शेषास्तिष्ठन्ति चतुस्त्रिंशत् द्वाषष्टिभागस्य सप्तषष्टिभागा-स्तत आगतं पुष्यस्य दशसु मुहूर्त्तेष्वेकस्य च मुहूर्त्तस्याष्टादशसु द्वाषष्टिभागेष्वेकस्य च द्वाषष्टिभागस्य चतुस्त्रिंशत्सप्तषष्टिभागेषु गतेषु एकोनविंशतौ च मुहूर्त्तेष्वेकस्य च मुहूर्त्तस्य त्रिचत्वारिंशति द्वाषष्टिभागेष्वेकस्य च द्वाषष्टिभागस्य त्रयस्त्रिंशति सप्तषष्टिभागेषु शेषेषु प्रथमा १ श्रावणमासभाविन्यावृत्तिः प्रवर्त्तते इति।

अथ श्रावणमासभाविद्वितीयाऽऽवृत्तिविषयं प्रश्नसूत्रमाह—

ता एएसि णं पंचण्हं संवच्छराणं दोच्चं वासिकिं आउट्टिं चंदे केणं नक्खत्तेणं जोगं जोएति । पुच्छा, ता संठाणाहिं संठाणाणं से चेव अभिलावो-एकारस मुहुत्ते ऊतालीसं च बावट्ठिभागा मुहुत्तस्स बावट्ठिभागं च सत्तट्ठिधा छेत्ता तेपण्ण चेव चुण्णिता भागा सेसा । तं समयं च णं सूरे केणं णक्खत्तेणं जोगं जोएति पुच्छा, ता पूसेणं, पूसस्स णं तं चेव जं पढमाए, (सूत्र-७६×)

'ता एएसि णमि' त्यादि, ता इति पूर्ववत् , एषाम्-अनन्तरोदितानां चन्द्रादीनां पञ्चानां संवत्सराणां मध्ये द्वितीयां वार्षिकीं श्रावणमासभाविनीमावृत्तिं चन्द्रः केन नक्षत्रेण युनक्ति-केन नक्षत्रेण युक्तः सन् चन्द्रो द्वितीयामावृत्तिं प्रारम्भयति?, एवं प्रश्ने कृते सति भगवानाह-'ता संठाणाहिं' इत्यादि, ता इति पूर्ववत् , संस्थानाभि -संस्थानाशब्देन मृगशिरोनक्षत्रमभिधीयते । तथा प्रवचने प्रसिद्धेः, ततो मृगशिरोनक्षत्रेण युक्तश्चन्द्रमा द्वितीयां श्रावणमासभाविनीमावृत्तिं प्रवर्त्तयति तदानीं च मृगशिरोनक्षत्रस्य एकादश मुहूर्त्ता एकस्य च मुहूर्त्तस्य एकोनचत्वारिंशद् द्वाषष्टिभागा एकस्य च द्वाषष्टिभागस्य त्रिपञ्चाशत् सप्तषष्टिभागा शेषा । तथा हि-इह या द्वितीया श्रावणमासभाविन्यावृत्तिः सा प्राक्प्रदर्शितक्रमापेक्षया तृतीया ततस्तत्स्थाने त्रिको ध्रियते स रूपोन क्रियते इति जातो द्विक २, तेनऽप्राक्तनो ध्रुवराशि पञ्च शतानि त्रिसप्तत्यधिकानि मुहूर्त्तानाम् एकस्य च मुहूर्त्तस्य षट्त्रिंशत् द्वाषष्टिभागा एकस्य च द्वाषष्टिभागस्य षट्सप्तषष्टि ५७३।$\frac{३६}{६२}$।$\frac{६}{६७}$ भागाः इत्येवप्रमाणो गुण्यते जातानि एकादश शतानि षट्चत्वारिंशदधिकानि मुहूर्त्तानां [११४६] द्वासप्तति ७२ एकस्य मुहूर्त्तस्य सत्का द्वाषष्टिभागा , एकस्य च द्वाषष्टिभागस्य द्वादश सप्तषष्टिभागा $\frac{१२}{६७}$ तत एतेभ्यो मुहूर्त्तानामष्टभिः शतैरेकोनविंशत्यधिकैरेकस्य मुहूर्त्तस्य चतुर्विंशत्या द्वाषष्टिभागैरेकस्य च द्वाषष्टिभागस्य षट्षष्ट्या सप्तषष्टिभागैरेकः परिपूर्णो नक्षत्रपर्याय शुद्धः । स्थितानि पश्चात् मुहूर्त्तानां त्रीणि शतानि सप्तविंशत्यधिकानि एकस्य च मुहूर्त्तस्य सप्तचत्वारिंशद् द्वाषष्टिभागा, एकस्य द्वाषष्टिभागस्य त्रयोदश सप्तषष्टिभागा ३२७।$\frac{४७}{६२}$।$\frac{१३}{६७}$ । तत एतेभ्यस्त्रिभिर्मुहूर्त्तशतैर्नवोत्तरैरेकस्य च मुहूर्त्तस्य चतुर्विंशत्या द्वाषष्टिभागै ६२ एकस्य च द्वाषष्टिभागस्य षट्षष्ट्या सप्तषष्टिभागै ६७ श्रभिजिदादीनि रोहिणिकापर्यन्तानि नक्षत्राणि शुद्धानि,तेषु चैव नक्षत्रेषु "रोहिणिया इत्यादि प्रागुक्तवचनात् , तत स्थिता पश्चाद्-अष्टादश मुहूर्त्ता एकस्य च मुहूर्त्तस्य द्वाविंशतिर्द्वाषष्टिभागा एकस्य च द्वाषष्टिभागस्य चतुर्दश सप्तषष्टिभागा. १८।$\frac{२२}{६२}$।$\frac{१४}{६७}$ एतावता च मृगशिरो न शुद्ध्यति, ततः आगतं मृगशिरोनक्षत्रमेकादशसु मुहूर्त्तेष्वेकस्य च मुहूर्त्तस्य एकोनचत्वारिंशद् द्वाषष्टिभागेषु एकस्य च द्वाषष्टिभागस्य त्रिपञ्चाशत् सप्तषष्टिभागेषु शेषेषु द्वितीयां श्रावणमासभाविनीमावृत्तिं प्रवर्त्तयति । संप्रति सूर्यनक्षत्रविषयं प्रश्नसूत्रं निर्वचनसूत्रं चाह-' तं समयं च णमि ' त्यादि, तस्मिंश्च समये सूर्य केन नक्षत्रेण सह योगमुपागतस्तां द्वितीयां वार्षिकीमावृत्तिं युनक्ति ? भगवानाह-' ता पूसेणमि'त्यादि, ता इति पूर्ववत् , पुष्येण युक्त "तं चेव" इति-वचनसामर्थ्यादिद द्रष्टव्यम्-"पुस्सस्स एगुणवीसं मुहुत्ता तेयालीसं च बावट्ठीभागा मुहुत्तस्स बावट्ठिभागं च सत्तट्ठिहा छेत्ता तत्तीसं चुण्णिया भागा सेसा" इति इह सूर्यस्य दशभिरयनैः पञ्च सूर्यनक्षत्रपर्याया लभ्यन्ते द्वाभ्यां चायनाभ्यामेक , तत्रोत्तरायणं कुर्वन् सर्वदैवाभिजिता नक्षत्रेण सह योगमुपागच्छति, दक्षिणायनं कुर्वन् पुष्येण,तस्य च पुष्यस्य एकोनविंशतौ मुहूर्त्तेष्वेकस्य च मुहूर्त्तस्य त्रिचत्वारिंशति द्वाषष्टिभागेष्वेकस्य च द्वाषष्टिभागस्य त्रयस्त्रिंशति सप्तषष्टिभागेषु शेषेषु, तथा चोक्तम् । (च० प्र० १२ पाहु०)-

अब्भिंतराहिं निंतो, आइच्चो पुस्सजोगमुवगयस्स ।
सव्वा आउट्टीओ , करेइ सो सावणे मासे ॥ २४८ ॥

श्रावणे मासे सर्वाभ्यन्तरान्मण्डलान् निष्कामन् सूर्य सर्वा अप्यावृत्ती करोति पुष्येण सह योगमुपागम्य, नान्यथा, तत्रापि पुष्यस्य त्रयोविंशतिं सप्त षष्टिभागान् भुक्त्वा, (ज्यो०) ते किल—" जं रिक्खं जावइए, वच्चइ चंदेण भागसत्तट्ठी । तं पण भागे राइं-दियस्स सूरेण तावइए " ॥ १ ॥ इति वचनप्रामाण्यात् सूर्यमधिकृत्य रात्रिंदिवस्य पञ्च ५ भागा द्रष्टव्या , ततस्त्रयोविंशते २३ पञ्चभि ५ र्भागो ह्रियते, लब्धाश्चत्वारो दिवसास्त्रयश्च पञ्च भागा रात्रिंदिवस्य, तत्रैकैकस्मिन् पञ्चभागे षट्मुहूर्ता लभ्यन्ते, अहोरात्रो हि त्रिंशन्मुहूर्त्तप्रमाणस्ततस्तस्य पञ्चमो भागः षण्मुहूर्त्तप्रमाणो भवतीति,त्रिभिश्च पञ्चभागैरष्टादश १८ मुहूर्त्ता , त्रयाणां षट्कानामष्टादशप्रमाणत्वात् तत आगत चतुर्षु दिवसेषु अष्टादशमुहूर्त्तेषु पुष्यनक्षत्रस्य भुक्तेषु सर्वाभ्यन्तरान् मण्डलाद्बहिः सूर्यो निष्क्रामति । ज्यो० १२पाहु० ।

तदेवाह—

अठारस य मुहुत्ते , चत्तारि य केवले अहोरत्ते ।
पुस्सस्स विसयमइगतो,बहिया अभिनिक्खमइ सूरो ।२५०।

अष्टादश१८ मुहूर्त्तान् चतुरश्च४ केवलान् परिपूर्णान् अहोरात्रान् पुष्यनक्षत्रस्य विषयमतिगत —प्राप्त सन् ' बहिया अभिनिक्खमइ ' सूर्य सर्वाभ्यन्तरान्मण्डलद्बहिर्निष्क्रामति । ज्यो० १२ पाहु० ।

सम्प्रति श्रावणमासभावितृतीयावृत्तिविषयं प्रश्नसूत्रमाह-

ता एएसि णं पंचण्हं संवच्छराणं तच्चं वासिकिं आउट्टिं चंदे केणं णक्खत्तेणं जोगं जोएति ?, ता विसाहाहि विसाहाणं तेणं चेव अभिलावेणं तेरस १३ मुहुत्ता चउप्पण्णं च

सुविहितसूरिशक्रचक्रचूडामणि–कलिकालसर्वज्ञकल्प–परमयोगिराज—

## जगत्पूज्य–गुरुदेव–प्रभुश्रीमद्–विजयराजेन्द्रसूरीश्वरजी महाराज ।




दृप्तभ्रान्तविपक्षदन्तिदमने पञ्चाननग्रामणी–राजेन्द्राभिधकोशसंप्रणयनात्सन्दीप्तजैनश्रुतः ।
मद्यस्योपकृतिप्रयोगकरणे नित्यं कृती तादृशः, कोऽन्यः सूरिपदाङ्कितो विजयराजेन्द्रात्परः पुण्यवान् ? ॥ १ ॥

| | | |
|---|---|---|
| जन्म सं० १८८३ भरतपुर ( यू पी ) | पन्यासपद सं० १९०९ उदयपुर ( मेवाड ) | क्रियोद्धार सं० १९२५ जावरा ( मालवा ) |
| दीक्षा सं० १९०३ उदयपुर ( मेवाड ) | श्रीपूज्यपदवी सं० १९२४ आहोर ( मारवाड ) | निर्वाण सं० १९६३ राजगढ ( मालवा ) |

श्री महोदय प्रेस—भावनगर

श्रीमद्विजयराजेन्द्रसूरीश्वरपट्टप्रभाकर–चर्चाचक्रवर्त्ति–आगमरहस्यवेदी–श्रुतस्थविरमान्य—

## श्रीसौधर्मबृहत्तपोगच्छीय–श्रीमद्विजयधनचन्द्रसूरिजी महाराज ।




विद्वच्चकोरजनमोदकरं प्रसन्नं, शुभ्रव्रतं सुकविकैरवसद्विलासम् ।
हृद्ध्वान्तनाशकरणे प्रसरत्प्रतापं, वन्दे कलानिधिसमं धनचन्द्रसूरिम् ॥ १ ॥

जन्म स० १८९६ किसनगढ (मेवाड) दीक्षोपसवत् स० १९२५ जावरा (मालवा) सूरिपद स० १९६५ जावरा (मालवा)
यतिदीक्षा स० १९१७ धानेरा (पालनपुर) उपाध्यायपद स० १९२५ खाचरोद (मालवा) स्वर्गारोह स० १९७७ बागरा (मारवाड)

श्री महोदय प्रेस–भावनगर

# प्रस्तावना



इह हि खलु भारतवर्षे संस्कृतभाषायामनेकशोऽकारादिवर्णानुक्रमेण सङ्कलिताः कोशाः समुपलभ्यन्ते देशान्तरेषु च तत्तद्देशभाषया, परन्त्वद्यापि प्राचीनसमये मातृभाषात्वेन राष्ट्रभाषात्वेन च सकलभारतभूमिलब्धास्पदायां केवलिभाषायां कोऽपि कोषः संकलितोऽस्ति । किमत्राप्रस्तुतया प्राकृतभाषाप्रशंसया स्वरूपमेवात्मस्तुतिं विधास्यति । इयमेव उत्सर्पिण्यवसर्पिणीकाले समजनि, समादृता च सर्वज्ञैर्गणधरैश्चेयमेव । कतिचिद्वर्णेषु सुप्तिङ्कृत्सु च भेदमापन्नेयमेव संस्कृतभाषात्वेन परिणता । किं बहुना सर्वज्ञकथिता मर्मग्राहिणः पदार्थाः जैनदर्शनमूलसूत्राणि चास्यामेव भाषायामित्यस्या वर्णानुक्रमणिकया सङ्कलनमत्यावश्यकमिति वाढं सानुनयं सकलसंघेन संप्रार्थितः परमकारुणिकः सर्वतन्त्रस्वतन्त्रः श्रीभट्टारकश्रीश्री १००८श्रीविजयराजेन्द्रसूरिरभिधानेषु श्रेष्ठतममिममभिधानराजेन्द्रनामकं कोषं निरमास्त । श्रेष्ठतमत्वमस्यावलोकनत एवोह्यमलमत्र काकदन्तपरीक्षया ।

किञ्च-अस्यां भारतभूमौ पञ्चमारके मनुष्येषु मनःपर्यायकेवलयोः परिपूर्णश्रुतावधिज्ञानयोश्च विच्छेदेन अपूर्णज्ञानयुक्तं सकलसङ्घमवलोक्येमं कोशं संग्रहतया ग्रथितवान् यथा-सूर्याद्यावृत्त्यादीनां वर्णनम् 'आउट्टि' शब्दे श्रोत्रादीन्द्रियविषयकं वृत्तम् 'इंदिय' शब्दे ऋतुविषयकम् 'उउ' शब्दे एवं यथायथं वर्णितमनुपदमेव स्पष्टतया दर्शयिष्यामः । अयं कोशः संस्कृतभाषासु बह्वादराणां द्रव्याभावेनासंग्रहितान्यकोशानां कामधुगेवोपकारं करोतीति नात्रार्थवादः । जैनरहस्यजिज्ञासूनां कृते स्थूलघटरूपज्ञाने चक्षुरिव विस्मृतपदार्थमार्गणे साक्षात्पदार्थप्रापकमिवेतस्ततो विकीर्णपदार्थानामेकत्रोपलम्भकमिमं संगृहीतमवलोक्य सर्वेऽपि सन्तः सन्तोषमेष्यन्तीति वाढं निश्चिनुमः ।

भो भो विदेशीया जैनदर्शनजिज्ञासवो बौद्धेभ्यो भेदममन्यमाना विलोकयन्तु जैनदर्शनरहस्यम्, अवगच्छन्तु बौद्धदर्शनतस्तारतम्यम्, सर्वदर्शनमुकुटायमानमिमं जैनदर्शनमवलोक्य सूक्ष्मेक्षिकया विदांकुर्वन्तु जीवाजीवादितत्वम्, । प्राप्नुवन्तु परमोत्साहं सर्वविषयकसमुदायस्तत्तच्छब्दे एवोपलभ्यते इति नात्र भवतां श्रमलेशसंभवः ।

अपि च प्रचलिताद्यश्वीनभाषा ( हिन्दी ) शब्दपरावृत्तिजिज्ञासवोऽपि कस्माच्छब्दात्परावृत्य संस्कृते शब्दः प्रचलितः आधुनिककालापेक्षया संस्कृता ( हिन्दी )दत्त वा इत्येतदप्येतद्ग्रन्थानुभवनेन सुखेनैव बोधिष्यन्तीति निर्विवादम् । अत एव अभिधानराजेन्द्र इति यौगिकं नाम यथाहि राजा निष्पक्षपातं शत्रुमित्रोदासीनेषु नियमाभियुङ्क्ते एवमयमपि पदार्थविज्ञानरूपनियमं जैन-बौद्ध-सांख्य-योगादिदर्शनश्रद्धालुषु पदार्थसंशोधकेषु संस्कृतप्राकृतभाषारसिकेषु च सममेव प्रवर्त्तयतीति ।

## विषयसूचना-

पक्षपातो न मे वीरे न द्वेषः कपिलादिषु ।
युक्तिमद्वचनं यस्य तस्य कार्यः परिग्रहः ॥ १ ॥

इत्यनुसन्धानेन विशेषतो दर्शनीया शब्दास्तत्रस्था विषयाश्च लेशमात्रतो विज्ञप्यन्ते, यथा-'आउ' शब्दे आयुषो भेदान्निरूप्य तस्यातिप्रियत्वं प्रतिपादितमत एव तत्पुष्टिकारणानि प्रतिपादितानि, न खलु गतमायुः पुनरावर्त्तत इति च स्वल्पतः सूचितम् । आयुषोऽनित्यत्वं निरूप्य वर्षशतस्याप्यल्पत्वमेवेति वाढं विभावितम् । निरूपितानि च तत्रैव सोदाहरणानि सर्वसिद्धान्ताविरुद्धानि सप्तायुःक्षयकारणानि अपि च सोपक्रमनिरुपक्रमादिना भेदं निरूप्य आयुषोऽल्पत्वकारणं दीर्घायुष्कारणं शुभदीर्घायुरशुभदीर्घायुष्कादिना भेदास्तेषां कारणानि च दर्शितानि । आयुष्कर्मणो जीवितहेतुत्वं जीवानामिहभवपरभविकायुस्तत्र नैरयिकादीनां परभविकायुर्बन्धश्च प्रतिपादितः । प्रत्याख्यानादिना निवर्त्तितायुष्कत्वं सप्रमाणं निरूप्य अनन्तरोपपन्नकनैरयिकादीनामायुर्बन्धश्चेति निपुणं विभावितम् । असञ्ज्ञीजीवानामेकान्तवालैकान्तपण्डितवालपण्डितानां क्रियावाद्यादीनामायुर्वर्णयित्वा नैरयिकादिष्वापद्यमानानां भविकजीवानां सायुष्कत्वमायुष्करणसंवेदनादि न्यरूपि ।

एवमाउक्काय शब्दे–अप्कायिकानां भेदं निरूपयन् तेषां शरीरादि न्यरूपयत्। ऋवति चाप्कायिकस्य जीवितमिति सयुक्तिकं निरूपितमत एव सचित्ताचित्तमिश्रविवेकश्च कृतः। तीव्रोदकस्याचित्तत्वमप्कायशस्त्राणि प्रतिपाद्य सचित्ताप्कायपरिभोगविचारः प्रायुङ्क्त। तत्राप्कायपरिभोगकारणानि अप्कायसमारम्भव्यावृत्तस्यैव मुनित्वं शाक्यादिमुनयो नियमतोऽप्कायिकांस्तदाश्रितजीवांश्च विहिंसन्तीति युक्त्या प्रतिपाद्य अप्कायस्पर्शनिषेधं शीतोदकस्पर्शनिषेधं च कृतवान्।

एवमाउट्टिशब्दे सूर्यस्य कति कस्यामृतावावृत्तयो केन च नक्षत्रेण युक्ताः प्रथमादयो भवन्तीति पुनः पुनर्भावयन् सुबोधमेव निरूपितम्। अथ कस्मात्स्थानादेकेन्द्रिया आगम्य जाश्च जीवाः समागच्छन्तीति पृथ्वीकायिकानां पुनरपि गत्यागती भवतो जीवानां गत्यागतिपरिज्ञानेऽनेकशो मिथ्यादृष्टीनां सिद्धान्ता निपुणं निरूपिताः ।

अथ आगमशब्दे स्वशैल्या भेदप्रतिपादनपूर्वकमागमस्य परतः प्रामाण्यं तत्र च प्रामाणिकपुरुषप्रणीतत्वेन प्रामाण्यं प्रतिपाद्य दृढतरयुक्तिभिरपौरुषेयत्वं निराकृतम्। स्वीकृतं च संभवद्रूपस्यैवागमस्य मूलागमैकदेशभूतस्य आगमान्तरस्य च प्रामाण्यं न तु वेदस्यैव। प्रमाणान्तराविषय एव पदार्थो नागमेन बोध्यते किं तु प्रमाणान्तरविषयेऽपि इति निरूप्य कणादमते शब्दप्रामाण्यस्यानुमानान्तर्भावमभिधाय सर्वमतसंवादिशब्दप्रामाण्यं प्रत्यपादि । शब्दस्य बाह्यार्थे प्रामाण्यम् अपोहः शब्दार्थ इति बौद्धमतं च निरूप्य अर्थस्वरूपं वाच्यवाचकभावं शब्दस्य वाचकताविचारं चाकार्षीत्। स्फोटः शब्दः इति वैयाकरणमतं स्फोटयित्वा स्वमते शब्दस्य वाचकत्वे शब्दस्य नित्यत्वविचारः शब्दार्थयोः संबन्धश्च हेतुवादाहेतुवादभेदादागमस्य द्वैविध्यमागमस्य च सर्वव्यवहारनियामकत्वं च प्रतिपादितम्। धर्ममार्गे मोक्षमार्गे चागमस्यैव प्रामाण्यम् जिनागमस्यैव सत्यत्वम्, इत्यादयो मर्मग्राहिण आगमविषयिणो बहवो विषयाः समुपलभ्यन्ते। एवम् " आणा " शब्दे परलोके आज्ञाया एव प्रामाण्यम् आज्ञाप्रवर्तमानोऽप्यप्रवर्तमान एव तीर्थकराज्ञाऽन्यथाकरणे दोषाः प्रायश्चित्तं चेत्यादिकानपरांश्च तद्विषयकान् विषयान् वर्णयित्वा आज्ञाव्यवहारो निरूपितः। एवं आयरियशब्दे व्युत्पत्त्यादिप्रदर्शनपुरस्सरमाचार्यपदभेदमभिधाय कलाचार्यादिनाऽऽचार्यस्य त्रैविध्यं तेषां विनयकरणं च प्रदर्शितम्। निरूपितं चेहलोकोपकारिपरलोकोपकारिणोराचार्ययोः स्वरूपं तद्धेयोपादेयत्वं च। प्रव्राजनाचार्योपस्थापनाचार्याभ्यां द्वैविध्यं, लक्षणं चाचार्यस्य, आचार्यस्य गुणाः यद्विरहितो गुरुर्न भवतीति भ्रष्टाचारत्वं पराहितकारित्वं दुर्गुणमाचार्यस्य निरूप्य प्रमादिनमाचार्यं शिष्यो बोधयेत्। आचार्यस्य विनयः गुरुविनये वैद्यदृष्टान्तं च प्रदश्य केन कर्मविपाकेन गच्छाधिपतिर्भवतीति वर्णितम्। आचार्यस्यातिशया निर्ग्रन्थिनामप्याचार्य इति यथार्थं निरूपितम्। आचार्ये कालगते अवधाविते वा आचार्यान्तरस्थापनं तत्र " सुत्तत्थे णिम्माओ " इत्यादिना लक्षणं च प्रतिपादितम्। आचार्यस्य परीक्षां गुरोराचार्यपदे स्थापनाविधिं च तत्र स्थविराः प्रष्टव्याः इति प्रतिपाद्य प्रपरिच्छदस्यैवाचार्यत्वमिति निरूपितम्। एवम् आणुपुव्वीशब्दे आनुपूर्वीविषयकनिरूपणम्। एवं स्वस्वविषयकसकलविषयपूर्णाः चतुरस्रतो रमणीयाः विपक्षपक्षनिरूपणपूर्वकं युक्तियुतस्वपक्षस्थापननिरूपणगर्भाः पूर्वोक्ता अपरे चेमे शब्दास्तेऽवश्यं विलोकनीयास्तानेवाह। " आता, आधाकम्म, आभिणिबोहिय, आरम्भ, आराधक, आलोयणा, आसातना, आहार, इंद, इंदभूई, इंदिय, इत्थिलिंगसिद्ध, इरयी, ईसर, उउ, उग्गम , उग्गह, उदय, उद्देस, उद्देसिय, उप्पत्तिया, उप्पाय, उरब्भ, उवओग, उवट्ठवणा, उववाय, उवसंपया, उवसग्ग, उवहाण, उवहि, उवासगपडिमा, उसभ, उसुयार" एते शब्दा अस्मिन् ग्रन्थे विशेषतो दर्शनीयाः रमणीयविषयपरिपूर्णाश्चेति सूचनिकया निरूपिताः॥

( ग्रन्थनिर्दिष्टप्रकरणानां सङ्केतः )

| | | |
|---|---|---|
| १ | अङ्ग० | अङ्गचूलिका– |
| २ | अनु० | अनुयोगद्वार– |
| ३ | अने० | अनेकान्तजयपताका– |
| ४ | अन्त० | अन्तगडदशा– |
| ५ | अष्ट० | अष्टकयशोविजयकृत– |
| ६ | आचा० | आचाराङ्गसूत्र– |
| ७ | आ० चू० | आवश्यकचूर्णी– |
| ८ | आ० म० प्र० | आवश्यकमलयगिरिप्रथमखण्ड– |
| ९ | आ० म० द्वि० | आवश्यकमलयद्वितीयखण्ड– |
| १० | आतु० | आतुरप्रत्याख्यान– |
| ११ | आ० क० | आवश्यककथा– |
| १२ | आव० | आवश्यकबृहद्वृत्ति– |
| १३ | उवा० | औपपातिकसूत्रवृत्ति– |
| १४ | उत्त० | उत्तराध्ययनसूत्र– |
| १५ | उपा० | उपासकदशाङ्ग– |
| १६ | उत्त० नि० | उत्तराध्ययननिर्युक्ति– |
| १७ | एका० | एकाक्षरीकोश– |
| १८ | ओघ० | ओघनिर्युक्ति– |
| १९ | कर्म० | कर्मग्रन्थ– |
| २० | क० प्र० | कर्मप्रकृति– |

| | | |
|---|---|---|
| २१ | कप्प० | कप्पसुबोधिका– |
| २२ | ग० | गच्छाचारपयन्ना– |
| २३ | गा० | गायत्रीव्याख्या– |
| २४ | चं०प्र० | चन्द्रप्रज्ञप्ति– |
| २५ | जं० | जम्बूद्वीपप्रज्ञप्ति– |
| २६ | ज्ञा० | ज्ञाताधर्मकथा– |
| २७ | जीत० | जीतकल्प– |
| २८ | जी० | जीवाभिगम– |
| २९ | जीवा० | जीवानुशासन– |
| ३० | जैन० | जैन इतिहास– |
| ३१ | ज्यो० | ज्योतिष्करण्ड– |
| ३२ | ढुं० | प्राकृत ( ढुण्ढी ) टीका– |
| ३३ | तं० | तन्दुलवयाली– |
| ३४ | तित्थु० | तित्थुगाली– |
| ३५ | दशा० | दशाश्रुतस्कन्ध– |
| ३६ | दर्श० | दर्शनशुद्धि– |
| ३७ | दश० | दशवैकालिकाध्ययन– |
| ३८ | द०प० | दशपयन्ना– |
| ३९ | द्रव्या० | द्रव्यानुयोगतर्कणा– |
| ४० | द्वा० | द्वात्रिंशद्द्वात्रिंशिका ( बत्तीसबत्तीसी )– |
| ४१ | द्वी० | द्वीपसागरप्रज्ञप्ति– |
| ४२ | दे०ना० | देशीनाममाला– |
| ४३ | धर्म० | धर्मसंग्रह– |
| ४४ | ध० र० | धर्मरत्नप्रकरण– |
| ४५ | नयो० | नयोपदेश– |
| ४६ | नं० | नन्दीसूत्रवृत्ति– |
| ४७ | नि० | निरयावलि– |
| ४८ | नि० चू० | निशीथचूर्णि– |
| ४९ | पं० चू० | पञ्चकल्पचूर्णि– |
| ५० | पं० भा० | पञ्चकल्पभाष्य– |
| ५१ | पञ्चा० | पञ्चाशकसटीक– |
| ५२ | पं० व० | पञ्चवस्तुकटीका– |
| ५३ | पं० सं० | पञ्चसंग्रह– |
| ५४ | पं० सू० | पञ्चसूत्रमूल– |
| ५५ | प्रव० | प्रवचनसारोद्धार– |
| ५६ | प्रति० | प्रतिमाशतक– |
| ५७ | प्रश्न० | प्रश्नव्याकरण– |
| ५८ | प्रज्ञा० | प्रज्ञापनासूत्र– |
| ५९ | पिं० | पिण्डनिर्युक्तिवृत्ति– |
| ६० | पिं०मू० | पिण्डनिर्युक्तिमूल– |
| ६१ | पा० | पाक्षिकसूत्रसटीक– |
| ६२ | प्रा० | प्राकृतव्याकरण– |
| ६३ | प्रा० ना० | प्राकृतनाममाला– |
| ६४ | भ० | भगवतीसूत्र– |
| ६५ | महा० | महानिशीथसूत्र– |
| ६६ | मण्ड० | मण्डलप्रकरण– |
| ६७ | यो० वि० | योगविन्दु– |
| ६८ | रत्ना० | रत्नावतारिकावृत्ति– |
| ६९ | ल० | ललितविस्तरावृत्ति– |
| ७० | लघु० | लघुप्रवचनसार– |
| ७१ | व्य० अ० | व्यवहारअक्षरार्थ– |
| ७२ | वाच० | वाचस्पतिकोश– |
| ७३ | व्य० प्र० | व्यवहारसूत्रवृत्तिप्रथमखण्ड– |
| ७४ | व्य० द्वि० | व्यवहारसूत्रवृत्तिद्वितीयखण्ड– |
| ७५ | ती० | विविधतीर्थकल्प– |
| ७६ | बृ० | बृहत्कल्पवृत्ति– |
| ७७ | विशे० | विशेषावश्यकवृत्ति– |
| ७८ | विपा० | विपाकसूत्र– |
| ७९ | श्रा० | श्रावकधर्मप्रज्ञप्ति– |
| ८० | षो० | षोडशप्रकरणसटीक– |
| ८१ | स० | समवायाङ्गसूत्र– |
| ८२ | संथा० | संस्तारकपयन्ना– |
| ८३ | संस० नि० | संसक्तनिर्युक्तिमूल– |
| ८४ | संघा० | सङ्घाचारभाष्य– |
| ८५ | सत्त० | सत्तरिसयठाणावृत्ति– |
| ८६ | सम्म० | सम्मतितर्क– |
| ८७ | स्था० | स्थानाङ्गसूत्र– |
| ८८ | स्या० | स्याद्वादमञ्जरी– |
| ८९ | सू० प्र० | सूर्यप्रज्ञप्तिः सटीक– |
| ९० | सूत्र० | सूत्रकृताङ्गसूत्र– |
| ९१ | सेन० | सेनप्रश्नसंस्कृत– |
| ९२ | हा० | हारिभद्राष्टक– |
| ९३ | ही० | हीरप्रश्नसंस्कृत– |

| | |
|---|---|
| अ० | अध्ययन– |
| अधि० | अधिकार– |
| अध्या० | अध्याय– |
| अष्ट० | अष्टक०– |
| द्वा० | द्वार०– |
| पाहु० | पाहुड– |
| श्रु० | श्रुतस्कन्ध– |
| वक्ष० | वक्षस्कार– |

| | |
|---|---|
| गा० | गाथा– |
| उ० | उद्देश– |
| प्रति० | प्रतिपत्ति– |
| विव० | विवरण– |
| पद– | पद– |
| परि० | परिच्छेद– |
| सम० | समवाय– |
| उल्ला० | उल्लास– |
| प्र० | प्रश्न– |
| सं० | संवरद्वार– |
| अध० | अधर्मद्वार– |
| पुं० | पुंल्लिङ्ग– |
| स्त्री० | स्त्रीलिङ्ग– |
| न० | नपुंसकलिङ्ग– |
| त्रि० | त्रिलिङ्ग– |

# संकेतसूचना–

सर्वत्र हि सङ्केतज्ञानमन्तरेण न कश्चिदपि सङ्केतितपरिज्ञाने प्रभवतीति सङ्केतसूचनं क्रियते यत्रास्मिन् ग्रन्थे टीकारहिता गाथा उदाहरणपतितानि प्राकृतवाक्यानि संस्कृतश्लोका वा तत्राद्यान्तयोरेत " " चिह्नम्। मूलटीकयोः स्थूलसूक्ष्माक्षरैरेव भेदः प्रदर्शितः क्वचिदनुपयुक्ता टीका न संगृहीता किं तु मूलमात्रमेव स्थूलाक्षरैः प्रकाशितम् । सप्तम्यन्तत्वेन प्रदर्शितस्यार्थस्याधोभागे एत, चिह्नं दत्तम्, यत्रैकस्यानूद्यस्य प्राकृतशब्दस्य द्वित्राः संस्कृतेऽनुवादकशब्दास्तत्र द्वितीयोऽनुवादष्टीकासमपङ्क्तिष्वेव निहितः। अनूद्याः प्राकृतशब्दा अनुवादकाश्च संस्कृतशब्दाः इति गौणमुख्यभावोऽपि प्रदर्शित एव । अनूद्यानुवादकयोर्मध्ये एत–चिह्नमस्ति । येभ्यो ग्रन्थेभ्यः पाठः संगृहीतस्तत्र नामैकदेशे नामग्रहणमिति न्यायमनुश्रित्य ग्रन्थस्य पुंल्लिङ्गादीनां च पूर्णं नामधेयमनुक्त्वा एकं द्वे वा अक्षराणि प्रदर्शितानि एवमध्ययनशतकोद्देशादिखण्डेषु च एक एव वर्णः प्रदर्शितस्तत्र च शून्याकाररूपमेत० चिह्नमपि निहितमस्ति ।

# विशेषसूचना—

एतत्पुस्तकसंशोधनेऽस्मत्सतीर्थ्ययोर्मुनिश्रीदीपविजय–यतीन्द्रविजययोर्महान् श्रम इति नात्र दूये किन्त्वमुद्रितपुस्तकानामतिजीर्णत्वेन प्रतिपुस्तकमेकैकप्रत्युपलब्ध्या च कचिद्गाथादौ टीकावलम्बनैकशरणेन प्रकरणाविषयाविरोधेन च बहुतरं पर्यालोच्य निहितपदैः पूरितगाथासु कदाचिदेव कचिदेव पाठभेदः स्यात्स स्वयमेव सद्भिः संस्करणीयः । किञ्च यदि क्वचिद्यन्त्रदोषेण वर्णानां घर्षणेन च अनुत्थितेषु पकारादिषु दृष्टिदोषादिना वा अशुद्धिः स्यात्सा विद्वद्वरैः शोधनीया इत्यादि सर्वे विज्ञपयन्ति ।

श्री श्री १०८ श्री उपाध्याय–मुनिप्रवर मोहनविजयाः ।

श्रीवर्द्धमानो जयति ।

# अभिधानराजेन्द्रः।

सिरिवद्धमाणवाणिं, पणमिअ वत्तीइ अक्खरक्कमसो ।
सद्दे तेसु य सव्वं, पवयणवत्तव्वयं वोच्छं ॥ १ ॥






आ-आ-अव्य० । आप्-क्विप्-पृषो० पलोप । वाक्ये, ( पूर्वमित्थं नो अमंस्था , इदानीं त्वेवं मन्यसे इत्येवं वाक्यस्यान्यथात्वद्योतने, ) स्मृतौ, ( आ एवं मन्यसे इत्येव विस्मृतस्य स्मृतौ, ) अङितो निपातत्वात् प्रगृह्यसंज्ञा । ङितस्तु न । " निपात एकाजनाङ् ' ॥ १ । १ । १४ ॥ इति सूत्रात् । अत एवोक्तम्-" मर्यादायामभिविधौ. क्रियायोगेपदर्थयो । य आकार स ङित् प्रोक्तो, वाक्यस्मरणयोरङित् ॥ १ ॥ " वाच० । अभिविधौ ( व्याप्तौ, ) " आगमसत्थग्गहणं " ॥ २१ + ॥ आ-अभिविधिना--सकलश्रुतव्याप्तिरूपेण, मर्यादया वा । आ० म० १ अ० । " आङोऽभिविहीए० " ( १२७६४ ) अभिविधौ,। विशे० । " आगरा० ॥ ८+ ॥ " मर्यादया अभिविधिना वा । ओघ० । मर्यादायाम् . ( सीम्नि, ) प्रज्ञा० ३६ पद ४६ सूत्र । आ० म० । प्रव० । विशे० । भ० । ओघ० । सूत्र० । समन्तादित्यर्थे, उत्त० १ अ० १३ गाथा । स० । रा० । सूत्र० । अत्रागर्ये, ( अधोभूमौ, ) प्रज्ञा० २ पद ४६ सूत्र । ईषदर्थे, " आङ मर्यादेषदर्थत्वात् । विशे० १२३४ गाथा । आचा० । एका० । सूत्र० । ( अत्राऽङिल्लक्षण एव तात्पर्यम् , ङिद्देशे मर्यादायामित्यादयस्तूदाहरणमात्रमत एव अन्यत्रापि ङित्प्रयुज्यते ) अमर्षे, आभिमुख्ये, रा० । अनुकम्पायाम् , समुच्चये, अङ्गीकारे, कोपे, पिडायाम् , एका० । आ किमेतदित्यवम् विस्मये, स्था० ५ ठा० ३ उ० ३६४ सूत्र० । एका० । सन्तोषे, सुखतती, चिरे, लघुवस्तुनि, परितापे, विधौ, सलिले, क्षय, एका० । स्वयभुवि, पुं० । एका । आचार्ये च । स च नामैकदेशे नाममात्रग्रहणात्-ओमितिपदे आशब्द आचार्यं बोधयतीति । गा० ।



आअ-(आगअ)-आगत-त्रि० । आयाते, उपस्थिते, प्राप्ते च । आगमने, न० । वाच० । "व्याकरणप्राकारागते क-गोः" ॥ ८ । १ । २६८ ॥ इति हैमप्राकृतव्याकरणसूत्रेण वैकल्पिको गकारस्य सस्वरस्य लुक् । प्रा० ।

आ(अरं-)अरिस-आदर्श-पुं० । दर्पणे, वाच० । "र्श-र्ष-तप्त-वज्रे वा " ॥ ८ । २ । १०५ ॥ इति हैमप्राकृतसूत्रेणान्त्यव्यञ्जनात्पूर्व इकारो वैकल्पिक । प्रा० ।

आअड्ड-व्यापृ-धा० । वि-आ-पृ । व्यापारे, तुदा० आत्म० अनिट् । " व्याप्रेराअड्डः " ॥ ८ । ४ । ८१ ॥ इति हैमप्राकृतसूत्रेण वैकल्पिक आअड्ड इत्यादेश । आअड्डेइ । वावारेइ । व्याप्रियत इत्यर्थ. । प्रा० ।

आअरिअ-आचार्य-पुं० । गुरौ, वाच० । "स्याद्भव्य-चैत्य-चौर्य्य-समेषु यात् " ॥ ८ । २ । १०७ ॥ इति हैमप्राकृतसूत्रेण एकारात्पूर्वं इकार. । प्रा० । " आचार्ये चोऽच्च " ॥८।१।७३॥ इति हैमप्राकृतसूत्रेण अत् । प्रा० ।

आइ-आदि-पुं० । आदीयते-( गृह्यते ) इति आदि -प्रथम' । प्रव० ७१ द्वार १ गाथा । आ-दा-कि आदि । "क ग च ज त-द-प-य-वा-प्रायो लुक्" ॥८।१।१७७॥ इति द्लुक् । प्रथमे, प्रा० । यस्मात्परमस्ति,न पूर्वं स आदि.। अनु० ७४ सूत्र । मूलकारणे, प्रज्ञा०११ पद १६५ सूत्र । मूलमादिरित्यनर्थान्तरमिति । आ० चू० १ अ० । प्रथमोत्पत्तौ , सूत्र० २ श्रु० ५ अ० २ गाथा । प्राथम्ये , उत्त० १ अ० ३३ गाथा । प्रधाने , आचा० २ श्रु० १ चू० १ अ० ४ उ० २२ सूत्र । उत्सेधाख्ये नाभेरधस्तने देहभागे, स्था० ६ ठा० ३ उ० ४६५ सूत्र । भेदे, (प्रकारे,) नि० चू० १ उ० । सामीप्ये, व्यवस्थायाम् , अवयवे च । आह च-" सामीप्ये च, व्यवस्थायां, प्रकारेऽवयवे तथा । चतुर्ष्वर्थेषु मेधावी, ह्यादिशब्दं तु लक्षयेत् ॥ १ ॥ " प्रश्न० १ आश्र० द्वार ३ सूत्र ।

अस्य चतुर्विधो निक्षेप. नामस्थापना द्रव्यभावभेदात्,तद्यथा-

णामादी ठवणादी , दव्वादी चेव होति भावादी ।
दव्वादी पुण दव्व-स्स, जो सभावो सए ठाणे ॥१३४॥

' णामादी ' त्यादि, आदेर्निक्षेपं कर्तुकाम आह-आदेर्नामादिकश्चतुर्धा निक्षेपः नाम-स्थापने सुगमत्वादनादृत्य द्रव्यादि दर्शयति-द्रव्यादि. पुनर्द्रव्यस्य परमाण्वादेर्य. स्वभाव.-परि-

णतिविशेष स्वके स्थाने-स्वकीये पर्याये प्रथमम्-आदौ भवति स द्रव्यादि. द्रव्यस्य दध्यादेर्य आद्य परिणतिविशेष. क्षीरस्य विनाशकालसमकालीन एवमन्यस्यापि-परमाण्वादिर्द्रव्यस्य 'जो' य परिणतिविशेष प्रथममुत्पद्यते स सर्वोऽपि द्रव्यादिरेवमेव भवति। ननु च कथं क्षीरविनाशसमये एव दध्युत्पाद । तथाहि-उत्पादविनाशौ भावाभावरूपौ वस्तुधर्मौ वर्तेते न च धर्मो धर्मिणमन्तरेण भवितुमर्हति, अत एकस्मिन्नेव क्षणे तद्धर्मिणोर्दधिक्षीरयो सत्तामाप्नोत्येतच्च दृष्टेष्टबाधितमिति, नैष दोष । यस्य हि वादिन. क्षणमात्रं वस्तु तस्यायं दोषो, यस्य तु पूर्वोत्तरक्षणानुगतमन्वयि द्रव्यमस्ति तस्यायं दोष एव न भवति। तथाहि-तत्परिणामि द्रव्यमेकस्मिन्नेव क्षणे एकेन स्वभावेनोत्पद्यते परेण विनश्यत्यनन्तधर्मात्मकत्वाद्वस्तुन इति। यत्किंचिदेतत् । तदेवं द्रव्यस्य विवक्षितपरिणामेनापरिणमतो य आद्य समय स द्रव्यादिरिति स्थितं द्रव्यस्य प्राधान्येन विवक्षितत्वादिति।

सांप्रतं भावादिमपि कृत्याह—

**आगम णोआगमओ, भावादी तं दुहा उवदिसंति।**
**णोआगमओ भावो, पंचविहो होइ णायव्वो॥ १३५॥**
**आगमओ पुण आदी, गणिपिडगं होइ बारसंगं तु।**
**गंथसिलोगो पदपा-दअक्खराइं च तत्थादी॥ १३६॥**

'आगम' इत्यादि, भाव -अन्त करणस्य परिणतिविशेपस्तं बुद्धा -तीर्थकर-गणधराद्यो व्यपदिशन्ति-प्रतिपादयन्ति । तद्यथा-आगमतो, नोआगमतश्च। तत्र नोआगमत प्रधानपुरुषार्थनयाचिन्त्यमानत्वात्पञ्चविध -पञ्चप्रकारो भवति। तद्यथा-प्राणातिपातविरमणादीनां पञ्चानामपि महाव्रतानामाद्य प्रतिपत्तिसमय इति । तथा-'आगमओ' इत्यादि, आगममाश्रित्य पुनरादिरेव द्रष्टव्य । तद्यथा-यदेतद्गणिन-आचार्यस्य पिटक-सर्वस्वमाधारो वा तद्-द्वादशाङ्गं भवति। तुशब्दात्-अन्यदप्युपाङ्गादिकं द्रष्टव्यम्। तस्य प्रवचनस्यादिभूतो यो ग्रन्थस्तस्याप्याद्य श्लोकस्तस्याप्याद्यं पदं तस्यापि प्रथममक्षरम् एवंविधो बहुप्रकारो भावादिर्द्रष्टव्य इति। तत्र सर्वस्यापि प्रवचनस्य सामायिकमादिस्तस्यापि करोमीति पदं तस्याऽपि ककार । द्वादशाना त्वङ्गानामाचाराङ्गम् आदिस्तस्यापि शस्त्रपरिज्ञाध्ययनमस्यापि च जीवोद्देशकस्तस्यापि 'सुय' ति पद तस्यापि सुकार इति पदमादिरिति। अस्य च प्रकृताङ्गस्य समयाध्ययनमस्यापि आद्योद्देशक-लोक-पाद-पद-वर्णादिर्द्रष्टव्य इति । सूत्र० १ श्रु० १५ अ०। "ओयंमि उ गुणकारे, अब्भितर मंडले हवइ आई। जुम्मंमि य गुणकारे, बाहिरगे मण्डले आई"॥ ४॥ अस्यार्थ -ओजोरूपेण-विषमलक्षणेन गुणकारो भवति तत्र आदि अभ्यन्तरे मण्डले द्रष्टव्य । युग्मे तु-समे तु गुणकारे आदि बाह्ये मण्डले अवसेय । सू० प्र० १० पाहु० २० पाहु०पाहु० ७६ सूत्र।

आजि-स्त्री०। अजन्त्यस्यामिति, अज्-इण्। संग्रामे, सथा० ८७ गाथा। समरभूमौ, मर्यादायाम् वा डीप। क्षेणे, मार्गे पु०। भावे इण्। आजेय च। वाच०।

आति-पुं०। अत् इण्। शरारिपक्षिणि सततगन्तरि त्रि०। वाच०।

आइ (दिं) अंतियमरण-आत्यन्तिकमरण-न० । अत्यन्तंभवमात्यन्तिक तच्च तन्मरणं चेति कर्मधारय. । भ० १२ श० ६ उ० ४६ सूत्र। तृतीये मरणविशेष, प्रव०।

आत्यन्तिकमरणमाह—

**एमेव आइअंतिय-मरणं न वि मरइ ताणि पुणो॥२३॥**

आर्षत्वादित्यय निर्देश । एवमेव-अवधिमरणवदात्यन्तिकमरणमपि द्रव्यादिभेदत. पञ्चविधं, विशेष पुनरयम्-'न वि मरइ ताणि पुणो' त्ति-अपिशब्दस्यैवकारार्थत्वान्नैव तानिद्रव्यादीनि पुनर्म्रियन्ते। अयमर्थ -यानि नारकाद्यायुष्कतया कर्मदलिकान्यनुभूय म्रियन्ते मृताश्च न पुनस्तान्यनुभूय मरिष्यन्तीत्येवं यन्मरणं तद् द्रव्यापेक्षया अत्यन्तभावित्वादात्यन्तिकमिति। एवं क्षेत्रादिष्वपि वाच्यम्। प्रव० १५७ द्वार। उत्त०। स०।

तद्भेदा यथा—

**आदिंतियमरणे णं, पुच्छा, गोयमा! पंचविहे पण्णत्ते। तं जहा-दव्वादिंतियमरणे,खेत्तादिंतियमरणे० जाव भावादिंतियमरणे। (सूत्र ४६५×) भ० १३ श० ७ उ०।**

( एषा भेदा 'मरण' शब्दे षष्ठ भागे वक्ष्यन्ते )

आइल्ल-आदिम-त्रि०। आद्य, अनु०। "डिल्ल-डल्लौ भवे" ॥ ८। २। १६३॥ इति डल्ल। प्रा०।

आइं-आइं-अव्य०। वाक्यालङ्कारे, प्रश्न० ३ संव० द्वार २६ सूत्र। 'आइं' ति निपात । भ० १५ श० १ उ० ५५० सूत्र। "तक्करं एवं वयासी-अवि-आइ अहं विजया!" (सूत्र ४०×) 'अपि' संभावने 'आइं' ति भाषायाम्। ज्ञा० १ श्रु० २ अ०।

आइकडिल्ल-आदिकडिल्ल-न० । आद्यगहने, तच्चादिकडिल्लमुद्गमोत्पादनैपणारूप ज्ञानादिरूपम्। बृ०१ उ०। "कंटगमादीसु जधा, आदिकडिल्ले तधा जयनस्स"॥ ३१३ ×॥ नि० चू० ४ उ०।

आइक्ख-आङ् ख्या-धा०। अदा० पर० सेट्। सामान्येन, कथने,"आइक्खइ।' समान्येन भाषते इत्यर्थ.। औ०२७ सूत्र। सामान्येनाचष्टे। विपा० २ श्रु० १ अ० ३३ सूत्र।

आख्येय-त्रि०। कथनीये, स्था० ४ ठा० २ उ० ३६७ सूत्र।

आइक्खग(य)-आख्यायक-पुं०। शुभाशुभमाख्याय जीविकां कुर्वत्या जीविकाविशेष, ज० २ वक्ष० ३० सूत्र।

आइक्खण-आख्यान-न०। सामन्यत कथने. सहिताकर्षणपूर्वककथनं च। औ०२७ सूत्र। 'संहियकड्ढणमादिक्खण तु" ॥ ८७ ×॥ इह संहिताया अस्खलितपदोच्चारणरूपाया यदाकर्षण तत् आख्यानमुच्यते, तच्चेदम्-व्रतसमितिकषायाणां धारणरक्षणविनिग्रहा सम्यक् दण्डभयश्चोपरमो धर्म पञ्चेन्द्रियदमश्चैवं भिक्षा गत गृहस्थाना धर्मकथनार्थं सहिताकर्षणं करोति। बृ० ३ उ०।

आइक्खमाण-आचक्षाण-त्रि० । कथयति, "आइक्खमाणे"॥ १५ +॥ सत्र० १ श्रु० १४ अ०।

आइक्खिय-आख्यायिक-न० । पापश्रुतविशेष, सा च मातङ्गविद्या यदुपदेशाद्गतीनादि कथयतीति। स्था ६ ठा० ३ उ० ६७८ सूत्र।

आइक्खित्तए-आख्यातुम्-अव्य० । कथयितुमित्यर्थे, सू० २ उ० २३ सूत्र ।

आइगर-आदिकर-त्रि० । आदिं करोति अहेत्वादावपि टः । स्त्रियां ङीप् । प्रथमकारके, प्राक्सत्ताकर्त्तरि, वाच० । "तेणं कालेणं तेणं समएणं समणे भगवं महावीरे आइगरे" (सूत्र-१०×) औ० । "ते सव्वे पावाउया आदिगरा धम्माणं" (सूत्र-४१×) । सूत्र०२ श्रु०२ अ० । आदौ-प्रथमतः श्रुतधर्म्माचारादिग्रन्थात्मकं कर्म करोति तदर्थप्रणायकत्वेन प्रणयतीत्येवं शीलः । भ० १ श० १ उ० ५ सूत्र । आदिः-श्रुतधर्मस्य प्रथमा प्रवृत्तिस्तत्करणशीलः । रा० । स्वस्वतीर्थापेक्षया धर्मस्येति । कल्प०१ अधि०२ क्षण १५ सूत्र । जी० । तत्करणहेतुर्वा । ध० २ अधि० ६१ श्लोक । श्रुतधर्मस्य प्रथमप्रवृत्तिकारके तीर्थकरे च । आव० ५ अ० १ गाथा । स० । "नमोत्थु णं अरिहंताणं भगवंताणं आदिगराणं तित्थगराणं" । रा० । इहाऽऽदौ करणशीला आदिकरा अनादावपि भवे तदा तदा तत्तत्कर्माण्वादिसम्बन्धयोग्यतया विश्वस्यात्मादिगामिनो जन्मादिप्रपञ्चस्येति हृदयम्, अन्यथा-अधिकृतप्रपञ्चाऽसंभवः, प्रस्तुतयोग्यता वैकल्ये प्रक्रान्तसम्बन्धाऽसिद्धेः अतिप्रसङ्गदोषव्याघातात्, मुक्तानामपि जन्मादिप्रपञ्चस्याऽऽपत्तेः । प्रस्तुतयोग्यताऽभावेऽपि प्रक्रान्तसम्बन्धाऽविरोधादिति परिभावनीयमेतत् । न च तत्तत्कर्माण्वादेरेव तत्स्वभावतयाऽऽत्मनस्तथा सम्बन्धसिद्धिः, द्विष्ठत्वेन अस्योभयोस्तथास्वभावापेक्षितत्वात्, अन्यथा कल्पनाविरोधात्, न्यायानुपपत्तेः, न हि कर्माण्वादेस्तथाकल्पनायामप्यलोकाकाशेन सम्बन्धः, तस्य तत्सम्बन्धस्वभावत्वायोगात्, अतत्स्वभावे चाऽऽलोकाकाशे विरुध्यते कर्माण्वादेस्तत्स्वभावताकल्पनेति न्यायानुपपत्तिः, तत्स्वभावताङ्गीकरणे चास्यास्मदभ्युपगतापत्तिः, न चैव स्वभावमात्रवादसिद्धिः, तदन्यापेक्षित्वेन सामग्र्याः फलहेतुत्वात्, स्वभावस्य च तदन्तर्गतत्वेनेष्टत्वात् । निर्लोठितमेतदन्यत्र इति आदिकरत्वसिद्धिः ॥३॥ ल० । "यद्यप्येषा द्वादशाङ्गी न कदाचिन्नासीन्न कदाचिन्न भवति, न कदाचिन्न भविष्यति । अभूच्च, भवति च, भविष्यति च" इति वचनात् नित्या द्वादशाङ्गी, तथाप्यर्थापेक्षया नित्यत्वं, शब्दापेक्षया तु स्वस्वतीर्थे श्रुतधर्मादिकरत्वमविरुद्धम् । ध० २ अधि० ६० श्लोक ।

आइगुण-आदिगुण-पुं० । आदौ गुणः सप्तमीतत्पुरुषः । सहभाविनि गुणे, आव० ४ अ० १२७२ गाथा । ( सिद्धानामादिगुणा एकत्रिंशत्, ते च 'सिद्धाइगुण' शब्दे सप्तमभागे द्रष्टव्याः )

आइग्घ-आ घ्रा-धा० । आङ्, घ्रा-भ्वा० पर० अनिट् । गन्धोपादाने, तृप्तौ च । वाच० । "आघ्रराइग्घः" ॥८।४।१३॥ इति हैमप्राकृतसूत्रेणाऽऽजिघ्रतेर्वैकल्पिक आइग्घाऽऽदेशः । आइग्घइ । आग्घाअइ । जिघ्रतीत्यर्थः । प्रा० ।

आइच्च-आदित्य-पुं० । कृष्णराज्यवकाशान्तरस्थलोकान्तिकसक्तकार्चिर्मालिविमानस्थे लोकान्तिकदेवविशेषे, स्था० १ श्रु० ४ अ० ७७ सूत्र । स्था० । भ० । ग्रैवेयकविमानविशेषे, तन्निवासिनि वैमानिकदेवविशेषे च । प्रव० २६७ द्वार । समयावलिकादीनामादौ भवे, बहुलवचनात् त्यप्रत्ययः । सू० प्र० २० पाहु० १०५ सूत्र । भ० । सूर्ये, आव० ४ अ० ।

सूर्यस्यादित्यसंज्ञा यथा—

से केणट्ठेणं भंते ! एवं वुच्चइ-सूरे आइच्चे ?, सूरे आइच्चे गोयमा ! सूरादिया णं समयाइ वा आवलियाइ वा ०जाव उस्सप्पिणीइ वा अवसप्पिणीइ वा से तेणट्ठेणं गोयमा ! ०जाव आइच्चे सूरे आइच्चे सूरे । (सूत्र०४५५)

अथादित्यशब्दस्यान्वर्थाभिधानायाह—'से केणट्ठेणमित्यादि' 'सूराइय' त्ति—सूरः—आदिः—प्रथमो येषां ते सूरादिकाः के, ? इत्याह-'समयाइ व' त्ति-समयाः-अहोरात्रादिकालभेदाना निर्विभागा- अंशाः, तथाहि—सूर्योदयमवधिं कृत्वा अहोरात्रारम्भकः समयो गण्यते आवलिकामुहूर्त्तादयश्च 'से तेणमि' त्यादि, अथ तेनार्थेन सूरः-आदित्य इत्युच्यते इति आदौ अहोरात्रसमयादीना भव आदित्यः इति व्युत्पत्तेः । त्यप्रत्ययश्चेहाऽऽर्षत्वादिति । भ० १२ श० ६ उ० । सू० प्र० । चं० प्र० ।

आदित्यस्यास्तित्वम्—

णाऽऽइच्चो उएइ, ण अत्थमेइ ॥ ७ × ॥

सर्वशून्यवादिनो-ह्यक्रियावादिनः सर्वाध्यक्षामादित्योद्गमनादिकामेव क्रियां तावन्निरुन्धन्तीति दर्शयति-आदित्यो हि सर्वजनप्रतीतो जगत्प्रदीपकल्पो दिवसादिकालविभागकारी स एव तावन्न विद्यते, कुतस्तस्योद्गमनमस्तमयनं वा ? यच्च जाज्वल्यमानं तेजोमण्डलं दृश्यते तद् भ्रान्तमतीनां द्विचन्द्रादिप्रतिभासमृगतृष्णिकाकल्पं वर्त्तते । (सूत्र०।) अथैतन्मतस्य निराकरणम्-तथाहि-आगोपानाङ्गनादिप्रतीतः समस्तान्धकारक्षयकारी कमलाकरोद्घाटनपटीयानादित्योद्गमः प्रत्यहं भवन्नुपलभ्यते । तत्क्रिया च देशाद्देशान्तरावाप्त्याऽन्यत्र देवदत्तादौ प्रतीताऽनुमीयत इति । सूत्र० १ श्रु० १२ अ० । सूर्याधिष्ठिते गगने दिवानिशं वम्भ्रम्यमाणे लोकप्रकाशकरे तेजोमण्डले, "अग्नौ प्रस्ताऽऽहुतिः सम्य-गादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टि-र्वृष्टेरन्नं ततः प्रजाः" ॥ १ ॥ इति । मनुना अग्निहुतद्रव्याणां हविराज्यादीनां परमाणुमात्रतयाऽवस्थितानां दग्धशेषाणां सूर्यरश्मिकर्षणेन सूर्यलोकप्राप्त्या वृष्टिहेतुत्वमुक्तम्, तच्च मण्डलार्थपरत्व एव सम्भवति । वाच० । अर्कवृक्षे, पुं । आदित्यस्यापत्यम् ण्यः यलोपः आदित्यापत्ये, पुं० स्त्री० । वाच० । "आइच्चो य होई बोधव्वो" ॥ १५ ॥ (भाष्यगा०) । आदित्यस्यायमादित्यः पत्युत्तरपदयमादित्यादितेरिति ण्याऽपवादस्त्यक् । आदित्यस्याऽयम् । आदित्यः । ( "अनिदमि अणपवादे च दित्यादित्यादित्ययमपत्युत्तरपदात् ण्य" ॥६।१।१५॥ एभ्यः प्राग्जितयेऽर्थे इदं वर्जे अपत्याद्यर्थे यः अणोऽपवादः तद्विषये च ण्यः स्यात् । इति ण्य ः) "व्यञ्जनात्पञ्चमान्तस्थाया सरूपे वा" ॥१।३।४७॥ इति पाक्षिक एकस्य यकारस्य लोपः । आदित्यचारनिष्पन्नत्वादुपचारतो मासोऽप्यादित्यः (व्य०) । आदित्यसम्बन्धिनि तच्चारनिष्पन्ने मासादौ, स चैकस्य दक्षिणायनस्योत्तरायणस्य वा त्र्यशीत्यधिकदिनशतप्रमाणस्य षष्ठभागमानः । यदि वा-आदित्यचारनिष्पन्नत्वादुपचारतो मासोऽप्यादित्यः । व्य०१ उ० । "जस्स जओ आइच्चो, उएइ सा भवइ तस्स पुव्वदिसा" ॥ (४७×) । आचा०१ श्रु०१

अ० १ उ०। ('दिसा' शब्दे चतुर्थभागे व्याख्या द्रष्टव्या)

आइच्चगय-आदित्यगत-त्रि०। सूर्य्याऽऽक्रान्ते नक्षत्रादौ, "आइच्चगए अनिव्वाणी" ॥ रविगते नक्षत्रे शुभप्रयोजने प्रारभ्यमाणेऽसुखम्। वृ० १ उ० ॥

आइच्चजस-आदित्ययशस्-पुं०। ऋषभदेववंशजे भरतात्मजे नृपभेदे, आ० चू० १ अ०। "राया आइच्चजसे०" ॥३६३॥ आ० म० १ अ०। स्था०। स च पुण्डरीकशिखरे सिद्ध। ती० १ कल्प। आदित्ययशःप्रभृतयो भगवन्नाभेयवंशजाः त्रिखण्डभरतार्द्धमनुपाल्य पर्यन्ते पारमेश्वरीं दीक्षामतिगृह्य तत्प्रभावतः सकलकर्मक्षयं कृत्वा सिद्धिमगमन्निति। नं० ५६ सूत्र।

आइच्चपीढ-आदित्यपीठ-न०। गजपुरस्थे श्रेयांसेन कारिते आदितीर्थकरस्य रत्नमये पादपीठे, आ० म०।

तद्वक्तव्यता यथा-

"सेज्जंसो वि तत्थ ठिओ भयवं पडिलाभितो ताणि पयाणि पाएहिं मा अक्कमिस्सामि त्ति भत्तीए तत्थ रयणमयं पीढं करेइ तिसंझं च पूएइ। पव्वदिवसे विसेसेण पूइऊण भुंजइ। लोगो पुच्छइ। किमेयं-सेज्जंसो भणइ-"आइतित्थयरमण्डल" ततो लोगेण वि जत्थ जत्थ भयवं ठितो तत्थ तत्थ पीढं कयं। कालेण य "आइच्चपीढं" जायं ॥ (३४५ गाथाटी०) अक्षरगमनिका क्रियाध्याहारतः कार्य्या। यथा गजपुरं नगरमासीत् तत्र श्रेयांसः सोमयशसो राज्ञः पुत्रः, तेनेक्षुरसदानं भगवते कृतम्। तत्रार्द्धत्रयोदशहिरण्यकोटी वसुधारा निपतिता। पीढमिति यत्र भगवता पारितं तत्र तत्पादयोर्मा कश्चिदाक्रमणं कार्षीदिति श्रेयांसेन भक्त्या रत्नमयं पीठं कारितं गुरुपूजेति तदर्चनं कृतवान्। आ० म० १ अ०।

आइच्चमास-आदित्यमास-पुं०। आदित्यस्यायमादित्य आदित्यचारनिष्पन्नत्वादुपचारतो वाऽऽदित्य स चासौ मासश्च कर्मधारयसमासः। आदित्यचारनिष्पन्ने मासभेदे, स चैकस्य दक्षिणायनस्योत्तरायणस्य वा त्र्यशीत्यधिकशतदिनप्रमाणस्य षष्ठभागप्रमाणः। व्य० १ उ० ४५ गाथा।

आइच्चे णं मासे एकतीसं राइंदियाणं किंचि विसेसूणाइं राइंदियग्गेणं पण्णत्ते। (सूत्र ३१×)।

आदित्यमासो-येन कालेनादित्यो राशिं भुङ्क्ते 'किंचि विसेसूणाइं' ति-अहोरात्रार्द्धेन न्यूनानीति। स० ३१ स०।

आइच्चो खलु मासो, तीसं अद्धं च ॥२७×॥

आदित्यसंवत्सरसम्बन्धी खलु मासो भवति त्रिंशद्रात्रिन्दिवानि एकस्य च रात्रिंदिवसस्यार्धम्। तथाहि-सूर्यसंवत्सरस्य परिमाणं त्रीणि शतानि षट्षष्ट्यधिकानि रात्रिंदिवानि, द्वादशभिश्च मासैः संवत्सरस्ततस्त्रयाणां शतानां षट्षष्ट्यधिकाना द्वादशभिर्भागे हृते यथोक्तं मासपरिमाणं भवति। ज्यो० २ पाहु०।

आइच्चवण्ण-आदित्यवर्ण-त्रि०। भास्वरे, पो० १५ विव० १४ श्लोक।

आइच्चसंवच्छर-आदित्यसंवत्सर-पुं०। प्रमाणसंवत्सराणां मध्ये चतुर्थे संवत्सरविशेषे, यावता कालेन षडपि प्रावृडादय ऋतवः परिपूर्णा आवृत्ता भवन्ति तावान् कालविशेष आदित्यसंवत्सरः। उक्तं च-"छप्पि उऊ परियट्टा, एसो संवच्छरो उ आइच्चो" तत्र यद्यपि लोके षष्ट्यहोरात्रप्रमाणः प्रावृडादिक ऋतुः प्रसिद्धः, तथापि परमार्थेन स एकषष्ट्यहोरात्रप्रमाणो वेदितव्यः तथैवोत्तरकालमव्यभिचारदर्शनात् अत एवास्मिन् संवत्सरे त्रीणि शतानि षट्षष्ट्यधिकानि रात्रिंदिवानां भवन्ति। चं० प्र० १० पाहु० २० पाहु० पाहु०। तत्र त्र्यशीत्यधिकशततमोऽहोरात्रः प्रथमस्य षण्मासस्य पर्य्यवसानम्। षट्षष्ट्यधिकत्रिशततमोऽहोरात्रो द्वितीयस्य षण्मासस्य पर्यवसानम्। एष एवंप्रमाण आदित्यसंवत्सरः। चं० प्र० १ पाहु०। (एतस्य वक्तव्यता 'अहोरत्त' शब्दे प्रथमभागे गता।) ('संवच्छर' शब्दे सप्तमभागे च वक्ष्यते।) (अयमेव लक्षणप्रधानतया लक्षणसंवत्सरान्तर्गतोऽपि।)

तल्लक्षणं यथा—

**पुढविदगाणं च रसं, पुप्फफलाणं च देइ आइच्चो।**
**अप्पेण वि वासेण वि, सम्मं निप्पज्जए सस्सं ॥ ४ ॥**

पृथिव्या उदकस्य तथा पुष्पाणां फलानां च रसमादित्यसंवत्सरो ददाति, तथा अल्पेनापि-स्तोकेनापि वर्षेण वृष्ट्या सस्यं निष्पद्यते, अन्तर्भूतण्यर्थत्वात् सस्यं निष्पादयति। किमुक्तं भवति-यस्मिन् संवत्सरे पृथिवी तथाविधोदकसंपर्कादतीव सरसा भवति। उदकमपि परिणामसुन्दररसोपेतं परिणमते। पुष्पाणां च मधूकादिसंबन्धिनां फलानां च चूतफलादीनां रसः प्रचुरः संभवति। स्तोकेनापि वर्षेण धान्यं सर्वत्र सम्यक् निष्पद्यते तम्-आदित्यसंवत्सरं पूर्वर्षयः उपदिशन्ति। सू० प्र० १० पाहु० २० पाहु० पाहु०। स्था०।

आइजिण-आदिजिन-पुं०। ऋषभदेवे, हेम०। वाच०।
"नमिऊण तमाइजिणं, जस्सीसे सोहए जडामउडो।
कप्पाकप्पवियारं, पच्चक्खाणे भणिस्सामि ॥ १ ॥"
ल० प्र० ॥

आइ (दे) ज्ज-आदेय-त्रि०। आ-दा-यत्। ग्राह्ये, जं० २ वक्ष०। उपादेये, उत्त० १ अ०।

आइ (दे) ज्जमाण-आद्रियमाण-त्रि०। आर्द्रीक्रियमाणे, आचा० १ श्रु० ५ अ० ३ उ०।

आइ (दे) ज्जवक्क-आदेयवाक्य-त्रि०। ग्राह्यवाक्ये, "से सुद्धसुत्ते उवहाणवं, धम्म च जे विन्दति तत्थ तत्थ ॥ आदेज्जवक्के०" ॥२७×॥ एतद्गुणसम्पन्नश्चादेयवाक्यो भवति। सूत्र० १ श्रु० १४ अ०।

आइ (दे) ज्जवयण-आदेयवचन-त्रि०। सकलजनग्राह्यवाक्ये, दशा० १ अ०। उत्त०। स्था०।

आइ (दे) ज्जवयणया-आदेयवचनता-स्त्री०। सकलजनग्राह्यवाक्यताया ग्राह्यवचनतारूपे वचनसम्पद्भेदे, उत्त० १ अ०। स्था०।

आइञ्छ-कृष-धा०। तुदा० आ० प०। भ्वा० पर० अनिट्च। आकर्षणे, विलेखने च। वाच०। "कृषे कड्ढ-साअड्ढाञ्चाणच्छायञ्छाइञ्छाः" ॥ ८। ४। १८७ ॥ इति वा कृषेराइञ्छादेशः। आइञ्छइ। पक्षे-करिसइ। कृषते कर्षति वा। प्रा०।

कर्ष-पुं० । भावे घञ् । आकर्षणे, विलेखने च । वाच० ।

आइट्ठ-आतिष्ठ-न० । अति-स्था-क-षत्वम् । अतिष्ठस्तस्य भाव अण् । अतिक्रम्य स्थितौ, उत्कर्षे, वाच० ।

आदिष्ट-न० । आ-दिश् । भावे, आज्ञायाम् , उपदेशे च । कर्मणि क्त. । उपदिष्टे, व्याकरणप्रसिद्धे स्थानिजाते वर्णे च । त्रि० । यथा इक. स्थाने यण् आदिश्यते इति इको यणादिष्ट इत्युच्यते । आज्ञप्ते, उच्छिष्टे, अनुशिष्टे, त्रि० । वाच० । चोदिते, त्रि० । सूत्र० १ श्रु० ४ अ० १ उ० । आदेशे, भ० १२ श० १० उ० । विशेषरूपेण निर्दिष्टे, त्रि० । यथाऽयं देवदत्तोऽयं यज्ञदत्त इति । वृ० ४ उ० । आविष्टे, अधिष्ठिते, त्रि० । स्था० ५ ठा० २ उ० ।

आइट्ठि-आदिष्टि-स्त्री० । धारणायाम् , स्था० ७ ठा० ३ उ० ।

आइड्ढि-आत्मर्द्धि-स्त्री० । आत्मन ऋद्धि. षष्ठीतत्पुरुषः । स्वकीयशक्तौ, आत्मलब्धौ च । भ० १० श० ३ उ० ।

आइड्ढिय-आत्मर्द्धिक-पुं० । आत्मान एव ऋद्धिर्यस्य ६ बहु० । स्वकीयशक्तिसम्पन्ने, स्वकीयलब्धिसम्पन्ने च । भ० ।

आइड्ढीए णं भंते ! देवे ०जाव चत्तारि पंच देवावासंतराइं वीइक्कंते. तेण परं परिड्ढीए ? , हंता गोयमा ! आइड्ढीए णं तं चेव०, ( जाव ) एवं असुरकुमारे वि, णवरं असुरकुमारावासंतराइं सेसं तं चेव , एवं एएणं कमेणं०जाव थणियकुमारेऽवि, एवं वाणमंतरजोइसिए वेमाणिए०जाव तेण परं परिड्ढिए । ( सूत्र ४४१+ )

' आइड्ढीए णं ' ति-आत्मर्द्ध्या—स्वकीयशक्त्या । अथवा-आत्मन. एव ऋद्धि. यस्याऽसौ आत्मर्द्धिक. । ' देवे ' त्ति-सामान्य , ' देवावासंतराइ ' ति-देवाऽऽवासविशेषान् । ' वीइक्कंते ' त्ति-व्यतिक्रान्त. लङ्घितवान् । क्वचिद्-व्यतिव्रजतीति पाठ । भ० १ श०३ उ० । (अधिकम् ' इड्ढि ' शब्दे) ऽस्मिन्नेव भागे वक्ष्यते ।

आइणाह--आदिनाथ--पुं० । ऋषभदेवे , आ० म० १ अ० । ( वृत्तम्-' उसह ' शब्देऽस्मिन्नेव भागे वक्ष्यते )

आइणियंठ-आदिनिर्ग्रन्थ-पुं० । प्रथमनिर्ग्रन्थ पुलाके, प्रति० ।

"हिट्ठट्ठाणट्ठिओ वि, पावयणिगणट्ठयाइ अधरे उ ।
कडजोगि जं णिसेवइ, आइणियंठु व्व सो पुज्जो ॥१॥ "

अस्यार्थ —अधरे-आत्यन्तिके कार्ये समुत्पन्ने कृतयोगी-कृताभ्यासः आदिनिर्ग्रन्थ.-पुलाकः अधस्तनस्थानस्थितस्यैव पुष्टालम्बनेऽपि वैक्रियाद्यधिकारित्व न तु तत्करणप्रयोज्याधस्तनस्थानस्थितेरिति परमार्थ । प्रति० ८ श्लोक ।

आइण्ण-आकीर्ण-त्रि० । व्याप्ते ( युक्ते ) रा० । आकीर्णे, समाकुले, वृ० १ उ० । संकीर्णे , औ० । संकुले , आचा० २ श्रु ०१ चू० १ अ ० ३ उ० १७ सूत्र । "आइण्णओमाणविवज्जणा य" । आकीर्णावमानवर्जना च विहारचर्या प्रशस्ता । दश० २ चू० । आकीर्यते-व्याप्यते विनयादिगुणैरिति । जात्य अश्वविशेष च । स च जवविनयादिगुणैर्युक्त । स्था० ४ ठा० ३ उ० । "आइण्णवरतुरयसुसंपउत्ते" भ०७श०८उ० । जात्यवरतुरंग , जी० ३ प्रति० ४ अधि० । "कसं व दट्ठुमाइन्ने पावग परिवज्जए " उत्त० १ अ० । पुरुषविशेषे च । स च विनयादिगुणोपेत. । स्था० ४ ठा० ३ उ० । जवादिगुणयुक्ते अश्वे, ज्ञा० १ श्रु० १७ अ० । स्था० । विक्षिप्ते च । वाच० ।

आचीर्ण-त्रि० । आचर्यत इति । कल्पनीये, नि० चू०१ उ० । आसेविते. दर्श० १ तत्त्व । आइण्णं णाम ज माहूहिं आयरियं विणा वि ओमादिकारणेहिं गेण्हइ । नि० चू० १५ उ० । आचीर्णम्-आसेवितं, तच्च नामदि पोढा. तद् व्यतिरिक्तं द्रव्याऽऽचीर्णं सिंहादेस्तृणादिपरिहारेण पिशितभक्षणम् . क्षेत्राऽऽचीर्णं वाल्हीकेषु सक्तव । कोङ्कणेषु पेया । कालाचीर्णं त्विदम्-"सरसीचदणपको, अग्घइ सरसा य गधकासादी । पाडलिसिरीसमल्लिय, पेयाइं काले निदाहम्मि ॥१॥ " भावाचीर्णं तु ज्ञानादिपञ्चकं, तत्प्रतिपादकश्चाचारग्रन्थ । "आइण्णं जं पुण अणुण्णाय ।" आचा० १ श्रु० १ अ० १ उ० । अनुज्ञाते, नि० चू० १५ उ० । ( आचीर्णलक्षणादि 'जीयव्ववहार' शब्दे । चतुर्थभागे वक्ष्यते )

आइण्णजणमणुस्स-आकीर्णजनमनुष्य-त्रि० । मनुष्यजनेनाकीर्णे.-सकीर्णं इति मनुष्यजनाकीर्णेति वाच्ये राजदन्तादि ( ३ । १ । १४६ । हैम० ) दर्शनात्परनिपात । मनुष्यजनसंकुले, ज्ञा० १ श्रु० १ अ० । औ० ।

आइण्णट्ठाण-आकीर्णस्थान-न० । हिरण्यादिवस्तुव्याप्ते स्थाने, " आइण्णादीणि वज्जए ठाणे । " ( + ४२४ गाथा ) भिक्षार्थं प्रविष्ट साधु आकीर्णादिस्थानं परिवर्जयेत् । यत्र हिरण्यादिविक्षिप्तमास्ते तदाकीर्णस्थानं तच्च साधुना वर्जनीयम् । ओघ० ।

आइण्णणायज्झयण-आकीर्णज्ञाताध्ययन-न० । ज्ञाताङ्गस्य सप्तदशेऽध्ययने, आ० चू० ४ अ० । आव० । स० ।

आइण्णमणाइण्णकप्प-आचीर्णाऽनाचीर्णकल्प-पुं० । आसेवितेऽनासेविते आचारे, प० भा० ।

तद्वर्णनं यथा—

आइण्णमणाइण्णे, कप्पं तु गुरूवदेसेणं ॥
आहारचउक्के करण, फासणे खेत्तकालउवगरणे ।
आइण्णे आइण्णं, तव्विवरीए अणाइण्णं ॥
आहारचउक्कं खलु, असणादीयं तु होति णायव्वं ।
करणं आयरणं तु, तस्स तु जं जत्थ आइण्णं ॥
पिसितं सिंधूविसए, वाति पुण उत्तरावहाऽऽइण्णं ।
तंबोलं दभि(वि)ले(डे)सुं, एमादी खेत्तमाइण्णं ॥
काले दुब्भिक्खादिसु, न (प) लंबमादी तु मव्वमाइण्णं ।
उवगरणे आइण्णं, वोच्छामि अतो समासेणं ॥
सिंधू आयलियाइं, काला कप्पा सुरट्ठविसयम्मि ।
दुग्गुल्लादिपुंडवद्धण, महरट्ठेसुं च जलपूरा ॥
एवं जत्थाऽऽइण्णं, तहियं तु कप्पतीति आयरिउं ।
इतरत्थ कारणम्मि, फासणगहणं च परिभोगो ॥
आइण्णे चउवग्गो, ण य पीलाकारओ पवयणस्स ।
ण य मडलणा पवयणे, आइण्णं आयरे कप्पं ॥
आहारउवहिसेज्जा, मेहा चउवग्गो होंति णायव्वो ।

पवयणपीलुववातो, पिसिया ताइ मज्जया इत्ति ॥
चोदेइ का मइलणा, भएणति परिसहियाणं जे सेवे ।
सा होति मइलणा तु, जो पुण सुपरिट्ठिओ चरणे ॥
तएहो तु मलाहेती, घयति गुणेहिं य एसु जुत्तो त्ति ।
सुट्ठुकरे तप्पहितं, जो पुण करणे अजुत्तो उ ॥
तं दट्ठुं संदेहो, उप्पज्जति किएणु एम सच्छंदो ।
आऊणं उवएसो, एरिसओ देमिओ समए ॥
अह जिणकप्पियाण वि,आइसं किंचि अत्थि अह णत्थि
भएणति णत्थि कि पुण, आयरियजिणकप्पिताऽऽइस्सं॥
आहारउवहिदेहे, णिरविक्खो णवरि णिज्जरापेही ।
मंघयणविरियजुत्तो, आइसं आयरति कप्पं । पं० भा० ५ कल्प ।

इयाणि आइएण-मणाइएणकप्पा समं चेव जंति । गाहा-आहार चउक्के—आहारो चउव्विहो जत्थाऽऽइएणो तत्थ नऽत्थि दोसो । जहा-सिंधूए-पोग्गलं । उत्तरावहे-वियडं । तयोले-दमिलेसु ( द्रविडेषु )। फासुओ वत्थादि । आइएण-मणाइएणे । एवं खेत्ते, काल वि । ओमोयरियाए सव्वाइं आइएणाइं । उवगरणे जहा-सिंधूए-अलाउ । पोंडवद्धणे दुकूला । सुरट्ठाए-कालक्खलीओ । महारट्ठाणं-जलपूरगा । एवमाइ जत्थाऽऽइएणाणि तत्थ कप्पो । इयरथा कारणेण कप्पन्ति । गाहा—' आइएणे चउ ' आइएणे पुण ' चउवग्गो ' त्ति-असणाइणा य पवयणपीला भवइ । विपरिणामेण-अणाइएणं पुण वियडाइ अणुयाइसु मइलणा । एए वियडमल्ला गिहत्था वियरंति अप्पणा अणिवित्ता । तहा पोग्गले जत्थ ण चित्तं तत्थ भणइ लोगो-एएसिं नडपढियम्मिहत्थे चारेंति मा पोग्गलं खाह । अहिंसगा य होह । सव्वमेएसिं कैयवं । असब्भादियाणं एसा पीला । गाहा-का ? मइलणा प्रवचने उच्यते सूत्रार्थ.-प्रतिषेधमाचरिते सा मइलणा । करणजुत्तेसु पुण एवं नो भवइ । अहो सुट्ठु एयं । साइ अकरणजुत्तो पुण संसओ भवइ । किमेस अप्पच्छन्देण करेइ ?, उवएसो एरिसो । एवं संसओ भवइ । आह-जिणकप्पे किंचि आइएणमत्थि । गाहा—' आहारोवहि । ' उच्यते-आहारोवहिदेहेसु सो भयवं निरवेक्खो, न केवलं निज्जरा. मोक्खो बलविरियसंघयणजुत्तो आइएणं कप्पमेव आयरइ । सइ वि आइएणे जिणकप्पियपाउग्गं त आयरइ । एस आइएणकप्पो । पं० चू० ५ कल्प ।

आइएणहय-आकीर्णहय-पुं० । आकीर्णो-गुणैर्व्याप्त स चासौ हयश्च आकीर्णहय । क० म० । जात्योऽश्वविशेष, स च जवविनयादिगुणोपेत ।" आइएणहय व्व निरुवलेवे " यथा जात्योऽश्वो मूत्रपुरीषाद्यनुपलिप्तगात्र । जी० ३ प्रति० ४ अधि० ।

आइतित्थयर-आदितीर्थकर-पुं० । ऋषभदेवस्वामिनि, " भगवओ उसहसामिस्स आइतित्थयरस्स ' । नं० ४३ सूत्र ।

आइतित्थयरमंडल-आदितीर्थकरमण्डल-न० । श्रेयांसेन कारित आदितीर्थकरस्य पीठे, आ० म० १ अ० ३४५ गाथा-टी० । ( आइच्चपीढ' शब्देऽस्मिन्नेव भागे विशेषो गत. )

आइत्त-आदीप्त-त्रि० । ईषद्दीप्ते, ज्ञा० १ श्रु० १ अ० ।

आइत्ता-आदाता-त्रि० । गृहीतरि, स्था० ७ ठा० ३ उ० ।

आइत्तु-आदाय-अव्य० । गृहीत्वेत्यर्थे, आचा० १ श्रु० ४ अ० १ उ० १२७ सूत्र ।

आइद्ध-आविद्ध-त्रि० । आ-व्यध-क्त । प्रेरिते, दर्श० ४ तत्त्व । ताडिते, विद्धे छिद्रिते, क्षिप्ते च । वाच० ।

आदिग्ध-त्रि० । व्याप्ते, ज्ञा० १ श्रु० १ अ० ।

आइदाण-आदान-न० । ग्रहणे, प्रश्न० * ।

आइधम्मिय-आदिध ( धा ) र्मिक-पुं० । एतत्संज्ञया प्रसिद्धे अपुनर्बन्धकापरपर्याये प्रथमारब्धस्थूलधर्माचारे, ध० । ( धर्मसंग्रहे गृहस्थधर्मानुक्त्वैतल्लक्षणादि प्रतिपादितम् । )

अथ पूर्वोक्तगुणवत एव संज्ञाविशेषविधिं, तदवस्थाविशेषविधिं चाऽऽह—

स आदिधार्मिकश्चित्र-स्तत्तत्तन्त्रानुसारतः ।
इह तु स्वागमापेक्षं, लक्षणं परिगृह्यते ॥ १७ ॥

स.-पूर्वोक्तगुणैरुत्तरोत्तरगुणवृद्धियोग्यतावान् आदिधार्मिक -प्रथममेवारब्धस्थूलधर्माचारत्वेनादिधार्मिकसंज्ञया प्रसिद्ध , स च तानि तानि तन्त्राणि-शास्त्राणि तदनुसारतश्चित्रो-विचित्राचारो भवति । भिन्नाचारस्थितानामप्यन्त -शुद्धिमतामपुनर्बन्धकत्वाऽविरोधात्, अपुनर्बन्धकस्य हि नानास्वरूपत्वात् तत्तत्तन्त्रोक्ताऽपि मोक्षार्था क्रिया घटते । तदुक्तं योगबिन्दौ-"अपुर्बन्धकस्यैव, सम्यग्नीत्योपपद्यते । तत्तत्तन्त्रोक्तमखिल-मवस्थाभेदसंश्रयात् ॥२५१॥" इति (अस्य व्याख्या ' अणुट्ठाण ' शब्दे प्रथमभागे ३७७ पृष्ठे गता) । इह तु प्रक्रमे स्वागमापेक्षं-स्वागमानुसारि 'लक्षणं'-व्यञ्जकं प्रक्रमादादिधार्मिकस्य ' परिगृह्यते '-आश्रीयते । यो ह्यन्ये शिष्टबोधिसत्त्वनिवृत्तप्रकृत्यधिकारादिशब्दैरभिधीयते स एवास्माभिरादिधार्मिकापुनर्बन्धकादिशब्दैरिति भाव । लक्षणमित्यत्रैकवचनं जात्यपेक्षं, तल्लक्षणसंपादनविधिश्चायमुक्तो ललितविस्तरायाम्-" परिहर्त्तव्योऽकल्याणमित्रयोग. । सेवितव्यानि कल्याणमित्राणि । न लङ्घनीयोचितस्थिति , । अपेक्षितव्यो लोकमार्ग , । माननीया गुरुसंहति । भवितव्यमेतत्तन्त्रेण , प्रवर्तितव्यं दानादौ, । कर्त्तव्योदारपूजा भगवताम् । निरूपणीय साधुविशेष । श्रोतव्यं विधिना धर्मशास्त्रम् । भावनीयं महायत्नेन । प्रवर्तितव्यम्-विधानत. । अवलम्बनीयं धैर्यम् । पर्यालोचनीया आयति. । अवलोकनीयो मृत्यु । भवितव्यं परलोकप्रधानेन । सेवितव्यो गुरुजन. । कर्त्तव्यं योगपटदर्शनम् । स्थापनीयं तद्रूपादि चेतसि । निरूपयितव्या धारणा । परिहर्तव्यो विक्षेपमार्ग । यतितव्यं योगसिद्धौ । कारयितव्या भगवत्प्रतिमा. । लेखनीयं भुवनेश्वरवचनम् । कर्तव्यो मङ्गलजाप.। प्रतिपत्तव्यं चतु शरणम् । गर्हितव्यानि दुष्कृतानि । अनुमोदनीयं कुशलम् । पूजनीया मन्त्रदेवता । श्रोतव्यानि सच्चेष्टितानि । भावनीयमौदार्यम् । वर्तितव्यमुत्तमज्ञाने(ते)न । एवंभूतस्य येह प्रवृत्ति. सा सर्वैव साध्वी । मार्गानुसारी ह्यय नियमादपुनर्बन्धकादि. । तद-

-स्यैवंभूतगुणसम्पदाऽ (दोऽ) भावात्, अत आदित आरभ्यास्य प्रवृत्तिः सत्प्रवृत्तिरेव नैगमानुसारेण चित्रापि प्रस्थकप्रवृत्तिकल्पा। तदेतदधिकृत्याह —"कुठारादिप्रवृत्तिरपि रूपनिर्माणप्रवृत्तिरेव" तद्वदादिधार्मिकस्य धर्मे कार्त्स्न्येन तद्गामिनी न तद्बाधिनीति हार्दम्। तत्त्वाविरोधकं हृदयमस्य, ततः समन्तभद्रता, तन्मूलत्वात्सकलचेष्टितस्य, एवमतोऽपि विनिर्गतं तत्तद्दर्शनानुसारतः सर्वमिह योज्यं सुसमण्डितप्रवोधदर्शनादि। न ह्येव प्रवर्त्तमानो नेष्टसाधक इति। भग्नोऽप्येतद्यल्लिङ्गोऽपुनर्बन्धक इति तं प्रत्युपदेशसाफल्यम्। "नानिवृत्ताधिकारायां प्रकृतावेवंभूतः" इति कापिलाः। 'नाऽनवाप्तभवविपाक' इति च सौगताः। 'अपुनर्बन्धकास्त्वेवंभूता' इति जैनाः इति। ध० १ अधि०। ल०।

अथोक्तस्वरूपस्यादिधार्मिकस्य सद्धर्मदेशनायोग्यत्वं दर्शयति—

**स धर्मदेशनायोग्यो, मध्यस्थत्वाज्जिनैर्मतः।**
**योगदृष्ट्युदयात्सार्थं, यद्गुणस्थानमादिमम्॥ १८॥**

स -पूर्वोक्तगुणसम्पत्त्या प्रसिद्ध आदिधार्मिकः धर्मदेशनायोग्य —लोकोत्तरधर्मप्रज्ञापनार्हः जिनैः —अर्हद्भिर्मत -उपदिष्ट। कालतश्चायं चरमावर्त्तवर्त्येवेत्यनुक्तमपि ज्ञेयम्। यत उक्तम् (हरिभद्रसूरिरचिते) उपदेशपदे-

घणमिच्छत्तो कालो, एत्थ अकालो उ होइ णायव्वो।
कालो उ अपुणबंधग,-पभिई धीरेहिं णिद्दिट्ठो॥ १॥
णिच्छयओ पुण एसो, विन्नेओ गंठिभेअकालम्मि।
एयम्मि विहिसयपा-लणाउ आरोग्गमेयाओ॥ २॥"

एतद्वृत्तिर्यथा-घन-मिथ्यात्वं यत्र स तथा कालोऽचरमावर्त्तलक्षण 'अत्र' वचनौषधप्रयोगे 'अकालस्तु' अनवसर एव भवति—विज्ञेयश्चरमावर्त्तलक्षणस्तु तथाभव्यत्वपरिपाकतो बीजाधानबीजोद्भेदबीजपोषणादिषु स्यादपि काल इति। अत एवाह—'कालस्तु' अवसरः पुनरपुनर्बन्धकप्रभृतिस्तत्रादिशब्दान्मार्गाभिमुखमार्गपतितौ गृह्येते। तत्र मार्गः—चेतसोऽवक्रगमनं भुजङ्गनलिकाऽऽयामतुल्यो विशिष्टगुणस्थानावाप्तिप्रवण स्वरसवाही क्षयोपशमविशेषो हेतुस्वरूपफलशुद्धश्चभिमुख इत्यर्थः, तत्र पतितो भव्यविशेषो मार्गपतित इत्युच्यते। तदादिभावापन्नश्च मार्गाभिमुख इति। एतौ चरमयथाप्रवृत्तकरणभागभाजावेव ज्ञेयौ। अपुनर्बन्धकोऽपुनर्बन्धककाल प्रभृतिर्यस्य स तथा, धीरैर्निर्दिष्टो व्यवहारत इति॥ १॥ निश्चयतस्तु कालो ग्रन्थिभेदकाल एव, यस्मिन् कालेऽपूर्वकरणानिवृत्तिकरणाभ्या ग्रन्थिर्भिन्नो भवति तस्मिन्नेवेत्यर्थ। यतोऽस्मिन् विधिनाऽवस्थोचितकृत्यकरणलक्षणेन सदा-सर्वकाले या पालना-वचनौषधस्य तया कृत्वाऽऽरोग्यं संसारव्याधिरोधलक्षणम्, एतस्माद्-वचनौषधप्रयोगाद्भवति। अपुनर्बन्धकप्रभृतिषु वचनप्रयोग क्रियमाणोऽपि न तथा सूक्ष्मबोधविधायकोऽनाभोगबहुलत्वात्तत्कालस्य। भिन्नग्रन्थ्यादयस्तु व्यावृत्तमोहत्वेनातिनिपुणबुद्धितया तेषु तेषु कृत्येषु वर्त्तमानास्तत्कर्मव्याधिसमुच्छेदका जायन्त इति। ध० १ अधि०। ननु "गलमच्छभवविमोअग-विसन्नभोईण जारिसो एसो। मोहासुहो वि असुहो, तप्फलओ एवमेसो त्ति॥१॥" श्रीहरिभद्रवचनानुसारेण विपर्यासयुक्तत्वान्मिथ्यादृशा शुभपरिणामोऽपि फलतोऽशुभ एवेति कथमादिधार्मिकस्य देशनायोग्यत्वमित्याशङ्कायामाह—'मध्यस्थत्वात्' इति-रागद्वेषरहितत्वात् पूर्वोक्तगुणयोगादेव माध्यस्थ्योपसंपत्तेरित्यर्थः। मध्यस्थस्यैव चागमेषु धर्मार्हत्वप्रतिपादनात्, यत -" रत्तो १ दुट्ठो २ मूढो ३, पुव्विं वुग्गाहिओ ४ अ चत्तारि। एए धम्माऽणरिहा, धम्मे अरिहो उ मज्झत्थो" ॥ १॥ त्ति श्रीहारिभद्रवचनं तु कदाग्रहग्रस्ताभिग्रहिकमाश्रित्येति न विरोध। इदमत्र हृदयम्-यः खलु मिथ्यादृशामपि केषाचित्स्वपक्षनिबद्धो दूरानुबन्धानामपि प्रबलमोहत्वे सत्यपि कारणान्तरादुपजायमानो रागद्वेषमन्दतालक्षण उपशमो भूयानपि दृश्यते स पापानुबन्धिपुण्यहेतुत्वात्पर्यन्तदारुण एव, तत्फलसुखव्यामूढानां तेषां पुण्याभासकर्मोपरमे नरकादिपातावश्यभावादित्यसत्प्रवृत्तिरेवायम्। यश्च गुणवत्पुरुषप्रज्ञापनार्हत्वेन जिज्ञासादिगुणयोगान्मोहापकर्षप्रयुक्तरागद्वेषशक्तिप्रतिघातलक्षण उपशम, स तु सत्प्रवृत्तिहेतुरसद्ग्रहनिवृत्तं सदर्थपक्षपातसारत्वादिति। नन्वेवमपि स्वागमानुसारिण आदिधार्मिकस्योपपन्नं माध्यस्थ्यं परं तस्य विचित्राचारत्वेन भिन्नाचारस्थितानां तेषां स्वस्वमतनिष्ठाना कथं तदुपपद्यते? तदभावे च कथं देशनायोग्यत्वमित्यत्राह-'योगे' त्यादि-यद्यस्माद्धेतोः, तस्येति शेष, 'योगदृष्ट्युदयात्'-योगदृष्टिप्रादुर्भावात्। 'आदिमं' 'गुणस्थानं' 'सार्थम्'-अन्वर्थं भवति। अयं भावः-मिथ्यादृष्टयोऽपि परमार्थगवेषणपराः सन्तः पक्षपातं परित्यज्याद्वेषादिगुणस्था खेदादिदोषपरिहाराद्यदा संवेगतारतम्यमाप्नुवन्ति। तदा मार्गाभिमुख्यात्तेषामिक्षुरसकक्क(क्व)गुडकल्पा मित्रा तारा बला दीप्रा चेति चतस्रो योगदृष्टय उल्लसन्ति, भगवत्पतञ्जलिभदन्तभास्करादीना तदभ्युपगमात्। ( ध० ) मिथ्यादृष्टीनामपि माध्यस्थ्यादिगुणमूलकमित्रादिदृष्टियोगेन तस्य गुणस्थानकत्वसिद्धेस्तथा प्रवृत्तेरनाभिग्रहिकस्य सम्भवादनाभिग्रहिकत्वमेव तस्य देशनायोग्यत्वे शोभननिबन्धनमित्यापन्नम्। 'इत्थं चानाभोगतोऽपि मार्गगमनमेव-पङ्ग्वन्धन्यायेनेत्यध्यात्मचिन्तका' इति ललितविस्तरावचनानुसारेण यद्यनाभोगवान् मिथ्यादृष्टिरपि मिथ्यात्वमन्दतोद्भूतमाध्यस्थ्यतत्त्वजिज्ञासादिगुणयोगान्मार्गमेवानुसरति तर्हि तद्विशेषगुणयोगादनाभिग्रहिके तु सुतरां धर्मदेशनायोग्यत्वमिति भावः। ध० १ अधि० १८ श्लोक।

आइबंभ-आदिब्रह्मन्-न०। सकलजगदुत्पत्तिकारणे ब्रह्मणि, कल्प० १ अधि० ६ क्षण।

आइबंभझुणि-आदिब्रह्मध्वनि-स्त्री०। आदिब्रह्मण शब्दे, "आदिब्रह्मध्वनि किं वा, वीरवेदध्वनिर्विभौ" कल्प० १ अधि० ६ क्षण।

आइम-आदिम-त्रि०। आदौ भव। आदि-डिमच्। आदिभवे, वाच०। "पश्चादाद्यन्ताग्रादिमः"॥ ६। ३। ७५॥ इति सूत्रेण इमप्रत्यये टिलोप। प्रथमे, आव० ५ अ०। प्रव०। कर्म०।

आइमगणहर-आदिमगणधर-पुं०। प्रथमगणधरे, प्रव० १ द्वार।

आइमज्झंतकल्लाण-आदिमध्यान्तकल्याण-त्रि० । आदिमध्यावसानेषु सुन्दरे, धर्मप्रशंसामुपक्रम्योक्तम्-" सर्वागमपरिशुद्धं , यदादिमध्यान्तकल्याणम " । षो० ३ विव० ।

आइमुहुत्त-आदिमुहूर्त्त-न० । प्रथमे मुहूर्त्ते, स० ।

तत्प्रमाणं यथा—

अब्भिंतरओ आइमुहुत्ते छण्णउइअंगुलच्छाए पसत्ते ।

( सूत्र-९६+ )

अभ्यन्तराद्-अभ्यन्तरमण्डलमाश्रित्येत्यर्थः, आदिमुहूर्त्तः षण्णवत्यङ्गुलच्छाय प्रज्ञप्त । अयमत्र भावार्थः-सर्वाभ्यन्तरमण्डले यत्र दिने सूर्यश्चरति तस्य दिनस्य प्रथमो मुहूर्त्तो द्वादशाङ्गुलमानं शङ्कुमाश्रित्य षण्णवत्यङ्गुलच्छायो भवति । तथा हि-तद्दिनमष्टादशमुहूर्त्तप्रमाणं भवतीति मुहूर्त्तोऽष्टादशभागो दिनस्य भवति , ततश्च छायागणितप्रक्रियया छेदेनाष्टादशलक्षणेन द्वादशाङ्गुल शङ्कुर्गुण्यत इति ततो द्वे शते षोडशोत्तरे भवत - २१६, तयोरर्द्धो-कृतयोरष्टोत्तरं शतं भवति-१०८, ततश्च शङ्कुप्रमाणे द्वादशापनीते षण्णवति-९६ अङ्गुलानि लभ्यन्ते इति । स०९६ सम० ।

आइमूल-आदिमूल-न० । प्रधानकारणे भावमूलभेदे , आचा० ।

यथा मोक्षस्याऽऽदिमूलं विनय , संसारस्य विषय इति । तत्र मोक्षस्यादिमूलं ज्ञानदर्शनचारित्रतप. औपचारिकरूप. पञ्चधा विनयस्तन्मूलत्वान्मोक्षावाप्तेस्तथाचाह-

" विणया णाणं णाणाउ, दंसणं दंसणाहि चरणं तु ।
चरणाहिंतो मोक्खो , मोक्खे सुक्खं अणाबाहं ॥ १ ॥ "

"विनयफलं शुश्रूषा, शुश्रूषायाः फलं श्रुतज्ञानम् ।
ज्ञानस्य फलं विरति., विरते. फलं चाश्रवनिरोधः ॥ २ ॥
संवरफलं तपोबल-मथ तपसो निर्जराफलं दृष्टम् ।
तस्मात् क्रियानिवृत्ति , क्रियानिवृत्तेरयोगित्वम् ॥ ३ ॥
योगनिरोधाद् भवस-न्ततिक्षय. संततिक्षयान्मोक्ष. ।
तस्मात्कल्याणानां, सर्वेषां भाजनं विनय ॥ ४ ॥"

इत्यादि । संसारस्य त्वादिमूलं विषयकषाया । आचा० १ श्रु० २ अ० १ उ० ।

आइमोक्ख-आदिमोक्ष-पुं० । आदि'—संसारस्तस्मान्मोक्ष आदिमोक्ष । संसारविमुक्तौ, सूत्र० । धर्मकारणाना शरीरं तावदादिभूतं तस्य मोक्ष -तद्विमुक्तिर्यावज्जीवमित्यर्थ.। शरीरपरित्यागे च ।"विउंड णं जीविउ य आदिमोक्खं (२२+)" यावज्जीवम् । सूत्र० १ श्रु० ७ अ० । आदौ-प्रथमं मोक्षोऽस्येति । मोक्षायते साधौ, आदि-प्रधानं मोक्षोऽस्येति । मोक्षैकताने साधौ च । सूत्र० ।

इत्थीओ जे ण सेवंति, आइमोक्खा हि ते जणा ॥९+॥

ये महासत्त्वा कटुविपाकोऽयं स्त्रीप्रसङ्ग इत्येवमवधारणतया स्त्रिय सुगतिमार्गार्गला -संसारवीथीभूता सर्वाऽविनयराजधान्य कपटजालशताकुला-महामोहनशक्तयो 'न सेवन्ते'-न तत्प्रसङ्गमभिलषन्ति न एवंभूता जना -इतरजनातीता साधव आदौ-प्रथमं मोक्षोऽशेषद्वन्द्वोपरमरूपो येषां ते आदिमोक्षा । हुयधारणे आदिमोक्षा एव तेऽवगन्तव्या । इद तुक्तं भवति-सर्वाविनयास्पदभूत स्त्रीप्रसङ्गो यै. परित्यक्तस्त एवादिमोक्षाः प्रधानभूतमोक्षस्य पुरुषार्थोद्यता आदिशब्दस्य प्रधानवाचित्वात् । सूत्र० १ श्रु० ५ अ० ।

आइय-आचित-त्रि० । आ-चि-क्त-आप्रोते, (व्याप्ते,) ज्ञा० १ श्रु० ६ अ० । गुम्फिते, ग्रथिते , "तुलापलशतं तासां , विंशत्याभार आचित" इत्युक्तेर्भारात्मके द्विसहस्रपलमाने, ' आचितं दश भारा स्यात् , शाकटो भार आचित ' इत्युक्ते दशभारमाने , न० । शाकटभारे , । पुं० । परिमाणवाचकत्वात्तन्मितेऽपि । संगृहीते, क्षिप्ते च । वाच० ।

आइयण-आदान-न० । ग्रहणे, प्रश्न० ३ आश्र० द्वार । वाच० ।

आइयत्तिय-आदियात्रिक-पुं० । आदौ यात्राऽस्येति सार्थवाहादीनामारक्षके, वृ० ।

तस्याष्टौ भेदा यथा—

पुराणसावगसम्म-द्दिट्ठि, अहाभद्द दाणसड्ढे य ।
अणभिग्गहिए मिच्छे,अभिग्गहे अन्नतित्थी य ॥९२३॥

वृ० १ उ० । ( अस्या व्याख्या ' सत्थवाह ' शब्दे सप्तमभाग वक्ष्यते ) ( एतस्याशीतिभङ्गकाः सार्थवाहवत् ते च ' विहार ' शब्दे षष्ठ भागे ३२ अधिकाराङ्क द्रष्टव्या. )

आइ (दि) यावण-आदापन-न० । आहणे, " आदियावेंति" आदापयन्ति-ग्राहयन्ति । सूत्र० २ श्रु० १ अ० ।

आइराय-आदिराज-पुं० । ऋषभदेवे, स्था० ६ ठा० ३ उ० । ( अस्य वृत्तम् ' उसह ' शब्देऽस्मिन्नेव भागे वक्ष्यते । )

आइल-आविल-त्रि० । आ-विल् । भेदन, क० । अस्वच्छे, कालुष्ययुक्ते, सूत्र० १ श्रु० ६ अ० । अस्वच्छस्य हि जलादे. सम्यग्दृष्टिप्रसारभेदनात्तथात्वम् । भेदके, त्रि० । वाच० ।

आइल्ल-आदिम-त्रि० । आद्ये, आ० २८ गाथा । स० । सू० प्र० ।

आइल्लचन्द-आदिमचन्द्र-पुं० । उत्तरोत्तरद्वीपसमुद्रचन्द्रापेक्षया पूर्वपूर्वद्वीपसमुद्रचन्द्रे, सू० प्र० ।

तस्य तथात्वम्—

धातइसंडपभितिसु, उद्दिट्ठा तिगुणिता भवे चंदा ।
आदिल्लचंदसहिता, अणंतराणंतरे खेत्ते ॥ ३३ ॥

सू०प्र० १९ पाहु० १०० सूत्र ।

( अस्या व्याख्या ' जोइसिय ' शब्दे ४ भागे वक्ष्यते )

आइल्लसूर-आदिमसूर्य्य-पुं० । उत्तरोत्तरद्वीपसमुद्रसूर्यापेक्षया पूर्वपूर्वद्वीपसमुद्रसूर्ये सू० प्र० १९ पाहु० । ( अस्य तथात्वमत्रैव ' आइल्लचंद ' शब्दे गतम् । )

आई (ती) (दी) ण-आजिन-न० । मूषकादिचर्मनिष्पन्ने वस्त्रे, आचा० २ श्रु० २ अ० ६ उ० । द्वीपविशेषे, समुद्रविशेषे च । पुं० । जी० ३ प्रति० ४ अधि० ।

आदीन-न० । आ-समन्ताद्दीनम् । अत्यन्तदीनतायाम् , सूत्र० १ श्रु० ४ अ० १ उ० ।

आईणग-आजिनक-न० । चर्ममये वस्त्रविशेषे, रा० । तच्च स्वभावादतिकोमलं भवति । ज्ञा० १ श्रु० १ अ० । परिकर्मितकर्माणि, कर्म० २ कर्म० । ज्ञा० । आ० म० । नि० ।

। जी०। " आईणगरूयवूरणवणीयतूजफासे " भ० ११ श० ११ उ०। " आईणाणि वा आईणपवराणि वा० " ( सूत्र-१०-११-१२ + ) " अजिणं चम्मं तम्मि जे कीरंति ते ' आईणा-णि ' त्ति। नि० चू० ७ उ०।

आईणभद्द-आजिनभद्र-पुं०। आजिने द्वीपे, आजिनभद्राजिनमहाभद्रौ। आजिनद्वीपस्थे देवे, जी० ३ प्रति० ४ अधि०।

आई (दी) णभोइ (न्)-आदीनभोजिन्-पुं०। पतितपिण्डोपजीविनि, सूत्र०।

आदीणभोई वि करेति पावं,
मंता उ एगंतसमाहिमाहु ॥ ६ ॥

आदीनभोज्यपि पापं करोतीति। उक्तं च-" पिंडोलगेव दुस्सीले, णरगाओ ण मुच्चई " स कदाचित् शोभनमाहारमलभमानोऽप्रत्वादार्तरौद्रध्यानोपगतोऽध-सप्तम्यामप्युत्पद्यते, तद्यथा-असावेव राजगृहनगरोत्सवनिर्गतजनसमूहवैभारगिरिशिलापातनोद्यतः स दैवात्स्वयं पतित पिण्डोपजीवीति, तदेवमादीनभोज्यपि पिण्डोलकादिवज्जनः पापं कर्म करोतीत्येवं मत्वा-अवधार्य एकान्तेनात्यन्तेन च यो भावरूपः ज्ञानादिसमाधिस्तमाहु संसारोत्तरणाय तीर्थकरगणधरादयः। सूत्र० १ श्रु० १० अ०।

आईणमहाभद्द-आजिनमहाभद्र-पुं०। आजिनद्वीपस्थे देवे, जी० ३ प्रति० ४ अधि०।

आईणमहावर-आजिनमहावर-पुं०। आजिनसमुद्रस्थे देवे, आजिनवरसमुद्रस्थे देवे च। जी० ३ प्रति० ४ अधि०।

आईणवर-आजिनवर-पुं०। द्वीपविशेषे, समुद्रविशेषे च। आजिनसमुद्रस्थे देवे, आजिनवरसमुद्रस्थे देवे च। जी० ३ प्रति० ४ अधि०।

आईणवरभद्द-आजिनवरभद्र-पुं०। आजिनवरद्वीपस्थे देवे, जी० ३ प्रति० ४ अधि०।

आईणवरमहाभद्द-आजिनवरमहाभद्र-पुं०। आजिनवरद्वीपस्थे देवे, जी० ३ प्रति० ४ अधि०।

आईणवरोभास-आजिनवरावभास-पुं०। द्वीपविशेषे, समुद्रविशेषे च। जी० ३ प्रति० ४ अधि०।

आईणवरोभासभद्द-आजिनवरावभासभद्र-पुं०। आजिनवरावभासद्वीपस्थे देवे, जी० ३ प्रति० ४ अधि०।

आईणवरोभासमहाभद्द-आजिनवरावभासमहाभद्र-पुं०। आजिनवरावभासद्वीपस्थे देवे, जी० ३ प्रति० ४ अधि०।

आईणवरोभासमहावर-आजिनवरावभासमहावर-पुं०। आजिनवरावभाससमुद्रस्थे देवे, जी० ३ प्रति० ४ अधि०।

आईणवरोभासवर-आजिनवरावभासवर-पुं०। आजिनवरावभाससमुद्रस्थे देवे, जी० ३ प्रति० ४ अधि०।

आई (दी) णवित्ति-आदीनवृत्ति-पुं०। आ-समन्तादीनाकरुणास्पदा वृत्तिः-अनुष्ठानं यस्य कृपणवनीपकादेरित्यर्थः। अत्यन्तदीनवृत्तिके कृपणवनीपकादौ, सूत्र०।

आदीणवित्तीव करेति पावं,
मंता उ एगंतसमाहिमाहु ॥६॥

' आदीणवित्ती ' त्यादि आदीनवृत्तिरपि पापं कर्म करोतीत्येवं मत्वा एकान्तेन भावसमाधिमाहु संसारोत्तरणाय तीर्थकरगणधरादयः। सूत्र० १ श्रु० १० अ०।

आई (दी) णिय-आदीनिक-पुं०। आ-समन्तादीनमादीनं तद्विद्यते यस्मिन्। अत्यन्तदीनसत्त्वाश्रये, सूत्र०।

आदीणियं दुक्कडियं पुरत्था ॥६४॥

आदीनिकं दुष्कृतिकं पुरस्तात्-पूर्वजन्मनि यन्नरकगमनयोग्यं चरितं कृतं तत्प्रतिपादयिष्ये। सूत्र० १ श्रु० ५ अ०।

आईरण-आजीरण-त्रि०। आजि-संग्रामस्तमीरयति-प्रेरयति क्षिपति जयतीति यावत्। राज्यावस्थायां संग्रामजेतरि, संथा० ६६ गाथा।

आईल-आचील-पुं०। उद्गाले, ताम्बूलसंयन्धिनमुद्गालम्-आचीलं तत्र मुञ्चति। चीलस्य जिनमन्दिरे परित्यागे तीर्थकृदाशातना भवति। प्रव० ३८ द्वार।

आईवमाण-आदीप्यत्-त्रि०। प्रकाशमाने, महा० २ अ०।

आउ-अप्-स्त्री०। बहुव० आप्-क्विप्-ह्रस्व। वाच०। "गोणादयः"॥८।२।१७४॥ इति हैमप्राकृतसूत्रेण निपातितः। प्रा०। द्रवलक्षणे महाभूतविशेषे, " आप्त्वयोगादापस्ताश्च रूपरसस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वस्वाभाविकद्रवत्वस्नेहवेगवत्यस्तासु च रूपं शुक्लमेव, रसो मधुर एव, स्पर्शः शीत एव " इति वैशेषिकाः ( सूत्र० )। "रसतन्मात्रादापो रसरूपस्पर्शवत्य" इति. श्लेष्मासृग्द्रवलक्षणा आप " इति च सांख्याः। सूत्र० १ श्रु० १ अ० १ उ०। (एतन्निराकरणं 'महाभूय-' शब्दे षष्ठे भागे करिष्यते) "अप्सु स्थानं रसन " रसनेन्द्रियमिति। सूत्र० १ श्रु० १ अ० १ उ०। तासां जीवत्वम्-"सात्मकमम्भो भौमं, भूमिखनने स्वाभाविकसंभवात्, दर्दुरवत्"। अथवा-"सात्मकमन्तरिक्षोदकं स्वभावतो व्योमसंभूतस्य पातात्, मत्स्यवत्"। आह च-" भूमिक्खय साभाविय-संभवओ दद्दुरो व्व जलमुत्तं। ( सात्मकत्वेनेति ) अहवा-मच्छो व्व सहा-ववोमसंभूय-पायाओ " ॥ १॥ इति। स्था० १ ठा०। " आऊ वि जीवा " ॥ ७४॥ आपश्च-द्रवलक्षणा जीवा। सूत्र० १ श्रु० ७ अ०। ( ७ गाथाया व्याख्या ' कुसील ' शब्दे ३ भागे ६०६ पृष्ठे करिष्यते ) (अत्र यद्वक्तव्यं तत् ' आउकाइय ' शब्देऽस्मिन्नेव भागे द्रष्टव्यम् ) जलनामके देवविशेषे, तदधिष्ठातृके पूर्वाषाढानक्षत्रे च। आपो जलनामा देवस्तेन पूर्वाषाढानामयमिति प्रसिद्धम्। जं० ७ वक्ष०। स्था०। " पुव्वासाढा आउदेवताए " ( सूत्र-४६ × )। सू० प्र० १० पाहु० १२ पाहु० पाहु०। ननु स्वस्वामिभावसम्बन्धप्रतिपादकभावमन्तरेण कथं देवतानाम्ना नक्षत्रनाम सम्पद्यते ?, उच्यते-अधिष्ठातरि अधिष्ठेयस्योपचाराद् भवतीति। जं० ७ वक्ष०। " दो आऊ " (सूत्र-९०×) स्था० २ ठा० ३ उ०।

आतु-पुं०। अत् उण्। मेलके, उडुपे, वाच०।

आकु ( गु )-पुं०। अभिलापायाम्, आ०क० १ अ०। ( इक्खाग ' शब्देऽस्मिन्नेव भागेऽस्य व्युत्पत्तिः )

आयुस्-न०। प्रतिसमयं भोग्यत्वेनायातीत्यायुः। नि० चू० ११

उ० । स्वकीयावसरे एति च, आयाति चेत्यायु । स्था० ४ ठा० २ उ० । उत्त० । एति-गच्छत्यनेन गत्यन्तरमित्यायु , यद्वा-एति-आगच्छति प्रतिबन्धकता स्वकृतकर्मावाप्तनरकादिदुर्गतेर्निष्क्रमितुमनसोऽपि जन्तोरित्यायु. । उभयत्राप्यौणादिको ऽणुस्प्रत्यय.। यद्वा-आयाति भवाद्भवान्तरं संक्रमतां जन्तूनां निश्चयेनोदयमागच्छतीति पृषोदरादित्वादायु शब्दसिद्धि । यद्यपि च सर्वं कर्मोदयमायाति तथाऽप्यस्यायुषो विशेषो, यत शेष कर्मबद्धं सत्किञ्चित्तस्मिन्नेव भवे उदयमायाति, किंचित्तु-प्रदेशोदयभुक्तं जन्मान्तरेऽपि स्वविपाकेन उदयमायात्येव इत्युभयथाऽपि व्यभिचार. आयुषि त्वय नास्ति बद्धस्य तस्मिन्नेव भवे वेदनात् जन्मान्तरसंक्रान्तौ तु स्वविपाकतोऽवश्यं वेदनादिति विशिष्टस्यैवोदयागमनस्य विवक्षितत्वात्स्य वायुष्येव सद्भावात्तस्यैवैतन्नाम । अथवा-आयान्त्युपभोगाय तस्मिन्नुदिते सति तद्भवप्रायोग्याणि सर्वाण्यपि शेषकर्माणीत्यायु । कर्म० १ कर्म० । प्रव० । अथवा-आ-समन्तादिति—गच्छति भवाद्भवान्तरसंक्रान्तौ जन्तूना विपाकोदयमित्यायु । पं०सं० २ द्वार । दशा० । जीवितविपाकवेद्ये भवोपग्राहिणि कर्मविशेषे, जं० ४ वक्ष० । उत्त० । विशे० । एतद्रूपं च-" दुक्खं न देइ आऊ न वि य सुहं देइ चउसु वि गईसु । दुक्खसुहाणाऽऽधार, धरेइ देहट्ठियं जीवं ॥ १ ॥ " इति । स्था० २ ठा० ४ उ० । आयुर्भवस्थितिहेतव. कर्मपुद्गला । आचा० १ श्रु० २ अ० १ उ० । जीविते, स्था० ८ ठा० ३ उ० । तच्च चिरकाल शरीरसंबन्ध. । तं० । स्था० ।

विषयसूचनार्थमधिकाराङ्का —

(१) आयुषो नामादिभेदतो दशविधत्वम् ।
(२) आयुष अतिप्रियत्वम् ।
(३) आयुष पूर्वनिर्गतायुष पुनरनागमनं च ।
(४) सर्वेषामायुष अल्पत्वमनित्यत्वं च ।
(५) आयुष सप्तधा भेदनं तदुदाहरणानि च ।
(६) आयुष सोपक्रमनिरुपक्रमभेदाद् द्वैविध्यम् ।
(७) आयुषोऽल्पदीर्घशुभादिभेदाद्बहुविधत्वं,तत्कारणानि च ।
(८) आयुष्कर्मणो जीवितहेतुत्वम् ।
(९) आयुषो द्विविधत्वं प्रकारान्तरेण ।
(१०) प्रत्याख्याना-प्रत्याख्यानतदुभयनिर्वर्तितायुष्कत्वं जीवानाम् ।
(११) जीवानामाभोगाऽनाभोगनिर्वर्तितायुष्कत्वमायुषश्चातुर्विध्य च ।
(१२) अनन्तरोपपन्नकादीना नैरयिकादीनामायु ।
(१३) असंज्ञिजीवानामायु ।
(१४) एकान्तबालैकान्तप.ण्डितबालपण्डितानामायु ।
(१५) क्रियावाद्यादिजीवाना सलेश्यादिजीवाना चायु. ।
(१६) कृष्णपाक्षिक.डिम्ध्यग्दृष्ट्यादिक्रियावाद्यादिजीवानामायु ।
(१७) ज्ञानिनामज्ञानिना विभङ्गज्ञानिनां सवेदकादेरक्रियावाद्यादिजीवाना, क्रियावाद्यादिनैरयिकादीना चाऽऽयु ।
(१८) अनन्तरोपपन्नकाऽऽदिक्रियावाद्यादीनामायु ।
(१९) भविकजीवाना नैरयिकादिषूपपद्यमानाना सायुष्कत्वम् ।
(२०) भविकजीवाना नैरयिकादिषूपपद्यमानानामायुष्कारणप्रतिसंवेदनादि ।
(२१) अनन्तरमुद्वृत्योत्पद्यमाननैरयिकादीनामयुष्प्रतिसंवेदनादि ।

(१) तत्रायुर्नामादिभेदतो दशधा । तद्यथा—

"नामं ठवणा दविए,
ओहे भव तब्भवे य भोगे य ।
संजमे जस अ कित्ती,
जीवियं च तं भण्णई दसहा ॥ १ ॥"

तत्र नामस्थापने सुगमे । 'दविए' त्ति-द्रव्यमेव सचेतनादिभेदं जीवितव्यहेतुत्वाज्जीवितं द्रव्यजीवितम् । ओघजीवितम् नारकादिविशेषणायुर्द्रव्यमात्र सामान्यजीवित भवति, नारकादिभवविशिष्ट जीवितं भवजीवितं नारकजीवितमित्यादि, 'तब्भवेय' त्ति-तस्यैव पूर्वभवस्य समानजातीयतया सम्बन्धिजीवितं तद्भवजीवितम्, यथा मनुष्यस्य सतो मानुषत्वेनोत्पन्नस्येति, भोगजीवितं चक्रवर्त्यादीनाम्, संयमजीवितं साधूना, यशोजीवितं-कीर्त्तिजीवितं च यथा महावीरस्येति, जीवितश्चायुरेवेति । स्था० १ ठा० १ सूत्र टी० ।

(२) आयुश्च सर्वेषामतिप्रियं तथैवोक्तम्—

" तृणायापि न मन्यन्ते, पुत्रदारार्थसम्पद. ।
जीवितार्थे नरास्तेन, तेषामायुरतिप्रियम् ॥१॥" इति । स्था० १ ठा० १ सूत्र टी० । संथा० ।

**सव्वे पाणा पियाउया सुहसाया दुक्खपडिकूला अप्पियवहा पियजीविणो जीविउकामा सव्वेसिं जीवियं पियं । ( सूत्र-८०+)**

प्राणशब्देनात्राभेदोपचारात्तद्वन्त एव गृह्यन्ते सर्वे प्राणिनो जन्तव प्रियायुष प्रियमायुर्येषां ते प्रियायुष । ननु च सिद्धैर्व्यभिचार., न हि ते प्रियायुषस्तदभावात्; नैष दोषो, यतो मुख्यजीवादिशब्दव्युदासेन प्राणशब्दस्योपचरितस्य ग्रहणं संसारिप्राण्युपलक्षणार्थमिति । यत्किञ्चिदेतत् । ( आचा० ) 'जीविउकामा' यत एव प्रियजीविनोऽत एव दीर्घकाल जीवितुकामा दीर्घकालमायुष्काभिलाषिणो दु खाभिभूता अप्यन्त्यां दशामापन्ना जीवितमेवाभिलषन्ति, उक्तञ्च-"रमइ विहवी विसेसे ठिइमेत्तं थेव वित्थरो महइ । मग्गइ सरीरमहणो. रोगी जीए विय कयत्थो ॥१॥ " तदेवं सर्वोऽपि प्राणी सुखजीविताभिलाषी । (आचा०) कस्य कियदायुरिति जिज्ञासाया चतुर्थभागस्थ 'ठिइ' शब्दो वीक्षणीय ) प्राणिना जीवितमत्यर्थं दयितमित्यतो भूयो भूयस्तदेवापदिश्यत इत्यत आह- सव्वेसिं ' त्यादि-सर्वेषामपि प्राणिनां 'जीवितम्' असंयमजीवितं प्रियं दयितम् । आचा० १ श्रु० २ अ० ३ उ० ।

**जीवियं पुढो पियं इहमेगेसिं माणवाणं खेत्तवत्थुममायमाणाणं आरत्तं विरत्तं मणिकुंडलं सह हिरण्णेण इत्थियाउ परिगिज्झ तत्थेव रत्ता ण एत्थ तवो वा दमो वा णियमो वा दिस्सइ संपुण्णं बाले जीविउकामे लालप्पमाणे मूढे विप्परियासमुवेति । ( सूत्र-७९+ )**

'जीवितम्'-आयुष्कानुपरमलक्षणमसंयमजीवित वा पृथगिति प्रत्येक प्रतिप्राणि प्रिय-दयित वल्लभम् 'इह' त्ति-अस्मिन् संसारे एकेषाम्-अविवेकोपहतचेतसां मानवानामिति उपलक्ष-

णार्थत्वात् प्राणिनां, तथाहि-दीर्घजीवनार्थं तास्ता रसायनादिका सत्त्वोपघातकारिणीः क्रिया कुर्वते। आचा० १श्रु० २ अ० ३ उ०।

( ३ ) आयु पुष्टिश्च यथा भवति तथा—

णिद्धमधुरेहि आओ, वड्ढति देहिंदिया मेहा।
अत्थति जत्थ णत्थति, सट्ठातिसु वीहगादीया ॥२५८॥

चोदक आह-कथमायुष पुष्टि ?, आचार्य आह। यथा देवकुरोरुत्तरासु क्षेत्रस्य स्निग्धगुणत्वादायुषो दीर्घत्वं सुषमसुषमायां च कालस्य स्निग्धत्वाद् दीर्घत्वमायुषस्तथा-इहापि स्निग्धमधुराहारत्वात् पुष्टिरायुषो भवति । सा च न पुद्गलवृद्धेः, किंतु-युक्तग्रासग्रहणात्, क्रमेण भोगेनेत्यर्थः । नि० चू० ११ उ०।

गत चायुर्न पुनरावर्त्तते। उक्तं च-
" भवकोटीभिरसुलभं, मानुष्य प्राप्य कः प्रमादो मे।
न च गतमायुर्भूयः, प्रत्येत्यपि देवराजस्य " ॥ १ ॥
' नो ' नैव संसारे सुलभ-सुप्रापं संयमप्रधानं जीवितं, यदि वा-जीवितम्-आयुस्त्रुटितं सत् तदेव संधातु न शक्यते, इति वृत्तार्थः । सूत्र० १ श्रु० २ अ० १ उ०।

( ४ ) अल्पमनित्यं चायुः सर्वेषाम्। तत्रानित्यत्व यथा-

दुमपत्तए पंडुरए, जह निवडइ राइगणाण अच्चए।
एवं मणुआण जीवियं, समयं गोयम ! मा पमायए॥१॥

( अस्या गाथाया व्याख्या ' जीविय ' शब्दे चतुर्थभागे १५६ पृष्ठे वक्ष्यते ) उत्त० १० अ०।

जीवशतब्देन शरीरमुच्यते। यदाह निर्युक्तिकारः—

परियट्टिय लावन्नं, चलंतसंधिं मुअंतविंटग्गं।
पत्तं च वसणं पत्तं, कालप्पत्तं भणइ गाहं॥ ३०७॥
जह तुब्भे तह अम्हे, तुब्भे वि अ होहिहा जहा अम्हे।
अप्पाहेइ पडंतं, पडुअपत्त किसलयाणं॥ ३०८॥
न वि अत्थि न वि अ होही, उल्लावो किसलपण्डुपत्ताणं।
उवमा खलु एस कया, भवियजणविबोहणट्ठाए ॥३०६॥

उत्त० पाई० १० अ०।

( आसा गाथानां व्याख्या 'दुमपत्त' शब्दे चतुर्थभागे द्रष्टव्या। ) यथा हि किशलयाणि पाण्डुपत्रेण अनुशिष्यन्ते तथा अन्योऽपि यौवनगर्वितोऽनुशासनीयः ।

अथाऽऽयुषोऽनित्यत्वमाह—

कु(कू)सग्गे जह ओसबिंदुए, थोव चिट्ठइ लंबमाणए।
एवं मणुयाण जीवियं, समयं गोयम ! मा पमायए ॥२॥

हे गौतम ! समयमात्रमपि मा प्रमादीः । तत्र हेतुमाह । यथा-कुशस्याग्रे अवश्यायबिन्दुर्लम्बमान सन् स्तोक-स्तोककाल तिष्ठति वातादिना प्रेर्यमाण सन् पतति तथा मनुष्याणां जीवितम्-आयुरस्थिरं क्षयम्। एव आयुषोऽनित्यत्वं ज्ञात्वा धर्मे प्रमादो न विधेय इत्यर्थः । उत्त० १ अ० ।
' आयुषि बहूपसर्गे, वाताहतसलिलबुद्बुदानितरं। उच्छ्वस्य निश्वसिति यः, सुप्तो वा विबुध्यत तच्चित्रम् " ॥१॥ पं० सू० ३ सूत्र टी०।

आयुष अल्पत्वं यथा—

अप्पं च खलु आउयं इहमेगेसिं माणवाणं। (सूत्र ६२+)

अल्पं-स्तोक चशब्दोऽधिकवचन, खलुरवधारणे, आयुरिति—भवस्थितिहेतव कर्म्मपुद्गला । ' इहे ' ति-संसारे-मनुष्यभवे-एकेषां-केषाचिदेव मानवानां-मनुजानामिति पदार्थो, वाक्यार्थ —' इह ' अस्मिन् संसारे केषांचिन्मनुजानां क्षुल्लकभवोपलक्षितान्तर्मुहूर्त्तमात्रमल्पं स्तोकमायुर्भवति । चशब्दादुत्तरोत्तरसमयादिवृद्ध्या पल्योपमत्रयावसानेऽप्यायुषि तत्र खलुशब्दस्यावधारणार्थत्वात्संयमजीवितमल्पमेवेति। तथा हि-अन्तर्मुहूर्तादारभ्य देशोनपूर्वकोटिं यावत्संयमायुष्कं तच्चाल्पमेवति । अथवा-त्रिपल्योपमस्थितिकमप्यायुरल्पमेव, यतस्तदप्यन्तर्मुहूर्तमपहाय सर्वमपवर्त्तत । उक्तञ्च—

" अद्धा जाणुक्कोसे, बंधित्ताभोगभूमिए सुलहुं ।
सव्वप्पजीवियं व-ज्जइ तु उव्वट्टिया दोण्ह ॥ १ ॥ "

अस्यायमर्थः -उत्कृष्टे योगे-बन्धाध्यवसायस्थाने आयुषो यो बन्धकालोऽद्धा(समयः) उत्कृष्ट एव त बध्वा क भोगभूमिकेषु देवकुर्वादिजेषु, तस्य क्षिप्रमेव सर्वाल्पमायुर्वर्ज्जयित्वा द्वयो -तिर्यग्मनुष्ययोरपवृत्तिका अपवर्त्तनं भवति, एतच्चापर्याप्तकान्तर्मुहूर्त्तान्तर्द्रष्टव्यं, तत ऊर्ध्वमनपवर्त्तनमेवेति । (आचा० ) उक्तञ्च—

"स्वतोऽन्यत इतस्ततोऽभिमुखधावमानापदा-
महो निपुणाता नृणा क्षणमपीह यज्जीवितम्।
मुखे फलमतिक्षुधा सरसमल्पमायोजितं,
कियच्चिरमचर्वितं दशनसंकटान्ये स्थितम् ? ॥ १ ॥
उच्छ्वासावधयः प्राणा, स चोच्छ्वास समीरणात्।
समीरणं च चलनात्, क्षणमप्यायुरद्भुतम् ॥ २ ॥ "

इत्यादि। येऽपि दीर्घायुष्कस्थितिका उपक्रमणकारणाभावे आयु स्थितिमनुभवन्ति तेऽपि मरणादप्यधिकां जराभिभूतविग्रहा जघन्यतरामवस्थामनुभवन्ति। आचा० १ श्रु० २ अ० १ उ०।

वर्षशतायुष्कस्यायुषोऽल्पत्वमेव। तद्यथा—

आउसो से जहानामए केइ पुरिसे ण्हाए कयवलिकम्मे कयकोउयमंगलपायच्छित्ते सिरसि ण्हाए कंठे मालाकडे आविद्धमणिसुवन्ने अहयसुमहग्घवत्थपरिहिए चंदणोक्किन्नगायसरीरे सरससुरहिगंधगोसीसचंदणाणुलित्तगत्ते सुइमालावन्नगविलेवणे कप्पियहारद्धहारतिसरयपालंबपलंबमाणे कडिसुत्तयसुकयसोहे पिणद्धगेविज्जअंगुलिज्जगललियंगयललियकयाभरणे नाणामणिकणगरयणकडगतुडियथंभियभुए अहियरूवसस्सिरीए कुंडलुज्जोवियाणणे मउडदित्तसिरए हारुत्थयसुकयरइयवत्थे पालंबपलंबमाणसुकयपडउत्तरिज्जे मुद्दियापिंगलंगुलिए नाणामणिकणगरयणविमलमहरिहनिउणोवियमिसमिसंतविरइयसुसिलिट्ठविसिट्ठलट्ठआविद्धवीरवलए। किं बहुणा कप्परुक्खो विव अलंकियविभूसिए सुइपयए भवित्ता अम्मापियरो

अभिवादइज्जा। तए णं तं पुरिसं अम्मापियरो एवं वइज्जा-जीव पुत्ता! वाससयंति तं पियाइं तस्स नो बहुयं भवइ कम्हा वाससयं जीवंतो वीसं जुगाइं जीवइ १, वीसं जुगाइं जीवंतो दो अयणसयाइं जीवइ २, दो अयणसयाइं जीवंतो छ उऊसयाइं जीवइ ३, छ उऊसयाइं जीवंतो वारसमाससयाइं जीवइ ४, वारसमाससयाइं जीवंतो चउवीसं पक्खसयाइं जीवइ ५, चउवीसं पक्खसयाइं जीवंतो छत्तीसं राइंदिअसहस्साइं जीवंति छत्तीसं राइंदियसहस्साइं जीवंतो दसअसीयाइं मुहुत्तसयसहस्साइं जीवइ ६, दस असीयाइं मुहुत्तसयसहस्साइं जीवंतो चत्तारि ऊसासकोडिसए सत्त य कोडिओ अडयालीसं च सयसहस्साइं चत्तालीसं च सहस्साइं जीवइ ७। (सूत्र-१६+)

अथ यदि तस्य पुत्रस्य वर्षशतप्रमाणमायुः स्यात्तदा सजीवति, नान्यथेति, तदपि च आयुः 'आई' ति-अलंकारे तस्य-वर्षशतायुः पुरुषस्य न बहुकं-वर्षशताधिकं भवति. कस्मात्? यस्माद्वर्षशतं जीवन् विंशतियुगानि एव जीवति, निरुपक्रमायुष्कत्वात् १. विंशतियुगानि जीवन् पुरुषो द्वे अयनशते जीवति २, द्वे अयनशते जीवन् जीवः षड्ऋतुशतानि जीवति ३, षड्ऋतुशतानि जीवन् जन्तुः द्वादश मासशतानि जीवति ४, द्वादश मासशतानि जीवन् प्राणी चतुर्विंशतिपक्षशतानि २४०० जीवति ५, चतुर्विंशतिपक्षशतानि जीवन् षट्त्रिंशदहोरात्रसहस्राणि ३६००० जीवति रुरव. ६, षट्त्रिंशदहोरात्रसहस्राणि जीवन् असुमान् दश मुहूर्तलक्षाणि अशीतिमुहूर्तसहस्राणि १०८०००० जीवति ७, दशलक्षमुहूर्तानि अशीतिमुहूर्तसहस्राणि जीवन् देहधारी चत्वारि उच्छ्वासकोटिशतानि सप्तकोटिः अष्टचत्वारिंशच्छ्वसनसहस्राणि चत्वारिंशत्सहस्राणि च ४०७४८४०००० जीवति देहभृत् ८। तं०।

(५) आयुश्च सप्तधा भिद्यते। तद्यथा—

अज्झवसाणनिमित्ते, आहारे वेयणापराघाए।
फासे आणापाणू, सत्तविहं भिज्जए आउं॥ २०४१॥

अनिष्टहर्षविषादात्मकमधिकमवसानं चिन्तनमध्यवसानं तस्मान्निमित्तं-खण्ड्यत-उपक्रम्यते आयुः-अतिशयेन हृदयसंरोधात्। अथवा-रागस्नेहभयभेदादध्यवसानं त्रिधा, तस्माद्वायुर्भिद्यते (विशे०) निमित्ते दण्डकशादिकं वक्ष्यति, तत्र च सत्यायुर्भिद्यते। तथा-आहारे समधिके अभ्यवहृते, वेदनायां, चातिशयवत्यां, शिरोऽक्षिकुक्ष्यादिप्रभवायां, पराघाते च गर्त्तपातादिसमुत्थे, तथा-स्पर्शे भुजङ्गादिसम्बन्धिनि, तथा-प्राणापानयोश्च निरोधे सत्यायुर्भिद्यत। इति एवं सप्तविधं-सप्तभिः प्रकारैः प्राणिनामायुर्भिद्यते-उपक्रम्यते इति। विशे०।

एतेषां क्रमेणोदाहरणानि। तत्र रागाद्यध्यवसानेन क्षीयते आयुः—

"एकस्य कस्यचिद् गावो, ह्रियन्ते स्म मलिम्लुचैः।
पालनाय गवां जग्मुः, पत्तयस्तस्करानु॥ १॥
वालना वालयित्वा गा-स्तत्रैकस्तरुणः पुमान्।
गृहीताङ्ग इवानङ्ग-स्तृषितो ग्राममध्यगात्॥ २॥
तत्रैका ग्रामतरुणी, तमपीप्यत्पयः परम्।
शिरो धूनयतोऽप्यस्य, निवृत्त्यै न न्यवर्त्तत॥ ३॥
स उत्थाय युवा यातो-स्सा तु तद्रूपमोहिता।
अनुरागमहाधूर्त्त-क्षिप्तचूर्णेव तद्वशा॥ ४॥
निर्ध्यायन्ती तमद्यास्थात्, तन्मयत्वमिवेयुषी।
अदृश्यत्वे गते तस्मि-स्तस्याः प्राणास्तमन्वगुः॥ ५॥"

स्नेहाध्यवसानेनाप्यायुः क्षीयते—

"एकस्य वणिजो यूनः, प्रेयसी प्रौढयौवना।
द्वयोरपि तयोः स्नेहः, कोऽपि वाचामगोचरः॥ १॥
स वाणिज्याय गत्वाऽथ, प्रत्यावृत्तः समेष्यति।
एकाहेन निजावासं, यावत्तावत्परस्परम्॥ २॥
वयस्याश्चिन्तयामासुः, स्नेहः सत्योऽनयोर्न वा।
पूर्वमेकस्ततो गत्वा, तस्य कान्तामवोचत॥ ३॥
मृतस्तव पतिर्भद्रे!, श्रुत्वा वज्राहतेव सा।
सत्यं सत्यमिदमिति पृष्ट्वा वारत्रयं मृता॥ ४॥
तत्स्वरूपं च वणिजे कथितं सोऽपि तत्क्षणात्।
एकोऽपि प्राप पञ्चत्व-मेवं प्रेम्णायुषः क्षयः॥ ५॥"

भयाध्यवसानेनाप्यायुः क्षीयते. यथा—

"नगरी द्वारवत्यासी-त्स्वर्णा स्वर्णमयालया।
अन्तः समुद्रमौर्वाग्नि-र्भेजे यत्प्रतिबिम्बताम्॥ १॥
जेतुं पौराङ्गनास्येन्दून्, यत्र स्वप्रतिपन्थिनः।
स चन्द्रमेनश्चन्द्रोऽस्थात्, शालशीर्षावलीमिषात्॥ २॥
वासुदेवोऽभवत्तत्र, वसुदेवनृपाङ्गजः।
देवकीकुक्षिकासार-कलहंसः क्षितीश्वरः॥ ३॥
द्विषः पौरुषवन्तोऽपि यद्बलैरबलाः कृताः।
सापत्न्यत्यासकरणा-ज्जिज्ञे सुप्तापि ते स्फुटम्॥ ४॥
सुतु स्तनंधयं धाप-यन्तीं स्त्रीं वीक्ष्य काञ्चन।
अधृतिं देवकी चक्रे पृष्टारिष्टारिणा क्षणात्॥ ५॥
अधृतिं किं विधत्सेऽम्ब!, तयोक्तं जातु मे।
तनूजेन न वक्षोज—पयः केनाप्यपीयत॥ ६॥
वासुदेवोऽवदन्मात!, मा कार्षीस्त्वमिहाधृतिम्।
कारयिष्यामि ते पुत्र-प्राप्तिमाराध्य देवताम्॥ ७॥
देवताऽऽराधिताऽवादी-द्दिव्यः सूनुर्भविष्यति।
अभूच्च तनुभूस्तस्या, नान्यथा देवतावचः॥ ८॥
गजसुकुमाल इति, नाम चक्रे कृतोत्सवम्।
सुता सोमिलविप्रस्य, स युवा पर्यणाययत॥ ९॥
सोऽन्येद्युः स्वामिनो नेमेः, श्रुत्वा धर्ममभूद् यती।
विजह्रे स्वामिना सार्द्धं, सेर्ष्यस्तस्मिन्नभूद् द्विजः॥ १०॥
क्रमेण प्रभुभिः साकं, द्वारिकां पुनरागमत्।
प्रभुं पृष्ट्वा पितृवने, कायोत्सर्गेण संस्थितः॥ ११॥
तथास्थं तत्र दृष्ट्वा तं, रुष्टो दुष्टो द्विजस्ततः।
निवेश्य कण्टकं मूर्ध्नि, चिताङ्गारैरपूरयत्॥ १२॥
तत्कष्टं सहमानस्यो-त्पन्नं केवलमुज्ज्वलम्।
अन्तकृत्केवलित्वेन, तदैव प्राप निर्वृतिम्॥ १३॥
विष्णुः प्रातः प्रभुं नत्वा, साधूंश्चापृच्छदच्छधीः।
क मे बन्धुः प्रभुः स्माह, निश्रयस्यात्मातमां वद्धि॥ १४॥
वासुदेवो गतस्तत्र, परासुमवलोक्य तम्।

कुपितः प्रभुमप्राक्षी-त्केनामारि प्रभुर्जगौ ॥ १५ ॥
विशन्तं स्वां पुरीं दृष्ट्वा , यस्य शीर्षं स्फुटिष्यति ।
कुटुम्बं प्रेष्य विप्रोऽपि , स्वयं याचन्निरेति सः ॥ १६ ॥
तावद् दृष्टो विशन् विष्णु-स्ततोऽ तिभयसंभ्रमात् ।
ययौ पतितवत्कुम्भ-स्तन्मुण्डं शतखण्डताम् ॥ १७ ॥
आ० क० १ अ० । आ० म० । ( विस्तरतो गजसुकुमारकथा-' गजसुकुमाल ' शब्दे तृतीयभागे वक्ष्यते )

निमित्तादप्यायु क्षीयते, तच्चानेकधा—

दंड-कस-सत्थ-रज्जू , अग्गी-उदगपडणं विसं वाला ।
सीउण्हं अरइ भयं, खुहा पिवासा य वाही अ ॥७२५॥
मुत्तपुरीसनिरोहे , जिन्नाजिन्ने अ भोअणे बहुसो ।
घंसण घोलण पीलण , आउस्स उवक्कमा एए ॥७२६॥

दण्ड कष शस्त्र रज्जव अग्न्युदकयोः पतन विष व्याला -सर्पा शीतोष्णम् अरतिभयं क्षुत्पिपासा च व्याधिश्च मूत्रपुरीषनिरोध जीर्णाजीर्णे च भोजने बहुश. घर्षणं चन्दनस्येव घोलनं अङ्गुष्ठाङ्गुलिभ्यां यूकाया इव पीडनमित्यादेरिव आयुष उपक्रमरूपत्वादुपक्रमा एते । कारणे कार्योपचाराद् यथा तण्डुलान्वर्षति पर्जन्य., यथा च-आयुर्घृतम् । ( आ०क० १ अ० ) कथं दण्डादय उपक्रमहेतव इति चेत् , उच्यते-दण्डेन गाढमभिघाते , कशया-शस्त्रखड्गादिना , रज्ज्वा गलादौ बन्धे , अग्निना परिदाहे , उदके सर्वस्रोतसामन्त पूरणे , विषे भक्षिते , व्याला -सर्पास्तैर्दशने , शीतोष्णेन च संस्पर्शत. , अरत्या भयेन चान्तर्मनसि पीडासमुत्पत्तौ , क्षुधया अभक्षणे , पिपासया हृदयगलतालुशोषणे , मूत्रपुरीषनिरोधे शरीरक्षोभत. , जीर्णाजीर्णे नाम अर्द्धजीर्णे तस्मिन् सति अनेकशो भोजने रसोपचयात् , घर्षणं-चन्दनस्येव घोलनम्-अङ्गुष्ठकाङ्गुलिगृहीतचाल्यमानयूकाया इव तस्मिन् ,पीडनमित्यादेस्तस्मिन्नपि सति, भिद्यते आयुरित्येते सर्वेऽप्युपक्रमहेतव. । (आ० म०१ अ० ॥७२५॥७२६॥ गाथाटी०) नन्वध्यवसानादीन्यपि निमित्तान्येवायुषोऽपक्रमस्य तत्कोऽत्र भेद. ? सत्यं, किं (न्त्वान्त) त्वितरेतरविचित्रोपाधिभेदेन भेदाद्विस्तरप्रियविनयानुग्रहार्थत्वाद्वा न दोष । विशे० २०४३ गाथाटी० ।

आहारादिभिरप्यायुर्भिद्यते—

"बहुरेको दिने कृत्वा, वारानष्टादशाशनम् ।
शूलेन म्रियते स्माशु, मृतश्चान्य' क्षुधा पुन ॥ १ ॥
दृग्वेदनादिभिर्जाता, भूयांसोऽपि गतायुष. ।
विद्युदाद्युपघाताच्च, श्रूयन्ते बहवो मृता ॥ २ ॥
स्पर्शोऽप्यायु क्षयाय स्या-द्यथा त्वग्विषभोगिन ।
स्त्रीरत्नस्येव संस्पर्शो, यदि वा चक्रवर्त्तिन ॥ ३ ॥
ब्रह्मदत्ते मृतिं प्राप्ते, द्वादशे चक्रवर्तिनि ।
स्त्रीरत्नं तत्सुतोऽवादी-द्भोगान् भुङ्क्ष्व मया सह ॥ ४ ॥
तयोक्तं न मम स्पर्श , सह्यस्ते चक्रिणं विना ।
तं प्रत्याययितु वाजी, मुखाद्यावत् कटिं तया ॥ ५ ॥
स्पृष्ट. करेण तत्कालं, गलद्रेत. क्षयान्मृत ।
तथाऽप्यप्रत्यये तस्य, कृत्वा लोहमयं नरम् ॥ ६ ॥
परिरेभे सरन्ते च, दैवादाशु व्यलीयत ।
ततोऽभूत्प्रत्ययस्तस्य,-दृष्टं को वा न मध्यते ॥ ७ ॥
प्राणापानानुरोधेऽपि मृत्युर्भवति देहिनाम् ।
यज्ञाऽऽन्तौ मार्यमाणानां, छागानामिव याज्ञिकैः ॥ ८ ॥"
आ० क० १ अ० ।

आह—जति आउयबंधो उवक्कमिज्जाति । तेण कयविप्पणासो, अकयब्भागमो य होइ । कहं जेण वाससयं आउय बद्धं सो तं सव्वं आउबंधं न भुजति, जहा तेण कयविप्पणासो तस्स य तत्थ मारिज्जए ज उरमउरंति तेणं अकयब्भागमो भवति । एस यदि दोसो भवति तो णत्थि मोक्खो मोक्खगया वि पडंतु । उच्यते नाणस्स कथमुपालभ एक्को वि दोसो न भवति । कहं जेण त सव्व वेदेति । कहं पलालवट्टिदिट्ठंतसाहणा, जहा-पलालवट्टी हत्थसयदीहा अंते पदीविया चिरेण डज्झति । पुञ्जिया तक्खणा चेव डज्झति । एसो से उवणतो । अहवा-अग्निकज्याधिनिदर्शनात् फलपाचननिदर्शनाच्चेति । आ० चू० १ अ० । यथा वर्षशतोपभोगाय कल्पितं धान्यं भस्मकव्याधिपीडितस्याल्पेनापि कालेनापि भुञ्जानस्य न कृतनाशो, नाप्यकृताभ्यागमस्तद्वदत्रापीति । तथा चाह भाष्यकार.—

"कम्मोवक्कामिज्जइ, अपत्तकालम्मि जइ ततो पत्ता ।
अकयागमकयनासा, मोक्खाणासासया दोसा ॥ २०४७ ॥
न य दीहकालियस्स वि, नासो तस्साणुभूइतो खिप्पं ।
बहुकालाहारस्स व, दुयमग्गियरोगिणो भोगो ॥ २०४८ ॥
सव्व व पदेसतया, भुञ्जइ कम्ममणुभावतो भइयं ।
तेणावसाणुभवे, के कयनासादयो तस्स ॥ २०४९ ॥
किंचिदकाले वि फलं, पाविज्जइ पच्चए य कालेणं ।
तह कम्मं पाइज्जइ, कालेण य पच्चए अन्नं ॥ २०५० ॥
जह वा दीहा रज्जू , डज्झइ कालेण पुञ्जिया खिप्पं ।
वितती पडओ सुस्सइ, पिंडीभूतो उ कालेणं ॥ २०५१ ॥ "

(विशे०) ( असां गाथाना व्याख्या 'उवक्कमकाल' शब्देऽस्मिन्नेव भागे करिष्यते ) इत्यादि, ततो यथोक्तदोषानुपपत्तिरिति । आ० म० १ अ० । आयुश्च सोपक्रमायुषामेव भिद्यते, न निरुपक्रमायुषाम् । आ० चू० १ अ० । आव० । ( आयुर्हि द्विविधम् )-सोपक्रमायुषां सोपक्रमम् , निरुपक्रमायुषा निरुपक्रमम् । यदा ह्यसुमान् स्वायुषस्त्रिभागे त्रिभागत्रिभागे वा जघन्यत एकेन द्वाभ्या चोत्कृष्टत. सप्तभिरष्टभिर्वा वर्षैरन्तर्मुहूर्त्तप्रमाणेन कालेनात्मप्रदेशरचनानाडिकान्तर्वर्त्तिन. आयुष्ककर्मवर्गणापुद्गलान् प्रयत्नविशेषेण विधत्ते तदा निरुपक्रमायुर्भवतीति, अन्यदा तु-सोपक्रमायुष्क इति । आचा० १ श्रु० २ अ० १ उ० ६३ सूत्र । ( आयुष्कोपक्रमस्याऽपि यथायुष्कोपक्रमकालताम् ' उवक्कमकाल ' शब्देऽस्मिन्नेव भागे वक्ष्यते )

( सोपक्रमायुषो निरुपक्रमायुषश्च यथा )—

जीवा णं भंते ! किं सोवक्कमाउया,णिरुवक्कमाउया? । गोयमा ! जीवा सोवक्कमाउया वि , णिरुवक्कमाउया वि । णेरइया णं पुच्छा, गोयमा ! णेरइया णो सोवक्कमाउया, णिरुवक्कमाउया वि । एवं०जाव थणियकुमारा पुढवीकाइया जहा जीवा । एवं ०जाव मणुस्सा वाणमंतरजोइसियवेमाणिया; जहा णेरइया । ( सूत्र-६८५ )

'जीवाणमि' त्यादि-'सोवक्कमाउय' त्ति-उपक्रमणमुपक्रम - अप्राप्तकालस्यायुषो निर्जरणं तेन सह यत्तत्सोपक्रमं तदेवं विधमायुर्येषां ते तथा । तद्विपरीतास्तु निरुपक्रमायुष । इह गाथे- देवा नेरइया वि य, असंखवासाउया य तिरिमणुया । उत्तमपुरिसा य तहा, चरिमसरीरा य निरुवक्कमा ॥ १ ॥
सेसा संसारत्था , हवेज्ज सोवक्कमा य इयरे य ।
सोवक्कमनिरुवक्कम-भेओ भणिओ समासेणं ॥ २ ॥"
भ० २० श० १० उ० ।

नेरइया देवा असंखेज्जवासाउगा तिरिया मणुया य उत्तम-पुरिसा चरिमसरीर' त्ति-सेसा भविया देवा णारया । 'असंखेज्जवासाउया य' छम्मासेसाउया आउगाणि बंधंति । परभवियआयुआणि सेसतिभागे सेसाउया जे निरुवक्कमा जे ते सोवक्कमा मत्ते सिय तिभागसेसाउया परभवियआयुय पकरेंति । सिय तिभागतिभागावसेसाउया सिय तिभागउसेसाउया पकरेंति । कोऽनयो प्रतिविशेष । इमाणं संनिवायो निव्वा इमाण सो सिढिलो सोवक्कमस्स उववन्नमेत्तस्स आरद्ध जत्थ रक्खति तत्थ उयट्टिज्जति । निरुवक्कमेण अवस्सं त ठाणं पावियव्वं तिभागा वीप्सार्थं अणेगे तिभागा होंति, याव तिपाहिं आयुयं भागं देंति जो एगम्मि भाए वट्टति तत्थ अभावतो उ जीविअसंखेज्जपविट्ठ सव्वनिरुद्धो स आउतो स सव्वमहतीए आउयवधगद्धाए तीसे णं आउयबंधगद्धाए चरिमकालसमयम्मि वट्टमाणं जहट्ठियं सो अपज्जत्तगनिव्वत्ति निव्वत्तति । एयस्स भागस्स हट्ठा ण तरति आउयं । बंधिउं तेण य सव्वजीवाण आउबंधा । अणाभोगाभिनिव्वित्तिउं तेण सो अंतोमुहुत्तिओ आवलियाए वि । आ० चू० १ अ० ।

(७) आयुषोऽल्पायुर्दीर्घायुरशुभदीर्घायु शुभदीर्घायुरित्यादिका बहवो भेदास्तथा कारणानि च । तत्राल्पायुष्कारणानि यथा—

कहं ण भंते ! जीवाः अप्पाउयत्ताए कम्मं पगरेंति गोयमा ! । (सूत्र २०४+) ( भ० ५ श० ६ उ० ) तिहिं ठाणेहिं जीवा अप्पाउअत्ताए कम्मं पगरेंति, तं जहा- पाणे अइवाइत्ता भवइ, मुसंवइत्ता भवइ , तहारूवं समणं वा माहणं वा अफासुएणं अणेसणिज्जेणं असणपाणखाइमसाइमेणं पडिलाभित्ता भवइ. इच्चेएहिं तिहिं ठाणेहिं जीवा अप्पाउअत्ताए कम्मं पगरेंति । (सूत्र-१२५ ×) स्था० ३ ठा० १ उ० ।

'अप्पाउयत्ताए' त्ति-अल्पायुष्कतायै अल्पजीवितव्यनिबन्धनमित्यर्थ । (भ०) अथवा-अल्पमायु-र्जीवितं यस्यासावल्पायुष्कस्तद्भावस्तत्ता तया कर्मायुर्लक्षणं प्रकुर्वन्ति बध्नन्तीत्यर्थ । तद्यथा-प्राणान्-प्राणिनोऽतिपातयिता इति शीलाघठ्यन्तमिति कर्मणि द्वितीयेति प्राणिनां विनाशनशील इत्यर्थ । एवम्भूतो यो भवति, एव मृषावादवक्ता यश्च भवति, तथा-तत्प्रकारं रूप-स्वभावो नेपथ्यादि वा यस्य स तथारूपो दानोचित इत्यर्थ. । ( स्था० ) ( 'समण ' दिपदानां व्याख्या स्वस्व शब्दे ) प्रतिलम्भयिता लाभयन्त करोतीत्येवं शीलो यश्च भवति । (स्था०) पडिलाभित्त ' त्ति-प्रतिलभ्य लाभवन्तं कृत्वा (भ०) तऽल्पायुष्कतया कर्म कुर्वन्तीति प्रक्रम. ' इच्चेएहिं ' ति-इत्येतै प्राणातिपातादिभिरुक्तप्रकारैस्त्रिभि. स्थानैर्जीवा अल्पायुष्कतया कर्म प्रकुर्वन्तीति निगमनमिति । इह च प्राणातिपातयित्रादिपुरुषनिर्देशेऽपि प्राणातिपातादीनामेवाल्पायुर्बन्धनिबन्धनत्वेन तत्कारणत्वमुक्तं द्रष्टव्यमिति । इयं चास्य सूत्रस्य भावना-अध्यवसायविशेषेण एतत्त्रयं यथोक्तफल भवतीति ( स्था० ) अथवेहापेक्षिकी अल्पायुष्कता ग्राह्या, यत किल जिनागमाभिसंस्कृतमतयो मुनय- प्रथमवयसं भोगिनं कञ्चन मृत दृष्ट्वा वक्तारो भवन्ति । नूनमनेन भवान्तरे किञ्चिदशुभं प्राणिघातादि चासेवितमकल्प्यं वा मुनिभ्यो दत्तं येनायं भोग्यप्यल्पायु संवृत्त इति । (भ०) अथ वा-यो हि जीवो जिनादिगुणपक्षपातितया तत्पूजाद्यर्थं पृथिव्याद्यारम्भेण न्यासापहारादिना च प्राणातिपातादिषु वर्तते तस्य सरागसंयमनिरवद्यदाननिमित्तायुष्कापेक्षयेयमल्पायुष्टा समवसेयेति । अथ-नैतदेवं निर्विशेषणत्वात् सूत्रस्य अल्पायुष्कस्य क्षुल्लकभवग्रहणरूपस्यापि प्राणातिपातादिहेतुतो युज्यमानत्वाद् , अत. कथमभिधीयत सविशेषणप्राणातिपातादिवर्ती जीव आपेक्षिकी चाल्पायुष्कतेति ?, उच्यते-अविशेषणत्वेऽपि सूत्रस्य प्राणातिपातादेर्विशेषणमवश्यं वाच्य यत इतस्तृतीयसूत्रे प्राणातिपातादित एवाशुभदीर्घायुष्टां वक्ष्यति । न हि समानहेतो कार्यवैषम्यं युज्यते, सर्वत्रानाश्वासप्रसङ्गात् । तथा- समणोवासयस्स णं भंते ! तहारूवं समणं वा माहणं वा अफासुएणं अणेसणिज्जेणं असणपाणखाइमसाइमेणं पडिलाभेमाणस्स किं कज्जइ ?, गोयमा ! बहुतरिया से निज्जरा कज्जइ, अप्पतराए से पावे कम्मे कज्जइ " इति भगवतीवचनश्रवणादवसीयते । नैवेयं क्षुल्लकभवग्रहणरूपाऽल्पायुष्टा, न हि स्वल्पपापबहुनिर्जरानिबन्धनस्यानुष्ठानस्य क्षुल्लकभवग्रहणनिमित्तता सम्भाव्यते जिनपूजाद्यनुष्ठानस्यापि तथा प्रसङ्गात् । अथाऽप्रासुकदानस्य भवतु क्षाल्पायुष्टा, प्राणातिपातमृषावादयोस्तु क्षुल्लकभवग्रहणमेव फलमिति, नैतदेवम्-एकयोगप्रवृत्तत्वाद् अविरुद्धत्वाच्चेति । अथ मिथ्यादृष्टिश्रमणब्राह्मणानां यदप्रासुकदानं ततो निरुपचरितैवाल्पायुष्टा युज्यते, इतराभ्यां तु को विचार इति ?, नैवम् , अप्रासुकेनेति तत्र विशेषणस्यानर्थकत्वात् । प्रासुकदानस्याप्यल्पायुष्कफलत्वाविरोधात् , उक्तञ्च-भगवत्याम्- ' समणोवासयस्स णं भंते ! तहारूवं असंजय अविरय अप्पडिहय अपच्चक्खाय पावकम्मं फासुएण वा अफासुएण वा एसणिज्जेण वा अणेसणिज्जेण वा असणं पाणं खाइमं साइमं पडिलाभेमाणस्स किं कज्जइ? गोयमा ! एगंतसो पावे कम्मे कज्जइ नो से काइ निज्जरा कज्जइ" त्ति । यच्च पापकर्मण एव कारणं तदल्पायुष्टाया अपि कारणमिति, नन्वेवं-प्राणातिपातमृषावादावप्रासुकदानं च कर्त्तव्यमापन्नमिति ?, उच्यते-आपद्यतां नाम भूमिकापेक्षया को दोष । ( स्था० ) यतो यतिधर्माशक्तस्य गृहस्थस्य द्रव्यस्तवद्वारेण प्राणा-

नोट—१-(देवा नैरयिका अपि , चासंख्यवर्षायुषश्च तिर्यग्मनुजा उत्तमपुरुषाश्च तथा, चरमशरीराश्च निरुपक्रमा ॥ १ ॥ शेषा संसारस्था भवेयु सोपक्रमा इतरे च सोपक्रमनिरुपक्रमभेदो भणित समासेन । २ ॥)

१-भ० ५ श० ६ उ० २०३ सूत्रटी० ।

तिपातादिकमुक्तमेव प्रवचने ( भ० ) " अधिकारिवशाच्छास्त्रे, धर्मसाधनसंस्थितिः । व्याधिप्रतिक्रिया तुल्या, विज्ञेया गुणदोषयोः ॥ १ ॥ " । तथा च गृहिणं प्रति जिनभवनकारणफलमुक्तम् । " एतदिह भावयज्ञः, सद्गृहिणो जन्मफलमिदं परमम् । अभ्युदयाविच्छित्त्या, नियमादपवर्गबीजमिति " ॥ १ ॥ तथा-" भन्नइ जिणपूयाए, कायवहो जइ वि होइ उ कहिं वि । तह वि तहिं परिसुद्धा, गिहीण कूवाऽऽहरणजोगा ॥ १ ॥ असदारंभपवत्ता, जं च गिही तेण तेसि विन्नेया । तन्निव्वित्ति फल चिय, एसा परिभावणीयमिदं " ॥ २ ॥ इति । दानाधिकारे तु श्रूयते हि द्विविधाः श्रमणोपासकाः-संविग्नभाविता, लुब्धकदृष्टान्तभाविताश्चेति । यथोक्तम्- " संविग्गभावियाणं, लोद्धयदिट्ठंतभावियाणं च । मुत्तूण खेत्तकाले, भावं च कहिंति सुद्धत्थं " ॥ १ ॥ इति । तत्र लुब्धकदृष्टान्तभाविता यथा कथञ्चिद्ददति संविग्नभाविताऽस्त्वौचित्येनेति । तच्चेदम्-"संथरणम्मि असुद्ध, दोण्ह वि गिण्हंतयाण हियं । आउरदिट्ठंतेणं, तं चेय हियं असंथरणे " ॥ १ ॥ इति । तथा-"नायागयाणं कप्पणिज्जाणं अन्नपाणाईणं दव्वाणं देसकालसद्धासक्कारक्कमजुयं ' इत्यादि क्वचित् 'पाणे अइवाइत्ता मुसं वइत्ता " इत्यत्र भवति शब्दवर्ज्या वाचना, तत्रापि स एवार्थः, क्त्वाप्रत्ययान्तता व्याख्येया, प्राणानतिपात्य मृषोक्त्वा श्रमणं प्रतिलम्भ्य अल्पायुष्टया कर्म बध्नन्तीति प्रक्रमः । शेषं तथैव । ( स्था० ) अथ वहाप्रासुकदानमल्पायुष्कतायां मुख्यं कारणम्, इतरे तु सहकारिकारणे इति व्याख्येयं प्राणातिपातमृषावादनयोर्दानविशेषणत्वात्, तथाहि-( भ० ) प्राणानतिपात्याधाकर्मादिकरणतो मृषोक्त्वा भो साधो ! स्वार्थसिद्धमिदम्भक्तादि कल्पनीयमकल्पनीयं वा न शङ्का कार्येत्यादि, तत प्रतिलम्भ्य तथा कर्म कुर्वन्तीति प्रक्रमः । इह च द्वयस्य विशेषणत्वेनैकस्य विशेष्यत्वेन त्रिस्थानकत्वमवगन्तव्यम् । गम्भीरार्थश्चेदं सूत्रमतोऽन्यथाऽपि भावनीयमिति । स्था० ३ ठा० १ उ० । भ० ५ श० ६ उ० ।

दीर्घायुष्कारणानि यथा—

तिहिं ठाणेहिं जीवा दीहाउअत्ताए कम्मं पगरेंति, तं जहा-णो पाणे अइवाइत्ता भवइ, णो मुसंवइत्ता भवइ तहारूवं समणं वा माहणं वा फासुएसणिज्जेणं असणपाणखाइमसाइमेणं पडिलाभेत्ता भवइ, इच्चेएहिं तिहिं ठाणेहिं जीवा दीहाउअत्ताए कम्मं पगरेंति। (सूत्र-१२५×)। (स्था० ३ ठा० १ उ० )

अल्पायुष्कताकारणान्युक्तानि अधुनैतद्विपर्ययस्यैतान्येव विपर्यस्ततया कारणान्याह- तिहिं' इत्यादि प्राग्वदवसेय, नवरं ' दीहाउअत्ताए ' त्ति-शुभदीर्घायुष्टायै शुभदीर्घायुष्टया घेति प्रतिपत्तव्यम् । ( स्था० ) कहन्नमि' त्यादि, भवति हि जीवदयादिमतो दीर्घमायुर्यतोऽत्रापि तथैव भवन्ति दीर्घायुष दृष्टा वक्तारो जीवदयादि पूर्वे कृतमनेन तेनाय दीर्घायु सवृत्तस्तथा सिद्धमेव वधादिविरतेर्दीर्घमायु ( भ० ) प्राणातिपातविरत्यादीना दीर्घायुषः शुभस्यैव निमित्तत्वात् । उक्तञ्च-

" महव्वय अणुव्वएहिं, बालतवा कामनिज्जराए य । देवाउयं निबंधइ, सम्मद्दिट्ठी य जो जीवो " ॥ १ ॥ तथा' पयईए तणुकसाओ, दाणरओ सीलसंयमविहूणो । मज्झिमगुणेहिं जुत्तो, मणुयाउयं बंधए जीवो " ॥ २ ॥ देवमनुष्यायुषी च शुभे इति । तथा भगवत्यां दानमुद्दिश्योक्तम्- समणोवासयस्स णं भंते ! तहारूवं समणं वा माहणं वा फासुएसणिज्जेणं असणं पाणं खाइमं साइमं पडिलाभेमाणस्स किं कज्जइ, गोयमा ! एगंतसो निज्जरा कज्जइ, णो से केइ पावे कम्मे कज्जइ ' त्ति । यच्चनिर्जराकारणं तत् शुभदीर्घायुष्कारणतया न विरुद्धं महाव्रतवदिति । स्था० ३ ठा० १ उ० ॥

अशुभदीर्घायुष्कारणानि यथा—

तिहिं ठाणेहिं जीवा असुभदीहाउअत्ताए कम्मं पगरेंति १, तं जहा-पाणे अइवाइत्ता भवइ, मुसंवइत्ता भवइ, तहारूवं समणं वा माहणं वा हीलित्ता निंदित्ता खिंसेत्ता गरिहित्ता अवमाणित्ता अन्नयरेणं अमणुन्नेणं अपीइकारएणं असणं वा पाणं वा खाइमं वा साइमं वा पडिलाभेत्ता भवइ । इच्चेएहिं तिहिं ठाणेहिं जीवा असुभदीहाउअत्ताए कम्मं पगरेंति । ( सूत्र-१२५ + )

अनन्तरमायुषो दीर्घताकारणान्युक्तानि, तच्च शुभाशुभमिति तत्रादौ तावदशुभायुर्दीर्घताकारणान्याह-' तिहिं ' इत्यादि-प्राग्वद्, नवरम् । अशुभदीर्घायुष्टायै इति-नारकायुष्कायेति भावः । तथाहि-अशुभं च तत् पापप्रकृतिरूपत्वात् दीर्घं च तस्य जघन्यतोऽपि दशवर्षसहस्रस्थितिकत्वादुत्कृष्टतस्तु त्रयस्त्रिंशत्सागरोपमरूपत्वात्, अशुभदीर्घं तद्भूतमायुर्जीवितं यस्मात्कर्मणस्तदशुभदीर्घायुस्तद्भावस्तत्ता तस्यै तया वेति प्राणान् प्राणिन इत्यर्थोऽतिपातयिता भवति मृषावादी च वक्ता भवति, तथा श्रमणब्राह्मणादीनां हीलनादि कृत्वा प्रतिलम्भयिता भवतीत्यक्षरघटना । हीलना तु जात्याद्युद्घट्टनतो निन्दनं मनसा खिंसनं जनसमक्षं गर्हणं तत्समक्षम् अपमाननमनभ्युत्थानादिभिः अन्यतरेण-बहूनां मध्ये एकतरेण कश्चिदन्यतरेणेति न दृश्यते, अमनोज्ञेन-स्वरूपतोऽशोभनेन कदन्नादिना अत एवाप्रीतिकारकेण भक्तिमनस्त्वमनोज्ञमपि मनोज्ञमेव तत्फलत्वादार्यचन्दनाया इव । आर्यचन्दनया हि कुल्माषाः सूर्पकोणकृता भगवते महावीराय पञ्चदिनोनषाण्मासिकक्षपणपारणके दत्तास्तत्रैव च तस्या लोहनिगडानि हेममयनूपुरौ सम्पन्नौ केशाः पूर्ववदेव जाताः पञ्चवर्णविविधरत्नराशिश्च गृहे भूत सेन्द्रदेवदानवनरनायकैरभिनन्दिता कालेनावाप्तचारित्रा च सिद्धिसौधशिखरमुपगतेति । इह च सूत्रे अशनादिप्रासुकाऽप्रासुकत्वादिना न विशेषितं हीलनादिकर्तृ प्रासुकादिविशेषणस्य फलविशेषं प्रत्यकारणत्वान्मत्सरजनितहीलनादिविशेषणानामेव प्रधानतया तत्कारणत्वादिति । स्था० ३ ठा० १ उ० । वीरस्य भगवतः पारणाकारणात् आर्यचन्दनया कृतपुण्याहमित्यादि आर्यचन्दनाया वृत्तम् ' अज्जचंदणा ' शब्दे प्रथमभागे गतम् ) वाचनान्तरे तु-" अफासुएणं अणेसणिज्जेणं " त्ति-दृश्यते तत्र च प्रासुकदानमपि हीलनादिविशेषितमशुभदीर्घायुष्कारणम्, अप्रासुकदानं तु विशेषित इत्युपदर्शयता ' अ-

फासुएणे" त्यायुक्तमिति प्राणातिपातमृषावादनयोर्दानविशेषणपक्षव्याख्यानमपि घटत एव अवज्ञादानेऽपि प्राणातिपातादेर्दृश्यमानत्वादिति । भवति च प्राणातिपातादेरशुभदीर्घायुस्तेषां नरकगतिहेतुत्वाद्, यदाह-" मिच्छद्दिट्ठिमहारंभ-परिग्गहो तिव्वलोभनिस्सीलो । नरयाऽऽउयं निबंधइ, पावमई रोद्दपरिणामो " ॥ १ ॥ नरकगतौ च विवक्षया दीर्घमेवायु । भ० ५ श० ६ उ० २०४ सूत्रटी० ।

शुभदीर्घायुष्कारणानि यथा—

तिहिं ठाणेहिं जीवा सुभदीहाउअत्ताए कम्मं पगरेंति, तं जहा-णो पाणे अइवाइत्ता भवइ, णो मुसंवइत्ता भवइ, तहारूवं समणं वा माहणं वा वंदित्ता नमंसित्ता सक्कारेत्ता सम्माणेत्ता कल्लाणं मंगलं देवयं चेइयं पज्जुवासेत्ता मणुन्नेणं पीइकारएणं असणपाणखाइमसाइमेणं पडिलाभेत्ता भवइ, इच्चेएहिं तिहिं ठाणेहिं जीवा सुहदीहाउअत्ताए कम्मं पगरेंति । ( सूत्र-१२५ + )

उक्तविपर्ययेणाधुनेतरदाह । 'तिहिं ठाणेहिं' इत्यादि पूर्ववत् इहापि प्रासुकाऽप्रासुकनया दानं न विशेषितं पूर्वसूत्रविपर्ययत्वादस्य पूर्वसूत्रस्य वा विशेषणतया प्रवृत्तत्वादिति । न च प्रासुकाऽप्रासुकदानयो फलं प्रति न विशेषोऽस्ति पूर्वसूत्रयोस्तस्य प्रतिपादितत्वात्तस्मादिह प्रासुकैषणीयस्य कल्पप्रार्त्ताविनरस्य चेदं फलमवसेयम् । ( स्था० ३ ठा० १ उ० । ) वाचनान्तरे-तु 'फासुएणमि' त्यादि दृश्यत एवेति ( भ० ५ श० ६ उ० सूत्र-२०४ ) अथवा—भावप्रकर्षविशेषादनेषणीयस्यापीट फलं न विरुध्यते, अचिन्त्यत्वाच्चित्तपरिणते. सा हि वाह्यस्यानुगुणनयैव न फलानि साधयति भरतादीनामिवेति । इह च प्रथममल्पायु सूत्रं, द्वितीय तद्विपक्ष., तृतीयमशुभदीर्घायु सूत्रं, चतुर्थं तद्विपक्ष इति; न पुनरुक्ततेति । स्था० ३ ठा० १ उ० ।

अत्राऽपरं सूत्रम्—

समणोवासए णं भंते ! तहारूवं समणं वा फासुएसणिज्जेणं असणपाणखाइमसाइमेणं पडिलाभेमाणे किं लब्भइ ?, गोयमा ! समणोवासएणं तहारूवं समणं वा ०जाव पडिलाभेमाणे तहारूवस्स समणस्स वा महाणस्स वा समाहिं उप्पाएइ , समाहिकारएणं तमेव समाहिं पडिलभइ । समणोवासए णं भंते ! तहारूवं समणं वा०जाव पडिलाभेमाणे किं चयइ ?, गोयमा ! जीवियं चयइ , दुच्चयं चयइ, दुक्करं करेइ, दुल्लहं, लहइ बोहिं बुज्झइ, तओ पच्छा सिज्झइ, ०जाव अंतं करेइ । ( सूत्र-२६४ )

'किंचयइ' त्ति-किं ददानीत्यर्थ 'जीवियं चयइ' त्ति-जीविनमिव ददात्यन्नादि द्रव्यं यच्छन् जीवितस्यैव त्यागं करोतीत्यर्थ । जीवितस्येवान्नादिद्रव्यस्य दुस्त्यजत्वादेतदेवाह-'दुच्चयं चयइ' त्ति-दुस्त्यजमनत्त्यागस्य दुष्करत्वादेवाह-दुष्करं करोतीति । अथवा-किं त्यजति-किं विरहयति । उच्यते-जीवितमिव जीवितं कर्मणो दीर्घा स्थिति 'दुच्चयं' ति-दुष्टं कर्म्म द्रव्यसञ्चयम् 'दुक्करं' ति-दुष्करमपूर्वकरणतो ग्रन्थिभेदं, ततश्च-'दुल्लभं लभइ' ति-अनिवृत्तिकरणं लभते । ततश्च-'बोहिं बुज्झइ' त्ति-बोधिं-सम्यग्दर्शनं बुध्यते-अनुभवति । इह च श्रमणोपासक साधूपासनामात्रकारी ग्राह्यस्तदपेक्षयैवास्य सूत्रार्थस्य घटमानत्वात् 'तओ पच्छ' त्ति-तदनन्तरं सिध्यतीति प्राग्वत्, अन्यत्राप्युक्तं दानविशेषस्य बोधिगुणत्वं , यदाह-" अणुकंपकामणिज्जरबालतवेदाणविणए" त्यादि । तद्यथा-" केई तेणेव भवेण णिव्वुया, सव्वकम्मओ मुक्का । केई तइयभवेण, सिज्झिस्संति जिणसगासे ॥ १ ॥" इति । भ० ७ श० १ उ० ।

मध्यमायुर्बलदेवादीनां यथा—

तओ मज्झिममाउयं पालयंति, तं जहा-अरहंता, चक्कवट्टी, बलदेववासुदेवा । ( सूत्र-१४३× )

'मज्झिमे' त्ति-मध्यमायु. पालयन्ति वृद्धत्वाभाव् । स्था० ३ ठा० १ उ० ।

( ८ ) आयुष्कर्मणो जीवितहेतुत्वं यथा ।

यावदायुष्कर्म विजृम्भते तावद्दोषैरतिपीडितोऽपि जीवत्यायुष्कर्मक्षये च दोषाणामविकृतावपि म्रियते । नं० १ गाथा टी० " सुरनरतिरिनरयाऊ हडिसरिसं " ( २३ गाथा + ) एतच्चायुर्हडिसदृशं भवति । तत्र हडि.-खोडकस्तेन सदृशं तत्तुल्यं, यथा हि राजादिना हडौ क्षिप्त कश्चिच्चौरादिस्ततो निर्गमनमनोरथं कुर्वाणोऽपि विवक्षितं कालं यावत्तया म्रियते तथा नारकादिस्ततो निष्क्रमितुमना अपि तदायुषा म्रियते इति हडिसदृशमायु । कर्म० १ कर्म० । (अत्र विशेषतो व्याख्यानम् आउकम्म' शब्देऽस्मिन्नेव भागे करिष्यते) आयाति स्वकीयावसरे इत्यायु. गतेर्निस्सरितुमिच्छन्नपि जीवो निर्गन्तुं न शक्नोति यस्मिन्सति निगडबद्ध इव तिष्ठतीत्यायुष. स्वभाव. । उत्त० ३३ अ० २ गाथा ।

( ६ ) द्विविधमायुर्यथा—

दुविहे आउए पण्णत्ते, तं जहा-अद्धाउए चेव, भावाउए चेव१६ । ( सूत्र-८५× )

'दुविहे' त्यादि , अद्धा-कालः तत्प्रधानमायुः-कर्मविशेषोऽद्धायु , भवात्ययेऽपि कालान्तरानुगामीत्यर्थ , यथा-मनुष्यायु , कस्यापि भवात्यय एव नापगच्छत्यपि तु सप्ताष्टभवमात्रं कालमुत्कर्षतोऽनुवर्तत इति , तथा-भवप्रधानमायुर्भवायु. , यद्भवात्यये अपगच्छत्येव न कालान्तरमनुयाति, यथा-देवायुरिति , १६ । स्था० २ ठा० ३ उ० । ( यथायुष्कं पालयन्ति इति 'आउय' शब्देऽस्मिन्नेव भागे वक्ष्यते ) यथायुष्कवक्तव्यता 'अहाउय' शब्दे प्रथमभागे द्रष्टव्या ) ( द्वयो अद्धायुष्कमिति 'अद्धाउय' शब्दे प्रथमभागे गतम् ) ( द्वयो भवायुष्कमिति 'भवाउय' शब्दे पञ्चमभागे वक्ष्यते ) ( द्वौ यथायुष्कं पालयन्ति इति; 'अहाउय' शब्दे प्रथमभागे दर्शितम् ) ( द्वयो. आयुष्कसंवर्तः इति 'आउयसंवट्टय' शब्देऽस्मिन्नेव भागे द्रष्टव्यम् )

जीवानामिह भविकायु , परभविकायुर्यथा । तत्र कियति पूर्वभवायुषि शेषे पारभविकमायुर्बध्नन्ति संशयान पृच्छति—

नेरइया णं भंते ! कइभागावसेसाऽऽउया परभवियाऽऽउयं पकरेंति ?, गोयमा ! नियमा छम्मासाऽवसेसाउया परभ—

विश्राउयं, पकरंति । एवं असुरकुमाराऽवि ०जाव थणियकुमारा वि । पुढवीकाइया णं भंते ! कइभागावसेसाऽऽउया परभवियाउयं पकरेंति ?, गोयमा ! पुढवीकाइया दुविहा पन्नत्ता, तं जहा-सोवक्कमाउया य, निरुवक्कमाउया य । तत्थ णं जे ते निरुवक्कमाउया ते नियमा तिभागावसेसाउया परभवियाउयं पकरेंति । तत्थ णं जे ते सोवक्कमाउया ते सिय तिभागावसेसाउया परभवियाउयं पकरेंति; सिय तिभागतिभागावसेसाउया परभवियाउयं पकरेंति; सिय तिभागतिभागतिभागावसेसाउया परभवियाउयं पकरेंति । आउ-तेउ-वाउ-वणस्सइकाइयाणं, बेइंदिय-तेइंदिय-चउरिंदियाण वि एवं चेव ॥ पंचिंदियतिरिक्खजोणिया णं भंते ! कइभागावसेसाउया परभवियाउयं पकरंति ?, गोयमा ! पंचिंदियतिरिक्खजोणिया दुविहा पन्नत्ता, तं जहा-संखेज्जवासाउया य, असंखेज्जवासाउया य । तत्थ णं जे ते असंखेज्जवासाउया ते नियमा छम्मासावसेसाउया परभवियाउयं पकरेंति । तत्थ णं जे ते संखिज्जवासाउया ते दुविहा पण्णत्ता, तं जहा-सोवक्कमाउया य, निरुवक्कमाउया य । तत्थ णं जे ते निरुवक्कमाउया ते नियमा तिभागावसेसाउया परभवियाउयं पकरंति । तत्थ णं जे ते सोवक्कमाउया ते णं सिय तिभागावसेसाउया परभवियाउयं पकरंति; सिय तिभागतिभागे परभवियाउयं पकरंति; सिय तिभागतिभागतिभागावसेसाउया परभवियाउयं पकरंति । एवं मणुस्सा वि, वाणमंतर-जोइसिय-वेमाणिया जहा नेरइया । दारं । (सूत्र-१४४)

'नेरइया णं भंते ! कइभागावसेसाउया परभवियाउय बधं (पकरें) ति' इत्यादि । पाठसिद्धं, तदेवं यद्भागावशेषेऽनुभूयमानभवायुषि पारभविकमायुर्बध्नन्ति तत्प्रतिपादितम् । प्रज्ञा० ६ पद । भ० 1

नैरयिकादीनां परभविकायुर्बन्धो यथा—

णेरइया णियमा छम्मासावसेसाऽऽउया परभवियाऽऽउयं पगरेंति । एवमसुरकुमाराऽवि, ०जाव थणियकुमारा । असंखेज्जवासाउया सन्निपंचिंदियतिरिक्खजोणिया णियमं छम्मासावसेसाउया परभवियाउयं पगरेंति । असंखेज्जवासाउया सन्निमणुस्सा णियमं ०जाव पगरेंति । वाणमंतरजोइसिया वेमाणिया जहा णेरइया । ( सूत्र-५३६ )

'नियम' त्ति-अवश्यंभावादित्यर्थः । 'छम्मासावसेसाउय' त्ति-षण्मासा अवशेषा-अवशिष्टा यस्य तत्तथा तदायुर्येषां ते षण्मासावशेषायुष्का । परभवो विद्यते यस्मिंस्तत्पारभविकं तच्च तदायुश्चेति परभविकायु प्रकुर्वन्ति—बध्नन्ति । असंख्येयानि वर्षाण्यायुर्येषां ते तथा ते च ते सञ्ज्ञिनश्च समनस्का पञ्चेन्द्रियतिर्यग्योनिकाश्चेत्यसंख्येयवर्षायुष्कसंज्ञिपञ्चेन्द्रियतिर्यग्योनिका । इह च सञ्ज्ञिग्रहणमसंख्येयवर्षायुष्का संज्ञिन एव भवन्तीति नियमदर्शनार्थं न त्वसंख्येयवर्षायुषामसंज्ञिना व्यवच्छेदार्थं, तेषामसंभवादिति । इह च गाथे—

"निरइसुरअसंखाऊ, तिरिमणुया सेसए उ छम्मासे ।
इगविगला निरुवक्कम-तिरिमणुया आउयतिभागे ॥ १ ॥
अवसेसा सोवक्कम-तिभागनवभागसत्तवीसइमे ।
बंधंति परभवाऊ, नियभवे सव्वजीवा उ" ॥ २ ॥ इति ।

इदमेवान्यैरित्थमुक्तम्-इह तिर्यग्मनुष्या आत्मीयायुषस्तृतीयत्रिभागे परभवायुषो बन्धयोग्या भवन्ति, देवनारका पुन षण्मासे शेषे । तत्र तिर्यग्मनुष्यैर्यदि तृतीयत्रिभागे आयुर्न बद्धं तत पुनस्तृतीयत्रिभागस्य तृतीयत्रिभागे शेषे बध्नन्ति एव तावत् सङ्क्षिपन्त्यायुर्यावत्सर्वजघन्य आयुर्बन्धकाल उत्तरकालश्च शेषस्तिष्ठति । इह तिर्यग्मनुष्या आयुर्बध्नन्त्यय वा संक्षेपकाल उच्यते । तथा देवनैरयिकैरपि यदि षण्मासे शेषे आयुर्न बद्धं तत आत्मीयस्यायुष षण्मासशेषं तावत्संक्षिपन्ति यावत्सर्वजघन्य आयुर्बन्धकाल उत्तरकालश्चावशेषोऽवतिष्ठते इह परभवायुर्देवनैरयिका बध्नन्तीत्ययमसंक्षेपकाल । स्था० ६ ठा० ३ उ० । ( परभविकायुष्प्रकार 'उववाय' शब्दे-ऽस्मिन्नेव भागे निरूपयिष्यते )

(१०) प्रत्याख्यानाऽप्रत्याख्यानतदुभयनिर्वर्त्तिताऽऽयुष्कत्वं जीवानाम्—

जीवा णं भंते ! किं पच्चक्खाणनिव्वत्तियाऽऽउया, अपच्चक्खाणणिव्वत्तियाऽऽउया पच्चक्खाणाऽपच्चक्खाणणिव्वत्तियाउया ? । गोयमा ! जीवा य, वेमाणिया य, पच्चक्खाणणिव्वत्तियाउया । तिन्नि वि अवसेसा अपच्चक्खाणनिव्वत्तियाउया । गाहा-

"पच्चक्खाणं जाणइ, कुव्वंति तणेव आउनिव्वत्ती ।
सपएसुद्देसम्मि य, एमेए दंडगा चउरो ॥ १ ॥" (सूत्र-२४०)

जीवपदे जीवा प्रत्याख्यानादित्रयनिबद्धायुष्का वाच्या, वैमानिकपदे च वैमानिका अप्येवं प्रत्याख्यानादित्रयवतां तदुत्पादात् 'अवसेस' त्ति-नारकादयोऽप्रत्याख्याननिर्वृत्तायुषे . यतस्तेषु तत्त्वेनाविरता एवोत्पद्यन्त इति । उक्तार्थसंग्रहगाथा-'पच्चक्खाण' मित्यादि, प्रत्याख्यानमिति एतदर्थ एको दण्डक, एवम्-अन्ये त्रय । भ० ६ श० ४ उ० ।

(११) जीवानामाभोगानाभोगनिर्वर्त्तितायुष्कत्वं यथा—

जीवा णं भंते ! किं आभोगनिव्वत्तियाउया, अणाभोगनिव्वत्तियाउया ? । गोयमा ! नो आभोगनिव्वत्तियाउया; अणाभोगनिव्वत्तियाउया । एवं नेरइया वि, एवं०जाव वेमाणिया । ( सूत्र-२८४ ) । भ० ७ श० ६ उ० ।

तच्चतुर्विधम्—

चउव्विहे आउए पण्णत्ते, तं जहा-णेरइयाऽऽउए, ०जाव देवाऽऽउए ॥ ( सूत्र-२६४× )

एति च, याति चेति आयु -कर्मविशेष इति, तत्र येन निरयभवे प्राणी ध्रियते तन्निरयायुरेवमन्यान्यपि । स्था० ४ ठा० २ उ० ।

अस्यैता एवोत्तरप्रकृतय —

नेरइय तिरिक्खाओ, मणुस्साओ तहेव य ।

देवाओ य चउत्थं तु, आउकम्मं चउव्विहं ॥ १२ ॥

उत्त० ३३ अ० । प्रव० । ( अस्या गाथाया व्याख्या 'कम्म' शब्दे तृतीयभागे १६ अधिकाराङ्के करिष्यते )।

(१२) अनन्तरोपपन्नकादीनां नैरयिकादीनामायुस्तद्बन्धश्च-

गोरइया णं भंते ! किं अणंतरोववरणगा, परंपरोववरणगा, अणंतरपरंपरअणुववरणगा ?। गोयमा ! णेरइया णं अणंतरोववरणगा वि, परंपरोववरणगा वि, अणंतरपरंपर-अणुववरणगा वि। से केणऽट्ठेणं भंते ! एवं वुच्चइ ०जाव अणंतरपरपरअणुववरणगा वि ?। गोयमा ! जेणं णेरइया पढमसमओववरणगा तेणं णेरइया अणंतरोववरणगा। जेणं णेरइया अपढमसमओववरणगा तेणं णेरइया परंपरोववरणगा। जेणं णेरइया विग्गहगइसमावरणगा तेणं णेरइया अणंतरपरंपरअणुववरणगा। से तेणऽट्ठेणं ०जाव अणुववरणगा वि। एवं णिरंतरं ०जाव वेमाणिया। अणंतरोववरणगा णं भंते ! णेरइयाउयं पकरेंति, तिरिक्खमणुस्सदेवाउयं पकरेंति ?, गोयमा ! णो णेरइयाउयं पकरेंति ०जाव णो देवाउयं पकरेंति। परंपरोववरणगा णं भंते ! णेरइया किं णेरइयाउयं पकरेंति ०जाव देवाउयं पकरेंति ?, गोयमा ! णो णेरइयाउयं पकरेंति, तिरिक्खजोणियाउयं पि पकरेंति, मणुस्साउयं पि पकरेंति, णो देवाउयं पकरेंति। अणंतरपरंपरअणुववरणगा णं भंते ! णेरइया किं णेरइयाउयं पुच्छा, गोयमा ! णो णेरइयाउयं पकरेंति, ०जाव णो देवाउयं पकरेंति. एवं ०जाव वेमाणिया। णवरं पंचिंदियतिरिक्खजोणिया मणुस्सा य परंपरोववरणगा चत्तारि वि आउयं ( पकरेंति ) बंधति सेसं त चेव २ ॥

'नेरइया णमि' त्यादि, 'अणंतरोववरणग' त्ति-न विद्यन्तेऽन्तर समयादिव्यवधानमुपपन्ने-उपपाते येषां ते अनन्तरोपपन्नकाः 'परंपरोववरणग' त्ति—परम्परा-द्वित्रादिसमयता उपपन्ने-उपपाते येषां ते परंपरोपपन्नका । 'अणंतरपरंपर-अणुववरणग' त्ति-अनन्तरम्-अव्यवधानं परंपरं च द्वित्रादिसमयरूपमविद्यमानम्-उपपन्नम्-उत्पादो येषां ते तथा। एते च विग्रहगतिका , विग्रहगतौ द्विविधस्याप्युत्पादस्याविद्यमानत्वादिति ॥ अथानन्तरोपपन्नादीनाश्रित्याऽऽयुर्बन्धमभिधातुमाह-' अणंतरे ' त्यादि इह चानन्तरोपपन्नानामनन्तरपरम्परानुपपन्नानां च चतुर्विधस्याप्यायुषः प्रतिषेधोऽध्येतव्य । तस्यामवस्थायां तथाविधाध्यवसायस्थानाभावेन सर्वजीवानामायुषो बन्धाभावात् स्वायुषस्त्रिभागादौ च शेषे बन्धसद्भावात्परम्परोपपन्नकास्तु स्वायुषः षण्मासे शेषे मतान्तरेणोत्कर्षत षण्मासे जघन्यतश्चान्तर्मुहूर्त्ते शेषे भवप्रत्ययात्तिर्यङ्मनुष्यायुषी एव कुर्वन्ति, नेतरे इति 'एवं ०जाव वेमाणिय ' त्ति—अनेनोक्तालापकत्रययुक्तश्चतुर्विंशतिदण्डकोऽध्येतव्य इति सूचितम्। यश्चात्र विशेषस्तं दर्शयितुमाह-' नवरं पंचिंदिए ' त्यादि ।

अथानन्तरनिर्गतत्वादिना अपर दण्डकमाह—

णेरइया णं भंते ! किं अणंतरणिग्गया, परंपरणिग्गया, अणंतरपरंपरअणिग्गया ?। गोयमा ! णेरइया णं अणंतरणिग्गया वि ०जाव अणंतरपरंपरणिग्गया वि । से केणऽट्ठे णं भंते ! ०जाव अणिग्गया वि ?, गोयमा ! जे णं णेरइया पढमसमयणिग्गया ते णं णेरइया अणंतरणिग्गया। जे णं णेरइया अपढमसमयणिग्गया ते णं णेरइया परंपरणिग्गया। जे णं णेरइया विग्गहगइसमावरणगा ते णं अणंतरपरंपरअणिग्गया। से तेणऽट्ठेणं गोयमा ! ०जाव अणिग्गया वि, एवं ०जाव वेमाणिया ३ ॥

'णेरइया ण' इत्यादि, तत्र निश्चितं स्थानान्तरप्राप्त्या गतं-गमनं निर्गतम्-अनन्तरं समयादिना निर्व्यवधानं निर्गतं येषां तेऽनन्तरनिर्गतास्ते च येषां नरकादुद्वृत्तानां स्थानान्तरप्राप्तानां प्रथमसमयो वर्त्तते, तथा परम्परेण-समयपरंपरया निर्गतं येषां ते तथा , ते च येषां नरकादुद्वृत्तानामुत्पत्तिस्थानप्राप्तानां द्व्यादयः समया । अनन्तरपरम्परानिर्गतास्तु ये नरकादुद्वृत्ता सन्तो विग्रहगतौ वर्त्तन्ते , न तावदुत्पादक्षेत्रमासादयन्ति तेषामनन्तरभावेन; परम्परभावेन चोत्पादक्षेत्रप्राप्तत्वेन निश्चयेनानिर्गतत्वादिति ।

अथानन्तरनिर्गतादीनाश्रित्यायुर्बन्धमभिधातुमाह—

अणंतरणिग्गया णं भंते! णेरइया किं णेरइयाऽऽउयं पकरेंति ०जाव देवाऽऽउयं पकरेंति ?, गोयमा ! णो णेरइयाउयं पकरेंति ०जाव णो देवाउयं पकरेंति । परंपरणिग्गया णं भंते ! णेरइया किं णेरइयाउयं पि पकरेंति ०जाव देवाउयं पकरेंति पुच्छा , गोयमा ! णेरइयाऽऽउयं पकरेंति ०जाव देवाउयं पि पकरेंति। अणंतरपरअणिग्गया णं भंते ! णेरइयपुच्छा, गोयमा ! णो णेरइयाउयं पकरेंति ०जाव णो देवाउयं पकरेंति। एवं निरवसेसं ०जाव वेमाणिया ४ ॥

' अणंतरे ' त्यादि, इह च परम्परानिर्गता नारका सर्वाण्यायूंषि बध्नन्ति । यतस्ते मनुष्याः पञ्चेन्द्रियतिर्यञ्च एव च भवन्ति। ते च सर्वायुर्बन्धका एवेति। एवं सर्वेऽपि परम्परनिर्गता वैक्रियजन्मान , औदारिकजन्मानोऽप्युद्वृत्ता । केचिन्मनुष्यपञ्चेन्द्रियतिर्यञ्चो भवन्त्यतस्तेऽपि सर्वायुर्बन्धका एवेति अनन्तर निर्गता उक्तास्ते च कश्चिदुत्पद्यमाना सुखेनोत्पद्यन्ते दु खेन वेति दु खोत्पन्नकानाश्रित्याह—' नेरइये ' त्यादि ।

अनन्तरखेदोपपन्नकपरम्परखेदोपपन्नकानन्तरपम्परखेदोपपन्नकाना नैरयिकादीनामायु —

णेरइया णं भंते ! किं अणंतरखेदोववरणगा, परंपरखेदोववरणगा, अणंतरपरम्परखेदाऽणुववरणगा ?। गोयमा ! णेरइया ०एवं एएणं अभिलावेणं ते चेव चत्तारि दंडगा भाणियव्वा । ( सूत्र-५०२X )

त एव पूर्वोक्ता उत्पन्नदण्डकादय खेदशब्दविशेषिताश्चत्वारो दण्डका भणितव्यास्तत्र च प्रथम.-खेदोपपन्नदण्डको,

द्वितीयस्तदायुष्कदण्डक , तृतीय. खेदनिर्गतदण्डक , चतुर्थस्तु तदायुष्कदण्डक इति । भ० १४ श० १ उ० ।

( १३ ) असञ्ज्ञिजीवानामायु —

कइविहे गं भंते ! असण्णियाउए पण्णत्ते ?, गोयमा ! चउव्विहे असण्णियाउए पण्णत्ते , तं जहा-गोरइयअसण्णियाउए , तिरिक्खजोणियअसण्णियाउए , मणुस्सअसण्णियाउए, देवअसण्णिआउए ।। असण्णी गं भंते ! जीवे किं गोरइयाउयं पकरेइ, तिरिक्खजोणियाउयं पकरेइ, मणुस्सदेवाउयं पकरेइ ? । गोयमा ! गोरइयाउयं पकरेइ, तिरिक्खमणुस्सदेवाउयं पकरेइ । गोरइयाउयं पकरेमाणे जहण्णेणं दसवाससहस्साइं उक्कोसेणं पलिओवमस्स असंखेज्जइभागं पकरेइ, तिरिक्खजोणियाउयं पकरेमाणे जहण्णेणं अंतोमुहुत्तं; उक्कोसेणं पलिओवमस्स असंखेज्जइभागं पकरेइ, मणुस्साउए वि एवं चेव । देवाउए जहा गोरइयाउए । एयस्स गं भंते ! गोरइयअसण्णिआउयस्स तिरिक्खजोणियअसण्णिआउयस्स मणुस्सअसण्णिआउयस्स देवअसण्णिआउयस्स कयरे कयरेहिंतो ०जाव विसेसाहिए वा ?, गोयमा ! सव्वत्थोवे देवअसण्णियाउए, मणुस्सअसण्णियाउए संखेज्जगुणे, तिरियअसण्णियाउए असंखेज्जगुणे, गोरइयअसण्णिआउए असंखेज्जगुणे । ( सूत्र-२६+ )

'कइविहेणमि' त्यादि, व्यक्तं नवरं 'असण्णिआउए' त्ति-असञ्ज्ञी सन् यत्परभवप्रायोग्यमायुर्बध्नाति तदसञ्ज्ञ्यायु. । 'नेरइयअसण्णिआउए' त्ति—नैरयिकप्रायोग्यमसञ्ज्ञ्यायु-नैरयिकासञ्ज्ञ्यायुरेवमन्यान्यपि, एतच्चासंञ्ज्ञ्यायु. सम्बन्धमात्रेणापि भवति । यथा भिक्षो पात्रमतस्तत्कृतत्वलक्षणसम्बन्धविशेषनिरूपणायाह-'असण्णी' त्यादि, व्यक्तं नवर 'पकरेइ' त्ति-बध्नाति 'दसवाससहस्साइं' ति-रत्नप्रभाप्रथमप्रतरमाश्रित्य 'उक्कोसेण पलिओवमस्स असंखेज्जइभाग' ति-रत्नप्रभाचतुर्थप्रतरं मध्यमस्थितिकं नारकमाश्रित्येति, कथं यत. प्रथमप्रस्तटे दशवर्षाणां सहस्राणि जघन्या स्थितिरुत्कृष्टा नवति. सहस्राणि । द्वितीये तु दशलक्षाणि जघन्या इतरा तु नवतिर्लक्षाणि । एवैव तृतीये जघन्या इतरा पूर्वकोटी । एपैव चतुर्थे जघन्या इतरा तु सागरोपमस्य दशभागा । एवञ्चात्र पल्योपमाऽसंख्येयभागो मध्यमायु स्थितिर्भवति । तिर्यक्सूत्रे यदुक्तम्- 'पलिओवमस्स असंखेज्जइभाग त्ति " तन्मिथुनकतिरश्चोऽधिकृत्येति 'मणुस्साउए वि एव चेव' त्ति-जघन्यतोऽन्तर्मुहूर्त्तम् , उत्कर्षत पल्योपमासंख्येयभाग इत्यर्थ , तत्र चासंख्येयभागा मिथुनकनरानाश्रित्य । 'देवा जहा नेरइय' त्ति-'देवा' इति असञ्ज्ञिविषय देवायुरुपचारतया वाच्यम् 'जहा णेरइय' त्ति-यथा असञ्ज्ञिविषय नारकायुस्तच्च प्रतीतमेव, नवर भवनपतिव्यन्तरानाश्रित्य तदवसेयमिति । भ० १ श० २ उ० । प्रज्ञा० ।

(१४) एकान्तबालैकान्तपण्डितबालपण्डितानामायुर्यथा-

एगंतबाले णं भंते ! मणूसे किं नेरइयाउयं पकरेइ तिरिआउयं पकरेइ मणुयाउयं पकरेइ देवाउयं पकरेइ । नेरइयाउयं किच्चा नेरइएसु उववज्जइ । तिरियाउयं किच्चा तिरिएसु उववज्जइ । मणुयाउयं किच्चा मणुएसु उववज्जइ । देवाउयं किच्चा देवलोएसु उववज्जइ ? । गोयमा ! एगंतबाले णं मणुया नेरइयाउयं पि पकरेइ, तिरियाऽऽउयं पि पकरेइ, मणुयाऽऽउयं पि पकरेइ, देवाउयं पि पकरेइ । नेरइयाउयं पि किच्चा नेरइएसु उववज्जइ । तिरियाऽऽउयं किच्चा तिरिएसु उववज्जइ । मणुयाऽऽउयं किच्चा मणुएसु उववज्जइ । देवाउयं किच्चा देवलोएसु उववज्जइ । ( सूत्र-६३ )

एगंतपंडिए णं भंते ! मणुस्से किं नेरइयाउयं पकरेइ ०जाव देवाउयं किच्चा देवलोएसु उववज्जइ ?, गोयमा ! एगंतपंडिए णं मणुस्से आउयं सिय पकरेइ; सिय णो पकरेइ । जइ पकरेइ णो णेरइयाउयं पकरेइ, णो तिरियाउयं पकरेइ, णो मणुयाउयं पकरेइ । देवाउयं पकरेइ, णो णेरइयाउयं किच्चा णेरइएसु उववज्जइ, णो तिरियाउयं किच्चा तिरिएसु उववज्जइ, णो मणुयाउयं किच्चा मणुएसु उववज्जइ । देवाउयं किच्चा देवेसु उववज्जइ । से केणऽट्ठेणं ०जाव देवाउयं किच्चा देवेसु उववज्जइ ?, गोयमा ! एगंतपंडियस्स णं मणुस्सस्स केवलमेव दो गईओ पण्णायंति, तं जहा-अंतकिरिया चेव, कप्पोववत्तिया चेव । से तेणऽट्ठेणं गोयमा ! ०जाव देवाउयं किच्चा देवेसु उववज्जइ ।

बालपंडिए णं भंते ! मणूसे किं नेरइयाउयं पकरेइ ०जाव देवाउयं किच्चा देवेसु उववज्जइ ?, गोयमा ! णो णेरइयाउयं पकरेइ ०जाव देवाउयं किच्चा देवेसु उववज्जइ । से केणऽट्ठेणं ०जाव देवाउयं किच्चा देवेसु उववज्जइ ?, गोयमा ! बालपंडिए णं मणूसे तहारूवस्स समणस्स वा माहणस्स वा अंतिए एगमवि आरियं धम्मियं सुवयणं सोच्चा निसम्म, देसं उवरमइ, देसं णो उवरमइ, देसं पच्चक्खाइ, देसं णो पच्चक्खाइ, से तेणं देसोवरमेणं, देसपच्चक्खाणेणं णो णेरइयाउयं पकरेइ ०जाव देवाउयं किच्चा देवेसु उववज्जइ । से तेणऽट्ठेणं ०जाव देवेसु उववज्जइ । ( सूत्र-६४ )

'एगंतबाले' त्यादि, एकान्तबालो मिथ्यादृष्टिरविरतो वा, एकान्तग्रहणेन मिश्रतां व्यवच्छिनत्ति । यद्यैकान्तबालत्वे समानेऽपि नानाविधायुर्बन्धन तन्महारम्भाद्युन्मार्गदेशनादितनुकषायत्वाऽऽद्यकामनिर्जरादितद्धेतुविशेषवशादिति, अत एव बालत्वे समानेऽप्यविरतसम्यग्दृष्टिर्मनुष्यो देवायुरेव प्रकरोति, न शेषाणि. एकान्तबालप्रतिपक्षत्वादेकान्तपण्डितसूत्रं तत्र च-'एगन्तपण्डिए णं' ति-एकान्तपण्डित साधू 'मणुस्से' त्ति-विशेषण स्वरूपज्ञानार्थमेव, अमनुष्यस्यैकान्तपण्डितत्वायोगात्तदयोगश्च सर्वविरतेरन्यस्याभावादिति । 'एगतपंडिए

णं मणुस्से आउयं सिय पकरेइ सिय नो पकरेइ ' त्ति—सम्यक्त्वसप्तके क्षपिते न बध्नात्यायु साधु, अर्वाक् पुनर्बध्नातीत्यत उच्यते, स्यात्प्रकरोतीत्यादि केवलमेव ' दो गईओ पन्नायंति ' त्ति-केवलशब्द: सकलार्थस्तेन साकल्येनैव द्वे गती प्रज्ञायेते-अवबुध्येते केवलिना तयोरेव सत्त्वादिति ' अंतकिरियं ' त्ति-निर्वाणम् ' कप्पोववत्तिय ' त्ति-कल्पेषु-अनुत्तरविमानान्तदेवलोकेषूपपत्तिः -उत्पत्तिर्या सैव कल्पोपपत्तिका इह च कल्पशब्द: सामान्येनैव वैमानिकदेवाऽऽवासाभिधायक इति । एकान्तपण्डितो द्वितीयस्थानवर्त्तित्वाद् बालपण्डितस्य बालपण्डितसूत्रम् । तत्र च-' बालपंडिए णं ' ति-श्रावक ' देसं उवरमइ ' त्ति—विभक्तिविपरिणामात् देशादुपरमते-विरतो भवति, ततो देशं स्थूलप्राणातिपातादिकं प्रत्याख्याति, वर्जनीयतया प्रतिजानीते । भ० १ श० ८ उ० ।

( १५ ) क्रियावाद्यादिजीवानामायुर्यथा—

किरियावादी णं भंते ! जीवा किं णेरइयाउयं पकरेंति, तिरिक्खजोणियाउयं, मणुस्साउयं पकरेंति ? । गोयमा ! णो णेरइयाउयं पकरेंति, णो तिरिक्खजोणियाउयं पकरेंति । मणुस्साऽऽउयं पकरेंति, देवाउयं पि पकरेंति । जइ देवाउयं पकरेंति । किं भवणवासिदेवाउय ०जाव वेमाणियदेवाउयं पकरेंति ?, गोयमा ! णो भवणवासिदेवाउयं पकरेंति, णो वाणमंतरदेवाउयं पकरेंति, णो जोइसियदेवाउयं, पकरेंति वेमाणियदेवाउयं पकरेंति ॥ अकिरियावादी णं भंते ! जीवा किं णेरइयाउयं पकरेंति, तिरिक्ख पुच्छा, गोयमा ! णेरइयाउयं पि पकरेंति, ०जाव देवाउयं पि पकरेंति । एवं अण्णाणियवादी वि, वेणइयवादी वि ।

' किरिये ' त्यादि ' मणुस्साउयं पि पकरेंति देवाउयं पि पकरेंति त्ति-तत्र ये देवा नारका वा क्रियावादिनस्ते मनुष्यायुः प्रकुर्वन्ति ये तु मनुष्या पञ्चेन्द्रियतिर्यञ्चो वा ते देवायुरिति ।

सलेश्यादीनां जीवाना क्रियावाद्यादीनामायुर्यथा—

सलेस्सा णं भंते ! जीवा किरियावादी किं णेरइयाउयं पकरेंति पुच्छा , गोयमा ! णो णेरइयाउयं एवं जहेव जीवा तहेव सलेस्सा वि चउहिं वि समोसरणेहिं भाणियव्वा । कण्हलेस्सा णं भंते ! जीवा किरियावादी किं णेरइयाउयं पकरेंति पुच्छा, गोयमा ! णो णेरइयाउयं पकरेंति, णो तिरिक्खजोणियाउयं पकरेंति, मणुस्साउयं पकरेंति, णो देवाउयं पकरेंति ॥ अकिरिया-अण्णाणिय-वेणइयवादी य चत्तारि वि आउयं पकरेंति । एवं णीललेस्सा वि । काउलेस्सा वि ॥ तेउलेस्सा णं भंते ! जीवा किरियावादी किं णेरइयाउयं पकरेंति ? पुच्छा, गोयमा ! णो णेरइयाउयं पकरेंति, णो तिरिक्खजोणियाउयं पकरेंति, मणुस्साउयं पि पकरेंति, देवाउयं पि पकरेंति, जइ देवाउयं पकरेंति तहेव, तेउलेस्सा णं भंते ! जीवा अकिरियावादी किं णेरइयाउयं पुच्छा, गोयमा ! णो णेरइयाउयं पकरेंति, तिरिक्खजोणियाउयं पि पकरेंति, मणुस्साउयं पि पकरेंति, देवाउयं पि पकरेंति । एवं अण्णाणियवादी वि वेणइयवादी वि जहा तेउलेस्सा । एवं पम्हलेस्सा वि । सुक्कलेस्सा वि णेयव्वा ॥ अलेस्सा णं भंते ! जीवा किरियावादी किं णेरइयाउयं पुच्छा ?, गोयमा ! णो णेरइयाउयं पकरेंति णो तिरिक्खजोणियाउयं पकरेंति णो मणुस्साउयं पकरेंति णो देवाउयं पकरेंति ।

' कण्हलेस्सा णं भंते ! जीवा ' इत्यादौ ' मणुस्साउयं पकरेंति ' त्ति-यदुक्तं तन्नारकासुरकुमारादीनाश्रित्यावसेयम् । यतो ये सम्यग्दृष्टयो मनुष्या पञ्चेन्द्रियतिर्यञ्चश्च ते मनुष्यायुर्न बध्नन्तीत्येव वैमानिकायुर्बन्धकत्वात्तेषामिति । ' अलेस्सा णं भंते ! जीवा किरियावाई ' इत्यादि, अलेश्या -सिद्धा: अयोगिनश्च ते चतुर्विधमप्यायुर्न बध्नन्तीति । भ० ३० श० १ उ० ।

(१६) कृष्णपाक्षिकादीनां क्रियावाद्यादीनां जीवानामायुर्यथा-

कण्हपक्खिया णं भंते ! जीवा अकिरियावादी किं णेरइयाउय पुच्छा, गोयमा ! णेरइयाउयं पि पकरेंति । एव चउव्विहं पि । एवं अण्णाणियवादी वि, वेणइयवादी वि ॥ सुक्कपक्खिया जहा सलेस्सा ॥

सम्यग्दृष्ट्यादिक्रियावाद्यादीना जीवानामायुर्यथा—

सम्मद्दिट्ठी णं भंते ! जीवा किरियावादी किं णेरइयाउयं पुच्छा, गोयमा ! णो णेरइयाउयं पकरेंति, णो तिरिक्खजोणियाउयं पकरेंति । मणुस्साउयं पि पकरेंति, देवाउयं पि पकरेंति । मिच्छादिट्ठी जहा कण्हपक्खिया ॥ सम्ममिच्छादिट्ठी णं भंते ! अण्णाणियवादी किं णेरइयाउयं पकरेंति जहा अलेस्सा । एवं वेणइयवादी वि ॥

सम्यग्मिथ्यादृष्टिपदे-' जहा अलेस्स ' त्ति—समस्तायूंपि न बध्नन्तीत्यर्थ । नारकदण्डके-' किरियावाईणमि ' त्यादौ यन्नैरयिकायुर्देवायुश्च न प्रकुर्वन्ति क्रियावादिनारकास्तन्नारकभवानुभावादेव । यच्च तिर्यगायुर्न प्रकुर्वन्ति तत्क्रियावादानुभावादित्यवसेयम् । अक्रियावादादिसमवसरणत्रयं तु नारकाणा सर्वपदेषु तिर्यग्मनुष्यायुषी एव भवत । सम्यग्मिथ्यात्वे पुनर्विशेषोऽस्तीति तद्दर्शनायाह-नवरं ' सम्मे' त्यादि, सम्यग्मिथ्यादृष्टिनारकाणा द्वे एवान्तिमे समवसरणे स्त तयो चायुर्बन्धो नास्त्येव गुणस्थानकस्वभावात्तस्ते तयोर्न किंचिदपि आयु प्रकुर्वन्तीति ।

(१७) ज्ञानिनाम् , अज्ञानिनां, विभङ्गज्ञानिनाञ्च क्रियावाद्यादिजीवानामायुर्यथा—

णाणी आभिणिबोहियणाणी य, सुअणाणी य, ओहिणाणी य जहा सम्मद्दिट्ठी ॥ मणपज्जवणाणी णं भंते ! पुच्छा, गोयमा ! णो णेरइयाउयं पकरेंति, णो तिरिक्खजोणियाऽऽउयं पकरेंति, णो मणुस्साउयं पकरेंति । देवाउयं पकरेंति । जइ देवाउयं पकरेइ किं भवणवासी पुच्छा,

गोयमा ! णो भवणवासी देवाउयं पकरेंति, णो वाणमंतरदेवाऽऽउयं पकरेंति, णो जोइसियवेमाणियदेवाउयं पकरेंति । केवलणाणी जहा अलेस्सा । अण्णाणी ०जाव विभंगणाणी जहा कण्हपक्खिया ॥

संज्ञिकादीनां क्रियावाद्यादिजीवानामायुर्यथा—

सण्णासु चउसु वि ०जाव सलेस्सा णो सण्णोवउत्ता जहा मणपज्जवणाणी ॥

सवेदकावेदकसकषायकषायिसयोग्ययोगिसाकारोपयुक्तानाकारोपयुक्तानां क्रियावाद्यादिजीवानामायुर्यथा—

सवेदगा ०जाव णपुंसगवेदगा जहा सलेस्सा ॥ अवेदगा जहा अलेस्सा ॥ सकसाई ०जाव लोभकसाई जहा सलेस्सा ॥ अकसाई जहा अलेस्सा ॥ सजोगी ०जाव कायजोगी जहा सलेस्सा ॥ अजोगी जहा अलेस्सा ॥ सागारोवउत्ता य, अणागारोवउत्ता य जहा सलेस्सा ॥ ( सूत्र-८२४ )

क्रियावाद्यादिनैरयिकादीनामायुर्यथा—

किरियावादी णं भंते ! णेरइया किं णेरइयाउयं पुच्छा, गोयमा ! णो णेरइयाउयं, णो तिरिक्खजोणियाउयं पकरेइ, मणुस्साउयं पकरेइ, णो देवाउयं पकरेइ ॥ अकिरियावादी णं भंते ! णेरइया पुच्छा, गोयमा ! णो णेरइयाउयं पकरेइ, तिरिक्खजोणियाउयं पकरेइ, मणुस्साउयं पि पकरेइ, णो देवाउयं पि पकरेइ ॥ एवं अण्णाणियवादी वि ॥ वेणइयवादी वि ॥ सलेस्सा णं भंते ! णेरइया किरियावादी किं णेरइयाउयं, एवं सव्वेऽवि णेरइया, जे किरियावादी ते मणुस्साउयं एगं पकरेंति । जे अकिरियावादी अण्णाणियवादी वेणइयवादी वि ते सव्वट्ठाणेसु वि णो णेरइयाउयं पकरेंति । तिरिक्खजोणियाउयं पकरेंति, मणुस्साउयं पि पकरेंति, णो देवाउयं पि पकरेंति, णवरं सम्मामिच्छत्ते उवरिल्लेहिं दोहिं समोसरणेहिं न किंचि वि पकरेंति, जहेव जीवपदे । एवं ०जाव थणियकुमारा जहेव णेरइया ॥ अकिरियावादी णं भंते ! पुढवीकाइया पुच्छा, गोयमा ! णो णेरइयाउयं पकरेइ, तिरिक्खजोणियाउयं पकरेइ, मणुस्साउयं पकरेइ, णो देवाउयं पकरेइ ॥ एवं अण्णाणियवादी वि ॥ सलेस्सा णं भंते ! एवं जं जं पदं अत्थि पुढवीकाइयाणं तहिं तहिं मज्झिमेसु दोसु समोसरणेसु एवं चेव दुविहं आउयं पकरेंति, णवरं तेउलेस्साए किं पि पकरेंति ॥ एवं आउकाइयाण वि, एवं वणस्सइकाइयाण वि, तेउकाइया, वाउकाइया सव्वट्ठाणेसु मज्झिमेसु दोसु समोसरणेसु णो णेरइयाउयं पकरेइ, तिरिक्खजोणियाउयं पकरेइ, णो मणुस्साउयं पकरेइ, णो देवाउयं पकरेइ- बेइंदिय-तेइंदिय-चउरिंदिया णं जहा पुढवीकाइया णं णवर सम्मत्ते णाणेसु ण एक्कं पि आउयं पकरेंति ॥ किरियावादी णं भंते ! पंचिंदियतिरिक्खजोणिया किं णेरइयाउयं पकरेंति, पुच्छा, गोयमा ! जहा मणपज्जवणाणी अकिरियावादी अण्णाणियवादी वेणइयवादी चउव्विहं पि पकरेंति । जहा ओहिया तहा सलेस्सा वि ॥ कण्हलेस्सा णं भंते ! किरियावादी पंचिंदियतिरिक्खजोणिया किं णेरइयाउयं पुच्छा, गोयमा ! णो णेरइयाउयं पकरेंति, णो तिरिक्खजोणियाउयं पकरेंति, णो मणुस्साउयं पकरेंति, णो देवाउयं पकरेंति ॥ अकिरियावादी, अण्णाणियवादी, वेणइयावादी चउव्विहं पि पकरेंति । जहा कण्हलेस्सा । एवं णीललेस्सा वि । काउलेस्सा वि । तेउलेस्सा जहा सलेस्सा । णवरं अकिरियावादी; अण्णाणियवादी; वेणइयवादी; णो णेरयाउयं पकरेंति, तिरिक्खजोणियाउयं पि पकरेंति, मणुस्साउयं पि पकरेंति, देवाउयं पि पकरेंति । एवं पम्हलेस्सा वि । एवं सुक्कलेस्सा वि भाणियव्वा । कण्हपक्खिया तिहिं समोसरणेहिं चउव्विहं पि आउयं पकरेंति । सुक्कपक्खिया जहा सलेस्सा । सम्मद्दिट्ठी जहा मणपज्जवणाणी तहेव वेमाणियाउयं पकरेंति ॥ मिच्छादिट्ठी जहा कण्हपक्खिया ॥ सम्मामिच्छादिट्ठी णं एक्कं पि आउयं पकरेंति जहेव, णेरइया णाणी ०जाव ओहिणाणी जहा सम्मद्दिट्ठी अण्णाणी ०जाव विभंगणाणी जहा कण्हपक्खिया । सेसा ०जाव अणागारोवउत्ता, सव्वे जहा सलेस्सा तहा चेव भाणियव्वा । जहा पंचिंदियतिरिक्खजोणियाणं वत्तव्वया भणिया एवं मणुस्साण वि भाणियव्वा, णवरं मणपज्जवणाणी णो सण्णोवउत्ता य जहा सम्मद्दिट्ठी तिरिक्खजोणिया तहेव भाणियव्वा । अलेस्से केवलणाणी अवेदकअकसाई अजोगी य एए एक्कं पि आउयं ण पकरेंति, जहा ओहिया जीवा । सेसं तं चेव । वाणमंतरजोइसियवेमाणिया जहा असुरकुमारा । ( सूत्र-८२५+ )

'पुढविकाइये' त्यादौ 'दुविहं आउयं' त्ति-मनुष्यायुस्तिर्यगायुश्चेति तेओलेस्साए न किं पि पकरेंति' त्ति-अपर्याप्तकावस्थायामेव, पृथिवीकायिकानां तद्भावात्तद्विगम एव चायुषो बन्धादिति सम्मत्तनाणेसु न एक्कं पि आउयं पकरेंति' त्ति-द्वीन्द्रियादीनां सम्यक्त्वज्ञानकालात्यय एवायुर्बन्धो भवत्यल्पत्वात्तत्कालस्येति नैकमप्यायुर्बध्नन्ति तयोस्त इति । पञ्चेन्द्रियतिर्यग्योनिकदण्डके । कण्हलेस्साणमि' त्यादि, यदा पञ्चेन्द्रियतिर्यञ्च सम्यग्दृष्टय कृष्णलेश्यादित्रयपरिणता भवन्ति तदायुरेकमपि न बध्नन्ति सम्यग्दृशां वैमानिकायुर्बन्धकत्वेन तेजोलेश्यादित्रय एव बन्धनादिति, तओलेस्सा जहा सलेस्स' त्ति-अनेन च क्रियावादिनो वैमानिकायुरेव इतरे तु त्रयश्चतुर्विधमप्यायु प्रकुर्वन्तीति प्राप्तं

सलेश्यानामेवविधस्वरूपतयोक्तत्वादिह तु यदनभिमतं तन्निषेधनायाऽऽह-'नवरं अकिरियावाई' त्यादि, शेषं तु प्रतीतार्थत्वान्न व्याख्यातमिति । भ० ३० श० १ उ० ।

( १८ ) अनन्तरोपपन्नकादिक्रियावाद्यादीनामायुर्यथा—

किरियावादी णं भंते ! अणंतरोववन्नगा णेरइया किं णेरइयाउयं पकरेंति पुच्छा, गोयमा ! णो णेरइयाउयं णो तिरिक्खजोणियाऽऽउयं पकरेंति । मणुयाऽउयं पकरेंति । णो देवाउयं पकरेंति । एवं अकिरियावादी वि । अण्णाणियवादी वि । वेणइयवादी वि । सलेस्सा णं भंते ! किरियावादी अणंतरोववन्नगा णेरइया किं णेरइयाउयं पुच्छा, गोयमा ! णो णेरइयाउयं ०जाव णो देवाउयं पकरेंति । एवं ०जाव वेमाणिया । एवं सव्वट्ठाणेसु अणंतरोववन्नगा णेरइया ण किंचि वि आउयं पकरेंति, ०जाव अणागारोवउत्ते त्ति । एवं ०जाव वेमाणिया । णवरं जं जस्स अत्थि तं तस्स भाणियव्वं ।(सूत्र-८२६+)। भ० ३० श० १ उ० ।

( १६ ) भविकजीवाना नैरयिकादिषूपपद्यमानानां सायुष्कत्वं यथा-

जीवे णं भंते ! जे भविए नेरइएसु उववज्जित्तए से णं भंते ! किं साऽऽउए संकमइ; निराउए संकमइ ?, गोयमा ! साउए संकमइ, नो नेराउए संकमइ। से णं भंते ! आउए कहिं कडे, कहिं समाइण्णे ? । गोयमा ! पुरिमे भवे कडे, पुरिमे भवे समाइण्णे, एवं ०जाव वेमाणियाणं दंडओ । से णूणं भंते ! जे जं भविए जोणिं उववज्जित्तए से तमाउयं पकरेइ, तं जहा-नेरइयाउयं वा ०जाव देवाउयं वा ? हंता गोयमा ! जे जं भविए जोणिं उववज्जित्तए से तमाउयं पकरेइ । तं जहा-नेरइयाउयं वा; तिरियमणुयदेवाउयं वा । नेरइयाउयं पकरेमाणे सत्तविहं पकरेइ, तं जहा-रयणप्पभापुढवीनेरइयाउयं वा ०जाव अहे सत्तमापुढवीनेरइयाउयं वा तिरिक्खजोणियाउयं पकरेमाणे पंचविहं पकरेइ, तं जहा-एगिंदियतिरिक्खजोणियाउय वा भेदो सव्वो भाणियव्वो मणुस्साउय दुविहं पकरेइ, देवाउयं चउव्विहं पकरेइ । ( सूत्र-१८४ + )

जीवे णमि' त्यादि, 'से णं भंते' त्ति-अथ तद्भदन्त ! 'कहिं कडे ' त्ति-क भवे बद्धम । समाइण्णे' त्ति-समाचरितं तद्धेतुसमाचरणात् ' जे जं भविए जोणिं उववज्जित्तए ' त्ति-विभक्तिविपरिणामाद्यो यस्यां योनावुत्पत्तुं योग्य इत्यर्थः, 'मणुस्साउयं दुविहं ' ति-संमूर्च्छिम-गर्भव्युत्क्रान्तिकभेदाद् द्विधा देवाउयं चउव्विहं' ति—भवनपत्यादिभेदात् । भ० ५ श० ३ उ० ।

( २० ) भविकजीवाना नैरयिकादिषूपपद्यमानानामायुष्करणप्रतिसंवेदनादि यथा—

रायगिहे ०जाव एवं वयासी-जीवे णं भंते ! जे भविए नेरइएसु उववज्जित्तए से णं भंते ! किं इह गए नेरइयाउयं पकरेइ, उववज्जमाणे नेरइयाउयं पकरेइ, उववन्ने नेरइयाउय पकरेइ ?, गोयमा ! इह गए नेरइयाउयं पकरेइ, नो उववज्जमाणे नेरइयाउयं पकरेइ, नो उववन्ने नेरइयाउयं पकरेइ । एवं असुरकुमारेसु वि। एवं ०जाव वेमाणिएसु । जीवे णं भंते ! जे भविए नेरइएसु उववज्जित्तए से भंते ! किं इह गए नेरइयाउयं पडिसंवेदेइ, उववज्जमाणे नेरइयाउयं पडिसंवेदेइ, उववन्ने नेरइयाउयं पडिसंवेदेइ ?, गोयमा ! नो इह गए नेरइयाउयं पडिसंवेदेइ , उववज्जमाणे नेरइयाउयं पडिसंवेदेइ , उववन्ने वि नेरइयाउयं पडिसंवेदेइ , एवं ०जाव वेमाणिएसु । ( सूत्र-२८३+ ) । भ० ७ श० ६ उ० ।

( २१ ) अनन्तरमुद्वर्त्योपपद्यमानाना नैरयिकादीनामायुष्प्रतिसंवेदनादि यथा—

णेरइया णं ! अणंतरं उव्वट्टित्ता जे भविए पंचिंदियतिरिक्खजोणिएसु उववज्जित्तए से णं भंते ! कयरं आउयं पडिसंवेदेइ ?, गोयमा ! णेरइयाउयं पडिसंवेदेइ । पंचिंदियतिरिक्खजोणियाउए से पुरओ कडे चिट्ठइ । एवं मणुस्से वि । णवरं मणुस्साउए से पुरओ कडे चिट्ठइ । असुरकुमारा णं भंते ! अणंतरं उव्वट्टित्ता जे भविए पुढवीकाइएसु उववज्जित्तए पुच्छा , गोयमा ! असुरकुमाराउयं पडिसंवेदेइ , पुढवीकाइयाउए से पुरओ कडे चिट्ठइ। एवं जो जहिं भविओ उववज्जित्तए तस्स तं पुरओ कडे चिट्ठति, तत्थ ठिओ तं पडिसंवेदेइ ०जाव वेमाणिया, णवरं पुढवीकाइओ पुढवीकाइएसु उववज्जंति, पुढवीकाइयाउयं पडिसंवेदेइ अण्णे य से पुढवीकाइयाउए पुरओ कडे चिट्ठइ , एवं ०जाव मणुस्सो सट्ठाणे उववातेयव्वो परट्ठाणे तहेव । ( सूत्र-६२८ ) भ० १८ श० ५ उ० ।

( चतुर्गत्यायुःस्थिति 'कम्म' तृतीयभागे (२६) अधिकाराङ्के दर्शयिष्यते ) ( आयुषो गुणस्थानेषु बन्धोदयसत्तास्थानाना परस्परसंबन्धेन भङ्गा " छट्ठगुणा० " ४७ गाथया ' कम्म ' शब्दे तृतीयभागे दर्शयिष्यते )

आहोस्वित्–अव्य० । आहो च स्विच्च द्व० । विकल्पे , प्रश्ने च ।' आहोस्वित् शाश्वतं स्थानं, तेषां तत्र द्विजोत्तम ! । " द्विपदमित्येके । किं देवाणं वयणं गब्भ आउ जिणवराणं" ॥३०५॥ 'आउ' त्ति-आर्षत्वात्-आहोस्विदिति । उत्त०१ अ० ।

आउंचण-आकुञ्चन-न० । सकोचात्मके क्रियाभेदे , जङ्घादेः सङ्कोचने , ध० २ अधि० । गात्रसंकोचने, आव० ४ अ० । पश्चा०। ऋजुद्रव्यस्य कुटिलत्वकारणे च कर्म आकुञ्चनं यथा ऋजुनोऽङ्गुल्यादिद्रव्यस्य येऽग्रावयवास्तेषामाकाशादिभिः

स्वसंयोगिभिर्विभागे सति मूलप्रदेशैश्च सयोगे सति येन कर्मणाङ्गुल्यादिरवयवी कुटिल संपद्यते तदाकुञ्चनम्। सम्म० ३ काण्ड ४६ गाथाटी०।

**आउचणपट्टग**-आकुञ्चनपट्टक-न०। पर्यस्तिकापट्टे, वृ०।
तच्च निर्ग्रन्थीनां धारयितुं कल्पते ( सूत्रम् )—

**नो कप्पइ निग्गंथीणं आकुचणपट्टगं धारित्तए वा परिहरित्तए वा ॥ ३६ ॥ कप्पइ निग्गंथाणं आकुचणपट्टगं धारित्तए वा परिहरित्तए वा ॥३७॥**

एव यावद्दारुदण्डकसूत्रम्।
अथामीषा सूत्राणां सम्बन्धमाह—

**बंभवयपालणऽट्ठा, तहेव पट्टायियाउ समणीणं।**
**विइयपएण जईणं, पीढगफलए विवज्जित्ता ॥ २८५ ॥**

यथा ब्रह्मव्रतपालनार्थमचलत्वादीनि न कल्पन्ते। तथा ब्रह्मचर्यरक्षणार्थमेव श्रमणीना पट्टादयोऽपि वा संदण्डकान्ता न कल्पन्ते। द्वितीयपदे तु यतीनां कल्पन्ते, पर पीठफलकानि वर्जयित्वा तानि साधूनामपवादमन्तरेणापि कल्पन्त एवेत्यर्थः। अत एतेषा सूत्राणामारम्भ। अनेन सवन्धेनायातानाममीषा ( ३६ ) प्रथमसूत्रस्य व्याख्या-नो कल्पते निर्ग्रन्थीनामाकुञ्चनपट्ट-पर्यस्तिकापट्ट धारयितुं वा परिहर्तुं वा ॥ ३६ ॥ कल्पते निर्ग्रन्थानामाकुञ्चनपट्टं धारयितुं वा परिहर्तुं वेति सूत्रार्थः॥ ३७ ॥

अथ भाष्यम्-

**गव्वो अवाउडत्तं, अणुवधिपलिमन्थुपरिवाओ।**
**पट्टमतोलियदोसा, गिलाणियाए उ जयणाए ॥ २८६ ॥**

पर्यस्तिकापट्ट परिदधानामार्यिकां दृष्ट्वा लोका ब्रूयात्-अहो अस्या कियान् गर्वो यदेव महिलाभवन्ती पर्यस्तिका करोति अपावृता वा पर्यस्तिकां वा कुर्वाणा भवेत्। ' अणुवहि-त्ति ' य उपकारे वर्तते स उपधिरुच्यते। स च तासामुपकार नायातीति कृत्वा अनुपधिरुभयकाले प्रत्युपेक्ष्यमाणे च तस्मिन् सूत्रार्थपरिमन्थ। शास्तुश्च-तीर्थकृत परिवादो यथा नूनमसर्वज्ञोऽसौ येनेत. स पर्यस्तिकापट्टो न प्रतिषिद्ध। द्वितीयपदे य सयती स्थविरो ग्लानतया यतनया अल्पसागारिकपर्यस्तिकापट्ट परिधातव्य उपरि चान्यत्प्रावरणीयं कारणे च गृह्यमाणे योऽजालिको-जालरहित स गृहीतव्यो जालसदृशपु चिरदोष एव निर्ग्रन्थानामप्यकारणे पर्यस्तिका कुर्वाणानां चतुर्लघु गुर्वादयश्च त एव दोषा।

कारणे पुनरयं विधि —

**थेरे व गिलाणे वा, सुत्तकाउमुवरिं तु पाउरणं।**
**वसमए व चेट्ठो पुव्व--कतमसारिए वाए ॥ २८७ ॥**

सूत्रपौरुषीम्; उपलक्षणत्वादर्थपौरुषीं च कर्तुं, शिष्याणां दातुमित्यर्थः। स्थविरो ग्लानो वाचनाचार्य पर्यस्तिकां कृत्वा परिप्रावृणुयात्। उत्तरार्द्धे पश्चाद् व्याख्यास्यते।
स च पर्यस्तिकापट्ट कीदृश इत्याह-

**फल्लो अचित्तो अह आविओ वा,**
**चउरंगुलो वित्थडओ असंधिमो।**
**विस्सामहेउं तु सरीरगस्स,**
**दोसा अवट्टंभगया य एवं ॥ २८८ ॥**

फलाज्जात. फाल; सौत्रिक इत्यर्थ। आचित्र -अकुवेर.। अथ सौत्रिको न प्राप्यते तत आविको वा स च चतुरङ्गुलविस्तृत.। स्थूलोऽसंधिमश्चापान्तराले संधिरहित एवंविधः पर्यस्तिकापट्ट शरीरस्य विश्रामहेतोर्गृह्यते ये वाऽवष्टम्भगता "अवरकुथुद्देहिय" इत्यादिका दोषा. तथैवमाकुञ्चनपट्ट परिधीयमान न भवन्ति। वृ० ५ उ०।

**आउंच**-(ट) णा-आकुञ्चना-स्त्री०। आकुञ्चन-गात्रसकोचन तदेवाकुञ्चना। सङ्कोचे, ध० ३ अधि०।

**आउंटण**-आकुंचन-न०। ' आर्षेऽन्यदपि दृश्यते ' इति प्राकृतव्याकरणाच्चस्य ट। संकोचने, आव० ४ अ०। अउटणं गात्रसखेवो। आ० चू० ४ अ०। आवर्जने च। पञ्चा० ७ विव०।

**आउंटणपसारण**-आकुञ्चनप्रसारण-न०। आकुञ्चन जङ्घादेः संकोचनं, प्रसारणं च तस्यैव जङ्घादे सङ्कुचितस्य ऋजुकरणं आकुञ्चन-प्रसारणे च। जङ्घादिसङ्कोचनाकुञ्चितजङ्घाधृजुकरणयोस्तदात्मके, एकासनप्रत्याख्यानस्याकारविशेषे च। प्रव०। " अण्णत्थ आउंटणपसारणेण " आकुञ्चनप्रसारणे चाऽसहिष्णुतया क्रियमाणे यत्किञ्चिदासनं चलति ततोऽन्यत्र प्रत्याख्यान तस्मिन् हि क्रियमाणे न प्रत्याख्यानभङ्ग। प्रव० ४ द्वार। ध०। हत्थं वा पायं वा सीसं वा पसारे आउटेज्ज वा पसारेज्ज वा ण भज्जेति। आ० चू० ६ अ०।

आकुण्टनादिप्रस्तावादिदमाह—

**देवे णं भंते ! महिड्डिए०जाव महेसक्खे लोगंते ठिच्चा पभू अलोगंसि हत्थं वा०जाव ऊरूं वा आउंटावेत्तए वा पसारेत्तए वा ? णो इणट्ठे समट्ठे, से केणऽट्ठेणं भंते ! एवं वुच्चइ देवे णं महिड्डिए०जाव महेसक्खे लोगंते ठिच्चा णो पभू अलोगंसि हत्थं वा ०जाव पसारेत्तए वा ?, गोयमा ! जीवा णं आहारोवचिया पोग्गला बोंदिचिया पोग्गला कडेवरचिया पोग्गला पोग्गला चेव पप्प जीवाण य अजीवाण य गइपरियाये आहिज्जइ, अलोए णं णेवऽत्थि जीवा णेवऽत्थि पोग्गला से तेणऽट्ठेणं ०जाव पसारेत्तए वा सेवं भंते ! भंते त्ति। ( सूत्र-५८६ )।**

'देवे णमि' त्यादि.'जीवा ण आहारोवचिया पोग्गल'त्ति-जीवाना, जीवानुगता इत्यर्थ। आहारोपचिता-आहाररूपतयोपचिता। ' बोंदिचिया पोग्गल ' त्ति-अव्यक्तावयवशरीररूपचिता 'बोंदिचिया पोग्गल' त्ति-अव्यक्तावयवशरीररूपतया चिता ' कडेवरचिया पोग्गल ' त्ति-शरीररूपतया चिता उपलक्षणत्वाच्चास्योच्छ्वासचिताः पुद्गला इत्याद्यपि द्रष्टव्यम् अनेन चेदमुक्तं-जीवानुगामिस्वभवा पुद्गला भवन्ति ततश्च यत्रैव क्षेत्रे जीवास्तत्रैव पुद्गलानां गति स्यात्तथा 'पोग्गला चेव पप्प'त्ति-पुद्गलानेव प्राप्य-आश्रित्य जीवानां च 'अजीवाण य'त्ति-पुद्गलानां च गतिपर्यायो-गतिधर्म 'आहिज्जइ'त्ति आख्यायते। इदमुक्तं भवति-यत्र क्षेत्रे पुद्गलास्तत्रैव जीवानां पुद्गलाना च गतिर्भवति,एव चालोके नैव सन्ति जी-

वा नैव च सन्ति पुद्गला इति तत्र जीवपुद्गलानां गतिर्नास्ति तदभावाच्चालोके देवो हस्ताद्याकुण्टयितु प्रसारयितुं वा न प्रभु । भ० १६ श० ८ उ० ।

आउअकरण-अ.युष्करण-न०। आयुषः करणमिति । जीवितविपाकेत्वयस्यायुष्कर्मविशेषस्य निर्वर्तने, "आउअकरण०" (२०५४ गा०) 'आयु करणम् इति-आयुष -पञ्चमकर्मप्रकृत्यात्मकस्य करणं-निर्वर्तनम्-आयु करणम् । उत्त०पाई० ४ अ० । ( अत्र विस्तर 'असखय' शब्दे प्रथमभागे गत । )

आउकम्म-आयुष्कर्मन्-न० । एति-याति चत्यायुस्तन्निबन्धन कर्मायुष्कर्म । कर्मविशेषे, उत्त० १ अ० ( तद्वक्तव्यता 'आउ' शब्देऽस्मिन्नेव भागे गता )

आउकम्मे दुविहे पण्णत्ते. तं जहा-अद्धाउए चेव, भवाउए चेव । ( सूत्र-१०५+ ) स्था० २ ठा० ४ उ० । (व्याख्या स्वस्वस्थाने )

इदानीं पञ्चविधमायुष्कर्म व्याचिख्यासुराह—

सुरनरतिरिनरयाऊ, हडिसरिसं ॥२३×॥

आयु शब्द प्रत्येकं योज्यते, ततश्च सुष्ठु राजन्ते इति सुरा । यद्वा-'सुरत्' ऐश्वर्यदीप्त्यो सुरन्ति-विशिष्टमैश्वर्यमनुभवन्ति दिव्याभरणकान्त्या सहजशरीरकान्त्या च दीप्यन्त इति सुरा । यदिवा-सुष्ठु रान्ति-ददति प्रणतानामीप्सितमर्थं लवणाधिपसुस्थित इव लवणजलधौ मार्गं जनार्दनस्येति सुरा देवास्तेषामायु सुरायुर्येन तेष्ववस्थितिर्भवति १ । नृणन्ति-निश्चिन्वन्ति वस्तुतत्त्वमिति नरा -मनुष्यास्तेषामायुर्नरायुस्तद्भावावस्थितिहेतु २ । 'तिरि' त्ति—प्राकृतत्वात्तिरोऽञ्चन्ति-गच्छन्तीति तिर्यञ्च व्युत्पत्तिनिमित्त चैतत्, प्रवृत्तिनिमित्तं तु तिर्यग्गतिनाम, एते चैकेन्द्रियादय , ततस्तिरश्चामायुस्तिर्यगायुर्येनैतेषु स्थीयते । नरान् उपलक्षणत्वात् तिरश्चोऽपि प्रभूतपापकारिण कायन्तीवाऽऽह्वयन्तीवेति नरका -नरकावासा तत्रोत्पन्ना जन्तवोऽपि नरका., नरको वा विद्यते येषा ते "अभ्रादिभ्य " ॥ ७ । २ । ४६ ॥ इत्यप्रत्यये नरकास्तेषामायुर्नरकायुर्येन ते तेषु ध्रियन्ते । " एतच्चायुर्हडिसदृशं भवति । कर्म० १ कर्म० ( हडिदृष्टान्त. 'आउ' शब्देऽस्मिन्नेवभागे (८) अधिकाराङ्क गत )

आउक्काइय-अप्कायिक-पुं० । आपो—द्रवास्ता एव काय शरीर यस्येति अप्काय एवाप्कायिक स्वार्थे इकप्रत्यय. । एकेन्द्रियसंमारम्भमापन्नजीवविशेषे, प्रज्ञा० १ पद । ( अत्रस्था सर्वा वक्तव्यता 'आउक्काय' शब्दादवगन्तव्या )

आउकाय-अप्काय-पुं० । आप कायो यस्येति । एकेन्द्रियसमारम्भमापन्नजीवभेदे, षट्कायभेदे च जीविनि, प्रज्ञा० १ पद । स० ।

विषय-सूची—

( १ ) अप्कायिकाना द्वैविध्यम् ।
( २ ) अप्कायिकस्य शरीरादिवर्णनम् ।
( ३ ) सचित्ता-ऽचित्त-मिश्रविवेक ।
( ४ ) तीर्थोदकस्याऽचित्तत्वम् ।
( ५ ) अप्कायशस्त्रनिरूपणम् ।
( ६ ) सचित्ताऽप्कायपरिभोगविचार ।
( ७ ) अप्कायपरिभोगकारणानि ।
( ८ ) अप्कायसमारम्भव्यावृत्तस्यैव मुनित्वम् ।
( ९ ) शाक्याऽऽदिमुनयो नियमत. अप्कायिकास्तदाश्रितजीवाश्च विहिंसन्ति ।
( १० ) अप्कायविहिंसननिषेध. ।
( ११ ) अप्कायस्पर्शनिषेध ।
( १२ ) शीतोदकाऽऽदिपरिसेवननिषेध ।

( १ ) संप्रत्यप्कायिकप्रतिपादनार्थमाह-ते च द्विविधाः-

से किं तं आउका ( का ) इया ?, आउकाइया दुविहा पन्नत्ता । तं जहा-सुहुमआउकाइया य, बादर आउकाइया य । से किं तं सुहुमआउकाइया ?, सुहुमआउकाइया दुविहा, पन्नत्ता, तं जहा-पज्जत्तसुहुमआउकाइया य, अपज्जत्तसुहुमआउकाइया य । सेत्तं सुहुमआउकाइया ॥ से किं तं बादरआउकाइया ?, बादरआउकाइया अणेगविहा पण्णत्ता, तं जहा-ओसा, हिमए, महिया, करए, हरतणुए, सुद्धोदए, सीतोदए, उसिणोदए, खारोदये, खट्टोदए, अंबिलोदए, लवणोदए, वारुणोदए, खीरोदए, घओदए, खोदोदए, रसोदए, जेयावरणे, तहप्पगारा । ते समासओ दुविहा पण्णत्ता । तं जहा-पज्जत्तगा य, अपज्जत्तगा य । तत्थ णं जे ते अपज्जत्तगा ते णं असंपत्ता । तत्थ णं जे ते पज्जत्ता एतेसि णं वण्णाऽऽदेसेणं गंधादेसेणं रसादेसेणं फासादेसेणं सहस्सग्गसो विहाणाइं संखेज्जाइ जोणिप्पमुहसयसहस्साइं, पज्जत्तगणिस्साए अपज्जत्तगा वक्कमंति । जत्थ एगो तत्थ नियमा असंखेज्जा । सेत्त बादरआउकाइया । सेत्तं आउकाइया । ( सूत्र-१६ )

'उस्सा' इत्यवश्याय त्रेह , 'हिम' स्त्यानोदकं, 'महिका' गर्भमासेषु सूक्ष्मवर्ष , करको-घनोपल , हरतनुर्यो भुवमुद्भिद्य गोधूमाङ्कुरतृणाग्रादिषु बद्धो बिन्दुरुपजायते, 'शुद्धोदकम्' अन्तरिक्षसमुद्भवं नद्यादिगतं च, तच्च स्पर्शरसादिभेदादनेकभेदं, तदेवानेकभेदत्वं दर्शयति-शीतोदकं-नदीतडागाऽवटवापीपुष्करिण्यादिषु शीतपरिणामम् , उष्णोदकं-स्वभावत एव क्वचिन्निर्झरादावुष्णपरिणामं क्षारोदकम्-ईषल्लवणस्वभावं यथा लाटदेशादौ केषुचिदवटेषु, खट्टोदकम्-ईषदम्लपरिणामम् . अम्लोदकं-स्वभावत एवाम्लपरिणाम काञ्जिकवत् , लवणोदकं लवणसमुद्रे, वारुणं वारुणसमुद्रे, क्षीरोदक क्षीरसमुद्रे, क्षोदोदक इक्षुसमुद्रे, रसोदकं पुष्करवरसमुद्रादिषु, येऽपि चान्ये तथाप्रकारा -रसस्पर्शादिभेदभिन्ना घृतोदकादयो बादरा अप्कायिका. ते सर्वे बादराप्कायिकतया प्रतिपत्तव्या , 'ते समासओ' इत्यादि प्राग्वत् , नवर सङ्ख्येयानि योनिप्रमुखाणि शतसहस्राणि इत्यत्रापि सप्त वेदितव्यानि । उक्ता अप्कायिका. । प्रज्ञा० १ पद ।

आउस्स वि दाराइं , ताइं जाइं हवंति पुढवीए ।
नाणत्तीउ विहाणे , परिमाणुवभोगसत्थे य ॥ १०६ ॥

अप्कायस्यापि तान्येव द्वाराणि भवन्ति, यानि पृथिव्या प्रतिपादितानीति, नानात्वं भेदरूप विधानपरिमाणोपभोग-शस्त्रविषय द्रष्टव्यं, चशब्दाल्लक्षणविषयं च, तुशब्दोऽवधारणार्थ, एतद्गतमेव नानात्व, नाऽन्यगतमिति।

तत्र विधानं-प्ररूपणा, तद्गत नानात्वं प्रदर्शयितुमाह—

दुविहा य आउजीवा, सुहुमा तह बायरा य लोयम्मि।
सुहुमा य सव्वलोए, पंचेव य बायरविहाणा ॥१०७॥

स्पष्टा।

तत्र पञ्च बादरविधानानि दर्शयितुमाह—

सुद्धोदए य ओसा-हिमे य महिया तरतणू चेव।
बायरआउविहाणा, पंचविहा वरिणया एए ॥ १०८ ॥

शुद्धोदकं तडागसमुद्रनदीह्रदावटादिगतमवश्यायादिरहितमिति, अवश्यायो-रजन्यां यस्त्रेह पतति, हिमं तु-शिशिरसमये शीतपुद्गलसम्पर्काज्जलमेव कठिनीभूतमिति, गर्भमासादिषु सायं प्रातर्वा धूमिकापातो महिकेत्युच्यते, वर्षाशरत्कालयोर्हरिताङ्कुरमस्तकस्थितो जलबिन्दुर्भूमिस्नेहसम्पर्कोद्भूतो हरतनुशब्देनाभिधीयत, एवमेते पञ्च बादराप्कायविधाना व्यावर्णिता। एते बादराप्कायाः समासतो द्वेधा पर्याप्तका, अपर्याप्तकाश्च। तत्रापर्याप्तका-वर्णादीनाम्, संप्राप्तपर्याप्तकास्तु-वर्णगन्धरसस्पर्शादेशैः सहस्राग्रशो भिद्यन्ते ततश्च सख्येयानि योनिप्रमुखाणि शतसहस्राणि भवन्ति भेदानामित्यवगन्तव्यम्। संवृतयानयश्चैते सा च योनिः सचित्ताऽचित्त-मिश्रभेदात् त्रिधा। पुनश्च शीतोष्णोभयभेदात् त्रिधैव। एवं गण्यमाना योनीनां सप्त लक्षा भवन्ति इति प्ररूपणानन्तरं परिमाणद्वारमाह—

जे बायरपज्जत्ता, पयरस्स असंखभागमेत्ता ते।
सेसा तिन्नि वि रासी, वीसुं लोगा असंखेज्जा ॥ १०९ ॥

'जे बायरे' त्यादि, ये बादराप्कायपर्याप्तकास्ते संवर्तितलोकप्रतरासंख्येयभागप्रदेशराशिपरिमाणाः। शेषास्तु त्रयोऽपि विष्वक्-पृथगसंख्येयलोकाकाशप्रदेशराशिपरिमाणा इति। विशेषश्चायम्-बादरपृथिवीकायपर्याप्तकेभ्यो बादराप्कायपर्याप्तका असंख्येयगुणा, बादरपृथिवीकायाऽपर्याप्तकेभ्यो बादराप्कायिकाऽपर्याप्तका असंख्येयगुणा सूक्ष्मपृथिवीकायाऽपर्याप्तकेभ्य सूक्ष्माप्कायाऽपर्याप्तका विशेषाधिका, सूक्ष्मपृथिवीकायपर्याप्तकेभ्य सूक्ष्माप्कायपर्याप्तका विशेषाधिका। आचा० १ श्रु० १ अ० ३ उ०।

भौमान्तरिक्षभेदाद् द्विविधत्वम्। अप्कायद्वारमाह—

आउक्काओ दुविहो, भोमो तह अन्तलिक्खो य ॥२८॥

अप्कायो द्विविध-भौम, आन्तरिक्षश्च।

इदानीं प्रत्यासत्तिन्यायादान्तरिक्षस्तावदुच्यते, तत्रान्तरिक्षमपि द्विविधम्-

मिहिया वाम पुण अं-तलिक्खिअं० ॥ २९+ ॥

सोऽन्तरिक्षजो द्विविध-महिका--धूमिकारूपाऽप्काय 'वास' ति-वर्षारूपश्चाप्काय। ओघ०। (भौमाप्कायिकव्याख्यानमग्र १७४७ गाथया करिष्यते)

(२) अप्कायिकस्य शरीरादि यथा—

तेसि णं भंते! जीवाणं कति सरीरा पण्णत्ता?, गोयमा! तओ सरीरया पण्णत्ता, तं जहा-ओरालिते, तेयत्ते, कम्मत्ते, जहेव सुहुमपुढविकाइयाणं। नवरं थिवुगसंठिया पण्णत्ता, सेसं तं चेव ०जाव दुगतिया दुआगतिया परित्ता असंखेज्जा पण्णत्ता। सेत्त सुहुमआउकाइया। (सूत्र-१६×)। से किं तं बायरआउकाइया?, बायरआउकाइया अणेगविहा पण्णत्ता, तं जहा-उसा हिमे ०जाव जे यावन्ने तहप्पगारा। ते समासओ दुविहा पण्णत्ता, तं जहा-पज्जत्ता य, अपज्जत्ता य। तं चेव सव्वं। नवरं थिवुगसंठिया, चत्तारि लेसाओ, आहारो नियमा छद्दिसिं, उववाओ तिरिक्खजोणियमणुस्सदेवेहिंं, ठिती-जहन्नेणं अंतोमुहुत्तं, उक्कोसेणं सत्तवाससहस्साइं। सेसं तं चेवं। जहा-बायरपुढविकाइया णं ०जाव दुगतिया तिआगतिया परित्ता असंखेज्जा पन्नत्ता समणाउसो!। सेत्तं बायरआउकाइया। सेत्तं आउकाइया। (सूत्र-१७)

'ते समासतो' इत्यादि, प्राग्वद् नवरं सख्येयानि योनिप्रमुखाणि शतसहस्राणीत्यत्रापि सप्त वेदितव्यानि 'तेसि णं भंते! जीवाणं कइ सरीरगा" इत्यादि, द्वारकलापचिन्तायामपि बादरपृथिवीकायिकगमोऽनुगन्तव्यो, नवरं संस्थानद्वारे-शरीरकाणि स्तिबुकसंस्थानसंस्थितानि वक्तव्यानि। स्थितिद्वारे-जघन्यत स्थितिरन्तर्मुहूर्त्तम्, उत्कर्षतः सप्तवर्षसहस्राणि। शेष तथैव। जी० १ प्रति०।

अप्कायिकस्य जीवत्व यथा-साम्प्रतं परिमाणद्वारानन्तरं चशब्दसूचितलक्षणद्वारमाह—

जह हत्थिस्स सरीरं, कललाऽवत्थस्स अहुणोववन्नस्स।
होइ उदगंडगस्स य, एसुवमा आउजीवाणं ॥११०॥

अथवा-पर आक्षिपति-नाप्कायो जीव, तल्लक्षणायोगात्, प्रश्रवणादिवदित्यस्य हेतोरसिद्धतोद्भावनार्थं दृष्टान्तद्वारेण लक्षणमाह-'जह' त्यादि, यथा हस्तिन शरीरं कललाऽवस्थायामधुनोत्पन्नस्य द्रवं, चेतनञ्च दृष्टमेवमाप्कायोऽपीति। यथा वा-उदकप्रधानमण्डकमुदकाण्डकम्, अधुनोत्पन्नमित्यर्थ, तन्मध्यव्यवस्थित रसमात्रमसञ्जातावयवमनभिव्यक्तचञ्च्वादिप्रविभागञ्चेतनावद् दृष्टम्। एषा एवोपमाऽप्कायजीवानामपीति। हस्तिशरीरकललग्रहणञ्च महाकायत्वात्तद्धि भवतीत्यत सुखेन प्रतिपाद्यते। अधुनोपपन्नग्रहणं सप्ताहपरिग्रहार्थं, यत सप्ताहमेव कललं भवति, परतस्त्वर्बुदादि। अण्डकेऽप्युदकग्रहणमेवमेव, प्रयोगश्चायम्-सचेतना आप शस्त्रानुपहतत्वे सति द्रवत्वात्, हस्तिशरीरोपादानभूतकललवत्, विशेषणोपादानात्प्रश्रवणादिव्युदास। तथा सात्मक तोयम्, अनुपहतद्रवत्वादण्डकमध्यस्थितकललवदिति। तथा आपो जीवशरीराणि छेद्यत्वाद् भेद्यत्वादुत्क्षेप्यत्वाद्भोग्यत्वाद्घ्रेयत्वाद् ज्ञेयत्वाद्रसनीयत्वात् स्पर्शनीयत्वात् दृश्यत्वात् द्रव्यत्वादेव सर्वेऽपि शरीरधर्मा हेतुत्वेनोपन्यसनीया गगनवर्जभूतधर्मा स्वरूपवत्त्वाकारवत्त्वादय। सर्वत्रायं दृष्टान्त-सास्नाविषाणादिसंघातवदिति। ननु च रूपवत्त्वाऽऽकारवत्त्वादयो भूतधर्मा परमाणु-

प्यपि दृष्टा इत्यनेकान्तिकता, नैतदेवं यदत्र छेद्यत्वादिहेतुत्वेनोपन्यस्तं तत्सर्वमिन्द्रियव्यवहारानुपाति, न तथा परमाणवोऽत्र प्रकरणादनीन्द्रियपरमाणुव्यवच्छेद । यदि वा- नैवासौ विपक्ष सर्वस्य पुद्गलद्रव्यस्य द्रव्यशरीराभ्युपगमात्, जीवसहितासहितत्वं तु विशेष, उक्तञ्च-" तणवो णुब्भानिविगार-मुत्तजाइत्तउणिलं ता उ । सत्थासत्थहयाओ, निर्जीवमजीवरूवाओ ॥ १ ॥ " एवं शरीरत्वे सिद्धे सति प्रमाणम् । सचेतना हिमादय., क्वचित् अप्कायत्वादितरोदकवत् इति । तथा सचेतना आप., क्वचित् खातभूमिस्वभाविकसम्भवत्वाद्दर्दुरवत् । अथवा-सचेतना अन्तरिक्षोद्भवा आप , स्वाभाविकव्योमसंभूतसंपातित्वात्मत्स्यवत्, अत एते एवंविधलक्षणभाक्त्वाज्जीवा भवन्त्यप्काया.। आचा० १ श्रु० १ अ० ३ उ० ।

भौमाऽप्काय—

भूमिक्खयसाभाविय--संभवओ दद्दुरो व्व जलमुत्तं ।
अहवा मच्छो व्व सभा--ववोमसंभूयपायाओ ॥१७५७॥

विशे० । ( अस्या गाथाया. व्याख्यानं ' सचेयण ' शब्दे सप्तमे भागे करिष्यते ) भौम जलं सचित्तं, भूमिखाते स्वाभाविकसंभवात्, दर्दुरवदिति प्रयोग. । यथा-दर्दुरस्य भूमिखनने स्वाभाविक संभवो जायते, तथा जलस्यापि भूमिखाते स्वाभाविकसंभव इति । अथवा-सात्मकमन्तरिक्षोदक, स्वभावतो व्योमसंभूतस्य पातान्मत्स्यवत्, यथा मत्स्यस्य स्वभावेन व्योम्नि संभूतस्य पातो दृश्यते तथाऽन्तरिक्षजलस्यापि, इति सिद्धं जीवत्व जलस्य । ध० ३ अधि० ३८ श्लोक । सूत्र० ।

आउक्काइया, ( दश० ) आऊ चित्तमंतमक्खाया अणेगजीवा पुढो सत्ता अन्नत्थ सत्थपरिणएणं । ( सूत्र-१+ ) दश० ४ अ० ।

कललंऽडरसादीया, जह जीवा तहेव आउ जीवाऽवि ॥ ७५+ ॥

यथा कलल गर्भप्रथमाऽवस्थारूपम् अण्डरस' इत्येवमादयो जीवा अपि प्रतिपत्तव्या , प्रयोग अप्कायिका जीवा अनुपहतत्वे सति द्रवत्वात् कललाण्डरसादिवद् । व्य० १० उ० ।

इहं च खलु भो अणगाराणं उदयजीवा वियाहिया ( सूत्र-२४ ) ।

उदकरूपा जीवा । आचा० १ श्रु० १ अ० ३ उ० ।

उदकाश्रिताश्च जीवा सन्ति । तथा चाह—

संति पाणा उदगणिस्सिया जीवा अणेगे ।( सूत्र-२३+)

' संति पाणा ' इत्यादि, पूर्ववत्, कियन्त पुनस्त इति दर्शयति-' जीवा अणेगे ' पुनर्जीवोपादानमुदकाश्रितप्रभूतजीवभेदज्ञापनार्थं, ततश्चेदमुक्तं भवति-एकैकस्मिन् जीवभेदे उदकाश्रिता अनेके-असंख्येया प्राणिनो भवन्ति । आचा० १ श्रु० १ अ० ३ उ० । यद्येवम्-उदकमेव जीवास्ततोऽवश्यं तत्परिभोगे सति प्राणातिपातभाज साधव इति, अत्रोच्यते-नैव तदेवं यतो वयं त्रिविधमप्कायमाचक्ष्महे-सचित्तं, मिश्रम्, अचित्त च । आचा० १ श्रु० १ अ० ३ उ० ।

( ३ ) सचित्ताऽचित्तमिश्रविवेक —

आउक्काओ तिविहो, सचित्तो मीसओ य अचित्तो ।
सच्चित्तो पुण दुविहो, निच्छय ववहारओ चेव ॥१६॥

अप्कायस्त्रिविध., तद्यथा-सचित्तो, मिश्र , अचित्तश्च । तत्र सचित्तो द्विधा-निश्चयतो , व्यवहारतश्च ।

एतदेव सचित्तस्य निश्चयव्यवहाराभ्यां द्वैविध्यमुपदर्शयति-

घणउदही घणवलया, करगसमुद्दद्दहाण बहुमज्झे ।
अह निच्छयसच्चित्तो, ववहारनयस्स अवडाई ॥१७॥

घनोदधयो-नरकपृथ्वीनामाधारभूताः कठिनतोया. समुद्रा , घनवलयास्तासामेव नरकपृथिवीना पार्श्ववर्तिवृत्ताकारतोया ये च ' करका ' घनोपलास्तथा समुद्रह्रदाना-लवणादिसमुद्रपद्मादिह्रदानां बहुमध्यभागेऽप्कायाः 'अह' त्ति-एष सर्वोऽपि अप्कायो निश्चयसचित्त.-एकान्तसचित्त', शेषस्तु अवटाऽऽदि -अवटवापीतडागादिस्थ' । इह अवटादिस्थोऽवटादिशब्देन उक्तस्तात्स्थ्येन तद्व्यपदेशप्रवृत्ते. यथा मञ्चाः क्रोशन्तीत्यादौ, तत्रावट -कूपस्तदादिगतोऽप्कायो व्यवहारनयस्य व्यवहारनयमतेन सचित्त । उक्तः सचित्तोऽप्काय ।

सम्प्रति मिश्रमाह—

उसिणोदगमणुवत्ते , दंडे वासे य पडियमत्तम्मि ।
मोत्तूणाऽऽदेसतिगं, चाउलउदगं बहुपसन्नं ॥ १८ ॥

अनुवृत्ते दण्ड, अत्र च जातावेकवचन, ततोऽयमर्थ.-अनुवृत्तेषु त्रिषु दण्डेषु उत्कालेषु यदुष्णोदकं तन्मिश्रमिति प्रस्तावादवगम्यते, तथा हि-प्रथमे दण्डे जायमाने कश्चित्परिणमति कश्चिन्नेति मिश्र', द्वितीये प्रभूत परिणमति स्तोकोऽवतिष्ठते , तृतीये तु सर्वोऽप्यचित्तो भवति । ततोऽनुवृत्तेषु त्रिषु दण्डेषु उष्णोदकं मिश्रमेव सम्भवति । तथा वर्षे-वृष्टौ पतितमात्रे यज्जलं ग्रामनगरादिषु प्रभूततिर्यग्मनुष्यप्रचारसंभविषु भूमौ वर्तते तद्यावन्नाद्याप्यचित्तीभवति तावन्मिश्रमवगन्तव्यम् । ग्रामनगरादिभ्योऽपि बहिस्तावद्यदि स्तोकं मेघजलं निपतति तदानीं तदपि पतितमात्र मिश्रमवसेयम् । पृथिवीकायसम्पर्कतस्तस्य परिणममानत्वात् यदाप्यतिप्रभूतं जलं मेघो वर्षति तदाऽपि प्रथमतो निपतत् पृथिवीकायसंपर्केत परिणममान मिश्रं, शेषं तु पश्चान्निपतत्सचित्तमिति, तथा-मुक्त्वा-परिहृत्य आदेशत्रिकं-मतत्रिकं तदुक्ता मिश्रता न ग्राह्येति भावार्थ । चाउलोदकम्-तण्डुलोदकम् अबहुप्रसन्नं नातिस्वच्छीभूतं मिश्रमिति गाथार्थ । अबहुप्रसन्नमित्यत्राऽऽकारलोप आर्षत्वात् । ( आदेशत्रिकम् ' चाउलोदग ' शब्दे तृतीयभागे दर्शयिष्यते । )

अचित्तमिश्राऽप्कायमाह—

सीउण्हखारखत्ते, अग्गीलोणूसअंबिले नेहे ।
वुक्कंतजोणिएणं, पओयणं तेणिमं होइ ॥ २२ ॥

इयं गाथा प्रागिव व्याख्येया । नवरं पृथिवीकायस्थाने अप्कायाभिलाप कर्त्तव्य । इह या स्वकायपरकायशस्त्रयोजना द्रव्यक्षेत्रकालभावापेक्षया वा अचित्तत्वभावना साऽपि प्रागिव यथा योगमप्कायेऽपि भावनीया । तथा-यदा दधितैलादिसत्केषु घटेषु क्षिप्तस्य शुद्धजलादेरुपरि दध्याद्यवयवसत्का तरी जायते तदा सा यदि परिस्थूरा तर्हि एकया

पौरुष्या तत्परिणमति। मध्यमभावा चेत्तर्हि द्वाभ्यां पौरुषीभ्यां, स्तोका चेत्तर्हि तिसृभिः पौरुषीभिरिति।

इह तावद् व्युत्क्रान्तयोनिकेनाप्कायेनेद प्रयोजनमित्युक्तम्, अनन्तरदेव दर्शयति-

परिसेयपियणहत्था-इधोवणं चीरधोवणं चेव।
आयमणभाणधुवणं, एमाइपओयणं बहुहा ॥ २३ ॥

परिषेको—दुष्टव्रणादेरुत्थितस्योपरि पानीयेन सेचनम्। पानम्—तृडपनोदाय जलस्याभ्यवहरणम्। हस्तादिधावनं-करचरणप्रभृतिशरीरावयवानां कारणमुद्दिश्य प्रक्षालनम्, चीवरधावनं-वस्त्रप्रक्षालनम्। अस्य भिन्नविभक्तिनिर्देशो न सदैव साधुनोपधिप्रक्षालनं कर्त्तव्यमिति प्रदर्शनार्थं। आचमनम्-पुरीपोत्सर्गानन्तरं शौचकरणम्, 'भाणधुवणं' ति-पात्रकादिभाजनप्रक्षालनम्। एवमादिकमादिशब्दात्-ग्लानकार्यादिपरिग्रह। अचित्तेनाप्कायेन प्रयोजनं बहुधा-बहुप्रकारं द्रष्टव्यम्। पिं०। ओघ०। ध०।

( ४ ) तीव्रोदकस्याचित्तत्वम्—

" तिव्वोदगस्स गहणं, केइ भायणेसु असुइपडिसेहो।
गिहिभायणेसु गहणं, ठिअवासे मीसगं छारे॥ १ ॥ "

( अस्या गाथाया व्याख्या ' अचित्त ' शब्दे प्रथमभागे गता) ध० २ अ०। तत्र योऽचित्तोऽप्कायस्तेनोपयोगविधिः साधूनां, नेतराभ्यां, कथं पुनरसौ भवत्यचित्त, किं स्वभावाद्, आहोस्विच्छस्त्रसम्बन्धात्, उभयथापीति। तत्र यः स्वभावादेवाचित्तीभवति न बाह्यशस्त्रसम्बन्धात्तमचित्तं जानाना अपि केवलमनःपर्यायावधिश्रुतज्ञानिनो न परिभुञ्जते अनवस्थाप्रसङ्गभीरुतया। यतोऽनुश्रूयते भगवता किल श्रीवर्द्धमानस्वामिना विमलसलिलसमुल्लसत्तरङ्ग शैवलपटलत्रसादिरहितो महाह्रदो व्यपगताशेषजलजन्तुकोऽचित्तवारिपूर्णः स्वशिष्याणां तृड्बाधितानामपि पानाय नानुजज्ञे। तथा अचित्ततिलशकटस्थण्डिलपरिभोगानुज्ञा चाऽनवस्थादोषसंरक्षणाय भगवता न कृतेति श्रुतज्ञानप्रामाण्यज्ञापनार्थञ्च। तथाहि—सामान्यश्रुतज्ञानी बाह्येन्धनसम्पर्कादुषितस्वरूपमेवाचित्तमिति व्यवहरति, जलं, न पुनर्निरिन्धनमेवेति। अतो यद्-बाह्यशस्त्रसम्पर्कात्परिणामान्तरापन्नं वर्णादिभिस्तदचित्तं साधुपरिभोगाय कल्पते। आचा०१ श्रु० १ अ० ३ उ० २४ सूत्रटी०।

( ५ ) किम्पुनस्तच्छस्त्रमित्यत आह—

उस्सिंचणगालणधो-यणे य उवकरणकोसभंडे य।
बायर आउकाए, एवं तु समासओ सत्थं॥ ११३ ॥
किंची सकायसत्थं, किंची परकायतदुभयं किंची।
एयं तु दव्वसत्थं, भावे य असंजमो सत्थं॥ ११४ ॥

' उस्सिंचणे ' त्यादि, शस्त्रं द्रव्यभावभेदात् द्विधा। द्रव्यशस्त्रमपि समास-विभागभेदात् द्विधैव। तत्र समासतो द्रव्यशस्त्रमिदमूर्ध्वसेचनम् उत्सेचनं-कूपादेः कोशादिनोत्क्षेपणमित्यर्थः। गालनं-घनमसृणवस्त्राद्यन्तेन। धावनं-वस्त्राद्युपकरणचर्मकोशघटादिभाण्डकविषयम्, एवमादिकं बादराप्काये। एतत्पूर्वोक्तं समासतः-सामान्येन शस्त्रम्, तुशब्दो विभागापेक्षया विशेषणार्थः। ॥११३॥ विभागतस्त्विदम्-' किंची ' त्यादि, किञ्चित् स्वकायशस्त्रं नादेयं तडागस्य। किञ्चित्परकायशस्त्रं मृत्तिकास्नेहक्षारादि। किंचिदुभयम्-उदकमिश्रा मृत्तिकोदकस्य। आचा० १ श्रु० १ अ० ३ उ०।

सत्थं चेत्थं अणुवीइपासा पुढो सत्थं पवेइयं। (सूत्र-२५)

शस्यन्ते-हिंस्यन्ते अनेन प्राणिन इति शस्त्रं तच्चोत्सेचनगालनोपकरणधावनादि स्वकायादि च वर्णाद्यापत्तयो वा पूर्वावस्थाविलक्षणाः शस्त्रम्। तथा हि-अग्निपुद्गलानुगतत्वादीषत्पिङ्गलं जलं भवत्युष्णं गन्धतोऽपि धूमगन्धि रसतो विरसं, स्पर्शत उष्णम्। तच्चोद्धृतत्रिदण्डमेवंविधावस्थं यदि ततः कल्पते, नान्यथा। तथा कचवरकरीषगोमूत्रोषादीन्धनसम्बन्धात् स्तोकं स्तोकमध्यबहुभेदात्, स्तोकं स्तोकं प्रक्षिपतीत्यादिचतुर्भङ्गिकाभावना कार्या। एवमेतत्त्रिविधं शस्त्रं चशब्दोऽवधारणार्थः। अन्यतमशस्त्रसम्पर्कविध्वस्तमेव ग्राह्य, नान्यथेति। ' एत्थं ' ति-एतस्मिन्नप्काये प्रस्तुते अनुविचिन्त्य-विचार्य-इदमस्य शस्त्रमित्येवं ग्राह्यम्। पश्येत्यनेन शिष्यस्य चोदनेति। तदेव नानाविधं शस्त्रमप्कायस्यास्तीति प्रतिपादितम्, एतदेव दर्शयति—'पुढो सत्थ पवेदितं' पृथग्विभिन्नमुत्सेचनादिकं शस्त्रं प्रवेदितम्-आख्यातं भगवता, पाठान्तरं वा-'पुढोऽपासं पवेदितं' एवं पृथग्विभिन्नं लक्षणेन शस्त्रेण परिणामितमुदकग्रहणमपाशं सम्प्रवेदितम्—आख्यातं भगवता, अपाशः-अबन्धनं शस्त्रपरिणामितोदकग्रहणमबन्धनमाख्यातमिति यावदेवं तावत्साधूनां सचित्तमिश्राप्कायपरित्यागेनाचित्तपयसा परिभोगः प्रतिपादितः। आचा० १ श्रु० १ अ० ३ उ०।

( ६ ) सचित्ताप्कायपरिभोगविचार।

इच्छिज्जइ जत्थ सया, बीयपएणाऽवि फासुयं उदयं।
आगमविहिणा निउणं, गोयम! गच्छं तयं भणियं ॥७८॥

इष्यते-वाञ्छ्यते यत्र गणे सदा-नित्यम् उत्सर्गपदापेक्षया द्वितीयपदम्-अपवादपदं तेनापि किं पुनरुत्सर्गपदेनेत्यपिशब्दार्थः। प्रगता असवः-प्राणा यस्मात्तत्प्रासुकं, किम्? उदकं-जलं तच्च उत्कालत्रयोत्कलनादिप्रकारेण प्रासुकीस्यात्, न तु तप्तमात्रम्। यत उक्तं दशवैकालिके—

" गिहिणो वेयावडियं, जायआजीववत्तिया।
तत्तानिव्वुडभोइत्तं, आउरस्सरणाणि य॥ १ ॥ "

तप्तानिर्वृतभोजित्वं-तप्तं च तदनिर्वृतं चात्रिदण्डोद्वृत्तं च। ' उदकमि ' ति विशेषणान्यथानुपपत्त्या गम्यते, तद्भोजित्वं, मिश्रसचित्तोदकभोजित्वमित्यर्थः। आगमविधिना-सिद्धान्तोक्तप्रकारेण निपुणं यथा स्यात्तथा हे गौतम! स गच्छो भणितः। ग० २ अधि०।

सचित्तस्य तु विन्दुमात्रस्यापि परिभोगो न कल्पते—

जत्थ य बाहिरपाणिअ, बिंदूमित्तं पि गिम्हमाईसु।
तिण्हासोसियपाणा, मरणे वि मुनी न गिण्हंति ॥७७॥

हे गौतम! यत्र—गच्छे बाह्यपानीयविन्दुमात्रमपि-सचित्तजललेशमात्रमपि ग्रीष्मादिषु कालेषु तृष्णया—द्वितीयपरीषहेण शोषिता-ग्लानिं प्रापिताः प्राणा-इन्द्रियादयो-येषां ते तृष्णाशोषितप्राणाः मरणान्तेऽपि मुनयः-साधवो न गृह्णन्ति क्षुल्लकवत्। तथाहि—" उज्जेणी नयरी। तत्थ

धणमित्तो नाम वाणियश्रो। तस्स पुत्तो धणसम्मा नाम । सो धणमित्तो पुत्तेण सह पव्वइश्रो। अण्णया य ते साहू विहरंता मज्झएहसमये एलगच्छं (त्थ) पुरपहे पडिया। सो वि खुड्डो निसाए अभिभूश्रो सणिश्रं सणिश्रं एइ, सोऽवि से खंतश्रो सिणेहाणुरागेण पच्छो उ एइ। साहुणो वि पुरश्रो वच्चंति । अंतरा य नई समावडिया खंतएण भणियं—एहि पुत्ता ! पियसु पाणियं नित्थरसु आवई, पच्छा आलोइज्जासि, सो न इच्छति। खंतो नई उत्तिन्नो, चिंतेइ-श्रश्रो सरामि मणागं जाव स खुड्डगो पाणियं पियइ। मा ममासंकाए न पाही। एगंते पडिच्छइ ०जाव खुड्डो पत्तो नई दढव्वयाए सत्तसारयाए ण पीयं । अन्ने भणंति-अइवाहिश्रो हंत पिवामि पाणियं प च्छा गुरुमूले पायच्छित्तं पडिवज्जिस्सामि त्ति उक्खित्तो जलंजली । अह से चिंता जाया । कहमेए हलहलए जीवे पियामि, जश्रो-

“ एक्कम्मि उदगबिंदुम्मि, जे जीवा जिणवरेहिँ पण्णत्ता ।
ते पारेवयमित्ता, जंबुद्दीवे न माएज्जा ॥ १ ॥
जत्थ जलं तत्थ वणं, जत्थ वणं तत्थ निच्छश्रो तेऊ ।
तेऊवाउसहगश्रो, तसा य पच्चक्खया चेव ॥ २ ॥
ता हंतूण परपाणे य अप्पाणं जो करेइ सप्पाणं ।
अप्पाणं दिवसाणं, कएण नासेइ अप्पाणं ” ॥ ३ ॥

( ग० ) एव भावेनेण अइसंविग्गेण न पीयं उत्तिन्नो नई आमाए छिहाए नमोक्कारं झायंतो सुहपरिणामो कालगश्रो देवेसु उववन्नो। श्रोहिपउत्तो ०जाव खुड्डगसरीरं पासइ तहिमणुपविट्ठो खंतमणुगच्छइ खंतो वि एइ त्ति पत्थिश्रो। पच्छा देवेण अणुकंपाए साहूण गोकुलाणि विउव्वियाणि । साहू वि तासु वइगासु तक्काईणि गिरहंति वइया परंपरएण जणवयं पत्ता। पच्छिमाए वइयाए देवेण विंटिया पम्हुसाविया जाणावणनिमित्तं, एगो य साहू नियत्तो तयवत्थं पेच्छइ विंटियं नऽत्थि वइया, आगंतूण समाहियं तेण, पच्छा नाय तेहिं सा दिव्वं ति। इत्थंतरे देवेण साहू वंदिया, खंतो न वंदिश्रो। तेहिं पुच्छिश्रो किमेयं न वंदसि। तश्रो सव्वं परिकहेइ नियवइश्ररं, भणइ य-अहं एएण परिचत्तो वयलोवेण दोग्गइभायणं कश्रो आसि तुममेयं पियाहिं जपंतेण जइ न पाणियं पियंतो तो संसारं भमंतो, देवो पडिगउ ” त्ति। हे गौतम ! स गच्छो ऽन्य इति शेष । गाथाछन्द. । ग० २ अधि० ।

( ७ ) अप्कायपरिभोगकारणानि यथा—

एहाणे पियणे तह धो-यणे य भत्तकरणे य सेए य ।
आउस्स उ परिभोगो, गमणागमणे य जीवाणं ॥ १११ ॥

स्नान-पान-धावन-भक्त-करणसेकयानपात्रोडुपगमनाऽऽगमनादिरुपभोग । एतत्परिभोगाभिलाषिणो जीवा एतानि कारणान्युद्दिश्याऽप्कायवधे प्रवर्त्तन्त इति दर्शयति-

एएहिँ कारणेहिं, हिंसंति आउकाइए जीवे ।
सायं गवेसमाणा, परस्स दुक्खं उदीरेंति ॥ ११२ ॥

पांश-स्नानावगाहनादिकै कारणैरुपस्थितैर्विषयविषमोहितात्मानो निरनुकम्पा अप्कायिकान् जीवान् हिंसन्ति-घ्नन्ति, प्रपादयन्ति, किमर्थमित्याह-सातं-सुखं तदात्मनोऽन्वेषयन्त -प्रार्थयन्त हिताहितविचारशून्यमनस. कतिपयदिवसस्थायिरूपयौवनदर्पाध्मातचेतस सन्त साद्धिवेकरहितास्तया विवेकिजनसंसर्गविकला परस्य- अपांदिजन्तुगणस्य दु खम्-असातलक्षण तत् उदीरयन्ति; सातवेदनीयमुत्पादयन्तीत्यर्थ । आचा० १ श्रु० १ अ० ३ उ० ।

( ८ ) अप्कायसमारम्भव्यावृत्तस्यैव मुनित्वम्—

से बेमि जहा अणगारे उज्जुकडे नियागपडिवरणे अमायं कुव्वमाणे वियाहिए । ( सूत्र-१८ )

स यथा पृथिवीकायसमारम्भव्यावृत्त्युत्तरकालं सम्पूर्णोऽनगारव्यपदेशभाग् भवति तदहं ब्रवीमि । अपि. समुच्चये, स यथा चानगारो न भवति तथा च ब्रवीमि ‘ अणगारामो त्ति एगे पयवमाणे ’ त्यादि नेति, न विद्यते अगारं-गृहमेषामित्यनगारा इह च यत्यादिशब्दव्युदासेनानगारशब्दोपादानेनैतदाचष्टे-गृहपरित्याग प्रधानं मुनित्वकारणं, तदाश्रयत्वात्सावद्यानुष्ठानस्य, निरवद्यानुष्ठायी च मुनिरिति दर्शयति-‘उज्जुकडे त्ति-ऋजु -अकुटिल संयमो-दुष्प्रणिहितमनोवाक्कायनिरोध सर्वसत्त्वसंरक्षणप्रवृत्तत्वादैकरूप -सर्वत्राकुटिलगतिरिति यावत्। यदि वा-मोक्षस्थानगमनर्जुश्रेणिप्रतिपत्ति सर्वसंवरसंयमात् । कारणे कार्योपचारं कृत्वा संयम एव सप्तदशप्रकार ऋजुस्तं करोतीति ऋजुकृत्, ऋजुकारीत्यर्थ । अनेन चेदमुक्त भवति-अशेषसंयमानुष्ठायी सम्पूर्णोऽनगार एवंविधश्चेदृग्भवतीति दर्शयति-‘ नियागपडिवन्ने ’ त्ति—यजनं याग नियतो निश्चितो वा यागो नियागो मोक्षमार्ग, सङ्गताऽर्थत्वाद्धातो सम्यग्ज्ञानदर्शनचारित्रात्मतया गतं सङ्गतमिति । तं नियागं सम्यग्दर्शनज्ञानचारित्रात्मकं मोक्षमार्गप्रतिपन्नो नियागप्रतिपन्न । पाठान्तरं वा-“ निकायप्रतिपन्नो ” निर्गत काय औदारिकादिर्यस्माद्यस्मिन्वा सति स निकायो मोक्ष तं प्रतिपन्नो निकायप्रतिपन्नस्तत्कारणस्य सम्यग्दर्शनादे स्वशक्त्यानुष्ठानात् स्वशक्त्यानुष्ठानं वा मायाविनो भवतीति दर्शयति- अमायं कुव्वमाणे ’ त्ति—माया-सर्वत्र स्ववीर्यनिगूहनम्, न माया अमाया ता कुर्वाणोऽनिगूहितबलवीर्यः संयमानुष्ठानं पराक्रममाणोऽनगारो व्याख्यात इति, अनेन तज्जातीयोपादानादशेषकषायापगमोऽपि द्रष्टव्य इति । उक्तंच-‘ सोही य उज्जुयभूयस्स, धम्मो सुद्धस्स चिट्ठइ ’ त्ति।

तदेवमसावुन्मूलितसकलमायावल्ली-
वितान किं कुर्यादित्याह-

जाए सद्धाए निक्खंतो तमेव अणुपालिज्जा विजहित्तु विसोत्तियं (पाठान्तरं)-पुव्वसंजोयं । ( सूत्र-१९ )

‘ जाए सद्धाए ’ इत्यादि यया श्रद्धया प्रवर्द्धमानानुष्ठानकरणरूपया निष्क्रान्त प्रव्रज्यां गृहीतवाँस्तामेव श्रद्धामश्रान्तो यावज्जीवमनुपालयेद्, रक्षेदित्यर्थ । प्रव्रज्याकाले च प्रायश प्रवृद्धपरिणाम एव प्रव्रजति, पश्चात्तु संयमश्रेणीं प्रपन्नो वर्द्धमानपरिणामो वा हीयमानपरिणामो वा अवस्थितपरिणामो वेति, तत्र वृद्धिकालो हानिकालो वा समयाद्युत्कर्षेणान्तर्मुहूर्त्तिक , नाऽत पर संक्लेशविशुद्ध्यद्धे भवत । उक्त च- नान्तर्मुहूर्त्तकाल-मतिवृत्य शक्य हि जग-

ति संक्लेष्टुम् । नापि विशोद्धुं शक्यं, प्रत्यक्षो ह्यात्मन सोऽर्थः ॥ १ ॥ उपयोगद्वयपरिवृत्तिः, सा निर्हेतुकस्वभावत्वात् । आत्मप्रत्यक्षो हि स्व-भावो व्यर्थात्र हेतूक्ति ॥ २ ॥ " अवस्थितिकालश्च द्वयोर्वृद्धिहानिलक्षणयोर्यवमध्यवज्रमध्ययोरष्टौ समयाः, तत ऊर्ध्वमवश्यं पातात् । अयं च वृद्धिहान्यवस्थितरूपपरिणाम केवलिनां निश्चयेन गम्यो, न छद्मस्थानामिति । यद्यपि च-प्रव्रज्याभिगमोत्तरकाल श्रुतसागरमवगाहमानः संवेगवैराग्यभावनाभावितान्तरात्मा कश्चित् प्रवर्द्धमानमेव परिणामं भजते । तथा चोक्तम्-" जह जह सुयमवगाहइ, अइ मयरसपसरसंजुयमउव्वं । तह तह पल्हाइ मुणी, नवनवसंवेगसद्धाने ॥ १ ॥ " तथापि स्तोक एव तादृक् बहवश्च परिपतन्त्यतोऽभिधीयते-' तामेवानुपालयेदिति ' । कथं पुन कृत्वा श्रद्धामनुपालयेदित्यत आह- ' विजहे ' त्यादि, विहाय- परित्यज्य विस्रोतसिका-शङ्काम् । सा च द्विधा-सर्वशङ्का, देशशङ्का च । तत्र सर्वशङ्का-किमस्त्यार्हतो मार्गो न वेति, देशशङ्का तु-किं विद्यन्तेऽप्कायादयो जीवा विशिष्यप्रवचनेऽभिहितत्वात् स्पष्टचेतनात्मलिङ्गाभावान्न विद्यन्ते इति वा, इत्येवमादिकामारेका विहाय संपूर्णाननगारगुणान् पालयेत् । यदि वा-विस्रोतांसि द्रव्यभावभेदाद् द्विधा-तत्र द्रव्यविस्रोतांसि नद्यादिस्रोतसां प्रतीतापगमनानि भावविस्रोतासि तु मोक्ष प्रति सम्यग्दर्शनादिस्रोतसा प्रस्थितानां विरूपाणि प्रतिकूलानि गमनानि भावविस्रोतासि तानि विहाय सपूर्णानगारगुणभाग्भवति श्रद्धां वा अनुपालयेदिति । पाठान्तरं वा-' विजहित्ता पुव्वसंयोगं " पूर्वसयोग -मातापित्रादिरस्य चोपलक्षणार्थत्वात्पश्चात्संयोगोऽपि श्वशुरादिकृतो ग्राह्यस्तं विहाय- त्यक्त्वा श्रद्धामनुपालयेदिति मीलनीयम् । तत्र यस्यायमुपदेशो दीयते यथा ' विहाय विस्रोतांसि तदनु श्रद्धानुपालन कार्यं ' स एवाभिधीयते-न केवलं भवानेवापूर्वमिदमनुष्ठानमेवविधं करिष्यति, किं त्वन्यैरपि महासत्त्वैः कृतपूर्वमिति दर्शयितुमाह—

पणया वीरा महावीहिं । ( सूत्र-२० )

पणता —प्रह्वाः वीराः—परिषहोपसर्गकषायसेनाविजयात् वीथिः-पन्था महाश्चासौ वीथिश्च-महावीथि -सम्यग्दर्शनादिरूपो मोक्षमार्गो जिनेन्द्रचन्द्रादिभि सत्पुरुषै प्रहतस्तं प्रति प्रह्वा-वीर्यवन्त स्वयमानुष्ठानं कुर्वन्ति, ततश्चोत्तमपुरुषप्रहतोऽयं मार्ग इति प्रदर्श्य तज्जनितमार्गविश्रम्भो विनेयः संयमानुष्ठाने सुखेनैव प्रवर्तयिष्यते ।

उपदेशान्तरमाह-'लोगं चे' त्यादि, अथ वा-यद्यपि भवतो मतिर्न क्रमतेऽप्कायजीवविषयेऽसस्कृतत्वात् , तथापि भगवदाज्ञेयमिति श्रद्धातव्यमित्याह—

लोगं च आणाए अभिसमेचा अकुओभयं । (सूत्र--२१)

अत्राधिकृतत्वादप्कायलोको लोकशब्देनाभिधीयते, तमप्कायलोक चशब्दादन्याश्च पदार्थान् आज्ञया-मौनीन्द्रवचनेनाभिमुख्येन सम्यग् ज्ञात्वा, यथा-अप्कायादयो जीवा, इत्येवमवगम्य न विद्यते कुतश्चिद्धेतो -केनापि प्रकारेण जन्तूना भयं यस्मात्सोऽयमकुतोभय -सयमस्तमनुपालयेदिति सम्बन्ध. । यद्वा-अकुतोभयोऽप्कायलोको, यतोऽसौ न कुतश्चिद् भयमिच्छति, मरणभीरुत्वात् , तमाज्ञयाऽभिसमेत्यानुपालयेत् , रक्षेदित्यर्थः ।

अप्कायलोकमाज्ञयाऽभिसमेत्य यत्कर्तव्यं तदाह—

से बेमि णेव सयं लोगं अब्भइक्खिज्जा, णेव अत्ताणं अब्भाइक्खिज्जा, जे लोयं अब्भाइक्खइ से अत्ताणं अब्भाइक्खइ से लोयं अब्भाइक्खइ । ( सूत्र-२२ )

' से बेमी ' त्यादि, सोऽहं ब्रवीमि 'से'शब्दस्य युष्मदर्थत्वाद् त्वां वा ब्रवीमि, न स्वयम्-आत्मना लोकोऽ-प्कायलोकोऽभ्याख्यातव्य । अभ्याख्यानं नामासदभियोग , यथा-अचौरं चौरमित्याह । इह तु जीवा न भवन्त्याप केवलमुपकरणमात्रं घृततैलादिवत् । एषोऽसदभियोग हस्त्यादीनामपि जीवानामुपकरणत्वात् स्यादारेका, नन्वेतदेवाभ्याख्यानं यदजीवानां जीवत्वापादनं नैतदस्ति, प्रसाधितमपा प्राक् सचेतनत्वम् । यथा ह्यस्य शरीरस्याहंप्रत्ययादिभिर्हेतुभिरधिष्ठातात्मा व्यतिरिक्त प्राक् प्रसाधित एवमप्कायोऽप्यव्यक्तचेतनया सचेतन इति प्राक् प्रसाधित । न च प्रसाधितस्याभ्याख्यानं न्याय्यम् , अथापि स्यादात्मनोऽपि शरीराधिष्ठातुरभ्याख्यान कर्त्तव्यम् , न च तत्क्रियमाणं घटामियर्तीति दर्शयति-' नेव अत्ताणं अब्भाइक्खेज्जा ' नैवाऽऽत्मानं-शरीराधिष्ठातारमहप्रत्ययसिद्धं ज्ञानाभिन्नगुणं प्रत्यक्ष प्रत्याचक्षीत-अपह्नुवीत, ननु चैतदेव कथमवसीयते शरीराधिष्ठातात्मास्तीति , उच्यतेविस्मरणशीलो देवानाप्रिय उक्तमपि भाणयति । तथा ह्याहतमिद शरीरं केनचिदभिसधिमता, कफरुधिराङ्गोपाङ्गादिपरिणतेरन्नादिवत्त्वोत्सृष्टमपि केनचिदभिसम्बन्धिमत्तैव, आहतत्वाद् , अन्नमलवदिति । तथा न ज्ञानोपलब्धिपूर्वकः परिस्पन्दो भ्रान्तिरूप परिस्पन्दत्वास्त्वदीयवचनपरिस्पन्दवत् । तथा विद्यमानाधिष्ठातृव्यापारभाञ्जीन्द्रियाणि , करणत्वाद्दात्रादिवत् । एव कुतर्कमार्गानुसारिहेतुमालोच्छेदः स्याद्वादपरशुना कार्य अत एवविधोपपत्तिसमधिगतमात्मानं शुभाशुभफलभाज न प्रत्यचक्षीत । एवं च सति यो ह्यत्र कुतर्कतिमिरोपहतज्ञानचक्षुरप्कायलोकमभ्याख्याति-प्रत्याचष्टे स सर्वप्रमाणसिद्धमात्मानमभ्याख्याति, यश्चात्मानमभ्याख्याति-नास्म्यहं स सामर्थ्यादप्कायलोकमभ्याख्याति । यतो ह्यात्मनि पाण्याद्यवयवोपेतशरीराधिष्ठायिनि प्रस्पष्टलिङ्गेऽभ्याख्याते सत्यव्यक्तचेतनालिङ्गोऽप्कायलोकस्तेन सुतरामभ्याख्यातः । एवमनेकदोषोपपत्तिं विदित्वा नायमप्कायलोकोऽभ्याख्यातव्यः इत्यालोच्य साधवो नाप्कायविषयमारम्भं कुर्वन्तीति ।

( ६ ) शाक्यादयस्त्वन्यथोपस्थिता इति दर्शयितुमाह—

लज्जमाणा पुढोपास अणगारा मो त्ति एके पवयमाणा जमिणं विरूवरूवेहिं सत्थेहिं उदयकम्मसमारंभेणं उदयमत्थं समारभमाणे अणेगरूवे पाणे विहिंसइ, तत्थ खलु भगवता परिण्णा पवेदिता इमस्स चेव जीवियस्स परिवंदणमाणणपूयणाए जाईमरणमोयणाए दुक्खपडिघायहेउं से सयमेव उदयसत्थं समारभति अणेहिं वा उदयसत्थं समा-

रंभावेति अन्ने उदयसत्थं समारंभंते समणुजाणाति तं से अहियाए तं से अबोहीए । से तं संबुज्झमाणे आयाणीयं समुट्ठाए सोच्चा भगवओ अणगाराणं अंतिए इहमेगेसिं णायं भवति-एस खलु गंथे एस खलु मोहे एस खलु मारे एस खलु णरए, इच्चत्थं गढिए लोए जमिणं विरूवरूवेहिं सत्थेहिं उदयकम्मसमारंभेणं उदयसत्थं समारंभमाणे अण्णे अणेगरूवे पाणे विहिंसइ ।

'लज्जमाणे' इत्यादि. लज्जमाना.-स्वकीयं प्रव्रज्याभासं कुर्वाणाः यदि वा-सावद्यानुष्ठानेन लज्जमाना -लज्जां कुर्वाणा पृथग्विभक्ताः शाक्योलूककणभुक्कपिलादिशिष्याः । पश्यन्ति शिष्यचोदना, अविवक्षितकर्मका अपि अकर्मका भवन्ति, यथा-'पश्य मृगो धावति' द्वितीयार्थे वा प्रथमा, सुप् व्यत्ययेन द्रष्टव्या । ततश्चायमर्थः-शाक्यादीन् गृहीतप्रव्रज्यानपि सावद्यानुष्ठानरतान् पृथग्विभिन्नान् पश्य, किन्तैरसदाचरितं येनैवं प्रदर्श्यन्ते इति दर्शयति-"अनगारा वयम्" इत्येके शाक्यादयः प्रवदन्तो यदिदं तदेतत्काका दर्शयति-विरूपरूपैरुत्सेचनाग्निविध्यापनादिशस्त्रैः स्वकायपरकायभेदभिन्नैरुदककर्म समारभन्ते । उदककर्मसमारम्भेण च उदके शस्त्रम् उदकमेव वा शस्त्रं समारभन्ते । नच समारभमाणोऽनेकरूपान्वनस्पतिद्वीन्द्रियादीन्विविधं हिनस्ति । तत्र खलु भगवता परिज्ञा प्रवेदिता, यथाऽस्यैव जीवितव्यस्य परिवन्दनमाननपूजनार्थं जातिमरणमोचनार्थं दुःखप्रतिघातहेतुं यत् करोति-तद्दर्शयति-स स्वयमेवोदकशस्त्रं समारभते. अन्यैश्चोदकशस्त्रं समारम्भयति, अन्यांश्चोदकशस्त्रं समारभमाणान् समनुजानीते । तच्चोदकसमारम्भणं तस्याऽहिताय भवति । तथा तदबोधिलाभाय भवति । स एतत्सम्बुध्यमानः आदानीयं सम्यग्दर्शनादि सम्यगुत्थाय-अभ्युपगम्य-श्रुत्वा भगवतोऽनगाराणां वान्तिके इहैकेषां साधूनां ज्ञातं भवति तद्दर्शयति-एषोऽप्कायसमारम्भो ग्रन्थः-एष खलु मोहः, एष खलु मारः, एष खलु नरक इत्येवमर्थं गृद्धो लोको यदिदं विरूपरूपैः शस्त्रैः उदककर्मसमारम्भेणोदकशस्त्रं समारभमाणोऽन्याननेकरूपान् प्राणिनो विविधं हिनस्तीत्येतत्प्राग्वद् व्याख्येयम् ।

पुनरप्याह—

से बेमि संति पाणा उदयनिस्सिया जीवा अणेगे।(सूत्र-२३)

इहं च खलु भो ! अणगाराणं उदयजीवा वियाहिया । ( सूत्र-२४ )

'से' शब्द आत्मनिर्देशे, सोऽहमेवमुपलब्धानेकाऽप्कायतत्त्ववृत्तान्तो ब्रवीमि सन्ति-विद्यन्ते प्राणिन उदकनिश्रिताः-पूतरकमत्स्यादयो यानुदकारम्भप्रवृत्तो हन्यादिति । अथवा-अपरः सम्बन्धः प्रागुक्तमुदकशस्त्रं समारभमाणोऽन्यानप्यनेकरूपान् जन्तून् विविधं हिनस्तीति, तत्कथमेतच्छ्रद्धेयमभ्युपगन्तुमित्यत आह-'संति पाणा' इत्यादिपूर्ववत्, विद्यन्ते पुनरस्त इति दर्शयति-'जीवा अणेगा' इति-पुनर्जीवोपादानमुदकाश्रितप्रभूतजीवभेदज्ञापनार्थम् । ततश्चेदमुक्तं भवति-एकस्मिन् जीवभेदे उदकाश्रिता अनेके-असंख्येयाः प्राणिनो भवन्ति, एवम्-अप्कायविषयारम्भभाजः पुरुषास्ते तन्निश्रितप्रभूतसत्त्वव्यापत्तिकारिणो द्रष्टव्याः । शाक्यादयस्तूदकाश्रितानेव द्वीन्द्रियादीन् जीवानिच्छन्ति नोदकम् * इत्येतदेव दर्शयति-खलु शब्दोऽवधारणे, इहैव-ज्ञातपुत्रीयप्रवचने द्वादशाङ्गे गणिपिटके अनगाराणां साधूनामुदकरूपा जीवाश्चशब्दात्तदाश्रिताश्च पूतरकच्छेदनकलोद्दणकभ्रमरकमत्स्यादयो जीवा व्याख्याताः, अवधारणफलं च नान्येषामुदकरूपा जीवाः प्रतिपादिताः । आचा० १ श्रु० १ अ० ३ उ० । * जीवा इति ।

ये पुनः शाक्यादयोऽप्कायोपभोगप्रवृत्तास्ते नियमत एवाऽप्कायं विहिंसन्ति तदाश्रितांश्चान्यानिति । तत्र न केवलं प्राणातिपातापत्तिरेव तेषां किमन्यदित्यत आह—

अदुवा अदिन्नादाणं । ( सूत्र-२६ )

अथवेति-पक्षान्तरोपन्यासद्वारेणाभ्युच्चयोपदर्शनार्थं, अशस्त्रोपहताप्कायोपभोगकारिणां न केवलं प्राणातिपातोऽपि किंतु-अदत्तादानमपि तत्तेषाम् । यतो यैरप्कायजन्तुभिर्यानि शरीराणि निर्वर्त्तितानि तैरदत्तानि, ते तान्युपभुञ्जन्ते, यथा कश्चित् पुमान् सचित्तशाक्यभिक्षुकशरीरकात् खण्डमुत्कृत्य गृह्णीयाददत्तं हि तस्य तत्परपरिगृहीतत्वात् । परकीयगवाद्यादानवत् । एवं तानि शरीराण्यप्जीवपरिगृहीतानि गृह्णतोऽदत्तादानमवश्यम्भावि । स्वाम्यनुस्वाम्यनुज्ञानाभावादिति ननु यस्य तत्तडागकूपादि तेनानुज्ञातं स्वकृत्तत्पय इति । ततश्च नाऽदत्तादानं, स्वामिनाऽनुज्ञातत्वात् परानुज्ञानपश्वादिघातवत् । नन्वेतदपि साध्यावस्थामेवोपन्यस्तं, यतः पशुरपि शरीरप्रदानविमुख एव भिक्षार्यमर्यादैर्श्चैरारटन् विशस्यते, ततश्च कथमिव नाऽदत्तादानं स्यात् । न चान्यदीयस्यान्यः स्वामी दृष्टः परमार्थचिन्तायाम् । नन्वेवमशेषलोकप्रसिद्धगोदानादिव्यवहारस्त्रुट्यति, त्रुट्यतु नामैवंविधः पापसम्बन्धः तद्धि देयम् यद्धि दुःखितं स्वयं न भवति । दासीबलीवर्दादिवत् । न चान्येषां दुःखोत्पत्तेः कारणं हलखड्गादिवत् । एतद्व्यतिरिक्तं दातृपरिगृहीत्रोरेकान्ततः एवोपकारकं देयं प्रतिजानते जिनेन्द्रमतावलम्बिनः । उक्तञ्च-"यत् स्वयमदुःखितं स्यान्न च परदुःखे निमित्तभूतमपि । केवलमुपग्रहकरं, धर्मकृते तद्भवेद्देयम्" ॥१॥ इति । तस्मादवस्थितमेतत्तेषां तददत्तादानमपीति ।

सांप्रतमेतद्दोषद्वयं स्वसिद्धान्ताभ्युपगमद्वारेण परः परिजिहीर्षुराह—

कप्पइ णे कप्पइ णे पाउं अदुवा विभूसाए । (सूत्र-२७)

अशस्त्रोपहतोदकारम्भिणो हि चोदिताः सन्त एवमाहुः-यथा नैतत्स्वमनीषिकातः समारम्भयामो वयं; किन्त्वागमे निर्जीवत्वेनानिषिद्धत्वात् कल्पते-युज्यते नः-अस्माकं पातुम्-अभ्यवहर्तुमिति वीप्सया च नानाविधप्रयोजनविषयः उपभोगोऽभ्यनुज्ञातो भवति । तथाहि-"आजीविकभस्मस्नायादयो वदन्ति पातुमस्माकं कल्पते, न स्नातुं वारिणा" शाक्यपरिव्राजकादयस्तु-स्नानपानावगाहनादि सर्वं कल्पते इति प्रभाषन्ते; एतदेव स्वनामग्राहं दर्शयति-अथवोदकं विभूषार्थमनुज्ञातं न समये, विभूषा—करचरणपायूपस्थमुखप्रक्षालनादिका वस्त्रभाण्डकादिप्रक्षालनात्मिका वा, एवं स्नानादिशौचानुष्ठायिनां नास्ति कश्चिद्दोष इति ।

एवं ते परिफल्गुवचस परिव्राजकादयो निजराद्धान्तो-पन्यासेन मुग्धमतीन्विमोह्य किं कुर्वन्तीत्याह—

पुढो सत्थेहिं विउट्टंति । ( सूत्र-२८ )

पृथग्—विभिन्नलक्षणैर्नानारूपैरुत्सेचनादिशस्त्रैस्तेऽनगारायमाणाः 'विउट्टंति' त्ति-अप्कायजीवान् जीवनाद् व्यावर्त्तयन्ति ; व्यपरोपयन्तीत्यर्थः । यदि वा—पृथग् विभिन्नै शस्त्रैरप्कायिकान् विविधं कुट्टन्ति ; छिन्दन्तीत्यर्थः, कुट्ट-धातोः छेदनार्थत्वात् ।

अधुनैषामागमानुसारिणामागमाऽसारत्वप्रदिपादनायाह-

एत्थ वि तेसिं नो निकरणाए। ( सूत्र-२६ )

एतस्मिन्नपि-प्रस्तुते स्वागमानुसारेणाभ्युपगमे सति " कप्पइ णे कप्पइ णे पाउ, अदुवा विभूसाए (२६) " त्ति-एवं रूपस्तेषामयमागमो यद्बलादप्कायपरिभोगे ते प्रवृत्ताः स स्याद्वादयुक्तिभिरभ्याहतः सन् 'नो निकरणाए' त्ति-नो निश्चयं कर्तुं समर्थो भवति, न केवलं तेषां युक्तयो न निश्चयायाऽलम्, अपि त्वागमोऽपीत्यपिशब्दः । कथं पुनस्तेषामागमो निश्चयाय नालमिति, अत्रोच्यते-त एवं प्रष्टव्याः-कोऽयमागमो नाम? यदादेशः कल्पते भवतामप्कायारम्भः, त आहुः-प्रतिविशिष्टानुपूर्वीविन्यस्तवर्णपदवाक्यसंघात आप्तप्रणीत आगमः नित्योऽकर्तृको वा ?, तत्रश्चैवमभ्युपगते यो येन प्रतिपन्न आप्त स निराकर्त्तव्यः । अनाप्तोऽसावप्कायजीवाऽपरिज्ञानात्तद्वधानुज्ञानाद्वा भवानिव । जीवत्वं चापां प्राक् प्रसाधितमेव । ततस्तत्प्रणीतागमोऽपि सद्धर्मचोदनायामप्रमाणम् , अनाप्तप्रणीतत्वात् , रथ्यापुरुषवाक्यवत् । अथ नित्योऽकर्तृकः समयोऽभ्युपगम्यते ततो नित्यत्वं दुष्प्रतिपादम् । यतः शक्यते वक्तु-भवदभ्युपगतः समयः, सकर्तृको वर्णपदवाक्यात्मकत्वात् , विधिप्रतिषेधात्मकत्वात् , उभयसम्मतसकर्तृकग्रन्थसन्दर्भवदिति । अभ्युपगम्य वा ब्रूम -अप्रमाणमसौ , नित्यत्वादाकाशवत् , यच्च प्रमाणं तदनित्यं दृष्टं प्रत्यक्षादिवदिति । तथा विभूषासूत्रावयवेऽपि पृष्टा न प्रत्युत्तरदाने क्षमा , यतियोग्यं स्नानं न भवति, कामाङ्गत्वात् , मण्डनवत् । कामाङ्गता च सर्वजनप्रसिद्धा । तथाचोक्तम्-

" स्नानं मददर्पकरं, कामाङ्गं प्रथमं स्मृतम् । तस्मात्कामं परित्यज्य, नैव स्नान्ति दमे रताः " ॥ १ ॥

शौचार्थोऽपि न पुष्कलो वारिणा बाह्यमलापनयनमात्रत्वात् ह्यन्तर्व्यवस्थितकर्ममलक्षालनसमर्थं वारि न दृष्टं, तस्माच्छरीरवाङ्मनसामकुशलप्रवृत्तिनिरोधो भावशौचमेव कर्मक्षयायाऽलम् । तच्चधारिसाधर्म्यं न भवति , कुतः ?, अन्वयव्यतिरेकसमधिगम्यत्वात्सर्वभावानाम् । न हि मत्स्यादयः तत्र स्थिता मत्स्यत्वादि कर्मक्षयभाक्त्वे नाप्यभ्युपगम्यन्ते , विना च वारिणा महर्षयो विचित्रतपोभिः कर्म क्षपयन्तीति अतः स्थितमेतत्तत्समयी न निश्चयाय प्रभवतीति ।

तदेवं नि:सपत्नमपां जीवत्वं प्रतिपाद्य तत्प्रवृत्तिनिवृत्तिविकल्पफलप्रदर्शनद्वारेणोपसंजिहीर्षुः सकलमुद्देशार्थमाह-

एत्थ सत्थं समारंभमाणस्स इच्चेए आरंभा अपरिण्णाया भवंति । एत्थ सत्थं असमारंभमाणस्स इच्चेते आरंभा परिण्णाया भवंति । तं परिण्णाय मेहावी णेव सयं उदयसत्थं समारंभेज्जा, णेवण्णेहिं उदयसत्थं समारंभावेज्जा, उदयसत्थं समारंभंतेऽवि अण्णे ण समणुजाणेज्जा जस्सेते उदयसत्थसमारंभा परिण्णाया भवंति से हु मुणी परिण्णातकम्मेत्ति बेमि । ( सूत्र-३० )

एतस्मिन्नप्काये शस्त्रं द्रव्यभावरूपं समारभमाणस्यैते समारम्भा बन्धकारणत्वेनाऽपरिज्ञाता भवन्ति । अत्रैवाऽप्काये शस्त्रमसमारभमाणस्यैते आरम्भा ज्ञपरिज्ञया परिज्ञाता भवन्ति । प्रत्याख्यानपरिज्ञया च परिहृता भवन्ति, तामेव प्रत्याख्यानपरिज्ञां विशेषतो ज्ञपरिज्ञापूर्विकां दर्शयति-तदुदकारम्भणं बन्धायेत्येवं परिज्ञाय मेधावी-मर्यादाव्यवस्थितो नैव स्वयमुदकशस्त्रं समारभेत, नैवान्यैरुदकशस्त्रं समारम्भयेत् । नैवाऽन्यानुदकशस्त्रं समारभमाणान् समनुजानीयात् , यस्यैते उदकशस्त्रसमारम्भा द्विधा परिज्ञाता भवन्ति स एव मुनिः परिज्ञातकर्मा भवति । ब्रवीमीति पूर्ववत् । आचा० १ श्रु० १ अ० ३ उ० ।

( १० ) अप्कायविहिंसननिषेधः—

आउकायं न हिंसंति, मणसा वयसा कायसा ।
तिविहेण करणजोएणं, संजया सुसमाहिया ॥ २९ ॥
आउकायं विहिंसंतो, हिंसई ओ तयस्सिए ।
तसे अ विविहे पाणे, चक्खुसे य अचक्खुसे ॥ ३० ॥
तम्हा एयं वियाणित्ता, दोसं दुग्गइवड्ढणं ।
आउकायसमारंभं, जावजीवाइ वज्जए ।३१। दश० ६ अ० ।

( ११ ) अप्कायस्पर्शादिनिषेधः—

से भिक्खू वा, भिक्खुणी वा संजयविरयपडिहयपच्चक्खायपावकम्मे दिया वा राओ वा एगओ वा परिसागओ वा सुत्ते वा जागरमाणे वा से उदगं वा ओसं वा हिमं वा महियं वा करगं वा हरितणुगं वा सुद्धोदगं वा उदउल्लं वा कायं उदउल्लं वा वत्थं ससणिद्धं वा कायं ससणिद्धं वा वत्थं न आमुसेज्जा न संफुसेज्जा न विलेज्जा न पविलेज्जा न अक्खोडेज्जा न पक्खोडेज्जा न आयाविज्जा न पयाविज्जा, अन्नं न आमुसावेज्जा न संफुसावेज्जा न विलावेज्जा न पविलावेज्जा न अक्खोडावेज्जा न पक्खोडावेज्जा न आयावेज्जा न पयावेज्जा, अन्नं आमुसंतं वा संफुसंतं वा आविलंतं वा पविलतं वा अक्खोडंतं वा पक्खोडंतं वा आयावंतं वा पयावंतं वा न समणुजाणेज्जा जावज्जीवाए तिविहं तिविहेणं मणेणं वायाए कायेणं न करेमि न कारवेमि करंतं पि अन्नं न समणुजाणामि । तस्स भंते ! पडिकमामि निंदामि गरिहामि अप्पाणं वोसिरामि । ( सूत्र-११ )

'से भिक्खू वा' इत्यादि, 'जावजागरमाणेव' त्ति-पूर्ववदेव 'से उदगं वे'त्यादि, तद्यथा-उदकं वा अवश्यायं वा हिमं वा महिका वा करकं वा हरतनुं शुद्धोदकं वा । (दश०)
( उदकादिपदानां व्याख्या अस्मिन्नेव शब्द आदौ उक्ता )

तथा उदकार्द्रं वा कायं उदकार्द्रं वा वस्त्रम् उदकार्द्रता चेह गलद्विन्दुतुषारानन्तरोदितोदकभेदसम्मिश्रिता । तथा-सस्निग्धं वा कायं सस्निग्धं वस्त्रम् अत्र स्नेहनं स्निग्धमिति भावे निष्ठाप्रत्यय स्निग्धेन सह वर्त्तते इति सस्निग्धं सस्निग्धता चेह विन्दुरहितानन्तरोदितोदकभेदसम्मिश्रिता ( अस्य सूत्रस्य संपूर्णा टीका 'महव्वय' शब्दे षष्ठे भागे दर्शयिष्यते ) दश० ४ अ० ।

( १२ ) शीतोदकादिपरिषेवणनिषेध.—

सीओदकं न सेविज्जा, सिलावुट्ठं हिमाणि य ।
उसिणोदगं तत्तफासुय, पडिगाहिज्ज संजए ॥ ६ ॥

शीतोदकं-पृथिव्युद्भवसचित्तोदकं न सेवेत । तथा-शिलावृष्टं हिमानि च न सेवेत । तत्र शिलाग्रहणेन करका. परिगृह्यन्ते । वृष्टं-वर्षणं,हिमं प्रतीतं, प्राय उत्तरापथे भवति । यद्येवं कथमय वर्तेतेत्याह-उष्णोदकं-क्वथितोदकं तप्तप्राशुकं तप्तं सत्प्राशुक त्रिदण्डोद्वृत्तं नोष्णोदकमात्रं प्रतिगृह्णीयाद्वृत्त्यर्थं संयत - साधु । एतच्च सौवीराऽऽद्युपलक्षणमिति सूत्रार्थ. ।

तथा—

उदउल्लं अप्पणो कायं , नेव पुंछे न संलिहे ।
समुप्पेह तहाभूय , नो णं संघट्टए मुणी ॥ ७ ॥

नदीमुत्तीर्णो भिक्षा प्रविष्टो वा वृष्टिहत उदकार्द्रम्-उदकबिन्दुचितमात्मन कायं-शरीरं स्निग्धं वा नैव पुञ्छयेत्-वस्त्रतृणादिभिर्न संलिखेत् पाणिना, अपि तु-संप्रेक्ष्य-निरीक्ष्य तथाभूतमुदकार्द्रादिरूपं नैव कायं संघट्टयेत् मुनिर्मनागपि न स्पृशेदिति सूत्रार्थ । दश० ८ अ० (उदकतीरे निवासाऽऽदिनिषेध 'दगतीर' शब्दे चतुर्थभागे वक्ष्यते ) ( अप्कायस्यबहुवक्तव्यता 'पाणग' शब्दे पञ्चमभागे वक्ष्यते ) ( अप्कायस्य दर्पिका कल्पिका च 'मूलगुणपडिसेवणा' शब्दे षष्ठे भागे वक्ष्यते ) (वस्त्रधावनेऽप्कायप्रतिसेवनाया वक्तव्यता 'धावण' शब्दे चतुर्थभागे वक्ष्यते ) ( उदकसन्तरणेऽप्कायप्रतिसेवनाया वक्तव्यता 'मूलगुणपडिसेवणा' शब्दे षष्ठे भागे वक्ष्यते)

आउक्कायविहिंसग-अप्कायविहिंसक-त्रि० । सचित्तजलविनाशके, । ग० १ अधि० ।

आउक्काल-आयुष्काल-पुं० । मृत्युकाले , आचा० १ श्रु०८ अ० ८ उ० ।

आउक्खय-आयुःक्षय-पुं० । आयुष्कर्मपुद्गलनिर्जरणे, स्था० ८ ठा० ३ उ० । आयुर्दलिकनिर्जरणे, नि० १ श्रु० ५ वर्ग १ अ० । कर्मद्रव्यनिर्जरणे, विपा० २ श्रु० ? अ० । कर्मणो दलिकनिर्जरणे, औ० । भ० ( आयु.क्षयनिमित्तान्यध्यवसायादीनि 'आउ' शब्देऽस्मिन्नेव भागे गतानि ,

क्षीणमायुर्जिनेन्द्रैरपि न वर्द्धयितुं शक्यम् , तथा चाह—

शक्रेण स्वामी विज्ञप्तो , यत क्षणमायुर्वर्द्धयत येन भवन्तु जीवन्तु भवज्जन्मनक्षत्रं सङ्क्रान्तो भस्मराशिग्रहो भवच्छासन पीडयितु न शक्नोति, ततोऽवश्यं प्रभुणोक्तम्-न खलु शक्र ! कदाचिदपीदं भूतपूर्वं यत् क्षीणमायुर्जिनेन्द्रैरपि वर्द्धयितु शक्यते । कल्प० ? अधि० २ क्षण ।

आयुष क्षये चावश्यं जीवितनाशः—

( "ताले जह" (६ गा०) इत्यादिकस्यार्थ. 'अणिच्चया' शब्दे प्रथमभागे विशेषतो दर्शित. ) सूत्र० १ श्रु० २ अ० १ उ० ।

डहरा वुड्ढा य पासह , गब्भत्था वि चयंति माणवा ।
सेणे जह वट्टयं हरे , एवमाउक्खयम्मि तुट्टती ॥ २ ॥

डहरा-बाला एव केचन जीवितं त्यजन्ति । तथा-वृद्धाश्च गर्भस्था अप्येतत्पश्यत यूयं , के ते ? मानवा -मनुष्यास्ते-षामेवोपदेशदानार्हत्वात् मानवग्रहणम् वक्ष्यपायत्वादायुष , सर्वास्वप्यवस्थासु प्राणी प्राणांस्त्यजतीत्युक्तं भवति । तथाहि-त्रिपल्योपमायुष्कस्यापि पर्याप्त्यन्तरमन्तर्मुहूर्तेनैव कस्यचिन्मृत्युरुपतिष्ठतीति । अपि च-गर्भस्थम्-जायमानमित्यादि, अत्रैव दृष्टान्तमाह-यथा श्येन -पक्षिविशेषो वर्त्तकं-तित्तिरजातीयं हरेत्-व्यापादयेदेवं प्राणिन प्राणान् मृत्युरुपहरेत् , उपक्रमकारणमायुष्कमुपक्रामेत् । तदभावे वा आयुष्यक्षये त्रुट्यति-व्यवच्छिद्यते, जीवानां जीवितमिति शेष. । सूत्र० १ श्रु० २ अ० १ उ० ।

आयुष क्षयमजानन्त आरम्भे प्रवर्त्तन्ते—

आउक्खयं चेव अबुज्झमाणे ,
ममेति से साहसकारि मंदे ।
अहो य राओ परितप्पमाणे ,
अट्टेसु मूढे अजरामरे व्व ॥ १८ ॥

आयुषो-जीवनलक्षणस्य क्षय आयुष्कक्षयस्तम्-आरम्भप्रवृत्त छिन्नह्रदमत्स्यवदुदकक्षये सत्यवबुध्यमानोऽतीव 'मम' इति ममत्ववानिदं मे अहमस्य स्वामीत्येव स मन्द -अज्ञः साहसं कर्तुं शीलमस्येति साहसकारीति । तद्यथा-कश्चिद्वणिङ् महाक्लेशेन महार्घाणि रत्नानि समासाद्योज्जयिन्या बहिरावासित । स च राजचौरदायादभयाद्रात्रौ रत्नान्येवमेवं च प्रवेशयिष्यामीत्येवं पर्यालोचनाऽऽकुलो रजनीक्षयं न ज्ञातवान् अहन्येव रत्नानि प्रवेशयन् राजपुरुषै रत्नेभ्यश्च्यावित इति । एवमन्योऽपि किंकर्तव्यताकुल स्वायुष. क्षयमबुध्यमान परिग्रहेष्वारम्भेषु च प्रवर्तमान साहसकारी स्यादिति । तथा कामभोगतृषितोऽह्नि रात्रौ च परि-समन्तात् द्रव्यार्थी परितप्यमानो मम्मणवणिग्वदार्तध्यायी कायेनापि क्लिश्यते । तथा चोक्तम्-"अजरामरवद्बाल , क्लिश्यते धनकाम्यया । शाश्वत जीवितं चैव, मन्यमानो धनानि च"॥१॥ तदेवमार्तध्यानोपहत " कइया वच्चइ सत्थो, किं भंडं कत्थ कित्तिया भूमी " त्यादि । तथा-" उक्खणइ खणइ णिहणइ, रत्तिं न सुयइ दिया वि य ससंको ' इत्यादि । चित्तसंक्लेशात्सुष्ठु मूढो वणिग्वदजरामरवदात्मानं मन्यमानोऽपगतशुभाध्यवसायोऽहर्निशमारम्भे प्रवर्तते । सूत्र० १ श्रु० १० अ० ।

अहर्निशमायुष क्षयमवबुध्य धर्मे यतितव्यम्—

पिच्छह आउस्स खयं,
अहोनिसं झिज्जमाणस्स ॥ १८ ॥ ( ७३ )
राइदिएण तीसं तु,
मुहुत्ता नवसयाई मामेरणं ।

१-मम्मणवणिग्वृत्त 'मम्मण' शब्दे षष्ठे भागे दर्शयिष्यते ।

हायंति पमत्ताणं,
न य णं अवुहा वियाणंति ॥ १९ ॥ ( ७४ )
तिन्नि सहस्से सगले,
छच्च सए उडुवरो हरइ आउं ।
हेमंते गिम्हासु य,
वासासु य होइ नायव्वं ॥ २० ॥ ( ७५ )
वाससयं परमाउं,
इत्तो पन्नास हरइ निद्दाए ।
इत्तो विसए हायइ,
वालत्ते वुड्ढभावे य ॥ २१ ॥ ( ७६ )
सीउण्हपंथगमणे,
खुहा पिवासा भयं च सोगे य ।
नाणाविहा य रोगा,
हवंति तीसाइ पच्छद्धे ॥ २२ ॥ ( ७७ )
एवं पंचासीई,
नट्ठा पण्णरसमेव जीवंति ।
जे हुंति वाससइया,
न य सुलहा वाससयजीवा ॥ २३ ॥ ( ७८ )
एवं निस्सारे मा-
णुसत्तणे जीविए अहिवडंते ।
न करेह चरणधम्मं,
पच्छा पच्छाऽणुतप्पिहह हा ॥ २४ ॥ ( ७९ )

'पिच्छह' त्ति-भो भव्या ! यूय पश्यत-ज्ञानचक्षुषा विलोकयत आयुष. क्षयमहोरात्र क्षीयमाणस्य समये समये आवीचीमरणेन त्रुट्यमानस्येति ॥१८॥ 'राई' ति-अहोरात्रेण त्रिंशन्मूहूर्त्ता भवन्ति, मासेन नवशतानि ९०० मुहूर्त्तानि, तानि प्रमत्ताना—मद्यादिप्रमादयुक्तानां सुभूम[1]—ब्रह्मदत्तादीनामिव हीयन्ते न चाऽवुधा-मूर्खा विजानन्तीति ॥१९॥ 'तिन्नि' त्ति-त्रीणि सहस्राणि षट्शताधिकानि[3] सकलानि-संपूर्णानि मुहूर्त्तानि हेमन्ते-शीतकाले भवन्ति । एतत्प्रमाणमायुर्जीवाना हेमन्ते उडुवर-सूर्यो हरति, एव ग्रीष्मे वर्षासु च ज्ञातव्यं भवति ॥ २० ॥ ( त० ) 'वास' त्ति—साम्प्रत जीवाना परमायु-उत्कृष्टजीवित वर्षशतं प्रवाहेण ज्ञातव्यम् । इतो वर्षशतात् निद्रया पञ्चाशद्वर्षाणि ५० हरति-गमयति, जीव इत-शेषपञ्चाशद्वर्षेत. विंशतिर्वर्षाणि २० हीयन्ते यान्ति-प्रमादिनाम् कथम् ?-वालत्वे दशकं १०, वृद्धत्वे दशकं १० चेति ॥२१॥ 'सीउ' त्ति-शीतोष्णपथगमनानि, तथा क्षुधा पिपासा भयं च शोकश्च नानाविधा रोगाश्च भवन्ति, त्रिंशत पश्चार्द्धे त्रिंशत्पश्चार्द्धे-पञ्चदशवर्षरूप तस्मिन् को भाव ?-शेषत्रिंशत. पञ्चदश १५ वर्षाणि जीवाना शीतोष्णपथगमनादिभिर्मुधा यान्तीति ॥ २२ ॥ एवं पूर्वोक्तप्रकारेण पञ्चाशीतिवर्षाणि नष्टानि ८५, धर्म्मं विना विकथानिद्रालस्यवतां मुधा गतानि, कथम् ?-निद्रया पञ्चाशद्वर्षाणि ( ५० ), वालत्वे दश (१०), वृद्धभावे दश ( १० ), शीतादिभि पञ्चदश ( १५ ), एवं सर्वाणि पञ्चाशीतिवर्षाणि ( ८५ ), इति ये जीवा वर्षशतिका—वर्षशतप्रमाणा भवन्ति ते जीवा पञ्चदश १५ वर्षाणि जीवन्ति, अन्यानि मृतप्रायत्वात् । न च वर्षशतजीविनो जीवा प्राप्यन्ते । किंभूता सुखेन-अनायासेन लभ्यन्त इति सुलभा, सर्वथा सुखिन इत्यर्थ । उक्तं च-" आयुर्वर्षशतं नृणां परिमितं रात्रौ तदर्द्धं गतं, तस्यार्द्धस्य परस्य चार्द्धमपरं वालत्ववृद्धत्वयो । शेषं व्याधिवियोगदुःखसहितं सेवादिभिर्नीयते, जीवे वारितरङ्गचञ्चलतरे सौख्य कुत प्राणिनाम् " ॥ १ ॥ २३ ॥ एवम्-उक्तप्रकारेण निस्सारे-असारे मानुषत्वे-मनुजत्वे तथा जीविते आयुषि रत्नकोटिकोटिभिरपि अप्राप्ये अधिपतति, समये समये क्षय गच्छति सतीत्यर्थ न कुरुत यूय चरणधर्म्म-ज्ञानदर्शनपूर्वकं देशसर्वचारित्रं 'हा' इति—महाखेदे, पश्चाद्-आयु क्षयानन्तरम्-आयु क्षयचरमक्षणे वा पश्चात्तापं कायवाङ्मनोभिर्महाखेद करिष्यथ नरकस्थशशिराजवदिति ॥ २४ ॥ त० ॥ " समस्तसत्त्वसंघाना क्षयत्यायुरनुक्षणम् । आममल्लकवारीव, किं तथापि प्रमाद्यसि " ॥ १ ॥ पञ्चा० १ विव० । मरणे, प्रश्न० १ आश्र० द्वार । उत्त० ।

आउक्खेम-आयुःक्षेम-न० । आयुष क्षेममिति । आयुष. सम्यक्पालने, जीविते च । आचा० ।

जं किंचि वुक्कमं जाणे, आउक्खेमस्स मप्पणो ।
तस्सेव अंतरऽद्धाए, खिप्पं सिक्खेज्ज पडिए ॥ ६ ॥

एतदुक्तं भवति-आत्मायुषो यत्क्षेम-प्रतिपालनोपाय जानीत त क्षिप्रमेव शिक्षेत् । ( आचा० ) यदिवा-आत्मन आयु क्षेमस्य-जीवितस्य । आचा० १ श्रु० ८ अ० ८ उ० ।

आउजीव-अव्जीव-पु० । आप एव जीव । स्थावरजीवविशेषे, अवाश्रितो वा जीव. । उदकाश्रिते जीवे च । सूत्र० १ श्रु० ११अ० ।

तद्भेदा यथा—

दुविहा आउजीवाओ, सुहुमा वायरा तहा ।
पज्जत्तमपज्जत्ता, एवमेए दुहा पुणो ॥ ८४ ॥
वायरा जे उ पज्जत्ता, पंचहा ते पकित्तिया ।
सुद्धोदये य उस्से य, हरितणु महिया हिमे ॥ ८५ ॥
एगविहमनाणत्ता, सुहुमा तत्थ वियाहिया ।
सुहुमा सव्वलोयम्मि, लोगदेसे य वायरा ॥ ८६ ॥

तिसृणां गाथानामर्थ-अव्जीवास्तु द्विविधा-सूक्ष्मा, तथा वादरा अपि । पर्याप्ता, अपर्याप्ताश्च । एवमेते द्विविधा पुनर्वर्त्तन्ते इति शेष ॥ ८४ ॥ अथ पुनर्वादरा ये पर्याप्ता अव्जीवास्ते पञ्चधा प्रकीर्त्तिता । ( उत्त० ) तत्र सूक्ष्मा अप्कायजीवा एकविधा अनानात्वात्तीर्थकरैर्व्याख्याता । तत्र सूक्ष्मा अप्कायजीवा सर्वस्मिन्—चतुर्दशरज्ज्वात्मके लोके वर्त्तन्ते, वादरा अप्कायजीवा लोकस्यैकदेशे वर्त्तन्ते ॥ ८६ ॥

१—'सुभूम' वृत्तान्त 'माण' शब्दे षष्ठे भागे विस्तरतो करिष्यते ।
२—ब्रह्मदत्तवृत्त 'बंभदत्त' शब्दे पञ्चमभागे करिष्यते । ३—३६०० ।

मतइं पप्पऽणाईया , अपज्जवसिया वि य ।
ठिइं पडुच्च साऽऽईया , मपज्जवसिया वि य ॥ ८७ ॥

सन्तति-प्रवाहमार्गमाश्रित्य अप्कायजीवा अनादिका पुनरपर्यवसिता अपि स्थिति-भवस्थितिं, कायस्थितिं चाश्रित्य सादिकास्तथा सपर्यवसिता अवसानसहिता अपि वर्त्तन्ते ॥ ८७ ॥

सत्तेव सहस्साइं , वासाणुक्कोसिया भवे ।
आउठिई आऊणं , अंतोमुहुत्तं जहन्नियं ॥ ८८ ॥

अपाम्-अप्कायजीवानां सप्तैव सहस्राणि वर्षाण्युत्कृष्टा आयुषः स्थितिर्भवेत् , जघन्यतः अन्तर्मुहूर्त्तं भवेत् ॥ ८८ ॥

असंखकालमुक्कोस , अंतोमुहुत्तं जहन्निया ।
कायठिई आऊणं , तं कायं तु अमुंचओ ॥ ८९ ॥

अपाम्-अप्काजीवानां तं स्वकायमर्थात्-अप्कायममुञ्चतामुत्कृष्टा कायस्थितिः असंख्यकालं भवति जघन्या कायस्थितिरन्तर्मुहूर्त्तं भवति ।

अणंतकालमुक्कोसं, अंतोमुहुत्तं जहन्नयं ।
विजढम्मि सए काए, आउजीवाण अंतरं ॥ ९० ॥

अप्जीवानां स्वकीये काये त्यक्ते सति अपरस्मिन् काये उत्पद्य पुनः स्वकीये काये उत्पत्तिः स्यात्तदा उत्कृष्टमन्तरमनन्तकालं भवति । जघन्यकमन्तरम्-अन्तर्मुहूर्त्तं भवति । वनस्पतिकाये जीवोऽनन्तकालं तिष्ठति तदा अनन्तकालमन्तरं भवति, इति भावः ।

एएसिं वन्नओ चेव, गंधओ रसफासओ ।
संठाणाऽऽदेसओ वा वि, विहाणाइं सहस्ससो ॥ ९१ ॥

एतेषाम्-अप्कायजीवानां वर्णतो गन्धतः रसतः स्पर्शतः संस्थानाऽऽदेशतश्चापि-संस्थाननामतश्चापि सहस्रशो-बहवो भेदा भवन्ति ॥ ९१ ॥ उत्त० ३६ अ० । अप्जीवानां च प्रत्येकशरीरिता । "पुढोसत्ता आउजीवा " प्रत्येकशरीरत्वात्पृथक्-प्रत्येकं सत्त्वाः -प्रत्येकशरीरिणोऽवगन्तव्याः । सूत्र० । १ श्रु० ११ अ० ।

आउज्ज -आतोद्य--न० । आ-समन्तात् तुद्यते । आ-तुद-ण्यत् । वीणादौ वाद्ये, आचा० १ श्रु० १ अ० ५ उ० । स्था० । अनु० । आव० । जी० । तच्च द्विविधम्-ततविततभेदात् । तत-वितते अपि द्विविधे-घन-शुषिरभेदात् । स्था० २ ठा० ३ उ० । चतुर्विधम्-ततविततघनशुषिरभेदात् । वृ० १ उ० । ' ततं वीणादिकं ज्ञेय ', विततं पटहादिकम् । घनं तु कांस्यतालादि वंशादि शुषिरं मतम् ॥ १ ॥ इति विवक्षाप्राधान्याच्च न विरोधो मन्तव्यः । स्था० २ ठा० ३ उ० । आचा० ।

आतोद्यस्य ४९ भेदाः —

तते णं से सूरियाभे देवे अट्ठसयं संखाणं विउव्वति । अट्ठसयं संगाणं विउव्वइ । अट्ठसयं सङ्खियाणं विउव्वइ । अट्ठसयं खरमुहीणं विउव्वइ । अट्ठसयं पेयाणं विउव्वइ । अट्ठसयं पिरिपिरियाणं विउव्वति । एवमाइयाणं एगोणवण्णं आउज्जविहाणाइं विउव्वति ।

'सरमाराया ' ति-याचिशब्देन-* पणव १ पटह ७ भम्भा ८ होरम्भा ९ भेरी १० झल्लरी ११ दुन्दुभी १२ मुरज १३ मृदङ्ग १४ नन्दीमृदङ्ग १५ आलिङ्ग १६ कुस्तुम्ब १७ गोमुखी १८ मर्द्दल १९ विपञ्ची २० वल्लकी २१ भ्रमरी २२ भ्रामरी २३ परिवादिनी २४ चच्चसा २५ सुघोषा २६ नन्दीघोषा २७ महती २८ कच्छपी २९ चित्रवीणा ३० आमोद ३१ झण्डा ३२ नकुल ३३ तूणा ३४ तुम्बवीणा ३५ मुकुन्द ३६ हुडुक्क ३७ विचिकी ३८ करटी ३९ डिण्डिम ४० किणित ४१ कडम्बा ४२ दर्दरक ४३ दर्दरिका ४४ कुसुम्बर ४५ कलशिका ४६ तल ४७ ताल ४८ कांस्यताल ४९ रिगिसिका ५० मकरिका ५१ शुशुमारिका ५२ वंश ५३ वाली ५४ वेणु ५५ परिली ५६ बद्धका ५७ प्रदर्शिता । *) अव्याख्यातास्तु भेदाः लोकतः प्रत्येतव्याः एवमादीनि बहून्यातोद्यानि विकुर्वन्ति सर्वसंख्यया तु मूलभेदापेक्षया आतोद्यभेदा एकोनपञ्चाशत् । शेषास्तु भेदास्तेष्वेवान्तर्भवन्ति यथा वंशातोद्यविधाने वालीवेणुपरिलीबद्धका । रा० । * 'णट्ट' शब्दे ४ भागे विशेषः ।

आवज्ज-पु० । आवर्जनमावर्ज । अभिमुखीकरणे, आवर्ज्यतेऽभिमुखीक्रियते मोक्षोऽनेनेति—शुभमनोवाक्कायव्यापारविशेषे च । उक्तञ्च-" आवज्जणमुवओगो वावारो वा " ( ३०५१ + विशे० ) इति, आवर्ज्यते-अभिमुखीक्रियते, इति घञ् । अभिमुखीकर्त्तव्ये, त्रि० । प्रज्ञा० ३६ पद ।

आवर्ज्य-त्रि० । आवर्ज्यते इति ण्यत् । अभिमुखीकर्त्तव्ये, आ० म० १ अ० ।

आउज्जण-आवर्जन-न० । अभिमुखीकरणे, शुभमनोवाक्कायव्यापारे च । प्रज्ञा० ३६ पद । विशे० ।

आउज्जसद्द-आतोद्यशब्द-पुं० । नोभाषाशब्दविशेषे, स्था० २ ठा० ३ उ० । स च वेणुवीणामृदङ्गादीनां यो शब्दः । जी० ३ प्रति० ४ अधि० ।

तद्भेदादि—

आउज्जसद्दे दुविहे पण्णत्ते, तं जहा-तते चेव,वितते चेव । तते दुविहे पण्णत्ते, तं जहा-घणे चेव, सुसिरे चेव । एवं वितते वि । ( सूत्र-८१ + )

( ततविततादिकमातोद्यभेदः ' आउज्ज ' शब्देऽस्मिन्नेव भागे प्रदर्शितः ) तज्जनितः शब्दस्ततो घनः शुषिरश्चेति व्यपदिश्यते । स्था० २ ठा० ३ उ० । ( अस्य चतुर्विधत्वम् चतुर्विधातोद्यजनितत्वात् । आतोद्यस्य बहवो भेदाः ' आउज्ज ' शब्देऽस्मिन्नेव भागे अनुपदमेव दर्शिताः ) ।

आउज्जिय-आयोगिक-पुं० । उपयोगवति ज्ञानिनि, । भ० । २ श० ५ उ० ।

आवर्जित-त्रि० । आ-वृज् णिच् क्त । अभिमुखीकृते, तथा च लोके वक्तारः -आवर्जितोऽयं मया; सम्मुखीकृत इत्यर्थः । प्रज्ञा० ३६ पद । पं० सं० । दत्ते, त्यक्ते, निम्नीकृते च । वाच० ।

आउज्जियकरण-आवर्जितकरण-न० । आवर्जितस्य करणमिति केवलिसमुद्घातात्पूर्वं क्रियमाणे शुभयोगव्यापारणे, तच्च भव्यत्वेनावर्जितस्य मोक्षगमनं प्रत्यभिमुखीकृतस्य शुभयोगव्यापारणम् । प्रज्ञा० ३६ पद । पं० सं० । ( अत्रत्या वक्तव्यता ' आउज्जीकरण ' शब्देऽग्रे वक्ष्यते )

आउज्जिया-आयोजिका-स्त्री० । भावे वुञ् । व्यापारणे, आ० म० १ अ० ।

आउज्जियाकरण-आयोजिकाकरण-न० । आङ्—मर्यादया केवलिदृष्ट्या योजनं-शुभानां योगानां-व्यापारणम् । भावे वुञ् । तस्य करणमिति । केवलिसमुद्घातात्पूर्वं क्रियमाणे शुभव्यापारात्मके क्रियाविशेषे, प्रज्ञा० ३६ पद । आ० म० । पं० सं० ।

आउज्जीकरण-आवर्जीकरण-न० । आवर्जनमावर्ज्ज तस्य करणमिति विवक्षायां च्विप्रत्यय । केवलिसमुद्घातात्पूर्वं क्रियमाणे आत्मानं प्रति मोक्षस्याभिमुखीकरणेनात्मनो मोक्षं प्रत्युपयोजनकरणे, आवर्ज्यतेऽभिमुखीक्रियते मोक्षोऽनेनेति आवर्जस्तस्य करणमिति विवक्षायां च्विप्रत्यय । केवलिसमुद्घातात्पूर्वं क्रियमाणे शुभमनोवाक्कायव्यापारविशेषकरणे, प्रज्ञा० ३६ पद । आवर्ज्यते इत्यावर्ज. घञ्, तस्य करणमिति च्वि. । केवलिसमुद्घातात्पूर्वं क्रियमाणे मोक्षं प्रत्यभिमुखीकर्त्तव्यस्य करणे, तत्रान्तर्मौहूर्त्तिक उदयावलिकायां कर्म्मपुद्गलप्रक्षेपव्यापाररूप उदीरणाविशेष. । आ० म० १ अ० । औ० । स्था० । कर्म्म० । पं० स० ।

आवर्जीकरणञ्च—

कइसमइए णं भंते ! आउज्जीकरणे पण्णत्ते, गोयमा ! असंखिज्जसमइए, अंतोमुहुत्तिए आउज्जीकरणे पण्णत्ते । ( सूत्र-३४६ )

सर्वोऽपि केवली केवलिसमुद्घातं गच्छन् प्रथमत आवर्जीकरणम् उपगच्छति । तथा च—केवलिसमुद्घातप्रक्रिया विभणिषु. समुद्घातशब्दव्याख्यानपुरस्सरमाह भाष्यकार ( प्रज्ञा० ३६ पद । )—

तत्थाउयसेसा हिय-कम्मसमुग्घायणं समुग्घाओ ।
तं गंतुमणा पुव्वं, आउज्जीकरणमब्भेइ ॥ ३०५० ॥
आवज्जणमुवओगो , वावारो वा तदत्थमाईए ।
अंतोमुहुत्तमेत्तं , काउं कुरुए समुग्घायं ॥ ३०५१ ॥

तत्रायु शेषाणाम्-अधिकस्थितिकानां वेदनीयादिकर्म्मणा समुद्घातन समुद्घात , त च गन्तुमना.-प्रारिप्सु पूर्वमावर्जीकरणमभ्यति-विदधाति । कथंभूत तदिति ?, उच्यते-तदर्थम्-समुद्घातकरणार्थमादौ केवलिन उपयोगो मया अधुनेदं कर्त्तव्यमित्येवरूप उदयावलिकायां कर्म्मप्रक्षेपरूपो व्यापारो चा आवर्जनमुच्यते । तस्यैवभूतस्य करणमावर्ज्जीकरणं तदन्तर्मुहूर्त्तमात्र कालं कृत्वा तत. समुद्घात कुरुत । विशे० ।

आउज्जोवण-अव्योजन-न० । अप्कायचन्त्रयोजने, ओघ० ।

तेषा हि सशब्द व्रजतामेते दोषा —

आउज्जोवणवणिए , अगणि कुडुंबीकुकम्मकुमरीए ।
तेणे मालागारे , उब्भामगपंथि एजंते ॥ ९० ॥

ते हि यदि सशब्दं व्रजन्ति ततश्च लोको विबुध्यते, विबुद्धश्च सन् ' आउज्जोवण' त्ति—अप्कायचन्त्राणि योज्यन्ते वहनाय सज्जीक्रियन्ते । ओघ० । असंजयपहिं सद्ध वसंताणं आउज्जोवणवणियादिदोसा भवति । नि० चू० २ उ० ।

आउट्ट-आउट्ट-पुं० । करणे, अयमेतादृश एव सैद्धान्तिको धातुः । कल्प० ३ अधि० १ क्षण । आउट्टन्ति णाम करेंति । नि० चू० ३ उ० ।

आकुट्ट-पुं० । आकुट्टनमाकुट्ट । आ-कुट्ट-घञ् । छेदने, हिंसाया च । सा चात्र प्राण्यवयवानां छेदनभेदनादिरूपो व्यापार' । सूत्र० १ श्रु० १ अ० २ उ० ।

आतुष्ट-त्रि० । सन्तुष्टे , नि० चू० १ उ० ।

आवृत्त-त्रि० । आ-समन्ताद् वृत्त इति । समन्ताद् व्यवस्थिते आचा० १ श्रु० ७ अ० ४ उ० । परावृत्ते , प्रतिनिवृत्ते च । वाच० । " आउट्टे " ०( २१ गाथा ) आवृत्ते-आवृत्तपरिणामे साधाविति । पचा० १६ विव० ॥ समन्तात् हिंसायां प्रवृत्ते, 'आउट्टामो' प्रवर्तामहे । हिंसायाम् । आचा० १ श्रु० ६ अ० १ उ० । पुन पुनरभ्यासे, आवर्त्यमाने च । वाच० ।

आउट्टंत-आउट्टत्-त्रि० । कुर्वति , कल्प० ३ अधि ० १ क्षण । नि० चू० ।

आउट्टण-आउट्टन-न० । करणे, कल्प० ३ अधि० १ क्षण । नि० चू० ।

आकुट्टन-न० । हिंसायाम् , सूत्र० १ श्रु० १ अ० २ उ० । आ० म० ।

आवर्तन-न० । अभिलाषायाम् , आचा०२ श्रु० ७ अ०१ उ० । आराधनायाम् , व्य० "कहणाऽऽउट्टण आगमण-पुच्छणं दीवणा य कज्जस्स " (५१×गाथा) । आवर्तनम्-आकम्पनं राज्ञो भक्तीभवनम् । व्य० २ उ० । नि० चू० । आवर्जने, व्य० १०उ० । अभिमुखीभूय वर्त्तने, नं० ३२ सूत्र । निवर्तने, सूत्र०१ श्रु० १० अ० । आवर्तते पूर्वभावतो निवृत्त्यान्यभावप्रतिपत्त्यभिमुखो वर्तते येन बोधपरिणामेन स आवर्त । पु । तथावर्तने , ईहातो निवृत्त्यापायभावप्रतिपत्त्यभिमुखीभूय वर्तनस्य हेतौ, बोधपरिणाम च । नं० ३२ सूत्र ।

आउट्टणया-आवर्तनता-स्त्री० । आवर्त्ततेऽभिमुखीभूय वर्त्तते येन स तथा तद्भावस्तत्ता । आभिनिबोधिकज्ञानावशेषस्यापायस्य नामधेयविशेषे , सा चेहातो निवृत्त्यापायभावप्रतिपत्त्यभिमुखीभूय वर्त्तते, हेतुभूता बोधपरिणामता । नं० ३२ सूत्र ।

आउट्टणा-आवर्त्तना-स्त्री० । आराधनायाम् , नि० चू० २ उ० । आकम्पने, व्य० २ उ० । आवर्जने, " आउट्टऊण अत्तीकरेइ" आवर्त्य-आवर्ज्यात्मीकरोति । व्य० १० उ० ।

आउट्टावण-आवर्त्तन-न० । अभिमुखीकरणे, आचा० २ श्रु० १ चू० २ अ० १ उ० ।

आउट्टि-आउट्टि-स्त्री० । करणे, " आउट्ट त्ति णाम करेंति " ' आउट्टि ' धातु. करणार्थे सैद्धान्तिकः । कल्प० ३ अधि० १ क्षण । नि० चू० ।

आकुट्टि-स्त्री० । हिंसायाम् , आचा० १ श्रु० ६ अ० १ उ० । इद करोमीत्येवं बुध्वोपेत्य करणे, जीत० । स० । ध० । प्रव० । पं० व० । आव० । ' आउट्टिया ' नाम आभोगे जानान इत्यर्थ । चू० ३ उ० । ( आकुट्या धर्मरुचेरुदाहरणम्- ' आता ' शब्देऽस्मिन्नेव भागे वक्ष्यते )

आवृत्ति-स्त्री० । आ-वृत्-क्तिन् । समन्तात्प्रवर्त्तने, आचा० २ श्रु० १ चू० १ अ० ३ उ० । अभिलाषायाम् , आचा० २ श्रु० २ चू० ६ अ० । आराधनायाम् , राज्ञो भक्तीभवनम् । व्य० २ उ० । नि० चू० । आवर्जने, । व्य० १० उ० । अभिमुखीभूय वर्त्तते, नं० । निवर्त्तने, सूत्र० १ श्रु० १० अ० । पुनः पुनरभ्यासे, भूय एकजातीयक्रियाकरणे, "आवृत्तिः सर्वशास्त्राणां, बोधादपि गरीयसी" । प्रत्यावृत्तौ, पुनरागतौ, वाच० । सूर्यस्य चन्द्रस्य च भूयो भूयो दक्षिणोत्तरगमने, सू० प्र० १२ पाहु० । चं० प्र० । ज्यो० । आवृत्तयो द्विधा । तद्यथा-एका. सूर्यस्यावृत्तयः, अपराश्चन्द्रमसः । तत्र युगे सूर्यस्यावृत्तयो दश भवन्ति, चतुस्त्रिंशच्छतमावृत्तीना चन्द्रमस । सू० प्र० १२ पाहु० । चं०प्र० ।

तत्र ( ५ वर्षात्मके युगे ) सूर्यस्य दशाऽऽवृत्तय —

तत्थ खलु इमातो पंच वासिकीओ, पंच हेमन्तीओ आउट्टीओ पण्णत्ताओ । ( सूत्र-७६ + )

तत्थ खलु' इत्यादि-तत्र युगे खलु इमा-वक्ष्यमाणस्वरूपाः पञ्च वार्षिक्य , पञ्च हैमन्त्य -शीतकालभाविन्यः सर्वसंख्यया दश आवृत्तय. सूर्यस्य प्रज्ञप्ता । सू०प्र० १२ पाहु० । चं० प्र० ।

एतस्योपपत्ति वक्तुकाम आह—

एत्तो आउट्टीओ, वोच्छं जह य कमेण सूरस्स ।
चंदस्स य लहुकरणं, जह दिट्ठं सव्वदंसीहिं ॥ २३१ ॥

इत'-अयनविभागप्रतिपादनानन्तरं सूर्यस्य चन्द्रस्य च आवृत्तीर्भूयो भूयो दक्षिणोत्तरगमनरूपा यथाक्रमेण-परिपाट्या वक्ष्यामि, तासां चाऽऽवृत्तीनां प्रतिनियतप्रथमदिवसपरिज्ञानाय यथा दृष्टं सर्वदर्शिभि.-सर्वज्ञैस्तथा करणम्-लघूपायं वक्ष्ये ।

प्रतिज्ञातमर्थं निर्वाहयितुकामः प्रथमत आवृत्ती. प्रतिपादयति—

सूरस्स य अयणसमा, आउट्टीओ जुगम्मि दस होंति ।
चंदस्स य आउट्टी, सयं च चोत्तीसयं चेव ॥ २३२ ॥

सूर्यस्य—आदित्यस्य युगे च चन्द्रचन्द्राभिवर्द्धित—चन्द्राभिवर्द्धितसंवत्सरपञ्चकपरिमाणे आवृत्तय यथोदितस्वरूपा अयनसमा भवन्ति । अयनप्रथमप्रवृत्तेरावृत्तिशब्दवाच्यत्वात् , ताश्च कति सख्या ? इत्याह-दश ।

तथा चन्द्रस्यावृत्तीना शतं चतुस्त्रिंशदधिकम्,१३४ अयनाना हि प्रथमा प्रवृत्तय आवृत्तिशब्दवाच्याश्चन्द्रस्य वा अयनान्येतावन्त्या भवन्ति तदावृत्तयोऽप्येतावत्य एव । अथैकस्मिन् युगे सूर्यस्य दशायनानि भवन्तीति, कथमवसीयते सूर्यस्याऽऽवृत्तयो युगे दश भवन्ति, चन्द्रमसश्चाऽऽवृत्तीना चतुस्त्रिंशच्छतमिति १३४, उच्यते-उक्त नाम आवृत्तयस्तयोर्दक्षिणोत्तरगमरूपा तत सूर्यस्य चन्द्रमसो वा यावन्त्ययनानि तावत्य आवृत्तय , सूर्यस्य चायनानि दश, एतच्चावसीयते त्रैराशिकबलात्, तथाहि-यदि दिवसैस्त्र्यशीत्यधिकेन शतेन एकमयनं भवति ततोऽष्टादशभि शतै. त्रिंशदधिकै कति अयनानि लभ्यन्ते, राशित्रयस्थापना-(१८३)(१)(१८३०) अत्रान्त्येन राशिना मध्यमस्य राशेर्गुणनम् , एकस्य च गुणने तदेव भवतीति जातान्यष्टादशशतानि त्रिंशदधिकानि-(१८३०)तेषामाद्येन राशिना त्र्यशीत्यधिकेन शतेन भागहरणे, लब्धा दश १० । आगतं युगमध्ये सूर्यस्य दश १० अयनानि भवन्तीति आवृत्तयोऽपि दश १०। तथा यदि त्रयोदशभिर्दिवसैश्चतुश्चत्वारिंशता च सप्तषष्टिभागैरेकं चन्द्रस्यायन भवति ततोऽष्टादशभिर्दिवसशतैस्त्रिंशदधिकै. कति चन्द्रायनानि भवन्ति ?, राशित्रयस्थापना-१३, ४४ । ६७ (१)।(१८३०)। तत्राद्य राशौ सवर्णनाकरणार्थं त्रयोदशापि दिनानि सप्तषष्ट्या गुणयित्वा चोपरितनाः चतुश्चत्वारिंशत् सप्तषष्टिभागाः प्रक्षिप्यन्ते, जातानि नव शतानि पञ्चदशोत्तराणि ( ९१५ ) यानि चाष्टादशशतानि त्रिंशदधिकानि-(१८३०) तान्यपि सवर्णनाकरणार्थं सप्तषष्ट्या ६७ गुण्यन्ते, जातानि द्वादश लक्षाणि द्वे सहस्रे षट् शतानि दशोत्तराणि ( १२०२६१० ) तत्रैवंरूपेणानेन राशिना मध्यमस्य राशेरेककरूपस्य गुणनम् , एकस्य च गुणने तदेव भवतीत्येतावानेव राशिर्जात., तस्य नवभि शतैः पञ्चदशोत्तरै -९१५ भागो ह्रियते लब्धं चतुस्त्रिंशं शतम् १३४ एतावन्ति चन्द्रायनानि युगमध्ये भवति, एतेतावत्य.१३४ चन्द्रमस आवृत्तय.। ज्यो०१२पाहु०।चं०प्र०।सू०प्र०।

संप्रति का सूर्यस्यावृत्ति' कस्यां तिथौ भवतीति चिन्तायां यत्पूर्वाचार्यैरुपदर्शितं करणं तदुपदर्श्यते ( सू० प्र० १२ पाहु० )—

आउट्टीहिं एगूणियाहिं , गुणियं सयं तु तेसीयं ।
जेण गुणियं तं तिगुणं , रूवहियं पक्खिवे तत्थ ॥२३९॥
पन्नरसलाइयम्मि उ, जं लद्धं तं तेसु होइ पव्वेसु ।
जे अंसा ते दिवसा , आउट्टी एत्थ बोधव्वा ॥ २४० ॥

अनयोर्व्याख्या- आवृत्तिभिरेकोनिकाभिर्गुणितं शतं त्र्यशीत्यधिकम् , । किमुक्त भवति-या आवृत्तिर्विशिष्टतिथियुक्ता ज्ञातुमिष्टा तत्संख्या एकोनिका क्रियते । ततस्तया-त्र्यशीत्यधिकं शतं गुण्यते , गुणयित्वा च येनाऽङ्केन गुणितं त्र्यशीत्यधिकं शतं तदङ्कस्थानं त्रिगुणं कृत्वा रूपाधिकं सत्तत्र-पूर्वराशौ प्रक्षिप्यते , तत. पञ्चदशभिर्भागो ह्रियते , हृते च भागे यल्लब्धं तत्तेषु तावत्संख्याकेषु पर्वसु निक्रान्तेषु सा विवक्षिता आवृत्तिर्भवति, ये त्वंशा. पश्चादुद्ग(द्ध)रितास्ते दिवसा ज्ञातव्या । तत्र तेषु दिवसेषु मध्ये चरमदिवसे आवृत्तिर्भवतीति भाव., इहावृत्तीनामेवं क्रमो-युगे-प्रथमा आवृत्ति. श्रावणे मासे, द्वितीया माघे मासे, तृतीया भूय श्रावणे मासे, चतुर्थी माघमासे , पुनरपि पञ्चमी श्रावणे. षष्ठी माघमासे, भूयः सप्तमी श्रावणे, अष्टमी माघमासे, नवमी श्रावणमासे, दशमी माघमासे इति । तत्र प्रथमा किल आवृत्ति' कस्यां तिथौ भवतीति यदि जिज्ञासा तदा प्रथमावृत्तिस्थाने एकको ध्रियते सा रूपोना क्रियते इति न किमपि पश्चाद्रूप प्राप्यते, तत पाश्चात्ययुगभाविनी या दशमी आवृत्तिस्तत्संख्या दशकरूपा ध्रियते, तया त्र्यशीत्यधिकं शतं गुण्यते, जातान्यष्टादश शतानि त्रिंशदधिकानि-१८३०, दशकेन किल गुणितं त्र्यशीत्यधिकं शतमिति । तत ते दश१०त्रिगुणीक्रियन्ते,जातास्त्रिंशत्३०। सा रूपाधिका

-विधेया, जाता एक त्रिंशत्, सा पूर्वराशौ प्रक्षिप्यते' जातान्यष्टादशशतान्येकषष्ट्यधिकानि-१८६१, तेषां पञ्चदशभिर्भागो ह्रियते लब्ध्वा चतुर्विंशतिशतं शेषं तिष्ठति एकं रूपम् आगतम् चतुर्विंशत्यधिकपर्वशतात्मके पाश्चात्ये युगे अतिक्रान्ते, अभिनवे युगे प्रवर्त्तमाने प्रथमावृत्तिः प्रथमायां तिथौ प्रतिपदि भवतीति। तथा कस्यां तिथौ द्वितीया माघमासभाविनी आवृत्तिर्भवतीति यदि जिज्ञासा ततो द्विको ध्रियते स रूपोन क्रियते इति जात एककस्तेन त्र्यशीत्यधिकं शतं गुण्यते, 'एकेन च गुणितं तदेव भवति' इति जातं त्र्यशीत्यधिकमेव शतम् १८३, एकेन गुणितं किल त्र्यशीत्यधिकं शतमिति। एकः त्रिगुणीक्रियते,जातस्त्रिकः स रूपाधिकः क्रियते जाताश्चत्वार ४, ते ४ पूर्वराशौ प्रक्षिप्यन्ते जातं सप्ताशीत्यधिकं शतम् १८७,तस्य पञ्चदशभिर्भागो ह्रियते लब्धा द्वादश, शेषास्तिष्ठन्ति सप्त, आगतं युगे द्वादशपर्वस्वतिक्रान्तेषु माघमासे बहुलपक्षे सप्तम्यां तिथौ द्वितीया माघमासे-माघमासभाविनीनां तु मध्ये प्रथमा आवृत्तिरिति। तथा तृतीया आवृत्तिः कस्यां तिथौ भवतीति जिज्ञासायां त्रिको ध्रियते, स रूपोन क्रियते इति जातो द्विकस्तेन त्र्यशीत्यधिकं शतं१८३ गुण्यते जातानि षट्षष्ट्यधिकानि त्रीणि शतानि (३६६) द्विकेन किल गुणितं त्र्यशीत्यधिकशतमिति। द्विकस्त्रिगुणीक्रियते जाताः षट् ते रूपाधिकाः क्रियन्ते, जाताः सप्त, ते पूर्वराशौ प्रक्षिप्यन्ते, जातानि त्रीणि शतानि त्रिसप्तत्यधिकानि-३७३ तेषां पञ्चदशभिर्भागे ह्रियते लब्धाश्चतुर्विंशति २४, शेषास्तिष्ठन्ति त्रयोदश-१३अंशा, आगतं युगे तृतीयावृत्तिः श्रावणमासभाविनीनां तु मध्ये द्वितीया चतुर्विंशतिपर्वात्मके प्रथमे संवत्सरेऽतिक्रान्ते श्रावणमासे बहुलपक्षे (ज्यो० १२ पाहु०) त्रयोदश्यां तिथौ भवतीति, एवमन्यास्वप्यावृत्तिषु करणवशाद्विवक्षितास्तिथय आनेतव्याः; ताश्चैवं युगे चतुर्थी माघमासभावनीनां तु मध्ये द्वितीया शुक्लपक्षे चतुर्थ्यां पञ्चमी। श्रावणमासभाविनीनां तु मध्ये तृतीया, श्रावणमासे शुक्लपक्षे दशम्यां षष्ठी, माघमासभाविनीनां तु मध्ये तृतीया माघमासे बहुलपक्षे प्रतिपदि सप्तमी। श्रावणमासभाविनीनां तु मध्ये चतुर्थी श्रावणमासे बहुलपक्षे सप्तम्यामष्टमी। माघमासभाविनीनां तु मध्ये चतुर्थी माघमासे बहुलपक्षे त्रयोदश्यां नवमी। श्रावणमासभाविनीनां तु मध्ये पञ्चमी, श्रावणमासे शुक्लपक्षे चतुर्थ्यां दशमी। माघमासभाविनीनां तु मध्ये पञ्चमी माघमासे शुक्लपक्षे दशम्याम् तथा चैता एव पञ्चानां श्रावणमासभाविनीनां पञ्चमीनां तु माघमासभाविनीनां तु तिथयोऽन्यत्राप्युक्ताः। चं० प्र० १२ पाहु० ७६ सूत्रटी०।

सम्प्रति या सूर्यस्यावृत्तिर्यस्मिन् दिने भवति तां तथा प्रतिपादयति—

पढमा बहुलपडिवए, बिइया बहुलस्स तेरसीदिवसे।
सुद्धस्स य दसमीए, बहुलस्स य सत्तमीए उ ॥ २३३ ॥
सुद्धस्स चउत्थीए, पवत्तए पंचमी उ आउट्टी।
एया आउट्टीओ, सव्वाओ सावणे मासे ॥ २३४ ॥

इह सूर्यस्य दशावृत्तयो भवन्ति, एतद्यानन्तरमेव भावितं, तत्र पञ्च आवृत्तय श्रावणे मासे भवन्ति, तासां मध्ये प्रथमा बहुलपक्षे प्रतिपदि १, द्वितिया-बहुलस्य बहुलपक्षस्य सम्बन्धिनि त्रयोदशीरूपे दिवसे२, तृतीया-शुद्धस्य-शुक्लपक्षस्य दशम्याम्३,चतुर्थी-बहुलपक्षस्य सप्तम्याम्४,शुद्धस्य-शुक्लपक्षस्य चतुर्थ्यां प्रवर्त्तते पञ्चमी-आवृत्ति ५, एता सर्वा अप्यावृत्तयः श्रावणे मासे वेदितव्याः। ज्यो० १२ पाहु०।

अधुना माघमासे भाविन्य आवृत्तयो यासु तिथिषु भवन्ति ता अभिदधाति—

बहुलस्स सत्तमीए, पढमा सुद्धस्स तो चउत्थीए।
बहुलस्स य पाडिवए, बहुलस्स य तेरसी दिवसे ॥२३६॥
सुद्धस्स य दसमीए पवत्तए पंचमी उ आउट्टी।
एया आउट्टीओ, सव्वाओ माघमासम्मि ॥ २३७ ॥

माघमासे प्रथमा आवृत्तिः-बहुलस्य-कृष्णपक्षस्य सप्तम्यां भवति १, द्वितीया-शुद्धस्य-शुक्लपक्षस्य चतुर्थ्याम् २, तृतीया-बहुलपक्षस्य प्रतिपदि ३, चतुर्थी-बहुलपक्षस्य त्रयोदशीदिवसे भवति ४, पञ्चमी शुक्लपक्षस्य दशम्यां प्रवर्तते ५, एता सर्वा अप्यावृत्तयो माघमासे भवन्ति। ज्यो० १२ पाहु०।

एतासु सूर्यावृत्तिषु चन्द्रनक्षत्रयोगपरिज्ञानार्थं करणमभिधित्सुस्तद्विषयं ध्रुवराशिमाह—

पंचसया पडिपुण्णा, तिसुत्तरा नियमसो मुहुत्ताणं।
छत्तीस बिसट्ठिभागा, छच्चेव य चुण्णिया भागा ॥२४१॥

ज्यो० १२ पाहु०।

पञ्चशतानि त्रिसप्ततानि-त्रिसप्तत्यधिकानि परिपूर्णानि मुहूर्त्तानां भवन्ति षट्त्रिंशच्च द्वाषष्टिभागाः। षट् चैव चूर्णिका भागा एकस्य द्वाषष्टिभागस्य सत्काः सप्तषष्टिभागा इत्यर्थ एतावान् विवक्षितकरणे ध्रुवराशि। कथमस्योत्पत्तिरिति चेत्?, उच्यते-इह यदि दशभि सूर्यायनैः सप्तषष्टिश्चन्द्रनक्षत्रपर्याया लभ्यन्ते तत एकेन सूर्याऽयनेन किं लभामहे?, राशित्रयस्थापना-( १० ) (६७) (१) अत्रान्त्येन राशिना एककेन मध्यस्यराशेः सप्तषष्टिलक्षणस्य गुणने 'एकेन च गुणितं तदेव लब्धं भवतीति" जाता सप्तषष्टिः (६७) तस्य दशभिर्भागहारे लब्धाः षट् ६ पर्यायाः, एकस्य च पर्यायस्य सप्तदश १७ भागा ये च सप्तमस्य पर्यायस्यसप्तदशभागा १७ तद्गतमुहूर्तप्रमाणमधिकृतगाथायामुपन्यस्तम्। अथ कथमेतदवसीयते एतावन्तस्तत्र मुहूर्त्ता भवन्ति? इति चेदुच्यते-त्रैराशिककर्मचिन्तावलात्तथा हि-यदि दशभिर्भागैः सप्तविंशतिर्दिनानि एकस्य च दिनस्य एकविंशति सप्तषष्टिभागा लभ्यन्ते तत सप्तभिर्भागैः किं लभामहे?, राशित्रयस्थापना-( १०-२७, २१/६७। ७ ) अत्रान्त्येन राशिना सप्तक ७ लक्षणेन मध्यस्य राशेः सप्तविंशति १७ दिनानि गुण्यन्ते जातं नवाशीत्यधिकं शतं (१८९) नस्यायेन राशिना दशक १० लक्षणेन भागे हृते लब्धा अष्टादश (१८) दिवसास्ते च मुहूर्त्तानयनाय त्रिंशता ३० गुण्यन्ते जातानि पञ्चशतानि चत्वारिंशदधिकानि-५४०, मुहूर्त्तानां, शेषा उपरि तिष्ठन्ति नव ९, ते मुहूर्तकरणार्थं त्रिंशता गुण्यन्ते जाते द्विशते सप्तत्यधिके-२७०, त्रयोदशभि १३ भागे हृते लब्धाः सप्तविंशतिर्मुहूर्त्ताः२७, ते पूर्वस्मिन् मुहूर्त्तराशौ

प्रक्षिप्यन्ते, जातानि पञ्चशतानि सप्तषष्ट्यधिकानि-५६७, येऽपि च एकविंशति सप्तषष्टिभागा दिनस्य तेऽपि मुहूर्त्तभागकरणार्थं त्रिंशता ३० गुण्यन्ते, जातानि षट्शतानि त्रिंशदधिकानि-६३०. तानि सप्तभि ७ र्गुण्यन्ते जातानि दशोत्तराणि चतुश्चत्वारिंशच्छतानि-४४१०, तेषां दशभि १० र्भागे हृते लब्धानि चत्वारि शतानि एकचत्वारिंशदधिकानि-४४१, तेषां सप्तषष्ट्या६७भागे हृते लब्धा षट्६मुहूर्त्ता ,ते पूर्वमुहूर्त्तराशौ प्रक्षिप्यन्ते, जातानि मुहूर्त्तानां पञ्च शतानि त्रिसप्तत्यधिकानि-५७३, शेषाश्चोद्वरिता एकोनचत्वारिंशत् ३९, सा द्वाषष्ट्या६२ गुण्यते, जातानि चतुर्विंशतिशतानि अष्टादशाधिकानि-२४१८, तेषां सप्तषष्ट्या ६७भागे हृते लब्धा. षट्त्रिंशत् द्वाषष्टिभागा , शेषास्तिष्ठन्ति षट् ६। ते एकस्य च द्वाषष्टिभागस्य सत्का सप्तषष्टिभागा. एते चातिश्लक्ष्णरूपा भागा इति चूर्णिका भागा इति व्यपदिश्यन्ते तदेवमुक्तो ध्रुवराशिः। सू० प्र० १२ पाहु० ७६ सूत्रटी० । चं० प्र० १२ पाहु० । ज्यो०।

सम्प्रति करणमाह—

आउट्टीहि एगुणियाहिं, गुणिओ हविज्ज धुवरासी ।
एयं मुहुत्तगणियं, एत्तो वोच्छामि सोहणगं ॥ २४२ ॥

ज्यो० १२ पाहु० ।

'आउट्टीहि' इत्यादि, यस्यां यस्यामावृत्तौ नक्षत्रयोगो ज्ञातुमिष्यते तया तया आवृत्त्या एकोनिकया-एकरूपहीनया गुणितोऽनन्तरोक्तस्वरूपो ध्रुवराशिर्भवेत् यावान् एतन्मुहूर्त्तगुणितं मुहूर्त्तपरिमाणम् , अत ऊर्ध्वं वक्ष्यामि शोधनकम् ॥ २४२ ॥

तत्र प्रथमतोऽभिजितो नक्षत्रस्य शोधनकमाह (सू०प्र०)—

अभिइस्स नव मुहुत्ता , विसट्ठिभागा उ होंति चउवीसं ।
छावट्ठी य समग्गा, भागा सत्तट्ठिछेयकया ॥ २४३ ॥
उगुणट्ठ पोट्ठवया, तिसु चेव नवोत्तरेसु रोहिणिया ।
तिसु नवनउएसु भवे , पुणव्वसू उत्तराफग्गू ॥ २४४ ॥
पंचेव अउणपन्ना , सयाइँ एगुणत्तराइँ छच्चेव ।
सोज्झाइँ विसाहाणं , मूले सत्तेव चोयाला ॥ २४५ ॥
अट्ठसयमुगुणवीसा , सोहणगं उत्तराअसाढाणं ।
चउवीस खलु भागा , छावट्ठी चुण्णिया भागा ॥ २४६ ॥

ज्यो० १२ पाहु० ।

'अभिइस्से' त्यादि, अभिजित -अभिजिन्नक्षत्रस्य शोधनकं नव९मुहूर्त्ता एकस्य च मुहूर्त्तस्य चतुर्विंशतिर्द्वाषष्टिभागा एकस्य च द्वाषष्टिभागस्य सत्का सप्तषष्टिच्छेदकृता समग्राः परिपूर्णाः षट्षष्टिभागा ६६ कथमेतस्योत्पत्तिरिति चेदुच्यते-इहाभिजितोऽहोरात्रसत्का एकविंशति सप्तषष्टिभागाश्चन्द्रेण योग । ततोऽहोरात्रे त्रिंशन्मुहूर्त्ता ३० इति मुहूर्त्तभागकरणार्थमेकविंशति २१ त्रिंशता ३० गुण्यते जातानि षट्शतानि त्रिंशदधिकानि (६३०) तेषां सप्तषष्ट्या भागो ह्रियते लब्धा नव९मुहूर्त्ताः शेषास्तिष्ठन्ति सप्तविंशतिः । ते द्वाषष्टिभागकरणार्थं द्वाषष्ट्या ६२ गुण्यन्ते,जातानि षोडशशतानि चतुःसप्तत्यधिकानि(१६७४)तेषां सप्तषष्ट्या ६७ भागो ह्रियते लब्धाश्चतुर्विंशतिर्द्वाषष्टिभागा ,शेषास्तिष्ठन्ति षट्षष्टि (६६) । ते च द्वाषष्टिभागस्य सत्का सप्तषष्टिभागा ॥२४३॥ सम्प्रति शेषनक्षत्राणां शोधनकानि उच्यन्ते-'उगुणट्ठमि' त्यादिगाथाद्वयम् । एकोनषष्टिमेकोनषष्ट्यधिकं शतं प्रोष्ठपदा-उत्तरभाद्रपदा किमुक्तं भवति-एकोनषष्ट्यधिकेन शतेनाभिजिदादीन्युत्तरभाद्रपदान्तानि नक्षत्राणि शुद्ध्यन्ति । तथाहि-नव९ मुहूर्त्ता अभिजित ,त्रिंशच्छ्रवणस्य, त्रिंशद्धनिष्ठाया , पञ्चदश शतभिषज , त्रिंशत्पूर्वभाद्रपदाया , पञ्चचत्वारिंशदुत्तरभाद्रपदाया इति शुद्ध्यन्ति । एकोनषष्ट्यधिकेन शतेनोत्तरभाद्रपदान्तानि नक्षत्राणि तथा त्रिषु नवोत्तरेषु शतेषु रोहिणिकान्तानि शुद्ध्यन्ति । तथाह्येकोनषष्ट्यधिकेन-शतेनोत्तरभाद्रपदान्तानि शुद्ध्यन्ति । ततस्त्रिंशन्मुहूर्त्तैः ३० रेवती, त्रिंशता ३० अश्विनी, पञ्चदशभिर्भरणी त्रिंशता कृत्तिका, पञ्चचत्वारिंशता ४५ रोहिणिकेति, तथा त्रिषु नवनवत्यधिकेषु शतेषु पुनर्वस्वन्तानि शुद्ध्यन्ति । तत्र त्रिभि शतैर्नवोत्तरैः रोहिणिकान्तानि शुद्ध्यन्ति, ततस्त्रिंशता ३० मुहूर्त्तै मृगशिरः , पञ्चदशभिरार्द्रा, पञ्चचत्वारिंशता ४५ पुनर्वसू इति । तथा पञ्चशतान्येकोनपञ्चाशदधिकानि उत्तरफाल्गुनीपर्यन्तानि । किमुक्तं भवति—पञ्चभि शतैरेकोनपञ्चाशदधिकैरुत्तरफाल्गुन्यन्तानि नक्षत्राणि शुद्ध्यन्ति। तथाहि-त्रिभि शतैर्नवनवत्यधिकैः पुनर्वस्वन्तानि शुद्ध्यन्ति । ततस्त्रिंशता ३० मुहूर्त्तै पुष्य , पञ्चदशभिरश्लेषा त्रिंशता ३० मघा, त्रिंशता ३० पूर्वफाल्गुनी. पञ्चचत्वारिंशता-उत्तरफाल्गुनीति , तथा-षट्शतानि एकोनसप्ततानि-एकोनसप्तत्यधिकानि विशाखानां-विशाखान्तानां नक्षत्राणां शोध्यानि, तथाहि-उत्तरफाल्गुन्यन्तानां पञ्चशतान्येकोनपञ्चाशदधिकानि शोध्यानि। ततस्त्रिंशन्मुहूर्त्ता ३०हस्तस्य, त्रिंशत् ३०चित्राया , पञ्चदश १५ स्वातेः, पञ्चचत्वारिंशद्विशाखाया, इति । तथा मूले-मूलनक्षत्रे शोध्यानि सप्तशतानि चतुश्चत्वारिंशदधिकानि ( ७४४ ) तत्र षट् शतानि एकोनसप्तत्यधिकानि ( ७६९ ) विशाखान्तानां नक्षत्राणां शोध्यानि, तत त्रिंशन्मुहूर्त्ता अनुराधाया , पञ्चदश ज्येष्ठाया , त्रिंशत् मूलस्येति , तथा अष्टौ शतानि समाहृतानि अष्टशतमेकोनविंशत्यधिकम् । किमुक्तं भवति-अष्टौ शतान्येकोनविंशत्यधिकानि उत्तराषाढानाम्-उत्तराषाढान्तानां नक्षत्राणां शोधनकम् । तथाहि-मूलान्तानां नक्षत्राणां शोध्यानि सप्तशतानि चतुश्चत्वारिंशदधिकानि(७४४) तत त्रिंशन्मुहूर्त्ता ३० पूर्वाषाढानक्षत्रस्य पञ्चचत्वारिंशदुत्तराषाढानामिति । तथा यथासंभवं सर्वेषामपि चामीषां शोधनकानामुपरि अभिजित संबन्धिनः चतुर्विंशतिर्द्वाषष्टिभागा शोध्याः एकस्य च द्वाषष्टिभागस्य सत्का षट्षष्टिश्चूर्णिका भागाः ॥ २४४ ॥ २४५ ॥ २४६ ॥

एयाइँ सोहइत्ता , जं सेसं तं हवेज्ज नक्खत्तं ।
चंदेण समाउत्तं , आउट्टीए उ बोधव्वं ॥ २४७ ॥

'एयाइं' इत्यादि, एतानि-अनन्तरोदितानि शोधनकानि यथासंभवं शोधयित्वा यत् शेषमुद्धरति तत्र यथायोगमपान्तरालवर्त्तिषु नक्षत्रेषु शोधितेषु यन्नक्षत्रं न शुद्ध्यति तन्नक्षत्रं चन्द्रेण समायुक्तं विवक्षितायामावृत्तौ वेदितव्यम् । तत्र प्रथमायामावृत्तौ प्रथमत प्रवर्त्तमानायां केन नक्षत्रेण युक्तश्चन्द्र इति यदि जिज्ञासा तत्प्रथमावृत्तिस्थाने एकको १ ध्रियते स रूपोन कियन इति न किमपि पश्चात् रूपमवतिष्ठते। तत पाश्चात्ययुगभाविनीनामावृत्तीना मध्ये या दशमी आवृत्तिस्तत्सख्या दशक१०रूपा ध्रियते तया प्राचीन. सम-

स्तोऽपि ध्रुवराशि· पञ्चशनानि त्रिसप्तत्यधिकानि मुहूर्त्तानामेकस्य च मुहूर्त्तस्य षट्त्रिंशत् द्वापष्ठिभागा एकस्य च द्वापष्टिभागस्य षट् सप्तषष्ठिभागाः (५७३) ( ३६।६२ ६।६७ ) इत्येवं प्रमाणो गुणयते । तत्र मुहूर्त्तराशौ दशभिर्गुणिते जातानि सप्तपञ्चाशत् शनानि त्रिंशदधिकानि (५७३०) येऽपि च षट्त्रिंशद्-द्वापष्टिभागास्तेऽपि दशभिर्गुणिते जातानि त्रीणि शतानि षष्ट्यधिकानि ( ३६०) तेषां द्वापष्ट्या भागे हृते लब्धा पञ्च ५ मुहूर्त्तास्ते पूर्वराशौ प्रक्षिप्यन्ते जातः पूर्वराशि –सप्तपञ्चाशच्छतानि पञ्चत्रिंशदधिकानि ( ५७३५ ) शेषास्तिष्ठन्ति द्वापष्ठिभागाः पञ्चाशत् ( ५० ) येऽपि च षट् चूर्णिकाभागास्तेऽपि दशभि १० र्गुणिता जाता षष्टि ६०, वत एतस्मात् शोधनकानि शोध्यन्ते । तत्रोत्तराषाढान्तानां नक्षत्राणा शोधनकमष्टौ शतान्येकोनविंशत्यधिकानि ( ८१९ ) एतानि किल यथोदितराशेः सप्तकृत्व· शुद्धिमाप्नुवन्तीति सप्तभिर्गुणयन्ते जानानि सप्तपञ्चाशच्छतानि त्रयस्त्रिंशदधिकानि ( ५७३३ ) तानि पञ्चाशच्छतेभ्य· पञ्चत्रिंशदधिकेभ्य· पात्यन्ते स्थितौ पश्चात् द्वौ २ मुहूर्त्तौ द्वाषष्टिभागकरणार्थे द्वापष्ट्या ६२ गुणयेते जातं चतुर्विंशत्यधिकं शतं ( १२४ ) द्वापष्टिभागानाम् तत· प्राक्तने पञ्चाशल्लक्षणे द्वापष्टिभागराशौ प्रक्षिप्यते जात चतु सप्तत्यधिक शतम् ( १७४ ) द्वापष्टिभागाना, तथापि ये अभिजित· सबन्धिनश्चतुर्विंशतिर्द्वापष्टिभागा शोध्यास्ते सप्तभिर्गुणयन्ते जातमष्टषष्ट्यधिक शतम् ( १६८ ) तत् चतुःसप्तत्यधिकात् शतात् शोध्यते स्थिताः शेषाः षट् द्वापष्टिभागा·। ते च चूर्णिकाभागकरणार्थ सप्तषष्ट्या गुणयन्ते गुणयित्वा च ये प्राक्तना· षष्टि सप्तषष्टिभागाः ते तत्र प्रक्षिप्यन्ते जानानि चत्वारि शतानि द्वापष्ट्यधिकानि ( ४६२ ) ततो ये अभिजित संबन्धिन षट् षष्टिश्चूर्णिकाभागाः शोध्याः ते सप्तभिर्गुणयन्ते जानानि चत्वारि शनानि द्वाषष्ट्यधिकानि ( ४६२ ) तान्यनन्तरोदितराशे शोध्यन्ते, स्थित पश्चात् शून्यम्०। नत आगत–साकल्येनोत्तराषाढानक्षत्रे चन्द्रेण भुक्ते सति तदनन्तरस्याभिजिनो नक्षत्रस्य प्रथमसमये युगे प्रथमा आवृत्ति· प्रवर्त्तते । ज्यो० १२ पाहु० । चन्द्र० १२ पाहु० । सू० प्र० ।

अथ श्रावणमासभाविनीनामावृत्तीनां चन्द्रनक्षत्रस्य संग्रहणीं गाथामाह—

पढमा होइ अभिइणा, संठाणाहि य तहा विसाहाहिं ।
रेवतीए उ चउत्थी, पुव्वाहि फग्गुणीहि तहा ॥ २३५ ॥

श्रावणमासभाविनीनामनन्तरोदितस्वरूपाणां पञ्चानामावृत्तीनां मध्ये प्रथमा आवृत्तिरभिजिता नक्षत्रेण युता भवति, द्वितीया ' संठाणाहिं ' ति–मृगसिरसा, तृतीया विशाखाभि , चतुर्थी रेवत्या, पञ्चमी पूर्वफाल्गुनीभि· । ज्यो० १२ पाहु० ।

सम्प्रति वार्षिकीणामेवाऽऽवृत्तीनां नक्षत्रयोगं प्रश्नरीत्या प्रतिपादयति—

ता एएसि णं पंचण्हं संवच्छराणं पढमं वासिकिं आउट्टिं चंदे केणं णक्खत्तेणं जोगं जोएति?, ता अभिइणा, अभिजिस्स पढमसमएणं, तं समयं च णं सूरे केणं णक्खत्तेणं जोगं जोएति ?, ता पूसेणं, पुस्सस्स एगूणवीसं मुहुत्ता तेतालीसं च बावट्ठिभागा मुहुत्तस्स बावट्ठिभागं च सत्तट्ठिहा छेत्ता तेतालीसं चुण्णिया भागा सेसा, ( सूत्र ७६+ )

'ता एएसि णमि' त्यादि, एतेषाम्–अनन्तरोदितानां पञ्चानां चन्द्रादीनां सवत्सराणां मध्ये प्रथमां वार्षिकीं–वर्षाकालसबन्धिनीं, श्रावणमासभाविनीमित्यर्थ· । आवृत्ति चन्द्र· केन नक्षत्रेण युनक्ति ?–केन नक्षत्रेण सह योगमुपागतः सन् प्रवर्त्तयति ?, एव गौतमेन प्रश्ने कृते भगवानाह–' ता अभिजिणा ' इत्यादि, अभिजिता नक्षत्रेण युनक्ति, एतदेव विशेषत आचष्टे–अभिजितो नक्षत्रस्य प्रथमसमये युनक्ति, तदेव चन्द्रनक्षत्रमवबुध्य, सूर्यनक्षत्रविषयं प्रश्नमाह–' तं समयं च णमि ' त्यादि, तस्मिंश्च समये णमिति वाक्यालङ्कारे, सूर्य· केन नक्षत्रेण युनक्ति–केन नक्षत्रेण सह सूर्यो योगमुपागत सन् तां प्रथमामावृत्ति–प्रवर्त्तयतीति ? । भगवानाह–' ता पूसेणमि ' त्यादि, ता इति पूर्ववत् , पुष्येण युक्तस्तां प्रथमामावृत्तिं युनक्ति, एतदेव सविशेषमाचष्टेतदानीं पुष्यस्य एकोनविंशति १९ मुहूर्त्तास्त्रिचत्वारिंशत् ४३ च द्वाषष्टिभागा मुहूर्त्तस्य एकं च द्वाषष्टिभागं सप्तषष्टिधा छित्वा तस्य सत्कास्त्रयस्त्रिंशत् ३३ चूर्णिकाभागाः शेषाः । कथमेतदवसीयत इति चेत् , उच्यते–त्रैराशिकबलात् , तथाहि–यदि दशभिरयनै· पञ्च सूर्यकृतान्नक्षत्रपर्यायान् लभामहे तत एकेनायनेन किं लभामहे ?, राशित्रयस्थापना–१०।५।१। अत्रान्त्येन राशिना एकक १ लक्षणेन मध्यमस्य राशे पञ्चक ५ रूपस्य गुणने जाता· पञ्चैव ५, तेषां दशभि १० र्भागो ह्रियते लब्धमर्ध पर्यायस्य तत्र नक्षत्रपर्याय· सप्तषष्टिभागरूपोऽष्टादशशतानि त्रिंशदधिकानि ( १८३० ) तथाहि–षट् नक्षत्राणि शतभिषक्प्रभृतीनि अर्द्धक्षेत्राणि ततस्तेषा प्रत्येक सार्द्धत्रयस्त्रिंशत् सप्तषष्टिभागास्ते सार्द्धास्त्रयस्त्रिंशत् षड्भिर्गुणयन्ते जाते द्वे शते एकोत्तरे ( २०१ ) षट् नक्षत्राण्युत्तरभाद्रपदादीनि द्व्यर्द्धक्षेत्राणि, ततस्तेषां प्रत्येकमेकं शतं सप्तषष्टिभागानामेकस्य च सप्तषष्टिभागस्यार्द्धम् एतत् षड्भिर्गुण्यते जातानि षट्शतानि त्र्युत्तराणि–(६०३)शेषाणि पञ्चदश १५ नक्षत्राणि समक्षेत्राणि तेषां प्रत्येक सप्तषष्टिभागा ततः सप्तषष्टि पञ्चदशभिर्गुण्यते जातं पञ्चोत्तर सहस्रम् (१००५) एकविंशतिश्चाभिजित· सप्तषष्टिभागाः सर्वसंख्यया सप्तषष्टिभागानामष्टादशशतानि त्रिंशदधिकानि ( १८३० ) एष परिपूर्ण· सप्तषष्टिभागात्मको नक्षत्रपर्याय· एतस्यार्द्धं नव शतानि पञ्चदशोत्तराणि ( ९१५ ) तेभ्य एकविंशतिरभिजित· संबन्धिनी शुद्धा, शेषाणि तिष्ठन्त्यष्टौ शतानि चतुर्नवत्यधिकानि (८९४) तेषा सप्तषष्ट्या६७भागो ह्रियते लब्धास्त्रयोदश (१३) शेषास्तिष्ठन्ति त्रयोविंशति २३, त्रयोदशभिश्च पुनर्वस्वन्तानि नक्षत्राणि शुद्धानि, ये च शेषास्तिष्ठन्ति त्रयोविंशति· २३ भागा ते मुहूर्त्तकरणार्थं त्रिंशता ३० गुणयन्ते, जातानि षट् शनानि नवत्यधिकानि(६९०)तेषां सप्तषष्ट्या६७भागो ह्रियते लब्धा दश(१०)मुहूर्त्ता·, शेषास्तिष्ठन्ति विंशति २०, सा २० द्वाषष्टिभागकरणार्थं द्वाषष्ट्या ६२ गुणयते जातानि द्वादशशतानि चत्वारिंशदधिकानि ( १२४० ) तेषा सप्तषष्ट्या६७भागो ह्रियते,लब्धा अष्टादश द्वाषष्टिभागाः,

वावट्ठिभागा मुहुत्तस्स वावट्ठिभागं च सत्तट्ठिधा छेत्ता। चत्तालीसं ४४ चुण्णिया भागा सेसा, तं समयं च णं सूरे केणं णक्खत्तेणं जोगं जोएति ? ता पूसेणं, पूसस्स णं तं चेव,

'ता एएसि णमि' त्यादि, सुगमं, भगवानाह-'ता विसाहाहिं' इत्यादि, 'ता' इति पूर्ववत्, विशाखाभि -विशाखानक्षत्रेण युक्तः सन् चन्द्रमास्तृतीयां श्रावणमासभाविनीमावृत्तिं प्रवर्त्तयति, तदानीं च तृतीयाऽऽवृत्तिप्रवर्त्तनसमये विशाखाना-विशाखानक्षत्रस्य त्रयोदश १३ मुहूर्त्ताः एकस्य १ च मुहूर्त्तस्य चतुःपञ्चाशद् द्वाषष्टिभागा एकं च द्वाषष्टिभागं सप्तषष्टिधा छित्वा तस्य सत्काश्चत्वारिंशच्चूर्णिकाभागाः शेषाः, तथा हि—तृतीया श्रावणमासभाविन्यावृत्तिः पूर्वप्रदर्शितक्रमापेक्षया पञ्चमी ५, ततस्तत्स्थाने पञ्चको ५ ध्रियते स रूपोनः कार्य इति जातश्चतुष्क ४ तेन ४ प्राक्तनो ध्रुवराशि -५७३।३६।६। गुण्यते जातानि द्वाविंशति शतानि द्विनवत्यधिकानि मुहूर्त्तानां चतुश्चत्वारिंशं शतं मुहूर्त्तगताना द्वाषष्टिभागानामेकस्य च द्वाषष्टिभागस्य चतुर्विंशति सप्तषष्टिभागा -२२९२।१४४।२४। तत एतेभ्यः षोडशभिर्मुहूर्त्तशतैरष्टात्रिंशदधिकैरष्टाचत्वारिंशता च द्वाषष्टिभागैर्मुहूर्त्तस्य द्वाषष्टिभागगतानां च सप्तषष्टिभागाना द्वात्रिंशेन शतेन द्वौ परि पूर्णौ नक्षत्रपर्यायौ शुद्धौ, स्थितानि पश्चात् षट् शतानि चतुःपञ्चाशदधिकानि मुहूर्त्तानां, मुहूर्त्तगतानां च द्वाषष्टिभागाना चतुर्नवतिरेकस्य च द्वाषष्टिभागस्य सप्तविंशति सप्तषष्टिभागा -६५४।६४।२६। तत एतेभ्यः पञ्चभिः शतैरेकोनपञ्चाशदधिकैर्मुहूर्त्तानामेकस्य च मुहूर्त्तस्य चतुर्विंशत्या द्वाषष्टिभागैरेकस्य च द्वाषष्टिभागस्य षट्षष्ट्यासप्तषष्टिभागैरभिजिदादीन्युत्तरफाल्गुनीपर्यन्तानि नक्षत्राणि शुद्धानि। स्थितम् पश्चात् पञ्चोत्तरं मुहूर्त्तशतं मुहूर्त्तगतानां च द्वाषष्टिभागानामेकोनसप्ततिरेकस्य च द्वाषष्टिभागस्य सप्तविंशति सप्तषष्टिभागा, तत्र द्वाषष्ट्या द्वाषष्टिभागैरेको १ मुहूर्त्तो लब्ध, स्थिता पश्चात् सप्त द्वाषष्टिभागा, लब्धश्च मुहूर्त्तो मुहूर्त्तराशौ प्रक्षिप्यते, जातं षडुत्तरं मुहूर्त्तशतं १०६ ६२ ६७ तत पञ्चसप्तत्या मुहूर्त्तैः हस्तादीनि स्वातिपर्यन्तानि त्रीणि नक्षत्राणि शुद्धानि, स्थिता शेषा एकत्रिंशन्मुहूर्त्ता ३१, आगतं विशाखानक्षत्रस्य त्रयोदशसु मुहूर्त्तेष्वेकस्य च मुहूर्त्तस्य चतुःपञ्चाशद् द्वाषष्टिभागेष्वेकस्य च द्वाषष्टिभागस्य चत्वारिंशति सप्तषष्टिभागेषु शेषेषु चन्द्रस्तृतीयां श्रावणमासभाविनीमावृत्तिं प्रवर्त्तयति।

सम्प्रति सूर्यनक्षत्रविषयं प्रश्नसूत्र निर्वचनसूत्र चाह-'तं समयं च णमि' त्यादि, सुगमम्। चं० प्र० १२ पाहु०।

सम्प्रति श्रावणमासभावि (ज्यो०) चतुर्थ्यावृत्तिविषयं प्रश्नसूत्रमाह—

ता एएसिणं पंचण्हं संवच्छराणं चउत्थिं ४ वासिकिं आउट्टिं चंदे केणं णक्खत्तेणं जोएति ता, रेवतीहिं रेवतीणं पणवीसं मुहुत्ता वासट्ठिभागा मुहुत्तस्स वावट्ठिभागं च सत्तट्ठिहा छेत्ता बत्तीसं चुण्णिया भागा सेसा, तं समयं च णं सूरे केणं णक्खत्तेणं जोएति ?, ता पूसेणं पूसस्स णं तं चेव। ( सूत्र-७६ + ) ॥

'ता एएसि णमि' त्यादि, सुगमं, भगवानाह-'ता रेवईहिं' इत्यादि, रेवत्या युक्तश्चन्द्र चतुर्थी श्रावणमासभाविनीमावृत्तिं प्रवर्तयति, तदानीं च रेवतीनक्षत्रस्य पञ्चविंशतिर्मुहूर्त्ता द्वात्रिंशत् द्वाषष्टिभागा मुहूर्त्तस्य एकं च द्वाषष्टिभागं सप्तषष्टिधा छित्वा तस्य सत्का षड्विंशनिश्चूर्णिकाभागाः शेषाः, तथाहि-प्रागुपदर्शितक्रमापेक्षया श्रावणमासभाविनीचतुर्थ्यावृत्तिः, सप्तमी ततः सप्तको ७ ध्रियते, स रूपोनः कार्य इति जातः षट्क ६, तेन ६ प्राक्तनो ध्रुवराशिः ५७३। ३६। ६। गुण्यते, जातानि चतुस्त्रिंशच्छतानि अष्टात्रिंशदधिकानि ( ३४३८ ) मुहूर्त्तानां, मुहूर्त्तगतानां च द्वाषष्टिभागानां द्वे शते षोडशात्तरे ( २१६ ) एकस्य च द्वाषष्टिभागस्य षट्त्रिंश ( ३६ ) त्सप्तषष्टिभागा तत एतेभ्यो द्वात्रिंशता शतै षट्नसत्यधिकैर्मुहूर्त्ताना, मुहूर्तगतानां च द्वाषष्टिभागानां पञ्चवत्या द्वाषष्टिभागसत्कानां च सप्तषष्टिभागानां द्वाभ्यां शताभ्या चतुःषष्टिसहिताभ्यां चत्वारो नक्षत्रपर्याया शुद्धा, स्थितं पश्चादिकं द्वाषष्ट्यधिक मुहूर्त्तशत मुहूर्त्तगतानां च द्वाषष्टिभागाना षोडशोत्तर शतम् एकस्य च द्वाषष्टिभागस्य चत्वारिंशत् सप्तषष्टिभागा. (१६२) (११६) ४०। तत्र एकोनषष्ट्यधिकेन मुहूर्त्तशतेन एकस्य च मुहूर्त्तस्य चतुर्विंशत्या द्वाषष्टिभागैरेकस्य च द्वाषष्टिभागस्य षट्षष्ट्या सप्तषष्टिभागैः १५६। २४। ६६। अभिजिदादीन्युत्तरभद्रपदापर्यन्तानि नक्षत्राणि भूयः शुद्धानि, स्थिता पश्चात् त्रयो मुहूर्त्ता मुहूर्त्तगतानां च द्वाषष्टिभागानामेकनवतिरेकस्य च द्वाषष्टिभागस्य एकचत्वारिंशत्सप्तषष्टिभागा द्वाषष्ट्या च द्वाषष्टिभागैरेको मुहूर्त्तो लब्ध, स मुहूर्त्तराशौ प्रक्षिप्यते, जाताश्चत्वारो ४ मुहूर्त्ता, एकस्य च मुहूर्त्तस्य एकोनत्रिंशद् द्वाषष्टिभागा. ( एकस्य च द्वाषष्टिभागस्यैकचत्वारिंशत् सप्तषष्टिभागा ) ४। २९। ४१। तत आगतं-रेवतीनक्षत्रं पञ्चविंशतौ मुहूर्त्तेष्वेकस्य च मुहूर्त्तस्य द्वात्रिंशति द्वाषष्टिभागेष्वेकस्य च द्वाषष्टिभागस्य षड्विंशतौ सप्तषष्टिभागेषु शेषेषु चतुर्थीं श्रावणभाविनीमावृत्तिं प्रवर्त्तयति, 'त समय च णमि' त्यादि, सूर्यनक्षत्रविषय प्रश्नसूत्र निर्वचनसूत्र च प्राग्वद्भावनीयम्।

साम्प्रतं पञ्चमं श्रावणमासभाविपञ्चमावृत्तिविषयं प्रश्नसूत्रमाह—

ता एएसि णं पंचण्हं संवच्छराणं पंचमीं वासिकिं आउट्टिं चंदे केणं णक्खत्तेणं जोगं जोएत्ति ?, ता पुव्वाहिं फग्गुणीहिं पुव्वाणं फग्गुणीणं बारस १२ मुहुत्ता सचालीसं च वावट्ठिभागा मुहुत्तस्स वावट्ठिभागं च संचट्ठिहा छेत्ता तेरस १३ चुण्णिया भागा सेसा, तं समयं च णं सूरे केणं णक्खत्तेणं जोगं जोएति ?, ता पूसेणं पूसस्स णं तं चेव।
( सूत्र-७६+ ) ॥

'ता एएसि णमि' त्यादि, सुगमं, भगवानाह-'ता पुव्वाहिं फग्गुणीहिं' इत्यादि, 'ता' इति पूर्ववत्, पूर्वाभ्या फाल्गुनीभ्या युक्तश्चन्द्र पञ्चमीं ५ श्रावणमासभाविनीमावृत्तिं प्रवर्त्तयति तदानीं च तस्य पूर्वफाल्गुनीनक्षत्रस्य द्वादश १२ मुहुर्त्ता एकस्य च मुहूर्त्तस्य सप्तचत्वारिंशद् ४७ द्वाषष्टिभागा.-

६२ एकं च द्वाषष्टि ६२ भागं सप्तषष्टिधा ६७ छित्त्वा तस्य सत्कास्त्रयोदश १३ चूर्णिकाभागा शेषा । तथा हि-पञ्चमी श्रावणमासभाविन्यावृत्तिः प्राक्प्रदर्शितक्रमापेक्षया नवमी ९ ततस्तत्स्थाने नवको ९ ध्रियते । स रूपोनः कार्य इति, जाता अष्टौ ८, तैः प्रागुक्तो ध्रुवराशिः ५७३ । ३६/६२ । ६/६७ गुण्यते जातानि पञ्चचत्वारिंशच्छतानि चतुरशीत्यधिकानि मुहूर्त्तानां, मुहूर्त्तगतानां च द्वाषष्टि ६२ भागानां द्वे शते अष्टाशीत्यधिके एकस्य च द्वाषष्टिभागस्याष्टाचत्वारिंशत् सप्तषष्टिभागाः ४५८४।२८८।४८। तत एतेभ्यश्चत्वारिंशता मुहूर्त्तशतैः पञ्चनवत्यधिकैर्मुहूर्त्तगतानां च द्वाषष्टिभागानां त्रिंशत्यधिकेन शतेन एकस्य च द्वाषष्टिभागस्य सत्कानां सप्तषष्टिभागानां त्रिंशदधिकैस्त्रिभिः शतैः पञ्च ५ नक्षत्रपर्याया शुद्धाः, स्थितानि पश्चान्मुहूर्त्तानां चत्वारि शतानि एकोननवत्यधिकानि मुहूर्त्तगतानां च द्वाषष्टिभागानां शतं त्रिषष्ट्यधिकम् एकस्य च द्वाषष्टिभागस्य त्रिपञ्चाशत् सप्तषष्टिभागाः—४८९ । १६३ । ५३ । तत एतेभ्यो भूयः त्रिभिः शतैर्नवत्यधिकैर्मुहूर्त्तानामेकस्य च मुहूर्त्तस्य चतुर्विंशत्या द्वाषष्टिभागैरेकस्य च द्वाषष्टिभागस्य षट्षष्ट्या सप्तषष्टिभागैरभिजिदादीनि पुनर्वसुपर्यन्तानि नक्षत्राणि शुद्धानि स्थिताः पश्चान्मुहूर्त्तानां नवतिः मुहूर्त्तगतानां द्वाषष्टिभागानामष्टात्रिंशदधिकं शतम् एकस्य च द्वाषष्टिभागस्य चतुःपञ्चाशत् सप्तषष्टिभागाः ९०।१३८।५४। तत्र चतुर्विंशत्यधिकेन द्वाषष्टिभागशतेन द्वौ मुहूर्त्तौ लब्धौ पश्चात् स्थिता द्वाषष्टिभागाश्चतुर्दश, लब्धौ च मुहूर्त्तौ मुहूर्त्तराशौ प्रक्षिप्येते जाता मुहूर्त्तानां द्विनवतिः -९२।१४।५४। तत्र पञ्चसप्तत्या ७५ मुहूर्त्तैः पुष्यादीनि मघापर्यन्तानि त्रीणि नक्षत्राणि शुद्धानि, स्थिताः पश्चात् सप्तदश मुहूर्त्ताः —१७।१४।५४। न चैतावता पूर्वफाल्गुनी शुध्यति तत आगतं पूर्वफाल्गुनीनक्षत्रस्य द्वादशसु १२ मुहूर्त्तेष्वेकस्य च मुहूर्त्तस्य सप्तचत्वारिंशद् द्वाषष्टिभागेषु एकस्य च द्वाषष्टि ६२ भागस्य त्रयोदशसु सप्तषष्टिभागेषु शेषेषु पञ्चमी ५ श्रावणमासभाविनी आवृत्तिः प्रवर्त्तते । सूर्यनक्षत्रविषयं प्रश्नसूत्रं निर्वचनसूत्रं च प्राग्वद्भावनीयम् । चन्द्र० १२ पाहु० । सू० प्र० । ज्यो० ।

तदेवं चन्द्रनक्षत्रयोगविषये, सूर्यनक्षत्रयोगविषये च पञ्चापि वार्षिकीरावृत्तीः प्रतिपाद्य, संप्रति हैमन्तीः प्रतिपिपादयिषु (चं० प्र० १२ पाहु०) आदौ चन्द्रनक्षत्रविषयकसंग्रहणीगाथामाह—

> हत्थेण होइ पढमा, सयभिसयाहि य ततो य पुस्सेणं ।
> मूलेण कत्तियाहि य, आउट्टीओ य हेमंते ॥ २९८ ॥

हेमन्ते-माघमासे प्रथमा १ आवृत्तिर्भवति हस्तेन-हस्तनक्षत्रेण युता, द्वितीया २ शतभिषजा, तृतीया ३ पुष्येण, चतुर्थी ४ मूलेन, पञ्चमी ५ कृत्तिकाभिः । ज्यो० १२ पाहु० ।

प्रथमावृत्तिः—

ता एएसि णं पंचण्हं संवच्छराणं पढमं हेमंतिं आउट्टिं चंदे केणं णक्खत्तेणं जोगं जोएति ?, ता हत्थेणं, हत्थस्स णं पंच मुहुत्ता पण्णासं च बावट्ठिभागा मुहुत्तस्स बावट्ठिभागं च सत्तट्ठिधा छेत्ता सट्ठि चुण्णिया भागा सेसा, तं समयं च णं सूरे केणं णक्खत्तेणं जोगं जोएति ?, उत्तराहिं आसाढाहिं, उत्तराणं आसाढाणं चरिमसमए १ ॥

'ता एएसि ण' मित्यादि, ता इति पूर्ववत्, एतेषाम्-अनन्तरोदितानां चन्द्रादीनां पञ्चानां संवत्सराणां मध्ये प्रथमा हैमन्तीमावृत्तिं चन्द्रः केन नक्षत्रेण युनक्ति ?, केन नक्षत्रेण सह योगमुपागतः सन् प्रवर्त्तयतीति भावः, भगवानाह— 'ता हत्थेण' इत्यादि, ता इति पूर्ववत्, हस्तेन—हस्तनक्षत्रेण युक्तश्चन्द्रः प्रवर्त्तयति, तदानीं च हस्तनक्षत्रस्य पञ्च ५ मुहूर्त्ता एकस्य च मुहूर्त्तस्य पञ्चाशत् द्वाषष्टिभागाः एकं च द्वाषष्टिभागं सप्तषष्टिधा छित्त्वा तस्य सत्काः षष्टिश्चूर्णिकाभागाः शेषाः, तथाहि-हैमन्ती प्रथमा आवृत्तिः प्रागुक्तक्रमापेक्षया द्वितीया ततस्तत्स्थाने द्विको ध्रियते, स रूपोनः कार्य इति जात एकक १ स्तेन १ प्रागुक्तो ध्रुवराशिः -५७३ । ३६/६२ । ६/६७ । गुण्यते, 'एकेन च गुणितं तदेव भवती' ति जातस्तावानेव ध्रुवराशिः, तत एतस्मात् पञ्चभिः शतैरेकोनपञ्चाशदधिकैर्मुहूर्त्तानामेकस्य च मुहूर्त्तस्य चतुर्विंशत्या द्वाषष्टिभागैरेकस्य च द्वाषष्टिभागस्य षट्षष्ट्या सप्तषष्टिभागैरभिजिदादीन्युत्तरफाल्गुनीपर्यन्तानि नक्षत्राणि शुद्धानि स्थिताः पश्चाच्चतुर्विंशतिर्मुहूर्त्ता एकस्य च मुहूर्त्तस्य एकादश द्वाषष्टिभागा एकस्य च ६२ भागस्य सप्त सप्तषष्टिभागाः २४ । ११ । ७ । तत आगतं हस्तनक्षत्रस्य पञ्चसु मुहूर्त्तेषु एकस्य च मुहूर्त्तस्य पञ्चाशति द्वाषष्टिभागेष्वेकस्य च द्वाषष्टिभागस्य षष्टौ सप्तषष्टिभागेषु शेषेषु प्रथमां हैमन्तीमावृत्तिं चन्द्रः प्रवर्त्तयतीति । सूर्यनक्षत्रविषयं प्रश्नसूत्रमाह—'तं समयं च ण' मित्यादि, तस्मिंश्च समये सूर्यः केन नक्षत्रेण युक्तस्तां प्रथमां हैमन्तीमावृत्तिं युनक्ति—प्रवर्त्तयति ?, भगवानाह—'ता उत्तराहिं' इत्यादि, उत्तराभ्यामाषाढाभ्यां तदानीं चोत्तराषाढायाश्चरमसमये, समकालमुत्तराषाढानक्षत्रमुपभुज्याभिजिन्नक्षत्रस्य प्रथमसमये प्रथमां हैमन्तीमावृत्तिं सूर्यः प्रवर्त्तयतीति भावः, तथाहि—यदि दशभिरयनैः पञ्च सूर्यकृताः नक्षत्रपर्यायान् लभामहे तत एकेनायनेन किं लभामहे ?, राशित्रयस्थापना-१० । ५ । १ । अत्रान्त्येन राशिना एककलक्षणेन मध्यमस्य पञ्च ५ करूपस्य राशेर्गुणनं जाताः पञ्चैव तेषां दशभिर्भागे हृते लब्धमेकमर्द्धं पर्यायस्य, अर्द्धं च पर्यायस्य सप्तषष्टिभागरूपं नव शतानि पञ्चदशोत्तराणि ९१५, तत्र ये विंशतिः, सप्त६७ भागाः पाश्चात्ये अयने पुष्यस्य गताः शेषाश्चतुश्चत्वारिंशत्सप्तषष्टिभागाः स्थिताः ते साम्प्रतमितो राशेः शोध्यन्ते स्थितानि शेषाण्यष्टौ शतान्येकसप्तत्यधिकानि ८७१, तेषां सप्तषष्ट्या भागे हृते लब्धास्त्रयोदश पश्चान्न किमपि तिष्ठति, त्रयोदशभिश्चाश्लेषादीन्युत्तराषाढापर्यन्तानि शुद्धानि, तत आगतम्-अभिजितः प्रथमसमये माघमासभाविनी १ आवृत्तिः प्रवर्त्तते, एवं सर्वा अपि माघमासभाविन्य आवृत्तयः सूर्यनक्षत्रयोगमधिकृत्य वेदितव्याः, उक्तं च—"बाहिरओ पविसंतो आइच्चो अभिइजोगमुवयगंमि । सव्वा आउट्टीओ करेइ सो माघमासंमि ॥ १ ॥"

द्वितीयहेमन्ताऽऽवृत्तिविषयं प्रश्नसूत्रमाह—

ता एएसि णं पंचण्हं संवच्छराणं दोच्चं हेमंतिं आउट्टिं

चंदे केणं णक्खत्तेणं जोगं जोएति ?, ता सतभिसयाहिं, सतभिसयाणं दुन्नि मुहुत्ता अट्ठावीसं च बावट्ठिभागा मुहुत्तस्स बावट्ठिभागं च सत्तट्ठिधा छेत्ता छत्तालीसं चुण्णिया भागा सेसा, तं समयं च णं सूरे केणं णक्खत्तेणं जोगं जोएति ?, ता उत्तराहिं आसाढाहिं, उत्तराणं आसाढाणं चरिमसमए २॥

'ता एएसि णं' मित्यादि सुगमं भगवानाह 'ता सयभिसयाहिं' इत्यादि, ता इति पूर्ववत् , शतभिषजा युक्तश्चन्द्रो द्वितीयां हैमन्तीमावृत्तिं प्रवर्त्तयति , तदानीं च शतभिषजो नक्षत्रस्य द्वौ मुहूर्त्तावेकस्य च मुहूर्त्तस्याष्टाविंशतिर्द्वाषष्टिभागा एकं च द्वाषष्टिभागं सप्तषष्टिधा छित्त्वा तस्य सत्काः षट्चत्वारिंशच्चूर्णिकाभागाः शेषाः , तथाहि-प्रागुपदर्शितक्रमापेक्षया द्वितीया माघमासभाविन्यावृत्तिश्चतुर्थी ततस्तस्याः स्थाने चतुष्को४ ध्रियते स४ रूपोनः कार्य इति जातस्त्रिक ३ तेन ३ प्राक्तनो ध्रुवराशि ५७३ ।३६। ६ । गुण्यते जातानि सप्तदश शतान्येकोनविंशत्यधिकानि मुहूर्त्तानां मुहूर्त्तगतानां च द्वाषष्टिभागानामष्टोत्तरं शतमेकस्य च द्वाषष्टिभागस्याष्टादश सप्तषष्टिभागाः १७१९ । १०८ । १८ । तत एतेभ्यः षोडशभिः शतैरष्टात्रिंशदधिकैर्मुहूर्त्तानामेकस्य च मुहूर्त्तस्याष्टाचत्वारिंशता द्वाषष्टिभागैरेकद्वाषष्टिभागसत्कानां च सप्तषष्टिभागानां द्वात्रिंशदधिकेन शतेन द्वौ नक्षत्रपर्यायौ शुद्धौ, स्थिताः पश्चादेकाशीतिर्मुहूर्त्तानामेकस्य च मुहूर्त्तस्याष्टपञ्चाशत् द्वाषष्टिभागा एकस्य च द्वाषष्टिभागस्य विंशतिः सप्तषष्टिभागाः ८१ । ५८ । २० । ततो भूयो नवभिर्मुहूर्त्तैरेकस्य च मुहूर्त्तस्य चतुर्विंशत्या द्वाषष्टिभागैरेकस्य च द्वाषष्टिभागस्य षट्षष्ट्या सप्तषष्टिभागैरभिजिन्नक्षत्रं शुद्धं, स्थिताः पश्चाद् द्वासप्ततिर्मुहूर्त्ता एकस्य च मुहूर्त्तस्य त्रयस्त्रिंशत् द्वाषष्टिभागा एकस्य च द्वाषष्टिभागस्यैकविंशतिः सप्तषष्टिभागाः ७२ । ३३ । २१ । ततस्त्रिंशता मुहूर्त्तैः श्रवणः शुद्धस्त्रिंशता धनिष्ठा पश्चादवतिष्ठन्ते द्वादश १२ मुहूर्त्ताः , शतभिषक्नक्षत्रं चार्द्धनक्षत्रं, तत आगतं शतभिषजो नक्षत्रस्य द्वयोर्मुहूर्त्तयोरेकस्य च मुहूर्त्तस्याष्टाविंशतौ द्वाषष्टिभागेषु एकस्य च द्वाषष्टिभागस्य षट्चत्वारिंशति सप्तषष्टिभागेषु शेषेषु द्वितीया २ हैमन्ती आवृत्तिः प्रवर्त्तते । सूर्यनक्षत्रयोगविषयं प्रश्नसूत्रं निर्वचनसूत्रं च सुगमं, प्रागेव भावितत्वात् ।

अधुना तृतीयमाघमासभाव्यावृत्तिविषयं प्रश्नसूत्रमाह—

तेसि णं पंचण्हं संवच्छराणं तच्चं हेमंतिं आउट्टिं चंदे केणं णक्खत्तेणं जोगं जोएति ?, ता पूसेणं, पूसस्स एकूणवीसं मुहुत्ता तेतालीसं च बावट्ठिभागा मुहुत्तस्स बावट्ठिभागं च सत्तट्ठिधा छेत्ता तेत्तीसं चुण्णिया भागा सेसा, तं समयं च णं सूरे केणं णक्खत्तेणं जोगं जोएति ?, ता उत्तराहिं आसाढाहिं, उत्तराणं आसाढाणं चरिमसमए ३॥

' ता एएसि णं ' मित्यादि, सुगमं, भगवानाह-' ता पूसेणं ' मित्यादि, ता इति प्राग्वत् पुष्येण युक्तश्चन्द्रस्तृतीयां माघमासभाविनीमावृत्तिं प्रवर्त्तयति, तदानीं च पुष्यस्य एकोनविंशतिर्मुहूर्त्ता एकस्य च मुहूर्त्तस्य त्रिचत्वारिंशद् द्वाषष्टिभागा एकं च द्वाषष्टिभागं सप्तषष्टिधा छित्त्वा तस्य सत्कास्त्रयस्त्रिंशच्चूर्णिकाभागाः शेषाः , तथाहि-प्रागुपदर्शितक्रमापेक्षया तृतीया माघमासभाविन्यावृत्तिः षष्ठी ततस्तस्याः स्थाने षट्को ध्रियते स रूपोनः कार्य इति जातः पञ्चकस्तेन स प्राक्तनो ध्रुवराशिः ५७३ । ३६ । ६ । गुण्यते जातान्यष्टाविंशतिः शतानि पञ्चषष्ट्यधिकानि मुहूर्त्तानां मुहूर्त्तगतानां च द्वाषष्टिभागानामशीत्यधिकं शतम् एकस्य च द्वाषष्टिभागस्य त्रिंशत् सप्तषष्टिभागाः २८६५ । १८० । ३० । तत एतेभ्यः सप्तपञ्चाशदधिकैः चतुर्विंशतिशतैर्मुहूर्त्तानामेकमुहूर्त्तगतानां च द्वाषष्टिभागानां द्विसप्तत्या एकस्य च द्वाषष्टिभागस्य सत्कानां सप्तषष्टिभागानामष्टानवत्यधिकेन शतेन २४५७ । ७२ । १९८ । त्रयो नक्षत्रपर्यायाः शुद्धाः, स्थितानि पश्चात् चत्वारि मुहूर्त्तशतान्यष्टोत्तराणि मुहूर्त्तगतानां च द्वाषष्टिभागानां पञ्चोत्तरं शतमेकस्य च द्वाषष्टिभागस्य चतुस्त्रिंशत्सप्तषष्टिभागाः ४०८ । १०५ । ३४ । तत एतेभ्यस्त्रिभिः शतैर्नवनवत्यधिकैर्मुहूर्त्तानामेकस्य च मुहूर्त्तस्य चतुर्विंशत्या द्वाषष्टिभागैरेकस्य च द्वाषष्टिभागस्य षट्षष्ट्या सप्तषष्टिभागैरभिजिदादीनि पुनर्वसुपर्यन्तानि नक्षत्राणि शुद्धानि, स्थिताः पश्चान्नव ९ मुहूर्त्ता मुहूर्त्तगतानां च द्वाषष्टिभागानामशीतिः एकस्य च द्वाषष्टिभागस्य चतुस्त्रिंशत्सप्तषष्टिभागाः द्वाषष्ट्या च द्वाषष्टिभागैरेको मुहूर्त्तो लब्धः स मुहूर्त्तराशौ प्रक्षिप्यते जाता दश मुहूर्त्ताः शेषास्तिष्ठन्ति द्वाषष्टिभागा अष्टादश-१० । १८ । ३४ । तत आगतः—पुष्यस्य एकोनविंशतौ मुहूर्त्तेष्वेकस्य च मुहूर्त्तस्य त्रिचत्वारिंशति द्वाषष्टिभागेष्वेकस्य च द्वाषष्टिभागस्य त्रयस्त्रिंशति सप्तषष्टिभागेषु शेषेषु तृतीया माघमासभाविन्यावृत्तिः प्रवर्त्तते । सूर्यनक्षत्रयोगविषयं प्रश्नसूत्रं निर्वचनसूत्रं च सुगमम् ।

चतुर्थमाघमासभाव्यावृत्तिविषयं प्रश्नसूत्रमाह-

ता एतेसि णं पंचण्हं संवच्छराणं चउत्थिं हेमंतिं आउट्टिं चंदे केणं णक्खत्तेणं जोगं जोएति ?, ता मूलेणं, मूलस्स छ मुहुत्ता अट्ठावन्नं च बावट्ठिभागा मुहुत्तस्स बावट्ठिभागं च सत्तट्ठिधा छेत्ता वीसं चुण्णिया भागा सेसा, तं समयं च णं सूरे केणं णक्खत्तेणं जोगं जोएति ?, ता उत्तराहिं आसाढाहिं, उत्तराणं आसाढाणं चरिमसमए ४ ॥

'ता एएसि णं'मित्यादि सुगमं भगवानाह'ता मूलेणं'मित्यादि, ता इति प्राग्वत् , मूलेन युक्तश्चन्द्रः चतुर्थीं४ हेमन्तीमावृत्तिं प्रवर्त्तयति, तदानीं च मूलस्य-मूलनक्षत्रस्य षट् मुहूर्त्ता एकस्य च मुहूर्त्तस्याष्टापञ्चाशत् द्वाषष्टिभागा एकं च द्वाषष्टिभागं सप्तषष्टिधा छित्त्वा तस्य सत्काः विंशतिश्चूर्णिकाभागाः शेषाः , तथाहि-चतुर्थी माघमासभाविन्यावृत्तिः पूर्वप्रदर्शितक्रमापेक्षया अष्टमी तस्याः स्थाने अष्टको८ ध्रियते स८ रूपोनः कार्य इति जातः सप्तक ७ तेन७ स प्राक्तनो ध्रुवराशि ५७३ । ३६ । ६७ । गुण्यते जातान्येकादशोत्तराणि चत्वारिंशन्मुहूर्त्तशतानि मुहूर्त्तगतानां च द्वाषष्टिभागानां द्वे शते द्विपञ्चाशदधिके एकस्य च द्वाषष्टिभागस्य द्वाचत्वारिंशत् सप्तषष्टिभागाः-४०११ । २५२ । ४२ । तत एतेभ्यः षट्सप्तत्यधिकैर्द्वात्रिंशच्छतैर्मुहूर्त्तानां मुहूर्त्तगतानां च द्वाषष्टिभागानां प्रण-

चत्वा द्वाषष्टिभागसत्कानां च सप्तषष्टिभागाना द्वाभ्यां शताभ्यामष्टषष्ट्यधिकाभ्यां चत्वारो ४ नक्षत्रपर्याया शुद्धा, स्थितानि पश्चान्मुहूर्त्ताना सप्तशतानि पञ्चत्रिंशदधिकानि मुहूर्त्ताना, मुहूर्त्तगतानां च द्वाषष्टिभागानां द्विपञ्चाशदधिकं शतम् एकस्य च द्वाषष्टिभागस्य षट्चत्वारिंशत्सप्तषष्टिभागा - ७३५। १५२। ४६। तत एतेभ्यो भूय षड्भि शतैः मुहूर्त्तानामेकोनसप्तत्यधिकैरेकस्य च मुहूर्त्तस्य चतुर्विंशत्या द्वाषष्टिभागैरेकस्य च द्वाषष्टिभागस्य षट्षष्ट्या सप्तषष्टिभागैरभिजिदादीनि विशाखापर्यन्तानि नक्षत्राणि शुद्धानि, स्थिता पश्चात् षट्षष्टिर्मुहूर्त्ता मुहूर्त्तगतानां च द्वाषष्टिभागानां सप्तविंशत्यधिकं शतम् एकस्य च द्वाषष्टिभागस्य सप्तचत्वारिंशत्सप्तषष्टिभागा, चतुर्विंशत्यधिकेन च द्वाषष्टिभागशतेन द्वौ मुहूर्त्तौ लब्धौ, तौ २ मुहूर्त्तराशौ प्रक्षिप्येते जाता अष्टषष्टिर्मुहूर्त्ता, शेषास्तिष्ठन्ति द्वाषष्टिभागास्त्रय ६८। ३। ४७। तत पञ्चचत्वारिंशता मुहूर्त्तैरनुराधाज्येष्ठे शुद्धे, शेषा स्थितास्त्रयोविंशतिर्मुहूर्त्ता २३। ३। ४७। तत आगतं मूलस्य षट्सु मुहूर्त्तेष्वेकस्य च मुहूर्त्तस्याष्टापञ्चाशति द्वाषष्टिभागेष्वेकस्य च द्वाषष्टिभागस्य विंशतौ सप्तषष्टिभागेषु शेषेषु चतुर्थी ४ माघमासभाविन्यावृत्ति प्रवर्त्तते। सूर्यनक्षत्रयोगविषयं प्रश्नसूत्र निर्वचनसूत्रं च सुगमम्।

इह तावद् माघमासभाविपञ्चम्यावृत्तिविषयं प्रश्नसूत्रमाह-

ता एएसि णं पंचण्हं संवच्छराणं पंचमं हेमंतिं आउट्टिं चंदे केणं णक्खत्तेणं जोगं जोएति ?, ता कत्तियाहिं कत्तियाणं अट्ठारस मुहुत्ता, छत्तीसं च बावट्ठिभागा, मुहुत्तस्स बावट्ठिभागं च सत्तट्ठिहा छेत्ता छ चुण्णिया भागा सेसा, तं समयं च णं सूरे केणं णक्खत्तेणं जोगं जोएति ?, ता उत्तराहिं आसाढाहिं उत्तराणं आसाढाणं चरिमसमए ५॥ (सूत्र-७७+)

'ता एएसि णं' इत्यादि, सुगमं, भगवानाह-'ता कत्तियाहिं' इत्यादि। 'ता' इति पूर्ववत्, कृत्तिकाभिर्युक्तश्चन्द्र पञ्चमीं५ हैमन्तीमावृत्तिं प्रवर्त्तयति, तदानीं च कृत्तिकानक्षत्रस्याष्टादश १८ मुहूर्त्ता एकस्य १ च मुहूर्त्तस्य षट्त्रिंशद्द्वाषष्टिभागा एकं च द्वाषष्टिभाग सप्तषष्टिधा छित्त्वा तस्य सत्का षट् ६ चूर्णिकाभागा शेषा, तथाहि-पञ्चमी ५ माघमासभाविन्यावृत्ति —प्रागुपदर्शितक्रमापेक्षया-दशमी १०, ततस्तस्या· स्थाने दशको १० ध्रियते, स रूपोन कार्य इति जातो नवक ९, तेन ९ प्राक्तनो ध्रुवराशि -५७३। ३६। ६। गुण्यते जातान्येकपञ्चाशच्छतानि सप्तपञ्चाशदधिकानि मुहूर्त्ताना, मुहूर्त्तगतानां च द्वाषष्टिभागाना त्रीणि शतानि चतुर्विंशत्यधिकानि एकस्य च द्वाषष्टिभागस्य चतुःपञ्चाशत् सप्तषष्टिभागा -५१५७। ३२४। ५४। तत एतेभ्य एकोनपञ्चाशच्छतैर्मुहूर्त्तै चतुर्विंशत्यधिकै मुहूर्त्तगतानां च द्वाषष्टिभागाना चतुश्चत्वारिंशदधिकेन शतेन द्वाषष्टिभागगतानां च सप्तषष्टिभागाना त्रिभि शतै षडशीत्यधिकै षट्६ नक्षत्रपर्याया शुद्धा, स्थिते पश्चान्मुहूर्त्ताना द्वे शते त्रिचत्वारिंशदधिके मुहूर्त्तगतानां च द्वाषष्टिभागानां चतु सप्तत्यधिकं शतमेकस्य च द्वाषष्टिभागस्य षष्टि सप्तषष्टिभागा -२४३। १७४। ६०। तत एकोनपञ्चाशदधिकेन मुहूर्त्तशतेन एकस्य च मुहूर्त्तस्य चतुर्विंशत्या द्वाषष्टिभागैरेकस्य च द्वाषष्टिभागस्य षट्षष्ट्या सप्तषष्टिभागैरभिजिदादीन्युत्तरभद्रपदापर्यन्तानि नक्षत्राणि शुद्धानि, स्थितानि पश्चान्मुहूर्त्ताना चतुरशीति; मुहूर्त्तगतानां च द्वाषष्टिभागानां शतमेकोनपञ्चाशदधिकम् एकस्य च द्वाषष्टिभागस्य एकषष्टि· सप्तषष्टिभागा -८४। १४९। ६१। ततो द्वाषष्टिभागानां चतुर्विंशत्यधिकेन शतेन द्वौ मुहूर्त्तौ लब्धौ पश्चात् स्थिता पञ्चविंशति· २५ द्वाषष्टिभागा, लब्धौ च मुहूर्त्तौ मुहूर्त्तराशौ प्रक्षिप्येते जाता षडशीतिर्मुहूर्त्तानां तत पञ्चसप्तत्या मुहूर्त्तानां रेवत्य-श्विनी-भरण्य शुद्धा·, स्थिता· पश्चादेकादश मुहूर्त्ताः, शेषं तथैव ११। २५। ६१। तत आगतम्-कृत्तिकानक्षत्रस्याष्टादशसु मुहूर्त्तेष्वेकस्य च मुहूर्त्तस्य षट्त्रिंशति द्वाषष्टिभागेष्वेकस्य च द्वाषष्टिभागस्य षट्सु सप्तषष्टिभागेषु शेषेषु पञ्चमी ५ हैमन्ती आवृत्ति प्रवर्त्तते, सूर्यनक्षत्रयोगविषये च प्रश्ननिर्वचनसूत्रे सुगमे,तदेवमुक्ता· १०दशापि नक्षत्रयोगमधिकृत्य सूर्यस्याऽऽवृत्तय॥ सम्प्रति चन्द्रस्य वक्तव्या । तत्र यस्मिन्नेव नक्षत्रे प्रवर्त्तमान· सूर्यो दक्षिणा, उत्तरा वा आवृत्ती· करोति तस्मिन्नेव नक्षत्रे प्रवर्त्तमानश्चन्द्रोऽपि दक्षिणा-उत्तरा वा आवृत्ती· कुरुते, ततो या उत्तराभिमुख्य आवृत्तयो युगे चन्द्रस्य दृष्टास्ता· सर्वा अपि नियतमभिजिता नक्षत्रेण सह योगे द्रष्टव्या·, यास्तु दक्षिणाभिमुखाः ता· पुष्येण चन्द्रयोगे, उक्तं च (ज्योतिष्करण्डके द्वादशे १२ प्राभृते)-"चंदस्स वि नायव्वा, आउट्टीओ जुगम्मि जा दिट्ठा। अभिईए पुस्सेण य, निययं नक्खत्तसेसेणं"॥२५२॥ अत्र-"नक्खत्तसेसेणं' ति-नक्षत्रार्द्धमासेन शेषं सुगमम्। तत्राभिजित्युत्तराभिमुखा आवृत्तयो भाव्यन्ते, यदि चतुस्त्रिंशदधिकेनायनशतेन चन्द्रस्य सप्तषष्टिनक्षत्रपर्याया लभ्यन्ते तत· प्रथमे अयने किं लभ्यते ?, राशित्रयस्थापना-। १३४। ६७। १। अत्रान्त्येन राशिना—एकक१लक्षणेन मध्यमस्य राशे सप्तषष्टि६७रूपस्य गुणनं जाता सप्तषष्टिरेव ६७, "एकेन गुणितं तदेव भवती" ति वचनात्. तस्याश्च सप्तषष्टे ६७ चतुस्त्रिंशदधिकेन शतेन १३४ भागे हृते लब्धमेकमर्द्धं पर्यायस्य, तस्मिंश्चार्द्धे नव शतानि पञ्चदशोत्तराणि सप्तषष्टिभागानां भवन्ति, तत्र त्रयोविंशतौ सप्तषष्टिभागेषु पुष्यनक्षत्रस्य भुक्तेषु दक्षिणाऽऽयनं चन्द्र कृतवान्, तत· शेषाश्चतुश्चत्वारिंशत् सप्तषष्टिभागा अनन्तरोदितराशे शोध्यन्ते, स्थितानि शेषाणि अष्टौ शतान्येकसप्तत्यधिकानि-(८७१) तेषां सप्तषष्ट्या ६७ भागो ह्रियते, इह कानिचित् नक्षत्राण्यर्द्धक्षेत्राणि तानि च सार्द्धत्रयस्त्रिंशत्सप्तषष्टिभागप्रमाणानि,कानिचित् समक्षेत्राणि तानि परिपूर्णसप्तषष्टिभागप्रमाणानि कानिचिच्च द्व्यर्द्धक्षेत्राणि तान्यर्द्धभागाऽधिकशतसंख्यसप्तषष्टिभागप्रमाणानि मात्रं त्वाधिकृत्य सप्तषष्ट्या शुद्ध्यन्ति इति तत सप्तषष्ट्या भागहरणे लब्धास्त्रयोदश १३ राशिश्चोपरितनो निर्लेपत शुद्धस्तैश्च त्रयोदशभि १३ अश्लेषादीनि उत्तराषाढापर्यन्तानि नक्षत्राणि शुद्धानि तत आगतमभिजितो नक्षत्रस्य प्रथमसमये चन्द्र उत्तरायणं करोति, एवं सर्वाण्यपि चन्द्रस्योत्तरायणानि वेदितव्यानि, उक्तं च-" प·

चरसे उ मुहुत्ते, जोइत्ता उत्तराअसाढा उ। एकं च अहोरत्तं, पविसइ अभिंतरे चंदो ॥ १ ॥" अधुना पुष्ये दक्षिणा आवृत्तयो भाव्यन्ते-यदि चतुस्त्रिंशदधिकेनायनशतेन सप्तषष्टिश्चन्द्रस्य पर्याया लभ्यन्ते तत एकेनायनेन किं लभामहे ?।, राशित्रयस्थापना-१३४।६७।१। अत्रान्त्येन राशिना एकक १लक्षणेन मध्यमस्य राशेः सप्तषष्टि ६७ रूपस्य गुणने जाताः सप्तषष्टिरेव ६७, तस्या ६७ चतुस्त्रिंशदधिकशतेन१३४भाग हरणे लब्धमेकमर्द्धं पर्यायस्य तच्च सप्तषष्टिभागरूपाणि नव शतानि पञ्चदशोत्तराणि-९१५, तत एकविंशति २१ अभिजित सबन्धिन सप्तषष्टिभागा शोध्यन्ते स्थितानि पश्चादष्टौ शतानि चतुर्नवत्याधिकानि—८९४ तेषा सप्तषष्ट्या भागो ह्रियते लब्धास्त्रयोदश १३ तैश्च त्रयोदशभि १३ पुनर्वस्वन्तानि नक्षत्राणि शुद्धानि,शेषा तिष्ठति त्रयोविंशति २३, एते च किल सप्तषष्टिभागा अहोरात्रस्य ततो मुहूर्तभागकरणार्थं त्रिंशता गुणयन्ते जातानि षट् शतानि नवत्यधिकानि-६९० । तेषा सप्तषष्ट्या ६७ भागे हृते लब्धा दश १० मुहूर्त्ता , शेषास्तिष्ठन्ति विंशति सप्तषष्टिभागास्तत इदमागत पुनर्वसुनक्षत्रे सर्वात्मना भुक्ते पुष्यस्य च दशसु मुहूर्त्तेष्वेकस्य च मुहूर्त्तस्य विंशतौ सप्तषष्टिभागेषु भुक्तेषु सर्वाभ्यन्तरान्मण्डलाद्बहिर्निष्क्रामति चन्द्र एवं सर्वाण्यपि दक्षिणायनानि भावनीयानि , उक्त च (" ज्योतिष्करण्डके द्वादशे १२ प्राभृते)-"दस १० य मुहुत्ते सगले, मुहुत्तभागे य वीसई चेव । पुस्सविसयमइगओ, बहिया अभिनिक्खमइ चंदो" ॥ २५३ ॥ चं० प्र० १२ पाहु० ।

साम्प्रतं येन नक्षत्रेण युक्तश्चन्द्रमा अभ्यन्तरं प्रविशन् बहिर्वा निष्क्रामन् आवृत्ती करोति तत्प्रतिपादनार्थमाह—

चंदस्स वि नायव्वा, आउट्टीओ जुगम्मि जा दिट्ठा ।
अभिईए पुस्सेण य, नियय नक्खत्तसेसेणं ॥ २५२ ॥

यस्मिन्नेव नक्षत्रे वर्त्तमानस्य चन्द्रमसोऽपि नक्षत्रशेषेण-नक्षत्रार्द्धमासेन या उत्तराभिमुखा आवृत्तयो युगे दृष्टास्ता नियतमभिजिता नक्षत्रेण युग द्रष्टव्या , याश्च युगे दृष्टा दक्षिणाभिमुखा आवृत्तयस्ता पुष्येण योग, तत्राभिजित्युत्तराभिमुखा आवृत्तयो भाव्यन्ते-यदि चतुस्त्रिंशदधिकेनायनशतेन चन्द्रस्य सप्तषष्टिर्नक्षत्रपर्याया लभ्यन्ते ? तत प्रथमे अयने किं लभ्यते?, राशित्रयस्थापना-१३४। ६७।१।अत्रान्त्येन राशिना एकक१लक्षणेन मध्यमस्य राशे सप्तषष्टि६७लक्षणस्य गुणनम् , जाता सप्तषष्टिरेव ६७, तस्या ६७ चतुस्त्रिंशदधिकशतेन भागहरणे लब्धमेकमर्द्धं पर्यायस्य, तच्च सप्तषष्टिभागरूपाणि नव शतानि पञ्चदशोत्तराणि-( ९१५ ) तत एकविंशति २१ अभिजित संबन्धिन सप्तषष्टिभागा ६७ शोध्यन्ते स्थितानि पश्चादष्टौ शतानि चतुर्नवत्यधिकानि-( ८९४ ) तेषा सप्तषष्ट्या ६७ भागो ह्रियते लब्धा त्रयोदश १३, तैश्च त्रयोदशभि १३ पुनर्वस्वन्तानि नक्षत्राणि शुद्धानि, शेषास्तिष्ठन्ति त्रयोविंशति २३, एते च किल सप्तषष्टिभागा अहोरात्रस्य, ततो मुहूर्तभागकरणार्थं ते त्रिंशता ३० गुणयन्ते जातानि षट्शतानि नवत्यधिकानि—६९० तेषा सप्तषष्ट्या ६७ भागे हृते लब्धा दश १० मुहूर्त्ता , शेषास्तिष्ठन्ति विंशति २०, आगतं पुनर्वसु नक्षत्रे सर्वात्मना भुक्ते पुष्यस्य दशसु १० मुहूर्त्तेषु एकस्य च मुहूर्त्तस्य विंशतौ सप्तषष्टिभागेषु भुक्तेषु सर्वाभ्यन्तरान्मण्डलाद्बहिर्निष्क्रामति चन्द्र । तथा चाह (चं० प्र० १२ पाहु०।)-

दस १० य मुहुत्ते सगले,मुहुत्तभागे य वीसई २०चेव।
पुस्सस्स विसयमभिगओ , बहिया अभिनिक्खमइ चंदो
॥ २५३ ॥

दश १० च सकलान्-परिपूर्णान् मुहूर्त्तान्-मुहूर्त्तभागान् सप्तषष्टि ६७ रूपान् विंशतिं २० पुष्यविषयमभिगत सन् सर्वाभ्यन्तरान्मण्डलाद्बहिर्निष्क्रामति चन्द्र । ज्यो० १२ पाहु० । सू० प्र० ।

**आउट्टि(न्)**-आकुट्टिन्-त्रि०। यो हि जानन्-अवगच्छन् प्राणिनो हिनस्ति स आकुट्टी। 'कुट्ट' छेदने। आकुट्टनमाकुट्ट स विद्यते यस्येति। छेदनभेदानादिव्यापारवति, सूत्र०। " जाणं कायेणऽणाउट्टी " (२५ × गाथा)। सूत्र० १ श्रु० १ अ० २ उ०। ज्ञानपूर्वकव्यापारवति, । अनापद्यप्यकार्यकारके च। " आउट्टियाए पाणाइवायं करेमाणे सबले ॥ १२ ॥ " ' आउट्टीति '-यो जानन् करोत्यापद्रहितो वा करोति । दशा० २ अ० । सूत्र० ।

**आवर्तिन्**-त्रि०। आ०+वृत्-णिनि । पुन. पुनर्वर्त्तनशीले, वाच० ।

**आउट्टिऊण** आवर्त्य-अव्य०। आवर्त्येत्यर्थे , व्य० १० उ०।

**आउट्टिज्जमाण**-आकोट्यमान-त्रि०। सकोच्यमाने , सूत्र० २ श्रु० १ अ० ।

**आउट्टित्तए**-आउट्टितुम्-अव्य०। कारयितुमित्यर्थे, 'आउट्टि' एतादृश एवाय धातुस्सैद्धान्तिक करणार्थ । कल्प० १ अधि० ६ क्षण।

**आउट्टिम**-आकोट्टिम-न०। उत्कीर्णे, " आउट्टिमं उक्किन्न " ( १६७× ) आकोट्टिम जधा रूवओ हेट्ठा वि उवरिं वि मुह काऊण आउट्टिज्जति। दश० २ अ०।

**आउट्टिय**-आउट्टित-त्रि०। कृते , कल्प० ३ अधि० ६ क्षण।

**आकुट्टित**-त्रि०। छिन्ने, सूत्र० १ श्रु० १ अ० २ उ०। ज्ञानपूर्वककृते , दशा० २ अ० ।

**आउट्टिया**-आउट्टिका-स्त्री०। करणे, कल्प० १ अधि०६ क्षण।

**आकुट्टिका**-स्त्री०। छेदनभेदनादिव्यापारे, सूत्र० १ श्रु० १ अ० २ उ०। ज्ञानपूर्वकव्यापारे , दशा० २ अ० । जीत० । स० । प्रव० । आभोगे , नि० चू० १२ उ० ।

**आवृत्तिका**-स्त्री० । समन्तात्प्रवर्त्तने, अभिलाषायां च । आचा० २ श्रु० १ चू० १ अ० ३ उ० । आराधनायाम् , व्य० २ उ० । नि० चू० । आवर्जने, व्य० १० उ० । अभिमुखीभूय वर्तने, नं० ३२ सूत्र । निवर्तने, सूत्र० १ श्रु० १० अ० ।

**आउट्टीकम्म**-आकुट्टीकर्मन्-न०। आकुट्या कृतं कर्म आगमोक्तकारणमन्तरेणापेत्य प्राण्युपमर्द्देनेन विहिते कर्मणि, आचा०।

आकुट्टीकृतकर्म्मणि तु यद्विधेयं तदाह—

**जं आउट्टिकम्मं,तं परिण्णाय विवेगमेइ। (सूत्र-१५८×)**

'जं आउट्टी' इत्यादि, यत्तु पुनः कर्म्माऽऽकुट्या कृतमागमोक्तकारणमन्तरेणोपेत्य प्राण्युपमर्दनेन विहितं तत्परिज्ञाय ज्ञपरिज्ञया विवेकमेति-विविच्यतेऽनेनेति विवेकः-प्रायश्चित्तं दशप्रविधं तस्यान्यतरभेदमुपैति तद्विवेकं वा-अभावाख्यमुपैति तत्करोति येन कर्म्मणोऽभावो भवति। आचा० २ श्रु० ५ अ० ४ उ०।

**आउड**-आवृत्-स्त्री०। आ-वृत्-सम्प० क्विप्। आवर्त्तने, भ्रमणे, पुनः पुनश्चालने, पुनः पुनरेकजातीयक्रियाकरणे, आधारे क्विप्। परिपाट्याम्, अनुक्रमे, इति कर्त्तव्यताप्रकारे, संस्कारे, तूष्णीम्भावे च। कर्त्तरि क्विप्। आवर्त्तमाने, त्रि०। वाच०।

**आवृत**-त्रि०। आ-वृ-क्त। कृतावरणे,अप्रकाशावृते,आच्छादिते, स्था० ३ ठा० ३ उ०। संकीर्णवर्णभेदे, पुं०। स्त्री०। स्त्रियां जातित्वात् ङीप्। वाच०।

**आउडावेइत्ता**-आखोट्य-अव्य०। प्रवेशयित्वेत्यर्थे, विपा० १ श्रु० ६ अ०।

**आउडिज्जमाण**-आजोड्यमान-त्रि०। सम्बध्यमाने, 'जुड' बन्धने इति वचनात्। भ० ५ श० ४ उ० १८५ सूत्र।

आकुट्यमान-त्रि०। परस्परेणाभिहन्यमाने, भ०। "छउमत्थे णं भंते! मणूसे आउडिज्जमाणाइं सद्दाइं सुणेइ" 'आउडिज्जमाणाइं' ति-जुड बन्धने इति वचनात्, आजोड्यमानेभ्यः-सम्बध्यमानेभ्यो मुखहस्तदण्डादिना सह शङ्खपटहझल्लर्यादिभ्यो वाद्यविशेषेभ्य आकुट्यमानेभ्यो वा, एभ्य एव ये जाताः शब्दास्ते आजोड्यमाना एव आकुट्यमाना एव वा उच्यन्ते, अतस्तानाजोड्यमानानाकुट्यमानान्वा, शब्दान् शृणोति। इह च प्राकृतत्वेन शब्दशब्दस्य नपुंसकनिर्देशः। अथवा-'आउडिज्जमाणा' इति—आकुट्यमानि परस्परेणाभिहन्यमानानि। भ० ५ श० ४ उ०।

**आउडिय**-आकुञ्चित-त्रि०। अङ्किते। अनु० १४८ सूत्र।

**आउडमाण** आकुट्टयत्-त्रि०। ताडयति, भ० ६ श० ? उ०।

**आउड्ड**-मस्ज-धा०। स्नाने, तुदा०पर०अकर्मक० अनिट्। "मस्जेराउड्ड णिउड्ड बुड्ड खुप्पाः" ॥८।४।१०१॥ इति हैमप्राकृतसूत्रेण मस्जेः आउड्ड इत्यादेशः। आउड्डइ। मज्जइ। मज्जतीत्यर्थः। प्रा०।

**आउत्त**-आगुप्त-त्रि०। संगुप्ते, स्था० ३ ठा० १ उ०। संयते पुं०। संयतस्सम्बन्धिनि गमनादौ च। त्रि०। "आउत्तं गमणं" (सूत्र-८०२×) आगुप्तस्य-संयतस्य सम्बन्धि यत् तदागुप्तमेवेति। भ० २५ श० ७ उ०।

आयुक्त-न०। आ युज क्त। उपयोगे, भ०। "आउत्तं वत्थपडिग्गहकंबलपायपुंछणं गेण्हमाणस्स" । (सूत्र-१५३+) उपयोगपूर्वकमित्यर्थः। भ० ३ श० ३ उ०। उपयोगवति, संथा०। उपयुक्ते, स्था० ५ ठा० १ उ०। ध०। सूत्र०।

प्रशस्तदार्थाविनयभेदानुद्दिश्याह—

---

१-इइ। २-इइ। उम्मग्गा...। सद्दा।

**आउत्तं गमणं,आउत्तं ठाणं, आउत्तं णिसीयणं,आउत्तं तुयट्टणं, आउत्तं उल्लंघणं, आउत्तं पल्लंघणं, आउत्तं सव्विंदियजोगजुंजणया। (सूत्र-५८४×)**

आयुक्तं गमनम् आयुक्तस्य—उपयुक्तस्य संलीनयोगस्य। स्था० ७ ठा० ३ उ०। भ०। समन्तादुपयुक्ते, आ०म० १ अ०। प्रयत्नपरे ओघ० ८०७ गाथा। शिक्षिते चा त्रि०। 'असिकंटकविसमादीसु, गच्छंतो सिक्खिओ वि जत्तेणं। चुक्केइ एमेव मुणी, छलिज्जती अप्पमत्तो वि" ॥१००॥ सिक्खिओ वि-आउत्तो वि छलिज्जति। नि० चू०१ उ०। संयमार्थिनि च। संजमट्ठाए त्ति वा,आउत्तो त्ति वा,अविधिपरिहारि त्ति वा, एगट्ठा इति। आ० चू० १ अ०। आ युज् कर्मणि क्तः। सम्यग्व्यापारिते, भावे क्त, सम्यग्विनियोजने,न०। आयुक्तमनेन। इष्ठा० इति। आयुक्ती। सम्यग्विनियोजनकर्त्तरि, त्रि०। स्त्रियां ङीप्। वाच०।

**आउपरिणाम**-आयुःपरिणाम-पुं०। आयुषः-कर्मप्रकृतिविशेषस्य परिणामः-स्वभावः। आयुषः स्वभावे,स्था०९ठा०१ उ०।

तस्य भेदाः —

**नवविहे आउपरिणामे पण्णत्ते, तं जहा-गइपरिणामे,१ गइबन्धणपरिणामे२, ठिइपरिणामे३, ठिइबन्धणपरिणामे४, उड्ढगारवपरिणामे५, अहेगारवपरिणामे६, तिरियंगारवपरिणामे ७, दीहंगारवपरिणामे ८, हस्संगारवपरिणामे। (सूत्र-६८६)**

'नवविहे' त्यादि, 'आउपरिणामे' त्यादि. आयुषः-कर्मप्रकृतिविशेषस्य परिणामः-स्वभावः-शक्तिर्धर्म्म-इत्यायुःपरिणामः। तत्र गतिर्देवादिका तां नियतां येन स्वभावेनायुर्जीवं प्रापयति स आयुषो गतिपरिणामः १, तथा-येनायुःस्वभावेन प्रतिनियतगतिकर्मबन्धो भवति, यथा नारकायुःस्वभावेन मनुष्यतिर्यग्गतिनामकर्म बध्नाति न देवनारकगतिनामकर्मेति स गतिबन्धनपरिणामः २, तथा-आयुषो याऽन्तर्मुहूर्त्तादित्रयस्त्रिंशत्सागरोपमान्ता स्थितिर्भवति स स्थितिपरिणामः ३, तथा-येन पूर्वभवायुःपरिणामेन परभवायुषो नियतां स्थितिं बध्नाति स स्थितिबन्धनपरिणामः, यथा-तिर्यगायुःपरिणामेन देवायुष उत्कृष्टतोऽप्यष्टादशसागरोपमाणीति, तथा-येन आयुःस्वभावेन जीवस्योर्ध्वदिशि गमनशक्तिलक्षणपरिणामो भवति स ऊर्ध्वगौरवपरिणामः ५,इह गौरवशब्दो गमनपर्यायः। एवमितरौ द्वावपि ६।७। तथा यत आयुःस्वभावात् जीवस्य दीर्घ-दीर्घगमनतया लोकान्ताल्लोकान्तं यावद्गमनशक्तिर्भवति स दीर्घगौरवपरिणामः ८, एवं च यस्मात् ह्रस्वं गमनं स ह्रस्वगौरवपरिणामः, सर्वत्र प्राकृतत्वादनुस्वार इति अन्यथाऽप्यूह्यमेतदिति। स्था० ९ ठा० ३ उ०।

**आउबहुल**-अब्बहुल-त्रि०। प्रचुरजलोपेते, स० ८० सम०। "नो चेवणं आउबहुले भविस्सइ" (सूत्र-२८८+)। बहुप्कायमित्यर्थः। भ० ७ श० ६ उ०।

**आउबहुलकंड**-अब्बहुलकाण्ड-न०। प्रचुरजलोपेते रत्नप्रभायास्तृतीये काण्डे, स०।

तत्प्रमाणादि—

आउबहुले णं कंडे असीइजोयणसहस्साइं ८०००० बाहल्लेणं पण्णत्ते। ( सूत्र-८० )

रत्नप्रभायाः अशीत्युत्तरयोजनलक्षबाहल्यायास्त्रीणि काण्डानि भवन्ति। तत्र प्रथमं रत्नकाण्डं षोडशविधरत्नमयं षोडशसहस्रबाहल्यम्, द्वितीयं पङ्ककाण्डं चतुरशीतिसहस्रमानम्। तृतीयमब्बहुलकाण्डमशीतिर्योजनसहस्राणीति। स० ८० सम०।

आउब्भेय-आयुर्भेद-पुं०। आयुषो-जीवितस्य भेद-उपक्रम आयुर्भेदः। स्था० ७ ठा० ३ उ०। आयुष उपघाते, आ० चू० १ अ०। आ० म०। ( तन्निमित्तानि 'आउ' शब्देऽस्मिन्नेव भागे गतानि )

स च सप्तविधनिमित्तत्वात्सप्तविधः—

सत्त विहे आउभेदे पण्णत्ते, तं जहा-
" अज्झवसाणनिमित्ते, आहारे वेयणा पराघाए।
फासे आणापाणू, सत्तविधं भिज्जए आऊ ॥ १॥ "
( सूत्र-५६१ )

अध्यवसानं-रागस्नेहभयात्मकोऽध्यवसायो निमित्तं दण्डकशाशस्त्रादीति समाहारद्वन्द्वस्तत्र सति आयुर्भिद्यत इति सबन्धः, तथा आहारे-भोजनेऽधिके सति, तथा वेदना-नयनादिपीडा पराघातो-गर्त्तपातादिसमुत्थः, इहापि समाहारद्वन्द्व एव तत्र सति, तथा स्पर्शे-तथाविधभुजङ्गादिसम्बन्धिनि सति, तथा 'आणापाणु' त्ति—उच्छ्वासनिश्वासौ निरुद्धावाश्रित्येति—एवं च सप्तविधं यथा भवति तथा भिद्यते आयुरिति। अथवा-अध्यवसानमायुरुपक्रमकारणमिति शेषः, एवं निमित्तमित्यादि यावत् 'आणापाणु' त्ति-व्याख्येयं, प्रथमैकवचनान्तत्वाद् अध्यवसानादिपदानामेव सप्तविधस्त्वादायुर्भेदहेतूनां सप्तविधं यथा भवति तथा भिद्यते आयु। स्था० ७ ठा०३ उ०।

आउय-आयुष्क-न०। जीविते, उत्त०३ अ०। संथा०। आ० म०। भवस्थितिहेतौ, कर्मपुद्गले च। आचा० १ श्रु० २ अ० १ उ०।

तओ अहाउयं पालेंति, तं जहा-अरहंता, चक्कवट्टी, बलदेववासुदेवा। ३१। (सूत्र-१४३×) स्था०३ ठा०१उ०।

आयुषा कायति, कै। आयुषा प्रकाशमाने प्रशस्तायुष्के। वाच०।

आवुक-पुं०। अवति-रक्षति। अव्-धा०। उण् सञ्ज्ञाया कन्। नाट्योक्तौ, जनके, वाच०। स्था० २ ठा० ३ उ०।

आउयपरिहाणि-आयुष्कपरिहानि-स्त्री०। प्रतिक्षणायुष्कक्षये, पञ्चा० १ विव०।

आउयबंध-आयुष्कबन्ध-पुं०। आयुषो बन्ध इति। स्था० ६ ठा०३ उ०। आयुषो निषेके, स०। स च प्रतिसमयं बहुहीनहीनतरस्य दलिकस्यानुभवनार्थं रचना। स०।

तद्भेदा —

कइविहे णं भंते! आउयबंधे पण्णत्ते?, गोयमा! छव्विहे आउयबंधे पण्णत्ते, तं जहा-जाइनामनिहत्ताऽऽउए १, गइनामनिहत्ताउए२, ठिइनामनिहत्ताउए३, ओगाहणानामनिहत्ताउए४, पएसनामनिहत्ताउए५, अणुभागनामनिहत्ताउए६, दंडओ ०जाव वेमाणियाणं। ( सूत्र-२५०+ )

( जाइनामनिहत्ताउय त्ति १ ) जातिरेकेन्द्रियजात्यादि पञ्चधा, सैव नाम इति-नामकर्मण उत्तरप्रकृतिविशेषो जीवपरिणामो वा तेन सह निधत्तं-निषिक्तम्। भ० ६ श० ८ उ०। अनुभवनार्थं बहुलपाल्पतरक्रमेण व्यवस्थापितं(स०)(यद् भ०) य आयुस्तज्जातिनामनिधत्तायु ( स०-१५४ सूत्रटी० ) निषेकश्च कर्मपुद्गलाना प्रतिसमयमनुभवनार्थं रचना। भ० ६ श० ८ उ०। उक्तं च-" मोत्तूण सगमबाहं, पढमाए ठिईए बहुतरं दव्वं। सेसे विसेसहीणं, जावुक्कोस्सति सव्वासिं " ॥१॥ इति। स्था० ६ ठा० ३ उ०। (गइनामनिहत्ताउए त्ति २)-गतिः-नारकगत्यादिभेदाच्चतुर्धा-तल्लक्षणं नाम कर्म तेन सह निधत्तं निषिक्तमायुर्गतिनामनिधत्तायु। स० १५४सम०। (ठिइनामनिधत्ताउए त्ति ३-स्थितिरिति यत्स्थातव्यं,केनचिद्विवक्षितभवे जीवेनायु कर्मणा वा सैव नाम परिणामो धर्मः स्थितिनामस्तेन विशिष्टं निधत्तं यदायुर्दलिकरूपं तत्स्थितिनामनिधत्तायुः। अथवा-इह सूत्रे जातिनामगतिनामावगाहनानामग्रहणाज्जातिगत्यवगाहनानां प्रकृतिमात्रमुक्तं, स्थितिप्रदेशानुभागनामग्रहणात्तु तासामेव स्थित्यादय उक्ताः, ते च जात्यादिनामसम्बन्धित्वान्नामकर्मरूपा एवेति, नामशब्दः सर्वत्र कर्मार्थो घटत इति, स्थितिरूपं नामकर्मस्थितिनाम तेन निधत्तं यदायुस्तत्स्थितिनामनिधत्तायु। स्था०६ ठा० ३उ०। यत्-यस्मिन् भवे उदयमागमनमवतिष्ठते तद्गतिजातिशरीरपञ्चकादिव्यतिरिक्तं स्थितिनामावसेयमिति भावः, गत्यादीनां वर्जनं तेषां स्वपदे 'गइनामनिहत्ताउए' ( १५५+ सूत्रटी० ) इत्यादिभिरुपात्तत्वात्। प्रज्ञा० ६ पद। ( ओगाहणानामनिधत्ताउए त्ति४ )। अवगाहते यस्यां जीवः सा अवगाहना-शरीरम् औदारिकादि तस्या नाम औदारिकादिशरीरनामकर्मेत्यवगाहनानाम। ( अवगाहनारूपो वा, नामः परिणामोऽवगाहनानामः ) तेन सह यन्निधत्तमायुस्तदवगाहनानामनिधत्तायु। ( पएसनामनिहत्ताउए त्ति५ )-प्रदेशानाम्-आयु कर्मद्रव्याणां नाम-तथाविधा परिणतिः प्रदेशनाम, प्रदेशरूपं वा, नामकर्मविशेष इत्यर्थः, प्रदेशनाम। भ० ६ श० ८ उ०। प्रदेशाः कर्मपरमाणवस्ते च प्रदेशाः सङ्क्रमतोऽप्यनुभूयमानाः परिगृह्यन्ते, तत्प्रधानं नाम प्रदेशनाम, किमुक्तं भवति-यत् यस्मिन् भवे प्रदेशतोऽनुभूयते तत्प्रदेशनामेति अनेन विपाकोदयमप्राप्तमपि नाम परिगृहीतम्। प्रज्ञा० ६ पद। प्रदेशानां प्रमितपरिणामानामायु कर्मदलिकानां नामपरिणामो यः तथाऽऽत्मप्रदेशेषु सम्बन्धनं स प्रदेशनामो जातिगत्यवगाहनाकर्मणा वा यत्प्रदेशरूपं नामकर्म तत्प्रदेशनाम। स० १५४ सम०। तेन सह यन्निधत्तमायुस्तत्प्रदेशनामनिधत्तायुरिति। ( अणुभागनामनिधत्ताउए त्ति ६)। अनुभाग आयुर्द्रव्याणामेव विपाकः। भ० ६ श० ८ उ०। तीव्रादिभेदो रसः। स० १५४ सम०। तल्लक्षण एव नाम। परिणामोऽनुभागनामोऽनुभागरूपं वा नामकर्मानुभागनाम। भ० ६ श० ८ उ०। स चेह प्रकर्षप्राप्तः परिगृह्यते तत्प्रधानं

नाम अनुभावनाम यत् यस्मिन् भवे तीव्रविपाकं नामकर्मा-नुभूयते यथा नारकायुषि अशुभवर्णगन्धरसस्पर्शो पघाताऽ-नादेयदुःस्वराऽयशोकीर्त्यादिनामानि तदनुभावनाम। प्रज्ञा० ६ पद। अथवा-गत्यादीनां नामकर्मणामनुभागवन्धरूपो भेदोऽनुभागनाम। स० १५४ सम०। तेन सह निधत्त यदा-युस्तदनुभागनामनिधत्तायुरिति। अथ किमर्थं जात्यादि-नामकर्मभिरायुर्विशिष्यते ?, उच्यते-आयुष्कस्य प्राधा-न्योपदर्शनार्थं यस्मान्नारकाद्यायुरुदये सति जात्यादिनाम-कर्मणामुदयो भवति। भ० ६ श० ८ उ०। नान्यथेति भव-स्यायुष प्रधानता। प्रज्ञा० ६ पद।

नारकादिभवोपग्राहकं चायुरेव, यस्मादुक्तमिहैव—

"नेरइए णं भंते! नेरइएसु उववज्जइ, अनेरइए नेरइएसु उववज्जइ ?, गोयमा! नेरइए नेरइएसु उववज्जइ, नो अनेर-इए नेरइएसु उववज्जइ" त्ति। एतदुक्तंभवति—नारकायु प्रथमसमयसंवेदन एव नारका उच्यन्ते तत्सहचारिणाञ्च पञ्चेन्द्रियजात्यादिनामकर्मणामभ्युदय इति। इह चायुर्ब-न्धस्य षड्विधत्वे उपक्षिप्ते यदायुष षड्विधत्वमुक्तं तदा-युषो वन्धाव्यतिरेकाद्वन्धस्यैव चायुर्व्यपदेशविषयत्वादिति। 'दंडओ' त्ति-नेरइयाणं भंते! कइविहे आउयबंधे पन्नत्ते' इत्यादि वैमानिकान्तश्चतुर्विंशतिदण्डको वाच्योऽत एवा-वाह—'जाव वेमाणियाण' ति। भ० ६ श० ८ उ० २५० सूत्रटी०। प्रज्ञा०। स०। स्था०।

अथ कर्मविशेषाधिकारात्तद्विशेषितानां जीवादिपदानां द्वादशदण्डकानाह—

जीवा णं भंते! किं जाइनामनिहत्ता, ०जाव अणुभाग-नामनिहत्ता ?, गोयमा! जाइनामनिहत्ता वि ०जाव अणु-भागनामनिहत्ता वि, दंडओ ०जाव वेमाणियाणं। जीवाणं भंते! किं जाइनामनिहत्ताउया ०जाव अणुभागनाम-निहत्ताउया ?, गोयमा! जाइनामनिहत्ताउया वि ०जाव अणुभागनामनिहत्ताउयावि, दंडओ ०जाव वेमाणियाणं। एवं एए दुवालस १२ दंडगा भाणियव्वा। जीवा णं भंते। किं जाइनामनिहत्ता १, जाइनामनिहत्ताउया २, जाइनाम-निउत्ता ३, जाइनामनिउत्ताउया ४, जाइगोयनिहत्ता ५, जाइगोयनिहत्ताउया ६, जाइगोयनिउत्ता ७, जाइगोयनि-उत्ताउया ८, जाइनामगोयनिहत्ता ९, जाइनामगोयनि-हत्ताउया १०, जाइनामगोयनिउत्ता ११, जाइनामगोय-निउत्ताउया १२, ०जाव अणुभागनामगोयनिउत्ताउया ?। गोयमा! जाइनामगोयनिउत्ताउयावि ०जाव अणुभाग-नामगोयनिउत्ताउयावि दंडओ ०जाव वेमाणियाणं। (सूत्र-२५०+)

'जाइनामनिहत्त त्ति-जातिनाम निधत्तं-निषिक्तं विशिष्टवन्धं वा कृतं यैस्ते जातिनामनिधत्ता। एवं गतिनामनिधत्ता। यावत्करणात्—" ठिइनामनिहत्ता, ओगाहणानाम निहत्ता, पएसनामनिहत्ता, अनुभागनामनिहत्ता इति दृश्यम्। व्या ख्या तथैव नवरं जात्यादिनाम्ना या स्थितिर्ये च प्रदेशा य-

आनुभागस्तत्स्थित्यादिनाम अवगाहनानाम शरीरनामेति। अयमेको दण्डको वैमानिकान्त, तथा-'जाइनामनिहत्ताउय' त्ति-। जातिनाम्ना सह निधत्तमायुर्यैस्ते जातिनामनिधत्ता-युषः, एवमन्यान्यपि पदानि अयमन्यो दण्डकः २, एवमेते 'दुवालस दंडग' त्ति-अमुना प्रकारेण द्वादश दण्डका भवन्ति, तत्र द्वावाद्यौ दर्शितावपि संख्यापूरणार्थं पुनर्दर्शयति-जाति-नामनिधत्ता इत्यादिरेक, 'जाइनामनिहत्ताउया' इत्यादिर्द्वि-तीय, जीवा णं भंते! किं जाइनामनिउत्ता इत्यादिस्तृतीय, तत्र जातिनामनियुक्तं नितरां युक्तं सम्बद्धं निकाचितं वेदने वा नियुक्तं यैस्ते जातिनामनियुक्ता, एवमन्यान्यपि ५, 'जाइ-नामनिउत्ताउया' इत्यादिश्चतुर्थ। तत्र जातिनाम्ना सह नियु-क्तं निकाचितं वेदयितुमारब्धं वाऽऽयुर्यैस्ते। तथा एवमन्या-न्यपि ५ 'जाइगोयनिहत्ता' इत्यादि पञ्चम। तत्र जातेरेके-न्द्रियादिकाया यदुचितं गोत्रं नीचैर्गोत्रादि तज्जातिगोत्रं त-न्निधत्तं यैस्ते जातिगोत्रनिधत्तायुष एवमन्यान्यपि ५ 'जा-इगोयनिउत्ताउया' इत्यादिरष्टम, तत्र जातिनामगोत्रं च नि-धत्तं यैस्ते तथा एवमन्यान्यपि ५, 'जाइगोयनिहत्ताउया' इत्यादिः, दशम। तत्र जातिनाम्ना गोत्रेण च सह निधत्त-मायुर्यैस्ते तथा एवमन्यान्यपि ५, 'जाइनामगोयनिउत्ता' इ-त्यादिरेकादश। तत्र जातिनामगोत्रञ्च नियुक्तं यैस्ते तथा एवमन्यान्यपि ५, 'जीवा णं भंते! किं जाइनामगोयनिउत्ताउ-या' इत्यादिर्द्वादश। तत्र जातिनाम्ना गोत्रेण च सह नियु-क्तमायुर्यैस्ते तथा एवमन्यान्यपि ५ इह च जात्यादिनामगो-त्रयोरायुषश्च भवोपग्रहे प्राधान्यख्यापनार्थं यथायोगं जीवा विशेषिता वाचनान्तरे चाद्या एवाष्टौ दण्डका दृश्यन्त इति। भ० ६ श० ८ उ०।

अथ जात्यादिनामविशिष्टमायु कियद्भिराकर्षैर्बध्नातीति जिज्ञासुर्जीवादिदण्डकक्रमेण पृच्छति अल्पबहुत्वं च—

जीवा णं भंते! जातिनामनिहत्ताउयं कतिहिं आगरिसे-हिं पकरेंति ?, गोयमा! जहन्नेणं एक्केण दोहिं वा तिहिं वा उक्कोसेणं अट्ठहिं, नेरइया णं भंते! जातिनामनिहत्ताउयं कतिहिं आगरिसेहिं पकरेंति? गोयमा!। (सूत्र-१४५+) प्रज्ञा० ६ पद। सिय १ एक्केणं सिय २।३।४।५।६ ७ सिय ८ अट्ठहिं, नो चेवं णं नवहिं। (सूत्र १५४×) स० १५४ सम०। जहन्नेणं एक्केण वा दोहिं वा तिहिं वा उक्कोसेणं अट्ठहिं। (सूत्र-१४५×) प्रज्ञा० ६ पद। स०। एवं ०जाव वेमा-णिया। एवं गतिनामनिहत्ताउए वि। ठितिनामनिहत्ता-उए वि। ओगाहणानामनिहत्ताउएवि। पदेसनामनिहत्त-उए वि। अणुभावनामनिहत्ताउए वि। एतेसि णं भंते! जीवाणं जातिनामनिहत्ताउयं जहन्नेणं एक्को वा दोहिं वा तिहिं वा उक्कोसेण अट्ठहिं आगरिसेहिं पकरेमाणा णं कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा! सव्वत्थोवा जीवा जातिनामनिहत्ताउयं अट्ठहिं आगरिसेहिं पकरेमाणा, सत्तहिं आगरिसेहिं पकरेमाणा संखेज्जगुणा एएहिं आगरिसेहिं पकरेमाणा संखेज्जगुणा, एवं

पचहिं संखेज्जगुणा, तिहिं संखेज्जगुणा, चउहिं संखेज्जगुणा, दोहिं संखेज्जगुणा, एगेणं आगारिसेणं पकरेमाणा संखेज्जगुणा। एवं एतेणं अभिलावेणं ०जाव अणुभावनिहत्ताउयं। एवं एते छप्पि अप्पा-बहुदण्डगा जीवादिया भाणियव्वा। ( सूत्र-१४५+ )

' आगरिसेहिं पगरती ' त्यादि, आकर्षो नाम तथाविधेन प्रयत्नेन कर्मपुद्गलोपादानं यथा गौः पानीयं पिबन्ती भयेन पुनः पुनरावर्त्तयति एवं जीवोऽपि यदा तीव्रेणायुर्बन्धाध्यवसायेन जातिनामनिधत्तायुरन्यद्वा बध्नाति तदा एकेन। प्रज्ञा० ६ पद। मन्देन द्वाभ्यामाकर्षाभ्यां मन्दतरेण त्रिभिर्मन्दतमेन चतुर्भिः पञ्चभिः षड्भिः सप्तभिरष्टाभिर्वा न पुनर्नवभिरेव शेषाण्यपि ' आउगाणि ' त्ति—गतिनामनिधत्तायुरादीनि वाच्यानि यावद्वैमानिका इति अयञ्चैकाद्याकर्षनियमो जात्यादीनां कर्मणामायुर्बन्धकाल एव। स० १५४ समः। आयुषा सह बध्यमानानामवसातव्यो न शेषकाले काञ्चित्प्रकृतीनां ध्रुवबन्धिनीत्वादपरासां परावर्त्तमानत्वात्। प्रभूतकालमपि बन्धसम्भवेनाकर्षानियमात्। प्रज्ञा० ६ पद। आयुर्बन्धपरिसमाप्तेरुत्तरकालमपि बन्धोऽस्त्येवैषां ध्रुवबन्धिनीनाञ्च ज्ञानावरणादिप्रकृतीनां प्रतिसमयमेव बन्धनिवृत्तिर्भवत्येनास्तु परावृत्त्यावध्यन्ते '। स० १५४ सम०। ( नारक-तिर्यग्-मनुष्य-देवायुर्बन्धकारणानि बहुप्रकारेण ' बन्धहेउ ' शब्दे पञ्चमभागे विस्तरतः प्रतिपादयिष्यते ) तथा देवनैरयिकैरपि यदि षण्मासे शेषे आयुर्न बद्धं तत आत्मीयमप्यायुः षण्मासशेषं तावत्संक्षिपन्ति यावत्सर्व्व-जघन्य आयुर्बन्ध उत्तरकालश्चावशेषोऽवतिष्ठते। इह परभवायुर्देवनैरयिका बध्नन्तीत्ययमसंक्षेपकाल इति श्रीस्थानांगषष्ठाध्ययनवृत्त्युपान्ते प्रोक्तमस्तीति "पर बंधंति देवनारयअसंखतिरिनरछम्मासससेसाउ" इत्यादिवचसा कथं संवाद इति प्रश्ने, अत्रोत्तरम्-' बंधंति देवनारय ' त्यादिवचनं प्रायिकं तेन केषांचिद्देवनारकाणां शेषेऽन्तर्मुहूर्तेऽप्यायुर्बन्धो भवतीति मतान्तरमवसीयते इति न कोऽपि विसंवाद इति। ॥ ३६ ॥ सेन०। ( आयुषो बन्धकान्' कम्म ' शब्दे तृतीयभागे दर्शयिष्यते ) ( आयुर्बन्धकानां कर्म्मप्रकृतिबन्ध कम्मपयडि ' शब्दे तृतीयभागे दर्शयिष्यते ) ( आयुर्बन्धस्थितिरायुर्बन्धकानां कर्म्मवेदमा आयुर्वेदकाना कर्मप्रकृतिबन्धश्च ' कम्म ' शब्दे तृतीयभागे दर्शयिष्यते )

आउयसंवट्टय-आयुष्कसंवर्त्तक-पुं०। संवर्त्तनम्-अपवर्त्तनं संवर्त्तः स एव संवर्त्तकः, उपक्रम इत्यर्थः, आयुषः संवर्त्तक आयुःसंवर्त्तकः। आयुषः उपक्रमः, स्था०।

( आयुःसंवर्तकमाह )—

दोएहं आउयसंवट्टए पण्णत्ते, तं जहा-मणुस्साणं चेव, पंचिंदियतिरिक्खजोणियाणं चेव २४। (सूत्र-८५)

स्था० २ ठा० ३ उ०।

आउयसंवेदन-आयुःसंवेदन-न०। आयुःकर्मोदयविपाकाऽनुभवने, भ० ३५ श०।

आउयसदव्वया-आयुस्सद्द्रव्यता-स्त्री०। आयुःप्रदेशकर्म तस्य द्रव्यैस्सह मानता-आयुस्सद्द्रव्यता। जीवस्यायुष्कर्मद्रव्यसहचारितायाम्, "आउयसदव्वयभवे ओघे"। आयुस्सद्द्रव्यता-ओघजीवितं सामान्यजीवितमिदं च सकलसंसारिणामविशेषेण सर्वदाभावीति। आ० म० १ अ०।

आउयाय-अप्काय-पुं०। एकेन्द्रियसंसारसमापन्नजीवविशेषे, प्रज्ञा० १ पद। भ०। ( एतस्य वक्तव्यता ' आउक्काय ' शब्देऽस्मिन्नेव भागे गता )

आउर-आतुर-त्रि०। ईषदर्थे, आ-अत्-उरच्। वाच०। ग्लाने, ( रोगिणि ) स्था० १० ठा० ३ उ०। वृ०। विविधदुःखोपद्रुते, ( रोगादिपीडिते ) वृ० १ उ० २ प्रक०। उत्त०। बुभुक्षादिभिः पीडिते, ज्ञा० १ श्रु० १ अ०। अस्वस्थमनसि, "तत्थ तत्थ पुढो पास आतुरा परितावेंति" ' तत्थ-तत्थे ' त्यादि-तत्र तत्र तेषु तेषु कारणेषूत्पन्नेषु वक्ष्यमाणेषु शरीरचर्मशोणितादिषु च पृथग्विभिन्नेषु प्रयोजनेषु पश्येति शिष्यचोदना किं तत्पश्येति दर्शयति-मासभक्षणादिगृद्धा आतुरा-अस्वस्थमनसः परि-समन्तात्तापयन्ति-पीडयन्ति। आचा०। किंकर्त्तव्यतामूढे, "पासिय आतुरए पाणे अप्पमत्तो परिव्वए" ( सूत्र १०६ + )। ' पासिय ' इत्यादि, स हि भावजागरस्तैर्भावः जागरस्वापजनितैः शारीरमानसैर्दुःखैरातुरान्-किंकर्त्तव्यतामूढान् दुःखसागरावगाढान् प्राणान्-भेदापचारात् प्राणिनो दृष्ट्वा ज्ञात्वा अप्रमत्तः परिव्रजेत्-उद्युक्तः सन् संयमानुष्ठानं विदध्यात्। आचा० १ श्रु० ३ अ० १ उ०। आकुलतनौ, उत्त० २ अ०। क्वचिदपि स्वास्थ्यमलभमाने सत्याकुले, जी० ३ प्रति० १ अधि०। उत्सुके, वृ० १ उ० ३ प्रक०। व्याकुले, ज्ञा० १ श्रु० १ अ०। ' आउर लोयमायाए ' ( सूत्र-१८१ + )। ' आउरं ' इत्यादि, लोकं मातापितृपुत्रकलत्रादिकं तमातुरं स्नेहानुषक्ततया वियोगात्कार्यावसादेन वा। यदि वा-जन्तुलोकं कामरोगातुरमादाय ज्ञानेन परिगृहीत्वा परिच्छिद्य। आचा० १ श्रु० ६ अ० २ उ०। क्लिष्टे, ' केषाञ्चिद्विषयज्वराकुलमहो" केषाञ्चिज्जीवाना चित्तं-मनः विषया-इन्द्रियाभिलाषा एव ज्वरस्तेन आतुर-क्लिष्टं मनो यस्य। अष्ट०३२ अष्ट०। द्व० स्थे, भ० १६ श० ४ उ०। प्रथमद्वितीयपरीषहाभ्यां जिते, ( क्षुत्पिपासापीडिते ) चिकित्साक्रियाव्यपेते, मरणचिह्नान्युपलभ्याकुले च। नं०। व्य०। पा०। "आउराण य अप्पगइयाण मच्छमसाइ उवदिसइ" (सूत्र-२८४) आउराणं' ति-चिकित्सायामविषयभूतानाम्। विपा० १ श्रु० ७ अ०। ( एतस्य बहुवक्तव्यता ' गिलाण ' शब्दे तृतीयाभागे कथयिष्यते ) आतुरत्वे च। ( क्षुत्पिपासाव्याधिभिरभिभूतत्वे ) "संकिए सहसागारे, उभयाउरे आवतीसु य" ( १०० × ) भावप्रधानश्चायं निर्देशस्ततोऽयमर्थः। व्य०१ उ०। ' सभमभयाउरावइ ' ' आउर ' त्ति—भावप्रधानत्वान्निर्देशस्यातुरपीडितत्वं क्षुत्पिपासाद्यैः। जीत०। लुप्तभावप्रत्ययत्वाद्वा। स्था० ६ ठा० ३ उ०। कार्य्याक्षमे, वाच०। अशक्नुवति, व्य० ४ उ०।

आउरचिन्न-आतुरचीर्ण-त्रि०। आतुर-चिकित्साया अविषयभूतो रोगी तस्य मर्तुकामस्य पथ्यापथ्याविवेकेन दीय-

मोन मनोज्ञाहारे, उत्त० ८ अ० । ('उरब्भ' शब्दे भावयिष्यते)

आउरपच्चक्खाण-आतुरप्रत्याख्यान-न० । आतुर -क्रियानीतो ग्लानस्तस्य प्रत्याख्यानमातुरप्रत्याख्यानम् । चिकित्सकक्रियाव्यपेतस्य ग्लानस्य प्रत्याख्याने,नं० । आतुर.-चिकित्स्यक्रियाव्यपेतस्तस्य प्रत्याख्यानं यत्राध्ययने विधिपूर्वकमुपवर्ण्यते तदातुरप्रत्याख्यानम् । उत्कालिकश्रुतविशेषे च । विधिश्चातुरप्रत्याख्यानदानविषये चूर्णिकृतैवमुपदर्शित -' गिलाण किरियातीय नाउ गीयत्था पच्चक्खावेंति दिणे दिणे दव्वहासं करेत्ता अंते य सव्वदव्वदायणाए भत्तंवरग्गं जाणि (णे) त्ता भत्ते वि (नि) त्तिण्हस्स भवचरिमपच्चक्खाणं कारवेंति " नं० ४३ सूत्र । पा० ।

आउरपडिसेवणा-आतुरप्रतिसेवना-स्त्री० । प्रतिसेवनाविशेषे, " दप्प-पमायऽणाभोगे, आउरे आवईसु य " । आतुरे-ग्लाने सति तत्प्रतिजागरणार्थमिति भाव. । अथवा-आत्मन एवातुरत्वे सति लुप्तभावप्रत्ययत्वादयमर्थ.-क्षुत्पिपासाव्याधिभिरभिभूत सन् या करोति । उक्तं च-" पढमबीयदुदुवाहिओ व ज सेव आउराए साइत्ति " । स्था० १० ठा० ३ उ० । ( विशेषत. व्याख्या 'पडिसेवणा' शब्दे पञ्चमभागे द्रष्टव्या )

आउरभेसज्जीय-आतुरभैषज्यीय-न० । अवितर्कितसम्भवितुल्य याद्दच्छिकन्याये, आचा०(यथा-आतुरभवनम्भैषज्योपकारश्चाबुद्धिपूर्वकैव, नाऽऽतुरस्य बुद्धिरस्ति मह्यम्भैषज्यमुपकरिष्यति नापि भैषज्यस्यैताद्दशी बुद्धिरस्ति आतुरायोपकरिष्यामीति, अथ तत्तथैव भवत्येव सर्वं जातिजरामरणादिकं-लोके याद्दच्छिकमिति यदृच्छावादिन ) । आचा०१ श्रु० १ अ० १ उ० ।

आउरसरण-आतुरशरण-न० । दोषातुरस्याश्रयदाने , दश० ३ अ० ।

आतुरस्मरण-न० । क्षुधाद्यातुराणां पूर्वोपभुक्तस्मरणे, दश० " आउरस्सरणाणि य " ॥ ६ ॥ तथाऽऽतुरस्मरणानि च क्षुधाद्यातुराणा पूर्वोपभुक्तस्मरणानि च अनाचरितानि । आतुरशरणानि वा दोषातुराश्रयदानानि । दश०३ अ० । रोगादिपीडितस्य हा तात ! हा मात ! इत्यादिरूपं स्मरणे च । ' आउरे सरण तिगिच्छियं च तं परिण्णाय परिव्वए स भिक्खू " ' आउरं सरणं ' ति-सुव्यत्ययादातुरस्य रोगादिपीडि-तस्य शरणं-स्मरण हा तात! हा मात ! इत्यादिरूपम् । उत्त० १५ अ० ।

आउल-आकुल-त्रि० । व्याप्त, औ० । ज्ञा० । "कलुसाऽऽउल चित्त ' कलुषयन्ति आत्मानमिति कलुषा -कषायास्तैराकुलं-व्याप्तं यत्तथोच्यते । आव० ४ अ० । जनाऽऽकीर्णे, वृ० १ उ० । प्रचुरे भ० १ श० ६ उ० । क्षुब्धे, " जत्थऽत्थमिए अणाउले ( १४× ) " भिक्षुर्यत्रैवास्तमुपैति सविता; तत्रैव कायोत्सर्गादिना तिष्ठतीति । यत्रास्तमितस्तथाऽनाकुल -स मुद्रवणकादिभि पर्गापद्धोपसर्गैरक्षुभ्यन् । सूत्र० १ श्रु० १ अ० । अभिभूते , " तह निव्वकोहलोहाउलस्स " तीव्राबुत्कटौ च तौ क्रोधलोभौ च ताभ्यामाकुलोऽभिभूतस्तस्य । आव० ४ अ० । व्याकुल, ( विह्वले ) आ० म० १ अ० । व्यग्रे , आव० ४ अ० । व्याप्त, सूत्र० १ श्रु० १ अ० १ उ० ।

सकीर्णे च । " किमिजालाउलसंसत्ते " ( सूत्र-६७+ ) कृमिजालैराकुलै -व्याकुलैराकुल वा संकीर्णं यथा भवतीत्येव ससक्त यत्तथा । ज्ञा० १ श्रु० ८ अ० । " अट्ठारसवज्जणाउलं " (सूत्र-१०६×) च० प्र० २० पाहु० । राजगृहाङ्गणजनाकुलवदाकुल । भावस्कन्धविशेषे च । अनु० ।

आउलतर-आकुलतर-त्रि० । अतिशयेनाकुले , तथा च षष्ठपृथिवीनरकापेक्षया सप्तमपृथिवीनारकाणां वर्णनमुपक्रम्योक्तम्-" णो आउलतरा चेव " ( सूत्र-४७५ × ) ' आउलतरा चेव ' त्ति-अतिकर्त्तव्यतया ये आकुला-नारकलोकास्तेषामतिशयेन योगादाकुलतरा. । भ० १३ श० ४ उ० ।

आउलमण-आकुलमनस्-त्रि० । आकुलं-व्यग्रं मन -अन्त.-करणं यस्य स तथा । व्यग्रान्त करणे, "तप्पडियाराउलमणस्स" तत्प्रतीकारे-वेदनाप्रतीकारे चिकित्सायामाकुल-व्यग्रं मनो यस्य स तथा । आव० ४ अ० ।

आउलमाउला-आकुलाऽऽकुला-स्त्री० । निद्राप्रमादाभिभूतस्य मूलगुणानामुत्तरगुणाना वा या नानाविधोपरोधक्रिया तदात्मिकायाम् , अथवा-आकुलं-नानाविधरूपं विवाहसंगमादिषु दृष्टमाचरितं वा पुनरपि आकुलास्ताद्दशा बहवो दृष्टा व्यापारास्तदात्मिकायां स्वाप्निकक्रियायाम् , आव० । सुप्तस्य दैवसिकमतिचारमधिकृत्योक्तम्-

आउलमाउलाए सोयणवत्तियाए इत्थीविप्परियासिए दिट्ठिविप्परियासियाए मणविप्परियासियाए पाणभोयणविप्परियासियाए जो मे देवसिओ अइयारो कओ तस्स मिच्छा मि दुक्कडं ॥ ( सूत्र )

' आउलमाउलाए ' त्ति-आकुलाकुलया-स्त्र्यादिपरिभोगविवाहयुद्धादिसंस्पर्शननानाप्रकारया स्वप्नप्रत्ययया स्वप्ननिमित्तया विराधनया योऽतिचार. । आव० ४ अ० । " आउलमाउलताए सोवणंतियाए निद्दप्पमायाभिभूतस्स मूलगुणाणं उत्तरगुणाणं वा उवरोधकिरिया जा णाणाविधा सोवणंतिया सा आउलमाउला ॥ अहवा-आउलं-णाणाविह रूवं विवाहसगमादिसु दिट्ठ आयरितं वा पुणो वि आउला तारिसा बहवो वारा दिट्ठा एसा आउलमाउला ॥ केईपुण-आउलमाउलाए सोयणवत्तियाए एते आलावगं एत्थ जातो सेसाओ आउलमाउलाओ ॥ सोमणंतियाओ इत्थी दिट्ठाओ निद्दापमादाभिभूतेण तस्स मिच्छा मि दुक्कडंति पुव्वभणितं ॥ आ० चू०४ अ० ।

आउलवाय-आकुलवाद्-पुं० । परस्परसंकीर्णवादे, आकुलवाद इति । सदसत्त्वयोः परस्परसंकीर्णवादे , अने० १ अधि० ।

आउलि-आतुलि-स्त्री० । पीतपुष्पके, (तडउडा) नामके वनस्पतिजातिविशेषे, "तडउडाकुसुमेइ वा"तडउडा-आउली । आ० म०१ अ० । आउलिविशेष इत्यर्थ । स्था० ४ ठा०१ उ० । एतत्काष्ठनिष्पादिते दन्ते दोषा भवन्ति । आउलिसत्कदन्तकाष्ठे केचिद्बहु दोषं वदन्ति तत्सत्यमसत्यं वा तथा बदरीवब्बूलदन्तकाष्ठेष्व आउलिदन्तकाष्ठे जीवा. किमलपा बहवस्तुल्या वेति प्रज्ञापनाया प्रथमपदे गुच्छाधिकारे आउलिसत्कमूलकन्दस्कन्धत्वक्शाखाप्रवालेषु प्रत्येकमसंख्येयजीवा-

त्मकता प्रोक्ताऽस्ति तदनुसारेण बदरीबब्बूलयोरपि पत्रेष्वपि स्थानेष्वसख्याता जीवा संभाव्यन्ते, नतु न्यूनाधिकजीवा ॥ ४१ ॥ सेन० ।

आउलि–पुं० । आ कुल इन् । व्याकुलत्वे, वाच० ।

आउलीकरण–आकुलीकरण–न० । प्रचुरीकरणे , भ० ।

जीवाना ससाराकुलीकरणकारणम् लघुत्वकारणप्रतिपाद्योक्तम्—

कह णं भंते ! जीवा लहुयत्तं हव्वमागच्छंति ?, गोयमा ! पाणाइवायवेरमणेणं०जाव मिच्छादंसणसल्लवेरमणेणं एवं खलु गोयमा ! जीवा लहुयत्तं हव्वमागच्छंति एवं संसारं आउलीकरेंति । ( सूत्र-७२× )

'एवं आउली करेंति ' त्ति-इहैवंशब्द पूर्वोक्ताभिलापससूचनार्थ., स चैवम्-"कहं ण भंते ! जीवा संसार आउलीकरेंति ?, गोयमा ! पाणाइवाएणमि " त्यादि , । एव उत्तरणापि, तत्र ' आउलीकरेंति ' त्ति-प्रचुरीकुर्वन्ति, कर्मभिरित्यर्थ । भ० १ श० ६ उ० ।

आउलीभूय–आकुलीभूत–त्रि० । आ-कुल-च्वि । भूते क्त । स्वयं तथाभूते , वाच० । आ० म० १ अ० ।

आउवज्जिय–आयुर्वर्जित–त्रि० । आयुष्कर्मविरहिते, । पञ्चा० १६ विव० ।

आउविज्जा–आयुर्विद्या–स्त्री० । वैद्यके पापश्रुतविशेषे , आ व० ४ अ० ।

आउविवागदसा–आयुर्विपाकदशा–स्त्री० । प्रतिसमयभोगत्वेनायातीत्यायु विपचन विपाक , आयुषोऽपरिहाणिरित्यर्थः । अनुभागेन युक्तो विभागो दशा इत्युच्यते आयुर्विपाकस्य दशा आयुर्विपाकदशा । आयुर्विपाकविभागे, " जं जम्मि काल आउय उक्कोसं दसधा विभत्तं दस आउविवागदसा भवन्ति " ततो य दसाओ दसवरिसपमाणातो वरिससयाउसो भवन्ति । नि० चू० ११ उ० । ( दशाभेदादिकम् ' दसा ' शब्दे चतुर्थभागे वक्ष्यते )

आउव्वेय–आयुर्वेद–पुं० । आयु -जीवित तद्विदन्ति-रक्षितुमनुभवन्ति चोपक्रमरक्षणेन विदन्ति वा लभन्ते यथाकाल तेन तस्मात्तस्मिन्वत्यायुर्वेद । चिकित्साशास्त्रे, स्था० ८ ठा० ३ उ० । वैद्यकशास्त्रे , विपा० १ श्रु० ७ अ० ।

तच्चाऽष्टविधम्—

अट्ठविहे आउव्वेए पण्णत्ते, तं जहा–कुमारभिच्चे १, कायतिगिच्छा२, सालाइयं३, सल्लहत्ता ४, जंगोली ५, भूयविज्जा६, खारतंते७, रसायणे ८ । ( सूत्र-६११ )

' कुमारभिच्चे' ति-कुमाराणा-बालकाना भृतौ-पोषणे साधु कुमारभृत्य तद्धि तन्त्र कुमारभरणक्षीरदोषसशोधनार्थं दुष्टस्तन्यनिमित्ताना व्याधीनामुपशमनार्थं चेति १ । कायस्य ज्वरादिरोगग्रस्तस्य चिकित्साप्रतिपादकं तन्त्रं कायचिकित्सातन्त्र तद्धि मध्याङ्गसमाश्रिताना ज्वरातीसाररक्तशोषोन्मादप्रमेहकुष्ठादीना शमनार्थमिति २ । शलाकाया कर्म शालाक्य तत्प्रतिपादक तन्त्रं शालाक्यं तद्धि ऊर्ध्वमजुगताना रोगाणां श्रवणवदननयनघ्राणादिसमाश्रितानामुपशमनार्थमिति ३। शल्यस्य हत्या-हननम्-उद्धार शल्यहत्या तत्प्रतिपादकं तन्त्रमपि शल्यहत्येत्युच्यते,तद्धि तृणकाष्ठपाषाणपांसुलोहलोष्ठास्थिनखप्रायोऽङ्गान्तर्गतशल्योद्धरणार्थमिति ४ । 'जागौली'ति-विषविघाततन्त्रम् , अगदतन्त्रमित्यर्थ । तद्धि सर्पकीटलूतादष्टविषविनाशार्थं विविधविषसंप्रयोगोपशमनार्थं चेति ५ । भूतादीनां निग्रहार्थं विद्यातन्त्रं भूतविद्या साहि देवाऽसुरगन्धर्वयक्षराक्षसपितृपिशाचनागग्रहाद्युपसृष्टचेतसा शान्तिकर्मबलिकरणादिग्रहोपशमनार्थमिति ६ । क्षारतन्त्रमिति—क्षरणं क्षार शुक्रस्य तद्विषयं तन्त्रं यत् तत्तथा, इद हि सुश्रुतादिषु वाजीकरणतन्त्रमुच्यते । स्था० ८ ठा० ३ उ० । तथा च विपाकश्रुते-धन्वन्तरिवर्णने-" अट्ठगाऽऽउवेदपाढए- त जहा-कोमारभिच्चं १, सालागे २, सल्लगहत्ते ३, कायतिगिच्छा ४, जगोले ५, भूयवेज्जे ६, रसायणे ७, वाजीकरण ८। ( सूत्र-२८+)। विपा० १ श्रु० ७ अ० । अवाजिनो वाजीकरण रेतोवृद्धया अश्वस्येव करणमित्यनयो. शब्दार्थ सम एवेति तत्तन्त्रं हि अल्पक्षीणविशुष्करेतसामाप्यायनप्रसादोपजननिमित्तं प्रहर्षजननार्थमिति ७। रस.-अमृतरसस्तस्यायन-प्राप्ती रसायन तद्धि वय स्थापनमायुर्मेधाकरणं रोगापहरणसमर्थ च तत्प्रतिपादक शास्त्रं रसायनतन्त्रमिति । कृतरसायनश्च देववच्चिरुपक्रमायुर्भवति ८ । स्था० ८ ठा० ३ उ० ।

आउस ( स्स )–आक्रोश–पुं० । "मृतोऽसि त्वम्"इत्यादिभिरसभ्यवचनरूपैं शापैरभिशापे, " अप्पेगइए आउसिहिंति, । ( सूत्र-५५६+ ) आक्रोशान्दास्यति, भ० १५ श० । " भंते ! अहं णं पुरिस आउसेज्जा वा" (सूत्र-४७×) 'आउसेज्जा व' त्ति-आक्रोशयामि वा-मृतोऽसि त्वमित्यादिभि. शापैरभिशपामि । उपा० ७ अ० । दण्डमुष्ट्यादिभिर्हननव्यापारे च । सूत्र० । '

परतीर्थिकानुद्दिश्योक्तम्—

रागदोसाभिभूऽप्पा, मिच्छत्तेण अभिद्दुता ।
आउस्ससरणं जति, टंकणा इव पव्वयं ॥ १८ ॥

' रायद्दोस्सा ' इत्यादि , रागश्च प्रीतिलक्षणो द्वेषश्च तद्विपरीतलक्षणस्ताभ्यामभिभूत आत्मा येषा परतीर्थिकाना ते तथा मिथ्यात्वेन विपर्यस्तावबोधेनातत्त्वाध्यवसायरूपेणाभिद्रुता व्याप्ता सद्युक्तिभिर्वादं कर्तुमसमर्था क्रोधानुगा आक्रोशान्-असभ्यवचनरूपास्तथा दण्डमुष्ट्यादिभिश्च हननव्यापारं यान्ति-आश्रयन्ते । अस्मिन्नेवार्थे प्रतिपाद्य दृष्टान्तमाह-यथा टङ्कणा-म्लेच्छविशेषा दुर्जया यदा परेण बलिना स्वानीकादिनाभिद्रूयन्ते तदा ते नानाविधैरप्यायुधैर्योद्धुमसमर्था सन्त पर्वत शरणमाश्रयन्त्येवं तेऽपि कुतीर्थिका वादपराजिता क्रोधाद्युपहतदृष्टय आक्रोशादिकं शरणमाश्रयन्ते । न च ते इदमाकलय्य प्रत्याक्रोष्टव्या , तद्यथा-"अक्कोसहणणमारणधम्मब्भसाण बालसुलभाण । लाभं मन्नइ धीरो, जहुत्तराण अभावमि" ॥ १ ॥ सूत्र० १ श्रु० ३ अ० ३ उ० ।

आउसंत–आयुष्मत्–त्रि० । प्राकृतत्वेन निष्ठ्यत्यय । प्रीतिप्रवणमनसि , स० १ सम० । " सुय मे आउसंतेणं " श्रवणविधिमर्यादया गुरूनासेवमानेन । स्था० १ ठा० । उत्त० । दशा० ।

आयुष्मत्–त्रि० । आयुरस्यास्तीति । दशा० १ अ० । दश० । जीवति, ( प्राणधारणधर्मवति ) स्था० १ ठा० । चिरजीविनि , उत्त० २ अ०। आयुः–जीवितं तत्संयमप्रधानतया प्रशस्तं प्रभूतं वा विद्यते यस्यासावायुष्मान् । स्था० १ ठा० । चिरप्रशस्तजीविते , भ० १६ श० ६ उ० । चिरायु –(दीर्घायु ) आचा० १ श्रु० १ अ० १ उ० । लक्षणगुणवति च शिष्यादौ, स्था० १ ठा० । सकलगुणाधारभूतत्वेनायुश्च प्रधानो गुणः सति तस्मिन्नव्यवच्छित्तिभावात् । दशा० १ अ० । दश० । एतच्च शिष्यामन्त्रणे पुत्रादेरामन्त्रणे च प्रयुज्यते । उत्त० २ अ० । दश० । दशा० । " अयमाउसो " ( सूत्र-१०७+ ) आयुष्मन्निति पुत्रादेरामन्त्रणम् । भ० २ श० ५ उ० । दशा० । परार्थप्रवृत्त्यादिना प्रशस्तमायुर्धारयति :न तु मुक्तिमवाप्यापि तीर्थनिकारादिदर्शनात्पुनरिहायातेनाभिमानादिभावतो ऽप्रशस्तमिति । तीर्थंकरे , पुं० । उत्त० २ अ० । दशा० । स्था०। यथोच्यते कैश्चित्–"ज्ञानिनो धर्मतीर्थस्य , कर्त्तारः परमं पदम् । गत्वा गच्छन्ति भूयोऽपि, भवं तीर्थनिकारतः ॥ १ ॥" एवं ह्यनुमूलितरागादिदोषत्वात्तद्वचसोऽप्रमाणमेव स्यात् निःशेषोन्मूलने हि रागादीनां कुतः पुनरिहागमनसम्भवः । स्था० १ ठा० । " सुयं मे आउसंतेणं भगवया एवमक्खायं " ( सूत्र-१× ) । आचा० १ श्रु० १ अ० १ उ० । स० । दश० । दशा० । विष्कुम्भावधिके तृतीये योगे, पुं० । विष्कुम्भ प्रीतिरायुष्मान् । ज्यो० नि० । वाच० ।

आउसुह–आयुःशुभ–न० । तीर्थंकरादिसम्बन्धिनि शुभे आयुष्कर्मणि दश० १ अ० ।

आउसोय–अप्शौच–न० । अद्भिः शौचमप्शौचम् । प्रक्षालनात्मके शौचभेदे, " जलशौचं तु पञ्चमम् " इति । स्था० ५ ठा० ३ उ० ।

आउस्सिय–आवश्यक–न० । अवश्यं भाव मनोज्ञा० । वुञ् । अवश्यंभावि, प्रज्ञा० ३६ पद । आ० म० ।

आउस्सियकरण–आवश्यककरण–न० । आवश्यकेन आवश्यंभावेन करणमावश्यककरणम् केवलिसमुद्धातात्पूर्वं केवलिनामवश्यकर्त्तव्ये व्यापारविशेषे, तथाहि-समुद्धातकेऽपि कुर्वन्ति केचिच्च न कुर्वन्ति इदन्त्वावश्यककरणं सर्वेऽपि केवलिनः कुर्वन्तीति ( अत्र विशेषः ' आउज्जीकरण ' शब्देऽस्मिन्नेव भागे गतः । ) प्रज्ञा० ३६ पद । आ० म० । वाच० ।

आउह–आयुध–न० । आयुध्यतेऽनेन । ग० । जी० । आयुध करणे घञर्थे क । वाच०। अस्त्रेऽस्त्रे च । औ०। ज्ञा०। प्रहरणे विशे० १२६६ गाथा । ' गहियाउहप्पहरणाणं '(३१ सूत्र-) गृहीतान्यायुधानि खड्गादीनि प्रहरणाय यैस्ते तथा तेषाम् । अथवा-आयुधान्यक्षेप्याणि, प्रहरणानि तु क्षेप्याणीति विशेषः । औ० । ज्ञा० । शस्त्रमात्रे, तस्य भेदाः समासतस्त्रिधा-प्रहरण-हस्तमुक्त-यन्त्रमुक्तभेदात् । तत्र हस्तस्थितैर्यैः प्रहियते तानि प्रहरणानि यथा खड्गादीनि, हस्तमुक्तानि चक्रादीनि, यन्त्रमुक्तानि शरादीनि, तेषां सर्वेषां युद्धसाधनत्वादायुधत्वम् । वाच० ।

आउहघर–आयुधगृह–न० । प्रहरणशालायाम् , जं० ३ वक्ष० ।

आउहघरसाला–आयुधगृहशाला–स्त्री० । प्रहरणगृहशालायाम् , जं० ३ वक्ष० ।

आउहघरिय–आयुधगृहिक–पुं० । आयुधाध्यक्षे, । " तए णं से आउहघरिए " (सूत्र-४३+) ततः-चक्ररत्नोत्पत्तेरनन्तरं सः-आयुधगृहिको यो भरतेन राज्ञाऽऽयुधाध्यक्षः कृतोऽस्तीति गम्यम् । जं० ३ वक्ष० ।

आउहागार–आयुधागार–न०। षष्ठी ६ त०। प्रहरणशालायाम् , औ० । ज्ञा० । ( प्रहरणकोशे ), स्था० ६ ठा० ३ उ० । तत्र राज्ञां प्रहरणस्थापनार्थं गृहम् । वाच० ।

आउहि ( न् )–आयुधिन्–त्रि० । आयुधं प्रहरणमस्त्यस्य । शस्त्रधारके, वाच० । विशे० १८८६ गाथा ।

आऊसिय–आयूषित–त्रि० । आ-यूष्-क्त । वाच० । प्रविष्टे, ' आऊसियवयणगंडदेसं " ( सूत्र-६१× ) 'आऊसिय' त्ति-प्रविष्टौ वदने गण्डदेशौ-कपोलभागौ यस्य तत्तथा । संकुचिते, ज्ञा० १ श्रु० ८ अ० । " आऊसियअक्खचम्मओट्ठगंडदेसं " ' आऊसिय ' त्ति-संकुचितं यदक्षचर्म जलापकर्षणकोशस्तद्वत् ' उट्ठ ' त्ति-अपकृष्टौ-अपकर्षवतौ संकुटितौ गण्डदेशौ यस्य स तथा तम् । ज्ञा० १ श्रु० ८ अ० ।

आमूषित–त्रि० । संकुटिते, " आऊसियअक्खचम्मओट्ठगंडदेसं ' अन्ये त्वाहुः-आमूषितानि-संकुटितानि अक्षाणि-इन्द्रियाणि चर्म्म ओष्ठौ च गण्डदेशौ च यस्य स तथा तम् । ज्ञा० १ श्रु० ८ अ० ।

गाहा—

रक्खाभूसणहेउं, भक्खणहेउं च मट्टियागहणं ।
दीहाहिभक्खइए, इमाए जतणाए णायव्वं ॥ १७० ॥

दीहादिणा खइए मंतेणाभिमंतिऊण कडगबंधेण रक्खा कज्जति, मट्टियं वा मुहे घे इडंको आऊसिज्जति-आलिप्पति वा । नि० चू० १ उ० ।

आए(दे)ज्ज–आदेय–त्रि० । आ-दा-यत् । आकाङ्क्षणीये, जं०२ वक्ष० । उपादेये जी०३ प्रति०४ अधि० । ग्राह्ये सू-त्र० १ श्रु० १४ अ० । " आएज्जलढहसुविभत्तजायसोयसोभसरुइलगंगमराई" । आदेया-दर्शनपथप्राप्ता सती उपादेया-सुभगा । जी० ३ प्रति० ४ अधि० । आदेया-दर्शनपथमुपगता सती पुनः पुनराकाङ्क्षणीया । जं० २ वक्ष० ।

आए ( दे ) ज्जवक–आदेयवाक्य–पुं० । ग्राह्यवाक्ये , सूत्र०

से सुद्धसुत्ते उवहाणवं च ,
धम्मं च जे विंदति तत्थ तत्थ ।
आदेज्जवक्के कुसले वियत्ते,
स अरिहइ भासिउं तं समाहिं ॥ २७ ॥

स-सम्यग्दर्शनस्याखूपको यथावस्थितागमस्य प्रश्नेनाऽनुविचिन्त्य भाषकः शुद्धमवदातं यथावस्थितवस्तुप्ररूपणतोऽध्ययनतश्च सूत्रं-प्रवचनं यस्यासौ शुद्धसूत्रः । तथाप-धानं-तपश्चरणं यद्यस्य सूत्रस्याभिहितमागमे तद्विद्यते यस्यासावुपधानवान् , तथा धर्मं श्रुतचारित्राख्यं य सम्यक् वेत्ति विन्दते वा सम्यक् लभते तत्र तत्रेति य आज्ञाग्राह्योऽ-

र्थ स आज्ञयैव प्रतिपत्तव्यो हेतुनस्तु सम्यग्घेतुना । यदि वा-स्वसमयसिद्धोऽर्थ स्वसमये व्यवस्थापनीय पर( समय) सिद्धश्च परस्मिन् । अथवा-उत्सर्गापवादयोर्व्यवस्थितोऽर्थस्ताभ्यामेव यथास्वं प्रतिपादयितव्य एतद्गुणसंपन्नश्चा-देयवाक्यो-ग्राह्यवाक्यो भवति । सूत्र० १ श्रु० १५ अ० ।

**आए ( दे ) ज्जणाम-आदेयनाम**-न० । नामकर्मभेदे, प्रव० २१६ द्वार । तच्च-" आएज्जा सव्वलोयगिज्झवओ" ( ५० + ) आदेयादादेयनामोदयेन सर्वलोकेन-समस्तजनेन ग्राह्यमादेयं वचो-वचन यस्य स तथा । कर्म०१ कर्म० । यथा यदुदयवशात् यच्चवृते भाषते वा तत्सर्व लोक प्रमाणीकरोति दर्शनसमनन्तरमेव च जनोऽभ्युत्थानादि समाचरति तदादेयनाम । प० सं० ३ द्वार । श्रा० । कर्म० ।

**आए ( दे ) ज्जवयण-आदेयवचन**-त्रि० । ग्राह्यवचने , दशा० ४ अ० । उत्त० ।

**आए ( दे ) ज्जवयणया-आदेयवचनता**-स्त्री० । सकलजनग्राह्यवाक्यतारूपे वचनसम्पद्भेदे , दशा० ४ अ० । स्था० ।

**आए ( दे ) स-आदेश**-पुं० आ-दिश् । भावे घञ् । उपदेश, आम्नायाम् , वाच० । आदिश्यते-आज्ञाप्यते सम्भ्रमेण परिजनो यस्मिन्नागते तदतिथेयाय । तदासनदानादिव्यापारे , स आ देश । सूत्र० २ श्रु० १ अ० । आचा० । उत्त० । आदिशतीत्यादेश । आयासकरे , व्य० ६ उ० । अभ्यर्हिते, उत्त० ६ अ० । नायकादौ प्राघूर्णके , उत्त० ६ अ० । " आए सो पाहुणगं " । आदेश करोतीत्यादेश. । नि० चू० १ उ० । ध० । आचा० । आ० म० । "सागारियस्स आएसे ' ( सूत्र-१-२-३-४-+ ) " सागारिकपिंडस्य प्रतिपादक यत् आदिमं सूत्रं तस्य संवन्ध , अनेन संवन्धेनायातस्यास्य व्याख्या-सागारिको नाम-शय्यातरस्तस्याऽऽदेश आयासकर आदेश । यदि वा-आदेशित.-आदेश । अथवा-आदेशत इति शब्दसंस्कारस्तस्य व्युत्पत्तिमग्रे वक्ष्याम । स च नायको मित्र प्रभु परतीर्थको वा द्रष्टव्य । व्य० ६ उ० ।

आदेशमनापृच्छ्य त्रिरात्रात्परं यत प्रायश्चित्तं संवासवक्तव्यता—

जे भिक्खू वहियावासियं आएसं परं तिरायाउ अवकालेत्ता संवसावेइ संवसावंत वा साइज्जइ ॥ १४ ॥

आगतो आदेश करोतीति आएस , प्राघूर्णकमित्यर्थ. । सो य अण्णगच्छवासी वहियावासी-भण्णति । समागत परतो तिरायतो परतो 'तिरहदिणाए' ति-अविफालियविप्फलणा णाम-वियडणा किं णिमित्त आगता अणवज्जतो वा भदंत ! कतो आगयर, कहिं वा वच्चह, एव अविफालेंतस्स चउत्थदिणे चउगुरु भवति, आणादिणो य दोसा ।

गाहा—

वहिवासगच्छवासी, आदेसं आगयं तु जो मंनं ।
तिण्हदिवसाण परतो, ण पुच्छती सवसाणादी ॥१५७॥

गतार्था । गता आरतो अविफालेंतस्स दोसा ।

गाहा—

पढमदिणं वितिएँ ततिए, लहुगुरुलहुगा य सुत्त तेण परं ।
सविग्गमणुसितरे, व होंतदपुट्ठे इमे दोसा ॥ १५८ ॥

पढमदिणे अविफालेंतस्स मासलहुं । वितियदिणे मासगुरु । ततियदिणे चउलहुं ।' तेण परं' ति-चउत्थदिणे सुत्तणिवातो, चउगुरुमित्यर्थ. । संविग्गो उज्जमंतो मणुण्णा संभवति तो पासत्थदिणो वा एए जइ अपुच्छिते सवसंति तो ता इमे दोसा भवंति ।

गाहा—

उवचरगअहिमरे वा, छेवतितो तेण मेथुणऽट्ठी वा ।
रायादवकारी वा, पउत्त अत्ता व तेणो वा ॥ १५६ ॥

कत्ताइ सो तेण वेसगाहणेण उवचरो-भडितो गच्छति, अहिमगे-यदि गच्छति छेवति-असंविग्गो हि तो भण्णति संपक्ख परिक्खातेणितुमागतो तेणगो वा गच्छति, मेहुण सेवेतुमागतो मेहुणट्ठी वा गच्छति, रण्णो वा अवकारं काउमागतो, रण्णो वा अवकारकारणाए गच्छति, वा विकप्पे आयरियस्स वा उदाइमारकवत् । भावे ' तेणो सिद्धं ताव हरणट्ठताए केणति पउत्तो आगतो, अप्पणा वा, गोविंदवाचकवत् । एवमादिदोसा भवति अपुट्ठ पुच्छितो वा इमं भणे ।

गाहा—

उवसंपयावराहे, कज्जे कारणिएँ अट्ठजाते वा ।
वहिताउ गच्छवामि-ईमाऽऽदीवण एवमादीहिं ॥१६०॥
कज्जे भत्तपरिण्णा, गिलाण राया य धम्मकहि वादी ।
छम्मासा उक्कोसा, तेसिं तु वइक्कमे गुरुगा ॥ १६१ ॥

तुब्भं चेव उवसंपज्जाणियव्वा आगतो,अवराहाऽऽलोयण वा दायण वा दाहामि त्ति आगतो, कुलगणसंघकज्जेण वा आगतो, असिवादीहिं वा कारणेहिं आगतो, अट्ठजायणिमित्तेण वा आगतो हंसो वहिया गच्छवासी विफालितो एवमादीकारणे दीविज्जा आयरिओवि विप्फालितो, एवमाइकारणे सुह जाणति कारण तिण्हदिणाणं परतो न विप्फाले आलोयणं वा न पडिच्छे, कुलगणसंघकज्जेण आयरिओ वा वडो न विप्फालेति, भत्तपरिभत्ती अणसणेववच्छिट्ठो तत्थ वा वाउलो, गिलाणकज्जेण वा वडो दिणं वा सव्व, रण्णो धम्ममाइक्खति, परवादिणा वा सद्धिं वाद करेति, एवमादिकारणेहिं तिण्हदिणाणं परतो अविफालतो विसुद्धो, उक्कासेण जाव छम्मासा । छम्मासातिक्कमपढमदिणे अविफालंतस्स व गुरुगा ।

गाहा—

अण्णेण पडिच्छावे, तस्साऽसति संतं पडिच्छते रत्तिं ।
उत्तरवीमंसासुं, खिण्णो व णिसिं पि ण पडिच्छे ॥१६२॥

तिरातिक्कमे अण्णण वि आलोयण'पडिच्छावे'ति-अण्णस्स वा आलायणारहियस्साऽसति सयमेव रातो' पडिच्छति अह एसो वि परवादुत्तरवीमसाए वा वडो दिवा वादकारणेण खिण्णो वीमसता एतो वि ण पडिच्छति एवं छम्मासा पत्ता छम्मासं त वि अण्णे पडिच्छावति एसेव भावत्थर्थ ।

गाहा—

दोहिं तिहिं व दिणेहिं, जतिअच्छति तो न होति पच्छित्तं ।
तेण परमणुमन्नणा, कुलाई रण्णो व दीवेंति ॥ १६३ ॥

छण्ह मासाण परतो दोहिं तिहिं कज्जं ण समप्पति तो कुलगणसघस्स रण्णो वा णिवेदेति जेहिं वा वडो भविस्सामि वण णागमिस्सं कारणेण विप्फालेज्जा ।

गाहा—

वितियपदमणप्पज्झे, अंतगणादागयं ण विप्फाले ।
अप्पज्झे च गिलाणं, अच्छितुकामं च वचंतं ॥ १६४ ॥

अणवज्झो ण विफालेति, ण विफालिज्जति वा, अवज्झो गिलाणेण पुच्छिज्जति गिलाणं वा घडो वा सो वा आदेसो । गिलाणा ण पुच्छिज्जति गिलाणं वा वडो वा आएसो न पुच्छिज्जति । अहवा-तेण अपुच्छिएण चेव कहियं,जहा-तुब्भ सगासं अच्छिउकामो आगतो, अहवा-अपुच्छिएण चेव कहियं इहाहं वसितुं इमिणो कारणेण गच्छामि चेव, एवं अविफालेंतो सुद्धो ।

सूत्रम्—

जे भिक्खू माहिगरणं अविउसवियं पाहुणगं अकडपायच्छित्तं परं तिरायाओ विप्फालियं अविप्फालियं संभुंजइ संभुंजंतं वा साइज्जइ ॥ १५ ॥

'जति' णिद्देसे, भिक्खू-पुव्ववण्णितो, 'सह'-अधिकरणे, कषायभावशुभभावाधिकरणसहितेत्यर्थः । विविधं विविधेहिं वा पगारेहिं उसवियं-उवसामियं किं तं पाहुडं; कलहमित्यर्थं । ण वि ओसवियं अविओसवियं पाहुडं तम्मि पाहुडकरणे जं पच्छित्तं भंड जेण सो कडपच्छित्तो अ, मा, नो, ना, प्रतिषेधे, । तत्कृतं प्रायश्चित्तमकृतप्रायश्चित्तं-जो तं संभुजए-संभोएण संभुंजति । एगमंडलीए संभुंजति त्ति वुत्तं भवति । अहवा-दाणग्गहेणं संभोएणं भुंजति, तस्स चउगुरुगा, आणादिणो य दोसा । नि० चू० १० उ० । आज्ञापने, वृ० १ उ० ३ प्रक० । स्था० । आज्ञायाम् , ज्ञा०१ श्रु० ६ अ० । आदेशिने, आदिश्यते-सत्कारपुरस्सरमाकार्य्यत इत्यादेशः इति व्युत्पत्तेः । व्य० ६ उ० । आदेशनमादेशः । उपचारे, ( व्यवहारे ) । स्था० ४ ठा० २ उ० । विशे० । आ० म० । उपचारेऽर्थे, ( आदेशवक्तव्यता ' आएससव्व ' शब्देऽस्मिन्नेव भागे वक्ष्यते ) उद्गमदोषविशेषस्यौद्देशिकस्य तृतीये भेदे च । स च निर्ग्रन्थशाक्यतापसगैरिकाजीविकानां श्रमणानां कृते चादेशाख्यमिति । आदिश्यते-ज्ञाप्यते इत्यादेशः । (कर्म्मकरादिके ) य कस्यांचित् क्रियायां नियोज्यते कर्म्मकरादि । आचा० २ श्रु० २ चू० ६ अ० । प्रकारे, नि० चू० १ उ० । " गहियाऽगहियम्मि आदेसे " ( ८२ × ) गृहीतागृहीतविषय आदेशः -प्रकारश्चतुर्भङ्गयात्मक । व्य० २ उ० ।

दव्वओ १, खेत्तओ २, कालओ ३, भावओ ४। दव्वओ ण आभिणिबोहियनाणी आएसेणं सव्वदव्वाइं जाणइ, पासइ । खेत्तओ णं आभिणिबोहियनाणी आएसेणं सव्वखेत्तं जाणइ, पासइ । एवं कालओ, भावओ वि । ( सूत्र-३२१ + )

आदेशः -प्रकारः सामान्यविशेषरूपस्तत्रादेशेनोघतो द्रव्यमात्रतया ननु तद्गतसर्वविशेषापेक्षयेति भावः । अथवा-आदेशेन श्रुतपरिकर्म्मिततया सर्वद्रव्याणि—धर्मास्तिकायादीनि जानाति अवायधारणापेक्षयाऽवबुध्यते; ज्ञानस्यावायधारणात्मकत्वात् । भ० ८ श० २ उ० । आदेशः -प्रकारः । स च द्विधा-सामान्यरूपो, विशेषरूपश्चेति । नं० ।

कोऽयमादेश इत्याह—

आएसो त्ति पगारो , ओहादेसेण सव्वदव्वाइं ।
धम्मत्थि आइयाइं, जाणइ, न उ सव्वभेदेणं ॥४०३॥

इह आदेशो नाम-ज्ञानव्यवस्तुप्रकारः, स च द्विविधः-सामान्यप्रकारो, विशेषप्रकारश्च । तत्रौघादेशेन-सामान्यप्रकारेण, द्रव्यसामान्येनेत्यर्थः , सर्वद्रव्याणि-धर्मास्तिकायादीनि जानाति असंख्येयप्रदेशात्मको लोकव्यापकोऽमूर्तः प्राणिनां पुद्गलानां च गत्युपष्टम्भहेतुर्द्धर्मास्तिकाय इत्यादिरूपेण कियत्पर्यायविशिष्टानि षडपि द्रव्याणि सामान्येन मतिज्ञानी जानातीत्यर्थः । विशे० । " अन्नो वि य आएसो " अन्यो वाऽऽदेशः प्रकारः । वृ० ३ उ० । आदिश्यत इत्यादेशः-आचार्यपारम्पर्यश्रुत्याऽऽयातो वृद्धवादोऽयमीतिसमाचक्षते, स आदेशः । वृद्धवादाऽऽयाते दृष्टान्ते, आचा० १ श्रु० ८ अ० १ उ० । आदिश्यत इत्यादेशः निर्देशे, नि० चू० १ उ० । आदिश्यत इत्यादेशः । व्यापारनियोजने , आचा० २ श्रु० १ चू० १ अ० १ उ० । प्रतिपादने, " धुयमादिसंति " धूतम्-मोक्षम् आदिशन्ति-प्रतिपादयन्ति । सूत्र०१ श्रु० १ अ० । प्रतिवचने , विशे० । मते, " मोत्तूणादेसतिगं " मुक्त्वा परित्यादेशत्रिकं-मतत्रिकम् । पिं० । विकल्पे , " आदेसा इमे होंति" आदेशाः-विकल्पाः । नि० चू०१ उ० । आङिति-मर्य्यादया विशेषरूपानतिक्रमात्मिकया आदिश्यते- कथ्यत इत्यादेशः । विशेषे, उत्त० ।

.................... आएसे चेवऽणाएसे ॥ ४७ ॥
आदिट्ठो आएसं-मि वहुविहे सरिसणाखचरणगते ।
सामित्तपव्वयाइं-मि चेव किंचित्तओ वोच्छं ॥ ४७ ॥

आङिति-मर्यादया विशेषरूपानतिक्रमात्मिकया आदिश्यते-कथ्यत इति आदेशो-विशेषस्तस्मिन् तदन्यस्त्वनादेशः सामान्यं पूर्वत्र चैवशब्दयोः समुच्चयावधारणार्थयोर्भिन्नक्रमत्वात्तस्मिंश्चैव तत्र क्षेत्रविषयोऽनादेशो यथा जम्बूद्वीपजोऽयम् आदेशे तु-यथा भारतोऽयं, कालविषयोऽनादेशो यथा-ग्रैष्मिकोऽयम् आदेशे तु-वासन्तिकोऽयं, भावविषयोऽनादेशो भाववानयम् , आदेशे त्वौदयिकादिभाववानिति । सामान्यावगमपूर्वकत्वाद्विशेषावगमस्यैवमुदाहियते । निर्युक्तौ तु विपर्ययाभिधानं जम्बूद्वीप इति सामान्यमपि लोकापेक्षया विशेषो भरतमिति, विशेषोऽपि मगधाद्यपेक्षया सामान्यमित्यादिरूपेण सर्वत्र सामान्यविशेषयोरनियतत्वख्यापनार्थम् । उत्त० १ अ० ।

आएसो पुण दुविहो , अप्पियववहारणप्पितो चेव ।
एक्केक्को पुण तिविहो , अप्पाण परे तदुभए य ॥४८॥

आदेशोऽभिहितरूपः पुनःशब्दो विशेषणे, द्विविधो-द्विभेदः , कथमित्याह-'अप्पिअववहाराणप्पिओ चेव' त्ति-व्यवहारशब्दोऽत्र डमरुकमणिन्यायेनोभयत्र संबध्यते, ततश्चार्पितो व्यवहारो यस्मिन्सोऽयमर्पितव्यवहारः, मयूरव्यंसकादित्वात्समासः अनर्पितव्यवहारस्तु तद्विपरीतस्तत्रार्पितो नाम क्षायिकादिर्भावः स्वाधारे-भाववति ज्ञातोऽयमित्यादिरूपेण ज्ञानमस्येत्यादिरूपेण वा वचनव्यापारेण वक्त्रा स्थापित , अनर्पितस्तु वस्तुतः साधारत्वेऽपि निराधारप्ररूपणार्थं विवक्षितो यथा-सर्वभावप्रधानः क्षायिको भा-

योऽनयोरपि भेदानाह-एकैक इति अर्पितव्यवहार , अनर्पितव्यवहारश्च । पुनस्त्रिविध', कथमित्याह-'अत्ताए' त्ति-आकर्षत्वादात्मनि परस्मिन् तयोरात्मपरयोरुभय तदुभय तस्मिश्च विषयसप्तम्यश्चैता , नतो विषयत्रैविध्यनानयास्त्रैविध्यम् । उत्त०१ अ० ।( आदेशाऽनादेशयोर्बहुवक्तव्यता 'सजोग' शब्दे सप्तमभागे करिष्यते) व्यपदेशे, आचा० ।

एओवम आएसो, वाए ऽसंतेऽवि रूवंमि ॥ १६७ ॥

एतदुपमानो वायावपि भवति आदेशो-व्यपदेश. । आचा० १ श्रु० १ अ० ७ उ० ।

केसिंचिय आएसो, दंसख, खाणेहिँ वट्टए तित्थं(५५+)

केषांचिद्-दुर्विदग्धबुद्धीनां ज्ञानलवाध्मातचेतसां-कदाग्रहग्रस्तमनसाम् आदेशो-व्यपदेश गूरणेति यावत् दर्शनज्ञानाभ्यां वर्त्तते । दर्श० ४ तत्त्व । श्रुतपरिकर्मिततायाम् , भ० ८ श० २ उ० । श्रुतपरिकर्मणायाम् , भ० ८ श० २ उ० । सूत्रे च । " आदेशो ण उववज्जतीति अणवड्डो होति " भवति आदेश ; सूत्रादित्यर्थः । नि० चू० १ उ० ।

तत्थ दव्वओ णं आभिणिबोहियनाणी आएसेणं सव्वाइं दव्वाइं जाणइ, न पासइ । ( सूत्र-२६ + )

अथवा-आदेश इति-सूत्रादेशस्तस्मात्सूत्रादेशात्सर्वद्रव्याणि धर्मास्तिकायादीनि जानाति, नतु साक्षात्सर्वाणि पश्यति । नं० ।

आएसो त्ति य सुत्तं, सुओवलद्धेसु तस्स मइनाणं ।
पसरइ तब्भावणया, विणा सुत्ताणुसरेणं ॥ ४०५ ॥

अथवा-आदेशः सूत्रमुच्यते, तेन सूत्रादेशेन सूत्रोपलब्धेष्वर्थेषु तस्य मतिज्ञानिन. सर्वद्रव्यादिविषयं मतिज्ञान प्रसरति । विशे० ।

अङ्गोपाङ्गादिसूत्रेष्वबद्धा ये भावा.—पदार्था ज्ञानिभिः प्रकाशिताश्च ते कस्य तीर्थकरस्य समये कियन्त आदेशा उच्यते-

एवं बद्धमबद्धं, आएसाणं हवंति पंच सया ।
जह एगा मरुदेवा, अचंतं थावरा सिद्धा ॥१०२३॥

एवम्-अनन्तरोक्तप्रकारं सर्वे(बद्धं)लोकोत्तरं श्रुतम् । लौकिकं त्वारण्यकादि द्रष्टव्यम् । अबद्धं पुनरादेशानां भवन्ति पञ्च शतानि, किंभूतानीत्यत आह-यथैका-तस्मिन् समये अद्वितीया मरुदेवी-ऋषभजननी अत्यन्तस्थावरा-अनादिवनस्पतिराशेरुद्धृत्य सिद्धा-निष्ठितार्था संजाता । उपलक्षणमेतत् अन्येषामपि स्वयंभूरमणजलधिमत्स्यपद्मपत्राणा वलयव्यतिरिक्तसकलसंस्थानसंभवादीनामिति, लौकिकमप्यनिबद्धं वेदितव्यम् । अट्टिकाप्रत्यट्टिकादिकरणं ग्रन्थाऽनिबद्धत्वात् । अत्र वृद्धसंप्रदाय.-

"आरुहए पवयणे पंच आएससयाणि जाणि अणिबद्धाणि, तत्थेगं मरुदेवा णवि अगे ण उवगे पाढो अत्थि, जहा-अच्चतं थावरा होइऊण सिद्धत्ति, बिइय सयभुरमणे समुद्दे मच्छाणं पउमपत्ताण य सव्वसंठाणाणि अत्थि वलयसठाण मोत्तुं, तइयं विण्हुस्स सातिरेगजोयणसयसहस्सविउव्वणं, चउत्थं करडओकुरुडा दोसट्टियरुवज्झाया, कुणालाणयरीए निद्धमणमूले वसही, वरिसासु देवयाणुकंपणं, नागरेहिं निच्छुहणं, करडेण रूसिएण वुत्तं-' वरिस देव ! कुणालाए, ' उक्कुरुडेण भणियं-' दस दिवसाणि पंच य ' पुणरवि करडेण भणियं-' मुट्ठिमेत्ताहिं धाराहिं ' उक्कुरुडेण भणियं-' जहा रत्तिं तहा दिवं ' एवं वोत्तूणमवक्कंता, कुणालाएवि पण्णरसदिवसअणुबद्धवरिसेणं सजाणवया ( सा ) जलेण उक्कता तओ ते तइयवरिसे साएए णयरे दोऽवि कालं काऊण अहे सत्तमाए पुढवीए काले णरगे वावीससागरोवमट्ठिईआ णेरइया संवुत्ता । कुणालाणयरीविणासकालाओतेरसमे वरिसे महावीरस्स केवलणाणसमुप्पत्ती । एवं अनिबद्धं, एवमाइ पंचाऽऽएससयाणि अबद्धाणि । एवं लोइयं अबद्धकरणं वत्तीसं अट्टियाओ वत्तीसं पच्चट्टियाओ सोलस करणाणि, लोगप्पवाहे पंचट्ठाणाणि,तंजहा-आलीढं, पच्चालीढं,वइसाहं मंडल, समपयं । तत्थालीढ दाहिणं पाय अग्गओहुत्तं काउं वामपायं पच्छओहुत्त ओसारेइ, अंतरं दोण्हवि पायाणं पंचपाया, एवं चेव विवरीयं पच्चालीढ, वइसाहं पण्हीओ अब्भितराहुत्तीओ समसेढीए करेइ, अग्गिमयलो बहिराहुत्तो, मडलं दोवि पाए दाहिणवामहुत्ता ओसारत्ता ऊरुणोवि आउटावेइ जहा मंडलं भवइ, अंतरं चत्तारि पया, समपायं दोवि पाए सम निरंतरं ठवेइ, एयाणि पंचट्ठाणाणि, लोगप्पवाए ( हे ) सयणकरणं छट्ठ ठाणं, इत्यलं विस्तरेण । आव० १ अ० । ( सूत्रस्यादेशत्वे बहुवक्तव्यता 'आभिणिबोहियणाण' शब्देऽस्मिन्नेव भागे वक्ष्यते )

एष्य—त्रि० । आगमिष्यति , सूत्र० । "आएसा वि भवंति सुव्वया " ( २०४ ) । आगमिष्यांश्च ये भविष्यन्ति । सूत्र० १ श्रु० २ अ० ३ उ० ।

आवेश—पुं० । आविशतीत्यावेशः यस्मिन् स्थाने प्रविष्टे सागारिकस्याऽऽयासो जन्यते स आवेश । ज्ञातिके, स्वजने, सुहृदि , प्रभौ , परतीर्थिके च । व्य० ।

भाष्यकृदादेशशब्दव्याख्यानमाह—

आयासकरो आए-सितो उ आवेसणं व आविसइ ।
सो नायगो सुही वा,पभू व परतित्थितो वाऽवि ॥ २ ॥

आयासकर आदेश आदिशनीत्यादेशः इति व्युत्पत्ते', आदिशिनो वा आदेश । आदेश्यते सत्कारपुरस्सरमाकार्यत इत्यादेशव्युत्पत्ते. । अथवा-आवेश इति संस्कारस्तत्र व्युत्पत्तिमाह—आवेशन वाशब्द शब्दसंस्कारापेक्षया विकल्पने , आविशतीत्यावेश आवेशनं नाम यस्मिन् स्थाने प्रविष्टेन सागारिकस्याऽऽयासो जन्यते, स आदेश ,आवेशो वा नाम ज्ञातिक.-स्वजन सुहृद्वा-मित्रं प्रभुर्वा-नायक. परतीर्थिको वाऽपि । व्य० ६ उ० । आ-विश-घञ् । अहङ्कारभेदे, संरम्भे, अभिनिवेशे, आसङ्गे, अनुप्रवेशे, यथा भूताऽऽवेशः । ग्रहभये, भूताद्यावेशरोगे च । वाच० ।

आएसकारिन्—आदेशकारिन्-पुं० । आज्ञाकारिणि , कौटुम्बिकादौ , " कोडुंबियपुरिसे सद्दावेंति " (सूत्र-१०४) कौटुम्बिकपुरुषान्-आदेशकारिण. । ज्ञा० १ श्रु० १ अ० ।

आएसग (य)-आदेशक-त्रि०। आदिशति । आ-दिश् धा०-ण्वुल् । आदेशकारके, आज्ञाकारके, वाच० । आदिश्यते-यस्मिन्नागते संभ्रमेण परिजनस्तदासनदानादिव्यापारे स आदेशक । प्राघूर्णके, सूत्र० २ श्रु० १ अ० ।

आएसग्ग-आदेशाग्र-न०। आदिश्यते इत्यादेशो-व्यापार-नियोजना । अग्रशब्दोऽत्र परिमाणवाची , तत्र च यत्र परिमितानामादेशो, दीयते तदादेशाग्रम् । ( आचा० ) । आदिश्यते इत्यादेशो निर्देश इत्यर्थ आदेशानाग्रं आदेशाग्रम् । नि० चू० १ उ० । परिमितानामादेशे, तद्यथा-त्रिभि पुरुषै कर्म्म कारयन्ति तान्वा भोजयति । आचा० २ श्रु० १ चू० १ अ० १ उ० ।

गाहा—

आदेसग्गं पंचगु-लादि जं पच्छिमं तु आदिसति ।
पुरिसाण व जेयंते , भोयणकम्मादिकज्जेसु ॥ ५३ ॥

आदिश्यते इति आदेशो, निर्देश इत्यर्थ । तेण आदेसेण अग्गं आदेसग्गं, तत्थुदाहरणं पंचगुलादि, पचण्हं अंगुलीदव्वाण कम्मट्ठिताण जदि पच्छिमं आदिसति तं आदेसग्गं भवति आदेसकारणं इम भोयणकाले जहा सत्तट्ठाणे बहुआण कम्मट्ठिताण इमं बहुयं भोजयसु त्ति (आदिसति) एव कम्माइकज्जेसु वि नेयं । गयं आदेसग्ग । नि० चू० १ उ० ।

आवेशन-न०। आ-विश आधारे ल्युट् । वाच० । लोहकारादिशालायाम् । आचा० २ श्रु० १ चू० २ अ० २ उ० । तानि चायस्कारकुम्भकारादिस्थानानि येषु लोका आविशन्ति । औ० । शिल्पशालायाम् , तत्र हि मनोऽभिनिवेशेन च कार्य्यकरणात्तस्यास्तथात्वम् । भूतावेशादिरोगे , कोपादौ, वाच० ।

आएसपर-आदेशपर-त्रि० । आदिश्यते-आज्ञाप्यते इत्यादेश । य कस्यांचित्क्रियाया नियोज्यते कर्म्मकरादि स चासौ परश्चादेशपर । कस्याचित्क्रियायां नियुक्ते कर्म्मकरादौ, आचा० २ श्रु० २ चू० ६ अ० ।

भोअणपिसणमादी-सु एगखेत्तट्ठियं तु जं पच्छा ।
आदिसइ भुंजऊणसु, व आएसपरो हवइ तत्थ ॥५८३॥

एतद्व्याजन प्रतीत, पेषण-व्यापारेण तदादिषु कारणेषु यं कञ्चन पुरुषमेकस्मिन् क्षेत्रे स्थितमपि पश्चात्पर्यन्ते आदिशति-यथा, भुङ्क्ष्व-भोजन विधेहि, कुरु वा कृष्यादिकर्म्म, एप आदेशपरो भवति आदेश-आज्ञापनं तदाश्रित्य पर पाश्चात्य आदेशपर । बृ० १ उ० ३ प्रक० ।

आएसभत्त-आदेशभक्त-न० । आएसो-पाहुणगो आगतो तस्स भत्तं आदेसभक्तम् । प्राघूर्णकभक्ते । नि० चू० ६ उ० । ( 'एतद्व्याख्या' 'भत्त' शब्दे ५ पञ्चमे भागे करिष्यते )

आएससव्व-आदेशसर्व-पुं०। आदेशनमादेश -उपचारो व्यवहार । स च बहुतर प्रधाने चाऽऽदिश्यते, देशेऽपि यथा-विवक्षित घृतमविमम्मीक्ष्य बहुतरे भुक्ते, स्तोके च शेषे उपचार क्रियते-'सर्वं घृतं भुक्त' प्रधानेष्वप्युपचार क्रियते, यथा-ग्रामप्रधानेषु गतेषु पुरुषेषु " सर्वो ग्रामो गत" इति व्यपदिश्यते इति। आदेशत सर्वमादेशसर्वमुपचारसर्वमित्यर्थ । स्था० ४ ठा०२ उ०। उपचारेण सर्वस्मिन् स्था०४ ठा०२ उ०। आ०म०।

आदेशसर्वस्य स्वरूपम्—

आएसो उवयारो, सो बहुतरए पहाणतरए वा ।
देसे वि जहा सव्वं, भत्तं भुत्तं गओ गामो ॥ ३४८८ ॥

आदेश -उपचार स च बहुतर-प्रधानतरे वा आदेशोऽपि सर्वतया प्रवर्त्तते, तद्यथा-परिगृहीतं भक्तमध्याद्बहुतरे भुक्ते सति आदिश्यते-सर्वमनेन भुक्तमिति । प्रधानेतराऽऽदेशे च कतिपयपुरुषेषु गतेषु शेषेष्ववतिष्ठमानेष्वप्योदिश्यते, लोके यथा-"गत सर्वो ग्राम" । विशे० ।

आएसिन्-आदेशिन्-त्रि० । आदिशति । आ-दिश् णिनि । आदेशकारके, वाच० । अभिलाषिणि, " वण्णादेसी णारभे कंचण (सूत्र-१५४ ×) । वर्ण -साधुकारस्तदादेशी वर्णादेशी-वर्णाभिलाषी सन्नारभते कञ्चन । आचा० १ श्रु० ५ अ० ३ उ० ।

आएसिय-आदेशिक-त्रि०। उपदेष्टरि, सूत्र०।

( सम्यग्ज्ञानवतामुपदेष्टॄणां गुणानाविर्भावयन्नाह )—

लोयं विजाणंति हे केवलेणं,
पुन्नेण णाणेण समाहिजुत्ता ।
धम्मं समत्तं च कहंति जे उ,
तारंति अप्पाण परं च तिन्ना ॥ ५० ॥

सूत्र० २ श्रु० ६ अ० । ( अस्या गाथाया व्याख्या ' अद्दगकुमार ' शब्दे १ प्रथमभागे ५५६ पृष्ठे गता ) आदेशितो वा आदेश आदेशात्सत्कारपुरस्सरमाकार्यते इत्यादेश इति व्युत्पत्ते । (व्य०) आदेश, ( नायकादौ प्राघूर्णके ) । व्य० ६ उ० ।

आओग-आयोग-पुं० । आ युज घञ् । गन्धमाल्योपहारे, व्यापारे, रोधे, सम्यक् सम्बन्धे च । वाच० । द्विगुणादिलाभे, स्था० ८ ठा० ३ उ० । द्विगुणादिवृद्ध्याऽर्थप्रदाने च । भ० २ श० ५ उ० । परिकरे, "भीमसंगामिअ आओगं" ( सूत्र ) । भीम -सांग्रामिक आयोग -परिकरो यस्य । ज्ञा० १ श्रु० १६ अ० ।

आओगपओग-आयोगप्रयोग-पुं० । आयोगस्य-अर्थलाभस्य प्रयोगा-उपाया । औ० । आयोगेन द्विगुणादिलाभेन द्रव्यस्य प्रयोगोऽधमर्णानां दानम् । स्था० ८ ठा० ३ उ० । द्रव्योपार्जनोपायविशेषे , स्था० ६ ठा० ३ उ० । द्विगुणादिवृद्ध्याऽर्थप्रदाने , कालान्तरे प्रयोगे च । भ० २ श० ५ उ० ।

आओगपओगसपउत्त-आयोगप्रयोगसम्प्रयुक्त-त्रि०। आवाहनविसर्जनकुशले , रा० । आयोगो द्विगुणादिवृद्ध्यार्थप्रदानं प्रयोगश्च कालान्तरितौ सम्प्रयुक्तौ व्यापारितौ यैस्ते तथा । भ० २ श० ५ उ० । आयोगप्रयोगा-द्रव्योपार्जनोपायविशेषा सम्प्रयुक्ता -प्रवर्त्तिता येन स तथा , स्था० १ ठा० । आयोगस्य-अर्थलाभस्य प्रयोगा-उपाया संप्रयुक्ता-व्यापारिता येन तेषु वा सम्प्रयुक्तो व्यापृतो य स । ज्ञा० १ श्रु० १ अ० । औ० । प्रवर्त्तितद्रव्योपार्जनोपायविशेषे , स्था० ६ ठा० ३ उ० । द्रव्योपार्जनोपायविशेषेषु प्रवृत्ते च । ज्ञा० १ श्रु० १ अ० । आयोगेन द्विगुणादिलाभेन द्रव्यस्य प्रयोग -अधमर्णानां दानम् तत्र सम्प्रयुक्तानि-व्यापृतानि

तेन वा संप्रयुक्तानि-संगतानीति। स्था० ८ ठा० ३ उ०। द्विगुणादिलाभेन द्रव्यप्रयोगेषु व्यापृते, द्विगुणादिलाभार्थम् द्रव्यप्रयोगेण संगते च। स्था० ८ ठा० ३ उ०।

आंबुरिगाम-आंबुरिग्राम-पुं०। अशीतितीर्थजिनान्तर्गतश्रीमतिदेवजिनाधिष्ठिते ग्रामविशेषे, आबुरिग्रामे श्रीमतिदेवः। ती० ४३ कल्प।

आकंखा-आकाङ्क्षा-स्त्री०। आ-काङ्क्ष-अङ्। अभिलाषे, न्यायमते, वाक्यार्थज्ञानहेतौ, यत्पदं विना यत्पदस्यानन्वयस्तत्पदे तत्पदवत्स्वरूपे संबन्धे, पदान्तरव्यतिरेकेणान्वयाभावे च। वाच०। वाञ्छायाम्, षो०१५ विव०। (अभिलाषायाम्) आचा० १ श्रु० ५ अ० ६ उ०। "तत्तत्त्वं यद् दृष्ट्वा, निवर्त्तते दर्शनाऽऽकाङ्क्षा" ॥१२॥ दर्शनाकाङ्क्षा-दर्शनवाञ्छा। षो० १५ विव०।

आकंदमाण-आक्रन्दत्-त्रि०। आक्रन्दशब्दं कुर्वति, विपा० १ श्रु० ६ अ०।

आकंप-आकम्प-पुं०। आवर्जने, स्था० १० ठा० ३ उ०। व्य०। ध०। आराधने, व्य० १ उ०। आ-ईषदर्थे, कपि घञ्। ईषत्कम्पे, वाच०।

आकंपइत्ता-आकम्प्य-अव्य०। आराध्येत्यर्थे, व्य० १ उ०। आवर्ज्येत्यर्थे, ध० २ अधि०। स्था०। (आकम्पालोचनो हि आलोचकस्य दशसु दोषेषु प्रथमो दोषः 'आलोयणा' शब्देऽत्रैऽस्मिन्नेव भागे द्रष्टव्यः।)

आकंपइत्तु-आकम्प्य-अव्य०। आवर्ज्येत्यर्थे, स्था० १० ठा० ३ उ०।

आकंपण-आकम्पन-न०। आराधने, आवर्जने च। व्य० १ उ०। ध०। आकम्पने, आ-कपि-युच्। ईषत्कम्पनशीले, त्रि०। भावे ल्युट्। ईषत्कम्पे, न०। आ-कपि-णिच्-ल्यु०। ईषच्चालके, त्रि०। तत एव भावे ल्युट्। ईषच्चालन, न० वाच०।

आकड्ढ-आकर्ष-पुं०। अभिमुखमाकर्षणे, प्रश्न०१ आश्र०द्वार। नि० चू०।

आकड्ढण-आकर्षण-न०। अभिमुख कर्षणमाकर्षणम्। अभिमुखकर्षणे, प्रश्न० १ आश्र०द्वार। "आकड्ढणमाकसणं" अप्पणो तेण आगड्ढणमागसणं"। नि० चू० १८ उ०।

आकड्ढविकड्ढ-आकर्षविकर्ष-पु०। द्वि०। अभिमुखकर्षणविपरीतकर्षणयोः, 'आकड्ढविकड्ढ' (सूत्र-४×)। आकृष अभिमुखं कर्षणं कुरु। वि-कृष विपरीत कर्षणं कुरु। प्रश्न० १ आश्र० द्वार।

आकड्ढविकड्ढिया-आकर्षविकर्षिका-स्त्री०। अभिमुखमाकृष्टस्य विपरीतकर्षणे, प्रश्न० १ आश्र० द्वार। "आकड्ढविकड्ढिं करेमाणे" (सूत्र-५५६+)। भ० १५ श०। नि० चू०।

आकण्णन-आकर्णन-न०। श्रवणे, आचा० १ श्रु० १ अ० १ उ०। ध०र०। (एतद्वक्तव्यता 'सवण' शब्दे सप्तमे भागे द्रष्टव्या) आ-कर्णि-ल्युट्। श्रवणे, 'मुदा तदाकर्णनतत्परोऽभूत्।" नैष०। वाच०।



आकण्णिय-आकर्णित-त्रि०। श्रुते, आचा० १ श्रु० १ अ० १ उ०।

आकम्हिय-आकस्मिक-त्रि०। अकस्मादित्यव्यय कारणाभाव कारणं विना भव। विनया० ठक् टिलोप। अकस्माद्भवे, स्त्रियां ङीप्। वाच०। अकस्मादेव यद्भवति तदाकस्मिकम्। विशे०। निर्युक्तिके, आचा० १ श्रु० ८ अ० १ उ०। अहेतुके, विशे०।

वज्झनिमित्ताभावा, जं भवमाकम्हियं तं ति ॥३४५१॥

यत्तु वाह्यनिमित्ताभावात्-अकस्मादेव भवति तदाकस्मिकम्। विशे०। (एतद्वक्तव्यता 'सभाव' शब्दे सप्तमभागे करिष्यते)

आकि(गि)इ-आकृति-स्त्री०। आ-कृत्-क्तिन्। "इत्कृपादौ" ॥ ८। १। १२८॥ इति हैमप्राकृतसूत्रेणेत्वम्। प्राकृतत्वात्तकारलोप। प्रा०। आक्रियते-व्यज्यते जातिरनया। करणे क्तिन्। जातिव्यञ्जकेऽवयवसंस्थानभेदे, "आकृतिग्रहणा जाति" महाभा०। जात्याकृतिव्यक्तयस्तु पदार्थाः। गौ० सू० ॥ वाच०। आकारे, आ० म० १ अ०। ज्ञा०। सस्थान, नयो०। 'आगार त्ति वा आग त्ति वा सठाणं ति वा एगट्ठा' आ० चू० १ अ०। आकृतिशब्देन प्राण्यवयवानां पाण्यादीना तदवयवानां चाङ्गुल्यादीनां संयोगोऽभिधीयते। तथा च सूत्रम्-' आकृतिर्जातिलिङ्गाख्या" (न्यायद० अ० २ आ० २ सू० ६७) इति अस्य भाष्यम्। (सम्म० १ काण्ड २ गाथाटी०। ('सद्द' शब्दे सप्तमे भागे विस्तरत प्रतिपादयिष्यते) (अस्या शब्दार्थत्वविचार 'आगम' शब्दे ऽस्मिन्नेव भागे करिष्यते) रूपं, "यत्राकृतिस्तत्र गुणा वसन्ति" आचा० १ श्रु० १ अ० १ उ०।

आकिइमंत-आकृतिमत्-त्रि०। प्रशस्तस्वरूपोपेते, "जो वि अगीतो वि आगइमंतो" (६७×)। अगीतार्थोऽपि आकृतिमान्-रूपेण मकरध्वजतुल्य स गणधरपदे निवेश्यते। व्य० ३ उ०।

आकिंचणिय-आकिंचन्य-न०। अकिञ्चनस्य भाव ष्यञ्। दरिद्रतायाम्। वाच०। नाऽस्य किञ्चन द्रव्यमस्तीत्यकिञ्चनस्तस्य भाव आकिञ्चन्यम्। प्रव० ६६ द्वार। पो०। ध०। कनकादिरहिततायाम्, पञ्चा० ११ विव०। आकिंचणियं-नत्थि जस्स किंचण सो अकिंचणो तस्स भावो आकिंचणियं, कंमनिज्जरट्ठ सदेहादिसु विणस्समेण भवितव्वं। आ० चू० ४ अ०।

आकिंचणियव्वय-आकिञ्चन्यव्रत-न०। पञ्चमे महाव्रते, ध०।

परिग्रहस्य सर्वस्य, सर्वथा परिवर्जनम्।
आकिञ्चन्यं व्रतं प्रोक्त-मर्हद्भिर्हितकाङ्क्षिभिः॥ ४४॥

सर्वस्य-सचित्ताऽचित्तादिविषयस्य द्रव्यक्षेत्रकालभावविषयस्य वा परिग्रहस्य-मूर्च्छाभावस्य सर्वथा त्रिविधे त्रिविधेन परिवर्जन-त्याग तत् आकिञ्चन्यव्रत, न विद्यते किंचन द्रव्य यस्यासावकिञ्चनस्तस्य भाव आकिञ्चन्यं तच्च तद्व्रत चेति समास, अपरिग्रहव्रतमित्यर्थ। प्रोक्तं-प्रज्ञप्त कैरर्हद्भि-र्जिनै किंविशिष्टैस्तै-र्हितकाङ्क्षिभि-र्हितेच्छुभिरिति शब्दार्थ। ध०३ अधि०।

आकीलवास-आक्रीडावास-पुं० । गौतमद्वीपस्थसुस्थितल-वणाधिपतेरत्यर्थक्रीडावासे भौमेयविहारे, जी० । ( तद्वक्तव्यता 'गोयमदीव' शब्दे तृतीय भागे वक्ष्यते )। जी० ३ प्रति० ४ अधि० ।

आकुट्ठ-आक्रुष्ट त्रि० । आ-कुश-क्त । कृताक्रोश, यं प्रति आक्रोश कृतस्तस्मिन् शब्दिते, निन्दिते च । भावे क्त । पुरुषभाषणे न० । मार्ज्जारमूषिकास्पर्शे आक्रुष्टे क्रोधसम्भवे' । कात्या० । आक्रुष्ट, परुषभाषणे वाच० । वाग्भिराक्रुष्ट आचा०१ श्रु०६ अ०३ उ० । आक्रुष्टेन मतिमता तत्त्वार्थविचारणे मतिः कार्या ॥ यदि सत्यं कः कोपः , स्यादनृतं किं नु कोपेन ॥ १ ॥' सूत्र० १ श्रु० १४ अ० ।

आकूय-आकूत-न० । आ-कू-भावे क्त । आशय , अभिप्राये वाच० । अभिप्रेते वस्तुनि, विशे० । भावे च । विशे० ।

आकेवलिय-आकेवलिक-पुं० । न केवलमकेवलं तत्र भवा आकेवलिका । सद्वन्द्वे , ( सप्रतिपक्षे ) असम्पूर्णे च । ' आकेवलिएहिं" (सूत्र-२८२+)। आचा०१ श्रु० ६ अ०२उ० ।

आकोसायंत-आकोशायमान-त्रि० । आकोशायते इत्याकोशायमानम् । विकचीभवति कमलादौ , जी० । " आकोसायंतपउमगंभीरवियडा (सूत्र-१९७×)। आकोशायते इत्याकोशायमानं विकचीभवदित्यर्थः । पद्मं तद्वद्गम्भीरा विकटा च नाभिर्येषां ते । जी० ३ प्रति० ४ अधि० ।

आखंडल-आखण्डल-पुं० । आखण्डयति भेदयति पर्वतान् आ-खडि-डलच् डस्य नेत्त्वम् । इन्द्रे, वाच० । " अ (आखं) खंडलो सुरवइ पुरंदरो वासवो सुणासीरो ।' ( २३+) पाइ० ना० २३ गाथा । ( अस्य वक्तव्यता 'सक्क' शब्दे सप्तमभागे वक्ष्यते ) ।

आगइ-आगति-स्त्री० । आगमनमागतिः नारकत्वादेरेव प्रज्ञापकप्रत्यासन्नस्थाने प्रतिनिवृत्तौ, ( आगमने ) स्था० १ ठा० । कल्प० । ' गइं च जो जाणइ ऽणागइं च " ( २०+) । यश्च जीवानामागतिम्-आगमनम् कुतः समागता नारकास्तिर्यञ्चो मनुष्या देवा । सूत्र० २ श्रु० १२ अ० । ' एगस्स जंतो गतिरागती य । ' (१८×) । आगति -आगमनं भवान्तरादुपजायते कर्मसहायस्यैव । सूत्र० २ श्रु० १३ अ० । उत्पत्तौ स्था० ७ ठा० ३ उ० । "एगा आगती ' ( सूत्र-४३+ ) । आगमनम्-आगतिर्नारकत्वादेरेव प्रतिनिवृत्तिस्तदेकत्वं गतेरिवेति । स्था० १ ठा० ।

नैरयिकाणां दण्डकक्रमेण गत्यागती—

नेरइया दुगइया दुयागइया पन्नत्ता, तं जहा-नेरइए नेरइएसु उववज्जमाणे मणुस्सेहिंतो वा पंचिंदियतिरिक्खजोणिएहिंतो वा उववज्जेज्जा । से चेव णं से नेरइए नेरइयत्तं विप्पजहमाणे मणुस्सत्ताए वा पंचिंदियतिरिक्खजोणियत्ताए वा गच्छेज्जा । एवं असुरकुमारा वि, णवरं चेव णं से असुरकुमारे असुरकुमारत्तं विप्पजहमाणे माणुस्सत्ताए वा तिरिक्खजोणियत्ताए वा गच्छेज्जा । एवं सव्वदेवा , पुढविकाइया दुगइया दुयागइया पन्नत्ता , तं जहा-पुढविकाइए पुढविकाइएसु उववज्जमाणे पुढविकाइएहिंतो वा णो पुढविकाइएहिंतो उववज्जेज्जा । से चेव णं से पुढविकाइयत्तं विप्पजहमाणे पुढविकाइयत्ताए वा णो पुढविकाइयत्ताए वा गच्छेज्जा, एवं ०जाव मणुस्सा । ( सूत्र-७८ )

दण्डकः कण्ठ्यः नवरं नैरयिकाः-नारका द्वयोः -मनुष्यगतितिर्यग्गतिलक्षणयोर्गत्योरधिकरणभूतयोर्गतिर्येषां ते तथा, द्वाभ्यामेताभ्यामेवाऽवधिभूताभ्यामागति -आगमनं येषां ते तथा, उदितनारकायुर्नारक एव व्यपदिश्यते, अत उच्यते- ' नेरइए नेरइएसु ' त्ति-नारकेषु मध्ये इत्यर्थः । इह चोद्देशकमव्यत्ययात् प्रथमवाक्येनागतिरुक्ता, ' से चेव ण से ' त्ति-यो मानुषत्वादितो नरकं गतः स एवाऽसौ नारको नाऽन्यः , अनेनैकान्ताऽनित्यत्वं निरस्तमिति । 'विप्पजहमाणे ' त्ति-विप्रजहन्-परित्यजन् , इह च भूतभावनया नारकव्यपदेशः , अनेन वाक्येन गतिरुक्ता, इत्थञ्च व्याख्यानं तेजस्कायिकाद्यागतयस्तिर्यङ्मनुष्यापेक्षया एकगतयस्तिर्यगपेक्षयेति वाक्यमुपजीवयति ' एवं असुरकुमारावि' त्ति-नारकवद्वक्तव्या इत्यर्थः , 'नवरं' ति-केवलमयं विशेषः-तिर्यक्षु न पञ्चेन्द्रियेष्वेवोत्पद्यन्ते । पृथिव्यादिष्वपि तदुत्पत्तेरित्यतः सामान्यत आह-' से चेव णं से ' इत्यादि ०जाव तिरिक्खजोणियत्ताए वा गच्छेज्ज ' त्ति-' एवं सव्वदेव ' त्ति-असुरवद् द्वादशाऽपि दण्डकेऽवपदानि वाच्यानि तेषामप्येकेन्द्रियेषूत्पत्तेरिति । ' णो पुढविकाएहिंतो ' त्ति-अनेन पृथ्वीकायिकनिषेधद्वारेणाप्कायिकादयः सर्वे गृहीता द्विस्थानकानुरोधादिति, तेभ्यो वा-नारकवर्जेभ्यः समुत्पद्यते । ' णोपुढविकाइयत्ताए' त्ति-देवनारकवर्जाऽप्कायादितया गच्छेदिति, ' एव ०जाव मणुस्से ' त्ति-यथा पृथ्वीकायिका " दुगइया " इत्यादिभिरभिलापैरुक्ता एवमेभिरेवाप्कायिकादयो मनुष्याऽवसाना पृथ्वीकायिकशब्दस्थानेऽप्कायादिकव्यपदेशं कुर्वद्भिरभिधातव्या इति । व्यन्तरादयस्तु पूर्वमतिदिष्टा एवेति । स्था० २ ठा० २ उ० । ( ' उववाय ' शब्देऽस्मिन्नेव भागे आगतिः कुत उत्पद्यत इत्यादि वक्ष्ये )

एकेन्द्रियादीनां गत्यागती—

एगिंदिया पंचगइया पंचाऽऽगइया पण्णत्ता, तं जहा-एगिंदिए एगिंदिएसु उववज्जमाणे एगिंदिएहिंतो वा ०जाव पंचेंदिएहिंतो वा उववज्जेज्जा । से चेव णं से एगिंदिए एगिंदियत्तं विप्पजहमाणे एगिंदियत्ताए वा ०जाव पंचेंदियत्ताए वा गच्छेज्जा । बेइंदिया पंचगइया पंचाऽऽगइया एवं चेव । एवं ०जाव पंचेंदिया पंच गइया, पंचाऽऽगइया पण्णत्ता, तं जहा-पंचेंदिया ०जाव गच्छेज्जा ।(सूत्र-४५८+) स्था० ५ ठा० ३ उ० ।

पृथ्वीकायिकादीनां गत्यागती—

पुढविकाइया छ गइया, छ आगइया पन्नत्ता, तं जहा-पुढविकाइए पुढविकाइएसु पुढविकाइएहिंतो वा ०जाव तसकाइएहिंतो वा गच्छेज्जा णो चेव णं से पुढविकाइए पुढ-

निकाइयत्तं विप्पजहमाणे पुढविकाइयत्ताए वा ०जाव तसकाइयत्ताए वा गच्छेज्जा । ( सूत्र-४८३× ) । स्था० ६ ठा० ३ उ० ।

अण्डजाऽऽदीना गत्यागतिप्रतिपादनाय सूत्रम्—

अंडगा सत्तगइया सत्ताऽऽगइया पण्णत्ता, तं जहा-अंडगे अंडगेसु उववज्जमाणे अंडगेहिंतो वा पोयएहिंतो वा ०जाव उब्भिएहिंतो वा उववज्जेज्जा, से चेव णं से अंडए अंडगत्तं विप्पजहमाणे अंडयत्ताए वा पोययत्ताए वा ०जाव उब्भियत्ताए वा गच्छेज्जा । पोयया सत्तगइया सत्ताऽऽगइया एवं चेव सत्तण्ह वि गइरागई भाणियव्वा ०जाव उब्भियत्ति । (सूत्र-५४३) ।

'अंडये त्यादि सूत्रसप्तकम्, तत्र सूनाना सप्तगतय अण्डजादियोनिलक्षणा यर्षा ते सप्त गतय सप्तभ्य एवाण्डजादियोनिभ्य आगतिरुत्पत्तिर्येषां ते सप्ताऽऽगतय । 'एव चेव' त्ति-यथाऽण्डजाना सप्तविधे गत्यागती भणिते तथा पोतजादिभि. सह सप्तानामप्यण्डजादिजीवभेदाना गतिरागतिश्च भणितव्या । 'जाव उब्भिय' त्ति-सप्तमसूत्र यावदिति, शेषं सुगमम् । स्था० ७ ठा० ३ उ० ।

अंडया अट्ठगइया अट्ठाऽऽगइया पण्णत्ता, तं जहा-अंडए अंडएसु उववज्जमाणे अंडएहिंतो वा ०जाव उववाइएहिंतो वा उववज्जिज्जा । से चेव णं से अंडए अंडगत्तं विप्पजहमाणे अंडगत्ताए वा पोयगत्ताए वा ०जाव उववाइयत्ताए वा गच्छेज्जा । एवं पोयया वि । जराउया वि । सेसाणं गइरागई नऽत्थि । (सूत्र-५९५+)

अट्ठविहे' त्यादि, सूत्रचतुष्टय सुगम, नवरमौपपातिका देवनारका, 'सेसाण' ति-अण्डजपोतजजरायुजवर्जिताना रसजादीना गतिरागतिश्च नास्तीत्यष्टप्रकारेति शेष, यतो रसजादयो नोपपातिकेषु सर्वेषूत्पद्यन्ते, पञ्चेन्द्रियाणामेव तत्रोत्पत्ते । नाप्यौपपातिका रसजादिषु सर्वेष्वप्युपपद्यन्ते पञ्चेन्द्रियैकेन्द्रियेष्वेव तेषामुपपत्तेरिति अण्डजपोतजजरायुजसूत्राणि त्रीण्येव भवन्तीति । स्था० ८ ठा० ३ उ० ।

पृथ्वीकायिकादीना पुनरपि गत्यागती—

पुढविकाइया नवगइया नवआगइया पण्णत्ता, तं जहा-पुढविकाइए पुढविकाइएसु उववज्जमाणे पुढविकाइएहिंतो वा ०जाव पंचिंदिएहिंतो वा उववज्जेज्जा, से चेव णं से पुढविक इए पुढविकाइयत्तं विप्पजहमाणे पुढविकाइयत्ताए ०जाव पंचिंदियत्ताए वा गच्छेज्जा । २ ॥ एवं आउकाइयाऽवि ॥ ३ ॥ ०जाव पंचिंदियत्त ॥ १० ॥ ( सूत्र-६६६× ) स्था० ९ ठा० ३ उ० ।

गत्यागतिपरिज्ञानेन कर्मक्षयम्—

आगतिं गतिं परिण्णाय दोहि वि अंतेहिं अदिस्समाणेहिं से ण छिज्जति, ण भिज्जति, ण डज्झति, ण हण्णति कचण सव्वलोए । ( सूत्र-११६× )

आगमनमागति., सा च तिर्यग्मनुष्ययोश्चतुर्धा चतुर्विधनरकादिगमनसद्भावाद्, देवनारकयोर्द्विधा-तिर्यङ्मानुष्यगतिभ्यामेवागमनसद्भावाद्देवगतिरपि मनुष्येषु तु पञ्चधा, तत्र मोक्षगतिसद्भावाद् अनन्तामागतिं गतिं वा परिज्ञाय ससारचक्रवालेऽरघट्टघटीयन्त्रन्यायं वेत्य मनुष्यत्वे मोक्षगतिसद्भावमाकलय्यान्त हेतुत्वादन्तौ रागद्वेषौ ताभ्यां द्वाभ्यामन्ताभ्यामदृश्यमानाभ्यामनपदिश्यमानाभ्यां वा, क्त्वाप्रत्ययस्योत्तरक्रियामाह-' से ' इत्यादि ' से '-आगतिगतिपरिज्ञाता रागद्वेषाभ्यामनपदिश्यमानो न छिद्यते अस्यादिना, न भिद्यते कुन्तादिना, न दह्यते पावकादिना न हन्यते नरकगत्यानुपूर्व्यादिना बहुश । अथवा-रागद्वेषाभावात्सिद्धस्यैव, तदवस्थस्य चैतानि छेदनादीनि विशेषणानि, 'कचण ' मिति—विभक्तिविपरिणामात् केनचित् सर्वस्मिन्नपि लोके न छिद्यते, नापि भिद्यते रागद्वेषोपशमादिति, तदेवमागतिगतिपरिज्ञानाद्रागद्वेषपरित्याग., तदभावाच्च छेदनादिरनारब्ध खाऽभाव ।

अपरे च सांप्रतेक्षिण कुतो वयमागता. ?, क्व यास्याम ?, किं वा तत्र न सपत्स्यते ?, नैवं भावयन्त्यत. संसारभ्रमणपात्रतामनुभवन्तीति दर्शयितुमाह—

> अवरेण पुव्विं न सरंति एगे,
> किमस्स तीयं किं वाऽऽगमिस्सं ।
> भासंति एगे इह माणवाओ,
> जमस्स तीयं व तमागमिस्सं ॥ १ ॥
> नाऽईयमट्ठं न य आगमिस्सं,
> अट्ठं नियच्छन्ति तहाऽऽगया उ ।
> विहूयकप्पे एयाणुपस्सी,
> निज्झोसइत्ता खवगे महेसी ॥ २ ॥

'अवरेण इत्यादिरूपकम्, अपरेण-पश्चात्कालभाविना सह पूर्वमतिक्रान्तं न स्मरन्ति अन्ये-मोहाज्ञानावृतबुद्धयो, यथा किमस्य जन्तोर्नरकादिभवोद्भूत बालकुमारादिवयोपचितं वा दु खादतीतं किं वाऽऽगमिष्यति आगामिनि काले किमस्य सुखाभिलाषिणो दु खद्विषो भावीति । यदि पुनरतीताऽऽगामिपर्यालोचनं स्यात्त तर्हि संसार रति स्यादिति, उक्तं च-" केण ममेत्थुप्पत्ती, कह इओ तह पुणो वि गंतव्व । जो एत्तियं पि चिंतइ, इत्थं सो को न निव्विण्णो ॥ १ ॥ एक-पुनर्महामिथ्याज्ञानिनो भाषन्ते-इहास्मिन्संसारे-मनुष्यलोके वा मानवा-मनुष्या यथा यदस्य-जन्तोरतीतं-स्त्रीपुनपुंसकसुभगदुर्भगश्वगोमायुत्राह्मणक्षत्रियविट्शूद्रादिभेदावेशात्पुनरप्यन्यजन्मानुभूतं तदेवागामिष्यम्-आगामीति । यदि वा-न विद्यते पर-प्रधानोऽस्मादित्यपर संयमस्तेन वासितचित्ता सन्त पूर्वे-पूर्वानुभूत विषयसुखोपभोगादि न स्मरन्ति-न तदनुस्मृतिं कुर्वते, एके-रागद्वेषविप्रमुक्ता, तथा नाऽऽगतदिव्याङ्गनाभोगमपि नो काङ्क्षन्ति, किंच-अस्य जन्तोरतीत सुखदु खादि किं वाऽऽगमिष्यम्-आगामीति एतदपि न स्मरन्ति, यदि वा-कियान् कालोऽतिक्रान्त कियानेष्यति लोकोत्तरास्तु भाषन्ते-एके-रागद्वेषरहिता केवलिनश्चतुर्दशपूर्वविदो वा यदस्य-जन्तोरनादिनिधनत्वा-

न्कालशरीरसुखाद्यतीतमागामिन्यपि तथैवेति, अपरे तु पठन्ति–"अवरेण पुव्वं किह से अतीतं, किह आगमिस्सं न स(म)रंति एगे । भासंति एगे इह माणवाओ, जह से अईयं तह आगमिस्सं" ॥२॥ (अस्या. १ व्याख्या)-अपरेण-जन्मादिना सार्द्धं पूर्वम्-अतिक्रान्तं जन्मादि न स्मरन्ति, कथं वा केन प्रकारेणाऽतीतं-सुखदुःखादि कथं वैष्यमित्येतदपि न स्मरन्ति, एके भाषन्ते-किमत्र ज्ञेयम् ?, यथैकस्य रागद्वेषमोहसमुत्थैः कर्मभिर्बध्यमानस्य जन्तोस्तद्विपाकांश्चानुभवत संसारस्य यदतिक्रान्तमागाम्यपि तत्प्रकारमेवेति । यदि वा-प्रमादविषयकषायादिना कर्माण्युपचित्येष्टानिष्टविषयाननुभवन सर्वज्ञवाक्सुधास्वादासंविदो यथा संसारेऽतिक्रान्तस्तथाऽऽगाम्यपि यास्यति ॥ १ ॥ ये तु पुनस्संसारार्णवतीरभाजस्ते पूर्वोत्तरवेदिन इत्येतद्दर्शयितुमाह-'नाऽईयमि' त्यादि, तथैव-अपुनरावृत्त्यागतं गमनं येषां ते तथागता -सिद्धाः, यदि वा-यथैव ज्ञेयं तथैव गतं-ज्ञानं येषां ते तथागता -सर्वज्ञाः, ते तु नाऽतीतमर्थमनागतरूपतयैव नियच्छन्ति-अवधारयन्ति नाप्यनागतमतिक्रान्तरूपतयैव, विचित्रत्वात्परिणतेः । पुनरर्थग्रहणं पर्यायरूपार्थं, द्रव्यार्थतया त्वेकत्वमेवेति । यदि वा-नाऽतीतमर्थं-विषयभोगादिकं नाऽप्यनागतं-दिव्याङ्गनासङ्गादिकं स्मरन्ति, अभिलषन्ति वा, के ? तथागता -रागद्वेषाभावात्पुनरावृत्तिरहिता, तुशब्दो विशेषमाह-यथा मोहोदयादेके-पूर्वमागामि चाभिलषन्ति, सर्वज्ञास्तु नैवमिति, तन्मार्गानुयाय्यप्येवंभूत एवेति दर्शयितुमाह-' विहूयकप्पे ' इत्यादि, विविधम्-अनेकधा धूतमपनीतमष्टप्रकारं कर्म्म येन स विधूत, कोऽसौ कल्प -आचार । विधूत कल्पो यस्य साधो स विधूतकल्प । स एतदनुदर्शी भवति अतीतानागतसुखाभिलाषी न भवतीति यावत् , एतदनुदर्शी च किं गुणो भवतीत्याह- निरुभात्यइत्ता इत्यादि पूर्वोपार्जितकर्म्मणां निर्झोषयिता-क्षपक क्षपयिष्यति वा तृजन्तमेतल्लुडन्तं वा ।

कर्मक्षपणायोद्यतस्य च धर्म्मध्यायिन शुक्लध्यायिनो वा महायोगीश्वरस्य निरस्तसंसारसुखदुःखविकल्पाऽऽभासस्य यत्स्यात्तद्दर्शयति-

का अरई के आणंदे? इत्थं पि अग्गहे चरे। (सूत्र-११७×)

इष्टाऽप्राप्तिविनाशोत्थो मानसो विकारो रति ,अभिलषितार्थावाप्तावानन्द योगिचित्तस्य तु धर्म्मशुक्लध्यानावेशात्प्रध्येयान्तरायरात्यरत्यानन्दयोरुपादानकारणाऽभावादनुत्थानमव इत्येतत्प्रदिश्यते-कथमरतिर्नाम को वाऽऽनन्द इति?, नास्त्येवमरजनतुष्णाऽप विकल्प इति । एवं तद्धारतिरसंयमे संयमे चाऽऽनन्द इत्येतदन्यत्रानुमतमनेनाभिप्रायेण न विधेयमित्येतदतिरिक्ता-प्याप्तमिति चेत् , न,अभिप्रायापरिज्ञानात् यतोऽयाऽरतिरतिविकल्पा व्यवसाया निषिषित्सिता, न प्रवृत्तायत अप्यरत्यरती , तदाह-'पत्थं पी ' त्यादि । अत्रापरत्यानन्दे योपसर्जनप्राये न विद्येते यदा गाढ्यं तात्पर्यं यस्य सो प्रा स एवभूतश्चरेद्धर्मानुष्ठानं , इदमुक्तं भवति-शुक्लध्यानादवस्थानन्तरं कुतश्चिन्निमित्तादायाते तदाग्रहप्रदर्शी तस्माद्यप्यनुवर्तेदिति । आचा० १ श्रु० ३ अ० ३ उ० । परस्परं हर्षाद्या पदार्थस्य विशेषणविशेष्यतया प्रत्यावृत्त्या-प्रातिकूल्येन गमनमागति । लक्षणविशेषे , विशे० । यथा " देवो जीव ' इत्यत्र देवत्वमनूद्य जीवत्वं पृच्छ्यते इतीह प्रत्यावृत्त्या देवपदाज्जीवपदं आगति । विशे० २१५६ गाथा । आ० म० । ( अस्या भेदादिकम् ' गइरागइलक्खण ' शब्दे तृतीयभागे वक्ष्यते )

**आगइगइविण्णाण**–आगतिगतिविज्ञान–न० । शुभाशुभपूर्वजन्मानागतजन्मना निर्णय,आगत्या-आगमनेनास्खलितेतरादियुक्तेन गतिविज्ञानम् , आगामिभवविज्ञानम् ,आगतिविज्ञानम् । स्खलितास्खलितागमनेनागामिभवविज्ञाने च । पञ्चा० । "आगइगइविन्नाण" ॥२५॥ आगतिगतिविज्ञानं-शुभाशुभपूर्वजन्मानागतजन्मना निर्णयेन कार्यम् , अथवा-गत्या-गमनेनाऽस्खलितेतरादियुक्तेन गतिविज्ञानम् , आगामिभवज्ञानमागतिविज्ञानम् , इह व्याख्याने समासितमपि गतिविज्ञानमित्येतत्पदं प्राकृतत्वेनोत्तरत्र संबन्धनीयम् । पञ्चा०२ विव० ।

**आगंतगार**–आगन्तागार–पुं० न० । आगन्तुकानां कार्पटिकादीनामावासार्थे गृहे , सूत्र० । "आगंतगारे आरामगारे, समणे उ भीते ण उवेति वासं ।" (२५+)। आगतुकानां कार्पटिकादीनामगारमागन्तागारम् । सूत्र० २ श्रु० ६ अ० ।

**आगंता**–आगन्तृ–त्रि० । आ समंताद् गन्ता । आगन्ता । सूत्र० १श्रु०२अ०१उ० । आगमनशीले, स्था०३ठा०२उ० । "आगंतारो महब्भयं" (२१×) । महाभयं पौन पुन्येन संसारपर्यटनतया नारकादिस्वभावं तु समागन्तारः-आगमनशीला भवन्ति । सूत्र० २ श्रु० ११ अ० ।

**आगंतार**–आगन्ताऽऽगार–पुं० न० । ग्रामबाह्याऽऽवासे, नि० चू० । "आगंतारो जत्थ' आगत्य विहरतीति आगंतारो जत्थ आगारा आगंतु विहरंति तं आगंतागारं गामपरिसट्ठाणंति वुत्तं भवति । आगतुगाण वा कयं अगारं आगंतागारं वाहि यावासो त्ति । नि० चू०३ उ० । आगमा-रुक्खा तहिं कतं अगारं आगंतु जत्थ चिट्ठंति आगारा तं आगंतागारं परिसंतागारण गिहभावगतत्यर्थ. । पज्जायोपवज्जा सो य चरगपरिव्वायगसक्कआजीवगमादिऽण्णगाघिधो । नि० चू०३ उ० । ( अण्णउत्थिय ' शब्दे प्रथमभागे पृष्ठ ४६४ विस्तरो गत )

**आगन्तार**–पुं० । न० । यत्र ग्रामादेर्बहिरागत्याऽऽगत्य पथिकादयस्तिष्ठन्ति तान्यागन्तागाराणि । आचा० २ श्रु०१ चू०२ अ०२ उ० । पत्तनाद्बहिर्गृहे आचा०२ श्रु०१ चू०१ अ०८ उ० । प्रसङ्गायाता आगत्य वा यत्र तिष्ठन्ति तदागन्तारं तत्पुनर्ग्रामान्नगराद्बहि स्थानम् । आचा० १ श्रु० ६ अ० २ उ० । औ० । ( तत्र अन्ययूथिकगृहस्थेभ्योऽशनादिदाननिषेध 'अण्णउत्थिय ' शब्दे प्रथमभागे गत )

**आगंतारट्ठिय**–आगन्तुकागारस्थित–त्रि० । आगन्तुकागारोषिते प्राघूर्णकादौ , वृ० ।

आगंतारट्ठियाणं , कज्जे आदेसमाइणा केइ ।
वसिउं विस्समिउं वा,छड्डिउं गया अणाभोगा ॥१०७१॥

इह यत्रागारिण आगत्याऽऽगत्य तिष्ठन्ति तदागन्तुकागारं तत्र कार्ये कारणविशेषेण स्थिताना प्रकृतस्तत्र अवतरति , कथमित्याह—आदेशप्राघूर्णकस्तथा कश्चित्पथिका आगन्तुकागारे रजन्यां वा समुपगता यावद् भोजनाय विश्रामं

कृतवन्त तत उषित्वा विश्रम्य वा किंचित् द्रव्यजातमना-भोगात्परित्यज्य गताः । बृ० ३ उ० । ( तत्र कर्तव्यता 'वसहि' शब्दे षष्ठे भागे वक्ष्यते । )

**आगंतु ( ग ) य-आगन्तुक**-त्रि० । अन्यत आगते, बृ० ४ उ० । कार्पटिकादौ, सूत्र० ।

उपसर्गमधिकृत्य—

**आगंतुगो य पीला-करो य जो सो उवसग्गो ॥ ४५ ॥**

अपरस्माद्-दिव्यादेरागच्छतीत्यागन्तुको योऽसावुपसर्गो भवति स च देहस्य संयमस्य वा पीडाकारी । सूत्र० १ श्रु० ३ अ० १ उ० । व्रणभेदमधिकृत्य- " आगंतुको य नाव्वो " आगन्तुक.-कण्टकादिप्रभव. । आव० ५ अ० ।

**आगच्छमाण-आगच्छत्**-त्रि० । प्रतिनिवर्तिनि, भ० १२ श० ६ उ० ।

**आगम-आगम**-पुं० । आ-गम्-घञ् । आगतौ, प्राप्तौ च । वाच० । " जेण आगमो होइ " ॥ ३२ × ॥ आगमो भवति-प्राप्तिर्भवति । दश० १ अ० । उत्पत्तौ, सामान्योपाये च । आगम्यते स्वत्वमनेन । स्वत्वप्रापके क्रयप्रतिग्रहादौ, वाच० । ज्ञाने, " आगमेत्ता आणवेज्जा " ( सूत्र-१५६ × ) । ज्ञात्वा-ऽऽज्ञापयेत् । आचा० १ श्रु० ५ अ० ४ उ० । " लाघवं आगममाणा" (सूत्र-१८५ ×) । लाघवम् आगमयन्-अवबुध्यमान. । आचा० १ श्रु० ६ अ० ३ उ० ।

**नायं आगमियं ति, एगट्ठं जस्स सो परायत्तो ।**
**सो पारोक्खो वुच्चइ, तस्स पएसा इमे हुन्ति ॥ २०८ ॥**

ज्ञानमागमितमित्येकार्थमेव च ज्ञानमागम इत्येकार्थमापतितम् , तत्र यस्य स आगमोऽपराधीन स प्रत्यक्ष उच्यते सचाऽवध्यादिरूप । यस्य तु परायत्त स परोक्ष उच्यते स च चतुर्दशपूर्वादि समुत्थस्तस्य परोक्षस्यागमस्य प्रदेशा , प्रतिभागा भेदा इत्यर्थ । व्य० १ उ० । ( ते च ' आगमववहार ' शब्देऽस्मिन्नेव भागे दर्शयिष्यते ) आप्तवचनादाविर्भूतमर्थसंवेदनमागम । उपचारादाप्तवचनं चेति । स्या० ३८ श्लोकटी० ।

**आप्तवचनादाविर्भूतमर्थसंवेदनमागमः इति ॥ १ ॥**

आप्तः प्रतिपादयिष्यमाणस्वरूप तद्वचनाज्जातमर्थज्ञान-मागम. । आगम्यन्ते-मर्यादयावबुध्यन्तेऽर्था अनेनेत्यागम । रत्ना० ४ परि० । शब्दार्थपरिज्ञान, नयो० ८६ श्लोक । आ-अभिविधिना सकलश्रुतविषयव्याप्तिरूपेण, मर्यादया वा यथावस्थितप्ररूपणारूपया गम्यन्ते-परिच्छिद्यन्ते अर्था येन स आगम । पुन्नाम्नि घ ॥ ५ । ३ । १३० ॥ इति करणे घप्रत्यय । आ० म० १ अ० २१ गाथा । आणज्जति अत्था जेण सो आगमो त्ति । आ० चू० १ अ० २१ गाथा । केवल-मन -पर्यायावधिज्ञाने स्था० ५ ठा० २ उ० ४२१ सूत्र । पञ्चा० । आ० म० । नं० । व्य० । ध० । जी० । आ-समन्ताद् गम्यन्ते वस्तुतत्त्वमनेनेत्यागम । श्रुतज्ञाने, आ० म० १ अ० १ गाथा । आ० चू० । सर्वज्ञप्रणीतोपदेशे, आचा० १ श्रु० ६ अ० ४ उ० १६३ सूत्र । व्य० । प्रतिविशिष्टवर्णानुपूर्वीविन्यस्तवर्णपदवाक्यसंघातात्मके आप्तप्रणीते (आचा० १ श्रु० १ अ० ३ उ० २१ सूत्र । ) गणधरादिविरचिते ( दर्श० ३ तत्त्व ६ गाथा ) द्वादशाङ्गादिरूपे ( सूत्र० १ श्रु० १ अ० १ उ० ) सिद्धान्ते , आ० म० १ अ० । ध० र० । पञ्चा० । सूत्र० । दर्श० । प्रश्न० । इहापारसंसारान्तर्गतेनाऽसुमताऽवाप्याऽतिदुर्लभं मनुजत्वं सुकुलोत्पत्तिसमग्रेन्द्रियसामग्र्याद्युपेतेनाऽर्हद्दर्शनमशेषकर्मोच्छित्तये यतितव्यम् । कर्मोच्छेदश्च सम्यग्विवेकसव्यपेक्षोऽसावप्याप्तोपदेशमन्तरेण न भवति, आप्तश्चात्यन्तिकाद्दोषक्षयात्, सचार्हन्नेव, अतस्तत्प्रणीतागमपरिज्ञाने यत्नो विधेय । आगमश्च द्वादशाङ्गादिरूप , सोऽप्यार्यरक्षितमिश्रैरैदंयुगीनपुरुषानुग्रहबुद्ध्या चरणकरणद्रव्यधर्मकथागणितानुयोगभेदाच्चतुर्धा अवस्थापित. । सूत्र० १ श्रु० १ अ० १ उ० ।

**आप्तवचनादाविर्भूतमर्थसंवेदनमागमः इति ॥१॥**

रत्ना० ४ परि० । ( अस्य सूत्रस्य व्याख्याऽस्मिन्नेव शब्दे प्रागगता ) उपचारादाप्तवचने, रत्ना० ।

ननु यथार्थसंवेदनमागम. तर्हि कथमाप्तवचनात्मकोऽसौ सिद्धान्तविदा सिद्ध इत्याशङ्कयाह —

**उपचारादाप्तवचनं चेति ॥ २ ॥**

प्रतिपाद्यज्ञानस्य ह्याप्तवचनं कारणमिति कारणे कार्योपचारात्तदप्यागम इत्युच्यते । रत्ना० ४ परि० । स्या० । अनु० । दर्श० । दश० । आ० चू० । वचने , यो० विं० । सूत्रे , आगमश्च वन्दनकसूत्रादिकम् । आव० ४ अ० । श्रुतिस्मृत्यादिके , उत्त० २५ अ० । आ-मर्यादाभिविधिभ्या परिच्छिद्यन्ते अर्था अनेनेत्यागम. । चतुर्दशकदशकनवमपूर्वं च । पञ्चा० १६ विव० । शेषं-श्रुतमाचारप्रकल्पादिकं श्रुतं नवादिपूर्वाणा श्रुतत्वेऽप्यतीन्द्रियार्थज्ञानहेतुत्वेन सातिशयत्वादागमव्यपदेश केवलवद् । स्था० ५ ठा० २ उ० ।

आगमव्यवहारिणमधिकृत्योक्तम्—

**केवलमणो हि चोद्दस. दस नव पुव्वी उ नायव्वो ॥ १३५ ॥** व्य० १ उ० ।

( चतुर्दशक दशक नवमपूर्वस्यागमत्वं, तदितरस्य श्रुतत्वं ) श्रुतव्यवहारश्चाचाराङ्गादीनामष्टपूर्वान्तानामेव यदुक्तम्-'आयारपकप्पाई, सेसं सव्वं सुयं विणिद्दिट्ठं ।" अत्राह कश्चित्-किमष्टपूर्वान्तमेव श्रुत, नवमपूर्वादीना न श्रुतत्वम् , उच्यते-आगम्यन्ते-परिच्छिद्यन्ते अतीन्द्रिया . पदार्था येन स आगम इति व्युत्पत्ते , नवमपूर्वादीना श्रुतत्वाविशेषे केवलज्ञानादिवदतीन्द्रियार्थेषु विशिष्टज्ञानहेतुत्वेन सातिशयत्वादागमत्वेनैव व्यपदेश शेषश्रुतस्य तु नाऽतीन्द्रियार्थेषु तथाविधोऽवबोधस्ततोऽस्मिन्श्रुतव्यवहार । जीत० । व्य० । आगम्यन्ते परिच्छिद्यन्ते अर्था अनेनेत्यागम । प्रमाणभेदे, स्था० । स च आप्तवचनसम्पाद्यो विप्रकृष्टार्थप्रत्यय । उक्तञ्च-

" दृष्टेष्टाव्याहताद्वाक्यात् , परमार्थाभिधायिना ।
तत्त्वग्राहितयोत्पन्न , मान शाब्द प्रकीर्तितम् ॥ १ ॥
आप्तोपज्ञमनुल्लङ्घ्य-मदृष्टेष्टविरोधकम् ।
तत्त्वोपदेशकृत्सार्थं , शास्त्रं कापथघट्टनम् " ॥ २ ॥ इति । स्था० ४ ठा० ३ उ० ।

विषयसूचनार्थमधिकाराङ्का —

(१) आगमभेदा ।
(२) आगमस्य स्वतः प्रामाण्यम् ।
(३) आगमस्य पौरुषेयत्वम् ।
(४) आगमश्चाऽऽप्तप्रणीत एव प्रमाणम् ।
(५) सम्यग्दृष्टिपरिग्रहस्यैवाऽऽगमस्य प्रामाण्यं, न वेदस्यैव ।
(६) मूलाऽऽगमप्रामाण्यम्, नेतराऽऽगमप्रामाण्यम् ।
(७) प्रमाणान्तराविषय एवाऽऽगमविषयः ।
(८) आगमप्रमाणस्यानुमानप्रमाणेऽन्तर्भावः ।
(९) आगमप्रामाण्ये संवादित्वम् ।
(१०) शब्दस्य बाह्यार्थप्रामाण्यम् ।
(११) अपोह शब्दार्थ इति बौद्धाः ।
(१२) अर्थः किंस्वरूपः ।
(१३) वाच्यवाचकभावः ।
(१४) वाचकरूपस्य शब्दस्य विचारः ।
(१५) स्फोटः शब्दः । (इति 'फोड' शब्दे ५ भागे वक्ष्यते ।)
(१६) जैनानां वाचकः शब्दः ।
(१७) शब्दनित्यत्वविचारः ।
(१८) शब्दार्थयोः सम्बन्धः ।
(१९) शब्दार्थयोर्वाच्यवाचकभावः सम्बन्धः ।
(२०) आगमद्वैविध्यम् हेतुवादाऽहेतुवादभेदात् ।
(२१) आगमस्य सर्वव्यवहारनियामकत्वम् ।
(२२) आगमस्यैव प्रामाण्यम् धर्ममार्गे, मोक्षमार्गे च ।
(२३) जिनाऽऽगमस्यैव सत्यत्वम् ।
(२४) जिनाऽऽगमपूजासत्कारः ।
(२५) आगमशब्दस्य अर्थान्तराणि ।

(१) आगमभेदाः —

से किं तं आगमे ? आगमे दुविहे पण्णत्ते, तं जहा-लोइए अ, लोउत्तरिए अ । से किं तं लोइए ?, लोइए जण्णं इमं अण्णाणिएहिं मिच्छादिट्ठीएहिं सच्छंदबुद्धिमइविगप्पिअं । तं जहा-भारहं, रामायणं ०जाव चत्तारि वेआ संगोवंगा । से तं लोइए आगमे । से किं तं लोउत्तरिए ?, लोउत्तरिए-जण्णं इमं अरिहंतेहिं भगवंतेहिं उप्पण्णणाणदंसणधरेहिं तीयपच्चुप्पण्णमणागयजाणएहिं तिलुक्कवहिअमहिअपूइएहिं सव्वण्णूहिं सव्वदरिसीहिं पणीअं दुवालसंगं गणिपिडगं, तं जहा-आयारो ०जाव दिट्ठिवाओ । ( सूत्र-१४७ × )

'से किं तं आगमे' इत्यादि गुरुपारम्पर्येणागच्छतीत्यागमः, आ-समन्ताद्गम्यन्ते-ज्ञायन्ते जीवादयः पदार्था अनेनेति वा आगमः, अयं च द्विधा प्रज्ञप्तः । अनु० । भ० श० ।

अहवा आगमे तिविहे पण्णत्ते, तं जहा-सुत्ताऽऽगमे, अत्थाऽऽगमे, तदुभयाऽऽगमे । ( सूत्र-१४७ + )

'अहवा आगमे तिविहे' इत्यादि तत्र सूत्रमेव सूत्रागमः, तदभिधेयश्च अर्थः एवाऽर्थागमः, सूत्रार्थोभयरूपस्तु तदुभयागमः ।

अहवा-आगमे तिविहे पण्णत्ते, तं जहा-अत्ताऽऽगमे १, अणंतराऽऽगमे २, परंपराऽऽगमे ३ । तित्थगराणं अत्थस्स अत्तागमे, गणहराणं सुत्तस्स अत्तागमे अत्थस्स अणंतरागमे । गणहरसीसाणं सुत्तस्स अणंतरागमे, अत्थस्स परंपरागमे । तेणं परं सुत्तस्स वि अत्थस्स वि णो अत्तागमे, णो अंतरागमे, परंपरागमे । ( सूत्र-१४७ + )

अथवा-अनेन प्रकारेणागमस्त्रिविधः प्रज्ञप्तः, तद्यथा-'आत्मागमः' इत्यादि तत्र गुरूपदेशमन्तरेणात्मन एव आगमः आत्मागमो—यथा, तीर्थकराणामर्थस्यात्मागमः, स्वयमेव केवलेनोपलब्धेः, गणधराणां तु सूत्रस्यात्मागमः स्वयमेव ग्रथितत्वात्, अर्थस्यानन्तरागमोऽनन्तरमेव तीर्थकरादागतत्वात्, उक्तं च-'अत्थं भासइ अ(रि)रहा, सुत्तं गंथंति गणहरा निउणमि' त्यादि । गणधरशिष्याणां जम्बूस्वामिप्रभृतीनां सूत्रस्याऽनन्तरागमः-अव्यवधानेन गणधरादेव श्रुतेः, अर्थस्य परंपरागमः-गणधरेणैव व्यवधानात् । ततः ऊर्ध्वं प्रभवादीनां सूत्रस्यार्थस्य च नात्मागमो नानन्तरागमः स्तल्लक्षणायोगात्, अपि तु परंपरागम एव । अनेन आगमस्य तीर्थकरादिप्रभवत्वभणनेनैकान्ताऽपौरुषेयत्वं निवारयति । पौरुषताल्वादिव्यापारमन्तरेण नभसीव विशिष्टशब्दानुपलब्धेस्ताल्वादिभिरभिव्यज्यत एव शब्दो न तु क्रियते इति चेत्, ननु यद्येवं तर्हि सर्ववचसामपौरुषेयत्वप्रसङ्गस्तेषां भाषापुद्गलनिष्पन्नत्वाद् भाषापुद्गलानां च लोके सर्वदैवावस्थानतो पूर्वक्रियमाणता अयोगेन ताल्वादिभिरभिव्यक्तिमात्रस्यैव निर्वर्त्तनात् । न च वक्तव्यं वचनस्य पौद्गलिकत्वमसिद्धं महाध्वनिपटलपूरितश्रवणबाधिर्यकुड्यस्खलनाद्यन्यथानुपपत्तेः, तस्मान्नैकान्तेनाऽपौरुषेयमागमवचस्ताल्वादिव्यापाराभिव्यङ्ग्यत्वाद्देवदत्तादिवाक्यवदित्याद्यन्यत्र बहुवक्तव्यं तत्तु नोच्यते स्थानान्तरनिर्णीतत्वादिति । 'सत्तं लोगुत्तरिए' इत्यादि निगमनत्रयम् । अनु० । भ० । अङ्ग० । नि० चू० । सूत्र० । " आगमो दुविहो-लोइओ, लोउत्तरिओ य । लोइओ चोद्दसविज्जाट्ठाणाणि " " अङ्गानि चतुरो वेदा मीमांसा न्यायविस्तरः । धर्मशास्त्रं पुराणं च विद्या ह्येताश्चतुर्दश ॥१॥" (अस्य श्लोकस्य व्याख्या)-तत्राङ्गानि षट् ६ तद्यथा-शिक्षा १, कल्पो २, व्याकरणं ३, छन्दो ४, निरुक्तं ५, ज्योतिषं ६, चेति । "लोउत्तरो दुवालस१२, अंगा, चोद्दस१४ पुव्वाणि य"। आ० चू० १ अ० । आ० म० । ('सुय' शब्दे सप्तमे भागे प्रकारान्तरेण निक्षेपः)

(२) आगमस्य च स्वतः प्रामाण्यम्—

सिद्धं सिद्धट्ठाणं ठाणमणोवमसुहमुवगयाणं ।
कुसमयविसासणं सा-सणं जिणाणं भवजिणाणं ॥१॥

अस्याश्च समुदायार्थः पातनिकयैव प्रकाशितः, अवयवार्थस्तु प्रकाश्यते-शास्यन्ते जीवादयः पदार्था यथावस्थितत्वेनानेनेति शासनं-द्वादशाङ्गम्, तच्च सिद्धं-प्रतिष्ठितं-निश्चितप्रामाण्यमिति यावत्, स्वमहिम्नैव नाऽतः प्रकरणात्तन्निष्ठाप्यम् । सम्म० १ काण्ड ।

शब्दसमुत्थस्य त्वभिधेयविषयज्ञानस्य यदि प्रामाण्यमभ्युपगम्यते तदा-अपौरुषेयत्वस्यासम्भवाद् गुणवत्पुरुषप्र-

णीतस्तदुत्पादकः शब्दोऽभ्युपगन्तव्य, अथ तत्प्रणीतत्वं नाऽभ्युपगम्यते तदा तत्समुत्पन्नज्ञानस्य प्रामाण्यमपि न स्यादित्यभिप्रायवानाचार्य प्राह-जिनाना रागद्वेषमोहलक्षणान् शत्रून् जिनवन्त इति जिनास्तेषां शासनं तदभ्युपगन्तव्यमिति प्रसङ्गसाधनम् । नचाऽत्रेद प्रेर्य-यदि जिनशासनं जिनप्रणीतत्वेन सिद्ध निश्चितप्रामाण्यमभ्युपगमनीयम्, अन्यथा प्रामाण्यस्याप्यनभ्युपगमनीयत्वादिति प्रसङ्गसाधनमत्र प्रतिपाद्यत्वेनाभिप्रेतं तत्किमिति बौद्धयुक्त्याऽर्हतेन त्वया स्वत प्रामाण्यनिरासोऽभिहित ?, यत. सर्वसमयसमूहात्मकत्वमेवाऽऽचार्येण प्रतिपादयितुमभिप्रेतम् । यद्वक्ष्यत्यस्यैव प्रकरणस्य परिसमाप्तौ, यथा-" भद्द मिच्छद्दसणसमूहमइयस्स अमयसारस्स । जिणवयणस्स भगवओ, संविग्गसुहाहिगम्मस्स " ॥ ७० ॥ ( अस्यैव ग्रन्थस्य तृतीयकाण्डगाथयम् ) इत्यादि । अयमेवार्थो बौद्धयुक्त्युपन्यासेन समर्थित, अन्यत्राप्यन्यमताऽपक्षेपेणान्यमतनिरासेऽयमेवाभिप्रायो द्रष्टव्य, सर्वनयानां परस्परसापेक्षाणा सम्यग्मतत्वेन, विपरीताना विपर्ययत्वेनाचार्यस्येष्टत्वात्, अत एवोक्तमनेनैव (चतुर्थ) द्वात्रिंशिकायाम्-"उदधाविव सर्वसिन्धव, समुदीरणास्त्वयि नाथ ! दृष्टय. । न च तासु भवान् प्रदृश्यते, प्रविभक्तासु सरित्स्विवोदधि. ॥ १ ॥" सम्म० १ काण्ड १ गाथाटी० ।

( ३ ) आगमस्य पौरुषेयत्वम्—

स हिं पौरुषेयो वा स्यादपौरुषेयो वा ? । पौरुषेयश्चेत्सर्वज्ञकृत, तदितरकृतो वा ? । आद्यपक्ष-युष्मन्मतव्याहति । तथा च भवत्सिद्धान्तः-" अतीन्द्रियाणामर्थाना, साक्षाद् द्रष्टा न विद्यते । नित्येभ्यो वेदवाक्येभ्यो, यथार्थत्वविनिश्चय ॥ १ ॥" द्वितीयपक्षे तु-तत्र दोषवत्कर्तृकत्वेनाऽनाश्वासप्रसङ्ग । अपौरुषेयश्चेन्न सम्भवत्येव स्वरूपनिराकरणात्, तुरङ्गशृङ्गवत् । तथाहि- " उक्तिर्वचनमुच्यते " इति चेति पुरुषक्रियानुगत रूपमस्य । एतत्क्रियाभाव कथं भवितुमर्हति । नचैतत्केवलं क्वचिद्ध्वनदुपलभ्यते उपलब्धावप्यदृश्यवक्त्राशङ्कासम्भवात् तस्माद्यद्वचनं तत्पौरुषेयमेव, वर्णात्मकत्वात् कुमारसम्भवादिवचनवत् । वचनात्मकश्च वेद, तथाचाहु - 'ताल्वादिजत्मा न तु वर्णवर्गो, वर्णात्मको वेद इति स्फुटश्च । पुसश्च ताल्वादि तत कथं स्या-दपौरुषेयोऽयमिति प्रतीति " ॥ १ ॥ इति । श्रुतेरपौरुषेयत्वमुररीकृत्यापि तावद्भवद्भिरपि तदर्थव्याख्यान पौरुषेयमेवाङ्गीक्रियते । अन्यथा- अग्निहोत्रं जुहुयात्स्वर्गकाम. " इत्यस्य श्वमांसं भक्षयेदिति किं नार्थो नियामकाभावात्, ततोऽवरं सूत्रमपि पौरुषेयमभ्युपगतम् । अस्तु वा अपौरुषेयस्तथाऽपि तस्य न प्रामाण्यम् आप्तपुरुषाधीना हि वाचा प्रमाणतेति । स्या० ११श्लोक ।

जयइ सुयाणं पभवो, ( २+गाथा )

श्रुताना-स्वदर्शन-परदर्शनानुगतसकलशास्त्राणां प्रभवन्ति सर्वाणि शास्त्राणि अस्मादिति प्रभव -प्रथममुत्पत्तिकारण, तदुपदिष्टमर्थमुपजीव्य सर्वेषा शास्त्राणा प्रवर्त्तनात्, परदर्शनशास्त्रेष्वपि हि य कश्चित्समीचीनोऽर्थ ससारासारतास्वर्गापवर्गादिहेतु प्राण्यहिंसादिरूप स भगवत्प्रणीतशास्त्रेभ्य एव समुद्धृतो वेदितव्यो, न खल्वतीन्द्रियार्थपरिज्ञानमन्तरेणातीन्द्रियः प्रमाणाबाधितोऽर्थः पुरुषमात्रेणोपदेष्टुं शक्यते, अविषयत्वात् । नच-अतीन्द्रियार्थपरिज्ञानं परतीर्थिकानामस्तीत्येतदग्रे वक्ष्याम. । ततस्ते भगवत्प्रणीतशास्त्रेभ्यो मौलं समीचीनमर्थलेशमुपादाय पश्चादभिनिवेशवशत. स्वस्वमत्यनुसारेण तास्ता स्वप्रक्रिया प्रपञ्चितवन्त. । उक्तं च स्तुतिकारेण-" सुनिश्चितं न. परतन्त्रयुक्तिषु, स्फुरन्ति या. काश्चन सूक्तिसम्पद । तवैव ता पूर्वमहार्णवोत्थिता, जगत्प्रमाण जिनवाक्यविप्लु(प्रु)ष ॥१॥" शाकटायनोऽपि यापनीययतिग्रामाग्रणी स्वोपज्ञशब्दानुशासनवृत्तावादौ भगवत स्तुतिमेवमाह-" श्रीवीरममृत ज्योति-र्नत्वादिं सर्ववेदसाम् " अत्र च न्यासकृतो व्याख्या-'सर्ववेदसां'-सर्वज्ञानाना-स्वपरदर्शनसंबन्धिसकलशास्त्रानुगतपरिज्ञाना-नाम् 'आदिं' प्रभव प्रथममुत्पत्तिकारणमिति । अत एव चेह श्रुतानामित्यत्र बहुवचनम्, अन्यथैकवचनमेव प्रयुज्यते प्राय. श्रुतशब्दस्य केवलद्वादशाङ्गमात्रवाचिन. सर्वत्रापि सिद्धान्ते एकवचनान्ततया प्रयोगदर्शनात्, सर्वश्रुतकारणत्वेन च भगवत स्तुतिप्रतिपादने इदमप्यावेदितं द्रष्टव्यम्-सर्वाण्यपि श्रुतानि पौरुषेयाण्येव, न किमप्यपौरुषेयमस्ति, असम्भवात् । तथाहि-शास्त्रं वचनात्मकम् । वचन च ताल्वोष्ठपुटपरिस्पन्दादिरूपपुरुषव्यापारान्वयव्यतिरेकानुविधायि, ततस्तदभावे कथ भवति ?, न खलु पुरुषव्यापारमन्तरेण वचनमाकाशे ध्वनदुपलभ्यते । अपि च—तदपौरुषेय वचनमकारणत्वान्नित्यमभ्युपगम्यते, 'सदकारणवन्नित्य' मिति वचनप्रामाण्यात् । ततश्च—अत्र विकल्पयुगलमवतरतीयते, तदपौरुषेयं वच किमुपलभ्यस्वभावम्, उताऽनुपलभ्यस्वभावं वा ? । तत्र यद्यनुपलभ्यस्वभावं तर्हि तस्य नित्यत्वेनाभ्युपगमात्कदाचिदपि स्वभावाऽप्रच्युते सर्वदैवोपलम्भाभावप्रसङ्ग, अथोपलम्भस्वभाव तर्हि सर्वदानुपरमेणोपलभ्येत, अन्यथा-तत्स्वभावताहानिप्रसङ्गात्, अथोपलभ्यस्वभावमपि सहकारिप्रत्ययमपेक्ष्योपलम्भमुपजनयति तेन न सर्वदोपलम्भप्रसङ्ग. । तदयुक्तम्, एकान्तनित्यस्य सहकार्यपेक्षया अयोगात्, ततो विशेषप्रतिलम्भलक्षणा हि तस्य तत्रापेक्षा, यदाह-धर्मकीर्ति.-' अपेक्षाया विशेषप्रतिलम्भलक्षणत्वात् ' इति । न च नित्यस्य विशेषप्रतिलम्भोऽस्ति, अनित्यत्वापत्ते. । तथाहि-स विशेषप्रतिलम्भ तस्यात्मभूत, ततो विशेषे जायमाने स एव पदार्थस्तेन रूपेण जातो भवति, प्राक्तन च विशिष्टावस्थालक्षण रूपं विनष्टमित्यनित्यत्वापत्ति । अथोच्येत-स विशेषप्रतिलम्भो न तस्यात्मभूत किं तु व्यतिरिक्त कथमनित्यत्वापत्ति. ?, यद्येव तर्हि कथं स तस्य सहकारी न हि तेन सहकारिणा तस्य वचनस्य किमप्युपक्रियते, भिन्नविशेषकरणात्, अथ भिन्नोऽपि विशेषस्तस्य सम्बन्धी तेन तत्सम्बन्धिविशेषकरणात् तस्याप्युपकारी द्रष्टव्य इति सहकारी व्यपदिश्यते, ननु विशेषेणापि सह तस्य वचनस्य क संबन्धो न तावत् 'तादात्म्य' भिन्नत्वेनाभ्युपगमात्, नापि तदुत्पत्ति, विकल्पद्वयानतिक्रमात्, तथाहि-किं वचनेन विशेषो जन्यते ?, उत विशेषेण वचनं ?, तत्र न तावदाद्य पक्ष, विशेषस्य सहकारिणोऽभावात्, नापि द्वितीय., व-

चनस्य नित्यतया कर्त्तुमशक्यत्वात्, अथ मा भूद् वचनविशेषयोर्जन्यजनकभाव 'आधाराऽऽधेयभावो' भविष्यति, तदप्यसमीचीनम्, आधाराऽऽधेयभावस्यापि परस्परोपकार्योपकारकभावापन्नत्वात्, तथाहि-बदरं पतनधर्मकं सन्कुण्डेन स्वानन्तरदेशस्थायितया परिणामि जन्यते, ततस्तयोराधाराधेयभाव उपपद्यते; वचनेन तु विशेषो जन्यते, तस्यान्यता भावात्, ततः कथमनयोराधाराधेयभाव ?। अथ तेन विशेषेण वचनस्योपकार कश्चित् क्रियते ततः स तस्य संबन्धी, न तु स उपकारस्ततो भिन्न, अभिन्नो वेत्यादि तदेवावर्त्तते इत्यनवस्था। अपि च-कुत प्रमाणाद्वचनस्यापौरुषेयत्वाभ्युपगम, कर्त्तुरस्मरणादिति चेत्, न, तस्याप्यसिद्धत्वात्, तथाहि-स्मरन्ति-जिनप्रणीतागमतत्त्ववेदिनो वेदस्य कर्तॄन् पिप्पलादप्रभृतीन् सकर्तृस्मरणाद्यस्तेषा मिथ्यारूप इति चेत्, क इदानीमेवं सति पौरुषेय सर्व्वस्याप्यपौरुषेयत्त्वप्रसङ्गः । तथाहि-कालिदासादयोऽपि कुमारसंभवादिष्वात्मानमन्यं वा प्रणेतारमुपदिशन्त एवं प्रतिक्षेप्तुं शक्यन्ते मिथ्या-वम त्मानमन्यं वा कुमारसंभवादिषु प्रणेतारमुपदिशन्तीति । तत कुमारसंभवादयोऽपि अन्था सर्व्वेऽप्यपौरुषेया भवेयु, तथा च-क. प्रतिविशेषो वेदे ? येन स एव प्रमाणतयाभ्युपगम्यते, न शेषाऽऽगमा । अपि च-येऽस्माकीनेरपि पूर्वमहर्षिभि' सकर्तृकत्वं वेदस्याभ्युपगतमेव, तथा च-तदग्रन्थ-' ऋगिराद्यचक्षक्कु सामानि सामगिराविति"। अथ तत्र करोति-स्मरणे वर्त्तते, न निष्पादने, दृष्टश्च करोतिरर्थान्तरेऽपि वर्तमानो, यथा संस्कारे, तथा च लोके वक्तार -'पृष्ठं मे कुरु पादौ मे कुर्विति' अत्र हि संस्कार एव करोतिवर्त्तते, नापूर्वनिर्वर्त्तने सभवति अशक्यक्रियत्वात्, ततोऽन्यथानुपपत्त्या संस्कार एव करोतिर्वर्त्तते, वेदविषये तु नान्यथानुपपन्नत्वं किमपि निबन्धनमस्ति । तत कथं तत्र स्मरणे वर्तयितु शक्यते ?, स्यादेतत्-यदि वेदविषये करोति स्मरणेन वर्त्तेत तर्हि वेदस्य प्रामाण्यं न स्याद्, अथ च प्रामाण्यमभ्युपगम्येत, तच्चापौरुषेयत्वादेव, अन्यथा सर्वागमानामपि प्रामाण्यप्रसङ्ग । ततोऽत्रापि करोति प्रामाण्यान्यथानुपपत्त्या स्मरणे वर्त्त इति, तदेतदसत्, इतरेतराश्रयदोषप्रसङ्गात्, तथाहि-प्रामाण्ये सिद्धे सति तदन्यथानुपपत्त्या करोति स्मरणे वर्त्तेत, करोते स्मरणे वृत्तौ चापौरुषेयत्वसिद्धित' प्रामाण्यमित्येकाऽसिद्धावन्यतराऽसिद्धि, अनैकान्तिकं च कर्त्तुरस्मरणं 'वटे वटे वैश्रवण ' इत्यादिशब्दाना पौरुषेयाणामपि कर्त्तुरस्मृत यत्नवान् तत्कर्त्तारमुपलभत एवेति चेत्, नावश्यं तदुपलम्भसंभव, नियमाभावात्, किं च-पौरुषेयत्वेनाभ्युपगतस्य वेदस्य कर्त्ता नैवास्ति कश्चित् पौरुषेयत्वेनाभ्युपगतस्य च वटे वटे वैश्रमण इत्यादिरस्तीति न प्रमाणात् कुतश्चिन्निश्चय, किं तु-परोपदेशात्, स च भवतो न प्रमाण, परस्य रागादिपरीतत्वेन यथावद्वस्तुतत्त्वापरिज्ञानात्, तत कर्तृमात्रमदेह इति संदिग्धासिद्धोऽप्ययं हेतु, एतेन यदप्यदपि मायनमवादीत् वेदवादी- वेदाध्ययन सर्वं गुर्वध्ययनपूर्वकं वेदाध्ययनत्वाद्, इदानीन्तनवेदाध्ययनवदिति । तदपि निरस्तमवसेयम्।

परमपौरुषेयत्वसाधने सर्व्वस्याप्यपौरुषेयत्वप्रसङ्ग, तथाहि--कुमारसंभवाध्ययनं सर्व्वं गुर्वध्ययनपूर्वकं, कुमारसंभवाध्ययनत्वात्, इदानीतनकुमारसंभवाध्ययनवदिति कुमारसंभवादीनामध्ययनाऽनादितासिद्धेरपौरुषेयत्व दुर्निवारम्, न च तेषामपौरुषेयत्वं स्वयं करणपूर्वकत्वेनापि तदध्ययनस्य भावाद् एवं वेदाध्ययनमपि किंचित् स्वयं करणपूर्वकमपि भविष्यतीति वेदाध्ययनत्वादिति व्यभिचारी हेतु, स्यादेतत्, वेदाऽध्ययनम् स्वयं करणपूर्वकं न भवति, वेदानां स्वयं कर्त्तुमशक्ते. । तथा चात्र प्रयोग - पूर्वेषां वेदरचनायामशक्ति, पुरुषत्वाद्, इदानींतनपुरुषवदिति, तदप्ययुक्तम् अत्रापि हेतोर्व्यभिचारात्, तथाहि--भारतादिष्विदानींतनपुरुषाणामशक्तावपि कस्यचित्पुरुषस्य व्यासादे शक्तिः श्रूयते, एव वेदविषयेऽपि, संप्रति पुरुषाणां कर्त्तुमशक्तावपि कस्यचित्प्राक्तनस्य पुरुषविशेषस्य शक्तिर्भविष्यतीति । अपि च-यथाग्निसामान्यस्य ज्वालाप्रभवत्वमरणिनिर्मथनप्रभवत्वं च परस्परमबाध्यबाधकत्वान्न विरुध्यते, को ह्यत्र विरोध. अग्निश्च स्यात् कदाचिदरणिनिर्मथनपूर्वक कदाचित् ज्वालान्तरपूर्वकश्च। ततो यथाऽऽद्योऽपि पथिकक्रतोऽग्निर्ज्वालान्तरपूर्वको नारणिनिर्मथनपूर्वकः पथिकाऽग्नित्वाद् आद्यानन्तराग्निवदित्ययं हेतुर्व्यभिचारी, विपक्षे वृत्तिसंभवात्, तथा वेदाध्ययनमपि विपक्षे वृत्तिसंभवात् व्यभिचार्येव, तथाहि-वेदाध्ययने स्वयंकरणपूर्वकत्वमध्ययनान्तरपूर्वकत्वं च परस्परमबाध्यबाधकत्वादविरुद्धं, ततश्च वेदाध्ययनमपि स्यात्किंचित् स्वयंकरणपूर्वकमपीति, यदा त्वेवं विशिष्यते-यस्तु तथाविध स्वयं कृत्वा अध्येतुमसमर्थः तस्य वेदाध्ययनमध्ययनान्तरपूर्वकमिति तदा न कश्चिद्दोष, यथा यादृशोऽग्निर्ज्वालाप्रभवो दृष्ट तादृश सर्वोऽपि ज्वालाप्रभव इति, अस्तु वा सर्वं वेदाऽध्ययनमध्ययनान्तरपूर्वकं, तथाऽप्येवमनादिता सिद्धेद्वेदस्य, नापौरुषेयत्वम्, अथाऽत एवानादितामात्रादपौरुषेयत्वसिद्धिरिष्यते तर्हि डिम्भकपांशुक्रीडादेरपि पुरुषव्यवहारस्याऽपौरुषेयतापत्ति, तस्यापि पूर्वपूर्वदर्शनप्रवृत्तित्वेनाऽनादित्वात् ।

अपि च-स्युरपौरुषेया वेदा यदि पुरुषाणामादि स्याद्वेदाध्ययनं चानादि, तदाप्याद्य पुरुषस्याध्ययनमध्ययनान्तरपूर्वकं न सिद्धयति, अध्यापयितुरभावात्, न च पुरुषस्य ताल्वादिकरणग्रामव्यापाराभावात् स्वयं शब्दा ध्वनन्ति ततो वेदस्य प्रथमोऽध्येता कर्त्तैव वेदितव्य, अपि च-यद्वस्तु यद्धेतुकमन्वयव्यतिरेकाभ्या प्रसिद्धं तज्जातीयमन्यदप्यदृष्टहेतुकं ततो हेतोर्भवतीति संप्रतीयते, यथेन्धनादेको वह्निर्दृष्टस्ततस्तत्समानस्वभावोऽपरोऽप्यदृष्टहेतुक तत्समानहेतुक संप्रतीयते, लौकिकेन च शब्देन समानधर्मा सर्वोऽपि वैदिक शब्दराशि, ततो लौकिकवद्वैदिकोऽपि शब्दराशि पौरुषेय सम्प्रतीयताम्। स्यादेतद्वैदिकेषु शब्देषु यद्यपि न पुरुषो हेतु, तथापि पौरुषेयाभिमतशब्दसमानाऽवशिष्टपदवाक्यरचना भविष्यति तत. कथं तत्समानधर्मतामवलोक्य पुरुषहेतुकता तेषामनुमीयते, तदेतद् बालिशजल्पितं पदवाक्यरचना हि यदि हेतुमन्तरेणापीष्यते तत आकस्मिकी सा भवेत् ततश्चाकाशादावपि सा सर्वत्र संभवेत्, अहेतुकस्य देशादिनियमायोगात्, न च

सा सर्वत्राऽपि संभवति, तस्मात् पुरुष एव तस्या हेतुरित्य-वश्यं प्रतिपत्तव्यम् , अन्यच्च पुरुषस्य रागादिपरीतत्वेन यथावद् वस्तुपरिज्ञानाऽभावात् तत्प्रणीतं वाक्यमयथार्थमपि संभाव्यत इति संशयहेतु पुरुषोऽपकीर्णः, स च संशयोऽपौरुषेयत्वाभ्युपगमेऽपि वेदवाक्यानां तदवस्थ एव, तथाहि-स्वयं तावत्पुरुषो वेदस्यार्थं नाऽवबुध्यते, रागादिपरीतत्वात् , नाऽप्यन्यत -पुरुषान्तरात् , तस्यापि रागादिपरीतत्वेन यथा तत्त्वमपरिज्ञानाद् , अथ जैमि(म)निश्चिरतरपूर्वकालभावी पटुप्रज्ञः सम्यग्वेदार्थस्य परिज्ञानासीत् तत परिज्ञानमभूदिति, न हि सर्वेऽपि पुरुषा समाना प्रज्ञामेधादिगुणैरिति वक्तुं शक्यं, संप्रत्यपि प्रतिपुरुषं प्रज्ञादेस्तारतम्यस्य दर्शनात् , ननु स जैमि(म)नि. पुरुषो वेदस्यार्थं यथावस्थितमवगच्छतिस्मेति कुतो निश्चय. ?, प्रमाणेन संवादादिति चेत् नन्वतीन्द्रियेष्वर्थेषु न प्रमाणस्यावतारो यथाग्निहोत्रवचनस्य स्वर्गसाधनत्वे, बहवश्चानीन्द्रियार्था वेदे व्यावर्ण्यन्ते, तत्कथं तत्र संवाद ?, अथ येष्वर्थेष्वस्मादृशां प्रमाणसंभव तद्विषये प्रमाणसंवाददर्शनादतीन्द्रियाणामप्यर्थानां स सम्यक् परिज्ञानाभ्युपगम्यते,तदप्ययुक्तम् , रागादिकलुषिततया तस्याऽतीन्द्रियार्थपरिज्ञानाऽसंभवाद् , अन्यथा सर्वेषामप्यतीन्द्रियार्थदर्शित्वप्रसक्ति ततस्तत्कृतातीन्द्रियार्थव्याख्या मिथ्यैव। अपिच—आगमोऽर्थत परिज्ञात सन् प्रेक्षावतामुपयोगविषये भवति, नापरिज्ञानार्थे शब्दगडुमात्र, ततोऽर्थ प्रधान , स चेत्पुरुषप्रणीत किं शब्दमात्रस्याऽपौरुषेयत्वपरिकल्पनेन निरर्थकत्वात् , तत्राऽन्यतोऽपि वेदार्थस्य सम्यगवगम । नाऽपि वेद स्वकीयमर्थमुपदेशमन्तरेण स्वयमेव साक्षादुपदर्शयति, ततो वेदस्येष्टार्थप्रतिपत्त्युपायाऽभावाद् 'अग्निहोत्रं जुहुयात् स्वर्गकाम ' इत्यत्र श्रुतौ यथा वेदप्रामाणिकैरयमर्थ परिकल्प्यते घृताऽऽद्याहुतिं प्रक्षिपेत् स्वर्गकाम' इति । तथाऽयमप्यर्थ तै किं न कल्प्यते-खादेत् स्वमांस स्वर्गकाम इति, नियामकाऽभावात् ,

उक्तं च—

" स्वयं रागाऽऽदिमान्नाऽर्थं, वेत्ति वेदस्य नाऽन्यत. ।
न वेदयति वेदोऽपि, वेदार्थस्य कुतो गति ॥ १ ॥
तेनाऽग्निहोत्र जुहुयात् , स्वर्गकाम इति श्रुतौ ।
खादेत्स्वमांसमित्येष, नाऽर्थ इत्यत्र का प्रमा ॥ २ ॥ "

अथ य एव शाब्दो व्यवहारो लोके प्रसिद्ध स एव वेदवाक्यार्थनिश्चयनिबन्धन, न च लोकेऽग्निहोत्रशब्दस्य स्वमांसं वाच्यम् , नाऽपि जुहुयादित्यस्य भक्षणं, तत्कथमयमर्थ परिकल्प्यते ?, तदयुक्तं, नानाऽर्था हि लोके शब्दा रूढा यथा गोशब्द ।

अपि च-सर्वे शब्दा. प्राय सर्वार्थाना वाचका देशादिभेदतो द्रुतविलम्बितादिभेदेन, तथाप्रतीतिदर्शनात् , तथाहि-द्रविडस्यार्यदेशमुपागतस्य मारिशब्दात्-भगि(टि)ति वर्षविषया प्रतीतिरुपजायते विलम्बिना चोपसर्गविषया, यद्वा-आर्यदेशोत्पन्नस्य द्रविडदेशमधिगतस्य शीघ्रमुपसर्गविषया प्रतीतिर्विलम्बिना च वर्षविषया एवमनया दिशा सर्वेषामपि शब्दाना सर्वार्थवाचकत्वं परिभावनीयम् ,

न च वाच्यम् एवं सति घटशब्दमात्रश्रवणादखिलार्थप्रतीतिप्रसङ्गो, यथा क्षयोपशममवबोधप्रवृत्ते , क्षयोपशमश्च संकेताद्यपेक्ष इति तदभावे न भवति, ततोऽग्निहोत्रादिशब्दस्य स्वमांसादिवाचकत्वेऽप्यवरोध इति लौकिकशाब्दव्यवहारानुसरणेऽपि न वैदिकवाक्यानामभिलपितनियतार्थप्रतिपत्ति । किं च-लोकप्रसिद्धेनैव शाब्देन व्यवहारेण वयं वेदवाक्याना प्रतिनियतमर्थं निश्चेतुमुद्युक्ता , लौकिकश्च शाब्दो व्यवहारोऽनेकधा परिप्लवमानो दृष्ट संकेतवशात. प्राय सर्वेषामपि शब्दाना सर्वार्थप्रतिपादनशक्तिसंभवात् , ततो लौकिकेनैव शाब्देन व्यवहारेणास्माकमाशङ्कादपादि कोऽत्रार्थ स्यात् ? किं घृताद्याहुतिं प्रक्षिपेत् स्वर्गकाम इति उताहो स्वमांस खादेदिति ?, तत्कथं तत एव निश्चय. कर्तुं बुध्यते ? । न हि योऽत्र संशयहेतु स तत्र निश्चयमुत्पादयितुं शक्त इति ।

अपि च-नैकान्तेन वेदे लौकिकशब्दव्यवहारानुसरणं स्वर्गोर्वश्यादिशब्दानामरूढार्थानामपि तत्र व्याख्यानात् , यथा स्वर्ग -सुखविशेष , उर्वशी तु अरणिरिति । तथा शब्दान्तरेष्वप्यरूढार्थकल्पना किं न संभविनी ?, उक्तं च-" स्वर्गोर्वश्यादिशब्दस्य, दृष्टा रूढार्थवाचक । शब्दाऽन्तरेषु तादृक्षु, तादृश्येवाऽस्तु कल्पना ॥ १ ॥ " स्यादेतत् अग्निहोत्रादिवाक्यस्य स्वमांसभक्षणप्रसङ्गो न युक्तो, वेदे नैवान्यत्र तस्यान्यथा व्याख्यानात् तदयुक्तम् , तत्राऽपि वाक्यार्थस्य निर्णयाभावादयोक्तं प्राक्-न हि अप्रसिद्धार्थस्य वाक्यस्याऽप्रसिद्धार्थमेव वाक्यान्तरं नियतार्थप्रसाधनायालं , तुल्यदोषत्वात् । अथेत्थमाचक्षीथा. यत्रार्थे न काचित्प्रमाणबाधा सोऽर्थो ग्राह्यो, न चाग्निहोत्रादिवाक्यस्य घृताऽऽद्याहुतिप्रक्षेपरूपेऽर्थे प्रमाणबाधामुत्पश्याम , तत्कथ तमर्थं न गृह्णीम । वदेतत्स्वमांसभक्षणलक्षणेऽप्यर्थे समानं न हि तत्रापि काञ्चित् प्रमाणबाधामीक्षामहे ।

अपि च—यदि प्रमाणबलात्प्रवृत्तिमीहसे तर्हि पौरुषेयमेव वचस्त्वयोपादेयं तस्य लोकप्रतीत्यनुसारितया संप्रदायतोऽभिगतार्थतया च प्रायो युक्तिविषयत्वात् , नाऽपौरुषेयम् , विपरीततया तत्र युक्तेरसंभवात् , तथाहि—काऽत्र युक्ति ? यया स्वमांसभक्षणात्स्वर्गप्राप्तिर्बाध्यते , न घृताद्याहुतिप्रक्षेपादिति ?, घृताऽऽद्याहुतिप्रक्षेपादीनां स्वर्गप्रापणादिशक्तेरतीन्द्रियत्वेन प्रत्यक्षाद्यगोचरत्वात् , संप्रदायस्य चार्थनैयत्यकारिणोऽसंभवात् , एतच्चानन्तरमेव वक्ष्यामः ।

अथाऽऽगमार्थोऽऽश्रया युक्ति स्वमांसभक्षणेन स्वर्गप्राप्तेर्बाधिका भविष्यति,तदयुक्तम् , आगमार्थस्याऽद्याप्यनिश्चयात् । अनिश्चितार्थस्य च बाधकत्वाऽयोगात् , अथ संप्रदायादर्थनिश्चयो भविष्यति, तथा हि- प्रथमतो वेदेन जैमिनये स्वार्थं उपदर्शित पश्चात्तेनास्मभ्यमुपदिष्ट" इति, तदप्यसत् , वेदस्य हि यदि स्वार्थोपदर्शनशक्तिस्ततोऽस्मभ्यमपि स्वार्थं किं नोपदर्शयति ?, तस्माज्जैमिनयेऽपि न तेन स्वार्थो दर्शित , किन्तु-स वेदमुखेनात्मानमेवार्थनियमस्वप्रकारमुपदर्शितवान् , यथा कश्चित्केनचित्पृष्ट -' को मार्ग पाटलिपुत्रस्य ? ' स प्राह-एष स्थाणुर्दृश्यमानो वक्ति-' अयं मार्गः पाटलिपुत्रस्य ', तत्र न स्थाणोर्वचनशक्ति केवल स्थाणुमुखेन स एवात्मानं मार्गोपदेष्टारं कथयति, एवं वेदस्यापि न स्वाऽर्थोपदर्शनशक्ति ,ततस्तन्मुखेन जैमि म)निरात्मानमेवार्थनियमस्वप्रकारमुपदर्शितवान् , तत्र लौकिकशब्दव्यवहारानु-

स्मरणाच्चापि युक्तेर्नापि च सम्प्रदायाद्वेदस्यार्थनिश्चयो नापि तस्याऽपौरुषेयत्वसाधकं किमपि प्रमाणमित्यसंभव्यपौरुषेयम्। उक्तं च-"वान्ध्येयखरविषाणतुल्यमपौरुषेयमि" ति। ननु यदि वान्ध्येयखरविषाणतुल्यमपौरुषेयं भवेत्तर्हि न वेदवचोऽपौरुषेयतया शिष्टाः प्रतिगृह्णीयुः।

अथ च-सर्वेष्वपि देशेषु शिष्टाः प्रतिगृह्णन्तो दृश्यन्ते, तस्माच्चासंभव्यपौरुषेयं तदत्र पृच्छामः-के शिष्टाः?। ननु किमत्र प्रष्टव्यम्? ये ब्राह्मणीयोनिसंभविनो वेदोक्तविधिसंस्कृता वेदप्रणीताचारपरिपालनैकतानपरचेतसस्ते शिष्टाः तदेतदयुक्तं, विचारासहत्वात्, तथा हि-किमिदं नाम ब्राह्मणत्वं यद्योनिसंभवाच्छिष्टत्वं भवेत्?, ब्रह्मणोऽपत्यत्वमिति चेत् तथा हि-ब्रह्मणोऽपत्यं ब्राह्मण इति व्यपदिशन्ति पूर्वेऽपि न एवं सति चाण्डालस्यापि ब्राह्मणत्वप्रसक्तिः, तस्याऽपि ब्रह्मतनोः समुत्पन्नत्वात्। उक्तं च-'ब्रह्मणोऽपत्यतामात्रात् ब्राह्मणोऽनिप्रमन्यते। न कश्चिदब्रह्मतनोऽस्त्यत्र कश्चिदिष्यते॥१॥" यदप्युक्तम्-'वेदोक्तविधिसंस्कृता वेदप्रणीताचारपरिपालनैकतानपरचेतसः' इति, तदप्ययुक्तम्, इतरेतराश्रयदोषप्रसङ्गात्। तथाहि-वेदस्य प्रामाण्ये सिद्धे सति तदुक्तविधिसंस्कृतास्तदर्थसमाचरणाच्छिष्टा भवेयुः शिष्टत्वे च तेषां सिद्धे सति तत्परिग्रहाद्वेदप्रामाण्यमित्येकाभावेऽन्यतरस्याऽप्यभावः।

आह च-"शिष्टैः परिगृहीतत्वा-द्वेदोऽन्योऽन्यसमाश्रयः। वेदार्थाचरणाच्छिष्टा-स्तदाचाराच्च स प्रमा॥१॥" स्यादेतत्-भवतोऽपि तद्वचनोऽपौरुषेयं वचनमिष्टमेव, तथाहि-'सर्वोऽपि सर्वज्ञो वचनपूर्वको भवतीत्येवेष्यते' "तप्पुव्विया अरिहया" इति वचनप्रामाण्यात्, ततोऽनादित्वात्सिद्धं वचनस्यापौरुषेयत्वमिति, तदयुक्तम् अनादितायामप्यपौरुषेयत्वायोगात्, तथाहि-सर्वज्ञपरम्परायेयाऽनादिरिष्यते, तत पूर्वः पूर्वः सर्वज्ञः प्राक्तनसर्वज्ञप्रणीतवचनपूर्वकोऽभवदिति विरुध्यते। किं च-वचनं द्विधा-शब्दरूपम्, अर्थरूपं च। तत्र शब्दरूपवचनापेक्षया नायमस्माकं सङ्गरः, यदुत-'सर्वोऽपि सर्वज्ञो वचनपूर्वक' इति, मरुदेव्यादीनां तदन्तरेणाऽपि सर्वज्ञत्वश्रुतेः, किं त्वर्थरूपापेक्षया। तत कथं शब्दोऽपौरुषेयत्वाभ्युपगमप्रसङ्गः। नन्वर्थपरिज्ञानमपि शब्दमन्तरेण नोपपद्यते तत्कथं न शब्दरूपापेक्षयाऽपि सङ्गरः, तदसत्, शब्दमन्तरेणापि विशिष्टक्षयोपशमादिभावतोऽर्थपरिज्ञानस्य संभवात्, तथा हि-दृश्यन्ते तथाविधक्षयोपशमभाजो मार्गानुसारिबुद्धयो वचनमन्तरेणापि तदर्थप्रतिपत्तिरिति कृतं प्रसङ्गेन। नं० २ गाथाटी०।

ये तु श्रोत्रियाः श्रुतेरपौरुषेयत्वेऽपौरुष्यीं स्फो(र)टयांचक्रुः, ते वीदृशीं श्रुतिमसूमाख्याय-किं वर्णरूपाम्, आनुपूर्वीरूपा वा?। यदि प्राचिकी, तदस्पष्टम् उपरिष्टाद्" अकारादिः पौद्गलिको वर्णः" इत्यत्र विचार्यमाणत्वादस्याः। अथोत्तरा, तर्हि तत्र तत्प्रतीतौ प्रत्यक्षम्, अनुमानम्, अर्थापत्तिः आगमो वा प्रमाणं परिगण्यते। न प्रत्यक्षम्, अस्य तादात्विकभावस्वभावाऽवभासमात्रचारिरूपविरचनत्वात्, 'संबद्धं वर्तमानं च गृह्यते चक्षुरादिना' इति वचनात्। यैव श्रुतिर्मया प्रागश्रावि, सैवेदानीमपीति प्रत्यभिज्ञाप्रत्यक्षमक्षुणं लक्षयन् एवास्याः सदातनत्वमवधीतयदिति चेत्, नन्वसौ-"समुदयमात्रमिदं कलेवरम्" इत्यादिलोकायतागमस्वर्थकरस्यैवास्तीति तेऽपि तथा स्युः, तथा च-तत्पठितानुष्ठाननिष्ठापाटिष्ठता विप्राणामपि मासाति, अन्यथा प्रत्यवायसंभवात्। अथात्रेयमभिधानानन्तरानुपलम्भेन बाध्यते, किं न श्रुतावपि?। अभिव्यञ्जकाभावसंभवी तदानीमनुपलम्भः श्रुतौ नाभावनिबन्धन इति चेत्, किं न नास्तिकसिद्धान्तेऽप्येवम्, इति सकलं समानम्।

किं च-अनुभवानुचरणचतुरं प्रत्यभिज्ञानम्, अनुभवश्च प्रायेण प्रत्यभिज्ञा तात्त्विकी, जातिस्मृत्यादिमतः कस्यापि कतिपयभवविषया च प्रभावयितुं प्रभुः, इति कथमनादौ काले केनापि नेयं श्रुतिः सूत्रिता इति प्रकटयितुं पटीयसीयं स्यात्?। तत्र तत्र प्रत्यक्षं क्षमते। नाऽप्यनुमानं, तद्धि कर्तृस्मरणं, वेदाध्ययनवाच्यत्वं, कालत्वं वा तत्रैतेषु सर्वेष्वपि प्रत्यक्षाऽनुमानाऽऽगमबाधितत्वं तावत्पक्षदोषः। तत्र प्रत्यक्षबाधस्तावत्, तथाविधमठपीठिकाप्रतिष्ठशठबठराध्वर्यूद्गातृहोतृप्रायप्रचुरखण्डिकेषु यजुःसामर्चः उच्चैस्तरां युगपत्पूत्कुर्वत्सु कोलाहलममी कुर्वन्तीति प्रत्यक्षं प्रादुरस्ति, तेन चापौरुषेयत्वपक्षो बाध्यते। अभिव्यक्तिसद्भावादेवेयं प्रतीतिरिति चेत्, तर्हि हंसपक्षादिहस्तकेष्वपि किं नेयं तथा? इति तेऽपि नित्याः स्युः। वर्णयिष्यमाणवर्णव्यक्तिव्यपाकरणं चेहाऽप्यनुसंधानीयम्। 'श्रुतिः पौरुषेयी' वर्णाद्यात्मकत्वात्, कुमारसंभवादिवद् इत्यनुमानबाधः। पुरुषा हि परिभाव्याभिधेयभावस्वभावं तदनुगुणां ग्रन्थवीथीं ग्रथ्नन्ति, तदभावे कौतस्कुतीयं संभवेत्?। यदि हि शङ्खसमुद्रमेघादिभ्योऽपौरुषेयेभ्योऽपि कदाचित्तदात्मकं वाक्यमुपलभ्येत, तदाऽत्राऽपि संभाव्येत, न चैवम्। अथ वर्णाद्यात्मकत्वमात्रं हेतुश्चिकीर्षितं चेत्, तदानीमप्रयोजकं, वल्मीकस्य कुलालपूर्वकत्वे साध्ये मृद्विकारत्ववद्। अथ लौकिकश्लोकादिविलक्षणं तत्तर्हि विरुद्धं, साधनशून्यं च कुमारसंभवादिनिदर्शनं, तत्रैव साध्ये विशिष्टमृद्विकारत्ववत्, कुदृष्टान्तवच्चेति चेत्। नैतच्चतुरस्रम्। यतस्तन्मात्रमेव हेतुः, न चाऽप्रयोजकं विशिष्टवर्णाऽऽद्यात्मकत्वस्यैव क्वाऽप्यसंभवाद्। दुःश्रवणदुर्भणत्वादिस्तु श्रुतिविशेषस्य। "नाष्ट्रस्याष्ट्रारिराष्ट्रेण, भाष्ट्राणदंष्ट्रिणो जनाः। धार्तराष्ट्राः सुराष्ट्रेण, महाराष्ट्रे तु नाष्ट्रिण॥१॥" इत्यादौ लौकिकश्लोके सविशेषस्य सद्भावाद् अभ्यर्थि(धि)ष्महि च-"यत्कौमारकुमारसंभवभवाद्वाक्याच्च किंचिद्भवे-द्वैशिष्ट्यं श्रुतिषु स्थितं तत इमाः स्युः कर्तृशून्याः कथम्" इति। "प्रजापतिर्वेदमेकमासीत्, न अहः आसीत्, न रात्रिः आसीत्; स तपोऽतप्यत तस्मात्तपनः तपनाच्चत्वारो वेदा अजायन्त" इति स्वकर्तृप्रतिपादकागमबाधः। ननु नाऽयमागमः प्रमाणं भूतार्थाभिधायकत्वात्, कार्ये एव ह्यर्थे वाचां प्रामाण्यम्, अन्वयव्यतिरेकाभ्यां लोके कार्यान्वितेषु पदार्थेषु पदानां शक्त्यवगमादिति चेत् तदश्लीलं कुशलोदर्कसंपर्ककर्कश साधूपास्याप्रसक्त इत्यादेर्भूतार्थस्यापि शब्दस्य लोके प्रयोगोपलम्भात्। अथाऽत्रापि कार्यार्थतैव, तस्मादत्र प्रवर्तितव्यमित्यवगमादिति चेत्, स तर्ह्यवगमः औपदेशिकः औ-

पदेशिकार्थकृतो वा भवेत् । न तावदाद्य , तथाविधोपदेशाऽश्रवणात् । द्वितीयस्तु स्यात् , न पुनस्तत्रोपदेशस्य प्रामाण्यम्, अस्य स्वार्थप्रथामात्रचरितार्थत्वात् । प्रतिपादकत्वेनैव प्रमाणानां प्रामाण्याद् । अन्यथा प्रवृत्ताविव तत्साध्यार्थेऽपि प्रामाण्यप्रसङ्गात् । प्रत्यक्षस्य च विवक्षितार्थवत्तत्साध्यार्थक्रियापि प्रमया भवेत् , तस्मात्पुरुषेच्छाप्रतिबद्धवृत्तिप्रवृत्तिरस्तु । मा वा भूत् , प्रमाणेन पदार्थपरिच्छेदश्चकाण , तावतैव प्रेक्षावतोऽपेक्षाबुद्धे पर्यवसानात् , पुरुष प्रामाण्यमस्यावसेयम् । यद्वा-अस्तु तस्मादत्र प्रवर्तितव्यमित्यवगमात्कुशलोदर्कैत्यादिवाक्यानां प्रामाण्यं , किं तु-तद्वदेव वेदे कर्तृप्रतिपादकाऽऽगमस्यापि प्रामाण्यं प्रासाङ्गिदेवेति सिद्ध आगमबाधोऽपि ।

यत्तु कर्त्रस्मरणं साधनम् , तद्विशेषणं सविशेषणं वा वर्ण्येत । प्राक्तनं, तावत्पुराणकूपप्रासादारामविहारादिभिर्व्यभिचारि , तेषां कर्त्रस्मरणेऽपि पौरुषेयत्वात् । द्वितीयं तु संप्रदायाव्यवच्छेदे सति कर्त्रस्मरणादिति व्यधिकरणाऽसिद्धम् , कर्त्रस्मरणस्य श्रुते. अन्यत्राश्रये पुंसि वर्तनात् । अथाऽपौरुषेयी श्रुति , संप्रदायावच्छेदे सत्यस्मऽर्यमाणकर्तृकत्वाद् , आकाशवद् इत्यनुमानरचनायामनवकाशव्यधिकरणासिद्धि. । मैवम् । एवमपि विशेषणे संदिग्धाऽसिद्धताऽऽपत्ते. । तथाहि-आदिमनामपि प्रासादादीनां संप्रदायो व्यवच्छिद्यमानो विलोक्यते, अनादेस्तु श्रुतेरव्यवच्छेदी संप्रदायोऽद्यापि विद्यत इति मृतकमुष्टिबन्धमन्वकार्षीत् , तथा च-कथं न संदिग्धाऽसिद्ध विशेषणम् ? । विशेष्यमप्युभयाऽसिद्धं , वादिप्रतिवादिभ्यां तत्र कर्तु स्मरणात् । ननु श्रोत्रिया. श्रुतौ कर्तारं स्मरन्तीति मृषाद्य श्रोत्रियापसदा. खल्वमी इति चेत् ननु यूयमाम्नायमाम्नासिष्ट तावत्त-"यो वै वेदांश्च प्रहिणोति " इति , " प्रजापति. सोमं राजानमन्वसृजत ततस्त्रयो वेदा अन्वसृजन्त' इति च स्वयमेव स्वस्य कर्तारं स्मारयन्तीं श्रुतिं विश्रुतामश्रुतामिव गणयन्तो यूयमेव श्रोत्रियाऽपसदा. किन्न स्यात् ? । किं च-कण्व-माध्यन्दिनि-तित्तिरिप्रभृतिमुनिनामाङ्किता काश्चन शाखास्तत्कृतत्वादेव मन्वादिस्मृत्य दिवत् । उत्पन्नाना तासां कल्पादौ तैर्दृष्टत्वात् , प्रकाशितत्वाद्वा तन्नामचिह्न अनादौ कालेऽनन्तमुनिनामाऽङ्कितत्व तासां स्यात् । जैनाश्च-कालाऽसुरमेतत्कर्तारम् स्मरन्ति । कर्तृविशेष विप्रतिपत्तेरप्रमाणमेवैतत्स्मरणमिति चेत् । नैवम् । यतो यत्रैव विप्रतिपत्ति , तदेवाऽप्रमाणमस्तु , न पुन कर्तृमात्रस्मरणमपि ।

" वेदस्याऽध्ययनं सर्वं , गुर्वध्ययनपूर्वकम् ।
वेदाध्ययनवाच्यत्वा-दधुनाऽध्ययनं यथा ॥ १ ॥
अतीताऽनागतौ कालौ , वेदकारविवर्जितौ ।
कालत्वात्तद्यथा कालो , वर्तमान समीक्ष्यते ॥ २ ॥"

इति कारिकोक्ते वेदाध्ययनवाच्यत्वकालत्वेऽपि हेतु 'कुरङ्गशृङ्गभङ्गुर कुरङ्गाक्षीणा चेत ' इति वाक्याध्ययन गुर्वध्ययनपूर्वकम् एतद्वाक्याध्ययनवाच्यत्वाद् , अधुनातनाध्ययनवद् अतीतानागतौ कालौ प्रक्रान्तवाक्यकर्तृवर्जितौ कालत्वात् , वर्तमानकालवत् , इतिवदप्रयोजकत्वाद् , अनाकर्णनीयौ सकर्णानाम् । अथाऽर्थाऽऽपत्तेरपौरुषेयत्वनिर्णयो वेदस्य । तथाहि-संवाद-विसंवाददर्शनाऽदर्शनाभ्या तावदेष नि.शेषपुरुषै' प्रामाण्येन निरणायि । तन्निर्णयश्चास्य पौरुषेयत्वे दुराप । यत -

" शब्दे दोषोद्भवस्ताव-द्वक्त्रधीन इति स्थिति. ।
तदभाव. क्वचित्तावद्, गुणवद्वक्तृकत्वत ॥ १ ॥
तद्गुणैरपकृष्टाना, शब्दे संक्रान्त्यसम्भवात् ।
वेदे तु गुणवान् वक्ता, निर्णेतुं नैव शक्यते ॥ २ ॥
ततश्च दोषाभावोऽपि, निर्णेतुं शक्यता कथम् ।
वक्त्रभावे तु सुज्ञानो, दोषाभावो विभाव्यते ॥ ३ ॥
यस्माद्वक्तुरभावेन, न स्युर्दोषा निराश्रया. " ।

तत. प्रामाण्यनिर्णयान्यथाऽनुपपत्तेरपौरुषेयोऽयमिति । अस्तु तावदत्र कृपणपशुपरंपराप्राणव्यपरोपणप्रगुणप्रचुरोपदेशाऽपवित्रत्वादप्रमाणमेवैष. इत्यनुत्तरोत्तरप्रकार. । प्रामाण्यनिर्णयोऽप्यस्य न साध्यसिद्धि , विरुद्धत्वाद् , गुणवद्वक्तृकतायामेव वाक्येषु प्रामाण्यनिर्णयोपपत्ते. । पुरुषो हि यथा रागादिमान्मृषावादी, तथा सत्यशौचादिमान् अवितथवचन समुपलब्ध । श्रुतौ तु तदुभयाभावैरनर्थक्यमेव भवेत् । कथं वक्तुर्गुणित्वनिश्चयश्छन्दसीति चेत् , कथ पितृपितामहप्रपितामहादेरप्यसौ ते स्यात् ? येन तद्धस्तन्यस्तात्तरश्रेणे. पारंपर्योपदेशस्य वाऽनुसारेण आह्यदेयनिधानादौ निःशङ्क प्रवर्तेथा. । कचित्संवादाच्चेद् , अत एवान्यत्रापि प्रतीहि । कारीर्यादौ संवाददर्शनात् । कदाचित्-क्वचित्संवादस्तु सामग्रीवैगुण्यात्त्वयाऽपि प्रतीयत एव, प्रतीताप्तमन्त्रोपदिष्टमन्त्रवत् । प्रतिपादितश्च प्राक् रागद्वेषाज्ञानशून्यपुरुषविशेषनिर्णय. । किं च-अस्य व्याख्यानं तावत्पौरुषेयमेव, अपौरुषेयत्वे भावनानियोगादिविरुद्धव्याख्याभेदाभावप्रसङ्गात् , तथा च को नामाऽत्र विश्रम्भो भवेत् ? । कथं चैतद् ध्वनीनामर्थनिर्णीति ? लौकिकध्वन्यनुसारेणेति चेत् , किं न पौरुषेयत्वनिर्णीतिरपि ?, तत्रोभयस्याऽपि विभावनाद् । अन्यथा त्वर्द्धजरतीयम् । न च लौकिकाऽर्थानुसारेण मदीयोऽर्थ स्थापनीय इति श्रुतिरेव स्वयं वक्ति, न च जैमिन्यादयोऽपि तथा कथयति प्रत्यय इत्यपौरुषेयवचसामर्थोऽप्यन्य एव कोऽपि सभाव्येत । पौरुषेयीणामपि म्लेच्छार्यवाचामैकार्थ्यं नाऽस्ति, किं पुनरपौरुषेयवाचाम् । तत परमकृपापीयूषप्लावितान्त करणः कोऽपि पुमान् निर्दोष प्रसिद्धार्थै ध्वनिभि. स्वाध्यायं विधाय व्याख्याति, इदानींतनग्रन्थकारवत् , इति युक्तं पश्याम. । अवोचाम च-" छन्द स्वीकुरुषे प्रमाणमथ चेत्तद्वाच्यनिश्चायकं, कंचिद्विश्वविदं न जल्पसि ततो ज्ञातोऽस्य मूल्यक्रयी " इति ।

आगमोऽपि नापौरुषेयत्वमाख्याति । पौरुषेयत्वाविष्कारिण एवास्योक्तवत्सद्भावात् । अपि च-इयमानुपूर्वी पिपीलिकादीनामिव देशकृताङ्कुरपत्रकन्दलकाण्डादीनामिव कालकृता वा वर्णाना वेदे न सभवति तेषा नित्यव्यापकत्वात् । क्रमेणाऽभिव्यक्ते सा संभवतीति चेत् , तर्हि कथमियमपौरुषेयी भवेद् , अभिव्यक्ते पौरुषेयत्वात् इति सिद्धा पौरुषेयी श्रुति । रत्ना० ४ परि० ।

(८) आगमस्य चाप्तप्रणीतस्यैव प्रामाण्यं, नतु विरुद्धार्थस्य- आगमानां च येषा पूर्वापरविरुद्धार्थत्वं तेषामप्रामाण्यमेव

यस्त्वाप्तप्रणीत आगमः स प्रमाणमेव कषच्छेदतापलक्षणोपाधित्रयविशुद्धत्वात्। कषाऽऽदीनां च स्वरूपं पुरस्ताद्वक्ष्यामः। न च वाच्यम्-आप्तः क्षीणसर्वदोषस्तथाविधं चाऽऽप्तत्वं कस्याऽपि नाऽस्तीति; यतो रागाऽऽदयः कस्यचिदत्यन्तं छिद्यन्ते अस्मदादिषु तदुच्छेदप्रकर्षाऽपकर्षोपलम्भात् सूर्याऽऽद्यावारकजलदपटलवत्। तथा चाऽऽहु -" देशतो नाशिनो भावा दृष्टा निखिलनश्वराः। मेघपङ्क्त्यादयो यद्वदेवं रागाऽऽदयो मताः" ॥१॥ इति। यस्य च निरवयवतयैते विलीनाः स एवाऽऽप्तो भगवान् सर्वज्ञः।

अथाऽनादित्वाद्रागाऽऽदीनां कथं प्रक्षय इति चेत्?, न उपायतस्तद्भावात्, अनादेरपि सुवर्णमलस्य क्षारमृत्पुटपाकादिना विलयोपलम्भात्। तद्वदेवाऽनादीनामपि रागाऽऽदिदोषाणां प्रतिपक्षभूतरत्नत्रयाऽभ्यासेन विलयोपपत्तेः। क्षीणदोषस्य च केवलज्ञानाऽव्यभिचारात् सर्वज्ञत्वम्। तत्सिद्धिस्तु ज्ञानतारतम्यं क्वचिद्विश्रान्तं तारतम्यत्वात् आकाशपरिमाणतारतम्यवत्। तथा-सूक्ष्मान्तरितदूरार्थाः कस्यचित्प्रत्यक्षाः अनुमेयत्वात् क्षितिधरकन्धराधिकरणधूमध्वजवत्। एवं चन्द्रसूर्योपरागादिसूचकज्योतिर्ज्ञानाविसंवादान्यथानुपपत्तिप्रभृतयोऽपि हेतवो वाच्यास्तदेवमाप्तेन सर्वविदा प्रणीत आगमः प्रमाणमेव, तदप्रामाण्यं हि प्रणायकदोषनिबन्धनं " रागाद्वा द्वेषाद्वा, मोहाद्वा वाक्यमुच्यते ह्यनृतम्। यस्य तु नैते दोषा-स्तस्याऽनृतकारणं किं स्यात्" ॥१॥ इति। स्या० १७ श्लोक।

न च-आगमानां परस्परविरुद्धार्थतया सर्वेषामप्यप्रामाण्यमभ्युपेयं, सर्वज्ञमूलस्याऽवश्यं प्रमाणत्वेनाभ्युपगमार्हत्वात्, अन्यथा-सम्यक् प्रमाणाऽप्रमाणविभागाऽपरिज्ञतेः प्रज्ञावचाद्यानिप्रसङ्गात्, अथ कथमेतत्प्रत्येयं यथा-अयमागमः सर्वज्ञमूल इति ?, उच्यते-यदुक्तोऽर्थः प्रत्यक्षेणाऽनुमानेन च न बाध्यते नाऽपि पूर्वाऽपरव्याहतः सोऽवसीयते। सर्वज्ञप्रणीतोऽन्यस्य तथारूपत्वाऽसंभवात्, ततस्तत्साधयतिद्रम् तत्सर्वं सुसिद्धम्, उक्तं च-" दिट्ठेण इट्ठेण य, जम्मि विरोहो न जुज्जइ कहिंचि। सो आगमो तत्तो जं, नाणं तं सम्मनाणं ति ॥१॥" (धर्म० ५१६) आ० म० १ अ० ६०० गाथाटी०।

जैनाऽऽगमस्य च सर्वज्ञप्रणीतत्वम्—

" सव्वण्णु विहाणम्मि वि, दिट्ठेट्ठावाहिया उ वयणाओ। सव्वण्णू होइ जिणो, सेसा सव्वे असव्वन्नू ॥१॥" एतेन यदुक्तं-भवतु वा वर्द्धमानस्वामी सर्वज्ञस्तथाऽपि तस्य सत्कोऽयमाचारादिक उपदेश इति कथं प्रतीयते इति, तदपि दूराऽपास्तम्, अन्यस्येदंभूतदृष्टेष्टाबाधितवचनप्रवृत्तेरसंभवात्, यदप्युक्तं भवत्वेषोऽपि निश्चयो यथाऽयमाचारादिक उपदेशो वर्द्धमानस्वामिन इति, तथाऽपि तस्योपदेशस्याऽयमर्थो नाऽन्य इति न शक्यं प्रत्येतुमित्यादि, तदप्ययुक्तं, भगवान् हि वीतरागत्वेनो न विप्रतारयति विप्रतम्भहेतुरागाऽऽदिदोषगणाऽसंभवात्। तथा सर्वज्ञत्वेन विपरीत मस्यत्र्यार्थमवयुध्यमानं शिष्यं जानाति ततो यदि विपरीतमर्थमवयुध्यते श्रोता नहि निवारयेत्, न च निवारयति, न च विप्रतारयति, करोति च देशनां इतस्त्वोऽपि तीर्थकरनामकर्मोदयात् ततो ज्ञायते एष एवाऽस्योपदेशस्याऽर्थ इति। उक्तं च—

"नाए वि तदुवएसे, एसेवत्थो मओ त्ति से एवं।
नज्जइ पवत्तमाणं, जं न निवारेइ तह चेव ॥ १ ॥
अन्नह य पवत्तं तं, निवारइ न य तओ पवंचेइ।
जम्हा स वीयरागो, कहणे पुण कारणं कम्मं ॥ २ ॥"

एवं च भगवद्विवक्षाया परोक्षत्वेऽपि सम्यगुपदेशस्यार्थनिश्चये जाते। यदुक्तम्—' गौतमादिरपि छद्मस्थ ' इत्यादि, तदप्यसारमवसेयं, छद्मस्थस्याऽप्युक्तप्रकारेण भगवदुपदेशार्थनिश्चयोपपत्ते। तथा चित्रार्था अपि शब्दा भगवतैव समर्थितास्ते च प्रकरणाद्यनुरोधेन तत्तदर्थप्रतिपादकाः प्रतिपादितास्ततो न कश्चिद्दोष, तत्तत्प्रकरणाद्यनुरोधेन तत्तदर्थनिश्चयोपपत्ते। भगवताऽपि च तथा तथाऽर्थावगमे प्रतिषेधाऽकरणादिति, एवं च तदानीं गौतमादीनां सम्यगुपदेशार्थस्यावगतावाचार्यपरंपरात इदानीमपि तदर्थावगमो भवति। नचाऽऽचार्यपरम्परा न प्रमाणम् अविपरीतार्थव्याख्यातृत्वेन तस्या प्रामाण्यस्याऽपाकर्तुमशक्यत्वात्। अपि च-भवद्दर्शनमपि किमागममूलम्, अनागममूलं वा ?, यद्यागममूलं तर्हि कथमाचार्यपरपरामन्तरेण ?, आगमार्थस्याऽवबोद्धुमशक्यत्वात्, अथाऽनागममूल तर्हि न प्रमाणम्, उन्मत्तकविरचितदर्शनवत्। नं० ४६ सूत्रटी०।

(५) संभवद्रूपस्यैव वचनस्य प्रामाण्यं, नत्वसंभवद्रूपस्येति-

एयं पि ण जुत्तिखमं,
ण वयणमित्ताउ होइ एवमियं।
संसारमोअगाण वि,
धम्मो दोसप्पसंगाओ ॥१२२३॥ पं०व०।

एतदपि न युक्तिक्षमं यदुक्तं परेण, कुत इत्याह—न वचनमात्रादनुपपत्तिकाद्भवत्येवमेतत्सर्वं, कुत इत्याह—संसारमोचकानामपि वचनात् हिंसाकारिणां धर्मस्य, दु खिनो हन्तव्या इत्यस्याऽदोषप्रसङ्गाददुष्टतापत्तेरित्यर्थः ॥१२४॥ प्रति०।

सिय तं ण सम्मवयणं,
इयरं सम्मवयणंति किं माणं ?।
अह लोगो च्चिय णेयं,
तहा अपाढा विगाणा य ॥१२२४॥ पं०व०।

स्यात्-' तत्- ' संसारमोचकवचनं, न सम्यग्वचनमित्याशङ्क्याह- ' इतरद् ' वैदिकं सम्यग् वचनमिति किं मानम्? अथ लोक एव मानमित्याशङ्क्याह—नैतत्तथा, लोकस्य प्रमाणतया अपाठात्, अन्यथा प्रमाणस्य षट्संख्याविरोधात्। तथाविगानाच्च, नहि वेदवचनं प्रमाणमित्येकवाक्यता लोकानामिति ॥ १२५ ॥ प्रति०।

अह पाढोऽभिमओ च्चिय,
विगाणमवि एत्थ थो(थे)वगाणं तु।
इत्थं पि णप्पमाणं,
मज्झेसि विदंमणाओ उ ॥१२२५॥ पं०व०।

अथ पाठोऽभिमत एव लोकस्य प्रमाणमध्ये, परगामुप-

लक्षणत्वात् , विगानमप्यत्र-वेदवचनाप्रामाण्ये स्तोकानामेव लोकानामित्येतदाशङ्क्याह-अत्राऽपि-कल्पनायां न प्रमाणं, सर्वेषां लोकानामदर्शनाद् , अल्पबहुत्वनिश्चयाऽभावादित्यर्थः ॥ १२६ ॥ प्रति० ।

किं तेसि दंसणेणं,
अप्पबहुत्तं जहित्थ तह चेव ।
सव्वत्थ समवसेयं,
ऐव वभिचारभावाओ ॥१२३६॥ पं० व० ।

किं तेषां सर्वेषां लोकानां दर्शनेन?,अल्पबहुत्वं यथा इह-मध्यदेशाऽऽदौ वेदवचनप्रामाण्यं प्रति तथैव सर्वत्र देशान्तरेऽपि समवसेयं, लोकत्वादिहेतुभ्यः, इत्यत्राऽऽह-नैवं, व्यभिचारभावस्तत्कारणत् ॥ १२७ ॥

एतदेवाह ( प्रति० । )—

अग्गाऽऽहारे बहुगा,
दीसंति दिया जहा ण सुद्द त्ति ।
ण य तदंसणओ च्चिय,
सव्वत्थ इमं हवइ एवं ॥१२३७॥पं० व० ।

अग्राऽऽहारे बहवो दृश्यन्ते द्विजा-ब्राह्मणास्तथा न शूद्रा इति, ब्राह्मणवद् बहवो दृश्यन्ते । न च तद्दर्शनादेवाऽग्राऽऽहारे बहुद्विजदर्शनादेव सर्वत्र भिल्लपल्ल्यादावप्येतद्भवत्येव द्विजबहुत्वमिति गाथार्थः ॥ १२८ ॥ प्रति० ।

उपपत्त्यन्तरमाह—

ण य बहुगाण वि(ए)इत्थं,
अविगाणं सोहणं ति णियमोऽयं ।
न य णो थेवाणं पि हु,
मूढेयरभावजोएणं ॥१२३८॥ पं०व० ।

न च बहूनामप्यत्र-लोके अविगानम्-एकवाक्यतारूपं शोभनमिति नियमः नच स्तोकानामपि च शोभनं मूढेतरभावयोगेन मूढानां बहूनामपि न शोभनममूढस्य त्वेकस्यैवेति भावः ॥ १२६ ॥ प्रति० ।

ण य रागाऽऽइविरहिओ,
को वि पमाया विसेसकारि त्ति ।
जं सव्वे वि य पुरिसा,
रागाऽऽइजुआ उ परपक्खे ॥१२३६॥ पं०व० ।

न च रागादिविरहित कोऽपि माता-प्रमाता विशेषकारी-विशेषकृत् यत् सर्वेऽपि पुरुषा रागादियुता परपक्षे-परमते मीमांसकस्य सर्वज्ञाऽनभ्युपगन्तृत्वात् ॥१३०॥

दोषान्तरमाह ( प्रति० । )—

एवं च वयणमित्ता,
धम्माऽऽदोसा ति मिच्छगाणं पि ।
घाएंताण दियवरं,
पुरओ नणु चंडिगाऽऽईणं ॥ १२४० ॥ पं०व० ।

एवं च प्रमाणविशेषाऽपरिज्ञाने सति वचनमात्रात् सकाशात् धर्मादिदोषौ प्राप्नुत, म्लेच्छादीनामपि-भिल्लादीनामपि घातयतां द्विजवरम्-ब्राह्मणमुख्यं पुरतो ननु चण्डिकाऽऽदीनां देवताविशेषाणाम् ॥ १३१ ॥ प्रति० ।

ण य तेसिं पि ण वयणं,
एत्थ णिमित्तं ति जं न सव्वे उ ।
तं तह घायंति सया,
अस्सुअतव्वोअणावक्का ॥ १२४१ ॥ पं०व० ।

न च तेषामपि म्लेच्छानां न वचनमत्र निमित्तमिह द्विजघाते किंतु वचनमेव, कुत इत्याह-यन्न सर्व एव म्लेच्छास्तं द्विजवरं घातयन्ति अश्रुतं तच्चोदनावाक्यं द्विजवरघातविधिवचनं यैस्ते तथा ॥ १३२ ॥ प्रति० ।

अह तं ण एत्थ रूढं,
एयं पि ण तत्थ तुल्लमेवेयं ।
अह तं थो ( थे ) वमणुचियं,
इमम्मि एयारिसं तेसिं ॥१२४२॥ पं०व० ।

अथ तन्म्लेच्छप्रवर्त्तकवचनं नाऽत्र रूढं लोके इत्याशङ्क्याह-इयमेतदपि वैदिकं न तत्र भिल्लमते रूढमिति तुल्यमन्यतरारूढत्वम् , अथ तन्म्लेच्छप्रवर्त्तकं वचनं स्तोकमनुचितमसंस्कृतमित्याशङ्क्याह-इदमप्येतादृशं तेषां म्लेच्छप्रवर्त्तकमेव वचनं वेदेऽस्ति न द्विजप्रवर्त्तकं अथवणमाचस्याऽतन्त्रत्वात् अथर्वणस्योच्छिन्नशाखत्वेनोपपत्तेरिति तैरपि वक्तुं शक्यत्वादिति ॥ १३३ ॥

अन्याऽपि कल्पना ब्राह्मणपरिगृहीतत्वादिरूपा भिल्लपरिगृहीतत्वादितुल्यत्वेन दुष्टत्याह ( प्रति० )-

अह तं वेअंगं खलु,
न तं पि एमेव इत्थ वि ण माणं ।
अह तत्थाऽसवणमिणं,
सि एअमुच्छिन्नसाहं तु ॥ १२४३ ॥
ण य तव्वयणाओ च्चिय,
तदुभयभावो त्ति तुल्लभणिईओ ।
अण्णा वि कप्पणेवं,
साहम्मविहम्मओ दुट्ठा ॥ १२४४ ॥

अथ तद्वेदाङ्गं खलु द्विजप्रवर्त्तकमित्याशङ्क्याह-न तदपि म्लेच्छप्रवर्तकमेवमेव वेदे इत्यत्रापि न मानम् , अथ तत्र वेदे अश्रवणमिदम्-मानम् , न हि तद् वेदे श्रूयत इत्याशङ्क्याह-स्यादेतत्-उत्स(च्छि)न्नशाखमेवैतदपि सम्भाव्यतइति गाथार्थः ॥ १२४३ ॥ न च तद्वचनाद्-वेदवचनादेव तदुभयभावो-धर्मादोषभाव इति, कुत इत्याह-भणितेः, म्लेच्छवचनादेवैतदुभयमित्यपि वक्तुं शक्यत्वादित्यर्थः , अन्याऽपि कल्पना ब्राह्मणपरिगृहीतत्वादिरूपा एवम्-उक्तवत् भिल्लपरिगृहीतत्वादिना प्रकारेण साधर्म्यवैधर्म्येण कारणात् दुष्टेति गाथार्थः ॥ १२४४ ॥ पं० व० ।

यस्मादेवम् ( प्रति० )—

तम्हा ण वयणमित्तं,
सव्वत्थ विसेसओ बुहजणेणं ।

एत्थ पवित्तिणिमित्तं,

ति एय दट्ठव्वयं होइ ॥ १२४५ ॥ पं० व० ।

तस्माच्च वचनमात्रमुपपत्तिशून्यं सर्वत्राऽविशेषत कारणात् बुधजनेन—विद्वज्जनेन अत्र लोके प्रवृत्तिनिमित्तमेव द्रष्टव्य भवति ॥ १३६ ॥ प्रति० ।

किं पुण विसिट्ठगं चिय,

जं दिट्ठिट्ठाहि णो खलु विरुद्धं ।

तह संभवंस(त)रूवं,

वियारिउं सुद्धबुद्धीए ॥ १२४६ ॥ पं० व० ।

किं पुनः विशिष्टमेव वचन प्रवृत्तिनिमित्तमिह द्रष्टव्य, किं भूत यत् दृष्टेष्टाभ्या न खलु विरुद्ध, तृतीयसंस्थानसक्रान्तमित्यर्थ. । तथा संभवत्स्वरूपं यत्, न पुनरत्यन्ताऽनभवि विचार्य शुद्धबुद्धया मध्यस्थयेति गाथार्थ. ॥ १३७ ॥ प्रति० ।

जिनागमस्यैव च सम्भवद्रूपत्व, तदितरस्य चाऽसम्भवद्रूपत्वम्—

तह संभवंतरूवं,

सव्वं सव्वन्नुवयणश्रो एयं ।

तं णिच्छियं हि आगम-

पउत्तगुरुसंपदाएहिं ॥१२७७॥ प०व० ।

तथा संभवद्रूप सर्व सर्वज्ञवचनत एतत्, तन्निश्चितं हिताऽऽगमप्रयुक्तगुरुसम्प्रदायेभ्य. ॥ १६८ ॥ प्रति० ।

वेयवयणं तु णेवं,

अपोरुसेयं तु तं मयं जेणं ।

इयमच्चंतविरुद्धं,

वयणं च अपोरिसेयं च ॥१२७८॥ पं०व० ।

वेदवचन तु नैवं सभवत्स्वरूपम् , अपौरुषेयमेव तन्मतम् इदमत्यन्तविरुद्ध वर्त्तत, यदुत वचन चाऽपौरुषेय चेति गाथाथ ॥ १६९ ॥

एतद्भावनायाऽऽह ( प्रति० )—

जं वुच्चइ त्ति वयणं,

पुरिसाभावे उ णेयमेयंति ।

ता तस्सेवाऽभावो,

णियमेण अपोरुसेयत्ते ॥१२७९॥

यत्-यस्मात् उच्यत इति वचनम् इत्यन्वर्थसज्ञा पुरुषाऽभावे तु नैवमेतत्, नोच्यत इत्यर्थ तत्तस्यैव वचनस्याऽभावो नियमेनाऽपौरुषेयत्वे मत्यापद्यते ॥१७०॥ प्रति० ।

तव्वावारविरहियं,

ण य कत्थइ सुव्वइ इह तं वयणं ।

सवणे वि य णाऽऽसंका,

अदिस्सकत्तुब्भवाऽवेइ ॥१२८०॥ पं०व० ।

तद्व्यापारविरहित न च कदाचित् श्रूयते इह च लोके, श्रवणेऽपि च नाऽऽशङ्का अदृश्यकर्तृद्भवापैति, प्रमाणाभावादिति गाथार्थ. ॥ १७१ ॥ प्रति० ।

अदिस्सकत्तिगं णो,

अणं सुव्वइ कहं णु आसंका ? ।

सुव्वइ पिसायवयणं,

कयाइ एयं तु ण सदेव ॥१२८१॥ पं०व० ।

अदृश्यकर्तृकम् 'नो' नैवान्यत् श्रूयते कथ चाशङ्कति विप्लाद्दष्टेरित्यर्थ । अत्राह-श्रूयते पिशाचवचन, कथञ्चन-कदाचित् लौकिकमेतत्तु वैदिकमपौरुषेय न सदैव श्रूयते ॥१७२॥

अथाभ्युपगमदूषणमाह ( प्रति० )—

वण्णा य पोरसेयं,

लोइयवयणाण ऽवीह सव्वेसिं ।

वेयम्मि को विसेसो,

जेण तहिं एस ऽसग्गाहो ॥१२८२॥ पं०व०।

वर्णाद्यपौरुषेयं लौकिकवचनानामपीह सर्वेषा , वर्णत्वादिवाचकत्वादे पुरुषैरकरणात् , वेदे को विशेषो येन तत्रैषोऽसद्ग्राहोऽपौरुषेयत्वासद्ग्रह इति ॥ १७३ ॥ प्रति० ।

ण य णिच्छश्रो वि हु तश्रो,

जुज्जइ पायं कहं चि सण्णाया ।

जं तस्सत्थपगासण-

विसएह अइंदिश्रा सत्ती ॥ १२८३ ॥ पं० व० ।

न च निश्चयोऽपि ततो वेदवाक्यात् युज्यते प्राय कचिद्वस्तुनि सन्न्यायात् यद्-यस्मात्तस्य वेदवचनस्यार्थप्रकाशनविषयेहप्रक्रमेऽतीन्द्रियाशक्तिरिति गाथार्थ. ॥१७४॥ प्रति० ।

णो पुरिसदि्तगम्मा ,

तदतिसश्रो वि हु ण बहुमश्रो तुम्हं ।

लोइयवयणेहिंतो ,

दिट्ठं च कहिंचि वेहम्मं ॥ १२८४ ॥ पं०व० ।

न पुरुषमात्रगम्या एषा तदतिशयोऽपि न बहुमतो युष्माकम् अतीन्द्रियदर्शी लौकिकवचनेभ्यः सकाशाद् दृष्ट च कथंचिद्वैधर्म्य वेदवचनानामिति गाथार्थ ॥ १७५ ॥ प्रति० ।

ताणि ह पोरुसेयाणि,

अपोरुसेयाणि वेयवयणाणि ।

सग्गुव्वसिपमुहाणं ,

दिट्ठो तह अत्थभेश्रोऽवि ॥ १२८५ ॥ पं०व० ।

तानीह पौरुषेयाणि लौकिकानि अपौरुषेयाणि वेदवचनानीति वैधर्म्य, स्वर्गोर्वशीप्रमुखानां शब्दानां दृष्ट; स्त्यार्थभेदोऽपि, एवं च 'य एव लौकिकास्त एव वैदिका , स एवैषामर्थ' इति यत् किंचिदेतत् ॥ १७६ ॥ प्रति० ।

ण य तं सहावश्रो चिय,

सत्थपगासणपरं पईवो व्व ।

समयविभेयाऽजोगा,

मिच्छत्तपगासजोगा य ॥ १२८६ ॥ पं०व० ।

न च तद्वेदवचनं स्वभावत एव स्वार्थप्रकाशनपरं प्रदीपवत्, कुत ?, इत्याह—समयविभेदाऽयोगात्-संकेतभेदाऽभावात

मिथ्यात्वप्रकाशयोगाच्च क्वचिदेतदापत्तेरिति भाव ॥१७७॥
तदाह (प्रति०)—

इंदीवरंमि दीवो,
पगासई रत्तयं असंतं पि ।
चंदो वि पीयवत्थं,
धवलं ति न णिच्छओ तत्तो ॥१२८७॥ पं० व० ।

इन्दीवरे दीप प्रकाशयति रक्तनामसतीमपि चन्द्रोऽपि पीतवस्त्रं धवलमिति प्रकाशयति न निश्चयस्ततो वेदवचनाद् व्यभिचारिण इति गाथार्थ ॥ १७८ ॥ प्रति० ।

एवं णो कहियाऽऽगम-
पओगगुरुसंपयायभावोऽवि ।
जुज्जइ सुद्दो इहं खलु,
नाएणं छिन्नमूलत्ता ॥ १२८८ ॥ पं० व० ।

एवं न कथिताऽऽगमप्रयोगगुरुसम्प्रदायभावोऽपि प्रवृत्त्यङ्गभूतो युज्यते यत इह खलु वेदवचने न्यायेन, 'छिन्नमूलत्वात्' तथाविधवचनासंभवादिति गाथार्थ ॥१७९॥ प्रति० ।

ण कयाइ इओ कस्सइ,
इह णिच्छयमो कहिं चि वत्थुम्मि ।
जाओ त्ति कहइ एवं,
जं सो तत्तं स वामोहो ॥ १२८९ ॥ पं० व० ।

न कदाचिदतो-वेदवचनात् कस्यचिदिह निश्चय एव क्वचिद्वस्तुनि जात इति कथयति एवं सति यदसौ वैदिकस्तस्य स व्यामाह स्वतोऽप्यज्ञात्वा कथनात् ॥ १८० ॥ प्रति० ।

तत्तो अ आगमो जो,
विणेयसत्ताण सो वि एमेव ।
तस्स पओगो चेवं,
अणिवारणगं च णियमेणं ॥१२९०॥ पं० व० ।

ततश्च वैदिकादर्थादागमो यो व्याख्यारूप विनेयसत्वानां सबन्धी सोऽप्येवमेव-व्यामोह एव तस्याऽऽगमार्थस्य प्रयोगोऽप्येवमेव-व्यामोह एव अनिवारण च नियमेन व्यामोह एवेति गाथार्थ ॥ ८१ ॥ प्रति० ।

णेवं परंपराए,
माण एत्थ गुरुसंपयाओ वि ।
रूवविसेसद्दवणे,
जह जच्चंधाण सव्वेसिं ॥ १२९१ ॥ पं० व० ।

नैव परम्पराया मानम् , अत्र च व्यतिकरे गुरुसम्प्रदायोऽपि निदर्शनमाह-सितेतरादिरूपविशेषस्थापने यथा जात्यन्धाना सर्वेषामनादिमताम् ॥ १८२ ॥
पराऽभिप्रायमाह (प्रति०)—

भवतो वि य सव्वन्नू,
सव्वो आगमपुरस्सरो जेणं ।
ता सो अपोरुसेओ,
इअरो वाऽणागमा जो उ ॥ १२९२ ॥ पं० व० ।

भवतोऽपि च सर्वज्ञ सर्व आगमपुरस्सर येन कारणेन स्वर्गकेवलार्थिना तपोध्यानादिकर्तव्यमित्यागम अत प्रवृत्तेरिति, तदसावपौरुषेय , इतर अनादिमत् सर्वज्ञोऽनागमादेव कस्यचित्तमन्तरेणापि भावादितिगाथार्थ ॥ १८३ ॥ प्रति० ।

णोभयमवि जमणाई,
बीयंऽकुरजीवकम्मजोगसमं ।
अहवऽत्थतो उ एवं,
ण वयणओ वत्तहीणं तं ॥ १२९३ ॥ पं० व० ।

अत्रोत्तरम्-'नो'नैतदेवमुभयमप्यागम सर्वज्ञश्च यद्यस्मादनादिबीजाङ्कुरजीवकर्मयोगसम न ह्यत्रेद पूर्वमिदं नेति व्यवस्था ततश्च यथोक्तदोषाभाव , अथवा-अर्थत एव बीजाऽङ्कुरादिन्याय सर्व एव कथचिदागममामाद्य सर्वज्ञो जात नदर्थश्च तत्साधक इति न वचनतो-न वचनमेवाश्रित्य मरुदेव्यादीनां प्रकारान्तरेणापि भावात् । तद्वचनं वक्त्रधीन तत्वनाद्यपि वक्तारमन्तरेण वचनप्रवृत्तेरयोगात् । तदर्थप्रतिपत्तिस्तु क्षयोपशमादेरविरुद्धा, तथा दर्शनादेतत्सूक्ष्मधिया भावनीयम् ॥ १८४ ॥ प्रति० ।

वेयवयणम्मि सव्वं,
णाएणासंभवंतरूवं जं ।
ता इयरवयणसिद्धं,
वत्थु कहं सिज्झई तत्तो ॥१२९४॥ पं० व० ।

वेदवचने सर्वमागमादिन्यायेनाऽसंभवद्रूपं यद्—यस्मात् तत्-तस्मादितरवचनात्सिद्ध सद्रूपवचनसिद्ध वस्तु हिंसादोसादि कथं सिध्यति ततो--वेदवचनादिति गाथार्थ ॥ १८५ ॥ प्रति० ।

( आगमस्य च स्वरूपप्रतिपादकस्यापि प्रामाण्यम् )—

नच स्वरूपप्रतिपादकानामप्रामाण्यम् , प्रमाणजनकत्वस्य सद्भावात् । तथाहि-प्रमाजनकत्वेन प्रमाणस्य प्रामाण्य न प्रवृत्तिनिवृत्तिजनकत्वेन तच्चेहास्त्येव प्रवृत्तिनिवृत्ती तु पुरुषस्य सुखदु खसाधनत्वाध्यवसाये समर्थस्यार्थित्वाद्भवत इति । अथ विधावङ्गत्वादमीषां प्रामाण्य न स्वरूपार्थत्वादिति चेत् , तदसत् , स्वार्थप्रतिपादकत्वेन विध्यङ्गत्वात् . तथाहि-स्तुते स्वार्थप्रतिपादकत्वेन प्रवर्त्तकत्वं,निन्दायास्तु निवर्त्तकत्वमिति । अन्यथा हि-तदर्थापरिज्ञाने विहितप्रतिषिद्धेष्वविशेषेण प्रवृत्तिर्निवृत्तिर्वा स्यात्तथार्वाचीनवाक्यस्यापि स्वार्थप्रतिपादनद्वारेणैव पुरुषप्रेरकत्व दृष्टम् एवं स्वरूपपरेष्वपि वाक्येषु स्यात् , वाक्यस्वरूपताया अविशेषात् विशेषहेतोश्चाऽभावादिति । तथा-स्वरूपार्थानामप्रामाण्ये ' मेध्या आपो दर्भा पवित्रम् , अमेध्यमशुची" त्येवंस्वरूपापरिज्ञाने विध्यङ्गतायामप्यविशेषेण प्रवृत्तिनिवृत्तिप्रसङ्ग , न चैतदस्ति; मेध्येष्वेव प्रवर्त्तते अमेध्येषु च निवर्त्तत इत्युपलम्भात् । तदेवं स्वरूपार्थेभ्यो वाक्येभ्योऽर्थस्वरूपावबोधे सति इष्टे प्रवृत्तिदर्शनात् अनिष्टे च निवृत्तेरिति ज्ञायते-स्वरूपार्थानां प्रमाजनकत्वेन प्रवृत्तौ निवृत्तौ वा विधिसहकारित्वमिति, अपरिज्ञानात्तु प्रवृत्तावतिप्रसङ्ग । अथ स्वरूपार्थाना प्रामाण्ये "ग्रावाण प्लवन्ते" इत्येवमादीनामपि यथाऽर्थता स्यात् , न,

मुख्ये बाधकोपपत्ते । यत्र हि मुख्ये बाधकं प्रमाणमस्ति तत्रोपचारकल्पना, तदभावे तु प्रामाण्यमेव । न चेश्वरसद्भावप्रतिपादनेषु किंचिदस्ति बाधकमिति स्वरूपे प्रामाण्यमभ्युपेन्तव्यम् । सम्म० १ काण्ड १ गाथाटी० ।

(मूलाऽऽगमैकदेशभूतस्य चाऽऽगमान्तरस्यापि प्रामाण्यम् )-

ऐदंपर्यं शुध्यति, यत्रासावागमः सुपरिशुद्धः ।
तदभावे तद्देशः, कश्चित्स्यादन्यथा ग्रहणात् ॥ १२ ॥

ऐदंपर्यं-तात्पर्यं पूर्वोक्तं शुध्यति-स्फुटीभवति यत्राऽऽगमे-असावागमः सुपरिशुद्धः-प्रमाणभूतस्तदभावे-ऐदंपर्यशुध्यभावे तद्देशः-परिशुद्धाऽऽगमैकदेशः कश्चिद्-अन्य आगमः स्यान्नतु मूलागम एव अन्यथाग्रहणात् मूलाऽऽगमैकदेशस्य सतो विषयस्यान्यथा प्रतिपत्तेर्यतः समतामवलम्बमानास्तेऽपि तथेच्छन्ति ।

मूलाऽऽगमव्यतिरिक्ते तदेकदेशभूत आगमेऽन्यथा परिगृहीते द्वेषो विधेयो न वेति, तदभावप्रतिपादनायाह—

तत्राऽपि च न द्वेषः, कार्यो विषयस्तु यत्नतो मृग्यः ।
तस्याऽपि न सद्वचनं, सर्वं यत्प्रवचनादन्यत् ॥ १३ ॥

तत्रापि च-तदेकदेशभूत आगमान्तरे न द्वेषः कार्यो-न द्वेषो विधेयो विषयस्त्वभिधेयज्ञेयरूपो यत्नतो-यत्नेन मृग्यः-अन्वेषणीयो यद्यवं सर्वमेव तद्वचनं किं न प्रमाणीक्रियत इत्याह-तस्याप्यागमान्तरस्य न सत्-शोभनं वचनं सर्वम्-अखिलं यत्प्रवचनात्-मूलाऽऽगमादन्यत् यत्तु तदनुपाति तत्सदेवेति ।

कस्मात्पुनस्तत्राऽद्वेषः क्रियत इत्याह—

अद्वेषो जिज्ञासा, शुश्रूषा श्रवणबोधमीमांसाः ।
परिशुद्धा प्रतिपत्तिः, प्रवृत्तिरष्टाङ्गिकी तत्त्वे ॥ १४ ॥

अद्वेषः-अप्रीतिपरिहारस्तत्त्वविषयस्तत्पूर्विका ज्ञातुमिच्छा-जिज्ञासा तत्त्वविषया ज्ञानेच्छा तत्त्वजिज्ञासा सा पूर्विका बोधाम्भःश्रोतसः शिराकल्पा श्रोतुमिच्छा शुश्रूषा तत्त्वविषयैव । तत्त्वशुश्रूषानिबन्धनं श्रवणम्-आकर्णनं तत्त्वविषयमेव बोधः-अवगमः परिच्छेदो विवक्षितार्थस्य श्रवणनिबन्धनस्तत्त्वविषय एव मीमांसा सद्विचाररूपा-बोधानन्तरभाविनी तत्त्वविषयैव । श्रवणं च बोधश्च मीमांसा च श्रवणबोधमीमांसाः । परिशुद्धा-सर्वतो भावविशुद्धा प्रतिपत्तिर्मीमांसोत्तरकालभाविनी निश्चयाकारा परिच्छित्तिरिदमिदमेवेति तत्त्वविषयैव । प्रवर्त्तनं प्रवृत्तिरनुष्ठानरूपा परिशुद्धप्रतिपत्त्यनन्तरभाविनी तत्त्वविषयैव, प्रवृत्तिशब्दो द्विरावर्त्यते तेनायमर्थो भवति । तत्त्वे प्रवृत्तिरष्टभिरङ्गैर्निर्वृत्ताष्टाङ्गिकी एभिरद्वेषादिभिरष्टभिरङ्गैस्तत्त्वप्रवृत्तिः संपद्यते तेनाऽऽगमान्तरे मूलाऽऽगमैकदेशभूते न द्वेषः कार्य इति । षो० १६ विव० ।

( ७ ) प्रमाणान्तराविषय एव पदार्थो नाऽऽगमेन बोध्यते किन्तु प्रमाणान्तरविषयोऽपि-

" न ह्यागमसिद्धा पदार्थाः " इति, प्रत्यक्षस्यापि प्रतिक्षेपो युक्तः । यदपि प्रत्यक्षानुमानाविषये चार्थे आगमप्रामाण्यवादिभिस्तस्य प्रामाण्यमभ्युपगम्यते-तदुक्तम्-" आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम् । " ( जैमि० १-२-१ । ) इति तदप्ययुक्तम् , यतो यथाप्रत्यक्षप्रतीतेऽप्यर्थे विप्रतिपत्तिविषयेऽनुमानमपि प्रवृत्तिमासादयतीति प्रतिपादितम् । तथा प्रत्यक्षानुमानप्रतिपन्नेऽप्यात्मलक्षणेऽर्थे तस्य वा प्रतिनियतकर्मफलसंबन्धलक्षणे किमित्यागमस्य प्रवृत्तिर्नाभ्युपगमस्य विषय ? । नचाऽऽगमस्य तत्राप्रामाण्यमिति वक्तुं युक्तं, सर्वज्ञप्रणीतत्वेन तत्प्रामाण्यस्य व्यवस्थापितत्वात् । सम्म० १ काण्ड १ गाथाटी० ।

आगमप्रमाणञ्च प्रमाणान्तरे नान्तर्भवति तथा चाऽत्र शङ्कितम्-

आगमोऽपि नाऽनुमानाद् भिद्यते, परमार्थतस्तस्याप्यनुमानत्वात्तथाहि-'शाब्दं प्रमाणमागमः' उच्यते-शब्दश्च द्विविधो दृष्टार्थविषयः,अदृष्टार्थविषयश्च । तत्र दृष्टार्थविषया शब्दाद् या प्रतीतिः, सा वस्तुतोऽनुमानमनुमेयैव यतः क्वचित्प्रथमं पृथुबुध्नोदरोर्ध्वकुण्डलोष्टायतवृत्तग्रीवादिमति घटपदार्थे घटशब्दं प्रयुज्यमानं दृष्ट्वा तदुत्तरकालं क्वापि घटमानयेत्यादिशब्दं श्रुत्वा पृथुबुध्नोदरादिमदर्थ एव घट उच्यते, तथाभूतपदार्थे एव घटशब्दप्रयोगप्रवृत्तेः, यथा पूर्वं कुम्भकारापणादौ घटशब्दश्चायमिदानीमपि श्रूयते तस्मात्तथाभूतस्यैव पृथुबुध्नोदरादिमतः पदार्थस्य मया आनयनादिक्रिया कर्त्तव्या इत्यनुमानं विधाय प्रमाता घटानयनादिक्रियां करोति, इत्येवं दृष्टार्थविषयं शाब्दं प्रमाणं वस्तुतो नानुमानाद्भिद्यते । विशे० १५५२ गाथाटी० ।

( ८ ) आगमप्रमाणस्यानुमानप्रमाणेऽन्तर्भावः—

काणादाः—शब्दोऽनुमानं व्याप्तिग्रहणबलेनार्थप्रतिपादकत्वाद्धूमवदिति । तत्र हेतोरामुखे कूटाऽकूटकार्षापणनिरूपणप्रवणप्रत्यक्षेण व्यभिचारस्तथाभूतस्यापि तत्प्रत्यक्षस्यानुमानरूपताऽपायात् । आः कथं प्रत्यक्षं नाम भूत्वा व्याप्तिग्रहणपुरस्सरं पदार्थं परिच्छिन्द्यात् ? उन्मीलितं हि चक्षुर्लोचनं जातमेव परीक्षकाणां कूटाकूटविवेकेन प्रत्यक्षमिति क्व व्याप्तिग्रहणावसर इति चेत् , तदेवान्यत्रापि प्रतीहि । तथाहि-समुच्चारितश्चेद्ध्वनिः , जातमेव जनस्य शब्दार्थसंवेदनमिति क्व व्याप्तिग्रहणावकाश इति । एवं तर्हि नालिकेरद्वीपवासिनोऽपि पनसशब्दात्तदर्थसंवित्तिः स्यादिति चेत् , किं नापरीक्षकस्यापि कार्षापणे कूटाकूटविवेकेन प्रत्यक्षोत्पत्तिः ? । अथ यावानेतादृशविशेषसमाकलितकलेवरः कार्षापणः तावानेष कूटोऽकूटो वा निष्टङ्कनीयस्त्वया, इत्युपदेशसाहायकापेक्षं चक्षुरादि तद्विवेकं कौशलं कलयति, नचापरीक्षकस्यायं प्राक्प्रावर्त्तिष्टेति चेत् तर्हि शब्दोऽपि यावान् पनसशब्दस्तावान् पनसार्थवाचक इति संवित्तिसहायस्तत्प्रतिपादने पटीयान् , न च नालिकेरद्वीपवासिनः प्रागियं प्रादुरासीदिति कथं तस्य तत्प्रतीतिः स्यात् ? । अथैतादृशसंवेदनं व्याप्तिसंवेदनरूपमेव , तदपेक्षायां च शब्दार्थज्ञानमनुमानमेव भवेदिति चेत् , कूटाकूटकार्षापणविवेकप्रत्यक्षमपि किं न तथा । तत्रापि तथाविधोपदेशस्य व्याप्त्युल्लेखस्वरूपत्वात् । अथ व्याप्तः प्राक् प्रवृत्तावपि तदानीमभ्यासदशापन्नत्वेनानपेक्षणात्प्रत्यक्षमेवैतत्तदपेक्षायां तु भवत्येवैतदनुमानं , कूटोऽयं कार्षापणः , तथाविधविशेषसमन्वितत्वात्प्राक्प्रेक्षितकार्षापणवत् , इति चेत् ,एतदेव समस्तमन्यत्रापि तुल्यं विचारयतु भवान् । न खल्वभ्यासदशायां कोऽपि व्याप्तिं शब्देऽप्यपेक्षते, सहसैव तज्ज्ञानोत्पत्तेः। अनभ्या-

से तु को नाम नानुमानतां मन्यते, । यथा कस्यचिद्विस्मृतसंकेतस्य कालान्तरे पनसशब्दश्रवणे, य पनसशब्द स आमूलफले अहिविटपिविशेषवाचको , यथा यज्ञदत्तोक्त प्राक्तनस्तथा चायमपि देवदत्तोक्त इति । एव च पक्षैकदेशे सिध्यसाध्यता , शब्दोऽनुमानमित्यत्र सकलवाचकाना पक्षीकृतानामेकदेशस्यानुमानरूपतया स्वीकृतत्वात् । यस्त्वागमरूपतया स्वीकृत शब्दस्तत्राभ्यासदशापन्नत्वेन व्याप्तिग्रहणापेक्षैव नास्ति । अन्यथा कूटाऽकूटकार्षापणप्रत्यक्षण व्यभिचारापत्ते तथा च हेतोरसिद्धि । एवं च ( शब्दत्वस्य व्याप्तिग्रहणानपेक्षत्वे सिद्धे ) विवादास्पद शब्दो नानुमान, तद्विभिन्नसामग्रीकत्वात्, कूटाऽकूटकार्षापणविवेकप्रत्यक्षवदिति सिद्धम् ।

किं च-वाचामनुमानमानतामातन्वानोऽसौ कथं पक्षधर्मतादिकमादर्शयत् ? । चैत्र ककुदादिमदर्थविवक्षावान् गोशब्दोच्चारणकर्तृत्वात्, अहमिव इतीत्थमिति चेत्, नन्वतो विवक्षामात्रस्यैव प्रतीति स्यात्, तथा च कथमर्थे प्रवृत्तिर्भवेत् ? । विवक्षातोऽर्थसिद्धिरिति चेत् । मैवम् । अस्या तद्व्यभिचारात् नाप्तानामन्यथापि तदुपलब्धे । अथ यथाप्रोक्ताच्छब्दात्तथाप्तविवक्षातोऽनुगुणैवार्थसिद्धिर्भविष्यतीति चेत्, सत्यम् । किं प्रतीतिपराहतैवेयं परम्परा,शब्दश्रुतौ सत्या प्रतीत्यन्तराव्यवहितस्यैवार्थस्य संवेदनात्, यथा लोचनव्यापारे सति रूपस्य । अपि च-अप्रातीतिकैतादृक्कल्पनामहापातक क्रियता नाम, यदि नान्या गति स्यात् अस्ति चेयं शब्दस्य स्वाभाविकवाच्यवाचकभावसंबन्धद्वारेणार्थप्रत्यायकत्वोपपत्ते । एतच्च " स्वाभाविकसामर्थ्यसमयाभ्यामि " त्यादिसूत्रे निर्णेष्यते ।

उदाहरन्ति—

**समस्त्यत्र प्रदेशे रत्ननिधानं, सन्ति रत्नसानुप्रभृतय इति ॥ ३ ॥**

वक्ष्यमाणलौकिकजनकादिलोकोत्तरतीर्थकराद्यपेक्षया क्रमेणोदाहरणोभयी । रत्ना० ४ परि० ।

अत्राह मीमांसक- " शब्दज्ञानादसन्निकृष्टेऽर्थे बुद्धि शाब्दम् "-( १-१-५ । शाबरभा० ) इति वचनात् ' शब्दादुदेति यद् ज्ञान-मप्रत्यक्षेऽपि वस्तुनि । शाब्दं तदिति मन्यन्ते, प्रमाणान्तरवादिन " ॥१॥ इतिलक्षणलक्षितस्य प्रमाणान्तरस्य सद्भावात्, कथं द्वे एव प्रमाणे ? । न चास्य प्रत्यक्षप्रमाणता सविकल्पकत्वात्, नाप्यनुमानता त्रिरूपलिङ्गाप्रभवत्वात् अनुमानगोचराविषयत्वाच्च । तदुक्तम्-" तस्मादननुमानत्व , शाब्दे प्रत्यक्षवद्भवेत् । त्रैरूप्यरहितत्वेन, तादृग्विषयवर्जनात् " ( श्लो० वा० शब्दप० ६८) । तथाहि-न शब्दस्य पक्षधर्मत्व धर्मिणोऽयोगात् । नचार्थस्य धर्मित्वं तेन तस्य संबन्धासिद्धे । नचाप्रतीतेऽर्थे तद्धर्मतया शब्दस्य प्रतीति संभविनी प्रतीते चार्थे न तद्धर्मताप्रतिपत्ति शब्दस्योपयोगिनी तामन्तरेणाप्यर्थस्य प्रागेव प्रतीते अन्यथा तस्य तद्धर्मतया प्रतीत्ययोगात् । भवतु वाऽर्थो धर्मी तथाऽपि किं तत्र साध्यमिति वक्तव्यं ?, सामान्यमितिचेत्, न, तस्य धर्मिपरिच्छेदकाल एव सिद्धत्वात् । तदपरिच्छेदे धर्मिपरिच्छेदाऽयोगाद् नागृहीतविशेषणा विशेष्ये बुद्धि " इति न्यायात् । न च सामान्यं धर्मि अर्थविशेषस्तत्र साध्यो धर्म उक्तदोषानतिक्रमात् । विशेषस्य चानन्वयाद् । अथ-शब्दो धर्मी अर्थवानिति साध्यो धर्म शब्द एव च हेतु न, प्रतिज्ञार्थैकदेशत्वप्राप्ते । अथ शब्दत्व हेतुरिति न प्रतिज्ञार्थैकदेशत्वं दोष , न, शब्दत्वस्यागमकत्वात् गोशब्दत्वस्य च निपेत्स्यमानत्वेनासिद्धत्वात् । अत एवानुमानतुल्यविषयताऽपि न शाब्द संभवति । तदुक्तम्—

" सामान्यविषयत्व हि , पदस्य स्थापयिष्यते ।
धर्मी धर्मविशिष्टश्च, लिङ्गीत्येतच्च साधितम् ॥
न तावदनुमान हि , यावत्तद्विषय न तत् ।
अथ शब्दोऽर्थवत्त्वेन , पक्ष कस्मान्न कल्प्यते ।
प्रतिज्ञार्थैकदेशो हि हेतुस्तत्र प्रसज्यत ।
पक्षे धूमविशेष हि , सामान्यं हेतुरिष्यत ।
शब्दत्व गमक नात्र , गोशब्दत्व निपेत्स्यते ।

व्यक्तिरेव विशेष्याऽतो, हेतोश्चैका प्रसज्यते " इति । ( श्लो० वा० शब्दप० ५५-५६-, ६२-,६४ । ) शब्दस्य चार्थेन संबन्धाभावतो यथा न पक्षधर्मत्वं तथाऽन्वयोऽपि प्रमेयेण व्यापाराभावतोऽसङ्गत एव । तदुक्तम्-

" अन्वयो न च शब्दस्य, प्रमेयेण निरूप्यते ।
व्यापारेण हि सर्वेषा-मन्वेतृत्वं प्रतीयेत ।
यत्र धूमोऽस्ति तत्राग्ने-रस्तित्वेनान्वय स्फुट ।
नत्वेवं यत्र शब्दोऽस्ति, तत्राऽर्थोऽस्तीति निश्चय ।
न तावत् यत्र देशेऽसौ , न तत्कालेऽवगम्यते ।
भवेन्नित्यविभुत्वाच्चेत्, सर्वार्थेष्वपि तत्समम् ।
तेन सर्वत्र दृष्टत्वाद् ,व्यतिरेकस्य चागत ।

सर्वशब्दैरशेषार्थ-प्रतिपत्ति प्रसज्यत "( श्लो० वा० शब्दप० ८५-८८ ) अन्वयाभाव व्यतिरेकस्याप्यभाव, उक्तं च- अन्वयेन विना तस्मा-द्व्यतिरेक कथं भवेत्-? " इति तदेवमनुमानलक्षणाभावात् शाब्द प्रमाणान्तरमेव । सम्म० २ काण्ड १ गाथाटी० ।

अत्र प्रतिविधीयते-यत्तावत् शाब्दस्य त्रैरूप्यरहितत्वेन तादृग्विषयाभावाच्चानुमानानन्तर्भावप्रतिपादमभ्यधायि तद् युक्तमेव न ह्यप्रमाणस्यानुमानेऽन्तर्भावो युक्त । कुत पुन शब्दाद्भवस्य ज्ञानस्याप्रामाण्य ?, शब्दस्यार्थप्रतिबन्धाभावात् । न हि शब्दोऽर्थस्य स्वभाव अत्यन्तभेदात् नापि कार्य तेन विनाऽपि भावात् । न च तादात्म्यतदुत्पत्तिव्यतिरिक्त संबन्धो गमकत्वनिबन्धनमस्ति । न च सङ्केतबलाद्वास्तवप्रतिपक्तिशक्तियुक्ताना प्रदीपानामिवार्थप्रकाशकत्वं संभवति । न च व्यवस्थितैवार्थप्रतिपादनयोग्यता संकेतेन शब्दस्याभिव्यज्यत इति वक्तव्य पुरुषेच्छावशादन्यत्रार्थे शब्दस्य समयादप्रवृत्तिप्रसक्ते । दृश्यते च पुरुषेच्छावशादन्यत्रापि विषये शब्दाना प्रवृत्ति । न च पुरुषेच्छावृत्ति समयो वस्तुप्रतिबद्ध तदभावेऽपि तस्य प्रवृत्त । न च संकेतमन्तरेण शब्दस्य वस्तुप्रत्यायकत्व संकेताभावप्रसक्ते । आप्तप्रणीतशब्दाना पुनरर्थाव्यभिचारेऽप्याप्तप्रणीतत्वानिश्चयादप्रामाण्य न पुनराप्तस्यैवासंभवात् । तदसंभवबाधकप्रमाणाभावात् । ततो बाह्ये विषये शब्दाना प्रतिबन्धाभावत प्रमाण्यमेव न संभवति

पक्षधर्मत्वाद्यसंभवादनुमानत्वाभावप्रतिपादनं युक्तमेवेति स्थितम्। यत्र तु वक्त्रभिप्रायसूचने प्रामाण्यमस्य तत्रानुमानलक्षणयुक्तस्यैव नान्यादृग्भूतस्येति न प्रमाणान्तरत्वम्। सम्म० २ काण्ड १ गाथाटी०।

(६) आगममधिकृत्योक्तम्—

तस्य च जीवाऽजीवादिलक्षणे दृष्टविषये वस्तुतत्त्वे सर्वदा अविसंवादात् अदृष्टविषयेऽप्येकवाक्यतया प्रवर्तमानस्य च प्रामाण्यं प्रतिपत्तव्यम्। न च वक्त्रधीनत्वात् तस्य अप्रामाण्यं वक्त्रधीनत्वप्रमाणत्वयोर्विरोधाभावाद्वक्त्रधीनस्यापि प्रत्यक्षस्य प्रामाण्योपलब्धेः न चाक्षजत्वाद्वस्तुप्रतिबद्धत्वेन तत्र प्रामाण्यं न शाब्दस्य विपर्ययादिति वक्तव्यं शाब्दस्य अत एव प्रमाणान्तरत्वोपपत्तेः अन्यथा अनुमानादविशेषप्रसङ्गात्। तथाहि-गुणवद्वक्तृप्रयुक्तशब्दप्रभवत्वादेव शाब्दम् अनुमानज्ञानाद्विशिष्यते अन्यथा बाह्यार्थप्रतिबन्धस्यात्रापि सद्भावात् नानुमानादस्य विशेषः स्यात्। यदा च परोक्षेऽपि विषयेऽस्य प्रामाण्यमुक्तन्यायात् तदा गुणवद्वक्तृप्रयुक्तत्वेनास्य प्रामाण्यम् अतश्च गुणवद्वक्तृप्रयुक्तत्वमितीतरेतराश्रयदोषोऽपि नाऽत्राऽवकाशं लभते यथोक्तसंवादादस्य प्रामाण्यनिश्चये। कुतोऽयमस्यात्र संवाद इत्यपेक्षायाम् आप्तप्रणीतत्वादित्यवगमो न पुनः प्रथममेव तत्प्रणीतत्वनिश्चयादस्यार्थप्रतिपादकत्वं प्रतिबन्धनिश्चयादनुमानस्येव नापि दृष्टविषयाविसंवादिवाक्यैकवाक्यतां विरहय्य अदृष्टार्थवाक्यैकदेशस्यान्यतः कुतश्चित्प्राक् संवादित्वनिबन्धनस्य प्रामाण्यस्य निश्चयोऽभ्यासावस्थायां तु आप्तप्रणीतत्वनिश्चयात् प्रवृत्तिरदृष्टार्थवाक्यान्निवार्यते इति कुत इतरेतराऽऽश्रयाऽवकाशः ?,

(एकान्तिकं वाच्यस्वरूपं निरसितुं लडादेरर्थविचारपक्षः)-

एकान्तवादिवाक्यात्तु दृष्टार्थेऽपि विसंवादिनः सर्वथा अप्रवृत्तिरेव निश्चितविसंवादाङ्गुल्यग्रहस्तियूथशतप्रतिपादकवाक्यादिवत् नह्येकान्तवादिवचनानां वाच्यं संभवतीत्युक्तम्। यतः सामान्यं वा तद्वाच्यं भवेत् विशेषो वा,उभयम्, अनुभयं वेति विकल्पाः। न तावत्सामान्यं तस्येतरव्यावृत्तप्रतिनियतैकवस्तुरूपत्वायोगात्। शब्दवाच्यत्वे घटाद्यानयनाय प्रेरितः सर्वत्र प्रवर्तेत न वा क्वचिद् भेदनिबन्धनत्वात् प्रवृत्तेः सामान्यस्य अनर्थक्रियाकारितया च प्रवृत्तिनिबन्धनत्वायोगात्। अथापि स्याद्यदाऽयं प्रतिपत्ता वाक्यमश्रुतपूर्वं शृणोति तदा पदानां संकेतकालानुभूतानामर्थं सामान्यलक्षणमेव प्रतिपद्यते या तु वाक्यार्थप्रतिपत्तिः सा अपेक्षासंनिधानाभ्यां विशेषणविशेष्यभावात्पदार्थप्रतिपत्तिनिबन्धना न पुनस्ततो वाक्यात् तथाविधस्य तस्य स्वार्थेन सह संबन्धाप्रतिपत्तेः वाक्यमेव च प्रवृत्तिनिवृत्तिव्यवहारक्षमं न पदं तस्यानर्थक्रियाकारिसामान्यप्रतिपादकत्वेनाऽप्रवृत्त्यङ्गत्वाद्। अत एव न विवक्षाप्रतिभासनमप्यर्थं प्रतिपादयन्तः शब्दा अनुमानतामासादयन्ति अगृहीतप्रतिबन्धादपि वाक्यविशेषात् यथोक्तस्य।यतो वाक्यार्थप्रतिपत्तेः। अनेनैवाभिप्रायेण सौगता वाक्यगतां चिन्तामनादृत्य पदमेवानुमाने अन्तर्भावितवन्तः। उक्तं च मीमांसकैः —

"वाक्यार्थे तु पदार्थेभ्यः, संबन्धानुगमादृते।
बुद्धिरुत्पद्यते तस्मा-द्भिन्ना साऽध्यक्षबुद्धिवत्॥"

(श्लो० वा० शब्द प० श्लो० १०६) तथा—

'वाक्येष्वदृष्टेष्वपि सार्थकेषु,
पदार्थचिन्मात्रतया प्रतीतिम्।
दृष्टानुमानव्यतिरेकभीताः।
क्लिष्टाः पदाभेदविचारणायाम्।"

(श्लो० वा० शब्दप० श्लो० ११२) इति।

असदेतत्, एवं कल्पनायां पदार्थानामपि वाक्यार्थप्रतिपत्तिहेतुत्वासंभवात्। तथा हि-'घटः पटः कुम्भः' इत्यादिपदेभ्यो यथाऽन्योन्याननुषक्तस्वतन्त्रसामान्यात्मकार्थप्रतिपत्तिस्तथासंबद्धपदसमूहश्रवणादपि किं न तथाभूतसामान्यप्रतिपत्तिर्भवेत्? नहि तत्र सामान्यमात्राऽधिगमे तत्परित्यागतो विशिष्टार्थप्रतिपत्तौ निमित्तमस्ति न चापेक्षा-संनिधानादिकं पदार्थानां तत्प्रतिपत्तौ निमित्तं पदार्थस्य पदार्थान्तरं प्रत्युत्पत्तौ प्रतिपत्तौ वाऽपेक्षादेरयोगात् तस्य सामान्यात्मकत्वेनोत्पत्तेरसंभवात् स्वपदेभ्य एव प्रतिपत्तेस्तत्रापि पदार्थान्तरापेक्षाद्यनुपपत्तेः। अर्थशक्तित एव ततो विशेषप्रतिपत्तिरितिचेत् तर्हि पदार्थानामेकार्थसंभवा प्रतिपत्तिर्यस्य तस्यापि ततस्तत्प्रतिपत्तिर्भवेत्। न च सामान्यत्यागे किंचिन्निबन्धनं बाधकाभावात् सत्यपित्वे उभयप्रतिपत्ति-प्रवृत्ती स्याताम्। न च वाक्यार्थप्रत्यय एव बाधकस्तेन तस्य विरोधाभावात् सामान्यविशेषयोः साहचर्यात् सामान्यप्रत्ययस्य च विशेषप्रतिपत्तिं प्रति निमित्तत्वाभ्युपगमात् निमित्तस्य च निमित्तिना अबाध्यत्वाद् अन्यथा तस्य तन्निमित्तत्वायोगाद्। अथ प्रागप्येवमयं व्युत्पादितः -यत्र पदार्थानामेकद्रव्यसंभवस्तत्र पदार्थसामान्यत्यागाद्विशेषः प्रतिपत्तव्यो यथा नीलोत्पलादौ, नन्वेवं सर्ववाक्यान्यस्य व्युत्पादितान्येव भवन्ति। तथाहि-यः कश्चित् संभवदेकद्रव्यार्थनिवेशः पदसमूहः स संकेतसमयावगतसामान्यात्मकावयवार्थपरित्यागतस्तेषामेव विशेषणविशेष्यभावेन विशिष्टाऽर्थगोचरः प्रतिपत्तव्यो, यथा 'नीलोत्पलं पश्य' इत्यादिपदसंघातः, तथा चायमपूर्ववाक्यात्मकः पदसमुदाय इति संकेतमनुसृत्य यदा ततस्तथाभूतमर्थं प्रत्येति तदा कथं न विशिष्टार्थवाचकं वाक्यम्? अनेनैव च क्रमेण शब्दविदां समयव्यवहार उपलभ्यते। यथा-' धात्वादिः क्रियादिवचनः, कर्त्रादिवचनश्च लडादिः' इति समयपूर्वकं 'प्रकृति-प्रत्ययौ प्रत्ययार्थं सह ब्रूतः' इति व्युत्पादितोऽनर्थक्रियाकारित्वेन सामान्यमात्रस्य विशेषनिरपेक्षस्य प्रतिपादयितुमनिष्टेः तत्परित्यागेन व्यवहारकाले विशेषमवगच्छति व्यवहारी। न च प्रकृतिप्रत्ययार्थावेवात्र पदार्थं प्रतिपादयतो न पदमिति मन्तव्यम्।

"अशाब्दे वाऽपि वाक्यार्थे, न पदार्थेष्वशाब्दता।
वाक्यार्थस्येव नैतेषां, निमित्तान्तरसंभवः॥" (श्लो० वा० वाक्याधि० श्लो० २३०) इत्यस्य विरोधप्रसक्तेः। न च वाक्यस्य वाक्यार्थे संकेतकरणेऽनुमानात् शाब्दस्याऽविशेषप्रतिपत्तिः, विशेषस्य प्राक् प्रतिपादितत्वात्। केवलस्य च पदस्य प्रयोगानर्हत्वाद्वाक्यस्य तु प्रयोगार्हस्य सामान्यानभिधायकत्वात् कथं सामान्यं शब्दार्थः स्यात्?।

यस्तु पूर्वपदाऽनुरञ्जितं पदमेव वाक्यं पदार्थ एव पदार्था-

न्तरविशेषितो वाक्यार्थोऽभ्युपगत। तथाहि-'दण्डी' 'छत्री'-इत्यादिव्यपदेशं यथा पुरुष एव समासादयति नान्यस्तद्व्यतिरिक्तः तथा 'अपाक्षीत्' 'पचति' 'पक्ष्यति' इत्याद्यतीतकालाद्यवच्छिन्न क्रियाविशिष्टश्च देवदत्त एव प्रतीयते-'अपाक्षीद्' इत्यादिशब्दाना देवदत्तशब्देन सामानाधिकरण्यात्-न तु तद्व्यतिरिक्तोऽर्थ अथ यद्यत्र कालाद्यवच्छिन्नपुरुष एव प्रतीयते तदा 'अग्निहोत्रं जुहुयात्' 'ग्राम गच्छ' 'स्वाध्याय कर्त्तव्य' इति लिङ्-लोट्-कृत्य-प्रयोगेषु कस्यार्थस्य प्रतीति ? अत्रापि कर्मणि नियुक्त क्रियाविशिष्टोऽध्येषणादिविशिष्टश्च देवदत्त एव प्रतीयते केवलं वर्त्तमानादिकालो न विशेषणत्वेनाऽत्रावतिष्ठते।

अथ यदि नात्रार्थातिरेकावगतिर्भावसंपादने कथं पुरुष. प्रवर्तते ? यथा हि देवदत्त पचति इत्यादिवाक्यान्न प्रवर्तते तथा 'जुहुयाद्' इत्यस्मादपि नैव प्रवर्त्तेत प्रवृत्ति निमित्तस्यानवबोधात् असदेतत्, 'जुहुयाद्' इत्यादिवाक्यजनितविज्ञानस्यैव प्रवर्त्तकत्वात् प्रवृत्तेस्तद्भावभावित्वेनोपलम्भाद् एतद्वाक्यसमुत्थ ज्ञानं पुरुषं स्वर्गादिसाधने नियोजयदुपलभ्यते न 'पचति' आदिवाक्यसमुत्थम्। तथाहि-विध्यादिवाक्यजनितज्ञानानन्तरमिच्छा तदनन्तरं प्रयत्न तदनन्तर च पुरुषस्य स्वर्गादिफलार्थं परिस्पन्दस्ततोऽपि फलपर्यन्ता स्वर्गफलावाप्ति इत्यभिधानात्। तेऽपि अयुक्तिकारिण एकान्तपक्षे विविशेषण-विशेष्ययोरत्यन्तभेदे अभेदे वा विशेषणानुरागस्य पद-पदार्थेषु असंभवाद्वाक्यार्थकल्पनादरनुपपत्त अत एव 'अपाक्षीद्देवदत्त' इत्यादौ न कालक्रियाविशिष्टपुरुषप्रतिपत्ति क्रियादे पुरुषाद्भेदे सबन्धाऽसिद्धितो व्यवच्छेदकत्वानुपपत्त अभेदेऽप्येकस्य तात्त्विकविशेषणविशेष्यरूपतासंगते। अन्यथाऽतिप्रसङ्गात्। कल्पनारचितस्य तद्रूपत्वस्य सर्वत्राविशेषात् विशिष्टप्रत्ययोत्पत्तेश्च अन्यनिमित्तत्वात् विरोधादिदोषस्य च तत्र प्रागेव प्रतिविहितत्वादनेन लिङादियुक्तवाक्यजनितविज्ञानस्य प्रवर्त्तकत्वमेकान्तवादिप्रकल्पित प्रतिक्षिप्त तद्भावभावित्वस्य अन्यथासिद्धत्वप्रतिपादनात्। सम्म० ३ काण्ड ६३ गाथाटी०।

(१०) (शब्दस्य बाह्यार्थे प्रामाण्यं शास्त्रप्रयोजनमधिकृत्योक्तम्)—

यदि प्रेक्षावतां प्रवृत्त्यर्थं प्रयोजनप्रतिपादनायादिवाक्यमुपादीयते तदा ते प्रेक्षापूर्वकारित्वादेवाप्रमाणके नैव प्रवृत्तिं विदधति। नच प्रयोजनप्रतिपादकमादिवाक्यं तत्प्रभवं वा ज्ञान प्रमाणम् अनक्षजत्वेनाध्यक्षत्वायोगात्।

नाऽप्यनुमान स्वभावकार्यलिङ्गसमुत्थं तद्भावत्वेन तत्कारणत्वेन वा तत्प्रत्याय्य प्रयोजनस्य प्रमाणतोऽप्रतिपत्ते. तदुत्थापकस्य लिङ्गस्य तत्कार्यत्वानवगमाद्, अन्यस्य च स्वसाध्याप्रतिबन्धाद् अप्रतिपद्धस्य च स्वसाध्यव्यभिचारेणागमकत्वात्, तत्त्वे वाऽतिप्रसङ्गात्, तत्प्रतिबद्धत्वेऽप्यनिश्चतप्रतिबन्धस्यातिप्रसङ्गत एव अगमकत्वात्।

न च वाक्यमिद प्रवर्त्तमानं स्वमहिम्नैव स्वार्थं प्रत्यायतीति शब्दप्रमाणरूपत्वात्स्वाभिधेयप्रयोजनप्रतिपादने प्रमाणम्, शब्दस्य बाह्येऽर्थे प्रतिबन्धासंभवेनाप्रामाण्यात्, विवक्षाया प्रामाण्येऽपि तस्या बाह्यार्थाविनाभावित्वायोगात्। नाऽपि ये यमर्थं विवक्षन्ति ते तथैवं तं प्रतिपादयन्ति, अन्यविवक्षायामप्यन्यशब्दोच्चारणदर्शनाद्विवक्षायाश्च बाह्यार्थप्रतिबद्धत्वानुपपत्तेरेकान्तत । तत्र शब्दादपि प्रमाणादादिवाक्यरूपात् प्रयोजनविशेषोपायप्रतिपत्ति तदप्रतिपत्तौ च तेषा तत प्रवृत्तौ प्रेक्षापूर्वकारिताव्यावृत्तिप्रसङ्गात्। प्रयोजनविशेषोपायसशयोत्पादकत्वेन प्रवृत्त्यङ्गत्वादादिवाक्यस्य सार्थकत्वम्। तथाहि-अर्थसंशयादपि प्रवृत्तिरुपलभ्यते यथा कृषीवलादीनां कृष्यादावनवगतशस्यावाप्तिफलानाम्। अथ अबीजादिविवेकेनावधृतबीजादिभावतया निश्चितोपाया। नद्रूपेयशस्यावाप्त्यनिश्चयेऽपि तत्र तेषां प्रवृत्तिर्युक्ता न पुन शास्त्रश्रवणादावुपेयप्रयोजनविशेषानिश्चयवत्तदुपायाभिमतादिवाक्यप्रत्याय्योपायनिश्चयस्याप्यसंभवाद्, अयुक्तमेतत्, यतो यथा शस्यसपत्त्यादौ फले कृषी बलादे संदेह. तथा तदुपाया भिमतबीजादावपि, अनवेक्षितकार्यस्य कारणस्य तथाभावनिश्चयायोगात्। तत्र यथाकृष्यादिकं संशय्यमानोपायभाव प्रवृत्तिकारण तथा शास्त्रमप्यादिवाक्यादनिश्चितोपायभावं किं न प्रवृत्तिकारणमभ्युपगम्येत इति चेद्, असदेतत् आदिवाक्योपन्यास शास्त्रप्रयोजनविषयसंशयोत्पादनार्थ संशयोऽपि च निश्चयविरुद्ध —अनुत्पन्न च निश्चये-तत्राप्रतिबद्धप्रवृत्तिहेतुतया प्रादुर्भवन् केन वार्यते आदिवाक्योपन्यासमन्तरेणापि ?,

अथाश्रुतप्रयोजनवाक्याना प्रयोजनसामान्ये तत्सत्त्वेनराभ्या सशयो जायते-'किमिदं चिकित्साशास्त्रवत्सप्रयोजनम् उत काकदन्तपरीक्षावन्निष्प्रयोजनम् ततश्च संशयादनुपन्यस्ते प्रयोजनवाक्ये प्रयोजनसामान्यार्थिन प्रवर्त्तन्तां प्रयोजनविशेषे तु कथमश्रुतप्रयोजनवाक्याना संशयोत्पत्ति ? प्रायेण च प्रयोजनविशेषविषयस्यैव संशयस्य प्रवृत्तिकारणत्वात् तदु पादनायादिवाक्यमुपादेयम् अतश्च प्रयोजनसामान्यविशेषेषु सशयाना 'किमिदं सप्रयोजन उत निष्प्रयोजन सप्रयोजनत्वेऽपि किमभिलषितेनैव प्रयोजनेन तद्वद् इति पक्षपरामर्शं कुर्वाणा प्रवर्त्तन्ते असदेतत्, कुतश्चिच्छास्त्रादनुभूतप्रयोजनविशेष श्रोतारं प्रति प्रयोजनवाक्यस्यानुपयोगात्-स हि किंचिच्छास्त्रमुपलभ्य प्रागनुभूतप्रयोजनविशेषेण शास्त्रेणास्य वाक्यात्मकत्वेन साधर्म्यमवधार्येदमपि निष्प्रयोजनम् उत-अनभिमतप्रयोजनवद् उताऽभीष्टप्रयोजनवद्वा इत्याशङ्कमान प्रयोजनवाक्यमन्तरेणापि प्रवर्त्तत एव अननुभूतप्रयोजनविशेषस्तु प्रयोजनवाक्यादपि नैव प्रवर्त्तते, तं प्रति तस्यापि तदुत्पादकत्वायोगात्-न हि प्रागननुभूतशास्त्रप्रयोजनविशेष 'प्रयोजनप्रतिपादक वाक्यमेतदर्थमि' त्यपि प्रतिपत्तु समर्थोऽपरयत्नमन्तरेण। नाप्यनुभूतविस्मृतप्रयोजनविशेष प्रयोजनवाक्यात्संस्मृत्य तद्विशेषं संशयान प्रवर्त्तते, तद्रहितशास्त्रादपि तद्विशेषे स्मृतिसंभवात् नियमेन तु नोभाभ्यामपि तदनुसरण भवात, तथाऽपि प्रयोजनवाक्यस्य तत स्मृतिहेतुत्वत उपन्यासे अन्यस्यापि तद्धेतो किं नोपन्यास ? सामान्यविशेषयोश्च दर्शनाऽदर्शनाभ्या विशेषस्मरणसहकारिभ्यां सशया, न च प्रयोजनवाक्यं प्रयोजनविशेषस्य भावाऽभावयो. सामान्यम्। अथ विवक्षापरतन्त्रत्वात् स्वार्थतथाभावाऽतथाभावयोरपि प्रयोगसंभवात्सामान्यमेव वाक्य,

शास्त्रमपि तर्हि शास्त्रान्तरसादृश्यात्प्रयोजननिर्वृत्त्युपायत्वाऽनुपायत्वयोः सामान्यम्-अन्यतरनिश्चयनिमित्ताभावात्तत्संशयात् प्रवर्त्ततां किमकिंचित्करप्रयोजनवाक्येन ? न च सामान्यस्य विशेषस्य च दर्शनाऽदर्शनाभ्यामेव यथोक्ताभ्यां संशयः, किं तु-साधक-बाधकप्रमाणावृत्तावपि. सा च प्रयोजनवाक्योपन्यासाऽनुपन्यासयोरपि संभवत्येव ।

मा भूत्संशयोत्पादनेन वाक्यस्य शास्त्रश्रवणादिप्रवृत्तौ सामर्थ्यं, किं तु-प्रकरणारम्भप्रतिषेधाय 'नारब्धव्यमिदं प्रकरणम्, अप्रयोजनत्वात्, काकदन्तपरीक्षावद्' इति व्यापकानुपलब्धेरसिद्धतोद्भावनाय तदुपन्यास इति चेत्, एतदप्यसत्. यतः शास्त्रप्रयोजनं वाक्येनाप्रदर्शयता तदसिद्धिरुद्भावयितुमशक्या, वाक्यस्याऽप्रमाणतया प्रयोजनविशेषसद्भावप्रकाशनसामर्थ्याभावात् । न च सप्रयोजनेतरयोः परस्परपरिहारस्थितयोः कुतश्चित्प्रमाणादेकभावाप्रतिपत्तावितराभावप्रतिपत्ति -अतिप्रसङ्गात्-येन वाक्यमात्रस्योपक्षेपेण हेतोरसिद्धिः स्यात् । नाऽपि कुतश्चित्प्रयोजनविशेषमुपलभ्यमानेन स्वयमुपलब्धप्रयोजनविशेषोपलम्भोपायमप्रदर्शयता कर्तुमशक्या असिद्धतोद्भावना वाक्यस्याप्रमाणस्य हेतुप्रतिपक्षभूतार्थोपस्थापना अशक्तस्योपन्यासमात्रेणासिद्धेरयोगात् । नाऽप्यनिबन्धना प्रतिपत्तिः, अतिप्रसङ्गात् ।

अथ यद्यप्यप्रमाणत्वाद्विपरीतार्थोपस्थापनमुखेनासिद्धतामिदं नोद्भावयति । तथापि शास्त्रस्य निष्प्रयोजनता संदिग्धा अतः संदिग्धनिष्प्रयोजनत्वस्य शास्त्रस्य प्रयोजनाभावं निश्चितं प्रेक्षावदारम्भप्रतिषेधहेतुं प्रयुञ्जानोऽनेन वाक्येन प्रतिक्षेप्तुमिष्टः न पुनः प्रयोजनविपर्ययनिश्चय एवोत्पादयितुमिष्टः, नहि प्रतिपक्षोपक्षेपेणैव साधनधर्माणामसिद्धिः अपि तु स्वग्राहिज्ञानविकलतया संदिग्धधर्मिसंबन्धित्वमप्यसिद्धत्वमेव, तस्मात्संदिग्धासिद्धतोद्भावनाय वाक्यप्रयोग इति, तदप्यनुपपन्नम्; यथाहि-सप्रयोजनत्वे संदेहोत्पादने वाक्यस्यानुपयोगित्वं-शास्त्रमात्रादपि भावात्-तथा निष्प्रयोजनत्वेऽपि एवं ह्यनेन वाक्येन हेतोरसिद्धतोद्भाविता भवति यदि तत्सत्तासंदेहनिबन्धनानि कारणान्यपि तदैव प्रकाशितानि भवन्ति । न च विपर्यस्तपुरुषसंदेहोत्पादने तद्वाक्यं प्रभवति, अदर्शनात् । नच प्रस्तुतशास्त्रस्य प्रयोजनवत् शास्त्रान्तरेण कथञ्चित्सारूप्यात्साधक-बाधकप्रमाणाप्रवृत्तितश्चान्यानि संदेहकारणानि संभवन्ति, वाक्यमप्येतावन्मात्रप्रकाशनपरं हेतोः संदिग्धासिद्धतामुद्भावयेत्, तच्च तथाप्रकाशनमनुपन्यस्तेऽपि वाक्ये शास्त्रमात्रादपि दर्शनात् प्रमाणद्वयावृत्तेश्च भवतीति कस्तस्योपयोगः ? अनुपन्यस्ते कथं नदिति चेत्, उपन्यस्तेऽपि कथं नहि तदुपन्यासाऽनुपन्यासाऽवस्थयोः संदिग्धत्वात्प्रस्तुतात्कथंचन विशेषं पश्यामः ? असिद्धतोद्भावनमनेन न्यायेन सर्वमेवासङ्गतमिति चेत्, नैतत्, नह्यनेन प्रकारेणासिद्धतोद्भावनमेव प्रतिक्षिप्यते, किंतु प्रमाणरहितादुद्भावनादसिद्धता नोद्भावयितुं शक्येति प्रदर्श्यते । नच प्रयोजनवाक्यं हेत्वसिद्धतोद्भावनार्थमपि युक्तम् ।

नच परोपन्यस्ते साधने प्रयोजनवाक्येनासिद्धतामुद्भाव्य कथमसिद्धिः साधनस्येति प्रत्यवस्थानवन्तं शास्त्रपरिसमाप्तेः प्रयोजनमवगमयन् शास्त्रं श्रावयति । ततः समधिगते प्रयोजने तदुपन्यस्तस्य साधनस्याऽसिद्धिरिति वक्तुं शक्यं, शास्त्रश्रवणतः प्रयोजनावगमे शास्त्रस्यादौ तद्वाक्योपन्यासस्य वैयर्थ्यप्रसङ्गः । अत एव "शास्त्रार्थप्रतिज्ञाप्रतिपादनपर आदिवाक्योपन्यासः"( ) इत्याद्यपि प्रतिक्षिप्तम्, अप्रमाणादादिवाक्यात्तदसिद्धेः । तथा-संबन्धाभिधेयप्रत्यायनपराण्यपि वाक्यानि शास्त्रादौ वाङ्मात्रेण निश्चयायोगान्निष्प्रयोजनानि प्रतिक्षिप्तान्येव, उक्तन्यायस्य समानत्वात् । तदयुक्तम् 'समय' इत्याद्यभिधेयप्रयोजनप्रतिपादक- ( अस्य काण्डस्य द्वितीयं ) गाथासूत्रम् ।

(उत्तरपक्ष -आदिवाक्योपन्यासस्य सार्थकत्वसमर्थनम् )-

अत्र-प्रतिविधीयते-यदुक्तं न प्रत्यक्षमनुमानं वा शब्दः तत्र सिद्धसाध्यता, प्रत्यक्षानुमानलक्षणयोगात्तत्र । यच्च 'नापि' शब्दः प्रमाणं बहिरर्थे तस्य प्रतिबन्धवैकल्येन, विवक्षाया तु प्रतिबन्धेऽपि यथाविवक्षमर्थासंभवात्, तदप्यसारम्, बाह्यार्थेन शब्दप्रतिबन्धस्य प्रसाधयिष्यमाणत्वात् तत्रैव च प्रतिपत्ति-प्रवृत्त्यादिव्यवहारस्योपलभ्यमानत्वाद्बाह्यार्थे एव शब्दस्य प्रामाण्यमभ्युपगन्तव्यम् प्रत्यक्षवत् । न चार्थाऽव्यभिचारित्वप्रामाण्यनिश्चयवतां ततः प्रवर्त्तमानानां प्रेक्षापूर्वकारिताक्षतिः । न चाऽनाप्तप्रणीत 'सरित्तटपर्यस्तगुडशकट'पटुवाक्यविशिष्टतानवगमात्तत्र प्रवृत्तिः प्रत्यक्षाभासात्प्रत्यक्षस्येवानाप्तप्रणीतवाक्यादस्य विशिष्टतावसायात्; यस्य तु न तद्विशिष्टावसायो नासावतः प्रवर्त्तते अनवधृततद्धेत्वाभासविवेकाद्धेतोरिवानुमेयार्थक्रियार्थी । न चाप्तानां परहितप्रतिबद्धप्रयासानां प्रमाणभूतत्वात्स्ववाङ्मात्रेण प्रवर्त्तयितुं प्रभवतां प्रयोजनवाक्योपन्यासवैयर्थ्यं सुनिश्चिताप्तप्रणीतवाक्यादपि प्रतिनियतप्रयोजनार्थिना तदुपायानिश्चये तत्र प्रवृत्त्ययोगात् नच प्रयोजनविशेषप्रतिपादकवाक्यमन्तरेणाऽऽप्तप्रणीतशास्त्रस्यापि तद्विशेषप्रतिपादकत्वनिश्चयः येन तत एव तदर्थिनां तत्र प्रवृत्तिः स्यात् तदनभिमतप्रयोजनप्रतिपादकानामपि तेषां संभवात् ।

अतः-"यत्र खल्वाप्तैः 'इदं कर्त्तव्यम्' इति पुरुषाः प्रतीततदाप्तभावा नियुज्यन्ते तत्रावधीरिततत्प्रेरणाऽतथाभावविषयविचारास्तदभिहितं वाक्यमेव बहु मन्यमाना अनादृतप्रयोजनपरिप्रश्ना एव प्रवर्त्तन्ते विनिश्चिततदाप्तभावानां प्रत्यवस्थानासंभवात्"( ) इति निरस्तम्, आप्तप्रवर्त्तितप्रतिनियतप्रयोजनार्थिजनप्रेरणावाक्यस्यैव प्रयोजनवाक्यत्वनिश्चयाद् अन्यथाऽभिमतफलार्थिजनप्रेरकवाक्यस्याप्तप्रयुक्तत्वमेवानिश्चितं स्याद् अनभिमतार्थप्रेरकस्यावगताप्तवाक्यत्वे चातिप्रसङ्गः, न चाप्तवाक्यादपि प्रतिनियतप्रयोजनार्थिनस्तदवगमे तत्र प्रवर्त्तितुमुत्सहन्ते, अतिप्रसङ्गादेवेति सुप्रसिद्धम् । अर्थसंशयोत्पादकत्वेन चादिवाक्यस्य प्रवर्त्तकत्वप्रतिक्षेपे सिद्धतासाधनम्, व्यापकानुपलब्धेस्त्वसिद्धतोद्भावनमादिवाक्यान्निश्चितबाह्यार्थप्रामाण्यात् युक्तमेव, यथा च तस्य तस्या(तस्य)प्रामाण्यं तथा प्रतिपादयिष्यामः । अत एव-"आप्ताभिहितत्वासिद्धेरविसंवादकत्वायोगादप्रमाणत्वाभावनिश्चयनिमित्ताभावादप्रवर्त्तकत्वं प्रयोजनवाक्यस्य प्रेक्षापूर्वकारिणः प्रति"( ) इति । यदुच्यते तदपि प्रतिव्यूढं द्रष्टव्यम् । सम्म० १ काण्ड २ गाथाटी० ।

(११) अपोह शब्दार्थ इति बौद्धा —

ननु च—'समयपरमार्थविस्तर'-इत्यनेनाऽऽगमस्याकल्पितो बाह्योऽर्थ प्रतिपाद्यत्वेन शब्दार्थयोश्च वास्तव संबन्धा निर्दिष्ट, द्वितयमप्येतदयुक्तं, प्रमाणबाधितत्वाद् इतिबौद्धा । तथाहि-शब्दानां न परमार्थत किंचिद्वाच्य वस्तुस्वरूपमस्ति, सर्व एव हि शाब्दप्रत्ययो भ्रान्त, भिन्नेष्वर्थेष्वभेदाकाराध्यवसायेन प्रवृत्त । यत्र तु पारंपर्येण वस्तुप्रतिबन्धस्तत्रार्थसंवादो भ्रान्तत्वेऽपि, तत्र यत्तदारोपित विकल्पबुद्ध्याऽर्थेष्वभिन्न रूप तदन्यव्यावृत्तपदार्थानुभवबलायातत्वात्स्वयं चान्यव्यावृत्ततया प्रतिभासनाद् भ्रान्तैश्चाऽऽन्यव्यावृत्तार्थेन सहैक्येनाध्यवसितत्वात् अन्यापोढपदार्थाधिगतिफलत्वाच्च अन्याऽपोह इत्युच्यते । अत अपोह शब्दार्थ इति प्रसिद्धम् ।

('विधिरेव शब्दस्यार्थ' इति विधिवादिमतस्य सन्निप्य प्रतिस्थापनम् )—

अत्र विधिवादिन प्रेरयन्ति-यदि भवतां द्रव्य-गुण-कर्म-सामान्यादिलक्षणानि विशेषणानि शब्दप्रवृत्तिनिमित्तानि परमार्थतो न सन्ति कथं लोके 'दण्डी' इत्याद्यभिधानप्रत्यया प्रवर्तन्ते द्रव्याद्युपाधिनिमित्ता, तथा हि- दण्डी' 'विषाणी' इत्यादिधीध्वनी लोके द्रव्योपाधिकौ प्रसिद्धौ, 'शुक्ल' 'कृष्ण' इति गुणोपाधिकौ, 'चलति' 'भ्रमति' इति कर्मनिमित्तौ, 'अस्ति' 'विद्यते' इति सत्तानिमित्तकौ, गौ' 'अश्व' इति सामान्यविशेषोपाधी, 'इह तन्तुषु पट' इति समवायनिमित्त । (तौ)। तत्रैषा द्रव्यादीनामभावे 'दण्डी' इत्यादिप्रत्यय-शब्दौ निर्विषयौ स्याताम् । न चानिमित्तावेतौ युक्तौ, सर्वदा तयोरविशेषेण प्रवृत्तिप्रसङ्गात् । नचाविभागेन वयो प्रवृत्तिरस्ति, तस्मात्सन्ति द्रव्यादय पारमार्थिका प्रस्तुतप्रत्ययशब्दविषया ।

प्रमाणयन्ति चात्र-ये परस्परासंकीर्णप्रवृत्तयस्ते सनिमित्ता, यथा श्रोत्रादिप्रत्यया, असंकीर्णप्रवृत्तयश्च 'दण्डी' इत्यादिशब्दप्रत्यया इति स्वभावहेतु । अनिमित्तत्वे सर्वत्राऽविशेषेण प्रवृत्तिप्रसङ्गो बाधक प्रमाणम् ।

(विधिवादिमतं सविस्तर दूषयताम् अपोहवादिना मतस्य निर्देश )—

अत्र यदि पारमार्थिकबाह्यविषयभूतेन निमित्तेन सनिमित्तत्वमेषा साधयितुमिष्टं तदा अनैकान्तिकता हेतो, साध्यविपर्यये बाधकप्रमाणाभावात् । अथ येन केनचिन्निमित्तेन सनिमित्तत्वमिष्यते तदा सिद्धसाध्यता । तथाहि--अस्माभिरपीष्यत एवैषामन्तर्जल्पवासनाप्रबोधो निमित्त नतु विषयभूतम्, भ्रान्तत्वेन सर्वस्य शा(श)ब्दप्रत्ययस्य निर्विषयत्वात् । तदुक्तम्-" येन येन हि नाम्ना वै, यो यो धर्मोऽभिलप्यते । न स संविद्यते तत्र, धर्माणां सा हि धर्मता " ( ) इति ।

नच शाब्दप्रत्ययस्य भ्रान्तत्वाऽविषयत्वयो किं प्रमाणमिति वक्तव्यम्, भिन्नेष्वभेदाध्यवसायेन प्रवर्त्तमानस्य प्रत्ययस्य भ्रान्तत्वात् । तथाहि-य 'अतस्मिंस्तद्' इति प्रत्यय स भ्रान्त, यथा मरीचिकाया जलप्रत्यय, तथा चाय भिन्नेष्वर्थेष्वभेदाध्यवसायी शाब्द प्रत्यय इति स्वभावहेतु । न च सामान्यं वस्तुभूत ग्राह्यमस्ति येनासिद्धतास्य हेतो स्यात्, तस्य निषिद्धत्वात् । सम्म० १ काण्ड २ गाथाटी० । ( इतोऽग्र 'सद्द' शब्दे सप्तमे भागे ३४० पृष्ठे द्रष्टव्यम् )

इतश्च-स्वलक्षणव्यपदेश्यं शब्दबुद्धौ तस्या प्रतिभासनात् । यथाहि-उष्णाद्यर्थविषयेन्द्रियबुद्धि स्फुटप्रतिभासानुभूयते न तथा उष्णादिशब्दप्रभवा नह्युपहतनयनादयो मातुलिङ्गादिशब्दश्रवणाच्चद्रूपाद्यनुभाविनो भवन्ति यथानुपहतनयनादय अक्षबुद्ध्यानुभवन्त । यथोक्तम्-" अन्यथैवाग्निसंबन्धा-द्दाह दग्धोऽभिमन्यते । अन्यथा दाहशब्देन, दाहार्थ संप्रतीयते " ॥ ( वाक्यप० द्वि० का० श्लो० ४२५ )

न च यो यत्र न प्रतिभाति स तद्विषयोऽभ्युपगन्तुं युक्तः अतिप्रसङ्गात् । तथा च प्रयोग-यो यत् कृतप्रत्यये न प्रतिभासते न स तस्यार्थ यथा रूपशब्दजनिते प्रत्यये रस, न प्रतिभासते च शाब्दप्रत्यये स्वलक्षणम् इति व्यापकानुपलब्धि । अत्र चातिप्रसङ्गो बाधक प्रमाणम् । तथाहि-शब्दस्य तद्विषयज्ञानजनकत्वमेव तद्वाचकत्वमुच्यते नान्यत्, नच यद्विषयं ज्ञानं यदाकारशून्यं तत्तद्विषयं युक्तमतिप्रसङ्गात् । न चैकस्य वस्तुनो रूपद्वयमस्ति-स्पष्टम् अस्पष्टं च येनाऽस्पष्टं वस्तुगतमेव रूपं शब्दैरभिधीयते-एकस्य द्वित्वविरोधात् । भिन्नसमयस्थायिना च परस्परविरुद्धस्वभावप्रतिपादनात् न शब्दगोचरः स्वलक्षणम् । सम्म० १ काण्ड २ गाथाटी० ।

(१२) शब्दार्थविचार

अत्थो किं झुणि सुई, त्तिसाणं वत्थुभेओ वा ॥१६००॥
जाई दव्व किरिया, गुणोऽहवा संसओ तवो जुत्तो ।
अयमेवेति न वा यं, न वत्थुधम्मो जओ जुत्तो ॥१६०१॥
सव्वं चिय सव्वमयं, सपरप्पजायओ जओ नियय ।
सव्वमसव्वमय पि य, विचित्तरूवं विवक्खाओ ॥१६०२॥
सामण्णविसेसमओ, तेण पयत्थो विवक्खया जुत्तो ।
वत्थुस्स विस्सरूवो, पज्जाया-वेक्खया सव्वो ॥१६०३॥

अर्थ ध्वनि -शब्दो भवेत्, यथा भेरी-पटह-ढक्कादीना शब्दस्य शब्द एवार्थ, अथवा-यद् घटादिशब्दे समुच्चारिते तदभिधेयार्थविषय विज्ञानं भवद्-दृश्यते तत्तेषामर्थ, किं वा-घटशब्दे समुत्कीर्त्तिते 'पृथुबुध्नोदराद्याकारवान् घटलक्षणोऽर्थोऽनेनाक्तो, नतु पटादि' इत्येवं यो वस्तुभेद प्रतीयते स एषामर्थ, यदि वा-किं जातिरमीषामर्थो, यथा गोशब्दे समुच्चारिते गोजातिरवसीयते, यदि वा-किं द्रव्यमेषामर्थो यथा दण्डीत्यादिषु दण्डादिमद् द्रव्य किं वा धावतीत्यादीनामिव धावनादिक्रिया अमीषामर्थ, अथवा-किं शुक्लादीनामिव शुक्लादिगुण एतेषामर्थ इति ? । अय च संशयस्तवाऽयुक्तो, यस्माद्-'अयमेव, नैव वाऽयमि' त्येवं कस्यापि वस्तुनो धर्मोऽवधारयितु न युक्त । शब्दोऽपि वस्तुविशेष एव, तत 'एवंभूतस्यैवार्थस्यायमभिधायको, नैव वा इत्थंभूतस्यार्थस्यायं प्रतिपादक' इत्येवमेतद्धर्मस्याप्यवधारणमयुक्तमेव । कुत ? इत्याह-'सव्वं चिये' त्यादि, यस्मात्सर्वमपि वाच्यवाचकादिक वस्तु नियत-निश्चित स्व-

पर्यायै सर्वात्मकमेव सामान्यविवक्षयेत्यर्थ । तथा-सर्व-मसर्वमयमप्याप्नोति विविक्तरूपं सर्वतो व्यावृत्तम्। कया? इत्याह-विवक्षया केवलस्वपर्यायापेक्षयेत्यर्थ विशेषविषययेति तात्पर्यार्थ । तस्मात्सर्वेषामपि पदानां विवक्षावशेन सामान्यमयो विशेषमयश्च पदार्थो युक्त, न पुनरेकान्तेनेत्थंभूत एव अनित्यभूत एव वेतिकुत ? इत्याह- वस्तुमुस्सेत्यादि. ' यस्मात्सर्वोऽपि वाच्यस्य वाचकस्य वा वस्तुन स्वभाव पर्यायापेक्षया विश्वरूपो नानाविधो वर्त्तते । ततश्च सामान्यविवक्षायां घटशब्द सर्वात्मकत्वात्सर्वेषामपि द्रव्यगुणक्रियाद्यर्थानां वाचक विशेषविवक्षया तु प्रतिनियतरूपत्वात् य एवास्येह पृथुबुध्नोदराद्याकारवानर्थो वाच्यतया रूढस्तस्यैव वाचक । एवमन्योऽपि शब्दो विशेषविवक्षया यो यत्र देशादौ यस्यार्थस्य वाचकतया रूढ. स तस्य वाचको द्रष्टव्य । सामान्यविवक्षया तु ' सर्व सर्वस्य वाचक सर्व सर्वस्य वाच्यमि ' त्यनया दिशा सकलं स्वधिया भावनीयमिति । विशे० ।

( १३ ) अथ स्वाभिमतसामान्यविशेषोभयात्मकवाच्यवाचकभावसमर्थनपुरस्सरं तीर्थान्तरीयप्रकल्पितनदेकान्तगोचरवाच्यवाचकभावनिरासद्वारेण तेषां प्रतिभावैभवाऽभावमाह—

अनेकमेकात्मकमेव वाच्यं,
द्वयात्मकं वाचकमप्यवश्यम् ।
अतोऽन्यथा वाचकवाच्यक्लृप्ता-
वतावकानां प्रतिभाप्रमादः ॥ १४ ॥

व्याख्या-वाच्यम्-अभिधेय चेतनम् अचेतनं च वस्तु एवकारस्यात्यर्थत्वात् सामान्यरूपतया एकात्मकमपि व्यक्तिभेदेन अनेकम्-अनेकरूपम् । अथवा-अनेकरूपमपि एकात्मकम् अन्योन्यसंवलितत्वादित्थमपि व्याख्याने न दोष । तथा च-वाचकमभिधायक शब्दरूपं तदप्यवश्यं निश्चितं द्वयात्मकं, सामान्यविशेषोभयात्मकत्वादेकानेकात्मकमित्यर्थ ।(उभयत्र वाच्यलिङ्गत्वेऽप्यव्यक्तत्वान्नपुंसकत्वम्। अवश्यमिति पदं वाच्यवाचकयोरुभयोरप्यनेकात्मकत्व निश्चिन्वत्तदेकान्त व्यवच्छिनत्ति ) अत उपदर्शितप्रकारादन्यथा सामान्यविशेषैकान्तरूपेण प्रकारेण ' वाचकवाच्यक्लृप्तौ '-वाच्यवाचकभावकल्पनायाम् 'अतावकानाम्'-अत्वदीयानाम्-अन्ययूथ्यानाम् प्रतिभाप्रमाद '-प्रज्ञास्खलितम् इत्यक्षरार्थ । (अत्र चाल्पस्वरत्वेन वाच्यपदस्य प्राग्निपाते प्राप्तेऽपि यदादौ वाचकग्रहणं तत्प्रायोऽर्थप्रतिपादनस्य शब्दाधीनत्वेन वाचकस्याऽर्च्यत्वज्ञापनार्थम् ) । तथा च शाब्दिका - ' न सोऽस्ति प्रत्ययो लोके, य शब्दानुगमादृते । अनुविद्धमिव ज्ञानं, सर्वं शब्देन भासते ' ॥ १ ॥ इति । भावार्थस्त्वेवम्-एके तीर्थिका सामान्यरूपमेव वाच्यतया शब्दार्थमभ्युपगच्छन्ति ते च द्रव्यास्तिकनयानुपातिनो मीमांसकभेदा अद्वैतवादिन , सांख्याश्च । केचिच्च विशेषरूपमेवं वाच्य निर्वचन्ति । ते च पर्यायास्तिकनयानुसारिण सौगता । अपरे च-परस्परनिरपेक्षपदार्थपृथग्भूतसामान्यविशेषयुक्तं वस्तु वाच्यत्वेन निश्चिन्वते । ते च नैगमनयानुरोधिन नागादा आत्तपादाश्च । स्या० १४ श्लोक ।

एवं वाचकमपि शब्दाख्य द्वयात्मकम् ( सामान्य-विशेषात्मकम् ) । सर्वशब्दव्यक्तिष्वनुयायिशब्दत्वमेकं शाङ्गशाङ्गीतीव्रमन्दोदात्तानुदात्तस्वरितादिविशेषभेदादनेकम् । शब्दस्य हि सामान्यविशेषात्मकत्वं पौद्गलिकत्वाद्व्यक्तमेव, तथाहि-पौद्गलिक शब्द , इन्द्रियार्थत्वाद्रूपादिवत् । यच्चास्य पौद्गलिकत्वनिषेधाय स्पर्शशून्याश्रयत्वादतिनिविडप्रदेशे प्रवेशनिर्गमयोरप्रतिघातात्पूर्वं पश्चाच्चावयवानुपलब्धे सूक्ष्ममूर्त्तद्रव्यान्तराप्रेरकत्वाद्गगनगुणत्वाच्चेति पञ्च हेतवो यौगैरुपन्यस्तास्ते हेत्वाभासा , तथाहि-शब्दपर्यायस्याश्रयो भाषावर्गणा न पुनराकाशं तत्र च स्पर्शो निर्णीयत एव । यथा शब्दाश्रय स्पर्शवान् अनुवातप्रतिवातयोर्विप्रकृष्टनिकटशरीरिणोपलभ्यमानानुपलभ्यमानेन्द्रियार्थत्वात्तथाविधगन्धाऽऽधारद्रव्यपरमाणुवत् । इत्यसिद्धः प्रथमः ।

द्वितीयस्तु गन्धद्रव्येण व्यभिचारादनैकान्तिक वर्त्तमानजात्यकस्तूरिकादिगन्धद्रव्यं हि पिहितद्वारापवरकस्यान्तर्विशति, बहिश्च निर्याति । नचापौद्गलिकम् । अथ तत्र सूक्ष्मरन्ध्रसंभवान्नातिनिबिडत्वम् । अतस्तत्र तत्प्रवेशनिष्क्रमौ कथमन्यथोद्घाटितद्वारावस्थायामिव न तदेकार्णवत्व ? सर्वथा नीरन्ध्रे तु प्रदेशे न तयो संभवः । इति चत्तर्हि शब्देप्येतत्समानम् । इत्यसिद्धो हेतु । तृतीयस्तु तडि(विद्यु)दुल्कादिभिरनैकान्तिकः । चतुर्थोऽपि तथैव; गन्धद्रव्यविशेषसूक्ष्मरजोधूमादिभिर्व्यभिचारात् । नहि गन्धद्रव्यादिकमपि नासायां निविशमानं तद्विवरद्वारदेशोद्भिन्नश्मश्रुप्रेरक दृश्यते ।

पञ्चम पुनरसिद्ध । तथाहि-न गगनगुण शब्द , अस्मदादिप्रत्यक्षत्वाद्रूपादिवद् । इति सिद्ध पौद्गलिकत्वात्सामान्यविशेषात्मक शब्द इति । नच वाच्यम्-" आत्मन्यपौद्गलिकेऽपि कथं सामान्यविशेषात्मकत्वं निर्विवादमनुभूयते , इति; यत संसार्यात्मन प्रतिप्रदेशमनन्तानन्तकर्मपरमाणुभि सह वह्नितापितघनकुट्टितनिर्विभागपिण्डीभूतसूचीकलापवल्लोलीभावमापन्नस्य कथंचित्पौद्गलिकत्वाभ्युपगमादिति । यद्यपि स्याद्वादवादिनां पौद्गलिकम् अपौद्गलिकं च सर्वं वस्तु सामान्यविशेषात्मकं तथाप्यपौद्गलिकेषु धर्माधर्माकाशकालेषु तदात्मकत्वमर्वाग्दृशां न तथा प्रतीतिविषयमायाति पौद्गलिकेषु पुनस्तत्साध्यमानं तेषां सुश्रद्धानम् । इत्यप्रस्तुतमपि शब्दस्य पौद्गलिकत्वं समान्यविशेषात्मकत्वं साधनायोपन्यस्तमिति ।

अत्रापि नित्यशब्दवादिसंमत शब्दैकत्वैकान्तोऽनित्यशब्दवाद्यभिमत शब्दानेकत्वैकान्तश्च प्राग्दर्शितदिशा प्रतिक्षेप्य । अथवा-वाच्यस्य घटादेरर्थस्य सामान्यविशेषात्मकत्वे तद्वाचकस्य ध्वनेरपि तत्त्वम् , शब्दार्थयो कथंचित्तादात्म्याभ्युपगमात् । यथाहुर्भद्रबाहुस्वामिपादा -

" अभिहाणं अभिहेआउ , होइ भिन्नं अभिन्नं च ।
खुर अग्गि मोयगुच्चा-रणंमि जम्हा उ वयणसवणाणं ॥१॥
न विछेओ न वि दाहो, न पूरणं तेण भिन्नं तु ।
जम्हा य मोयगुच्चा-रणंमि तत्थेव पच्चओ होइ ॥ २ ॥
ण य होइ स अन्नत्थे , तेण अभिन्नं तदत्थाउ । "

एतेन-

"विकल्पयोनय शब्दा, विकल्पा शब्दयोनय ।

कार्यकारणता तेषा, नार्थ शब्दा स्पृशन्त्यपि " ॥ १ ॥ इति प्रत्युक्तम् 'अर्थाभिधानप्रत्ययास्तुल्यनामधेया" इति वचनात्, शब्दस्य ह्येतदेव तत्त्वं यदभिधेय याथात्म्येनासौ प्रतिपादयति। स च तत्तथा प्रतिपादयन् वाच्यस्वरूपपरिणामपरिणत एव वक्तुं शक्तो नान्यथाऽतिप्रसङ्गात्, घटाभिधानकाले पटाद्यभिधानस्यापि प्राप्तेरिति। अथवा-भङ्ग्यन्तरेण सकलं काव्यमिदं व्याख्यायते-वाच्य वस्तु घटादिकमेकात्मकमेवैकस्वरूपमपि सदनेकम् (अनेकस्वरूपम्) अयमर्थ। प्रमाता तावत् प्रमेयस्वरूपं लक्षणेन निश्चिनोति। तच्च सजातीयविजातीयव्यवच्छेदादात्मलाभं लभते। यथा घटस्य सजातीया मृन्मयपदार्था विजातीयाश्च पटादयस्तेषां व्यवच्छेदस्तल्लक्षणम्। पृथुबुध्नोदराद्याकार कम्बुग्रीवो जलधारणाहरणादिक्रियासमर्थः पदार्थविशेषो घट इत्युच्यते। तेषां च सजातीयविजातीयानां स्वरूपं तत्र बुद्ध्या आरोप्य व्यवच्छिद्यते, अन्यथा-प्रतिनियततत्स्वरूपपरिच्छेदानुपपत्ते सर्वभावानां हि भावाऽभावात्मकं स्वरूपम् एकान्तभावात्मकत्वे वस्तुनो वैश्वरूप्य स्याद् एकान्ताऽभावात्मकत्वे च निःस्वभावता स्यात्, तस्मात्स्वरूपेण सत्त्वात्पररूपेण चाऽसत्त्वाद्भावाभावात्मकं वस्तु, यदाह—" सर्वमस्ति स्वरूपेण, पररूपेण नास्ति च। अन्यथा सर्वसत्त्वं स्यात्, स्वरूपस्याप्यसंभवः " ॥ १ ॥ ततश्चैकस्मिन् घटे सर्वेषां घटव्यतिरिक्तपदार्थानामभावरूपेण वृत्तेरनेकात्मकत्वं घटस्य सूपपादकम्। एवं चैकस्मिन्नर्थे ज्ञाते सर्वेषामर्थानां ज्ञानं, सर्वपदार्थपरिच्छेदमन्तरेण तन्निषेधात्मन एकस्य वस्तुनो विविक्ततया परिच्छेदासंभवात्। आगमोऽप्येवमेव व्यवस्थित—'जे एगं जाणइ, से सव्वं जाणइ। जे सव्वं जाणइ, से एगं जाणइ"। तथा-' एको भाव सर्वथा येन दृष्ट, सर्वे भावा सर्वथा तेन दृष्टा। सर्वे भावा सर्वथा येन दृष्टा, एको भाव सर्वथा तेन दृष्ट " ॥ १ ॥ ये तु सौगता परासत्त्वं नाङ्गीकुर्वते तेषां घटादे सर्वात्मकत्वप्रसङ्गः। तथाहि—यथा घटस्य स्वरूपादिना सत्त्वं तथा यदि पररूपादिनापि स्यात्तथा च सति स्वरूपादिसत्त्ववत्पररूपादिसत्त्वप्रसक्ते कथं न सर्वात्मकत्वं भवेत्? परासत्त्वेन तु प्रतिनियतोऽसौ सिद्ध्यति।

अथ न नाम नास्ति परासत्त्वं किं तु स्वसत्त्वमेव तदितिचेदहो वैदग्धी न खलु यदेव सत्त्वं तदेवासत्त्वं भवितुमर्हति विधिप्रतिषेधरूपतया विरुद्धधर्माध्यासेनानयोरैक्यायोगात्। अथ युष्मत्पक्षेऽप्येष विरोधस्तदवस्थ एवेति चेदहो वाचाटता देवानांप्रियस्य* न हि वयं येनैव प्रकारेण सत्त्वं तेनैवासत्त्वं येनैव चाऽसत्त्वं तेनैव सत्त्वमभ्युपगम, किंतु-स्वरूपद्रव्यक्षेत्रकालभावै सत्त्वं पररूपद्रव्यक्षेत्रकालभावैस्त्वसत्त्वम्। तदा क्व विरोधावकाश?, यौगास्तु प्रगल्भन्ते-" सर्वथा पृथग्भूतपरस्पराभावाभ्युपगममात्रेणैव पदार्थप्रतिनियमसिद्धे किं तेषामसत्त्वात्मकत्वकल्पनया " इति, तदसत्, यदाहि-पटाद्यभावरूपो घटो न भवति तदा घट पटादिरेव स्यात्। यथा च घटाभावाद्भिन्नत्वाद् घटस्य घटरूपता तथा पटादेरपि स्याद् घटाभावाद्भिन्नत्वादेव इत्यलं विस्तरेण ॥ *मूर्खस्य।

एवं वाचकमपि शब्दरूपं द्वयात्मकम् एकात्मकमपि सदनेकमित्यर्थ, यथोक्तन्यायेन शब्दस्यापि भावाऽभावात्मकत्वात् अथवा—एकविषयस्यापि वाचकस्याऽनेकविषयत्वोपपत्ते। यथा किल घटशब्द संकेतवशात्पृथुबुध्नोदराद्याकारवति पदार्थे प्रवर्तते वाचकतया तथा देशकालाद्यपेक्षया तत्तद्वशादेव पदार्थान्तरेष्वपि तथा वर्तमान केन वार्यते?, भवन्ति हि वक्तारो योगिनः शरीरं प्रति घट इति, संकेतानां पुरुषेच्छाधीनतयाऽनियतत्वात्। यथा चौरशब्दोऽन्यत्र तस्करे रूढोऽपि दाक्षिणात्यानाम्-ओदने प्रसिद्ध। यथा च कुमारशब्द पूर्वदेशे आश्विनमासे रूढ, एवं कर्कटीशब्दादयोऽपि तत्तद्देशापेक्षया योन्यादिवाचका ज्ञेया। कालापेक्षया पुनर्यथा जैनानां प्रायश्चित्तविधौ धृतिश्रद्धासहननादिमति प्राचीनकाले षड्गुरुशब्देन शतमशीत्यधिकमुपवासानामुच्यते स्म। सांप्रतकाले तु तद्विपर्यते तेनैव षड्गुरुशब्देनोपवासत्रयमेव संकेत्यते जीतकल्पव्यवहारानुसारात्।

शास्त्रापेक्षया तु यथा पुराणेषु द्वादशीशब्देनैकादशी त्रिपुरार्णवे च अलिशब्देन मदिराभिषिक्ताऽन्नं च मैथुनशब्देन मधुसर्पिषोर्ग्रहणमित्यादि। न चैव सकेतस्यैवार्थप्रत्यायने प्राधान्यं; स्वाभाविकसामर्थ्यसाचिव्यादेव तत्र तस्य प्रवृत्ते सर्वशब्दानां सर्वार्थप्रत्यायनशक्तियुक्तत्वात् यत्र च देशकालादौ यदर्थप्रतिपादनशक्तिसहकारिसंकेतस्तत्र तमर्थं प्रतिपादयति। तथा च-निर्जितदुर्जयपरप्रवादाः श्रीदेवसूरिपादा -" स्वाभाविकसामर्थ्यसमयाभ्यामर्थबोधनिबन्धनं शब्द "। अत्र शक्तिपदार्थसमर्थनं ग्रन्थान्तरादवसेयम्, 'अतोऽन्यथे' त्यादि उत्तरार्द्धं पूर्ववत्। प्रतिभाप्रमादस्तु तेषां सदसदेकान्ते वाच्यस्य प्रतिनियतार्थविषयत्वे च वाचकस्योक्तयुक्त्या दोषसद्भावाद् व्यवहारानुपपत्ते। तदयं समुदायार्थ सामान्यविशेषात्मकस्य भावाऽभावात्मकस्य च वस्तुन सामान्यविशेषात्मको भावाभावात्मकश्च ध्वनिर्वाचक इति अन्यथा प्रकारान्तरै पुनर्वाच्यवाचकभावव्यवस्थामातिष्ठमानानामन्धवादिनां प्रतिभैव प्रमाद्यति न तु तद्भणितयो युक्तिस्पर्शमात्रमपि सहन्ते। कानि तानि वाच्यवाचकभावप्रकारान्तराणि परवादिनामिति चेदेते ब्रूम। अपोह एव शब्दार्थ इत्येके " अपोहशब्दलिङ्गाभ्यां, न वस्तुविधिनोच्यते " इति वचनात्। अपरे सामान्यमात्रमेव शब्दानां गोचर, तस्य क्वचित् प्रतिपन्नस्यैकरूपतया सर्वत्र संकेतविषयतोपपत्ते, न पुनर्विशेषा, तेषामानन्त्यत कार्त्स्न्येनोपलब्धुमशक्यतया तद्विषयतानुपपत्ते विधिवादिनस्तु विधिरेव वाक्यार्थोऽप्रवृत्तप्रवर्त्तनस्वभावत्वात्तस्येत्याचक्षते। विधिरपि तत्तद्वादिविप्रतिपत्त्याऽनेकप्रकार, तथाहि-वाक्यरूप शब्द एव प्रवर्त्तकत्वाद्विधिरित्येके तद्व्यापारो भावनाऽपरपर्यायो विधि इत्यन्य। नियोग इत्यपरे। प्रैषादय इत्यके निरस्तकनतदुपाधिप्रवर्त्तनामात्रमित्यन्ये। एव फलतदभिलापकर्मादयोऽपि वाच्या। एतेषां निराकरणं सपूर्वोत्तरपक्षं न्यायकुमुदचन्द्रादवसेयमिति काव्यार्थ। स्या० १४ श्लोक। (इतोऽग्रे 'सद्द' शब्दे सप्तमभागे विशेष)

( १४ ) ( शब्दस्य वाचकताविचार )—
('अत्र वैयाकरणा प्राहु' इत्याद्यारभ्य स्फोटविचार. 'फोड' शब्दे ५ पञ्चमे भागे द्रष्टव्य ।)

(१५) अथ गकाराद्यानुपूर्वीविशिष्टोऽन्त्यो वर्णो विशिष्टानुपूर्विका वा गकारौकारविसर्जनीया शब्दा । तथा च मीमांसका प्राहु –"यावन्तो यादृशा ये च, यदर्थप्रतिपादका । वर्णा प्रज्ञातसामार्थ्या-स्ते तथैवाऽवबोधका " ( श्लो० वा० स्फोट० वा० श्लो० ६६ ) ॥ इति । एतदपि न सम्यग्, यत । आनुपूर्वी यद्यनर्थान्तरभूतास्तदा वर्णा एव नानुपूर्वी, ते च व्यस्ता समस्ता वा अर्थप्रत्यायका न भवन्तीत्यावेदितम् । अथार्थान्तरभूता तदा वक्तव्य सा नित्या, अनित्या वा ?, न तावदनित्या स्वसिद्धान्तविरोधात्-वैदिकानुपूर्व्या नित्यत्वेनाभ्युपगमात् । "वक्ता न हि क्रमं कश्चित्, स्वातन्त्र्येण प्रपद्यते" (श्लो० वा० शब्दनित्य० श्लो० २८८ ) इत्याद्यभिधानात् । नापि नित्या स्फोटपक्षोदितसमस्तदोषप्रसक्ते । नच वैदिकवर्णाद्यानुपूर्वी नित्या, लौकिकतदानुपूर्व्यविशेषात् । तथाहि-वैदिकवर्णाद्यानुपूर्वी अनित्या, पदानुपूर्वीशब्दवाच्यत्वात् लौकिकवर्णाद्यानुपूर्वीवत् ।

न च लौकिकानुपूर्व्या विलक्षणेयं, वैलक्षण्यासिद्धे । तथाहि-किमपौरुषेयत्वमस्या वैलक्षण्यम्, आहोस्विद्विचित्ररूपता ?, न-तावदाद्य पक्ष अपौरुषेयत्वस्य निरस्तत्वात् । नापि वैचित्र्य-तस्यानित्यत्वेनाविरोधात्तत्सद्भावेऽपि नित्यत्वाप्रसाधकत्वाल्लौकिकवाक्येष्वपि वैचित्र्यस्योपलब्धेश्च । नच वर्णाना नित्यव्यापिनामानुपूर्वी संभवति । देश-कालकृतक्रमानुपपत्ते । नचाभिव्यक्तानुपूर्वी तेषां सम्भविनी । अभिव्यक्ते प्राक्निरस्तत्वात् । 'पूर्ववर्णसंवित्प्रभवसंस्कारसहित तत्स्मृतिसहितो वा अन्त्यो वर्ण पदम्' इत्यभ्युपगमोऽपि न युक्तिसङ्गत । संस्कारस्मरणादेरनुपलभ्यमानस्य तदा सहकारित्वकल्पनायां प्रमाणाभावात् ।

नचार्थप्रतिपत्त्यन्यथानुपपत्तिस्तत्कल्पनायां प्रमाणं, तत्प्रतिपत्तेरन्यथासिद्धत्वात् । न चानुपूर्वीसम्भवेऽपि परपक्षे वर्णा अर्थप्रतीतिहेतुतया संभवन्ति, तेषा तत्प्रतिपत्तिजननस्वभावत्वे सर्वदा तत्प्रतिपत्तिप्रसक्तेस्तज्जननस्वभावस्य सर्वदा भावात् । अतज्जननस्वभावत्वे न कदाचिदप्यर्थप्रतिपत्तिं जनयेयु अनपगताऽतज्जननस्वभावत्वात् । नच सहकारिसन्निधानेऽपि तेषामतज्जननस्वभावता व्यपगच्छन्ति अनित्यताप्रसक्तिदोषापत्ते । नित्याश्च परैस्ते अभ्युपगता इत्यभ्युपगमविरोधश्च ।

(१६) ( वाच्यवाचकयो. संबन्धस्य नित्यत्वं निषिध्य तस्य कृतकत्वव्यवस्थापनम् )--

नच नित्यसंबन्धवादिनस्तदपेक्षा वर्णा अर्थप्रत्यायका संभवन्ति, नित्यस्यानुपकारकत्वेनापेक्षणीयत्वायोगात् । न नित्य संबन्ध शब्दार्थयो प्रमाणेनावसीयते । प्रत्यक्षेण तस्याननुभवात् । तदभावतानुमानेनापि तस्य तत्पूर्वकत्वाभ्युपगमात् । न च शब्दार्थयो स्वाभाविकसंबन्धमन्तरेण गोशब्दश्रवणानन्तर ककुदादिमदर्थप्रतिपत्तिर्न भवेद् अस्ति च सा इति शब्दस्य वाचिका शक्तिरवगम्यत इति वाच्यम्, अनवगतसंबन्धस्यापि तत्तदर्थप्रतिपत्तिप्रसक्ते ।

न च संकेताभिव्यक्त स्वाभाविक संबन्धोऽर्थप्रतिपत्ति जनयतीति नायं दोष संकेतादेवार्थप्रतिपत्ते स्वाभाविकसंबन्धपरिकल्पनावैयर्थ्यप्रसक्ते । तथाहि-संकेताद् व्युत्पाद्या 'अनेन शब्देनेत्थंभूतमर्थं व्यवहारिण प्रतिपादयन्ति' इत्यवगत्य व्यवहारकाले पुनस्तथाभूतशब्दश्रवणात् । संकेतस्मरणे तत्सदृशं तं चार्थं प्रतिपद्यन्ते न पुन स्वाभाविकं संबन्धमवगत्य पुनस्तत्स्मरणे अर्थमवगच्छन्ति ।

न च वाच्यवाचकसंकेतकरणे स्वाभाविकसंबन्धमन्तरेणानवस्थाप्रसक्ति वृद्धव्यवहारात् प्रभूतशब्दानां वाच्यवाचकस्वरूपावधारणात् । तथाहि-एको व्युत्पन्नव्यवहारः तथाभूताय 'गामभ्याज शुक्लां देवदत्त ! दण्डेन' इति यदा व्यपदिशति द्वितीयस्तु तद्वचपदेशानन्तरं तथैव विदधाति तदा अव्युत्पन्नसंकेत शिशुस्तं तथा कुर्वाणमुपलभ्यैवमवधारयति-' अनेन गोशब्दाद्यर्थ प्रतिपन्न अभ्याजाऽऽदिशब्दादभ्याजिक्रियादिक अन्यथा कथमपरनिमित्ताभावेऽपि गोपिण्डाऽऽनयनादिकं वाक्यश्रवणानन्तरं विदध्याद्' एवमपोद्धारकल्पनयाऽव्युत्पन्नानां संकेतग्रहणसंभवान्नानवस्थादोष ।

न च प्रथमसंकेतविधायिन स्वाभाविकसंबन्धव्यतिरेकेण वाच्यवाचकयो कुतो वाच्यवाचकरूपावगतिरिति वक्तव्यम् . अनादित्वादस्य व्यवहारस्यापरापरसंकेतविधायिपूर्वकत्वेन निर्दोषत्वात् ।

न च वाच्यवाचकसंबन्धस्य पुरुषकृतत्वे शब्दवदर्थस्यापि वाचकत्वम् अर्थवच्छब्दस्यापि वाच्यत्वं प्रसक्तमिति वक्तव्यम् । वाच्यतानतिक्रमेण संकेतकरणात् । न च स्वाभाविकसंबन्धव्यतिरेकेण प्रतिनियतयोग्यताया अभाव., कृतकत्वेऽपि प्रतिनियतयोग्यतावतां भावानामुपलब्धे. । तथाहि-यत्र लोहत्वं छेदिकाशक्तिस्तत्रैव क्रियमाणा दृष्टा, न जलादौ, यत्रैव तन्तुत्वमस्ति तत्रैव निष्पाद्यते पटोत्पादनशक्तिर्नतु वीरणादौ तत्र तन्तुत्वाभावाद् एवं च यथोपलभ्यते तस्तथैवाभ्युपगन्तव्यम् । दृष्टाऽनुमितानां नियोगप्रतिषेधानुपपत्ते तेन यत्रैव वर्णत्वादिकं निमित्त तत्रैव वाचिका शक्ति संकेतेनोत्पाद्यते यत्र तु तन्नियत निमित्तं नास्ति तत्र न वाचिका शक्तिरिति न नित्यवाच्यवाचकसंबन्धपरिकल्पनया प्रयोजनम् । एकान्तनित्यस्य तु ज्ञानजनकत्वे सर्वदा ज्ञानोत्पत्ति. तदजननस्वभावत्वेन कदाचिदपि ज्ञानोत्पत्तिरिति प्राक् प्रतिपादितम् । समयबलेन तु शब्दादर्थप्रतिपत्तौ यथासंकेत विशिष्टसामग्रीत. कार्योत्पत्तौ न कश्चिद्दोष ।

( अनुमानात् शब्दस्य प्रमाणान्तरत्वप्रसाधनम् )—
अत एवानुमानात् प्रमाणान्तरं शाब्दम् । अनुमानं हि पक्षधर्मत्वान्वयव्यतिरेकवल्लिङ्गबलादुदयमासादयति । शाब्दं तु संकेतसव्यपेक्षशब्दोपलम्भात् प्रत्यक्षानुमानागोचरेऽर्थे प्रवर्त्तते । स्वसाध्याऽव्यभिचारित्वमप्यनुमानस्य त्रिरूपलिङ्गाङ्गत्वेनैव निश्चीयते । शाब्दस्य त्वाप्तोक्तत्वनिश्चये सति शब्दस्योत्तरकालमिति । किं च-शब्दो यत्र यत्रार्थे प्रतिपादकत्वेन पुरुषेण प्रयुज्यते त तमर्थं यथासंकेतं प्रतिपादयति, नत्वेवं धूमादिक लिङ्गं पुरुषेच्छावशेन जलादिकं प्रतिपादयतीत्यनुमानात् प्रमाणान्तर सिद्ध शब्द. ।

न च शब्दादर्थप्रतिपत्तौ शब्दस्य त्रैरूप्यमस्ति। यतो न तस्य पक्षधर्मता यत्रार्थस्तत्र धर्मिणि शब्दस्यावृत्तेर्गोपिण्डाधारेण प्रदेशेन शब्दस्याऽऽश्रयाऽऽश्रयिभावस्य जन्यजनकभावनिबन्धनस्याऽभावाद् अत:-' गोपिण्डवानय देशो गोशब्दवत्त्वात् ' इति नाऽभिधातुं शक्यम् । नापि गोपिण्डे गोशब्दो वर्तते। आधाराधेयवृत्त्या जन्यजनकभावेन वा गोपिण्डाऽभावेऽपि गोशब्दस्य दर्शनात् । नच-गम्यगमकभावेन तत्रासौ वर्त्तते पक्षधर्मत्वाभावे तस्यैवानुपपत्तेः वाच्यवाचकभावेन वृत्तावनुमानात् प्रमाणान्तरत्वम् । तेन 'गोपिण्डो गोत्ववान् गोशब्दवत्त्वाद् अयमपि प्रयोगोऽनुपपन्न एव नापि गोत्वे गोपिण्डविशेषणे वर्त्तते । तस्सामान्येनाश्रयाश्रयिभावस्य जन्यजनकभावस्य वा अस्याभावाद् । अत ' गोत्वं गोपिण्डवत् गोशब्दवत्त्वाद् ' इत्यपि वक्तुमशक्यम् । विशेषे च साध्येऽनन्वयश्चात्र पक्षे दोष । नच-' गोशब्दो गवार्थवान् गोशब्दत्वात् ' इति प्रयोगो युक्तः तथा प्रतीत्यभावात् । नहि ' गौर्गच्छति ' इत्युक्ते गमनक्रियाविशिष्टवाच्यार्थप्रतीतिमन्तरेण गोपिण्डेन तद्वान् शब्दो लोकेनाऽवगम्यते ।

नच-गोशब्दो गवार्थवाचकत्वेन गोशब्दत्वादनुमीयते, किंतु-गवार्थप्रतिपत्त्यन्यथानुपपत्त्या गवार्थवाचकत्वं तस्य गम्यते । प्रतिनियतपदार्थनिवेशिना तु देवदत्तादिशब्दाना नान्वयः नापि पक्षधर्मता दृष्टान्तदार्ष्टान्तिकभेदं चानुमानप्रवृत्ते । नच-शाब्द स्वभावलिङ्गजमनुमानं शब्दस्यार्थस्वभावत्वासिद्धेराकारभेदात् प्रतिनियतकरणग्राह्यत्वाद्वाचकस्वभावत्वाच्च तस्य । नापि कार्यलिङ्गजम् अर्थाभावऽपीच्छातः शब्दस्योत्पत्तेः । नच-न बाह्यार्थविषयत्वेन शब्दस्यानुमानता सौगतैरभ्युपगम्यते अपि तु विवक्षाविषयत्वेनेति वक्तव्यम्, यतो यथा न तदर्थो विवक्षा तथा शब्दप्रामाण्यप्रतिपादनेऽभिहितं न पुनरुच्यते ।

( परकल्पितवर्णाना नित्यता तत्पदादिप्रक्रियां च प्रदूश्यानेकान्तदृष्ट्या शब्द-तदर्थसम्बन्धयोस्स्वरूपनिरूपणम् )-न च-मीमांसकाभिप्रायेण वर्णानां वाचकत्वम् अभिव्यक्तानभिव्यक्तपक्षद्वयेऽपि दोषात् अनभिव्यक्तानां ज्ञानजनकत्वे सर्वपुरुषान् प्रति सर्वे सर्वदा ज्ञानजनकाः स्युः केनचित् प्रत्यासत्तिविप्रकर्षाभावाद् अभिव्यक्तानां ज्ञानजनकत्वे एकवर्णाऽऽवरणापाये सर्वेषां समानदेशत्वेनाभिव्यक्तत्वायुगपत् सर्वश्रुतिप्रसक्तिरित्युक्तं प्राक् । इन्द्रियसंस्कारपक्षेऽपि पूर्वप्रतिपादितमेव दूषणमनुसर्त्तव्यम् । किं च-यद्यवचगतसंबन्धा वर्णा अर्थप्रत्यायकास्तदा नारिकेरद्वीपवासिनोऽप्युपलभ्यमाना अर्थावगतिं विदध्युः । अर्थावगतसम्बन्धास्तथा सति पदस्य स्मारकत्वमेव स्यान्न वाचकत्वं तथा चानधिगतार्थाधिगमहेतुत्वाभावाच्च प्रमाणता भवेत् , तदुक्तम्-" पदं त्वभ्यधिकाभावात् , स्मारकान्न विशिष्यते । अथाऽऽधिक्यं भवेत्किंचित् , स पदस्य न गोचरः " ॥ ( श्लो० वा० शब्दप० श्लो० १०७ ) इति, तन्न मीमांसकमतेनापि वर्णाना शब्दत्वम् । कथं तर्हि वर्णा शब्दरूपता प्रतिपद्यन्ते ? उक्तमत्र परिमितसङ्ख्याना पुद्गलद्रव्यापादानपरित्यागेनैव परिणतानामश्रावणस्वभावपरित्यागावाप्तश्रावणस्वभावाना विशिष्टानुक्रमयुक्ताना वर्णाना वाचकत्वात् शब्दत्वम् ; अन्ययोक्तदोषानतिवृत्तेः । वैशेषिकपरिकल्पितपदादिप्रक्रियात्वनुभवबाधितत्वादयुक्ता ।

न च-निरन्वयविनाशिनां विज्ञानहेतुता संभवतीत्यसकृत्प्रतिपादितम् । पद्लक्षणावस्थायित्वलक्षणमप्यनित्यत्व तत्परिकल्पिते निरन्वयविनाशपक्षे अर्थक्रियानिर्वर्त्तनानुपयोगि तेषाम् । नच पद्लक्षणावस्थानमपि संभवति. प्रथमक्षणसत्ताया द्वितीयक्षणसत्ताऽनुप्रवेशे तत्क्षणसत्तायाः अप्युत्तरक्षणसत्तानुप्रवेशपरिकल्पनायां क्षणिकत्वमेव । अननुप्रवेशेऽपि परस्परविविक्तत्वात् । क्षणस्थितीनां नैव क्षणिकत्वमिति कुतः पद्लक्षणावस्थानमेकस्य? अक्षणिकत्वे चार्थक्रियाविरोधः प्रतिपादित एवेति । न पदादिपरिकल्पना वैशेषिकपक्षे युक्तियुक्तेति स्थितम् । ननु भवत्पक्षेऽपि क्रमस्य वर्णेभ्यो व्यतिरेके न वर्णविशेषणत्वम् अव्यतिरेके वर्णा एव केवलास्ते च न व्यस्तसमस्ता अर्थप्रतिपादका इति पूर्वमेव प्रतिपादितमिति न शब्दः कश्चिदर्थप्रत्यायकः , असदेतत् , वर्णव्यतिरिक्ताऽव्यतिरिक्तस्य क्रमस्य प्रतिपत्तेः । तथाहि-न वर्णेभ्योऽर्थान्तरमेव क्रमः वर्णानुविद्धतया तस्य प्रतीतेः । नापि वर्णा एव क्रमः । तद्विशिष्टतया तेषां प्रतिपत्तेः । नच तद्विशेषणत्वेन प्रतीयमानस्य क्रमस्याऽपह्नवो युक्तिसङ्गतो वर्णेष्वपि तत्प्रसक्तेः ।

नच-भ्रान्तिरूपा प्रतिपत्तिरियं, वर्णाना तद्विशिष्टतया वाधिनाध्यक्षगोचरतया प्रत्यबाधितत्वाद् अर्थप्रतिपत्तिकारणतोऽनुमितत्वाच्च । न चाऽभावः कस्यचिद्भावाध्यवसायि तया विशेषण नाऽप्यर्थप्रतिपत्तिहेतुर्नच क्रमोऽप्यहेतु तथात्मकवर्णेभ्योऽर्थप्रतीतेः । ततो भिन्नाऽभिन्नानुपूर्वीविशिष्टा वर्णा विशिष्टपरिणतिमन्तः शब्दः स च पद-वाक्यादिरूपतया व्यवस्थितः तेन विशिष्टानुक्रमवन्ति तथाभूतपरिणतिमापन्नानि पदान्येव वाक्यमभ्युपगन्तव्यम् । तद्व्यतिरिक्तस्य तस्य पदवदनुपपद्यमानत्वात्। सम्म० १ काण्ड ३२ गाथाटी० ।

( १७-१८ ) शब्दस्य नित्यत्वाऽनित्यत्वविचार , शब्दार्थतःस्सम्बन्धविचारश्च—

अकारादिः पौद्गलिको वर्णः इति ॥ ६ ॥

पुद्गलैः-भाषावर्गणापरमाणुभिरारब्धः पौद्गलिकः । अत्र याज्ञिकाः प्रज्ञापयन्ति- वर्णस्यानित्यत्वमेव तावद् दुरुपपादं कुतस्तरा पुद्गलारब्धत्वमस्य स्यात् ? । तथाहि-स एवायं गकार इति प्रत्यभिज्ञा, शब्दो नित्यः श्रावणत्वाच्छब्दत्ववद् इत्यनुमानम् , शब्दो नित्यः , परार्थं तदुच्चारणान्यथानुपपत्तेरित्यर्थापत्तिश्चेति प्रमाणानि दिनकरकरनिकरनिरन्तरप्रसरपरामर्शोपजातजृम्भारम्भाम्भोजानीव मनःप्रसादमस्य नित्यत्वमेव द्योतयन्ति । तदचयम् । यतः प्रत्यभिज्ञानं तावत्कथंचिदनित्यत्वेनैवाविनाभावमाभेजानम् , एकान्तैकरूपताया ध्वने स एवायमित्याकारोभयगोचरत्वविरोधात् । कथमात्मनि तद्रूपऽपि स एवाहमिति प्रत्यभिज्ञेति चेत् । तदशम्यम् । तस्यापि कथंचिदनित्यस्यैव स्वीकारात् । प्रत्यभिज्ञाभासश्चायम् , प्रत्यक्षानुमानाभ्यां बाध्यमानत्वात्, प्रदीपप्रत्यभिज्ञावत् । प्रत्यक्षं हि तावदुत्पन्नं विपन्नं च वागियमिति प्रवर्त्तते ।

न च-प्रत्यभिज्ञानेनैवेदं प्रत्यक्षं बाधिष्यत इत्यभिधानीयम्, अस्याऽन्यथा सिद्धत्वात्। अभिव्यक्तिभावाभावाभ्यामेवेयं प्रतीतिरिति चेत् कुटकटकटाहकटाहादावपि किं नेयं तथा?। कुम्भकारमुद्गरादिकारणकलापव्यापारोपलम्भात्तदुत्पत्तिविपत्तिस्वीकृतौ, तालुवातादिहेतुव्यापारप्रेक्षणाद्ध्वनेरप्यपि तत्स्वीकारोऽस्तु। तालुवातादेरभिव्यञ्जकत्वेनाभिव्यक्तिमात्रहेतुत्वे कुलालादेरपि तदस्तु। न चाभिव्यक्तिभावाऽभावाभ्यां तथा प्रतीतिरुपपादि। दिनकरमरीचिराजीव्यज्यमाने, घनतरतिमिरनिकराकीर्यमाणे च कुम्भादावुत्पादि व्यपादि चायमिति प्रतीत्यनुत्पत्तेः। तिमिरावरणवेलायामपि स्पार्शनप्रत्यक्षेणास्योपलम्भान्न तथेयमिति चेत् यदा तर्हि नोपलम्भस्तदा किं वक्ष्यसि?। अथ क्वापि तिमिरादेस्तत्सत्त्वाविरोधित्वावधारणात्सर्वत्रानभिव्यक्तिदशायां तत्सत्त्वं निश्चीयत इति चेत्, तत्किमावृतावस्थायां शब्दस्य सत्त्वनिर्णायकं न किञ्चित्प्रमाणमस्ति?। ओमिति चेत्तर्हि साधकप्रमाणाभावादसत्त्वमस्तु। अस्त्येव प्रत्यभिज्ञादिकं तदिति चेत्। न। अस्य प्रत्यक्षबाधितत्वेनोन्मज्जनमशक्तेः। उन्मज्जनेऽपि व्यक्तिभावाभावयोः कुम्भादाविवात्राप्युदयव्ययाध्यवसायो न स्यात्। अस्ति चायम्, तस्मादनन्यथासिद्धप्रत्यक्षप्रतिबद्ध एवेति निश्चीयते। अनित्यः शब्दस्तीव्रमन्दतादिधर्मोपेतत्वात्, सुखदुःखादिवदित्यनुमानबाधः। व्यञ्जकाश्रितास्तीव्रतादयस्तत्राभान्तीति चेत्, किं तत्र व्यञ्जकम्?। कोष्ठ्यवायुविशेषा ध्वनय इति चेत्कथं तर्हि तद्धर्माणां तथा श्रावणप्रत्यक्षे प्रतिभासः स्यात्?। ध्वनीनामश्रावणत्वेन तद्धर्माणामप्यश्रावणत्वात्। न खलु मृदुगभीरलहरीतरङ्ग्यमाणनिष्पङ्कपयोभाजनादौ प्रतिबिम्बितमुखादिगतत्वेन तरलत्वमिव माधुर्यमप्यचाक्षुषं चक्षुःप्रत्यक्षेण प्रत्येति। श्रोत्रग्राह्य एव कश्चिदर्थः शब्दस्य व्यञ्जकः, स्तीव्रत्वादिधर्मवान् अनित्यश्चेष्यत इति चेत्। न। तस्यैव शब्दत्वात्। श्रोत्रग्राह्यत्वं हि शब्दलक्षणं; तल्लक्षणयुक्तस्य च तस्य ततोऽर्थान्तरत्वमयुक्तम्।

किं च-कस्य किं कुर्वन्तोऽमी व्यञ्जका ध्वनयो भवेयुः?। शब्दस्य, श्रोत्रस्योभयस्य वा। संस्कारमिति चेत्, कोऽयं संस्कारोऽत्र रूपान्तरोत्पत्तिः, आवरणविपत्तिर्वा। आद्यश्चेत्, कथं न शब्दश्रोत्रयोरनित्यत्वं स्यात्? स्वभावान्यत्वरूपत्वात्तस्य। अथ रूपं धर्मः, धर्मधर्मिणोश्च भेदात्, तदुत्पत्तावपि न भावस्वभावान्यत्वमिति चेत् ननु धर्मान्तरोत्पादेऽपि भावस्वभावोऽननुयद्रूपस्वरूपस्तादृगेव चेत् तदा घटादिरिव श्रोत्रेण घटादेरिव ध्वनेर्नोपलम्भः संभवेत्। तत्संबन्धिनस्तस्य करणादेवेति चेत्, स तावत्संबन्धो न संयोगः, तस्याऽद्रव्यत्वात्। समवायस्तु कथञ्चिदविष्वग्भावान्नान्यो भवितुमर्हतीति तदात्मकधर्मोत्पत्तौ धर्मिणोऽपि कथञ्चिदुत्पत्तिरनिवार्या। आवरणापगमः संस्कारः चमत्कार इति चेत्, स तर्हि शब्दस्यैव संभाव्यते, ततश्चैकत्रावरणविगमे समग्रवर्णाऽऽकर्णनं स्यात्। प्रतिवर्णं पृथगावरणमिति यस्यैवाऽऽवरणविरमणम्, तस्यैवोपलब्धिरिति चेत्, तदवितथम्। अपृथग्देशवर्त्तमानैकेन्द्रियग्राह्याणां प्रतिनियतावरणावार्यत्वविरोधात्। यत् खलु प्रतिनियतावरणावार्यं, तत्पृथग्देशे वर्त्तमानम्, अनेकेन्द्रियग्राह्यं च दृष्टं, यथा घटपटौ, यथा वा रूपरसाविति। अपृथग्देशवर्त्तमानैकेन्द्रियग्राह्यत्वादेव च नास्य प्रतिनियतव्यञ्जकव्यङ्ग्यत्वमपि। अस्तु वैतत्तथाप्ययमभिव्यज्यमानः सामस्त्येन, प्रदेशतो वा व्यज्येत। नाद्यः पक्षः क्षमङ्करः। सकलशरीरिणां युगपत्तदुपलम्भापत्तेः। द्वितीयविकल्पे तु कथं सकर्णस्यापि संपूर्णवर्णाऽऽकर्णनं भवेत्?। न खलु निखिलावृताङ्गराजाङ्गनानामपटुपवनापनीयमानवसनाञ्चलत्वेन चलनाङ्गुलिकोटिप्रकटतायां विकस्वरशिरीषकुसुमसुकुमारसमग्रविग्रहयष्टिनिष्टङ्कनं विशिष्टलक्षणानामपीक्ष्यते। प्रदेशाभिव्यक्तौ चास्य सप्रदेशत्वं प्रसज्यते। ततो व्यञ्जकस्य कस्यचित्कथञ्चिदपि संभवाऽभावात्। तद्गता एव तीव्रतादय इति नासिद्धो हेतुः। यदपि श्रावणत्वादित्यनुमानं, तदपि-"कान्तकीर्त्तिप्रथाकामः, कामयेत स्वमातरम्। ब्रह्महत्यां च कुर्वीत, स्वर्गकामः सुरां पिबेत्॥१॥" इत्याद्यानुपूर्व्या सव्यभिचारम्। नित्यैवेयमिति चेत् तर्हि प्रेरणावत्प्रामाण्यप्रसङ्गः, तदर्थानुष्ठानाश्रद्धाने च प्रत्यवायाऽऽपत्तिः। उदात्तस्वरिततरतीव्रमन्दसुस्वरविस्वरत्वादिधर्मैश्च व्यभिचारः, तेषां नित्यत्वे सदाप्येकाकारप्रत्ययप्रसक्तेः। नित्यत्वेऽप्यमीषामभिव्यक्तिः कादाचित्कीति चेत्, तदचारु। परस्परविरुद्धानामेकत्र समावेशासंभवात्। प्रभाकरेण शब्दत्वाऽस्वीकारादुभयविकलश्च तं प्रत्यत्र दृष्टान्तः।

अथ भट्ट एवेत्थमनुमानयति। प्रभाकरस्तु देशकालभिन्ना गोशब्दव्यक्तिबुद्धय एकगोशब्दगोचराः, गौरित्युत्पद्यमानत्वात्, अद्योच्चारितगोशब्दव्यक्तिबुद्धिवदिति वदतीति चेत्। तदप्यनवदातम्। अत्र प्रतिबन्धाभावात्, तडित्तन्तुनित्यत्वसिद्धावप्येवंविधानुमानस्य कर्तुं शक्यत्वात्। याऽप्यर्थाऽऽपत्तिः प्रत्यपादि, तत्रायमर्थः-अनित्यत्वे सति यो गृहीतसंबन्धः शब्दः, स तदैव दध्वंसे इति व्यवहारकालेऽन्य एवाऽगृहीतसंबन्धः कथमुच्चार्येत? उच्चार्यते च तस्मान्नित्य एवायमिति। तदयुक्तम्। अनेन न्यायेनार्थस्याऽपि नित्यत्वैकतापत्तेः, अन्यथा बाहुलेये गृहीतसंबन्धोऽपि गोशब्दः शाबलेयादिष्वगृहीतसंबन्धः कथं प्रतिपत्तिं कुर्यात्?। सामान्यस्यैव शब्दार्थत्वाददोष इति चेत्। न। लम्बकम्बलः ककुद्मान्, शुक्लशृङ्गश्चायं गौरिति सामानाधिकरण्याभावप्रसक्तेः। ततः सामान्यविशेषाऽऽत्मैव शब्दार्थः, स च नैकान्तेनाऽन्वेतीति न नित्यैकरूपोऽभ्युपेयः स्यात्। कथं च धूमव्यक्तिः पर्वते पावकं गमयेत्?। धूमत्वसामान्यमेव गमकमिति चेत्, वाचकमपि सामान्यमेवास्तु। अथ शब्दत्वं, गोशब्दत्वं, क्रमाभिव्यज्यमानगत्वौत्वादिकं वा तद्भवेत्। आद्यपक्षे प्रतिनियतार्थप्रतिपत्तिर्न स्यात्, सर्वत्र शब्दत्वस्याऽविशेषात्। गोशब्दत्वं तु नाऽस्त्येव, गोशब्दव्यक्तेरेकस्याः कस्याश्चित्तदाधारभूताया असंभवात्, क्रमेण व्यज्यमानं हि वर्णद्वयमेवैतत्। क्रमाभिव्यज्यमानेत्यादिपक्षोऽप्यसंभवी, गत्वाऽऽदिसामान्यस्याविद्यमानत्वात्, सर्वत्र गकारादेरेकत्वात्। अत्रोच्यते-अस्तु तार्तीयीकः कल्पः, न च गकारादेरैक्यम्, गर्गभर्गवर्गस्वर्गमार्गादिषु भूयांसोऽमी गकारा इति तद्भेदोपलम्भात्। व्यञ्जकभेदादयमिति चेद्, अकाराद्यशेषवर्णेष्वप्ययमस्त्वित्येक एव वर्णः स्यात्। अथ य-

था अयमपि गकार, अयमपि गकार', इत्येकाकारा प्रतीति. तथा नाकाराद्यशेषवर्णेषु अपीति चेत्। नैवम्। अयमपि वर्ण, अयमपि वर्ण', इत्येकप्रत्ययवमर्शोत्पत्ते। सामान्यनिमित्तक एवायमितिचेत्, तर्हि गकारादावपि तथाऽस्तु। अथाकारेकारादौ विशेषोऽनुभूयते, नतु गर्गादिगकारेषु, तेषा तुल्यस्थानाऽऽस्यप्रयत्नादित्वादिति चदेवं तर्हि "सदर्प इपन्ते हग्धिहरिति हम्मीरहस्य" इत्यादिहकारात्कण्ठ्याद्वह्निजिह्वादिहकारस्य, ह "उरस्यो वह्निजिह्वादौ, वर्गपञ्चमसंयुत." इति वचनादुरस्यत्वेन स्थानभेदप्रतीते.। ततो भिन्नोऽयं वर्णो भवेत्।

नच गकारे नास्ति विशेषावभासः, तीव्रोऽयं मन्दोऽयं गकार इति तीव्रतादिविशेषस्फुरणात् व्यञ्जकगतास्तीव्रतादयस्तत्र स्फुरन्तीति चेत्, कृतोत्तरमेतत्। अकारेकारादावप्यनुभूयमानः स विशेषस्तद्गत एवाऽस्तु, तथा चैक एव वर्ण किन्न भवेत्?। मा भूद्वा विशेषावभासो गकारेषु भेदावभासस्तु विद्यत एव, बहवोऽमी गकारा इति प्रतीते.। भवति च विशेषावभासं विनापि भेदस्फूर्त्ति, सर्षपराशौ गुरुलाघवादिविशेषावाभासं विनाऽपि तद्भेदप्रतिभासवद्। इति सिद्धो गकारभेद.। तथाच-तदादिवर्णवर्त्तिसामान्यानामेव वाचकत्वमस्तु तत्त्वतस्तुगोशब्दत्वमेव सदृशपरिणामात्मकं वाचकं क्रमाभिव्यज्यमानं वर्णद्वयमेवैतत्, नैका गोशब्दव्यक्तिरिति च न वाच्यम्। नित्यत्वाप्रसिद्धावद्याप्यस्योत्तरस्य कूर्परकोटिसंटङ्कितगुडायमानत्वात्। तस्मात्क्रमोत्पादिशु तत्तद्गकारादिपर्यायोपहितभाषाद्रव्यात्मको गोशब्द एव सदृशपरिणामात्मा वाचकोऽस्तु। तथा च क्षीणाऽर्थाऽऽपत्ति।

अस्तु अनित्यो ध्वनि, किंतु-नाऽयं पौद्गलिक' संगच्छत इति यौगा संगिरमाणा. सप्रणयप्रणयिनीनामव गौरवार्हा। यत. कोऽत्र हेतु, स्पर्शशून्याश्रयत्वम्, अतिनिविडप्रदेशे प्रवेशनिर्गमयोरप्रतिघात, पूर्वं पश्चाच्चाऽवयवानुपलब्धि। सूक्ष्ममूर्त्तद्रव्यान्तराऽप्रेरकत्व,गगनगुणत्व वा?। नाद्य पक्ष। यत शब्दपर्यायस्याश्रये भाषावर्गणारूपे स्पर्शाभावो न तावदनुपलब्धिमात्रात्प्रसिध्यति, तस्य सव्यभिचारत्वात्। योग्यानुपलब्धिस्त्वसिद्धा, तत्र स्पर्शस्यानुभूतत्त्वेनोपलब्धिलक्षणप्राप्तत्वाभावात्, उपलभ्यमानगन्धाऽऽधारद्रव्यवत्। अथ घनसारगन्धसाराऽऽदौ गन्धस्य स्पर्शाव्यभिचारनिश्चयादत्रापि तन्निर्णयेऽप्यनुपलम्भादनुद्भूतत्व युक्तं, नेतरत्र, तन्निर्णायकाभावाद्, इति चेत्, मा भूत्तावत्तन्निर्णायकं किंचित्। किंतु-पुद्गलानामुद्भूतानुद्भूतस्पर्शानामुपलब्धे शब्देऽपि पौद्गलिकत्वेन परै प्रणिगद्यमाने बाधकाभावे च सति सदेह एव स्यात्, नत्वभावनिश्चय., तथा च संदिग्धाऽसिद्धो हेतु। नच नास्ति तन्निर्णायकम्। तथाहि-शब्दाश्रय स्पर्शवान्, अनुवातप्रतिवातयोर्विप्रकृष्टनिकटशरीरिणोपलभ्यमानानुपलभ्यमानेन्द्रियार्थत्वात्,तथाविधगन्धाऽऽधारद्रव्यवद्, इति। द्वितीयकल्पेऽपि गन्धद्रव्येण व्यभिचार.। वर्त्तमानजात्यकस्तूरिकाकर्पूरकश्मीरजादिगन्धद्रव्यं हि पिहितकपाटसपुटापवरकस्यान्तर्विशति, बहिश्च निस्सरति, नचापौद्गलिकम्। अथ तत्र सूक्ष्मरन्ध्रसंभवेनातिनिविडत्वाभावात्तत्प्रवेशनिष्काशौ, अत एव तदल्पीयस्ता, नत्वपावृतद्वारदशायामिव तदेकार्णवत्वं, सर्वथा नीरन्ध्रे तु प्रदेशे नैतौ संभवत इति चेद्, एव तर्हि शब्देऽपि सर्वस्य तुल्ययोगक्षेमत्वादसिद्धता हेतोरस्तु। पूर्वं पश्चाच्चावयवानुपलब्धि, सौदामिनीदामोल्कादिभिरनैकान्तिकी। सूक्ष्ममूर्त्तद्रव्यान्तराप्रेरकत्वमपि गन्धद्रव्यविशेषसूक्ष्मरजाधूमाऽऽदिभिर्व्यभिचारि। न हि गन्धद्रव्यादिकमपि नसि निविशमान तद्विवरद्वारदेशोद्भिन्नसमश्रुप्रेरकं प्रेक्ष्यते। गगनगुणत्व त्वसिद्धम्। तथाहि-न गगनगुण शब्द अस्मदादिप्रत्यक्षत्वात्, रूपादिवदिति। पौद्गलिकत्वसिद्धि पुनरस्य, शब्द पौद्गलिक. इन्द्रियार्थत्वात्, रूपादिवदेवेति। रत्ना० ४ परि०।

अथ संकेतमात्रेणैव शब्दोऽर्थं प्रतिपादयति; नतु स्वाभाविकसंबन्धवशादिति गदतो नैयायिकान, समयादपि नार्थं वस्तु वदतीति वदत. सौगताश्च पराकुर्वन्ति—

**स्वाभाविकसामर्थ्यसमयाभ्यामर्थबोधनिबन्धनं शब्दः इति ॥ ११ ॥**

स्वाभाविकम्-सहजम्। सामर्थ्यं-शब्दस्यार्थप्रतिपादनशक्ति, योग्यतानाम्नी। समयश्च-संकेत ताभ्यामर्थप्रतिपत्तिकारण शब्द इति। तत्र नैयायिकान्प्रत्येवं विधेयानुवाद्यभाव., योऽयम् अर्थबोधनिबन्धनं शब्द अभ्युपगतोऽस्ति,स स्वाभाविकसामर्थ्यसमयाभ्यां-द्वाभ्यामपि. न पुनः समयादेव केवलात्। समयो हि पुरुषाऽऽयत्तवृत्ति; नच-पुरुषेच्छया वस्तुनियमो युज्यते। अन्यथा तदिच्छाया अव्याहतप्रसरत्वादर्थोऽपि वाचक, शब्दोऽपि वाच्यः स्यात्। अथ गत्वौत्वादिसामान्यसंबन्धो यस्य भवति, स वाचकत्वे योग्य, इतरस्तु वाच्यत्वे, यथा द्रव्यत्वाविशेषेऽप्यग्नित्वादिसामान्यविशेषवत् एव दाहजनकत्वं, न जलत्वादिसामान्यविशेषवत् इति चेत्। तदयुक्तम्। अतीन्द्रिया शक्तिं विनाऽग्नित्वादेरपि कार्यकारणभावनियामकत्वानुपपत्ते। अग्नित्वं हि दाहवद्विजातीयकारणजन्यकार्येष्वपि तुल्यरूपम्। नहि दाहं प्रत्येवाऽग्नेरग्नित्वं, यथा पुत्रापेक्षं पितु पितृत्वम्। ततश्चाग्निर्दाहवत्पिपासापनोदमपि विदध्यादिति नातीन्द्रिया शक्तिमन्तरेणाग्नित्वादीना कार्यकारणभावव्यवस्थाहेतुत्वं, तद्वदेव च गत्वौत्वादिसामान्यानामपि न वाच्यवाचकभावनियमहेतुत्वमिति नियामिका शक्ति स्वीकर्त्तव्यैव। अथ किमनेनातीन्द्रियशक्तिकल्पनाक्लेशेन?। करतलानलसंयोगादिसहकारिकारणनिकरपरिष्कृतं कृपीटयोनिस्वरूपं हि स्फोटघटनपाटवं प्रकटयिष्यति, किमवशिष्टं यदनया करिष्यते। तथा च जयन्त -' स्वरूपादुद्भवत्कार्यं, सहकार्युपबृंहितात्। नहि कल्पयितुं शक्ता, शक्तिमन्यामतीन्द्रियाम् ॥ १ ॥ ' यदुक्तम्-अग्निर्दाहवत्पिपासापनोदमपि विदध्यादिति। तन्न सत्। नहि वयमद्य कश्चिदभिनव भावाना कार्यकारणभावमुत्थापयितु शक्नुम किंतु यथा प्रवृत्तमनुसरन्तो व्यवहराम। नह्यस्मदिच्छया आपः शीत शमयन्ति कृशानुर्वा पिपासां, किंतु तत्र दाहादावन्वयव्यतिरेकाभ्या वा वृद्धव्यवहाराद्वा ज्वलनादेरेव कारणत्वमवगच्छाम इति तदेव तदर्थिन उपाददमहे, न जलादि। तदेतदतथ्यम्। यतो यथाभूतादेव विभावसोर्दाहोत्पत्ति-

प्रतीयते, तथाभूतादेव मणिमन्त्रयन्त्रतन्त्रौषधादिसन्निधाने सति न प्रतीयते। यदि हि दृष्टमेव रूपं स्फुटं स्फोटं घटयेत्, तदा तदानीं तस्य समस्तस्य सद्भावात्तदनुत्पादो न स्याद्। अस्ति चासौ, ततो दृष्टरूपस्य व्यभिचारं प्रपञ्चयन्नतीन्द्रियायाः शक्तेः सत्त्वं समर्थ(पं)यति। तथा च- "स्वरूपात्स्वाऽप्यनुद्यत्त-त्सहकार्युपबृंहितात्। किं न कल्पयितुं शक्तं, शक्तिमन्यामतीन्द्रियाम् ॥ १ ॥ यत्तूक्तम्— "दाहादावन्वयव्यतिरेकाभ्यां वृद्धव्यवहाराद्वा ज्वलनादेरेव कारणत्वमवगच्छाम" इति। तदुक्तिमात्रमेव। यत एव हि दाह-दहनयोः कार्यकारणभावनियमः प्रसिद्धिपद्धतिप्रतिबद्ध एव, तत एव प्रसङ्गः प्रवर्तते। यदि कृशानुः स्वरूपमात्रादेव दाहमुत्पादयेत्, तर्हि तदविशेषादुदन्यापनोदमपि विदध्यादिति।

अथ न मणिमन्त्रादिप्रतिबन्धकनैकट्ये सति स्फोटानुत्पत्तिरदृष्टं रूपमाक्षिपति, यथा ह्यन्वयव्यतिरेकाभ्यामवधृतसामर्थ्यो दहनो दाहहेतुः, तथा प्रतिबन्धकाभावोऽपि। स च प्रतिबन्धकयोगे विनिवृत्त इति सामग्रीवैगुण्यादेव दाहस्यानुत्पत्तिः, न तु शक्तिवैकल्यादिति चेत् तदयुक्तम्। यतः प्रतिबन्धकाभावो भावादेकान्तव्यतिरिक्तः कथं किंचित्कार्यं कुर्यात्? कूर्मरोमराजीवत्। ननु नित्यानां कर्मणामकरणात्प्रागभावस्वभावात्प्रत्यवाय उत्पद्यते, अन्यथा नित्याऽकरणे प्रायश्चित्तानुष्ठानं न स्यात्, वैयर्थ्यात्। तन्न तथ्यम्। नित्याकरणस्वभावात्क्रियान्तरकरणादेव प्रत्यवायोत्पत्तेरभ्युपगमात्, त्वन्मतस्य तस्य तद्धेतुत्वाऽसिद्धेः। यदप्युच्यते—"सुखदुःखसमुत्पत्ति-रभावे शत्रुमित्रयोः ॥ कण्टकाऽभावमालक्ष्य, पादः पथि निधीयते" ॥१॥ तत्राऽप्यमित्रमित्रकण्टकाभावज्ञानानामेव सुखदुःखाङ्घ्रिनिधानकार्यकारित्वं, न त्वभावानाम्। तज्ज्ञानमप्यमित्रमित्रकण्टकविविक्तप्रतियोगिवस्त्वन्तरसंपादितमेव, न तु त्वदभिमताभावकृतम्। अथ भाववदभावोऽपि भावजननसमर्थोऽस्तु, को दोषः। न हि निःशेषसामर्थ्यरहितत्वमभावलक्षणम्; अपि तु-नास्तीति ज्ञानगम्यत्वम्। सत्प्रत्ययगम्यो हि भाव उच्यते, असत्प्रत्ययगम्यस्त्वभाव इति चेत्। तदयुक्तम्। त्वदभ्युपगताभावस्य भावात्सर्वथा पार्थक्येन स्थितस्य भावोत्पादत्वविरोधात्। तथाहि-विवादास्पदीभूतोऽभावो भावोत्पादको न भवति, भावादेकान्तव्यतिरिक्तत्वात्, यदेवं तदेवं यथा तुरङ्गशृङ्गम्। तथा चायं तस्मात्तथा। प्रागभावप्रध्वंसाभावपरस्पराभावस्वभावो ह्यभावो वस्तुनो व्यतिरिक्तमूर्तिर्भावोत्पादकः परैरिष्टः, सोऽत्र विवादपदशब्दितः। अन्यथा-जैनस्य भावाविष्वग्भूताभावैर्भावोत्पादकत्वेनाङ्गीकृतैर्बाधा स्यात्। यौगस्य चात्यन्ताभावेन भावानुत्पादकेन सिद्धसाध्यता भवेत्। नन्वयं धर्मित्वेनोपात्तोऽभावो भवद्भिः प्रतिपन्नो न वा। यदि प्रतिपन्नः, किं प्रत्यक्षाद्, अनुमानात्, विकल्पाद्वा; उपमानादेरप्रानुचितत्वात्। यदि प्रत्यक्षात्; तदा कथमभावस्य भावोत्पादनापवादस्सूपपादः स्यात्? प्रत्यक्षस्यैवोत्पादितत्वात्। अथानुमानात्तत्प्रतिपत्तौ, तत्राप्यभावधर्मिणः प्रतीतिरनुमानान्तरादेव, इत्यत्राऽनवस्थादौस्थ्यस्थेमा। विकल्पादपि तत्प्रतीतिः, प्रमाणमूलात्, तन्मात्रादेव वा। न प्रथमात्; प्रमाणप्रवृत्तेस्तत्र निरस्कृतत्वात्। विकल्पमात्रात्तु तत्प्रतीतिरसत्कल्पा, तत कस्यापि प्रतिपत्तेरनुपपत्तेः। अन्यथा-प्रामाणिकानां प्रमाणपर्येषणमरमणीयं स्यात्। तथा चाश्रयासिद्धो हेतुः। अथाप्रतिपन्नः, तर्हि कथं धर्मितयोपादायि? उपात्ते चास्मिन्। हेतुराश्रयासिद्ध एव। अत्रोच्यते-विकल्पमात्रादेव तत्प्रतिपत्तिं ब्रूमहे। नचाश्रयासिद्धिः, अवस्तुनि विकल्पात्प्रसिद्धेरवश्याश्रयणीयत्वाद्। अन्यथा वन्ध्यास्तनन्धयादिशब्दानुच्चारणप्रसङ्गात्। नच-नोच्चार्यत एवायं मयेति वाच्यम्। वान्ध्येयोऽस्ति नास्ति वेति। पर्यनुयोगे पृथ्वीपतिपरिषद्यवश्यं विधिनिषेधान्यतराभिधायिवचनस्यावकाशात्। तूष्णीं पुष्णतोऽस्याप्रतिपित्सितं, किंचिदुच्चारयतो वा पिशाचकित्वप्रसङ्गात्। तथाविधवचनोच्चारणं च कथमेतदिति प्रमाणगवेषणे अनुमानमुच्चार्यमाणमाश्रयासिद्धिग्रस्तम्। समस्तं निष्प्रमाणकं वचनमात्रं प्रेक्षावता प्रश्नकृताऽनपेक्षितमेव। न चोभयाभावोऽभिधातुं शक्यः। विधिनिषेधयोर्भावाभावस्वभावत्वात्, एकनिषेधेनापरविधानात्। विधिप्रतिषेधो हि निषेधः, निषेधप्रतिषेधश्च विधिः। अस्तु वोभयप्रतिषेधप्रतिज्ञाहेतोस्तु तत्रापादीयमानस्य नाश्रयासिद्धिपरिहारः। तदुक्तम्-"धर्मस्य कस्यचिदवस्तुनि मानसिद्धा-बाधाविधिव्यवहृतिः किमिहास्ति नो वा। अस्त्येव चेत्कथमियन्ति न दूषणानि, नास्त्येव चेत् स्ववचनप्रतिरोधसिद्धिः ॥ १ ॥ (अस्य व्याख्या)-अवस्तुनि बाधाविधिव्यवहारो नास्तीत्येतदनेनैव स्ववचनेन प्रतिरुध्यते; नास्तीति प्रतिषेधस्य स्वयं कृतत्वाद्, इत्यन्त्यपादस्यार्थः। तुरङ्गशृङ्गदृष्टान्तोऽपि विकल्पादेव प्रसिद्धः स्वीकर्त्तव्यः। तत्र च वस्त्वेकान्तव्यतिरेके सति भावानुत्पादकत्वमपि प्रतीतम्, इति नास्य साध्यसाधनोभयवैकल्यम्। ननु जैनैर्भावादभिन्नस्याभावस्याभ्युपगमात् बाधासिद्धो हेतुरिति चेत्, तदसत्। पराभ्युपगताभावस्य धर्मीकृतत्वात्, तस्य च भावादेकान्तेन पृथग्भूततया जैनैरपि स्वीकारात्। न खल्ववस्तु वस्तुभूताद्भावादभिन्नमिति मन्यन्ते जैनाः। ततो नाभावो भावोत्पादकस्तवास्तीति सिद्धम् ॥ किंच-यदाप्रतिबन्धकाभावो विभावसुस्वरूपादेकान्ताभिन्नोऽभ्युपागामि, तदा विभावसुः प्रतिबन्धकस्वभावस्स्वीकृतः स्यात्, प्रतिबन्धकाभावाद्यावर्त्तमानत्वान्मणिमन्त्रादिप्रतिबन्धकस्वरूपवत्। तथा च कथं कदाचिद्दाहादिकार्योत्पादो भवेत्? विभावसोरेव प्रतिबन्धकत्वात्। अथ कथं विभावसुः प्रतिबन्धकः स्यात्? तत्र प्रतिबन्धकप्रागभावस्य विद्यमानत्वात्। तदनवदानम्। एतावता हि तत्र वर्त्तमानः प्रतिबन्धकप्रागभाव एव प्रतिबन्धकस्वभावो मा भूत्, विभावसुस्वरूपं तु तदभावाद्व्यावर्त्तमानं प्रतिबन्धकतां कथं न कलयेत्?। यथाहि—प्रतिबन्धकः स्वभावाद्व्यावर्त्तमानः प्रतिबन्धकतां दधाति, तथा-तनूनपादपि प्रतिबन्धकाभावाद्व्यावर्त्तमानमूर्त्तिः कथं न प्रतिबन्धरूपतां प्रतिपद्येत?। स्याद्वादिनां तु भावाऽभावोभयात्मकं वस्त्विति प्रतिबन्धकाभावात्मनः कृष्णवर्त्मनो न प्रतिबन्धकरूपता। किं च-प्रतिबन्धकाभावस्य कारणत्वे, प्रतिबन्धकस्य कस्यचिन्नैकट्येऽपि प्रतिबन्धकाभावान्तराणामनेकेषां भावात्कथं न कार्योत्पादः?। नहि कुम्भकारकारणः कुम्भः, कुम्भकारस्यैकस्याभावेऽपि कुम्भकारान्तरव्यापारान्न भवति। नचैक एव

कश्चित्प्रतिबन्धकाभाव· कारणं, यदभावात्तदानीं न कार्यं जायते, तद्वदेव त्वन्मतेन सर्वेषामवधूतसामर्थ्यत्वात् ।

अथ सर्वे प्रतिबन्धकाभावा समुदिता एव कारणं; न पुनरेकैकशः कुम्भकारवत्, तर्हि कदाचिदपि दाहादिकार्योत्पत्तिर्न स्यात्, तेषां सर्वेषां कदाचिदभावात्, भुवने मणिमन्त्रतन्त्रादिप्रतिबन्धकानां भूयसां संभवात् । अथ ये प्रतिबन्धकास्ते तनूनपातं प्रतिबद्धुं प्रसिद्धसामर्थ्या, तेषामेवाऽभावा सर्वे कारणं न तु सर्वेषां, सर्वशब्दस्य प्रकारकार्त्स्न्ये वर्त्तमानस्य स्वीकारात्, इति चेत् । ननु प्रसिद्धसामर्थ्या इति सामर्थ्यशब्दस्यातीन्द्रिया शक्तिः, स्वरूपं वा प्रतिबन्धकानां वाच्यं स्यात् । प्राच्यपक्षकक्षीकारे, क्षीणं क्षणेनावयो· कण्ठशोषः, अतीन्द्रियशक्तिस्वीकारात् । द्वितीयपक्षे तु त एव तं प्रति प्रतिबन्धकाः नापरे, इति कौतस्कुती नीतिः ? । स्वरूपस्योभयेषामपि भावात् । न खलु मणिमन्त्रादे· कश्चिदेव जातवेदसमाश्रित्य तत्स्वरूपं, न पुनर्जातवेदोऽन्तरमिति । तथा न प्रतिबन्धकस्यात्यन्ताऽभावस्तावत्कारणतया वक्तुं युक्तः, तस्याऽसत्त्वाद्, अन्यथा-जगति प्रतिबन्धककथा प्रत्यस्तमयप्रसङ्गात् ।

अपरे पुन प्रतिबन्धकाभावा एकैकश· सहकारितां दधीरन्, द्वित्रा वा । प्रथमपक्षे, प्रागभाव, प्रध्वंसाऽभाव, परस्पराऽभाव·, य कश्चिद्वा सहकारी स्यात् । न प्रथम, प्रतिबन्धकप्रध्वंसेऽपि पावकस्य स्फोटकार्योपलम्भात् । न द्वितीय, प्रतिबन्धकप्रागभावेऽपि दहनस्य दाहोत्पादकत्वात् । न तृतीय, प्रतिबन्धकसंबन्धबन्धोरपि धनञ्जयस्य स्फोटघटनप्रसङ्गात्, तस्य तदानीमपि भावात् । न चतुर्थ, प्ररूपयिष्यमाणानियतहेतुकत्वदोषानुषङ्गात् । द्वित्रप्रतिबन्धकाभावभेदे तु किं प्रागभावप्रध्वंसाऽभावौ, प्रागभावपरस्पराऽभावौ, प्रध्वंसाऽभावपरस्पराऽभावौ, त्रयोऽपि वा हेतवो भवेयु· । नाद्य पक्षः, उत्तम्भकनैकट्ये तावन्तरेणापि पावकस्य स्फोटकार्याऽर्जनदर्शनात् । न द्वितीयतृतीयतुरीया, प्रतिबन्धकपरस्पराऽभावस्य प्राक् तदकारणत्वेन वर्णितत्वाद्, भेदत्रयस्यापि चास्य परस्परभावसवलितत्वात् । अथ प्रागभावप्रध्वंसाभावोत्तम्भकमणिमन्त्रतन्त्रादयो यथार्थं कारणमिति चेत् । तदस्फुटम् । स्फोटादिकार्यस्यैवमनियतहेतुकत्वप्रसङ्गात्, । अनियतहेतुकं-चाऽहेतुकमेव । तथाहि-अन्वयव्यतिरेकावधार्य कार्यकारणभावो भावानाम्, धूम-धूमध्वजयोरिव । प्रस्तुते तु प्लोषादि यदेकदैकस्मादुत्पद्यमानमाभीलामासे, तदन्यदा यद्यन्यतोऽपि स्यात्, तर्हि तत्कारणकमेव तन्न भवेदिति कथं नाऽहेतुकं स्यात् ? ।

अथ गोमायात्, वृश्चिकाच्च वृश्चिकोत्पाद प्रेक्ष्यते । न च तत्राऽनियतहेतुकत्वं स्वीकृतं त्वयापीति चेत् । तदपि त्रपापात्रम् । सर्वत्र हि शालूकगोमयादौ वृश्चिकादिम्भारम्भशक्तिरकास्तीति यानि तच्छक्तियुक्तानि तानि तत्कार्योत्पादकानि, इति नायं न कलङ्क सङ्क्रामति । भवता पुनरत्राप्यय प्रादुर्भवन् दुष्प्रतिषेध, येषां वृश्चिकगोमयसाधारणमेकं किंचिन्नास्तीति । न च प्रागभावप्रध्वंसाभावोत्तम्भकादीनामप्येकं किंचित्तुल्यं रूपं वर्त्तते । इति नानियतहेतुकत्वेन दुर्विधदैवेनेवाऽमी मुच्यन्ते । एतेन 'भावस्वभावोऽप्यभाव एवास्तु हेतुर्नत्वतीन्द्रियशक्तिस्वीकार सुन्दर' इत्यप्युच्यमानमपास्तम् । उक्ताभावविकल्पानामत्राप्यविशेषात् । अथ शक्तिपक्षप्रतिक्षेपदीक्षिता "आद्यपादा" एवं साक्षेपमाचक्षते-ननु भवत्पक्षे प्रतिबन्धकोऽकिंचित्करः किंचित्करो वा भवेत् । अकिंचित्करप्रकारेऽतिप्रसङ्ग, शृङ्गभृङ्गभृङ्गाराऽऽदेरप्यकिंचित्करस्य प्रतिबन्धकत्वप्रसङ्गात् । किंचित्करस्तु किंचिदुपचिन्वन् अपचिन्वन्वा स्यात् । प्राचिपक्षे, किं दाहकशक्तिप्रतिकूला शक्तिं जनयेद्, तस्या एव धर्मान्तरं वा । न प्रथम· प्रमाणाभावात् । दाहाऽभावस्तु, प्रतिबन्धकसन्निधिमात्रेणैव चरितार्थ इति न तामुपपादयितुमीश्वरः । धर्मान्तरजनने तदभावे सत्येव दाहोत्पाद इत्यभावस्य कारणत्वस्वीकारे, त्वदुक्ताशेषप्रागभावाऽऽदिविकल्पाऽवकाशश्च ।

अपचयपक्षे तु प्रतिबन्धकस्तां शक्तिं विकुट्टयेत्, तद्धर्मं वा । प्रथमप्रकारे-कुतस्त्यं कृपीटयोने पुन स्फोटघटनपाटवम् । तदानीमन्यैव शक्ति संजायते इति चेत् । ननु सा संजायमाना किमुत्तम्भकात्प्रतिबन्धकाभावात् देशकालादिकारकचक्रात् अतीन्द्रियार्थान्तराद्वा जायते । आद्यमिदायाम्, उत्तम्भकाभावेऽपि प्रतिबन्धकाभावमात्रात्कौतस्कुतं कार्याऽर्जनं जातवेदस ।

द्वितीयभेदे-तत एव स्फोटोत्पत्तिसिद्धेः शक्तिकल्पनावैयर्थ्यम् । तृतीये-देशकालादिकारकचक्रस्य प्रतिबन्धकालेऽपि सद्भावेन शक्त्यन्तरप्रादुर्भावप्रसङ्ग । चतुर्थे-अतीन्द्रियार्थान्तरनिमित्तकल्पने तत एव स्फोट स्फुटं भविष्यति, किमनया कार्यम् ? । तन्न शक्तिनाश श्रेयस । तद्वदेव तद्धर्मनाशपक्षोऽपि प्रतिक्षेपणीय । अत्राभिदध्महे । एतेषु शक्तिनाशपक्ष एव कक्षीक्रियते इत्यपरविकल्पशिल्पकल्पनाजल्पाकता कण्ठशोषायैव व संवभूव । यत्पूक्तम्-कुत पुनरसावुत्पद्यतेति । तत्र शक्त्यन्तरसहकृता कृपीटयोनेरेवेति ब्रूम । ननु प्रतिबन्धकदशायां सा शक्तिरस्ति, न वा । नास्ति चेत्, कुत· पुनरुत्पद्यत । शक्त्यन्तरसहकृतादग्नेरेवेति चेत्, तर्हि साऽपि शक्त्यन्तरसध्रीचस्तस्मादेवोत्पद्येदित्यनवस्था । अथाऽस्ति तदानीमपि स्फोटोत्पादिका शक्तिं संपादयेत् ततोऽपि स्फोट स्फुटं स्यादेवेति । अत्रोच्यते-प्रतिबन्धकावस्थायामप्यस्त्येव शक्त्यन्तरं, घटयति च स्फोटघटनलम्पटां शक्तिं तदापि । यस्तु तदा स्फोटानुत्पाद ,स प्रतिबन्धकेनोत्पन्नोत्पन्नायास्तस्या प्रध्वंसात् । प्रतिबन्धकापगमे तु स्फोट स्फुटीभवत्येवेत्यतीन्द्रियशक्तिसिद्धि । अत्राऽऽशङ्कान्तरपरिहारप्रकारमौक्तिकक्रणप्रचयावचाय स्याद्वादरत्नाकरात् तार्किकै कर्त्तव्य । एवं च स्वाभाविकशक्तिमान् शब्द अर्थं बोधयतीति सिद्धम्, अथ तदङ्गीकारे तत एवार्थसिद्धे संकेतकल्पनाऽनर्थिकैव स्यादिति चेत्, मैवम् । अस्य सहकारितया स्वीकाराद्, अङ्कुरोत्पत्तौ पय पृथिव्यादिवत् । अथ स्वाभाविकसंबन्धाभ्युपगमे देशभेदेन शब्दानामर्थभेदो न भवेत् भवतिचायम्, चौरशब्दस्य दाक्षिणात्यैरोदने प्रयोगादिति चेत् । तदप्रशस्यम् । सर्वशब्दाना सर्वार्थप्रत्यायनशक्तियुक्तत्वात् । यत्र च देशे यदर्थप्रतिपादनशक्तिसहकारी संकेत, स तमर्थं तत्र प्रतिपादयतीति सर्वमवदातम् । सौगतास्तु प्रत्यक्षविधयानुवाद्यभाव योऽय शब्द

वर्णान्ना आवयोः प्रसिद्धः, स स्वाभाविकसामर्थ्यसमयाभ्यां कृत्वा अर्थबोधनिबन्धनमेवेति ।

अथ स्वाभाविकसामर्थ्यसमयाभ्यां शब्दस्यार्थे सामान्यरूपे, विशेषरूपे, तदुभयस्वभावे वा वाचकत्वं व्याक्रियेत। न प्रथमे, सामान्यस्यार्थक्रियाकारित्वाभावेन नभोऽम्भोजन्मनिभत्वात् । न द्वैतीयीके, विशेषस्य स्वलक्षणलक्षणस्य वैकल्पिकविज्ञानागोचरत्वेन संकेतास्पदत्वाऽसंभवात् । तत्संभवेऽपि विशेषस्य व्यवहारकालाननुयायित्वेन संकेतनैरर्थक्यात् । तार्तीयीके तु स्वतन्त्रयो, तादात्म्यापन्नयोर्वा सामान्यविशेषयोस्तद्गोचरता संगीर्येत । नाद्यः पक्षः प्रत्येकविकल्पोपदर्शितदोषानुषङ्गात् । न द्वितीयः, सामान्यविशेषयोर्विरुद्धधर्माध्यासितत्वेन तादात्म्याऽयोगादिति नार्थो वाच्यो वाचाम्, अपि तु परमार्थतः सर्वतो व्यावृत्तस्वरूपेषु स्वलक्षणेष्वेकार्थकारित्वेन, एककारणत्वेन चोपजायमानैकप्रत्यवमर्शरूपविकल्पस्याकारो बाह्यत्वेनाभिमन्यमानो बुद्धिप्रतिबिम्बव्यपदेशभाक् अपोहः, शब्दश्रुतौ सत्यां तादृशोल्लेखशेखरस्यैव वेदनस्योत्पादात् । अपोहत्वं चास्य स्वाकारविपरीताकारोन्मूलकत्वेनावसेयम् । अपोह्यते स्वाकाराद्विपरीत आकारोऽनेनेत्यपोह इति व्युत्पत्तेः । तत्त्वतस्तु न किंचिद्वाच्यं वाचकं वा विद्यते, शब्दार्थतया कथिते बुद्धिप्रतिबिम्बात्मन्यपोहे कार्यकारणभावस्यैव वाच्यवाचकतया व्यवस्थापितत्वात् ।

'अथ श्रीमदनेकान्त-समुद्घोषपिपासितः । अपोहमापिबामि प्राग् वीक्षन्तां भिक्षवः क्षणम्' ॥ १ ॥ इह तावद्विकल्पानां तथाप्रतीतिपरिहृतविरुद्धधर्माध्यासकथंचित्तादात्म्यापन्नसामान्यविशेषस्वरूपवस्तुलक्षणगोचरत्वादीनितत्वं शाक्याः कथयन्ति । ततस्तन्मते शब्दानामपि तत्प्रसिद्धमेव । यतोऽजल्पि युष्मदीयैः "स एव शब्दानां विषयो यो विकल्पानाम्" इति कथमपोहः शब्दार्थः स्यात्। अस्तु वा तथाप्यनुमानवत्कि न शब्दः प्रमाणमुच्यते । अपोहगोचरत्वेऽपि परम्परया पदार्थे प्रतिबन्धात्प्रमाणमनुमानमिति चेत् तत एव शब्दोऽपि प्रमाणमस्तु अतीतानागतान्यस्वसरोजादिष्वसत्स्वपि शब्दोपलम्भान्नात्रार्थप्रतिबन्ध इति चेत्, तर्ह्यभूद् वृष्टिः, गिरिनदीवेगोपलम्भात्, भावी भरण्युदयः, रेवत्युदयात्, नास्ति रासभशृङ्गं सम्यक्प्रमाणैरनुपलम्भात् इत्यादेरर्थाभावेऽपि प्रवृत्तेरनुमानेऽपि नार्थप्रतिबन्धः स्यात् । यदि वचोवाच्याऽपोहेऽपि पारंपर्येण पदार्थप्रतिष्ठः स्यात्। तदानीम्-अलावूनि मज्जन्तीत्यादिविप्रतारकवाक्यापोहोऽपि तथा भवेदिति चेद् अनुमेयापोहेऽपि तुल्यमेतत् प्रमेयत्वादिहेत्वनुमेयापोहेऽपि पदार्थप्रतिष्ठताप्रसक्तेः । प्रमेयत्वं हेतुरेव न भवति, विपक्षासत्त्वलक्षणाभावादिति कुतस्तस्य तदपोहस्य तन्निष्ठतेति चेत्, तर्हि विप्रतारकवाक्यमप्यागम एव न भवति आप्तोक्तत्वलक्षणाभावादित्यादि समस्तं समानम् । यस्तु 'नाप्तोक्तत्वं वचसि विवेचयितुं शक्यम्' इति शाक्यो वक्ति, स पर्यनुयोज्यः । किमाप्तस्यैव कस्याप्यभावादेवमभिधीयते, भावेऽप्यभावस्य निश्चयाभावात्, निश्चयेऽपि मौनव्रतिकत्वात्, वक्तृत्वेऽप्यनाप्तवचनात्, तद्वचसो विवेकावधारणाभावाद्वा। सर्वमप्येतत् चार्वाकादिवाचो प्रपञ्चात्। मातापितृपुत्रभ्रातृगुरुसुगतादिवचसां विशेषमानिष्टमानैरप्रकटनीयमेव ।

ननु-नाऽस्ति विशेषस्वीकारः, तत्पठितानुष्ठानघटनायामेव प्रवृत्तेर्निर्निबन्धनत्वाऽऽपत्तेः । अथानुमानिकस्येवाप्तशब्दादर्थप्रतीतिः । कथम्? "पादपार्थविवक्षावान्, पुरुषोऽयं प्रतीयते । वृक्षशब्दप्रयोक्तृत्वात्, पूर्वावस्थास्वहं यथा" ॥१॥ इति विवक्षामनुमाय, सत्या विवक्षेयम् आप्तविवक्षात्वात्, मद्विवक्षावदिति वस्तुनो निर्णयादिति चेत्, तदचतुरस्रम् । अमूदृशव्यवस्थाया अनन्तरोक्तवैशेषिकपक्षप्रतिक्षेपेण कृतनिर्वचनत्वात् । किंच-शाखादिमति पदार्थे वृक्षशब्दसंकेते सत्यं तद्विवक्षानुमानमानन्त्येन, अन्यथा वा । न तावदन्यथा । केनचित्करे वृक्षशब्दं संकेत्य तदुच्चारणात्, उन्मत्तसुप्तशुकसारिकादिना गोत्रस्खलनवता चान्यथाऽपि तत्प्रतिपादनाच्च हेतोर्व्यभिचारापत्तेः । संकेतपक्षे तु यद्यपि तपस्वी शब्दस्तद्दशाङ्कस्येव वेदत्तदा किंनाम क्षूणं स्यात्। न खल्वेषोऽर्थाद्विभेति । विशेषलाभश्चैवं सति यदेवंविधानुभूयमानपारंपर्यपरित्याग इति । यदकथि-'परमार्थतः सर्वतोऽव्यावृत्तस्वरूपेषु स्वलक्षणेष्वेकार्थकारित्वेन' इत्यादि । तदवद्यम् । यतोऽर्थस्य वाहदोहादेरेकत्वम्, अद्विरूपत्वं, समानत्वं वा विवक्षितम् । न तावदाद्यः पक्षः-षण्डमुण्डादौ कुण्डकाण्डभाण्डादिवाहादेरर्थस्य भिन्नस्यैव संदर्शनात् ।

द्वितीयपक्षेऽपि सदृशपरिणामास्पदत्वम् अन्यव्यावृत्त्यधिष्ठितत्वं वा समानत्वं स्यात् । न प्राच्यः प्रकारः, सदृशपरिणामस्य सौगतैरस्वीकृतत्वात् । न द्वितीयः, अन्यव्यावृत्तेरतात्त्विकत्वेन वान्ध्येयस्येव स्वलक्षणेऽधिष्ठानासंभवात्। किंच-अन्यतः सामान्येन विजातीयाद्वा व्यावृत्तिरन्यव्यावृत्तिर्भवेत् । प्रथमपक्षे, न किंचिदसमानं स्यात्, सर्वस्यापि सर्वतो व्यावृत्तत्वात् द्वितीये तु विजातीयत्वं वाजिकुञ्जरादिकार्याणां वाहादिसजातीयत्वे सिद्धे सति स्यात्, तच्चान्यव्यावृत्तिरूपमन्येषां विजातीयत्वे सिद्धे सति, इतिस्पष्टं परस्पराश्रयत्वमिति । एवं च कारणैक्यं प्रत्यवमर्शैक्यं च विकल्प्य दूषणीयम् । अपि च-यदि बुद्धिप्रतिबिम्बात्मा शब्दार्थः स्यात्तदा कथमतो बहिरर्थे प्रवृत्तिः स्यात्? । स्वप्रतिभासेऽनर्थेऽर्थाध्यवसायाच्चेत् । ननु कोऽयमर्थाध्यवसायो नाम अर्थसमारोप इति चेत्, तर्हि सोऽयमर्थानर्थयोरग्निमाणवकयोरिव तद्विकल्पविषयभावे सत्येव समुत्पत्तुमर्हति नच समारोपविकल्पस्य स्वलक्षणं कदाचन गोचरतामञ्चति ।

यदि चाऽनर्थेऽर्थसमारोपः स्यात्, तदा वाहदोहाद्यर्थक्रियार्थिनः सुतरां प्रवृत्तिर्न स्यात्। नहि दाहपाकाद्यर्थी समारोपितपावकत्वे माणवके कदाचित्प्रवर्त्तते । रजतरूपतावभासमानशुक्तिकायामिव रजतार्थिनोऽर्थक्रियार्थिनो विकल्पात्तत्र प्रवृत्तिरिति चेत् । भ्रान्तिरूपस्तर्ह्ययं समारोपः, तथा च कथं ततः प्रवृत्तोऽर्थक्रियार्थी कृतार्थः स्यात् । यथा शुक्तिकायां प्रवृत्तो रजतार्थक्रियार्थीति । यदपि प्रोक्तं कार्यकारणभावस्यैव वाच्यवाचकतया व्यवस्थापितत्वादिति । तदप्ययुक्तम् । यतो यदि कार्यकारणभाव एव वा वाच्यवाचकभावः स्यात्, तदा श्रोत्रज्ञाने प्रतिभासमानः शब्दः स्वप्रतिभासस्य भवत्येव कारणमिति तस्याऽप्यसौ वा-

चक स्यात्। यथा च विकल्पस्य शब्द कारणम्, एव परपरया स्वलक्षणमपि, अनस्तदपि वाचक भवेदिति प्रतिनियतवाच्यवाचकभावव्यवस्थान प्रलयपद्धतिमनुधावेत्, तत. शब्द सामान्यविशेषाऽऽत्मकार्थावबाधनिबन्धनमवेति स्थितम्।

स्वाभाविकसामर्थ्यसमयाभ्यामर्थबोधनिबन्धन शब्द इत्युक्तम्। अथ किमस्य शब्दस्य स्वाभाविक रूप, किंच परापेक्षमिति विवेचयन्ति—

**अर्थप्रकाशकत्वमस्य स्वाभाविकं प्रदीपवद्यथाऽर्थत्वाऽयथाऽर्थत्वे पुनः पुरुषगुणदोषावनुसरतः इति ॥ १२ ॥**

अर्थप्रकाशकत्वम्-अर्थाववोधसामर्थ्यम्। अस्य-शब्दस्य स्वाभाविकम्-पराऽनपेक्षम्। प्रदीपवत्-यथा हि प्रदीप प्रकाशमान शुभम् अशुभं वा यथासन्निहितं भावमवभासयति, तथा शब्दोऽपि वक्त्रा प्रयुज्यमान श्रुतिवर्त्तिनीभवती र्ण सत्ये अनृते वा, समन्विते असमन्विते वा, सफले निष्फले वा, सिद्धे साध्ये वा, वस्तुनि प्रतिपत्तिमुत्पादयतीति तावदेवास्य स्वाभाविकं रूपम्। अथ पुन प्रदीपाच्छब्दस्य विशेष.-यदसौ सकेतव्युत्पत्तिमपेक्षमाण पदार्थप्रतीतिमुपजनयति, प्रदीपस्तु तन्निरपेक्ष। यथाऽर्थत्वाऽयथार्थत्वे-सत्यार्थत्वाऽसत्यार्थत्वे पुन प्रतिपादकनराधिकरणशुद्धत्वाऽशुद्धत्वे अनुसरत, पुरुषगुणदोषापेक्षे इत्यर्थ। तथाहि-सम्यग्दर्शिनि शुचौ पुरुषे वक्तरि यथार्था शाब्दी प्रतीति अन्यथा तु मिथ्यार्थेति। स्वाभाविके तु याथार्थ्ये मिथ्याऽर्थत्वे चाऽस्या स्वीक्रियमाणे विप्रतारकेतरपुरुषप्रयुक्तवाक्येषु व्यभिचाराऽव्यभिचारनियमो न भवेत्। पुरुषस्य च करुणादयो गुणा, द्वेषादयो दोषा प्रतीता एव। तत्र च यदि पुरुषगुणाना प्रामाण्यहेतुत्व नाभिमन्यते जैमिनीयैस्तर्हि दोषाणामप्यप्रामाण्यनिमित्तता मा भूत्। दोषप्रशमनचरितार्था एव पुरुषगुणा, प्रामाण्यहेतवस्तु न भवन्तीत्यत्र च कोशपानमेव शरणं श्रोत्रियाणामिति। रत्ना० ४ परि०।

(१९) (शब्दाऽर्थयोर्वाच्यवाचक भाव एव सम्बन्ध इति 'णिद्देस' शब्दे चतुर्थभागे १५३० विशेषावश्यकगाथाव्याख्यावसरे वक्ष्यते) सवन्धस्त्वभिधेयेन सह वाच्यवाचकभावलक्षण शास्त्रस्यावश्यभावी, इत्यनुक्तोऽपि अर्थात् गम्यते, इति सवन्धरहितत्वाऽऽशङ्कानुत्थानोपहतैवेति। रत्ना० १ परि० १ सूत्रटी०। (सम्मतितर्क—स्याद्वादमञ्जरी-रत्नाकरावतारिकादिग्रन्थेभ्यो विशेषोऽवगन्तव्य)। (शब्दस्य पौद्गलिकत्वं नाऽऽकाशगुणत्वमिति 'सद्द' शब्दे ७ सप्तमे भागे दर्शयिष्यत)

(२०) (आगमस्य हेतुवादाऽहेतुवादभेदेन द्वैविध्यम् 'अहेउवाय' शब्दे प्रथमभागे ८९१ पृष्ठे अहेतुवादस्वरूपं, तत्रैव हेतुवादलक्षणमपि गतम्)

"जीवाऽजीवाऽऽश्रवबन्धसवरनिर्जरामोक्षास्तत्वम्" (तत्त्वार्थसू० १-४) इत्युभयवाऽऽदागमप्रतिपाद्यान् भावास्तथैवासकीर्णरूपान् प्रतिपादयन् सैद्धान्तिक पुरुष, इतरस्तु तद्विराधक इत्याह—

**जो हेउवायपक्ख-म्मि हेउओ आगमे य आगमिओ। सो स समयपण्णवओ, सिद्धंतविराहओ अन्नो ॥ ४५ ॥**

यो हेतुवादाऽऽगमविषयमर्थं हेतुवादाऽऽगमेन तद्विपरीतागमविषयं चार्थमागममात्रेण प्रदर्शयति वक्ता स स्वसिद्धान्तस्य-द्वादशाङ्गस्य प्रतिपादनकुशल, अन्यथाप्रतिपाद्यस्य-तदर्थस्य प्रतिपादयितुमशक्यत्वात् तत्प्रतिपादके वचसि अनास्थाऽऽदिदोषमुत्पादयन्-सिद्धान्तविराधको भवति सर्वज्ञप्रणीतागमस्य नि.सारताप्रदर्शनात्, तत्प्रत्यनीको भवतीति यावत्।

तथाहि-पृथिव्यादेर्मनुष्यपर्यन्तस्य पञ्चविधजीवनिकायस्य जीवत्वमागमेनाऽनुमानादिना च प्रमाणेन सिद्धं तथैव प्रतिपादयन् स्वसमयप्रज्ञापक, अन्यथा तद्विराधक। यत प्रत्यक्षचेतने त्रसनिकाये चैतन्यलक्षण जीवत्वं स्वसंवेदनाध्यक्षत स्वात्मनि प्रतीयते, परत्र तु अपरेण-अनुमानत। वनस्पतिपर्यन्तेषु पृथिव्यादिषु स्थावरेषु त्वनुमानतश्चैतन्यप्रतिपत्ति। तथाहि-वनस्पतयश्चेतना, वृक्षायुर्वेदाभिहितप्रतिनियतकालायुष्कविशिष्टौषधप्रयोगसपादितवृद्धिहानिक्षतभग्नसरोहणप्रतिनियतवृद्धिषड्भावविकारोत्पादनाशावस्थानियतविशिष्टशरीरस्निग्धत्वरूक्षत्वविशिष्टदोहदबालकुमारवृद्धावस्थाप्रतिनियतविशिष्टरसवीर्यविपाकप्रतिनियतप्रदेशाहारग्रहणादिमत्त्वान्यथानुपपत्ते, विशिष्टस्त्रीशरीरवदित्याद्यनुमान भाष्यकृत्प्रभृतिभिर्विस्तरत प्रतिपादितं तच्चैतन्यप्रसाधकमित्यनुमानतस्तेषा चैतन्यमात्र सिद्ध्यति। साधारणप्रत्येकशरीरत्वादिकस्तु भेद (जीवविचारगाथा)—

" गूढशिरसधिपव्व, समभगमहीरगं च छिन्नरुहं।
साहारण सरीर, तव्विवरीयं च पत्तेय ॥१२॥ "

इत्याद्यागमप्रतिपाद्य एव। जीवलक्षणव्यतिरिक्तलक्षणास्त्वजीवा धर्माऽधर्माऽऽकाशपुद्गलभेदेन पञ्चविधा। तत्र पुद्गलास्तिकायव्यतिरिक्ताना स्वतो मूर्त्तिमद्द्रव्यसवन्धमन्तरेणात्मद्रव्यवदमूर्त्तत्वादनुमानप्रत्ययाचमेयता। तथाहि— "गतिस्थित्यवगाहलक्षण पुद्गलास्तिकायादिकार्यं" विशिष्टकारणप्रभव, विशिष्टकार्यत्वात्, शाल्यङ्कुरादिकार्यवत्, यश्चासौ कारणविशेष स धर्माऽधर्माऽऽकाशलक्षणो यथासंख्यमवसेय। कालस्तु विशिष्टपरापरप्रत्ययादिलिङ्गानुमेय। पुद्गलास्तिकायस्तु प्रत्यक्षानुमानलक्षणप्रमाणद्वयगम्य यस्तेषा धर्मादीना सख्येयप्रदेशात्मकत्वादिको विशेषस्तत्प्रदेशाना च सूक्ष्म-सूक्ष्मतरत्वादिको विभाग स -"कालो य होइ सुहुमो" इत्याद्यागमप्रतिपाद्य एव नाऽऽगमनिरपेक्षयुक्त्यवसेय। एवमाश्रवादिष्वपि तत्त्वेषु युक्त्या आगमगम्येषु युक्तिगम्यमश युक्तित एव, आगमगम्य केवलाऽऽगमत एव प्रतिपादयन् तु स्वसमयप्रज्ञापक, इतरस्तु तद्विराधक इति प्रज्ञापकलक्षणमवगन्तव्यम्। सम्म० ३ काण्ड।

(२१) आगमस्य सर्वव्यवहारनियामकत्वम्—

**आगमात्सर्व एवाऽयं, व्यवहारः स्थितो यतः।**
**तत्रापि हार्दिको यस्तु, हन्ताऽज्ञानां स शेखरः ॥२३९॥**

आगमाद्-गुरुवचनप्रत्ययरूपात्सर्व एव-निखिलोऽप्ययम्-योगमार्गोपयोगी व्यवहारो—हेयोपादेययोर्हानोपादानरूप. स्थित -प्रतिष्ठितो यत.-यस्मादतीन्द्रियफलत्वात्तस्यातीन्द्रि-

यफलेपु चानुष्ठानेपु शास्त्रस्यैव प्रतीतिहेतुत्वात् ततस्तत्रा-ऽऽगमाधीने व्यवहारे किं पुनरितररूपे इत्यपि शब्दार्थः । 'हाठिक' स्वविकल्पप्रवृत्त्याऽऽगमनिरपेक्षत्वेन बलात्कारचारी। यस्तु-यः पुनर्योगी इन्तेति सन्निहितसभ्यामन्त्रणमज्ञानाम्-अबुद्धिमतां स शेखर -शिरोमणिर्वर्त्ततेऽनुपायप्रवृत्तत्वात्तस्य।

किंच—

तत्कारी स्यात्स नियमात्, तद्द्वेषी चेति यो जडः ।
आगमाऽर्थे तमुल्लङ्घ्य, तत एव प्रवर्त्तते ॥ २४० ॥

तत्कारी-तत्करणशील स्याद्-भवेत्स नियमादवश्यंभावेन तद्द्वेषी च-स्वयमेव क्रियमाणवस्तुद्वेषवांश्चेत्येतत्तद्रूपं संपद्यते यः-कश्चिज्जडो-मन्द , आगमार्थे-आगमविहिते चैत्यवन्दनादौ विधातुमिष्टे । तम्-आगममुल्लङ्घ्य-अतिक्रम्य 'तत एव'-आगमादेव प्रवर्त्तते-आगमनिरूपितविधिनिरपेक्षतया आगमार्थमनुतिष्ठन्नपि न तद्भक्तः । किंतु-तद्द्वेषि एव द्वेषमन्तरेण तदुल्लङ्घनाभावादिति भावः । यो० विं० ।

( अतीन्द्रियार्थप्रत्यायकस्त्वागम एव )—

" आगमश्चोपपत्तिश्च, संपूर्णं दृष्टिलक्षणम् ।
अतीन्द्रियाणामर्थानां, सद्भावप्रतिपत्तये ॥ १ ॥
आगमो ह्याप्तवचन-माप्तं दोषक्षयाद्विदुः ।
वीतरागोऽनृतं वाक्यं, न ब्रूयाद्धेत्वसंभवात् " ॥ २ ॥

दश० ४ अ० । अनु० ।

तथा च—

शास्त्रस्यैवावकाशौ च, कुतर्काऽऽग्रहतस्ततः ।
शीलवान् योगवानत्र, श्रद्धावाँस्तत्त्वविद्भवेत् ॥ १३ ॥

अत्र-अतीन्द्रियार्थसिद्धौ शास्त्रस्यैवावकाशस्तस्यातीन्द्रियार्थसाधनसमर्थत्वाच्छुष्कतर्कस्यातथात्वात् , न दुक्तम्-"गोचरस्त्वागमस्यैव, ततस्तदुपलब्धितः । चन्द्रसूर्योपरागादिसंवाद्यागमदर्शनात् ॥१॥" द्वा० २३ द्वा०। (श्लोकार्थः 'कुतर्क' शब्दे तृतीयभागे ५८५ पृष्ठे करिष्यते )

अस्थान रूपमन्धस्य , यथा सन्निश्चयं प्रति ।
तथैवातीन्द्रियं वस्तु , छद्मस्थस्यापि तत्त्वतः ॥ २५ ॥
हस्तस्पर्शसमं शास्त्रं , तत एव कथंचन ।
अत्र तन्निश्चयोऽपि स्या - त्तथाचन्द्रोपरागवत् ॥ २६ ॥

द्वा० १८ द्वा० । ( अनयोरर्थः 'इस्सर' शब्देऽस्मिन्नेवभागे चिन्तरतः दर्शयिष्यते )

( आगमस्य परलोकादिसाधकत्वम् )—

आगमप्रमाणबलाद्धि सकलमपि परलोकादिपरस्वरूपं यथावदनुगम्यन्ते नान्यतस्तेन यदुच्यते प्रज्ञाकरगुप्तेन-" दीर्घकालसुखादग्रा-विच्छा तत्र कथं भवेत् " इति तदपास्तमवसेयम् आगतौ दीर्घकालसुखस्य दर्शनात् । न चागमस्य न प्रामाण्यं तदप्रामाण्ये सकलपरलोकानुष्ठानप्रवृत्त्ययनुपपत्तेः उपायान्तराऽभावात् । नं० ३ गाथाटी० ।

शास्त्रमागमनभव्यस्य, मानमामुष्मिके विधौ ।
नैव्यं यद्विचिकित्सायां, समाधिप्रतिकूलता ॥ ३० ॥

द्वा० १८ द्वा० । ( अस्य श्लोकस्यार्थः 'जोग' शब्दे चतुर्थभागे १६३० पृष्ठे दर्शयिष्यते )

(२२) धर्ममार्गे चाऽऽगमस्यैव प्रामाण्यम् , कुशीलानामागमाऽप्रामाण्यम् )—

जम्हा न धम्ममग्गे, मोत्तूणं आगमं इह पमाणं ।
विज्जइ छउमत्थेणं, तम्हा एत्थेव जइअव्वं ॥ १७०७ ॥

यस्माच्च धर्ममार्गे-परलोकगामिनि मुक्त्वा आगममेकं परमार्थेन इह प्रमाणं-प्रत्याख्यानादि विद्यते छद्मस्थानां प्राणिनां, तस्मादत्रैवागमे कुग्रहान्विहाय यतितव्यम् । जिज्ञासाऽश्रवणश्रवणानुष्ठाने यत्न कार्यो नागीतार्थज्ञनाचरणपरेण भवितव्यमिति गाथार्थः ।

प्रत्यपायप्रदर्शनद्वारेणैतदेवाह—

सुअवज्झायरणरया, पमाणयंता तहाविहं लोअं ।
सुअणगुरुणो वरागा, पमाणयं नावगच्छंति ॥१७०८॥

श्रुतबाह्याचरणरता.—आगमबाह्यानुष्ठानसक्ताः प्रमाणयन्त —सन्त केनचिच्चोदनायां क्रियमाणायां तथाविधं लोकं-श्रुतबाह्यमेवाश्रीतादिकं, किमित्याह-भुवनगुरो-भगवतस्तीर्थकरस्य वराकास्तेऽप्रमाणतामर्थापत्तिसिद्धां नावगच्छन्ति, तथाहि-यदि ते सूत्रबाह्यस्य कर्त्तारः प्रमाणं भगवांस्तर्हि तद्विरुद्धसूत्रार्थवक्ता अप्रमाणमिति महामिथ्यात्वं बलादापद्यत इति गाथार्थः ।

अत एव प्रक्रमाद्धर्मानधिकारिणमाह—

सुत्तेण चोइओ जो, अन्नं उद्दिसिअ तयण्ण पडिवज्जे ।
सो तत्तवायवज्झो, न होइ धम्मंमि अहिगारी ॥१७०९॥

सूत्रेण चोदितः-इदमित्थमुक्तम् एवं, य सत्त्व अन्यं-प्राणिनं सुदिश्यात्मतुल्यमुदाहरणतया तन्न प्रतिपद्यते । सौऽमुक्तः, स-एवभूत -तत्त्ववादबाह्य , परलोकमङ्गीकृत्य परमार्थवादबाह्यो , न भवति , धर्मे सकलपुरुषार्थहेतावधिकारी सम्यग्विवेकाभावादिति गाथार्थ ।

अत्रैव प्रक्रमे किमित्याह—

तीअबहुस्सुयणायं , तक्किरिआदरिसणा कह पमाणं ।
वोच्छिज्जंती अइमा , सुद्धा इह दीसई चेव ॥ १७१० ॥

तीतबहुश्रुतज्ञातम् , अतीता अप्याचार्या बहुश्रुता एव, तैः कस्मादिदं वन्दनं कायोत्सर्गादि नानुष्ठितमित्येवभूतकिमित्याह—तत्क्रियादर्शनाद् तीतबहुश्रुतसंबन्धिक्रियादर्शनात्कारणात्कथं प्रमाणं, नैव प्रमाणं , न ज्ञायते ते कथं वन्दनादिक्रियां कृतवन्त इति । नन्वेदार्वीतनसाधुमात्रगतक्रियानुसारतः तत्तथातावगम इत्याह- व्यवच्छिद्यमाना चेयं क्रिया शुद्धा आगमानुसारिणी इह लोके साम्प्रतमपि दृश्यत एव , कालदोषादिति गाथार्थः ।

उपसंहरन्नाह—

आगमपरतंतेहिं , तम्हा णिच पि सिद्धिकंखीहिं ।
सव्वमणुट्ठाणं खलु, कायव्वं अप्पमत्तेहिं ॥ १७११ ॥

यस्मादेवम्-आगमपरतन्त्रैः -सिद्धान्तायत्तैः तस्मान्नित्यमपि-सर्वकालमपि सिद्धिकाङ्क्षिभिः-भव्यसत्त्वैः सर्वमनुष्ठानं खलु वन्दनादि कर्त्तव्यमप्रमत्तैः-प्रमादरहितैरिति गाथार्थः । पं०व० ।

मोक्षमार्गे चाऽऽगमस्यैव प्रामाण्यम्—

जम्हा न मोक्खमग्गे, मोत्तूणं आगमं इह पमाणं ।
विज्जइ छउमत्थाणं, तम्हा तत्थेव जइयव्वं ॥ ३७ ॥

यस्मान्न नैव मोक्षमार्गे-मोक्षे साध्ये, मोक्षागमशास्त्र परित्यज्येत्यर्थः 'इह' ति-धर्मविचारे प्रमाणम्-आलम्बनमित्यर्थ, विद्यते छद्मस्थानाम्, अतिशयवतां हि कथं चित्सेवातिशयवशात्प्रवर्त्तमानानामपि निर्जरालाभ एवावसीयते, तद्रहितै पुन सर्वथा शास्त्रमेव प्रमाणीकर्त्तव्यम्। तस्मात्तत्रैव यतितव्यम्-उद्यम कार्य इति गाथार्थ । दर्श० ५ तत्त्व।

"धर्माऽधर्मव्यवस्थायां, शास्त्रमेव नियामकम् ।
तदुक्तासेवनाद्धर्म-स्त्वधर्मस्तद्विपर्ययात् ॥ १ ॥" पो०टी० १ विव० ।

( आगमावलम्बनस्यैवैहिकामुष्मिकफलसिद्धिहेतुत्वम् ) धर्मार्थिना-धर्ममार्गे प्रवर्त्तमानेन आगमावलम्बनेनैव प्रवर्त्तितव्यं तस्यैवैकस्यैहिकामुष्मिकफलसिद्धिहेतुतयोपादेयत्वात् अन्यस्य पुरुषमात्रस्यावलम्बने तदुच्छेदः स्यादित्येतद्दर्शयन्निदमाह—

किं वा देइ वराओ, मणुओ सुट्ठु वि धणी वि भत्तो वि ।
आणाअइक्कमं पुण, तयं पि अणंतदुहहेऊ ॥ ८२ ॥

किं वा न किंचिद्ददाति-प्रयच्छति वराक -अत्यन्तशक्तिरहिता मनुजो-नर सुष्ठ्वपि-अतिशयेन धन्यपि-धान्यादिसंपदुपेत. भक्तोऽपि—भक्तपानवस्त्रपात्रादिदानसमर्थ एव स्यात्, पुन सुगते, आज्ञातिक्रमण-भगवदाज्ञोल्लङ्घनं पुन परापेक्षयापि तनुकमपि-स्वल्पमपि आस्ता तावद् बहित्यपिशब्दार्थ, अनन्तदुखहतु, अनन्तसंसारनिवर्त्तनमित्यर्थ, अपक्षया सर्वविदाज्ञाल्लङ्घन क्रियते स हि आहारादिदानमात्र एव समर्थ, न पुन कुगतिरक्षणम, अन किं तदपेक्षया भगवदाज्ञोल्लङ्घनेनानन्तसंसारनिवर्त्तनेनेति गाथार्थः। दर्श० ४ तत्त्व।

( युक्त्युपपन्नस्यैव सदागमत्वम् ) नाऽऽगममात्रमेवाऽर्थप्रतिपत्तिहेतुर्भवतीति दर्शयन्नाह—

जुत्तीए अविरुद्धो, सदागमो साऽवि तयविरुद्ध त्ति ।
इय अण्णोण्णाऽणुगयं, उभयं पडिवत्तिहेउ त्ति ॥४५॥

व्याख्या-युक्त्या-उपपत्त्याऽविरुद्ध -अबाधित सदागम -सत्सिद्धान्तो भवति । साऽपि-युक्तिरपि, तदविरुद्धा-सिद्धान्ताऽविरुद्धा स्यात्तदन्या त्वयुक्तिरेव, इति वाक्यार्थसमाप्तौ, इति-एवम् अन्योऽन्यानुगत-परस्परानुयायि, उभयम्-युक्तिसदागमरूपं द्वय प्रतिपत्तिहेतु -अर्थप्रतीतिकारणम्, इतिशब्द समाप्तौ, इति गाथार्थ । पञ्चा० १८ विव०।

वचनाऽऽराधनया खलु, धर्मस्तद्बाधया त्वधर्म इति ।
इदमत्र धर्मगुह्य, सर्वस्व चैतदेवाऽस्य ॥ १२ ॥

'वचने' त्यादि वचनाराधनया-आगमाराधनयैव खलुशब्द एवकारार्थ । धर्म -श्रुतचारित्ररूप सपद्यते। पो०२ विव०। ( 'धम्मदेसणा' शब्दे चतुर्थभागेऽत्र २७२२ पृष्ठे विशेषव्याख्यानम् )

( २३ ) जिनाऽऽगमस्यैव सत्यत्वम्—

एकाऽप्यनाद्याऽखिलतत्त्वरूपा,
जिनेशगीर्विस्तरमाप तर्कैः ।
तत्राऽप्यमत्यं त्यज सत्यमङ्गी,
कुरु स्वयं स्वीयहिताऽभिलाषिन् ! ॥ १ ॥

'एकेति' एकापि जिनेशगी -अर्हद्वाणी अर्हन्मुखान्निर्गच्छमाना अद्वितीया यथाभाषितं तथाश्रूयमाणा तथा अनाद्या-आदिरहिता एकेन तीर्थकृता यदुपदिष्टं तदनेकेषां पूर्वपूर्वतरतीर्थकृतामपि तथैव निरूप्यमाणत्वात् आदरहिता। पुन कीदृशी-अखिलतत्त्वरूपा-समस्ततत्त्वमपि वितर्कैः -विचारैर्विस्तर-बहुभेदता प्राप्य बहुप्रकारैर्बहुधा विस्तृता, यतो दिग्वाससा मतमपि जिनमतं ध्रुवा एतादृशनयानाम् अनेकाकारता प्रवर्त्तयन्ति, अतस्तन्मतेऽपि यद्विमृश्यमानं सत्य जायते तदयाऽङ्गीकुरु, यच्चाऽसत्यं तत्सर्वमपि त्यज स्वयम्-आत्मना हेस्वीयहिताभिलाषिन् !-निजहितकाङ्क्षिन् ! शब्दान्तरत्वेन तन्मतमपि न द्वेषविषयीकर्त्तव्य सर्वमपि अर्थैकत्वविवक्षया असमञ्जसमेवेति। द्वा०१ अ०।

सेव भंते सेव भंते ! "तमेव सच्चं णिस्संकं जं जिणेहिं पवेइयं" । हंता जंबू !-"तमेव सच्चं निस्संक, ज जिणेहिं पवेइयं" । कहं आगाममंडलाओ निवडिआ इव भामह । अम्मापिऊणं संजोए मंताणं भवति । किं अन्नहा वि भवंति पवेइयं हंता जबू ! "तमेव सच्चं निस्संक जं जिणेहि पवेइयं" । अंग० ।

से णूणं भंते !-"तमेव सच्चं नीसकं, ज जिणेहिं पवेइयं।" हंता गोयमा !-तमेव सच्च नीसकं, एवं ०जाव पुरिसकारपरक्कमेइ वा। (सूत्र-३७×)। भ० १ श० ३ उ० ।

( जिनागमस्य सिद्धत्वम् )—

"जिणवयणं सिद्ध' ४६ इत्यादिगाथया धम्म' शब्दे चतुर्थभागे २६८८ पृष्ठे प्रतिपादयिष्यते ।

( परप्रवादानां मत्सरित्वम् जिनागमस्यामत्सरित्वम् ) अधुना परदर्शनाना परस्परविरुद्धार्थसमर्थकतया मत्सरित्वं प्रकाशयन् सर्वज्ञोपज्ञसिद्धान्तस्यान्योन्यानुगतसर्वनयमयतया मात्सर्याभावमाविर्भावयति—

अन्योऽन्यपक्षप्रतिपक्षभावात्,
यथा परे मत्सरिणः प्रवादाः ।
नयाऽनशेषानविशेषमिच्छन्,
न पक्षपाती समयस्तथा ते ॥ ३० ॥

स्या० ३० श्लोक० । ( श्लोकार्थ 'णय' शब्दे चतुर्थभागे १८६६ पृष्ठे दर्शयिष्यते )

( २४ ) ( जिनागमप्रशंसा ) जिनागमो हि कुशास्त्रजनितसम्कारविपसमुच्छेदनमन्त्रायमाणो धर्माऽधर्मकृत्याऽकृत्यभक्ष्याऽभक्ष्यपेयाऽपेयगम्याऽगम्यसाराऽसारादिविवेचनाहेतु सन्तमसे दीप इव, समुद्रे द्वीपमिव, मेरौ कल्पतरुरिव, ससारे दुराप, जिनादयोऽप्यनत्प्रामाण्यादेव निश्रीयन्ते यदुक्तं स्तुतिषु श्रीहेमसूरय —

" यदीगमस्यफलवलात्प्रतीमो,
भवादृशाना परमाप्तभावम्।
कुवासनापाशविनाशनाय,
नमोऽस्तु तस्मै जिनशासनाय ॥१॥"

जिनागमबहुमानिना च देवगुरुधर्मादयोऽपि बहुमता भवन्ति। किंच-केवलज्ञानिनोऽपि जिनागम एव प्रामाण्येनातिरिच्यन्ते, यदाहु -' ओहसु उवउत्तो, सुअनाणी जइ हु गिएहइ असुद्धं। न केवली वि भुंजइ अपमाणसुअं भवे इहरा ॥१॥" एकमपि च जिनागमवचनं भविना भवनाशहेतुः, यदाहु -" एकमपि च जिनवचना-द्यस्मान्निर्वाहकं पदं भवति। श्रूयन्ते चानन्ता, सामायिकमात्रपदसिद्धाः ॥१॥" यद्यपि च मिथ्यादृष्टिभ्य आतुरेभ्य इव पथ्याऽन्नं न रोचते जिनवचनं तथापि नान्यत्स्वर्गापवर्गमार्गप्रकाशनसमर्थमिति सम्यग्दृष्टिभिस्तदादरेण श्रद्धातव्यं, यतः कल्याणभागिन एव जिनवचनं भावतो भावयन्ति, इतरेषां तु कर्णशूलकारित्वेनामृतमपि विषायते, यदि चेद् जिनवचनं नाभविष्यत्तदा धर्म्माऽधर्म्मव्यवस्थाशून्यं भवान्धकारे भुवनमपतिष्यत्, यथा च- हरीतकीं भक्षयेद्विरेककाम-" इति वचनाद्धरीतकीभक्षणप्रभवविरेकलक्षणेन प्रत्ययेन सकलस्याप्यायुर्वेदस्य प्रामाण्यमवसीयते, तथाऽष्टाङ्गनिमित्तकेवलिकाचन्द्रार्कग्रहचारधातुवादरसरसायनादिभिरप्यागमार्पादृष्टदृष्टार्थवाक्यानां प्रामाण्यनिश्चयनाऽदृष्टार्थानामपि वाक्यानां प्रामाण्यं मन्दधीभिर्निश्चेतव्यम्। ध० २ अधि०। ( जिनागमलेखनफलम् 'पोत्थग' शब्दे पञ्चमभागे दर्शयिष्यते ) ( जिनागमलिखितपुस्तकाना दानफलम् 'णाण' शब्दे चतुर्थभागे वर्णयिष्यते ) 'आगमं आयरंतेण, अत्तणो हियकंखिणो। तित्थनाहो सयंबुद्धो सव्वे ते बहुमन्निया ॥१॥" अष्ट० २४ अष्ट०। " आगम चक्खू साहू' अष्ट० २४ अष्ट०।

आगम्यन्ते परिच्छिद्यन्तेऽर्थाअनेनेत्यागमः। केवलमनःपर्यायावधिपूर्वचतुर्दशकदशकनवकरूपे व्यवहारभेदे, स्था० ५ ठा०२उ०। व्यवहारता चास्य व्यवहारहेतुत्वाद्। पञ्चा० १६ विव०। तन्निबन्धनत्वात् ज्ञानविशेषोऽपि व्यवहारः। स्था० ४ ठा० २ उ०। ( विस्तरत आगमव्यवहारस्य वक्तव्यता 'आगमववहार' शब्देऽस्मिन्नेव भागे आगमिष्यति )। प्राप्तौ, दश० १ अ०। ( लाभे, ) स्था० २ ठा० ४ उ०।

( २५ ) आगमस्याऽर्थान्तराणि—

आतो त्ति आगमो त्ति य, लाभो त्ति य होंति एगट्ठा ॥६॥

आय इति, आगम इति च, लाभ इति च भवन्त्येकार्थिका। उत्त०पाइ० १ अ०। "आगमं" लाभम्। लाभे, बृ० ३ उ०। पुरुषान्तरमस्तनिकालान्तर्गते कलाभेदे कल्प०१ अधि० ७ क्षण। आगच्छति-प्रकृतिप्रत्ययावनुपहत्य उपयाते कर्त्तरि संज्ञाया घः। व्याकरणोक्ते प्रकृतिप्रत्ययानुपघातके अद् इद् इत्यादौ शब्दे, आगमादेशयोर्मध्ये बलीयानागमो विधि' व्याकरणान्तरपरिभाषा "यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते "आगमशास्त्रमनित्यम्" इति च परिभा०। 'आगमा आद्युदात्ता' "आगमा अविद्यमानवद्भवन्तीति", च। श्रा या। वाच०।

( आगमनिष्पन्नं नामाधिकृत्याह )—

से किं तं आगमेणं आगमेणं पद्मानि पयांसि कुण्डानि, सेत्तं आगमेणं। ( सूत्र-१२५× )

आगच्छतीत्यागमः स्वागमादिस्तेन निष्पन्नं नाम यथा 'पद्मानी' त्यादि. "धुट्स्वराद् घुटि नु " (का०रू०२४) इत्यनेनात्र न्वागमस्य विधानाद् उपलक्षणमात्रं चैतद्, संस्कार उपस्कार इत्यादरपि सुडाद्यागमनिष्पन्नत्वाद्धिति। अनु०। ( 'सत्य' शब्दे सप्तमभागे विस्तरो द्रष्टव्यः )

आगमकुसल-आगमकुशल- त्रि०। आगमनिपुणे, आतु०। " आगमकुसला सदाररया ॥ ४६४ ॥ " आगमः-श्रुतिस्मृत्यादिरूपस्तस्मिन् कुशलाचागमकुशलाविति। उत्त० २५ अ०।

आगमण-आगमन-न०। आ+गम् भावे ल्युट्। किञ्चिद्देशावधिकविभाजनक्रियायामागतौ,। वाच०। गमनं स्वस्थानादन्यत्र यानम्। आगमनञ्च तद्व्यत्ययः। ध० ३ अधि०। अन्यतः स्थानात् प्रज्ञापकसम्मुखं यदागम्यते तदागमनम्। बृ० १ उ० ३ प्रक०। व्य०। उत्पत्तौ। वाच०। प्राप्तौ, वाच०।

आगमणगहियविणिच्छय-आगमनगृहीतविनिश्चय-त्रि०। आगमने गृहीतः-कृतो विनिश्चयो-निर्णयो येन स तथा। आगमनाय कृतनिश्चये, भ० ६ श० ३३ उ०।

आगमणगिह-आगमनगृह-न०। पथिकादीनामागमनेनोपेतं, तदर्थं वा गृहमागमनगृहम्। बृ० २ उ०। सभाप्रपादौ, सूत्र०। " आगमणगिहंसि वा " ( सूत्र-१६१× ) स्था० ३ ठा० ४ उ०। आगमनगृहमागन्तुकागारं यत्र कार्पटिकादय आगत्य वसन्तीति। पञ्चा० १८ विव०।

( आगमनगृहं व्याचष्टे )—

आगंतुऽगारत्थजणो जहिं तु,
संठाइ जं वाऽऽगमणंमि तेसिं।
तं आगमोकं तु विदू वयंति,
सभा-पवा-देउलमाइयं वा ॥ १६३ ॥

आगन्तुकः-पथिकः अगारस्थजनो' यत्र-आगत्य संतिष्ठते यच्च तेषां पथिकादीनाम् आगमने वर्त्तते तदागमौकः— आगमनगृहं विद्वांसः-श्रुतधरा वदन्ति, तच्च सभा वा, प्रपा वा, देवकुलादिकं वा मन्तव्यम्। बृ० २ उ०। स्था०। ( अत्र च निवासे दोषा 'वसहि' शब्दे षष्ठभागे वर्णयिष्यते। )

आगमणपह-आगमनपथ-पुं०। आगमनमार्गे, नि०चू०। आगमणपहसिजणं पहेण पक्खियादिसु आगच्छति तंमि पहे। नि० चू० ४ उ०। ( निर्ग्रन्थीनामागमनपथे दण्डकादिस्थापने दोषा 'उवहि' शब्देऽस्मिन्नेव भागे दर्शयिष्यते )

आगमणागमणपविभत्ति-आगमनागमनप्रविभक्ति-न०। नाट्यविधिविशेषे, रा०। " आगमणागमणपविभत्तिणामं दिव्वं णट्टविहिं उवदंसेति " ( सूत्र-× ) रा०। चन्द्रागमनप्रविभक्तियुक्तमागमनप्रविभक्तिनाम सप्तमं नाट्यविधिमुपदर्शयन्ति। रा०।

आगमणीइ-आगमनीति-स्त्री०। आगमन्याये, पञ्चा०। " एसा पवयणणीई " ( सूत्र-१४+ ) एषा-अनन्तरोक्ता भव-

वननीति-आगमन्यायो वर्त्तते । पञ्चा० ६ विव० । सिद्धान्तभणिताऽऽचारे, " मग्गो आगमणीई " (८०+) । आगमनीति -सिद्धान्तभणिताचार. । ध० र० ३ अधि० १ लक्ष० । ध० । ( तस्य मार्गत्वम् ' मग्ग ' शब्दे ६ षष्ठ भागे प्रतिपादयिष्यते )

**आगमतंत-आगमतन्त्र**-त्रि० । आगमपरतन्त्रे, आगमानुसारिणि पो० ।

> आगमतन्त्रः सततं, तद्भक्त्यादिलिङ्गसंसिद्धः ।
> चेष्टायां तत्स्मृतिमान्, शस्तः खल्वाशयविशिष्टः॥१३॥

आगमतन्त्र.-आगमपरतन्त्र ,आगमानुसारी । पो०७ विव० । ( अत्र विशेषव्याख्या ' चेइय ' शब्दे तृतीयभागे १२६६ पृष्ठ दर्शयिष्यते )

**आगमतत्त-आगमतत्त्व**-न० । आगमपरमार्थे, पो० ।

> आगमतत्त्वं तु बुधः, परीक्षते सर्वयत्नेन ॥ २ ॥

आगमतत्त्वं तु-आगमपरमार्थमिदं पर्यवरूपं बुधो-विशिष्टविवेकसपन्न परीक्षते-समीचीनमवलोकयति सर्वयत्नेन-सर्वादरेण धर्म्माऽधर्म्मव्यवस्थाया आगमनिबन्धनत्वात् यत उक्तम् " धर्म्माऽधर्म्मव्यवस्थायां, शास्त्रमेव नियामकम् । तदुक्तासेवनाद्धर्म्म-स्त्वधर्म्मस्तद्विपर्यात् ॥१॥" पो० १ विव० । ( अत्रार्थे ' धम्म ' शब्दे चतुर्थभागे २६६४ पृष्ठ विशेषो दर्शयिष्यते )

**आगमदिट्ठि-आगमदृष्टि**-स्त्री० । आगम -आप्तवचन स एव दृष्टिर्हिताऽहितपदार्थप्रकाशकत्वादागमदृष्टि. । आप्तवचनात्मिकाया दृष्टौ, दर्श० ३ तत्त्व ।

**आगमदिट्ठिदिट्ठसुन्नायमग्ग-आगमदृष्टिदृष्टसुज्ञातमार्ग**-पुं० । आगम -आप्तवचनं स एव दृष्टिर्हिताऽहितप्रकाशकत्वात् आगमदृष्टिस्तया दृष्टम्-अवलोकितमागमदृष्टिदृष्ट तेन शोभनप्रकारेण ज्ञातो मार्गो ज्ञानादिको यैस्ते आगमदृष्टिदृष्टसुज्ञातमार्गा. । आगमदृष्ट्या सम्यगवलोकितदर्शनादिके, दर्श० ३ तत्त्व ।

**आगमपरतंत-आगमपरतन्त्र**-त्रि० । सिद्धान्तपरतन्त्रे, पं०व० ।

> एत्थ वि मूलं ऐओ, एगंतेणेव भव्वसत्तेहिं ।
> सिद्धाइभावओ खलु, आगमपरतंतया णवरं ॥१७०६॥

अत्रापि-आराधनायतने मूलं-कारण ज्ञेयमेकान्तेनैव भव्यसत्वै-भव्यप्राणिभि , किमित्यत्राह-श्रद्धादिभावत. खलु-श्रद्धादिभावादेव कारणादागमपरतन्त्रता-सिद्धान्तपारतन्त्र्य नवर, नान्यन्मूलमिति गाथार्थ. । पं०व० ५ द्वार ।

**आगमपह-आगमपथ**-पु० । लाभमार्गे, स्था० २ ठा० ४ उ० ।

**आगमबलिय-आगमबलिक**-पुं० । आगमज्ञानविशेषवति केवल्यादिके, भ० । "आगमबलिया समणा णिग्गथा" (सूत्र-३४० + ) आगमबलिका उक्तज्ञानविशेषबलवन्त श्रमणा-निर्ग्रन्था. केवलिप्रभृतय. । भ० ८ श० ८ उ० ।

**आगममलारहियय-आगममलारहृदय**-पुं० । आगमार्थप्रतिपत्त्यसमर्थहृदये, ( आगमार्थकुण्ठितबुद्धौ ) सम्म० ।

> समयपरमत्थवित्थर-विहाडजणपज्जुवासणसयण्हो ।
> आगममलारहियओ, जह होति तमत्थमन्नेसु ॥ २ ॥

सम्म० १ काण्ड ।

अत्र च-'आगममलारहृदय इत्यनुवादेन समयपरमार्थविस्तरहाटजनपर्युपासनसकर्णो यथा भवति तमर्थमुन्नेष्ये' इति-विधिपरा पदघटना कर्त्तव्या । पदार्थस्तु मलमिवारा-प्राजनकविभागो यस्यासौ मलारो-गौर्गली आगमे तद्वत्कुण्ठ हृदयं यस्य तदर्थप्रतिपत्त्यसामर्थ्यादसौ तथा मन्दधी , सम्यग् ईयन्ते-परिच्छिद्यन्तेऽनेनार्था इति समय -आगमस्तस्य परम -अकल्पितश्चासावर्थ. समयपरमार्थस्तस्य विस्तरो-रचनाविशेष शब्दार्थयोश्च भेदेऽपि पारमार्थिकसंबन्धप्रतिपादनायाऽभेदविवक्षया ' प्रथने वावशब्दे' ( पाणि० । ३ । ३ । ३३ ।) इति घञ् न कृतः तस्य विहाट इति-दीप्यमानान् श्रोतृबुद्धौ प्रकाशमानानर्थान् दीपयति-प्रकाशयति विहाटश्चासौ जनश्चचतुर्दशपूर्वविदादिलोक. । तस्य पर्युपासनं-'कारणे कार्योपचारात्' सेवाजनिततद्व्याख्यानम् । तत्र सह कर्णाभ्या वर्त्तत इति सकर्ण तद्व्याख्यातार्थावधारणसमर्थ । यथा इति-येन प्रकारेण भवति तं तथाभूतमर्थम् उन्नेष्ये-लेशन प्रतिपादयिष्ये । यथाभूतेनार्थेन प्रतिपादितेनातिकुण्ठधीरपि श्रोतृजनो विशिष्टागमव्याख्यातृप्रतिपादितार्थावधारणपटु सपद्यते । तमर्थमनेन प्रकरणेन प्रतिपादयिष्यामीति यावत् । सम्म० १ काण्ड ।

**आगममाण-आगमयत्**-त्रि० । आपादयति , " लाघविर्य आगममाणे " । सूत्र-२१३+ )। लाघविकमात्मानमागमयन्-आपादयन् । आचा० १ श्रु० ८ अ० ४ उ० । आगमयति , (अवबुध्यमाने) लाघव आगममाणा" (१८५×)। आगमयन्-अवगमयन् अवबुध्यमान । आचा० १ श्रु० ६ अ० ३ उ० ।

**आगमलोयणीइ-आगमलोकनीति**-स्त्री० । जिनप्रवचनन्यायलौकिकन्याययो , पं० ।

> जिणबिंबपइट्ठाए, विहिमागमलोयणीतीए ॥ १ ॥

जिनबिम्बप्रतिष्ठाया. प्रणीताया विधि-विधानमागमलोकनीत्या-जिनप्रवचनन्यायेन , लौकिकन्यायेन चेत्यर्थ । लोकग्रहणेन चेद दर्शयति-लोकनीतिरपि कश्चिज्जिनमतविरुद्धाश्रयणीया अत एव प्रासादादिलक्षण तदुक्तमप्याश्रीयत इति गाथार्थ । पञ्चा० ८ विव० ।

**आगमवयण-आगमवचन**-न० । आर्षवचने , पो० ।

> सर्वज्ञवचनमागम-वचनं यत् परिणते ततस्तस्मिन् ।
> नासुलभमिदं सर्वं , ह्युभयमलपरिक्षयात् पुंसाम् ॥ ११ ॥

सर्वज्ञवचनम्-आगमवचनं यद्-यस्मात् परिणते ततस्तस्मिन्-आगमवचने नासुलभमिद-न दुर्लभमिद किंतु सुलभमेव भवति सर्वं हि-पूर्वोक्तमुभयमलपरिक्षयात् क्रियामलभावमलपरिक्षयात् पुसा पुरुषाणाम् । पो० ५ विव० ।

**आगमवयणपरिणइ-आगमवचनपरिणति**-स्त्री० । आगमवचनस्य विषयविभागेन चेतसि व्यवस्थितौ, पो०

किमित्यागमवचनपरिणाम प्रशस्यत इत्याह—

> आगमवचनपरिणति-र्भवरोगसदौषधं यदनपायम् ।

तदिह परः सद्बोधः, सदनुष्ठानस्य हेतुरिति ॥ ६ ॥

आगमवचनपरिणतिर्यथावत् तत्प्रकाशरूपा भवरोगस-दौषध-भवरोगस्य-संसारामयस्य सदौषध तदुच्छेदकारित्वेन यद्-यस्मात्, अनपायम्-अपायरहितं-निर्दोष वर्त्तते तदिह पर सद्बोधस्तच्च भवरोगसदौषधम्-आगमवचनपरिणत्याख्य, पर -प्रधान. सद्बोध -सम्यग्ज्ञान वर्त्तते सदनुष्ठानस्य-सुन्दरानुष्ठानस्य हेतु -कारणमिति कृत्वा। षो० ५ विव०।

आगमववहार-आगमव्यवहार-पुं०। आ-मर्यादाऽ-भिविधिभ्या गम्यन्ते-परिच्छिद्यन्तेऽर्था येनासावागम केवलमन पर्य्यायावधिचतुर्द्दशदशनवपूर्वलक्षण व्यवहारभेद, पञ्चा०। व्यवहारता चास्य व्यवहारहेतुत्वाद्। पञ्चा० १६ विव०। स्था०। ध०। ( एतेषां च यथा आगमत्वं तथा 'आगम' शब्देऽस्मिन्नेव भागे गतम् )

आगमव्यवहारभेदा —

आगमतो ववहारो, सुणह जहा धीरपुरिसपन्नत्तो ।
पच्चक्खो य परोक्खो, सोऽवि य दुविहो मुणेयव्वो ॥२०१॥

तत्र-आगमतो व्यवहारो यथा धीरपुरुषैः प्रज्ञप्तस्तथा शृणुत, स-आगमतो व्यवहारो द्विविधो ज्ञातव्य, तद्यथा-प्रत्यक्ष, परोक्षश्च।

पच्चक्खो वि य दुविहो, इंदियजो चेव नो व इंदियजो ।
इंदियपच्चक्खो वि य, पंचसु विसएसु नेयव्वो ॥ २०२ ॥

प्रत्यक्षोऽपि द्विविध, तद्यथा-इन्द्रियजो, नोइन्द्रियजश्च। तत्र इन्द्रियज प्रत्यक्ष पञ्चसु रूपादिषु विषयेषु ज्ञातव्य.।

नोइंदियपच्चक्खो, ववहारो सो समासतो तिविहो ।
ओहिमणपज्जवेया, केवलनाणे य पच्चक्खे ॥ २०३ ॥

यस्तु-नोइन्द्रियज प्रत्यक्षो व्यवहार स समासतस्त्रिविध, तद्यथा-अवधिप्रत्यक्षं, मन पर्यवप्रत्यक्षं, केवलज्ञानप्रत्यक्षम्।

तत्राऽवधिप्रत्यक्षमाह—

ओही गुणपच्चइए, जे वट्टंती सुयंगवी धीरा ।
ओहिविसयनाणत्थे, जाणसु ववहारसोहिकरे ॥ २०४ ॥

अवधिर्द्विधा-भवप्रत्ययजो, गुणप्रत्ययजश्च। तत्र संयतानां गुणप्रत्ययज एव, न भवप्रत्ययज, तत आह-अवधौ गुण-प्रत्यये ये वर्त्तन्ते श्रुताङ्गविदो धीरास्तान् अवधिविषयज्ञानस्थान जानीत व्यवहारशोधिकरान्-शुद्धव्यवहारकारिण।

उज्जुमती विउलमती, जे वट्टंती सुयंगवी धीरा ।
मणपज्जवनाणत्थे, जाणसु ववहारसोहिकरे ॥ २०५ ॥

ये ऋजुमतौ विपुलमतौ वा मन पर्यवज्ञाने श्रुताङ्गविदो धीरा वर्त्तन्ते तान् मन पर्यवज्ञानस्थान् जानीत व्यवहारशोधिकरान-शुद्धव्यवहारकारिण।

आदिगरा धम्माणं, चरित्तवरनाणदंसणसमग्गा ।
सव्वत्तगनाणेणं, ववहारं ववहरंति जिणा ॥ २०६ ॥

ये धर्मयो -श्रुतधर्मस्य चारित्रधर्मस्य चादिकरा -तत्प्रथमतया प्रवर्त्तनशीलाश्चारित्रवरज्ञानदर्शनसमग्रास्ते जिना सर्वत्रगज्ञानेन व्यवहार व्यवहरन्ति इक्क प्रत्यक्ष।

संप्रति परोक्षमाह—

पच्चक्खागमसरिसो, होति परोक्खोऽवि आगमो जस्स ।
चंदमुही विव सो वि हु, आगमो ववहारवं होइ॥२०७॥

यद्यपि पूर्वादिकं श्रुतं तथापि यस्याऽऽगमश्चतुर्द्दशपूर्वादिक परोक्षोऽपि प्रत्यक्षाऽऽगमसदृश। प्रत्यक्षावध्यादितुल्यरूपो भवति सोऽप्यागमव्यवहारवान् वक्तव्यो भवति। यथा चन्द्रसदृशमुखी कन्या चन्द्रमुखीति, एतदुक्त भवति-यद्यपि पूर्वाणि श्रुत नाऽऽगमतुल्यानीति (तदपि) नैर्व्यवहरन् आगमव्यवहारवानुच्यते इति। व्य० १० उ०। ( आगमस्य व्याख्यानम् ' आगम ' शब्देऽस्मिन्नेव भागे प्राग् गतम् )

आगमभेदा —

पारोक्खं ववहारं, आगमतो सुयधरा ववहरंति ।
चोद्दस दस पुव्वधरा, नवपुव्वियं गंधहत्थी य ॥२०८॥

ये श्रुतधराश्चतुर्दशपूर्वधरा दशपूर्वधरा नवपूर्विणो वा गन्धहस्तिनो-गन्धहस्तिसमाना ते आगमत. परोक्ष व्यवहारं व्यवहरन्ति।

अत्राक्षेपपरिहारावभिधित्सुराह—

किह आगमववहारी, जम्हा जीवाऽऽदयो पयत्था उ ।
उवलद्धा तेहिं तु, सव्वेहिं नयविगप्पेहि ॥ २१० ॥

कथं-केन प्रकारेण साक्षात् श्रुतेन व्यवहरन्त आगमव्यवहारिण प्रोच्यन्ते, सूरिराह-यस्मात् जीवादय पदार्थास्तै. चतुर्दशपूर्वधरादिभि सर्वै.-नयविकल्पै.-नैगमादिनयभेदैरुपलब्धा।

एतदेव सविशेषमाह--

जह केवली वि जाणइ, दव्वं खेत्तं च कालभावं वा ।
तह चउलक्खणमेवं, सुयनाणी चेव जाणाति ॥२११॥

यथा केवली केवलज्ञानेन सर्वं द्रव्यं सर्वं क्षेत्रं सर्वं कालं सर्वं भावं च सर्वात्मना स्वपरपर्यायभेदभिन्न जानाति। एवं श्रुतज्ञान्यपि चतुर्लक्षणं द्रव्यक्षेत्रकालभावरूपं श्रुतबलेन जानाति।

तत एतेऽप्यागमव्यवहारिण उच्यन्ते, एतदेवं प्रस्तुते प्रायश्चित्तशुद्ध्यधिकारमधिकृत्य योजयति--

पणगं मासविवड्ढी, मासगहाणी य पणगहाणी य।
एगाऽहे पंचाऽहं, पचाहे चेव एगाऽह ॥ २१२ ॥
रागद्दोसविवड्ढिं, हाणिं वा नाउं देंति पच्चक्खी ।
चोद्दसपुव्वादी वि हु, तह नाउं देंति हीणऽहियं॥२१३॥

यथा प्रत्यक्षिण -प्रत्यक्षागमज्ञानिनस्तुल्येऽप्यपराधे पञ्चकयोग्ये एकस्य पञ्चक ददति। अपरस्य-रागद्वेषविवृद्धिमुपलभ्य मासेन मासाभ्यां मासैर्वा वृद्धिं प्रयच्छन्ति। उपलक्षणमेतत्-मूलम् अनवस्थाप्यं पाराञ्चिकं वा प्रयच्छन्ति। तथा तुल्येऽपि पाराञ्चितयोग्याऽपराध एकस्य पाराञ्चितम्, अपरस्य अनवस्थाप्यं मूलं छेद मासेन मासाभ्या मासैर्वा हान्या तपो वा चशब्दात्-पञ्चकं यावदन्ते नमस्कारसहितं हा दुष्ठु कृतं, हा दुष्टुकारितं, हा दुष्ठु अनुमोदितमित्येवं वैराग्यभावनातो रागद्वेषहानिं भूयसीम्-अतिभूयस्तरामुपलभ्य प्रयच्छन्ति, तथा कस्यचित् मासिकप्रतिसेवना-

यामलपां राग-द्वेषहानिमुपलभ्य पञ्चकहान्या मासिकं ददति; पञ्चविंशतिं दिनानि ददतीत्यर्थः । तथा एकाहं नाम--अभक्तार्थ प्रतिसेविते पश्चाद्दे ददति, पश्चाहे वा प्रतिसेविते एकाहम्, उपलक्षणत्वादाचाम्लम् एकाशने पूर्वार्द्धे निर्विकृत पौरुषीं नमस्कारसहितां वा प्रयच्छन्ति। एव चतुर्दशपूर्वादयोऽपि 'हु' निश्चित रागद्वेषहानिवृद्धी उपलभ्य हीनमधिकं वा प्रायश्चित्तं ददति।

अत्र परस्य प्रश्नमुदीरयति—

चोयगपुच्छा पच्च-क्खनाणिणो थोवं कह बहुं देंति।
दिट्ठंतो वाणियए, जिणचोद्दसपुव्विए धमए॥ २१४॥

चोदकस्यात्र पृच्छा-प्रत्यक्षज्ञानिनो जिनादयः स्तोके अपराधे कथं बहु प्रयच्छन्ति प्रायश्चित्तम् उपलक्षणमेतत् भूयसि वा अपराधे स्तोकम्?, अत्र सूरिराह-दृष्टान्तोऽत्र वणिजा द्रष्टव्यः, तथा भूयः परस्य पृच्छा?-जिनादयः केवलज्ञानादिबलेन परस्य भावं जानते चतुर्दशपूर्विणस्तु कथं येन स्तोकेऽपि बहु बह्वपि-स्तोकं ददति। सूरिराह-अत्र धमको दृष्टान्तः।

तत्र प्रथमतो वणिग्दृष्टान्तं भावयति—

जं जह मोल्लं रयणं, तं जाणइ रयणवाणितो निउणो।
थोवं तु महल्लस्स वि, कासइ अप्पस्स वि बहुं तु॥ २१५॥

यथा निपुणो रत्नवणिक् यत् रत्न यथामूल्यं तत्तथा सम्यक् जानाति, ज्ञात्वा च कस्यचित् महतोऽपि रत्नस्य स्तोक मूल्य ददाति, कस्यचिदल्पस्याप्यद्भुतगुणोपेतस्य बहु।

इमामेव तद्दृष्टान्तभावना प्रकारान्तरेणाह—

अहवा कायमणिस्स उ, सुमहल्लस्स वि उ कागणी मोल्लं।
वइरस्स उ अप्पस्स वि, मोल्लं होती सयसहस्सं॥ २१६॥

अथवेति-प्रकारान्तरे रत्नपरीक्षको वणिक् काचमणेः सुमहतोऽपि मूल्यम् काकिणीं करोति, वज्रस्य तु-रत्नस्याल्पस्यापि मूल्य तेन क्रियमाणं शतसहस्रं भवति।

अत्रोपनयमाह—

इय मासाण बहूण वि, रागद्दोसप्पयाएँ थोवं तु।
रागद्दोसोवचया, पणगे वि उ तो बहुं देंति॥ २१७॥

'इति'-अमुना दृष्टान्तप्रकारेण बहूनामपि-मासाना योग्ये अपराधे वैराग्यभावनाछलतो रागद्वेषाल्पतया स्तोकं प्रायश्चित्तं ददति। सिंहव्यापादकस्येव रागद्वेषोपचयात् पञ्चकेऽप्यपराधे बहु प्रायश्चित्तं ददति।

अधुना "जिनचोद्दसपुव्विए धमए" (२१४)
इत्यस्य व्याख्यानमाह—

पच्चक्खी पच्चक्खं, पासइ पडिसेवगस्स सो भावं।
किह जाणइ पारोक्खी, नायमिणं तत्थ धमएणं॥२१८॥

प्रत्यक्षी-जिनादिः प्रत्यक्षं प्रतिसेवकस्य भावं जानाति, परोक्षी-चतुर्दशपूर्वादिः कथं जानाति येन सोऽपि तथैव व्यवहरति, सूरिराह-तत्र तस्मिन्विषये ज्ञातम्-उदाहरणमिदं वक्ष्यमाणं धमकेन-शङ्खध्मात्रा।

तदेव दर्शयति—

नालीधमएण जिणा, उवसंहारं करेंति पारोक्खं।
जह सो कालं जाणइ, सुएण सोहिं तहा सोउं॥ २१९॥

जिना-तीर्थकृत परोक्षे आगमे उपसंहारं नालीधमकेन-कुर्वन्ति, इयमत्र भावना-नाडिकायां गलन्त्यामुदकगलनपरिमाणतो जानाति एतावत्युदके गलितयामो दिवसस्य रात्रेर्वा गत इति ततोऽन्यस्य परिज्ञानाय शङ्खं धमति तत्र यथा सोऽन्यो जन शङ्खस्य शब्देन श्रुतेन कालं यामलक्षणं जानाति, तथा परोक्षागमज्ञानिनाऽपि शोधिम्-आलोचना श्रुत्वा तस्य यथाऽवस्थित भावं जानन्ति, ज्ञात्वा च तदनुसारेण प्रायश्चित्त ददति। व्य० १० उ०।

आगमतो ववहारं, परसोच्चा संकियंमि उ चरित्ते।
आलोइयमि आरा-हणा अणालोइए भयणा॥२२२॥

आगमत प्रत्यक्षज्ञानी वा परे-परस्मिन् व्यवहार करोति। परस्यालोचना श्रुत्वा नान्यथा। तत्र यदि कलुषितचारित्रतया न सम्यगालोचयति, किंतु आलोचनामर्यादामतिक्रम्य वर्त्तत तदा शाङ्कनमिति वा मिश्रमिति वा कलुषितमिति वा एकार्थं, चारित्रे सति न सम्यगनेनालोचितमिति ज्ञात्वा तं ब्रूते-अन्यत्र गत्वा शोधिं कुरु, यदि पुन सम्यगालोचयति तदा ददाति प्रायश्चित्तम्। अथ यदि प्रत्यक्षागमज्ञानिन परोक्षाऽऽज्ञानिनो वा सर्वभावविषयपरिज्ञानात् ततः कस्मात्तस्य पुरत आलोच्यते। किंतु—तस्य समीपमुपगम्य वक्तव्यम्-अपराधं मे भवन्तो जानते तस्य शोधिं प्रयच्छत तत्र आह-'आलोई' त्यादि, आलोचिते बहुगुणसंभवत सम्यगाराधना भवति, अनालोचिते आराधनाया भजना—विकल्पना कदाचिद्भवति कदाचिन्नेति एतच्चाग्रे भावयिष्यते।

तत्र " आगमतो ववहारं, परसोच्चा "
(२२२) इति व्याख्यानयति—

आगमववहारी छ-व्विहो वि आलोयणं निसामेत्ता।
देति ततो पच्छित्तं, पडिवज्जइ सारिओ जइ य॥२२३॥

आगमव्यवहारी षड्विधोऽपि परस्यालोचना निशम्य तत प्रायश्चित्तं ददाति, यदि च-कमप्यपराधं विस्मृतं स्मारित सन् सम्यक् प्रतिपद्यते तदा सारयति च। अन्यथा तस्याऽऽलोचनामेव न ददाति।

सांप्रतमुत्तरार्द्धं (२२२) व्याख्यानयति—

आलोइय पडिकंत-स्स होइ आराहणा सुनियमेणं।
अणालोइयंमि भयणा, किह पुण भयणा हवइ तम्मि॥२२४

पूर्वमपराधजातमालोचितं ततस्तस्मात्प्रतिक्रान्तस्य अपुनःकारणतया प्रतिनिवृत्तस्य नियमेन पर्यन्ते सम्यगाराधना भवति। अनालोचिते पुनर्भजना। आह-कथं पुनरनालोचिते तस्याराधनाविषये भजना भवति।

अत्राऽऽह—

कालं कुव्वेज्ज मय, अमुहो वा हुज्ज अहव आयरिओ।
अप्पत्ते पत्ते वा, आराहणा तह वि भयणेव॥ २२५॥

कोऽपि आलोचना ग्रहीष्यामीत्यालोचनापरिणामपरिगत आलोचनाग्रहणाय संप्रस्थित आलोचनार्हसमीपं, स च तमप्राप्त एवापान्तराले स्वय कालं कुर्यात्, यदि वा-

प्राप्तोऽपि रोगवशादमुखो जातः । अथवा-तस्याप्राप्तवत एव स आलोचनार्ह आचार्यः कालगतः, यदि वा-प्राप्तवतोऽप्यमुखो जातः, ततः स एवमालोचनापरिणत आलोचनाया अनभवेऽपि काले कुर्वन्नाराधकः, यदि पुनर्न सम्यगालोचनापरिणामपरिणतस्तदा सोऽनाराधकः, स च तथा-कालगतो दीर्घसंसारी भवति । एवमाराधना आलोचना हि प्राप्ते अप्राप्ते वा भजनया भवति ।

संप्रत्यागमव्यवहारिणामपि पुरत आलो-
चनाया गुणानुपदर्शयति—

अवराहं वियाणंति, तस्स सोहिं च जइवि ।
तहाऽवि आलोयणावुत्ता, आलोयंते बहू गुणा ॥२२६॥

यद्यप्यागमव्यवहारिणस्तथाप्यालोचकस्यापराधं विजानन्ति शोधिं च तथाऽपि तेषामपि पुरत आलोचना दातव्या उक्ता तीर्थकरगणधरैर्यत आलोचयति (सति) बहवो गुणास्तथा ह्यालोचनाऽऽचार्येण स आलोचकः प्रोत्साह्यते यथा वत्स ! त्वं धन्यस्त्वं सभाग्यः । यदेवं मानं निहत्याऽऽत्महितार्थतया स्वरहस्यानि प्रकटयसि महादुष्करमेतत्, एवं स प्रोत्साहितः सन् प्रवर्द्धमानपरिणामः सम्यग् निःशल्यो भूत्वा यथावस्थितमालोचयति । शोधिं च सम्यक् प्रतिपद्यते । ततः पर्यन्ते आराधना स्तोककालेन च मोक्षगमनमिति ।

अथ च कथमागमिनो व्यवहारं प्रयुञ्जते, तत आह—

दव्वेहिँ पज्जवेहि य, कम-खेत्त-काल-भावपरिसुद्धं ।
आलोयणं सुणेत्ता, तो ववहारं पउंजति ॥ २२७ ॥

द्रव्यैः सचित्तादिभिः, पर्यायैः-तेषामेव सचित्तादिद्रव्याणामेव स्थानविशेषैः-परिणामविशेषैः, तथा क्रमतः, क्षेत्रतः, कालतो, भावतश्च परिशुद्धामालोचनां श्रुत्वा ततस्तदनन्तरं व्यवहार-शोधिव्यवहारं प्रयुञ्जते, नान्यथा, तत्र यदि सचित्तं सेवित्वा सचित्तमेवालोचयति तदा द्रव्यशुद्धा सा आलोचना, यदा तु सचित्तं प्रतिसेव्य अचित्तमालोचयति तदा द्रव्याऽशुद्धा । तथा यामवस्थामुपगतं सचित्तं प्रतिसेव्य तामेवाऽवस्थागतं तदाऽऽलोचयति तदा सा आलोचना पर्यायशुद्धा, यदा त्वन्यामवस्थामुपगतं प्रतिसेव्यान्यामवस्थामालोचयति तदा पर्यायाऽशुद्धा । तथा यदि प्रतिसेवनानुलोममालोचयति तदा सा क्रमशुद्धा, उत्क्रमेणाऽऽलोचयतः क्रमाऽशुद्धा । तथा यत्रत्र जनपदे अध्वनि वा प्रतिसेवितं तत्तथैवालोचयतः क्षेत्रशुद्धा आलोचना, जनपदे प्रतिसेवितमध्वनि कथयतः क्षेत्राऽशुद्धा । यथा यत् यदा दुर्भिक्षे सुभिक्षे वा दिवा रात्रौ वा प्रतिसेवितं तत्तदाऽऽलोचयतः कालशुद्धा, सुभिक्षे प्रतिसेव्य दुर्भिक्षे कथयतो रात्रौ वा प्रतिसेव्य दिवसे कथयतः कालाऽशुद्धा, तथा-येन अनाभोगादिना सेवितं तं भावं कथयतो भावशुद्धा, दर्पेण प्रतिसेव्याऽनाभोगादिना कथयतो भावाऽशुद्धा ।

संप्रति भावमेवोपदर्शयति—

सहसा अन्नाणेण व, भीएण व पेल्लिएण व परेण ।
वसणेण पमादेण व, मूढेण व रागदोसेहिं ॥ २२८ ॥

तेन-प्रतिसेवकेन सहसा अज्ञानेन वा परेण वा प्रेरितेन वा व्यसनेन वा-द्यूतादिना प्रमादेन वा मूढेन वा रागद्वेषाभ्यां वा प्रतिसेव्य यदि तथैवाऽऽलोच्यते प्रायश्चित्ताय मे ददाति नान्यथेति वाक्यशेषः ।

संप्रति "सहसे" (२२८) त्यस्य व्याख्यानमाह—

पुव्वं अपासिऊणं, (उ) च्छूढे पायंमि जं पुणो पासे ।
न य तरइ नियत्तेउं, पायं सहसाकरणमेयं ॥ २२९ ॥

पूर्वम्-अग्रतनप्रदेशे कुलिङ्गिनमदृष्ट्वा उत्क्षिप्ते-उत्पादिते पादे यत्पुनः पश्यति कुलिङ्गिनं समापतितं न पादं निवर्त्तयितुं शक्नोति । तत एवं यस्तस्य व्यापादनमेतत्सहसाकरणम् ।

सांप्रतमज्ञानमाह—

अन्नयरपमाएणं, असंपउत्तस्स नोवउत्तस्स ।
इरियाइसुं भूयत्थे, अवट्टतो एयमन्नाणं ॥ २३० ॥

पञ्चानां प्रमादानाम्-अन्यतरेणाऽपि प्रमादेनाऽसंप्रयुक्तस्याऽऽकोडीकृतः स्यात्, एवम् ईर्यादिषु समितिषु भूतार्थेन तत्त्वतो वर्त्तमानस्य यद्भवनम् एतदज्ञानम् ॥

अधुना "भीएण व पेल्लिएण व परेण" (२२८ x)
इत्यस्य व्याख्यानमाह—

भीतो पलायमाणो, अभियोगभएण वाऽवि जं कुज्जा ।
पडितो वाऽपडितो वा, पेल्लिज्जउ पेल्लिओ पाणे ॥२३१॥

अभियोगभयेन भीतः पलायमानो यत् कुर्यात्प्राणव्यपरोपणादि तत् भीतेनेति द्रष्टव्यं, तथा परेण प्रेरितः सन्पतितोऽपतितो वा प्राणान् द्वीन्द्रियाऽऽदीन् एकेन्द्रियादीन् वा प्रेरयेत ।

संप्रति व्यसनाऽऽदिपदानि व्याचष्टे—

जूयादि होइ वसणं, पंचविहो खलु भावपमादो उ ।
मिच्छत्तभावणा उ, मोहो तह रागदोसा य ॥ २३२ ॥

द्यूताऽऽदि भवति व्यसनं प्रमादः खलु मद्यादिभेदाद्भवति पञ्चविधः मिथ्यात्वभावना मोहः रागद्वेषौ सुप्रतीतौ ।

एएसिं ठाणाणं, अन्नयरे कारणे समुप्पन्ने ।
तो आगमवीमंसं, करेंति अत्ता तदुभयेणं ॥ २३३ ॥

एतेषामनन्तरोदितानां सहसा प्रभृतीनां स्थानानामन्यतरस्मिन्कारणे समुत्पन्ने सति आलोचनायां प्रदत्तायामागमविमर्शमाप्ता उभयेन सूत्रार्थलक्षणेन कुर्वन्ति । यथाऽयं सहोऽयमसहः अयमेतावता शोत्स्यति अयं नेति । अथवा-किमनेन सम्यगालोचितं, किं वा नेति ।

सांप्रतमागमविमर्शमेव व्याख्यानयति—

जइ आगमो य आलो-यणा य दोण्णि वि समं तु निवयंति ।
एसा खलु वीमंसा, जो व सहो जेण वा सुज्झे ॥२३४॥

यद्यागमश्चालोचना च एते द्वे अपि समकं-परस्परमविसंवादितया निपततो यथैव तस्याऽऽगमस्तथैवेतरस्याऽऽलोचना । यथैव तस्याऽऽलोचना तथैवागमिन आगमः । एष खलु आगमविमर्श उच्यते, अस्मिन् सति शोधिं ददति नाऽन्यथा, यदि वा-यः सहोऽसहो वा येन वा यः शुद्ध्यति । एतत् परिभावनमागमविमर्शः । व्य० १० उ० ।

("नाणमादीणि अत्ताणि" (२३५) गाथा 'अत्त' शब्दे १ प्रथमभागे गता तथैव व्याख्याता च)

संप्रति 'उभय' शब्दव्याख्यानार्थमाह—

सुत्तं अत्थो उभयं, आलोयण आगमो वयति उभयं।
जं तदुभयंति वुत्तं, तत्थ इमा होति परिभासा ॥२३६॥

सूत्रम्, अर्थ इत्युभयं तेनागमविमर्शं कुर्वन्ति किमयं सह इत्यादि, अथवा-आलोचनमागमविमर्शं विदधाति। यथा किं यथास्थिताऽस्याऽऽलोचना, किं वा नेति। तत्र यत्तदुभयमित्युक्तं तत्र इयं वक्ष्यमाणा परिभाषा भवति।

तामेवाह—

पडिसेवणाइयारे, जइ नाउट्टइ जहक्कमं सव्वे।
न हु देंती पच्छित्तं, आगमववहारिणो तस्स ॥२३७॥

यदि प्रतिसेवनातिचारान् यथाक्रमं सर्वान् यदि नाकुट्टयति-नाऽऽलोचयति तदा तस्यागमव्यवहारिण प्रायश्चित्त न ददति। यदि पुनः प्रतिसेवनातिचारान् यथाक्रमं सर्वान् आकुट्टयति-आलोचयति तदा तस्यागमव्यवहारिण प्रायश्चित्तं ददति।

कहे(हि)सु सव्वं जो वुत्तो, जाणमाणोऽवि गूहति।
न तस्स दिंति पच्छित्तं, बिंति अन्नत्थ सोहय ॥२३८॥

यान् सर्वानालोचयन् कथय सर्वं मा निगूहय इति य उक्तः सन् जानानोऽपि गूहयति तस्य प्रायश्चित्तमागमव्यवहारिणो न ददति, किंतु ब्रुवते-अन्यस्य समीपे गत्वा शोधय-शोधिं गृहाण।

न संभरति जो दोसे, सब्भावा न य मायया।
पच्चक्खी साहए ते उ, माइणो उ न साहए ॥२३९॥

यो दोषान् सद्भावतो न स्मरति न मायया तस्य प्रत्यक्षी-प्रत्यक्षागमज्ञानी कथयति।

जइ आगमतो आलो-यणा व दोऽवि विसमं निवइयाइं।
न हु देंति य पच्छित्तं, आगमववहारिणो तस्स ॥२४०॥

यद्यागम आलोचना च एते द्वे अपि विषमं निपतिते यथा तेनालोचित तथागमज्ञानी तस्यातीचारं न प्रेक्षते किंत्वन्यादृशम्, ऊनमधिकं वा इत्यर्थ.। तदा तस्याऽऽगमव्यवहारिणः प्रायश्चित्त न ददति।

जइ आगमो य आलो-यणा य दोन्नि वि समं निवडियाइं।
देंति ततो पच्छित्तं, आगमववहारिणो तस्स ॥ २४१ ॥

यद्यागम आलोचना च एते द्वे अपि सम निपतिते, यथाऽपराधमालोचनामागमज्ञानी पश्यतीत्यर्थ। ततस्तस्यागमव्यवहारिण प्रायश्चित्त ददति। व्य० १० उ०।

आलोचनार्हस्याष्टादश स्थानानि षट्त्रिंशत्स्थानान्युक्त्वा प्रतिपादितम्—

छत्तीसेयाणि ठाणाणि, भणियाणणुपुव्वसो।
जो कुसलो एएहिं, ववहारी सो समक्खातो ॥ ३२८ ॥

एतानि-अनन्तरोदितानि स्थानानि षट्त्रिंशत् आनुपूर्व्या-क्रमश,-क्रमेण भणितानि यस्तेषु कुशल' स व्यवहारी-आगमव्यवहारी समाख्यात.।

पुनरपि यादृशा आगमव्यवहारिणस्तादृशानाह—

अट्ठहिँ अट्ठारसहिं,
दसहि य ठाणेहिँ जे अपरोक्खा।
आलोयणदोसेहिं,
छहियं ठाणेहिं जे अपरोक्खा ॥ ३२९ ॥
आलोयणठाणेहिं,
छहियं ठाणेहिँ जे अपरोक्खा।
पंचहिँ नियंठेहिं,
पंचहि य चरित्तमंतेहिं अट्ठसु ॥ ३३० ॥

अष्टसु आचारवत्वप्रभृतिषु स्थानेषु अष्टादशसु व्रतषट्कप्रमुखेषु दशसु च प्रायश्चित्तस्थानेषु ये अपरोक्षा.-प्रत्यक्षज्ञानिन, तथा-दशसु आलोचनादोषेषु वा ये अपरोक्ष-विज्ञाना —प्रत्यक्षविज्ञानिन, तथा—दशस्वालोचनागुणेषु षट्सु च स्थानेषु अनन्तरभाविषु ये अपरोक्षा.-साक्षाज्ज्ञानिन.स्तथा पञ्चसु निर्ग्रन्थेषु पुलाकादिषु पञ्चसु चारित्रवत्सु-सामायिकादिसयमवत्सु ये प्रत्यक्षज्ञानिनस्ते आगमव्यवहारिण.। व्य० १० उ०।

आगमव्यवहारिणश्च यावदार्यरक्षितमेवाऽभूवन्—

तो जाव अज्जरक्खिय, आगमववहारिणो वियाणित्ता।
न भविस्सति दोसो त्ति, तो वायंती उ छेदसुयं ॥६२॥

यावदार्यरक्षितास्तावदागमव्यवहारिणोऽभूवन् ते चाऽऽगमव्यवहारवलन विज्ञाय यथा एतस्याश्छेदश्रुतवाचनायां दोषो न भविष्यतीति सयतीमपि छेदश्रुतं वाचयन्ति स्म।

आरेणागमरहिया, मा विद्दाहिंति तो न वाएंति।
तेण कहं कुव्वंतु, सोहिं तु अयाणमाणी ती ॥ ६३ ॥

आर्यरक्षितादारत. आगमरहितास्ततस्ते मा छेदश्रुताध्ययनत. संयत्यो विद्रास्यन्ति-विनङ्क्ष्यन्तीति हेतोश्छेदश्रुतानि सयतीर्न वाचयन्तीति, अत्राह-तेन छेदश्रुताध्ययनाभावेन कथ ता. सयत्योऽजानाना शोधिं कुर्वन्तु,

अत्राऽऽचार्य आह—

तो जाव अज्जरक्खिय, सट्ठाणे पगासयंसु वइणीतो।
असतीए विवक्खमि वि, एमेव य होंति समणाऽन्नि ।६४।

यत पूर्वमागमव्यवहारिण स्युश्छेदश्रुत च संयत्य अधीयेरन् ततो यावदार्यरक्षितास्तावद् व्रतिन्यः स्वस्थाने-स्वपक्षे संयतीना प्रकाशनामकार्षु, स्वपक्षाभावे विपक्षेऽप्यालोचितवत्य. श्रमण्य एवमेव श्रमणा अपि भवन्ति ज्ञातव्याः। किमुक्त भवति-श्रमणा, अपि स्वपक्षे आलोचितवन्त., तदलाभे विपक्षेऽपि, श्रमणीना पार्श्वे इत्यर्थ दोषाभावात्, आगमव्यवहारिभिर्हि दोषाभावमवबुध्य छेदश्रुतवाचना सयतीना दत्ता नान्यथेति। आर्यरक्षितादारत पुन श्रमणानामेव समीपे आलोचयन्ति श्रमण्योऽपि, श्रमणानामागमव्यवहारच्छेदात्। व्य० ५ उ०।

आगमववहारि(न्)-आगमव्यवहारिन्-पु०। प्रत्यक्षज्ञानिनि, व्य०।

आगम-सुय ववहारी, आगमतो छव्विहो उ ववहारी।

केवलि मणोहि चोद्स,-दस-नवपुव्वी उ नायव्वो ॥ १३५ ॥

तत्राऽऽगमतो व्यवहारी षड्विध , तद्यथा-केवली-केवलज्ञानी 'मणोहि' त्ति-पदैकदेशे पदसमुदायोपचारात् मन पर्यायज्ञानी, अवधिज्ञानी, 'चोद्सदसनवपुव्वी' ति-पूर्वि-शब्द प्रत्येकमभिसम्बध्यते चतुर्दशपूर्वी दशपूर्वी नवमपूर्वी च ज्ञातव्या एते चागमव्यवहारिण प्रत्यक्षज्ञानिन उच्यन्ते, चतुर्दशादिपूर्वबलसमुत्थस्यापि ज्ञानस्य प्रत्यक्षतुल्यत्वात् । व्य० १ उ० । जी० । ( विस्तरत आगमव्यवहारिण. ' आगमववहार ' शब्देऽस्मिन्नेव भागेऽनुपदमेवोक्ता )

आगमविहि-आगमविधि-पुं० । आगमो-गणधरादिविरचितशास्त्रपद्धतिस्तस्य विधि । आगमन्याये , दर्श० ।

जावज्जीवं आगम-विहिणा चारित्तपालणं पढमो ।( ६ )

तत्र यावज्जीवं-यावत्प्राणधारणं; नतु परपरिकल्पितन्यायेनेत्यर्थ. । आगमो-गणधरादिविरचितशास्त्रपद्धतिस्तस्य विधिस्तेन-आगमन्यायेनेत्यर्थ । वयोरिक्तीकरणं चारित्रं तस्य पालनं यत्तत्सकलसमितिगुप्तिप्रत्युपेक्षणाद्यनुष्ठानकरणं, तत्किमित्याह-प्रथम -आद्यस्तस्य मुख्यवृत्त्यैव समस्तसमीहितप्रापकत्वेन प्रधानत्वात् । दर्श० ३ तत्त्व ।

आगमवीमंस-आगमविमर्श-पुं० । आगमपरिभावने , व्य० १० उ० । ( आगमविमर्शस्वरूपं विस्तरतः "जइ आगमो० ॥ २३४ ॥ " इत्यादि व्यवहारदशमोद्देशगाथया 'आगमववहार' शब्देऽस्मिन्नेव भागेऽनुपदमेवोक्तम् )

आगमसंपएण-आगमसम्पन्न-पुं० । विशिष्टश्रुतधरे , दश० । १ अ० ।

आगमसज्जोग-आगमसद्योग-पुं० । आगमनमागम'-सम्यक्परिच्छेदस्तेन सद्योग -सद्व्यापार. आगमसहितो वा य सद्योग सत्क्रिया । सम्यक्परिच्छेदात्मक सद्व्यापारे, आगमसहितायां सत्क्रियायाञ्च । षो० ।

रागादयो मलाः स-त्वागमसद्योगतो विगम एषाम् ।
तदयं क्रियात एव हि, पुष्टिः शुद्धिश्च चित्तस्य ॥ ३ ॥

षो० ३ विव० ।

(अस्य व्याख्या 'धम्म' शब्दे चतुर्थभागे २६६६ पृष्ठे वक्ष्यते)

आगमसत्थ-आगमशास्त्र-न० । आ-अभिविधिना सकलश्रुतिविषयव्याप्तिरूपेण मर्यादया वा यथावस्थितप्ररूपणारूपया गम्यन्ते-परिच्छिद्यन्तेऽर्था येन स आगम । नं० । शिष्यते शिष्यते-वो ध्यतेऽनेनेति शास्त्रम् आगमरूपं शास्त्रम् आगमशास्त्रम् । श्रुतज्ञाने, विशे० ।

अत्र भाष्यम्—

सासिज्जइ जेण तयं,
सत्थं त वा विसेसियं नाणं ।
आगम एव य सत्थं,
आगमसत्थं तु सुयनाणं ॥ ५५६ ॥ विशे० ।

आगमसत्थग्गहणं,
जं बुद्धिगुणेहिँ अट्ठहि दिट्ठं ।
बेंति सुयनाणलंभं,
तं पुव्वविसारदा धीरा ॥ १८३ ॥ (सूत्र ५८+)

आ-अभिविधिना सकलश्रुतिविषयव्याप्तिरूपेण मर्यादया वा यथाऽवस्थितप्ररूपणारूपया गम्यन्ते-परिच्छिद्यन्ते अर्थाः येन स आगम । नं० । " पुनाम्नि घ. " ॥ ५ । ३ । १३० ॥ ( सिद्धहे० ) इति करणे घ' । आ० म० १ अ० २१ गाथा टी० । स चैवं व्युत्पत्त्या अवधिकेवलादिलक्षणोऽपि भवति ततस्तद्व्यवच्छेदार्थ विशेषणान्तरमाह-शास्त्रेति-शिष्यतेऽनेनेति शास्त्रम् आगमरूपं शास्त्रम् आगमशास्त्रम् आगमग्रहणेन षष्टितन्त्रादिकुशास्त्रव्यवच्छेद.,तेषां यथावस्थितार्थप्रकाशनाभावतोऽनागमत्वात् आगमशास्त्रस्य ग्रहणमागमशास्त्रग्रहणं यद् बुद्धिगुणैर्वक्ष्यमाणै. कारणभूतैरष्टभिर्दृष्टं, तदेव ग्रहणं श्रुतज्ञानस्य लाभं ब्रुवते पूर्वेषु विशारदा. विपश्चित. धीरा-व्रतपालने स्थिरा , किमुक्तं भवति-यदेव जिनप्रणीतप्रवचनार्थपरिज्ञानं तदेव परमार्थत. श्रुतज्ञानं, न शेषमिति । नं० । विशे० । आ० म० । आ० चू० ।

आगमसिद्ध-आगमसिद्ध-पुं० । आगमो-द्वादशाङ्गं प्रवचनम् तत्रासाधारणार्थावगमात् सिद्ध आगमसिद्धः । सिद्धभेदे, ध० २ अधि० ।

आगमसिद्धो सव्वंऽ-गपारओ गोयमो व्व गुणरासी ।

आगमसिद्ध. सर्वाङ्गपारगो-द्वादशाङ्गवित् अयं च महातिशयवानेव, यत उक्तम्—" सखाता ते वि भवे साहइ, " इत्यादि इयं, च गौतम ! अवगुणराशिरवगन्तव्य. अत्र भूयांस. सातिशयचेष्टिता उदाहरणम् । आ० म० १ अ० । भावार्थ कथानकादवसेय., तच्चेदम्-"तत्थाऽऽगमसिद्धो किर सयंभूरमणे वि मच्छाईया । जं चिट्ठंति स भयव उवउत्तो जाणइ । " आ० म० १ अ० ।

आगमसुद्ध-आगमसुद्ध-त्रि० । आगम'--आप्तवचनं तेन शुद्ध -तदुक्तार्थानुवादत निर्दोष आगमशुद्ध. । आगमाऽनुवादत निर्दोषे, पञ्चा० ।

स्तवविधिमधिकृत्य--

थवविहिमागमसुद्धं, सपरेसिमणुग्गहट्ठाए ॥ १ ॥

आगम -स्तवपरिज्ञानादिकमाप्तवचनं तेन शुद्ध -तदुक्तानुवादेन निर्दोष आगमशुद्धस्तं, किमर्थमित्याह-स्वपरयोरात्मतदन्ययोरनुग्रह -उपकारस्तल्लक्षणो योऽर्थ -पदार्थ प्रयोजनं वा सोऽनुग्रहार्थस्तस्मै अनुग्रहार्थाय, तत्र स्वानुग्रह' प्रावचनिकार्थानुवादे निर्मलबोधभावात् परोपकारद्वारायातकर्मक्षयाच्च । परानुग्रहस्तु परेषा निर्मलबोध तत्पूर्वकक्रियासंपादनात्परंपरया निर्वाणसंपादनाच्चेति गाथार्थ. । पञ्चा० ६ विव० ।

आगमाऽऽभास-आगमाऽऽभास-पुं० । अनाप्तवचनसमुत्थे ज्ञाने, रत्ना० ।

आगमाऽऽभासमाह —

अनाप्तवचनप्रभवं ज्ञानमागमाभासमिति ॥ ८३ ॥

अभिधेयं वस्तु यथाऽवस्थितं यो जानीते, यथाज्ञान चाभिधत्ते स आप्त उक्त । तद्विपरीतोऽनाप्त । तद्वचनसमुत्थ ज्ञानम्-आगमाऽऽभासं ज्ञेयम् ।

अत्रोदाहरन्ति—

यथा मेकलकन्यकायाः कूले तालहिन्तालयोर्मूले सुलभाः पिण्डखर्जूराः सन्ति, त्वरितं गच्छत गच्छत शावकाः इति ॥ ८४ ॥

यथाऽऽक्रान्तो ह्यनाप्तः पुरुषः क्रीडापरवशः सन् आत्मनो विनोदार्थं किञ्चन वस्त्वन्तरमलभमानः शावकैरपि समं क्रीडाभिलाषेणेदं वाक्यमुच्चारयति । रत्ना० ६ परि० ।

आगमिय-आगमिक-त्रि० । आगमादागत ठञ् । आगमप्राप्ते, वाच० । आगमगम्ये च । पं० व० । "आगमिअमागमेणं ॥६६१॥" आगमिक वस्त्वागमेन, यथा स्वर्गे अप्सरस, उत्तरा कुरवः इति । पं० व० ४ द्वार ।

आगमित-त्रि० । अर्धन्ते । वाच० । गृहीते, "उवधारी त्ति वा अहीतंति वा आगमियति वा गृहीतंति वा एगट्ठा" नि० चू० १ उ० । ज्ञाते, वाच० । "नायं आगमिय य एगट्ठं" ॥२०८४॥ ज्ञातम् आगमितमित्येकार्थम् । व्य० १० उ० । पठिते, प्रेरणे, णिच् क्त । यापिते, प्रापिते च । वाच० ।

आगमिस्स(त्)-आगमिष्यत्-त्रि० । आगामिनि, "जे य आगमिस्सा अरहंता भगवंतो" ( सूत्र-१२६+ ) । ये चागामिन । आचा० १ श्रु० ४ अ० १ उ० । आगामिनि काले, "किमस्सऽतीत किंवाऽऽगमिस्स०" ॥१॥ ( सूत्र-११७+ ) । किंवाऽऽगमिष्यति-आगामिनि काले सुखाभिलाषिणा दु खक्षिपो भावीति । आचा० १ श्रु० ३ अ० ३ उ० । "सिज्झिस्सइ आगमिस्से णं" ( सूत्र-६७२+ ) । आगमिष्यति काले सेत्स्यति । स्था० ६ ठा० ३ उ० । "सो आगमिस्साए जिणो भविस्सइ" 'आगमिस्साए' आयत्याम् । आगामिनि काले, आव० ३ अ० । "आगमिस्सा वि सुव्वया०" ( २५+ ) आगामिनि चानन्ते काले तथाभूता सत्संयमानुष्ठायिनो भविष्यन्ति । सूत्र० १ श्रु० १५ अ० । "आगमिस्स च पावग०" ( २१४ ) आगामिनि काले यत्करिष्यते तत्सर्वमिति । सूत्र० १ श्रु० ८ अ० । "हवइ पुणो आगमिस्साए" ( ४१४ ) 'आगमिस्साए' त्ति-एष्यत्काले इत्यर्थ, प्राकृतत्वादत्रापि विभक्तिव्यत्यय । आतु० । "आगमिस्सेण होक्खइ" ॥ (१+) ( सूत्र-५५६+ ) आगमिष्यता कालेन हेतुना भविष्यतीत्यर्थ । स्था० ७ ठा० ३ उ० । उत्तरकालभाविनि च । "पडिकमे आगमिस्साण" ( ॥४२॥+ ) आगमिष्याणाम्-उत्तरकालभाविनाम् । आतु० ।

आग(म्म)मित्ता-आग(म्य)त्य-अव्य० । आ-गम-ल्यप् वा मोलोपे तुक् । आगमनं कृत्वेत्यर्थे । वाच० । ज्ञात्वेत्यर्थे, "आगमेत्ता आणविज्जा" ( सूत्र-१५६+ )ज्ञात्वाऽऽज्ञापयेदिति । आचा० १ श्रु० ५ अ० ४ उ० । "आगम्मुक्कुडुओ सतो" ॥ २२ ४ ॥ आगत्योत्कुटुक त्यक्तासन इति । उत्त० १ अ० ।

आगमेयव्व-आगमयितव्य-त्रि० । आगमनम्-आगमनपरिज्ञानम् । तदगाचरत्वमानयितव्ये, बृ० १ उ० २ प्रक० ।

आगमेसि(त्)-आगमिष्यत्-त्रि० । आगामिनि, स्था० ८ ठा० ३ उ० । कल्प० । आगमिष्यति काले, प्रश्न० १ संव० द्वार ।

आगमेसिभद्द-आगमिष्यद्भद्र-न० । आगमिष्यति काले भद्रं कल्याणं यत्तदागमिष्यद्भद्रम् । आगमिष्यत्कालभाविनि कल्याणे, प्रश्न० १ आश्र० द्वार । आगमिष्यद्भद्रं यस्येति । आगमिष्यत्कालभाविकल्याणवति, स्था० ।

समणस्स णं भगवओ महावीरस्स अट्ठ सया अणुत्तरोववाइयाणं गइकल्लाणाणं०जाव आगमेसिभद्दाणं उक्कोसिया अणुत्तरोववाइसंपया होत्था ॥ १ ॥ ( सूत्र-६५३ )

आगमिष्यत्भद्रं—निर्वाणलक्षणं येषां ते तथा । स्था० ८ ठा० ३ उ० । आगामिभवे सेत्स्यमानत्वात् । कल्प० १ अधि० ६ क्षण ।

आगमिष्यद्भद्रकर्मकारणान्याह—

दसहिं ठाणेहिं जीवा आगमेसिभद्दत्ताए कम्मं पगरेंति, तं जहा—अनिदाणयाए १, दिट्ठिसंपन्नयाए २, जोगवाहियाए ३, खंतिखमणयाए ४, जिइंदियाए ५, अमाइल्लयाए ६, अपासत्थयाए ७, सुसामन्नयाए ८, पवयणवच्छल्लयाए ९, पवयणउब्भावणयाए १० ।( सूत्र-७५८)

'दसहिं' इत्यादि, आगमिष्यद्-आगामिभवान्तरे भावि भद्रं-कल्याण, सुदेवत्वलक्षणमनन्तर सुमानुषत्वप्राप्त्या मोक्षप्राप्तिलक्षण च येषा ते आगमिष्यद्भद्रास्तेषां भाव आगमिष्यद्भद्रता तस्यै आगमिष्यद्भद्रताये, तदर्थमित्यर्थ, आगमिष्यद्भद्रतया वा-कर्म शुभप्रकृतिरूपं प्रकुर्वन्ति-बध्नन्ति, तद्यथा-निदायते-लूयते ज्ञानाद्याराधनालता आनन्दरसोपेतमोक्षफला येन परशुनेव देवेन्द्रादिगुणर्द्धिप्रार्थनाऽध्यवसानेन तन्निदानम्-अविद्यमान तद्यस्य सोऽनिदानस्तद्भावस्तत्ता तया हेतुभूतया, निरुत्सुकतयेत्यर्थ । १ । दृष्टिसम्पन्नतया-सम्यग्दृष्टितया । २ । योगवाहितया-श्रुतोपधानकारितया, योगेन वा-समाधिना सर्वत्रानुत्सुकत्वलक्षणेन वहतीत्येवंशीलो योगवाही तद्भावस्तत्ता तया । ३ । क्षान्त्या क्षमते इति क्षान्तिक्षमणः क्षान्तिग्रहणमसमर्थताताव्यवच्छेदार्थं यत -असमर्थोऽपि क्षमत इति क्षान्तिक्षमणस्य भावस्तत्ता तया । ४ । जितेन्द्रियतया—करणनिग्रहेण । ५ । 'अमाइल्लयाए' त्ति- माइल्लो-मायावांस्तत्प्रतिषेधेनामायावास्तद्भावस्तत्ता तया । ६ । तथा-पार्श्वे बहिर्ज्ञानादीना देशत सर्वतो वा तिष्ठतीति पार्श्वस्थ, ( स्था० ) ( पार्श्वस्थलक्षणम् 'पासत्थ' शब्दे पञ्चमभागे दर्शयिष्यते ) पार्श्वस्थस्य भावः पार्श्वस्थता न सा अपार्श्वस्थता तया । ७ । तथा-शोभन पार्श्वस्थादिदोषवर्जिततया मूलोत्तरगुणसम्पन्नतया च स चासौ श्रमणश्च साधु सुश्रमणस्तद्भावस्तत्ता तया । ८ । तथा-प्रकृष्ट-प्रशस्त, प्रगतं वा वचनम्-आगम -प्रवचन- द्वादशाङ्ग तदाधारो वा सङ्घस्तस्य वत्सलता हितकारिता प्रत्यनीकत्वादिनिरासेनेति प्रवचनवत्सलता तया । ९ । तथा-प्रवचनस्य-द्वादशाङ्गस्योद्भावनम्-प्रभावनं प्रावचनिकत्वधर्मकथावादादिलब्धिभिर्वर्णवादजननं प्रवचनोद्भावन तदेव प्रवचनोद्भावनता तयेति । १० । स्था० १० ठा० ३ उ० ।

आगय-आगत-त्रि० । आ-गम्-क्त । आयाते, । विशे० । भ० ।

वाच० । ज्ञाते, ज्ञा० १ श्रु० ७ अ० । उत्पन्ने, सूत्र० १ श्रु० १ अ० १ उ० ।

आगयमिवागयं तं, तत्तो जत्तो समुब्भवो जस्स ।
सपरपरओ य जओ, तमागयमिओ तदुवयारो ॥१०८४॥

'जत्तो' त्ति-यतो यस्मात् रूपकादेर्घटादेर्वा सकाशाद्यस्य भोजनादे रूपादिविज्ञानस्य वा समुद्भव-उत्पत्तिः 'तं' ति-तद्भोजनादिकं रूपादिज्ञानं वा वस्तु 'तत्तो' त्ति-ततो रूपकादेर्घटादेर्वा सकाशादागतमिवागतमुच्यते, हिमवत्समागतगङ्गाप्रवाहस्येव तस्य तद्धेतुकत्वादित्यर्थः । (विशे० ।) आगतशब्दश्चेहोत्पत्तिवचनो, बोधवचनो मन्तव्यः—इदमत्र हृदयम्-यस्य वस्तुनो यस्माद्वस्तुनः सकाशात्समुद्भवस्तद्वस्तुनः आगतमिवागतं व्यपदिश्यते । यथा कार्षापण-रूपकादिभ्यः समुद्भूतं धान्यभोजनादि घटाद् समुद्भूतं रूपादिज्ञानं वा तत समागतमित्युच्यते । विशे० । उपस्थिते वाच० । "आगयसमए" (सूत्र-८२+) । आसन्नीभूतोऽवसरो यस्य स इत्यर्थः । आ० १ श्रु० ६ अ० । प्राप्ते, अभिन्नमआगया (सूत्र-१०६+) । आचा० १ श्रु० ३ अ० १ उ० । प्राप्ते, वाच० । "सिरीअतुलमागया" ॥७६+॥ (सूत्र-३०+) श्री-लक्ष्मीरतुलाऽसाधारणाऽऽगता-प्राप्तेति । स० ३० सम० । भावे क्त । आगमने, न० । वाच० ।

आगयगंध-आगतगन्ध-त्रि० । जातसुरभिगन्धे, ज्ञा० १ श्रु० ७ अ० ।

आगयपण्ण-आगतप्रज्ञ-त्रि० । आगता-उत्पन्ना प्रज्ञा यस्यासावागतप्रज्ञः । संजातकर्त्तव्याऽकर्त्तव्यविवेके, सूत्र० । "समितीसु गुत्तीसु य आगयपण्णे" ॥४×॥ सूत्र० १ श्रु० १४ अ० ।

आगयपण्णाण-आगतप्रज्ञान-त्रि० । आगतं-स्वीकृतं प्रज्ञानम् सदसद्विवेको यस्य स तथा । स्वीकृतसदसद्विवेके, "सया आगयपण्णाणे" (सूत्र-१२६+) । आचा० १ श्रु० ५ अ० २ उ० । "आगयपण्णाणाणं किसा बाहा भवंति" (सूत्र-१८६×) । आगतं प्रज्ञानं पदार्थाविर्भावकं येषां ते तथा तेषामागतप्रज्ञानानां तपसा परिषहातिसहनेन च कृशा बाहवो भुजा भवन्ति । यदि वा-सत्यपि महोपसर्गपरिषहाद्या-द्यागतप्रज्ञानत्वाद् बाधा-पीडा कृशा भवन्ति । आचा० १ श्रु० ६ अ० ३ उ० ।

आगयपण्हया-आगतप्रश्रवा-स्त्री० । आगतप्रश्रवायाम्, "तएणं सा देवाणंदा माहणी आगयपण्हया" (सूत्र-३८०×) आयातप्रश्रवा पुत्रस्नेहादागतस्तनस्तन्येत्यर्थः । भ० ९ श० ३३ उ० । अन्त० ।

आगयसम-आगतश्रम-त्रि० । उत्पन्नश्रमे कल्प० १ अधि० ३ क्षण ।

आगयसमय-आगतसमय-त्रि० । आसन्नीभूतोऽवसरो यस्य स । आसन्नीभूतावसरे आ० १ श्रु० ६ अ० ।

आगर-आकर-पुं० । आकुर्वन्त्यस्मिन्नित्याकरः । उत्त० ३० अ० । आगत्य तस्मिन् कुर्वन्तीत्याकरः । आचा० १ श्रु० १ अ० १ उ० । (तस्यैकार्थिकानि 'आयारंग' शब्देऽस्मिन्नेव भागे द्रष्टव्ये) । प्रश्न०, "धाउमणिसिलप्पवालरयणागरे य सार्हिति (सूत्र-७+) । धातुमणिशिलाप्रवालरत्नानामाकरा-खनयस्तान् साधयन्तीति । प्रश्न० १ आश्र० द्वार । "गुणआगरं" ॥५+॥ गुणानां-ज्ञानदर्शनचारित्राणामाकरं खनिमिति । उत्त० १६ अ० । निधाने, "गुणसयाऽऽगरो संघो" ॥२४+॥ गुणशतानामनेकेषां गुणानामाकरो-निधानम् गुणशताकरः संघः । व्य० २ उ० । बृ० । मर्य्यादयाऽभिविधिना वाऽऽक्रियन्ते वज्रादीनि तेष्विति । ओघ० । हिरण्याकरादौ व्य० १ उ० । जी० । प्रज्ञा० । आचा० । रा० । स च हिरण्याद्युत्पत्तिभूमिः । ज्ञा० १ श्रु० १७ अ० । ओघ० । उत्त० । ताम्रादेरुत्पत्तिस्थानम् । आचा० १ श्रु० १ चू० १ अ० २ उ० । लोहाद्युत्पत्तिभूमिः । स्था० २ ठा० ४ उ० । लोहाद्युत्पत्तिस्थानम् । अनु० । प्रश्न० । भ० । लोहादिधातुजन्मभूमिः । ग० १ अधि० । लवणाद्युत्पत्तिभूमिः । ज्ञा० १ श्रु० १ अ० । औ० । लवणाद्युत्पत्तिस्थानमिति । प्रश्न० ४ आश्र० द्वार । यत्र सन्निवेशे लवणाद्युत्पद्यते । स्था० ६ ठा० ३ उ० । रूप्यसुवर्णाद्युत्पत्तिस्थानम् । नं० । भ० । आकीर्य्यन्ते धातवोऽत्र कृ-अप् । रत्नाद्युत्पत्तिस्थाने, वाच० । "अयमाइआगरा खलु" ॥२८४×॥ अयो-लोहं तदादय आकरा उच्यन्ते यत्र पाषाणं धातुधमनादिना लोहमुत्पाद्यते स अयआकरः, आदिशब्दात्-ताम्ररूप्याद्याकरपरिग्रहः । बृ० १ उ० २ प्रक० । "वइरे कणगे य रयय-लोहे य । चत्तारि आगरा खलु" ॥८+॥ वज्राणि-रत्नानि तेषामाकरः-खनिर्वज्राकरः, "चिंतालोहागरिए" त्ति इत्यतः सिंहावलोकितन्यायेनाऽऽकरग्रहणं संबध्यते एतेन कारणेन 'होइ उ' त्ति-इत्यस्माद्भवति क्रिया सर्वत्र मीलनीयेति, कनकं-सुवर्णं तस्याऽऽकरो भवति द्वितीयः, रजतं-रूप्यं तद्विषयः तृतीय आकारो भवति, चशब्दः समुच्चये, अनेकभेदभिन्नं रूप्याकरं समुच्चिनोति, 'लोहे य' त्ति-लोहमयस्तस्मिन् लोहे लोहविषयश्चतुर्थ आकरो भवति, चशब्दो मृदुकठिनमध्यलोहसमुच्चायकः । चत्वार इति संख्या आक्रियन्ते एतेष्वित्याकरास्तथा च मर्यादया अभिविधिना वा क्रियन्ते वज्रादीनि तेष्विति खलुशब्दो विशेषणे । ओघ० । (एतेषां प्राधान्याऽप्राधान्यविवेक-'अणुओग' शब्दे १ भागे ३५७ पृष्ठे गतः) ।

आकरशब्दस्य चतुर्धा निक्षेपः—नामादिस्तत्र व्यतिरिक्तो रजतादिः, भावाऽऽकरेऽयमेव ज्ञानादिः, तत्प्रतिपादकश्चायमेव ग्रन्थो, निर्जरादिरत्नानामत्र लाभात् । आचा० १ श्रु० १ अ० १ उ० । उत्पत्तिभूमौ, अनु० । "कमलाऽऽगरनलिणीसंडबोहए" (सूत्र-१६×) कमलानामाकरा-उत्पत्तिभूमयो ह्रदादिजलाशयविशेषास्तेषु यानि नलिनीखण्डानि तेषां बोधको यः स तथेति । अनु० ।

अयाऽऽगरेइ वा, तंबागरेइ वा, तउआगरेइ वा, सीसागरेइ वा, रुप्पागरेइ वा सुवण्णागरेइ वा । (सूत्र-५९७×)

अयआकरा-लोहाकरा यत्र लोहं ध्मायते । स्था०८ठा०३उ० ।

तत्थ णं बहवे हिरण्णागरा य, सुवण्णागरा य, रयणागरा य, वइरागरा य । (सूत्र-१३२×)

हिरण्याऽऽकराँश्च, सुवर्णाकराँश्च, रत्नाकराँश्च, वैराकराँश्च तत्तदुत्पत्तिभूमीरित्यर्थः । ज्ञा० १ श्रु० १७ अ० । स्थानमात्रे च । व्य० ।

तत्थ न कप्पइ वासो, गुणाऽऽगरा जत्थ नऽत्थि पंच इमे।
आयरियउवज्झाए, पवत्तिथेरे य गीयत्थे ॥ ३२४ ॥

वणिज इव राजाद्यभावे साधोरपि तत्र गच्छे वासो न कल्पते, यत्र इमे-वक्ष्यमाणा गुणानामाकरा -स्थानानि गुणाकरा पञ्च न सन्ति, के ते इत्याह-आचार्य, उपाध्याय, प्रवृत्ति, स्थविरो, गीतार्थश्च। व्य० १ उ०। आकुर्व्वेन्ति, संघीभूय कुर्व्वन्ति व्यवहारमत्र आ-कृ-घ। समूहे, श्रेष्ठे च। वाच०। अरघट्टादिसमीपस्थे प्रदेशे, अरघट्टादिसमीपे, प्रभूता यत्र तुषा भवन्ति स आकर उच्यते। बृ० ४ उ०। को पुण आगरो भएणति—जत्थ घरट्टादिसमीवे सुवह जवभुसुट्ट, सो, आगरो भएणति। नि० चू० १ उ०। भिल्लपल्ल्यादौ, यत्राऽलावूनि भवन्ति। "आगरपल्लीमाई" ॥ ३४६ × ॥ आकरो नाम-भिल्लपल्ली, भिल्लकादं वा तत्र प्रायोऽलावूनि प्राप्यन्ते। बृ० ३ उ०।

आगर-पु०। आगीर्य्यते-उद्गमितुमारभ्यते चन्द्रमा अत्र। आगृ आधारे अप्। अमावास्यायाम्, वाच०।

आगरणिवेस-आकरनिवेश-पुं०। आकरस्थाने, "आगरणिवेसेसु" ( सूत्र-३५×)। प्रज्ञा० १ पद।

आगरणी-आकरणी-स्त्री०। लोहकराम्बरीषायाम्, स्था० ८ ठा० ३ उ०।

आगरपल्ली-आकरपल्ली-स्त्री०। स्वर्णाद्युत्पत्तिस्थानस्थिते वृक्षवंशादिगहनाश्रिते प्रान्तजनस्थाने, उत्त०। "निगमे य आगर पल्ली" ॥ १६+ ॥ आकर -स्वर्णाद्युत्पत्तिस्थान तस्मिन् आकारे। पल्ली वृक्षवशादिगहनाश्रिता प्रान्तजनस्थानम्। तस्या पल्ल्याम्, उत्त० ३० अ०।

आगरमुत्ति-आकरमुक्ति-स्त्री०। चिक्कणिकायाम्, सा च नो कर्म्मद्रव्यलोभ। आव० १ अ०। आ०म०। अएणे भणंतिणो कस्मे आकरमोत्ती पढमादि आकरमोत्ति चिक्कणिकेति। आ० चू० १ अ०। ( एतद्वक्तव्यता 'लोभ' शब्दे षष्ठभागे वक्ष्यते )।

आगरि(न्)-आकरिन्-त्रि०। आकर-उत्पत्तिस्थानं प्राशस्त्येनाऽस्त्यस्येति इनि स्त्रियां ङीप्। प्रशस्ताकरजाते, "दधतमाकरिभि: करिभि: क्षतै:" किरा०। वाच०। आकरवति, प्रश्न० २ आश्र०द्वार।

आगरिस-आकर्ष-पुं०। आकर्षणमाकर्ष आ-कृष् घञ्। 'र्श-र्ष-तप्त-वज्रे वा" ॥८।२।१०५॥ इति हैमप्राकृतसूत्रेण कार। प्रा०। उदाने, आकर्षो नाम कर्मपुद्गलोपादानमिति। स०। आकर्षो नाम-तथाविधेन प्रयत्नेन कर्मपुद्गलोपादानम्। प्रज्ञा० ६ पद ७ द्वार। ( आयुष्कर्माकर्षा 'आउवध' शब्देऽस्मिन्नेव भागे गता ) ग्रहणे, आ० म० १ अ०। विशे०। प्रथमतया ग्रहणे, मुक्तस्य ग्रहणे च। आ० म० १ अ०। विशे०। ग्रहणमोचनयो, आकर्षणमाकर्ष। ग्रहणमोचनमित्यर्थ। आ० चू० १ अ०। स च द्विविध -एकभविको, नानाभविकश्चेति। प्रव० १२२ द्वार। आ० चू०। विशे०। अनु०। आ०म०। ( सामायिकस्याकर्षाः 'सामाइय' शब्दे सप्तमभागे वक्ष्यते ) प्रासौ, भ०।

पुलागस्स णं भंते! एगभवग्गहणिया केवइया आगरिसा पण्णत्ता, जहण्णेणं एक्को, उक्कोसेणं तिण्णि। (सूत्र-७७८+)

आकर्षणमाकर्ष -चारित्रस्य प्राप्तिरिति। भ० २५ श० ६ उ०। ( वकुसाऽऽदीनामाकर्षा 'णिग्गंथ' शब्दे चतुर्थभागे २०४२ पृष्ठे वक्ष्यते )

आगरिसग-आकर्षक-पुं०। आकर्षति सन्निकृष्टस्थं लौहम् आ-कृष्-ण्वुल्। ( चुम्बक ) इतिख्याते अयस्कान्ते, आकर्षणकर्त्तरि, त्रि०। आकर्षे नियुक्त आकर्षादि० कन्। आकर्षनियुक्त, "आकर्ष निकषोपल" इति रेफरहित पाठो युक्त सि० कौ०। वाच०। आ० म० १ अ०।

आगरिसण-आकर्षण-त्रि०। आ-कृष् ल्युट्। अन्यत्र स्थितस्य वस्तुन बलेन अन्यत्र नयने,"योषिदाकर्षणे चैत्र-विनियोग प्रकीर्त्तित।" आकृष्यते अनेन करणे ल्युट्। आकर्षण साधने तन्त्रोक्ते षट्कर्म्मान्तर्गते विधानभेदे च। वाच०। आकृष्यत-इति आकर्षणम्। द्रविणे, आकृष्यत इति आगरिसणं तं च दविण। नि० चू० २ उ०। प्रेरणे, आकड्ढणमाकरिसण अप्पणो तेण। आघट्टणमागसणं उदगगंतन प्रेरणमिति। नि० चू० १८ उ०।

आगलण-आकलन-न०। अध्यवसाये, "धणुबलं वा आगलति" ( सूत्र-१४३×) 'आगलंति' त्ति-आकलयन्ति-जेष्याम इत्यध्यवस्यन्तीति। भ० ३ श० २ उ०।

आगलिय-आगलित-त्रि०। निवारिते, ज्ञा० १ श्रु० ६ अ०।

आगल्ल-आगल्ल-त्रि०। ग्लाने, "तेण य्म आगल्लो" ॥४३६×॥ तेनाऽयमागल्ला-ग्लान संजात। बृ० ४ उ०।

आगाढ-आगाढ-त्रि०। अत्यन्तदुर्भेदे, व्य०। "आगाढपएसु य संथवेसु" ॥ २६६+ ॥ आगाढप्रश्नेषु चाऽत्यन्तदुर्भेद्यप्रश्नेषु परिचयेषु सत्स्विति। व्य० १ उ०। कर्कशे, बृ०। "आगाढे अहिगरणे" ॥ ५७३× ॥ आगाढे-कर्कशेऽधिकरणे उत्पन्ने। बृ० १ उ० ३ प्रक०। कारणे, नि० चू० ६ उ०।

अद्धाणविवित्ताणं, आगाढं सेसऽणागाढं ॥ ८४ ॥

अद्धाणे विवित्ताण आगाढकारणं। सेस अद्धाण तंमि उवगरणाभावे आगाढ ण भएणइ। नि०चू० ५ उ०। आगाढेहिं वा कारणेहिं वोलेंति। नि० चू० २ उ०। "आगाढकारणेहिं" ॥ ३५० + ॥ आगाढे -कुलादिभि कारणै। बृ० १ उ० २ प्रक०। आगाढे-प्रत्यनीकस्तेनादिरूपं यत्कारणम्। बृ० १ उ० ३ प्रक०। अशिवादिके कारणे, बृ०।

असिवे ओमोदरिए, रायदुट्ठे भए अ आगाढे।
गेलन्न उत्तिमट्ठे, णाणे तह दंसणचरित्ते ॥ ६१८ ॥

आगाढशब्द प्रत्येकमभिसंबध्यते, आगाढे-अशिवे अवमौदर्ये, राज्यद्विष्टे, बोधिकस्तेनादिभये च यथा आगाढ नाम शैक्षसागारिकादिमन्यतमकारणं तदा ग्लान उत्तमार्थप्रतिपन्नो वा क्वचिद्देशान्तरे श्रुत अपान्तराले च तत्र छिन्न पन्था अतस्तत्परिचरणार्थं गन्तव्यम्, उत्तमार्थे वा प्रतिपित्सु संविग्नगीतार्थसमीपच्छिन्नेनापि पथा गच्छति।

ज्ञानमाचाराऽऽदि, दर्शने दर्शनविशुद्धिकारकाणि शास्त्राणि तदर्थमध्वानं गच्छेत् , चारित्रार्थं नाम-यत्र देशे स्त्रीदोषा वा भवन्ति तं परित्यज्य देशान्तरं गन्तव्यम्।

एएहिं कारणेहिं, आगाढेहिं तु गम्ममाणेहिं।
उवगरणपुव्वं गहिऊ-ण पडिलेहिएण गंतव्वं ॥६१६॥

एते -अशिवादिभिः कारणैरागाढैरेव गम्यमानैः -प्राप्यमाणैः उपकरणमध्वप्रायोग्य गृहीत्वा पूर्वं गमनात् प्राक् प्रत्युपेक्षित सम्यक् शुद्धाऽशुद्धतया निरूपितो यः स सार्थस्तेन सह गन्तव्यम्। बृ० १ उ० ३ प्रक०।

(ग्लानवैयावृत्यमधिकृत्योक्तम् )-आगाढे कारणजाते सति वैयावृत्त्य कुर्याऽपि, परित्यजेद्वा ग्लानं, किं पुनस्तत्कारणजातम्। बृ० १ उ० २ प्रक०। इति ' गिलाण ' शब्दे तृतीयभागे ८६३ पृष्ठे वक्ष्यते।)

अणुवसमंते निग्गमो, लिंगविवेगेण होइ आगाढे।
देसंतरसंकमणं, भिक्खुगमादी कुलिंगेणं ॥ २७० ॥

अनुपशमयति-उपशममकुर्वति राज्ञि निर्गमो भवति। कथमित्याह-लिङ्गविवेकेन—लिङ्गपरित्यागेन ; गृहस्थलिङ्गेनेत्यर्थः। अथ तथाऽपि न मुञ्चति गाढकोपावेशात् , तत आह-आगाढम् अत्यन्तप्रकोपतो गाढममोक्षणे भिक्षुकादिलिङ्गेन देशान्तरसंक्रमणं कर्त्तव्यम्। अशिवाऽऽदौ वा कारणे समुपस्थिते देशान्तरगमनं किल कर्त्तव्यम्। व्य० १ उ०। (" असिवं० " इत्यादिगाथाभिः ' आगाढ ' स्वरूप ' कालकप्प ' शब्दे तृतीयभागे ४८६ पृष्ठे वक्ष्यते )

आगाढे अन्नलिंगं, कालक्खेवो य होति गमणं वा ।६६०X।

आगाढे-राजद्विष्टे। बृ० १ उ० ३ प्रक०।

( आहारमधिकृत्याऽऽगाढस्य भेदाः )। किं पुण आगाढं, अणागाढं वा। तत्थिमं आगाढं समासतो चउव्विहं। गाहा—

अद्धाणे ओमे वा, गेलन्न-परिन्न-दुल्लभे दव्वे।
आगाढं नायव्वं, मुत्तूण होंति ऽणागाढा ॥ १६० ॥

इम खेत्ताऽऽगाढं अद्धाणपडिवन्नगाढं सव्वं जाहं असंथरणं तं गाढं। इमं कालाऽऽगाढं ओमकाले ज असंथरणं तं गाढं। इमे गिलाणपरिन्ना दोऽवि भावाऽऽगाढे गिलाणस्स तद्दिवसं पायोग्गं जति न लब्भंति तो गिलाणो गाढं परिण्णस्स अणनाघाणं उप्पण्णं दिया राओ वा परिण्णाऽऽगाढं गिलाणस्स तद्दिवसं पायोग्गं इह गाती आहणागं। इमं दव्वाऽऽगाढं दुल्लभदव्वे त्ति-सतपाग-सहस्सपागं,घय,तेल्लं तेण साहुणो कज्जं तमि अलभंते दुल्लभदव्वाऽऽगाढं। एवंविधं आगाढं नायव्वं। पडिपक्खे अणागाढं। नि० चू० ११ उ०।

( विस्तरेणाऽऽगाढस्य भेदाः )—

दव्वे खेत्ते काले, भावे पुरिसे तिगिच्छे अमहाए।
एतेहिं कारणेहिं, सत्तविहं होइ आगाढं ॥

पं० भा० ४ कप्प०। नि० चू०।

दव्वे ताव वेज्जो पुच्छियव्वो। जाव इयाणि दव्वाणि उवदंसइ ताव इयाणि न पाउग्गाणि जंति। जदा एवं अम्ह न कप्पइ। ताहे उव्वट्ठाणि, ताहे ओमत्थपरिहाणीए भणइ। पं० चू०।

( द्रव्याऽऽगाढम् )—

एगादीयवड्ढीए, एगुत्तरिया य होति दव्वाणं।
ओमत्थगपरिहाणी, दव्वागाढं वियाणाहि ॥
जंयेति पुणो वेज्जो, सचित्तं दुल्लभं च दव्वं वा।
अप्पाडिहणंतो अच्छति, उद्दिसिउं जाव सो ठाति ॥
जाहे उद्दिट्ठाणी, ताहे ओमत्थहाणिए भणति।
अम्हे करेमो जोग्गं, अलंभे एयस्स किं कुणिमो ॥
एवं तु हावयंता, खेत्तं कालं च भावमासज्ज।
ता जूहंती जाव उ, लंभे जेसिं तु दव्वाणं ॥
अह पुण भणेज्ज एवं, अवस्समेत्तेहि कज्जदव्वेहिं।
एतं दव्वाऽऽगाढं तहिं जए पणगहाणीए ॥
पं० भा०।

एगाइयवड्ढीए अम्हे करेमु जोगं मग्गसु तं चेव जाव कलमसाली। खेत्तकालगाहा। तहेव य जहिं लाभो तहिं ठायंति। अहवा-भणेज्जा अवस्सिमाणि दव्वाणि जाणि दव्वाणि दुल्लहाणि परित्ताणह स तेल्लमाईणि वा ताहे तं दव्वाऽऽगाढं पणगपरिहाणीए जयंति जाव चउगुरुएण वि गेण्हंति। पं० चू०।

खेत्ताऽऽगाढमियाणिं गाहा—

खेत्ताऽऽगाढं इणमो, असती खेत्ताण मासजोग्गाणं।
असिवं वा अन्नत्थ, णदी व य वा होज्ज सद्धा तु ॥
आयरियादि अहारग, अहवा अन्नत्थ सावता होज्ज।
अंतर जहिं च गम्मति, वाला ताहे ण खुत्तियं वा ॥
एतेहि कारणेहिं, खेत्ताऽऽगाढंमि पुरिसे य।
तो अत्थंति असढभावा, एगखेत्ते वि जयणाए ॥
पं० भा०।

खेत्तस्स वा अलभे असइ मासपाउग्गाणं खेत्ताणं एगत्थ अत्थंति असिवं वा अनत्थ नई वा तीरानि गंतूण अकारगं वा आयरियाणं अन्नत्थ सावया वा तत्थ अंतरा वा दिग्घजाइया वा अन्नंमि देसे अंतरा वा ताहे एगत्थ अत्थंति अहवा-खेत्ताऽऽगाढं। पं० चू०।

( कालाऽऽगाढम् )—

कालस्स वाऽवि असती, वासावासे वियारणा णऽत्थि।
एतेहिं कारणेहिं, कालाऽऽगाढं वियाणाहि ॥
वासाजोगं खेत्तं, पडिलेहे तं तु कालेणं बहुतो।
वघंताण य अंतर-वासं तु णिवडितुं पव्वत्तं ॥
डहरं वंतरखेत्तं, ताहे तं चेव पुव्वखेत्तं तु।
गंतू वसती वासं, समतीत वा ति दस रातं ॥पं० भा०॥

कालओ कालेण बहुत्तो वासावासपाउग्गं खेत्तं वघंताणं अनगावास पडियं तं च अंतराखेत्तं। संनिसद्धग ताहे तं चेव पुव्वपडिलेहियं खेत्तं। जं तिउल्लंता वि अइत्थिरा वा वासावासे जइ वासइ मग्गसिरे दस राया निग्गए होंति

उक्कोसेण ओमोयरियाए वा जा जयणा आहाराइसु एयं कालाऽऽगाढं। पं० चू०।

इयाणिं भावाऽऽगाढे—

अतिउक्कडं च दुक्खं, अप्पा वा वेदणा भये आसुं।
एतेहिं कारणेहिं, भावाऽऽगाढं वियाणाहि ॥
अच्चुक्कडसूलादी, अहिडक्काई तु वेदणा अप्पा।
तत्थऽग्गि तावणादी, दाहच्छेदोवगाढादी ॥ पं० भा० ॥

'अइउक्कड च' अइउक्कडत्ति-विसूइयाइ अहिदट्ठविसं अप्पा वा वेयणा हिययसूलाइ तत्थ अग्गी कंदाई वा परित्तावणाइ दायव्व एयं भावाऽऽगाढं। पं० चू०।

(पुरुषाऽऽगाढम्)—

जंमि विणट्ठे गच्छ-स्स विणासो तह य णाणचरणाणं।
एतेहिं कारणेहिं, पुरिसाऽऽगाढं वियाणाहि ॥
तस्स तु सुद्धालंभे, जावज्जीवं पि होत सुद्धेणं।
कायव्वं तु य णियमा, पुरिसाऽऽगाढं भवे एतं ॥
जेण कुलं आयत्तं, तं पुरिसं आदरेण रक्खाहि।
ण हु तुंबंमि विणट्ठे, अरया साहारगा होंति। पं० भा०।

पुरिसाऽऽगाढे-जंमि विणट्ठे गच्छस्स विणासो नाणदरिसणचरित्ताईण विणासो। न हु तुंबंमि विणट्ठे गाहा—ताहे तस्स असुद्धेणवि कीरइ जाव जीवइ एय पुरिसाऽऽगाढं। पं० चू०।

(चिकित्साऽऽगाढम्)—

संजोगदिट्ठपाढी, फासुगउवदेसणासु जो कुसलो।
एतारिसस्स असती, णायव्वं तिगिच्छमागाढं ॥
मज्जणतूलिविभासा, अरणे पाउरणए य पाणे य।
केवडियाण पहाणे, अब्भध वत्तो गिलाणो तु ॥
पं० भा०।

संयोगदिट्ठपाढी-वेज्जस्स वा संयोगदिट्ठपाढिस्स असइ गीयत्थसंविग्गस्स। ताहे गीयत्थवेज्जस्स जा पाहुडिया कीरइ-पहाणभोयणचोयणाइ त सद्दहइ। एयं तिगिच्छाऽऽगाढं। प० चू०।

सहायाऽऽगाढम्—

हुज्ज व सहायरहितो, अव्वत्ता वाऽवि अहव अममत्था।
एय सहायाऽऽगाढं, तम्हाणु मुणी ण विहरेज्जा। पं०भा० ४ कल्प०।

होज्ज व सहायसहाया वासावासे नत्थि अवत्तव्वया सुत्तेण वा दोसा य हिंडमाणस्स वा एगागियस्स ताहे एगत्थ अत्थइ एगं अत्थंतो अपायच्छिन्नो जाव सहाए न लभइ पाउग्गे, एयं सहायाऽऽगाढं। प० चू० ४ कल्प। आशुघातिनि अहिदशनादिके कारणे च। बृ०।

अहिडक्कविसविसूइय-सज्जक्खयसूलमागाढं ॥ १४६ ॥

अहिना-सर्पेण दष्ट कश्चित्साधु, विष वा केनाचिद्भक्तादिमिश्र दत्तं, विसूचिका वा कस्यापि जाता, सद्य क्षयकारि वा कस्यापि शूलमुत्पन्नम् एवमादिकमाशुघाति सर्वमप्यागाढम्। एतद्विपरीत तु चिरघाति कुष्ठादिरोगात्मकम्-अनागाढम्। बृ० १ उ० २ प्रक०। नि० चू०। ग०। ('गच्छसारणा' शब्दे तृतीय भागेऽत्र विस्तरा वक्ष्यते) अवश्यकर्त्तव्ये कार्य्ये, ग०।

अणागाढे आगाढं, करंति आगाढे अणागाढं ॥११६॥

आगाढम्-अवश्यकर्त्तव्यं ग्लानप्रतिजागरणादिकं न आगाढम् अनागाढ तस्मिन् अनागाढे, कार्ये इति शेष। आगाढम्-अवश्यकर्त्तव्यमिति कृत्वा कुर्वन्तीत्यर्थ। तथा-आगाढे-अवश्यकर्त्तव्ये कार्ये। अनागाढ कार्य येन कुलेन विनाऽपि सरति, तत्कार्यं कुर्वन्तीत्यर्थ। अथवा-अनागाढयोगानुष्ठाने वर्त्तमानं, आगाढयोगानुष्ठानं कुर्वन्ति। तथा-आगाढयोगानुष्ठाने अनागाढयोगानुष्ठान कुर्वन्ति स्वच्छन्दा। ग० ३ अधि०। औत्पत्तिके कार्य्ये च। आगाढ तु किंचिदौत्पत्तिक कार्य्यम्। बृ० १ उ० ३ प्रक०। "आगाढमुसावाई" ॥३७२४॥ आगाढ-कुलकार्य्ये सघकार्य्ये वेति। व्य० ३ उ०।

करणे य विवच्चासं, करेइ आगाढेऽणागाढं ॥ ७२२४॥

आगाढे-ग्लानादिकार्य्ये अनागाढ त्रि कृत्वा परिभ्रमणादिलक्षणम्, अनागाढ वा आगाढ सद्य प्रतिसेवनात्मक करोति। बृ० १ उ० १ प्रक०। आगाढे-राजद्विष्टादिककार्य्ये। बृ० १ उ० ३ प्रक०। अभिगृहीतमिथ्यादर्शने, पुं०। आगाढ-अभिगृहीतमिथ्यादर्शन। बृ० १ उ० २ प्रक०।

आगाढजोग-आगाढयोग-पुं०। योगभेदे, नि० चू०।

आगाढमणागाढे, दुविहे जोगे समासतो होति ॥३६+॥

जोगो दुविहो-आगाढो य, अनागाढो य। आगाढ तु राजम्मि जोगे जनणा सो आगाढो यथा "भगवती" त्यादि। नि० चू० १ उ०। बृ०। (अत्र विशेषव्याख्यानम् 'अज्जा' शब्दे प्रथमभागे २२० पृष्ठे गतम्।)

आगाढपण्ण-आगाढप्रज्ञ-न०। शास्त्रे, व्य०। "आगाढपण्णेसु य भावियप्पा" ॥ ३७४ ॥ आगाढप्रज्ञानि-शास्त्राणि तेषु भावितात्मा-तात्पर्य्यग्राहितया तन्नातीवनिष्पन्नमति.। व्य० ३ उ०।

आगाढपण्ह-आगाढप्रश्न-पुं०। अत्यन्तदुर्भेदप्रश्ने, व्य०। "आगाढपण्हेसु य संथवेसु" ॥२७०+॥ आगाढप्रश्नेषु वाऽत्यन्तदुर्भेदप्रश्नेषु परिचयेषु सत्स्विति। व्य० १ उ०।

आगाढपरियावण-आगाढपरितापन-न०। बहुतमपीडोत्पादनात्मके परितापे, जीत०। "आगाढपरियावणुद्दवणे" ॥३०४॥ बहुतमपीडोत्पादनं चाऽऽगाढम्। जीत०।

आगाढमुसावाइ-(न्)-आगाढमृषावादिन्-त्रि०। आगाढे-कुलकार्य्ये, गणकार्य्ये, संघकार्य्ये वा अनाभाव्यस्य आभाव्यस्य वा (नाभाव्यस्य वा) ज्ञानतया रागद्वेषाज्ञानस्य वा भणनात् मृषावदनीत्येवंशील आगाढमृषावादी। कार्य्ये सति मृषावादिनि व्य०।

आगाढमुसावादी, बितियतइए उ लोवेति वए उ।३७२+।

आगाढे मृषावादी द्वितीयमृषावादादत्तादानविरतिरूप व्रते लोपयति। व्य० ३ उ०। ('उद्देस' शब्देऽस्मिन्नेव भागेऽत्र विस्तर वक्ष्यामि)

आगाढवयण-आगाढवचन-न०। अत्यर्थं गाढम् आगाढम्। 'गाढुत्तगूढगक्खं गाहेउं व तेण आगाढं' (३+)। गाढं उक्तं गाढुत्त न करिम गूढगक्खं अन्यस्याख्यातुं न शक्यते। अथवा-शरीरस्योष्मा येनाङ्गेन जायते तमागाढम् इत्युक्त-लक्षणे वचने, । नि० चू० १० उ०।

सूत्रम्—

जे भिक्खू भदंतं आगाढं वयइ वदंतं वा साइज्जइ ॥ १ ॥

आगाढवचन-परुषवचना-ऽऽगाढपरुषवचननिषेधः—

मा भुंज गयपिंडं-ति चोदितो तत्थ मुच्छितो गिद्धो ।
खुड्डाती माल वत्तह, आगाढ च उप्पती दसमे ॥ १ ॥

गुरुणा चोदितो मुच्छितो गिद्धो एकार्थवचनं, अहवा—तं भुंजतो सज्जमाऽसंजमं ण जाणइ मूर्च्छितवत् मूर्च्छितो अभिलाषमात्रगृद्ध, अहवा—खुड्डादियाणमालय वत्तेहति चोदितो आगाढवयणं भणेज्ज । एस उप्पत्ती आगाढवयणस्स दसमुद्देसगस्स एस संबंधो । ( १ सूत्र व्याख्या )- 'जे' इति णिद्देसे भिक्खू पुव्ववण्णिओ, 'भदि' कल्याणे, सुखे च । दीप्ति-स्तुति-सौख्येषु वा, माहात्म्यस्य सिलोकः । भदंतो-आचार्यो अत्यर्थम्-आगाढं, 'वद' व्यक्तायां वाचि, अण्णं वा वदंतं-अणुमोदति ।

णिज्जुत्तीगाहा—

आगाढं पि य दुविधं, होइ असूआए तह य सूयाए ।
एएसिं पत्तेयं, दोण्ह पि परूवणं वोच्छं ॥ २ ॥

आगाढं द्विविधम्-असूयायां, सूतायां वा । आगाढफरुसो-भयसुत्ताण तिण्ह वि इम सई वा ।

गाहा—

गाढुत्तगूढगक्खं, गाहेउं व तेण आगाढं ।
णेहरहितं तु फरुसं, उभए संजोयणा णवरं ॥ ३ ॥

गाढम्-उक्तं गाढुत्तं, तं करिसं-गूढगक्खं-अन्यस्याख्यातुं न शक्यते । अहवा-शरीरस्योष्मा येनाङ्गेन जायते तमागाढं, नेहरहितं णिप्पिवासं फरुसं भण्णति । गाढफरुसं-उभयं तोतियसुत्तं जोगो दोण्ह वि सूयाऽसूयवयणाण इमेहिं दारेहिं नवरं जाणियव्वं ।

गाहा—

जातिकुलरूवभासा, धणबलपरियागजसतवलाभे ।
सत्तवयबुद्धिधारण, उग्गहसील समायारी ॥ ४ ॥
अम्हे 'मो जातिहीणा, जातीमंतेहिं को विरोहेण ।
एस असूया सूया, तु णवरं परवत्थुणिद्देसो ॥ ५ ॥

लाक्षणिकम् उत्तमाधिकवचनं नच अत्र तादृशं न गृहीतव्यम् । इह तु परं दोषेण सूचयति स्पष्टमेव दोषं भाषमाणस्य । परवत्थुणिद्देसो णाम—'भदंत' चेव भण्णति, तुमं जातिहीणो त्ति ।

गाहा—

अम्हे 'मो कुलहीणा, को कुलपुत्तेहिं सह विरोहेणं ।
एस असूया सूया, तु णवरं परवत्थुणिद्देसो ॥ ६ ॥
अम्हे मो रूवहीणा, सरूवदेहेसु को विरोहेण ।
एस असूया सूया, तु णवरं परवत्थुणिद्देसो ॥ ७ ॥
अम्हे मो अकतमुहा, अलं विवाएण णेकत्तमुहेहिं ।
एस असूया सूया, तु णवरं परवत्थुणिद्देसो ॥ ८ ॥

वाग्मीकृतमुखभासाए द्वितीयव्याख्यानम् ।

गाहा—

खरफरुसणिट्ठुरं णे, वक्कं तुज्झं मो महुरगंभीरं ।
एस असूया सूया, तु णवरं परवत्थुणिद्देसो ॥ ९ ॥

सरोसवयणमिअकन्तं खरं प्रणयेन हणि तएहं फरुस-जगारादियं अणुवयारं णिट्ठुरं । 'मो' इत्यात्मनिर्देशे, अक्खरेहिं मितं अत्थमभिधाणेहिं मधुरं सरेण गंभीरं ।

गाहा—

अम्हे मो धणहीणा, आसि अगारंमि इड्ढिमं तुज्झे ।
एस असूया सूया, तु णवरं परवत्थुणिद्देसो ॥ १० ॥
एमेव सेसएसु वि, जोएयव्वा असूय-सूयाओ ।
अत्तगता तु असूया, सूया पुण पागडं भणिया ॥११॥

अप्पणो दोस भासति, ण परस्स, एसा असूया । ण अप्पणो परस्स फुडमेव दोसं भासति एसा सूया । सूयतीव सूया । औरसबलयुक्तो बलवान् । परियाओ-प्रव्रज्याकाल । सक्तो वा सक्क -प्रथमे वयसि वर्त्तमान , त्रिदशवत् वयोवर्ज्जो वा उमि वए ठितो तस्स तदा गुणवासेति उप्पत्तियादिबुद्धिजुत्तो बुद्धिमं धारणा दढस्मृति बहुबहुविधक्षिप्रानिश्रिता -संदिग्धं ध्रुवाणा उग्गह करेति, अक्कोहादिणा सालेवं चक्कवालसामायारीपज्जुत्तो कुसलो वा एते अत्था सव्वे सूयाऽसूएहिं भाणियव्वा ।

गाहा—

एक्केका सा दुविधा, संतमसंता य अत्तणि परे य ।
पचक्खपरोक्खाऽवि य, असंतपचक्खदोसयरा ॥१२॥

आतमगता असूया । परगता सूया । असूया-सता, असता य । सूया वि-संता, असता य । जहत्थेण ठियं सतं अभूतार्थे अनृत, असतं-परस्स जं पभासति पच्चक्खं महत्तदोसतरं भवति,अहवा-इमेहिं अप्पाणं, परं वा,पसंसति, णिंदति वा ।

गाहा—

गणि वायते बहुसुते, सेहा वाऽऽयरियधम्मकहिवादी ।
अप्पकसाए थूल, तणुए डीहे य मडहे य ॥ १३ ॥
अम्हे खमणा ण गणी, को गणवसभेहिं सह विरोहेण ।
एस असूया सूया, तु णवरं परवत्थुणिद्देसो ॥१४॥
अगणिं तु हाससादीहिं अगणिं व गणिं पूयागणिं च ।
एव समपएसु वि, सप्पडिपक्खं तु नेयव्वं ॥ १५ ॥

सेसा पाढा बहुसुतादीया निविर्त्त, बहुयं च सुयं बहुस्सुतो, तिविधो-मेहावी-गहणधारणमेधावी य, आयरियो-गच्छाहिवती, तत्थेवं भासति-अम्हे के? आयरियत्तस्स जं सामायारिं पि ण याणामो । अहवा-भणति-तुम को आयरियत्तस्स जो सामायारिं पि ण याणसि, चतुविहाए अक्खेवणियमादियाए धम्मकहाए लद्धीए जुत्तो ससमय-

---

१-'ऋ' ... (२) ... [illegible]

परसमयसु गतागमो उप्पएणपइतो वादी वहु अल्पकषाय· क्रियासु दल स्थूर तनुईन्न समापूरदेहाको तणुदेहे हीणेण सह विरोधो घट्टमो खिद्धं उवरिं मइहसरीरेहिं का विरोहेण, णिंदं च करेंति, थुनी य, परमप्पणो कहनरं णाउं परचयणपयोगवसा पुव्वुत्तरमप्पणो देंति एनेसामन्नतरं आगाढ जो वदति तस्सिमा सोही।

गाहा—

छेदादी आरोवण, नेयव्वा जाव मासियं लहुगं।
आयरिए वसभंमि य, भिक्खुंमि य खुड्डए चेव॥१६॥
आयरिओ आयरियं, आगाढं वयति पावई छेयं।
वसभे छग्गुरु भिक्खु–म्मि छल्लहू खुड्डए गुरुगा॥१७॥

आयरिओ आयरियं आगाढ वदात-छेदा, आयरिओ वसभं ह्न, आयरिओ भिक्खु ह्न, आयरिआ खुत्ते ह्न।

गाहा—

वसभे छग्गुरुगाई, छल्लहुगा भिक्खुखुड्डे गुरुगाई।
अंता पुण सिं चउ लहु, मासगुरू मासलहुओ य॥१८॥

वसभो आयरियं आगाढ वदनि ह्न, खुत्तो वसभं ह्न, खुत्तो खुत्तं, अहवा अन्यथा प्रायश्चित्तक्रम·।

गाहा—

पंचएहापरियारइ, छेया एक्केकहासणा अहवा।
राइंदियवीसऽतं, चउएह चत्तारि अविसिट्ठा॥ १६॥

आयरियवसभभिक्खुथेरो खुत्तो यच्छेदादी वीसए रातिंदियाइ अनेण चेव वाराणयप्पओगेणं वारियव्व, जत्थ जत्थ चउगुरुगं तत्थ तत्थ सुत्तणिवाओ दट्ठव्वो, अहवा-पुव्वुत्ताण चउएहं चउगुरुग तव-कालविसेसियं, अहवा-सव्वेसिं अविसिट्ठ चउ।

गाहा—

जं चेव परट्ठाणे, आसायंताण पावए ओमं।
तं चेव य ओमो वि य, आसाइंतो वि राइणियं॥२०॥

परट्ठाण परप्रधानं, ज्येष्ठमित्यर्थ । ज सो ओमं आसादेंतो पावति आमे वि त चेव जट्ठं आसादेंतो पावति।

गाहा—

एएसामन्नयरं, आगाढं जो वदे भयंतारं।
सो आणाअणवत्थं, मिच्छत्तविराधणं पावे॥२१॥

असंखडादयो दोसा पक्खाऽपक्खगहण य गच्छभेदा कारणे भणेज्जाऽवि। नि० चू० १० उ०।

ण य णिच्छयमावसिया, छड्ड वल्ली फलाऽवि संवद्धा।
इति हरिसगमणचोदण–आगाढ चोदितो भणति॥१॥

कारणे-वासावासे भाय णाण कसेण कतेणं वसित्ता पासति। तं वीओ जायपुत्त भंडाओ ताहे सो हरिसितो भणति-ण णित्थयामो वसित्ता मम वादेसु अतीव वल्लीओ पसारिता ण केवल पसरिता ता पभूता फलावि सवद्धा न केवलं सवद्धा प्रायशो निप्पन्ना। अभिस्समो पादे तं एव भणंत कोऽवि साधू पडिचोएज्जा। मा अज्जो! एव भणाहि ण वट्टति। ततो सो पडिचोदणाए रुट्ठो फरुसं वदेज्ज।

तत्प्रतिषेधार्थमिदं सूत्रमारभ्यते—

जे भिक्खू भिक्खूणं आगाढं वदइ वदंतं वा साइज्जइ॥१॥
जे भिक्खू भिक्खूणं फरुसं वदइ वदंतं वा साइज्जइ॥२॥
जे भिक्खू भिक्खूणं आगाढफरुसं-वदइ वदंतं वा साइज्जइ॥ ३॥

आगाढ–फरुस–मीसग–दसमुद्देसंमि वरिणयं पुव्वं।
तं चेव विवज्जतो, सो पावति आणमादीणि॥ ४॥

नि० चू० १५ उ०।

जे भिक्खू अएणउत्थियं वा गारत्थियं वा आगाढं वदइ वदंतं वा साइज्जइ॥ ६॥

जे भिक्खू अएणउत्थिय वा गारत्थियं वा फरुसं वदइ वदंतं वा साइज्जइ॥ १०॥

जे भिक्खू अएणउत्थियं वा गारत्थियं वा आगाढफरुसं वदइ वदंतं वा साइज्जइ॥ ११॥ नि०चू०-१३ उ०।

आगाढफरुसमीसग–दसमुद्देसंमि वरिणतं पुव्वं।
गिहिअएणतित्थिएहि य, तं चेव य होंति तेरसमे॥२५॥

जहा दसमुद्देसे भदतं प्रति आगाढफरुसमीसगसुत्ता भणिता, तहा इहं गिहत्थ अएणउत्थिय प्रति वक्तव्या इमेहिं जातिमत्तिएहिं गिहत्थं अएणतित्थियं वा ऊणतर परिभवतो आगाढ फरुसं वा भणति। नि० चू० १३ उ०।

**आगाढसुय**–आगाढश्रुत–न०। श्रुतभेदे, नि०चू०। आगाढसुयं भगवतीमाइ अणागाढ आयारमाति त्ति। नि० चू० १ उ०। "आगाढे एवमत्थे वि"॥२४+॥ आगाढे तु-उत्तराध्ययन-भगवत्यादिके श्रुते। जीत०।

**आगाढाऽऽगाढकारण**–आगाढाऽऽगाढकारण–न०। तथाविधे प्रयोजने, "अएणत्थ आगाढाऽऽगाढेहिं"(सूत्र-६६+)। अन्यत्र-तथाविधप्रयोजनात्। आचा० २ श्रु० १ चू० २ अ० १ उ०।

भिक्खू य वहुस्सुए वब्भागमे वहुआगाढाऽऽगाढेसु कारणेसु माई मुसावाई। ( सूत्र–२३ × )

( इदं सपूर्णं सूत्रम् 'उद्देस' शब्दे अस्मिन्नेव भागे व्याख्या सहित दर्शयिष्यते। ) कुलप्राप्त गणप्राप्तं सघप्राप्त यत् सचित्तादिक व्यवहारेण छेत्तव्य कार्यं वा आगाढाऽऽगाढं कारणं तेषु आगाढाऽऽगाढेषु। व्य० ३ उ०।

आगाढाऽऽगाढकारणादीनि पदानि व्याचिख्यासुराह (भाष्यकृत्)—

कुलगणसंघप्पत्तं, सचित्तादी तु कारणागाढं॥२८५×॥

सचित्तनिमित्ताऽचित्तनिमित्तो वा यो व्यवहार कुले छिन्नो यथेद सचित्तादिक विवादास्पदीभूत कुलेन छेत्तव्यमिति तत्कुलप्राप्तमेव गणप्राप्तं सङ्घप्राप्त भावनीयम्, यत्र यत्सचित्तादिकं विवादास्पदीभूत व्यवहारेण छेद्यतया कुलप्राप्त वा गणप्राप्त वा तत्कारणाऽऽगाढं कारणम्। व्य० ३ उ०।

आगामि( न् )-आगामिन्-त्रि० । आगन्तुके, भविष्यत्कालवृत्तौ च । वाच० । लब्धव्ये, । स्था० २ ठा० ४ उ० ।

आगामिपह-आगामिपथ-पुं० । आगामिनो-लब्धव्यस्य वस्तुन पन्था' आगामिपथः । लब्धव्यवस्तुमार्गे, स्था० २ ठा० ४ उ० ।

आगामिय-आकामिक-त्रि० । अनभिलषणीये , स्था० ५ ठा० २ उ० ।

आगामिक-त्रि० । आमरहिते, स्था० । " अत्थेगइया णिग्गंथा य णिग्गंथीओ य एगमहं आगामियं छिन्नावायं दीहमद्धमड विमणुपविट्ठा ' ( सूत्र-४१७ + )। स्था० ५ ठा० २ उ० ।

आगार-आकार-पुं० । आ-कृ-घञ् । आकृतौ, आ० म० १ अ० । कल्प० । ज्ञा० । स्था० । भ० । रा० । संस्थाने, औ० । ' सिंगारागारचारुवेसाए ' ( सूत्र- ) शृङ्गारो-मण्डनभूषणाटोपस्तत्प्रधान आकार —आकृतिर्यस्याः सा तथा । तथा चारु वेशो-नेपथ्यो यस्याः सा तथा, ततः कर्मधारय । रा० । औ० । सन्निवेशविशेष, शृङ्गार —शृङ्गाररसपोषक आकार —सन्निवेशविशेषो यस्य । चं०प्र० २० पाहु० । " आगारविगार तह प्पयासंति " ॥ १२१ +॥ आकार-मुखनयनस्तनाद्याकृति , विकारं च मुखनयनादिविकृति । यद्वा-आकारस्य स्वाभाविकाकृतेर्विकारो विकृतिस्तं तथा प्रकाशयन्ति । ग० ३ अधि० । आगारो णाम-आगारो त्ति वा, आगति त्ति वा, संठाणं ति वा, एगट्ठा । आ० चू० १ अ० । स्वरूप, ध० ३ अधि० । " कइयागयस्स आगारा " ( सूत्र-५५३ + ) । आकारा-आकृतय , स्वरूपाणीत्यर्थ । स्था० ७ ठा० ३ उ० । रूपमाकारश्चक्षुर्विषय । स्था० १ ठा० । प्रतिवस्तुनियतं ग्रहणपरिणामे च । ' आगारो उ विसेसो, " इति वचनादिति । जी० १ प्रति० । सह आकारेण वर्त्तत इति साकारं विशेषग्रहणप्रवणम् । दर्श० ५ तत्त्व ।

( सर्वस्य च वस्तुन आकारवत्त्वम् )—

आगारो च्चिय मइस-द्दवत्थुकिरिया फलाभिहाणाइं ।
आगारमयं सव्वं , जमणागारं तयं नऽत्थि ॥ ६४ ॥
न परागुमयं वत्थुं, आगाराऽभावओ खपुप्फं व ।
उवलभव्ववहाराऽ-भावाओ नाणऽऽगारं च ॥ ६५ ॥

विशे० । ( अनयोर्गाथयोरर्थ ' उवगारय ' शब्दे चतुर्थभागे वर्णयिष्यते ) आक्रियते-आकल्प्यतेऽभिप्रेतं मनोविकलितं वस्त्वनेनेत्याकार । आ-कृ-करणे घञ् । बाह्यचेष्टायाम , विशे० । आ० म० । आकार-स्थूलधीसंवेद्य प्रस्थानादिभावाऽभिव्यञ्जको दिगवलोकनादि । आह च—
" अवलोयण दिसाणं , वियंभणं साडयस्स सठवणं ।
आसणसिढिलीकरणं,पट्ठियलिंगाइँ एयाइं । उत्त० पाई० १ अ० ।

यदुक्तम्—

अवलोकनं दिशानां विजृम्भणं शाटकस्य संवरणम् ।
आसनशिथिलीकरणं,प्रस्थितलिङ्गानि चैतानि ।१। उत्त १ अ ।

"आगारेहिं" सरेहि य ॥ ५०४॥ आकारा -शरीरगता भाविशेषा । दश० १ उ० ( विस्तरोऽस्य ' आगारलक्खण ' शब्देऽस्मिन्नेव भागे वक्ष्यते ) । भाव चेष्टा । इङ्गितभाववेदने , इङ्गिते च । वाच० । आक्रियन्त इत्याकारा आगृह्यन्त इति भावना । सर्वथा कायोत्सर्गापवादे, आव० ५ अ० । ल० । कायोत्सर्गाकारानभिधायोक्तम्-"एवमादिएहिं आगारेहिं अभग्गो अविराहिओ होज्ज मे काउस्सग्गो" (सूत्र-३+) त्ति । ल० । आव० ( ते च ' काउस्सग्ग ' शब्दे तृतीयभागे वर्णयिष्यते) । आ-मर्यादया मर्यादाख्यापनार्थम् आक्रियन्ते-विधीयन्ते प्रत्याख्यानभङ्गपरिहारार्थमित्याकारा । प्रत्याख्यानापवादहेतावनाभोगादिके , स्था० १० ठा० ३ उ० । प्रव० । पञ्चा० । आव० । ' आगारेहिँ विसुद्धं " ॥५०५+॥ आकारैः-अनाभोगादिभि' । पं०व० २ द्वार । " गहणे आगारेसुं " ॥ ४+॥ आकारेषु—प्रत्याख्यानापवादेषु । पञ्चा० ५ विव० । " दो चेव नमुक्कारे आगारा " ॥ ५०८+॥ आकारो हि नाम-प्रत्याख्यानाऽपवादहेतुः । पं०व० २ द्वार ।

(कस्य प्रत्याख्यानस्य कत्याकारा )—

नवकारपोर (रि) (रु) सीए ,
पुरिमड्ढेकासणेगठाणे अ ।
आयंबिलऽभत्तट्ठे,
चरिमे अ अभिग्गहे विगई ॥ ५०६ ॥
दो छच्च सत्त अट्ठ य,
सत्तऽट्ठ य पंच छच्च पाणम्मि ।
चउ पंच अट्ठ नवए,
पत्तेअ पिंडए नवए ॥ ५०७ ॥

' नमस्कार ' इति-उपलक्षणत्वात् नमस्कारसहिते पौरुष्यां पुरिमार्द्धे एकासने एकस्थाने च आयाम्ले अभक्तार्थे चरमे च अभिग्रहे विकृतौ, किं ?-यथासङ्ख्यमेते आकारा , द्वौ षट् सप्त अष्टौ च सप्त अष्टौ च पञ्च षट् (पाने) चतु पञ्च नवाऽष्टौ प्रत्येक, पिण्डके नवक इति गाथाद्वयाक्षरार्थ ॥५०६॥५०७॥

भावार्थमाह—

दो चेव नमुक्कारे, आगारा छच्च पोरिसीए उ ।
सत्तेव य पुरिमड्ढे, एकासणगम्मि अट्ठेव ॥ ५०८ ॥
सत्तेकट्ठाणस्स उ, अट्ठेवाऽऽयंबिलस्स आगारा ।
पंच अभत्तट्ठस्स उ, छप्पाणे चरिम चत्तारि ॥ ५०९ ॥
पंच चउरो अभिग्गह, निव्विइए अट्ठ नव य आगारा ।
अप्पावरणे पंच उ, हवंति सेसेसु चत्तारि ॥ ५१० ॥
नवणीए उग्गाहिमए, अद्दवदहि पिसिअ घय गुले चेव ।
नव आगारा तेसिं, सेसदवाणं च अट्ठेव ॥ ५११ ॥

द्वावेव नमस्कारे आकारौ, इह नमस्कारग्रहणात् नमस्कारसहितं गृह्यते, तत्र द्वावेवाकारौ, आकारो हि नामप्रत्याख्यानापवादहेतु , इह च सूत्रम्-" सूरे उग्गए नमुक्कारसहिअं पच्चक्खाइ चउव्विहंपि आहारं-असणं,पाणं,खाइमं, साइमं, अन्नत्थणाभोगेणं सहसागारेणं वोसिरइ " सूत्रार्थः प्रकट एव, आकारार्थस्त्वयम्-आभोगनमाभोग न आभोगोऽनाभोग अत्यन्तविस्मृतिरित्यर्थ तेन, अनाभोगं मुक्त्वेत्यर्थ , अथ सहसा करणं सहसाकार , अतिप्रवृत्तयोगानिवर्त्तनमित्यर्थ , 'षट् च पौरुष्यां तु' इह पौरुषीनाम-

प्रत्याख्यानविशेष , तस्यां षडाकारा भवन्ति , इह चेदं सूत्रम्-"पोरुसिं पच्चक्खाइ सूरे उग्गए चउव्विहं पि आहारं असणमित्यादि , अन्नत्थणाभोगेणं सहसागारेणं पच्छन्न-कालेणं दिसामोहेणं साहुवयणेणं सव्वसमाहिवत्तियागा-रेणं वोसिरइ" अनाभोगसहसाकारौ पूर्ववत् , प्रच्छन्न-कालादीनां त्विदं स्वरूपम्-' पच्छन्नाओ दिसाओ रएण रेणुना पव्वएण वा अंतरितो सूरो ण दीसइ, पोरुसी पुण्णत्तिकाउं व पारितो, पच्छा णायं ताहे ठाइयव्वं, न भग्गं, जइ भुंजइ तो भग्गं, एवं सव्वेहिऽवि, दिसामोहेण कस्सइ पुरिसस्स कम्हिवि खित्ते दिसामोहो भवइ, सो पुरिमं दिसं न जाणइ, एवं सो दिसामोहेणं अइरुग्गयपि सूरं दट्ठुं उस्सूरीहूयंति मएणइ, नाए ठाति । ' साहुवयणेणं ' साहुणो भणंति-उग्घाडा पोरुसी, ताहे सो पजिमितो, पारित्ता मिणइ, अएणो वा मिणति, तेण से भुंजनस्स कहियं ण पूरंति, ताहे ठाइयव्वं । समाही णाम तेण पोरुसी पच्चक्खाया आसुकारियं च दुक्खं जायं, अएण-स्स वा, ताहे तस्स पसमणनिमित्तं पाराविज्जइ ओसहं वा दिज्जइ, एत्थंतरा णाए तहेव विवेगो । सर्वत्र तु पुरि-मार्द्धे पुरिमार्द्धे-प्रथमप्रहरद्वयकालावधिप्रत्याख्याने गृह्यते तत्र सप्ताऽऽकारा भवन्ति, इह चेदं सूत्रम्-' सूरे उग्गए ' इत्यादि पूर्वसदृशं ' महत्तराऽऽगारेणं ' ति विशेषः, अस्य चायमर्थः-अयं च महान् अयं च महान् अयमनयोरति-शयेन महान् महत्तरः आक्रियत इत्याकारः, एतदुक्तं भवति-महल्लं पयोयणं, तेण अब्भत्तट्ठो पच्चक्खातो, ताहे आय-रिएहिं भएणइ-अमुगं गामं गंतव्वं, कहइ जहा मम अज्ज अब्भत्तट्ठो, जदि ताव समत्थो करेउ जाउ, य, ण तरइ अएणो भत्तट्ठिओ अभत्तट्ठिओ वा जो तरइ सो वच्चउ, णऽत्थि अएणो तस्स कज्जस्स समत्थो ताहे तस्स चेव अब्भत्तट्ठियस्स गुरू विसज्जिंति, एरिसस्स तं जेमतस्स अणभिलासस्स अब्भत्तट्ठियनिज्जरा जा सा से भवइ, एवमादिमहत्तरागारो । एकाशने अष्टावेव, एकाशनं नाम स्कृदुपविष्टपुताचालनेन भोजनं, तत्राष्टावाकारा भवन्ति, इह चेदं सूत्रम्-एक्कासणगमित्यादि, ते च अएणत्थणाभो-गेणं १ सहसागारेणं २ सागारिआगारेणं ३ आउट्टणपसा-रणागारेणं ४ गुरुअब्भुट्ठाणेणं ५ पारिट्ठावणियागारेणं ६ मयहरागारेणं ७ सव्वसमाहिवत्तियागारेणं ८ वोसिरति, अणाभोगसहसाकारा तहेव , सागारिअं अद्धसमुद्दिट्ठस्स आगयं, जइ वोलेइ पडिच्छइ, अह थिरं ताहे सज्झाय-वाघाउ त्ति उट्ठउ अएणत्थ गंतूण समुद्दिसइ, हत्थं वा पायं वा सीसं वा आउट्टिज्ज वा पसारिज्ज वा ण भज्जइ, अब्भुट्ठा-णारिहो आयरितो पाहुणगो वा आगओ अब्भुट्ठेयव्वं तस्स एवं समुद्दिट्ठस्स उट्ठियस्स ण भज्जइ,पारिट्ठावणिया जइ होज्ज कप्पइ, मयहरागारसमाहीओ तहेव त्ति गाथार्थः ॥ ५०८ ॥ ' सप्तैकस्थानस्य तु ' एकस्थानं नाम प्रत्याख्यानं, तत्र सप्ता-ऽऽकारा भवन्ति, इहेदं सूत्रम्- एगट्ठाणं ' मित्यादि, एगट्ठा-णए जं जहा अंगोवंगं ठविअं तेण तहाठिएण चेव समुद्द-सियव्वं, आगारा से सत्त, आउंटपसारणा नऽत्थि, सेसं जहा एक्कासणए । अष्टावाऽऽयामाम्लस्याऽऽकारा , अणाभोगा०१ स-हसागारेणं २ लेवालेवेणं ३ उक्खित्तविवेगेणं ४ गिहत्थस-



सट्ठेणं ५ पारिट्ठावणियागारेणं ६ मयहरागारेणं ७ सव्वसमा-हिवत्तियागारेणं ८ वोसिरति, अणाभोगसहसक्कारा तहेव, लेवालेवो वा, जइ भाणे पुव्वं लेवाडगं गहिअं समुद्दिट्ठं सं-लिहिय च जइ तएण आणति ण भज्जइ, उक्खित्तविवेगा जइ आयंबिले पडइ विगतिमादि उक्खिवित्ता विकिंचउ, मा णवरि गलउ, अएणं वा आयंबिलस्स अपाउग्गं जइ उद्ध-रिउं तीरइ उद्धरिए ण उवहम्मइ, गिहत्थसंसट्ठऽवि जइ गि-हत्थो डोवलियं भायणं वा लेवालेवाड कुसणाईहिं तएण इ-सिन्ति लेवाडादीहिं देति ण भज्जइ, जइ रसो आलक्खि-ज्जइ बहुआ ताहे ण कप्पइ, पारिट्ठावणियमयहरगसमाहीओ तहेव । पञ्चाऽभक्तार्थस्य तु, न भक्तार्थोऽभक्तार्थः , उपवास इ-त्यर्थः , तस्य पञ्चाऽऽकारा भवन्ति, इहेदं सूत्रम्-'सूरे उग्गए' इत्यादि, तस्स पंच आगारा-अणाभोग-सहसाकार-पारि-ट्ठावण-मयहर-समाहि त्ति, जइ तिविहस्स पच्चक्खाइ तो विकिंचणिया कप्पइ, जइ चउव्विहस्स पच्चक्खाइ पाणगं च नऽत्थि न वट्टइ, जइ पुण पाणगपि उव्वरियं ताहे से कप्पइ जइ तिविहस्स पच्चक्खाइ ताहे से पाणगस्स छ आगारा कीरंति-लेवाडेण वा, अलेवाडेण वा अच्छेण वा बहलेण वा, ससित्थेण वा,असित्थेण वा, वोसिरइ" प्रकटार्था एते छपि। एतेन षड् पाने इत्येतदपि व्याख्यातमेव । 'चरमे चत्वारि' इ-त्यत्र चरिमं दुविहं-दिवसचरिमं भवचरिमं च, दिवसचरिम-स्स चत्तारि-अएणत्थअणाभोगा सहस महत्तर सव्वसमाहि, भवचरिमं-जावज्जीवियं, तस्सवि एए चत्तारि त्ति गाथार्थः ॥५०९॥ पञ्च चत्वारश्चाभिग्रहे निर्विकृतौ अष्टौ नव चाऽऽकारा 'अप्रावरणे' इत्यप्रावरणाभिग्रहे पञ्चैवाकारा भवन्ति शेषाभ्-भिग्रहेषु-दण्डकप्रमार्जनादिषु चत्वार इति गाथार्थः ॥५१०॥ भावार्थस्तु- अभिग्गहेसु अपाउडत्तणं कोइ पच्चक्खाइ तस्स पंच-अणाभोगा सहसा चोलपट्टगाऽऽगारा मयहर समाहि, सेसेसु चोलपट्टगागारो णत्थि, निव्विगईए अट्ठ नव य आ-गारा ' इत्युक्तं, अत्र विकृतयः पूर्वोक्ताः , अधुना प्रकृतमु-च्यते-कदाष्टौ क वा नवाऽऽकारा ? इति, तत्र-नवनीते उद्-ग्राहिमके अद्रवदध्नि, गालित इत्यर्थः , ' पिशिते -माले इन्ने गुडे चैव, अद्रवग्रहणं सर्वत्राभिसंबन्धनीयं, नवाकारा अ-मीषा विकृतिविशेषाणां भवन्ति, शेषाणां द्रवाणां-विकृति-विशेषाणामष्टावेवाकारा भवन्ति, उत्क्षिप्तविवेको न भव-तीति गाथार्थः ॥ ५११ ॥ इह चेदं सूत्रम्-' निव्विगतीयं प-च्चक्खाइ ' इत्यादि, अएणत्थ १ सहसा २ लेवालेव ३ गि-हत्थसंसट्ठ ४ उक्खित्तविवेग ५ पडुच्चमक्खिएणं ६ पारिट्ठा-वणिया ७ मयहर ८ सव्वसमाहिवत्तियागारेणं ९ वोसिरइ, तत्थ अणाभोग-सहसाकारा लेवालेवा तहेव दट्ठव्वा, गि-हत्थसंसट्ठस्स उ इमा विही-खीरेण जइ कुसणिओ कूरो लब्भइ, तस्स जइ कुडगस्स ओदणाउ चत्तारि अंगुलाणि दुद्धं ताहे निव्विगइयस्स कप्पइ, पंचमं त्वारब्भ विगतीयं, एवं दहिस्सवि, वियडस्सवि, केसुवि विसएसु वियडेण मी-सिज्जइ ओदणो ओगाहिमगो वा फाणियगुलस्स निल्लव-णाए य एएहिं कुम्मिणिए जइ अंगुलं उवरिं अच्छइ तो व-ट्टइ परेण न वट्टइ, महुस्स पोग्गलस्सगस्स य अद्धअंगुलगं संसट्ठं होइ पिंडगुलस्स नवणीयस्स य अ(द्दा) मलमित्तं संसट्ठं जइ वि बहूणि एतप्पमाणाणि करोति एगं पि वट्टइ न

कप्पइ उक्खित्तविवेगो जहा आयंबिलये उद्धरिउ तीरइ सेसेसु ण्ऽन्नि, पडुच्च मक्खियं पुण जइ अंगुलिए गहाय मक्खेइ निल्लेणं वा घएण वा ताहे निव्विगइयस्स कप्पइ, अह धाराए छुभइ मणागपि न कप्पइ पारिट्ठावणियागारो उ लेसओ भणिओ एव-इति वृद्धसम्प्रदाय, कृत प्रसङ्गेन, प्रकृत प्रस्तुम'-आह इह आकारा एव किमर्थमित्याह—

वयभंगे गुरुदोसो, थेवस्सऽवि पालणा गुणकरी अ।
गुरुलाघवं च नेअं, धम्मम्मि अओ उ आगारा ॥५१२॥

व्रतभङ्गो गुरुदोष भगवदाज्ञाविराधनात्, स्तोकस्यापि पालना व्रतस्य गुणकारिणी च, विशुद्धकुशलपरिणामरूपत्वाद्, गुरुलाघवं च विज्ञेय धर्मे, एकान्तग्रहस्य प्रभूतापकारित्वेनाशोभनत्वात्, यत एतद्वमत.-अस्मात् कारणादाकारा इति गाथार्थ.॥५१२॥ गृह, आगमांहि कतमागार, आगमा—रुक्खा तेहिं कत आगारं ति। नि० चू० ३ उ०।

**आगारगोवणा-आकारगोपना**-स्त्री०। स्त्रीणा द्वासप्ततिकलान्तर्गते कलाभेदे, कल्प० १ अधि० ७ क्षण।

**आगारचरित्तधम्म-आगारचरित्रधर्म**-पुं०। अगारं गृहं तद्योगादागारा-गृहिणस्तेषा यश्चरित्रधर्म-सम्यक्त्वमूलाणुव्रतादिपालनरूप स तथा। चारित्रधर्मभेदे, स्था० २ ठा० १ उ०।

**आगारभाव-आकारभाव**-पुं०। आकारस्य-आकृतेर्भावा-पर्य्याया। भ० ६ श० ७ उ०। आकृतिलक्षणपर्य्याये, भ० १ श० ८ उ०। आकारभाव स्वरूपविशेष। जी० ३ प्रति० ४ अधि०।

**आगारभावपडोयार-आकारभावप्रत्यवतार**-पुं०। आकारस्य-आकृतेर्भावा:-पर्य्याया। अथवा-आकाराश्च भावाश्च आकारभावास्तेषां प्रत्यवतार.-अवतरणमाविर्भाव आकारभावप्रत्यवतार। भ० ६ श० ७ उ०। आकारभावस्य-आकृतिलक्षणपर्य्यायस्य प्रत्यवतार-अवतरणमाकारभावप्रत्यवतार। भ० ६ श० ७ उ०। आकृतिलक्षणपर्य्यायस्याविर्भावे, जी०।

किमागारभावपडोयारा णं भंते! दीवसमुद्दा पण्णत्ता। (सूत्र-१२३+)

आकारभाव'-स्वरूपविशेष- कस्याऽऽकारभावस्य प्रत्यवतारो येषां ते किमाकारभावप्रत्यवतारा, बहुलग्रहणाद्वैयधिकरण्येऽपि समास। गमिति पूर्ववत्, द्वीपसमुद्रा किंस्वरूपं द्वीपसमुद्रागामिति भाव। जी० ३ प्रति० ४ अधि० १ उ०। (अत्र विस्तर 'दीवसमुद्द' शब्दे चतुर्थभागे २५४३ पृष्ठे दर्शयिष्यते)

**आगारलक्खण-आकारलक्षण**-न०। आक्रियते-अभिप्रेत ज्ञायतेऽनेनेत्याकारो-बाह्यचेष्टारूप स एवान्तरेङ्गितगमकत्वाल्लक्षणमाकारलक्षणम्। लक्षणविशेषे आन्तरेङ्गितगमकता चाकारस्य सुप्रसिद्धा। आ० म० १ अ०।

आगारं त्ति (२१४६)। आकारलक्षणम् (भाष्यकार.) व्याचिख्यासुराह—

बाहिरचिट्ठागारो, लक्खिज्जइ तेण माणसाकूतं।
आहारादिच्छाइ-त्थवयणनेत्ताइसरणाहिं ॥ २१५५ ॥

आक्रियते-आकल्यते ज्ञायतेऽभिप्रेत-मनोविकारूपल्पन वस्त्वनेनेत्याकारो—बाह्यचेष्टारूप। तेन च मानसमाकूतम्-अभिप्रेत वस्तु लक्ष्यत इति लक्षणमभ्युच्यते। तथाहि-राजादीनामाहारादीच्छाहस्तवदननेत्रादिसञ्ज्ञाभिलक्ष्यत एव विचक्षणै। उक्तं च-"आकारैरिङ्गितैर्गत्या, चेष्टया भाषणेन च। नेत्रवक्त्रविकारैश्च, लक्ष्यतेऽन्तर्गतं मन"॥१॥इति। विशे०।

(तच्चानेकविधं दर्शितं यथा)—

"आगारलक्खणं अणेगविहं—गंतुमागारं देंति, भोत्तुमागारं देंति, सोतुमागारं देंति। एवं वक्तु, द्रष्टुमित्यादि, कहं गतु०। "अवलोयणदिसाणं, वियंभण साडगस्स सट्ठवणा। आसणसिढिलीकरणं पडितलिंगाणि चत्तारि ॥१॥ भोत्तुमिच्छतिभोयणविधि वक्कं पसरइत्ते य से बहुसो दिट्ठी य भमति तत्थेव पडति छायस्स लिंगाणि तएणं विक्रियत। ततो हुत्त वा पुलोएति। सोतु जहा उदीरेते य णिद्दाति तस्स वि य सइयकायतस्स दुहियस्स उ मिलाइयमसत्थवीयरागस्स गाथा। द्रष्टुं जह आगारेहिं सुणं मोणी वरेहिं चक्खुरागेहिं जणमणुरत्तविरत्तं पहट्ठचित्त च पदुट्ठ "आकारैरिङ्गितैर्भावै, क्रियाभिर्भाषितेन च। नेत्रवक्त्रविकारैश्च, गृह्यतेऽन्तर्गतं मन"॥१॥ अत्थीणि चेव जाणंति रुट्ठस्स खग दिट्ठीओ। उप्पलधवला पसन्नचित्तस्स दुहियस्स उ गिलायंति गंतुमणस्सुस्सुया होति। आ० चू० १ अ०।

**आगारविगार-आकारविकार**-पुं०। आकृतेर्विकृतौ, ग०।

गइविब्भमाइएहिं, आगारविगार तह पयासंति।

स्वच्छन्द श्रमणो गतिभ्रमादिकै। 'आगारविगार' त्ति-अत्र विभक्तिलोप प्राकृतत्वात्। तत आकारं मुखनयनस्तनाद्याकृति, विकारं च मुखनयनादिविकृति। यद्वा-आकारस्य-स्वाभाविकाऽऽकृते विकारो-विकृतिस्तम्, तथा प्रकाशयन्ति। ग० ३ अधि०।

**आगारसुद्धि-आकारशुद्धि**-स्त्री०। आकारशुद्धिस्तु राजाभियोगादिप्रत्याख्यानापवादमुत्कलीकरणात्मिका। शुद्धिभेदे, ध० २ अधि०।

**आगारिय-आकारिक**-त्रि०। आकारे कुशल ठञ्, आकारिक। तत्र नियुक्ते, वाच०।

**आकारित**-त्रि०। उत्सारिते, "अरिओ आगारि आस्सारिओ वा एगट्ठं ति,,। आव० ४ अ०।

**आगारिक**-न०। अगा-वृक्षास्तै कृतमगारं गृहं तदस्यास्तीति मत्वर्थलोपादगारी गृहस्थस्तस्येदमागारिकम्। विशे०।

दुविहं चेव चरितं, अगारमणगारियं चेव ॥ ७८६ ॥

अगा-वृक्षास्तै कृतत्वाद् आ-समन्तात् राजते इति अगारम्-गृहम्, "क्वचित्" ॥५।१।१७१॥ इति डप्रत्यय, तदस्यास्तीति। "अभ्रादिभ्य"॥७।२।४६॥ इति मत्वर्थीय अकारप्रत्यय। अगार-गृही तस्मिन् भवम् आगारिकम्। "अध्यात्मादिभ्य इकण्"॥६।३।७८॥ इति इकणप्रत्यय, चारित्रसामायिकभेदे, आ० म० १ अ०। विशे०।

आगारेऊण-आकार्य-अव्य० । रे कयास्यसीदानीमित्येव-माहूयत्यर्थे , आव० ।

आगारेऊण परं, रणि व्व जड सो करिज्ज उस्सग्गं ॥ १४५५४ ॥

'आगारेऊण' त्ति—आकार्य रे रे क यास्यसीदानीम् , एव परम्-अन्य कश्चन 'रणि' व्व सग्राम इव यदि स. कुर्य्यात्कायोत्सर्गम् । आव० ५ अ० ।

आगाल-आगाल-पुं० । आगालनमागाल । समप्रदेशावस्थाने, आचा० । सोऽपि चतुर्द्धा-व्यतिरिक्त उदकादेर्निम्नप्रदेशावस्थानम् , भावागालो ज्ञानादिक एव तस्यात्मनि रागादिरहितेऽवस्थानमिति कृत्वा । आचा० १ श्रु० ५ अ० १ उ० । उदीरणाविशेषे च । प्रथमस्थितौ च । यत्पुनर्द्वितीयस्थितेसकाशादुदीरणाप्रयोगेणैव दलिकं समाकृष्योदये प्रक्षिपति सा उदीरणाऽपि पूर्वसूरिभिर्विशेषप्रतिपत्त्यर्थमागाल इत्युच्यते । कर्म० ५ कर्म० । ( अधिकम् 'उवसमसेढि' शब्देऽस्मिन्नेव भागे वक्ष्यते )

आगास-आकाश-पुं० । न० । आकाशन्ते-दीप्यन्ते स्वधर्मोपेता आत्मादयो यत्र । तस्मिन् , दश०१अ० । आ-समन्तात् सर्वाण्यपि द्रव्याणि काशन्ते दीप्यन्ते अत्र व्यवस्थितानि । जी० १ प्रति० । आ-मर्य्यादयाऽभिविधिना वा सर्वेऽर्था काशन्ते-प्रकाशन्ते स्वस्वभावं लभन्ते यत्र तदाकाशम् । भ० २ श० १ उ० । आङिति मर्य्यादया स्वस्वभावापरित्यागरूपया काशन्ते—स्वरूपेण प्रतिभासन्तेऽस्मिन् व्यवस्थिता. पदार्था इत्याकाशम् , यदा त्वभिविधावाङ् तदा आङिति सर्वभावाभिव्याप्त्या काशते इत्याकाशम् । (सूत्र-टी० ३ ) प्रज्ञा०१पद । उत्त० । सर्वभावावकाशनादाकाशम् । आ—मर्य्यादया तत्संयोगेऽपि स्वकीयस्वकीयरूपेऽवस्थानत सर्वथा तत्स्वरूपत्वाप्राप्तिलक्षणया काशन्ते स्वभावलाभेनावस्थितिकरणेन च दीप्यन्ते पदार्थसार्था यत्र तदाकाशमिति । अथवा-अभिविधिना सर्वात्मना तत्संयोगानुभवलक्षणेन काशन्त दीप्यन्ते पदार्थो यत्र तदाकाशम् । अनु० ६७ सूत्रटी० । सर्वद्रव्यस्वभावानाआशयति-आदीपयति तेषा स्वभावलाभेऽवस्थानदानादित्याकाशम् । आङ्-मर्य्यादाऽभिविधिवाची,तत्र मर्य्यादायाम्-आकाशे भवन्तोऽपि भावाः स्वात्मन्येवासते नाकाशता यान्तीत्यर्थ तेषामात्मसादकरणाद् अभिविधौ तु-सर्वभावव्यापनादाकाशमिति । स्था० २ ठा० १ उ० ७४ सूत्रटी० । आ-समन्तात् काशतेऽवगाहदानतया प्रतिभासत इत्याकाशम् । कर्म० ४ कर्म० । लोकालोकव्याप्यनन्तप्रदेशात्मकाऽमूर्तद्रव्यविशेषे , अनु० । आकाशं तु जीवादिपदार्थानामाधारान्यथानुपपत्तेरस्तीति श्रद्धेयम् । न च धर्माधर्मास्तिकायावेव तदाधारौ भविष्यत इति वक्तव्य, तयोस्तद्गतिस्थितिसाधकत्वेनोक्तत्वात् , न चान्यसाध्य कार्यमन्य' प्रसाधयत्यतिप्रसङ्गादिति । अनु० ६७ सूत्रटी० । " जीवाना पुद्गलानां च, धर्माधर्मास्तिकाययो । बादराणा घटादीना-माकाशमवकाशदम् ॥ १ ॥ " इति । आव० ४ अ० । जीवाना पुद्गलाना धर्माधर्मास्तिकाययोर्बादरघटादीना चोपग्रहवदवकाशदम् । दर्श० ४ तत्त्व ।

अथाऽऽकाशद्रव्यस्य लक्षणमाविष्करोति—

यो दत्ते सर्वद्रव्याणां, साधारणावगाहनम् ।
लोकालोकप्रकारेण, द्रव्याकाशः स उच्यते ॥ ८ ॥

य -आकाशास्तिकाय. सर्वद्रव्याणा साधारणावगाहनम्-सामान्यावकाश दत्ते स द्रव्याकाशो लोकालोकप्रकारेण उच्यते इति । यत सर्वद्रव्याणा य सर्वदा साधारणावकाशदाता स अनुगत एक आकाशास्तिकाय कथित सर्वाऽऽधार इति । यथा पक्षिणा गगनमिवेति व्यवहारनयदेशभेदेन भवेत् , तद्देशीयानुगत आकाश एव पर्यवसन्न स्यात् । तथा च-तत्तद्देशोर्ध्वभागावच्छिन्नमूर्त्ताभावादिना तद्व्यवहारोपपत्तिरिति वर्द्धमानाद्युक्त नाऽनवद्यम् । तस्याभावादिनिष्ठत्वेनानुभूयमानद्रव्याधारांशापलापप्रसङ्गात्तावद्गतिसन्धानेऽपि लोकव्यवहारेणाकाशदशप्रतिसंधनयोक्तव्यवहाराच्च । द्रव्या० १० अध्या० ।

भायणं सव्वदव्वाणं, नहं ओगाहलक्खणं ॥ ६ ॥

यत्पुन सर्वद्रव्याणा-जीवादीना भाजनम्-आधाररूप नभः-आकाशम् उच्यते । तच्च नभ अवगाहलक्षण अवगाढु प्रवृत्ताना जीवाना पुद्गलाना आलम्बा भवति इति । अवगाह -अवकाश स एव लक्षणं यस्य तत् अवगाहलक्षणं नभ उच्यते । उत्त० २८ अ० ।

( आकाशस्य नित्यत्व द्रव्यत्वञ्च )-

आकाशाख्यैकनित्य-द्रव्यप्रसिद्ध्यै शब्द गुणत्वाल्लिङ्गत्वेन प्रतिपादयन्ति । तथा च परेषा प्रयोग'-ये विनाशित्वोत्पत्तिमत्त्वादिधर्माध्यासिनास्ते क्वचिदाश्रिता यथा घटादय , तथा च-शब्दास्तस्मादंभिराश्रितै क्वचिद् भवितव्यं, यश्चैषामाश्रय स पारिशेष्यादाकाश , तथाहि-नायं शब्द पृथिव्यादीना वायुपर्यन्तानां गुणः, अध्यक्षग्राह्यत्वे सत्यकारणगुणपूर्वकत्वात्, ये तु पृथिव्यादीना चतुर्णा गुणास्ते बाह्येन्द्रियाऽध्यक्षत्वे सति-अकारणगुणपूर्वका न भवन्ति, यथा रूपादयो, न च तथा शब्द एवम्-'अयावद्द्रव्यभावित्वाद्' आश्रयाद्बहिर्यादेरन्यत्रोपलब्धेश्च' इत्यादयो हेतवो द्रष्टव्या । स्पर्शवता यथोक्तविपरीता गुणा उपलब्धा । 'प्रत्यक्षत्वे सति ' इति च विशेषणं परमाणुगतै पाकजैरनैकान्तिकत्वं मा भूदित्युपात्तम् । न च-आत्मगुण अहङ्कारेण विभक्तग्रहणाद् बाह्येन्द्रियाध्यक्षत्वात् आत्मान्तरग्राह्यत्वाच्च , बुध्यादीनामात्मगुणाना तद्वैपरीत्योपलब्धे । न दिक्-काल-मनसा श्रोत्रग्राह्यत्वात् । अत पारिशेष्यात् गुणो भूत्वा आकाशस्य लिङ्गम् आकाशं च शब्दलिङ्गाविशेषात् विशेषलिङ्गाभावाच्च एक विभु च सर्वत्रोपलभ्यमानगुणत्वात् समवायित्वे सत्यनाश्रितत्वाच्च द्रव्यम् , अकृतकत्वान्नित्यम् । सम्म० ३ काण्ड ४६ गाथाटी० ।

( आकाशस्य सावयवत्वम् )—

न च सावयवत्वमसिद्ध प्रदेशव्यवहारस्याऽऽकाशे दर्शनात् । न च-' आकाशस्य प्रदेशा ' इति व्यवहारो मिथ्या, मिथ्यात्वनिमित्ताभावात् । न च संयोगस्याव्याप्यवृत्तित्वनिमित्त सावयवत्वाध्यारोपो मिथ्यात्वकारण निरवयव अव्याप्यवृत्ति संयोगाधारत्वस्याप्यारोपनिमित्तस्यैवानुपपत्ते. । यदि च-सावयवं नभो न भवेत् तदा श्रोत्राकाश-

समवेतस्यैव शब्दस्य ब्रह्मभाषितस्याप्युपलम्भोऽस्मदादि-(दे)र्भवेत् निरवयवैकाकाशश्रोत्रसमवेतत्वात् । अथ धर्माधर्माभिसंस्कृतकर्णशष्कुल्यवरुद्धाकाशदेश एव श्रोत्रं तत्र न च ब्रह्मभाषितस्यासमवायात्राऽस्मदादिभिः श्रवणम् । नन्वेवम्-मैव सावयवत्वप्रसक्तिः श्रोत्राकाशप्रदेशात् ब्रह्मशब्दाधाराकाशदेशस्यान्यत्वात् । यदि च-सावयवमाकाशं न भवेत्, शब्दस्य नित्यत्व सर्वगतत्वं च स्याद् आकाशैकगुणत्वात्तन्महत्त्ववत् । अथ क्षणिकैकदेशवृत्तिविशेषगुणत्वस्य शब्दे प्रमाणेन प्रतिसिद्धेर्नायं दोषः । नन्वेवमेकदेशवृत्तिविशेषगुणत्वाभ्युपगमे कथं न शब्दाधारस्याकाशस्य सावयवत्वप्रसिद्धिः ? न हि निरवयवत्वे तस्यैकदेश एव शब्दो वर्त्तते न सर्वत्र इति व्यपदेशः सङ्गच्छते । न च संयोगस्याव्याप्यवृत्तित्वनिबन्धनोऽयं यत आकाशं व्याप्य संयोगो न वर्त्तते इति तदेकदेशे वर्त्तते इत्यभ्युपगमप्रसक्तिः । व्याप्यवृत्तित्वं हि सामस्त्यवृत्तित्वं, तत्प्रतिषेधश्च पर्युदासपक्षे एकदेशवृत्तित्वमेव, प्रसज्यपक्षे तु वृत्तिप्रतिषेध एव. नचासौ युक्तः संयोगस्य गुणत्वेन द्रव्याश्रितत्वात् । तदभावे च तदभावात् । न च निरवयवत्वे आकाशस्य सन्तानवृत्त्या आगतस्य शब्दस्य श्रोत्रेणाप्युपलब्धिः संभवति अन्याऽन्याकाशदेशोत्पत्तिद्वारेण तस्य श्रोत्रसमवेतत्वानुपपत्तेः । जलतरङ्गन्यायेनाऽपराऽपराऽऽकाशदेशादावपरापरशब्दोत्पत्तिप्रकल्पनायां कथं नाऽऽकाशस्य सावयवत्वम् ?, किं च-आकाशं शब्दोत्पत्तौ समवायिकारणमभ्युपगम्यते यच्च समवायिकारणं तत्सावयवं, यथा-तन्त्वादि, समवायिकारणं च । परेण शब्दोत्पत्तावाकाशमभ्युपगतम् । न च परमाण्वात्मादिना व्यभिचारः तस्यापि सावयवत्वात्; अन्यथा-द्व्यणुकबुद्ध्यादेस्तत्कार्यस्य सावयत्वं न स्यात् न च बुद्ध्यादेः सावयवत्वमसिद्धम् आत्मनः सावयवत्वेन साधितत्वात् तद्विशेषगुणत्वेन बुद्ध्यादेः कथंचित्तादात्म्यसिद्धितः सावयवत्वोपपत्तेः ।

नच यत एव प्रमाणादणवः सिद्धास्तेषां निरवयवत्वमपि तत एव सिद्धमिति तद्ग्राहकप्रमाणबाधितत्वात् सावयवत्वानुमानस्याप्रामाण्यं प्रमाणेन परमाणूनामसिद्धावाश्रयासिद्धितः सावयवत्वानुमानस्याप्रवृत्तिरिति वाच्यं, यतः सावयवकार्यस्य सावयवकारणपूर्वकत्वे साध्ये न पूर्वोक्तदोषावकाशः । न च कार्यकारणयोरात्यन्तिको भेदः, समवायनिषेधे हि हिमवद्-विन्ध्ययोरिव भेदे विशिष्टकार्यकारणरूपतानुपपत्तेः । ततो द्व्यणुकादेः परमाणुकार्यस्य सावयवत्वात् तदात्मभूताः परमाणवः कथं न सावयवा इति न परमाण्वादिभिर्व्यभिचारः ।

अपि च-सावयवमाकाशं तद्विनाशान्यथानुपपत्तेः । नचाऽऽकाशस्य विनाशित्वमसिद्धम् । तथाहि-अनित्यमाकाशं, तद्विशेषगुणाभिमतशब्दविनाशान्यथानुपपत्तेः । यतो न तावदाश्रयविनाशाच्छब्दविनाशोऽभ्युपगतस्तन्नित्यत्वाभ्युपगमविरोधात् न विरोधिगुणप्रादुर्भावात्, तन्महत्त्वादेरेकार्थसमवायित्वेन रूपरसयोरिव विरोधिनाऽसिद्धेः । विरोधित्वे वा श्रवणसमयेऽपि तद्भावप्रसङ्गः तदापि तन्महत्त्वस्य सद्भावात् । नापि संयोगादिर्विरोधिगुणस्तस्य तत्कारणत्वात् । नाऽपि संस्कारः तस्य गुणत्वेन शब्देऽसमवायात्संभवे वा शब्दस्य द्रव्यत्वप्रसक्तिः आकाशस्य द्रव्यत्वेन तत्संभवेऽपि तस्याभावे आकाशस्याप्यभावप्राप्तिः तस्य तदव्यतिरेकात् व्यतिरेके वा 'तस्य' इति संबन्धायोगात् । नापिशब्दोपलब्धिप्रापकधर्माद्यभावात् तदभावः तस्य विभिन्नाश्रयस्यातेन विनाशयितुमशक्यत्वात् । शक्यत्वे वा तदाधारस्यापि विनाशप्रसङ्गस्तस्य तदव्यतिरेकात् ततोऽम्बरविशेषगुणत्वे शब्दस्य तद्विनाशान्यथानुपपत्त्या तस्यापि विनाशित्वं, ततोऽपि सावयत्वम् । न च बुद्ध्यादिभिर्व्यभिचारः उक्तोत्तरत्वात् ।

किंच-आश्रितविनाशे आश्रयत्वस्यापि विनाशः आश्रितत्वनिबन्धनत्वात् तस्य धर्मस्य च धर्मिणः कथंचिदव्यतिरेकात् । तथा आकाशस्य विनाशित्वात्सावयवत्वं घटादेरिवोपपन्नम् । किं च-सावयवमाकाशम्, हिमवद्विन्ध्यावरुद्धविभिन्नदेशत्वात् तदवरुद्धदेशभूभागवद्, अन्यथा तयोरूपरसयोरिवैकदेशाकाशस्थितिप्रसक्तिः, न चैतद् दृष्टमिति सर्वं वस्तूत्पादविनाशस्थित्यात्मकत्वात्कथंचित्सावयवं सिद्धम् । सम्म० ३ काण्ड ३३ गाथाटी० ।

( आकाशस्य निरालम्बनत्वम् )-" आगासे चेव निरालंबे " ( सूत्र-२९४ ) आकाशमिव निरालम्बो यथाऽऽकाशमनालम्बनं तथा साधुर्न किञ्चिदालम्बते । प्रश्न० ५ सब० द्वार ।

( आकाशं द्विविधम् )—

**दुविहे आगासे पण्णत्ते, तं जहा-लोगागासे चेव, अलोगागासे चेव । (सूत्र-७४+)**

तत्र लोको यत्राकाशदेशे धर्मास्तिकायादिद्रव्याणां वृत्तिरस्ति स एवाकाशं लोकाकाशमिति । ( स्था० ) लोकाऽलोकभेदेनाऽऽकाशद्वैविध्यमुक्तम् । स्था० २ ठा० १ उ० ।

( एतमेवार्थं मीमांसयन्नाह )—

**धर्मादिसंयुतो लोको-ऽलोकस्तेषां वियोगतः ।**
**निरवधिः स्वयं तस्या-ऽवधित्वं तु निरर्थकम् ॥ ६ ॥**

धर्मास्तिकायादिसंयुक्त आकाशो लोकः, तदितरस्त्वलोकः । स च पुनर्निरवधिः-अपारः अलोकः, तस्य-अलोकस्य स्वयम्-आत्मनाऽवधित्वमन्तर्गडु इति । कश्चिदाहात्र-यथा लोकस्य पार्श्वे अलोकस्यापि पारोऽस्ति; तथैवाग्रेऽपि द्वितीयतटे पारो भविष्यतीति ब्रुवाणमुत्तरयन्ति-लोकस्तु भावरूपोऽस्ति, तस्यावधित्वं घटते परं तु अग्रे अलोकस्य केवलमभावात्मकस्याऽवधित्वं कथं कल्प्यते शशशृङ्गवत् । यथा असद्-अविद्यमानं शशशृङ्गं न कुत्रापि निरीक्ष्यमाणं विद्यमानवदाभाति तथैवैतस्याप्यलोकस्य अविद्यमानस्यावधित्वं न घटामाटीकते । अथ भावरूपात्मकत्वमङ्गीक्रियते तदा तु षडतिरिक्तमन्यद् द्रव्यं नास्तीति व्यवहारात् आकाशदेशरूपस्य तु तदन्तत्वं कथयता बुद्ध्या धानो जायते । तस्मादलोकाकाशस्तु अनन्त एव मन्तव्य इति । आकाशो यथा साऽन्तः शस्तिता धर्माऽधर्मानुभावात् तस्य भावस्तदभावात्तदभावः । अलोकाकाशोऽपि सान्तो धर्माधर्मानुभावी भवन् अतिरिक्तद्रव्यत्वमापत्स्यते । तस्माद्यथोक्तमेव न्याय्यम् । यावता आकाशेन तद्धर्माधर्मौ व्याप्य स्थितौ तावता

तत्परिमाणशालिना आकाशेनापि भवितव्यं तयोरभावात्तस्याप्यभाव. सुपरिशीलनीय इति । द्रव्या० १० अध्या० ।

( लोकाऽलोकाऽऽकाशौ विस्तरेण )—

**कइविहे णं भंते ! आगासे पण्णत्ते ?, गोयमा ! दुविहे आगासे पण्णत्ते, तं जहा–लोयाऽऽगासे य, अलोयाऽऽगासे य।**

'कतिविहे णं भंते !' इत्यादि, तत्र लोकाऽलोकाऽऽकाशयोर्लक्षणमिदम्–" धर्मादीनां वृत्ति-र्द्रव्याणां भवति यत्र तत् क्षेत्रम् । तैर्द्रव्यैः सह लोक-स्तद्विपरीतं ह्यलोकाख्यम् " ॥ १ ॥ इति ।

**लोयाऽऽगासे णं भंते ! किं जीवा, जीवदेसा, जीवपएसा, अजीवा, अजीवदेसा, अजीवपएसा ?, गोयमा ! जीवा वि, जीवदेसा वि, जीवपदेसा वि, अजीवा वि, अजीवदेसा वि, अजीवपदेसा वि । जे जीवा ते नियमा एगिंदिया बेइंदिया तेइंदिया चउरिंदिया पंचिंदिया अणिंदिया, जे जीवदेसा ते नियमा एगिंदियदेसा०जाव अणिंदियदेसा, जे जीवपदेसा ते नियमा एगिंदियपदेसा०जाव अणिंदियपदेसा । जे अजीवा ते दुविहा पण्णत्ता, तं जहा–रूवी य, अरूवी य । जे रूवी ते चउव्विहा पण्णत्ता, तं जहा–खंधा, खंधदेसा, खंधपदेसा, परमाणुपोग्गला । जे अरूवी ते पंचविहा पएणत्ता तं जहा–धम्मत्थिकाए, नो धम्मत्थिकायस्स देसे, धम्मत्थिकायस्स पदेसा । अधम्मत्थिकाए नो अधम्मत्थिकायस्स देसे, अधम्मत्थिकायस्स पदेसा । अद्धासमए । ( सूत्र–१२१ )**

'लोगागासेणमि'त्यादौ षट् प्रश्ना । तत्र लोकाकाशेऽधिकरणे 'जीव त्ति-सम्पूर्णानि जीवद्रव्याणि ' जीवदेस ' त्ति-जीवस्यैव बुद्धिपरिकल्पिता द्व्यादयो विभागा । 'जीवप्पएस' त्ति-तस्यैव बुद्धिकृता एव अकृष्णा देशा प्रदेशा निर्विभागा, भागा इत्यर्थ । ' अजीव ' त्ति-धर्मास्तिकायादय, ननु लोकाकाशे जीवा अजीवाश्चेत्युक्ते तद्देशप्रदेशास्तत्रोक्ता एव भवन्ति, जीवाद्यव्यतिरिक्तत्वाद्देशादीनां, ततो जीवाजीवग्रहणे किं देशादिग्रहणेनेति ?, नैवम्-निरवयवा जीवाद्य इति मतव्यवच्छेदार्थत्वादस्येति । अत्रोत्तरम्–' गोयमा ! जीवाऽवी ' त्यादि, अनेन चाद्यप्रश्नत्रयस्य निर्वचनमुक्तम् । अथान्त्यस्य प्रश्नत्रयस्य निर्वचनमाह–' रूवीय ' त्ति-मूर्त्ता , पुद्गला इत्यर्थ. । ' अरूवीय ' त्ति-अमूर्त्ता, धर्मास्तिकायादय इत्यर्थ , ' खंध ' त्ति-परमाणुप्रचयात्मका स्कन्धा.- स्कन्धदेशा द्व्यादयो विभागा स्कन्धप्रदेशास्तस्यैव निरंशा अंशा. परमाणुपुद्गला स्कन्धभावमनापन्ना. परमाणव इति, ततो लोकाकाशे रूपिद्रव्यापेक्षया ' अजीवा वि अजीवदेसावि अजीवप्पएसावि ' इत्येतदर्थत स्यादणूनां स्कन्धानाञ्चाजीवग्रहणेन ग्रहणात् , ' जे अरूवी ते पंचविहे ' त्यादि-अन्यत्राप्यरूपिणो दशविधा उक्ता , तद्यथा-आकाशास्तिकायस्तद्देशस्तत्प्रदेशश्चेत्येवं धर्माधर्मास्तिकायौ समयश्चेति दश इह तु सभेदस्याकाशस्याधारत्वेन विवक्षितत्वात्तदाधेया सप्त वक्तव्या भवन्ति, न च तेऽत्र विवक्षिता. वक्ष्यमाणकारणात् ये तु विवक्षितास्तानाह-पञ्चेति, कथमित्याह–' धम्मत्थिकाय ' त्यादि-इह जीवानां पुद्गलानां च बहुत्वादेकस्यापि जीवस्य पुद्गलस्य वा , स्थाने सङ्कोचादि तथाविधपरिणामवशाद् बहवो जीवा पुद्गलाश्च तथा तद्देशास्तत्प्रदेशाश्च सम्भवन्तीति कृत्वा जीवाश्च जीवदेशाश्च जीवप्रदेशाश्च, तथा रूपिद्रव्यापेक्षया अजीवाश्चाजीवदेशाश्चाजीवप्रदेशाश्चेति सङ्गतम् , एकत्राप्याश्रये भेदवतो वस्तुत्रयस्य सद्भावात् । धर्मास्तिकायादौ तु त्रितयमेव युक्तं, यतो यदा सम्पूर्णं वस्तु विवक्ष्यते तदा धर्मास्तिकायादीत्युच्यते, तदंशविवक्षायां तु तत्प्रदेशा इति तेषामवस्थितरूपत्वात्, तद्देशकल्पना त्वयुक्ता, तेषामनवस्थितरूपत्वादिति । यद्यपि चानवस्थितरूपत्वं जीवादिदेशानामप्यस्ति तथापि तेषामेकत्राश्रये भेदेन सम्भव प्ररूपणाकारणम् इह तु तत्रास्तिकायादेरेकत्वादसङ्कोचादिधर्मकत्वाच्चेति । अत एव धर्मास्तिकायादिदेशनिषेधायाह–" नो धम्मत्थिकायस्स देसे " तथा–" नो अधम्मत्थिकायस्स देसे " त्ति, चूर्णिकारोऽप्याह—' अरूविणो दव्वा समुदयसद्देण भएणंति । नीसेसा पएसेहिं वा नीसेसा भणेज्जा, नो देसेणं तस्स अणवट्ठियपमाणत्तणओ, तेण न देसेण निद्देसो, जो पुण देससद्दो एएसु कओ सो सविसयगयववहारत्थं परदव्वफुसणादिगयववहारत्थं चेति, तत्र स्वविषये धर्मास्तिकायादिविषये यो देशस्य व्यवहारो यथा-धर्मास्तिकायः स्वदेशेनोर्ध्वलोकाकाशं व्याप्नोतीत्यादि तदर्थं, तथा परद्रव्येण ऊर्ध्वलोकाकाशादिना य स्वस्य स्पर्शनादिगतो व्यवहारो यथा ऊर्ध्वलोकाकाशेन धर्मास्तिकायस्य देश स्पृश्यते इत्यादि तदर्थमिति ' अद्धासमए ' त्ति-अद्धाकालस्तल्लक्षण समय —क्षणोऽद्धासमय , स चैक एव वर्त्तमानक्षणलक्षण , अतीतानागतयोरसत्त्वादिति, । कृतं लोकाकाशगतप्रश्नषट्कस्य निर्वचनम् ।

अथाऽलोकाऽऽकाशं प्रति प्रश्नत्रयमाह—

**अलो(गाऽऽ)याकासे णं भंते ! किं जीवा ? पुच्छा तह चेव, गोयमा ! नो जीवा०जाव नो अजीवप्पदेसा । एगे अजीवदव्वदेसे अगुरुयलहुए अणंतेहिं अगरुयलहुयगुणेहिं संजुत्ते सव्वाऽऽगासे अणंतभागूणे । (सूत्र–१२२)**

' पुच्छा तह चेव ' त्ति—यथा लोकाकाशप्रश्ने, तथाहि— ' अलोकाकासे णं भंते ! किं जीवा जीवदेसा जीवप्पएसा अजीवा अजीवदेसा अजीवप्पएस ' त्ति— निर्वचनं त्वेषां षएणामपि निषेधस्तथा—' एगे अजीवदव्वदेसे ' त्ति—अलोकाकाशस्य देशत्वं लोकालोकरूपाकाशद्रव्यस्य भागरूपत्वात् अगरुअलहुए' त्ति-गुरुलघुत्वाव्यपदेश्यत्वात् ' अणंतेहिं अगुरुयलहुयगुणेहिं' ति-अनन्तै स्वपर्यायपरपर्यायरूपैर्गुणै , अगुरुलघुस्वभावैरित्यर्थ । 'सव्वागासे अणंतभागूणे ' त्ति—लोकाकाशस्यालोकाकाशापेक्षयाऽनन्तभागरूपत्वादिति । भ० २ श० १० उ०। ( एकैकस्याकाशप्रदेशस्यागुरुलघुपर्याया अनन्ता इति 'अगरुलहुय ' शब्दे प्रथमभागे द्रष्टव्यम् ।) आकाशस्य पर्याया –नभो-व्योमा-ऽन्तरिक्षाऽऽ-काशादय. । विशे० । आकाश नभस्तारापथो व्यो.

-माऽम्बरमित्यादि । अनु० । स्था० । ( अस्य बहव पर्याया 'आगासत्थिकाय' शब्देऽस्मिन्नेव भाग वर्णयिष्यन्ते )। अवगाहदानलक्षणे सर्वद्रव्याधारभूते महाभूतविशेषे च। सूत्र० २ श्रु० १ अ० । शब्दतन्मात्रादाकाश सुषिरलक्षणम्। सूत्र० १ श्रु० १२ अ० । " शब्दतन्मात्रादाकाशं गन्धरसरूपस्पर्शवर्जितमुत्पद्यत " इति च सांख्या । सूत्र० १ श्रु० १२ अ० । -आकाशमिति पारिभाषिकी संज्ञा एकत्वात्तस्य । तच्च-' सख्यापरिमाणपृथक्त्वसयागविभागशब्दाख्यै षड्भिर्गुणैर्गुणवत् शब्दलिङ्गञ्च' ति । ( वैशेषिका. ।) सूत्र० १ श्रु० १ अ० १ उ०। ( शब्दस्याकाशगुणत्वनिराकरणम् 'आगम' शब्दे अस्मिन्नेव भागे गतम् ) ( आकाशस्य वर्णगन्धादि 'अत्थिकाय' शब्दे प्रथमभागे द्रष्टव्यम् ) अनावृते स्थाने च । आकाशमनावृतं स्थानम् । प्रश्न० ४ संव० द्वार । छिद्र, गणितादिप्रसिद्धे सूत्राङ्के च । वाच० ।

**आगासग**-आकाशग-त्रि० । आकाशगामिनि , वाच० । खनामख्याते भूतविशेष , प्रज्ञा० १ पद ।

**आगासगमा**-आकाशगमा-स्त्री० । गमने गम. आकाशेन गमो यस्या सा आकाशगमा। विद्याविशेषे, आ० म०१ अ० । ( तथा चार्यवज्रस्वामिकथायाम् )—' पदानुसारिणा तेन, स्वामिना प्रस्मृता सती । महापरिज्ञाध्ययना-द्विद्योद्धे नभोगमा " ॥ १ ॥ आ० क० १ अ० । ' तए भगवया पयाणुसारित्तणओ पहुट्ठा महापरिन्नातो अज्झयणातो आगासगामिणी विज्जा उद्धरिया , तीए गमणलद्धिसंपन्नो भयव ति।

उक्तमर्थं सम्यगाथयाऽऽह—

जेणुद्धरिया विज्जा , आगासगमा महापरिण्णातो ।
वंदामि अज्जवइरं , अपच्छिमो जो सुयधराणं ॥७६९॥

येनोद्धृता विद्या 'आगासगम ' त्ति-गमन गम आकाशेन गमो यस्यां सा आकाशगमा महापरिज्ञातो-महापरिज्ञानामकादध्ययनात् तमार्यवज्रम् आरात्—सर्वहेयधर्मेभ्यो जात -प्राप्त. सर्वैरुपादेयगुणैरित्यार्य , सचासौ वज्रश्चेति आर्यवज्रस्तं वन्दे, अपश्चिमो य श्रुतधराणम्- दशपूर्वविदाम्।

सांप्रतमन्येभ्योऽधिकृतयाऽऽज्ञानिवेदनाख्यापनाय प्रदाननिराचिकीर्षुस्तदनुवादतावत् , इदमाह—

भणइ य आहिंडिज्जा, जंबुद्दीवं इमाइ विज्जाए।
गंतूण माणुसनगं,विज्जाए एस मे विसओ ॥ ७७० ॥

भणति च वर्त्तमाननिर्देशप्रयोजनं प्राग्वत् । आहिण्डेत् । पाठान्तरे वा-' आभणिसु य हिंडिज्जा ' इति, वभाण, हिण्डेत्-पर्यटेत् जम्बूद्वीपमनया विद्यया, तथा गत्वा च मानुषनग-मानुषोत्तरपर्वतं, तिष्ठेयमिति वाक्यशेष , विद्याया एष मे विषयो-गोचर ।

भणइ य धारेयव्वा, न हु दायव्वा इमा मए विज्जा ।
अप्पड्ढिया उ मणुया, होहिंति अतो परं अन्ने ॥७७१॥

'भणति चे ति पूर्ववत् । धारयितव्या प्रवचनोपकाराय, न पुनर्दातव्या इय मया विद्या । हुशब्द पुन शब्दार्थे, किमित्यत आह-अल्पर्द्धय एव, तुशब्द एवकारार्थ , भविष्यन्त्यत. परमन्ये भविष्यत् कालभाविन । आ० म० १ अ०।

**आगासगय**-आकाशक-त्रि० । प्रकाशके, स० ३४ सम० ।

**आकाशगत**-त्रि० । व्योमवर्त्तिनि, स० ३४ सम० । औ० । " आगासगएण चक्केण आगासगएणं छत्तेण " (सूत्र-१०+) आकाशवर्त्तिना चक्रेण । औ० ।

बुद्धातिशेषानधिकृत्येत्याह—

आगासगयं चक्कं, आगासगयं छत्तं, आगासगयाओ सेयचामराओ । ( सूत्र-३४× )

आकाशगतं-व्योमवर्त्ति आकाशग ( कं ) तं वा; प्रकाशमित्यर्थ., चक्रं धर्मचक्रमिति षष्ठ ॥ ६ ॥ एवमाकाशगं छत्रम् ; छत्रत्रयमित्यर्थ. इति सप्तम. ॥ ७ ॥ आकाशके— प्रकाशे श्वेतवरचामरे प्रकीर्णके इत्यष्टम. ॥ ८ ॥ स० ३४ सम० । अत्यर्थं तुङ्ग च । स० ।

आगासगओ कुडभीमहस्सपरिमंडियाभिरामो इंदज्झओ पुरओ गच्छइ । ( सूत्र-३४+ )

' आगासगओ ' त्ति-आकाशगत -अत्यर्थंतुङ्गमित्यर्थः । स० ३४ सम० ।

**आगासगामि ( न् )**-आकाशगामिन्-त्रि० । आकाशेन पक्ष्यादौ, आचा० । "आगासगामिणो पाणा पाणे किलेसंति" ( सूत्र-१७७+ ) अपरे त्वाकाशगामिन -पक्षिण इत्येवं सर्वेऽपि प्राणा -प्राणिनोऽपरान् प्राणिन आहाराद्यर्थं मत्सरादिना वा क्लेशयन्ति-उपतापयन्ति । आचा०१ श्रु०६ अ०१ उ०। सम्प्राप्ताकाशगमनलब्धिषु , चतुर्विधदेवनिकायविद्याधरवायुषु च । " आगासगामि य पुढोसिया जे " ॥ १३ ॥ ये केचनाऽऽकाशगामिन --संप्राप्तगमनलब्धयश्चतुर्विधदेवनिकायविद्याधरपक्षिवायवश्च । सूत्र० १ श्रु० १२ अ० ।

**आगासत्थिकाय**-आकाशास्तिकाय-पुं० । अस्तयश्चेह-प्रदेशास्तेषा काय -सङ्घात. ' गणकायनिकाए खंध वग्गे तहेव रासी य इति वचनात् , अस्तिकाय : प्रदेशसंघात इत्यर्थ । प्रज्ञा० १ पद । स० । कर्म० । उत्त० । आकाश च तदस्तिकायश्चेत्याकाशास्तिकाय. । प्रज्ञा० १ पद । जी० । लोकालोकव्याप्यनन्तप्रदेशात्मकामूर्त्तद्रव्यविशेषे. अनु० ।

आगासे तस्स देसे य, तप्पएसे य आहिए ॥ ६+ ॥

-आकाशम्-आकाशास्तिकाय जीवपुद्गलयोरवकाशदायाकाशमिति सप्तमा भेदोऽरूप्यजीवस्येति । उत्त० ३६ अ०।

( आकाशास्तिकायस्य पर्याया )—

आगासत्थिकायस्स णं पुच्छा, गोयमा ! अणेगा अभिवयणा पण्णत्ता, तं जहा-आगासेइ वा आगासत्थिकाएति वा गगणत्ति वा नभेइ वा समेति वा विसमेति वा खहेति वा विहेति वा वीयीति वा विवरेत्ति वा अंबरेति वा अंबरसेति वा छिड्डेति वा झुसिरेति वा मग्गेति वा विमुहेति वा अ(दे)ट्टेति वा वियट्टे(दे)ति वा आधारेति वा वोमेति वा भायणेति वा अंतरिक्खेति वा सामेति वा

उवासंतरेति वा अगमेति वा फलिहेति वा अणंतेति वा, जेयावण्णे तहप्पगारा सव्वे ते आगासत्थिकायस्स अभिवयणा । ( सूत्र-६६४+ )

' आगासे ' त्ति—आ-मर्यादया, अभिविधिना वा; सर्वेऽर्था काशन्ते-प्रकाशन्ते स्वस्वभावं लभन्ते यत्र तदाकाशम्, ' गगणे ' त्ति--अतिशयगमनविषयत्वाद्गगनं निरुक्तिवशात्, ' नभे ' त्ति-न भाति-न दीप्यत इति नभः ' समे ' त्ति-निम्नोन्नतत्वाभावात्समम्, ' विसमे ' त्ति-दुर्गमत्वाद् विषमम्, ' खहे ' त्ति-खनने भुवः हाने च त्यागे यद्भवति तत्खहमिति निरुक्तिवशात्, 'विहे' त्ति-विशेषेण हीयते-त्यज्यते तादनि विहाय, अथवा-विधीयते—क्रियते कार्यजातमस्मिन्निति विहम्, 'वीइ' त्ति-वचनाद्विविक्तस्वभावत्वाद्वीचि ' विवर ' त्ति-विगतवरणतया विवरम्, ' अंबर ' त्ति-अम्ब-मातेव जननसाधर्म्यादम्बा-जलं तस्य राणाद्-दानादम्बरमिति निरुक्तितोऽम्बरम्, 'अंबरसे' त्ति—अम्बा—पूर्वोक्तयुक्त्या जलं तद्रूपो रसो यस्मात्तन्निरुक्तितोऽम्बरसम्, ' छिड्ड ' त्ति-छिद्रशब्देऽनस्यास्तित्वाच्छिद्रम् 'भुसिरे' त्ति-शुष शुषे शोषस्य दानाच्छुषिरम्, 'मग्गे'त्ति-पथिरूपत्वान्मार्गः ' विमुहे ' त्ति—मुखस्यादेरभावाद्विमुखम्, ' अद्दे ' त्ति-अर्द्यते-गम्यते, अट्यते वा-अतिक्रम्यतेऽनेनेति अर्द्दः अट्टो वा, विय (ट्ट) इ'त्ति-स एव विशिष्टो व्यर्द्दो व्यट्टो वा । ' आहार ' त्ति-आधारणादाधारः ' वोमे ' त्ति—विशेषेणावनात्—व्योम, ' भायणे ' त्ति-भाजनात्-विश्वस्याश्रयणाद्भाजनम्, 'अंतलिक्खे' त्ति-अन्त -मध्य ईक्षा-दर्शनं यस्य तदन्तरीक्षम्, 'सामे' त्ति-श्यामवर्णत्वाच्छ्यामम्, 'उवासंतरे' त्ति-अवकाशरूपमन्तरं न विशेषादिरूपमित्यवकाशान्तरम्, 'अगमे' त्ति-गमनक्रियारहितत्वेनागम्, 'फलिहे' त्ति—स्फटिकमिव स्वच्छत्वात्स्फटिकम्, ' अणंते ' त्ति-अन्तवर्जितत्वात् । भ० २० श० २ उ० । ( आकाशस्य वर्णगन्धादिकम् ' अत्थिकाय ' शब्दे प्रथमभागे गतम् )

आकाशास्तिकायस्य जीवाजीवद्रव्याधारत्वम्—

आगासत्थिकाए णं भंते ! जीवाणं, अजीवाणं य किं पवत्तइ ?, गोयमा ! आगासत्थिकाए णं जीवदव्वाण य अजीवदव्वाण य भायणभूए-" एगेण वि से पुण्णे, दोहि वि पुन्ने सयं पि माएज्जा । कोडिसएण वि पुण्णे, कोडिसहस्सं पि माएज्जा ॥ १ ॥" अवगाहणालक्खणेणं आगासत्थिकाए । ( ४८१+ )

' आगासत्थिकाए णमि ' त्यादि । जीवद्रव्याणां चाजीवद्रव्याणां च भेदेन भाजनभूतं अनेन चेदमुक्तं भवति-एतस्मिन्सति जीवादीनामवगाहः प्रवर्तते एतस्यैव प्रश्निनत्वादिति, भाजनभावमेवास्य दर्शयन्नाह-' एगेण वी ' त्यादि एकेन परमाण्वादिना । ' से ' त्ति- असौ आकाशास्तिकायप्रदेश इति गम्यते, पूर्णो भृतस्तथा द्वाभ्यामपि ताभ्यामसौ पूर्णः, कथमेतद् ?, उच्यते-परिणामभेदात्, यथा-अपवरकाऽऽकाशमेकप्रदीपप्रभापटलेनाऽपि पूर्यते, द्वितीयमपि तत्तत्र माति यावच्छतमपि तेषां तत्र माति, तथौषधिविशेषापादितपरिणामादेकत्र पारदकर्षे सुवर्णकर्षशतं प्रविशति, पारदकर्षीभूतं च सदौषधिसामर्थ्यात्पुनः पारदस्य कर्षः सुवर्णस्य च कर्षशतं भवति विचित्रत्वात्पुद्गलपरिणामस्येति, 'अवगाहणालक्खणेणं' तिइहाऽवगाहनाश्रयभावो ' जीवत्थिकाएणं ' मित्यादि, जीवास्तिकायेनेति अन्तर्भूतभावप्रत्ययत्वाज्जीवास्तिकायत्वेन; जीवतयेत्यर्थः । भ० १३ श० ४ उ० ।

**आगासत्थिकायदेस**-आकाशास्तिकायदेश-पुं० । आकाशास्तिकायस्य बुद्धिकल्पिते द्व्यादिप्रदेशात्मके विभागे, प्रज्ञा० १ पद । जी० । अस्यारूप्यजीवत्वम्- " आगासे तस्स देसे य, तप्पएसे य आहिए ॥ ६ + ॥ " आकाशस्य देशः कनमो विभागः आकाशास्तिकायदेश इत्यष्टमो भेदोऽरूप्यजीवस्य । उत्त० ३६ अ० ।

**आगासत्थिकायप्पएस**-आकाशास्तिकायप्रदेश-पुं० । आकाशास्तिकायस्य निर्विभागे भाग, प्रज्ञा० १ पद । जी० । अस्यारूप्यजीवत्वम्- । " आगासे तस्स देसे य, तप्पएसे य, आहिए " ॥ ६+ ॥ तस्याकाशास्तिकायस्य निरंशो देशस्तत्प्रदेश, आकाशास्तिकायप्रदेश इति नवमो भेदोऽरूप्यजीवस्येति । उत्त० ३६ अ० ।

**आगासथिग्गल**-आकाशथिग्गल न० । शरत्कालिके मेघविनिर्मुक्त आकाशखण्डे, । कृष्णमणिवर्णनमधिकृत्य-" आगासथिग्गलेइ वा " ( सूत्र-१२६+ ) आकाशथिग्गलं-शरदि मेघविनिर्मुक्तमाकाशखण्डं तद्धि कृष्णमतीव प्रतिभातीति तदुपादानम् । जी० ३ प्रति० ४ अधि० १ उ० । जं० । आ० म० ।

( तच्च केन स्पृष्टमित्याह)—

आगासथिग्गले णं भंते ! किण्णा फुडे कइहिं वा काएहिं फुडे किं धम्मत्थिकाएणं फुडे धम्मत्थिकायस्स देसेणं फुडे धम्मत्थिकायस्स पदेसेहिं फुडे, एवं अधम्मत्थिकाएणं आगासत्थिकाएणं एएणं भेदेणं ०जाव पुढवीकाएणं फुडे ०जाव तसकाएणं फुडे अद्धा समएणं फुडे ?, हंता गोयमा ! धम्मत्थिकाएणं फुडे, नो धम्मत्थिकायस्स देसेहिं फुडे, धम्मत्थिकायस्स पदेसेहिं फुडे, एवं अधम्मत्थिकायेण वि नो आगासत्थिकाएणं फुडे आगासत्थिकायस्स देसेणं फुडे आगासत्थिकायस्स पदेसेहिं फुडे ०जाव वणस्सइकाएणं फुडे , एवं तसकाइएणं सिय फुडे, सिय नो फुडे , अद्धा समएणं देसेणं फुडे । ( १८८× )

' आगासथिग्गले णं भन्ते ' इत्यादि. आकाशथिग्गलम्-लोकः स हि महता-वहिराकाशस्य वितनपटस्य थिग्गलमिव प्रतिभाति । भदन्त ! केन स्पृष्टो व्याप्तः, एतत् सामान्येन स्पृष्टमेतदेव विशेषेण प्रश्नयन्ति-कतिभिः कियत्संख्याकैः कायैः स्पृष्टः वाशब्दः पक्षान्तरद्योतनार्थः प्रकारान्तरं च सामान्यविशेषेण तान् कायान् प्रत्येकं पृच्छन्ति-' किं धम्मत्थिकाएणं फुडे ' इत्यादि, सुगमं, भगवानाह-हे गौतम ! धर्मास्तिकायेन स्पृष्टः धर्मास्तिकायस्य सर्वात्मना तत्रावगाढत्वात्, अत एव नाधर्मास्तिकायस्य देशेन

स्पृष्टो यो हि येन सर्वात्मना व्याप्तो नासौ तस्यैव देशेन व्याप्तो भवति—विरोधात्, प्रदेशैस्तु व्याप्त । सर्वेषामपि धर्मास्तिकायप्रदेशाना तत्रावगाढत्वात्, एवमधर्मास्तिकायविषयेऽपि, निर्वचनं वाच्यम् । तथा नो आकाशास्तिकायेन सकलेन द्रव्येण स्पृष्ट, आकाशास्तिकायदेशमात्रत्वाल्लोकस्य, किन्तु-देशेन व्याप्त । प्रदेशैश्च पृथिव्यादयोऽपि सूक्ष्मा सकललोकापन्ना वर्त्तन्ते ततस्तैरपि सर्वात्मना व्याप्त, 'तसकाइएणं सिय फुडे इति, यदा केवली समुद्घातं गत सन् चतुर्थे समये वर्त्तते तदा तेन स्वप्रदेशै सकललोकपूरणात् त्रसकायेन स्पृष्ट केवलिनस्त्रसकायत्वात्, शेषकालं तु न स्पृष्ट सर्वत्र त्रसकायनामभावात् । प्रज्ञा० १५ पद १ उ० ।

आगासपइट्ठिय-आकाशप्रतिष्ठित-त्रि० । आकाशं-व्योम तत्र प्रतिष्ठितो-व्यवस्थित आकाशप्रतिष्ठित । आकाशव्यवस्थिते " आगासपइट्ठिए वाए '( सूत्र-२८६ × )। स्था० ३ ठा० १ उ० । भ० ।' तप्पइट्ठिओ लोगो " ॥ १२३+॥ तत्प्रतिष्ठितो लोकस्तत्—इत्यनेनाकाशपरामर्शस्तस्मिन्नाकाशे प्रतिष्ठितस्तत्प्रतिष्ठित , प्रकर्षेण स्थितवानित्यर्थ । दश०१ अ०।

आगासपंचम-आकाशपञ्चम-पुं० । आकाशं-सुपिरलक्षणम् । तत्पञ्चमं यथा तानि । पृथिव्यादिके पञ्चमहाभूते, सूत्र० । " पुढवी आउ तेऊ, वाउ आगासपंचमा " ॥ ७ ॥ सूत्र० १ श्रु० १ अ० १ उ० ।

आगासपय-आकाशपद-न० । सिद्धश्रेणिकपरिकर्मश्रुतभेदे, नं० १४७ सूत्र ।

आगासप्पएस-आकाशप्रदेश-पुं० । आकाशस्य निर्विभागे भागे, प्रज्ञा० १ पद । षोडशाकाशप्रदेशा । सूत्र० १ श्रु० १ अ० १ उ० ।

आगासफलिह (फालिय)-आकाशस्फटिक-पुं० । आकाशमिव यदत्यन्तमच्छं-स्फटिकमाकाशस्फटिकम् । स० ३४ समः । अतिस्वच्छे स्फटिकविशेषे, । " आगासफालिहामएणं सपायपीढेणं सीहासणेणं " ( सूत्र-४ + टी० ) । आकाशस्फटिकमतिस्वच्छं स्फटिकविशेषस्तन्मयेनोपलक्ष्यत इति गम्यम् । भ० ? श० १ उ० । जं० । रा० । आकाशे भव स्फटिक इव वर्षोपले करकाख्ये संहतजलखण्डे तदुत्पादविलयौ श्रीपतिराह-' उद्धूतै पांसुभिर्भूमे' प्रचण्डपवनोद्धयात् । मेघमण्डलमानीतै-र्मालिन्यपरिवर्ज्जितै ॥ १ ॥ मिश्रणाज्जलबिन्दूना, पिण्डभावो भवेदिह । दपद्वन्निपतन्त्येते, द्रवन्ते च पुन क्षितौ ॥ २ ॥ " वाच० ।

आगास ( फलिह ) फालियमरिमप्पह-आकाशस्फटिकसदृशप्रभ-त्रि० आकाशस्फटिकयोगकाशस्फटिकस्य वा सदृशी प्रभा येषा तानि तथा । आकाशस्फटिकतुल्ये, औ० ।

आगास (फलिहा) फालियामय-आकाशस्फटिकमय-त्रि० अतिस्वच्छस्फटिकविशेषमये, भ० १ श० १ उ० । " आगासफालियामयं सपायपीढं सीहासणं " ( सूत्र-३४ + )। आकाशमिव यदत्यन्तमच्छं स्फटिकं तन्मयं सिंहासनं सपादपीठम् । स० ३४ सम० । रा० । आकाशतुल्य स्वच्छत्वया यत् स्फटिक तन्मयेन सपादपीठेन सिंहासनेनेति । औ० ।

आगासमग्ग-आकाशमार्ग-पुं० । द्रव्यमार्गभेदे, सूत्र० १ श्रु० ११ अ० । आकाशमार्गौ विद्याधरादीनाम् । सूत्र० १ श्रु० ११ अ० ।

आगासातिवाइ ( न् )-आकाशातिपातिन्-पुं० । आकाशम्-व्योम अतिपततीति । आकाशगामिविद्याप्रभावात् पादलेपादिप्रभावाद्वा आकाशमतिक्रामति, आकाशाद्वा हिरण्यवृष्ट्यादिकमिष्टमनिष्टं वा अतिशयेन पातयतीत्येवंशीले च । औ० १५ सूत्र० ।

आकाशादिवादिन्-पुं० । अमूर्त्तानामपि पदार्थानां साधनसमर्थवादिनि, औ० । " अप्पेगइया विउलमइविउव्विणिड्डिपत्ता चारणा विज्जाहरा आगासातिवाइणो " ( सूत्र-१५+ ) ' आगासातिवाइ ' त्ति—आकाशं-व्योमातिपतन्ति-अतिक्रामन्ति । आकाशगामिविद्याप्रभावात् पादलेपादिप्रभावाद्वा आकाशाद्वा हिरण्यवृष्ट्यादिकमिष्टमनिष्टं वा अतिशयेन पातयन्तीत्येवंशीला आकाशातिपातिन । आकाशादिवादिनो वा । अमूर्त्तानामपि पदार्थानां साधनसमर्थवादिन इति भाव । औ० ।

आगासिउं-आकृष्टुम्-अव्य० । हठात्समाकृष्यात्मन समीपमानेतुमित्यर्थे, विशे० ।

आगासिय-आकर्षित-त्रि० । आकृष्टे, उत्पाटिते, औ० ।

आकाशित-त्रि० । आकाशम्-अम्बरम् इत -प्राप्त । आकाशं गत, ' आगासियाहिं सेअचामराहिं । ( सूत्र-१०+ ) आकाशम्-अम्बरमिताभ्यां-प्राप्ताभ्याम्, आकर्षिताभ्यां वा; आकृष्टाभ्याम्-उत्पाटिताभ्यामित्यर्थ । औ० ।

आगिइत्तिग-आकृतित्रिक-न० । आकृतय -संस्थानानि पट् संहननानि पट् जातय पञ्चेत्येवं सप्तदशके आकृत्युपलक्षिते त्रिके , कर्म० ५ कर्म० ।

आगु -आकु-(गु)-पुं० । ' अक' ' अग ' कुटिलायां गतौ, उण् अभिलापायाम् , आव० । ' सक्को वंसट्ठवणा इक्खुअगू तेण हुंति इक्खागा " ' अक' ' अग ' कुटिलायां गतौ , अनेकार्थत्वाद्धातूनाम् । अकधातोरौणादिके उणप्रत्यये आगुशब्दोऽभिलापार्थे , तत स्वामी इक्षो आकुना-अभिलापेण करं प्रासारयत् शक्र आर्पयत् तेन कारणेन भवन्ति इक्ष्वाकुवंशभवा ऐक्ष्वाका । आ० क० १ अ० ।

आग्घाण-आघ्राण-त्रि० । आ-घ्रा-क्त । ग्रहीनगन्धे पुष्पादौ, नासिकया यस्य गन्धज्ञानं जातम् । तस्मिन् , तृप्ते च । भावे क्त । गन्धग्रहणे , तृप्तौ च । न० । वाच० । ' आघ्रेराइग्घ " ॥८।४।१३॥ इति आइग्घादेश । आइग्घइ । आग्घाइ । प्रा० ।

आघं-आख्यातवत्-त्रि० । कथयितरि , सूत्र० । "आघं मईमं अणुवीय धम्मं " ॥ १४ ॥ 'आघं' ति-आख्यातवान् । सूत्र० १ श्रु० १० अ० ।

आघअज्झयण-आख्यातवदध्ययन-न० । सूत्रकृताङ्गप्रथमश्रुतस्कन्धस्य समाध्यध्ययनापरनामधेये दशमेऽध्ययने, सूत्र० । निर्युक्तिकृदाह- आयाणपदेणाऽऽघं, गोणं णाम पुणो समाहि त्ति ' ॥१०३४॥ आदीयते-गृह्यते प्रथममादौ यस्-

दादानम् आदानं च तत्पदं च सुबन्तं तिङन्तं वा तदादानपदं तेनाऽऽघन्ति नामास्याध्ययनस्य यस्मादध्ययनादाविदं सूत्रम्। सूत्र० १ श्रु० १० अ० । (अत्र विशेष दृष्टान्तश्च 'समाहि' शब्दे सप्तमे भागे दर्शयिष्यते ।)

**आघंसण-आघर्षण**-न० । भावे ल्युट् । मर्दने, वाच० । ईषत् घर्षणे, "आघंसेज्ज वा" (सूत्र-६७×)। ईषत्पुनः पुनर्वा घर्षयेद्। आचा० २ श्रु० १ चू० २ अ० १ उ० ।

जे भिक्खू अप्पणो दंते आघंसेज्ज वा पघंसेज्ज वा आघसंतं वा पघसंतं वा साइज्जइ ॥ ४७ ॥

एक्कदिणं-आघसण, दिणे दिणे पघंसण ति । नि० चू० ३ उ०।

**आघवत्ता-आख्यातृ**-त्रि० । आख्यायके, (प्रज्ञापके) स्था० ४ ठा० ४ उ० ।

**आघवण-आख्यान**-न० । सामान्यविशेषाभ्यां कथने, "आघविज्जति" (सूत्र-१३७×)। प्राकृतशैल्या-आख्यायन्ते सामान्यविशेषाभ्यां कथ्यन्ते इत्यर्थः । स० । आव० । आख्यापने, सामान्यविशेषरूपेण कथनं,-"दुवालसंगं गणिपिडगं आघवेइ" (सूत्र-७५०×)। सामान्यविशेषरूत आख्यापयतीति । स्था० १० ठा० ३ उ० ।

**आग्रहण**-न० । आदाने, अनु० ।

**आग्राहण**-न० । आदापने, भ० ६ श० ३१ उ० ।

**अर्थापन**-न०। प्रतिपादनत पूजाप्रापणे, भ०। "केवलिपण्णत्तं धम्मं आघवेज्ज वा" (सूत्र-३६८×)। आग्राहयेच्छिष्यानर्थापयेद्वा प्रतिपादनतः पूजां प्रापयेदिति । भ०६ श०३१ उ०।

**आघवणा-आख्यापना**-स्त्री० । आख्याने, उपा० । "बहूहिं आघवणाहि य" (सूत्र-४४×)।'आघवणाहि य' त्ति-आख्यानैः । उपा० ७ अ० । तत्र सामान्यत प्रतिपादनम्- "आघवणाहि य" (सूत्र-२४+)। आख्यापनाभिश्च-सामान्यत प्रतिपादनैः । ज्ञा० १ श्रु० १ अ० । नि० । भ० ।

**आघवित्तए-आख्यातुम्**-अव्य० । भणितुमित्यर्थे, अन्त० १ श्रु० ३ वर्ग ८ अ० । भ० ।

**आघविय-आख्यात**-त्रि० । आ-ख्या-कर्मणि-क्त । कथिते, वाच० । "भगवया महावीरेणं आघविए" (सूत्र-७४×)। 'आघविए' त्ति-आर्षत्वादाख्यात इति । उत्त० २६ अ० ।

आगृहीत-त्रि० । आदत्ते, "आवस्सए त्ति पयं आघवियं पच्चविथं परूविय" ग० २ अधि० । 'आघवियं' ति-प्राकृतशैलया छान्दसत्वाच्च गुरोः सकाशादागृहीतम् । अनु० ।

आग्राहित-त्रि० । आदापिते, भ० ६ श० ३१ उ० ।

अर्थापित-त्रि० । प्रतिपादनेन पूजां प्रापिते, "केवलिपण्णत्तं धम्मं आघवेज्ज वा" (सूत्र-३६८)। आग्राहयेच्छिष्यान्, अर्थापयेद्वा-प्रतिपादनत पूजां प्रापयेद् । भ० ६ श० ३१ उ० ।

**आघवेमाण-आख्यातृ**-त्रि० । कथयति, आव० ३ अ० ।

**आघसंत-आघर्षण**-त्रि० । ईषद्घर्षणं कुर्वति, नि० चू० १७ उ० ।

**आघसावण-आघर्षण**-न० । ईषद्घर्षणे, नि० चू० ।



जे भिक्खू णिग्गंथे णिग्गंथस्स दंते अण्णउत्थिएण वा गारत्थिएण वा आघसावेज्ज वा पघसावेज्ज वा आघसंतं वा पघसंतं वा साइज्जइ ॥ ५२ ॥ नि० चू० १७ उ० ।

**आघाण-आख्यान**-न० । कथने,-आचा०" आघाइ णाणी" (सूत्र-१३१×)। ज्ञानी आख्याति-आचष्टे । आचा० १ श्रु० ४ अ० २ उ० ।

**आघाय-आख्यात**-त्रि० । आ-ख्या-कर्मणि क्त । कथिते, वाच० । "आघाय तु सोच्चा" (सूत्र-१८८×)। आख्यानमेवैतत् कुशीलविपाकादिकं श्रुत्वा निशामयति । आचा० १ श्रु० ६ अ० ४ उ० । भावे क्त । आशये च । न० । "आघायं पुण एगेसिं" (॥ १+ ॥)। नियतिवादिनां पुनरेकेषामेतदाख्यातम्, अत्र च-"अविवक्षितकर्मका अपि अकर्मका भवन्तीति" ख्यातेर्घानीर्भावे निष्ठाप्रत्ययस्तद्योगे कर्त्तरि षष्ठी, ततश्चायमर्थः—तैर्नियतिवादिभिः पुनरिदमाख्यातं, तेषामयमाशय इत्यर्थः । सूत्र० १ श्रु० १ अ० २ उ० ।

आघात-पुं० । आ-हन् घञ् । वधे, आहनने, ताडने च । आधारे घञ् । वधस्थाने, वाच० । आहन्यन्ते-अपनयन्ति विनाश्यन्ते प्राणिना दशप्रकारा अपि प्राणा यस्मिन् स आघात । मरणे सूत्र० १ श्रु० ६ अ० ।

**आघायकिच्च-आघातकृत्य**-न० । अग्निसंस्कारजलाञ्जलिप्रदानपितृपिण्डादिके मरणकृत्ये, सूत्र० ।

आघायकिच्चमाहेउं, नाइओ विसएसिणो ।
हरंति अन्ने तं वित्तं, ॥ ४× ॥

आहन्यन्ते—अपनयन्ति; विनाश्यन्ते प्राणिनां दशप्रकारा अपि प्राणा यस्मिन् स आघातो मरणं तस्मै तत्र वा कृतमग्निसंस्कारजलाञ्जलिप्रदानपितृपिण्डादिकमाघातकृत्यं तदाधातुम्-आधाय-कृत्वा पश्चात् ज्ञातयः-स्वजनाः; पुत्रकलत्रभ्रातृव्यादय, किम्भूता ?-विषयानन्वेष्टुं शीलं येषा ते, अन्येऽपि विपर्यैषिण सन्तस्तस्य दु खार्ऽर्जितं वित्तं-द्रव्यजातम्-अपहरन्ति-स्वीकुर्वन्ति । सूत्र० १ श्रु० ६ अ० ।

**आ(घ)घायण-आघातन**-न० । वधस्थाने, वाच० । "तत्थ ण मह एगं आघायणं पासंति" (सूत्र-८×)। 'आघायणं' ति-वधस्थानम् । ज्ञा० १ श्रु० ६ अ० । "आघायणपडिदुवारसपाविया" (सूत्र-१२×)। आघाननस्य वध्यभूमिमण्डलस्य प्रतिद्वारे संप्रापिता । प्रश्न० ३ आश्र०द्वार । "असिवो मा०' ॥ १४५६+ ॥ आघायणंति जत्थ वा महासंगाममया बहू । अ० चू० ४ अ० । आव० । भावे ल्युट । हनने, वाच० ।

**आघुम्मिय-आघूर्णित**-त्रि० । आ-घूर्ण-क्त । "घूर्णेर्घुलघोल घुम्म-पहल्ला" ॥ ८ । ४ । ११७ ॥ इति हैमप्राकृतसूत्रेणैते चत्वार आदेशा । प्रा० । चलिते, भ्रान्ते च । वाच० । घुलइ । घोलइ । घुम्मइ । पहल्लइ । प्रा० ४ पाद ।

**आघुलिय-आघूर्णित**-त्रि० । 'आघुम्मिय' शब्दार्थे, प्रा० ४ पाद ।

**आघोलिय-आघूर्णित**-त्रि० । 'आघुम्मिय' शब्दार्थे, प्रा० ४ पाद ।

आचंदसूरिय-आचन्द्रसूर्य-न० । यावच्चन्द्रसूर्यौ तावदि-त्यर्थे पञ्चा० ।

आचन्दसूरियं तह, होइ इमा सुप्पतिट्ठ त्ति ॥३४॥

आचन्द्रसूर्यं-चन्द्रसूर्यौ यावत्तावद् भवतु-अस्तु, इयम्-अधिकृता सुप्रतिष्ठा-शोभनावस्थानम् । पञ्चा० ८ विव० ।

आचेलक्क-आचेलक्य-त्रि० । न विद्यते चेलं वस्त्रं यस्य स-अचेलकस्तस्य भाव आचेलक्यम् । विगतवस्त्रत्वे, कल्प० १ अधि० १ क्षण । तदात्मके कल्पभेदे च । आचेलक्यधर्मो-पेतत्वादाचेलक्य । चारित्रलक्षणे धर्मे च । पुं० । "आ-चेलक्को धम्मो, पुरिमस्स य पच्छिमस्स य जिणस्स"॥१२+॥ पञ्चा० १७ विव० । ( भेदादिबहुवक्तव्यता 'अचेल (ग)' शब्दे प्रथमभागे गता )

आचोक्ख-आचोक्ष-पुं० । अष्टमे पिशाचनिकाये, प्रज्ञा० १ पद ।

आजम्म-आजन्मन्-अव्य० । यावज्जीवमित्यर्थे, " वसिज्ज तत्थ आजम्मं, गोयमा ! संजए मुणी " ॥ ७॥ आजन्म-जी-वितकालमभिव्याप्य, यावज्जीवमित्यर्थ । ग० १ अधि० ।

आज ( य ) वंजवीभाव-आजवंजवीभाव-पुं० । पुन पुन-र्गमनागमन, " आरभसत्ता पकरंति संगं " ( सूत्र-६० + )। सगाच्च पुनरपि ससार-आजवंजवीभावरूप । आचा० १ श्रु० १ अ० ७ उ० । " एस मरणा पमुच्चइ " ( सूत्र-१११× ) मरणाद्-आयु क्षयलक्षणान्मुच्यते आयुषो बन्धनाभावात्, यदि वा-आजवंजवीभावात्, आवीचिमरणाद्वा सर्व एव सं-सारो मरणं तस्मात्प्रमुच्यते । आचा० १ श्रु० ३ अ० २ उ० ।

आजा ( या ) इ-आजाति-स्त्री० । आ-जन् क्तिन् । आ-जननमाजाति । स्था० १० ठा० ३ उ० । " आइक्खणाऽऽ-जाइ " ॥ ७ × ॥ आजायन्ते तस्यामित्याजाति । आचा० १ श्रु० १ अ० १ उ० । ( कतिविधा सा आजाति इति 'आयारग' शब्देऽस्मिन्नेव भागे वक्ष्यते । ) आजनने, जन्मनि, " ताडयित्वा तृणेनापि, सत्वाऽन्मतिपूर्वकम् । एकविंशतिमाजाती, पापयोनिषु जायते " ॥ १ ॥ " सा-क्ष्येऽनृतं वदन् पाशै-र्बध्यते वारुणैर्भृशम् । विवश शतमा जाती-स्तस्मात् साक्ष्यं वदेदृतम् " ॥ १ ॥ इति च मनु । वाच० । आजननमाजाति । सम्मूर्छनगर्भोपपाततो जन्म । स्था० १० ठा० ३ उ० । आजाति -ततश्च्युतस्य मनुष्यजन्म । स्था० ८ ठा० ३ उ० । आजायन्ते तस्यामित्याजाति, सा अपि चतुर्गा-र्व्यनिरिक्ता, मनुष्यादिजाति, भावाऽऽजाति-स्तु, ज्ञानाद्याचारप्रसूतिरियमेव ग्रन्थ इति । आचा० १ श्रु० १ अ० १ उ० ।

आयाति-स्त्री० । आगतौ, आजाति-र्जन्म । आयाति -आ-गति । स्था० ३ ठा० ३ उ० । आयाति -गर्भान्निष्क्रम । स्था० २ ठा० ३ उ० ।

आजीव-आजीव-पुं० । आजीवनमाजीव । भावे घञ् । जी-विकायाम्, प्रव० ६७ द्वार । आजीवनार्थमालम्बने, वाच० । आ-समन्ताज्जीवन्त्यनेनेति आजीव । अर्थनिचय, सूत्र० १ श्रु० १३ अ० । आजीविकायाम्, व्य० १ उ० । आत्म-वर्त्तनोपाय सूत्र० १ श्रु० १३ अ० । वाच० ।

आजीवमेयं तु अबुज्झमाणो,
पुणो पुणो विप्परियासुवेंति ॥ १२ ॥

आजीवम्-आजीविकाम्, आत्मवर्त्तनोपायं कुर्वाण पुनः पुन संसारकान्तारे विपर्यासं-जन्मजरामरणरोगशोको-पद्रवम् उपैति-गच्छति तदुत्तरणायाभ्युद्यतो वा तत्रैव निमज्जतीत्ययं विपर्यास । सूत्र० १ श्रु० १३ अ० ।

आजीवनं-जातिकुलगणकर्मशिल्पानां गृहस्थसमानाभि-धानत उपजीवनम्-आजीवा । उत्पादनादोषविशेषे, प-ञ्चा० १३ विव० । जात्यादिकथनाद् आजीवनम् आजीव । ग० १ अधि० ।

आजीवस्य भेदादिकमाजीवपिण्डदोषस्य स्वरूपादिकञ्च—

जाई-कुल-गणकम्मे, सिप्पे आजीवणा उ पंचविहा ।
सूयाएँ असूयाए, व अप्पाणं कहेहि एकेके ॥ ४३७ ॥

आजीवना पञ्चविधा, तद्यथा-जातिविषया, जातिमा-जीवति करोतीत्यर्थ, एवं-कुलविषया, गणविषया, कर्म-विषया, शिल्पविषया च । सा चाजीवना एकैकस्मिन् भे-दे द्विधा, तद्यथा-सूचया आत्मानं कथयति । असूच-या च, तत्र सूचा-वचनभङ्गिविशेषेण कथनम्, असूचा स्फु-टवचनेन ।

तत्र जात्यादीनां लक्षणमाह—

जाई कुले विभासा, गणो उ मल्लाइ कम्म किसिमाई ।
तूणादि सिप्पणाव-ज्जगं च कम्मे य आवज्जे ॥ ४३८ ॥

जातिकुले विभाषा-विविधं भाषणं कार्य्यं, तच्चैवम्-जाति-ब्राह्मणादिका, कुलम्-उग्रादि । अथवा-मातृसमुत्था जाति, पितृसमुत्थं कुलम् । गणो-मल्लादिवृन्दम् । कर्म-कृष्यादि, शिल्प-तूर्णादि, तूर्णनसीवनप्रभृति । अथवा-अनावर्जकम्-अप्रीत्युत्पादकं कर्म, इतरत्तु-आवर्जकं प्रीत्युत्पादकं शि-ल्पम्, अन्ये त्वाहु -अनाचार्योपदिष्टं कर्म, आचार्योपदिष्टं तु शिल्पमिति । पिं० । ( तत्र जातिलक्षणम्, तद्व्यवस्था च 'जाइ' शब्दे चतुर्थे भागे दर्शयिष्यते । ) ( कुललक्षणम्, तद्भेदा, तद्व्यवस्था च 'कुल' शब्दे तृतीयभागे वक्ष्यते । ) ( आ-दिजिनो भगवान् प्रथमम् उग्र-भोग-राजन्य-क्षत्रियलक्षणा-नि चत्वारि कुलानि स्थापितवान् इति 'उसभ (ह)' शब्दे-ऽस्मिन्नेव भागे दर्शयिष्यते । ) ( कुलकर्त्तारोऽन्येऽपि सन्ती-'कुलगर' शब्दे तृतीयभागे विस्तरतो दर्शयिष्यते । ) ( गणलक्षणम्, तद्व्यवस्था च 'गण' शब्दे तृतीयभागे दर्श-यिष्यते । ) ( कर्मलक्षणम्, तद्विस्तरश्च 'कम्म' शब्दे ३ भागे दर्शयिष्यते । तत् प्रकृतयश्च 'कम्मपयडि' शब्दे तस्मिन्नेव ३ भागे दर्शिता भविष्यन्ति । ) ( शिल्पलक्षणम्, तस्य पञ्च मूलभेदा, पुनस्तेषां प्रत्येकं विंशति विंशति भेदा सन्ती-ति प्रतिपादनम् 'सिप्प' शब्दे सप्तमभागे वक्ष्यते । ) शि-ल्पशतभेदा कालनिधौ विस्तरत 'भरह' शब्दे षष्ठे भागे दर्शयिष्यते । )

तत्र यथा साधु सूचया स्वजातिप्रकटनाज्जातिमुपजी-वति तथा दर्शयति—

होमायवितहकरणे, नज्जइ जह सोत्तियस्स पुत्तो त्ति ।
वसिओ वेस गुरुकुले, आयरियगुणे व सूएइ ॥ ४३९ ॥

(ख) से णं पावे पाहुडियं भमाडिउकामे सिरिसमणसंघं कयत्थेज्जा जाव णं कयत्थे ताव णं गोयमा! जे केइ तत्थ सलिद्धी महाणुभागो अवलियसत्ते तवोवहाणे अणगारे। तेर्मि च पाडिहेरियं कुज्जा सोहम्मे कुलिसपाणी एरावणगामी सुरवरिंदे एवं च गोयमा! देविंदवंदिए दिट्ठपच्चए णं सिरिसमणसंघेज्जा णिट्ठिज्जा कुणए पासंडधम्मे ०जाव णं गोयमा! एगे अविइज्जे। अहिंसालक्खणं खंतादिदसविहधम्मे। एगे अरहा देवाहिदेवे एगे जिणालये एगे वंदे पूए दक्खे सक्कारे संमाखे महाजसे महासत्ते महाणुभागे दढसीलवयनियमधारए तवोवहाणे साहु तत्थ णं चंदमिव सोमलेसे सूरिए इव तवतेयरासी पुढवी इव परिसहोवसग्गसहे मेरुमंदरधरे इव निप्पकंपे ठिए अहिंसालक्खणखंतादिदसविहे धम्मे। से णं सुसमणगणपरिवुडे। निरब्भगयणामलकोमुइजोगजुत्ते इव गहरिक्खपरिवारिए गहवई चंदे अहिययरं विराहेज्जा गोयमा! से णं सिरिप्पभे। अणगारे भो गोयमा! एवतियं कालं ०जाव एसा आणा पवेइया से भयवं उड्ढं पुच्छा गोयमा! तओ परेणं उड्ढं हायमाणे कालसमये तत्थ णं जे केई छक्कायसमारंभविवज्जए। से णं धन्ने पुन्ने वंदे पूए पससणिज्जे। जीवियं सुजीवियं तेसिं। महा० ४ अ०।

( १२ ) आज्ञाव्यवहार.—

आज्ञायते-आदिश्यते इत्याज्ञा। व्यवहारभेदे, स्था० ५ ठा० २ उ०। भ०। व्य०। पञ्चा०। देशान्तरस्थितयोर्द्वयोर्गीतार्थयोर्गूढपदैरालोचनानि जातिचारनिवेदनम्-आज्ञाव्यवहार, एतदुक्तं भवति-यदा द्वावप्याचार्यावासेवितसूत्रार्थतयाऽनिगीतार्थौ क्षीणजङ्घाबलौ विहारक्रमानुरोधतो दूरतरदेशान्तरव्यवस्थितावत एव परस्य समीपे गन्तुमसमर्थावभूतां तदाऽन्यतरप्रायश्चित्ते समापतिते सति तथाविधयोग्यगीतार्थशिष्याऽभाव मतिधारणाकुशलमगीतार्थमपि शिष्य समयभाषया गूढार्थान्यतिचारासेवनपदानि कथयित्वा प्रेषयति, तेन च गत्वा गूढपदेषु कथितेषु स आचार्यो द्रव्यक्षेत्रकालभावसंहननधृतिबलादिकं परिभाव्य स्वय च तत्राऽऽगमनं करोति, शिष्य वा तथाविधं योग्य गीतार्थं प्रज्ञाप्य प्रेषयति। तदभावे तस्यैव प्रेषितस्य गूढार्थमतिचारशुद्धिं कथयतीति। प्रव० १२६ द्वार। व्य०।

( तथा च )—

पढमस्स य कज्जस्स य, पढमेण पएण सेवियं जं तु।
पढमे छक्के अब्भि-तरं उ पढमं भवे ठाणं ॥ १ ॥

अत्र प्रथम कार्ये दर्प -, तत्र प्रथम पदं दर्शननिमित्त प्रथम षट्क व्रतषट्क तत्राभ्यन्तरम्-अन्तर्गत प्रथ स्थान प्राणातिपात।

पढमस्स य कज्जस्स य, पढमेण पएण सेविय जं तु।
पढमे छक्के अब्भि-तरं तु बीय भवे ठाण ॥ २ ॥

अत्र द्वितीय स्थाने मृषावाद, एवमदत्तादानादिष्वपि भावनीयम्।

पढमस्स य कज्जस्स य, पढमेण पएण सेवियं जं तु।
बिइए छक्के अब्भि-तरं तु पढमं भवे ठाणं ॥ ३ ॥

अत्र द्वितीयं षट्क कायषट्कमित्यादि। एव तेन कथितेन आचार्यो द्रव्यक्षेत्रकालभावसंहननधृतिबलादिकं परिभाव्य स्वय वा गमन करोति। शिष्यं वा तथाविधं योग्य गीतार्थं प्रज्ञाप्य प्रेषयति, तदभावे तस्यैव प्रेषितस्य गूढार्थमतिचारविशुद्धिं कथयति। व्य० १ उ०।

आणाए ववहारं, सुण वच्छ जहकमं वुच्छं ॥ ६०९ ॥

आज्ञया व्यवहार यथाक्रमं यथा वक्ष्ये त च वक्ष्यमाणं वत्स! शृणु।

समणस्स उत्तमट्ठे, सल्लुद्धरणकरणे अभिमुहस्स।
दूरत्था जत्थ भवे, छत्तीसगुणा उ आयरिया ॥६१०॥

श्रमणस्य उत्तमार्थे-भक्तप्रत्याख्याने व्यवसितस्य यत्किमपि सल्यमनुधृतमस्ति तदुद्धरणकरणे अभिमुखस्य। 'दूरत्था जत्थ भवे छत्तीसगुण' त्ति-यत्र प्रायश्चित्तव्यवहार षट्त्रिंशद्गुणा आचार्या दूरस्था भवेयुस्तत्राऽऽज्ञया व्यवहार.।

कथमित्याह—

अपरक्कमो सि जाओ, गंतुं जे कारणं च उप्पन्नं।
अट्ठारसमन्नयरे, वसणगतो इच्छिमो आणं ॥ ६११ ॥

स आलोचयितुकामश्चिन्तयति-सांप्रतमहमपराक्रमो जातोऽस्मि ततस्तेषा समीपे गन्तु न शक्नोमि। कारण च मम तत्पार्श्वगमननिमित्तं समुत्पन्नम्। यतोऽष्टादशाना व्रतषट्कादीनाम् अन्यतरस्मिन्नतीचारे व्यसनगत.-पतितस्तस्मादिच्छाम्याज्ञाव्यवहारमिति।

एतदेव सविशेष भावयति—

अपरक्कमो तवस्सी, गंतु जो सोहिकारगसमीवं।
आगंतुं न वाएई, सो सोहिकरो वि देसाउ ॥ ६१२ ॥

स -आलोचयितुकामस्तपस्वी शोधिकारकसमीपे गन्तुम् अपराक्रमो यस्य शोधि कर्त्तव्या सोऽपि देशादालोचयितु समीपमागन्तुं न शक्नोति।

अह पट्ठवेइ सीसं, देसंतरगमणनट्ठचेट्ठागो।
इच्छामज्जो काउं, सोहिं तुब्भं सगासम्मि ॥ ६१३ ॥

अथ—अनन्तरमालोचयितुकामो देशान्तरगमननष्टचेष्टक आलोचनाऽऽचार्यस्य समीपे शिष्यम्, आर्य! युष्माकं सकाशे शोधि कर्तुमिच्छामीत्येतत्कथयित्वा प्रेषयति।

सो वि अपरक्कमग-सीस पेसइ धारणाकुसल।
एयस्स दाणि पुरओ, करेहि सोहिं जहावत्त ॥ ६१४ ॥

सोऽपि आलोचनाऽऽचार्योऽपराक्रमगतिर्न विद्यते पराक्रमो गतौ यस्येति विग्रह। शिष्य धारणाकुशल प्रेषयति। यस्यालोचयितुकामेन प्रेषितस्तस्य सन्देश कथयति, त्वमिदानीमेतस्य पुरतो यथावृत्त शोधि कुरु।

अपरक्कमो अ सीसं, आणापरिणामगं परिच्छेज्जा।
रुक्खे य बीयकाए, सुत्ते वा मोहणाधारी ॥ ६१५ ॥

स-आलोचनाचार्योऽपराक्रम. शिष्यमाज्ञापरिणामकं परीक्षेत; किमेष आज्ञापरिणामक, किं वा नेति ?। आज्ञापरीणामको नाम-यत् आज्ञाप्यते तत्कारणं न पृच्छति ' किमर्थमेतदिति" किंत्वाज्ञया एव कर्त्तव्यतया श्रद्दधाति, यदत्र कारणं तत्पूज्या एव जानन्न एवं य परिणामयति स आज्ञापरीणामकस्तत्परीक्षा च वृक्ष बीजकाय च वक्ष्यमाणरीत्या कर्त्तव्या। आज्ञापरिणामित्व परीक्ष्य पुनरिदं परीक्षणीय यथा किमेषोऽवग्रहणे समर्थो धारणासमर्थश्च किं वा नेति। तत्राध्ययनादिपरीक्षया सूत्रे चशब्दात्-अर्थे वा अमोहन-मोहरहितं समस्तम् आ-समन्ताद्धारयतीत्येवं शील अमोहधारी तं परीक्षेत ।

तत्र वृक्षेणाऽऽज्ञापरिणामित्वपरीक्षामाह—

दहुमहं ते भक्खो, गणिओ रुक्खो विलग्गिउं डेव।
अपरिणयं बेंति तहिं. न वट्टइ रुक्खे वि आरोढुं ॥६१६॥
किं वा मारेयव्वो, अहियंतो वेह रुक्खओ डेव।
अतिपरिणामो भणति, इय हेऊ अम्ह वेसिच्छा ॥६१७॥

दृष्ट्वा महतो महीरुहान् गणिक -आचार्यो ब्रूते-अस्मिन्नुच्चैस्त्वेन तालप्रमाणे वृक्षे विलग्य तत आत्मान (डिप) क्षिप्रपातं कुर्वित्यर्थ, एवमुक्ते तत्र-आज्ञापरिणामको ब्रूते-न वर्त्तते वृक्षे विलगितुं साधो सचित्तत्वाद्वृक्षस्य प्रपाते च कुर्वन् आत्मविराधना भवति। सा च भगवता निषिद्धा, किंतु-अमुनोपायेन मारयितव्योऽभिप्रेतो यथ वृक्षादात्मानं डेपेति। अतिपरिणामक पुनरिदं भणति-इत्येव भवतु, करोमि प्रपातमिति भाव अस्माकमप्येषा इच्छा वर्त्तते।

वेइ गुरू अह तंतू, अपरिच्छियत्थे पभाससे एवं।
किं च मए तं भणितो, आरुहरुक्खे (य) सच्चिते ॥६१८॥

अथ-अनन्तरं तमतिपरिणामकं शिष्यं ब्रूते-अपरीक्षिते-अपराभाविते मद्वचनस्यार्थे त्वमेवमुक्तप्रकारेण प्रभाषसे यथा करोमि प्रपातमस्माकमप्येषेच्छा वर्त्तते। अपरिणामकमधिकृत्य ब्रूते-त्व वा मया किमेवं भणितो यथा सचित्त वृक्षे आरोहाय नोच्यते न वर्त्तते साधो वृक्षे विलगितुमिति किंतु-तन्मयोक्तम्।

तदेवाऽऽह—

तवनियमनाणरुक्खं, आरुहिउ भवमहण्णवाऽऽपण्णं।
ममारग(ड)त्तकूलं, डेव हंत मए भणितो ॥ ६१६ ॥

तपोनियमज्ञानमय वृक्षं भवार्णवापन्नं-भवसमुद्रमध्यप्राप्तमारुह्य संसारगर्त्ताकूलं ' डिप ' उल्लङ्घय इति मया भणित।

जो पुण परिणामो खलु, आरुह भणितो वि सो विचिंतेइ।
नेच्छति पावमेतं, जीवाणं थावरा(दी)णं(पि) ॥६२०॥
किं पुण पंचेंदीणं. तं भणियव्वेत्थ कारणेणं तु।
आरुहणववसियं तु, वारेड गुरुववसंतो ॥ ६२१ ॥

य पुन खलु परिणाम -आज्ञापरिणामक स आरोहेति भणितोऽप्येतद्विचिन्तयति-नेच्छन्ति पापमेतं मदीया गुरवो जीवाना स्थावराणामपि; किं पुन पञ्चेन्द्रियाणां तस्मादत्र कारणेन भवितव्यम्, एव विचिन्त्य आरोहणे व्यवसित। तमारोहणव्यवसितं गुरुरवष्टभ्य—बाहौ धृत्वा वारयति। यदेवमुक्त वृक्ष परीक्षणम्।

अधुना जीवेषु तदाह—

एत्ताऽऽणेह य बीयाई, भणितो पडिसेहे अपरिणामो।
अइपरिणामो पोट्टल, बंधूणं आगतो तहियं ॥ ६२२ ॥

एवम्-अमुना प्रकारेण बीजानि आनायत इत्युक्त अपरिणामः प्रतिषेधयति-न कल्पन्ते बीजानि गृहीतुमिति, यस्त्वतिपरिणामक स बीजानां पोट्टल बद्ध्वा तत्र गुरुसमीपे समागत।

ते वि भणिया गुरूणं, भणिया नेह अमलिबीयाइं।
न विरोहसमत्थाइं, सचित्ताइं व भणियाइं ॥ ६२३ ॥

तावत् य अपरिणामको गुरुणा भणितो मया भणितमानय अम्लिकाबीजानि-काञ्जिकनीबीजानि, यदि वा-सचित्तानि-विध्वस्तयोनिमयानि, यानि न विरोहसमर्थानि तान्यानयेति भणितानि।

तत्थ वि परिणामो तू, भणती आणेसि केरिसाइं तु।
कत्तियमित्ताइं वा, विरोहमविरोहजोग्गाइं ॥ ६२४ ॥

तत्रापि य परिणामक स भणति-कीदृशानि बीजान्यानयामि। विरोहयोग्यानि, अविरोहयोग्यानि वा, कियन्मात्राणि वा।

सो वि गुरूहिं भणितो, न ताव कज्जं पुणो भणीहामि।
हसितो व मए तासिं, वीमंसत्थं व भणितो सि ॥६२५॥

स-अप्याज्ञापरिणामको गुरुभिर्भणितो न तावदिदानीं कार्यं यदा तु कार्यं भविष्यति तदा पुनर्भणिष्याम। अथवाहसितोऽसि मया तावदिदानीं न पुनर्बीजैः प्रयोजनं, यदि वा-विमर्शार्थं तव-विमर्शपरीक्षणार्थं त्वमेव भणितोऽसि।

संप्रत्यमोहनाधारिपरीक्षामाह—

पयमक्खरमुद्देसं, संधीसु तत्थ तदुभयं चेव।
अक्खरवंजणसुद्धं, जह भणितं सो परिकहेइ ॥ ६२६ ॥

पदमक्षरमुद्देशं सन्धिम्-अधिकारविशेष सूत्रमर्थ तदुभयं च अक्षरव्यञ्जनशुद्ध पूर्वमवग्राहयति किमेष ग्रहणधारणायोग्य किं वा नेति अवग्राह्य, ततो ब्रूते-उच्चारय प्रेक्षे किमपि गृहीतं न वा किं त्वगृहीतमपि किं स्मृतं किं वा नेति। तत्र यदि यथा भणित तथा सर्वं परिकथयन्ति तदा ज्ञानन्य एष ग्रहणधारणे कुशल इति।

एवं परिच्छिऊणं, जोग्गं नाऊण पेसये तं तु।
वच्चाहि तस्सगासं, सोहिं सोऊण आगच्छ ॥ ६२७ ॥

एव परीक्ष्य-योग्यं ज्ञात्वा तं प्रेषयेत् सन्दिशति च व्रज तस्य-साधोरालोचयितुकामस्य शोधिम्-आलोचनां श्रुत्वा पुनरत्राऽऽगच्छ।

अह सो गतो उ तहियं, तस्स सगासंमि सो करे सोहिं।
दुगतिचउविसुद्धं, तिविहे काले विगडभावो ॥ ६२८ ॥

अथ-प्रेषणानन्तर यत्राऽऽलोचयितुकामा विद्यते। तत्र गतस्तस्याऽऽगतस्य समीपे आलोचयितुकाम प्रशस्तेषु द्रव्यादिषु शोधिम्-आलोचना करोति। कथमित्याह-द्विकदर्शना-

तिचार, चारित्राचारमालोचयनीत्यर्थः । दर्शनग्रहणं ज्ञानग्रहणमपीति ज्ञानातिचार इत्यपि द्रष्टव्यम् । चारित्रातिचारालोचनेऽपि च द्विभेदा-मूलगुणातिचारविषया, उत्तरगुणविषया च । तां करोति । पुनस्त्रिकाम्-आहारोपधिशय्याभेदत एकैका त्रिप्रकाराम्, चतुर्विशुद्धां-प्रशस्तद्रव्यक्षेत्रकालभावोपेतां, त्रिविधे काले--अतीते, प्रत्युत्पन्ने च यत्सेवितम्, अनागतं च यत्सेविष्ये इत्यध्यवसितं विकटभाव.-प्रकटभाव, अप्रतिकुञ्चन इत्यर्थः । व्य० १० उ० ।

( आज्ञाव्यवहारसाधकः )—

दव्वे भावे आणा, खलु सुयं जिणवराणं ।
सम्मं ववहरमाणो, उ तीएँ आराहओ होति ॥ ५६ ॥

आज्ञा द्विविधा-द्रव्ये, भावे च । तत्र द्रव्याज्ञा-राजादीनामाज्ञा, भावाज्ञा खलु श्रुतं जिनवराणाम् । तत्र सम्यक् पञ्चविधान्यतमेन व्यवहारेण-प्रागुक्तनीत्या व्यवहरन् तस्याः-आज्ञाया आराधको भवति । व्य० ३ उ० ।

**आणाअविराहग**-आज्ञाऽविराधक-पुं० । आज्ञाया आराधके, पं०सू० २ सूत्र ।

**आणाआराहण**-आज्ञाऽऽराधन-न० । आप्तोपदेशानुपालने, पञ्चा० । "आणा आराहणाओ" ॥ (५+) ॥ आज्ञाऽऽराधनात्-आप्तोपदेशानुपालनान्निर्निदानतामेव हि जिना मन्यन्ते । पञ्चा० ६ विव० ।

**आणाआराहणजोग**-आज्ञाऽऽराधनयोग-पुं० । आप्तोपदेशानुपालनसम्बन्धे, पञ्चा० १२ विव० ।

**आणाइत्त**-आज्ञावत्-त्रि० । आप्तोपदेशवर्तिनि, पञ्चा० १५ विव० ।

**आणाईसर**-आज्ञेश्वर-पुं० । आज्ञया आज्ञाया वा ईश्वर आज्ञेश्वर । जी० ३ प्रति० ४ अधि० । आ० म० । आज्ञाप्रधाने ईश्वरे, जं० १ वक्ष० । औ० ।

**आणाईसरसेणावच्च**-आज्ञेश्वरसेनापत्य-न० । आज्ञाया ईश्वर आज्ञेश्वर । ( जी० ३ प्रति० ४ अधि० । आ० म० । ) सेनाया पति सेनापति. आज्ञेश्वरश्चासौ सेनापतिश्च आज्ञेश्वरसेनापतिस्तस्य कर्म आज्ञेश्वरसेनापत्यम् । जी० ३ प्रति० ४ अधि० । आज्ञाप्रधानो य. सेनापति -सैन्यनायक तस्य भाव कर्म वा आज्ञेश्वरसेनापत्यम् । औ० । स्वसैन्यं प्रत्यद्भुते आज्ञाप्राधान्ये, जी० ३ प्रति० ४ अधि० । "आणाईसरसेणावच्चं कारेमाणे पालेमाणे' ज्ञा० १ श्रु० १ अ० । विपा० । स० । प्रश्न० ।

**आणाकंखिन्**-आज्ञाकाङ्क्षिन्-पुं० । आज्ञामाकाङ्क्षितुं शीलमस्येत्याज्ञाकाङ्क्षी । सर्वज्ञोपदेशानुष्ठायिनि, आचा० । "इह आणाकंखी पंडिए" ( सूत्र-१५३× ) इह-अस्मिन् मौनीन्द्रप्रवचने व्यवस्थित, सन् आज्ञा-तीर्थकृतोपदेशमाकाङ्क्षितुं शीलमस्येत्याज्ञाकाङ्क्षी आगमानुसारप्रवृत्तिक कश्चैवंभूत पण्डित -सदसद्विवेकज्ञ । आचा० १ श्रु० ४ अ० ३ उ० ।

**आणाकरण**-आज्ञाकरण-न० । आगमवचनासेवने, पञ्चा० । सौत्रविधिसम्पादने, प० व० ।



ता एअम्मि वि काले, आणाकरणे अमूढलक्खेहिं ।
सत्तीए जइयव्वं, एत्थ विही हंदि एसो अ ॥१०००॥

यस्मादेव तस्मादेतस्मिन्नपि काले-दु षमारूपे आज्ञाकरणे-सौत्रविधिसम्पादने अमूढलक्षै -सद्भि शक्त्या यतितव्यमुपसम्पदादौ, अत्र विधिरेष व्याख्यानकरणे हन्दीत्युपप्रदर्शने, एष च वक्ष्यमाणलक्षण । इति गाथार्थ. । प० व०४ द्वार ।

**आणाका (गा) रि ( न् )**-आज्ञाकारिन्-पुं० । आप्तोपदेशवर्तिनि, पञ्चा० ८ विव० । आप्तोपदेशविधायिनि, पञ्चा० । तथा च—

एयस्स फलं भणियं इय आणाकारिणो उ सड्ढस्स ॥४४+॥

एतस्य-समस्तजिनभवनविधानस्य फलम्-प्रयोजन भणितम्-उक्तम् इत्येवम्-उक्तनीत्या । आज्ञाकारिणस्तु-आप्तोपदेशविधायिन एव श्राद्धस्य-श्रद्धावत , श्रावकस्येत्यर्थ । पञ्चा० ७ विव० ।

**आणाखंडण**-आज्ञाखण्डन-न० । आज्ञाभङ्गे, " आणा नो खंडज्जा आणाभंगे कओ सुहो " । महा० ४ अ० ।

( आज्ञाखण्डनकरधर्मस्य विचारे पण्डितश्रीकल्याणकुशलगणिकृतप्रश्ना यथा )—

" आणाखंडणकारी य, सव्वं पि निरत्थयं तस्स ।
आणारहिओ धम्मो, पलालपूलु व्व पडिहाइ ॥१॥ "

" फलं नग्घइ सोलसिमि " त्यादि वचनालम्बनेन साङ्ख्यादिदर्शनान्तरेषु यद्बालतप कष्टानुष्ठानं समाचरन्ति तत्सर्वं सर्वथा निष्फलमेव, न कापि कर्मनिर्जरा भवति केषाचित्संमत, केषाचित्तु तेषामपि तारतम्येन स्वल्पमपि फलं स्वीकार्यं न तु निष्फलता । अत्राऽऽगम -' ज अन्नाणी कम्मं, खवेइ बहुयाहिँ वासकोडीहिं । तं नाणी तिहिं गुत्तो, खवइ ऊसासमित्तेण ॥ १ ॥ " पं०भा० । " फलं नग्घइ सोलसिं पलालपूलु व्व " इत्यादावपीदमेव तात्पर्यम्-" अविरयमाइसुराउ, बालतवोकामनिज्जरा जयइ "-त्ति, " सरागसजमेणं बालतवेण " त्ति, "चरगपरिव्वायगबंभलोगो जा" । इत्यपि अत एव बालतपस्विनामपि कोडिन्नदिन्नसेवालिनाम्ना स्वीयस्वीयतपोऽनुसारेणैव सोपानप्राप्ति , सर्वथा विफलताया तु सर्वेषामप्राप्ति प्रसज्यते कथं च कर्मलाघवमन्तरेण मिथ्यात्विन एव ग्रन्थिदेशं यावदागच्छन्ति न वा कामनिर्जरामात्रमेव तत्र हेतु कारणान्तराणामपि विवाध प्रज्ञप्तिवृत्त्याद्युक्तत्वात्, तथाहि-

" अणुकम्पकामनिज्जर-बालतवे दाणविणयविभंगे ।
संजोगविप्पओगे, वसणूसवइड्ढिसक्कारे " ॥ १ ॥

दृश्यते चैतदर्थसंवाद साक्षाद्यं महानिशीथे नागिलाधिकारे, तद्यथा-"अकामनिज्जराए वि किंचि कम्मक्खयं भवइ । किं पुण जं बालतवेणं, एवं सांति निरत्थयं तस्स ॥ १ ॥ " इत्यादीनां का गतिरिति चेत्सत्यम्, सर्वाणि चैतानि उत्सर्गसूत्राणि ततोऽत्र 'उत्सर्गादपवादो बलीयान्" अयमेव न्यायोऽनुसर्त्तव्य , तत सिद्धं तेषामपि तारतम्येन किंचित् २ फलमिति समाधाने ३ । तथा केचित् महानिशीथगतम्-" जे यावि निन्हगाणं अनुकूलं भासिज्जा ' इत्यादि प्रसिद्धालापकमुपष्टभ्य वक्षारो भवन्ति । तथाहि-ये

पक्षान्तरीयविहितं यतिजनप्रासादादिपरित्राणमाचार्योपाध्यायादीनामापन्निवारणं साधुमुद्दिश्य दानसत्कारादिकं चानुमन्यन्ते तेषां महत्पातकं जायते, सम्यक्त्वमपि प्रतिहन्यते, तेन मतान्तरायत्तं तं युगप्रधानाचार्यभक्त्यादिकमपि सर्वथा नानुमोदनीयमेवेति, केचित्तु-तानपि प्रतिवदन्ति । यथा-नयसाधनश्रेष्ठिसंगमादीनां मिथ्यात्वभाजामपि दानं बहुषु ग्रन्थेषु परंपरया चानुमोद्यमानं दृश्यते, तथा सर्वतीर्थकृत्सातिशयसाधुपारणासु पञ्चदिव्यावसरे अहो दानमहो दानमित्युद्घोषोऽपि यदनुमोदनीयं न तत्कार्यते, कथं दृश्यन्ते च भवदादयः सर्वेऽपि मार्गं प्रतिपन्ना । कारयन्तो यथा देहि भो किंचिदस्मभ्यं तव भूयान् लाभो भावीति, यदि च प्रदत्ते तदा सन्तुष्टिरपि जायते इति स्वयमनुभूयमानस्यार्थस्य विलोपः कर्तुं सतां नोचित इत्याशयतयैव सूत्रकारेणाभ्यधायि, "अहवा सव्वं वि य वित्रराये" त्यादि अत्र सम्यग्दृष्टिपर्यन्तानां पूर्वमुक्तत्वान्मिथ्यात्विनामपि किंचित्करणीयमनुमोदनीयमित्यापतितम् , तच्च विचार्यमाणं जिनजिनबिम्बजिनालयाचार्योपाध्यायसाधुश्राद्धादीनां वास्तवाराध्यानामशनपानप्रदानादि भक्तिवर्णनसंज्वलनाऽऽपत्परित्राणादिकं दृश्यते चानुमोदितं साक्षादप्याचाराङ्गादौ , साधुना साग्निशकटीपुरस्करणे मम न कल्पते भवता । पुनः पुण्यप्राग्भारार्जनमकारीत्यादि कथं च जिनशासनप्रभावनाकारिणो म्लेच्छा अप्यनुमोद्यन्ते इत्याद्यनाग्रहबुद्ध्या पर्यालोचनीयमिति ॥४॥ ही० । तथा तृतीय-चतुर्थप्रश्नप्रतिवचनं तु द्वादशजल्पपट्टकादवसेयं, किंच-" सव्वं पि निरत्थयं तस्स " इत्यादिवचनस्यापेक्षिकत्वान्नैकान्तवादः । अपेक्षा च मोक्षफलाभावलक्षणेति भावः । अन्यच्च महानिशीथप्रसिद्धालापकमुपष्टभ्य एकान्तेन परपाक्षिकप्रशंसानिषेधः । सोऽपि न संगच्छते यतस्तस्मिन्नेवालापके-" अविसुद्धमुद्धपरिसामज्झगए सलाहेज्जा " इति वचनेनाभिमुखमुग्धपरिषद्विशेषमध्य एव तत् श्लाघाया निषेधः प्रतिपादितोऽस्ति , न तु सामान्यपर्षदीति, किंचाऽत्रार्थे-ऊह-प्रत्यूहादिबहुवक्तव्यमस्ति तत्तु साक्षान्मिलने एव समीचीनतामञ्चतीति ॥ ३ ॥ ४ ॥ ही० ३ प्रका० ।

आणागाहग-आज्ञाग्राहक-पुं० । आगमग्राहके, " सयाऽऽणागाहगे सिया"(सूत्र-२+)। सदाऽऽज्ञाग्राहकः स्यात् , अध्ययनश्रवणाभ्याम् । पं०सू० २ सूत्र ।

आणागिज्झ-आज्ञाग्राह्य-त्रि० । आगमविनिश्चेये, पं०व० ।

आणागिज्झो अत्थो,
आणाए चेव सो कहेयव्वो ॥ ९९३+ ॥

पं० व० ४ द्वार ।

आज्ञा-आगमस्तद्ग्राह्यस्तद्विनिश्चेयोऽर्थोऽनागतातिक्रान्तप्रत्याख्यानादिरागमैकग्राह्य-आगमेनैवासौ कथयितव्य इति । यद्वा-सामान्येनैवाज्ञाग्राह्योऽर्थ -सौधर्मादि , आज्ञयैवासौ कथयितव्यो, न दृष्टान्तेन तस्य तत्र वस्तुनोऽसम्भवात् । आव० ६ अ० । ( इत्यादिबहुवक्तव्यता ' वक्खाण ' शब्दे षष्ठ भागे करिष्यते । )

आणाजुत्त-आज्ञायुक्त-त्रि० । आगमोपेते, दर्श० ।

चारित्रमुद्दिश्य- 'आणाजुत्ताणमिणं , न होइ अहुणो त्ति वामोहो ' ॥ ५७ ॥ आज्ञायुक्तानामपि न केवलमाज्ञाबाह्यानामिदं प्रस्तुतं चारित्रं न भवति-न जायते । दर्श० ४ तत्त्व ।

आणाजोग ( य )-आज्ञायोग-पुं० । आज्ञा-नियोग शासनं यथा राजाऽऽज्ञा-राजशासनम् तस्या योग-उत्साह तया वाऽऽज्ञया योगः-सम्बन्धः । दत्ताया अविफलीकरणे , षो० १३ विव० । आप्तवचनसम्बन्धे च । पञ्चा० १३ विव० । सूत्रव्यापारे , पं० व० ।

पावं विसाइतुल्लं, आणाजोगो अ मंतसमो ॥ ९९९ ॥

सर्वमपि पापं निन्द्यम् , विषादितुल्यं, विपाकदारुणत्वाद् आज्ञायोगश्च-सूत्रव्यापारश्च अत्र मन्त्रसमः तद्दोषापनयनात् । पं० व० ४ द्वार ।

आणाणिद्देस-आज्ञानिर्देश-पुं० । भगवदभिहितागमस्योत्सर्गापवादाभ्यामिदमित्थं विधेयमिदमित्थं चेत्यवमात्मके प्रतिपादने , उत्त० १ अ० ।

आणाणिद्देसयर-आज्ञानिर्देशकर-त्रि० । भगवदभिहितागमप्रतिपादनकरणशीले , भगवदभिहितागमानुलोमानुष्ठायिनि च । उत्त० १ अ० ।

आज्ञानिर्देशतर-त्रि० । गुरुवचनस्येदमित्थमेवं करोमीति निश्चयाभिधानेन भवाम्भोधेस्तरणशीले उत्त० १ अ० ।

तथा च विनीतशिष्यमधिकृत्य—

आणाणिद्देसकरे ॥ ३+ ॥

आङिति स्वस्वभावावस्थानात्मिकया मर्यादयाभिव्याप्त्या वा ज्ञायतेऽर्थो अनयेत्याज्ञा-भगवदभिहितागमरूपा तस्या निर्देश-उत्सर्गाऽपवादाभ्यां प्रतिपादनम् , आज्ञानिर्देश इदमित्थं विधेयमिदमित्थं वेत्येवमात्मकं तत्करणशीलस्तदनुलोमानुष्ठाता वा आज्ञानिर्देशकर । यद्वा—आज्ञा-सौम्य ! इदं कुरु, इदं च मा कार्षीरिति गुरुवचनमेव, तस्या निर्देश -इदमित्थमेव करोमीति निश्चयाभिधानं तत्कर । आज्ञानिर्देशेन वा तरति भवाम्भोधिमित्याज्ञानिर्देशतर इति, इत्यादयोऽनन्तगमपर्यायत्वाद् भगवद्वचनस्य व्याख्याभेदा संभवन्तोऽपि मन्दमतीनां व्यामोहहेतुतया बालाऽबलादिबोधोत्पादनार्थत्वाच्चास्य प्रयासस्य न प्रतिसूत्रं प्रदर्शयिष्यन्ते । उत्त० १ अ० ।

आज्ञाऽनिर्देशकर-पुं० । आज्ञाविराधके, उत्त० ।

अविनीतशिष्यमधिकृत्य-" आणाऽनिद्देसकरे ॥३+॥" स शिष्योऽविनीत इत्युच्यते य आज्ञाया -तीर्थकरवाक्यस्य, गुरोर्वाक्यस्य चाऽनिर्देशकर -अप्रमाणकर्त्ता आज्ञाविराधक । उत्त० १ अ० ।

आणाणिप्फादय-आज्ञानिष्पादक-पुं० । आज्ञासाधके, पं० सू० २ सूत्र ।

आणाऽणुग-आज्ञाऽनुग-त्रि० । आज्ञामनुगच्छति, अनु० । गम-ड ६ त० । आदेशानुसारेण गन्तरि दासादौ, क्त आज्ञानुगतोऽप्यत्र । त्रि० । वाच० । आज्ञानुसारिणि, दर्श० ४ तत्त्व । आगमानुसारिणि, पञ्चा० ।

सुहभावा तदिगमो, सो वि य आणाणुगो नियोगेण ॥ २९+ ॥

शुभभावात्-प्रशस्ताध्यवसायात्तद्विगम -अशुभकर्मविगमो भवति 'सो वि य' त्ति स पुन शुभभाव आज्ञानुगः-आगमानुसारी भवति नियोगेन—नियमेन अनाज्ञाऽनुगस्त्वशुभ एवेति भाव । पञ्चा० १६ विव० ।

**आणाऽणुगामि-(न्)**-आज्ञाऽनुगामिन्-त्रि० । आज्ञामनुचलति अनु० । गम—णिनि ६ त० स० । आज्ञानुगते, स्त्रियां ङीप् । वाच० ।

**आणापडिच्छय**-आज्ञाप्रतीच्छक-पुं० । आज्ञाप्रतीच्छाकारके पं०सू० २ सूत्र ।

**आणापरतत**-आज्ञापरतन्त्र-पुं० । आप्तवचनाधीने, पञ्चा० १४ विव० । (आज्ञापरतन्त्रा प्रवृत्तिरप्रवृत्तिर्वेति 'आणा' शब्देऽस्मिन्नेव भागे उक्तम् ।)

**आणापरिणामग**-आज्ञापरिणामक-पुं० । यदाज्ञाप्यते तत्करोति तत्कारणान्न पृच्छति;-किमर्थमेतदिति किंत्वाज्ञयैव कर्त्तव्यतया श्रद्धातीत्येवलक्षणे परिणामकभेदे व्य० १० उ० । (एतस्य लक्षणाऽऽदिवहुवक्तव्यता 'परिणामग' शब्दे पञ्चमभागे वक्ष्यते) (एतस्य परीक्षाप्रकार आज्ञाव्यवहारनिरूपणावसरे 'आणा' शब्देऽस्मिन्नेव भागे गत )

**आणापवित्ति**-आज्ञाप्रवृत्ति-स्त्री० । आप्तोपदेशपरतन्त्रप्रवर्त्तने, पञ्चा० ।

आज्ञाप्रवृत्तिकश्च शुद्ध एव । तथाच विम्बविधिमधिकृत्य-

आणापवित्तिउ च्चिय, सुद्धो एसो ण अण्णहा णियमा ।
तित्थगरे वहुमाणो, तदभावाओ य णायव्वो ॥ १२ ॥

आज्ञाप्रवृत्तित एव-आप्तोपदेशपरतन्त्रप्रवर्त्तनादेव शुद्धो-विशुद्ध । एप परिणामो विम्बविधायको वा ज्ञेय इति योग । पञ्चा० ८ विव० । (अत्र विशेप 'चेइय' शब्दे तृतीयभागे १२६८ पृष्ठे वक्ष्यते )

**आणापवित्तिय**-आज्ञाप्रवृत्तिक-पुं० । आप्तोपदेशपरतन्त्रप्रवृत्तिमति , पञ्चा० ८ विव० ।

**आणापहाण**-आज्ञाप्रधान-पुं० । आगमपरतन्त्रे, ध० २ अधि० ।

**आणापाणपज्जत्ति**-आनप्राणपर्याप्ति-स्त्री० । पर्याप्तिभेदे , मया पुनरुच्छ्वासप्रायोग्यवर्गणादलिकमादायोच्छ्वासरूपतया परिणमय्य आलम्ब्य च मुञ्चति सा प्राणापानपर्याप्तिरिति । प्रव० २३२ द्वार ।

**आणापाणवग्गणा**-आनप्राणवर्गणा-स्त्री० । उच्छ्वासनिश्वासयोग्यायां पुद्गलवर्गणायाम् , कर्म० ५ कर्म० । ( वक्तव्यता 'वग्गणा' शब्दे षष्ठ भागे वक्ष्यते )

**आणापाणु**-आनप्राण-पुं० । कालविशेषे , जी० ३ प्रति० ४ अधि० । अनु० । स्था० । ज्ञा० । कर्म० ।

आणुप्राणु-त्रि० । प्र अन् उण् । वाच० ।

( सूर्यप्रज्ञप्त्यावानप्राणकालपरिमाणम् )—

"आवलियानि वा आणापाणू ति वा । (सूत्र-१०४+) असङ्ख्यया आवलिका एक आनप्राण , 'छिपञ्चाशदधिकात्रिचत्वारिंशच्छतमङ्ख्यावलिकाप्रमाण एक आनप्राण" इति वृद्धसम्प्रदाय ।

तथा चोक्तम्—

"एगो आणापाणू , तेयालीसं (तेयालीसं) सया उ वावन्ना ।
आवलियपमाणेणं, अणतनाणीहिं निद्दिट्ठो ॥ १ ॥"

सप्ताऽऽनप्राणप्रमाण स्तोक । सू०प्र० २० पाहु० ।

**आणावज्झ**-आज्ञाबाह्य-त्रि० । आप्तोपदेशशून्ये , पञ्चा० ।

आज्ञाबाह्यायाश्च स्वमतिप्रवृत्तेर्भवनिबन्धनत्वम्—

समितिपवित्ती सव्वा, आणावज्झ त्ति भवफला चेव ।
तित्थगरुद्देसेण वि, ण तत्तओ सा तदुद्देसा ॥ १३ ॥

स्वमतिप्रवृत्ति -आत्मबुद्धिपूर्विका चेष्टा सर्वा-समस्ता द्रव्यस्तव-भावस्तवविषया आज्ञाबाह्या-आप्तोपदेशशून्या इति हेतोर्भवफलैव-संसारनिबन्धनमेव आज्ञाया एव भवोत्तारहेतुषु प्रमाणत्वात् । पञ्चा० ८ विव० । ( विशेप 'चेइय' शब्दे तृतीयभागे १२६८ पृष्ठे वक्ष्यते । ) आप्तवचनबहिष्कृते च । पञ्चा० ।

आणावज्झत्तणओ, न होइ मोक्खंगया णवरं ।

आज्ञाबाह्यत्वाद्-आप्तवचनबहिष्कृतत्वाद्यदाज्ञाबाह्यं तन्मोक्षाङ्ग न भवति । पञ्चा० ६ विव० ।

**आणावलाभिओग**-आज्ञाबलाभियोग-पुं० । आज्ञापनम्-आज्ञा; भवतेद कार्यमेव तदकुर्वतो बलात्कारणम् बलाभियोगस्ततश्चाऽऽज्ञया सह बलाभियोग आज्ञाबलाभियोग. आज्ञाबलयोरभियोगो-व्यापारणमिति समास । आज्ञाबलयोर्व्यापारणे, पञ्चा० ।

आणावलाऽभियोगो, णिग्गंथाणं ण कप्पते काउं ।
इच्छा पउंजियव्वा, सेहे तह चेव राइणिए ॥ ८ ॥

आज्ञाबलाऽभियोगो निर्ग्रन्थाना-साधूना न कल्पते-न युज्यते कर्त्तुं-विधातु परपीडोत्पादकत्वादात्मनश्चाभियोगिककर्मबन्धहेतुत्वात्तस्येत्यादि-( बहुवक्तव्यता 'इच्छाकार' शब्देऽस्मिन्नेव भागे वक्ष्यते ) पञ्चा० १२ विव० ।

**आणाभंग**-आज्ञाभङ्ग-पुं० । आज्ञाया-आदेशस्य भङ्ग -स्वविषयेषु प्रचाराभाव:, आदेशस्याऽकरणेन आदिष्टविषयेषु प्रचाराऽभावे, वाच० । आप्तोपदेशाननुपालने, पञ्चा० १५ विव० । सर्वविद्रागमोल्लङ्घने च । दर्श० १ तत्त्व । ( एतद्वक्तव्यता 'आणा' शब्देऽस्मिन्नेव भागे गता )

**आणाभावग**-आज्ञाभावक-पु० । आज्ञाया भावयितरि, पं० सू० । 'सयाणाभावगे सिया" (सूत्र-२+) । सदाऽऽज्ञाभावक. स्यात्तदनुप्रेक्षाद्वारेणेति । पं० सू० २ सूत्र ।

**आणामिय**-आनामित-त्रि० । ईषन्नामिते, उपा० २ अ० । न० । प्रश्न० । जी० । "आणामियचावरुइलकिण्हब्भराइसुसंठियसंगयआययसुजायभूमया" (सूत्र-१४+) । ( आनामित चापरुचिरकृष्णचिकुरराजिसुसंस्थितसंगतायतसुजातभ्रूका ) आनामितम्-ईषन्नामित यच्चाप-धनुस्तद्वद्रुचिरे-शोभने कृष्णचिकुरराजिसुसंस्थिते कृष्णापि-कृष्णा भ्रूराजिसुसंस्थिते सगते आयते-दीर्घे सुजाते-सुनिष्पन्ने भ्रुवौ येषा ते तथा । नं० । प्रश्न० । 'आणामियचावरुइलतणुकसिणनिद्धभूमया" ( सूत्र-१४७ + ) । आनामितम्-ईषन्नामितम्-आरोपितमिव भाव , यच्चाप-धनुस्तद्वत् रुचिरे-संस्थानविशेषभावता रमणीये तनू-तनु

श्लक्ष्णपरिमितबालपङ्क्त्यात्मकत्वात् कृष्णे-परमकालिमोपेते स्निग्धे-स्निग्धच्छाये भ्रुवौ येषां ते आनामितचापरुचिरतनुकृष्णस्निग्धभ्रूकाः। जी० ३ प्रति० ४ अधि० २ उ०। ( हस्तिवर्णकर्माधिकृत्य )-" आणामियचावललियसंवेल्लिनग्गसोंडं " (सूत्र-२१×)। आनामितम्-ईषन्नामितं यच्चापं धनुस्तद्वद् ललिता च-विलासवती संवेल्लिता च-वेल्लन्ती संकोचिता वा अग्रशुण्डा-शुण्डाग्रं यस्य तत्तथा। उपा० २ अ०।

आणामेत्त-आज्ञामात्र-न०। आप्तवचनमात्रे, " आणामेत्तंमि सव्वहा जुत्तो " ॥ २८ + ॥ आज्ञामात्रे, आप्तवचन एव सर्वथा सर्वप्रकारैर्युक्त-उद्यत । पञ्चा० १४ विव०।

आणारुइ-आज्ञारुचि-स्त्री०। आज्ञा-सूत्रव्याख्यानं, निर्युक्त्यादि तत्र तया वा रुचिः श्रद्धानम् सा आज्ञारुचिः। स्था० ४ ठा० १ उ०। भ०। निर्युक्त्यादिस्तत्त्वश्रद्धानं, ग० १ अधि०। औ०। " आणारुई तित्थगराणं आण पसंसति "। आ० चू० ४ अ० १२४८ गाथा। रागद्वेषरहितस्य पुंस आज्ञयैव धर्मानुष्ठानगता-रुचिराज्ञारुचिः। तृतीये सम्यग्दर्शनभेदे, ध० २ अधि०। आज्ञा-सर्वज्ञवचनात्मिका तया रुचिर्यस्य स। स्था० १० ठा० ३ उ०। उत्त०। आप्तोपदेशाभिलापयुक्ते, पञ्चा०। ' आणारुइणो चरणं " ॥ १२ + ॥ आज्ञारुचेः-आप्तोपदेशाभिलापयुक्तस्य चरणं—चारित्रम्। पञ्चा० ११ विव०। आगमबहुमानिनि च। पञ्चा० १६ विव०। " आणारुइणो य सम्मं ति " ॥ ४१ + ॥ आज्ञारुचय -आगमबहुमानिन। पञ्चा० ११ विव०। तदात्मके तृतीये सरागसम्यग्दर्शिनि च। स्था० १० ठा० ३ उ०। उत्त०। यो हि प्रतनुरागद्वेषमिथ्याज्ञानतयाऽऽचार्यादीनामाज्ञयैव कुग्रहाभावाज्जीवादितथेति रोचयते माषतुषादिवत् स आज्ञारुचिः। स्था० १० ठा० ३ उ०।

( तल्लक्षणं यथा )—

रागो दोसो मोहो, अन्नाणं जस्स अवगयं होइ।
आणाए रोयंतो, सो खलु आणारुई नाम ॥ २० ॥

स खलु निश्चयेन आज्ञारुचिर्नाम इति प्रसिद्धो भवति, स इति कः ?-यस्य रागः -स्नेहः द्वेषः -अप्रीतिः ,मोहः -शेषमोहनीयप्रकृतयः , अज्ञानं -मिथ्यात्वरूपम् एतत्सर्वं नष्टं भवति अस्य देशतोऽपगतं गम्यते। न सर्वतोऽपगतशब्दस्य प्रत्येकं संबन्धः। यस्य रागो द्वेषोऽपगतः, यस्य द्वेषोऽपि देशतोऽपगतः, यस्य मोहोऽपि देशतोऽपगतः, यस्य अज्ञानं देशतोऽपगतम्, एतेषां अपगमात् आज्ञया आचार्याद्युपदेशेन रोचमानजीवादितत्त्वं तथैवेति प्रतिपद्यमानो यो भवति स आज्ञारुचिरित्यर्थः। अत्र माषतुषदृष्टान्तः -स हि रूस मा तुस इति स्थाने माषतुष इति दृष्टान्तोऽस्ति ॥२०॥ उत्त० २८ अ०। प्रव०। स्था०। ' आणारुई ' ॥१९५+॥ आज्ञा-सर्वज्ञवचनात्मिका तस्यां रुचिः -अभिलाषो यस्य स आज्ञारुचिः। सरागसम्यग्दर्शनाऽऽर्यभेदे, जिनाज्ञैव मे तत्त्वं; न शेषं युक्तिजालमिति योऽभिमन्यते स आज्ञारुचिः। ( ३७ सूत्र टी० ) प्रज्ञा० १ पद।

( आज्ञारुचिमाह )—

जो हेउमयाणंतो, आणाए रोयए पवयणं तु।
एमेव णन्नहत्ति य, एसो आणारुई नाम॥११९॥(सूत्र-३७)

यो हेतुम्-विवक्षितार्थगमकमजानान प्रवचनमाज्ञयैव तुशब्द एवकारार्थे, केवलया रोचते, कथमित्याह-एवमेतत्; प्रवचनोक्तमर्थजातं, नान्यथेति एष आज्ञारुचिर्नाम। प्रज्ञा० १ पद।

आणाल-आलान-न०। आ-लीयतेऽत्र आ-ली-ल्युट्। "आलाने ल्-नो." ॥८।२।११७॥ इति हैमप्राकृतसूत्रेण ल्-नो-र्व्यत्ययः। प्रा०। गजबन्धनस्तम्भे, करणे ल्युट्। तद्बन्धनरज्ज्वाम्, भावे ल्युट्। बन्धनमात्रे च। वाच०।

आणालक्खंभ-आलानस्तम्भ-पुं०। गजबन्धनस्तम्भे, प्रा० २ पाद। वाच०।

आणावं-आज्ञावत्-त्रि०। आप्तोपदेशवर्त्तिनि, ध० २ अधि०।

आणावट्टि(न्)-आज्ञावर्त्तिन्-त्रि०। भगवत्प्रणीतवचनानुसारिणि आचा०।

आणाववहार-आज्ञाव्यवहार-पुं०। व्यवहारभेदे, ध० २ अधि०। व्य०। प्रव०। पञ्चा०। ( वक्तव्यता 'आणा' शब्देऽस्मिन्नेव भागे गता। )

आणाविजय-आज्ञाविच ( ज ) य-पुं०। आ-अभिविधिना ज्ञायन्तेऽर्था यया सा-प्रवचनं, सा विचीयते-निर्णीयते, पर्यालोच्यते वा यस्मिंस्तदाज्ञाविचयं-धर्मध्यानमिति, प्राकृतत्वेन-विजयमिति। स्था० ४ ठा० १ उ०। आज्ञा-जिनप्रवचनं तस्या विचयो-निर्णयो यत्र तदाज्ञाविचयम्, प्राकृतत्वात्-आणाविजयम्। औ०। ग०। आज्ञा वा विजीयते-अधिगमद्वारेण परिचितीक्रियते यस्मिन्नित्याज्ञाविजयम्। स्था० ४ ठा० १ उ०। आज्ञागुणानुचिन्तनात्मके धर्मध्यानभेदे, औ०। ग०। भ०। स च आज्ञाया अनन्तत्वपूर्वापराविरोधित्वादिस्वरूपे चमत्कारपूर्वकश्चित्तविश्रामः-आज्ञाविचयः। अष्ट० ६ अष्ट०। अतीन्द्रियत्वाद्धेतूदाहरणादिसद्भावेऽपि बुध्यतिशयशक्तिविकलैः परलोकबन्धमोक्षधर्माधर्मादिभावेष्वत्यन्तदुःखावबोधेष्वाप्तप्रामाण्यात्तद्विषयं तद्वचनं तथैवेत्याज्ञाविचयम्। सम्म० ३ काण्ड ६३ गाथाटी०। धर्म्यमपि ज्ञानदर्शनचारित्रवैराग्यभावनाभिः कृताभ्यासस्य नयादिभिरतिगहनं न बुध्यते तुच्छमतिना परं सर्वज्ञमतं सत्यमेवेति चिन्तनमाज्ञाविचयः। ध० ३ अधि०।

( एतत्स्वरूपम् )—

( १२८४ गाथा ) तत्थ आणाविजये आणं विवेएति। जधा पंचत्थिकाए छज्जीवनिकाए अट्ठ पवयणमाता, अण्णे य सुत्तनिबद्धे भावे, अबद्धे य पेच्छ, कह आणाए परियाणिज्जंति? एवं चिंतेति, भासति य। तधा पुरिसादिकारणं पडुच्च किच्छासज्झेसु हेतुविसया तीतेसु वि बन्धुसु वि सव्वण्णादिट्ठेसु एवमेव सतंति चिंतेतो भासेतो य आणा विवेयेति। आ० चू० ४ अ०।

आणाविराहणा-आज्ञाविराधना-स्त्री०। आप्तोपदेशाननुपालने, पञ्चा० १६ विव०। ( आप्तोपदेशाऽननुपालने किं भवतीति ' आणा ' शब्देऽस्मिन्नेव भागे गतम्)

आणाविराहणाऽणुग-आज्ञाविराधनाऽनुग-त्रि०। आप्तोपदेशाऽननुपालनानुसारिणि, पञ्चा०।

तथा च अशुभाऽध्यवसानमधिकृत्य—

**आणाविराहणाणुग-मेयं पि य होति दट्ठव्वं ॥ २८ ॥**

इद पुनरशुभाध्यवसानम—आज्ञाविराधनाम्-आप्तोपदेशानुपालनाम्-अनुगच्छति-अनुसरतीत्याज्ञाविराधनानुग भवति स्याद् द्रष्टव्यम्-ज्ञेयम्। पञ्चा० १६ विव०।

**आणाविवरीय-आज्ञाविपरीत**-त्रि०। आप्तवचनविपर्यस्ते, पञ्चा०। "आणाविवरीयमेव जं किंचि" ॥ ६+ ॥ आज्ञाविपरीतमेव-आप्तवचनविपर्यस्तमपि। पञ्चा० ६ विव०।

**आणावेतव्व-आज्ञापयितव्य**-त्रि०। आदेशनीये, आचा०।

**आणासार-आज्ञासार**-त्रि०। आप्तवचनप्रधाने, "आणासारं मुणेयव्वं" ॥ ८+ ॥ आज्ञासारम्-आप्तवचनप्रधानम्। पञ्चा० ११ विव०।

**आणासिद्ध-आज्ञासिद्ध**-त्रि०। आप्तवचनसिद्धे, सूत्र०। "पुराणं मानवो धर्मः, साङ्गो वेदश्चिकित्सितम्। आज्ञासिद्धानि चत्वारि, न हन्तव्यानि हेतुभिः ॥ १ ॥ इति परतीर्थिका। सूत्र० १ श्रु० ३ अ० ३ उ०।

**आणिज्जंत-आनीयमान**-त्रि०। प्राप्यमाणे, "णिज्जंताऽऽणिज्जंता" ॥ ६४२ ॥ 'आणिज्जतो' त्ति-गृहपति-गृहादानीयमानो वा। बृ० ३ उ०।

**आणि ( णी ) य-आनीत**-त्रि०। आ-नी—कर्मणि क्त। "पानीयादिष्वित् ॥ ८। १। १०१ ॥" इति हैम प्राकृतसूत्रेण-इत्त्वम्। प्रा०। देशाद्देशान्तरं नीते, वाच०। आहृते, प्रश्न० ६ द्वार।

**आणील-आनील**-पुं०। ईषदर्थे, आङ्। प्रा० स०। ईषन्नीलवर्णे, सामस्त्येन नीलवर्णे च। "आणीलं च वत्थं रयाविहि" ॥ ६ ॥ वस्त्रम्-अम्बरं परिधानार्थं गुलिकादिना रञ्जय आनीलम्-ईषन्नीलं सामस्त्येन नील भवति। सूत्र० १ श्रु० ४ अ० २ उ०। तद्वति, त्रि०। नीलघोटके, पुं०। हेम०। तज्जातिस्त्रियाम् स्त्री०। ङीप्। वाच०।

**आणुकंपिय-आनुकम्पिक**-त्रि०। अनुकम्पया चरतीत्यानुकम्पिक। भ० १५ श०। कृपावति, भ०३ श० १ उ०। प्रति०।

**आणुगामिय-आनुगामिक**-त्रि०। गच्छन्तं पुरुषम् आ-समन्तादनुगच्छत्यवशील आनुगामि, आनुगाम्येवानुगामिक स्वार्थे कप्रत्ययः। अथवा-अनुगम प्रयोजन यस्य तदानुगामिकम्। अनुशतिकादिपाठादुभयपदवृद्धि। आ० म० १ अ०। नं०। स्था०। अनुगन्तरि, ( अनुगमनशीले )। ध० ३ अधि०। "आणुगामियं ति वेमि" ( सूत्र-२१७ + )। आनुगामिक तदार्जितपुण्यानुगमनाद्। आचा० १ श्रु० ८ अ० ५ उ०। सह गन्तरि, सूत्र०। "से एगईओ आणुगामियभाव पडिसधाय" ( सूत्र-३१ × )। आनुगामुकभाव प्रतिसंधाय-सहगन्तृभावेनानुकूल्य प्रतिपद्य। सूत्र० २ श्रु० २ अ०। अवधिज्ञानविशेष, देशान्तरगतमपि ज्ञानिनमनुगच्छति लोचनवत्तदवधिज्ञानमानुगामि। कर्म० १ कर्म०।

**आणुगामिओऽणुगच्छइ,**
**गच्छंतं लोअणं जहा पुरिसं ॥ ७१४+ ॥** विशे०।



नं० स्था०। ( एतद्व्याख्याम् 'ओहि' शब्दे तृतीयभागे १४१ पृष्ठे करिष्यते। )

( आनुगामिकानानुगामिकमिश्रावधिज्ञानस्वरूपम् )—

**आणुगामिओ य ओही, नेरइयाणं तहेव देवाणं।**
**अणुगामि अणाणुगामी, मीसो य मणुस्सतेरिच्छे॥७१४॥**

अनुगमनशील आनुगामुक। ( सर्वोऽप्यवधिज्ञानविषय· 'ओहि' शब्दे तृतीयभागे १४१ पृष्ठे दर्शयिष्यते ) ( विशे०। ) त्रिविधोऽप्यवधिर्मनुष्येषु तिर्यक्षु च भवतीति निर्युक्तिगाथार्थः। विशे०। तत्रेहान्तगतो न ग्राह्यो, देवनारकाणामभ्यन्तरावधित्वात्, किन्तु-मध्यगत, सोऽप्यन्त ( न्त्य ) व्याख्यानविशिष्टो देवनारकाणां स्वावधिद्योतितक्षेत्रमध्यवर्तित्वात्, तुशब्द एवकारार्थ, स चावधारणे आनुगामिक एव यथाक्तरूपो नान्य इति, केषामित्याह-नरान् कायन्ति स्वयोग्यतानाह्वयन्तीति नरका तेषु भवा नारकास्तेषां तथा दीव्यन्ति-यथेच्छया क्रीडन्तीति देवा तेषां मनुष्याश्च तिर्यञ्चश्च मनुष्यतिर्यञ्च तस्मिन्मनुष्यतिरश्चि जातावेकवचनं, तमोऽयमर्थः-मनुष्येषु तिर्यक्षु आनुगामिक उक्तशब्दार्थः. अनानुगामिक-अवस्थित शृङ्खलादिनियन्त्रितप्रदीप इव यो गच्छन्तं पुरुष नानुगच्छति आह च भाष्यकृत्-" अणुगामिकोऽणुगच्छइ, गच्छत लोयण जहा पुरिसं। इयरो उ नाणुगच्छइ, ठियप्पदीवो व्व गच्छत " ( विशे० ७१४ )। यस्य तु एकदेशस्यात्रदेशो व्रजति स्वामिना सह अपरश्च देश· प्रदेशान्तरस्खलितपुरुषस्योपहतैकलोचनवदन्यत्र न व्रजति स मिश्र उच्यते, उक्त च-" उभयसहावो मीसो, देसो जस्साऽणुजाइ ना अन्ना। कासइ गयस्स करयइ, एग उवहम्मइ जहच्छि " ( विशे०७१४ ) एप च भवति गाथासक्षेपार्थ। देवनारका, सर्वात्मदेशजाभ्यन्तरावधिरूपमध्यगत आनुगामिकोऽवधि, तिर्यङ्मनुष्याणा सप्रभेद -आनुगामिक, अनानुगामिको, मिश्रश्चेति। आ० म० १ अ०।

एतस्य भेदा —

**से किं तं आणुगामियं ओहिनाणं ?, आणुगामियं ओहिनाणं दुविहं पण्णत्तं; तं जहा-अंतगयं; मज्झगयं च। ( सूत्र-१०+ )**

'से किं तमि' त्यादि अथ किं तदानुगामिकमवधिज्ञानम् ?। आनुगामिकमवधिज्ञान द्विविधं प्रज्ञप्तम्, तद्यथा-अन्तगत च, मध्यगत च। नं०। ( अन्तगताऽवधिज्ञानस्वरूपम् 'अन्तगय' शब्दे प्रथमभागे गतम्। ) ( मध्यगताऽवधिज्ञानस्वरूपम् 'मज्झगय' शब्दे षष्ठ भागे वक्ष्यते। )

( अन्तगत-मध्यगतयोर्विशेष )—

**अंतगयस्स मज्झगयस्स य को पइविसेसो ?, पुरओ अंतगएणं ओहिनाणेणं पुरओ चेव संखिज्जाणि वा असंखिज्जाणि वा जोयणाइं जाणइ पासइ, मग्गओ अंतगएणं ओहिनाणेणं मग्गओ चेव संखिज्जाणि वा असंखिज्जाणि वा जोयणाइं जाणइ पासइ, पासओ अंतगएणं ओहिनाणेणं पासओ चेव संखिज्जाणि वा असंखिज्जाणि**

वा जोयणाइं जाणइ पासइ, मज्झगएणं ओहिनाणेणं सव्वओ समंता संखिज्जाणि वा असंखिज्जाणि वा जोयणाइं जाणइ पासइ । ( सूत्र-१० + )

अन्तगतस्य मध्यगतस्य च परस्परं कः प्रतिविशेषः ? -प्रतिनियतो विशेष: सूरिराह-पुरतोऽन्तगतेनावधिज्ञानेन पुरत-एवाग्रत एव संख्येयानि-एकादीनि; शीर्षप्रहेलिकापर्यन्तान्यसङ्ख्येयानि वा योजनानि; एतावत्सु योजनेष्ववगाढं, द्रव्यमित्यर्थ, जानाति-पश्यति ज्ञानं विशेषग्रहणात्मकं, दर्शनं सामान्यग्रहणात्मकम् । तदेवं पुरतोऽन्तगतस्य शेषावधिज्ञानिभ्यो भेदः । एवं शेषाणामपि परस्परं भावनीयः । ' नवरं सव्वओ समंता ' इति-सर्वत सर्वासु दिग्विदिक्षु समन्तात्सर्वैरप्यात्मप्रदेशैः सर्वैर्वा विशुद्धस्पर्द्धकैः, उक्तं च चूर्णौ-" सव्वउ त्ति सव्वासु दिसि विदिसासु समंता इति सव्वायप्पएसेसु सव्वेसु वा विसुद्धफड्डगेसु " इति । अत्र ' सव्वायप्पएसेसु इत्यादौ तृतीयार्थे सप्तमी भवति च तृतीयार्थे सप्तमी, यदाह पाणिनि स्वप्राकृतलक्षणे-"व्यत्ययोऽप्यासा " मित्यत्र सूत्रे- तृतीयार्थे सप्तमी' यथा-" तिसु तेसु अलंकिया पुहवी " इति । अथवा-समन्ता इत्यत्र स अवधिज्ञानी परामृश्यते. मन्ता इति ज्ञाता, शेषं तथैव । नं० । साध्यमसाध्यमन्यात्विकमनुगच्छति साध्याभावेन भवति यो धूमादिहेतु सोऽनुगामी ततो जातमानुगामिकम् अनुमानं तद्रूपो व्यवसायोऽपि आनुगामिक एव । अनुमाने, तदात्मके व्यवसायविशेषे च । स्था० ३ ठा० ३ उ० ।

**आणुगामियत्ता-आनुगामिकता-स्त्री०** । परम्पराशुभानुबन्धे, ' आणुगामियत्ताए भविस्सइ " ( सूत्र-३८० × ) आनुगामिकत्वाय शुभानुबन्धायेत्यर्थ । भ० ६ श० ३३ उ० । " आणुगामियत्ताए अब्भुट्ठेत्ता भवति " ॥ १६ + ॥ आनुगामिकतायै-परम्पराशुभानुबन्धायेति । दशा० ४ अ० । स्था० । भवपरम्परासु, सानुबन्धसुखे च । " आणुगामियत्ताए भविस्सइ ॥ ११ + ॥ " आनुगामिकत्वाय-भवपरम्परासु सानुबन्धसुखाय भविष्यति । दशा० १० अ० । नि० ।

**आणुधम्मिय-आनुधार्मिक-त्रि०** । अन्यैरपि तद्धार्मिकैस्समाचीर्णे, आचा० । भगवतो महावीरस्य विहारसमये इन्द्रप्रक्षिप्तवस्त्रधारणमधिकृत्य-" एवं खु आणुधम्मियं तस्स " ( सूत्र-२ + ) । एतद्वस्त्रावधारणं तस्य भगवतोऽनुपश्चाद्धार्मिकमानुधार्मिकमेवेत्यपरैरपि तीर्थकृद्भिः समाचीर्णमित्यर्थ । आचा० १ श्रु० ६ अ० १ उ० ।

**आणुपुव्व-आणुपूर्व्य-न०** । पूर्वस्य पश्चादनुपूर्वं तस्य भाव इत्यर्थे । " गुणवचनब्राह्मणादिभ्य " ( पाणि० ५ । १ । १२-६ ) कर्मणि चेति ष्यञ् । उत्त० १ अ० । अनु० । क्रमे, औ० । परिपाट्याम्, प्रा० १ श्रु० १ अ० । विशिष्टरचनायाम्, सूत्र० २ श्रु० १ अ० ।

**आणुपुव्वट्ठिय- आनुपूर्व्यस्थित-त्रि०** । विशिष्टरचनया स्थिते, सूत्र० २ श्रु० १ अ० ।

**आणुपुव्व-(व्वि) सुजाय-आनुपूर्व्य (र्वी) सुजात-त्रि०** । परिपाट्या सुसुजाते, । तथा च वृक्षवर्णनमुपक्रम्य-" आणुपुव्वसुजायरुइलवट्टभावपरिणया" ( सूत्र- २ टी० ) आनुपूर्व्येण-मूलादिपरिपाट्या सुष्ठु जाता रुचिरा वृत्तभावं च परिणता ये ते तथा । ज्ञा० १ श्रु० १ अ० । आनुपूर्व्या-मूलादिपरिपाट्या जन्मदोषरहितं यथा भवति एवं जात आनुपूर्वीसुजात । रा० । जं० । तथा च ह्रदवर्णनमुपक्रम्य-" आणु ्व्वसुजायवप्पगंभीरसीयजले " ( सूत्र-५१+) आनुपूर्व्येण-परिपाट्या सुष्ठु जाता वप्राः-तटा यत्र स तथा गम्भीरम्-अगाधं शीतलं जलं यत्र स तथा ततः पदद्वयस्य कर्मधारय । ज्ञा० १ श्रु० ४ अ० । " आणुपुव्वसुसंहयंगुलीए "( सूत्र-१०+ ) आनुपूर्व्येण-क्रमेण वर्द्धमाना हीयमाना वा इति गम्यम्, सुसंहता-सुष्ठु अविरला अङ्गुल्य पादाग्रावयवा यस्य स तथा । औ० ।

**आणुपुव्विग-आनुपूर्वीग-त्रि०** । आनुपूर्वी-क्रमस्तं गच्छतीत्यानुपूर्वीग । क्रमवति, आचा० १ श्रु० ६ अ० १ उ० । " आणुपुव्विगमा एसो पव्वज्जासुत्तअत्थकरणं च " ॥ २-६८+ ॥ आचा० १ श्रु० ८ अ० १ उ० ।

**आणुपुव्विगंठिय-आनुपूर्वीग्रन्थित-त्रि०** । परिपाट्या गुम्फिते, भ० । अन्ययूथिकानधिकृत्य-" आणुपुव्विगंठिया " ( सूत्र-१८३× ) आनुपूर्व्या-परिपाट्या ग्रन्थिता-गुम्फिता आद्युचितग्रन्थीनामादौ विधानादन्तोचितानां च क्रमेणान्त एव करणाद् । भ० ५ श० ३ उ० ।

**आणुपुव्विणाम-आनुपूर्वीनामन्-न०** । वृषभनासिकान्यस्तरज्जुसंस्थानीया कर्मसंहत्या विशिष्टं स्थानं प्राप्यते असौ यया चोर्ध्वोत्तमाङ्गाधश्चरणादिरूपो नियमत शरीरविशेषो भवति सा अनुपूर्वीति । आव० १ अ० । कूर्परलाङ्गलगोमूत्रिकाकाररूपेण यथाक्रमं द्वित्रिचतु समयप्रमाणेन विग्रहेण भवान्तरोत्पत्तिस्थानं गच्छतो जीवस्यानुश्रेणिनियता गमनपरिपाटी आनुपूर्वी, तद्विपाकवेद्या कर्मप्रकृतिरपि, कारणे कार्योपचारादानुपूर्वी । पंचा० ७ विव० । कूर्परलाङ्गलगोमूत्रिकाकाररूपेण यथाक्रमं द्वित्रिचतु समयप्रमाणेन विग्रहस्य भवान्तरोत्पत्तिस्थान गच्छतो जीवस्य अनुश्रेणिगमनमानुपूर्वी, तन्निबन्धनं नाम आनुपूर्वीनाम । कर्म० ६ कर्म० । नामकर्मभेदे, यदुदयादन्तराले गतो जीवो याति तदानुपूर्वीनाम । स०४२ सम० । तच्चतुर्विधम्-नारकानुपूर्वीनाम १, तिर्यगानुपूर्वीनाम २, मनुष्यानुपूर्वीनाम ३, देवानुपूर्वीनाम ४, । कर्म० ६ कर्म० । " आणुपुव्वी चउभेया " ॥ १२८३× ॥ आनुपूर्वी चतुर्द्धा-नारक-तिर्यग्मनुष्य-देवानुपूर्वीभेदाद् । प्रव० २१६ द्वार । कर्म० । चतुर्द्धा गतिरिवानुपूर्वी प्रागुक्तरूपा भवति, कोऽर्थः-गत्यभिधानव्यपदेश्यमानुपूर्वीनाम, ततो निरयानुपूर्वीतिर्यगानुपूर्वीमनुष्यानुपूर्वीदेवानुपूर्वीभेदात्-आनुपूर्वीनाम चतुर्द्धेति तात्पर्यम् । तत्र नरकगत्या नाम कर्मप्रकृत्या सहचरितानुपूर्वी नरकगत्यानुपूर्वी तत्समकाल चास्या वेद्यमानत्वात्सहचरितत्वम् । एवं तिर्यग्मनुष्यदेवानुपूर्व्योऽपि वाच्या । कर्म०१ कर्म० । ननु आनुपूर्व्या उदयो नरकादिषु किमृजुगत्या गच्छत आहोस्विद्वक्रगत्येत्याशङ्क्याऽऽह-'पुव्वीउदओ वक्के' त्ति पूर्व्या आनुपूर्व्या वृषभस्य नासिकारज्जुकल्पाया उदयो-विपाको वक्र एव भवति । अयमर्थ —नरके द्विसमयादिवक्रेण

गच्छतो जीवस्य नरकानुपूर्व्या उदय. तिर्यक्षु-द्विसमयादिवक्रेण जीवस्य गच्छतस्तिर्यगानुपूर्व्या उदय. मनुष्येषु द्विसमयादिवक्रेण गच्छतो जीवस्य मनुष्यानुपूर्व्या उदय, देवेषु द्विसमयादिवक्रेण गच्छतो जीवस्य देवानुपूर्व्या उदय । उक्तं च बृहत्कर्मविपाके—

" नरयाउयस्स उदए, नरए वक्केण गच्छमाणस्स ।
नरयाणुपुव्वियाए, तहिँ उदओ अन्नहिं नऽत्थि ॥ १ ॥
एव तिरिमणुदंये, तेसु वि वक्केण गच्छमाणस्स ।
वेसिमाणुपुव्वियाणं, तहिँ उदओ अन्नहिं नत्थि ॥ २ ॥

कर्म० १ कर्म० ४२ गाथाटी० ।

**आणुपुव्विविहारि ( न् )-आनुपूर्वीविहारिन्-पुं०** । प्रव्रज्यादिक्रमेण विहारिणि, आचा० ।

( आह निर्युक्तिकार )—

**आणुपुव्विविहारीणं, भत्तपरिणा य इंगिनीमरणं ।
पायवगमणं च तहा, अहियारो होइ अट्ठमए ॥ २५७ ॥**

अष्टमके तु अयमर्थाधिकार ,तद्यथा-आनुपूर्वीविहारिणाम प्रतिपालितदीर्घसंयमानाम् ,शास्त्रार्थग्रहणप्रतिपादनान्तरकालमवसीदत्सयमाऽध्ययनाऽध्यापनक्रियाणां निष्पादितशिष्याणामुत्सर्गतो द्वादशसंवत्सरसंलेखनाक्रमसंलिखितदेहाना भक्तपरिज्ञेङ्गितमरणं,पादपोपगमनं वा यथा भवति तथोच्यते । आचा० १ श्रु० ८ अ० १ उ० ।

तत्रैवानुपूर्वीविहारिणां मरणमधिकृत्य सूत्रम्—

**अणुपुव्वेण विमोहाइं, जाइं धीरा समासज्ज ॥ १ + ॥**

आनुपूर्वी क्रम ,-तद्यथा-प्रव्रज्याशिक्षासूत्रार्थग्रहणपरिनिष्ठितस्यैककालिकविहारित्वमित्यादि , यदि वा-आनुपूर्वीसंलेखनाक्रमश्चत्वारि विकृष्टानीत्यादि, तया आनुपूर्व्या यान्यभिहितानि । आचा० १ श्रु० ८ अ० ८ उ० ।

**आणुपुव्वियसंखाए, कम्मणाओ तिउट्टइ ॥ २ ॥**

आनुपूर्व्या-प्रव्रज्यादिक्रमेण सयममनुपाल्य मम जीवन कश्चिद् गुणो नाऽस्तीत्यत शरीरमोक्षावसर प्राप्तस्तथा कस्मै मरणाय समर्थोऽहमित्येवं संख्याय-ज्ञात्वा आरम्भणमारम्भ -शरीरधारणायाऽन्नपानाद्यन्वेषणात्मकस्तस्मात् त्रुट्यति; अपगच्छतीत्यर्थ सुव्यत्ययेन पञ्चम्यर्थे चतुर्थी पाठान्तरं वा-" कम्मुणाओ तिउट्टइ " कर्माष्टभेद तस्मात् त्रुट्यतीति त्रुट्यति, ' वर्त्तमानसामीप्ये वर्त्तमानवद्वा" (पाणि० ३ । ३ । १३१ । इत्यनेन भविष्यत्कालस्य वर्त्तमानता । आचा० १ श्रु० ८ अ० ८ उ० ।

**आणुपुव्वी-आनुपूर्वी-स्त्री०** । पूर्वस्य पश्चादनुपूर्वं तस्य भाव इत्यर्थे ' गुणवचनब्राह्मणादिभ्य " ( पाणि० । ५ । १ । १२६ । ) कर्मणि चेति ष्यञ् तस्य च षित्करणसामर्थ्यात् स्त्रीत्वे " षिद्गौरादिभ्य श्च" ( पाणि० । ४ । १ । ४१ ) इति ङीषि आनुपूर्वी । क्रमे, परिपाट्याम् उत्त० १ अ० । आचा० । रा० । विशे० । पं० स० । ज० । आनुपूर्वी, अनुक्रम , अनुपरिपाटीति पर्याया ;ऽयादिवस्तुसंघा इत्यर्थ । अनु० । " आणुपुव्व पाणेहिं संजए " ( सूत्र-१३ × ) । आनुपूर्व्या-भ्रमणधर्मप्रतिपत्त्यादिलक्षणया प्राणिषु यथाशक्त्या सम्यक् यत संयत. । सूत्र० १ श्रु० २ अ० ३ उ० । " आणुपुव्वियसंखाए " सूत्र-२ + ) आनुपूर्व्या-प्रव्रज्यादिक्रमेण । आचा० १ श्रु० ८ अ० ८ उ० । विशिष्टरचनायाम् , सूत्र० २ श्रु० १ अ० । तदात्मके शास्त्रीयोपक्रमभेदे, प्रकारान्तरेण शास्त्रभावोपक्रमभेदे च । अनु० ।

विषयसूचनार्थमधिकाराङ्का.—

( १ ) आनुपूर्व्या सामान्यतो भेदा ।
( २ ) आनुपूर्व्या द्रव्यादिना भेदा ।
( ३ ) नैगमव्यवहारसम्मताया द्रव्यानुपूर्व्या निरूपणम् ।
( ४ ) प्रसङ्गप्राप्तस्यानुगमस्य निरूपणम् ।
( ५ ) आनुपूर्व्या संग्रहनयमतेन निरूपणम् ।
(६) प्रागुद्दिष्टाया औपनिधिक्या द्रव्याऽऽनुपूर्व्या निरूपणम्
( ७ ) प्रागुद्दिष्टक्षेत्राऽऽनुपूर्व्या निरूपणम् ।
( ८ ) क्रमप्राप्तकालाऽऽनुपूर्व्या निरूपणम् ।
( ९ ) उत्कीर्त्तनाऽऽनुपूर्व्या निरूपणम् ।
( १० ) गणनाऽऽनुपूर्व्या निरूपणम् ।
( ११ ) प्रागुद्दिष्टसंस्थानाऽऽनुपूर्व्या निरूपणम् ।
( १२ ) भावाऽऽनुपूर्व्या निरूपणम् ।

( १ ) आनुपूर्वीस्वरूपनिरूपणगर्भं भेदमाह—

**से किं तं आणुपुव्वी ?, आणुपुव्वी दसविहा पण्णत्ता, तं जहा-नामाऽऽणुपुव्वी१, ठवणाऽऽणुपुव्वी २, दव्वाऽऽणुपुव्वी ३, खेत्ताऽऽणुपुव्वी४, कालाणुपुव्वी ५, उक्कित्तणाऽऽणुपुव्वी ६, गणणाऽऽणुपुव्वी ७, संठाणाऽऽणुपुव्वी ८,सामाआरियाणुपुव्वी ९,भावाऽऽणुपुव्वी१०(सूत्र-७१) नामट्ठवणाओ गयाओ । (सूत्र-७२+)**

' से किं तमि ' त्यादि, अथ किं तदानुपूर्वी वस्त्विति प्रश्नार्थ । अत्र निर्वचनम्-' आणुपुव्वी दसविहे 'त्यादि , इह हि पूर्व, प्रथमम् आदि., इति पर्याया । पूर्वस्य अनु-पश्चादनुपूर्वं, ' तस्य भाव ' इति यण्प्रत्यये स्त्रियामीकारे चानुपूर्वी, अनुक्रमो, अनुपरिपाटीति पर्याया , ऽयादिवस्तुसंहतिरित्यर्थ । इयमानुपूर्वी दशविधा-दशप्रकारा प्रज्ञप्ता, तद्यथा-नामाऽऽनुपूर्वी, स्थापनाऽऽनुपूर्वी, द्रव्याऽऽनुपूर्वी , क्षेत्राऽऽनुपूर्वी, कालाऽऽनुपूर्वी, उत्कीर्तनाऽऽनुपूर्वी, गणनाऽऽनुपूर्वी, संस्थानाऽऽनुपूर्वी, सामाचार्यानुपूर्वी, भावानुपूर्वीति ॥७१॥ अत्र नामस्थापनानुपूर्वीसूत्रे नामस्थापनावश्यकसूत्रव्याख्यानुसारेणव्याख्येय ॥ ७२× ॥

( २ ) द्रव्यादिना आनुपूर्वीभेदमाह—

**से किं तं दव्वाणुपुव्वी ?, दव्वाणुपुव्वी दुविहा पण्णत्ता, तं जहा-आगमतो अ, नो आगमतो (ओ) अ । से किं त आगमाओ दव्वाणुपुव्वी ?, २ जस्स णं आणुपुव्वि त्ति पदं सिक्खि (अ)त ठितं जितं मितं परिजितं०जाव नो अणुप्पेहाए कम्हा अणुवओगो दव्वम्मि तिकट्टु णेगमस्स ण एगो अणुवउत्तो आगमतो एगा दव्वाणुपुव्वी०जाव कम्हा जति जाणए अणुवउत्ते न भवति । सेत्त आगमओ दव्वाणुपुव्वी ॥ से किं तं नोआगमतो दव्वाणुपुव्वी ?, नो-**

आगमतो दव्वाणुपुव्वी तिविहा पण्णत्ता ?, तं जहा-जाणगसरीरदव्वाणुपुव्वी, भवियसरीरदव्वाणुपुव्वी जाणगसरीरभवियसरीरवतिरित्ता दव्वाणुपुव्वी । से किं तं जाणगसरीरदव्वाणुपुव्वी ?, जाणगसरीरदव्वाणुपुव्वी पदत्थाहिगारजाणयस्स जं सरीरयं ववगतचुतचावितचत्तदेहं, सेसं जहा दव्वाऽऽवस्सए तहा भाणिअव्वं०जाव सेतं जाणगसरीरदव्वाणुपुव्वी । से किं तं भविअसरीरदव्वाणुपुव्वी ?, भविअसरीरदव्वाणुपुव्वी जे जीवे जोणीजम्मणनिक्खंते, सेसं जहा दव्वावस्सए०जाव से(तं)त्तं भविअसरीरदव्वाणुपुव्वी । से किं तं जाणयसरीरभविअसरीरवतिरित्ता दव्वाणुपुव्वी ?, जाणयसरीरभविअसरीरवतिरित्ता दव्वाणुपुव्वी दुविहा पण्णत्ता ?, तं जहा-उवणिहिआ य, अणोवणिहिआ य । तत्थ णं जा सा उवणिहिआ सा ठप्पा, ( सूत्र-७२+ )

द्रव्यानुपूर्वीसूत्रमपि द्रव्यावश्यकवदेव भावनीयम् यावत्- " जाणगसरीरभवियसरीरवइरित्ता दव्वाणुपुव्वी दुविहा " त्यादि, तत्र निधानं निधिः निक्षेपो न्यासो विरचना प्रस्तारः, स्थापना इति पर्यायाः । तथा च-लोके—निधेहीदं निहितमिदमित्यत्र निपूर्वस्य धागो निक्षेपाऽर्थे प्रतीत एव, उप-सामीप्येन निधिरुपनिधिः एकस्मिन्विवक्षितेऽर्थे पूर्वं व्यवस्थितेऽपि तत्समीप एवापरापरस्य वक्ष्यमाणपूर्वानुपूर्व्यादिक्रमेण यन्निक्षेपणं सः उपनिधिरित्यर्थः । उपनिधिः प्रयोजनं यस्या आनुपूर्व्याः सा औपनिधिकीति, प्रयोजनार्थे इकण् प्रत्ययः । सामायिकाऽध्ययनादिवस्तूनां वक्ष्यमाणपूर्वानुपूर्व्यादिप्रस्तारप्रयोजनानुपूर्वी औपनिधिकी उच्यते इति तात्पर्यम् । अनुपनिधिः- वक्ष्यमाणपूर्वानुपूर्व्यादिक्रमेणाविरचनं प्रयोजनमस्या इत्यनौपनिधिकी, यस्यां वक्ष्यमाणपूर्वानुपूर्व्यादिक्रमेण विरचना न क्रियते सा व्यणुकादिपरमाणुनिष्पन्नस्कन्धविषया आनुपूर्वीति अनौपनिधिकीत्युच्यते इति भावः । आह नन्वानुपूर्वी परिपाटिरुच्यते भवता च व्यणुकादिकोऽनन्ताणुकावसानः एकैकस्कन्धः अनौपनिधिक्यानुपूर्वीत्वेनाभिप्रेतो न च स्कन्धगतद्व्यादिपरमाणूनां नियता काचित्परिपाटिरस्ति विशिष्टैकपरिणामपरिणतत्वात्तेषां तत्कथमिहानुपूर्वीत्वं सत्यम्, किंतु-व्यादिपरमाणूनामादिमध्यावसानभावेन नियतपरिपाट्या व्यवस्थापनयोग्यताऽस्तीति योग्यतामाश्रित्याचाप्यानुपूर्वीत्वं न विरुध्यते । ' तत्थ णमि ' त्यादि, तत्र या सा चौपनिधिकी द्रव्यानुपूर्वी सा स्थाप्या सा न्यासकी तिष्ठतु तावदल्पतरवक्तव्यत्वेन तस्या उपरि वक्ष्यमाणत्वादिति भावः ।

अनौपनिधिकी तु पश्चान्निर्दिष्टाऽपि बहुतरवक्तव्यत्वेन प्रथमं व्याख्यायते । बहुतरवक्तव्यत्वे हि वस्तुनि प्रथममुच्यमानेऽल्पतरवक्तव्यवस्तुतः काश्चिद्धर्मानस्मिन्नध्यध्युक्तं एव लभ्यत इति गुणागुणं पर्यालोच्य सूत्रकारोऽनौपनिधिक्याः स्वरूपं विवरीषुराह—

तत्थ णं जा सा अणोवनिहिआ सा दुविहा पण्णत्ता, तं जहा-नेगमववहाराणं, संगहस्स य ॥ ( सूत्र-७२ + )

' तत्थ णमि ' त्यादि तत्र याऽसावनौपनिधिकी द्रव्यानुपूर्वी सा नयवक्तव्यताश्रयणात्-द्रव्यास्तिकनयमतेन द्विविधा प्रज्ञप्ता, तद्यथा-नैगमव्यवहारयोः, संग्रहस्य च । नैगमव्यवहारसंमता संग्रहसंमता, चेत्यर्थः । अयमत्र भावार्थः-इहौघतः सप्त नया भवन्ति नैगमादयः, उक्तं च-नैगम-संग्रह-व्यवहार-ऋजुसूत्र-शब्द-समभिरूढै-वंभूता नया एते च द्रव्यास्तिकपर्यायास्तिकलक्षणनयद्वयेऽन्तर्भाव्यन्ते द्रव्यमेव परमार्थतोऽस्मिन् पर्याया इत्यभ्युपगमपरः द्रव्यास्तिकः, पर्याया एव वस्तुतः सन्ति न द्रव्यमित्यभ्युपगमपरः पर्यायास्तिकः, तत्राद्यास्त्रयो द्रव्यास्तिकाः, शेषास्तु पर्यायास्तिकाः । पुनर्द्रव्यास्तिकोऽपि सामान्यतो द्विविधः-विशुद्धः, अविशुद्धश्च । तत्र नैगमव्यवहाररूपः अविशुद्धः, संग्रहरूपस्तु विशुद्धः । कथं यतो नैगमव्यवहारावनन्तपरमाण्वनन्तद्व्यणुकाद्यनेकव्यक्त्यात्मकं कृष्णाद्यनेकगुणाधारं त्रिकालविषयं वा विशुद्धं द्रव्यमिच्छतः संग्रहश्च परमाण्वादिकं-परमाण्वादिसाम्यादिकं तिरोभूतगुणकलापमविद्यमानपूर्वापरविभागं नित्यं सामान्यमेव द्रव्यमिच्छति, एतच्च किलानेकताद्यभ्युपगमकलङ्कनाकलङ्कितत्वाच्छुद्धम्, ततः शुद्धद्रव्याभ्युपगमपरत्वादयमेव शुद्धः । अत्र च द्रव्यानुपूर्व्येव विचारयितुं प्रक्रान्ता अतः शुद्धाऽशुद्धस्वरूपं द्रव्यास्तिकमतेनैवासौ दर्शयिष्यते न पर्यायास्तिकमतेन पर्यायविचारस्यानुपक्रान्तत्वात्, इत्यलं विस्तरेण ।

( २ ) तत्र नैगमव्यवहारसम्मतामिमां दर्शयितुमाह—

से किं तं नेगमववहाराणं अणोवनिहिआ दव्वाऽऽणुपुव्वी ?, नेगमववहाराणं अणोवनिहिआ दव्वाऽऽणुपुव्वी पंचविहा पण्णत्ता, तं जहा-अट्ठपयपरूवणया १, भंगसमुक्कित्तणया २, भंगोवदंसणया ३, समोआरे ४, अणुगमे ५ ( सूत्र-७३ )

अत्र निर्वचनम् । ' नैगमववहाराणं अणोवणिहिया दव्वाणुपुव्वी पंचविहे' त्यादि, अर्थपदप्ररूपणतादिभिः पञ्चभिः प्रकारैर्विचार्यमाणत्वात्पञ्चविधा-पञ्चप्रकारा प्रज्ञप्ता, तद्यथा-अर्थपदप्ररूपणता, भङ्गसमुत्कीर्तनता, भङ्गोपदर्शनता, समवतारः, अनुगमः, एभिः पञ्चभिः प्रकारैर्नैगमव्यवहारनयमतेन अनौपनिधिक्या द्रव्यानुपूर्व्याः स्वरूपं निरूप्यते इतीह तात्पर्यम् । तत्र अर्थ्यते इति अर्थः व्यणुकस्कन्धादिः स्तद्युक्तं तद्विषयं वा पदमानुपूर्व्यादिकं तस्य प्ररूपणं-कथनं तद्भावोऽर्थपदप्ररूपणता इयमानुपूर्व्यादिका संज्ञा अयं च तदभिधेयस्त्र्यणुकादिरर्थः । सञ्ज्ञेत्येवं संज्ञासंज्ञिसंबन्धकथनमात्रं प्रथमं कर्तव्यमिति भावार्थः । तेषामेवानुपूर्व्यादिपदानां समुदितानां वक्ष्यमाणन्यायेन संभविनो विकल्पा-भङ्गा उच्यन्ते-विभज्यन्ते; विकल्पयन्ते इति कृत्वा, तेषां समुत्कीर्तनं-समुच्चारणं भङ्गसमुत्कीर्तनं, तद्भावो भङ्गसमुत्कीर्तनता, आनुपूर्व्यादिपदनिष्पन्नानां प्रत्येकभङ्गानां, व्यादिसंयोगभङ्गानां च समुच्चारणमित्यर्थः, तेषामेव सूत्रमात्रतया अनन्तरसमुत्कीर्तितभङ्गानां प्रत्येकं स्वाभिधेयेन त्र्यणुकाद्यर्थेन सहोपदर्शनं-भङ्गोपदर्शनं तद्भावो भङ्गोपद-

र्शनता । भङ्गसमुत्कीर्त्तने भङ्गकविषयं सूत्रमेव केवलमुच्चारणीयम्, भङ्गोपदर्शने तु तदेव स्वविषयभूतेनार्थेन सहोच्चारयितव्यमिति विशेष । तथा- तेषामेवानुपूर्व्यादिद्रव्याणां स्वस्थानपरस्थानान्तरभावचिन्तनप्रकार समवतार । तथा तेषामेव आनुपूर्व्यादिद्रव्याणां सत्पदप्ररूपणादिभिरनुयोगद्वारैरनुगमन-विचारणमनुगम ।

तत्राऽऽद्यभेदं विवरीपुराह—

से किं तं नेगमववहाराणं अट्ठपयपरूवणया?, नेगमववहाराणं अट्ठपयपरूवणया तिपएसिए आणुपुव्वी. चउप्पएसिए आणुपुव्वी ०जाव दसपएसिए आणुपुव्वी,संखेज्जपएसिए आणुपुव्वी , असंखिज्जपएसिए आणुपुव्वी, अणंतपएसिए आणुपुव्वी, परमाणुपोग्गले अणाणुपुव्वी, दुपएसिए अवत्तव्वए, तिपएमिआ आणुपुव्वीओ, ०जाव अणंतपएसिआओ आणुपुव्वीओ, परमाणुपोग्गला अणाणुपुव्वीओ, दुपएसिआइं अवत्तव्वयाइं सेत्तं णेगमववहाराणं अट्ठपयपरूवणया । ( सूत्र-७४ )

अथ केय. नैगम-व्यवहारयो. सम्मता अर्थपदप्ररूपणना? इति । अत्रोत्तरमाह । ' नेगमववहाराणमि ' त्यादि, तत्र त्रय प्रदेशा परमाणुत्रयलक्षणा यत्र स्कन्धे सा त्र्यणु कानुपूर्वीत्युच्यते , एव यावदनन्ता अणवो यत्र स. अनन्ताणुक. सोऽप्यानुपूर्वीत्युच्यते । ' परमाणुपोग्गले ' त्ति—एक. परमाणु परमाण्वन्तरासंसक्तोऽनानुपूर्वीत्यभिधीयते । द्वौ प्रदेशौ यत्र स द्विप्रदेशिक स्कन्धाऽवक्तव्यकमित्याख्यायते बहवस्त्रिप्रदेशिकादय स्कन्धा आनुपूर्व्यो, बहवश्चैकाकिपरमाणवोऽनानुपूर्व्य , बहूनि च द्व्यणुकस्कन्धद्रव्याण्यवक्तव्यकानि । आनुपूर्व्यां प्रकान्तायामनानुपूर्व्यवक्तव्यकयो प्ररूपणमसङ्गतमिति चेत्, न, तत्प्रतिपक्षत्वात्तयोरपि प्ररूपणीयत्वात्, प्रतिपक्षपरिज्ञाने च प्रस्तुतवस्तुन सुखावसेयत्वादिति भावार्थः । इहानुपूर्वी अनुपरिपाटिरिति पूर्वमुक्तं सा च यत्रैवादिमध्यान्तलक्षण. संपूर्णो गणनानुक्रमोऽस्ति तत्रैवोपपद्यते; नान्यत्र, एतच्च त्रिप्रदेशिकादिस्कन्धेष्वेव । तथा हि—" यस्मात्परमस्ति न पूर्वं स आदि , यस्मात् पूर्वमस्ति न परं सोऽन्त , तयोरान्तरं मध्यमुच्यते, ' अयं च संपूर्णो गणनानुक्रमस्त्रिप्रदेशादिस्कन्ध एव, न परमाणौ , तस्यैकद्रव्यत्वेनाऽऽदिमध्यान्तव्यवहाराभावाद्, अत एवायमनानुपूर्वीत्वेनोक्त, नापि द्व्यणुकस्कन्ध , तत्रापि मध्याभावेन संपूर्णगणनानुक्रमाऽभावाद्, अत्राऽऽह-ननु पूर्वस्यानु-पश्चादनुपूर्वं तस्य भाव आनुपूर्वीति पूर्वं व्याख्यातम् , एतच्च द्व्यणुकस्कन्धेऽपि घटत एव परमाणुद्वयस्यापि परस्परापेक्षया पूर्वपश्चाद्भावस्य विद्यमानत्वात्तत संपूर्णगणनानुक्रमाभावेऽपि कस्मादयमप्यानुपूर्वी न भवति ? नैतदेव, यतो यथा मेर्वादिकं क्वचित्पदार्थं मध्ये अवधौ व्यवस्थापिते लोके पूर्वादिविभाग प्रसिद्धस्तथा यत्रापि स्यात्तदा स्यादप्येवं न चैवमत्रास्ति, मध्येऽवधिभूतस्य कस्यचिदभावतोऽमाङ्गणे पूर्वपश्चाद्भावस्यासिद्धत्वात् , यद्येव परमाणुवत् द्व्यणुकस्कन्धोऽप्यनानुपूर्वीत्वेन कस्मान्नोच्यते सत्य, किंतु— परस्परापेक्षया पूर्वपश्चाद्भावमात्रस्य सद्भावादेवमप्यभिधातुमशक्योऽसौ तस्मादानुपूर्व्यनानुपूर्वीप्रकाराभ्या वक्तुमशक्यत्वादवक्तव्यकमेव द्व्यणुकस्कन्ध', तस्माद्व्यवस्थितमिदम् आदिमध्यान्तभावेनाऽवधिभूतं मध्यवर्त्तिनमपेक्ष्याऽऽनुकर्येण मुख्यस्य पूर्वपश्चाद्भावस्य सद्भावात् त्रिप्रदेशादिस्कन्ध एवानुपूर्वी, परमाणुस्तूक्तयुक्त्या अनानुपूर्वी द्व्यणुकोऽवक्तव्यक , इत्येवं सञ्ज्ञासंज्ञिकसंबन्धकथनरूपा अर्थपदप्ररूपणा कृता भवति । यद्येवं त्रिप्रदेशिका आनुपूर्व्य इत्यादि बहुवचननिर्देश किमर्थ ?, एकत्वमात्रेणैव संज्ञासंज्ञिसंबन्धकथनस्य सिद्धत्वात् , सत्यम् , किंत्वानुपूर्व्यादिद्रव्याणां प्रतिभेदमनन्तव्यक्तिख्यापनार्थो नैगमव्यवहारयोरित्थंभूताभ्युपगमप्रदर्शनार्थश्च बहुत्वनिर्देश इत्यदोष । अ. आह- नन्वनानुपूर्वीद्रव्यमेकेन परमाणुना निष्पद्यते, अवक्तव्यकद्रव्यं परमाणुद्वयेन आनुपूर्वीद्रव्य तु जघन्यतोऽपि परमाणुत्रयेण इत्थं द्रव्यवृद्ध्या पूर्वानुपूर्वीक्रममाश्रित्य प्रथममनानुपूर्वी तत. अवक्तव्यकम् ततश्चानुपूर्वीत्येवं निर्देशो युज्यते, पश्चानुपूर्वीक्रमाश्रयणे तु व्यत्ययन युक्तस्तत्कथं क्रमद्वयमुल्लङ्घ्यान्यथा निर्देश' कृत. ?, सत्यमेतत् , किंत्वनानुपूर्व्यपि व्याख्याङ्गमिति ख्यापनार्थ' । यदि वा-त्र्यणुकचतुरणुकादीन्यानुपूर्वीद्रव्याण्यनानुपूर्व्यवक्तव्यकद्रव्येभ्यो बहूनि तेभ्योऽनानुपूर्वीद्रव्याण्यल्पानि तेभ्योऽप्यवक्तव्यकद्रव्याण्यल्पतराणीत्यत्रैव वक्ष्यते, ततश्चेत्थ द्रव्यहान्या पूर्वानुपूर्वीक्रमनिर्देश एवायमिति । अलं विस्तरेण । ' सेत्तमि ' त्यादि निगमनम् ।

एआए णं नेगमववहाराणं अट्ठपयपरूवणयाए किं पओअणं ?, एआए णं नेगमववहाराणं अट्ठपयपरूवणयाए भंगसमुक्कित्तणया कज्जइ । ( सूत्र-७५ )

'एताए णमि' त्यादि, एतया अर्थपदप्ररूपणतया किं प्रयोजनमिति, अत्राऽऽह—एतया अर्थपदप्ररूपणतया भङ्गसमुत्कीर्तना क्रियते, इदमुक्तं भवति-अर्थपदप्ररूपणताया सञ्ज्ञासंज्ञिव्यवहारो निरूपितस्तस्मिश्च सत्येव भङ्गका. समुत्कीर्त्तयितुं शक्यन्ते, नाऽन्यथा, संज्ञामन्तरेण निर्विषयाणां भङ्गाना प्ररूपयितुमशक्यत्वात् तस्मात्युक्तमुक्तम् एतया अर्थपदप्ररूपणतया भङ्गसमुत्कीर्त्तना क्रियते इति ।

तामेव भङ्गसमुत्कीर्त्तनां निरूपयितुमाह—

से किं तं नेगमववहाराणं भंगसमुक्कित्तणया ?, नेगमववहाराणं भंगसमुक्कित्तणया-अत्थि आणुपुव्वी १, अत्थि अणाणुपुव्वी २, अत्थि अव्वत्तव्वए ३, अत्थि आणुपुव्वीओ ४, अत्थि अणाणुपुव्वीओ ५, अत्थि अव्वत्तव्वयाइं ६, इक्कसंयोगी छ भंगा । द्विकसंयोगीभंगा-अहवा-अत्थि आणुपुव्वी अ अणाणुपुव्वी अ १, अहवा-अत्थि आणुपुव्वी अ अणाणुपुव्वीओ अ २, अहवा-अत्थि आणुपुव्वीओ अ अणाणुपुव्वी अ ३, अहवा-अत्थि आणुपुव्वीओ अ अणाणुपुव्वीओ अ ४, अहवा-अत्थि आणुपुव्वी अ अव्वत्तव्वए अ ५, अहवा-अत्थि आणुपुव्वी अ अव्वत्तव्वयाइं च ६, अहवा-अत्थि आणुपुव्वीओ अ अव्वत्तव्वए अ ७, अहवा-अत्थि आणुपुव्वीओ अ अवत्तव्वाइं च ८, अहवा-अत्थि अणाणुपुव्वी अ अवत्तए अ ९, अहवा-अत्थि अणाणु-

पुव्वी अ अवत्तव्वयाइं च १०, अहवा-अत्थि अणाणुपुव्वीओ अ अवत्तव्वए अ ११, अहवा-अत्थि अणाणुपुव्वीओ अ अवत्तव्वयाइं च १२ ॥ त्रिकसंयोगी भङ्गा-अहवा-अत्थि आणुपुव्वी अ अणाणुपुव्वी अ अवत्तव्वए अ १, अहवा-अत्थि आणुपुव्वी अ अणाणुपुव्वी अ अवत्तव्वयाइं च २, अहवा-अत्थि आणुपुव्वी अ अणाणुपुव्वीओ अ अवत्तव्वए अ ३, अहवा-अत्थि आणुपुव्वी अ अणाणुपुव्वीओ अ अवत्तव्वयाइं च ४, अहवा-अत्थि आणुपुव्वीओ अ अणाणुपुव्वी अ अवत्तव्वए अ ५, अहवा-अत्थि आणुपुव्वीओ अ अणाणुपुव्वी अ अवत्तव्वयाइं च ६, अहवा-अत्थि आणुपुव्वीओ अ अणाणुपुव्वीओ अ अवत्तव्वए अ ७, अहवा-अत्थि आणुपुव्वीओ अ अणाणुपुव्वीओ अ अवत्तव्वयाइं च ८, त्रिकसंयोगी एए अ(ड)ट्ठ भंगा। एवं सव्वेऽवि छव्वीस भंगा। सेत्तं नेगमववहाराणं भंगसमुक्कित्तणया।(सूत्र-७६)

प्रश्न अत्र चानुपूर्व्यादिपदत्रयेणैकवचनान्तेन त्रयो भङ्गा भवन्ति। बहुवचनान्तेनापि तेन त्रय एव भङ्गा, एवमेते असंयोगेन प्रत्येकभङ्गाः षड् भवन्ति, संयोगपक्षे तु पदत्रयस्यास्य त्रयो द्विकसंयोगाः, एकैकस्मिंस्तु द्विकसंयोगे एकवचनबहुवचनाभ्यां चतुर्भङ्गीसद्भावेन त्रिष्वपि द्विकसंयोगेषु द्वादशभङ्गाः संपद्यन्ते, त्रिकसंयोगस्त्वेक एव, तत्र च ( एकवचनान्तास्त्रय एते बहुवचनान्तास्त्रय ) एकवचनबहुवचनाभ्यामष्टौ भङ्गाः सर्वेऽप्यमी षड्विंशतिः, अत्र स्थापना चेयम्—

| इत्येकवचनान्तास्त्रय. | बहुवचनान्तास्त्रय |
|---|---|
| आनुपूर्वी १ | आनुपूर्व्यः ३ |
| अनानुपूर्वी १ | अनानुपूर्व्यः ३ |
| अवक्तव्यक. १ | अवक्तव्यकाः ३ |

| १ द्विकयोगे चतुर्भङ्गी। | | २ द्विकयोगे ४। | | ३ द्विकयोगे ४। | |
|---|---|---|---|---|---|
| आनुपूर्वी १ | अनानुपूर्वी १ | आनुपूर्वी १ | अवक्तव्यक १ | अनानुपूर्वी १ | अवक्तव्यक. १ |
| आनुपूर्वी १ | अनानुपूर्व्यः ३ | आनुपूर्वी १ | अवक्तव्यकाः ३ | अनानुपूर्वी १ | अवक्तव्यकाः ३ |
| आनुपूर्व्यः ३ | अनानुपूर्वी १ | आनुपूर्व्यः ३ | अवक्तव्यक १ | अनानुपूर्व्यः ३ | अवक्तव्यक १ |
| आनुपूर्व्यः ३ | अनानुपूर्व्यः ३ | आनुपूर्व्यः ३ | अवक्तव्यकाः ३ | अनानुपूर्व्यः ३ | अवक्तव्यकाः ३ |

त्रिकसंयोगेऽष्टौ भङ्गाः

| | | |
|---|---|---|
| आनुपूर्वी १ | अनानुपूर्वी १ | अवक्तव्यकः १ |
| आनुपूर्वी १ | अनानुपूर्वी १ | अवक्तव्यका ३ |
| आनुपूर्वी १ | अनानुपूर्व्य ३ | अवक्तव्यक १ |
| आनुपूर्वी १ | अनानुपूर्व्य. ३ | अवक्तव्यका ३ |
| आनुपूर्व्य ३ | अनानुपूर्वी १ | अवक्तव्यक १ |
| आनुपूर्व्य ३ | अनानुपूर्वी १ | अवक्तव्यका ३ |
| आनुपूर्व्य ३ | अनानुपूर्व्य ३ | अवक्तव्यक १ |
| आनुपूर्व्य ३ | अनानुपूर्व्य ३ | अवक्तव्यका ३ |

सर्वेऽपि षड्विंशतिरेव एते चोत्तरं प्रयच्छता अनेनैव क्रमेण सूत्रेऽपि लिखिता सन्तीति भावनीया। अथ किमर्थं भङ्गकसमुत्कीर्त्तनं क्रियत इति चेत्, उच्यते-इहानुपूर्व्यादिभिस्त्रिभिः पदैरेकवचनान्तबहुवचनान्तैः प्रत्येकचिन्तया संयोगचिन्तया च षड्विंशतिर्भङ्गाः जायन्ते, तेषु च मध्ये येन केनचिद्भङ्गेन वक्ता द्रव्यं वक्तुमिच्छति तेन प्रतिपादयितुं सर्वाणि प्रतिपादनप्रकारानेनेकरूपानैगमव्यवहारनयाविच्छन्न इति प्रदर्शनार्थं भङ्गकसमुत्कीर्त्तनमिति। 'सेत्तमि' त्यादि निगमनम्। उक्ता भङ्गसमुत्कीर्त्तनता।

अथ भङ्गोपदर्शनतां प्रतिपिपादयिषुराह—

**एआए णं नेगमववहाराणं भंगसमुक्कित्तणयाए किं पओअणं? एआए णं नेगमववहाराणं भंगसमुक्कित्तणयाए नेगमववहाराणं भंगोवदंसणया कीरइ। ( सूत्र-७७ )**

'एताए णमि' इत्यादि, एतया भङ्गसमुत्कीर्त्तनतया किं प्रयोजनमिति?, अत्रोत्तरमाह-'एताए णमि' त्यादि, एतया भङ्गसमुत्कीर्त्तनया भङ्गोपदर्शनता क्रियते, इदमुक्तं भवति-भङ्गसमुत्कीर्त्तनतायां भङ्गकसूत्रमुक्तं, भङ्गोपदर्शनतायां तस्यैव वाच्यं त्र्यणुकस्कन्धादिकं कथयिष्यते। न च सूत्रे समुत्कीर्त्तिते एव कथयितुं शक्यते, वाचकमन्तरेण वाच्यस्य कथयितुमशक्यत्वाद् अतो युक्तं भङ्गकसमुत्कीर्त्तनतायां भङ्गोपदर्शनताप्रयोजनम्, अत्राह-ननु भङ्गोपदर्शनतायां वाच्यस्य त्र्यणुकस्कन्धादेः कथनकाले आनुपूर्व्यादिसूत्रं पुनरप्युत्कीर्त्तयिष्यति तत् किं भङ्गसमुत्कीर्त्तनतया प्रयोजनमिति, सत्यं, किंतु-भङ्गसमुत्कीर्तनता सिद्धस्यैव सूत्रस्य भङ्गोपदर्शनतायां वाच्यवाचकभावसुखप्रतिपत्त्यर्थं प्रसङ्गेन पुनरपि समुत्कीर्त्तनं करिष्यते; न मुख्यतयेत्यदोषः। यथाहि-" संहिता च पदं चैव " इत्यादि व्याख्याक्रमे सूत्रं संहिताकाले समुच्चारितमपि पदार्थकथनकाले पुनरप्यर्थकथनार्थमुच्चार्यते तद्वदत्रापीति भावः।

अथ केयं पुनर्भङ्गोपदर्शनतेति प्रश्नपूर्वकं तामेव निरूपयितुमाह—

**से किं तं नेगमववहाराणं भंगोवदंसणया?, नेगमववहाराणं भंगोवदंसणया?, तिपएसिए आणुपुव्वी १, परमाणुपोग्गले अणाणुपुव्वी १, दुपएसिए अवत्तव्वए २, अहवा-तिपएसियानुपुव्वीओ परमाणुपोग्गला अणाणुपुव्वीओ दुपएसिया अव्वत्तव्वयाइं ३, अहवा-तिपएसिए अ परमाणुपोग्गले अ आणुपुव्वी अ अणाणुपुव्वी अ ४, चउभंगो। अहवा-दुपएसिए य तिपएसिए अ आणुपुव्वी अ अव्वत्तव्वए य चउभंगो, अहवा-दुपएसिए य परमाणुपोग्गले अ अवत्तव्वए य आणुपुव्वी अ, अहवा-तिपएसिआ य परमाणुपोग्गला य आणुपुव्वीओ अ अणाणुपुव्वीओ अ ४, अहवा-तिपएसिए अ दुपएसिए अ आणुपुव्वी अ अवत्तव्वए अ ५, अहवा-तिपएसिए अ दुपएसिआ य आणुपुव्वी अ अवत्तव्वयाइं च ६, अहवा-तिपएसिआ य आणुपुव्वी अ अवत्तव्वयाइं च ७, अ-**

हवा-तिपएसिआ य दुपएसिए अ आणुपुव्वीओ अ अवत्तव्वए अ , अहवा-तिपएसिआ य दुपएसिआ य आणुपुव्वी अ अवत्तव्वए अ, अहवा-तिपएसिआ य दुपएसिआ य आणुपुव्वी अ अवत्तव्वयाइं च ८, अहवा-परमाणुपोग्गले अ दुपएसिए अ अणाणुपुव्वी अ अवत्तव्वए अ ९, अहवा-परमाणुपोग्गले अ दुपसिएआ य अणाणुपुव्वी अ अवत्तव्वयाइं च १०, अहवा-परमाणुपोग्गला य दुपएसिए अ अणाणुपुव्वी अ अवत्तव्वए अ ११, अहवा-परमाणुपोग्गला य दुपएसिआ य अणाणुपुव्वी अ अवत्तव्वयाइं च १२,

अहवा-तिपएसिए अ परमाणुपोग्गले अ दुपएसिए अ आणुपुव्वी अ अणाणुपुव्वी अ अवत्तव्वए अ १, अहवा-तिपएसिए अ परमाणुपोग्गले य दुपएसिआ य आणुपुव्वी अ अणाणुपुव्वी अ अवत्तव्वयाइं च २, अहवा-तिपएसिए अ परमाणुपोग्गला अ दुपएसिआ य आणुपुव्वी अ अणाणुपुव्वीओ अ अवत्तव्वए अ ३, अहवा-तिपएसिए अ परमाणुपोग्गला य दुपएसिया अ आणुपुव्वी अ अणाणुपुव्वीओ अ अवत्तव्वए अ ४, अहवा-तिपएसिए अ परमाणुपोग्गला य दुपएसिआ य आणुपुव्वी अ अणाणुपुव्वीओ अ अवत्तव्वए अ ५, अहवा-तिपएसिआ य परमाणुपोग्गले अ दुपएसिए अ आणुपुव्वीओ अ अणाणुपुव्वीओ अ अवत्तव्वयाइं च ६, अहवा-तिपएसिआ य परमाणुपोग्गले अ दुपएसिआ य आणुपुव्वीओ अ अणाणुपुव्वी अवत्तव्वआ ७, अहवा-तिपएसिआ य परमाणुपोग्गले अ दुपएसिआ य आणुपुव्वीओ अ अणाणुपुव्वीओ अ अवत्तव्वयाइं च ८। सेत्तं नेगमववहाराणं भंगोवदंसणया। ( सूत्र-७८ )

'से किं तमि' त्यादि, 'तिपएसिए आणुपुव्वी' त्ति-त्रिप्रदेशिकोऽर्थ आनुपूर्वीत्युच्यते, त्रिप्रदेशिकस्कन्धलक्षणेनार्थेनानुपूर्वीति भङ्गका निष्पद्यत इत्यर्थः। एव परमाणुपुद्गललक्षणोऽर्थ अनानुपूर्वीत्युच्यते, द्विप्रदेशिकस्कन्धलक्षणोऽर्थोऽवक्तव्यकमुच्यते, एवं बहवस्त्रिप्रदेशिका आनुपूर्व्य, बहव परमाणुपुद्गला अनानुपूर्व्य बहवो द्विप्रदेशिकस्कन्धा अवक्तव्यकानीति परणा प्रत्येकभङ्गानामर्थकथनम्। एवं द्विकसंयोगेऽपि त्रिप्रदेशिकस्कन्ध परमाणुपुद्गलआनुपूर्व्यनानुपूर्वीत्वेनोच्यते, यदा त्रिप्रदेशिकस्कन्ध परमाणुपुद्गलश्च प्रतिपादयितुमभीष्टो भवति। तदा 'अत्थि आणुपुव्वी अ अणाणुपुव्वी अ' इत्येव भङ्गो निष्पद्यत इत्यर्थ, एवमर्थकथनपुरस्सरा शेषभङ्गा अपि भावनीया। अत्राह-नन्वर्थोऽप्यानुपूर्व्यादिपदाना त्र्यणुकस्कन्धादिकोऽर्थःपदप्ररूपणतालक्षणे प्रथमद्वारे कथित एव तत्किमनेन ? सत्यम्, किंतु तत्र पदार्थमात्रमुक्तम्, अत्र तु तेषामेवानुपूर्व्यादिपदानां भङ्गकरचनासमादिष्टानामर्थ कथ्यत इत्यदोष, नयमतवैचित्र्यप्रदर्शनार्थं वा पुनरित्थमर्थोपदर्शनमिति। अलं विस्तरेण। 'सेत्तमि' त्यादि निगमनम्। उक्ता भङ्गोपदर्शनता।

अथ समवतारं विभणिषुराह—

से किं तं समोआरे ?, समोआरे नेगमववहाराणं आणुपुव्वीदव्वाइं कहिं समोअरंति ?, किं आणुपुव्विदव्वेहिं समोअरंति ?, अणाणुपुव्विदव्वेहिं समोअरंति ?, अवत्तव्वयदव्वेहिं समोअरंति ?, नेगमववहाराणं आणुपुव्वीदव्वाइं आणुपुव्वीदव्वेहिं समोअरंति, नो अणाणुपुव्वीदव्वेहिं समोअरंति, नो अवत्तव्वयदव्वेहिं समोअरंति, नेगमववहाराणं अणाणुपुव्विदव्वाइं कहिं समोअरंति ?, किं आणुपुव्विदव्वेहिं समोअरंति ? अणाणुपुव्विदव्वेहिं समोअरंति ? अवत्तव्वयदव्वेहिं समोअरंति ?, नो आणुपुव्विदव्वेहिं समोअरंति, अणाणुपुव्विदव्वेहिं समोअरंति, नो अवत्तव्वयदव्वेहिं समोअरंति। नेगमववहाराणं अवत्तव्वयदव्वाइं कहिं समोअरंति ?, किं आणुपुव्विदव्वेहिं समोअरंति ? अणाणुपुव्विदव्वेहिं समोअरंति ?, अवत्तव्वयदव्वेहिं समोअरंति. नो आणुपुव्विदव्वेहिं समोअरंति; नो अणाणुपुव्विदव्वेहिं समोअरंति; अवत्तव्वयदव्वेहिं समोअरंति। सेत्तं समोआरे। ( सूत्र-७९ )

अथ कोऽयं समवतार इति प्रश्ने सत्याह-'समोयारे' त्ति-अयं समवतार उच्यत इति शेष, क समवतार इत्याह—'नेगमववहाराणं आणुपुव्वीदव्वाइं कहिं समोयरंती' त्यादि प्रश्न, अत्रोत्तरम् 'नेगमववहाराणं आणुपुव्वी' इत्यादि, आनुपूर्वीद्रव्याणि आनुपूर्वीद्रव्यलक्षणाया स्वजातावेव वर्त्तन्त, न स्वजात्यतिक्रमेणेत्यर्थ, इदमुक्तं भवति—सम्यगविरोधेनावतरणं-वर्त्तनं समवतार अविरोधवृत्तिता प्रोच्यते, सा च स्वजातिवृत्तावेव स्यात्, परजातिवृत्तेर्विरुद्धत्वात् ततो नानादेशादिवृत्तीन्यपि सर्वाण्यानुपूर्वीद्रव्याणि आनुपूर्वीद्रव्येष्वेव वर्तन्त इति स्थितम्। एवमनानुपूर्व्यादीनामपि स्वस्थानावतारो भावनीय.। 'सेत्तमि' त्यादि निगमनम्। उक्त समवतार।

(४) अथाऽनुगम विभणिषुरुपक्रमते—

से किं तं अणुगमे ?, अणुगमे नवविहे पण्णत्ते, तं जहा—
" संतपयपरूवणया १,
दव्वपमाणं च २. खित्त ३ फुसणा य ४।
कालो य ५ अतरं ६ भा-
ग ७ भाव ८ अप्पाबहु चेव ९ ॥ १ ॥" (सूत्र-८०)

अत्रोत्तरम्-'अणुगमे नवविहे इत्यादि, तत्र सूत्रार्थस्यानुकूलमनुरूपं वा गमनं, व्याख्यानमनुगम। अथवा-सूत्रपठनादनु-पश्चाद् गमन व्याख्यानमनुगम। यदि वा—अनुसूत्रमर्थो गम्यते-ज्ञायते अनेनेत्यनुगमो-व्याख्यानमेवेत्याद्यन्यदपि वस्त्वविरोधेन स्वधिया वाच्यमिति। स च नवविधो-नवप्रकारो भवति। तदेव नवविधत्व दर्शयति,

तद्यथेत्युपदर्शनार्थः । ' संतपयगाहा '-सदर्थविषयं पद सत्पद तस्य प्ररूपणं-प्रज्ञापनं सत्पदप्ररूपणं तस्य भाव: सत्पदप्ररूपणता सा प्रथमं कर्त्तव्या । इदमुक्तं भवति— इह स्तम्भकुम्भादीनि पदानि सदर्थविषयाणि दृश्यन्ते खरशृङ्गव्योमकुसुमादीनि त्वसदर्थविषयाणि दृश्यन्ते तत्रानुपूर्व्यादिपदानि किं स्तम्भादिपदानीव सदर्थविषयाणि आहोस्वित् खरविषाणादिपदवत् असदर्थगोचराणि इत्येतत्प्रथम पर्यालोचयितव्यं, तथा आनुपूर्व्यादिपदाभिधेयद्रव्याणां प्रमाण संख्यास्वरूपं प्ररूपणीयम्, च. समुच्चये, एवमन्यत्रापि तथा तेषामेव क्षेत्रं तदाधारस्वरूपं प्ररूपणीयं, कियति क्षेत्रे तानि भवन्तीति चिन्तनीयमित्यर्थ । तथा स्पर्शना च वक्तव्या, कियत्क्षेत्रं तानि स्पृशन्तीति चिन्तनीयमित्यर्थ । तथा कालश्च तत्स्थितिलक्षणो वक्तव्य, तथा अन्तर-विवक्षितस्वभावपरित्यागे सति पुनस्तद्भावप्राप्तिविरहलक्षणं प्ररूपणीय, तथा आनुपूर्वीद्रव्याणि शेषद्रव्याणां कतिभागे वर्त्तन्ते इत्यादिलक्षणो भाग प्ररूपणीय, तथा आनुपूर्व्यादिद्रव्याणि कस्मिन् भावे वर्त्तन्ते इत्येवरूपो भाव प्ररूपणीय, तथा अल्पबहुत्वं चानुपूर्व्यादिद्रव्याणां द्रव्यार्थप्रदेशार्थोभयार्थताश्रयणेन परस्पर स्तोकबहुत्वचिन्तालक्षण प्ररूपणीयम् एवकारोऽवधारणे, एतावत्प्रकार एवानुगम इति गाथासमासार्थ । विस्तरा(व्यासा)र्थे तु ग्रन्थकार स्वयमेव विभणिषुरायावयवमधिकृत्याह—

नेगमववहाराणं आणुपुव्विदव्वाइं किं अत्थि णऽत्थि ?, णियमा अत्थि । नेगमववहाराणं अणाणुपुव्वीदव्वाइं किं अत्थि णऽत्थि ?, नियमा अत्थि । नेगमववहाराणं अवत्तव्वगदव्वाइं किं अत्थि णऽत्थि, नियमा अत्थि । (सूत्र-८१)

नैगमव्यवहारयोरानुपूर्वीशब्दाभिधेयानि द्रव्याणि त्र्यणुकस्कन्धादीनि किं सन्ति, न इति(च) प्रश्न, अत्रोत्तरं-नियमा ' अत्थि ' इति, एतदुक्तं भवति-नेदं खरशृङ्गादिवदानुपूर्वीपदमसदर्थगोचरम्, अतो नियमात्सन्ति तदभिधेयानि द्रव्याणि तानि च त्र्यणुकस्कन्धादीनि पूर्वं दर्शितान्येव, एवमनानुपूर्व्यवक्तव्यकपदद्वयेऽपि वाच्यम् । कृता सत्पदप्ररूपणा ।

अथ द्रव्यप्रमाणमभिधित्सुराह—

नेगमववहाराणं आणुपुव्विदव्वाइं किं संखिज्जाइं असंखिज्जाइं अणंताइं ?, नो संखिज्जाइं नो असंखिज्जाइं, अणंताइं, एवं अणाणुपुव्विदव्वाइं, अवत्तव्वगदव्वाइं च अणंताइं भाणिअव्वाइं । ( सूत्र-८२ )

' नेगमववहाराणं आणुपुव्विदव्वाइं किं संखेज्जाइमि ' त्यादि, अयमत्र निर्वचनभावार्थ -इहानुपूर्व्यनानुपूर्व्यवक्तव्यकद्रव्याणि प्रत्येकमनन्तान्येकैकस्मिन्नप्याकाशप्रदेश प्राप्यन्ते, किं पुन सर्वलोक, अत संख्याऽसंख्येयप्रकारद्वयनिषेधेन त्रिष्वपि स्थानेष्वानन्त्यमेव वाच्यमिति । न च वक्तव्यं कथमसंख्येये लोके अनन्तानि द्रव्याणि तिष्ठन्ति ?, अचिन्त्यत्वात् पुद्गलपरिणामस्य, शक्तिर्दृश्यत चैकगृहान्तर्धर्याकाशप्रदेशेष्वेकप्रदीपप्रभापरमाणवस्तत्रैवानेकाऽपरप्रदीपप्रभापरमाणूनां तत्रैवावस्थानं, न चाऽऽदिष्टदृष्टेऽप्यर्थेऽनुपपत्तिः अतिप्रसङ्गादिति । अलं प्रपञ्चेन ।

इदानीं क्षेत्रद्वारमुच्यते—

नेगमववहाराणं आणुपुव्वीदव्वाइं लोअस्स किं संखिज्जइभागे होज्जा असंखिज्जइभागे होज्जा संखेज्जेसु भागेसु होज्जा असंखिज्जेसु भागेसु होज्जा सव्वलोए होज्जा ?, एगं दव्वं पडुच्च संखेज्जइ भागे वा होज्जा असंखिज्जइ भागे वा होज्जा संखेज्जेसु भागेसु वा होज्जा असंखिज्जेसु भागेसु वा होज्जा सव्वलोए वा होज्जा, णाणादव्वाइं पडुच्च निअमा सव्वलोए होज्जा । नेगमववहाराणं अणाणुपुव्विदव्वाइं किं लोअस्स किं संखिज्जइभागे होज्जा ०जाव सव्वलोए वा होज्जा ?, एगं दव्वं पडुच्च नो संखेज्जइभागे होज्जा, असंखिज्जइभागे होज्जा, नो संखेज्जेसु भागेसु होज्जा, नो असंखेज्जेसु भागेसु होज्जा, नो सव्वलोए होज्जा, णाणादव्वाइं पडुच्च निअमा सव्वलोए होज्जा, एवं अवत्तव्वगदव्वाइं भाणिअव्वाइं । ( सूत्र-८३ )

आनुपूर्वीद्रव्याणि किं लोकस्यैकस्मिन् संख्याततमे भागे 'होज्ज' त्ति । आर्षत्वात् भवन्ति अवगाहन्त इति यावत् । यदि वा-एकस्मिन्नसंख्याततमे भागे भवन्ति उत बहुषु संख्येयेषु भागेषु भवन्ति आहोस्विद्बहुष्वसंख्येयेषु भागेषु भवन्ति अथ सर्वलोके भवन्तीति पञ्च प्रश्नस्थानान्यत्र निर्वचनसूत्रस्येयं भावना-इहानुपूर्वीद्रव्याणि त्र्यणुकस्कन्धादीन्यनन्ताणुस्कन्धपर्यवसनान्युक्तानि तत्र च सामान्यत एकं द्रव्यमाश्रित्य तथाविधपरिणामवैचित्र्यात् किंचिल्लोकस्यैकस्मिन् संख्याततमे भागे भवति एकं तत्संख्यातभागमवगाह्य तिष्ठतीत्यर्थ., अन्यत्तु तदसंख्येयभागमवगाहते, अपरस्तु—बहूंस्तदसंख्येयान् भागानवगाह्य वर्त्तते, अन्यच्च बहून् तदसंख्येयभागानवगाह्य तिष्ठतीति, 'सव्वलोए वा होज्ज त्ति' इहानन्तानन्तपरमाणुप्रचयनिष्पन्नं प्रज्ञापनाविप्रसिद्धाचित्तमहास्कन्धलक्षणमानुपूर्वीद्रव्यं समयमेकं सकललोकावगाहि प्रतिपत्तव्यमिति । कथ पुनरयमचित्तमहास्कन्ध. सकललोकावगाही स्याद् ?, उच्यते-समुद्घातवर्त्तिकेवलिवत् । तथाहि-लोकमध्यव्यवस्थितोऽसौ प्रथमसमये तिर्यगसंख्यातयोजनविस्तरं संख्यातयोजनविस्तर वा ऊर्ध्वमधस्तु चतुर्दशरज्ज्वायतं विश्रसापरिणामेन वृत्त दण्डं करोति द्वितीये कपाटम्, तृतीय मन्थानं, चतुर्थे लोकव्याप्तिं प्रतिपद्यते । पञ्चमे अन्तराणि संहरति षष्ठे मन्थान सप्तमे कपाटमष्टमे तु दण्ड संहृत्य खण्डशो भिद्यत इत्येके, अन्येत्वन्यथापि व्याचक्षते, तत्तु विशेषावश्यकादवसेयमिति ' वा ' शब्दः समुच्चये एव यथासंभवमन्यत्रापि । 'नाणा दव्वाइं पडुच्च'त्यादि नानाद्रव्याण्यानुपूर्वीपरिणामवन्ति प्रतीत्य प्रकृत्य वा, अधिकृत्येत्यर्थ, नियमात् नियमेन सर्वलोके भवन्ति, न संख्येयादिभागेषु यत सर्वलोकाकाशस्य स प्रदेशोऽपि नास्ति यत्र सूक्ष्मपरिणामवन्त्यनन्तान्यानुपूर्वीद्रव्याणि न सन्तीति अनानुपूर्व्यवक्तव्यकद्रव्येषु त्वेकं द्रव्यमाश्रित्य लोकस्याऽ-

संख्येयभाग एव वृत्तिर्न संख्येयभागादिषु यतोऽनानुपूर्वी तावत्परमाणुरुच्यते, स चैकाकाशप्रदेशावगाढ एव भवति, अवक्तव्यकं तु द्व्यणुकस्कन्ध, स चैकाकाशप्रदेशावगाढो द्विप्रदेशावगाढो वा स्यादिति यथोक्तभागवृत्तितैवेति, नाना द्रव्यभावना पूर्ववदिति । उक्तं क्षेत्रद्वारम् ।

साम्प्रतं स्पर्शनाद्वारमुच्यते—

नेगमववहाराणं आणुपुव्विदव्वाइं लोगस्स किं संखेज्जइ भागं फुसंति असंखेज्जइभागं फुसंति संखेज्जे भागे फुसंति असंखेज्जे भागे फुसंति सव्वलोअं फुसंति?, एगं दव्वं पडुच्च लोगस्स संखेज्जइभागं वा फुसंति० जाव सव्वलोगं वा फुसंति णाणादव्वाइं पडुच्च निअमा सव्वलोगं फुसंति । णेगमववहाराणं अणाणुपुव्विदव्वाइं लोअस्स किं संखेज्जइभागं फुसंति० जाव सव्वलोगं फुसंति । एगं दव्वं पडुच्च नो संखिज्जइभागं फुसंति असंखिज्जइभागं फुसंति नो संखिज्जे भागे फुसंति नो असंखेज्जे भागे फुसंति नो सव्वलोअं फुसंति, नाणादव्वाइं पडुच्च निअमा सव्वलोअं फुसंति, एवं अवत्तव्वगदव्वाइं भाणिअव्वाइं । (सूत्र-८४)

भावना तु क्षेत्रद्वारवदेव कर्त्तव्या, नवरं क्षेत्रस्पर्शनयोरयं विशेष क्षेत्रम् अवगाहाक्रान्तप्रदेशमात्रं, स्पर्शना तु षड्दिक्कै प्रदेशैस्तद्बहिरपि भवति, तथा च—परमाणुद्रव्यमाश्रित्य तावदवगाहनास्पर्शनयोरन्यत्रोक्तो भेद. । 'एगपएसोगाढं सत्त पएसा य से फुसणा'त्ति-अस्यार्थ -परमाणुद्रव्यमवगाढं तावदेकस्मिन्नेवाकाशप्रदेशे, स्पर्शना तु (से) तस्य सप्त प्रदेशा भवन्ति, षड्दिग्व्यवस्थितान् षट्प्रदेशान् यत्र चावगाढस्त च स्पृशतीत्यर्थ.,एवमन्यत्रापि क्षेत्रस्पर्शनयोर्भेदो भावनीय । अत्र सौगता प्रेरयन्ति-यदि परमाणो षड्दिग्स्पर्शना अभ्युपगम्यते तदैकत्वमस्य हीयते, तथा हि-प्रष्टव्यमत्र, किं येनैव स्वरूपेणासौ पूर्वाद्यन्यतरद्दिशा सम्बद्धस्तेनैवान्यदिग्भि , उत स्वरूपान्तरेण ?, यदि तेनैव तदाऽयं पूर्वदिक्सम्बन्धोऽयं चापरदिक्सम्बन्ध इत्यादि विभागो न स्यात् एकस्वरूपत्वात्, विभागाभावे च षड्दिक्सम्बन्धवचनमुपप्लवत् एव अथाऽपरो विकल्प कल्प्यते तर्हि तस्य षट्स्वरूपाऽऽपत्त्या एकत्वं विशीर्यते, उक्तं च-'दिग्भागभेदो यस्याऽस्ति तस्यैकत्वं न युज्यत' इति । अत्र प्रतिविधीयते-इह परमाणुद्रव्यमादिमध्याऽन्त्यादिविभागरहित निरंशमेकस्वरूपमिष्यते अत. सांशत्वस्तु सम्भवित्वात्परोक्त विकल्पद्वयं निरास्पदमेव, अथानभ्युपगम्यमानाऽपि परमाणो' सांशता अनन्तरोक्तविकल्पबलेनापाद्यते, ननु भवन्तोऽपि तर्हि प्रष्टव्या -कश्चिद्विज्ञानसंताने विवक्षित. कश्चिद्विज्ञानलक्षणक्षण. स्वजनकपूर्वक्षणस्य कार्यं स्वजन्योत्तरक्षणस्य कारणमित्यत्र सौगताना तावदविप्रतिपत्ति., तत्रापि विचार्यते—किमसौ येन स्वरूपेण पूर्वक्षणस्य कार्यं तेनैवोत्तरक्षणस्य कारणम् ? उत स्वरूपान्तरेण ?, यद्याद्यः पक्षस्तर्हि यथा पूर्वापेक्षयाऽसौ कार्यं तथोत्तरापेक्षयापि स्यात् यथा वा उत्तराऽपेक्षया कारणं तथा पूर्वापेक्षयापि स्याद्, एकस्वरूपत्वात्तस्येति, अथ द्वितीय पक्षस्तर्हि तस्य सांशत्वप्रसक्तोऽत्राऽपि दुर्वार. स्याद् अथ निरंश एवासौ ज्ञानलक्षणक्षणोऽकार्याकारणरूप वस्तुवस्तुव्यापृतत्वात् । तथा तथा व्यपदिश्यते, न पुनस्तस्यानेकस्वरूपत्वमस्ति , नन्वस्माकमपि नेदमुत्तरमतिदुर्लभं स्यात्, यतो द्रव्यतया निरंश एव परमाणुस्तथाविधाऽचिन्त्यपरिणामत्वाद् द्विकषट्केन सह नैरन्तर्येणावस्थितत्वात्तस्य स्पर्शकमुच्यते, न पुनस्तत्रांशै. काचित् स्पर्शना समस्तीति, अत्र बहुवक्तव्यं; तत्तु नोच्यते, स्थानान्तरेषु चर्चितत्वादिति । अलं विस्तरेण । उक्तं स्पर्शनाद्वारम् ।

इदानीं कालद्वारं विभणिषुराह—

णेगमववहाराणं आणुपुव्विदव्वाइं कालओ केवच्चिरं होइ ?, एगं दव्वं पडुच्च जहण्णेणं एगं समयं उक्कोसेणं असंखेज्जं कालं, णाणादव्वाइं पडुच्च णिअमा सव्वऽद्धा अणाणुपुव्विदव्वाइं अवत्तव्वगदव्वाइं च एवं चेव भाणिअव्वाइं । ( सूत्र-८५ )

नैगमव्यवहारयोरानुपूर्वीद्रव्याणि कालत'—कालमाश्रित्य कियच्चिर-कियन्त काल भवन्ति-आनुपूर्वीत्वपर्यायेणावतिष्ठन्ते ?, अत्रोत्तरम्-'एग दव्वमि' त्यादि , इयमत्र भावना-परमाणुद्व्यादेरपरैकादिपरमाणुमीलने अपूर्वं किंचिदानुपूर्वीद्रव्यं समुत्पन्नम्, तत समयादूर्ध्वं पुनरप्येकादयो वियुक्तेऽपगतस्तद्भाव इत्येकमानुपूर्वीद्रव्यमधिकृत्य-जघन्यत. समय.—अवस्थितिकाल , यदा तु तदेवासंख्यातं कालं तद्भावेन स्थित्वाऽनन्तरोक्तस्वरूपेण वियुज्यते तदा उत्कृष्टतोऽसंख्येयोऽवस्थितिकाल प्राप्यते, अनन्तं कालं पुनर्नावतिष्ठते उत्कृष्टाया अपि पुद्गलसंयोगस्थितेरसंख्येयकालत्वादिति । नानाद्रव्याणि बहूनि पुनरानुपूर्वीद्रव्याण्यधिकृत्य सर्वाऽद्धास्थितिर्भवति, नास्ति स. कश्चित्कालो यत्रानुपूर्वीद्रव्यविरहितोऽयं लोक स्यादिति भाव । अनानुपूर्व्यवक्तव्यकद्रव्येष्वपि जघन्यादिभेदभिन्न एतावानेवावस्थितिकाल , तथाहि-कश्चित्परमाणुरेकं समयमेकाकीभूत्वा तत परमाण्वादिना अन्येन सह संयुज्यत इत्थमेकमनानुपूर्वीद्रव्यमधिकृत्य जघन्यतः समय.—अवस्थितिकाल , यदा तु स एवासंख्यातं कालं तद्भावेन स्थित्वा अन्येन परमाण्वादिना सह संयुज्यते तत उत्कृष्टतोऽसंख्येयोऽवस्थितिकाल संप्राप्यते, नानाद्रव्यपक्षस्तु पूर्ववदेव भावनीय । अवक्तव्यकद्रव्यमपि परमाणुद्वयलक्षणं यदा समयमेकं संयुक्तं स्थित्वा ततो वियुज्यते तदवस्थमेव वाऽन्येन परमाण्वादिना संयुज्यते तदा तस्याऽवक्तव्यकद्रव्यतया जघन्यत समयोऽवस्थानं लभ्यते, यदा तु तदेवाऽसंख्यात कालं तद्भावेन स्थित्वा विघटते तदवस्थमेव वाऽ(वा)न्येन परमाण्वादिना संयुज्यते तदोत्कृष्टत अवक्तव्यकद्रव्यतया असंख्यात कालमवस्थान प्राप्यते, नानाद्रव्यपक्षस्तु तथैव भावनीय इति । उक्तं कालद्वारम् ।

अथाऽन्तरद्वारं प्रतिपिपादयिषुराह—

णेगमववहाराणं आणुपुव्विदव्वाणं अंतरं कालओ केवच्चिरं होइ ?, एगं दव्वं पडुच्च जहण्णेणं एगं समयं

उक्कोसेणं अणंतं कालं, नाणादव्वाइं पडुच्च णऽत्थि अंतरं
णेगमववहाराणं अणाणुपुव्वीदव्वाणं अन्तरं कालओ
केवच्चिरं होइ ?, एगं दव्वं पडुच्च जहण्णेणं एगं समयं
उक्कोसेणं असंखेज्जं कालं, नाणादव्वाइं पडुच्च णऽत्थि अ-
न्तरं। णेगमववहाराणं अवत्तव्वगदव्वाणं अन्तरं कालओ
केवच्चिरं होइ ?, एगं दव्वं पडुच्च जहण्णेणं एगं समयं
उक्कोसेणं अणंतं कालं। नाणादव्वाइं पडुच्च णऽत्थि अ-
न्तरं। ( सूत्र–८६ )

नैगमव्यवहारयोरानुपूर्वीद्रव्याणामन्तरं कालतः कियच्चिरं
भवतीति प्रश्न, अन्तरम्-व्यवधानं, तच्च क्षेत्रतोऽपि भवति,
यथा भूतलसूर्ययोरष्टौ योजनशतान्यन्तरमित्यतस्तद्व्यव-
च्छेदार्थमुक्तं कालत -कालमाश्रित्य, तदयमत्रार्थ -आनुपू-
र्वीद्रव्याण्यानुपूर्वीस्वरूपता परित्यज्य कियता कालेन ता-
न्येव पुनस्तथा भवन्ति, आनुपूर्वीत्वपरित्याग-पुनर्लाभयोर-
न्तरे कियान् कालो भवतीत्यर्थ। अत्र निर्वचनम्-' एगं
दव्वमि ' त्यादि, इयमत्र भावना–इह विवक्षितं त्र्यणुकस्क-
न्धादिकं किमप्यानुपूर्वीद्रव्यं विश्रसापरिणामात्प्रयोगपरि-
णामाद्वा खण्डशो वियुज्य परित्यक्तानुपूर्वीभावं संजात एक-
स्माच्च समयादूर्द्ध्वं विश्रसादिपरिणामात्पुनस्तैरेव परमाणु-
भिस्तथैव तन्निष्पन्नमित्येवं जघन्यतः सर्वस्तोकतया एकं
द्रव्यमाश्रित्याऽऽनुपूर्वीत्वपरित्याग-पुनर्लाभयोरन्तरे समयः
प्राप्यते, उत्कृष्टत सर्वबहुतया पुनरन्तरमनन्तं कालं भवति,
तथाहि-तदेव विवक्षितं किमप्यानुपूर्वीद्रव्यं तथैव भिन्नं
भित्त्वा च ते परमाणवोऽन्येषु परमाणुद्व्यणुकत्र्यणुकादिषु
अनन्ताणुकस्कन्धपर्यन्तेषु अनन्तस्थानष्तूत्कृष्टान्तराधिका-
रादसकृत्प्रतिस्थानमुत्कृष्टां स्थितिमनुभवन्त पर्यटन्ति,
कृत्वा चेत्थं पर्यटनं कालस्यानन्तत्वाद्विश्रसादिपरिणामतो
यदा तैरेव परमाणुभिस्तदेव विवक्षितमानुपूर्वीद्रव्यं नि-
ष्पद्यते, तदाऽनन्त उत्कृष्टान्तरकाल प्राप्यते, नानाद्रव्या-
ण्यधिकृत्य पुनर्नाऽस्त्यन्तरम् , नहि स कश्चित्कालोऽस्ति
यत्र सर्वाण्यप्यानुपूर्वीद्रव्याणि युगपदानुपूर्वीभावं परित्य-
जन्ति, अनन्तानन्तैरानुपूर्वीद्रव्यै सर्वदैव लोकस्याऽशून्य-
त्वादिति भाव । अनानुपूर्वीद्रव्यान्तरकालचिन्तायाम्-'एगं
दव्व पडुच्च जहन्नेणं एक समयं'ति-इह यदा किंचिदनानु-
पूर्वीद्रव्यं परमाणुलक्षणमन्येन परमाणुद्व्यणुकत्र्यणुकादिना
केनचित् द्रव्येण सह संयुज्य समयादूर्ध्वं वियुज्य पुनरपि
तथा स्वरूपमेव भवति तदा समयलक्षणो जघन्यान्तरकालः
प्राप्यते, 'उक्कोसेणं असंखेज्जं कालं' ति-तदेवाऽनानुपूर्वीद्रव्यं
यदा अन्येन परमाणुद्व्यणुकत्र्यणुकादिना केनचिद् द्रव्येण
सह संयुज्यते तत् संयुक्तं चाऽसंख्येयं कालं स्थित्वा वियु-
ज्य पुनस्तथास्वरूपमेव भवति तदा असंख्यात उत्कृष्टान्तर-
कालो लभ्यते। अत्राह-ननु अनानुपूर्वीद्रव्य यदा अनन्ताऽ-
नन्तपरमाणुप्रचितस्कन्धेन सह संयुज्यते तत्संयुक्तं चा-
संख्येय कालमवतिष्ठते, ततोऽसौ स्कन्ध उद्भिद्यते भिन्ने च
तस्मिन् यस्तस्माल्लघुस्कन्धो भवति तेनापि सह संयुक्तमसं-
ख्यातं कालमवतिष्ठते पुनस्तस्मिन्नपि भिद्यमाने य तस्माल्ल-
घुतर स्कन्धो भवति तेनापि संयुक्तमसंख्येयं कालमवतिष्ठते,
पुनस्तस्मिन्नपि भिद्यमाने यस्तस्माल्लघुतम स्कन्धो भवति
तेनापि संयुक्तमसंख्येयं कालमवतिष्ठते इत्येवं तत्र भिद्यमाने
क्रमेण कदाचिदनन्ता अपि स्कन्धा संभाव्यन्ते, तत्र च
प्रतिस्कन्धसंयुक्तमनानुपूर्वीद्रव्य यदा यथोक्तां स्थितिमनु-
भूय तत एकाक्येव भवति तदा तस्य यथोक्तानन्तस्कन्ध-
स्थित्यपेक्षया अनन्तोऽपि कालोऽन्तरं प्राप्यते, किमित्य-
संख्येय एवोक्त. अत्रोच्यते-स्यादेव, हन्त यदि संयुक्तोऽ-
णुरेतावन्तं कालं तिष्ठेदेतच्च नास्ति, पुद्गलसंयोगस्थिते-
रुत्कृष्टतोऽप्यसंख्येयकालत्वादित्युक्तमेव, अथ ब्रूयात्-य-
स्मिन्नेव स्कन्धे संयुज्यते असौ परमाणु स चेत् स्कन्धः
असंख्येयकालाद् भिद्यते तर्ह्येतावतैव चरितार्थः पुद्गल-
संयोगाऽसंख्येयकालनियमो, विवक्षितपरमाणुद्रव्यस्य तु
वियोगो मा भूदपीति, नैतदेवं, यस्या अन्येन संयोगो जा-
तस्तस्यासंख्येयकालाद्वियोगश्चिन्त्यते, यदि च परमाण्वा-
श्रय स्कन्धो वियुज्यते तर्हि परमाणो किमायातं ?, त-
स्यान्यसंयोगस्य तदवस्थत्वात् , तस्मादणुत्वेनासौ सं-
युक्तोऽसंख्येयकालादणुत्वेनैव वियोजनीय इति यथोक्त
एवान्तरकालो लभ्यन्त इति, कथं पुनरणुत्वेनैव तस्य वि-
योगश्चिन्तनीय इति चेत् सूत्रप्रामाण्यात् , प्रस्तुतसूत्रे व्या-
ख्याप्रज्ञप्त्यादिषु च परमाणो पुन परमाणुभवने संख्येयरूप-
स्यैवान्तरकालस्योक्तत्वाद् इत्यलं विस्तरेण। 'नाणादव्वाइं
पडुच्च ' त्यादि, पूर्ववद्भावनीयम् । अवक्तव्यकद्रव्याणाम-
न्तरचिन्तायाम् 'एग दव्वं पडुच्च' त्यादि । अत्र भावना-इह
कश्चिद् द्विप्रदेशिक स्कन्धो विघटित स्वतन्त्रं परमाणुद्वयं
जातं, समयं चैकं तथा स्थित्वा पुनस्ताभ्यामेव परमाणु-
भ्या द्विप्रदेशिक स्कन्धो निष्पन्न , अथवा-विघटित एव
द्विप्रदेशिक स्कन्धोऽन्येन परमाण्वादिना संयुज्य समया-
दूर्ध्वं पुनस्तथैव नियुक्त इत्यवक्तव्यकस्य पुनरप्यवक्तव्यक-
भवने उभयथाऽपि समयोऽन्तरे लभ्यते,' उक्कोसेणं अणंतं
कालं' इति कथम् ?, अत्रोच्यते--अवक्तव्यकद्रव्यं किमपि
विघटितं विशकलितपरमाणुद्वयं जात तच्चानन्तै परमा-
णुभिरनन्तैर्द्व्यणुकस्कन्धैरनन्तैस्त्र्यणुकस्कन्धैर्यावदनन्तैरन-
न्ताणुकस्कन्धै सह क्रमेण संयोगमासाद्य उत्कृष्टान्तरा-
धिकाराच्च प्रतिस्थानमसकृदुत्कृष्टां संयोगस्थितिमनुभूय
कालस्यानन्तत्वात् यदा पुनरपि तथैव द्व्यणुकस्कन्धतया
संयुज्यते तदा अवक्तव्यकैकद्रव्यस्य पुनस्तथाभवने अनन्तो-
ऽन्तरकाल प्राप्यते नानाद्रव्यपक्षभावनालोके सर्वदैव त-
द्भावात् पूर्ववदवक्तव्या। उक्तमन्तरद्वारम्।

साम्प्रतं भागद्वारं निर्दिदिक्षुराह—

णेगमववहाराणं आणुपुव्वीदव्वाइं सेसदव्वाणं कति
भागे होज्जा ?, किं संखिज्जइ भागे होज्जा असंखिज्जइ भागे
होज्जा संखेज्जेसु भागेसु होज्जा असंखेज्जेसु भागेसु होज्जा?, नो
संखिज्जइ भागे होज्जा नो असंखिज्जइ भागे होज्जा नो संखे-
ज्जेसु भागेसु होज्जा, नियमा असंखेज्जेसु भागेसु होज्जा। णे-
गमववहाराणं अणाणुपुव्विदव्वाइं सेसदव्वाणं कति भागे
होज्जा ?। किं संखिज्जइ भागे होज्जा असंखिज्जइ भागे होज्जा
संखेज्जेसु भागेसु होज्जा असंखेज्जेसु भागेसु होज्जा ?, नो

संखेज्जइ भागे होज्जा नो असंखिज्जइ भागे होज्जा नो संखेज्जेसु भागेसु होज्जा, असंखेज्जेसु भागे होज्जा। एवं अवत्तव्वगदव्वाणि वि भाणिअव्वाणि। (सूत्र-८७)

नैगमव्यवहारयोस्त्र्यणुकस्कन्धादीन्यनन्ताणुकस्कन्धपर्यन्तानि सर्वाण्यप्यानुपूर्वीद्रव्याणि शेषद्रव्याणां समस्तानानुपूर्व्यवक्तव्यकद्रव्यलक्षणानां 'कति भागे होज्ज' त्ति-कति भागे भवन्तीत्यर्थ, किं सख्यातनमभागे भवन्ति, यथा असत्कल्पनया शतस्य विंशतिमिना, किमसंख्याततमे भागे भवन्ति ?, यथा शतस्यैव दश, अथ संख्यातेषु भागेषु भवन्ति ?, यथा शतस्यैव चत्वारिंशत्पष्टिर्वा, किमसख्यातेषु भागेषु भवन्ति यथा शतस्यैवाशीतिरिति प्रश्न, अत्र निर्वचनम्-' नो संखेज्जइभागे होज्जा ' इत्यादि, नियमात् 'असंखेज्जेसु भागेसु होज्ज' त्ति-इह तृतीयार्थे सप्तमी, ततश्चानुपूर्वीद्रव्याणि शेषेभ्योऽनानुपूर्व्यवक्तव्यकद्रव्येभ्योऽसंख्येयैर्भागैरधिकानि, भवन्तीति वाक्यशेषो द्रष्टव्य, ततश्चायमर्थ प्रतिपत्तव्य -आनुपूर्वीद्रव्याणि शेषद्रव्येभ्योऽसख्येयगुणानि, शेषद्रव्याणि तु तदसंख्येयभाग वर्तन्ते, न पुन शतस्याशीतिरिवानुपूर्वीद्रव्याणि शेषेभ्य स्तोकानीति, कस्मादेवं ? व्याख्यायते-स्तोकान्यपि तानि भवन्त्विति चेत् नैतदेवम्, अघटमानकत्वात् तथाहि-अनानुपूर्व्यवक्तव्यकद्रव्येषु एकाकिन परमाणुपुद्गला द्व्यणुकाश्च स्कन्धा इत्येतावन्त्येव द्रव्याणि लभ्यन्ते, शेषाणि तु त्र्यणुकस्कन्धादीन्यनन्ताणुकस्कन्धपर्यन्तानि द्रव्याणि समस्तान्यप्यानुपूर्वीरूपाण्येव तानि च पूर्वेभ्योऽसंख्येयगुणानि, यदुक्तम्- एएसि णं भंते ! परमाणुपोग्गलाण संखिज्जपएसियाण असंखेज्जपएसियाणं अणंतपएसियाण य खधाणं कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ?, गोयमा ! सव्वत्थोवा अणंतपएसिया खधा परमाणुपोग्गला अणंतगुणा, संखिज्जपएसिया खधा संखिज्जगुणा असंखेज्जपएसिया खधा असंखेज्जगुणा ' तदत्र सूत्रे पुद्गलजातेः सर्वस्यापि सकाशादसख्यातप्रदेशिका स्कन्धा असख्यातगुणा उक्तास्ते चानुपूर्व्यामन्तर्भवन्ति, अत तदपेक्षया आनुपूर्वीद्रव्याणि शेषात्समस्तादपि द्रव्यादसख्यातगुणानि किं पुनरनानुपूर्व्यवक्तव्यकद्रव्यमात्रात्, ततो यथोक्तमेव व्याख्यान कर्तव्यमित्यल विस्तरेण। अणाणुपुव्विदव्वाइमि ' त्यादि। इहानानुपूर्वीद्रव्याण्यवक्तव्यकद्रव्याणि च शेषद्रव्याणा यथा असख्यातम एव भागे भवन्ति न शेषभागेषु तथा अनन्तरोक्तन्यायादेव भावनीयमिति। उक्तं भागद्वारम्।

साम्प्रतं भावद्वारमाह—

णेगमववहाराणं आणुपुव्वीदव्वाइं कतरमि भावे होज्जा ?, किं उदइए भावे होज्जा उवसमिए भावे होज्जा खइए भावे होज्जा खओवसमिए भावे होज्जा पारिणामिए भावे होज्जा संनिवाइए भावे होज्जा ?, णिअमा सादिपारिणामिए भावे होज्जा, अणाणुपुव्विदव्वाणि, अवत्तव्वगदव्वाणि अ ; एवं चेव भाणिअव्वाणि। (सूत्र-८८)

' नेगमववहाराणमि ' त्यादि प्रश्न, अत्र चौदयिकादिभावाना शब्दार्थो भावार्थश्च विस्तरेणोपरिष्टात् स्वस्थान एव वक्ष्यते, अत्र निर्वचनसूत्रे नियमा ' साइपारिणामिए भावे होज्ज ' त्ति-परिणमन-द्रव्यस्य तेन तेन रूपेण वर्तनं-भवनं परिणाम, स एव पारिणामिक तत्र भवस्तेन वा निर्वृत्त इति वा पारिणामिक, स च द्विविध-सादि, अनादिश्च। तत्र धर्मास्तिकायाद्यरूपि द्रव्याणामनादिपरिणामोऽनादिकालात्तद्द्रव्यत्वेन तेषा परिणतत्वाद्, रूपिद्रव्याणा तु सादि परिणाम, अभ्रेन्द्रधनुरादीना तथा परिणतेरनादित्वाभावाद्, एवं च स्थिते नियमाद्-अवश्यंतया आनुपूर्वीद्रव्याणि सादिपारिणामिक एव भावे भवन्ति, आनुपूर्वीत्वपरिणतेरनादित्वासभवात्, विशिष्टैकपरिणामेन पुद्गलानामसख्येयकालमेवावस्थानादिति भाव । अनानुपूर्व्यवक्तव्यकद्रव्येष्वपीत्थमेव भावना कार्या इति। उक्त भावद्वारम्।

इदानीमल्पबहुत्वद्वार विभणिषुराह—

एएसि णं भंते ! णेगमववहाराणं आणुपुव्वीदव्वाणं अणाणुपुव्विदव्वाणं अवत्तव्वगदव्वाण य दव्वट्ठयाए पएसट्ठयाए दव्वट्ठपएसट्ठयाए कतरे कतरेहिंतो अप्पा वा बहुआ वा तुल्ला वा विसेसाहिआ वा ?, गोयमा ! सवत्थोवाइं णेगमववहाराणं अवत्तव्वगदव्वाइं दव्वट्ठयाए अणाणुपुव्विदव्वाइं दव्वट्ठयाए विसेसाहियाइं आणुपुव्विदव्वाइं दव्वट्ठयाए असखेज्जगुणाइं पएसट्ठयाए णेगमववहाराणं सव्वत्थोवाइं अणाणुपुव्विदव्वाइं अपएसट्ठयाए अवत्तव्वगदव्वाइं पएसट्ठयाए विसेसाहिआइं आणुपुव्विदव्वाइं पएसट्ठयाए अणंतगुणाइं दव्वट्ठपएसट्ठयाए सव्वत्थोवाइं णेगमववहाराणं अवत्तव्वगदव्वाइं दव्वट्ठयाए अणाणुपुव्विदव्वाइं दव्वट्ठयाए अपएसट्ठयाए विसेसाहिआइं अवत्तव्वगदव्वाइं पएसट्ठयाए विसेसाहिआइं आणुपुव्विदव्वाइं दव्वट्ठयाए असखेज्जगुणाइं ताइं चेव पएसट्ठयाए अनंतगुणाइं। सेत्त(तं)अणुगमे। सेत्तं (तं) णेगमववहाराणं अणोवणिहिआ दव्वाणुपुव्वी। (सूत्र-८९)

द्रव्यमेवार्थो द्रव्यार्थस्तस्य भावो द्रव्यार्थता तया; द्रव्यत्वेन इत्यर्थ, प्रकृष्टो-निरंशो देश- प्रदेश स चासावर्थश्च प्रदेशार्थस्तस्य भाव प्रदेशार्थता तया, परमाणुत्वेनेति भाव, द्रव्यार्थप्रदेशार्थतया तु यथोक्तोभयरूपतयेति भाव, तदयमर्थ- एतेषा आनुपूर्व्यादिद्रव्याणा मध्ये ' कयरे कयरेहिंतो' त्ति-कतराणि कान्याश्रित्य द्रव्यापेक्षया प्रदेशापेक्षया उभयापेक्षया वाऽल्पानि विशेषहीनत्वादिना बहूनि असख्येयगुणत्वादिना तुल्यानि समसंख्यत्वेन विशेषाधिकानि किंचिदाधिक्येनेति वाशब्दा पक्षान्तरसूचिद्योतका, इति पृष्टे वाच क्रमवर्तित्वाद् द्रव्यार्थतापेक्षया तावदुत्तरमुच्यते, तत्र-' सव्वत्थोवाइ नेगमववहाराण अवत्तव्वगदव्वाइ दव्वट्ठयाए ' त्ति-नैगमव्यवहारयो द्रव्यार्थतामपेक्ष्य तावदवक्तव्यकद्रव्याणि सर्वेभ्योऽन्येभ्य स्तोकानि सर्वस्तो-

कानि अनानुपूर्वीद्रव्याणि तु द्रव्यार्थतामेवापेक्ष्य विशेषाधिकानि कथम् ?, वस्तुस्थितिस्वभावात्, उक्तं च- "एएसि णं भंते ! परमाणुपोग्गलाणं दुपएसियाणं संधाणं कयरे कयरेहिंतो अप्पा वा बहुया वा० ?, गोयमा ! दुपएसिएहिंतो खंधेहिंतो परमाणुपोग्गला बहुग" त्ति- तेभ्योऽपि आनुपूर्वीद्रव्याणि द्रव्यार्थतयैवासंख्येयगुणानि, यतोऽनानुपूर्वीद्रव्येष्वेव वक्तव्यकद्रव्येषु च परमाणुलक्षणं द्व्यणुकस्कन्धलक्षणं चैकैकमेव स्थानं लभ्यते, आनुपूर्वीद्रव्येषु तु त्र्यणुकस्कन्धादीन्येकोत्तरवृद्ध्यानन्ताणुकस्कन्धपर्यन्तान्यनन्तानि स्थानानि प्राप्यन्ते, अतः स्थानबहुत्वादानुपूर्वीद्रव्याणि पूर्वेभ्योऽसंख्यातगुणानि । ननु यदि तेषु स्थानान्यनन्तानि तर्ह्यनन्तगुणानि पूर्वेभ्यस्तानि कस्मान्न भवन्तीति चेत्, नैवम्, यतोऽनन्ताणुकस्कन्धाः केवलानानुपूर्वीद्रव्येभ्योऽप्यनन्तभागवर्तित्वात् स्वभावादेव स्तोका इति न किंचित्तैरिह वर्द्धते अतो वस्तुवृत्त्या किलासंख्यातान्येव तेषु स्थानानि प्राप्यन्ते तदपेक्षया त्वसंख्यातगुणान्येव तानि एतच्च पूर्वं भागद्वारे लिखितप्रज्ञापनासूत्रात्सर्वं भावनीयमित्यलं विस्तरेण। उक्तं द्रव्यार्थतया अल्पबहुत्वम्, इदानीं प्रदेशार्थतया तदेवाह- 'पएसट्ठयाए सव्वत्थोवाइं नेगमववहाराणमि' त्यादि, नैगमव्यवहारयोः प्रदेशार्थतया अल्पबहुत्वे चिन्त्यमाने अनानुपूर्वीद्रव्याणि सर्वेभ्यः स्तोकानि, कुत इत्याह-' अपएसट्ठयाए ' त्ति-प्रदेशलक्षणस्यार्थस्य तेष्वभावादित्यर्थः, यदि हि तेषु प्रदेशाः स्युस्तदा द्रव्यार्थतायामिव प्रदेशार्थतायामप्यवक्तव्यकापेक्षयाधिकत्वं स्यात्, नचैतदस्ति "परमाणुरप्रदेश" इति वचनाद् अत सर्वस्तोकान्येतानि, ननु यदि प्रदेशार्थता तेषु नास्ति तर्हि तया विचारोऽपि तेषां न युक्त इति चेत्, न, एतदेवम्-प्रकृष्ट-सर्वसूक्ष्म पुद्गलास्तिकायस्य देशो-निरंशो भाग-प्रदेश इति व्युत्पत्तेः प्रतिपरमाणुप्रदेशार्थताभ्युपगम्यत एव आत्मव्यतिरिक्तप्रदेशान्तरापेक्षया त्वप्रदेशार्थतेत्यदोषः, अवक्तव्यकद्रव्याणि प्रदेशार्थतयाऽनानुपूर्वीद्रव्येभ्यो विशेषाधिकानि, यत किलासत्कल्पनया अवक्तव्यकद्रव्याणां षष्टिः अनानुपूर्वीद्रव्याणां तु शतम्, ततो द्रव्यार्थताविचारे एतानीतरापेक्षया विशेषाधिकान्युक्तानि,अत्र तु प्रदेशार्थताविचारे अनानुपूर्वीद्रव्याणां निष्प्रदेशत्वात्तदेव शतमवस्थितम् अवक्तव्यकद्रव्याणां त्विह प्रत्येकं द्विप्रदेशत्वाद् द्विगुणितानां विंशत्युत्तरं प्रदेशशतं जायते इति तेषामितरेभ्यः प्रदेशार्थतया विशेषाधिकत्वं भावनीयम् । आनुपूर्वीद्रव्याणि प्रदेशार्थतया अवक्तव्यकद्रव्येभ्योऽनन्तगुणानि भवन्ति, कथम् ?, यतो द्रव्यार्थतयापि तावदेतानि पूर्वेभ्योऽसंख्यातगुणान्युक्तानि, यदा तु संख्यातप्रदेशिकस्कन्धानामसंख्यातप्रदेशिकस्कन्धानामनन्ताणुकस्कन्धानां च सम्बन्धिनः सर्वेऽपि प्रदेशा विवक्ष्यन्ते तदा महानसौ राशिर्भवतीति प्रदेशार्थतयाऽमीषां पूर्वेभ्योऽनन्तगुणत्वं भावनीयम् । उक्तं प्रदेशार्थतयाऽल्पबहुत्वम् । इदानीमुभयार्थतामाश्रित्य तदाह-' दव्वट्ठपएसट्ठयाए ' इत्यादि, इहोभयार्थताधिकारेऽपि यदेवाल्पं तदेवाऽऽदौ दर्श्यते-अवक्तव्यकद्रव्याणि च सर्वाऽल्पानि इति प्रथममेवोक्तम्, ' सव्वत्थोवाइं नेगमववहाराणं अवत्तव्वगदव्वाइं दव्वट्ठयाए ' त्ति-अपरं चोभयार्थताधिकारेऽपि-" अणाणुपुव्विदव्वाइं दव्वट्ठयाए " इत्यादि यदुक्तम्-' अपएसट्ठयाए ' त्ति-तदात्मव्यतिरिक्तप्रदेशान्तराभावतोऽनानुपूर्वीद्रव्याणामप्रदेशिकत्वादिति मन्तव्यम् । ततश्चेदमुक्तं भवति-द्रव्यार्थतया अप्रदेशार्थतया च विशिष्टान्यनानुपूर्वीद्रव्याण्यवक्तव्यकद्रव्येभ्यो विशेषाधिकानि, शेषभावना तु प्रत्येकचिन्तावत्सर्वा कार्या । आह-यद्येवं प्रत्येकचिन्तायामेव प्रस्तुतोऽर्थः सिद्ध किमनयोभयार्थताचिन्तयेति चेत्, नैवम्, यत आनुपूर्वीद्रव्येभ्यस्तत्प्रदेशाः कियताप्यधिका इति प्रत्येकचिन्तायां न निश्चितम्, अत्र तु-' ताइं चेव पएसट्ठयाए अणंतगुणाइं' इत्यनेन तन्निर्णीतमेव तनोऽनवगतार्थप्रतिपादनार्थत्वात्प्रत्येकावस्थातो भिन्नैवोभयावस्था वस्तूनामिति दर्शनार्थत्वाच्च युक्तमेवोभयार्थताचिन्तनमित्यदोषः । तदेवमुक्तो नवविधोऽप्यनुगम इति-निगमयति । ' से तं अणुगमे ' त्ति । तद्भणने च समर्थिता नैगमव्यवहारयोरनौपनिधिकी द्रव्यानुपूर्वी इति निगमयति । से तं नेगमे' त्यादि, व्याख्याता नैगमव्यवहारनयमतेन अनौपनिधिकी द्रव्यानुपूर्वी ।

(५) साम्प्रतं संग्रहनयमतेन तामेव व्याचिख्यासुराह-

**से किं तं संगहस्स अणोवणिहिआ दव्वाणुपुव्वी ?, संगहस्स अणोवणिहिआ दव्वाणुपुव्वी पंचविहा पण्णत्ता, तं जहा- अट्ठपयपरूवणया १, भंगसमुक्कित्तणया २, भंगोवदंसणया ३, समोआरे ४, अणुगमे ५ । ( सूत्र-६० )**

सामान्यमात्रसंग्रहणशील संग्रहो नयः, अथ तस्य संग्रहनयस्य किं तद्वस्त्वनौपनिधिकीद्रव्यानुपूर्वीति प्रश्नः, आह-ननु' नेगमसंगहववहारे" त्यादिसूत्रक्रमप्रामाण्यान्नैगमानन्तरं संग्रहस्योपन्यासो युक्तः, तत्किमिति व्यवहारमपि निर्दिश्य ततोऽयमुच्यत इति, सत्यम्, किं तु-नैगमव्यवहारयोरत्र तुल्यमतत्वाल्लाघवार्थं युगपत्तन्निर्देशं कृत्वा पश्चात्संग्रहो निर्दिष्ट इत्यदोषः, अत्र निर्वचनमाह-' संगहस्स अणोवणिहिया दव्वाणुपुव्वी पंचविहा पणत्त ' त्ति-संग्रहनयमतेनाप्यनौपनिधिकी द्रव्यानुपूर्वी प्राक्प्ररूपितशब्दार्था पञ्चभिरर्थपदप्ररूपणतादिभिः प्रकारैर्विचार्यमाणत्वात् पञ्चविधा-पञ्चप्रकारा प्रज्ञप्ता, तदेव दर्शयति-' तं जहे ' त्यादि, अत्र व्याख्या पूर्ववदेव ।

**से किं तं संगहस्स अट्ठपयपरूवणया ?, संगहस्स अट्ठपयपरूवणया तिपएसिए आणुपुव्वी चउप्पएसिए आणुपुव्वी ०जाव दसपएसिए आणुपुव्वी संखिज्जपएसिए आणुपुव्वी असंखिज्जपएसिए आणुपुव्वी अणंतपएसिए आणुपुव्वी, परमाणुपुग्गले अणाणुपुव्वी, दुपएसिए अवत्तव्वए । सेत्तं(तं)संगहस्स अट्ठपयपरूवणया । (सूत्र-६१)**

यावत् ' तिपएसिए आणुपुव्वी ' इत्यादि-इह पूर्वमेकस्त्रिप्रदेशिक आनुपूर्वी अनेके त्रिप्रदेशिका आनुपूर्व्य इत्याद्युक्तम्, अत्र तु संग्रहस्य सामान्यवादित्वात्सर्वेऽपि त्रिप्रदेशिका एकैवानुपूर्वी इमां चात्र युक्तिमयमभिधत्ते-त्रिप्रदेशिका स्कन्धास्त्रिप्रदेशिकत्वसामान्याद्व्यतिरेकिणः, अव्यतिरेकिणो वा?, यद्याद्य पक्षस्तर्हि ते त्रिप्रदेशिका स्कन्धा त्रिप्रदेशिका

एव न भवन्ति, तत्सामान्यव्यतिरिक्तत्वात् द्विप्रदेशिकादिवदिति । अथ चरम पक्षस्तर्हि सामान्यमेव ते तद्व्यतिरेकात्तत्स्वरूपवत्सामान्यं चैकस्वरूपमेवेति सर्वेऽपि त्रिप्रदेशिका एकैवानुपूर्वी, एवं चतु प्रदेशिकत्वसामान्याऽव्यतिरेकात्सर्वेऽपि चतु प्रदेशिका एकैवानुपूर्वी, एवं यावदनन्तप्रदेशिकत्वसामान्याऽव्यतिरेकात्सर्वेऽप्यनन्तप्रदेशिका एकैवानुपूर्वी इत्यविशुद्धसंग्रहनयमतं विशुद्धसंग्रहनयमतेन तु सर्वेषां त्रिप्रदेशिकादीनामनन्ताणुकपर्यन्तानां स्कन्धानामानुपूर्वीत्वसामान्याव्यतिरेकाद् व्यतिरिक्ते चानुपूर्वीत्वाभावप्रसक्तात्सर्वाऽप्येकैवानुपूर्वीति । एवमनानुपूर्वीत्वसामान्याव्यतिरेकात्सर्वेऽपि परमाणुपुद्गला एकैवानानुपूर्वी, तथा अवक्तव्यकत्वसामान्यव्यतिरेकात्सर्वेऽपि द्विप्रदेशिकस्कन्धा एकमेवावक्तव्यकमिति सामान्यवादित्वेन सर्वत्र बहुवचनाभाव । 'सेत्तमि' त्यादि, निगमनम् ।

भङ्गसमुत्कीर्त्तनतां निर्दिदिक्षुराह—

एआए णं संगहस्स अट्ठपयपरूवणयाए किं पओअणं ?, एआए णं संगहस्स अट्ठपयपरूवणयाए संगहस्स भंगसमुक्कित्तणया कज्जइ । से किं तं संगहस्स भंगसमुक्कित्तणया ?, संगहस्स भंगसमुक्कित्तणया अत्थि आणुपुव्वी १, अत्थि अणाणुपुव्वी २, अत्थि अवत्तव्वए ३, अहवा-अत्थि आणुपुव्वी अ, अणाणुपुव्वी अ ४, अहवा-अत्थि आणुपुव्वी अ, अवत्तव्वए अ ५, अहवा-अत्थि अणाणुपुव्वी अ, अवत्तव्वए अ ६, अहवा-अत्थि आणुपुव्वी अ अणाणुपुव्वी अ अवत्तव्वए अ ७, एवं सत्तभंगा । सेत्तं संगहस्स भंगसमुक्कित्तणया । एआए णं संगहस्स भङ्गसमुक्कित्तणयाए किं पओअणं ?, एआए णं संगहस्स भंगसमुक्कित्तणयाए संगहस्स भंगोवदंसणया कीरइ । (सूत्र-९२)

'एयाए णमि' त्यादि. अत्रापि व्याख्या कृतैव द्रष्टव्या या वत् 'अत्थि आणुपुव्वी' त्यादि , इहैकवचनान्तास्त्रय, एव प्रत्येकभङ्गा , सामान्यवादित्वेन व्यक्तिबहुत्वाभावतो बहुवचनाभावाद् आनुपूर्व्यादिपदत्रयस्य च त्रयो द्विकयोगा भवन्ति, एकैकस्मिंश्च द्विकयोगे एकवचनान्त एक एव भङ्ग, त्रिकयोगेऽपि एक एवैकवचनान्त इति, सर्वेऽपि सप्त भङ्गा संपद्यन्ते, शेषास्त्वेकोनविंशतिर्बहुवचनसम्भवित्वान्न भवन्ति । अत्र स्थापना-आनुपूर्वी १ अनानुपूर्वी १ अवक्तव्यक १ इति त्रय, प्रत्येकभङ्गा , आनुपूर्वी १ अनानुपूर्वी १ इति प्रथमो द्विकयोग , आनुपूर्वी १ अवक्तव्यक १ इति द्वितीयो द्विकयोग । अनानुपूर्वी अवक्तव्यक इति तृतीयो द्विकयोग । आनुपूर्वी १ अनानुपूर्वी १ अवक्तव्यक १ इति त्रिकयोग , एवमेते सप्त भङ्गा । 'सेत्तमि' त्यादि निगमनम् ।

भङ्गोपदर्शनतां विभणिषुराह—

से किं तं संगहस्स भंगोवदंसणया ?, संगहस्स भंगोवदंसणया तिपएसिया आणुपुव्वी परमाणुपोग्गला अणाणुपुव्वी दुपएसिया अवत्तव्वए, अहवा-तिपएसिया अ परमाणुपोग्गला य आणुपुव्वी य, अणाणुपुव्वी य, अहवा-तिपएसिया य दुपएसिया अ आणुपुव्वी य अवत्तव्वए य, अहवा-परमाणुपोग्गला अ दुपएसिया य अणाणुपुव्वी य अवत्तव्वए य, अहवा-तिपएसिया य परमाणुपोग्गला य दुपएसिया य आणुपुव्वी य अणाणुपुव्वी य अवत्तव्वए य । सेत्तं संगहस्स भंगोवदंसणया । ( सूत्र-९३ )

अत्राऽपि सप्त भङ्गास्त एवाऽर्थकथनपुरस्सरा भावनीया , भावार्थस्तु सर्व. पूर्ववत् , 'सेत्तमि' त्यादि निगमनम् ।

अथ समवताराऽभिधित्सया प्राऽऽह—

से किं तं संगहस्स समोआरे ?, संगहस्स समोआरे संगहस्स आणुपुव्विदव्वाइं कहिं समोयरंति ?, किं आणुपुव्विदव्वेहिं समोयरंति ?, अणाणुपुव्विदव्वेहिं समोयरंति ?, अवत्तव्वगदव्वेहिं समोयरंति ?, संगहस्स आणुपुव्विदव्वाइं आणुपुव्विदव्वेहिं समोयरन्ति, णो अणाणुपुव्विदव्वेहिं समोयरंति, णो अवत्तव्वगदव्वेहिं समोयरंति, एवं दोण्णि वि सट्ठाणे सट्ठाणे समोयरंति । सेत्तं (तं) समोयारे । ( सूत्र-९४ )

'से किं तं संगहस्स समोयारे' इत्यादि । इदं च द्वारं पूर्ववन्निखिलं भावनीयम् ।

अथाऽनुगमं व्याचिख्यासुराह—

से किं तं अणुगमे ?, अणुगमे अट्ठविहे पण्णत्ते, तं जहा-
संतपयपरूवणया १
दव्वपमाणं च २ खित्त ३ फुसणा य ४ ।
कालो य ५ अंतर ६ भा-
ग ७ भावे ८ अप्पाबहुं णऽत्थि ॥ १ + ॥"

'से किं तं अणुगमे' त्ति—अत्रोत्तरम् 'अणुगमे अट्ठविहे पण्णत्ते' इति पूर्वं नवविध उक्तोऽत्र त्वष्टविध एव, अल्पबहुत्वद्वाराभावात्तदेवाष्टविधत्वं दर्शयति-नयं अत्युपदर्शनार्थं 'संतपयगाहा' इयं पूर्वं व्याख्यातैव नवरम् 'अप्पाबहुं नऽत्थि' संग्रहस्य सामान्यवादित्वात्सामान्यस्य च सर्वत्रैकत्वादल्पबहुत्वविचारोऽत्र न संभवतीत्यर्थ ।

तत्र सत्पदप्ररूपणताभिधानार्थमाह—

संगहस्स आणुपुव्विदव्वाइं किं अत्थि ?, नऽत्थि ? । नियमा अत्थि, एवं दोण्णि वि × ।

'संगहस्से' त्यादि, ननु संग्रहविचारे प्रक्रान्ते आनुपूर्वीद्रव्याणि सन्तीत्यनुपपन्नम् आनुपूर्वीसामान्यस्यैवैकस्य तेन नास्तित्वाभ्युपगमात् सत्यं मुख्यरूपतया सामान्यमेवास्ति, गुणभूतं च व्यवहारमात्रनिबन्धनं द्रव्यबाहुल्यमप्यसौ मन्यते।त्यदोष. शेषभावना पूर्ववदिति ।

संगहस्स आणुपुव्विदव्वाइं किं संखेज्जाइं, असंखेज्जाइं,

अणंताइं ? । नो संखिज्जाइं, नो असंखिज्जाइं. नो अणंताइं । निअमा एगो रासी, एवं दोण्णि वि + ।

द्रव्यप्रमाणद्वारे यदुक्तं नियमा 'एगो रासि' त्ति-अत्राह-ननु यदि सङ्ख्येयादिस्वरूपाण्येतानि न भवन्ति तर्ह्येको राशिरित्यपि नोपपद्यते, द्रव्यबाहुल्ये सति तस्योपपद्यमानत्वात्, व्रीह्यादिराशिषु तथैव दर्शनात्, सत्यं किंत्वेको राशिरिति वदत कोऽभिप्राय, बहूनामपि तेषामानुपूर्वीत्वसामान्येनैकेन क्रोडीकृतत्वादेकत्वमेव, किं च यथा विशिष्टैकपरिणामपरिणते स्कन्धे तदारम्भकाऽवयवानां बाहुल्येऽप्येकतैव मुख्या, तद्वदत्राऽऽनुपूर्वीद्रव्यबाहुल्येऽपि तत्सामान्यस्यैकरूपत्वादेकत्वमेव मुख्यमसौ नय प्रतिपद्यते, तद्वशेनैव तेषामानुपूर्वीत्वसिद्धे, अन्यथा तदभावप्रसङ्गात्, तस्मान्मुख्यस्यैकत्वस्याऽनेन कक्षीकृतत्वात्संख्येयरूपतादिनिषेधो गुणभूतानि तु द्रव्याण्याश्रित्य राशिभावोऽपि न विरुध्यते, एवमन्यत्रापि भावनीयमित्यलं प्रपञ्चेन ।

संगहस्स आणुपुव्विदव्वाइं लोगस्स कइ भागे होज्जा ? । किं संखेज्जइभागे होज्जा असंखेज्जइभागे होज्जा । संखेज्जेसु भागेसु होज्जा असंखेज्जेसु भागेसु होज्जा सव्वलोए होज्जा ?, नो संखिज्जइभागे होज्जा नो असंखेज्जइभागे होज्जा नो संखेज्जेसु भागेसु होज्जा णो असंखेज्जेसु भागेसु होज्जा; णिअमा सव्वलोए होज्जा, एवं दोण्णि वि । संगहस्स आणुपुव्विदव्वाइं लोगस्स किं संखेज्जइभागं फुसंति असंखेज्जइभागं फुसंति ? संखेज्जे भागे फुसंति असंखेज्जे भागे फुसंति सव्वलोअं फुसंति, नो संखेज्जइभागं फुसंति नो असंखेज्जइभागं फुसंति । नो संखेज्जे भागे फुसंति नो असंखेज्जे भागे फुसंति । णिअमा सव्वलोगं फुसंति । एवं दोण्णि वि + ।

क्षेत्रद्वारे-'नियमा सव्वलोए होज्ज' त्ति—आनुपूर्वीसामान्यस्यैकरूपत्वात् सर्वलोकव्यापित्वाच्चेति भावनीयम्, (एकत्वमेव मुख्यमसौ नय प्रतिपद्यते, तद्वशेनैव तेषामानुपूर्वीद्वाराण्येव ) एवमितरद्वयेऽप्यभ्यूह्यमिति स्पर्शनाद्वारमप्येवमेव चिन्तनीयमिति ।

संगहस्स आणुपुव्विदव्वाइं कालओ केवच्चिरं होन्ति?, णिअमा सव्वद्धा, एवं दोण्णि वि । संगहस्स आणुपुव्विदव्वाणं कालओ केवच्चिरं अन्तरं होइ ?, नऽत्थि अंतरं, एवं-अणाणुपुव्वीदव्वाणं, अवत्तव्वगदव्वाण वि + ।

कालद्वारेऽपि तत्सामान्यस्य सर्वदा अव्यवच्छिन्नत्वात् त्रयाणामपि सर्वाऽद्धावस्थानं भावनीयमिति, अत एवाऽन्तरद्वारे नास्त्यन्तरमित्युक्तं, तद्भावव्यवच्छेदस्य कदाचिदप्यभावादिति ।

संगहस्स आणुपुव्विदव्वाइं सेसदव्वाणं कति भागे होज्जा ?, किं संखेज्जइ भागे होज्जा असंखेज्जइभागे होज्जा, संखेज्जेसु भागेसु होज्जा असंखेज्जेसु भागेसु होज्जा ? । नो संखेज्जइभागे होज्जा नो असंखेज्जइभागे होज्जा नो संखेज्जेसु भागेसु होज्जा नो असंखेज्जेसु भागेसु होज्जा णियमा तिभागे होज्जा, एवं दोण्णि वि × ।

भागद्वारे-'नियमा तिभागे होज्ज' त्ति—त्रयाणां राशीनामेको राशिस्त्रिभाग एव वर्त्तत इति भाव, यत्तु राशिगतद्रव्याणां पूर्वोक्तमल्पबहुत्वं तदत्र न गण्यते, द्रव्याणां प्रस्तुतनयमते व्यवहारसंवृत्तिमात्रेणैव सत्त्वादिति ।

संगहस्स आणुपुव्विदव्वाइं कतरम्मि भावे होज्जा ?, णिअमा साइपारिणामिए भावे होज्जा, एवं दोण्णि वि + ।

भावद्वारे—'सादिपारिणामिए भावे होज्ज' त्ति—यथा आनुपूर्व्यादिद्रव्याणामेतद्भाववर्त्तित्वं पूर्वं भावितं, तथा अत्रापि भावनीयम्, तेषां यथास्वं सामान्याद्व्यतिरिक्तत्वादिति ।

संगहस्स अप्पाबहुं नऽत्थि । सेत्तं अणुगमे । सेत्तं संगहस्स अणोवणिहिया दव्वाणुपुव्वी । सेत्तं अणोवणिहिया दव्वाणुपुव्वी । (सूत्र-९५)

अल्पबहुत्वद्वाराऽसंभवस्तु उक्त एव, इति समर्थितोऽनुगमं, तत्समर्थने च समर्थिता संग्रहनयमतेनानौपनिधिकी द्रव्यानुपूर्वी, तत्समर्थने च व्याख्याता सर्वथापीयम्, अतः 'सेत्तमि' त्यादि, निगमनत्रयम् । मता अनौपनिधिकी द्रव्यानुपूर्वी ।

( ६ ) साम्प्रतं प्रागुद्दिष्टामेवौपनिधिकीं द्रव्यानुपूर्वीं व्याचिख्यासुराह—

से किं तं उ(ओ)वणिहिया दव्वाणुपुव्वी ?, उवणिहिया दव्वाणुपुव्वी तिविहा पण्णत्ता. तं जहा—पुव्वाणुपुव्वी, पच्छाणुपुव्वी, अणाणुपुव्वी य । ( सूत्र-९६ )

'से किं तमि' त्यादि, अथ केयं प्राग्निर्णीतशब्दार्थमात्रा औपनिधिकी द्रव्यानुपूर्वीति प्रश्न, अत्र निर्वचनम्-औपनिधिकी द्रव्यानुपूर्वी त्रिविधा प्रज्ञप्ता, तद्यथा-पूर्वानुपूर्वीत्यादि, उपनिधिर्निक्षेपो विरचनं प्रयोजनमस्या इत्यौपनिधिकी द्रव्यविषया आनुपूर्वी-परिपाटिर्द्रव्यानुपूर्वी सा त्रिप्रकारा, तत्र विवक्षितधर्मास्तिकायादिद्रव्यविशेषस्तत्समुदाये य पूर्व -प्रथमः तस्मादारभ्यानुपूर्वी-अनुक्रमः-परिपाटिर्निक्षिप्यते-विरच्यते यस्या सा पूर्वानुपूर्वी तत्रैव य. पाश्चात्य -चरमस्तस्मादारभ्य व्यत्ययेनैवानुपूर्वी-परिपाटिर्विरच्यते यस्या सा निरुक्तविधिना पश्चानुपूर्वी न आनुपूर्वी अनानुपूर्वी । यथोक्तप्रकारद्वयातिरिक्तस्वरूपेत्यर्थ ।

तत्राऽऽद्यभेदं तावन्निरूपयितुं प्रश्नमाह—

से किं तं पुव्वाणुपुव्वी ?, पुव्वाणुपुव्वी छव्विहा पण्णत्ता, तं जहा-धम्मत्थिकाए अधम्मत्थिकाए आगासत्थिकाए जीवत्थिकाए पोग्गलत्थिकाए अद्धासमए । सेत्तं पुव्वाणुपुव्वी ।

( धर्मास्तिकायपदव्याख्या 'धम्मत्थिकाय' शब्दे चतुर्थे भागे वक्ष्यते) (अधर्मास्तिकायव्याख्या 'अध(ह)म्मत्थिकाय'

शब्दे प्रथमभागे ५६७ पृष्ठे गता ) ( विशेषत स्वरूपम् ' अत्थिकाय ' शब्दे प्रथमभागे ५१३ पृष्ठे गतम् ) ( आकाशास्तिकायव्याख्या ' आगासत्थिकाय ' शब्देऽस्मिन्नेव भागे प्राग् गता ) अत्र च जीवपुद्गलानां गत्यन्यथानुपपत्तेर्धर्मोऽस्तिकायस्य तेषामेव स्थित्यन्यथानुपपत्तेरधर्मास्तिकायस्य सत्त्वं प्रतिपत्तव्यम् । अनु० । ( जीवास्तिकायव्याख्या ' जीवत्थिकाय ' शब्दे चतुर्थभागे वक्ष्यते ) पुद्गलास्तिकायस्य तु घटादिकार्यान्यथानुपपत्तेः कालोऽप्यस्ति बकुलाशोकचम्पकादिषु पुष्पफलप्रदानस्यानियमेनादर्शनात्, यस्तु तत्र नियामक स काल इति, स्वभावादेव तु तद्भवने " नित्यं सत्त्वमसत्त्वं वा० " इत्यादि दूषणप्रसङ्ग , अत्र बहु वक्तव्यं तत्तु नोच्यते ग्रन्थदुरवगमनाभयादिति । आह—धर्मास्तिकायस्य प्राथम्यम् अधर्मास्तिकायादीनां तु तदनन्तरं क्रमेणेत्थं निर्देश. कुत. सिद्ध. ?, येनात्र पूर्वानुपूर्वीरूपना स्यादिति, अत्रोच्यते-आगमइत्थमेव पठितत्वात्तत्रापि कथमित्थमेव पाठ इति चेत्, उच्यते-धर्मास्तिकाय इत्यत्र यदाद्यं 'धर्मे' ति पदं तस्य माङ्गलिकत्वाद्धर्मास्तिकायस्य प्रथममुपन्यास , ततस्तत्प्रतिपक्षत्वाद्धर्मास्तिकायस्य ततस्तदाधारत्वादाकाशास्तिकायस्य तत. स्वाभाविकाऽमूर्तत्वसाम्याज्जीवास्तिकायस्य ततस्तदुपयोगित्वात्पुद्गलास्तिकायस्य ततो जीवाजीवपर्यायत्वात्तदनन्तरमद्धासमयस्योपन्यास इति पूर्वानुपूर्वीसिद्धिरिति ।

अथ पश्चानुपूर्वी निरूपयितुमाह—

**से किं तं पच्छाणुपुव्वी ?, पच्छाणुपुव्वी, छव्वि० तं०—अद्धासमए पोग्गलत्थिकाए जीवत्थिकाए,आगासत्थिकाए अहम्मत्थि क्राए धम्मत्थिकाए। सेत्तं पच्छा(णु)नुपुव्वी।**

' से किं तं पच्छाणुपुव्वी' इत्यादि, पाश्चात्यादारभ्य प्रतिलोम व्यत्ययेनैव आनुपूर्वी-परिपाटी क्रियते यस्या सा पश्चानुपूर्वी, अत्रोदाहरणमुत्क्रमेण, इदमेवाह- अद्धासमये ' त्यादि, गतार्थमेव ।

अथाऽनानुपूर्वी पूर्वं निरूपयति—

**से किं तं अणानुपुव्वी ?, अणाणुपुव्वी एआए चेव एगाइआए एगुत्तरिआए छगच्छगयाए सेढीए अन्नमन्नब्भासो दु(दु)रूवूणो । सेत्तं अणानुपुव्वी । (सूत्र-६७)**

' से किंतमि ' त्यादि, अत्र निर्वचनम्—' अणाणुपुव्वी एनाए चेव ' इत्यादि, न विद्यते आनुपूर्वी-यथोक्तपरिपाटिद्वयरूपा यस्यां सा अनानुपूर्वी, विवक्षितपदानामनन्तरोक्तक्रमद्वयमुल्लङ्घ्य परस्पराऽसदृशै संभवद्भिर्भङ्गकैर्यस्या विरचना क्रियते साऽनानुपूर्वीत्यर्थ । का पुनरियमित्याह— ' अन्नमन्नब्भासो ' त्ति -अन्योन्यम्-परस्परमभ्यासो गुणनम् अन्योन्याऽभ्यास 'दु(दु)रूवूणो' त्ति-द्विरूपन्यून आद्यन्तरूपरहित. अनानुपूर्वीति संटङ्क । कस्या विषये योऽसावभ्यास इत्याह-श्रेण्याम्-पङ्क्तौ, कस्या पुन श्रेण्यामित्याह- ' एताए चेवे ' ति-अस्यामेवाऽनन्तराधिकृतधर्मास्तिकायादिसंबन्धिन्याम्, कथंभूतायामित्याह-एक आदिर्यस्यां सा एकादिकी एकैक उत्तर प्रवर्द्धमानो यस्या सा एकोत्तरा तस्याम्, पुन कथंभूतायामित्याह-' छगच्छगताए ' त्तिषण्णां गच्छ -समुदाय षड्गच्छस्तं गता-प्राप्ता षड्गच्छगता तस्या धर्मास्तिकायादिवस्तुषट्कविषयायामित्यर्थ' । आदौ व्यवस्थापितैकिकाया पर्यन्ते न्यस्तषट्काया धर्मास्तिकायादिवस्तुषट्कविषयाया पङ्क्तेर्या परस्परगुणने भङ्गकसंख्या भवति सा आद्यन्तभङ्गकद्वयरहिता अनानुपूर्वीति भावार्थ तत्रोर्ध्वाध किलैककादय षट्पर्यन्ता अङ्का स्थापिता., तत्र चैककेन द्विके गुणिते जातौ द्वावेव, ताभ्यां त्रिको गुणितो जाता षट्, तैरपि चतुष्को गुणितो जाता चतुर्विंशति , पञ्चकस्य तु तद्गुणने जातं विंश शतं, षट्कस्य तद्गुणने जातानि विंशत्यधिकानि सप्तशतानि, स्थापना ६-५-४-३-२-१, आगतम्-७२०, अत्राद्यो भङ्ग पूर्वानुपूर्वी, अन्त्यश्च (स्तु) पश्चानुपूर्वीति तदपगमे शेषाण्यष्टादशोत्तराणि सप्तभङ्गकशतान्यनानुपूर्वीति मन्तव्यानि । अत्र च भङ्गकस्वरूपानयनार्थं करणगाथा—

" पुव्वाणुपुव्विहिट्ठा, समयाभेषण कुरु जहा जेट्ठ ।
उवरिमतुल्लं पुरओ, निसेज्ज पुव्वक्कमा सेसे ॥ १ ॥" इति ।

व्याख्या इह विवक्षितपदाना क्रमेण स्थापना पूर्वानुपूर्वीत्युच्यते, तस्या ' हट्ठ ' त्ति-अधस्तात्-द्वितीयादिभङ्गकान् जिज्ञासु ' कुरु ' त्ति—स्थापय एकादीनिपदानीति शेष , कथमित्याह-ज्येष्ठस्यानतिक्रमेण यथाज्येष्ठं यो यस्यादौ स तस्य ज्येष्ठ, यथा द्विकस्यैको ज्येष्ठ त्रिकस्य त्वेककोऽनुज्येष्ठश्चतुष्कादीनां तु स एव ज्येष्ठानुज्येष्ठ इति, एव त्रिकस्य द्विको ज्येष्ठ स एव चतुष्कस्यानुज्येष्ठ पञ्चकादीना तु स एव ज्येष्ठानुज्येष्ठ इत्यादि एवं च सति उपरितनाङ्कस्य अधस्ताज्ज्येष्ठो निक्षिप्यते, तत्रालभ्यमाने अनुज्येष्ठ, तत्राप्यलभ्यमाने ज्येष्ठानुज्येष्ठ इति यथाज्येष्ठ निक्षेप कुर्यात्, कथमित्याह-समयाऽभेदेनेति समय -सङ्केत. प्रस्तुतभङ्गकरचनव्यवस्था तस्य अभेद -अनतिक्रम , तस्य च भेदस्तदा भवति यदा तस्मिन्नेव भङ्गके निक्षिप्ताङ्कसदृशोऽपरोऽङ्क पतति, ततो यथोक्तं समयभेदं वर्जयन्नेव ज्येष्ठाद्यङ्कनिक्षेपं कुर्यात्, उक्तं च-" जहियम्मि उ निक्खित्ते, पुणरवि सो चेव होइ कायव्वो । सो होइ समयभेओ, वज्जेयव्वो पयत्तेण ॥ १ ॥" निक्षिप्तस्य चाङ्कस्य यथासभवं ' पुरउ ' त्ति-अग्रत उपरितनाङ्कतुल्यंसदृशं यथा भवत्येवं न्यसेत्, उपरितनाङ्कसदृशानेवाङ्कान्निक्षिपेदित्यर्थ', ' पुव्वक्कमो सेसे ' त्ति—स्थापितशेषानङ्कान्निक्षिप्ताङ्कस्य यथासभव पृष्ठत -पूर्वक्रमेण स्थापयेदित्यर्थ , य सख्यया लघुरेककादि स प्रथमं स्थाप्यते वस्तुनया महान् द्विकादि स पश्चादिति पूर्वक्रम , पूर्वानुपूर्विलक्षणे प्रथमभङ्गके इत्थमेव दृष्टत्वादिति भाव इत्यक्षरघटना। भावार्थस्तु दिङ्मात्रदर्शनार्थं सुखाधिगमाय च त्रीणि पदान्याश्रित्य तावत् दर्श्यते, तेषा च परस्पराभ्यासे षड् भङ्गका भवन्ति, ते चैवमानीयन्ते-पूर्वानुपूर्वीलक्षणस्तावत्प्रथमो भङ्ग , तद्यथा-१-२-३ अस्याश्च पूर्वानुपूर्व्या अधस्तादङ्करचने क्रियमाणे एककस्य तावज्ज्येष्ठ एव नास्ति, द्विकस्य तु विद्यते एक , स तदधो निक्षिप्यते, तस्य चाग्रतस्त्रिको दीयते, " उवरिमतुल्लमि ' त्यादिवचनात्, पृष्ठ-

तस्तु स्थापितशेषो द्विको दीयते, ततोऽयं द्वितीयो भङ्गः २-१-३ अत्र च त्रिकस्य विद्यते एकको ज्येष्ठः, परं नासौ तदधस्तान्निक्षिप्यते, अग्रतः सदृशाङ्कपातेन समयभेदप्रसङ्गात्, एकस्य तु ज्येष्ठ एव नास्ति, त्रिकस्य तु विद्यते द्विको ज्येष्ठ, स तदधस्तान्निक्षिप्यते, अत्र चाग्रभागस्य सावतंभव एव पृष्ठतस्त्ववस्थापितशेषावेककत्रिकौ क्रमेण स्थाप्येते "पुव्वक्कमो सेसे त्ति" वचनात्, ततस्तृतीयोऽयं भङ्ग १-३-२, अत्राप्येककस्य ज्येष्ठ एव नास्ति त्रिकस्य तु ज्येष्ठोऽस्ति द्विको न च क्षिप्यते अग्रे सदृशाङ्कपातेन समयभेदापत्तेस्ततोऽस्यैवानुज्येष्ठ एककः स्थाप्यते, अग्रतस्तु द्विक "उवरिमतुल्लमि" त्यादिवचनात्, पृष्ठतस्तु स्थापितशेषस्त्रिको दीयते इति चतुर्थोऽयं भङ्ग ३-१-२ एवमनया दिशा पञ्चमषष्ठावप्यभ्यूह्यौ, सर्वेषां चामीषामियं स्थापना-१-२-३ अत्राप्याद्यभङ्गस्य पूर्वानुपूर्वीत्वादन्त्यस्य च पश्चानुपूर्वीत्वान्मध्यमा एव चत्वारोऽनानुपूर्वीत्वेन मन्तव्याः एवमनया दिशा, १-२-३ चतुरादिपदसंभाविनोऽपि भङ्गा भावनीया, भूयासश्चोत्तराध्ययनटीकादिनिर्दिष्टा मस्तुतभङ्गानयनोपाया. १-३-२। सन्ति नचोच्यन्ते अतिविस्तरभयात्, तदर्थिना तु तत एवावधारणीया। तदिदमत्र तात्पर्यं ३-१-२ पूर्वानुपूर्व्यां तावद्धर्मास्तिकायस्य प्रथमत्वमेव तदनुक्रमेणाधर्मास्तिकायादीनां द्वितीयादित्वं पश्चानुपूर्व्यां २-३-१, त्वद्धासमयस्य प्रथमत्वं, पुद्गलास्तिकायादीना तु प्रतिलोमतया द्वितीयादित्वं अनानुपूर्व्यां त्वनियमेन कश्चिद्भङ्गके ३-२-१, कस्यचित्प्रथमादित्यलं विस्तरेण 'सेत्तमि' त्यादि, निगमनं, तदेवमत्र पत्त धर्मास्तिकायादीनि षडपि द्रव्याणि पूर्वानुपूर्व्यादित्वेनोदाहृतानि।

साम्प्रतं त्वेकमेव पुद्गलास्तिकायमुदाहर्तुमाह—

अहवा-उवनिहिआ दव्वाऽऽणुपुव्वी, तिविहा पण्णत्ता, तं जहा-पुव्वाणुपुव्वी, पच्छाणुपुव्वी, अणाणुपुव्वी। से किं तं पुव्वाणुपुव्वी ?, पुव्वाणुपुव्वी परमाणुपोग्गले दुपएसिए तिपएसिए०जाव दसपएसिए संखिज्जपएसिए असंखिज्जपएसिए अणंतपएसिए। सेत्तं पुव्वाणुपुव्वी। से किं त पच्छाणुपुव्वी, पच्छाणुपुव्वी अणंतपएसिए असंखिज्जपएसिए सखिज्जपएसिए ०जाव दसपएसिए०जाव तिपएसिए दुपएसिए परमाणुपोग्गले। सेत्तं पच्छाणुपुव्वी।

'अहवा' इत्यादि, अत्र चौपनिधिक्या द्रव्यानुपूर्व्या ज्ञानमपि त्रैविध्यं यत्पुनरप्युपन्यस्तं तत्प्रकारान्तरभणनप्रस्तावादेवेति मन्तव्यम्।

से किं तं अणाणुपुव्वी ?, अणाणुपुव्वी एआए चेव एगाइआए एगुत्तरिआए अणंतगच्छगयाए सेढीए अन्नमन्नब्भासो दुरूवूणो। सेत्तं अणाणुपुव्वी। सेत्तं उवणिहिआ दव्वाणुपुव्वी। सेत्तं जाणगवतिरित्ता दव्वाणुपुव्वी। सेत्तं नोआगमतो दव्वाणुपुव्वी। सेत्तं दव्वाणुपुव्वी। (सूत्र-६८)

'अणंतगच्छगताए' त्ति-अनैकोत्तरवृद्धिमत्स्कन्धानामनन्तत्वादनन्तानां गच्छ-समुदायोऽनन्तगच्छस्तं गता अनन्तगच्छगता तस्याम्, अत एव भङ्गाः अत्राऽनन्ता एवाऽवसेया इति। शेषभावना च सर्वा पूर्वोक्तानुसारत स्वयमप्यवसेयेति। आह—ननु यथैकः पुद्गलास्तिकायो निर्द्धार्य्य पुनरपि पूर्वानुपूर्व्यादित्वेनोदाहृतः, एवं शेषा अपि प्रत्येकं किमिति नोदाह्रियन्ते ?, अत्रोच्यते-द्रव्याणां क्रमेः परिपाट्यादिलक्षण पूर्वानुपूर्व्यादिविचारः इह प्रक्रान्तः, स च द्रव्यबाहुल्ये सति सम्भवति, धर्माऽधर्माऽऽकाशास्तिकायेषु च पुद्गलास्तिकायवन्नाऽस्ति प्रत्येकं द्रव्यबाहुल्यम्; एकैकद्रव्यत्वात्तेषाम्, जीवास्तिकाये त्वनन्तजीवद्रव्यात्मकत्वादस्ति द्रव्यबाहुल्यं केवलं परमाणुद्विप्रदेशिकादिद्रव्याणामिव जीवद्रव्याणां पूर्वानुपूर्व्यादित्वनिबन्धन प्रथमपाश्चात्यादिभावो नाऽस्ति, प्रत्येकमसंख्येयप्रदेशत्वेन सर्वेषां तुल्यप्रदेशत्वात्परमाणुद्विप्रदेशिकादिद्रव्याणां तु विषमप्रदेशिकत्वादिति अद्धासमयस्यैकत्वादेव तदसम्भव इत्यलमतिचर्चितेन, तदेवं समर्थिता औपनिधिकी द्रव्यानुपूर्वी। तत्समर्थने च समर्थिता प्रागुद्दिष्टा द्विप्रकारापि द्रव्यानुपूर्वी। तत 'सेत्तमि' त्यादि निगमनानि, इति द्रव्यानुपूर्वी समाप्ता; उक्ताद्रव्यानुपूर्वी।

(७) अथ प्रागुद्दिष्टामेव क्षेत्रानुपूर्वीं व्याचिख्यासुराह—

से किं तं खेत्ताऽऽणुपुव्वी ?, खेत्ताणुपुव्वी दुविहा पण्णत्ता, तं जहा-उवणिहिआ य, अणोवणिहिआ य। (सूत्र-६६) तत्थ णं जा सा उवणिहिआ सा ठप्पा +।

'से किं तं खेत्ताणुपुव्वि' त्ति-इह क्षेत्रविषयानुपूर्वी क्षेत्रानुपूर्वी, का पुनरियमित्यत्र निर्वचनं-क्षेत्रानुपूर्वी द्विविधा प्रज्ञप्ता, तद्यथा-औपनिधिकी, पूर्वोक्तशब्दार्था अनौपनिधिकी च। तत्र या सा औपनिधिकी सा स्थाप्या, अल्पवक्तव्यत्वादुपरि वक्ष्यते इत्यर्थ।

तत्थ णं जा अणोवणिहिया सा दुविहा पण्णत्ता, तं जहा-णेगमववहाराणं, संगहस्स य। (सूत्र-१००)

तत्र या असौ अनौपनिधिकी सा नयवक्तव्यताश्रयणाद् द्विविधा प्रज्ञप्ता, तद्यथा—नैगमव्यवहारयो, संग्रहस्य च; सम्मतेति शेषः।

तत्र नैगमव्यवहारसम्मतां तावद्दर्शयितुमाह—

से किं तं णेगमववहाराणं अणोवनिहिआ खेत्ताऽऽणुपुव्वी ?, नेगमववहाराणं अणोवणिहिया खेत्ताणुपुव्वी पंचविहा पण्णत्ता, तं जहा-अट्ठपयपरूवणया १, भंगसमुक्कित्तणया२, भंगोवदंसणया३, समोआरे४, अणुगमे५। से किं तं णेगमववहाराणं अट्ठपयपरूवणया ?, णेगमववहाराणं अट्ठपयपरूवणया तिपएसोगाढे आनुपुव्वी ०जाव दसपएसोगाढे आनुपुव्वी ०जाव संखिज्जपएसोगाढे आनुपुव्वी असंखिज्जपएसोगाढे आनुपुव्वी, एगपएसोगाढे अणाणुपुव्वी, दुपएसोगाढे अवत्तव्वए, तिपएसोगाढा आनुपुव्वीओ ०जाव दसपएसोगाढा आनुपुव्वीओ, ०जाव

असंखिज्जपएसोगाढा आनुपुव्वीओ, एगपएसोगाढा अ-
णानुपुव्वीओ, दुपएसोगाढा अवत्तव्वगाइं । सेत्तं णेगम-
ववहाराणं अट्ठपयपरूवणया । एआए णं णेगमववहाराणं
अट्ठपयपरूवणयाए किं पओअणं ?, एआए णेगमवव-
हाराणं अट्ठपयपरूवणयाए णेगमववहाराणं भंगसमुक्कि-
त्तणया कज्जइ । से किं तं णेगमववहाराणं भंगसमुक्कित्त-
णया ?, णेगमववहाराणं भंगसमुक्कित्तणया अत्थि आ-
नुपुव्वी, अत्थि अणानुपुव्वी, अत्थि अवत्तव्वए, एव
दव्वानुपुव्विगमेणं खेत्तानुपुव्वीएऽवि ते चेव छव्वीसं
भंगा भाणिअव्वा, ०जाव सेत्तं णेगमववहाराणं भंग-
समुक्कित्तणया । एआए णं णेगमववहाराणं भंगसमुक्कित्त-
णयाए किं पओअणं ?, एआए णं णेगमववहाराणं भं-
गसमुक्कित्तणयाए णेगमववहाराणं भंगोवदंसणया क-
ज्जइ । से किं तं णेगमववहाराणं भंगोवदंसणया ?, णे-
गमववहाराणं भंगोवदंसणया तिपएसोगाढे आनुपुव्वी,
एगपएसोगाढे अणानुपुव्वी, दुपएसोगाढे अवत्तव्वए, ति-
पएसोगाढा आणुपुव्वीओ, एगपएसोगाढा अणानुपुव्वी-
ओ, दुपएसोगाढा अवत्तव्वगाइं, अहवा-तिपएसोगाढे अ,
एगपएसोगाढे अ, आणुपुव्वी अ, अणाणुपुव्वी अ । एवं
तहा चेव दव्वाणुपुव्विगमेणं छव्वीसं भंगा भाणिअव्वा
०जाव सेत्तं णेगमववहाराणं भंगोवदंसणया । से किं तं
समोआरे ?, समोआरे णेगमववहाराणं आणुपुव्विदव्वाइं
कहिं समोतरंति ?, किं आणुपुव्विदव्वेहिं समोतरंति ?,
अणाणुपुव्विदव्वेहिं समोतरंति ?, अवत्तव्वगदव्वेहिं समो-
तरंति ?, आणुपुव्विदव्वाइं आणुपुव्विदव्वेहिं समोतरंति,
णो अणाणुपुव्विदव्वेहिं समोतरन्ति णो अवत्तव्वगद-
व्वेहिं समोतरन्ति, एवं तिन्नि वि सट्ठाणे समोअरंति
त्ति भाणिअव्वं, सेत्तं समोतारे । से किं तं अणुगमे ?, अ-
णुगमे नवविहे पन्नत्ते, तं जहा-"संतपयपरूवणया ०जाव
अप्पा बहुं चेव" ?, णेगमववहाराणं आणुपुव्विदव्वाइं किं
अत्थि नऽत्थि ?, णिअमा अत्थि, एवं दोण्णि वि + ।

'से किं तमि' त्यादि, इह व्याख्या-यथा द्रव्यानुपूर्व्यां त-
थैव कर्त्तव्या, विशेष तु वक्ष्याम, तत्र 'तिपएसोगाढे आणु-
पुव्वि' त्ति-त्रिषु नभःप्रदेशेष्ववगाढः-स्थित त्रिप्रदेशावगाढ
त्र्यणुकादिकोऽनन्ताणुकपर्यन्तो द्रव्यस्कन्ध एवानुपूर्वी, ननु
यदि द्रव्यस्कन्ध एवानुपूर्वी कथं तर्हि तस्य क्षेत्रानुपूर्वीत्व ?,
सत्य, किन्तु-क्षेत्रप्रदेशत्रयावगाहपर्यायविशिष्टोऽसौ द्र-
व्यस्कन्धो गृहीतो नाविशिष्ट, ततोऽत्र क्षेत्रानुपूर्व्यधि-
कारात् क्षेत्रावगाढपर्यायस्य प्राधान्यात्सोऽपि क्षेत्रानुपूर्वीति
न दोष., प्रदेशत्रयलक्षणस्य क्षेत्रस्यैवात्र मुख्य क्षेत्रानुपूर्वी-
त्व तदधिकारादेव, किन्तु तदवगाढ द्रव्यमपि तत्पर्यायस्य



प्राधान्येन विवक्षितत्वात् क्षेत्रानुपूर्वीत्वेन न विरुध्यत इति
भाव, यद्येवं तर्हि मुख्यं क्षेत्र परित्यज्य किमिति तदव-
गाढद्रव्यस्यानुपूर्व्यादिभावश्चिन्त्यते ?, उच्यते-'सन्तपय-
परूवणय' त्यादिवक्ष्यमाणबहुतरविचारविषयत्वेन द्रव्यस्य
शिष्यमतिव्युत्पादनार्थत्वात् क्षेत्रस्य तु नित्यत्वेन सदाव-
स्थितमानत्वादचलत्वाच्च प्रायो वक्ष्यमाणविचारस्य सुप्रती-
तत्वेन तथाविधशिष्यमतिव्युत्पत्त्यविषयत्वाद् एवमन्यदपि
कारणमभ्यूह्यमित्यल विस्तरेण । एवं चतुःप्रदेशावगाढा-
दिष्वपि भावना कार्या, यावदसङ्ख्यातप्रदेशावगाढा आनु-
पूर्वीति, असंख्यातप्रदेशेषु चावगाढोऽसख्याताणुकोऽनन्ता-
णुको वा द्रव्यस्कन्धो मन्तव्यो यत पुद्गलद्रव्याणामव-
गाहमित्थं जगद्गुरव प्रतिपादयन्ति-परमाणुराकाशस्यै-
कस्मिन्नेव प्रदेशेऽवगाहते, द्विप्रदेशिकादयोऽसंख्यातप्रदेशि-
कान्तास्तु स्कन्धा प्रत्येकं जघन्यत एकस्मिन्नाकाशप्रदेशे-
ऽवगाहन्ते, उत्कृष्टतस्तु यत्र स्कन्धे यावन्त परमाणवो
भवन्ति स तावत्स्वेव नभःप्रदेशेष्ववगाहते अनन्ताणुक-
स्कन्धस्तु जघन्यतस्तथैव उत्कृष्टतस्त्वसंख्येयेष्वेव नभःप्र-
देशेष्ववगाहते, नाऽनन्तेषु, लोकाकाशस्यैवासंख्येयप्रदेश-
त्वात्, अलोकाकाशे च द्रव्यस्याऽवगाहाऽभावादित्यल प्रस-
ङ्गेन, प्रकृतमुच्यते-तत्रानुपूर्वीप्रतिपक्षत्वादनानुपूर्व्यादिस्व-
रूपमाह-'एगपएसोगाढे अणाणुपुव्वि' त्ति-एकस्मिन्नभ-
प्रदेशेऽवगाढ स्थित एकप्रदेशावगाढ परमाणुसङ्घातस्क-
न्धसङ्घातश्च क्षेत्रतोऽनानुपूर्वीति मन्तव्य, 'दुपएसोगाढे
अवत्तव्वए' त्ति-प्रदेशद्वयेऽवगाढो द्विप्रदेशिकादिस्कन्ध
क्षेत्रतोऽवक्तव्यक, शेषो बहुवचननिर्देशादिको ग्रन्थो यथाऽ-
धस्तद् द्रव्यानुपूर्व्यां व्याख्यातस्तथेहापि तदुक्तानुसारतो
व्याख्येय यावत् द्रव्यप्रमाणद्वारं ।

णेगमववहाराणं आणुपुव्विदव्वाइं किं संखिज्जाइं असं-
खिज्जाइं अणंताइं ?, नो संखिज्जाइं, असंखिज्जाइं, णो अ-
णंताइं एवं दोण्णि वि । * नेगमववहाराणं आणुपुव्विद-
व्वाइं अणंताइं, नो संखिज्जाइं, असंखिज्जाइं, नो अणंताइं
एवं तिण्णि वि × । . .

'णेगमववहाराणं आणुपुव्विदव्वाइं किं संखेज्जाइं' इ-
त्यादिप्रश्न, अत्रोत्तरम्-'नो संखेज्जाइमि' त्यादि त्र्यादिप्र-
देशविभागावगाढानि द्रव्याणि क्षेत्रत आनुपूर्वीत्वेन निर्दि-
ष्टानि, त्र्यादिप्रदेशविभागाश्चासङ्ख्यातप्रदेशात्मके लोकेऽ-
सङ्ख्याता भवन्ति, अतो द्रव्यतया बहूनामपि क्षेत्रावगाह-
मपेक्ष्य तुल्यप्रदेशावगाढानामेकत्वात् क्षेत्रानुपूर्व्यामसङ्ख्या-
तान्येवानुपूर्वीद्रव्याणि भवन्तीति भाव, एवमेकप्रदेशा-
वगाढं बह्वपि द्रव्यं क्षेत्रत एकैवाऽनानुपूर्वीत्युक्तम् । लोके
च प्रदेशा असङ्ख्याता भवन्ति अतस्तत्तुल्यसङ्ख्यत्वादनानु-
पूर्वीद्रव्याण्यप्यसङ्ख्येयानीति, एवं प्रदेशद्वयेऽवगाढ बह्वपि
द्रव्य क्षेत्रत एकमेवावक्तव्यकमुक्त द्विप्रदेशात्मकाश्च विभागा
लोकेऽसङ्ख्याता भवन्त्यतस्तान्यप्यसंख्येयानीति ।

क्षेत्रद्वारे निर्वचनसूत्र-

नेगमववहाराणं आनुपुव्विदव्वाइं लोगस्स किं संखिज्जइ
भागे होज्जा असंखिज्जइभागे होज्जा ०जाव सव्वलोए

होज्जा ?, एगं दव्वं पडुच्च लोगस्स संखिज्जइभागे वा होज्जा असंखिज्जइभागे वा होज्जा संखेज्जेसु भागेसु वा होज्जा असंखेज्जेसु भागेसु वा होज्जा देसूणे वा लोए होज्जा, नाणादव्वाइं पडुच्च निअमा सव्वलोए होज्जा, नेगमववहाराणं अणाणुपुव्विदव्वाणं पुच्छा-एगं दव्वं पडुच्च नो संखिज्जइभागे होज्जा, असंखिज्जइभागे होज्जा, नो संखेज्जेसु नो असंखेज्जेसु नो सव्वलोगे होज्जा, नाणादव्वाइं पडुच्च निअमा सव्वलोए होज्जा, एवं अवत्तव्वगदव्वाणि वि भाणिअव्वाणि ×।

'एगं दव्वं पडुच्च लोगस्स संखेज्जइभागे वा होज्जे' त्यादि' इह स्कन्धद्रव्याणां विचित्ररूपत्वात् कश्चित् स्कन्धो लोकस्य संख्येयं भागमवगाह्य तिष्ठति, अन्यस्त्वसंख्येयम्, अन्यस्तु संख्येयांस्तद्भागानवगाह्य वर्त्तते, अन्यस्त्वसंख्येयान् इत्यतस्तत्स्कन्धद्रव्यापेक्षया सङ्ख्येयाऽऽदिभागवर्त्तित्वं भावनीयम्, विशिष्टक्षेत्रावगाहोपलक्षितानां स्कन्धद्रव्याणामेव क्षेत्रानुपूर्वीत्वेनोक्तत्वादिति भावः। 'देसूणे वा लोए होज्ज' त्ति-देशोने वा लोके आनुपूर्वीद्रव्यं भवेदिति, अत्राह—नन्वचित्तमहास्कन्धस्य सर्वलोकव्यापकत्वं पूर्वमुक्तं तस्य च समस्तलोकवर्त्यसंख्येयप्रदेशलक्षणायां क्षेत्रानुपूर्व्यामवगाढत्वात्परिपूर्णस्यापि क्षेत्रानुपूर्वीत्वं न किंचिद्विरुध्यते, अतः तदपेक्षं क्षेत्रतोऽप्यानुपूर्वीद्रव्यं सर्वलोकव्यापि प्राप्यते, किमिति देशोनलोकव्यापित्वं प्रोच्यते ?, सत्यं, किन्तु-लोकोऽयमानुपूर्व्यनानुपूर्व्यवक्तव्यकद्रव्यैः सर्वदैवाऽशून्य एवैष्टव्य इति समयस्थितिः, यदि चात्रानुपूर्व्या सर्वलोकव्यापिता निर्दिश्येत तदाऽनानुपूर्व्यवक्तव्यकद्रव्याणां निरवकाशतया अभावः प्रतीयेत, ततः—अचित्तमहास्कन्धपूरितेऽपि लोके जघन्यतोऽप्येकः प्रदेशोऽनानुपूर्वीविषयत्वेन प्रदेशद्वयं चाऽवक्तव्यकविषयत्वेन विवक्ष्यते, आनुपूर्वीद्रव्यस्य तत्र सत्त्वेऽप्यप्राधान्यविवक्षणादनानुपूर्व्यवक्तव्यकयोस्तु प्राधान्यविवक्षणादिति भावः, ततोऽनेन प्रदेशत्रयलक्षणेन देशेन हीनोऽत्र लोकः प्रतिपादित इत्यदोषः, उक्तं च पूर्वमुनिभिः—" महखंधा पुण्णे वि, अवत्तव्वगणाणुपुव्विदव्वाइं। जहदेसोगाढाइं, तद्देसेण स लोगूणो ॥ १ ॥" ननु यद्येवं तर्हि द्रव्यानुपूर्व्यामपि सर्वलोकव्यापित्वमानुपूर्वीद्रव्यस्य यदुक्तं तदसङ्गतं प्राप्नोति. अनानुपूर्व्यवक्तव्यकद्रव्याणामनवकाशत्वेन तत्राप्यभावप्रतीतिप्रसङ्गात्, सर्वकाले च तेषामप्यवस्थितिप्रतिपादनात्, नैतदेवं, यतो द्रव्यानुपूर्व्यां द्रव्याणामेवानुपूर्व्यादिभावः उक्तः, न क्षेत्रस्य, तस्य तत्रानधिकृतत्वात्, द्रव्याणां चानुपूर्व्यादीनां परस्परभिन्नानामप्येकत्रापि क्षेत्रेऽवस्थानं न किंचिद्विरुध्यते, एकाऽपवरकान्तर्गतानेकप्रदीपप्रभावस्थानदृष्टान्तादिसिद्धत्वात्, अतो न तत्र कस्याप्यनवकाशः, अत्र तु द्रव्याणामौपचारिक एवानुपूर्व्यादिभावो मुख्यस्तु क्षेत्रस्यैव क्षेत्रानुपूर्व्यधिकारात्, ततो यदि लोकप्रदेशाः सामस्त्येनैवानुपूर्व्या क्रोडीकृताः स्युस्तदा किमन्यदनानुपूर्व्यवक्तव्यकतया प्रतिपद्येत यस्त्विदं येष्वाकाशप्रदेशेष्वानुपूर्व्यस्तेष्वेवेतरयोरपि सद्भावः कथयिष्यते स द्रव्यावगाहभेदेन क्षेत्रभेदस्य विवक्षणात्, अत्र तु तदविवक्षणादिति, तस्मादनानुपूर्व्यवक्तव्यकविषयप्रदेशत्रयलक्षणेन देशेन लोकस्योनता विवक्षितेति। अथवा-आनुपूर्वीद्रव्यस्य स्वावयवरूपा देशाः कल्प्यन्ते यथा पुरुषस्याङ्गुल्यादयः, ततश्च विवक्षिते कस्मिंश्चिद्देशे देशिनोऽसद्भावो विवक्ष्यते, यथा पुरुषस्यैवाङ्गुलीदेशे देशित्वस्यैव तत्र प्राधान्येन विवक्षितत्वादिति भावः, न च वक्तव्यं देशिनो देशो न कश्चिद्भिन्नो दृश्यते, एकान्ताभेदे देशमात्रस्य देशिमात्रस्य चाभावप्रसङ्गात्, ततश्च समस्तलोकक्षेत्रावगाहपर्यायस्य प्राधान्याश्रयणादत्राचित्तमहास्कन्धस्यानुपूर्वीत्वेऽपि देशोन एव लोकः, स्वकीयैकस्मिन्देशे तस्याऽभावविवक्षणात्, तस्मिंश्चानुपूर्व्यव्याप्तदेशे इतरयोरवकाशः सिद्धो भवतीति भावः। न च देशदेशिभावः कल्पनामात्रं सम्मत्यादिन्यायनिर्दिष्टयुक्तिसिद्धत्वात् इत्यलं प्रसङ्गेन। 'नाणादव्वाइमि' त्यादि, त्र्यादिप्रदेशावगाढद्रव्यभेदतोऽत्रानुपूर्वीणां नानात्वं, तैश्च त्र्यादिप्रदेशावगाढैः द्रव्यभेदैः सर्वोऽपि लोको व्याप्त इति भावः। अत्रानानुपूर्वीचिन्तायामेकद्रव्यं प्रतीत्य लोकस्यासंख्येयभागवर्त्तित्वमेव, एकप्रदेशावगाढस्यैवानानुपूर्वीत्वेन प्रतिपादनात्, एकप्रदेशस्य च लोकाऽसंख्येयभागवर्त्तित्वादिति, 'नाणादव्वाइं पडुच्च नियमा सव्वलोए होज्ज' त्ति-एकैकप्रदेशावगाढैरपि द्रव्यभेदैः समस्तलोकव्याप्तेरिति एवम्-' अवत्तव्वगदव्वाणि वि' त्ति-अवक्तव्यकद्रव्यमप्येकं लोकासंख्येयभाग एव वर्त्तते, द्विप्रदेशावगाढस्यैवाऽवक्तव्यकत्वेनाभिधानात्, प्रदेशद्वयस्य च लोकाऽसंख्येयभागवर्त्तित्वादिति, तथा प्रत्येकं द्विप्रदेशावगाढैरपि द्रव्यभेदैः समस्तलोकव्याप्तेर्नानाद्रव्याणामत्रापि सर्वलोकव्यापित्वमवसेयमिति। अत्राऽऽह-नन्वानुपूर्व्यादिद्रव्याणि त्रीण्यपि सर्वलोकव्यापीनीत्युक्तानि, ततश्च येष्वेवाकाशप्रदेशेष्वानुपूर्वी तेष्वेवेतरयोरपि सद्भावः प्रतिपादितो भवति कथं चैतत्परस्परविरुद्धं भिन्नविषयं व्यपदेशत्रयमेकस्य स्यात् ?, अत्रोच्यते-इह त्र्यादिदेशावगाढात् द्रव्याद्भिन्नमेव तावदेकप्रदेशावगाढं ताभ्यां च भिन्नं द्विप्रदेशावगाढं, ततश्चाधेयस्यावगाहकद्रव्यस्य भेदादाधारस्याप्यवगाह्यस्य भेदः स्यादेव, तथा च व्यपदेशभेदो युक्त एव, अनन्तधर्माध्यासिते च वस्तुनि तत्तत्सहकारिसन्निधानात्तत्तद्धर्माभिव्यक्तौ दृश्यत एव समकाल व्यपदेशभेदो, यथा खड्गकुन्तकवचादियुक्ते देवदत्ते खड्गी कुन्ती कवचीत्यादिरिति। इह कचिद्वाचनान्तरे-' अणाणुपुव्विदव्वाइं अव्वत्तव्वगदव्वाणि य जहेव हिट्ठ' त्ति-अतिदेश एव दृश्यते तत्र 'हिट्ठ' त्ति-यथाऽधस्ताद् द्रव्यानुपूर्व्यामनयोः क्षेत्रमुक्तं तथाऽत्रापि ज्ञातव्यमित्यर्थः, तच्च व्याख्यातमेव, इत्येवमन्यत्रापि यथासंभवं वाचनान्तरमवगन्तव्यमिति। गतं क्षेत्रद्वारम्।

णेगमववहाराणं आणुपुव्विदव्वाइं लोगस्स किं संखेज्जइभागं फुसन्ति असंखिज्जइभागं फुसंति संखिज्जे भागे फुसंति॰जाव सव्वलोगं फुसंति ?, एगं दव्वं पडुच्च संखिज्जइभागं वा फुसइ संखिज्जइ भागे असंखिज्जइ भागे संखेज्जे भागे वा असंखेज्जे भागे वा देसूणं वा लोगं फु-

सइ, नाणादव्वाइं पडुच्च णिअमा सव्वलोगं फुसंति, अणाणुपुव्वीदव्वाइं अवत्तव्वगदव्वाइं च जहा खेत्तं नवरं फुसणा भणिअव्वा + ।

स्पर्शनाद्वारमपि चेत्थमेव निखिलं भावनीयं, नवरमत्र कस्याश्चिद्वाचनाया अभिप्रायेणानुपूर्व्यामेकद्रव्यस्य संख्येयभागादारभ्य यावद्देशोनलोकस्पर्शना भवतीति ज्ञायते, अन्यस्यास्त्वभिप्रायेण असंख्येयभागादारभ्य यावत्सम्पूर्णलोकस्पर्शना स्यादित्यवसीयते. एतच्च द्वयमपि युज्यत एव, यतो यदि मुख्यतया क्षेत्रप्रदेशानामानुपूर्वीत्वमङ्गीक्रियते तदा अनानुपूर्व्यवक्तव्यकयोर्निरवकाशताप्रसङ्गात्पूर्ववद्देशोनता लोकस्य वाच्या, अथाऽऽनुपूर्वीरूपे क्षेत्रे अवगाढत्वादचित्तमहास्कन्धस्यैवानुपूर्वीत्वं तर्हि द्रव्यानुपूर्व्यामिवात्रापि संपूर्णता लोकस्य वाच्यति नचात्रानुपूर्व्या सकलस्यापि लोकस्य स्पृष्टत्वादितरयोरवकाशाभाव इति वक्तव्यम् , एकैकप्रदेशरूपे द्विद्विप्रदेशरूपे च क्षेत्रेऽवगाढानां प्रत्येकमसंख्येयानां द्रव्यभेदानां सद्भावतस्तयोरपि प्रत्येकमसंख्येयभेदयो लोके सद्भावाद् , द्रव्यावगाहभेदेन च क्षेत्रभेदस्येह विवक्षितत्वादिति भावः, वृद्धबहुमतश्चायमपि पक्षो लक्ष्यते, तत्त्व तु केवलिनो विदन्ति । क्षेत्रस्पर्शनयोस्तु विशेषः प्राग्निदर्शित एवेति । गतं स्पर्शनाद्वारम् ।

अथ कालद्वारम्—

णेगमववहाराणं आणुपुव्वीदव्वाइं कालओ केवच्चिरं होइ ?, एवं तिण्णि वि, एगं दव्वं पडुच्च जहन्नेणं एगं समयं उक्कोसेणं असंखेज्जं कालं, नाणादव्वाइं पडुच्च निअमा सव्वद्धा × ।

तत्र क्षेत्राऽवगाहपर्यायस्य प्राधान्यविवक्षया त्र्यादिप्रदेशावगाढद्रव्याणामेवाऽऽनुपूर्व्यादिभावः पूर्वमुक्तः, अनन्तेषामेवाऽवगाहस्थितिकाल चिन्तयन्नाह—' एगं दव्वं पडुच्च ' त्यादि, अत्र भावना-इह द्विप्रदेशावगाढस्य वा एकप्रदेशावगाढस्य वा द्रव्यस्य परिणामवैचित्र्यात्प्रदेशत्रयाद्यवगाहभवने आनुपूर्वीव्यपदेशः संजातः, समयं चैकं तद्भावमनुभूय पुनस्तथैव द्विप्रदेशावगाढमेकप्रदेशावगाढं वा तद् द्रव्यं संजातमित्यानुपूर्व्याः समयो जघन्याऽवगाहस्थितिः, यदा तु तदेव द्रव्यमसंख्येयं कालं तद्भावमनुभूय पुनस्तथैव द्विप्रदेशावगाढमेकप्रदेशावगाढं वा जायते तदा उत्कृष्टतया असंख्येयोऽवगाहस्थितिकालः सिध्यति, अनन्तस्तु न भवति, विवक्षितैकद्रव्यस्यैकावगाहेनोत्कृष्टतोऽप्यसंख्यातकालमेवावस्थानादिति, नानाद्रव्याणि तु सर्वाऽद्धा—सर्वकालमेव भवन्ति त्र्यादिप्रदेशावगाढद्रव्यभेदाना सदैवाऽवस्थानादिति, एवं यदा समयमेकं किंचिद् द्रव्यमेकस्मिन् प्रदेशे अवगाढं स्थित्वा ततो द्व्यादिप्रदेशावगाढं भवति तदा अनानुपूर्व्याः समयो जघन्यावगाहस्थितिः, यदा तु तदेवाऽसंख्यातं कालं तद्रूपेण स्थित्वा ततो द्व्यादिप्रदेशावगाढं भवति तदोत्कृष्टतोऽसंख्येयोऽवगाहस्थितिकालः नानाद्रव्याणि तु सर्वकालम् एकप्रदेशावगाढद्रव्यभेदानां सर्वदैव सद्भावादिति, अवक्तव्यकस्य तु द्विप्रदेशावगाढस्य समयादूर्ध्वमेकस्मिस्त्र्यादिषु वा प्रदेशेष्ववगाहप्रतिपत्तौ जघन्यः समयोऽवगाहस्थितिः, असंख्येयकालादूर्ध्वं द्विप्रदेशावगा(हं)ढं परित्यजत उत्कृष्टतोऽसंख्येयोऽवगाहस्थितिकाल सिध्यति, नानाद्रव्याणि तु सर्वकालं, द्विप्रदेशावगाढद्रव्यभेदाना सदैव भावादिति, एवं समानवक्तव्यत्वादतिदिशति एवं ' दोण्ण वि ' त्ति ।

इदानीमन्तरद्वारम्—

णेगमववहाराणं आणुपुव्वीदव्वाणं अंतरं कालओ केवच्चिरं होइ ?, तिण्हं पि एगं दव्वं पडुच्च जहण्णेणं एकं समयं उक्कोसेणं असंखेज्जं कालं, नाणादव्वाइं पडुच्च नऽत्थि अंतरं × ।

' जहण्णेणं एगं समयं ' ति—अत्र भावना-इह यदा त्र्यादिप्रदेशावगाढं किमप्यानुपूर्वीद्रव्यं समयमेकं तस्माद्विवक्षितक्षेत्रादन्यत्रावगाह्य प्रतिपद्य पुनरपि केवलमन्यद्रव्यसंयुक्तं वा तेष्वेव विवक्षितत्र्याद्याकाशप्रदेशेष्ववगाहते । तदैकानुपूर्वीद्रव्यस्य समयो जघन्योऽन्तरकाल प्राप्यते. ' उक्कोसेणं असंखेज्जं कालं ' ति-तदेव यदाऽन्येषु क्षेत्रप्रदेशेष्वसंख्येयं कालं परिभ्रम्य केवलमन्यद्रव्यसंयुक्तं वा समागत्य पुनरपि तेष्वेव विवक्षितत्र्याद्याकाशप्रदेशेष्ववगाहेत तदोत्कृष्टतोऽसंख्येयोऽन्तरकाल प्राप्यते, न पुनर्द्रव्यानुपूर्व्यामिवानन्त , यतो द्रव्यानुपूर्व्यां विवक्षितद्रव्यादन्ये द्रव्यविशेषा अनन्ताः प्राप्यन्ते, तैश्च सह क्रमेण संयोगे। उक्तोऽनन्त काल । अत्र तु विवक्षितावगाहक्षेत्रादन्यत्क्षेत्रमसंख्येयमेव, प्रतिस्थानं चावगाहनामाश्रित्य संयोगस्थितिरप्यसंख्येयकालैव । ततश्च-असंख्येये क्षेत्रे परिभ्रमता द्रव्येण पुनरपि केवलेनान्यसंयुक्तेन वाऽसंख्येयकालात्तेष्वेव नभःप्रदेशेष्वागत्यावगाहनीयम् , न च वक्तव्यमसंख्येयेऽपि क्षेत्रे पौनःपुन्येन तत्रैव परिभ्रमणे कस्मादनन्तोऽपि कालो नोच्यत इति ?, यत इहासंख्येयक्षेत्रे असंख्येयकालमेवान्यत्र तेन पर्यटितव्यम् तत ऊर्ध्वं पुनस्तस्मिन्नेव विवक्षितक्षेत्रे नियमादवगाहनीयं, वस्तुस्थितिस्व(स्वा)भावा(व्या)दिति,तावदेकीय व्याख्यानमादर्शितम् , अन्ये तु व्याचक्षते-यस्मात् त्र्यादिप्रदेशलक्षणाद्विवक्षितक्षेत्रात्तदानुपूर्वीद्रव्यमन्यत्र गतं, तस्य क्षेत्रस्य स्वभावादेवासंख्येयकालादूर्ध्वं तेनैवानुपूर्वीद्रव्येण वर्णगन्धरसस्पर्शसंख्यादिधर्मैः सर्वथा तुल्येनान्येन वा तथाविधाऽऽधेयेन संयोगे सति नियमात्तथाभूताधारतोपपत्तेरसंख्येय एवान्तरकाल इति, तत्त्व तु केवलिनो विदन्ति, गम्भीरत्वात् सूत्रप्रवृत्तेरिति । ' नाणादव्वाइं ' इत्यादि, नहि त्र्यादिप्रदेशावगाढानुपूर्वीद्रव्याणि युगपत्सर्वाण्यपि तद्भावं विहाय पुनस्तथैव जायन्त इति कदाचिदपि संभवति, असंख्येयानां तेषां सर्वदैवोक्तत्वादिति भाव । अनानुपूर्व्यवक्तव्यकद्रव्येष्वप्यसावेवैकानेकद्रव्याश्रया अन्तरकालवक्तव्यता केवलमनानुपूर्वीद्रव्यस्यैकप्रदेशावगाढस्यावक्तव्यकद्रव्यस्य तु द्विप्रदेशावगाढस्य पुनस्तथाभवने अन्तरकालश्चिन्तनीय , शेषा तु व्याख्याद्वयभावना सर्वाऽपि तथैवेति । उक्तमन्तरद्वारम् ।

साम्प्रत भागद्वारमुच्यते—

णेगमववहाराणं आणुपुव्विदव्वाइं सेसदव्वाणं कइ-

भाग होज्जा ?, तिसु वि जहा दव्वाणुपुव्वीए ×।

तत्र च यथा द्रव्यानुपूर्व्यां तथाऽत्राऽप्यानुपूर्वीद्रव्याणि अनानुपूर्व्यवक्तव्यकलक्षणेभ्य: शेषद्रव्येभ्योऽसङ्ख्येयैर्भागैरधिकानि, शेषद्रव्याणि तु तेषामसङ्ख्येयभागे वर्त्तन्त इति। अत्राह-ननु त्र्यादिप्रदेशावगाढानि द्रव्याण्यानुपूर्व्य एकैकप्रदेशावगाढान्यनानुपूर्व्यो द्विद्विप्रदेशावगाढान्यवक्तव्यकानीति प्राक् प्रतिज्ञातम्, एतानि चानुपूर्व्यादीनि सर्वस्मिन्नपि लोके सन्त्यतो युक्त्या विचार्यमाणान्यानुपूर्वीद्रव्याण्येव स्तोकानि ज्ञायन्ते, तथाहि-असत्कल्पनया किल लोके त्रिंशत्प्रदेशा, तत्र चानानुपूर्वीद्रव्याणि त्रिंशदेव, अवक्तव्यकानि तु पञ्चदश आनुपूर्वीद्रव्याणि तु यदि सर्वस्तोकतया त्रिप्रदेशनिष्पन्नानि गण्यन्ते तथापि दशैव भवन्तीति, शेषेभ्य स्तोकान्येव प्राप्नुवन्ति. कथमसंख्येयगुणानि स्युरिति ?, अत्रोच्यते-एकस्मिन्नानुपूर्वीद्रव्ये ये नभःप्रदेशा उपयुज्यन्ते ते यद्यन्यस्मिन्नपि नोपयुज्येरंस्तदा स्यादेवं, तच्च नास्ति यत एकस्मिन्नपि प्रदेशत्रयनिष्पन्ने आनुपूर्वीद्रव्ये ये त्रयः प्रदेशास्त एवाऽन्यान्यरूपतयाऽवगाढनाधेयद्रव्येणाऽऽक्रान्ता सन्त प्रत्येकमनेकेषु त्रिकसंयोगेषु गण्यन्ते, प्रतिसंयोगमाधेयद्रव्यस्य भेदात्, तद्भेदे चाधारभेदादिति भाव.। एवमन्यान्यपि चतुःप्रदेशावगाढाद्याधेयेनाध्यासितत्वात् त एवानेकेषु चतुष्कसंयोगेष्वनेकेषु पञ्चकसंयोगेषु यावदनेकेष्वसङ्ख्येयकसंयोगेषु प्रत्येकमुपयुज्यन्ते, एवं चतुरादिप्रदेशनिष्पन्नेष्वप्यानुपूर्वीद्रव्येषु ये चतुरादयः प्रदेशास्तेषामप्यन्यान्यसंयोगोपयोगिता भावनीया, तस्मादसङ्ख्येयप्रदेशात्मकेप्वस्थित्या व्यवस्थिते लोके यावन्तस्त्रिकसंयोगाद्योऽसंख्येयकसंयोगपर्यन्ता. संयोगा जायन्ते तावन्त्यानुपूर्वीद्रव्याणि भवन्ति, प्रतिसंयोगमाधेयद्रव्यस्य भेदेनावस्थितिसद्भावाद्, आधेयभेदे चाधारभेदात्, नहि नभःप्रदेशा येनैव स्वरूपेणैकस्मिन्नाधेये उपयुज्यन्ते तेनैव स्वरूपेणाधेयान्तरेऽपि, आधेयैकताप्रसङ्गाद्, एकस्मिन्नाधारस्वरूपे तदवगाहाभ्युपगमात्, घटे तत्स्वरूपवत्, तस्मात् त्र्यादिसंयोगानां लोके बहुत्वादानुपूर्वीणां बहुत्वं भावनीयम्। अवक्तव्यकानि तु स्तोकानि द्विकसंयोगानां तत्र स्तोकत्वाद्. अनानुपूर्व्योऽपि स्तोका एव लोकप्रदेशसंख्यमात्रत्वाद् अत्र सुखप्रतिपत्त्यर्थं लोके किल पञ्चाकाशप्रदेशा कल्प्यन्ते, तद्यथा- ⁘ अत्रानुपूर्व्यस्तावत्पञ्चैव प्रतीता, अवक्तव्यकानि त्वष्टौ, द्विकसंयोगानामिहाष्टानामेव संभवाद् आनुपूर्व्यस्तु षोडश संभवन्ति दशानां त्रिकसंयोगानां पञ्चानां चतुष्कसंयोगानामेकस्य तु पञ्चकयोगस्येह लाभाद्, दश त्रिकयोगा कथमिह लभ्यन्ते ? इति चेत्, उच्यते-षड् तावत् मध्यव्यवस्थापितेन सह लभ्यन्ते चत्वारस्तु त्रिकसंयोगादिव्यवस्थापितैश्चतुर्भिरेव केवलैरिति चतुष्कयोगास्तु चत्वारो मध्यव्यवस्थापितेन सह लभ्यन्ते, एकस्तु तद्विरपेक्षैर्दिग्व्यवस्थितैरेवेति सर्वे पञ्च पञ्चकयोगस्तु प्रतीत एवेति, तदेवं प्रदेशपञ्चकप्रस्तारेऽप्यानुपूर्वीणां बाहुल्यं दृश्यते अत एव तदनुसारेण सद्भावतोऽसङ्ख्येयप्रदेशात्मके लोकेऽप्यानुपूर्वीद्रव्याणां शेषेभ्योऽसंख्यातगुणत्वं भावनीयमित्यलं विस्तरेण। उक्तं भागद्वारम्।

साम्प्रतं भावद्वारमाह—

णेगमववहाराणं आणुपुव्वीदव्वाइं कत(य)रंमि भावे होज्जा ?, तिण्णि वि णिअमा साऽऽदिपारिणामिए भावे होज्जा ॥ एवं दोण्णि वि ×।

तत्र च द्रव्याणां त्र्यादिप्रदेशावगाहपरिणामस्य एकप्रदेशावगाहपरिणामस्य द्विप्रदेशावगाहपरिणामस्य च सादिपारिणामिकत्वात् त्रयाणामपि सादिपारिणामिकभाववर्त्तित्वं भावनीयमिति।

अल्पबहुत्वद्वारे—

एएसि णं भंते ! णेगमववहाराणं आणुपुव्विदव्वाणं अणाणुपुव्विदव्वाणं अवत्तव्वगदव्वाण य दव्वट्ठयाए पएसट्ठयाए कतरे कयरेहिंतो अप्पा वा बहुआ वा तुल्ला वा विसेसाहिआ वा, जहा दव्वाणुपुव्वीए तहा भाणिअव्वं, णवरं अणंतगं नऽत्थि ॥ ( गोयमा ! सव्वत्थोवाइं णेगमववहाराणं अवत्तव्वगदव्वाइं दव्वट्ठयाए अणाणुपुव्वीदव्वाइं दव्वट्ठयाए विसेसाहियाइं आणुपुव्वीदव्वाइं दव्वट्ठयाए असंखेज्जगुणाइं, पएसट्ठयाए सव्वत्थोवाइं णेगमववहाराणं अणाणुपुव्वीदव्वाइं अपएसट्ठयाए अवत्तव्वगदव्वाइं पएसट्ठयाए विसेसाहियाइं आणुपुव्वीदव्वाइं पएसट्ठयाए असंखेज्जगुणाइं, दव्वट्ठपएसट्ठयाए सव्वत्थोवाइं णेगमववहाराणं अवत्तव्वगदव्वाइं दव्वट्ठयाए अणाणुपुव्वीदव्वाइं दव्वट्ठयाए अपएसट्ठयाए विसेसाहियाइं अवत्तव्वगदव्वाइं पएसट्ठयाए विसेसाहियाइं आणुपुव्वीदव्वाइं दव्वट्ठयाए असंखेज्जगुणाइं ताइं चेव पएसट्ठयाए असंखेज्जगुणाइं।) सेत्तं अनुगमो (मे)। सेत्तं णेगमववहाराणं अणोवणिहिआ खेत्ताणुपुव्वी। ( सूत्र-१०१ )

इह द्रव्यगणनं द्रव्यार्थता, प्रदेशगणनं प्रदेशार्थता, उभयगणनं तूभयार्थता, तत्रानुपूर्व्यो विशिष्टद्रव्यावगाहोपलक्षितास्त्र्यादिनभःप्रदेशसमुदायास्तावद् द्रव्याणि। समुदायारम्भकास्तु प्रदेशा. अनानुपूर्व्यां त्वेकैकप्रदेशावगाहिद्रव्योपलक्षिता सकलनभःप्रदेशा प्रत्येकं द्रव्याणि, प्रदेशास्तु न संभवन्ति, एकैकप्रदेशद्रव्ये हि प्रदेशान्तरायोगाद्, अवक्तव्यकेषु तु यावन्तो लोके द्विकयोगाः संभवन्ति तावन्ति प्रत्येकं द्रव्याणि तदारम्भकास्तु प्रदेशा इति, शेषा त्वत्र व्याख्या द्रव्यानुपूर्वीवत्कर्त्तव्येति 'नवरं सव्वत्थोवाइं नेगमववहाराणं अव्वत्तव्वगदव्वाइमि' त्यादि, अत्राह-ननु यदा पूर्वोक्तयुक्त्या एकैको नभःप्रदेशोऽनेकेषु द्विकसंयोगेषूपयुज्यते तदा अनानुपूर्वीद्रव्येभ्योऽवक्तव्यकद्रव्याणामेव बाहुल्यमवगम्यते, यत पूर्वोक्तायामपि पञ्चप्रदेशनभःकल्पनायामवक्तव्यकद्रव्याणामेवाऽष्टसंख्योपेतानां पञ्चसंख्येभ्योऽनानुपूर्वीद्रव्येभ्यो बाहुल्यं दृष्टं तत्कथमत्र व्यत्यय प्रतिपाद्यते ?, सत्यम्, अस्त्येतत् केवलं लोकमध्ये, लोकपर्यन्तवर्त्तिनिष्कुटगतास्तु ये कण्टकाकृतयो विश्रेण्या निर्गता एकाकिन प्रदेशास्ते विश्रेणिव्यवस्थितत्वादवक्तव्यक-

स्वाऽयोग्या इत्यनानुपूर्वीसङ्ख्यायामेवान्तर्भवन्ति, अतो लोकमध्यगतां निष्कुटगतां च प्रस्तुतद्रव्यसंख्या मीलयित्वा यदा केवली चिन्तयति तदा अवक्तव्यकद्रव्याण्येव स्तोकानि, अनानुपूर्वीद्रव्याणि तु तेभ्यो विशेषाधिकानि प्रतिपद्यन्ते, अत्र निष्कुटस्थापना-'४४४', अत्र विश्रेणिलिखितौ द्वौ अवक्तव्यकायोग्यौ दृष्टव्याविति, एवम्भूताश्च किलामी सर्वलोकपर्यन्तेषु बहवः सन्तीत्यनानुपूर्वीद्रव्याणां बाहुल्यमित्यलं विस्तरेण । आनुपूर्वीद्रव्याणां तु तेभ्योऽसंख्यातगुणत्वं भावितमेव, शेषं द्रव्यानुपूर्व्यनुसारेण भावनीयम्, नवरमुभयार्थताविचारे आनुपूर्वीद्रव्याणि स्वद्रव्येभ्य प्रदेशार्थतयाऽसंख्येयगुणानि कथम्?, एकैकस्य तावद् द्रव्यस्य त्र्यादिभिरसंख्येयान्तैर्नभःप्रदेशैरारब्धत्वात्, न भःप्रदेशानां च समुदितानामप्यसंख्येयत्वादिति ।' सेत्तमि ' त्यादि निगमनद्वयम् । उक्ता नैगमव्यवहारनयमतेन अनौपनिधिकी क्षेत्रानुपूर्वी ।

अथ तामेव संग्रहमतेन विभणिषुराह—

से किं तं संगहस्स अणोवणिहिआ खेत्ताऽऽणुपुव्वी ?, संगहस्स अणोवणिहिया खेत्ताऽऽणुपुव्वी पंचविहा पण्णत्ता, तं जहा-अट्ठपयपरूवणया१, भंगसमुक्कित्तणया२, भंगोवदंसणया३, समोतारे४, अणुगमे५ । से किं तं संगहस्स अट्ठपयपरूवणया ?, संगहस्स अट्ठपयपरूवणया तिपएसोगाढे आणुपुव्वी चतुप्पएसोगाढे आणुपुव्वी०जाव दसपएसोगाढे आणुपुव्वी संखिज्जपएसोगाढे आणुपुव्वी असंखिज्जपएसोगाढे आणुपुव्वी, एगपएसोगाढे अणाणुपुव्वी, दुपएसोगाढे अवत्तव्वए । सेत्तं संगहस्स अट्ठपयपरूवणया । एआए णं संगहस्स अट्ठपयपरूवणयाए किं पओअणं ?, एआए णं संगहस्स अट्ठपयपरूवणयाए संगहस्स भंगसमुक्कित्तणया कज्जइ । से किं तं संगहस्स भंगसमुक्कित्तणया ?, संगहस्स भंगसमुक्कित्तणया अत्थि आ(णु)नुपुव्वी अत्थि अणाणुपुव्वी अत्थि अवत्तव्वए, अहवा-अत्थि आनुपुव्वी अ अणाणुपुव्वी अ । एवं जहा दव्वानुपुव्वीए संगहस्स तहा भाणिअव्वं ०जाव सेत्तं संगहस्स भंगसमुक्कित्तणया । एआए णं संगहस्स भंगसमुक्कित्तणयाए किं पओअणं ? एआए णं भंगसमुक्कित्तणयाए संगहस्स भंगोवदंसणया कज्जइ । से किं तं संगहस्स भंगोवदंसणया ?, संगहस्स भंगोवदंसणया तिपएसोगाढे आनुपुव्वी एगपएसोगाढे अणानुपुव्वी दुपएसोगाढे अवत्तव्वए, अहवा-तिपएसोगाढे अ एगपएसोगाढे अ आनुपुव्वी अ अणानुपुव्वी अ । एवं जहा दव्वानुपुव्वीए संगहस्स तहा खेत्तानुपुव्वीए वि भाणिअव्वं ०जाव सेत्तं संगहस्स भंगोवदंसणया । से किं तं समोआरे ?, समोआरे संगहस्स आनुपुव्विदव्वाइं कहिं समोतरंति ?, किं आनुपुव्विदव्वेहिं समोतरंति अणानुपुव्विदव्वेहिं समोअरंति अवत्तव्वगदव्वेहिं समोअरंति ?, तिण्णि वि सट्ठाणे समोतरंति । सेत्तं समोआरे । से किं तं अणुगमे अणुगमे अट्ठविहे पण्णत्ते, तं जहा-" संतपयपरूवणया, ०जाव अप्पाबहुं नऽत्थि " ॥ १ ॥ संगहस्स आनुपुव्विदव्वाइं किं अत्थि नऽत्थि निअमा अत्थि । एवं तिण्णि वि सेसगदाराइं जहा दव्वाणुपुव्वीए संगहस्स तहा खेत्तानुपुव्वीए वि भाणिअव्वाइं ०जाव सेत्तं अनुगमे । सेत्तं संगहस्स अणोवणिहिआ खेत्तानुपुव्वी । सेत्तं अणोवनिहिआ खेत्ता(णु)पुव्वी । ( सूत्र १०२ )

' से किं तमि ' त्यादि, इह संग्रहाभिमतद्रव्यानुपूर्व्यनुसारेण विखितं भावनीयम् । नवरं क्षेत्रप्राधान्यादत्र ' तिपएसोगाढा आणुपुव्वी०जाव असंखेज्जपएसोगाढा आणुपुव्वी, एगपएसोगाढा अणाणुपुव्वी, दुपएसोगाढा अवत्तव्वए' इत्यादि वक्तव्यं, शेषं तथैवेति । उक्ता अनौपनिधिकी क्षेत्रानुपूर्वी ।

अथौपनिधिकीं तां निर्दिदिक्षुराह—

से किं तं उवनिहिआ खेत्तानुपुव्वी ?, उवणिहिया खेत्ताणुपुव्वी तिविहा पण्णत्ता, तं जहा-पुव्वाणुपुव्वी१, पच्छानुपुव्वी२, अणानुपुव्वी ३ । से किं तं पुव्वाणुपुव्वी ?, पुव्वाणुपुव्वी अहोलोए तिरिअलोए उड्ढलोए । सेत्तं पुव्वानुपुव्वी । से किं तं पच्छानुपुव्वी ?, पच्छाणुपुव्वी उड्ढलोए तिरिअलोए अहोलोए । सेत्तं पच्छानुपुव्वी । से किं तं अणानुपुव्वी ?, अणाणुपुव्वी, एआए चेव एगाइआए एगुत्तरिआए तिगच्छगयाए सेढीए अन्नमन्नब्भासो दुरूवूणो । सेत्तं अणाणुपुव्वी ।

' से किं तं उवणिहिये'त्यादि । अत्र व्याख्या पूर्ववत्कर्त्तव्या, नवरं तत्र द्रव्यानुपूर्व्यधिकाराद्धर्मास्तिकायादिद्रव्याणि पूर्वानुपूर्व्यादित्वेनोदाहृतानि अत्र तु क्षेत्रानुपूर्व्यधिकारादधोलोकादिक्षेत्रविशेषा इति, (अनु०) (अधोलोकव्याख्या ' अहोलोय ' शब्दे प्रथमभागे ८६२ पृष्ठे गता ) ( तिर्यग्लोकव्याख्या ' तिरियलोय ' शब्दे चतुर्थभागे २३२२ पृष्ठे दर्शयिष्यते ) ( ऊर्ध्वलोकव्याख्या 'उड्ढलोग' शब्दे अस्मिन्नेव भागे वक्ष्यते ) अत्र च जघन्यपरिणामवद् द्रव्ययोगतो जघन्यतया गुणस्थानकेषु मिथ्यादृष्टेरिवादावेवाऽधोलोकस्योपन्यासः, तदुपरि मध्यमद्रव्यवत्त्वान्मध्यमतया तिर्यग्लोकस्य तदुपरिष्टादुत्कृष्टद्रव्यवत्त्वादूर्ध्वलोकस्योपन्यास इति पूर्वानुपूर्वीत्वसिद्धिः, पश्चानुपूर्वी तु व्यत्ययेन प्रतीतैव, अनानुपूर्व्यां तु पदत्रयस्य षड् भङ्गा भवन्ति, ते च पूर्वं दर्शिता एव, शेषभावना त्विह प्राग्वदेवेति । अत्र च क्वचिद्वाचनान्तरे—एकप्रदेशावगाढादीनामसंख्यातप्रदेशावगाढान्तानां प्रथमं पूर्वानुपूर्व्यादिभावः उक्तो दृश्यते, सोऽपि क्षेत्रानुपूर्व्यधिकारादविरुद्ध एव, सुगमत्वाच्चोक्तानुसारेण भावनीय इति ।

१-अभिधेय भागे ... पृष्ठे ... सूत्रे ... [illegible]

साम्प्रत वस्त्वन्तरविषयत्वेन पूर्वानुपूर्व्यादिभावं दिदर्शयिपुरधोलोकादीना च परिभेदज्ञानं शिष्यव्युत्पत्तिं पश्यन्नाह—

अहोलोअखेत्तानुपुव्वी तिविहा पण्णत्ता, तं जहा-पुव्वानुपुव्वी, पच्छानुपुव्वी, अणानुपुव्वी । से किं तं पुव्वानुपुव्वी ?, पुव्वाणुपुव्वी रयणप्पभा सक्करप्पभा वालुअप्पभा पंकप्पभा धूमप्पभा तमप्पभा तमतमप्पभा । सेत्तं पुव्वानुपुव्वी । से किं तं पच्छानुपुव्वी ?, पच्छाणुपुव्वी तमतमा ०जाव रयणप्पभा । सेत्तं पच्छानुपुव्वी । से किं तं अणानुपुव्वी ?, अणाणुपुव्वी एआए चेव एगाइआए एगुत्तरिआए सत्तगच्छगयाए सेढीए अण्णमण्णब्भासो दुरूवूणो । सेत्तं अणानुपुव्वी + ।

अहोलोयखेत्ताणुपुव्वी तिविहे' त्यादि । अधोलोकक्षेत्रविषया आनुपूर्वी, आनुपूर्वी औपनिधिकीति प्रक्रमाल्लभ्यते, सा त्रिविधा प्रज्ञप्ता तद्यथे' त्यादि, शेषं पूर्ववद्भावनीयम् । यावद्रत्नप्रभेत्यादि ( अनु० ) । रत्नप्रभाया. व्याख्या ' रयणप्पभा ' शब्दे षष्ठ भागे दर्शयिष्यामि ) ( शर्कराप्रभायां सर्वो वृत्तान्त ' सक्करप्पभा ' शब्दे सप्तम भागे वक्ष्यते ) ( वालुकाप्रभाविस्तर ' वालुयप्पभा ' शब्दे षष्ठ भागे कथयिष्यते ) ( पङ्कप्रभाया सर्वं वृत्तम् ' पंकप्पभा ' शब्दे पञ्चमे भागे वक्ष्यते ) ( धूमप्रभाया. व्याख्यानम् ' धूमप्पभा ' शब्दे चतुर्थे भागे करिष्यते ) ( तमःप्रभाकीदृशीति ' तमप्पभा ' शब्दे चतुर्थे भागे वक्ष्यते ) ( तमस्तमःप्रभायाः सर्वो विषय ' तमतमप्पभा ' शब्दे चतुर्थे भागे करिष्यते । ) अत्र प्रज्ञापकप्रत्यासन्नेति रत्नप्रभाया आदावुपन्यास कृत, ततः परं व्यवहितव्यवहिततरादित्वात् क्रमेण शर्कराप्रभादीनामिति पूर्वाऽऽनुपूर्वीत्वं, व्यत्ययेन पश्चानुपूर्वीत्वम्, अमीषां च सप्तानां पदानां परस्पराभ्यासे पञ्चसहस्राणि चत्वारिंशदधिकानि भङ्गानां भवन्ति तानि चाद्यन्तभङ्गकद्वयरहितान्यनानुपूर्व्या द्रष्टव्यानि इति, शेषभावना पूर्ववदिति ।

तिरिअलोअखेत्तानुपुव्वी तिविहा पण्णत्ता, तं जहा-पुव्वाणुपुव्वी १ पच्छाणुपुव्वी २, अणाणुपुव्वी ३ । से किं तं पुव्वाणुपुव्वी ?, पुव्वाणुपुव्वी—

" जंबुद्दीवे लवणे, धायइ कालोअ पुक्खरे वरुणे ।
खीरे घय खोअ नंदी, अरुणवरे कुंडले रुअगे ॥ १ ॥
आभरणवत्थगंधे, उप्पल तिलए अ पुढविनिहिरयणे ।
वासहर-दह-नईओ, विजया वक्खार-कप्पिंदा ॥ २ ॥
कुरुमंदर-आवासा, कूडा नक्खत्तचंदसूरा य ।
देवे नागे जक्खे, भूए अ सयंभुरमणे अ ॥ ३ ॥
सेत्तं पुव्वाणुपुव्वी ।

से किं तं पच्छाणुपुव्वी ?, पच्छाणुपुव्वी सयंभूरमणे अ ०जाव जंबुद्दीवे । सेत्तं पच्छाणुपुव्वी । से किं तं अणाणुपुव्वी ?, अणाणुपुव्वी एआए चेव एगाइआए एगुत्तरिआए असंखेज्जगच्छगयाए सेढीए अन्नमण्णब्भासो दुरूवूणो । सेत्तं अणाणुपुव्वी । ( सूत्र-१०३ )

तिर्यग्लोके क्षेत्रानुपूर्व्यां 'जंबुद्दीवे' इत्यादि गाथाव्याख्या-द्वाभ्यां प्रकाराभ्यां स्थानदातृत्वाहाराद्युपष्टम्भहेतुत्वलक्षणाभ्यां प्राणिनः पान्तीति द्वीपाः—जन्त्वावासभूतक्षेत्रविशेषाः, सह मुद्रया-मर्यादया वर्त्तन्त इति समुद्राः-प्रचुरजलोपलक्षिताः क्षेत्रविशेषा एव, एते च तिर्यग्लोके प्रत्येकमसंख्येया भवन्ति, तत्र समस्तद्वीपसमुद्राभ्यन्तरभूतत्वेनादौ तावज्जम्बूवृक्षेणोपलक्षितो द्वीपो जम्बूद्वीपस्ततस्तं परिक्षिप्य स्थितो लवणरसास्वादनीरपूरितः समुद्रो लवणसमुद्रः एकदेशेन समुदायस्य गम्यमानत्वात्, एवं पुरस्तादपि यथासम्भवं द्रष्टव्यं ' धायइकालोय ' त्ति—ततो लवणसमुद्रं परिक्षिप्य स्थितो धातकीवृक्षखण्डोपलक्षितो द्वीपो धातकीखण्डस्तत्परितोऽपि शुद्धोदकरसास्वादः कालोदधिसमुद्रः तं च परिक्षिप्य स्थितः पुष्करैः-पद्मवरैरुपलक्षितो द्वीप पुष्करवरद्वीप, तत्परितोऽपि शुद्धोदकरसास्वाद एव पुष्करोद समुद्र, अनयोश्च द्वयोरप्येकेनैव पदेनात्र संग्रहो द्रष्टव्य ' पुक्खरे ' त्ति-एवमुत्तरत्रापि तत –' वरुणे ' त्ति-वरुणवरो द्वीपस्ततो वारुणीरसास्वादो वारुणोद समुद्र ' खीर ' त्ति-क्षीरवरो द्वीप क्षीररसास्वाद क्षीरोद समुद्र ' घय ' त्ति-घृतवरो द्वीप घृतरसास्वादो घृतोद समुद्र ' खोय ' त्ति-इक्षुवरो द्वीपः इक्षुरसास्वाद एवेक्षुरस समुद्र, इत ऊर्ध्वं सर्वेऽपि समुद्रा द्वीपसदृशनामानो मन्तव्या, अपरं च-स्वयंभूरमणवर्जाः सर्वेऽपीक्षुरसास्वादा, तत्र द्वीपनामान्यमूनि, तद्यथा-नन्दी-समृद्धिस्तस्या ईश्वरो द्वीपो नन्दीश्वर, एवम्-अरुणवर, अरुणावास कुण्डलवर, शङ्खवर, रुचकवर, इत्येव षड् द्वीपनामानि चूर्णौ लिखितानि दृश्यन्ते, सूत्रे तु–' नन्दी अरुणवरे कुण्डले रुयगे ' इत्येतस्मिन् गाथादले चत्वार्येव तान्युपलभ्यन्ते अतश्चूर्णिलिखितानुसारेण रुचकस्त्रयोदश, सूत्रलिखितानुसारतस्तु स एवैकादशो भवति, तत्त्वं तु केवलिनो विदन्तीति गाथार्थ । इदानीमनन्तरोक्तद्वीपसमुद्राणामवस्थितिस्वरूपप्रतिपादनार्थं शेषास्तु नामाभिधानार्थमाह–

" जंबुद्दीवाओ खलु निरंतरा सेसया असंखइमा ।
भुयगवरकुसवरा वि य,कोंचवराऽऽभरणमाई य " ॥ १ ॥ इति ।

( अस्याः गाथाया ) व्याख्या-एते पूर्वोक्ताः सर्वेऽपि जम्बूद्वीपादारभ्य निरन्तरा नैरन्तर्येण व्यवस्थिता, न पुनरमीषामन्तरे अपरो द्वीप कश्चनापि समस्तीति भाव । ये तु शेषका भुजगवरादय इत ऊर्ध्वं वक्ष्यन्ते ते प्रत्येकमसंख्यातनमा द्रष्टव्या, तथा हि–' भुयगवरे ' त्ति-पूर्वोक्ताद् रुचकवराद् द्वीपादसंख्येयान् द्वीपसमुद्रान् गत्वा भुजगवरो नाम द्वीप समस्ति । 'कुसवर' त्ति-ततोऽप्यसंख्येयांस्तान् गत्वा कुशवरो नामद्वीप समस्ति, अपिचेति समुच्चये कोंचवर त्ति-ततोऽप्यसंख्येयांस्तानतिक्रम्य क्रौञ्चवरो नाम द्वीप समस्ति 'आभरणमाई य' त्ति-एवमसंख्येयान् द्वीपसमुद्रानुल्लङ्घ्याऽऽभरणाऽऽदयश्च-आभरणादिनामसदृशनामानश्च द्वीपा वक्तव्या, समुद्रास्तु तत्सदृशना-

मान एव भवन्तीत्युक्तमेवेति गाथार्थः । इयं च गाथा कस्यांचिद्वाचनायां न दृश्यत एव केवलं क्वाऽपि वाचनाविशेषे दृश्यते टीकाचूर्ण्योस्तु तद्व्याख्यानमुपलभ्यत इत्यस्माभिरपि व्याख्यातेति। तान्येवाऽऽभरणादीनाह-"आभरणवत्थे" त्यादि गाथाद्वयम् , असंख्येयानां संख्येयाना द्वीपानामन्ते आभरणवस्त्रगन्धोत्पलतिलकादिपर्यायैर्संज्ञानामक एकैकोऽपि द्वीपस्तावद्वक्तव्यो यावदन्ते स्वयंभूरमणो द्वीपः शुद्धोदकस्य स्वयंभूरमण एव समुद्र इति गाथाद्वयभावार्थः । ननु यद्यवं तह्यसंख्येयान् द्वीपानतिक्रम्य ये वर्त्तन्ते तेषामेव द्वीपानामेतानि नामान्याख्यातानि, ये त्वन्तरालेषु द्वीपास्ते किंनामका इति वक्तव्यम् ?, सत्यम् लोके पदार्थानां शङ्खध्वजकलशस्वस्तिकश्रीवत्सादीनि यावन्ति शुभनामानि तैः सर्वैरप्युपलक्षितास्तेषु द्वीपाः प्राप्यन्त इति स्वयमेव द्रष्टव्यं, यत उक्तम्-" दीवसमुद्दा णं भंते ! केवइया नामधिज्जेहिं पण्णत्ता ?, गोयमा ! जावइया लोए सुभा नामा सुभा रूवा सुभा गंधा सुभा रसा सुभा फासा एव-या ण दीवसमुद्दा नामधिज्जेहिं पण्णत्ता" इति । संख्या तु सर्वेषामसंख्येयस्वरूपा "उद्धारसागराण अड्ढाइज्जाण जत्तिया समया। दुगुणा दुगुणपवित्थरदीवोदहिरज्जु एवइया ॥ १ ॥ " इति गाथा प्रतिपादिता द्रष्टव्या, तदेवमत्र क्रमोपन्यासे पूर्वानुपूर्वी व्यत्ययेन पश्चानुपूर्वी, अनानुपूर्वी त्वमीषामसंख्येयाना पदानां परस्पराभ्यासे येऽसंख्येया भङ्गा भवन्ति भङ्गकद्वयोना तत्स्वरूपा द्रष्टव्येति ।

उड्ढलोअखेत्ताणुपुव्वी तिविहा पण्णत्ता, तं जहा-पुव्वाणुपुव्वी पच्छाणुपुव्वी, अणाणुपुव्वी । से किं तं पुव्वाणुपुव्वी ?, पुव्वाणुपुव्वी-सोहम्मे ईसाणे सणंकुमारे माहिंदे बंभलोए लंतए महासुक्के सहस्सारे आणए पाणए आरणे अच्चु(ए)ते गेवेज्जविमाणे अणुत्तरविमाणे ईसिपब्भारा । सेत्तं पुव्वानुपुव्वी । से किं तं पच्छाणुपुव्वी ?, पच्छाणुपुव्वी ईसिप्पब्भारा ०जाव सोहम्मे । सेत्तं पच्छाणुपुव्वी । से किं तं अणाणुपुव्वी ?, अणाणुपुव्वी एआए चेव एगाइआए एगुत्तरिआए पण्णरसगच्छगयाए सेढीए अण्णमण्णब्भासो दुरूवूणो । सेत्तं अणाणुपुव्वी । अहवा-उवनिहिआ खेत्ताऽऽणुपुव्वी तिविहा पण्णत्ता, तं जहा-पुव्वाणुपुव्वी, पच्छाणुपुव्वी, अणाणुपुव्वी । से किं तं पुव्वाणुपुव्वी ?, पुव्वाणुपुव्वी-एगपएसोगाढे दुपएसोगाढे दसपएसोगाढे संखिज्जपएसोगाढे ०जाव असंखिज्जपएसोगाढे । सेत्तं पुव्वाणुपुव्वी ॥ से किं तं पच्छाणुपुव्वी ?, पच्छाणुपुव्वी-असंखिज्जपएसोगाढे संखिज्जपएसोगाढे ०जाव एगपएसोगाढे । सेत्तं पच्छाणुपुव्वी ॥ से किं तं अणाणुपुव्वी ?, अणाणुपुव्वी-एआए चेव एगाइआए एगुत्तरिआए असंखिज्जगच्छगयाए सेढीए अन्नमन्नब्भासो दुरूवूणो । सेत्तं अणाणुपुव्वी । सेत्तं उवनिहिआ खेत्ताणुपुव्वी । सेत्तं खेत्ताणुपुव्वी । ( सूत्र १०४ )

ऊर्ध्वलोकक्षेत्रानुपूर्व्याम्-'सोहम्मे' त्यादि । सकलविमानप्रधानसौधर्मावतंसकाभिधानविमानविशेषोपलक्षितत्वात्सौधर्म , एवं सकलविमानप्रधानेशानावतंसकविमानविशेषोपलक्षित ईशान , एवं तत्तद्विमानावतंसकप्राधान्येन तन्नाम वाच्यं, यावत्सकलविमानप्रधानाच्युतावतंसकाभिधानविमानविशेषोपलक्षितोऽच्युत', लोकपुरुषस्य ग्रीवाविभागे भवानि विमानानि ग्रैवेयकानि, नैषामन्यान्युत्तराणि विमानानि सन्तीत्यनुत्तरविमानानि, ईषद्भारक्रान्तपुरुषवन्नता अन्तेष्विति ईषत्प्राग्भारेति । अत्र प्रज्ञापकप्रत्यासत्ते आदौ सौधर्मस्योपन्यास , ततो व्यवहितादिरूपत्वात् क्रमेणेशानादीनामिति पूर्वानुपूर्वीत्वं, शेषभावना तु पूर्वोक्तानुसारतः कर्त्तव्येति । क्षेत्रानुपूर्वी समाप्ता । उक्ता क्षेत्रानुपूर्वी ।

( ८ ) साम्प्रतं प्रागुद्दिष्टामेव क्रमप्राप्तां कालानुपूर्वीं व्याचिख्यासुराह—

से किं तं कालाणुपुव्वी?, कालाणुपुव्वी दुविहा पण्णत्ता, तं जहा-उवनिहिआ य, अणोवणिहिआ य ॥(सूत्र-१०५)॥ तत्थ णं जा सा उवनिहिआ सा ठप्पा । तत्थ णं जा सा अणोवणिहिआ सा दुविहा पण्णत्ता, तं जहा-णेगमववहाराणं, संगहस्स य । (सूत्र-१०६) । से किं त नेगमववहाराणं अणोवनिहिआ कालाणुपुव्वी ?, अणोवणिहिया कालाणुपुव्वी पंचविहा पण्णत्ता, तं जहा-अट्ठपयपरूवणया १, भंगसमुक्कित्तणया २, भंगोवदंसणया ३, समोआरे ४, अणुगमे ५ । ( सूत्र-१०७ ) । से किं तं णेगमववहाराणं अट्ठपयपरूवणया ?, णेगम० तिसमयट्ठिइए आणुपुव्वी ०जाव दससमयट्ठिईए आणुपुव्वी संखिज्जसमयट्ठिईए आणुपुव्वी असंखिज्जसमयट्ठिईए आणुपुव्वी एगसमयट्ठिईए अणाणुपुव्वी दुसमयट्ठिईए अवत्तव्वए, तिसमयट्ठिइयाओ आणुपुव्वीओ एगसमयट्ठिइआओ अणाणुपुव्वीओ दुसमयट्ठिइआ अवत्तव्वगाइं । सेत्तं नेगमववहाराणं अट्ठपयपरूवणया । एआए णं णेगमववहाराणं अट्ठपयपरूवणयाए किं पओयणं ?, एयाए णं णेगमववहाराणं अट्ठपयपरूवणयाए नेगमववहाराणं भंगसमुक्कित्तणया कज्जइ, ( सूत्र-१०८ ) । से किं तं णेगमववहाराणं भंगसमुक्कित्तणया ?, णेगम० अत्थि आणुपुव्वी, अत्थि अणाणुपुव्वी, अत्थि अवत्तव्वए, एवं दव्वाणुपुव्वीगमेणं कालाणुपुव्वीए वि ते चेव छव्वीसं २६ भंगा भाणिअव्वा ०जाव सेत्तं णेगमववहाराणं भंगसमुक्कित्तणया । एआए णं णेगमववहाराणं भंगसमुक्कित्तणयाए किं पओअणं ?, एआए णं णेगमववहाराणं भंगसमुक्कित्तणयाए णेगमववहाराणं भंगोवदंसणया कज्जइ, ( सूत्र-१०९ ) । से किं तं

णेगमववहाराणं भंगोवदंसणया ?, णेगमव० तिसमयट्ठिईए आणुपुव्वी, एगसमयट्ठिईए अणाणुपुव्वी, दुसमयट्ठिईए अवत्तव्वए, तिसमयट्ठिईआ आणुपुव्वीओ, एगसमयट्ठिइआ अणाणुपुव्वीओ, दुसमयट्ठिईआ अवत्तव्वगाइं। अहवा- तिसमयट्ठिईए अ एगसमयट्ठिईए अ आणुपुव्वी अ अणाणुपुव्वी अ, एवं तहा चेव दव्वाणुपुव्वीगमेणं छव्वीसं २६ भंगा भाणिअव्वा०जाव सेत्तं नेगमववहाराणं भंगोवदंसणया, (सूत्र-११०)। से किं तं समोतारे ?, समोआरे णेगमववहाराणं आणुपुव्वीदव्वाइं कहिं समोतरंति ?, किं आणुपुव्वीदव्वेहिं समोतरंति अणाणुपुव्वीदव्वेहिं, एवं तिन्नि वि सट्ठाणे समोतरंति इति भाणिअव्वं। सेत्तं समोतारे। ( सूत्र-१११ )।

से किं तं अणुगमे ?, अणुगमे णवविहे पण्णत्ते, तं जहा- " संतपयपरूवणया ०जाव अप्पाबहुं चेव " ॥ १ ॥ ( सूत्र-११२ × )

' से किं तं कालानुपुव्वी ' त्यादि । अत्राक्षरगमनिका यथा द्रव्यानुपूर्व्यां तथा कर्त्तव्या, यावत्—' तिसमयट्ठिईए आणुपुव्वी ' त्यादि, त्रय: समया: स्थितिर्यस्य परमाणुद्व्यणुकत्र्यणुकाद्यनन्ताणुकस्कन्धपर्यन्तस्य द्रव्यविशेषस्य सः त्रिसमयस्थितिर्द्रव्यविशेष आनुपूर्वीति । आह—ननु यदि द्रव्यविशेष एवात्राप्यानुपूर्वी कथं तर्हि तस्य कालानुपूर्वीत्वम् ?, नैतदेवम्—अभिप्रायाऽपरिज्ञानात् ,यत: समयत्रयलक्षणकालपर्यायविशिष्टमेव द्रव्यं गृहीतं, ततश्च पर्यायपर्यायिणो: कथञ्चिदभेदात्कालपर्यायस्य चेह प्राधान्येन विवक्षितत्वाद् द्रव्यस्यापि विशिष्टस्य कालानुपूर्वीत्वं न दुष्यति, मुख्यं समयत्रयस्यैवात्रानुपूर्वीत्व, किन्तु-तद्विशिष्टद्रव्यस्यापि तदभेदोपचारात्तदुक्त इति भाव: । एव चतु समयस्थित्यादिष्वपि वाच्यं, यावद्दश समया स्थितिर्यस्य परमाण्वादिद्रव्यसङ्घातस्य स तथा । संख्येया समया स्थितिर्यस्य परमाण्वादे: स तथा । असंख्येया: समया: स्थितिर्यस्य परमाण्वादे: स तथा, " अनन्तास्तु समया द्रव्यस्य स्थितिरेव न भवति" स्वाभाव्यादित्युक्तमवेति, शेषा बहुवचननिर्देशादिभावना पूर्ववदेव एकसमयस्थितिकं परमाण्वाद्यनन्ताणुकस्कन्धपर्यन्तं द्रव्यमनानुपूर्वी, द्विसमयस्थितिकं तु तदेवावक्तव्यकमिति, शेषं पूर्वोक्तानुसारेण सर्वं भावनीयम् ।

' णेगमववहाराणं आणुपुव्वीदव्वाइं किं अत्थि णऽत्थि ?, नियमा तिन्नि वि अत्थि । नेगमववहाराणं आणुपुव्वीदव्वाइं किं संखेज्जाइं ?, असंखेज्जाइं ?, अणंताइं ? । तिन्नि वि नो संखिज्जाइं, असंखेज्जाइं, नो अणंताइं × ।

' यावद् द्रव्यप्रमाणद्वारं—'नो संखेज्जाइं, असंखेज्जाइं, नो अणंताइं ' इति । अस्य भावना इह त्र्यादिसमयस्थितिकानि परमाण्वादिद्रव्याणि लोके यद्यपि प्रत्येकमनन्तानि प्राप्यन्ते तथाऽपि समयत्रयलक्षणाया स्थितेरेकस्वरूपत्वात् काल-(स्य चेह) स्यैवेह प्राधान्येन द्रव्यबहुत्वस्य गुणीभूतत्वात् त्रिसमयस्थितिकैरनन्तैरप्येकमेवानुपूर्वीद्रव्यम् , एवं चतु:समयलक्षणाया स्थितेरेकत्वादनन्तैरपि चतु:समयस्थितिकद्रव्यैरेकमेवानुपूर्वीद्रव्यम् , एवं समयवृद्ध्या तावन्नेयं यावदसंख्येयसमयलक्षणाया स्थितेरेकत्वादनन्तैरप्यसंख्येयसमयस्थितिकैर्द्रव्यैरेकमेवानुपूर्वीद्रव्यमिति, एवमसंख्येयान्येवात्रानुपूर्वीद्रव्याणि भवन्ति, एवमनानुपूर्व्यवक्तव्यकद्रव्याण्यपि प्रत्येकमसंख्येयानि वाच्यानि, अत्राह—नन्वेकसमयस्थितिकद्रव्यस्यानानुपूर्वीत्वं द्विसमयस्थितिकस्य त्ववक्तव्यकत्वमुक्तम् , तत्र यद्यप्येकद्विसमयस्थितीनि परमाण्वादिद्रव्याणि लोके प्रत्येकमनन्तानि लभ्यन्ते तथाऽप्यनन्तरोक्तत्वादुक्तयुक्त्यैव समयलक्षणाया द्विसमयलक्षणायाश्च स्थितेरेकैकरूपत्वाद् द्रव्यबाहुल्यस्य च गुणीभूतत्वादेकमेवानानुपूर्वीद्रव्यमेकमेव चाऽवक्तव्यकद्रव्यं वक्तुं युज्यते, न तु प्रत्येकमसंख्येयत्वम् , अथ द्रव्यभेदेन भेदोऽङ्गीक्रियते , तर्हि प्रत्येकमानन्त्यप्रसङ्गः एकसमयस्थितीनां द्विसमयस्थितीनां च द्रव्याणां प्रत्येकमनन्तानां लोके सद्भावादिति,सत्यमेतत् , किन्त्वेकसमयस्थितिकमपि यदवगाहभेदेन वर्त्तते तदिह भिन्नं विवक्ष्यते, एवं द्विसमयस्थितिकमप्यवगाहभेदेन भिन्नं चिन्त्यते, लोके च असंख्येया अवगाहभेदाः सन्ति । प्रत्यवगाहं चैकद्विसमयस्थितिकाऽनेकद्रव्यसम्भवादनानुपूर्व्यवक्तव्यकद्रव्याणामाधारक्षेत्रभेदात् प्रत्येकमसंख्येयत्वं न विहन्यत इति अनया दिशा अतिगहनमिदं सूक्ष्मधिया पर्यालोचनीयमिति ।

क्षेत्रद्वारे—

नेगमववहाराणं आणुपुव्वीदव्वाइं लोगस्स किं संखिज्जइभागे होज्जा ? असंखिज्जइभागे होज्जा ? संखेज्जेसु भागेसु वा होज्जा ? असंखेज्जेसु भागेसु वा होज्जा ? सव्वलोए वा होज्जा ?। एगं दव्वं पडुच्च लोगस्स संखेज्जइभागे वा होज्जा असंखेज्जइभागे वा होज्जा ? संखेज्जेसु वा भागेसु होज्जा ? असंखेज्जेसु वा भागेसु होज्जा ? देसूणे वा लोए होज्जा ?, नाणादव्वाइं पडुच्च नियमा सव्वलोए होज्जा, एवं अणाणुपुव्वीदव्वं, आएसंतरेण वा सव्वपुच्छासु होज्जा, एवं अवत्तव्वगदव्वाणि वि भाणिअव्वाणि जहा खेत्ताणुपुव्वीए । फुसणा कालाणुपुव्वीए वि तहा चेव भाणिअव्वा । (सूत्र-११२ + )

" एगं दव्वं पडुच्च लोगस्स संखेज्जइभागे वा होज्जा ०जाव देसूणे वा लोगे होज्ज ' त्ति—इह त्र्यादिसमयस्थितिकद्रव्यस्य तत्तदवगाह(ह)नसम्भवतः संख्येयादिभागवर्त्तित्वं भावनीयम् , यदा त्र्यादिसमयस्थितिकः सूक्ष्मपरिणाम स्कन्धो देशोने लोकेऽवगाहते तदैकस्यानुपूर्वीद्रव्यस्य देशोनलोकवर्त्तित्वं भावनीयम् , अन्ये तु-" पदेसूणे वा लोगे होज्ज " त्ति पाठं मन्यन्ते, तत्राप्ययमेवार्थः , प्रदेशस्यापि विवक्षया देशत्वादिति, संपूर्णेऽपि लोके कस्मादिदं न प्राप्यत इति चेद् , उच्यते–सर्वलोकव्यापी अचित्तमहास्कन्ध एव प्राप्यते, स च तद्व्यापितया एकमेव समयमव-

तिष्ठते, तत ऊर्ध्वमुपसहारस्योक्तत्वात्, नचैकसमयस्थिति-
कमानुपूर्वीद्रव्यं भवितुमर्हति, त्र्यादिसमयस्थितिकत्वेन त
स्योक्तत्वात्, तस्मात् त्र्यादिसमयस्थितिकमन्यद् द्रव्यं नि
यमादेकेनाऽपि प्रदेशेनोन एव लोकेऽवगाहत इति प्रतिपत्त-
व्यम् । अत्राह- नन्वचित्तमहास्कन्धोऽप्येकसमयस्थितिको
न भवति, दण्डाद्यवस्थासमयगणनेन तस्याप्यष्टसमयस्थि-
तिकत्वाद्, एव च सति तस्याप्यानुपूर्वीत्वात् सपूर्णलोक-
व्यापित्वं युज्यतेऽत्र वक्तुमिति, तेनेदमम्, अवस्थाभेदेन
वस्तुभेदस्येह विवक्षितत्वाद्भिन्नाश्च परस्पर दण्डकपाटाद्य-
वस्था, ततस्तद्भेदेन (स्कन्धभेदेन) वस्तुनोऽपि भेदाद्,
अन्यदेव दण्डकपाटाद्यवस्थाद्रव्येभ्यः सकललोकव्याप्य-
चित्तमहास्कन्धद्रव्य, तच्चैकसमयस्थितिकमिति, न त-
स्यानुपूर्वीत्वम् एतच्चानन्तरमेव पुनर्वक्ष्यत इत्यलं विस्तरेण ।
अथवा—यथा क्षेत्रानुपूर्व्यां तथाऽत्रापि सर्वलोकव्या-
पिनोऽप्यचित्तमहास्कन्धस्य विवक्षामात्रमाश्रित्य एकस्मि-
न्नभ प्रदेशे त्वप्रधान्यादेशोनलोकवर्त्तित्वं वाच्यम्, एकस-
मयस्थितिकस्यानानुपूर्वीद्रव्यस्य द्विसमयस्थितिकावक्तव्य-
कस्य च तत्र प्रदेश प्राधान्याश्रयणादिति भाव । एवमन्य-
त्रापि आगमाविरोधतो वक्तव्यमिति । 'णाणादव्वाइं पडुच्च
नियमा सव्वलोए होज्ज' त्ति—त्र्यादिसमयस्थितिकद्रव्याणां
सर्वलोकेऽपि भावादिति भावनीयम् । अनानुपूर्वीद्रव्यचि-
न्तायां यथा क्षेत्रानुपूर्व्यां तथा अत्राप्येकद्रव्यं लोकस्या-
संख्येयभाग एव वर्त्तते कथमिदम् ?, उच्यते-यत् कालत
एकसमयस्थितिकं तत् क्षेत्रतोऽप्येकप्रदेशावगाढमेवहाना-
नुपूर्वीत्वेन विवक्ष्यते. तच्च लोकासख्येयभाग एव भवति,
'आएसंतरेण वा सव्वपुच्छासु होज्ज' त्ति-अस्य भावना-
इहाचित्तमहास्कन्धस्य दण्डाद्यवस्था परस्परं भिन्ना,
आकारादिभेदाद्, द्वित्रिचतु प्रदेशकादिस्कन्धवत्, तत्र
ता एकैकसमयवृत्तित्वात् पृथगनानुपूर्वीद्रव्याणि तेषु च
मध्ये किमपि कियत्यपि क्षेत्र वर्त्तत इत्यनया विवक्षया कि-
लैकमनानुपूर्वीद्रव्यं मतान्तरेण संख्येयभागादिकासु पञ्च-
स्वपि पृच्छासु लभ्यते, एतच्च सूत्रेषु प्रायो न दृश्यते,
टीकाचूर्ण्योस्त्वेवं व्याख्यानमुपलभ्यत इति, नानाद्रव्याणि
तु सर्वस्मिन्नपि लोके भवन्ति, एकसमयस्थितिकद्रव्याणा
सर्वत्र भावादिति । अवक्तव्यकद्रव्यचिन्तायां क्षेत्रानुपूर्व्या-
मिवैकद्रव्यं लोकस्यासख्येयभाग एव वर्त्तते, कथमिति,
उच्यते-यत्कालतो द्विसमयस्थितिकं तत् क्षेत्रतो द्विप्रदे-
शावगाढमेवेहावक्तव्यकत्वेन गृह्यते, तच्च लोकासंख्येयभाग
एव स्यात्, अथवा-द्विसमयस्थितिकं द्रव्यं स्वभावादेव
लोकस्यासंख्येयभाग एवावगाहते न परतः, आदेशान्तरेण
वा- 'महाखंधवज्जमन्नदव्वेसु आइल्लचउपुच्छासु होज्ज"
त्ति—अस्य हृदयम्—मतान्तरेण किल द्विसमयस्थिति-
कमपि द्रव्य किञ्चिल्लोकस्य संख्येयभागेऽवगाहते कि-
ञ्चित्त्वसख्येये अन्यत्तु संख्येयेषु तद्भागेष्ववगाहते अपरं
त्वसंख्येयेष्विति महास्कन्धं वर्जयित्वा शेषद्रव्याण्याश्रित्य
यथोक्तस्वरूपास्वाद्यासु चतसृषु पृच्छास्वेकमवक्तव्यकद्रव्य
लभ्यते, महास्कन्धस्य त्वष्टसमयस्थितित्वेनोक्तत्वाच्च द्वि-
समयस्थितिकत्वसंभव इति तद्वर्जनम्. अत एव सर्वलो-
कव्याप्तिलक्षणोया. पञ्चमपृच्छाया अत्राऽसभव महास्क-
न्धस्यैव सर्वलोकव्यापकत्वात्तस्य चावक्तव्यकत्वायोगा-
दिति । एतदपि सूत्रं वाचनान्तरे क्वचिदेव दृश्यते ।
नानाद्रव्याणि तु सर्वलोके भवन्ति द्विसमयस्थितीनां
सर्वत्र भावादिति । गतं क्षेत्रद्वारम् । स्पर्शनाद्वारमप्येवमत्र
भावनीयम् ।

कालद्वारे—

णेगमववहाराणं आणुपुव्वीदव्वाइं कालओ केवचिरं
होन्ति ?, एगं दव्वं पडुच्च जहन्नेणं तिण्णि समया, उक्को-
सेणं असंखेज्जं कालं । णाणादव्वाइं पडुच्च सव्वऽद्धा ।
णेगमववहाराणं अणाणुपुव्विदव्वाइं कालओ केवचिरं
होइ ?, एगं दव्वं पडुच्च अजहन्नमणुक्कोसेणं एक्कं समयं ना-
णादव्वाइं पडुच्च निअमा सव्वऽद्धा । अवत्तव्वगदव्वाणं
पुच्छा, एगं दव्वं पडुच्च अजहन्नमणुक्कोसेणं एक्कं समयं
णाणादव्वाइं पडुच्च निअमा सव्वऽद्धा+ ।

'एगं दव्वं पडुच्च जहन्नेणं तिण्णि समया' त्ति—जघन्यतो-
ऽपि त्रिसमयस्थितिकस्यैवानुपूर्वीत्वेनोक्तत्वादिति भाव ।
'उक्कोसेणं असंखेज्जं कालं' ति-असंख्येयकालात्परत एकेन
परिणामेन द्रव्यावस्थानस्यैवाभावादिति हृदयम् । नाना-
द्रव्याणि तु सर्वकाले भवन्ति, प्रतिप्रदेश लोकस्य सर्वदा
तैरशून्यत्वादिति । अनानुपूर्व्यवक्तव्यकचिन्तायाम् 'अज-
हन्नमणुक्कोसेणं' ति—जघन्योत्कृष्टचिन्तामुत्सृज्येत्यर्थ., न
हि एकसमयस्थितिकस्यैवानानुपूर्वीत्वे द्विसमयस्थितिक-
स्यैव चावक्तव्यकत्वेऽभ्युपगम्यमाने जघन्योत्कृष्टचिन्ता
सम्भवतीति भाव, नानाद्रव्याणि तूभयत्रापि सर्वकाले
भवन्ति, प्रतिप्रदेश तैरपि सर्वदा लोकस्याशून्यत्वादिति ।

अन्तरद्वारे—

णेगमववहाराणं आणुपुव्विदव्वाणमंतरं कालओ केव-
चिरं होइ ?, एगं दव्वं पडुच्च जहन्नेणं एगं समय उक्को-
सेणं दो समया णाणादव्वाइ पडुच्च नऽत्थि अंतरं । णे-
गमववहाराणं अणाणुपुव्वीदव्वाणमंतरं कालओ केवचिरं
होइ ?, एगं दव्वं पडुच्च जहन्नेणं दो समया, उक्कोसेणं
असंखेज्जं कालं, णाणादव्वाइं पडुच्च णऽत्थि अंतरं ।
णेगमववहाराणं अवत्तव्वगदव्वाणुपुव्विदव्वाणं पुच्छा
एगं दव्वं पडुच्च जहन्नेणं एगं समयं, उक्कोसेणं असंखे-
ज्जं कालं, णाणादव्वाइं पडुच्च नऽत्थि अंतरं+ ।

'एगं दव्वं पडुच्च जहन्नेणं एगं समयं' ति-अत्र भावना-
इह त्र्यादिसमयस्थितिक विवक्षितं किञ्चिदेकमानुपूर्वीद्रव्यं
तं परिणामं परित्यज्य यदा परिणामान्तरेण समयमेकं
स्थित्वा पुनस्तेनैव परिणामेन त्र्यादिसमयस्थितिकं जा-
यते तदा जघन्यतया समयोऽन्तरं लभ्यते, 'उक्कोसेणं
दो समया' त्ति-तदेव यदा परिणामान्तरेण द्वौ समयौ
स्थित्वा पुनस्तमेव त्र्यादिसमयस्थितियुक्तम प्राक्तन
परिणाममासादयति तदा द्वौ समयावुत्कृष्टतोऽन्तरे भ-
वतः, यदि पुन. परिणामान्तरेण त्र्यादिकं तत समय-

द्वयात् परतोऽपि तिष्ठेत्तदा, तत्राप्यानुपूर्वीत्वमनुभवेत्, ततोऽन्तरमेव न स्यादिति भावः। नानाद्रव्याणां तु नाऽस्त्यन्तरं सर्वदा लोकस्य तदशून्यत्वादिति। अनानुपूर्वीचिन्तायाम् 'एगं दव्वं पडुच्च जहण्णेणं दो समय' त्ति-एकसमयस्थितिकं द्रव्यं यदा परिणामान्तरेण समयद्वयमनुभूय पुनस्तमेवैकसमयस्थितिकं परिणाममासादयति तदा समयद्वयं जघन्योऽन्तरकालः, यदि तु-परिणामान्तरेणाऽप्येकमेव समयं तिष्ठेत्तदा अन्तरमेव न स्यात्, तत्राप्यनानुपूर्वीत्वात्, अथ समयद्वयात्परतस्तिष्ठेत्तदा जघन्यत्वं न स्यादिति भावः। 'उक्कोसेणं असंखेज्जं कालं' ति-तदेव यदा परिणामान्तरेणासंख्येयकालमनुभूय पुनरेकसमयस्थितिकं परिणाममनुभवति तदोत्कृष्टतोऽसंख्येयोऽन्तरकालः प्राप्यते। आह-ननु यदि च अन्यान्यद्रव्यक्षेत्रसम्बन्धे तस्यानन्तोऽपि कालोऽन्तरे लभ्यते किमित्यसंख्येय एवोक्तः?, सत्यम्, किन्तु-कालानुपूर्वीप्रक्रमात्कालस्यैवेह प्राधान्यं कर्त्तव्यम्, यदि त्वन्यान्यद्रव्यक्षेत्रसम्बन्धतोऽन्तरकालबाहुल्यं क्रियते तदा तद्द्वारेणैवान्तरकालस्य बहुत्वकरणात्तयोर्द्वयोरेव प्राधान्यमाश्रितं स्यान्न कालस्य तस्मादेकस्मिन्नेव परिणामान्तरे यावान् कश्चिदुत्कृष्टः कालो लभ्यते स एवान्तरे चिन्त्यते, स चासंख्येय एव ततः परमेकेन परिणामेन वस्तुनोऽवस्थानस्यैव निषिद्धत्वादित्येवं भगवतः सूत्रस्य विवक्षावैचित्र्यात्सर्वं पूर्वमुत्तरत्र चागमाऽविरोधेन भावनीयमिति। नानाद्रव्याणां तु नास्त्यन्तरं प्रतिप्रदेशं लोके सर्वदा तत्सद्भावादिति। अवक्तव्यकद्रव्यचिन्तायाम् 'जहण्णेणं एगं समयं' ति-द्विसमयस्थितिकं किञ्चिदवक्तव्यकद्रव्यं परिणामान्तरेण समयमेकं स्थित्वा यदा पूर्वानुभूतमेव द्विसमयस्थितिकपरिणाममासादयति तदा समयो जघन्यान्तरकालः। 'उक्कोसेणं असंखेज्जं कालं' ति-तदेव यदा परिणामान्तरेणासंख्येयं कालं स्थित्वा पुनस्तमेव पूर्वानुभूतं परिणाममासादयति तदाऽसंख्यात उत्कृष्टोऽन्तरकालो भवति, आक्षेपपरिहारावत्राप्यनानुपूर्वीवत् द्रष्टव्याविति। नानाद्रव्यान्तरं तु नास्ति सर्वदा लोके तद्भावादिति। उक्तमन्तरद्वारम्।

भागद्वारे—

भाग-भाव अप्पा बहुं चेव जहा खेत्ताणुपुव्वीए तहा भाणिअव्वाइं, ०जाव सेत्तं अणुगमे। सेत्तं नेगमववहाराणं अणोवनिहिआ कालाणुपुव्वी। ( सूत्र-११२ × )

भागद्वारं तु यथा द्रव्य-क्षेत्रानुपूर्व्योस्तथैवानुपूर्वीद्रव्याणि शेषद्रव्येभ्योऽसंख्येयैर्भागैरधिकानि व्याख्येयानि, शेषद्रव्याणि त्वानुपूर्वीद्रव्याणामसंख्येयभाग एव वर्त्तन्ते इति, भावना त्वियं कर्त्तव्या-इहानानुपूर्व्यामेकसमयस्थितिलक्षणमेकमेव स्थानं लभ्यते, अवक्तव्यकेऽपि द्विसमयस्थितिलक्षणमेकमेव तल्लभ्यते, आनुपूर्व्यां तु त्रिसमयचतुःसमयपञ्चसमयस्थित्यादीन्येकोत्तरवृद्ध्याऽसंख्येयसमयस्थित्यन्तान्यसंख्येयानि स्थानानि लभ्यन्ते, इत्यानुपूर्वीद्रव्याणामसंख्येयगुणत्वम्, इतरयोस्तु तदसंख्येयभागवर्त्तित्वमिति। भावद्वारं-सादिपारिणामिकभाववर्त्तित्वं त्रयाणामपि पूर्ववद्भावनीयम्। अल्पबहुत्वद्वारम्-सर्वस्तोकान्यवक्तव्यकद्रव्याणि द्विसमयस्थितिकद्रव्याणां स्वभावत एव स्तोकत्वात्, अनानुपूर्वीद्रव्याणि तु तेभ्यो विशेषाधिकानि, एकसमयस्थितिकद्रव्याणां निसर्गत एव पूर्वेभ्यो विशेषाधिकत्वात्, आनुपूर्वीद्रव्याणि तु पूर्वेभ्योऽसंख्यातगुणत्वं भागद्वारे भावितमेव, शेषं तु क्षेत्रानुपूर्व्याद्युक्तानुसारतः सर्वं वाच्यमिति अत एव कपुचिद्वाचनान्तरेषु भागादिद्वारत्रयं क्षेत्रानुपूर्व्यतिदेशेनैव निर्दिष्टं दृश्यते, नतु विशेषतो लिखितमिति। 'सेत्तमि' त्यादि निगमनम्। उक्ता नैगमव्यवहारनयमतेनानौपनिधिकी कालानुपूर्वी।

अथ संग्रहनयमतेन तामेव व्याचिख्यासुराह—

से किं तं संगहस्स अणोवनिहिआ कालाऽऽनुपुव्वी?, संगहस्स अणोवणिहिया कालाणुपुव्वी पंचविहा पण्णत्ता, तं जहा-अट्ठपयपरूवणया १, भंगसमुक्कित्तणया २, भंगोवदंसणया ३, समोतारे ४, अणुगमे ५। ( सूत्र-११३ )। से किं तं संगहस्स अट्ठपयपरूवणया?, संगहस्स अट्ठपयपरूवणया एआइं पंच वि दाराइं जहा खेत्ताणुपुव्वीए संगहस्स तहा कालाणुपुव्वीए वि भाणिअव्वाइं, णवरं ठिई, अभिलावो, ०जाव सेत्तं अणुगमे। सेत्तं संगहस्स अणोवनिहिआ कालाणुपुव्वी। सेत्तं अणोवनिहिआ कालाणुपुव्वी, ( सूत्र-११४ )।

'से किं तमि' त्यादि। यथा क्षेत्रानुपूर्व्यामियं संग्रहमतेन प्राग्निर्दिष्टा तथाऽत्रापि वाच्या, 'नवरं तिसमयठिइया आनुपुव्वी ०जाव असंखेज्जसमयट्ठिइया आणुपुव्वी' त्यादि अभिलापः कार्यः, शेषं तु तथैवेति। उक्ता संग्रहमतेनाप्यनौपनिधिकी कालानुपूर्वी, तथा च सति अवसितः तद्विचारः।

इदानीं प्रागुद्दिष्टामेवौपनिधिकीं तां निर्दिदिक्षुराह—

से किं तं उवनिहिआ कालाणुपुव्वी उवणिहिआ कालाणुपुव्वी तिविहा पण्णत्ता, तं जहा-पुव्वाणुपुव्वी, पच्छाणुपुव्वी, अणाणुपुव्वी, से किं तं पुव्वानुपुव्वी?, पुव्वाणुपुव्वी। ( अनु० )।

एगसमयट्ठिइए, दुसमयट्ठिइए, तिसमयट्ठिइए ०जाव दससमयट्ठिइए संखिज्जसमयट्ठिइए असंखिज्जसमयट्ठिइए। सेत्तं पुव्वानुपुव्वी। से किं तं पच्छानुपुव्वी?, पच्छाणुपुव्वी असंखिज्जसमयट्ठिइए ०जाव एगसमयट्ठिइए। सेत्तं पच्छानुपुव्वी। से किं तं अणानुपुव्वी?, अणाणुपुव्वी-एआए चेव एगाइआए एगुत्तरिआए असंखिज्जगच्छगयाए सेढीए अण्णमण्णब्भासो दुरूवूणो। सेत्तं अणानुपुव्वी।

'से किं तमि' त्यादि। एकः समयः स्थितिर्यस्य द्रव्यविशेषस्य स तथा, एवं यावदसंख्येयाः समयाः स्थितिर्यस्य स तथेति पूर्वानुपूर्वी, शेषभावना त्वत्र पूर्वोक्तानुसारेण सुकरैव।

अथ कालविचारस्य प्रस्तुतत्वात्समयादेश्च कालत्वेन प्रसिद्धत्वात्तदनुप्रसङ्गतो विनेयानां समयादिकालपरिज्ञानदर्शनाय तद्विषयत्वेनैव प्रकारान्तरेण तामाह—

अहवा उवणिहिआ कालाणुपुव्वी तिविहा पण्णत्ता, तं जहा-पुव्वाणुपुव्वी पच्छाणुपुव्वी अणाणुपुव्वी । से किं तं पुव्वाणुपुव्वी ?. पुव्वाणुपुव्वी । ( अनु० )

समए १, आवलिआ २, आण ३, । ४ । पाणू ५, थोवे ६, लवे ७, मुहुत्ते ८, अहोरत्ते ९, पक्खे १०, मासे ११, उऊ १२, अयणे १३, संवच्छरे १४, जुगे १५, वासमए १६, वाससहस्से १७, वाससयसहस्से १८, पुव्वंगे १९, पुव्वे २०, तुडिअंगे २१, तुडिए २२, अडडंगे २३, अडडे २४, अववंगे २५, अववे २६, हुहुअंगे २७, हुहुए २८ उप्पलंगे २९, उप्पले ३०, पउमंगे ३१, पउमे ३२, णलिणंगे ३३, णलिणे ३४, अत्थनिउरंगे ३५, अत्थनिउरे ३६, अउअंगे ३७ अउए ३८, नउअंगे ३९, नउए ४०, पउअंगे ४१, पउए ४२, चूलिअंगे ४३, चूलिआ ४४, सीसपहेलिअंगे ४५, सीसपहेलिआ ४६ पलिओवमे ४७, सागरोवमे ४८, ओसप्पिणी ४९, उस्सप्पिणी ५०, पोग्गलपरिअट्टे ५१, अतीतद्धा ५२ अणागतद्धा ५३, सव्वऽद्धा ५४ । सेत्तं पुव्वाणुपुव्वी । से किं त पच्छाणुपुव्वी ?, पच्छाणुपुव्वी सव्वद्धा अणागतद्धा ०जाव समए, से तं पच्छाणुपुव्वी । से किं तं अणाणुपुव्वी ?, अणाणुपुव्वी एआए चेव एगाइआए एगुत्तरिआए अणंतगच्छगयाए सेढीए अन्नमन्नब्भासो दुरूवूणो, से तं अणाणुपुव्वी ॥ सेत्त उवणिहिआ कालाणुपुव्वी । सेत्तं कालाणुपुव्वी । ( सूत्र-११५ ) ।

' अहवे ' त्यादि, तत्र समयो-वक्ष्यमाणस्वरूपः सर्वसूक्ष्मः कालांऽशः, स च सर्वप्रमाणानां प्रभवत्वात् प्रथमं निर्दिष्टः ( १ ) । तैरसङ्ख्येयैर्निष्पन्ना आवलिका ( २ ) । सङ्ख्येया आवलिका ' आण ' त्ति—आणः, एक उच्छ्वास इत्यर्थः ( ३ ) । ता एव सङ्ख्येया निःश्वासः, अयं च सूत्रेऽनुक्तोऽपि द्रष्टव्यः, स्थानान्तरप्रसिद्धत्वादिति ( ४ ) । द्वयोरपि कालः ' पाणु ' त्ति-एकः प्राणुरित्यर्थः ( ५ ) । सप्तभिः प्राणुभिः स्तोकः ( ६ ) । सप्तभिः स्तोकैर्लवः ( ७ ) । सप्तसप्तत्या लवानां मुहूर्त्तः ( ८ ) । त्रिंशता मुहूर्त्तैरहोरात्रम् ( ९ ) । तैः पञ्चदशभिः पक्षः ( १० ) । ताभ्यां द्वाभ्यां मासः ( ११ ) । मासद्वयेन ऋतुः ( १२ ) । ऋतुत्रयमानमयनम् ( १३ ) । अयनद्वयेन संवत्सरः ( १४ ) । पञ्चभिस्तैर्युगम् ( १५ ) । विंशत्या युगैर्वर्षशतम् ( १६ ) । तैर्दशभिर्वर्षसहस्रम् ( १७ ) । तेषां शतेन वर्षशतसहस्रम्, लक्षमित्यर्थः ( १८ ) । चतुरशीत्या च लक्षैः पूर्वाङ्गं भवति ( १९ )—८४००००० । तदपि चतुरशीतिलक्षैर्गुणितं पूर्वं भवति ( २० ), तच्च सप्ततिकोटिलक्षाणि षट्पञ्चाशच्च कोटिसहस्राणि वर्षाणाम्, उक्तं च—
" पुव्वस्स उ परिमाणं, सयरिं खलु हुंति कोडिलक्खाउ ।
छप्पण्णं च सहस्सा, बोद्धव्वा वासकोडीणं ॥ १ ॥ " स्थापना[1]—७०५६०००००००००० । इदमपि चतुरशीत्या लक्षैर्गुणितं त्रुटिताङ्गं भवति ( २१ )—५९२७०४०००००, अग्रे दश १० शून्यानि अन्यानि स्थापनीयानि । एतदपि चतुरशीत्या लक्षैर्गुणितं त्रुटितं भवति (२२)-४९७८७१३६००००० अग्रे पञ्चदश १५ शून्यानि अन्यानि स्थापनीयानि । तदपि चतुरशीत्या लक्षैर्गुणितमडडाङ्गम् ( २३ )—४१८२११९४२४०००००० अग्रे विंशति २० शून्यानि अन्यानि स्थापनीयानि । एतदपि तेनैव गुणकारेण गुणितमडडम् ( २४ )—३५१२९८०३१६१६००००० अग्रे पञ्चविंशति २५ शून्यानि अन्यानि स्थापनीयानि । एवं सर्वत्र पूर्वः पूर्वो राशिश्चतुरशीतिलक्षस्वरूपेण गुणकारेण गुणित उत्तरोत्तरराशिरूपतां प्रतिपद्यत इति प्रतिपत्तव्यं, ततश्च-अववाङ्गम् ( २५ )—२९५०९०३४६५५७४४००००० अग्रे त्रिंशत् ३० शून्यानि अन्यानि स्थापनीयानि । अववम् ( २६ )-२४७८७५८९११०८-२४९६००००० अग्रे पञ्चत्रिंशत् ३५ शून्यानि अन्यानि स्थापनीयानि । हुहुकाङ्गम् ( २७ )-२०८२१५७४८५३०९३९६६-४००००० अग्रे चत्वारिंशत् ४० शून्यानि अन्यानि स्थापनीयानि । हुहुकम् (२८)-१७४९०१२२८७६५९८९०१७६०००००० अग्रे पञ्चचत्वारिंशत् ४५ शून्यानि अन्यानि स्थापनीयानि । उत्पलाङ्गम् ( २९ )-१४६९१७०३२१६३४ ३९७०९१८४००००० अग्रे पञ्चाशत् ५० शून्यानि अन्यानि स्थापनीयानि । उत्पलम् ( ३० )-१२३४१०२७०१७२७६१३५५७१९५६००००० अग्रे पञ्चपञ्चाशत् ५५ शून्यानि अन्यानि स्थापनीयानि । पद्माङ्गम् ( ३१ )—१०३६६४६५७८९४५११९५३८८००२३०४०००००० अग्रे षष्टि ६० शून्यानि अन्यानि स्थापनीयानि । पद्मम् (३२)-८७०७८३१२६३१३९००४१२५-६२११६३५३६००००० अग्रे पञ्चषष्टि ६५शून्यान्यन्यानि स्थाप० । नलिनाङ्गम् ( ३३ )—७३१४५७८२६१०३६७८३४६५७७४४-२५७०२४००००० अग्रे सप्तति ७० शून्यानि अन्यानि स्थापनीयानि । नलिनम् (३४)-६१४४२४५७३६२७०८८१३-११२५०५१७१९००१६००००० अग्रे पञ्चसप्तति ७५ शून्यानि अन्यानि स्थापनीयानि । अर्थनिपूराङ्गम् (३५)-५१६-११६९४२०९८७५४०३०१४५०४३८७७५६१३४५००००० अग्रे अशीति ८० शून्यानि अन्यानि स्थापनीयानि । अर्थनिपूरम् (३६)-४३३५३७९७१३६२९५३३८५३२१८३६५२११५१५२८९-६००००० अग्रे पञ्चाशीति ८५ शून्यानि अन्यानि स्थापनीयानि । अयुताङ्गम् (३७)-३६४१७११०२६६४८८०८४३६-७०३४२६७७७६७२८४३२६४००००० अग्रे नवति ९० शून्यानि अन्यानि स्थापनीयानि । अयुतम् (३८)-३०५९०४३९८-७३८४९९९०८६८३०८७८४९३२४५१८८३४१७९००००० अग्रे पञ्चनवति ९५ शून्यानि अन्यानि स्थापनीयानि । नयुताङ्गम् (३९)—२५६९५९६९८४५२०३९९२३२९३७९३७९३५९२२-५९५८२०७५७८४००००० अग्रे शत १०० शून्यानि अन्यानि स्थापनीयानि । नयुतम् (४०)-२१५८८४१४३३९७०८५५३५५-९९७८७८९३३८०४८९३९५८५९००००० अग्रे पञ्चाधि-

१-चतुर्थाङ्के टीकादृष्ट्या ।

[1] अङ्कस्थापना-स्पष्टावबोधार्थं कोशकारेण दर्शिता ।

कशत १०५ शून्यानि अन्यानि स्थापनीयानि । प्रयुताङ्गम् (४१)—१८१३१०७६०४५३५५१८८६८७६१००९००६४६०३६६-१७०६१४५१६०४००००० अग्रे दशाधिकशत११०शून्यानि अन्यानि स्थापनीयानि । प्रयुतम् (४२)—१५२३०१०३८७८-०६८३५५३८६५६२४७५६५४२६७३२७३३१६८१६५६६३६०००-०० अग्रे पञ्चदशाधिकशते११५शून्यानि अन्यानि स्थापनीयानि । चूलिकाङ्गम् (४३)-१२७६३२८७२५७६०२६१८५२-७२५७६७१५४६५८४५५४६५८६१२८४६३४६२४००००० अग्रे विंशत्यधिकशत १२० शून्यानि अन्यानि स्थापनीयानि । चूलिका (४४)-१०७४६२६१२६६३८६१६६५६२८६६४५०६११-६५१०२६१६५३३४७७४१३०८४१६००००० अग्रे पञ्चविंशत्यधिकशत१२५शून्यानि अन्यानि स्थापनीयानि । शीर्षप्रहेलिकाङ्गम् (४५)-९०२६६४३४८८९६४४०७६३२८३३०१८५-१३७८६८६१९७८७९७२१०२६६९०६९४८००००० अग्रे त्रिंशदधिकशत १३० शून्यानि अन्यानि स्थापनीयानि । ) एवमेते राशयश्चतुरशीतिलक्षस्वरूपेण गुणकारेण यथोत्तरं वृद्धा द्रष्टव्यास्तावद् यावदिदमेव शीर्षप्रहेलिकाङ्गम् चतुरशीत्या लक्षैर्गुणितं शीर्षप्रहेलिका भवति (४६) अस्याः स्वरूपमङ्कतोऽपि दर्शयते-७५८२६३२५३०७३०१०२४११५७९७३५५५१-५८०१८४०६२१८९६५६६२६७२१८३२१६ अग्रे च चत्वारिंशं शून्यशतम् १४०, तदेवं शीर्षप्रहेलिकायां सर्वाण्यमूनि चतुर्णवत्यधिकशतसंख्यानि१६४अङ्कस्थानानि भवन्ति, अनेन चैतावता कालमानेन केषाचिद् रत्नप्रभानारकाणां भवनपतिव्यन्तरसुराणां सुषमदुःषमारकसंभविनां नरतिरश्चां च यथासंभवमायूंषि मीयन्ते, एतस्माच्च परतोऽपि संख्येयः कालोऽस्ति, किन्त्वनतिशयिनामसंव्यवहार्यत्वात्सर्षपाद्युपमयाऽत्रैव वक्ष्यमाणत्वाच्च नेहोक्तः, किं तर्हि ?, उपमामात्रप्रतिपाद्यानि पल्योपमादीन्येव, तत्र पल्योपम-सागरोपमे ४७, ४८, अत्रैव वक्ष्यमाणस्वरूपे दशसागरोपमकोटाकोटिमाना त्ववसर्पिणी४९, तावन्मानैवोत्सर्पिणी५०, अनन्ता उत्सर्पिण्यवसर्पिण्यः पुद्गलपरावर्त ५१. अनन्तास्तेऽतीताद्धा५२, तावन्मानैवाऽनागताद्धा५३ अतीतानागतवर्त्तमानकालस्वरूपा सर्वाऽद्धेति ५४, एषा पूर्वानुपूर्वी । शेषभावना तु पूर्वोक्तानुसारतः सुकरैव यावत्कालानुपूर्वी समाप्ता ।

(६) साम्प्रतं प्रागुद्दिष्टामेवोत्कीर्त्तनानुपूर्वीं विभणिषुराह—

से किं तं उक्कित्तणाणुपुव्वी ?, उक्कित्तणाणुपुव्वी तिविहा पण्णत्ता, तं जहा-पुव्वानुपुव्वी, पच्छानुपुव्वी, अणानुपुव्वी । से किं तं पुव्वानुपुव्वी ?, पुव्वाणुपुव्वी-उसभे १, अजिए २, संभवे ३, अभिणंदणे ४, सुमती ५, पउमप्पहे ६, सुपासे ७, चंदप्पहे ८, सुविही ९, सीतले १०, सेज्जंसे ११, वासुपुज्जे १२, विमले १३, अणंते १४, धम्मे १५, संती १६ कुंथू १७, अरे १८, मल्ली१९, मुणिसुव्वते २०, नमी २१, अरिट्ठनेमी २२, पासे २३, वद्धमाणे २४, । सेत्तं पुव्वानुपुव्वी । से किं तं पच्छाणुपुव्वी ?, पच्छाणुपुव्वी-वद्धमाणे ०जाव उसभे । सेत्त पच्छाणुपुव्वी । से किं त अणाणुपुव्वी ?, अणाणुपुव्वी-एआए चेव एगाइआए एगुत्तरिआए चउवीसगच्छगयाए सेढीए अण्णमण्णब्भासो दुरूवूणो सेत्तं । अणाणुपुव्वी । सेत्तं उक्कित्तणाणुपुव्वी । ( सूत्र-११६ )

'से किं तमि' त्यादि । उत्कीर्त्तनं-संशब्दनम्-अभिधानोच्चारणम्, तस्यानुपूर्वी—अनुपरिपाटिः सा पूर्वानुपूर्व्यादिभेदेन त्रिविधा, तत्र ऋषभः प्रथममुत्पन्नत्वात्पूर्वमुत्कीर्त्यते, तदनन्तरं क्रमेण अजितादय इति पूर्वानुपूर्वी, शेषभावना तु पूर्ववद् । अत्राह—ननु औपनिधिक्या द्रव्यानुपूर्व्या अस्याश्च को भेद ?, उच्यते-तत्र द्रव्याणां विन्यासमात्रमेव पूर्वानुपूर्व्यादिभावेन चिन्तितम्, अत्र तु तेषामेव तथैवोत्कीर्त्तनं क्रियते, इत्येतावन्मात्रेण भेद इति, भवत्येव, किंत्वावश्यकस्य प्रस्तुतत्वादुत्कीर्तनमपि सामायिकाद्यध्ययनानामेव युक्तम्, किमित्यप्रक्रान्तानाम् ऋषभादीना, तद्विहितमिति ?, सत्यं, किंतु-सर्वव्यापकं प्रस्तुतशास्त्रमित्यादावेवोक्तं, तद्दर्शनार्थमृषभादिसूत्रान्तर्गोपादानं भगवतां च तीर्थप्रणेतृत्वात्तत्स्मरणस्य समस्तश्रेय फलकल्पपादपत्वात् युक्तं तन्नामोत्कीर्तनं, तद्विषयत्वेन चोक्तमुपलक्षणत्वादन्यत्रापि द्रष्टव्यमिति, शेषं भावितार्थं यावत् 'सेत्तमि' त्यादि निगमनम् ।

इदानीं पूर्वोद्दिष्टामेव गणनाऽऽनुपूर्वीमाह—

से किं तं गणणाऽऽणुपुव्वी ?, गणणाऽऽणुपुव्वी तिविहा पण्णत्ता, तं जहा-पुव्वाणुपुव्वी१, पच्छाणुपुव्वी२, अणाणुपुव्वी३ । से किं तं पुव्वाणुपुव्वी ?, पुव्वाणुपुव्वी-एगो, दस, सतं, सहस्सं, दससहस्साइं, सतसहस्सं, दससतसहस्साइं कोडी, दसकोडीओ, कोडिसयं, दसकोडिसयाइं । सेत्तं पुव्वाणुपुव्वी । से किं तं पच्छाणुपुव्वी ?, पच्छाणुपुव्वी-दसकोडीसयाइं०जाव एक्को । सेत्तं पच्छाणुपुव्वी । से किं तं अणाणुपुव्वी ?, अणाणुपुव्वी-एआए चेव एगाइआए एगुत्तरिआए दसकोडिसतगच्छगयाए सेढीए अन्नमन्नब्भासो दुरूवूणो । सेत्तं अणानुपुव्वी । सेत्तं गणनाणुपुव्वी । ( सूत्र-११७ )

'से किं तमि' त्यादि, गणनं-परिसंख्यानम्-एकं, द्वे त्रीणि, चत्वारि इत्यादि, तस्य आनुपूर्वी-परिपाटिर्गणनानुपूर्वी, अत्रोपलक्षणमात्रमुदाहर्तुमाह-'एगे' त्यादि सुगमम्, उपलक्षणमात्र चेदमतोऽन्येऽपि संभविन संख्याप्रकारा अत्र द्रष्टव्या । उत्कीर्तनानुपूर्व्यां नाममात्रोत्कीर्त्तनमेव कृतम्, अत्र त्वेकादिसंख्याभिधानमिति भेद । 'सेत्तमि' त्यादि निगमनम् ।

अथ प्रागुद्दिष्टामेव संस्थानानुपूर्वीमाह—

से किं तं संठाणानुपुव्वी ?, संठाऽऽणाणुपुव्वी तिविहा पण्णत्ता, तं जहा-पुव्वाणुपुव्वी, पच्छाणुपुव्वी, अणाणुपुव्वी । से किं तं पुव्वाणुपुव्वी?, पुव्वाणुपुव्वी-समचउरंसे निग्गोहमंडले, सादी, खुज्जे, वामणे, हुंडे । सेत्तं पुव्वाणुपुव्वी । से किं तं पच्छाणुपुव्वी ? पच्छाणुपुव्वी हुंडे

०जाव समचउरंसे । सेत्तं पच्छाणुपुव्वी । से किं तं अणाणुपुव्वी ?, अणाणुपुव्वी-एआए चेव एगाइआए एगुत्तरिआए छगच्छगयाए सेढीए अन्नमन्नब्भासो दुरूवूणो । सेत्तं अणाणुपुव्वी । सेत्तं संठाणाणुपुव्वी । ( सूत्र-११८ ) ( १० ) * अधिकाराङ्कः ।

'से किं तमि' त्यादि, आकृतिविशेषा -संस्थानानि, तानि च जीवाऽजीवसंबन्धित्वेन द्विधा भवन्ति, तत्रेह जीवसंबन्धीनि, तत्रापि पञ्चेन्द्रियसंबन्धीनि वक्तुमिष्टानि, अत तान्याह-' समचउरंसे ' त्यादि, तत्र समा -शास्त्रोक्तलक्षणाविसंवादिन्यश्चतुर्दिग्वर्तिन्य: अवयवरूपाश्चतस्रोऽस्रयो यत्र तत्समासान्तात् प्रत्यये समचतुरस्रं संस्थानं, तुल्यारोहपरिणाहं संपूर्णलक्षणोऽपि साङ्गोपाङ्गावयव स्वाङ्गुलाष्टाधिकशतोच्छ्रय: सर्वसंस्थानप्रधान , पञ्चेन्द्रियजीवशरीराकारविशेष इत्यर्थ १। नाभेरुपरि न्यग्रोधवन्मण्डलम्-आद्यसंस्थानलक्षणयुक्तत्वेन विशिष्टाकारं न्यग्रोधमण्डलं, न्यग्रोधो-वटवृक्ष , यथा चायमुपरि वृत्ताकारतादिगुणोपेतत्वेन विशिष्टाकारो भवति, अधस्तु न तथा एवमेतदपीति भाव २। सह आदिना नाभेरधस्तनकायलक्षणेन वर्त्तते इति सादि, ननु सर्वमपि संस्थानं आदिना सहैव वर्त्तते ततो निरर्थकं सादित्वविशेषणम् ,सत्यम् ,किं तु-अत एव विशेषणवैफल्यप्रसङ्गादाद्यसंस्थानलक्षणयुक्त आदिरिह गृह्यते, ततस्तथाभूतेन आदिना सह यद्वर्त्तते नाभेस्तूपरितनकाये आद्यसंस्थानलक्षणविकल तत्सादीति तात्पर्यम् ३। यत्र पाणिपादशिरोग्रीवं समग्रलक्षणपरिपूर्णम् , शेषं तु हृदयोदरपृष्ठलक्षण कोष्ठम्-लक्षणहीनं तत् कुब्जम् ४। यत्र तु हृदयोदरपृष्ठ सर्वलक्षणोपेतम् , शेषं तु हीनलक्षणं तद्वामनम् , कुब्जविपरीतमित्यर्थं ५। यत्र सर्वेऽप्यवयवा प्रायो लक्षणविसंवादिन एव भवन्ति तत्संस्थान-हुण्डमिति ६ । अत्र च सर्वप्रधानत्वात्समचतुरस्रस्य च प्रथमत्वम् ,शेषाणा तु यथाक्रमं हीनत्वाद् द्वितीयादित्वमिति पूर्वानुपूर्वीत्व, शेषभावना पूर्ववदिति । आह-यदीत्थं संस्थानानुपूर्वी प्रोच्यते तर्हि संहननवर्णरसस्पर्शाऽऽद्यानुपूर्व्योऽपि वक्तव्या स्यु , तथा च सत्यानुपूर्वीणामियत्तैव विशीर्येत, ततो निष्फल एव प्रागुपन्यस्तो दशविधत्वसंख्यानियम इति, सत्यम् , किन्तु-सर्वासामपि तासा वक्तुमशक्यत्वादुपलक्षणमात्रमेवायं सङ्ख्यानियम , एतदनुसारेणाऽन्या अप्येता अनुसर्त्तव्या इति तावल्लक्षयाम , सुधिया त्वन्यथापि वाच्यं, गम्भीरार्थत्वात् परममुनिप्रणीतविवक्षाया , एवमुत्तरत्रापि वाच्यम् , इत्यल विस्तरेण ।

(११) सामाचार्य्यानुपूर्वीं विवक्षुराह—

से किं तं सामायारीआणुपुव्वी ?, समायारीआणुपुव्वी तिविहा पण्णत्ता, तं जहा-पुव्वाणुपुव्वी १, पच्छाणुपुव्वी २, अणाणुपुव्वी ३ । से किं तं पुव्वाणुपुव्वी ?, पुव्वाणुपुव्वी-

" इच्छा १, मिच्छा २, तहक्कारो ३,
आवस्सिआ य ४, निसीहिआ ५ ।
आपुच्छणा य ६ पडिपुच्छा ७,
छंदणा य ८, निमंतणा ९ ॥ १ ॥
उवसंपया य १० काले,
सामायारी ( भवे ) दसविहा उ ।

सेत्तं पुव्वाणुपुव्वी । से किं तं पच्छाणुपुव्वी ?, पच्छाणुपुव्वी उवसंपया ०जाव इच्छागारो । सेत्तं पच्छाणुपुव्वी । से किं तं अणाणुपुव्वी ?, अणाणुपुव्वी-एआए चेव एगाइआए एगुत्तरिआए दसगच्छगयाए सेढीए अन्नमन्नब्भासो दुरूवूणो । सेत्तं अणाणुपुव्वी । सेत्तं सामायारीआणुपुव्वी । ( सूत्र-११९ )

( सामाचारीव्याख्यानम् ' सामायारी ' शब्दे सप्तमे भागे करिष्यते ) इह धर्मस्यापरोपतापमूलत्वादिच्छाकारस्याज्ञाबलाभियोगलक्षणपरोपतापवर्जकत्वात्प्राधान्यात्प्रथममुपन्यास अपरोपतापकेनापि च कथञ्चित् स्खलनं मिथ्यादुष्कृत दातव्यमिति, तदनन्तरं मिथ्याकारस्य, एतौ च गुरुवचनप्रतिपत्तावेव ज्ञातुं शक्यौ, गुरुवचनं च तथाकारकरणेनैव सम्यक् प्रतिपन्नं भवतीति तदनन्तरं तथाकारस्य प्रतिपन्नगुरुवचनेन चोपाश्रयाद्बहिर्निर्गच्छता गुरुपृच्छापूर्वकं निर्गन्तव्यमिति । तथाकारानन्तर तत्पृच्छारूपाया आवश्यकया बहिर्निर्गतेन च नैषेधिकीपूर्वक पुन प्रवेष्टव्यमिति तदन्तरं नैषेधिक्या , उपाश्रयप्रविष्टेन च गुरुमापृच्छ्य सकलमनुष्ठेयमिति तदनन्तरमापृच्छनाया , आपृष्टे च निषिद्धे पुन प्रष्टव्यमिति तदनन्तरं प्रतिपृच्छनाया , प्रतिप्रश्ने चानुज्ञातेना'शनाद्यानीय तत्परिभोगाय साधव उत्साहनीया इति तदनन्तर' छन्दनाया:, एषा च गृहीत एवाऽशनादौ स्याद् अगृहीते तु निमन्त्रणैवेति तदनन्तर निमन्त्रणाया , इयं च सर्वाऽपि निमन्त्रणापर्यन्ता सामाचारी गुरूपसंपदमन्तरेण न ज्ञायते इति तदनन्तरमुपसम्पद उपन्यास इति पूर्वानुपूर्वीत्वसिद्धिरिति । शेषं पूर्ववदिति ।

( १२ ) अथ भावाऽऽनुपूर्वीमाह—

से किं तं भावाणुपुव्वी ?, भावाणुपुव्वी तिविहा पण्णत्ता, तं जहा-पुव्वाणुपुव्वी १, पच्छाणुपुव्वी २, अणाणुपुव्वी ३। से किं तं पुव्वाणुपुव्वी ?, पुव्वाणुपुव्वी-उदइए, उवसमिए, खाइए, खओवसमिए, पारिणामिए, सन्निवाइए । सेत्तं पुव्वाणुपुव्वी । से किं तं पच्छाणुपुव्वी ?, पच्छाणुपुव्वी संनिवाइए, ०जाव उदइए । सेत्तं पच्छाणुपुव्वी । से किं तं अणाणुपुव्वी ?, अणाणुपुव्वी एआए चेव एगाइआए एगुत्तरिआए छगच्छगयाए सेढीए अन्नमन्नब्भासो दुरूवूणो । सेत्तं अणाणुपुव्वी । सेत्तं भावाणुपुव्वी । सेत्तं आणुपुव्वी आणुपुव्वि त्ति पदं समत्तं । ( सूत्र-१२० )

'से किं तमि' त्यादि, इह तेन तेन रूपेण भवनानि भावा -वस्तुपरिणामविशेषा -औदयिकादय , अथवा-तेन तेन रूपेण भवन्तीति भावास्त एव, यद्वा-भवन्ति तेभ्यस्तेषु

वा सत्सु प्राणिनस्तेन तेन रूपेणेति भावा यथोक्ता एव ते-षामानुपूर्वी- परिपाटिर्भावानुपूर्वी, औदयिकादीनां तु स्व-रूपं पुरस्तात् न्यक्षेण वक्ष्यते. अत्र च नारकादिगतिरौद-यिको भाव इति वक्ष्यते, तस्यां च सत्यां शेषा भावाः सर्वेऽपि यथासम्भवं प्रादुर्भवन्तीति शेषभावाऽऽधारत्वेन प्रधा-नत्वादौदयिकस्य प्रथममुपन्यासः, ततश्च शेषभावपञ्चकस्य मध्ये औपशमिकस्य स्तोकविषयत्वात् स्तोकतया प्रति-पादयिष्यत इति तदनन्तरमौपशमिकस्य, ततो बहुविषय-त्वात् क्षायिकस्य ततो बहुतरविषयत्वात् क्षायोपशमिकस्य, ततो बहुतमविषयत्वात्पारिणामिकस्य, ततोऽप्येषामेव भावानां द्विकादिसंयोगसमुत्थत्वात्सान्निपातिकस्योपन्यास इति पूर्वानुपूर्वीक्रमसिद्धिरिति । शेषं पूर्वोक्तानुसारेण भा-वनीयम् । तदेवमुक्ता प्रागुद्दिष्टा दशाप्यानुपूर्वीभेदाः, तद्भणने चोपक्रमप्रथमभेदलक्षणा आनुपूर्वी समाप्ता । अनु० ।

आणोह-आज्ञौघ-पुं० । सम्यग्दर्शनविकले आज्ञामात्रे, पञ्चा० । " आणोहेणाऽणंता, मुक्का " ॥ ४८४ ॥ पञ्चा० । आज्ञया-आप्तोपदेशरूपया ओघः-सामान्यमाज्ञौघः ; सम्यग्दर्शन-विकलमाज्ञामात्रमित्यर्थः । तेन सताऽपीति गम्यम् अन-न्तानि अनन्तसंख्यानि मुक्तानि-त्यक्तानीति । पञ्चा० १६ विव० ।

आतं(यं)क-आतङ्क-पुं० । 'तकि' कृच्छ्रजीवने, आतङ्कन-मातङ्कः । आ-तकि-घञ् । कृच्छ्रजीवने, ( दुःखे ) आचा० १ श्रु० १ अ० ७ उ० । नरकादिदुःखे च । आचा० १ श्रु० ३ अ० २ उ० । तच्च द्विविधम्-शारीरं, मानसं च । तत्राद्यम्-कण्टकक्षारशस्त्रगण्डलूतादिसमुत्थम्, मानसं प्रियविप्रयोगा-ऽप्रियसंप्रयोगेप्सितालाभदारिद्र्यदौर्मनस्यादिकृतम् । आ-चा० १ श्रु० १ अ० ७ उ० । यदिवा-आतङ्को द्विधा-द्रव्यभा-वभेदात् । ( स च 'आतं(यं)कदंसि' शब्देऽस्मिन्नेव भागेऽनु-पदमेव दर्शयिष्यते) रोगे, स्था० ५ ठा० ३ उ० । उत्त० । को० । अनु० । आङिति सर्वात्मप्रदेशाऽभिव्याप्त्या तङ्कयन्ति-कृ-च्छ्रजीवितमात्मानं कुर्वन्तीत्यातङ्काः । सद्योघातिनि रोग-विशेषे, उत्त० २० अ० । " आयङ्को जरमाई " ॥ १८३२+ ॥ आतङ्काः-ज्वरादिः सद्यो घाती रोगः । पं०व०५ द्वार । उत्त० । " आसुघाई आतंको " आव० ४ अ० । स्था० । पिं० सू० । आ० चू० । जी० । उत्त० । प्रव० । रा० । आ० म० । दश० । ' आतंका विविहा फुसंति " ॥ १८५ ॥ आतङ्का -रोगपरीषहा स्पृशन्ति । उत्त० २१ अ० । आतङ्क -कृच्छ्रजीवितकारी ज्व-रादिकः । भ० १६ श० २ उ० । ' उयाहु ते आतंका फुसंति " (सूत्र-१४७४) । आतङ्काः-आशुजीवितापहारिणः शूलादयो-व्याधिविशेषाः स्पृशन्ति-अभिभवन्ति-पीडयन्ति । आचा० १ श्रु० ४ अ० २ उ० । उत्त० । भ० । ज्ञा० । सूत्र० । स्था० । ' दीहकालिएणं रोगातंकेणं" (सूत्र-१३५+) । आतङ्क - कृच्छ्र-जीवितकारी सद्योघाती शूलादिः । स्था० ३ ठा० १ उ० । ज्ञा० । प्रश्न० । आतङ्का -सद्योघातिनः शूलादिका रोगाः । सभा० । भ० । ' आयंके से वहाय होइ ॥६॥ " ( सूत्र-१४ ) । आतङ्क -सद्योघाती विशूचिकादिको रोगस्तस्य गृहिणो धर्मप्रत्युद्यतस्य वधाय-विनाशाय भवति । दश० १ चू० । ते चोत्तराध्ययने दर्शिता यथा—

अरई गंडं विसूइया, आयंका विविहा फुसंति ते ।
विवडइ विद्धंसइ ते सरीरयं,समयं गोयम ! मा पमायए॥२७॥

हे गौतम ! ' ते ' तव विविधा -नानाप्रकारा आतङ्का-रोगाः शरीरं स्पृशन्ति ते केचन आतङ्का अरतिश्चतुरशीतिविधि-धवातोद्भूतचित्तोद्वेगः; वातप्रकोप इत्यर्थः । गण्डं-रुधिर-प्रकोपोद्भूतस्फोटकः । विशूचिका—अजीर्णोद्भूतवमना-द्यतिविरेचनादि सद्यो मृत्युकृत् रुक् इत्याद्यो रोगा-आत-ङ्का देहं पीडयन्ति, तैः रोगैः पीडिते शरीरे सति ध-र्माराधनं दुष्करं ते शरीरं रोगाभिभूतं सत् विपतति, वि-शेषेण बलापचयात् नश्यति, पुनः शरीरं ' ते ' तव वि-ध्वस्यते जीवमुक्तं सत् विशेषेण अधः पतति, अत्र सर्वत्र यद्यपि ' ते ' तव इत्युक्तं गौतमे च केशपाण्डुरत्वादि इन्द्रि-याणां हानिश्च न संभवति तथापि तन्निश्रया अपर-शिष्यादिवर्गप्रतिबोधार्थमुक्तं दोषाय न भवति, तथा च प्रमादो न विधेयः । उत्त० १० अ० । रोगा -अकालमहात्या-घय आतङ्कास्त एव सद्योघातिन इति । औ० । आतङ्क-रोगयोर्विशेषो यथा—स्यात् करिसो रोगो, करिसो वा आतङ्कस्तत उच्यते ।।

गाहा—

गंडी कोढं खयकादी, रोगा कासादितो तु आतंको ।
दीहरुया वा रोगो, आतङ्को आसुघाती य ॥ २१६ ॥

(अस्या गाथायाः व्याख्या ' फलेव ' शब्दे पञ्चमभागे दर्श-यिष्यते । बृ० १ उ० २ प्रक० । ) । नि० चू० । आतङ्को ज्व-रादिस्तद्योगादातङ्किनोऽप्यातङ्का । आतङ्किनि, पिं० । सं-तापे, सन्देहे, मुरजशब्दे, भये च । वाच० ।

आतं(यं)कदंसि (न्)-आतङ्कदर्शिन्-पुं० । ' तकि ' कृच्छ्र-जीवने, आतङ्कनमातङ्कः कृच्छ्रजीवनं-दुःखं तच्च द्विवि-धम्-शारीरं, मानसं च । तत्राद्य-कण्टकक्षारशस्त्रगण्डलू-तादिसमुत्थम् , मानसं प्रियसंप्रयोगेप्सितालाभदारिद्र्य-दौर्मनस्यादिकृतम् । एतदुभयमातङ्कं पश्यति तच्छीलश्चेत्या-तङ्कदर्शी । अवश्यमेतदुभयमपि दुःखमप्यापततीत्येवं ज्ञा-तरि, आचा० ।

( तथा च वायुकायसमारम्भमधिकृत्य)—

आयंकदंसी अहियंति णच्चा ।( सूत्र-५६ + )

अवश्यमेतदुभयमपि दुःखमापतति मत्यनिवृत्तवायुकाय-समारम्भे ततश्च तद्वायुकायसमारम्भणमातङ्कहेतुभूतमहि-तमिति ज्ञात्वैनस्मान्निवर्तनं प्रभुर्भवतीति । यदि वा-आत-ङ्का द्विधा-द्रव्य-भावभेदाद् । तत्र द्रव्यातङ्के इदमुदाहरणम्-

"जम्बुद्दीवे दीवे, भारहवासम्मि अत्थि सुपसिद्धं ।
बहुणयरगुणसमिद्धं रायगिहं णाम णयरं ति ॥ १ ॥
तत्थासि गरुयदरिया-रिमद्दणो सुयणनिग्गयपयावो ।
अभिगयजीवाजीवो, राया णामेण जियसत्तू ॥ २ ॥
अणवरयगरुयसंवे-गभाविओ धम्मघोसपामूले ।
सो अन्नयाकयाई, पमाइणे पासए सेहे ॥ ३ ॥
चोइज्जतमभिक्खं, अवराहं तं पुणो वि कुणमाणे ।
तम्स हिअट्ठ राया, सेमाण य रक्खणट्ठाए ॥ ४ ॥

आयरियासुएणाए, आणावइ सो उ णिययपुरिसेहिं ।
निब्बुक्कउदव्वेहिं संघिय पुव्व नहिं खार ॥ ५ ॥
पक्खित्ता जत्थ णगे, णवर दोगोहमेत्तकालेण ।
णिज्जिएणमंससोणिय-अट्ठिऽवसेसत्तणमुवेइ ॥ ६ ॥
दा ताहे पुव्वमए, पुरिसे आणावए तहिं एया ।
एग गिहत्थवेसं, बीयं पासंडिणेवत्थ ॥ ७ ॥
पुव्वं वि य सिक्खविए, ते पुरिसे पुच्छए तओ राया ।
अवराहो एएसिं भणंति आणं अइक्कमइ ॥ ८ ॥
पासंडिओ जहुत्ते-ण वट्टइ अत्तणो य आयारे ।
पक्खिवह खारमज्झे, खित्ता गोदोहमेत्तस्स ॥ ९ ॥
दट्ठूणऽट्ठिऽवसेसं, ते पुरिसे अलियरोसरत्तऽच्छो ।
सेइ आलायनो, राया तो भणइ आयरियं ॥ १० ॥
तुम्हे वि कोऽवि पमादी,
सासेमि य तं पि णऽत्थि भणइ गुरू ।
जइ होहिइ तो साहे,
तुम्हे चिय तस्स जाणिहिह ॥ ११ ॥
सेहो गए णिवम्मि, भणइ ते साहुणो उण पुण त्ति ।
हा हं पमायसीला; तुम्हं सरणागओ धणियं ॥ १२ ॥
जइ पुण होज्ज पमाओ, पुणो ममं सब्भावरहियस्स ।
तुम्हं गुणेहिं सुविहिय, तो सायरक्खमामुच्च ॥ १३ ॥
आयकभउव्विग्गो ताहे सो णिच्चउज्जुओ जाओ ।
के वियमती य समए, रक्खा नरिसाविओ पच्छा ॥ १४ ॥
दव्वायंकाऽऽदंसी, अत्ताए मव्वहा णियत्तेइ ।
अहियारभा उ सया, जह सीसा धम्मघासस्स ॥ १५ ॥"

भावातङ्काऽऽदर्शी तु नरकतिर्यग्मनुष्यामरभवेषु प्रियविप्रयोगादिशारीरमानसाऽऽतङ्कभीत्या न प्रवर्तते वायुसमारम्भे । अपि तु-अहितमेतद्वायुसमारम्भणमिति मत्वा परिहरति । आचा० १ श्रु० १ अ० ७ उ० ।

आयंकदंसी न करेइ पावं ॥४+॥ (सूत्र-१११)

आतङ्को-नरकादिदु:ख तदुद्द्रष्टुं शीलमस्यत्यातङ्कदर्शी स 'पाप' पापानुबन्धि कर्म न करोति उपलक्षणार्थत्वान्न कारयति, नानुमन्यत इति । आचा० १ श्रु० ३ अ० २ उ० ।

**आतं (यं) कविवचास-आतङ्कविपर्यास-पुं०** । आगाढे अनागाढकरणे । आयकविवच्चासो नाम-आगाढे अहिदट्ठाइ, अणागाढं करेइ त्ति । पं० चू० ४ कल्प ।

**आतं (यं) कसंपओगसंपउत्त-आतङ्कसंप्रयोगसंप्रयुक्त-त्रि०** । आतङ्का-रोगस्तस्य संप्रयोग-सम्बन्धस्तेन संप्रयुक्त सम्बन्धो य. स तथा । आतङ्कनबद्धे, "आतंकसंपओगसपउत्ते तस्स विप्पओगे सति समण्णागए यावि भवइ ३ ।" (सूत्र-४४७+) (अथ चार्तध्यानस्य तृतीयो भेदस्तद्व्याख्यना 'अ(ट्ट)ज्झाण' शब्दे प्रथमभागे गता) स्था० ४ ठा० १ उ० । ग० । औ० ।

**आतं (यं) कि (न्)-आतङ्किन्-पुं०** । रोगिणि. स्था० ५ ठा० ३ उ० ।

**आतं (यं) चणिया-आतंचनिका-स्त्री०** । कुम्भकारभाजने. भ० । 'आयचणिओदएणं गायाइं परिसिंचमाणे विहरइ" (सूत्र-५५३+) । 'आयंचणिओदएणं' ति-इह आतञ्चनिकोदक-कुम्भकारस्य भाजनं स्थितं तेमनाय मृन्मिश्रं जलं तेन । भ० १५ श० ।

**आतं (यं) तकर-आत्मान्तकर-पुं०** । आत्मनोऽन्तम्-अवसानं भवस्य करोतीत्यात्मान्तकर । प्रत्येकबुद्धादिके, स्था० ४ ठा० २ उ० । आत्मनोऽन्त-मरणं करोतीत्यात्मान्तकर । आत्मवधके स्था० ४ ठा० २ उ० । "आयंतकरे णाममेगे णो परंतकरे" (सूत्र-२८७) स्था० ४ ठा० २ उ० ।

**आतं (यं) तम-आत्मतम-पुं०** । आत्मानं तमयति-खेदयतीत्यात्मतम । आचार्यादिके आत्मखेदयितरि, स्था० । आत्मैव तम -अज्ञान, क्रोधो वा यस्य स आत्मतमा । अज्ञानात्मनि, क्रोधात्मनि च । स्था० । 'आयतमे णाममेगे णो परंतमे' (सूत्र-२८७+) स्था० ४ ठा० २ उ० ।

**आतं (यं) दम-आत्मदम-पुं०** । आत्मानं दमयति-शमवन्तं करोति-शिक्षयति वत्यात्मदम । आचार्ये, स्था० । अश्वदमकादौ च । "आयंदमे णाममेगे णो परंदमे" (सूत्र-२८७+)। स्था० ४ ठा० २ उ० ।

**आत (यं) व-आताम्र-त्रि०** । ईषद्रक्ते, जं० २ वक्ष० । औ०। "आयंवतलिणसुइरुइलनिद्धनक्खा" (सूत्र-१४७) । आताम्रा -ईषद्रक्तास्तलिना -प्रतला शुचय -पवित्रा रुचिरा दीप्ता स्निग्धा-अरूक्षा नखा -कररुहा येषा ते आताम्रतलिनशुचिरुचिरस्निग्धनखा । जी० ३ प्रति०४ अधि०२ उ० ।

**आतं (यं) वज्झयण-आताम्राऽध्ययन-न०** । सूर्यस्याग्रमहिष्या आताम्राया वक्तव्यताप्रसिद्धे ज्ञाताधर्मकथाया द्वितीयश्रुतस्कन्धसप्तमवर्गस्य द्वितीयेऽध्ययने, ज्ञा० २ श्रु० ७ वर्ग १ अ० ।

**आतं (यं) भरि-आत्मम्भरि-त्रि०** । आत्मानं बिभर्ति भृ-खि-मुम्-च उप० स० । स्वोदरमात्रपूरके, । देवतातिथ्यनादरणात्मपापकत्वात्तस्य तथात्वम् । "आत्मम्भरिस्त्व पिशितैर्नराणाम्" भट्टि । वाच० । आत्मानं बिभर्ति-पुष्णातीति आत्मम्भरि । स्वार्थकारके, स्था० । "आयंभरे णाममेगे णो परंभरे" (सूत्र-३२७+) । आत्मम्भरि. प्राकृतत्वात् 'आयंभरे' । स्था० ४ ठा० ३ उ० ।

**आत (य) कम्म (न्)-आत्मकर्मन्-त्रि०** । ६ त० । आत्मन -स्वस्य कर्त्तव्ये कार्य्ये, 'आत्मकर्मक्षम देह क्षात्रो धर्म इवाश्रित ।" रघु । वाच० । ज्ञानावरणादिके आत्मकृतकर्माणि, भ० "किं आयकम्मुणा उववज्जति ?, परकम्मणा उववज्जति" (सूत्र-६८६+) । भ० २० श० १० उ० ।

**आत (य) गवेसय-आत्मगवेषक-त्रि०** । आत्मान कर्ममलापहारेण शुद्ध गवेषयतीत्यात्मगवेषक । उत्त० १५ अ० । आत्मानं कर्मविगमाच्छुद्धस्वरूप गवेषयति-कथमयमित्थंभूतो भवेदित्यन्वेषयते य स आत्मगवेषक । कर्मविगमाच्छुद्धस्वरूपस्यात्मनाऽन्वेषके, उत्त०पाई० १५ अ० । "साहए आयगवेसए स भिक्खू" ॥ ५ ॥ उत्त० १५ अ० ।

**आत (य) गय-आत्मगत-त्रि०**। आत्मनि गतमात्मगतम् । आत्मगे, सूत्र० ।

संलोकणिज्जमणगारं, आयगयं निमंतणे णाहंसु ॥२०+॥

सलोकनीयं-संदर्शनीयमाकृतिमन्तं कञ्चनाऽनगार-साधुमात्मनि गतमात्मगतम् आत्मज्ञमित्यर्थ । सूत्र० १ श्रु० ४ अ० २ उ० ।

आत ( य ) गुत्त-आत्मगुप्त-त्रि० । आत्मा-शरीरम् आत्मशब्दस्य शरीरवचनस्यापि दर्शनात्, उक्तं हि-" धर्मधृत्यग्निर्धाम्ब्वर्क—स्वकृतस्वस्वार्थदेहिपु । शीलाऽनिलमनोयत्नै-कर्वीर्येष्वात्मन स्मृति ॥ १ ॥ " इति, तेन गुप्त आत्मगुप्तो न यतस्तत करचरणादिविक्षेपकृत्, इतस्तत करचरणाऽविक्षेपक, यद्वा—गुप्ता रक्षितोऽसंयमस्थानेभ्य आत्मा येन स तथा । उत्त०पाइ० १५ अ० । असंयमस्थानेभ्यो रक्षितात्मनि, आत्मा गुप्तो यस्य स आत्मगुप्त । सूत्र० २ श्रु० २ अ० । मनोवाक्कायैरात्मा गुप्तो यस्य स. आत्मगुप्त । सूत्र० १ श्रु० ७ अ० । मनोवाक्कायगुप्त, सूत्र० १ श्रु० ११ अ० । इन्द्रिय-नोइन्द्रियात्मना गुप्त आत्मगुप्त । आचा० १ श्रु० ३ अ० ३ उ० । आत्मना-मनोवाक्कायरूपेण गुप्त आत्मगुप्त । सूत्र० १ श्रु० ११ अ० । मनोवाक्कायात्मना गुप्त, ' आयगुत्ते सयावी(धी)रे ॥१+॥ (सूत्र-११६×) । " आयगुत्ते सया दते ' ॥ सूत्र० १ श्रु० ११ अ० ।

(आत्मगुप्तस्य फलमाह)—

कडं च कज्जमाणं च, आगमिस्सं च पावगं ।

सव्वं त णाणुजाणंति, आयगुत्ता जिइंदिया ॥ २१ ॥

साधूद्देशेन यद् अपरै.-अनार्यकल्पै. कृतम्-अनुष्ठितं पापकं कर्म तथा वर्त्तमाने च काले क्रियमाण तथाऽऽगामिनि च काले यत्करिष्यते तत्सर्वं मनोवाक्कायकर्मभिर्नानुजानन्ति नानुमोदन्ति तदुपभोगपरिहारेणेति भाव । यद्यप्यात्मार्थं पापक कर्म परै. कृतं, क्रियते, करिष्यते च । तद्यथा-शत्रो शिरश्छिन्नं, छिद्यते, छेत्स्यते वा, तथा चौरो हतो, हन्यते, हनिष्यते वा, इत्यादिक परानुष्ठानं नाऽनुजानन्ति-न च बहु मन्यन्ते, तथाहि । यदि पर. कश्चिदशुद्धेनाहारेणोपनिमन्त्रयेत्तमपि नानुमन्यत इति । क एवभूता भवन्तीति दर्शयति-आत्माऽकुशलमनोवाक्कायनिरोधेन गुप्ता येषां ते तथा, जितानि-वशीकृतानि इन्द्रियाणि-श्रोत्रादीनि यैस्ते तथा एवभूता पापकर्म नाऽनुजानन्तीति स्थितम् । सूत्र० १ श्रु० ८ अ० ।

गुप्तात्मन्-त्रि० । गुप्त -असंयमस्थानेभ्यो रक्षित आत्मा येन स गुप्तात्मा प्राकृतत्वाद्विपर्यय । असंयमस्थानेभ्यो रक्षितात्मनि, उत्त० १५ अ० । आत्मना गुप्त । स्वशक्त्यैव रचिते लताभेदे, स्त्री० । तस्याः स्पर्शने हि आतिकण्डूयनं दु ख भवति तद्भयाद्यान्यैर्न सा स्पृश्यत इति तस्या आत्मगुप्तत्वम् । वाच० ।

आत ( य ) छट्ठवाइ ( न् )-आत्मषष्ठवादिन्-पुं० । आत्मा षष्ठो यथा तान्यात्मषष्ठानि भूतानि विद्यन्त इत्येवं वादिनि सांख्यादौ, सूत्र० ।

साम्प्रतमात्मषष्ठवादिमतं पूर्वपक्षयितुमाह—

संति पंचमहाभूया, इह मेगेसि आहिया ।

आयछट्ठो पुणो आहु, आया लोगे य सासए ॥१५॥

आत्मतत्त्वमेव भूय प्रतिपादयितुमाह—

दुहओ ण विणस्संति, नो य उप्पज्जए असं ।

सव्वे वि सव्वहा भावा, नियतीभावमागया ॥ १६ ॥

सूत्र० १ श्रु० १ अ० १ उ० । ( अनयोर्गाथयोर्व्याख्यानम् ' अत्तछट्ठ ' शब्दे प्रथमभागे ५०२ पृष्ठे गतम् । )

आत (य) जस ( स् )-आत्मयशस्-न० । आत्मसंबन्धिनि यशसि, यशोहेतुभूते संयमे च । भ० "जीवा किं आयजसेणं उववज्जंति " ( सूत्र-८६७ + ) । ' आयजसेणं ' ति-आत्मनः संबन्धि यशो यशोहेतुत्वाद्यश-संयम आत्मयशस्तेन (भ०) ' आयजसं उवजीवंति ' त्ति-आत्मयश -आत्मसंयममुपजीवन्ति-आश्रयन्ति; विदधतीत्यर्थ । भ०४१ श० ।

आत (य) जोगि ( न् )-आत्मयोगिन्-पुं० । आत्मनो योगः कुशलमन प्रवृत्तिरूप आत्मयोग स यस्यास्ति । सदा धर्मध्यानावस्थिते, सूत्र० २ श्रु० २ अ० ।

आत (य) ट्ठ-(अप्पणट्ठ)-आत्मार्थ-पु० । आत्महिते, "आयट्ठं " ( सूत्र-६६ + टी० ) । आचा० १ श्रु० २ अ० १ उ० । आत्मनोऽर्थ आत्मार्थ.। ज्ञानदर्शनचारित्रेषु, आत्मने हितम्-प्रयोजनमात्मार्थम् । चरित्रानुष्ठाने, आचा० १ श्रु० २ अ० १ उ० ।

आयतट्ठ(अप्पणट्ठ)-आयतार्थ-पुं० । आयतः-अपर्यवसानान्मोक्ष एव स चासावर्थश्चायतार्थ. । मोक्षात्मके प्रयोजने, आयतो-मोक्ष अर्थ-प्रयोजनं यस्य स. । मोक्षप्रयोजनक दर्शनादिके, आचा० १ श्रु० २ अ० १ उ० । आत्मनिमित्ते, ' अप्पणट्ठा परट्ठा वा " ( सूत्र-१३ + ) । आत्मार्थमात्मनिमित्तम् । दश० ६ अ० २ उ० ।

( आत्मार्थश्चावश्यमुपासनीयः )—

अप्पं च खलु आउयं इहमेगेसिं माणवाणं ॥ ६२ ॥

आचा० १ श्रु० २ अ० १ उ० । ( अस्य व्याख्या ' आउ ' शब्दे अस्मिन्नेव भागे प्राग् दर्शिता )

येऽपि दीर्घायुष्कस्थितिका उपक्रमणकारणाभावे आयुःस्थितिमनुभवन्ति तेऽपि मरणादर्व्यागधिकां जराभिभूतविग्रहा जघन्यतरामवस्थामनुभवन्तीति तद्यथेत्यादिना दर्शयति-

ते जहा-सो य परिण्णाणेहिं परिहायमाणेहिं चक्खुपरिण्णाणेहिं परिहायमाणेहिं घाणपरिण्णाणेहिं परिहायमाणेहिं रसणपरिण्णाणेहिं परिहायमाणेहिं फासपरिण्णाणेहिं परिहायमाणेहिं अभिक्कंतं च खलु वयं सपेहाए तओ से एगदा मूढभावं जणयंति ॥ ६३ ॥

'सो य परिण्णाणेहिं' इत्यादि । तत स एकदा मूढभावं जनयंतीति । यावत् शृणोति भाषापरिणतान् पुद्गलानिति श्रोत्रं, तच्च कदम्बपुष्पाऽऽकार द्रव्यतो भावतो भाषाद्रव्यग्रहणलब्ध्युपयोगस्वभावमिति, तेन श्रोत्रेण परि -समन्ताद् घटपटशब्दाऽऽदिविषयाणि ज्ञानानि-परिज्ञानानि तै श्रोत्रपरिज्ञानैर्जराप्रभावात्परिहीयमानै सद्भिस्ततोऽसौ प्राणी एकदा-वृद्धावस्थायाम्-रोगाद्यावसरे वा मूढभावम्-मूढता कर्त-

१-सोऽस्थिरदन्तेन स्म शृणोत ।

त्याऽकर्त्तव्यमतामिन्द्रियपाटवाभावादात्मनो जनयति; हिताऽहितप्राप्तिपरिहारविवेकशून्यतामापद्यत इत्यर्थः । जनयन्तीति विवेकवचनावसरे " तिडा निडो भवन्ति " इति बहुवचनमकारि, अथवा-तानि वा श्रोत्रविज्ञानानि परिहीयमाणान्यात्मनः सदसद्विवेकशून्यतामापादयन्तीति, श्रोत्रादिविज्ञानानां च तृतीया प्रथमार्थे सुव्यत्ययेन द्रष्टव्येति, एवं चक्षुरादिविज्ञानेष्वपि योज्यम् । अत्र च करणत्वादिन्द्रियाणामेव सर्वत्र द्रष्टव्यम्—श्रोत्रेणात्मनो विज्ञानानि चक्षुषात्मनो विज्ञानानीति ५। (आचा०) अत्र च ' सोयपरिन्नाणेहिं परिहायमाणेहिं ' त्यादि , य उत्पत्तिं प्रति व्यत्ययेनेन्द्रियाणामुपन्यासः स एवमर्थो द्रष्टव्यः-इह संज्ञिनः पञ्चेन्द्रियस्य उपदेशदानेनाधिकृतत्वादुपदेशश्च श्रोत्रेन्द्रियविषय इति कृत्वा तत्पर्याप्तौ च सर्वेन्द्रियपर्याप्तिः सूचिता भवति । श्रोत्रादिविज्ञानानि च वयोऽतिक्रमे परिहीयन्ते, तदाह—'अभिक्कंतमि' त्यादि, अथवा-श्रोत्रादिविज्ञानैरपचितैः करणभूतैः सद्भिः ' अभिक्कंतं च खलु वयसंपेहाए ' तत्र प्राणिनां कालकृता शरीरावस्था-यौवनादिर्वय तज्जरामभि मृत्युं वा क्रान्तमभिक्रान्तम् , इह हि चत्वारि वयांसि कुमारयौवनमध्यमवृद्धत्वानि, उक्तं च—' प्रथमे वयसि नाधीतं, द्वितीये नार्जितं धनम् । तृतीये न तपस्तप्तं, चतुर्थे किं करिष्यति " ॥ १ ॥ तत्राद्यवयोद्वयातिक्रमे जराभिमुखमभिक्रान्तं वयो भवति, अन्यथा वा त्रीणि वयांसि कौमारयौवनस्थविरत्वभेदाद् , उक्तं च-" पिता रक्षति कौमारे, भर्ता रक्षति यौवने । पुत्राश्च स्थाविरे भावे, न स्त्री स्वातन्त्र्यमर्हति ॥१॥ " अन्यथा वा त्रीणि वयांसि बालमध्यमत्ववृद्धत्वभेदाद् , उक्तं च-"आषोडशाद्भवेद् बालो, यावत् क्षीरान्नवर्तकः । मध्यमः सप्ततिं यावत्-परतो वृद्ध उच्यते ॥१॥" एतेषु वयस्सु सर्वेष्वपि या उपचयवत्यवस्था तामतिक्रान्तोऽतिक्रान्तवया इत्युच्यते, च समुच्चये, न केवलं श्रोत्रचक्षुर्घ्राणरसनस्पर्शनविज्ञानैर्व्यस्तसमस्तैर्देशतः सर्वतो वा परिहीयमानैर्वा मौढ्यमापद्यते, वयश्चातिक्रान्तं प्रेक्ष्य—पर्यालोच्य, ' स ' इति-प्राणी, खलुरिति विशेषणे विशेषेण अत्यर्थं मौढ्यमापद्यत इति, आह च-'ततो से' इत्यादि,'तत' इति-तस्मादिन्द्रियविज्ञानापचयाद् वयोऽतिक्रमणाद्वा 'से' इति-प्राणी 'एकदे' ति-वृद्धावस्थायां मूढभावो-मूढत्वं किंकर्तव्यताभावमात्मनो जनयति, अथवा- से' तस्याऽसुभृतः श्रोत्रादिविज्ञानानि परिहीयमाणानि मूढत्वभावं जनयन्तीति ।

स एवं वार्द्धक्ये मूढस्वभावः सन् प्रायेण लोकावगीतो भवतीत्याह—

जेहिं वा सद्धिं संवसति ते वि णं एगदा णियगा पुव्विं परिवयंति। सोऽवि ते णियए पच्छा परिवएज्जा, णाऽलं ते तव ताणाए वा सरणाए वा, तुमं पि तेसिं णाऽलं ताणाए वा सरणाए वा, से ण हासाय ण किड्डाए ण रतीए ण विभूसाए ॥ ( सूत्र-६४ )

'जेहिं वे'त्यादि, वाशब्दः पक्षान्तरद्योतकः । आस्तां तावत् अपरो लोको यैः पुत्रकलत्रादिभिः सार्द्धं सह संवसति ।



त एव भार्यापुत्रादयो णमिति वाक्यालङ्कारे । एकदेति-वृद्धावस्थायां ' नियगा ' आत्मीया ये तेन समर्थावस्थायां पूर्वमेव पोषितास्ते तं ' परिवदन्ति ' परि-समन्ताद्वदन्ति-यथाऽयं न म्रियते, नापि मञ्चकं ददाति, यदि वा परिवदन्ति-परिभवन्तीत्युक्तं भवति, अथ वा-किमनेन वृद्धेनेत्येवं परिवदन्ति न केवलमेषां तस्यामपि तस्यामवस्थायामवगीतो भवतीति, आह च-" वलिसंततमस्थिशेषितं, शिथिलस्नायुपिनद्ध कडे(ले)वरम् । स्वयमेव पुमान् जुगुप्सते, किमु कान्ता कमनीयविग्रहा " ॥ १ ॥ गोपालबालाङ्गनादीनां च दृष्टान्तद्वारेणोपन्यस्तोऽर्थो बुद्धिमधितिष्ठतीत्यतस्तदाविर्भावनाय कथानकम्-कौशाम्ब्यां नगर्यामर्थवान् बहुपुत्रो धनो नाम सार्थवाहस्तेन चैकाकिना नानाविधैरुपायैः स्वापतेयमुपार्जितम् , तथाशेषद्रु खितबन्धुजनस्वजनमित्रकलत्रपुत्रादिभोग्यतां नीत्वा, ततोऽसौ कालपरिपाकवशाद् वृद्धभावमुपगतः सन् पुत्रेषु सम्यक्पालनोपचितकलाकुशलेषु समस्तकार्यचिन्ताभारं निचिक्षेप । तैरपि वयमनेनेदृशीमवस्थां नीता सर्वजनाग्रे "सरा विहिता" इति कृतोपकारैः सद्भिः कुलपुत्रतामवलम्बमाना स्वतः क्वचित् कार्यव्यासङ्गात् स्वभार्याभिः स्तिमकल्प वृद्धः प्रत्यजजागरन् ता अप्युद्वर्तनस्नानभोजनादिना यथाकालमनुष्ठेयं विहितवत्यस्ततो गच्छत्सु दिवसेषु वर्द्धमानेषु पुत्रभाण्डेषु प्रौढीभवत्सु भर्तृषु जरद्वृद्धे च विवशकरणपरिचारे सर्वाङ्गकम्पनि गलद्दशेषश्रोतांसि सति शनैः शनैरुचितमुपचारं शिथिलतां निन्युः , असावपि मन्दप्रतिजागरणतया चित्ताभिमानेन विथ्यसया च सुतरां दुःखसागरावगाढः सन् पुत्रेभ्यः स्नुषाद्गुणान्याऽऽचचक्षे ताश्च स्वभर्तृभिर्खिद्यमाना सुतरामुपचारं परिहृतवत्यः सर्वाश्च पर्यालोच्यैकवाक्यतया स्वभर्तृनभिहितवत्यः क्रियमाणेऽप्ययं प्रतिजागरणे वृद्धभावाद्विपरीतबुद्धितयाऽपह्नुते , यदि भवतामप्यस्माकमुपर्यविश्रम्भस्ततोऽन्येन विश्वसनीयेन निरूपयत तेऽपि तथैव चक्रुः , तास्तु तस्मिन्नवसरे सर्वा अपि सर्वाणि कार्याणि यथावसरं विहितवत्यः , असावपि पुत्रैः पृष्टः पूर्वविरुक्षितचेतास्तथैव ता अपवदति नैता मम किञ्चित्सम्यक् कुर्वन्ति, तैस्तु प्रत्ययैकवचवादचगतत्तद्वैर्यथायमुपचर्यमाणोऽपि वार्द्धक्याद् रोरुयते, ततस्तैरप्यवधीरितोऽन्येषामपि यथाऽवसरे तद्वत्खण्डनस्वभावतामाचचक्षिरे । ततोऽसौ पुत्रैस्तद्वधूभिश्च स्नुषाभिः परिभूतः परिजनेनावगीतो वाङ्मात्रेणापि केनचिदप्यननुवर्त्यमानः सुखितेषु दुःखितः कष्टतरामायुःशेषामवस्थामनुभवतीति, एवमन्योऽपि जराभिभूतविग्रहस्तृणकुब्जीकरणोऽप्यसमर्थः सन् स्वार्थैकनिष्ठलोकात्परिभवमाप्नोतीति, आह-" गात्रं सङ्कुचितं गतिर्विगलिता दन्ताश्च नाशं गताः, दृष्टिर्भ्रश्यति रूपमेव ह्रसते वक्त्रं च लालायते । वाक्यं नैव करोति बान्धवजनः पत्नी न शुश्रूषते, धिक्कष्टं जरयाऽभिभूतपुरुषं पुत्रोऽप्यवज्ञायते"॥१॥ इत्यादि तदेवं जराभिभूतं निजाः परिवदन्त्यसावपि परिभूयमानस्तद्विरक्तचेतास्तदपवादान् जनायाऽऽचष्टे , आह च-' सो वा ' इत्यादि, वाशब्दः पूर्वापेक्षया पक्षान्तरं दर्शयति-ते वा निजास्तं परिवदन्ति, स वा जराजर्जरितदेहस्तान्निजान् अनेकदोषोद्घट्टनतया परिवदेत्-निन्देद् ,

अथ वा-खिद्यमानार्थनया तानसावयगायति; परिभवनी-त्यर्थ । येऽपि पूर्वक्तनधर्मवशात्तं वृद्धं न परिवदन्ति तेऽपि तदुःखाऽपनयनसमर्था न भवन्ति, आह च— 'नालमि' त्यादि-नाऽलं-न समर्थास्ते पुत्रकलत्रादयस्तवेति । प्रत्यक्षभावमुपगतं वृद्धमाह—त्राणाय शरणाय वेति, तत्रापत्तरणसमर्थं त्राणमुच्यते, यथा महाश्रोतोऽभिरुह्यमान· सुकर्णधाराऽधिष्ठितं प्लवमासाद्याऽऽपस्तरन्तीति, शरणं पुनर्यद्वष्टम्भान्निर्भयैः स्थीयते तदुच्यते, तत्पुनर्दुर्ग-पर्वत-पुरुषो वेति, एतदुक्तं भवति--जराभिभूतस्य न कश्चित् त्राणाय, शरणाय वा, त्वमपि तेषां नालं त्राणाय शरणाय वेति, उक्तञ्च-' जन्मजरामरणभयै-रभिद्रुते व्याधिवेदनाग्रस्ते । जिनवरवचनादन्य-त्र नास्ति शरणं क्वचिल्लोके ॥ १ ॥ " इत्यादि, स तु तस्यामवस्थायां किंभूतो भवतीत्याह-' से ण हस्साए ' इत्यादि, स जराजीर्णविग्रहो न हास्याय भवति तस्यैव हसनीयत्वात्; न परान् हसितुं योग्यो भवतीत्यर्थ । स च समक्षं परोक्षं वा एवमभिधीयते जनै -किं किलास्य हसितेन हास्यास्पदस्येति । न च क्रीडायै न च लङ्घनवल्गनास्फोटनक्रीडानां योग्योऽसौ भवति, नापि रत्यै भवति रतिरिह विषयगता गृह्यते सा पुनर्ललनावगूहनादिका, तथाभूतोऽप्ययजुगुप्सिषु स्त्रीभिरभिधीयते-न लज्जसे भवान् पश्यति-आत्मानं नावलोकयति शिर पलितभस्मावगुण्डितं मां दुहितृभूतामेवं गृहितुमिच्छसीत्यादिवचसामास्पदत्वान्न रत्यै भवति, न विभूषायै, यतो विभूषितोऽपि प्रततचर्मवलिक· स नैव शोभन, उक्तञ्च—

" न विभूषणमस्य युज्यते, न च हास्यं कुत एव विभ्रम ?।
अथ तेषु च वर्तते जनो, ध्रुवमायाति परां विडम्बनाम् "॥१॥
" जं जं करेइ तं तं, न सोहए जोव्वणे अतिक्कंते ।
पुरिसस्स महिलियाए, एक्कं धम्मं पमुत्तूणं " ॥ २ ॥

गतमप्रशस्तं मूलस्थानम् । सांप्रतं प्रशस्तमुच्यते—

इच्चेवं समुट्ठिए अहोविहाराए अंतरं च खलु इमं संपेहाए धीरे मुहुत्तमवि णो पमायए वओ अच्चेति जोव्वणं व । ( सूत्र-६५ )

अथ वा-यत एवं ते सुहृदो नाल त्राणाय शरणाय वा अत· किं विदध्यादित्याह-'इच्चेवमि' त्यादि इतिरुपप्रदर्शने, अप्रशस्तमूलगुणस्थाने वर्तमानो जराभिभूतो न हास्याय न क्रीडायै न रत्यै न विभूषायै प्रत्येक च शुभाशुभकर्मफलं प्राणिनामित्येवं मत्वा, समुत्थित —सम्यगुत्थित शस्त्रपरिज्ञोक्तं मूलगुणस्थानमधितिष्ठन् 'अहो' इत्याश्चर्ये विहरणं विहार आश्चर्यभूतो विहारोऽहोविहारो यथोक्तसंयमानुष्ठानं तस्मै अहोविहारायोत्थित सन् क्षणमपि नो प्रमादयेदित्युत्तरेण सम्बन्ध । किं च-' अन्तरं चे ' त्यादि, अन्तरमिति-अवसरस्तच्चार्यक्षेत्रसुकुलोत्पत्तिबोधिलाभसर्वविरत्यादिकं, च समुच्चये, खल्ववधारणे, इममिति अनेनेदमाह-विनेयस्तव संयमादावयमीदृक् प्रत्यक्षभावापन्नमार्यक्षेत्रादिकमन्तरमवसरमुपदर्शयाभिधीयते--तवायमेवंभूतोऽवसरोऽनादौ संसारे पुनस्तीव सुदुर्लभ एवेति, अतस्तमवसरं संप्रेक्ष्य-पर्यालोच्य धीरः सन् मुहूर्तमप्येकं नो प्रमादयेत्-नो प्रमादवशगो भूयादिति संप्रेक्ष्येत्यत्र अनुस्वार लोपश्छान्दसत्वादिति, अन्यदप्यलाक्षणिकमेवंजातीयमस्मादेव हेतोरवगन्तव्यमिति, । आन्तर्मौहूर्तिकत्वाच्च छाद्मस्थिकोपयोगस्य मुहूर्त्तमित्युक्तम्, अन्यथा समयमप्येकं न प्रमादयेदिति वाच्यं, तदुक्तम्-

" संप्राप्य मानुषत्वं, संसारासारतां च विज्ञाय ।
हे जीव ! किं प्रमादा-न्न चेष्टसे शान्तये सततम् ॥ १ ॥
ननु पुनरिदमतिदुर्लभ-मगाधसंसारजलधिविभ्रष्टम् ।
मानुष्यं खद्योतक-तडिल्लताविलसितप्रतिमम् " ॥ २ ॥

इत्यादि, किमर्थञ्च नो प्रमादयेदित्याह-'वयो अच्चेइ' त्ति—वय -कुमारादि 'अत्येति' अतीव एति-याति अत्येति, अन्यच्च-"जोव्वणं व" त्ति-अत्येत्यनुवर्त्तते, यौवनं वाऽत्येति-अतिक्रामति, वयोग्रहणेनैव यौवनस्यावगतत्वात्तदुपादानं प्राधान्यख्यापनार्थं, धर्मार्थकामानां तन्निबन्धनत्वात् सर्ववयसां यौवनं साधीय·; तदपि त्वरितं यातीति, उक्तं च-"नईवेगसमं चवलं, च जीवियं जोव्वणञ्च कुसुमसमं । सोक्खं च जं अणिच्चं, तिण्णि वि तुरमाणभोज्जाइं " ॥ १ ॥ तदेवं मत्वा अहो विहारायोत्थानं श्रेय इति ।

ये पुन· संसाराभिष्वङ्गिणोऽसंयमजीवितमेव बहु मन्यन्ते ते किंभूता भवन्तीत्याह—

जीविए इह जे पमत्ता से हंता छेत्ता भेत्ता लुंपित्ता विलुंपिता उद्दवित्ता उत्तासइत्ता, अकडं करिस्सामि त्ति मएणमाणे, जेहिं वा सद्धिं संवसइ ते वा णं एगया नियगा तं पुव्विं पोसेंति, सो वा ते नियगे पच्छा पोसिज्जा नाऽलं ते तव ताणाए वा सरणाए वा, तुमं पि तेसिं नाऽलं ताणाए वा सरणाए वा । ( सूत्र-६६ )

'जीविए ' इत्यादि, ये तु वयोऽतिक्रमणं नावगच्छन्ति, ते ' इह ' इति-अस्मिन्नसंयमजीविते प्रमत्ता अभ्युपपन्ना विषयकषायेषु प्रमाद्यन्ति प्रमत्ताश्चाहर्निशं परितप्यमानाः कालाऽकालसमुत्थायिन सन्त· सत्त्वोपघातकारिणी क्रियाः समारम्भन्त, इति, आह च-' से हंता ' इत्यादि, ' से ' इत्यप्रशस्तगुणमूलस्थानवान्विषयाभिलाषी प्रमत्त सन् स्थावरजङ्गमानामसुमतां हन्ता भवतीति, अत्र च बहुवचनप्रक्रमेऽपि जात्यपेक्षयैकवचननिर्देश इति, तथा छेत्ता कर्णनासिकादीना भेत्ता-शिरोनयनादरादीनां लुम्पयिता ग्रन्थिच्छेदनादिभिर्विलुम्पयिता ग्रामघातादिभिरपद्रावयिता प्राणव्यपरोपको विषशस्त्रादिभिरपद्रावयिता वा उत्त्रासको लोष्टप्रक्षेपादिभि· स किमर्थं हननादिका· क्रिया· करोतीत्याह-' अकडं ' इत्यादि, अकृतमिति, यदन्येन नानुष्ठितं तदहं करिष्यामीत्येवं मन्यमानोऽर्थोपार्जनाय हननादिक्रियासु प्रवर्त्तते स एवं क्रूरकर्मा-अतिशयकारी समुद्रलङ्घनादिका क्रिया कुर्वन्नप्यलाभोदयादपगतसर्वस्व किंभूतो भवतीत्याह-' जेहिं वा ' इत्यादि । वाशब्दो भिन्नक्रम· पक्षान्तरद्योतको, यैर्मातापितृस्वजनादिभि सार्द्धं संवसत्यसौ त एव वा णमिति वाक्यालङ्कारे, एकदेति-अर्थनाशाद्यापदि शैशवे वा निजा आत्मीया बान्धवा· सुहृदो वा

'पुव्विं' पूर्वमेव तं सर्वोपायपीणं पोषयन्ति स्म यः प्राप्तमनोरथलाभः संस्तान्निजान् पश्चात्पोषयेदर्थदानादिना सम्मानयेदिति । ते च पोषका-पोष्या वा तवापद्गतस्य न त्राणाय भवन्तीत्याह-' नालं ' इत्यादि । ते निजा मातापित्रादयस्तवेत्युपदेशविषयापन्नाः, उच्यते-त्राणाय-आपद्रक्षणार्थं शरणाय-निर्भयस्थित्यर्थं नालं-न समर्थाः, त्वमपि तेषां त्राण-शरणे कर्त्तुं नालमिति; तदेवं तावत् स्वजनो न त्राणाय भवतीत्येतत्प्रतिपादितम् ।

अर्थोऽपि महता क्लेशेनोपात्तो रक्षितश्च न त्राणाय भवतीत्येतत्प्रतिपिपादयिषुराह—

**उवादीतसेसेण वा संणिहिसंणिचओ किज्जइ, इह-मेगेसिं असंजयाणं भोयणाए, तओ से एगया रोगसमुप्पाया समुप्पज्जंति, जेहिं वा सद्धिं संवसति, ते वा णं एगया णियगा तं पुव्विं परिहरंति, सो वा ते णियए पच्छा परिहरेज्जा, णालं ते तव ताणाए वा सरणाए वा तुमं पि तेसिं णालं ताणाए वा सरणाए वा, ( सूत्र-६७ )**

'उवादिते' ति-'अद्' भक्षणे इत्येतस्मादुपपूर्वान्निष्ठाप्रत्ययः, तत्र बहुलं छन्दसीतीडागमः, उपादितम्-उपभुक्तं तस्य शेषमुपभुक्तशेषं, तेन वा वाशब्दादनुपभुक्तशेषेण वा सांनिधानं सांनिधिस्तस्य सन्निचयस्सांनिधिसंनिचयः, अथ वा-सम्यङ्निधीयते-स्थाप्यत उपभोगाय योऽर्थः स संनिधिस्तस्य सन्निचयः-प्राचुर्यम्; उपभोग्यद्रव्यनिचय इत्यर्थः, स इहास्मिन् संसारे एकेषाम्-असंयतानां, संयताऽऽभासानां वा केषांचिद्भोजनाय-उपभोगार्थं क्रियते-विधीयत इति, असावपि यदर्थमनुष्ठितोऽन्तरायोदयात्तत्सम्पत्तये न प्रभवतीत्याह-'तओ से' त्यादि, ततो द्रव्यसंनिधिसंनिचयादुत्तरकाल-मुपभोगाऽवसरे 'से' तस्य बुभुक्षोरकदेति द्रव्यक्षेत्रकालभावनिमित्ताविर्भावितवेदनीयकर्मोदये रोगसमुत्पादाः-ज्वरादिप्रादुर्भावाः 'समुत्पद्यन्ते' इति—आविर्भवन्ति । स च तैः कुष्ठराजयक्ष्मादिभिरभिभूतः सन् भग्ननासिको गलत्पाणिपादोऽविच्छेदप्रवृत्तश्वासाऽऽकुलः, किंभूतो भवति इत्याह—'जेहिं' इत्यादि, यैर्मातापित्रादिभिर्निजैः सार्द्धं संवसति त एव वा निजा एकदा-रोगोत्पत्तिकाले पूर्वमेव तं परिहरन्ति, स वा तान्निजान् पश्चात्परिभवोत्थापितविवेकः परिहरेत् त्यजेत्तन्निरपेक्षः, सेडुकवत्स्यादित्यर्थः, ते च स्वजनादयो रोगोत्पत्तिकाले परिहरन्तो अपरिहरन्तो वा न त्राणाय भवन्तीति दर्शयति-'नालं' इत्यादि, पूर्ववद्,

रोगाद्यभिभूतान्तःकरणेन-चाऽपगतत्राणेन न च किमालम्ब्य सम्यक्करणेन रोगवेदना सोढव्या इति आह—

**जाणित्तु दुक्खं पत्तेयं सायं । (सूत्र-६८)**

'जाणित्तु' इत्यादि, ज्ञात्वा प्रत्येकं प्राणिनां दुःखं तद्विपरीतं शातं वा दीनमानसेन ज्वरादिवेदनोत्पत्तिकाले स्वकृतकर्मफलमवश्यमनुभवनीयमिति मत्वा न वैक्लव्यं कार्यमिति, उत्युक्तं च-"सह कले( डे )वर ! दुःखमचिंतयत्, स्ववशता हि पुनस्तव दुर्लभा । बहुतरं च सहिष्यसि जीव हे !, परवशो न च तत्र गुणोऽस्ति ते "॥ १ ॥

यावच्च श्रोत्रादिभिर्विज्ञानैरपरिहीयमानैर्जरागजीर्णं न निजाः परिवदन्ति यावच्चानुकम्पया न पोषयन्ति रोगाभिभूतं च न परिहरन्ति तावदात्मार्थोऽनुष्ठेय इत्येतद्दर्शयति-

**अणभिक्कंतं च खलु वयं संपेहाए । (सूत्र-६९ )**

'अणभिक्कंतञ्च' इत्यादि, चशब्दः आधिक्ये, खलु शब्दः पुनःशब्दार्थे, पूर्वमभिक्रान्तं वयः समीक्ष्य मूढभावं व्रजतीति प्रतिपादितम्, अनभिक्रान्तं च पुनर्वयः संप्रेक्ष्य 'आयट्ठं सम्मं समणुवासेज्जासि ' (सूत्र-७१) । इत्युत्तरेण संबन्धः, आत्मार्थम् आत्महितं समनुवासयेत्, कुर्यादित्यर्थः ।

किमनतिक्रान्तवयसैवात्महितमनुष्ठेयमुतान्यनापीति?, परेणापि लब्धावसरेणात्महितमनुष्ठेयमित्येतद् दर्शयति—

**खणं जाणाहि पंडिए । ( सूत्र-७० )**

क्षण-अवसरो धर्मानुष्ठानस्य स चार्यक्षेत्रसुकुलोत्पत्त्यादिकः परिवादपोषणपरिहारदोषदुष्टानां जराबालभावरोगाणामभावे सति, तं क्षणं जानीहि-अवगच्छ पण्डित !-आत्मज्ञ ! अथ वा-अवसीदन् शिष्य प्रोत्साह्यते-हे अनतिक्रान्तयौवन ! परिवादादिदोषत्रयास्पृष्टपण्डित ! द्रव्यक्षेत्रकालभावभेदभिन्नं क्षणम्-अवसरमेवंभूतं जानीहि-अवबुध्यस्व । आचा०।(क्षणस्वरूपम् 'खण' शब्दे ३ भागे दर्शयिष्यते) एवभूतमवसरमवाप्यात्मार्थं समनुवासयेदित्युत्तरेण सम्बन्धः ।

किञ्च—

**०जाव सोत्तपरिण्णाणा अपरिहीणा णेत्तपरिण्णाणा अपरिहीणा घाणपरिण्णाणा अपरिहीणा रसणपरिण्णाणा अपरिहीणा फासपरिण्णाणा अपरिहीणा इच्चेतेहिं विरूवरूवेहिं पण्णाणेहिं अपरिहायमाणेहिं आयट्ठं सम्मं समणुवासेज्जासि त्ति बेमि । ( सूत्र-७१ )**

'जाव' इत्यादि, यावदस्य—विशरारोः कायापसदस्य श्रोत्रविज्ञानानि जरसा रोगेण वा अपरिहीनानि भवन्ति एवं नेत्रघ्राणरसनस्पर्शविज्ञानानि न विषयग्रहणस्वभावतया मान्द्यं प्रतिपद्यन्ते इत्येतैर्विरूपरूपैः-इष्टानिष्टरूपतया नानारूपैः प्रज्ञानैः-प्रकृष्टैर्ज्ञानैरपरिहीयमाणैः सद्भिः किं कुर्यात्, इत्याह-'आयट्ठं' इत्यादि, आत्मनोऽर्थः आत्मार्थः, स च ज्ञानदर्शनचारित्रात्मकः, अन्यस्त्वनर्थ एव । अथवा-आत्मने हितं प्रयोजनमात्मार्थः, तच्च चारित्रानुष्ठानमेव । अथ वा-आयतः—अपर्यवसानान् मोक्ष एव स चासावर्थश्चायतार्थोऽनन्तम्, यदि वा-आयत्तो-मोक्ष अर्थः-प्रयोजनं यस्य दर्शनादित्रयस्य तत्तथा 'समनुवासयेद्' इति-'वस' निवासे, इत्यस्माद्धेतुमण्णिजन्ताल्लिङ् ( लिप् ) सम्-सम्यग्-यथोक्तानुष्ठानेन अनु-पश्चादनभिक्रान्ते वयः सम्प्रेक्ष्य क्षणम्-अवसरं प्रतिपद्य श्रोत्रादिविज्ञानानां वा प्रहीणतामधिगम्य तत आत्मार्थं समनुवासय-आत्मनि विदध्याः । अथ वा-अर्थवशाद्विभक्तिपुरुषविपरिणाम इति कृत्वा तेन

वा आत्मार्थेन ज्ञानदर्शनचारित्रात्मकेनात्मानं समनुवासयेद्-भावयेद्-रञ्जयेत्, आयतार्थं वा मोक्षाख्यं सम्यक् अपुनरागमनेना अन्विति-यथोक्तानुष्ठानात्पश्चादात्मना समनुवासयेद्-अधिष्ठापयेत्, इति परिसमाप्तौ, ब्रवीमीति सुधर्मस्वामी जम्बूस्वामिनमिदमाह-यद्भगवता श्रीवर्द्धमानस्वामिनाऽर्थतोऽभ्यधायि तदेवाहं सूत्रात्मना वच्मीति। आचा० १ श्रु० २ अ० १ उ०।

आत (य) ट्ठि (न्) -आत्मार्थिन्-पुं०। आत्मनोऽर्थ आत्मार्थः स विद्यते यस्य स तथा। आत्मवति, "एवं से भिक्खू आत(य)ट्ठी" (सूत्र-४२×)। यो ह्यन्यमपायेभ्यो रक्षति स आत्मार्थी-आत्मवानित्युच्यते। सूत्र०२ श्रु०२ अ०।

आत (य) निप्फेडय-आत्मनिस्फेटक-पुं०। आत्मानं सम्यग्दर्शनादिकेनानुष्ठानेन संसारचारकान्निस्सारके, सूत्र०। 'आयनिप्फेडए आयाणमेवं पडिसाहरेज्जासि" (सूत्र-४२+)। आत्मानं सम्यग्दर्शनादिकेनानुष्ठानेन संसारचारकान्निस्सारयतीति। सूत्र० २ श्रु० २ अ०।

आत(य)ण्ण-आत्मज्ञ-पुं०। आत्मज्ञानिनि, सूत्र०।

अत्ताण जो जाणति जो य लोगं। (सूत्र० २० ×)

यो ह्यात्मानं परलोकयायिन शरीराद्व्यतिरिक्तं सुखदुःखाधारं जानाति यश्चात्महितेषु प्रवर्त्तते स आत्मज्ञो भवति। येन चात्मा यथावस्थितस्वरूपोऽहंप्रत्ययग्राह्योऽभिज्ञातो भवति नैवायं सर्वोऽपि लोक प्रवृत्तिनिवृत्तिरूपो विदितो भवति, स एव चात्मज्ञोऽस्तीत्यादिक्रियावाद भाषितुमर्हतीति। सूत्र० १ श्रु० १२ अ०।

आत (य) तंत-आत्मतन्त्र-त्रि०। आत्मायत्ते, स्था० ४ ठा० २ उ०।

आत (य) तंतकर-आत्मतन्त्रकर-पुं०। आत्मतन्त्र सन् कार्याणि करोतीत्यात्मतन्त्र। आत्मायत्ते जिनादौ, आत्मतन्त्रमात्मायत्तं धनम्-गच्छादि करोतीत्यात्मतन्त्रकर। आत्माऽऽयत्तस्य धनस्य गच्छादिकस्य कारके च। स्था० ४ ठा० २ उ०।

आत (य) तत्त-आत्मतत्त्व-न०। आत्मनस्तत्त्वम्। आत्मनो यथार्थस्वरूपे, चैतन्यरूपे मतभेदे, कर्तृत्वादिरूपे, आत्मैव तत्त्वम्परमपदार्थे, आत्मरूपे परमपदार्थे च, वाच०। ज्ञानदर्शनचारित्रात्मकं तत्त्वं च। परमार्थदर्शी ज्ञानदर्शनचारित्रात्मकमात्मतत्त्वं विहायान्यत्सर्वं शरीराद्यपि परायमेवेति। आचा०।

आत [य] तत्तप्पगास-आत्मतत्त्वप्रकाश-पुं०। आत्मधर्मप्राग्भावे, अष्ट०।

गुरुत्वं स्वस्य नोदेति, शिक्षासात्म्येन यावता।
आत्मतत्त्वप्रकाशेन, तावत्सेव्यो गुरूत्तमः॥ ५॥

अष्ट० ८ अष्ट०। वाच०।

आत (य) तरग-आत्मतरक-पुं०। आत्मानं केवलं तारयन्तीत्यात्मतरा, स्वार्थिकप्रत्ययविधानात् आत्मतरका। व्य०। प्रायश्चित्तार्हे पुरुषविशेषे, व्य०। "आयतरगा० 'ये पुनस्तपोबलिष्ठा वैयावृत्यलब्धिहीनास्ते तप एव यथोक्तरूपं कुर्वन्ति न वैयावृत्त्यमाचार्यादीनामित्यात्मानं केवलं तारयन्तीत्यात्मतराः, स्वार्थिकप्रत्ययविधानात् आत्मतरकाः। व्य० १ उ०।

आत (य) तुला-आत्मतुला-स्त्री०। आत्मौपम्ये, सूत्र० २ श्रु० २ अ०। आत्मतुल्यतायाम्, सूत्र० १ श्रु० २ अ०३ उ०।

कम्हा णं तुब्भे पाणिं पडिसाहरह ?, पाणिनो डहिज्जा, दड्ढे किं भविस्सइ ?, दुक्खं ति मन्नमाणा पडिसाहरइ, एस तुला एस पमाणे एस समोसरणे। (सूत्र०४१+)

अवश्यमग्निदाहभयात् कश्चिदग्न्यभिमुखं पाणिं ददातीत्येतत्परोऽयं दृष्टान्त। पाणिना दग्धेनापि किं भवता भविष्यतीति ? दुःखमिति चेत् यद्येवं भवन्तो दाहोपादितदुःखभीरवः सुखलिप्सवः, तदेवं सति सर्वेऽपि जन्तवः संसारोदरविवरवर्तिन एवंभूता एवेत्येवम् आत्मतुलया—आत्मौपम्येन यथा मम नाभिमतं दुःखमित्येवं सर्वजन्तूनामित्यवगम्याऽहिंसैव प्राधान्येनाश्रयणीया, तदेतत्प्रमाणम्, एषा युक्तिः। "आत्मवत्सर्वभूतानि, यः पश्यति स पश्यति"। सूत्र० २ श्रु० २ अ०।

एवं सहिते हियासए,आयतुलं पाणेहिं संजए॥१२×॥

'एवम्' अनन्तरोक्तरीत्या परिवर्त्तमानः सह हितेन वर्तत इति सहितो ज्ञानादियुक्तो वा संयतः-प्रव्रजितोऽपरप्राणिभिः सुखार्थिभिरात्मतुलाम्-आत्मतुल्यतां दुःखाऽप्रियत्वसुखप्रियत्वरूपामधिकं पश्येत् आत्मतुल्यान् सर्वानपि प्राणिनः पालयेत्। सूत्र० १ श्रु० २ अ०। "आयतुले पयासु" ॥३×॥ प्रजायन्त इति प्रजा पृथिव्यादयो जन्तवस्तास्वात्मतुल्यः; आत्मवत्सर्वप्राणिन पश्यतीत्यर्थः, एवंभूत एव साधुर्भवतीति, तथा चोक्तम्—" जह मम ण पियं दुक्खं, जाणिय एमेव सव्वजीवाणं। ण हणइ ण हणावेइ य, सममणई तेण सो समणो"॥ १॥ सूत्र० १ श्रु० १ अ०।

डहरे य पाणे वुड्ढे य पाणे,
ते आतओ पासइ सव्वलोए॥ १८+॥

ये केचन 'डहरे'त्ति-लघवः-कुन्थ्वादयः सूक्ष्मा वा ते सर्वेऽपि प्राणाः प्राणिनो ये च वृद्धा बादरशरीरिणस्तान्सर्वानप्यात्मतुल्यान्-आत्मवत्पश्यति-सर्वस्मिन्नपि लोके यावत्प्रमाणं मम तावदेव कुन्थोरपि यथा वा मम दुःखमनभिमतमेवं सर्वलोकस्यापि-सर्वेषामपि प्राणिनां दुःखमुत्पद्यते, दुःखाद् वाद्विजन्ते। सूत्र० १ श्रु० १२ अ०।

आत (य) त्त-आत्मत्व-न०। आत्मनो भावे, आत्मधर्मे, वाच०।

अह पास तेहिं कुलेहिं, आयत्ताए जाया। (सूत्र-१७२×)

'अथ' इति-वाक्योपन्यासार्थे, पश्य त्वं तेषूच्चावचेषु कुलेषु आत्मत्वाय-आत्मीयकर्मानुभवनाय जाता, आचा० १ श्रु० ६ अ० १ उ०।

अशेषकर्मकलङ्करहितत्वे मोक्षभावे, संयमभावे च। सूत्र०।

आरंभं तिरियं कट्टु, आतत्ताए परिव्वए॥ ७॥

आरम्भम्-सावद्यानुष्ठानरूपं, तिर्यक्कृत्वा-अपहस्तयित्वा आत्मनो भाव आत्मत्वम्-अशेषकर्मकलङ्करहितत्वं तस्मै आत्मत्वाय । यदि वा-आत्मा-मोक्षः; संयमो वा तद्भावस्तस्मै तदर्थं परि-समन्ताद् व्रजेत् , संयमानुष्ठानक्रियायां दत्तावधानो भवेदित्यर्थः । सूत्र० १ श्रु० ३ अ० ३ उ० ।

आत(य)दंड-आत्मदण्ड-पुं० । आत्मानं दण्डयतीत्यात्मदण्डः । आत्मन उपघातके, " वीयाइ असंजय आयदण्डे " ॥ ६ + ॥ असंयतो-गृहस्थ , प्रव्रजितो वा तत्कर्मकारी गृहस्थ एव । स च हरितच्छेदविधाय्यात्मानं दण्डयतीत्यात्मदण्डः । स हि परमार्थतः परोपघातेनात्मानमवोपहन्ति । सूत्र० १ श्रु० ७ अ० । " एतेण काएण य आयदण्डे " ॥ २ + ॥ यथैभिः कायैः-समारभ्यमाणैः; पीड्यमानैरात्मा दण्ड्यते; तत्समारम्भादात्मदण्डो भवतीत्यर्थः । सूत्र० १ श्रु० ७ अ० । " णिस्सिय आयदण्डा " ॥ २३ × ॥ आत्मैव दण्डयतीति दण्डो येषां ते भवन्त्यात्मदण्डा असदाचारप्रवृत्तेरिति । सूत्र० २ श्रु० ६ अ० ।

आत ( य ) दण्डसमायार-आत्मदण्डसमाचार-त्रि० । आत्मा दण्ड्यते-हिताद् भ्रश्यते येन स आत्मदण्डः समाचारः-अनुष्ठानं येषामनार्याणां ते । आत्महितानुष्ठातरि, सूत्र० १ श्रु० २ अ० १ उ० । " आयदण्डसमायारे " ॥१४+॥ सूत्र० १ श्रु० ३ अ० १ उ० ।

आत ( य ) दरिस-आत्मदर्श-पुं० । आत्मा-देहः दृश्यतेऽस्मिन् आधारे घञ् । दर्पणे, आदर्शे, को० । घन् ६ त० । आत्मनो दर्शने, आत्मसाक्षात्कारे, वाच० ।

आत ( य ) पएस-आत्मप्रदेश-पुं० । जीवांशे, पञ्चा० १४ विव० ।

आत ( य ) परिणइ-आत्मपरिणति-स्त्री० । आत्मनो-जीवस्य परिणतिरात्मपरिणतिः । जीवस्यानुष्ठानविशेषसम्पादके परिणामविशेषे, द्वा० ।

> विषयप्रतिभासं चा-त्मपरिणतिमत्तथा ।
> तत्त्वसंवेदनं चैव, ज्ञानमाहुर्महर्षयः ॥ १ ॥

आत्मनो-जीवस्य परिणते -अनुष्ठानविशेषसंपाद्य परिणामविशेष , सैव ज्ञेयतया यस्मिन्नस्ति ज्ञानेन पुनस्तद्रूपप्रवृत्तिनिवृत्ती अपि तदात्मपरिणतिमत् । द्वा० ६ अष्ट० ।

> विषयप्रतिभासाख्य-मात्मपरिणतिमत्तथा ।
> तत्त्वसंवेदनं चैव, त्रिधा ज्ञानं प्रकीर्तितम् ॥ २ ॥

तथा-आत्मन -स्वस्य परिणाम -अर्थानर्थप्रतिभासात्मा विद्यते यत्र तत् , आत्मनो-जीवस्य परिणाम -अनुष्ठानविशेषसपाद्यो विद्यते यत्रेति यन सम्यक्त्वलाभप्रयोज्यवस्तुविषयतावत्त्वमर्थो लभ्यते । द्वा० ६ द्वा० ।

आत ( य )पसंसा-आत्मप्रसंसा-स्त्री० । आत्मस्तुतौ, अष्ट० । ( आत्मप्रशंसा च न कार्या ) आत्मस्वरूपध्यानी सर्वं परम्—अनात्मत्वेन जानाति । स आत्मवित् प्रशसा न करोति, तदेवाऽऽह—

> गुणैर्यदि न पूर्णोऽसि, कृतमात्मप्रशंसया ।
> गुणैरेवाऽसि पूर्णश्चेत् , कृतमात्मप्रशंसया ॥ १ ॥

व्या०—गुणैरिति—' यदि गुणै ' केवलज्ञानादिभि पूर्णः न असि तर्हि ' आत्मप्रशसया ' व्यर्थात्मस्तुत्या ' कृतं ' नाम-श्रितं निर्गुणात्मन का प्रशसा ?, पौद्गलिकोपाधिजा गुणा इति मूढा वदन्ति तैन प्रशसा ' चेद् ' यदि सम्यग्दर्शनज्ञानचारित्रतपोरूपै साधनगुणै क्षायिकज्ञानदर्शनचारित्ररूपै सिद्धगुणै पूर्ण तर्हि वाचकात्मकप्रशसया कृतम्; श्रितमित्यर्थ , प्रागभाविता गुणा स्वत एव प्रकटीभवन्ति नेक्षुयष्टि पलालावृता चिरकालं तिष्ठति इति का स्वमुखात्स्वगुणप्रशंसना ।

पुनर्व्यवहारेण दर्शयति—

> श्रेयोद्रुमस्य मूलानि, स्वोत्कर्षाम्भःप्रवाहतः ।
> पुण्यानि प्रकटीकुर्वन् , फलं किं समवाप्स्यसि ? ॥ २ ॥

व्या०-' श्रेयोद्रुम ' इति-भो भद्र ? ' पुण्यानि ' पवित्राणि ' श्रेयोद्रुमस्य मूलानि ' कल्याणवृक्षस्य मूलानि ' स्वोत्कर्षाम्भःप्रवाहतः ' स्वस्य उत्कर्ष -औत्सुक्य स एव अम्भःप्रवाहः तस्मात् ' प्रकटीकुर्वन् ' व्यक्तं कुर्वन् किं फलं समवाप्स्यसि ?, अपि तु नैव, यस्य द्रुमस्य मूलम् उत्खातं तेन फलोत्पत्तिर्न भवति ।

> आलम्बिता हिताय स्युः, परैः स्वगुणरश्मयः ।
> अहो स्वयं गृहीतास्तु, पातयन्ति भवोदधौ ॥ ३ ॥

व्या०-' आलम्बिता ' इति-' स्वगुणरश्मय ' आत्मीगुणरज्जव ' परै ' अन्यै ' आलम्बिता ' स्मरणचिन्तनेन गृहीता ' हिताय ' कल्याणाय स्यु , स्वसुखाय भवन्ति, ' अहो ' इति-आश्चर्ये स्वगुणाः स्वयं गृहीता भवोदधौ पातयन्ति, स्वमुखेन स्वगुणोत्कर्ष न कार्य ।

> उच्चत्वदृष्टिदोषोत्थ-स्वोत्कर्षज्वरशान्तिकम् ।
> पूर्वपुरुषसिंहेभ्यो, भृशं नीचत्वभावनम् ॥ ४ ॥

व्या०-' उच्चत्वदोष ' इति-अभ्यासात्प्राप्तज्ञानविनयतपोरूपगुणान्तर्ज्वलितमहामोहोदयेन आत्मनि उच्चत्वम् अहं गुणी मया प्राप्तमिदं, ज्ञानं विनयगुणवानहमिति उच्चत्वदृष्टिदोषेण उत्थो य स्वोत्कर्ष स एव ज्वर तस्य 'शान्तिकम्' उपशमकारण ' पूर्वपुरुषा ' अर्हदादय ते एव सिंहाः तेभ्यः ' आत्मन्यूनत्वभावनं ' मानोदयतापनिर्वापण क्षेयम् ।

" धन्नो धन्नो वयरो, सालिभद्दो य थूलभद्दो अ ।
जेहिं विसयकसाया, चत्ता रत्ता गुणे नियए ॥ १ ॥ "

( अस्या गाथाया व्याख्या )-धन्या पूर्वपुरुषा ये वान्ताश्रवा —अनादिभुक्तपरभावास्वादनरामणीयकं त्यजन्ति, सदुपदेशज्ञानसत्तासुखलसया आत्मधर्मश्रवणसुखम् अनुभूयमाना चक्रिसंपदो विपद इव मन्यन्ते, स्वगुणेषु धन्यः स्थूलभद्र यो ह्यत्यातुरक्तः, कोशाप्रार्थनाऽकम्पितपरिणामस्तु-" अहो स्वय गृहीतास्तु, पातयन्ति भवोदधौ ॥ ३ ॥

उच्चत्वदृष्टिदोषोत्थ , स्वोत्कर्षज्वरशान्तिकम् ।
पूर्वपुरुषसिंहेभ्यो, भृशं नीचत्वभावनम् ॥ ४ ॥
शरीररूपलावण्य-ग्रामारामधनादिभि ।

१-येनात्मानमिच्छन्ति । २-मूलमेव टीकाकारेण नादृतम् ।

उत्कर्षः परपर्याये-श्चिदानन्दघनस्य कः ॥ ५॥"-

अहं तु निरर्थककुविकल्पैः चिन्तयामि विषयविषोपायान्। उक्तं च-' संतेवि कोवि उज्झइ, को वि असंते वि अहिलसइ । भोए चय इयरचयेण वि, दट्ठु पभवेण जह जवू ॥१॥" इत्यादिभावनया स्वदोषचिन्तनेन आत्मोत्कर्षपरिणामो निवार्य' ।

शरीररूपलावण्य-ग्रामाऽऽरामधनादिभिः ।
उत्कर्षः परपर्यायै-श्चिदानन्दघनस्य कः ॥ ५ ॥

व्या०-'शरीरे'ति-'चिदानन्दघनस्य' चिद्-ज्ञानम् आनन्द -सुखं ताभ्यां घनस्य-आत्मनः परपर्यायैः -सयोगसंभवैः पुद्गलसंनिकर्षोद्भवैः कः उत्कर्षः-उन्मादः कैरिति शरीराणि-औदारिकादीनि विनाशिस्वभावानि रूपं-संस्थाननिर्माण-वर्णनामकर्मोद्भवं लावण्यं-चातुर्यं सौभाग्यनामोदयनिष्पन्नं वेदादिमोहसंनिकर्षसंभव ग्राम -जननिवासलक्षण , आरामा -वनोद्यानभूमयः , धनं-गणिमधरिमादि तेषां द्वन्द्वः तैः कः उत्कर्षः परत्वात् कर्मबन्धनिबन्धनात् स्वस्वरूपरोधकात् तत्संयोगः निन्द्य एव तर्हि कः उत्कर्षः ?, उक्तं च उत्तराध्ययने—

" धणेण किं धम्मधुराहिगारे,
सयणेण वा कामगुणेहि चेव ।
समणा भविस्सामो गुणोहधारी,
वहिं विहारा अभिगम्म भिक्खुं ॥ १ ॥
न तस्स दुक्खं विभजति णाइओ,
न मित्तवग्गा न सुआ न बाधवा ।
इक्को सयं पच्चणुहोइ दुक्खं,
कत्तारमेवं अणुजाइ कम्मं" ॥ २ ॥

अत आत्मगुणानन्दपरिणतानां कर्मोपाधिसंभवे उत्कर्षो न भवति ।

शुद्धाः प्रत्यात्मसाम्येन, पर्यायाः परिभाविताः ।
अशुद्धाश्चाप्रकृष्टत्वात् ,स्वोत्कर्षाय महामुनेः ॥ ६ ॥

व्या०-'शुद्धाः प्रत्यात्म' इति-तथा मुनेः -निर्ग्रन्थस्य पाकोत्तीर्णज्ञात्यकार्त्तस्वरगृहीतात्मस्वरूपस्य शुद्धाः —पर्यायाः सम्यग्ज्ञानचरणध्यानप्राग्भावरूपा आत्मपर्याया न उत्कर्षाय भवन्ति । कथं न भवन्तीत्याह—प्रत्यात्मसाम्येन परिभाविता आत्मानम् आत्मानं प्रति प्रत्यात्म तत्र साम्येन तुल्यत्वेन भाविता । भावना च किमाधिक्य मम जातं ?, तेन एते ज्ञानाद्या गुणाः सर्वात्मनि सन्त्येवं सर्वसाधारणे कः उत्कर्षः ? इति भावितात्मना सर्वजीवानां ज्ञानाद्यनन्तपर्यायत्वं तुल्य सिद्ध-संसारस्ययो न सत्ताभेद । उक्तं च संवेगरङ्गशालायाम्—

' नाणाइणंतगुणोववेयं, अरूवमणहं च लोगपरिमाणं ।
कत्ता भोत्ता जीवं, मयहु सिद्धाण तुल्लमिणं ॥ १ ॥ "

श्रीपूज्यैश्च-" जीवो गुणपडिवन्नो, न जस्स दव्वट्ठियस्स सामइय " । तथा ठाणांगे-'एगे आया' ( सूत्र-२। स्था० १ ठा० ) इत्यादिपाठात् सर्वत्र तुल्यत्वं आत्मनः सद्गुणप्राकट्ये कः उत्कर्षः अशुद्धा पर्याया औदयिकाः शक्रत्वादयः अपकृष्टत्वात् तुच्छत्वाद् दोषत्वाद् गुणघातकत्वेज्ञानरमणोपघातत्वात् शोकप्रयोगपुष्टत्वव्च उत्कर्षाय भवन्ति, किमेभिः पुद्गलोपचयरूपैः परोपाधिजैः संसर्गैश्च मे कदा निवृत्तिः एभ्य इति संवेगनिर्वेदपरिणतानां नोन्माद इति ।

पुन आत्मानमुपदिशति—

क्षोभं गच्छन्समुद्रोऽपि, स्वोत्कर्षपवनेरितः ।
गुणौघान् बुद्बुदीकृत्य, विनाशयसि किं मुधा ॥ ७ ॥

व्या०-'क्षोभं गच्छन्नि' ति-हे हंस ! स्वतत्त्वजलपूर्णस्वरूपमानसनिवासरसिकः त्वं 'समुद्रोऽपि' मुद्रा-साधुलिङ्गरूपा तया युक्तोऽपि ' स्वोत्कर्षपवनेरितः ' साऽहंकारपवनप्रेरित' क्षोभं गच्छन् अध्यवसायैः एवमेवं भवन् गुणौघान् अभ्यासोत्पन्नान् श्रुतधरव्रतधरलक्षणान् आमर्षौषधिरूपान् बुद्बुदीकृत्य ' मुधा ' व्यर्थं किं विनाशयसि प्राप्तगुणगम्भीरो भव, स्वगुणाः स्वस्यैव हितहेतवः तत्र, किं परदर्शनेन मानोपहतस्य गुणाः तुच्छीभवन्ति, अतो न मानो विधेयः ।

निरपेक्षाऽनवच्छिन्ना-नन्तचिन्मात्रमूर्त्तयः ।
योगिनो गलितोत्कर्षा-पकर्षानल्पकल्पनाः ॥ ८ ॥

व्या०-' निरपेक्षा ' इति-योगिनो-यमनियमाद्यष्टाङ्गयोगाभ्यासोत्पन्नरत्नत्रयीलक्षणस्वयोगसिद्धा ईदृशा भवन्ति, '-निरपेक्षाः ' निर्गता अपेक्षा-अपेक्षणं येभ्यस्ते निरपेक्षा ; अपेक्षारहिता इत्यर्थः । ' अनवच्छिन्ना ' अवच्छेदरहिता । ' अनन्तचिन्मात्रमूर्त्तयः ' अनन्तं प्रान्तरहितं चिद्-ज्ञानं तन्मात्रा ज्ञानमात्रा मूर्त्तिः येषां ते अनन्तचिन्मात्रमूर्त्तयः इत्यनेन परभावानुगतचतनाविकलाः स्वच्छस्वरूपानुगतचिन्तनपरिणताः ' गलितोत्कर्षापकर्षाः ' गलितः उत्कर्ष-उन्माद अपकर्ष -दीनता तयोः अनल्पा -कल्पना विकल्पजालपटलानि येषां एवंविधा योगिनः ज्ञानपरिणताः ज्ञानैकरसाः तिष्ठन्ति ते एव तत्त्वसाधनचिन्मया इति अतो मानोन्मादजनकः स्वोत्कर्षो निवार्यः । अष्ट० १८ अष्ट० ।

अहाहु से आयरियाण सयंसे,
जो लावएज्जा असणस्स हेऊ ॥ २४ ॥

अथाऽसावाचार्यगुणाना शतांऽशे वर्तते शतग्रहणमुपलक्षणं सहस्राऽशादेरप्यधो वर्तते इति 'यो' ह्यन्नस्य हेतुम्-भोजननिमित्तमपरवस्त्रादिनिमित्तं वा आत्मगुणान् परेणालापयेद्-भाणयेत् असावप्याचार्यगुणानां सहस्रांशे वर्त्तते । किमङ्ग ! पुनर्यः स्वत एवाऽऽत्मप्रशंसा विदधातीति । सूत्र० १ श्रु० ७ अ० ।

आत ( य ) प्पओग-आत्मप्रयोग-पुं० । आत्मव्यापारे , " आयप्पओगेण उववज्जंति, णो परप्पओगेणं उववज्जंति" ( सूत्र-६८६× ) भ० २० श० १० उ० ।

आत (य) प्पओगणिव्वत्तिय-आत्मप्रयोगनिर्वर्तित-त्रि० । " आयप्पओगणिव्वत्तिए " ( सूत्र-५६४ + ) । आत्मनः प्रयोगेण-मन प्रभृतिव्यापारेण निर्वर्त्तितं निष्पादितं यत्तत्तथा । आत्मनो मन प्रभृतिव्यापारेण निष्पादिते, भ० १६ श० १ उ० ।

आत ( य ) प्पमाण-आत्मप्रमाण-त्रि० । सार्द्धहस्तत्रय-प्रमाणे, प्रव० २ द्वार ।

आत ( य ) प्पवाय-आत्मप्रवाद-न० । आत्मानं-जीवमनेकधा नयमतभेदेन यत्प्रवदति तदात्मप्रवादम् । नं० । यत्राऽऽत्मा-जीवोऽनेकनयैः प्रोच्यते तदात्मप्रवादम् । स० १४ सम० । आत्माऽनेकधा यत्र नयदर्शनैर्वर्ण्यते तदात्मप्रवादम् । (स० १४७ सूत्रटी०) पूर्वगतश्रुतविशेषे, (स० १४७ सूत्रटी०) तस्य पदप्रमाणं षड्विंशतिपदकोट्यः । नं० । स० ।

आयप्पवायपुव्वस्स णं सोलस१६ वत्थू पमत्ता । नं० ।

आत्मप्रवादपूर्वस्य सप्तमस्य । स० १६ सम० ।

आयप्पवायपुव्वं, अहिज्जमाणस्स तीसगुत्तस्स ।
नयमयमयाणमाणस्स, दिट्ठीमोहो समुप्पन्नो ॥२३३५॥

आत्मप्रवादनामकं पूर्वमधीयानस्य । विशे० । ( अस्या गाथायाः व्याख्या 'जीवपएसिय' शब्दे चतुर्थभागे १५५४ पृष्ठे वक्ष्यते )

आयप्पवायपुव्वा, निज्जूढा होइ धम्मपन्नत्ती ॥१६+॥

इह आत्मप्रवादपूर्वं-यत्रात्मनः ससारिमुक्ताद्यनेकभेदभिन्नस्य प्रवदनमिति तस्मान्निर्यूढा भवति धर्म्मप्रज्ञप्तिः, षड्जीवनिकेत्यर्थः । दश० १ अ० ।

आत (य) प्पियसंबंधणसंयोग-आत्मार्पितसम्बन्धनसंयोग-पुं० । संयोगभेदे, उत्त० १ अ० । ( तद्वक्तव्यता 'संजोग' शब्दे सप्तमे भागे वक्ष्यते )

आत ( य ) बल-आत्मबल-न० । आत्मनो बलम् शक्त्युपचय आत्मबलम् । आत्मन शक्त्युपचये, आचा० १ श्रु० २ अ०२ उ० । बहुलाधिकारात् । पो व. ॥ ८ । १ । २३१ ॥ अस्य वैकल्पिकत्वात् ।

आत ( य ) बोध-आत्मबोध-पुं० । आत्मज्ञाने, अष्ट० ।

आत्मबोधो न वः पाशो, देहगेहधनादिकम् ।
यः क्षिप्तोऽप्यात्मना तेषु, स्वस्य बन्धाय जायते ॥ ६ ॥

भो भव्या ! व -युष्माकम् आत्मबोध. आत्मज्ञानं न पाश - न बन्धहेतु तेषु देहगृहधनादिषु य. आत्मना क्षिप्त स पाश -रागपरिणाम स्वस्य-आत्मन. एव बन्धाय जायते इत्यनेन देहगृहादिषु य रक्त स सर्व भवपाशैर्बध्नाति स्वस्य बन्धहेतु इत्यनेन परभावा-रागादय आत्मनो बन्धवृद्धिहेतव । अष्ट० १४ अष्ट० ।

आत ( य ) भाव-आत्मभाव-पुं० । अनादिभवाभ्यस्ते मिथ्यात्वादिके विषयगृध्नुतायाम्, "विणइज्ज्ज्ञो सव्वउ आयभाव " ॥ २१ + ॥ आत्मभाव -अनादिभवाभ्यस्तो मिथ्यात्वादिकस्तमपनयेत् । यदिवा-आत्मभावो-विषयगृध्नुता, अतस्तमपनयेद् । सूत्र० १ श्रु० १३ अ० । स्वाभिप्राये च । भ० २ श० ५ उ० ।

आत (य) भाववंकणया-आत्मभाववङ्कनता-स्त्री० । आत्मभावस्याऽप्रशस्तस्य वङ्कनता-वक्रीकरणं प्रशस्ततयोपदर्शनेनात्मभाववङ्कनता । मायाप्रत्ययिकक्रियाभेदे, वङ्कनाना च बहुत्वविवक्षाया भावप्रत्ययो न विरुद्ध. सा च क्रियाव्यापारत्वात् । स्था० २ ठा० १ उ० । " अप्पणो चियं भावं गूहति नियडिमंतो उज्जगभावं दरिसेइ संजमादिसिढिलो वा करणफला जो डोमं दरिसेइ । " आव० ४ अ० ।

आत (या) भाववत्तव्वया-आत्मभाववक्तव्यता-स्त्री० । आत्मभाव एव-स्वाभिप्राय एव न वस्तुतत्त्वं वक्तव्यो-वाच्यो ऽभिमानाद् येषां ते आत्मभाववक्तव्यास्तेषा भाव आत्मभाववक्तव्यता । अहंमानितायाम् । भ० २ श० ५ उ० । " सच्चेणं एस अट्ठे नो चेव णं आयभाववत्तव्वयाए " ( सूत्र-१११ × ) । नैवात्मभाववक्तव्यतयाऽयमर्थ न वयमहमानितयैव ब्रूम., अपि तु-परमार्थ एवायमेवंविध. इति भावना । भ० २ श० ५ उ० ।

आत ( य ) भू-आत्मभू-पुं० । आत्मनो-मनसो, देहाद्वा भवति, भू-क्विप्-५-त० । मनोभवे कामे, देहभवे पुत्रे, कन्यायाम्, वाच० ।

" नार्य्या कुत्राऽपि कस्याश्चि-द्दारकौ द्वौ बभूवतु. ।
सपत्नीतनुभूरेको, द्वितीयश्चात्मभूर्द्वयो. " ॥ १ ॥

आ० क० ६ अ० । बुद्धौ च । स्त्री० । आत्मनैव भवति । भू-क्विप् । शिवे, विष्णौ च । वाच० ।

आत ( य ) रक्ख-आत्मरक्ष-त्रि० । अङ्गरक्षके, स्त्री० । आत्मानं रागद्वेषादेरकृत्योद्भवकूपाद्वा रक्षन्तीत्यात्मरक्षा. । रागद्वेषादेरकृत्याद्वात्मनो रक्षके, स्था० ।

ते च—

तओ आयरक्खा पन्नत्ता, तं जहा-धम्मियाए पडिचोयणाए पडिचोएत्ता भवइ १, तुसिणीए वा सिया २, उट्ठित्तु वा आयाए एगंतमवक्कमेज्जा ३। (सूत्र-१७२ +)

' धम्मियाए पडिचोयणाए ' त्ति-आत्मना एवं धार्मिकोपदेशेन नेदं भवादृशा विधातुमुचितमित्यादिना प्रेरयिता-उपदेष्टा भवतीति अनुकूलेतरापसर्गकारिण ततोऽस्मादुपसर्गकरणान्निवर्तते ततोऽकृत्यासेवा न भवतीत्यत आत्मा रक्षितो भवतीति १, तूष्णीको वा-वाचयम, उपेक्षक इत्यर्थ, स्यादिति २, प्रेरणाया अविषये उपेक्षणासामर्थ्ये च तत. स्थानादुत्थाय ' आय ' त्ति-आत्मना एकान्तम्-विजनम् अन्तं भूमिभागमवक्रामत्-गच्छेत् । स्था० ३ ठा० ३ उ० । विमानाधिपते सूर्याभस्य देवस्यात्मानं रक्षयन्तीत्यात्मरक्षा । कर्मणोऽण् ॥ ५ । ३ । १४ ॥ इत्यणप्रत्यय । रा० । देवविशेषे, रा० । सूर्य्याभस्य वर्णककर्मधिकृत्य-" सोलसेहिं आयरक्खदेवसाहस्सीणं " (अस्य सूत्राशस्य व्याख्या )-षोडशभिरात्मरक्षदेवसहस्रैरिति विमानाधिपते. सूर्याभस्य देवस्यात्मान रक्षयन्तीत्यात्मरक्षा । कर्मणोऽण । ५ । ३ । १४ । इत्यणप्रत्यय. । ते च शिरस्त्राणकल्पा., यथा हि शिरस्त्राणं-शिरस्याविद्धप्राणरक्षकं भवति तथा तेऽप्यात्मरक्षका गृहीतधनुर्दण्डादिप्रहरणा. समन्तत. सप्तानीकाधिपतेरप्यनश्वावस्थायिनो विमानाधिपते. सूर्याभस्य देवस्य प्राणरक्षका । देवानामपायाभावात् तथा तथाग्रहणपुरस्सरमवस्थान निरर्थकमिति चेतरागा स्थितिमात्रपरिपालनहेतुत्वात् प्रीतिप्रकर्षहेतुत्वाच्च, तथा हि-ते समन्तत - सर्वासु दिक्षु गृहीतप्रहरणा ऊर्ध्वस्थिता अवतिष्ठमाना.

स्वनायकशरीररक्षणपरायणा स्वनायकैकनिपण्णदृष्टय' परेपामसहमानाना क्षोभमुत्पादयन्ति-जनयन्ति स्वनायकस्य परा प्रीतिम् । रा० ।

( तथा च )-

चमरस्स णं भंते ! असुरिंदस्स असुररण्णो कइ आयरक्खदेवसहस्सीओ पण्णत्ताओ ?, गोयमा ! चत्तारि चउसट्ठीओ आयरक्खदेवसाहस्सीओ पण्णत्ताओ, एए णं आयरक्खवण्णओ । एवं सव्वेसिं इंदाणं जस्स जत्तिया आयरक्खा ते भाणियव्वा । ( १६४ + )

'वण्णओ' त्ति-आत्मरक्षदेवानां वर्णको वाच्य , स चायम्- " सन्नद्धबद्धवम्मियकवया उप्पीलियसरासणपट्टिया पिणद्धगेवेज्जा बद्धआविद्धविमलवरचिंधपट्टा गहियाउहपहरणा तिणयाइ तिसंधियाइं वइरामयकोडीणि धणूइं अभिगिज्झ पयओ परमाइयकंडकलावा नीलपाणिणो पीयपाणिणो रत्तपाणिणो एवं चारुचावचम्मदंडखग्गपासपाणिणो नीलपीयरत्तचारुचावचम्मदंडखग्गपासवरधरा आयरक्खा रक्खोवगया गुत्ता गुत्तपालिया जुत्ता जुत्तपालिया पत्तेय पत्तेयं समयओ विणयओ किंकरभूया इव चिट्ठंति ' त्ति, अस्यायमर्थ -संनद्धा-सन्नहनिकया कृतसन्नाहा॰ बद्ध कशाबन्धनत वर्म्मितश्च वर्म्मीकृत शरीरारोपणेन कवच कङ्कटो यैस्ते तथा, नत॰ सन्नद्धशब्देन कर्मधारय॰ । तथा उत्पीडिता प्रत्यञ्चाऽऽरोपणेन शरासनपट्टिका धनुर्यष्टिर्यैस्ते तथा, अथ वा—उत्पीडिता बाहौ बद्धा शरासनपट्टिका धनुर्यष्टिर्यैस्ते तथा । पिनद्धं परिहितं ग्रैवेयक ग्रीवाभरणं यैस्ते तथा, तथा बद्धो ग्रन्थिदानेन आविद्धश्च शिरस्यारोपणेन विमलो वरश्च चिह्नपट्टो योधनासूचको नेत्रादिवस्त्ररूप सौवर्णो वा पट्टो यैस्ते तथा तथा गृहीतान्यायुधानि प्रहरणाय यैस्ते तथा, अथ वा-गृहीतान्यायुधानि क्षेप्यास्त्राणि प्रहरणानि च यैस्ते तथा, तथा त्रिनतानि मध्यपार्श्वद्वयलक्षणस्थानत्रयेऽवनतानि त्रिसन्धितानि त्रिपु स्थानेपु कृतसन्धिकानि, नैकाङ्गिकानीत्यर्थ । वज्रमयकोटीनि धनूंष्यभिगृह्य वदत पदे मुष्टिस्थान तिष्ठन्तीति सम्बन्ध । परिमात्रिक सर्वतो मात्रावान् काण्डकलापो येषा ते तथा । नीलपाणय इत्यादिपु नीलादिवर्णपुङ्खत्वान्नीलादयो बाणभेदा सम्भाव्यन्ते । चारुचापपाणय इत्यत्र च चाप-धनुरेवानारोपितज्यमतो न पुनरुक्तता, चर्मपाणय इत्यत्र चर्मशब्देन स्फुरक उच्यते. दण्डादय प्रतीता , उक्तमेवार्थं संग्रहणेनाह-' नीलपीए ' त्यादि अथ वा-नीलादीन् सर्वानेव युगपत्केचिद्धारयन्ति देवशक्तेरिति दर्शयन्नाह-'नीलपीए'त्यादि, ते चात्मरक्षा न संग्रामाद्येवेत्याह-आत्मरक्षा - स्वाम्यात्मरक्षा इत्यर्थ , ते एव विशेष्यन्ते रक्षोपगता रक्षामुपगता . सतत प्रयुक्तरक्षा इत्यर्थ । एतदेव कथमित्याह—गुप्ता अभेदवृत्तय , तथा-गुप्तपालीका॰ तदन्यतो व्यावृत्तमनोवृत्तिका मण्डलीका, युक्ता परस्परसम्बद्धा . युक्तपालीका निरन्तरमण्डलीका:, प्रत्येकमेकैकश समयत पदातिसमाचारेण विनयतो-विनयेन किंकरभूता इव-प्रेष्यत्वं प्राप्ता इवेति, स्वयं च पुरुस्कान्तरं साक्षाद् दर्शयन एवेति । ' एवं सव्वेसिमिंदाण ति-'एवमि'ति-चरमवत्सर्वेषामिन्द्राणां सामानिकचतुर्गुणा आत्मरक्षा वाच्या , ते चार्थत एवम्-सर्वेषामिन्द्राणां सामानिकचतुर्गुणा आत्मरक्षा , तत्र चतु षष्टिसहस्राणि चमरस्येन्द्रसामानिकानाम् , बलेस्तु षष्टिः, शेषभवनपतीन्द्राणां प्रत्येक षट् षट् सहस्राणि, शक्रस्य चतुरशीति , ईशानस्याऽशीतिः सनत्कुमारस्य द्विसप्तति. , माहेन्द्रस्य सप्तति , ब्रह्मण॰ षष्टि , लान्तकस्य पञ्चाशत् , शुक्रस्य चत्वारिंशत्, सहस्रारस्य त्रिंशत् . प्राणतस्य विंशतिः, अच्युतस्य दशसहस्राणि सामानिकानामिति, यदाह—

" चउसट्ठी सट्ठी खलु. छच्च सहस्सा उ असुरवज्जाणं ।
सामाणिया उ एए. चउग्गुणा आयरक्खाउ ॥ १ ॥
चउरासीइ असीई, बावत्तरि सत्तरी य सट्ठी य ।
पण्णा चत्तालीसा, तीसा वीसा दससहस्सा" ॥ २ ॥ इति । भ० ३ श० ६ उ० ।

आत [य] रक्खि [न्] -आत्मरक्षिन्-त्रि० । आत्मानं रक्षत्यपायेभ्य —कुगतिगमनादिभ्य इत्येवंशीलः आत्मरक्षी । कुगतिगमनादिभ्य आत्मनो रक्षणशीले,, उत्त०पाइ० ४ अ०। " अप्पाणरक्खी चरमप्पमत्तो " ॥ १०+ ॥ उत्त० ४ अ० ।

आत ( य ) रक्खिय-आत्मरक्षित-त्रि० । आत्माऽपायेभ्यो दुर्गतिगमनादिभ्यो रक्षितो येन स तथा । दुर्गतिगमनहेतुनिबन्धनात्सावद्यानुष्ठानान्निवृत्ते, सूत्र० । " आयपरक्कमे आयरक्खिए " ( सूत्र० ४२ + ) । दुर्गतिगमनहेतुनिबन्धनस्य सावद्यानुष्ठानस्य निवृत्तत्वाद् । सूत्र० २ श्रु० २ अ० ।

अरइं पिट्ठओ किच्चा, विरए आयरक्खिए ॥ १५ × ॥

आत्मरक्षितो दुर्गतिहेतोरपध्यानादेरनेनेत्यात्मरक्षित । आहिताग्न्यादिपु ॥३।१।१५३॥ दर्शनात् क्षान्तस्य परनिपातः ( हैम व्याकरण सूत्रेण ) उत्त० २ अ० ।

आत ( य ) वं-आत्मवत्-त्रि० । " आयवं " (सूत्र-१० ×) । आत्मा ज्ञानादिकोऽस्यास्तीत्यात्मवान् । ज्ञानादिमति, आचा० १ श्रु० ३ अ० १ उ० ।

आत्मा-चित्तं वश्यतयाऽस्त्यस्य मतुप् । मस्य व॰ स्त्रियां ङीप् । वश्यचित्ते, निर्विकारचित्ते च । आत्मा प्रकाश्यतया विद्यतेऽस्य आत्मप्रकाशके शास्त्रे, आत्मना तुल्यक्रियावृति, आत्मतुल्यक्रियायाम् , अव्य० । वाच० ।

आतव-आतप-पुं० । आ-समन्तात्तपति संतापयति जगदित्यातप । उत्त० १ अ० । आ-तप-अच् । उद्योते, कर्म० २ कर्म० । स चोद्योतो यद्यपि लोके भेदेन प्रसिद्धो-यथा, सूर्यगत आतप , चन्द्रगत प्रकाश इति । तथाप्यातपशब्द' चन्द्रप्रभायामपि वर्त्तते, यदुक्तम्-" चन्द्रिका कौमुदी ज्योत्स्ना, तथा चन्द्रातप. स्मृत. " ॥ १ ॥ इति । सू० प्र० ३ पाहु० । "आतवाइ वा" (सूत्र-६५×) आतप इति वा । आतप आदित्यस्येति । स्था० २ ठा०-४ उ० । घर्मे, उत्त० २ अ० । "आयवताणनिमित्त" ॥ ६६× ॥ उष्णेन परितापना । व्य० ८ उ० । आतप्यते-पीड्यते शरीरमनेनेत्यातप' । वणपाषाणादौ, " आयवस्स निवाएणं, अउला हवइ वेयणा " ॥ ३५× ॥ उत्त० २ अ० । निविडकिरणे, रौद्रे च प्रकाशे, वाच० । स्वनामख्याते अहोरात्रभवे चतुर्विंशतितमे मुहूर्ते च । स०३० सम० । च० प्र० । *पो व ।८।१।२३१। इतिपस्यव. ।

आतवणाम (न्)-आतपनामन्-न०। नामकर्मभेदे,श्रा०। यदुदयादातपवान् भवति। पृथिवीकाये, आदित्यमण्डलादिवत्। श्रा०। यदुदयाज्जन्तुशरीराणि स्वरूपेणानुष्णान्यपि उष्णप्रकाशलक्षणमातपं कुर्वन्ति तदातपनाम। तद्विपाकश्च भानुमण्डलगतभूकायिकेष्वेव, न वह्नौ, प्रवचनप्रतिषेधात्; तत्रोष्णत्वमुष्णस्पर्शनामोदयात्, उत्कटलोहितवर्णनामोदयाच्च प्रकाशकत्वमिति। पं० सं० ३ द्वार। यदुदयवशाज्जन्तुशरीराणि भानुमण्डलगतपृथ्वीकायिकरूपाणि स्वरूपेणानुष्णान्यपि उष्णप्रकाशलक्षणमातपं कुर्वन्ति तदातपनाम। आतपनामोदयश्च वह्निशरीरे न भवति सूत्रे प्रतिषेधात्। तत्रोष्णत्वमुष्णस्पर्शनामोदयात्, उत्कटलोहितवर्णनामोदयाच्च प्रकाशकत्वम्। कर्म० ६ कर्म०।

रविबिंबे उ जियंगं, तावजुयं आयवाउ न उ जलणे।
जमुसिणफासस्स तहिं, लोहियवण्णस्स उदउ त्ति ॥४४॥

आतपाद् आतपनामोदयाज्जीवानामङ्गं-शरीरम् तापयुतं स्वयमनुष्णमपि उष्णप्रकाशयुक्तं भवति। आतपस्य पुनरुदयो रविबिम्बे एव। तुशब्द एवकारार्थः। भानुमण्डलादिपार्थिवशरीरेष्वेव; न पुनर्ज्वलने-हुतभुजि। अत्र युक्तिमाह-यद्-यस्मात्कारणात् तत्र-ज्वलने-ज्वलनजन्तुशरीरे; तेजस्कायशरीरे इत्यर्थः, उष्णस्पर्शस्योदयः, तथा-'लोहितवर्णस्योदय' इति-तेजस्कायशरीराण्येवोष्णस्पर्शोदयेनोष्णानि, लोहितवर्णनामोदयात्तु प्रकाशयुक्तानि भवन्ति, न त्वातपोदयादिति भावः। तदुदयाज्जन्तुशरीराण्यात्मनानुष्णान्यप्युष्णप्रकाशरूपमातपं कुर्वन्ति, तदातपनामेत्यर्थः। कर्म० १ कर्म०।

आत(य)वणिवाय-आतपनिपात-पुं०। आतपस्य-घर्मस्य नितरां पातो निपातः। घर्मस्य नितरांपाते, उत्त०।

आयवस्स निवाएणं, अउला हवइ वेयणा ॥ ३५× ॥

आतपस्य निपातेन-घर्मस्य संयोगेन अतुला वेदना भवति, तापशीतवर्षावातादिपीडाऽस्माभिः सोढुं न शक्यते। अथ वा-आतप्यते-पीड्यते शरीरमनेनेत्यातपः तृणपाषाणादिरप्युच्यते तस्य संगेनास्मच्छरीरे महती वेदना भवति। उत्त० २ अ०।

आत ( य ) वतत्त-आतपतप्त-त्रि०। घर्मतप्ते, "आतवतत्ते वहे अहवे" ॥ २०१ × ॥ आयवतत्तं अप्पोदगं अवहं घेप्पंति। असइ आयवतत्तं वहं घिप्पति। नि० चू०१ उ०।

आत ( य ) वं ( त् )-आतपवत्-त्रि०। आतपोऽस्त्यत्र मतुप्। मस्य वः। आतपयुक्ते, "शृङ्गाणि यस्यातपवन्ति सिद्धाः" वाच०। अहोरात्रभवे स्वनामख्याते चतुर्विंशे मुहूर्ते, जं० ७ वक्ष०। कल्प०।

आत ( य ) वाल-आत्मपाल-त्रि०। आत्मानमेव पालयतीत्यात्मपालः। आत्मनः पालके, श्रा० १ श्रु० १ अ०।

आतवालोय-आतपालोक-पुं०। हुतवहतापदर्शने, श्रा०। "आतवालोयमहंततुंवइयपुराणकरणे" ( सूत्र-२७× )। श्रा० १ श्रु० १ अ०।

आत ( य ) वस-आत्मवश-त्रि०। आत्मनो वशः-आयत्तता यत्र। आत्माधीने, "यद्यदात्मवशं तु स्यात्तत्तत्सेवेत यत्नतः। सर्वं परवशं दुःखं, सर्वमात्मवशं सुखम्" ॥१॥ मनु०। वाच०।

सव्वत्थेसु विमुत्तो, साहू सव्वत्थ होइ अप्पवसो ।६८+।

सर्वार्थेषु विमुक्तः-सर्वपदार्थेषु ममतारहितः साधुः-मोक्षसाधकः सर्वत्रात्मवशो भवति; न कुत्रापि परवशः। ग० २ अधि०।

आत ( य ) वायपत्त-आत्मवादप्राप्त-त्रि०। आत्मनः उपयोगलक्षणस्य जीवस्यासंख्येयप्रदेशात्मकस्य संकोचविकाशभाजः स्वकृतफलभुजः प्रत्येकसाधारणतया व्यवस्थितस्य द्रव्यपर्यायतया नित्यानित्याद्यनन्तधर्मात्मकस्य वा वादः आत्मवादस्तं प्राप्तः आत्मवादप्राप्तः। सम्यग् यथावस्थितात्मस्वतत्त्ववेदिनि, सूत्र०। "आयवायपत्ते विऊ" ( सूत्र० ४ × )। सूत्र० १ श्रु० १६ अ०।

आत ( य ) वि ( द् )-आत्मविद्-त्रि०। पाठान्तरे-"आयवी" ( सूत्र-१०७ × )। आत्मानं श्वभ्रादिपतनरक्षणद्वारेण वेत्तीत्यात्मवित्। आत्मनो रक्षके, आचा० १ श्रु० ३ अ० १ उ०। आत्मानं यथार्थरूपेण वेत्ति, विद्-क्विप्-६ त०। आत्मस्वरूपज्ञे, आत्मानं स्वपक्षं वेत्ति क्विप्। स्वपक्षज्ञातरि,। वाच०।

आत ( य ) वीरिय-आत्मवीर्य-न०। वीर्यभेदे, नि० चू०। आयविरियं दुविहं-विओगायवीरियं च, अविओगायवीरियं च। विओगायवीरियं जहा-संसारावत्थस्स जीवस्स मणमादिजोगा वियोगजा भवन्ति, अविओगाऽऽयवीरियं पुण-उवओगो असंखेज्जा पए एसत्तणं। नि० चू० १ उ०।

आत ( य ) विसोहि-आत्मविशुद्धि-स्त्री०। उत्कालिकश्रुतविशेषे, न०। आत्मनो-जीवस्यालोचना प्रायश्चित्तप्रतिपत्तिप्रभृतिप्रकारेण विशुद्धिः कर्मविगमनलक्षणा प्रतिपाद्यते यस्यां ग्रन्थपद्धतौ सा आत्मविशुद्धिः। नं०। आत्मनो जीवस्यालोचनादिप्रायश्चित्तप्रतिपत्त्यादिप्रकारेण विशुद्धिः कर्मविगमनलक्षणा प्रतिपाद्यते यत्र तदध्ययनमात्मविशुद्धिः। पा०।

आत (य) वेयावच्चकर-आत्मवैयावृत्यकर-त्रि०। अलसे, विसम्भोगिके च। स्था०।

आयवेयावच्चकरे नाममेगे, णो परवेयावच्चकरे। (सूत्र-३२०×)

आत्मवैयावृत्यकरः-अलसो, विसम्भोगिको वा। स्था० ४ ठा० ३ उ०।

आतमंचेयणिज्ज-आत्मसंचेतनीय-पुं०। आत्मना संचेत्यन्ते-क्रियन्त इत्यात्मसंचेतनीयाः। स्था० ४ ठा० ४ उ०। उपसर्गभेदे, स्था० ४ ठा० ४ उ०। ( अस्य भेदोदाहरणादिवक्तव्यता 'उवसग्ग' शब्दे ऽस्मिन्नेव भागे वक्ष्यते )

आत (य) संजम-आत्मसंयम-पु०। आत्मनः-शरीरस्य संयमः। संवृताङ्गोपाङ्गेन्द्रियत्वे, पा०। आत्मनो-मनसः संयमः। चित्तसंयमने, वाच०।

आत (य) संयमपर-आत्मसंयमपर-त्रि०। आत्मन -शरीरस्य संयम संवृतनाङ्गोपाङ्गेन्द्रियत्वम् तत्पर-तत्प्रधानम्। संवृतनाङ्गोपाङ्गेन्द्रियत्वप्रधाने षो० ६ विव०।

आत (य)संयमोवाय-आत्मसंयमोपाय-पु०। संयमनं संयम आत्मन संयम आत्मसंयमस्तदुपाय। आत्मसंयमनोपाये, दश०। उक्त च—" तस्यात्मा संयतो यो हि, सदाचारे रतस्सदा। स एव धृतिमान् धर्म-स्तस्यैव च जिनो हित. " ॥ १ ॥ इति। दश० ३ अ०।

आत(य)संवेयण-आत्मसंवेदन-न०। द्रव्योपसर्गभेदे, सूत्र०। तथा च उपसर्गमधिकृत्य—

दव्वे चउव्विहो दे-वमणुयतिरियायसंवेतो ॥ ४७ ॥

आत्मसंवेदना अपि चतुर्विधा, तद्यथा-घट्टनात, लेशनात, अङ्गुलाद्यवयवसंश्लेषरूपाया स्तम्भनात., प्रपाताच्च। सूत्र० १ श्रु० ३ अ० १ उ०।

आत ( य ) संवेयणिज्ज-आत्मसंवेदनीय-पुं०। आत्मना क्रियन्त इत्यात्मसंवेदनीया। द्रव्योपसर्गभेदे, आ० चू० १ अ०। ( एतस्य भेदादिबहुवक्तव्यता 'उवसग्ग' शब्देऽस्मिन्नेव भागे वक्ष्यते )।

आत( य ) सक्खि ( न् )-आत्मसाक्षिन्-त्रि०। आत्मन. बुद्धिवृत्त. साक्षी-प्रकाशक वेदान्तादिमतसिद्धे बुद्धिवृद्धिप्रकाशक चैतन्ये, वाच०। आत्मा-स्वजीवः स्वस्वसंचितप्रत्यक्षविरतिपरिणामपरिणत. साक्षी यत्र तदात्मसाक्षिकम्। स्वजीवसाक्षिके, पा०।

आत (य) (अप)सत्तम-आत्मसप्तम-त्रि०। आत्मना सप्तम -सप्तानां पूरण आत्मा वा सप्तमो यस्यासावात्मसप्तम। सप्तानां पूरण आत्मा यस्य। तस्मिन्, स्था०। " मल्लीणं अरहा अप्पसत्तमे मुंडे भवित्ता " ( सूत्र-५६४+ ) स्था० ७ ठा० ३ उ०।

आत(य)समप्पण-आत्मसमर्पण-न०। आत्मनिवेदने,पञ्चा०।

गुरवे चात्मनिवेदनं महते फलाय—

अह निपगाहिगिणपुव्वं, सम्मं सुद्धेण चित्तरयणेण।
गुरुणोऽणुवेयणं स-व्वहेव दढमप्पणा एत्थ ॥ २६ ॥

अथ तदात्मनिवेदनं गुरु प्रतिपद्यते न वा यदि न प्रतिपद्यते तदा न गुरुं निष्फलत्वात्तस्येत्याशङ्क्य परिहरन्नाह-

एसा खलु गुरुभत्ती, उक्कोसो एस दाणधम्मो उ।
भावविसुद्धीऍ दढ, इहरा वि य बीयमेयस्स ॥ ३० ॥

कथमिद भावविशुद्ध्याभावपूर्वकमात्मनिवेदनमुत्कृष्टदानधर्मबीज भवतीत्याह—

जं उत्तमचरियमिणं, सोउं पि अणुत्तमाण पावे त्ति।
ता एयमगाणाओ, उक्कोसो होइ एयस्स ॥ ३१ ॥

अथ यदि तदात्मनिवेदन गुरु प्रतिपद्यते तदाऽधिकरणदोषो गुरु स्यादित्याशङ्का परिहरन्नाह—

गुरुणो वि णाऽहिगरणं, ममत्तरहियस्स एत्थ वत्थुम्मि।
तब्भवसुद्धिहेउं, आणाएँ पयत्तमाणस्स ॥ ३२ ॥

पञ्चा० २ विव०।

( एतासां गाथानां व्याख्या 'पवज्जा' शब्दे पञ्चमेभागे करिष्यते। )

आत(य)समया-आत्मसमता-स्त्री०। आत्मौपम्ये, आचा०। सर्वत्रात्मौपम्यं समाचरेदित्याह—

आयओ बहिया पास, तम्हा ण हंता ण विघायए।
( सूत्र-११५× )।

यथा ह्यात्मन सुखमिष्टमितरत्त्वन्यथा तथा बहिरपि-आत्मनो व्यतिरिक्तानामपि जन्तूनां सुखप्रियत्वमसुखाप्रियत्वं च पश्य-अव धारय, तदेवमात्मसमतां सर्वप्राणिनामवधार्य किं कर्त्तव्यमित्याह-' तम्हा ' इत्यादि। यस्मात्सर्वेऽपि जन्तवो दु.खद्विष सुखलिप्सवस्तस्मात्तेषा न हन्ता-न व्यापादक स्यात्, नाप्यपरैस्तान् जन्तून् विविधैर्नानाप्रकारैरुपायैर्घातयेत्-विघातयेदिति। आचा० १ श्रु० ३ अ० ३ उ०।

आत (य) समोयार-आत्मसमवतार-पुं०। ज्ञशरीरभव्यशरीरव्यतिरिक्तद्रव्यसमवतारभेदे, अनु०।

सव्वदव्वा वि णं आयसमोआरेणं आयभावे समोअरंति। ( सूत्र-१५३+ )

ज्ञशरीरभव्यशरीरव्यतिरिक्तो द्रव्यसमवतारस्त्रिविधः प्रज्ञप्त., तद्यथा-आत्मसमवतार इत्यादि। तत्र सर्वद्रव्याण्यप्यात्मसमवतारेण चिन्त्यमानान्यात्मभावे—स्वकीयस्वरूपे समवतरन्ति—वर्तन्ते तदव्यतिरिक्तत्वात्तेषाम्। अनु०। (अत्र बहुवक्तव्यता ' समोयार ' शब्दे सप्तमे भागे करिष्यते)

आत ( य ) सरीरखेत्तोगाढ-आत्मशरीरक्षेत्रावगाढ-त्रि०। स्वशरीरक्षेत्रव्यवस्थिते, भ०। ' आयसरीरखेत्तोगाढे पोग्गले अत्तमायाए आहारेन्ति " ( सूत्र-२५८+ )। स्वशरीरे व्यवस्थितानित्यर्थ। भ० ६ श० १० उ०।

आत ( य ) साय-आत्मसात-न०। आत्मसुखे, सूत्र०। " भूताइं जे हिंसति आयसाते ॥५+॥ " अभूवन् भवन्ति भविष्यन्तीति भूतानि-प्राणिनस्तानि आत्मसुखार्थं हिनस्ति-व्यापादयति। सूत्र० १ श्रु० ७ अ०।

आत (य) सायाणुगामि ( न् )-आत्मसातानुगामिन्-पुं०। स्वसुखलिप्सौ, सूत्र०।

हंता छेत्ता पगब्भित्ता, आयसायाणुगामिणो ॥ ५ ॥

आत्मसातानुगामिन -स्वसुखलिप्सव.। सूत्र०१ श्रु०८ अ०।

आत(य)सुह-आत्मसुख-न०। शरीरसुखे, सूत्र०। " आयसुहं पडुच्च " ॥ ४ + ॥ आत्मसुखम्प्रतीत्य-स्वस्य शरीरसुखकृते। सूत्र० १ श्रु० ५ अ० १ उ०। ' जे छिंदंति आयसुहं पडुच्च ॥ ८ × ॥ सूत्र० १ श्रु० ७ अ०। जीवसुखे, द्रव्या०।

अर्हत्क्रमाऽम्भोजयुगोपयोगि,
चेतः कुरुष्वाऽऽत्मसुखं लभस्व ॥ ७ ॥

आत्मनो-जीवस्य सुखं-निराबाधानुभव लभस्व-प्राप्नुहि नयज्ञानात् जीवादीन् परीक्ष्य कर्मभ्य आत्मानं वियोज्यानन्तसुखभाक् भव इत्यर्थः । द्रव्या० ८ अध्या० । आत्मैव सुखमस्य आत्मलाभमात्रेण सुखिनि, त्रि० । आत्मैव सुखं सच्चिदानन्दरूपत्वात् । आत्मरूपे परमानन्दे, न० । वाच० ।

आत (य) सोहि-आत्मशुद्धि-स्त्री० । आत्मनो-देहस्य, मनसो वा शुद्धिः । देहशुद्धौ, चित्तशुद्धौ च । वाच० । कर्मक्षयोपशमक्षये च । " आययजोगमायसोहीए " ॥ १५४ ॥ आत्मशुद्ध्या-कर्मक्षयोपशमक्षयलक्षणया ऽऽयतयोग-सुप्रणिहितमनोवाक्कायात्मक विधाय । आचा० १ श्रु० ६ अ०४ उ० ।

आत (य) हित-आत्महित-त्रि० । स्वहिते, सूत्र० । "आयहियाए सन्निसेज्जाओ" ॥१६४॥ आत्महिताय स्वहितं मन्यमाना. । सूत्र० १ श्रु० ४ अ० १ उ० । शरीराय हिते, " आयट्टीणं आयहियाए " (सूत्र-१+॥) आत्महितानां हितमिव हितम् आत्महित च शरीरे आत्मनि च भवति । तत्र शरीरे हिताऽहित पथ्याऽपथ्याहारादिकम् । आत्मनि तु हिंसादिप्रवृत्तिनिवृत्ती । अथवा-आत्मनो हितानि त्रीणि त्रिषष्ठानि पाखण्डिकशतानि तदपनयनं तदस्ति यपा ते आत्महिता । दशा० ५ अ० । अहिताचाराश्च चौरादय , अयं त्वात्महित ऐहिकामुष्मिकापायभीरुत्वाद् । सूत्र०२ श्रु० २ अ० । "आयहिए अणियाणसवुडे" ( सूत्र-२०१ )। सूत्र० १ श्रु० २ अ० ३ उ० ।

आयहेउ-आत्महेतु-पुं०। आत्मनिमित्ते, दश०।"आयहेउ पर उभये"॥३३६+॥ आत्महेतो -आत्मनिमित्तम् । दश०१० अ०। "केइ पुरिसे आयहेउं वा णाइहेउं वा"(सूत्र-१७+) । आत्मनिमित्तम्-आत्मार्थम् । सूत्र० २ श्रु० २ अ० ।

आता (अप्पा)-स्त्री० । आत्मन्-पुं० । अत-मनिण् । स्वरूपे, वाच० । भ० । भस्माऽऽत्मनो पो वा ॥८।२।५१॥ इति हैमप्राकृतसूत्रेण भस्माऽऽत्मनो संयुक्तस्य पो वा । अप्पा । अप्पाणो । पक्षे-अत्ता । प्रा० । पुंस्यन आणो राजवच्च ॥ ८ । ३ । ५६ ॥ इति हैमप्राकृतसूत्रेण पुल्लिङ्गे वर्त्तमानस्याऽन्नन्तस्य स्थाने आण इत्यादेशो वा भवति । पक्षे यथादर्शन राजवत् च कार्य्यं भवति । आणादेशे च-" अत सर्डो " ॥ ८ । ३ । २ ॥ इत्यादय प्रवर्तन्ते । पक्षे तु-राजवत्-अप्प शस् । जस्शस्ङसिङसा णो ॥ ८ । ३ । ५० ॥ टो णा ॥ ८ । ३ । ५१ ॥ इणममामा ॥ ८ । ३ । ५३ ॥ इति प्रवर्तन्ते । अप्पाणो । अप्पाणा, प्रथमा । अप्पाण । अप्पाणे, द्वितीया । अप्पाणेण । अप्पाणेहिं, तृतीया । अप्पाणाओ । अप्पाणासुन्तो, पञ्चमी । अप्पाणस्स । अप्पाणाण, षष्ठी । अप्पाणम्मि । अप्पाणेसु, सप्तमी । अप्पाण कअं । पक्षे राजवत् । अप्पा । अप्पो प्रथ० । हे अप्पा ! हे अप्प !, संबोधनम् । अप्पाणो चिट्ठन्ति । अप्पाणो पेच्छ । अप्पाणा, अप्पेहिं । अप्पाणो । अप्पाओ । अप्पाउ । अप्पाहि । अप्पाहिन्तो । अप्पा । अप्पासुन्तो । अप्पाणो धण । अप्पाण । अप्पे । अप्पेसु । प्रा० । ' आत्मनष्टो णिआ णइआ " ॥ ८ । ३ । ५७ ॥ आत्मन परस्याष्टाया स्थाने णिआ णइआ इत्यादेशौ वा भवत । अप्पणिआ पाउसे उवगअम्मि । अप्पणिआ अविअड्डिखाणिआ॥ अप्पणइआ । पक्षे-अप्पाणेण । प्रा० । यत्ने, वाच० । स्वस्मिन् , " आयाए एगंतमतं अवक्कमति " ( सूत्र-१४२+ ) । ' आयाए ' त्ति--आत्मना, स्वयमित्यर्थ । भ० ३ श० २ उ० ।

दोहिं ठाणेहिं आया सरीरं फुसित्ता णं णिज्जाति, तं जहा-देसेण वि आया सरीरं फुसित्ता णं णिज्जाति, सव्वेण वि आया सरीरगं फुसित्ता ण णिज्जाति, एवं फुरित्ता णं, एवं फुडित्ता, एवं संवट्टित्ता, निव्वट्टित्ता । ( सूत्र-६७ )

' दोहिं ' इत्यादिकं कण्ठ्यम् । नवरं द्वाभ्या प्रकाराभ्यां ' देसेण वि ' त्ति-देशेनापि कतिपयप्रदेशलक्षणेन केषाञ्चित्प्रदेशा वा इलिकागत्योत्पादस्थानं गच्छता जीवेन शरीराद्-बहि क्षिप्तत्वात् , आत्मा-जीव , शरीरम्-देह स्पृष्ट्वा-श्लिष्ट्वा निर्याति शरीरान्मरणकाले निस्सरतीति, ' सव्वेण वि ' त्ति-सर्वेण-सर्वात्मना सर्वैर्जीवप्रदेशै कन्दुकगत्योत्पादस्थानं गच्छता शरीराद् बहि प्रदेशानामक्षिप्तत्वादिति । अथवा-देशेनाऽपि-देशतोऽपि अपिशब्द सर्वेणापीत्यपेक्ष । आत्मा-शरीरं कोऽर्थ ? शरीरदेश-पादादिकं स्पृष्ट्वा अवयवान्तरेभ्य प्रदेशसंहारान्निर्याति, स च संसारी । सर्वेणापि-सर्वतयाऽपि, अपि देशेनापीत्यपेक्ष सर्वमपि शरीरं स्पृष्ट्वा निर्यातीति भाव , स च सिद्धो, वक्ष्यति च-" पायणिज्जाणा निरएसु उववज्जंती " त्यादि, यावत्-" सव्वंगनिज्जाणा सिद्धेसु " त्ति । आत्मना शरीरस्य स्पर्शने सति स्फुरण भवतीति, इत्यत उच्यत-'एवमि' त्यादि, 'एवमि' ति 'दोहिं ठाणेहिं ' इत्याद्यभिलापससूचनार्थ , तत्र देशेनापि कियद्भिरप्यात्मप्रदेशैरिलिकागतिकाले ' सव्वेण वि ' त्ति सर्वैरपि गेन्दुकगतिकाले शरीरम् । ' फुरित्ता ण ' ति-स्फोरयित्वा सस्पन्दं कृत्वा निर्याति, अथवा-शरीरकं देशत , शरीरदेशमित्यर्थ , स्फोरयित्वा पादादिनिर्याणकाले सर्वत शरीरं स्फोरयित्वा सर्वाङ्गनिर्याणावसर इति । स्फुरणाच्च सात्मकत्व स्फुट भवतीत्याह-' एवमि ' त्यादि-' एवमि ' ति-तथैव देशेनात्मदेशेन शरीरकम् ' फुडित्ता ण ' ति-सचेतनतया स्फुरणलिङ्गत स्फुटं कृत्वा इलिकागतौ सर्वेण-सर्वात्मना स्फुटं कृत्वा गेन्दुकगताविति, अथवा-शरीरकं देशत सात्मकतया स्फुट कृत्वा पादादिना निर्याणकाले सर्वत सर्वाङ्गनिर्याणप्रस्ताव इति, अथवा-फुडित्ता' स्फोटयित्वा विशीर्णं कृत्वा तत्र देशतोऽक्ष्यादिविघातेन, सर्वत सर्वविशरणेन देवदीपादिजीववदिति शरीरक सात्मकतया स्फुटीकुर्वस्तत्संवर्त्तनमपि कश्चित्करोतीत्याह-' एवमि ' त्यादि , ' एवमि ' ति, तथैव ' संवट्टइत्ता णं ' ति-संवर्त्य-सङ्कोच्य शरीरक देशेनेलिकागतौ शरीरस्थितप्रदेशै सर्वेण--सर्वात्मना गेन्दुकगतौ सर्वात्मप्रदेशाना शरीरस्थितत्वान्निर्यातीति , अथवा--शरीरक शरीरिण-मुपचाराद्दण्डयोगाद्दण्डपुरुषवत् , तत्र देशत संवर्तन संसारिणो म्रियमाणस्य पादादिगतजीवप्रदेशसंहारान्मर्त्यैतम्नु निर्याणं गन्तुरिति । अथवा-शरीरक देशत संवर्त्य हस्तादिसङ्कोचनेन सर्वत -सर्वशरीरसङ्कोचनेन पिपीलिकादिवदिति । आत्मनश्च संवर्त्तन कुर्वत शरीरस्य निवर्तन करोतीत्याह-एव निवट्टइत्ता ण ' ति-तथैव निवर्त्य-जीवप्रदे-

शेभ्य , शरीरकं पृथक् कृत्वेत्यर्थः,तत्र देशेनेलिकागतौ सर्वेण गेन्दुकगतौ, अथवा-प्रदेशत शरीरकं निवर्त्यात्मनः पादादिनिर्याणवान् ,सर्वेन. सर्वाङ्गनिर्याणवानिति, अथवा-पञ्चविधशरीरसमुदयापेक्षया देशतः शरीरम्—औदारिकादि निवर्त्य, तैजसकार्म्मणे त्वादायैव, तथा सर्वेण सर्वं शरीरसमुदाय निवर्त्य निर्याति; सिद्धयतीत्यर्थः,

अनन्तरं सर्वनिर्याणमुक्तं, तच्च परम्परया धर्मश्रवणलाभादिषु ते च यथा स्युस्तथा दर्शयन्नाह—

दोहिं ठाणेहिं आता केवलिपन्नत्तं धम्मं लभेज्जा सवणताते, तं जहा-खतेण चेव, उवसमेण चेव, एवं ०जाव मणपज्जवनाणं उप्पाडेज्जा, तं जहा-खतेण चेव, उवसमेण चेव। ( सूत्र-६८ )

'दोहीं' त्यादि, कण्ठ्यं, नवरम्'खएण चेव' त्ति-ज्ञानावरणीयस्य दर्शनमोहनीयस्य च कर्मण उदयप्राप्तस्य क्षयेण-निर्जरणेन, अनुदितस्य चोपशमेन-विपाकानुभवनेन क्षयोपशमेनेत्युक्तं भवति, यावत्करणात्-" केवलं बोहिं बुज्झेज्जा मुंडेभवित्ता अगाराओ अणगारियं पव्वएज्जा केवल बभचेरवासमावसेज्जा केवलेणं संजमेणं संजमेज्जा केवलेणं संवरेणं संवरेज्जा केवलमाभिणिबोहियनाणमुप्पाडेज्जा " इत्यादि दृश्यम् , एवं यावन्मन.पर्यवज्ञानमुत्पादयेदिति, केवलज्ञानं तु क्षयादेव भवतीति तन्नोक्तम् । इह च यद्यपि बोध्यादय सम्यक्त्वचारित्ररूपत्वात्केवलेन क्षयेण, उपशमेन च, भवन्ति । तथाप्येते क्षयोपशमेनापि भवन्ति । श्रवणाभिनिबोधिकादीनि तु क्षयोपशमेन भवन्तीति सर्वसाधारण. क्षयोपशम उक्त । स्था० २ ठा० ४ उ० । देहे, उत्त०। उक्तं हि-"धर्मधृत्यग्निधीन्द्वर्क-त्वक्नत्त्वसूर्यदेहेषु । शीलानिलमनोयत्न-कवीर्येऽप्यात्मन स्मृति " ॥१॥ इति । उत्त० १५ अ० ।

तथा च—

जमि णं विरूवरूवेहिं सत्थेहिं लोगस्स कम्मसमारम्भा कज्जंति, तं जहा-अप्पणो से पुत्ताणं। ( ८६+ )

' त जहा अप्पणो ' इत्यादि, तद्यथेत्युपप्रदर्शनार्थं नोक्तमात्ममेवान्यदप्येवंजातीयकं मित्रादिकं द्रष्टव्यम् (स) तस्यारम्भारिम्भोयं आत्मा-शरीर तस्मै अर्थं तदर्थं कर्म्मारम्भा पाकादय क्रियन्ते । आचा० १ श्रु० २ अ० ५ उ० । मनस्वि; बुद्धिरूपे निजे स्वभावे, बुद्धौ च । वाच० । देहावच्छिन्नचैतन्ये च । अन्त करणे, वाच० । ज्ञाने, प्रकाशस्वरूपे बुद्धौ आत्मनि, बुद्धिर्हि मनआदिकरणानि प्राप्नोत्यात्मा नेपा प्रत्यभिज्ञानम् । वाच० । अर्के वह्नौ,वायौ, वाच० । अततीत्यात्मा । विशे० २२५६ गाथा । अतति-सततं गच्छत्यपरापरान् स्वपरपर्यायानित्यात्मा । अथवा-अतधातोर्गमनार्थत्वेन ज्ञानार्थत्वादतति—सततमवगच्छत्युपयोगलक्षणत्वादित्यात्मा । भ० १० श० १२ उ० । अतति—सातत्येन गच्छति तांस्तान् ज्ञानदर्शनसुखादिपर्यायानित्यात्मादिशब्दव्युत्पत्तिनिमित्तसंभवात् , उक्तञ्च-" एवं जीवो जीवो, संसारी पाणधारणाणुगओ । सिद्धो पुणरज्जीवो, जीवणपरिणामरहिओ त्ति " आ० म० १ अ०।

को ह्यात्मा भगवानाह-योऽहमित्यभिमन्यते, स कीदृक् सूक्ष्मोऽसौ?, किं तत्सूक्ष्मं-यन्न गृह्णीम.,न तु शब्दगन्धानिला., किं तु ते इन्द्रियग्राह्याः, तेन ग्रहणमात्मा न तु ग्राहयिता हि सः । आ० चू० १ अ० ।

विषयसूचना—

( १ ) एकविध. आत्मा ।
( २ ) एकविधोऽप्यात्मा त्रिविधः ।
( ३ ) निक्षेप आत्मन. ।
( ४ ) अष्टविध आत्मा ।
( ५ ) आत्मान -सूक्ष्मा, बादराश्च नवविधाश्च ।
( ६ ) आत्मन. लक्षणम् ।
( ७ ) परिभोगोपभोगकषायद्वाराणि ।
( ८ ) इन्द्रियाण्यात्मन ।
( ९ ) चित्तादीनि आत्मन. ।
( १० ) आत्मन अस्तित्वम् ।
( ११ ) अभ्याख्यानमात्मन. ।
( १२ ) आत्मनोऽस्तित्वमिन्द्रभूतिं प्रति ।
( १३ ) अभौतिकत्वमात्मनः ।
( १४ ) कस्या दिश आगतोऽहम् ।
( १५ ) अन्यत्वम् , अमूर्त्तत्वम् , अनित्यत्वं च आत्मनः ।
( १६ ) कर्त्तृत्वमात्मन. ।
( १७ ) विभुत्वमात्मनः ।
( १८ ) परिमाणमात्मन. ।
( १९ ) विस्तरत एकत्वमात्मनः ।
( २० ) क्रियावत्त्वमात्मन ।
( २१ ) ज्ञानमात्मनो भिन्नम् , अभिन्नं च ।
( २२ ) द्वाभ्यां स्थानाभ्यामात्मा जानाति ।
( २३ ) आत्मनिरूपणे स्फुटगाथाः ।
( २४ ) क्षणिकत्वमात्मनः ।
( २५ ) रत्नप्रभादिभावानामात्मत्वम् ।
( २६ ) गाथा.-" अप्पा नई वेयरणी " ति ।

( १ ) एकविध आत्मा ।

एगे आता ( या ) । ( सूत्र-२ )

एको, न द्व्यादिरूप आत्मा-जीव कथञ्चिदिति गम्यते। स्था० १ ठा० । (अस्य सूत्रस्य विस्तरतो व्याख्या ( १९ ) ऊनविंशे अधिकाराङ्के करिष्यते) ( ' आत्मत्वमेव जीवत्वम् ' अस्याग्रे विवेचनं भविष्यति द्विविधत्वम् जीवस्य ' जीव ' शब्दे चतुर्थभागे १५२२ पृष्ठे करिष्यते )

( २ ) एकविधोऽपि स च ( आत्मा ) त्रिविध —

बाह्यात्मा चान्तरात्मा च, परमात्मेति च त्रयः ।
कायाधिष्ठायकध्येयाः, प्रसिद्धा योगवाङ्मये ॥ १७॥

बाह्यात्मा चेति-काय स्वात्मधिया प्रतीयमान अहं स्थूल , अहं कृश इत्याद्युल्लेखेनाधिष्ठायक कायचेष्टाजलकस्त्रयस्त्रवाक् ध्येयश्च ध्यानभाव्य एते त्रय -'बाह्यात्मा च अन्तरात्मा च परमात्मा चे' ति-योगवाङ्मये-योगशास्त्रे प्रसिद्धा. । द्वा०२० द्वा० । यस्य देहमनोवचनादिषु आत्मत्वभास देह एवात्मा एवं सर्वपौद्गलिकप्रवर्त्तनेषु आत्मनिष्ठेषु आत्मत्वबुद्धि. स बाह्यात्मा १, मिथ्यादृष्टि. एष. । पुन. स कर्मावस्थायाम-

पि आत्मनि ज्ञानाद्युपयोगलक्षणे शुद्धचैतन्यलक्षणे महानन्दस्वरूपे निर्विकाराऽमृताऽव्याबाधरूपे समस्तपरभावमुक्ते आत्मबुद्धिः, अन्तरात्मा-सम्यग्दृष्टिगुणस्थानकत क्षीणमोह यावत् अन्तराऽऽत्मा उच्यते २, य केवलज्ञानदर्शनोपयुक्त शुक्लनिद्धः स परमात्मा-सयोगी अयोगी केवली सिद्धश्च स परमाऽऽत्मा उच्यते । अष्ट० १५ अष्ट० । ( अस्य वक्तव्यता ( 'जोग' शब्दे चतुर्थभागे १६३१ पृष्ठे वक्ष्यते ) ( "आत्मत्वमेव जीवत्वम्" ॥ ४६ × ॥ इत्यादि श्लोकविवरणं 'जीव' शब्दे चतुर्थभागे १५५१ पृष्ठे वक्ष्यते )

( ३ ) अधुना जीवपद ( निक्षेप ) माह—

जीवस्स उ निक्खेवो, परूवणा लक्खणं च अत्थित्तं ।
अन्नामुत्तत्तं नि-चकारगो देहवावित्तं ॥ २२० ॥
गुणिउड्ढगइत्ते या, निम्मयसाफल्लता य परिमाणे ।
जीवस्स तिविहिकालं-मि परिक्खा होइ कायव्वा ।२२१।

[ दो दारगाहाओ ] एतद् द्वारगाथाद्वयम्, अस्य व्याख्या०-जीवस्य तु निक्षेपो नामाऽऽदिः प्ररूपणा द्विविधाश्च भवन्ति जीवा इत्यादिरूपा लक्षणं चाऽऽदानादि अस्तित्वं सत्त्वं शुद्धपदवाच्यत्वादिना अन्यत्वं देहात्, अमूर्तत्व स्वतः, नित्यत्वं विकारानुपलम्भेन, कर्तृत्वं-स्वकर्मफलभोगात्, देहव्यापित्व-तत्रैव तल्लिङ्गोपलब्ध्या, गुणित्वं योगादिना, ऊर्ध्वगतित्वमगुरुलघुभावेन, निर्मायता विकाररहितत्वेन, सफलता च कर्मणः, परिमाणं लोकाकाशमात्र इत्यादि, एवम्-'जीवस्य त्रिविधकाल' इति-त्रिकालविषया, परीक्षा भवति-कर्त्तव्या । इति द्वारगाथाद्वयसमासार्थः । व्यासार्थस्तु भाष्यादवसेयः ।

तथा च निक्षेपमाह—

नामं ठवणा जीवो, दव्वजीवो य भावजीवो य ।
ओहभवग्गहणंमि य, तब्भवजीवे य भावम्मि ॥ २२२ ॥

व्या०-'नामस्थापनाजीव' इति-जीवशब्दः प्रत्येकमभिसंबध्यते, नामजीवः स्थापनाजीव इति । तथा द्रव्यजीवश्च भावजीवश्च वक्ष्यमाणलक्षण । तत्रौघ इति ओघजीव, भवग्रहणे चेति भवजीव, तद्भवजीवश्च-तद्भव एवोत्पन्न, भावे भावजीव इति गाथासमासार्थः ।

व्यासार्थं त्वाह [ भाष्यकार ]—

नामं ठवणाॅगयाओ, दव्वे गुणपज्जवेहि रहिओ त्ति ।
तिविहो य होइ भावे, ओहे भवतब्भवे चेव ॥ ६ ॥

व्या०-नामस्थापने गते क्षुण्णत्वादिति भाव । 'द्रव्ये' इतिद्रव्यजीवो गुणपर्यायाभ्यां चैतन्यमनुष्यत्वादिलक्षणाभ्यां रहित । बुद्धिपरिकल्पितो, न त्वसावित्थंविध सम्भवतीति । त्रिविधश्च भवति 'भाव' इति—भावजीवत्रैविध्यमाह-ओघजीवो भवजीवस्तद्भवजीवश्चेति । प्रागुपन्यासक्रमण्येतदित्थविधभाष्यकारशैलीप्रामाण्यतोऽदुष्टमेवेति । अन्ये तु पठन्ति-" भावे उ तिहा भणिओ, तं पुण सखेवओ वोच्छं " 'भाव' इति-भावजीव, त्रिधेति-त्रिप्रकारो भणितो निर्युक्तिकारेण ओघजीवादि, तमपि च भावार्थमधिकृत्य सक्षेपतो वक्ष्य इति गाथार्थ ।



तत्रौघजीवमाह [ भाष्यकार ]—

संते आउयकम्मे, धरई तस्सेव जीवई उदए ।
तस्सेव निज्जराए, मओ त्ति सिद्धो नयमएणं ॥ ७ ॥

व्या०—सति—विद्यमाने आयुष्ककर्मणि सामान्यरूपे ध्रियते सामान्येनैव तिष्ठति भवोदधौ कथमित्थमवस्थानमात्राज्जीवत्वमस्येत्याशङ्कयाऽत्रैवान्वर्थयोजनामाह-तस्यैव-ओघायुष्ककर्मणो 'जीवत्युदये' उदये सति जीवत्यासंसारं प्राणान् धारयत्यतो जीवनाज्जीव इति । तस्यैवौघायुष्ककर्मणो निर्ज्जरया क्षयेण 'मृत इति' सर्वथा जीवनाभावात्, स च सिद्धो मृतो नान्य, विग्रहगतावपि तथा जीवनसद्भावात्, नयमतेनेति सर्वनयमतेनैव मृत इति गाथार्थ । * जीवत्यनेनेति जीव ओघेन सामान्येन जीव, ओघजीवितविशिष्टो जीव मध्यपदोत्तरपदलोपादित्थ भवति उक्त ओघजीवितविशिष्ट ओघजीव । * अधिक पाठ ।

सांप्रतं भवजीवं तद्भवजीवं चाह (भाष्यकार)—

जेण य धरइ भवगओ, जीवो जेण य भवाउ संकमइ ।
जाणाहि तं भवाऽऽउं, चउव्विहं तब्भवे दुविहं ॥ ८ ॥
निक्खेवो त्ति गयं ।

व्या०—येन च-नारकाद्यायुष्केण ध्रियते तिष्ठति भवगतो नारकादिभवस्थितो जीव, तथा येन च मनुष्याद्यायुष्केण भवान्नारकादिलक्षणात् संक्रामति-याति, मनुष्यादिभवान्तरमिति सामर्थ्याद्गम्यते, जानीहि-विद्धि । तदित्थभूतं भवायुर्भवजीवितं चतुर्विधं नारकतिर्यङ्मनुष्यामरभेदेन तथा तद्भवे तद्भवविषयम् आयुरिति वर्तते, तच्च द्विविधम् तिर्यक्त्वतद्भवायुः, मनुष्यत्वतद्भवायुश्च । यस्मात्तावेव मृतौ सन्तौ भूयस्तस्मिन्नेव भव उत्पद्येते नान्ये, तद्भवजीवितं च तस्मान्मृतस्य तस्मिन्नेवोत्पन्नस्य यत्तदुच्यते इति । अत्रापि च भावजीवाधिकारात्तद्भवजीवितविशिष्टश्च जीव एव ग्राह्य, जीवितं तु तद्विशेषणत्वादुक्तमिति गाथार्थ । उक्तो निक्षेप । दश०४ अ०। ( चतुर्विध-पञ्चविध-षड्विध-सप्तविधत्वं 'जीव'शब्दे चतुर्थभागे १५२४ पृष्ठे दर्शयिष्यते )

( ४ ) आत्मनोऽष्टविधनिक्षेप —

कइविहा णं भंते ! आता पण्णत्ता ?, गोयमा ! अट्ठविहा आता पण्णत्ता, तं जहा-दवियाऽऽता १, कसायाऽऽता २, जोगायाऽऽता ३, उवओयाऽऽता ४, णाणाऽऽता ५, दंसणाऽऽया ६, चरित्ताऽऽया ७, वीरियाऽऽता ८ ।

'कइ विहा णं' मित्यादि, 'आय' त्ति—अतति-सततं गच्छति अपरापरान् स्वपरपर्यायानित्यात्मा, अथवा-अत धातोर्गमनार्थत्वेन ज्ञानार्थत्वादतति-सततमवगच्छत्युपयोगलक्षणत्वादित्यात्मा, प्राकृतत्वाच्च सूत्रे स्त्रीलिङ्गनिर्देश, तस्य चोपयोगलक्षणत्वात्सामान्येनैकविधत्वेऽप्युपाधिभेदादष्टधात्व, तत्र 'दवियाय' त्ति-द्रव्यं त्रिकालानुगाम्युपसर्जनीकृतकषायादिपर्याय तद्रूप आत्मा द्रव्यात्मा सर्वेषां जीवानाम् १, 'कसायाय' त्ति-क्रोधादिकषायविशिष्ट आत्मा कषायात्मा, अक्षीणानुपशान्तकषायाणाम् २, 'जोगाय त्ति-योगा मन प्रभृतिव्यापारास्तत्प्रधान आत्मा योगात्मा,

योगवतामिव ३, 'उवओगाय' त्ति-उपयोगः साकारानाकार-भेदस्तत्प्रधान आत्मा उपयोगात्मा, सिद्धसंसारिस्वरूप सर्वजीवानाम् । अथवा-विवक्षितवस्तूपयोगापेक्षयोपयोगात्मा ४, 'नाणाय' त्ति-ज्ञानविशेषित उपसर्जनीकृतदर्शनादिरात्मा ज्ञानात्मा, सम्यग्दृष्टे ५, एव दर्शनात्मादयोऽपि नवर दर्शनात्मा सर्वजीवानाम् ६, चारित्रात्मा विरतानाम् ७, वीर्यम्-उत्थानादि तदात्मा सर्वसंसारिणामिति । उक्तं च—

जीवानां द्रव्यात्मा, ज्ञेयः स कषायिणां कषायात्मा ।
योगः संयोगिनां, पुनरुपयोग सर्वजीवानाम् ॥ १ ॥
ज्ञानं सम्यग्दृष्टे-दर्शनमथ भवति सर्वजीवानाम् ।
चारित्रं विरतानां, तु सर्वसंसारिणां वीर्यम् ॥२॥ इति, ८ ॥

एवमष्टधात्मानं प्ररूप्य अथ यस्यात्मभेदस्य यदन्यदात्मभेदान्तरं युज्यते यच्च न युज्यते तस्य तद्दर्शयितुमाह—

**जस्स णं भन्ते ! दवियाऽऽता तस्स णं कसायाता, जस्स कसायाता तस्स दवियाता ?, गोयमा ! जस्स दवियाता तस्स कसायाता सिय अत्थि सिय णत्थि, जस्स पुण कसायाता तस्स दवियाता णियमं अत्थि ।**

'जस्स णमि' त्यादि, इहाष्टौ पदानि स्थाप्यन्ते तत्र प्रथमपदं शेषैः सप्तभिः सह चिन्त्यते-तत्र यस्य जीवस्य द्रव्यात्मा-द्रव्यात्मत्वं, जीवत्वमित्यर्थः, तस्य कषायात्मा स्यादस्ति कदाचिदस्ति सकषायावस्थायां स्यान्नास्ति कदाचिन्नास्ति क्षीणोपशान्तकषायावस्थाया, यस्य पुनः कषायात्माऽस्ति तस्य द्रव्यात्मत्वं जीवत्वं नियमादस्ति, जीवत्वं विना कषायाणामभावादिति ।

**जस्स णं भंते ! दवियाऽऽता तस्स जोगाता ?, एवं जहा दवियाता कसायाता भणिया तहा दवियाता जोगायाया वि भाणियव्वा ।**

तथा यस्य द्रव्यात्मा तस्य योगात्माऽस्ति योगवतामिव नास्ति चायोगिसिद्धानामिव, तथा यस्य योगात्मा तस्य द्रव्यात्मा नियमादस्ति जीवत्वं विना योगानामभावादेतदेव पूर्वसूत्रोपमानेन दर्शयन्नाह-' एवं जहा दवियाये' त्यादि ।

**जस्स णं भंते ! दविताऽऽया तस्स उवओगाता एवं सव्वत्थ पुच्छा भाणियव्वा, गोयमा ! जस्स दवियाता तस्स उवओगाया णियमं अत्थि, जस्स वि उवओगाता तस्स वि दवियाता णियमं अत्थि, जस्स दवियाता तस्स णाणाता भयणाए, जस्स पुण णाणाता तस्स दवियाता णियमं अत्थि । जस्स दवियाता तस्स दंसणाता णियमं अत्थि, जस्स वि दंसणाता तस्स दवियाता णियमं अत्थि, जस्स दवियाता तस्स चरित्ताया भयणाए, जस्स पुण चरित्ताता तस्स दवियाता णियमं अत्थि । एवं वीरियाताए वि समं ।**

तथा यस्य जीवस्य द्रव्यात्मा तस्य नियमादुपयोगात्मा यस्याप्युपयोगात्मा तस्य नियमाद् द्रव्यात्मा, एतयो परस्परेण अविनाभूतत्वाद्यथा सिद्धस्य, तदन्यस्य च द्रव्यात्मास्त्युपयोगात्मा चोपयोगलक्षणत्वाज्जीवानाम् , एतदेवाह-' जस्स दवियाये ' त्यादि, तथा ' जस्स दवियाता तस्स नाणाया भयणाए, जस्स पुण नाणाया तस्स दवियाया नियमं अत्थि ' त्ति-यस्य जीवस्य द्रव्यात्मा तस्य ज्ञानात्मा स्यादस्ति यथा सम्यग्दृष्टीनां, स्यान्नास्ति यथा मिथ्यादृष्टीनामित्येवं भजना, यस्य तु ज्ञानात्मा तस्य द्रव्यात्मा नियमादस्ति, यथा सिद्धस्येति । तथा ' जस्स दवियाया तस्स दंसणाया नियमं अत्थि ' त्ति-यथा सिद्धस्य केवलदर्शनम् । ' जस्स वि दंसणाया तस्स दवियाया नियमं अत्थि ' त्ति-यथा चक्षुर्दर्शनादिदर्शनवतां जीवत्वमिति, तथा ' जस्स दवियाया तस्स चरित्ताया भयणाए ' त्ति-यत सिद्धस्याविरतस्य वा द्रव्यात्मत्वे सत्यपि चरित्रात्मा नास्ति विरतानां चास्तीति भजनेति- 'जस्स पुण चरित्ताया तस्स दवियाया नियमं अत्थि' त्ति-चारित्रिणा जीवत्वाव्यभिचारित्वादिति, एवं 'वीरियायाए वि समं' ति—यथा द्रव्यात्मनश्चारित्रात्मना सह भजनोक्ता, नियमश्चैवम्-वीर्यात्मनापि सहेति, तथाहि—यस्य द्रव्यात्मा तस्य वीर्यात्मा नास्ति, यथा सकरणवीर्यापेक्षया सिद्धस्य, तदन्यस्य त्वस्तीति भजना, वीर्यात्मनस्तु द्रव्यात्मास्त्येव यथा संसारिणामिति ॥ ७ ॥

अथ कषायात्मनः सहान्यानि पदानि चिन्त्यन्ते-

**जस्स णं भंते ! कसायाऽऽता तस्स जोगाया पुच्छा ?, गोयमा ! जस्स कसायाता तस्स जोगाता णियमं अत्थि, जस्स पुण जोगाया तस्स कसायाता सिय अत्थि सिय णत्थि, एवं उवओगाए वि समं कसायाता णेयव्वा, कसायाता णाणाता य परोप्पर दोवि भइयव्वाओ, जहा कसायाया य उवओगाया य तहा कसायाया य दंसणाता य कसायाता चरित्ताता य दोऽवि परोप्परं भइयव्वाओ, जहा कसायाता य जोगाता तहा कसायाता य वीरियाया य भाणियव्वाओ एवं जहा कसायायाए वत्तव्वया भणिया तहा जोगायाए वि उवरिमाहिं समं भाणियव्वाओ ।**

'जस्स णमि'त्यादि यस्य कषायात्मा तस्य योगात्माऽस्त्येव न हि सकषायोऽयोगी भवति यस्य तु योगात्मा तस्य कषायात्मा स्याद्वा न वा । सयोगानां सकषायाणामकषायाणां च भावादिति । एवम्-' उवओगायाए वी 'त्यादि, अयमर्थ –यस्य कषायात्मा तस्योपयोगात्मावश्यं भवत्युपयोगरहितस्य कषायाणामभावात् यस्य पुनरुपयोगात्मा तस्य कषायात्मा भजनया, उपयोगात्मतायां सत्यामपि कषायिणमेव कषायात्मा भवति । निष्कषायाणां तु नास्तीति भजनेति, तथा-' कसायाया य नाणाया य परोप्परं दोवि भइयव्वाओ ' त्ति-कथ ?, यस्य कषायात्मा तस्य ज्ञानात्मा स्यादस्ति, स्यान्नास्ति, यतः कषायिण सम्यग्दृष्टेर्ज्ञानात्मास्ति मिथ्यादृष्टेस्तु तस्य नास्त्यमाविति भजना । तथा यस्य ज्ञानात्मास्ति तस्य कषायात्मा स्यादस्ति, स्यान्नास्ति, ज्ञानिनां कषायभावात् तदभावाच्चेति भजनेति । ' जहा कसायाया उवओगाया तहा कसायाया य दंसणाया,

य ' त्ति-अतिदेश', तस्माच्चेदं लब्धम्-' जस्स कसायाया तस्स दंसणाया नियमं अत्थि ' दर्शनरहितस्य घटादेः कषायात्मनोऽभावात् ' जस्स पुण दंसणाया तस्स कसायाया सिय अत्थि सिय नऽत्थि' दर्शनवतां कषायसद्भावात्तदभावाच्चेति, दृष्टान्तार्थस्तु प्राक् प्रसिद्ध एवेति 'कसायाया य चरित्ताया य दोवि परोप्परं भइयव्वाओ' त्ति-भजना चैवम्-यस्य कषायात्मा तस्य चारित्रात्मा स्यादस्ति, स्यान्नास्ति, कथं कषायिणां चारित्रस्य सद्भावात्, प्रमत्तयतीनामिव तदभावाच्चासंयतानामिवेति, तथा यस्य चारित्रात्मा तस्य कषायात्मा स्यादस्ति स्यान्नास्ति, कथं सामायिकादिचारित्रिणः कषायाणां भावाद्यथाख्यातचारित्रिणां च तदभावादिति । ' जहा कसायाया य जोगाया य तहा कसायाया य वीरियाया य भाणियव्वाओ ' त्ति-दृष्टान्तं प्राक् प्रसिद्ध, दार्ष्टान्तिकस्त्वेवम्-यस्य कषायात्मा तस्य वीर्यात्मा नियमादस्ति, न हि कषायवान् वीर्यविकलोऽस्ति, यस्य पुनर्वीर्यात्मा तस्य कषायात्मा भजनया, यतो वीर्यवान् सकषायोऽपि स्याद्यथाऽसंयतः अकषायोऽपि स्याद्यथा केवलीति ॥६॥ अथ योगात्माऽग्रेतनपदैः पञ्चभिः सह चिन्तनीयस्तत्र च लाघवार्थमतिदिशन्नाह-' एवं जहा कसायायावत्तव्वया भणिया तहा जोगायाए वि उवरिमाहिं समं भाणियव्वं ' त्ति-सा चैवम्-यस्य योगात्मा तस्योपयोगात्मा नियमात् यथा सयोगानां,यस्य पुनरुपयोगात्मा तस्य योगात्मा स्यादस्ति यथा सयोगानां स्यान्नास्ति यथा-अयोगिनां सिद्धानां चेति, तथा यस्य योगात्मा तस्य ज्ञानात्मा स्यादस्ति सम्यग्दृष्टीनामिव, स्यान्नास्ति मिथ्यादृष्टीनामिव, यस्य ज्ञानात्मा तस्यापि योगात्मा स्यादस्ति, योगिनामिव, स्यान्नास्ति अयोगिनामिवेति, तथा यस्य योगात्मा तस्य दर्शनात्मास्त्येवेति योगिनामिव, यस्य च दर्शनात्मा तस्य योगात्मा स्यादस्ति योगवतामिव स्यान्नास्त्ययोगिनामिव, तथा यस्य योगात्मा तस्य चारित्रात्मा स्यादस्ति विरतानामिव, स्यान्नास्त्यविरतानामिव, यस्यापि चारित्रात्मा तस्य योगात्मा स्यादस्ति सयोगचारित्रवतामिव, स्यान्नास्त्ययोगिनामिवेति, वाचनान्तरे पुनरिदमेव दृश्यते-' जस्स चरित्ताया तस्स जोगाया नियमं ' त्ति-तत्र च चारित्रस्य प्रत्युपेक्षणादिव्यापाररूपस्य विवक्षितत्वात्तस्य च योगाविनाभावित्वाद्यस्य चारित्रात्मा तस्य योगात्मा नियमादित्युच्यते इति, तथा यस्य योगात्मा तस्य वीर्यात्मास्त्येव योगसद्भावे वीर्यस्यावश्यं भावात्, यस्य तु वीर्यात्मा तस्य योगात्मा भजनया यतो वीर्यविशेषवान् सयोग्यपि स्यात् यथा सयोगिकेवल्यादिरयोग्यपि स्याद्यथाऽयोगिकेवलीति ॥ ५ ॥

अथोपयोगात्मना सहान्यानि चत्वारि चिन्त्यन्ते । तत्रातिदेशमाह—

जहा दवियाताए वत्तव्वया भणिया तहा उवओगाताए वि उवरिल्लाहिं समं भाणियव्वा ।

एवं च भावना कार्या यस्योपयोगात्मा तस्य ज्ञानात्मा स्यादस्ति यथा सम्यग्दृशः, स्यान्नास्ति यथा मिथ्यादृशः, यस्य च ज्ञानात्मा तस्यावश्यमुपयोगात्मा सिद्धानामिवेति १, तथा यस्योपयोगात्मा तस्य दर्शनात्मास्त्येव, यस्यापि दर्शनात्मा तस्योपयोगात्मास्त्येव यथा सिद्धादीनामिति २, तथा यस्योपयोगात्मा तस्य चारित्रात्मा स्यादस्ति, स्यान्नास्ति, यथा संयतानाम्, असंयतानां च, यस्य तु चारित्रात्मा तस्योपयोगात्मास्त्येव यथा संयतानां ३, तथा यस्योपयोगात्मा तस्य वीर्यात्मा स्यादस्ति संसारिणामिव स्यान्नास्ति सिद्धानामिव, यस्य पुनर्वीर्यात्मा तस्योपयोगात्मास्त्येव संसारिणामिवेति ४ ।

अथ ज्ञानात्मना सहान्यानि त्रीणि चिन्त्यन्ते—

जस्स णाणाऽऽया तस्स दंसणाया णियमं अत्थि, जस्स पुण दंसणाया तस्स णाणाया भयणाए, जस्स णाणाया तस्स चरित्ताया सिय अत्थि सिय णत्थि, जस्स पुण चरित्ताया तस्स णाणाया णियमं अत्थि, णाणाता वीरियाता दो वि परोप्परं भयणाए ।

तत्र यस्य ज्ञानात्मा तस्य दर्शनात्मास्त्येव सम्यग्दृशामिव, यस्य च दर्शनात्मा तस्य ज्ञानात्मा स्यादस्ति यथा सम्यग्दृशः, स्यान्नास्ति यथा मिथ्यादृशामत एवोक्तम्-' भयणाए ' त्ति, १, तथा ' जस्स नाणाया तस्स चरित्ताया सिय अत्थि ' त्ति । संयतानामिव । ' सिय नत्थि ' त्ति, असंयतानामिव ' जस्स पुण चरित्ताया तस्स नाणाया नियमं अत्थि ' त्ति, ज्ञानं विना चारित्रस्याभावादिति २, तथा-' णाणाये ' त्यादि । अस्यार्थ -यस्य ज्ञानात्मा तस्य वीर्यात्मा स्यादस्ति केवल्यादीनामिव, स्यान्नास्ति सिद्धानामिव, यस्यापि वीर्यात्मा तस्य ज्ञानात्मा स्यादस्ति, सम्यग्दृष्टेरिव, स्यान्नास्ति मिथ्यादृश इवेति ३ ।

अथ दर्शनात्मना सह द्वे चिन्त्येते—

जस्स दंसणाया तस्स उवरिमाओ दो वि भयणाए, जस्स पुण ताओ तस्स दंसणाया णियमं अत्थि । जस्स चरित्ताया तस्स वीरियाता णियमं अत्थि, जस्स पुण वीरियाता तस्स चरित्ताया सिय अत्थि सिय णत्थि ।

' जस्स दंसणाये ' त्यादि, भावना चास्य—यस्य दर्शनात्मा तस्य चारित्रात्मा स्यादस्ति संयतानामिव, स्यान्नास्त्यसंयतानामिव, यस्य च चारित्रात्मा तस्य दर्शनात्मास्त्येव साधूनामिवेति, तथा यस्य दर्शनात्मा तस्य वीर्यात्मा स्यादस्ति संसारिणामिव, स्यान्नास्ति सिद्धानामिव, यस्य च वीर्यात्मा तस्य दर्शनात्मास्त्येव संसारिणामिवेति ॥ २ ॥ अथान्तिमपदयोर्योजना-' जस्स चरित्ते ' त्यादि, यस्य चारित्रात्मा तस्य वीर्यात्मास्त्येव वीर्यं विना चारित्रस्याभावात्, यस्य पुनर्वीर्यात्मा तस्य चारित्रात्मा स्यादस्ति साधूनामिव, स्यान्नास्ति असंयतानामिवेति ।

अधुनैषामेवात्मनामल्पबहुत्वमुच्यते—

एयासि णं भंते ! दवियाऽऽताणं कसायाऽऽताणं ०जाव वीरियायाणं कयरे कयरेहिंतो अप्पा वा ०जाव विसेसाहिया वा ?, गोयमा ! सव्वत्थोवा चरित्तायाओ णाणायाओ अणंतगुणाओ, कसायाओ अणंतगुणाओ जोगायाओ

विमेसाहियाओ, वीरियाताओ वि उवयोगदवियदंसणाया-
ओ तिन्नि वि तुल्लाओ, विसेसाहियाओ । ( सूत्र-४६७ )

तत्र च ' सव्वत्थोवाओ चारित्तायाओ ' त्ति-चारित्रिणा संख्यातत्वात् । ' णाणायाओ अणंतगुणाओ ' त्ति-सिद्धादीनां सम्यग्दृशां चारित्रिभ्योऽनन्तगुणत्वात् । ' कसायायाओ अणंतगुणाओ ' त्ति, सिद्धेभ्य कषायोदयवतामनन्तगुणत्वात् ' जोगायाओ विसेसाहियाओ ' त्ति-अपगतकषायोदयैर्योगवद्भिरधिका इत्यर्थ , ' वीरियायाओ विसेसाहियाओ ' त्ति-अयोगिभिरधिका इत्यर्थः, अयोगिनां वीर्यवत्त्वादिति, ' उवओगदवियदंसणायाओ तिरिण वि तुल्लाओ विसेसाहियाओ ' त्ति-परस्परापेक्षया तुल्या सर्वेषां सामान्यजीवरूपत्वात् , वीर्यात्मभ्य· सकाशादुपयोगद्रव्यदर्शनात्मानो विशेषाधिका , यतो वीर्यात्मन सिद्धाश्च मीलिता उपयोगाद्यात्मानो भवन्ति, ते च वीर्यात्मभ्य सिद्धराशिनाऽधिका भवन्तीति । भवन्ति चात्र गाथा.-

" कोडिसहस्सपुहुत्तं, जईण तो थोवियाउ चरणाया ।
नाणायाणंतगुणा, पडुच सिद्धे य सिद्धाओ ॥ १ ॥
होंति कसायायाओ-ऽणंतगुणा जेण ते सरागाणं ।
जोगायाभणियाओ, अजोगिवज्जाण तो अहिया ॥ २ ॥
जं सेलेसिगयाण वि, लद्धी विरियं तओ समहियाओ ।
उवओगदवियदंसण-सव्वजियाणं तवो अहिया " ॥ ३ ॥

इति । भ० १२ श० १० उ० ।

( ५ ) जीवा सूक्ष्मा , बादराश्च ( नवविधाश्च ) ।
यथा सन्ति तथाऽऽह भाष्यकार —

दुविहा य हुंति जीवा, सुहुमा तह बायरा य लोगम्मि ।
सुहुमा य सव्वलोए, दो चेव य बायरविहाणे ॥ ६ ॥

व्या०-द्विविधाश्च—द्विप्रकाराश्च, चशब्दात्—नवविधाश्च पृथिव्यादिद्वीन्द्रियादिभेदेन भवन्ति जीवा , द्वैविध्यमाह-सूक्ष्मा, तथा बादराश्च । तत्र सूक्ष्मनामकर्मोदयात् सूक्ष्मा , बादरनामकर्मोदयाच्च बादरा इति 'लोके' इति लोकग्रहणमलोके जीवसत्त्वव्यवच्छेदार्थं तत्र सूक्ष्माश्च सर्वलोक इति चशब्दस्यावधारणार्थत्वात् सूक्ष्मा एव सर्वलोकेषु न बादरा । क्वचित्तेषामसम्भवात् ' द्वे एव च ' पर्याप्तकाऽपर्याप्तकलक्षणे ' बादरविधाने ' बादरविधौ चशब्दात् सूक्ष्मविधाने च । तेषामपि पर्याप्तकाऽपर्याप्तकरूपत्वादिति गाथार्थ ।

एतदेव स्पष्टयन्नाह ( भाष्यकारः )—

सुहुमा य सव्वलोए, परियावन्ना भवंति नायव्वा ।
दो चेव बायराणं, पज्जत्तियरे अ नायव्वा ॥ १० ॥

व्या०-सूक्ष्मा एव पृथिव्यादय सर्वलोके-चतुर्दशरज्ज्वात्मके पर्यायापन्ना भवन्ति-ज्ञातव्या , 'पर्यायापन्ना ' इति-तमेव सूक्ष्मपर्यायमापन्ना भावसूक्ष्मा न तु भूतभाविनो द्रव्यसूक्ष्मा इति भाव· । तथा द्वौ भेदौ बादराणां पृथिव्यादीनां चशब्दात्सूक्ष्माणां च पर्याप्तेतरौ ज्ञातव्यौ पर्याप्तकाऽपर्याप्तकाविति गाथार्थ । दश० ४ अ० ।

( ६ ) (लक्षणद्वारम् 'लक्खण' शब्दे षष्ठे भागे वक्ष्यते) ।
तथाऽऽदानादीनां दृष्टान्तानाह (भाष्यकार.)—

अयगारकूरपरसू , अग्गिसुवन्ने य खीरनरवाऊ ।
आहारो दिट्ठंता, आयाणाईण जहसंखं ॥ १३ ॥

व्या०-अयस्कार कूरस्तथा परशुरग्नि सुवर्णं च क्षीरनरवाश्च तथा आहारो दृष्टान्ता आदानादीनां प्रक्रान्तानां यथासंख्यं प्रतिज्ञाद्युल्लङ्घनेन चैतदभिधानं परोक्षार्थप्रतिपत्तिं प्रति प्रायः प्रधानाङ्गताख्यापनार्थमिति गाथार्थ. ।

सांप्रतं प्रयोगानाह (भाष्यकार.)—

देहिंदियाइरित्तो, आया खलु गज्झगाहगपओगा ।
संडासा अयपिंडो, अयकाराइ व्व विन्नेओ ॥ १४ ॥

व्या०-देहेन्द्रियातिरिक्त आत्मा । खलुशब्दो विशेषणार्थः, कथञ्चित् , न सर्वथा अतिरिक्त एव तदसंवेदनादिप्रसङ्गादिति अनेन प्रतिज्ञार्थमाह, प्रतिज्ञा पुन· अर्थेन्द्रियाण्यादेयादानानि विद्यमानादातृकाणि, कुत इत्याह-ग्राह्यग्राहकप्रयोगात् । ग्राह्या·-रूपादय· । ग्राहकाणीन्द्रियाणि तेषां प्रयोग.-सफलसाधनव्यापारस्तस्मान्न ह्यमीषां कर्मकरणभाव· कर्त्तारमन्तरेण स्वकार्यसाधनप्रयोग संभवत्यनेनापि हेत्वर्थमाह । हेतुश्चादेयादानरूपत्वादिति । दृष्टान्तमाह-संदंशादादानात्-अयस्पिण्डादादेयात् ' अयस्कारादिवत् ' लोहकारवद्विज्ञेय अतिरिक्तो विद्यमान आदातेत्यनेनापि दृष्टान्तार्थमाह-दृष्टान्तस्तु संदंशकायस्पिण्डवत् । यस्तु तदनतिरिक्त न ततो ग्राह्यग्राहकप्रयोग । यथा देहादिभ्य एवेति व्यतिरेकार्थ , व्यतिरेकस्तु यानि विद्यमानादातृकाणि न भवन्ति तान्यादानादेयरूपाण्यपि न भवन्ति । यथा मृतकद्रव्येन्द्रियादीनीति गाथार्थ. । उक्तमादानद्वारम् ।

( ७ ) अधुना (भाष्यकार.) परिभोगद्वारमाह—

देहो सभोत्तिओ खलु, भोज्जत्ता ओयणाइथालं व ।
अन्नप्पउत्तिगा खलु, जोगा परसु व्व करणत्ता ॥१५॥

व्या०-देह सभोक्तृक खल्विति प्रतिज्ञा, भोग्यत्वादिति हेतु ओदनादिस्थालवत्-स्थालस्थितौदनवदिति दृष्टान्त । भोग्यत्वं च देहस्य जीवेन तथानिवसतोपभुज्यमानत्वादिति । उक्तं परिभोगद्वारम् । अधुना योगद्वारमाह-अन्यप्रयोक्तृकाः खलु योगा , योगा -साधनानि मन प्रभृतीनि करणानीति प्रतिज्ञार्थ , करणत्वादिति हेतु , परशुवदिति दृष्टान्त । भवति च विशेषे पक्षीकृते सामान्यं हेतु , यथा अनित्यो वर्णात्मक शब्द , शब्दत्वात् मेघशब्दवदिति गाथार्थ । उक्तं योगद्वारम् ।

साम्प्रतम् (भाष्यकार ) उपयोगद्वारमाह—

उवओगा नाभावो, अग्गि व्व सलक्खणा परिच्चागा ।
सकमाया णाभावो, पज्जयगमणा सुवन्नं व ॥ १६ ॥

व्या०-उपयोगात्-साकारानाकारभेदभिन्नात् ' नाभावो ' जीव इति गम्यते, कुत इत्याह-स्वलक्षणापरित्यागादुपयोगलक्षणमाधारणात्मीयलक्षणाऽपरित्यागात् अग्निवद्यथाऽग्निरौष्ण्यादिस्वलक्षणापरित्यागान्नाभावस्तथा जीवोऽपीति प्रयोगार्थ , प्रयोगस्तु सन्नात्मा स्वलक्षणापरित्यागाद् , अग्निवदिति । उक्तमुपयोगद्वारम् ।

अधुना कषायद्वारमाह-सकषायत्वाद् अचेतनविलक्षणक्रोधादिपरिणामोपेतत्वादित्यर्थ । नाभावो जीव· । कुत

इत्याह-पर्यायगमनात् क्रोधमानादिपर्यायप्राप्ते । सुवर्णवत् कटकादिपर्यायगमनोपेतसुवर्णवदिति प्रयोगार्थः प्रयोगस्तु, सन्नात्मा, पर्यायगमनात्सुवर्णवदिति गाथार्थः । उक्तं कषायद्वारम् ।

इदानीं ( भाष्यकारः ) लेश्याद्वारमाह—

लेसाओ णाऽभावो, परिणमणसभावाओ य खीरं व ।
उस्सासा णाभावो, समसब्भावा खउ व्व नरो ॥१७॥

व्या०-लेश्यातो लेश्यासद्भावेन न अभावो जीवः किं तु-भाव इति, कुत इत्याह-परिणमनस्वभावत्वात्कृष्णादिद्रव्य-साचिव्येन जम्बूखादकादिदृष्टान्तसिद्धतथाविधपरिणाम-धर्मत्वात्, क्षीरवदिति प्रयोगार्थः, प्रयोगस्तु सन्नात्मा परिणामित्वात् क्षीरवदिति । गतं लेश्याद्वारम् ।

प्राणापानद्वारमाह-उच्छ्वासादिति अचेतनधर्मविलक्षणप्रा-णापानसद्भावान्नाऽभावो जीवः, किन्तु-भाव एव इति, श्र-मसद्भावेन परिस्पन्दोपेतपुरुषवदिति प्रयोगार्थः । प्रयोगस्तु पुनरत्र व्यतिरेकी द्रष्टव्यः न सात्मकं जीवच्छरीरं प्राणादि-मत्त्वात् यत्तु सात्मकं न भवति तत्प्राणादिमदपि न भवति, यथाऽऽकाशमिति गाथार्थः । उक्तं प्राणापानद्वारम् ।

( ८ ) ( भाष्यकारेण ) अधुनेन्द्रियद्वारमुच्यते—

अक्खाणेयाणि पर-त्थगाणि वासाइवेह करणत्ता ।
गहवेयगनिज्जरओ, कम्मस्सत्तो जहाहारो ॥ १८ ॥

व्या०-अक्षाणीन्द्रियाणि एतानीति लोकप्रसिद्धानि देहा-श्रयाणि परार्थानि-आत्मप्रयोजनानि वास्यादिवदिह करण-त्वादिहलोके वास्यादिवदिति प्रयोगार्थः । आह-आदा-नान्यवेन्द्रियाणि तत्किमर्थं भेदोपन्यासः ?, उच्यते-नि-र्वृत्त्युपकरणद्वारेण द्वैविध्यख्यापनार्थं ततश्च तत्रोपकरणस्य ग्रहणमिह तु निर्वृत्तेरिति, प्रयोगस्तु-परार्थाश्चक्षुरादयः सं-घातत्वाच्छयनासनादिवत् न चायं विशेषविरुद्धः, कर्मसंब-द्धस्यात्मनः सघातरूपत्वाभ्युपगमात् । उक्तमिन्द्रियद्वारम् । इदानीं ( अधुना ) बन्धादिद्वाराण्याह—ग्रहणवेदकनिर्ज-रक कर्मणोऽन्यो, 'यथाहार'इति-तत्र ग्रहणं-कर्मणो बन्ध वेदनम्-उदयः निर्जरा-क्षय, 'यथाहार' इति-आहारविष-याणि ग्रहणादीनि न कर्त्रादिव्यतिरेकेण तथा कर्मणोऽपीति प्रयोगार्थः । प्रयोगस्तु विद्यमानभोक्तृकमिदं कर्मग्रहण-वेदननिर्जरणसद्भावात्, आहारवदिति गाथार्थः । उक्तानि बन्धादिद्वाराणि । व्याख्याता च प्रथमा प्रतिद्वारगाथा ।

( ९ ) साम्प्रतं द्वितीयामधिकृत्य चित्तादिस्व-रूपव्याचिख्यासयाऽऽह—

चित्तं तिकालविसयं, चेयणपच्चक्खसन्नमणुमरणं ।
विन्नाणणेगभेयं, कालमसंखेयरं धरणा ॥ १९ ॥

व्या०-चित्तं त्रिकालविषयम् ओघतोऽतीतानागतवर्त्तमा-नग्राहि चेतनं चेतना सा प्रत्यक्षवर्त्तमानार्थग्राहिणी । सञ्ज्ञान संज्ञा सा अनुस्मरणम् इदं तदिति ज्ञानम्, विविधं ज्ञानं विज्ञानमनेकभेदम्-अनेकप्रकारम्, अनेकधर्मिणि वस्तुनि तथा, तथाऽध्यवसाये इत्यर्थः । 'कालमसंखेयेतरम्' असं-ख्येयं संख्येयं वा धारणा अविच्युतिस्मृतिवासनारूपा, तत्र वासनारूपा संख्येयवर्षायुषामसंख्येयम्, संख्येयवर्षायुषां च संख्येयमिति गाथार्थः ।

( भाष्यम् )—

अत्थस्स ऊह बुद्धी, ईहा चेट्ठत्थअवगमो उ मई ।
संभावणत्थतक्का, गुणपच्चक्खा घडो व्व ऽत्थि ॥२०॥

व्याख्या-अर्थस्येहा बुद्धिः संज्ञिनः परनिरपेक्षार्थपरिच्छेद इति भावः, ईहा-चेष्टा किमयं स्थाणुः किं वा पुरुष इति, सदर्थपर्यालोचनरूपा, अर्थावगमस्तु अर्थपरिच्छेदस्तु शिरः-कण्डूयनादिधर्मोपपत्ते पुरुष एवायमित्येवरूपा मतिः 'संभावणत्थतक्क' त्ति-प्राकृतशैल्या अर्थसंभावना । एव-मेव चायमर्थ उपपद्यत इत्यादिरूपा तर्का । इत्यं द्वाराणि व्याख्याय सर्वे एते चित्तादयो गुणा वर्त्तन्त इति जीवाख्यगुणप्रतिपादकेन प्रयोगार्थेनोपसंहरन्नाह—गुणप्र-त्यक्षत्वादेतो घटवदस्ति जीव इति गम्यते । एष गाथार्थः ।

(भाष्यकारः) एतदेवस्फुटयति—

जम्हा चित्ताईया, जीवस्स गुणा हवंति पच्चक्खा ।
गुणपच्चक्खत्तणओ, घडु व्व जीवो अओ अत्थि॥२१॥

व्याख्या-यस्माच्चित्तादयोऽनन्तरोक्ता जीवस्य गुणा ना-ऽजीवस्य, शरीरादिगुणविधर्मत्वात् । एते च भवन्ति प्रत्य-क्षाः, स्वसंवेद्यत्वात्, यतश्चैवम्-गुणप्रत्यक्षत्वाद्धेतोर्घटवज्जी-व । अतोऽस्तीति प्रयोगार्थः । प्रयोगस्तु सन्नात्मा गुणप्र-त्यक्षत्वात् घटवन्नायं घटवदात्मनो-चेतनत्वापादनेन विरुद्धः "विरुद्धोऽसति वाधने" इति वचनात्, एतच्चैतन्य प्रत्यक्षे-णैव वाधनमिति गाथार्थः । व्याख्यातं मूलद्वारगाथाद्वये प्रतिद्वारद्वयेन लक्षणद्वारम् ।

(१०) इदानीमस्तित्वद्वारावसर, तथा चाह भाष्यकार —

अत्थि त्ति दारमहुणा, जीवस्सइ अत्थि विज्जए नियमा ।
लोआययमयघाय-त्थमुच्चए तत्थिमो हेऊ ॥ २२ ॥

व्याख्या-अस्तीति द्वारमधुना साम्प्रतमवसरप्राप्तम् तदेत-दुच्यते-जीव सन्, पृथिव्यादिविकारदेहमात्ररूप सन्नि-ति सिद्धिसाध्यता । न तु ततोऽन्याऽस्तीत्याशङ्कापनोदा-याह-अस्त्यन्यश्चैतन्यरूपस्तदपि मातृचैतन्योपादान भ-विष्यति परलोकयायी तु न विद्यत इति मोहापोहायाह-विद्यते नियमात्-नियमेन, तथाचाह-लोकायतमतघातार्थम्-नास्तिकाभिप्रायनिराकरणार्थमुच्यते एतत्, तस्य चानन्त-रोदित एवाभिप्राय इति सफलानि विशेषणानि तत्र-लो-कायतमतविघाते कर्त्तव्ये अयम्-वक्ष्यमाणलक्षणो हेतु, अन्यथानुपपत्तिरूपो युक्तिमार्ग इति गाथार्थः ।

( भाष्यम् )-

जो चिंतइ सरीरे, नऽत्थि अहं स एव होइ जीवो त्ति ।
न हु जीवम्मि असंते, संसय उप्पायओ अन्नो ॥ २३ ॥

व्याख्या-यश्चिन्तयति शरीरे अत्र लोकप्रतीते नास्त्यहं न एव चिन्तयिता भवति 'जीव इति ' कः संभवत्वमित्याह-न यस्माज्जीवे असति स्मृतेऽदार्दौ संशयोत्पादकः अन्य - प्राणादि, चैतन्यस्वरूपत्वात्संशयस्येति गाथार्थः ।

एतदेव (भाष्यकारः) भावयति—

जीवस्स एस धम्मो, जा ईहा अत्थि नऽत्थि वा जीवो ।

खाणुमणुस्साणुगया, जह ईहा देवदत्तस्स ॥ २४ ॥

व्या०-जीवस्यैव स्वभाव -एप धर्मः या ईहा सदर्थपर्यालोचनात्मिका, किं विशिष्टेत्याह अस्ति, नाऽस्ति वा जीव इति। लोकप्रसिद्धं निदर्शनमाह-स्थाणुमनुष्यानुगता-किमयं स्थाणुः ?, किं वा पुरुषः ?, इत्येवंरूपा या ईहा-देवदत्तस्य जीवतो धर्मः । इति गाथार्थः ।

( भाष्यकार ) प्रकारान्तरेणैतदेवाह—

सिद्धं जीवस्स अत्थित्तं, सद्दादेवाणुमीयए ।

नासओ भुवि भावस्स, सद्दो हवइ केवलो ॥ २५ ॥

व्या०—सिद्धम्-प्रतिष्ठितं जीवस्योपयोगलक्षणस्यास्तित्वं, कुत इत्याह-शब्दादेव जीव इत्यस्मादनुमीयते, कथमेतदेवमित्याह-' नाऽसत ' इति-न असत -अविद्यमानस्य भुवि पृथिव्यां भावस्य पदार्थस्य शब्दो भवति वाचक इति, खरविषाणादिशब्दैर्व्यभिचारमाशङ्क्याह-केवलः शुद्धः-अन्यपदासंसृष्ट, खरादिपदसंसृष्टाश्च विषाणादिशब्दा इति गाथार्थः।

एतद्विवरणायैवाह भाष्यकारः—

अत्थि त्ति निव्विगप्पो, जीवो नियमाउ सद्दओ सिद्धो ।

कम्हा सुद्धपयत्ता, घडखरसिंगाणुमाणाओ ॥ २६ ॥

व्या०—अस्तीति निर्विकल्पो जीवः 'निर्विकल्प' इति-निःसंदिग्धः नियमात् नियमेनैव प्रतिपत्त्यपेक्षया शब्दत सिद्धिः वाचकाद्वाच्यप्रतीतेः । एतदेव प्रश्नद्वारेणाह-कस्मात्कुत एतदेवमिति ? आह-शुद्धपदत्वात्-केवलपदत्वाज्जीवशब्दस्य घटखरशृङ्गानुमानादनुमानशब्दो दृष्टान्तवचनः घटखरशृङ्गदृष्टान्तादिति प्रयोगार्थः , प्रयोगस्तु-मुख्येनार्थेनार्थवान् जीवशब्दः, शुद्धपदत्वात् घटशब्दवत्, यस्तु मुख्येनार्थेनार्थवान्न भवति स शुद्धपदमपि न भवति, यथा खरशृङ्गशब्द इति गाथार्थः ।

पराभिप्रायमाशङ्क्य परिहरन्नाह ( भाष्यकारः )—

चोयग ! सुद्धपयत्ता, सिद्धी जइ एव सुन्नसिद्धि अम्हं पि ।

तं न भवइ संतेणं, जं सुन्नं सुन्नगेहं व ॥ २७ ॥

व्या०-उक्तवच्छुद्धपदत्वात्सिद्धिर्यदि जीवस्य एवं तर्हि शून्यसिद्धिरस्माकमपि, शून्यनष्टशब्दस्यापि शुद्धपदत्वादित्यभिप्राय । अत्रोत्तरमाह तन्न भवति यदुक्तं परेण । कुत इत्याह-सता विद्यमानेन पदार्थेन यद्-यस्मात् शून्यं शून्यमुच्यते। किंवदित्याह-शून्यगृहमिव, तथा हि-देवदत्तेन रहितं शून्यगृहमुच्यते । निवृत्तो-घटो नष्ट इति, न त्वनयोर्ज्जीवशब्दस्य जीववदवशिष्टं वाच्यमस्तीति गाथार्थः ।

प्रकारान्तरेणास्तित्वपक्षमेव समर्थयन्नाह (भाष्यकारः)—

मिच्छा भवेउ सव्वऽत्था, जे केई पारलोइया ।

कत्ता चेवोपभोत्ता य, जइ जीवो न विज्जइ ॥ २८ ॥

व्या०—मिथ्या भवेयुः-अनृताः स्युः सर्वेऽर्था ये केचन पारलौकिका दानादय , यदि किमित्याह-कर्त्ता चैव कर्म्मण उपभोक्ता च तत्फलस्य, यदि जीवो न विद्यते परलोकयायीति गाथार्थः ।

एतदेवाव्युत्पन्नशिष्यानुग्रहार्थं स्पष्टतरमाह(भाष्यकार.)-

पाणिदया-तव-नियमा, बम्भं दिक्खा य इंदियनिरोहो ।

सव्वं निरत्थमेयं, जइ जीवो न विज्जई ॥ २९ ॥

व्या०—प्राणिदया-तपो-नियमाः-करुणोपवासहिंसाविरत्यादिरूपा , तथा—ब्रह्म—ब्रह्मचर्यम् , दीक्षा च यांगलक्षणा इन्द्रियनिरोध -प्रव्रज्याप्रतिपत्तिरूपः सर्वं निरर्थकं-निष्फलमेतत्, यदि जीवो न विद्यते परलोकयायीति गाथार्थः ।

किंच शिष्टाचरितो मार्गः शिष्टैरनुगन्तव्य इति ।

तन्मार्गस्थापनायाह (भाष्यकारः)—

लोइया वेइया चेव, तहा सामाइया विऊ ।

निच्चो जीवो पि हो देहा, इइ सव्वे ववत्थिया ॥३०॥

व्या०-लोके भवा लोके वा विदिता इति लौकिका-इतिहासादिकर्त्तारः । एवं वैदिकाश्चैव-त्रैविद्यवृद्धास्तथा सामायिकाः त्रिपिटकादिसमयवृत्तयो विद्वांस —पण्डिताः नित्यो जीवो नानित्य । एवं पृथग् देहात्-शरीरादित्येवं सर्वे व्यवस्थिता नान्यथेति गाथार्थः ।

एतदेव व्याचष्टे ( भाष्यकार )—

लोगे अच्छेज्ज भेज्जो, वेए सपुरीसदद्धगसियालो ।

समए अहमासि गओ, तिविहो दिव्वाइसंसारो ॥३१॥

व्या०-लोके अच्छेद्योऽभेद्य आत्मा पठ्यते, यथोक्तं गीतासु-"अच्छेद्योऽयमभेद्योऽय-मविकार्योऽयमुच्यते। नित्य सर्वगतः स्थाणु-रचलोऽयं सनातन ॥१॥" इत्यादि । तथा वेदे-"सपुरीषो दग्ध शृगाल पठ्यते" इति, यथोक्तम्-" शृगालो वै एष जायते यः सपुरीषो दह्यते "-अथाऽपुरीषो दह्यते "आक्षोधुका अस्य प्रजाः प्रादुर्भवन्ती" त्यादि । तथा समये "अहमासीद्गज" इति पठ्यते, तथा च बुद्धवचनम्-"अहं मासं भिक्षवो हस्ती, षड्दन्तः शङ्खसंनिभ । शुकः पञ्जरवासी च, शकुन्तो जीवजीवकः ' ॥ १ ॥ इत्यादि । तथा त्रिविधो दिव्यादिसंसारः कैश्चिदिष्यते । देवमानुषतिर्यग्भेदेन , आदिशब्दाच्चतुर्विधः—कैश्चिन्नारकाधिक्येनेति गाथार्थ ।

अत्रैव प्रकारान्तरेण तदस्तित्वमाह (भाष्यकारः)—

अत्थि सरीरविहाया, पइनिययागारयाइभावाओ ।

कुंभस्स जह कुलालो, सो मुत्तो कम्मजोगाओ ॥३२॥

व्या०-अस्ति शरीरस्यौदारिकादेर्विधाता विधातेति-कर्त्ता । कुत इत्याह-'प्रतिनियताकारादिसद्भावात् ,' आदिमत्प्रतिनियताकारत्वादित्यर्थः । दृष्टान्तमाह—कुम्भस्य यथा कुलालो विधाता कुलालवदेवमसावपि मूर्तः प्राप्नोतीति विरुद्धमाशङ्क्य परिहरन्नाह-स आत्मा य शरीरविधाता असौ मूर्त्त कर्मयोगादिति-मूर्तकर्मसंबन्धादिति गाथार्थः ।

( भाष्यकारः ) अत्रैव शिष्यव्युत्पत्तये अन्यथा तद्ग्रहणविधिमाह—

फरिसेण जहा वाऊ, गिज्झई कायसंसिओ ।

नाणाईहिं तहा जीवो, गिज्झई कायसंसिओ ॥३३॥

व्या०-स्पर्शेन-शीतादिना यथा वायुर्गृह्यते कायसंस्पृष्टो-देहसङ्गत अदृष्टोऽपि तथा ज्ञानादिभिर्ज्ञानदर्शनेच्छादिभि-र्जीवो गृह्यते कायसस्पृष्टो देहसङ्गत इति गाथार्थ ।

असकृदनुमानादस्तित्वमुक्तं जीवस्य, अनुमान च प्रत्यक्ष-पूर्वक नचैनं केचन पश्यन्तीति ततश्चाशोभनमेतदित्याश-ङ्क्याह ( भाष्यकार )—

**अणिंदियगुणं जीवं, दुन्नेयं मंसचक्खुणा ।**
**सिद्धा पासंति सव्वन्नू, नाणसिद्धा य साहुणो ॥३४॥**

व्या०-अनिन्द्रियगुणम्—अविद्यमानरूपादीन्द्रियग्राह्यगुणं जीवम्-अमूर्तत्वादिधर्मकं दुर्ज्ञेय-दुर्लक्ष्य मांसचक्षुषा-छद्मस्थेन पश्यन्ति, सिद्धा'-सर्वज्ञा अञ्जनसिद्धादिव्यवच्छेदार्थं सर्वज्ञग्रहण, ततश्च ऋषभादय इत्यर्थ., ज्ञानसिद्धाश्च साधवो-भवस्थकेवलिन इति गाथार्थः।

सांप्रतमागमादस्तित्वमाह ( भाष्यकारः )—

**अत्तवयणं उ सत्थं, दिट्ठा य ततो अईंदियाण पि ।**
**सिद्धी गहणाईणं, तहेव जीवस्स विन्नेया ॥ ३५ ॥**

व्या०—आप्तवचनं तु शास्त्रम् आप्तो रागादिरहितः तु-शब्दोऽवधारणे, आप्तवचनमेव अनेन अपौरुषेयव्यवच्छेद-माह, तस्याऽसंभवादिति । दृष्टा च तत इत्युपलब्धा च तत आप्तवचनशास्त्रात् अतीन्द्रियाणामपि इन्द्रियगोचरातिक्रान्तानामपि, सिद्धिर्ग्रहणादीनामिति उपलब्धिश्चन्द्रोपरागादीनामित्यर्थ, तथैव जीवस्य विज्ञेयेति । अतीन्द्रियस्याप्याप्तवचनप्रामाण्यादिति गाथार्थ । मूलद्वारगाथायां व्याख्यातमस्तित्वद्वारम्। दश० ४ अ० ।

( ११ ) अभ्याख्यानम्। आत्मनोऽस्तित्वे—

**णेव सयं लोगं अब्भाइक्खेज्जा, णेव अत्ताणं अब्भाइ-क्खेज्जा । जे लोयं अब्भाइक्खइ से अत्ताणं अब्भाइक्खइ, जे अत्ताणं अब्भाइक्खइ से लोयं अब्भाइक्खइ । ( सूत्र-३१ + )**

नैवात्मानं शरीराधिष्ठातारं ज्ञानगुणं प्रत्यात्मसंवेद्य प्रत्याचक्षीत तस्य शरीराधिष्ठातृत्वेनाहनमिदं शरीर केनचिद-भिसंधिमता, तथा त्यक्तमिदं शरीरं केनचिदभिसन्धिमतैवस्ये-त्यमादिभिर्हेतुभि प्रसाधितत्वात्, न च साधितसाधन पिष्ट पेषणवत् विद्वज्जनमनांसि रञ्जयति। आचा०१ श्रु०१अ०४उ०।

अन्यच्च—

आत्मा न विद्यते; तस्य प्रत्यक्षाऽऽदिभिरनुपलभ्यमानत्वात्, तथाहि-न प्रत्यक्षग्राह्योऽसावतीन्द्रियत्वात्, नाप्यनुमान-ग्राह्य, अनुमानस्य लिङ्गलिङ्गिनो साक्षात्सम्बन्धदर्शनेन प्रवृत्तेरिति, आगमगम्योऽपि नाऽसौ, आगमानामन्योऽन्यं विसंवादादिति, अत्रोच्यते-केयमनुपलभ्यमानता ?, कि-मेकपुरुषाश्रिता ?, सकलपुरुषाश्रिता वा ?, यद्येकपुरुषाश्रि-ता न तयाऽऽत्माऽभाव सिध्यति सत्यपि वस्तुनि तस्या सम्भवात्, न हि कस्यचित् पुरुषविशेषस्य घटाद्यर्थग्राहक प्रमाणं न प्रवृत्तमिति सर्वत्र सर्वदा तदभावो निर्णेतुं शक्य इति, नहि प्रमाणनिवृत्तौ प्रमेयं विनिवर्त्तते, प्रमेयकार्य-त्वात् प्रमाणस्य न च कार्याभावे कारणाभावो दृष्ट इत्यनै-कान्तिकताऽनुपलम्भहेतो., सकलपुरुषाश्रितानुपलम्भस्त्व-सिद्ध इत्यसिद्धो हेतु, न ह्यर्वाग्दर्शिना सर्वे पुरुषा सर्वदा सर्वत्रात्मानं न पश्यन्तीति वक्तुं शक्यमिति, किञ्च-विद्यते आत्मा, प्रत्यक्षादिभिरुपलभ्यमानत्वात्, घटवदिति न चा-यमसिद्धो हेतु, यतोऽस्मदादिप्रत्यक्षेणाप्यात्मा तावद्गृह्यत एव, आत्मा हि ज्ञानादनन्य, आत्मधर्मत्वात् ज्ञानस्य, तस्य च स्वसंविदितरूपत्वात्, स्वसंविदितत्व च ज्ञानस्य नीलज्ञानमुत्पन्नमासीदित्यादिस्मृतिदर्शनात् न ह्यस्वसंविदिते ज्ञाने स्मृतिप्रभवो युज्यते, प्रमाणान्तरज्ञानस्यापि स्मृति-गोचरत्वप्रसङ्गादिति, तदेवं तदव्यतिरिक्तज्ञानगुणप्रत्यक्षत्वे आत्मा गुणी प्रत्यक्ष एव, रूपगुणप्रत्यक्षत्वे घटगुणीप्रत्यक्ष-त्ववदिति, उक्तञ्च विशेषावश्यके—

" गुणपच्चक्खत्तणओ, गुणी वि जीवो घडो व्व पच्चक्खो ।
घडओ व्व घिप्पइ गुणी, गुणमित्तग्गहणओ जम्हा।।१५५८॥"

तथा—

"अन्नोऽणन्नो व गुणी, होज्ज गुणेहिं ? जइ णाम सोऽणन्नो।
णणुगुणमित्तगहणे, घिप्पइ जीवो गुणी सक्खं ॥ १५५९ ॥
अह अन्नो तो एवं, गुणिणो न घडादयो वि पच्चक्खा ।
गुणमित्तग्गहणाओ, जीवंमि कुतो विआरोयं ॥१५६०॥ "

इति, ये तु सकलपदार्थसार्थस्वरूपाविर्भावनसमर्थज्ञानवन्त-स्तेषां सर्वात्मनैव प्रत्यक्ष इति । तथाऽनुमानगम्योऽप्यात्मा, तथाहि-विद्यमानकर्तृकमिदं शरीरं भोग्यत्वात्, ओदनादिवत् व्योमकुसुमं विपक्ष स च कर्त्ता जीव इति, नन्वोदनकर्तृ-वन्मूर्त आत्मा सिद्ध्यतीति साध्यविरुद्धो हेतुरिति नैव, संसारिणो मूर्त्तत्वेनाप्यभ्युपगमात्, आह च-" जो कत्ता सो जीवो, सज्झविरुद्धो त्ति ते मई होज्जा । मुत्ताइ य सं-गाओ, तत्तो संसारिणो दोसो " ॥ १ ॥ इति । न चायमे-कान्तो; यदुत-लिङ्गयविनाभूतलिङ्गोपलम्भव्यतिरेकेणानु-मानस्यैव एकान्ततोऽप्रवृत्तिरिति हसितादिलिङ्गविशेषस्य ग्रहाख्यलिङ्गयविनाभावग्रहणमन्तरेणापि ग्रहगमकत्वदर्श-नात्। न च देह एव ग्रहो येनाऽन्यदेहे दर्शनमविनाभाव-ग्रहणनियामकं भवतीति, उक्तञ्च(विशे०)-"सो नेगतो जम्हा, लिंगेहिं समं अदिट्ठपुव्वो वि । गहलिंगदरिसणाओ, ग-होऽणुमेओ सरीरम्मि ॥ १५६६ ॥ " इत्यागमगम्यत्वं त्वा-त्मन -' एगे आया ' अत एव वचनात्, न चास्यागमा-न्तरैर्विसंवाद सम्भावनीय. । सुनिश्चिताप्तप्रणीतत्वादस्ये-ति, बहुवक्तव्यमत्र तत्तु स्थानान्तरादवसेयमिति । किञ्च—आत्माभावे जातिस्मरणादयस्तथा प्रेतीभूतपितृपितामहादि कृतानुग्रहोपघातौ च न प्राप्नुयुरिति । स्था० १ ठा० ।

( १२ ) इन्द्रभूतिमुद्दिश्य भगवता महावीरेणोक्तं विस्तरत जीवास्तित्वम्—

**जीवे तुह संदेहो, पच्चक्खं जं न घिप्पइ घडो व्व ।**
**अच्चंता पच्चक्खं, च नऽत्थि लोए खपुप्फं व ॥१५४९॥**

आयुष्मन् ! इन्द्रभूते ! तवैष सदेह । किमयमात्मा-अस्ति?, नास्ति वा ?, उभयहेतुसद्भावात्, तत्र नास्तित्वहेतवोऽमी-नास्त्यात्मा, प्रत्यक्षेणात्यन्तमगृह्यमाणत्वात्, इह यदत्य-न्ताऽप्रत्यक्षं तल्लोके नास्त्येव, यथा-खपुष्पं, यत्वस्ति त-त्प्रत्यक्षेण गृह्यत एव, यथा—घट इत्ययमौ व्यतिरेकदृष्टा-

न्न । अणवोऽपि ह्यप्रत्यक्षा , किंतु-घटादिकार्यतया परिणतास्ते प्रत्यक्षत्वमुपयान्ति , न पुनरेवमात्मा कदाचिदपि भावप्रत्यक्षमुपगच्छत्यतोऽत्रात्यन्तविशेषणमिति ।

एवं च मन्यसे त्वं किमित्याह-

न य सोऽणुमाणगम्मो, जम्हा पच्चक्खपुव्वयं तं पि ।
पुव्वोवलद्धसंबं-धसरणओ लिंगलिंगीणं ॥ १५५० ॥

न चासावात्मानुमानगम्यः यस्मात्तदप्यनुमानं प्रत्यक्षपूर्वकं प्रवर्त्तते, कुत इत्याह-'पुव्वोवलद्ध' त्यादि लिङ्ग्यते-गम्यतेऽतीन्द्रियार्थोऽनेनेति लिङ्गम्, अथ वा-लीनं-तिरोहितमर्थं गमयतीति लिङ्गं धूमकृतकत्वादिकं तदस्यास्तीति लिङ्गी वह्व्यनित्यत्वादिस्तयोर्लिङ्गलिङ्गिनोर्यः पूर्वं महानसादौ प्रत्यक्षादिना उपलब्धकार्यकारणभावादिकः संबन्धस्तस्य यत् स्मरणं तस्मादिति । इदमुक्तं भवति-पूर्वं महानसादावग्निधूमयोर्लिङ्गिलिङ्गयोरन्वयव्यतिरेकवत्त्वमविनाभावमध्यक्षतो गृहीत्वा तत उत्तरकाले कचित्कान्तारपर्वतनितम्बादौ गगनाऽवलम्बिनीं धूमलेखामवलोक्य प्राग्गृहीतं संबन्धमनुस्मरति, तद्यथा-' यत्र यत्र धूमस्तत्र तत्र प्रागहं वह्निम् अद्राक्षं यथा-महानसादौ, धूमश्चात्र दृश्यते तस्माद्वह्निनापीह भवितव्यम् इत्येवं लिङ्गग्रहणसंबन्धस्मरणाभ्यां तत्र प्रमाता हुतभुजमवगच्छति, न चैवमात्मना लिङ्गिना सार्द्धं कस्यापि लिङ्गस्य प्रत्यक्षेण संबन्धः प्रसिद्धोऽस्ति, यतः तत्संबन्धमनुस्मरतः पुनस्तल्लिङ्गदर्शनाज्जीवे संप्रत्ययः स्यात् । यदि पुनर्जीवलिङ्गयोः प्रत्यक्षतः संबन्धसिद्धिः स्यात्तदा जीवस्यापि प्रत्यक्षत्वापत्त्यानुमानवैयर्थ्यं स्यात्तत एव तत्सिद्धेरिति ।

एतदेवाह-

न य जीवलिंगसंबं-धदरिसणमभू जओ पुणो सरओ ।
तल्लिंगदरिसणाओ, जीवे संपच्चओ होज्जा ॥१५५१॥

गतार्था । न च वक्तव्यं सामान्यतो दृष्टात् अनुमानात् आदित्यादिगतिवज्जीवः सिध्यति, यथा-गतिमानादित्यो, देशान्तरप्राप्तेः देवदत्तवदिति, यतो हन्त देवदत्ते दृष्टान्तधर्मिणि सामान्येन देशान्तरप्राप्तिः गतिपूर्विका प्रत्यक्षेणैव निश्चितेति सूर्येऽपि तां तथैव प्रमाता साधयतीति युक्तम् , न चैवमत्र कचिदपि दृष्टान्ते जीवसत्त्वेनाविनाभूतः कोऽपि हेतुरध्यक्षेणोपलक्ष्यते इति । अतो न सामान्यतो दृष्टादप्यनुमानात्तद्गतिरिति ।

न चाऽऽगमगम्योऽपि जीव इति दर्शयति-

नाऽऽगमगम्मो वि तओ, भिज्जइ जं नागमोऽणुमाणाओ ।
न य कासइ पच्चक्खो, जीवो जस्साऽऽगमो वयणं ।१५५२।

न चागमगम्योऽपि तकोऽसौ जीवो, यद् यस्मादागमोऽपि अनुमानाद् न भिद्यते ( इत्यादिना यद्व्याख्याने ' आगम ' शब्देऽस्मिन्नेव भागे गतम् ) । न चैवमसौ आत्मशब्द शरीरादन्यत्र प्रयुज्यमानः कचिदुपलब्धो, यत्र स्वलान्मशब्दश्रवणाद् आत्मा इति प्रत्ययो भवेदिति । यदपि स्वर्गनरकाद्यदृष्टार्थविषयं शाब्दं प्रमाणं, तदपि तत्त्वतोऽनुमानं , नातिवर्तते । तथाहि-प्रमाणं स्वर्गनरकाद्यदृष्टार्थविषयं वचनम् , अविसंवादिवचनाप्तप्रणीतत्वाच्चन्द्रार्कोपरागादिवचनवदित्येवमनुमानादेव तत्र प्रमाणता । न चैवं भूतमाप्तं कमपि पश्यामो, यस्यात्मा प्रत्यक्ष इति तद्वचनमागम इति प्रतिपद्येमहि इति शेषः ।

किं च--

जं चाऽऽगमा विरुद्धा, परोप्परमओ वि संजुत्तो ।
सव्वप्पमाणविसया-इओ जीवो त्ति तो बुद्धी ॥१५५३॥

यतश्च तीर्थिकानां संबन्धिनः सर्वेऽप्यागमाः परस्परविरोधिनः खल्वतोऽपि संशय एवात्मनो युक्तो, न तु निश्चयः, तथाहि-केचिदागमा आत्मनो नास्तित्वमेव प्रतिपादयन्ति, यदाहुर्नास्तिकाः —" एतावानेव लोकोऽयं यावानिन्द्रियगोचरः । भद्रे ! वृकपदं पश्य, यद्वदन्ति बहुश्रुताः ' ॥ १ ॥ इत्यादि, भट्टोऽप्याह-"विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न च प्रेत्य संज्ञास्ति" । सुगतस्त्वाह-" न रूपं भिक्षवः पुद्गलः " इत्यादि । आत्मास्तित्ववचनान्यप्यागमेषु श्रूयन्ते, तथा च वेदः-"न ह वै सशरीरस्य प्रियाप्रिययोरपहतिरस्ति, अशरीरं वा वसन्तं प्रियाप्रिये न स्पृशतः" इति । तथा-' अग्निहोत्रं जुहुयात्स्वर्गकामः ' इत्यादि । कापिलागमे तु प्रतिपाद्यते-' अस्ति पुरुषः अकर्ता निर्गुणो भोक्ता चिद्रूपः " इत्यादि । तस्मादागमानां परस्परविरुद्धत्वान्नागमप्रमाणादप्यात्मसत्त्वसिद्धिः । इदं च वैशेषिकमतेन प्रत्यक्षानुमानागमलक्षणं प्रमाणत्रयमुपन्यस्तम् ॥ एतच्च स्वयं द्रष्टव्यम्—उपमाप्रमाणगम्योऽपि जीवो न भवति ।-तत्र हि ' यथा गौस्तथा गवयः ' इत्यादावेव सादृश्यमसन्निकृष्टेऽर्थे बुद्धिमुत्पादयति । न चेहाऽन्यः कश्चित् त्रिभुवनेऽप्यात्मसदृशः पदार्थोऽस्ति, यद्दर्शनादात्मानमवगच्छामः । कालाऽऽकाशदिगादयो जीवतुल्या विद्यन्ते इति चेत्?, न, तेषामपि विवादास्पदीभूतत्वेन तद्वद्(द्धि)बद्धत्वात् । अर्थापत्तिसाध्योऽपि जीवो न भवति, न हि दृष्टः श्रुतो वा कोऽप्यर्थः आत्मानमन्तरेण नोपपद्यते, यद्बलात्तं साधयामः , तस्मात्सर्वप्रमाणविषयातीतो जीव इति तव बुद्धिः , भावोपलम्भप्रमाणपञ्चकविषयातीतत्वात् प्रतिषेधसाधकाऽभावाख्यषष्ठप्रमाणविषय एव जीव इत्यर्थः । इति पूर्वपक्षः ।

अथैतत्प्रतिविधानमाह—

गोयम ! पच्चक्खो च्चिय, जिवो जं संसयाइविन्नाणं ।
पच्चक्खं च न सज्झं,जह सुह-दुक्खा सदेहम्मि ।१५५४।

गौतम ! भवतोऽपि प्रत्यक्ष एवायं जीवः, किमन्येन प्रमाणान्तरोपन्यासेन ?, कोऽयं जीवो मम प्रत्यक्ष ? इति चेत्, उच्यते—यदेतत्—तवैव संशयादिविज्ञानं स्वसंवेदनसिद्धं हृदि स्फुरति ।-स एव जीवः, संशयादिज्ञानस्यैव तदनन्यत्वेन जीवत्वात् । यच्च प्रत्यक्षं तद् न प्रमाणान्तरेण साध्यं, तथा-स्वशरीरे एवात्मसंवेदनसिद्धाः सुखदुःखादयः, प्रत्यक्षसिद्धमपि सग्रामनगरं विश्वं शून्यवादिनं प्रति साधयन् एवेति चेत्, नैवम् , निरालम्बनाः सर्वे प्रत्ययाः, प्रत्ययत्वात् , स्वप्नप्रत्ययवद्, इत्यादेस्तदुद्भावितबाधकप्रमाणस्यैव तत्र निराकरणाद् , अत्र त्वात्मग्राहके प्रत्यक्षे बाधकप्रमाणाऽभावादिति ।

इतश्चायं प्रत्यक्षो जीव कुत ? इत्याह—

कयवं करेमि काहं, वाहमहं पच्चया इमाऊ य ।
अप्पा स प्पच्चक्खो, तिकालकज्जोवएसाओ ।।१५५५।।

'वा' इति-अथवा—कृतवानहं, करोम्यहं, करिष्याम्यहम्, उक्तवानहं, ब्रवीम्यहं, वक्ष्याम्यहं, ज्ञातवानहं, जानेऽहं, ज्ञास्याम्यहम्, इत्यादिप्रकारेण योऽयं त्रैकालिक कार्यव्यपदेशस्तद्विषयप्रयुज्यमानतया तत्समुत्थो योऽयम्—'अहंप्रत्यय' एतस्मादपि प्रत्यक्ष एवायमात्मेति प्रपद्यस्व, अथ 'ह्यहंप्रत्ययो' नानुमानिक, अलैङ्गिकत्वात् नाप्यागमादिप्रमाणसंभव', तदनभिज्ञानानां बालगोपालादीनामप्यन्तर्मुखतया आत्मग्राहकत्वेन स्वसंविदितस्य तस्योत्पादाद् घटादौ चानुत्पादादिति ।

अपि च—

कह पडिवन्नमहं ति य,किमत्थि नऽत्थि त्ति संसओ कह णु।
सइ संसयमि वायं, कस्साऽहंपच्चओ जुत्तो ।।१५५६।।

हन्त कथमसति जीवे 'अहमिति' प्रतिपन्नं त्वया विषयाभावे विषयिणोऽनुत्थानप्रसङ्गादिह एवास्य प्रत्ययस्य विषय इति चेत्, न, जीवविप्रमुक्तेऽपि देहे तदुत्पत्तिप्रसङ्गात्, सति च जीवविषये अस्मिन्नहंप्रत्यये किमहमस्मि नास्मीति भवत. सशय कथ केन प्रकारेणोपजायते ?, अहंप्रत्ययग्राह्यस्य जीवस्य सद्भावाद् अस्म्यहमिति निश्चय एव युज्यते इति भाव । सति वा अस्मिन्नात्मास्तित्वसशये कस्यायम् 'अहंप्रत्ययो' युज्यते निर्मूलत्वेन तदनुत्थानप्रसङ्गादिति ।

जीवाभावे सशयविज्ञानमपि न युज्यत एवेति तद्दर्शयन्नाह—

जइ नऽत्थि संसय चिय,किमत्थि नऽत्थि त्ति संसओ कस्स।
संसइए व सरूवे, गोयम ! किमसंसयं होज्जा ।।१५५७।।

यदि संशयी जीव एवादौ नास्ति, तर्ह्यस्ति नास्तीति संशय कस्य भवतु । सशयो हि विज्ञानाख्यो गुण एव, न च गुणिनमन्तरेण गुण संभवति । देहोऽत्र गुणीति चेत्, न देहस्य मूर्त्तत्वाज्जडत्वाच्च ज्ञानस्य चामूर्त्तत्वाद् बोधरूपत्वाच्च न चाननुरूपाणां गुणगुणिभावो युज्यते, आकाशरूपादीनामपि तद्भावापत्त्या अतिप्रसङ्गप्राप्तं । 'संसइए व' त्यादि, 'वा' इति-अथवा संशयिते स्वरूपे गौतम ! किमसशयं शेष भवेद् ? । इदमुक्तं भवति—किमस्मि नास्म्यहमित्येवं य. स्वरूपेऽपि सशेते-आत्मनिश्चयोऽपि यस्य नास्तीत्यर्थ., तस्य शेष कर्मबन्धमोक्षादिकं घटपटादिकं च किमसंशयम्-असंदिग्ध स्यात् ? न किञ्चित्सर्वसंशय एव तस्य स्यादित्यर्थ , आत्मास्तित्वनिश्चयमूलो हि शेषवस्तुनिश्चय इति भाव । अहंप्रत्ययग्राह्य च प्रत्यक्षमात्मानं निह्नुवानस्य अश्रावण शब्द इत्यादिवत्प्रत्यक्षविरुद्धो नाम पक्षाऽऽभास , तथा-वक्ष्यमाणात्मास्तित्वानुमानसद्भावान्नित्य' शब्द इत्यादिवदनुमानविरुद्धोऽपि । तथा-अहमस्मि संशयीति प्रागभ्युपगम्योत्तरत्र नास्मीति प्रतिजानानस्य साङ्ख्यस्य अनित्य कर्त्ता अचेतन आत्मेत्यादिवदभ्युपगमविरोध. । बालगोपालाङ्गनादिप्रसिद्धं चात्मानं निराकुर्वत अचन्द्र. शशी इत्यादिवल्लोकविरोध, अहं नास्मीति वदतो 'माता मे वन्ध्या' इत्यादिवत्स्ववचनव्याहति । एवं च प्रत्यक्षादिबाधितेऽस्मिन् पक्षे अपक्षधर्मतया हेतुरप्यसिद्ध । हिमवत्पलपरिमाणादौ पिशाचादौ च प्रमाणपञ्चकाभावस्य प्रवृत्तेरनैकान्तिकोऽपि वक्ष्यमाणानुमानप्रमाणसिद्धे चात्मनि विपक्ष एव वृत्तेर्विरुद्धश्चेति ।

प्रकारान्तरेणाप्यात्मनः प्रत्यक्षसिद्धतामाह—

गुणपच्चक्खत्तणओ, गुणी वि जीवो घडो व्व पच्चक्खो ।
घडओ वि घेप्पइ गुणी,गुणमित्तग्गहणओ जम्हा।१५५८।

प्रत्यक्ष एव गुणी जीव स्मृतिजिज्ञासाचिकीर्षाजिगमिषाशंशीत्यादिज्ञानविशेषाणा तद्गुणाना स्वसंवेदनप्रत्यक्षसिद्धत्वाद्, इह यस्य गुणा प्रत्यक्षा स प्रत्यक्षो दृष्टो, यथा घट', प्रत्यक्षगुणश्च जीव, तस्मात्प्रत्यक्ष यथा घटोऽपि गुणी रूपादिगुणप्रत्यक्षत्वादेव प्रत्यक्षस्तद्वज्ज्ञानादिगुणप्रत्यक्षत्वादात्मापीति । आह—अनैकान्तिकोऽयं यस्मादाकाशगुण शब्द प्रत्यक्षोऽस्ति, न पुनराकाशमिति । तदयुक्तम्, यतो नाकाशगुण शब्द, किं तु-पुद्गलगुण, ऐन्द्रियकत्वात्, रूपादिवदिति ।

गुणाना प्रत्यक्षत्वे गुणिनस्तद्रूपताया किमायातम् ?, इति चेद्, उच्यते—

अन्नोऽणन्नो व गुणी, होज्ज गुणेहिं जइ नाम सोऽणन्नो ।
ननु गुणमेत्तग्गहणे. घेप्पइ जीवो गुणी सक्खं ।१५५९।
अह अन्नो तो एवं, गुणिणो न घडादओ वि पच्चक्खा।
गुणमेत्तग्गहणाओ, जीवम्मि कउवियारोऽयं ।।१५६०।।

ननु भवता गुणेभ्यो गुणी किमर्थान्तरभूतोऽभ्युपगम्यते, अनर्थान्तरभूतो वा ? । यदि नाम-सोऽनन्यस्तेभ्योऽनर्थान्तरभूत' तर्हि ज्ञानादिगुणग्रहणमात्रादेव गुणी जीव प्रत्यक्षेण गृह्यत इति सिद्धमेव । प्रयोग -यो यस्मादनर्थान्तरं स तद्ग्रहणेन गृह्यते, यथा वाससि रागो, गुणेभ्योऽनर्थान्तर च गुणी, तस्माद् गुणग्राहकप्रत्यक्षेण सोऽपि गृह्यत एवेति । अथ गुणेभ्योऽन्योऽर्थान्तरभूत एव गुणी, तत एव सति घटादयोऽपि गुणिन न प्रत्यक्षास्तदर्थान्तरभूतस्य रूपादिगुणमात्रस्यैव ग्रहणात् । इह यद्-यस्मादर्थान्तरभूत तद्ग्रहणेऽपि नेतरस्य ग्रहणं, यथा घटे गृहीते पटस्य, अर्थान्तरभूताश्च गुणिनो गुणा इष्यन्ते अतो गुणग्रहणेऽपि न गुणिग्रहणम् । अतो घटादीनामपि समानोऽग्रहणदोषे कोऽयं नाम भवत केवलजीवे विचारो नास्तित्वविवक्षा, येनोच्यते—"पच्चक्खं जं न घिप्पइ घडो व्व इत्यादि, अथ द्रव्यविरहिता केऽपि न सन्त्येव गुणा , इत्यतस्तद्ग्रहणद्वारेण गृह्यन्त एव घटादय । न त्वेतदात्मन्यपि समानमेव । किं च-गुणिनो गुणानामर्थान्तरत्वे अभ्युपगम्यमाने गुणीभवतु, मा भूद्वा प्रत्यक्ष , तथापि ज्ञानादिगुणेभ्य पृथगात्मा गुणी त्वदभ्युपगमेनापि सिद्धयत्येवेति ।

अत्र पराभिप्रायमाशङ्कमान. प्राह—

अहमन्नसि अत्थि गुणी, न य देहत्थंतरं तओ किं तु ।
देहे नाणाइगुणा, सो चिय तम्मि गुणी जुत्तो ।।१५६१।

अथ मन्यसे अस्त्येव ज्ञानादिगुणाना गुणिनेव न प्रत्या-

वदामहे, एतत्तु नाभ्युपगच्छामो यद्देहादर्थान्तर तर्कोऽसौ इ ति,किन्तु-देह एव ज्ञानादयो गुणा. समुपलभ्यन्ते अत. स एव तेषां गुणी युक्तो, यथा रूपादीना घट प्रयोगः देहगुणा एव ज्ञानादय., तत्रैवोपलभ्यमानत्वाद्गौरकृशस्थूलतादिवदिति ।

अत्रोत्तरमाह-

नाणादओ न देहस्स, मुत्तिमत्ताइओ घटस्सेव ।
तम्हा नाणाइगुणा, जस्स सदेहाहिओ जीवो ॥१५६२॥

प्रयोगो देहस्य सम्बन्धिनो ज्ञानादयो गुणा न भवन्त्येव तस्य मूर्तिमत्त्वात्, चाक्षुषत्वाद्वा, घटवत् । न च द्रव्यरहितो गुण. समस्ति ततो यो ज्ञानादिगुणानामनुरूप अमूर्त , अचाक्षुषश्च गुणी स देहातिरिक्तो जीवो ज्ञातव्य' । आह—ज्ञानादयो न देहस्येति प्रत्यक्षबाधितमिदम् , देह एव ज्ञानादिगुणानां प्रत्यक्षेणैव ग्रहणात् । तदयुक्तम् , अनुमानबाधितत्वादस्य प्रत्यक्षस्य, तथा हि-इन्द्रियानिरिक्तो विज्ञाता, तदुपरमेऽपि तदुपलब्धार्थानुस्मरणात् , यो हि यदुपरमेऽपि यदुपलब्धमर्थमनुस्मरति स तस्मादर्थान्तर दृष्टो, यथा-पञ्चवातायनोपलब्धार्थानुस्मर्त्ता देवदत्त इत्यादि वायुभूतिप्रश्ने । वक्ष्याम इति ।

उपसंजिहीर्षुराह—

इय-तुह देसेणाऽयं, पचक्खो सव्वहा महं जीवो ।
अविहयनाणत्तणओ, तुह विन्नाणं व पडिवज्जा ।१५६३।

'इति'-एवम्-उक्तप्रकारेण स्वशरीरे तवापि देशत. प्रत्यक्षोऽयमात्मा छद्मस्थत्वेन भवत सर्वस्यापि वस्तुनो देशविषयत्वात् , घटवत् , तथाहि-सर्वमपि-स्व-परपर्यायतोऽनन्तपर्यायं वस्तु छद्मस्थश्च प्रत्यक्षेण साक्षात् तद्देशमेव गृह्णाति । प्रत्यक्षेण च प्रदीपादिप्रकाशेनैव देशत. प्रकाशिता अपि घटादयो व्यवहारत. प्रत्यक्षा उच्यन्ते एव । सर्वात्मना च केवली प्रत्यक्षमेव वस्तु प्रकाशयति अतो ममाऽप्रतिहताऽनन्तज्ञानत्वेन सर्वात्मनाऽपि प्रत्यक्षोऽयं जीवो यथाऽतीन्द्रियमपि त्वत्संशयविज्ञानमिति प्रतिपद्यस्वेति ।

परशरीरे तर्हि कथमित्याह—

एवं चि य परदेहे, ऽणुमाणओ गिरह जीवमत्थि त्ति ।
अणुवित्तिनिवित्तीओ, विन्नाणमयं सरूवे व्व ॥१५६४॥

यथा स्वदेहे, एवं परदेहेऽपि गृहाण जीवमनुमानत कथम् ? इत्याह—अस्ति—विद्यते इति । कथंभूत जीवम् ? इत्याह-विज्ञानमयं-विज्ञानात्मकम् अनुमानमेव सूत्रयन्नाह-' अणुवित्तिनिवित्तीओ ' ' सरूवे व ' त्ति—इदमुक्तं भवति-परशरीरेऽप्यस्ति जीव । इष्टानिष्टयो प्रवृत्तिनिवृत्तिदर्शनात् यथा-स्वरूपे स्वात्मनि इह यत्रेष्टानिष्टयो प्रवृत्तिनिवृत्ती दृश्येते तत्सात्मकं दृष्टं यथा स्वशरीर तथा च प्रवृत्तिनिवृत्ती दृश्येते परशरीरे, अतस्तदपि सात्मकम् आत्माभावे चेष्टानिष्टप्रवृत्तिनिवृत्ती न भवतो, यथा घटे, इत्यनुमानात्परशरीरेऽपि जीवसिद्धि ।

अत्र परमतमाशङ्क्योत्तरमाह—

जं च न लिंगेहिँ समं, मन्नसि लिंगी पुरा जओ गहिओ ।
संगं ससेण व समं, न लिंगओ तोऽणुमेए सो ॥१५६५॥

सोऽणेगंतो जम्हा, लिंगेहिँ समं न दिट्ठपुव्वो वि ।
गहलिंगदरिसणाओ,गहोऽणुमेओ सरीरम्मि ॥१५६६॥

यच्च न य जीवलिङ्गसंबन्धदरिसणमभू० ।१५५१। ' इत्यादि पूर्वोक्तपूर्वपक्षानुसारेण मन्यसे त्वम् । किमित्याह—ततो न लिङ्गतो-लिङ्गादनुमेयोऽसौ जीव । यत., किमित्याह-यतो न खलु लिङ्गैः कैश्चिदपि समं लिङ्गी जीव. क्वापि केनापि पुरा पूर्वं गृहीत , किंवदित्याह—शृङ्गमिव शशकेन समं ततो लिङ्गलिङ्गिनोः पूर्वं संबन्धाग्रहणान्न लिङ्गाज्जीवोऽनुमीयत इति यन्मन्यसे त्वं, तत्र प्रतिविधीयते-सोऽनेकान्त यस्माल्लिङ्गैः समम् अदृष्टपूर्वोऽपि ग्रहो-देवयोनिविशेषत , शरीरे हसनगानरोदनकरचरणभ्रूविक्षेपादिविकृतग्रहलिङ्गदर्शनादनुमीयत इति बालानामपि प्रतीतमेवेति ।

अनुमानान्तरमप्यात्मसाधकमाह—

देहस्सऽत्थिविहाया, पइनियया गारओ घडस्सेव ।
अक्खाणं च करणओ, दंडाईणं कुलालो व्व ॥१५६७॥

देहस्यास्ति विधाता-कर्त्तेति प्रतिज्ञा, आदिमत्प्रतिनियताकारत्वाद् , घटवत् , यत्पुनरकर्तृकं तदादिमत्प्रतिनियताकारमपि न भवति, यथा अभ्रविकार., यश्च देहस्य कर्त्ता स जीव । प्रतिनियताऽऽकारत्वं मेर्वादीनामप्यस्ति, न च तेषां कश्चिद्विधाता, इति तैरनैकान्तिको हेतु स्याद्, अतोऽनुक्तमप्यादिमत्त्वविशेषणं द्रष्टव्यमिति । तथा अक्षाणाम्—इन्द्रियाणामस्त्यधिष्ठाता इत्यध्याहार., करणत्वात् यथा चक्रचीवरमृत्सूत्रदण्डादीनां कुलाल., यच्च निरधिष्ठातृकं तत्करणमपि न भवति, यथा आकाशं, यश्चेन्द्रियाणामधिष्ठाता स जीव इति ।

तथा—

अत्थिंदियविसयाणं, आयाणादेयभावओऽवस्सं ।
कम्मार इवादाया, लोए संडासलोहाणं ॥ १५६८ ॥

इह यत्रादानादेयभावस्तत्रावश्यमादाता समस्ति, यथा लोके संदंशकलोहानां कर्म्मारोऽयस्कार. विद्यते चेन्द्रियविषयाणामादानादेयभाव , अतस्तेषामप्यस्त्यादाता, स च जीव , यत्र त्वादाता नास्ति, तत्रादानादेयभावोऽपि न विद्यते यथा आकाश इति ।

तथा—

भोत्ता देहाईणं, भोज्जत्तणओ नरो व्व भत्तस्स ।
संघायाइत्तणओ, अत्थि य अत्थी घरस्सेव ॥१५६९॥

इह देहादीनां भोक्ता समस्ति. भोग्यत्वात् , यथा शाल्यादिमिश्रकवलादीनां नर', यस्य च भोक्ता नास्ति तद्भोग्यमपि न भवति, यथा खरविषाणं, भोग्य च शरीरादिकं, ततो विद्यमानभोक्तृकमिति । तथा-अर्थी-स्वामी । ततश्च देहादीनां विद्यते स्वामी, संघातरूपत्वाद् आदिशब्दात्-मूर्तिमत्त्वात् ऐन्द्रियत्वाच्चाक्षुषत्वाद् इत्यादयोऽप्यनैकान्तिकत्वपरिहारार्थं संभवद्विहितविशेषणा हेतवो योजनीया , यथा गृहादीनां सूत्रधारादय इति दृष्टान्त., यत् पुनरस्वामिकं तत्संघातादिरूपमपि न भवति यथा गगनकुसुमं, संघातादिरूप च देहादिकं तस्माद्विद्यमानस्वामिकमिति ।

आह-ननु "देहस्सऽत्थि विहाया ( १५६७ )" इत्यादिना शरीरादीनां कर्त्रादय एव सिध्यन्ति 'न तु प्रस्तुतो जीव, इत्याशङ्कयोत्तरमाक्षेपपरिहारौ चाह—

जो कत्ताइ स जीवो, सज्झविरुद्धो त्ति ते मई होज्जा ।
मुत्ताइप्पसंगाओ, तं न संसारिणो दोसो ॥ १५७० ॥

यश्चायमनन्तरं देहेन्द्रियादीनां कर्त्ता; अधिष्ठाता, आदाता, भोक्ता, अर्थी, चोक्तः स सर्वोऽपि जीव एव, अन्यस्येश्वरादेर्युक्त्यक्षमत्वेन कर्तृत्वाद्यसंभवादिति । अथ साध्यविरुद्धसाधकत्वाद्विरुद्धा एते हेतव इति तव मतिर्भवेत् तथा हि-घटादीनां कर्त्रादिरूपा कुलालादयो मूर्तिमन्त संघातरूपा अनित्यादिस्वभावाश्च दृष्टा इत्यतो जीवोऽप्येवंविध एव सिध्यति, एतद्विपरीतश्च किलास्माकं साधयितुमिष्ट, इत्येवं साध्यविरुद्धसाधकत्व हेतूनामिति, तदेतदयुक्तत्वाच्च, यतः खलु ससारिणो जीवस्य साधयितुमिष्टस्याऽदोषोऽयं, स हि अष्टकर्मपुद्गलसंघातोपगूढत्वात् सशरीरत्वाच्च कथंचिन्मूर्त्तत्वादिधर्मयुक्त एवेति भावः ।

अपरमप्यात्मसाधकमनुमानमाह—

अत्थि चिय ते जीवो, संसयओ सोम्म ! थाणुपुरिसो व्व ।
जं संदिद्धं गोयम !, तं तत्थऽन्नत्थ वत्थु(त्थि)धुवं ।१५७१।

हे सौम्य ! गौतम ! अस्त्येव तव जीव संशयत.-संशयसद्भावाद्यत्र यत्र संशयस्तत्तदस्ति यथा स्थाणुपुरुषौ, संशयश्च तव जीवे, तस्मादस्त्येवायं, तथाहि-स्थाणुपुरुषयोरूर्ध्वत्वारोहपरिणाहाद्युभयसाधारणधर्मप्रत्यक्षतायां चलनशिरःकण्डूयनवयोनिलयनवल्ल्यारोहणाद्युभयगतविशेषधर्मापत्यक्षतायां चोभयगतैतद्धर्मानुस्मरणे च सत्येकतरविशेषनिश्चयचिकीर्षो किमिदमिति विमर्शरूप संशय. प्रादुरस्ति । एवंभूते च स्थाणुपुरुषादिगतसंशये तत्स्थाणुपुरुषादिक वस्त्वस्त्येव, अवस्तुनि संशयायोगात् एवमात्मशरीरयोरपि प्रागुपलब्धसामान्यविशेषधर्मस्य प्रमातुस्तयो सामान्यधर्मप्रत्यक्षताया विशेषधर्माऽप्रत्यक्षत्वेऽपि च तद्विषयानुस्मृतौ सत्यामेकतरविशेषोपलिप्सो. 'किमयमात्मा किं वा शरीरमात्रमिदम्' इति, विमर्शरूप संशयो जायते । अथ चात्मशरीरयो सत्त्व एवोपपद्यते, नैकतरस्याप्यभावेऽतोऽस्ति जीव । अथैवं ब्रूषे-अरण्यादिषु स्थाणुपुरुषसंशये तत्र विवक्षितप्रदेशे अनयोरेकतर एव भवति, न पुनरुभयमपि तत्कथमुच्यते-विद्यमान एव वस्तुनि संशयो भवति इति ?, तदयुक्तम्, अभिप्रायाऽपरिज्ञानात्, न हि वयमेवं ब्रूमस्तत्रैव प्रदेशे तदुभयमप्यस्ति इति, किं तु यद्गतसंदेह तद्वस्तु तत्रान्यत्र वा प्रदेशे ध्रुवमस्त्येव, अन्यथा-षष्ठभूतविषयोऽपि संशय स्यादेतदेवाह-'जं संदिद्धमि' त्यादि-तस्मात् संशयविषयत्वादस्त्येव जीव इति स्थितम् ।

अथ पूर्वपक्षमाशङ्क्य परिहरन्नाह—

एवं नाम विसाणं, खरस्स पत्त न तं खरे चेव ।
अन्नत्थ तदत्थि चिय, एव विवरीयगाहे वि ॥१५७२॥

हन्त, यदि यत्र संशयस्तेनावश्यमेव भवितव्यम् एवं तर्हि खरविषाणमप्यस्तीति प्राप्त, तत्रापि कस्यचित्संशयसद्भावाद् उच्यते-नन्वभिहितमत्र यदुत तत्रान्यत्र वा विद्यमान एव वस्तुनि संशयो भवति, नाविद्यमाने । खरस्य विषाणं खरविषाणं नास्तीत्यत्र च कोऽर्थ इत्याह-'न तं खरे चेव' त्ति-खर एव तद्विषाणं नास्ति, अन्यत्र गवादौ वस्त्येवेति; न कश्चिद् व्यभिचार. । एवं 'विवरीयगाहे वि' त्ति-इदमुक्त भवति-यदा विपर्यस्तः कश्चित्स्थाणौ पुरुष एवायमित्यादिविपरीतग्रहं करोति तदाप्ययमेव न्यायो वाच्यः-सोऽपि विपरीतग्रहो विपरीते पुरुषादिके वस्तुनि सत्येवोपपद्यते; नाविद्यमान इत्यर्थ । एवं भवदभिप्रायेण योऽस्मादृशां शरीरे आत्मास्तित्वाभिमानो, नायमात्मन. सर्वथा नास्तित्वे युज्यते इति ।

इतोऽप्यस्ति जीव कुत ?, इत्याह—

अत्थि अजीवविवक्खो, पडिसेहाओ घडोऽघडस्सेव ।
नऽत्थि घडो त्ति व जीव-त्थित्तपरो नऽत्थि सद्दोयं ।१५७३।

अत्र प्रयोग-प्रतिपक्षवानयमजीव, अत्र व्युत्पत्तिमच्छुद्धपदप्रतिषेधाद् यत्र व्युत्पत्तिमत शुद्धपदस्य प्रतिषेधो दृश्यते स प्रतिपक्षवान् दृष्टो, यथा घटोऽघटप्रतिपक्षवान्, अत्र ह्यघटप्रयोगे शुद्धस्य व्युत्पत्तिमतश्च पदस्य प्रतिषेध, अतोऽवश्यं घटलक्षणेन प्रतिपक्षेण भवितव्यम् । यस्तु न प्रतिपक्षवान् न तत्र शुद्धस्य व्युत्पत्तिमतश्च पदस्य प्रतिषेध, यथा—असखरविषाणम्, 'अडित्थ' इति—अखरविषाणमित्यत्र खरविषाणलक्षणस्याऽशुद्धस्य सामासिकपदस्य प्रतिषेध इति, अतोऽत्र खरस्य विषाण खरविषाणमित्यादिव्युत्पत्तिमत्त्वे सत्यपि खरविषाणलक्षणो विपक्षो नास्ति 'अडित्थ' इत्यत्र तु व्युत्पत्तिरहितस्य डित्थस्य-डित्थपदस्य प्रतिषेध इति समासरहितत्वेन शुद्धत्वे सत्यपि नावश्यमवस्थितो डित्थलक्षण. कोऽपि पदार्थो जीववद्विपक्षभूतोऽस्तीति ।

'नऽत्थि घडो त्ति च' इत्यादि पश्चार्धम् । 'नास्त्यात्मा' इति च योऽयमात्मनिषेधध्वनि स जीवास्तित्वे नान्तरीयक एव, यथा नास्त्यत्र घट इति शब्दोऽन्यत्र घटास्तित्वाविनाभाव्येव । प्रयोग -यस्य निषेध क्रियमाणो दृश्यते तत् क्वचिदस्त्येव, यथा घटादिकम्, निषिध्यते च भवता 'नास्ति जीव.' इति वचनात् जीव, तस्मादस्त्येव असौ, यश्च सर्वथा नास्ति तस्य निषेधो न दृश्यत एव, यथा खरविषाणकल्पाना पञ्चभूतातिरिक्तभूताना निषिध्यते च त्वया जीव, तस्मान्निषेध एवायं तत्सत्त्वसाधक इति ।

अनैकान्तिकोऽयं हेतु; असतोऽपि खरविषाणादेर्निषेधदर्शनादित्याशङ्क्याह—

असओ नऽत्थि निसेहो, संजोगाइपडिसेहओ सिद्धं ।
संजोगाइचउक्कं, पि सिद्धमत्थंतरे निययं ॥ १५७४ ॥

असत -अविद्यमानस्य नास्ति-न सम्भवत्येव निषेध इति सिद्धम् । कुत इत्याह संयोगादिप्रतिषेधाद्, आदिशब्दात्-समवायसामान्यविशेषपरिग्रह । एतदुक्तं भवति-इह यत्किंचित्क्वचित् देवदत्तादिक निषिध्यते तस्यान्यत्र सत एव विवक्षितस्थाने कस्मिंश्चित्संयोग-समवाय-सामान्य-विशेषलक्षणं चतुष्टयमेव निषिध्यते, न तु सर्वथैव देवदत्तादेर-

भाव प्रतिपाद्यते। तत्र 'नास्ति गृहे देवदत्त' इत्यादिपु गृहदेवदत्तादीनां सतामेव संयोगमात्र निषिध्यते, न तु तेपां सर्वथैवास्तित्वमपाक्रियते। तथा-'नास्ति खरविषाणम्' इत्यादिपु खरविषाणादीनां सतामेव समवायमात्र निराक्रियते । तथा-'नास्त्यन्यश्चन्द्रमा.' इत्यादिपु विद्यमानस्यैव चन्द्रमसोऽन्यचन्द्रनिषेधाच्चन्द्रसामान्यमात्र निषिध्यते, न तु सर्वथा चन्द्राभाव. प्रतिपाद्यते। तथा- न सन्ति घटप्रमाणा मुक्ता' इत्यादिपु घटप्रमाणतामात्ररूपो विशेषो मुक्तानां निषिध्यते, न तु मुक्ताभाव., ख्याप्यत इति, एव च सति 'नास्त्यात्मा' इत्यत्र विद्यमानस्यैवात्मनो यत्र क्वचन येन केनचित्सहसंयोगमात्रमेव त्वया निषेद्धव्यम्, यथा 'नास्त्यात्मा वपुषी' त्यादि, न तु सर्वथात्मन' सत्त्वमिति । अत्राह कश्चित्-ननु यदि यन्निषिध्यते तदस्ति, तर्हि मत्त्रिलोकेश्वरताप्यस्ति, युष्मदादिभिर्निषिध्यमानत्वात्, तथा—चतुर्णां समवायादिप्रतिपेधानां पञ्चमोऽपि प्रतिपेधप्रकारोऽस्ति त्वयैव निषिध्यमानत्वात्, तदयुक्तम्-त्रिलोक्येश्वरताविशेषमात्र भवतो निषिध्यते, यथा घटप्रमाणत्व मुक्तानां, न तु सर्वदैवेश्वरता, स्वशिष्यादीश्वरतायास्तवापिविद्यमात्वात् । तथा-प्रतिषेधस्यापि पञ्चसख्याविशिष्टत्वमपाक्रियते, न तु सर्वथा प्रतिषेधस्याभाव, चतु सख्याविशिष्टस्य तस्य सद्भावात् । ननु सर्वमप्यसंबद्धमिदम्, तथाहि-मत्त्रिलोकेश्वरत्व तावदसदेव निषिध्यते, प्रतिपेधस्यापि पञ्चसख्याविशिष्टत्वमविद्यमानमेव निवार्यते, तथा सयोग समवाय-सामान्य-विशेषाणामपि गृहदेवदत्तखरविषाणादिष्वसतामेव प्रतिषेध, इत्यत 'यन्निषिध्यते तदस्त्येव' इत्येतत्कथं न स्रवेत इत्याशङ्क्याह- 'संयोगाइचउक्कं पी' त्यादि, इदमुक्त भवति-देवदत्तादीनां संयोगादयो गृहादिष्वेवाऽसन्तो निषिध्यन्ते। अर्थान्तरे तु तेपा ते विद्यन्त एव; तथाहि-गृहेणैव सह देवदत्तस्य संयोगो न विद्यते, अर्थान्तरेण तु क्षेत्रहट्टग्रामादिना सह तस्यासौ समस्त्येव, गृहस्यापि देवदत्तेन सह संयोगो नास्ति, खट्वादिना तु सह तस्यासौ विद्यत एव, एवं विषाणस्यापि खर एव समवायो नास्ति गवादावस्त्येव, सामान्यमपि द्वितीयचन्द्राभावाच्चन्द्र एव नास्ति, अर्थान्तरे तु घटगवादावस्त्येव, घटप्रमाणत्वमपि मुक्तासु नास्ति, अर्थान्तरे तु-कूष्माण्डादावस्त्येव । त्रिलोकेश्वरताऽपि भवत एव नास्ति, तीर्थकरादावस्त्येव, पञ्चसंख्याविशिष्टत्वमपि प्रतिषेध नाऽस्ति, अर्थान्तरे त्वनुत्तरविद्यमानादावस्त्येव, इत्यनया विवक्षया ब्रूम -'यन्निषिध्यते तत्सामान्येनाऽस्त्येव, नत्वेव प्रतिजानीमहे-यद् यत्र निषिध्यते तत्तत्रैवास्ति, इति, येन व्यभिचार. स्यात् । वयमपि शरीरे जीव निषेधयामो नान्यत्रेति चेत् साधूक्तम्, अस्मत्समीहितस्य सिद्धत्वात्, जीवसिद्ध्यर्थमेव हि यतामहे वय, स चेत्सिद्ध, तर्हि तत्सिद्धयन्यथानुपपत्तेरेव तदाश्रय. सेत्स्यति किं तया चिन्तया ?। न च शरीरमन्तरेण जीवस्याश्रयान्तरमुपपद्यते, तत्रैव तदवस्थानलिङ्गोपलब्धे., न च वक्तव्यम्-शरीरमेव जीवो, 'जीवति, मृतो, मूर्च्छित' इत्यादिव्यवस्थानुपपत्ते इत्यादेरभिधास्यमानत्वादिति।

जीवसिद्धावेवोपपत्त्यन्तरमाह—

जीवो त्ति सत्थयमिणं, सुद्धत्तणओ घडाभिहाणं व ।
जेणऽत्थेण सदत्थं, सो जीवो अह मई होज्ज ॥ १५७५ ॥
अत्थो देहो च्चिय, से नो पज्जायवयणभेयाओ ।
नाणाइगुणो य जओ, भणिओ जीवो न देहो त्ति । १५७६।

जीव इत्येतद्वचन सार्थकमिति प्रतिज्ञा, व्युत्पत्तिमत्त्वे सति शुद्धपदत्वात्, इह यद् व्युत्पत्तिमत्त्वे सति शुद्धपद तदर्थवद् दृष्ट, यथा घटादिकं, तथा च जीवपदं, तस्मात्सार्थकं, यत्तु सार्थक न भवति तद्व्युत्पत्तिमच्छुद्धपदं च न भवति, यथा डित्थादिकं, खरविषाणादिक च, न च तथा जीवपदं, तस्मात्सार्थकम् । यद्व्युत्पत्तिमन्न भवति तच्छुद्धपदमपि सद् न सार्थकम्। यथा डित्थादिपदम्, इति हेतोरनैकान्तिकतापरिहारार्थं व्युत्पत्तिमत्त्वविशेषणं द्रष्टव्यम्। यदपि शुद्धपदं न भवति किं तु सामासिकं, तदपि व्युत्पत्तिमत्त्वे सत्यपि सार्थकं न भवति, यथा खरविषाणादिकम्, इति शुद्धत्वविशेषणम्। अथ मन्यसे देह एवास्य जीवपदस्यार्थो न पुनरर्थान्तरम्, उक्तं च-" देह एवायमनुप्रयुज्यमानो दृष्टो, यथैष जीव, एनं न हिनस्ति " इति अतो देह एवास्यार्थो युक्त इति। तदेतन्न, कुत ? इत्याह-देहजीवयो. पर्यायवचनभेदात्, यत्र हि पर्यायवचनभेदस्तत्रान्यत्वं दृष्टम्, यथा घटाकाशयो तत्र घटकुटकुम्भकलशादयो घटस्य पर्याया, नभोव्योमान्तरिक्षाऽऽकाशादयस्तु आकाशपर्याया। प्रस्तुते च जीवो जन्तुरसुमान्प्राणी सत्त्वो भूत इत्यादयो जीवपर्याया.; शरीरं वपु. कायो देह कलेवरमित्यादयस्तु शरीरपर्यायाः। पर्यायवचनभेदेऽपि च वस्त्वेकत्वे सर्वैकत्वप्रसङ्गोऽत्र बाधकम्। यत्पुनरिदमुक्तम्-" देह एवायमनुप्रयुज्यमानो दृष्ट " इत्यादि तच्छरीरसहचरणावस्थानादित शरीरे जीवोपचार क्रियते । किं च-इत्थमपि श्रूयत एव-'गत स जीव, दह्यतामिद शरीरम्' इति। किं च— 'नाणाइ' इत्यादि, यस्माच्च ज्ञानादिगुणयुतो जन्तु, जडश्च देह, तत्कथं देह एव जीव । प्रागिहैव चोक्तम्-न ज्ञानादिगुणो देह, मूर्तिमत्त्वाद्, घटवत्; तथा-देहेन्द्रियातिरिक्त आत्मा, तदुपरमेऽपि तदुपलब्धार्थानामनुसरणात्, वातायनपुरुषवदिति।

तदद्याप्यप्रतिबुध्यमाने इन्द्रभूतौ भगवानाह—

जीवोऽत्थि वओ सच्चं, मव्वयणाओऽवसेसवयणं व।
सव्वण्णुवयणओ वा, अणुमयसव्वण्णुवयणं व।१५७७।

'जीवोऽस्ति' इत्येतद्वच सत्यं, मद्वचनत्वात्, भवत्संशयविषयाद्यवशेषवचनवत्, यच्च सत्यं न भवति तद् *मदीयवचनमपि न भवति, यथा कूटसाक्षिवचनम्*। अथ वा-सत्य 'जीवोऽस्ति' इतिवचनं सर्वज्ञवचनत्वाद्भवदनुमतसर्वज्ञवचनवदिति।

यदि वा—

भयरागदोसमोहा-भावाओ सच्चमणइवाइं च ।
सव्वं चिय मे वयणं, जाणयमज्झत्थवयणं व ॥१५७८॥

सर्वमपि मद्वचन सत्यम् अनतिपाति च बोद्धव्य, भयरागद्वेषाज्ञानरहितत्वात् इह यद्भयादिरहितस्य वचन त-

त्तस्यं दृष्टम्, यथा मार्गज्ञस्य भयरहितस्य प्रष्टरि राग-द्वेषरहितस्य मार्गोपदेशवचनम्, तथा च मद्वच., त-स्मात्सत्यमनतिपाति चेति ।

अत्र गौतममाशङ्क्य भगवानुत्तरमाह—

कह सव्वरणु त्ति मई, जेणाहं सव्व संसयच्छेई ।

पुच्छसु व जं न जाणसि,जेण व ते पच्चओ होज्जा ।१५७९।

कथं नाम 'त्वं सर्वज्ञ' इति ते मति ? एवं त्वं मन्यसे, तथा भयरागद्वेषमोहाभावश्चासिद्ध इति मन्यसे, तदयुक्तम्, येनाहं सर्वसंशयच्छेदी, यश्च सर्वसंशयच्छेत्ता स सर्वज्ञ एव । दृष्टान्ताभावेनान्वयासिद्धेरनैकान्तिकोऽय हेतुरिति चेत्, न, सर्वसंशयच्छेतृत्वानुपपत्तिरेवेह विपर्यये बाधकं प्रमाणं, किमिहान्वयान्वेषणेन ? । यदि वा-पृच्छयतां यत्त्रैलोक्यान्तर्गतं, वस्तु त्वं न जानासि, येन सर्वज्ञत्वप्रत्यय-स्तव जायते । भयाद्यभावोऽपि तल्लिङ्गादर्शनात् मयि सिद्ध-एवेति स्वयमेव द्रष्टव्यम् । कदाचिदपि लिङ्गादर्शने लिङ्गिनो-ऽस्तित्वशङ्कायामतिप्रसङ्ग इति ।

अथोपसंहरन्नाह—

एवमुवओगलिंगं, गोयम ! सव्वप्पमाणमंसिद्धं ।

संसारीयरथावर-तसाइभेयं मुणे जीवं ॥ १५८० ॥

एवम्—उक्तेन प्रकारेण जीवम्—आत्मानं गौतम ! मुण-प्रतिपद्यस्वेति संबन्ध । कथंभूतम् ? । उपयोग एव लिङ्गं यस्य स तथा, सर्वैः प्रत्यक्षानुमानागमप्रमाणैः संसिद्धम्-प्रतिष्ठितम्, तथा संसारीतरस्थावरत्रसादिभेदम् । संसा-रिणश्च इतरे-सिद्धा । आदिशब्दाच्च सूक्ष्मबादरपर्याप्तापर्या-प्तादिभेदपरिग्रह इति । विशे० । ( जीवस्यैकत्वनिराकरण-युक्ति. 'एगावाइ' शब्दे तृतीयभागे ३४ पृष्ठे वक्ष्यते )

अथ "विज्ञानघन एवैतेभ्यो भूतेभ्य समुत्थाय तान्येवानु-विनश्यति; न प्रेत्य संज्ञाऽस्ति" इत्यादिवेदवाक्यार्थमनुभा-वयतस्त्यजतोऽपि मम संशयोऽतिविरोधिताहित इव पृष्ठं न मुञ्चति, तत्किं करोमि ? इति चेत्तदयुक्तं कुत ? इत्याह-

गोयम ! वेयपयाणं, इमाण अत्थं च तं न याणासि ।

जं विन्नाणघणो च्चिय, भूएहिंतो समुत्थाय ॥१५८८॥

मन्नसि मज्जंगेसु व, मयभावो भूयसमुदउब्भूओ ।

विणाणमेत्तमाया, भूएऽणुविणस्सइ सब्भूओ ।१५८९॥

अत्थि न य पेच्च सण्णा, जं पुव्वभवेऽभिहाणममुगो त्ति ।

जं भणियं न भवाओ, भवंतरं जाइ जीवो त्ति ॥१५९०॥

गौतम ! इत्यामन्त्रणम्, वेदपदानाम्-श्रुतिवाक्यानाममीषा "विज्ञानघन एवैतेभ्य" इत्यादीना चेतसि वर्तमानानामर्थं यथास्थितं त्वं न जानासि-नावबुध्यसे । किमिति ? अत आह-यद्यस्मात्त्वमात्माभिप्रायेणैवंभूतमिहार्थं मन्यसे-वि-कल्पयसीति संबन्ध । कथंभूतम् ? इत्याह-' विण्णाण-घणो च्चिय ' त्ति-पृथिव्यादिभूतानां विज्ञानलवसमुदायो विज्ञानघन ; पृथिव्यादिविज्ञानांशाना पिण्ड इत्यर्थ, अव-धारणं त्वात्मवादिपरिकल्पितस्य भूतसमुदायातिरिक्तस्य ज्ञानदर्शनादिगुणाश्रयस्यात्मनो निरासार्थम् । भूतेभ्य -पृ-थिव्यादिभ्य समुदितेभ्यो न तु व्यस्तेभ्यो, ज्ञानस्य तत्स-मुदायपरिणामाङ्गीकारादिति भाव, मद्याङ्गेषु-मद्यकारणेषु धातक्यादिषु मदभाव इव, कथंभूतो विज्ञानघन ? इत्याह-' भूयसमुदउब्भूओ विण्णाणमेत्तमाय ' त्ति-भूतसमुदाया-दुद्भूतस्तदैव जातो न तु परभवात्कश्चिदायातो, विज्ञान-मात्ररूप आत्मेत्यर्थ, समुत्थाय-उत्पद्य ततस्तान्येव-पृ-थिव्यादिभूतानि विनाशमश्नुवानान्यनु-लक्षीकृत्य भूय - पुनरपि स विज्ञानघनो-विज्ञानमात्ररूप. आत्मा विनश्यति, न त्वात्मवादिनामिवान्यभवं याति । अत एव न प्रेत्य भवे-परभवे संज्ञास्ति, यत्पूर्वभवे नारकादिजन्मन्यभिधानमा-सीत्तत्परभवे नास्ति, यदुत-अमुको नारको देवो वा भूत्वा इदानीं मनुष्य संवृत्त इत्यादि, नारकादे प्रागेव सर्वनाशं नष्टत्वादिति भाव । किमिह वाक्ये तात्पर्यवृत्त्या प्रोक्तं भवति ?, इत्याह-' जं भणियमि' त्यादि सर्वथात्मन समु-त्पद्य विनष्टत्वान्न भवाद्भवान्तरं कोऽपि यातीत्युक्तं भवति ।

यद्येवंभूतमस्य वेदवाक्यस्यार्थमहम—
वगच्छामि तत. किम् ? इत्याह—

गोयम ! पयत्थमेवं, मन्नंतो नऽत्थि मन्नसे जीवं ।

वक्कंतरेसु य पुणो, भणिओ जीवो जमत्थि त्ति ॥१५९१॥

अग्गिहवणाइकिरिया-फलं च तो संसयं कुणसि जीवे ।

मा कुरु न पयत्थोऽयं, इमं पयत्थं निसामेहि ॥१५९२॥

गौतम ! अस्य वाक्यस्य दर्शितरूपमेव पदार्थं मन्यमान-स्त्वं ' नास्ति ' इत्येव जीवं मन्यसे । यस्माच्च पुन. "न ह वै सशरीरस्य प्रियाप्रिययोरपहतिरस्ति, अशरीरं वा वसन्तं प्रियाप्रिये न स्पृशत " इत्यादिषु वेदवाक्यान्तरेषु ' अस्ति ' इत्येवं जीवो भणित -प्रतिपादित, तथा-" अग्निहोत्रं जु-हुयात् स्वर्गकाम " इत्यादिवचनादग्निहवनादिक्रियाया फलं च पारभविकं श्रूयते । न चेदं भवान्तरयायिनमात्मान-मन्तरेणोपपद्यते । अत किं जीव अस्ति, नास्ति वा इत्येवं संशयं जीवे करोषि त्वम्, तदमुं मा कृथा, यस्माद्-" वि-ज्ञानघन एव" इत्यादिवाक्यस्य नाऽयमर्थो य भवानध्यवस्य-ति, किं त्वमुम्-वक्ष्यमाण पदार्थमिह निशमय-आकर्णयेति ।

तमेव दर्शयति—

विण्णाणाओऽणण्णो, विण्णाणघणो त्ति सव्वओ वाऽवि ।

स भवइ भूएहिंतो, घडविण्णाणाइभावेण ॥ १५९३ ॥

ताइं चिय भूयाइं, सोऽणुविणस्सइ विणस्समाणाइं ।

अत्थंतरोवओगे, कमसो विण्णेयभावेणं ॥ १५९४ ॥

इह विज्ञानघनो जीव उच्यते । कथम् ? इति चेत्, उ-च्यते-विशिष्ट ज्ञान विज्ञान, ज्ञानदर्शनोपयोग इत्यर्थ, तेन विज्ञानेन सहानन्यभूतत्वादेकतया घनत्व निबिडत्वमा-पन्नो विज्ञानघनो जीव. उच्यते । यदि वा-'सव्वओ वा वि' त्ति-सर्वत.-प्रतिप्रदेशमनन्तानन्तविज्ञानपर्यायसंघातघ-टितत्वाद्विज्ञानघनो जीव । एवकारेण तु विज्ञानघन ए-वासौ, न तु नैयायिकादीनामिव ' स्वरूपेण निर्विज्ञानत्वा-ज्जडोऽसौ, बुद्धिस्तु तत्र समवेतैव ' इति नियम्यते । स भवति उत्पद्यत इति क्रिया । केभ्य ?, इत्याह-' भूएहिंतो ' चि-भूतानीह घटपटादिज्ञेयवस्तुरूपाण्यभिप्रतानि, तेभ्यो ज्ञेय-

भावेन परिणतेभ्य. । केन भवति ? इत्याह-'घटोऽयं' 'पटोऽयमि' त्यादिविज्ञानभावेन—घटादिज्ञानपर्यायेण । ततः किम् ? इत्याशङ्क्य तान्येवानुविनश्यतीत्यस्यार्थमाह--'ताइं चिय' त्यादि, तान्येव-ज्ञानालम्बनभूतानि-घटादिभूतानि क्रमश —कालक्रमेण व्यवधानस्थगनाऽन्यमनस्कत्वादिनाऽर्थान्तरोपयोगे सति विज्ञेयभावेन-ज्ञानविषयभावेन विनाशमश्नुवानानि अनु-पश्चात्-तद्बोधपर्यायेण, स विज्ञानघनो विनश्यतीति सबन्ध । ज्ञानपर्यायेण घटादिभ्यो ज्ञेयभूतेभ्यो जीव समुत्थाय कालक्रमाद् व्यवधानादिना अर्थान्तरोपयोगे सति ज्ञेयभावेन तान्येव विनाशमश्नुवानान्यनुविनश्यतीति तात्पर्यार्थ ।

किमित्थं सर्वथाऽयमात्मा विनश्यति ?, न इत्याह—

पुव्वावरविन्नाणो-वओगओ विगमसंभवसहाओ ।
विन्नाणसन्तईए, विणाणघणोऽयमविनासी ॥१५६५॥

एक एवायमात्मा त्रिस्वभाव । कथम् ? इत्युच्यते-अर्थान्तरोपयोगकाले पूर्वविज्ञानोपयोगेन तावदयं विगमस्वभावो-विनश्वररूप , अपरविज्ञानोपयोगतस्तु संभवस्वभाव उत्पादस्वरूप , अनादिकालप्रवृत्तसामान्यविज्ञानमात्रसंतत्या पुनरयं विज्ञानघनो जीव अविनष्ट एवावतिष्ठते। एवमन्यदपि सर्वं वस्तूत्पादव्ययध्रौव्यस्वभावमेवावगन्तव्यम् , न पुन किमपि सर्वथोत्पद्यते विनश्यति चेति ।

'न प्रेत्य संज्ञाऽस्ति' इत्येतद्व्याचिख्यासुराह—

न च पेच्च नाणसन्ना-ऽवतिट्ठए संपओवओगाओ ।
विन्नाणघणाभिक्खो. जीवोऽयं वेयपयभिहिओ॥१५६६॥

न च प्रत्येति-न चान्यवस्तूपयोगकाले प्राक्तनी ज्ञानसज्ञाऽस्ति कुत ? सांप्रतवस्तुविषयोपयोगात् । इदमुक्तं भवति-यदा घटोपयोगनिवृत्तौ पटोपयोग उत्पद्यते, तदा घटोपयोगसंज्ञा नास्ति, तदुपयोगस्य निवृत्तत्वात्, किं तु-पटोपयोगसंज्ञैवास्ति, तदुपयोगस्यैव तदानीमुत्पन्नत्वात् । तस्माद्विज्ञानघनाऽभिधानो वेदपदेष्वभिहितोऽयं जीव. । ततो गौतम ! प्रतिपद्यस्व एनमिति ।

पुनरपीह प्रेर्यमाशङ्क्य परिहरन्नाह—

एवं पि भूयधम्मो, नाणं तब्भावभावओ बुद्धी ।
तन्नो तदभावम्मि वि, जं नाणं वेयसमयम्मि ॥१५६७॥
अत्थमिए आइच्चे, चंदे संतासु अग्गिवायासु ।
किं जोइरयं पुरिसो, अप्पज्जोइ त्ति निद्दिट्ठो ॥ १५६८ ॥

'बुद्धी ति स्याद् बुद्धि प्रेरकस्य-एवमपि 'स भवइ भूयेहिंतो' इत्यादिना युष्मद्व्याख्यानप्रकारेणापीत्यर्थ , पृथिव्यादिभूतधर्म एव ज्ञान-भूतस्वभावात्मकमेव ज्ञानमिति भाव । कुत इत्याह-'तब्भावभावउ' त्ति-एतेभ्यो भूतेभ्य. समुत्थाय तान्येवानुविनश्यतीति वचनाद्भूतसद्भावे ज्ञानस्य भावात्; तदभावे चाभावादित्यर्थ, यस्य च भावे एव यद्भवति, अभावे च न भवति तत्तस्यैव धर्मो, यथा चन्द्रमसश्चन्द्रिका, तथा च ज्ञानमनुविद्धानि भूतान्वयव्यतिरेकौ , तस्मात्तद्भूतधर्म एव । तदयुक्तम् , विशिष्टमेव हि नीलपीतादिभूतग्राहकं ज्ञानं तदन्वयव्यतिरेकावनुविदधाति न तु सामान्यं ज्ञानमात्रम् , यस्माद् भूताभावेऽपि वेदलक्षणे समये सिद्धान्ते 'सामान्यज्ञानं भणितमेव' इति शेष. । केन वाक्येन इत्याह-'अत्थमिए' इत्यादि, अस्तमिते आदित्ये, याज्ञवल्क्यश्चन्द्रमस्यस्तमिते, शान्तेऽग्नौ, शान्तायां वाचि, किं ज्योतिरेवायं पुरुष., आत्मज्योतिः सम्राडिति होवाच, 'ज्योति' रिति-ज्ञानमाह । आदित्याऽस्तमयादौ किं ज्योति. ? इत्याह-'अयं पुरुष' इति, पुरुषः, आत्मेत्यर्थ. । अयं च कथभूत ?, इत्याह-'अप्पज्जोइ' त्ति-आत्मैव ज्योतिरस्य सोऽयमात्मज्योति -ज्ञानात्मक इति हृदयम् , निर्दिष्टो वेदविद्भि. कथित., ततो न ज्ञानं भूतधर्म्म इति स्थितम् ।

इतश्च न ज्ञानं भूतधर्म्म. । कुत ?, इत्याह—

तदभावे भावाओ, भावे चाभावओ न तद्धम्मो ।
जह घडभावाऽभावे, विवज्जयाओ पडो भिन्नो ॥१५६९॥

न भूतधर्म्मो ज्ञानम् , मुक्तावस्थायां भूताभावेऽपि भावात्, मृतशरीरादौ तद्भावेऽपि चाभावात् , यथा घटस्य धर्म्म पटो न भवति, किं तु तस्माद्भिन्न एव । कुतः ?, इत्याह-घटभावाभावे विपर्ययात्-घटभावेऽप्यभावात् , तदभावेऽपि च भावादित्यर्थ । विशे० । आ० म० । आव० । कल्प० । ( विशेषस्त्वत्र सम्मतितर्कग्रन्थादवसेय. )

( १३ ) अभौतिकत्वमात्मन —

( पञ्चभूताद् व्यतिरिक्तो गन्धरसोरूपस्पर्शशब्दरूप भिन्नो न कश्चित् पदार्थ )—

एए पंच महब्भूया, तेब्भो एगो त्ति आहिया ।
अह तेसिं विणासेणं, विणासो होइ देहिणो ॥ ८ ॥

'एए पञ्च महब्भूया' इत्यादि, एतानि-अनन्तरोक्तानि पृथिव्यादीनि पञ्चमहाभूतानि यानि तेभ्य. कायाकारपरिणतेभ्य. एक कश्चिच्चिद्रूपो भूताऽव्यतिरिक्त आत्मा भवति; न भूतेभ्यो व्यतिरिक्तोऽपर कश्चित्पर -परकल्पित परलोकानुयायी सुखदु.खभोक्ता जीवाख्य. पदार्थोऽस्तीत्येवमाख्यातवन्तस्ते, तथाहि-एव प्रमाणयन्ति-न पृथिव्यादिव्यतिरिक्त आत्मास्ति, तद्ग्राहकप्रमाणाभावात् , प्रमाण चात्र प्रत्यक्षमेव, नानुमानादिकम् , तत्रेन्द्रियेण साक्षादर्थस्य सबन्धाभावाद्व्यभिचारसंभव । सति च व्यभिचारसंभवे सदृशे च बाधासंभवे तल्लक्षणमेव दूषितं स्यादिति सर्वत्रानाश्वास. । तथाचोक्तम्—" हस्तस्पर्शादिवान्धेन, विषमे पथि धावता । अनुमानप्रधानेन, विनिपातो न दुर्लभ. " ॥ १ ॥ अनुमानं चात्रोपलक्षणमागमादीनामपि । साक्षादर्थसबन्धाभावाद्धस्तस्पर्शेनेव प्रवृत्तिरिति । तस्मात्प्रत्यक्षमेवैकं प्रमाणं, तेन च भूतव्यतिरिक्तस्यात्मनो न ग्रहणम् । यत्तु चैतन्यं तेषूपलभ्यते तद्भूतेष्वेव कायाकारपरिणतेष्वभिव्यज्यते मद्याङ्गेषु समुदितेषु मदशक्तिवदिति । तथा न भूतव्यतिरिक्तं चैतन्यं तत्कार्यत्वाद् घटादिवदिति तदेवं भूतव्यतिरिक्तस्यात्मनोऽभावाद् भूतानामेव चैतन्याभिव्यक्तिर्जलस्य बुद्बुदाभिव्यक्तिवदिति। केषाचिल्लोकायतिकानामाकाशस्यापि भूतत्वेनाभ्युपगमात्पञ्चकोपन्यासो न दोषायेति । ननु च यदि भूतव्य-

तिरिक्तोऽपरः कश्चिदात्माख्यः पदार्थो न विद्यते कथं तर्हि मृत इति व्यपदेश इत्याशङ्क्याह-अथैषां कायाऽऽकारपरिणतौ चैतन्याभिव्यक्तौ सत्यां तदूर्ध्वं तेषामन्यतमस्य विनाशे-अपगमे वायोस्तेजसश्च, उभयोर्वा देहिनो देवदत्ताख्यस्य विनाशः-अपगमो भवति, ततश्च-मृत इति व्यपदेशः प्रवर्त्तते, न पुनर्जीवापगम इति भूताऽव्यतिरिक्तचैतन्यवादिपूर्वपक्ष इति ।

अत्र प्रतिसमाधानार्थं निर्युक्तिकृदाह-

**पंचरहं संजोए, अरणगुणाणं च चेयणाइगुणो ।**
**पंचिंदियठाणाणं, ण अरणमुणियं मुणइ अणो ॥३३॥**

'पंचरहं संजोए' इत्यादि, पञ्चानां पृथिव्यादीनां भूतानां संयोगे-कायाकारपरिणामे चैतन्यादिकः । आदिशब्दात् भाषाचङ्क्रमणादिकश्च गुणो न भवतीति प्रतिज्ञा, अन्यादयस्त्वत्र हेतुत्वेनोपात्ता । दृष्टान्तस्त्वभ्यूह्य, सुलभत्वात्तस्य नोपादानम् । तत्रेदं चार्वाकः प्रष्टव्यः-यदेतद्भूतानां संयोगे चैतन्यमभिव्यज्यते तत्किं तेषां संयोगेऽपि स्वातन्त्र्य एव, आहोस्वित् परस्परापेक्षया पारतन्त्र्ये इति । किंचातः ?, न तावत्स्वातन्त्र्ये, यत आह-'अन्नगुणाणं चे'ति-चैतन्यादन्ये गुणा येषां तान्यन्यगुणानि, तथाहि-आधारकाठिन्यगुणा पृथिवी, द्रवगुणा आपः, पक्तृगुणं तेजः, चलनगुणो वायुः, अवगाहदानगुणमाकाशमिति । यदि वा-प्रागभिहिता गन्धादयः पृथिव्यादीनामेकैकपरिहान्याऽन्ये गुणाश्चैतन्यादिति, तदेव पृथिव्यादीन्यन्यगुणानि, चशब्दो द्वितीयविकल्पवक्ष्यमाणसूचनार्थः, चैतन्यगुणे साध्ये पृथिव्यादीनामन्यगुणानां सतां चैतन्यगुणस्य पृथिव्यादीनामेकैकस्याप्यभावात्तत्समुदायाच्चैतन्याख्यो गुणः सिद्ध्यतीति, प्रयोगस्तत्र भूतसमुदायः स्वातन्त्र्ये सति धर्मित्वेनोपादीयते, न तस्य चैतन्याख्यो गुणोऽस्तीति साध्यो धर्मः, पृथिव्यादीनामन्यगुणत्वात्, यो योऽन्यगुणानां समुदायस्तत्र तत्राऽपूर्वगुणोत्पत्तिर्न भवतीति, यथा सिकतासमुदाये स्निग्धगुणस्य तैलस्य नोत्पत्तिरिति, घटपटसमुदाये वा न स्तम्भाद्याविर्भाव इति, दृश्यते च काये चैतन्यं, तदात्मगुणो भविष्यति, न भूतानामिति । अस्मिन्नेव साध्ये हेत्वन्तरमाह-'पंचिंदियठाणाणं' ति-पञ्च च तानि स्पर्शनरसनघ्राणचक्षुःश्रोत्राख्यानीन्द्रियाणि तेषां स्थानानि-अवकाशास्तेषां चैतन्यगुणाभावात्र भूतसमुदाये चैतन्यम् । इदमत्र हृदयम्-लोकायतिकानां हि अपरस्य द्रष्टुरनभ्युपगमादिन्द्रियाण्येव द्रष्टृणि । तेषां च यानि स्थानान्युपादानकारणानि तेषामचिद्रूपत्वान्न भूतसमुदाये चैतन्यमिति, इन्द्रियाणां चामूनि स्थानानि । तद्यथा-श्रोत्रेन्द्रियस्याकाशं सुषिरात्मकत्वात्, घ्राणेन्द्रियस्य पृथिवी तदात्मकत्वात्, चक्षुरिन्द्रियस्य तेजस्तद्रूपत्वात्, एवं रसनेन्द्रियस्याऽऽपः, स्पर्शनेन्द्रियस्य वायुरिति । प्रयोगश्चात्र-नेन्द्रियाण्युपलब्धिमन्ति तेषामचेतनगुणाऽऽरब्धत्वात्, यद्यदचेतनगुणाऽऽरब्धं तत्तदचेतनम्, यथा घटपटादीनि । एवमपि च भूतसमुदाये चैतन्याभाव एव साधितो भवति, पुनर्हेत्वन्तरमाह-'ण अरणमुणियं मुणइ अरणो' त्ति-इन्द्रियाणि प्रत्येकं भूतात्मकानि तान्येवापरस्य द्रष्टुरभावाद् द्रष्टृणि तेषां च प्रत्येकं स्वविषयग्रहणादन्यविषये चाप्रवृत्तेर्नान्यदिन्द्रियज्ञातमन्यदिन्द्रियं जानातीत्यतो मया पञ्चापि विषया ज्ञाता इत्येवमात्मकः सकलनाप्रत्ययो न प्राप्नोति, अनुभूयते चायं, तस्मादेकेनैव द्रष्ट्रा भवितव्यम्, तस्यैव च चैतन्यं न भूतसमुदायस्येति, प्रयोगः पुनरेवम्-न भूतसमुदाये चैतन्यं, तदारब्धेन्द्रियाणां प्रत्येकविषयग्राहित्वे सति संकलनाप्रत्ययाभावात्, यदि पुनरन्यगृहीतमप्यन्यो गृह्णीयाद्देवदत्तगृहीतं यज्ञदत्तेनापि गृह्येत नचैतद् दृष्टमिष्टं चेति । ननु च स्वातन्त्र्यपक्षेऽयं दोषः । यदा पुनः परस्परसापेक्षाणां संयोगपारतन्त्र्याभ्युपगमेन भूतानामेव समुदितानां चैतन्याख्यो धर्मः संयोगवशादाविर्भवति, यथा किण्वोदकादिषु मद्याङ्गेषु समुदितेषु प्रत्येकमविद्यमानापि मदशक्तिरिति तदा कुतोऽस्य दोषस्यावकाश इति । अत्रोत्तरम्-गाथोपात्तचशब्दाऽऽक्षिप्तमभिधीयते-यत्तावदुक्तं यथा भूतेभ्यः परस्परसव्यपेक्षसंयोगभाग्भ्यश्चैतन्यमुत्पद्यते, तत्र विकल्पयामः-किमसौ संयोगः संयोगिभ्यो भिन्नः अभिन्नो ? वा भिन्नश्चेत्षष्ठभूतप्रसङ्गो नचान्यत्पञ्चभूतव्यतिरिक्तसंयोगाख्यभूतग्राहकं भवतां प्रमाणमस्ति प्रत्यक्षस्यैवैकस्याभ्युपगमात्तेन च तस्याग्रहणात् प्रमाणान्तराभ्युपगमे च तेनैव जीवस्यापि ग्रहणमस्तु तथाऽभिन्नो भूतेभ्यो भूतानामेव संयोगस्तत्राप्येतच्चिन्तनीयं किं भूतानि प्रत्येकं चेतनावन्ति, अचेतनावन्ति वा, यदि चेतनावन्ति तदा एकेन्द्रियसिद्धिस्तदा समुदायस्य पञ्चप्रकारचैतन्यापत्तिः, अथ-अचेतनानि तत्रोक्तो दोषो न हि यद्यत्र प्रत्येकमविद्यमानं तत्समुदाये भवदुपलभ्यते सिकतासु तैलवदित्यादिना । यदप्यत्रोक्तम्-यथा मद्याङ्गेष्वविद्यमानाऽपि प्रत्येकं मदशक्तिः समुदाये प्रादुर्भवतीति । तदप्ययुक्तम्, यतस्तत्र किण्वादिषु या च यावती शक्तिरुपलभ्यते, तथाहि-किण्वे बुभुक्षापनयनसामर्थ्यं भ्रमिजननसामर्थ्यं चोदकस्य तृडपनयनसामर्थ्यमित्यादिनेति, भूतानां प्रत्येकं चैतन्याऽनभ्युपगमे दृष्टान्तदार्ष्टान्तिकयोरसाम्यम् । किं च-भूतचैतन्याभ्युपगमे मरणाऽभावो, मृतकायेऽपि पृथिव्यादीनां भूतानां सद्भावात्, नैतदस्ति, तत्र-मृतकाये वायोस्तेजसो वा अभावान्मरणसद्भाव इत्यशिक्षितस्योल्लापः । तथाहि-मृतकाये शोफोपलब्धेर्न वायोरभावः, कोथस्य च पक्तिस्वभावस्य दर्शनान्नाग्नेरिति, अथ सूक्ष्मः कश्चिद्वायुविशेषो-ऽग्निर्वा ततोऽपगत इति मतिरित्येव च जीव एव नामान्तरेणाभ्युपगतो भवति, यत् किंचिदेतत् । तथा न भूतसमुदायमात्रेण चैतन्याविर्भावः । पृथिव्यादिष्वेकत्र व्यवस्थापितेष्वपि चैतन्यानुपलब्धेः । अथ कायाकारपरिणतौ सत्यां तदभिव्यक्तिरिष्यते, तदपि न यतो लेप्यमयप्रतिमायां समस्तभूतसद्भावेऽपि जडत्वमेवोपलभ्यते । तदेवमन्वयव्यतिरेकाभ्यामालोच्यमानो नायं चैतन्याख्यो गुणो भूतानां भवितुमर्हति, समुपलभ्यते चायं शरीरेषु । तस्मात् पारिशेष्यात् जीवस्यैवायमिति स्वदर्शनपक्षपात विहायाङ्गीक्रियतामिति । यच्चोक्तं प्राक् न पृथिव्यादिव्यतिरिक्त आत्मास्ति, तद्ग्राहकप्रमाणाभावात्, प्रमाणं चात्र प्रत्यक्षमेवैकमित्यादि, तत्र प्रतिविधीयते-यत्तावदुक्तम्- प्रत्यक्षमेवैकं

प्रमाणं नानुमानादिकम् ' इत्येतदनुपासितगुरोर्वचः । तथाहि—अर्थाऽविसंवादकं प्रमाणमित्युच्यते, प्रत्यक्षस्य च प्रामाण्यमेवं व्यवस्थाप्यते। काश्चित्प्रत्यक्षव्यक्तीर्धर्मित्वेनोपादाय प्रमाणयति—प्रमाणमेता अर्थाऽविसंवादकत्वादनुभूतप्रत्यक्षव्यक्तिवत् । न च ताभिरेव प्रत्यक्षव्यक्तिभिः स्वसंविदितनाभिः परं व्यवहारयितुमयमीशस्तासां स्वसंविदितत्वान्मूकत्वाच्च । प्रत्यक्षस्य नानुमानं प्रमाणमित्यनुमानेनैवानुमाननिरासं कुर्वंश्चार्वाकः कथं नोन्मत्तः स्यात् ?, एव ह्यसौ तदप्रामाण्यं प्रतिपादयेत् । यथा नानुमानं प्रमाणं विसंवादकत्वादनुभूतानुमानव्यक्तिवदित्येतच्चानुमानम्, अथ परप्रसिध्यैतदुच्यते तदप्ययुक्तम्, यतस्तत्परप्रसिद्धमनुमानं भवतः प्रमाणम्, अप्रमाणं वा ? । प्रमाणं चेत्कथमनुमानमप्रमाणमित्युच्यते, अथाऽप्रमाणं कथमप्रमाणेन सता तेन परः प्रत्याय्यते ?, परेण तस्य प्रामाण्येनाभ्युपगतत्वादिति चेत्तदप्यसांप्रतम्, यदि नाम परो मौढ्यादप्रमाणमेव प्रमाणमित्यध्यवस्यति किं भवताऽतिनिपुणेनापि तेनैवाऽसौ प्रतिपाद्यते ?, यो ह्यज्ञो गुडमेव विषमिति मन्यते किं तस्य मारयितुकामेनापि बुद्धिमता गुड एव दीयते ?, तदेवं प्रत्यक्षानुमानयोः प्रामाण्याप्रामाण्ये व्यवस्थापयतो भवतोऽनिच्छतोऽपि बलादायातमनुमानस्य प्रामाण्यम् । तथा स्वर्गापवर्गदेवतादेः प्रतिषेधं कुर्वन् भवान् केन प्रमाणेन करोति ?, न तावत्प्रत्यक्षेण प्रतिषेधं कर्तुं पार्यते, यतस्तत्प्रत्यक्षं प्रवर्त्तमानं वा तन्निषेधं विदध्यान्निवर्त्तमानं वा ?।, न तावत्प्रवर्तमानं, तस्याऽभावविषयत्वविरोधात्, नापि निवर्तमानम्, । यतस्तच्च नास्ति तेन च प्रतिपत्तिरित्यसङ्गतम् । तथाहि-व्यापकविनिवृत्तौ व्याप्यस्यापि निवृत्तिरिष्यते, न चार्वाकदर्शिनप्रत्यक्षेण समस्तवस्तुव्याप्तं संभाव्यते, तत्कथं प्रत्यक्षविनिवृत्तौ पदार्थव्यावृत्तिरिति ? । तदेवं स्वर्गाऽऽदेः प्रतिषेधं कुर्वता चार्वाकेणाऽवश्यं प्रमाणान्तरमभ्युपगतम् । तथाऽन्याभिप्रायविज्ञानाभ्युपगमादत्र स्पष्टमेव प्रमाणान्तरमभ्युपगतम् । अन्यथा कथं परावबोधाय शास्त्रप्रणयनमकारि चार्वाकेणेत्यलमतिप्रसङ्गेन । तदेवं प्रत्यक्षादन्यदपि प्रमाणमस्ति तेनात्मा सेत्स्यति किं पुनस्तदिति चेत्, उच्यते-अस्त्यात्मा, असाधारणतद्गुणोपलब्धेः, चक्षुरिन्द्रियवत् । चक्षुरिन्द्रियं हि न साक्षादुपलभ्यते । स्पर्शनादीन्द्रियाऽसाधारणरूपविज्ञानोत्पादनशक्त्या त्वनुमीयते। तथाऽऽत्मापि पृथिव्याद्यसाधारणचैतन्यगुणोपलब्धेरस्तीत्यनुमीयते, चैतन्यं च तस्यासाधारणगुण इत्येतत्पृथिव्यादिभूतसमुदाये चैतन्यस्य निराकृतत्वादवसेयम् । तथाऽस्त्यात्मा समस्तेन्द्रियोपलब्धार्थसंकलनाप्रत्ययसद्भावात् । पञ्चगवाक्षान्तर्गतोपलब्धार्थसंकलनाविधाय्येकदेवदत्तवत् , तथाऽत्माऽर्थद्रष्टा नेन्द्रियाणि । तद्विगमेऽपि तदुपलब्धार्थस्मरणात्, गवाक्षोपरमेऽपि तद्द्वारोपलब्धार्थस्मर्तृदेवदत्तवत् । तथाऽर्थापत्त्याप्यात्मास्तीत्यवसीयते, तथाहि—सत्यपि पृथिव्यादिभूतसमुदाये लेप्यकर्मादौ न सुखदुःखेच्छाद्वेषप्रयत्नादिक्रियाणां सद्भाव इत्यतः सामर्थ्यादवसीयते। अस्ति भूतातिरिक्तः कश्चित्सुखदुःखेच्छादीनां क्रियाणां समवायिकारणं पदार्थः, स चात्मेति, तदेवं प्रत्यक्षानुमानादिपूर्विकाऽन्याप्यर्थापत्तिरभ्यूह्या । तस्यास्त्विदं लक्षणम्—" प्रमाणषट्कविज्ञातो, यत्राऽर्थो नाऽन्यथाभवन् । अदृष्टं कल्पयेदन्यं, सार्थापत्तिरुदाहृता " ॥१॥ तथाऽऽगमादप्यस्तित्वमवसेयम् । स चायमागमः-" अत्थि मे आया उववाइए" इत्यादि । यदि वा-किमत्राऽपरप्रमाणचिन्तया ?, सकलप्रमाणज्येष्ठेन प्रत्यक्षेणैवात्माऽस्तीत्यवसीयते । तद्गुणस्य ज्ञानस्य प्रत्यक्षत्वात् । ज्ञानगुणस्य च गुणिनोऽनन्यत्वात् प्रत्यक्ष एवाऽऽत्मा, रूपादिगुणप्रत्यक्षत्वेन पटाऽऽदिप्रत्यक्षत्ववत्, तथाहि-अहं सुखी अहं दुःखी एवमाद्यहंप्रत्ययग्राह्यश्चात्मा प्रत्यक्षः, अहंप्रत्ययस्य स्वसंविद्रूपत्वादिति । ममेदं शरीरं पुराणं कर्मेति च शरीराद्भेदेन निर्दिश्यमानत्वादित्यादीन्यन्यान्यपि प्रमाणानि जीवसिद्धावभ्यूह्यानीति । तथा यदुक्तम्-न भूतव्यतिरिक्तं चैतन्यं तत्कार्यत्वात् घटादिवदिति, एतदप्यसमीचीनम्, हेतोरसिद्धत्वात्, तथाहि-न भूतानां कार्यं चैतन्यं, तेषामतद्गुणत्वात् भूतकार्यचैतन्ये संकलनाप्रत्ययासंभवाच्च इत्यादिनोक्तप्रायम्, अतोऽस्त्यात्मा भूतव्यतिरिक्तो ज्ञानाधार इति स्थितम् । ननु च किं ज्ञानाधारभूतेनात्मना ज्ञानाद्भिन्नेनाश्रितेन ?, यावता ज्ञानादेव सर्वसकलनाप्रत्ययादिकं सेत्स्यति, किमात्मनान्तर्गडुकल्पेनेति । तथाहि-ज्ञानस्यैव चिद्रूपत्वाद् भूतैरचेतनैः कायाकारपरिणतैः सह संबन्धे सति सुखदुःखेच्छाद्वेषप्रयत्नक्रिया प्रादुष्यन्ति तथा संकलनाप्रत्ययो भवान्तरगमनं चेति । तदेव व्यवस्थिते किमात्मना कल्पितेनेति ?, अत्रोच्यते-न ह्यात्मानमेकमाधारभूतमन्तरेण संकलनाप्रत्ययो घटते, तथाहि-प्रत्येकमिन्द्रियैः स्वविषयग्रहणे सति परविषये चाप्रवृत्तेरेकस्य च परिच्छेत्तुरभावात् । मया पञ्चापि विषया परिच्छिन्ना इत्यात्मकस्य संकलनाप्रत्ययस्याभाव इति । आलयविज्ञानमेकमस्तीति चेत्, एव सत्यात्मन एव नामान्तरं भवता कृतं स्यात् । न च ज्ञानाख्यो गुणो गुणिनमन्तरेण भवतीत्यवश्यम्-आत्मना गुणिना भाव्यमिति। सूत्र० १ श्रु० १ अ० । सूक्ष्मान्तरितदूरार्थाः कस्यचित्प्रत्यक्षा अनुमेयत्वात् क्षितिधरकन्धराधिकरणधूमध्वजवत् । एवं चन्द्रसूर्योपरागादिसूचकज्योतिर्ज्ञानाविसंवादान्यथाऽनुपपत्तिप्रभृतयोऽपि हेतवो वाच्या । तदेवमाप्तेन सर्वविदा प्रणीत आगमः प्रमाणमेव । तदप्रामाण्यं हि प्रणायकदोषनिबन्धनम् । " रागाद्वा द्वेषाद्वा, मोहाद्वा वाक्यमुच्यते ह्यनृतम् । यस्य तु नैते दोषा-स्तस्यानृतकारणं किं स्यात् " ॥ १ ॥ इति वचनात् । प्रणेतुश्च निर्दोषत्वमुपपादितमेव । इति सिद्ध आगमादप्यात्मा-" एगे आया " इत्यादिवचनात् । तदेवं प्रत्यक्षानुमानागमैः सिद्धः प्रमाता । स्या० १७ श्लोक।

प्रमाता प्रत्यक्षादिप्रसिद्ध आत्मा ॥५५॥

अतति-परापरपर्यायान सततं गच्छतीत्यात्मा-जीवः । रत्ना० ७ परि० । ( अस्य टीका रत्नाकरावतारिकाग्रन्थादवसेया ) ( शून्यवादनिराकरणपूर्विकाऽऽत्मव्यवसिद्धिः विस्तरतः स्याद्वादमञ्जरीग्रन्थादवसेया )

१-अन्यथा स्थितस्य वस्तुनः अन्यथा कथनम्-विसंवाद ।

( १४ ) साम्प्रतं कस्या दिश आगतोऽहमिति प्रकृतमनुस्रियते। यो हि 'सोऽहम्' इत्यनेनाहङ्कारज्ञानेनात्मोल्लेखिन पूर्वादिदिश आगतमात्मानमवच्छिन्नसन्ततिपतितं द्रव्यार्थतया नित्यम्; पर्यायार्थतया त्वनित्यं जानाति स परमार्थेन आत्मवादीति । सूत्रकृद्दर्शयति—

अत्थि मे आया उववाइये, जो इमाओ दिसाओ अणुदिसाओ वा अणुसंचरइ, सव्वाओ दिसाओ अणुदिसाओ, सोहं। (सूत्र-४×) आचा० १ श्रु०१ अ०१ उ०।

( अस्य सूत्रस्य व्याख्या चतुर्थभागात्-२५२६ पृष्ठे करिष्यमाणादवगन्तव्या )

से आयावादी, लोगावादी, कम्मावादी, किरियावादी। ( सूत्र-५ )

'से' इति-यो भ्रान्तः पूर्वे नारकतिर्यङ्नरामराद्यासु भावदिक्षु पूर्वाद्यासु च प्रज्ञापकदिक्षु अक्षणिकामूर्तादिलक्षणोपेतमात्मानमवैति स इत्थभूत आत्मवादीति आत्मानं वदितु शीलमस्येति। य पुनरेवभूतमात्मानं नाभ्युपगच्छति। सोऽनात्मवादी; नास्तिक इत्यर्थ । योऽपि सर्वव्यापिनं नित्य क्षणिकं वाऽऽत्मानमभ्युपैति; सोऽप्यनात्मवाद्येव यत सर्वव्यापिनो निष्क्रियत्वाद्भवान्तरसंक्रान्तिर्न स्यात्सर्वथा नित्यत्वेऽपि अप्रच्युतानुत्पन्नस्थिरैकस्वभावं नित्यमिति कृत्वा मरणाऽभावेन भवान्तरसक्रान्तिरेव न स्यात्, सर्वथा क्षणिकत्वेऽपि। निर्मूलविनाशात् सोऽहमित्यनेन पूर्वोत्तरानुसंधानं न स्यात्। य एव चात्मवादी स एव परमार्थता लोकवादी । यतो-लोकयतीति लोक.-प्राणिगणस्तं वदितु शीलमस्येत्यनेन चात्माद्वैतवादिनिरासेनात्मवहुत्वमुक्तम्, यदि वा-लोकाऽऽपतीति लोक -चतुर्दशरज्ज्वात्मक, प्राणिगणो वा, तत्राऽऽपतितुं शीलमस्येत्यनेन च विशिष्टाकाशखण्डस्य लोकसंज्ञा वदिता, तत्र च जीवास्तिकायस्य संभवेन जीवानां गमनागमनमावेदितं भवति। य एव च दिगादिगमनपरिज्ञानेनात्मवादी लोकवादी च संवृत्त स एवासुमान् कर्मवादी कर्म-ज्ञानावरणीयादि तद्वदितुं शीलमस्य यतो हि प्राणिनो मिथ्यात्वाविरतिप्रमादकषाययोगै पूर्वे गत्यादियोग्यानि कर्माण्याददते, पश्चात्तासु तासु विरूपरूपासु योनिषूत्पद्यन्ते । कर्म च प्रकृतिस्थित्यनुभावप्रदेशात्मकमवसेयमिति । अनेन च कालयदृच्छानियतीश्वरात्मवादिनो निरस्ता द्रष्टव्या । तथा य एव कर्मवादी, स एव क्रियावादी। यत. कर्म योगनिमित्त वध्यते, योगश्च-व्यापार, स च क्रियारूप, अत कर्मण. कार्यभूतस्य वदनात्तत्कारणभूताया क्रियाया अप्यसावेव परमार्थतो वादीति क्रियायाश्च कर्मनिमित्तत्व प्रसिद्धमागमे, स चायमागम - "जाव णं भंते ! एस जीवे सया समियं एयइ वेयइ चलति फंदति घट्टति तिप्पति जाव तं तं भाव परिणमति ताव(च)च णं अट्ठविहवधए वा सत्तविहवंधए वा छव्विहवधए वा एकविहवधए वा णो ण अवधए" त्ति। एव च कृत्वा य एव कर्मवादी स एव क्रियावादीति । अनेन च साङ्ख्याभिमतमात्मनोऽक्रियावादित्वं निरस्तं भवति।

सांप्रतं पूर्वोक्तां क्रियामात्मपरिणतिरूपां विशिष्टकालाभिधायिना तिङ्प्रत्ययेनाभिदधदहंप्रत्ययसाधर्म्यात्मनस्तद्भव एवावाधिमन पर्यायकेवलज्ञानजातिस्मरणव्यतिरेकेणैव त्रिकालसस्पर्शिना मतिज्ञानेन सद्भावावगमं दर्शयितुमाह—

अकरिस्सं च हं कारवेसुं च हं करओ आवि समणुन्ने भविस्सामि। ( सूत्र-६ )

इह भूतवर्तमानभविष्यत्कालापेक्षया कृतकारितानुमतिभिर्नवविकल्पा सम्भवन्ति, ते चामी-अहमकार्षमचीकरमहं कुर्वन्तमन्यमनुज्ञासिषमहं करोमि कारयाम्यनुजानाम्यहमिति करिष्याम्यहं कारयिष्याम्यहं कुर्वन्तमन्यमनुज्ञास्याम्यहमिति, एतेषां च मध्ये आद्यन्तौ सूत्रेणैवोपात्तौ तदुपादानाच्च तन्मध्यपातिनां सर्वेषां ग्रहणम्, अस्यैवार्थस्याविष्करणाय द्वितीयो विकल्प । "कारवेसुं चऽहमिति" सूत्रेणोपात्त', एते च चकारद्वयोपादानादपिशब्दोपादानाच्च मनोवाक्कायैश्चिन्त्यमाना सप्तविंशति २७ भेदा भवन्ति, अयमत्र भावार्थ -अकार्षमहमित्यत्राहमित्यनेनात्मोल्लेखिना विशिष्टक्रियापरिणतिरूप आत्मा अभिहितस्तत्रश्चायं भावार्थो भवति-स एवाऽहं येन मयास्य देहादे पूर्वे यौवनावस्थायामिन्द्रियवशंगन विषयविषमोहितान्धचेतसा तत्तदकार्यानुष्ठानपरायणेनानुकूल्यमनुष्ठितम्। उक्तञ्च-" विहवावलेवनडिएहिं, जाइ कीरति जोव्वणमएणं । वयपरिणामे सरियाइ, ताइ हियए खुडुक्कति" ॥ १ ॥ तथा अचीकरमहमित्यनेन परोपकार्यादौ प्रवर्त्तमानो मया प्रवृत्तिं कारित', तथा कुर्वन्तमन्यमनुज्ञातवानित्येवं कृतकारितानुमतिभिर्भूतकालाभिधानं, तथा करोमीत्यादिना वचनत्रिकेण वर्त्तमानकालोल्लेख, तथा करिष्यामि कारयिष्यामि कुर्वतोऽन्यान्प्रति समनुज्ञापरायणो भविष्यामीत्यनागतकालोल्लेख, अनेन च कालत्रयसस्पर्शेन देहेन्द्रियातिरिक्तस्यात्मनो भूत-वर्तमान-भविष्यत्कालपरिणतिरूपस्यास्तित्वावगतिरावेदिता भवति, सा च-नैकान्तक्षणिकनित्यवादिना सम्भवतीत्यतोऽनेन ते निरस्ता क्रियापरिणामेनात्मन परिणामित्वाभ्युपगमादिति, एतदनुसारेणैव संभवानुमानादतीतानागतयोरपि भवयोरात्मास्तित्वमवसेयम्। यदि वा— अनेन क्रियाप्रबन्धप्रतिपादनेन कर्मण उपादानभूताया क्रियाया. स्वरूपमावेदितमिति ।

अथ किमेतावत्य एव क्रिया, उतान्या अपि सन्तीत्येतावेत्याह—

एयावंति सव्वावंति लोगंसि कम्मसमारंभा परिजाणियव्वा भवंति। ( सूत्र-७ )

एतावन्त सर्वेऽपि लोके प्राणिसंघाते कर्मसमारम्भा - क्रियाविशेषा ये प्रागुक्ता अतीतानागतवर्त्तमानभेदेन कृतकारितानुमतिभिश्चाशेषक्रियानुयायिना च करोतिना सर्वेषां संग्रहादित्येतावन्त एव परिज्ञातव्या भवन्ति नान्ये इति। परिज्ञा च ज्ञप्रत्याख्यानभेदाद् द्विधा, तत्र ज्ञपरिज्ञायात्मनो बन्धस्य चास्तित्वमेतावद्भिरेव सर्वै. कर्मसमारम्भैर्ज्ञातं भवति प्रत्याख्यानपरिज्ञया च सर्वे पापोपादानहेतव —कर्मसमारम्भा प्रत्याख्यातव्या इति । इयता सामान्येन जीवास्तित्वं प्रसाधितम्।

अधुना तस्यैवात्मनो दिगादिभ्रमणहेतूपदर्शनपुरस्सरमपायान् प्रदर्शयितुमाह-यदि वा-यस्तावदात्मकर्मादिवादी स दिगादिभ्रमणान्मोक्ष्यते इतरस्य तु विपाकान्दर्शयितुमाह—

अपरिण्णायकम्मा खलु अयं पुरिसे जो इमाओ दिसाओ अणुदिसाओ अणु संचरइ, सव्वाओ दिसाओ सव्वाओ अणुदिसाओ साहेति । ( सूत्र-८ )

'अपरिज्ञाये' त्यादि, योऽयं पुरि शयनात्पुरुषः सुखदुःखाना वा पुरुषो जन्तुर्मनुष्यो वा, प्राधान्याच्च पुरुषस्योपादानम्, उपलक्षणं चैतत्, सर्वोऽपि चतुर्गत्यापन्न प्राणी गृह्यते दिशोऽनुदिशो वा अनुसञ्चरति, स. अपरिज्ञातकर्मा-अपरिज्ञात कर्माऽनेनेत्यपरिज्ञातकर्मा, खलुरवधारणे, अपरिज्ञातकर्मैव दिगादौ भ्राम्यति नेतर इति, उपलक्षणं चैतद् अपरिज्ञाताऽऽत्मा अपरिज्ञातक्रियश्चेति यश्चापरिज्ञातकर्मा स, सर्वा दिश सर्वाश्चानुदिश 'साहेति' स्वयंकृतेन कर्मणा सहानुसञ्चरति, सर्वग्रहणं सर्वासा प्रज्ञापकदिशां भावदिशा च उपसंग्रहार्थम् ।

स यदाप्नोति तद्दर्शयति—

अणेगरूवाओ जोणीओ संधेइ, विरूवरूवे फासे पडिसंवेदेइ । ( सूत्र-९ )

आचा० । ( कति जीवोत्पत्तिस्थानानि इति 'जोणि' शब्दे चतुर्थभागे वक्ष्यते । ) एताश्चानेकरूपा योनीर्दिगादिषु पर्यटन्नपरिज्ञानकर्माऽसुमान् 'संधेइ' त्ति-सन्धयति सन्धि करोत्यात्मना सहाऽविच्छेदेन सघट्टयतीत्यर्थ, "सन्धावइ" त्ति-पाठान्तरं, सन्धावति, पौन पुन्येन तासु गच्छतीत्यर्थः, तत्सन्धाने च यदनुभवति तद्दर्शयति- विरूप वीभत्समनोज्ञं रूप स्वरूप-येषां स्पर्शानां दु खोपनिपातानां ते तथा स्पर्शाश्चेता दु खोपनिपाता स्पर्शा इत्युक्तास्तात्स्थ्यात्तद्व्यपदेश इति कृत्वा उपलक्षणं चैतन्मानस्योऽपि वेदना ग्राह्या अतस्तानेवभूतान् स्पर्शान् प्रतिसंवेदयति-अनुभवति प्रतिग्रहणात्प्रत्येक शारीरान्मानसांश्च दु खोपनिपातानुभवतीत्युक्तं भवति स्पर्शग्रहण चेह सर्वससारान्तर्वर्तिजीवराशिसंग्रहार्थ, स्पर्शनेन्द्रियस्य सर्वजीवव्यापित्वात्, अथवेदमपि वक्तव्यं सर्वान्विरूपरूपान् रसगन्धरूपशब्दान् प्रतिसंवेदयतीति विरूपरूपत्वञ्च स्पर्शाना कार्यभूतानाम् विचित्रकर्मोदयात् कारणभूताद्भवतीति वेदितव्य, विचित्रकर्मोदयाच्चापरिज्ञातकर्मा संसारी स्पर्शादीन्विरूपरूपांस्तेषु तेषु योन्यन्तरेषु विपाकत. परिसवेदयतीति, आह च—

"तै कर्मभि' स जीवो, विवश संसारचक्रमुपयाति ।
द्रव्यक्षेत्राद्धाभा-वभिन्नमावर्त्तते बहुश ॥ १ ॥
नरकेषु देवयोनिषु, तिर्यग्योनिषु च मनुजयोनिषु च ।
पर्यटति घटीयन्त्रव-दात्मा विभ्रच्छरीराणि ॥ २ ॥
सततानुबद्धमुक्तं, दु ख नरकेषु तीव्रपरिणामम् ।
तिर्यक्षु भयक्षुत्तृड्-वधादिदु खं सुख चाल्पम् ॥ ३ ॥
सुखदु ख मनुजाना मन शरीराश्रये बहुविकल्प ।
सुखमेव हि देवाना, दु ख स्वल्प च मनसि भवम् ॥ ४ ॥
कर्मानुभावदु खित, एव मोहान्धकारगहनवति ।
अन्ध इव दुर्गमार्गे, भ्रमति हि संसारकान्तारे ॥ ५ ॥
दु खप्रतिक्रियार्थं, सुखाभिलाषाच्च पुनरपि तु जीव ।
प्राणिवधादीन् दोषा-नाधितिष्ठति मोहसंछन्न' ॥ ६ ॥
बध्नाति ततो बहुविध-मन्यत्पुनरपि नव सुबहु कर्म ।
तेनाथ पच्यते पुन-रग्निरग्नि प्रविश्यैव ॥ ७ ॥
एवं कर्माणि पुन , पुन सम्बध्नंस्तथैव मुञ्चश्च ।
सुखकामो बहुदु'खं, संसारमनादिकं भ्रमति ॥ ८ ॥
एवं भ्रमत. संसा-रसागरे दुर्लभं मनुष्यत्वम् ।
संसारस्य महत्त्व, त्वधर्मदुष्कर्मबाहुल्यैः ॥ ९ ॥
आर्यो देश कुलरूप-सम्पदायुश्च दीर्घमारोग्यम् ।
यतिसंसर्ग. श्रद्धा, धर्मश्रवणं च मतिनैष्ठ्यम् ॥ १० ॥
एतानि दुर्लभानि, प्राप्तवतोऽपि दृढमोहनीयस्य ।
कुपथाकुलेऽर्हदुक्तोऽ-तिदुर्लभो जगति सन्मार्ग. " ॥ ११ ॥

यदि वा-योऽयं पुरुष. सर्वा दिशोऽनुदिशश्चानुसञ्चरति तथा-अनेकरूपा योनी. सन्धावति विरूपविरूपांश्च स्पर्शान् प्रतिसवेदयति 'सोऽविज्ञानकर्मा' अविज्ञातम्-अविदितं कर्म क्रिया-व्यापारो मनोवाक्कायलक्षण, अकार्षमहं, करोमि, करिष्यामीत्येवंरूप जीवोपमर्दात्मकत्वेन बन्धहेतु सावद्या येन सोऽयमविज्ञानकर्मा. अविज्ञातकर्मत्वेन च तत्र तत्र कर्मणि जीवोपमर्दादिके प्रवर्त्तते येन येनास्याष्टविधकर्मबन्धो भवति, तदुदयाच्चानेकरूपयोन्यनुसन्धान विरूपरूपस्पर्शानुभवश्च भवतीति ।

यद्येव तत. किमित्यत आह—

तत्थ खलु भगवता परिण्णा पवेइया । ( सूत्र-१० )

( अस्य सूत्रस्य व्याख्या ' परिण्णा ' शब्दे पञ्चमे भागे करिष्यते ) आचा० १ श्रु० १ अ० १ उ० ।

अमुमेवार्थं निर्युक्तिकृदाह—

तत्थ अकारि करिस्सं-ति बंधचिंता कया पुणो होइ ।
सहसंमइया जाणइ, कोऽई पुण हेउजुत्तीए ॥ ६७ ॥

तत्र—कर्मणि—क्रियाविशेषे, किम्भूत इत्याह—' अकारि करिस्संति ' अकारीति-कृतवान् ' करिस्संति ' करिष्यामीत्यनेनातीतानागतोपादानेन तन्मध्यवर्तिनो वर्तमानस्य कारितानुमत्योश्चोपसंग्रहात्-नवापि भेदा आत्मपरिणामत्वेन योगरूपा उपात्ता द्रष्टव्या , तत्रानेनात्मपरिणामरूपेण क्रियाविशेषेण बन्धचिन्ता कृता भवति, बन्धस्योपादानमुपात्तं भवति, " कर्मयोगनिमित्त बध्यत " इति वचनात्, एतच्च कश्चिज्ज्ञानानि आत्मना सह या सन्मति स्वमतिर्वाऽवधिमन पर्यायकेवलिजातिस्मरणरूपा तया जानाति, कश्चिच्च परतधर्म्माऽन्वयव्यतिरेकलक्षणया हेतुयुक्त्येति ।

अथ किमर्थमसौ कटुकविपाकेषु कर्माश्रवहेतुभूतेषु क्रियाविशेषेषु प्रवर्त्तत इत्याह—

इमस्स चेव जीवियस्स परिवंदणमाणणपूयणाए जाईमरणमोयणाए दुक्खपडिघायहेउं । ( सूत्र-११ )

तत्र जीवितमिति-जीवन्त्यनेनायुष्कर्मणेति जीवितं-प्राणधारण, तच्च प्रतिप्राणि स्वसंविदितमिति कृत्वा प्रत्यक्षासन्नवाचिना इदमा निर्दिशति चशब्दो वक्ष्यमाणजात्यादिसमुच्चयार्थ , एवकारोऽवधारणे; अस्यैव जीवितस्यार्थे परि-

फलगुसारस्य तडिल्लताविलसितचञ्चलस्य बह्वपायस्य दीर्घसुखार्थं क्रियासु प्रवर्तते । तथा हि-जीविष्याम्यहमरोग सुखेन भोगान् भोक्ष्ये ततो व्याध्यपनयनार्थं स्नेहपान-लावकपिशितभक्षणादिषु क्रियासु प्रवर्त्तते, तथा अल्पस्य सुखस्य कृतेऽभिमानग्रहाकुलितचेता बह्वारम्भपरिग्रहाद् बह्वशुभं कर्माऽऽदत्ते, उक्तञ्च—

"द्वे वाससी प्रवरयोषिदपायशुद्धा,
शय्यासनं करिवरस्तुरगो रथो वा ।
काले भिषग्नियमिताशनपानमात्रा,
राज्ञः पराक्र्यमिव सर्वमवेहि शेषम् ॥ १ ॥
पुष्ट्यर्थमन्नमिह यत्प्रणिधिप्रयोगैः,
सन्त्रासदोषकलुषो नृपतिस्तु भुङ्क्ते ।
यन्निर्भयः प्रशमसौख्यरतिश्च भैक्ष,
तत् स्वादुता भृशमुपैति न पार्थिवाऽन्नम् ॥ २ ॥
भृत्येषु मन्त्रिषु सुतेषु मनोरमेषु,
कान्तासु वा मधुमदाङ्कुरितेक्षणासु ।
विश्रम्भमेति न कदाचिदपि क्षितीश,
सर्वाभिशङ्कितमते कतरत्तु सौख्यम्" ॥ ३ ॥

तदेवमनवबुद्धतरुणकिशलयपलाशचञ्चलजीवितरतय कर्माऽऽश्रवेषु जीवितोपमर्दादिरूपेषु प्रवर्तन्ते तथा अस्यैव जीवितस्य परिवन्दनमाननपूजनार्थं हिंसादिषु प्रवर्तन्ते । तथा परिवन्दनम्-संस्तव, प्रशंसा तदर्थमाचेष्टते, तथाहि-अहं मयूरादिपिशिताशनाद्बली तेजस्वी देदीप्यमानो देवकुमार इव लोकानां प्रशंसास्पदं भविष्यामीति माननम्-अभ्युत्थानासनदानाञ्जलिप्रग्रहादिरूपं तदर्थं वा चेष्टमानः कर्माऽऽचिनोति, तथा पूजन-पूजा द्रविणवस्त्रान्नपानसत्कारप्रणामसेवाविशेषरूपा तदर्थं च प्रवर्त्तमानः क्रियासु कर्माश्रवैरात्मानं सम्भावयति, तथाहि-वीरभोग्या वसुन्धरेति मत्वा पराक्रमते, दण्डभयात्सर्वा प्रजा बिभ्यतीति दण्डयति, इत्येवं राज्ञामन्येषामपि यथासम्भवमायोजनीयम्, अत्र च वन्दनादीनां द्वन्द्वसमासं कृत्वा तादर्थ्ये चतुर्थी विधेया, परिवन्दनमाननपूजनाय जीवितस्य कर्माश्रवेषु प्रवर्त्तन्त इति समुदायार्थः । न केवलं परिवन्दनाद्यर्थमेव कर्मादत्ते, अन्यार्थमप्यादत्त इति दर्शयति—जातिश्च मरणञ्च मोचनञ्च जातिमरणमोचनमिति समाहारद्वन्द्वात्तादर्थ्ये चतुर्थी, एतदर्थं च प्राणिन क्रियासु प्रवर्तमाना कर्माददते, तत्र जात्यर्थं क्रौञ्चारिवन्दनादिका क्रिया विधत्ते, तथा यान् यान् कामान् ब्राह्मणादिभ्यो ददाति तांस्तानन्यजन्मनि पुनर्जातो भोक्ष्यते, तथा मनुनाऽप्युक्तम्-" वारिदस्तृप्तिमाप्नोति, सुखमक्षय्यमन्नद । तिलप्रद प्रजामिष्टामायुष्कमभयप्रद "॥१॥ अत्र चैकमेव सुभाषितम्-अभयप्रदानमिति, तुषमध्ये कणिकावदिति एवमादिकुमार्गोपदेशात् हिंसादौ प्रवृत्तिं विदधाति, तथा मरणार्थमपि पितृपिण्डदानादिषु क्रियासु प्रवर्त्तते, यदि वा ममानेन सम्बन्धी व्यापादितस्तस्य वैरनिर्यातनार्थं वधबन्धादौ प्रवर्त्तते, यदि वा-मरणनिवृत्त्यर्थमात्मनो दुर्गाद्युपयाचितमजादिना बलिं विधत्ते, यशोधर इव पिष्टमयकुक्कुटेन, तथा मुक्त्यर्थमज्ञानावृतचेतस पञ्चाग्नितपोऽनुष्ठानादिकेषु प्राण्युपमर्दकारिषु प्रवर्त्तमान कर्माऽऽददते, यदि वा-जातिमरणयोर्विमोचनाय हिंसादिका क्रिया कुर्वते, "जाइमरणमोयणाए" त्ति-पाठान्तरम्, तत्र भोजनार्थं कृष्यादिकर्मसु प्रवर्त्तमाना वसुधाजलज्वलनपवनवनस्पतिद्वित्रिचतुःपञ्चेन्द्रियव्यापत्तये व्याप्रियन्त इति । तथा दुःखप्रतिघात-मुरगीकृत्यात्मपरित्राणार्थमारम्भानासेवन्ते, तथा हि-व्याधिवेदनार्ता लावकपिशितमदिराद्यासेवन्ते, तथा वनस्पतिमूलत्वक्पत्रनिर्यासादिसिद्धशतपाकादितैलार्थमग्न्यादि-समारम्भेण पापं कुर्वन्ति, स्वत कारयन्त्यन्यैः कुर्वतोऽन्यान् समनुजानत इत्येवमतीतानागतकालयोरपि मनोवाक्काययोगैः कर्माऽऽदानं विदधतीत्यायोजनीयम् । तथा दुःखप्रतिघातार्थमेव सुखोत्पत्त्यर्थं च कलत्रपुत्रगृहोपस्करायाददते तत्पालनार्थं च तासु तासु क्रियासु प्रवर्तमाना पापकर्माऽऽसेवन्त इति । उक्तञ्च- 'आदौ प्रतिष्ठाधिगमे प्रयासो, दारेषु पश्चाद् गृहिणः सुतेषु । कर्तुं पुनस्तेषु गुणप्रकर्षं चेष्टा तदुच्चैः पदलङ्घनाय " ॥ १ ॥ तदेवमूते क्रियाविशेषैः कर्मोपादाय नानाविधयोनिषु सञ्चरन्ति अनेकरूपासु च योनिषु सन्धावन्ति विरूपरूपांश्च स्पर्शान् प्रतिसंवेदयन्ति, इत्येतज्ज्ञात्वा क्रियाविशेषनिवृत्तिर्विधेयेति ।

एतावन्त एव च क्रियाविशेषा इति दर्शयितुमाह—

एयावन्ति सव्वावन्ति लोगंसि कम्मसमारम्भा परिजाणियव्वा भवन्ति । ( सूत्र- १२ )

'एतावंती' त्यादि 'एआवंति सव्वावन्ति' इति-एतौ शब्दौ मागधदेशीभाषाप्रसिद्ध्या एतावन्त. सर्वेऽपीत्येतत्पर्यायौ एतावन्त एव सर्वस्मिन् लोके-धर्माऽधर्मास्तिकायावच्छिन्ने नभःखण्डे ये पूर्वे प्रतिपादिता कर्मसमारम्भा'-क्रियाविशेषा नैतेभ्योऽधिका केचन सन्तीत्येवं परिज्ञातव्या भवन्ति, सर्वेषां पूर्वत्रोपादानादिति भाव, तथाहि-आत्मपरोभयैहिकामुष्मिकाऽतीताऽनागतवर्तमान-कालकृतकारितानुमतिभिरारम्भा क्रियन्ते, ते च सर्वेऽपि प्रागुपात्ता यथा सम्भवमायोज्या इति ।

एव सामान्येन जीवास्तित्वं प्रसाध्य तदुपमर्दकारिणां च क्रियाविशेषाणां बन्धहेतुत्वं प्रदर्श्योपसंहारद्वारेण विरतिं प्रतिपादयन्नाह—

जस्सेते लोगंसि कम्मसमारंभा परिण्णाया भवन्ति से हु मुणी परिण्णायकम्मे त्ति बेमि । ( सूत्र-१३ )

'जस्से' त्यादि, भगवान् समस्तवस्तुवेदी केवलज्ञानेन साक्षादुपलभ्यैवमाह-यस्य-मुमुक्षोरेते-पूर्वोक्ता कर्मसमारम्भा -क्रियाविशेषा कर्मणो वा ज्ञानावरणीयाद्यष्टप्रकारस्य समारम्भा-उपादानहेतवस्ते च-क्रियाविशेषा एव परि-समन्तात् ज्ञाता -परिच्छिन्ना कर्मबन्धहेतुत्वेन भवन्ति, दुःखधार्मण, मनुते मन्यते वा जगतस्त्रिकालावस्थामिति मुनि स एव मुनिर्ज्ञपरिज्ञया परिज्ञातकर्मा प्रत्याख्यान-परिज्ञया च प्रत्याख्यातकर्मबन्धहेतुभूतसमस्तमनोवाक्कायव्यापार इति अनेन च साक्षाद्भूते ज्ञानक्रिये उपात्ते भवतो, न ह्याभ्यां विना मोक्षो भवति, यत उक्तम्-'ज्ञानक्रियाभ्यां मोक्ष " इति । इतिशब्द एतावानयमात्मपदार्थ-

विचारः कर्मबन्धहेतुविचारश्च सकलोद्देशकेन परिसमापित इति प्रदर्शकः, यदि वा-'इति'-एतदह ब्रवीमि यत्प्रागुक्तं यच्च वक्ष्ये तत् सर्वं भवगदन्तिके साक्षात् श्रुत्वेति । आचा० १ श्रु० १ अ० १ उ० । ( आत्माऽस्तित्वे बहुभङ्गाः क्रियावादिनः, अक्रियावादिनः, ते च 'अकिरियावाइ' शब्दे प्रथमभागे दर्शिताः । 'किरियावाइ' शब्दे तृतीयभागे च दर्शयिष्यामि । )

आत्मास्तित्वं विस्तरेण—

सुयं मे आउसं ! तेणं भगवया एवमक्खायं-इहमेगेसिं णो सण्णा भवइ । (सूत्र-१) । तं जहा-पुरच्छिमाओ वा दिसाओ आगओ अहमंसि, दाहिणाओ वा दिसाओ आगओ अहमंसि, पच्चच्छिमाओ वा दिसाओ आगओ अहमंसि, उत्तराओ वा दिसाओ आगओ अहमंसि, उड्ढाओ वा दिसाओ आगओ अहमंसि, अहोदिसाओ वा आगओ अहमंसि, अण्णयरीओ वा दिसाओ अणुदिसाओ वा आगओ अहमंसि, एवमेगेसिं णो णायं भवति । ( सूत्र-२ )

आचा० १ श्रु० १ अ० १ उ० । ( अनयोः सूत्रयोर्व्याख्यानं 'सण्णा' शब्दे सप्तमभागे करिष्यते ) ( अत्रस्थनिर्युक्तिगाथाव्याख्यानम् 'दिसा' शब्दे चतुर्थभागे करिष्यते ) अत्र च सामान्यदिग्ग्रहणेऽपि यस्या दिशि जीवानामविगानेन गत्यागती स्पष्टे सर्वत्र संभवतस्तस्यैवेहाधिकार इति नामव निर्युक्तिकृत्साक्षाद्दर्शयति भावदिग्भावेन भाविनी सामर्थ्यादधिकृतैव यतस्तदर्थमन्वादिशश्चिन्तयन्नाह । आचा० १ श्रु० १ अ० १ उ । तत्रह-' एवमेगेसिं णो णायं भवइ ' इत्यनेन केषांचिदेव संज्ञानिषेधात्केषांचित्तु भवतीत्युक्तं भवति । तत्र सामान्यसंज्ञायां प्रतिप्राणि सिद्धत्वात्तत्कारणपरिज्ञानस्य चेहाकिंचित्करत्वाद्विशिष्टसंज्ञायास्तु केषांचिदेव भावात्तस्याश्च भवान्तरगात्म्यात्मनः स्पष्टप्रतिपादने सोपयोगित्वाद् सामान्यसंज्ञाकारणप्रतिपादनमनादृत्य विशिष्टसंज्ञायाः कारणं सूत्रकृद्दर्शयितुमाह—

से जं पुण जाणेज्जा सह संमइयाए परवागरणेणं अन्नेसिं अंतिए वा सोच्चा, तं जहा-पुरत्थिमाओ वा दिसाओ आगओ अहमंसि, ०जाव अन्नयरीओ दिसाओ अणुदिसाओ वा आगओ अहमंसि, एवमेगेसिं जं णायं भवति-अत्थि मे आया उववाइए, जो इमाओ दिसाओ अणुदिसाओ वा अणुसंचरइ, सव्वाओ दिसाओ अणुदिसाओ, सोऽहं । ( सूत्र-४ )

आचा० १ श्रु० १ अ० १ उ० । ( अस्य सूत्रस्य व्याख्यानम् 'दिसा' शब्दे चतुर्थभागे करिष्यते )

इममेवार्थं निर्युक्तिकृद्दर्शयितुमना गाथात्रितयमाह—

जाणइ सय मतीए, अन्नेसिं वाऽवि अंतिए सोच्चा ।
जाणगजणपरणविओ, जीवं तह जीवकाए वा ॥६४॥

एत्थ य सह सम्मइय-त्ति जं एयं तत्थ जाणणा होइ ।
ओहीमणपज्जवना-णकेवले जाइमरणे य ॥ ६५ ॥

परवइवागरणं पुण, जिणवागरणं जिणा परं नऽत्थि ।
अण्णेसिं सोच्चं ति य, जिणेहिँ सव्वो परो अन्नो ॥६६॥

'जाणइ' त्यादि, 'एत्थयं' त्यादि, 'परं' त्यादि, कश्चिदनादिसंसृतौ पर्यटन्नवध्यादिकया चतुर्विधया स्वकीयया मत्या जानाति । अनानुपूर्वीन्यायप्रकटनार्थं पश्चादुपात्तमप्यन्येषामित्येतत्पदं तावदाचष्टे अन्येषां वाऽतिशयज्ञानिनामन्तिके श्रुत्वा जानाति, तथा-'जाणगजणपरणविओ' इत्यनेन परव्याकरणमुपात्तं, तेनायमर्थो-ज्ञापकस्तीर्थकृत् तत्प्रज्ञापितश्च जानाति यज्जानाति तत्स्वत एव दर्शयति—सामान्यतो 'जीवमि' ति-अनेन चाधिकृतोद्देशकस्यार्थाधिकारमाह. तथा-' जीवकायांश्च ' पृथ्वीकायादीन् इत्यनेन चोत्तरेषां षण्णामप्युद्देशकाना यथाक्रममधिकारार्थमाहेति, अत्र च—'सहम्मइए त्ति-सूत्रे यत् पदं. तत्र 'जाणण' त्ति-ज्ञानमुपात्तं भवति 'मन' ज्ञाने, मननं मतिरिति कृत्वा. तच्च किंभूतमिति दर्शयति—अवधिमनः पर्यायकेवलजातिस्मरणरूपमिति, तत्रावधिज्ञानी संख्येयानसंख्येयान्वा भवान् जानाति, एवं मनःपर्यायज्ञान्यपि केवली तु नियमतोऽनन्तान्, जातिस्मरणन्तु नियमतः संख्येयानिति, शेषं स्पष्टम् अत्र च-सहसन्मत्यादिपरिज्ञाने सुखप्रतिपत्त्यर्थं त्रयो दृष्टान्ताः प्रदर्श्यन्ते, तद्यथा-वसन्तपुरे नगरे जितशत्रू राजा, धारणी महादेवी, तयोर्द्धर्मरुच्यभिधानः सुतः । स च राजाऽन्यदा तापसत्वेन प्रव्रजितुमिच्छुर्द्धर्मरुचिं राज्ये स्थापयितुमुद्यतः, तेन च जननी पृष्टा किमिति तातो राज्यश्रियं त्यजति ?, तयोक्तं किमनया चपलया नारकादिसकलदुःखहेतुभूतया स्वर्गापवर्गमार्गार्गलयाऽवश्यमपायिन्या परमार्थेन इह लोकेऽप्यभिमानमात्रफलयेत्यतो विहायैनां सकलसुखसाधनं धर्मं कर्त्तुमुद्यतः, धर्मरुचिस्तदाकर्ण्योक्तवान्यद्येवं किमहं तातस्यानिष्टा यनैवभूतां सकलदोषाश्रयणीं मयि नियोजयति, सकलकल्याणहेतोर्द्धर्मात्प्रच्यावयतीत्यभिधाय पित्राऽनुज्ञातस्तेन सह तापसाश्रममगात्, तत्र च सकलास्तापसक्रिया यथोक्ताः पालयन्नास्ते । अन्यदामावास्याया पूर्वाह्णे केनचित्तापसेनोक्तं यथा भो भो तापसा श्वोऽनाकुट्टिर्भविता अतोऽद्यैव समित्कुसुमकुशकन्दफलमूलाद्याहरणं कुरुतैतच्चाकर्ण्य धर्मरुचिना जनकः पृष्टस्तात ! कयमनाकुट्टिरिति तेनोक्तं-पुत्र ! कन्दफलादीनामच्छेदनं तच्चामावास्यादिके विशिष्टे पर्वदिवसे न वर्त्तते, सावद्यत्वाच्छेदनादिक्रियायाः । श्रुत्वा चैतदसावचिन्तयत्-यदि सर्वदानाकुट्टिः स्याच्छोभनं भवेद्, एवमध्यवसायिनस्तस्यामावास्यायां तपोवनासन्नपथेन गच्छता साधूनां दर्शनमभूत्तं च तेनाभिहिता किमद्य भवतामनाकुट्टिर्न संजाता येनाटवीं प्रस्थिता, तैरप्यभिहितं यथाऽस्माकं यावज्जीवमनाकुट्टिः, इत्यभिधायातिक्रान्ताः साधवस्तस्य च तदाकर्ण्येहापोहविमर्शेन जातिस्मरणमुत्पन्नं-यथाहं जन्मान्तरे प्रव्रज्यां कृत्वा देवलोकसुखमनुभूयेहागत इति एव तेन विशिष्टदिगागमनं स्वमत्या जातिस्मरणरूपया विज्ञातं, प्रत्येकबुद्धश्च जातः, एवमन्येऽपि वल्कलचीरिश्रेयांसप्रभृतयोऽत्र योज्या

इति । परव्याकरणे त्विदमुदाहरणम्-गौतमस्वामिना भगवान्वर्द्धमानस्वामी पृष्टो-भगवन् ! किमिति मे केवलज्ञानं नोत्पद्यते ?, भगवता व्याकृतम्-भो गौतम ! भवतोऽतीव ममोपरि स्नेहोऽस्ति तद्वशात् तेनोक्तम्-भगवन्नेवमेवं, किंनिमित्तः पुनरसौ मम भगवद्विषयः स्नेहः ?, ततो भगवता तस्य बहुषु भवान्तरेषु पूर्वसंबन्धः समावेदितः "चिरसंसिट्ठो सि मे परिचिओ सि मे गोयमा" इत्येवमादि, तच्च तीर्थकृद्व्याकरणमाकर्ण्य गौतमस्वामिनो विशिष्टदिगागमनादि विज्ञानमभूदिति । अन्यश्रवणे त्विदमुदाहरणम्-मल्लिस्वामिना षण्णां राजपुत्राणामुद्वाहार्थमागतानामवधिज्ञानेन तत्प्रतिबोधनार्थं यथा जन्मान्तरे सहितैरेव प्रव्रज्या कृता, यथा च तत्फलं देवलोके जयन्ताभिधानविमानेऽनुभूतं तथाऽऽख्यानं, तच्चाकर्ण्य ते लघुकर्मत्वात्प्रतिबुद्धा विशिष्टदिगागमनविज्ञानं च संज्ञातम्, उक्तञ्च-" किं च तयं पम्हुट्ठं जं च तया भो ! जयंतपवरम्मि । वुच्छा समयनिबद्धं, देवा ! तं संभरह जातिं " इति गाथात्रयतात्पर्यार्थः । आचा० १ श्रु० १ अ० १ उ० ।

(१४) (भाष्यकारः) अन्यत्वादिद्वारत्रयव्याचिख्यासुराह-

अण्णत्तममुत्तत्तं, णिच्चत्तं चेव भण्णए समयं ।
कारणअविभागाई-हेऊहिँ इमाहिँ गाहाहिँ ॥ ३६ ॥

व्याख्या-अन्यत्वं देहात् अमूर्तत्वं स्वरूपेण नित्यत्वं चैव-परिणामिनित्यत्वं भण्यते । समकम्-एकैकेन हेतुना त्रितयमपि युगपदिति, एककालमित्यर्थः, कारणाविभागादिभिः-वक्ष्यमाणलक्षणैर्हेतुभिः इमाभिस्तिसृभिर्निर्युक्तिगाथाभिरेवेति गाथार्थः ।

कारणविभागकारण-विणासबंधस्स पच्चया भावा ।
विरुद्धस्स य अत्थस्साऽ-पाउब्भावाऽविणासा य ।२२५।

व्याख्या-कारणविभागकारणविनाशबन्धस्य प्रत्ययाभावादिति-अत्राऽभावशब्दः प्रत्येकमभिसंबध्यते कारणविभागाभावाच्च खलु जीवस्य पटादेरिव तन्त्वादिकारणविभागोऽस्ति कारणाभावादेव । एवं कारणविनाशाभावेऽपि योज्यम्, तथा बन्धस्य ज्ञानाऽऽवरणादिपुद्गलयोगलक्षणस्य प्रत्ययाभावात्-हेतुत्वानुपपत्तेः, बन्धस्येति वध्यमानव्यतिरिक्तबन्धज्ञापनार्थमसमासः । व्यतिरेकी चायमन्वयव्यतिरेकावर्थसाधकाविति दर्शनार्थमिति, तथा विरुद्धस्य चार्थस्य पटादिनाशे भस्मादेरिव अप्रादुर्भावाद् अविनाशाच्च अप्रादुर्भावे-अनुत्पत्तौ सत्यामविनाशाच्च हेतोर्जीवस्य नित्यत्वम्, नित्यत्वादमूर्तत्वम्, अमूर्तत्वाच्च देहादन्यत्वमिति प्रतिपत्त्यनुगुण्यतो व्यत्ययेन साध्यनिर्देशः । वक्ष्यति च निर्युक्तिकारः -" जीवस्स सिद्धमेवं, णिच्चत्तममुत्तमण्णत्तं " इति गाथासमासार्थः ।

व्यासार्थस्तु भाष्यादवसेयः, तत्राव्युत्पन्नविनेयासंमोहनिमित्तं यथोपन्यासं तावद् द्वाराणि व्याख्याय पश्चान्निर्युक्तिकाराभिप्रायेण मीलयिष्यतीत्यत आह—

अन्नं ति दारमहुणा, अन्नो देहा गिहाउ पुरिसो व्व ।
तज्जीवतस्सरीरिय-मयघायत्थं इमं भणियं ॥ ३७ ॥

व्याख्या—अन्यो देहादिति द्वारमधुना तदेतद्व्याख्यायते-अन्यो देहाज्जीव इति गम्यते, गृहादिगतपुरुषवदिति दृष्टान्तः, तद्भावेऽपि तत्र अनियमतोऽभावादिति हेतुरभ्यूह्य, न चासिद्धोऽयम्, मृतदेहे अदर्शनात्, प्रयोगफलमाह-तज्जीवतच्छरीरवादिमतविघातार्थमिदं प्रयोगरूपं भणितमिति गाथार्थः ।

(भाष्यकारः) प्रयोगान्तरमाह—

देहिंदियाऽइरित्तो, आया खलु तदुवलद्धअत्थाणं ।
तव्विगमेऽवि सरणओ,गेहगवक्खेहिँ पुरिसो व्व ॥३८॥

व्याख्या-खलुशब्दो विशेषणार्थत्वात् कथंचिद्देहेन्द्रियातिरिक्त आत्मेति प्रतिज्ञार्थः, तदुपलब्धार्थानामिति सम्भवतः पगमर्शत्वात् इन्द्रियोपलब्धार्थानाम् तद्विगमेऽपि-इन्द्रियविगमेऽपि स्मरणादिति हेत्वर्थः, स्मरन्ति चान्धबधिरादयः पूर्वानुभूत रूपादीनि गेहगवाक्षैः पुरुषवदिति दृष्टान्तः । प्रयोगस्तु कथंचिद्देहेन्द्रियातिरिक्त आत्मा तद्विगमेऽपि तदुपलब्धार्थानुस्मरणात्, पञ्चवातायनोपलब्धार्थानुस्मर्तृदेवदत्तवदिति गाथार्थः ।

(भाष्यकारः) इन्द्रियोपलब्धिमत्त्वोशङ्कापोहायाह—

न उ इंदियाइँ उवल-द्धिमंति विगएसु विसयसंभरणा ।
जह गेहगवक्खेहिं, जो अणुसरिया स उवलद्धा ॥३९॥

व्याख्या-न पुनरिन्द्रियाण्येवोपलब्धिमन्ति द्रष्टॄणि, कुत इत्याह-विगतेष्विन्द्रियेषु विषयसस्मरणात्—तद्गृहीतरूपाद्यनुस्मृतेरन्धबधिरादीनामिति । निदर्शनमाह-यथा गेहगवाक्षैः करणभूतैर्दृष्टानर्थाननुस्मरन् योऽनुस्मर्ता स उपलब्धा, न तु गवाक्षा एवमत्रापीति गाथार्थः । उक्तमेकेन प्रकारेणान्यत्वद्वारम् ।

अधुना अमूर्त्तद्वारावसर इत्याह भाष्यकारः—

संपयममुत्तदारं, अइंदियत्ता अछेयभेयत्ता ।
रूवाइविरहओ वा, अणाइपरिणामभावाओ ॥ ४० ॥

व्याख्या—साम्प्रतममूर्त्तद्वारम्, तद्व्याख्यायते-अमूर्त्तो जीवः अतीन्द्रियत्वाद् द्रव्येन्द्रियाग्राह्यत्वात्, अच्छेद्याभेद्यत्वात्-खड्गशूलादिना, रूपादिविरहितत्वाच्च, अरूपत्वादित्यर्थः । तथा अनादिपरिणामभावादिति स्वभावतोऽनाद्यमूर्तपरिणामत्वादिति गाथार्थः ।

(भाष्यम्)—

छउमत्थाणुवलंभा, तहेव सव्वन्नुवयणओ चेव ।
लोयाइपसिद्धीओ, जीवोऽमुत्तो त्ति नायव्वो ॥ ४१ ॥

व्याख्या-छद्मस्थानुपलम्भात् । अवधिज्ञानिप्रभृतिभिरपि साक्षादगृह्यमाणत्वात्, तथैव सर्वज्ञवचनाच्चैव; सत्यवक्तृप्रणीतागमवचनादित्यर्थः, लोकादिप्रसिद्धेः लोकादावमूर्तत्वेन प्रसिद्धत्वात्, आदिशब्दाद्वेदसमयपरिग्रहः । "अमूर्त्तो जीवः" इति ज्ञातव्यः, सर्वप्रवेयं प्रतिज्ञेति गाथार्थः । उक्तममूर्त्तद्वारम् । दश० ४ अ० । तस्य ज्ञानादिकर्मसम्बद्धस्य कदाचिदपि सांसारिकस्यात्मनः स्वरूपेऽनवस्थानात् सत्यप्यमूर्तत्वे मूर्तेन कर्मणा संबन्धो न विरुध्यते, कर्मसम्बन्धाच्च सूक्ष्मबादरैकद्वित्रिचतुःपञ्चे-

न्द्रियपर्याप्ताऽपर्याप्ताद्यवस्था बहुविधा प्रादुर्भवन्ति । सूत्र० १ श्रु० १ अ० १ उ०।

इदानीं नित्यत्वद्वारावसरस्तथा चाह भाष्यकार:—

णिच्चो त्ति दारमहुणा,णिच्चो अविणासि सासश्रो जीवो।
भावत्ते सइ जम्माऽ–भावाउ नहं व विन्नेश्रो ॥ ४२ ॥

व्याख्या-' नित्य इति '-नित्यद्वारमधुना-अवसरप्राप्तं तद् व्याचिख्यासुराह—नित्यो जीव इति-एतावत्युच्यमाने परैरपि संन्तानस्य नित्यत्वाभ्युपगमात्सिद्धसाध्यतेति । तन्निराकरणायाह—अविनाशी-क्षणापेक्षयापि न निरन्वयनाशधर्म्मा, एवमपि परिमितकालावस्थायी कैश्चिदिष्यते-" कप्पट्ठाइ पुढवी भिक्खू वा " इति वचनात्तदपोहायाह-शाश्वत इति-सर्वकालावस्थायी, कुत इत्याह—भावत्वे सति; वस्तुत्वे सतीत्यर्थ , जन्माऽभावात्-अनुत्पन्नत्वाद्-आकाशवद्विज्ञेय. भावत्वे सतीतिविशेषणं खरविषाणादिव्यवच्छेदार्थमिति गाथार्थ.।

( भाष्यकार ) हेत्वन्तराण्याह—

संसाराश्रो आलो–यणाश्रो तह पच्चभिन्नभावाश्रो ।
खणभंगविघायट्ठं, भणियं तेलोक्कदंसीहिं ॥ ४३ ॥

व्याख्या-संसारादिति-संसरणं संसारस्तस्मात् , स एव नारक स एव तिर्यगादिरिति नित्य , आलोचनादिति आलोचनं-करोम्यहं, कृतवानहं, करिष्येऽहमित्यादिरूपं त्रिकालविषयमिति नित्य , तथा प्रत्यभिज्ञाभावात् स एष इति प्रत्यभिज्ञाप्रत्यय आविद्वदङ्गनादिसिद्धस्तदभेदग्राहीति नित्य इति, उक्ताभिधानफलमाह-क्षणभङ्गविघातार्थ—निरन्वयक्षणिकवस्तुवादविघातार्थं भणितं त्रैलोक्यदर्शिभि -तीर्थकरै. एतत्-अदनन्तरोदितं न पुनरेष एव परमार्थ इति गाथार्थ ।

एतदेव ( भाष्यकार ) दर्शयति—

लोगे वेए समये, निच्चो जीवो विभासओ अम्हं ।
इहरा संसाराई, सव्वं पि न जुज्जए तस्स ॥ ४४ ॥

व्याख्या-लोके-" नैन छिन्दन्ति शस्त्राणि " इत्यादिवचनप्रामाण्यात् , वेदे-"स एष अक्षयोऽज" इत्यादि श्रुतिप्रामाण्यात् , समये-' न प्रकृतिर्न विकृति पुरुष " इति वचनप्रामाण्यात् , किमित्याह—नित्यो जीव -अप्रच्युतानुत्पन्नस्थिरैकस्वभाव , एकान्तनित्य एव न चैतन्न्याय्यम् एकस्वभावतया संसरणादिव्यवहारोच्छेदप्रसङ्गादिति वक्ष्यति अत आह-विभाषयाऽस्माकं विकल्पनेन भजनया स्यान्नित्य इत्यादिरूपया द्रव्यार्थादेशान्नित्य पर्यायार्थादेशादनित्य इत्यर्थ , इतरथा-यद्येव नाभ्युपगम्यते तत संसारादि-संसारालोचनादि सर्वमेव न युज्यते तस्यात्मन स्वभावान्तरानापत्त्या एकस्वभावतया वार्तमानिकभावातिरेकेण भावान्तरानापत्ते', एवममूर्तत्वाऽन्यत्वयोरपि विभाषा वेदितव्या, अन्यथा व्यवहाराभावप्रसङ्गात् , एकान्तामूर्तस्यएकान्तदेहभिन्नस्य चानिपानाद्यसभवादित्यत्र बहु वक्तव्यं तत्तु नोच्यते अक्षरगमनिकामात्रत्वात्प्रारम्भस्येति गाथार्थ ।

एवमन्यत्वादिद्वारत्रयं व्याख्यायाधिकृतनिर्युक्तिगाथा (भाष्यकार ) व्याचिख्यासुराह—

कारणअविभागाओ, कारणअविणासओ य जीवस्स ।
निच्चत्तं विन्नेयं, आगासपडाऽणुमाणाओ ॥ ४५ ॥

व्याख्या-कारणविभागात्पटादेस्तन्त्वादेरिव; कारणविभागाभावादित्यर्थ , कारणविनाशतश्च कारणविनाशश्च कारणानामेवाभावात्, किमित्याह-जीवस्य-आत्मनो नित्यत्वं विज्ञेय कुत इत्याह-आकाशपटानुमानाद् अत्रानुमानशब्दो दृष्टान्तवचन । आकाशपटदृष्टान्तात्। तत्रश्चैवं प्रयोगः-नित्य आत्मा स्वकारणविभागाभावाद् आकाशवत् , तथा कारणविनाशाभावाद् आकाशदेव यस्त्वनित्यस्तस्य कारणविभागभाव कारणविनाशभावो वा यथा पटस्येति व्यतिरेकः, पटाद्धि तन्तवो विभज्यन्ते विनश्यन्ति चेति नित्यत्वसिद्धि नित्यत्वादमूर्त., अमूर्तत्वाद्देहादन्य इति गाथार्थ.। दश० ४ अ०। तस्य चैकान्तेन क्षणिकत्वे ध्यानाऽध्ययनश्रमप्रत्यभिज्ञानाद्यभाव., एकान्तनित्यत्वे च नारकतिर्यङ्मनुष्यामरगतिपरिणामाभाव स्यात्, तस्मात्स्यादनित्य. स्यान्नित्य आत्मेति अलमतिप्रसङ्गेन । सूत्र० १ श्रु० १ अ०।

दव्वादिएहिं निच्चो, एगंतेणेव जेसिं अप्पा उ।
होइ अभावो तेसिं, सुहदुहसंसारमोक्खाणं ॥ ५९ ॥

व्याख्या-द्रव्यादिभि —द्रव्यक्षेत्रकालभावैर्नारकत्वविशिष्टक्षेत्रवयोऽवस्थितत्वाऽप्रसन्नत्वादिभिर्नित्य -अविचलितस्वभावः एकान्तेनैव-सर्वथैव येषां वादिनामात्मा-जीवः तुशब्दादन्यच्च वस्तु भवति-संजायते, अभाव.-असंभवस्तेषां वादिना केषां सुखदु खसंसारमोक्षाणां तत्राह्लादानुभवरूपं क्षणं सुखं, तापानुभवरूपं दु ख, तिर्यङ्नरनारकाऽमरभवसंसरणरूप संसार , अष्टप्रकारकर्मबन्धवियोगो मोक्ष , तत्र कथं पुनस्तेषा वादिना सुखाद्यभाव. ?. आत्मनोऽप्रच्युतानुत्पन्नस्थिरैकस्वभावाद् , अन्यथात्वापरिणते , सदैव नारकत्वादिभावाद्. अपरित्यक्तप्रसन्नत्वे पूर्वरूपस्य च प्रसन्नत्वेनाभवनाद् एवं शेषेष्वपि भावनीयमिति गाथार्थः।

ततश्चैवम्—

सुहदुक्खसंपओगो, न विज्जई निच्चवायपक्खम्मि ।
एगंतच्छेअंमि अ, सुहदुक्खविगप्पणमजुत्तं ॥ ६० ॥

व्याख्या-सुखदु खसंप्रयोग सम्यक्संगतो वा प्रयोग. संप्रयोग ; अर्कालिपन इत्यर्थ । न विद्यते नास्ति; न घटत इत्यर्थ , क्व-नित्यवादपक्षे-नित्यवादाभ्युपगमे संप्रयोगो न विद्यते, कल्पितस्तु भवत्येव, यथाऽऽहुर्नित्यवादिन —" प्रकृत्युपधानत पुरुषस्य सुखदुःख स्त , स्फटिके रक्ततादिवद् बुद्धिप्रतिबिम्बाद्वाऽन्ये " इति. कल्पितत्वं चास्य आत्मनस्तत्त्वत एव तथा परिणतिमन्तरेण सुखाद्यभावादुपधानसंन्निधावप्यन्धोपले रक्ततादिवत् तदभ्युपगमे चाभ्युपगमक्षति , बुद्धिप्रतिबिम्बपक्षेऽप्यविचलितस्यात्मन सदैवैकस्वभावत्वात्। सदैवैकरूपप्रतिबिम्बाऽऽपत्ते । स्वभावभेदाभ्युपगमे चानित्यत्वप्रसङ्ग इति । मा भूदनित्यैकान्तग्रह इत्यत आह-एकान्तेन सर्वथा उत्—प्राबल्येन छेदो-विनाश एकान्तोच्छेद ; निरन्वयो नाश इत्यर्थ । अस्मिश्च किं सुखदु खयोर्विकल्पनं सुखदु खविकल्पनम् , अयुक्तम्-अघटमानकम्। अयमत्र भावार्थ -एकान्तोच्छेदेऽपि सुखाद्यनुभवितुस्तत्क्षण एव सर्वथोच्छेदादहेतुकत्वा-

त्तदुत्तरक्षणस्योत्पत्तिरपि न युज्यते, कुत पुनस्तद्विकल्पनामिति गाथार्थ । दश० ४ अ० ।

पूर्वं भावितमपीदं पुनरपि स्मारयन्नाह—

एक्कं पि सव्वकारग-परिणामाभावन्नभावयामेइ ।
नाया णाणाऽणन्नो, जह विन्नेयाइपरिणामं ॥३५३८॥

विशे० । ( अस्या. गाथाया. व्याख्या ‘सामाइय’ शब्दे सप्तमे भागे करिष्यते )

इदानीं देहव्यापित्वद्वारावसर इत्याह भाष्यकार —

वावि त्ति दारमहुणा, देहव्वावी मओऽग्गिउण्हं व ।
जीवो न उ सव्वगओ, देहे लिंगोवलंभाओ ॥ ५१ ॥

व्याख्या-व्यापीति द्वारमधुना तदेतद्व्याख्यायते, देहव्यापी-शरीरमात्र व्याप्तु शीलमस्येति तथा मत -इष्ट प्रवचनज्ञैर्जीवा; न तु सर्वग इति योग , तुशब्दस्यावधारणार्थत्वाच्च चारवादिमात्र , कुत इत्याह-देह लिङ्गोपलम्भात् शरीर एव सुखादिर्तल्लिङ्गोपलब्धे अग्न्यौष्ण्यवत् उष्णत्वं ह्यग्निलिङ्ग नान्यत्राग्नेर्नच नाग्नाविति ( गाथा ) प्रयोगार्थ । प्रयोगस्तु शरीरनियतदेश आत्मा परिमितदेश लिङ्गोपलब्धेरग्न्यौष्ण्यवदिति गाथार्थ । व्याख्याता प्रथमा मूलद्वारगाथा । दश० ४ अ० ।

आत्मानमधिकृत्य—

स च न सर्वव्यापी, तद्गुणस्य सर्वत्रानुपलभ्यमानत्वात्, घटवत् । नापि श्यामाकतण्डुलमात्र., अङ्गुष्ठपर्वमात्रो वा तावन्मात्रस्योपात्तशरीराव्यापित्वात्, त्वक्पर्यन्तशरीरव्यापित्वेन चोपलभ्यमानगुणत्वात् । तस्मात्स्थितमिदम्-उपात्तशरीरत्वक्पर्यन्तशरीरव्याप्यात्मा । सूत्र० १ श्रु० १ अ० १ उ० ।

अथ ते वादिन कायप्रमाणत्वमात्मन स्वय सवेद्यमानमप्यपलप्य नादृशकुशास्त्रसपर्कविनष्टसदृष्टयस्तस्य विभुत्व मन्यन्ते । अतस्तत्रोपलम्भमाह—

यत्रैव यो दृष्टगुणः स तत्र,
कुम्भादिवन्निष्प्रतिपक्षमेतत् ।
तथाऽपि देहाद्वहिरात्मतत्त्व-
मतत्त्ववादोपहताः पठन्ति ॥ ६ ॥

यत्रैव-देशे य पदाऽर्थो दृष्टगुणो दृष्टा -प्रत्यक्षादिप्रमाणतोऽनुभूता गुणा-धर्मा यस्य स तथा स पदार्थ तत्रैव-विवक्षितदेश एवोपपद्यत इति क्रियाध्याहारो गम्य , पूर्वस्यैवकारस्यावधारणार्थस्यात्राप्यऽभिसंवन्धात्तत्रैव-नान्यत्रेत्य -न्ययोगव्यवच्छेद । अमुमेवार्थं दृष्टान्तेन दृढयति—कुम्भादिवदिति-घटादिवत् । यथा कुम्भादेर्यत्रैव देशे रूपादयो गुणा उपलभ्यन्ते तत्रैव तस्यास्तित्व प्रतीयते, नान्यत्र । एवमात्मनोऽपि गुणाश्चैतन्यादयो देह एव दृश्यन्ते न बहि तस्मात्तत्प्रमाण एवात्मेति । यद्यपि पुष्पादीनामवस्थानदेशादन्यत्रापि गन्धादिगुण उपलभ्यते तथाऽपि तेन न व्यभिचार' । तदाश्रया हि गन्धादिपुद्गलास्तेषा च वैस्रसिकया प्रायोगिकया वा गत्या गतिमत्त्वेन तदुपलम्भकप्रमाणादेश यावदागमनोपपत्तेरिति । अत एवाह- निष्प्रतिपक्षमेतदिति'-एतन्निष्प्रतिपक्ष-बाधकरहितं न हि दृष्टेऽनुपपन्नं नामेति न्यायात् । ननु मन्त्रादिना भिन्नदेशस्थानामप्याकर्षणोच्चाटनादिको गुणो योजनशतादे परतोऽपि दृश्यत इत्यस्ति बाधकमिति चेत् । मैव वोच. । स हि न खलु मन्त्रादीना गुण , किं तु-तदधिष्ठातृदेवताना तासां चाऽऽकर्षणीयोच्चाटनीयादिदेशगमने कौतस्कुतोऽयमुपालम्भ । न जातु गुणा गुणिनमतिरिच्य वर्तन्त इति । अथोत्तरार्द्धं व्याख्यायते—‘तथापी' त्यादि, तथापि-एवं नि सपत्न-व्यवस्थितेऽपि तत्त्वे अतत्त्ववादोपहता अनाचार इत्यत्रेव नञ कुत्सार्थत्वात् कुत्सिततत्त्ववादेन तदभिमताप्ताभासपुरुषविशेषप्रणीतेन तत्त्वाभासप्ररूपणेनोपहता-व्यामोहिता देहाद् बहि शरीरव्यतिरिक्तेऽपि देशे आत्मतत्त्वम्—आत्मस्वरूप पठन्ति . शास्त्ररूपतया प्रणयन्ते इत्यक्षरार्थ । भावार्थस्त्वयम्-आत्मा सर्वगतो न भवति, सर्वत्र तद्गुणानुपलब्धे । यो य सर्वत्रानुपलभ्यमानगुण स स सर्वगतो न भवति । यथा घट , तथा चायम् तस्मात्तथा व्यतिरेके व्योमादि न चायमसिद्धो हेतु । कायव्यतिरिक्तदेशे तद्गुणाना बुद्ध्यादीना वादिना प्रतिवादिना वाऽनभ्युपगमात् । तथा च भट्ट श्रीधर -“ सर्वगतत्वेऽप्यात्मनो देहप्रदेशे ज्ञातृत्वं नान्यत्र शरीरस्योपभोगायतनत्वात् । अन्यथा तस्य वैयर्थ्यादिति” । अथाऽस्त्यदृष्टमात्मनो विशेषगुणस्तच्च सर्वोत्पत्तिमतां निमित्त सर्वव्यापक च । कथमितरथा द्वीपान्तरादिष्वपि प्रतिनियतदेशवर्तिपुरुषोपभोग्यानि कनकरत्नचन्दनाङ्गनादीनि तेनोत्पाद्यन्ते । गुणश्च गुणिन विहाय न वर्तते अतोऽनुमीयते सर्वगत आत्मेति । नैवम् । अदृष्टस्य सर्वगतत्वसाधने प्रमाणाभावात् । अथाऽस्त्येव प्रमाण वह्नेरूर्ध्वज्वलन वायोस्तिर्यक्पवनं चादृष्टकारितमिति चेत्-न, तयोस्तत्स्वभावत्वादेव तत्सिद्धेः दहनस्य दाहशक्तिवत् साप्यदृष्टकारिता चेत्तर्हि जगत्त्रयवैचित्रीसूत्रणेऽपि तदेव सूत्रधारायता किमीश्वरकल्पनया । तन्नायमसिद्धो हेतु । न चानैकान्तिक साध्यसाधनयोर्व्याप्तिग्रहणेन व्यभिचाराभावात् । नाऽपि विरुद्ध । अत्यन्त विपक्षव्यावृत्तत्वात्, आत्मगुणाश्च बुद्ध्यादय शरीरे एवोपलभ्यन्ते, ततो गुणिनाऽपि तत्रैव भाव्यम् , इति सिद्ध कायप्रमाण आत्मा । अन्यच्च त्वयात्मना बहुत्वमिष्यते "नानाऽऽत्मानो व्यवस्थात " इति वचनात्, ते च व्यापकास्तेषा प्रदीपप्रभामण्डलानामिव परस्परानुवेधे तदाश्रितशुभाऽशुभकर्मणामपि परस्परं सङ्कर स्यात्, तथा चैकस्य शुभकर्मणा अन्य. सुखी भवेत् इतरस्याशुभकर्मणा चाऽन्यो दु खीत्यसमंजसं समापद्येत । अन्यच्च—एकस्यैवात्मन स्वोपात्तशुभकर्मविपाकेन सुखित्वं परोपार्जिताऽशुभकर्मविपाकसम्बन्धेन च दु खित्वमिति युगपत् सुखदु खसवेदनप्रसङ्ग । अथ स्वायत्तोपभोगायतनमाश्रित्यैव शुभाऽशुभयोर्भोगस्तर्हि स्वोपार्जितमप्यदृष्टं कथ भोगायतनाद् बहिर्निष्क्रम्य वह्नेरूर्ध्वज्वलनादिक करोतीति चिन्त्यमेतत् । आत्मना च सर्वगतत्वे एकैकस्य सृष्टिकर्तृत्वप्रसङ्ग सर्वगतत्वेनऽपरात्मान्तरानुप्रवेशस्य सभावनीयत्वात् । ईश्वरस्य वा तदन्तरानुप्रवेश

१-नियतकस्थात् ।

नस्यापि अकर्तृत्वापत्तिः । न हि क्षीरनीरयोरस्योन्यसंबन्धे एकतरस्य पानादिक्रिया अन्यतरस्य न भवतीति युक्तं वक्तुम्, किञ्च-आत्मनः सर्वगतत्वे नरनारकादिपर्यायाणां युगपदनुभवानुषङ्गः अथ भोगायतनाभ्युपगमान्नायं दोष इति चेन्ननु न भोगायतनं सर्वात्मनावष्टभ्नीयादेकदेशेन वा सर्वात्मनाचेत्तदभिमताऽङ्गीकारः एकदेशेन चेत्सावयवत्वप्रसङ्गः परिपूर्णभोगाऽभावश्च । अथाऽऽत्मनो व्यापकत्वाभावे दिग्देशान्तरवर्तिपरमाणुभिर्युगपत् संयोगाभावादाद्यकर्माभावस्तदभावादन्त्यसंयोगस्य तन्निमित्तशरीरस्य तेन तत्संबन्धस्य चाभावादनुपायसिद्धः सर्वदा सर्वेषां मोक्षः स्यात् । नैवम् । यद् येन संयुक्तं तदेव तं प्रत्युपसर्पतीति नियमाऽसंभवात् । अयस्कान्तं प्रत्ययसस्तेनाऽसंयुक्तस्याप्याकर्षणोपलब्धेः । अथासंयुक्तस्याप्याकर्षणे तच्छरीरारम्भं प्रत्येकमुखीभूतानां त्रिभुवनोदरविवरवर्तिपरमाणूनामुपसर्पणप्रसङ्गान्न जाने तच्छरीरं कियत्प्रमाणं स्यादिति चेत्, संयुक्तस्याप्याकर्षणे कथं स एव दोषो न भवेत् । आत्मनो व्यापकत्वेन सकलपरमाणूनां तेन संयोगात् । अथ तद्भावाविशेषेऽप्यदृष्टवशाद् विवक्षितशरीरोत्पादनानुगुणा नियता एव परमाणव उपसर्पन्ति तदितरत्रापि तुल्यम् । अथाऽस्तु यथाकथंचिच्छरीरोत्पत्तिस्तथापि सावयवं शरीरं, प्रत्यवयवमनुप्रविशन्नात्मा सावयवः स्यात्, तथा चास्य पटादिवत्कार्यत्वप्रसङ्गः कार्यत्वे चासौ विजातीयैस्सजातीयैर्वा कारणैरारभ्येत । न तावद्विजातीयैस्तेषामनारम्भकत्वात् नहि तन्तवो घटमारभन्ते । न च सजातीयैर्यत आत्मत्वाभिसंबन्धादेव तेषां कारणानां सजातीयत्वम् । पार्थिवादिपरमाणूनां विजातीयत्वात् । तथा चात्मभिरात्माऽऽरभ्यत इत्यायातं, तच्चायुक्तम्-एकत्र शरीरेऽनेकात्मनामारम्भकाणामसंभवात् संभवे वा प्रतिसंधानाऽनुपपत्तिः । न ह्यन्येन दृष्टमन्यः प्रतिसंधातुमर्हति अतिप्रसङ्गात् । तदारभ्यत्वे चास्य घटवदवयवक्रियातो विभागात्संयोगविनाशाद्विनाशः स्यात् । तस्माद्व्यापक एवात्मा युज्यते कायप्रमाणतायामुक्तदोषसद्भावात् इति चेत्-न, सावयवत्वकार्यत्वयोः कथंचिदात्मन्यभ्युपगमात् । तत्र सावयवत्वं तावदसंख्येयप्रदेशात्मकत्वात् । तथा च द्रव्यालङ्कारकारौ-" आकाशोऽपि सदेशः सकृत् सर्वमूर्ताभिसंबन्धार्हत्वात् " इति । यद्यप्यवयवप्रदेशयोर्गन्धहस्त्यादिषु भेदोऽस्ति तथापि नात्र सूक्ष्मेक्षिका चिन्त्या । प्रदेशेष्वप्यवयवव्यवहारात् कार्यत्वं तु वक्ष्यामः । नन्वात्मना कार्यत्वे घटादिवत्प्राक्प्रसिद्धसमानजातीयावयवारभ्यत्वप्रसक्तिः अवयवा ह्यवयविनमारभन्ते यथा तन्तवः पटमिति चेन्न वाच्यम् । न खलु घटादावपि कार्ये प्राक्प्रसिद्धसमानजातीयकपालसंयोगारभ्यत्वं दृष्टम् । कुम्भकारादिव्यापारान्वितान्मृत्पिण्डात्प्रथममेव पृथुबुध्नोदराद्याकारस्याऽस्योत्पत्तिप्रतीतेः । द्रव्यस्य हि पूर्वाकारपरित्यागेनोत्तराकारपरिणामः कार्यत्वं तच्च बहिरिवान्तरप्यनुभूयत एव । ततश्चात्मापि स्यात् कार्यः । न च पटादौ स्वावयवसंयोगपूर्वककार्यत्वोपलम्भात्सर्वत्र तथाभावो युक्तः काष्ठे लोहलेख्यत्वोपलम्भात् वज्रेऽपि तथाभावप्रसङ्गात् । प्रमाणबाधनमुभयत्रापि तु-

१-हेमचन्द्र-गुणचन्द्रौ ।

ल्यम् । न च-उक्तलक्षणकार्यत्वाभ्युपगमेऽप्यात्मनोऽनित्यत्वानुषङ्गात्प्रतिसन्धानाभावोऽनुषज्यते । कथंचिदनित्यत्वे सत्येवास्योपपद्यमानत्वात् । प्रतिसन्धानं हि यमहमद्राक्षं तमहं स्मरामि इत्यादिरूपं तच्चैकान्तनित्यत्वे कथमुपपद्यते अवस्थाभेदात् अन्या ह्यनुभवावस्था अन्या च स्मरणावस्था । अवस्थाभेदे चाऽवस्थावतोऽपि भेदादेकरूपत्वक्षतेः कथंचिदनित्यत्वं युक्त्याऽऽयातं केन वार्यताम् । अथाऽऽत्मनः शरीरपरिमाणत्वे मूर्तत्वानुषङ्गाच्छरीरेऽनुप्रवेशो न स्यान्मूर्ते मूर्तस्यानुप्रवेशविरोधात्ततो निरात्मकमेवाखिलं शरीरं प्राप्नोतीति चेत् किमिदं मूर्तत्वं नाम असर्वगतद्रव्यपरिमाणत्वं रूपादिमत्त्वं वा । तत्र नाद्यः पक्षो दोषाय । संमतत्वात् । द्वितीयस्त्वयुक्तो व्याप्त्यभावात्, न हि यदसर्वगतं तन्नियमेन रूपादिमदित्यविनाभावोऽस्ति । मनसोऽसर्वगतत्वेऽपि भवन्मते तदसंभवात् । आकाशकालदिगात्मनां सर्वगतत्वं परममहत्त्वं सर्वसंयोगिसमानदेशत्वं चेत्युक्तत्वान्मनसो वैधर्म्यात्सर्वगतत्वप्रतिषेधनात् । अतो नात्मनः शरीरेऽनुप्रवेशानुपपत्तिर्येन निरात्मकं तत्स्यात् असर्वगतद्रव्यपरिमाणलक्षणमूर्तत्वस्य मनोवत्प्रवेशाऽप्रतिबन्धकत्वात् । रूपादिमत्त्वलक्षणमूर्तत्वोपेतस्यापि जलादेर्वालुकादावनुप्रवेशो न निषिध्यते । आत्मनस्तु तद्रहितस्यापि तत्रासौ प्रतिषिध्यते इति महच्चित्रम् । अथात्मनः कायप्रमाणत्वे बालशरीरपरिमाणस्य सतो युवशरीरपरिमाणस्वीकारः कथं स्यात् । किं तत्परिमाणपरित्यागात्तदपरित्यागाद्वा । परित्यागाच्चेत्तदा शरीरवत्तस्याऽनित्यत्वप्रसङ्गात्परलोकाद्यभावानुषङ्गः । अथाऽपरित्यागात् । तन्न । पूर्वपरिमाणाऽपरित्यागे शरीरवत्तस्योत्तरपरिमाणोत्पत्त्यनुपपत्तेः । तदयुक्तम् । युवशरीरपरिमाणावस्थायामात्मनो बालशरीरपरिमाणपरित्यागे सर्वथा विनाशाऽसंभवात् । विफणावस्थोत्पादे सर्पवत् । इति कथं परलोकाभावोऽनुषज्यते पर्यायतस्तस्याऽनित्यत्वेऽपि द्रव्यतो नित्यत्वात् । अथ आत्मनः कायप्रमाणत्वे तत्खण्डने खण्डनप्रसङ्ग इति चेत्क. किमाह । शरीरस्य खण्डने कथंचित् तत्खण्डनस्येष्टत्वात् । शरीरसंबद्धात्मप्रदेशेभ्यो हि कतिपयात्मप्रदेशानां खण्डितशरीरप्रदेशेऽवस्थानादात्मनः खण्डनं तच्चात्र विद्यत एव । अन्यथा शरीरात् पृथग्भूतावयवस्य कम्पोपलब्धिर्न स्यात् । न च खण्डितावयवानुप्रविष्टस्यात्मप्रदेशस्य पृथगात्मत्वप्रसङ्गस्तत्रैवानुप्रवेशात् । न चैकत्र सन्तानेऽनेके आत्मानः अनेकार्थप्रतिभासिज्ञानानामेकप्रमात्राधारतया प्रतिभासाऽभावप्रसङ्गात् शरीरान्तरव्यवस्थितानेकज्ञानावसेयार्थसंवित्तिवत् । कथं खण्डितावयवयोः संघट्टनं पश्चादिति चेत् एकान्तेन छेदानभ्युपगमात् पद्मनालतन्तुवच्छेदस्यापि स्वीकारात् । तथाभूतादृष्टवशात्तत्संघट्टनमविरुद्धमेवेति तनुपरिमाण एवात्माङ्गीकर्तव्यो न व्यापकः, तथा च-आत्मा व्यापको न भवति चेतनत्वात् यत्तु व्यापकं न तच्चेतनम् । यथा व्योम चेतनश्चाऽऽत्मा । तस्मान्न व्यापकः अव्यापकत्वे चास्य तत्रैवोपलभ्यमानगुणत्वेन सिद्धा कायप्रमाणता । यत् पुनरष्टसमयसाध्यकेवलिसमुद्घातदशायामार्हतानामपि चतुर्दशरज्ज्वात्मकलोकव्यापित्वेनात्मनः सर्वव्यापकत्वं तत् कादाचि-

स्कामिति, न तेन व्यभिचार । स्याद्वादमन्त्रकवचावगुण्ठितानां च नेदृशविभीषिकाभ्यो भयमिति काव्यार्थः । स्या० ।

(१६) इदानीं कर्तृद्वारावसरस्तथा चाह (भाष्यकार)—

कत्त त्ति दारमहुणा, सकम्मफलभोइणो जओ जीवा ।
वाणियकिसीवला इव, कविलमयनिसेहणं एयं ॥५०॥

व्याख्या-कर्त्तेति द्वारमधुना तदेतद्व्याख्यायते-स्वकर्मफलभोगिनो यतो जीवास्ततः कर्त्तार इति, वणिक्कृषीवलादय इव, न ह्यमी अकृतमुपभुञ्जन्त इति प्रयोगार्थ, प्रयोगस्तु-कर्तात्मा, स्वकर्मफलभोक्तृत्वात्, कर्षकादिवत् । ऐदंपर्यमाह—कपिलमतनिषेधमेतत्-साख्यमतनिराकरणमेतत्, तत्राऽकर्तृवादप्रसिद्धेरिति गाथार्थ । मूलद्वारगाथाद्वये व्याख्यात कर्तृद्वारम् । दश० ४ अ० ।

जेसिं पि अत्थि आया,वत्तव्वा ते त्ति अम्ह वि स अत्थि ।
किं तु अकत्ता न भवइ, वेययइ जेणं सुहदुक्खं ॥७५॥

व्याख्या-येषामपि द्रव्यास्तिकादिनयमतावलम्बिनां तन्त्रान्तरीयाणा किम्? अस्ति-विद्यते आत्मा जीव वक्तव्यास्तेऽपि तन्त्रान्तरीया साध्वेतदस्माकमप्यस्ति स, तदभावे सर्वक्रियावैफल्यात्, किन्तु-अकर्त्ता न भवति—सुकृतदुष्कृतानां कर्मणामकर्त्ता न भवति—अनिष्पादको न भवति, किं तु-कर्त्तैव, अत्रैवोपपत्तिमाह-वेदयते-अनुभवति येन कारणेन, किम्?-सुखदु खं-सुकृतदुष्कृतकर्मफलमिति भाव । न चाकर्तुरात्मनस्तदनुभावो युज्यते, अतिप्रसङ्गान्मुक्तानामपि सासारिकसुखदु खवेदनापत्ते, अकर्तृत्वाविशेषात्, प्रकृत्यादिवियोगस्याप्यनाधेयातिशयमेकान्तेनाकर्त्तारमात्मान प्रत्यकिंचित्करत्वात्, अल विस्तरेणेति गाथार्थ । दश० ४ अ० ।

(आत्मन. सक्रियत्वं साधयन्नाह)—

कत्ताइत्तणओ वा, सकिरिओऽयं मओ कुलालो व्व ।
देहप्फन्दणओ वा, पचक्खं जंतपुरिसो व्व ॥ १८४६ ॥

पराशङ्कां प्रतिविधान चाऽऽह—

देहप्फंदणहेऊ, होज पयतो त्ति सो वि नाकिरिए ।
होज्जा दिट्ठो व मई, तदरूवत्ते नणु समाणं ॥ १८४७ ॥
रूवित्तम्मि सदेहो, वच्चो तप्फंदणे पुणो हेऊ ।
पइनिययपरिप्फंदण-मचेयणाणं न वि य जुत्तं ॥१८४८॥

विशे०। (आसां गाथानां व्याख्यानम् 'बन्धमोक्खसिद्धि' शब्दे पञ्चमे भागे वक्ष्यते)

साख्यमते आत्मनोऽक्रियत्वम्—

"अमूर्तश्चेतनो भोगी, नित्य सर्वगतोऽक्रिय ।
अकर्ता निर्गुण सूक्ष्म, आत्मा कपिलदर्शने" ॥ १ ॥ इति ।
स्या० १५ श्लोक ।

१-"देहस्पन्दनहेतुर्भवेत् प्रयत्न इति सोऽपि नाक्रिये ।
भवेद्दृष्टो वा मतिस्तदरूपत्वे ननु समानम् ॥ १८४७ ॥
२-रूपित्वे स देही वाच्यस्तत्स्पन्दने पुनर्हेतु ।
प्रतिनियतपरिस्पन्दनमचेतनानां नापि च युक्तम् ॥ १८४८ ॥

(एतन्मतनिराकरणम्)—

जे केइ लोगंमि उ अकिरियआया,
अन्नेण पुट्ठा धुयमादिसंति ।
आरंभसत्ता गढिता य लोए,
धम्मं ण जाणंति विमुक्खहेउं ॥ १६ ॥

सूत्र० १ श्रु० १० अ० ।

(अस्य सूत्रस्य व्याख्यानम् 'अकिरियाआय' शब्दे प्रथमभागे गतम्)

(१७) (आत्मनो विभुत्वविचार)—

न च-आत्मनो विभुत्वमसिद्धम्, अनुमानात् तत्सिद्धे । तथाहि-बुद्ध्यधिकरण द्रव्य विभु, नित्यत्वे सत्यस्मदाद्युपलभ्यमानगुणाधिष्ठानत्वात्, यद्यन्नित्यत्वे सत्यस्मदाद्युपलभ्यमानगुणाधिष्ठानं तत्तद्विभु, यथा आकाशम्, तथा च-बुध्यधिकरणं द्रव्य, तस्माद्विभु-नच बुद्धेर्गुणत्वासिद्धेहेतुविशेषणासिद्धया हेतोरसिद्धिरभिधातुं शक्या, बुद्धिगुणत्वस्यानुमानात्सिद्धे । सम्म० १ काण्ड १ गाथाटी० ।

(बुद्धेर्गुणत्वाऽसाधनम् 'बुद्धि' शब्दे पञ्चमे भागे वक्ष्यते)

आत्मन. प्रदेशत्वाऽप्रदेशत्वविचार —

न च-आत्मन प्रदेशास्सन्ति येन प्रदेशवृत्तित्वं ज्ञानस्य सिद्धं स्यात् । कल्पितप्रदेशाभ्युपगमे च तद्वृत्तित्वमपि हेतु कल्पित इति न कल्पितात्साधनात्साध्यसिद्धिर्युक्ता, सर्वत्र सर्वसिद्धिप्रसङ्गात् । संदिग्धविपक्षव्यावृत्तिकत्वं च हेतोर्विपर्यये बाधकप्रमाणाभावादत्राऽपि समानमिति ।

तथा-स्वदेहमात्रव्यापकत्वेन हर्षविषादाद्यनेकविवर्तात्मकस्याहमिति स्वसंवेदनप्रत्यक्षसिद्धत्वादात्मनो विभुत्वसाधकत्वेनोपन्यस्यमान सर्व एव हेतु प्रत्यक्षबाधितकर्मनिर्देशानन्तरप्रयुक्तत्वेन कालात्ययापदिष्ट । सत्प्रतिपक्षश्चायं हेतुरित्यसत्प्रतिपक्षत्वमप्यस्य लक्षणमसिद्धम् । स्वदेहमात्रात्मप्रसाधकश्च प्रतिपक्षहेतुरत्रैव प्रदर्शयिष्यते । तन्नातोऽपि हेतोरात्मनो विभुत्वसिद्धि ।

यदप्यात्मनो विभुत्वसाधनं कैश्चिदुपन्यस्तम्-"अदृष्टं स्वाश्रयसंयुक्ते आश्रयान्तरे कर्मारभते एकद्रव्यत्वे सति क्रियाहेतुगुणत्वाद्यो य एकद्रव्यत्वे सति क्रियाहेतुगुण स स्वाश्रयसंयुक्ते आश्रयान्तरे कर्मारभते यथा वेग, तथा च-अदृष्ट, तस्मात्तदपि स्वाश्रयसंयुक्ते आश्रयान्तरे कर्मारभत इति । न चासिद्धं क्रियाहेतुगुणत्वम्, 'अग्नेरूर्ध्वज्वलन वायोस्तिर्यक्पवनम्, अणु-मनसोश्चाद्यं कर्म देवदत्तविशेषगुणकारितम्, कार्यत्वे सति देवदत्तस्योपकारकत्वात्, पाण्यादिपरिस्पन्दवत् एकद्रव्यत्वं चैकस्यात्मनस्तदाश्रयत्वात् एकद्रव्यमदृष्टं विशेषगुणत्वात्, शब्दवत् । एकद्रव्यत्वादित्युच्यमाने रूपादिभिर्व्यभिचारस्तन्निवृत्त्यर्थं क्रियाहेतुगुणत्वादित्युक्तम् । क्रियाहेतुगुणत्वादित्युच्यमाने मुसलहस्तसंयोगेन स्वाश्रयासंयुक्तस्तम्भादिचलनाहेतुना व्यभिचार, तन्निवृत्त्यर्थमेकद्रव्यत्वे सति, इति विशेषणम् । 'एकद्रव्यत्वे सति क्रियाहेतुत्वात्' इत्युच्यमाने स्वाश्रयासंयुक्तलोहादिक्रियाहेतुनाऽयस्कान्तेन व्यभिचार, तन्निवृत्त्यर्थं 'गुणत्वादित्यभिधानम्'" एतदपि प्रत्यक्षेणा-

धितप्रतिज्ञासाधकत्वेनैकशाखाप्रभवत्वानुमानवदनुमानाभासम् । 'एकद्रव्यत्वे' इति च विशेषणं किमेकस्मिन्द्रव्ये संयुक्तत्वाद्, उत-तत्र समवायात् ? तत्र यद्याद्यः पक्ष, स न युक्तः, संयोगगुणेनाऽदृष्टस्य गुणवत्त्वात् द्रव्यत्वप्रसङ्गे 'क्रियाहेतुगुणत्वाद्' इत्येतस्य बाधाप्रसङ्गात् । अथ द्वितीयस्तदा द्रव्येण सह कथंचिदेकत्वमदृष्टस्य प्राप्तम्, न ह्यन्यस्यान्यत्र समवायः घट-रूपादिषु तस्य तत्रानुभूतस्यैवोपलब्धेः । न हि घटाद्रूपादयः, तेभ्यो वा घटः तदन्तरालवर्त्ती समवायश्च भिन्नः प्रतीतिगोचरः, अपि तु-कथंचित् रूपाद्यात्मकाश्च घटपटादयः तदात्मकाश्च रूपादयः प्रतीतिगोचरचारिणोऽनुभूयन्ते, अन्यथा गुणगुणिभावेऽतिप्रसङ्गात् घटस्याऽपि रूपादयो पटस्य स्युः । 'तयो तत्राप्यप्रतीतेरितरेषां तु प्रतीतेः' इत्यादिकं प्रतिविहितत्वान्नात्रोद्घोष्यम् । तेन समवायेनैकत्रात्मनि वर्त्तनाददृष्टस्यैकद्रव्यत्वं वादिप्रतिवादिनोरसिद्धम्, एकान्तभेदे समवायाभावेनैकद्रव्यत्वस्यासिद्धेः ।

अथ गुणिनो गुणानामनर्थान्तरत्वे गुण-गुणिनोरन्यतर एव स्याद्, अर्थान्तरत्वे परपक्ष एव समर्थितः स्यादिति समवायः सिद्धः । कथंचिद्वादोऽपि न युक्तः; अनवस्थादिदोषप्रसङ्गाद्, अयुक्तमेतत्; पक्षान्तरेऽप्यस्य समानत्वात् । तथाहि-द्वित्वसंख्या-संयोगादिकमनेकेन द्रव्येणाभिसंबध्यमानं यदि सर्वात्मनाभिसंबध्यते द्वित्वसंख्यादिमात्रं द्रव्यमात्रं वा स्याद्, एकेनैव वा द्रव्येण सर्वात्मनाभिसंबन्धान्न द्रव्यान्तरेण तत्प्रतीतिः । अथैकेन देशेनैकत्र वर्त्तते अन्येनान्यत्र, तेऽपि देशा यदि ततो भिन्नास्तेष्वपि स तथैव वर्त्तते इत्यनवस्था । अभिन्नाश्चेदुक्तो दोषः । कथंचित्पक्षे परवाद एव समर्थितः स्यादित्यात्मना सहाऽदृष्टस्य कथञ्चिदनन्यभाव एव एकद्रव्यत्वमित्यविभुत्वाद् गुणानां तदव्यतिरिक्तस्यात्मनोऽप्यविभुत्वमिति विपक्षसाधकत्वादेकद्रव्यत्वलक्षणस्य हेतुविशेषणस्य विरुद्धत्वम् । 'क्रियाहेतुगुणत्वात्' इत्यत्रापि यदि देवदत्तसंयुक्तात्मप्रदेशे वर्त्तमानमदृष्टं द्वीपान्तरवर्त्तिषु मुक्ताफलादिषु देवदत्तं प्रत्युपसर्पणवत्सु क्रियाहेतुः, तदयुक्तम्; अतिदूरत्वेन द्वीपान्तरवर्त्तिभिस्तैस्तस्यानभिसंबन्धित्वेन तत्र क्रियाहेतुत्वाऽयोगात्, तथाऽपि तद्धेतुत्वे सर्वत्र स्याद्, अविशेषात् । अथाऽनभिसंबन्धाविशेषेऽपि यदेव योग्यं तदेव तेनाकृष्यते न सर्वमिति नातिप्रसङ्गः, नः चक्षुषः अप्राप्यकारित्वेऽपि यदेव योग्यं तदेव तद्ग्राह्यमिति यदुक्तं परेण-" अप्राप्यकारित्वे चक्षुषोर्दूरव्यवस्थितस्याऽपि ग्रहणप्रसङ्गः" इत्ययुक्तं स्याद् । अथ स्वाश्रयसंयोगसंबन्धसंभवाद् 'अनभिसंबन्धाद्' इत्यसिद्धम् । तथाहि-यमात्मानमाश्रित्यमदृष्टं तेन संयुक्तानि देशान्तरवर्त्तिमुक्ताफलादीनि देवदत्तं प्रत्याकृष्यमाणानि, नः सर्वस्याकर्षणप्रसङ्गात्तेनाभिसंबन्धाविशेषात् । न च-यददृष्टेन यज्जन्यते तत्तेनाकृष्यत इति कल्पना युक्तिमती, देवदत्तशरीरारम्भकपरमाणूना तददृष्टाजन्यत्वेनाऽनाकर्षणप्रसङ्गात्, तथाऽप्याकर्षणे अति प्रसङ्ग प्रतिपादित एव । यथा च कारणत्वाविशेषे घटदेशादौ सन्निहितमेव दण्डादिकं घटादिकार्यं जनयत्यदृष्टं त्वन्यथेत्यभ्युपगमः तथा बाह्येन्द्रियत्वाविशेषेऽपि त्वगिन्द्रियं प्राप्तमर्थमवभासयति,

लोचनं त्वन्यथेत्यभ्युपगमः किन्न युक्तः ?, नापि द्वीपान्तरवर्त्तिमुक्तादिसंयुक्ताऽऽत्मप्रदेशे वर्तमानं तं प्रत्युपसर्पणहेतु, विकल्पानुपपत्तेः । तथाहि-यथा वायुः स्वयं देवदत्तं प्रत्युपसर्पणवान् अन्येषां तृणादीनां तं प्रत्युपसर्पणहेतुः तथा यद्यदृष्टमपि तं प्रत्युपसर्पत् स्वयमन्येषां तं प्रत्युपसर्पणहेतुः, तथा सत्यदृष्टस्येव मुक्तादेरपि तथैव तं प्रत्युपसर्पणाविरोधाद् व्यर्थमदृष्टपरिकल्पनम् । तथाभ्युपगमे च 'यद्देवदत्तं प्रत्युपसर्पति तद्देवदत्तगुणाकृष्टं तं प्रत्युपसर्पणाद्' इति हेतुरनैकान्तिकः अदृष्टेनैव वायुवच्च सक्रियस्यमदृष्टस्य गुणत्वं बाधते । शब्दवच्चापरापरस्योत्पत्तावपरमदृष्टं निमित्तकारणं तदुत्पत्तौ प्रसक्तं, तत्राप्यपरमित्यनवस्था; अन्यथा शब्देऽपि किमदृष्टलक्षणनिमित्तपरिकल्पनया ? अदृष्टान्तरात्तस्य तं प्रत्युपसर्पणे तदप्यदृष्टान्तरं तं प्रत्युपसर्पत्यदृष्टान्तरात् तदपि तदन्तरादित्यनवस्था ।

अथ तत्रस्थमेव तत्तेषां तं प्रत्युपसर्पणे हेतु, तदपि न युक्तम्; अन्यत्र प्रयत्नादावात्मगुणे तथा अदर्शनात्, न हि प्रयत्नो प्रासादिसंयुक्ताऽऽत्मप्रदेशस्थ एव हस्तादिसंचलनहेतुर्ग्रासादिकं देवदत्तमुखं प्रति प्रापयन् दृष्टः, अन्तरालप्रयत्नवैफल्यप्रसङ्गात् । अथ प्रयत्नवैचित्र्यवददृष्टेऽदृष्टेऽप्यन्यथा कल्पनम् । तथाहि-कश्चित् प्रयत्नः स्वयमपरापरदेशवान् परत्र क्रियाहेतुर्यथानन्तरोदितः; अपरश्चाऽन्यथा यथा शरासनाध्यासपदसंयुक्तात्मप्रदेशस्थ एव शरीरादीनां लक्ष्यप्रदेशप्राप्तिक्रियाहेतुः । यद्येवम्, इयं चित्रता एकद्रव्याणां क्रियाहेतुगुणानां स्वाश्रयसंयुक्ताऽसंयुक्तद्रव्यक्रियाहेतुत्वेन किं नेष्यते विचित्रशक्तित्वाद्भावानां ? तथा दृष्टेरिति नोत्तरम्, अयस्कान्तभ्रामकस्पर्शगुणस्यैकद्रव्यस्य स्वाश्रयाऽसंयुक्तलोहद्रव्यक्रियाहेतुत्वे अप्याकर्षकाख्यद्रव्यविशेषव्यवस्थितस्य तथाविधस्यैव तस्य स्वाश्रयसंयुक्तलोहद्रव्यक्रियाहेतुत्वदर्शनात् । अथ द्रव्यं क्रियाकारणं न स्पर्शादिर्गुणः, द्रव्यरहितस्य क्रियाहेतुत्वादर्शनात्, नः वेगस्य क्रियाहेतुत्वं, क्रियायाश्च संयोगनिमित्तत्वं तस्य च द्रव्यकारणत्वं तत एव न स्यात्, तथा च वेगवदिति दृष्टान्ताऽसिद्धिः । अथ द्रव्यस्य तत्कारणत्वे वेगादिरहितस्यापि तत्प्रसक्तिः, स्पर्शादिरहितस्यायस्कान्तस्यापि स्पर्शस्याऽकारणत्वेऽन्यत्र क्रियाहेतुत्वप्रसक्तिः । तद्रहितस्य तस्याऽदृष्टेर्नायं दोषस्तर्हि लोहद्रव्यक्रियोत्पत्तावुभयं दृश्यत इत्युभयं तदस्तु, अविशेषात् । एवं सति 'एकद्रव्यत्वे सति क्रियाहेतुगुणत्वाद्' इति व्यभिचारी हेतुः । एतेन यदुक्तं परेण-" अदृष्टमेवायस्कान्तेनाकृष्यमाणलोहदर्शने सुखवत्पुंसो निःशल्यत्वेन तत्क्रियाहेतुः" इति तन्निरस्तम्, सर्वत्र कार्यकारणभावे अस्य न्यायस्य समानत्वात् अदृष्टमेव कारणं स्यात्, यस्य शरीरं सुखं दुःखं चोत्पादयति तददृष्टमेव तत्र हेतुरिति न तदारम्भकाऽवयवक्रियासंयोगादयः । अपि च-तददृष्टस्य कथं तद्धेतुत्वं ? तस्य भावे भावादभावे अभावादिति चेत् किं पुनरयस्कान्तस्पर्शाद्यभाव एव तत्क्रिया दृष्टा येनैषा तत्र कारणत्वाक्लृप्तिः ? ततो न दृष्टानुसारेण तत्रस्थस्यैवाऽदृष्टस्य तं प्रति तत्क्रियाहेतुत्वम् । प्रयत्नवैचित्र्याभ्युपगमे च हेतोरनैकान्तिकत्वम् ।

अथ सर्वत्राऽदृष्टस्य वृत्तिस्तर्हि सर्वद्रव्यक्रियाहेतुत्वम् । यददृष्टं यद् द्रव्यमुत्पादयति तत् तत्रैव क्रियामुपरचयतीत्यभ्युपगमे शरीरारम्भकेषु परमाणुषु तत क्रिया न स्यादित्युक्तम् । न च गुणत्वमप्यदृष्टस्य सिद्धमिति 'क्रियाहेतुगुणत्वात्' इत्यसिद्धो हेतु । अथ 'अदृष्ट गुण, प्रतिषिध्यमानद्रव्य-कर्मभावे सति सत्तासंबन्धित्वात् रूपादिवत्'। न च प्रतिषिध्यमानद्रव्यत्वमसिद्धम् । तथाहि—'न द्रव्यमदृष्टम्, एकद्रव्यत्वात्, रूपादिवत्' इति, असदेतत्; एकद्रव्यत्वस्याऽसिद्धताप्रतिपादनात्, सत्तासंबन्धित्वस्य चेति । यदपि तद्गुणत्वसाधनमुक्तम् 'देवदत्त प्रत्युपसर्पन्त. पश्वादयो देवदत्तविशेषगुणकृष्टास्तं प्रत्युपसर्पणवत्त्वात् ग्रासादिवत्' इति, तदप्ययुक्तं यतो यथा तद्विशेषगुणेन प्रयत्नाख्येन समाकृष्टास्तं प्रत्युपसर्पन्तो ग्रासाऽऽदयः समुपलभ्यन्ते तथा नयनाञ्जनादिद्रव्यविशेषेणाऽपि समाकृष्टा स्त्र्यादयस्तं प्रत्युपसर्पन्त. समुपलभ्यन्त एव, तत 'किं प्रयत्नसधर्मणा केनचिदाकृष्टा पश्वादय, उत नयनाञ्जनादिसधर्मणा' इति संदेह, शक्यते ह्येवमनुमानमारचयितुं परेणापि—'नयनाञ्जनादिसधर्मणा विवादगोचरचारिण पश्वादय समाकृष्टा देवदत्तं प्रत्युपसर्पन्ति, तं प्रत्युपसर्पणवत्त्वात् स्त्र्यादिवत्' । अथ तदभावेऽपि प्रयत्नादपि तद्दृष्टेरनैकान्तिकत्व प्रयत्नसधर्मणो गुणस्याभावेऽप्यञ्जनादेरपि तद्दृष्टेर्भवदीयहेतोरनैकान्तिकत्वम् । न चात्रानुमीयमानस्य प्रयत्नसधर्मणो हेतो सद्भावादव्यभिचार, अन्यत्राप्यञ्जनादिसधर्मणोऽनुमीयमानस्य सद्भावेनाव्यभिचारप्रसङ्गात् । तत्र प्रयत्नसामर्थ्यादस्य वैफल्येऽन्यत्राप्यञ्जनादिसामर्थ्यात् वैफल्यं समानम् । अथाऽञ्जनादेरेव त द्धेतुत्वे सर्वस्य तद्वत स्त्र्याद्याकर्षणप्रसक्ति, न चाऽञ्जनादौ सत्यप्यविशिष्टे तद्वतः सर्वान्प्रति तदागमनं ततोऽवसीयते 'तदविशेषेऽपि यद्वैकल्यात्तन्नेति तदपि कारणं नाञ्जनादिमात्रम्' इति । तदेतत्प्रयत्नकारणेऽपि समान, न हि सर्वं प्रयत्नवन्तं प्रति ग्रासादय उपसर्पन्ति, तदपहारादिदर्शनात् । ततोऽत्राप्यन्यत्कारणमनुमीयताम्, अन्यथा न प्रकृतेऽपि, अविशेषात् । तत प्रयत्नवदञ्जनादेरपि तं प्रति तदाकर्षणहेतुत्वात्कथ न संदेह ? अञ्जनादे. स्त्र्याद्याकर्षणं प्रत्यकारणत्वे गन्धादिवत्तदर्थिनां न तदुपादानम् । न च दृष्टसामर्थ्यस्याप्यञ्जनादे कारणत्वक्लृप्तिपरिहारेणान्यकारणत्वकल्पने भवताऽनवस्थामुक्तिः । अथाऽञ्जनादिकमदृष्टसहकारित्वात्तत्कारणं न केवलमिति, नन्वेवं सिद्धमदृष्टवदञ्जनादेरपि तत्र कारणत्व, तत संदेह एव 'किं ग्रासादिवत्प्रयत्नसधर्मणाऽऽकृष्टा पश्वादय, किं वा-'स्त्र्यादिवदञ्जनादिसधर्मणा तत्संयुक्तेन द्रव्येण' इति सदिग्धं 'गुणत्वात्' इत्येतत्साधन सपरिस्पन्दात्मप्रदेशमन्तरेण ग्रासाद्याकर्षणहेतो प्रयत्नस्यापि देवदत्तविशेषगुणस्य परं प्रत्यसिद्धत्वात् साध्यविकलता चात्र दृष्टान्तस्य । यच्च 'यद् देवदत्तं प्रत्युपसर्पन्ति' इत्युक्तं तत्र क पुनरसौ देवदत्तशब्दवाच्य ? यदि शरीर तदा शरीरं प्रत्युपसर्पणात् शरीरगुणाकृष्टा पश्वादय इति आत्मविशेषगुणाकृष्टत्वे साध्ये शरीरगुणाकृष्टत्वस्य साधनाद्विरुद्धो हेतु । अथाऽऽत्मा, तस्य समीकृष्यमाणपदार्थदेश-कालाभ्यां सदाभिसंबन्धात् न त प्रति कस्यचिदुपसर्पणम्—अन्यदेश प्रत्यन्यदेशस्योपसर्पणदर्शनात् अन्यकालं प्रत्यन्यकालस्य च यथाऽङ्कुरं प्रति अपरापरशक्तिपरिणामप्राप्तबीजादे' । न चैतदुभय नित्यव्यापित्वाभ्यामात्मनि सर्वत्र सर्वदा सन्निहिते संभवति 'अतो देवदत्त प्रत्युपसर्पन्त' इति धर्मिविशेषणं, 'देवदत्तगुणाकृष्टा इति साध्यधर्म, 'देवदत्तं' प्रत्युपसर्पणवत्त्वाद्' इति साधनधर्म' परस्य स्वरुचिविरचितमेव । नन्न शरीरसंयुक्त आत्मा सह तस्यापि नित्यव्यापित्वेन तत्र सन्निधानेनाऽनिवारणात्, न हि घटयुक्तमाकाश मेवादौ न सन्निहितम् । अथ शरीरसंयुक्त आत्मप्रदेशो देवदत्त. स काल्पनिक पारमार्थिको वा ?, काल्पनिकत्वे 'काल्पनिकात्मप्रदेशगुणाकृष्टा पश्वादय, तथाभूतात्मप्रदेशं प्रत्युपसर्पणवत्त्वाद्' इति तद्गुणानामपि काल्पनिकत्वं साधयेत् । तथा च सौगतस्येव तद्गुणकृत प्रेत्यभावोऽपि न पारमार्थिक स्यात्, न हि कल्पितस्य पावकस्य रूपादयस्तत्कार्यं वा दाहादिकं पारमार्थिकं दृष्टम् । पारमार्थिकाश्चेदात्मप्रदेशा, तेऽपि यदि ततोऽभिन्नास्तदात्मैव ते इति न पूर्वोक्तदोषपरिहार, भिन्नाश्चेत्तर्हि तद्विशेषगुणाकृष्टा पश्वादय इति तेषामेवाऽऽत्मत्वप्रसक्तिरित्यान्यात्मपरिकल्पना व्यर्था । तेषां च न द्वीपान्तरवर्तिभिर्मुक्तादिभि संयोग इति 'अदृष्टं स्वाश्रयसंयुक्तेऽन्यत्र क्रियाहेतु' इति व्याहतम् । संयोगे वाऽऽत्मवदित्यनिवृत्तो व्याघात । अथ तेषामप्यपरे शरीरसंयुक्ता' प्रदेशा देवदत्तशब्दवाच्या, तत्राप्यनन्तरदूषणमनवस्थाकारि । अथात्मानमन्तरेण कस्य ते प्रदेशा' स्युरिति तत्प्रदेशपर आत्मेत्यभ्युपगमनीयम् । नन्वर्थान्तरभूतत्वे आत्मन कथं तस्य ते इति व्यपदेश. ? अथ तेषु तस्य वर्तनात्तथा व्यपदेश, न सदेतत्, तथाऽभ्युपगमेऽवयविपक्षभाविदूषणावकाशात् । यथा च तेषां सदूषणत्व तथा प्रतिपादितम्, प्रतिपादयिष्यते चेत्यास्ता तावत् । तन्न परस्य देवदत्तशब्दवाच्य. कश्चिदस्ति यं प्रत्युपसर्पणवन्त. पश्वादय स्वक्रियाहेतोर्गुणत्वं साधयेयु । अतो नैतदपि साधनमात्मनो विभुत्वप्रसाधकम् ।

यदपि 'सर्वगत आत्मा, सर्वत्रोपलभ्यमानगुणत्वाद्, आकाशवद्' इति साधनं, तदप्यचारु; यतो यदि 'स्वशरीरे सर्वत्रोपलभ्यमानगुणत्वाद्' इति हेतुस्तथा सति तत्रैव ततस्तस्य सर्वगतत्वसिद्धेर्विरुद्धो हेत्वाभास' । अथ स्वशरीरवत्परशरीरेऽन्यत्र नोपलभ्यमानगुणत्वं हेतुस्तदा असिद्ध., तथोपलम्भाभावात्-नहि बुद्ध्यादयस्तद्गुणास्तत्रोपलभ्यन्ते, अन्यथा सर्वस्य सर्वज्ञताप्रसङ्ग । अथैकनगरे उपलब्धा बुद्ध्यादयो नगरान्तरेऽप्युपलभ्यन्ते, मनुष्यजन्मवज्जन्मान्तरेऽपीति कथ न सर्वत्रोपलभ्यमानगुणत्वं ? न, वायोरपि स्पर्शविशेषगुण एकत्रैकदा उपलब्धोऽन्यत्रान्यदोपलभ्यमान तस्यापि सर्वगतत्वं प्रसाधयेद्, अन्यथा तेनैव हेतोर्व्यभिचार. । अथ तांस्तान् देशान् क्रमेण गतस्य तस्य तद्गुण उपलभ्यते, आत्मनोऽपि तथैव तद्गुणस्योपलम्भ. इति समान पश्याम । न च तद्वत्तस्यापि सक्रियत्वप्रसक्तेरयुक्तमेतं कल्पनमिति वाच्यम्, इष्टत्वाद् । अथ लोष्टवत् ततो मूर्तत्वप्रसक्तिस्तस्य दोष । ननु कैव मूर्ति ?। असर्वगतद्रव्यपरिमाणं सति चेत् नाऽयं दोष, असर्वगता मयादिनो.

मीष्टत्वात् । रूप-रस-गन्ध-स्पर्शवत्त्वं मेति चेत् , न ता-दृशीं मूर्तिमात्मनः सक्रियत्वं साधयति, व्याप्त्यभावाद् रूपादिमन्मूर्त्यभावे सक्रियत्वात् । 'यो यः सक्रियः स रूपादिमन्मूर्तिमान् , यथा शरः , तथा चाऽऽत्मा, तस्माद्रूपादिमन्मूर्तिमान्' इति कथं न व्याप्तिसंभवः ? असदेतत् ; मनसाऽपि व्यभिचारात् । न च तस्याऽपि पक्षीकरणं, 'रूपादिविशेषगुणाऽनधिकरणं सद् मनोऽर्थं प्रकाशयति, शरीराद्यर्थान्तरत्वे सति सर्वत्र ज्ञानकारणत्वाद् , आत्मवद्' इत्यनुमानविरोधप्रसङ्गात् । न च सक्रियत्वं रूपादिमन्मूर्त्यभावेन विरुद्धं यतस्ततस्तन्निवर्तमानमात्मनि तथाविधां मूर्तिं साधयेत् । न च तथाविधमूर्तिरहितेऽम्बरादौ तदर्शनात्सिद्धो विरोधः, एकशाखाप्रभवत्वस्याप्यन्यत्र पक्षे अदर्शनाद्विरोधसिद्धिप्रसङ्गे । पक्ष एव व्यभिचारदर्शनात्सा तत्र नेति चेत् , नः सक्रियत्वस्याऽपि तथा व्यभिचारः समानः पक्षीकृत एवाऽऽत्मनि रूपादिमन्मूर्तिरहिते तद्दर्शनाद् । अनेनैव च तत्साधनाद्व्यभिचारः - इत्येकशाखाप्रभवत्वाऽनुमानेऽपि समानम् । प्रत्यक्षबाधितकर्मनिर्देशानन्तरप्रयुक्तत्वेन कालात्ययापदिष्टत्वमुभयत्र तुल्यम् । नच सक्रियत्वमात्मनो रूपादिमन्मूर्तित्वं साधयतीति व्यवस्थितम् ।

अथ सक्रियत्वे तस्यानित्यत्वम् । तथा हि-'यत्सक्रियं तदनित्यं, यथा लोष्टादि, तथा चाऽऽत्मा तस्मादनित्य' इति, एतदपि न सम्यक् , परमाणुभिरनैकान्तिकत्वात् ; कथंचिदनित्यत्वस्येष्टत्वात् सिद्धसाधनं च । सर्वात्मना अनित्यत्वस्य लोष्टादावप्यसिद्धत्वात्साध्यविकलता दृष्टान्तस्य । नच सर्वत्रोपलभ्यमानगुणत्वमात्मनः सिद्धम् ।

अपरे—सर्वत्रोपलभ्यमानगुणत्वमात्मनोऽतोऽनुमानात्साधयन्ति-" देवदत्तोपकरणभूतानि मणिमुक्ताफलादीनि द्वीपान्तरसंभूतानि देवदत्तगुणकृतानि कार्यत्वे सति देवदत्तोपकारकत्वात् , शकटादिवत् । न च तद्देशे असन्निहिता एव तद्गुणास्तान् व्युत्पादयितुं समर्थाः न हि पटदेशे असन्निधानवन्तस्तन्तु-तुरी-कुविन्दादयः पटमुत्पादयितुं क्षमाः । आत्मगुणानां च तद्देशसन्निधानं न तद्गुणिसंनिधिमन्तरेण संभवि, अगुणत्वप्राप्तेः, ततस्तस्यापि तद्देशत्वम् " असदेतत् ; तत्कार्यत्वेऽपि तेषां न 'अवश्यतया कार्यदेशसन्निधिमद् निमित्तकारणम्' इति नियम उपलब्धिगोचरः, अन्यदेशस्याऽपि ध्यानादेरन्यस्थितविषापनयनकार्यकर्तृत्वस्योपलब्धिविषयत्वात् नच अतोऽपि सर्वत्रोपलभ्यमानगुणत्वसिद्धिः इत्यसिद्धो हेतुः ।

एतेन 'विभुत्वान्महानाकाशः तथा चात्मा' इति निरस्तम् , विभुत्वस्यात्मन्यसिद्धेः । तथा हि-"सर्वमूर्तैर्युगपत्संयोगो विभुत्वम् " । न च सर्वमूर्तिमद्भिर्युगपत्संयोगस्तस्य सिद्धः । अथैकदेशवृत्तिविशेषगुणाधारत्वात्तस्य सर्वमूर्तैर्युगपत्संयोग आकाशस्येव सिद्धः , असदेतत् ; एकदेशवृत्तिविशेषगुणाधिष्ठानत्वस्य साधनस्य सर्वमूर्तिमत्संयोगाऽऽधारत्वस्य च साध्यस्याकाशेऽप्यसिद्धेरुभयविकलो दृष्टान्तः । न चाऽऽत्मदृष्टान्तादाकाशे साध्यसाधनोभयधर्मसंबन्धित्वं सिद्धमिति शक्यं वक्तुम्, इतरेतराश्रयदोषप्रसङ्गात् । यदपि 'विभुरात्मा, अणुपरिमाणानधिकरणत्वे सति नित्यद्रव्यत्वात् , यद्यदणुपरिमाणानधिकरणत्वे सति नित्यद्रव्यं तत्तद् विभु, यथा-आकाशं, तथा चाऽऽत्मा, तस्माद्विभु' इति, तदप्यसारं तन्नित्यत्वाऽसिद्धेर्हेतोरसिद्धत्वात् अणुपरिमाणानधिकरणत्वस्य च विशेषणस्यात्मनो द्रव्यत्वासिद्धेरसिद्धिः , तदसिद्धिश्च इतरेतराश्रयदोषप्रसङ्गात् । तथाहि-अणुपरिमाणान्यगुणस्य गुणत्वे सिद्धे अनाधारस्य तस्यासंभवादात्मनो गुणवत्त्वेन द्रव्यत्वसिद्धिः , तत्सिद्धौ च तदाश्रितत्वेनाणुपरिमाणान्यगुणस्य गुणत्वसिद्धिरिति व्यक्तमितरेतराश्रयत्वम् । न चाऽऽकाशस्याप्यणुपरिमाणानधिकरणत्वे सति नित्यद्रव्यत्वं विभुत्वं च सिद्धमिति साध्य-साधनविकलो दृष्टान्तः । न चाऽऽत्मदृष्टान्तबलात्तस्य तदुभयधर्मयोगित्वं सिद्धमिति वक्तुं युक्तम्, अत्रापीतरेतराश्रयदोषप्रसक्तस्य व्यक्तत्वात् । अपि च-अणुपरिमाणानधिकरणत्वे सति नित्यद्रव्यत्वं च भविष्यत्यविभुत्वं च, विपक्षे हेतोर्बाधकप्रमाणाऽसत्त्वेन ततो व्यावृत्त्यसिद्धेः सन्दिग्धानैकान्तिकश्च हेतुः । न च विपक्षे हेतोरदर्शनं बाधकं प्रमाणम् , सर्वात्मसंबन्धिनस्तस्यासिद्धानैकान्तिकत्वप्रतिपादनाद् । अपि च-आत्मनः स्वदेहमात्रव्यापकत्वेन सुखदुःखादिपर्यायाक्रान्तस्य स्वसंवेदनाध्यक्षसिद्धत्वात्तद्विभुत्वसाधकस्य हेतोरध्यक्षबाधितपक्षानन्तरप्रयुक्तत्वेन कालात्ययापदिष्टत्वम् । अन्यस्य च 'अहम्' इत्यध्यक्षासिद्धस्य प्रमाणाविषयत्वेनाऽसत्त्वादाश्रयासिद्धो हेतुरिति । अनया दिशा अन्येऽपि तद्विभुत्वसाधनायोपन्यस्यमाना हेतवो निराकर्तव्याः , अस्य निराकरणप्रकारस्य सर्वेषु तत्साधकहेतुषु समानत्वात् । तत् न आत्मनः कुतश्चित् विभुत्वसिद्धिः ।

अथापि स्यात् यथाऽस्माकं तद्विभुत्वसाधकं प्रमाणं न संभवति तथा भवतामपि तदविभुत्वसाधकप्रमाणाभाव इति नाऽनुपमसुखस्थानोपगतिस्तेषां सिद्ध्यतीति तदवस्थं चोद्यं, न हि परपक्षे दोषोद्भावनमात्रतः स्वपक्षाः सिद्धिमुपगच्छन्ति अन्यत्र स्वपक्षसाधकत्वलक्षणपरप्रयुक्तहेतुविरुद्धतोद्भावनात् , न चासौ भवता प्रदर्शितेति, न सम्यगेतत् ; तद्भावासिद्धेः । तथाहि-'देवदत्तात्मा देवदत्तशरीरमात्रव्यापकः, तत्रैव व्याप्त्योपलभ्यमानगुणत्वात् , यो यत्रैव व्याप्त्योपलभ्यमानगुणः स तन्मात्रव्यापकः, यथा देवदत्तस्य गृह एव व्याप्त्योपलभ्यमानभास्वरत्वादिगुणः प्रदीपः , देवदत्तशरीर एव व्याप्त्योपलभ्यमानगुणस्तदात्मा' इति । तदात्मनो हि ज्ञानाऽऽदयो गुणास्ते च तद्देह एव व्याप्त्योपलभ्यन्ते, न परदेहे, नाप्यन्तराले ।

अत्र केचिद्धेतोरसिद्धतामुद्भावयन्तः " शरीरान्तरेऽपि तदङ्गनासंबन्धिनि तद्गुणा उपलभ्यन्ते इत्यभिदधति । तथाहि-'देवदत्ताङ्गनाङ्गं देवदत्तगुणपूर्वकं, कार्यत्वे सति तदुपकारकत्वाद् , ग्रासादिवत्' । कार्यदेशे च सन्निहितं कारणं तज्जनने व्याप्रियते अन्यथातिप्रसङ्गादिति तदङ्गनाङ्गप्रादुर्भावदेशे तत्कारणात्तद्गुणसिद्धिः । तथा-तदन्तराले च प्रतीयन्ते । तथाहि-अग्नेरूर्ध्वज्वलनं, वायोस्तिर्यग् पवनम् तद्गुणपूर्वकं, कार्यत्वे सति तदुपकारकत्वाद् ग्रासादिवत् । यत्र च तद्गुणास्तत्र तद्गुण्यप्यनुमीयते इति, 'स्वदेह एव देवदत्ताऽऽत्मा' इति प्रतिज्ञा अनुमानबाधिता । ततोऽनुमानबाधितकर्मनिर्देशानन्तरप्रयुक्तत्वेन कालाऽत्य-

शापदिष्टो हेतु "। ननु केऽत्र देवदत्तात्मगुणा ये तदङ्गनाङ्गे तदन्तराले च प्रतीयन्ते ? यदि ज्ञान-दर्शन-सुखवीर्यस्वभावा -" सह वर्तिनो गुणाः -" इति वचनाद्-इति पक्षः, स न युक्तः; ज्ञान-दर्शन-सुखानि संवेदनरूपाणि न तदङ्गनाङ्ग-जन्मनि व्याप्रियमाणानि प्रतीयन्ते, नापि सत्तामात्रेण तद्देश प्रतीतिगोचरमाणि । वीर्यं तु शक्तिः क्रियानुमेया, साऽपि तद्देश एवानुमीयते, तत्रैव तल्लिङ्गभूतपरिस्पन्ददर्शनात् नस्याश्च तदङ्गनादेहनिष्पत्तौ देवदत्तस्य भार्या दुहिता स्यात् । ततस्तज्ज्ञानादेस्तद्देह-एव तत्कार्यजननविमुखस्य प्रतीतः प्रत्यक्षतस्तद्बाधितकर्म्मनिर्देशानन्तरप्रयुक्तत्वेन कालात्ययापदिष्टः " कार्यत्वे सति तदुपकारकत्वाद् ' इति हेतु ।

अथ धर्माधर्मौ तदङ्गनादिकार्यनिमित्तं तद्गुण, तद्युक्तं, न धर्माधर्मौ तदात्मनो गुणौ अचेतनत्वात्, शब्दादिवत् । न सुखादिना व्यभिचार, तत्र हेतोरवर्तनात्-नाह्ररुद्धत स्वसंवेदनलक्षणचैतन्येन तस्य व्याप्तत्वात् अभिमतपदार्थसंबन्धसमये एव स्वसंवेदनरूपाह्लादस्वभावस्य तदात्मनोऽनुभवात्, अन्यथा सुखादे स्वयमननुभवात् अनवस्थादोषप्रसङ्गाद् अन्यज्ञानेनाप्यनुभवे सुखस्य परलोकप्रवृत्तताप्रशक्तिः । प्रसाधित चैतत् प्राक् ।

न च-असिद्धता अचेतनत्वाद् इति हेतो । तथाहि—अचेतनौ तौ, अस्वसंविदितत्वात्, कुम्भवत् । न बुद्ध्या अस्य व्यभिचार , अस्या , स्वसंवेदनसाधनात्-'स्वग्रहणात्मिका बुद्धि , अर्थग्रहणात्मकत्वात्, यत्स्वग्रहणात्मकं न भवति न तद् अर्थग्रहणात्मक, यथा घट , इति व्यतिरेकी हेतु ।

न च धर्माऽधर्मयोर्ज्ञानरूपत्वाद्वैद्रष्टया , ज्ञानस्य च स्वग्रहणात्मकत्वादसिद्धो हेतुरिति वक्तव्य, तयो-ज्ञरूपग्रहणात्मकत्वे सुखादाविव विवादाभावप्रसक्तेः । अस्ति चासौ अनुमानोपन्यासान्यथानुपपत्ते तत्र । न च लौकिकपरीक्षकयो प्रत्यक्षं कर्मेति व्यवहारसिद्धम् । न चाविकल्पबोधविषयत्वात्स्वग्रहणात्मकत्वेऽपि तयोर्विवाद क्षणिकत्वादिवत्, तथा अनिश्चयात् तद्विषयऽतिप्रसङ्गात् । तथाहि-अविकल्पकाध्यक्षविषय जगज्जन्तुमात्रस्य, तथा—अनिश्चयस्तु क्षणिकत्ववत् निर्विकल्पकाध्यक्षविषयत्वात् । न च मूषिकालर्कविषविकारवत्तदनन्तर तत्फलादर्शनान्न तद्दर्शनव्यवहार इति, स्वसत्तासमये स्वकार्यजननसामर्थ्यं तस्य तदैव तत्कार्यमिति तदन्तर तद्दर्शनप्रसक्तेः अन्यदा तु स एव नास्तीति कुतस्ततस्तस्य भाव ?

अथ तयोरचेतनत्वेऽपि तदात्मगुणत्वे को विरोध अचेतनस्य चेतनात्मगुणत्वमेव । चेतनश्च तदात्मा स्वपरप्रकाशकत्वात् अन्यथा तदयोगात् कुड्यादिवत् । न च धर्माधर्मयोरभावादाश्रयासिद्धो हेतु , अनुमानतस्तयो सिद्धेः । तथाहि-चेतनस्य स्वपरज्ञस्य तदात्मनो हीनमातृगर्भस्थानप्रवेशस्तत्संबन्धान्यनिमित्त , अनन्यनेयत्वे सति तत्प्रवेशात्, मत्तस्याशुचिस्थानप्रवेशवत्, योऽसावन्य स द्रव्यविशेषो धर्मादिरिति । न च कस्यचित्पूर्वशरीरत्यागेन शरीरान्तरगमनाभावात्तत्प्रवेशोऽसिद्ध अनुमानात्तत्सिद्धे । तथाहि-तदहर्जातस्य स्तनादौ प्रवृत्तिस्तदभिलापपूर्विका, तत्त्वात्, मध्यदशावत् । यथा च परलोकाऽऽ-

गामी आत्मा अनुमानात्तिसिद्धिमुपगच्छति तथा प्राक् प्रतिपादितम् । सुखसाधनजलादिदर्शनानन्तरोद्भूतस्मरणसहायेन्द्रियप्रभवप्रत्यभिज्ञानक्रमोपजायमानाभिलापादेर्व्यवहारस्यैककर्तृपूर्वकत्वेन प्राक् प्रसाधितत्वात् नाऽत्र प्रयोग व्याप्त्यसिद्धि । अत एव स्तनादिप्रवृत्तेरभिलापः सिद्धिमासादयन् सङ्कलनाज्ञान गमयति तदपि स्मरणम्, तच्च सुखादिसाधनपदार्थदर्शनम् । 'कारणव्यतिरेकेण कार्योत्पत्तौ तस्य निर्हेतुकत्वप्रसक्तिः ' इति अत्र विपर्ययबाधकं प्रमाणं व्याप्तिनिश्चायक प्रदर्शितम् । अपूर्वप्राणिप्रादुर्भावे च सर्वोऽप्ययं व्यवहार प्रतिप्राणिप्रसिद्ध उत्सीदेत् , तज्जन्मनि सुखसाधनदर्शनादेरभावात्, न हि मातुरुदर एव स्तनादे सुखसाधनत्वेन दर्शनम् । यत प्रत्यग्रजातस्य तत्र स्मरणादिव्यवहार सम्भवदिति पूर्वशरीरसम्बन्धोऽप्यात्मनः सिद्ध ।

न च मध्यावस्थाया सुखसाधनदर्शनादिक्रमेणोपजायमानोऽपि प्रवृत्त्यन्तो व्यवहारो जन्मादावन्यथा कल्पयितु शक्य । विजानीयादपि गोमयादे कारणाच्छालूकादे कार्यस्योत्पत्तिदर्शनादिति वक्तुं शक्यं, जलपाननिमित्ततृषाच्छेदादावप्यनलनिमित्तत्वसंभावनया तदर्थिन पावकादौ प्रवृत्तिप्रसङ्गात् सर्वव्यवहारोच्छेदप्रसक्तेः ।

अथ ' देहिनो देहाद्देहान्तरानुप्रवेशस्तदभिलापपूर्वक गृहाद् गृहान्तरानुप्रवेशवद् ' इत्यतोऽन्यथासिद्धो हेतुरिति न द्रव्यविशेषं साधयति । तदुक्तं सौगतैः -" दु खे विपर्यासमति-स्तृष्णा वाऽबन्ध्यकारणम् । जन्मिनो यस्य ते न स्तो, न स जन्माधिगच्छति " ॥ १ ॥ इति, असदेतद् , इह जन्मनि प्राणिना तदभिलापस्य परलोकेऽभावात् न तेनैतस्य इति युक्तम् । नापि मनुष्यजन्मा हीनशून्यादिगर्भमभवेम-भिलपति यतस्तत्र तत्संभव स्यात् । तदेवं धर्माऽधर्मयोस्तदात्मगुणत्वनिषेधात्तद्विपर्ययानुमानबाधितमेतत् 'पावकादूर्ध्वज्वलनादिदेवदत्तगुणकारितम् ' इति ।

यत्पुनरुक्तम्- गुणवद् गुणि अप्यनुमानतस्तद्देशे अस्तीत्यनुमानबाधितस्वदेहमात्रव्यापकाऽऽत्मकर्मनिर्देशानन्तरप्रयुक्तत्वेनाद्यो हेतु कालात्ययापदिष्ट ' इति, तदपि निरस्तं; तत्र तत्सद्भावासिद्धे । यच्चान्यत्कार्यत्वे ' सति तदुपकारकत्वाद् इति, तत्र किं तद्गुणपूर्वकत्वाभावेऽपि तदुपकारकन्य दृष्ट यत कार्यत्वे सति इति विशेषणमुपादीयत सति संभवे व्यभिचारे च विशेषणोपादानस्यार्थवत्त्वात् ? कालेश्वरादौ दृष्टमिति चेत्, न कालेश्वरादिकमतद्गुणपूर्वकमपि यदि तदुपकारकं कार्यमपि किंचिदन्यपूर्वकं तदुपकारकं स्यादिति संदिग्धविपक्षव्यावृत्तिकत्वादनैकान्तिको हेतु । सर्वज्ञत्वाभावसाधने रागादिमत्त्वविशेषणस्येव तस्याभिधाने को दोष ? व्यभिचार कालेश्वरादिनेति चेत्, न, नित्यैकस्वभावात्कस्यचिदुपकारोभावाद् । अपि च—शुभ्रशरीरप्रवृत्तेर्माभावस्वद्विरूपत्वस्योपकारको भवति सोऽपि तद्गुणनिमित्त स्यात् । तदभ्युपगमे वा तत्र कार्यत्वासंभवेन विशेषणस्य हेतोरवर्तनाद्भागाऽसिद्धो हेतु । अतद्गुणनिमित्तत्वे तस्याप्यदस्यतद्गुणपूर्वक तदुपकारक तदेव स्यादिति न तद्गुणसिद्धि ।

यत्पुनर्ग्रसादिवद् इति निदर्शन तत्र यदि तदात्मगुणो

धर्मादिहेतु , साध्यवत्प्रसङ्ग । प्रयत्नश्चेत् , न, तत्स्वरूपासिद्धे —शरीरावयवप्रविष्टानामात्मप्रदेशानां परिस्पन्दस्य ज्वलनलक्षणक्रियारूपत्वाच्च गुणत्वं तत्त्वे वा गमनादेरपि तत्त्वात्र कर्मपदार्थसद्भाव कश्चिदपीति न युक्तं । क्रियावद् इति द्रव्यलक्षणं निष्क्रियत्वात्मनो न स इति चेत् , कुतस्तस्य निष्क्रियत्वम् अमूर्तत्वादिति चेत् प्रत्यक्षनिराकृतमेतत् प्रत्यक्षेण हि देशाद्देशान्तरं गच्छन्तमात्मानमनुभवति लोक । तथा च व्यवहारः-अहमद्य योजनमात्रं गत'. न च मन शरीर वा तद्व्यवहारविषय , तस्याऽहं प्रत्ययावेद्यत्वात् । तदेवं परस्य साध्यविकलं निदर्शनमिति स्थितम् । तत यदुक्तम्-'यस्मात्तदात्मनो गुणा अपि दूरदेशभाविनि तदङ्गनाङ्गे अन्तराले चोपलभ्यन्ते तस्मात्सिद्ध तस्य सर्वत्रोपलभ्यमानगुणत्वम् . अत. ' सर्वगत आत्मा, सर्वत्रोपलभ्यमानगुणत्वात् आकाशवद् ' इत्यनुमानबाधिता तदात्मस्वशरीरमात्रप्रतिज्ञा ' इति. तन्निरस्तं; सर्वेषां सर्वगतात्मप्रसाधकहेतूनां पूर्वमेव निरस्तत्वाद् । अतो न स्वदेहमात्रव्यापकात्मप्रसाधकहेतोरसिद्धि । नाऽप्यनुमानेन तत्पक्षबाधा । न च तद्देहव्यापकत्वेनैवोपलभ्यमानगुणोऽपि तदात्मा सर्वगतो निजदेहैकदेशवृत्तिर्वा स्यात् अविरोधात्संदिग्धविपक्षव्यावृत्तिकत्वादनैकान्तिको हेतु इति युक्तं, वाय्वादावपि तथाभावप्रसङ्गेन प्रतिनियतदेशसंबद्धपदार्थव्यवहारोच्छेदप्रसङ्ग । तथाहि—यद्यथा प्रतिभाति तत्तथैव सद्व्यवहारपथमवतरति, यथा प्रतिनियतदेशकालाकारतया प्रतिभासमानो घटादिकोऽर्थ , अन्यथा प्रतिभासमाननियतदेशकालाकारस्पर्शविशेषगुणोऽपि वायु सर्वगत स्यात् । न चात्र प्रत्यक्षबाध , परेण तस्य परोक्षत्वोपवर्णनात् । यदि च-स्वदेहैकदेशाश्रित , कथं तत्र सर्वत्र सुखादिगुणोपलब्धि. ? इतरथा सर्वत्रोपलभ्यमानगुणोऽपि वायुरेकपरमाणुमात्र स्यात् । नच क्रमेण सर्वदेहभ्रमणात्तस्य तथा तत्रोपलब्धि. युगपत्तत्र सर्वत्र सुखादेर्गुणस्योपलम्भात् । न चाऽऽशुवृत्तेर्यौगपद्याभिमान . अन्यत्रापि तथा प्रसङ्गे — शक्यं हि वक्तुं घटादिरप्येकावयववृत्ति आशुवृत्तेर्युगपत्सर्वेष्ववयवेषु प्रतीयत इति । अत एव सौगतोऽपि तत्रैकं निरंशं ज्ञानं कल्पयन्निरस्त', प्रत्यवयवमनेकसुखादिकल्पने सन्तानान्तरवत् परस्परमसंक्रमात् अनुस्यूतैकप्रतीतिविलोप सर्वत्र शरीरे मम सुखम् इति । अथ युगपद्वात्तिभिरेकशरीरवर्त्तिभिरनेकनिरंशक्षणिकसुखसंवेदनैरेकपरामर्शविकल्पजननादयमदोष , असदेतत्; अनेकोपादानस्य परामर्शविकल्पस्यैकत्वसंभवे चार्वाकाभिमतैकशरीरव्यपदेशभागनेकपरमाणूपादानानेकविज्ञानभावेऽपि तद्विकल्पसंभवात् । ततो यदुक्तं धर्मकीर्त्तिना त प्रति-" अनेकपरमाणूपादानमनेक चेद्विज्ञानं सन्तानान्तरवदेकपरामर्शाभाव. ' इति, तत्तस्य न सुभाषितं स्यात् ।

यच्च 'सावयव शरीरं प्रत्यवयवमनुप्रविशंस्तदात्मा सावयव स्यात्, तथा-पटवत् समानजातीयारब्धत्वाच्च तद्विनाशवाश्च स्याद् ' इति, तदपि न सम्यक्; घटादिना व्यभिचारात् घटादिर्हि सावयवोऽपि न तन्तुवत्प्राक्प्रसिद्धसमानजातीयकपालसंयोगपूर्वक , मृत्पिण्डात्प्रथममेव स्वावयवरूपतयात्मन. प्रादुर्भावादिति निरूपयिष्यमाणत्वाद् अपि च-यदि तदात्मनि कथंचिद्विनाश' प्रतिपादयितुमिष्ट समानजातीयावयवारब्धत्वात् तदा सिद्धसाधनं, तदभिन्नमसार्यवस्थाविनाशेन तद्रूपतया तस्यापि नष्टत्वात् । अथ सर्वात्मना सर्वथा नाश , स घटादावप्यसिद्ध इति साध्यविकलो दृष्टान्त. । यदि च-तद्दहजातबालाऽऽत्मा प्रागेकान्तनाशेस्तथा अवयवैरारभ्यते तदा स्तनादौ प्रवृत्तिश्च 'स्यात् , तदभिलाषप्रत्यभिज्ञान-स्मरण-दर्शनादेरभावात् । तदारम्भकावयवानां प्राक्तनो विषयदर्शनादिकमिति चेत् तर्हि नपामेय तद्दहजातवेलायां तत्वन्तराणामिव तत्र प्रवृत्ति. स्यात्मन., स्मरणाद्यभावात् । कारणगमने तस्यापि सर्वत्र सा स्यात् , ". कारणसंयोगिना कार्यमवश्यं संयुज्यते " इति वचनात् न तस्य विषयानुभवाभाव , भेदैकान्ते चास्याः प्रक्रियाया. समवायनिषेधेन निषेधात् ।

अथ कारणगुणप्रक्रमेण तत्र दर्शनादयो गुणा वर्ण्यन्ते, तेऽपि प्रागसन्त एव जायन्त इति, एवमपि न किंचित् परिहृतम् । एतेन " अवयवेषु क्रिया, क्रियातो विभाग', ततस्संयोगविनाश , ततोऽपि द्रव्यविनाश " इति परस्याऽऽकूतं पूर्वभवाऽन्ते तथा तद्विनाशे आदिजन्मनि स्मरणाद्यभावप्रसङ्गान्निरस्तम् । नचायमेकान्तः-कटकस्य केयूरभावे कुतश्चिद्भागेषु क्रिया, विभाग , संयोगविनाश., द्रव्यनाश , पुनस्तदवयवा केवला ; तदनन्तरं कर्म-संयोगक्रमेण केयूरभाव प्रमाणगोचरचारी । केवलं सुवर्णकारव्यापारात्कटकस्य केयूरीभावं पश्याम , अन्यथाकल्पने प्रत्यक्षविरोध । न हि पूर्वं विभागस्तत. संयोगविनाश इति, तद्भेदानुपलक्षणात्सैनन्य बुद्धिवद् । नचैकान्तेन तस्याः क्षणिकत्वे सुखसाधनदर्शनादय. संभवन्तीत्यऽसकृदावेदितमावेदयिष्यते चेत्यास्तां तावत् । ततो नाऽनैकान्तिको हेतु', विपक्षेऽसंभवात् । अत एव न विरुद्धोऽपीति भवत्यत. सर्वदोषरहितात् केशनखादिरहितशरीरमात्रव्यापकस्य विवादाध्यासितस्याऽऽत्मन सिद्धिरिति साधूक्तम्-" ठाणमणोवमसुहमुवगयाणं " इति । सम्म० १ काण्ड १ गाथाटी० ।

जीवानां नानात्वं व्यवस्थाप्य, भवतु तर्हि जीवाना नानात्वं, किन्त्वेकैको जीव सर्वजगद्व्यापकोऽस्त्विति नैयायिकादिमतमपाकुर्वन्नाह—

जीवो तणुमेत्तत्थो, जह कुंडो तग्गुणोवलंभाओ ।
अहवाऽणुवलंभाओ, भिन्नम्मि घडे पडस्सेव ॥१५८६॥

तनुमात्रस्थो जीव इति प्रतिज्ञा, तत्रैव तद्गुणोपलब्धे , यथा घट , स्वात्ममात्रे इति शेष. । ' अहवा ' इत्यादि, अथवा-यो यत्र प्रमाणैर्नोपलभ्यते तस्य तत्राभाव एव, यथा भिन्ने घटे पटस्य, नोपलभ्यते च शरीराद् बहिर्जीव , तस्मात्तस्य तत्राऽभाव एवेति । विशे० ।

सांप्रतं द्वितीयद्वारगाथा व्याख्यायते तत्र गुणीत्याद्यद्वारम् , तद्व्याचिख्यासयाऽऽह भाष्यकार.—

अहुणा गुणि त्ति दारं, होइ गुणेहिं गुणि त्ति विब्भमो ।
ते भोगजोगउवओ-गमाइरूवाइ व घडस्स ॥ ५२ ॥

व्याख्या-अधुना गुणीति द्वारं तदेतद्व्याख्यायते-भवति गुणैर्हि गुणी, न तद्व्यतिरेकेण इति एष विभ्रम , अनेन

गुणगुणिनोर्भेदाऽभेदमाह ;- ते भोगयोगोपयोगादयो गुणा इति आदिशब्दादमूर्तत्वसदिपरिग्रह , निदर्शनमाह-रूपादय इव घटस्य गुणा इति गाथार्थ. । व्याख्यात मूलद्वारगाथायां गुणिद्वारम् ।

अधुनोर्ध्वगतिद्वारावसर इत्याह भाष्यकार.—

उड्ढं गइ त्ति अहुणा, अगुरुलहुत्ता सभाव उड्ढगई ।
दिट्ठतलाउएणं, एरंडफलाइएहिं च ॥ ५३ ॥

व्याख्या—ऊर्ध्वगतिरित्यधुना द्वारम्—तदेतद्व्याख्यायते, अगुरुलघुत्वात्कारणात्स्वभावेन कर्मविप्रमुक्त सन्नूर्ध्वगति जीव इति गम्यते, यद्येव तर्हि कथमधो गच्छति ? अत्राह-दृष्टान्त -अलाबुना-तुम्बकेन, यथा तत्स्वभावेन ऊर्ध्वगमनरूपमपि मृल्लेपाज्जलेऽधो गच्छति तदपगमादूर्ध्वमाजलान्तादेवमात्मापि कर्मलेपादधो गच्छति तदपगमादूर्ध्वमालोकान्तादिति । एरण्डफलादिभिश्च दृष्टान्त इति, अनेन दृष्टान्तबाहुल्यं दर्शयति, यथा—चैरण्डफलमपि बन्धनपरिभ्रष्टमूर्ध्व गच्छति, आदिशब्दादग्न्यादिपरिग्रह इति गाथार्थ. । व्याख्यात द्वितीयमूलद्वारगाथायामूर्ध्वगतिद्वारम् ।

साम्प्रत निर्मयद्वारव्याचिख्यासयाऽऽह (भाष्यकार )—

अमओ य होइ जीवो, कारणविरहा जहेव आगासं ।
समयं च हो अनिच्च, मिम्मयघडतंतुमाईयं ॥ ५४ ॥

व्याख्या-अमयश्च भवति जीव न किमयोऽपीत्यर्थ., कुत इत्याह-कारणविरहात्-अकारणत्वात्, यथैवाकाशम् ; आकाशवदित्यर्थ । समयं च-वस्तु भवत्यनित्यम्, एतदेव दर्शयति-मृन्मयघटतन्त्वादि, यथा मृन्मयो घट., तन्तुमय पट इत्यादि, न पुनरात्मा, नित्य इति दर्शितम् । आह—अस्मिन् द्वारे सति 'अमयो, न तु मृन्मय इव घट' इति प्राक्किमर्थमुक्तमिति, उच्यते-अत एव द्वारादनुग्रहार्थमुक्त-मिति लक्ष्यते, भवति चास्मकृच्छ्रवणादक्लेशेन परिज्ञानमित्यनुग्रह , अतिगम्भीरत्वाद्भाष्यकाराभिप्रायस्य न वा वयमभिप्रायं विद्म इति । अन्ये त्वभिदधति अन्यकर्तृकैवासौ गाथेति गाथार्थ । व्याख्यात द्वितीयमूलद्वारगाथाया निर्मयद्वारम् ।

अधुना साफल्यद्वारावसर , तथा चाह भाष्यकार -

साफल्लदारमहुणा, निच्चाऽनिच्चपरिणामि जीवम्मि ।
होइ तयं कम्माणं, इहरेगमभावओ जुत्त ॥ ५५ ॥

व्याख्या-साफल्यद्वारमधुना-तदेतद्व्याख्यायते नित्यानित्य एव परिणामिनि, जीव इति योग भवति तत्साफल्य कालान्तरफलप्रदानलक्षणम् केषामित्याह-कर्मणा-कुशलाऽकुशलानाम् , कालभेदेन कर्तृभोक्तृपरिणामभेदे सत्यात्मनस्तदुभयोपपत्ते कर्मणा कालान्तरफलप्रदानमिति । इतरथा पुनर्यद्येवं नाभ्युपगम्यते तत एकस्वभावत्वत कारणादयुक्त नत्कर्मणा साफल्यमिति एतदुक्तं भवति यदि नित्य आत्मा कर्तृस्वभाव एव कुतोऽस्य भोग ? भोक्तृस्वभावत्वे चाकर्तृत्वम् क्षणिकस्य तु कालद्वयाभावादेवैतदुभयमनुपपन्नम् , उभयं च सति कालान्तरफलप्रदानेन कर्म सफलमिति गाथार्थः । द्वितीयमूलद्वारगाथाया व्याख्यातं साफल्यद्वारम् ।

(१८) अधुना परिमाणद्वारमाह ( भाष्यकार )—

जीवस्स उ परिमाणं, वित्थरओ जाव लोगमेत्तं तु ।
ओगाहणा य सुहुमा, तस्स पएसा असंखेज्जा ॥ ५६ ॥

व्याख्या जीवस्य तु परिमाण विततस्य विस्तरतो-विस्तरेण यावल्लोकमात्रमेव एतच्च केवलिसमुद्घातचतुर्थसमये भवति तथावगाहना च सूक्ष्मा विततैकैकप्रदेशरूपा भवति तस्य जीवस्य प्रदेशाश्चासंख्येया ; सर्वे एव लोकाकाशप्रदेशतुल्या इति गाथार्थ ।

अनेकधा जीवानां गणनापरिमाणमाह ( भाष्यकारः )[1]—

पत्थेण व कुलवेण व जह कोइ मिणेज्ज सव्वधन्नाइं ।
एवं मविज्जमाणा, हवंति लोगा अणंताओ ॥ ५७ ॥

व्याख्या-प्रस्थेन वा-चतु कुडवमानेन कुडवेन वा-चतु सेतिकामानेन-यथा कश्चित्प्रमाता मिनुयात् सर्वधान्यानि व्रीह्यादीनि एव मीयमाना असद्भावस्थापनया भवन्ति लोका अनन्तास्तु जीवभृता इति भाव । आह यद्येवं कथमेकस्मिन्नेव न लोके माता इति ?, उच्यते-सूक्ष्माऽवगाहनया यत्रैकस्तत्रानन्ता व्यवस्थिता , इह तु प्रत्येकावगाहनया चिन्त्यन्ते इति न दोष दृष्टं च बादरद्रव्याणामपि प्रदीपप्रभापरमाण्वादीना तथा परिणामतो भूयस्तामकत्रैवावस्थानमिति गाथार्थ । व्याख्यात द्वितीयमूलद्वारगाथायां परिमाणद्वारम् । तद्व्याख्यानाच्च द्वितीया मूलद्वारगाथा जीवपद चेति । दश० ४ अ० ।

( १६ ) आत्मन एकत्वाऽनेकत्वविचारः—

एगे आया । ( सूत्र २ )

एक ; न द्व्यादिरूप . आत्मा-जीव', कथञ्चिदिति गम्यते, तत्र अतति-सततमवगच्छति ' अत ' सातत्यगमने, इति वचनात् 'अत' धातोर्गत्यर्थत्वाद्गत्यर्थाना च ज्ञानार्थत्वादनवरत जानातीति निपातनाद्-आत्मा-जीवे , उपयोगलक्षणत्वादस्य सिद्धससारावस्थाद्वयेऽप्युपयोगभावेन सततावबोधभावात् . सततावबोधाभावे चाजीवत्वप्रसङ्गात्, अजीवस्य च सत पुनर्जीवत्वाभावात् . भावे चाकाशादीनामपि तथात्वप्रसङ्गात्. एवं च जीवाऽनादित्वाभ्युपगमाभावप्रसङ्ग इति अथवा-अतति-सततं गच्छति स्वकीयान् ज्ञानादिपर्यायानिति आत्मा नन्वेवमाकाशादीनामप्यात्मत्वप्रसङ्गः तेषामपि स्वपर्यायेषु सततगमनाद् अन्यथा अपरिणामित्वेनावस्तुत्वप्रसङ्गादिति, नैवम् . व्युत्पत्तिमात्रनिमित्तत्वादस्य . उपयोगस्यैव च प्रवृत्तिनिमित्तत्वात् , जीव एवा ऽत्मा, नाऽऽकाशादिरिति, यद्वा-संसारापेक्षया नानागतिषु सततगमनात् . मुक्तापेक्षया च भूततद्भावत्वादात्मेति, तस्य चैकत्व कथंचिदेव, तथाहि-द्रव्यार्थतयैकत्वमेकद्रव्यत्वादात्मन , प्रदेशार्थतया त्वनेकत्वमसंख्येयप्रदेशात्मकत्वात्तस्येति. तत्र द्रव्यं च तदर्थश्चेति द्रव्यार्थस्तस्य भावो द्रव्यार्थता प्रदेशगुणपर्यायाधारता अवयविद्रव्यतेति यावत् , तथा प्रकृष्टा देश प्रदेश -निरवयवोंऽश स चासावार्थश्चेति प्रदेशार्थ तस्य भाव प्रदेशार्थता-गुणपर्यायाधारावयवलक्षणार्थतेति यावत् । स्था० १ ठा० । ( तस्यदयवि द्रव्यमेव नास्ति, इत्यादिशङ्काप्रतीकार 'अवयवि' शब्दे प्रथमभागे ७६७ पृष्ठे द्रष्टव्य । )

[1] 'लो ' शब्दे षष्ठे भागे स्फुटा। प्रतेर पाठस्वीकृता च ]

आत्मनस्तु सप्रदेशत्वमवश्यमभ्युपगन्तव्यम् । निरवयवत्वे तु हस्ताद्यवयवानामेकत्वप्रसङ्गः प्रत्यवयवं स्पर्शाद्यनुपलब्धिप्रसङ्गश्चेति सप्रदेश आत्मा प्रत्यवयवं चैतन्यलक्षणतद्गुणोपलम्भात् । प्रतिग्रीवाद्यवयवमुपलभ्यमानरूपगुणघटवदिति स्थापितमेतद् द्रव्यार्थतयैक आत्मा इति । अथ वा-एक आत्मा कथंचिदिति, प्रतिक्षणं सम्भवद्भूतापरकालकृतकुमारतरुणतरतारकत्वादिपर्यायैरुत्पादविनाशयोगेऽपि द्रव्यार्थतयैकत्वादस्य, यद्यपि हि कालकृतपर्यायैरुत्पद्यते नश्यति च वस्तु तथाऽपि स्वपरपर्यायरूपानन्तधर्मात्मकत्वात्तस्य न सर्वथा नाशो युक्त इति, आह च—

न हि सव्वहा विणासो अद्धा पज्जायमित्तनासम्मि ।
सपरपज्जायाणं-ऽणंतधम्मुणो वत्थुणो जुत्तो ॥१॥ ' इति ।

किंच-प्रतिक्षणं क्षयिणो भावा इत्येतस्माद्वचनात्प्रतिपाद्यस्य यत् क्षणभङ्गविज्ञानमुपजायेत तदनेकसमयैरेव वाक्यार्थग्रहणपरिणामाज्जायते न तु प्रतिपत्तुः प्रतिसमयं विनाशे सति यत एकैकमक्षरं पदमन्त्यसंख्यातीतसमयसम्भूतं, संख्यातानि चाक्षराणि पदं संख्यातपदं च वाक्यं तदर्थग्रहणपरिणामश्च सर्वं क्षणभङ्गुरमिति संविज्ञानं भवेत्, तत्रायुक्तं समयैकस्थायित्वे, आह च—

'कह वा सव्वं खणियं, विन्नायं ? जइ मई सुयाओ त्ति ।
तदसंखसमयसुत्त-त्थगहणपरिणामओ जुत्तं ॥ १ ॥
न उ पइसमयविणासे, जेणेक्केक्कक्खरं पि य पयस्स ।
संखाईयसमइयं, संखेज्जाइं पय ताइं ॥ २ ॥
संखेज्जपयं वक्कं, तदत्थगहणपरिणामओ होइज्जा ।
सव्वक्खणभङ्गनाणं, तदजुत्तं समयनट्ठस्स " ॥३॥ इति ।

तथा सर्वथोच्छेदे तृप्त्यादयो न घटन्ते पूर्वसंस्कारानुवृत्तावेव तथा युज्यमानत्वात् आह च—' तित्तीसमो किलामो, सारिक्खविपक्खपच्चयाईणि । अज्झयणं सुमरणं, भावणा य का सव्वनासम्मि ' ॥ १ ॥ इति । (अस्या गाथाया व्याख्या )—तत्र तृप्ति -घ्राणि श्रम -अध्वादिखेद क्लमो-ग्लानि सादृश्य-साधर्म्यं विपक्षो-वैधर्म्यं प्रत्यय -अवबोध , शेषपदानि प्रतीतानि इत्यादि बहु वक्तव्यं तत्तु स्थानान्तरादवसेयमिति । तदेवम्—आत्मा स्थितिभवनभङ्गरूप स्थिररूपापेक्षया नित्यो नित्यत्वाच्चैको भवनभङ्गरूपापेक्षया त्वनित्यो ऽनित्यत्वाच्चानेक इति आह च—

' जमणंतपज्जयमयं, वत्थु भवणं च चित्तपरिणामं ।
ठिइविभवभंगरूवं, णिच्चाणिच्चाइ तोऽभिमयं"॥१॥ इति ।

एवं च—

"सुहदुक्खबंधमोक्खा, उभयनयमयाणुवत्तिणो जुत्ता ।
एगयरपरिच्चाए, सव्वव्ववहारवोच्छित्ति ॥ २ ॥ " इति ।

अथ वा-एक आत्मा कथंचिदेवेति यतो जैनानां न हि सर्वथा किंचिद्वस्तु एकमनेकं चास्ति सामान्यविशेषरूपत्वाद्वस्तुन , अथ ब्रूयाद्विशेषरूपमेव वस्तु, सामान्यस्य विशेषेभ्यो भेदाऽभेदाभ्यां चिन्त्यमानस्यायोगात्, तथाहि—सामान्यं विशेषेभ्यो भिन्नमभिन्नं वा स्यात् ? न भिन्नमुपलम्भाभावात् नचानुपलभ्यमानमपि सत्तया व्यवहर्तुं शक्यं खरविषाणस्यापि तथा प्रसङ्गात् । अथाऽभिन्नमिति पक्ष , तथा च सामान्यमात्रं वा स्याद्विशेषमात्रं वेति, न ह्येकस्मिन्सामान्यमेकं विशेषास्त्वनेकरूपा इत्यसंकीर्णवस्तुव्यवस्था स्यादिति, अत्रोच्यते-न ह्यस्माभि सामान्यविशेषयोरेकान्तेन भेदोऽभेदो वाऽभ्युपगम्यते, अपि तु विशेषा एव प्रधानीकृतास्तुल्यरूपा उपसर्जनीकृततुल्यरूपा विषमतया प्रख्यायमाना विशेषा व्यपदिश्यन्ते त एव च विशेषा उपसर्जनीकृताः तुल्यरूपा प्रधानीकृततुल्यरूपा , समतया प्रख्यायमानाः सामान्यमिति व्यपदिश्यन्त इति, आह च—

" निर्विशेषं गृहीताश्च, भेदा सामान्यमुच्यते ।
ततो विशेषसामान्यं, विशिष्टत्वं न युज्यते ॥ १ ॥
वैषम्यसमभावेन, ख्यायमाना इमे किल ।
प्रकल्पयन्ति सामान्य-विशेषस्थितिमात्मनि ॥ २ ॥" इति ।

तदेवं सामान्यरूपेणात्मा एको विशेषरूपेण त्वनेक , न च-आत्मनां तुल्यरूपं नास्ति एकात्मव्यतिरेकेण शेषात्मनामनात्मत्वप्रसङ्गादिति, तुल्यश्च स्वरूपमुपयोग ' उपयोगलक्षणो जीव ' इति वचनात् तदेवमुपयोगरूपैकलक्षणत्वात्सर्वे एवात्मान एकरूपाः, एवं च एकलक्षणत्वादेक आत्मेति, अथवा-जन्ममरणसुखदु खादिसंवेदनप्रवाहमहाप्रवाहादेक आत्मेति भावनीयमिति । इह च सर्वसूत्रेषु कथंचित्त्वमनुस्मरणीयं, कथंचिद्वादस्याविरोधेन सर्ववस्तुव्यवस्थानिबन्धनत्वात् , उक्तं च—' स्याद्वादाय नमस्तस्मै यं विना सकला क्रिया । लोकद्वितयभाविन्यो, नैव साङ्गत्यमियति ॥१॥ " तथा-' नयास्तव स्यात्पदसत्त्वलाञ्छिता, रसोपविद्धा इव लोहधातव । भवन्त्यभिप्रेतफला यतस्ततो भवन्तमार्या प्रणता हितैषिण ॥ १ ॥ ' इति । स्था० १ ठा० । एक आत्मा कथंचिदिति गम्यते, इदं च सर्वसूत्रेष्वनुगमनीयम् , तत्र प्रदेशार्थतया असंख्यातप्रदेशोऽपि जीवो द्रव्यार्थतया एक । अथ वा-प्रतिक्षणं पूर्वस्वभावक्षयाऽपरस्वरूपोत्पादयोगेनानन्तभेदोऽपि ' कालत्रयानुगामिचैतन्यमात्रापेक्षया एक एव आत्मा, अथवा-प्रतिसन्तानं चैतन्यभेदेनाऽनन्तत्वेऽप्यात्मना सग्रहनयाऽश्रितसामान्यरूपापेक्षयैकत्वमात्मन इति । तथा न आत्मा अनात्मा—घटादिपदार्थ , सोऽपि प्रदेशार्थतया संख्येयाऽसंख्येयानन्तप्रदेशोऽपि तथाविधैकपरिणामरूपद्रव्यार्थापेक्षया एक एव, एवं सन्तानापेक्षयाऽपि तुल्यरूपापेक्षया तु अनुपयोगलक्षणैकस्वभावयुक्तत्वात्कथंचिद्भिन्नस्वरूपाणामपि धर्मास्तिकायादीनामनात्मनामेकत्वमवसेयमिति । सू० १ सम० टी० । ननु बहुभेदत्वमात्मनोऽसिद्धं तस्य सर्वत्रैकत्वात् , तदुक्तम्—

' एक एव हि भूतात्मा भूते भूते प्रतिष्ठित ।
एकधा बहुधा चैव, दृश्यते जलचन्द्रवत् ॥ १ ॥
यथा विशुद्धमाकाशं, तिमिरोपप्लुतो जन ।
संकीर्णमिव मात्राभि-र्भिन्नाभिरभिमन्यते ॥ २ ॥
तथेदममलं ब्रह्म, निर्विकल्पमविद्यया ।
कलुषत्वमिवापन्नं भेदरूपं प्रकाशते ॥ ३ ॥
ऊर्ध्वमूलमध शाख-मश्वत्थं प्राहुरव्ययम् ।
छन्दांसि यस्य पर्णानि, यस्तं वेद स वेदवित् ॥ ४ ॥"

तथा ' पुरुष एवेदं सर्वं यद् भूतं यच्च भाव्यम् , उतामृतत्वस्येशानो , यदन्नेनातिरोहति ; यदेजति यन्नैजति, यद् दूरे, यदन्तिके, यदन्तरस्य सर्वस्य, यत्सर्वस्यास्य बाह्यत ' इत्यादि ।

इत्येतदेव पूर्वार्द्धेनोत्क्षिप्योत्तरार्द्धेन परिहरन्नाह—

जइ पुण सो एगो च्चिय, हवेज्ज वोमं व सव्वपिंडेसु ।
गोयम ! तदेगलिंगं, पिंडेसु तहा न जीवोऽयं ॥१५८१॥

परः प्राह-यदि पुनर्दर्शितन्यायेन स आत्मा सर्वेष्वपि नारकतिर्यङ्नरामरपिण्डेषु व्योमवदेक एव भवेत्तु संसारीतरादिभेदभिन्न , तर्हि किं नाम दूषणं स्याद् ?; एवमुक्ते भगवानाह-गौतम ! तद्व्योम सर्वेष्वपि पिण्डेषु-मूर्तिविशेषेषु स्थितमेकलिङ्गं वैसदृश्याभावादेकरूपमेव, इति युक्तं तस्यैकत्वम्, जीवस्त्वयं विचार्यत्वेन प्रस्तुतो न तथा-नैकलिङ्गः सर्वत्र दृश्यते, प्रतिपिण्डं तस्य विलक्षणत्वात् लक्षणभेदे च लक्ष्यभेदात् इति न तस्यैकत्वमिति ।

अत्र प्रयोगमाह—

नाणा जीवा कुंभा-दत्र्यो व्व भुवि लक्खणाइभेयाओ ।
सुहदुक्खबंधमोक्खा-भावो य जओ तदेगत्ते ॥१५८२॥

नानारूपा भुवि जीवाः, परस्परं भेदभाज इत्यर्थः , लक्षणादिभेदादिति हेतुः, कुम्भादय इवेति दृष्टान्तः । यच्च न भिन्नं, न तस्य लक्षणभेदः, यथा नभस इति । सुखदुःखबन्धमोक्षाभावश्च यस्मात्तदेकत्वे तस्माद्भिन्ना एव सर्वेऽपि जीवा इति ।

कथं पुनस्तेषां प्रतिपिण्डं लक्षणभेदः ? इत्याह—

जेणोवओगलिंगो, जीवो भिन्नो य सो पइसरीरं ।
उवओगो उक्करिसा-ऽवगरिसओ तेण तेऽणंता ॥१५८३॥

येन ज्ञानदर्शनोपयोगलक्षणोऽसौ जीवः, स चोपयोगः प्रतिशरीरमुत्कर्षापकर्षभेदादनन्तभेदः, तेन जीवास्तद्भेदादनन्तभेदा एवेति । तदेव भावितम् 'नाणा जीवा' इत्यादि पूर्वार्द्धम् ।

इदानीं सुखदु खेत्याद्युत्तरार्द्धं भावयन्नाह—

एगत्ते सव्वगय-त्तओ य न मोक्खाऽऽदओ नभसस्सेव ।
कत्ता भोत्ता मंता, न य संसारी जहाऽऽगासं ॥१५८४॥

एकत्वे जीवानां सुखदुःखबन्धमोक्षादयो नोपपद्यन्ते, सर्वगतत्वात्, नभस इव, यत्र तु सुखादयो न तत्सर्वगतं, यथा देवदत्त इति । किं च-न कर्त्ता, न भोक्ता, न मन्ता, न संसारी जीवः, एकत्वात् सर्वजीवानां, यच्चैकं न तस्य कर्तृत्वादयः, यथा नभस इति ।

अपि च—

एगत्ते नऽत्थि सुही, बहूवघाउ त्ति देसनिरुउ व्व ।
बहुतरबद्धत्तणओ, न य मुक्को देसमुक्को व्व ॥ १५८५ ॥

इदमत्र हृदयम्-नारकतिर्यगादयोऽनन्ता जीवा नानाविधशरीरमानसोपघातसंपातैर्दुःखिता एव, तदनन्तभागवर्तिनस्तु सुखिनः, एवम् अनन्ता बद्धाः, तदनन्तभागवर्तिनस्तु मुक्ताः, तेषां च सर्वेषामेकत्वे न कोऽपि सुखी प्राप्नोति, बहुतरोपघातान्वितत्वात्, यथा सर्वाङ्गरोगग्रस्तोऽङ्गुल्येकदेशेन नीरोगो यज्ञदत्तः एवं न कोऽपि मुक्तस्तत्सुखभाक् च न कोऽपि घटते बहुतरबद्धत्वात्, यथा सर्वाङ्गकीलिता ऽङ्गुल्येकदेशमुक्तस्तस्मादेकत्वे सुखाद्यनुपपत्तेर्नानात्वं जीवानामिति स्थितम् । विशे० ।

तथा च—

एगे भवं०जाव संबुद्धे सावगधम्मं पडिवज्जित्ता पडिगते ।

'एगे भवं' ति-एको भवान् इत्येकत्वाभ्युपगमे आत्मनः कृते भगवता श्रोत्रादिविज्ञानानामवयवानां चात्मनोऽनेकशः उपलब्ध्या एकत्वं दूषयिष्यामीति बुद्ध्या पर्यनुयोगो द्विजेन कृतः, यावच्छब्दात्—'दुवे भवं' ति गृहीते द्वौ भवान् इति च द्वित्वाभ्युपगमेऽहमित्येकत्वविशिष्टस्यार्थस्य द्वित्वविरोधेन द्वित्वं दूषयिष्यामीति बुद्ध्या पर्यनुयोगो विहितः । अत्र भगवान् स्याद्वादपक्षं निखिलदोषगोचरातिक्रान्तमवलम्ब्योत्तरमदायि--एकोऽप्यहं कथं द्रव्यार्थतया जीवद्रव्यस्यैकत्वात्,न तु प्रदेशार्थतया ह्यनेकत्वात्, ममेत्यवयवादीनामेकत्वोपलम्भो न बाधकः ज्ञानदर्शनार्थतया कदाचिद् द्वित्वमपि न विरुद्धमित्यत उक्तं-द्वावप्यहं, किं चैकस्यापि स्वभावभेदेनानेकधात्वं दृश्यते, तथाहि-एको हि देवदत्तादिपुरुष एकदैव तत्तदपेक्षया पितृत्वपुत्रत्वभ्रातृव्यत्वमातुलत्वभागिनेयत्वादीननेकान् स्वभावान् लभते । 'तहा-अक्खए अव्वए निच्चे अवट्ठिए आय' त्ति-यथा जीवद्रव्यस्यैकत्वादेकस्तथा प्रदेशार्थतया असंख्येयप्रदेशतामाश्रित्याऽक्षयः, सर्वथा प्रदेशानां क्षयाभावात्, तथा अव्ययः कियतामपि च व्ययत्वाभावात् असंख्येयप्रदेशता हि न कदाचनाप्यपैति, अतो व्यवस्थितत्वान्नित्यताभ्युपगमेऽपि न कश्चिद्दोषः, इत्येवं भगवताऽभिहिते तेनापृष्टेऽप्यात्मस्वरूपे तद्बोधार्थं, व्यवच्छिन्नसंशयः संजातसम्यक्त्वः 'दुवालसविहं सावगधम्मं पडिवज्जित्ता सट्ठाणमुवगओ सोमिलमाहणो'। नि० १ श्रु० ३ वर्ग ३ अ० ।

एगे भवं, दुवे भवं, अक्खए भवं, अव्वए भवं, अवट्ठिए भवं, अणेगभूयभावभविए भवं । एवं सुया एगे वि अहं दुवे वि अहं ०जाव अणेगभूयभावभविए वि अहं. से केणऽट्ठेणं भन्ते ! एगे वि अहं ०जाव सुया दव्वट्ठाए एगे अहं, णाणदंसणट्ठयाए दुवे अहं, पएसट्ठयाए अक्खए वि अहं, अव्वए वि अहं, उवओगट्ठए अणेगभूयभावभविए वि अहं । ( सूत्र-५५ + )

ज्ञाता० १ श्रु० ५ अ० । ( अस्य सूत्रखण्डस्य व्याख्या 'थावच्चापुत्त' शब्दे चतुर्थभागे २४०७ पृष्ठे करिष्यते )

मुक्तोऽपि वाऽभ्येतु भवं भवो वा,
भवस्थशून्योऽस्तु मिताऽऽत्मवादे ।
षड्जीवकायं त्वमनन्तसंख्य-
माख्यस्तथा नाथ ! यथा न दोषः ॥ २९ ॥

व्याख्या-मितात्मवादे-संख्यातानामात्मनामभ्युपगमे, दूषणद्वयमुपतिष्ठते; तत्क्रमेण दर्शयति-मुक्तोऽपि वा अभ्येतु भवमिति—मुक्तो—निर्वृतिप्राप्तः सोऽपि वा ( अपिरेवमर्थे, वाशब्द उत्तरदोषापेक्षया समुच्चयार्थः, यथा देवो वा मानवो वेति ।) भवमभ्येतु-संसारमभ्यागच्छतु इत्येको दोषप्रसङ्गः ।

भवो वा भवस्थशून्योऽस्तु-भव-संसारः स वा भवस्थ-
शून्य-संसारिभिर्जीवैर्विरहित अस्तु-भवतु इति द्वितीयो
दोषप्रसङ्ग । इदमत्राऽऽकूतम्-यदि परिमिता एवाऽऽत्मानो
मन्यन्ते तदा तत्त्वज्ञानाभ्यासप्रकर्षादिक्रमेणापवर्गं गच्छत्सु
तेषु संभाव्यते खलु स कश्चित्कालो यत्र तेषां सर्वेषां नि-
र्वृति., कालस्याऽनादिनिधनत्वाद् आत्मना च परिमित-
त्वात्संसारस्य रिक्तता भवन्ती केन वार्यताम् । समुन्नीयते
हि प्रतिनियतसलिलपटलपरिपूरिते सरसि पवनतपनात-
पनजनोदञ्चनादिना कालान्तरे रिक्तता । नत्राऽयमर्थ प्रा-
माणिकस्य कस्यचित्प्रसिद्ध. संसारस्य स्वरूपहानिप्र-
सङ्गात् तत्स्वरूपं ह्येतद्यत्र कर्मवशवर्तिन प्राणिन संसर-
न्ति ससारेषु ससरिष्यन्ति चेति सर्वेषा च निर्वृतत्वे
संसारस्य वा रिक्तत्वं हठादभ्युपगन्तव्यम् । मुक्तैर्वा पुन-
र्भवे आगन्तव्यम् । न च क्षीणकर्मणा भवाधिकारः-" दग्धे
बीजे यथाऽत्यन्त, प्रादुर्भवति नाङ्कुर । कर्मबीजे तथा दग्धे,
न रोहति भवाङ्कुर " ॥ १ ॥ इति वचनात् । आह च पत-
ञ्जलि -" सति मूले तद्विपाको जात्यायुर्भोगा " इति एत-
ट्टीका च-"सत्सु क्लेशेषु कर्माऽऽशयो विपाकारम्भी भवति
नोच्छिन्नक्लेशमूल । यथा तुषावनद्धा. शालितण्डुला अ-
दग्धबीजभावा प्ररोहणसमर्था भवन्ति , नापनीततुषा
दग्धबीजभावा वा । तथा क्लेशावनद्ध कर्माशयो विपाक-
प्ररोही भवति; नापनीतक्लेशो-न दग्धबीजभावो वा इति ।
स च विपाकस्त्रिविधो जातिरायुर्भोग ' इति । अक्षपादो-
ऽप्याह-"न प्रवृत्ति प्रतिसंधानाय हीनक्लेशस्य" इति, एवं
विभङ्गज्ञानिशिवराजर्षिमतानुसारिणो दूषयित्वा उत्तरार्द्धेन
भगवदुपज्ञमपरिमितात्मवादं निर्दोषतया स्तौति- षड्जीवे'
त्यादि त्वं तु हे नाथ ! अनन्तसंख्यम्-अनन्ताख्यसंख्या-
विशेषयुक्तं षड्जीवकायम् , अजीवन् जीवन्ति, जी-
विष्यन्ति चेति जीवा —इन्द्रियादिज्ञानादिद्रव्यभावप्राण-
धारणयुक्तास्तेषाम् " संघऽ(वाऽ)नूर्ध्वे " ॥ ५।३।८० ॥ इति
चिनोतेर्घञि आदेश्च कत्वे काय -समूहो जीवकाय पृथि-
व्यादि । षण्णां जीवकायानां समाहार. षड्जीवकायम् ।
पात्रादिदर्शनान्नपुंसकत्वम् , अथवा-षण्णां जीवानां कायः
प्रत्येक सङ्घात षड्जीवकाय , तं षड्जीवकायं पृथिव्य-
प्तेजोवायुवनस्पतित्रसलक्षणषड्जीवनिकायं तथा तेन प्र-
कारेण आख्य.-मर्यादया प्ररूपितवान् , यथा-येन प्रकारेण
न दोषो-न दूषणमिति, जात्यपेक्षमेकवचनम् । प्रागु-
क्तदोषद्वयजातीया अन्येऽपि दोषा यथा न प्रादुष्यन्ति
तथा त्वं जीवाऽनन्त्यमुपदिष्टवानित्यर्थ. । ' आख्य ' इति-
आङ्पूर्वस्य ख्यातेरद्यि सिद्धि । त्वमित्येकवचन चेदं ज्ञा-
पयति यज्जगद्गुरोरेवैकस्येदृक्प्ररूपणसामर्थ्यं न तीर्था-
न्तरशास्तॄणामिति । पृथिव्यादीनां पुनर्जीवत्वमित्थं सा-
धनीयम्-यथा सात्मिका विद्रुमशिलादिरूपा पृथिवी छेदे
समानधातूत्थानादर्शाङ्कुरवत् । भौममम्भोऽपि सात्मकं
क्षतभूसजातीयस्य स्वभावस्य संभवात् . शालूरवत् । आ-
न्तरिक्षमपि सात्मकम् : अभ्रादिविकारे स्वत संभूय पा-
तात् , मत्स्यादिवत् । तेजोऽपि सात्मकम्-आहारोपादा-
नेन वृद्ध्यादिविकारोपलम्भात् पुरुषाङ्गवत् । वायुरपि सा-
ऽऽत्मक अपरप्रेरितत्वेऽपि तिर्यग्गतिमत्त्वात् , गोवत् ।
वनस्पतिरपि सात्मक. छेदादिभिर्म्लान्यादिदर्शनात् , पु-
रुषाङ्गवत् । केषांचित् स्वापाङ्गनोपश्लेषादिविकाराच्च अ-
पकर्षतश्चैतन्याद्वा सर्वेषां सात्मकत्वसिद्धि , आप्तवचनाच्च ।
त्रसेषु च कृमिपिपीलिकाभ्रमरमनुष्यादिषु न केषांचित्सा-
त्मकत्वे विगानमिति । यथा च भगवदुपक्रमे जीवानन्त्ये न
दोषस्तथा दिग्मात्रं भाव्यते । भगवन्मते हि षण्णां जीव-
निकायानामेतदल्पबहुत्वम्-सर्वस्तोकास्त्रसकायिका. । ते-
भ्योऽसंख्यातगुणास्तेजस्कायिका. । तेभ्यो विशेषाधिकाः
पृथ्वीकायिकाः । तेभ्यो विशेषाधिका अप्कायिका. । तेभ्यो
विशेषाधिका वायुकायिका. । तेभ्योऽनन्तगुणा. वनस्पति-
कायिका ; ते च व्यावहारिका , अव्यावहारिकाश्च—

" गोला य असंखिज्जा, असंखनिग्गोयगोलओ भणिओ ।
इक्किक्कनिगोयम्मि, अणंतजीवा मुणेयव्वा ॥ १ ॥
सिज्झंति जत्तिया खलु, इह संववहारजीवरासीओ ।
एति अणाइवणस्सइ, रासीओ तत्तिया तंमि ॥ २ ॥".

इति वचनात् यावन्तश्च यतो गच्छन्ति मुक्तिं जीवास्ता-
वन्तोऽनादिनिगोदवनस्पतिराशेस्तत्राऽऽगच्छन्ति न च
तावता तस्य काचित्परिहाणिर्निगोदजीवाऽनन्त्यस्याऽक्ष-
यत्वात् । निगोदस्वरूपं च समयसागरादवगन्तव्यम् ,
अनाद्यनन्तेऽपि काले ये केचिन्निर्वृता निर्वान्ति निर्वास्य-
न्ति च ते निगोदानामनन्तभागेऽपि न वर्त्तन्ते, नाऽवर्ति-
षत, न वर्त्स्यन्ति । ततश्च कथं मुक्तानां भवाऽऽगमनप्रसङ्ग ?
कथं च संसारस्य रिक्तताप्रसक्तिरिति अभिप्रेतं चैतदन्य-
यूथ्यानामपि । यथाचोक्त वार्तिककारेण—

" अत एव च विद्वत्सु, मुच्यमानेषु सन्ततम् ।
ब्रह्माण्डलोकजीवाना-मनन्तत्वादशून्यता ॥ १ ॥
अत्यन्यूनातिरिक्तत्वै-र्युज्यते परिमाणवत् ।
वस्तुन्यपरिमेये तु, नूनं तेषामसंभव. " ॥ २ ॥

इतिकाव्यार्थः । स्या० । आव० ।

"एको नित्यस्तथा बद्ध , क्षय्यसत्स्वेह सर्वथा ।
आत्मेति निश्चयाद् भूयो, भवनैर्गुण्यदर्शनात् ॥ ४ ॥
तत्त्यागायोपशान्तस्य, सद्वृत्तस्यापि भावत. ।
वैराग्यं तद्गतं यत्त-न्मोहगर्भमुदाहृतम् ॥ ५ ॥
भूयांसो नामिनो बद्धा, बाह्येनेच्छादिना ह्यमी ।
आत्मानस्तद्वशात्कष्टं, भवे तिष्ठन्ति दारुणे ॥ ६ ॥
एवं विज्ञाय तत्त्याग-विधिं त्यागं च सर्वथा ।
वैराग्यमाहुः सज्ञान-संगतं तत्त्वदर्शिन' ॥ ७ ॥"

अन० ३ अधि० । ( आत्मन एकत्वाऽनेकत्व-सर्वगतत्व-
सक्रियत्व-निस्क्रियत्ववक्तव्यता ' परलोग ' शब्दे पञ्चमे
भागे च वक्ष्यते )

(२०) अथवा मुक्ताऽमुक्तविशेषमपहाय सामान्येनाऽऽत्मन.
सक्रियत्वं साधयन्नाह—

कत्ताइत्तणओ वा, सकिरिओ यं मओ कुलालो व्व ।
देहप्फंदणओ वा, पच्चक्खं जंतपुरिसो व्व ॥ १८४८ ॥

विशे० । ( व्याख्या 'बंधमोक्खसिद्धि शब्दे ५ भागे वक्ष्यते )

( २१ ) आत्मनो ज्ञानस्वरूपत्वम्—

अणुमवेदणमप्पाणेणं जं हंतव्वं ति णाभि पत्थए ।
( सूत्र-१६४× )

संवेदनम्-अनुभवनम् अनु-पश्चात् सवेदनं केनात्मना यत्परेषां मोहोदयाद्धननादिना तु खोत्पादनं विधीयते तत्पश्चादात्मना संवेद्यमित्याकलय्य यत्किमपि हन्तव्यमिति चिकीर्षितं तन्नाभिप्रार्थयेत्-नाऽभिलपेत् ।

ननु चाऽऽत्मना अनुसंवेद्यमित्युक्तं संवेदनं च सातासातरूपं, तच्च यथा नैयायिकवैशेषिकाणामात्मनो भिन्नेन गुणभूतेनैकार्थसमवायिना ज्ञानेन भवति तथा भवतामप्याहोस्विद् भिन्नेनात्मन इत्यस्य प्रतिवचनमाह—

जे आया, से विराणाया, जे विराणाया, से आया, जेण विजाणति से आया, तं पडुच्च पडिसंखाए । एस आयावादी समियाए परियाए वियाहिए त्ति बेमि । ( सूत्र-१६५× )

य आत्मा नित्य उपयोगलक्षणः विज्ञानाप्यसावेव, न तु पुनस्तस्मादात्मनो भिन्नं ज्ञानं पदार्थसंवेदकं, यश्च विज्ञाता पदार्थानां परिच्छेदक उपयोग आत्माप्यसावेव, उपयोगलक्षणत्वात् जीवस्योपयोगस्य च ज्ञानात्मकत्त्वादिति ज्ञानात्मनोरभेदाभिधानाद् बौद्धाभिमतं ज्ञानमेवैकं स्यादिति चेत्, तन्न भेदाभावोऽत्र केवलं चिकीर्षितो नैक्यम् एतदैक्ये यो भेदाभाव इति चेत्, वार्तमेतत्, तथा हि-पटशुक्लत्वयोर्भेदेनावस्थानाभावेऽपि नैकत्वापपत्तिः, अथापि शुक्लत्वव्यतिरेकेण नापरः पटः कश्चिदप्यस्तीति चेदशिक्षितस्योल्लापो यतः शुक्लगुणविनाशे सर्वथा पटाभावापत्तिः स्यात्, तदात्मना विनष्ट एवेति चेत्, भवतु का नो हानिः ? अनन्तधर्मात्मकत्वाद्वस्तुनाऽपरमृद्वादिधर्मसद्भावे तद्धर्मविनाशेऽप्यविनष्ट एवेत्येवमात्मनोऽपि प्रत्युत्पन्नज्ञानात्मकतया विनाशेऽप्यपगामूर्त्तत्वासंख्येयप्रदेशता अगुरुलघ्वादिधर्मसद्भावादविनाश एवेत्यलं प्रसङ्गेन । ननु च य आत्मा स विज्ञातेत्यत्र तृजन्तेन कर्तुरभिधानादात्मनश्च कर्तृत्वात्तनश्च य एवात्मा स एव विज्ञातेत्यत्र विप्रतिपत्त्यभावो, येन चासौ जानाति तद्भिन्नमपि स्यात्, तथा हि-तत्करणं क्रिया वा भवेत् यदि करणं तद्दात्रादिवद्भिन्नं स्यात्, अथ क्रिया सा यथा कर्तृस्था सम्भवत्येवं कर्म्मस्थापीति एव भेदसम्भवे कुत ऐक्यमिति यश्चोदयेत्तं प्रति स्पष्टतरमाह-' जेण ' इत्यादि, येन मत्यादिना ज्ञानेन करणभूतेन वा क्रियारूपेण वा विविधं सामान्यविशेषाकारतया वस्तु जानाति-विजानाति स आत्मा न तस्मादात्मनो भिन्नं ज्ञानं, तथा हि-न करणतया भेदः, एकस्यापि कर्तृकर्म्मकरणभेदेनोपलब्धेः, तद्यथा-देवदत्त आत्मानमात्मना परिच्छिनत्ति, क्रियापक्ष पाक्षिको ह्यभेदो भवताप्यभ्युपगत एव, अपि च-' भूतिर्येषां क्रिया सैव कारकं सैव चोच्यते' इत्यादिनैकत्वमेवोक्त । ज्ञानात्मनोश्चैकत्वे यद्भवति तद्दर्शयितुमाह-'तं' इत्यादि, तं ज्ञानपरिणामं प्रतीत्य-आश्रित्यात्मा तेनैव प्रतिसंख्यायते—व्यपदिश्यते, तद्यथा—इन्द्रोपयुक्त इन्द्र इत्यादि यदि वा—मतिज्ञानी श्रुतज्ञानी यावत् केवलज्ञानीति यश्च ज्ञानात्मनोरेकत्वमभ्युपगच्छति स किं गुणः स्यादिति आह—' एस ' इत्यादि, एष — अनन्तरोक्तया नीत्या यथावस्थितात्मवादी स्यात्तस्य च सम्यग्भावेन शमितया वा पर्याय संयमानुष्ठानरूपो व्याख्यातः । इत्यधिकारपरिसमाप्तौ, ब्रवीमीति पूर्ववत् । आचा० १ श्रु० ५ अ० ५ उ० ।

आत्मनो ज्ञानस्वरूपत्वमभिधातुमात्मन एव स्वरूपनिरूपणायाह—

आया भंते ! णाणे, अराणाणे, गोयमा ! आया सिय णाणे, सिय अण्णाणे ? । णाणे पुण णियमं आया ।

'आया भंते ! णाणे' इत्यादि, आत्मा ज्ञानं योऽयमात्माऽसौ ज्ञानं न तयोर्भेदः अथात्मनोऽन्यज्ज्ञानमिति प्रश्नः । उत्तरन्तु-आत्मा स्यात् ज्ञानं सम्यक्त्वे सति मत्यादिज्ञानस्वभावत्वात्तस्य, स्यादज्ञानं मिथ्यात्वे सति तस्य मत्यज्ञानादिस्वभावत्वात्, ज्ञानं पुनर्नियमादात्मा आत्मधर्म्मत्वात् ज्ञानस्य । न च सर्व्वथा धर्मो धर्मिणा भिद्यते, सर्वथा भेदे हि विप्रकृष्टगुणिनो गुणमात्रोपलब्धौ प्रतिनियतगुणिविषय एव संशयो न स्यात्, तदन्येभ्योऽपि तस्य भेदाविशेषात्, दृश्यते च यदा कश्चिद्दूरगततरुतरुणशाखाविसरस्योदरान्तरगतं किमपि शुक्लं पश्यति तदा किमियं पताका किमियं बलाका ? इत्येवं प्रतिनियतगुणिविषयोऽसौ नापि धर्मिणो धर्मः सर्वथैवाभिन्नः सर्वथैवाभेदे हि संशयानुत्पत्तिरेव, गुणग्रहणत एव गुणिनोऽपि गृहीतत्वादतः कथञ्चिदभेदपक्षमाश्रित्य ज्ञानं पुनर्नियमादात्मेत्युच्यत इति, इह चात्मा ज्ञानं व्यभिचरति, ज्ञानं त्वात्मानं न व्यभिचरति, खदिरवनस्पतिवदिति सूत्रगर्भार्थः इति ।

अमुमेवार्थं दण्डके निरूपयन्नाह—

आया भंते ! णेरइयाणं णाणे, अराणे णेरइयाणं णाणे ?, गोयमा ! आया णेरइयाण सिय णाणे, सिय अराणाणे, णाणे पुण ते णियमं आया एवं ०जाव थणियकुमाराणं ।

' आय ' त्यादि, नारकाणाम् 'आत्माऽऽत्मस्वरूपं ज्ञानम्" उतान्यन्नारकाणां ज्ञानं, तभ्यो व्यतिरिक्तमित्यर्थः इति प्रश्नः, उत्तरन्तु-आत्मा नारकाणां स्यात् ज्ञानं सम्यग्दर्शनभावात्, स्यादज्ञानं मिथ्यादर्शनभावात्, ज्ञानं पुनः ' सेति ' तन्नारकसम्बन्धि आत्मा न तद्व्यतिरिक्तमित्यर्थः ।

आया भंते ! पुढवीकाइयाणं अराणाणे अन्ने पुढवीकाइयाणं अराणाणे ?, गोयमा ! आया पुढवीकाइयाणं णियमं अराणाणे, अराणाणे वि णियमं आया, एवं ०जाव वणस्सइकाइयाणं, बेइंदियतेइंदिय ०जाव वेमाणियाणं, जहा णेरइयाणं ।

' आया भंते ! पुढवीकाइयाणमि' त्यादि, आत्मा आत्मस्वरूपमज्ञानम् उतान्यत्तेषाम् उत्तरन्तु-आत्मा तेषामज्ञानरूपो नान्यत्तत्तेभ्य इति भावार्थः ।

आया भंते ! दंसणे अन्ने दंसणे ?, गोयमा ! आया णियमं दंसणे दंसणे वि णियमं आया । आया भंते ! णेरइयाणं दंसणे अन्ने णेरइयाणं दंसणे ? गोयमा ! आया णेरइयाणं णियमा दंसणे दंसणे वि से णियमं आया एवं ०जाव वेमाणियाणं निरंतरं दंडओ । ( सूत्र-४६८ )

एव दर्शनसूत्राण्यपि, नवरं सम्यग्दृष्टिमिथ्यादृष्ट्योर्दर्शनस्याविशिष्टत्वादात्मा दर्शने-दर्शनमप्यात्मैवेति वाच्यं, यत्र हि धर्मे विपर्ययो नाऽस्ति तत्र नियम एवोपनीयते, न व्यभिचारो यथेहैव दर्शने, यत्र तु विपर्ययोऽस्ति तत्र व्यभिचारो नियमश्च यथा ज्ञाने, आत्मा ज्ञानरूपोऽज्ञानरूपश्चेति व्यभिचार , ज्ञानं त्वात्मैवेति नियम इति । भ० १२ श० १० उ० ।

आत्मन स्वपर्यायेभ्य कथञ्चिदव्यतिरिक्तत्वम्—

जीवो अणाइणिहणो, जीव त्ति य णियमओ ण वत्तव्वो।
जं पुरिसाऽऽउयजीवो, देवाऽऽउयजीवियविसिट्ठो ॥४२॥

व्यतिरेकादात्मनो वा केवलज्ञानाव्यतिरेकात् । कथञ्चिदेकत्वं तयोरित्याह—

संखेज्जमसंखेज्ज, अणंतकप्पं च केवल णाणं ।
तह रागदोसमोहा, अण्णेऽवि य जीवपज्जाया ॥ ४३ ॥

सम्म० २ काण्ड० । ( अनयोर्गाथयोर्व्याख्या 'केवलणाण' शब्दे तृतीयभागे ६८५ पृष्ठे वक्ष्यते )

आत्मकर्मणोरन्योन्यानुगतत्वम्—

( 'णय' शब्दे चतुर्थभागे "अण्णोण्णाणुगयाणं०" (४७) इत्यादि प्रथमकाण्डगाथाभि दर्शयिष्यामि ) आत्मना आत्मानं ज्ञात्वा । अष्ट० १३ अष्ट० । ( आत्मज्ञानस्यैव सम्यक्त्वम्, आत्मज्ञानस्यैव ज्ञानदर्शनचारित्रत्वमिति 'मुणि' शब्दे षष्ठ भागे दर्शयिष्यते )

( २२ ) आत्मनो ज्ञानदर्शनश्रवणादिप्रकार —

दोहिं ठाणेहिं आया अधोलोगं जाणइ पासइ, तं जहा-समोहएणं चेव अप्पाणेणं आया अहेलोगं जाणइ पासइ, असमोहएणं चेव अप्पाणेणं आया अहेलोगं जाणइ पासइ, आधोहिसमोहतासमोहएणं चेव अप्पाणेण आया अहेलोगं जाणइ पासइ १, एवं तिरियलोग २, उड्ढलोगं ३, केवलकप्प लोगं ४, दोहिं ठाणेहिं आया अहेलोगं जाणइ पासइ, तं जहा-विउव्विएण चेव अप्पाणेणं आया अहेलोगं जाणइ पासइ अविउव्विएणं चेव अप्पाणेणं आया अहेलोगं जाणइ पासइ, आहोहिविउव्वियाऽविउव्विएण चेव अप्पाणेणं आया अहेलोग जाणइ पासइ १, एवं तिरियलोगं २, उड्ढलोग ३, केवलकप्पं लोग ४,

'दोही' त्यादि सूत्रचतुष्टय, द्वाभ्यां स्थानाभ्या-प्रकाराभ्यामात्मगताभ्यामात्मा-जीवोऽधोलोकं जानात्यवधिज्ञानेन पश्यत्यवधिदर्शनेन 'समवहतेन' वैक्रियसमुद्घातगतेनात्मना—स्वभावेन, समुद्घातान्निर्गतेन वा, असमवहतेन त्वन्यथेति एतदेव व्याख्याति— 'आहोही' त्यादि यत्प्रकारोऽवधिरस्येति यथावधि , आदिदीर्घत्वं प्राकृतत्वात्, परमावधेर्वाऽधोवर्त्यवधिर्यस्य सोऽधोऽवधिरात्मा नियतक्षेत्रविषयावधिज्ञानी स कदाचित् समवहतेन क-

दाचिदन्यथेति समवहताऽसमवहतेनेति, 'एव' मित्यादि, 'एव' मिति यथाऽधोलोक समवहतासमवहतप्रकाराभ्यामवधिविषयतयोक्त एवं तिर्यग्लोकादयोऽपीति, सुगमानि च तिर्यग्लोकोर्द्ध्वलोककेवलकल्पसूत्राणि, नवरं केवल — परिपूर्ण स चासौ स्वकार्यसामर्थ्यात् कल्पश्च केवलज्ञानमिव वा परिपूर्णतयेति केवलकल्प , अथवा-केवलकल्पः समयभाषया। परिपूर्णस्तं लोक चतुर्दशरज्ज्वात्मकमिति । वैक्रियसमुद्घातानन्तरं वैक्रियं शरीर भवतीति वैक्रियशरीरमाश्रित्याधोलोकादिज्ञाने प्रकारद्वयमाह—'दोही' त्यादि सूत्रचतुष्टयं कण्ठ्यम्, नवरं 'विउव्विएणं' ति कृतवैक्रियशरीरेणेति ।

ज्ञानाधिकार एवेदमपरमाह—

दोहिं ठाणेहिं आया, सद्दाइं सुणेइ, तं जहा-देसेण वि आया सद्दाइं सुणेइ, सव्वेण वि आया, सद्दाइं सुणेइ १ । एवं रूवाइं पासइ, गंधाइं अग्घाति ३, रसाइं आसाएइ ४, फासाइं पडिसंवेएइ ५ ।

'दोही' त्यादि, पञ्चसूत्री, द्वाभ्यां स्थानाभ्यां-प्रकाराभ्याम् 'देसेण वि' त्ति-देशेन च शृणोत्यकेन श्रोत्रेणैकश्रोत्रोपघाते सति सर्वेण वानुपहतश्रोत्रेन्द्रियो यो वा संभिन्नश्रोतोऽभिधानलब्धियुक्त स सर्वैरिन्द्रियै शृणोतीति सर्वेणेति व्यपदिश्यते, एवमिति यथा शब्दान् देशसर्वाभ्याम् एवं रूपादीनपि नवर जिह्वादेशस्य प्रसुप्त्यादिनोपघाताद्देशेनास्वादयतीत्यवसेयमिति । शब्दश्रवणादयो जीवपरिणामा उक्ता ।

तत्प्रस्तावात् तत्परिणामान्तराण्याह—

दोहिं ठाणेहिं आया ओभासइ, तं जहा-देसेण वि आया ओभासइ, सव्वेण वि आया ओभासइ १ । एवं पभासइ २, विउव्वइ ३, परियावेइ ४, भासं भासइ ५, आहारेइ ६, परिणामेइ ७, वेएइ, ८, निज्जरेइ ६ । (सूत्र-८०X)

'दोही' त्यादि, नव सूत्राणि सुगमानि, नवरं, अवभासते-द्योतते, देशेन-खद्योतकवत्, सर्वत -प्रदीपवत् , अथ वा-अवभासते-जानाति, १, स च देशत फड्डकावधिज्ञानी, सर्वत -अभ्यन्तरावधिरिति, एवमिति-देशसर्वाभ्या-प्रभासते प्रकर्षेण द्योतते २, विकरोति देशेन-हस्तादिवैक्रियकरणेन, सर्वेण सर्वस्यैव कायस्येति ३, 'परियारे' इति-मैथुन सेवते, देशेन-मनोयोगादीनामन्यतमेन, सर्वेण-योगत्रयेणापि ४, भाषां भाषते देशेन-जिह्वाग्रादिना, सर्वेण-समस्तताल्वादिस्थानै ५, आहारयति देशेन मुखमात्रेण, सर्वेण-ओजआहारापेक्षया ६ आहारमेव परिणमयति परिणामं नयति-खलरसविभागेनेति भक्ताश्रयदेशस्य प्लीहादिना रुद्धत्वात् । देशन अन्यथा तु सर्वत ७ वेदयति-अनुभवति, देशेन—हस्तादिना अवयवेन, सर्वेण सर्वावयवैराहारसत्कान्-परिणमितपुद्गलान् इष्टानिष्टपरिणामत ८, निर्जरयति-त्यजति आहारितान्-परिणामितान् वेदितान् आहारपुद्गलान् देशेन अपानादिना, सर्वेण सर्वशरीरेणैव प्रस्वेदवदिति ६ । अथ वा-एतानि चतुर्दशापि सूत्राणि विभङ्गज्ञानविषयवस्त्वपेक्षया नेयानि, तत्र देशसर्वयो-

अना यथा देशेनापीनि देशतोऽपि शृणोति विवक्षितशब्दानां मध्ये कांश्चिच्छृणोतीति सर्व्वेणापीति सर्वतश्च सामस्त्येन; सर्वानित्यर्थः, एव रूपादीनपि, तथा विवक्षितस्य देशं सर्वं वा विवक्षितमवभासयत्येवं प्रभासयति एव विकुर्वणीयं विकुरुते परिचारणीयं औसरीरादि परिचारयति भाषणीयापेक्षया देशतो भाषां भाषते सर्व्वतो वेति अभ्यवहार्यमाहारयति, आहृत परिणमयति, वेद्यं कर्म वेदयति देशतः सर्व्वतो वा, एवं निर्जरयत्यपि । स्था० २ ठा० २ उ० ।

(२३) आत्मनिरूपणम् । तथा च पूर्वाचार्यकृतगाथा —

"जीवो अणाइनिहणो, अविणासी अक्खओ धुवो निच्चं ।
दव्वट्ठयाए णिच्चो, परियायगुणेहि य अणिच्चो ॥ १ ॥
जह पजराउ सउणी, घडाउ वयराणि कंचुआ पुरिसो ।
एवं न चेव भिण्णो, जीवो देहाउ संसारी ॥ २ ॥
जह खीरोदगतिलतिल्ल-कुसुमगंधाण दीसइ न भेओ ।
तह चेव न जीवस्स वि देहादच्चंतिओ भेओ ॥ ३ ॥
संकोअविकोएहि य, जहक्कमं देहलोयमित्तो वा ।
हत्थिस्स व कुंथुस्स व, पएससंखा समा चेव ॥ ४ ॥
कालो जहा अणाई, अविणासी होई तिसु वि कालेसु ।
तह जीवो वि अणाई, अविणासी तिसु वि कालेसु ॥ ५ ॥
गयणं जहा अरूवी, अवगाहगुणेण घिप्पई तं तु ।
जीवो तहा अरूवी, विण्णाणगुणेण घेत्तव्वो ॥ ६ ॥
जह पुढवी अविणट्ठा, आहारो होइ सव्वदव्वाण ।
तह आहारो जीवो, नाणाईणं गुणगणाण ॥ ७ ॥
अक्खयमणंतमउलं, जह गयणं होइ तिसु वि कालेसु ।
तह जीवो अविणासी, अवट्ठिओ तिसु वि कालेसु ॥ ८ ॥
जह कणगाओ कीर-ति पज्जवा मउलकुंडलाईया ।
दव्वं कणगं तं चिय, नाम विसेसो इमो अन्नो ॥ ९ ॥
एव चउगईए, परिब्भमंतस्स जीवकणगस्स ।
नामाइँ बहुविहाइं, जीवदव्वं तयं चेव ॥ १० ॥
जह कम्मयरो कम्मं, करेइ भुंजेइ सो फलं तस्स ।
तह जीवो वि अकम्मं, करेइ भुंजेइ तस्स फलं ॥ ११ ॥
उज्जोवेउं दिवसं, जह सूरो वच्चई पुणो अत्थं ।
नय दीसइ सो सूरो, अन्नं खित्तं पयासंतो ॥ १२ ॥
जह सूरो तह जीवो, भवंतरं वच्चए पुण्णे आउ ।
तत्थ वि सरीरमन्नं, खित्त व रवी पयासेई ॥ १३ ॥
फुल्लुप्पलकमलाण, चंदणअगरूण सुरहिगंधीणं ।
घिप्पइ नासाइगुणो, न य रूवं दीसए तेसिं ॥ १४ ॥
एवं नाणगुणेण, घिप्पइ जीवो वि बुद्धिमंतेहिं ।
जह गंधो तह जीवो, न हु सक्का कीरए भित्तुं ॥ १५ ॥
भभामउद्दमद्दल-पणवमकुंदाण सखसन्नाणं ।
सद्दु च्चिय सुव्वइ, के-वलु त्ति न हु दीसई रूवं ॥ १६ ॥
पच्चक्खं गहगहिओ, दीसइ पुरिसो न दीसइ पिसाओ ।
आगारेहिँ मुणिज्जइ, एव जीवो वि देहठिओ ॥ १७ ॥
हसइ विरूसइ रूसइ, नच्चइ गाएइ रुयइ सुहदुक्खं ।
जीवो देहमइगओ, विविहपयारं पयसेइ ॥ १८ ॥
जह आहारो भुत्तो, जिब्भाए परिणमइ सत्तभेएहिं ।
वस १ सोणिय २ मस ३ऽट्ठिअ ४-मज्जा ५ तह मेय ६ सुक्केहिं ७ ॥ १९ ॥
एवं अट्ठविह च्चिअ, जीवेण अणाइसहगयं कम्मं ।
जह कणगपाहाणे, अणाइसंजोगनिप्फन्नं ॥ २० ॥
जीवस्स य कम्मस्स य, अणाइमं चेव होइ संजोगो ।
सो वि उवाएण पुढो, कीरइ न बलाउ जह कणगं ॥ २१ ॥
जह पुव्वयरं कम्मं, जीवो वा जइ हविज्ज वा वइ कोई ।
सो वत्तव्वो कुक्कुडि-अंडाणं भणसु को पढमो ॥ २२ ॥
जह अंडसंभवा कुक्कुडि, त्ति अंडं च कुक्कुडी उ भवं ।
न य पुव्वाऽवरभावो, जह तह कम्माण जीवाणं ॥ २३ ॥
अणुमाणपहे सिद्धं, छउमत्थाण जिणाण पच्चक्खं ।
गिण्हसु गणहर ! जीवं, अणाइयमक्खयसरूवं ॥ २४ ॥
कत्थ य जीवो बलिओ, कत्थ य कम्माइँ हुंति बलियाइं ।
जीवस्स य कम्मस्स य, पुव्वनिबद्धाइँ वेराइं ॥ २५ ॥ "
ग० २ अधि० ।

(२४) आत्मतत्त्वनिरूपणं बौद्धादिसम्मतात्मत्वनिराकरणेन प्रदर्शितम्—

बौद्धास्तु—बुद्धिक्षणपरंपरामात्रमेवाऽऽत्मानमाम्नासिषु, न पुनर्मौक्तिककणनिकरनिरन्तरानुस्यूतैकसूत्रवत्तदन्वयिनमेकम् । ते लोकायतलुण्टाकेभ्योऽपि पापीयांसः, तद्भावेऽपि तेषां स्मरणप्रत्यभिज्ञानाद्यघटनात्, तथा हि—पूर्वबुद्ध्यानुभूतेऽर्थे नोत्तरबुद्धीनां स्मृतिः सम्भवति, ततोऽन्यत्वात्, सन्तानान्तरबुद्धिवत् । न ह्यन्यदृष्टोऽर्थोऽन्येन स्मर्यते, अन्यथैकेन दृष्टेऽर्थे सर्वैः स्मर्येत । स्मरणाभावे च कौतस्कुती प्रत्यभिज्ञाप्रसूतिः ?, तस्याः स्मरणानुभवोभयसम्भवत्वात्; पदार्थप्रेक्षणप्रबुद्धप्राक्तनसंस्कारस्य हि प्रमातुः स एवायमित्याकारेणेयमुत्पद्यते । अथ स्यादयं दोषो यद्यविशेषेणान्यदृष्टमन्यः स्मरतीत्युच्यते किं त्वन्यत्वेऽपि कार्यकारणभावादेव स्मृतिः, भिन्नसन्तानबुद्धीनां तु कार्यकारणभावो नाऽस्ति, तेन सन्तानान्तराणां स्मृतिर्न भवति; न चैकसान्तानिकीनामपि बुद्धीनां कार्यकारणभावो नास्ति, येन पूर्वबुद्ध्यनुभूतेऽर्थे तदुत्तरबुद्धीनां स्मृतिर्न स्यात् । तदप्यनवदातम्, एवमपि नानात्वस्य तदवस्थत्वात् । अन्यत्वं हि स्मृत्यसंभवे साधनमुक्तम्, तच्च कार्यकारणभावाभिधानेऽपि नाऽपगतम्, न हि कार्यकारणभावाभिधाने तस्यासिद्धत्वादीनामन्यतमो दोषः प्रतिपद्यते । नाऽपि स्वपक्षसिद्धिरनेन क्रियते, न हि कार्यकारणभावात् स्मृतिरित्यत्रोभयप्रसिद्धोऽस्ति दृष्टान्तः । अथ "यस्मिन्नेव हि सन्ताने, आहिता कर्मवासना । फलं तत्रैव संधत्ते, कर्पासे रक्तता यथा ॥ १ ॥" इति कर्पासरक्तताद्दृष्टान्तोऽस्तीति चेत् । तदसाधीयः, साधनदूषणाऽसंभवात् । अन्वयाद्यसंभवात् न साधनम्-न हि कार्यकारणभावो यत्र तत्र स्मृतिः कर्पासे रक्ततायदित्यन्वयः संभवति, नाऽपि यत्र न स्मृतिस्तत्र न कार्यकारणभाव इति व्यतिरेकोऽस्ति । असिद्धत्वाद्यनुद्भावनाच्च न दूषणम् । न हि ततोऽन्यत्वादित्यस्य हेतोः कर्पासे रक्ततावदित्यनेन कश्चिद्दोषः प्रतिपाद्यते । किं च-यद्यन्यत्वेऽपि कार्यकारणभावेन स्मृतेरुत्पत्तिरिष्यते, तदा शिष्याचार्यादिबुद्धीनामपि कार्यकारणभावसद्भावेन स्मृत्यादि स्यात् । अथ नाऽयं प्रसङ्गः, एकसन्तानत्वे सतीति विशेषणादिति चेत्, तदयुक्तम्, भेदाऽभेदपक्षाभ्यां तस्यापक्षीणत्वात् । क्षणपरं-

परानस्तस्याऽभेदे हि तागपरंपरैव सा, तथा च सन्तान इति न किंचिदतिरिक्तमुक्तम् । भेदे तु पारमार्थिकोऽपारमार्थिको वाऽसौ स्यात् । अपारमार्थिकत्वे त्वस्य तदेव दूषणम् । पारमार्थिकत्वे स्थिरो वा स्यात्, क्षणिको वा । क्षणिकत्वे सन्तानिनिर्विशेष एवायमिति किमनेन स्तेनभीतस्य स्तेनान्तरशरणस्वीकरणकारिणा ?।

' स्थिरमथ सन्तानमभ्युपयाः,प्रथयन्तं परमार्थसत्स्वरूपम् । अमूर्तं पिव पूतयाऽनयोक्त्या, स्थिरवपुः परलोकिन प्रसिद्धे ॥ १ ॥" उपादानोपादेयभावप्रबन्धेन प्रवर्तमानः कार्यकारणभाव एव सन्तान इति चेत् । तदवद्यम्, अविष्वग्भावादिसंबन्धविशेषाभावे कारणत्वमात्राऽविशेषादुपादानेतरविभागानुपपत्तेः । सन्तानजनकं यत्तदुपादानमिति चेत् । न, इतरेतराश्रयत्वप्रसङ्गात् सन्तानजनकत्वेनोपादानकारणत्वम्, उपादानकारणजन्यत्वेन च सन्तानत्वमिति । लोके तु समानजातीयानां कार्यकारणभावे सन्तानव्यवहारः, तद्यथा-आम्रसन्तानं इति, तत्प्रसिद्धया चास्माभिरपि शब्दप्रदीपादिषु सन्तानव्यवहारः क्रियते । तथापि यद्येवमभिप्रेतः सन्तानस्तदा कथं न शिष्याचार्यबुद्धीनामेकसन्तानत्वम् ?। तासां समानजातीयत्वे कार्यकारणभावो वा नाऽस्ति, ततः शिष्यस्य चिरव्यवहिता अपि बुद्धय पारंपर्येण कारणमिति तदनुभूतेऽप्यर्थे यथा स्मृतिर्भवति तथोपाध्यायबुद्धयोऽप्याजन्मप्रभृत्युत्पन्ना पारंपर्येण कारणमिति तदनुभूतेऽप्यर्थे स्मृतिर्भवेत् । किंच—धूमशब्दादीनामुपादानकारणं विनैवोत्पत्तिस्तव स्यात्, न हि तेषामप्यनादिप्रबन्धेन समानजातीय कारणमस्तीति शक्यते वक्तुम्, तथा च ज्ञानस्यापि गर्भादावनुपादानैवोत्पत्तिः स्यादिति परलोकाभावः । अथ धूमशब्दादीनां विजातीयमप्युपादानमिष्यते, एवं तर्हि ज्ञानस्याप्युपादानं गर्भशरीरमेवास्तु न जन्मान्तरज्ञानं कल्पनीयम्, यथा दर्शनं हि, पादानमिष्टम्, अन्यथा धूमशब्दादीनामप्यनादिः सन्तानं कल्पनीयः स्यादिति सन्तानघटनात् न परेषां स्मृत्यादिव्यवस्था नापि परलोकः कोऽपि प्रसिद्धिपद्धतिं दधाति परलोकिनः कस्यचिदसंभवात् । सत्यपि वा परलोके कथमकृताभ्यागमकृतप्रणाशौ पराक्रियेते ? येन हि ज्ञानेन चैत्यवन्दनादि कर्मकृतम्, तस्य विनाशात् तत्फलोपभोगो गस्य च फलोपभोगस्तेन न तत्कर्म कृतमिति । अथ नाऽयं दोषः कार्यकारणभावस्य नियामकत्वात्, अनादिप्रबन्धप्रवृत्तो हि ज्ञानानां हेतुफलभावप्रवाहः । स च सन्तान इत्युच्यते तद्वशात्सर्वो व्यवहारः संगच्छते । नित्यस्यात्माभ्युपगम्यमानो यदि सुखादिजन्मना विकृतिमनुभवति । तदयमनित्य एव चर्मादिवदुक्तः स्यात्, निर्विकारकत्वे तु सताऽसता वा सुखदुःखादिना कर्मफलेन कस्तस्य विशेषः ? इति कर्मवैफल्यमेव । तदुक्तम्-' वर्षाऽऽतपाभ्यां किं व्योम्न-श्चर्मण्यस्ति तयोः फलम् । चर्मोपमश्चेत्सोऽनित्यः, खतुल्यश्चेदसत्समः ॥ १ ॥" इति तस्मात् त्वदुक्तनामपि मूर्द्धाभिषिक्तः प्रथमो मोह आत्मग्रहो नाम, तन्निवृत्तावात्मीयग्रहोऽपि विरस्यति । अहमेव न, किं मम ? इति । तावदहमहङ्कारममकारग्रन्थिप्रहाणेन नैरात्म्यदर्शनमेव निर्वाणद्वारम्, अन्यथा कौतुस्कुती निर्वाणवार्तापि ? । तदपि वार्त्तम्, हेतुफलभावप्रवाहस्वभावस्य सन्तानस्याप्यन्तरमेव नियामकत्वेन निरस्तत्वात् । यत्पुनः सुखादिविकाराभ्युपगमे चर्मादिवत् आत्मनोऽनित्यत्वं प्रसञ्जितं तदिष्टमेव, कथंचिदनित्यत्वेनात्मनः स्याद्वादिभिः स्वीकारात् । नित्यत्वस्य कथंचिदेवाभ्युपगमात् । यत्तु नित्यत्वे अस्यात्मीयग्रहसद्भावेन मुक्त्यनवाप्तिदूषणमभाणि, तदप्यनवदातं विवितपर्यन्तविरससंसारस्वरूपाणां परिगमपारमार्थिकैकान्तिकात्यन्तिकानन्दसन्दोहस्वभावाऽपवर्गोपनिषदां च महात्मना शरीरेऽपि किंपाकपाकोपलिप्तपायस इव निर्ममत्वदर्शनात् । नैरात्म्यदर्शने पुनरात्मैव तावन्नास्ति क प्रेत्य सुखीभवनार्थं यतिष्यते ?; ज्ञानक्षणोऽपि संसारी कथमपरज्ञानक्षणसुखीभवनाय घटिष्यते ?; न हि दुःखी देवदत्तो यज्ञदत्तसुखाय चेष्टमानो दृष्टः; एकक्षणस्य तु दुःखं स्वरससनाशित्वात्तेनैव सार्द्धं ध्वसे । सन्तानस्तु न वास्तवः कार्यत्वादिति प्ररूपितमेव, वास्तवत्वे तस्य निष्प्रत्यूहात्मसिद्धिरिति ।

अथ आत्मनः परपरिकल्पितस्वरूपप्रतिषेधाय स्वाभिमतधर्मान्वर्णयन्ति—

**चैतन्यस्वरूपः परिणामी कर्ता साक्षाद्भोक्ता स्वदेहपरिमाणः प्रतिक्षेत्रं भिन्नः पौद्गलिकाऽदृष्टवांश्चाऽयमिति ।५६।**

चैतन्यं साकारनिराकारोपयोगाख्यं स्वरूपं यस्यासौ चैतन्यस्वरूपः परिणमनं प्रतिसमयमपरापरपर्यायेषु गमनं परिणामः स नित्यमस्यास्तीति परिणामी, करोत्यदृष्टादिकमिति कर्त्ता, साक्षादनुपचरितवृत्त्या भुङ्क्ते सुखादिकमिति साक्षाद्भोक्ता, स्वदेहपरिमाणः स्वोपात्तवपुर्व्यापकः, प्रतिक्षेत्रं प्रतिशरीरं भिन्नः पृथक्, पौद्गलिकादृष्टवान् पुद्गलघटितकर्मपरतन्त्रः, अयमित्यनन्तरं प्रमातृत्वेन निरूपित आत्मेति । अत्र चैतन्यस्वरूपत्वपरिणामित्वविशेषणाभ्यां जडस्वरूपः कूटस्थनित्यो नैयायिकादिसंमतः प्रमाता व्यवच्छिद्यते । यतो येषामात्मानुपयोगस्वभावस्तावत्, तेषां नासौ पदार्थपरिच्छेदं विदध्यात्, अचेतनत्वात्, आकाशवत् । अथ नोपयोगस्वभावत्वं चेतनत्वम्, किं तु चैतन्यसमवायः, स चात्मनोऽस्तीत्यसिद्धमचेतनत्वमिति चेत् । तदनुचितम्, इत्थमाकाशादेरपि चेतनत्वापत्तेः, चैतन्यसमवायो हि विहाय-प्रमुखेऽपि समानः; समवायस्य स्वयमविशिष्टस्यैकस्य प्रतिनियमहेत्वभावादात्मन्येव ज्ञानं समवेतं नाकाशादिष्विति विशेषाव्यवस्थितेः । ननु यथेह कुण्डे दधीतिप्रत्ययात् तत्कुण्डादन्यत्र तद्दधिसंयोगः शक्यसंपादनः, तथेह मयि ज्ञानमितीहेदंप्रत्ययात् नात्मनोऽन्यत्र गगनादिषु ज्ञानसमवाय इति चेत् । तदयौक्तिकम् । यतः सोऽऽदयोऽपि ज्ञानमस्मास्विति प्रतियन्तु, स्वयमचेतनत्वाद्, आत्मवत्, आत्मानो वा मैवं प्रतियन्तु, तत एव, खादिवद्, इति जडात्मवादिमते सर्वोऽपि ज्ञानमिहेति प्रत्ययः प्रत्यात्मवेद्यो न ज्ञानस्यात्मनि समवायं नियमयति, विशेषाभावात् । नन्वेवमिह पृथिव्यादिषु रूपादय इति प्रत्ययोऽपि न रूपादीनां पृथिव्यादिषु समवायं साधयेत्, यथा खादिषु; तत्र यो स तं साधयेत्, पृथिव्यादिष्विव, इति न कश्चित्प्रत्ययविशेषात् कस्यचित् व्यवस्थेति चेत् । सत्यम्, अयमपरो-

ऽस्य दोषोऽस्तु, पृथिव्यादीनां रूपाद्यनात्मकत्वे खादिभ्यो विशिष्टतया व्यवस्थापयितुमशक्तेः। स्यान्मतम् आत्मनो ज्ञानमस्मास्विति प्रतियन्ति। आत्मत्वात्, ये तु न तथा ते नाऽऽत्मानो, यथा खादयः, आत्मानश्चैतेऽहंप्रत्ययग्राह्या-स्तस्मात्तथा; इत्यात्मत्वमेव खाऽऽदिभ्यो विशेषमात्मनां साधयति, पृथिवीत्वादिवत्, पृथिव्यादीनां पृथिवीत्वादि-योगाद्धि पृथिव्यादय, तद्वदात्मत्वयोगादात्मान इति। तदयुक्तम्, आत्मत्वादिजातीनामपि जातिमदनात्मकत्वे तत् समवायनियमासिद्धेः। प्रत्ययविशेषात्तत्सिद्धिरिति चेत्, स एव विचारयितुमारब्धः परस्परमत्यन्तभेदाविशेषेऽपि जातितद्वताम्, आत्मत्वजातिरात्मनि प्रत्ययविशेषमुपजन-यति, न पृथिव्यादिषु, पृथिवीत्वादिजातयश्च तत्रैव प्रत्य-यमुत्पादयन्ति नात्मनि; इति कोऽत्र नियमहेतुः?। समवाय इति चेत्, सोऽयमन्योन्यसंश्रयः -सति प्रत्ययविशेषे जा-तिविशेषस्य जातिमति समवायः, सति च समवाये प्रत्य-यविशेष इति। प्रत्यासत्तिविशेषादन्यत एव तत्प्रत्ययवि-शेष इति चेत्। स कोऽन्योऽन्यत्र कथञ्चित्तादात्म्यपरिणा-माद्?, इति स एव प्रत्ययविशेषहेतुरस्तितव्य तदभावे तद्-घटनाज्जातिविशेषस्य क्वचिदेव समवायाऽसिद्धेरात्मादिवि-भागानुपपत्तेरात्मन्येव ज्ञानं समवेतमिहेदमिति प्रत्ययं कुरुते न पुनराकाशादिषु; इति प्रतिपत्तुमशक्तेः चैतन्ययोगादात्म-नश्चेतनत्वं सिध्येत्; अथ किमपरम्? प्रतीयते तावच्चेतना-समवायादात्मा चेतन इति चेत्। तदयुक्तम्। यतः प्रतीतिश्चे-त्प्रमाणीक्रियते तर्हि निष्प्रतिद्वन्द्वमुपयोगात्मक एवाऽऽत्मा प्रसिध्यति। न हि जातुचित्स्वयमचेतनोऽहं चेतनायो-गाच्चेतन, अचेतने वा मयि चेतनायाः समवाय इति प्रतीतिरस्ति ज्ञाताऽहमिति समानाधिकरणतया प्रतीतेः। भेदे तथा प्रतीतिरस्तीति चेत्। न, कथंचित्तादात्म्याभावे तद्-दर्शनात्। यष्टिः पुरुष इत्यादिप्रतीतिस्तु भेदे सत्युपचा-राद् दृष्टा न पुनस्तात्त्विकी, तथा चात्मनि ज्ञाताऽहमिति प्रतीतिः कथंचिच्चेतनाऽऽत्मतां गमयति तात्त्विकत्वानुप-पद्यमानत्वात् कलशादिवत्; न हि कलशादिरचेतनात्मको ज्ञाताऽहमिति प्रत्येति। चैतन्ययोगाभावादसौ न तथा प्रत्येतीति चेत्। न, अचेतनस्यापि चैतन्ययोगाच्चेतनोऽह-मिति प्रतिपत्तेरनन्तरमेव निरस्तत्वाद्, इत्यचेतनत्वे सि-द्धमात्मनो जडस्यार्थपरिच्छेदं पराकरोति; तं पुनरिच्छता चैतन्यस्वरूपताऽस्य स्वीकरणीया। ननु ज्ञानवानहमिति प्रत्ययादात्मज्ञानयोर्भेदः, अन्यथा धनवानिति प्रत्ययादपि धनतद्वतोर्भेदाभावानुषङ्गादिति कश्चित्। तदप्यसत्। यतो ज्ञानवानहमिति नाऽऽत्मा प्रत्येति जडत्वैकान्तरूपत्वाद्, घ-टवत्। सर्वथा जडश्च स्यादात्मा ज्ञानवानहमिति प्रत्यय-श्चाऽस्य स्यात्, विरोधाभावाद्, इति मा निर्णैषीः, तस्य तथोत्पत्त्यसंभवात्; ज्ञानवानहमिति हि प्रत्ययो नागृहीते ज्ञानाख्ये विशेषणे विशेष्ये चात्मनि जातूत्पद्यते, स्वमत-विरोधात्। "नागृहीतविशेषणा विशेष्ये बुद्धिः" इति वचनात्। गृहीतयोस्तयोरुत्पद्यत इति चेत्, कुतस्तद्-गृहीतिः?। न तावत्स्वतः स्वसंवेदनानभ्युपगमात्, स्व-संविदिते ह्यात्मनि ज्ञाने च स्वतः सा युज्यते, नान्यथा, संतानान्तरवत्। परतश्चेत्, तदपि ज्ञानान्तरं विशेष्यं नागृहीते ज्ञानत्वविशेषणे ग्रहीतुं शक्यमिति। ज्ञानान्तरात्, तद्ग्रहणेन भाव्यमित्यनवस्थानात्कुतः प्रकृतप्रत्ययः?। तदेवं नाऽऽत्मनो जडस्वरूपता संगच्छते नाऽपि कूटस्थ-नित्यता। यतो यथाविध पूर्वदशायामात्मा तथाविध एव चेत् ज्ञानोत्पत्तिसमयेऽपि भवेत्तदा प्रागिव कथमेष प-दार्थपरिच्छेदकः स्यात्? प्रतिनियतस्वरूपाप्रच्युतिरूप-त्वात्कौटस्थ्यस्य; पदार्थपरिच्छेदे तु प्राग् प्रमातृ प्रमातृ-रूपतया परिणामात्कुतः कौटस्थ्यमिति कृता सोऽत्रा-द्योक्तिः विशेषणयुगलकेन कापिलमतं निरस्क्रियते, तथा हि-कापिलः कर्तृत्वं प्रकृतेः प्रतिजानीते; न पुरुषस्य। "अकर्ता निर्गुणो भोक्ता" इति वचनात्। तदयुक्तम्। यतो यद्ययमकर्ता स्यात्, तदानीमनुभवितापि न भवेत्। द्रष्टृ कर्तृत्वे मुक्तस्याऽपि कर्तृत्वप्रसक्तिरिति चेत्। मुक्तः किम-कर्तेष्टः?। विषयसुखादेरकर्तैवेति चेत्, कुत स तथा?। तत्कारणकर्मकर्तृत्वाभावादिति चेत्, तर्हि संसारी वि-षयसुखादिकारणकर्मविशेषस्य कर्तृत्वात् विषयसुखादेः क-र्ता, स एव चानुभविता किं न भवेत्?। संसारावस्थाया-मात्मा विषयसुखाऽऽदितत्कारणकर्मणो न कर्ता चेतन-त्वात्, मुक्ताऽवस्थावत्; इत्येतदपि न सुन्दरम्। स्वेष्ट-विघातकारित्वात् संसारावस्थायामात्मा न सुखादेर्भोक्ता, चेतनत्वात्, मुक्तावस्थावद्; इति स्वेष्टस्यात्मनो भोक्तृ-त्वस्य विघातात्। प्रतीतिविरुद्धमिष्टविघातसाधनमिद-मितिचेत्। कर्तृत्वाभावसाधनमपि किं न तथा? पुमान् श्रोता घ्राताऽहमिति स्वकर्तृत्वप्रतीतेः। अथ श्रोता-ऽहमित्यादिप्रतीतिरहङ्काराऽऽस्पदम् अहङ्कारस्य च प्र-धानमेव कर्तृतया प्रतीयत इति चेत्, तत एवाऽ-नुभवितृप्रधानमस्तु। न हि तस्याऽहंकाराऽऽस्पदत्वं न प्रतिभाति, शब्दादेरनुभविताहमिति प्रतीतेः सकलजन-साक्षिकत्वात्। भ्रान्तमनुभवितुरहङ्काराऽऽस्पदत्वमिति चेत्, कर्तुः कथम् भ्रान्तम्?। तस्याऽहंकाराऽऽस्प-दत्वादिति चेत्, तत एवानुभवितुस्तदभ्रान्तमस्तु, तस्योपा-धिकत्वादहंकाराऽऽस्पदत्वं भ्रान्तमेवेति चेत्, कुतस्तदौपा-धिकत्वसिद्धिः?। अथ पुरुषस्वभावत्वाऽभावादहङ्कारस्य तदास्पदत्वं पुरुषस्वभावस्यानुभवितृत्वस्यौपाधिकमिति चेत्। स्यादेवं, यदि पुरुषस्वभावोऽहङ्कारो न स्यात्। मुक्त-स्याऽहंकाराऽभावात् अपुरुषस्वभाव एवाऽहङ्कारः स्व-भावो हि न जातुचित्तद्वन्तं त्यजति, तस्य निःस्वभावत्व-प्रसङ्गादिति चेत्। न, स्वभावस्य द्विविधत्वात् सामान्यवि-शेषपर्यायभेदात् तत्र सामान्यपर्यायः शाश्वतिकस्वभावः। कादाचित्को विशेषपर्याय इति न कादाचित्कत्वात्पुंस्य-हङ्कारादेव तत्स्वभावता, ततो न तदास्पदत्वमनुभवितृत्व-स्यौपाधिकं, येनाऽभ्रान्तं न भवेत्। ततः सिद्धमात्मानुभ-वितेव कर्त्ता अकर्तुर्भोक्तृत्वानुपपत्तेश्च। ननु भोक्तृत्वम-प्युपचारितमेवास्य, प्रकृतिविकारभूतायां हि दर्पणाकारायां बुद्धौ संक्रान्तानां सुखदुःखादीनां पुरुषः स्वात्मनि प्रति-बिम्बोदयमात्रेण भोक्ता व्यपदिश्यते। तदशस्यं, तस्य तथा-परिणाममन्तरेण प्रतिबिम्बोदयस्याऽघटनात् स्फटिका-देरपि परिणामेनैव प्रतिबिम्बोदयसमर्थनात्, तथापरिणा-माभ्युपगमे च कुतः कर्तृत्वमस्य न स्यात्?; इति सिद्ध-

मस्य कर्तृत्वं साक्षाद् भोक्तृत्वं चेति, स्वदेहपरिमाण इत्यनेनापि नैयायिकादिपरिकल्पितं सर्वगतत्वमात्मनो निषिध्यते, तथात्वे जीवतत्त्वप्रभेदानां व्यवस्थानाप्रसिद्धिप्रसङ्गात्। सर्वगतात्मन्येकत्रैव नानात्मकार्यपरिसमाप्ते, सकृज्ज्ञानामनःसमायोगो हि नानाऽऽत्मकार्ये तत्रैकत्रापि युज्यते, नभसि नानाघटादिसंयोगवत्। एतेन युगपज्ज्ञानाशरीरेन्द्रियसंयोगः प्रतिपादितः। युगपज्ज्ञानाशरीरेष्वात्मसमवायिनां सुखदुःखादीनामनुपपत्तिः, विरोधादिति चेत्। न, युगपज्ज्ञानाभेर्यादिष्वाकाशसमवायिनां विततादिशब्दानामनुपपत्तिप्रसङ्गात्, तद्विरोधस्याविशेषात्। तथाविधशब्दकारणभेदान्न तदनुपपत्तिरिति चेत्, सुखाऽऽदिकारणभेदाच्चदनुपपत्तिरप्येकत्रात्मनि मा भूद् विशेषाभावात्। विरुद्धधर्माध्यासादात्मनो नानात्वमिति चेत्। तत एवाकाशस्यापि नानात्वमस्तु। प्रदेशभेदोपचाराद्दोष इति चेत्, तत एवात्मन्यप्यदोषः। जननमरणकरणादिप्रतिनियमोऽपि सर्वगतात्मवादिना नाऽऽत्मबहुत्वं साधयेत्, एकत्राऽपि तदुपपत्तेः, घटाकाशादिजननविनाशाऽऽदिवत्; न हि घटाकाशस्योपपत्तौ घटाकाशस्योत्पत्तिरेव, तदा विनाशस्यापि दर्शनात्, नापि विनाशे विनाश एव, जननस्यापि तदोपलम्भात्, स्थितौ वा न स्थितिरेव विनाशोत्पादयोरपि तदा समीक्षणात्। सति बन्धे न मोक्षः, सति वा मोक्षे न बन्धः स्यात्, एकत्रात्मनि विरोधादिति चेत्। न, आकाशेऽपि सति घटबन्धे घटान्तरमोक्षाभावप्रसङ्गात्, सति वा घटविश्लेषे घटान्तरविश्लेषप्रसङ्गात्। प्रदेशभेदोपचारान्न तत्प्रसङ्ग इति चेत्, तत एवात्मनि न तत्प्रसङ्गः। नभसः प्रदेशभेदोपगमे जीवस्याप्येकस्य प्रदेशभेदोऽस्त्विति कुतो जीवतत्त्वप्रभेदव्यवस्था? यतो व्याकत्व स्यात्। नन्वात्मनो व्यापकत्वाऽभावे दिग्देशान्तरवर्त्तिपरमाणुभिर्युगपत्संयोगाभावादाद्यकर्माभाव, तदभावादन्त्यसंयोगस्य तन्निमित्तशरीरस्य तेन तत्संबन्धस्य चाऽभावादनुपायसिद्ध। सर्वदा सर्वेषां मोक्षः स्यात्। अस्तु वा यथा कथंचिच्छरीरोत्पत्तिः, तथाऽपि सावयवं शरीरं प्रत्यवयवमनुप्रविशन्नात्मा साऽवयवः स्यात्, तथा चास्य पटादिवत् कार्यत्वप्रसङ्गः। कार्यत्वे चाऽसौ विजातीयैः सजातीयैर्वा कारणैरारभ्येत। न प्राच्यः प्रकारः, विजातीयानामनारम्भकत्वात्। न द्वितीयः, यतः सजातीयत्वं तेषामात्मत्वाऽभिसम्बन्धादेव स्यात्, तथा चात्मभिरारभ्यते इत्यायातम्, एतच्चायुक्तम्, एकत्र शरीरेऽनेकात्मनामात्मारम्भकाणामसंभवात्। सम्भवे वा प्रतिसंधानानुपपत्तिः, न ह्यन्येन दृष्टमन्यः प्रतिसंधातुमर्हत्यतिप्रसङ्गात्, तदारभ्यत्वे चास्य घटवदवयवक्रियातो विभागात्संयोगविनाशाद्विनाशः स्यात्। शरीरपरिणामत्वे चात्मनो मूर्त्तत्वानुषङ्गाच्छरीरेऽनुप्रवेशो न स्यात्, मूर्त्ते मूर्त्तस्यानुप्रवेशविरोधात्; ततो निरात्मकमेव अखिलं शरीरमनुषज्यते। कथं वा तत्परिमाणत्वे तस्य बालशरीरपरिमाणस्य सतो युवशरीरपरिमाणस्वीकारः स्यात्?, तत्परिमाणपरित्यागात्, तदपरित्यागाद्वा। परित्यागाच्चेत् तदा शरीरवत्तस्याऽनित्यत्वप्रसङ्गात्परलोकाद्यभावाऽनुषङ्गः। अपरित्यागात्, तन्न, पूर्वपरिमाणाऽपरित्यागे शरीरवत्तस्योत्तरपरिमाणोत्पत्त्यनुपपत्तेः। तथा–" यदि वपुःपरिमाणपवित्रित, वदसि जैनमतानुग! पुरुषम्। वद तदा कथमस्य विखण्डने, भवति तस्य न खण्डनडम्बरम् ॥ १ ॥" अत्राभिदध्महे–यदभ्यधायि नन्वात्मनो व्यापकत्वाभाव इत्यादि, तदसत्यम्। यद्येन संयुक्तं तदेव तं प्रत्युपसर्पतीति नियमाऽसंभवात्; अयस्कान्तप्रत्ययसस्तेनाऽसंयुक्तस्याप्याकर्षणोपलब्धेः। अथासंयुक्तस्याप्याकर्षणे तच्छरीरारम्भं प्रत्येकमुखीभूतानां त्रिभुवनोदरविवरवर्त्तिपरमाणूनामुपसर्पणप्रसङ्गात् न जाने कियत्परिमाणं तच्छरीरं स्यादिति चेत्। संयुक्तस्याप्याकर्षणे कथं स एव दोषो न भवेद्? आत्मनो व्यापकत्वेन सकलपरमाणूनां तेन संयोगात्। अथ तदभावाविशेषेऽप्यदृष्टवशाद्विवक्षितशरीरोत्पादनानुगुणा नियता एव परमाणव उपसर्पन्ति तदितरत्रापि तुल्यम्। यच्चान्यदुक्तम्–" सावयवं शरीरं प्रत्यवयवमनुप्रविशन्नात्मे " त्यादि, तदप्युक्तिमात्रम्–सावयवत्व-कार्यत्वयोः कथञ्चिदात्मन्यभ्युपगमात्। न चैवं घटादिवत्प्राक् प्रसिद्धसमानजातीयावयवारभ्यत्वप्रसक्तिः, न खलु घटादावपि कार्ये प्राक् प्रसिद्धसमानजातीयकपालसंयोगारभ्यत्वं दृष्टम्, कुम्भकारादिव्यापारान्वितान्मृत्पिण्डात्प्रथममेव पृथुबुध्नोदराद्याकारस्याऽस्योत्पत्तिप्रतीतेः। द्रव्यस्य हि पूर्वाकारपरित्यागेनोत्तराकारपरिणामः कार्यत्वं, तच्च बहिरिवान्तरप्यनुभूयत एव। न च पटाऽऽदौ स्वावयवसंयोगपूर्वककार्यत्वोपलम्भात् सर्वत्र तथाभावो युक्तः, काष्ठे लोहलेख्यत्वोपलम्भात् वज्रेऽपि तथाभावप्रसङ्गात्; प्रमाणबाधनमुभयत्र तुल्यम्। न चाक्षलक्षणकार्यत्वाभ्युपगमेऽप्यात्मनोऽनित्यत्वानुषङ्गात्। प्रतिसंधानाभावोऽनुषज्यते, कथञ्चिदनित्यत्वे सत्येवास्योपपद्यमानत्वात्। यच्चाऽवाचि शरीरपरिमाणत्वे चाऽऽत्मनो मूर्त्तत्वानुषङ्ग इत्यादि, तत्र किमिदं मूर्त्तत्वं नाम?–असर्वगतद्रव्यपरिमाणत्वं, रूपादिमत्त्वं वा। तत्र नाद्यः पक्षो दोषपोषाय, सम्मतत्वात्। द्वितीयपक्षस्त्वयुक्तः; व्याप्त्यभावात्; न हि यदसर्वगतं तन्नियमेन रूपादिमदित्यविनाभावोऽस्ति, मनसोऽसर्वगतत्वेऽपि तदसंभवात्। अतो नाऽऽत्मनः शरीरेऽनुप्रवेशानुपपत्तिर्यतो निरात्मकं तत्स्यात्। असर्वगतद्रव्यपरिमाणलक्षणमूर्त्तत्वस्य मनोवत्प्रवेशाप्रतिबन्धकत्वात्, रूपाऽऽदिमत्त्वलक्षणमूर्त्तत्वोपेतस्याऽपि हि जलादेर्भस्मादावनुप्रवेशो न निषिध्यते, आत्मनस्तु तद्रहितस्यापि तत्रासौ प्रतिबध्यत इति महच्चित्रम्। यदप्यवादि–तत्परिमाणत्वे तस्य बालशरीरपरिमाणस्येत्यादि, तदप्ययुक्तम्, युवशरीरपरिमाणावस्थायामात्मनो बालशरीरपरिमाणपरित्यागे सर्वथा विनाशाऽसंभवात्, विफणावस्थोत्पादे सर्पवत्, इति कथं परलोकाभावोऽनुषज्येत?, पर्यायतस्तस्यानित्यत्वेऽपि द्रव्यतो नित्यत्वात्। यच्चाजल्पि–"यदि वपुष्परिमाणपवित्रितम्" इत्यादि तदप्यपेशलम्, शरीरखण्डने कथंचित्तत्खण्डनस्येष्टत्वात् शरीरसंबद्धात्मप्रदेशेभ्यो हि कतिपयात्मप्रदेशानां खण्डितशरीरप्रदेशे अवस्थानमात्मनः खण्डनं, तच्चात्र विद्यत एव, अन्यथा शरीरात्पृथग्भूतावयवस्य कम्पोपलब्धिर्न स्यात्। न च खण्डितावयवानुप्रविष्टस्यात्मप्रदेशस्य पृथगात्मत्वप्रसङ्गः। "तत्रैवानुप्रवेशात्"। न चैकत्र सन्तानेऽनेक आत्मा अनेकार्थप्रतिभासिज्ञानानामेकप्रमात्राधारतया प्रतिभासाभावप्रसङ्गात्, शरीरान्तरव्यवस्थितानेकज्ञानावसेयार्थसं-

विस्तिवत् । कथं खण्डिनाऽखण्डिनावयवयोः संघट्टनं पश्चादिति चेत् ?, एकान्तेन छेदानभ्युपगमात्, पद्मनालतन्तुवदच्छेदस्यापि स्वीकारात्, तथाभूनाऽदृष्टवशाच्च तत्संघट्टनमविरुद्धमेवेति तनुपरिमाण एवाऽऽत्माङ्गीकर्त्तव्यो, न व्यापकः । तथा चाऽऽत्मा व्यापको न भवति, चेतनत्वात्, यत्तु नैवं न तच्चेतन, यथा व्योम, चेतनश्चाऽऽत्मा, तस्मादव्यापकः । अव्यापकत्वे चास्य तत्रैवोपलभ्यमानगुणत्वेन सिद्धा शरीरपरिमाणता । प्रतिक्षेत्रं विभिन्न इत्यनेन तु विशेषणेनाऽऽत्माद्वैतमपास्तम् एतदपासनप्रकारश्च प्रागेव प्रोक्त इति न पुनरुच्यते । रत्ना० ७ परि० ।

(२५) आत्माधिकाराद् रत्नप्रभादिभावानात्मत्वादिभावेन चिन्तयन्नाह—

**आया भंते ! रयणप्पभा पुढवी, अण्णा रयणप्पभा पुढवी ?, गोयमा ! रयणप्पभापुढवी सिय आया, सिय णो आया, सिय अवत्तव्वं आताति य, णो आताति य । से केणऽट्ठेणं भंते ! एवं वुच्चइ रयणप्पभा पुढवी सिय आया, सिय णो आया, सिय अवत्तव्वं आयाति य णो आयाति य ?, गोयमा ! अप्पणो आदिट्ठे आया, परस्स आदिट्ठे णो आया, तदुभयस्स आदिट्ठे अवत्तव्वं रयणप्पभा पुढवी आयाति य, णो आयाति य से तेणऽट्ठेणं तं चेव ०जाव णो आयाति य । आया भंते ! सक्करप्पभा पुढवी जहा रयणप्पभा पुढवी तहा सक्करप्पभाए वि एवं ०जाव अहे सत्तमा ।**

'आया भंते! इत्यादि, अतति-सततं गच्छति तांस्तान्पर्यायानित्यात्मा ततश्चात्मा सद्रूपा रत्नप्रभा पृथिवी, 'अन्न' त्ति-अनात्मा, असद्रूपेत्यर्थः । 'सिय आया सिय नो आय' त्ति-स्यात्सती स्यादसतीति । 'सिय अवत्तव्व' ति-आत्मत्वेनाऽनात्मत्वेन च व्यपदेष्टुमशक्यं वस्त्विति भावः । कथमवक्तव्यम् ? इत्याह-आत्मेति च नो आत्मेति च, वक्तुमशक्यमित्यर्थः, 'अप्पणो आइट्ठे' त्ति-आत्मनः, स्वस्य रत्नप्रभाया एव वर्णादिपर्यायैरादिष्टे आदेशे सति तैर्व्यपदिष्टासतीत्यर्थः, आत्मा भवति स्वपर्यायापेक्षया सतीत्यर्थः, 'परस्स आइट्ठे नो आय' त्ति-परस्य शर्करादिपृथिव्यन्तरस्य पर्यायैरादिष्टे-आदेशे सति, तैर्व्यपदिष्टा सतीत्यर्थः, नोआत्मा अनात्मा भवति, पररूपापेक्षयाऽसतीत्यर्थः, 'तदुभयस्स आइट्ठे अवत्तव्वं' ति—तयोः स्वपरयोरुभयं तदेव वा उभयं तदुभयं तस्य पर्यायैरादिष्टे आदेशे सति, तदुभयपर्यायैर्व्यपदिष्टेत्यर्थः, अवक्तव्यम्—अवाच्यं वस्तु स्यात्, तथाहि—नह्यसौ आत्मेति वक्तुं शक्या, परपर्यायापेक्षया अनात्मत्वात्तस्या नाऽप्यनात्मेति वक्तुं शक्या, स्वपर्यायापेक्षया तस्या आत्मत्वादिति, अवक्तव्यत्वं च आत्माऽनात्मशब्दापेक्षयैव न तु सर्वथा, अवक्तव्यशब्देनैव तस्या उच्यमानत्वादनभिलाप्यभावानामपि भावपदार्थ-वस्तुप्रभृतिशब्दैरनभिलाप्यशब्देन वाऽभिलाप्यत्वादिति ।

**आया भंते ! सोहम्मे कप्पे पुच्छा, गोयमा ! सोहम्मे कप्पे सिय आया, सिय णो आया ०जाव णो आयाति य, से केणऽट्ठेणं भंते ! ०जाव णो आयाति य ?, गोयमा ! अप्पणो आदिट्ठे आया, परस्स आदिट्ठे णो आया, तदुभयस्स आदिट्ठे अवत्तव्वं आयाति य णो आयाति य, से तेणऽट्ठेणं गोयमा ! तं चेव ०जाव णो आयाति य, एवं ०जाव अच्चुयकप्पे । आया भंते ! गेविज्जगविमाणे अन्ने गेविज्जगविमाणे एवं जहा रयणप्पभापुढवी तहेव, एवं अणुत्तरविमाणा वि, एवं ईसिप्पब्भारा वि । आया भंते ! परमाणुपोग्गले, अण्णे परमाणुपोग्गले । एवं जहा सोहम्मे कप्पे तहा परमाणुपोग्गले वि भाणियव्वे ।**

एवं परमाणुसूत्रमपि ।

**आया भंते ! दुपदेसिए खंधे, अन्ने दुपदेसिए खंधे ?, गोयमा ! दुपदेसिए खंधे सिय आया १, सिय णो आया २, सिय अवत्तव्वं आयाति य णो आयाति य ३, सिय आया य, सिय णो आया य ४, सिय आया य अवत्तव्वं आयाति य णो आयाति य ५, सिय णो आया य अवत्तव्वं आयाति य णो आयाति य ६, से केणऽट्ठेणं भंते ! एवं तं चेव ०जाव णो आयाति य अवत्तव्वं आयाति य णो आयाति य ?, गोयमा ! अप्पणो आदिट्ठे आया १, परस्स आदिट्ठे णो आया २, तदुभयस्स आदिट्ठे अवत्तव्वं दुपदेसिए खंधे आयाति य णो आयाति य ३ । देसे आदिट्ठे सब्भावपज्जवे देसे आदिट्ठे असब्भावपज्जवे दुपदेसिए खंधे आया य णो आया य ४, देसे आदिट्ठे सब्भावपज्जवे देसे आदिट्ठे तदुभयपज्जवे दुपदेसिए खंधे आया य अवत्तव्वं आयाति य णो आयाति य ५, देसे आदिट्ठे असब्भावपज्जवे देसे आदिट्ठे तदुभयपज्जवे दुपदेसिए खंधे णो आया य अवत्तव्वं आयाति य णो आयाति य ६ से तेणऽट्ठेणं तं चेव ०जाव णो आयाति य ।**

द्विप्रदेशिकसूत्रे षड् भङ्गाः, तत्राद्यास्त्रयः सकलस्कन्धापेक्षाः पूर्वोक्ता एव, तदन्ये तु त्रयो देशापेक्षास्तत्र च गोयमेत्यत आरभ्य व्याख्यायते 'अप्पणो' त्ति-स्वस्य पर्यायैः 'आदिट्ठे' त्ति-आदिष्टे-आदेशे सति, आदिष्ट इत्यर्थः, द्विप्रदेशिकस्कन्ध आत्मा भवति १, एवं परस्य, पर्यायैरादिष्टोऽनात्मा २, तदुभयस्य द्विप्रदेशिकस्कन्धतदन्यस्कन्धलक्षणस्य पर्यायैरादिष्टोऽसाववक्तव्यं वस्तु स्यात्, कथम् ? आत्मेति चाऽनात्मेति चेति ३, तथा द्विप्रदेशत्वात्तस्य देश एक आदिष्टः, सद्भावप्रधानाः-सत्तानुगताः पर्यवा यस्मिन् स सद्भावपर्यवः, अथवा-तृतीयाबहुवचनमिदं स्वपर्यवैरित्यर्थः, द्वितीयस्तु देश आदिष्टः असद्भावपर्यवः परपर्यायैरित्यर्थः, परपर्यवाश्च तदीयद्वितीयदेशसम्बन्धिनो वस्त्वन्तरसम्बन्धिनो वेति, ततश्चासौ द्विप्रदेशिकः स्कन्धः क्रमेणाऽऽत्मा चेति नोआत्मा चेति ४, तथा तस्य देश आदिष्टः सद्भा-

वपर्यवो देशश्चोभयपर्यवस्ततोऽसौ. आत्मा चावक्तव्यं चेति ५, तथा तस्यैव देश आदिष्टोऽसद्भावपर्यवो देशस्तूभयपर्यवस्ततोऽसौ नोआत्मा चावक्तव्य च स्यादिति ६, सप्तम. पुनरात्मा च नोआत्मा चावक्तव्यं चेत्येव रूपो न भवति द्विप्रदेशिके द्व्यंशत्वादस्य, त्रिप्रदेशिकादौ तु स्यादिति सप्तभङ्गी।

आया भन्ते! तिपदेसिए खंधे अन्ने तिपदेसिए खंधे ?, गोयमा! तिपदेसिए खंधे सिय आया १. सिय णो आया २, सिय अवत्तव्वं आयाति य णो आयाति य ३. सिय आया य णो आया य ४, सिय आया य णो आयाओ य ५, सिय आयाओ य णो आया य ६, सिय आया य अवत्तव्वं आयाति य णो आयाति य ७, सिय आयाइ य अवत्तव्वाइं आयाओ य णो आयाओ य ८, सिय आयाओ य अवत्तव्वं आयाति य णो आयाति य ९, सिय णो आया य अवत्तव्वं आयाति य णो आयाति य १०, सिय आया य अवत्तव्वाइं आयाओ य णो आयाओ य ११, सिय णो आयाओ य अवत्तव्वं आयाति य णो आयाति य १२, सिय आया य णो आया य अवत्तव्वं आयाति य णो आयाति य १३, से केणऽट्ठेणं भंते! एवं वुच्चइ तिपदेसिए खंधे सिय आया एवं चेव उच्चारेयव्वं ०जाव सिय आया य णो आया य अवत्तव्वं आयाति य णो आयाति य ?, गोयमा! अप्पणो आदिट्ठे आया १, परस्स आदिट्ठे णो आया २, तदुभयस्स आदिट्ठे अवत्तव्वं आयाति य णो आयाति य ३, देसे आदिट्ठे सब्भावपज्जवे देसे आदिट्ठे असब्भावपज्जवे तिपदेसिए खंधे आया य णो आया य ४, देसे आदिट्ठे सब्भावपज्जवे देसा आदिट्ठा असब्भावपज्जवे तिपदेसिए खंधे आया य णो आयाओ य ५, देसा आदिट्ठा सब्भावपज्जवे देसे आदिट्ठे असब्भावपज्जवे तिपदेसिए खंधे आयाओ य णो आया य ६, देसे आदिट्ठे सब्भावपज्जवे देसे आदिट्ठे तदुभयपज्जवे तिपदेसिए खंधे आया य अवत्तव्वं आयाति य णो आयाति य ७, देसे आदिट्ठे सब्भावपज्जवे देसा आदिट्ठा तदुभयपज्जवा तिपदेसिए खंधे आया य अवत्तव्वाइं आयाउ य णो आयाउ य ८, देसा आदिट्ठा सब्भावपज्जवा देसे आदिट्ठे तदुभयपज्जवे तिपदेसिए खंधे आयाओ य अवत्तव्वं आयाति य णो आयाति य ९, एए तिन्नि भंगा देसे आदिट्ठे असब्भावपज्जवे देसे आदिट्ठे तदुभयपज्जवे तिपदेसिए खंधे णो आया य अवत्तव्वं आयाति य णो आयाति य १०, देसे आदिट्ठे असब्भावपज्जवे देसा आदिट्ठा तदुभयपज्जवा तिपदेसिए खंधे णो आया य अवत्तव्वाइं आयाउ य णो आयाउ य ११, देसा आदिट्ठा असब्भावपज्जवा देसे आदिट्ठे तदुभयपज्जवे तिपदेसिए खंधे णो आयाओ य अवत्तव्वं आयाति य णो आयाति य १२, देसे आदिट्ठे सब्भावपज्जवे देसे आदिट्ठे असब्भावपज्जवे देसे आदिट्ठे तदुभयपज्जवे तिपदेसिए खंधे आया य णो आया य अवत्तव्वं आयाति य णो आयाति य १३, से तेणऽट्ठेणं गोयमा! एवं वुच्चइ-तिपदेसिए खंधे सिय आया तं चेव०जाव णो आयाति य।

त्रिप्रदेशिकस्कन्धे तु त्रयोदशभङ्गास्तत्र पूर्वोक्तेषु सप्तसाद्या. सकलादेशास्त्रयस्तथैव तदन्येषु तु त्रिषु त्रयस्त्रय एकवचनबहुवचनभेदात् सप्तमस्त्वेकविध एव, स्थापना चेयम्—

| आ० १ | १ १ १ नो० | १ १ १ नो० | १ १ १ नो० | आ० १ |
| --- | --- | --- | --- | --- |
| नो० १ | | | | नो० १ |
| अव० १ | १ १ १ अव० | ३ ३ १ अव० | ३ १ १ नो० | अव० १ |

यच्चेह प्रदेशद्वयेऽप्येकवचनं क्वचित्तस्य प्रदेशद्वयस्यैकप्रदेशावगाढत्वादिहेतुनैकत्वविवक्षणात्, भेदविवक्षाया च बहुवचनमिति।

आया भंते, चउप्पदेसिए खंधे अन्ने० पुच्छा, गोयमा! चउप्पदेसिए खंधे सिय आया १, सिय णो आया २, सिय अवत्तव्वं आयाति य णो आयाति य ३, सिय आया य णो आया य ४, सिय आया य अवत्तव्वं ४, सिय णो आया य अवत्तव्वं ४, सिय आया य णो आया य अवत्तव्वं आयाति य णो आति य १६ सिय आया य णो आया य अवत्तव्वाइं आयाओ य णो आयाओ य १७, सिय आया य णो आयाओ य अवत्तव्वं आयाति य णो आयाति य १८, सिय आयाओ य णो आया य अवत्तव्वं आयाति य णो आयाति य १९, से केणऽट्ठेणं भंते! एवं वुच्चइ-चउप्पदेसिए खंधे सिय आया य णो आया य अवत्तव्वं. तं चेव अट्ठे पडिउच्चारेयव्वं ?, गोयमा! अप्पणो आदिट्ठे आया १, परस्स आदिट्ठे णो आया २, तदुभयस्स आदिट्ठे अवत्तव्वं आयाति य णो आयाति य ३, देसे आदिट्ठे सब्भावपज्जवे देसे आदिट्ठे असब्भावपज्जवे ४ चउभंगो, सब्भावपज्जवेणं तदुभएण य ४ चउभंगो, असब्भावेणं तदुभएण य ४ चउभंगो, देसे आदिट्ठे सब्भावपज्जवे देसे आदिट्ठे असब्भावपज्जवे देसे आदिट्ठे तदुभयपज्जवे चउप्पदेसिए खंधे आया य णो आया य अवत्तव्वं आयाति य णो आयाति य १६, देसे आदिट्ठे सब्भावपज्जवे देसे आदिट्ठे असब्भावपज्जवे देसा आदिट्ठा तदुभयपज्जवा चउप्पदेसिए खंधे भवइ आया य णो आया य

अवत्तव्वाइं आयाओ य णो आयाओ य १७, देसे आ-दिट्ठे सब्भावपज्जवे देसा आदिट्ठा असब्भावपज्जवा देसे आदिट्ठे तदुभयपज्जवे चउप्पदेसिए खंधे आया य णो आयाओ य अवत्तव्वं आयाति य णो आयाति य १८, देसा आदिट्ठा सब्भावपज्जवा देसे आदिट्ठे असब्भाव-पज्जवे देसे आदिट्ठे तदुभयपज्जवे चउप्पदेसिए खंधे आ-याओ य णो आया य अवत्तव्वं आयाति य णो आ-याति य १९, से तेणट्ठेणं गोयमा ! एवं वुच्चइ च-उप्पदेसिए खंधे सिय आया सिय णो आया सिय अवत्तव्वं, निक्खेवो ते चेव भंगा उच्चारेयव्वा ०जाव णो आयाति य ।

चतुष्प्रदेशिकेऽप्येवं नवरमेकोनविंशतिर्भङ्गास्तत्र त्रय सक-लादेशास्तथैव शेषेषु चतुर्षु प्रत्येक चत्वारो विकल्पास्ते चैव चतुर्थादिषु त्रिषु-[illegible] सप्तमस्त्वेवम्—[illegible]

आया भंते ! पंचपदेसिए खंधे अन्ने पंचपदेसिए खंधे ?, गोयमा ! पंचपदेसिए खंधे सिय आया १, सिय णो आया २, सिय अवत्तव्वं आयाति य णो आयाति य ३, सिय आया य णो आया य सिय अवत्तव्वं ४, णो आया य अवत्तव्वेण य ४, तियगसंयोगे एक्को न पठति, से केणट्ठेणं भंते ! तं चेव पडिउच्चारेयव्वं ?, गोयमा ! अप्पणो आदिट्ठे आया १, परस्स आदिट्ठे णो आया २, तदुभयस्स आदिट्ठे अवत्तव्वं ३ देसे आदिट्ठे सब्भाव-पज्जवे देसे आदिट्ठे असब्भावपज्जवे एवं दुयगसंजोगे सव्वे पठति, तियगसंजोगे एक्को न पठति, छप्पदेसियस्स सव्वे पठति जहा छप्पदेसिए एवं ०जाव अणंतपदेसिए । सेवं भंते ! सेवं भंते ! त्ति ०जाव विहरइ । (सूत्र-४६६)

पञ्चप्रदेशके तु द्वाविंशतिस्तत्राद्यास्त्रयस्तथैव, तदुत्तरेषु च त्रिषु प्रत्येक चत्वारो विकल्पास्तथैव, सप्तमे तु सप्त, तत्र त्रिकसंयोगे किलाऽष्टौ भङ्गका भवन्ति, तेषु च सप्तैवेह ग्राह्या एकस्तु तेषु न पतत्यसम्भवात् इदमेवाह-' तिगस-जोगे ' इत्यादि । तत्रैतेषां स्थापना—[illegible] यश्च न पतति स पुनरयम्-२२२ षट्प्र देशिके त्रयोविंशतिरिति । भ० १२ श० १० उ० । ( आत्म-स्वरूपादि ' जीव ' शब्दे चतुर्थभागेऽपि वक्ष्यते )

(२६) अप्पा णई वेतरणी, अप्पा कूडसामली ।
अप्पा काम दुहा धेणू, अप्पा मे नंदणं वणं ॥ ३६ ॥
अप्पा कत्ता विकत्ता य, दुहाण य सुहाण य ।
अप्पा मित्तममित्तं च, दुप्पट्ठियसुपट्ठिओ ॥ ३७ ॥

आत्मेति-व्यवच्छेदफलत्वाद्वाक्यस्यात्मैव नान्य कश्चिदि-त्याह-नदी-सरित् वैतरणीति नरकनद्या नाम ततो महाऽ-नर्थहेतुतया नरकनदीव अत एवाऽऽत्मैव कूटमिव जन्तुय-तनाहेतुत्वात्कूटशाल्मली कूटशाल्मली नरकोद्भवा । तथाऽऽ-त्मैव कामान्—अभिलाषान् दोग्धि—कामितार्थप्रापकतया प्रपूरयति कामदुघा धेनुरिव धेनु, इयं च रूढित उक्ता, एतदुपमत्व चाभिलषितस्वर्गापवर्गावाप्तिहेतुतया, आत्मैव ' मे ' मम नन्दनं नन्दननामकं वनम्-उद्यानम् एतदौपम्यं चास्य चित्तप्रह्लादहेतुतया यथा चैतदेवं तथाऽऽह— आत्मैव कर्ता-विधायको दु खानां, सुखानां चेति योग, प्रक्रमाच्चात्मन एव विकरिता च—विक्षेपकश्चात्मैव ते-षामेव अतश्चात्मैव मित्रम्-उपकारितया सुहृत् ' अमि-त्तं ' ति—अमित्रं च—अपकारितया दुर्हृत् कीदृक् सन्-' दुप्पट्ठिय-सुपट्ठिओ ' त्ति—दुष्टं प्रस्थित.—प्रवृत्तो दु-ष्प्रस्थित ; दुराचारविधातेति यावत् , सुष्ठु प्रस्थित सुप्र-स्थित , सदनुष्ठानकर्त्तेति यावत् , योऽर्थ एतयोर्विशेषण-समास', दुष्प्रस्थितो ह्यात्मा समस्तदु खहेतुरिति वैतर-ण्यादिरूप , सुप्रस्थितश्च सकलसुखहेतुरिति कामधेन्वा-कल्प , तथा च-प्रव्रज्यावस्थायामेव सुप्रस्थितत्वेन आत्म-नोऽन्येषां च योगकरणसमर्थत्वान्नाथत्वमिति सूत्रद्वयग-र्भार्थ. । उत्त० २० अ० ।

आत्मा चावश्यं पालयितव्यः—

अप्पा खलु सययं रक्खिअव्वो,
सव्विदिएहिं सुसमाहिएहिं ।
अरक्खिओ जाइपहं उवेइ,
सुरक्खिओ सव्वदुहाण मुच्चइ ॥ १६ ॥

आत्मा 'खलिवति'-खलुशब्दो विशेषणार्थ , शक्तौ. सत्यां परोऽपि सततं-सर्वकाल रक्षितव्य -पालनीय' पारलौकि-काऽपायेभ्य , कथमित्युपायमाह-सर्वेन्द्रियै स्पर्शनादिभि सुसमाहितेन; निवृत्तविषयव्यापारेणेत्यर्थ , अरक्षणरक्ष-णयो फलमाह-अरक्षित' सन् जातिपन्थानम्-जन्ममार्ग-संसारमुपैति-सामीप्येन गच्छति सुरक्षित पुनर्यथाऽऽ-गमनप्रमादेन सवदु खेभ्य —शारीरमानसेभ्यो विमुच्यते, विविधम्-अनेकै प्रकारैः पुनर्ग्रहणपरमस्वास्थ्यापादनलक्ष-णैर्मुच्यत इति । दश० २ चू० ।

आत्मा च सर्वस्याऽवलम्बनम्—

ममत्तं परिवज्जामि, निम्ममत्तं उवट्ठिओ ।
आलंबणं च मे आया, अवसेसं च वोसिरे ॥ ३७ ॥

तथा ममत्वम्-ममेदमित्येव रूपो भावो ममत्वम्-प्रति-बन्धस्तत्र मनोऽभिमतवस्तुष्विति शेष , परिजानामि ज्ञ-परिज्ञया ज्ञात्वा प्रत्याख्यानपरिज्ञया परिहरामीत्यर्थ , अहं किंभूत सन् निर्ममत्व—नि सङ्गत्वम् उपस्थित ; आश्रित इत्यर्थ , नहिं किमालम्बनतया चिन्तयतीत्याह-आलम्बनं-च-आश्रयोऽवष्टम्भः आधार इत्यर्थ मे' ममात्मैवाराधना-हेतुत्वम् अवशेषम्-अपरं; शरीरोपध्यादि सर्वं व्युत्सृजामि।
अथ केषु कार्येष्वयमात्माऽवलम्बनमित्यत इत्याह—

आया हु महं नाणे, आया मे दंसणे चरित्ते य ।
आया पच्चक्खाणे, आया मे संयमे जोगे ॥ ३८ ॥

अतति-सततं गच्छति तासु तासु योनिष्विति आत्मा

स मम ज्ञाने-ज्ञानविषये आलम्बनं, सहाय इत्यर्थः, 'हु' स्फुटं भवतु इति शेषः । आत्मा मे दर्शने सम्यक्त्वे चारित्रेऽपि चालम्बनं, तथा प्रत्याख्याने-भक्तपरिज्ञारूपे संयमे च संयमसर्वविरत्यङ्गीकाररूपे, योगे च-प्रशस्तमनोवाक्कायव्यापाररूपे ममाऽऽत्मैवालम्बनमनन्तान्यप्युपात्तानि द्रष्टव्यानि । एक एव चाऽऽत्मा सर्वमङ्गीकरोति ।

अथ निर्ममत्वाय एकत्वभावनां भावयति—

एगो वच्चइ जीवो, एगो चेवुववज्जइ ।
एगस्स चेव मरणं, एगो सिज्झइ नीरओ ॥ ३९ ॥

' एगो वच्चइ ' एकः स्वजनधनादिरहितो व्रजति जीवो, भवान्तरमिति शेषः, एक एव च उत्पद्यते मनुष्यादिरूपतया, एकस्यैव मरणं भवति, एक एव च कर्मरजोरहितः सन् सिध्यति जीवः भवान्तरगमनस्य मरणस्य चैकार्थत्वेऽपि पृथगुपादानमेकत्वभावनोत्कर्षपोषार्थं नानादेशजविनेयानां व्यक्तार्थप्रतिपादनार्थं वा ।

एगो मे सासओ अप्पा, नाणदंसणसंजुओ ।
सेसा मे बाहिरा भावा, सव्वे संजोगलक्खणा ॥ ४० ॥

' एगो मे ' एक एव ' मे ' मम आत्मा शश्वद्भवनात् शाश्वतः सहचारी ज्ञानदर्शनसंयुक्तः स एव, मदीय इत्यर्थः, शेषाः केचन ' मे ' मम बाह्या भावाः-पदार्थाः, पुत्रकलत्रादिकाः ते सर्वे संयोजनं सयोगः स एव लक्षणं येषां ते तथा कृत्रिममेलापका एवेत्यर्थः, ननु शाश्वता येषां संयोगस्तेषामवश्यंभावी वियोग इति हेतोर्न मदीयास्ते इति परमार्थः । आतु० ।

आत्मकृतमेव च भुज्यते—

को देइ कस्स देज्जइ, विहियं को हरइ हीरए कस्स ।
सयमप्पणा विढत्तं, अल्लियइ सुहं पि दुक्खं पि ॥ १ ॥

महा० ६ अ० ।

आत्मनैव च संसारमुत्तरेति—

णो णं गोयमा ! गुरुसीसगाणं निस्साए संसारमुत्तरेज्जा । णो णं गोयमा ! परस्स निस्साए संसारमुत्तरेज्जा । अप्पणो निस्साए संसारमुत्तरेज्जा । महा० ३ अ० ।

( आत्मजयेनैव च क्रोधादिजयः )—

जे उ संगामकालम्मि, नाया सूरपुरंगमा ।
णो ते पिट्ठमुवेहिंति, किं परं मरणं सिया ॥ ६ ॥

सूत्र० १ श्रु० ३ अ० ३ उ० । ( अस्या गाथाया अर्थः ' अभत्तविसीयण ' शब्दे प्रथमभागे २२९ पृष्ठे गतः )

तदेवं सुभटदृष्टान्तं प्रदर्श्य दार्ष्टान्तिकमाह—

तमेगे परिभासंति, भिक्खुयं साहुजीविणं ।
जे एवं परिभासंति, अंत एते समाहिये ॥ ८ ॥

सूत्र० १ श्रु० ३ अ० ३ उ० । ( अस्या गाथाया अर्थः ' परवादिवयण ' शब्दे पञ्चमे भागे वक्ष्यते )

धर्म स्वाऽऽत्मसाक्षिक एव—

आया सयमेव अत्थाणं, निउणं जाणे जहट्ठियं ।
आया चेव दुप्पतिज्जे, धम्मं त्ति य अत्तसक्खियं ॥ ६ ॥

महा० १ अ० ।

उक्तं च श्रीहरिभद्रपूज्यैः—

" आयप्पभवं धम्मं, आयंति यं अप्पणो सरूवं च ।
दंसणणाणचरित्ते-गत्तं जीवस्स परिणामं ॥ १ ॥ "

रे भव्य ! हिताय वदामः सर्वागमेषु धर्म आत्मनः शुद्धापरिणतिरेव निमित्तस्योपादानात्प्राकट्यहेतुत्वात्, बाह्याचरणादिकं साधकैरारभ्यस्ते तथापि धर्महेतुत्वेनोपादेयं श्रद्धावद्भिः, तत्स्वात्मक्षेत्रव्यापकरूपानन्तपर्यायलक्षणं धर्मः उत्तराध्ययनावश्यकादिसर्वसिद्धान्ताशयः । अष्ट०३२ अष्ट० ।

आत्मज्ञानस्यैव विद्यात्वम्—

नित्यशुच्यात्मताख्याति-रनित्याऽशुच्यनात्मसु ।
अविद्यातत्त्वधीर्विद्या, योगाचार्यैः प्रकीर्तिता ॥ १ ॥
यः पश्येन्नित्यमात्मान-मनित्यं परसंगमम् ।
छलं लब्धुं न शक्नोति, तस्य मोहमलिम्लुचः ॥ २ ॥
तरङ्गतरलां लक्ष्मी-मायुर्वायुवदस्थिरम् ।
अदभ्रधीरनुध्याये-दभ्रवद्भङ्गुरं वपुः ॥ ३ ॥
शुचीन्यप्यशुचीकर्तुं, समर्थेऽशुचिसम्भवे ।
देहे जलादिना शौच-भ्रमो मूढस्य दारुणः ॥ ४ ॥
यः स्नात्वा समताकुण्डे, हित्वा कश्मलजं मलम् ।
पुनर्न याति मालिन्यं, सोऽन्तरात्मा परः शुचिः ॥ ५ ॥
आत्मबोधो न वः पाशो, देहगेहधनादिषु ।
यः क्षिप्तोऽप्यात्मना तेषु स्वस्य बन्धाय जायते ॥ ६ ॥
मिथो युक्तपदार्थाना-मसंक्रमचमत्क्रिया ।
चिन्मात्रपरिणामेन, विदुषैवानुभूयते ॥ ७ ॥
अविद्यातिमिरध्वंसे, दृशा विद्याञ्जनस्पृशा ।
पश्यन्ति परमात्मान-मात्मन्येव हि योगिनः ॥ ८ ॥

अष्ट० १४ अष्ट० । ( अस्याष्टकस्य व्याख्या ' विज्जा ' शब्दे षष्ठे भागे करिष्यामि )

( आत्मविवेकस्यैव विवेकत्वम् )—

कर्मजीवं च संश्लिष्टं, सर्वदा क्षीरनीरवत् ।
विभिन्नीकुरुते योऽसौ, मुनिहंसो विवेकवान् ॥ १ ॥
देहाऽऽत्माद्यविवेकोऽयं, सर्वदा सुलभो भवे ।
भवतोऽप्यापि तद्भेद-विवेकस्त्वतिदुर्लभः ॥ २ ॥
शुद्धेऽपि व्योम्नि तिमिराद्, रेखाभिर्मिश्रिता यथा ।
विकारैर्मिश्रिता भाति, तथात्मन्यविवेकतः ॥ ३ ॥
यथा योधैः कृतं युद्धं, स्वामिन्येवोपचर्यते ।
शुद्धात्मन्यविवेकेन, कर्मस्कन्धोर्जितं तथा ॥ ४ ॥
इष्टकाद्यपि हि स्वर्णं, पीतोन्मत्तो यथेक्षते ।

आत्मा भेदभ्रमस्तद्वद्, देहादावविवेकिनः ॥ ५ ॥
इच्छन्न परमान्भावान्, विवेकाद्रेः पतत्यधः ।
परमं भावमन्विष्य-न्नविवेके निमज्जति ॥ ६ ॥
आत्मन्येवात्मनः कुर्यात्, यः षट्कारकसंगतिम् ।
काऽविवेकज्वरस्यास्य, वैषम्यं जलमज्जनात् ॥ ७ ॥
संयमास्त्रं विवेकेन, शाणेनोत्तेजितं मुनेः ।
धृतिधारोल्बणं कर्म,शत्रुच्छेदक्षमं भवेत् ।८। अष्ट. १५ अष्ट.

आत्मार्चनस्यैव भावपूजात्वम्—

दयाऽम्भसाकृतस्नानः, सन्तोषशुभवस्त्रभृत् ।
विवेकतिलकभ्राजी, भावनापावनाशयः ॥ १ ॥
भक्तिश्रद्धानघुसृणो-न्मिश्रकश्मीरजद्रवैः ।
नवब्रह्मागतो देवं, शुद्धमात्मानमर्चय ॥ २ ॥
क्षमापुष्पस्रजं धर्म- युग्मक्षौमद्वयं तथा ।
ध्यानाभरणसारं च, तदङ्गे विनिवेशय ॥ ३ ॥
मदस्थानभिदा त्यागै-र्लिखाऽग्रे चाष्टमङ्गलम् ।
ज्ञानाऽग्नौ शुभसंकल्प- काकतुण्डं च धूपय ॥ ४ ॥
प्राग् धर्मलवणोत्तारं, धर्मसन्यासवह्निना ।
कुर्वन्पूरय सामर्थ्य-राजन्नीराजनाविधिम् ॥ ५ ॥
स्फुरन्मङ्गलदीपं च, स्थापयानुभवं पुरः ।
योगनृत्यपरस्तूर्य- त्रिकसंयमवान् भव ॥ ६ ॥
उल्लसन्मनसः सत्य- घण्टां वादयतस्तव ।
भावपूजारतस्येत्थं, करक्रोडे महोदयः ॥ ७ ॥
द्रव्यपूजोचिताभेदो- पासना गृहमेधिनाम् ।
भावपूजा तु साधूना-मभेदोपासनात्मिका ॥ ८ ॥

अष्ट० २६ अष्ट० । ( अस्याष्टकस्य व्याख्या 'पूया' शब्दे पञ्चमे भागे वक्ष्यते ) मोक्षे, संयमे च । " आततार परिव्वए " ॥ ७ ॥ आत्मा-मोक्षः, संयमो वा; तद्भावस्तस्मै तदर्थं परि-समन्तात् व्रजेत्; संयमानुष्ठानक्रियाया दत्ताऽवधानो भवेदित्यर्थः । सूत्र० १ श्रु० ३ अ० ३ उ० । तथा प्रवचनसारोद्धारवृत्त्यादौ इन्द्रियविषयप्रमाणता आत्माङ्गुलेन प्रोक्ताऽस्ति चक्षुष उत्कृष्टविषयतायां लक्षयोजनरूपो विष्णुकुमारो दृष्टान्तः प्रोक्तोऽस्ति, तथा हि-चक्षुः सातिरेकयोजनलक्षाद्रूपं गृह्णातीति, सातिरेकत्वं तु विष्णुकुमारादय स्वपदपुरे स्थितं गर्तादिकं तन्मध्यगतं च लेष्ट्वादिकं पश्यन्तीति नवतत्त्वमहाचूर्णावस्ति, इति चक्षुषः सातिरेकलक्षयोजनदूरस्थरूपग्रहणविषये दृष्टान्तकरणाद्विष्णुकुमारविकुर्वितरूपमात्माङ्गुलेन संभाव्यते, अन्यथा न दृष्टान्तसंगतिरित्येवं सति प्रश्नोत्तरसमुच्चयचतुर्थप्रकाशप्रान्ते यद्विष्णुकुमारविकुर्वितरूपमुत्सेधाङ्गुलनिष्पन्नलक्षयोजनप्रमाणमुक्तमस्ति तत्कथमिति प्रश्न , अत्रोत्तरम्-विष्णुकुमारकृतं सातिरेकलक्षयोजनप्रमाणरूपं चमरेन्द्रादिवत्प्रमाणाङ्गुलेनापि संभवति न काऽपि विप्रतिपत्तिः, यच्च प्रश्नोत्तरे उत्सेधाङ्गुलेन प्रोक्तमस्ति तत्र किंचिद्विधेयमस्तीति । २८० प्र० । सेन० ३ उल्ला० ।

आता ( या ) णुकंपय-आत्मानुकम्पक त्रि० । आत्मानमेवानर्थपरिहारद्वारेणानुकम्पते शुभानुष्ठानेन सद्गतिगामिनं विधत्ते इत्यात्मानुकम्पकः । सूत्र० २ श्रु० २ अ० । आत्महितप्रवृत्ते, प्रत्येकबुद्धे जिनकल्पिके च । स्था० । " आयाणुकंपए णाममेगे " ( सूत्र-३५२ × ) । आत्मानुकम्पक,-आत्महितप्रवृत्तः प्रत्येकबुद्धो जिनकल्पिको वा परानपेक्षो वा निर्घृणः । स्था० ४ ठा० ४ उ० ।

आता ( या ) णुस्सरण-आत्मानुस्मरण-न० । आत्मनोऽनुस्मृतौ, पो० । " आत्मानुस्मरणाय च " ॥ १६ + ॥ आत्मनोऽनुस्मरणाय च—स्वयमेवानुस्मृतिनिमित्तम् । पो० । १६ विव० ।

आता ( या ) णुसासण-आत्मानुशासन-न० । आत्मनोऽनुशास्तौ, सूत्र० ।

मा पच्छ असाधुता भवे, अच्चेही अणुसास अप्पगं ।
अहियं च असाहु सोयती, से थणती परिदेवती बहुं ॥७॥

मा पश्चात्-मरणकाले, भवान्तरे वा कामानुषङ्गादसाधुता-कुगतिगमनादिकरूपा भवेत्-प्राप्नुयादिति । अतो विषयासङ्गादात्मानम्-अत्येहि-त्याजय । तथा-आत्मानं च अनुशाधि-आत्मनोऽनुशास्तिं कुरु, यथा-हे जीव ! यो ह्यसाधु -असाधुकर्मकारी-हिंसानृतस्तेयादौ प्रवृत्तः सन् दुर्गतौ पतितः अधिकम्-अत्यर्थमेव शोचति, स च परमाऽधार्मिकैः कदर्थ्यमानस्तिर्यक्षु वा क्षुधादिवेदनाग्रस्तोऽत्यर्थं स्तनति—सशब्दं निःश्वसिति । तथा-परिदेवते विलपति-आक्रन्दति । सुबह्विति । " हा मातर्म्रियत इति, त्राता नैवाऽस्ति सांप्रतं कश्चित् । किं शरणं मे स्यादिह, दुष्कृतचरितस्य पापस्य ? ॥ १ ॥ " इत्येवमादीनि दुःखान्यसाधुकारिणः प्राप्नुवन्तीत्यतो विषयानुषङ्गो न विधेय इत्येवमात्मनोऽनुशासनं कुर्विति संबन्धनीयम् । सूत्र० १ श्रु० २ अ० ३ उ० ।

आताव-आताप-पुं० । ईषत्तापे, आचा० । " णो खलु मे कप्पति अगणिकायं उज्जालित्तए वा पज्जालित्तए वा कायं आयावेत्तए वा पयावेत्तए वा " ( सूत्र-२१० + ) । कायम्-शरीरमीषत्तापयितुं वा प्रकर्षेण तापयितुं प्रताययितुं वा । आचा० १ श्रु० ८ अ० ३ उ० । " अनादौ स्वरादसंयुक्तानां क-ख-त-थ-प-फां-ग-घ-द-ध-ब-भाः " ॥ ८ । ४ । ३९६ ॥ इति अपभ्रंशे पस्य वः । प्रा० ।

आता (या) वग-आतापक-पुं० । आतापयत्यातापनां शीतातपादिसहनरूपां करोतीत्यातापकः । स्था० ५ ठा० २ उ० । आतापनाग्राहिणि परतीर्थिकभेदे, सूत्र० २ श्रु० २ अ० ।

आता (या) वण-आतापन-न० । सकृदीषद्वा तापने, ' आयाविज्जा न पयाविज्जा " सकृदीषद्वा तापनमातापनम् । दश० ४ अ० । शीतादिभिः शरीरस्य सन्तापने च । स्था० ३ ठा० ३ उ० ।

आता (या) वणया-आतापनता-स्त्री० । आतापनाना-शीतादिभिः शरीरस्य संतापनानां भाव आतापनता । शीतातपादेः सहने स्था० ३ ठा० ३ उ० ।

आता (या) वणा-आतापना-स्त्री० । शीतादिसहनात्मके तपोभेदे पञ्चा० । आयावणठाणमाईया ॥४८॥" पञ्चा० १८ विव० । "आयावणाए आयावेमाणस्स" । आ० म० १ अ० ४२६गाथाटी० । "आतावेत्ते" ( सूत्र०-३६६ × ) आतापयति-आतापनाम्-शीताऽऽतपादिसहनरूपाम् । स्था० ५ ठा० १ उ० ।

'आयावणा य तिविहा, उक्कोसा१ मज्झिमा२ जहन्ना य३।
उक्कोसा उ निविन्ना, निसन्नमज्झा ठिय जहन्ना ॥ ३ ॥
तिविहा होइ निवन्ना, ओमंथिय१ पास२ तइय उत्ताणा ॥"
इति ।

निषण्णाऽपि त्रिविधा—

" गोदुह उक्कुड पलियं-कमेस तिविहा य मज्झिमा होइ ।
तइया उ हत्थिसुंडे-गपायसमपाइया चेव ॥ १ ॥ "

इयं च निषण्णादिका त्रिविधाप्यातापना स्वस्थाने पुनरुत्कृष्टादिभेदा ओमन्थियादिभेदेनावगन्तव्या । इह च यद्यपि स्थानानिगन्चादीनामातापनायामन्तर्भावस्तथापि प्रधानेतरविवक्षया न पुनरुक्तत्वं मन्तव्यमिति । स्था०५ ठा०१ उ० ।

तद्भक्तव्यता—

नो कप्पइ निग्गंथीए बहिया गामस्स वा ०जाव सन्निवेसस्स वा उड्ढं बाहाओ पगिज्झिय २ सूराभिमुहाए एगपाइयाए ठिच्चा आयावणाए आयावित्तए ॥२३॥ कप्पइ से उवस्सयस्स अंतोवगडाए संघाडिपडिबद्धाए पलंबियाहियाए समतलपाइयाए ठिच्चा आयावणाए आयावित्तए ॥२४॥

नो कल्पते निर्ग्रन्थ्या बहिर्ग्रामस्य वा यावत् सन्निवेशस्य वा ऊर्ध्वम्-ऊर्ध्वमुखो बाहू प्रगृह्य, प्रकर्षेण गृहीत्वाः कृत्वेत्यर्थ , सूर्याभिमुख्या एकपादिकाया एकं पादमूर्द्ध्वमाकुञ्च्य अपरं एकपदे सुविकृतवत्या एवंविधाया स्थित्वा आतापयितुम् ॥२३॥ किं तु कल्पते- से तस्याः उपाश्रयस्यान्तर्वगडाया संघाटीप्रतिबद्धाया प्रलम्बितबाहुकाया समतलपादिकाया स्थित्वा आतापनया-आतापनाय, आतापयितुमिति सूत्रार्थ ।

अथ भाष्यम्—

आयावणा य तिविहा, उक्कोसा मज्झिमा जहन्ना य ।
उक्कोसा उ णिवण्णा, णिसण्णमज्झा वि य जहन्ना ॥२६५॥

आतापना त्रिविधा-उत्कृष्टा, मध्यमा, जघन्या च । तत्रोत्कृष्टा-निवन्ना-निपत्य शयितो या करोतीत्यर्थ । मध्यमा-निषण्णस्य, जघन्या तु ऊर्द्ध्वस्थितस्य ।

पुनरेकैका त्रिविधा—

तिविहा होइ निवण्णा, ओमंथे पासतइयमुत्ताणा ।
उक्कोसुक्कोसा उक्को-ममज्झिमा उक्कोसगजहण्णा ॥२६६॥

निवन्नस्योत्कृष्टा आतापना, सा त्रिविधा भवति-उत्कृष्टोत्कृष्टा, उत्कृष्टमध्यमा, उत्कृष्टजघन्या च । तत्र यदवाङ्मुख निपत्य आतापना क्रियते सा उत्कृष्टोत्कृष्टा, या तु पार्श्वेन शयाने क्रियते सा उत्कृष्टमध्यमा, या पुनरुत्तानशयनेन विधीयते सा उत्कृष्टजघन्या ।

उक्कोसा दुहओ वि, मज्झिममज्झिमा जहन्ना य ।
अहमुक्कोसाहममज्झिमा,य अहमाऽधमा चरिमा ।२६७॥

निषण्णस्य मध्यमा आतापना, सा त्रिधा-मध्यमोत्कृष्टा, 'दुहओ वि मज्झिम' त्ति-मध्यममध्यमा, मध्यमजघन्या । ऊर्ध्वस्थितस्य या जघन्या सा त्रिधा-अधमोत्कृष्टा, अधममध्यमा । अधमा च चरमेति अधमशब्दो जघन्यवाचकोऽत्र द्रष्टव्य. ।

एतासामिदं सूत्रम्—

पलियंक अद्ध उक्कुडु-गमो य तिविहा उ मज्झिमा होइ ।
तइया उ हत्थिसुंडे-गपादसमपादिगा चेव ॥ २६८ ॥

मध्यमोत्कृष्टा-पर्यङ्कासनसंस्थिता, मध्यममध्या-अर्द्धपर्यङ्का, मध्यमजघन्या-उत्कुटुका । क्वचिदादर्शे पूर्वार्द्धमित्थं दृश्यते-' गोदोहुक्कुडुपलियंकमो य वि तिविहा उ मज्झिमा होइ " त्ति, तत्र मध्यमोत्कृष्टा-गोदोहिका, मध्यमा-उत्कुटुका, मध्यमजघन्या-पर्यङ्कासनरूपा । गोशब्द पादपूरणे, एषा त्रिविधा मध्यमा भवति । या तु तृतीयाऽस्ति तस्या जघन्योत्कृष्टादिभेदात्त्रिधा भणिता, सजघन्योत्कृष्टा, हस्तिसुण्डिका, पुनर्नताभ्यामुपविष्टस्यैकपादोत्पादनरूपा । जघन्यमध्यमा-एकपादिका, उत्थितस्यैकपादेनावस्थानं, जघन्यजघन्या-समतलाभ्यां पादाभ्यां स्थित्वा यदूर्द्ध्वस्थितैरातप्यते ।

कथ पुन शयितस्योत्कृष्टा आतापना भवतीत्युच्यते—

सव्वंगिओ पतावो, य ताविया घम्मरस्सिणा भूमी ।
ण य कमइ तत्थ वाऊ, विस्सामो नेव गत्ताणं ॥२६९॥

भूमौ निवन्नस्य सर्वाङ्गाना प्रताप -प्रकर्षेण तापो लगति घर्मरश्मिना च भूमि - प्रकर्षेणात्यन्ततापिता, न च तत्र भूमौ वायु क्रमते-प्रचरति न च गात्राणाम्-अङ्गाना विश्रामो भवति, अतो निवन्नस्योत्कृष्टा आतापना मन्तव्या । अथैतासां मध्यादार्यिकाणां का आतापना कर्तुं कल्पते इत्यत आह—

एयासिं णवण्हा-णुण्णाया संजईण अंतिल्ला ।
सेसा नाणुन्नाया, अट्ठ तु आतावणा तेसिं ॥ २७० ॥

एतासां नवानामप्यातापनाना मध्याद् अन्तिमा-समपादिकाख्या आतापना संयतीनामनुज्ञाता, शेषा अष्टावातापना आसा नाऽनुज्ञाता ।

कीदृशे पुन स्थाने च आतापयन्तीत्युच्यते—

पालीहिं जत्थ दीसइ, जत्थ य सइरं विसंति न हु दाता ।
उग्गहमादिसु सज्जा, आयावयते तहिं अज्जा ॥२७१॥

यत्र प्रतिश्रयपालिकाभि -स्वयतीभि आतापयता दृश्यत. । यत्र च स्वैर-स्वच्छन्दं युवानो न प्रविशन्ति तत्र स्थाने अवग्रहानन्तकादिभि सघटिकान्तैरुपकरणै सज्जा-आयुक्ता आर्यिका प्रलम्बितबाहुयुगला आतापयन्ति ।

किमर्थमवग्रहानन्तकादिसज्जेति चेत्त आह—

मुच्छाए विवडिताए, ताविण मुमुच्छुतेव संवरणे ।
गोचरमजयणदोसा, जे वुत्ता ते उ पाविज्जा ॥ २७२ ॥

तस्या आतापयन्त्या खरतराऽऽतपसम्पर्कपरितापितायाः कदाचिन्मूर्च्छा संजायेत तया च निपतिता वा तेन वा

समरणे-प्रावरणे समुद्भूते अवग्रहानन्तकादिभिर्विना गोचरचर्यायामयनतया प्रविष्टाया ये दोषास्तृतीयोद्देशके उक्तास्तान् प्राप्नुयात्, अतस्तं प्रावृता आतापयेत् । बृ० ५ उ० । ( आतापनोदकतीरे न कर्त्तव्येति 'दगतीर' शब्दे चतुर्थभागे वक्ष्यते । )

**आताबि ( न् )-आतापिन्**-पुं० । आतापयति-आतापनां शीतातपादिसहनरूपां करोतीत्यातापी । शीतादिसहनकर्तरि, स्था० ४ ठा० ३ उ० । वस्त्रादेरातपे दातरि च । कल्प० ३ अधि० ६ क्षण । आतपति आ-तप्-णिनि । पक्षिभेदे क्षीरस्वामी । वाच० ।

**आता ( या ) वित्तए-आतापयितुम्**-अव्य० । आतपे दातुमित्यर्थे, " आयावित्तए पयावित्तए वा " ( सूत्र-४२ × ) आतापयितुमेकवारमातपे दातुं प्रतापयितुं पुनः पुनरातपे दातुमिच्छन्ति । कल्प० ३ अधि० ६ क्षण ।

**आता ( या ) विया-आतापयित्वा**-अव्य० । आतापनां कृत्वेत्यर्थे, " आयाविय २ " ( सूत्र- × ) । आचा० २ श्रु० १ चू० २ अ० ३ उ० ।

**आता ( या ) वेमाण-आतापयत्**-त्रि० । आतापनां कुर्वति, " आयावणाए आयावेमाणस्स छट्ठेणं भत्तेणं " ( ५२४ गाथाटी० ) । आ० म० १ अ० ।

**आता ( या ) भिणिवेस-आत्माभिनिवेश**-पुं० । आत्मनोऽभिनिवेशे, यावदात्माभिनिवेशस्तावदेव संसार । नं० ।

शौद्धौदनीया पुनरेवमाहु —

नैरात्म्यादिभावना रागादिक्लेशप्रहाणिहेतुः नैरात्म्यादिभावनायाः सकलरागादिविपक्षभूतत्वात्, तथाहि-नैरात्म्यावगतौ नाऽऽत्माभिनिवेशः । आत्मनोऽवगमाभावाद्, आत्माभिनिवेशाभावाच्च न पुत्रभ्रातृकलत्रादिष्वात्मीयाभिनिवेशः, आत्मनो हि य उपकारी स आत्मीयो, यश्च प्रतिघातकः स द्वेष्यः, यदा त्वात्मैव न विद्यते किन्तु पूर्वापरक्षणत्रुटितानुसन्धाना., पूर्वपूर्वहेतुप्रतिबद्धा ज्ञानक्षणा एव तथा तथोत्पद्यन्ते तदा कः कस्योपकर्त्ता उपघातको वा ?, ज्ञानक्षणानां च क्षणमात्रावस्थायितया परमार्थेन उपकर्तुमपकर्त्तुं वा अशक्यत्वात्, तत्र तत्त्ववेदिनः पुत्रादिष्वात्मीयाभिनिवेशो, नाऽपि वैरिषु द्वेषो, यस्तु लोकानामात्मीयानात्मीयाद्यभिनिवेशः सोऽनादिवासनापरिपाकोपनीतो वेदितव्योऽतत्त्वमूलत्वात्, ननु यदि न परमार्थतः कश्चिदुपकार्योपकारकभावस्तर्हि कथमुच्यते भगवान् सुगतः करुणया सकलसत्त्वोपकाराय देशनां कृतवानिति । क्षणिकत्वमपि च यद्येकान्तेन तर्हि तत्त्ववेदी क्षणानन्तरं विनष्टः सन् कदाचनाऽप्येवं भूयो भविष्यामीति जानानः किमर्थं मोक्षाय यत्नमारभते ? तदयुक्तम्, अभिप्रायापरिज्ञानात्, भगवान् हि प्राचीनायामवस्थायामवस्थितः सकलमपि जगद्रागद्वेषादिदुःखसंकुलमभिजानानः कथमिदं सकलमपि जगन्मया दुःखादुद्धर्तव्यमिति समुत्पन्नकृपाविशेषो नैरात्म्यक्षणिकत्वादिकमवगच्छन्नपि तेषामुपकार्यसत्त्वानां निःक्लेशक्षणोत्पादनाय प्रजाहितो राजेव स्वसन्ततिशुद्ध्यर्थं सकलजगत्साक्षात्करणसमर्थं स्वसन्ततिगतविशिष्टक्षणोत्पत्तये यत्नमारभते, सकलजगत्साक्षात्कारसन्तरेण सर्वेषामनुग्रहविधानमुपकर्त्तुमशक्यत्वात् । ततः समुत्पन्नकेवलज्ञानः पूर्वोऽऽहितकृपाविशेषसंस्कारवशात् कृतार्थोऽपि देशनायां प्रवर्त्तते इति । तदेव श्रुतमय्यात्मप्रज्ञया निर्दोषं नैरात्म्यादिवस्तुतत्त्वं परिभाव्य भावतः तथैव भावयतो जन्तोर्भावनाप्रकर्षविशेषतो वैराग्यमुपजायते ततो मुक्तिलाभः, यस्त्वात्मानमभिमन्यते न तस्य मुक्तिसंभवो यत् आत्मनि परमार्थतया विद्यमाने तत्र स्नेहः प्रवर्त्तते । ततः स्नेहवशाच्च तत्सुखेषु परितर्षवान् भवति, तृष्णावशाच्च सुखसाधनेषु दोषान् सतोऽपि तिरस्कुरुते गुणांस्त्वभिभूतानपि पश्यति । ततो गुणदर्शी सन् तानि ममत्वविपर्यीकरोति तस्माद्यावदात्माभिनिवेशः तावत्संसारः,

आह च-

" यः पश्यत्यात्मानं तत्रा-स्याहमिति शाश्वतः स्नेहः ।
स्नेहात्सुखेषु तृष्यति, तृष्णा दोषांस्तिरस्कुरुते ॥ १ ॥
गुणदर्शी परितृष्यन्, ममेति तत्साधनान्युपादत्ते ।
तेनात्माभिनिवेशो, यावत्तावत्स संसारे ' ॥ २ ॥

तदेतत्सर्वमन्तःकरणकृतावाससमहामोहमहीयस्ताविलसितम्, आत्माभावे बन्धमोक्षाऽऽद्येकाधिकरणत्वायोगात्, तथाहि—यदि नात्माभ्युपगम्यते किं तु पूर्वापरक्षणत्रुटितानुसंधाना ज्ञानलक्षणा एव, तदा सत्यन्यस्य बन्धः, अन्यस्य मुक्तिः, अन्यस्य क्षुद्, अन्यस्य तृप्तिः, अन्योऽनुभविता, अन्यः स्मर्ता, अन्यश्चिकित्सादुःखमनुभवति, अन्यो व्याधिरहितो भवति, अन्यः तपःक्लेशमपि सहते, परः स्वर्गसुखमनुभवति, अपरः शास्त्रमभ्यसितुमारभते, अन्योऽधिगतशास्त्रार्थो भवति, न चैतद्युक्तम्, अतिप्रसङ्गात्, सन्तानापेक्षया बन्धमोक्षादेरेकाधिकरण्यमितिचेत्, न, सन्तानस्यापि भवन्मते नानुपपद्यमानत्वात् सन्तानो हि सन्तानिभ्यो भिन्नो वा स्यादभिन्नो वा ? यदि भिन्नस्तर्हि पुनरपि विकल्पयुगलमुपढौकते । स किं नित्यः, क्षणिको वा ? यदि नित्यस्ततो न तस्य बन्धमोक्षादिसंभवः, आकालमेकस्वभावतया तस्यावस्थाद्वैविध्यानुपपत्तेः । न च नित्यः किमप्यभ्युपगम्यते, " सर्वं क्षणिकम् " ति वचनात्, अथ क्षणिकस्तर्हि तदेव प्राचीनं बन्धमोक्षादिवैयधिकरण्यं प्रसक्तम्, अथाभिन्न इति पक्षस्तर्हि सन्तानिन एव, न सन्तानः, तदभिन्नत्वात् तत्स्वरूपवत्, तथा च सति तदवस्थमेव प्राक्तनं दूषणमिति । नं० ।

**आता-(या)भिसित्त-आत्माभिषिक्त**-पुं० । निजबलेन राज्याभिषिक्ते भरतादौ व्य० ।

अहवा राया दुविहो, आयाभिसित्तो पराभिसित्तो य ।
आयाभिसित्तो भरहो, तस्स उ पुत्तो परेणं तु ॥१०५॥

राजा द्विविधो भवति । तद्यथा-आत्माभिषिक्तः पराऽभिषिक्तश्च । व्य० ४ उ० । ( विशेषतश्चास्या गाथाया व्याख्या षष्ठे भागे 'राय' शब्दे करिष्यते )

**आता(या)गामि( न् )-आत्मागामिन्**-पुं० । आत्मनि आगामिनि, आत्मानुभवसमये स स्वयं समागमिष्यत्सन्ततसेवनागराभिमन्यतीति । अष्ट० ६ अष्ट० ।

आतालिङ्गंत-आताड्यमान-त्रि० । आ-समन्तात् ताड्यमाने, "आतालिज्जताणं तालीणं, तालाणं, कंसतालाणं" ति । आ० चू० १ अ० ।

आता (या) व-आताप-पुं० "पो व" ॥ ८ । १ । २३१ ॥ इति प्राकृतसूत्रेण पस्य व । असुरकुमारविशेषे, विशेषस्तु नाव गम्यते इति, अभयदेवसूरिः । भ० १३ श० ६ उ० ।

आता (या) वाइ (न्) -आत्मवादिन्-पुं० । "से आयावादी" (सूत्र-५×) । आत्मानं वदितुं शीलमस्येति । आचा० १ श्रु० १ अ० १ उ० । 'एस आयावाई" (सूत्र-१६५×) । यथावस्थितात्मवादिनि, आचा० १ श्रु० ५ अ० ६ उ० । (आत्मवादिनोऽशेषवक्तव्यताऽऽचाराङ्ग-प्रथमश्रुतस्कन्धप्रथमाध्ययनस्य प्रथम उद्देशके (सूत्र-५ आरभ्य) स्या 'आता' शब्देऽस्मिन्नेव भागे गता) तथा च ऐक्यवादिनमधिकृत्य-अपरस्त्वात्मैवास्ति, नान्यर्दिति प्रतिपन्न, तदुक्तम्-"पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम्, उतामृतत्वस्येशानो यदन्नेनातिरोहति, यदेजति यन्नैजति यद् दूरे यदन्तिके यदन्तरस्य सर्वस्यास्य बाह्यत" इति । स्था० टी० ८ ठा० ३ उ० । येऽपि च आत्मवादिन "पुरुष एवेदं सर्वमि" त्यादि प्रतिपन्ना, तेऽपि महामोहोरगगरलपूरमूर्च्छितमानसा वेदितव्या । नं० । (अत्र विस्तरं 'एगावाइन्' शब्दे तृतीयभागे वक्ष्यामि)

आता (या) हम्म-आत्मघ्न-न० । आत्मा हन्यते तेषु तेषु यातनास्थानेषु येन तदात्मघ्नम् । दर्श० ४ तत्त्व ।

आत्मघ्नैकार्थिकानि—

आहा अहे य कम्मे, आताहम्मे य अत्तकम्मे य ।
तं पुण आहाकम्मं, नायव्वं कप्पते कस्स ॥ ४५६ ॥

आधाकर्म १, अधः कर्म २ आत्मघ्न ३, आत्मकर्म ४, इति चत्वारि नामानि । (वृ०) आत्मानं-ज्ञानदर्शनचारित्ररूपं घ्नन्ति-विनाशयतीत्यात्मघ्नम् । वृ० ४ उ० । आत्मानं दुर्गतिप्रपातकारणतया हन्ति-विनाशयतीत्यात्मघ्नम् । पिं० । आधाकर्मणि, पिं० । (आत्मघ्नस्याधाकर्मैकार्थिकत्वम् 'आधाकम्म' शब्देऽस्मिन्नेव भागे विस्तरतो वक्ष्यते)

एतस्य निक्षेप—

आयाहम्मं वि चउव्विहो निक्खेवो दव्वाऽऽयाहम्मे अणुवउत्तो पाणाऽतिवायं करेंतो भावाऽऽत्तं णाणदंसणचरणा, तं हणंतो भावाऽऽताहम्मं । नि० चू० १० उ० ।

सम्प्रत्यात्मघ्ननाम्नोऽवसर तदपि चात्मघ्नं चतुर्धा, तद्यथा-नामाऽऽत्मघ्नं स्थापनात्मघ्नं द्रव्यात्मघ्नं भावात्मघ्नं च । इदमप्यध कर्मवत् तावद्भावनीय यावन्नोआगमतो ज्ञशरीरद्रव्यात्मघ्नम्, भव्यशरीरद्रव्यात्मघ्नम् ।

ज्ञशरीरभव्यशरीरव्यतिरिक्तं तु द्रव्यात्मघ्न निर्युक्तिकृदाह-

अट्ठाए अणट्ठाए, छक्कायपमद्दणं तु जो कुणइ ।
अनियाए अ नियाए, आयाहम्मं तयं बेंति ॥ १०३ ॥

यो गृही अर्थाय-स्वस्य परस्य वा निमित्तम्, अनर्थाय प्रयोजनमन्तरेण एवमेव पापकरणशीलतया 'अणियाए य नियाए' ति-निदानं निदा-प्राणिहिंसा तत्कारिदु स्वहेतुरिति ज्ञानतापि, यद्वा-साधूनामाधाकर्म न कल्पते इति परिज्ञानवतापि यज्जीवानां प्राणव्यपरोपणं सा निदा । तन्निषेधाद्-अनिदा पूर्वोक्तपरिज्ञानविकलेन सता यत् परप्राणनिर्दहणं सा अनिदेति भावार्थः । अथवा-स्वार्थं परार्थं चेति विभागेनोद्दिश्य यत् प्राणव्यपरोपणं सा निदा, तन्निषेधाद्-अनिदा, यत् स्व पुत्रादिकमन्य वा विभागेनाविविच्य सामान्येन विधीयते । अथ वा-व्यापाद्यस्य सत्त्वस्य हा धिक् सप्रलेप मां मारयिष्यतीति परिज्ञानतो यत् प्राणव्यपरोपणं सा निदा, तद्विपरीता-अनिदा, यत् अजानतो व्यापाद्यस्य सत्त्वस्य व्यापादनमिति ।

तथा चाह भाष्यकृत्—

जाणंतो अजाणंतो, तहेव उद्दिसिय ओहओ वाऽवि ।
जाणगअजाणगं वा, वहेइ अनिया निया एसा ॥ ३१ ॥

व्याख्यातार्था । ततो निदया अनिदया वा य षट्कायप्रमर्दनं करोति—षण्णा पृथिव्यादीनां कायाना प्राणव्यपरोपण विदधाति । तत् षट्कायप्रमर्दनम् आत्मघ्नम् नोआगमतो द्रव्यात्मघ्नं ब्रुवन्ति तीर्थकरगणधरा । अथ षट्कायप्रमर्दनं कथं नोआगमतो द्रव्यात्मघ्नम् ?, यावता भावाऽऽत्मघ्नं कस्मान्न भवति ?, अत आह-

दव्वाऽऽया खलु काया,

अस्य व्याख्या—काया—पृथिव्यादय खलु निश्चयेन द्रव्यात्मानो द्रव्यरूपा आत्मान जीवानां गुणपर्यायवत्तया द्रव्यत्वात्, उक्त च-"अजीवकाया -धर्माऽधर्माऽऽकाशपुद्गला, द्रव्याणि जीवाश्च" (तत्त्वा० ५ अ०-सूत्र१-२) इति । ततस्तेषां यत् उपमर्दनं तत् द्रव्याऽऽत्मघ्न भवति । उक्त द्रव्यात्मघ्नम् ।

संप्रति भावाऽऽत्मघ्नं वक्तव्यं, तच्च द्विधा-आगमतो, नोआगमतश्च । तत्र आगमत आत्मघ्नशब्दार्थज्ञाता तत्र चोपयुक्त ।

नोआगमत आत्मघ्नमाह—

भावाऽऽया तिन्नि नाणमाईणि ।
परपाणपाडणरओ, चरणायं अप्पणो हणइ ॥ १०४ ॥

भावाऽऽत्मानो भावरूपा आत्मानस्त्रीणि ज्ञानादीनि—ज्ञानदर्शनचारित्राणि आत्मनो हि पारमार्थिकं स्वस्वरूपं ज्ञानदर्शनचरणात्मकं ततस्तान्येव परमार्थेन आत्मनो न शेषं द्रव्यमात्रं स्वस्वरूपाभावात्, ततो यश्चारित्री सन् परेषां पृथिव्यादीनां ये प्राणा इन्द्रियादयस्तेषां यत् पातनं-विनाशन तस्मिन् रत-आसक्त स आत्मनश्चरणरूपं भावाऽऽत्मानं हन्ति । चरणात्मनि च हते ज्ञानदर्शनरूपावप्यात्मानौ परमार्थतो हतावेव द्रष्टव्यौ ।

यत आह—

निच्छयनयस्स चरणा-ऽऽयविघाए नाणदंसणवहो वि ।
ववहारस्स उ चरणे, हयम्मि भयणा उ सेसाणं ॥१०५॥

निश्चयनयस्य मतेन चरणात्मविघाते सति ज्ञानदर्शनयोरपि वधो-विघातो द्रष्टव्य ज्ञानदर्शनयोर्हि फल सम्यक्प्रवृत्तिनिवृत्तिरूपा सन्मार्गप्रवृत्ति । सा चेन्नास्ति तर्हि ते अपि

ज्ञानदर्शने परमार्थतोऽसती एव, स्वकार्याकरणात्। उक्तं च मूलटीकायाम्-चरणाऽऽत्मविघाते ज्ञानदर्शनवधोऽपि तयोश्चरणफलत्वात् फलाभावे च हेतोर्निरर्थकत्वादिति । अपि च-यश्चरणं प्रतिपद्य आहारलाम्पट्यादिना ततो न विनिवर्त्तते स नियमाद्भगवदाज्ञाविलोपादिदोषभागी, भगवदाज्ञाविलोपादौ च वर्तमानो न सम्यग्ज्ञानी नापि सम्यग्दर्शनी । उक्तं च—

"आणाइ च्चिय चरणं, तब्भंगे जाण किं न भग्गं ति ।
आणं च अइक्कतो, कस्साऽऽएसा कुणइ सेसं " ॥ १ ॥

तथा—

"जो जह वायं न कुणइ, मिच्छादिट्ठी-तओ हु को अन्नो ।
वड्ढेइ य मिच्छत्तं, परस्स संकं जणेमाणो " ॥ २ ॥

ततश्चरणविघाते नियमतो ज्ञानदर्शनविघात । व्यवहारस्य-व्यवहारनयस्य पुनर्मतेन हते चरणे शेषयोर्ज्ञानदर्शनयोर्भजना कचिद्धत । क्वचिन्न । य एकान्तेन भगवतो विप्रतिपन्नस्तस्य न भवतो यस्तु देशविरतिं भगवति श्रद्धानमात्रं वा कुरुते तस्य व्यवहारनयमतेन सम्यग्दृष्टित्वाद्धयन इति। ततो निश्चयनयमतापेक्षया चरणात्मनि हते ज्ञानदर्शनरूपावप्यात्मानौ हतावेवेति । परप्राणव्यपरोपणेन समूलघातमात्मघ्न इति परप्राणव्यपरोपणमात्मघ्नं तच्च साधोराधाकर्मभुञ्जानस्यानुमोदनादिद्वारेण नियमन संभवतीत्युपचारतः आधाकर्म आत्मघ्नमित्युच्यते तदेवमुक्तमात्मघ्ननाम । पिं० । आत्मघ्नपिण्डे, पिं० ।

आता ( या ) हिगरणवत्तिय-आत्माधिकरणप्रत्यय–त्रि० । आत्मनोऽधिकरणानि आत्माधिकरणानि तान्येव प्रत्यय - कारणं यत्र क्रियाकरणे तदात्माधिकरणप्रत्ययम् । आत्माधिकरणकारणके " आयाहिगरणवत्तियं च णं तस्स नो इरियावहिया किरिया कज्जइ, संपराइया किरिया कज्जइ " ( सूत्र-२६२ × ) । साम्परायिकी क्रिया क्रियत इति योग. । भ० ७ श० १ उ० ।

आता ( या ) हिगरणि ( न् )-आत्माधिकरणिन्–पुं० । अधिकरणी-कृष्यादिमान् आत्मनाऽधिकरणी आत्माधिकरणी । आत्मना कृष्यादिमति, भ० १६ श० १ उ० । " आयाहिगरणी भवइ" (सूत्र-२६२×)। आत्मा-जीवोऽधिकरणानिहलशकटादीनि कषायाश्रयभूतानि यस्य सन्ति सोऽधिकरणी । भ० ७ श० १ उ० ।

आता(या)हिय-आत्महित–त्रि० । आत्मोपकारके, आचा० । " परलोकविरुद्धानि, कुर्वाणं दूरतस्त्यजेत् । आत्मानं यो न सन्धत्ते, सोऽन्यस्मै स्यात्कथं हित ॥१॥ " इति । आचा० १ श्रु० ६ अ० ४ उ० ।

आति (ती) ण- आजिन–न० । मूषिकादिचर्मनिष्पन्ने वस्त्रे, आचा० । " आति (ती) णाणि वा, " ( सूत्र-१४५ + ) । आजिनानि मूषिकादिचर्मनिष्पन्नानि । आचा० १ श्रु० ५ अ० १ उ० ।

आती ( अप्पी ) कय-आत्मीकृत–त्रि० । आत्मना गाढतरमागृहीते आत्मप्रदेशैस्तनुलग्ननोयवन्मिश्रीभूते , विशे० । आ० म० ।



आतीय-आतीत–त्रि० । आ-समन्तादतीव इत -ज्ञात. । समन्तादतीव ज्ञाते, सामस्त्येनातिक्रान्ते, समन्तादतीव गते च । आचा० १ श्रु० ८ अ० ६ उ० । " अणातीयं " (सूत्र-२२२+) आ—समन्तादतीव इतो-गतोऽनाद्यनन्ते संसार आतीत. न आतीतोऽनातीत., अनात्तो वा संशयो येन स तथा; संसारार्णवपारगामीत्यर्थ. । आचा० १ श्रु० ८ अ० ७ उ० ।

आत्मीय-त्रि० । आत्मनोऽयम् । छ प्रत्यय. छस्य ईयाऽऽदेशश्च । आत्मसंबन्धिनि, वाच० ।

आतीयट्ठ-आतीतार्थ–त्रि० । आ-समन्तादतिशयेन ज्ञातजीवादिपदार्थे, सामस्त्येनातिक्रान्तार्थे, उपरतव्यापारे, " आतीयट्ठे अणातीए " (सूत्र-२२२+)। आ-समन्तादतीव इता.-ज्ञाता परिच्छिन्ना जीवादयोऽर्था येन सोऽयमतीतार्थ । आदत्तार्थे वा । यदि वा—अतीता -सामस्त्येनातिक्रान्ता अर्था —प्रयोजनानि यस्य स तथा; उपरतव्यापार इत्यर्थ । आचा० १ श्रु० ८ अ० ६ उ० ।

आतुर-आतुर–त्रि० । ईषदर्थे, आ । आत-उरच् । कार्य्याऽक्षम वाच० । विह्वले, उत्त० ३२ अ० ।

आतेस्सरिय-आत्मैश्वर्य–न०। स्वरूपसाम्राज्ये,अष्ट०। आत्मैश्वर्यम्-स्वरूपसाम्राज्यम् ( १ श्लोकटी० ) अष्ट० १२ अष्ट० ।

आत्त(ताय)-आदत्त–त्रि० गृहीते, अनु०। " आत्तपणं सरीरसमुस्सयणं जिणदिट्ठेणं भावेणं, " ( सूत्र-१७+ ) । आत्तेन आदत्तेन वा गृहीतेन प्राकृतशैलीवशादात्मीयेन वा । अनु० ।

आत्ततर-आत्ततर–त्रि० । अतिशयेन आत्तो-गृहीत. आत्ततर । यत्नेनाध्यवसिते, आचा० १ श्रु० ८ अ० ८ उ० ।

आदं ( यं ) स-आदरिस-आदस्स-आदर्श–पुं० । आदृश्यतेऽत्र दृश-आधारे घञ् । वाच० । आ-समन्ताद् दृश्यते आत्मा यस्मिन् स आदर्श । सूत्र० १ श्रु० ४ अ० २ उ० । दर्पणे, रा० । " आदंसगं च पयच्छाहि " ( सूत्र-११+ ) । सूत्र० १ श्रु० ४ अ० २ उ० । चक्षुरिन्द्रियजज्ञाने च । " आवण वेदनादर्शाऽऽस्वादवार्ताश्च जायते ॥११॥ " द्वा० । आदर्शश्चक्षुरिन्द्रियजज्ञानम्, आ-समन्तात् दृश्यते-अनुभूयते रूपमनेनेति कृत्वा, यत्प्रकर्षाद्दिव्यरूपज्ञानमुत्पद्यते । द्वा० २६ द्वा० । तत्र हि विम्बपदार्थस्य प्रतिविम्बजननात् तत्संयोगेन नयनरश्मीना परावर्तने वा विम्बग्राहितया विम्बं दृश्यते इति तस्य तथात्वम् । आदृश्यते सम्यग्रूपेण ज्ञायते प्राप्यार्थो यस्मिन् । टीकाया ३ प्रतिरूपपुस्तकादौ यत्रत्यमक्षरसन्निवेश दृष्ट्वा तदनुरूपमन्यल्लिख्यते तादृशे पुस्तके । यथादर्श तथा लिखितमिति भूरि प्रयोग । तत्र तदीयगुणान् दृष्ट्वा परैस्तथा गुणा आश्रीयन्त इति तस्य तथात्वम् । जनपदसीमाभेदे च । वाच० । वृषभादिग्रीवाभरणे च । आदर्शस्तु-वृषभादिग्रीवाभरणम् । अनु० ।

आदं (यं) सग-आदरिसग- आदसग-आदर्शक–पु० । आ-समन्ताद् दृश्यते आत्मा यस्मिन् स आदर्श । स एवादर्शक । दर्पणे, सूत्र० १ श्रु०४ अ०२ उ०। रा०। आदर्शे भेद ।

मर्यादा वृत्त जनपदावधिसूचकस्थानभेदे च । त्रि० वाच० ।

आदं (यं) स ( आदरिस ) (आदस्स) घरग-आदर्शगृहक- न० । आदर्शमये गृहे, रा० । "आदसघरगा सव्वरयणामया" आदर्शगृहकाणि आदर्शमयानीव गृहाणि । रा० । जं० । जी० । ( भरतस्यादर्शगृहस्थितिकथानक 'भरह' शब्दे पञ्चम-भागे वक्ष्यते । )

आदं ( यं ) सतल-आदर्शतल-न० । दर्पणतले, औ० ।

आदं ( यं ) स ( आदरिस ) (आदस्स ) तलोवम-आदर्श-तलोपम-त्रि० । आदर्शो-दर्पणस्तस्य तलं तेन समतयोपमा यस्य आदर्शतलोपम । आदर्शतलवत्सम. रा० ।

आदं (यं) स (आदरिस)(आदस्स) मंडल-आदर्शमण्डल-न० । आदर्श इव मण्डलमस्य । आदर्शाकारमण्डलयुक्ते स-र्पभेदे, आदर्शो मण्डलमिव । मण्डलाकारे दर्पणे, न० । वा-च० । जावशब्दग्राह्य बहुसमत्ववर्णके टीकायाम् पाठ — ' आयसमण्डलइ वा ' ( सूत्र-६+ ) । जं० १ वक्ष० । ' आयंसमंडलतल व्व" ( सूत्र-२६ ) । प्रश्न० ५ संव० द्वार ।

आदं ( यं ) स ( आदरिस ) ( आदस्स ) मुह-आदर्शमुख-पुं० । स्वनामख्याते अन्तरद्वीपभेदे जी० ३ प्रति० ३ अधि० । तद्वक्तव्यता ' अन्तरदीव ' शब्दे प्रथमभागे गता )

आद ( यं ) स (आदरिस) (आदस्स) लिवि-आदर्शलिपि-स्त्री० । ब्राह्मलिपेर्लेख्यविधानभेदे, स० १८ सम० ।

आद ( य ) र-आदर-पुं० । आ-दृ-अप् । गौरवहेतुके क-र्मणि, सम्माने. वाच० । सत्कारे, स्था० ६ ठा० ३ उ०" । ' न पुरिस आयरेण रक्खेह ॥ १३३ + ॥ आ० म० १ अ० । उचितकृत्यकरणे, आ० १ श्रु० १ अ० । प्रयत्नातिशये, पञ्चा० । " यत्रादरोऽस्ति परम , प्रीतिश्च हितोदया भ-वति । कर्तु शेषत्यागं-न करोति यच्च तत्प्रीत्यनुष्ठानम् " ॥१॥ पञ्चा० २ विव० । " आ दृङ सन्नाम " ॥ ८ । ४ । ८३ ॥ इति हैमप्राकृतसूत्रेणाद्रियते सन्नाम इत्यादेशो वा भवति । स-ामइ । आदरइ । प्रा० ।

आद ( य ) रण-आदरण-न० । अभ्युपगमे, भ० १२ श० ५ उ० ।

आद ( य ) रणया-आदरणता-स्त्री० । अभ्युपगमे, ' आ-यरणया ( सूत्र-४४६ + ) । ' आयरणय त्ति-यतो मा-याविशेषादादरणमभ्युपगमं कस्यापि वस्तुनः करोत्यसावा-दरणम् , तात्प्रत्ययस्य च स्वार्थिकत्वात् आदरणया आच-रणा वा परप्रतारणाय विविधक्रियाणामाचरणम । भ० १२ श० ५ उ० ।

आद ( य ) रतर-आदरतर-पुं० अत्यादरे दश० । "आय-रतरेण रवीने" (११०×)। अत्यादरेण गवयन्ति । दश०१ अ० ।

आद (य) राइजुत्त-आदरादियुक्त-त्रि० । आदरकरणप्री-त्यादिसमन्वित पा० ।

स्यादादरादियुक्तं, यत्तद्देवार्चनं चेष्टम् ॥ १४ ॥

'स्यादादरादियुक्तं यद् आदरकरणप्रीत्यादिसमन्वित यद् स्यात् तद्देवार्चनं चेष्टं-तत्र देवार्चनमिष्टम् । षो० ५ विव० ।

आदहण-आदहन-न० । आ-दह-भावे ल्युट् । दाहे, हिंसा-याम् , कुत्सने च । आदह्यतेऽत्र आधारे ल्युट् श्मशाने, वाच० । आ-समन्ताद्दहने. सूत्र० २ श्रु० १ अ० ।

आदा (या) ण-आदान-न० । आ-दा-भावे ल्युट् । ग्रहणे, वाच० । प्रश्न० ३ आश्र० द्वार । पं० व० । औ० । आ० चू० । उत्त० । स्था० । विशे० । प्रव० । "आयाणं सुसमाहरे" ॥२०॥ आहरेत्-आददीत, गृह्णीयादित्यर्थ । सूत्र० १ श्रु० ८ अ० । "दण्डसमादाणं संपेहाए ' (सूत्र-७५×)। दण्डयन्ते-व्यापाद्यन्ते प्राणिनो येन स दण्डस्तस्य सम्यगादानं-ग्रहणम्-समा-दानम् । आचा० १ श्रु० ७ अ० २ उ० । स्वीकरणे स्था० ३ ठा० ३ उ० । "सयमाइयंति अन्ने वि, आदियावेंति अन्नं पि आयतंत समणुजाणंति " (सूत्र-६+) स्वयम्-आत्मना सा वद्यमनुष्ठानमाददते स्वीकुर्वन्ति अन्यान्यप्यादापयन्ति—ग्राहयन्ति अन्यमप्यादानं-परिग्रहं स्वीकुर्वन्त समनुजान-न्ति । सूत्र० २ श्रु० १ अ० । आदीयत इत्यादानम् परिग्राह्ये वस्तुनि, स्था० ४ ठा० १ उ० । आदीयते-गृह्यत इत्यादानम् । धनधान्यादिके परिग्रहे, आव० ४ अ० । प्रव० । कल्प० । स्था० ।

आयाणं नरयं दिस्स, नायइज्ज तणामवि ॥ ८+ ॥

साधुस्तृणमपि ' नायइज्ज ' इति-नाऽऽददीत-अदत्त न गृह्णीत, किं कृत्वा आदानं-नरकं दृष्ट्वा आदीयत इत्यादानं-धनधान्यादिकं परिग्रहं, नरकं-नरकहेतुत्वान्नरकं, ज्ञात्वे-त्यर्थः । उत्त० लक्ष्मी० टी० ६ अ० । आदीयत इत्यादान-धनधान्यादि. कृत्यल्युटोऽन्यत्रापि " कृत्यल्युटो बहुलम् " ( पाणि० ३।३।११३। ) इति कर्मणि ल्युट् । आर्षत्वादादानीयं वा नरककारणत्वान्नरकं दृष्ट्वा, किमित्याह—नाददीत—न गृह्णीत न स्वीकुर्यादिति यावत् । 'तणमवी'ति तृणमप्या-स्तां रजतरूप्यादीनि । उत्त०पाइ० १ अ० । मिथ्यात्वादि-नाऽऽदीयत इत्यादानम् । सूत्र० १ श्रु० १३ अ० । आदीयते सावद्यानुष्ठानेन स्वीक्रियते इत्यादानम् . कर्म । " आयाण-सोयगढिए ' (सूत्र-१३८×) । अष्टप्रकारके कर्मणि, सूत्र० १ श्रु० १३ अ० । आचा० । आदीयते वाऽनेनेत्यादानम् । कर्मोपादाने, "आयाणं" (सूत्र-१८५+)। आचा०१ श्रु०६ अ० ३ उ० । " मासिणिए उवस्सए णो ठाणं वा निसीयणं वा तुयट्टणं वा चेतेज्जा । आयाणमेयं ' (सूत्र-६७×) । आचा० २ श्रु० १ चू० २ अ० १ उ० । " एयं खु मुणी आयाणं सया सुअक्खायधम्मे विधूतकप्पे णिज्झोसइत्ता " (सूत्र-१८५+)। एतत्-पूर्वोक्तं वक्ष्यमाणं वा खु वाक्यालंकारे, आदीयत इत्यादान—कर्म, आदीयते वाऽनेन कर्मेत्यादान-कर्मोपा-दानम् तच्च धर्मोपकरणातिरिक्तं वक्ष्यमाणं वस्त्रादि तन्मु-निर्झोषयित्वेति संबन्ध । आचा० १ श्रु० ६ अ० ३ उ० । "सन्ति मे तओ आयाणा जेहिं कीरइ पावगं " ( २६× ) । सन्ति-विद्यन्ते अमूनि त्रीणि आदीयन्ते—स्वीक्रियन्ते अ-मीभि कर्मेत्यादानानि एतदेव दर्शयति-यैरादानैः क्रियते-विधीयते निष्पाद्यते पापकं कल्मषम् । सूत्र० १ श्रु० १ अ० ३ उ० । " संखडिं संखडिपडियाए णो अभिसंधारेज्जा गमणाए केवली बूया-आयाणमेयं " (सूत्र-१७+) । केवली

ब्रूयात्-आदानमेतत्-कर्मोपादानमेतदिति । पाठान्तरं वा—'आयवणमेयं' ति-आयतनं-स्थानमेतद्दोषाणां यत्संस्वडीगमनम् । आचा० २ श्रु० १ चू० १ अ० ३ उ० । "एते आयाणा संति-" ( सूत्र-१५४ )। यस्मादेतानि आयतनानि-कर्मोपादानकारणानि सन्ति-भवन्ति । आचा० २ श्रु०१ चू० १ अ० ३ उ० । आदीयते-गृह्यते आत्मप्रदेशैः सह श्लिष्यते अष्टप्रकारं कर्म येन तदादानम् । हिंसाद्याश्रवद्वारे, अष्टादशपापस्थानेषु च । आचा० १ श्रु० ३ अ० ४ उ० । "आयाणं सगडभिज्जं " (सूत्र-२२१ ×)। आदीयते-गृह्यते आत्मप्रदेशैः सह श्लिष्यते अष्टप्रकारं कर्म येन तदादानं हिंसाद्याश्रवद्वारमष्टादशपापस्थानरूपं वा, तत् स्थितेर्निमित्तत्वात् कषायापादानं तद्भमिता स्वकृतभिद् भवति । आचा० १ श्रु० ३ अ०१ उ० । ( 'सगडभिज्ज' शब्दे सप्तमे भागे व्याख्या द्रष्टव्या ) कषाये, परिग्रहे, सावद्यानुष्ठाने च । सूत्र० १ श्रु० १६ अ० । "जओ जओ आदाणं अप्पणो पद्दोसहेऊ तओ तओ आदाणतो पुव्वं पडिविरते " ( सूत्र-× ) आदीयते-स्वीक्रियतेऽष्टप्रकारं कर्म येन तदादानम्-कषाय- परिग्रह सावद्यानुष्ठानं वेति । सूत्र० १ श्रु० १६ अ० ।

> मुसावायं बहिद्धं च, उग्गहं च अजाइया ।
> सत्थादाणाइँ लोगंसि, तं विज्जं परिजाणिया ॥ १० ॥
> पलिउंचणञ्च भयणञ्च, थंडिल्लुस्सयणाणि य ।
> धूणादाणाइँ लोगंसि, तं विज्जं परिजाणिया ॥ ११ ॥

तथा-आदीयते-गृह्यतेऽष्टप्रकारं कर्मभिरिति ( आदानानि )-कर्मोपादानकारणान्यस्मिन् । सूत्र० १ श्रु० ६ अ० । एतानि पलिकुञ्चनादीनि अस्मिन् लोके आदानानि वर्तन्ते तदेतद्विद्वान् ज्ञपरिज्ञया परिज्ञाय प्रत्याख्यानपरिज्ञया प्रत्याचक्षीत । सूत्र० १ श्रु० ६ अ० । (१०-११ । अनयोर्गाथयोर्विशेषत- व्याख्यानं ' धम्म ' शब्दे चतुर्थभागे करिष्यते ) आदीयते-स्वीक्रियते; प्राप्यते वा मोक्षो येन तदादानम् । ज्ञानदर्शनचारित्रेषु, " वुसीए य विगयगेही आयाणं सम्मरक्खए" ॥१९×॥ विविधम्-अनेकप्रकारमुषित-स्थितो दशविधचक्रवालसामाचार्यां व्युषितस्तथा विगता-अपगता आहारादौ गृद्धिर्यस्यासौ विगतगृद्धिः साधुरेवंभूतश्चादीयते-स्वीक्रियते, प्राप्यते वा मोक्षो येन तदादानीयं ज्ञानदर्शनचारित्रत्रयं तत्सम्यग् रक्षयेद्-अनुपालयेत् ; यथा तस्य वृद्धिर्भवति तथा कुर्यादित्यर्थः । सूत्र० १ श्रु० १ अ० ४ उ० । "आयाणअट्ठी वोदाणमोणं" ( सूत्र-१७× ) । मोक्षार्थिनाऽऽदीयत इत्यादानम् सम्यक्ज्ञानादिकमिति । सूत्र० १ श्रु० १४ अ० । "आयाणव धम्ममुदाहरेज्जा ॥२४॥ मोक्षार्थमादीयत-इत्यादानं-सम्यग्दर्शनज्ञानचारित्ररूपं तद्विद्यते यस्यासावादानवान् । सूत्र० २ श्रु० ६ अ० । " आयाणं सुसमाहरे " ॥२६॥ मोक्षस्यादानम्-उपादानं सम्यग्दर्शनादिकं सुष्ठुशुद्धं सम्यग्विस्रोतसिकारहितं आहरेत्-आददीत; गृह्णीयादित्यर्थः । सूत्र० १ श्रु० ८ अ० । " अज्झप्पजोगसुद्धादाणे " १४१ । ( सूत्र-३ × ) शुद्धमवदानम् आदानं-चारित्रं यस्य स शुद्धादानो भवति । सूत्र० १ श्रु० १६ अ० । आदीयत इत्यादानम् । मोक्षे, " आयाणमट्ठं खलु वंचयित्ता " ( सूत्र-४+ ) आदीयत इत्यादानम्-ज्ञानादिकं, मोक्षो वा तमर्थं वञ्चयन्ति-भ्रंशयन्त्यात्मन । सूत्र० १ श्रु० १३ अ० । संयमे, " आयाणगुत्ते वलयाविमुक्के ॥ २२ + ॥ मोक्षार्थिनाऽऽदीयते-गृह्यत इत्यादानं-संयमस्तेन तस्मिन्वा सति गुप्तः । सूत्र० १ श्रु० १२ अ० । संयमानुष्ठाने च । " एस वीरे पसंसिए, जे ण णिव्विज्जति आदाणाए " ( सूत्र-८५+ ) भोगाशाऽऽलम्बविवेचकोऽप्रमादी पञ्चमहाव्रतभारारोहणोन्नामितस्कन्धो वीरः कर्मविदारणात् प्रशंसित-स्तुतो देवराजादिभिः, क एष वीरो नाम योऽभिष्टूयत इत्यत आह-' जे ' इत्यादि; यो न निर्विद्यते न खिद्यते-न जुगुप्सते, कस्मै ? आदानाय—आदीयते-गृह्यते अवाप्यते आत्मस्वतत्त्वमशेषावारककर्मक्षयाविर्भूतसमस्तवस्तुग्राहिज्ञानाबाधसुखरूपं येन तदादानं—संयमानुष्ठानं तस्मै न जुगुप्सते, तद्वा कुर्वन् सिकताकवलचर्वणदेशीयं कश्चिदलाभादौ न खेदमुपयातीति । आचा०१ श्रु० २ अ० ४ उ० । आदीयत इत्यादानम् । प्रथमव्रतग्रहणे । सूत्र० "जायज्जीवाए, जेहिं समणोवासगस्स आयाणसो, आमरणंताए दंडे निक्खित्ते"(सूत्र०)। यावच्चैर्येषु वा श्रमणोपासकस्याऽऽदीयत इत्यादानम्-प्रथमव्रतग्रहणम् ; तत आरभ्य आमरणान्ताद्दण्डो निक्षिप्त -परित्यक्तो भवति । सूत्र०२ श्रु०७ अ० । केनचिदादीयत इत्यादानम् । सूत्र० २ श्रु० २ अ० । कारणे, कल्प० । "आयाणमेयं," कर्मणां-दोषाणां वा आदानम्-उपादानकारणम् । कल्प० ३ अधि०६ क्षण । "एगइओ केणइ आयाणेणं विरुद्धे समाणे " (सूत्र-३२+)। सूत्र० २ श्रु० २ अ० । एकः कश्चित् प्रकृत्या क्रोधनोऽसहिष्णुतया केनचिदादीयत इत्यादानम्-शब्दादिकं कारणं तेन विरुद्धः समानः परस्यापकुर्यात् शब्दादानेन तावत्केनचिदाक्रुष्टो निन्दितो वाचा विरुध्येत रूपादानेन तु बीभत्सं कञ्चन दृष्ट्वा अपशकुनाऽध्यवसायेन कुप्येत । सूत्र० २ श्रु० २ अ० । आदीयन्ते-गृह्यन्ते शब्दादयोऽर्था एभिरित्यादानानि । इन्द्रिये, वृ० १ उ० । केवली णं आयाणेहिं न जाणइ न पासइ " ( सूत्र-१६८+ )। आदीयन्ते गृह्यन्तेऽर्था एभिरित्यादानानि-इन्द्रियाणि तैर्न जानाति केवलित्वाद् । भ० ५ श० ४ उ० । " आयाणनिरुद्धाओ" ॥१८६+॥ आदानानीन्द्रियाणि निरुद्धानि यस्याः सा निरुद्धादाना, गाथायां व्यत्ययेन पूर्वापरनिपातः प्राकृतत्वाद् । बृ० १ उ० ३ प्रक० । " आयाणगुत्ता विकहाविहीणा" (८८४+)। आदाने -इन्द्रियैर्गुप्ता । वृ०३ उ० । आदीयते कर्मानेनेत्यादानम् । दुष्प्रणिहिते इन्द्रिये च । आचा० । "आयाणसोयमतिवायमायं ' ॥१६×॥ आचा० १ श्रु०६ अ०। आदीयते गृह्यते, प्रथमम्-आदौ यत्तदानम् । सूत्र०१ श्रु०१० अ० । आचा० । आदौ, (प्रथमे) 'आयाणपएणेयं ॥४०३+॥ आदीयत-इत्यादानम्—आदिः ; प्रथममित्यर्थः , तच्च तत्पदञ्च निराकाङ्क्षतया अर्थगमकत्वेन वाक्यमेवादानपदम् । उत्त० २६ अ० । " से किं तं आयाणपदेणं " ( सूत्र-+) आदीयते तत्प्रथमतया उच्चारयितुमारभ्यते शास्त्रस्याध्ययनोद्देशकादेर्यादिपदमित्यर्थः । अनु० । नि०चू० ।

आदानशब्दस्य तत्पर्यायस्य च ग्रहणशब्दस्य
च निक्षेपं कर्तुकामो निर्युक्तिकृदाह—

आदाणे गहणंमि य, णिक्खेवो होति दोन्नि वि चउक्के ।

**एगहुं नाणट्ठं, च होज्ज पगयं तु आदाणे ॥ १३२ ॥**

अथवा-' जमनीय ' ति-अस्याध्ययनस्य नाम, तच्चादानपदेन , आदावादीयते इत्यादानं. तच्च ग्रहणमित्युच्यते. तत्राऽऽदानग्रहणयोर्निक्षेपार्थं निर्युक्तिकृदाह-'आदाणे' इत्यादि आदीयते-कार्यार्थिना तदित्यादानं. कर्मणि ल्युट्प्रत्ययः, करणे वा, आदीयते-गृह्यते स्वीक्रियते विवक्षितमनेनेति-कृत्वा, आदानं च-पर्यायतो ग्रहणमित्युच्यते, तत आदानग्रहणयोर्निक्षेपो भवति द्वौ चतुष्कौ, तद्यथा-नामादानम् , स्थापनादानम् , द्रव्यादानम् , भावादानञ्च । तत्र नामस्थापने क्षुण्णे, द्रव्यादानं वित्तं यस्माल्लौकिकैः परित्यक्तान्यकर्त्तव्यैर्महता क्लेशेन तदादीयते, तेन वाऽपरं द्विपदचतुष्पदादिकमादीयते इति कृत्वा, भावाऽऽदानं तु द्विधा-प्रशस्तम् , अप्रशस्तं च । तत्र-अप्रशस्तम्-क्रोधाद्युदयो, मिथ्यात्वाविरत्यादिकं वा, प्रशस्तं-तूत्तरोत्तरगुणश्रेण्या विशुद्धाध्यवसायकण्डकोपादानं, सम्यग्ज्ञानादिकं वेत्येतदर्थप्रतिपादनपरमेतदेव वाऽध्ययनं द्रष्टव्यमिति । सूत्र० १ श्रु० १५ अ० ।

**आदा (या) णअट्ठि ( न् )**-आदानाऽर्थिन्-पुं० । मोक्षार्थिनाऽऽदीयते इत्यादानम्-सम्यग्ज्ञानादिकं तेनार्थः स एवार्थः आदानार्थः स विद्यते यस्यासावादानार्थी । सम्यग्ज्ञानादिप्रयोजनवति, ' आदाणअट्ठी वोदाणमोणं " ( सूत्र-१७ × ) । सूत्र० १ श्रु० १४ अ० ।

**आदा (या) णगुत्त**-आदानगुप्त-त्रि० । संयमगुप्ते, मनोवाक्काये कर्मणि गुप्ते च । सूत्र० । ' आयाणगुत्ते वलयाविमुक्के ' ( सूत्र-२२ + ) । मोक्षार्थिनाऽऽदीयते-गृह्यते इत्यादानसंयमस्तेन तस्मिन्वा सति गुप्तः, यदि वा-मिथ्यात्वादिनाऽऽदीयते इत्यादानम्-अष्टप्रकारकं कर्म तस्मिन्नादातव्ये मनोवाक्कायैर्गुप्तः समितश्च । सूत्र० १ श्रु० १३ अ० । इन्द्रियैर्गुप्ते च । "आयाणगुत्ता विकहाविहीणा" (८८४×) । आदाने -इन्द्रियैर्गुप्तः । बृ० ३ उ० ।

**आदा ( या ) णणिक्खेवदुगुंछय**-आदाननिक्षेपजुगुप्सक-त्रि० । आदाननिक्षेपौ-पात्रादिग्रहणमोक्षौ आगमप्रतिषि(सि)(द्ध)द्धौ जुगुप्सति-न करोतीति आदाननिक्षेपजुगुप्सकः । आव० ४ अ० । आगमप्रति(ष)षिद्धौ पात्रादिग्रहणमोक्षौ न कुर्वन्ति, आगमानुसारेण प्रत्यवेक्षणप्रमार्जनपूर्वमुपयुक्तः सन्नुपधेरादाननिक्षेपौ करोतीत्यर्थः । ( ६४३ गाथाटी० ) । प्रव० ७२ द्वार ।

**आदा ( या ) णनिरुद्ध**- निरुद्धाऽऽदान-त्रि० । निरुद्धेन्द्रिये, " आयाणनिरुद्धाओ " ॥ १८६ × ॥ आदानानि-इन्द्रियाणि निरुद्धानि यस्यां सा निरुद्धाऽऽदाना, गाथायां व्यत्यास्मिन पूर्वाऽपरनिपातः प्राकृतत्वाद् । बृ० १ उ० ३ प्रक० ।

**आदा ( या ) णपय**-आदानपद-न० । आदीयते-गृह्यते प्रथमम्-आदौ यत्तदादानम् आदानञ्च तत्पदं च सुबन्तं तिङन्तं वा तदादानपदम् । सूत्र० १ श्रु० १५ अ० । शास्त्रस्याध्ययनोद्देशकादिश्चादिपदं, अनु० । यथामादानपदेनाऽभिधानं नाम्नेनादौ यत्पदं तदादानपदम् । सूत्र० १ श्रु० १५ अ० । उत्त० ।

**से किं तं आयाणपदेणं ?, आयाणपएणं धम्मो मंगलं चूलिआ आवंती चाउरंगिज्जं असंखयं अहातत्थिज्जं अद्दइज्जं जण्णइज्जं पुरिसइज्जं (उसुकारिज्जं) एलइज्जं वीरियं धम्मो मग्गो समोसरणं गत्थो जमइयं । सेतं आयाणपएणं । (सूत्र-१३१×)**

' से किं तं आयाणपएणमि 'त्यादि-आदीयते-तत्प्रथमतया उच्चारयितुमारभ्यते शास्त्रादानेनेत्यादानं तच्च तत्पदं चादानपदं, शास्त्रस्याध्ययनोद्देशकादेश्चादिपदमित्यर्थः, तेन हेतुभूतेन किमपि नाम भवति, तच्च "आवंती" त्यादि, तत्र-आवन्तीत्याचारस्य पञ्चमाध्ययनम् , तत्र ह्यादावेव-'आवंती' त्यालापको विद्यते इत्यादानपदेनैतन्नाम । "चाउरंगिज्जं" ति-एतदुत्तराध्ययनेषु तृतीयमध्यनम् , तत्र-"चत्तारि परमंगाणि दुल्लहाणीह जंतुणो" इत्यादि विद्यते, " असंखयं ति-इदमप्युत्तराध्ययनेष्वेव चतुर्थमध्ययनम् , तत्र च आदावेव-" असंखयं जीवियमापमायए " इत्येतत् पदमस्ति, ततस्तेनेदं नाम, एवमन्यान्यपि कानिचिदुत्तराध्ययनान्तर्वर्तीन्यध्ययनानि, कानिचित्तु दशवैकालिकसूयगडाध्ययनानि (सूत्रकृताङ्गाऽध्ययनानि) स्वधिया भावनीयानि । अनु० ।

**आदा ( या ) णफलिह**-आदानपरिघ-पुं० । आदीयते-द्वारस्थगनार्थं गृह्यते इत्यादानः । स चासौ परिघश्चादानपरिघः । द्वारस्थगनार्थं ग्राह्यायामर्गलायाम् , ज० २ वक्ष० २१ सूत्रटी० । जी० । " आयाणफलिह० " ( सूत्र-२१+ ) आदीयते इत्यादानम्-आदेयो-रम्यो य परिघ -अर्गला स आदानपरिघः । रम्यायामर्गलायाम् , प्रश्न० ४ आश्र० द्वार ।

**आदा ( या ) णभंडमत्तनिक्खेवणासमिइ**-आदानभाण्डमात्रनिक्षेपणासमिति-स्त्री० । आदाने-ग्रहणे भाण्डमात्राया-उपकरणमात्राया, भाण्डस्य वा वस्त्राद्युपकरणस्य मृण्मयादिपात्रस्य च साधुभाजनविशेषस्य निक्षेपणायां च समितिः सुप्रत्युपेक्षितसुप्रमार्जितक्रमेणेति आदानभाण्डमात्रनिक्षेपणासमितिः । समितिभेदे, पा० १७ सूत्रटी० । स्था० । ( अत्र सूत्रम् ' समिइ ' शब्दे सप्तमे भागे वक्ष्यते ) भाण्डमात्रे, आदाननिक्षेपविषया सुन्दरचेष्टा । स्था० ५ ठा० ३ उ० ४५८ सूत्रटी० । " इह च सत्त भंगा होन्ति पत्तादि न पडिलेहइ, ण पमज्जइ, चउभंगो, एत्थ चउत्थे चत्तारि गमा-दुप्पडिलेहियं दुप्पमज्जियं चउभंगो, आइल्ला छ अप्पसत्था, चरिमो पसत्थो, चउत्थीए उदाहरणं-"आयरिएण साहू भणिओ गाम वच्चामो, उग्गाहिए संते केण इ कारणेण ठिया, एक्को पत्ताहे पडिलेहियाणि त्ति काउं ठवेउमारद्धो, साहूहिं चोइओ भणइ-किमित्थ सप्पो अच्छइ सन्निहियाए देययाए सप्पो विउव्विओ, एस जहण्णओ असमिओ, अण्णो तेणेव विहिणा पडिलेहित्ता ठवेइ, सो उक्कोसओ समिओ " । आव० ४ अ० १०५ गाथाटी० । अत्राप्युदाहरणम्-"एकस्स आयरियस्स पंच सीससयाइं, तस्सिमगो सेट्ठिसुओ पव्वइओ, सो जो जो साहू एइ तस्स तस्स डंडगं निक्खिवइ, एवं तस्स उट्ठियस्स

अमो एति, अम्मे जाइ, तहावि-सो भगवं अतुरियं अवबल उवरिं हेट्ठा मज्जिउं ठवेइ । एत्र बहुएण वि कालेण न परितम्मइ " पा० १७ सूत्रटी० ।

आदा ( या ) णभंडमत्तनिक्खेवणासमिय आदानभाण्डमात्रनिक्षेपणासमित–त्रि० । " आयाणभंडमत्तनिक्खेवणासमिए " ( सूत्र-६२ × ) । आदानेन-ग्रहणेन सह भाण्डमात्रा या-उपकरणपरिच्छदस्य या निक्षेपणा-न्यासस्तस्यां समितो य स तथा । आदानभाण्डमात्रनिक्षेपणासमितौ सम्यक् प्रवृत्ते, भ० २ श० १ उ० ।

आदा ( या ) णभय–आदानभय–न० । आदीयत इत्यादानं-धनं तदर्थं चौरादिभ्यो यद् भयं तदादानभयम् । आव० ४ अ० ८३ गाथाटी० । स्था० । भयस्थानभेदे, स० ७ सम० । नि० चू० । आदानभयम्-आदानं पुण्यार्थमपुण्यार्थं वा परेण राजादिना वितीर्णग्रामनगरभूखण्डादेः स्वीकरणं तदेव भयम् आदानभयम् मा कञ्चनापराधमवाप्य तद् ग्रहीष्यति । दर्श० १ तत्त्व ६ गाथाटी० ।

आदा(या)णभरिय आदानभृत–न० । आग्रहणभृते, उपा० । ' आदाणभरियंसि कडाहयंसि अद्दहेमि " ( सूत्र-२८+ ) आदानम्—आद्रहणं यदुदकतैलादिकमन्यतरद्रव्यपाकायाऽग्नावुत्ताप्यत तद्भृते । उपा० ३ अ० ।

आदा(या)णया–आदानता–स्त्री० । ग्रहणतायाम्, इह च तात्प्रत्ययः स्वार्थिकः । प्राकृतत्वेनादानादीनां भावविवक्षया वा । स्था० २ ठा० २ उ० ।

आदा ( या ) णवंत–आदानवत्–त्रि० । मोक्षार्थमादीयत इत्यादानम् सम्यग्दर्शनज्ञानचारित्ररूप तद्विद्यते यस्यासावादानवान् सम्यग्दर्शनज्ञानचारित्रवति साधौ, सूत्र० । "आयाणवन्त समुदाहरेज्जा ' ॥५५॥ सूत्र० २ श्रु० ६ अ० ।

आदा ( या ) णसोयगढिय–आदानश्रोतोगृद्ध–त्रि० । आदीयते-कर्मानेनेति आदानं-दुष्प्रणिहितमिन्द्रियमादानं च श्रोतश्चादानश्रोत । आचा० १ श्रु० ६ अ० १ उ० १६ गाथाटी० । आदीयते-सावद्यानुष्ठानेन स्वीक्रियते इत्यादानं कर्म संसारबीजभूत तस्य श्रोतांसि इन्द्रियविषया मिथ्यात्वाविरतिप्रमादकषाययोगा वा तेषु गृद्ध -अभ्युपपन्न । आचा० १ श्रु० ४ अ० ३ उ० । " आदानश्रोतस्यध्युपपन्ने, आचा० ।

आयाणसोयगढिए बाले अवोच्छिन्नबंधणे अणभिक्कंतसंजोए तमंसि अविजाणओ आणाए लंभो णत्थि त्ति बेमि । (सूत्र-१३८+)

(आदानश्रोतोगृद्ध ) स्यात्, कोऽसौ ? बाल -अज्ञ रागद्वेषमहामोहाभिभूतान्त करण । यश्चादानश्रोतोगृद्धः स किंभूत स्यादित्याह-' अव्वोच्छिन्नबंधणे " इत्यादि, अव्यवच्छिन्न-जन्मशतानुवृत्तिबन्धनम्-अष्टप्रकार कर्म यस्य स तथा, किञ्च-' अणभिक्कत' इत्यादि-अनभिक्रान्त -अनतिलङ्घित संयोगो धनधान्यहिरण्यपुत्रकलत्रादिकृतोऽसयमसयोगो वा येनासावनभिक्रान्तसंयोग तस्य चैवंभूतस्येन्द्रियानुकूलयरूपे मोहात्मके वा तमसि वर्त्तमानस्यात्महितं मोक्षोपाय वा अविजानत आज्ञाया-तीर्थकरोपदेशस्य लाभो नास्तीत्येतदहं ब्रवीमि तीर्थकरवचनोपलम्भसद्भाव । आचा० १ श्रु० ४ अ० ३ उ० ।

आदा ( या ) णिज्ज–आदानीय–त्रि० । आदीयते-उपादीयते इत्यादानीय । उपादेये, स्था० ६ ठा० ३ उ० । स० । ग्राह्य, आचा० । "आयाणिज्जं वियाहिए" ( सूत्र-१३७+ ) । स वीराणां मार्गे प्रतिपन्न मासक्षोणितयोरपनेता मुमुक्षूणामादानीयो-ग्राह्य आदेयवचनश्च व्याख्यात । आचा० १ श्रु० ४ अ० ३ उ० । आदीयन्ते-गृह्यन्ते सर्वभावा अनेनेत्यादानीयम् । श्रुते, भोगाङ्गे, द्विपदचतुष्पदधनधान्यहिरण्यादिके, आचा० १ श्रु० २ अ० ३ उ० । "आयाणिज्ज ' (सूत्र-१८४+) आदीयत इत्यादानीयम् । कर्मणि आचा० १ श्रु० ६ अ० २ उ० । " आयाणिज्जं च आदाय तम्मि ठाणे ण चिट्ठइ" । आदीयन्ते-गृह्यन्ते-सर्वभावा अनेनेत्यादानीयम्-श्रुतम्, तदादाय तदुक्ते तस्मिन् संयमस्थाने न तिष्ठति । यदि वा-आदानीयम्-आदातव्य भोगाङ्गं द्विपदचतुष्पदधनधान्यहिरण्यादि तदादाय-गृहीत्वा । अथ वा-मिथ्यात्वाऽविरतिप्रमादकषाययोगैरादानीयं कर्मादाय, किंभूतो भवतीत्याह-तस्मिन् ज्ञानादिमये मोक्षमार्गे सम्यगुपदेशे वा प्रशस्तगुणस्थाने न तिष्ठति नात्मानं विधत्ते । आचा० १ श्रु० २ अ० ३ उ० । ' आयाणिज्जं परिन्नाय, परियाएणं विगिंचइ (सूत्र-१८४×) । आदीयत इत्यादानीय-कर्म तत्परिज्ञाय मूलोत्तरप्रकृतिभेदतो ज्ञात्वा पर्यायेण-श्रामण्येन विवेचयति; क्षपयतीत्यर्थ । आचा० १ श्रु० ६ अ० २ उ० । आश्रयणीये, मोक्षे, मोक्षमार्गे, सम्यग्दर्शनादिके च । " पुरिसाऽऽदाणिया नरा " ३४+ । मुमुक्षुणामादानीया-आश्रयणीया- पुरुषादानीया महान्तोऽपि महीयांसो भवन्ति । यदि वा-आदानीयो-हितैषिणा मोक्ष, तन्मार्गो वा-सम्यग्दर्शनादिक पुरुषाणा-मनुष्याणामादानीय स विद्यते येषामिति विगृह्य मत्वर्थीय । ' अर्शआदिभ्योऽच ' इति । सूत्र० १ श्रु०९ अ० ।

से तं संबुज्झमाणे आयाणीयं समुट्ठाए तम्हा पावं कम्मं णेव कुज्जा ण कारवेज्जा । ( सूत्र-९४ × )

आदानव्यम्-आदानीय तच्च परमार्थतो भावाद्-आदानीयं ज्ञानदर्शनचारित्ररूप तदुत्थाय इति अनेकार्थत्वाद्-आदाय-गृहीत्वा । अथवा-स अनगार एतदादानीय-ज्ञानाद्यपवर्गकारणम् । आचा० १ श्रु० २ अ० ६ उ० । ( ६?-अस्य सपूर्णसूत्रस्य व्याख्यां ' लोगविजय ' शब्दे षष्ठ भागे करिष्यामि ) । " आयाणीय समुट्ठाय " ( सूत्र-१६ + ) । आदानीयं-ग्राह्य सम्यग्दर्शनादि सम्यगुत्थाय-अभ्युपगम्य । आचा० १ श्रु० १ अ० २ उ० ।

आदा (या) णिज्जज्झयण–आदानीयाध्ययन–न० । मोक्षार्थिनाऽशेषकर्मक्षयार्थं यज्ज्ञानादिकमादीयते-तदत्र प्रतिपाद्यत इति कृत्वाऽऽदानीयमिति नाम सवृत्तम् । सूत्रकृताङ्गस्य स्वनामख्याते पञ्चदशेऽध्ययने सूत्र० १ श्रु० १५ अ० ।

आदानपदमाश्रित्यास्याभिधानमाकारि, आदानीय घा-

ज्ञानादिकमाश्रित्य नाम कृतमिति । आदानीयाभिधानस्यान्यथा वा प्रवृत्तिनिमित्तमाह—

जं पढमस्सऽतिमए, वितियस्स उ तं हवेज्ज आदिम्मि ।
एतेणाऽऽदाणिज्जं, एसो अन्नो वि पज्जाओ ॥ १३५ ॥

यत्पदं प्रथमश्लोकस्य तदर्द्धस्य च अन्ते-पर्यन्ते तदेव पद शब्दत अर्थत उभयतश्च द्वितीयश्लोकस्यादौ तदर्धस्य वाऽऽदौ भवति-एतेन प्रकारेणाद्यपदसदृशत्वेनादानीयं भवति, एष आदानीयाभिधानप्रवृत्ते. पर्याय.—अभिप्राय. अन्यो वा विशिष्टज्ञानादि आदानीयोपादानादिति । केचित्तु-पुनरस्याध्ययनस्यान्तादिपदया सकलनात्संकलिकेति नाम कुर्वते । तस्या अपि नामादिकश्चतुर्धा निक्षेप । ( स च 'सकलिया' शब्दे सप्तमे भागे दर्शयिष्यते ) सूत्र० १ श्रु० १५ अ० । पञ्चदशं त्वादानीयाख्येऽध्ययनेऽर्थाधिकारोऽयम् . तद्यथा- "आदाणियसकलिया आदाणीयम्मि आयतचरित्तं " ॥ २८ × ॥ आदीयन्ते-गृह्यन्ते-उपादीयन्त, इत्यादानीयानि पदानि अर्था वा ते च आनुपूर्व्यस्तपदैरर्थैश्च प्रायशोऽत्र संकलिता ; तथा-आयतं चरित्रं-सम्यक् चरित्रं मोक्षमार्गप्रसाधकं तच्चात्र व्यावर्ण्यते । सूत्र० १ श्रु० १ अ० १ उ० ।

आदाणीय-आदानीय-त्रि० । उपादेये, स्था० ६ ठा० ३ उ० । सूत्र० । ( अस्य बहवोऽर्था 'आदाणिज्ज' शब्देऽनुपदमेव गता )

आदा ( या ) य- आदाय-अव्य० । आ-दा-ल्यप् । गृहीत्वेत्यर्थे, सूत्र० १ श्रु० ३ अ० ४ उ० । " इमं च धम्ममादाय, कासवेण पवेइय " ॥ २० + ॥ आदाय-उपादाय-आचार्योपदेशेन गृहीत्वेति । सूत्र० १ श्रु० ३ अ० ३ उ० । आचा० । प्राप्येत्यर्थे, ' एवं विवेगमादाय ' ॥ १० × ॥ विपाक-स्वानुष्ठानस्य आदय-प्राप्य, विवेकमिति वा कश्चित् पाठस्तद्विपाक-विवेक चादाय-गृहीत्वा । सूत्र० १ श्रु० ४ अ० १ उ० । अङ्गीकृत्येत्यर्थे, " तवोवहाणमादाय " ॥ ८३ × ॥ उत्त०लक्ष्मी० २ अ० । स्वीकृत्येत्यर्थे, उत्त० पाई० २ अ० । अवगम्येत्यर्थे " आयाए एगतमवक्कमेज्जा " ( सूत्र-३० × ) । आदाय—अवगम्यैकान्तमपक्रामेत् । आदाने, पु० । आचा०२ श्रु० १ चू० १ अ० ६ उ० ।

आदा (या) हिणपयाहिण-आदक्षिणप्रदक्षिण-त्रि० । आदक्षिणात्-दक्षिणहस्तादारभ्य प्रदक्षिण परितो-भ्राम्यतो दक्षिण एव आदक्षिणप्रदक्षिण । रा० । आदक्षिणाद्-दक्षिणपार्श्वादारभ्य प्रदक्षिणो-दक्षिणपार्श्ववर्ती आदक्षिणप्रदक्षिण । विपा० १ श्रु० १ अ० । दक्षिणपार्श्वादारभ्य परितो भ्राम्यता दक्षिणपार्श्ववर्तिनि, भ० । ' समणं भगवं महावीरं तिक्खुत्तो आयाहिणपयाहिणं करेइ " ( सूत्र-७ + ) । आदक्षिणाद्-दक्षिणहस्तादारभ्य प्रदक्षिण -परितो भ्राम्यता दक्षिण एव आदक्षिणप्रदक्षिणोऽनस्तं करोतीति । भ० १ श० १ उ० । नि० । औ० । ' आयाहिण पयाहिणं करेंति " ( १८४ गाथाटी० ) । आ-सर्वत समन्तात्-परिभ्रमता दक्षिणमेव जन्मभवन यथा भवति एवं प्रदक्षिणं कुर्वन्ति । आ० म० १ अ० । जं० ।

आदा ( या )हिणपयाहिणा-आदक्षिणप्रदक्षिणा-स्त्री० । आदक्षिणात् -पार्श्वात्प्रदक्षिणा पार्श्वभ्रमणमादक्षिणप्रदक्षिणा । स्था० १ ठा० । दक्षिणपार्श्वादारभ्य परिभ्रमणतो दक्षिणपार्श्वप्राप्तौ, नि० । "अज्जसुहम्मं थेरं तिक्खुत्तो आयाहिणपयाहिणं करेइ " । त्रि कृत्व.-त्रीन् वारान् आदक्षिणप्रदक्षिणां दक्षिणपार्श्वादारभ्य परिभ्रमणतो दक्षिणपार्श्वप्राप्तिरादक्षिणप्रदक्षिणा तां करोति । नि० १ श्रु०१ वर्ग १ अ० ।

आदि(इ)च्च-आदृत्य-त्रि० । आ-दृ-कर्मणि क्यप् । आदरणीये आदर्तव्ये, ल्यप् । सम्मान्येत्यर्थे, अव्य० । वाच० ।

आदित्य-पुं० । कृष्णराज्यवकाशान्तरस्थलोकान्तिककर्मकार्चिर्मालिविमानस्थे लोकान्तिकदेवविशेषे, भ० ६ श० ५ उ० । समयावलिकादीनामादौ भवे, सू० प्र० २० प्राभृ० । सूर्ये. आव० ४ अ० । आदित्यो हि सर्वजगत्प्रतीतो जगत्प्रदीपकल्पो दिवसादिकालविभागकारी । ( सूत्र० ) आ-गोपालाङ्गनादिप्रतीत समस्तान्धकारक्षयकारी कमलाकरोद्घाटनपटीयान् आदित्योऽयम् प्रत्यह भवन्नुपलक्ष्यते । सूत्र० १ श्रु० १२ अ० । ( अस्य विमानवक्तव्यता 'विमाण' शब्दे षष्ठे भागे वक्ष्यते ) ( अस्य मण्डलादिवक्तव्यता 'सूरमंडल' शब्दे सप्तमे भागे वक्ष्यते ) ( अस्य आवृत्तय ' आउट्ट ' शब्देऽस्मिन्नेव भागे गता. )

जस्स जओ आइच्चो, उएइ सा भवइ तस्स पुव्वदिसा ।
जत्तो य अत्थमेइ उ, अवरदिसा सा उ नायव्वा ॥४७॥
दाहिणपासम्मि य दाहिणा दिसा उत्तरा उ वामेणं ।
एया चत्तारि दिसा, तावक्खेत्ते उ अक्खाया ॥ ४८ ॥

तापयतीति ताप -आदित्य । आचा० १ श्रु० १ अ० १ उ० । ( अत्र विस्तरं ' दिसा ' शब्दे चतुर्थे भागे कथयिष्यामि )

आदिच्छा-आदित्सा-स्त्री० । आदातुमिच्छायाम् , आव० ६ अ० ।

आदिम-आदिम-त्रि० । अग्रिमे, बृ० । " आवासगमाईया सूयगडा जाव आइमा भावा " ( ७८० × ) । आवश्यकादय सूत्रकृताङ्गं यावत् ये आगमग्रन्थास्तेषु ये पदार्था अभिधेयास्ते आदिमा भावा उच्यन्ते बृ० १ उ० १ प्रक० ।

आदियावण-आदापन-न० । ग्राहणायाम् , सूत्र० । " स य माइअति अन्ने वि आदियावेंति " ( सूत्र-६ + ) । स्वयम्आत्मना सावद्यमनुष्ठानमाददते-स्वीकुर्वन्ति, अन्यानप्यादापयन्ति-ग्राहयन्ति । सूत्र० २ श्रु० १ अ० ।

आदीण-आदीन-त्रि० । आ-समन्ताद्दीन. आदीन । सूत्र० १ श्रु० ५ अ० १ उ० । समन्तात्करुणास्पदे, सूत्र० १ श्रु० १० अ० ।

आदीणभोइ ( न् )-आदीनभोजिन्-पुं० । पतितपिण्डोपजीविनि, ' आदीणभोई वि करेइ पावं " ( ६ × ) । आदीनभोज्यपि पाप करोतीति । उक्तं च-" पिंडोलकेव दुम्मील, ' णरगाओ ण मुच्चइ ' स कदाचिच्छोभनमाहारमलभमानोऽल्पत्वादार्त्तरौद्रध्यानोपगतोऽप्यध सप्तम्यामप्युत्पद्येत । तद्यथा-असावेव राजगृहनगरोत्सवनिर्गतजनसमूहो वै-

भारगिरिशिलापातनोद्यतः स दैन्यात्स्वयं पतति पिण्डोप-जीवीति तदेवमादीनभोज्यपि पिण्डोलकादिवज्जन पापं कर्म करोति। सूत्र० १ श्रु० १० अ०।

**आदीणवित्ति-आदीनवृत्ति**-त्रि०। आ-समन्ताद्दीना-करुणास्पदा वृत्तिः-अनुष्ठानं यस्य। एवंभूते, "आदीणवित्ती वि करेइ पावं" (६४) आ-समन्ताद्दीना-करुणास्पदा वृत्तिरनुष्ठानं यस्य कृपणवनीपकादेः स भवत्यादीनवृत्तिरेवंभूतोऽपि पापं कर्म करोति। सूत्र० १ श्रु० १० अ०।

**आदीणिय-आदीनिक**-त्रि०। आ-समन्ताद्दीनमादीनं तद्विद्यते यस्मिन्स आदीनिकः। अत्यन्तदीनसत्त्वाश्रये, सूत्र० "आदीणियं दुक्कडियं पुरत्था ॥ २ ॥" सूत्र० १ श्रु० ५ अ० १ उ०।

**आदीव-आदीप**-अव्य०। दीपादारभ्येत्यर्थे, स्था० ५ स्थोक।

**आध(ह)रिसिय-आधर्षित**-त्रि०। आ-धृष्-क्त। अवैयात्ये इट् गुणश्च। अवमानिते, तिरस्कृते, बलात्कारेणाभिभूते च। वाच०। ' तेण भणिय जो चंडमेह तूय आधरिसेइ त्ति। (४४४-४४५ गाथाटी०।) आ० म० १ अ०। आहरिसिओ दूओ संभंतेण निययत्तिओ (४४४-४४५ गाथा टी०) आ० म० १ अ०।

**आधा(हा)-आधा**-स्त्री०। आधानमाधा। उपसर्गादातः ॥५। ३।११०॥ इत्यङ्प्रत्ययः। पिं०। साधुनिमित्तं चेतसः प्रणिधाने, पञ्चा० ३१ विव०। पिं०। प्रव०। प्रश्न०। दशा०। ग०। वृ०। करण, उत्त० ५ अ०। आधीयतेऽस्यामित्याधा। आश्रये, पिं०। आश्रय आधार इत्यनर्थान्तरमिति। पिं०। साऽपि च-आधा नामादिभेदाच्चतुर्द्धा। तद्यथा-नामाऽऽधा स्थापनाऽऽधा, द्रव्याऽऽधा, भावाऽऽधा च। तत्र नामाऽऽधा, द्रव्याऽऽधाऽपि च आगमतो नो आगमतश्च ज्ञशरीररूपा भव्यशरीररूपा च पूर्ववदेव भावनीया। ज्ञशरीरभव्यशरीरव्यतिरिक्तां तु द्रव्याऽऽधामभिधित्सुराह—

> धणुजुयकायभराणं, कुडुंबरज्जधुरमाइयाणं च।
> खंधाई हियये चिय, दव्वाऽऽहा अंतए धणुणो ॥६६॥

इह द्रव्याऽऽधाया विचार्यमाणायामाधाशब्दोऽधिकरणप्रधानो विवक्ष्यते आधीयते अस्यामित्याधा, आश्रय आधार इत्यनर्थान्तरम्। तत्र 'धणु' त्ति-धनुः-चापं तत् आधा-आश्रयः प्रत्यञ्चाया इति सामर्थ्याद्गम्यते, यूपः प्रतीतः। कायः-कापोती यया पुरुषाः स्कन्धारूढया पानीयं वहन्ति। भरः-यवसादिसमूहः, तथा—कुटुम्बम्—पुत्रकलत्रादिसमुदायः, राज्यं प्रतीतं तयोर्धूः-चिन्ता आदिशब्दात्-महाजनधूः प्रभृतिपरिग्रहः तेषां च यथासंख्यं द्रव्याऽऽधा द्रव्यरूप आधारः स्कन्धादि इदं च। तत्र स्कन्धो बलीवर्दादिस्कन्धो, नरादिस्कन्धश्च परिगृह्यते, आदिशब्दात्-गन्त्र्यादिपरिग्रहः, तत्र यूपस्य द्रव्याऽऽधा द्रव्यरूप-आश्रयो—वृषभादिस्कन्धः, स हि यूपस्तत्राऽऽरोप्यते। कापोत्या आश्रयो नरस्कन्धः, नरो हि पानीयानयनाय कापोतीं स्कन्धेन वहति। भरस्याश्रयो गन्त्र्यादि, महाप्रमाणो हि भरो गन्त्र्यादिनैवानेतुं शक्यते, नान्येन। तथा-कुटुम्ब-चिन्ताया राज्यचिन्तायाश्चाश्रयो हृदयं मनः, हृदयमन्तरेण चिन्ताया अयोगात्, धनुर्विषयं भावनामाह-अन्तके करहस्ते धनुषः सबन्धिनि प्रत्यञ्चाऽऽरोप्यते ततो धनुः प्रत्यञ्चाया आश्रयः, एवं शेषाणामपि यूपादीनां प्रत्याश्रयत्वं भावनीयम्, तत्र भावितमेव। उक्ता द्रव्याऽऽधा। संप्रति भावाऽऽधा वक्तव्या-सा च द्विधा-आगमतो, नो आगमतश्च। तत्राऽऽगमतः आधाशब्दार्थपरिज्ञानकुशलस्तत्र चोपयुक्तः, "उपयोगो भावनिक्षेपः" इति वचनात्। नोआगमतस्तु भावाऽऽधा, यत्र तत्र वा मनः प्रणिधानम्, तथा हि-भावो नाम-मानसिकः परिणामस्तस्य चाऽऽधानं—निष्पादनं भवति मनसस्तदनुगुणतया तेन तेन रूपेण परिणमने सति नाऽन्यथा. ततो मनःप्रणिधानं भावाऽऽधा सा चेह प्रस्ताधात्साधुदानार्थमोदनपचनपाचनादिविषया द्रष्टव्या। पिं०।

**आधा(हा)कम्म-आधाकर्मन्**-न०। आधानम् आधा। उपसर्गादातः ॥५।३।११०॥ इत्यङ् प्रत्ययः। साधुनिमित्तं चेतसः प्रणिधानम्। यथा-अमुकस्य साधोः कारणेन मया भक्तादि पचनीयमिति, आधाया कर्म-पाकादिक्रिया-आधाकर्म तद्योगात् भक्ताद्यप्याधाकर्म। इह दोषाभिधानप्रक्रमेऽपि यद्दोषवतोऽभिधानं तद्दोषदोषवतोरभेदविवक्षया। द्रष्टव्यम्। पिं०। ग०। प्रव०। ख-घ-थ-ध-भाम् ॥८।१।१८७॥ इति हैमप्राकृतसूत्रेण बहुलं धस्य हः। प्रा०।

विषयसूची—


( १ ) वक्तव्यसंग्रहः।
( २ ) व्युत्पत्तयः।
( ३ ) प्रतिषेवणादीनि।
( ४ ) प्रतिश्रवणस्वरूपम्।
( ५ ) एकार्थिकानि आधाकर्मणः।
( ६ ) आधाकर्माश्रित्य कल्प्याऽकल्प्यविधिः।
( ७ ) तीर्थकरस्य आधाकर्मभोजित्वम्।
( ८ ) द्वाविंशतिजिनेषु कल्प्याऽकल्प्यविधिः।
( ९ ) अशनादिषु आधाकर्मसंभवः।
( १० ) आधाकर्मणः पूताऽकल्प्यविधिः।
( ११ ) आधाकर्मभोजिनां कटुकविपाकः।
( १२ ) आधाकर्मभोजिनां बन्धः।


(१) आधाकर्मदोषं व्याचिख्यासुस्तत्प्रतिबद्धद्वारगाथामाह—

> आहाकम्मिय नामा, एगट्ठा कस्स वाऽवि किं वाऽवि।
> परपक्खे य सपक्खे, चउरो गहणे य आणाई ॥ ६४ ॥

इह प्रथमतः आधाकर्मिकस्य नामान्येकार्थिकानि वक्तव्यानि तदनन्तरं कस्यार्थाय कृतमाधाकर्म भवतीति विचारणीयं, तदनन्तरं च किंस्वरूपमाधाकर्मेति विचार्यं। तथा परपक्षः—गृहस्थवर्गः स्वपक्षः-साध्वादिवर्गः तत्र परपक्षनिमित्तं कृतमाधाकर्म न भवति। स्वपक्षनिमित्तं तु कृतं भवतीति वक्तव्यम्. तथा—आधाकर्मग्रहणविषये, चत्वारोऽतिक्रमादयः प्रकारा भवन्तीति वक्तव्यं, तथा ग्रहणे-आधाकर्मणो भक्तादेरादाने आज्ञादयः "सूचनात्सूत्रम्" इति न्यायादाज्ञाभङ्गादयो दोषा वक्तव्याः।

तत्रैकार्थिकाभिधानलक्षणं प्रथमं द्वारं विवृणुराह—

> आहा अहे य कम्मे, आयाहम्मे य अत्तकम्मे य।

पडिसेवणपडिसुणणा, संवासऽणुमोयणा चेव ॥६५॥

'आहा अहे य कम्मे' त्ति-अत्र कर्मशब्दः प्रत्येकमभिसंबध्यते चकारश्च कर्मेत्यनन्तरं समुच्चयार्थो द्रष्टव्यः, तत एवं निर्देशो ज्ञातव्य -आधाकर्म, अध कर्म च । तत्राऽऽधाकर्मेति प्रागुक्तशब्दार्थम्, अध कर्मेति अधोगतिनिबन्धनं कर्म अध कर्म तथा हि-भवति साधूनामाधाकर्मभुञ्जानानामधोगतिः, तन्निबन्धनप्राणातिपाताद्याश्रवेषु प्रवृत्ते तथा आत्मानं दुर्गतिप्रपातकारणतया हन्ति-विनाशयतीत्यात्मघ्न, तथा यत् पाचकादिसंबन्धिकर्म पाकादिलक्षण ज्ञानावरणीयादिलक्षणं वा । तदात्मन सम्बन्धि क्रियतेऽनेनेति आत्मकर्म । एतानि च नामान्याधाकर्म्मणो मुख्यानि । सम्प्रति पुनर्यै प्रतिषेवणादिभि प्रकारैस्तदाधाकर्म भवति । तान्यप्यभेदविवक्षया नामत्वेन प्रतिपादयति—' पडिसेवणे' त्यादि-प्रतिसेव्यते इति प्रतिषेवणं, तथा—आधाकर्मनिमन्त्रणानन्तरं प्रतिश्रूयते । अभ्युपगम्यते यत् आधाकर्म तत् प्रतिश्रवणं, तथा आधाकर्मभोक्तृभि सह वसनं संवास तद्वशात् शुद्धाऽऽहारभोज्यपि आधाकर्मभोजी द्रष्टव्यः यो हि तै सह संवासमनुमन्यते स तेषामाधाकर्मभोक्तृत्वमप्यनुमन्यते, अन्यथा नैः सह संवसनमेव नेच्छेत् अन्यच्च संवासवशात् कदाचिदाधाकर्मगतमनोज्ञगन्धाऽऽघ्राणादिना विभिन्न सन् स्वयमप्याधाकर्मभाजनं प्रवर्तेत तत संवास आधाकर्मदोषहेतुत्वादाधाकर्म उक्त, तथाऽनुमोदनम् अनुमोदना आधाकर्मभोक्तृप्रशंसाऽपि आधाकर्मसमुत्थपापनिबन्धनत्वादाधाकर्मप्रवृत्तिकारणत्वाच्च आधाकर्मेति उक्तम् । अमीषां च प्रतिषेवणादीनामाधाकर्मत्वमात्मकर्मरूपं नाम प्रतीत्य वेदितव्यं, तथा च वक्ष्यति-' अत्तीकरेइ कम्मंमि ' त्यादि-इह आधाकर्मेति शब्दार्थविचारे आधया कर्म आधाकर्मेत्युक्तम् । पिं० । साधूनाम् आधया-प्रणिधानेन यत्कर्म षट्कायविनाशेनाऽशनादिनिष्पादनं तदाधाकर्म । वृ० ४ उ० ४४६ गाथाटी० । नि० चू० ।

(२) आधाकर्मशब्दव्युत्पत्तय —

आधानमाधा प्रस्तावात्साधुप्रणिधानं अमुकस्मै साधवे देयमिति, तया आधाय वा साधून् कर्म षड्जीवनिकायविराधनादिना भक्तादिपाकक्रिया आधाकर्म तद्योगाद् भक्ताद्यपि तथा निरुक्ताद् यलोप । ग० १ अधि० २१ गाथाटी० । साधुं चेतसि आधाय-प्रणिधाय; साधुनिमित्तमित्यर्थ , कर्म सचित्तस्याऽचित्तीकरणमचित्तस्य वा पाको निरुक्तादाधाकर्म । ध० ३ अधि० २२ श्लोकटी० । आधानमाधा-प्रणिधान तया, साधुप्रणिधानेनेत्यर्थ , कर्मक्रिया पाकादिका आधाकर्म । पञ्चा० १३ विव० ५ गाथाटी० । यद्वा-आधाय साधु-चेतसि प्रणिधाय यत् क्रियते-भक्तादि तदाधाकर्म । पृषोदराऽऽदय ॥ ३ । २ । १५५ ॥ इति यलोप । पिं० । प्रव० । आधाय-चेतसि अवस्थाप्य साधु यदशनादि सचेतनमचेतनं वा पच्यते-अचित्तीक्रियते तदाधाकर्म । दर्श० ४ तत्त्व ६ गाथाटी० । आधया-साधुप्रणिधानेन यत्सचेतनमचेतनं क्रियते अचेतनं वा पच्यते-चीयते वा गृहादिक वयते वा वस्त्रादिकं तदाधाकर्म । "आहाकम्मं भुंजमाणे सबले भवइ ॥ ४ ॥ दशा० २ अ० । साधुनिमित्तं, सचित्तस्याचित्तीकरणे-अचित्तस्य पाके च । प्रव० ६७ द्वार ३७० गाथाटी० । साधुनिमित्त कृते ओदनादौ च । दर्श० ४ तत्त्व ६ गाथाटी० । तदात्मके उद्गमदोषविशेषे च । स्था० ३ ठा० ४ उ० । आचा० । उत्त० । आधाकर्मिकं यन्मूलत एव साधूनां कृते कृतम् । व्य० ३ उ० १६४ गाथाटी० ।

सच्चित्तं जमचित्तं, साहूणऽट्ठाए कीरए जं च ।
अच्चित्तमेव पच्चइ, आहाकम्मं तयं भणिअं ॥ ७ ॥

सचित्तम्-विद्यमानचैतन्यं सत् फलबीजादि । यदचित्तम् अचेतनं साधूनां-संयतानाम् अर्थाय-हेतवे क्रियते-विधीयते तथा यत्, 'च' शब्दो-लक्षणान्तरसमुच्चयार्थ, अचित्तमेव-अचेतनमपि सत्तण्डुलादि पच्यते-राध्यते साधूनामर्थायेति प्रकृतम्, आधाकर्मोक्तनिर्वचनतकत्-तद्भणितम्—उक्त जिनादिभिर्यद्यपि सचित्तस्य पृथिव्यादेरचित्तीकरणेन यत् क्रियते गृहवस्त्रादि, तदपि आधाकर्मोच्यते, तथापीह तत्रोक्त पिण्डस्यैवाधिकृतत्वादिति गाथार्थ । पञ्चा० १३ विव० । ध० । पं० व० ।

आधाया निक्षेप प्रतिपादयति तया (आधया) यत्कृत कर्म-ओदनपाकादि तदाधाकर्म । तथा चाह निर्युक्तिकृत्—

ओरालसरीराणं, उद्दवणतिवायणं व जस्सऽट्ठा ।
मणमाहित्ता कीरइ, आहाकम्मं तय बेंति ॥ ६७ ॥

औदारिकं शरीरं येषां ते औदारिकशरीरा -तिर्यञ्चो, मनुष्याश्च । तत्र तिर्यञ्च —एकेन्द्रियादय पञ्चेन्द्रियपर्यन्ता द्रष्टव्या, एकेन्द्रिया अपि सूक्ष्मा, बादराश्च । नन्विह ये अपद्रावणयोग्यास्तिर्यञ्चस्ते ग्राह्या, न च सूक्ष्माणां मनुष्यादिकृतमपद्रावणं संभवति, सूक्ष्मत्वादेव, तत कथं ते इह गृह्यन्ते ? उच्यते, इह यो यस्मादविरत स तदकुर्वन्नपि परमार्थत कुर्वन्नेव अवसेयो यथा रात्रिभोजनादनिवृत्तो रात्रिभोजनम् । गृहस्थश्च । सूक्ष्मैकेन्द्रियापद्रावणादनिवृत्तस्तत साध्वर्थं समारम्भं कुर्वन् स तदपि कुर्वन्नवगन्तव्य इति सूक्ष्मग्रहणम्, यद्वा-एकेन्द्रिया बादरा एव ग्राह्या, न सूक्ष्मा, तथा च वक्ष्यति भाष्यकृत्—" ओरालग्गहणेणं, तिरिक्खमणुयाहवा सुहुमवज्जा" तेषां औदारिकशरीराणां यत् अपद्रावणम्—अतिपातविवर्जिता पीडा । किमुक्त भवति-साध्वर्थमुपस्क्रियमाणेष्वोदनादिषु यावदद्यापि शाल्यादिवनस्पतिकायादीनामतिपात -प्राणव्यपरमलक्षणो न भवति । तावदर्वाग्वर्तिनी सर्वाऽपि पीडा अपद्रावणम्, यथा साध्वर्थं शाल्योदनकृते शालिकरट्यविद्वाग्द्वय कण्डनम् । तृतीय तु कण्डनमतिपात । तस्मिन् कृते शालिजीवानामवश्यमतिपातभावात् । ततस्तृतीयकण्डनमतिपात ग्रहणेन गृह्णात वक्ष्यति च भाष्यकृत्- उद्दवणं पुण जाणसु अइवायविवज्जय पीडं ति । उद्दवणशब्दात्-परतो विभक्तिलोप आर्षत्वात्, " तथा तिवायणं' ति त्रीणि-कायवाङ्-मनांसि यद्वा-त्रीणि देहाऽऽयुरिन्द्रियलक्षणानि । पातनं चातिपातो, विनाश इत्यर्थ तत्र च त्रिधा समासविवक्षा, तद्यथा—षष्ठीतत्पुरुष, पञ्चमीतत्पुरुष तृतीयातत्पुरुषश्च । तत्र षष्ठीतत्पुरुषोऽयम्-त्रयाणां-काय-वाङ्-मनसां-पातनं-

विनाशनं त्रिपातनम् एतच्च परिपूर्णगर्भजपञ्चेन्द्रियतिर्यङ्-मनुष्याणामवसेयम्, एकेन्द्रियाणां तु कायस्यैव केवलस्य विकलेन्द्रियसमूर्च्छिमतिर्यङ्मनुष्याणां तु कायवचनयोरेवेति । यद्वा—त्रयाणां—देहायुरिन्द्रियरूपाणां पातन—विनाशनं त्रिपातनम्, इद च सर्वेषामपि तिर्यङ्मनुष्याणां परिपूर्णं घटते केवलं यथा येषां संभवति तथा तेषां वक्तव्यम्, यथा एकेन्द्रियाणां देहस्य औदारिकस्य आयुष -तिर्यगायुरूपस्य इन्द्रियस्य स्पर्शनेन्द्रियस्य, द्वीन्द्रियाणां देहस्यौदारिकरूपस्य आयुषस्तिर्यगायुष इन्द्रिययोश्च स्पर्शनरसनलक्षणयोरित्यादि, पञ्चमीतत्पुरुषस्त्वयम्-त्रिभ्य -कायवाङ्मनोभ्यो देहायुरिन्द्रियेभ्यो वा पातन-च्यावनमिति त्रिपातनम्, अत्रापि त्रिभ्य. परिपूर्णेभ्य. कायवाङ्मनोभ्य. पातनं गर्भजपञ्चेन्द्रियतिर्यङ्मनुष्याणाम् एकेन्द्रियाणां तु कायादेव केवलात् विकलेन्द्रियसंमूर्च्छिमतिर्यङ्मनुष्याणां तु कायवाग्भ्यामिति, देहायुरिन्द्रियरूपेभ्यस्तु त्रिभ्य. पातनं सर्वेषामपि परिपूर्णं संभवति, केवल यथा येषां संभवति तथा तेषां प्रागिव वक्तव्यम्, तृतीयातत्पुरुषः पुनरयम्-त्रिभिः कायवाङ्मनोभिर्विनाशकेन स्वसम्बन्धिभि पातन-विनाशन त्रिपातन, 'च' शब्द समुच्चये, भिन्नविभक्तिनिर्देशश्चशब्दोपादानं च यस्य साध्वर्थमपद्रावण कृत्वा गृही स्वार्थमतिपातं करोति तत्कल्प्यं, यस्य तु गृही त्रिपातनमपि साध्वर्थे विधत्ते तन्न कल्प्यमिति ख्यापनार्थम्, इत्थभूतमौदारिकशरीराणामपद्रावणं त्रिपातनं च यस्य साधोरेकस्यानेकस्य वाऽर्थाय-निमित्तं मन आधाय-चित्तं प्रवर्त्य क्रियते तदाधाकर्म ब्रुवते तीर्थकरगणधरा. ।

इमामेव गाथां भाष्यकृद् गाथात्रयेण व्याख्यानयति—

ओरालग्गहणेणं, तिरिक्खमणुयाऽहवा सुहुमवज्जा ।
उद्दवणं पुण जाणसु, अइवायविवज्जियं पीडं ॥२५॥
कायवइमणो तिन्नि उ, अहवा देहाऽऽउइंदियप्पाणा ।
सामित्ता वायाणे, होइ तिवाओ य करणेसु ॥ २६ ॥
हिययंमि समाहेउं, एगमणेगं च गाहगं जो उ ।
वहणं करेइ दाया, काएण तमाह कम्मंति ॥ २७ ॥

सुगमा । नवरं 'देहाऽऽउइंदियप्पाण' त्ति—देहायुरिन्द्रियरूपास्त्रय. प्राणा., 'सामित्ते' त्यादि स्वामित्वे-स्वामित्वविषये संबन्धविवक्षयेति भावार्थ, एवमपादाने-अपादानविवक्षया करणेषु विषये-करणविवक्षया अतिपातो भवति, यथा त्रयाणां पातनं त्रिपातनम्, यद्वा-त्रिभ्य पातनं त्रिपातनम्, त्रिभिर्वा करणभूतै पातन त्रिपातनं, भावार्थस्तु प्रागेवोपदर्शित तदेवमुक्तमाधाकर्मनाम । पिं० । (आधाकर्मणोऽध कर्मत्वमध कर्म 'अधेकम्म' शब्दे प्रथमभागे ५८६ पृष्ठे द्रष्टव्यम्) । आधाकर्म अधोगतिनिबन्धनम् इत्यध कर्मेत्युच्यते । पिं० १०२ गाथाटी० । (आत्मघ्नकर्म 'आताहम्म' शब्दे अस्मिन्नेव भागे प्रागुक्तम् ।) (तच्च आत्मघ्नकर्म) साधो आधाकर्मभुञ्जानस्याऽनुमोदनादिद्वारेण नियमत संभवतीत्युपचारत आधाकर्म आत्मघ्नमित्युच्यते । पिं० १०५ गाथाटी० । (आत्मकर्म 'अत्तकम्म' शब्दे प्रथमभागे ५०० पृष्ठे दर्शितम्) अशुभो भाव आधाकर्म ग्रहणरूप साधुना प्रयत्नेन वर्जयितव्य । पिं० ११० गाथाटी० । परकर्मणश्चात्मीकरणम् आधाकर्मणा ग्रहणे भोजने वा सति भवति, नान्यथा, तत उपचाराद्-आधाकर्म आत्मकर्मेत्युच्यते । पिं० १११ गाथाटी० । अतिप्रसङ्गदोषभयात् कृतकारितदोषरहितमपि न आधाकर्म भुञ्जीत । अन्यच्च तदाधाकर्म जानानोऽपि भुञ्जानो नियमताऽनुमोदते; अनुमोदना हि नाम अप्रतिषेधनम्, 'अप्रतिषिद्धमनुमतम्' इति विद्वत्प्रवादात् । पिं० १११ गाथाटी० ।

(३) संप्रति प्रतिषेवणादीनि नामानि वक्तव्यानि तानि चाऽऽत्मकर्मेति नामाङ्गत्वेन प्रवृत्तानि, ततस्तेषां आत्मकर्मेति नामाङ्गत्वं परस्परं गुरुलघुचिन्ता च चिकीर्षुरिदमाह—

अत्तीकरेइ कम्मं, पडिसेवाईहिँ तं पुण इमेहिं ।
तत्थ गुरू आइपयं,लहु लहु लहुगा कमेणियरे ॥११२॥

तत्पुनर्ज्ञानावरणीयादिक परकर्म आत्मीकरोति-आत्मसात्करोति एभि -वक्ष्यमाणस्वरूपै प्रतिषेवणादिभि तत प्रतिषेवणादिविषयमाधाकर्माऽपि प्रतिषेवणादिनाम तत्र तेषां प्रतिषेवणादीनां चतुर्णां मध्ये आदिपद-प्रतिषेवणालक्षणं गुरु-महादोष, शेषाणि तु पदानि प्रतिषेवणादीनि लघुलघुलघुकानि द्रष्टव्यानि, प्रतिषेवणापेक्षया प्रतिश्रवण लघुप्रतिश्रवणादपि संवासनं लघु संवासनादप्यनुमोदनमिति ।

संप्रत्येतेषामेव प्रतिषेवणादीनां स्वरूपं दृष्टान्तांश्च प्रतिपिपादयिषुस्तद्विषया प्रतिज्ञामाह—

पडिसेवणमाईणं, दाराणणुमोयणाऽवसाणाणं ।
जहसंभवं सरूवं, सोदाहरणं पवक्खामि ॥ ११३ ॥

प्रतिषेवणाऽऽदीना द्वाराणामनुमोदनापर्यवसानाना यथासंभवं यद्यस्य संभवति । तस्य तत् स्वरूपं सोदाहरणम्-सदृष्टान्तं प्रवक्ष्यामि, तत्र प्रथमत प्रतिषेवणास्वरूपं वक्तव्यम् । पिं० । (प्रतिषेवणारूपम् 'पडिसेवणा' शब्दे पञ्चमभागे वक्ष्यते ११४-११५ गाथाभ्याम्)

[४] संप्रति प्रतिश्रवणस्वरूपमाह—

उवओगम्मि य लाभं, कम्मग्गाहिस्स चित्तरक्खट्ठा ।
आलोइए सुलद्धं, भणइ भणंतस्स पडिसुणणा ॥११६॥

पिं० । [अस्या गाथाया. व्याख्या 'पडिसुणणा' शब्दे पञ्चमभागे करिष्यते]

सम्प्रति संवासा-ऽनुमोदनयो स्वरूपं प्रतिपादयति—

संवासो उ पसिद्धो, अणुमोयणकम्मभोयगपसंसा ।
एएसिमुदाहरणा, एए उ कमेण नायव्वा ॥११७॥

'संवास' आधाकर्म्मभोक्तृभिः सह एकत्र संवसनरूप प्रसिद्ध एव, अनुमोदनादाधाकर्म्मभोजकप्रशंसा-कृतपुण्या सुलब्धिका एते ये इत्थ सर्वदेव लभन्ते भुञ्जते चेत्येवंरूपा । तदेवमुक्तं प्रतिषेवणादीना चतुर्णामपि स्वरूपम्, संप्रत्येतेषामेव प्रतिषेवणादीनां क्रमेण एतानि वक्ष्यमाणस्वरूपाणि उदाहरणानि ज्ञातव्यानि, सूत्रे च उदाहरणशब्दस्य पुल्लिङ्गता प्राकृतलक्षणवशात् ।

तत्र यान्युदाहरणानि वक्ष्यन्ति तेषां नामानि क्रमेण प्रतिपादयति—

पडिसेवणाए तेणा, पडिसुणणाए उ रायपुत्तो उ।
संवासंमि य पल्ली, अणुमोयण रायदुट्ठो य ॥११८॥

प्रतिषेवणस्य स्तेना उदाहरणम्, प्रतिश्रवणस्य तु राजपुत्रं, राजपुत्रापलक्षिता ज्ञेयाः पुरुषाः। संवासे 'पल्ली'-पल्लीवास्तव्या वणिजः, अनुमोदनायां राजदुष्टो-राजदुष्टोपलक्षितास्तत्प्रशंसाकारिणः।

तत्र प्रथमतः प्रतिषेवणसंबन्धिनं स्तेनदृष्टान्तं भावयति—

गोणीहरण सभूमी, नेऊणं गोणिओ पहे भक्खे।
निव्विसया परिवेसण-ढियाऽवि ते कूविया वत्थे ॥११९॥

इह गाथाक्षरयोजना सुगमत्वात् स्वयमेव कर्त्तव्या, केवलं 'निर्विशका'-उपभोक्तारो, नि पूर्वस्य विशरुपभोगे वर्तमानत्वात् तथा चोक्तम्-" निर्वेशं उपभोगः स्यात् " कूजका-व्याहारकारिणः; गवां व्यावर्त्तका इत्यर्थः, 'वत्थे' इति गृहीताः। कथानकमुच्यते-इह क्वचिद्ग्रामे बहवो दस्यव, ते चान्यदा कुतश्चित्सन्निवेशाद् गाः अपहृत्य निजग्रामाऽभिमुखं प्रचलिताः, गच्छतां च तेषामपान्तराले केऽप्यन्ये दस्यवः पथिका मिलितवन्तस्ततस्तेऽपि तैः सार्द्धं व्रजन्ति; व्रजन्तश्च स्वदेशं प्राप्ताः, ततः प्राप्ताः स्वदेशं इति निर्भया भोजनवेलायां कतिपया गा विनाश्य भोजनाय तन्मांसं पक्तुमारब्धवन्तः। अस्मिंश्च प्रस्तावे केऽप्यन्येऽपि पथिकाः समाययुः, ततस्तेऽपि तैर्दस्युभिर्भोजनाय निमन्त्रिता ततो गोमांसे पक्वे केऽपि चौराः पथिकाश्च भोक्तुं प्रवृत्ताः, केऽपि गोमांसभक्षणं बहुपापमिति परिभाव्य न भोजनाय प्रवृत्ताः, केवलमन्येभ्यः परिवेषणं विदधति अत्रान्तरे च निष्प्रत्याकारनिशितकरवालभीषणमूर्त्तय समाययुः कूजकाः, ततस्तैः सर्वेऽपि भोक्तारः परिवेषकाश्च परिगृहीताः, तत्र ये पथिका अपान्तराले मिलितास्ते पथिका वयमिति ब्रुवाणा अपि चौरोपनीतगोमांसभक्षणपरिवेषणप्रवृत्ततया चौरवद् दुष्टा इति गृहीताः, विनाशिताश्च।

अमुमेवार्थं दार्ष्टान्तिके योजयति—

जे वि य परिवेसंती, भायणाणि धरंति य।
तेऽवि बज्झंति तिव्वेण, कम्मुणा किमु भोयिणो? ॥१२०॥

इह चौराणां येऽपान्तराले भोजनवेलायां वा ये मिलिताः पथिकास्तेषामपि ये परिवेषमात्रं भाजनधारणमात्रं वा कृतवन्तस्तेऽपि कूजकैरागत्य बद्धा-विनाशिताश्च, एवमिहापि ये साधवोऽन्येभ्यः साधुभ्य आधाकर्म्म परिवेषयन्ति वा धरन्ति। तेऽपि तीव्रेण-दुःसहविपाकेन नरकादिगतिहेतुना कर्म्मणा बध्यन्ते किं पुनराधाकर्म्मभोजिनः?। ततः एतद्दोषभयात्परिवेषणादिमात्रमप्याधाकर्म्मणः प्रतिषेवणं यतिभिर्न कर्त्तव्यम्, इह चौरस्थानीया आधाकर्म्मनिमन्त्रिणः साधवो, गोमांसभक्षकचौरपथिकस्थानीयाः स्वयंगृहीतनिमन्त्रिताधाकर्म्मभोजिनो, गोमांसपरिवेषकादिस्थानीया आधाकर्म्मपरिवेषकादयः, गोमांसस्थानीयमाधाकर्म्म, पथस्थानीयं मानुषं जन्म कूजकस्थानीयानि कर्म्माणि मरणस्थानीयं नरकादिप्रपातः।

संप्रति प्रतिश्रवणस्य पूर्वोक्तराजसुतदृष्टान्तं भावयति—

सामत्थण रायसुए, पिइवहणसहाय तह य तुसिहिक्का।
तिण्हं पि हु पडिसुणणा, रन्ना सिट्ठंमि सा नऽत्थि ॥१२१॥

गुणसमृद्धं नाम नगरं तत्र महाबलो राजा तस्य शीला नाम देवी तयोर्विजितसमरो नाम ज्येष्ठः कुमारः, स च राज्यं जिघृक्षुः पितरि दुष्टाशयश्चिन्तयामास यथा ममैष पिता स्थविरोऽपि न म्रियते नूनं दीर्घजीवी संभाव्यते ततो निजभटान् सहायीकृत्यैनं मारयामीति, एवं च चिन्तयित्वा निजभटैः समं मन्त्रयितुं प्रावर्त्तत, तत्र कैश्चिदुक्तं वयं तव साहायककारिणः, अपरैरुक्तमेव कुरु, केचित्पुनस्तूष्णीं प्रतिपेदिरे, अपरे पुनश्चैतस्यप्रतिपद्यमानाः सकलमपि तद् वृत्तान्तं राज्ञे निवेदयामासु, ततो राजा ये साहायकं प्रतिपन्ना ये च एवं कुर्वित्युक्तवन्तो येऽपि च तूष्णीं तस्थु तान् सर्वानपि ज्येष्ठं च कुमारं वैवस्वतमुखे प्रतिचिक्षेप यैस्त्वागत्य निवेदितं ते पूजिताः, गाथाक्षरयोजना त्वियम्-'सामत्थण' स्वभटैः सह पर्यालोचनं 'रायसुए' त्ति-तृतीयार्थे-सप्तमी, ततोऽयमर्थः -राजसुतेन कर्त्तुमारब्धमिति शेषः, तत्र कैश्चिदुक्तं पितृहनने कर्त्तव्ये तव सहाया वयमिति 'तथा' इति समुच्चये, चशब्दोऽनुक्तसमुच्चयार्थः, स च कैश्चिदेवं कुर्विति भाषितवन्त इति समुच्चिनोति, केचित् पुनस्तूष्णीका जाता-मौनेनावस्थिताः, एतेषां च त्रयाणामपि प्रतिश्रवणदोषः, यैस्तु राज्ञे शिष्टं तेषां 'सा' तत्प्रतिश्रवणं नास्ति।

अमुमेवार्थं दार्ष्टान्तिके योजयति—

भुंज न भुंजे भुंजसु, तइओ तुसिणीए भुंजए पढमो।
तिण्हं पि हु पडिसुणणा, पडिसेहंतस्स सा नऽत्थि ॥१२२॥

इह किल केनापि साधुना चत्वारः साधव आधाकर्म्मणे निमन्त्रिता यथा भुङ्ध्वं यूयमेनमाहारमिति तत्रैव निमन्त्रणे कृते प्रथमो भुङ्क्ते द्वितीय प्राह-नाहं भुञ्जे भुङ्क्ष्व त्वमिति, तृतीयो मौनमाश्रितः, चतुर्थः पुनः प्रतिपिद्धवान् यथा न कल्पते साधूनामाधाकर्म तस्मादहं भुञ्जे इति, त्रयाणामाद्यानां प्रतिश्रवणदोषः, चतुर्थस्य प्रतिषेधतः सतः 'सा' तत्प्रतिश्रवणं नास्ति, अत्राह—नन्वाद्यस्याधाकर्मभुञ्जानस्य प्रतिषेवणलक्षण एव दोषः, कथं प्रतिश्रवणदोष उक्तः?। उच्यते—इह यदा आधाकर्म्मनिमन्त्रितः सन् तद्भोजनमभ्युपगच्छति। तदा नाद्यापि प्रतिषेवणमिति प्रतिश्रवणदोषः, ततः ऊर्ध्वं तु प्रतिषेवणं ततो न कश्चिद्दोषः। अथामीषामेव भोजकादीनां कः कः कायिकादिको दोषः स्याद्? अत आह—

आणंतभुंजगा क-म्मुणा उ, बीयस्स वाइओ दोसो।
तइयस्स य माणसिओ, तीहिँ विसुद्धो चउत्थो उ ॥१२३॥

इह य आधाकर्म्मणि स्वयमानेता यश्चानीतस्य निमन्त्रितः सन् भोक्ता तौ द्वावपि कर्म्मणा आनयनभोजनरूपतया कायक्रियया तुशब्दान्मनसा वाचा च दोषवन्तौ द्वितीयस्य तु भुङ्क्ष्व त्वं नाहं भुञ्जे इति ब्रुवाणस्य वाचिको दोषः, उपलक्षणमेतत्-मानसिकश्च, तृतीयस्य तु तूष्णींस्थितस्य तु मानसिको, यस्तु चतुर्थः स त्रिभिरपि दोषैर्विशुद्धः, तस्माच्चतुर्थकल्पेन सर्वदैव साधुना भवितव्यम्।

संप्रति दृष्टान्तोक्तस्य कुमारस्य ये दोषा सम्प्रभवन्ति तानुपदर्श्याऽऽधाकर्मणो भोक्तरि योजयति—

**पडिसेवणा पडिसुणणा, संवासऽणुमोयणा उ चउरोऽवि।
पियमारग रायसुए, विभासियव्वा जइजणेऽवि ॥१२४॥**

पितृमारके राजसुते प्रतिषेवण-प्रतिश्रवण-संवासाऽनुमोदनारूपाश्चत्वारोऽपि दोषा घटन्ते, तथाहि-तस्य स्वयं पितृमारणाय प्रवृत्तत्वात् प्रतिषेवणं, वयं तव सहाया इति निजभटवचनं प्रतिपद्यमानस्य प्रतिश्रवणं, तैरेव सार्द्धमेकत्र निवसनेन संवासः, तेष्वेव बहुमानकरणादनुमोदना, एवं यतिजनेऽप्याधाकर्मणो भोक्तरि विभाषितव्या-योजनीया, अत्र यः स्वयमानीयान्यैः सह भुङ्क्ते तत्र प्रथमतो योज्यन्ते तस्य आधाकर्म गृहस्थगृहादानीय भुञ्जानस्य प्रतिषेवणं, गृहस्थेनाधाकर्मग्रहणाय निमन्त्रितस्य तद्ग्रहणाभ्युपगम प्रतिश्रवणं, तस्मै तदाधाकर्म आनीय संविभागेन प्रयच्छति तेन सहैकत्र संवसन संवासः, तत्रैव बहुमानकरणादनुमोदना यश्चान्येनानीतमाधाकर्म निमन्त्रित सन् भुङ्क्ते तस्य प्रथमतो निमन्त्रणानन्तरमभ्युपगच्छत प्रतिश्रवणं, ततो भुञ्जानस्य प्रतिषेवणं, निमन्त्रकेण सह एकत्र संवसन संवासः, तत्र बहुमानकरणादनुमोदना, तदेव यत्र प्रतिषेवणं तत्र नियमतश्चत्वारोऽपि दोषाः, प्रतिश्रवणे च केवले त्रय, संवासे द्वौ अनुमोदनायां त्वनुमोदनैव केवला, अत एवाऽऽदिपदं गुरु, शेषाणि तु पदानि लघुलघुलघुकानीति।

संप्रति संवासे पल्लीदृष्टान्तं भावयति—

**पल्लीवहम्मि नट्ठा, चोरा वणिया वयं न चोर त्ति।
न पलाया पावकर त्ति, काउं रन्ना उवालद्धा ॥१२५॥**

वसन्तपुरं नाम नगरं तत्र-अरिमर्दनो नाम राजा, तस्य प्रियदर्शना देवी, तस्य वसन्तपुरस्य प्रत्यासन्ना भीमाभिधाना पल्ली, तस्यां च बहवो भिल्लरूपा दस्यव परिवसन्ति, वणिजश्च। ते च दस्यवस्सदैव स्वपल्ल्या विनिर्गत्य सकलमप्यरिमर्दनराजमण्डलमुपद्रवन्ति। न स कश्चिदस्ति राज्ञः सामन्तो माण्डलिको वा यस्तान् साधयति, ततोऽन्यदा तत्कृतं सकलमण्डलोपद्रवमाकर्ण्य महाकोपावेशपूरितमानसो राजा स्वयं महतीं सामग्रीं विधाय भिल्लान् प्रतिजगाम, भिल्लाश्च पल्लीं मुक्त्वा संमुखीभूय संग्रामं दातुमुद्यता, राजा प्रबलसेनापरिकलिततया तान् सर्वानप्यविगणय्य सोत्साहो हन्तुमारब्धवान्, ते चैव हन्यमाना केऽपि तत्रैव परासवो बभूवु, केऽपि पुन पलायितवन्त, राजा च साऽमर्ष पल्लीं गृहीतवान्, वणिजश्च तत्रत्या न वयं चौरास्तत किमस्माकं राजा करिष्यतीति बुद्ध्या नाऽनेशन्, राज्ञा च तेऽपि ग्राहिता, ततस्तैर्विज्ञपयाञ्चक्रे यथा देव! वयं वणिजो; न चोरा इति, ततो राजाऽवादीत्-यूयं चौरेभ्योऽप्यतीवापराधकारिणो येऽस्माकमपराधकारिभिश्चौरै सह संवसथेति. ततो निगृहीता। गाथाऽक्षरयोजना तु सुगमत्वात् स्वयं कार्या।

दार्ष्टान्तिकयोजना करोति—

**आहाकडभोईहिं, सहवासो तह य तव्विवज्जं पि।
दंसणगंधपरिकहा, भावेंति सुलूहवित्तिं पि ॥ १२६ ॥**

भावना-यथा वणिजां चौरैस्सहैकत्र संवासो दोषाय बभूव तथा साधूनामप्याधाकर्मभोक्तृभिः सहैकत्र संवासो दोषाय वेदितव्य, यतस्तद्विवर्ज्जमपि—आधाकर्मपरिहारकमपि तथा सुरूक्षवृत्तिमपि सुष्ठु-अतिशयेन रूक्षा द्रव्यतो विकृत्यपरिभोगेन भावतोऽभिष्वङ्गाभावेन निःस्नेहा वृत्तिः-वर्तनं यस्य तथा तमपि आधाकर्मसंबन्धिन्यो दर्शनगन्धपरिकथा भावयन्ति—आधाकर्मपरिभोगवाञ्छोत्पादनेन वासयन्ति। तथाहि दर्शनम्-अवलोकनं, तच्च मनोज्ञमनोज्ञतराऽऽधाकर्माहारविषयं नियमाद्वासयति, यत कस्य नाम शङ्खकुन्दावदातो रसपाकविधाननिष्णातमहासूपकारसुसंस्कृत शाल्याद्योदनो न मन क्षोभमुत्पादयति। गन्धोऽपि सद्यस्तापितघृतादिसंबन्धी नासिकेन्द्रियाऽऽप्यायनशीलो बलादपि तद्भोजने श्रद्धामुपजनयति, परिकथाऽपि च विशिष्टविशिष्टतरद्रव्यनिष्पादितमोदकादिविषया विधीयमाना तदास्वादनपरयाशमाविधौ चेत् उत्साहयितुमीश्वरा, तथा दर्शनात् ततोऽवश्यमाधाकर्मभोक्तृभि सह संवासो यतीनां दोषायेति।

अनुमोदनायां राजदुष्टदृष्टान्तं भावयति—

**रायारोहवराहे, विभूसिओ धाइओ नयरमज्झे।
धन्नाऽधन्न त्ति कहा, वहाऽवहो कप्पडिय खोला ॥१२७॥**

श्रीनिलयं नाम नगरं, तत्र गुणचन्द्रो नाम राजा, तस्य गुणवतीप्रमुखमन्त पुरं. तत्रैव च पुरे सुरूपो नाम वणिक्, स च निजशरीरसौन्दर्यविनिर्जितमकरध्वजलावण्यिमाकमनीयकामिनीनामतीव कामास्पदं स्वभावतश्च परदाराभिष्वङ्गलालस, तत सोऽन्यदा राजान्तःपुरसन्निवेशसमीपं गच्छन्नन्त पुरिकाभि सस्नेहमवलोकितः, तैनाप्यपचित्ता. साभिलाषमवेक्षितास्ततो जातं परस्परमनुरागं दूतीनिवेदितप्रयोगवशेन च ता प्रतिदिनं तेन सेवितुमारब्धा, राज्ञा च कथमप्ययं वृत्तान्तो जज्ञे, ततो यदा सोऽन्तःपुरं प्रविशतदा निजपुरुषैर्ग्राहितो ग्राहयित्वा च तैरेवाभरणैरलङ्कृतोऽन्तःपुरं प्रविवेश तैरेवाभरणैर्विभूषितो नगरमध्ये चतुष्पथे सकलजनसमक्षं विचित्रकदर्थनापुरस्सरं विनिपातितः। राजा चान्तःपुरविध्वंसेनातीवदूनमनास्तस्मिन् विनाशितेऽपि न कोपावेशं मुञ्चति। ततो हेरिकान् प्रयोजयामास, यथा के दुरात्मान त ये प्रशंसन्ति ये वा निन्दन्ति तान् द्वयानपि मह्यं निवेदय? इति एवं च ते प्रेषिता कार्पटिकवेषधारिण सर्वत्रापि नगरे परिभ्रमन्ति, लोकाश्च तं विनाशितं दृष्ट्वा केचन ब्रुवते, यथा अहो जातेन मनुजजन्मना अवश्यं तावन्मर्त्तव्यं पर या अस्मादृशामधन्यानां दृष्टिपथमपि कदाचनापि नायान्ति ता अप्यय यथासुखं चिरकालं भुक्त्वा मृतस्तस्माद्धन्य एव इति, अपरे ब्रुवत-अधन्य एव उभयलोकविरुद्धकारी स्वामिनोऽन्तःपुरिका हि जननीतुल्यास्ततस्तास्वप्येव संचरन् कथं प्रशंसामर्हति शिष्टेभ्य इति. ततस्ते द्वये अपि हेरिकैर्निवेदिता राज्ञे, राजा च ये तस्य निन्दाकारिणस्ते सद्बुद्धय इति कृत्वा पूजिता, इतरे तु-एनान्तमुखे प्रक्षिप्यन्त. गाथाक्षरयोजना त्वेवम्-राज्ञोऽवरोधेऽन्तःपुरे तद्विषयेऽपराधे तैरेवाऽऽभरणैर्विभूषितोऽन्तःपुरे प्रविष्टस्तैरेव विभूषितो नगरमध्ये घातित। तत कार्पटि-

कर्षणधारिणः खोला-हेरिका राज्ञा नियुक्ताः । लोकानां च तद्विषया धन्याऽधन्यकथा । ततो धन्यकथाकारिणां विनाशः, इतरेषां त्वविनाश इति । दार्ष्टान्तिकयोजना त्वेवम्-एके साधवस्तावदाधाकर्म भुञ्जते । तत्राऽपरे-जल्पन्ति धन्या एते सुखं जीवन्ति, अन्ये ब्रुवते-धिग् एतान् ये भगवत्प्रवचनप्रतिषिद्धमाहारमश्नन्ति, तत्र ये प्रशंसितारस्ते कर्मणा बध्यन्ते, इतरे तु न, इहान्न पुरस्थानीयमाधाकर्म, अन्नपुरद्रोहकारिस्थानीया आधाकर्मभोजिनः साधवः, नृपस्थानीयं ज्ञानावरणादिकं कर्म, मरणस्थानीयः संसारः, तत्र ये आधाकर्मभोक्तृप्रशंसकास्ते कर्मराज्ञो निग्राह्याः शेषास्त्वनिग्राह्याः ।

संप्रत्यनुमोदनाप्रकारमेव दर्शयति—

साउं पज्जत्तं आ-यरेण काले रिउक्खमं निद्धं ।
तग्गुणविकत्थणाए, अभुंजमाणे वि अणुमन्ना ॥१२८॥

आधाकर्मभोजिन उद्दिश्य केचिदेवं ब्रुवते—वयं तावन्न कदाचनाऽपि मनोज्ञमाहारं लभामहे, एते पुनः सदैव स्वादु लभन्ते, तदपि च पर्याप्त-परिपूर्णं तत्राप्यादरेण-बहुमानपुरस्सरं तत्रापि काले-प्रस्तुतभोजनवेलायां तदपि ऋतुक्षमं-शिशिरादिऋतूपयोगि तथा स्निग्धं-घृतपूर्णादि तस्मादन्या अमी सुखं जीवन्ति । एवं तद्गुणविकत्थनया-तद्गुणप्रशंसया अभुञ्जानेऽपि-अनभ्यवहरत्यपि अनुमन्या-अनुमोदना इह अनुमन्याजनितो दोषोऽपि कार्ये कारणोपचारादनुमन्येत्युक्तम्, ततोऽयमर्थः—अभुञ्जानेऽप्यनुमोदनाद्वारेणाधाकर्मभोजिन इव दोषा भवन्तीति । अन्ये तु तद्गुणविकत्थनामेवं योजयन्ति-आधाकर्मभोजिनं कोऽपि कन्दर्पेणानाभोगेन वा पृच्छति-साधु लब्धं त्वया भोजनं, तथा पर्याप्तं, तथा आदरेण भक्त्या इत्यादि ?, तत्राप्यविरोधः । तदेवमुक्तान्याधाकर्मणो नामानि, तदुक्तौ च यदुक्तं प्राक् मूलद्वारगाथायाम् "आधाकम्मियनामा" इति तद् व्याख्यातम् । पिं० ।

( ५ ) एकार्थिकानि आधाकर्मणः । संप्रति 'एगट्ठा' इत्यवयवं व्याचिख्यासुरिदमाह—

आहा अहे य कम्मं, आयाहम्मे य अत्तकम्मे य ।
जह वंजणनाणत्तं, अत्थेण वि पुच्छए एवं ॥ १२९ ॥

अत्र परः एवं पृच्छति-यथा आधाकर्म १, अधःकर्म २, आत्मघ्नकर्म ३, आत्मकर्म ४ इत्येतेषु चतुर्षु नामसु व्यञ्जनैर्नानात्वं विद्यते, तथाऽर्थेनाऽपि-अर्थापेक्षयापि नानात्वमस्ति किं वा न ? इति, पृच्छतश्चायमभिप्रायः-इहाऽऽधाकर्मादीनां नाम्नां सर्वेषामपि व्युत्पत्तिनिमित्तं पृथगुक्तं तद्यथा-आधया कर्म आधाकर्म, अत्र साधुविषयप्रणिधानपुरस्सरपाकादिक्रियारम्भो व्युत्पत्तिनिमित्तम्, अधोऽधः कर्म-अधःकर्म, अत्र विशुद्धेभ्यः संयमादिस्थानेभ्योऽधोऽधस्तरगमनम्, आत्मानं हन्तीत्यात्मघ्नमिति अत्र चरणाद्यात्मविनाशनम्, परकर्म आत्मकर्म क्रियते इत्यात्मकर्म, अत्र परकर्मणः आत्मसम्बन्धितया करणं ततोऽत्र संशयो यथा व्युत्पत्तिनिमित्तं पृथक् पृथक् भिन्नमेवं प्रवृत्तिनिमित्तमपि पृथक् पृथक् भिन्नं यथा घटपटशकटादिशब्दानां, किं वा न यथा घटकलशकुम्भादीनामिति । अत्र 'आहा अहेयकम्मे' इत्यादावक्षरयोजना प्रागिव भावनीया ।

एवं परेण प्रश्ने कृते सति शिष्यमतिप्रागल्भ्याधानाय सामान्यतो नामविषयां चतुर्भङ्गिकामाह—

एगट्ठ एगवंजण, एगट्ठा नाणवंजणा चेव ।
नाणट्ठ एगवंजण, नाणऽट्ठा वंजणा नाणा ॥ १३० ॥

इह नामानि जगति प्रवर्तमानानि कानिचिदुपलभ्यन्ते । एकार्थानि—एकव्यञ्जनानि १, कानिचिदेकार्थानि नानाव्यञ्जनानि २, कानिचिन्नानार्थानि एकव्यञ्जनानि ३, कानिचित् पुनर्नानार्थानि नानाव्यञ्जनानि ४ ।

अस्या एव चतुर्भङ्गिकायाः क्रमेण लौकिकनिदर्शनानि गाथाद्वयेनोपदर्शयति—

दिट्ठं खीरं खीरं, एगऽट्ठं एगवंजणं लोए ।
एगऽट्ठं बहुनामं, दुद्ध पओ पीलु खीरं च ॥ १३१ ॥
गोमहिसिअयाखीरं, नाणऽट्ठं एगवंजणं नेयं ।
घडपडकडसगडरहा, होइ पिहत्थं पिहंनामं ॥ १३२ ॥

इह सर्वत्राऽपि जातावेकवचनं, ततोऽयमर्थः-एकार्थानि एकव्यञ्जनानि नामानि लोके प्रवर्त्तमानानि दृष्टानि यथा क्षीरं क्षीरमिति, इयमत्र भावना-एकत्र क्वचिद् गृहे गोदुग्धादिविषये क्षीरमिति नाम प्रवृत्तमुपलब्धं, तथाऽन्यत्रापि गोदुग्धादावेव विषये क्षीरमिति नाम प्रवर्तमानमुपलभ्यते, एवं ततोऽप्यन्यत्र गृहान्तरे ततोऽमूनि सर्वाण्यपि क्षीरं क्षीरमित्येवरूपाणि नामान्येकार्थानि एकव्यञ्जनानि, तथा एकार्थानि बहुव्यञ्जनरूपाणि नामानि यथा दुग्धं पयः पीलु क्षीरमिति अमूनि हि नामानि सर्वाण्यपि विवक्षितगोदुग्धादिलक्षणैकार्थाभिधायितया नानापुरुषैरेककालं क्रमेणैकपुरुषेण वा प्रयुज्यमानान्येकार्थानि नानाव्यञ्जनानि च ततो द्वितीये भङ्गे निपतन्ति । नानार्थान्येकव्यञ्जनानि, यथा-गोमहिष्यजासंबन्धिषु क्षीरं क्षीरमिति नामानि प्रवर्त्तमानानि, एतानि हि नामानि सर्वाण्यपि समानव्यञ्जनानि भिन्नभिन्नगोदुग्धमहिषीदुग्धादिरूपार्थवाचकतया भिन्नार्थानि च तत उच्यन्ते-नानार्थान्येकव्यञ्जनानि, नानार्थानि नानाव्यञ्जनानि यथा घटपटकटशकटरथादीनि नामानि । तदेवमुक्तानि चतुर्थभङ्गिकया निदर्शनानि ।

सांप्रतमिमामेव चतुर्भङ्गिकामाधाकर्मणि यथासंभवं गाथाद्वयेन योजयति—

आहाकम्माईणं, होइ दुरुत्ताइ पढमभंगो उ ।
आहाऽहेकम्मति य, बिइओ सक्किंद इव भंगो ॥ १३३ ॥
आहाकम्मंतरिया, असणाई उ चउरो तइयभंगो ।
आहाकम्म पडुच्चा, नियमा सुन्नो चरिमभंगो ॥ १३४ ॥

आधाकर्मादीनां नाम्नां युगपद्बहुभिः पुरुषैरेकेन वा कालभेदेन एकस्मिन्नेव अशनादिरूपे वस्तुनि यद् द्विरुक्तादि द्विरुच्चारणादि आदिशब्दात्त्रिरुच्चारणादिपरिग्रहः, स भवति प्रथमो भङ्गः किमुक्तं भवति ?-एकत्र वसत्याद्यशनविषये केनाप्याधाकर्मेति नाम प्रयुक्तं, तथाऽन्यत्रापि वसत्य-

न्तरेऽशनविषये एवाधाकर्मेति नाम प्रयुज्यते, तथा ततोऽन्यत्रापि वसत्यन्तरे, तान्यमूनि सर्वाण्यप्याधाकर्मेति नामान्येकार्थानि एकव्यञ्जनानीति प्रथमे भङ्गेऽवतरन्ति, आधाकर्म अध:कर्मेत्यादीनि तु नामानि विवक्षिताशनादिरूपैकविषये प्रवर्तमानानि। द्वितीयो भङ्ग, एकार्थानि नानाव्यञ्जनानीत्येवरूपद्वितीयभङ्गविषयाणि ' शक्रेन्द्र इव ' तियथा इन्द्र शक्र इत्येवमादीनि नामानि, तथा अशनाद्य:-अशनपानखादिमस्वादिमरूपाश्चत्वार आधाकर्मान्तरिता—आधाकर्मशब्देन-व्यवहिता यथा-अशनमाधाकर्म पानमाधाकर्म इत्येवमादि , तृतीयभङ्ग -तृतीयभङ्गविषय , अमाव्ययं भावार्थ:-यदा-अशनादय: प्रत्येकमाधाकर्म आधाकर्मेति देशभेदेन बहुभि: । पुरुषैरेककालमेकेन वा पुरुषेण कालभेदेनोच्यन्ते तदा तानि आधाकर्म आधाकर्मेति नामानि नानार्थान्येकव्यञ्जनानीति तृतीये भङ्गेऽवतरन्ति, आधाकर्मरूप नामाश्रित्य पुनश्चरमो भङ्गो नानार्थानि नानाव्यञ्जनानीत्येवंरूपो नियमाच्छून्य: आधाकर्म आधाकर्मेत्येवमादिनाम्नां सर्वेषामपि समानव्यञ्जनत्वात् , उपलक्षणमेतत् , तेन सर्वाण्यपि नामानि प्रत्येक चरमभङ्गे न वर्त्तन्ते, यदा तु कोऽप्यशनविषये आधाकर्मेति नाम प्रयुङ्क्ते, पानविषये त्वध:कर्मेति, खादिमविषये त्वात्मघ्नमिति, स्वादिमविषये त्वात्मकर्मेति तदामूनि नामानि नानार्थानि नानाव्यञ्जनानि चेति चरमोऽपि भङ्ग प्राप्यते ।

इह विवक्षिताशनादिरूपैकविषये प्रवर्तमानान्याधाकर्माध:कर्मप्रभृतीनि नामानि द्वितीयभङ्ग उक्तास्ततस्तदेव भावयति—

इंदत्थं जह सद्दा, पुरंदराई उ नाऽइवत्तंते ।
अहकम्म आयहम्मा, तह आहं नाऽइवत्तंते ॥ १३५ ॥

यथा इन्द्रार्थं इन्द्रशब्दवाच्यं देवराजरूपं पुरन्दराद्य -पुरन्दर: शक्र इत्येवमाद्य शब्दा नातिवर्तन्ते-नातिक्रामन्ति । तथा अध कर्म-आत्मघ्नशब्दौ उपलक्षणमेतत्। आत्मकर्मशब्दश्च 'आह'ति-' सूचनात् सूत्रमि"ति न्यायात् आधाकर्मार्थम्-आधाकर्मशब्दवाच्य नातिवर्तन्ते, यदेव येन दोषेण दुष्टमाधाकर्मशब्दवाच्यमोदनादि तदेव तेनैव दोषेण दुष्टमध कर्मादयोऽपि शब्दा ब्रुवते इति भाव ।

एतदेव भावयति—

आहाकम्मेण अहे, करेइ जं हणइ पाणभूयाइं ।
ज त आययमाणो, परकम्मं अत्तणो कुणइ ॥ १३६ ॥

आधाकर्मणा भुज्यमानेन कृत्वा यस्माद्विशुद्धेभ्यो विशुद्धतरेभ्य संयमादिस्थानेभ्योऽवतीर्याधस्तादात्मान करोति । तेन कारणेन तदेवाधाकर्म अध कर्मेत्युच्यते, तथा यस्मादाधाकर्मणा भुज्यमानेन कृत्वा स एव भोक्ता । परमार्थत प्राणान्-द्वीन्द्रियादीन् भूतान्-वनस्पतिकायान् उपलक्षणमेतत् जीवान्-सत्त्वांश्च हन्ति-विनाशयति । "जस्सऽट्ठा आरम्भो पाणिवहो होइ तस्स नियमेण" इति वचनप्रामाण्यात्प्राणादींश्च घ्नन् नियमतश्चरणादिरूपमात्मान हन्ति-विनाशयति । ' पाणिवह वयभंगो' इत्यादिवचनात् तत आधाकर्म आत्मघ्नमित्युच्यते, तथा यत्-सात्कारणात् तत्-आधाकर्म आददान परस्य-पाचकादे सम्बन्धि यत्कर्म आरम्भजनित ज्ञानावरणीयादिकमुत्पन्नमासीत् तदात्मनोऽपि करोति , ततस्तदाधाकर्म आत्मकर्मेत्युच्यते तस्मादध कर्मादीनि नामानि सर्वाण्यपि नाऽऽधाकर्मशब्दार्थमतिवर्तन्ते इति द्वितीये भङ्गेऽवतरन्ति । तदेवं मूलद्वारगाथायाम् 'एगट्ठा' इत्यपि व्याख्यातम् । पिं० ।

(६) आधाकर्माश्रित्य कल्प्याऽकल्प्यविधि । सम्प्रत्येनामेवाधिकृत्य कल्प्याऽकल्प्यविधिर्वक्तव्य , तत्र नामसाधर्मिकमधिकृत्य प्रथमत कल्प्याकल्प्यविधिं गाथाद्वयेन प्रतिपादयति—

जावंत देवदत्ता, गिहीव अगिहीव तेसि दाहामि ।
नो कप्पई गिहीणं, दाहंति विसेसिए कप्पे ॥ १४२ ॥
पासंडीसु वि एवं, मीसाऽमीसेसु होइ हु विभासा ।
समणेसु संजयाण उ,विसरिसनामाण वि न कप्पे॥१४३॥

इह कोऽपि पितरि मृते जीवति वा तन्नामानुरागतस्तन्नामयुक्तेभ्यो दानं दित्सुरेव सकल्पयति यथा यावन्तो गृहस्था अगृहस्था वा देवदत्तास्तेभ्यो मया भक्तादिकमुपस्कृत्य दातव्यं , तत्रैवं संकल्पे कृते देवदत्ताख्यस्य साधोर्न कल्पते, देवदत्तशब्देन तस्यापि संकल्पविषयीकृतत्वात् , यदा पुनरेवं संकल्पयति, यथा यावन्तो गृहस्था देवदत्तास्तेभ्यो दातव्यमिति, तदा एवं विशेषिते-निर्द्धारिते सति तद्योग्यमुपस्कृतं देवदत्ताख्यस्य साधो कल्पते, तस्य विवक्षितसंकल्पविषयीकरणाभावात् , तथा पाषण्डिष्वपि मिश्राऽमिश्रेषु एवं-पूर्वोक्तप्रकारेण विभाषा कर्त्तव्या, इह सामान्यसंकल्पविषया मिश्रा उच्यन्ते, यथा यावन्त पाषण्डिनो देवदत्ता इति , प्रतिनियतसंकल्पविषयास्त्वमिश्रा यथा यावन्त सरजस्का: पाषण्डिनो, यदिवा-सौगता देवदत्ता इत्यादि तत्र यावन्तो देवदत्ता पाषण्डिन इति मिश्रसंकल्पे कृते न कल्पते । पाषण्डिदेवदत्तशब्दाभ्या देवदत्ताख्यस्याऽपि साधो: संकल्पविषयीकृतत्वात् यदा पुनरमिश्र सकल्पो यथा यावन्त सरजस्का: पाषण्डिनो देवदत्ता, यदि वा-यावन्त सौगता देवदत्ता , यद्वा-साधुव्यतिरेकेण सर्वेऽपि पाषण्डिनो देवदत्तास्तेभ्यो दास्यामीति, तदा देवदत्ताख्यस्य साधो कल्पते, तस्य संकल्पविषयीकरणाभावात् , यथा च पाषण्डिषु मिश्रामिश्रेषु विभाषा कृता तथा श्रमणेष्वपि मिश्रामिश्रेषु कर्त्तव्या, श्रमणा हि शाक्यादयोऽपि भण्यन्ते, यतो वक्ष्यति-" निग्गंथ-सक्क-तावस-गेरुय-आजीव पंचहा समणा " ततो यदैवं मिश्र संकल्पो यावन्त श्रमणा देवदत्तास्तेभ्यो दास्यामीति तदा देवदत्ताख्यस्य साधोर्न कल्पते, तस्य श्रमणदेवदत्तशब्दाभ्या सकल्पविषयीकृतत्वात् , यदा पुनरेवममिश्र सकल्पो यावन्त शाक्या श्रमणा , यदि वा-आजीवका देवदत्ता , यद्वा—साधुव्यतिरेकेण सर्वे श्रमणा देवदत्तास्तेभ्यो दास्यामीति तदा कल्पते, तस्य विवक्षितसंकल्पविषयीकरणाभावात् , संयतानां तु निर्ग्रन्थानां विसदृशनाम्नामपि संकल्पे कृते देवदत्ताख्यादे साधोर्न कल्पते, किमुक्तं भवति-चैत्रनाम्नाऽपि संयतस्योद्देशेन कृत देवदत्ताख्यस्य साधोर्न कल्पते, तथा सदृशनाम्नोऽपि कृत-

गात् यदा पुनस्तीर्थकरप्रत्येकबुद्धसंकल्पनेन कृतं तदा कल्पते. तीर्थकरप्रत्येकबुद्धानां सङ्घातीतत्वेन सङ्घमध्यवर्त्तिभिः साधुभिः सह साधर्मिकत्वाभावात् । " संजयाणउ चिस्सरिस्सनामाण वि न कप्पे " इति वचनाच्चार्थापत्त्या यावन्तो देवदत्ता इत्यादौ विसदृशचैत्रादिनाम्नां साधूनां कल्पत एवेति प्रतिपादितं द्रष्टव्यम् । तदेवमुक्तो नाम साधर्मिकमधिकृत्य कल्प्याऽकल्प्यविधिः ।

संप्रति स्थापनाद्रव्यसाधर्मिकावधिकृत्य तमाह—

तीसमतीमावकडं, ठवणा साहम्मियम्मि उ विभासा ।
दव्वे मयतणुभत्तं, न तं तु कुच्छा विवज्जज्जा ॥ १४४ ॥

इह कोऽपि गृही गृहीतप्रव्रज्यस्य मृतस्य जीवतो वा पित्रादेः स्नेहवशात्प्रतिकृतिं कारयित्वा तत्पुरतो ढौकनाय बलिं निष्पादयति, तन्निष्पादनं च द्विधा, तद्यथा-निश्रया, अनिश्रया च । तत्र ये रजोहरणादिवेषधारिणो मत्पितृतुल्यास्तेभ्यो दास्यामीति सङ्कल्प्य निष्पादयति । तदा तद्बलिनिष्पादनं निश्राकृतमुच्यते यदा त्वेवंविधः सङ्कल्पो न भवति किन्त्वेवमेव ढौकनाय बलिं निष्पादयति । तदा तद्बलिनिष्पादनमनिश्राकृतमुच्यते. तथा चाह—' तीसमतीसा व कडं ' इह प्रथमा तृतीयार्थे वेदितव्या ततोऽयमर्थः —निश्रया अनिश्रया वा यत्कृतं—निष्पादितं भक्तादि स्थापनासाधर्मिकविषये । तत्र विभाषा कर्त्तव्या, यदि निश्राकृतं तदपि च ढौकितमढौकितं वा तर्हि न कल्पते अनिश्राकृतं तु ढौकितमढौकितं वा कल्पते. परं तत्रापि प्रवृत्तिदोषप्रसङ्ग इति पूर्वसूरयो निषेधमाचक्षते, तथा द्रव्ये-द्रव्यसाधर्मिकविषये यत् मृततनुभक्तं तत्कालं मृतस्य साधोस्तनुस्तस्याः पुरतो ढौकनाय यदशनादि तत् पुत्रादिना कृतं तत् मृततनुभक्तं तदपि द्विधा-निश्राकृतम् अनिश्राकृतं च। तत्र साधुभ्यो दास्यामीति सङ्कल्पकृतं निश्राकृतम् इतरत्तु स्वपित्रादिमोक्षमात्रकृतमनिश्राकृतं तत्र यन्निश्राकृतं तान्नेषयति-नैव कल्पते, इतरत्तु अनिश्राकृतं कल्पते किंतु तद्ग्रहणे लोके जुगुप्सा-निन्दा प्रवर्त्तेत यथा अहो अमी भिक्षवो निःशूका मृततनुभक्तमपि न परिहरन्तीति ततो विवर्जयन्ति तत्साधव ।

सम्प्रति क्षेत्रकालसाधर्मिकावधिकृत्यातिदेशेन कल्प्याऽकल्प्यविधिमाह—

पासंडियसमणाणं, गिहिनिग्गंथाण चेव उ विभासा ।
जह नामम्मि तहेव य खेत्ते काले य नायव्वं ॥ १४५ ॥

यथा नाम्नि-नामसाधर्मिकविषयं पाषण्डिनां श्रमणानां 'गिहि त्ति- सूचनात् सूत्रमि' ति न्यायात् गृहस्थगृहिणां निर्ग्रन्थानां च विभाषा कृता तथा क्षेत्रे काले च विभाषणं ज्ञातव्यं तत्र क्षेत्र-सौराष्ट्रादिकं काल -दिनपौरुष्यादिकं ; तत्र क्षेत्रविषयं विभाषा एवम् यदि सौराष्ट्रदेशोत्पन्नेभ्यः पाषण्डिभ्यो मया दातव्यमिति सङ्कल्प तदा सौराष्ट्रदेशोत्पन्नस्य साधोर्न कल्पते, सौराष्ट्रदेशोत्पन्नत्वेन तस्यापि सङ्कल्पविषयीकरणात् , शेषदेशोत्पन्नानां तु कल्पते तेषां सङ्कल्पाविषयीकरणाभावात् . यदि पुनः सौराष्ट्रदेशोत्पन्नेभ्यः पाषण्डिभ्यः सरजस्केभ्यः , यदि वा-सौगतेभ्यः यद्वा-साधुव्यतिरेकेण सर्वपाषण्डिभ्यो दास्यामीति संकल्पस्तदा सौराष्ट्रदेशोत्पन्नस्यापि साधोः कल्पते. तस्य संकल्पाक्रोडीकरणात् , एवं श्रमणेष्वपि सामान्यतः संकल्पितेषु न कल्पते साधुव्यतिरेकेण तु संकल्पितेषु कल्पते तथा गृहस्थगृहिषु सामान्यतः सौराष्ट्रदेशोत्पन्नत्वेन संकल्पितेषु न कल्पते, केवलेषु तु गृहिषु कल्पते. निर्ग्रन्थेषु तु सौराष्ट्रदेशोत्पन्नेषु अनौराष्ट्रदेशोत्पन्नेषु वा संकल्पितेषु सौराष्ट्रदेशोत्पन्नानामन्यदेशोत्पन्नानां वा सर्वथा न कल्पते तदेवं क्षेत्रसाधार्मिके विभाषा भाविता, एवं कालसाधर्म्मिकेऽपि भावनीया, यथा विवक्षितदिनजातेभ्यः पाषण्डिभ्यो मया दातव्यमिति संकल्पिते तस्यापि तद्दिनजातस्य साधोः न कल्पते, तस्यापि तद्दिनजातत्वेन संकल्पविषयीकरणात् , शेषदिनजातानां तु कल्पते, संकल्पविषयीकरणाऽभावात् इत्यादि सर्वं पूर्वोक्तानुसारेण भावनीयम् , प्रवचनादिषट्सतके पुनरेवं पूर्वाचार्यव्याख्या—प्रवचनलिङ्गदर्शनज्ञानचारित्राभिग्रहभावनारूपेषु सप्तसु पदेषु द्विसंयोगभङ्गा एकविंशतिः तद्यथा-प्रवचनस्य लिङ्गेन सह एको, दर्शनेन सह द्वितीयो, ज्ञानेन सह तृतीयः एवं यावत् भावनया सह षष्ठ इति षड् भङ्गाः. एवं लिङ्गस्य दर्शनादिभिः सह पञ्च, दर्शनस्य ज्ञानादिभिः सह चत्वारः , ज्ञानस्य चारित्रादिभिः सह त्रयः , चारित्रस्याभिग्रहभावनाभ्यां द्वौ अभिग्रहस्य भावनया सहैक इत्येकविंशतिः, एतेषु च एकविंशतिसंख्येषु भङ्गेषु प्रत्येकमेकैका चतुर्भङ्गिका, तद्यथा-प्रवचनतः साधर्मिको न लिङ्गतः , लिङ्गतः साधर्मिको न प्रवचनतः , प्रवचनतः साधर्म्मिको लिङ्गतश्च न प्रवचनतो न लिङ्गतश्च, शेषेषु भङ्गेषु यथास्थानं चतुर्भङ्गिका दर्शयिष्यते ।

तत्र प्रथमचतुर्भङ्गिकाया आद्यभङ्गद्वयोदाहरणमुपदर्शयति-

दस ससिहागा सावग, पवयण साहम्मिया न लिंगेण ।
लिंगेण उ साहंमी, नो पवयण निण्हगा सव्वे ॥१४६॥

प्रवचनतः साधर्म्मिका न लिङ्गेन अविरतसम्यग्दृष्ट्यारभ्य यावद्दशमीं श्रावकप्रतिमां प्रतिपन्ना ये श्रावकास्ते द्रष्टव्या , कुत इत्याह- दस ससिहागा ' इत्यत्र ' निमित्तकारणहेतुषु सर्वासां विभक्तीनां प्रायो दर्शनम् " इति न्यायाद्धेतौ प्रथमा, ततोऽयमर्थः -यतस्ते दशमीं श्रावकप्रतिमां प्रतिपन्नाः सशिखाकाः -शिखासहिताः केशसहिता एवेत्यर्थः ततस्ते प्रवचनत एव साधर्म्मिका भवन्ति- न लिङ्गतः . ये त्वेकादशीं श्रावकप्रतिमां प्रतिपन्नास्ते निष्केशा इत्यादिना लिङ्गतोऽपि साधर्मिका भवन्तीति तद्विवर्जनम् एतेषां चार्थाय यत् कृतं तत्साधूनां कल्पते, तथा लिङ्गतः साधर्म्मिका न प्रवचनतो निह्नवाः , तेषां प्रवचनबहिर्भूतत्वेन प्रवचनतः साधर्मिकत्वाभावात् , लिङ्गं तु तेषामपि रजोहरणादिकं विद्यते इति लिङ्गतः साधर्मिकाः , तेषामप्यर्थाय कृतं साधूनां कल्पते निह्नवाश्च द्विधा-लोके निह्नवत्वेन ज्ञाता अज्ञाताश्च । तत्र ये अज्ञातास्ते इह ग्राह्या अज्ञातानां लोके साधुत्वेन व्यवहरणाभावतः प्रवचनान्तर्वर्त्तित्वात् इहाद्यभङ्गद्वयेन उदाहृतं शेषमुत्तरभङ्गद्वयं स्वयमेव श्रोतारोऽवभोत्स्यन्ते । इति बुद्ध्या निर्युक्तिकृन्नोदाहृतवान् अनेनैव च कारणेन शेषाणामपि चतुर्भङ्गिकाणामाद्यमेव भङ्गद्वयमुदाहरिष्यति नोत्तरं भङ्गद्वयं वयं

तु सुखावबोधाय उदाहरिष्यामः, तत्रास्यामेव प्रथमचतुर्भङ्गिकायां प्रवचनत साधर्मिका लिङ्गतश्चेति तृतीयभङ्ग उदाहरणं साधवः एकादशीं प्रतिमा प्रतिपन्ना श्रावका वा, तत्र साधूनामर्थाय कृत न कल्पते, श्रावकाणां त्वर्थाय कृतं कल्पते, न प्रवचनत साधर्मिका नाऽपि लिङ्गतस्तीर्थकरप्रत्येकबुद्धा, तेषां प्रवचनलिङ्गातीतत्वात् तेषामर्थाय कृत कल्पते, द्वितीयाचतुर्भङ्गिका-प्रवचनत साधर्मिका, न दर्शनत, दर्शनत साधर्मिका न प्रवचनत, प्रवचनत साधर्मिका दर्शनतश्च। न प्रवचनतो न दर्शनत ।

तत्राद्यभङ्गद्वयोदाहरणमाह—

**विसरिसदंसणजुत्ता, पवयणसाहम्मिया न दंसणओ ।**
**तित्थगरा पत्तेया, नो पवयणदंसणसाहम्मी ॥ १४७ ॥**

प्रवचनत साधर्मिका न दर्शनतो विसदृशदर्शनयुक्ता -विभिन्नक्षायिकादिसम्यक्त्वयुक्ता साधव श्रावका वा किमुक्तं भवति-एकेषां साधूनां श्रावकाणां वा क्षायोपशमिक दर्शनमपरेषां त्वौपशमिकं क्षायिकं वा ते परस्परं प्रवचनत साधर्मिका न दर्शनत, तत्र साधूनामर्थाय कृतं साधूनां न कल्पते, श्रावकाणां त्वर्थाय कृत कल्पते तथा दर्शनत साधर्मिका न प्रवचनत तीर्थकरा प्रत्येकबुद्धा वा समानदर्शना वेदितव्या, तेषामर्थाय कृत साधूना कल्पते, प्रवचनत साधर्मिका दर्शनतश्च, साधव श्रावका वा समानदर्शना, अत्रापि साधूनामर्थाय कृत साधूना न कल्पते, श्रावकाणां त्वर्थाय कृत कल्पते, न प्रवचनतो नापि दर्शनतस्तीर्थकरप्रत्येकबुद्धनिह्नवा, तत्र तीर्थकरा प्रत्येकबुद्धाश्च विभिन्नदर्शना वेदितव्या निह्नवाश्च मिथ्यादृष्टय प्रतीता एव एतेषां च सर्वेषामर्थाय कृत कल्पते, तृतीया चतुर्भङ्गिका-प्रवचनत साधर्मिका न ज्ञानत, ज्ञानत साधर्मिका न प्रवचनत, प्रवचनतोऽपि साधर्मिका ज्ञानतश्च, न प्रवचनतो नापि ज्ञानत, एव चतुर्थ्यपि चतुर्भङ्गिका प्रवचनस्य चारित्रेण सह वेदितव्या ।

एतयोर्द्वयोरपि चतुर्भङ्गिकयोराद्यभङ्गद्वयमतिदेशेनोदाहरति —

**नाणचरित्ता एवं, नायव्वा होंति पवयणेणं तु ॥**

यथा प्रवचनेन सह दर्शनमुक्तमेव ज्ञानचारित्रे अपि प्रवचनेन सह ज्ञातव्ये, तद्यथा-प्रवचनत साधर्मिका न ज्ञानत, विसदृशज्ञानसहिता साधव श्रावका वा अत्रापि यदि साधवस्तर्हि न कल्पते, अथ श्रावकास्तर्हि कल्पते, ज्ञानत सार्धर्मिका न प्रवचनत, तीर्थकरा प्रत्येकबुद्धा वा समानज्ञाना, तेषामर्थाय कृत कल्पते, प्रवचनत साधर्मिका ज्ञानतश्च, साधव श्रावका वा समानज्ञाना अत्रापि साध्वर्थं कृतं न कल्पते, श्रावकाणां त्वर्थाय कृत कल्पते, न प्रवचनतो नाऽपि ज्ञानत तीर्थकरप्रत्येकबुद्धनिह्नवा, तत्र तीर्थकरा प्रत्येकबुद्धाश्च विभिन्नज्ञाना वेदितव्या, निह्नवास्तु मिथ्यादृष्टित्वादज्ञानिन प्रतीता एव, एतेषां सर्वेषामर्थाय कृतं कल्पते, तथा प्रवचनत साधर्मिका न चारित्रत साधव श्रावकाश्च, तत्र साधवो विसदृशचारित्रसहिता वेदितव्या, श्रावकाणां त्वविरतसम्यग्दृष्टीनां सर्वथा विरत्यभावेन देशविरतानां तु देशचारित्रतया चारित्रत साधर्मिकत्वाभाव सुप्रतीत, साध्वर्थं चेत् कृत न कल्पते, श्रावकार्थे चेत्तर्हि कल्पते, चारित्रत साधर्मिका न प्रवचनत, तीर्थकरप्रत्येकबुद्धा समानचारित्रा, तेषामर्थाय कृत कल्पते, प्रवचनत साधर्मिकाश्चारित्रतश्च साधव समानचारित्रा, तेषामर्थाय कृत न कल्पते, न प्रवचनतो नापि चारित्रतस्तीर्थकरप्रत्येकबुद्धनिह्नवा, तत्र तीर्थकरप्रत्येकबुद्धा विसदृशचारित्रा वेदितव्या, निह्नवास्त्वचारित्रिण एव एतेषां च सर्वेषामर्थाय कृत कल्पते । पञ्चमी चतुर्भङ्गिका-प्रवचनत साधर्मिका नाऽभिग्रहत अभिग्रहत साधर्मिका न प्रवचनत, प्रवचनतोऽपि साधर्मिका अभिग्रहतश्च, न प्रवचनतोऽपि नाप्यभिग्रहतश्च, एव षष्ठ्यपि चतुर्भङ्गिका प्रवचनस्य भावनया सह वेदितव्या ।

एतयोर्द्वयोरपि चतुर्भङ्गिकयो प्रत्येकमाद्य भङ्गद्वयमुदाहरति—

**पवयणओ साहमी, नाभिग्गहसावगा जइणो ॥ १४८ ॥**
**साहम्मऽभिग्गहेणं, नो पवयणनिण्हतित्थ पत्तेया ।**
**एवं पवयणभावण, एत्तो सेसाण वोच्छामि ॥ १४९ ॥**

प्रवचनत सार्धर्मिका नाभिग्रहत श्रावका यतयश्च विसदृशाभिग्रहसहिता, तत्र श्रावकाणामर्थाय कृत कल्पते न साधूनाम् अभिग्रहेण साधर्मिका न प्रवचनेन निह्नवतीर्थकरप्रत्येकबुद्धा, एतेषां चार्थाय कृत कल्पते, प्रवचनत साधर्मिका अभिग्रहतश्च साधव श्रावकाश्च समानाभिग्रहा, अत्रापि श्रावकाणामर्थाय कृत कल्पते न साधूना, न प्रवचनतो नाऽप्यभिग्रहत, तीर्थकरप्रत्येकबुद्धनिह्नवा विसदृशाभिग्रहकलिता निरभिग्रहा वा, तेषामर्थाय कृत कल्पते, एवम्- 'पवयणभावण' त्ति-एवं-पूर्वोक्त प्रकारेण प्रवचनभावनेति प्रवचनभावना चतुर्भङ्गिका भावनीया तद्यथा-प्रवचनत साधर्मिका न भावनात, साधव श्रावका वा विसदृशभावनाका, अत्रापि श्रावकाणामर्थाय कृत कल्पते, न साधूना, भावनात सार्धर्मिका न प्रवचनत, निह्नवतीर्थकरप्रत्येकबुद्धास्तेषामर्थाय कृत कल्पते, प्रवचनत साधर्मिका भावनातश्च, साधव श्रावकाश्च समानभावनाका, तत्र श्रावकाणामर्थाय कृत कल्पते न साधूना, न प्रवचनतो नापि भावनातस्तीर्थकरप्रत्येकबुद्धनिह्नवा विसदृशभावनाका, एतेषामर्थाय कृत कल्पते, तदेवमुक्तानि प्रवचनाश्रिताना षण्णा चतुर्भङ्गिकाना— मुदाहरणानि-'एत्तो सेसाण वोच्छामि' त्ति-इत ऊर्ध्वं शेषाणां चतुर्भङ्गिकानामुदाहरणानि वक्ष्ये ।

प्रतिज्ञातमेवातिदेशेन निर्वाहयति—

**लिंगाईहि वि एवं, एक्केक्केणं तु उवरिमा नेया ।**
**जेऽन्नेव उवरिल्ला, ते मोत्तु सेसए एवं ॥ १५० ॥**

'लिंगाईहि वि' इत्यत्र समस्यैव तृतीया। ततोऽयमर्थ -एवपूर्वोक्तेन प्रकारेण लिङ्गादिष्वपि लिङ्गदर्शनप्रभृतिष्वपि पदेषु एकैकेन लिङ्गादिना पदेन उपरितनानि-दर्शनज्ञानप्रभृतीनि पदानि नेयत्, किमुक्त भवति ?-लिङ्गदर्शनप्रभृतिषु पदेषु द्व्य

नज्ञानादिभि' पदै सह याश्चतुर्भङ्गिकास्ताः पूर्वोक्तानुसारेणोदाहरेत्, अनीवेदं संक्षिप्ततरमुक्तम्, अत' न्यक्षेण विवक्षुरिदमाह-'जेऽनन्ने' इत्यादि, ये अनन्ये उदाहरणापेक्षया अन्यादृशा न भवन्ति भङ्गास्तान् मुक्त्वा शेपकान् भङ्गकान् एवं—वक्ष्यमाणप्रकारेण जानीत, इयमत्र भावना—इह लिङ्गदर्शनयोर्ये चत्वारो भङ्गा सोदाहरणा वक्ष्यन्ते तादृशा एव प्राय उदाहरणापेक्षया लिङ्गज्ञानलिङ्गचरणयोरपि भङ्गा, ततस्तान् मुक्त्वा लिङ्गदर्शनलिङ्गाभिग्रहादिसत्कान् भङ्गानुदाहरिष्यामीति, तत्र लिङ्गदर्शनयोरियं चतुर्भङ्गिका, लिङ्गत साधर्म्मिका न दर्शनत, दर्शनत. साधर्म्मिका न लिङ्गत. लिङ्गतोऽपि साधर्म्मिका दर्शनतश्च, न लिङ्गतो नापि दर्शनत ।

तत्राऽऽद्य भङ्गद्वयमुदाहरति—

लिंगेण उ साहंमी, न दंसणे वीसुदंमि जइ निण्हा।
पत्तेयबुद्धतित्थं-करा य बीयंमि भंगम्मि ॥ १५१ ॥

लिङ्गत साधर्म्मिका 'न दंसणे' इत्यत्र तृतीयार्थे सप्तमी न दर्शनेन, विष्वग्दर्शना-विभिन्नदर्शना यतयो निह्नवाश्च उपलक्षणमेतद्विभिन्नदर्शना एकादशप्रतिमाप्रतिपन्ना श्रावकाश्च, तत्र निह्नवा मिथ्यादृष्टित्वात् न दर्शनत. साधर्मिका, अत्र च निह्नवाना श्रावकाणां चार्थाय कृत कल्पते, न यतीनां, द्वितीये भङ्गे दर्शनत साधर्मिका न लिङ्गत इत्येवरूप प्रत्यकबुद्धास्तीर्थकृत एकादशप्रतिमाप्रतिपन्नवर्जा श्रावकाश्च समानदर्शना ज्ञेया, तषामर्थाय कृत कल्पते, शेप भङ्गद्वयं वयमुदाहराम, लिङ्गत साधर्म्मिका दर्शनतश्च समानदर्शना साधव एकादर्शी प्रतिमां प्रतिपन्ना श्रावकाश्च, अत्रापि श्रावकाणामर्थाय कृत कल्पते न साधूनां, न लिङ्गतो नापि दर्शनतो विसदृशदर्शना प्रत्येकबुद्धतीर्थकरा एकादशप्रतिमाप्रतिपन्नवर्जा श्रावकाश्च तेषामर्थाय कृतं कल्पते, लिङ्गज्ञानचतुर्भङ्गिका त्वेवम्-लिङ्गत साधर्मिका न ज्ञानत, ज्ञानत साधर्मिका न लिङ्गत, लिङ्गत साधर्मिका ज्ञानतश्च, न लिङ्गतो नाऽपि ज्ञानत, अस्याश्चतुर्भङ्गिकाया आद्यभङ्गद्वयोदाहरणानि प्रायो लिङ्गदर्शनचतुर्भङ्गिकाद्यद्वयसदृशानीति कृत्वा निर्युक्तिकृन्नोदाहरति, ततो वयमेवोदाहराम-लिङ्गत. साधर्मिका न ज्ञानत, विभिन्नज्ञाना यतय एकादर्शी प्रतिमां प्रतिपन्ना श्रावका निह्नवाश्च, अत्रापि श्रावकाणा निह्नवाना चार्थाय कृतं कल्पते न यतीना, ज्ञानत साधर्मिका न लिङ्गत समानज्ञानास्तीर्थकरप्रत्येकबुद्धा एकादश प्रतिमावर्जा श्रावकाश्च, तषामर्थाय कृत कल्पते लिङ्गत साधर्मिका ज्ञानतश्च समानज्ञाना साधव एकादर्शी प्रतिमां प्रतिपन्ना श्रावकाश्च. अत्राऽपि श्रावकाणामर्थाय कृत कल्पते न यतीना, न लिङ्गतो नाऽपि ज्ञानतो विभिन्नज्ञाना प्रत्येकबुद्धतीर्थकरा एकादशप्रतिमाप्रतिपन्नवर्जा श्रावकाश्च एतेषामर्थाय कृत कल्पते । लिङ्गचरणयोरिय चतुर्भङ्गिका, लिङ्गत. साधर्मिका न चरणत १, चरणत साधर्मिका न लिङ्गत २, लिङ्गत साधर्मिकाश्चरणतश्च ३, न लिङ्गतो नापि चरणत ४ अस्या अपि चतुर्भङ्गिकाया उदाहरणानि प्राय पूर्वसदृशानीति कृत्वा निर्युक्तिकृत् नोदाहृतवान् ततोऽहमेवोदाहरामि-लिङ्गत साधर्मिका न चरणतो विभिन्नचारित्रा यतय, एकादर्शी प्रतिमा प्रतिपन्ना श्रावका निह्नवाश्च, अत्र श्रावकाणां निह्नवानां चार्थाय कृतं कल्पते न यतीनां, चरणत. साधर्मिका न लिङ्गत., प्रत्येकबुद्धास्तीर्थकृतश्च समानचारित्रा., तेषामर्थाय कृतं साधूना कल्पते, लिङ्गत. साधर्म्मिकाश्चरणतश्च समानचारित्रा यतय, तेषामर्थाय कृतं न कल्पते, न लिङ्गतो नापि चरणतो विसदृशचरणा. प्रत्येकबुद्धतीर्थकरा एकादशप्रतिमावर्जा' श्रावकाश्च, तेषामर्थाय कृतं कल्पते। लिङ्गाभिग्रहयोश्चतुर्भङ्गिका इयम्-लिङ्गत. साधर्मिका नाभिग्रहतः १, अभिग्रहत. साधर्मिका न लिङ्गत. २, लिङ्गत. साधर्मिका अभिग्रहतश्च ३, न लिङ्गतो नाप्यभिग्रहत' ४।

तत्राद्यं भङ्गत्रयमुदाहरति—

लिंगेण उ नाभिग्गह. अणभिग्गह वीसुऽभिग्गही चेव।
जइ सावग बीयभंगे, पत्तेयबुहा य तित्थयरा ॥ १५२ ॥

लिङ्गत साधर्मिका नाभिग्रहतोऽनभिग्रहा., यद्वा—विष्वग्-अभिग्रहिणो-विभिन्नाभिग्रहकलिता यतय एकादर्शी प्रतिमां प्रतिपन्ना श्रावकाश्च वेदितव्या, उपलक्षणमेतत् निह्नवाश्च, अत्रापि निह्नवाना श्रावकाणा चार्थाय कृतं कल्पते न यतीनाम् १. अभिग्रहत. साधर्मिका न लिङ्गत इत्येवंरूपे द्वितीये भङ्गे प्रत्येकबुद्धास्तीर्थकराश्चशब्दादेकादशप्रतिमावर्जा. श्रावकाश्च समानाभिग्रहा द्रष्टव्याः, एतेषामर्थाय कृत कल्पते २, लिङ्गत. साधर्मिका अभिग्रहतश्च समनाभिग्रहा. साधव एकादर्शी प्रतिमा प्रतिपन्नाः श्रावका निह्नवाश्च, अत्रापि श्रावकनिह्नवानामर्थाय कृतं कल्पते न यतीनाम् ३, न लिङ्गतो नाप्यभिग्रहतश्च विसदृशाभिग्रहास्तीर्थकरप्रत्येकबुद्धैकादशप्रतिमावर्जश्रावका., एतेषामर्थाय कृतं कल्पत। लिङ्गभावनयोरियं चतुर्भङ्गिका-लिङ्गत साधर्मिका न भावनात., भावनात साधर्मिका न लिङ्गत, लिङ्गत. साधर्मिका भावनातश्च, न लिङ्गतो नापि भावनात. ।

तत्रास्या उदाहरणान्यतिदेशेनाह-

एवं लिङ्गेण भावण,

यथा लिङ्गे अभिग्रहेण भङ्गेषूदाहृतमेवं भावनयाऽप्युदाहर्तव्यम्। तद्यथा-लिङ्गत साधर्मिका न भावनात, भावनारहिता विष्वग्भावना वा यतय एकादर्शी प्रतिमा प्रतिपन्ना श्रावका निह्नयाश्च। अत्र श्रावकनिह्नवानामर्थाय कृतं कल्पते न साधूनामर्थाय १, भावनात साधर्मिका न लिङ्गत, प्रत्यकबुद्धास्तीर्थकृत एकादर्शी प्रतिमां प्रतिपन्ना श्रावकाश्च समानभावनाका, एतेषामर्थाय कृतं कल्पते २, लिङ्गत साधर्मिका भावनातश्च समानभावनाका साधव एकादर्शी प्रतिमां प्रतिपन्ना श्रावका निह्नवाश्च, अत्रापि श्रावकनिह्नवानामर्थाय कृतं कल्पते न यतीनाम् ३, न लिङ्गतो नापि भावनातो विसदृशभावनाकास्तीर्थकरप्रत्येकबुद्धैकादशप्रतिमावर्जश्रावका, एतेषामर्थाय कृत कल्पते, तदेव लिङ्गविषया पञ्च चतुर्भङ्गिका उक्ता । संप्रति दर्शनस्य ज्ञानादिभि सह वक्तव्यास्तत्र दर्शनज्ञानयोरियं चतुर्भङ्गिका-दर्शनत. साधर्मिका न ज्ञानत १ ज्ञानत साधर्मिका न दर्शनत २ दर्शनतोऽपि साधर्म्मिका ज्ञानतश्च ३, न दर्शनतो नाऽपि ज्ञानत ४।

तत्राद्यं भङ्गद्वयमुदाहरति—

**दंसणनाणे य पढमभंगो उ ।**
**जइ सावग वीसुनाणी, एवं चिय बिइयभंगोऽवि ॥१५३॥**

दर्शनज्ञाने-दर्शनज्ञानविषयायां च समुच्चये, प्रथमो भङ्गो दर्शनतः साधर्मिका न ज्ञानत इत्येवरूपो विष्वग्ज्ञानिनः—विभिन्नज्ञानाः समानदर्शना यतयः श्रावकाश्च वेदितव्याः, तत्र श्रावकाणामर्थाय कृतं कल्पते न यतीनामर्थाय कृतम् । एवमेव ज्ञानतः साधर्मिका न दर्शनत इत्येवंरूपो द्वितीयभङ्गोऽपि ज्ञातव्यः; तत्राऽपि यतयः श्रावकाश्च वेदितव्या इत्यर्थः, केवलं विभिन्नदर्शना समानज्ञानाः, अत्रापि कल्प्याऽकल्प्यविधिः प्रागिव, ज्ञानतः साधर्मिका दर्शनतश्च समानज्ञाना समानदर्शना यतयः श्रावकाश्च, अत्राऽपि कल्प्याऽकल्प्यविधिः प्राग्वत्, न ज्ञानतो नापि दर्शनतो विसदृशज्ञानदर्शनाः साधवः श्रावका निह्नवाश्च, अत्र श्रावकनिह्नवानामर्थाय कृतं कल्पते न साधूनाम् । दर्शनचरणयोश्चतुर्भङ्गिका त्वियम्-दर्शनतः साधर्मिका न चरणतः १, चरणतः साधर्मिका न दर्शनतः २, दर्शनतोऽपि साधर्मिकाश्चरणतश्च ३, न दर्शनतो नापि चरणतः ४ ।

तत्राऽऽद्यं भङ्गद्वयमुदाहरति—

**दंसणचरणे पढमो, सावग जइणो य बीयभंगो उ ।**
**जइणो विसरिसदंसी, दंसे य अभिग्गहे वोच्छं ॥१५४॥**

दर्शनचरणे-दर्शनचरणचतुर्भङ्गिकायां प्रथमो भङ्गो दर्शनतः साधर्मिका न चरणत इत्येवरूपः समानदर्शना श्रावका विसदृशचरणा यतयश्च अत्र श्रावकाणामर्थाय कृतं कल्पते न यतीनामर्थाय कृतम् १. द्वितीयो भङ्गः पुनश्चरणतः साधर्मिका न दर्शनत इत्येवंरूपः विसदृशदर्शना समानचारित्रा यतयः, एतेषामर्थाय कृतं न कल्पते २. दर्शनतः साधर्मिकाश्चरणतश्च समानदर्शनचरणा यतयः, अत्रापि न कल्पते ३, न दर्शनतो नापि चरणतो निह्नवा विसदृशदर्शना श्रावका विसदृशचरणा यतयश्च, तत्र निह्नवश्रावकाणामर्थाय कृतं कल्पते न यतीनाम्, दर्शनाभिग्रहयोरियं चतुर्भङ्गिका-दर्शनतः साधर्मिका नाभिग्रहतः १, अभिग्रहतः साधर्मिका न दर्शनतः २, दर्शनतः साधर्मिका अभिग्रहतश्च ३, न दर्शनतो नाप्यभिग्रहतः ४, तत्राद्यं भङ्गद्वयमुदाजिहीर्षुरिदमाह—'दंसण' इत्यादि, दर्शने अभिग्रहे चाद्यभङ्गद्वयमधिकृत्योदाहरणं वक्ष्ये ।

प्रतिज्ञातमेव निर्वाहयति—

**सावग जइ वीसऽभिग्गह-पढमो बीओ य**

समानदर्शना विष्वगभिग्रहाः—विभिन्नाभिग्रहाः श्रावका यतयश्च दर्शनतः साधर्मिका नाभिग्रहत एवंरूपः प्रथमो भङ्गः अत्रापि श्रावकाणामर्थाय कृतं कल्पते, न यतीनां. द्वितीयोऽपि भङ्गोऽभिग्रहतः साधर्मिका न दर्शनत इत्येवंलक्षणः श्रावकयतिरूप एव, केवलं ते यतयः श्रावकाश्च विसदृशदर्शना समानाभिग्रहा वेदितव्याः उपलक्षणमेतत्, तेन निह्नवाश्च समानाभिग्रहा ज्ञातव्याः । अत्र श्रावकनिह्नवानामर्थाय कृतं कल्पते न यतीनां, दर्शनतः साधर्मिका अभिग्रहतश्च समानदर्शनाभिग्रहा साधुश्रावकाः, अत्रापि श्रावकाणामर्थाय कृतं कल्पते न साधूनां, दर्शनतो नाप्यभिग्रहतो विसदृशदर्शनाभिग्रहाः साधुश्रावकनिह्नवाः, अत्र कल्प्याऽकल्प्यविधिर्द्वितीयभङ्गवत् । दर्शनभावनयोरपि चतुर्भङ्गिका-दर्शनतः साधर्मिका न भावनातः १, भावनातः साधर्मिका न दर्शनतः २. दर्शनतोऽपि साधर्मिका भावनातश्च ३, न दर्शनतो नाऽपि भावनातः ४ ।

अस्या आद्यभङ्गद्वयोदाहरणातिदेशार्थमाह—

**भावणा चेवं ।**

यथा दर्शनेन अभिग्रह उदाहृत एवं भावनाऽप्युदाहर्तव्या. सा चैवम्-दर्शनतः साधर्मिका न भावनातः, विसदृशभावनाकाः समानदर्शना श्रावका यतयः १, भावनातः साधर्मिका न दर्शनतो विसदृशदर्शनसमानभावनाकाः साधवः श्रावका निह्नवाश्च २. दर्शनतः साधर्मिका भावनातश्च समानदर्शनभावनाकाः साधुश्रावकाः ३, न दर्शनतो नापि भावनातो विसदृशदर्शनभावनाकाः साधुश्रावकनिह्नवाः ४, अत्र चतुर्ष्वपि भङ्गेषु कल्प्याऽकल्प्यविधिः प्रागिव । तदेवं दर्शनविषया अपि चतस्रश्चतुर्भङ्गिका उक्ताः ।

संप्रति ज्ञानस्य चारित्रादिभिः सह वक्तव्या । ताश्चाऽतिदेशेनाह—

**नाणेण वि नेज्जेवं,**

यथा दर्शनेन सह चतस्रश्चतुर्भङ्गिका उक्ताः एवं ज्ञानेनापि सह चारित्रादीनि पदानि अधिकृत्य तिस्रश्चतुर्भङ्गिका भावनीयाः । अथैवेदं संक्षिप्तमुक्तमतः स्पष्टं विव्रियते-ज्ञानचरणयोरियं चतुर्भङ्गिका-ज्ञानतः साधर्मिका न चरणतः १, चरणतः साधर्मिका न ज्ञानतः २, ज्ञानतोऽपि साधर्मिकाश्चरणतश्च ३, न ज्ञानतोऽपि नापि चरणतः ४ । तत्र ज्ञानतः साधर्मिका न चरणतः, समानज्ञाना श्रावका विसदृशचरणसमानज्ञाना यतयश्च, अत्र श्रावकाणामर्थाय कृतं कल्पते न यतीनाम् १. चरणतः साधर्मिका न ज्ञानतो विसदृशज्ञाना समानचरणयतयः, अत्र न कल्पते २, ज्ञानतः साधर्मिकाश्चरणतश्च समानज्ञानचरणा यतयः, अत्रापि न कल्पते ३, न ज्ञानतो नापि चरणतो विसदृशज्ञानचरणा यतयो विसदृशज्ञाना श्रावका निह्नवाश्च, अत्र श्रावकनिह्नवानामर्थाय कृतं कल्पते, न यतीनाम् ४ । ज्ञानाभिग्रहयोरियं चतुर्भङ्गिका-ज्ञानतः साधर्मिका नाभिग्रहतः १, अभिग्रहतः साधर्मिका न ज्ञानतः २, ज्ञानतोऽपि साधर्मिका अभिग्रहतश्च ३, न ज्ञानतो नाप्यभिग्रहतः ४ । तत्र ज्ञानतः साधर्मिका नाभिग्रहतः समानज्ञाना विसदृशाभिग्रहा साधुश्रावकाः, अत्र श्रावकाणामर्थाय कृतं कल्पते, न साधूनाम् १, अभिग्रहतः साधर्मिका न ज्ञानतो विसदृशज्ञाना समानाभिग्रहा साधुश्रावकाः समानाभिग्रहा निह्नवाश्च अत्रापि श्रावकनिह्नवानामर्थाय कृतं कल्पते, न साधूनाम् २, ज्ञानतः साधर्मिका अभिग्रहतश्च समानज्ञानाभिग्रहाः साधुश्रावकाः, अत्र कल्प्याऽकल्प्यविधिः प्रथमभङ्ग इव ३ न ज्ञानतो नाप्यभिग्रहतो विसदृशज्ञानाभिग्रहाः साधुश्रावका विसदृशाभिग्रहा निह्नवाश्च अत्र द्वितीये भङ्ग इव कल्प्याऽकल्प्यभावना ४ ज्ञानभावनयोरियं च-

तुर्भङ्गिका-ज्ञानत साधर्म्मिका न भावनात, भावनात. साधर्मिका न ज्ञानत, ज्ञानतोऽपि साधर्मिका भावनातश्च, न ज्ञानतो नापि भावनात, तत्र-ज्ञानत. साधर्मिका न भावनात समानज्ञाना विसदृशभावनाका साधुश्रावका. १, भावनात. साधर्मिका न ज्ञानतो विसदृशज्ञाना. समानभावनाका साधुश्रावका समानभावना निह्नवाश्च २, ज्ञानत साधर्मिका भावनातश्च समानज्ञानभावनाका. साधुश्रावका ३ न ज्ञानतो नापि भावनातो विसदृशभावना. साधुश्रावका विसदृशभावना निह्नवाश्च ४ अत्र चतुर्ष्वपि भङ्गकेषु कल्प्याऽकल्प्यभावना प्रागिव । तदेवं ज्ञानविषया अपि तिस्रश्चतुर्भङ्गिका उक्ता. ।

संप्रति चरणेन सह यच्चतुर्भङ्गिकाद्वयं तदुदाहर्तुमाह—

एत्तो चरणेण वोच्छामि ॥ १५५ ॥

इत ऊर्ध्वं चरणेन सह ये द्वे चतुर्भङ्गिके तदुदाहरणानि वक्ष्ये, तत्र चरणाभिग्रहयोरिय चतुर्भङ्गिका-चरणत. साधर्मिका नाभिग्रहत, अभिग्रहत साधर्म्मिका न चरणत, चरणतोऽपि साधर्मिका अभिग्रहतश्च, न चरणतो नाप्यभिग्रहत ।

तत्राद्यं भङ्गद्वयमुदाजिहीर्षुराह—

जइणो वीमाऽभिग्गह, पढमो विय निण्ह सावगजइणो उ ।

चरणत साधर्म्मिका नाभिग्रहत इत्येवंरूप प्रथमो भङ्गः समानचरणा विसदृशाभिग्रहा-विभिन्नाभिग्रहा यतय, अत्र न कल्पते अभिग्रहत साधर्म्मिका न चरणत इत्येवंरूपो-द्वितीयो भङ्ग, समानाभिग्रहा निह्नवा श्रावका विभिन्नचरणा यतयश्च, अत्र श्रावकाणां निह्नवाना चार्थाय कृत कल्पते, न यतीनाम्, २ चरणत साधर्मिका अभिग्रहतश्च समानाभिग्रहचरणा यतय, अत्र न कल्पते ३, न चरणतो नाप्यभिग्रहत विसदृशाभिग्रहचरणा साधवो विसदृशाभिग्रहा श्रावकनिह्नवाश्च, अत्र कल्प्याऽकल्प्यभावना द्वितीयभङ्ग इव ४. चरणभावनयोरियं चतुर्भङ्गिका-चरणत साधर्म्मिका न भावनात १. भावनात साधर्म्मिका न चरणत २, चरणत साधर्म्मिका भावनातश्च ३, न चरणतो नापि भावनात ४ ।

अस्या उदाहरणान्यतिदिशन आह—

एवं तु भावणासु वि,

यथा चरणेन सहाभिग्रहे उदाहृतम् एवं भावास्वप्युदाहर्तव्यम् तच्चैवम्-चरणत साधर्म्मिका न भावनात समानचरणविभिन्नभावना यतय १, भावनात. साधर्मिका न चरणत समानभावना निह्नवा श्रावका विभिन्नचरणा यतयश्च २ चरणत साधर्मिका भावनातश्च समानचरणभावना यतयः ३, न चरणतो नापि भावनात विसदृशचरणभावना साधवो विसदृशभावना श्रावका निह्नवाश्च ४ अत्र चतुर्ष्वपि भङ्गकेषु कल्प्याऽकल्प्यविधि प्रागिव । तदेव चरणविषये अपि द्वे चतुर्भङ्गिके उक्ते ।

सम्प्रत्यभिग्रहभावनयोश्चतुर्भङ्गिका वक्तुकाम आह—

बोच्छं दोण्ह ति मागिल्लो ॥१५६॥

इत ऊर्द्ध्वं द्वयोरन्तिमयो - अभिग्रहभावनालक्षणयो पदयोश्चतुर्भङ्गिकामुदाहरणतो वक्ष्ये । तत्र तयोरियं चतुर्भङ्गिका-अभिग्रहत साधर्म्मिका न भावनात १ भावनात साधर्म्मिका नाभिग्रहत २, भावनात साधर्म्मिका अभिग्रहतश्च ३, नाभिग्रहतो नापि भावनात ४ ।

तत्राद्यं भङ्गद्वयमुदाजिहीर्षुराह—

जइणो सावगनिण्हव-पढमे बीए य हुंति भंगे य ।

अभिग्रहतः साधर्म्मिका न भावनात इत्येवंरूपे प्रथमे भङ्गे भावनात साधर्मिका नाभिग्रहत इत्येवं रूपे द्वितीये च भङ्गे यतयः श्रावका निह्नवाश्च भवन्ति, केवल प्रथमभङ्गे समानाभिग्रहा विसदृशभावना वेदितव्या., द्वितीयभङ्गे पुन. समानभावना विसदृशाभिग्रहा अभिग्रहत साधर्मिका भावनातश्च समानभावनाभिग्रहा साधुश्रावकनिह्नवा, नाभिग्रहतो नापि भावनातो विसदृशभावनाभिग्रहा. साधुश्रावकनिह्नवा । अत्र चतुर्ष्वपि भङ्गेषु श्रावकनिह्नवानामर्थाय कृत कल्पते, न साधूनामिति । तदेवमुक्ता. २१ एकविंशतिरपि चतुर्भङ्गिका ।

( ७ ) तीर्थकरस्य आधाकर्मभोजित्वम् । संप्रति सामान्यकेवलिनं तीर्थकर चाधिकृत्य कल्प्याऽकल्प्यविधिं कथयन्ति—

केवलनाणे तित्थं-करस्स नो कप्पइ कयं तु ॥ १५७ ॥

केवलज्ञाने—केवलज्ञानिन सामान्यसाधो उपलक्षणमेतत्; तेन तीर्थकरप्रत्येकबुद्धवर्ज्जानां शेषसाधूनामित्यर्थ, तीर्थकरस्य, तीर्थकरग्रहणमुपलक्षणम्, तेन प्रत्येकबुद्धस्य चार्थाय कृतं यथाक्रम न कल्पते, तुशब्दस्यानुक्तार्थसमुच्चायकत्वात् कल्पते च । इयमत्र भावना-तीर्थकरप्रत्येकबुद्धवर्ज्जशेषसाधूनामर्थाय कृतं न कल्पते, तीर्थकरप्रत्येकबुद्धाना त्वर्थाय कृत कल्पते, तथा हि-तीर्थकरनिमित्तं सुरैः कृतेऽपि समवसरणे तत्र साधूनां देशनाश्रवणार्थमुपवेशनादि कल्पते, एवं भक्ताद्यपि, एवं प्रत्येकबुद्धस्याऽपि ।

संप्रति यानाश्रित्य पूर्वोक्ता भङ्गा. संभवन्ति स तान् प्रति पादयति—

पत्तेयबुद्ध निण्हव, उवासए केवलीऽवि आसज्ज ।

खइयाइए य भावे, पडुच भंगे उ जोएज्जा ॥ १५८ ॥

प्रत्येकबुद्धान्-निह्नवान् उपासकान्-श्रावकान् केवलिनस्तीर्थकरान् अपिशब्दात्-शेषसाधूंश्चाश्रित्य तथा क्षायिकादीन् भावान् क्षायिकक्षयोपशमिकानि दर्शनानि चशब्दाद्विचित्राणि ज्ञानानि चरणाणि अभिग्रहान् भावनाश्च प्रतीत्य भङ्गान् योजयेत् ते च तथैव योजिता ।

तत्र प्रथमचतुर्भङ्गिका प्रवचनलिङ्गविषयामधिकृत्य विशेषत कल्प्याऽकल्प्यविधिमाह—

जत्थ उ तइओ भंगो, तत्थ न कप्पं तु, सेसए भयणा ।

तित्थंकरकेवलिणो, जहकप्पं नो य सेसाणं ॥ १५९ ॥

यत्र साधर्मिके तृतीयो भङ्ग प्रवचनत साधर्मिका लिङ्गतश्चेत्येवरूपस्तत्र न कल्पते, यत प्रवचनतो लिङ्गतश्च साधर्मिका प्रत्येकबुद्धतीर्थकरवर्जा यतयस्ततस्तेषा-

मर्थाय कृतं न कल्पते, तुशब्दोऽनुक्तसमुच्चयार्थः, स च श्रावकस्य एकादशीं प्रतिमां प्रतिपन्नस्य तृतीयभङ्गभाविनोऽप्यर्थाय कृतं कल्पत इति समुच्चिनोति, केचिदाहु -एकादशीं प्रतिमां प्रतिपन्नः साधुकल्प इति तस्याप्यर्थाय कृतं न कल्पते, तदयुक्तं मूलटीकायामस्यार्थस्यासम्मतत्वात्, मूलटीकायां हि लिङ्गाभिग्रहचतुर्भङ्गिकाविषय कल्प्याऽकल्प्यविधिरेवमुक्तः-' लिंग नो अभिग्गह जइ साहू न कप्पइ, गिहत्थनिग्गहव कप्पइ " त्ति। इह लिङ्गयुता गृहस्था एकादशीं प्रतिमां प्रतिपन्ना श्रावका एव लभ्यन्ते, ततस्तेषामर्थाय कृतं कल्प्यमुक्तम्, ' सेसए भयणा ' त्ति-शेषके भङ्गकत्रये भजना-विकल्पना क्वचित् कथञ्चित्कल्पते, क्वचिन्न, भङ्गचतुष्टयमप्यधिकृत्य सामान्यत उदाहरति-' तित्थंकर ' त्यादि, यथेत्युदाहरणोपन्यासार्थं । तीर्थकरकेवलिनोऽर्थाय कृतं कल्पते, इह तीर्थकर उत्पन्नकेवलज्ञान एव प्राय सर्वत्रापि भूमण्डले प्रतीतो भवति । प्रतीतस्य च तीर्थकरस्यार्थाय कृत कल्पते, नाप्रतीतस्य तत केवलिग्रहणम्, यदा पुन छद्मस्थावस्थायामपि तीर्थकरत्वेन प्रतीतो भवति । तदा तस्यामप्यवस्थायां तन्निमित्तं कृतं कल्पते, तीर्थग्रहणं च प्रत्येकबुद्धानामुपलक्षणं, तेन तेषामप्यर्थाय कृत कल्पते, ' नो य सेसाणं ' ति-शेषसाधूनामर्थाय कृतं न कल्पते इद च सामान्यत उक्तम्, ततोऽमुमेवार्थं मुपजीव्य तृतीयवर्जे शेषे भङ्गत्रये भजना स्पष्टमुपदर्श्यते-प्रवचनत साधर्मिका न लिङ्गत, एकादशप्रतिमाप्रतिपन्नवर्जा शेषश्रावकास्तेषामर्थाय कृत कल्पते, ये तु चौरादिमुषितरजोहरणादिलिङ्गा साधवस्तेषामर्थाय कृत न कल्पते द्रव्यलिङ्गापेक्षया साधर्मिकत्वाभावेऽपि भावतश्चरणसाधर्मिकत्वात्, लिङ्गत साधर्मिका न प्रवचनतो निह्नवास्ते यदि लोके निह्नवत्वेन ख्यातास्ततस्तेषामर्थाय कृत कल्पते, अन्यथा न, न प्रवचनतो न लिङ्गतस्तीर्थकरप्रत्येकबुद्धास्तेषामर्थाय कृत कल्पते, तदेव प्रथमचतुर्भङ्गिकामधिकृत्य कल्प्याऽकल्प्यविधिरुक्त एतदनुसारेण च शेषास्वपि चतुर्भङ्गिकासु विज्ञेय, स च प्रागेव प्रत्येकं दर्शित । सर्वत्राप्ययं तात्पर्यार्थोऽवधारणीय.-यदि तीर्थकरा प्रत्येकबुद्धा निह्नवा श्रावका वा तर्हि तेषामर्थाय कृतं कल्पते । साधूनामर्थाय कृत न कल्पते । तदेवमुक्त कल्प्याऽकल्प्यविधि, तदुक्तौ च- आहाकम्मियनाम '-त्यादि मूलद्वारगाथाया ' कस्स वाऽवी ' ति व्याख्यातम् । पिं० ।

आत्मघ्नपिण्डे—

जीवं उद्दिस्स कडं, कंमं सोऽवि य जया उ साहंमी ।
साऽवि य तइए भंगे, लिंगादीणं न सेसेसु ॥ ६४० ॥

जीवमुद्दिश्य यत् षट्कायविराधनया कृत सोऽपि च यदि जीव साधर्मिक —समानधर्मा भवति सोऽपि च साधर्मिको लिङ्गादीनां लिङ्गत. साधर्मिको न प्रवचनत इत्यादीनां चतुर्णां भङ्गानां तृतीये भङ्गे लिङ्गत —प्रवचनतोऽपीत्येव लक्षणे यदि वर्तते न शेषेषु तदनत्-आधाकर्म मन्तव्यम् ।

अथ तीर्थकरप्रतिमार्थं निष्पादिते तत्साधूनां किं कल्पते नवेत्याशङ्कानिरासार्थमाह—

संवट्टमेहपुप्फा, सत्थनिमित्तं कया जइ जईणं ।
न हु लब्भा पडिसिद्धुं, किं पुण पडिमट्ठमारद्धं ॥६४१॥

शास्ता-तीर्थकरस्तस्य निमित्त यानि देवै संवर्त्तकमेघपुष्पाणि समवसरणभूमौ कृतानि तानि यतीनां यदि प्रतिषेद्धुं न लभ्यानि तेषां तत्रावस्थातुं यदि कल्पते इति भाव । तर्हि किं पुन प्रतिमार्थम्-अजीवानां हेतोरारब्धं तत -पुरातन प्रतिषेधमर्हतीत्यभिप्राय ।

आह—यदि तीर्थकरार्थं संवर्तकमेघपुष्पाणि कृतानि तर्हि तस्य भगवतस्तानि प्रतिसेवमानस्य कथं न दोषो भवतीति ?, उच्यते—

तित्थयरनामगोयस्स, खयऽट्ठा अवि य दोण्णि साभव्वा ।
धम्मं कहेइ सत्था, पूयं वा सेवई तं तु ॥ ६४२ ॥

तीर्थकरनाम्नो गोत्रस्य कर्मण क्षयार्थं शास्ता भगवान् धर्मं कथयति पूजां च तामनन्तरोक्तां संवर्त्तकवातप्रभृतिकामासेवते भगवता हि तीर्थकरनामगोत्रं कर्मावश्य वेदनीयं विपाकोदयाऽऽवर्तित्वात्, तस्य च वेदने अयमेवोपायो यदग्लान्या धर्मदेशनाकरण सदेवमनुजासुरलोकविरचितायाश्च पूजाया उपजीवनम् । ' तं च कहं वेइज्जइ, अगिलाए धम्मदेसणाईहिं " तथा-" उदए जस्स सुराऽसुरनरवइनिवहेहिं पूइओ लोए । तं तित्थयरं नाम, तस्स विवागो उ केवलिणो " ॥ १ ॥ इति वचनप्रामाण्यात्, अपिचेत्यभ्युच्चये, ' दोण्णि ' त्ति-निपातो वाक्यालङ्कारे, स्वा भवति । स्वो भाव स्वभाव, यथा-आपो द्रवा चला वायुरित्यादि तस्य भाव स्वाभाव्य तस्मात् तस्य हि भगवत स्वभावोऽय यत्तया धर्मकथाविधानं पूजायाश्चाऽऽसेवनम् ।

इदमेव स्पष्टतरमाह—

खीणकसाओ अरिहा,कय किच्चो अवि य जीयमणुयत्ती ।
पडिसेवंतो वि अ तओ, अदोसवं होइ तं पूय ॥ ६४३ ॥

क्षीणा -प्रलयमुपगता कषाया -क्रोधादयो यस्य स क्षीणकषाय एवंविधोऽर्हन् तां पूजां प्रतिसेवमानोऽपि न दोषवान्, इयमत्र भावना-यो हि रागादिमान् पूजामुपजीवन् स्वात्मन्युत्कर्षं मन्यते स दोषभाग् भवति भगवतस्तु क्षीणकषायस्य पूजामुपजीवतोऽपि नास्ति स्वात्मन्युत्कर्षगन्ध ; अतो दूरापास्तप्रसरा तस्य सदोषतेति तथा कृतकृत्य -केवलज्ञानलाभान्निष्ठितार्थं तत कृतकृत्यत्वादेषोऽसौ पूजामासेवेत, न च दोषमापद्यते । अपि च-जीतमुपजीवनीया सुराऽसुरविरचिता पूजेत्येवंलक्षण कल्पमनुवर्त्तयितु शीलमस्यासौ जीतानुवर्त्ती गाथाया सकारोऽलाक्षणिक ।

आह भवत्वेव पर तीर्थकरस्य तत्प्रतिमाया वा निमित्त यत्कृतं तत्केन कारणेन यतीनां कल्पते ? उच्यते—

साहम्मिओ न सत्था, तस्स कय तेण कप्पइ जईणं ।
जं पुण पडिमाण कयं,कम्म कहा का अजीवत्ता ॥६४४॥

शास्ता-तीर्थकर साधर्मिको लिङ्गत प्रवचनतो वा न भवति तस्य लिङ्गमस्य भगवता नास्ति तथा कल्पस्थितिः, तथा

न लिङ्गत साधर्मिक . प्रवचनतोऽपि साधर्मिक· सोऽभिधीयते-यश्चतुर्वर्णसङ्घाभ्यन्तरवर्ती भवति " पवयणसंघयगेरे " इति वचनात् , भगवांश्च तत्प्रवर्तकतया न तदभ्यन्तरवर्ती किं तु सर्वस्यापि सङ्घस्यापि ततो न प्रवचनतोऽपि साधर्मिक इत्यतस्तस्य तीर्थकरस्यार्थाय कृतं यतीना कल्पते, यत्पुन प्रतिमानामर्थाय कृतं तस्य का कथा-का वार्ता सुतरा तत् कल्पते, कुत इत्याह-अजीवत्वात् , जीवमुद्दिश्य यदि यत्कृतं तदाधाकर्म भवति ' जीव उद्दिस्स कडं०॥६४०॥ " इति प्रागेवोक्तत्वात् तच्च जीवत्वमेव प्रतिमाना नास्तीति ।

अथ वसतिविषयमाधाकर्म दर्शयति—

ठाइमठाई ओसरणे अमंडवा संजयट्ठ देसे वा ।
पीढी भूमीकम्मं, निसिवतो अणुमई दोसा ॥ ६४५ ॥

' ओसरणे ' समवसरणे बहव संयता समागमिष्यन्तीति बुद्ध्या श्रावका धर्मश्रद्धया बहून् मण्डपान् कुर्यु: ते च द्विधा-स्थायिन , अस्थायिनश्च । ये समवसरणपर्वणि व्यतीते सति नोत्कील्यन्ते ते स्थायिन , ये पुनरुत्कील्यन्ते ते अस्थायिन । पुनरेकैकं द्विविधा -संयतार्थकृता, देशकृता वा । ये आधाकर्मिकास्ते संयतार्थकृता । ये तु साधूनामात्मन स्वार्थाय कृतास्ते देशकृता एतेषु तिष्ठता नाश्रपण प्रायश्चित्तम् । तथा पीठिकानाम-उपवेशनादिस्थानविशेषा ' भूमीकम्मे ' त्ति—भूमिकर्म—विषमाया भूमे समीकरणम् उपलक्षण चेद तेन समार्जनोपलेपनादिपरिग्रह । एतान्यपि पीठिकादीनि संयतार्थकृतानि देशकृतानि भवेयु । एतानि मण्डपादीनि सदोषाणि निषेवमाणस्य अनुमतिदोषा भवन्ति एतेषु क्रियमाणेषु या षण्णा जीवनिकायाना विराधना सा अनुमोदिता भवतीति भाव । बृ० १ उ० २ प्रक० ।

आधाकर्मण कल्प्याऽकल्प्यविवेक —

आहा अहे य कम्मं, आताहम्मे य अत्तकम्मे य ।
त पुण आहाकम्मं, णायव्वं कप्पते कस्स ॥ ६४६ ॥

आधाकर्म, अध कर्म. आत्मघ्नम् . आत्मकर्म चेति चत्वारि नामानि । तत्र साधूनामाधया-प्रणिधानेन यत्कर्म-षट्कायविनाशेनाशनादिनिष्पादनं तदाधाकर्म, तथा विशुद्धसंयमस्थानेभ्य प्रतिपत्त्यात्मानमविशुद्धसंयमस्थानेषु यद्वशोऽध करोति तदध कर्म । आत्मान-ज्ञानदर्शनचारित्ररूप हन्ति-विनाशयतीत्यात्मघ्नो यत्पाचकादिभवन्धि कर्म पाकादिलक्षणं ज्ञानावरणीयादिलक्षणं वा तदात्मन सवन्धि क्रियते अनेनेत्यात्मकर्म । तत्पुनराधाकर्म कस्य पुरुषस्य कल्पते न वा, यद्वा-कस्य तीर्थे कथं कल्पते, न कल्पते च । बृ० ४ उ० । ( इति 'अकप्पट्ठिय' शब्दे प्रथमभागे गतम् । )

(८) यथाक्रमं द्वाविंशति २२ जिनेषु कल्प्याऽकल्प्यविधि.-' अकप्पट्ठिय ' शब्द प्रथमभागे गत. । )

( ६ ) अशनादिषु आधाकर्मसंभव । सम्प्रति ' किंवावी ' ति द्वारावयवमाह—

किं तं आहाकम्मं, ति पुच्छिए तस्स रूवकहणऽत्थं ।
संभवपदरिसणत्थ, च तस्स असणाइय भणइ ॥१६०॥

किं तदाधाकर्मेति शिष्येण पृष्टे तत्स्वरूपकथनार्थम्—आधाकर्मस्वरूपकथनार्थम् . तस्य-आधाकर्मण संभवप्रदर्शनार्थं च अशनादिकम्-अशनपानखादिमस्वादिमं गुरुर्भणति इयमत्रभावना-अशनादिस्वरूपमाधाकर्म-अशनादावेव आधाकर्मण: संभव., ततो गुरु किमाधाकर्मेति पृष्ट सन्नशनादिकमेव वक्ति, तथा च शय्यंभवसूरिराधाकर्म दर्शयन् पिण्डैषणाध्ययने अशनादिकमभिधत्ते, तद्यथा-

" असणं पाणगं चेव, खाइमं साइमं तहा ।
जं जाणेज्ज सुणेज्जा वा, समणऽट्ठा पगडं इमं ॥१॥
तं भवे भत्तपाण तु, संजयाण अकप्पियं ।
दिंतियं पडियाइक्खे, न मे कप्पइ तारिस ' ॥ २ ॥ इति ।

संप्रत्यशनादिकमेव व्याचष्टे—

सालीमाई अवडे, फलाइ सुंठाइ साइमं होइ ।

शाल्यादिकमशनम् , ' अवट ' इति—वापीकूपतडागाद्युपलक्षणं, तत. कूपवापीतडागादौ यज्जलं तत्पान, तथा फलादि-फल नालिकेरादि , आदिशब्दाद्बिसाकिणिकापुष्पादिपरिग्रह तत् खादिमं, शुण्ठ्यादिकं स्वादिम, तत्र शुण्ठी प्रतीता, आदिशब्दात्-हरीतक्यादिपरिग्रह. ।

तदेवं व्याख्यातान्यशनादीनि—
संप्रत्येतेष्वेवाधाकर्मरूपेषु प्रत्येकं भङ्गचतुष्टयमाह—

तस्स कडनिट्ठियंमी, सुद्धमसुद्धे य चत्तारि ॥ १६१ ॥

तस्येति प्रस्तावात् साधोरर्थाय ' कृत ' मित्यत्र बुद्धावादिकर्मविवक्षायां क्तप्रत्यय . ततोऽयमर्थ.-कर्त्तुं प्रारब्ध, तथा तस्य साधोरर्थाय निष्ठितं-सर्वथा प्रासुकीकृतमिति, अत्र विषये चत्तारी' ति-चत्वारो भङ्गा भवन्ति तत्र प्रथम एष एव भङ्गस्तस्य कृत तस्य निष्ठित द्वितीय -तस्य कृतमन्यस्य निष्ठितं, तृतीय -अन्यस्य कृतं तस्य निष्ठित चतुर्थ अन्यस्य कृतमन्यस्य निष्ठितम् । तत्र प्रथमो व्याख्यात , द्वितीयादिनां तु भङ्गानामयमर्थ -पूर्वं तावत्तस्य साधोरर्थाय कृतम्-आरब्धं ततो दातु साधुविषयदानपरिणामाभावतोऽन्यस्य-आत्मन स्वपुत्रादेर्वाऽर्थाय निष्ठा नीतं, तथा प्रथमतोऽन्यस्य पुत्रादेरात्मनो वाऽर्थाय कर्त्तुमारब्ध तत साधुविषयदानपरिणामभावत. साधोरर्थाय निष्ठा नीत, तथा प्रथमत एवाऽन्यस्य निमित्तं कर्तुमारब्धमन्यस्यैव च निमित्तं निष्ठा नीतम् । एवमशने पाने खादिमे स्वादिमे च प्रत्येकं चत्वारश्चत्वारो भङ्गा भवन्ति, तत ' सुद्धमसुद्धे य ' त्ति-आर्षत्वात् शुद्धावशुद्धौ चेति द्रष्टव्यं, तत्र शुद्धौ साधोरासेवनायोग्यौ, तौ च द्वितीयचतुर्थभङ्गौ, तथा हि—क्रिया या निष्ठा प्रधाना, ततो यद्यपि प्रथमत· साधुनिमित्त क्रिया प्रारब्धा तथाऽपि निष्ठाम्-अन्यनिमित्तं नीतेति द्वितीयो भङ्ग साधो कल्पते, चतुर्थस्तु भङ्ग शुद्ध एव न तत्र विवाद , अशुद्धौ अकल्पनीयौ, तौ च प्रथमतृतीयौ तत्र प्रथम एकान्तेनाशुद्ध एव साध्वर्थं प्रारब्धत्वान्निष्ठितत्वाच्च, तृतीये तु भङ्गे यद्यपि पूर्वं न साधुनिमित्त पाकादिक्रियारम्भस्तथापि साधुनिमित्तं निष्ठा नीता, निष्ठा च प्रधानेति न कल्पते । तदेवमाधाकर्मस्वरूपमुक्तम् । पिं० ।

आधाकर्मण उत्पत्ति —

सालीघयगुलगोरस-नवेसु वल्लीफलेसु जातेसु ।

पुरणट्ठकरणसड्ढा, आहाकम्मे णिमंतणता ॥ ६३६ ॥

कस्यापि दानरुचेरभिगमश्राद्धस्य वा नवः शालिर्भूयान् गृहे समायातस्ततः स चिन्तयति-पूर्वं यतीनामदत्वा ममाऽऽत्मना परिभोक्तुं न युक्त इति परिभाव्याऽऽधाकर्म कुर्यात्, एवं घृते गुडे गोरसे नवेषु वा तुम्ब्यादिवल्लीफलेषु जातेषु पुण्यार्थं दानरुचि श्राद्ध 'करणं' ति-आधाकर्म कृत्वा साधूना निमन्त्रणं कुर्यात्। वृ० ४ उ०।

आधाकर्म सम्भवे भेदाश्च प्रदर्शिता, तस्स आहाकम्मस्स कहं सभवो हवेज्ज इमो भण्णति।

सूत्रम्—

सालीघयगुलगोरस-नवेसु वल्लीफलेसु जातेसु।
पुण्णट्ठदाणसड्ढा, आहाकंमे णिमंतणया ॥ ५७ ॥
आहाकंमे तिविहो, आहारे उवधिवसहिमादीसु।
आहाए वा कम्मं, चउव्विधं होति असणादी ॥५८॥

कस्सति दाणरुइणो अभिगमसड्ढस्स वा णवो साली घरे पवेसितो ताहे दाणसड्ढो चिंतेति—पुव्वं जतीणं दाउं पच्छा अप्पणा परिभोगं करेमि त्ति आहाकम्मं करेज्ज, जहा सालीए, एवं घृतगुडे गोरसे वा नवेसु वा तुम्ब्यादिवल्लिफलेषु जातेषु पुण्ण णिमित्तं दाणसड्ढा जया आहाकम्मं काउं साहुणो णिमंतेज्ज तस्स य आहाकम्मस्स इमे दोसा—आहाकम्म तिविधं-आहारे, उवधौ वसहीए। आदिसद्दो णामादिभेदप्रदर्शनार्थं। उत्तरभेदप्रदर्शनार्थं वा आहाए कम्मं चउव्विधं असणादिय।

गाहा—

उवही आहाकम्मं, वत्थे पाए य होति नायव्वं।
वत्थे पंचविधं पुण, तिविहं पुण होति पातम्मि ॥ ५६ ॥

उवधीआहाकम्मं दुविधं-वत्थे, पादे य। तत्थ वत्थे पंचविहं-जंगियं भंगियं, सणियं, पत्तया तिरीडपट्टं च। पादे तिविहं-लाउयं, दारुयं, मट्टियापादं च। एतेसिं वक्खाणं पूर्ववत्। नि० चू० १० उ०।

साम्प्रतमशनादिरूपस्याधाकर्मण सम्भवं प्रतिपिपादयिषु कथानकं रूपकपट्केनाह—

कोद्दवरालगगामे, वसही रमणिज्ज भिक्खमज्झाए।
खेत्तपडिलेहसंजय, सावयपुच्छुज्जुए कहणा ॥ १६२ ॥
जुज्जइ गणस्स खेत्त, नवरि गुरूणं तु नऽत्थि पाउग्गं।
सालित्ति कए रुंपण, परिभायण नियगेहेसुं ॥१६३॥
वोलेंता ते व अन्ने वा, अडंता तत्थ गोयरं।
सुणंति एसणाजुत्ता, बालादिजणसंकहा ॥ १६४ ॥
एए ते जेसिमो रद्धो, सालिकूरो घरे घरे।
दिन्नो वा सेमयं देमि, देहि वा वेंति वा इमं ॥ १६५ ॥
थके थक्कावडियं, अभत्तए सालिभत्तयं जायं।
मज्झ य पइस्स मरणं, दियरस्स य मे मया भज्जा ॥१६६॥
चाउलोदगं पि मे देहि, सालीआयामकंजियं।
किमेयति कयं नाउं, वज्जंतऽन्नं वयंति वा ॥ १६७ ॥

इह संकुलो नाम ग्राम, तत्र जिनदत्तनामा श्रावकः तस्य भार्या जिनमति, तत्र च ग्रामे कोद्रवा रालकाश्च प्राचुर्येणोत्पद्यन्ते इति तेषामेव कूरं गृहे गृहे भिक्षार्थमटन्त साधवो लभन्ते वसतिरपि स्त्रीपशुपण्डकविवर्जिता समभूतलादिगुणैरतिरमणीया कल्पनीया च प्राप्यते, स्वाध्यायोऽपि तत्र वसतामविघ्नमभिवर्द्धते, केवलं शाल्योदनो न प्राप्यत इति न केचनापि सूरयो भरेण तत्राऽवतिष्ठन्ते। अन्यदा च संकुलग्रामप्रत्यासन्ने भद्रिलाभिधाने ग्रामे केचित् सूरय समाजग्मु, तैश्च संकुलग्रामे क्षेत्रप्रत्युपेक्षणाय साधवः प्रेष्यन्ते, साधवोऽपि तत्राऽऽगत्य यथाऽऽगम जिनदत्तस्य पार्श्वे वसतिमयाचिषत, जिनदत्तेनापि च साधुदर्शनसमुच्छलितप्रमोदभरसमुद्भिन्नरोमाञ्चकञ्चुकितगात्रेण तेभ्यो वसतिः कल्पनीया उपादेशि। साधवश्च तत्र स्थिता, यथाऽऽगमं भिक्षाप्रवेशनेन बहिर्भूमौ स्थण्डिलनिरीक्षणेन च सकलमपि ग्राम प्रत्युपेक्षितवन्त, जिनदत्तोऽपि च श्रावको वसतावागत्य यथाविधि साधून् वन्दित्वा महत्तरं साधुमपृच्छत्—भगवन्! रुचितमिदं युष्मभ्य क्षेत्रम्?, सूरयोऽत्र निजसमागमेनाऽस्माकं प्रसादमाधास्यन्ति। तत स ज्येष्ठ साधुरवादीत्-वर्तमानयोगेन, ततो ज्ञातं जिनदत्तेन-यथा न रुचितमिदमेतेभ्य क्षेत्रमिति, चिन्तयति च-अन्येऽपि साधवोऽत्र समागच्छन्ति परं न केचिदत्रतिष्ठन्ते, तन्न जानामि किमत्र कारणमिति, ततः कारणपरिज्ञानाय तेषां साधूनामन्यतमं कमपि साधुमृजु ज्ञात्वा पप्रच्छ, स च यथाऽवस्थितमुक्तवान्, यथाऽत्र सर्वेऽपि गुणा विद्यन्ते गच्छस्यापि च योग्यमिदं क्षेत्रं, केवलमत्राऽऽचार्यस्य प्रायोग्य शाल्योदनो न लभ्यते, इति नाऽवस्थीयते। तत एवं कारणं परिज्ञाय तेन जिनदत्तश्रावकेण परस्माद् ग्रामात् शालिबीजमानीय निजग्रामक्षेत्रभूमिषु वापितं, ततः संपन्नो भूयान् शालि, अन्यदा च यथाविहारक्रम ते वाऽन्ये वा साधव समायासिषु., श्रावकश्च चिन्तयामास-यथैतेभ्यो मया शाल्योदनो दातव्यो येन सूरीणामिदं योग्य क्षेत्रमिति परिभाव्य साधवोऽमी सूरीनत्राऽऽनयन्ति, तत्र यदि निजगृह एव दास्यामि ततोऽन्येषु गृहेषु कोद्रवरालककूरं लभमानानामेतेषामाधाकर्मशङ्कोत्पत्स्यते तस्मात् सर्वेष्वपि स्वजनगृहेषु शालिं प्रेषयामीति, तथैव च कृत स्वजनाश्चोक्तवान् यथा स्वयमप्यमुं शालिं पक्त्वा भुञ्जत, साधुभ्योऽपि च दद्त, एव च वृत्तान्तः सर्वोऽपि बालादिभिरवजग्मे, साधवश्च भिक्षामटन्तो यथाऽऽगममेषणासमितिसमिता बालादीनामुल्लापान् शृण्वन्ति, तत्र कोऽपि बालको वक्ति एते ते साधवो येषामर्थाय गृहे गृहे शाल्योदनो निष्पादि, अन्यो भाषते साधुसम्बन्धी शाल्योदनो मह्यं जनन्या ददे, दासी वा कचिदेवं भाषते-दत्त परकीय शाल्योदन, सम्प्रत्यात्मीयं किमपि ददामि, गृहनायकोऽपि कापि भूते-दत्त शाल्योदन परकीय, संप्रत्यात्मीयं किमपि देहि, बालकोऽपि कापि कोऽप्यनभिज्ञो जननीं ब्रूते-मम साधुसम्बन्धिनं शाल्योदनं देहीति, अन्यस्त्रीपहसिन्तु महर्ष भाषते-अहो भक्ते भक्तमिदं मम्भाक संपन्नम्। इह यदवसरं अवसरानुरूपमापततिः... ग-

कावडियमित्युच्यते, ततः स एवमाह-येन-अभक्के-भक्ता-भावेऽस्माकं शालिभक्तमुदपादि. अत्रैवार्थे स लौकिकं दृष्टान्तमुदाहरति-सूग्रामे यशोधराभिधाना काचिदाभीरी, तस्या योगराजो नाम भर्ता, वत्सराजो नाम देवर, तस्य भार्या योधनी अन्यदा च मरणपर्यवसानो जीवलोको मरणं चानियतहेतुकम्—अनियतकालमिति योधनी-योगराजौ समकालं मरणमुपगतौ, ततो यशोधरा देवरं वत्सराजमयाचत-त्वं भार्याऽहं भवामीति, देवरोऽपि च-ममापि भार्या न विद्यते इति विचिन्त्य प्रतिपन्नवान्, तत सा चिन्तयामास—अहो ! अवसरे-अवसराऽऽपतितमस्माकमजायत, यस्मिन्नेवावसरे मम पति पञ्चत्वमुपाऽगमत् तस्मिन्नेवावसरे मम देवरस्यापि भार्या मृत्युमगच्छत्, ततोऽहं देवरेण भार्यात्वेन प्रतिपन्ना अन्यथा न प्रतिपद्येत । तथा कदाऽपि बालको जननीमाचष्ट-मात ! शालितण्डुलोदकमपि साधुभ्यो देहि, अन्यस्त्वाह-शालिकाञ्जिकं तत एवमादीनि बालादिजनजल्पितानि श्रुत्वा किमेतदिति पृच्छन्ति पृष्ट च सन्ति ये ऋजवस्ते यथावत् कथितवन्तो यथा युष्माकमर्थायेदं कृतमिति, ये तु मायाविन श्रावकेण वा तथा प्रज्ञापितास्ते न कथयन्ति, केवल परस्परं निरीक्षन्ते, तत एवं नूनमिदमाधाकर्मेति परिज्ञाय तानि सर्वाण्यपि गृहाणि परिहृत्याऽन्येषु भिक्षार्थमटन्ति स्म, ये च तत्र न निर्वहन्ति स्म ते तत्राऽनिर्वहन्त प्रत्यासन्ने ग्रामे भिक्षार्थमगच्छन्, एवमन्यत्राप्याधाकर्म संभवति तच्च बालादिजल्पितविशेषैरवगत्य कथानकोक्तसाधुभिरिव नियमतो निष्कलङ्कसंयममिच्छुना परिहर्त्तव्यम् ' सूत्रं तु सकलमपि सुगमं, नवरं ' रुंपण ' त्ति-रोपणम् 'परिभायण' त्ति-गृहे परिभाजनम्' से' इति-एतेभ्य 'अन्नं' ति-अन्यं ग्रामम् । तदेवमुक्तोऽशनस्याधाकर्मण संभव ।

संप्रति पानस्याऽऽह—

लोणाऽगडोदए एवं, खाणित्तु महुरोदगं ।
ढक्किएणऽच्छते ताव, जाव साहु त्ति आगया ॥१६८॥

यथा-अशनस्याधाकर्मकथानकसूचनेन संभव उक्तस्तथा पानस्याऽप्याधाकर्मणो वेदितव्य कथानकमपि तथैव,केवलमयं विशेष -क्वचिद् ग्रामे सर्वेऽपि कूपा क्षारोदका आसीरन् क्षारोदका नाम-आमलकोदका विरूपा , तत्रत्यन्त क्षारजला तथा सति ग्रामस्याप्यवस्थानानुपपत्त . ततस्तस्मिन् लवणावटे क्षेत्र क्षेत्रप्रत्युपेक्षणाय साधव समागच्छन् परिभावयन्ति स्म च यथाऽऽगमं सकलमपि क्षेत्र, ततस्तन्निवासिना श्रावकेण सादरमुपरुध्यमाना अपि साधवो नावतिष्ठन्ते, ततस्तन्मध्यवर्ती कोऽपि ऋजुकोऽनवस्थानकारण पृष्ट स च यथाऽवस्थित तस्मै कथयामास यथा-विद्यन्ते सर्वेऽप्यत्र गुणा केवलं क्षारं जलमिति नाऽवतिष्ठन्ते, ततो गतेषु तेषु साधुषु स मधु रोदकं कूप खानितवान . त खानयित्वा लोकप्रवृत्तिजनितपापभयात् फलकादिना स्थगितमुख कृत्वा तावदास्ते यावत्ते वाऽन्ये वा साधव समाययु समागतेषु च साधुषु मा मम गृहे कपोत आधाकर्मिकशङ्काऽभूदिति प्रतिगृहं तन्मधुरमुदक भाजितवान् , तत पूर्वोक्तकथानकप्रकारेण साधवो बालादीनामुल्लापानाकर्ण्याऽऽधाकर्मेति च परिज्ञाय तं ग्रामं परिहृतवन्त । एवमन्यत्राप्याधाकर्म पानीयसंभवो द्रष्टव्य', तऽपि बालाद्युल्लापविशेषै परिकलय्य कथानकोक्तसाधव इव परिहरेयुरिति । सूत्र सुगमम् ।

संप्रति खादिम-स्वादिमयोराधाकर्मणोः संभवमाह—

कक्कडिय अंबगा वा, दाडिम दक्खा य बीयपूराई ।
खाइमऽहिगरणकरणं-ति साइमं तिगडुगाईयं ॥१६९॥

कर्कटिका-चिर्भटिका आम्रकाणि—चूतफलानि दाडिमानि द्राक्षाश्च प्रतीता. बीजपूरकादिकम् , आदिशब्दात्-कपित्थाऽऽदिपरिग्रह., एतान्याश्रित्य खादिमविषये अधिकरणकरणं भवेत्-पापकरणं भवेत् , एतानि साधूनां शालनकादिकार्येषु प्रयुज्यन्ते इति तेषां वपनादि कुर्यादिति भाव. । तथा त्रिकटुकादिक-शुण्ठीपिप्पलीमरिचकादिकमाश्रित्य स्वादिमे अधिकरणकरणं भवेत्-साधूनामौषधाद्यर्थममूनि कल्पन्ते इति तेषां रोपणादि कुर्यादिति भाव ।

संप्रति यदुक्तं प्राक् ' तस्स कडनिट्ठियंमी ' त्यादि, तत्र कृतनिष्ठितशब्दयोरर्थमाह—

असणाईण चउण्ह वि, आमं जं साहुगहणपाउग्गं ।
तं निट्ठियं वियाणसु, उवक्खडं तू कडं होइ ॥ १७० ॥

अशनादीनां चतुर्णामपि मध्ये यत् आमम्-अपरिणतं सत् साधुग्रहणप्रायोग्य कृतम् प्रासुकीकृतमित्यर्थ , तं निष्ठित विजानीत उपस्कृतं तु अत्रापि बुद्धाद्यादिकर्मविवक्षाया क्तप्रत्यय । ततोऽयमर्थ —उपस्कर्तुमारब्धमिति भाव , कृत भवति ज्ञातव्यम् ।

एतदेव विशेषतो भावयति—

कंडिय तिगुणुक्कंडा उ, निट्ठिया नेगदुगुणउक्कंडा ।
निट्ठियकडा उ कूरो, आहाकम्मं दुगुणमाहु ॥ १७१ ॥

इह ये तण्डुला प्रथमत साध्वर्थमुप्तास्तत क्रमेण कण्टयां जातास्तत् काण्डना कथंभूता कण्डिता ? इत्याह-त्रिगुणोत्कण्डा.—त्रिगुण त्रीन् वारान् यावत्-उत्-प्राबल्यत कण्डनं-छटन येषां ते त्रिगुणोत्कण्डा , त्रीन् वारान्-कण्डिता इत्यर्थ , ते निष्ठिता उच्यन्ते, ये पुनर्वपनादारभ्य यावदेकगुणोत्कण्डा द्विगुणोत्कण्डा वा कृता वर्त्तन्ते ते कृता , अथवा-मा भूवन् साध्वर्थमुप्ता केवलं ये कण्टयः सन्त साध्वर्थं त्रिगुणोत्कण्डकण्डितास्ते निष्ठिता उच्यन्ते, ये त्वेकगुणोत्कण्डं द्विगुणोत्कण्डं वा कण्डितास्ते कृता । अत्र वृद्धसंप्रदायः—इह यद्येकं वारं द्वौ वा वारौ साध्वर्थं कण्डितास्तृतीयं तु वारमात्मनिमित्तं कण्डिता राद्धाश्च ते साधूना कल्पन्ते, यदि पुनरेकं द्वौ वा वारौ साध्वर्थं कण्डितास्तृतीय वारं स्वनिमित्तमेव कण्डिता राद्धास्तु आत्मनिमित्तं ते केषाचिदादेशेन एकेनान्यस्मै दत्तास्तेनाप्यन्यस्मायित्येवं यावत्सहस्रसंख्येयस्थाने गतास्तत परं गता कल्पन्ते नाऽर्वाक्, अपरेषां त्वादेशेन न कदाचिदपि यदि पुनरेकं द्वौ वा वारौ साधुनिमित्तम् आत्मनिमित्त वा कण्डितास्तृतीयं तु वारमात्मनिमित्तं राद्धा पुन साध्वर्थं ते न कल्पन्ते यदि पुनरेकं द्वौ वा वारौ

साधुनिमित्तम् आत्मनिमित्तं वा कण्डितास्तृतीय तु वारं साध्वर्थमेव तैरेव च तण्डुलै साधुनिमित्तं निष्पादित कूर स निष्ठितकृत उच्यते । निष्ठिते -आधाकर्मतण्डुलै कृता- निष्पादितो; राद्ध इत्यर्थः, निष्ठितकृत , स साधूना सर्वथा न कल्पते, कुत ? इत्याह-' आहाकम्मं ' इत्यादि, आधाकर्म प्रतीन, द्विगुणमाहुस्तीर्थकरादयस्तं निष्ठितकृतं कूर, त- त्रैकमाधाकर्मनिष्ठितनतण्डुलरूपं द्वितीयं तु पाकक्रियारूपं, तदेवमुक्तो निष्ठितकृतशब्दयोरर्थ , संप्रति चतुर्ष्वप्यशना- दिषु कृतनिष्ठितता भाव्यते तत्र वपनादारभ्य यावद् धारद्वयं कण्डन तावत् कृतत्वं, तृतीयवार तु कण्डन नि- ष्ठितत्वम् , एतच्चाऽनन्तरमेवोक्त पाने कूपादिक साधुनि- मित्तं खनितं, ततो जलमाकृष्टं, ततो यावत्प्रासुकीक्रिय- माण नाद्यापि सर्वथा प्रासुकीभवति तावत् कृत, प्रासु- कीभूत च निष्ठितं, खादिमे कर्कटिकादय. साधुनिमित्त- मुप्ता क्रमेण निष्पन्ना यावद्दात्रादिना खण्डिता., तानि च खण्डानि यावन्नाद्यापि प्रासुकीभवन्ति तावत्कृतत्वमव- सेयं, प्रासुकीभूतानि च तानि निष्ठितानि । एवं स्वादिमे- ऽपि विज्ञेयम् । सर्वत्रापि च द्वितीयचतुर्थभङ्गौ शुद्धौ, प्रथ- मतृतीयौ त्वशुद्धाविति ।

सम्प्रति खादिम-स्वादिममाश्रित्य मतान्तरं प्रतिचिक्षि- प्सुराह—

छायं पि विवज्जंती, केइ फलहेउगाइवुत्तस्स ।
तं तु न जुज्जइ जम्हा, फलं पि कप्पं विइयभंगे ॥१७२॥

इह फलहेतुकादे —फलहेतो पुष्पहेतोरन्यस्माद्वा हेतो साध्वर्थमुप्तस्य वृक्षस्य केचिदगीतार्था छायामप्याधाक- र्मिकवृक्षसंबन्धिनीति कृत्वा विवर्जयन्ति-परिहरन्ति, तत्तु छायाविवर्जनं न युज्यते, यस्मात्फलमपि यदर्थं स वृक्ष आरोपितस्तत आधाकर्मिकवृक्षसंबन्धि द्वितीये भङ्गे तस्य कृतमन्यार्थं निष्ठितमित्येवंरूपे वर्त्तमानं सत्कल्पते, कि- मुक्तं भवति ?—साध्वर्थमारोपितेऽपि कदल्यादौ वृक्षे यदा फलं निष्पद्यमान साधुसत्ताया अपनीय आत्मसत्ता- संबन्धि करोति त्रोटयति च तदा तदपि कल्पते किं पुन छाया ?, सा हि सर्वथा न साधुसत्तासंबन्धिनी विवक्षिता, न हि साधुच्छायानिमित्तं स वृक्ष आरोपितस्तत् कथं न कल्पते ? ।

परपच्चइया छाया, न वि सा रुक्खो व्व नट्ठिया कत्ता ।
नट्ठच्छाए उ दुमे. कप्पइ एवं भणंतस्स ॥ १७३ ॥

सा छाया परप्रत्ययिका-सूर्यहेतुका न वृक्षमात्रनिमित्ता, तस्मिन् सत्यपि सूर्याभावे अभावात् , तथाहि—छाया- नाम " पार्श्वत सर्वत्राऽऽतपपरिवेष्टितप्रतिनियतदेशवर्त्ती श्यामपुद्गलात्मक आतपाभाव ' इत्थंभूता च छाया सूर्य- स्यैवान्वयव्यतिरेका. चतुर्विधत्वेन द्रुमस्य, द्रुमस्तु केवल तस्या निमित्तमात्रं, नचैतावता सा दुष्यति, छायापुद्गला- ना द्रुमपुद्गलेभ्यो भिन्नत्वात् , न च वृक्ष इव-तरुरिव कर्त्ता वृक्षारोपकेण वृद्धिं नीता तद्विषयतयारूपसंकल्पस्यैवाभा- वात् ततो नाऽऽधाकर्मिकी छाया । किं च-यद्याधाकर्मिकी- च्छायेति न तस्यामवस्थान न कल्पते । तत एव परस्य भणतो यदा घनपटलैराच्छादितं गगनमण्डल भवति तदा तस्मिन् द्रुमे नष्टच्छाये सति तस्याधःशीतभयादिनाऽव- स्थान कल्पते इति प्राप्त न चैतद्युक्त तस्मात्स एव द्रुम आधाकर्मिकस्तत्संस्पृष्टाश्चाध.कतिपयप्रदेशा पूतिरिति प्रतिपत्तव्यम् , न तु छायाऽऽधाकर्मिकीति ।

पुनरपि परेषां दूषणान्तरमाह—

वड्ढइ हायइ छाया, तत्थिकं पूइयं पि व न कप्पे ।
न य आहाय सुविहिए, निव्वत्तयई रविच्छायं ॥ १७४ ॥

इह छाया तथा तथा तथा सूर्यगतिवशात् वर्द्धते ही- यते च ततो रवेरस्तमयसमये-प्रातःसमये चातिद्रा- घीयसी विवर्द्धमाना छाया सकलमपि ग्राममभिव्याप्य वर्तते, अतस्तत्संस्पृष्टं सकलमपि ग्रामसंबन्धि वसत्यादिक पूतिकमिव-तृतीयोद्गमदोषदुष्टमशनादिकमिव न कल्पते न चैतदागमोपदिष्ट तस्माऽऽधाकर्मिकी वृक्षस्य छाया, अपि च-प्रागेवैतदुक्त सूर्यप्रत्यया सा छाया न वृक्षहेतुका , न च सूर्य सुविहितानाधाय छायां निर्वर्तयति । तत. कथ- माधाकर्मिकी ? ।

यदि पुनराधाकर्मिकी भवेत् तर्हि—

अघणघणचारिगगणे , छाया नट्ठा दिया पुणो होइ ।
कप्पइ निरायवे ना-म आयवे तं विवज्जेउं ॥ १७५ ॥

अघना-विरला घना-मेघास्तेषु चारिणि -परिभ्रमणशीला यत्र इ- त्थंभूते गगने, विरलविरलेषु, नभसि मेघेषु परिभ्रमत्सु इत्यर्थ , छाया नष्टाऽपि सती दिवा पुनरपि भवति, ततो मेघैरन्तरिते सूर्ये-निरातपे-आतपाभावे तस्य वृक्षस्या- धस्तनं प्रदेशं सेवितुं कल्पते, आतपे तु तं वर्जयितुं न चायं विषयविभाग सूत्रेऽपदिश्यते न च पूर्वपुरुषा- चीर्णो नापि परेषा सम्मत , तस्मादसदेतत्परोक्तमिति । इह पूर्वं वृक्षसंबन्धित्वेन छायामाधाकर्मिकीमाशङ्क्य ' नट्ठ- च्छाए उ दुमे कप्पइ ' इत्याद्युक्तम् इदानीं तु रविकृतत्वेना- धाकर्मिकीमाशङ्क्य ' कप्पइ निरायवे नाम ' इत्याद्युक्तम् अतो न पुनरुक्तता ।

संप्रति छायानिर्दोषतानिगमनमगीतार्थधार्मिकाणा परेषा किंचिदाश्वासन च विवक्षुराह—

तम्हा न एस दोसो, संभवइ कम्मलक्खणविहूणो ।
तं पि य हु अइघिणिल्ला, वज्जेमाणा अदोसिल्ला॥१७६॥

यस्मात् फलमपि द्वितीयभङ्गे कल्पते तथा रविहेतुका छायेत्यादि चोक्त तस्मादाधाकर्मिकी छायेति यो दोष उक्त- ते स एष दोषो न संभवति. कुत ? इत्याह-कर्मलक्षणविहीन इति-अत्र हेतौ प्रथमा कर्मेति च आधाकर्मेति द्रष्टव्यं, ततोऽयमर्थ -यत आधाकर्मलक्षणविहीन एष दोष न हि तरोरिव छायाऽपि कर्त्रा वृद्धिं नीता इत्यादि तस्मान्नैष दोष संभवति अथ वा-तामपि-आधाकर्मिकवृक्षच्छायां हु -निश्चितम अतिघृणावन्त -अतिशयेन दयालयो विव- र्जयन्त परे-अदोषवन्त । तदेवमुक्तमानुषङ्गिक तदुक्तौ च 'आहाकम्मियनाम' इत्यादि मूलद्वारगाथायां ' नि यायो ' ति व्याख्यानम् ।

सम्प्रति " परपक्खो य, सपक्खो " द्वारद्वयं व्याख्यानयन् प्रसङ्गतो निष्ठित-कृतयोः स्वरूपं ताभ्यामुत्पन्नं भङ्गचतुष्टयं चाऽऽह—

परपक्खो उ गिहत्था, समणो समणी उ होइ उ सपक्खो।
फासुकडं रद्धं वा, निट्ठियमियरं कडं सव्वं ॥ १७७ ॥
तस्स कडनिट्ठियंमी, अन्नस्स कडंमि निट्ठिये तस्स।
चउभंगो इत्थभवे, चरमदुगे होइ कप्पं तु ॥१७८॥

इह परपक्षः-गृहस्थाः, श्रावकादयः, तेषामर्थाय कृतं साधूनामाधाकर्म न भवति, स्वपक्षः-श्रमणाः, साधवः, ' समणी उ ' त्ति-श्रमण्यो-व्रतिन्यः, तेषामर्थाय कृतं साधूनामाधाकर्म वेदितव्यम्, तथा प्राशु(सु)कं कृतं कण्टथादिकं सचेतनं सत् साध्वर्थं निश्चेतनीकृतं यत्र स्वयमचेतनमपि तण्डुलादिकं कृतत्वेन निष्पादितं तन्निष्ठितमित्युच्यते, इतरत् पुनरेकगुणद्विगुणकण्डिततण्डुलादिकं सर्व्वं कृतमिति। अत्र च कृत-निष्ठितविषये तस्य साधोरर्थाय कृते निष्ठिते च तथा अन्यस्याऽप्यर्थाय कृते तस्य साधोरर्थाय निष्ठिते भक्तादौ चतुर्भङ्गिका भवति, तत्र प्रथमतृतीयभङ्गौ साक्षाद्दर्शितौ द्वितीयचतुर्थौ तु हेतुगम्यौ, तौ चैवं-तस्य कृतमन्यस्य निष्ठितमन्यस्य कृतमन्यस्य निष्ठितं, तत्रोपात्तयोर्द्वयोर्भङ्गयोः चरमौ-अनुक्तौ पाश्चात्यौ द्वौ भङ्गौ, द्वितीयचतुर्थावित्यर्थः, प्रथमस्य हि द्वितीयः पाश्चात्यस्तृतीयस्य तु चतुर्थः, तत उपात्तप्रथमतृतीयभङ्गापेक्षया चरमौ द्वितीयचतुर्थौ लभ्येते, तस्मिन् चरमद्विके भवति कल्प्यमशनादि एतच्च यद्यपि प्रागेवोक्तं तथापि विस्मरणशीलानां स्मरणाय भूयोऽप्युक्तमिति न कश्चिद्दोषः। उक्तं परपक्षस्वपक्षरूपं द्वारद्वयम्।

सम्प्रति ' चउरो ' इति व्याचिख्यासुराह—

चउरो अइक्कम्मवइ-क्कमा य अइयार तह अणायारो।
निदंसिणं चउण्ह वि, आहाकम्मे निमंतणया ॥१७९॥

आधाकर्मणि विषये केनाप्यभिनवेन श्राद्धेन निमन्त्रणे कृते चत्वारो दोषाः संभवन्ति तद्यथा-अतिक्रमः १ व्यतिक्रमः २, अतीचारः ३, अनाचारश्च ४। एते चत्वारोऽपि स्वयमेव सूत्रकृता व्याख्यास्यन्ते, एतेषां च चतुर्णामपि निदर्शनं-दृष्टान्तो भावनीयः, तमपि च वदयति।

तत्र प्रथमत आधाकर्मनिमन्त्रणं भावयति—

सालीघयगुलगोरस-नवेसु वल्लीफलेसु जाएसुं।
दाणे अहिगमसड्ढे, आहायकए निमंतेइ ॥ १८० ॥

शालिषु-शाल्योदनेषु तथा घृतगुडगोरसेषु साधूनाधाय षट्कायोपमर्दनेन निष्पादितेषु नवेषु च वल्लीफलेषु जातेषु। साधुनिमित्तमचित्तीकृतेषु दान-दानविषये कोऽप्यभिनवश्राद्ध (द्धम्)-अभ्युपगमश्रावको निमन्त्रयते, यथा भगवन्! प्रतिगृह्णीत यूयमस्मद्गृहे शाल्योदनादिकमिति।

ततश्च—

आहाकम्मग्गहणे, अइक्कमाईसु वट्टए चउसु।
नेउरहारिगहत्थी, चउतिगदुगएगचलणेणं ॥ १८१ ॥

आधाकर्मग्रहणे अतिक्रमादिषु चतुर्षु दोषेषु वर्त्तते, स च यथा यथा उत्तरस्मिन्नुत्तरस्मिन् दोषे वर्त्तते, तथा तथा तद्दोषजनितात् पापादात्मानं महता कष्टेन व्यावर्त्तयितुमीश, अत्र दृष्टान्तमाह-' नेउरे ' त्यादि, इह नुपूरपण्डितायाः कथानकमतिप्रसिद्धत्वाद् बृहत्त्वाच्च न लिख्यते, किंतु-धर्मोपदेशमालाविवरणादेरवगन्तव्यम्, तत्र नूपुरं-मञ्जीरं तस्य हारो-हरणं श्वशुरकृतं तेन या प्रसिद्धा सा नूपुरहारिका, आगमे चान्यत्र नूपुरपण्डितेति प्रसिद्धा, तस्याः कथानके यो हस्ती राजपत्नीं संचारयन् प्रसिद्धः स नूपुरहारिको हस्ती स यथा ' चउतिगदुगएगचलणेणं ' ति-पश्चानुपूर्व्या योजना, एकेन द्वाभ्यां त्रिभिश्च चरणैराकाशस्थैर्महतामहत्तरेण कष्टेन आत्मानं व्यावर्त्तयितुमीशस्तथा आधाकर्मग्राह्यपि इयमत्र भावना-नूपुरहारिकाकथानके राज्ञा हस्ती स पत्नीमिण्ठाभ्यां सह छिन्नटङ्के समारोपित, ततोऽपि मिण्ठेन छिन्नटङ्कपर्वताग्रभागे व्यवस्थाप्याऽग्रेतनमेकं कंचिच्चरणमाकाशे कारित, स च तथाकारित सन् स्तोकेनैव क्लेशेन तं चरणं व्यावर्त्य तत्रैव पर्वते आत्मान स्थापयितुं शक्नोति, एवं साधुरपि कश्चिदतिक्रमाख्यं दोषं प्राप्त सन् स्तोकेनैव शुभाध्यवसायेन तं दोषं विशोध्याऽत्मानं संयमे स्थापयितुमीश, यथा च स हस्ती चरणद्वयमग्रेतनमाकाशस्थ क्लेशेन व्यावर्त्तयितु शक्नोति, एवं च साधुरपि व्यतिक्रमाख्यं दोष विशिष्टेन शुभेनाध्यवसायेन विशोधयितुमीष्टे, यथा च स हस्ती चरणत्रयमाकाशस्थमेकेन-केनापि पाश्चात्येन चरणेन स्थितो गुरुतरेण कष्टेन व्यावर्त्तयितुं क्षम., तथा साधुरप्यतीचारदोषं विशिष्टतरेण शुभेनाध्यवसायेन विशोधयितुं प्रभु., यथा च स हस्ती चरणचतुष्टयमाकाशस्थितं सर्व्वथा न व्यावर्त्तयितुमीश, किं तु-नियमतो भूमौ निपत्य विनाशमाविशति, एव साधुरप्यनाचारे वर्त्तमानो नियमतः संयमात्मानं विनाशयति। इह दृष्टान्ते चरणचतुष्टयं हस्तिना नोत्पाटितं किंतु-दार्ष्टान्तिकयोजनानुरोधात्संभावनामङ्गीकृत्य प्रतिपादितम्। पिं०।

संप्रति ' गहणे य आणाई ' इति व्याख्यानयन्नाह—

आणाइणो य दोसा, गहणे जं भणिय मह इमे ते उ।
आणाभंगऽणवत्था, मिच्छत्तविराहणा चेव ॥ १८२ ॥

यदुक्तम् ' आहाकम्मियनामे ' त्यादि मूलद्वारगाथायामाधाकर्मग्रहणे आज्ञादय -आज्ञाभङ्गादयो दोषास्ते इमे, तद्यथा-आज्ञाभङ्ग १, अनवस्था २, मिथ्यात्वम् ३, विराधना च ४।

तत्र प्रथमत आज्ञाभङ्गदोष भावयति—

आणं सव्वजिणाणं, गिण्हंतो तं अइक्कमइ लुद्धो।
आणं अइक्कमंतो, कस्साएसा कुणइ सेसं ॥ १८४ ॥

तद्-आधाकर्मिकमशनादिकं लुब्ध सन् गृह्णान सर्वेषामपि जिनानामाज्ञामतिक्रामति, जिना हि सर्वेऽप्येतदेव ब्रुवन्ति स्म-यदुत मा गृह्णन मुमुक्षवो! भिक्षव आधाकर्मिका भिक्षामिति, ततस्तद्याददानो जिनाज्ञामतिक्रामति, ता चातिक्रमन् कस्य नाम! आदेशाद्-आज्ञया शेष-केशलुञ्चनभूशयनमलिनवासोधारणप्रत्युपेक्षणाद्यनुष्ठानं करोति?, न कस्यापीति भावः, सर्व्वस्यापि सर्वज्ञाऽऽज्ञाभङ्गकारिणोऽनुष्ठानस्य ( नैष्फल्यात्। ) निष्फलत्वात्।

अनवस्थादोषं भावयति—

एक्केण कयमकज्जं, करेइ तप्पच्चया पुणो अन्नो ।
सायाबहुलपरंपर-वोच्छेओ संयमतवाणं ॥ १८५ ॥

इह प्राय सर्वेऽपि प्राणिन कर्मगुरुतया दृष्टमात्रसुखाभिलाषिणो न दीर्घसुखदर्शिनस्तत एकेनापि साधुना यदाधाकर्मपरिभोगादिलक्षणमकार्यमासेव्यते तदा तत्प्रत्ययात् तेनापि साधुना तत्त्वं विदुषापि सेवितमाधाकर्म ततो वयमपि किं न सेविष्यामहे इत्येवं तमालम्बनीकृत्यान्योऽप्यासेवते, तमप्यालम्ब्याऽन्य सेवते इत्येवं सातबहुलाना प्राणिना परंपरया सर्व्वथा व्यवच्छेद प्राप्नोति संयमतपसाम्, तद्व्यवच्छेदे च तीर्थव्यवच्छेद, यश्च भगवत्तीर्थविलोपकारी स महाऽऽशातनाभागित्यनवस्थादोषभयान्न कदाचनाऽप्याधाकर्म सेवनीयम् ।

मिथ्यात्वदोषं भावयति—

जो जहवायं न कुणइ, मिच्छद्दिट्ठी तओ हु को अन्नो ।
वड्ढेइ य मिच्छत्तं, परस्स संकं जणेमाणो ॥१८६॥

इह यद्देशकालसंहननानुरूपं यथाशक्ति यथावदनुष्ठान तत् सम्यक्त्वम्, यत उक्तमाचारसूत्रे-" ज मोणंति पासहा, त सम्मंति पासहा, ज सम्मंति पासहा, तं मोणंति पासहा " इति। ततो यो देशकालसंहननानुरूप शक्त्यनिगूहनेन यथाऽऽगमेऽभिहितं तथा न करोति तत सकाशात् कोऽन्यो मिथ्यादृष्टि ?, नैव कश्चित्, किंतु-स एव मिथ्यादृष्टीनां धुरि युज्यते, महामिथ्यादृष्टित्वात्, कथं तस्य मिथ्यादृष्टिता ? इत्यत आह-' वड्ढेइ य ' इत्यादि चशब्दो हेतौ यस्मात्स यथावादमकुर्व्वन् परस्य शङ्का जनयति, यथा-( तथाहि ) यदि यत्प्रवचने अभिधीयते तत्तत्त्वं तर्हि किमय तत्त्वं जानानोऽपि तथा न करोति ?, तस्माद् वितथमेतत् प्रवचनोक्तमिति, एव च परस्य शङ्का जनयन् मिथ्यात्व सन्तानेन वर्द्धयति । तथा च प्रवचनस्य व्यवच्छेद, शेषास्तु मिथ्यादृष्टयो नैवं प्रवचनस्य मालिन्यमापाद्य परपरया व्यवच्छेदमाधातुमीशा, तत शेषमिथ्यादृष्ट्यपेक्षयाऽसौ यथावादमकुर्व्वन् महामिथ्यादृष्टिरिति ।

अन्यच्च—

वड्ढेइ तप्पसंगं, गेही अ परस्स अप्पणो चेव ।
सजियं पि भिन्नदाढो, न मुयइ निद्धधमो पच्छा॥१८७

साधुराधाकर्म गृह्णान परस्य " एक्केण कयमकज्जं " इत्यादिरूपया पूर्वोक्तनीत्या 'तत्प्रसङ्गम्'--आधाकर्मग्रहणप्रसङ्ग वर्द्धयति आत्मनोऽपि तथाहि-सकृदपि चेदाधाकर्म गृह्णाति तर्हि तद्गतमनोज्ञरसास्वादलाम्पट्यतो भूयोऽपि तद्ग्रहणे प्रवर्त्तते, तत एवमेकदाप्याधाकर्म गृह्णन् परस्य आत्मनश्च तत्प्रसङ्ग वर्द्धयति, तत्प्रसङ्गवृद्धौ च कालेन गच्छता परस्य आत्मनश्च गृद्धि -अत्यन्तमासक्तिरुपजायते, ततो विशिष्टविशिष्टतरमनोज्ञरसास्वादनेन भिन्नदंष्ट्राको ' निद्धंधस ' अपगतसर्वथाद्याशनाको भूत्वा पश्चात् स्वय परो वा सजीवमपि-सचेतनमपि चूतफलादिकं न मुञ्चति तदमोचने च दूर दूरतरमपसर्पन् अपगतसर्वथाजिनवचनपरिणामो मिथ्यात्वमपि गच्छतीति ।



संप्रति विराधनादोषं भावयति—

खद्धे निद्धे य सया, सुत्ते हाणी तिगिच्छणे काया ।
पडियरगाण वि हाणी,कुणइ किलेस किलिस्संते॥१८८॥

आधाकर्म प्राय प्राघूर्णकस्येव गौरवेण क्रियते, ततस्तत्स्वादु स्निग्ध भवति, तस्मिश्च खद्ध-प्रचुरे स्निग्ध बहुस्नेहे भक्षिते रुजा-रोगो ज्वरविसूचिकादिरूप प्रादुर्भवति, इयमात्मविराधना, ततो रुजा पीडितस्य 'सूत्रे'-सूत्रग्रहणमुपलक्षणम् अर्थस्य च हानि तथा यदि चिकित्सा न कारयति तर्हि चिरकालसयमपरिपालनभ्रंश, अथ कारयति तर्हि चिकित्सायां क्रियमाणाया काया -तेजस्कायादयो विनाशमाविशन्ति, तथा च सति संयमविराधना, तथा प्रतिचारकाणामपि-परिपालकानामपि साधूनां तद्वैयावृत्त्यव्यापृततया सूत्रार्थहानि, षट्कायोपमर्दकारणानुमोदनाभ्यां च संयमस्यापि हानि, तथा प्रतिचारकास्तदुक्तं यावन्न प्रपारयन्ति तावत्स -क्लिश्यमान पीडा सोढुमशक्नुवन् तेभ्य कुप्यति, कुप्यश्च तेषामपि मनसि क्लेशमुत्पादयति, अथ वा-क्लिश्यमानो दीर्घकालं क्लेशमनुभवन् प्रतिचारकाणामपि जागरणत क्लेशम्-रोगमुत्पादयति, ततस्तेषामपि चिकित्साविधौ षट्कायविराधना । तदेव व्याख्याता सकलापि ' आहाकम्मियनाम ' इत्यादिका मूलगाथा ।

( १० ) सम्प्रत्याधाकर्मण एवाऽकल्प्यविधिं विभणिषु सम्बन्धमाह—

जह कम्मं तु अकप्पं, तच्छिक्कं वाऽवि भायणठियं वा ।
परिहरणं तस्सेव य, गहियमदोसं च तह भणइ॥१८९॥

यथा कर्म-आधाकर्म अकल्प्यम्-अभोज्य, यथा च तेनाऽऽधाकर्म्मणा स्पृष्टमकल्प्यं यथा च भाजनस्थितं-यस्मिन् भाजने तदाधाकर्म्म प्रक्षिप्तं तस्मिन्नाधाकर्म्मपरित्यागानन्तरमकृतकल्पत्रयप्रक्षालने यत् क्षिप्तं शुद्धमशनादि तदपि यथा न कल्प्य यथा च तस्याऽऽधाकर्मण परिहारो विध्यविधिरूपो यथा च गृहीतं सद्भक्तमदोषं भवति तथा गुरुर्भणति । अनेन यथैवागमे पिण्डविशुद्धिरभाणि तथैवाऽहमपि भणामीत्यावेदितं द्रष्टव्यम्, अनया च गाथया पञ्च द्वाराणि प्रतिपाद्यान्युक्तानि ।

सम्प्रति तान्येव शेषं प्रतिपादयन्नाह—

अब्भुज्जे गमणाइ य, पुच्छा दव्वकुलदेसभावे य ।
एवं जयते छलणा, दिट्ठंता तत्थिमे दोन्नि ॥ १९० ॥

यथा साधूनामाधाकर्म्म तत्स्पृष्टं कल्पत्रयाप्रक्षालितभाजनस्थं वा अभोज्य तथा भणनीय, तथा आधाकर्मपरिहारे गमनादिका कायक्लेशादिलक्षणा दोषा वक्तव्या, तथा विधिपरिहारे कर्त्तव्यं यथा द्रव्यकुलदेशभावे पृच्छा कर्त्तव्या चशब्दाद्-यथा च न कर्त्तव्या तथा वक्तव्यम्, एवं यतमाने प्रायश्छलनाया असम्भवो, यदि पुनरेवमपि यतमाने छलना-अशुद्धभक्तादिग्रहणरूपा भवेत् तत्तत्र दृष्टान्ताविमौ वक्ष्यमाणौ वक्तव्यौ । इह ' अब्भुज्जे ' इत्यनेन पूर्वगाथाया द्वारमय परामृष्टम्, ' गमणाइ य पुच्छा दव्व-

कुलेहसभावे य' इत्यनेन पुन परिहरणस्य विशेषो वक्तव्य उक्त, उत्तरार्द्धेन तु 'गहियमदोसं' चेत्यस्य विशेष. ।

सम्प्रति प्रथमं द्वारमाधाकर्मणोऽकल्प्यतालक्षणं व्याचिख्यासुराह—

जह वंतं तु अभोज्जं, भत्तं जइ वि य सुसक्कयं आसि ।
एवमसंजमवमणे, अणेसणिज्जं अभोज्जं तु ॥ १६१ ॥

इह यद्यपि वमनकालादर्वाक् भक्तम्-ओदनादिकं सुसंस्कृत-शोभनद्रव्यसंपर्ककृतोपस्कारमासीत्, तथापि यथा तद्वान्तमभोज्यम्, एवमसंयमवमने कृते साधोरण्येषणीयमभोज्यमेव. तुरेवकारार्थः, इयमत्र भावना-संयमप्रतिपत्तौ हि पूर्वमसंयमो वान्त -असंयमरूपं चाधाकर्म, षट्कायोपमर्द्देन तस्य निष्पन्नत्वात् न च वान्तमभ्यवहर्त्तुमुचितं विवेकिनाम्. अत- साधोरनेषणीयमभोज्यमिति ।

पुनरप्याधाकर्म्मण एवाऽभोज्यता दृष्टान्तान्तरेण समर्थयमानो गाथाद्वयमाह—

मज्जारखइयमंसा, मंसासिति कुणिमं सुणयवंतं ।
वक्खाइ अन्नउप्पा-इयं पि किं तं भवे भोज्जं ? ॥ १६२ ॥
केई भणंति पहिए, उद्दाणे मंसपेसि वोसिरणं ।
सभारिय परिवेसण, वारेइ सुओ करे घेत्तुं ॥ १६३ ॥

वक्रपुरं नाम पुरं, तत्र वसत्युग्रतेजा- पदाति, तस्य भार्या रुक्मिणी, अन्यदा च उग्रतेजसो ज्येष्ठभ्राता सोदासाभिधन प्रत्यासन्नपुरात्प्राघूर्णक समाययौ, उग्रतेजसा च भोजनाय काऽपि मांसं क्रीत्वा रुक्मिण्यै समर्पयामासे, तस्याश्च रुक्मिण्या गृहव्यापारव्यापृताया तन्मांसं मार्जारोऽभक्षत् । इतश्च सोदासोग्रतेजसोर्भोजनार्थमागमवेला, तत सा व्याकुलीबभूव । अत्रान्तरे च कापि कस्याऽपि मृतस्य कार्पटिकस्य शुना मांसं भक्षयित्वा तद्गृहप्राङ्गणप्रदेशे तस्या साक्षात्पश्यन्त्या पुरत कथमपि वातसंक्षोभादिवशादुद्वमितम् । तत साऽचिन्तयत्—यदि नाम पुनोऽपि विपणेरन्यत् मांसं क्रीत्वा समानयिष्यामि तर्हि महद्दुःखं लगिष्यति, प्राप्ता च समीप पतिज्येष्ठयोर्भोजनवेला. तस्मादेतदेव मांसं जलेन सम्यक् प्रक्षाल्य वेसवारेणोपस्करोमि, तथैव च कृतम् । समागतौ सोदासोग्रतेजसौ उपविष्टौ च भोजनार्थं, परिवेषितं तयोस्तन्मांसम्, ततो गन्धविशेषेणोग्रतेजसा विज्ञातं यथा वान्तमेतदिति, ततस्तेन साक्षेप भ्रुवमुत्पाट्य रुक्मिणी पप्रच्छे सा च साटोपभ्रूत्क्षेपदर्शनतो विस्मयी पवनधुततृणशाखेव कम्पमानवपुर्यथाऽवस्थितं कथितवती, तत परित्यज्य तन्मांस सात्तेप निर्भर्त्स्य भूयोऽन्यन्मांसं पाचिता तद्भुक्तम् । प्रथमगाथाक्षरयोजना त्वेवम्-मार्जारेण खादित-भक्षितं मांसं यस्या सा मार्जारखादितमांसा मांसाशिन उग्रतेजस स्त्री—महेला अन्यन्मांसमप्राप्नुवती श्ववान्तं कुणपं मांसं गृहीतवती तच वेसवारोपस्कारेण वर्णादिभिरन्यदिवोत्पादितमपि किं भवति भोज्यं ? नैव भवतीति भाव, एवमाधाकर्माऽपि संयमिनामभोज्यम् ॥ केचित्पुनरत्रैव कथानके एवमाहु -तस्या रुक्मिण्या गृहे कोऽप्यतीसारेण पीडितो " दुष्प्रसनामा कार्पटिक किंचित् विविक्तं स्थानं याचित्वा स्थितवान्, स चातीसारेण मांसखण्डानि व्युत्सृजति, ततः सौदासे प्राघूर्णके समागते सति भर्त्रा च समानीते मांसे मार्जारेण च तस्मिन् भक्षिते रुक्मिणी प्रत्यासन्ना समागता भोजनवेलेति भयभीता अन्यन्मांसमप्राप्नुवती तान्यतीसारव्युत्सृष्टानि मांसखण्डानि गृहीत्वा जलेन प्रक्षाल्य वेसवारेण चोपस्कृत्य भोजनायोपविष्टयो पति-ज्येष्ठयो पतिवेषितवती. अथ च सा तानि मांसखण्डानि गृह्णन्ती मृतसपत्नीपुत्रेणाग्रतेजसो आतेन गुणमित्रेण ददृशे, न च तदानीं तेन किमपि भयाद्वक्तुं शक्तं, ततो भोजनकाले तौ द्वावपि पितृ-पितृव्यौ तेन करं गृहीत्वा निवारितौ, यथा कार्पटिकातीसारसक्तान्यमूनि मांसखण्डानि तन्मा यूयं विभक्षत, तत उग्रतेजसा सा दूरं निर्भर्त्सयामासे, तत्यजे च तन्मांसम्, द्वितीयगाथाक्षरयोजना त्वेवं केचिद्भणन्ति-पथिके-पथिकस्य 'उद्दाणे' अतीसारोत्थाने मांसपेशीव्युत्सर्ज्जने ततस्तन्मांसपेशीरादाय तासां संभृत्य—वेसवारेणोपस्कृत्य परिवेषणे कृते सुत- करेण गृहीत्वा तौ पितृ-पितृव्यौ भोजनाय वारयति स्म, ततो यथापुरीषमांसमभोज्यं विवेकिनामेवमाधाकर्माऽपि साधूनामिति ।

किं च—

अविलाकरहीखीरं, ल्हसण पलंडू सुरा य गोमंसं ।
वेयसमए वि अमयं, किंचि अभोज्जं अपेज्जं च ॥१६४॥

अविला-ऊरणी करभी- उष्ट्री तयो क्षीरं, तथा लशुनम्-पलाण्डु सुरा गोमांसं च वेदे यथायोगं शेषेषु च समयेषु-निर्द्धर्मप्रणीतेषु अमतम्-असम्मतं भोजने पाने च, तथा जिनशासनेऽपि किंचिदाधाकर्मिकादिरूपमभोज्यमपेयं च वेदितव्यम् । इयमत्र भावना-पूर्वमिह संयमप्रतिपत्तावसंयमवमनेनाधाकर्मापि साधुभिर्वान्तं, पुरीषमिवोत्सृष्टं वा, नच वान्तं पुरीषं वा भोक्तुमुचितं विवेकिनामिति युक्तिवशादभोज्यमुक्तमाधाकर्म्म । अथवा-मा भूत् युक्ति, केवलं वचनप्रामाण्यादभोज्यमवसेयं, तथा च मिथ्यादृष्टयोऽपि वेदेषु यथायोगमन्येष्वपि समयेषु गोमांसादिकं करभीक्षीरादिकं चाभोज्यमपेयं चाभिधीयमानं वचनप्रामाण्याभ्युपगमतस्तथेति प्रतिपद्यन्ते । तद्यदि मिथ्यादृष्ट्योऽपि स्वसमयवचनप्रामाण्याभ्युपगमतस्तथेति प्रतिपन्नास्ततः साधुभिर्भगवति सर्वज्ञे प्रत्ययदार्ढ्यमवलम्बमानैर्विशेषतो भगवत्प्रणीते वचस्यभिधीयमानमाधाकर्मादिकमभोज्यमपेयं च तथेति प्रतिपत्तव्यम् ।

संप्रति तत्स्पृष्टस्याऽकल्प्यतामाह—

वन्नाइजुयावि बली, सपललफलसेहरा असुइनत्था ।
असुइस्स विप्पुसेण वि,जह छिक्काओ अभोज्जाओ ।१६५।

यथा वर्णादियुतोऽपि बलि -उपहार. सपललफलशेखरः इह पललं-तिलक्षोद उच्यते फलं-नालिकेरादि तत्सहित -शेखर -शिखा यस्य स तथा, आस्तामनेवंविध इत्यपिशब्दार्थ, एतेनास्य प्राधान्यमुक्तं, स एवंविधोऽपि यदा अशुचौ न्यस्त -पुरीषस्योपरि स्थापित सन् अशुचेः विप्रुषापि-लवेनापि, आस्तां स्तवकादिनेत्यपिशब्दार्थ, स्पृष्टो

भवति तदा अभोज्यो भवति, एव निर्दोषतया भोज्योऽप्याहार आधाकर्मावयवसंस्पृष्टतया साधूनामभोज्यो वेदितव्य.।

भोजनस्थितस्याऽकल्प्यता भावयति—

एमेव उज्झियंमि वि, आहाकम्ममि अकयए कप्पे।
होइ अभोज्जं भाणे, जत्थ व सुद्धेऽवि तं पडियं ॥१९६॥

यथा आधाकर्मावयवेन संस्पृष्टमभोज्यम् एव, यस्मिन् भाजने तदाधाकर्म गृहीतं तस्मिन्नाधाकर्मण्युज्झितेऽपि अकृते-कल्पे-वक्ष्यमाणप्रकारेण कल्पत्रयेणाप्रक्षालिते, यद्वा-यत्र भाजने पूर्वं शुद्धेऽपि भक्ते गृहीते आधाकर्म स्तोकमात्रं पतितं तस्मिन् भाजने पूर्वगृहीते शुद्धे आधाकर्मणि च सर्वात्मना त्यक्ते पश्चादकृतकल्पे-वक्ष्यमाणप्रकारेणाकृतकल्पत्रये यद् भूय शुद्धमपि प्रक्षिप्यते तदभोज्यमवसेयं, न खलु लोकेऽपि यस्मिन् भाजने पुरीषं न्यपतत् तस्मिन्नशुचिपरित्यागानन्तरमप्रक्षालिते, यद्वा—यस्मिन् भाजने भक्तादिना पूर्णेऽपि तदुपरि पुरीषं निपतितं भवेत् तस्मिन् पूर्वपरिगृहीतभक्तादिपुरीषपरित्यागानन्तरमप्रक्षालिते भूय प्रक्षिप्तमशनादिकं भोज्यं भवति, पुरीषस्थानीयं च सयमिनामाधाकर्म, ततस्तस्मिन् सर्वात्मना परित्यक्तेऽपि पश्चाददत्ते कल्पत्रये भाजने यत्प्रक्षिप्यते तदभोज्यमवसेयम्।

संप्रति परिहरणं प्रतिपिपादयिषुरिदमाह-

वंतुच्चारसरिच्छं, कम्मं सोउमवि कोविओ भीओ।
परिहरइ सावि य दुहा,विहिअविहीए य परिहरणा १९७।

वान्तसदृशम्—उच्चारसदृशं च आधाकर्म यतीन् प्रति प्रतिपाद्यमानं श्रुत्वा अपि संभावने, समाव्यते एतन्नियमन कोविद -संसारविमुखप्रज्ञतया पण्डितोऽत एव भीत -आधाकर्मभोगतः संसारो भवतीत्याधाकर्मणस्त्रस्तदाधाकर्म परिहरति-न गृह्णाति, परिहरणं च द्विधा-विधिना, अविधिना च। सूत्रे च परिहरणशब्दस्य स्त्रीत्वेन निर्देश. प्राकृतत्वात्, "प्राकृते हि लिङ्ग व्यभिचारि"।

तत्राऽविधिपरिहरणे विभणिषु कथानक गाथात्रयेणाह—

सालीओयणहत्थं, दट्ठुं भणई अकोविओ दिंतिं।
कत्तो चउत्ति साली, वणि जाणइ पुच्छ तं गंतु ॥१९८॥
गंतूण आवण सो, वाणियग पुच्छए कओ साली?।
पच्चंते मगहाए, गोब्बरगामो तहिं वयइ ॥१९९॥
कम्मासंकाएँ पहं, मोत्तुं कंटाहि सावया अदिसिं।
छाय पि वज्जयंतो, डज्झइ उण्हेण मुच्छाई ॥ २०० ॥

शालिग्रामे ग्रामे ग्रामणीनामा वणिक् तस्य भार्याऽपि ग्रामणी. अन्यदा च वणिजि विपणिं गते भिक्षार्थमटन् अकोविद कोऽपि साधुस्तद्गृहं प्रविवेश, आनीतश्च तद्भार्यया ग्रामण्या शाल्योदन, साधुना चाऽऽधाकर्मदोषाऽऽशङ्कापनोदाय सा पप्रच्छे, यथा श्राविके! कुतस्त्य एष शालि? इति, सा प्रत्युवाच-नाहं जाने, वणिग्जानाति, ततो वणिज विपणौ गत्वा पृच्छ इति, तत एवमुक्त सन् स साधुस्तं शाल्योदनमपहाय वणिजं विपणौ गत्वा पृष्टवान्, वणिजाऽप्युक्त मगधजनपदप्रत्यन्तवर्तिनो गोर्बरग्रामादागत शालिरेष इति, तत स तत्र गन्तुं प्रावर्तत, तथापि साधुनिमित्तं केनापि श्रावकेणाऽयं पन्था कृतो भविष्यतीति आधाकर्मशङ्कया पन्थानं विमुच्योत्पथेन व्रजति, उत्पथेन व्रजन्नहिकण्टकश्वापदादिभिरभिद्रूयते, नापि काञ्चन दिशं जानाति, तथा आधाकर्मशङ्कया वृक्षच्छायामपि परिहरन् मूर्ध्नि सूर्यकरनिकरप्रपातेन तप्यमानो मूर्च्छामगमत्, क्लेश च महान्तं प्रापेति।

इय अविहीपरिहरणा, नाणाईणं न होइ आभागी।
दव्वकुलदेसभावे, विहिपरिहरणा इमा तत्थ ॥ २०१ ॥

इति-एवम् उक्तेन प्रकारेण अविधिना परिहरणात् ज्ञानादीनामाभागी न भवति, तस्माद्विधिना परिहरणा कर्त्तव्या, तत्र-विधिपरिहरणम् इदं-वक्ष्यमाणं द्रव्यकुलदेशभावानाश्रित्य तत्र-आधाकर्मणि विषये द्रष्टव्यम्।

तत्र प्रथमतो द्रव्यादीन्येव गाथाद्वयेनाऽऽह—

ओयणसमिइमसत्तुग-कुम्मासाई उ होंति दव्वाइं।
बहुजणमप्पजणं वा, कुलं तु देसो सुरट्ठाऽऽई ॥२०२॥
आयरऽणायरभावे, सयं व अन्नेण वाऽवि दावणया।
एएसिं तु पयाणं, चउपयतिपया व भयणा उ ॥२०३॥

ओदन -शाल्यादिकूर. समितिमा -मण्डादिका सक्तव कुल्माषाश्च प्रतीता, आदिशब्दात्-मुद्गादिपरिग्रह, अमूनि भवन्ति द्रव्याणि, कुलम्-अल्पजन बहुजनं वा देश -सौराष्ट्रादिक भावे आदरोऽनादरो वा एतावेव स्वरूपतो व्याख्यानयति—स्वयं वा अन्येन वा कर्मकरादिना यत् दापनं तौ यथासंख्यमादरानादरौ, एतेषां च पदानां भजना-विकल्पना चतुष्पदा त्रिपदा वा स्यात्, किमुक्तं भवति?-कदाचिच्चत्वार्यपि पदानि संभवन्ति कदाचित्त्रीणि तत्र यदा चत्वार्यपि द्रव्यादीनि प्राप्यन्ते तदा चतुष्पदा, यदा तु आदरो नाप्यनादर केवल मध्यस्थवृत्तिता तदा भावस्याऽभावात् त्रिपदेति।

संप्रति यादृशेषु द्रव्यादिषु सत्सु पृच्छा कर्त्तव्या यादृशेषु न कर्त्तव्या तान्याह—

अणुचिय देसं दव्वं, कुलमप्पं आयरो य तो पुच्छा।
बहुएऽवि नऽत्थि पुच्छा,सदेसदविए अभावेऽवि ।२०४।

यदा अनुचितदेशम्-विवक्षितदेशासंभवि द्रव्य लभ्यते तदपि च प्रभूत एतच्च 'आयरो य' इत्यत्र चशब्दाल्लभ्यते, एतेन द्रव्यदेशावुक्तौ. कुलमपि च अल्पमल्पजन अनेन कुलमुक्तम् आदरश्च प्रभूत, एतेन भाव उक्त, ततो भवति पृच्छा, आधाकर्मसंभवात्, बहुकेऽपि च स्वदेशद्रव्येप्रभूतेऽपि च तद्देशसंभविनि लभ्यमाने द्रव्ये यथा मालवके मण्डकादौ नास्ति पृच्छा, यत्र हि देशे यद् द्रव्यमुत्पद्यते तत्र तत्प्राय प्राचुर्येण जनभुज्यत इति नास्ति तत्र बहुकेऽपि लभ्यमाने पृच्छा, आधाकर्माऽसंभवात्, पर तत्रापि कुल महदपेक्षणीयम्, अन्यथाऽल्पजने भवेदाधाकर्मेति शङ्का न निवर्त्तते। तथा-अभावेऽपि-अनादरेऽपि नास्ति पृच्छा, यो ह्याधाकर्म कृत्वा ददाति स प्राय आदरमपि कुर्यात्, तत आदराऽकरणेन ज्ञायते यथा नास्ति तत्राऽऽधा-

कर्मेति न पृच्छा । तदेव यदा पृच्छा कर्त्तव्या यदा च न कर्त्तव्या तत्प्रतिपादितम् ।

संप्रति पृच्छायां कृतायां यदा तद् ग्राह्यं भवति यदा च न तदेतत्प्रतिपादयति-

तुज्झऽट्ठाए कयमिणं-मन्नोऽन्नमवेक्खए य सविलक्खं।
वज्जेंति गाढरुट्ठा, का मे तत्ति त्ति वा गिएहं ॥ २०५ ॥

इह या दात्री ऋज्वी भवति सा पृष्टा सती यथावत् कथयति,यथा भगवन्! तवाऽर्थाय कृतमिदमशनादिकमिति, यत्तु भवति मायाविकुटुम्बं तन्मुखेनैवमाचष्टे-गृहार्थमेतत् कृत, न तवाऽर्थायेति, परं ज्ञाता वयमिति सविलक्षणं सर्वाण्यपि मानुषाणि परस्परमवेक्ष्यन्ते कपोलोद्भिन्नमात्र च हसन्ति, ततो यदा तवाऽर्थायेद कृतमशनादिकमिति जल्पन्ति, यद्वा-सविलक्षं-सलज्जमन्योऽन्यम् अवेक्षन्ते चशब्दाद् हसन्ति वा, तदा साधवस्तद्देयमाधाकर्मेति परिज्ञाय वर्जयन्ति, यदा तु कस्यार्थायेदं कृतमिति पृष्टा सती गाढं सत्यवृत्त्या रुष्टा भवति यथा का 'मे' भट्टारक! तव तृ(त)प्तिः इति तदा नैवाधाकर्मेति नि शङ्कं गृह्णीत ।

सम्प्रति " गहियमदोसं च " इत्यवयवं व्याचिख्यासुः परं प्रस्तयति-

गूढायारा ण करेंति, आयरं पुच्छिया वि न कहेंति ।
थोवंति व णो पुट्ठा, तं च असुद्धं कहं तत्थ ॥ २०६ ॥

इह ये श्रावका श्राविकाश्चाऽतीव भक्तिपरवशगा गूढाचाराश्च ते नाऽऽदरमतिशयेन कुर्वन्ति मा भूत् न ग्रहीष्यतीति नापि पृष्टा सन्तो यथावत् कथयन्ति, यथा तवाऽर्थायेदं कृतमिति, अथवा-स्तोकमिति कृत्वा ते साधुना न पृष्टाः, अथ च तद् देयं वस्तु अशुद्धम्-आधाकर्मदोषदुष्टम्, अतः कथं तत्र साधोः शुद्धिर्भविष्यति इति ।

एवं परेणोक्ते गुरुराह-

आहाकम्मपरिणओ, फासुयभोई वि बंधओ होइ ।
सुद्धं गवेसमाणो, आहाकम्मे वि सो सुद्धो ॥ २०७ ॥

इह प्रासु (शु)कग्रहणेन एषणीयमुच्यते, सामर्थ्यात्, तथाहि-साधूनामय कल्पो-ग्लानादिप्रयोजनेऽपि प्रथमतस्तावदेषणीयमेषितव्यम्, तदभावेऽनेषणीयमपि श्रावकादिना कारयित्वा श्रावकाभावे स्वयमपि कृत्वा भोक्तव्यं, नतु कदाचनापि प्रासुकाभावेऽप्रासुकमिति ततः कदाचिदप्यप्रासुकभोजनाऽसंभवे ' फासुयभोई वी ' ति-वाक्यमनुपपद्यमानम् अर्थात् प्रासुकशब्दमेषणीयं वर्त्तयति ततोऽयमर्थः - प्रासुकभाज्यपि-एषणीयभोज्यपि यद्याधाकर्मपरिणतस्तर्हि सोऽशुभकर्मणां बन्धको भवति, अशुभपरिणामस्यैव वस्तुस्थित्या बन्धकारणत्वात्, शुद्धम्-उद्गमादिदोषरहितं पुनर्गवेषयन्नाधाकर्मण्यपि गृहीते भुक्ते च स शुद्धो वेदितव्य । शुद्धपरिणामयुक्तत्वात् ।

एतदेव कथानकाभ्यां भावयति-

संघुद्दिट्ठं सोउं, एइ दूय कोइ साडए पत्तो ।
दिन्नं ति देहि मज्झं-ति गाउ साउं तओ लग्गो॥२०८॥

शतमुखं नाम पुरं, तत्र गुणचन्द्रः श्रेष्ठी, चन्द्रिका तस्य भार्या, श्रेष्ठी च जिनप्रवचनानुरक्तो हिमगिरिशिखरानुकारि जिनमन्दिरं कारयित्वा तत्र युगादिजिनप्रतिमां प्रतिष्ठापितवान्, ततः सङ्घभोज्यं दापयितुमारब्धम् । इतश्च प्रत्यासन्ने कस्मिंश्चिद् ग्रामे कोऽपि साधुवेषविडम्बकः साधुर्वर्त्तते । तेन च जनपरंपरया शुश्रुवे । यथा शतमुखपुरे गुणचन्द्रः श्रेष्ठी सङ्घभोज्यमद्य ददातीति । ततः स तद्ग्रहणाय सत्वरमाजगाम । सङ्घभक्तं च सर्वं दत्तं तेन च श्रेष्ठी याचितो यथा मह्यं देहि, श्रेष्ठिना च चन्द्रिका अभ्यधायि-देहि साधवेऽस्मै भक्तमिति । सा प्रत्युवाच-दत्तं सर्वं न किमपीदानीं वर्त्तते, ततः श्रेष्ठिना सा पुनरप्यभाणि-देहि निजरसवतीमध्यात्परिपूर्णमस्मायिति । तत सा शाल्योदनमोदकादिपरिपूर्णमदात्, साधुश्च सङ्घभक्तमिति बुद्ध्या परिगृह्य स्वोपाश्रये भुक्तवान् । तत स शुद्धमपि स भुञ्जान आधाकर्मग्रहणपरिणामवशादाधाकर्मपरिभोगजनितेन कर्मणा बद्ध । एवमन्योऽपि वेदितव्य । सूत्रं सुगमं नवरम् ' देहि मज्झति गाउ ' त्ति-भार्यया दत्तमित्युक्ते श्रेष्ठी वभाण देहि मम मध्यात्-मदीयभोजनमध्यात् । दत्ते च स्वादुमिष्टमिदं सङ्घभक्तमिति भुञ्जानो विचिन्तयति । ततो लग्न आधाकर्मपरिभोगजनितकर्मणा बद्ध । तदेवम्-' आधाकम्मपरिणओ ' इत्यादिकथानकेन भावितम् ।

संप्रति 'सुद्धं गवेसमाणो' इत्यादि कथानकेन भावयति—

मासियपारणगट्ठा, गमणं आसन्नगामगे खमए ।
सड्ढीपायसकरणं, कयाइ अज्जेजिही खमओ ॥ २०९ ॥

खेल्लग-मल्लगलेच्छा-रियाणि डिंभगनिब्भच्छणं च रुटंणया।
हंदि समणत्ति पायस-घयगुलजुयजावणट्ठाए ॥ २१० ॥

एगंतमवक्कमणं, जइ साहू इज्ज होज्ज तिन्नोमि ।
तणुकोट्ठमि अमुच्छा, भुत्तंमि य केवलं नाणं ॥२११॥

पोतनपुरं नाम नगर, तत्र पञ्चभि साधुशतैः परिवृता यथाऽऽगमं विहरन्तो रत्नाकरनामानः सूरयः समाययुः, तस्याश्च साधुपञ्चशत्या मध्ये प्रियंकरो नाम क्षपक, स च मासमासपर्यन्ते पारणकं विदधाति, ततो मासक्षपणपर्यन्ते मा कोऽपि मदीयं पारणकमवबुद्ध्याऽऽधाकर्मादिकं कार्षीदित्यज्ञात एव प्रत्यासन्ने ग्रामे पारणार्थं व्रजामीति चेतसि विचिन्त्य प्रत्यासन्ने क्वचिद्ग्रामे जगाम । तत्र च यशोमतिर्नामश्राविका तया च तस्य क्षपकस्य मासक्षपणकं पारणकदिनं च जनपरंपरया श्रुतं, ततस्तया तस्मिन् पारणकदिने कदाचिदद्य स क्षपकोऽत्र पारणककरणाय समागच्छेदिति बुद्ध्या परमभक्तिवशतो विशिष्टशालितण्डुलैः पायसमपच्यत, घृतगुडादीनि च उपबृंहकद्रव्याणि प्रत्यासन्नीकृतानि ततो मा साधुः पायसमुत्तमं द्रव्यमिति कृत्वा आधाकर्मशङ्कां कार्षीदिति मातृस्थानतो घटादिपात्रैः कृतेषु शरावाकारेषु भाजनेषु डिम्भयोग्या स्तोका स्तोका चैरेयी प्रक्षिप्ता भणिताश्च डिम्भा यथा रे बालका । यदा क्षपकः साधुरीदृशस्तादृशो वा समायाति तदा यूय भणत-हे अम्ब ! प्रभूताऽस्माकं चैरेयी परिवेषिता ततो न शक्नुमो भोक्तुम्, एवं च उक्तेऽहं युष्मान्निर्भ-

रंसयिष्यामि, ततो यूयं भणत किं दिने दिने पायसमुपस्क्रियत । एवं च बालकेषु शिक्षितेषु तस्मिन्नेव प्रस्तावे स क्षपको भिक्षामटन् कथमपि तस्या एव गृहं प्रथमतो जगाम, तदा सा यशोमतिरन्तः समुल्लसत्परमभक्तिर्मा साधोः काऽपि शङ्का भूदिति बहिरादरम् अकुर्वती यथास्वभावमवतिष्ठते । बालकाश्च यथाशिक्षितं भणितुं प्रवृत्ताः, तथैव च तया निर्भर्त्सितास्ततः सरूपेवाऽनादरपरया क्षपकोऽपि तया बभणे, यथा अमी मत्ता बालकाः पायसमपि नैतेभ्यो रोचते, तर्हि ततो यदि युष्मभ्यमपि रोचते गृहीत स्वैर्यो नोचेत् व्रजत इति । तत एवमुक्ते स क्षपकसाधुर्निःशङ्को भूत्वा पायसं प्रतिगृहीतुमुद्यतः, साऽपि परमभक्तिमुद्वहन्ती परिपूर्णभाजनभरणं पायसं घृतगुडादिकं च दत्तवती । साधुश्च मनसि निःशङ्को भूत्वा पायसं गृहीत्वा भोजनाय वृक्षस्य कस्यचिदधस्ताद् गतवान्, गत्वा च यथाविधि ईर्यापथिकादि प्रतिक्रम्य स्वाध्यायं च कियन्तं कृत्वा चिन्तयामास-अहो लब्धमुत्कृष्टं मया पायसद्रव्यं घृतगुडादि च, ततो यदि कोऽपि साधुरागत्य संविभागयति मा तर्हि भवामि संसारार्णवोत्तीर्णो यतो निरन्तरं ये स्वाध्यायनिषण्णचेतसः प्रतिक्षणं परिभावयन्ति सकलमपि यथाऽवस्थितवस्तुजातम् अत एव च दुःखरूपात्संसाराद्विमुखबुद्धयो मोक्षविधायकतानां यथाशक्ति गुर्वादिषु वैयावृत्त्योद्यता ये वा परोपदेशप्रवणाः स्वयं सम्यक् संयमानुष्ठानविधायिनश्च तेषां संविभागे कृते तद्गतं ज्ञानाद्युपष्टम्भं भवति ज्ञानाद्युपष्टम्भे च मम महान् लाभः, शरीरकं पुनरिदमसारं प्रायो निरुपकारि च । ततो येन तेन वोपष्टम्भं सुखेन वहतीत्येवं भुञ्जानोऽपि शरीरमूर्च्छारहितः प्रवर्द्धमानविशुद्धाध्यवसायो भोजनानन्तरं केवलज्ञानमासादितवान्, सूत्रं सुगमम् । नवरम् 'खेल्लगमल्लगलिच्छारियाणि' त्ति-मल्लकं-शरावं तदाकाराणि यानि खेल्लकानि-वटादिपत्रकृतानि भाजनानि-द्रोणा(दूता)नीत्यर्थः, तानि 'लिच्छारियाणि' डिम्भकयोग्यस्तोकस्तोकपायसप्रक्षेपणेन खरण्टितानीव खरण्टितानि कृतानि कण्टणया इत्यवज्ञया हन्दीत्यामन्त्रणे, भो श्रमण ! यदि रोचते तर्हि गृहाण शेषं वत अप्रीत्यपनयाय घृतगुडयुतं पायसं गृहीत्वा एकान्ते अवक्रमणं, शेषं सुगमम् । एवमन्येषामपि भावतः शुद्धं गवेषयतामाधाकर्मण्यपि गृहीते भुक्ते वा न दोषः, भगवदाज्ञाराधनात् ।

तथा च भगवदाज्ञाराधनकृतमेवाऽदोषं भगवदाज्ञाखण्डनकृतमेव च दोषं विभावयितुकामः कथानकं रूपकचतुष्केणाऽऽह—

चंदोदयं च सूरो-दयं च रन्नो उ दोन्नि उज्जाणा ।
तेसिं विवरीयगमणे, आणाकोवो तओ दंडो ॥२१२॥

सूरोदयं गच्छमहं पभाए,
चंदोदयं जंतु तणाऽऽहारा ।
दुहा रवी पच्चुरमन्ति काउं,
रायाऽवि चंदोदयमेव गच्छे ॥ २१३ ॥

पत्तलदुममालगया, दच्छामु निवगणं त्ति दुचित्ता ।
उज्जाणपालएहिं, गहिया य हया य बद्धा य ॥२१४॥
सहस पइट्ठा दिट्ठा, इयरेहिँ निवगण त्ति तो बद्धा ।
नितस्स य अवरएहे, दंसणमुभओ वह विसग्गा॥२१५॥

चन्द्रानना नाम पुरी, तत्र चन्द्रावतंसो राजा, तस्य त्रिलोकरेखाप्रभृतयोऽन्तःपुरिकाः, राज्ञश्च द्वे उद्याने, तद्यथा-एकं पूर्वस्यां दिशि सूर्योदयाभिधानम् । द्वितीयं पश्चिमायां चन्द्रोदयाभिधानम् । तत्र चान्यदा प्राप्ते वसन्तमासे कस्मिंश्चिद्दिने राजा निजान्तःपुरक्रीडाकौतुकार्थी जनानां पटहं दापितवान्, यथा भो ! शृणुत जनाः ! प्रभाते राजा सूर्योदयोद्याने निजान्तःपुरिकाभिः सह स्वेच्छं विहरिष्यति ततो मा तत्र कोऽपि यासीत्, सर्वेऽपि तृणकाष्ठाऽऽहारादयश्चन्द्रोदयं गच्छन्त्विति, एवं च पटहे दापिते तस्य सूर्योदयोद्यानस्य रक्षणाय पदातीन् निरूपितवान्, यथा न तत्र कस्याऽपि प्रवेशो दातव्य इति, राजा च निशि चिन्तयामास सूर्योदयमुद्यानं गच्छतामपि प्रभाते सूर्यः प्रत्युरसं भवति, ततः प्रतिनिवर्त्तमानानामपि मध्याह्ने प्रत्युरसं च सूर्यो दुःखावहस्तस्माच्चन्द्रोदयं गमिष्यामीति, एवं च चिन्तयित्वा प्रातस्तथैव कृतवान्, इतश्च पटहश्रवणानन्तरं केऽपि दुर्वृत्ताश्चिन्तयामासुः, यथा न कदाचिदपि वयं राजान्तःपुरिका दृष्टवन्तः । प्रातश्च राजा सूर्योदये सान्तःपुरः समागमिष्यति, अन्तःपुरिकाश्च यथेच्छं विहरिष्यन्ति । ततः पत्रबहुलतरुशाखासु लीना केनाप्यलक्षिता वयं ताः परिभावयाम एवं च चिन्तयित्वा ते तथैव कृतवन्तः, तत उद्यानरक्षकैः कथमपि ते शाखास्वन्तर्लीना दृष्टास्ततो गृहीता लकुटादिभिश्च हता रज्ज्वादिभिश्च बद्धाः, ये चान्ये तृणकाष्ठाऽऽहारादयो जनास्ते सर्वेऽपि चन्द्रोदयं गताः, तैश्च सहसा प्रविष्टैरग्रे यथेच्छं राजान्तःपुरिका क्रीडन्त्यो दृष्टाः, ततस्तेऽपि राजपुरुषैर्बद्धाः, ततो नगराभिमुखमुद्यानान्निर्गच्छतो राज्ञ उद्यानपालकैः पुरुषैर्द्वयेऽपि बद्धा दर्शिताः, कथितश्च सर्वोऽपि यथावस्थितो वृत्तान्तः, तत्र ये आज्ञाभङ्गकारिणस्ते विनाशिताः, इतरे मुक्ताः, सूत्रं सुगमं, नवरं 'तओ दंडो' त्ति-दण्डो मारणम्, एतदर्थावनार्थं रूपकत्रयम् । 'सूरोदयमि' त्यादि, तत्र 'पच्चुरसं' प्रत्युरसम् उरसः संमुखं 'नितस्स य' त्ति-उद्यानादपराह्णे निर्यतो राज्ञ उभयेषां दर्शनं ततो यथाक्रमं वध-विसर्गौ, एतेन यदुक्तम्- अभोज्जगमणाइ य' इत्यादिगाथायां 'दिट्ठता तत्थिमा दोन्नि' त्ति-तद्व्याख्यानम् ।

सांप्रतं दार्ष्टान्तिके योजनामाह-

जह ते दंसणकखी, अपूरिइच्छा विणासिया रन्ना ।
दिट्ठेऽवि येर मुक्का, एमेव इहं समोयारो ॥ २१६ ॥

यथा ते दुर्वृत्ता दर्शनकाङ्क्षिणः अपूरितेच्छा अपि आज्ञाभङ्गकारिण इति राज्ञा विनाशिताः, इतरे च तृणकाष्ठाऽऽहारादयश्चन्द्रोदयोद्यानगता दृष्टेऽपि नेरन्तःपुरे आज्ञाकारित्वात् मुक्ताः, एवमेव इहापि आधाकर्मविषये समवतारो योजना कार्या, सा चेयम्-आधाकर्मभोजनपरिणामपरिणता शुद्धमपि भुञ्जाना आज्ञाभङ्गकारित्वात् कर्मणा

बध्यन्ते, साधुवेषविडम्बकसाधुवत् शुद्धं गवेषयन्त आधाकर्मापि भुञ्जाना भगवदाज्ञाराधनात् न बध्यन्ते 'प्रियकरा' ऽभिधक्षपकसाधुवदिति ।

आधाकर्म्मभोजिनमेव भूयोऽपि निन्दति-

आहाकम्मं भुंजइ, न पडिक्कमए य तस्स ठाणस्स ।
एमेव अडइ बोडो, लुक्कविलुक्को जह कवोडो ॥२१७॥

य आधाकर्म्म भुङ्क्ते न च तस्मात् स्थानाद्-आधाकर्म्मपरिभोगरूपात्प्रतिक्रामति प्रायश्चित्तग्रहणेन निवर्त्तते । स बोड -मुण्डो जिनाऽऽज्ञाभङ्गे निष्फलं तस्य शिरोलुञ्चनादीति 'बोड' इत्ययमधिक्षिपति । एवमेव निष्फलमटति-जगति परिभ्रमति, अधिक्षेपसूचकमेव दृष्टान्तमाह-' लुक्कविलुक्को जह कवोडो ' लुञ्चितविलुञ्चितो यथा कपोत -पक्षिविशेष , यथा तस्य लुञ्चनम् अटन च न धर्माय. तथा साधोरप्याधाकर्मभोजिन इत्यर्थ , तत्र सामान्यतो लुञ्चनं विच्छित्त्या विशेषत वा लुञ्चन विलुञ्चनम् । पिं० ।

आधाकर्मपरिभोगे दोषमाह—

एगया देवलोएसु, नरएसु वि एगया ।
एगया आसुरं कायं, आहाकम्मेहिँ गच्छइ ॥ ३ ॥

आधानम् ; आधाकरणमित्यर्थ ,तदुपलक्षितानि कर्माण्याधाकर्माणि तै , किमुक्तं भवति-स्वयं विहितैरेव सरागसंयममाहारं भासुरभावनादिभिरेव नारकासुरगतिहेतुभिः क्रियाविशेषैर्यथाकर्म्मभिर्वा तत्तद्गत्यनुरूपचेष्टितैर्गच्छति यातीति सूत्रार्थ । उत्त० ३ अ० । " आहाकम्म भुंजमाणे सबले ४ " (सूत्र-२१+ सम०)। आधाकर्म-आधया-साधुप्रणिधानेन यत्सचेतनमचेतनं क्रियते अचेतनं वा पच्यते चीयते वा गृहादिकं वयते वा वस्त्रादिकं तदाधाकर्मभुञ्जान शबल. । दशा० ३ अ० ।

आधाकर्मपरिभोगे दोषस्सदृष्टान्तो यथा—

जं किंचि उ पूइकडं, सड्ढीमागंतुमीहियं ।
साहस्संतरियं भुंजे, दुपक्खं चेव सेवइ ॥ १ ॥

यत् किञ्चिदिति-आहारजातं स्तोकमपि, आस्तां तावत्प्रभूतं तदपि पूतिकृतम् आधाकर्मादि सिक्थेनाप्युपसृष्टम् , आस्तां तावदाधाकर्म, तदपि न स्वयं कृतम्, अपि तु श्रद्धावता अन्येन भक्तिमताऽपरानागन्तुकानुद्दिश्य ईहितं-चेष्टित निष्पादितं, तच्च सहस्रान्तरितमपि यो भुञ्जीत-अभ्यवहरेदसौ द्विपक्ष-गृहस्थपक्षं प्रव्रजितपक्षं वा सेवते, एतदुक्तं भवति-पचभूतमपि परकृतमपरागन्तुकमत्यर्थं निष्पादित यदाधाकर्मादि तस्य सहस्रान्तरितस्यापि योऽवयवस्तेनाप्युपसृष्टमाहारजातं भुञ्जानस्य द्विपक्षसेवनमापद्यते, किं पुन य एते शाक्यादय स्वयमेव सकलमाहारजातं निष्पाद्य स्वयमेव चोपभुञ्जते: ते च सुतरां द्विपक्षसेविनो भवन्तीत्यर्थ । यदि वा-द्विपक्षमिति-ईर्यापथ , साम्परायिकं वा । अथ वा-पूर्वबद्धा निकाचिताद्यवस्था कर्मप्रकृतीर्नयत्यपूर्वाश्चादत्ते ( सूत्र० ) ततश्चैव शाक्यादय एतीर्थिका स्वयूथ्या वा आधाकर्म भुञ्जाना द्विपक्षमेव सेवन्त इति सूत्रार्थ. ।

इदानीमेतेषां सुखैषिणामाधाकर्मभोजिनां कटुकविपाकाविर्भावनाय श्लोकद्वयेन दृष्टान्तमाह—

तमेव अवियाणंता, विसमंसि अकोविया ।
मच्छा वेसालिया चेव, उदगस्सऽभियागमे ॥ २ ॥
उदगस्स पभावेणं, सुक्कं सिग्घं तमिंति उ ।
ढंकेहि य कंकेहि य, आमिसत्थेहिँ ते दुही ॥ ३ ॥

तमेव-आधाकर्मोपभोगदोषमजानाना विषम -अष्टप्रकारकर्मबन्धो भवकोटिभिरपि दुर्मोक्षश्चतुर्गतिस्संसारो वा तस्मिन्नकोविदा कथमेष कर्मबन्धो भवति कथं वा न भवति? केन चोपायेनाय संसारार्णवस्तीर्यत इत्यत्राकुशला , तस्मिन्नेव संसारोदरे कर्मपाशावपाशिता दु:खिनो भवन्तीति । अत्र दृष्टान्तमाह—यथा मत्स्या· पृथुरोमाणो विशाल·-समुद्रस्तत्र भवा वैशालिका'; विशालाख्यविशिष्टजात्युद्भवा वा वैशालिका· विशाला एव वैशालिका —बृहच्छरीरास्त एवंभूता महामत्स्या उदकस्याभ्यागमे समुद्रवेलाया (मागता ) सत्या प्रबलमरुद्वेगोद्धूतोत्तुङ्गकल्लोलमालापनुन्नाः सन्त उदकस्य प्रभावेण नदीमुखमागता पुनर्वेलापगमे तस्मिन्नुदके शुष्के वेगेनैवापगते बृहत्वाच्छरीरस्य तस्मिन्नेव धुनीमुखे विलग्ना अवसीदन्त आमिषगृध्नुभिर्ढङ्कै कङ्कैश्च पक्षिविशेषैरन्यैश्च मांसवसार्थिभिर्मत्स्यबन्धादिभिर्जीवन्त एव विलुप्यमाना महान्त दुःखमनुद्धातमनुभवन्तोऽशरणाघात-विनाशं यान्ति प्राप्नुवन्ति । तुरवधारणे, त्राणाऽभावाद्विनाशमेव यान्तीति श्लोकद्वयार्थ. ।

एवं दृष्टान्तमुपदर्श्य दार्ष्टान्तिके योजयितुमाह—

एवं तु समणा एगे, वट्टमाणसुहेसिणो ।
मच्छा वेसालिया चेव, घातमेस्संतिऽणंतसो ॥ ४ ॥

यथैते-अनन्तरोक्तमत्स्यास्तथा श्रमणा आश्यन्तीति श्रमणा एके शाक्यपाशुपतादय स्वयूथ्या वा किंभूतास्ते इति दर्शयति-वर्त्तमानमेव सुखम् आधाकर्मोपभोगजनितमेषितु शीलं येषां ते वर्तमानसुखैषिण , समुद्रवायसवत् तत्कालावाप्तसुखलवाऽऽसक्तचेतसोऽनालोचिताऽऽधाकर्मोपभोगजनितातिकटुकदु खौघानुभवना वैशालिकमत्स्या इव घातं वि( नाश ) मेष्यन्ति-अनुभविष्यन्ति अनन्तशोऽरहट्टघटीन्यायेन भूयो भूय संसारोदन्वति निमज्जनोन्मज्जनं कुर्वाणा न ते संसाराम्भोधे पारगामिनो भविष्यन्तीत्यर्थ । सूत्र० १ श्रु० १ अ० ३ उ० ।

( १२ ) आधाकर्मपरिभोगे कर्मबन्ध -

आहाकम्मं णं भुंजमाणे समणे निग्गंथे किं बंधइ, किं पकरेइ, किं चिणाइ, किं उपचिणाइ ?। गोयमा ! आहाकम्मं णं भुंजमाणे आउयवज्जाओ सत्तकम्मपगडीओ सिढिलबंधणबद्धाओ धणियबंधणबद्धाओ पकरेइ० जाव अणुपरियट्टइ । से केणऽट्ठेणं०जाव आहाकम्म णं भुंजमाणे ०जाव अणुपरियट्टइ ?, गोयमा ! आहाकम्मं णं भुंजमाणे आयाए धम्मं अइक्कमइ, आयाए धम्मं अइक्कममाणे पुढविकायं णावकंखइ० जाव तसकायं णावकंखइ, जेसिं पि

य णं जीवाणं सरीराइं आहारमाहारेइ ते वि जीवे नाऽव-कंखइ, से तेणऽट्ठेणं गोयमा ! एवं वुच्चइ आहाकम्मं णं भुंजमाणे आउयवज्जाओ सत्त कम्मपगडीओ० जाव अणु परियट्टइ। ( सूत्र ७८+ )

' आहाकम्ममि ' त्यादि, आधाय साधुप्रणिधानेन यत्सचेतनमचेतनं क्रियते, अचेतनं वा पच्यते, चीयते वा गृहादिकं, वयते वा वस्त्रादिकं, तदाधाकर्म. 'किं बंधइ' त्ति-प्रकृतिबन्धमाश्रित्य स्पृष्टावस्थापेक्षया वा 'किं पकरेइ' त्ति-स्थितिबन्धापेक्षया बद्धावस्थापेक्षया वा, ' किं चिणाइ ' त्ति—अनुभागबन्धापेक्षया निधत्तावस्थापेक्षया वा ' किं उवचिणाइ ' त्ति-प्रदेशबन्धापेक्षया निकाचनापेक्षया चेति, ' आयाए ' त्ति—आत्मना श्रुतधर्मं—चारित्रधर्मं वा, 'पुढविकायं नावकंखइ' त्ति-नापेक्षते, नानुकम्पत इत्यर्थ । भ० ७ श० ६ उ० । ' आयाए ' त्ति-आत्मना धर्म-श्रुतधर्मं चारित्रधर्मं चेति " आयाए धम्मं अइक्कममाणे पुढविकायं नावकंखइ, आउकायं नावकंखइ, तेउकायं नावकंखइ, वाउकायं नावकंखइ, वणस्सइकायं नावकंखइ, तसकायं नावकंखइ, जेसिं पि य णं जीवाणं सरीरयाइं आहारमाहारेइ ते वि नावकंखइ से एएणऽट्ठेणं गोयमा ! एव वुच्चइ आहाकम्मं भुंजमाणे० जाव परियट्टइ, " तथा-" कहं णं भंते ! जीवा अप्पाउयत्ताए कम्मं पकरंति ?, गोयमा ! पाणे अइवाइत्ता भवइ, मुसं वइत्ता तहारूवं समणं वा माहणं वा अफासुएणं अणेसणिज्जेणं असणपाणखाइमसाइमेणं पडिलाहित्ता भवइ एवं खलु जीवा अप्पाउयत्ताए कम्मं पकरंति " त्ति, द्वितीयपदे पुनर्गाढग्लानादिकार्यासंस्तरणादिरूपे गच्छमध्यव्यवस्थितस्य गुर्वाज्ञावर्तिनोऽशठभावस्य साधो पञ्चकपरिहाणिक्रमेण सर्वथा प्रयतमानस्यातुरदृष्टान्तेनाधाकर्माद्यपि निर्दोषम् , तथा चाऽऽगमः-" संथरणम्मि असुद्धं, दुण्ह वि गिण्हत दिंतयाण हियं । आउरदिट्ठंतेण, तं चेव हियं असंथरणे ॥१॥ " तथा-" जा जयमाणस्स भवे, विराहणासुत्तविहिसमग्गस्स । सा होइ निज्जरफला, अज्झत्थविसोहिजुत्तस्स ॥१॥ " त्ति । ध० र० ३ अधि० ७ लक्ष० ।

चारित्रमधिकृत्याहारविषयाऽनाचाराऽऽ-
चारौ प्रतिपादयितुकाम आह—

आहाकम्माणि भुंजंति, अण्णमण्णे सकम्मुणा ।
उवलित्तेति जाणिज्जा, ऽणुवलित्तेति वा पुणो ॥ ८ ॥

किमित्येवं स्याद्वाद प्रतिपाद्यत इत्याह—

एएहिं दोहिं ठाणेहिं, ववहारो ण विज्जई ।
एएहिं दोहिं ठाणेहिं, अणायारं तु जाणए ॥ ९ ॥

सूत्र० २ श्रु० ५ अ० । ( अनयो ८-९ गाथयोर्व्याख्या ' अणायार ' शब्दे प्रथमभागे ३१८ पृष्ठे गता ) ( वसति विषयं आधाकर्मदोषं ' वसहि ' शब्दे षष्ठे भागे वक्ष्यते १६५ निशीथचूर्णिगाथया )

आधाकर्मदोषदुष्टत्वात् श्रमणार्थं कृता
वल्लिवृक्षादयो न कल्पन्ते—

वल्ली वा रुक्खो वा, कोई रोएज्ज संजयऽट्ठाए ।
तेसिं परिभोगकाले, समणाण तहिं कह भणियं ॥ ५३ ॥

वल्लीर्वा वृक्षान् वा कश्चित्संयतानामर्थाय रोपयेत् तत्र तेषां फलानां परिभोगकाले श्रमणानां कथं भणितम् , किं कल्पते किं वा न कल्पत इत्यर्थ ।

अत्र सूरिराह—

तस्स कडनिट्ठियादी, चउरो भंगे विभावइत्ताण ।
विसमेसु जाण विसमं, नियमा उ समो समग्गहणे ॥५४॥

तस्य कृतं तत् तस्य निष्ठितमिति प्रथमः, तस्य कृतमन्यस्य निष्ठितमिति द्वितीय । अन्यस्य कृतं तस्य निष्ठितमिति तृतीयः । अन्यस्य कृतमन्यस्य निष्ठितमिति चतुर्थं । तत्र तस्य-संयतस्य निमित्तं कृतम्-आरोपितं वृक्षादि तथा तस्यैव संयतस्य निमित्तं निष्ठितं-निष्ठां नीतमचित्तीकृतमित्यर्थ । एष प्रथमभङ्गार्थ । एवं शेषाणामपि भङ्गानामर्थ परिभावनीय , तत्र तस्य कृत तस्य निष्ठितमित्यादीन् चतुरो भङ्गान् विभाव्य विषमयोर्भङ्गयोर्गृह्णतो विषममसंयमं जानीयात्तन्निमित्तं निष्ठानयनात् समयोर्द्वितीयचतुर्थयोर्भङ्गयोर्ग्रहणे समं-संयमं जानीयात् । अन्यनिमित्तं निष्ठितत्वात् ।

पर आह—ननु श्रमणार्थं स आरोपितस्ततः कथं द्वितीये भङ्गे कल्पते । सूरिराह—

कामं सो समणऽट्ठा, वुत्तो तह वि य न होइ सो कम्मं ।
जं कम्मलक्खणं खलु, इह इ वुत्तं न पस्सामि ॥५५॥

कामम्-अनुमन्यामहे स वृक्ष श्रमणार्थमारोपित तथाऽप्यसौ कर्म न भवति । यतो यत्कर्मलक्षणं खलु तीर्थकरगणधरैरुक्तं तदिह ' इ ' पादपूरणे, न पश्यामि ।

किं तत्कर्मलक्षणमत आह—

सचित्तभावविकली-कयम्मि दव्वम्मि मग्गणा होई ।
का मग्गणा उ दव्वे सचेयणे फासुभोईण ॥ ५६ ॥

यत्सचित्तभावविकलीकृतमचित्तीकृतम् द्रव्यं तत्र प्रासुकभोजिनां मार्गणा भवति । तत आधाकर्मिकचिन्ताऽपि तत्रैव युक्ता; नान्यत्र । सचेतने तु द्रव्ये का मार्गणा ?, नैव काचित् सचित्ततया तस्य ग्रहणाऽसंभवात्ततो न तद्पेक्षया आधाकर्मिकत्वमिति । तदेवमारोपितरूपकृतनिष्ठितविषये कल्प्याऽकल्प्यविधिरुक्त ।

संप्रति छिन्नरूपकृतनिष्ठितविषयं तमाह—

संजयहेतु छिन्नं, अत्तऽट्ठोवक्खडं तु तं कप्पे ।
अत्तऽट्ठा छिन्न पि हु, समणऽट्ठा निट्ठियमकप्पं ॥५७॥

अत्राऽपि भङ्गचतुष्टयम्-तस्य कृतम् तस्य निष्ठितम् १, तस्य कृतमन्यस्य निष्ठितम् २ अन्यस्य कृतं तस्य निष्ठितम् ३, अन्यस्य कृतमन्यस्य निष्ठितम् ४। अत्र कृतं छिन्नं निष्ठितं-पाकादिकरणतो निष्ठां नीतम् । तत्र प्रथमभङ्गे सर्वथा न कल्पते चतुर्थस्तु भङ्ग एकान्तशुद्ध द्वितीयभङ्गमधिकृत्य पूर्वार्द्धमाह—संयतहेतो —संयतनिमित्तं छिन्नमात्मार्थमुपस्कृतं-निष्ठां नीतं तत्कल्पते । तृतीयभङ्गमधिकृत्याह-आत्मार्थं छिन्नमपि श्रमणार्थं निष्ठितमकल्प्यम् ।

संप्रति बीजानि, उदकं चाऽधिकृत्याह—

बीयाणि य वावेज्जा, अगडं व खणेज्ज संजयऽट्ठाए ।
तम्मि परिभोगकाले, समणाण तहिं कहं भणियं ॥५८॥

बीजानि शाल्यादिसत्कानि वपेत, अवटं च खानयेत्, संयतार्थं, तेषां परिभोगकाले तत्र श्रमणानां कथं भणितं कल्प्यम्, अकल्प्यं वा ।

सूरिराह—

दुच्छडाणियं च उदयं, जइ हेउं निट्ठियं च अत्तट्ठा ।
तं कप्पइ अत्तऽट्ठा, कयं तु जइ निट्ठियमकप्पं ॥ ५६ ॥

अत्रापि प्रागिव भङ्गचतुष्टयम्, तत्राऽऽद्यो भङ्ग एकान्तेनाऽशुद्ध । चरमस्त्वेकान्तशुद्ध । द्वितीयभङ्गमधिकृत्याह-यतिहेतोस्तरदुला द्विच्छटीकृता उदकं वा संयतहेतोरवटादानीतम् उभयमपि च निष्ठितम्—अचित्तीकृतमात्मार्थं तत्कल्पते । तृतीयभङ्गमधिकृत्याह-कृत द्विच्छटीकृतास्तण्डुला अवटादानीत पानीयं निष्ठित तु यतिनिमित्तं तदकल्प्यमिति ।

पुनरपि पर आह—

समणाण संजतीण व, दाहामि जो किणेज्ज अट्ठाए ।
गावीमहिसीमादी, समणाण तहिं कहं भणियं ॥६०॥

श्रमणानां संयतीनां दुग्धादि दास्यामीति बुद्धया तदामर्थाय गोमहिष्यादिकं य क्रीणीयात्तत्र श्रमणानां कथं कल्प्यम् अकल्प्यं वा भणितम् ।

सूरिराह—

संजयहेउं दूढा, न कप्पए कप्पए य सयमट्ठा ।
पामिच्चिय कीया वा, जइ वि समणट्ठ या धेणू ॥६१॥

यद्यपि च धेनु-गोरूपा महिषीरूपा वा श्रमणार्थमियमित्यात्मीया धेनु दत्त्वा परकीया याचिता क्रीता वा यदि संयतहेतोर्दुग्धा ततो न कल्पते । अथ स्वयमात्मनोऽर्थाय दुग्धा तर्हि कल्पते ।

पुनरन्यथा पर प्रश्नयति—

चेइयदव्वं विभया, करेज्ज कोई नरो सयट्ठाए ।
समणं वा सोवहियं, विक्केज्जा संजयट्ठाए ॥ ६२ ॥

चैत्यद्रव्यं चौरा समुदायेनापहृत्य तन्मध्ये कश्चिच्चर आत्मीयेन भागेन स्वयम्-आत्मनोऽर्थाय मोदकादि कुर्यात्, कृत्वा च संयतेभ्यो दद्यात् यो वा संयतार्थाय श्रमणं सोपधिक विक्रीणीयात् । विक्रीय च तत्प्रासुकं वस्त्रादि संयतेभ्यो दद्यात् ।

एयारिसम्मि दव्वे, समणाणं किं नु कप्पई घेत्तुं ।
चेइयदव्वेण कयं, मुल्लेण व जं सुविहियाणं ॥ ६३ ॥
तेण पडिच्छा लोए, वि गरहिया उत्तरे किमग ! पुण ।
चेइय जइ पडिणीए, जो गेराहइ सो वि हु तहेव ॥६४॥

एतादृशेन द्रव्येण गाथायां सप्तमी तृतीयार्थे यत् आत्मार्थं कृतं तत् श्रमणानां किं नु ग्रहीतु कल्पते । सूरिराह-यच्चैत्यद्रव्येण यच्च वा सुविहितानां मूल्येनात्मार्थं क्रीतं तद्गृह्यमानं न कल्पते । किं कारणमिति चेदुच्यते-स्तेनानीतस्य प्रतीच्छा-प्रतिग्रहणं लोकेऽपि गर्हिता किमङ्ग ! पुनरुत्तरे, तत्र सुतरां गर्हिता यत -चैत्ययतिप्रत्यनीके-चैत्ययतिप्रत्यनीकस्य हस्तात् यो गृह्णाति सोऽपि हु निश्चितं तथैव चैत्ययतिप्रत्यनीक एव ।

कस्मादिति आह—

हरियाहडिया सा खलु, समत्तितो उग्गए हरा गुरुगा ।
एवं तु कया भत्ती,न वि हाणी जा विणा तेण ॥६५॥

सा खलु स्तेनानीतप्रतीच्छा हृताहृतिका भरायते स्तेनैर्हृतस्य स्तेनहरणं हृताहृतिका यत एवं तस्मात् स्वशक्तितश्चैत्यद्रव्यं सोपधिकं वा श्रमणमुद्गमयेत्-उत्पादयेत् इतरथा प्रायश्चित्त चत्वारो गुरुका । एवं च सति कृता भक्तिर्भवति । प्रवचनस्य या च तेन विना हानि, साऽपि न भवति ।

पुन पृच्छति—

जा तित्थयराण कया, वंदणआवरिसणादि पाहुडिया ।
भत्तीहिँ सुरवरेहिं, समणाण तहिं कह भणियं ॥६६॥

या तीर्थकराणां सुरवरैर्भक्त्या वन्दनाऽऽवर्षणादिका आदि शब्दात्-पुष्पवृष्टिप्रकारत्रयादिकरणपरिग्रह प्राभृतिका कृता तत्र श्रमणानां कथं भणितं किं तत्र स्थातुं कल्पते न वा ।

अत्र सूरिराह—

जइ समणाण न कप्पइ, एवं एगागिणो जिणवरिंदा ।
गणहरमादी समणा, अकप्पिए न वि य चिट्ठंति ॥६७॥

तस्यां प्राभृतिकायां श्रमणानामवस्थातुं कल्पते भगवत प्रवचनातीतत्वात् । अन्यच्च यदि श्रमणानां न कल्पते तत एकाकिनो जिनवरेन्द्रा भवेयु । यतो गणधरादय श्रमणाः अकल्पिकेनैव तिष्ठन्ति । व्य० ६ उ० । बृ० ।

आधाकर्मोपभोगे प्रायश्चित्तम्—

जे भिक्खू आहाकम्म, भुंजइ भुंजंतं वा साइज्जइ ॥ ६ ॥

आधाकडं आहाकम्मं तं जो भुंजति तस्स चउगुरुं आणादिया य दोसा । नि० चू० १० उ० ।

आधाकर्मप्रायश्चित्तम्—" गुरुगा आइ य चरम० " ॥ ५४१ × ॥ ' आइ य ' आधाकर्मगृह्णत प्रायश्चित्त च त्यागे गुरुका ॥ वृ० १ उ० १ प्रक० । ज्ञानवत आधाकर्मादिदोषविचार ' णाण ' शब्दे चतुर्थभागे १६८० पृष्ठे करिष्यते) (गोचरचर्य्या गतेनाधाकर्मिकमशनादि न ग्राह्यमिति ' गोयरचरिया ' शब्दे तृतीयभागे ६६१ पृष्ठे वक्ष्यते । ) यदाधाय-निमित्तत्वेनाश्रित्य पूर्वोक्तमष्टप्रकारमपि कर्म बध्यते तदाधाकर्मेति । कर्मभेदे, आचा० १ श्रु० २ अ० १ उ० । ( तच्च विस्तरत ' कम्म ' शब्दे तृतीयभागे २४५ पृष्ठे, ६२ सूत्रव्याख्याने वक्ष्यते । ) आधानमाधाकरणमात्मनेति गम्यते तदुपलक्षितानि कर्माण्याधाकर्माणि । स्वकृतकर्मसु उत्त० ।

सुया मे णरए ठाणा, (उत्त०)पगाढा जत्थ वेयणा ॥१२॥

तत्थोववाइयं ठाणं, जहा मे तमणुस्सुयं ।
आहाकम्मेहिं गच्छंतो, सो पच्छा परितप्पइ ॥ १३ ॥

तत्रेति-नरकेषु उपपाते भवमौपपातिकं स्थान—स्थिति-र्यथा-येन प्रकारेण; भवतीति शेष । 'मे' मया तत्-इति-अनन्तरोक्तपरामर्शेऽनुश्रुतम्—अवधारितं गुरुभिरुच्यमान-मिति शेष (उत्त०) औपपातिकमिति च ब्रुवतोऽस्यायमा-शय, यदि गर्भजत्वं भवेत्-भवेदपि तदपि तदवस्थाया छेदभेदादिनारकदुःखान्तरम्, औपपातिकत्वे त्वन्तर्मुहू-र्त्तानन्तरमेव तथाविधवेदनोदय इति कुतस्तदन्तरसंभव ?, तथा च-'आहाकम्मेहिं' ति-आधानम्-आधाकरणमा-त्मनेति गम्यते, तदुपलक्षितानि कर्म्माण्याधाकर्म्माणि तै-राधाकर्म्मभि.-स्वकृतकर्मभि., यद्वा-आर्षत्वात्-'आहे' ति-आधाय-कृत्वा कर्म्माणीति गम्यते, ततस्तैरेव कर्म्मभि-र्गच्छन्-यान्, प्रक्रमात् नरकं, यद्वा-यथा कर्म्मभिर्गमिष्य-माणगत्यनुरूपैस्तीव्रतीव्रतराद्यनुभावान्वितैर्गच्छंस्तदनुरूप-मेव स्थानं 'स' इति-बाल. पश्चादिति-आयुषि हीयमाने परितप्यते-यथा-धिग्मामसदनुष्ठायिन, किमिदानीं मन्द-भाग्य करोमीत्यादि शोचते इति सूत्रार्थः । उत्त० ५ अ० ।

आधा ( हा ) कम्मिय-आधाकर्म्मिक-त्रि० । साधूनामेवा-र्थाय कारिते भक्तादौ, बृ० १ उ० ।

आधा(हा)ण-आधान-न० । आ-धा-भावे ल्युट् संस्का-रपूर्वक वह्नयादे स्थापने, अग्न्याधाने, गर्भाधाने च । वाच०। स्थाने, आव० । " इअ सव्वगुणाऽऽहाणं ॥१०५४॥ " सर्व-गुणाधानम्-अशेषगुणस्थानम् । आव०४ अ०। स्थापने, पो०। " कुलयोग्यादीनामिह, तन्मूलाऽऽधानयुक्तानाम्" मूलाऽऽ-धानं-मूलस्थापन-बीजन्यासस्तद्युक्तानाम् । पो० १३ विव०। व्यवस्थापने, आख्याने, व्याख्याने च । वाच० ।

अविरइं पडुच्च बाले, आहिज्जइ, विरइं पडुच्च पंडिए आ-हिज्जइ, विरयाऽविरइं पडुच्च बालपंडिए आहिज्जइ ॥३९४॥

आधीयते-व्यवस्थाप्यते, आख्यायते वा, तथा-विरतिं चाश्रित्य-प्रतीत्य पापाद् डीन पण्डित-परमार्थज्ञो वे-त्येवमाधीयते-व्याख्यायते । सूत्र० २ श्रु० २ अ० ।

आधा ( हा ) य-आधाय-अव्य० । आ-धा-ल्यप् । क्त्वे-त्यर्थे, उत्त० ५ अ० । स्थापयित्वेत्यर्थे, आधानं कृत्वेत्यर्थे, भावे-घञ् । आधाने, पु० । वाच० ।

आधा ( हा ) र-आधार-आ-धृ-आधारे-घञ् । आश्रये, "अपामिवाधारमनुत्तरङ्गम्" कुमा० । "चराचराणां भूतानां, कुक्षिराधारतां गत." । कुमा० । "वर्त्याधारस्नेहयोगाद्यथा दीपस्य संस्थिति " या० स्मृ० । " व्याकरणप्रसिद्धे औप-श्लेषिकवैषयिकाभिव्यापकाख्ये अधिकरणकारके," आधारो ऽधिकरणम् " । पाणिनि. । अधिकरणञ्च परम्परया क्रियाश्रय तच्च त्रिविधम् औपश्लेषिक—वैषयिका-ऽ-भिव्यापकभेदात् । तत्र औपश्लेषिक एकदेशसम्बन्ध, यथा-कटे आस्ते । वैषयिक -मोक्षे इच्छाऽस्ति । अभिव्यापक -ति-लेषु तैलमस्ति । मुग्धबोधकारस्तु " सामीप्या-ऽऽश्लेष-वि-षयै-र्व्याप्त्याऽऽधारश्चतुर्विध " इति "सामीप्यसम्बन्धेना-प्याधारतेत्याह " । तच्चिन्त्यम्, गङ्गायां घोषो वसतीत्यादौ विषयलक्षणयैव गङ्गासमीपवर्तीरस्योपस्थितौ न तस्य वि-षयत्वमिति पाणिनीया. । शस्यसंपादनार्थं जलरोधनार्थे बन्धने वृक्षसेकार्थे जलधारणार्थे आलवाले च । "आधा-रबन्धप्रमुखै प्रयत्नै." रघु० । वाच० । आधारस्य भाव तल् आधारता संबन्धविशेषेण पदार्थविशेषस्याऽऽधेयता-सम्पादक धर्म्मविशेषे, तथा च तयो परम्परनिरूप्यनि-रूपकभाव । आधारताया अनतिरिक्तवृत्तिर्धर्म्म आधा-रतावच्छेदक । एवमाधेयताया अनतिरिक्तवृत्तिर्धर्म्म आ-धेयतावच्छेदक. यथा संयोगेन घटाधारे भूतले भूतलत्व-माधारतावच्छेदक भूतलाधेये घटे च घटत्वमाधेयताव-च्छेदकम् तयोश्चावच्छेदकत्वात् । ताभ्यामाधारताऽऽधेयता चाऽवच्छिद्यते यथा घटत्वावच्छिन्ना घटनिष्ठाऽऽधेयता तथा भूतलत्वावच्छिन्ना भूतलनिष्ठाऽऽधारता इति नव्य-नैयायिकानां रीति । आधारत्वात्तदर्थे, न० । वाच० । ख-घ-थ-ध-भाम् ॥८।१।१८७॥ इति हैमप्राकृतसूत्रेण धस्य बाहुल्येन ह । प्रा० । "आहारो०" ॥१४०६४॥ द्रव्यम्-आधारो भवति । विशे० ।

आधि( हि )-आधि-पु० । आधीयते-अभिनिवेश्यते प्र-तीकाराय मनोऽनेन । आ—धा—कि । मानसव्यथाभेदे, वाच० । आधीनाम्-मन पीडानाम् । भ० १ श० १ उ० १ सूत्रटी० । शरीरमानसे पीडाविशेषे च । " आधीना परमौषधम् " ॥ ३ ४ ॥ आधीना-शरीरमानसपीडाविशे-षाणां परमौषधं-प्रधानौषधकल्पम् । पो० १५ विव० । ईषत् अधिक्रियते उत्तमर्णोऽत्र । आ-ईषदर्थे, धा-अधि-कारार्थे, आधारे कि, आधीयते ऋणशोधनार्थम् आ-धा-कर्मणि-कि-वा । ऋणशोधनार्थं प्रतिभूस्थानीयतया ब-न्धकत्वेन उत्तमर्णसमीपे अधमर्णेनाऽऽधीयमाने उत्तमर्णस्य ईषत् स्वत्वहेतुभूतव्यापारविशिष्टे, वाच० ।

आहि ( हि ) क्क-आधिक्य-न० । अधिकस्य भाव. ष्यञ् । अधिकतायाम्, अतिशयितायाम्, " यदावगच्छेदाय-त्यामाधिक्य ध्रुवमात्मन " । मनु० । युग्मायामपि रात्रौ चेत्, शोणितं प्रचुर तदा । कन्या च पुंवत् भवति, शुक्रा-धिक्ये पुमान् भवेत् ॥ १ ॥ ज्योतिस्तत्त्वम् । प्रातिपदिकमात्र लिङ्गमात्राद्याधिक्ये, सि० कौ० " एवमेतद् गुणाधिक्यं, द्रव्ये द्रव्ये व्यवस्थितम् " सुश्रु० । वाच० । ' आधिक्य-स्थैर्यसिद्ध्यर्थम् " ॥ २१ ४ ॥ आधिक्यं सजातीयपरि-णामप्राचुर्यम् । द्वा० १७ द्वा० ।

आधि ( हि ) गरणिया-आधिकरणिकी-स्त्री० । अधिक्रि-यते आत्मा नरकादिषु येन तदधिकरणं, तेन निर्वृत्ता आ-धिकरणिकी, पञ्चक्रिया मध्ये तृतीये क्रियाविशेषे, सा च द्विधा चक्ररथपशुयन्त्रमन्त्रतन्त्रादिप्रवर्त्तिनी खड्गादिनि-र्वर्त्तिनी चेति । ध० ३ अधि० ।

आधि ( हि ) देविय-आधिदैविक-त्रि० । अधिदेवं भव देवान्-वातादीन् अधिकृत्य प्रवृत्ते वा ठञ् । अनुशतिकादि-त्वाद् द्विपदवृद्धि । देवाधिकारेण प्रवृत्ते शास्त्रे, वातादि-निबन्धने, दु ख च । दु ख हि त्रिविधम्-आध्यात्मिकादिभे-

-दान्। वाच०। आधिदैविकम्—यत्तरात्तग्रहाद्यावेशहेतुकम्। स्या० १५ श्लोकटी०।

आधि ( हि ) भोइय-आधिभौतिक-त्रि०। भूतानि-व्याघ्रसर्पादीन्यधिकृत्य जातम्। अधिभूत ठञ् द्विपदवृद्धि। व्याघ्रसर्पादिजनिते दुःखे, वाच०। आधिभौतिक-मानुषपशुपक्षिमृगसरीसृपस्थावरनिमित्तम्। स्या० १५ श्लोकटी०।

आधु ( हु ) णिय-आधुनिक-त्रि०। अधुना भव ठञ्। सांप्रतंभवे अर्वाचीने अप्राचीने च। स्त्रियां ङीप्। वाच०। अष्टाशीतिग्रहाणामन्यतमे स्वनामख्याते ग्रहे, ज०। सू० प्र० २० पाहु०।

दो आहुणिया। (सूत्र-६०+) स्था० २ ठा ३ उ०।

आधे ( हे ) य-आधेय-त्रि०। आ-धा-कर्मणि यत्। १ उत्पाद्ये, 'आधेयश्चाक्रियाजश्च, सोऽसत्त्वप्रकृतिर्गुणः' इत्या० का०। यस्य सतो गुणान्तरमुत्पाद्यम् तादृशे उत्पाद्यगुणान्तरे विद्यमाने एव यत्र घटादिपदार्थे पाकादिना रक्तनागुणान्तरमाधीयते तादृशे घटादौ, आधानविधिना स्थापनीये वह्नौ, पुं०। अधिकरणेऽभिनिवेशनीये, "अधिक पृथुलाधाराद्धेयाधिक्यवर्णनम्" चन्द्रा०। वाच०।

आधाराऽऽधेयौ द्रव्यक्षेत्रकालभावभेदेन—

आहारो आहेय, च होइ दव्वं तहेव भावो य।
खेत्तं पुण आहारो, कालो नियमाउ आहेओ॥१४०६॥

( अस्या गाथाया व्याख्या 'अणुओग' शब्दे प्रथमभागे ३४४ पृष्ठे गता। ) विशे०। स्थापनीये द्रव्ये च। भावे यत्। आधाने, न०। वाच०।

आधे ( हे ) वच्च-आधिपत्य-न०। अधिपतेर्भावः कर्म्म वा पत्यन्तत्वात् यक्। स्वामित्वे, "अवाप्यभूमावसपत्नमृद्धं, राज्यं सुराणामपि चाधिपत्यम्" गीता०। वाच०। "यज्ञानामाधिपत्यं च, राजराजत्वमेव च"। भा०। व०। राजकार्ये प्रजापालनादौ, "दुर्योधनं तत्वहितं वै निगृह्य, पाण्डोः पुत्रं प्रकुरुष्वाधिपत्ये। अजातशत्रुर्हि विमुक्तरागो, धर्म्मेणेमां पृथिवीं शास्तु राजन्।" भा०। व०। प०। ८। अ०। वाच०। "आहेवच्च" (सूत्र-४६+)। प्रज्ञा० २ पद। अधिपतेः कर्म्माधिपत्यम्। रक्षायाम्, जी० ३ प्रति० ४ अधि० १ उ० ११७ सूत्रटी०। आ० म०। प्रज्ञा०। भ०। कल्प०। ज्ञा०। विपा०। ज०।

आधोधि (होहि) य-आधोऽवधिक-पुं०। नियतक्षेत्रविषयाऽवधिज्ञानिनि, भ०।

आहोहिए णं भंते! मणुस्से जे भविए अन्नयरेसु देवलोएसु उववज्जइ। ( सूत्र-२६१ + )

आहोहिए णं' ति, आधोऽवधिक —नियतक्षेत्रविषयाऽवधिज्ञानी। भ० ७ श० ७ उ०।

नमिस्स णं अरहओ एगूणचत्तालीसं आहोहियसया होत्था। ( सूत्र-३९ × )

'आहोहिय' त्ति—नियतक्षेत्रविषयावधिज्ञानिनस्त्रयां शतानि। स० ३९ सम०। प्रतिनियतक्षेत्रावऽवधिज्ञाने च। न०।

केवली णं भंते! आधोऽधियं जाणइ पासइ। ( सूत्र-५२८ + )

'आहोहियं' ति, प्रतिनियतक्षेत्रावधिज्ञानम्। भ० १४ श० १० उ०।

आप( व )-आप-पुं०। आप्यते। आप्-कर्मणि-घञ्-अष्टसु वसुषु चतुर्थे वसौ। अपां समूह अण्। जलसमूहे, न०। आकाशे, निरुक्त०। तस्य सर्वमूर्त्तसंयोगित्वात्तथात्वम्। वाच०। व्याप्तौ, आपः-व्याप्तिः। भ० १ श० ६ उ० ५० सूत्रटी०।

आप ( व ) इ-आपद्-स्त्री०। आ-पद्। सम्पदा क्विप्। आपद्विपद्संपदा द इ ॥८।४।४००॥ इति हैमप्राकृतसूत्रेण आपत् शब्ददकारस्य इकारः। "अणउ करन्तहो पुरिसहो, आवइ आवइ" (अनयम्-अन्यायं) कुर्वत पुरुषस्य आपत् आयाति। प्रा० ढुं०। पो व ॥८।१।२३१॥ इति हैमप्राकृतसूत्रेण स्वरात्परस्य पस्य व। विपत्तौ, प्रा०। "दुहओ गइ बालस्स, आवई वहमूलिया" ॥ १७+ ॥ आपदो-विपदः। उत्त० ७ अ०। 'संभम-भयाऽऽउरा-ऽऽवइ'॥१३+॥ आवई चउव्विहा-दव्वखेत्त-काल-भावाऽऽवई। दव्वाऽऽवई-दव्वं दुल्लहं। खेत्ताऽऽवई-वोच्छिन्न-मंडवाई। कालाऽऽवई-ओमाई। भावाऽऽवई-गुरुगिलाणाई। (इति तच्चूर्णि )। द्रव्यक्षेत्रकालभावैस्तत्र-द्रव्यापत्-कल्पनीयाशनादिद्रव्यदुर्लभता १, क्षेत्राऽऽपत्-प्रत्यासन्नग्रामनगरादिरहितमल्पं च क्षेत्रम् २, कालाऽऽपद् दुष्कालादि ३, भावाऽऽपद्-ग्लानत्वादि ४। जीत०। द्रव्याऽऽपत्-प्रासुकादिद्रव्यालाभ, क्षेत्राऽऽपत्-कान्तारक्षेत्रपतितत्वं, कालाऽऽपत्-दुर्भिक्षकालप्राप्ति, भावापत्-ग्लानत्वमिति। प्रतिषेवणाया पञ्चमे भेदे, भ० २५ श० ७ उ० ७९९ सूत्रटी०। "आउरे आवईसु य" (सूत्र-७७३+) तथा आपत्सु द्रव्यादिभेदेन चतुर्विधासु, तत्र द्रव्यतः-प्रासुकद्रव्यं दुर्लभं, क्षेत्रतो-ऽध्वप्रतिपन्नता, कालतो-दुर्भिक्षं, भावतो-ग्लानत्वमिति। उक्तं च-"दव्वाइअलंभे पुण चउव्विहा आवया होइ" इति। स्था० १० ठा० ३ उ०। व्य०। नि० चू०। आ० चू०। "आवईसु दढधम्मया" ( सूत्र-३२ + )। प्रशस्तयोगसंग्रहाय साधुनाऽऽपत्सु-द्रव्यादिभेदासु, दृढधर्मता कार्या सुतरां तासु दृढधर्मिणा भाव्यमित्यर्थः। स० ३२ सम०।

उदाहरणादियोग —

उज्जेणीए धणवसू, अणगारे धम्मघोसचम्पाए।
अडवीइ सत्थविब्भम-वोसिरणं सिज्झणा चेव॥१२८॥

अस्या व्याख्या कथानकादवसेया, तच्चेदम्-"उज्जेणी नयरी, तत्थ धणवसू वाणियओ, सो चंपं जाउकामो उग्घोसणं कारेइ। जहा (णाए) धन्नो, एयं अणुसवेइ धम्मघोसो नाम अणगारो, तेसु दूरं अडविमइगएसु पुलिन्देहिं विलोलिओ सत्थो इओ तइओ नट्ठो, सो अणगारो अण्णेण लोएण समं अडविं पविट्ठो ते मूलाणि खायंति

पाणिय च पियंति, सो निमंतिज्जइ, नेच्छति, आहारजाए, एगत्थ सिलायले भत्तं पच्चक्खायं, अदीणस्स अहियासेमाणस्स केवलनाणं समुप्पन्नं सिद्धो, दढधम्मयाए योगा संगहिया, एसा दव्वाऽऽवती १, खत्ताऽऽवती-खत्ताणं असतीए २, कालाऽऽवती-ओमादरियादि ३।

भावाऽऽवतीए ४-उदाहरणगाहा—

महुराए जउणराया, जउणावंकेण दंडमणगारे।
वहण च कालकरणं, सक्काऽऽगमणं च पव्वज्जा ।१२८२।

व्याख्या कथानकादवसेया, तच्चेदम्-" महुराए नगरीए जउणो राया, जउणावक्कं उज्जाणं अवरेणं, तत्थ जउणाए कोप्परो दिण्णो, तत्थ दण्डो अणगारो आयावेइ, सो रायाए णिज्जंतेण दिट्ठो, तेण रोसेण असिणा सीसं छिन्नं अन्ने भणन्ति-फलएण आहओ, सव्वेहिं वि मणुस्सेहिं पत्थरासी-कओ कोवोदयं पइ तस्स वेयणाउदए भावयतस्स आवती, कालगतो सिद्धो, देवागमणं महिमाकरणं, सक्कागमणं पासएण विमाणेण तस्स वि य रन्नो अधिती जाया, वज्जेण भेसिओ सक्केण जइ पव्वयसि तो मुच्चसि पव्वइओ थेराण अन्तिए अभिग्गहं गेण्हइ जइ भिक्खागओ संभरामि तो ण जमेमि जइ दराजिमिओ ता सेसगं विगिंचामि एव किर तेण भगवया एगमवि दिवसं नाऽऽहारियं तस्स दव्वाऽऽवती दण्डस्स भावाऽऽवती ४ ' आवईसु दढधम्मत त्ति गयं "। आव० ४ अ०। हलन्तत्वाट्टाप्-आपदाप्यत्र। वाच०।

**आप ( व ) गा-आपगा-**स्त्री०। आपेन-जलसमूहेन गच्छति-वहति-ड। नद्याम्, दश०।

बहुसमाणि तित्थाणि, आवगाणं वियागरे ॥३७॥

बहुसमानि-तीर्थानि आपगानां-नदीनां व्यागृणीयात् सा ध्वादिविषय इति। दश० ७ अ० २ उ०।

**आवच्चिज्ज-अपत्य-**पु०। सन्ताने, कल्प०। " एए णं सव्वे अज्जसुहमस्स अणगारस्स आवच्चिज्जा" एते सर्वे आर्यसुधर्मण अनगारस्य अपत्यानि-शिष्यसन्तानजा इत्यर्थ। कल्प० २ अधि० ८ क्षण।

**आप ( व ) डण-आपतन-**न०। आ-पत। भावे ल्युट्। आगमने, प्राप्तौ, ज्ञाने ( क्वचित्प्राकरणिकादर्थादप्राकरणिकस्यापननम् ) साहि०। दैववशात् पतने च। वाच०। प्रस्फाटने घ० ३ अधि० २४ श्लोकटी०। प्रस्खलने च। ओघ० ३१२ गाथाटी०। " आवडणं विसमखाणुकटसु "। ( ६१० ×)। विषमे वा स्थाणौ वा आपतन-प्रस्खलन भवति। बृ० १ उ० ३ प्रक०। आपतन नाम-यद् भूमिमसम्प्राप्तस्य सम्प्राप्तस्य वा जानुकूर्पराभ्यां प्रस्खलनम्। बृ० २ उ० १५१ गाथाटी०। " आवडणे लहुग " ॥ २११ + ॥ आवडण-पक्खलणं तं पुण भूमिमसपत्तो संपत्तो वा जाणुकोप्परेहिं। नि० चू० १ उ०।

**आप ( व ) डिय-आपतित-**त्रि०। आ-पत्-क्त। हठादागते, दैवायत्तपतने च। वाच०। आस्फालिते च। " दोऽवि आवडिया कुडु " ( ४२ + )। आपतितौ-भित्तौ आस्फालितौ। उत्त० २५ अ०।

**आप ( व ) ण-आपण-**पु०। आपणयन्ते-विक्रीणन्त्यत्र आपण। आधारे घञ्। हट्ट. " पणियाऽऽवणविविह " ( सूत्र-१ × )। पणितानि-भाण्डानि तत्प्रधाना -आपणा -हट्टा०। औ०। भ०। आ० म०। कल्प०। प्रश्न०। ज्ञा०। विशे०। आ०। " आवणसिंघाडग " ( सूत्र-१३४ + )। अनु०। ज्ञा०। वीथ्याम्, न०। ' कोलच्चुण्णाइ आवणे " ॥ ७१ + ॥ दश० ५ अ० १ उ०। पण्यस्थान, प्रश्न० ३ संव० द्वार २६ सूत्रटी०। क्रयविक्रयद्रव्यशालायां च। वाच०। " शकटाऽऽपणवेशाश्च, वणिजो वन्दिनस्तथा। नराश्च मृगयाशीला, शतशोऽथ सहस्रश "। भा० व० प० अ० २३८। " भद्यमालयाऽऽपणानाञ्च, ददृशु श्रियमुत्तमाम् " भा० स० प० ४ अ०। ( आपण पण्यवीथिका ) ( आपणो विक्रयस्थानम् ) तेनैवोक्तम्। " पूर्णाऽऽपणा विपणिनो विपणीर्विभेजु। माघ०। " वाच०।

**आप(व)णगिह-आपणगृह-**न०। आपणमध्यवर्तिगृहे, बृ०।

तथा च—

जं आवणमज्झम्मि, ज च गिहं आवणा य दुहओ वि।
तं होइ आवणगिहं, रत्थामुहरत्थपासम्मि ॥ १७० ॥

यद् गृहमापणमध्ये समन्तादापणै परिक्षिप्तं तदापणगृहम्, यद्वा-मध्ये गृहम् दुहओ वि ' त्ति—द्वाभ्यामपि च पार्श्वाभ्यां यस्याऽऽपणा भवन्ति तदापणगृहं भवति। बृ० १ उ० ३ प्रक०।

**आप ( व ) णवीहि-आपणवीथि-**स्त्री०। रथ्याविशेषे, आ० म० १ अ० १८३ गाथाटी०। ज्ञा०। रा०। जी०। हट्टमार्गे, दशा० १० अ०। जी०। ज्ञा०। " संमट्ठरत्थन्तराऽऽवणवीहिय "। आपणवीथयश्च हट्टमार्गा। कल्प० १ अधि० ५ क्षण।

**आप ( व ) ण्ण-आपन्न-**त्रि०। आ-पद क्त। आपद्ग्रस्ते, " आपन्न संसृतिं घोरां, यन्नाम विवशो गृणन्। तत सद्यो विमुच्येत, यद् बिभेति स्वयं भयम् "। भाग०। ' आपन्नाभयसत्रेषु दीक्षिता खलु पौरवा "। शकु०। " आत्मापराधादापन्न-स्तत् किं भीम जिघांससि " भा० स्त्री० प० १३ अ०। वाच०। आश्रिते, ' इम दरिसणमावण्णा, सव्वदुक्खा विमुच्चइ " ॥ १६ ॥ सूत्र० १ श्रु० १ अ० १ उ०। अनु०। उत्पन्ने, ज्ञा० १ श्रु० २ अ० ३६-३७ सूत्रटी०। प्राप्ते, ' जो जहिं आवन्ना " ( १२४५ )। आव० ४ अ०। आवण्णो प्राप्त उच्यते। नि० चू० १ उ० २५६ गाथाटी०। ' आवण्णा दीहमद्धाणं, संसारम्मि अणतए " ( १३ × )। आपन्ना -प्राप्ता। उत्त० १ अ०। व्यासे, नि०।

**आप( व )ण्णपरिहार-आपन्नपरिहार-**पु०। भावपरिहारभेदे, नि० चू०।

( भाष्यम् )—

मासादी आवण्णे, तेण उ पगय न अन्नेहिं ।' २३ ॥

आवण्णपरिहारो पुण जो मासियं वा ०जाव छम्मासियं

णा पायच्छित्तं आवराणे। नि० चू० २० उ०। यत् मासिकं यावत् पारमासिकं वा प्रायश्चित्तमापन्नं तत आपन्नं अपरिभोगेऽपि वर्त्तते, परिह्रियते इति परिहार, कर्म्मणि घञ् आपन्नमेव परिहार: आपन्नपरिहार इति व्युत्पत्ते:, तथाचाह–' मासाती आवन्ने ' इति-मासादिकं यत् प्रायश्चित्तस्थानमापन्न तत् आपन्ने–आपन्नपरिहारे द्रष्टव्यं, मासादिक यत् प्रायश्चित्तस्थानमापन्न तत् आपन्न परिहार इति भाव:। अथ वा-परिहरणं परिहार इति भावे घञ्, आपन्नेन-प्रायश्चित्तस्थानेन परिहारो वर्जन साधोरिति गम्यते। आपन्नपरिहार । तथा हि-स प्रायश्चित्ती अविशुद्धत्वात् विशुद्धचरणै: साधुभिर्यावत्प्रायश्चित्तप्रतिपत्त्या न शुद्धो भवति तावत् परिह्रियते, इह तेन आपन्नपरिहारेण प्रकृतमधिकारो, न शेषै: परिहारै। व्य० १ उ० २६ गाथाटी०।

आप ( व ) सत्ता–आपन्नसत्त्वा–स्त्री०। आपन्न:-उत्पन्न सत्त्वो-जीवो गर्भे यस्या: सा। ज्ञा० १ श्रु०२ अ० ३७ सूत्रटी०। गर्भिण्यां स्त्रियाम्, " समापन्नसत्त्वास्ता रेजुरापाण्डुरत्विष "। रघु०। वाच०।

आप ( व ) त्ति-आपत्ति-स्त्री०। आ-पद्-क्तिन्। आपदि, आपच्च-रोगाद्यभिभूतावस्था सम्यग् वर्त्तनोपायानुपलम्भश्च। वाच०। आपादने, व्य०। आपत्ति -प्रायश्चित्तस्याऽऽपादनम्। व्य० १ उ० १ प्रक० १६७ गाथाटी०। प्राप्तौ, " संवेगात् समरसापत्त्या। ८ ४।" आपत्तिश्च प्राप्ति। षो० ६ विव० ८ श्लोकटी०।

जं जं न भणियमिहयं, तस्सावत्तीए दाणसंखेवं।
भिन्नाइया य वुच्छं, छम्मासं ताय जीएणं ॥ ६० ॥

' जं जमित्याइ '। इह जीयववहारे जं ज पच्छित्त न भणियं अवराहमुद्दिसिऊण तस्सावि आवत्तिविसेसेण दाणसंखेवं भणामि। आवत्ती-पायच्छित्तट्ठाणसंपत्ती। सा य-निसीह-कप्प-ववहाराभिहिया। सुत्तओ, अत्थओ य। आणाअणवत्थमिच्छत्तविराहणा सवित्थरा। तवसो य-सो य तवो पणगादी छम्मासपज्जवसाणो अणेगाऽऽवत्तिदाणविरयणालक्खणो तेसु सव्वेसु गंथेसु। इह पुण जीयववहारे संखेवेणं आवत्तीदाणं निरूविज्जइ ॥ ६० ॥

भिन्नो अविसिट्ठो चिय,मासो चउरो य छच्च लहु-गुरुया।
निव्वियगाई अट्ठम-भत्तऽन्तं दाणमेएसिं ॥ ६१ ॥

' भिन्नो अविसिट्ठ ' इच्चाइ। ' भिन्न ' इति-ससमयसन्ना; पंचवीसं २० दिवसा भिन्नसद्देण घेप्पन्ति। सो य अविसिट्ठो एक्को चेव। अविसिट्ठगहणाओ य सव्वपणगाई भेया घेप्पन्ति। पणगं-लहुगं, गुरुगं च; दसगं-लहुगं गुरुगं च, पन्नरसगं-लहुगं, गुरुगं च, वीसगं-लहुगं, गुरुगं च, पंचवीसगं-लहुगं, गुरुगं च। एस भिन्नमासो बहुभेओ वि एक्को चेव घेप्पइ। एसो य सुयववहारो जेसु जेसु अवराहेसु भणिओ तेसु तेसु चेव अवराहेसु जीएण सव्वत्थ निव्वियगई। भिन्नो अविसिट्ठो च्चिय एवं वक्खाणियं। इयाणिं ' मासो ' त्ति-सो य लहुमासो, गुरुमासो य। तत्थ य लहुमासे पुरिमड्ढं। गुरुमासे एक्कासणयं। चउरो य छच्च मासा सम्बज्झन्ति। तत्थ लहुचउमासे आयामं। चउगुरुमासे चउत्थं। छल्लहुमासे छट्ठं। छग्गुरुमासे अट्ठमं। एवं सुत्तनिद्दिट्ठाऽऽवत्ति जहावराहं जाणिऊण जीएण निव्विइयाइ-अट्ठमभत्तन्तं तवं देज्जा।

इय सव्वाऽऽवत्तीओ, तवसो नाउं जह-कम्मं समए।
जीएण देज्ज निव्वी-इगाइ दाणं जहाऽभिहियं ॥ ६२ ॥

' इय सव्वाऽऽवत्तीओ' इच्चाइ। इय' एवं-एएण पगारेण 'सव्वाऽऽवत्तीओ'सव्वतवट्ठाणाइं।'जहकम्मं'-पायच्छित्ताणुलोमेण। समए-सिद्धन्ते। 'जीएण देज्जा'। निव्विइयाइयं दाणं जह जह भणियं तहा तहा 'देज्ज' त्ति-भणियं होइ। ( इति चूर्णि )। जीत०। इह-जीतव्यवहारे अपराधमुद्दिश्य यद्यत्प्रायश्चित्तेन भणितं तस्याऽप्यापत्तिविशेषेण दानसंक्षेपं वक्ष्ये आपत्तिश्च-अमुकातिचारेऽमुकस्य तपस: प्राप्तिरिति, सा च निशीथ-कल्प-व्यवहारादिषु विस्तरेणाभिहिता। जीत०। व्याप्तौ भ० १ श० ६ उ० ५० सूत्रटी०। उद्भूतौ, विशे० ६६ गाथाटी०। अनिष्टप्रसङ्गे च। स च व्याप्यस्याहार्य्यारोपात् व्यापकस्याहार्य्यारोप: यदि निर्वह्नि: स्यान्निर्धूम स्यादित्येवं रूप। वाच०।

आप ( व ) त्तिसुत्त-आपत्तिसूत्र-न०। शिष्यगतप्रतिसेवनाद्वारेणाऽऽपन्नप्रायश्चित्ताभिधायिनि सूत्रे, नि० चू०। प्रतिसेवनायां सत्यां प्रायश्चित्तापत्ति: स्यात् इत्यापत्तिसूत्राण्युच्यन्ते-जे भिक्खू बहुसो मासियं पडिसेवित्ता आलोइज्जा (१) बहुसो वि, बहुसो, वि बहुसो पंच पडिसेवित्ता आलोइज्जा (२) इति प्रत्येकबहुससूत्रम्, जे भिक्खू मासियं वा दो मासियं, तेमासियं, च (३) इत्यादि सकलसंयोगसूत्रम्, जे भिक्खू बहुसो मासियं बहुसो दो मासियं बहुसो तेमासियम् ( ४ ) इत्यादि बहुसंयोगसूत्रम्, एतत्सूत्रचतुष्टयमेतावता ग्रन्थेन सूत्रोपात्त व्याख्यानम्। नि०चू० २० उ०। आवत्तीए अहिगो दिज्जति, नि० चू० २० उ० ५ सूत्र-व्याख्याने।

( संपूर्णसूत्रपाठस्त्वेवम् )—

जे भिक्खू बहुसोमासियं परिहारट्ठाणं परिसेवित्ता आलोएज्जा अपलिउंचियं आलोएमाणस्स मासियं पलिउंचियं आलोएमाणस्स दोमासियं ॥ ६ ॥ जे भिक्खू बहुसोवि दोमासियं परिहारट्ठाणं परिसेवित्ता आलोएज्जा अपलिउंचियं आलोएमाणस्स दोमासिअं पलिउंचिअं आलोएमाणस्स तिमासियं ॥ ७ ॥ जे भिक्खू बहुसो तिमासिअं परिहारट्ठाणं परिसेवित्ता आलोएज्जा अपलिउंचिअं आलोएमाणस्स तिमासियं पलिउंचियं आलोएमाणस्स चाउम्मासियं ॥ ८ ॥ जे भिक्खू बहुसोवि चाउम्मासियं परिहारट्ठाणं परिसेवित्ता आलोएज्जा अपलिउंचियं आलोएमाणस्स चाउम्मासियं पलिउंचिय आलोएमाणस्स पंचमासियं ॥ ९ ॥ जे भिक्खू बहुसोवि पंचमासियं परिहारट्ठाणं परिसेवित्ता आलो–

एज्जा अपलिउंचियं आलोएमाणस्स पंचमासियं पलिउंचिश्रं आलोएमाणस्स छम्मासियं तेण परं पलिउंचियं वा अपलिउंचियं वा आलोएमाणस्स ते चेव छम्मासा ॥ १७ ॥ नि० चू० २० उ० ।

निसीहस्स पच्छिमे उद्देसगे तिविहभेदा सुत्ता, सव्वे तीस सुत्ता. तत्थ आवत्तिसुत्ता जे दस तेसिं चउरो सुत्तेणेव भणिता, इमे अत्थतो छ जाणियव्वा, तं जहा-सातिरेगसुत्तं १, बहुससातिरेगसुत्तं २, सातिरेगसजोगसुत्तं ३, बहुससातिरेगसजोगसुत्तं ४, सत्तमं सगलस्स सातिरेगस्स य संजोगसुत्तं ५, दसमं बहुसस्स बहुससाइरेगस्स सजोगे सुत्तं ६, एवं एतेसु दससु आवत्तिसुत्तेसु सणिएसु एते चेव विहिणा दस आलोयणासुत्ता भाणियव्वा । नि० चू० २० उ० ।

'इमे अत्थउ' त्ति-अर्थो-व्याख्याने-भाष्यादिके तस्मात् पद् बोद्धव्यानि, " त जहे " त्यादि, " जे भिक्खू मासाइरेगदोमासियंमि " ( १ ) त्यादि, सातिरेकसयोगसूत्रम्-" जे भिक्खू बहुसोसातिरेगमासियं, बहुसोसाइरेगदोमासिय ( २ ) च " इत्यादि । बहुससातिरेकसंयोगसूत्रम्, " जे भिक्खू मासियं सातिरेकमासियं (३) " । " जे भिक्खू दुमासिय सातिरेकदुमासिश्र च ( ४ ) " त्यादि, सकलस्य सातिरेकस्य च संयोगसूत्रम् , " जे भिक्खू बहुसो मासिय बहुसो सातिरेकमासियं च " ( ५ ) । " जे भिक्खू बहुसो दुमासिय, बहुसो सातिरेकदुमासियं चे " ( ६ ) त्यादि । बहुससातिरेयस्स य संजोगसुत्तं इत्येवमापत्तिसूत्राणि दश कथितानि । नि० चू० २० उ० ।

आप ( व ) य-आपद्-त्रि० । आपद ददातीत्यापदः । रोगादिके, पुरुषादिके च । आतु० ।

आप ( पि ) लव-आप्लव-पु० । आ-प्लु-घञ्-भावे । पक्षे-अप् । स्नाने, जलाना सर्व्वत समुच्छलने, ल्युट्-आप्लवनं त्रत्रैव । न० । वाच० । लात् ॥ ८ । २ । १०६ ॥ इति हैमप्राकृतसूत्रेण लकारात् पूर्वं इकारः । प्रा० ।

आप ( य ) सरीरअणवकंखवत्तिया-आत्मशरीरानवकाङ्क्षाप्रत्यया-स्त्री० । अनवकाङ्क्षप्रत्ययक्रियाभेदे, स्था० । तत्रात्मशरीरानवकाङ्क्षप्रत्यया सा स्वशरीरक्षतिकारिककर्माणि कुर्वत. क्रिया भवति । स्था० २ ठा० १ उ० ६० सूत्रटी० ।

आपहल्लिय-आघूर्णित-त्रि० । ' आघुम्मिय ' शब्दार्थे, प्रा० ४ पाद ।

आपा ( वा ) ग ( य )-आपाक-पु० । समन्तात्परिवेष्ट्य पच्यतेऽत्र आ-पच् । आधारे घञ् । कुम्भकारस्य मृण्मयपात्रपचनस्थाने, वाच० । तथा च- कुंभकाराऽऽवाएइ वा कवेल्लुयाऽऽवाएइ वा इट्टाऽऽवाएइ वा " ( सूत्र-५६७+ ) । कुम्भकारस्यापाको—भाण्डपचनस्थानम् , कवेल्लुकानि प्रतीतानि तेषामापाक प्रतीत एव । स्था० ८ ठा० ३ उ० । भावे घञ् । ईषत्पाके, सम्यक् पाके पुटपाके च । वाच० ।

आवाड-आवाड-पुं० । स्वनामख्याते चिलातजातौ, " उत्तरड्ढभरहे वासे बहवे आवाडा णाम चिलाता परिवसन्ति " । आ० चू० १ अ० ।

आपा ( वा ) य-आपात-पुं० । हठात्-अविवेकाम कारणान्तरमाचिव्याभावेऽपि आगत्य पात । अतर्कितागमने, " गरुडापातविश्लिष्ट-मेघनादास्त्रबन्धन " रघु " नद्यापातभयात् पथि " कुमा० । आपतत्यत्राधारे घञ् । उपक्रमे, " आपातरम्या विषया पर्य्यन्तपरितापिन " किरा० " आपातरम्या -तत्कालरमणीया " मल्लि० । उपक्रमे च " मध्यापात इति मनु । मध्यापाते मधुरोपक्रम " कुल्लू । वाच० । " आपातभद्दते " ( सूत्र-२५५ × ) । आपतनमापात । प्रथममीलके, । स्था० ४ ठा० १ उ० । तत्प्रथमतया ससर्गे, भ० ।

तस्स भोयणस्स आवाए भद्दए भवइ तओ पच्छा परिणममाणे परिणममाणे दुरूवत्ताए दुग्गंधत्ताए जहा महस्सवए ०जाव भुज्जो भुज्जो परिणमइ । (सूत्र-३०६+)

आपात -तत्प्रथमतया संसर्गे । भ० ७ श० १० उ० । अभिमुख्येन समवाये, " आवाए सव्वदव्वाणं " ॥२६३४॥ सर्वेषामपि जीवादिद्रव्याणामापाते-आभिमुख्येन समवाये निष्पद्यते इति शेष । विशे० । अभ्यागमे, " अणावायमसंलोए " ( २६६ × ) । न आपात -अभ्यागम , स्वपक्षपरपक्षयोर्यस्मिन् स्थण्डिले तदनापात' । ओघ० । वृ० । " तत्थाऽऽवायं दुविह " (२६७+) । तत्र-आपात-स्थण्डिलं द्विविधम्-द्विप्रकारम् । ओघ० । वृ० । ( अस्य बहुभेदा 'थंडिल' शब्दे चतुर्थभागे वक्ष्यते ) " अणावायमसंलोए चिट्ठज्जा " ( सूत्र-२६+ ) । अनापाते-विजने, असलोके च सन्तिष्ठेत् । आचा० २ श्रु० १ चू० १ अ० ५ उ० । प्राप्तौ, आपात.-विषयप्राप्ति । आ० चू० १ अ० ।

आपाद-पु० । आ-पद-घञ । फललाभे, आगतौ च । पादपर्य्यन्तम् । अव्य० । पादपर्यन्ते, अव्य० । वाच० ।

आपा (वा) यभद्दय-आपातभद्रक-पुं० । आपातनमापात - प्रथममीलकस्तत्र भद्रको-भद्रकारी दर्शनाऽऽलापादिना सुखकरत्वादापातभद्रक. । प्रथममीलके दर्शनाऽऽलापादिना सुखकरे, स्था० । " आवायभद्दए णाममेगे, णो संवासभद्दए ( सूत्र-२५५× ) । स्था० ४ ठा० १ उ० ।

आपायावच्च-आप्राजापत्य-न० । अहोरात्रभवे एकोनविंशतितमे स्वनामख्याते मुहूर्त्ते, कल्प० १ अधि० ६ क्षण ।

आपुच्छणा-आप्रच्छना-स्त्री० । आपृच्छाया करणमाप्रच्छना । पञ्चा० १२ विव० २६ गाथाटी० । प्रश्नकरणे, पञ्चा० १२ विव० २ गाथाटी० । भ० । "आपुच्छणा उचाइयं दोहला ' ( सूत्र-२६+ ) ' आपुच्छण त्ति-भर्त्तुरापृच्छा-' इच्छामि णं तुब्भेहिं अब्भणुन्नाया " इत्यादिका । विपा० ८ अ० । आ-मर्य्यादया तथाविधविनयलक्षणया, अभिविधिना वा सर्वप्रयोजनाभिव्याप्तिलक्षणेन प्रच्छनं गुरो प्रश्नकरणमाप्रच्छना । पञ्चा० १२ विव० २ गाथाटी० । सामाचारीभेदे, प्रव० १०१ द्वार ७६८ गाथाटी० । सा च कर्त्तुमभीष्टे कार्ये प्रवर्तमानेन गुरो कार्य्या-भगवन् ! अहमिदं करोमीति । प्रव०

१०१ द्वार ७७३ गाथाटी०। आ० चू०। जीत०। ग० । अनु० । "आपृच्छा" ध० ३ अधि० । अयं भाव -यत्कार्यं साक्षाद्गुरुं प्रष्टुं शक्यते विशेषप्रयोजनं च तत्र साक्षादापृच्छा, यत्तु मुहुर्मुहुः सम्भावितया प्रष्टुमशक्यं तत्रापि बहुवेलसंदेशनेनापृच्छाऽऽवश्यकीति । ध० ३ अधि० । "आपुच्छणा य तइया" । (२×) । तृतीया आपृच्छना यतो हि श्वासोच्छ्वासादिकं त्यक्त्वा अपरं सर्वं कार्यं गुरोः पृच्छां विना न कार्यम् तस्मादेषा आप्रच्छना । उत्त० २६ अ० । "आपुच्छणा सयंकरणे" (५+) । स्वयम् आत्मना कार्याणां करणे गुरोः आप्रच्छना कर्त्तव्या, न च गुरौ सति स्ववुद्ध्यैव गुरुम् अनापृच्छ्य कार्यं कर्त्तव्यमिति भाव । उत्त० २६ अ०। आङिति-सकलकृत्याभिव्याप्त्या प्रच्छना प्रच्छना-इदमहं कुर्या न वेत्येवंरूपा तां स्वयमित्यात्मन करण कस्यचिद्विवक्षितकार्यस्य निवर्त्तनं स्वयकरणम् । तस्मिन् , उत्त० गाई० २६ अ० । उच्छ्वासनिःश्वासौ विहाय सर्वकार्येष्वपि स्वसम्बन्धिषु गुरवः पृष्टव्या , अतः सर्वविषयमपि प्रथमत प्रच्छनमापृच्छेत्युच्यते तथा च निर्युक्तिकृता सामान्येनैवाभिहितम्-" आपुच्छणा उ कज्जे " ति । उत्त० २६ अ० । आ० म० ।

तथा च—

आउच्छणा उ कज्जे, गुरुणो गुरुसम्मयस्स वा णियमा ।
एवं खु तयं सेयं, जायति सति णिज्जरहेऊ ॥ २६ ॥

व्याख्या-आपृच्छाया करणम् आपृच्छना, तुशब्द पुनरर्थे , तत आपृच्छना पुन कार्ये-ज्ञानादिसाधने प्रयोजने सति कार्येति शेष , कस्येत्याह-गुरो रत्नाधिकस्य तत्संमतस्य वा गुरुवहुमतस्य वा स्थविरादे वाशब्दो विकल्पार्थो, नियमात्-अवश्यभावेन अथ कस्मादेषा विधेयेत्याह-एवं 'खु' एवमेव. गुर्वाद्यापृच्छापूर्वकमित्यर्थः , तत्कार्यं श्रेयोऽतिशयेन प्रशस्यं जायते-भवति सकृत्सदा निर्जराहेतुकर्म्मक्षयकारणमिति कृत्वेति गाथार्थ. ।

अथ कथमापृच्छाविषयभूतं कार्यं श्रेय. स्यादित्यत आह-

सो विहिना या तस्सा-हणम्मि तज्ञाणा सुणायंति ।
सन्नाणा पडिवत्ती, सुहभावो मंगल तत्थ ॥ २७ ॥

व्याख्या-' सो ' त्ति-य -आपृच्छ्यते स गुरु गुर्वनुमतो वा, विधिज्ञाता चिकीर्षितकार्यस्य वक्ष्यमाणस्यविधानस्य वेदिता भवति, गीतार्थत्वात् ततश्च तत्साधने अहमिदं कार्यं करोमीत्येवंविधिज्ञातगुरुनिवेदनं, अथ वा-विधिप्रतिपादने सति स हि पृच्छ्यमानो विधिज्ञत्वाच्चिकीर्षितकार्यविधिं साधयति, यथा-' अच्छोडपिट्टणासु य न भुंजे धोए पयावणं न करे " इत्यादि तज्जाण' त्ति-विधिज्ञान पृच्छकस्य भवति ततश्च—' सुनायं ' ति-' अहो गुरुणा जिनेन वा सुष्ठु ज्ञातं सकलसत्त्वानुपघातकत्वेन मुमुक्षोश्चोपग्राहकत्वेन निपुणमिदं दृष्टं, नैव दर्शनान्तरीयैरिति " एव विधात् स्वज्ञानात्-स्वगतसद्बोधात् सकाशात् प्रतिपत्तिर्गुरुरेव जिन एवाप्त इत्येवभूता रुचिर्भवति, सा च शुभभाव -प्रशस्ताध्यवसायो वर्त्तते, स च मङ्गलं—विघ्नविघातकं वस्तु तत्र कार्ये प्रवर्तमानस्येति-शेष'।अथ वा-न गुरु विधिज्ञाता-उपायज्ञ तत्साधने-चिकीर्षितकार्यनिष्पादने ततश्च तज्ज्ञानात् गुरो सकाशात् यत् ज्ञानं तस्मात् सुज्ञानं कार्यं भवति सुज्ञानाच्च प्रतिपत्तिः-सम्यक् क्रियाभ्युपगम. सा च शुभो भाव शेषं तथैव इति गाथार्थं । पञ्चा० १२ विव० ।

आपुच्छा-आपृच्छा-स्त्री० । आ-पृच्छ-अङ् । आलापे, जिज्ञासायाम्, आभाषणे-गतागतकाले, शुभे, प्रश्ने, आनन्दने च । वाच० । "आपुच्छणा य कज्जे" ( ६६७× ) आपृच्छनमापृच्छा । समाचारीभेदे, सा च कर्त्तुमभीष्टे कार्य्ये प्रवर्तमानेन गुरो. कार्य्या-अहमिदं करोमीति । आ० म०१ अ०। ( एतद्वक्तव्यता ' आपुच्छणा ' शब्देऽनुपदमेव गता ) ।

आपुच्छणिज्ज-आप्रच्छनीय-त्रि० । पृष्टव्ये, भ० १८ श० २ उ० ६१७ सूत्र । सकृत्पृष्टव्ये, " आपुच्छणिज्जे " (सूत्र-७×) आप्रच्छनीय -सकृद् पृष्टव्य । आ० १ श्रु० १ अ० ।

आपुच्छित्ता-आपृच्छ्य-अव्य० । आ-पृच्छ ल्यप् । जिज्ञासित्वेत्यर्थे, वाच० । ' आपुच्छित्ता ण ठंति सट्ठाणे"(४८६+)। आपृच्छ्य-प्रश्नार्हत्वाद् ; गुरुमिति गम्यते इति । पं० व० २ द्वार ।

आपूविय-आपूपिक-त्रि० । कर्मजवुद्धेर्दशमे उदाहरणभेदे अपूपकर्त्तरि, स चामित्याप्यपूपाना दलस्य मानं जानाति "पूयइ" १० (सूत्र-६८×) नं० ।

आपूरिय-आपूरित-न० । आ-पूर-क्त-यस्यापूरणं कृतम् । तस्मिन् , " पहयदेवदुंदुहिनिनायाऽऽपूरियदिसामडलं " ति आ० म० १ अ० ३४३ गाथाटी० । अभिव्याप्ते च । वाच० । " आपूरियं " ( २५१+ ) । 'आपूरियं' ति-आपूरितं-संव्याप्तभूतं वासितमित्यर्थ. । विशे० ।

आपूरिमाण-आपूरयत्-त्रि० । आपूरणं कुर्वति, "सद्देणं तप्पएसे सव्वओ समंता आपूरेमाणे" ( सूत्र × ) । शब्देन तान् प्रत्यासन्नान् सर्वतो-दिक्षु, समन्ततो-विदिक्षु आपूरयति शत्रन्तस्य साविदं रूपम् । रा० । जी० ।

आपूर्यमाण-त्रि० । आ-पूर-कर्मणि शानच् । सम्यक् पूर्य्यमाणे, वाच० । प्रश्न० ३ आश्र० द्वार ११ सूत्रटी० । समन्तात्प्रसृते, " आपूर्यमाणमचलप्रतिष्ठं, समुद्रमापः प्रविशन्ति यद्वत् " गीता० । आधारे शानच् । सूर्य्यकिरणैः पूर्य्यमाणचन्द्रस्याधारे पक्षे, वाच० ।

आफोडिय-आस्फोटित-त्रि० । करास्फोटे, प्रश्न० । "आफोडियसीहनाया " (सूत्र-११×) । आस्फोटितं-करास्फोटरूपम् । प्रश्न० ३ आश्र० द्वार ।

आवबहुल-आपबहुल-न० । रत्नप्रभाया पृथिव्या अप्बहुले काण्डे स० ।

इमीसे णं भंते ! रयणप्पभाए पुढवीए आप(व)बहुले कण्डे केवतियं बाहल्लेण पण्णत्ते, गोयमा ! असीतिजोयणसहस्साइं बाहल्लेण पण्णत्ते । ( सूत्र-७२ ) । जी० ३ प्रति० १ उ० ।

आबाह-आबाध-न० । आ-बाध-भावे अ । पीडायाम्, तापत्रय क्लेशे च । वाच० मानसपीडायाम् , " आबाहे च

भये वा" (४६६×)। आबाधं नाम-मानसी पीडा। वृ०१ उ०३ प्रक०। स्त्रीत्वे टाप्। तत्र मन शरीराऽऽवाधकराणि शल्यानि। सुश्रु०। नास्ति बाधा यस्य। पीडाशून्ये, त्रि०। वाच०।

**आभंकर**-आभङ्कर-पुं०। स्वनामख्याते महाग्रहे, सू० प्र० २० पाहु० ७ गाथा १०७ सूत्र। कल्प०। चं० प्र०।

दो आभंकरा। (सूत्र-६०+)

स्था० २ ठा० ३ उ०। स्वनामख्याते विमानभेदे च। स० ३ सम० ३ सूत्र।

**आभरण**-आभरण-न०। आ-भृ कर्मणि ल्युट्। भूषणे, स्था० ८ ठा० ३ उ०। सू० प्र०। आ० म०। औ०। 'ललियकयाऽऽभरणे' (सूत्र-+)। ललितानि-शोभमानानि कृतानि न्यस्तान्याभरणानि-सारभूषणानि यस्य स तथा। तं०। "आभरणभूसणविराइयमगुवग" (सूत्र +)। आभरणानि-अङ्गपारधेयानि ग्रैवेयककङ्कणादीनि। कल्प० १ अधि० २ क्षण। "आभरणेहिं विभूसिओ" ॥ ६ ॥ आभरणैः—कुण्डलमुकुटहारादिभि। उत्त० २२ अ०। "धेणूणाऽऽभरणाइं" (७२+)। आभरणानि-वस्त्राणि। व्य० ५ उ०। "पाण्डवानां सभामध्ये, दुर्योधन उपागत। तस्मै गाश्च हिरण्य च, सर्वाण्याभरणानि च"। १। वाच०। आभरणप्रधाने च। "आभरणाणि वा" (सूत्र० १४५+)। आभरणानि-आभरणप्रधानानि। आचा० २ श्रु० १ चू० ५ अ० १ उ०। भावे ल्युट्। सम्यक् पोषणे च। वाच०।

**आभरणचित्त**-आभरणचित्र-त्रि०। आभरणैश्चित्राणि—विचित्राण्याभरणचित्राणि। आभरणैर्विचित्रे, जी० ३ प्रति० २ उ० १४७ सूत्र।

**आभरणजहट्ठाणविविहपरिहाण**--आभरणयथास्थानविविधपरिधान-न०। आभरणाना यथास्थान विविधरूपेण परिधानलक्षणे द्वासप्ततिमे कलाभेदे, कल्प० १ अ० ७ क्षण २११ सूत्र।

**आभरणप्पिय**-आभरणप्रिय-पुं०। पुरुषभेदे, वृ०।

आभरणपिए जाणसु, अलंकरिते उ केसमादीणि।४२५×।

केशादीनि माल्यादिभिरलङ्कारैरलङ्कुर्वत पुरुषान् आभरणप्रियान् जानीहि। वृ० १ उ० ३ प्रक०।

**आभरणविचित्त**-आभरणविचित्र-त्रि०। आभरणविभूषिते, आचा०। "आभरणविचित्ताणि वा" (सूत्र-१४५×)। आभरणविचित्राणि-गिरिविङ्कादिविभूषितानि। आचा० २ श्रु० १ चू० ५ अ० १ उ०।

**आभरणविधि** आभरणविधि-पुं०। आभरणं—कटकादि तस्य विधिं-भेदा आभरणविधि। आभरणप्रकारेषु वृ० १ उ० ३ प्रक० ३२६ गाथा। कलाभेदे, नि० चू० ६ उ० ६४ गाथा। स०। ज्ञा०। जं०। "आभरणविहिपरिमाण करेइ" उपा० १ अ०। (सूत्रम्-'आणंद' शब्देऽस्मिन्नेव भागे गतम्)

**आभरणविभूमिय**-आभरणविभूषित-त्रि०। आभरणालङ्कृते, "आभरणविभूसियाणि वा" (सूत्र-१४५+)। आचा० २ श्रु० ५ अ० १ उ०।

**आभव**-आभव-अव्य०। आजन्मेत्यर्थे, आसंसारमित्यर्थे, च। "तव्वयणसेवणा आभवमखंडा" ॥ ३४ ॥ तद्वचनसेवना—गुरुवचनसेवा, आभवम्-आसंसारम्। पञ्चा० ४ विव०। आभवमखण्डा-आजन्म, आससारं वा सम्पूर्णा। ल०। "विसुज्झमाणे आभवं भावकिरियमाराहेइ" (सूत्र-४×)। आभवम्-आजन्म, आससारं वा भावक्रियं निर्वाणसाधकमाराधयति। प० सू०।

**आभवंताहिगार**-आभवदधिकार-पुं०। व्यवहारभेदे, पं० भा०। "ववहारो होइ दुविहो, पच्छित्ते आभवते य" पं० भा० १ कल्प। व्यवहर्तव्यभेदे च। व्य०। "आभवते य पच्छित्ते, ववहरियव्व समासतो दुविहं" ॥ ५६+॥ व्य० १० उ०। (आभवद्व्यवहार क्षेत्रविषय उवसंपया' शब्देऽस्मिन्नेव भाग वक्ष्यते) आभवद्व्यवहाराधिकारे, व्य०।

आभवंताऽहिगारे उ, वट्टंते तप्पसंगया।
आभवंता इमे अन्ने, सुहसीलादि आहिआ ॥ ४३७ ॥

आभवदधिकारे वर्तमाने तत्प्रसङ्गाद्-आभवदधिकारप्रसङ्गादिमे-वक्ष्यमाणा अन्ये आभवन्त —सुखशीलादयस्तु सुखशीलादिप्रयुक्ता आख्याता। व्य० ४ उ०।

**आभव्व**-आभाव्य-त्रि०। समन्ताद्भवितु योग्ये, व्य०। एते ते-अनन्तरोदिता चिन्हं विमार्गयन्त सन्त अभिधारयन्तं यान्ति-अभिधारयत आभाव्या भवन्ति, शेषेषु पुनरनभिधारयत्सु आचार्य-श्रुतगुरुस्वामी भवति। शेषा अनभिधारयन्त. श्रुतगुरोराभाव्या भवन्ति इत्यर्थ। उक्त च-"जइ ते अभिधारती, पडिच्छन्ते पडिच्छगस्सेव। अह नो अभिधारती, सुयगुरुणो तो उ आभव्वा" ॥ १ ॥ व्य० ४ उ०। (अस्य बहुवक्तव्यता 'चरियापविट्ठ' शब्दे तृतीयभागे ११६४ पृष्ठे वक्ष्यते)

**आभा**-आभा-स्त्री०। आ-भा-अङ्। प्रभायाम्, प्रश्न० ४ आश्र० द्वार १५ सूत्रटी०। दीप्तौ, वाच०। छायायाम्, जी० ३ प्रति०१ उ० २१४-सूत्र। शोभायाम्, कान्तौ, उपमाने, वाच०।

**आभास**-आभास-पुं०। आभासते आ-भास अच्। उपाधितुल्यतया भासमाने प्रतिबिम्बे, दुष्टहेत्वादौ, वाच०। 'प्रमाणस्य स्वरूपादि चतुष्टयाद्विपरीत तदाभासम्" इति ॥२३॥(रत्ना०) तद्वदाभासते इति। रत्ना०६ परि०।(अस्यसूत्रस्यार्थ 'पमाणाभास' शब्दे पञ्चमभागे विस्तरतो वक्ष्यते) (हेत्वाभासाश्च पञ्चधा) भाषा० "सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकाला हेत्वाभासा" गौतमसूत्र०। पक्षसत्त्वसपक्षसत्त्वविपक्षासत्त्वाबाधितत्वासत्प्रतिपक्षत्वोपपन्नो हेतुर्गमक स इवाभासत इति हेत्वाभासस्तेन तद्भिन्नत्वे सति तद्धर्मवत्त्वम् पञ्चरूपोपपन्नत्वाभावे सति तद्रूपेणाभासमानत्व हेत्वाभासत्वमिति फलितार्थ "हेत्वाभासाश्च यथोक्ता" गौ० सूत्र०। एव प्रमाणाभासो युक्त्याभास आगमाभास इत्यादावपि प्रामाण्याद्यभाववत्त्वे सति प्रमाणादिरूपेणाभासमानत्वमर्थ। 'एव वहवा विप्रतिपत्ता

युक्तिवाक्यतदाभाससमाश्रया सन्त" ॥ शा० भा० ॥ तथा च यद्वाचकपदोत्तरमाभासशब्दः प्रयुज्यते तस्य दुष्टत्वं तेन गम्यते। रसाऽऽभासादावपि तिर्यग्योन्यादिगतत्वेन परनायकगतत्वेन च दुष्टत्वाद्रसाऽऽभासत्वम्। पुनरुक्तवदाभासादौ च न दुष्टत्वम्, किन्तु-पुनरुक्तभिन्नत्वेनाऽऽभासमानत्वात् वस्तुतोऽपुनरुक्तत्वमेव गम्यत इत्येव तत्र विशेषः। "रस्यत इति रस इति व्युत्पत्तिदर्शनात् भावतदाभासादयोऽपि गृह्यन्ते" ॥ सा० द० ॥ तत्र रसाऽऽभासः "मधुद्विरेफः कुसुमैकपात्रे" इत्यादि। "अत्र हि सम्भोगशृङ्गारस्य तिर्यग्विषयत्वाद्रसाऽऽभासत्वम्"। सा० द०। "आपाततो यदर्थस्य पुनरुक्तावभासनम्। पुनरुक्तवदाभासः" ॥ सा० द० ॥ भावे-घञ्। ३ तुल्यप्रकाशे, आभास्यतेऽनेन आ-भास-णिच् करणे अच्। ग्रन्थावतारणार्थे ग्रन्थाभिप्रायवर्णने, व्याख्यानाशभेदे च। वाच०। (प्रत्यक्षाऽऽभासं 'पच्चक्खाऽऽभास' शब्दे पञ्चमभागे वक्ष्यते) (प्रत्यभिज्ञाऽऽभासम् 'पच्चभिण्णाऽऽभास' शब्दे पञ्चमभागे दर्शयिष्यामि) (तर्काभासम् 'तक्काऽऽभास' शब्दे चतुर्थभागे दर्शयिष्यामि) (पक्षाऽऽभासम् 'पक्खाऽऽभास' शब्दे पञ्चमभागे निरूपयिष्यामि। अस्य वहव प्रकारास्तान् तत्रैव दर्शयिष्यामि) (हेत्वाऽऽभासस्वरूपं तद्भेदाश्च 'हेउआभास' शब्दे सप्तमे भागे द्रष्टव्या) (दृष्टान्ताऽऽभासाः 'दिट्ठन्ताऽऽभास' शब्दे चतुर्थे भागे विस्तरतो विलोकनीया) (उपनयाऽऽभासस्वरूपम् 'उवणयाऽऽभास' शब्देऽस्मिन्नेव भागे द्रष्टव्यम्) (निगमनाऽऽभासः 'णिगमण' शब्दे चतुर्थभागे दर्शयिष्यमाणः) (आगमाऽऽभास 'आगमाऽऽ' शब्देऽस्मिन्नेव भागे दर्शित)

सम्प्रति संख्याऽऽभासमाख्यान्ति—

प्रत्यक्षमेवैकं प्रमाणमित्यादिसंख्यानं तस्य संख्याऽऽभासमिति ॥ ८५ ॥

प्रत्यक्षपरोक्षभेदाद्धि प्रमाणस्य द्वैविध्यमुक्तम्; तद्वैपरीत्येन प्रत्यक्षमेव, प्रत्यक्षानुमाने एव, प्रत्यक्षानुमानागमा एव प्रमाणमित्यादिकं चार्वाकवैशेषिकसौगतसांख्यादितीर्थान्तरीयाणां संख्यानं, तस्य प्रमाणस्य संख्याऽऽभासम्। प्रमाणसंख्याभ्युपगमश्च परेषामितोऽवसेयः—

'चार्वाकोऽध्यक्षमेकं सुगतकणभुजौ सानुमानं सशाब्दं, तद्वैतं पारमर्षः सहितमुपमया तत् त्रयं चाऽक्षपादः। अर्थाऽऽपत्त्या प्रभाकृद्वदति च निखिलं मन्यते भट्ट एतत्, साभावं द्वे प्रमाणे जिनपतिसमये स्पष्टतोऽस्पष्टतश्च ॥१॥"

अथ विषयाऽऽभासं प्रकाशयन्ति—

सामान्यमेव, विशेष एव, तद् द्वयं वा स्वतन्त्रमित्यादिस्तस्य विषयाऽऽभासः इति ॥ ८६ ॥

सामान्यमात्रं सत्ताद्वैतवादिनो, विशेषमात्रं सौगतस्य, तदुभयं च स्वतन्त्रं नैयायिकादेरित्यादिरेकान्तस्तस्य प्रमाणस्य विषयाऽऽभासः। आदिशब्दान्नित्यमेवाऽनित्यमेव तद्द्वयं वा परस्परनिरपेक्षमित्याद्येकान्तपरिग्रहः।

अथ फलाऽऽभासमाह—

अभिन्नमेव भिन्नमेव वा प्रमाणात्फलं तस्य तदाभासमिति ॥ ८७ ॥

अभिन्नमेव प्रमाणात्फलं बौद्धानां, भिन्नमेव नैयायिकादीनां, तस्य प्रमाणस्य तदाभासं फलाऽऽभासं; यथा फलस्य भेदाभेदैकान्तावकान्तावेव तथा सूत्रेन प्रत्र प्रागुपपादितमिति। रत्ना० ६ परि०। (नयाऽऽभासस्वरूपभेदा बहव, ते च 'णयाऽऽभास' शब्दे चतुर्थभागे दर्शयिष्यन्ते)

**आभासिय–आभाषिक**–पुं०। म्लेच्छजातिभेदे, प्रज्ञा० १ पद। प्रश्न०।

**आभासित**–त्रि०। परस्परकथिते, नि० १ श्रु० ३ वर्ग ३ अ०।

**आभासिय–आभाषि (सि) क**–पुं०। आभाषि (सि) कद्वीपजे मनुष्ये, जी० ३ प्रति० ३ अधि० १ उ०। स्था०। अन्तरद्वीपिकमनुष्यजातिभेदे च। टाप्। जी० २ प्रति०।

**आभासियदीव–आभाषि (सि) कद्वीप**–पुं०। अन्तरद्वीपभेदे, प्रज्ञा०। स च हिमवतः पर्वतस्य पर्यन्तादारभ्य दक्षिणपूर्वस्यां दिशि त्रीणि योजनशतानि लवणसमुद्रमवगाह्य द्वितीयदंष्ट्राया उपरि एकोरुकद्वीपप्रमाण आभासिकनामा द्वीपो वर्तते। प्रज्ञा० १ पद। कर्म०। स्था०। नं०।

कहि णं भंते ! दाहिणिल्लाणं आभासियमणुयाणं आभासियदीवे नामं दीवे पण्णत्ते ? । सूत्र (१११×) जी० ३ प्रति० ३ अधि० १ उ०। ('अंतरदीव' शब्दे प्रथमभागे ६५ पृष्ठे संपूर्णं सूत्रं गतम्।)

**आभासी–आभाषी**–स्त्री०। आभाषि (सि) कद्वीपजे, मनुष्यस्त्रीभेदे, जी० ३ प्रति० ३ अधि० १ उ० ११२ सूत्र।

**आभिओग–आभियोग्य**–पुं०। आ-समन्ताद् युज्यन्ते-प्रेष्यकर्मणि व्यापार्यन्ते इत्याभियोग्याः। ध० ३ अधि० ८१ श्लोक। अभियोगं-व्यापारणमर्हन्तीत्याभियोग्याः। स्था० ४ ठा० ४ उ०। आ-समन्तात् आभिमुख्येन युज्यन्ते-प्रेष्यकर्मसु व्यापार्यन्ते इत्याभियोग्या आभियोगिका। रा०। किंकरे, किंकरस्थानीये देवविशेषे च। स्था० ४ ठा० ४ उ०। रा०। "आभियोगाणं देवाणं अंतिए पयमट्ठं सोच्चा" (सूत्र— +) रा०। अभिमुखं कर्मणि युज्यते-व्यापार्यते इत्याभियोग्यस्तस्य भावः कर्म वा आभियोग्यम्।" व्यञ्जनात् पञ्चमान्तस्थायाः सरूपे वा" ॥ १। ३। ४७ ॥ इत्येकयकारस्य लोपः। जी० ३ प्रति० ४ अधि० २ उ० १४७ सूत्रटी०। अभियोग आज्ञाप्रदानलक्षणोऽस्यास्तीत्याभियोगी तद्भाव आभियोग्यम्। दश० ६ अ० २ उ०। कर्मकरभावे, दश० ६ अ० २ उ० १० गाथा। कर्मकरकर्मणि च। जी० ३ प्रति० ४ अधि० २ उ० १४७ सूत्रटी०। 'आभिओगमुवट्ठिया'। आभियोग्यं कर्मकरभावमित्यर्थः, उपस्थिताः-प्राप्ताः। दश० ६ अ० २ उ० ५ गाथाटी०।

**आभियोगता–आभियोग्यता**–स्त्री०। अभियोगं-व्यापारणमर्हन्तीत्याभियोग्याः-किंकरदेवविशेषास्तद्भावस्तत्ता। किंकरस्थानीयदेवविशेषत्वे, स्था०।

तत्कारणं दर्शित यथा—

चउहिं ठाणेहिं जीवा आभिओगत्ताए कम्मं पगरेंति ।
तं जहा-अणुक्कोसेणं, परपरिवाएणं, भूइकम्मेणं को-
उयकरणेणं । ( सूत्र-३४५ + )

अभियोगं-व्यापारणमर्हन्तीत्याभियोग्या -किङ्करदेवविशे-
षास्तद्भावस्तत्ता तस्यै तया वेति आत्मोत्कर्षेण-आत्मगुणा-
भिमानेन, परपरिवादेन-परदोषपरिकीर्तनेन, भूतिकर्म्मणा-
ज्वरितादीना भूत्यादिभी रक्षादिकरणेन कौतुककरणेन-सौ-
भाग्यादिनिमित्तं, परस्नपनकादिकरणेनेति, इयमप्येवम-
न्यत्र-" कोउयभूइकम्मे, पसिणपसिण निमित्तमाजीवी ।
इड्ढिरससायगरुओ, अभिजोगं भावणं कुणइ " ॥ १ ॥
इति । स्था० ४ ठा० ४ उ० ।

आभिओगपण्णत्ति-आभियोगप्रज्ञप्ति-स्त्री० । विद्याधरसम्ब-
न्धिनि विद्याभेदे, " सकामणि(अ)आभिओगपण्णत्तिगम-
णीथंभणीसु य बहुसु विज्जाहरीसु विज्जासु विस्सुयजसे "
( सूत्र-१२२ ) । ज्ञा० १ श्रु० १६ अ० ।

आभियोगि ( न् )-आभियोगिन्-पुं० । अभियोग-आज्ञा-
प्रदानलक्षणोऽस्यास्तीत्याभियोगी । कर्मकरे, दश० ६ अ० ।

आभिओगिय-आभियोगिक-पुं० । आभिमुख्येन योजनम्-
अभियोग प्रेष्यकर्मसु व्यापार्य्यमाणत्वम् । अभियोगेन
जीवन्तीत्याभियोगिका, "चेतनादेर्जीवति" । इकण्-
प्रत्यय । कर्मकरे, रा० । " आभिओगिएहिं " ( सूत्र-
१४ + ) । आभियोग -पारवश्य प्रयोजन येषा ते आ-
भियोगिका । विपा० १ श्रु० २ अ० । अभियोग, प्र-
योजनमस्येत्याभियोगिकम् । परतन्त्रताफले कर्म्मणि, प-
ञ्चा० १२ विव० ७ गाथा । विद्यामन्त्रादौ च । " आभि-
ओगेहि य आभिओगिता " ( सूत्र-१८× ) । अभियोगश्च
द्वेधा । ( स च ' अभिओग ' शब्दे प्रथमभागे विस्तरत
प्रतिपादित ) विपा० १ श्रु० २ अ० । पराभिभवहेतौ, चू-
र्णादिके च । " आभिओगिए वा " ( सूत्र-६६ × ) ।
' आभिओगिए ' त्ति-पराभिभवहेतुरिति । ज्ञा० १ श्रु० १४
अ० । अभियोजनमभियोग प्रेष्यकर्म्मणि व्यापार्य्यमाणत्व-
मिति भाव । अभियोगे नियुक्ता आभियोगिका । देव-
विशेषे, " आभिओगिए देवे सद्दावेति, आभिओगिए देवे
सद्दावेत्ता एव वयासी " ( सूत्र-१४१ + ) । आभियो-
गिकान् देवान् शब्दायन्ते-आकारयन्ति शब्दाययित्वा च
तानेवमवादिषु । जी० ३ प्रति० ४ अधि० २ उ० । रा० ।

आभिओगिय-आभियोगित-त्रि० । वशीकरणयन्त्रमन्त्रा-
भिसस्कृते, आव० । " आभिओगिए गहिए " ॥ ७३ + ॥
आभियोगिते-वशीकरणाय मन्त्राभिसस्कृते गृहीते सति ।
आव० ४ अ० ।

आभिओगियक्खय-आभियोगिकक्षय-पुं० । अभियोग
प्रयोजनमस्येत्याभियोगिकम्—परतन्त्रताफलं कर्म तस्य
क्षयो-विनाश आभियोगिकक्षय । परतन्त्रताफलकर्म्मणो
विनाशे पञ्चा० ।

एवं आणाराहण-जोगाओ आभियोगियक्खओ त्ति
॥ ७ × ॥

एवम्-उक्तविपर्ययेणेच्छाकारप्रयोगविधिना आज्ञाराधनयो-
गाद्-आप्तोपदेशपालनसम्बन्धात् पराभियोगपरमार्थान्
अभियोग, प्रयोजनमस्येत्याभियोगिकं-परतन्त्रताफलं कर्म
तस्य क्षयो-विनाश आभियोगिकक्षयो भवति । पञ्चा०
१२ विव० ।

आभिओगियभावणा-आभियोगिकभावना-स्त्री० । आ-
समन्तात् युज्यन्ते-प्रेष्यकर्मणि व्यापार्यन्ते इत्याभियो-
ग्या , किंकरस्थानीया देवविशेषा , तेषामियमाभियोगिकी ।
ध० ३ अधि० ८१ श्लोक । सैव भावना-आभियोगिक-
भावना । भावनाभेदे, ग० । ( अस्या भावनाया स्वरूप
' भावणा ' शब्दे पञ्चमे भागे वक्ष्यते ) ।

" मंता जोगं काउं, भूइकम्मं च जे पउंजति ।
सायरसइड्ढिहेउ अभिओग भावण कुणइ ॥ २ ॥ "

(अस्या व्याख्या)-मन्त्राणामायोगो-व्यापारो मन्त्रयोगस्त-
म्, यदि वा-मन्त्राश्च योगश्च तथाविधद्रव्यसंयोगा । सूत्र-
त्वान्मन्त्रयोग तत् कृत्वा-विधाय, व्यापार्य वा, भूत्या-भस्म-
ना उपलक्षणत्वान्मृदा सूत्रेण कर्मरक्षार्थं वसत्यादिपरिवेष्टन
भूतिकर्म चशब्दात्-कौतुकादि च य प्रयुङ्क्ते किमर्थं सात-
सुखं रसा माधुर्यादय ऋद्धि -उपकरणादिसंपत् एते हे-
तवो यस्मिन् प्रयोजने तत्सातरसर्द्धिहेतुको भाव सातार्थं
मन्त्रयोगादि प्रयुङ्क्ते एवमाभियोगीं भावना करोति, इह च
सातादिहेतोरभिधान निस्पृहस्याऽपवादत एतत् प्रयोग प्र-
त्युत गुण इति ख्यापनार्थम् । ग० २ अधि० ८२ गाथाटी० ।

( आभियोगिकीभावनाफलम् )—

एयाणि गारवट्ठा, कुणमाणो आभिओगियं बंधइ ।
बीयं गारवरहिओ, कुव्व आराहगत्तं च ॥ ४८४ ॥
बृ० १ उ० २ प्रक० ।

( अस्या गाथाया व्याख्या ' अभिओगी ' शब्दे प्रथम-
भागे गता )

आभिग्गहिय-आभिग्रहिक-त्रि० । अभिगृह्यत इत्यभिग्रह
अभिग्रहेण निर्वृत्त आभिग्रहिक -कायोत्सर्गस्तद्व्यतिरे-
कात्तत्कर्त्ताप्याभिग्रहिक । अभिग्रहनिर्वृत्ते कायोत्सर्गादौ,
अभिग्रहनिर्वृत्तकायोत्सर्गादिकारिणि च । आव० । " उ-
स्सास न निरुभइ, आभिग्गहिओ वि किमुअ चिट्ठाओ '
॥ १५१० × ॥ ऊर्ध्वं प्रबल श्वास उच्छ्वास तं ' न निरुभइ '
त्ति-न निरुणद्धि, ' आभिग्गहिओ वि ' अभिगृह्यत इत्य-
भिग्रह अभिग्रहेण निर्वृत्त आभिग्रहिक -कायोत्सर्गस्तद्-
व्यतिरेकात्कर्त्ताप्याभिग्रहिको भण्यते, अनाचण्याऽभिग्र-
हिककायोत्सर्गकार्य्यपीत्यर्थ । ' किमुत चेट्ठाओ ' त्ति-
किं पुनश्चेष्टा-कायोत्सर्गकारी स तु सुतरा न निरुणद्धी-
त्यर्थं । आव० ५ अ० । अभिग्रह -चैत्यपूजनमकृत्वा मया
न भोक्तव्यं न वा स्वप्तव्यमित्यादिरूपो नियम -प्रयोजन-
मस्येत्याभिग्रहिक । अभिग्रहप्रयोजनके च । पञ्चा० ४
विव० ८ गाथाटी० । जिनदासादौ पु० । आभिग्रहि-

को जिनकल्पिकादि। सूत्र० १ श्रु० २ अ० २ उ० १४ गाथाटी०।

आभिग्गहियकाल-आभिग्रहिककाल-पुं०। अभिग्रहश्चैत्यपूजनमकृत्वा मया न भोक्तव्य, न वा स्वप्तव्यमित्यादिरूपो नियम' प्रयोजनमस्येत्याभिग्रहिक स चासौ काल आभिग्रहिककाल। अभिग्रहप्रयोजनके काले, पञ्चा०।

तासिं अविरोहेणं, आभिग्गहिओ इहं मओ कालो।
तत्थावोच्छिएणो जं, णिच्चं तक्करणभावो त्ति ॥ ८ ॥

पञ्चा० ४ विव०। ( आभिग्रहिककालस्य व्याख्या 'चेइय' शब्दे तृतीयभागे करिष्यते। )

आभिग्गहियमिच्छत्त-आभिग्रहिकमिथ्यात्व-न०। मिथ्यात्वभेदे, ध०। तत्राऽभिग्रहिक पाषण्डिनां स्वशास्त्रनियन्त्रितविवकालोकाना परपक्षप्रतिक्षेपदक्षाणा जैनानां च धर्माऽधर्मवादेन परीक्षापूर्वं तत्त्वमाकलय्य स्वाभ्युपगतार्थे श्रद्दधानाना परपक्षप्रतिक्षेपदक्षत्वेऽपि नाभिग्रहिकत्वम्, स्वशास्त्रनियन्त्रितत्वाद्विवेकालोकस्य। यस्तु नाम्ना जैनोऽपि स्वकुलाचारेणैवागमपरीक्षां बाधते, तस्याभिग्रहिकत्वमेव, सम्यग्दृशोऽपरीक्षितपक्षपातित्वायोगात्, तदुक्तं हरिभद्रसूरिभि -" पक्षपातो न मे वीरे, न द्वेष कपिलादिषु। युक्तिमद्वचन यस्य, तस्य कार्य परिग्रह ॥ १ ॥" इति गीतार्थनिश्रितानां माषतुषादिकल्पाना तु प्रज्ञापाटवाभावाद्विवेकरहितानामपि गुणवत्पारतन्त्र्यान्न दोष इति भाव। तच्च नास्त्यात्मेत्यादिपड्विकल्पैः पड्विधम्। ध० २ अधि० २२ श्लोकटी०।

आभिणिबोहियणाण-आभिनिबोधिकज्ञान-न०। अर्थाभिमुखोऽविपर्ययरूपत्वान्नियतोऽसंशयरूपत्वाद् बोध -संवेदनमभिनिबोध स एव स्वार्थिके कप्रत्ययोपादानादाभिनिबोधिकम् ज्ञातिर्ज्ञायते अनेनेति वा ज्ञानम् आभिनिबोधिक च तज्ज्ञानं चेत्याभिनिबोधिकज्ञानम्, इन्द्रियानिन्द्रियनिमित्तो बोध इति। ज्ञानभेदे, भ० ८ श० २ उ० ३१८ सूत्रटी०। स्था०।

विषयसूचना—

( १ ) आभिनिबोधिकज्ञानशब्दव्युत्पत्ति।
( २ ) भेदा आभिनिबोधिकज्ञानस्य
( ३ ) अवग्रहेहावाऽ(प)यधारणानां स्वरूपम्।
( ४ ) अवग्रहप्ररूपणा।
( ५ ) अवग्रहादीना क्रमोपन्यासे प्रयोजनम्।
( ६ ) अवग्रहस्य मल्लकदृष्टान्तेन प्ररूपणा।
( ७ ) अष्टाविंशति २८ विधमाभिनिबोधिकम्।
( ८ ) बहुतरभेदत्वं मते।
( ९ ) अवग्रहादीना संशयादिभ्योऽपोह।
( १० ) आभिनिबोधिकं चतुर्विधम्-द्रव्यत क्षेत्रत कालतो भावत।
( ११ ) अवग्रहादीना कालमानम्।
( १२ ) ईहादीना मत्यादीना च आभिनिबोधिकत्वम्।
( १३ ) सत्पदप्ररूपणतादिभिराभिनिबोधिकज्ञानस्य प्ररूपणम्।

( १ ) आभिनिबोधिकज्ञानशब्दव्युत्पत्ति —

अभि इति आभिमुख्ये, नीति नैयत्ये, ततश्चाभिमुखो वस्तुयोग्यदेशावस्थानापेक्षी नियत इन्द्रियमन समाश्रित्य स्वस्वविषयापेक्षी बोधनं बोध अभिनिबोध स एवाऽभिनिबोधिकम्। (" विनयादिभ्य " ॥७।२।१६९॥ इति) विनयादेराकृतिगणत्वादिकण्प्रत्यय, अभिनिबुध्यत इत्यभिनिबोध इति कर्त्तरि लिहादि ( ५। १। ५० ) त्वादच् वा, यद्वा अभिनिबुध्यते आत्मना स इत्यभिनिबोध इति कर्मणि घञ्, स एवाभिनिबोधिकमिति, तथैव आभिनिबोधिक च तज्ज्ञानं चाभिनिबोधिकज्ञानम्। कर्म० १ कर्म०। अभिनिबोधे वा भव तेन निर्वृत्तं तन्मयं वा तत्प्रयोजन वेत्याभिनिबोधिकम्, अभिनिबुध्यते वा तत् कर्मभूतमित्याभिनिबोधिकम्, अवग्रहादिरूपं मतिज्ञानमेव, तस्य स्वसंविदितरूपत्वात्, भेदोपचारादित्यर्थ, अभिनिबुध्यते वा अनेनास्मादस्मिन्वेत्याभिनिबोधिकम्, तदावरणकर्मक्षयोपशम इति भावार्थ। आत्मैव वा अभिनिबोधोपयोगपरिणामानन्यत्वादभिनिबुध्यत इत्याभिनिबोधिकम्, तच्च तज्ज्ञानं चेत्याभिनिबोधिकज्ञानमिति। स्था० ५ ठा० ३ उ० ४६३ सूत्रटी०। अभिमुखम्-योग्यदेशावस्थितं नियतमर्थमिन्द्रियमनोद्वारेणात्मा येन परिणामविशेषेणावबुध्यते स परिणामविशेषो ज्ञानाऽपरपर्याय आभिनिबोधिकम्। आ० म० १ अ० १ गाथाटी०। अर्थाभिमुखो नियत -प्रतिनियतस्वरूपो बोधो—बोधविशेषोऽभिनिबोध अभिनिबोध एवाऽऽभिनिबोधिकम्, अभिनिबोधशब्दस्य विनयादिपाठाभ्युपगमात्, ' विनयादिभ्य " ॥ ७। २। १६९ ॥ इत्यनेन स्वार्थे इकण् प्रत्यय। " अतिवर्तन्ते स्वार्थे प्रत्ययका प्रकृतिलिङ्गवचनानि " इति वचनात्तत्र नपुंसकता, यथा विनय एव वैनयिकमित्यत्र, अथ वा-अभिनिबुध्यते अस्मादस्मिन्वेति अभिनिबोध -तदावरणकर्मक्षयोपशमस्तेन निर्वृत्तमाभिनिबोधिकम्, तच्च तज्ज्ञानं चाऽऽभिनिबोधिकज्ञानम्, स च इन्द्रियमनोनिमित्तो योग्यप्रदेशावस्थितवस्तुविषय स्फुट प्रतिभासो बोधविशेष इत्यर्थ। प्रज्ञा० २६ पद ३१३ सूत्रटी०। अभीत्याभिमुख्ये, नीति नैयत्ये, ततश्चाभिमुखो-वस्तुयोग्यदेशावस्थानापेक्षी नियत-इन्द्रियाण्याश्रित्य स्वस्वविषयापेक्षी बोधोऽभिनिबोध इति भावसाधन, स्वार्थिकतद्धितोत्पादात्स एवाभिनिबोधिकम्, अभिनिबुध्यते आत्मना स इत्यभिनिबोध इति कर्मसाधनो वा, अभिनिबुध्यते वस्त्वसावित्यभिनिबोध इति कर्तृसाधनो वा, स एवाभिनिबोधिकमिति तथैव, आभिनिबोधिकं च तज्ज्ञानं चाभिनिबोधिकज्ञानम्, इन्द्रियपञ्चकमनोनिमित्तो बोध इत्यर्थ। अनु० १ सूत्र।

आभिनिबोधिकज्ञानशब्दार्थं दर्शयन्नाह—

अत्थाभिमुहो नियओ, बोहो जो सो मओ अभिनिबोहो।
सो चेवाऽऽभिनिबोहिय-महव जहाजोगमाउज्जं ॥ ८० ॥

बोधनं बोध ' ऋ ' गतौ, अर्यते-गम्यते, ज्ञायत इत्यर्थ, तस्याभिमुखस्तद्ग्रहणप्रवण -अर्थबलायातत्वेन तन्नान्तरीयकोद्भव-इत्यर्थ, अयमभिशब्दस्यार्थो दर्शित, एवभूतश्च बोध क्षयोपशमाद्यपाटवे निश्चयात्मकोऽपि स्याद् ततो

नियतो-निश्चित इति निशब्देन विशिष्यते रसाद्यपोहेन रूपमेवेदम् इत्येव धारणात्मक इत्यर्थः । उक्तं च-" एवमवग्रहोऽपि निश्चितमवगृह्णाति, कार्येन उपलब्धं " । अन्यथावग्रहकार्यभूतोऽपायोऽपि निश्चयात्मको न स्यादिति भाव । आह-ननु नियतोऽर्थाभिमुख एव भवति ततो नियतत्वविशेषणमेवास्तु किमाभिमुखविशेषणेन ? । तदयुक्तं, द्विचन्द्रज्ञानस्य तैमिरिकं प्रति नियतत्वे सत्यप्यर्थाभिमुख्याभावादिति । एवं च सति-अर्थाभिमुखो नियतो यो बोध स तीर्थकरगणधरादीनामभिनिबोधो मत.-अभिप्रेत. । ' सो चेवाभिणिबोहियमिति ' स एवा-आभिनिबोध एवाभिनिबोधिक, विनयादिपाठादभिनिबोधशब्दस्य " विनयादिभ्यष्ठक् " ( पा०—५ । ४ । ३४ ) इत्यनेन स्वार्थ एव ठक्प्रत्ययो, यथा विनय एव वैनयिकमिति । 'अहव जहाजोग्गमाउज्ज ' ति-अथवा-नेह स्वार्थिकप्रत्ययो विधीयते, किंतु—यथायोगं-यथासंबन्धमायोजनीयम् , घटमानसंबन्धानुसारेण स्वयमेव वक्तव्यमित्यर्थ , तद्यथा-अर्थाभिमुखे नियते बोधे भवम् आभिनिबोधिक, तेन वा निर्वृत्त, तन्मय वा, तत्प्रयोजनं वा, आभिनिबोधिक तच्च तज्ज्ञान च आभिनिबोधिकज्ञानम् । इति गाथार्थः ।

तदेवमाभिनिबोधिकशब्दवाच्य ज्ञानमुक्तम् । अथ वा-ज्ञान क्षयोपशम आत्मा वा तद्वाच्य इति दर्शयन्नाह—

तं तेण तओ तम्मि य, सो वाऽऽभिनिबुज्झए तओ वा तं ॥८१×॥

त' ति-आभिमुख्येन निश्चितत्वेन अवबुध्यते-संवेदयते आत्मा तदित्यभिनिबोध.-अवग्रहादिज्ञान, स एवाभिनिबोधिकम् , अथ वा-आत्मा तेन प्रस्तुतज्ञानेन, तदावरणक्षयोपशमेन वा करणभूतेन घटादिवस्त्वभिनिबुध्यते तस्माद् वा-प्रकृतज्ञानात् , क्षयोपशमाद् वा अभिनिबुध्यते, तस्मिन्वाऽधिकृतज्ञाने , क्षयोपशमे वा सत्यभिनिबुध्यते अवगच्छतीत्यभिनिबोध -ज्ञान क्षयोपशमो वा । ' सो वा ऽभिणिबुज्झए ' त्ति-अथ वा-अभिनिबुध्यते-वस्तु-अवगच्छतीति अभिनिबोध । असावात्मैव ज्ञानज्ञानिनो कथंचिदव्यतिरेकादिति । स एवाभिनिबोधिकम् ' तओ वा तमि'ति—न केवल ' अत्थाभिमुहो नियओ ' इत्यादिव्युत्पत्त्या आभिनिबोधिकमुक्तं, किन्तु यत - न तेण तओ तम्मि ' इत्यादिव्युत्पत्त्यन्तरमस्ति, ततोऽपि कारणात्तदाभिनिबोधिकमुच्यत इत्यर्थ , नन्वात्मक्षयोपशमयोराभिनिबोधिकशब्दवाच्यत्वे ज्ञानेन सह कथ समानाधिकरणता स्यात् ? । सत्य, किं तु ज्ञानस्यात्माश्रयत्वात् क्षयोपशमस्य च ज्ञानकारणत्वादुपचारतोऽत्रापि पक्षे आभिनिबोधिकशब्दो ज्ञाने वर्तत । ततश्चाभिनिबोधिकं च तज्ज्ञान चाभिनिबोधिकज्ञानमिति समानाधिकरणसमास इत्यदोष । विशे० ।

आभिनिबोधिकज्ञानस्य स्वरूप परोक्ष ज्ञानमधिकृत्य—

पच्चक्खं परोक्खं वा, जं अत्थ ऊहिऊण निद्दिसइ ।
तं होइ अभिणिबोहं, अभिमुहमत्थ न विवरीयं ॥३६॥

१-" ठयेक "॥ इत्यनेन ठस्य इकाऽऽदेश ।

प्रत्यक्षम्-इन्द्रियविषय परोक्षम्-इन्द्रियविषयातिक्रान्तम् , यदर्थमूहित्वा निर्दिशति-निर्णयपुरस्सरं ब्रूते एष एवंभूतोऽर्थ इति तदर्थ प्रति अभिमुख-यथार्थविषयमाभिनिबोधिक न विपरीतं नाऽनर्थाभिमुख तस्य यथार्थतया मिथ्यारूपत्वात् तच्च द्विधा-इन्द्रियनिश्रितम् , अनिन्द्रियनिश्रित च । बृ० १ उ० १ प्रक० ।

( २ ) आभिनिबोधिकज्ञानभेदा —

जत्थ आभिणिबोहियणाणं तत्थ सुयनाणं, जत्थ सुयनाणं तत्थाऽऽभिणिबोहियणाणं, दो वि एयाइं अण्णमण्णमणुगयाइं, तह वि पुण इत्थ आयरिआ नाणत्तं पण्णवयंति-अभिणिबुज्झइ त्ति आभिणिबोहिअणाणं, सुणेइ त्ति सुअं । ( सूत्र-२४× )

'यत्र पुरुषे आभिनिबोधिक ज्ञान तत्रैव श्रुतज्ञानमपि, तथा यत्र श्रुतज्ञान तत्रैवाभिनिबोधिकज्ञानम् । आह-यत्राभिनिबोधिकज्ञान तत्र श्रुतज्ञानमित्युक्ते यत्र श्रुतज्ञान तत्राभिनिबोधिकज्ञानमिति गम्यत एव, तत किमनेनोक्तेनेति ?, उच्यते, नियमतो न गम्यते, ततो नियमावधारणार्थमेतदुच्यते इत्यदोष , नियमावधारणमेव स्पष्टयति-द्वे अप्येते-आभिनिबोधिकश्रुते अन्योऽन्यानुगते-परस्परप्रतिबद्धे, स्यादेतद्-अनयोर्यदि परस्परमनुगमस्तर्हि अभेद एव प्राप्नोति कथं भेदेन व्यवहार ?, तत आह-' तह वी ' त्यादि, तथापि—परस्परमनुगमेऽपि पुनरत्र-आभिनिबोधिकश्रुतयोराचार्या -पूर्वसूरयो नानात्व-भेदं प्ररूपयन्ति, कथमिति चेत् ? उच्यते, लक्षणभेदात् , दृष्टश्च परस्परमनुगतयोरपि लक्षणभेदाद्भेदो यथैकाकाशस्थयोर्धर्मास्तिकायाऽधर्मास्तिकाययो., तथाहि—धर्माऽधर्मास्तिकायौ परस्पर लोलीभावेनैकस्मिन्नाकाशदेशे व्यवस्थितौ, तथापि यो गतिपरिणामपरिणतयोर्जीवपुद्गलयोर्गत्युपष्टम्भहेतुर्जलमिव मत्स्यस्य स खलु धर्मास्तिकायो, य पुन स्थितिपरिणामपरिणतयोर्जीवपुद्गलयोरेव स्थित्युपष्टम्भहेतु क्षितिरिव झषस्य स खलु अधर्मास्तिकाय इति लक्षणभेदाद्भेदो भवति, एवमाभिनिबोधिकश्रुतयोरपि लक्षणभेदाद्भेदो वेदितव्य, लक्षणभेदमेव दर्शयति—' अभिनिबुज्झइ ' त्यादि, अभिमुख-योग्यदेशे व्यवस्थित नियतमर्थमिन्द्रियमनोद्वारेण बुध्यते--परिच्छिनत्ति आत्मा येन परिणामविशेषेण स परिणामविशेषो ज्ञानाऽपरपर्याय आभिनिबोधिक तथा शृणोति-वाच्यवाचकभावपुरस्सरं श्रवणविषयेन शब्देन सह संस्पृष्टमर्थं परिच्छिनत्त्यात्मा येन परिणामविशेषेण स परिणामविशेष श्रुतम् । न० । ( श्रुतज्ञानस्य सर्वा वक्तव्यता ' सुय ' शब्दे सप्तमे भागे करिष्यते )

से किं तं आभिणिबोहियनाणं ?, आभिणिबोहियनाणं दुविहं पण्णत्तं, तं जहा-सुयनिस्सियं च, असुयनिस्सियं च । ( सूत्र-२६ + )

' से किं त ' इत्यादि अथ किं तत् ? आभिनिबोधिकज्ञान सूरिराह-आभिनिबोधिकज्ञान द्विविध प्रज्ञप्त तद्यथा-श्रुतनिश्रित च, अश्रुतनिश्रित च । तत्र शास्त्रपरिकर्मितमतेरुत्पादकाले शास्त्रार्थपर्यालोचनमनपेक्ष्यैव यदुपजायते म-

निश्चानं तत् श्रुतनिश्रितम्-अवग्रहादि, यत्पुनः सर्वथा शास्त्रसंस्पर्शरहितस्य तथाविधक्षयोपशमभावत एवमेव यथाऽवस्थितवस्तुसंस्पर्शि मतिज्ञानम् उपजायते तत् अश्रुतनिश्रितम्-औत्पत्तिक्यादि, तथा चाह भाष्यकृत्-

" पुव्वं सुयपरिकम्मियमइस्स जं संपयं सुयाईयं ।
तं निस्सियमियरं पुण, अणिस्सियं मइचउक्कं तं ॥१६६॥"

( अस्या विशेषावश्यकभाष्यगाथाया विस्तरतो व्याख्या ' णाण ' शब्दे चतुर्थभागे १९५९ पृष्ठे करिष्यते )

आह-औत्पत्तिक्यादिकमप्यवग्रहादिरूपमेव तत् कोऽनयोर्विशेषः, उच्यते-अवग्रहादिरूपमेव, परं शास्त्रानुसारमन्तरेणोत्पद्यते इति भेदेनोपन्यस्तम्। तत्राल्पतरवक्तव्यत्वात् प्रथममश्रुतनिश्रितमतिज्ञानप्रतिपादनायाह—

से किं तं असुयनिस्सियं ?, असुयनिस्सियं चउव्विहं पण्णत्तं, तं जहा-

" उप्पत्तिया, वेणइया, कम्मया, पारिणामिया ।
बुद्धी चउव्विहा वुत्ता, पंचमा नोवलब्भइ ॥ ५६ ॥ "

( सूत्र० २६ )

' से किं तं ' इत्यादि-अथ किं तदश्रुतनिश्रितं ? सूरिराह-अश्रुतनिश्रितं चतुर्विधं प्रज्ञप्तम्, तद्यथा-' उप्पत्तिया गाहा ' । उत्पत्तिरेव न शास्त्राभ्यासकर्मपरिशीलनादिकं प्रयोजनं कारणं यस्याः सा औत्पत्तिकी, " तदस्य प्रयोजनम् " । इतीकण्, ननु सर्वस्या बुद्धेः कारणं क्षयोपशमः तत्कथम् ?, उच्यते-उत्पत्तिरेव प्रयोजनमस्या इति ?, उच्यते-क्षयोपशमः सर्वबुद्धिसाधारणः, ततो नाऽसौ भेदेन प्रतिपत्तिनिबन्धनं भवति, अथ च बुद्ध्यन्तराद् भेदेन प्रतिपत्त्यर्थं व्यपदेशान्तरं कर्तुमारब्धं, तत्र व्यपदेशान्तरनिमित्तमत्र न किमपि विनयादिकं विद्यते, केवलमेवमेव तथोत्पत्तिरिति सैव साक्षान्निर्दिष्टा । तथा विनयो-गुरुशुश्रूषा सा प्रयोजनमस्या इति वैनयिकी, तथा अनाचार्यकं कर्म, साचार्यकं शिल्पम्। अथ वा-कादाचित्कं शिल्पं, सर्वकालिकं कर्म। कर्मणो जाता कर्मजा तथा परि-समन्तान्नमनं परिणामः-सुदीर्घकालपूर्वापरपर्यालोचनजन्य आत्मनो धर्मविशेषः स प्रयोजनमस्या सा पारिणामिकी। बुध्यतेऽनयेति बुद्धिः, सा चतुर्विधा उक्ता तीर्थकरगणधरैः, किमिति ?, यस्मात्पञ्चमी केवलिनाऽपि नोपलभ्यते, सर्वस्याप्यश्रुतनिश्रितमतिविशेषस्यौत्पत्तिक्यादिबुद्धिचतुष्टय एवान्तर्भावात्। नं०। भ०।
( औत्पत्तिकीबुद्धिविषयः सदृष्टान्तः ' उप्पत्तिया ' शब्देऽस्मिन्नेव भागे वक्ष्यते ) ( वैनयिक्या बुद्धेः सर्वं रहस्यं ' वेणइया ' शब्दे षष्ठे भागे स्पष्टं भविष्यति ) ( कर्मजबुद्धेः सर्वो विषयः ' कम्मया ' शब्दे तृतीयभागे कथयिष्यते ) ' पारिणामिक्या बुद्धेः सदृष्टान्तो विषयः ५ भागे वक्ष्यते )

तथा च—

मइसुयनाणविसेसो, भणिओ तल्लक्खणाइभेएणं ।
पुव्वं आभिणिबोहिय-मुद्दिट्ठं तं परूविस्सं ॥ १७६ ॥

मतिश्रुतज्ञानयोर्विशेषो भेदो भणितः, केनेत्याह-तयोर्लक्षणादिभिर्भेदः, अथ वा-स चासौ अनन्तरोक्तो लक्षणादिभेदश्च तल्लक्षणादिभेदः तेन। सांप्रतं त्वाभिनिबोधिकज्ञानं प्ररूपयिष्ये-विस्तरतो व्याख्यास्यामि। शेषश्रुतादिपरिहारेण किमित्याभिनिबोधिकं प्रथमं प्ररूप्यते ? इत्याह-यस्माज्ज्ञानपञ्चके पूर्वमादौ तदुपदिष्टमुपन्यस्तं, तस्मात् " यथोद्देशं निर्देशः " इति कृत्वा तत् प्रथमं व्याख्यास्यामि। इति गाथार्थः ।

तत्त्वभेदपर्यायैश्च व्याख्या, तत्र तत्त्वं लक्षणं तच्च प्रागेवोक्तम्। अथ तद्भेदनिरूपणार्थमाह—

इंदियमणोनिमित्तं, तं सुयनिस्सियमहेयरं च पुणो ।
तत्थेक्किक्कं च उभे-यमुग्गहाइप्पत्तियाईयं ॥ १७७ ॥

इन्द्रियमनोनिमित्तं यत्प्रागुक्तमाभिनिबोधिकज्ञानं, तद् द्विभेदं भवति-श्रुतनिश्रितम्, इतरच्च-अश्रुतनिश्रितम् । ' अथ ' शब्दो वाक्यालङ्कारार्थः । तत्र श्रुतं-संकेतकालभावी परोपदेशः श्रुतग्रन्थश्च पूर्वं तेन परिकर्मितमतेर्व्यवहारकाले तदनपेक्षमेव यदुत्पद्यते तत् श्रुतनिश्रितं यत्तु श्रुतापरिकर्मितमतेः सहजमुपजायते तदश्रुतनिश्रितम् । तत्र तयोः-श्रुतनिश्रिताऽश्रुतनिश्रितयोर्मध्ये एकैकं चतुर्विधं, कथम् ? इत्याह-यथासंख्यमवग्रहादिकं, औत्पत्तिक्यादिकं च-अवग्रहेहापायधारणाभेदात् श्रुतनिश्रितं चतुर्विधम्, औत्पत्तिकी, वैनयिकी, कर्मजा, पारिणामिकी, लक्षणबुद्धिभेदात्तु अश्रुतनिश्रितं चतुर्भेदमित्यर्थः । यद्यप्यौत्पत्तिक्यादिबुद्धिचतुष्टयेऽप्यवग्रहादयो विद्यन्ते तथाऽपि " पुव्वमदिट्ठमसुयमवेइयतक्खणविसुद्धगहियत्था " इत्यादिवक्ष्यमाणवचनात्परोपदेशाद्यनपेक्षत्वात्ते श्रुतनिश्रिता न भवन्ति शेषास्त्ववग्रहादयः पूर्वं श्रुतपरिकर्मणान्तरेण न संभवन्ति, ईहादिगताभिलापस्य परोपदेशाद्यन्तरेणाप्युपपत्तेः, इति ते श्रुतनिश्रिता उच्यन्ते । औत्पत्तिक्यादिषु त्वीहाद्यभिलापस्य तथाविधकर्मक्षयोपशमजत्वात् परोपदेशाद्यन्तरेणाप्युपपत्तेरिति भावः इति गाथार्थः ।

(३) तत्र श्रुतनिश्रितानवग्रहादींस्तावन्निर्युक्तिकारः प्राह—

उग्गहो ईहऽवाओ, य धारणा एव होंति चत्तारि ।
आभिणिबोहियनाण-स्स भेयवत्थू समासेणं ॥१७८॥

रूपरसादिभेदैरनिर्देश्यस्याव्यक्तस्वरूपस्य सामान्यार्थस्यावग्रहणं परिच्छेदनमवग्रहः । तेनावगृहीतस्यार्थस्य भेदविचारणं वक्ष्यमाणगत्या विशेषान्वेषणमीहा, तया ईहितस्यैवार्थस्य व्यवसायस्तद्विशेषनिश्चयोऽपायः चशब्दोऽवग्रहादीनां पृथक् पृथक् स्वातन्त्र्यप्रदर्शनार्थः, तेनैतदुक्तं भवति-अवग्रहादेरीहादयः पर्याया न भवन्ति, पृथग्भेदवाचकत्वादिति । निश्चितस्यैव वस्तुनोऽविच्युत्यादिरूपेण धारणं धारणा। एवकारः क्रमद्योतनपरः, अवग्रहादीनामुपन्यासस्यायमेव क्रमो नान्यः अवगृहीतस्यैवेहनाद्, ईहितस्यैव निश्चयात् निश्चितस्यैव धारणादिति । एवमेतान्याभिनिबोधिकज्ञानस्य-४ चत्वार्येव भेदवस्तूनि समासेन—संक्षेपेण भवन्ति विस्तरतस्त्वष्टाविंशत्यादिभेदभिन्नमिदं वक्ष्यत इति भावः । तत्र भिद्यन्ते परस्परमिति भेदाः-विशेषास्त एव वस्तूनि भेदवस्तूनि समासः । इति गाथार्थः ।

अथ निर्युक्तिकार एवाऽवग्रहादीन् व्याख्यानयन्नाह—

अत्थाणं उग्गहणं, अवग्गहं तह वियालणं ईहं ।
ववसायं च अवायं, धरणं पुण धारणं विंति ॥ १७९ ॥

अर्थादीनाम्-रूपादीना प्रथमं दर्शनानन्तरमेवावग्रहणमवग्रहं ब्रुवत इति सबन्ध । तथा विचारण-पर्यालोचनम् अर्थानामिति वर्तते, ईहनमीहा ता ब्रुवते, इदमुक्तं भवति-अवग्रहादुत्तीर्णोऽपायात्पूर्वं सद्भूतार्थविशेषोपादानाभिमुखोऽसद्भूतार्थविशेषत्यागसमुखश्च प्रायः काकनिलयनादय स्थाणुधर्मा अत्र वीक्ष्यन्ते, न तु शिरःकण्डूयनादय पुरुषधर्मा इति मतिविशेष ईहेति । विशिष्टोऽवसायो व्यवसाय.-निश्चयस्त व्यवसायम् , अर्थानामितीहापि वर्तते, अवायम्-अपायं वा ब्रुवते; एतदुक्तं भवति-स्थाणुरेवायमित्यवधारणात्मक प्रत्यय -अवाय , अपायो वेति, चशब्द एवकारार्थ , व्यवसायमेव अवायम् अपायं वा ब्रुवत इत्यर्थ । धृतिर्धरणम् , 'अर्थानाम्' इति वर्तते, अपायेन विनिश्चितस्यैव वस्तुनोऽविच्युति-स्मृति-वासनारूपं धरणमेव धारणा ब्रुवत इत्यर्थ. । पुन शब्दस्यावधारणार्थत्वात् ब्रुवत इत्यनेन शास्त्रस्य पारतन्त्र्यमुक्तम् , इत्थं तीर्थकरगणधरा ब्रुवत इति । अन्ये त्वेवं पठन्ति-" अत्थाणं उग्गहणम्मि उग्गहो" इत्यादि, तत्र-अर्थानामवग्रहणे सत्यवग्रहो नाम मतिभेद इत्येवं ब्रुवते, एवमीहादिष्वपि योज्यम्, भावार्थस्तु पूर्ववदेव । अथ वा-प्राकृतशैल्यार्थवशाद् विभक्तिविपरिणाम इति सप्तमी द्वितीयार्थे द्रष्टव्या । इति गाथार्थ । विशे० । न० ।

अथैतदेव अवग्रहादिस्वरूपं भाष्यकारो विवृण्वन्नाह—

सामण्णत्थावग्गह-णमुग्गहो भेयमग्गहणमहेहा ।
तस्सावगमोवाओ, अविच्चुई धारणा तस्स ॥ १८० ॥

अन्तर्भूताशेषविशेषस्य केनाऽपि रूपेणानिर्देश्यस्य सामान्यार्थस्यैकसामायिकमवग्रहणं सामान्यार्थावग्रहणम् , अथ वा-सामान्येन-सामान्यरूपेणार्थस्यावग्रहणं सामान्यार्थाऽवग्रहणमवग्रहो वेदितव्य । अथाऽनन्तरमीहा प्रवर्तते कथभूतेऽयम् ? इत्याह-भेदमार्गण-भेदा -वस्तुनो धर्मास्तेषा मार्गणम्—अन्वेषणं विचारणं प्राय काकनिलयनादय स्थाणुधर्मा अत्र वीक्ष्यन्ते, न तु शिर कण्डूयनादय पुरुषधर्मा इत्येवं वस्तु धर्मविचारणमीहेत्यर्थ । तस्यैवेहया ईहितस्य वस्तुनस्तदनन्तरमवगमनमवगम —स्थाणुरेवायमित्यादिरूपो निश्चय' अवाय अपायो वेति तस्यैव निश्चितस्य वस्तुन अविच्युतिस्मृतिवासनारूपं धरणं धारणा सूत्रे अविच्युतेरुपलक्षत्वात् । इति गाथार्थ ।

अत्र चावग्रहादारभ्य परै सह विप्रतिपत्तय. सन्ति इत्यवग्रहविषया ता तावन्निराकर्तुमाह—

सामण्णविसेसस्स वि, केई उग्गहणमुग्गहं वेंति ।
जं मइरिदत्तयंति च, तं नो बहुदोसभावाओ ॥ १८१ ॥

सामान्य चासौ विशेषश्च सामान्यविशेष तस्यापि न केवल सामान्यार्थस्य इत्यपिशब्द , अवग्रहणम्-अवच्छेदन केचन व्याख्यातार अवग्रहं ब्रुवते, किं कारणम् ? इत्याह—'जं मइरिदंतयं ति चे' ति यत्-यस्मात्कारणात् अमुतः शब्दादिलक्षणसामान्यविशेषग्राहकावग्रहादनन्तरम् इदं नदिति चेति विमर्शलक्षणा मतिरनुधावति, ईहा प्रवर्तत इत्यर्थ., यदनन्तर चेहादिप्रवृत्ति सोऽवग्रह एव, यथा व्यञ्जनावग्रहानन्तरभावी अव्यक्तानिर्देश्यसामान्यमात्रग्राही अवग्रह , प्रवर्तते च शब्दादिसामान्यविशेषग्राहकावग्रहानन्तरमीहादि , तस्मादवग्रह एवायं, तथाहि-दूराच्छ्रुतादिसघन्धिनि शब्दे सामान्यविशेषात्मके रूपादिभ्यो भिन्ने गृहीते प्रवर्तते एवायं विमर्श -किमय शाङ्ख , शार्ङ्गो वा शब्द ? । शार्ङ्गश्चेत् किं महिषीशृङ्गोद्भवो महिषशृङ्गजो वा? । महिषीशृङ्गसंभवश्चेत् , किं प्रसूतमहिषीशृङ्गसंभव , अप्रसूतमहिषीशृङ्गसमुद्भूतो वा ?, इत्यादि, यतश्चानन्तरमित्थं विमर्शेनेहाप्रवृत्तिर्न भवति, अन्तप्राप्ते , क्षयोपशमाभावाद्वा, स पुनरपाय' ॥ तदेतत्परोक्तं दूषयितुमाह-"तं नो " इत्यादि, तदेतत्परोक्तं न । कुत ? इत्याह-बहवश्च ते दोषाश्च तेषां भाव उपनिपातस्तस्मात्, एव हि सर्वाशुपाप्यपायप्रवृत्तिर्न स्यात् , यथोक्तविमर्शप्रवृत्तेरनुपरतत्वात् । न च पूर्वमनीहिते प्रथमोऽपि शब्दनिश्चयो युक्त , यतश्च पूर्वमीहा प्रवर्तते नाऽसौ अवग्रह , किं त्वपाय एवेत्यादि सर्वं पुरस्ताद्वक्ष्यते । इति गाथार्थ ।

अन्ये त्वीहाया विप्रतिपद्यन्ते, तन्मतमुपन्यस्य दूषयन्नाह—

ईहासंशयमेत्तं, केई न तयं तओ जमन्नाणं ।
मइनाणंऽसा चेहा, कहमन्नाणं तई जुत्तं ? ॥ १८२ ॥

किमय स्थाणु , आहोस्वित्पुरुष ? इत्यनिश्चयात्मकं संशयमात्रं यदुत्पद्यते तदीहेति केचित् प्रतिपद्यन्ते तदेतन्न घटते । कुत ? इत्याह-यद्-यस्मात्कारणात् 'तओ' त्ति-असौ संशय'-ऽज्ञानम् । भवतु तर्ह्यज्ञानमपि ईहेति चेदित्याह-'मईत्यादि ' मतिज्ञानांशश्च-मतिज्ञानभेदश्चेहा वर्तते । न च ज्ञानभेदस्याज्ञानरूपता युज्यते, एतदेवाह—'कहमि ' त्यादि, कथम्-केन प्रकारेण ज्ञानं युक्तं न कथचिदित्यर्थ । कथमित्याह-'तई ' इति, असौ मतिज्ञानांशरूपा ईहा, संशयस्य वस्त्वप्रतिपत्तिरूपत्वेनाऽज्ञानात्मकत्वादीहायास्तु ज्ञानभेदत्वेन ज्ञानस्वभावत्वात् , ज्ञानाऽज्ञानयोश्च परस्परपरिहारेण स्थितत्वान्नाऽज्ञानरूपस्य संशयस्य ज्ञानांशात्मकेहारूपत्वं युक्तमिति भाव । इति गाथार्थ ।

आह-ननु सशयेहयो किं कश्चिद्विशेषोऽस्ति येनेहारूपत्वं संशयस्य निषिध्यते ? इत्याशङ्क्य तयो स्वरूपभेदमुपदर्शयन्नाह—

जमणेगत्थालंवण-मपज्जुदासपरिकुंठियं चित्तं ।
सेय इव सव्वपयओ. तं संसयरूवमन्नाणं ॥ १८३ ॥

तं चिय सयत्थहेऊ-ववत्तिवावारतप्परममोहं ।
भूयाऽ-भूयविसेसा-यागच्चायाभिमुहमीहा ॥ १८४ ॥

यच्चित्तं—यन्मन अनेकार्थालम्बनम्-अनेकार्थप्रतिभासान्दोलितम् , अत एव पर्युदसन पर्युदासो-निषेधो न तथा अपर्युदासोऽनिषेधस्तेन, तथा उपलक्षणत्वादविधिना च

परिकुण्ठितं-जडीभूतं सर्वथा अवस्तुनिश्चयरूपतामापन्नं, किं बहुना ? 'सय इव' त्यादि, शेत इव-स्वपितीव सर्वात्मना न किञ्चित् चेतयते वस्त्ववगतिशक्तिरूपत्वात् तदेवंविधं चित्त-संशय उच्यते इत्यर्थः, तच्चाऽज्ञानं वस्त्ववबोधरहितत्वादिति। यत्पुनस्तदेव चेतो-वक्ष्यमाणस्वरूपं तदीहेति संबन्धः। कथंभूतं सद् ? इत्याह-' भूयाऽभूय ' इत्यादि, भूतं क्वचिद् विवक्षितप्रदेशे स्थाण्वादिरर्थः, अभूतस्तत्राविद्यमानः पुरुषादिस्तावेव पदार्थान्तरेभ्यो विशिष्यमाणत्वात् विशेषौ, तयोरादानत्यागाभिमुखं भूतार्थविशेषोपादानस्याभिमुखम्, अभूतार्थत्यागस्याभिमुखमिति यथासंख्येन संबन्धः। पुनः कथंभूतम् ? इत्याह-सदर्थहेतूपपत्तिव्यापारतत्परं हेतुद्वारेणेदं विशेषणं-सदर्थहेतूपपत्तिव्यापारतत्परत्वाद् भूताऽभूतविशेषादानत्यागाभिमुखमिति भावः. तत्र हेतुः-साध्यार्थगमकं युक्तिविशेषरूपं साधनम्, उपपत्तिः-संभवघटनं, विवक्षितार्थस्य संभवव्यवस्थापनम्। ततश्च हेतुश्चोपपत्तिश्च हेतूपपत्ती सदर्थस्य विवक्षितप्रदेशे अरण्यादौ विद्यमानस्य स्थाण्वादेरर्थस्य हेतूपपत्ती सदर्थहेतूपपत्ती तद्विषयो व्यापारो घटनं-चेष्टनं सदर्थहेतूपपत्तिव्यापारस्तत्तत्परं तन्निष्ठमिति समासः। अत एव अमोघम्-अर्थबलायातत्वेन अविफलम्-अमिथ्यास्वरूपं, तदेवंभूतं चेतः ईहा इति संबन्धः कृत एव, इदमुक्तं भवतिकेनचिदरण्यदेशे गतेन सवितुरस्तमयसमये ईषदवकाशमासादयति तमिस्रे दूरवर्ती स्थाणुरुपलब्धस्ततोऽस्य विमर्शः समुत्पन्नः-किमयं स्थाणुः पुरुषो वा ? इति। अयं च संशयत्वात् अज्ञानम्। ततोऽनेन तस्मिन् स्थाणौ दृष्ट्वा वल्ल्यारोहणं, प्रविलोक्य काककारण्डवकादम्बकौञ्चकीरशकुन्तकुलनिलयनं, कृतश्चेतसि हेतुव्यापारः, यथा-स्थाणुरयं, वल्ल्युत्सर्पणकाकादिनिलयनोपलम्भात्। तथा संभवपर्यालोचनं च व्यधायि, तद्यथा-अस्ताचलान्तरिते सवितरि, प्रसरति चेयत्तमिस्रे महारण्येऽस्मिन् स्थाणुरेव संभाव्यते, न पुरुषः, शिरःकण्डूयनकरग्रीवाचलनादिस्तद्व्यवस्थापकहेतोरभावाद्, ईदृशे च प्रदेशेऽस्यां वेलायां प्रायस्तस्याऽसंभवात्। तस्मात् स्थाणुनाऽत्र सद्भूतेन भाव्यं, न पुरुषेण। तदुक्तम्-" अरण्यमेतत् सवितास्तमागतो, न चाधुना संभवतीह मानवः। प्रायस्तदेतेन खगादिभाजा, भाव्यं स्मरारातिसमाननाम्ना ॥१॥" एतत्स्वेदृशं चित्तं ईहा इत्युच्यते, निश्चयाभिमुखत्वेन संशयादुत्तीर्णत्वात्, सर्वथा निश्चयेऽपायत्वप्रसङ्गेन निश्चयावधावर्त्तित्वाच्चेति संशयेहयोः प्रतिविशेषः। इति गाथाद्वयार्थः।

अथापायधारणागतविप्रतिपत्तिनिराचिकीर्षया परमतमुपदर्शयन्नाह-

**केई तयएणविसेसा-वणयणमेत्तं अवायमिच्छंति।**
**सब्भूयत्थविसेसाऽ-वधारणं धारणं विंति ॥ १८५ ॥**

तदनन्तरगाथयाऽसौ भूतोऽर्थः समभ्यधायि, तस्मात्तत्र भूतात् विद्यमानात् स्थाण्वादेर्योऽन्यः तत्प्रतियोगी तत्राविद्यमानः पुरुषादिस्तद्विशेषाः शिरःकण्डूयनचलनस्पन्दनादयः तेषां पुरोवर्त्तिनि सद्भूतेऽर्थेऽपनयनम्-निषेधनं तदन्यविशेषापनयनं तदेव तन्मात्रम्, अपायमिच्छन्ति, केचनापि व्याख्यातारः अपायनम्-अपनयनम् अपाय इति व्युत्पत्त्यर्थविश्रामितमनस्का इति भावः। अवधारणं धारणा इति च व्युत्पत्त्यर्थश्रमितास्ते धारणां ब्रुवते। किं तत् ?, इत्याह-सद्भूतार्थविशेषावधारणं सद्भूतस्तत्र विवक्षितप्रदेशे विद्यमानः स्थाण्वादिरर्थविशेषस्तस्य स्थाणुरेवायम् इत्यवधारणं सद्भूतार्थविशेषावधारणमिति समासः। इति गाथार्थः।

तदेतद्दूषयितुमाह-

**कासइ तयन्नवइरे-गमेत्तओऽवगमणं भवे भूए।**
**सब्भूयसमएणयओ, तदुभयओ कासइ न दोसो ॥१८६॥**

' भूए ' त्ति-तत्र विवक्षितप्रदेशे भूते विद्यमानेऽर्थे स्थाण्वादौ ' कासइ ' त्ति-कस्यचित् प्रतिपत्तुस्तदन्यव्यतिरेकमात्रादवगमनं-निश्चयो भवति-तस्मात्स्थाण्वादेर्योऽन्यः पुरुषादिरर्थस्तस्य व्यतिरेकः स एव च तदन्यव्यतिरेकमात्रं तस्मात्स्थाण्वाद्यर्थनिश्चयो भवतीत्यर्थः; तद्यथा-यतो नेह शिरःकण्डूयनादयः पुरुषधर्मा दृश्यन्ते; ततः स्थाणुरेवायमिति। कस्यापि सद्भूतसमन्वयतः सद्भूतस्तत्र प्रदेशे विद्यमानः स्थाण्वादिरर्थस्तस्य समन्वयतः-अन्वयधर्मघटनात् भूतेऽर्थेऽवगमनं निश्चयो भवेत्, यथा स्थाणुरेवायं वल्ल्युत्सर्पणवयोनिलयनादिधर्माणामिहान्वयादिति। कस्यचित्पुनस्तदुभयाद्-अन्वयव्यतिरेकोभयात् तत्र भूतेऽर्थेऽवगमनं भवेत्; तद्यथा-यस्मात्पुरुषधर्माः शिरःकण्डूयनादयोऽत्र न दृश्यन्ते, वल्ल्युत्सर्पणादयस्तु स्थाणुधर्माः समीक्ष्यन्ते, तस्मात् स्थाणुरेवायमिति। न चैवमन्वयात् व्यतिरेकात्, उभयाद्वा निश्चये जायमाने कश्चिद् दोषः, परव्याख्याने तु वक्ष्यमाणन्यायेन दोष इति भावः। इति गाथार्थः।

कथं पुनस्तद्व्याख्याने न दोषः ? इत्याह-

**सव्वो वि य सोऽवाओ, भेए वा होंति पंच वत्थूणि।**
**आहेवं चिय चउहा, मई तिहा अन्नहा होइ ॥ १८७ ॥**

यस्माद् व्यतिरेकाद्, अन्वयाद्, उभयाद्वा भूतार्थविशेषावधारणं कुर्वतो योऽध्यवसायः स सर्वोऽप्यपायः-प्रस्तुतस्थाण्वादिवस्तुनिश्चयः, न तु सद्भूतार्थविशेषावधारणं धारणेति भावः, तस्मान्न दोषः ॥ आह ननु यथा मया व्याख्यायते-सद्भूतार्थविशेषाऽवधारणं धारणा, तथा किं कश्चिद्दोषः समुपजायते, येनाऽस्मदीयव्याख्यानपक्षे इदमित्थमभिधीयते न दोषः इति ?। एतदाशङ्क्याह-' भेए वा ' इत्यादि, वाशब्दः पातनायां गम्यार्थः, व्यतिरेकः-अपायः, अन्वयस्तु धारणा, इत्येवं मतिज्ञानतृतीयभेदस्यापायस्य भेदेऽभ्युपगम्यमाने पञ्च वस्तूनि-पञ्च भेदा भवन्ति, आभिनिबोधिकज्ञानस्येति गम्यते, तथा हि-अवग्रहेहाऽपायधारणालक्षणाश्चत्वारो भेदास्तावत् त्वयैव पूरिताः, पञ्चमस्तु भेदः स्मृतिलक्षणः प्राप्नोति-अविच्युतेः स्वसमानकालभाविन्यपायेऽन्तर्भूतत्वाद्, वासनायास्तु स्मृत्यन्तर्गतत्वेन विवक्षितत्वात् स्मृतेरनन्यशरणत्वान्मते पञ्चमो भेदः प्रसज्यत इति भावः ॥ ' आहे ' त्यादि, पुनरप्याह परः-ननु यथैव मया व्या-

व्यायते व्यतिरेकमुखेन निश्चयोऽपाय, अन्वयमुखेन तु धारणा इत्येवमेव चतुर्द्धा-चतुर्विधा मतिर्भवति—युक्तितो घटते। अन्यथा तु-व्याख्यायमाने-अन्वय-व्यतिरेकयोर्द्वयोरप्यपायत्वेऽभ्युपगम्यमाने इत्यर्थः । किम् ?, इत्याह-त्रिधा-अवग्रह-हापायभेदतस्त्रिभेदा मतिर्भवति. न पुनश्चतुर्द्धा, धारणाया अघटमानकत्वादिति भाव. । इति गाथार्थः ।

कथं पुनर्धारणाभावः ?, इत्याह—

काऽणुवओगम्मि धिई, पुणोवओगे य सा जओऽवाओ ।
तो नऽत्थि धिई भण्णइ, इदं तदेवेति जा बुद्धी ॥ १८८ ॥
नणु साऽवायब्भहिया, जओ य सा वासणाविसेसाओ ।
जा य अवायाणन्तर-मविच्चुई सा धिई नाम ॥१८९॥

अनुपयोगे-उपयोगोपरमे सति का धृतिः-का नाम धारणा ?, न काचिदित्यर्थः । इदमुक्तं भवति—इह तावन्निश्चयोऽपायमुखेन घटादिके वस्तुनि अवग्रहेहापायरूपतयाऽन्तर्मुहूर्त्तप्रमाण एवोपयोगो जायते। तत्र चापाये जाते। या उपयोगसातत्यलक्षणा अविच्युतिर्भवताऽभ्युपगम्यते, सा अपाय एवाऽन्तर्भूता। इति न ततो व्यतिरिक्ता। या तु तस्मिन् घटाद्युपयोगे उपरते सति संख्येयमसंख्येयं कालं वासनाभ्युपगम्यते, 'इदं तदेव' इति लक्षणा स्मृतिश्चाङ्गीक्रियते, सा मत्यंशरूपा धारणा न भवति, मत्युपयोगस्य प्रागेवोपरतत्वात्। पुनरपि कालान्तरोपयोगे धारणा भविष्यतीति चेत्, इत्याह-'पुणो' इत्यादि, कालाऽन्तरे पुनर्जायमानोपयोगेऽपि या ऽन्वयमुखोपजायमानावधारणरूपा धारणा मयेष्यते, सा यतोऽपाय एव भवताऽभ्युपगम्यते । 'सव्वो वि य सोवाओ' इत्यादिवचनात्; ततस्तत्रापि नाऽस्ति धृतिर्धारणा, पुनरप्युपयोगोपरमेऽपि पूर्वोक्तयुक्त्यैव तदभावः, तस्मादुपयोगकालेऽन्वयमुखावधारणरूपाया धारणायास्त्वयाऽनभ्युपगमात् उपयोगोपरमे च मत्युपयोगाभावात्, तदंशरूपाया धारणाया अघटमानकत्वात्त्रिधैव भवदभिप्रायेण मतिः प्राप्नोति, न चतुर्द्धा, इति पूर्वपक्षाभिप्रायः ।

अत्रोत्तरमाह—'भण्णइ' त्यादि, भण्यतेऽत्र प्रतिविधानम्। किम् ?, इत्याह—'इदं वस्तु तदेव यत् प्रागुपलब्धं मया' इत्येवंभूता कालान्तरे या स्मृतिरूपा बुद्धिरुपजायते नन्विह सा पूर्वप्रवृत्तापायान्निर्विवादमभ्यधिकैव, पूर्वप्रवृत्ताऽपायकाले; तस्या अभावात् साम्प्रतापायस्य तु वस्तुनिश्चयमात्रफलत्वेन पूर्वापरदर्शनानुसंधानायोगात् । ततश्च सा ऽनन्यरूपत्वात् धृतिर्धारणा नामेति पर्यन्ते संबन्धः । यतश्च यस्माच्च वासनाविशेषात्-पूर्वोपलब्धवस्त्वाहितसंस्कारलक्षणात्, तद्विज्ञानावरणक्षयोपशमसांनिध्यादित्यर्थः, सा इदं तदेवेति लक्षणा स्मृतिर्भवति। साऽपि वासनाऽपायादभ्यधिकेतिकृत्वा धृतिर्नाम इतीहापि संबन्धः । 'जा याऽवाय' इत्यादि, या च अपायादनन्तरमविच्युतिः प्रवर्तते साऽपि धृतिर्नाम । इदमुक्तं भवति-यस्मिन् समये 'स्थाणुरेवाय' मित्यादिनिश्चयस्वरूपोऽपायः प्रवृत्तः, ततः समयादूर्द्ध्वमपि 'स्थाणुरेवाऽयं, स्थाणुरेवायमि' त्यविच्युता याऽन्तर्मुहूर्त्तं काचिदपायप्रवृत्तिः साऽप्युपायाऽविच्युतिः प्रथमप्रवृत्ताऽपायादभ्यधिकेति धृतिर्धारणा नामेति। एवमविच्युतिवासनास्मृतिरूपा धारणा त्रिधा सिद्धा भवति ॥

अत्राह कश्चित्-नन्वविच्युति-स्मृतिलक्षणौ ज्ञानभेदौ गृहीतग्राहित्वान्न प्रमाणं, द्वितीयादिवाराप्रवृत्तापायस्याध्यस्य वस्तुनिश्चयलक्षणस्य कार्यस्य प्रथमवाराप्रवृत्तापायेनैव साधितत्वात् । न च निष्पादितक्रिये कर्मणि तत्साधनायैव प्रवर्तमानं साधनं शोभां बिभर्ति, अतिप्रसङ्गात्-कुठारादिभिः छिन्नच्छेदनादिक्रियेष्वपि वृक्षादिषु पुनस्तत्साधनाय तेषां प्रवृत्त्यापत्तेः। स्मृतेरपि पूर्वोत्तरकालभाविज्ञानद्वयगृहीत एव वस्तुनि प्रवर्तमानतया कुतः प्रामाण्यं. न च वक्तव्यं पूर्वोत्तरदर्शनद्वयानधिगतस्य वस्त्वेकत्वस्य ग्रहणात् स्मृतिः प्रमाणं, पूर्वोत्तरकालदृष्टस्य वस्तुनः कालादिभेदेन भिन्नत्वाद्, एकत्वस्यैवासिद्धत्वादिति । वासना तु किं रूपा ? इति वाच्यम्। संस्काररूपेति चेत्। कोऽयं नाम संस्कारः ?, स्मृतिज्ञानावरणक्षयोपशमो वा, तज्ज्ञानजननशक्तिर्वा, तद्वस्तुविकल्पो वा ? इति त्रयी गतिः । तत्राद्यपक्षद्वयमयुक्तम्, ज्ञानरूपत्वाभावात् तद्भेदानां चेह विचार्यत्वेन प्रस्तुतत्वात् । तृतीयपक्षोऽप्ययुक्त एव संख्येयमसंख्येयं वा कालं वासनाया इष्टत्वाद् एतावन्तं च कालं तद्वस्तुविकल्पायोगात् तदेवमविच्युतिस्मृतिवासनारूपायास्त्रिविधाया अपि धारणाया अघटमानत्वात्, त्रिधैव मतिः प्राप्नोति, न चतुर्द्धा ॥

अत्रोच्यते-यत्तावद् गृहीतग्राहित्वादविच्युतेरप्रामाण्यमुक्तम्, तदयुक्तम्, गृहीतग्राहित्वलक्षणस्य हेतोरसिद्धत्वाद्, अन्यकालविशिष्टं हि वस्तु प्रथमप्रवृत्तापायेन गृह्यते, अपरकालविशिष्टं च द्वितीयादिवाराप्रवृत्तापायेन । किं च-स्पष्ट-स्पष्टतर—स्पष्टतमभिन्नधर्मकवासनाजनकत्वादप्यविच्युतिप्रवृत्तद्वितीयाद्यपायविषयं वस्तु भिन्नधर्मकमेवेति कथमविच्युतेर्गृहीतग्राहिता ? । स्मृतिरपि पूर्वोत्तरदर्शनद्वयानधिगतवस्त्वेकत्वं गृह्णाना न गृहीतग्राहिणी। न च वक्तव्यं कालादिभेदेन भिन्नत्वात् वस्तुनो नैकत्वं, कालादिभिर्भिन्नत्वेऽपि सत्त्व-प्रमेयत्वसंस्थानरूपादिभिरेकत्वात्। वासनाऽपि स्मृतिविज्ञानावरणकर्मक्षयोपशमरूपा तद्विज्ञानजननशक्तिरूपा चेष्यते । सा च यद्यपि स्वयं ज्ञानस्वरूपा न भवति, तथापि पूर्वप्रवृत्ताविच्युतिलक्षणज्ञानकार्यत्वाद्, उत्तरकालभाविस्मृतिरूपज्ञानकारणत्वाच्चोपचारतो ज्ञानरूपाऽभ्युपगम्यते। तद्वस्तुविकल्पपक्षस्त्वनभ्युपगमादेव निरस्तः तस्मादविच्युतिस्मृतिवासनारूपाया धारणाया स्थितत्वात् न मतेस्त्रैविध्यं, किं तु चतुर्द्धा स्थितिः स्थितम्। इति गाथाद्वयार्थः ।

अथैतां स्वाभिमतां धारणां व्यवस्थाप्य परं प्रत्याह—

तं इच्छंतस्स तुहं वत्थूणि य पञ्च मच्छमामस्स ।
किं होउ मा अभावो, भावो नाणं व तं कयरं ? ॥१९०॥

अस्मदभिमतामनन्तरप्रतिष्ठितस्वरूपां तां धारणामिच्छतस्तव पञ्च वस्तूनि-पञ्चाभिनिबोधिकज्ञानभेदाः प्राप्नुवन्ति, अपायस्यैकस्यापि भेदद्वयरूपताभ्युपगमेन भेदचतुष्टयस्य त्वयाऽपि पूरितत्वात्, पञ्चमस्य तु मदुक्तस्य धारणालक्ष-

णस्य प्रसङ्गादिति भाव । अथाऽस्मदभ्युपगता धारणा त्वया नेष्यते, " तर्हि ' नेच्छमाणस्स किं होउ ' इत्यादि, तां मदभ्युपगतां धारणामनिच्छतोऽप्रतिपद्यमानस्य तव सा मदभ्युपगता धारणा किं भवतु अभाव अवस्तु, आहोस्विद्भावो, वस्तु ? इति विकल्पद्वयम् । किं चात ?, न तावदभावः भावत्वेनानुभूयमानत्वात् । न च तथानुभूयमानस्याभावत्वमाधातु शक्यते, अतिप्रसङ्गात्-घटादिष्वपि तथात्वप्राप्ते ; तेऽपि ह्यनुभववशेनैव भावरूपा व्यवस्थाप्यन्ते । यदि च-अनुभवोऽप्यप्रमाण, तदा घटादिष्वपि भावरूपतायामनाश्वास इति भाव । अथ भावोऽसौ, तर्हि वक्तव्य-ज्ञानम् , अज्ञानं वा ?, न तावदज्ञानं, चिद्रूपतयाऽनुभूयमानत्वात् । अथ ज्ञान तदपि मतिश्रुतावधिमन पर्यायकेवलभ्यो ज्ञानान्तरस्याभावात्तेषा मध्ये कतमत ? इति वाच्यम् । न तावत् श्रुतादिचतुष्टयरूपम् , अनभ्युपगमात् , तल्लक्षणाऽयोगाच्च मतिज्ञान चेत् , तदपि नावग्रहेहापायरूपं, तल्लक्षणाऽसंभवात् ' णणु सावायम्महिया ' इत्यादि, नाऽपायाभ्यधिकत्वेन साधितत्वाच्च । तस्मादन्वयव्यतिरेकाभ्या निश्चय सर्वोऽप्यपाय , अविच्युतिस्मृतिवासनारूपा तु पारिशेष्यद्वारेणैवेति स्थितम् । इति गाथार्थ. ।

तदेवं निरुत्तरीकृतोऽप्यविलक्षिततयाऽन्येन प्रकारेणाह-

तुज्झं बहुयरभेया, भणइ मई होइ धिइबहुत्ताओ ।
भण्णइ न जाइ भेओ, इट्ठो मज्झं जहा तुज्झं ॥१६१॥

अत्र प्रेरको भणति । किम् ?, इत्याह-' तुज्झमि ' त्यादि, इत्थमाचार्य ! तव बहुतरभेदा मतिर्भवति । कुत ? इत्याह-धृतेर्धारणाया बहुत्वात् , बहुभेदत्वादित्यर्थ., धारणाया एकस्या अप्यविच्युतिवासनास्मृतिलक्षणभेदत्रययुक्तत्वादवग्रहेहाऽपायै सह षड्भेदा मति. प्राप्नोतीति भाव । अत्र प्रतिविधानमाह—' भण्णइ ' इत्यादि, भण्यतेऽत्रोत्तरम्-जातेर्भेदो जातिभेदो, व्यक्तिपक्ष इत्यर्थः । स इह धारणाविचारे मम नेष्टो-नाभिप्रेत । किं तु धारणा सामान्यरूपा जातिरेव ममाभिप्रेता । कस्य यथा ?. इत्याह-यथा तवाऽवग्रहविषये इति शेष । इदमुक्तं भवति—यथाऽवग्रहो व्यञ्जनार्थावग्रहभेदादुभयरूपोऽवग्रहसामान्यादेकस्त्वयाऽपीष्ट , अन्यथा मते पञ्चविधत्वप्रसङ्गात् तथा त्रिरूपाऽपि धारणा तत्सामान्यादेकरूपैव, इति चतुर्विधैव मतिर्न बहुतरभेदा । इति गाथार्थ ।

एतदेव भावयन्नाह—

मा भिन्नलक्खणा वि हु, धिइमामन्नेण धारणा होइ ।
जह उग्गहो दुरूवो, उग्गहसामण्णओ एक्को ॥ १६२ ॥

सा धारणा, अविच्युति-वासना-स्मृतीनां भिन्नस्वरूपत्वेन भिन्नलक्षणाऽपि सती धारणा सामान्याव्यतिरेकादेकैव भवति, यथाऽवग्रहो व्यञ्जनार्थावग्रहभेदात् द्विरूपोऽप्यवग्रहसामान्याव्यतिरेकादेक परस्याऽपि सिद्धे , अन्यथा मते पञ्चविधत्वापत्ते । इति गाथार्थ ।

तदेवमवग्रादिभेदचतुष्टयविषया निराकृता सर्वा अपि परविप्रतिपत्तयस्तन्निराकरणप्रक्रमे चानन्तरमवग्रहो द्विरूप प्रोक्त. स च कथं द्विरूपो भवति इत्याशङ्क्य तद्द्विरूपताकथनव्याजेन पूर्वं यान्याभिनिबोधिकज्ञानस्याऽवग्रहादीनि चत्वारि भेदवस्तून्युक्तानि , तेष्वेव मध्येऽवग्रहं तावद् , विशे० । ( 'उग्गह' शब्देऽस्मिन्नेव भागे वक्ष्यते )

तत्र व्यञ्जनं तावत्किमुच्यते ? इत्यादि—

वंजिज्जइ जेणऽत्थो, घडो व्व दीवेण वंजणं तं च ।
उवगरणिंदियसद्दा-इपरिणयदव्वसंबंधो ॥ १६४ ॥

व्यज्यते प्रकटीक्रियतेऽर्थो येन दीपेनेव घटस्तत् व्यञ्जनं, किं पुनस्तदित्याह—' तं चे ' त्यादि । तच्च व्यञ्जनम् उपकरणेन्द्रियशब्दादिपरिणतद्रव्यसंबन्धः । इन्द्रियं द्विविधम्-द्रव्येन्द्रियम् . भावेन्द्रियं च । विशे० (अत्र विस्तर. 'इंदिय' शब्देऽस्मिन्नेव भागे वक्ष्यते ) तत्र निर्वृत्त्युपकरणे द्रव्येन्द्रियं, लब्ध्यु-पयोगौ भावेन्द्रियं, निर्वृत्तिश्च द्विधा—अङ्गुलासंख्येयभागादिमाना कदम्बकुसुमगोलकधान्यमसूरकाहलाक्षुरप्राकारमांसगोलकरूपा, शरीराकारा च । श्रोत्रादीन्द्रियाणां पञ्चानामपि यथासंख्यमन्तर्निर्वृत्ति'; कर्णशष्कुलिकादिरूपा तु बहिर्निर्वृत्ति. । तत्र कदम्बकुसुमगोलकाकारमांसखण्डादिरूपाया अन्तर्निर्वृत्ते शब्दादिविषयपरिच्छेदहेतुर्य शक्तिविशेष. स उपकरणेन्द्रिय, शब्दादिश्च श्रोत्रादीन्द्रियाणां विषय., आदिशब्दाद्-रसगन्धस्पर्शपरिग्रह., तद्भावेन परिणतानि च तानि भाषावर्गणादिसंबन्धीनि द्रव्याणि च शब्दादिपरिणतद्रव्याणि, उपकरणेन्द्रिय च शब्दादिपरिणतद्रव्याणि च तेषां परस्परं संबन्धः उपकरणेन्द्रियशब्दादिपरिणतद्रव्यसंबन्ध.; एष तावद् व्यञ्जनमुच्यते । अपरं च—इन्द्रियेणाऽप्यर्थस्य व्यज्यमानत्वात्तदपि व्यञ्जनमुच्यते । तथा शब्दादिपरिणतद्रव्यनिकुरम्बमपि व्यज्यमानत्वाद् व्यञ्जनमभिधीयते, इति । एवमुपलक्षणव्याख्यानात् त्रितयमपि यथोक्त व्यञ्जनमवगन्तव्यम् ततश्चेन्द्रियलक्षणेन व्यञ्जनेन शब्दादिपरिणतद्रव्यसंबन्धस्वरूपस्य व्यञ्जनस्याऽवग्रहो व्यञ्जनावग्रह., अथ वा-तेनैव व्यञ्जनेन शब्दादिपरिणतद्रव्यात्मकाना व्यञ्जनानामवग्रहो व्यञ्जनावग्रह , इत्युभयत्राऽप्येकस्य व्यञ्जनशब्दस्य लोपं कृत्वा समास. । इति गाथार्थ ।

अत्राऽऽक्षेप, परिहार चाभिधित्सुराह—

अण्णाणं सो बहिरा-ईणं व तक्कालमणुवलंभाउ ।
न तदंते तत्तो च्चिय, उवलंभाओ तओ नाणं ॥१६५॥

स व्यञ्जनावग्रहोऽज्ञानं, ज्ञानं न भवति, तस्य उपकरणेन्द्रियशब्दादिपरिणतद्रव्यसबन्धस्य कालस्तत्कालस्तस्मिन् ज्ञानस्यानुपलम्भात् स्वसंवेदनेनासंवेद्यमानत्वाद् , बधिरादीनामिव-यथा हि बधिरादीनामुपकरणेन्द्रियस्य शब्दादिविषयद्रव्यै सह संबन्धकालेन किमपि ज्ञानमनुभूयते अननुभूयमानत्वाच्च तन्नाऽस्ति तथेहापीति भाव । अत्रोत्तरमाह—' न तदंते ' इत्यादि, नाऽसौ जडरूपतया ज्ञानरूपेणाननुभूयमानत्वादज्ञान, किं तर्हि स कोऽसौ व्यञ्जनावग्रहो-ज्ञानमेव । कुत ?, तदन्ते—तस्य-व्यञ्जनावग्रहस्यान्ते तत एव ज्ञानात्मकस्याऽर्थावग्रहोपलम्भस्य भावात् , तथाहि-यस्य ज्ञानस्याऽन्ते तज्ज्ञेयवस्तूपादानात्त

एव ज्ञानमुपजायते, तज्ज्ञान दृष्ट, यथार्थावग्रहपर्यन्ते त-ज्ज्ञेयवस्तूपादानेन ईहासद्भावादर्थावग्रहो ज्ञानं, जायते च व्यञ्जनावग्रहस्य पर्यन्ते तज्ज्ञेयवस्तूपादानात्तेन एवा-र्थाऽवग्रहज्ञान,तस्माद् व्यञ्जनावग्रहो ज्ञानम् । इति गाथार्थ ।

तदेवं व्यञ्जनावग्रहे यद्यपि ज्ञान नाऽनुभूयते, तथाऽपि ज्ञा-नकारणत्वादसौ ज्ञानम् , इत्येवं व्यञ्जनावग्रहे ज्ञानाऽभाव-मभ्युपगम्योक्तम् । सांप्रतं ज्ञानाऽभावोऽपि तत्राऽसिद्ध एवेति दर्शयन्नाह—

तक्कालम्मि वि नाणं, तत्थऽत्थि तणुं ति तो तमव्वत्तं ।
बहिराईणं पुण सो, अन्नाणं तदुभया भावा ॥ १९६ ॥

तत्कालेऽपि-तस्य व्यञ्जनसंबन्धस्य कालेऽपि तत्रानुप-हतेन्द्रियसंबन्धिनि व्यञ्जनावग्रहे ज्ञानमस्ति, केवलमेकने-जोऽवयवप्रकाशवत् तनु अतीवाल्पमिति, अतोऽव्यक्त स्वसं-वेदनेनापि न व्यज्यते । यद्यव्यक्त, कथ तदस्तीति ज्ञायते ? इति चेत् । मा त्वरिष्ठा , " जह चिरणाणमसंखे-ज्जसमइ-ऍहिं सद्दव्वसब्भावे " इत्यादिनाऽनन्तरमेव तदस्तित्वयुक्ते-र्वक्ष्यमाणत्वात् दृष्टान्ते तु ज्ञानाऽभावे अविप्रतिपत्तिरिति दर्शयन्नाह—बधिरादीनाम् , आदिशब्दादुपहतघ्राणादी-न्द्रियाणां पुन स व्यञ्जनावग्रहोऽज्ञान-ज्ञान न भवतीत्य-त्राऽविप्रतिपत्तिरेव । कुत ?, इत्याह—तद्य तदुभयं च तदुभयं तस्याभावात्-ज्ञानकारणत्वाभावात् अव्यक्तस्यापि च ज्ञानस्याभावात् । इति गाथार्थ ।

अथ पुनर्व्याक्षेपं, परिहारं चाऽभिधित्सुराह—

कहमव्वत्तं नाणं, च सुत्तमत्ताइसुहमबोहो व्व ।
सुत्तादओ सयं वि य, विन्नाणं नाऽवबुज्झंति ॥१९७॥

पर साऽसूयमाह-ननु कथ ज्ञानम् 'अव्यक्तं च' इत्युच्यते ? तम प्रकाशाद्यभिधानवाहेरुद्धत्वान्नेदं वक्तु युज्यत इति भावः । अत्रोत्तरमनन्तरमेवोक्तम्-एकतेजोऽवयवप्रकाशव-त्सूक्ष्मत्वादव्यक्तम् । अथ पुनरप्युच्यते-सुप्तमत्तमूर्च्छिता-दीनां सूक्ष्मबोधवदव्यक्तं ज्ञानमुच्यत इति न दोष । सु-प्तादीना तदात्मीयज्ञानं स्वसंविदितं भविष्यतीति चेत् न एत-देवमित्याह-सुप्तादय स्वयमपि तदात्मीयविज्ञान नाऽ-वबुध्यन्ते-न संवेदयन्ति अतिसूक्ष्मत्वात् । इति गाथार्थ ।

आह-यदि तैरपि सुप्तादिभिस्तदात्मीयज्ञानं न संवेद्यते, तर्हि तत्तेषामस्तीत्येतत्कथं लक्ष्यते ? इत्याह—

लक्खिज्जइ तं सिमिणा-यमाणवयणदाणाइचेट्ठाहिं ।
जं नाऽमइपुव्वाओ, विज्जंते वयणचेट्ठाओ ॥ १९८॥

तत्सुप्तादीना ज्ञानमस्तित्वेन लक्ष्यते । कुत ?, स्वप्नायमान वचनदानादिचेष्टाभ्य , सुप्तादयोऽपि हि स्वप्नायमानाद्यवस्था या काश्चित्किमपि भाषमाणा दृश्यन्ते, शब्दिताश्चाव्यक्तो वाचं प्रयच्छन्ति, सकोचविकोचाङ्गभङ्गजृम्भितकूजितक-ण्डूयनादिचेष्टाश्च कुर्वन्ति, न च तास्ते तदा वेदयन्ते । नापि च प्रबुद्धा स्मरन्ति, तर्हि कथ तच्चेष्टाभ्यस्तेषां ज्ञानमस्तीति लक्ष्यते ?, इत्याह-' जमि ' त्यादि. यत्-य-स्मात्कारणात्-नाऽमतिपूर्वास्ता वचनादिचेष्टा विद्यन्ते किं तु मतिपूर्विका-एव. अन्यथा काष्ठादीनामपि तत्प्रसङ्गात् ।

अतस्ताभ्यस्तत्तेषामस्तीति लक्ष्यत एव धूमादग्निरिव । इति गाथार्थ ।

आह-ननु आत्मीयमपि चेष्टितं किं कश्चित्र जानाति येन सुप्तादीना स्वचेष्टितासंवेदनमुच्यते ?, इत्याशङ्क्याह—

जग्गंतो वि न जाणइ, छउमत्थो हिययगोचरं सव्वं ।
जं तज्झवसाणाइ, जमसंखिज्जाइँ दिवसेणं ॥ १९९ ॥

हृदयम्-मनोगोचरस्थानं यस्य तत् हृदयगोचरम्, अध्य-वसायनिकुरम्बम् इति गम्यते, तज्जाग्रदपि छद्मस्थ सर्वम्-अपरिशेष न जानाति-न संवेदयते, आस्ता ताव-त्पुन सुप्त.-कुत ?, इत्याह-अध्यवसायानि-अध्यवसाय-स्थानरूपाणि केवलिगम्यानि सूक्ष्माणि । यत् एकेनाप्य-न्तर्मुहूर्तेनासंख्येयानि यान्ति-अतिक्रामन्ति, किं पुन स-र्वेणापि दिवसेन ? । न चैतानि छद्मस्थ सर्वाण्यपि स-वेदयते । ततश्च यथैतानि छद्मस्थैरसवेद्यमानान्यपि के-वलिदृष्टत्वात्सत्त्वेनाभ्युपगम्यन्ते, तथा व्यञ्जनावग्रहज्ञान-मपि । इति गाथार्थ ।

आह—ननु सुप्तादीनां ज्ञान वचनादिचेष्टाभ्यो गम्यत इ-त्युक्तं तत्तावदभ्युपगच्छाम , व्यञ्जनावग्रहे तु ज्ञानस्वरूपता-गमकं लिङ्गं न किंचिदुपलभामहे, अतो जडरूपत्वान्नाऽसौ ज्ञानमिति ब्रूम , इत्याशङ्क्याह—

जइ व ऽणाणमसंखे- ज्जसमइसद्दाइदव्वसब्भावे ।
किह चरमसमयसद्दा-इदव्वविन्नाणसामत्थं ॥२००॥

वाशब्द पातनासूचक , सा च कृतैव । ततश्च हन्त यदि-अज्ञान व्यञ्जनावग्रह क सति ?, इत्याह-असंख्येयस-मयशब्दादिद्रव्यसद्भावेऽपि सति, इत्यपिशब्दो गम्यते । कथं तर्हि चरमसमयशब्दादिद्रव्याणां विज्ञानजननसाम-र्थ्यं ?; न कथंचिदित्यर्थ । इदमुक्त भवति-व्यञ्जनावग्रहे तावत्प्रतिसमयमसंख्येयान् समयान् यावच्छ्रोत्रादीन्द्रियै-सह शब्दादिविषयद्रव्याणि संबध्यन्ते । ततश्च यद्यसं-ख्येयसमयान् यावच्छ्रोत्रादीन्द्रियै. सह शब्दादिविषय-द्रव्यसंबन्धसद्भावेऽपि सति व्यञ्जनावग्रहरूपं ज्ञानं नाऽ-भ्युपगम्यते, कथंतर्हि चरमसमये श्रोत्रादीन्द्रियै सह संबद्धाना शब्दादिविषयद्रव्याणां परेणाऽप्यर्थावग्रहलक्षण-विज्ञानजननसामर्थ्यमिष्यते ?, तदभ्युपगन्तु न युज्यते इति भाव । यदि हि शब्दादिविषयद्रव्याणां श्रोत्रादीन्द्रियै सह संबन्धे आदिसमयादारभ्य ज्ञानमात्रा काचित्प्रति-समयमाविर्भवन्ती नाऽभ्युपगम्यते, तर्हि चरमसमयेऽप्य-स्मादेवैषा न युज्यते, तथा च मत्यर्थावग्रहादिज्ञानानाम-प्यनुदयप्रसङ्ग । इति गाथार्थ ।

तथाहि—

जं सव्वहा न वीसुं, सव्वेसु वि तन्न रेणुतिल्लं व ।
पत्तेयमणिच्छंतो, कहमिच्छसि समुदये नाणं ॥२०१॥

यद्वस्तु सर्वथा-सर्वप्रकारैर्विष्वक् पृथक् नाऽस्ति तत् समु-दायेऽपि नाभ्युपगन्तव्यं, यथा रेणुकणनिकरे प्रतिरेणुक-(ण)मविद्यमान तैलम् , एवं चत्वमपि प्रत्येकसमयेषु ज्ञानमनिच्छन् कथ समुदाये ज्ञानमिच्छसि ? । इदमुक्त भवति-यदीन्द्रिय-

विषयसंबन्धस्य प्रथमसमयादारभ्य व्यञ्जनावग्रहसंबन्धिनो ऽसंख्येयान् समयान् यावत्प्रतिसमयं पुष्टिमाविभ्रती ज्ञानमात्रा काश्चिदपि नेच्छसि तर्हि चरमसमयशब्दादिविषयद्रव्यसंबन्धेन सपूर्णे समुदायेऽपि कथं तामिच्छसि ?- चरमसमयशब्दादिविषयद्रव्यसंबन्धे यदर्थावग्रहज्ञानमभ्युपगम्यते, तदपि प्रत्येकमसच्चरमसिकताकणे तैलवन्न प्राप्नोतीति भाव । तस्मात्तिलेपु तैलवत्सर्वेष्वपि समयेपु प्रत्येकं यच्च यावच्च ज्ञानमस्तीति प्रतिपत्तव्यम् । इति गाथार्थ ।

किं च—

समुदाये जइ णाणं, देसूणे समुदए कहं नऽत्थि ।
समुदाये वाऽभूयं, कह देसे होज्ज तं सयल ॥ २०२ ॥

समुदायज्ञानवादिन् ? यदि विषयद्रव्यसंबन्धसमयानामसंख्येयाना समुदाये ज्ञानमर्थावग्रहलक्षणमभ्युपगम्यते । तर्हि चरमसमयलक्षणो योऽसौ देशस्तेन न्यूने समुदायेचरमैकसमयो नैष्वसंख्यातेपु समयेष्वित्यर्थ', तत्कथं नास्ति ?, समस्त्येव, प्रमाणोपपन्नत्वात् ?, तथाहि-सर्वेष्वपि शब्दादिद्रव्यसंबन्धसमयेपु ज्ञानमस्तीति प्रतिज्ञानीमहे, ज्ञानोपकारिशब्दादिद्रव्यसंबन्धसमयसमुदायैकदेशत्वादिति हेतु , अर्थावग्रहसमयवदिति दृष्टान्त । अत्राह- ननु शब्दादिविषयोपादानसमयसमुदाये ज्ञानं केनाभ्युपगम्यते, येन समुदायैकदेशत्वात्प्रथमादिसमयेपु सर्वेष्वपि तत् प्रतिज्ञायते । मया ह्येकस्मिन्नेव चरमसमये शब्दादिद्रव्योपादाने ज्ञानप्रसव इष्यते, इत्याशङ्क्याह-'समुदाये वा ऽभूयमि' त्यादि, वाशब्दो वाशब्दो वा पातनाया, सा च कृतैव । तत्र यद्येकस्मिन्नेव चरमसमये ज्ञानमभ्युपगम्यते । तदाऽसौ सर्वसमयसमुदायापेक्षया तावदेकदेश एव । ततश्चाऽनेनैकदेशेनाने शेषसमयसमुदाये यदभूतं ज्ञानं तत्कथं हन्त चरमसमयलक्षणे देशे अकस्मादेव सकलमखण्डं भवेत् अप्रमाणोपपन्नत्वात्, तथाहि-नैकस्मिश्चरमशब्दादिद्रव्योपादानसमये ज्ञानमुपजायते, एकसमयमात्रशब्दादिद्रव्योपादानात् व्यञ्जनावग्रहाद्यसमयवदिति । स्यादेतत् , चरमसमयेऽर्थावग्रहज्ञानमनुभवप्रत्यक्षेणाऽप्यनुभूयते तत प्रत्यक्षविरोधिनीयं प्रतिज्ञा । तदयुक्तम्, चरमसमय एव समग्रं ज्ञानमुत्पद्यत इति भवत्प्रतिज्ञानस्यैव प्रत्यक्षविरोधात्, चरमतन्तौ समस्तपटोत्पादवचनवत् । तथा, सर्वेष्वपि शब्दादिद्रव्यसंबन्धसमयेपु ज्ञानमस्तीत्यादिपूर्वोक्तानुमानविरोधश्च भवत्पक्षस्य । इति गाथार्थ ।

तस्मात्किमिह स्थितम् ?, इत्याह—

तन्तू पडोवगारी, न समत्तपडो य समुदिया ते उ ।
सव्वे समत्तपडओ, तह नाणं सव्वसमयेसु ॥२०३॥

यथा एकस्तन्तु पटोपकारी वर्तते तमन्तरेणापि समस्तस्य तस्याऽभावात् न चासौ तन्तुस्तावता समस्त पटो भवति, पटैकदेशत्वात् तस्य समुदिता पुनस्ते तन्तव सर्वे समस्तपटव्यपदेशभाजो भवन्ति ? । तथाऽत्रापि सर्वेष्वपि समुदितेपु समयेपु ज्ञान भवति नैकस्मिश्चरमसमये । ततश्चार्थावग्रहसमयात् पूर्वसमयेपु तदेव ज्ञानमतीवास्फुटं व्यञ्जनावग्रह उच्यते ? । चरमसमये तु तदेव किञ्चित् स्फुटतरावस्थामापन्नमर्थावग्रह इति व्यपदिश्यते । अतो यद्यपि सुप्तमत्तमूर्छितादिज्ञानस्येव व्यक्त तथाविधं व्यञ्जनावग्रहज्ञानसाधकं लिङ्ग नास्ति तथाऽपि यथोक्तयुक्तितो व्यञ्जनावग्रहे सिद्धं ज्ञानम् । इति गाथार्थ ।

तत्त्वभेदपर्यायैर्व्याख्या, तत्र तत्त्वं व्यञ्जनावग्रहस्य स्वरूपमुक्तम् । अथ तस्य भेदान्निरूपयितुमाह—

नयणमणोवज्जिंदिय-भेआओ वंजणोग्गहो चउहा ।
( २०४+ )

स च व्यञ्जनावग्रहश्चतुर्धा भवति । कुतः ?, इत्याह— नयनमनोवर्जेन्द्रियभेदात् । इदमुक्तं भवति-विषयस्य इन्द्रियस्य च य परस्पर संबन्ध -प्रथममुपश्लेषमात्रं तद् व्यञ्जनावग्रहस्य विषय । स च विषयेण सहोपश्लेष प्राप्यकारिष्वेव स्पर्शन-रसनघ्राण-श्रोत्रलक्षणेपु चतुर्ष्विन्द्रियेपु भवति, न तु नयनमनसो । अतस्ते वर्जयित्वा शेषस्पर्शनादीन्द्रियचतुष्टयभेदात् चतुर्विध एव व्यञ्जनावग्रहो भवति । विशे० । ( भेदान् ' इंदिय ' शब्देऽस्मिन्नेव भागे वक्ष्यामि । ('मण' शब्दे च षष्ठ भागे ) ( व्यवस्थितम् अप्राप्यकारित्वं नयनमनसो । ) ततश्च-स्पर्शन-रसन घ्राणश्रोत्रभेदात् चतुर्विध एव व्यञ्जनावग्रह । विशे० ।

( ४ ) अवग्रहप्ररूपणामाह । प्रतिबोधक-मल्लक-दृष्टान्ताभ्याञ्च प्ररूपणा सहोपात्तत्वात्प्ररूपणया सहैव व्युत्क्रमेणाह—

तत्थोग्गहो दुभेओ, उग्गहणं जं होइ वंजणऽत्थाण ।
वंजणओ य जमत्थो, तेणाईए तयं वोच्छं । १९३॥

( अस्या गाथाया व्याख्या ' उग्गह ' शब्देऽस्मिन्नेव भागे वक्ष्यते ) इत्यादिना ग्रन्थेन प्रतिज्ञातव्यञ्जनावग्रहस्वरूपप्रतिपादनं चेह प्रकृतम् । तस्य च व्यञ्जनावग्रहस्य स्वरूप नन्द्यध्ययनागमसूत्र प्रतियोधकमल्लकोदाहरणाभ्यां प्रतिपादितम् , तद्यथा—

" वजणुग्गहस्स परूवणं करिस्सामि पडिवोहगदिट्ठंतेण, मल्लगदिट्ठंतेण य । से किं तं पडियोहगदिट्ठंतेण ? पडियोहगदिट्ठंतेण से- जहानामए केइ पुरिसे कंचि पुरिसं सुत्त पडियोहिज्जा अमुग ! अमुग ! त्ति । तत्थ चोयगे पण्णवग एवं वयासी-किं एगसमयपविट्ठा पुग्गला गहणमागच्छंति दुसमयपविट्ठा पुग्गला गहणमागच्छंति ०जाव दससमयपविट्ठा पुग्गला गहणमागच्छंति संखिज्जसमयपविट्ठा पुग्गला गहणमागच्छंति असंखिज्जसमयपविट्ठा पुग्गला गहणमागच्छंति ?, एवं वदन्त चोयगं पण्णवए एवं वयासी-नो एगसमयपविट्ठा पुग्गला गहणमागच्छंति, नो दुसमयपविट्ठा पुग्गला गहणमागच्छंति ०जाव नो दससमयपविट्ठा पुग्गला गहणमागच्छंति नो संखिज्जसमयपविट्ठा पुग्गला गहणमागच्छंति, असंखिज्जसमयपविट्ठा पुग्गला गहणमागच्छंति, से (त्तं) त पडिवोहगदिट्ठंतेणं ॥

से किं त मल्लगदिट्ठंतेणं ? मल्लगदिट्ठंतेणं से जहानामए केइ आवागसीसाओ मल्लगं गहाय तत्थेगं उदगबिंदुं पक्खि-

विज्जा, से नट्ठे । अगणे वि पक्खित्ते, से ऽवि नट्ठे । अगणे वि पक्खित्ते, से वि नट्ठे । एवं पक्खिप्पमाणेसु पक्खिप्पमाणेसु होही से उदगबिंदू जे णं तं मल्लगं रावेहिति । होही से उदगबिंदू जे णं तंसि मल्लगंसि ठाहिति । होही से उदगबिंदू जे णं तं मल्लगं भरेहिति । होही से उदगबिन्दू जे णं तंसि मल्लगंसि न ठाहिहिति । होही से उदगबिंदू जे णं तं मल्लगं पवाहेहिति एवामेव पक्खिप्पमाणेहिं २ अणंतेहिं पुग्गलेहिं जाहे तं वंजणं पूरियं होइ ताहे हुंति करेइ, नो चेव णं जाणइ के वि एस सद्दाइ" (सूत्र-३५+) इत्यादि ।

इदं च सूत्रं नन्दिविवरणे एवमर्थं व्याख्यातम्, तद्यथा- प्रतिबोधकमल्लकदृष्टान्ताभ्यां व्यञ्जनावग्रहस्य प्ररूपणं करिष्यामि । तत्र प्रतिबोधयतीति प्रतिबोधकः स एव दृष्टान्तस्तेन, तद्यथानाम कश्चिद्-अनिर्दिष्टस्वरूपः पुरुषः कञ्चिद्-अन्यम् अनिर्दिष्टस्वरूपमेव पुरुषं सुप्तं सन्तं प्रतिबोधयेत् । कथमित्याह—अमुक ! अमुक ! इति । तत्र प्रेरकः प्रज्ञापकमेवमवादीत्-किमेकसमयप्रविष्टा इत्यादि । एवं वदन्तं प्रेरकं प्रज्ञापकः एवमुक्तवान्-नो एकसमयप्रविष्टा इत्यादि, प्रकटार्थं, यावदसंख्येयसमयप्रविष्टाः पुद्गला ग्रहणमागच्छन्ति । नवरमयं प्रतिषेधः शब्दविज्ञानग्राह्यतामधिकृत्य वेदितव्यः, शब्दविज्ञानजनकत्वेनेत्यर्थः, अन्यथा सम्बन्धमात्रमधिकृत्य प्रथमसमयादारभ्य पुद्गला ग्रहणमागच्छन्त्येव । 'असंखेज्ज' इत्यादि प्रतिसमयप्रवेशनादिना आरभ्यासंख्येयसमयैः प्रविष्टा असंख्येयसमयप्रविष्टाः पुद्गलाः-शब्दद्रव्यविशेषा ग्रहणमागच्छन्ति-अर्थावग्रहज्ञानहेतवो भवन्तीति भावः । इह च चरमसमयप्रविष्टा एव विज्ञानजनकत्वेन ग्रहणमागच्छन्ति तदन्ये त्विन्द्रियस्योपयोगोपकारिण इति सर्वेषां सामान्येन ग्रहणमुक्तम् । सेयं प्रतिबोधकदृष्टान्तेन व्यञ्जनावग्रहणप्ररूपणा इति वाक्यशेषः ॥ अथ केयं मल्लकदृष्टान्तेन प्ररूपणा ? । तद्यथानाम कश्चित्पुरुषः आपाकशिरसो मल्लकशरावं गृहीत्वा रूक्षमिदं भवतीत्यस्य ग्रहणम् । तत्र मल्लके एकमुदकबिन्दुं प्रक्षिपेत् स नष्टः तत्रैव तद्भावपरिणतिमापन्न इत्यर्थः । शेषं सुबोधम् जाव जे णं तं मल्लगं ' रावेहिति' आर्द्रतां नेष्यति । शेषं सुबोधम् । नवरम् ' पवाहेहिति ' प्रावयिष्यतीति । एवामेवे' त्यादि, अति बहुत्वात्प्रतिसमयमनन्तैः शब्दपुद्गलैः यदा तद्व्यञ्जनं पूरितं भवति, तदा 'हुम्' इति करोति तमर्थं गृह्णातीत्युक्तं भवति । किं विशिष्टं नाम-जात्यादिकल्पनारहितम्, अत एवाह-' नो चेव णं जाणइ के वेस सद्दाइ त्ति ' न पुनरेवं जानाति क एष शब्दादिः इत्यर्थः । एवं च सति सामर्थ्यकत्वादर्थावग्रहस्य अर्थावग्रहात्पूर्वं सर्वो व्यञ्जनाऽवग्रहः " तदेवमस्य व्यञ्जनाऽवग्रहस्वरूपप्रतिपादकस्य नन्दिसूत्रस्य शेषं प्रायः सुगममिति मन्यमानो भाष्यकारः 'जाहे तं वंजणं पूरियं होइ " इत्येतत् ( नन्दिसूत्रांशं ) व्याचिख्यासुराह—

तोएण मल्लगं पिव, वंजणमापूरियं ति जं भणियं ।
तं दव्वमिंदियं वा, तस्संजोगो व न विरुद्धं ॥ २५० ॥

' जं भणियं ' यदुक्तं नन्दिसूत्रकारेण किं तत् ?, इत्याह- व्यञ्जनमापूरितमिति । केन किंवत् ?, इत्याह । तोयेन-जलेन मल्लक-शरावं तद्वदिति । तस्मिन् सूत्रकारभणिते व्यञ्जनं द्रव्यं गृह्यते, इन्द्रियं वा, तयोर्वा द्रव्येन्द्रिययोः संयोग-सम्बन्ध इति सर्वथाऽप्यविरोधः । इदमुक्तं भवति-व्यञ्जनशब्देन शब्दादिविषयपरिणतपुद्गलसमूहरूपं द्रव्यं श्रोत्रादीन्द्रियं वा द्रव्येन्द्रिययोः सम्बन्धो वा गृह्यते न कश्चिद्विरोधः, व्यज्यते-प्रकटीक्रियते विवक्षितोऽर्थोऽनेनेति व्यञ्जनमित्यस्या व्युत्पत्तेः सर्वत्र घटनादिति गाथार्थः ।

केवलं द्रव्यादिषु त्रिष्वपि व्यञ्जनशब्दवाच्येषु प्रत्येकमापूरितत्वे विशेषो द्रष्टव्यः क पुनरसौ ? इत्याह—

दव्वं माणं पूरिय-मिंदियमापूरियं तहा दोण्हं ।
अण्णोण्णसमंसग्गो, जया तया गिण्हइ तमत्थं ॥२५१॥

'दव्वं' ति-यदा द्रव्यं व्यञ्जनमधिक्रियते तदा 'जाहे तं वंजणं पूरियं होइ' इति-कोऽर्थः ? इत्याह- माणं पूरियं' ति-मानम् तस्य शब्दादिद्रव्यस्य प्रमाणं प्रतिसमयप्रवेशनप्रभूतिकृतत्वात्स्वप्रमाणमानीत-प्रकर्षमुपनीतं स्वग्राहकज्ञानजनन समर्थीकृतमिति यावत् । यदा त्विन्द्रियमिति इन्द्रियं व्यञ्जनमधिक्रियते तदा ' जाहे तं वंजणं पूरियं होइ इति-किमुक्तं भवति ? इत्याह- आपूरियं' ति-आपूरितं-व्याप्त--भृत—वासितमित्यर्थः । तथा- दोण्हं ति '—द्वयोः श्रोत्रादीन्द्रियशब्दादिपरिणतद्रव्ययोः सम्बन्धो यदि व्यञ्जनमधिक्रियते तदा जाहे तं वंजणं पूरियं होइ ' इति-किमुक्तं भवति ? इत्याह- अण्णोण्ण समसग्गो ' त्ति-सम्यग् सर्गो-योगः संसर्गः सम्यक् सम्बन्ध इत्यर्थः, इदमत्र हृदयम्—अस्मिन्पक्षे यदा तयोरिन्द्रियद्रव्ययोः परस्परमतीव संयुक्तता—अनुषक्तता अङ्गाङ्गिभावेन परिणामो भवति, तदा प्रस्तुतसम्बन्धलक्षणं व्यञ्जनमापूरितं भवतीत्युच्यत इति । 'जया तया गिण्हइ तमत्थं' ति-एवं यदा त्रिविधमपि व्यञ्जनं प्रकारत्रयेणाऽऽपूरितं भवति, तदा तं विवक्षितं शब्दादिकमर्थमव्यक्तं नाम-जात्यादिकल्पनारहितं गृह्णाति । एतच्च 'ताहे हुंति करेइ' इत्यस्य व्याख्यानम् अर्थावग्रहश्चायमेकसामयिको विज्ञेयः, इतरस्तु पूर्वमन्तर्मुहूर्तं द्रव्यप्रवेशादिरूपो व्यञ्जनाऽवग्रहोऽवसेयः । इति गाथार्थः ।

किं विशिष्टं पुनस्तमर्थं गृह्णाति ? इत्याशङ्क्य स्वत एव भाष्यकारस्तत्स्वरूपमाह—

सामण्णमणिद्देसं, सरूव-नामाइकप्पणारहियं ।
जइ एवं ज तेणं, गहिए सद्देत्ति तं किहणु ? ॥२५२॥

ग्राह्यवस्तुनः सामान्यविशेषात्मकत्वे सत्यप्यर्थावग्रहेण सामान्यरूपमेवार्थं गृह्णाति, न विशेषरूपम् अर्थावग्रहस्यैकसामयिकत्वात्, समयेन च विशेषग्रहणायोगादिति । सामान्यार्थश्च कश्चित् ग्रामनगरवनसेनादिशब्दैर्निर्देश्योऽपि भवति, तद्व्यवच्छेदार्थमाह-अनिर्देश्यं केनापि शब्देनानभिलप्यम् । कुतः पुनरेतत् ?, इत्याह—यतः स्वरूपनामादिकल्पनारहितम्, आदिशब्दात्—जातिक्रियागुणद्रव्यपरिग्रहः । तत्र रूपरसादर्थानां यः आत्मीयश्चक्षुरादीन्द्रियगम्यः प्रतिनियतः स्वभावस्तत्स्वरूपम् । रूपरसादिस्तु तदभिधायको ध्वनिर्नाम, रूपत्व-रसत्वादिका

तु जानि प्रीतिकरमिदं रूपं पुष्टिकरोऽयं रस इत्यादिकस्तु शब्दः क्रियाप्रधानत्वात् क्रिया । कृष्णनीलादिकस्तु गुणः । पृथिव्यादिकं पुनर्द्रव्यम् । एतेषा स्वरूप-नाम-जात्यादीनां कल्पना अन्तर्जल्पारूषितज्ञानरूपा तया रहितमेवार्थमर्थावग्रहेण गृह्णाति यतो जीवः, तस्मादनिर्देश्योऽयमर्थः प्रोक्तः, तत्कल्पनारहितत्वेन स्वरूप-नाम-जात्यादिप्रकारेण केनाऽपि निर्देष्टुमशक्यत्वादिति । एवमुक्ते सति परः प्राह- जइ एवं ' इत्यादि-यदि स्वरूप-नामादिकल्पनारहितोऽर्थोऽर्थावग्रहस्य विषय इत्येव व्याख्यायते भवद्भिः, तर्हि ज' ति-यन्नन्द्यध्ययनसूत्रे प्रोक्तम् । किम् ?, इत्याह-' तेण गहिए सद्दे ' त्ति-उपलक्षणत्वादित्थं तत्सपूर्वं द्रष्टव्यम्-' से जहानामए केइ पुरिसे अव्वत्तं सद्दं सुणेज्जा तेणं सद्दे त्ति उग्गहिए, न उणं जाणेइ केवेस सद्दे ? " इति 'न किहइ ' त्ति-तदेतत्कथमविरोधेन नीयते ?- गुरुर्मद्व्याख्यानेन सह विरुध्यते एतदमित्यर्थः, तथा हि- अस्मिन्नन्दिसूत्रेऽयमर्थः प्रतीयते-यथा तेन प्रतिपत्त्रा-ऽर्थावग्रहेण शब्दोऽवगृहीत इति । भवन्तस्तु शब्दाद्युल्लेखरहितं सर्वथा अमुं प्रतिपादयन्ति ततः कथं न विरोध इति भावः इति गाथार्थः ।

अत्रोत्तरमाह—

सद्दे त्ति भणइ वत्ता, तम्मत्तं वा न सद्दबुद्धीए।
जइ होज्ज सद्दबुद्धी, तोऽवाओ चेव सो होज्जा ॥२५३॥

शब्दस्तेनाऽवगृहीत इति यदुक्तं तत्र-' शब्दः ' इति वक्ता प्रज्ञापकः, सूत्रकारो वा भणति-प्रतिपादयति, अथवा-तन्मात्रं-शब्दमात्रं रूपरसादिविशेषव्यावृत्त्याऽनवधारितत्वाच्छब्दतया अनिश्चितं गृह्णातीति । एतावतांऽशेन शब्दस्तेनाऽवगृहीत इत्युच्यते, न पुनः शब्दबुद्ध्या 'शब्दोऽयम् ' इत्यध्यवसायेन तत्-शब्दवस्तु तेनावगृहीतं, शब्दोल्लेखस्यान्तर्मुहूर्तिकत्वाद् अर्थावग्रहस्य त्वेकसमयसामायिकत्वादसंभव एवायमिति भावः । यदि पुनः तत्र—अर्थावग्रहे शब्दबुद्धिः स्यात्तर्हि को दोषः स्याद् ? इत्याशङ्क्य सूत्रकारः स्वयमेव दूषणान्तरमाह-' जई ' त्यादि-यदि पुनरर्थावग्रहे शब्दबुद्धिः-शब्दनिश्चयः स्यात्, तदाऽपाय एवाऽसौ स्यात्, नत्वर्थावग्रहः, निश्चयस्यापायरूपत्वात् । ततश्चार्थावग्रहाभाव एव स्यात्, न चैतद् दृष्टम्, इष्टं च । इति गाथार्थः ।

अत्राह परः-ननु प्रथमसमय एव रूपादिव्यपोहेन 'शब्दोऽयम्' इति प्रत्ययोऽर्थावग्रहत्वेनाभ्युपगम्यतां, शब्दमात्रत्वेन सामान्यत्वात् ; उत्तरकालं तु प्रायो माधुर्यादयः शङ्खशब्दधर्मा इह घटन्ते, ननु शार्ङ्गधर्मा खरकर्कशत्वादय इति विमर्शबुद्धिरीहा तस्माच्छाङ्ख एवाऽयं शब्द इति तद्विशेषस्त्वपायोऽस्तु । तथा च सति ' तेणं सद्दे त्ति उग्गहिए " इदं यथाश्रुतमेव व्याख्यायते-नो चेव णं जाणइ केवेस सद्दाइ तओ ईहं पविसइ " इत्याद्यपि सर्वमविरोधेन गच्छतीति । तदेतत्परोक्तं सूरिः प्रत्यनुभाष्य दूषयति, तद्यथा—

जइ सद्दबुद्धिमेत्तयमवग्गहो तव्विसेसणमवाओ।
ननु सद्दो नासद्दो, न य रूवाइव्विसेसोत्ति ॥ २५४ ॥

भो परः ! यदि शब्दबुद्धिमात्रं 'शब्दोऽयम्' इति निश्चयज्ञानमपि भवतार्थाऽवग्रहोऽभ्युपगम्यते, तद्विशेषणं तु तस्य शब्दस्य विशेषणं विशेषः 'शाङ्ख एवायं शब्दः ' इत्यादिविशेषज्ञानमित्यर्थः, अपायो मतिज्ञानतृतीयो भेदोऽङ्गीक्रियते हन्त तर्हि अवग्रहलक्षणस्य तदाद्यभेदस्याऽभावप्रसङ्गः, प्रथमत एवावग्रहमतिक्रम्याऽपायाऽभ्युपगमात् । कथं पुनः शब्दज्ञानमपायः ? इति चेद् । उच्यते-तस्यापि विशेषग्राहकत्वात्, विशेषज्ञानस्य च भवताप्यपायत्वेनाभ्युपगतत्वात् । ननु 'शाङ्ख एवाऽयं शब्दः' इत्यादिकमेव तदुत्तरकालभाविज्ञानं विशेषग्राहकं शब्दज्ञाने तु शब्दसामान्यस्यैव प्रतिभासनात्कथं विशेषप्रतिभासः, येनाऽपायप्रसङ्गः स्याद् ?, इत्याह- ननु ' इत्यादि, नन्वित्यत्तमायां, परामन्त्रणे वा, ननु ' शब्दोऽयं नाशब्दः ' इति विशेषोऽयं विशेषप्रतिभास एवाऽयमित्यर्थः । कथं पुनर्नाशब्द इति निश्चीयते ?, इत्याह-न च रूपादिरिति, चशब्दो हिशब्दार्थे, आदिशब्दाद्गन्ध-रस-स्पर्शपरिग्रहः । ततश्चेदमुक्तं भवति-यस्मान्न रूपादिरयं तेभ्यो व्यावृत्तत्वेन गृहीतत्वाद् अतो नाऽशब्दोऽयमिति निश्चीयते, यदि तु रूपादिभ्योऽपि व्यावृत्तिर्गृहीता न स्यात्तदा शब्दोऽयमिति निश्चयोऽपि न स्यादिति भावः । तस्माच्छब्दोऽयं नाशब्द इति विशेषप्रतिभास एवाऽयम् । तथा च सत्यस्याप्यपायप्रसङ्गतोऽवग्रहाभावप्रसङ्ग इति स्थितम् । इति गाथार्थः ।

अथ परेऽवग्रहाऽपाययोर्विषयविभागं दर्शयन्नाह—

थोवमियं नाऽवाओ, संखाइविसेसणमवाउ त्ति ।
तब्भेया वेक्खाए, ननु थोवमियं पि नाऽवाओ ॥२५५॥

इदं शब्दबुद्धिमात्रकं शब्दमात्रस्तोकविशेषावसायत्वात् स्तोकम्-स्तोकविशेषग्राहकम्, अतोऽपायो न भवति, किं त्ववग्रह एवाऽयमिति भावः । कः पुनस्तर्ह्यपायः ?, इत्याह- 'संखाइ' इत्यादि, शाङ्खोऽयं शब्द इत्यादिविशेषणविशिष्टं यज्ज्ञानं तदपायः बृहद्विशेषावसायित्वादिति हृदयम् । हन्त ! यद्यत् स्तोकं तत्तन्नाऽपायः, तर्हि निवृत्ता साम्प्रतमपायज्ञानकथा, उत्तरोत्तरार्थविशेषग्रहणापेक्षया पूर्वपूर्वार्थविशेषावसायस्य स्तोकत्वाद् । एतदेवाह-' तब्भेय ' त्यादि, तस्य-शाङ्खशब्दस्य ये उत्तरोत्तरभेदा मन्द्रमधुरत्वादयः, तरुणमध्यमवृद्धस्त्रीपुरुषसमुत्थत्वादयश्च तदपेक्षायां सत्यामिदमपि ' शाङ्खोऽयं शब्दः ' इत्यादि ज्ञानं ननु स्तोकं-स्तोकविशेषग्राहकमेव इति नाऽपायः स्याद् । एवमुत्तरोत्तरविशेषग्राहिणामपि ज्ञानानां तदुत्तरोत्तरभेदापेक्षया स्तोकत्वादपायत्वाभावो भावनीयः । इति गाथार्थः ।

तमेवाऽपायाभावं स्फुटीकुर्वन्नाह—

इय सुबहुणा वि कालेण, सव्वभेयावहारणमजुत्तं ।
जम्मि हवेज्ज अवाओ, सव्वो च्चिय उग्गहो नाम ॥२५६॥

इतिशब्द उपप्रदर्शनार्थः, ततश्चेदमुक्तं भवति-यथा 'शाङ्खोऽयं शब्दः ' इत्यस्यां बुद्धौ शब्दगतभेदावधारणं साम्प्रतमसाध्यम्, मन्द्रमधुरत्वादितदुत्तरोत्तरभेदवाहुल्यसंभवात् । तथा च सति स्तोकत्वान्नेयं बुद्धिरपायः, किं त्वर्थावग्रह इत्येव सुबहुनाऽपि कालेन सर्वेणाऽपि पुरुषायुषेण शब्दगतसमस्तमन्द्रमधुरत्वाद्युत्तरोत्तरभेदावधारणमसाध्यं तद्

ज्ञानामनन्तत्वादशक्यमित्यर्थः, यस्मिन् भेदाऽवधारणे, किम् ?, इत्याह-यस्मिन्नपायो भवेदन्यभेदाकाङ्क्षानिवृत्तेर्यस्मिन् भेदाऽवधारणज्ञानेऽपायत्व व्यवस्थाप्येत, इति भावः। तस्मात्सर्वोऽपि भेदप्रत्यय उत्तरोत्तरापेक्षया त्वदभिप्रायेण स्तोकत्वादर्थावग्रह एव प्राप्नोति, नाऽपायः, शब्दज्ञानवद्। इति गाथार्थः ।

किं च-शब्द एवायमिति ज्ञानं स्तोकत्वाद्यदर्थावग्रहत्वेन भवताऽभिमतम्। तत् पूर्वमीहामन्तरेण न संभवति तत्पूर्वकत्वे च तस्याऽर्थावग्रहत्वाऽलाभ इति दर्शयन्नाह—

किंसद्दो किमसद्दो-त्तणीहिए सद्दए व किह जुत्तं ? ।
अह पुव्वमीहिऊणं, सद्दो त्ति मयं तई पुव्वं ॥ २५७ ॥

'किं शब्दोऽयम्' आहो(स्वि)श्विद् अशब्दो-रूपादिः इत्येवं पूर्वमनीहिते यत् 'शब्द एव' इति निश्चयज्ञान तदकस्मादेव जायमानं कथं युक्तम् ?, विमर्शपूर्वकत्वमन्तरेण नेदं घटत इत्यर्थः। इदमुक्तं भवति-शब्दगतान्वयधर्मेषु रूपादिभ्यो व्यावृत्तौ च गृहीतायां 'शब्द एव' इति निश्चयज्ञानं युज्यते, तद्ग्रहणं च विमर्शमन्तरेण नोपपद्यते, विमर्शश्च-ईहा, तस्मादीहामन्तरेणायुक्तमेव 'शब्द एव' इति निश्चयज्ञानम् । अथ निश्चयकालात्पूर्वमीहित्वा भवतोऽपि 'शब्द एवायम्' इति निश्चयज्ञानमभिमतम्। हन्त; तर्हि निश्चयज्ञानात्पूर्वम् 'तई' असौ ईहा भवद्वचनतोऽपि सिद्धा। इति गाथार्थः ।

यदि नाम निश्चयज्ञानात्पूर्वमीहा सिद्धा,
ततः किम् ?, इत्याह—

किं तं पुव्वं गहियं, जमीहओ सद्दए व विण्णाणं ।
अह पुव्वं सामण्णं, जमीहमाणस्स सद्दो त्ति ॥ २५८ ॥

हन्त ! यदि निश्चयज्ञानमीहापूर्वकं त्वयाऽभ्युपगम्यते, तर्हि प्रष्टव्योऽसि ननु ईहायाः पूर्वं किं तद्वस्तु प्रमात्रा गृहीतम्, यदीहमानस्य तस्य 'शब्द एवायम्' इति निश्चयज्ञानमुपजायते ?, न हि कश्चिद्वस्तुन्यगृहीते अकस्मात्प्रथमत एव ईहां कुरुत इति भावः। क्षुभितस्य परस्योत्तरप्रदानाऽसामर्थ्यमालोक्य स्वयमेव तन्मतमाशङ्कते-अथ मन्यसे पर -सामान्य नाम-जात्यादिकल्पनारहित वस्तुमात्रमीहायाः पूर्वं गृहीतं, यदीहमानस्य 'शब्द' इति निश्चयज्ञानमुत्पद्यते। इति गाथार्थः ।

अथ ईहायाः पूर्वं सामान्यग्रहणे परेणेष्यमाणे सूरिः
स्वसमीहितसिद्धिमुपदर्शयन्नाह—

अत्थोग्गहओ पुव्वं, होयव्वं तस्स गहणकालेणं ।
पुव्वं च तस्स वंजण-कालो सो अत्थपरिसुण्णो ॥ २५९ ॥

ननु ईहायाः पूर्वं यत् सामान्य गृह्यते, तस्य तावद् ग्रहणकालेन भवितव्यम् । स चास्मदभ्युपगतसामायिकार्थाऽवग्रहकालरूपो न भवति, अस्मदभ्युपगताऽङ्गीकारप्रसङ्गात्, किं तर्हि ?, अस्मदभ्युपगतार्थाऽवग्रहात्पूर्वमेव भवदभिप्रायेण तस्य सामान्यस्य ग्रहणकालेन भवितव्यः, पूर्वं च तस्याऽस्मदभ्युपगतार्थाऽवग्रहस्य-व्यञ्जनकाल एव वर्त्तते, व्यञ्जनानां-शब्दादिद्रव्याणामिन्द्रियमात्रेणादान-



कालो मध्यपदलोपाद्व्यञ्जनकालः । भवत्वेवं, तथाऽपि तत्र सामान्याऽर्थग्रहणं भविष्यति, इत्याशङ्क्याह-स च व्यञ्जनकालोऽर्थपरिशून्यः, न हि तत्र सामान्यरूपो, विशेषरूपो वा कश्चनाप्यर्थः प्रतिभाति, तदा मनोरहितेन्द्रियमात्रव्यापारात्, तत्र चार्थप्रतिभासाऽयोगात् । तस्मात्पारिशेष्यादस्मदभ्युपगतार्थाऽवग्रह एव सामान्यग्रहणमिति गाथायामनुक्तमपि स्वयमेव द्रष्टव्यम् । तदनन्तरं चान्वयव्यतिरेकधर्मपर्यालोचनरूपा ईहा, तदनन्तरं च 'शब्द एवाऽयम्' इति निश्चयज्ञानमपायः इति सर्वं सुस्थं भवति । इति गाथार्थः ।

अथ प्रथममेवाऽर्थाऽवग्रहज्ञानेन शब्दाऽग्रहणे परः पुनरपि दोषमाह—

जइ सद्दो त्ति न गहियं, न उ जाणइ जं क एस सद्दो त्ति ।
तमजुत्तं सामण्णे, गहिए मग्गिज्जइ विसेसो ॥ २६० ॥

यदर्थाऽवबोधसमये प्रथममेव 'शब्दोऽयम्' इत्येवं तद्वस्तु न गृहीतं, तर्हि 'न उण जाणइ के वेस सद्दे त्ति' 'जति', यत्सूत्रे निर्दिष्टं तदयुक्तं प्राप्नोति, यस्माच्छब्दसामान्ये रूपादिव्यावृत्ते गृहीते सति पश्चान्मृग्यते-अन्विष्यते विशेषः-'किमयं शब्दः शाङ्खः, उत शार्ङ्गः ?' इति। इदमुक्तं भवति-"न उण जाणइ क वेस सद्दे" त्ति, अस्मिन् नन्दिसूत्रे 'न पुनर्जानाति कोऽप्येष शाङ्खशार्ङ्गाद्यन्यतरशब्द' इति विशेषस्यैवाऽपरिज्ञानमुक्तम्, शब्दसामान्यमात्रग्रहणं त्वनुज्ञातमेव, तद्ग्रहणे तु 'क एष शब्दः, किं शाङ्खः, शार्ङ्गो वा' इत्येवं विशेषमार्गणमसङ्गतमेव स्यात्, विशेषजिज्ञासायाः सामान्यज्ञानपूर्वकत्वाच्छब्दसामान्ये गृहीत एव तद्विशेषमार्गणस्य युज्यमानत्वात्। इति गाथार्थः ।

अत्रोत्तरमाह—

सव्वत्थ देसयंतो, सद्दो सद्दो त्ति भासओ भणइ ।
इहरा न समयमित्ते, सद्दो त्ति विसेसणं जुत्तं ॥ २६१ ॥

सर्वत्र-पूर्वस्मिन्, अत्र च सूत्रावयवे अवग्रहस्वरूपं देशयन्-प्ररूपयन् 'शब्दः शब्दः' इति भाषकः-प्रज्ञापक एव वदति, न तु तत्र ज्ञाने शब्दप्रतिभासोऽस्ति। इत्थं चैतद्, अन्यथा न समयमात्रेऽर्थावग्रहकाले 'शब्द' इति विशेषणं युक्तम्, आन्तर्मुहूर्तिकत्वाच्छब्दनिश्चयस्येति प्रागेवोक्तम्। सांव्यवहारिकार्थाऽवग्रहापेक्षं वा सूत्रमिदं व्याख्यास्यते इति मा त्वरिष्ठाः । इति गाथार्थः ।

अथ सूत्रावष्टम्भवादिनं परं दृष्ट्वा सूत्रमेव परिहारमाह—

अहव सुए च्चिय भणियं, जह कोइ सुणेज्ज सद्दमव्वत्तं ।
अव्वत्तमणिद्देस्सं, सामण्णं कप्पणारहियं ॥ २६२ ॥

अथवा यदि तव गाढं श्रुतावष्टम्भः तदा तत्रापि न गृहीतं यदुत--प्रथममव्यक्तस्यैव शब्दोल्लेखरहितस्य शब्दमात्रस्य ग्रहणम्। केन पुनः सूत्राऽवयवेनेदमुक्तम् ?, इत्याह-'जह कोइ सुणेज्ज सद्दमव्वत्तं' 'ति-अयं च सूत्रावयवो नन्द्यध्ययने इत्थं द्रष्टव्यः-" से जहानामए केइ पुरिसे अव्वत्तं सद्दं सुणेज्ज त्ति-(सूत्र+) अत्र-अव्यक्तमिति कोऽर्थः ?, इत्याह-अनिर्देश्यं 'शब्दोऽयं' रूपादिर्वा' इत्यादिना प्रका-

रेणाऽव्यक्तमित्यर्थः । ननु यदि शब्दादिरूपेणाऽनिर्देश्यं, तर्हि किं तद् ?, इत्याह-सामान्यम् । किमुक्तं भवति ?, इत्याह-नामजात्यादिकल्पनारहितम् । न च वक्तव्यं शब्दशार्ङ्गभेदापेक्षया शब्दोल्लेखस्याप्यव्यक्तत्वे घटमाने कुत इद व्याख्यानं लभ्यते ? इति, अवग्रहस्यानाकारोपयोगरूपतया सूत्रेऽधीतत्वाद् अनाकारोपयोगस्य च सामान्यमात्रविषयत्वात्, प्रथममेवाऽपायप्रसक्त्याऽवग्रहेहाभावप्रसङ्ग इत्याद्युक्तत्वाच्च । इति गाथार्थः ।

अथ सूरिरेव पराभिप्रायमाशिशङ्कयिषुराह—

अहव मई पुव्वं चिय, सो गहिओ वंजणोग्गहे तेणं ।
जं वंजणोग्गहम्मि वि, भणियं विण्णाणमव्वत्तं ॥२६३॥

अथ परस्य मतिः स्यात्केयम् ? इत्याह-स -अव्यक्तः, अनिर्देश्यादिस्वरूपः शब्दः अर्थावग्रहात्पूर्वमेव व्यञ्जनावग्रहे तेन श्रोत्रा गृहीतः, तत्किमित्यर्थावग्रहेऽपि तद्ग्रहणमुद्घुष्यते?, कथमिदं पुनर्ज्ञायते यदुत-असौ व्यञ्जनाऽवग्रहे गृहीतः ? इत्याह- जमि ' त्यादि, यत्-यस्माद् व्यञ्जनाऽवग्रहेऽपि अर्वाक्शब्दार्थज्ञानं विज्ञानमुक्तम्, अव्यक्तविषयग्रहण एव चाऽव्यक्तत्वम् तस्योपपद्यते इति भावः इति । गाथार्थः ।

अत्रोत्तरमाह—

अत्थि तयं अव्वत्तं, न उ तं गिण्हइ सयं पि सो भणियं ।
न उ अग्गहियम्मि जुज्जइ, सद्दो त्ति विसेसणं बुद्धी ॥२६४॥

अस्ति तदव्यक्तं श्रोतुर्व्यञ्जनावग्रहे ज्ञानं, न तस्यास्माभिरपलापः क्रियते, न पुनरसौ श्रोता अतिसौक्ष्म्यात्तत्स्वयमपि गृह्णाति-संवेदयते । एतच्च प्रागपि भणितम् । " सुत्तमत्ताइसुहुमबोहो व्व " इति वचनात्, तथा " सुत्तादयो सय वि य विण्णाणं णाऽवबुज्झन्ति " इति वचनाच्च । तस्माद् व्यञ्जनमात्रस्यैव तत्र ग्रहणं, न शब्दस्य, व्यञ्जनावग्रहत्वान्यथाऽनुपपत्तेरेवेति । न च सामान्यरूपतया अव्यक्ते शब्देऽगृहीतेऽकस्मादेव शब्दः इति विशेषणबुद्धिर्युज्यते, अनुस्वारस्याऽलाक्षणिकत्वाद्विशेषबुद्धिरित्यर्थः । अस्यां च विशेषबुद्धौ प्रथममेवेष्यमाणायामादावेवार्थावग्रहकालेऽप्यपायप्रसङ्ग इत्यसकृदेवोक्तम् । इति गाथार्थः ।

ननु यदि व्यञ्जनाऽवग्रहेऽप्यव्यक्तशब्दग्रहणं भवेत्तदा को दोषः स्यात् ?, इत्याह—

अत्थो त्ति विसयगहणं, जइ तम्मि वि सो न वजणं नाम ।
अत्थोग्गहो चिय तओ, अविसेसो संकरो वाऽवि ॥२६५॥

अर्थाऽवग्रहे अर्थ इत्यनेन तावद्विषयग्रहणमभिप्रेतं-रूपादिभेदेनाऽनिर्धारितस्याव्यक्तस्य शब्दादेर्विषयस्य ग्रहणं, तत्राऽभिप्रेतमित्यर्थः । यदि च-तस्मिन्नपि व्यञ्जनाऽवग्रहेऽसावव्यक्तशब्दः प्रतिभासते इत्यभ्युपगम्यते, तदा न व्यञ्जनं नाम; व्यञ्जनाऽवग्रहो न प्राप्नोतीत्यर्थः । ततश्चेदानीं निवृत्ता तत्कथा, व्यञ्जनमात्रसंबन्धस्यैव तत्रोक्तत्वात्, भवता च तदतिक्रान्तस्याऽव्यक्तार्थग्रहणस्येहाऽभिधीयमानत्वादिति । तर्ह्यव्यक्तार्थग्रहणे किमसौ स्यात् ? इत्याह—अर्थाऽवग्रह एवाऽसौ, अव्यक्ताऽर्थावग्रहणात्, ततश्च नाम्नि व्यञ्जनम-व्यञ्जनाऽवग्रहः । अथास्याऽपि सूत्रे प्रोक्तत्वादस्तित्वं न परिहियते, तर्हि द्वयोरप्यविशेषः सोऽप्यर्थावग्रहः सोऽपि व्यञ्जनावग्रहः प्राप्नोतीति भावः । मेचकमणिप्रभावत् संकरो वा स्यादित्यर्थः । इति गाथार्थः ।

तदेवं व्यञ्जनाऽवग्रहे व्यञ्जनसंबन्धमात्रमेव, अर्थाऽवग्रहे त्वव्यक्तशब्दाद्यर्थग्रहणं, न व्यक्तशब्दाद्यर्थसंवेदनम्, इति प्रतिपादितम् । साम्प्रतमुपपत्त्यन्तरेणाप्यर्थाऽवग्रहे व्यक्तशब्दार्थसंवेदनं निराचिकीर्षुराह—

जेणऽत्थोग्गहकाले, गहणेहाऽवायसंभवो नऽत्थि ।
तो नऽत्थि सद्दबुद्धी, अहऽत्थि नाऽवग्गहो नाम ॥२६६॥

पूर्वं तावदर्थस्य ग्रहणमात्रं ततश्चेहा, तदनन्तरं त्वपायः, इत्येव मतिज्ञानस्योत्पत्तिक्रमः । न चैतत् त्रितयं प्रथममेवशब्दार्थेऽवगृह्यते समस्तीति । एतदेवाह-येनार्थाऽवग्रहकालेऽर्थग्रहणेहाऽपायानां संभवो नाऽस्ति ततोऽर्थाऽवग्रहे नाऽस्ति ' शब्दः ' इति विशेषबुद्धिः, अर्थग्रहणेहापूर्वकत्वात्तस्याः । अथाऽस्त्यसौ तत्र, तर्हि नाऽयमर्थाऽवग्रहः, किं त्वपाय एव स्यात्, न एतद्युज्यते, तदभ्युपगमेऽर्थाऽवग्रहेहयोरभावप्रसङ्गात् । इति गाथार्थः ।

अपि च-अर्थाऽवग्रहे ' शब्दः ' इति विशेषबुद्धाविष्यमाणाया दोषान्तरमप्यस्ति । किं तत् ? इत्याह—

सामण्ण-तदण्णविसे-सेहावज्जणपरिग्गहणओ से ।
अत्थोग्गहेगसमओ-वओगबाहुल्लमावण्णं ॥ २६७ ॥

इह येयमर्थाऽवग्रहैकसमये 'शब्दः' इति विशेषबुद्धिर्भवताऽभ्युपगम्यते, सा तावन्निश्चयरूपा निश्चयश्चाकस्मादेव न युज्यते, किंतु क्रमेण, तथाहि-प्रथमं तावद्रूपादिभ्योऽव्यावृत्तमव्यक्तं शब्दसामान्यं ग्रहीतव्यं, ततस्तद्विशेषविषया तदपररूपादिविशेषविषया च । एतैरेतैश्च धर्मैः 'किमयं शब्दः, आहोस्वित् रूपादि' इत्येव रूपा ईहा, तदनन्तरं च गृहीतशब्दसामान्यविशेषाणां ग्रहणम्, अन्यथा तु रूपादिविशेषाणां तत्राऽविद्यमानानां परिवर्जनम्, इत्येवंभूतेन क्रमेण निश्चयोत्पत्तिः । तथा च सति श्रोतुरर्थाऽवग्रहैकसमयेऽपि सामान्यग्रहणादिभिः प्रकारैरुपयोगबहुत्वमापद्यते, एकस्मिंश्च समये बहव उपयोगाः सिद्धान्ते निषिद्धाः, इति नाऽर्थावग्रहे शब्दादिविशेषबुद्धिः । इति गाथाभावार्थः ।

अक्षरार्थस्तूच्यते-सामान्यमिह-श्रूयमाणशब्दसामान्यं गृह्यते, ' तयण्णविसेसेह ' त्ति--तच्छब्देनानन्तरोक्तं शब्दसामान्यमनुकृष्यते, अन्यशब्देन तु तत्राऽविद्यमाना रूपादयः परिगृह्यन्ते ततश्च तच्चान्ये च तदन्ये—शब्दसामान्यं, रूपादयश्चेत्यर्थः, तेषां विशेषा धर्माः श्रोत्रग्राह्यत्वादयः, चक्षुरादिविषयत्वादयश्च, तद्विषया ईहा तदन्यविशेषेहा, किमत्र-श्रोत्रग्राह्यत्वादयो धर्माः उपलभ्यन्ते, आहोस्वित् चक्षुरादिवेद्यत्वादयः ? इत्येवं रूपो विमर्श इत्यर्थः, तदनन्तरं तु वर्जनं च तत्राऽविद्यमानरूपादिगतानां हेयधर्माणां चक्षुर्वेद्यत्वादीनां, परिग्रहणं च तत्र च गृहीतशब्दसामान्यगतानामुपादेयधर्माणां श्रोत्रग्राह्यत्वादीनाम्, इति वर्जन-परिग्रहणं-त्यागाऽऽदाने, सामान्यं च तदन्यविशेषेहा च वर्जनपरिग्रहणे च सामान्य-तदन्यविशेषेहाव-

जैन-परिग्रहणानि तेभ्यस्तन 'से' तस्य श्रोतुः । अर्थावग्रहैकसमयेऽप्युपयोगबाहुल्यम्, आपन्नं-प्राप्तम् । तथाहि-प्रथमस्सामान्यग्रहणोपयोगः, यथोक्तेहोपयोगस्तु द्वितीयः, हेयधर्मवर्जनोपयोगस्तृतीयः, उपादेयधर्मपरिग्रहणोपयोगश्चतुर्थः, इत्येवमर्थावग्रहैकसमयमात्रेऽपि बहव उपयोगाः प्राप्नुवन्ति । नचैतद्युक्तं, समयविरुद्धत्वात् । तस्मान्नार्थावग्रहे शब्दविशेषबुद्धिः, किं तु 'सद्द त्ति भणगइ वत्ता' इत्यादि स्थितम् । इति गाथार्थः ।

अथास्मिन्नेवार्थाऽवग्रहेऽपरवाद्यभिप्रायं निराचिकीर्षुराह-

अएणे सामन्नग्गहणं-माहु बालस्स जायमेत्तस्स ।
समयम्मि चेव परिचिय-विसयस्स विसेसविन्नाणं ।२६८।

अन्ये-वादिनः केचिदेवमाहुः-यदेतत्सर्वविशेषविमुखस्याऽव्यक्तस्य सामान्यमात्रस्य वस्तुनो ग्रहणमालोचनं, तद् बालस्य-शिशोस्तत्क्षणजातमात्रस्य भवति, नाऽत्र विप्रतिपत्तिः, अव्यक्तो ह्यसौ संकेतादिविकलोऽपरिचितविषयः । यस्तर्हि परिचितविषयः, तस्य किम् ?, इत्याह-समय एव आद्यशब्दश्रवणसमय एव विशेषविज्ञानं जायते, स्पष्टत्वात्तस्य तत्रश्चामुमाश्रित्य 'तेण सद्द त्ति उग्गहिए' इत्यादि, यथाश्रुतमेव व्याख्यायते, तेन न कश्चिद्दोष इति भावः । इति गाथार्थः ।

अत्रोत्तरमाह—

तदवत्थमेव त पुव्व-दोसओ तम्मि चेव वा समये ।
संखमहुराइसुबहुय-विसेसगहणं पसज्जेज्जा ॥ २६९ ॥

'जेणऽत्थोग्गहकाले" (२६६ गा०) इत्यादिना ग्रन्थेन सामन्नत्थवत्तव्वविसेसेहा (२६७ गा०) इत्यादिना च ग्रन्थेन यद् दूषितं या तस्यावस्था-यत्तस्य स्वरूपम्-'समयम्मि चेव परिचियविसयस्स विसेसविन्नाणं' इति तदेतत्परोक्तमपि तदवस्थमेव, न पुनः किंचिन्न्यूनाधिकावस्थम् । कुतः ?, इत्याह-'पुव्वदोसओ" त्ति, "जेणऽत्थोग्गहकाले" (२६६ गा०) इत्यादिना "सामन्नत्थवत्तव्व" (२६७ गा०) इत्यादिना च यः पूर्वं दोषोऽभिहितस्तस्मात्पूर्वदोषात् पूर्वदोषानतिवृत्तेः, तदेतत्परोक्तं तदवस्थमेव, इति नान्यद्दूषणाद्यभिधानप्रयासो विधीयत इति भावः । अथ वा—पूर्वमपि दूषणमुच्यते । किं तद् ?, इत्याह-'तम्मि चेव' इत्यादि 'वा' इति-अथ वा, तस्मिन्नेव स्पष्टविज्ञानस्य व्यक्तस्य जन्तोर्विशेषग्राहिणि समये 'शाङ्खः, शार्ङ्गो वाऽयं शब्दः, स्निग्धो मधुरः, कर्कशः, स्त्री-पुरुषाद्यन्यतरवाद्यः' इत्यादिषु बहुकविशेषग्रहणं प्रसज्येत । इदमुक्तं भवति-यदि व्यक्तस्य परिचितविषयस्य जन्तोरव्यक्तशब्दज्ञानमुल्लङ्घ्य तस्मिन्नर्थावग्रहैकसमयमात्रे शब्दनिश्चयज्ञानं भवति, तदा अन्यस्य कस्यचित्परिचिततरविषयस्य पटुतरावबोधस्य तस्मिन्नेव समये व्यक्तशब्दज्ञानमपि अतिक्रम्य 'शाङ्खोऽयं शब्दः' इत्यादिरूपयातीतविशेषग्राहकमपि ज्ञानं भवदभिप्रायेण स्यात्, दृश्यन्ते च पुरुषशक्तीनां तारतम्यविशेषाः । भवत्येव कस्यचित्प्रथमसमयेऽपि सुबहुविशेषग्राहकमपि ज्ञानमिति चेत्, न, 'न उण जाणइ के वस सद्दे" इत्यस्य सूत्रावयवस्यागमकत्वप्रसङ्गात् । विमध्यमशक्तिपुरुषविषयमेतत्सूत्रमिति चेत्, न, अविशेषणोक्तत्वात्, सर्वविशेषविषयत्वस्य च युक्त्यनुपपन्नत्वात्; न हि प्रकृष्टमतेरपि शब्दधर्मिणमगृहीत्वा उत्तरोत्तर-बहुसुधर्मग्रहणसंभवोऽस्ति, निराधारधर्माणामनुपपत्तेः । इति गाथार्थः ।

किं च-समयमात्रेऽपि 'शब्दः' इति विशेषविज्ञानमभ्युपगच्छतोऽन्येऽपि समयविरोधादयो दोषाः । के पुनस्ते ?, इत्याह—

अत्थोग्गहो न समयं, अहवा समओवओगबाहुल्लं ।
सव्वविसेसग्गहणं, सव्वमईवोग्गहो णिज्झो ॥ २७० ॥
एगो वाऽवाउ च्चिय, अहवा सोऽगहियणीहिए पत्तो ।
उवक्कम-वइक्कमा वा, पत्ता धुवमोग्गहाईणं ॥ २७१ ॥
सामन्नं च विसेसो, वा सामन्नमुभयमुभयं वा ।
न य जुत्तं सव्वमियं वा,सामन्नाऽऽलंबणं मोत्तुं ॥२७२॥

'उग्गहो एक्कं समयं' इत्यादिवचनादर्थावग्रहः सिद्धान्ते सामयिको निर्दिष्टः, यदि-चार्थाऽवग्रहे विशेषविज्ञानमभ्युपगम्यते तदा सामायिकोऽसौ न प्राप्नोति, विशेषज्ञानस्याऽसंख्येयसामयिकत्वात् । अथ समयमात्रेऽप्यस्मिन् विशेषज्ञानमिष्यते, तर्हि "सामन्नत्थवत्तव्वविसेसेहा" (२६७ गा०) इत्यादिना प्रागुक्तं समयोपयोगबाहुल्यं प्राप्नोति । अथवेत्यग्रतोऽप्यनुवर्तते । ततश्च अथवा परिचितविषयस्य विशेषज्ञानेऽभ्युपगम्यमाने परिचिततरविषयस्य तस्मिन्नेव समये सर्वविशेषग्रहणमनन्तरोक्तं प्राप्नोति । अथवा-अवग्रहमात्रादपि विशेषपरिच्छेदेऽङ्गीक्रियमाणे ईहादीनामनुत्थानमेव । ततश्च सर्वापि मतिरवग्रहो ग्राह्य-सर्वस्याऽपि मतेरवग्रहरूपतया प्राप्नोतीत्यर्थः । अथवा-सर्वाऽपि मतिरपायः एवैकः प्राप्नोति, अर्थावग्रहे विशेषज्ञानस्याश्रयणात्, तस्य च निश्चयरूपत्वात्, निश्चयस्य, चाऽपायत्वादिति समयमात्रे चास्मिन्नपाये सिद्धे "ईहावायामुहुत्तमंतं तु" इति विरुध्यते । अथवा-अर्थेऽगृहीते ईहिते च, अपायः सिद्धान्ते निर्दिश्यते "उग्गहो, ईहा, अवाओ य" इति क्रमनिर्देशात्, यदि चाद्यसमयेऽपि विशेषज्ञानाभ्युपगमादपाय इष्यते, तदाऽनवगृहीते अनीहिते च तस्मिन्नसौ प्राप्तः । 'वा' इति-अथवा, यदि तृतीयस्थाननिर्दिष्टोऽप्यपायः 'समयम्मि चेव परिचियविसयस्स विन्नाणं" इति वचनात्पटुत्ववैचित्र्येण प्रथममभ्युपगम्यते, तर्हि तस्मादेव पाटववैचित्र्यादवग्रहे-हाऽ-पाय-धारणानां ध्रुवं निश्चितमुत्क्रम-व्यतिक्रमौ स्याताम् । तत्र पश्चानुपूर्वीभवनमुत्क्रमः । अनानुपूर्वीभावस्तु व्यतिक्रमः । तथा हि । यथा शक्तिवैचित्र्यात्स्थितप्रथममेवापायो भवताऽभ्युपगम्यते, तथा तत एव कस्यापि प्रथमं धारणा स्यात्, ततोऽपायः, ततोऽपि ईहा तदनन्तरं त्ववग्रहः इत्युत्क्रमः । अन्यस्य कस्यचित् पुनरवग्रहमुल्लङ्घ्य प्रथममेवेहा समुपजायेत, अपरस्य तु तामप्यतिक्रम्याऽपायः, अन्यस्य तु तमप्यतिवृत्य धारणा स्याद् इत्यादि व्यतिक्रमः । न चैवं युक्तिमाप्रच्छनीया, भवदभ्युपगतस्य शक्तिवैचित्र्य-

स्यैव पूर्वग्रहेतोः सद्भावात्। न चैनाद्युक्रमव्यतिक्रमौ युक्तौ " उग्गहो ईहा अवाओ य धारणा एव होंति चत्तारि " इति परममुनिनिर्दिष्टक्रमस्याऽन्यथाकर्त्तुमशक्यत्वादिति । तथा यदि यत्प्रथमसमये गृह्यते स विशेषस्तर्हि " सामरणं च विसेसो " त्ति-यत्सामान्यं तदपि विशेषः प्राप्तः, प्रथमसमये हि सर्वस्याऽपि वस्तुनोऽव्यक्तं सामान्यमेव रूपं गृह्यते, ततोऽस्मिन्न् अर्थावग्रहसमये सामान्यमेव गृह्यत इति परमार्थः। यदि वा-अत्र विशेषबुद्धिर्भवताऽभ्युपगम्यते, तर्हि यदिह वस्तुस्थित्या सामान्यं स्थितं तदपि भवदभिप्रायेण विशेषः प्राप्तः । 'च' शब्दो दूषणसमुच्चयार्थः । ' सो वा सामरणं ' त्ति-स वा भवदभिप्रेतो विशेषो वस्तु स्थितिसमायातं सामान्यं प्राप्नोतीति । ' उभयमुभयं च ' त्ति अथ वा-सामान्य-विशेषलक्षणमुभयमप्येतत्प्रत्येकमुभयं प्राप्नोति-एकैकमुभयरूपं स्यादित्यर्थः, तथा हि-अव-ईषत्सामान्यं गृह्णातीत्यवग्रह इति व्युत्पत्त्या वस्तुस्थितिसमायातं यत्सामान्यं तत्स्वरूपेण तावत्सामान्यम्, भवदभ्युपगमेन तु विशेषः, इत्येकस्याऽपि सामान्यस्योभयरूपता, तथा योऽपि भवदभ्युपगतो विशेषः सोऽपि त्वदभिप्रायेण विशेषः, वस्तुस्थित्या तु सामान्यम्, इति विशेषस्याप्येकस्योभयस्वभावता । भवत्वेवमिति चेत् । इत्याह-न च युक्तं सर्वमिदम् । किं कृत्वा ?, इत्याह-सामान्यमालम्बनं ग्राह्यं मुक्त्वा अर्थाऽवग्रहस्य इति शेषः । इदमुक्तं भवति-अर्थावग्रहस्याऽव्यक्तं सामान्यमात्रमालम्बनं परिहृत्य यदन्यद्विशेषरूपमालम्बनमिष्यते, तदभ्युपगमे च ' सामरणं च विसेसो वा सामरणं ' इत्यादि, यदापतति, तत्सर्वमयुक्तम्, अघटमानकत्वात्। इह च गाथात्रये बहुषु दूषणेषु मध्ये यत् प्रागुक्तमपि किंचित् दूषणमुक्तं तत्प्रसङ्गायातत्वात्, इति न पौनरुक्त्यमाशङ्कनीयम् । इति गाथात्रयार्थः ।

प्रस्तुत एवाऽर्थे परमपि मतान्तरमुपन्यस्य निराकुर्वन्नाह-

केई दीहालोयण-पुव्वमोग्गहं बिंति तत्थ सामरणं ।
गहियमहऽत्थावग्गह-काले सद्दि त्ति निच्छिरणं ॥२७३॥

केचित्-वादिनः इहास्मिन्प्रक्रमेऽवग्रहं ब्रुवते-अर्थावग्रहं व्याचक्षते । किं विशिष्टम् ? इत्याह-आलोचनपूर्वम्-सामान्यवस्तुग्राहिज्ञानम्-आलोचनं तत्पूर्वं-प्रथमं यत्र स तथा तं, प्रथममालोचनज्ञानं ततोऽर्थावग्रह इत्यर्थः, तथा च तैरुक्तम्-" अस्ति ह्यालोचनाज्ञानं प्रथमं निर्विकल्पकम् । बालमूकादिविज्ञान-सदृशं शुद्धवस्तुजम् " ॥ १ ॥ इति । किं पुनस्तत्राऽऽलोचनज्ञाने गृह्यते ? इत्याह-'तत्थ' इत्यादि, तत्र-आलोचनज्ञाने सामान्यमव्यक्तं वस्तु गृहीतं, प्रतिपत्त्रा इति गम्यते, अथानन्तरम्-अर्थाऽवग्रहकाले 'तदेव गृहीतम्' इत्यनुवर्त्तते । कथंभूतं सद् ? इत्याह-निच्छिन्नं-पृथक्कृतः रूपादिव्यावृत्तिरित्यर्थः, केनोल्लेखेन गृहीतम् ? इत्याह-'सद्द' त्ति-शब्दविशेषणविशिष्टमित्यर्थः । ततश्च " स जं-ईहामए कइ पुरिसे अव्वत्तं सद्द सुणेज्ज " इति-एतदालोचनज्ञानापेक्षया नीयते, " तेण, सद्द त्ति उग्गहिए " इत्येतत् चार्थाऽवग्रहापेक्षयेति सर्वं सुस्थतामनुभवति । न भान एव भवतोऽप्याचार्य ! किंचिद्दूषणमस्ति, यदि हि सूत्रयतनुभयसिद्धेनार्थेन सूत्रे विषयविभागव्यवस्थापितेऽपि वादी जयं न प्राप्स्यति, तदा तूष्णीमाश्रयन्तु विपश्चितो विचारचर्यामार्गस्य स्वाग्रहतत्परेण त्वयैव लुप्तत्वात् । इति गाथार्थः ।

तदत्र सूरिः परस्येषद्गर्वानुविद्धामज्ञतामवलोकयन् मार्गोऽवतारणाय विकल्पयन्नाह—

तं वंजणोग्गहाओ, पुव्वं पच्छा स एव वा होज्जा।
पुव्वं तदत्थवंजण-संबंधाऽभावओ नऽत्थि ॥ २७४ ॥

यदनुपहतस्मरणवासनासन्तानस्तदर्थावग्रहात्पूर्वं व्यञ्जनावग्रहो भवतीति यदुक्तं प्राक् तद् भवानपि स्मरति । ततः किम् ? इति चेद्, उच्यते-यदनद्भवदुत्प्रेक्षित सामान्यग्राहकमालोचनं तत्-तस्माद्व्यञ्जनाऽवग्रहात्पूर्वं वा भवेत्, पश्चाद्वा भवेत्, स एव वा व्यञ्जनावग्रहोऽप्यालोचनं भवेत् ? इति त्रयी गतिः, अन्यत्र स्थानाऽभावात् । किं चात ?, इत्याह-पूर्वं तन्नास्तीति संबन्धः । कुतः ?, इत्याह-अर्थव्यञ्जनसंबन्धाभावादिति अर्थः—शब्दादिविषयभावेन परिणतद्रव्यसमूहः, व्यञ्जनं तु श्रोत्रादि, अर्थश्च व्यञ्जनं च अर्थव्यञ्जने तयोः संबन्धस्तस्याऽभावात्, सति ह्यर्थव्यञ्जनसंबन्धे सामान्यार्थालोचनं स्याद्, अन्यथा सर्वत्र सर्वदा तद्भावप्रसङ्गात् । व्यञ्जनाऽवग्रहाच्च पूर्वमर्थव्यञ्जनसंबन्धो नाऽस्ति, तद्भावे च व्यञ्जनावग्रहस्यैवेष्टत्वात्तत्पूर्वकालता न स्यादिति भावः । इति गाथार्थः ।

द्वितीयविकल्पं शोधयन्नाह—

अत्थोग्गहो वि जं वं-जणोग्गहस्सेव चरमसमयम्मि ।
पच्छा वि तो न जुत्तं, परिसेसं वंजणं होज्जा ॥ २७५ ॥

तथा-अर्थावग्रहोऽपि यद्-यस्माद्व्यञ्जनाऽवग्रहस्यैव चरमसमये भवति, इति, प्रागिहापि निर्णीतम् । तस्मात्पश्चादपि व्यञ्जनाऽवग्रहादालोचनज्ञानं न युक्तं, निरवकाशत्वात् । न हि व्यञ्जनार्थाऽवग्रहयोरन्तरे कालः समस्ति, यत्र तत् त्वदीयमालोचनज्ञानं स्यात्, व्यञ्जनाऽवग्रहचरमसमय एवार्थावग्रहसद्भावात् । तस्मात्पूर्वपश्चात्कालयोर्निषिद्धत्वात्पारिशेष्यान्मध्यकालवर्त्ती तृतीयविकल्पोपन्यस्तो- व्यञ्जन-व्यञ्जनावग्रह एव भवता आलोचनाज्ञानत्वेनाभ्युपगतो भवेत्। एवं च न कश्चिद्दोषः नाममात्र एव विवादात् । इति गाथार्थः ।

क्रियतां तर्हि प्रेरकवर्गेण वर्द्धापनकं, त्वदभिप्रायाविसंवादलाभात्, इति चेत् । नैव, विकल्पद्वयस्येह सद्भावात्, तथा हि-तद् व्यञ्जनावग्रहकालेऽभ्युपगम्यमानमालोचनं किमर्थस्यालोचनं, व्यञ्जनानां वा ? इति विकल्पद्वयम् । तत्र प्रथमविकल्पमनूद्य दूषयन्नाह—

तं च समालोयणम-त्थदरिसणं जइ न वंजणं तो तं ।
अह वंजणस्स तो कह-मालोयणमत्थसुण्णस्स?॥२७६॥

तत्समालोचनं यदि सामान्यरूपस्यार्थस्य दर्शनमिष्यते नतु तर्हि तद् व्यञ्जनम्-न व्यञ्जनाऽवग्रहात्मकं भवति, व्यञ्जनाऽवग्रहस्य व्यञ्जनसंबन्धमात्ररूपत्वेनार्थशून्यत्वात्, तथा च-प्रागपि " पुव्वं च तस्स वंजण-कालो सो अत्थ

परिसुद्धणो " इत्यादिना साधितमेवेदम् । अतोऽर्थदर्शनरूपमालोचनं कथमर्थशून्य-व्यञ्जनावग्रहात्मकं भवितुमर्हति ?, विरोधात् । अथ द्वितीयविकल्पमङ्गीकृत्याह-अथ व्यञ्जनस्य शब्दादिविषयपरिणतद्रव्यसंबन्धमात्रस्य तत्समालोचनमिष्यते, तर्हि कथमालोचनं—कथमालोचकत्वं, तस्य घटते ?, इत्यर्थः । कथंभूतस्य सतः ?, इत्याह—अर्थशून्यस्य व्यञ्जनसंबन्धमात्रान्वितत्वेन सामान्यार्थालोचकत्वानुपपत्तेरित्यर्थः । इति गाथार्थः ।

ननु शास्त्रान्तरप्रसिद्धस्यालोचनज्ञानस्य वराकस्य तर्हि का गतिः ? इत्याह—

**आलोयण त्ति नामं, हविज्ज तं वंजणोग्गहस्सेव ।**
**होज्ज कहं सामण्ण-ग्गहणं तत्थऽत्थसुण्णम्मि ? ॥२७७॥**

तस्मादालोचनमिति यन्नाम तदन्यत्र निर्गतिकं सत्पारिशेष्याद् व्यञ्जनावग्रहस्यैव द्वितीय नाम भवेत् । न च विवक्षामात्रप्रवृत्तेषु वस्तूनां बहुष्वपि नामसु क्रियमाणेषु कोऽपि विवादमाविष्करोति ? । अत एतदपि नामान्तरमस्तु, को दोषः ? इति । नैतदेवम्, यस्मादिदं सामान्यग्राहकमालोचनज्ञानं भविष्यति, अर्थावग्रहस्तु विशेषग्राहक इति, एवमप्यस्माकं समीहितसिद्धिर्भविष्यतीति चेत्, इत्याह-'होज्ज' इत्यादि । व्यञ्जनावग्रहस्यैव पारिशेष्यादालोचनज्ञानत्वमापन्ने तत्र च प्रागुक्तयुक्तिभिरर्थशून्ये कथं सामान्यग्रहणं भवेत्, येन भवतः समीहितसिद्धिप्रमोदः ?, इति । तस्मादर्थावग्रह एव सामान्याऽर्थग्राहकः, न पुनरन्तस्मादपरमालोचनाज्ञानम् । अत एव यदुक्तम्-" अस्ति ह्यालोचनाज्ञानं, प्रथमं निर्विकल्पकम् " इत्यादि, तदप्यर्थावग्रहाश्रयमेव, यदि घटते, नाऽन्यविषयम् । इति गाथार्थः ।

अथ 'दुर्बलं वादिनं दृष्ट्वाऽभ्युपगमोऽपि कर्त्तव्यः' इति न्यायप्रदर्शनार्थमाह—

**गहियं व होउ तहियं, सामण्णं कहमणीहिए तम्मि ।**
**अत्थाऽवग्गहकाले, विसेसणं एस सद्दो त्ति ॥ २७८ ॥**

अथवा भवतु तस्मिन् व्यञ्जनाऽवग्रहे सामान्यं गृहीतं, तथाऽपि कथमनीहिते-अविमर्शिते तस्मिन्नकस्मादेवार्थाऽवग्रहकाले 'शब्द एषः' इति विशेषणं विशेषज्ञानयुक्तं, 'शब्द एवैषः' इत्ययं हि निश्चयः, न चायमीहामन्तरेण झगित्येव युज्यते, इत्यसकृदेवोक्तप्रायम् । अतो नार्थाऽवग्रहे 'शब्दः' इत्यादिविशेषबुद्धिर्युज्यते । इति गाथार्थः ।

अथाऽर्थाऽवग्रहसमये शब्दाद्यवगमेन सहैवेहा भविष्यतीति मन्यसे, तत्राऽऽह—

**अत्थाऽवग्गहसमये, वीसुमसंखिज्जसमइया दो वि ।**
**तक्काऽवगमसहावा, ईहाऽवाया कहं जुत्ता ? ॥ २७९ ॥**

अर्थाऽवग्रहसंबन्धिन्येकस्मिन्समये कथमीहापायौ युक्तौ ?, इति संबन्धः । कथंभूतावेतौ ? यतः, इत्याह-तर्काऽवगमस्वभावौ, तर्को-विमर्शस्तत्स्वभावा ईहा, अवगमोऽपि-निश्चयस्तत्स्वभावोऽपायः, द्वावपि चैतौ पृथगसंख्येयसमयनिष्पन्नौ । एतदुक्तं भवति-यदिदमर्थाऽवग्रहे विशेषज्ञानत्वयेष्यते सोऽपायः, स चाऽवगमस्वभावो निश्चयस्वरूप इत्यर्थः, या च तत्समकालमीहाऽभ्युपगम्यते सा तर्कस्वभावा; अनिश्चयात्मिका इत्यर्थः । तत एतौ ईहाऽपायौ अनिश्चयेतरस्वभावौ कथमर्थावग्रहे युगपदेव युक्तौ निश्चयाऽनिश्चययोः परस्परपरिहारेण व्यवस्थितत्वादेकत्रैकदाऽवस्थानाभावेन सहोदयानुपपत्तेः ? इति । एषा तावद्विशेषावगमे-द्वयोः सहभावे एकानुपपत्तिः । अपरं च समयमात्रकालोऽर्थोऽवग्रहः ईहाऽपायौ तु " ईहाऽवायामुहुत्तमंतं तु " इति वचनात्प्रत्येकमसंख्येयसमयनिष्पन्नौ कथमेकस्मिन्नर्थाऽवग्रहसमये स्याताम् । अत्यन्तानुपपन्नत्वात् ? । इति द्वितीयानुपपत्तिः । तस्मादत्यन्ताऽसंबद्धत्वाद्यत्किंचिदेतत्, इत्युपेक्षणीयम् । इति गाथार्थः ।

तदेवं युक्तिशतैर्निराकृतानामपि प्रेरकाणां निःसंशयत्वात्कथंचित्प्रैर्यशेषमद्यापि सूरिराशङ्कते—

**खिप्पेतराइभेओ, जमुग्गहो तो विसेसविण्णाणं ।**
**जुज्जइ विगप्पवसओ, सद्दो त्ति सुयम्मि जं केइ ॥२८०॥**

'केइ' त्ति-इहार्थाऽवग्रहे विशेषज्ञानसमर्थनाग्रहमसमुत्सवोऽपरापि 'केऽपि' केचिद्वादिनो मन्यन्ते । किम् ? इत्याह-क्षिप्रेतरादिभेदो यस्मादवग्रहो ग्रन्थान्तरे भणितः 'अत्रापि च विस्तरेण भणिष्यते' इति गम्यते । ततः 'शब्दः' इति विशेषविज्ञानं युज्यते-घटते 'अर्थावग्रहे' इति प्रस्तावादेव लभ्यते । यत्किम् ?, इत्याह-'सुयम्मि जं' ति-'तेणं सद्दे त्ति उग्गहिए" इत्यादिवचनात् यतः 'सूत्रे निर्दिष्टं' इति शेषः । कुतः पुनरिदं विशेषविज्ञानं युज्यते ?, इत्याह-विकल्पवशतोऽन्यत्रोक्तनानात्ववशत इत्यक्षरघटना । एतदत्र हृदयम् क्षिप्रमवगृह्णाति, चिरेणाऽवगृह्णाति, बह्ववगृह्णाति, अबह्ववगृह्णाति, बहुविधमवगृह्णाति, अबहुविधमवगृह्णाति, एवमनिश्रितं, निश्रितम्, असंदिग्धं, संदिग्धं, ध्रुवम्, अध्रुवं गृह्णाति, इत्यादिना ग्रन्थेनाऽवग्रहादयः शास्त्रान्तरे द्वादशभिर्विशेषणैर्विशेषिताः । अत्रापि च पुरस्तादयमर्थो वक्ष्यते । तत्र 'क्षिप्रं चिरेण चावगृह्णाति' इति विशेषणाऽन्यथानुपपत्तेर्ज्ञायते-नैकसमयमात्रमानः एवार्थाऽवग्रहः, किं तु-चिरकालिकोऽपि, नहि समयमात्रमानतया एकरूपे तस्मिन् क्षिप्र-चिरग्रहणविशेषणमुपपद्यत इति भावः । तस्मादेतद्विशेषणबलादसंख्येयसमयमानोऽप्यर्थावग्रहो युज्यते । तथा-बहूनां श्रोतॄणामविशेषेण प्राप्तिविषयस्थे शङ्खभेर्यादिबहुतूर्यनिर्घोषे क्षयोपशमवैचित्र्यात्कोऽप्यबहु अवगृह्णाति; सामान्यं समुदिततूर्यशब्दमात्रमवगृह्णातीत्यर्थः । अन्यस्तु बह्ववगृह्णाति शङ्ख-भेर्यादिसूर्यशब्दान् भिन्नान् बहून् गृह्णातीत्यर्थः । अन्यस्तु स्त्रीपुरुषादिवाद्यत्व-स्निग्धमधुरत्वादिबहुविधविशेषविशिष्टत्वेन बहुविधमवगृह्णाति, अपरस्तु—अबहुविधविशेषविशिष्टत्वाद् अबहुविधमवगृह्णाति, अत एतस्माद् बह्वबहुविधादिनैकविकल्पनानात्ववशादवग्रहस्य क्वचित्सामान्यग्रहणं, क्वचित्तु—विशेषग्रहणम्, इत्युभयमप्यविरुद्धम् । अतो यत्सूत्रे-'तेण सद्दे त्ति उग्गहिए' इति वचनात्-'शब्दः' इति विशेषज्ञानमुपदिष्टं तदप्यर्थावग्रहे युज्यत एव इति केचित् । इति गाथार्थः ।

अत्रोत्तरमाह—

सकिमुग्गहो त्ति भगणइ, गहणेहाऽवायलक्खणत्ते वि ।
अह उवचारो कीरइ, तो सुण जह जुज्जए सोऽवि ॥२८१॥

इह पूर्वमनेकधा प्रतिविहितमप्यर्थं पुनः पुनः प्रेरयन्तं प्रेरकमवलोकयान्तर्विस्फुरदसूयावशात्साक्षेपं काक्वा सूरिः पृच्छति–'किमुग्गहो त्ति भगणइ' त्ति–किंशब्दः क्षेपे, यो बहुबहुधादिविशेषणवशात् विशेषावगमः स किमबुधचक्रवर्तिन् ! अवग्रहः–अर्थाऽवग्रहो भगयते ? क सत्यपि ?, इत्याह–' गहणे–हि ' त्यादि, ग्रहणं च सामान्यार्थस्य, ईहा अवगृहीतस्य, अपायश्च ईहिताऽर्थस्य ग्रहणे–हाऽ–पायास्तैर्लक्ष्यते–प्रकटीक्रियते यः स तथा तद्भावस्तत्त्वं तस्मिन् सत्यपि बहु–बहुविधादिग्राहको हि विशेषाऽवगमो निश्चयः, स च सामान्याऽर्थग्रहणम्, ईहा च विना न भवति, यश्च तदविनाभावी सोऽपाय एव, कथमर्थावग्रह इति भगयते ?। इति । एतत्पूर्वमसकृदेवोक्तमपि हन्त ! विस्मरणशीलतया, जडतया, दुराभिनिवेशतया वा पुनः पुनरस्मान् भाणयसीति किं कुर्मः ?, पुनरुक्तमपि ब्रूमो यद्यस्मादायासेनाऽपि कश्चिन्मार्गमासादयतीति । ननु ग्रहणम्, ईहा च विशेषावगमस्य लक्षणं भवतु, ताभ्यां विना तदभावाद्, अपायस्तु कथं तल्लक्षणं. तत्स्वरूपत्वादेवास्य ?। सत्यं किं तु स्वरूपमपि भेदविवक्षया लक्षणं भवत्येव, यदाह— विषाऽमृते स्वरूपेण लक्ष्यते कलशादिवत्। एवं च स्वस्वभावाभ्या, व्यज्येते खलसज्जनौ ॥१॥' आह—यदि बहु–बहुविधादिग्राहकोऽपाय एव भवति, तर्हि कथमन्यत्राऽवग्रहादीनामपि बह्वादिग्रहणमुक्तम्। सत्यं, किंतु–अपायस्य कारणमवग्रहादयः, कारणे च योग्यतया कार्यस्वरूपमस्ति, इत्युपचरन्तस्तेऽपि बह्वादिग्राहकाः प्रोच्यन्ते, इत्यदोषः । यद्येवं, तर्हि वयमप्यपायगतं विशेषज्ञानमर्थावग्रहेऽप्युपचरिष्याम इति एतदेवाह–' अहे ' त्यादि, अथोक्तन्यायेनोपचारं कृत्वा विशेषग्राहकोऽर्थाऽवग्रहः प्रोच्यते । नैतदेवं, यतो मुख्याभावे सति प्रयोजने निमित्ते चोपचारः प्रवर्तते । न चैवमुपचारे किंचित्प्रयोजनमस्ति । " तेणं सद्दे त्ति उग्गहिए " इत्यादिसूत्रस्य यथा श्रुतार्थनिगमनं प्रयोजनमिति चेत् । न ' सद्द त्ति भणइ वत्ता " इत्यादिप्रकारेणाऽपि तस्य निगमितत्वात् । सामर्थ्यव्याख्यानमिदं, न यथाश्रुतार्थव्याख्येति चेत्। नर्हि यद्युपचारेणाऽपि श्रौतोऽर्थः सूत्रस्य व्याख्यायते इति तवाभिप्रायः, तर्हि यथा युज्यते उपचारस्तथा कुरु, न चैवं क्रियमाणोऽसौ युज्यते, यतः 'सिंहो माणवक ' ' समुद्रस्तडाग ' इत्यादाविव किंचित्साम्ये सत्ययं विधीयमानः शोभते । न चैतत्सामायिकेऽर्थावग्रहेऽसंख्येयसामयिकं विशेषग्रहणं कथमप्युपपद्यते । नर्हि कथमयमुपचारः क्रियमाणो घटते ?, इति चेद्। अहो ! सुचिरादुपसन्नोऽसि । ततः शृणु समाकर्णयाऽवहितेन मनसा, सोऽपि यथा युज्यते तथा कथयामि– सद्द त्ति भणइ वत्ता ' इत्यादिप्रकारेण तावद्व्याख्यातं सूत्रम्। यदि चौपचारिकेणाऽप्यर्थेन भवतः प्रयोजनं तर्हि सोऽपि यथा घटमानकस्तथा कथ्यत इत्यपिशब्दाभिप्रायः। इति गाथार्थः ।

यथा प्रतिज्ञातमेव संपादयन्नाह—

सामगणमेत्तग्गहणं, नेच्छइओ समयमुग्गहो पढमो ।
तत्तोऽणंतरमीहिय–वत्थुविसेसस्स जोऽवाओ ॥२८२॥
सो पुणरीहावायाऽ–विक्खाओऽवग्गहो त्ति उवयरिओ ।
एस्सविसेसाऽऽविक्खं, सामरणं गिरहए जेणं ॥२८३॥
तत्तोऽऽणंतरमीहा, ततोऽवाओ य तव्विसेसस्स ।
इय सामगणविसेसा–वेक्खा जावंऽतिमो भेओ ॥२८४॥

इहैकसमयमात्रमानो नैश्चयिको निरुपचरितः प्रथमोऽर्थावग्रहः कथंभूतः ?, इत्याह–सामान्यमात्रस्याऽव्यक्तनिर्देश्यस्य वस्तुनो ग्रहणं; सामान्यवस्तुमात्रग्राहक इत्यर्थः, सामयिकानि हि ज्ञानादिवस्तूनि परमयोगिन एव निश्चयवेदिनोऽवगच्छन्तीति नैश्चयिकोऽयमुच्यते । अथ छद्मस्थव्यवहारिभिरपि यो व्यवह्रियते, तं व्यावहारिकमुपचरितमर्थाऽवग्रहं दर्शयति–'तत्तो' इत्यादि, ततो नैश्चयिकाऽर्थाऽवग्रहादनन्तरमीहितस्य–वस्तुविशेषस्य योऽपायः स पुनर्भाविनीमीहाम्, अपायं–चाऽपेक्ष्योपचारितोऽवग्रहोऽर्थाऽवग्रह इति द्वितीयगाथाया संबन्धः । उपचारस्यैवास्य निमित्तान्तरमाह—' एस्से ' त्यादि, एष्यो–भावी योऽन्यो विशेषस्तदपेक्षया येन कारणेनायमपायोऽपि सन् सामान्यं गृह्णाति, यश्च सामान्यं गृह्णाति सोऽर्थावग्रहो यथा प्रथमो नैश्चयिकः । एतदिह तात्पर्यं—प्रथमं नैश्चयिकेऽर्थावग्रहे रूपादिभ्योऽव्यावृत्तमव्यक्तं शब्दादि वस्तु सामान्यं गृहीतं, ततस्तस्मिन्नीहिते सति ' शब्द एवायम् ' इत्यादि निश्चयरूपोऽपायो भवति । तदनन्तरं तु ' शब्दोऽयं किं शाङ्ख, शार्ङ्गो वा ' इत्यादिशब्दविशेषविषया पुनरीहा प्रवर्तिष्यते ' शाङ्ख एवाऽयं शब्द ' इत्यादिशब्दविशेषविषयोपायश्च यो भविष्यति तदपेक्षया 'शब्द एवायम्' इति निश्चयः प्रथमोऽपायोऽपि सन्नुपचारादर्थावग्रहो भगयते, ईहाऽपायापेक्षया तु इत्यनेन चोपचारस्यैकं निमित्तं सूचितम्, 'शाङ्खोऽयं शब्दः' इत्याद्येष्यविशेषापेक्षया येनाऽसौ सामान्यशब्दरूपं सामान्यं गृह्णातीति, अनेन तूपचारस्यैव द्वितीयं निमित्तमावेदितं, तथा हि–यदनन्तरमीहापायौ प्रवर्तेते, यश्च सामान्यं गृह्णाति, सोऽर्थावग्रहः, यथा आद्यो नैश्चयिकः, प्रवर्तेते च शब्द एवायमि' त्याद्यपायानन्तरमीहापायौ गृह्णाति च ' शाङ्खोऽयमि ' त्यादिभाविविशेषापेक्षयाऽयं सामान्यम् । तस्मादर्थावग्रह एष्यविशेषापेक्षया सामान्यं गृह्णातीत्युक्तम् । ततस्तदनन्तरं किं भवति ?, इत्याह–तृतीयगाथायाम्—' तत्तोऽणंतरमि ' त्यादि, ततः सामान्येन शब्दनिश्चयरूपात्प्रथमाऽपायादनन्तरं किमयं 'शब्दः शाङ्खः शार्ङ्गो वा ?' इत्यादिरूपा ईहा प्रवर्तते । ततस्तद्विशेषस्य शङ्खप्रभवत्वादेः शब्दविशेषस्य 'शाङ्ख एवायमि' त्यादिरूपेणापायश्च निश्चयरूपो भवति । अयमपि च भूयोऽन्यतमविशेषाकाङ्क्षावतः प्रमातुर्भाविनीमीहामपायं चापेक्ष्य एष्यविशेषापेक्षया सामान्यालम्बनत्वादर्थावग्रह इत्युपचर्यते । इयं च सामान्यविशेषापेक्षा तावत् कर्तव्या, यावदन्त्यो वस्तुनो भेदो विशेषः । यस्माच्च विशेषात्परतो वस्तुनोऽन्ये विशेषा न संभवन्ति सोऽन्त्यः, अथवा—

संभवत्स्वपि अन्यविशेषेषु यतो विशेषात्परतः प्रमातुस्तज्जिज्ञासा निवर्त्तते सोऽन्त्य, तमन्त्यं विशेषं यावद् व्यावहारिकार्थाऽवग्रहेहाऽपायार्थं सामान्यविशेषापेक्षा कर्त्तव्या। इति गाथात्रयाऽर्थः।

इह च गाथात्रयेऽपि यः पर्यवसितोऽर्थो भवति, तमाह—

सव्वत्थेहाऽवाया, निच्छयओ मोत्तुमाइसामण्णं।
संववहारत्थं पुण, सव्वत्थाऽवग्गहोऽवाओ ॥ २८५ ॥

सर्वत्र विषयपरिच्छेदे कर्त्तव्ये निश्चयतः-परमार्थतः ईहाऽपायौ भवतः, 'ईहा, पुनरपायः, पुनरीहा, पुनरप्यपायः' इत्येवं क्रमेण यावदन्त्यो विशेषस्तावदीहापायावेव भवतः, नाऽर्थावग्रह इत्यर्थः। किं सर्वत्र एवमेव? न इत्याह— 'मोत्तुमाइसामण्णं ति' आद्यमव्यक्तं सामान्यमात्रालम्बनमेकसामयिकं ज्ञानं मुक्त्वाऽन्यत्रेहापायौ भवतः, इदं पुनर्नेहा, नाऽप्यपायः, किं त्वर्थावग्रह एवेति भावः। संव्यवहारार्थं व्यावहारिकजनप्रतीत्यपेक्षया पुनः सर्वत्र यो योऽपायः स स उत्तरोत्तरेहाऽपायाऽपेक्षया, एष्यविशेषापेक्षया चोपचारतोऽर्थावग्रहः। एवं च तावन्नेयं, यावत्तारतम्येनोत्तरोत्तरविशेषाकाङ्क्षा प्रवर्तते। इति गाथार्थः।

तरतमयोगाभावे तु किं भवतीत्याह—

तरतमजोगाऽभावे, ऽवाउ च्चिय धारणा तदंतम्मि।
सव्वत्थ वासणा पुण, भणिया कालंतरे वि सई ॥२८६॥

तरतमयोगाऽभावे—ज्ञातुरप्रेतनविशेषाकाङ्क्षानिवृत्तौ अपाय एव भवति, न पुनस्तस्यावग्रहत्वमिति भावः, तन्निमित्तानां पुनरीहादीनामभावादिति। यद्यत्र ईहादयो न भवन्ति, तर्हि किं भवति?, इत्याह—तदन्ते-अपायान्ते धारणा-तदर्थोपयोगाप्रच्युतिरूपा भवति। शेषस्य वासनास्मृतिरूपस्य धारणाभेदद्वयस्य क्व संभवः?, इत्याह— 'सव्वत्थ वासणा पुण' इत्यादि, वासना च वक्ष्यमाणरूपा, तथा कालान्तरे स्मृतिः, सा च सर्वत्र भणिता। अयमर्थः-अविच्युतिरूपा धारणाऽपायपर्यन्त एव भवति, वासना-स्मृती तु सर्वत्र कालान्तरेऽप्यविरुद्धे। इति गाथार्थः।

एवं चाभिहितस्वरूपव्यावहारिकार्थावग्रहाऽपेक्षया यथाश्रुतार्थव्याख्यानमपि सूत्रस्याविरुद्धमेव, इति दर्शयन्नाह—

सद्दो त्ति य सुयभणियं, विगप्पओ जइ विसेसविण्णाणं।
घिप्पेज्ज तं पि जुज्जइ, संववहारोग्गहे सव्वं ॥ २८७ ॥

'वा' शब्दोऽथवार्थे, ततश्चाऽयमभिप्रायः-'सद्द त्ति भणइ वत्ता' इत्यादिप्रकारेण तावद्व्याख्यानं "तेण सद्दे त्ति उग्गहिए" इत्यादिसूत्रम्। अथवा-'शब्द' इति यत्सूत्रे भणितम्—"शब्दस्तेनाऽवगृहीतः" इति यत्सूत्रे प्रतिपादितम्, तद्यदि विकल्पतो विवक्षावशतो विशेषविज्ञानं गृह्यते, तदपि सर्व्वं युज्यते। कस्मिन्?, इत्याह— यथोक्ते औपचारिके साऽव्यवहारिकार्थावग्रहे गृह्यमाणे सति, अत्र हि 'शब्द' इति विशेषज्ञानं युज्यते, सर्वमुक्तं च, तदनन्तरमीहाद्यश्चोपपद्यन्ते, पूर्वोक्तयुक्तेः। ततश्च "से जहानामए केइ पुरिसे अव्वत्तं सद्दं सुणेज्जा, तेण सद्दे त्ति उग्गहिए, न उण जाणइ के वेस सद्दे, तओ ईहं पविसइ, तओ अवायं गच्छइ" इत्यादिमर्थं सुस्थं भवति। यद्येवम्, अयमेवार्थावग्रहः कस्माद्य गृह्यते, येन सर्वोऽपि विवादः शाम्यति? इति चेत्। नैवं 'शब्द एवायम्' इत्याद्यपायरूपोऽयमर्थावग्रहः, अपायश्च सामान्यग्रहणेहाभ्यामन्तरेण न संभवति, इत्याद्यसकृत्पूर्वमभिहितमेव। इति प्राक्तनमेव व्याख्यानं मुख्यम्। इत्यलं विस्तरेण। इति गाथार्थः।

व्यावहारिकार्थाऽवग्रहाभ्युपगमे यो गुणस्तं सविशेषमुपदर्शयन्नाह—

खिप्पेयराइभेओ, पुव्वोइयदोसजालपरिहारो।
जुज्जइ संताणेण य, सामण्णविसेसववहारो ॥ २८८ ॥

क्षिप्रेतरादिभेदः यत्पूर्वोदितदोषजालं तस्य परिहारो युज्यते, 'अस्मिन् व्यावहारिकेऽर्थावग्रहे सति' इति प्रक्रमाद् गम्यते। इदमुक्तं भवति-एकसामयिकनैश्चयिकार्थावग्रहव्याख्यातारं प्रति प्राग् यदुक्तं-यद्यसावेकसामयिकस्तर्हि कथं क्षिप्र-चिरग्रहणविशेषणमस्योपपद्यते; तथा यद्यसौ सामान्यमात्रग्राहकः, तर्हि बहु-बहुविधादिविशेषणोक्तं विशेषग्रहणं कथं घटते?, तथाऽर्थावग्रहस्य विशेषग्राहकत्वे यत्समयोपयोगबाहुल्यमुक्तम्; इत्यादिकस्य दोषजालस्य परिहारो व्यावहारिकेऽर्थावग्रहे सति युज्यते, तथा हि—नैश्चयिकावग्रहवादिना इदानीं शक्यमिदं वक्तुं यदुत-क्षिप्रे-तरादिविशेषणानि व्यावहारिकावग्रहविषयाण्येतानि, असंख्येयसमयनिष्पन्नत्वेनास्य क्षिप्रचिरग्रहणस्य युज्यमानत्वात्, विशेषग्राहकत्वेन बहुबहुविधादिग्रहणस्यापि घटमानकत्वादिति। 'सामण्णतयणंतरविसेसेहा' इत्यादिना प्रागभिहितं समयोपयोगबाहुल्यमप्यस्मिन्निरास्पदमेव, सामान्यग्रहणेहापूर्वकत्वेन, असंख्येयसामयिकत्वेन चैकसमयोपयोगबाहुल्यस्याऽप्रासंबध्यमानत्वादिति। ननु नैश्चयिकावग्रहे किं क्षिप्रेतरादिविशेषणकलापो, न घटते, येन व्यावहारिकावग्रहापेक्ष प्रोच्यते?। सत्यं, मुख्यतया व्यवहारावग्रहे एव घटते, कारणे कार्यधर्मोपचारात् पुनर्निश्चयावग्रहेऽपि युज्यते, इति प्रागप्युक्तं, वक्ष्यते च, विशिष्टादेव हि कारणात्कार्यस्य वैशिष्ट्यं युज्यते, अन्यथा त्रिभुवनस्याप्यैश्वर्यादिप्रसङ्गः, काष्ठखण्डादपि रत्नादिनिचयाऽवाप्तेः, इत्यलं प्रसङ्गेन। प्रकृतमुच्यते-सन्तानेन च योऽसौ सामान्यविशेषव्यवहारो लोके रूढः, सोऽपि 'व्यवहारावग्रहे सति युज्यते' इतीहापि सम्बध्यते। लोकेऽपि हि यो विशेषः सोऽप्यपेक्षया सामान्यं, यत्सामान्यं तदप्यपेक्षया विशेष इति व्यवह्रियते, तथाहि—'शब्द एवायम्' इत्येवमध्यवसितोऽर्थः पूर्वसामान्यापेक्षया विशेषः, 'शाङ्खोऽयम्' इत्युत्तरविशेषापेक्षया तु सामान्यम्, इत्येवं यावदन्त्यो विशेष इति प्रागप्युक्तम्। अयं चोपर्युपरिज्ञानप्रवृत्तिरूपेण सन्तानेन लोके रूढः सामान्यविशेषव्यवहार औपचारिकावग्रहे सत्येव घटते, नाऽन्यथा। तदनभ्युपगमे हि प्रथमापायानन्तरमीहानुत्थानम्, उत्तरविशेषाग्रहणं नाभ्युपगतं भवति, उत्तरविशेषाऽग्रहणे च प्रथमाऽपायस्यपर्यन्तिनार्थस्य

विशेषत्वमेव, न सामान्यत्वम्; इति पूर्वोक्तरूपो लोकप्रतीत सामान्यविशेषव्यवहार समुच्छिद्येत । अथ प्रथमापायानन्तरमभ्युपगम्यते ईहोत्थानम्, उत्तरविशेषग्रहणं च, तर्हि सिद्धं तदपेक्षया प्रथमापायव्यवसितार्थस्य सामान्यत्वं, यश्च सामान्यग्राहक यदनन्तरं चेहादि प्रवृत्ति स्रोऽर्थावग्रह, नैश्चयिकाद्यर्थावग्रहवत्, इत्युक्तमेव । इति सिद्धो व्यावहारिकार्थावग्रह, तत्सिद्धौ च सन्तानप्रवृत्त्या अन्त्यविशेषं यावत्सिद्ध सामान्यविशेषव्यवहार । इति गाथार्थ । इति मतिज्ञानाद्यभेदलक्षणो द्विभेदोऽप्यवग्रह समाप्त इति ।

अथ तद्द्वितीयभेदलक्षणामीहां व्याचिख्यासुराह—

इय सामण्णगहणा-णंतरमीहा सदत्थवीमंसा ।
किमिदं सद्दोऽसद्दो, को होज्ज व संखसंगाणं ॥ २८९ ॥

इतिशब्द उपदर्शने, इत्येवं प्रागुक्तेन प्रकारेण नैश्चयिकार्थावग्रहे यत्सामान्यग्रहणं रूपाद्यव्यावृत्त्या व्यक्तवस्तुमात्रग्रहणमुक्तं, तथा व्यवहारार्थावग्रहेऽपि यदुत्तरविशेषापेक्षया शब्दादिसामान्यग्रहणमभिहितं तस्मादनन्तरमीहा प्रवर्त्तते । विशे० । ( तस्या ईहाया स्वरूपम् 'ईहा' शब्दे ऽस्मिन्नेव भागे वक्ष्यते ) अथ मतिज्ञानतृतीयभेदस्याऽपायस्य स्वरूपम् । ( विशे० । २९० गाथया 'अवाय' शब्दे प्रथमभागे ८०४ पृष्ठे गतम् ) अथ चतुर्थो मतिज्ञानभेदो धारणा, इयं चाविच्युतवासनास्मृतिभेदात् त्रिधा भवत्यत सभेदाऽपि । ( विशे० । ) सा धारणा 'धारणा' शब्दे चतुर्थभागे २९१ गाथया वक्ष्यते )

तदेवं " से जहानामए केइ पुरिसे अव्वत्तं सद्दं सुणेज्जा " इत्यादिसूत्राऽनुरोधेन शब्दमाश्रित्यावग्रहादयो भाविता । अथ सूत्रकारेणैव यदुक्तम्—" एवं एएणं अभिलावेणं अव्वत्तं रूवं रसं गंधं फासं " इत्यादि, तच्चेतसि निधाय भाष्यकारोऽप्यतिदेशमाह—

सेसेसु वि रूवाइ-सु विसएसु होंति रूवलक्खाइं ।
पायं पच्चासन्न-त्तणेणमीहाइवत्थूणि ॥ २९२ ॥

यथा शब्दे एवं शेषेष्वपि, रूपाऽऽदिविषयेषु साक्षादनुक्तान्यपि रूपलक्षाणि कथितानुसारप्रसरत्प्रज्ञानां चतुरचेतसां सुज्ञेयानि भवन्ति । कानीत्याह-ईहार्थान्याभिनिबोधिकज्ञानस्य भेदवस्तूनि । केन रूपलक्षाणीत्याह—प्राय प्रत्यासन्नत्वेन चक्षुरादिना गृह्यमाणस्य स्थाण्वादेस्तत्राऽगृह्यमाणेन पुरुषादिना सह प्रायो बहुभिर्धर्मैर्यत्प्रत्यासन्नत्वं या प्रत्यासत्ति सादृश्यमिति यावत् तेन ईहादीनि ज्ञेयानि, न पुनरत्यन्तवैलक्षण्ये स्थाण्वादेरुष्ट्रादिना सहेत्यर्थ । इदमुक्तं भवति—अवग्रह तावत्सामान्यमात्रग्राहकत्वात् द्वितीयवस्त्वपेक्षाऽपि न विद्यते । ईहा पुनरुभयवस्त्ववलम्बिनी तत्र पुरोदृश्यमानस्य वस्तुनो यत्प्रतिपक्षभूतं वस्तु तत्प्रायो बहुभिर्धर्मै प्रत्यासन्नं ग्राह्यं न पुनरत्यन्तविलक्षणं पुरो हि मन्दमन्दप्रकाशे दूरात् दृश्यमाने स्थाण्वादौ 'किमयं स्थाणु, पुरुषो वा ?' इत्येवमेवेहा प्रवर्त्तते, ऊर्ध्वस्थानारोह-परिणाहतुल्यतादिभि प्रायो बहुभिर्धर्मै पुरुषस्य स्थाणुप्रत्यासन्नत्वादिति ।

'किमयं स्थाणु, उष्ट्रो वा ' इत्येवं तु न प्रवर्त्तते । उष्ट्रस्य स्थाण्वपेक्षया प्रायोऽत्यन्तविलक्षणत्वात् । अत एव सामान्यमात्रग्राही अवग्रहोऽत्रादौ न कृत, किं तु 'ईहादीनि' इत्येवमेवोक्तं उभयवस्त्ववलम्बित्वेनेहाया एव 'पायं पच्चासन्नत्तणेणं ' इति विशेषणस्य सफलत्वाद् अपायस्याऽपि ' स्थाणुरेवायं, न पुरुष ' इत्यादिरूपेण प्रवृत्ते । किंचिद्विशेषणस्य सफलत्वादादिशब्दोऽप्यविरुद्धः । इति गाथार्थ ।

इह ' किं शब्द, अशब्दो वा ' ? इति श्रोत्रेन्द्रियस्य प्रत्यासन्नवस्तूपदर्शनं कृतमेव । अथाऽशेषचक्षुरादीन्द्रियाणां विषयभूतानि प्रत्यासन्नवस्तूनि क्रमेण प्रदर्शयति—

थाणुपुरिसाइकुट्ठु-प्पलाइसंभियकरिल्लमंसाइ ।
सप्पुप्पलनालाइ व, समाणरूवाइविसयाइं ॥ २९३ ॥

' ईहादिवस्तूनि रूपलक्षाणि ' इत्युक्तं कथं भूतानि सन्ति पुनस्तानि रूपलक्षाणि ? इत्याह-समान समानधर्मा रूपरसादिर्विषयो येषामीहादीनां तानि समानरूपादिविषयाणीति पूर्वगाथायां संबन्ध । क पुनरमीषां समानधर्मा रूपादिविषयः ?, इत्याह—स्थाणुपुरुषादिवदिति पर्यन्ते निर्दिष्टोऽपि विषयोपदर्शनाभिधायको वच्छब्द सर्वत्र योज्यते । ततश्चक्षुरिन्द्रियप्रभवस्येहादे स्थाणुपुरुषादिवत्समानधर्मा रूपविषयो द्रष्टव्य, ' आदिशब्दात्-किमियं शुक्तिका रजतखण्डं वा ?,' मृगतृष्णिका, पय पूरो वा ?, 'रज्जुर्विषधरो वा ' इत्यादिपरिग्रह । घ्राणेन्द्रियप्रभवस्येहादे कुष्ठो(ष्ठो)त्पलादिवत्समानगन्धो विषय, तत्र कुष्टः (ष्ठ) गन्धिकहट्टविक्रेयो वस्तुविशेष, उत्पल-पद्मम् अनयो किल समानगन्धो भवति । तत ईदृशेन गन्धेन ' किमिदं कु(ष्ठ)ष्टम्, उत्पलं वा ?' इत्येवमीहाप्रवृत्ति, आदिशब्दात्-' किमत्र सप्तच्छदा, मत्तकरिणो वा ? ' ' कस्तूरिका, वनगजमदो वा ? ' इत्यादिपरिग्रह, रसनेन्द्रियप्रभवस्येहादे संभृतकरीलमांसादिवत्समानरसो विषय । तत्र संभृतानि संस्कृतानि संधानीकृतान्युद्धृतानि यानि वंशजालसंबन्धीनि करीलानि, तथा मांसम्, अनयो किलाऽऽस्वाद समानो भवति । ततोऽन्धकारादावन्यतरस्मिन् जिह्वाग्रप्रदत्ते भवत्येवं—' किमिदं संभृतवंशकरीलम्, आमिषं वा ? ' इति, आदिशब्दाद्-' गुडखण्डं वा ?' 'मृद्वीका, शुष्कराजादन वा ?, इत्यादिपरिग्रह । स्पर्शनेन्द्रियप्रभवस्येहादे सर्पोत्पलनालादिवत्समानस्पर्शो विषय सर्पो-त्पलयोश्च तुल्यस्पर्शेनेहाप्रवृत्ति सुगमैव, आदिशब्दात्-स्त्रीपुरुषलेष्टूपलादिसमानस्पर्शवस्तुपरिग्रह । इति गाथार्थ ।

अथ यदुक्तं सूत्रे ' से जहानामए केइ पुरिसे अव्वत्तं सुमिणं पासेज्जा ' इत्यादि, तदनुसृत्य स्वप्ने मनसोऽप्यवग्रहादीन् दर्शयन्नाह—

एवं चिय सिमिणाइसु, मणसो सद्दाइएसु विसएसु ।
होंतिंदियवावारा-भावे वि अवग्गहाईया ॥ २९४ ॥

एवमेव—उक्तानुसारेणेन्द्रियव्यापाराभावेऽपि स्वप्नादिषु, आदिशब्दात्—दत्तकपाटसान्धकारापवरकादीनीन्द्रियस्था

पाराभाववन्ति स्थानानि गृह्यन्ते, तेषु केवलस्यैव मनसो मन्यमानेषु शब्दादिविषयेष्ववग्रहादयोऽवग्रहेहापायधारणा भवन्तीति स्वयमभ्यूह्या, तथाहि-स्वप्नादौ चित्तोत्प्रेक्षामात्रेण श्रूयमाणे गीतादिशब्दे प्रथमं सामान्यमात्रोत्प्रेक्षायामवग्रह, 'किमयं शब्द, अशब्दो वा' इत्याद्युत्प्रेक्षायां त्वीहा. शब्दनिश्चये पुनरपाय, तदनन्तरं तु धारणा। एवं देवतादिरूपे कर्पूरादिगन्धे, मोदकादिरसे, कामिनीकुचकलशादिस्पर्शे चोत्प्रेक्ष्यमाणे अवग्रहादयो मनस. केवलस्य भावनीया । इति गाथार्थ ।

(५) आह नन्वेते अवग्रहादय उत्क्रमेण व्यतिक्रमेण वा किमिति न भवन्ति । यद्वा-ईहादयस्त्रयो द्वौ एको वा किं नाऽभ्युपगम्यन्ते यावत्सर्वेऽप्यभ्युपगम्यन्त इत्याशङ्क्याह—

उक्कमओऽइक्कमओ, एगाभावे वि वा न वत्थुस्स ।
ज सब्भावाहिगमो, तो सव्वे नियमियक्कमा य ॥२६५॥

एषामवग्रहादीनामुत्क्रमेण-उत्क्रमत., अतिक्रमेण-अतिक्रमत, 'अपिशब्दस्य भिन्नक्रमत्वादेकस्याप्यभावे वा यस्मान्न वस्तुन सद्भावाधिगम, तस्मात्सर्वे चत्वारोऽप्येष्टव्या, तथा नियमितक्रमाश्च-सूत्रनिर्दिष्टपरिपाट्यविनाश्च 'भवन्त्येतेऽवग्रहादय' इति प्रक्रमाल्लभ्यते। इत्यक्षरयोजना। भावार्थस्तूच्यते-तत्र पश्चानुपूर्वीभवनमुत्क्रम । अनानुपूर्वीभवन त्वतिक्रमः । कदाचिदवग्रहमतिक्रम्येहा तामप्यतिलङ्घ्यापायस्तमप्यतिवृत्य-धारणेति; एवमनानुपूर्वीरूपोऽतिक्रम इत्यर्थ । एताभ्यामुत्क्रमव्यतिक्रमाभ्या तावदवग्रहादिभिर्वस्तुस्वरूपं नाऽवगम्यते । तथैषा मध्य एकस्याऽप्यन्यतरस्याऽभावे वैकल्येन वस्तुस्वभावावबोध इत्यसकृदुक्तप्रायमेव। तत सर्वेऽप्यमी एष्टव्या, नत्वेक, द्वौ त्रयो वेत्यर्थ । तथा—" उग्गहो ईहाऽवाओ य धारणा एव होन्ति चत्तारि" इत्यस्यां गाथायां यथैवकारेण पूर्वमेतेषां नियमित क्रम, तथैवैते नियमितक्रमा भवन्ति, नोत्क्रमाऽतिक्रमाभ्यामिति भाव । इति गाथार्थ ।

अथोत्क्रमाऽतिक्रमयोरेकादिवैकल्ये चाऽवग्रहादीनां वस्त्वधिगमाऽभावे युक्तिमाह—

ईहिज्जइ नाऽगहियं, नज्जइ नाणीहियं न याऽनायं ।
धारिज्जइ जं वत्थुं, तेण कमोऽवग्गहाई उ ॥ २६६ ॥

यस्मादवग्रहेणागृहीतं वस्तु नेह्यते-न तत्रेहा प्रवर्तते, ईहाया विचाररूपत्वाद् अगृहीते च वस्तुनि निरास्पदत्वेन विचाराऽयोगादिति भाव । तदनेन कारणेनादौ अवग्रह निर्दिश्य पश्चादीहा निर्दिष्टा। न चाऽनीहितम्-अविचारितं ज्ञायते-अपायविषयता याति, अपायस्य निश्चयरूपत्वात्, निश्चयस्य च विचारपूर्वकत्वादिति हृदयम । एतदभिप्रायवता चापायस्यादौ ईहा निर्दिष्टेति । न चाज्ञातम्-अपायेनाऽनिश्चितं धार्यते—धारणाविषयीभवति वस्तु-धारणाया अर्थावधारणरूपत्वादवधारणस्य च निश्चयमन्तरेणाऽयोगादित्यभिप्राय । ततश्च धारणादावपाय । तत. किम्?, इत्याह-तेनाऽवग्रहादिरेव क्रमो न्याय्य, नोत्क्रमातिक्रमौ, यथोक्तन्यायेन वस्त्ववगमाऽभावप्रसङ्गात्। इति गाथार्थ ।

तदेवं निराकृतौ सयुक्तिकमुत्क्रमाऽतिक्रमौ। अथ यदुक्तम्-' एगाऽभावे वि वा न वत्थुस्स जं सब्भावाहिगमो नो सव्वे ' त्ति, तत्रापीयमेव युक्तिरिति दर्शयन्नाह—

एत्तो च्चिय ते सव्वे, भवंति भिन्ना य नेव समकालं ।
न वइक्कमो य तेसिं, न अन्नहा नेयसब्भावो ॥ २६७ ॥

यत एव ' नाऽगृहीतमीह्यते, ' इत्याद्युक्तम्, एतस्मादेव च तेऽवग्रहादय सर्वे चत्वारोऽप्येष्टव्या भवन्ति, उक्तन्यायात्रेकवैकल्येऽपि मतिज्ञानं संपद्यत इत्यर्थ । ' पूर्वमवगृहीतमीह्यत ' इत्याद्युक्तेरेव च ते भिन्ना -परस्परमसंकीर्णा, उत्तरोत्तरापूर्वभिन्नवस्तुपर्यायग्रहणादिति । नागृहीतमीह्यत ' इत्यादियुक्तेरेव च न ते समकालम्, भिन्ना सिद्धास्तेऽवग्रहादय -समकालमपि नैव भवन्ति, युगपन्न जायन्त इत्यर्थ. । ' पूर्वमवगृहीतमेवोत्तरकालमीह्यते, ईहोत्तरकालमेव च निश्चीयते ' इत्याद्युक्तन्यायेनैवावग्रहादीनामुत्पत्तिकालस्य भिन्नत्वात् न युगपत्संभव इति भाव । उक्तयुक्तेरेव नेषा न व्यतिक्रम, उपलक्षणत्वात् 'नाऽप्युत्क्रम '-इत्यपि द्रष्टव्यम्। एतच्च ' तेण कमोवग्गहाईउ ' इत्यनन्तरगाथाचरमपादेन सामर्थ्यादुक्तमपि प्रस्तावात्पुनरपि साक्षादुक्तम्, इत्यदोष । तदेव ' ईहिज्जइ नागहियं ' इत्यादियुक्त्यर्थोक्तधर्मका एवाऽवग्रहादय, न विपर्ययधर्माण इति साधितम्। अथ ज्ञेयवशेनाऽप्येषां यथोक्तधर्मकत्वं सिसाधयिषुरिदमाह—' न अन्नहा नेयसब्भावो ' त्ति-ज्ञेयस्याप्यवग्रहादिग्राह्यस्य शब्द-रूपादेर्नान्यथा स्वभावोऽस्ति, येनाऽवग्रहादयस्तद्ग्राहका, यथोक्तरूपता परित्यज्याऽन्यथा भवेयुरित्यर्थ । इदमुक्तं भवति-ज्ञेयस्याऽपि शब्दादे स स्वभावो नास्ति य एतैरवग्रहादिभिरेकादिविकलैरभिन्नै समकालभाविभिरुत्क्रमातिक्रमवद्भिश्चावगम्येत । किंतु-शब्दादिज्ञेयस्वभावोऽपि तथैव व्यवस्थितो यथाऽमीभि सर्वैर्भिन्नै, असमकालै, उत्क्रमातिक्रमरहितैश्च सपूर्णो यथावस्थितश्चावगम्यते, अतो ज्ञेयवशेनाप्येते यथोक्तरूपा एव भवन्ति। तदेवम्-' उक्कमओ अतिक्कमओ एगाऽभावे वि वा ' इत्यादिगाथोक्तप्रसङ्गतोऽन्यदपि भिन्नत्वम्, असमकालत्वं च समर्थितम्, इति गाथार्थ ।

अत्र पर प्राऽऽह—

अब्भत्थेऽवाओ च्चिय, कत्थइ लक्खिज्जई इमो पुरिसो ।
अन्नत्थ धारण च्चिय, पुरोवलद्धे इमं तंति ॥ २६८ ॥

स्वभ्यस्तेऽनवरत दृष्टपूर्वे विकल्पिते, भावित च विषये पुन कश्चित्कदाचिदवलोकिते अवग्रहेहाद्वयमतिक्रम्य प्रथमतोऽप्यपाय एव लक्ष्यते-अनुभूयते निर्विवादमशेषैरपि जन्तुभि यथाऽसौ ' पुरुष ' इति। अन्यत्र पुन कश्चित्पूर्वोपलब्धे सुनिश्चिते दृढवासने विषयेऽवग्रहेहापायाननिलक्ष्य स्मृतिरूपा धारणैव लक्ष्यते यथा ' इद तदस्तु यदस्माभि. पूर्वमुपलब्धम् ' इति तत्कथम्?, उच्यते-उत्क्रमाऽतिक्रमाभ्याम्, एकादिवैकल्ये च न वस्तुसद्भावाधिगम ?-इद च कथमभिधीयते " ईहिज्जइ नागहियं " इत्यादीतिप्रेरकाभिप्राय । इति गाथार्थ ।

भ्रान्तोऽयमनुभव इति दर्शयन्नाह—

उप्पलदलसयवेहे व्व, दुव्विभावत्तणेण पडिहाइ।
समयं व सुक्कसक्कुलि-दसणे विसयाणमुवलद्धी ॥२६६॥

'क्वचित्प्रथममेवाऽपाय, क्वचित्तु धारणैव' इति यत्त्वया प्रेर्यते, तत् 'प्रतिभाति' इत्यनन्तरगाथोक्तेन संबन्धः। केनैतत् प्रतिभाति?, इत्याह—दुःखेन विभाव्यते दुर्विभावो दुर्लक्षस्तद्भावस्तस्य तेन दुर्विभावत्वेन—दुर्लक्षत्वेनाऽवग्रहादिकालस्येति गम्यते। कस्मिन्निव इत्याह—उत्पलं-पद्मं तस्य दलानि-पत्राणि तेषां शतं तस्य सूच्यादिना वेधनं वेधस्तस्मिन्निव। इदमुक्तं भवति-यथा तरुण-समर्थपुरुषः पद्मपत्रशतस्य सूच्यादिना वेधं कुर्वाण एवं मन्यते, मया एतानि युगपद्विद्धानि, अथ च प्रतिपत्रं तानि कालभेदेनैव भिद्यन्ते, न चाऽसौ तं कालमतिसौक्ष्म्याद्भेदेनावबुध्यते, एवमत्राप्यऽवग्रहादिकालस्यातिसूक्ष्मतया-दुर्विभावनीयत्वेनाऽप्रतिभास, न पुनरसत्त्वेन, ईहादयो ह्यत्र क्वचित्तावदस्फुटमेवानुभूयन्ते, यत्राऽपि स्वसंवेदनेन नाऽनुभूयन्ते, तत्राऽपि 'ईहिज्जइ नागहियं नज्जइ नाणीहियं" इत्यादि प्रागस्मदभिहितयुक्तिकलापाद्दवसेया। तस्मादुत्पलदलशतवेधोदाहरणेन भ्रान्त एवायं प्रथमत एवाऽपायादिप्रतिभास। अथोदाहरणान्तरेणाप्यऽस्य भ्रान्ततामुपदर्शयति-'समयं वे'त्यादि, वा' इति-अथवा, यथा शुष्कशष्कुलीदशने समय-युगपदेव सर्वेन्द्रियविषयाणां-शब्द-रूप-रस-गन्ध-स्पर्शानामुपलब्धिः प्रतिभाति, तथैषोऽपि प्राथम्येनाऽपायादिप्रतिभास। एतदुक्तं भवति—यथा कस्यचित् शुष्कां दीर्घां शष्कुलिकां भक्षयन्, तच्छब्दोत्थानाच्छब्दविज्ञानमुपजायते, अत एव शुष्कत्वविशेषणं, मृदुत्वेनास्या शब्दानुत्थानादिति। शब्दश्रवणसमकालमेव च दीर्घत्वात् तस्या दृष्ट्या तद्रूपदर्शनं चाऽयमनुभवति, अत एव च दीर्घत्वविशेषणम्, अतिह्रस्वत्वे मुखप्रविष्टायास्तस्या शब्दश्रवणसमकालं रूपदर्शनानुभवाभावादिति। रूपदर्शनसमकालं च तद्गन्धज्ञानमनुभवति, अत एव शष्कुलीग्रहणं गन्धोत्कटत्वात्तस्या, इक्षुखण्डादिषु तु दीर्घेष्वपि तथाविधगन्धाभावादिति गन्धादिज्ञानसमकालं च तद्रसस्पर्शज्ञानेऽनुभवति। तदेवं पञ्चानामपीन्द्रियविषयाणामुपलब्धिर्युगपदेवास्य प्रतिभाति। न चैवं सत्या इन्द्रियज्ञानानां युगपदुत्पादाऽयोगात्, तथा हि-मनसा सह संयुक्तमेवेन्द्रियं स्वविषयज्ञानमुत्पादयति नाऽन्यथा, अन्यमनस्कस्य रूपादिज्ञानानुपलम्भात्। न च सर्वेन्द्रियैः सह मनो युगपत्संयुज्यते, तस्यैकोपयोगरूपत्वाद्, एकत्र ज्ञाने एककालेऽनेकैः संयुज्यमानत्वायोगात्। तस्मात्मनसोऽत्यन्ताशुसंचारित्वेन कालभेदस्य दुर्लक्षत्वाद्युगपत्सर्वेन्द्रियविषयोपलब्धिरस्य प्रतिभाति। परमार्थतस्त्वस्त्यस्यामपि कालभेदोऽस्त्येव ततो यथाऽसौ भ्रान्तैर्नोपलक्ष्यते तथाऽवग्रहादिकालेऽपीति प्रकृतम्। दीर्घत्वविशेषणं च शष्कुलिकाया गाथायामनुक्तमप्युपलक्षणत्वाद्विहितमिति परिभावनीयम्। तदेवमवग्रहादीना नैकादिवैकल्यं नाप्युत्क्रमाऽतिक्रमाविति स्थितम्। इति गाथार्थ। विशे०।

(७) आभिनिबोधिकज्ञानस्य अष्टाविंशति २८ भेदा.—

एवं अट्ठावीसइविहस्स आभिणिबोहियनाणस्स। वंजणुग्गहस्स परूवणं करिस्सामि; पडिबोहगदिट्ठंतेणं, मल्लगदिट्ठंतेण य। से किं तं पडिबोहगदिट्ठंतेणं?, पडिबोहगदिट्ठंतेणं से जहानामए केइ पुरिसे कंचि पुरिसं सुत्तं पडिबोहिज्जा अमुगा! अमुग! त्ति, तत्थ चोयगे पन्नवगं एवं वयासी-किं एगसमयपविट्ठा पुग्गला गहणमागच्छंति, दुसमयपविट्ठा पुग्गला गहणमागच्छंति, ०जाव दससमयपविट्ठा पुग्गला गहणमागच्छंति, संखिज्जसमयपविट्ठा पुग्गला गहणमागच्छंति, असंखिज्जसमयपविट्ठा पुग्गला गहणमागच्छंति, एवं वदंतं चोयगं पएणवए एवं वयासी—नो एगसमयपविट्ठा पुग्गला गहणमागच्छंति, नो दुसमयपविट्ठा पुग्गला गहणमागच्छंति, ०जाव नो दससमयपविट्ठा पुग्गला गहणमागच्छंति, नो संखिज्जसमयपविट्ठा पुग्गला गहणमागच्छंति, असंखिज्जसमयपविट्ठा पुग्गला गहणमागच्छंति, से तं पडिबोहगदिट्ठंऽतेणं॥

से किं तं मल्लगदिट्ठंतेणं?, मल्लगदिट्ठंतेणं-से जहानामए केइ पुरिसे आपागसीसाओ मल्लगं गहाय तत्थेगं उदगबिंदु पक्खिविज्जा से नट्ठे, अन्ने वि पक्खित्ते से वि नट्ठे; एवं पक्खिप्पमाणेसु पक्खिप्पमाणेसु होही से उदगबिंदू जेणं तं मल्लगं रावेहिइ त्ति, होही से उदगबिंदू जेणं तंसि मल्लगंसि ? ठाहिति, होही से उदगबिंदू जेणं तं मल्लगं भरिहिति, होही से उदगबिंदू जेणं तं मल्लगं पवाहेहिति, एवामेव पक्खिप्पमाणेहिं पक्खिप्पमाणेहिं अणंतेहिं पुग्गलेहिं जाहे तं वंजणं पूरियं होइ ताहे हुंति करेइ, नो चेव णं जाणइ केवि एस सद्दाइ ?, तओ ईहं पविसइ तओ जाणइ अमुगे एस सद्दाइ, तओ अवायं पविसइ, तओ से उवगयं हवइ, तओ णं धारणं पविसइ, तओ णं धारेइ संखिज्जं वा कालं असंखेज्जं वा कालं। से जहानामए केइ पुरिसे अव्वत्तं सद्दं सुणिज्जा तेणं सद्दो त्ति उग्गहिए, नो चेव णं जाणइ के वेस सद्दाइ तओ ईहं पविसइ तओ जाणइ अमुगे एस सद्दे, तओ णं अवायं पविसइ तओ से उवगयं हवइ तओ धारणं पविसइ, तओ णं धारेइ संखिज्जं वा कालं असखिज्जं वा कालं। से जहानामए केइ पुरिसे अव्वत्तं रूवं पासिज्जा तेणं रूव त्ति उग्गहिए नो चेव णं जाणइ के वेस रूव त्ति तओ ईहं पविसइ तओ जाणइ अमुगे एस रूवे त्ति तओ अवायं पविसइ तओ से उवगयं हवइ तओ धारणं

पविसइ तओ णं धारेइ संखिज्जं वा कालं असंखिज्जं वा कालं । से जहानामए केइ पुरिसे अव्वत्तं गंधं अग्घाइज्जा तेणं गंधे त्ति उग्गहिए नो चेव णं जाणइ के वेस गंधे त्ति तओ ईहं पविसइ तओ जाणइ अमुके एस गंधे तओ अवायं पविसइ तओ से उवगयं हवइ तओ धारणं पविसइ तओ णं धारेइ संखिज्जं वा कालं असंखिज्जं वा कालं । से जहानामए केइ पुरिसे अव्वत्तं रसं आसाइज्जा तेणं रसो त्ति उग्गहिए नो चेव णं जाणइ केवेस रसे त्ति तओ ईहं पविसइ तओ जाणइ अमुगे एस रसे तओ अवायं पविसइ तओ से उवगयं हवइ तओ धारणं पविसइ, तओ णं धारेइ संखिज्जं वा कालं असंखिज्जं वा कालं । से जहानामए केइ पुरिसे अव्वत्तं फासं पडिसंवेइज्जा तेणं फासे त्ति उग्गहिए नो चेव णं जाणइ के वेस फासे त्ति तओ ईहं पविसइ तओ जाणइ अमुगे एस फासे तओ अवायं पविसइ तओ से उवगयं हवइ तओ धारणं पविसइ तओ णं धारेइ संखिज्जं वा कालं असंखिज्जं वा कालं । से जहानाम केइ पुरिसे अव्वत्तं सुमिणं पासिज्जा तेणं सुमिणो त्ति उग्गहिए नो चेव णं जाणइ केवेस सुमिणे त्ति तओ ईहं पविसइ तओ जाणइ अमुगे एस सुमिणे तओ अवायं पविसइ तओ से उवगयं हवइ तओ धारणं पविसइ तओ णं धारेइ संखिज्जं वा कालं असंखिज्जं वा कालं । सेत्तं मल्लगदिट्ठंतेणं । ( सूत्र-३५ )

'एव अट्ठावीसे' इत्यादि । एवम्-उक्तेन प्रकारेण अष्टाविंशतिविधस्य, कथमष्टाविंशतिविधतेति, उच्यते-चतुर्द्धा व्यञ्जनावग्रह, षोढा अर्थावग्रह, षोढा ईहा, षड्विधोऽपाय, षोढा धारणेत्यावष्टाविंशतिविधता एवमष्टाविंशतिविधस्याभिनिबोधिकज्ञानस्य सम्बन्धी यो व्यञ्जनावग्रह तस्य स्पष्टतरस्वरूपपरिज्ञानाय प्ररूपणा करिष्यामि । कथम् ? इत्याह-प्रतिबोधकदृष्टान्तेन, मल्लकदृष्टान्तेन च । तत्र प्रतिबोधयतीति प्रतिबोधक —सुप्तस्योत्थापक स एव दृष्टान्त प्रतिबोधकदृष्टान्त तेन, मल्लक-शरावं तदेव दृष्टान्तो मल्लकदृष्टान्तस्तेन च, 'से किं तमि' त्यादि अथ केय प्रतिबोधकदृष्टान्तेन, व्यञ्जनावग्रहस्य प्ररूपणेति शेष । आचार्य प्राह—प्रतिबोधकदृष्टान्तेनेयं व्यञ्जनावग्रहप्ररूपणा, स यथानामको-यथासम्भवनामधेय कोऽपि पुरुष, अत्र सर्वत्राप्येकारो मागधिकभाषालक्षणानुसरणात, तच्च प्रागेवानेकश उक्त च-कश्चिदनिर्दिष्टनामान यथासंभवनामकं पुरुष सुप्त सन्त प्रतिबोधयेत्, कथमित्याह-अमुक अमुक इति, तत्र एवमुक्ते सति 'चोदको' ज्ञानावरणकर्मोदयत कथितमपि सूत्रार्थमनवगच्छन् प्रश्नं चोदयतीति चोदक, यथावस्थित सूत्रार्थं प्रज्ञापयतीति प्रज्ञापको गुरु, तम् एवं वक्ष्यमाणेन प्रकारेण अवादीत् भूतकालनिर्देशोऽनादिमानागम इति ख्यापनार्थं, वदनप्रकारमेव दर्शयति—किमेकसमयप्रविष्टा पुद्गला ग्रहणमागच्छन्ति ?-ग्राह्यतामुपगच्छन्ति, किं वा-द्विसमयप्रविष्टा ?, इत्यादि सुगमम्, एव वदन्तं चोदकं प्रति प्रज्ञापक अवादीत्-उक्तवान् नो एकसमयप्रविष्टा इत्यादि, प्रकटार्थं यावन्नो सङ्ख्येयसमयप्रविष्टा पुद्गला ग्रहणमागच्छन्ति नवरमयं प्रतिषेध स्फुटप्रतिभासरूपार्थावग्रहलक्षणविज्ञानग्राह्यतामधिकृत्य वेदितव्यो, यावता पुन प्रथमसमयादप्यारभ्य किंचित्किञ्चिद्व्यक्तं ग्रहणमागच्छन्तीति प्रतिपत्तव्यम्, 'ज वंजणोग्गहणमिति भणियं विन्नाणं अव्वत्तं' इतिवचनप्रामाण्यात् 'असंखेज्जे' त्यादि, आदित आरभ्य प्रतिसमयप्रवेशनेनासंख्येयान् समयान् यावत् ये प्रविष्टा. ते असङ्ख्येयसमयप्रविष्टा पुद्गला ग्रहणमागच्छन्ति अर्थावग्रहरूपविज्ञानग्राह्यतामुपपद्यन्ते असङ्ख्येयसमयप्रविष्टेषु तेषु चरमसमये प्रविष्टा. पुद्गला अर्थावग्रहविज्ञानमुपजनयन्तीत्यर्थ । अर्थावग्रहाद्विज्ञानाच्च प्राक् सर्वोऽपि व्यञ्जनावग्रह. । एषा प्रतिबोधकदृष्टान्तेन व्यञ्जनावग्रहस्य प्ररूपणा व्यञ्जनावग्रहस्य च कालो जघन्यत आवलिका ऽसङ्ख्येयभाग, उत्कर्षत. संख्येयावलिका, ता अपि संख्येया आवलिकाः आनपानपृथक्त्वकालमाना वेदितव्या, यत उक्तम्-' वंजणवग्गहकालो, आवलियासंखभागतुल्लो उ । थोवा उक्कोसा पुण, आणापाणू पहुत्तंति ' ॥ १ ॥ सेत्तमि' त्यादि, निगमनम्, सेय प्रतिबोधकदृष्टान्तेन व्यञ्जनावग्रहस्य प्ररूपणा ॥ 'से किं तमि' त्यादि, अथ केय मल्लकदृष्टान्तेन व्यञ्जनावग्रहस्य प्ररूपणा ?, सूरिराह-स -अनिर्दिष्टस्वरूपो यथानामक कश्चित् पुरुष आपाकशिरस -आपाक प्रतीत तस्य शिरसो मल्लकं-शराव गृहीत्वा इद हि किल रूक्ष भवति ततोऽस्योपादान, तत्र मल्लके एकमुदकबिन्दु प्रक्षिपेत्, स नष्ट, तत्रैव तद्भावपरिणतिमापन्न इत्यर्थ, ततो द्वितीयं प्रक्षिपेत् सोऽपि विनष्ट, एव प्रक्षिप्यमाणेषु प्रक्षिप्यमाणेषु भविष्यति स उदकबिन्दुर्यस्तत् मल्लकं ' रावेहिइ ' इति देश्योऽय शब्द -आर्द्रता नेष्यति, शेष सुगमं, यावदेवमित्यादि, एवमेव उदकबिन्दुभिरिव निरन्तरं प्रक्षिप्यमाणै प्रक्षिप्यमाणैरनन्तै शब्दरूपतापरिणतै पुद्गलैर्यदा तद् व्यञ्जन पूरितं भवति तदा हु करोति-हुंकारं मुञ्चति-तदा तान् पुद्गलान् अनिर्देश्यरूपतया परिच्छिनत्ति, इति भावार्थ । अत्र व्यञ्जनशब्देन उपकरणेन्द्रियं शब्दादिपरिणत वा द्रव्यं तयो सम्बन्धो गृह्यते, तेन न कश्चिद्विरोध । आह च भाष्यकृत्-" तोएण मल्लग पि व, वंजणमापूरियं ति जं भणियं । त दव्वमिदियं वा, तस्संबंधो व न विरोहो ॥२५०॥" तत्र यदा व्यञ्जनमुपकरणेन्द्रियमभिप्रियते तदा पूरितमिति कोऽर्थ —परिपूर्ण भृत-व्याप्तमित्यर्थ, यदा व्यञ्जन द्रव्यमभिगृह्यते तदा पूरितमिति प्रभूतीकृत स्वप्रमाणमानीत स्वव्यक्तौ समर्थीकृतमित्यर्थ, यदा तु व्यञ्जनं द्वयोरपि संबन्धो गृह्यते तदा पूरितमिति । किमुक्तं भवति-तावत् सम्बन्धोऽभूत् यावति सति ते शब्दादिपुद्गला ग्रहणमागच्छन्ति, आह च चूर्णिकृत्-" यदा पु-

ग्गलदव्वा वंजणं तया पूरियंति पभूया ते पुग्गलदव्वा जाया-स्वं प्रमाणमानीता सविसयपडिबोहसमत्था जाया ' इत्यादि, " जया उवगरणिदियं वंजणं तया पूरियंति कहं उच्यते ?, जाहे तेहिं पुग्गलेहिं तं दव्विदियं आवृतं भरियं " व्यापितं तया पूरयंति भएणइ, जया उभयसंबंधो वंजणं तया पूरियंति कहं ?, उच्यते, दव्वेंदियस्स । पुग्गला अंगीभावमागता, पोग्गला दव्विंदिए अभिषिक्ता इत्यर्थ, । तया पूरियंति इति भएणइ इति, एवं च यदा पूरितं भवति व्यञ्जनं तदा हुं इति करोति-अर्थावग्रहरूपेण ज्ञानेन तमर्थं गृह्णाति किं च ?, नामजात्यादिकल्पनारहितं, तथा चाह-' नो चेव णं जाणइ केवेस सद्दाइ त्ति "-न पुनरेवं जानाति क एष शब्दादिरर्थ इति स्वरूपद्रव्यगुणक्रियाविशेषकल्पनारहितमनिर्देश्यं सामान्यमात्रं गृह्णातीत्यर्थ । एवं रूपसामान्यमात्रकारणत्वादर्थावग्रहस्य एतस्माच्च पूर्वं सर्वोऽपि व्यञ्जनावग्रह., एषा मल्लकदृष्टान्तेन व्यञ्जनाऽवग्रहस्य प्ररूपणा, हुंकारकरणं चार्थावग्रहवलप्रवर्तितम् तत ईहां प्रविशति किमिदं किमिदमिति विमर्शं कर्त्तुमारभते, तत ईहानन्तरं क्षयोपशमविशेषभावाज्जानाति अमुक एष शब्दादिरिति, ' तत ' एवं रूपे ज्ञानपरिणामे प्रादुर्भवति सति सोऽपायं प्रविशति ततोऽपायानन्तरमन्तर्मुहूर्तकालं यावदुपगतं भवति-सामीप्येनात्मनि शब्दादिज्ञानं परिणतं भवति, अविच्युतिरन्तर्मुहूर्त्तकालं यावत् प्रवर्तत इत्यर्थ ततो धारणां प्रविशति, सा च धारणा वासनारूपा द्रष्टव्या, यत आह-' तत्तो णमि " त्यादि, ततो धारणायां प्रवेशात् 'णमि' तिवाक्यालंकारे, संख्येयं वा असंख्येयं वा कालं हृदि धारयन्ति, तत्र संख्येयवर्षायुष. संख्येयं कालम्, असंख्येयवर्षायुषस्तु असंख्येयं कालम् । अत्राह—सुप्तमङ्गीकृत्य पूर्वोक्त प्रकार सर्वोऽपि घटते, जाग्रतस्तु शब्दश्रवणसमनन्तरमेवाऽवग्रहेहाव्यतिरेकेणावायज्ञानमुपजायते, तथा प्रतिप्राणि संवेदनात्, तन्निषेधार्थमाह- से जहानामए ' इत्यादि, स यथानामक कश्चित् जाग्रदपि पुरुषोऽव्यक्तं शब्द शृणुयात्, अव्यक्तमेव प्रथमं शब्दं शृणोति, अव्यक्त नाम—अनिर्देश्यस्वरूपं नामजात्यादिकल्पनारहितम्, अनेनाऽवग्रहमाह, अर्थाऽवग्रहश्च श्रोत्रेन्द्रियस्य सर्वत्रैव व्यञ्जनाऽवग्रहमन्तरेण न भवति ततो व्यञ्जनाऽवग्रहोऽप्युक्तो वेदितव्य, अत्राह—नन्वेवं क्रमो न कोऽप्युपलभ्यते, किंतु प्रथमत एव शब्दाऽपायज्ञानमुपजायते, सूत्रेऽपि चाऽव्यक्तमिति शब्दविशेषणं कृतम्, ततोऽयमर्थो व्याख्येय -अव्यक्तम—अनवधारितशाङ्खशार्ङ्गादिविशेष शब्दं शृणुयादिति, इदं च व्याख्यानमुत्तरसूत्रमपि संवादयति-' तेण सद्दो त्ति उग्गहिए ' तेन-प्रमात्रा शब्द इत्यवगृहीतं, ' नो चेव णं जाणइ केवेस सद्दाऽऽइ ' न पुनरेवं जानाति-क एष शब्द -शाङ्ख शार्ङ्ग इति वा?. शब्द इत्यत्राऽऽदिशब्दात्-रसादिष्वप्ययमेव न्याय इति ज्ञापयति तत ईहां प्रविशति इत्यादि सर्वं सवद्धमेव तदेतदयुक्तम्, सम्यक् वस्तुतत्त्वापरिज्ञानात्, इह हि यत्किमपि वस्तु निश्चीयते तत्सर्वमीहापूर्वकम्, अनीहितस्य सम्यक् निश्चितत्वाऽयोगात्. न खलु प्रथमाक्षिप्तपाते सत्यधूमदर्शनेऽपि यावत्किमय धूम ?, किं वा मशकवर्तिरिति विमृश्य धूमगतकण्ठक्षणनकालीकरणसोष्मतादिधर्मदर्शनात् सम्यक् धूमं धूमत्वेन न विनिश्चिनोति तावत्स धूमो निश्चितो भवति, अनिवर्तितशङ्कतया तस्य सम्यक् निश्चितत्वायोगात्, तस्मादवश्यं यो वस्तु विशेषनिश्चय स ईहापूर्वक., शब्दोऽयमिति च निश्चयो वस्तुविशेषनिश्चयो, रूपादिव्यवच्छेदात् ततोऽवश्यमित .पूर्वमीहया भवितव्यम्, ईहा च प्रथमत. सामान्यरूपेणाऽवगृहीते भवति, नाऽनवगृहीते, न खलु सर्वथा निरालम्बनमीहनं क्वापि भवदुपलभ्यते, नचाऽनुपलभ्यमानं प्रतिपत्तुं शक्नुमः, सर्वस्या अपि प्रेक्षावतां प्रतिपत्ते प्रमाणमूलत्वाद् अन्यथा प्रेक्षावत्ताक्षितिप्रसक्तेः, तस्माद्-ईहाया प्रागवग्रहोऽपि नियमात्प्रतिपत्तव्य अमुमेवार्थं भाष्यकारोऽपि द्रढयति-" ईहिज्जइ नाऽगहियं, नज्जइ नाऽणीहियं न याऽनायं । धारिज्जइ त वत्थुं, तेण कमोऽवग्गहाई उ " ॥२६६॥ अवग्रहश्च शब्दोऽयमिति ज्ञानात् पूर्वं प्रवर्त्तमानोऽनिर्देश्यसामान्यमात्रग्रहणरूप एवोपपद्यते, नाऽन्य', अत एवोक्त सूत्रकृता- अव्यक्तं शब्दं शृणुयात्' इति, स हि परमार्थत शब्द एव, तत. -प्रज्ञापकस्त शब्दमनूद्य तद्विशेषणमाचष्टे—अव्यक्तमिति तं शब्दमव्यक्तं शृणोति, किमुक्त भवति ?-शब्दव्यक्त्यापि व्यक्तं न शृणोति, किं तु सामान्यमात्रमनिर्देश्यं गृह्णाति इत्यर्थ, यदपि चोक्तम्-तेन प्रमात्रा शब्द इत्यवगृहीतमिति, तत्र शब्द इति प्रतिपादयति प्रज्ञापक सूत्रकारो; न पुनस्तेन प्रमात्रा शब्द इति अवगृह्यते, शब्द इति ज्ञानस्याऽपायरूपत्वात्, तथा हि-शब्दोऽयमिति, किमुक्तं भवति ?-न शब्दाऽभावो, न च रूपादि, किं तु शब्द एवाऽयमिति, ततो विशेषनिश्चयरूपत्वादयमवगमोऽपायरूप एव, नाऽवग्रहरूप', अथ च अवग्रहप्रतिपादनार्थमिदमुच्यमानं वर्त्तते तत शब्द इति प्रज्ञापक. सूत्रकारो वदति, न पुनस्तेन प्रमात्रा शब्द इत्यवगृहीते इति स्थितं, तथा चाह सूत्रकृत्-" नो चेव णमि " त्यादि, न पुनरेव जानाति क एष शब्दादिरर्थ इति, शब्दादिरूपतया तमर्थं न जानातीति भावार्थ । अनिर्देश्यसामान्यमात्रप्रतिभासात्मकत्वादर्थाऽवग्रहस्य, अर्थाऽवग्रहश्च श्रोत्रेन्द्रियघ्राणेन्द्रियादीनां व्यञ्जनाऽवग्रहपूर्वक इति पूर्वं व्यञ्जनाऽवग्रहोऽपि द्रष्टव्य, तदेवं सर्वत्राप्यवग्रहेहापूर्वमवायज्ञानमुपजायते, केवलमभ्यासदशामापन्नस्य शीघ्र शीघ्रतरमवग्रहादय. प्रवर्तन्ते इति कालसौक्ष्म्याच्च स्पष्टं न संवेद्यन्ते इति स्थितम् । तत ईहां प्रविशति, इह केचिदीहां सशयमात्रं मन्यन्ते, तदयुक्तं, संशयो हि नामाऽज्ञानमिति, ज्ञानाऽशरूपा चेहा, तत सा कथमज्ञानरूपा भवितुमर्हति ?, नन्वीहाऽपि किमय शाङ्खः, किं वा शार्ङ्ग ?, इत्येवं -रूपतया प्रवर्त्तते, सशयोऽपि चैवमेव, तत कोऽनयो प्रतिविशेष ?, उच्यते-इह यत् ज्ञान शाङ्खशार्ङ्गादिविशेषाननेकानालम्बते न चासद्भूतं विशेषमपासितु शक्नोति. किं तु सर्वात्मना शयानमिव वर्तते, कुण्ठीभूत तिष्ठतीत्यर्थ, तदसद्भूतविशेषाऽपर्युदासपरिकुण्ठितं सशयज्ञानमुच्यते, यत्पुन सद्भूतार्थविशेषविषये हेतूपपत्तिव्यापारपरतया सद्भूतार्थविशेषोपादानाभिमुखम-

सद्भूतविशेषत्यागाभिमुखं च तदीहा, आह च ( विशेषाऽऽ-वश्यक ) भाष्यकृत्—

" जमणुगतथालंबण-मपज्जुदासपरिकुंठियं चित्तं ।
सेय इव सव्वप्पयओ, तं ससयरूवमण्णाणं ॥ १८३ ॥
तं चिय सयत्थहेऊ वय त्ति वावारतप्परममोहं ।
भूयाऽभूयविसेसा, दाणच्चायाभिमुहमीहा ॥ १८४ ॥ '

इह यदि वस्तु सुबोधं भवति—विशिष्टश्च मतिज्ञानावरणक्षयोपशमो वर्त्तते, ततोऽन्तर्मुहूर्त्तकालेन नियमात्तद्वस्तु निश्चिनोति यदि पुनर्वस्तु दुर्बोधं न च तथाविधो विशिष्टो मतिज्ञानावरणक्षयोपशमस्तेन ईहोपयोगाच्च्युतः पुनरप्यन्तर्मुहूर्त्तकालमीहते, एवमीहोपयोगाविच्छेदेन प्रभूतान्यन्तर्मुहूर्त्तानि यावदीहते तत ईहानन्तरं जानाति-अमुक एषोऽर्थः शब्द इति. इद च ज्ञानमवा(पा)यरूपं. ततोऽस्मिन् ज्ञाने प्रादुर्भवति 'णमि' ति वाक्यालङ्कारे, अपायं प्रविशति ततः ' स ' तस्योपगतम्-अविच्युत्या सामीप्येनात्मनि परिणतं भवति, ततो धारणां वासनारूपां प्रविशति, संख्येयमसंख्येयं वा कालम् । एवमनेन क्रमप्रकारेण एतेन पूर्वदर्शितेनाभिलापेन शेषेष्वपि चक्षुरादिष्विन्द्रियेषु अवग्रहादयो वाच्याः, नवरमभिलापविषये-" अव्वत्तं सद्द सुणेज्जा " इत्यस्य स्थाने " अव्वत्तं रूवं पासेज्जा " इति वक्तव्यम् , उपलक्षणमेतत् तेन सर्वत्राऽपि शब्दस्थाने रूपमिति वक्तव्यं, तद्यथा-'तेणं रूवे त्ति उग्गहिए नो चेव णं जाणइ केवेस रूवि त्ति ततो ईहं पविसइ ततो जाणइ अमुगे एस रूवे त्ति ततो अवायं पविसइ ' इत्यादि तदवस्थमेव, नवरमिह व्यञ्जनावग्रहो न व्याख्येयः, अप्राप्यकारित्वाद् चक्षुषः घ्राणेन्द्रियादिषु तु व्याख्येयः, एवं तु घ्राणेन्द्रियविषये-" अव्वत्तं गंधं अग्घाइज्जा " इत्यादि, वक्तव्यं जिह्वेन्द्रियविषये-" अव्वत्तं रसं आसाएज्जा " इत्यादि. स्पर्शनेन्द्रियविषये-'अव्वत्तं फासं पडिसंवेदेज्जा इत्यादि. यथा च शब्द इति निश्चिते तदुत्तरकालमुत्तरधर्मजिज्ञासायां किं शाङ्खः ? किं वा शार्ङ्गः ?, इत्येवंरूपा ईहा प्रवर्त्तते तथा रूपमिति निश्चिते तदुत्तरकालमुत्तरधर्मजिज्ञासायां किमयं स्थाणुः ? किं वा पुरुषः ? इत्यादिरूपा (सा) प्रवर्त्तते । एवं घ्राणेन्द्रियादिष्वपि समानगन्धादीनि वस्तूनि ईहाऽऽलम्बनानि वेदितव्यानि, आह च (विशेषावश्यक) भाष्यकृत्—

" सेसेसु वि रूवाइसु विसएसु होंति रूवलक्खाइं ।
पायं पच्चासन्न-त्तणेण ईहाइवत्थूणि ॥ २९२ ॥
थाणुपुरिसाइकुट्टु-प्पलाइसंभियकरिल्लमंसाइं ।
सप्पुप्पलनालाइ व, समाणरूवाइँ विसयाइं ॥ २९३ ॥ "

' से जहानामए ' इत्यादि. स यथानामकः कोऽपि पुरुषोऽव्यक्तं स्वप्नं प्रतिसंवेदयेत् , अव्यक्तं नाम-सकलविशेषविकलमनिर्देश्यमिति यावत् स्वप्नमिति प्रज्ञापक -सूत्रकारो वदति, स तु प्रतिपत्ता स्वप्नादिव्यक्तिविकलं किञ्चिदनिर्देश्यमेव तदानीं गृह्णाति. तथा अनेन प्रतिपत्त्रा "सुविणो त्ति उग्गहिए इति स्वप्नमिति अवगृहीतम् , यत्राऽपि स्वप्न इति प्रज्ञापको वदति न तु प्रतिपत्ता अशेषविशेषवियुक्तमेवाऽवगृहीतवान् , तथा चाह—न पुनरेव जानाति-क एष स्वप्न इति ?, स्वप्न इत्यपि तमर्थं न जानातीति भावः. तत ईहां प्रविशतीत्यादि, प्राग्वत् , एवं स्वप्नमधिकृत्य नोइन्द्रियस्याऽर्थाऽवग्रहादयः प्रतिपादिताः । अनेन चोक्तनीत्याऽन्यत्राऽपि विषये वक्तव्याः, तदेवं मल्लकदृष्टान्तेन व्यञ्जनावग्रहप्ररूपणां कुर्वता प्रसक्तोऽष्टाविंशतिसंख्या अपि मतिज्ञानस्य भेदाः स्वप्रपञ्चमुक्ताः . संप्रति मल्लकदृष्टान्तमुपसंहरन्ति-' सेत्तं मल्लगदिट्ठन्तेणं " एवं मल्लकदृष्टान्तेन व्यञ्जनावग्रहस्य प्ररूपणा । नं० ।

(७) मतान्तरेणाष्टाविंशति २८ भेदत्वम्-"उग्गह ईह अवाओ य " इत्यादिगाथायाम् ' आभिनिबोधिकज्ञानस्य ' चत्वारि भेदवस्तूनि समासत इत्युक्तं, तत्किं व्यासतो बहुभेदमप्याभिनिबोधिकज्ञानं भवति ? ' इत्याशङ्क्य तद्बहुविधत्वदर्शनात् ' समासेन ' इति विशेषणस्य सफलत्वमाह-

सोइंदियाइभेएण छव्विहा ऽवग्गहादओऽभिहिया ।
ते होंति चउव्वीसं, चउव्विहं वंजणोग्गहणं ॥३००॥
अट्ठावीसइभेयं, एयं सुयनिस्सियं समासेणं ।
केइ तु वंजणोग्गह-वज्जं छोढूण मेयम्मि ॥ ३०१ ॥
अस्सुयनिस्सियमेवं, अट्ठावीसइविहं ति भासंति ।
जमवग्गहो दुभेओ-ऽवग्गहसामण्णओऽग्गहियो ॥३०२॥

श्रोत्रेन्द्रियादीनां पञ्चानामिन्द्रियाणां मनःषष्ठानां ये भेदास्तेनाऽवग्रहादयः प्रत्येकं षड्विधाश्चत्वारोऽप्यभिहिताः । ततस्ते षड्भिश्चत्वारो गुणिताश्चतुर्विंशतिर्भवन्ति । अन्यच्च-स्पर्शनरसनघ्राणश्रोत्रेन्द्रियचतुष्टयभेदात् व्यञ्जनाऽवग्रहणम्—व्यञ्जनावग्रहश्चतुर्विधो भवति । एवमेतत् श्रुतनिसृ(श्रि)तमाभिनिबोधिकज्ञानं सर्वमप्यष्टाविंशतिविधं संपद्यते । एतदपि भेदाऽभिधानं वक्ष्यमाणबहुतरभेदकलापापेक्षयाऽत्राऽपि समासेन-संक्षेपेण द्रष्टव्यम् ।

अन्ये त्वेतानष्टाविंशतिभेदानन्यथा पूरयन्ति तन्मतमुपदर्शयन्ति-' केइ तु इत्यादि, केचित्पुनराचार्या एतस्मिन्नेव श्रुतनि (श्रि)ते मतिज्ञानभेदसमुदाये, व्यञ्जनावग्रहभेदचतुष्टयवर्ज्जे 'उप्पत्तिया, वेणइया, कम्मिया, पारिणामिया" इत्यादिना अन्यत्र, आगमेऽपि च प्रतिपादितस्वरूपमश्रुतनिसृ(श्रि)तमौत्पत्तिक्यादिबुद्धिचतुष्टयं क्षिप्त्वा-मीलयित्वा एवमष्टाविंशतिविधं सर्वमपि मतिज्ञानमिति भाषन्ते । अयं हि तेषामभिप्रायः-मतिज्ञानस्य संपूर्णस्येह भेदाः प्रतिपादयितुं प्रक्रान्ताः । यदि च-अश्रुतनिसृ(श्रि)तं बुद्धिचतुष्टयं न गण्यते तदा श्रुतनिसृ(श्रि)तरूपस्य मतिज्ञानदेशस्यैवैतेऽष्टाविंशतिभेदाः प्रोक्ता भवन्ति । न तु सर्वस्याऽपि; यदा तूक्तन्यायेन श्रुतनिसृ(श्रि)तमश्रुतनिसृ(श्रि)तं च मील्यते तदा सर्वस्याऽपि तस्य भेदाः सिद्धा भवन्ति । ननु साधूक्तं तैः . केवलमेवं सति व्यञ्जनाऽवग्रहचतुष्टयं क्व क्षिप्यताम् ?, न ह्येतदपि विमोच्यमानं स्वलक्षणदुमात्रेण क्षीणम् . किन्त्विदमपि मतिज्ञानान्तर्गतमेव ततोऽस्मापिष्काश्यमानं यत्किमिदं काऽर्थास्तीति वस्तात् ?, इत्याशङ्क्याह-' जमवग्गहो ' इत्यादि यत्-यस्माद्व्यञ्जनार्थाऽवग्रहभेदतो योऽयमवग्रहो द्विभेदः प्रागुक्तः सोऽवग्रहसामान्येन गृहीतोऽवग्रहसामान्येऽन्तर्भावित सर्वास च विशेषाणां सामान्येऽन्तर्भावः, यथा सेनायां गजादीनां

वनादौ च धवखदिरादीनाम् । अतोऽवग्रहस्य सामान्यरूपतया एकत्वादवग्रहेहाऽपायधारणानामिन्द्रियमनोभेदेन प्रत्येक षड्विधत्वात् । श्रुतनि सृ(श्रि)तमतिज्ञानस्य चतुर्विंशतिरेव भेदा , अश्रुतनि सृ(श्रि)तस्य तु बुद्धिचतुष्टयलक्षणाश्चत्वार , इत्येवं सर्वं मतिज्ञानमष्टाविंशतिभेदं सिद्ध्यति । इति केषाञ्चिन्मतम् । इति गाथात्रयार्थः ।

एतच्च तन्मतमयुक्तम् । कुत. ?, इत्याह—

चउवइरित्ता भावा, जम्हा न तमुग्गहाईओ ।
भिन्नं तणोग्गहाइ-सामन्नउतय तग्गयं चेव ॥२०३॥

चतुर्थ्य -अवग्रहेहापायधारणावस्तुभ्यो व्यतिरिक्तं चतुर्थ्यतिरिक्तं तस्य चतुर्थ्यतिरिक्तस्याश्रुतनि सृ(श्रि)तस्याऽभावात्कारणाद्यस्मात्—यतो न तदश्रुतनि सृ(श्रि)तमवग्रहादिभ्यो भिन्नम् । तत किम् , इत्याह-तेन कारणेनावग्रहादिसामान्याद्-अवग्रहादिसामान्यमाश्रित्य ' तयं तग्गय चेव ' त्ति-तेष्ववग्रहादिसंबन्धिष्वष्टाविंशतिभेदेष्वन्तर्गतं—प्रविष्टमन्तर्भूतं तदन्तर्गतमेवाऽश्रुतनि सृ(श्रि)तं बुद्धिचतुष्टयम् । अत किमिति व्यञ्जनावग्रहचतुष्टयं पातयित्वा श्रुतनि सृतं बुद्धिचतुष्टयं पुनरपि प्रक्षिप्यते ?, इत्यभिप्राय । इदमुक्तं भवति-" सोइंदियाइभेएण छव्विहा-वग्गहादओ " ( ३०० ) इत्यादिना प्रतिपादितैरवग्रहादिसंबन्धिभिरष्टाविंशतिभेदै किलाऽसगृहीतत्वाद्व्यञ्जनावग्रहचतुष्टयापगम कृत्वा श्रुतनि.सृत बुद्धिचतुष्टयं मतान्तरवादिभि. प्रक्षिप्यते एतच्चायुक्तं, यत -' सोइंदियाइभेएण ' इत्यादिनाऽवग्रहादीनामेव अष्टाविंशतिर्भेदा. प्रोक्ता, अवग्रहादयश्च बुद्धिचतुष्टयेऽपि सन्ति, अतोऽवग्रहादिभणनद्वारेण तदप्यश्रुतनि-सृ(श्रि)त बुद्धिचतुष्टयमेतेष्वष्टाविंशतिभेदेषु संगृहीतमेवेति, किमिति तै. पुनरपि प्रक्षिप्यते ?, । इति गाथार्थ ।

ननुैतस्याश्रुतस्य परस्य कथमौत्पत्तिक्यादिबुद्धिचतुष्टयेऽवग्रहादय सभवन्ति ? । तदत्र यथा ते भवन्ति, तथा दर्शयन्नाह—

किह पडिकुक्कुडहीणो, जुज्झे बिंबेणऽवग्गहो ईहा ।
किं सुसिलिट्ठमवाओ, दप्पणसंकंतबिंबं ति ॥२०४॥

इह किलाऽऽगमे-" भरह-सिल-मिंढकुक्कुड-तिल-वालुयहत्थि-अगड-वणसंडे । पायसअइयापत्ते-खाडहिला पंच पियरो य ' ॥६७॥ ( नन्दीसूत्र-२७ ) इत्यादिना औत्पत्तिक्यादिबुद्धीना बहून्युदाहरणान्युक्तानि, तन्मध्याल्लेशोपलक्षणार्थं कुक्कुटोदाहरणमाश्रित्यौत्पत्तिक्या बुद्धौ अवग्रहादयो भाव्यन्ते—राज्ञा नटकुमारकस्य भरतस्य किल बुद्धिपरीक्षणार्थमादिष्ट यदुत--अयं मदीयकु (कुं)क्कुटा द्वितीयकु(कुं क्कुटमन्तरेणैकक एव योधनीय । ततस्तेन जितात्मिना मनसि कथमय प्रतिकु(कुं)क्कुटहीन प्रतिपक्षभूतद्वितीयकु(कुं,क्कुटवर्जितो युध्यत । एतच्च जिज्ञासमानस्य तस्य झगित्येव स्फुरितं चेतसि । किम् ?, इत्याह- बिंबेन ' त्ति—आत्मीयेन प्रतिबिम्बेन पुरो वीक्षितेन दर्पाध्मातत्वादय युध्यत इत्यवगृहीतमित्यर्थ । एतच्च कम् ? इत्याह-अवग्रहमामान्येनैव बिम्बमात्रावग्रहणादवग्रहो मतिप्रथमभेद इत्यर्थ । ईहा तर्हि का ?, इत्याह-

' ईहा किं सुसिलिट्ठ ' मिति, किं पुनस्तर्हि प्रतिबिम्बमस्य योधनाय सुश्लिष्टं-सुष्ठु युज्यमानकं भवेत्-किं तडागपयःपूरादिगतम् , आहोस्विद्दर्पणगतम् ? इत्यादिविम्बविशेषान्वेषणम् ईहेत्यर्थ । अपायमुपदर्शयति-'अवाओ दप्पणसंकंतबिंबं' ति-कल्लोलादिभि' प्रतिक्षणमपनीयमानत्वाद् , अस्पष्टत्वाच्च जलादिगतबिम्बमिह न युक्तं; तत स्थिरत्वेन, स्पष्टादित्वेन च चरणाघातादिविषयत्वाद्दर्पणसंक्रान्तमेव तदत्र युज्यते इत्येवं बिम्बविशेषनिश्चय , अपाय इत्यर्थ. । एवमन्येष्वपि बुद्ध्युदाहरणेष्ववग्रहादयो भावनीया., तस्माद् बुद्धिचतुष्टयेऽप्येषा सद्भावात् श्रुतनि.(श्रि,सृतमतिज्ञानमवन्निष्ववग्रहादिगताऽष्टाविंशतिभेदेष्ववग्रहादिसाम्येन बुद्धिचतुष्टयस्यान्तर्भावो भावनीय । ततो न युक्त व्यञ्जनावग्रहचतुष्टयागमेन पुनर्बुद्धिचतुष्टयप्रक्षेपणम् । इति स्थितम् । इति गाथार्थ ।

आह-ननु यद्यवग्रहादिसाम्येनाश्रुतनिः(श्रि)सृतावग्रहादिष्वन्तर्भवति, तर्हि " आभिनिबोहियनाणं दुविहं पन्नत्तं, तं जहा-सुयनिस्सियं, असुयनिस्सियं च " इत्येवमागम य. श्रुतनि.(श्रि,सृतादश्रुतनि (श्रि)सृतस्य भेद उक्त स विशीर्यत एव, इत्याशङ्क्याह—

जह उग्गहाइसाम-न्नओ वि सोइंदियाइणा भेओ ।
तह उग्गहाइसाम-न्नओ वि तमणिस्सिया भिन्नं ॥२०५॥

यथेहावग्रहादीनामवग्रहादिसामान्ये सत्यपि, अवग्रहादित्वे तुल्येऽपि सतीत्यर्थ. । किम्?, इत्याह-श्रोत्रेन्द्रियादिना भेद , तथा हि-एके-श्रोत्रेन्द्रियसंबन्धिनोऽवग्रहादय., यावदन्ये स्पर्शनेन्द्रियसंबन्धिन , अपरे तु मन संबन्धिन ; तथा तेनैव प्रकारेणाऽवग्रहादिसामान्ये सत्यपि तदश्रुतनि सृ(श्रि)त भिन्नं 'श्रुतनि सृ(श्रि)तादि'ति विशेष । कस्मात् हेतोर्भिन्नम्?, इत्याह-' अणिस्सिय ' त्ति-भावप्रधानोऽय निर्देश , अनिसृ(श्रि)तत्वात् , श्रुतानि सृतत्वादित्यर्थ ; एतदुक्तं भवति-अष्टाविंशतिभेदविचारप्रक्रमेऽवग्रहादिमत्त्व सामान्य धर्ममाश्रित्याश्रुतनि सृतस्य श्रुतनि सृत एवान्तर्भावो विवक्ष्यते , श्रुताऽश्रुतनि सृतविचारप्रस्तावे त्वश्रुतनि सृतत्वं विशिष्ट धर्ममुररीकृत्य श्रुतनि सृतादश्रुतनि सृत पृथगवेक्ष्यते. इत्यागमोक्तस्तयोर्भेदोऽपि न किञ्चित् विशीर्यते । न च वक्तव्य कथमेकस्यैवैकस्मादेव भेदश्चाऽभेदश्च, विरोधात् इति यतो यदि तेनैव धर्मेण भेद , अभेदश्चेत्तेनैव, स्यात्तदा विरोध धर्मान्तरनिबन्धनौ तु भेदाऽभेदौ न विरुध्येते । किं हि नाम तद्वस्त्वस्ति, यस्य वस्त्वन्तराद्भेदाऽभेदौ न स्त. ? । घटादयोऽपि हि घटादित्वसामान्येन परस्परमभेदिनोऽपि स्वद्रव्यक्षेत्रकालादिमत्त्वेन भिन्ना इति । अत्र बहु वक्तव्य, तत्तु नोच्यते, ग्रन्थगहनताप्रसङ्गाद् , अनेकान्तजयपताकादिषु विस्तरेणोक्तत्वाच्च । इति गाथार्थ ।

स्यादेतत् , किमेतावता कष्टेन ?, मदीयव्याख्यापक्ष एव सुखावह , श्रुतनि सृताऽश्रुतनि सृतयोरभेदापत्तेरभावात् समस्तमतिज्ञानभेदभणनाच्चेति । तदेतदयुक्तं, सिद्धान्ताभिप्रायबहिर्भूतत्वादेतदेवोपसहारपूर्वकमाह—

अट्ठावीसइभेयं, सुयनिस्सियमेव केवल तम्हा ।

१-अनेकान्तजयनाकानाम्नि ग्रन्थे ।

जम्हा तम्मि समत्ते, पुणरस्सुअनिस्सियं भणियं ॥२०६॥

तस्माद्-अवग्रहादिग्रामाद् श्रुतनि सृतस्य अश्रुतनि सृतेऽन्तर्भाव कृत्वा केवलं श्रुतनि सृतमेव मतिज्ञानमष्टाविंशतिभेदं व्याख्यातुमुचित, न तु परोक्तरीत्या व्यञ्जनावग्रहाऽपगमेन श्रुताऽश्रुतनि सृतमिति । कुत ?, इत्याह— 'जम्हा ' इत्यादि, यत - से किं तं सुयनिस्सियं " इत्येवमागमे तस्मिन् श्रुतनि सृते समासे-निष्ठां नीते सति पुन. पश्चात् " से किं त असुयनिस्सिय " इत्यादिना ग्रन्थेनाऽश्रुतनि.सृतं भणितम् । अयमत्राभिप्रायः-श्रुतनि सृत सभेदमप्यभिधाय पश्चादेवाऽश्रुतनि सृतमुक्तम् । अत कथं तत्तत्र प्रक्षिप्यते ?, तस्मात्समयाऽभिप्रायेण श्रुतनि सृतस्यैवाष्टाविंशतिभेदा इति अतो न भवद्व्याख्यानं श्रेय इति । तदेवम्-" चउवइरित्ताभावा " इत्यादिगाथा मूलटीकाऽभिप्रायेण व्याख्याता । अन्ये त्वन्यथाऽपि व्याख्यानयन्ति, तदभिप्रायं त्वतिगम्भीरत्वान्न विद्म. । इति गाथार्थ । विशे० । आ० । द्वा० । नं० ।

एते चावग्रहादयोऽष्टाविंशतिभेदाः प्रत्येकं बह्वादिभि. सेतरै. सर्वसङ्ख्याया द्वादशसंख्यैर्भेदैर्भिद्यमाना यदा विवक्ष्यन्ते तदा षट्त्रिंशदधिकं भेदानां शतत्रयं ( ३३६ ) भवति । तत्र बह्वादय शब्दमधिकृत्य भाव्यन्ते । शङ्खपटहादिनानाशब्दसमूह पृथगेकैकं यदा अवगृह्णाति तदा बह्ववग्रह , यदा त्वेकमेव कंचिच्छब्दमवगृह्णाति तदा अबह्ववग्रह., तथा शङ्खपटहादिनानाशब्दसमूहमध्ये एकैक शब्दमनेकै. पर्यायै स्निग्धगाम्भीर्यादिभिर्विशिष्टं यथावस्थितं च यदा अवगृह्णाति, तदा स बहुविधाऽवग्रह , यदा त्वेकमनेकं वा शब्दमेकपर्यायविशिष्टमवगृह्णाति तदा सोऽबहुविधावग्रह. । यदा तु अचिरेण जानाति तदा स क्षिप्रावग्रह , यदा तु चिरेण तदा अक्षिप्राऽवग्रह , तमेव शब्द स्वरूपेण यदा जानाति; न लिङ्गपरिग्रहात् तदा अनिश्रितावग्रह । लिङ्गपरिग्रहेण त्ववगच्छतो निश्रितावग्रह , अथवा-परधर्मैर्विमिश्रितं यद् ग्रहण तन्मिश्रितावग्रह , यत्पुन -परधर्मैरविमिश्रितस्य ग्रहणं तदमिश्रितावग्रह । तथा निश्चितमवगृह्णतो निश्चितावग्रह , संदिग्धमवगृह्णत संदिग्धावग्रह , सर्वदैव बह्वादिरूपेणावगृह्णतो ध्रुवाऽवग्रह , कदाचिदेव पुनर्बह्वादिरूपेणावगृह्णत अध्रुवावग्रह , एते च बहुबहुविधादिरूपोऽवग्रहा विशेषसामान्यावग्रहरूपो द्रष्टव्य नैश्चयिकस्यावग्रहस्य सकलविशेषनिरपेक्षानिर्देश्यसामान्यमात्रग्राहिण एकसामयिकस्य बहुविधादिविशेषग्राहकत्वाऽसम्भवाद् . बह्वादीना चानन्तरोक्त व्याख्यान भाष्यकारोऽपि प्रमाणयति—

" नाणासद्दसमूह बहु पिहं मुणइ भिन्नजातीयं ।
बहुविहमणेगभेयं एक्केक्कं निद्धमहुराइ ॥ ३०८ ॥
खिप्पमचिरेण तं चिय सरूवओ जमनिस्सियमलिंगं ।
निच्छियमसंसय जं धुवमच्चंतं न उ कयाइ ॥ ३०९ ॥
एत्तो च्चिय पडिवक्खं, साहेज्जा निस्सिए विसेसोऽय ।
परधम्मेहिँ विमिस्सं, मिस्सियमविमिस्सिय इयरं।३१०॥"

यदा पुनरालोकस्य मन्द-मन्दतर-मन्दतमस्पष्ट-स्पष्टतर-स्पष्टतमत्वादिभेदतो विषयस्याऽल्पत्वमहत्त्वसंनिकर्षादिभेदत क्षयोपशमस्य च तारतम्यभेदतो भिद्यमान मतिज्ञान चिन्त्यते. तदा तदनन्तभेदं प्रतिपत्तव्यम् । नं० ३४ सूत्र टी० । आ० म० । कर्म० ।

(८) अष्टाविंशतिविधत्वं मतिज्ञानस्योपदर्श्य, विवक्षान्तरेण बहुतरभेदमप्येतद् भवतीति दर्शयन्नाह—

जं बहु-बहुविह-खिप्पाऽ-निस्सियनिच्छियधुवेअरविभिन्ना ।
पुणरुग्गहादओ तो, तं छत्तीसत्तिसयभेयं ॥ ३०७ ॥

यत्-यस्माद् बहु-बहुविधक्षिप्राऽनिश्रितनिश्चितध्रुवै सेतरै -सप्रतिपक्षैरेकैकशो विभिन्ना भेदभाज पुनरप्यवग्रहादय इष्यन्ते । ततस्तदेवाष्टाविंशतिविधमाभिनिबोधिकज्ञानमेतैर्द्वादशभिर्भेदै. प्रत्येक भिद्यमानत्वात् षट्त्रिंशदधिकत्रिशत-३३६ भेद भवति । इदमुक्तं भवति-अनन्तरवक्ष्यमाणन्यायेन संक्षेपत प्रागभिहितयुक्त्या च श्रोत्रादिभि कश्चिद्बह्ववगृह्णाति, कश्चित्त्वबहु, अपरस्तु बहुविधम् अन्यस्त्वबहुविधम् , एव यावदन्यो ध्रुवम् अपरस्त्वध्रुवमवगृह्णातीति । एवमीहाऽ-पाय-धारणास्वपि सप्रभेदासु प्रत्येकममी द्वादश १२ भेदा योजनीया. । नवरमीहते, निश्चिनोति, धारयति, इत्याद्यभिलाप. कार्य । ततश्चाष्टाविंशतौ द्वादशभिर्गुणितायां षट्त्रिंशदधिकानि त्रीणि शतानि ३३६ भेदाना भवन्तीति गाथार्थ ।

अथ शब्दलक्षणं विषयमाश्रित्य तावद् बह्वादीनामर्थं व्याख्यातुमाह—

नाणासद्दसमूहं, बहुं पिहं मुणइ भिन्नजातीयं ।
बहुविहमणेगभेयं, एक्केक्कं निद्धमहुराइं ॥ ३०८ ॥
खिप्पमचिरेण तं चिय,सरूवओ जं अणिस्सियमलिंगं ।
निच्छियमसंसयं ज, धुवमच्चंतं न उ कयाइ ॥ ३०९ ॥

इह श्रवणयोग्यदेशस्थे-तूर्यसमुदाये युगपद्वाद्यमाने कोऽपि श्रोता तस्य तूर्यसंघातस्य संबन्धिनं पटहढक्काशङ्खभेरिभाणकादिनानाशब्दसमूहमाकर्णितं सन्त क्षयोपशमविशेषाद् बहुमवग्रहादिना मुणति-जानाति । कोऽर्थ ?, इत्याह-पृथग्-भिन्नजातीयम् , एतावन्तोऽत्र भेरिशब्दा , एतावन्तो भाणकशब्दा , एतावन्तस्तु शङ्ख-पटहादिशब्दा . इत्येव पृथगेकैकशो, भिन्नजातीयत्वेन तं नानाशब्दसमूहं बुद्ध्यत इत्यर्थ । अन्यस्त्वल्पक्षयोपशमत्वात्तत्समानदेशोऽप्यबहु मुणति सामान्येन ' नानातूर्यशब्दोऽयमि ' त्यादिमात्रकमेव जानाति इति प्रतिपत्त । एवमुत्तरगाथायामभिधीयमाना प्रतिपक्षभावना सर्वत्राविरोद्धव्या । अन्यस्तु क्षयोपशमवैचित्र्याद् बहुविध मुणति । कोऽर्थ ?, इत्याह— अनेकभेदम् इदमपि व्याचष्टे-एकैक शङ्खभेर्यादिशब्द स्निग्धत्वमधुरत्वतरुणमध्यमवृद्धपुरुषवाद्यत्वादिबहुविधधर्मोपेत जानातीत्यर्थ । अन्यस्तु-अबहुविध स्निग्धमधुरत्वादिस्वल्पधर्मान्वितमेव पृथग्भिन्नजातीय नानाशब्दसमूहं जानाति । अन्यस्तु क्षिप्रम् । कोऽर्थ ?, इत्याह-अचिरेण-शीघ्रमेव परिच्छिनत्ति, नतु चिरेण विमृश्येत्यर्थ । अन्यस्तु-अक्षिप्र-चिरविमर्शितं जानाति । तथा-" तं चिय सरूवओ ज अणिस्सियमि " ति तमेव नानाशब्दसमूह योऽन्यनि(श्रि)सृत मुणतीति संबन्ध । यं किम् इत्याह-यं

स्वरूपतो जानाति । कोऽर्थः ? इत्याह—आलिङ्ग पताकाऽऽदिलिङ्गाऽऽनिश्रितमित्यर्थः । इदमुक्तं भवति-तमेव शङ्खसमूहं देवकुलमथ, तथाविधपताकादर्शनाद्' इत्येवं लिङ्गनिश्रामकृत्वा स्वरूपत एव यमवगच्छति, तमनिसृतं 'मुणति' इति-उच्यत इति । तमेव लिङ्गनिश्रया जानानो निःसृतं मुणतीत्युच्यते । तथा—' निच्छियमसंसयं ज ' ति—यमशंसयमवच्छिन्नत्ति तं निश्चितं मुणति । निश्चितं तावदित्थमेतन्मया परं न ज्ञातं, तथा वा स्याद् अन्यथा वा इत्येवं सन्देहानुविद्धं तु जानन्ननिश्चितं मुणति । 'धुवमि' त्यादि ध्रुवं कोऽर्थः-अत्यन्तं नतु कदाचिदिति । इदमुक्तं भवति—यथैकदा बह्वादिरूपेणावगतं सर्वदैव तथाऽवबुध्यमानो ध्रुवं मुणतीत्युच्यते । यस्तु कदाचिद् बह्वादिरूपेण, कदाचित्त्वबह्वादिरूपेण सोऽध्रुवं मुणति । इति गाथाद्वयार्थः ।

इतरशब्दं व्याचिख्यासुराह—

एत्तो चिय पडिवक्खं, साहिज्जा निस्सिए विसेसो वा ।
परधम्मेहि विमिस्सं, निस्सियमविणिस्सियं इयरं ॥२१०॥

एतस्मादेव-उक्तस्वरूपाद्-बह्वादिषट्कसमूहात्प्रतिपक्षमेतद्विपर्ययमबह्वबहुविधाऽक्षिप्र-निसृताऽनिश्रिताऽध्रुवषट्कलक्षणं साधयेत् स्वयमेव ब्रूयात् मेधावी । स च लाघवार्थं बह्वादिविचार एव साधित इतीदं व्याख्याता द्वादशापि बह्वादयो भेदाः । अथवा-निसृते सप्रतिपक्षेऽपि व्याख्यानान्तरलक्षणो विशेषो वक्तव्यः । कः ?, इत्याह-परधर्मैः-अश्वादिवस्तुधर्मैर्विमिश्रं-युक्तं गवादिवस्तु गृह्णतोऽस्य निसृतं भवति-गामश्वादिरूपेण गृह्णतो यैव विपर्ययोपलब्धिः, तन्निसृतमित्यर्थः । इतरत्तु यत्परधर्मैर्विमिश्रं वस्तु न गृह्णाति किं तु-यथावस्थितमेव तत्सद्भूतोपलब्धिरूपमनिसृतं गवादिकं वस्तु गवादिरूपेणैव गृह्णतो येयमविपर्ययोपलब्धिस्तदनिसृतमित्यर्थः ।

अत्राह—ननु बहुबहुविधपरिज्ञानादीनि विशेषणानि स्पष्टार्थग्राहकत्वपायादिषु भवन्तु व्यञ्जनावग्रहनिश्चयार्थावग्रहयोस्तु कथं तत्सम्भवः ? तथाहि— सामण्णमणिद्देस्सरूवनामाइकप्पणारहियं' इत्यादिवचनान्निश्चयार्थावग्रहे शब्दादिविशेषमात्रग्रहणमपि नाऽस्ति कुतो यथोक्तबह्वादिपरिभवज्ञानसंभवः ? । अथ व्याख्यानात् व्यवहारार्थावग्रहोऽत्र गृहीत, तस्मिंश्च विशेषग्राहित्वाद् बहुपरिज्ञानादिविशेषणान्युपपद्यन्त एव भवत्वेवं, तथाप्यष्टाविंशतिभेदमध्यसंगृहीतस्य व्यञ्जनावग्रहस्य कथमेतद् विशेषणसम्भवः ? तत्र हि सामान्यार्थग्रहणमात्रमपाकृतं बह्वादिपरिज्ञानं तु दूरोत्सारितमेवेति । सत्यमेतत्, किं तु-व्यञ्जनावग्रहादयः कारणमपायादीनां, नान्तरेणापायाद्यभावात् । ततश्चापायादिगतं बह्वादिपरिज्ञानं तत्कारणभूतेषु व्यञ्जनावग्रहादिष्वपि योग्यतयाऽभ्युपगन्तव्यम् । न हि सर्वथाऽविशिष्टकारणात् विशिष्टं कार्यमुत्पत्तुमर्हति कोद्रवबीजादेरपि शालिफलादिप्रसवप्रसङ्गात् इति प्रागप्युक्तप्रायम् । इत्यलमतिचर्चितेनेति गाथार्थः ।

ननु कथमेकस्यापि मतिज्ञानस्यैतावन्तो भेदा इत्याशङ्क्य निर्दिष्टभेदानां कारणम्, अन्येषामपि बहुतरभेदानां सहेतुकं संभवं चोपसंहारगर्भमाह—

एवं बज्झऽब्भं(ज्झं)तर-निमित्तवइचित्तओ मइबहुत्तं ।
किंचिम्मेत्तविसेसे-ण भिज्जमाणं पुणोऽणंतं ॥ २११ ॥

एवं तावद्बाह्याभ्यन्तरनिमित्तवैचित्र्यान्मतिबहुत्वमुक्तम् । तत्र बाह्यं निमित्तं मतिज्ञानस्य कारणम् आलोकविषयादिकम् । तस्य च स्पष्टाऽस्पष्टमध्यमाल्पमहत्त्वसंनिकर्षविप्रकर्षभेदाद्वैचित्र्यम् ? । आभ्यन्तरनिमित्तं पुनरावरणक्षयोपशमोपयोगोपकरणेन्द्रियाणि । अस्याऽपि वैचित्र्यं शुद्धाऽशुद्धमध्यमभेदात् । ततश्चैतस्माद् बाह्याभ्यन्तरनिमित्तवैचित्र्यान्मतिज्ञानस्य यथोक्तभेदबहुत्वमभिहितमवगन्तव्यम् । एतदेव च मतिज्ञानं यथोक्तनिमित्तद्वयस्य किंचिन्मात्रभेदाद्भिद्यमानं पुनरनन्तमपि भवतीति प्रतिपत्तव्यम्, सामान्येन मतिज्ञानमात्रवतां जीवानामनन्तत्वात्, तेषां च क्षयोपशमादिभेदेन मतेर्भिन्नत्वादिति भावः । इति गाथार्थः ।

( ६ ) अत्राह कश्चिन्ननु अवग्रहादयो ज्ञानमेव न भवन्ति, स्पष्टार्थनिर्भासाद्यभावात्, संशयादिवत्, कथममी मतिज्ञानभेदाः ?, इत्याशङ्क्यैतेषां ज्ञानत्वसाधनायाऽऽह—

इह संसयादणंतभा-वाओऽवग्गहादयो नाणं ।
अणुमाणमिवाह न सं-सयाइमब्भावओ तेसुं ॥२१२॥

" अवग्रहादयो ज्ञानमि ' ति प्रतिज्ञा । ' संशयादिष्वनन्तर्भावादि " ति हेतुः । आदिशब्दात्-विपर्ययाऽनध्यवसायपरिग्रहः; अनुमानवदिति दृष्टान्तः । इह संशयाद्यनन्तर्भूतैर्वर्णगन्धादिभिः पुद्गलद्रव्यैर्व्यभिचारसंभवात् सूत्रस्य सूचकत्वाद् ' आत्मधर्मत्वे सति संशयाद्यनन्तर्भावात् ' इति सविशेषणो हेतुर्द्रष्टव्यः । अत्राह परः-ननु सविशेषणे हेतावनैकान्तिकता मा भूद्, असिद्धता त्वनिवार्यैवेति, एतदेवाह-' न संशया इत्यादि, सूरे ' न तद्भवदीयं वचः । कुतः ?, इत्याह-संशयादिसद्भावतस्तेष्वऽवग्रहादिषु, तेषां संशयादिरूपत्वात् संशयाद्यनन्तर्भावाद्, इत्यसिद्धो हेतुरिति भावः । इति गाथार्थः ।

कथं पुनस्तेषु संशयादिसद्भावः ?, इत्याह—

ननु संदिद्धं संसय-विवज्जया संसओ ह चेहाऽवि ।
वच्चासो वा निस्सिय-मवग्गहोऽणज्झवसियं तु ॥२१३॥

ननु " क्षिप्रमचिरेण ' ( ३०६ ) इत्यादिगाथायां यदुक्तम्-' निच्छियमसंसयं जं ' ति, तत्प्रतिपक्षे यदुच्यते-" कोऽपि संदिग्धं मुणति " इति तत्र संदिग्धे ज्ञायमाने संशयस्तावद्व्यक्त एव यत्र च संशयस्तत्र संदिहानस्य कदाचिद्विपर्ययोऽपि स्याद् इत्येवं संदिग्धे संशयविपर्ययौ नातिवर्तनियामिताविव । अथ वा-किमनेनोत्तरभेदरूपे संदिग्धे दूषणप्रदानेन ? हन्त ! येयं मूलभेदरूपा ईहा साऽपि संशय एव, निश्चयस्य तस्याऽप्यायत्यप्रसङ्गादिति । अथ वा-' परधम्मे हि विमिस्सं निस्सियं " ( ३१० ) मित्यत्र यन्निसृतमुक्तं तदपि गवादिकमश्वादिरूपेण गृह्णद्विपर्यास एव । न हि वृत्त्यन्यविपर्यासो भवति, किं त्वन्यस्याऽन्य-

रूपेण ग्रहणमेवेति भाव। नैश्चयिकाऽर्थाऽवग्रहरूपोऽवग्रह। पुनरनध्यवसितमनध्यवसाय एव, अनिर्देश्यसामान्यमात्रग्राहित्वात्, नह्यत्र कस्याऽप्यर्थस्य सवन्ध्यध्यवसायोऽस्तीतिकृत्वा। तदेव संशयादिरूपत्वात् नाऽवग्रहादयो ज्ञानमिति। अतो न ते मतिज्ञानभेदा. तद्भेदत्वे वा मतिज्ञानमपि न किञ्चित्, दोषशतजर्जराऽवग्रहाद्यात्मकत्वात्। इति गाथार्थ।

अत्राऽऽचार्य प्राऽऽह—

इह सज्भमोग्गहाई-ण संसयाइत्तणं तह वि नाम।
अब्भुवगंतुं भएणइ, नाणं चिय संसयाऽऽईया ॥२१४॥

इह यदवग्रहादीना संशयादित्व त्वयोद्भावित तदत्राऽपि साध्य-साधनीय वर्तते, त्वदुक्तनिर्युक्तिकवाङ्मात्रेणैव मदुक्तहेतोरसिद्धत्वाभावादिति मन्तव्यं, न पुनरेतावतैव जाना त्वत्समीहितसिद्धि; इति प्रमुदितेन न भाव्यमिति भाव। तथा हि-यदुक्तम् 'संदिग्धे संशयविपर्ययौ' इति तदयुक्तम्, अभिप्रायाऽपरिज्ञानात् नह्यस्माभिस्तथाविधवस्त्वप्रापकं संदिग्धत्वं विवक्षित, येन वस्त्वप्रापणात्, विपर्ययप्रापणाद्वा तत्र संशयविपर्ययौ स्याताँ, किं तु-कृतेऽपि वस्तुप्रापकेऽवितथे निश्चये यत्र तथाविधक्षयोपशमवैचित्र्यात्मनसि किंचिदल्पं शङ्कामात्रं न निवर्तते 'सम्यक् न जाने, तथैव स्यादन्यथा वा' इति, तदिह संदिग्धत्वं विवक्षितम्। न चैतावन्मात्रेणैवाऽज्ञानता युक्ता, व्यवहारोच्छेदप्रसङ्गात्। न खलु धूमवलाकादे· सकाशात्सम्यग्दहनजलादौ निश्चितेऽपि मुक्त्वा तन्निश्चयं ब्रुवतामपि सर्वेषा प्रमातृणा चेतसि शङ्कामात्रं विनिवर्तते। न च ते सर्वेऽपि निश्चितं वस्तु न प्राप्नुवन्ति। न च क्वाऽपि संशयविपर्ययत्वेन अज्ञानता तेषां दृष्टा। यदप्युच्यते-'ईहाऽपि संशय एव'। तदप्यसंगतम्, न हि 'किमयं स्थाणु पुरुषो वा' इत्यादिरूप संशय ईहाऽभ्युपगम्यते। किं तु-यदनन्तरमेव निश्चयोऽवश्यं भवति स एवाऽन्वयधर्मघटनव्यतिरेकधर्मनिराकरणाभ्या निश्चयाभिमुखो बोध ईहा, इत्य सकृदेव पूर्वमावेदितम्। न चाऽयं संशयो निश्चयाभिमुखत्वात्। नाऽपि निश्चयस्तत्प्रत्यासत्तिमात्रप्राप्तत्वात्। न च वक्तव्य निश्चयादन्यस्य सर्वस्य संशयत्वादज्ञानतैवेति, निश्चयोपादानकारणस्यापि सर्वथाऽज्ञानत्वप्रसङ्गात्। तथा च सति निश्चयस्याप्यज्ञानताप्राप्ति। 'नह्यविशिष्टात्कारणाद्विशिष्टकार्योत्पत्ति·' इत्युक्तत्वादिति। यदप्युक्तम्-'नि स्सृत विपर्यास' इति। तदप्ययुक्तम्, 'लिङ्गासृत नि सृतम्' इत्यस्मिन् व्याख्यानेऽस्य दोषस्य सर्वथैवाऽसंवध्यमानत्वात्, 'परधम्मेहिं विमिस्सं निस्सिय' (२१०) इत्यस्य च व्याख्यानान्तरमात्रत्वात्। भवतु तदपि व्याख्यान तथाऽपि व्याख्यानात् परधर्मास्तस्मिन्नाशङ्किता एव द्रष्टव्या; न तु निश्चिता, यथा 'गौरिवाय, केवलमश्व इव प्रतिभाति' इति। एतावन्मात्रेणैव चेयं विपर्ययोपलब्धिरवगन्तव्या; न तु सर्वथा विपर्ययधर्मनिश्चयात् सर्वथा विपर्यये तत्राऽश्वादिमत्त्वप्रसङ्गात्। न च वक्तव्यम्-एवं सतीदं निश्चितात्र भिद्यत, तत्र परधर्मति सुतत्वाभावात्, विवक्षितवस्त्वभावशङ्कामात्रस्यैव सद्भावादिति। न च विपर्ययधर्मशङ्कामात्रेणाऽप्यज्ञानता, वस्तुप्राप्तिविघाताऽभावादिति। यदप्युक्तम्-'अवग्रहोऽनध्यवसाय' इति। तदप्ययुक्तम्। तत्र ह्यध्यवसायः साक्षादेव नास्ति, योग्यतया पुनरस्त्येव, अन्यथा तत्कार्येषु-अपायादिष्वपि तदभावप्रसङ्गात्, इत्युक्तमेव। अतिमत्तमूर्च्छितानामेव हि ज्ञानमनध्यवसाय उच्यते, तत्र योग्यतयाऽप्यध्यवसायस्य वक्तुमशक्यत्वात्, तत्कार्यभूतस्याऽपायाद्यध्यवसायस्याप्यलक्षणत्वात्। तदेवमवग्रहादीनामसिद्ध संशयादित्वम्। तथाऽपि 'अभ्युपगन्तुम्' अङ्गीकृत्यापि तेषा संशयादिरूपता ब्रूम। ज्ञानमेव संशयादयः। संशयविपर्ययाऽनध्यवसाया-नश्च तश्च संशयादिरूपत्वेऽपि नावग्रहादीना मतिज्ञानभेदत्वं विरुध्यत इति भाव। इदमुक्तं भवति—नाऽस्माभि 'समीहितवस्तुप्रापक ज्ञानम्, इतरदज्ञानम्' इत्येव व्यवहारिणां प्रमाणाऽप्रमाणभूते ज्ञानाऽज्ञाने विचारयितुमुपक्रान्ते, किं तु-'ज्ञायते येन किमपि, तत्सम्यग्दृष्टिसंबन्धिज्ञानम्' इत्येतावन्मात्रकमेव व्याख्यातुमभिप्रेत, वस्तुपरिज्ञानमात्र तु संशयादिष्वपि विद्यते, इति न तेषामपि सम्यग्दृष्टिसम्बन्धिना ज्ञानत्वहानि। इति गाथार्थ।

कथ पुन संशयादयो ज्ञानमित्याह—

वत्थुस्स देसगमग-त्तभावओ परमयप्पमाणं व।
किह वत्थुदेसविन्ना-णहेयवो सुणसु तं वोच्छं ॥२१५॥

ज्ञानमेव संशयादय इति प्राक्तनी प्रतिज्ञा वस्तुनो-गवादे· स्वपरपर्यायैरनन्तधर्माऽध्यासितस्य यो देश-एकदेशस्तस्य गमकत्वभावात्, इति हेतु, पराभिमत प्रमाण निश्चयज्ञानरूप तद्वदिति दृष्टान्त। इह यद्वस्त्वेकदेशस्य गमक तज्ज्ञानं दृष्ट, यथा परमत निश्चयरूप प्रमाण, वस्त्वेकदेशगमकाश्च संशयादय, ततस्ते ज्ञानम्, इति। अत्र हेतोरसिद्धता मन्यमान पर पृच्छति-कथ वस्त्वेकदेशविज्ञानहेतव संशयादय?, वस्तुनो निरंशत्वेन देशस्यैवाभावान्न ते एकदेशग्राहिणो घटन्त इति परस्याऽभिप्राय। आचार्य प्राह—यत्त्वया पृष्टं तद्वच्ये—भणिष्यामि अहं, शृणु—समवहित समाकर्णय त्वम्। इति गाथार्थ।

यथा प्रतिज्ञातमेवाह—

इह वत्थुमत्थवयणा-इपज्जयाऽणंतमत्तिसंपन्नं।
तस्सेगदेसविच्छे-यकारिणो संसयाईया ॥ २१६ ॥

इह वस्तुनो-घटादे मृण्मयत्वपृथुबुध्नोदरवृत्तत्वकुण्डलायतग्रीवायुक्तत्वादयोऽर्थरूपा पर्याया-अर्थपर्याया अनन्ता भवन्ति। घटकुटकुम्भकलशादयस्तु वचनरूपा पर्याया-वचनपर्यायास्तेऽप्यनन्ता भवन्ति. आदिशब्दात्-परव्यावृत्तिरूपा अप्यनन्ता गृह्यन्ते। ततश्चेत्थं समास एतेऽर्थ-अर्थश्च वचनानि च आदिशब्दात्-परव्यावृत्तयश्च तद्रूपा पर्याया अर्थवचनादिपर्याया, ते च तेऽनन्ताश्च त एव शक्तय, ताभि संपन्न-युक्तं यतो वस्तु भवति अनन्तस्यैकदेशविच्छेदकारिण संशयादयो ज्ञेया। इदमुक्तं भवति-न खलु वयं निरंशवस्तुवादिन., किंतु-यथोक्ताऽनन्तधर्मलक्षणवस्तुनोऽनन्ता एव देशा सन्तीति वय मन्यामहे। तन्मध्याच एकैकदेशग्राहिण संशयादयोऽपि

भवन्त्येव, इति कथं न ते ज्ञानम्?। यदि पुनस्ते किमपि न गृह्णीयुः तदा तेषामनुत्थानमेव स्यात्, सर्वथा निर्विषयज्ञानस्य प्रसवाऽयोगात्, गगननलिनज्ञानवत्। ततश्च ज्ञायतेऽनेनेति ज्ञानमिति व्युत्पत्त्यर्थात्संशयादीनामपि ज्ञानता न विरुध्यते। इति गाथार्थः।

अथ समस्तवस्तुरूपग्राह्येव ज्ञानं, नैकदेशग्राहकम् इत्येतदाशङ्क्य निराकुर्वन्नाह—

**अहवा न सव्वधम्मा-ऽवभासया तो न नाणमिट्ठं ते।**
**ननु निन्नओ वि तद्दे-समेत्तगाहि त्ति अन्नाणं ॥२१७॥**

अथवा-अथ चेदेवं ब्रूयात्परः। किम्?, इत्याह-न सर्वधर्माऽवभासका-न कार्त्स्न्येन गवादिवस्तुसमग्रग्राहिणः, ततो न ज्ञानमिष्टं ते संशयादयः, संपूर्णवस्तुस्वरूपग्राहिण एव ज्ञानत्वात्। अत्रोत्तरमाह-ननु भवता ज्ञानत्वेनाऽङ्गीकृतस्तर्हि निर्णयोऽप्यज्ञानमेव प्राप्नोति। कुतः?, इत्याह-तस्य गवादिवस्तुन एकदेशमात्रग्राहीति कृत्वा तथा हि-गौरयं, घटोऽयं, पटोऽयमित्यादिभिर्निर्णयैरपि गोत्वघटत्वादिको वस्त्वेकदेश एव गृह्यते, अतस्तेऽपि कथं ज्ञानरूपतां भजेयुः?। अथ देशस्य देशिनमन्तरेण कदाचिदप्यभावात्तद्ग्रहणद्वारेण सर्वमपि वस्तु निर्णयेन गृहीतम् इत्यतो ज्ञानमेवाऽसौ। तदेतत्संशयादिष्वपि समानः तथा हि-'किमयं स्थाणुः, पुरुषो वा' इत्यादिरूपः संशयोऽपि स्थाणुत्वादिकं वस्त्वेकदेशं जानाति विपर्यासोऽपि विपर्ययवस्त्वेकदेशमवबुध्यते अनध्यवसायोऽपि सामान्यमात्ररूपं वस्त्वेकदेशमवगृह्णाति। ततश्च संशयादयोऽप्येकदेशपरिज्ञानद्वारेण समग्रमपि वस्तु जानन्त्येव, इति तेषामपि ज्ञानता केन वार्यते?। अथ गृह्णन्ति संशयादिभिर्वस्त्वेकदेशं, केवलं संशयेन सदिग्धं, विपर्यासेन विपर्यस्तं, अनध्यवसायेन त्वविशिष्टं इति, चेत्। ननु प्रतिविहितमस्यद् किं विसरसि?, यतः-'ज्ञायतेऽनेनेति ज्ञानं-मतिरूपं ज्ञानं मतिज्ञानम्' इत्येवं सामान्येनैव सम्यग्दृष्टिसंबन्धि मतिज्ञानमिह विचार्यते। तस्य च संशयादिरूपस्य निर्णयरूपस्य वा सम्यग्दृष्टिसंबन्धिनो ज्ञानता न विरुध्यते, 'ज्ञायतेऽनेनेति ज्ञानम्' इत्यस्याऽर्थस्य सर्वत्रोपपद्यमानत्वादिति। ननु यदि संशयादयोऽपि मतिज्ञानं, तर्हि चतुर्भेदत्वमतिक्रम्य सप्तभेदत्वं तस्य प्रसज्यते, इति चेत्। नैतदेवं, यतोऽनध्यवसायस्तावत् सामान्यमात्रग्राहित्वेनाऽवग्रहे अन्तर्भवति संशयोऽपि पूर्वोक्तस्वरूपेहाप्रकारत्वात्, तत्कारणत्वाच्च तस्यामेवान्तर्विशति, यद्यपि संशयस्य पूर्वमीहान्त्वमपाकृतं तदपि व्यवहारिजनानुवृत्त्या, नतु सर्वथेति, विपर्यासस्तु निश्चयरूपत्वात्साक्षादपाय एव, इति कुतश्चतुर्भेदाऽतिक्रमः?। इत्थं चैतदङ्गीकर्त्तव्यम्, अन्यथा सम्यग्दृष्टिसंबन्धिनः संशयादयो मतिज्ञानादतिरिच्यमाना क्वाऽन्तर्भवेयुः?। अज्ञान इति चेत्। नैवं "सम्मद्दिट्ठीणं भंते! किं नाणी, अन्नाणी?, गोयमा! नाणी, नो अन्नाणी" इत्याद्यागमवचनात्सम्यग्दृष्टेः सदैव ज्ञानित्वादिति, भवत्वेवं, तथाऽपि सम्यग्दृष्टिसंबन्ध्येव मतिज्ञानमिह विचार्यत इति कुतो लभ्यते? इति चेद् उच्यते—ज्ञानपञ्चकमेवेह विचारयितुमुपक्रान्तम्। ज्ञानं च सम्यग्दृष्टेरेव भवति अतस्तत् संबन्ध्येव मतिज्ञानमिह विचार्यते सम्यग्दृष्टिसंबन्धिनां च संशयादीनां ज्ञानता साध्यते इत्यलं विस्तरेण। इति गाथार्थः॥ विशे०।

(१०) सम्प्रति पुनर्द्रव्यादिभेदतश्चतुष्प्रकारतामाह—

**तं समासओ चउव्विहं पन्नत्तं, तं जहा-दव्वओ१, खेत्तओ२, कालओ३, भावओ ४ तत्थ दव्वओ णं आभिणिबोहियनाणी आएसेणं सव्वाइं दव्वाइं जाणइ, न पासइ १। खेत्तओ णं आभिणिबोहियनाणी आएसेणं सव्वं खेत्तं जाणइ, न पासइ २। कालओ णं आभिणिबोहियनाणी आएसेणं सव्वकालं जाणइ, न पासइ ३। भावओ णं आभिणिबोहियनाणी आएसेणं सव्वे भावे जाणइ, न पासइ ४। (सूत्र-२६×)**

'तं समासओ' इत्यादि-तन्मतिज्ञानं समासतः-संक्षेपेण चतुर्विधं प्रज्ञप्तं तद्यथा-द्रव्यतः१, क्षेत्रतः२, कालतो ३, भावतश्च ४। तत्र द्रव्यतो णमिति वाक्यालङ्कारे, आभिनिबोधिकज्ञानी 'आदेसेण' ति-आदेशः-प्रकारः, स च द्विधा-सामान्यरूपो, विशेषरूपश्च। तत्रेह सामान्यरूपो ग्राह्यः ततः आदेशेन द्रव्यजातिरूपसामान्यादेशेन सर्वद्रव्याणि धर्मास्तिकायादीनि जानाति किंचिद्विशेषतोऽपि, यथा-धर्मास्तिकायो धर्मास्तिकायस्य प्रदेशः तथा—धर्मास्तिकायो गत्युपष्टम्भहेतुरमूर्त्तो लोकाऽऽकाशप्रमाण इत्यादि, न पश्यति सर्वात्मना, धर्मास्तिकायादीन् न पश्यति, घटादींस्तु योग्यदेशावस्थितान् पश्यत्यपि, अथ वा-'आदेश' इति—सूत्रादेशस्तस्मात्सूत्रादेशात्सर्वद्रव्याणि धर्मास्तिकायादीनि जानाति, न तु साक्षात्सर्वाणि पश्यति ननु यत्सूत्रादेशतो ज्ञानमुपजायते तत् श्रुतज्ञानं भवति, तस्य शब्दार्थपरिज्ञानरूपत्वात्। अथ च मतिज्ञानमभिधीयमानं वर्त्तते, तत्कथमादेश इति सूत्रादेशो व्याख्यातः? तदयुक्तम्, सम्यग्वस्तुतत्त्वापरिज्ञानाद्, इह हि श्रुतभावितमतेः श्रुतोपलब्धेष्वप्यर्थेषु सूत्रानुसारमात्रेण येऽवग्रहेहापायादयो बुद्धिविशेषाः प्रादुष्यन्ति ते मतिज्ञानमेव, न श्रुतज्ञानं, सूत्रानुसारनिरपेक्षत्वात्, आह च भाष्यकृत्-"आदेसो त्ति व सुत्तं, सुओवलद्धेसु तस्स मइनाणं। पसरइ तब्भावणया, विणा वि सुत्ताणुसारेणं ॥४०५॥ १, एवं क्षेत्रादिष्वपि नवरं तान् सर्वथा न पश्यति, तत्र क्षेत्रं लोकालोकात्मकम्२, कालः सर्वाऽद्धारूपः, अतीतानागतवर्त्तमानरूपो वा ३, भावाश्च पञ्चसंख्या औदयिकादयः, तथा चाह भाष्यकृत्—

"आएसो त्ति पगारो, ओहादेसेण सव्वदव्वाइं।
धम्मत्थिकाइयाइं, जाणइ न उ सव्वभावेणं ॥४०३॥
खेत्तं लोगालोगं, कालं सव्वऽद्धमहव तिविहं च।
पंचोदइयाईए, भावे जं नेयमेवइयं ॥४०४॥ ४। नं०।

(११) अथ तेषामेव कालनिरूपणार्थमाह निर्युक्तिकारः—

**उग्गहो एक्कं समयं, ईहाऽवाया मुहुत्तमेत्तं तु।**
**कालमसंखं संखं, च धारणा होइ नायव्वा ॥२२२॥**

'अवग्रह' इति-व्याख्यानान्नैश्चयिकोऽर्थावग्रहो द्रष्टव्यः। स किम्?, इत्याह-सर्वजघन्यः कालविशेषः समयः, तन्मात्रसमयो भवति, न परतः। ईहाऽपायौ प्राङ्निर्णीतस्वरूपौ 'मुहुत्तमतन्ति' ति-अन्त शब्दो मध्यवचनः, ततश्च जघन्यतः, उत्कृष्टतश्च मुहूर्तान्तर्भिन्नं मुहूर्तं ज्ञातव्यौ भवतः; अन्तर्मुहूर्त्तमित्यर्थः। तुशब्दः कारार्थः। चकारश्चानुक्तसमुच्चये। ततश्च व्यञ्जनाऽवग्रह-व्यावहारिकार्थाऽवग्रहौ च प्रत्येकमन्तर्मुहूर्त्तं भवत इति द्रष्टव्यम्। क्वचित्-"मुहुत्तमद्धं त्ति" ति-पाठः, तत्राऽपि मुहूर्त्तार्द्धशब्देनान्तर्मुहूर्त्तमेव मन्तव्यम्। तुशब्दोऽपि तथैव। कलनं कालः न विद्यते संख्या पक्षमासर्त्वयनसंवत्सरादिका यस्यासावसङ्ख्यः पल्योपमादिलक्षणं तं कालमसंख्यं, तथा-संख्यायत इति संख्यः-पक्षमासर्त्वयनादिप्रमित इत्यर्थः। तं संख्यं, चशब्दादन्तर्मुहूर्त्तं च धारणा प्रागभिहितस्वरूपा भवति-ज्ञातव्या। इदमुक्तं भवति-अविच्युतिस्मृतिवासनाभेदाद्धारणा त्रिविधा। तत्राऽविच्युतिरूपा स्मृतिरूपा च प्रत्येकमन्तर्मुहूर्त्तं भवति। या तु तदर्थज्ञानावरणक्षयोपशमरूपा स्मृतिबीजरूपा वासनाख्या धारणा सा संख्येयवर्षायुषां सत्त्वानां संख्येयं कालम्, असंख्येयवर्षायुषां तु-पल्योपमादिजीविनामसंख्येयं कालं भवति। इति निर्युक्तिगाथार्थः।

अथैनां भाष्यकारो व्याख्यानयति—

अत्थोग्गहो जहन्नो, समय सेसोग्गहादओ वीसुं।
अंतो मुहुत्तमेग, तु वासना धारणं मोत्तुं॥ ३३४॥

अवग्रह इत्यस्य व्याख्यानमर्थाऽवग्रह इति, अयमपि निश्चय-व्यवहारभेदतो द्विधा, ततो व्यवहारार्थाऽवग्रहव्यवच्छेदार्थमाह-'जहन्न' इति-अतिस्तोककालत्वेन जघन्यो नैश्चयिकोऽर्थावग्रहो नेतर इत्यर्थः, अयमेकसमयः भवति। शेषास्त्वेका वासनारूपां धारणां मुक्त्वा ये अवग्रहादयो व्यञ्जनाऽवग्रहो व्यावहारिकार्थाऽवग्रहेहापायाऽविच्युतिस्मृतिरूपा मतिभेदास्ते सर्वेऽपि विष्वक्-पृथक् एकमेवान्तर्मुहूर्त्तं भवन्ति। वासनाधारणायास्तु निर्युक्तिगाथोक्तमेव कालमानमवगन्तव्यम् इत्यभिप्रायः। इति गाथार्थः। विशे०।

(१२) अथ नानादेशजविनेयाऽनुग्रहार्थं तत्पर्यायान् (आभिनिबोधिकज्ञानपर्यायान्) आभिधित्सुराह—

ईहा अपोह वीमंसा, मग्गणा य गवेसणा।
सन्ना मई सई पन्ना, सव्वं आभिनिबोहियं॥ ३६६॥

'ईह' चेष्टायाम् ईहनमीहा-सतामन्वयिनां, व्यतिरेकिणां चार्थानां पर्यालोचना। अपोहनमपोहो निश्चयः। विमर्शनं विमर्षः, अपायात्पूर्वं ईहायाश्चोत्तरः 'प्रायः शिरःकण्डूयनादयः पुरुषधर्मा इह घटन्ते, इति सम्प्रत्ययः। तथा—मार्गणमन्वयधर्मान्वेषणं मार्गणा। चशब्दः समुच्चयार्थः। गवेषणं व्यतिरेकधर्मालोचनं गवेषणा। तथा-संज्ञानं संज्ञा अवग्रहोत्तरकालभावी मतिविशेष एव। स्मरणं स्मृतिः। पूर्वानुभूतार्थालम्बनः प्रत्ययः। मननं मतिः कथञ्चिदर्थपरिच्छित्तावपि सूक्ष्मधर्मालोचनरूपा बुद्धिः। तथा प्रज्ञानं प्रज्ञा विशिष्टक्षयोपशमजन्या प्रभूतवस्तुगतयथावस्थितधर्मालोचनरूपा मतिः। -सर्वमिदमाभिनिबोधिकं कथंचित् किंचिद्भेददर्शनेऽपि तत्त्वतः सर्वं मतिज्ञानमेवेदमित्यर्थः। इति निर्युक्तिश्लोकार्थः। विशे०। आ० म०१ अ०१२ गाथा।

अत्रैव तद्व्याख्यानाय भाष्यम्—

होइ अपोहोऽवाओ, सई धिई सव्वमेव मइपन्ना।
ईहा सेसा सव्वं, इदमाभिणिबोहियं जाण॥ ३६७॥

अपोहस्तावत्किमुच्यत इत्याह—अपोहो भवति-अपाय योऽयमपोह स मतिज्ञानतृतीयभेदोऽपायः निश्चय उच्यत इत्यर्थः। स्मृतिः पुनर्धृतिर्धारणोच्यते धारणाभेदत्वेनाऽवयवे समुदायोपचारादिति। मतिप्रज्ञे-मतिप्रज्ञाशब्दाभ्यां सर्वमपि मतिज्ञानमुच्यते ईहा सेस' त्ति शेषाऽभिधानानि त्वीहा-विमर्श-मार्गणा-गवेषणा-संज्ञालक्षणानि सर्वाण्यपि ईहा ईहाऽन्तर्भावीनि द्रष्टव्यानीत्यर्थः। एवं विशेषतः कथंचिद्भेदसद्भावेऽपि सामान्यतः सर्वमिदमाभिनिबोधिकज्ञानमेव जानीहि, यत -ईहाऽपोहादयः सर्वेऽप्यमी आभिनिबोधिकज्ञानस्यैव पर्यायाः, केषांचिद्वचनपर्यायत्वात्, केषांचित्त्वर्थपर्यायत्वादिति।

एतदेव दर्शयति—

मइपन्नाभिनिबोहिय-बुद्धीओ होंति वयणपज्जाया।
जा उग्गहाइमरणा, ते सव्वे अत्थपज्जाया॥ ३६८॥

इह ये शब्दाः किल सर्वं वस्तु—संपूर्णं प्रतिपादयन्ति ते वचनरूपा वस्तुनः पर्याया वचनपर्याया उच्यन्ते। ये तु तदेकदेशमभिदधति तेऽर्थैकदेशप्रतिपादकाः पर्याया अर्थपर्याया उच्यन्ते, तत्र मतिप्रज्ञाभिनिबोधिकबुद्धयो वचनपर्याया भवन्ति। मति-प्रज्ञा-भिनिबोधिक बुद्धिलक्षणाश्चत्वारः शब्दा आभिनिबोधिकज्ञानस्य ज्ञानपञ्चकाद्यभेदलक्षणस्य, वचनपर्याया द्रष्टव्या इत्यर्थः, संपूर्णस्याऽपि तस्यामीभिः प्रतिपाद्यमानत्वात्। येऽत्ववग्रहेहादिकाः संज्ञाविशेषास्ते सर्वेऽप्यर्थपर्यायाः, तदेकदेशप्रतिपादकत्वात्। ततश्चावग्रहाऽपोहादयः आभिनिबोधिकज्ञानस्यैवार्थपर्यायाः। मतिप्रज्ञाशब्दौ तु तस्यैव वचनपर्यायौ अतः सर्वमेवेदं सामान्येनाऽभिनिबोधिकज्ञानमेवेति स्थितम्। अथ वा-सर्वेषामपि वस्तूनामभिलापवाचकाः शब्दाः वचनरूपापन्ना वचनपर्यायाः, ये तु तेषामेव वाचकशब्दानामभिधेयाऽर्थस्यात्मभूता भेदाः यथा कनकस्य कटककेयूरादयः, ते सर्वेऽप्यर्थपर्याया भण्यन्ते। ततश्च प्रस्तुतस्याभिनिबोधिकज्ञानस्य मतिप्रज्ञावग्रहेहादयः सर्वेऽपि वाचका ध्वनयो वचनपर्याया एव तदभिधेयास्त्वाभिनिबोधिकस्यात्मभूता भेदा अर्थपर्याया इत्येवमेयमिति। इह पूर्वं मतिप्रज्ञादिशब्दानां सर्वमप्याभिनिबोधिकज्ञानं वाच्यम्, अवग्रहादिशब्दानां तु तदेकदेशा एवाऽभिधेया इति दर्शितम्।

अथाऽवग्रहेहादिभिरपि शब्दैरन्वर्थवशात्सर्वमप्याभिनिबोधिकमभिधीयते, इति दर्शयति—

सव्वं वाऽऽभिनिबोहिय-मिहोग्गहाइवयणगहियं।
केवलमत्थि विसेस, पइ भिन्ना उग्गहाईया॥ ३६९॥

'वा' इति-अथवा, इह सर्वमाभिनिबोधिकज्ञानमवग्रहे-

हादिवचनेन संगृह्यते न पुनस्तदेकदेश एव तर्ह्यवग्रहादि-शब्दाना सर्वेषामेकरूपता प्राप्नोति, एकाभिधेयत्वाद्, बहुपुरुषोच्चारितघटाद्येकशब्दवत् इत्याशङ्क्याह-' केवलमि ' त्यादि, केवलं-नवरम् अर्थविशेष प्रत्यवग्रहादय शब्दा भिन्ना । इदमुक्तं भवति-अवग्रहशब्दोऽवग्रहलक्षणेनार्थेन सर्वमाभिनिबोधिकं सगृह्णाति, ईहाशब्दस्तु चेष्टालक्षणेन अपायस्त्ववगमनलक्षणेन धारणा तु धरणलक्षणेनेत्यादि । ततोऽमुमवग्रहणादिलक्षणमर्थविशेषमात्रमपेक्ष्याऽवग्रहादिशब्दा भिन्ना , तत्त्वतस्त्वभिधेय सर्वेषामाभिनिबोधिकज्ञानमेव ।

अथवा, आह-ननु यदि सर्वमप्याभिनिबोधिकमवग्रहादिवचनेन सगृह्यते, तर्ह्यवग्रहेहापायधारणाना तद्भेदाना सर्वेषामपि संकर. प्राप्नोति, अनन्तरवक्ष्यमाणव्युत्पत्तित प्रत्येकमेषा सर्वेषामप्यवग्रहादिरूपत्वाद् , इत्याशङ्क्याह— ' केवलमत्थविसेसमि ' त्यादि, केवलं-नवरम् अर्थविशेषं प्रति अवग्रहादयो भिन्ना । इदमुक्तं भवति-यद्यप्यर्थाऽवग्रहणेहनावगमनधारणमात्रस्य सामान्यस्य प्रत्येकं सर्वेष्वपि विद्यमानत्वादेकैकशोऽप्यवग्रहादिशब्दैनोच्यन्तेऽवग्रहादय , तथाऽप्यर्थविशेषमाश्रित्यैते भिन्ना एव, तथाहि-यथाभूतमवग्रहे सामान्यमात्रार्थस्यावग्रहणं, न तथाभूतमेवेहाया, किं तु-विशिष्ट, विशिष्टतरं, विशिष्टतम, चाऽपायधारणयो , यथाभूता चेहाया मतिचेष्टा न तथाभूतान्यत्र, किं तु-विशिष्टा, विशिष्टतरा चाऽपायधारणया. अविशिष्टतरा चाऽवग्रहेऽर्थावगमनमप्यपायात् विशिष्टं धारणायाम् अविशिष्टमविशिष्टतरं चेहावग्रहयो , अर्थधारणमप्यवग्रहेहापायेष्व सर्वप्रकृष्टं धारणायाम् , इत्येवमवग्रहणादिमात्र सर्वेषा सामान्ये सत्यप्यर्थविशेष ग्राह्यमाश्रित्य भिन्ना एवावग्रहादय । स चार्थविशेषोऽमीषा ग्राह्य प्राग्विस्तरेण दर्शित एव, इत्येव वा उत्तरार्द्धमिद व्याख्यायते—इदमेव च व्याख्यानं वृद्धसम्मतं लक्ष्यते, युक्त्या तु प्राक्तनमपि घटते । इत्यल विस्तरेणेति ।

कथ पुनरवग्रहादिवचनेन सर्वमप्याभिनिबोधिक सगृह्यते ?, इत्याह—

उग्गहणमोग्गहो त्ति य, अविसिट्ठमवग्गहो तयं सव्वं ।
ईहा जं मइचेट्ठा, मइवावारो तयं सव्वं ॥ ४०० ॥

अवग्रहणं तावदवग्रह उच्यते इति कृत्वा अविशिष्ट तत्सर्वमपि ईहादिभेदभिन्नमाभिनिबोधिकज्ञानमवग्रह एव । इदमुक्तं भवति-अवग्रहणमवग्रह इति व्युत्पत्तिमाश्रित्य सर्वमप्याभिनिबोधिकज्ञानमवग्रहो भवति, यथाह्यवग्रह कमप्यर्थमवगृह्णाति, एवमीहाऽपि कमप्यर्थमवगृह्णात्येव, एवमपायधारणे अपि इति । सर्वमप्याभिनिबोधिकज्ञानं सामान्येनावग्रह । तथा यत्-यस्माद्-ईहचेष्टायाम्, ईहनमीहेति-व्युत्पत्ते ईहापि मतेश्चेष्टा मतिचेष्टा वर्त्तते तस्मात्सर्वमपि तदाभिनिबोधिकमविशिष्टं मतिव्यापार ईहेत्यर्थ अवग्रहापायधारणानामपि सामान्येन मतिचेष्टारूपत्वादितिभाव ।

तथा—

अवगमणमवाओ त्ति य, अत्थावगमो तयं हवइ सव्वं ।
धरणं च धारणं त्ति य, तं सव्वं धरणमत्थस्स ॥४०१॥

यतश्चाऽवगमनमवा(पा)यो भण्यते, अतोऽनया व्युत्पत्त्या सर्वमपि तदाभिनिबोधिकमर्थस्यापाय. अवग्रहेहाधारणास्वपि सामान्येनार्थावगमनस्य विद्यमानत्वात् । तथा, धरणं धारणा यतो भण्यते-अतोऽनया व्युत्पत्त्या तत्सर्वमप्याभिनिबोधिकमर्थधरणरूपत्वाद्धारणा, अवग्रहेहापायेष्वप्यविशिष्टस्यार्थधरणस्य विद्यमानत्वादिति । संकरप्राप्तिश्चैवमवग्रहादीना प्राक् " केवलमत्थविसेसं पइ " (३६६) इत्यादिना परिहृतैवेति गाथापञ्चकार्थ । विशे० । नं० । आ० म० । " ईह त्ति वा १, अपोहो त्ति वा २, वीमस त्ति वा ३, मग्गण त्ति वा ४, गवेसण त्ति वा ५, सण्ण त्ति वा ६, सइ त्ति वा ७, मति त्ति वा ८, पन्न त्ति वा ६, " सव्वमेयं आभिणिबोहियं एतेहिं एगट्ठिएहिं भणितं ति । आ० चू० १ अ० १२ गाथा । (१-ईहाया विचारो विस्तरत 'ईहा' शब्देऽस्मिन्नेव भागेऽग्रे करिष्यते ) ( २-अपोहशब्दार्थविचारः ' अपोह ' शब्दे प्रथमभागे विस्तरत समुक्त ) ( अत्र 'आगम' शब्देऽस्मिन्नेव भागे ( ११ ) विषयसूच्यङ्के विस्तर. प्रतिपादित । ततोऽवशिष्ट 'सइ' शब्दे सप्तमे भागे ३३७ पृष्ठादारभ्य दर्शयिष्यते ) (३-विमर्शशब्दविचार 'वीमंस' शब्दे षष्ठभागे करिष्यते ) ( ४-मार्गणाशब्दार्थनिरूपणम् दृष्टान्तश्च 'मग्गणा' शब्दे षष्ठभागे, तथा-अस्यैकार्थिकानि ' मग्गण ' शब्दे तस्मिन्नेव भागे दर्शयिष्यन्ते )। ५-गवेषणाविषयो विशेष ' गवेषणा ' शब्दे तृतीयभागे करिष्यते ) ( ६-संज्ञासर्वस्वविचार सण्णा' शब्दे ७ भागे दर्शयिष्यते ) (७-स्मृतिस्वरूपम् 'सइ' शब्दे सप्तमे भागे विस्तरतो वक्ष्यते) ( मतिस्वरूपं विस्तरत ' मइ ' शब्दे षष्ठभागे वक्ष्यते ) (८-प्रज्ञाशब्दार्थविचार 'पण्णा' शब्दे पञ्चमे भागे करिष्यते)

तदेवं तत्त्वभेदपर्यायैराभिनिबोधिकज्ञानं व्याख्याय, साम्प्रतं तद्विषयनिरूपणार्थमाह—

तं पुण चउव्विहं नेयं, भेयओ तेण जं तदुवउत्तो ।
आदेसेणं सव्वं, दव्वाइँ चउव्विहं मुणइ ॥ ४०२ ॥

तत्पुनराभिनिबोधिकज्ञानं चतुर्विध-चतुर्भेदम् । नन्ववग्रहादिभेदेन भेदकथनं प्रागस्य कृतमेव किमिह पुनरपि भेदोपन्यास ? । सत्यम् , ज्ञेयमेवेह द्रव्यादिभेदेन चतुर्भेदं, ज्ञानस्य तु तद्भेदादेव भेदोऽत्राऽभिधीयते, सूत्रे तथैवोक्तत्वात् । तथा च नन्दिसूत्र—" तं समासतो चउव्विह पन्नत्तं, तं जहा-दव्वओ १, खेत्तओ २, कालओ ३, भावओ ४ । तद्दव्वओ ण आभिणिबोहियनाणी आदेसेणं सव्वदव्वाइं जाणइ न पासइ (सूत्र-३६)" इत्यादि । ज्ञेयभेदादपि तत्कथं चतुर्विधमित्याह-'जं तदुवउत्तो' इत्यादि यत्-यस्मात्कारणात्तेनाभिनिबोधिकज्ञानेन सर्वं द्रव्यादि मुणतीति सबन्ध । कथंभूतम् ?, इत्याह-चतुर्विधं-चतुर्भेदं द्रव्य क्षेत्रकाल-भावभेदभिन्नमित्यर्थ । कथंभूत सन् । मुणति इत्याह-तस्मिन्-आभिनिबोधिकज्ञाने उपयुक्तस्तदुपयुक्त । केन ?, इत्याह-आदेशेनेति ।

कोऽयमादेश इत्याह—

आएसो त्ति पगारो, ओहादेसेण सव्वदव्वाइं ।
धम्मत्थिआइयाइं, जाणइ न उ सव्वभेदेणं ॥ ४०३ ॥

विशे०। ( अस्या गाथाया व्याख्या ' आएस ' शब्देऽस्मिन्नेव भागे गता )

क्षेत्रादिस्वरूपं विशेषतः प्राह—

खेत्तं लोगाऽलोगं, कालं सव्वद्धमहव तिविहं ति ।
पंचोदइयाईए, भावे जं नेयमेवइयं ॥ ४०४ ॥

क्षेत्रमपि-लोकाऽलोकस्वरूपं सामान्यादेशेन कियत्पर्याय-विशिष्टं सर्वमपि जानाति, न तु विशेषादेशेन सर्वपर्यायैर्विशिष्टमिति । एवं कालमपि सर्वाऽद्धारूपम् अतीताऽनागतवर्तमानभेदतस्त्रिविधं वा इत्येक एवार्थः । भावतस्तु सर्वभावानामनन्तभागं जानाति, औदयिकौपशमिकक्षायिकक्षायकौपशमिकपारिणामिकान्वा पञ्च भावान् सामान्येन जानाति; न परतः । कुतः ?, इत्याह-यत्-यस्मादेतावदेव ज्ञेयमस्ति, नाऽन्यदिति । इह क्षेत्रकालौ सामान्येन द्रव्यान्तर्गतावेव केवलं भेदेन रूढत्वात्पृथगुपादानमवसेयमिति ।

आदेशस्य व्याख्यानान्तरमाह—

आएसो त्ति य सुत्तं, सुओवलद्धेसु तस्स मइनाणं ।
पसरइ तब्भावणया, विणा वि सुत्ताणुसारेण ॥४०५॥

अथवा-आदेश -सूत्रमुच्यते, तेन-सूत्रादेशेन सूत्रोपलब्धेष्वर्थेषु तस्य मतिज्ञानिन सर्वद्रव्यादिविषयं मतिज्ञान प्रसरति । ननु श्रुतोपलब्धेष्वर्थेषु यज्ज्ञानं तच्छ्रुतमेव भवति, कथं मतिज्ञानम् ?, इत्याह-' तब्भावणये ' त्यादि, तद्भावनया-श्रुतोपयोगमन्तरेण तद्वासनामात्रत एव यद् द्रव्यादिषु प्रवर्तते, तत्सूत्रादेशेन मतिज्ञानमिति भावः । एतच्च पूर्वमपि ' पुव्वं सुयपरिकम्मियमइस्स जं संपयं सुयाईयं ' इत्यादि प्रोक्तमेव । इति गाथाचतुष्टयार्थः । विशे० । भ० ।

( १३ ) तदेवं तत्त्वभेदपर्यायैर्मतिज्ञानं व्याख्याय, विषयं च द्रव्यादिकमस्य निरूप्य, साम्प्रतमिदमेव सत्पदप्ररूपणतादिभिर्नवभिरनुयोगद्वारैर्विचारयितुमाह—

संतपयपरूवणया १.
दव्वपमाणं च २ क्खेत्त३ फुसणा य ४ ।
कालो य ५ अंतरं ६ भा-
ग७ भाव८ अप्पाबहुं चेव ६ ॥ ४०६ ॥

सच्च तत्पदं च सत्पदं तस्य प्ररूपणं सत्पदप्ररूपणं-गत्यादि द्वारेषु विचारणं तद्भाव सत्पदप्ररूपणता-'कस्मिन् गत्यादिद्वारे इदं सद्' इत्येव सतो-विद्यमानस्याऽभिनिबोधिकज्ञानस्यगत्यादिद्वारेषु; प्ररूपणा कर्तव्येत्यर्थः १ । तथा द्रव्यप्रमाणमिति । ' मतिज्ञानिजीवद्रव्याणामेकस्मिन्समये कियन्तो मतिज्ञानं प्रतिपद्यन्ते, सर्वे वा कियन्तस्ते ?, इत्येवं प्रमाणं वक्तव्यमित्यर्थः । चशब्द समुच्चये २ । तथा-क्षेत्रमिति ' कियति क्षेत्रे तत्संभवति ? ' इत्येवं मतिज्ञानस्य क्षेत्र वक्तव्यम् ३ । तथा-' कियत्क्षेत्रं मतिज्ञानिन स्पृशन्ति ' इत्येवं स्पर्शना वक्तव्या । यत्राऽवगाढस्तत्क्षेत्र पार्श्वतोऽपि च स्पर्शना, इत्येवं क्षेत्रस्पर्शनयोर्विशेष , च समुच्चये ४। तथा-काल स्थितिलक्षणो मतिज्ञानस्य वाच्य , वस्तंथेव ५ । 'एकदा प्रतिपद्य वियुक्तः कियता कालेन पुनरपि प्रपद्यते' इत्येवम् अन्तरं च तस्य वक्तव्यम् ६ । तथा ' मतिज्ञानिनः शेषज्ञानिनां कतिभागे वर्तन्ते' इत्येवं भागोऽस्य वक्तव्य ७ । तथा-' कस्मिन् भावे मतिज्ञानिनो वर्त्तन्ते ?' इत्येवं भावो भणनीयः ८ । तथा अल्पबहुत्व वक्तव्यम्, भागद्वारादपि तल्लब्धमिति चेत् । नैवं, यतोऽत्र मतिज्ञानिनां स्वस्थान एव पूर्वप्रतिपन्नप्रतिपद्यमानकापेक्षयाऽल्पबहुत्वमभिधानीयं, भागस्तु शेषज्ञानापेक्षया चिन्तनीय इति विशेष ६। इति निर्युक्तिगाथाद्वयार्थः । विस्तरार्थं तु भाष्यकार एव वक्ष्यति।

अथ (१) सत्पदप्ररूपणता किमुच्यते ?, इत्याह—

संतं ति विज्जमाणं, एयस्स जा परूवणया ।
गइआइएसु-वत्थुसु, संतपयपरूवणा सा उ ॥ ४०७॥
जीवस्स च जं संतं, जम्हा तं तेहि तेसु वा पयति ।
तो संतस्स पयाइं, ताइं तेसुं परूवणया ॥ ४०८ ॥

गत्यादिद्वारेषु सत्त्वेन चिन्त्यमानत्वात्पदं सत् उच्यते । ततश्च सतो-विद्यमानस्य पदस्य या वक्ष्यमाणेषु गत्यादिद्वारेषु प्ररूपणता सा सत्पदप्ररूपणतोच्यते । अथवा-जीवस्य यत्सज्ज्ञानदर्शनादिकं तत्तैश्च कारणभूतैः, तेषु वाऽधिकरणभूतेषु यस्मात् 'पयति' त्ति-पद्यते-अनुगम्यते विचार्यते तत -तस्मात्सतः पदानि सत्पदानि तानि गत्यादीनि द्वाराण्युच्यन्ते तै , तेषु वा प्ररूपणता 'गत्यादि ' इति गम्यते, सत्पदप्ररूपणता । इति गाथाद्वयार्थः ।

तान्येव सत्पदानि गत्यादिद्वाराणि दर्शयति—

गइइंदिए य काए, जोए वेए कसायलेसासु ।
सम्मत्त-नाण-दंसण-संजय-उवओग-आहारे ॥४०६॥
भासग-परित्त-पज्ज-त्त-सुहुम-सण्णी य भविय-चरिमे य ।
पुव्वपडिवन्नए वा, पडिवज्जंते य मग्गणया ॥ ४१० ॥

एतेषु गत्यादिषु द्वारेषु मतिज्ञानस्य पूर्वप्रतिपन्ना ; प्रतिपद्यमानका , तदुभयम् , उभयाभावश्च इत्येतच्चतुष्टय चिन्त्यते । तत्र येषु स्थानेषु मतिज्ञानिनो न प्रतिपद्यमानका , नाऽपि पूर्वप्रतिपन्ना , किं तु उभयाभाव , तान्यपोद्धृत्य दर्शयति—

एगिंदियजाईओ, सम्मा मिच्छो य जो य सव्वन्नू ।
अपज्जत्ता य अभव्वा, ऽचरिमा(य)एए सया सुण्णा॥४११॥

इह सर्वेष्वपि गत्यादिद्वारेषु यावान् कोऽप्येकेन्द्रियजातीय -एकेन्द्रियप्रकार ; एकेन्द्रियभेद इत्यर्थः । एष सर्वोऽपि मतिज्ञानेन शून्य , न तत्र मतिज्ञानस्य प्रतिपद्यमानक , नापि पूर्व प्रतिपन्न संभवतीत्यर्थः । " उभयाभावो एगिंदिएसु सम्मत्तलद्धीए " इति वचनादिति । क पुनरेकेन्द्रियजातीय ?, इति चेत् । उच्यते-इन्द्रियद्वारे-तावदेकेन्द्रिय एव, कायद्वारे-पृथिव्यप्तेजोवायुवनस्पतय । सूक्ष्मद्वारे तु—सूक्ष्म इत्यादि । तथा—सम्यग्मिथ्यादृष्टिरपि सम्यक्त्वद्वारे मतिज्ञानशून्यः । " सम्मामिच्छदिट्ठी णं भंते ! किं नाणी, अन्नाणी ? । गोयमा ! नो नाणी, अन्नाणी " इत्यादिवचनादिति । यश्च कोऽपि द्वारे-सर्वज्ञ केवली संभवति, सोऽपि तच्छून्य एव; तद्यथा-गतिद्वारे-

सिद्धिगतौ सिद्ध:, इन्द्रियद्वारे-अनीन्द्रिय, कायद्वारे-अकाय, योगद्वारे-अयोग, लेश्याद्वारे-अलेश्य, ज्ञानद्वारे-केवलज्ञानी, दर्शनद्वारे-केवलदर्शनी, तथा, संयमपरीत्त-पर्याप्त-सूक्ष्म-संज्ञि-भव्यद्वारेषु-यथासंख्यं नोसंयत-नोपरीत्त-नोपर्याप्त-नोसूक्ष्म-नोसंज्ञि-नोभव्या इति । एते सर्वेऽपि सर्वज्ञत्वान्मतिज्ञानशून्या, छद्मस्थस्यैव तत्संभवादिति भाव. । तथा-परीत्त-भव्य-चरमद्वारेषु परीत्ता-ऽभव्याऽचरमा अपि मिथ्यादृष्टित्वान्मतिज्ञानशून्या. । तदेवमेते सर्वे सर्वदैव मतिज्ञानशून्या मन्तव्या उभयाभावात् । इति गाथार्थ ।

अथ गत्यादिद्वारेष्वेव पूर्वप्रतिपन्नप्रतिपद्यमानकचिन्ता कुर्वन्नाह—

विगला अविसुद्धलेसा, मणपज्जवणाणिणो अणाहारा ।
असण्णि अणगारोव-ओगिणो पुव्वपडिवन्ना ॥४१२॥
सेसा पुव्वपवन्ना, नियमा पडिवज्जमाणया भइया ।
भयणा पुव्वपवन्ना, अकसायाऽवेयया होंति ॥ ४१३ ॥

विकला:-द्वित्रिचतुरिन्द्रियलक्षणा विकलेन्द्रिया., तथा-अविशुद्धलेश्या. भावलेश्यामङ्गीकृत्य कृष्ण-नील-कापोत-लेश्यावृत्तय., तथा-मन.पर्यायज्ञानिन, अनाहारका, असंज्ञिन, अनाकारोपयुक्ता; एते सर्वेऽपि मतिज्ञानस्य यदि भवन्ति । तदा पूर्वप्रतिपन्ना एव, नतु प्रतिपद्यमानका, तथा हि-इन्द्रियद्वारे केचिद्विकलेन्द्रिया ये सास्वादनसम्यक्त्वेन सह पूर्वभवादागच्छन्ति तेषां पूर्वप्रतिपत्तिमङ्गीकृत्य स्यान्मतिज्ञानं, प्रतिपद्यमानकास्त्वस्य विकलेन्द्रिया. सर्वेऽपि न भवन्त्येव, तथाविधविशुद्ध्यभावात् । तथा-लेश्याद्वारे—अविशुद्धलेश्या अपि पूर्वप्रतिपन्ना केचिद्भवन्ति, न तु प्रतिपद्यमानका, विशुद्धभावलेश्यानामेव तत्प्रतिपत्ते' ज्ञानद्वारे-मन पर्यायज्ञानिन सर्वेऽपि पूर्वप्रतिपन्ना भवन्त्येव न तु प्रतिपद्यमानका', सम्यक्त्वसहचरितप्राप्तमतिज्ञानस्यैव पश्चादप्रमत्तसंयतावस्थाया मन पर्यायज्ञानोत्पत्ते, सम्यक्त्वसहचरितचारित्रलाभे तु मतिसहचरितं मन पर्यायज्ञानं नोत्पद्यत एव, अत एव वचनाद्, अन्यथा अवधिज्ञानीव मन पर्यायज्ञान्यपि निश्चयनयमतेन प्रतिपद्यमानक स्यादिति । आहारकद्वारे अनाहारका केचिद्देवादय' पूर्वभावाद् गृहीतसम्यक्त्वा मनुष्यादिषूत्पद्यमाना. मते पूर्वप्रतिपन्ना भवन्ति, नतु प्रतिपद्यमानका तथाविधविशुद्ध्यभावात् । संज्ञाद्वारे असंज्ञिनो विकलेन्द्रियवद्भावनीया. । उपयोगद्वारे अनाकारोपयोगिन केचित्पूर्वप्रतिपन्ना भवन्ति, नतु प्रतिपद्यमानका., मतिज्ञानस्य लब्धित्वात्तदुत्पत्तेश्चानाकारोपयोगे प्रतिषिद्धत्वादिति । उक्तशेषास्तु-गतिद्वारे नारकादय, इन्द्रियद्वारे तु-पञ्चेन्द्रिया, कायद्वारे तु त्रसकायिका, इत्येवमादयो जातिमपेक्ष्य पूर्वप्रतिपन्ना नियमत सन्ति, प्रतिपद्यमानकास्तु भजनीया —कदाचिद्भवन्ति, कदाचिन्नेति । अनिर्धारितनिर्धारार्थमाह-' भयणा पुव्वपवन्ना ' इत्यादि, कषायद्वारे अकषाया, वेदद्वारे त्ववेदका., भजनया पूर्वप्रतिपन्नका एव भवन्ति, छद्मस्था ' पूर्वप्रतिपन्ना: सन्तभवन्ति, नतु केवलिन, प्रतिपद्यमानकास्त्वमी न भवन्त्येव, पूर्वप्रतिपन्नमतिज्ञानानामेव क्षपकोपशमश्रेणिप्रतिपत्ते. । इति गाथाद्वयार्थ' ।

तदेवं संक्षेपतो गत्यादिद्वारेषु भाष्यकृता मतिज्ञानस्य कृता सत्पदप्ररूपणा । अथ विनेयाऽनुग्रहार्थं किंचिद्विस्तरतोऽप्यसौ विधीयते-तत्र मतिज्ञानं किमस्ति, नवा ? । यद्यस्ति, क ? । तद्गत्यादिस्थानेषु । तत्र नारकतिर्यङ्नरामरभेदाद्गतिश्चतुर्द्धा । तत्र चतुर्विधायामपि गतौ मतिज्ञानस्य पूर्वप्रतिपन्ना नियमात्सन्ति, प्रतिपद्यमानकास्तु भाज्या'-विवक्षितकाले कदाचिद्भवन्ति, कदाचित्तु नेत्यर्थ. । आभिनिबोधिकप्रतिपत्तिप्रथमसमये प्रतिपद्यमानका उच्यन्ते, द्वितीयादिसमयेषु तु पूर्वप्रतिपन्ना इत्यनयोर्विशेष. । इन्द्रियद्वारे—एकेन्द्रियेषूभयाभाव. । सैद्धान्तिकमतेन कार्मिकग्रन्थिकास्तु-लब्धिपर्याप्तबादरपृथ्व्यब्वनस्पतीन् करणाऽपर्याप्तान् पूर्वप्रपन्नानिच्छन्ति, सास्वादनस्य तेषूत्पत्तेः । विकलेन्द्रियास्तूभयमतेनाऽपि करणाऽपर्याप्ताः सास्वादनमेव पूर्वभवायातमङ्गीकृत्य पूर्वप्रतिपन्ना लभ्यन्ते, नतु प्रतिपद्यमानका., पञ्चेन्द्रियास्तु सामान्येन पूर्वप्रतिपन्ना नियमतः सन्ति, प्रतिपद्यमानकास्तु भजनीयाः ।

कायद्वारे-पृथिव्यप्तेजोवायुवनस्पतित्रसकायभेदात्षोढा काय. । तत्राद्यकायपञ्चके उभयाभावः । त्रसकाये तु पञ्चेन्द्रियवद्वाच्यम् । योगद्वारे कायवाङ्मनोभेदात्त्रिधा योग., स एष त्रिविधोऽपि समुदितो येषामस्ति तेषां पञ्चेन्द्रियवद्वाच्यम्, मनोरहितवाग्योगिनां विकलेन्द्रियवत्, केवलकाययोगिना त्वेकेन्द्रियवदिति । वेदद्वारे-स्त्रीपुंनपुंसकभेदात् त्रिविधेऽपि वेदे पञ्चेन्द्रियवत् भावनीयम् । कषायद्वारे तु चतुर्ष्वनन्ताऽनुबन्धिषु सास्वादनमङ्गीकृत्य पूर्वप्रतिपन्नो लभ्यते; न प्रतिपद्यमानकः, शेषेषु द्वादशसु कषायेषु पञ्चेन्द्रियवदेव । लेश्याद्वारे-भावलेश्यामङ्गीकृत्य कृष्णादिकासु तिसृष्वप्रशस्तलेश्यासु पूर्वप्रतिपन्ना' संभवन्ति, न त्वितरे; प्रशस्ते तु लेश्यात्रये पञ्चेन्द्रियवदेव । सम्यक्त्वद्वारे—निश्चयव्यवहारनयाभ्यां विचार । तत्र व्यवहारनयो मन्यते—मिथ्यादृष्टिरज्ञानी च सम्यक्त्वज्ञानयो. प्रतिपद्यमानको भवति, न तु सम्यक्त्वज्ञानसहित. । निश्चयनयस्तु ब्रूते—सम्यग्दृष्टिर्ज्ञानी च सम्यक्त्वज्ञाने प्रतिपद्यते, न तु मिथ्यादृष्टिः, अज्ञानी च । विशे० । ( यच्चत् 'कज्जकारणभाव' शब्दे तृतीयभागे (४१४) इत्यादिगाथाभि दर्शयिष्यते )

तस्मात्-' इय न श्रवणादिकाले नाणं ' ( ४१७ ) -इत्यनेन यदि सर्वेष्वपि धर्मश्रवणादिसमयेषु मतिज्ञान निषिध्यते, तदा सिद्धसाध्यता । अथ चरमक्रियासमयेऽपि तन्निषिध्यते, तदयुक्तम्, तत्र तस्य प्रसाधितत्वादिति । तस्मिंश्च धर्मश्रवणादिक्रिया चरमसमये सम्यक्त्वं ज्ञान च प्रतिपद्यमानं प्रतिपन्नमेवेति । अत. सम्यग्दृष्टिर्ज्ञानी च सम्यक्त्वज्ञाने प्रतिपद्यते । इति निश्चयनयमततात्पर्यम् । व्यवहारनयस्तु ब्रूते-तस्मिंश्चरमसमये सम्यक्त्वज्ञानयारप्यसौ प्रतिपद्यमानक, प्रतिपद्यमानं चाप्रतिपन्नमेव । अतो मिथ्यादृष्टि, अज्ञानी च सम्यक्त्वज्ञाने प्रतिपद्यते । उत्तरत्र क्रियानिष्ठासमये तु सम्यक्त्वज्ञाने युगपदेव ल-

मते। अत प्रस्तुते सम्यक्त्वद्वारे एतन्मतेन सम्यग्दृष्टिगाभिनिबोधिकस्य पूर्वप्रतिपन्न एव भवति, नतु प्रतिपद्यमानकः, सम्यक्त्वज्ञानयोर्युगपल्लाभात्, तत्काले च क्रियाया अभावात्, तदभावे च प्रतिपद्यमानकत्वायोगादिति। निश्चयनयमतेन तु सम्यग्दृष्टेराभिनिबोधकस्य पूर्वप्रतिपन्न., प्रतिपद्यमानकश्च लभ्यते, क्रियायाः कार्यनिष्ठायाश्च युगपद्भावस्य समर्थितत्वात्। इत्यलमतिविस्तरेणेति। विशे०।

ज्ञानद्वारे-मतिश्रुतावधिमनःपर्यायकेवलभेदात्पञ्चधा ज्ञानम्। व्यवहारनयमतेन मतिश्रुतावधिमनःपर्यायज्ञानिन. आभिनिबोधिकस्य पूर्वप्रतिपन्ना भवन्ति, नतु प्रतिपद्यमानका, ज्ञानिनो मतिज्ञानप्रतिपत्त्ययोगस्यैतन्मतेन प्रागुक्तत्वात्। केवलिना तूभयाभाव, तेषां क्षायोपशमिकज्ञानातीतत्वात्। मत्यज्ञानश्रुताऽज्ञानविभङ्गज्ञानवन्तस्तु प्रतिपद्यमानका. कदाचित् भवन्ति, युक्तेर्दर्शितत्वात्, नतु पूर्वप्रतिपन्ना, निश्चयनयमतेन तु मतिश्रुतावधिज्ञानिन पूर्वप्रतिपन्ना नियमत सन्ति, प्रतिपद्यमानका अपि भजनीया, ज्ञानिनो ज्ञानप्रतिपत्ते समर्थितत्वात्। मन पर्यायज्ञानिनस्तु पूर्वप्रतिपन्ना एव भवन्ति, न तु प्रतिपद्यमानका, पूर्वसम्यक्त्वलाभकाले प्रतिपन्नमतिज्ञानस्यैव पश्चादन्त्यावस्थाया मन पर्यायज्ञानसद्भावात्। केवलिनां तूभयाभाव। एव मत्याद्यज्ञानवतामप्युभयाभाव एव, ज्ञानिन एव ज्ञानप्रतिपत्ते।

दर्शनद्वारे—चक्षुरचक्षुरवधिकेवलदर्शनभेदात् दर्शन तु चतुर्द्धा। अत्राद्यदर्शनत्रये लब्धिमङ्गीकृत्य पूर्वप्रतिपन्ना नियमत प्राप्यन्ते, प्रतिपद्यमानकास्तु भजनीया, तदुपयोग त्वाश्रित्य पूर्वप्रतिपन्ना एव, नतु प्रतिपद्यमानका, मतिज्ञानस्य लब्धित्वात्, लब्ध्युत्पत्तेश्व दर्शनोपयोगे निषिद्धत्वात्, "सव्वाश्रो वि लद्धीश्रो, सागारोवउत्तस्स उववज्जंति"- इति वचनादिति। केवलदर्शनिना तूभयाभाव।

संयतद्वारे-संयतादयश्चाऽऽभिनिबोधकस्य पूर्वप्रतिपन्ना नियमाल्लभ्यन्ते, प्रतिपद्यमाना अपि भजनया प्राप्यन्ते। ननु सम्यक्त्वलाभावस्थायामेव मतिज्ञानस्य प्रतिपन्नत्वात्संयत कथं प्रतिपद्यमानकोऽवाप्यते? सत्यं, किं तु-योऽतिविशुद्धिवशात्सम्यक्त्वं चारित्रं च युगपत्प्रतिपद्यते स तस्यामवस्थायां प्रतिपद्यमानस्य संयमस्य प्रतिपन्नत्वात्संयतो मते प्रतिपद्यमानको भवति, उक्तं चावश्यकचूर्णौ-"नऽत्थि चरित्तं सम्मत्तविहूणं दसणं तु भयणिज्ज"। भजनामेव आह—" सम्मत्तचरित्ताइं जुगवं, पुव्वं व सम्मत्तं" उपयोगद्वारे-उपयोगो द्विधा-पञ्च ज्ञानानि, त्रीणि चाज्ञानानि साकारोपयोगः; चत्वारि दर्शनानि अनाकारोपयोग तत्र साकारोपयोगे पूर्वप्रतिपन्ना नियमात् सन्ति, प्रतिपद्यमानकास्तु भजनीया.। अनाकारोपयोगे तु प्रतिपन्ना एव, नतु प्रतिपद्यमानका, अनाकारोपयोगे लब्ध्युत्पत्ते' प्रतिषिद्धत्वादिति। आहारकद्वारे-आहारका साकारोपयोगवद्। अनाहारकास्त्वपान्तरालगतौ प्रतिपन्ना संभवन्ति, प्रतिपद्यमानकास्तु न भवन्त्येव।

भाषकद्वारे भाष्यकार एवाह—

**भासामलद्धिश्रो लभई, भासमाणो श्रभासमाणो वा।**
**पुव्वपडिवन्नश्रो वा,उभयं पि अलद्धिए नऽत्थि॥४२७॥**

भाषालब्ध्या सह वर्त्तते इति भाषासमलब्धिक -भाषालब्धिमांश्चेद्भवतीत्यर्थ, तदा भाषमाणोऽभाषमाणो वा लभते-प्रतिपद्यते कश्चिन्मतिज्ञानं, पूर्वप्रतिपन्नो वा भवति— भाषालब्धियुक्तो मनुष्यादिर्जात्यपेक्षया पूर्वप्रतिपन्नो नियमाल्लभ्यते प्रतिपद्यमानकोऽपि भजनयेति तात्पर्यम्। अलब्धिके-भाषालब्धिशून्ये पुनरुभयमपि नास्ति, स ह्येकेन्द्रिय एव, तस्य च प्रागुक्तवदुभयाभाव एवेत्यर्थ। इति गाथार्थ। परीत्तद्वारे-परीत्ता प्रत्येकशरीरिण, परीत्तीकृतसंसारा वा; स्तोकावशेषभवा इत्यर्थ। एते उभयेऽपि पूर्वप्रतिपन्ना नियमाल्लभ्यन्ते, प्रतिपद्यमानकास्तु भजनीया। अपरीत्तास्तु साधारणशरीरिण, अपार्द्धपुद्गलपरावर्त्तादप्युपरिवर्तिसंसारा वा, मिथ्यादृष्टित्वादुभयेऽप्युभयविकला। पर्याप्तकद्वारे-षट्पर्याप्तिभि पर्याप्ता परीत्तवद्वाच्यास्तदपर्याप्तास्तु प्रतिपन्ना एव न त्वितरे। सूक्ष्मद्वारे-सूक्ष्मा उभयविकला। बादरास्तु पर्याप्तकवद्वाच्या। संज्ञिद्वारे-दीर्घकालिकोपदेशेन संज्ञिनो गृह्यन्ते, ते च बादरवद्भावनीया'। असंज्ञिनस्तु अपर्याप्तवदिति। भवद्वारे-भवसिद्धिका. संज्ञिवद्। अभवसिद्धिकास्तूभयशून्या। चरमद्वारे-चरमो भवो भविष्यति येषा तेऽभेदोपचाराच्चरमा भव्यवद् अचरमास्त्वभव्यवदिति। तदेवं कृता गत्यादिद्वारेषु भाष्ये वृत्तौ च सत्पदप्ररूपणता।

अथ (२) द्रव्यप्रमाणमाह—

**किमिहाभिणिबोहियनाणि-जीवदव्वपमाणमिगसमए।**
**पडिवज्जेज्जं तु न वा, पडिवज्जे जहन्नश्रो एगो॥४२८॥**
**खेत्तपलिश्रोवमासं-खभागउक्कोसश्रो पवज्जेज्जा।**
**पुव्वपवन्ना दोसु वि, पलियासंखेज्जईभागो॥४२९॥**

किमिहाऽस्मिन् लोके आभिनिबोधिकज्ञानपरिणामापन्नजीवद्रव्याणां प्रमाणमेकस्मिन् विवक्षितसमये?। एवं शिष्येण पृष्टे सत्याह-प्रतिपद्येरन्, नवेति। इदमुक्तं भवति-यदि प्रतिपद्यमानकानां प्रमाणं पृच्छसि, तदा प्रतिपद्यमानकास्तस्य विवक्षितसमये प्राप्यन्ते न वा। तत्र प्रतिपद्यमानप्राप्तिपक्षे जघन्यत एक प्रतिपद्येत, उत्कृष्टस्तु सर्वलोके क्षेत्रपल्योपमासंख्येयभाग प्रतिपद्येत। अथ पूर्वप्रतिपन्नानां तेषां प्रमाणमिच्छसि ज्ञातुं, तर्हि पूर्वप्रतिपन्ना द्वयोरपि पक्षयोर्जघन्योत्कृष्टलक्षणयो क्षेत्रपल्योपमाऽसंख्येयभागप्रदेशराशिप्रमाणा प्राप्यन्ते, केवल जघन्यपदादुत्कृष्टं विशेषाऽधिकम्। इति गाथाद्वयार्थ।

अथ (३) क्षेत्रद्वारमधिकृत्याह—

**खेत्त हवेज्ज चोद्दस-भागा सत्तोवरिं श्रहे पंच।**
**इलियागईए विग्गह-गयस्स गमणेऽहवाऽऽगमणे॥४३०॥**

नानाजीवानपेक्ष्य सर्वेऽप्याभिनिबोधिकज्ञानिन पिण्डिता लोकासंख्येयभागमेव व्याप्नुवन्ति। एकजीवस्य तु क्षेत्रं भवेत्कियद्?, इत्याह-सप्तचतुर्दशभागा -चतुर्दशभागीकृत-

स्य लोकस्य सप्त भागा , सप्तरज्जव इत्यर्थः, उपरि-ऊर्ध्वम् इलिकागत्या विग्रहगतस्य निरन्तराऽपान्तरालस्पर्शिनोऽनुत्तरविमानेषु गमने, तत आगमने वा । अधस्त्वनयैव गत्या षष्ठनरकपृथिवीगमने आगमने वा पञ्चचतुर्दशभागाः पञ्च रज्जवः प्राप्यन्ते । इदमुक्तं भवति-यदाऽत्राऽऽभिनिबोधिकज्ञानी मृत्वा इलिकागत्याऽनुत्तरसुरेषूत्पद्यते, तेभ्यो वाऽत्र मनुष्यो जायते, तदाऽस्य जीवप्रदेशो दण्ड सप्तरज्जुप्रमाणक्षेत्रे भवति, अधस्त्वनयैव गत्या षष्ठनरकपृथिव्यां गच्छतः, तत आगच्छतो वा पञ्चरज्जुप्रमाणक्षेत्रेऽसौ लभ्यत इति । विराधितसम्यक्त्वो हि षष्ठपृथ्वीं यावत् गृहीतेनाऽपि सम्यक्त्वेन सैद्धान्तिकमतेन कश्चिदुत्पद्यते, कार्मग्रन्थिकमतेन तु वैमानिकदेवेभ्योऽन्यत्र तिर्यङ्, मनुष्यो वा तेनैव क्षायोपशमिकसम्यक्त्वेनोत्पद्यते, न गृहीतेन, सप्तमपृथिव्यां पुनरुभयमतेनाऽपि वान्तेनैव तेनोपजायते । आह भवत्वेवं किंतु यः सप्तमपृथिव्या गृहीतसम्यक्त्वोऽत्रागच्छति तस्याऽधः षट्चतुर्दशभागाः किमिति न लभ्यन्ते ? इति ( विशे० । ) ( 'सम्मत्त' शब्दे सप्तमे भागे स्फुटीभविष्यति ) ( स्पर्शनाद्वारम् । क्षेत्रस्पर्शनयोर्विशेषश्च 'फासणा' शब्दे पञ्चमभागे ( ४३१ ) गाथया दर्शयिष्यते )

'एकस्याऽऽभिनिबोधिकज्ञानिजीवस्य ये क्षेत्रस्पर्शने, ताभ्यां सकाशान्नानाऽऽभिनिबोधिकजीवानां या क्षेत्रस्य स्पर्शनास्ता असंख्येयगुणा नानाऽऽभिनिबोधिकजीवाना सर्वेषामसंख्येयत्वादिति भावः' ।

कालद्वारमधिकृत्याह—

एगस्स अणेगाण य, उवओगंतो मुहुत्ताओ ॥४३४॥

द्विधा मतिज्ञानस्य कालश्चिन्तनीयः-उपयोगतो लब्धितश्च । तत्रैकजीवस्य तदुपयोगो जघन्यत उत्कृष्टतश्चाऽन्तर्मुहूर्त्तमेव भवति, परतः उपयोगान्तरगमनादिति । सर्वलोकवर्त्तिनामनेकाऽऽभिनिबोधिकजीवानामपीदमेवोपयोगकालमानम्, केवलमिदमन्तर्मुहूर्त्तमपि बृहत्तरमवसेयम् ।

लब्धिमङ्गीकृत्य कालमानमाह—

लद्धी वि जहन्नेणं, एगस्सेवं परा इमा होई ।
अह सागरोवमाइं, छावट्ठिं सातिरेगाइं ॥ ४३५ ॥

आभिनिबोधिकज्ञानलब्धिरपि तदावरणक्षयोपशमरूपाऽऽत्मसम्यक्त्वस्यैकजीवस्य जघन्यत एवमिति-एवमेव अन्तर्मुहूर्त्तमेवेत्यर्थः । परतो मिथ्यात्वगमनात्, केवलाऽवाप्तेर्वा । परा तूत्कृष्टा तल्लब्धिरेकजीवस्येयम्-अनन्तरवक्ष्यमाणा भवति । अथ सैवोच्यते-सातिरेकाणि षट्षष्टिसागरोपमाणि ।

कथं पुनरेतानि भवन्ति, नानाजीवानां च कियान् लब्धिकालः ? इत्याह—

दो वारे विजयाइसु, गयस्स तिन्नच्चुए अहव ताइं ।
अइरेगं नरभवियं, नाणाजीवाण सव्वऽद्धं ॥ ४३६ ॥

इह कश्चित्साधुर्मत्यादिज्ञानान्वितो देशोनां पूर्वकोटीं यावत्प्रव्रज्यां परिपाल्य विजयवैजयन्तजयन्ताऽपराजितविमानानामन्यतरविमाने उत्कृष्टं त्रयस्त्रिंशत्सागरोपमलक्षणदेवायुरनुभूय पुनरप्रतिपतितमत्यादिज्ञान एव मनुजेषु उत्पन्नो देशोनां पूर्वकोटीं प्रव्रज्यां विधाय तदेव विजयादिषूत्कृष्टमायुः संप्राप्य पुनरप्रतिपतितमत्यादिज्ञान एव मनुष्यो भूत्वा पूर्वकोटीं जीवित्वा सिद्ध्यतीति । एवं विजयादिषु वारद्वयं गतस्य, अथ वा-अच्युतदेवलोके द्वाविंशतिसागरोपमस्थितिकेषु देवेषु त्रीन् वारान् गतस्य तानि षट्षष्टिसागरोपमाणि अधिकानि भवन्ति । अधिकं चेह नरभवसंबन्धिदेशोनं पूर्वकोटित्रयं चतुष्टयं वा द्रष्टव्यम् । नानाजीवानां तु सर्वाऽद्धं-सर्वकालं मतिज्ञानस्य स्थितिः । इति गाथा (विशे०)ऽर्थः ।

अथाऽन्तरद्वारमाश्रित्याह—

एगस्स जहन्नेणं, अंतरमंतो मुहुत्तमुक्कोसं ।
पोग्गलपरिअट्टऽद्धं, देसूणं दोसबहुलस्स ॥ ४३७ ॥

इह कश्चिज्जीवः सम्यक्त्वसहितं मतिज्ञानमवाप्य-प्रतिपत्य चान्तर्मुहूर्ते मिथ्यात्वे स्थित्वा यदि पुनरपि सम्यक्त्वसहितं तदेव प्राप्नोति । तदेतन्मतिज्ञानस्य जघन्यमन्तरमुहूर्तमन्तरं प्राप्तिविरहकालरूपं भवति । आशातनादिदोषबहुलस्य तु जीवस्य सम्यक्त्वात् प्रतिपतितस्य देशोनपुद्गलपरावर्त्तार्द्धरूपमुत्कृष्टमन्तरं भवति, एतावता कालेन पुनरपि सम्यक्त्वाऽऽभिनिबोधिकलाभात् इत्येकजीवस्योक्तमन्तरम् ।

अथ नानाजीवानां तदभिधित्सुः, भावद्वारं च विभणिषुराह—

जमसुन्नं तेहिं तओ, नाणाजीवाणमंतरं नऽत्थि ।
मइनाणी सेसाणं, जीवाणमणंतभागम्मि ॥ ४३८ ॥

यत्-यस्मात्तैः-आभिनिबोधिकज्ञानिभिरशून्यः सर्वदैव नारकादिगतिचतुष्टयाऽन्वितं त्रिभुवनमिदं ततस्तस्मान्नानाजीवानाश्रित्य नाऽस्ति मतिज्ञानस्याऽन्तरकालः । तथा मतिज्ञानिनः शेषज्ञानवतां जीवानामनन्ततमे भागे वर्त्तन्ते, शेषज्ञानिनो हि केवलिसहितत्वादनन्ताः, आभिनिबोधिकज्ञानिनस्तु सर्वलोकेऽप्यसंख्याता एवेति भावः । इति गाथाद्वयार्थः ।

अथ भावद्वारम्, अल्पबहुत्वद्वारं चाऽभिधित्सुराह—

भावे खओवसमिए, मइनाणं नऽत्थि सेसभावेसुं ।
थोवा मइनाणविऊ, सेसा जीवा अणंतगुणा ॥४३९॥

मतिज्ञानावरणे हि कर्मण्युदीर्णे क्षीणे, अनुदीर्णे तूपशान्ते मतिज्ञानमुपजायते, अतः क्षायोपशमिक एव भावे तद्वर्त्तते, न तु शेषेष्वौदयिकक्षायिकादिभावेष्विति मतिज्ञानं विदन्तीति मतिज्ञानविदः स्तोकाः शेषज्ञानयुक्तास्तु सिद्धकेवल्यादयो जीवा अनन्तगुणा इति । एवमपि तावदल्पबहुत्वं भवति । केवलमिहैवमुच्यमाने भागाऽल्पबहुत्वद्वारयोरर्थतः परमार्थतो न कश्चिद्विशेषो भेदो दर्शितो भवति । तेन तत्त्वस्यैवाऽऽभिनिबोधिकस्य पूर्वप्रतिपन्नप्रतिपद्यमानकानाश्रित्याऽल्पबहुत्वं वक्तुमुचितं, पौनरुक्त्याऽभावादिति ।

एतदेवाह—

नेह इओ विसेसो, भागप्पबहुत्तएसु तस्सेव ।

पडिवज्जमाणपडिवन्नगाणमप्पाबहुं जुत्तं ॥ ४४० ॥

गतार्थैव ।

अथ यदेव युक्तं तदेवाह—

थोवा पवज्जमाणा, असंखगुणिया पवन्नयजहन्ना ।

उक्कोसए पवन्ना, होंति विसेसाऽहिया तत्तो ॥ ४४१ ॥

आभिनिबोधिकस्य "जहन्नेणं, एको वा, दो वा, तिन्नि वा, उक्कोसेणं असंखेज्जा" इत्येवं प्रतिपद्यमानकाः प्रोच्यन्ते ते सर्वस्तोकाः । तेभ्यो जघन्यपदवर्तिनः पूर्वप्रतिपन्नास्ते असंख्यातगुणाः, चिरकालसंकलितत्वात् प्रतिपद्यमानकानां तु विवक्षितैकसमयमात्रभावादिति । उत्कृष्टपदवर्तिनस्तु पूर्वप्रतिपन्नास्तेभ्योऽपि विशेषाधिका इति ।

प्रकारान्तरमप्यल्पबहुत्वं दर्शयति—

अहवा मइनाणीणं, सेसयनाणीहिँ नाणरहिएहिं ।

कज्ज सहो भएहि य, अहवा गइाइभेएणं ॥ ४४२ ॥

अथवा मतिज्ञानिनां शेषज्ञानिभिः सहाऽल्पबहुत्वं प्रथम वाच्यम्, यथा-'मइनाणी सेसाणं जीवाणमणंतभागम्मि" इति । ततो द्वितीयस्थाने-"नाणरहिएहिं" ति, ज्ञानानि व्याख्यानादिह मतिज्ञानादन्यानि गृह्यन्ते, तैरहिता -वियुक्ताः पूर्वप्रतिपद्यमानकमतिज्ञानिन एव केवला इत्यर्थः, तैः सहित मतिज्ञानिनामल्पबहुत्वं स्वस्थान एव, वक्तव्यम् । यथा-"थोवा पवज्जमाणा, असंखगुणिया पवण्णयजहन्ना" इत्यादि तत तृतीयस्थाने उभयैः शेषज्ञानिभिः समुदितैः सहाऽल्पबहुत्वं तेषां कर्तव्यम् । तद्यथा-"सव्वथोवा मणपज्जवनाणी, ओहिनाणी असंखेज्जगुणा, मइनाणी, सुयनाणी य दो वि सट्ठाणे तुल्ला, मज्झिओहिनो विसेसाहिया, केवलनाणी अणंतगुणा" एवं पूर्वप्रतिपन्नप्रतिपद्यमानकविभागेनाऽप्यल्पबहुत्वमिह स्वधियाऽभ्यूह्यमिति । अथवा-गत्यादिभेदेन तत्कार्यम्, यथा-सर्वस्तोका मतिज्ञानिनो मनुष्याः, नारका असंख्यातगुणाः, ततस्तिर्यञ्चः, ततो देवा इति । एवं संभवतः सर्वत्र वाच्यमिति ।

अथोपसंहरन्नाह—

लक्खणविहाणविसया-ऽणुओगदारेहिँ वन्निया बुद्धी ।

तयणंतरमुद्दिट्ठं, सुअनाणमओ परूविस्सं ॥ ४४३ ॥

लक्षणम्-आभिनिबोधिकशब्दव्युत्पत्तिः, विधानं-भेदोऽवग्रहादिः, विषयो द्रव्यतआदिः, अनुयोगद्वाराणि सत्पदप्ररूपणतादीनि, एतैः सर्वैरपि यथोक्तक्रमेणाभिनिबोधिकज्ञानलक्षणा वर्णिता व्याख्याता बुद्धिः । ततस्तदनन्तरोद्दिष्टं श्रुतज्ञानं प्ररूपयिष्य इति गाथापञ्चकार्थः । तदेवमाभिनिबोधिकज्ञानं समाप्तमिति । विशे० । आ० म० ।

**आभिणिबोहियनाणलद्धि**—आभिनिबोधिकज्ञानलब्धि—स्त्री० । आभिनिबोधिकज्ञानम्-मतिज्ञानम् तस्य लब्धि-योग्यता । आभिनिबोधिकज्ञानयोग्यतायाम्, "आभिणिबोहियणाणलद्धी ०जाव सव्वोसहिसमिद्धा" (सूत्र-२७४) । स्वस्वावरणकर्मक्षयोपशमसाध्यत्वात् क्षायोपशमिकी । अनु० ।

**आभिणिबोहियनाणसागारोवओग**-आभिनिबोधिकज्ञानसाकारोपयोग—पुं० । अर्थाभिमुखो नियतः -प्रतिनियतस्वरूपो बोधो-बोधविशेषः अभिनिबोधः अभिनिबोध एवाभिनिबोधिकम् । अभिनिबोधशब्दस्य विनयादिपाठाऽभ्युपगमात् "विनयादिभ्यः" ॥७।२।१६९॥ इत्यनेन स्वार्थे इकण्प्रत्ययः । "निवर्तन्ते स्वार्थे प्रत्ययकाः प्रकृतिलिङ्गवचनानि" इति वचनादत्र नपुंसकता, यथा विनय एव वैनयिकमित्यत्र । अथवा-अभिनिबुध्यते अस्मादस्मिन्वेति अभिनिबोधः-तदावरणकर्मक्षयोपशमस्तेन निर्वृत्तमाभिनिबोधिकम्, तच्च तज्ज्ञानं च आभिनिबोधिकज्ञानम्, इन्द्रियमनोनिमित्तो योग्यप्रदेशाऽवस्थितवस्तुविषयः स्फुटप्रतिभासो बोधविशेष इत्यर्थः, स चासौ साकारोपयोगश्च आभिनिबोधिकज्ञानसाकारोपयोगः । साकारोपयोगविशेषे, प्रज्ञा० २९ पद ३१२ सूत्रटी० ।

**आभिसेक्क**-आभिषेक्य—त्रि० । अभिषेकमर्हति आभिषेक्यम् । अभिषेकाऽर्हे, औ० । "आभिसेक्कं हत्थिरयणं पडिकप्पेहि" (सूत्र-२९+) । औ० ।

**आभीर**-आभीर—पुं० । आ-समन्ताद् भियं राति । रा-क । वाच० । शूद्रजातिभेदे, सूत्र० १ श्रु० ९ अ० २ गाथाटी० । 'आभीराणं अहिवई' (४९२ गाथाटी०) । आ० म० १ अ० । गोपे, सङ्कीर्णजातिभेदे, स हि अल्पभीतिहेतोरप्यधिकं बिभेतीति तस्य तथा तदिदं गृहाण । उक्तः स च सङ्कीर्णवर्णः । "ब्राह्मणादुग्रकन्यायामावृतो नाम जायते । आभीरोऽम्बष्ठकन्यायामायोगव्यां तु धिग्वणः ॥ १ ॥" इति मनूक्ते । "श्रीकोङ्कणादधोभागे, तापीतः पश्चिमे तटे । आभीरदेशो देवेशि, विन्ध्यशैले व्यवस्थितः" ॥ १ ॥ इति । देशभेदे तद्देशवासिनि, तद्देशराजे च । यं० त० । "एकादश कलाधारि-कविकुलमानसहारि । इदमाभीरमवेहि, जगणमन्त्यमनुधेहि" ॥ १ ॥ इत्युक्तलक्षणे ५ मात्रावृत्तभेदे च । वाच० ।

**आभीरदेस**-आभीरदेश—पुं० । देशभेदे, कल्प० । आभीरदेशे अचलपुरासन्न कन्ना-वेन्नानद्योर्मध्ये ब्रह्मद्वीपे पञ्चशत तापसानामभूत् । कल्प० २ अधि० ८ क्षण । ('जोगपिंड' शब्दे चतुर्थभाग १६४१ पृष्ठे ॥ 'बम्भदीविया' शब्दे पञ्चमभाग चाऽत्र विशेषवृत्तं वक्ष्यते)

**आभीरविसय**-आभीरविषय—पुं० । देशभेदे, "आभीरविसये कण्हावेन्नाणाम णई तस्स कूले बंभदीवो तत्थ पञ्च तावसा परिवसंति । नि० चू० १३ उ० । पिं० ५०३ गाथा । आ० म० । आ० चू० । "एवं सो भगवं विहरन्तो ततो आभीरविसयं गओ" आ० चू० १ अ० । आव० १ अ० ६३४ गाथा ।

**आभीरसाहु**-आभीरसाधु—पुं० । आभीरपुत्रे स्वनामख्याते साधौ, उत्त० २ अ० । (तत्कथा 'अण्णाण' शब्दे प्रथमभागे ४८८ पृष्ठे गता ।)

**आभीरीवंचग**-आभीरीवञ्चक—त्रि० । आभीर्यां वञ्चनकारके वणिजि, उत्त० । तत्कथा यथा—"क्वाऽपि ग्रामे कोऽपि वणिक् हट्टे क्रयविक्रयं करोति । अन्यदा एका आभीरी तद्धट्टे आगता । तया भणितम्—भो रूपकद्वयस्य मे घृतं देहि । तेनोक्तम्-अर्पयामि । अर्पितं मया रूपकद्वयम् । ततः वणिजा एकस्यैव रूपकस्य घृतं वाच्चयं

तोलयित्वा अर्पितम् । सा जानाति मम रूपकद्वयस्य तत्फलम् । वञ्चिता च सा । तस्यां गतायां स चिन्तयति—एष रूपको मया मुधा लब्ध, ततोऽहमेवं उपभुञ्जामि । तस्य रूपकस्य घृतखण्डादि लात्वा स्वगृहे विसर्जितं भार्याया कथयित्वम्-अस्य घृतपूरं कुर्या । तया घृतपूरा कृता । तावता तद्गृहे समित्रो जामाता समायात । तस्यैव तया घृतपूरा परिवेषिता । समित्रेण तेन भक्षिता । वणिक् गृहे समायात स्नानं कृत्वा भोजनार्थमुपविष्टः । तया स्वाभाविकमेव भाजने परिवेषितम् । वणिक् वदति—कथं न कृता घृतपूरा ? तया उक्तम्—कृता परमागन्तुकेन समित्रेण जामात्रा भक्षिता । स चिन्तयति मया सा वराकी आभीरी वञ्चिता । परार्थमेवाऽयमात्मा पापेन संयोजित । एवं चिन्तयन्नेवाऽसौ शरीरचिन्तार्थं बहिर्गत । तदानीं ग्रीष्मो वर्तते । स मध्याह्नवेलाया कृतशरीरचिन्त एकस्य वृक्षस्याधस्तात् विश्रामार्थमुपविष्ट । तेन मार्गेण गच्छन्तं साधुं दृष्टवान् । वणिगुवाच—भो साधो ? विश्रस्यताम् । साधुनोक्तम्-शीघ्रं मया स्वकार्ये गन्तव्यम् । वणिजा उक्तम्-भगवन् ! कोऽपि परकार्ये गच्छति ? साधु प्राह—यथा त्वं स्वजनार्थं क्लिश्यसि । अनेन एकेनैव वचनेन स बुद्ध । प्राह-भगवन् ! यत्र क्व तिष्ठथ । साधुना भणितम्-उद्याने । स साधुना सम तत्र गत । तन्मुखाद्धर्ममाकर्ण्य भणति-भगवन् ! अहं प्रव्रजिष्यामि । नवरं स्वजनमापृच्छ्याऽऽगच्छामि । गतो निजगृहे बान्धवान् भार्यां च भणति—अत्रापणे व्यवहारतो मम तुच्छलाभोऽस्ति देशान्तरं यास्यामि सार्थवाहद्वयमत्रायातमस्ति । एक सार्थवाहो मूलद्रव्यमर्पयति, इष्टपुरं नयति, न च लाभं गृह्णाति । द्वितीयो मूलद्रव्यमर्पयति सह गमनात् लाभञ्च गृह्णाति, तत्केन सह गमनं युज्यते ? । तैरुक्तं प्रथमेन सह व्रज । अथ स वणिक् स्वजनैः समं वने गत्वा उवाच-अयं मुनि परलोकसार्थवाह स्वकीयमूलद्रव्येण व्यवहारं कारयति मोक्षपुरं च नयतीति दृष्टान्तदर्शनपूर्वकं स्वजनानापृच्छ्य स वणिक् तस्य गुरो समीपे दीक्षां जग्राहेति । उत्त० ४ अ० ।

आभोइत्ता-आभोगयित्वा-अव्य० । "आभोइत्ताण णीसेसं" (८६ × गाथा) । आभोगयित्वा-ज्ञात्वा निश्शेषमतिचारम् । दश० ५ अ० ।

आभोएउं-आभोज्य-अव्य० । विचार्येत्यर्थे, पं० व० १४२० गाथा ।

आभोएमाण-आभोगयत्-त्रि० । अवलोकयति, कल्प० १ अधि० १ क्षण ११ सूत्र ।

आभोग-आभोग-पुं० । आभोगनमाभोग । उपयोगविशेषे आव० । "आभोगे सह अणाभोगे" ॥ २ ॥ आव० ४ अ० । "लोकालोकावलोकनाभोगम्" (१५ +)- । आभोग उपयोग । षो० १५ विव० । "अणाए आभोगं, नाणसमवाए संगते सज्झाय ॥ ७५ × ॥ जिनाऽऽज्ञाया अभिमानिनो गताऽऽगतम-उपयोगं कुर्वन तृष्णीका आसन स्पर्शे । बृ० ३ उ० । स्था०, "आभोगणिव्वत्तिय"

(सूत्र-२४६ +) । स्था० ४ ठा० १ उ० । संज्ञा-आभोग । स्था० १० ठा० ७५२ सूत्रटी० । "आभोगे जाणतेण, जो अइयारो कओ पुणो तस्स" आव० ४ अ० १२४६ गाथाटी० । ज्ञानपूर्वके व्यापारे, आतु० १ सूत्रटी० । परिस्फुटबुद्धौ "आभोगेण वि तणुएसु" (१२ + गाथा) । "परिस्फुडबुद्धीए वि" चूर्णि । आभोगेनापि-परिस्फुटबुद्ध्यापि अतिसूक्ष्माऽपीत्यर्थ । जीत० । 'अणुन्थ अणाभोगेणं" (सूत्र +) । आभोजनमाभोग-आभोगोऽत्यन्तविस्मृतिरित्यर्थ, तेन अनाभोग मुक्त्वेत्यर्थ । आव० ६ अ० २५३ आध्ययगाथाटी० । विस्तारे, ज्ञा० १ श्रु० १ अ० २७ सूत्रटी० । आभोजनमाभोग 'भुज' पालनाभ्यवहारयो, मर्य्यादया अभिविधिना वा भोगनपालनमाभोग । प्रतिलेखनायाम्, ओघ० ।

( अस्यैकार्थिकानि )—

आभोगण मग्गण गवे-सणा य ईहा अपोह पडिलेहा ।
पेक्खण निरिक्खणाऽवि य, आलोय पलोयणेगट्ठा ॥२॥

(अस्या गाथाया व्याख्या पडिलेहणा-'शब्दे पञ्चम-भागे करिष्यते) ओघ० । आ भुज् आधारे घञ् । परिपूर्णतायाम्, सम्यक् सुखाद्यनुभवे, वरुणस्य छत्रे च । मेदि० । वाच० ।

आभोगज्झाण-आभोगध्यान-न० । आभोगो-ज्ञानपूर्वको व्यापारस्तस्य ध्यानम् । ज्ञानपूर्वकव्यापारस्य ध्यानं ब्राह्मणनयनाभिप्रायेण फलान्यपि मृद्नता ब्रह्मदत्तस्येव । आतु० सूत्र-१ × टी० । ( अस्य वृत्तान्त 'बंभदत्त' शब्दे पञ्चमभागे निरूपयिष्यामि )

आभोगण-आभोगन-न० । आभोग्यतेऽनेनेति आभोगनम् । अर्थावग्रहसमयसमनन्तरमेव । सद्भूतार्थविशेषाऽभिमुखे आलोचने, नं० ३१ सूत्रटी० । उपयोगविशेषे, आव० ४ अ० ११ गाथाटी० ।

आभोगणया-आभोगनता-स्त्री० । आभोग्यतेऽनेनेत्याभोगनम्—अर्थावग्रहसमयसमनन्तरमेव सद्भूतार्थविशेषाभिमुखमालोचनम् तस्य भाव आभोगनता । ईहायाम्, नं० ३१ सूत्रटी० ।

आभोगणिव्वत्तिय-आभोगनिर्वर्तित-त्रि० । आभोगो-ज्ञानम् तेन निर्वर्तित । ज्ञानेन कृत क्रोधादौ यज्जानन् कोपविपाकादि रुष्यति । वैमानिकक्रोधविशेषे, स्था० ४ ठा० १ उ० २४६ सूत्रटी० ।

आभोगबउस-आभोगबकुश-पुं० । आभोग-साधूनामकृत्यमेतच्छरीरोपकरणविभूषणमित्येवं ज्ञानम्, तत्प्रधानो बकुश आभोगबकुश । बकुशभेदे, भ० २५ श० ६ उ० ७५१ सूत्रटी० ।

आभोगिणी-आभोगिनी-स्त्री० । विद्याभेदे, बृ० । "आभोगिणी य" ॥ १४६ × ॥ आभोगिनी नाम विद्या, सा भण्यते-या परिजपिता सती मानस परिच्छेदमुत्पादयति । बृ० ३ उ० । नि० चू० १

आम-आम-अव्य० । अभ्युपगमे, प्रा० । "आम अभ्युपगमे"

॥८।२।१७७॥ आमेत्यभ्युपगमे प्रयोक्तव्यम् । "आम बहला वणोली" प्रा०। 'दुविहन्त निद्धि-च,आम ति' ॥१६५॥ आमशब्दो ऽनुमतौ, सम्मतमेतदस्माकं सर्वमिति भावः। व्य० १ उ०। 'सो भणइ-आम दिट्ठं', आ० म० द्वि० अ० गाथाटी०। "आम-नि अणुमअत्थे" 'आम' इत्यनुमतार्थे इति। 'आम' नि एतदभ्युपगमस्यैव एवास्माभि। नि० चू०१० उ० ११७ गाथाटी०। अपक्के, विशे० २३४ गाथाटी०। "आम णामेमेगे" (सूत्र-२४३×)। आमम्-अपक्वम्। (स्था०) पुरुषस्तु आम -वय श्रुताभ्यामव्यक्तः। स्था० ४ ठा० १ उ०। "आम आमं च भुंजीया" ॥२०४॥ आमम्-अपक्वम्। आ० म० १ अ०।

आमनिक्षेपश्च—

'नामं ठवणाआमं, दव्वाऽऽमं चेव होइ भावाऽऽमं ।
उस्सेइमसंसइम-मुवक्खडं चेव पुलिआम ॥ ३२ ॥

आमं चतुर्द्धा। तद्यथा-नामाऽऽमम् १, स्थापनाऽऽमम् २, द्रव्याऽऽमम् ३, भावाऽऽमम् ४। तत्र नामस्थापने गतार्थे, द्रव्याऽऽम पुनश्चतुर्द्धा, तदेव दर्शयति-'उस्सेइम' इत्यादि. उत्-ऊर्ध्वं निर्गच्छता बाष्पेण य. स्वेद स उत्स्वेद उत्स्वेदेन निर्वृत्त उत्स्वेदिमम्। भावादिम ॥६।४।२१॥ इति सूत्रेण इम-प्रत्यय। उत्स्वेदिमञ्च तदाम-च उत्स्वेदिमाऽऽम १; 'संसइम' स एकाकिभावेन स्वेद संस्वेदस्तेन निर्वृत्त संस्वेदिमं तदवाऽऽमम् संस्वेदिमाऽऽमम् २, तथोपस्कृता राद्धा ये बल्लचणकादयस्तेषा मध्ये यदामं तदुपस्कृताऽऽमम् ३। पर्याय स्वाभाविक औपाधिको वा फलाना पाक परिणामस्तस्मिन् प्राप्तेऽपि यदाम तत्पर्यायाऽऽमम् ४।

अथोत्स्वेदिमादिचतुष्टयमेव व्याचष्टे—

उस्सेइम पिट्ठाई, तिलाईं ससेइमं तुऽणेगविहं ।
कंकडुयाइ उवक्खड, अविपक्करस तु पलियामं ॥३३॥

उत्स्वेदिमम्-पिष्टादिपिष्टम्, सूक्ष्मतन्दुलादिचूर्णनिष्पन्न त द्धि वस्त्रान्तरितमथ स्थितस्याप्मोदकस्य बाष्पेणोत्स्विद्यमान पच्यते तत्र यदाम तदुत्स्वेदिमाऽऽमम्, आदिग्रहणाद्गोला दिपरिग्रहं। संस्वेदिम पुनस्तिलादिकमनेकविधम्। इह क्वचित् पिठरादौ पानीय तापयित्वा पिटिकायां प्रक्षिप्तास्तिलास्तेनाष्णोदकेन सिच्यन्ते-ततस्तिला -संस्विद्यन्ते तेषां सस्विद्यमाना मध्ये य आमास्तत संस्वेदिमाऽऽमम्, आदिग्रहणेन-प्रत्यन्यदप्येतेन क्रमेण, संस्विद्यते, तत् संस्वेदिमाऽऽमम्। तथा चणकमुद्गादीनामुपस्कृताना ये कङ्कडुकादय आमास्ते उपस्कृताऽऽमम्, पर्यायाऽऽमम् पुनरविपक्वरसफलादिकमुच्यते, तच्चतुर्विधम्।

तद्यथा—

इन्धणधूमे गंधे, वच्छप्पभियामए अ आमविही ।
एसो खलु आमविही, तप्पच्चो आणुपुव्वीए ॥३४॥

इन्धनपर्यायाऽऽमम् १, धूमपर्यायामम् २, गन्धपर्यायामम् ३, वृक्षपर्यायाममितीत्येवं पर्यायाम आमविधिश्चतुः प्रकारः ४। एष खलु आमविधिर्ज्ञातव्य। आनुपूर्व्या यथोक्तयाऽऽदा आनुपूर्व्यानाम-वक्ष्यमाणलक्षणा पलालादिप्रक्षेपलक्षणकदीप-प्रक्षेपणादिका यथायोगमामफलपाचनाय रचना. तया प्रातव्य-आमविधिरिति।

अथेन्धनधूमपर्यायाऽऽमं विवृणोति—

कोद्दवपलालमाई, धूमेणं तिंदुगाइ पच्चंते ।
मज्झगडा मसणि परं-ततिंदुया छिद्दधूमस्स ॥ ३५ ॥

कोद्रवपलालादिकमिन्धनमुच्यते, आदिग्रहणेन-शालिपलालपरिग्रहः; तेन चाम्रादीनि फलानि वेष्टयित्वा पाच्यन्ते, तत्र यान्यपक्वानि फलानि तदिन्धनपर्यायामम्। तथा धूमेन तिन्दुकादीनि फलानि पाच्यन्ते। कथं पाच्यन्ते? इत्याह-मज्झगडा' इति-प्रथमतो गर्त्ताया मध्ये करीष प्रक्षिप्यते, तस्याश्च गर्त्ताया पार्श्वेऽपरा गर्त्ता खन्यन्ते, तासु च गर्त्तासु तिन्दुकादीनि फलानि प्रक्षिप्य मध्यगाया करीषगर्त्तायाम् 'अगणि' त्ति-अग्निर्दीयत तास्ता च 'परंत' त्ति-पर्यन्तगर्त्तानां स्रोतांसि मध्यमगर्त्तया सह मीलितानि क्रियन्ते। ततस्तस्या करीषगर्त्ताया सकाशाद्धूमस्ते स्रोतोभि पर्यन्तगर्त्तासु प्रविशति ततस्तच्छिद्रप्रवेशिना धूमेन प्रसरता तानि फलानि पाच्यन्त इति तेषा मध्ये यद्-आमं तद्धूमपर्यायाऽऽमम्।

अथ गन्धपर्यायाऽऽमं भावयति—

अंबगचिन्भिडमाई, गंधणं ज च उवरि रुक्खस्स ।
कालपत्तं न पच्चइ, वत्थपलियाममेतं तु ॥ ३६ ॥

आम्रकचिर्भिटादीनि आदिशब्दात्-बीजपूरकादीनि यान्यपक्वानि फलानि तेषा मध्य पक्वानि प्रक्षिप्यन्ते। तेषां गन्धेन प्राक्तनान्यामकानि पच्यन्ते। तत्र यदपक्वं फल तद्गन्धपर्यायामम्। तथा-'जं च' त्ति। चशब्दस्य प्रमरभिन्नत्वाद्यत्पुनर्वृक्षस्योपरि शाखाया वर्त्तमान काले वसन्तादिलक्षणे पाकसमये प्राप्तेऽपि परिपक्वं प्रवरफलेषु न पच्यते तद्वृक्षपर्यायाऽऽमम्। व्याख्यातं चतुर्विधमपि पर्यायाऽऽमम्। तद्व्याख्याने च समर्थित द्रव्याऽऽमम्।

अथवा भावाऽऽमस्य रूप निरूपयति—

भावाऽऽम पि य दुविहं, वयणाऽऽमं चेव णो य वयणाऽऽमं ।
वयणाऽऽमं अणुमयत्थं, आमं ति हि जो वदे वक्कं ॥३७॥
नो वयणाऽऽमं दुविहं, आगमतो चेव नोआगमतो ।
आगमओऽणुवउत्तो, नोआगमओ-इम होइ ॥ ३८ ॥

भावाममपि द्विविधम्-वचनाम चैव, नोवचनामम। वचनरूपमाम वचनामम्, अनुमतार्थं आममिति। यद्वाक्यं वचन तद्वचनामम्। यथा कोऽपि साधुर्गुरुणा प्रेषितः गच्छन्नपरेण पृष्ट-आर्य! किं गुरुणा प्रेषितो गम्यते? स प्रत्याह-आमम्; एवमेतदित्यर्थः। नोवचनाम द्विविधम्-आगमतश्चैव नोआगमतश्च। तत्राऽऽगमत आमपदार्थज्ञानयुक्तः तत्र चोपयुक्तः उपयोगस्य भावरूपत्वात् ज्ञानस्य चागमरूपत्वात्। नोआगमतो-भावाममपीदं भवति।

तदेवाह—

उग्गमदोसाईया, भावतो अस्संजमो य आमविही ।

अन्नो वि य आएसो, जो वग्घिसरयं न पूरेइ ॥ ३६ ॥

उद्गमदोषा.-आधाकर्मादय. आदिग्रहणाद्-उत्पादनादोषा, एषणादोषाइच, तद् आमम् प्रतिपत्तव्यम् । तथा चाचाराङ्गसूत्रम्- ' सव्वाऽऽमगंध परिन्नाय, निरामगंधो परिव्वए " (सूत्र-८७+) ( आचा० १ श्रु० २ अ० ५ उ० । ) असयमश्च पृथिव्याद्युपमर्दलक्षणो भावत आमविधिर्वा आमव्यचरित्राऽपध्वनाकारणात् । यद्वाऽन्योऽपि आदेशः-प्रकारो भण्यते-यो वर्षशतायु पुरुष आयुष्कोपक्रमेण वर्षशतमपूरयित्वा म्रियते सोऽपि भावत आम ; आयुषः परिपाकमन्तरेण मरणात् । अत्र च द्रव्याणामधिकारसूत्रे ऽपि वृक्षपर्यायाऽऽमेण शेषाणामुच्चारितसदृशतया विनेयव्युत्पादनार्थं प्रसङ्गत प्ररूपितत्वात् । व्याख्यातमामपदम् । वृ० १ उ० २ प्रक० । नि० चू० । अपरिशुद्धे, आचा० । " सव्वाऽऽमगंध परिण्णाय " ( सूत्र-८७ × ) । आमम्-अपरिशुद्धम् । आचा० १ श्रु० २ अ० ५ उ० । " णिरामगंधे धिइमं ठिअप्पा " ( सूत्र-५ + ) । निर्गत -अपगत आम.-अविशोधिकोटयाख्यस्तथा गन्धो-विशोधिकोटिरूपा, यस्मात्स भवति निरामगन्ध ; मूलोत्तरगुणभेदभिन्नां चारित्रक्रियां कृतवानित्यर्थः । सूत्र० १ श्रु० ६ अ० । अम-करणे घञ् । रोगमात्रे, वैद्यकोक्ते पड्विधे अजीर्णे, रोगभेदे. वाच० । अजीर्णरोगभेदे च । तल्लक्षणम्-' आमे तु द्रवगन्धित्वम् " ( ध० ) । व्याख्या द्रवस्य गुरुस्य क्वथितनकादेरिव गन्धो यस्यामस्ति तत्तथा तद्भावस्तत्त्वमिति । ध० १ अधि० १० श्लोकटी० ।

आमइ ( न् )-आमयिन्-पुं० । आमयो-रोग' स येषां विद्यते ते आमयिन. । रोगिणि व्य० ।

नाउं तिविहामयाणं. देइ लहाओ सह गणं तु ॥२५८॥

त्रिविधवातादिजन्यरोगयोगतस्त्रिप्रकारा आमया-रोगाः स येषां ते आमयिन त्रिविधाश्च ते आमयितश्च तेषां त्रिविधामयिनाम् । व्य० १ उ० ।

आमंतण-आमन्त्रण-न० । आ मन्त्र ल्युट् । अभिनन्दने, संबोधने, कामचारानुज्ञारूपे, क्रियाभेदेषु प्रवर्तनव्यापारे च । व्यापारे च । युच् । आमन्त्रणाप्यत्र । स्त्री० । वाच० । प्रच्छने, आचा० । ' अणामं ति या परिठ्ठवेति " ( सूत्र-५३ + ) । अनापृच्छ्य प्रमादितया परिष्ठापयेत् । आचा० २ श्रु० १ चू० १ अ० १ उ० । " समणामंतणखमणे " ॥ १६० × ॥ आचार्येण स्वगणस्य-स्वगच्छस्याऽऽमन्त्रणं प्रच्छनं कर्त्तव्यम् । व्य० १ उ० । ( स्त्रीपुरुषयोर्यन्नव्यावक्तव्यामन्त्रणवचनानि ' भासा ' शब्दे षष्ठे भागे ' नहेव काणं काण " त्ति (१२) इत्यादि दशवैकालिक ७ सप्तमाध्ययनस्थगाथाभिर्दर्श्यते ) । " करेमि भंते ! सामाइयं " ( ध० ) ' भंते ' इति गुरोरामन्त्रणम् । ( ध० ) आमन्त्रणं च प्रत्यक्षस्य गुरो , तदभाव परोक्षस्याऽपि बुद्धया प्रत्यक्षीकृतस्य भवति; गुरोश्चाभिमुखीकरणेन सर्वो धर्म. गुरुपादमूले तदभावे स्थापनासमक्षं कृत फलवानिति । ध० २ अधि० ७ श्लोक । ( ' भदंत ' शब्दे षष्ठे भागे विस्तरम् )

आमंतणी-आमन्त्रणी-स्त्री० । असत्यामृषाभाषाभेदे, संथा० ७ गाथाटी० आमन्त्रणी-हे ३ देवदत्त इत्यादिरूपा । एष हि प्राणुक्तभाषात्रयविलक्षणत्वान्न सत्या, न मृषा, नापि सत्यामृषा. केवलव्यवहारमात्रप्रवृत्तिहेतुरित्यसत्यामृषा एव, भावना कार्या । ध० ३ अधि० ४३ श्लोकटी० । दश० । विभक्तिभेदे च । " अट्ठमाऽऽमंतणीभवे " ॥ २ ॥ ( सूत्र-१२६ + ) । अष्टमी संबुद्धिः-आमन्त्रणी भवेत्, आमन्त्रणार्थे विधीयत इत्यर्थ. । अनु० । स्था० ।

आमंतणी भवे अट्ठ-मी य जह हे ३ जुवाण ! त्ति ॥६॥ ( सूत्र-६०६ + )

अष्टम्यामन्त्रणी भवेदिति । सु-औ-जसिति प्रथमापीयं विभक्तिरामन्त्रणलक्षणस्यार्थस्य कर्मकरणादिवत् । लिङ्गार्थमात्रातिरिक्तस्य प्रतिपादकत्वेनाष्टम्युक्ता , यथा हे ३ युवन् इति । स्था० ८ ठा० ३ उ० । इदं चानुयोगद्वारानुसारेण व्याख्यातम् , आदर्शेषु तु आमन्त्रणानि दृश्यन्ते। स्था० ८ ठा० ३ उ० । " आमंतणी भवे अट्ठ-मी उ जहा हे ३ जुवाण त्ति " ( सूत्र-१२६ + ) । आमन्त्रणी भवेदष्टमी, यथा-हे ३ युवन्निति वृद्धवैयाकरणदर्शनेन चेयमष्टमी गण्यते, पदंयुगीनाना त्वसौ प्रथमैवेति मन्तव्यमिति । अनु० । ' असत्यामृषा-आमन्त्रण्याज्ञापनादिका । आचा० २ श्रु० १ चू० ४ अ० १ उ० १३४ सूत्रटी । ( ' भासा ' शब्दे पञ्चमभागे दशवैकालिकस्य सप्तमाऽध्ययनद्वितीयोद्देशक " आमंतणि० " २७६ इत्यादिगाथया बहुविस्तरं कथयिष्यामि )

आमंतित्ता-आमन्त्र्य-अव्य० । आ मन्त्र—ल्यप् । सम्बोध्येत्यर्थे. वाच० ।

अज्जो ! त्ति समणे भगवं महावीरे गोतमादी समणे णिग्गथे आमंतेत्ता एवं वयासी-किंभया पाणा ? समणाऽऽउसो ! ( सूत्र-१६६ + )

' अज्जो ' इत्यादि, सुगमम् । केवलम् ' अज्जो त्ति ' त्ति-आरात्-पापकर्मभ्यो याता आर्याः तदामन्त्रणम्-हे३ आर्या! ' इति ' एवमभिलापेनाऽऽमन्त्र्येति संबन्ध', श्रमणो भगवान् महावीर. गौतमादीन् श्रमणान् निर्ग्रन्थानेवम्-वक्ष्यमाणन्यायेनाऽवादीदिति, कस्माद् भयं येषां ते किंभया , कुतो बिभ्यतीत्यर्थ , प्राणा -प्राणिन ' समणाऽऽउसो ' त्ति-हे ३ श्रमणा हे ३ आयुष्मन्त' इति गौतमादीनामेवाऽऽमन्त्रणमिति । स्था० ३ ठा० २ उ० ।

आमंतिय-आमन्त्रित-त्रि० । आ—मन्त्र क्त । अभ्यावश्यके कर्मणि नियोजिते, वाच० । " पुमं आमंतेमाणे आमंतिए वा अपडिसुणमाणे णो एवं वंदेज्जा " ( सूत्र-१३५ + ) । आचा० २ श्रु० १ चू० ४ अ० ३ उ० । वाच० । परिभाषितायां सम्बोधनार्थे प्रथमायां विभक्तौ, न० । "साम-न्त्रितम्" पाणिनि । सम्बोधने या प्रथमा साऽऽमन्त्रितसंज्ञा स्यात् । सि० कौ० । " आमन्त्रितं पूर्व्वमविद्यमानवत् " मामन्त्रिते समानाधिकरणे सामान्यवचनम् पा० । निमन्त्रिते, त्रि० । " प्रातरामन्त्रितान् विप्रान् " वाच० ।

आमन्त्र्य-अव्य०। आ-मन्त्र-ल्यप् । सम्बोध्येत्यर्थे, वाच० ।

"आमंतिय उस्सविया, भिक्खु आयसा निमंतति" ॥ ५५ ॥

स्त्रियो हि स्वभावेनैवाऽकर्त्तव्यप्रवणाः, साधुमामन्त्र्य-यथाऽहममुकस्यां वेलायां भवदन्तिकमागमिष्यामीत्येव संकेतं ग्राहयित्वा (सूत्र०) भर्तारम् आमन्त्र्य-आपृच्छ्य अहमिहाऽऽयाता । सूत्र० १ श्रु० ४ अ० १ उ० ।

आमंतेमाण-आमन्त्रयत्-त्रि० । आपृच्छति, आचा० । " पुमं आमंतेमाणे आमंतिते वा " (सूत्र-१३५+)। आचा०२ श्रु० १ चू० ४ अ० ३ उ० ।

आमंद-आमन्द्र-पुं० । ईषन्मन्द्र । प्रा० स० । ईषद्गम्भीरशब्दे, "आमन्द्रमन्थध्वनिदत्ततालम्" भट्टि । तद्युक्ते. त्रि० । वाच० । सर्वत्र लवरामचन्द्र ॥ ८।२।७६॥ इति रलुक् । प्रा० ।

आमग-आमक-त्रि० । अपक्वे, भ० १५ श० १ उ० ५५५ सूत्रटी० । " आमगमल्लगभूया " ( सूत्र-७१+ ) । आमकमल्लकभूता-अपक्वशरावकल्पा जलसंपर्के क्षणेन विलयनात् । सूत्र० १ श्रु० ६ अ० । अशस्त्रोपहते च । दश० । "आमग विविह बीय " ॥ १० × ॥ आमकम्-अशस्त्रोपहतम् । दश० ८ अ० २ उ० । आचा० । "फले बीए य आमए" ॥७+॥ आमकं-सचित्तम् । दश० ३ अ० ।

आमगंध आमगन्ध-न० । आमं च गन्धश्च आमगन्धम् । समाहारद्वन्द्व । अविशुद्धकोट्यन्तर्गतेषु आधाकर्मादिषु आचा० । "सव्वाऽऽमगंधं परिण्णाय णिरामगंधो परिव्वए" ( सूत्र-८७+ ) । सर्वञ्च तदामगन्धञ्च सर्वाऽऽमगन्धं, सर्वशब्द. प्रकारकात्स्न्र्येऽत्र गृह्यते; न द्रव्यकात्स्न्र्ये, आमम्-अपरिशुद्ध, गन्धग्रहणेन तु पूतिर्गृह्यते । ननु च पूतिद्रव्यस्याप्यशुद्धत्वादामशब्देनैवोपादानात्किमर्थं भेदेनोपादानमिति ?, सत्यम् , अशुद्धसामान्याद् गृह्यते किं तु पूतिग्रहणेनेह आधाकर्माद्यविशुद्धकोटिरुपात्ता , तस्याश्च गुरुतरत्वात्प्राधान्यख्यापनार्थं पुनरुपादान, ततश्चायमर्थ·-गन्धग्रहणेन-आत्मकर्म १ औद्देशिकत्रिकं २ पूतिकर्म्म३ मिश्रजातं ४ बादरप्राभृतिका ५ अध्यवपूरक ६ श्चेते षड्दुगमदोषा अविशुद्धकोट्यन्तर्गता गृहीता , शेषास्त्वयो विशुद्धकोट्यन्तर्भूता आमग्रहणेनोपात्ता द्रष्टव्या इति. सर्वशब्दस्य च प्रकारकार्त्स्न्याभिधायकत्वाद्येन केनचित्प्रकारेण आमम्-अपरिशुद्ध पूतिर्वा भवति तत्सर्वं ज्ञपरिज्ञया ज्ञात्वा प्रत्याख्यानपरिज्ञया निरामगन्धः निर्गतावामगन्धौ यस्मात् स तथा परिव्रजेत्-मोक्षमार्गे ज्ञानदर्शनचारित्राख्ये परि -समन्ताद् गच्छेत् ; संयमानुष्ठानं सम्यगनुपालयेदिति यावत् । आचा० १ श्रु० २ अ० ५ उ० ।

आमगोरस-आमगोरस-पु० । आमं च तद् गोरसं च आमगोरसम् । कच्चदुग्धदधितक्रादिके, ध० २ अधि० ३४ श्लोकटी० ।

आमज्जण आमार्जन-न० । सकृत् कर्दमादिशोधने, आचा० । 'णो आमज्जेज्ज वा" (सूत्र-२६+) । नैव सकृदामृज्यान्नाऽपि पुन पुन प्रमृज्यात् , कर्दमादि शोधयेदित्यर्थ । आचा० २ श्रु० १ चू० १ अ० ५ उ० । " आमज्जेज्ज वा पमज्जेज्ज वा आमज्जंत वा पमज्जंतं वा साइज्जइ " ( सूत्र-१६ + ) । नि० चू० १७ उ० । " आमज्जावेज्ज वा पमज्जावेज्ज वा आमज्जावंतं वा पमज्जावंतं वा साइज्जइ " ( सूत्र-२२ × ) नि० चू० १७ उ० । ( अनयो सूत्रांशयो व्याख्या ' अण्ण-मण्णकिरिया ' शब्दे प्रथमभागे ४८० पृष्ठे गता )

जे भिक्खू अप्पणो अच्छिणी आमज्जेज्ज वा पमज्जेज्ज वा आमज्जंतं वा पमज्जंतं वा साइज्जइ ॥ ६० ॥

" अच्छीणि वा आमज्जति णाम अच्छिपत्तगेमे संठवेति पुणो पुणो करेंतस्स पमज्जणा । अहवा-बीयकणगादीणं सकृत् अवणयणे आमज्जणा पुणो २ पमज्जणा । नि० चू० ३ उ० । मृदुगोमयादिना लिम्पने च । व्य० ४ उ० २७ गाथाटी० ।

आमज्जंत-आमज्जमाण-आमार्जयत्-त्रि० । सकृत् हस्तादिना शोधयति, नि०चू० । " आमज्जंत वा पमज्जंतं वा साइज्जइ " (सूत्र-६०×) । नि० चू० ३ उ० । " आमज्जमाणे वा" ( सूत्र ३६ × ) । आमार्जयत्-सकृत् हस्तादिना शोधयन् । आचा० २ श्रु० १ चू० १ अ० ७ उ० ।

आमडाग-आमडाग-न० । अर्द्धपक्के, अपक्के च । अरणिकतण्डुलीयकादिके, आचा० । " सेज्ज पुण जाणेज्जा आमडागं वा " ( सूत्र-४६ × ) । ' आमडागं वा ' इति-आमपत्रम्-अरणिकतण्डुलीयकादि तच्चार्द्धपक्वम् , अपक्वं वा । आचा० २ श्रु० १ चू० १ अ० ८ उ० ।

आमतर-आपतर-त्रि० । अतिशयेन प्रापके, रा० । " मणामतराए चेव ' ( सूत्र- + ) । द्रष्टीणा मनांसि आप्नुवन्ति-आत्मवशतां नयन्तीति मनआपास्तत प्रकर्षविवक्षायां तरप्प्रत्यय प्राकृतत्वाच्च पकारस्य मकारे मणामतरा इति भवति । रा० ।

आममल्लगरूव-आममल्लकरूप-त्रि० । अपक्वशरावतुल्ये , तं० । ' आममल्लगरूवे, निव्वेयं वच्चह सरीरे " ॥ ३२ ॥ ११६ (आदित गाथाङ्क ) ॥ (सूत्र-१८ +) । अपक्वशरावतुल्ये शरीरे निर्वेदं वैराग्यं व्रजत । तं० ।

आममहुर-आममधुर-न० । आममिव मधुरमाममधुरम् । ईषन्मधुरे फले, " आमे णामं एगे आममहुरे " ( सूत्र-२५३ + ) । स्था० ४ ठा० १ उ० ।

आमय-आमय-पुं० । आम-रोग यात्यनेन करणे घञर्थे क । वा । मीञ् हिंसायाम् । करणे अच् वा । रोगे, अनामयः निरामय. । " समौ हि शिष्टैराम्नातौ, वर्त्स्यन्तावामय स च ' माघ । वाच० । व्य० १ उ० २७८ गाथाटी० ।

आमयकरणी-आमयकरणी-स्त्री० । विद्याभेदे, सूत्र० २ श्रु० २ अ० ३० सूत्रटी० ।

आमयभाव-आमयभाव-पुं० । रोगोत्पत्तौ, दश० । " निरामयाऽऽमयभावा " ॥ २०६ × ॥ निरामयामयभावाश्च निरामयस्य-नीरोगस्याऽऽमयभावाद्रोगोत्पत्ते उपलक्षण चैतत्साऽऽमयनिरामयभावस्य तथा चैव चकार उपलभ्यन्ते-पूर्वं निरामयोऽहमासं, सम्प्रति साऽऽमयो जात । दश० ४ अ० ।

आमयि-आमयिन्-त्रि० । रोगिणि, व्य० । " गाउं तिविहामयीणि " ॥ २५८ + ॥ आमया त्रिविधा-वातादिजन्य-

रोगयोगतस्त्रिप्रकारा आमयो—रोग स येषा विद्यते, ते आमयिनः । व्य० १ उ० । " नाउ निविहामइणं " ॥१२३×॥ आमइणं ' नि-आमती-रोगत्तो, आमती जस्स अत्थि सो आमती मणुस्सो भण्णति । नि० चू० २० उ० ।

आमरकुंड- आमरकुण्ड—न० । तैलङ्गजनपदस्थे स्वनामख्याते नगरे, ती० । ' आमरकुण्डनगरे, तैलङ्गजनपदविभूषणे रुचिरे ॥ गिरिशिखरभुवनमध्य-स्थिता जयति पद्मामनी देवी ॥ १ ॥ " ती० ४३ कल्प । ( अस्मिन् विषये बहुवृत्तम् पउमिणी ' शब्दे पञ्चमभागे वक्ष्यते )

आमरणंत-आमरणान्त—अव्य० । मृत्युलक्षणावसान यावदित्यर्थे, पञ्चा० । " आमरणंतमजस्स, संज-परिपालणं विहिणा" ॥ ४६ ॥ आमरणान्तम् मृत्युलक्षणावसान यावद् । पञ्चा० ७ विव० । " एअस्स पायमूलं, आमरणंतं न मोत्तव्वं" ॥१३५७॥ एतस्य-गुरो पादमूल-समीपमामरणान्तं न मोक्तव्यं—सर्वकालम् । प० व० ।

आमरणंतदोस-आमरणान्तदोष—पु० मरणमेवान्तो मरणान्त आमरणान्तात्-आमरणान्तमसंजाताऽनुतापस्य कालसौकरिकादेरिव या हिंसादिप्रवृत्ति सेव दोष आमरणान्तदोष । रौद्रध्यानस्य लक्षणभेदे, भ० । " आमरणंतदोसे " ( सूत्र-८०३+ ) । भ० २५ श० ७ उ० । स्था० । ग० । औ० । " नानाविहाऽऽमरणदोसा ॥२६×॥ " महत्यापद्गतोऽपि स्वतः महदापद्गतेऽपि च परे आमरणादसंजाताऽनुताप कालसौकरिकवत् , अपि तु-असमाप्तानुतापानुशयपर इत्यामरणदोष इति । आव० १ अ० । आमरणन्तदोसो जधा पञ्चनराई, परिगिलायमाणस्स वि आगतपच्छादेसस्स थोवो वि पच्छाणुताओ न भवति, अवि मरणकालेऽवि जस्स कालसोयारयस्सेव ण ताओ उवरतो भवति, एस आमरणन्तदोसो । आ० चू० १ अ० १२८४ गाथाचूर्णि ।

आमरिस-आमर्श—पु० । आ-मृश । स्पर्शे, घञ् । सम्यक् स्पर्शे, ल्युट् । आमर्शनमप्यत्र । न० । वाच० ।

आमर्ष-पुं० । आमर्षणमामर्ष । संस्पर्शने, विशे० ७७६ गाथाटी० । आ० म० । र्श-र्ष-तप्त-वज्रे वा ॥ ८ । २ । १०५ ॥ इति हैमप्राकृतसूत्रेण र्श-र्षयो सयुक्तस्यान्त्यव्यञ्जनात्पूर्व इकारो वा । प्रा० । आ-मृष घञ् । कोपे, असहने, सम्यग् विवेके च । वाच० ।

आमलईकीडा -आमलकीक्रीडा—स्त्री० । क्रीडाभेदे, तथा च भगवतो महावीरस्य वर्णकमधिकृत्य-समानवयोभि कुमारै सह क्रीडा कुर्वाण आमलकीक्रीडानिमित्तं पुराद् बहिर्जगाम, तत्र च कुमारा वृक्षारोहणादिप्रकारेण क्रीडन्ति स्म । कल्प० १ अधि० ४ क्षण । ( आमलकीक्रीडाकरणसमये देवलोके शक्रकृतभगवत्प्रशंसां श्रुत्वा कश्चित् मिथ्यादृष्टिदेव भगवद्भापनार्थमिहागत इति ' वीर शब्दे षष्ठ भागे १०४ पृष्ठ विस्तरेण वक्ष्यते )

आमलकप्पा—आमलकल्पा—स्त्री० । स्वनामख्यातायां नगर्याम् विशे० । ' आमलकप्पा णयरी, मित्तसिरी कूरपिंडदाई " ॥२३३४॥ आमलकल्पाया नगर्यां गत तत्र च मित्रश्रीनाम्ना श्रावकेण कूरपिण्डदानादिना—कूरसित्थादिदानेन प्रतिबोधित इत्यर्थ । विशे० । आ० क० । आ० चू० । आ० म० । आव० । उत्त० । ग० । " इहेव जंबूदीवे दीवे भारहे वासे आमलकप्पानामं नयरी होत्था"। (सूत्र-१४८+)। ज्ञा०२ श्रु० १ अ० ।

आमल—आमल—पुं० । बहुबीजके वृक्षभेदे, " आमलपाणगं वा २०, " (सूत्र-४३×)। आचा०२ श्रु० १ चू० १ अ० ७ उ०।

आमलग—आमरक—पुं० । सामस्त्येन मार्याम् , स्था० १० ठा० । (सूत्र-७५५×) तदर्थप्रतिबद्धे कर्मविपाकदशाया नवमेऽध्ययने च । न० । स्था० ।

तद्वक्तव्यता यथा—

सहसुद्दाहे आमलए ( सूत्र-७५५+ )

'आमलए त्ति-रथुनेत्यर्थस्तिरित्यामरक., सामस्त्येन मारि', एवमर्थप्रतिबद्धं नवमं, तत्र किल सुप्रतिष्ठे नगरे सिंहसेनो राजा श्यामाभिधानदेव्यामनुरक्तस्तद्वचनादेकोनानि पञ्चशतानि देवीनां ता मिमारयिषूणि ज्ञात्वा कुपित सन् तन्मातृणामेकोनपञ्चशतान्युपनिमन्त्र्य महत्यगारे आवासं दत्त्वा भक्तादिभिः सम्पूज्य विश्रब्धानि सदेवीकानि सपरिवाराणि सर्वतो द्वारबन्धनपूर्वकमग्निप्रदानेन दग्धवानसौ राजा मृत्वा च षष्ठ्यां गत्वा रोहीतके नगरे दत्तसार्थवाहस्य दुहिता देवदत्ताभिधानाऽभवत् , सा च पुष्यनन्दिना राज्ञा परिणीता, स च मातुर्भक्तिपरतया तत्कृत्यानि कुर्वन्नासामास तया च भोगविघ्नकारिणीति तन्मातुर्ज्वलल्लोहदण्डस्यापानप्रक्षेपात्सहसा दाहेन वधो व्यधायि । राज्ञा चासौ विविधाभिर्विडम्बनाभिर्विडम्ब्य विनाशितेति विपाकश्रुते देवदत्ताभिधानं नवममिति ६ । स्था० १० ठा० ३ उ० ।

आमलक—त्रि० । आ-मल्-क्विन् । स्त्रीत्वे गौरा० ङीष् । बहुबीजके वृक्षभेदे, जी० १ प्रति० २० सूत्र० । प्रज्ञा० । ल० प्र० । आचा० । स्था० । " तत्थ णं आमलगा पक्खित्ता " ( सूत्र-१४३ × ) । अनु० । ( धात्रीवृक्षे ) । वाच० । धात्रीफले च । न० । " आमलगाई दगाहरणं च " ( गाथासूत्र १० × ) । आमलकानि—धात्रीफलानि । सूत्र० १ श्रु० ४ अ० २ उ० ।

आमलगमहुर—आमलकमधुर—त्रि० । आमलकमिव मधुरं यदन्यत् आमलकमेव वा मधुरमामलकमधुरम् । ईषन्मधुरं स्था० ४ ठा० ३ उ २३० सूत्रटी० ।

आमलगमहुरफलसमाण—आमलकमधुरफलसमान—पुं० । ईषदुपशमादिगुणलक्षणमाधुर्यवति पुरुषभेदे, स्था० ४ ठा० ३ उ० २३० सूत्रटी० ।

आमलगरस—आमलकरस—पुं० । धात्रीफलरसे, " शिशिरं चामलकरसः " सूत्र० १ श्रु० ८ अ० १३ गाथाटी० ।

आमलगरसिय—आमलकरसित—त्रि० । आमलकरससमृष्टे, विपा० । ' आमलगरसियाणि य " ( सूत्र-२६ + ) । आमलकरससमृष्टानीति । विपा० १ श्रु० ८ अ० ।

आमाऽभिभूय—आमाऽभिभूत—त्रि० । अपक्वरसेनाभिभूते, विपा० । ' आमाभिभूयगत्ता " ( सूत्र-+ ) । आमेन-अपक्वरसेन । विपा० ।

आमिस-आमिष-न० । आमिषति स्नेहम् । अम-टिषच्-दीर्घश्च वा-मांसे स्नेहातिरेकात्तस्य तथात्वम् । वाच० । "ढंकेहि य कंकेहि य, आमिसत्थेहि ते दुही ॥ ३ ॥" ढङ्कै ढङ्कैश्च पक्षिविशेषैरन्यैश्च मांसवशार्थिभिर्मत्स्यबन्धादिभिः । सूत्र० १ श्रु० १ अ० ३ उ० । आहारे, "इत्तो चिय फुल्ला-ऽऽमिस" ॥ २६+॥ पञ्चा० ६ विव० । मांसादिके, स्था० ४ ठा० ४ उ० ३८५ सूत्रटी० । आ० । अशनादिके च भोग्यवस्तुनि, ध० २ अधि० ६१ श्लोकटी० । "जं इच्छसि घेत्तुं जे पुव्विं तं आमिसेण गिण्हाहि । आमिसपासनिबद्धो, काहिइ कज्जं अकज्जं वा ॥ १ ॥" सूत्र० १ श्रु० ४ अ० १ उ० ४ गाथाटी० । उत्कोचे, सुन्दर-रूपादौ, लोभे, लोभनीय विषये च । वाच० । अभिष्वङ्गहेतौ, धनधान्यादिके च । उत्त० । "अकिंचणा उज्जुकडा निरा-मिसा ॥४१+॥" निष्क्रान्ता आमिषात्-विषयादिपदार्थात् इति निरामिषा-विषयादय पदार्था हि विषया जीवानां गृद्धिहेतुत्वादामिषोपमाः, एतस्मादहं निर्विषया सती । उत्त० १४ अ० ।

सामिसं कुललं दिस्स, वज्झमाणं निरामिसं ।

आमिसं सव्वमुज्झित्ता, विहरिस्सामो निरामिसा॥४७॥

हे राजन् अहं सर्वम् आमिषम्-अभिष्वङ्गहेतु धनधान्या-दिकम् उज्झित्वा-त्यक्त्वा निरामिषा-त्यक्तसङ्गा सती अ-प्रतिबद्धविहारतया विहरिष्यामि, किं कृत्वा साऽऽमिषम् (आमिषेण-पिशितरूपेण)। उत्त० पाई०। आमिषम्-अभि-ष्वङ्गहेतु धनधान्यादि । उत्त०पाई० १४ अ० ४७ गाथाटी० । आमिषसहितं कुललं-गृद्धम् अपरे पक्षिणं वा परैरिति अन्यैर्बध्यमानं-पीड्यमानं दृष्ट्वा सामिषं पक्षी हि आ-मिषाहारिपक्षिभिः पीड्यते । अथ वा-साऽऽमिषम्-सस्पृहं, भोजनार्थं लुब्धं, कुललं-पक्षिणं परैर्बध्यमानं-पीड्यमानं दृष्ट्वा यतो हि पक्षिणो यदा गृह्यन्ते तदा तान् भक्ष्यं दर्श-यित्वा पाशादिना बध्यन्ते, आमिषाहारी शकुनिस्तु आ-मिषदर्शनेनैव लोभयित्वा मीनवत् बध्यते सह आमिषेण-आमिषरसास्वादलोभेन वर्तते इति साऽऽमिषस्तं साऽऽमि-षम् । उत्त० १४ अ० । पर्णे जम्बीरफले च । वाच० । पूजायां निवेदनीयेऽक्षतादौ च । दर्श० । 'पुप्फाऽऽमिसथुइभेआ ॥३७४॥ पुष्पाऽऽमिषस्तुतिभेदात् त्रिधा पूजा । आमिषम्-चाऽखण्डाऽक्षतनारङ्गनालिकेरबीजपूरकफलविमलगालितज-लदधिघृताऽनेकविधिनैवेद्यस्वभावम् । दर्श० १ तत्त्व । ' एत्तो चिय फुल्लामिस-थुइपडिवत्तिपूयमज्झमि ॥२६४॥" इत एव सपूर्णाऽऽज्ञाकरणस्य भावसाधुसाध्यत्वादेव, 'फुल्लामिसथुइ पडिवत्तिपूयमज्झमि ' त्ति—पुष्पाणि—जात्यादिकुसुमानि, उपलक्षणत्वाद्वस्त्ररत्नादीनामिहैवान्तर्भावो वेदितव्य आ-मिषम्-आहार, इहाऽपि तथैव फलादिसकलनैवेद्यपरि-ग्रहो दृश्य । पञ्चा० ६ विव० ।

आमिसत्थि (न्) -आमिषार्थिन् -त्रि० । आमिषम्-मांसा-दिकम् अर्थयते -प्रार्थयते । मांसादिप्रार्थयितरि, आ० १ श्रु० ४ अ० ४' सूत्रटी० ।

आमिसप्पिय-आमिषप्रिय-त्रि० । कङ्कपक्षिणि, मांसाभि-लाषिणि च । वाच० । वल्लभमांसादिके, आ० १ श्रु० ४ अ० ४१ सूत्रटी० ।

आमिसलोल-आमिषलोल-त्रि० । आमिषलम्पटे, आ० १ श्रु० ४ अ० ४१ सूत्रटी० ।

आमिसाऽऽवत्त-आमिषाऽऽवर्त-पुं० । आमिषं-मांसादि तद-र्थमावर्तः शकुनिकादीनामामिषावर्तः । आवर्तभेदे, स्था० ४ ठा० ४ उ० ३८४ सूत्रटी० ।

आमिसाऽऽहार-आमिषाऽऽहार-त्रि० । मांसादिभोजिनि आ० १ श्रु० ४ अ० ४१ सूत्रटी० ।

आमुट्ठ-आमृष्ट-त्रि० । आ-मृष-क्त । आधर्षिते, आमर्दिते च । "आमृष्टास्तिलकरुच स्रजो निरस्ता" माघ । आ-मृज-क्त । परिमार्जिते, विशोधिते च । आ-मृश-क्त । संस्पृष्टे च । वाच० । विपर्यासीकृते च । ओघ० । "हेट्ठा-रिया आम(मु)ट्ठं ' ( २६७ + भाष्यगा० ) । अधस्तादुपरि च यत् ' आमुट्ठं ' विपर्यासीकृतं भुङ्क्ते. ओघ० । ' क्तेनाऽप्- ॥ ८ । १ । १२६ ॥ क्तेन अत्वम् । आमृष्टम् । आमट्ठं । प्रा० ।

आमुम्हिय-आमुष्मिक-त्रि० । अमुष्मिन्-परलोके भवः ठक् सप्तम्या अलुक् टिलोपः । वाच० । अमुत्र भवं आमु-ष्मिकं । द्वितीयेऽतीचारभेदे, परलोकमस्यस्थिति स्वर्ग-सुखादौ, ध० ३ अधि० १४८ श्लोक । परभवविपाकप्रद-र्शके ठा० । ' महानामुष्मिकोऽपि च ॥ १७ ॥ " आमु-ष्मिकोऽपि-परभवे विपाकप्रदर्शकोऽपि । द्वा० ७ द्वा० । "शास्त्रमासन्नभव्यस्य, मानमामुष्मिके विधौ" ॥ २० + ॥ आमुष्मिके विधौ-पारलौकिके कर्मणि । शास्त्रं मानम् । धर्माऽधर्मयोरतीन्द्रियत्वेन तदुपायत्वयोरपि प्रमाणान्तरा-सामर्थ्यात् । द्वा० १४ द्वा० ।

आमुसंत-आमृशत्-त्रि० । सकृदीषद् वा स्पृशति, दश० ४ अ० १९ सूत्रटी० । ' सुयं मे आउसंतेणं '( सूत्र-१ × ) । आमृशता—भगवत्पादारविन्द करयुगलादिना स्पृशता । आचा० १ श्रु० १ अ० १ उ० । स्था० ।

आमुसमाण-आमृशत् -त्रि० । ईषत् स्पृशति, भ० । "आ-मुसमाणे वा संमुसमाणे वा ' ( सूत्र-३२४ + ) । आमृ-शन ईषत्स्पृशन्नित्यर्थः । भ० ८ श० ३ उ० ।

आमूल-आमूल-न० । अभिव्याप्त्या कारणे, यो० । "आ-मूलमिदं परमं सर्वस्य हि योगमार्गस्य ' ॥ १६ ॥ आमू-लम्-अभिव्याप्त्या कारणम् । यो० १३ विव० ।

आमेड्ढ (गा) घर-आमेष्टकागृह-न० । अपक्वेष्टकागृहे, व्य० । "तालयकाणिट्ठघर, पक्केऽट्टाऽऽमेयणिडकार्थ " ॥४४४+॥ आमा-अपक्कास्ताभिरिष्टकाभिः कृतं गृहम्-आमेष्टकागृहम् । व्य० ४ उ० । गृहस्य घरोऽपत्नौ ॥८।२।१४४॥ इति घर । प्रा० ।

आमेल ( आवेड )-आपीड-पुं० । आ-पीड-अच् । शेख-रके प्रा० १ श्रु० १६ अ० १२४ सूत्रटी० । "पर्यायेणा-पीडबिभीतककीदृशादृशे " ॥ ८ । १ । १०४ ॥ इति हैमप्रा-कृतसूत्रेणैकार्यत्यम् । प्रा० । " नीपापीडे मो वा " ॥ ८ । १ । २३४ ॥ इति हैमप्राकृतसूत्रेण पस्य वा मः ।

आमेलो । प्रा० । ' डो ल " ॥ ८ । १ । २०२ ॥ इति हैमप्राकृतसूत्रेण स्वरात्परस्यासंयुक्तस्यानादेर्डस्य प्रायो ल । आमेलो । आवेडो । प्रा० । शिखामाल्ये शिरोभूषणे, वाच० । " वणमालाऽऽमेलमउलकुंडलसच्छंदविउव्विया-भरणचारुभूसणधरा ' ( सूत्र-४७ × ) । ' आमेल ' त्ति-आपीडशब्दस्य प्राकृतलक्षणवशात आपीड -शेखरक । प्रज्ञा० २ पद । जी० । " आविद्धतिलयामेलाए " ( सूत्र- × ) । आविद्धस्तिलक आमेलश्च शेखरको यकाभिस्ता आविद्धतिलकाऽऽमेलास्तासाम् । रा० ।

आमेलग-आपीडक-पुं० । शेखरके, भ० । ' णीलुप्पलकयामेलएहि ' ( सूत्र-३८० × ) । ' आमेल ' त्ति-आपीड शेखर. । भ० ८ श० ३३ उ० ज्ञा० । ' आमेलगओ " ( सूत्र-१२६ + ) । आमेलक -आपीड , शेखरक इत्यर्थ., जी० ३ प्रति० १ उ० । " आमेलग ' ( सूत्र-२४ × ) । आपीड -शेखर एव स्तनप्रस्तावाचञ्चुकस्तत्प्रधानौ आमेलकौ वा परस्परमीपत्सम्बद्धौ । ज्ञा० १ श्रु० १ अ० । गृहबहिर्निस्सृतकाष्ठे च आपीडकमात्रे, त्रि० । वाच० ।

आमेलक-त्रि० । परस्परमीषत्सम्बद्धे, ज्ञा० १ श्रु० १ अ० २४ सूत्रटी० ।

आमोडक-पुं० । पुष्पोन्मिश्रे वालबन्धविशेषे, आमोडक -पुष्पोन्मिश्रो वालबन्धविशेष । उत्त० ३ अ० १५२ गाथाटी० ।

आमोक्ख-आमोक्ष-पुं० । आमुच्यतेऽस्मिन्नित्यामोक्षण वा-आमोक्ष । परित्यागे, आचा० १ श्रु० १ अ० १ उ० ७ गाथा । अशेषकर्मक्षये, सूत्र० । " आमोक्खाए परिव्वएज्जा " ( सूत्र-२१ × ) । आमोक्षाय-अशेषकर्मक्षयप्राप्ति यावत् । सूत्र० १ श्रु० ३ अ० ३ उ० । अशेषकर्मक्षयसाधके आचारे, आचा० । तथा चाचारैकार्थिकानधिकृत्य-आमोक्षस्य निक्षेपो नामादिस्तत्र व्यतिरिक्तो निगडादे भावामोक्ष कर्माष्टकोद्वेष्टनमशेषमेतत् साधकश्चायमेवाचार इति । आचा० १ श्रु० १ अ० १ उ० ७ गाथाटी० । ( अस्यैकार्थिकानि ' आयारंग ' शब्दे ऽस्मिन्नेव भागे ऽग्र द्रष्टव्यानि )

आमोग-आमोक-पुं० । आ-मुच-घञ्-परिधाने, ल्युट् आमोचनमप्यत्र । न० । वाच० । कचवरपुञ्जे न० । " आमोयाणि वा ( सूत्र-१६६+ ) आमोकानि-कचवरपुञ्जा । आचा० १ श्रु० ७ अ० २ उ० ।

आमोडग ( लय )-आमोडक-न० । आतोद्यभेदे, "मुच्छिज्जंताण आमोडगाणं" आ० चू० १ अ० ।

आमोस-आमर्श-पुं० । आमर्शनमामर्श । परामर्शे ज्ञा० १ श्रु० ८ अ० ७६ सूत्रटी० । संस्पर्शे प्रश्न० १ संव० द्वार २७ सूत्र० । प्रव० । ग० ।

आमर्ष-पुं० । आमर्षणमामर्ष । संस्पर्शे विशे० ७७६ गाथाटी० । आ० म० । अप्रमृज्य करेण स्पर्शने, जाग्रतोऽनिचारभेदे च । आव० । ' आमोसे ससरक्खामोसे " अविधिनैव शामर्षणमामर्ष , अप्रमृज्य करेण स्पर्शनमित्यर्थ । तस्मिन् सरजस्कामर्षे सति सह पृथिव्यादिरजसा यद्वस्तु स्पृष्टं तत्सस्पर्श इत्यर्थ , आव० ४ अ० ।

आमोष-आमुष्णाति-आ-मुष-पचाद्यच् । सम्यगपहारके चौरादौ, आमुष्-भावे घञ् । अपहरणे, वाच० ।

आमोसग-आमोषक-पुं० । आमुष्णातीत्यामोषक । चौरे, स्था० ५ ठा०२उ० ४१७ सूत्रटी० । " आमोसगा संपिंडिया गच्छेज्जा " (सूत्र-१३०×) । आमोषका.-स्तेना । आचा० २ श्रु०१ चू०३ अ०३ उ० । "तत्थ खलु विहरंसि यहवे आमोसगा वत्थपडियाए संपिंडिया गच्छेज्जा " ( सूत्र-१५१× ) । आमोषका -चौरा । आचा० २ श्रु० १ चू० ५ अ० २ उ० ।

आमोसहि-आमर्शौं(र्शौ,)प(षि)धि-पुं० । आमर्शो हि-हस्तादिना स्पर्श औषधिर्यस्य स आमर्शौषधि. । ग० २ अधि० ७१ गाथाटी० । प्रव० । आमर्षणमामर्ष -संस्पर्शनमित्यर्थ. । स एवौषधिर्यस्यासावामर्षौषधि करादिसस्पर्शमात्रादेव व्याध्यपनयनसमर्थ , लब्धिलब्धिमतोरभेदोपचारात्साधुरेवामर्षौषधिरित्यर्थ । विशे० ७७६ गाथाटी० । आ० म० । लब्धिभेदे, पा० १ सूत्र । औ० । यत्प्रभावात्स्वहस्तपादाद्यवयवपरामर्शमात्रेणैवात्मन , परस्य वा सर्वेऽपि रोगा प्रणश्यन्ति स आमर्शौषधि । प्रव० २७० द्वार १५०६ गाथा । आमोसहिणाम रोगाभिभूत अत्ताणं परं वा जवे त्ति तिगिच्छामि त्ति सचिंतेऊण आमुसति तं तक्खणा चेव ववगयरोगातंकं करेति त्ति । सा य आमोसहिलद्धी । सरीरेगदेसे वा सव्वसरीरे वा समुपज्जति त्ति एवमेसा आमोसहि त्ति भण्णति । आ० चू० १ अ० ।

आमोसहिपत्त-आमर्शौ ( र्षौ ) षधिप्राप्त-त्रि० । आमर्श — संस्पर्श . स एवौषधि —सर्वरोगापहारित्वात् तपश्चरणप्रभावो लब्धिविशेषस्तां प्राप्ता ये ते तथा । आमर्शौ ( र्षो ) षधिलब्धिविशेषप्राप्ते, प्रश्न० । "आमोसहिपत्तेहिं" ( सूत्र--२२× ) प्रश्न० १ सव० द्वार ।

आय-आय-पुं० । आगच्छतीत्याय । द्रव्यादेर्लाभे, सूत्र० १ श्रु० १० अ० १० गाथाटी० । उत्त० । आ० म० । ज्ञा० । आतु० । प्रव० । दश० । विशे० । धनागमे, वाच० । " आयस्स हेउं पगरेइ संगं ' ॥ १६ + ॥ आयस्स-लाभस्य हेतो -कारणात् । सूत्र० १ श्रु० ६ अ० । ( आय दृष्ट्वा कार्य कुर्यादिति । ( ' गच्छमारणा ' शब्दे तृतीयभागे वक्ष्यते ) आय -प्राप्तिर्लाभ इत्यनर्थान्तरम् । अनु० १५४ सूत्रटी० । नि० चू० । ' गच्छपरिरक्खणट्ठा, अणागतं आउवायकुसलेणं " ॥ ८६४ ×॥ आया-नाम पार्श्वस्थादे. पार्श्वेभ्यि-प्रत्यूहसयमपालनादिको लाभ । वृ० ३ उ० । 'दानादिक च लाभोचितमेव कार्यम् " ' लाहोचियदाणे, लाहोचियभोगे, लाहोचियपरिवारे, लाहेचियनिहिकरे सिआ" सूत्र-२+) । ( अस्य सूत्रांशस्य व्याख्या ' धम्म ' शब्दे चतुर्थभागे ६५२ पृष्ठे वक्ष्यते ) उक्त चात्र लौकिकै -" पादमायान्निधिं कुर्या-त्पादं वित्ताय वर्द्धयेत् । धर्मोपभोगयो' पादं, पादं भर्तव्यपोषणे ' ॥ १ ॥ तथाऽन्यैरप्युक्तम्-' आयादर्द्धं नियुञ्जीत, धर्मे यद्वाऽधिकं ततः । शेषेण शेषं कुर्वीत, यत्नतस्तुच्छमैहिकम् ॥ १ ॥ " इत्यादि । ध० सू० । आ-

गच्छतीत्यायो--द्रव्यादेर्लाभस्तन्निमित्तापादितेऽष्टप्रकारक-कर्मलाभे च । " आय न कुज्जा इह जीविअट्ठी " ॥ ११+ ॥ आगच्छतीत्यायो-द्रव्यादेर्लाभ तन्निमित्तापादितोऽष्टप्रकारकर्मलाभ तमिहास्मिन् संसारे असंयमजीवितार्थी, भोगप्रधानजीवितार्थीत्यर्थ । यदि वा-आजीविकाभयात् द्रव्यसंचयं न कुर्यात् । सूत्र० १ श्रु० १० अ० । आयम्-कर्माश्रवलक्षणं न कुर्य्याद् । सूत्र० १ श्रु० १० अ० ३ गाथाटी० । उपादाने, हेतौ च । विशे० १२२६ गाथाटी० । आयो-लाभ । प्राप्तिर्ज्ञानादीनामस्मादित्यायः । विशे० ९६१ गाथाटी० । ओघनिष्पन्ननिक्षेपेण सामान्यत. अङ्गाध्ययनोद्देशकादिके श्रुतौ अनु० १५४ सूत्रटी० ।

तथा च—

नाणस्स दंसणस्स वि, चरणस्स य जेण आगमो होइ ।
सो होइ भावणाउ, आओ लाहो त्ति एगऽट्ठा ॥ ३२ ॥

ज्ञानस्य-मत्यादे , दर्शनस्य-चोपशमिकादे , चरणस्य च-सामायिकादेर्येन हेतुभूतेनागमो भवति-प्राप्तिर्भवति स भवति भावाऽऽय , आयो-लाभ इति निर्दिष्ट । अध्ययनेन च हेतुभूतेन ज्ञानाद्यागमो भवतीति गाथार्थ । दश०१ अ० ।

ओघनिष्पन्ननिक्षेपमधिकृत्य—

ओहो जं सामण्णं. सुयाऽभिहाणं चउव्विहं तं च ।
अज्झयणं अज्झीणं, आयज्झयणा य पत्तेयं ॥९५८॥

इह यच्छ्रुतस्य-जिनवचनरूपस्य सामान्यमङ्गाध्ययनोद्देशकादिक नाम तद् ओघ उच्यते, सामान्य शास्त्रनामेत्यर्थ । विशे० ।

अथाऽऽयनिक्षेपं कर्तुमाह—

से किं तं आए ?, आए चउव्विहे पण्णत्ते, तं जहा-नामाऽऽए १, ठवणाऽऽए २, दव्वाऽऽए ३, भावाऽऽए ४, नामठवणाओ पुव्वं भणिआओ ।

'आये'त्यादि आय -प्राप्तिलाभ-इत्यनर्थान्तरम् , अस्यापि नामादिभेदभिन्नस्य विचार सूत्रसिद्ध एव यावत् ।

से किं तं दव्वाऽऽए ?, दव्वाऽऽए दुविहे पण्णत्ते, तं जहा-आगमओ अ, नो आगमओ अ । से किं त आगमओ दव्वाऽऽए ? आगमओ दव्वाऽऽए जस्स ण आयत्ति-पदं सिक्खित ठितं जित मित परिजितं०जाव कम्हा ?, अणुवओगो दव्वमिति कट्टु, नेगमस्स ण जावइआ अणुवउत्ता आगमतो तावइआ ते दव्वाऽऽया, ०जाव सेत्त आगमओ दव्वाए । से किं तं नोआगमओ दव्वाए?, नोआगमओ दव्वाए तिविहे पण्णत्ते, तं जहा-जाणगसरीरदव्वाए, भविअसरीरदव्वाए, जाणगसरीरभविअसरीरवइरित्ते दव्वाए । से किं तं जाणगसरीरदव्वाए ? जाणगसरीरदव्वाए आयपयत्थाहिगारजाणयस्स जं सरीरयं ववगयचुअचाविअचत्तदेहं जहा दव्वज्झयणेः ०जाव से तं जाणगसरीरदव्वाए । से किं तं भविअसरीरदव्वाए ? भविअसरीरदव्वाए जे जीवे जोणीजम्मणणिक्खंते जहा दव्वज्झयणे०जाव सेत्तं भविअसरीरदव्वाए । से किं त जाणगसरीरभविअसरीरवइरित्ते दव्वाए ? जाणगसरीरभवियसरीरवइरित्ते दव्वाए तिविहे पण्णत्ते, तं जहा-लोइए१, कुप्पावयणिए२, लोगुत्तरिए ३ । से किं तं लोइए ? लोइए तिविहे पण्णत्ते. तं जहा-सचित्ते, अचित्ते, मीसए अ । से किं तं सचित्ते ?, सचित्ते तिविहे पण्णत्ते । तं जहा-दुपयाणं, चउप्पयाणं, अपयाणं । दुपयाणं दासाणं, दासीणं । चउप्पयाणं-आसाणं, हत्थीणं । अपयाणं-अंबाणं, अंबाडगाणं, आए. से तं सचित्ते । से किं तं अचित्ते ? अचित्ते अणेगविहे पण्णत्ते, तं जहा-सुवण्णरययमणिमोत्ति-असंखसिलप्पवालरयणाणं आए से तं अचित्ते । से किं तं मीसए ?, मीसए अणेगविहे पण्णत्ते, तं जहा-दासाणं, दासीणं, आसाणं, हत्थीणं, समाभरिआउज्जालंकिआणं आए । से तं मीसए । से तं लोइए ॥ से किं तं कुप्पावयणिए ?, कुप्पावयणिए तिविहे पण्णत्ते, तं जहा-सचित्ते, अचित्ते, मीसए अ । तिण्णि वि जहा लोइए०जाव से तं मीसए । से तं कुप्पावयणिए ॥ से किं तं लोगुत्तरिए ?, लोगुत्तरिए तिविहे पण्णत्ते. तं जहा-सचित्ते, अचित्ते, मीसए अ । से किं तं सचित्ते ?, सचित्ते दुविहे पण्णत्ते, तं जहा-सीसाणं, सिस्सणिआणं । सेतं सचित्ते । से किं तं अचित्ते ?, अचित्ते अणेगविहे पण्णत्ते, तं जहा-पडिग्गहाणं, वत्थाणं, कंबलाणं, पायपुच्छणाणं आए । सेत्त अचित्ते । से किं तं मीसए ?, मीसए तिविहे पण्णत्ते, तं जहा-सिस्साणं, सिस्सणिआणं, सभंडोवगरणाणं आए । सेत्तं मीसए । सेत्तं लोगुत्तरिए ॥ सेत्तं जाणगसरीरभविअसरीरवइरित्ते दव्वाए । से तं नो आगमओ दव्वाए । सेत्तं दव्वाए ।

' से किं तं अचित्ते ? ' ' सुवण्ण ' त्यादि-लौकिकोऽचित्तस्य सुवर्णादेरायो मन्तव्य , तत्र सुवर्णादीनि प्रतीतानि 'सिल' त्ति-शिला । मुक्ताशिलराजपट्टादीना रक्तरत्नानि रत्नानि-पद्मरागरत्नानि ' संतसावएज्जस्स ' त्ति-सद्-विद्यमान स्वापतेय द्रव्यं तस्याऽऽय , 'समाभरियाउज्जालंकियाण' ति-आभरितानां सुवर्णमेखलिकादिभूषितानामातोद्य -झल्लरीप्रमुखैरलङ्कृतानाम् ।

से किं तं भावाऽऽए ?, भावाऽऽए दुविहे पण्णत्ते, तं जहा-आगमओ अ, नो आगमओ अ । से किं तं आगमओ भावाऽऽए ?, आगमओ भावाऽऽए जाणए उवउत्ते, सेत्तं आगमओ भावाए । से किं तं नोआगमओ भावाए ?, नो आगमओ भावाए दुविहे पण्णत्ते, तं जहा-पसत्थे अ,

अपसत्थे अ । से किं तं पसत्थे ?, पसत्थे तिविहे पराणत्ते, तं जहा–णाणाऽऽए, दंसणाऽऽए, चरित्ताऽऽए, सेत्तं पसत्थे । से किं तं अपसत्थे?, अपसत्थे चउव्विहे पराणत्ते, तं जहा–कोहाए, माणाए, मायाए, लोभाए । से तं अप्पसत्थे । से तं णो आगमओ भावाए । सेत्तं भावाए । सेत्तं आए । (सूत्र–२५४+) अनु० ।

ज्योतिषोक्ते लग्नावधिके, गण्यदधिके च एकादशस्थाने, लग्नावधिकैकादशस्थानस्याऽऽयस्य च ' तत्स्थाने आयस्य चिन्तनीयत्वात् । धनिनागारपालके च । कर्माणि अप् घञ् वा । ग्रामादिक स्वामिग्राह्यभागे, लभ्ये धनादौ, " तदस्मिन् वृद्ध्यायलाभशुल्कोपदादीयते " पा० । ग्रामेषु स्वामिग्राह्यो भाग आय । सि० कौ० । वाच० । कूष्माण्ड भेदे, प्रश्ना० । ' आए काए, कुहणे " ॥ ४०+ ॥ ( सूत्र–२३× ) प्रश्ना० १ पद । आ त्रा० । ( अत्र विस्तर ' कुहण ' शब्दे तृतीयभागे वक्ष्यते ) ।

आज–त्रि० । आज्यतेऽनेन । आ अज घञर्थे क । घृते, ज–टा० । अजस्येदम् अण् । छागमांसादौ त्रि० । अलंकृतं कुमारं कुशलीकृताशिरस्समहतेन वाससा संवीतमैणेयेन वा आजिनेन ब्राह्मणं, रौरवेण क्षत्रियम्, आजेन वैश्यम् । आश्व० गृ० । " नव्यमाज्यं तथा चौष्ट्र–माविकं माहिषं च यत् । अश्वायाश्चैव नार्याश्च, करेणूनां च यत्पय " ॥ २ ॥ सुश्रुत । अज भावे घञ् । न वीभाव । विक्षेपे, आजानय । वाच० ।

आयइ ( ई )–आयति ( ती )–स्त्री० । आ य–ति । वा ङीप् । आगामिकाले, ' आयइ जणगो " ॥ ८८+ ॥ पञ्चा० १६ विव० । सू० । व्य० । ' से तत्थ मुच्छिए बाले आयइ नाऽवबुज्झइ" ॥ १ ॥ दश० ? चू० । तत्र तेषु भोगेषु मूर्च्छि–तो–गृद्धो बाल आयतिम्–आगामिकाल नाऽवबुद्ध्यते–न सम्यगवगच्छति । दश० १ चू० । आगामिकालविषया–ना महत्यामास्थायाम्, व्य० । जुवराजमि उ ठविए, एया–ओ वड्ढंति आयति तस्स " ॥२६६+॥ आयतिम् आगामि–कालविषया महतीमास्थां वर्द्धन्ति । व्य० ४ उ० । सन्ततौ, सू० । राजसुन्दरीक्षामधिकृत्य– आयती इङ्गितनपूया य ' ॥८३+॥ आयतिश्च–सन्ततिरनीचामेतेन अविच्छिन्ना भ–विष्यतीति । सू० ३ उ० । प्रभावे, कोषदण्डजे तेजसि, फलदत्तकाल च । आयति–स्त्री० । आ यम क्तिन् । स्नेह दीर्घत्वे सामर्थ्ये सीम्नि शयने प्रभावे, आगतौ च उपाये च अनाय्या च ततूकलतम् " । शा० मा० । वाच० ।

आयइजणग–आयतिजनक–त्रि० । आयतौ–आगामिकाले शुभाद फलं जनयति–करोति योऽसावायतिजनक । आ–गामिकालेऽभीष्टफलदायके, पञ्चा० । ' आयइजणगो ॥८८×॥ पञ्चा० १६ विव० ।

आयइत्ता–आदाय–अव्य० । गृहीत्वेत्यर्थे, सूत्र० १ श्रु० १२ अ० ६ गाथाटी० ।

आयइफल–आयतिफल–न० । आयतौ–आगामिनि काले फलमस्यत्यायतिफलम् । परभवफले, पञ्चा० । 'आय–तिफलमद्दुवसा–हणं च निउणं मुणेयव्वं ॥४२×॥ " आयतौ–आगामिकाले, परभवे इत्यर्थ । फल साध्यमस्येत्यायति–फलम् । पाठान्तरेण–आयतफलं–मोक्षफलम् । पञ्चा० १२ विव० ।

आयइविराहग–आयतिविराधक–त्रि० । परलोकपीडाकरे, पं० सू० । ' आयइविराहगं समारंभं न चिंतिज्जा " (सूत्र–२+) ॥ अ यतिविराधक–परपीडाकरं समारम्भम्–अङ्गा–रकर्मादिरूपं तथा न चिन्तयेद् । पं० सू० ।

आयइसंपगासण–आयतिसम्प्रकाशन–न० । चतुर्थे सामभेदे, स्था० । चतुर्थं सामभेदमधिकृत्य–" आयत्याः सम्प्रकाश–नम् " अस्मिन्नेवङ्कृते इदमावयोर्भविष्यतीत्याशायोजनम्–आयतिसम्प्रकाशनम् । स्था० ३ ठा० ३ उ० १८५ सूत्रटी० ।

आयगुल–आत्माङ्गुल–न० । आत्मनोऽङ्गुलमात्माङ्गुलम् । आ–त्माऽङ्गुलप्रमाणभेदे, प्रव० । ( ' अङ्गुल ' शब्दे प्रथमभागे स–त्वमुक्तम् )

जं पुण आयंगुलमे–रिसेण तं भासिअं विहिणा ॥१४०७॥

यत्पुनरात्माऽङ्गुल पूर्वमुद्दिष्ट तदीदृशेन–वक्ष्यमाणस्वरूपेण विधिना प्रकारेण भाषितं–प्रतिपादितं तीर्थकृद्गणधरैः ।

तमेव विधिमाह–

जे जम्मि जुगे पुरिसा, अट्ठसयंगुलमूसिआ हुंति ।
तेसिं जं जं निअमं–गुलमायंगुलमेत्थ तं होइ ॥१४०८॥

ये पुरुषाश्चक्रवर्तिवासुदेवादयो यस्मिन् युगे सुषमसुष–मादिकाले निजाऽङ्गुलेनैवाऽष्टोत्तर शतमङ्गुलानामुच्छ्रिता – उच्चा भवन्ति तेषा च स्वकीयाऽङ्गुलेनाऽष्टोत्तराऽङ्गुलशतो–च्चाना पुरुषाणां यन्निजम्–आत्मीयमङ्गुलं तत्पुनरात्माऽ–ङ्गुल भवति । इह च ये यस्मिन् काले प्रमाणयुक्ता पुरुषा भवन्ति, तेषां सम्बन्धी आत्मा गृह्यते । तत आत्मनो–ऽङ्गुलमात्माऽङ्गुलम् । इदं च पुरुषाणां कालादिभेदेनानव–स्थितमानत्वादनियतप्रमाणं द्रष्टव्यम् ।

जे पुण एयपमाणा, ऊणा अहिगा य तेसिमेयं तु ।
आयङ्गुलं न भन्नइ, किं तु तदाभासमेव त्ति ॥१४०९॥

ये पुन –पुरुषा एतस्मात्–अष्टोत्तराऽङ्गुलशतलक्षणात्प्रमाणात् न्यूना समधिका वा तेषां सम्बन्धि यदङ्गुलमेतदात्माऽङ्गुल न भण्यते, किं तु–तदाभासमेव–आत्माङ्गुलाभासमेव; पर–मार्थेत आत्माङ्गुलं तन्न भवतीत्यर्थ । लक्षणशास्त्रोक्तस्व–रादिशेषलक्षणवैकल्यसहायं च यथोक्तप्रमाणाद्धीनाधिक–मिह प्रतिपद्य न केवलमिति संभाव्यते, भरतचक्रवर्त्या–दीना स्वाऽङ्गुलेनो विंशत्यधिकाऽङ्गुलशतप्रमाणानामप्यत्र निर्णीतत्वान्महावीरादिना च कपाचिन्मतेन चतुरशीत्या–द्यङ्गुलप्रमाणत्वादिति । प्रव० २५४ द्वार ।

आत्माङ्गुल सूच्यङ्गुलादिभेदात् त्रिविधम्–

से किं तं आयंगुले ?, आयंगुले (अनु० सूत्र–१३४+) तिविहे पण्णत्ते, तं जहा सूइअंगुले १, पयरंगुले २, घणं–गुले ३, (सूत्र–१३४×) अनु० ।

( आत्माङ्गुलेन षडङ्गुलानि पाद इत्यादि । ये यदा मनुष्या भवन्ति तेषां तदा आत्माङ्गुलेन स्वकीयस्वकीयकाल–

संभवीत्ययटहद्दादीनि मीयन्ते इत्यादि सर्वम् 'अङ्गुल' शब्दे प्रथमभागे प्रतिपादितम् । ) ( सूच्यङ्गुलादिप्रदेशानामल्प-बहुत्वचिन्ताऽपि 'अंगुल' शब्दे प्रथमभागे गता )

**आयंत-आचान्त**-त्रि० । आ-चम-क्त । आचमनकर्त्तरि, आचान्त. पुनराचामेत् । काशी० । कृतमाचमन यस्य तादृशे जलादौ च । वाच० । गृहीताचमने, रा० । भ० । शौचार्थे कृतजलस्पर्शे, नि० १ श्रु० ३ वर्ग ३ अ० । औ० । "आयंते चोक्खे परमसुइभूये" ( सूत्र-+ ) । 'आयंत' इति-नवानामपि श्रोतसां शुद्धोदकप्रक्षालनेनाचान्ता गृहीताऽऽचमन । रा० । आचान्तौ-शुद्धोदकेन कृताऽऽचमनौ । कल्प० १ अधि० ५ क्षण १०५ सूत्रटी० । ज्ञा० । भ० ।

**आयंबिल-आचामाम्ल**-न० । ल० प्र०१०२ गाथा । आचाम - अवश्रावणम् , अम्लं चतुर्थो रस., त एव प्रायेण व्यञ्जनं यत्र भोजन ओदनकुल्माषसक्तुप्रभृतिके, तदाचामाम्लम् । समयभाषयौदनकुल्माषसक्तुप्रभृतिके, ध० २ अधि० ६३ श्लोक ।

**आयामाऽम्ल**-न० । आयामम्-अवश्रावणम् , अवश्रावणम्-काञ्जिकम् । सू० १ उ० । ( अत्रार्थे 'अवस्सावण' शब्द प्रथमभागस्थो द्रष्टव्य· ) ( आयाम -अवशायनम् । ) आव० ६ अ० १६०२ गाथाटी ) अम्लच-सौवीरक त एव प्रायेण व्यञ्जने यत्र भोजने ओदनकुल्माषसक्तुप्रभृतिके, तदायामाम्लम् । समयभाषयौदनकुल्माषसक्तुप्रभृती, पञ्चा० ५ विव० ७ गाथाटी० । अवस्यामे, (ते, आचा० २ श्रु० १ चू० १ अ० ७ उ० ४१ सूत्रटी० ) ग० २ अधि० ७८ गाथाटी० । ( आचाम्लभेदादि 'आयंबिलपच्चक्खाण' शब्देऽनुपदमेव वक्ष्यते ) तद्गत प्रत्याख्यानभेदं च । पञ्चा० ५ विव० ७ गाथाटी० । ( तद्वक्तव्यता आयंबिलपच्चक्खाण 'शब्देऽनुपदमेव वक्ष्यते )

**आयंबिलपच्चक्खाण-आचा (या) माम्लप्रत्याख्यान**-न० । प्रत्याख्यानभेदे, ध० ।

अत्र सूत्रम्—

आयंबिलं पच्चक्खाइ अन्नत्थणाभोगेणं, सहसागारेणं, लेवालेवेणं उक्खित्तविवेगेणं गिहत्थसंसट्ठेणं पारिट्ठावणियागारेणं, महत्तरागारेणं, सव्वसमाहिवत्तियागारेणं, वोसिरइ । आव० ६ अ० ।

आचाम-अवश्रावणम् , अम्ल चतुर्थो रस त एव प्रायेण व्यञ्जने यत्र भोजने ओदनकुल्माषसक्तुप्रभृतिके तदाचामाम्लम् समयभाषयोच्यते, तत्प्रत्याख्याति, आचामाम्ल-प्रत्याख्यान करोतीत्यर्थ । आद्यावन्त्याश्च त्रय आकारा पूर्ववत् , (लेवालेवेणं) लेपो-भोजनभाजनस्य विकृत्या तीमनादिना वा आचामाम्लप्रत्याख्यायातुरकल्पनीयेन लिप्तता, अलेपो-विकृत्यादिना लिप्तपूर्वस्य भोजनभाजनस्यैव हस्तादिना संलेखनतोऽलिप्तता, लेपश्चाऽलेपश्च लेपालेपम् , तस्मादन्यत्र, भाजने विकृत्याद्यवयवसद्भावेऽपि न भङ्ग इ-त्यर्थ । 'उक्खित्तविवेगेण' शुष्कौदनादिभक्ते पतितपूर्वस्याचामाम्लप्रत्याख्यानयतामयोग्यस्याद्रवविकृत्यादिद्रव्य-स्योत्क्षिप्तस्योद्धृतस्य विवेको निःशेषतया त्याग उत्क्षिप्त-विवेक । उत्क्षिप्य त्याग इत्यर्थ , तस्मादन्यत्र, भोक्तव्यद्रव्यस्य अभोक्तव्यद्रव्यस्पर्शेनाऽपि न भङ्ग इति भाव यत्तूत्क्षेप्तुं न शक्यं तस्य भोजने भङ्ग 'गिहत्थसंसट्ठेण' गृहस्थस्य—भक्तदायकस्य संबन्धि करोटिकादिभाजनं विकृत्यादिद्रव्येणोपलिप्त गृहस्थसंसृष्ट ततोऽन्यत्र, विकृत्यादिसंसृष्टभाजनेन हि दीयमानं भक्तमकल्पद्रव्यावयवमिश्रं भवति, न च तद्भुञ्जानस्याऽपि भङ्ग , यद्यकल्पद्रव्यरसो बहुल आयते । 'वोसिरइ' इति-आचामाम्लं चतुर्विधाहारं च व्युत्सृजति । ध० २ अधि० ७८ श्लोक । "अट्ठेवाऽऽयबिलम्मि आगारा ॥६४॥" अष्टैव, न न्यूनाधिका । आयाम -अवश्रावणम् , अम्ल च-सौवीरक, त एव प्रायेण व्यञ्जने यत्र भोजने ओदनकुल्माषसक्तुप्रभृतिके तदायामाम्ल समयभाषयोच्यते , एतद्रूप प्रत्याख्यानमपि तदेवेत्यतस्तस्मिन्नायामाम्ले आयामाम्लस्य चाऽऽकारा भवन्ति ।

ते चैवम् । पञ्चा० ५ विव० । सूत्रम्—

आयंबिलं पच्चक्खाइ अन्नत्थणाभोगेणं सहसाकारेणं लेवालेवेणं उक्खित्तविवेगेणं गिहत्थसंसट्ठेणं परिट्ठावणियागारेणं महत्तरागारेणं सव्वसमाहिवत्तियागारेणं वोसिरइ । आव० ६ अ० १६०५ गाथा ।

व्याख्यान सर्वं प्राग्वत् , नवरम् । आयामाम्ल प्रत्याख्याति-तदेव मया भोक्तव्यमिति प्रतिजानीते । लेपो भोजनभाजनस्य विकृत्या तीमदिना वा आयामाम्लप्रत्याख्यातुरकल्पनीयेन लिप्तता, स चालेपश्च विकृत्यादिना लिप्तपूर्वस्य भोजनभाजनस्यैव हस्तादिना संलेखनतो निर्लेपतेति लेपालेप तस्मादन्यत्र भाजने विकृत्याद्यवयवसद्भावेऽपि न भङ्ग इत्यर्थ , तथा उत्क्षिप्तस्य शुष्कौदनादिभक्ते निक्षिप्तपूर्वस्यायामाम्लप्रत्याख्यानवतामयोग्यस्याद्रवविकृत्यादिद्रव्यस्य विवेको निःशेषतया पृथक्करणम्-उद्धरणमुत्क्षिप्तविवेकस्तस्मादन्यत्र प्रत्याख्यान भोक्तव्यद्रव्यस्याकल्पनीयद्रव्येण संस्पर्शेऽपि न भङ्ग इति भाव । तथा गृहस्थस्य भक्तदायकस्य सम्बन्धि संसृष्ट-विकृत्यादिद्रव्येणोपलिप्त यत्करोटिकादिभाजन तद्गृहस्थसंसृष्टं ततोऽन्यत्र विकृत्यादिसंसृष्ट भाजनेन हि दीयमानं भक्तमकल्पद्रव्यावयवमिश्र भवति न च तत् भुञ्जानस्याऽपि भङ्ग इति भाव । 'वोसिरइ'त्ति—अनायामाम्ल व्युत्सृजतीति । पञ्चा० ५ विव० ६ गाथाटी० ।

अधुना तदुपन्यस्तमेव चाऽऽचामाम्लऽमुच्यते—

गुणं नाम तिविहं, ओअण १ कुम्मास २ सत्तुआ ३ चेव । इक्किक पि अ तिविहं, जहन्नयं १ मज्झिमुक्कोस ॥१६०३॥

आयामाम्लमिति गौण नाम, आयाम -अव( श्रावनम् ) श्रावणम् आम्लं-चतुर्थरस ताभ्या निर्वृत्तम् आयामाम्लम् , इद चोपाधिभेदात्त्रिविधं भवति । ओदन कुल्मापा , सक्तवश्चैव । ओदनमधिकृत्य कुल्मापान्सक्तूंश्चेति एकैकमपि चामीषां त्रिविधं भवति । जघन्यम् , मध्यमम् , उत्कृष्टं चेति ।

कथमित्याह—

दव्वे १ रसे २ गुणे वा ३, जहन्नयं १ मज्झिमं च २ उक्कोसं ३ ।
तस्सेव य पाउग्गं, छलणा पंचेव य कुडंगा ॥ १६०४ ॥

द्रव्ये रसे गुणे चैव-द्रव्यमधिकृत्य १, रसमधिकृत्य २ गुणं चाधिकृत्येत्यर्थः ३ । किं ? जघन्यक १, मध्यमं २, चोत्कृष्टं चेति ३ तस्यैवायामाम्लस्य प्रायोग्यं वक्तव्य, तथा आयामाम्लं प्रत्याख्यातमिति दध्ना भुञ्जानस्य दोष प्राणातिपातप्रत्याख्याने तदनासेवनवदिति, छलना वक्तव्या, पञ्चैव कुडङ्गा-वक्रविशेषा इति ।

तद्यथा—

लोए १ वेये २ समये ३, अन्नाणे ४ खलु तहेव गलन्ने ५ ।
एए पंच कुडंगा, नायव्वा अंबिलम्मि भवे ॥ १६०५ ॥

लोके वेदे समये अज्ञाने खलु तथैव ग्लानत्वे लोकमङ्गीकृत्य कुडङ्गा एव वेदान् समयान् अज्ञानं ग्लानत्वं च एते पञ्च कुडङ्गा ज्ञातव्या आयामाम्ले भवन्ति, आयामाम्लविषये । इति गाथात्रयसमासार्थः ॥ ५७ ॥ विस्तरार्थस्तु वृद्धसंप्रदायसमधिगम्य ।

सचाऽयम्—

' एत्थ आयंबिलं च भवति आयंबिलपाउग्गं च, तत्थोदणे आयंबिलं च आयंबिलपाउग्गं च आयंबिला सकूरा, जाणियव्वा कूरविहाणाणि आयंबिलपाउग्गं, तंदुलकणियाउ कुडगो पिट्ठं पिहुगा पिट्ठपोवलियाओ रालगा मंडगादि, कुम्मासा पुव्वं पाणिएण कड्ढिज्जंति पच्छा ओक्खलीए पीसंति, ते तिविहा-सण्हा, मज्झिमा, थूला, एए आयंबिलं आयंबिलपाउग्गाणि पुण जं तस्स तुसमीसा कणियाओ कक्कुगा य एवमादि सत्तुगा-जवाण वा गोधूमाणं वा, वीहियाणं वा, पाओग्गं पुण-गोधूमभुज्जिया पिच्चुगालाया जाव भुंजिज्जा, जे य जंतएण न तीरंति पीसिउं तस्सेव निहारो कणिगादि वा, एयाणि आयंबिलपाओग्गाणि तं तिविहं पि आयंबिलं, तिविह उक्कोसं मज्झिमं, जहन्नं । दव्वओ-कलमसालिकूरो उक्कोसो, जया जस्स पत्थं रुच्चइ वा, रालगो सामागो वा जहन्नो, सेसा मज्झिमा जो सो कलमसालीकूरो सो रसं पडुच्च तिविहो-उक्कोसो, मज्झिमो जहन्नो य । न चेव तिविधं पि आयंबिलं निज्जरागुणं पडुच्च तिविधं-उक्कोसो निज्जरागुणा, मज्झिमा, जहन्ना त्ति । कलमसालिकूरदव्वओ उक्कोसं दव्वं चउत्थं रसिएण समुद्दिसइ, रसओ वि उक्कोसं तस्स वएण वि आयामेण उक्कोसं रसओ गुणओ जहन्न थोवा निज्जर त्ति भणियं होइ, सो चेव कलमोयणो जया अंबेहि आयामेहि तया दव्वाओ उक्कोसो रसओ मज्झिमओ गुणओ वि स मज्झिमो चेव, सो चेव जया उण्होदएण तदा दव्वओ उक्कोसं, रसओ जहन्नं, गुणओ मज्झिमं चेव, जेण दव्वओ उक्कोसं, न रसओ । एगाणि जे मज्झिमा चाउलोदणा ते दव्वओ मज्झिमा, आयंबिलेण रसओ उक्कोसा, गुणओ मज्झिमा, तहेव चउण्होदएण दव्वओ मज्झ रसतो जहन्न गुणओ मज्झं मज्झिम दव्वं ति काऊण रालगकूरो दव्वओ जहन्नं आयंबिलेण रसओ उक्कोसं गुणतो मज्झं ते चेव आयामेणं दव्वओ जहन्नं रसओ मज्झं गुणओ मज्झं, ते चेव उण्होदएण दव्वओ जहन्न, रसओ जहन्न, गुणओ उक्कोस, बहु निज्जर त्ति भणियं होइ । अहवा-उक्कोसे तिन्नि विभासा उक्कोसोक्कोस, उक्कोसमज्झिमं, उक्कोसजहन्नं, कंजियआयामउण्होदएहिं जहन्ना, मज्झिमा, उक्कोसा निज्जरा । एवं तिसु विभासियव्वं छलणानाम एगेणाऽऽयंबिलं पच्चक्खायं, तेण हिंडंतेण सुद्धोदणो गहिओ, अण्णाणेण य खीरेण निमित्तं घेत्तूण आगमओ आलोएउं पजीओ, गुरूहिं भणिओ-अज्ज तुज्झ आयंबिलं पच्चक्खायं, भणइ सच्चं, तो किं भुंजसि ? जेण मे पच्चक्खायं, जहा पाणाइवाए पच्चक्खाते ण मारिज्जइ, एव आयंबिले वि पच्चक्खाते । तं न कीरइ, एसा छलणा " परिहारस्तु प्रत्याख्यानं भोजने तन्निवृत्तौ च भवति, भोजनं आयामाम्लप्रायोग्यादन्यत् तत् प्रत्याख्याति आयामाम्ले च वर्तते, तन्निवृत्तौ चतुर्विधमप्याहारं प्रत्याचक्षाणस्य तथा लोके एवमेव प्रत्याख्यानार्थः । दोसु अत्थेसु वट्टइ भोजने तन्निवृत्तौ च, तेण एसा छलणा निरत्थिया । पंच कुडंगा लोए, वेदे, समए, अन्नाणे, गिलाणे कुडंगो त्ति, एगेणाऽऽयंबिलस्स पच्चक्खायं, तेण हिंडंतेण सखडी संभाविया, अन्नं वा उक्कोस लद्धं, आयरियाण दंसेइ, भणियं-तुब्भ आयंबिलं पच्चक्खायं, सो भणइ—खमासमणा ! अम्हेहिं बहूणि लोइयाणि सत्थाणि परिमिलियाणि, तत्थ आयंबिलस्स सद्दो नऽत्थि, पढमो कुडंगो १ । अहवा-वेदेसु चउसु संगोवंगेसु नऽत्थि आयंबिलं, बितिओ कुडंगो २ । अहवा-समए चरगचीरिगभिक्खुपंडरगाणं तत्थ वि नऽत्थि, न जाणामि एस तुब्भं कओ आगओ ? तइओ कुडंगो ३ । अन्नाणेण भणइ न जाणामि खमासमणा ! केरिसयं आयंबिलं भवइ ?, अह जाणामि कुसणेहि वि जिम्मइ त्ति तेण गहियं, " मिच्छा मि दुक्कडं, " न पुणो गच्छामि, चउत्थो कुडंगो ४ । गिलाणो भणइ-न तरामि आयंबिलं काउं सूलं मे उट्ठइ अन्नं वा उद्दिसइ रोगं ताहे न तीरइ करेउं । एस पंचमो कुडंगो ५ । तस्स अट्ठ आगारा—

अण्णत्थणाभोगेणं सहस्सागारेणं लेवालेवेणं उक्खित्तविवेगेणं गिहत्थसंसट्ठेणं पारिट्ठावणियागारेणं महत्तरागारेणं सव्वसमाहिवत्तियागारेणं वोसिरति ।

अणाभोगसहसक्कारा तहेव लेवालेवो जइ भायणे पुव्वं लेवाडगगहियं च समुद्दिट्ठं संलिहियं जति तेण आणेति ण भुञ्जति, उक्खित्तविवेगो-जं आयंबिले पडति विगतिमादि उक्खिवित्ता विगिंचतु मा णवरि गलतु अन्न वा आयंबिलस्स अपाओग्गं जइ उद्धरिउं तीरइ उद्धरिए न उवहम्मइ, गिहत्थसंसट्ठे वि जदि गिहत्थो डोलियं भाणियं वा लेवाड कुसणादीहिं तेण देसि त्ति लेवाडं तं भुञ्जइ, जइ रसो आलिक्खिज्जइ बहुओ ताहे न कप्पइ, पारिट्ठावणियमहत्तरासमाहीओ तहेव । व्याख्यानमतिगम्भीरबुद्धिना भाष्यकारेणोपन्यस्तक्रममायामाम्लम् । आव० ६ अ० । तथा च—" आयंबिलमवि तिविहं ' इत्यादिगाथा १०८ आरभ्य-१०९ पर्यन्ता ' अचित्त शब्दे प्रथमभागे गता )

जं तिमियं काउं नो, सक्कइ तं तं न कप्पइ रयाइ ।
पायं हिंगुं न कप्पइ,दुकयदोसप्पसंगओ जयणा ।१०७।
दंतवणं तंबोलं, कायव्वं नेव अंबिलंमि नवे ।
जलभिन्नमणाहारं, कप्पइ सव्वं पि तत्थ ठिए ॥१०८॥
सोवीरमुसिणजलं, कप्पइ नो अण्णमेस विहिपायं ।
सोवीरं सिद्धपिट्ठं, निण्णेहं वियलमुक्किट्ठे ॥ १०९ ॥
मज्झिमे घुग्घरियाइं, हिंगुप्पमुहा पकप्पए भयणा ।
भज्जियधणाईयं, सव्वं पि पकप्पइ जहन्ने ॥ ११० ॥

काठिन्यसहितमण्डककखाखरपर्पटिकादि यतस्तिमितुम्-आर्द्रीकर्तुं न शक्यन्ते तत् आचामाम्ले अकल्प्यम् ।

दुभि चउअंगुलमाणं, नीरं जइ हवइ सिद्धभत्तुवरि ।
आयंबिलं विसुद्धं, हविज्ज तो सव्वकट्ठहरं ॥ १११ ॥
जगराजीरगजुच, ओयणमिह कप्पए जईण पुणो ।
सट्टाणं नो कप्पइ,नूयरि लट्टाइयं वि पुणो ।११२। ल०प्र०।

अत्रान्तरम्—तथा आचामाम्लमध्ये सुण्ठीमरिचादिक कल्पते तत्किं कारणेन स्वभावेन वेति ? ॥ ९ ॥ अत्र कारणं विनापि कल्पते इति ॥ ९ ॥ तथा आचामाम्लमध्ये सुण्ठी-मरिचादिकं कल्पते, पिप्पलीलवङ्गादिकं च न, तत्किं शास्त्राक्षरैः परंपरातो वेति ? ॥ १० ॥ तथा आचामाम्लमध्ये सुण्ठीमरिचादिकं कल्पते, लवङ्गपिप्पलीहरितकीप्रमुखं पुनर्न कल्पते, तत्रैतत्कारणं ज्ञायते-यल्लवङ्गेषु दुग्धं भक्तं दीयमानमस्ति, तथा हरीतकीपिप्पल्यादिकं नालिकातो-ऽपक्वं सत् शुष्कीक्रियते, यथा युगन्धरीगोधूमादि पृथुको राद्धस्स चाचामाम्लमध्ये न कल्पते, युगन्धरीगोधूमादिकं तु राद्धं सत् कल्पते इति संभाव्यते ॥ १० ॥ ही० ४ प्रका० ।

संप्रत्याचामाम्लशोध्यान् एतान् ( दोषान् )
संकलय्य गाथायुगलेनाह—

कम्मुदेसिय मीसे, धायाइ पगासणाइएसुं च ।
पुरपच्छकम्मकुच्छिय-संसत्ताऽऽलित्तकरमत्ते ॥ ३७ ॥
अइरं परित्तनिक्खि-त्तपहियसाहरियमीसियाईसु ।
अइमाणधूमकारण, विवज्जए विहियमायामं ॥ ३८ ॥

कर्मोद्देशिकं—विभागौद्देशिकम् नवमभेद , मिश्र च-यावदर्थिकमिश्राख्यो मिश्रजाताद्यभेदः कर्मोद्देशिकमिश्रं तस्मिन् धाव्यादिप्रकाशनादिषु च-धात्र्यादयश्च धात्रीदूतीनिमित्तकथनाऽऽजीवनापिण्डवनीपकत्वबादरचिकित्साकरणक्रोधमानपिण्डा द्विविधसंस्तव विद्यामन्त्रं चूर्णयोगपिण्डा प्रकाशनादयश्च प्रकाशकरणं द्विविधं द्रव्यक्रीत, द्विविध लौकिक-प्रामित्यपरिवर्त्तनं निष्प्रत्यपाय-परग्रामाऽऽहृतं पिहितोद्भिन्न-कपाटोद्भिन्ने उत्कृष्टमालाऽपहृतं सर्वमाच्छेद्यं-सर्वमनिष्टं चेति धात्र्यादिप्रकाशनादयस्तेषु पुरःकर्म -पश्चात्कर्मणो , 'कुच्छियसंसत्त ' त्ति-भीमो-भीमसेनवदिति न्यायाद्गर्हिताचित्तम्रक्षिते अगर्हितसंसक्ताचित्तम्रक्षिते, आलिप्तकरमात्रलिप्तदोष इत्यर्थः, 'अइर' परित्तोत्पन्नं परित्ताशब्दोपलक्षणत्वात् पृथिव्यप्तेजोवायुप्रत्येकवनस्पतित्र-



साऽऽख्याः षट्काया सचित्ता गृह्यन्ते । पश्चात् व्यवहित-षट्कायनिक्षिप्तपिहितसंहृतमिश्रादिषु आदिशब्दात्-षट्काया परिणतषट्कायोपरि छर्दितया 'निक्खित्त' त्ति-अकर्दमप्रदिप्ते बालवृद्धमत्तोन्मत्तव्यपनत्यरिनान्धा. नि-गडितकरचरणा छिन्नपाणिपादा. नपुंसका गुर्विणी बाल-वत्सा च भुञ्जती विलोडयन्ती भृज्जन्ती खण्डयन्ती पि-म्पन्ती दलन्ती पिंठरकादिकमपवर्त्य ददती साधारण चोरितकं वा ददती बलिं स्थापयन्ती परकीयमिदमित्यु-क्त्वा ददती सप्रत्यपाया च ददती कुलबालकमुनिमतं त्या-जयित्री मागधिका वेश्येव शाकिन्यादिश एतेभ्यो दायकेभ्यो ग्रहणे च, तथानिमानं च-प्रमाणभूताहाराधिकभोजनं धूमश्च सद्वेषभोजन कारणविपर्ययश्च निष्कारणे भोजनम् अति-मानधूमकारणविपर्ययः तस्मिन् एतेषु सर्वेषु विहितम् आचामाम्ल प्रायश्चित्तमित्यर्थः । जीत० ।

आयंबिलपाउग्ग-आचामाम्लप्रायोग्य-त्रि० । ओदनादि-सत्के कूरादौ. आव० ६ अ० । ( तानि च ' आयंबिलपच्च-क्खाण ' शब्देऽनुपदमेव गतानि )

आयंबिलवड्ढमाण-आचा(या)माम्लवर्द्धमान-न० । तपो-विशेषे औ० । " आयंबिलवड्ढमाणं तवोकम्मं पडिवन्नगा " ( सूत्र-१४ + ) । यत्र चतुर्थं कृत्वा आयामाम्लं क्रियते, पुनश्चतुर्थं, पुनर्द्वे आयामाम्ले, पुनश्चतुर्थं पुनस्त्रीणि आ-यामाम्लानि, एवं यावच्चतुर्थं शतं चाऽऽयामाम्लानां क्रियते इति, इह च शतं चतुर्थानां तथा पञ्चसहस्राणि पञ्चा-शदधिकानि ५०५०, आयामाम्लानां भवन्तीति । औ० । ( एतत्तप करणात् महासेनकृष्णा सिद्धिं प्राप्ता इति ' महासेणकण्हा ' शब्दे षष्ठे भागे दर्शयिष्यते )

तत्स्वरूप सूत्रत —

आयंबिलं करेति ०( अन्त० ) एवं एगुत्तरियाए वुड्ढीए आयंबिलाइं वड्ढंति चतुत्थंतरियाइं०जाव आयंबिलसयं करेति आयंबिलसयं करेत्ता चउत्थं करेति । अन्त० १ श्रु० ८ वर्ग १० अ० ।

आयंबिलिय-आचा(या)माम्लिक-पु० । आचामाम्ल स-मयप्रसिद्धं तेन चरतीत्याचामाम्लिक । स्था० ५ ठा० १ उ० ३९६ सूत्रटी० । आचामाम्लसहिते, " आयंबिल-मणायंबिले, आयंबिलगा, अणायंबिलगा य । अणायंबिलगा, आयंबिलगविराहिया " इति । आव० ६ अ० । आचाम्लम्-ओदनकुल्माषादि तेन चरतीत्याचाम्लिक । साधुभेदे, सूत्र० २ श्रु० २ अ० ।

आयग-आजक-न० । अजाना समूह । पुम् । छागसमूहे, वाच० । अजापदमनिष्पन्ने वस्त्रादौ, ' आयाणि वा ' ( सूत्र-१४५ × ) । क्वचिद्देशविशेषे अजा सूक्ष्मरोमवत्यो भवन्ति तत्पक्ष्मनिष्पन्नान्याजकानि भवन्ति । आचा० २ श्रु० १ चू० ५ अ० १ उ० ।

आयचरित्त-आयचरित्र-त्रि० । " आयचरित्तो " ॥ ३९ + ॥ आयभूत निरतिचारतया चारित्रं यस्य स आयचारित्रः । दृढचारित्र सथा० ३१ गाथाटी० ।

**आत्तचरित्र**–त्रि० । गृहीतचारित्रे, " आयचरित्तो करेइ सामण्णं ॥ ३६४ ॥ " आयभूतं–निरतिचारतया चारित्रं यस्य स आयचरित्रो दृढचारित्रत्वात् प्राकृतत्वात्-आत्त-चारित्रो-गृहीतचारित्रः करोति-पालयति श्रामण्य-श्रमण-भावम् । सथा० ।

**आयज्झ**-टुवेपृ-धा० । कम्पने, भ्वा० । आत्म० । सक० । सेट् । वेपते । अवेपिष्ट । ऋदित् । चङि न ह्रस्व । टित् । वेपथु । वांच० । " वेपेरायम्बाऽऽयज्झौ " ॥८।४।१४७॥ इति हैमप्राकृतसूत्रेण वेपे आयम्ब आयज्झ इत्यादेशौ वा । आयम्बइ । आयज्झइ । वेवइ । प्रा० ।

**आयट्ठ**–आयतार्थ–पुं० । आयत -अपर्यवसानान्मोक्ष एव, स चासावर्थश्चायतार्थः । मोक्षरूपेऽर्थे, । आयतो-मोक्ष अर्थः -प्रयोजनं यस्य दर्शनादित्रयस्य तत्तथा । दर्शनादित्रये च । आचा० १ श्रु० १ अ० २ उ० ७१ सूत्रटी० ।

आत्मार्थ–पुं० । 'आयट्ठ ( सूत्र-७१× ) आत्मनोऽर्थ आत्मार्थः, स च ज्ञानदर्शनचारित्रात्मकः, अन्यस्त्वनर्थ एव, अथवा-आत्मने हित-प्रयोजनमात्मार्थं, तच्च चारित्रानुष्ठानमेव चारित्रानुष्ठानं आचा० १ श्रु० २ अ० १ उ० ।

**आयण्ण**–आकर्णन–न० । श्रवणे, ' तत्थाऽऽयण्णणजाणण-गिण्हणपडिसेवणेसु उज्जुत्ता ' । तत्राऽऽकर्णन-विनयबहुमानाभ्यां वचनस्य श्रवणमिति । ध० २ अधि० २२ श्लोक ।

**आयत**–आयत–आ यम क्त । दीर्घे औ० १० सूत्रटी० । आ० म० । अनु० । उत्त० । स्था० । आयामवति प्रश्न० ३ आश्र० द्वार १२ सूत्रटी० । " गिरिवरे वा निसहोऽऽययाणं रुयए व सेट्ठे वलयाऽऽययाणं " ॥ १५+ ॥ यथा निषधो गिरिवरो गिरीणामायतानां मध्ये जम्बूद्वीपेऽन्येषु वा द्वीपेषु दैर्घ्येण श्रेष्ठ --प्रधान तथा वलयाऽऽयतानां मध्ये रुचकः पर्वतोऽन्येभ्यो वलयायतत्वेन । सूत्र० १ श्रु० ६ अ० । साद्यपर्यवसितत्वेन दीर्घत्वात् आयत —मोक्ष । मोक्षे पं० सू० ४ सूत्रटी० । प० व० । आयतो-मोक्षोऽपर्यवसितावस्थानत्वात् । सूत्र० १ श्रु० ८ अ० १८ गाथाटी० । आयतोऽपर्यवसानान्मोक्ष एव । आचा० १ श्रु० २ अ० १ उ० ७१ सूत्रटी० । आयतो-दीर्घसर्वकालभवनान्मोक्ष । सूत्र० १ श्रु० २ अ० ३ उ० १५ गाथाटी० । आत्मनि, सूत्र० । "सव्वे पाणा पियाऽऽयया" (सूत्र-८०×)। आयत -आत्मनोऽनाद्यनन्तत्वात् स प्रियो येषां ते तथा सर्वेऽपि प्राणिनः प्रियात्मानः । आचा० १ श्रु० २ अ० ३ उ० । आङ् अभिविधौ सामस्त्येन यत -आयत । आचा० १ श्रु० ८ अ० ८ उ० १६ गाथाटी० । संयते, " आयतजोगताए सेवित्था " ॥ ६ ॥ आचा० १ श्रु० ६ अ० ४ उ० । आकृष्टे, यतयति च । भ० । ' आययकण्णायय उसु आयामेत्ता ' ( सूत्र-६८× ) । कर्णं यावदायत -आकृष्टः कर्णाऽऽयत आयत—प्रयत्नवद् यथा भवतीत्येवं कर्णायत । भ० १ श० ८ उ० । संस्थानभेदे च । स्था० १ ठा० । उत्त० । (तद्वक्तव्यता आयतसंठाण शब्देऽस्मिन्नेव भागेऽनुपदमेव वक्ष्यते )

**आयत (य) कण्णायय**–आयतकर्णायत–त्रि० । कर्णं यावदायत -आकृष्टः कर्णायत आयत आयतम्(वा)-प्रयत्नवद् यथा भवतीत्येवं कर्णायत । आयतकर्णायत- । प्रयत्नेन कर्णपर्यन्तमाकृष्टे, " आययकण्णाययं उसुं आयामेत्ता चिट्ठइ " (सूत्र-६८+)। भ० १ श० ८ उ० । सामान्येन कर्णपर्यन्तमाकृष्टे च । " आययकण्णाययं उसुं करेइ " (सूत्र-३०३× ) । आयत--आकृष्ट सामान्येन स एव कर्णायतः आकर्णमाकृष्ट आयतकर्णायतस्तम् । भ० ७ श० ६ उ० ।

**आयत ( य ) चक्खु**–आयतचक्षुष्–त्रि० । आयतं—दीर्घमैहिकामुष्मिकाऽपायदर्शि चक्षु -ज्ञानं यस्य स आयतचक्षु । ऐहिकामुष्मिकाऽपायदर्शिज्ञानोपेते, आचा० १ श्रु० २ अ० ५ उ० ९३ सूत्रटी० ।

**आयतचरित्त**–आयतचरित्र–न० । आयतं—चरित्रं सम्यक् चरित्रं मोक्षमार्गप्रसाधकम् । मोक्षमार्गप्रसाधके चरित्रे, सूत्र० । " आदाणीयम्मि आयतचरित्तं " ॥२८×॥ सूत्र० १ श्रु० १ अ० ।

**आयत(य)जोग**–आयतयोग–पुं० । आयत-संयतो योगो-मनोवाक्कायलक्षण , आयतश्चासौ योगश्चायतयोग. । ज्ञान-चतुष्टयेन सम्यग् योगप्रणिधाने, आचा० । ' आयतजोगताए सेवित्था " ॥ ६× ॥ आचा० १ श्रु० ६ अ० ४ उ । "सयमेव अभिसमागम्म आययजोगमायसोहिए " ॥ १६ + ॥ आयतयोगम्—सुप्रणिहितं मनोवाक्कायात्मकं विधाय । आचा० १ श्रु० ६ अ० ४ उ० ।

**आयतट्ठ**–आयतार्थ–पुं० । आयत -अपर्यवसानान्मोक्ष एव स चासावर्थश्चायतार्थ । मोक्षरूपेऽर्थे, आयत.-मोक्ष. अर्थ -प्रयोजन यस्य दर्शनादित्रयस्य तत्तथा । दर्शनादित्रये, " आयतट्ठं सम्मं समणुवासेज्जा " ( सूत्र-७१ + ) । आयत -अपर्यवसानान्मोक्ष एव, स चासावर्थश्चायतार्थोऽनस्तं, यदि वा-आयतो-मोक्ष-अर्थ.-प्रयोजनं यस्य दर्शनादित्रयस्य तत्तथा । आचा० १ श्रु० २ अ० २ उ० । " आयतट्ठं सुआदाय, एवं वीरस्स वीरियं " ॥ १८ × ॥ आयत -मोक्ष अपर्यवसितावस्थानत्वान्मोक्ष स चासावर्थश्च तदर्थो वा तत्प्रयोजनो वा सम्यक्दर्शनज्ञानचारित्रमार्ग स आयतार्थस्त सुष्ठु आदाय-गृहीत्वा यो धृतिबलेन कामक्रोधादिविजयाय च पराक्रमते एतद्वीरस्य वीर्यमिति । सूत्र० १ श्रु० ८ अ० १८ गाथाटी० ।

**आयतट्ठि ( न् )**–आयतार्थिन्–पुं० । मोक्षार्थिनि, दश० ५ अ० २ उ० १५ गाथाटी० ।

**आयतट्ठित ( य )**–आयतार्थिक–पुं० । आयतो-दीर्घ सर्वकालभवनान्मोक्षस्तेनार्थिकस्तदभिलाषी । मोक्षाभिलाषिणि, सूत्र० । " आयपरे परमायतट्ठिए " ॥ १५ ॥ सूत्र० १ श्रु० २ अ० २ उ० ।

**आयतण**–आयतन–न० । आयतन्तेऽत्र यत् आधारे ल्युट् । गृहे ' सव्वओसहाऽऽययणं " ( सूत्र-१७ + ) । आयतनं-गृहम् । त० । " आयतणे ट्ठाणठवणा य " ॥ १६ ॥ आयतने-भवने । पञ्चा० ८ विव० । गुणाऽऽश्रये, प्रश्न० १ सव० द्वार २३ सूत्रटी० । ' इणमेव विमोहाऽऽयतणं " (सूत्र-२१५×) । विगतमोहानामायतनम्-आश्रय । आचा०

१ श्रु० ८ अ० ४ उ० । स्थाने, संथा० । आचा० । नि० चू० । " दस्सुगाऽऽयतणाणि " ( सूत्र-११५ × ) । दस्यूनां चौराणामायतनानि-स्थानानि । आचा० २ श्रु० १ चू० ३ अ० १ उ० । " एयाइ आयतणाइ " एतानि स्त्र्यादीन्यायतनानि—उपभोगास्पदभूतानि वर्तन्ते । आचा० । देवादिवन्दनस्थाने, वाच० । प्रश्न० १ आश्र० द्वार । " नयरस्स पुव्वेण जक्खस्स आययणं कयं " आ० म० । " भगवतो निव्वाणे गयस्स आययणं काराविय भरहो अयज्झमागओ कालेण य अप्पसोगो जाओ " आ० म० १ अ० ४३६ गाथाटी० । देवकुलपार्श्वापवरके च । " आयतणाणि वा " ( सूत्र-१ × ) । आयतनानि-देवकुलपार्श्वापवरकाः । दशा० १ श्रु० १० अ० । आचा० । धार्मिकजनमीलनस्थाने, ध० र० । भावश्रावकस्य शीलवत्स्वरूप द्वितीयलक्षणं व्याख्यानयन्नाह—' आययणं खु निसेवइ " ॥३७+॥ आयतनं-धार्मिकजनमीलनस्थानम् , उक्तं च । (ओघनि०) । ' जत्थ साहम्मिया बहवे, सीलवन्ता बहुस्सुया । चरित्ताऽऽयारसंपण्णा, आयतणं त वियाणाहि " ॥७८३॥ खुरवधारणे, प्रतिपक्षप्रतिषेधार्थः-ततश्चायतनमेव निषेवते भावश्रावको, न अनायतनमिति योग । ध० र० २ अधि० २ लक्ष० । दर्श० । कर्मोपादानस्थाने, आचा० । " इच्चेयाइं आयतणाइं " ( सूत्र-६१ × ) । इत्येतानि-पूर्वोक्तान्यायतनानि कर्मोपादानस्थानानि । आचा० १ श्रु० १ चू० १ अ० ११ उ० । " कम्मायतणेहिं " ( सूत्र-१५ + ) । कर्मणा ज्ञानावरणादीनाम् आयतनानि—आदानानि वा; बन्धहेतव इत्यर्थ । अन्त० १ श्रु० ६ वर्ग १५ अ० । विश्रामस्थाने, यत्नस्थाने च । वाच० । आङभिविधौ समस्तपापारम्भेभ्य आत्मा आयस्यते-आनियम्यते तस्मिन् कुशलानुष्ठाने वा यत्नात् क्रियते इत्यायतनम् । ज्ञानादित्रये, आचा० । " इक्कायतणरयस्स इह विप्पमुक्कस्स णऽत्थि मग्गे विरतस्स " ( सूत्र-१४८+ ) । आचा० १ श्रु० ५ अ० २ उ० । आयतनं-द्विधा-द्रव्यतो, भावतश्च । तत्र द्रव्यतो-जिनगृहादि, भावतस्तु-ज्ञानदर्शनचारित्रधरा साध्वादय. । प्रव० १४८ द्वार ६४६ गाथाटी० । ओघ० ।

इदानीमायतनप्रतिपादनायाह—

आययणं पि य दुविहं, दव्वे भावे य होइ नायव्वं ।
दव्वम्मि जिणघराई, भावम्मि होइ तिविहं तु ॥७८२॥

आयतनमपि द्विविधम्—द्रव्यविषये , भावविषये च ज्ञातव्यम् । तत्र द्रव्ये-जिनगृहादि, भावे च भवति त्रिविधम्-ज्ञानदर्शनचारित्ररूपमायतनमिति ।

जत्थ साहम्मिया बहवे, सीलवन्ता बहुस्सुया ।
चरित्ताऽऽयारसंपन्ना, आययणं त वियाणाहि ॥ ७८३ ॥

' जत्थे ' त्यादि, सुगमा ।

सुंदरजणसंसग्गी, सीलदरिद्दं पि कुणइ सीलड्ढं ।
जह मेरुगिरीजायं, तणं पि कणगत्तणमुवेइ ॥ ७८४ ॥

सुगमा । उक्तमायतनद्वारम् । ओघ० । आविष्करणे, निर्णये च । सूत्र० । ' पसिणाऽऽयतणाणि " ॥१६+॥ प्रश्नस्य-आदर्शप्रश्नादे आयतनम्—आविष्करणं; कथन यथा चिन्तितप्रश्ननिर्णयनानि । यदिवा-प्रश्नायतनानि-लौकिकानां परस्परव्यवहारे मिथ्याशास्त्रगतसंशये वा प्रश्ने सति यथा ऽवस्थितार्थकथनद्वारेणाऽऽयतनानि-निर्णयनानीति । सूत्र० १ श्रु० ६ अ० ।

**आयतणसेवा**–आयतनसेवा–स्त्री० । आयतनसेवाशब्द· प्रथमे शीलभेदे. दर्श० । शीलत्वभेदानधिकृत्य—नित्यमायतनसेवा, अनायतनपरिहार । तत्र आयतनं-पञ्चविधाऽऽचाराऽऽचरणप्रवणा सुसाधव । दर्श० ३ तत्र २४ गाथाटी० । (आयतन) प्रतिसेवनाद्वाराव्याचिख्यासया सचनं प्रतिपादयन्नाह—

एवं खलु आययणं, निसेवमाणस्स हुज्ज साहुस्स ।
कंटगपहेव छलणा, रागद्दोसे समासज्ज ॥ ७८५ ॥

एवम्-उक्तेन न्यायेन आयतनं सेवमानस्याऽपि साधो भवेत कण्टकपथ इव छलना, किमासाद्य ?, अत आह-रागद्वेषौ समाश्रित्य, सा च रागद्वेषेण सेवना द्विविधा भवति ।

एतदेवाह—

पडिसेवणाऽवि दुविहा, मूलगुणे चेव उत्तरगुणे य ।
मूलगुणे छट्ठाणा, उत्तरगुणे हुंति तिगमाई ॥ ७८६ ॥

ओघ० । ध० र० ।

**आयत ( य ) तर**–आयततर–त्रि० । " आयत(न)रे सिया " ॥ १६ × ॥ आङभिविधौ सामस्त्येन यत् आयत अयमनयोरतिशयेनायत आयततर. । यत्नेनाध्यवसित, आचा० १ श्रु० ८ अ० ८ उ० ।

**आयतसंठाण**–आयतसंस्थान–न० । संस्थानभेदे. आयतम्-दीर्घं यथा दण्डस्येति । उत्त० १ अ० ३८ गाथाटी० । ( आयतसंस्थान कनिमंयोगा इति ' सजोग ' शब्द उत्त० ॥ ४० ॥ ४१ ॥ गाथाभ्या सप्तमभागे वक्ष्यते )

तथा च—

एगो पिहुले ( सूत्र-४७ × ) ।

पृथुलं-विस्तीर्णम् , अन्यत्र, पुन -इह स्थाने आयतमभिधीयते, तदेव चेह दीर्घह्रस्वपृथुलशब्दैर्विभज्योक्तम् आयतधर्मत्वादेषा, तथाऽऽयतं प्रतरघनश्रेणिभेदात् त्रिधा, पुनरेकैकं सम-विषम-प्रदेशमिति षोढा, यच्चायतभेदयोगपि ह्रस्वदीर्घयोगादावभिधान तद्वृत्तादिषु संस्थानेष्वायतस्य प्रायो वृत्तिदर्शनार्थम् । तथा हि-दीर्घायत स्तम्भो वृत्तस्त्र्यस्रश्चतुरस्रश्चेत्यादि भावनीयम् । विचित्रत्वाद्वा सूत्रगतेरेवमुपन्यास इति । स्था० १ ठा० । प्रज्ञा० । ( भेदादिबहुवक्तव्यता ' संठाण ' शब्दे सप्तमे भागे वक्ष्यते )

**आयतसंठाणपरिणय**–आयतसंस्थानपरिणत–त्रि० । आयतसंस्थानभाजि प्रज्ञा० । ' आयतसंठाणपरिणया " ( सूत्र-४ + ) । आयतसंस्थानपरिणता दण्डादिवत् । प्रज्ञा० १ पद ।

**आयतित्त**–आत्मतृप्त–त्रि० । आत्मस्वरूपतुष्टे, अष्ट० । " आत्मतृप्तो मुनिर्भवेत् " ॥ ६ × ॥ आत्मतृप्त -आत्मस्वरूपेऽनन्तगुणात्मके तृप्त -तुष्टो भवेत् । अष्ट० १३ अष्ट० ।

आयत्त-आयत्त-त्रि० । आ यत क्त । अधीने, वशीभूते, वाच० । आयत्तो-वशवर्ती तदुक्तानुयायीति । दर्श० ४ तत्त्व ८० गाथाटी० । कृतप्रयत्ने च । वाच० ।

आयस्त-त्रि० । आ-यस्-क्त । क्षिप्ते, ' आयस्तसिंहा-कृतिरुत्पपात " किरा० । क्लेशिते, प्रतिहते, तीक्ष्णीकृते, आयासयुक्ते च । वाच० ।

आयपइट्ठिय-आत्मप्रतिष्ठित-त्रि० । स्वरूपप्रतिष्ठिते, "आयपइट्ठिया " ( सूत्र-१८६ × ) । स्था० ३ ठा० ३ उ० । क्रोधभेदे, स्था० २ ठा० ४ उ० १०० सूत्रटी० । ( व्याख्या ' कोह ' शब्दे तृतीयभागे करिष्यते )

आयपएण-आगतप्रज्ञ-त्रि० । आगता-उत्पन्ना प्रज्ञा यस्यासावागतप्रज्ञ । संजातकर्त्तव्याऽकर्त्तव्यविवेके, सूत्र० । "समितीसु गुत्तीसु य आयपएणे" ॥४+॥ सूत्र० १ श्रु० १४ अ० ।

आयमग्ग-आयतमार्ग-पु० । मोक्षमार्गे. आयतो-मोक्षोऽव्ययकत्वेदात्तस्य मार्गो-ज्ञानादि. । पञ्चा० ११ विव० ४२ गाथाटी० ।

आयमण-आचमन-न० । आ चम् । भावे ल्युट् । निर्लेपने, " आयमणत्थं वाऽवि वोसिरइ " ॥२६४४॥ आचमनम्-निर्लेपनम् । वृ० १ उ० ३ प्रक० । आयमणं-णिल्लेवणं । नि० चू० ४ उ० ३०७ गाथाचूर्णि । पुरीषोत्सर्गानन्तर शौचकरणे च । ' आयमणमाणधुवणं ॥ २३ × ॥ पिं० । " निहिं आयमण अदूरम्मि " । ओघ० ३१७ गाथा । ध० ३ अधि० ४ श्लोक । ( उच्चारप्रस्रवणे कृत्वा यो न परिष्ठापयति तस्य प्रायश्चित्तं ' थंडिल ' शब्दे चतुर्थभागे २३८१ पृष्ठ वक्ष्यते )

आयममाण-आचमत्-त्रि० । आचमनं कुर्वति, स्था० ५ ठा० २ उ० ४१४ सूत्र ।

आयमिणी-आयमिनी-स्त्री० । विद्याभेदे,सूत्र० । "आयमिणी एवमाइआओ विज्जाओ अन्नस्स हेउं पउंजति " ( सूत्र-३० + ) । सूत्र० २ श्रु० २ उ० ।

आयम्ब-टुवेपृ-धा० । कम्पने, " वेपेरायम्बाऽऽयज्झौ " ॥ ८।४।१४७ ॥ इति हैमप्राकृतसूत्रेण वेपेरायम्बाऽऽदेश. । आयम्बइ । आयज्झइ । वेवइ । प्रा० ।

आयरंत-आचरत्-त्रि० । अङ्गीकुर्वति, उत्त० । " तमायरतो ववहारं " ॥४२+॥ उत्त० १ अ० । कुर्वति, उत्त० पाई० १ अ० ४२ गाथाटी० । विदधति च । उत्त० । "नायरेज्ज कयाइ वि" ॥१॥ नाचरेत्-नाभिदध्यात् ( उत्त०१अ० । ) न समाचरेत्-न विदध्यादिति सम्बन्ध । सूत्र० २ श्रु० ५ अ० ।

आयरक्ख-आत्मरक्ष-पु० । आत्मरक्षके, स्था० ।

सूत्रम्—

तओ आयरक्खा पन्नत्ता । तं जहा-धम्मियाए पडिचोयणाए पडिचोएत्ता भवइ, तुसिणीतो वा सिया, उट्ठित्तु वा आयाए एगंतमन्तमवक्कमेज्जा । ( सूत्र-१७२× )

' तओ आय ' इत्यादि, सुगमा, नवरम् आत्मान रागद्वेषादेरकृत्याद्भवकूपाद्वा रक्षन्तीत्यात्मरक्षा । ' धम्मियाए पडिचोयणाए ' त्ति-धार्मिकोपदेशेन-नेदम् भवादृशा विधातुमुचितमित्यादिना प्रेरयिता-उपदेष्टा भवति, अनुकूलेतरोपसर्गकारिण , ततोऽसावुपसर्गकरणान्निवर्तेते तं-तोऽकृत्या सेवा न भवतीत्यत आत्मा रक्षितो भवतीति १, तूष्णीको वा वाचंयम ; उपेक्षक इत्यर्थ २, ' स्यादिति ' प्रेरणाया अविषये उपेक्षणासामर्थ्ये च तत स्थानादुत्थाय, ' आय ' त्ति-आत्मना एकान्त-विजनम् ' अंतं ' भूमिभागमवक्रामेत्-गच्छेत् । स्था० ३ ठा० ३ उ० ।

आयरक्खिय-आत्मरक्षित-त्रि० । आत्मा रक्षितो दुर्गतिहेतोरपध्यानादेरनेनेति आत्मरक्षित. । " आहिताग्न्यादिषु " ॥ ३ । १ । १५३ ॥ दर्शनात् क्तान्तस्य परनिपात. । दुर्गतिहेतोरात्मध्यानादेरात्मनो रक्षक , उत्त० पाई० २ अ० १५ गाथाटी० ।

आयरक्षित-त्रि० । आयो वा-ज्ञानादिलाभो रक्षितोऽनेनेत्यायरक्षित. । ज्ञानादिलाभस्य रक्षके, उत्त० । " विरओ आयरक्खिए " ॥ १५ × ॥ उत्त०पाई० २ अ० ।

आयरण-आचरण-न० । अनुष्ठाने,स्था० । आचरणमाचार. । स्था० ८ ठा० । विधाने, सूत्र० ।

अस्सिं धम्मे अणायारं, नाऽऽयरेज्ज कयाइ वि ॥ १ ॥

अस्मिन्धर्मे-सर्वज्ञप्रणीते व्यवस्थित सन्ननाचारम्-सावद्यानुष्ठानरूप न समाचरेत्-न विदध्यात् । सूत्र० २ श्रु० ५ अ० । केनचित्प्रकारेण परिणमने, दश० । ' दव्वाऽऽयारं वियाणाहि " ॥ १८० ॥ आचरणम्-आचारो द्रव्यस्याचारो द्रव्याचार. । द्रव्यस्य यदाचरणम् , तेन तेन प्रकारेण परिणमनमित्यर्थ । दश० ३ अ० । परप्रतारणाय विविधक्रियाणामाचरणरूपे मायाविशेषे च । भ० १२ श० ५ उ० ४४६ सूत्रटी० । आचरत्यनेन करणे ल्युट् । रथे, शकटे च । त्रि० । वाच० ।

आदरण-न० । मायाविशेषात्कस्यापि वस्तुनोऽभ्युपगमे, भ० १२ श० ५ उ० ४४६ सूत्रटी० ।

आयरणकप्प--आचरणकल्प-पु० । उत्सर्गाऽपवादयो. स्वस्थाने सेवनाकर्तव्यतायाम् . नि० चू० ।

इदाणीं इमो आयरणकप्पो "जे भणिता गाहा"—

जे भणिता उ पकप्पे, पुव्वाऽवरवाहता भवे सुत्ता ।
सो तह समायरंतो, सव्वो आयरणकप्पो उ ॥ ३८६ ॥

जे पकप्पे एगूणवीसतिउद्देसगेहिं पुव्वावरयाहया सुत्ता अत्था वा भणिता तहेव समायारंतस्स आयरणकप्पो भवति । एत्थ पुव्वो उस्सग्गो, अवरोऽववादो । एते परोप्परवाहता एतेसिं सट्ठाणे सेवणा कर्तव्येत्यर्थ' ।

गाहा—

उस्सग्गे अववायं, आयरमाणो विराहओ हो त्ति ।
अववाए पुण पत्ते,उस्सग्गनिसेवओ भइओ॥३०७॥ दारं

कया भयणाए कह उच्यते । जो धितिसंघयणसपन्नो सो अववादट्ठाणे पत्ते वि उसग्ग करेंतो सुद्धो जो पुण धितिसघयणहीणो अववादट्ठाणे उस्सग्ग करेति सो विराहए पावति । एसा भयणा । गतो आयरणकप्पो । नि० चू० २० उ० ।

**आयरणया-आद(च)रणता**-स्त्री० यतो मायाविशेषादादरणम्-अभ्युपगम कस्यापि वस्तुनः करोत्यसावादरणम् , तात्प्रत्ययस्य च स्वार्थिकत्वादादरणता । मायाविशेषे, आचरणताऽप्यत्रैव । भ० १२ श० ५ उ० ४४६ सूत्रटी० ।

**आयरिय-आचारिक**-पु० । स्वकीयमताद्भवानुष्ठानसमूहे , उत्त० ।

इह मेगे इइ (उ) मन्नंति, अपचक्खाय पावगं ।
आयरियं विदित्ताणं, सव्वदुक्खा विमुच्चइ ॥ ६ ॥

इह-अस्मिन्संसारे एके-केचित्कापिलिकादयो ज्ञानवादिन इति मन्यन्ते, इतीति किम् ? पापकम्-हिंसादिकम् अप्रत्याख्याय पापम्-अनालोच्याऽपि मनुष्य आचारिक-स्वकीयमतोद्भवानुष्ठानसमूहं विदित्वा-ज्ञात्वा सर्वदुःखात् विमुच्यते, एतावता 'तत्त्वज्ञानान्मोक्षावाप्ति' इति वदन्ति । जैनानां तु ज्ञानक्रियाभ्यां मोक्ष , ज्ञानवादिनां तु ज्ञानमेव मुक्त्यङ्गम् । उत्त० ६ अ० । ( एतन्मतनिराकरणं 'मोक्ख' शब्दे षष्ठे भागे करिष्यते )

**आचरित**-न० । आ-चर-भावे क्तः । आचरणे, उत्त० । आचरणमाचरितम् । तत्तत्क्रियाकलापः । उत्त०६ अ० ६ गाथाटी० । आसेवने, औ० ४० सूत्रटी० । "अवज्झाणायरिअ" (सूत्र-६+) । आचरित -आसेवित । उपा० १ श्रु० १ अ० । "जं किंचि वितहमायरियं" ॥६८२४॥ यत्किंचिद्वितथम्-अन्यथा आचरितम्-आसेवित भूतमिति वाक्यशेष । आ० म० १ अ० । अनुष्ठानमापन्ने ' जं किंचि वितहमायरियं " ॥१०४॥ वितथम्-अन्यथाभूत सयमानुकूलमित्यर्थ , आचरितम्-अनुष्ठानमापन्नमिति शेष । पञ्चा० १२ विव० ।

धम्मज्जियं च ववहारं, बुद्धेहाऽऽयरियं सया ।
तमायरंतो ववहारं, गरहं नाऽभिगच्छइ ॥ ४२

धर्मेण-क्षान्त्यादिरूपेणार्जितम्-उपार्जित धर्मार्जित , न हि क्षान्त्यादिधर्मविरहित इमं प्राप्नोतीति , च पूरणे, विविधं विधिवद्वा व्यवहरणमनेकार्थत्वात् आचरणं व्यवहार तम् इति-कर्तव्यतारूप बुद्ध.-अवगततत्त्वैराचरित सदा-सर्वकाले, तमिति सदावस्थिततया प्रतीतमेव शाचरन्-व्यवहरन् , यद्वा-यत्तदोर्नित्याभिसम्बन्धात्सुपव्यत्ययाच्च धर्मार्जितो बुद्धैराचरितश्च यो व्यवहारस्तमाचरन्-कुर्वन् , विशेषेणापहरति पापकर्मेति व्यवहारस्तम् , व्यवहारविशेषणमेतत् , एवं च किमित्याह-गर्हामविनीतोऽयमित्यवविधां निन्दां नाऽभिगच्छति-न प्राप्नोति यतिरिति गम्यते । उत्त० १ अ० । आचर्यते स्म वृद्धपुरुषैरप्याचरितम् । व्यवहारे व्यवहारैकार्थिकान्यधिकृत्य (आह भाष्यकार:)-" आयरिए चेव ववहारे ' ॥७+॥ व्य० १ उ० ।

**आचर्य**-त्रि० । आचर्यतेऽत्र । आ-चर-आधारे यत् । अनुष्ठानयोग्ये देशे, वाच० ।

**आचार्य**-पु० । आचर्यते असावाचार्य सूत्रार्थावगमार्थं मुमुक्षुभिरासेव्यते इत्यर्थ । आव० ४ अ० ४७ गाथाटी० ।

१-'आयरिय'ति-मूलपाठ । उत्त०पाई० ६ पत्र० ।



ध० । दशा० । ' आयरियाणं ' ( सूत्र-१ × ) । आ-मर्यादया तद्विषयविनयरूपया चर्यन्ते-सेव्यन्ते जिनशासनार्थोपदेशकतया तदाकाङ्क्षिभिरित्याचार्या. । उक्तं च—

" सुत्तत्थविऊ लक्खणजुत्तो गच्छस्स मेढिभूओ य ।
गणतत्तिविप्पमुक्को, अत्थं वाएइ आयरिओ " ॥ १ ॥ इति ।

अथवा-आचारो-ज्ञानाचारादि पञ्चधा, आ-मर्यादया वाऽऽचारो-विहार आचारस्तत्र साधव स्वयंकरणात्प्रभाषणात्प्रदर्शनाच्चेत्याचार्याः । आह च-" पंचविहं आयार, आयरमाणा तहा पयासंता । आयारं दंसंता, आयरिया तेण वुच्चंति ॥९९४॥ " ( आव० नि० ) । अथवा-आईषद् , अपरिपूर्णा इत्यर्थ , चारा -हेरिका ये ते आचारा , चारकल्पा इत्यर्थ , युक्तायुक्तविभागनिरूपणनिपुणा विनेया अतस्तेषु साधवो यथावच्छास्त्रार्थोपदेशकतयेत्याचार्या । भ० १ श० १ उ० । दशा० । 'चर' गतिभक्षणयो , आङ्पूर्व । आचर्यते कार्यार्थिभि सेव्यते इत्याचार्य । ' ऋवर्णव्यञ्जनात् ध्यण् " ॥ ५ । १ । १७ ॥ इति ध्यण् । आ० म० १ अ० ९९३ गाथा । आङ् मर्यादाभिविध्यो , चरिर्गत्यर्थ, मर्यादया चरन्तीत्याचार्या । आचारेण वा चरन्तीत्याचार्या । आ० चू० १ अ० ९९३ गाथाचूर्णि ।

अट्ठारसमीलगसहस्साहिट्ठियं तएणू छत्तीसइविहमायारं जहट्ठियं मे गिलाए महत्ति माणुममयं आयरंति त्ति-वत्तयति त्ति आयरिया । परमप्पणो य हियमायरति आयरिया । सव्वमत्तसीमगणाणं च हियमायरति आयरिया । पाणपरिच्चाए वि उ पुढवादीणं समारंभ नाऽऽयरंति, नारभति, णाणुजाणंति, आयरिया । सुहुमावरद्धेवि ण कस्सइ मणमाऽवि पावमायरंति त्ति वा आयरिया । महा० २ अ० ।

" स्याद्भव्यचैत्यचौर्यसमेषु यात् ' ॥ ८ । २ । १०७ ॥ इति हैमप्राकृतसूत्रेण चौर्यशब्देन समेषु शब्देषु संयुक्तस्य यात्पूर्व इत् । प्रा० । " आचार्ये चोऽच्च ॥ ८ । १ । ७३ ॥ इति हैमप्राकृतसूत्रेणाचार्यशब्दे चस्याऽऽत इत्वमत्त्व च । प्रा० । गुरौ पं० व० १३ गाथाटी० । पञ्चस्थविराणां मध्ये प्रथमे स्थविरे, ध० ३ अधि० ५४ श्लोक । आचार्या -अर्थदातार । बृ० १ उ० ३ प्रक० ६३९ गाथाटी० । आचार्यस्सूत्रार्थदाता, दिगाचार्यो वा । कल्प० ३ अधि० ६ क्षण ४६ सूत्रटी० । आचार्यस्सूत्रार्थोभयवेत्ता लक्षणादियुक्तश्च । आव० ३ अ० ११६५ गाथाटी० ।

विषयाः—

( १ ) निक्षेप आचार्यपदस्य ।
( २ ) भेदा -कलाचार्य १, शिल्पाचार्य २, धर्माचार्यश्चेति ३ । तेषां विनय ।
( ३ ) स्वरूपमाचार्यस्येह परत्र च ।
( ४ ) प्रव्राजनाचार्या उपस्थापनाचार्याश्च ।
( ५ ) स्वरूपमाचार्यस्य ' सुत्तत्थ ' इत्यादि ।
( ६ ) लक्षणमाचार्यस्य ।
( ७ ) गुणा आचार्यस्य ये गदितो गुरुर्न भवति ।
( ८ ) गुणा आचार्यस्य ' अपरिश्रावी ' इत्यादि ।

( ९ ) अशाचारस्य दुर्गुणस्सूरेः ।
( १० ) पराऽहितकारित्वं दुर्गुणः ।
( ११ ) सूरेः स दुर्गुणो येन कुगुरुर्भवति ।
( १२ ) प्रमादिनमाचार्य्यं शिष्यो बोधयति ।
( १३ ) वैरी शिष्यस्य गुरुः ।
( १४ ) विनय आचार्य्यस्य ।
( १५ ) गुरुविनये वैद्यदृष्टान्तः ।
( १६ ) नमस्कार आचार्य्यस्य ।
( १७ ) वैयावृत्त्यं गुरोः ।
( १८ ) गच्छाधिपतिः केन कर्मविपाकेन भवति ।
( १९ ) अतिशया आचार्य्यस्य ।
( २० ) निर्ग्रन्थीनामाचार्यः ।
( २१ ) आचार्ये कालगते आचार्य्यान्तरस्थापनम् ।
( २२ ) आचार्येऽवधाविते आचार्य्यान्तरस्थापनम् ।
( २३ ) लक्षणं "सुत्तत्थे णिम्माओ" इत्यादि ।
( २४ ) एकपाक्षिकादिर्लिङ्गाचार्य्यः ।
( २५ ) लक्षणं मद्दीभूतं ।
( २६ ) परीक्षा आचार्य्यस्य
( २७ ) उद्देशः मैथुनादिप्रतिसेव्याचार्य्यत्वेन ।
( २८ ) स्थापनाविधिराचार्य्यपदे गुरोः ।
( २९ ) परिच्छदसहितस्यैवाचार्य्यत्वम् ।
( ३० ) स्थापनाया स्थविरा प्रष्टव्याः ।

( १ ) निक्षेप आचार्यपदस्य—

आङ् मर्यादाऽभिविध्यो, चरिर्गत्यर्थे, मर्यादया चरन्तीत्याचार्याः । आचारेण वा चरन्तीत्याचार्याः । "ते चउव्विहा—णामट्ठवणाओ गताओ । द्रव्यभूतो वा द्रव्यनिमित्तं वा द्रव्यमेव वा दव्व आयारवंतं भवति, अनायारवंतं च नाम तं प्रति णिगुण सिलया एरंडो य, धावणं प्रति, हालिद्दा रागो य वासणं प्रति, कवेल्लुगा वइर य सिक्खवणं प्रति, मदणसलागा भासादीपकरणं प्रति, सुवण्णं घटा लोहं च अविरोधं प्रति, कीरं सक्कराय विरोधं प्रति, तल्लक्खणधिरार्थं एगमादि एत्थ गाधा—'णामण-धावण-वासण-सिक्खावण सुवण्ण अविरोधीणि । दव्वाणि जाणि लोए, दव्वायारं वियाणाहि । अहवा-दव्वायरिओ तिविहो एगभविओ बद्धाउओ अभिमुहणामगोत्तो । एगभविओ अणंतरं जो एगेण भवेण उववज्जिहि त्ति । बद्धाउओ जेण आउयं बद्धं । अभिमुहणामगोत्तो जेण पदेसा उक्कड्ढो । अहवा-मूलगुणणिव्वत्तितो, उत्तरगुणणिव्वत्तितो य । सरीरं मूलगुणा, विउकम्मादि उत्तरगुणा । अहवा-जाणओ, भविओ, वतिरित्तो, मंगुआयरियाणं समुद्दायरियाणं नागहत्थियायरियाणं उवाएसो आदेसो । आ० चू० १ अ० । "दव्वआयरिओ भयाऽभज्जा ॥ १३ + ॥ द्रव्याचार्यं आचार्यत्वयोग्यताया अभावादप्रधानाऽऽचार्यं । पञ्चा० ६ विव० । भावायरिओ दुविहो-आगमतो णोआगमतो य । तहेव । णोआगमतो दुविहो—लोइओ लोउत्तरिओ य । लोइओ—सिप्पाणि चित्तकम्मादिसत्थाणि वडुमाणियादि जो उपदिसति । उत्तरिओ—जो पञ्चविधं णाणादियं आयारं आयरति, पभासति य सव्वेसिं आयरियाणं आचारित्तदंसाणि दरिसयति । एवं मन्तव्यं । एवमादि तेण ते भावायरिया तेसिं फलं तहेव । आ० चू० २ अ० ।

नामं ठवणा दविए, भावे चउव्विहो य आयरिओ ।
दव्वंमि एगभवियाइ, लोइए सिप्पसत्थाई ॥ ३०५ ॥

आचार्य इति कः शब्दार्थः उच्यते-'चरगतिभक्षणयोः' इत्यस्य ( चरेः ) आङि वा गुरौ (पा० ३-१-१०० वार्त्तिक) विनि एयति आचार्य इति भवति, आचर्यतेऽसावित्याचार्यः, कार्यार्थिभिः सेव्यत इत्यर्थः । अयं च नामादिभेदाच्चतुर्विधः । आव० १ अ० । इह नामस्थापने सुगमे । विशे० ।

द्रव्यविचारं पुनराह—

आगमदव्वायरिओ, आयारवियाणओ अणुवउत्तो ।
नो आगमओ जाणय-भव्वसरीराइरित्तोऽयं ॥३१६१॥
भविओ बद्धाऊ, अभि-मुहो मूलाइनिम्मिओ वाऽवि ।
अहवा दव्वब्भूओ, दव्वनिमित्तायरणओ वा ॥३१६२॥

ज्ञशरीरभव्यशरीरव्यतिरिक्तस्त्वाचार्योऽयं क इत्याह—'भविओ' इत्यादि, एकभविको, बद्धायुष्क, अभिमुखनामगोत्रश्चेत्यर्थः, 'मूलाइनिम्मिओ वाऽवि' त्ति-तथा मूलगुणनिर्मितः, उत्तरगुणनिर्मितश्च तद्व्यतिरिक्तो द्रव्याचार्यो मन्तव्यः । तत्र मूलगुणनिर्मितः आचार्यशरीरनिर्वर्त्तनयोग्यानि द्रव्याणि उत्तरगुणनिर्मितस्तु तान्येव तदाकारपरिणतानीति । अथवा—द्रव्यभूतोऽप्रधान आचार्यस्तद्व्यतिरिक्तो द्रव्याचार्यः प्रतिपाद्यते । यो वा द्रव्यनिमित्तेनाचरति चेष्टते स द्रव्यनिमित्ताचरणाद् द्रव्याचार्यः, स च लौकिको, लौकिकमार्गे शिल्पशास्त्रादिविज्ञेयः । यः शिल्पानि निमित्तादिशास्त्राणि च ग्राहयति स इहोपचारतः शिल्पशास्त्रादिरुक्तः । अन्ये त्विमं शिल्पशास्त्राचार्यं लौकिकं भावाचार्यं व्याचक्षते । शेषं सुगममिति । 'पंचविहंमि' त्यादिना लोकोत्तरो भावाऽऽचार्य उक्तः । तत्स्वरूपव्याख्यानार्थमाह—

आ मज्जायावयणो, चरणं चारो त्ति तीए आयारो ।
सो होइ नाणदंसण-चरित्ततवविरियविप्पा ॥३१६३॥
तस्सायरणपभासण-देसणओ देसिया विमोक्खत्थं ।
जे ते भावाऽऽयरिया, भावायारोवउत्ता य ॥ ३१६४ ॥
अहवाऽऽयरंति जं मय-मायरेंति व जमायरिज्जंति ।
मज्जायाऽभिगम्मं-ति जमुत्त तेणमायरिया ॥३१६५॥

पाठसिद्धा एव, नवरं 'तीए' त्ति-तया—मर्यादया चरणमाचारः । 'तस्स' त्यादि, तस्य—पञ्चविधस्याचारस्य स्वयमाचरणतः परेषां च प्रभाषणतः तथा विनेयानां वस्तुप्रत्युपेक्षणादिक्रियाविधेर्दर्शनतो ये परात्मनो मोक्षार्थं 'देसिय' त्ति-देशिताऽस्ते भावाचारोपयुक्तत्वाद्भावाचार्या इति । अथवा-स्वयं यस्मादाचरन्ति सदनुष्ठानम्, आचरयन्ति चान्यैः । अथवा-आचर्यन्ते-मर्यादया अभिगम्यन्ते यतो मुमुक्षुभिरिति यदुक्तमेतत्तात्पर्यमित्यर्थः, तेनाऽऽचार्याः । विशे० ।

कस्याऽऽचार्यस्याऽऽज्ञा नाऽतिक्रमणीयेत्यधिकृत्य—

गोयमा ! चउव्विहा आयरिया भवंति, तं जहा– नामाऽऽयरिया १, ठवणायरिया २, दव्वायरिया ३, भावायरिया ४। तत्थ णं जे ते भावायरिया ते तित्थयरसमा चेव दट्ठव्वा, तेसिं संतियाणं णाइक्कमेज्जा, से भयवं ! कयरे णं ते भावायरिया भन्नंति, गोयमा ! जे अज्जपव्वइए वि आगमविहीए एयं पए पए आणाणुसंचरंति ते भावायरिया। जओ णं वाससयदिक्खिए वि हुत्ताणं वायामेत्तेणं पि आगमओ वाहिं करेंति ते णामठवणाहिं णिओइयव्वे। से भयवं ! आयरियाणं केवइयं पायच्छित्तं भवेज्जा। जेसिं गच्छस्स माइ णो तं आयरियमयहरपविनिणीए य सत्तरमगुणं अहागं सीलखलिए भवंति। तओ तिलक्खगुणं जं अइदुक्करणामंजं सुकर तम्हा सव्वहा सव्वपयारेहिं णं आयरियमयहर पवित्तिणिए य अत्ताण पायच्छित्तस्स मरक्खेयव्वं अखलिअसीलेहिं च भवियव्वं। महा० ५ अ०।

(२) आचार्यस्य भेदा —

तओ आयरिया पण्णत्ता। सिप्पायरिया १, कलायरिया २, धम्मायरिया ३। जे ते धम्मायरिया, परलोगहियट्ठाए, निज्जरट्ठाए, आराहेयव्वा। अण्णे कलायरिया, सिप्पायरियाए, कइएहिं, कित्तबुद्धिए, आराहियव्वे। तत्थेगे धम्मायरिया, सोवायकरंडसमा। वद्धइकथत्थप्पयगाहाइहिं जे सुद्धसभाए वक्खाणिंति ते सोवागकरंडसमा। वेसाकरंडसमा–जो रीरीं आहारणमरिमजीहावक्खाणडंबरेणं अंतरं सुअसारविरहियाऽवि सुद्धसभाए जण विमोहिंति खेरविंति अप्पाण थुतसि आलुव अत्थेण पाडिंति गोयमगणहराणं उवमाए ते वेसाकरंडसमा। गाहावइकरंडसमा–जे सम मसुवसियसुगुरूहिंतो संपत्त अंगोवंगाई सुत्तत्थेसु परिच्छियच्छेयगंथा ससमय-परसमयणिच्छया परोवयारकरणिक्कभल्लिच्छया। जणजोगविहीए अणुओगं करिंति ते गाहावइकरंडसमा। रायकरंडसमा–जे गणहरा चउदसपुव्विणो वा घडाओ घडसयं, पडाओ पडसयं, इच्चाइं विहाइं सयमंमाणिया ते रायकरंडसमा। गाहावइकरंडसमाणे, रायकरंडसमाणे, दोवि आयरिए तित्थयरसमाणे। अंग०।

(आचार्यस्य यथोचितसत्कारः)—

केसीकुमारसमणे पदेसिं रायं एवं वयासी–जाणासि णं तुम्हं पएसी केवइयाऽऽयरिया पण्णत्ता ?, हंता ! जाणामि, तओ आयरिया पण्णत्ता। तं जहा कलायरिए १, सिप्पायरिए २, धम्मायरिए ३। जाणासि णं तुम्हं पएसी तेसिं तिण्हं आयरियाणं कस्स का विणयपडिवत्ती पउजियव्वा ?, हंता जाणामि–कलायरियस्स, सिप्पायरियस्स उवलेवणं वा संमज्जणं वा करेज्जा, पुप्फाणि वा आणावेज्जा, मंडवेज्जा वा, भोयवेज्जा वा, विउलं जीवियारिहं पीइदाणं दलएज्जा, पुत्ताणं पुत्तियं वावि विकप्पेज्जा॥ जत्थेव धम्माऽऽयरियं पासेज्जा तत्थेव वंदिज्जा णमसेज्जा सक्कारेज्जा सम्माणेज्जा कल्लाणं मंगलं चेव पज्जुवासेज्जा फासुएसणिज्जेणं असणपाणखाइमसाइमेणं पडिलाभेज्जा पाडिहारिएण पीठफलगसेज्जासंथारतेणं उवनिमंतिज्जा। (सूत्र–+)। रा०।

आचार्यस्त्रिविधस्तद्यथा—

सीहाऽणुगवसभ-कोट्ठुगाणुगे॥ ४०० +॥

सिंहाऽनुगो १, वृषभाऽनुगः २, क्रोष्टुकाऽनुगश्च ३। क्रोष्टुकः-शृगालः। यत्र यो महत्या निषद्यायां स्थितः सन् सूत्रमर्थं वा वाचयति तिष्ठति वा स सिंहानुगः। य १ पुनरेकस्मिन् कल्पे स्थितस्सन् वाचयति तिष्ठति वा स वृषभानुगः २। यस्तु रजोहरणनिषद्यायामौपग्रहिकपादप्रोञ्छने वा स्थितो वाचयति तिष्ठति वा स क्रोष्टुकानुगः इति ४। व्य० १ उ०। नि० चू० २० उ० ३४३ गाथा। (कस्याचार्यस्य क आचार्य आलोचना दद्यात् इत्यादिबहुवक्तव्यता 'आलोयणा' शब्देऽस्मिन्नेव भागेऽग्रे वक्ष्यते)

(३) स्वरूपमाचार्यस्येह परत्र च--

आयरिओ केरिसओ, इहलोए केरिसो व परलोए।
इहलोए असारणिओ, परलोए फुडं भणंतो॥ ३८१॥

य एप उपग्रहकृदाचार्यस्तमेव ज्ञातुमिच्छामि कीदृशः ग-त्स्याचार्य इहलोके हितकारी, कीदृशः परलोके इति. सूरिराह-चतुर्विधस्सामान्येनाऽऽचार्यः, तद्यथा-इह लोके हितो नामैको न परलोके हितः १। परलोकहितो, न इहलोकहितः २। इह लोके हितोऽपि परलोके हितोऽपि ३। न इह लोकहितो, नापि परलोकहितः ४। तत्र प्रथमद्वितीयभङ्गद्वयाख्यानमाह-' इहलोए ' इत्यादि, तत्र यो वस्त्रपात्रभक्तपानादिकं समस्तमपि साधूनां पूरयति न पुनः संयमे सीदतस्सारयति स-असारणिकः सारणारहितः इह लोके हितो न परलोके एषा प्रथमभङ्गभावना। यः पुनस्संयमयोगेषु प्रमाद्यतः सारणां करोति न च वस्त्रपात्रभक्तपानादिकं प्रयच्छति, स केवलं स्फुटं भणन् कुर्वाणः परलोके हितो, नेह लोके, इति सामर्थ्याद्गम्यते, एषा द्वितीयभङ्गभावना। तृतीयचतुर्थभङ्गभावना तु स्वयं भावनीया। सा चैवम्-यो वस्त्रपात्रभक्तपानादिकं समस्तमपि साधूनां पूरयति संयमयोगेषु च सीदतस्सारयति स इहलोके हितः परलोके च हितः चतुर्थ उभयरहितः। अत्र पर आह—ननु यो भद्रस्वभावतया न सारयति वस्त्रपात्रभक्तादिकं तु समस्तमापूरयति स एव समीचीनः, यः पुनः सारणां कुर्वाणः-खरकुण्टाचार्य इव सारयति स न समीचीनः, असमाध्युत्पादकत्वात्।

तत्राऽऽह—

जीहाएऽभिलिहंतो, न भद्दतो जत्थ सारणा नऽत्थि ।
दंडेणऽवि ताडेंतो, स भद्दतो सारणा जत्थ ॥ ३८२ ॥

यत्र नाम संयमयोगेषु सीदतां सारणा नाऽस्ति स आचार्यो जिह्वयाऽभिलिहन्-मधुरवचोभिरानन्दयन् , उपलक्षणमेतत्—वस्त्रपात्रादिकं च पूरयन् न भद्रको—न समीचीनः परलोकाऽपायेषु पातनात् । यत्र पुनस्सीदतां साधूनां सम्यक् सारणा-संयमयोगेषु प्रवर्तना समस्ति स आचार्यो दण्डेनापि ताडयन् भद्रक-एकान्तसमीचीनः सकलसांसारिकाऽपायेभ्यः परित्राणकरणात् ।

अथ सारणमकुर्वाणो जिह्वया विलिहन् कस्मान्न समीचीन इत्यत्राऽऽह—

जह सरणमुवगयाणं, जीवियववरोवणं नरो कुणइ ।
एवं सारणियाणं, आयरिओ असारओ गच्छे ॥ ३८३ ॥

यथा कोऽपि नर एकान्तेनाऽहितकारी शरणमुपागतानां जीवितव्यपरोपणं करोति एवं साधूनामपि शरणमुपागतानां संयमयोगेषु प्रमादव्यावर्तनेन प्रवर्तनीयानामाचार्योऽसारको गच्छे भावनीयः । सोऽपि शरणोपगतशिरोनिकर्तक इव एकान्तेनाऽहितकारीति भावः । शरणमुपगतानां संसारापारपारावारे निरनुकम्पं प्रक्षेपणात् , स च तादृश इह परलोकहितार्थिना परित्याज्यः । यस्तु खरपरुषभणनेनापि संयमयोगेषु सीदतः सारयति स संसारनिस्तारकत्वादेकान्तेनाऽऽश्रयणीयः । व्य० १ उ० । नि० चू० ।

(८) प्रव्राजनाचार्याः , उपस्थापनाचार्याश्च । सूत्रम्—

चत्तारि आयरिया पएणत्ता, तं जहा-पव्वायणायरिए एगे नामं; नो उवट्ठावणआयरिए १ । उवट्ठावणायरिए नामं एगे; नो पव्वावणायरिए २ । एगे पव्वावणायरिएऽवि; उवट्ठावणायरिएऽवि ३ । एगे नो पव्वायणायरिए; नो उवट्ठायणायरिए धम्मायरिए ४ ॥१२॥

अस्य ( सूत्रस्य ) सम्बन्धमाह—

अदढाऽपियधम्माणं, तव्विवरीए करेंति आयरिए ।
तेसिं विहाणंमि इमं, कमेण सुत्तं समुद्दिट्ठं तु ॥ ३७ ॥

अदृढधर्माणामप्रियधर्म्माणां चानुशासनाय स्थविरा आचार्याः । व्याख्यानार्थमाह—

पव्वावणा उट्ठावणा, उभय नोभयमिति चउत्थो ।
अत्तऽट्ठपरऽट्ठा वा, पव्वावणा केवला पढमे ॥ ३८ ॥
एवमेव य बितितो वि. केवलमेव उवट्ठवे सो उ ।
तइओ पुण उभयं पि, अत्तऽट्ठपरऽट्ठ वा कुणइ ॥ ३९ ॥
जो पुण नोभयकारी, सो कम्हा भवति आयरिओ उ ।
भण्णति धम्माऽऽयरिओ.सो पुण गहितो व समणो वा॥४०॥

प्रथम-प्रव्राजनाऽऽचार्यः । द्वितीय-द्वितीयभङ्गेन सूचित-उपस्थापनाचार्यः । तृतीयभङ्गसूचित उभय । प्रव्राजनोपस्थापनाचार्यः । तत्र प्रथम —प्रव्रजनस्थापनार्थस्य परार्थस्य देवता प्रव्राजनात् । किमुक्तं भवति- आत्मनिमित्ते , परनिमित्ते वा यः केवलं प्रव्राजयति स प्रथमः प्रव्रजनाचार्यः । एवमेव-अनेनैव प्रकारेण द्वितीयः स केवलं मात्रम् उपस्थापयति, यः प्रव्राजितस्य सदुपस्थापनामात्रं करोति स द्वितीय इत्यर्थः । तृतीयः पुनरपि प्रव्राजनमुपस्थापनं वाऽऽत्मार्थे परार्थे वा करोति यः पुनर्नोभयकारी स चतुर्थः । अथ स कस्माद्भवत्याचार्यः उभयविकलत्वात्सूरिराह—भण्यते स धर्म्माचार्यो धर्म्मदेशकत्वात् स पुनर्गृही श्रमणो वा वेदितव्यः ।

एव च यत्राऽऽचार्या तथा चाह—

धम्मायरिपव्वायण, तह य उट्ठावणा गुरू तइओ ।
को इ तिहिं संपन्नो, दोहिं वि एक्केक्कएणं वा ॥ ४१ ॥

प्रथमो धर्म्माचार्यो यस्तत्प्रथमतया धर्म्मं ग्राहयति १ । द्वितीयः प्रव्राजनाचार्यो यः प्रव्राजयति २ । तृतीयो गुरुरुपस्थापनाचार्यो यो महाव्रतेषूपस्थापयति ३ । तत्र कश्चित्त्रिभिरपि संपन्नो भवति । तथाहि--कदाचित्स एव धर्म्मं ग्राहयति स एव प्रव्राजयति स एवोपस्थापयति कश्चिद् द्वाभ्याम् , तद्यथा-धर्म्मग्राहकत्वेन प्रव्राजनेन च, अथवा--धर्म्मग्राहकत्वेनोपस्थापनेन केनचिदेकैकेन गुणेन तद्यथा । कश्चिद् धर्म्ममेव ग्राहयति । कश्चित्प्रव्राजयत्येव कश्चिदुपस्थापयत्येव ।

सूत्रम्--

चत्तारि आयरिया पन्नत्ता । तं जहा-उद्देसणाऽऽरिए एगे णामं; एगे नो वायणायरिए १ , वायणायरिए एगे णामं; एगे णो उद्देसणायरिए २, एगे उद्देसणायरिए वि; वायणायरिए वि ३ , एगे नो उद्देसणायरिए, नो वायणायरिए ४ ॥ १३ ॥

अमीषां स्वरूपमाह—

एगो उद्दिसइ सुयं, एगो वाएइ तेण उद्दिट्ठं ।
उद्दिसई वाएइ य. धम्माऽऽयरिओ चउत्थो य ॥ ४२ ॥

एक -प्रथम श्रुतमुद्दिशति न वाचयति यथा मङ्गलबुद्ध्या प्रथमत आचार्य उद्दिशति तत उपाध्याय । अत्राचार्य प्रथमभङ्गवर्ती-उपाध्यायो द्वितीयभङ्ग तथा चाह-एको द्वितीय उपाध्यायस्तेनाऽऽचार्येणोद्दिष्टं वाचयति य एवोद्दिशति स एव वाचयति एष तृतीय , उभयविकलश्चतुर्थो धर्म्माचार्य । व्य० १० उ० । आचार्यते-सेव्यते वा आचार्य , स च पञ्चधा-प्रव्राजकाचार्य १, सचित्ताचित्तमिश्रानुज्ञायी दिगाचार्य २, प्रथमत एव श्रुतमुद्दिशति य. स उद्देशाचार्य ३ , उद्देष्टगुर्वभावे तदेव श्रुतं समुद्दिशत्यनुजानीते वा य स समुद्देशानुज्ञाचार्य ४, आम्नायम्-उत्सर्गापवादलक्षणमर्थं वक्ति य स प्रवचनार्थकथनेनानुग्राहकोऽजनिपद्यानुज्ञायी आम्नायार्थवाचकाचार्य ५ । ध० ३ अधि० ११९ श्लोक ।

(५) स्वरूपमाचार्यस्य । कीदृश आचार्यस्तत्स्वरूपमाह—

सुत्तत्थतदुभएहिं, उवउत्ता णाणदंसणचरित्ते ।
गणतत्तिविप्पमुक्का, एरिसया हुंति आयरिया ॥ ३२५ ॥

---

नोट-(३३२) अस्मात् पृष्ठाङ्कादग्रे ३०८ पृष्ठाङ्क द्रष्टव्यम् । द्वितायाऽऽवृत्तिगुरुत्वात् विषमता जाता ।

ये सूत्रार्थतदुभयोपेता इति गम्यते । तथा सतत ज्ञानदर्शन चारित्रे समाहारो द्वन्द्वः । ज्ञानदर्शनचारित्रेषु उपयुक्ताः कृतोपयोगाः । तथा गणस्य गच्छस्य या तप्तिस्साराः* तया विप्रमुक्ताः । गणावच्छेदप्रभृतीनां तत्तप्ते· समर्पितत्वादुपल क्षणमेतत् । शुभलक्षणोपेताश्च य एतादृशा भवन्त्याचार्याः । ते चार्थमेव केवलं भाषन्ते न तु सूत्रमपि वाचयन्ति । तथा चोक्तं । "सुत्तत्थविऊलक्खण, जुत्तो गच्छस्स मेढिभूतो य ॥ गणतत्तिविप्पमुक्को, अत्थं भासेइ आयरियो" ॥ अथ किं कारणमाचार्य्यास्स्वयं सूत्रन्न वाचयन्तीत्यत आह ॥

एगग्गया य झाणे वड्ढी, तित्थयरअणुगिई गरुया ।
आणाथेज्जमिति गुरु, कयरिणमुक्खो न वाएइ ॥

सूत्रवाचनाप्रदानपरिहारेणार्थमेव केवलव्याख्यानाय आचार्यस्य एकाग्रता एकाग्रमनस्कता ध्यानेऽर्थचिन्तनात्मके भवति । यदि पुनस्सूत्रमपि वाचयेत्तदा बहुव्यग्रत्वादर्थचिन्तायामेकाग्रता न स्यात् एकाग्रतयाऽपि को गुण इत्यत आह । वृद्धिः । एकाग्रस्य हि सतोऽर्थं चिन्तयतस्सूत्रार्थस्य तत्र सूक्ष्मार्थोन्मीलनाद्वृद्धिरुपजायते । तथा तीर्थकरानुकृतिरेव कृता भवति । तथाहि । तीर्थकृतो भगवन्तः किलार्थमेव केवलं भाषन्ते न तु सूत्रं नापि गणतत्तिङ्कुर्वन्ति । एवमाचार्य्या अपि तथा वर्तमानास्तीर्थकरानुकारिणो भवन्ति । सूत्रवाचनां तु प्रयच्छतामाचार्य्याणां लाघवमप्युपजायते । तद्वाचनायास्ततोऽधस्तनपदवृत्तिभिरप्युपाध्यायादिभिः क्रियमाणत्वादेव च तस्य तथा वर्तमानस्य लोके राज्ञ इव महती गुरुता प्रादुर्भवति । तद्गुरुतायां च प्रवचनप्रभावना तथा आज्ञायां स्थैर्यमाज्ञास्थैर्यं कृतं भवति तीर्थकृतामेवमाज्ञा पालिता भवतीत्यर्थः । इयं हि तीर्थकृतामाज्ञा यथोक्तप्रकारेण मानुकारिणा आचार्येण भवितव्यमित्यस्मात् हेतुकलापात् गुरुराचार्यः । कृतः ऋणमोक्षोयेन स कृतऋणमोक्षस्तेन हि सा मान्यावस्थायामनेके साधवस्तत्र सूत्रमध्यापितास्तत ऋणमोक्षस्य कृतत्वात्सूत्रं न वाचयति ॥ उक्तमाचार्यस्वरूपम् ॥ व्य० खं. १ उ १ ॥

## ( ६ ) लक्षणमाचार्य्यस्य ॥

आवश्यकचूर्णौ ॥

किंचि आयरिय आयारकुसल एव संजमपवयणसगह उवग्गहणुग्गहकप्पववहारपन्नत्तिदिट्ठिवायससमयपरसमयकुसल ओयंसिं तेयंसिं वच्चंसि जसंसिं दुरूरिस अलहुगचित्त जितकोहं पयार जिर्तिदिय जीवितास समरणभयविप्पमुक्क जियपरिस्सहं पुव्वरयपुव्वकीलियपुव्वसयवविरहित णिम्मम निरहकार अणाणुतावि सक्कारआभालाभसुहदुक्खमाणा अवमाणसहं अचवल असवलम असकिलिट्ठ णिव्वणचरित्तं दसविह आलोयणदोसविहिन्नु अट्ठारसआयारट्ठाणजाणग अट्ठविहालोयणारिहगुणोवदेसग आलोय णारिह सुतरहस्स अपरिस्साइ पायच्छित्तकुसल मग्गामग्गविया णग उग्गहईहअवायधारणापवरबुद्धिकुसल अणुओगजाणग णयविहिन्नु आहरणहेउकारणणिदरिसण उवमाविउत्ते तेहट्ठअड्ढर रिसिहिं बहुविहउपायागारोपदेसे णइंगितायारणे गमनिलासितमूगत्तमणुवदिट्ठा वा हयसच्छदविकप्पविहिविहिन्नु विविगणितसहत्थाणिमित्तउप्पादपोराणपरिच्छसभावजाणग वसुहसम सीतघरसमाणं पुक्खरपत्तमिव, णिरुवलेव वायुमिव, अप्पडिबद्ध पव्वयमिव, णिप्पकप सागरमिव, अक्खोभ कुम्मो, इव गुत्तिदिय जच्चकणगमिव, जायतेय चन्दमिव, सोम्मं सूरमिव, दित्ततेय सलिलमिव, सव्वजगणिव्वुइकर गगणमिव, अपरिमितणाण मतिकेतुं सूयकेतु सुविट्ठिव्वं सुपराणिट्ठितव्व एग आयतसुहगवेसग दुहोसजढ निरुभवित्त निगारवरहित तिसल्लविसल्ल तिगुत्तिगुत्त तिगणविसुद्धं चउव्विहविकहाविवज्जियमतिं चउक्कसायविजढ चउव्विहविसुद्धबुद्धिं चउव्विहाहार गीराउवमतिं पञ्चसमित पञ्चमहव्वयधारग पञ्चविहणिद्दाणजाणगं पञ्चविहचरित्तजाणग पञ्चविहचरित्तलक्खणसपन्न छव्विहविकहविवज्जग छव्विहदव्वविधिवित्थरजाणग छट्ठाणविसुद्धपच्चक्खाणदेसग छज्जीवकायदयापर सत्तभयविप्पमुक्क सत्तविहससारजाणगं सत्तविहगुत्तोवदेसग अट्ठविहमाणमहण अट्ठविहवाहिरुज्झणजोगरहिय अट्ठविहपवयणझाणजुत्त अट्ठविहकम्मगंठिभेदग नवबंभचेरवावत्तिघातक दसविहसमणधम्मजाणग एक्कारसमातियक्खरविहिवियाणग एक्कारसउवासगपडिमोवदेसगं बारसभिक्खुपडिमाफासगं बारसगतवभावणाभावितमति बारसंगसुत्तत्थपारग एवमाइगुणोववेयस्स णिम्मधमहिरिसिस्स सगवं सकम्म कितिकम्म काउण भणति भगवं बहुपुरिसपरपरागय ससारणित्थरणोपायं आवस्सगाणुओग मिच्छामि तस्सायरिओ गुरुमहप्पणा आवस्सयाणुओग परिकहेइ ॥ आ चू ॥

ईदृशि गुरौ गुणमाह ॥

भत्तिबहुमाणसद्धा, थिरयाचरणंमि होइ सेहाणं ॥
एआरिसम्मि नियमा, गुरुंमि गुणरयणजलहिंमि ॥ १५ ॥

व्याख्या । भक्तिबहुमानाविति भक्तिर्बाह्यविनयरूपा बहुमानो भावप्रतिबन्धः एतौ भवतः ॥ शिक्षकाणामभिनवप्रव्रजितानामिति योग । केत्याह ईदृश्येव श्रुते गुरो आचार्ये नियमान्नियमेन पुनरपि स एव विशिष्यते । गुणरत्नजलधौ गुणरत्नसमुद्र इति तत श्रद्धास्थिरताचरणे भवतीति । तथाहि । गुरुभक्तिबहुमानभावत एव चारित्रे श्रद्धा स्थैर्यं च भवति नान्यथेति गाथार्थः ॥ गुणान्तरमाह ॥

अणुवत्तगो अएसो, इवइ दहुं जाणई जओ सत्ता ॥
चित्ते चित्त सहावे, अणणुवत्ते तह उवायं च ॥ १६ ॥

व्याख्या । अनुवर्तकश्च एषोऽनन्तरोदितो गुरुर्भवति स्वम त्यर्थं कुत इत्याह । जानाति यत सत्वान् प्राणिनश्चित्रान् नानारूपांश्चित्रस्वभावाम्नानास्वभावान् अनुवर्त्याननुवर्तनीयान् तथोपाय चानुवर्तनोपायञ्च जानातीति गाथार्थः । प व०

## ( ७ ) गुणा आचार्य्यस्य ये रहितो गुरुर्न्न भवति ॥

गुरुगुणाश्च पञ्चत्रिंशदनुयोगगमे ॥

गुरुगुणरहितस्य गुरोर्विधिना परित्याग ॥

गुरुगुणरहिओ उ गुरू, न गुरू विहिचायमो उ उद्दिट्ठो ॥
अण्णत्थसंकमेणं, ण उ एगागित्तणेणं ति ॥ १४ ॥

* तप्तिश्चिन्ता । प्रतिमाशतके श्लोक ६५ तमे ॥

व्याख्या । गुरुगुणाः सज्ज्ञान सदनुष्ठानविशेषास्ते रहितोहीनोगुरुगुणरहित तुशब्द पुनरर्थे । गुरुर्धर्म्माचार्योगुरुर्नैधर्म्माचार्यो भवति । सुवर्णगुणविकल सुवर्णमिव । ततश्च (विहियायमो ऽत्ति ) इह मकारो लाक्षणिकस्ततश्च विधित्याग एवागमिकन्यायेन परिहार एव तस्य गुरोरिष्टो ऽभिमतो जिनानां । स च न यथा कथं चिदत एवाह । अन्यत्र गुरुकुलान्तरे सङ्क्रमेण प्रवेशेन न पुनरेकाकित्वेन एकाकिविहारितयेति । गुरुकुलान्तरसङ्क्रमणे विधिश्च" सद्दिट्ठो संदिट्ठस्स चेव सपज्जइ उपमाइ ॥ चउभंगो एत्थं पुण, पढमो भंगो हवइ सुद्धो,,॥१॥ इत्यादिरागमप्रसिद्ध इति सर्वथा गुरुरहितेन न भाव्य मिति भावो यदाह" एस उमएसण वा, कह तेनाहिंति जिणवरमय वा ॥ करिणं मिव पोयाला, जे मुक्का पव्वइयमेत्ता" इतिशब्द. प्राग्वदिति गाथार्थ ॥ पचा वृ ११ ॥ अथ गुरुगुणरहितस्तु गुरुर्न गुरुरिति विधित्याग एव तस्येष्ट इति यदुक्तं तत्र विशेषाभिधानायाह ॥

गुरुगुणरहिओ वि इह, दट्ठव्वो मूलगुणविउत्तो ॥
जोण उ गुणमेत्तविहीणोत्ति चंडरुद्दो उदाहरणं ॥३५॥

व्याख्या । गुरुगुणरहितोऽपि अपि शब्दोऽत्र पुनः शब्दार्थ स्ततश्च गुरुगुणरहितो गुरुर्न भवति । गुरुगुणरहित पुनरिह गुरुकुलवासप्रक्रमे स एव द्रष्टव्योज्ञातव्यो मूलगुणवियुक्तो महाव्रतरहित. सम्यग्ज्ञानक्रियाविरहितोवा यो न तु नपुनर्गुणमात्रविहीनो मूलगुणव्यतिरिक्तप्रतिरूपताविशिष्टोपशमादि गुणविकल इति हेतोर्गुरुगुणरहितोद्रष्टव्य इति प्रक्रम' उप प्रदर्शनार्थोवा इति शब्द. उक्तं वेहार्थे " काल परिहाणिदोसा,एत्तो इक्काइगुणविहीणेण ॥ अन्नेण वि पव्वज्जा,- दायव्वा सीलवतेण" अत्रार्थे किं ज्ञापकमित्याह । चंडरुद्रश्चण्डरुद्राभिधानाचार्य उदाहरण ज्ञापकं तत्प्रयोग श्चैव ॥ गुणमात्र विहीनोऽपि गुरुरेव मूलगुणयुक्तत्वात् चण्डरुद्राचार्यवत् तथा ह्यसौ प्रकृतिरोषणोऽपि बहूनां संविग्नगीतार्थशिष्याणाममोचनीय विशिष्टबहुमानविषयश्चाभूत् । पचा० वृ० ११ ॥

( ८ ) गुणा आचार्य्यस्य अपरिश्रावीत्यादि ॥

पुनरप्याचार्यगुणानाह ।

अपरिस्सावी सम्मं, समपासी चेव होइ कज्जेसु ।
सोरक्खइ चक्खुपिव सबालवुड्ढाउलं गच्छं ॥ २२ ॥

व्याख्या । न परिश्रवति परिकथितात्मगुह्यजलमित्येव शीलोऽपरिश्रावी आलोचनामाश्रित्य आचारांगोक्ततृतीयभगतुल्य इत्यर्थ । भगाश्चैते । एकोऽहद' परिगलत्श्रोता पर्यागलत् श्रोताश्च शीता शीतोदा प्रवाहहृदवत् । यतस्तत्र जल निर्गच्छत्यागच्छति च ।१। अपर सुपरिगलच्छ्रोता नो पर्यागलत् श्रोता पद्महृदवत् पद्महृदे तु जलं निर्गच्छति नत्वागच्छति । २। तथा परोनो परिगलत् श्रोता पर्यागलत् श्रोताश्च लवणोदधिवत् लवणे आगच्छति जलं न तु निर्गच्छति । ३ । अपरस्तु नो परिगलत् श्रोता नो पर्यागलत् श्रोताश्च मनुष्य लोकाद्बहि समुद्रवत्तत्र नागच्छति न च निर्गच्छति।४। तत्रा न्यत्र श्रुतमगीकृत्य प्रथमभगपतित श्रुतस्य दानग्रहण सद्भावात । ६ । सांपरायिककर्मापेक्षया तु द्वितीयभगपतित कषायोदयाभावेन ग्रहणाभावात तप' कायोत्सर्गादिना क्षपणापतेश्च सांपरायिककर्म कषायकर्म्म । २ । आलोचनामंगीकृत्य तृतीयभगपतित' आलोचनाया अपरिश्रावित्वात् । ३ । कुमार्ग प्रति चतुर्थभगपतित' कुमार्गस्यहि प्रवेशानिर्गमाभावात् ।४। यदि वा केवलश्रुतमाश्रित्य भंगा योज्यं ते तत्र स्थविरकल्पिकाचार्या. प्रथमभगपतिता । १ । द्वितीयभगपतितास्तु तीर्थङ्कृतः । २ । तृतीयभगपतिता यथा लदिका । तेषां तु कचिद् दृष्टापरिसमाप्ताथाचार्यादेर्निर्णय सद्भावात् । ३ । प्रत्येकबुद्धास्तूभयाभावाच्चतुर्थभगस्या ४ सम्य क्सर्वथेत्यर्थः ( समपासी चेव होइकज्जे सुत्ति) सममविपरीत पश्यतीत्येव शील. समदर्शी" दुगो नियरूव' पेच्छे' त्यादिना दृशे पासादेशः । एव विध एव योभवति क्व कार्येषु आगमव्याख्यानादिसकलव्यापारेष्वित्यर्थः । स आचार्यः रक्षति धत्ते कुमार्गे पतन्तमिति शेषः । कं गच्छ गण किंभूत सवालाश्चते वृद्धाश्च सवाल वृद्धास्तैराकुलः सकीर्णस्तं सवालवृद्धाकुल किमिव चक्षुरिव ॥

यथाचार्यस्वरूपमाह ।

सीआवेइ विहारं, सुहसीलगुणेहिं जो अबुद्धीओ ॥
सन वरं लिंगधारी, संजमजोएण निस्सारो ॥ २३ ॥

व्याख्या ( जो अवुद्धी ओत्ति ) य आचार्योऽबुद्धिकस्तत्वज्ञानरहित' ( सीयावे इत्ति ) सीदयति शिथिलीकरोति कं विहार नवकल्परूपं गीतार्थादिरूप वा । कैः सुखशीलगुणैः सुखशीलस्य साताभिलाषिणो गुणा' पार्श्वस्थादिस्थानानि सुखशीलगुणास्तै' ( स नवरित्ति ) केवल लिंगधारी वेषमात्र धारी सयम आश्रवनिरोधरूपस्तस्य योग. प्रतिलेखनादि व्यापारस्तेन रहितत्वात् निस्सारश्चर्वितताम्बूलवदिति गाथाछंद' ॥ २३ ॥

कुलगामनगररज्जं, पयहिय जो तेसु कुणइ हुममत्तं ॥
सोन वरि लिंगधारी संजमजोएण निस्सारो ॥ २४ ॥

व्याख्या । कुल गृह ग्रामं राकर नगरमष्टादशकररहित राज्य सप्तांगमयं उपलक्षणत्वात् धूलीप्रकारपरिक्षिप्त खेट कुनगरं कर्वट सर्वत्रार्द्धतृतीयगव्यूतांतरग्रामान्तररहित मडव जलपयोपेत जलपत्तनं द्वीपमिव स्थलपयोपेत स्थलपत्तन लोहादिधातुजन्मभूमिरूप आकर जलस्थलपथाद्वयमुपेत द्रोणमुख वणिक् समूहवास निगममित्यादि ज्ञेय ( पयहियत्ति ) प्रहायत्ति प्रहाय्य प्रकर्षेण त्यक्त्वा पुनर्य. आचार्यस्तेषु कुलादिषु करोति विधत्ते हु पुनरर्थे ममत्व ममैतदित्यभिप्रायमित्यर्थ । स सूरि नवरि केवलं वेषधारी सयमयोगेन निस्सार इति गाथा छन्द ॥ २४ ॥

अथ पुनरपि सुन्दराचार्यप्रशंसामाह ॥

विहिणा जो उ चोएइ, सुत्तं अत्थं च गाहइ ॥
सो धन्नो सो अपुणो अ, सबन्धू मुक्खदायगो ॥ २५ ॥

व्याख्या "विधिणा धम्ममइएहिं अइसुहरेहिं कारणगुणोवणिएहिं पल्हायन्तो श्रमण सो स चोएई आयरिओ" इत्यादाग गमोक्तप्रकारेण ( जोउत्ति )य पुनराचार्य' ( चोएत्ति ) चोदयति प्रेरयति शिष्यगण कृत्यकरणादौ तथा सूत्रमाचारांगादिश्रुतविधिनेत्यस्यात्रापि सम्बन्धनात् व्यवहारदशमोद्देशकाद्युक्तेन विधिना ग्राहयति पाठयति सूत्रपाठानान्तर तस्य

निर्युक्तिभाष्यचूर्णिसंग्रहणीवृत्तिटिप्पनकादिपरंपरोपलब्धमर्थं च विधिनेत्यस्यात्राप्यभिसम्बन्धनात् "सुत्तत्थो खलु पढमो बीओ" इत्यादिना श्रीभगवतीसूत्रपञ्चविंशतितमशतकतृतीयोद्देशकश्रीनन्दिसूत्रावश्यकनिर्युक्त्याद्युक्तेन विधिनैव ग्राहयति बोधयति अथवा सूत्रमर्थं च विधिना गाहते निरतर स्वयमभ्यस्यतीत्यर्थः स आचार्यो धन्यः पुण्यवान् अतएव ( सो अ पुणोयत्ति ) स पुण्य एव पवित्रात्मैव बधुरिव बन्धु । कुमत्यादिनिवारकत्वेन परमहितकर्तृत्वात् अतएव ( मुक्ख दायगोत्ति ) मोक्षप्राप्तिहेतुज्ञानादिरत्नत्रयलम्भकत्वेन मोक्षदायक इति अनुष्टुप्छन्द ॥२५॥

सएव भव्वसत्ताणं, चक्खुब्भूए वियाहिए ॥
दंसेइ जो जिणुद्दिट्ठं, अणुट्ठाणं जहट्ठिअं ॥ २६ ॥

व्याख्या । स एवाचार्यो भव्यसत्वानां मोक्षगमनयोग्यजन्तूनां चक्षुर्भूतो नयनतुल्यो व्याहृत कथितो जिनादिभि । स कोयो जिनोद्दिष्टमात्मोक्तमनुष्ठानं मोक्षपथप्रापकरत्नत्रयाराधनमित्यर्थः । यथा स्थितमवितथं दर्शयति कुमतिनिराकरणेन प्रकटीकरोतीति अनुष्टुप्छन्द ॥ २६ ॥

अथ पूर्वार्द्धेन सूरेर्गुणविशेषेण तीर्थकरसाम्यमुत्तरार्द्धेनाज्ञोल्लङ्घिनस्तस्य कापुरुषत्वं च दर्शयन्नाह ॥

तित्थयरसमो सूरी, संमं जो जिणमयं पयासेइ ॥
आणं अइक्कमन्तो, सो कापुरिसो न सप्पुरिसो ॥२७॥

व्याख्या । स सूरिस्तीर्थकरसम सर्वाचार्यगुणयुक्ततया सुधर्मादिवत्तीर्थकरकल्पो विज्ञेय । न च वाच्य चतुस्त्रिंशदतिशयादिगुणविराजमानस्य तीर्थकरस्योपमा सूरेस्तत्कथमस्यानुचिता । यथा तीर्थकरोऽर्थं भाषते एवमाचार्योऽप्यर्थमेव भाषते तथा । यथा तीर्थकर उत्पन्नकेवलज्ञानो भिक्षार्थं न हिण्डते एवमाचार्योऽपि भिक्षार्थं न हिण्डते इत्याद्यनेकप्रकारैस्तीर्थकरानुकारित्वस्य सर्वातिशायित्वस्य परमोपकारित्वादेश्च ख्यापनार्थं तस्या न्याय्यतरत्वात् । किञ्च श्रीमहानिशीथे पंचमाध्ययनेऽपि भावाचार्यस्य तीर्थकरसाम्यमुक्तं । यथा "से भयवं किं तित्थयरसंतिअं आणं नाइक्कमिज्जा ? उदाहु आयरिय संतिअं गोअमा ! चउव्विहा आयरिया भवन्ति । तं० नामायरिया, ठवणायरिया, दव्वायरिया, भावायरिया, तत्थ णं जे ते भावायरिया ते तित्थयरसमा चेव दट्ठव्वा तेसिं संतिअं आणं नाइक्कमेज्जत्ति" स क य सम्यग् यथास्थित जिनमत जगत्प्रभुदर्शनं नैगमसंग्रहव्यवहारर्जुसूत्रशब्दसमभिरूढैवंभूतरूपनयसप्तकात्मक प्रकाशयति भव्यानां दर्शयतीत्यर्थः । तथा आज्ञा तीर्थकरोपदेशवचनरूपां अतिक्रामन् वितथप्ररूपणादिनोल्लङ्घयन् स सूरि कापुरुष पुरुषाधम नसत्पुरुषो न प्रधानपुरुष इति । इहचाज्ञोल्लङ्घिन कापुरुषत्वमात्रमैहलौकिक फलं पारलौकिक तु तदनेकदुःखसहस्रसन्ततिसम्वलितमनन्तसंसारित्व श्रीमहानिशीथपञ्चमाध्ययनोक्तसावद्याचार्यस्येव ज्ञेय ॥

तस्मादिहज्जगत्पतिना सर्वदा सर्वार्थेषु अप्रमत्तेन भाव्यमिति पूर्वाचार्यसंस्तुत सावद्याचार्यसम्बन्ध एवैष विलोक्याऽऽचार्योपाध्यायप्रवर्तकादिना मोक्षार्थिना भगवदाज्ञा यथा आगमार्थो निरूपणीय न स्वमत्या तथात्वेऽनन्तससारित्वं इ- निगाथाछन्द ॥ २७ ॥ ग अधि ? ॥

## ( ९ ) भ्रष्टाचारत्वं दुर्गुणसङ्गः ॥

अथ के सूरय आज्ञामतिक्रामन्तीत्याह ॥

भट्ठायारो सूरी भट्ठायाराणुविक्खओ सूरी ॥
उम्मग्गट्ठिओ सूरी तिन्निवि मग्गं पणासंति ॥ २८ ॥

व्याख्या । भ्रष्ट सर्वथा विनष्ट आचारो ज्ञानाचारादिर्यस्य स भ्रष्टाचार सूरिर्धर्माचार्य १ भ्रष्टाचाराणां विनष्टाचाराणां साधूनामुपेक्षक प्रमादप्रवृत्तसाधूनामनिवारयितेत्यर्थः । सूरिर्मन्दधर्माचार्यः । २ । उन्मार्गस्थित उत्सूत्रादिप्ररूपणपर सूरिरधमाधमाचार्य । ३ । त्रयोऽप्येते मार्गं ज्ञानादिरूप मोक्षपथं प्रणाशयन्ति जिनाज्ञामतिक्रामन्तीत्यर्थ । गाथा छन्द ॥ २८ ॥

अथ तेषां त्रयाणां सेवकस्याशुभफलमाह ।

उम्मग्गनासए जोउ, सेवए सूरी नियेमणं ।
सो गोयम ! अप्पाणं, अप्पं पाडेइ संसारे ॥ २९ ॥

व्याख्या । उन्मार्गस्थितान् सन्मार्गनाशकान् १ (उ) शब्दात् भ्रष्टाचारान् २ भ्रष्टाचारोपेक्षकांश्च ३ सूरीन् य सेवते पर्युपास्ते नियमेन निश्चयेन स नरो हे गौतम ! आत्मान आत्मना पातयति ससारे चतुर्गत्यात्मके इति गाथा छन्द ॥ २९ ॥

अथ भङ्ग्यन्तरेण एनमेवार्थं दृष्टान्तेन समर्थयन्नाह ।

उम्मग्गट्ठिओ एक्को, विनासए भव्वसत्तसंघाए ॥
तं मग्गमणुसरंते, जह कुत्तारो नरो होइ ॥ ३० ॥

व्या० उन्मार्गस्थित उत्सूत्रप्ररूपणनिरत एकोऽपि अधिकारात् सूरिर्नाशयति ससारसमुद्रे अनन्तानंतमरणप्रदानेन विनाशयतीत्यर्थ । कान् भव्यसत्वसंघातान् किं कुर्वतस्तान् तन्मार्गस्थितप्रदर्शितपथ अनुसरत आश्रयत प्राकृतत्वात् वचनव्यत्यय । अत्र दृष्टांतमाह । यथा कुतार कुत्सितस्तारकोनरो भवति स बहून् पृष्ठलग्नान् जतून् संमूढान् नद्यादौ विनाशयति गाथाछन्द ॥ ३० ॥

अथोन्मार्गगामिनामेवाशुभफल दर्शयति ।

उम्मग्गमग्गसंपट्ठि, याण साहूणं गोअमा ! नूणं ।
संसारो अ अणंतो, होइ सम्मग्गनासीणं ॥ ३१ ॥

व्याख्या । उन्मार्गगा गोशालकबोटिकनिह्नवादय तेषा मार्ग परम्परा तस्मिन् अथवा उन्मार्गरूपो यो मार्ग स्तस्मिन् सम्प्रियेकीभावेन इति प्रकर्षेण स्थितानां साधूनां साधुवेश धारकाणा हे गौतम ! नूनं निश्चित संसारश्चतुर्गत्यात्मक अनतो ऽपर्यतो भवति चशब्दस्त्वनेकदुःखलक्षणक । किंभूताना तेषां सन्मार्गनाशिनां शुद्धपथोच्छेदकानां महानिशीथोक्तसुमतिनन्दाद्यवत् इति गाथाछन्द ३१ ग अधि. १ ॥

( प्रव्रज्यार्हो पञ्चदशगुणवन्त च प्रव्रज्याशब्दे )

सद्गुरुस्वरूप दर्शयति ॥

देश खित्तं उ जाणित्ता. वत्थं पत्तं उवस्सयं ।
संगहे साहुवग्गं च सुत्तत्थं च निहालए ॥ ३४ ॥

व्याख्या । आचार्यो देशं मालवकादिकं क्षेत्र रूक्षरूक्षभाविनाभाविनादिरूपं ( उ ) शब्दात् ग्लानादियोग्य द्रव्य दुर्भिक्षादिकाल इत्युपरिणामादिरूप भाव च ज्ञात्वा वस्त्र चीवर पात्रं पतद्ग्रहादि उपाश्रय मुनिनिवासस्थान सगृ

हीत कोऽर्थ । आचार्य क्षेत्रादिकारणं ज्ञात्वा वस्त्रादिकं मेल-यित्वा प्रायोगृहस्थानामदर्शयन् स्वपार्श्व एव सरक्षेत् न तु यथाकथचिदित्यर्थः । तथा ( साहु वग्गन्ति ) साधूनां वर्गोवृन्दं साधुवर्गस्तं च साध्वीवर्ग च सगृहीत तु हीनाचारवर्ग तथा सुत्तत्थं च ( निहालए ) इति सूत्रमाचारांगादि अर्थो निर्युक्ति भाष्यचूर्णिसग्रहिणीवृत्तिटिप्पनादि । सूत्रं चार्थश्चेति समाहारद्वन्द्वे सूत्रार्थं तन्निभालयति चिन्तयतीत्यर्थः । चशब्दा-त्साधूनामपि सूत्रार्थं ददातीति एव विधेय· स सदाचार्य· स्यादिति शेषः । त्र्यनुष्टुप्छन्दः ॥ १४ ॥ ग अधि १ टी ॥ भ्रष्टाचारस्य सूरेर्निन्दा यथा ॥

भट्टायारोसूरी, भट्टायाराणुविक्खओ सूरी ॥
उम्मगट्ठिओ सूरी, तिण्णि वि मग्गं पणासन्ति॥१॥

उम्मग्गट्ठिए सूरिंमिनिच्छयं भव्वसत्तसंधाए । जम्हा तंमग्गमणुसरन्ति तम्हाणतंजुत्तं । एकंपि जोदुहत्तं सत्तं पडि-बोहिं ठवे मग्गे । ससुरासुरंमि विजिगे तेण ह घोसियं आणावोयं । भूए अत्थि भविस्सति केइ जगवन्दणीय-कमजुयले । जेसिं परहियकरणे क्कवद्धलक्खाणवो बिही कालं । भूए अणागए काले ण केइ इहोहिंति गोयमा ! सूरी । णामग्गहणेण वि जेसि होज्जनियमेण पच्छित्तं । एयंगच्छिचवत्थं दुप्पसहाणंतरंतुजोरवके । तं गोयमाजाणगणिं निच्छयओ अणंतसंसारि । जेसयलजीवजगमंगलेक्ककल्लाण परमकल्लाणसिद्धिपए । वा वोच्छिन्ने पच्छितं होइ तं गणिणो । तम्हा गणिणं समसत्तुमित्तपक्खेण परहियरएणं कल्लाणकंखुणा अप्पणो विय अणाण लंघेया । एवं मेराण लंघेयव्वत्ति एवं गच्छववच्छ लंवितुनगारवेहिं पडिबद्धे संखाईए गणिणो अज्जवि बोहि न पावंति । ण लभेहिंति य अन्ने अणंतहुत्तोवि परिजमं तित्थं । चउगइभवसंसारेचिट्ठिज्जचिरसुदुक्खत्ते ॥ महा ५ अ. ।

( १० ) परहितकारित्वं सुगुणः ॥

अथ ये नाममात्रग्रहणेनाऽपि पराहितकारिणः सुरय-स्तानाह ॥

तीअणागयकाले, केइ होहिंति गोयमा ! सूरी ।
जेसिं नामग्गहणे, वि होइ नियमेण पच्छित्तं ॥ ३७ ॥

व्या० । अतीतकाले ते केचिदनिर्दिष्टनामानोऽभूवन्निति शेष । अनागतकाले च ( होहिति ) भविष्यति आगतग्रहणे मध्यस्यापि ग्रहणमिति न्यायेन वर्त्तमानकाले च सति । हे गौतम ! सूरय आचार्यनामधारका येषां परिच्यकरणादिक दूरे आस्तां नामग्रहणेऽपि भवति नियमेन निश्चयेन प्रायश्चित्तं । तथाचोक्तं । श्रीमहानिशीथपञ्चमाध्ययने "इय चायरि[illegible]ण, पणपन्न होंति कोडिलक्खाओ ॥ कोडिसह स्से कोडि, स[illegible]य तह पतिएच्चेव ॥ १ ॥ एतेसिं मज्झा एगे, निम्गु णाइ गुणगण[illegible]णो ॥ सव्वुत्तमभंगेणं, तित्थयरस्सा णुसा रिगुरू" इति गाथा १८ ॥ ३७ ॥

अथात्र हेतुमाह ॥

जओ सयरी भवंति, अणविक्खयाइ जह भिच्चवाहणा लोए ॥
पडिपुच्छेहिं चोयणं, तम्हाउ गुरू सया भयइ ॥ ३८ ॥

व्याख्या ( जओत्ति ) भिन्नं पद यतो भणितं ( सयरित्ति ) स्वेच्छाचारीणि भवति ( अणविक्खया इति ) अनपेक्षया शिक्षारहितत्वेन यथा लोके ( भिच्चवाहणत्ति ) भृत्याश्च सेवका श्च वाहनानि च हस्त्यश्ववृषभमहिषादीनीति द्वन्द्वे भृत्यवाहनानि । तथा विनेया· गुरुणां प्रतिपृच्छाभि· कार्यं २ प्रति पृच्छा ताभि· ( चोयणत्ति ) प्राकृतत्वाद्वि-भक्तिलोप । चोदनाभिश्च विनेति शेष । स्वेच्छाचारिणो भवति ( तम्हाउत्ति ) तस्मादेव कारणात्प्रतिपृच्छाभिश्चो-दनादिभिश्चाचार्यो विनेयान् सदा सर्वकालं ( भयइत्ति ) भजते सत्यापयति शिक्षयतीत्यर्थः । गाडाछद· ॥ ३८ ॥ ग० अधि १ ।

( ११ ) सूरेः म दुर्गुणो येन कुगुरुर्भवति ।

कुगुरुश्च कदा भविष्यतीति महानिशीथे अ ८ । सेभयवं केवइअेणं कालेणं पहे कुगुरुभावी होंति गोयमा ! इओ यमाइउयअध्दतेरसह्वं वाससयाणं साइरेगाणं समइकंताणं परउ भवीसुं से भयवं केणं अठ्ठेणं गोयमा ? तक्कालं इढ्ढि रससायगारवसंगए ममीकरे अहंकारग्गीए अंतो संपज्जलंतवोंदी अहमहंति कयमाणसे अमुणि य समयसब्भावे गणी भवीसु एएणं अट्ठेणं से भगवं किं सव्वेवीएवं विहे तक्कालगणि भवीसुं गोयमा ! एगंतेणं नो सव्वे केयपुण दुरन्तपंतलक्खणे अदट्ठव्वेणं एगाए जणणीए जमगसमगं पसूए निम्मेरे पावसीले दुज्जायजम्मे सुरोद्देय ंमहाभिगाहिय दूरमहामिच्छदिट्ठी भाविसुं सेयं भयवं कहं ते समुवलक्खेज्जा गोयमा ! उस्सुत्तउस्सगायवत्तणुडिस्मणमइपच्चएए वा ॥

( १२ ) प्रमादिनमाचार्य्यं शिष्यो बोधयति ॥

अथ कथचित् प्रमादिनं गुरु शिष्यो विबोधयतीत्याह ।

तुम्हारिसा वि मुणिवर, ! पमायवसगा हवंति जइ पुरिसा । तेणओ को अहं, आलंवणं हुज्ज संसारे ॥ १८ ॥

व्याख्या ॥ युष्मादृशा अपि हे मुनिवर ! श्रमणश्रेष्ठ प्रमाद-वशगा प्रमादपरवशा भवति यदि चेत् पुरुषा· पुमांसस्तेन कारणेनान्यो युष्मद्व्यतिरिक्त· कोऽस्माक मदभाग्यानामालबन-मत्र विभक्तिलोप प्राकृतत्वात् । सागरे नैरिव भविष्यति ससारे चतुर्गत्यात्मके पततामिति शेष· । अनेन विधिना शिष्य· प्रमादिन गुरुं विबोधयतीत्यधिकाराल्लभ्यते । तथाच विबोधनविधये आचार्य्यगु[illegible]नपि शिष्य आचार्यस्य दर्शयति यथा॥

पुढवीविव सव्वसहं, मेरुव्व अकंपिरं ठियं धम्मे ।
चंदुव्व सोमलेसं, तं आयरियं पभंसंति ॥ १ ॥
अप्परिसावि आलोयणा, रिह हेउकारणविहिन्नुं ।
गंभीरं दुद्धरिसं तं आयरियं० ॥ २ ॥

कालन्नुं देसन्नुं, भावन्नुं अत्तुरियं असंभंतं ।
अणुवत्तयं अमायं, तं आय० ॥ ३ ॥
लोइयसामाइएसु, सव्वेसु जस्स वक्खेवो ।
ससमयपरसमयंमि अ, तं० ॥ ४ ॥
बारसहिंवि अंगेहिं, सामाइयमाइपुव्वनिव्वद्धे ।
लद्धट्ठं गहियट्ठं, तं० ॥ ५ ॥
आयरियसहस्साइं, लहइ अ जीवो भवेहिं बहुएहिं ।
कम्मेसु य सिप्पेसु य, धम्मायरणेसु नो कइवि ॥ ६ ॥
जे पुण जिणोवइट्ठे, निग्गंथे पवयणंमि आयरिया ।
संसारमुक्खमग्गस्स, देसगा ते हु आयरिया ॥ ७ ॥
देवा वि देवलोए, निग्गंथं पवयणं अणुसरंता ।
अच्छरगणमज्झगया, आयरिए वंदयाइंति ॥ ८ ॥
जह दीवो दीवसयं, पइप्पए दिप्पई य ।
सो दीवसमा आयरिया, अप्पं च परं च दीवंति ॥ ९ ॥
देवा वि देवलोए, निच्चं दिव्वोहिणा वियाणंता ।
आयरियमणुसरंता, आसणसयणाणि मुंचंति ॥ १० ॥

इत्यादि चंद्रकवेधकप्रकीर्णकोक्तं वाच्यमिति गाथाछन्द· ॥ ग. १ अधि० ॥
प्रमादगतस्याचार्य्यस्य श्रमणोपासकेन कथं निवारणा कर्त्तव्येति ( समणोपासग ) शब्दे ॥
अथ चोदनाया अकर्त्तु· फल दर्शयन्नाह ॥

जो उ प्पमायदोसेणं, आलस्सेणं तहेव य ।
सीसवग्गं न चोएइ, तेण आणा विराहिया ॥ ३९ ॥

व्याख्या । योगणी चशब्दादुपाध्यायादिश्च प्रमाददोषेण प्रमादरूपो यो दोपस्तेन तथैव च चकारादुक्तशेपैर्मोहादिभिश्च उक्तञ्च "आलस्स १ मोह २ वन्ना, ३ थंभा ४ कोहा ५ पमाय ६ किविणत्ता ७ ॥ भय ८ सोगा ९ अन्नाणा, १० वक्खेव ११ कुऊहला १२ रमणा १३ (१) " एतैर्हेतुभि· शिष्यवर्गमंतेवासिवृन्द न प्रेरयति मोक्षानुष्ठाने इति शेपः । तेनाचार्येण उपाध्यायादिना वा आज्ञेति जिनाज्ञा विराधिता खण्डितेत्यर्थ ॥ ग अधि १ "आचार्यस्यैव तत् जाड्य, यच्छिष्यो नाववुध्यते । गावो गोपालकेनेव, कुतीर्थेनावतारिता· ( १ ) " आ म १ स्न १ अ. ॥

## ( १३ ) वैरी शिष्यस्य गुरुः ॥

अथ य·सूरिश्शिष्यस्य वैरी स्यात्त वृत्तद्वयेनाह ।

संगहोवग्गहं विहिणा, न करेइ य जो गणी ।
समणं समणिं तु दिक्खित्ता, सामायारीं न गाहए ॥ १५ ॥
बालाणं जो उ सीसाणं, जीहाए उवलिंपए ।
तं सम्ममग्गं गाहेइ, सो सूरि जाण वेरिउ ॥ १६ ॥

( संगहोवगाहेति ) सग्रहश्च शिष्यादीनां सग्रहण उपग्रहश्च तेषामेव भक्तश्रुतादिदानेनोपष्टंभन तथा तच्च करोति वा न कारयति विधिना आगमोक्तप्रकारेण योगणी आचार्य्यस्तथा च श्रमण श्रमणीं दीक्षित्वा तु शब्दात्प्रतिश्रुत्यापि समाचारीं आगमोक्ताहोरात्रक्रियाकलापरूपां सम्यगच्छोक्तां वा न ग्राहयेच्छिक्षेयेत् सम्यग् शिक्षयेदित्यर्थ ॥ १५ ॥ तथा य पुनर्या-
लानां शिष्याणां शिर प्रवृत्यवयवमिति शेष· । जिह्वया रसनया उपलिंपेत् गौरिव वत्सस्य चुम्बेत अत्यन्तवात्सल्यादित करोतीत्यर्थ· । ननु वालादीनां प्रव्राजने निषेधोऽस्ति तत्कथं बालानां शिष्यत्व मुच्यते । योऽयं प्रव्रजने वालो निषिध्यते स ऊनाष्टवर्ष· । अत्र त्वष्टवर्षोपरिवर्त्ती बालो गृह्यते । अपवादपदेन तु ऊनाष्टवर्षोऽपि ॥ तथा सम्यक्मार्गं मोक्षपथं न ग्राहयति दर्शयति न शिक्षयतीत्यर्थः । स आचार्यो वैरीति जानीहि हे गोतम ! त्वमिति विपमाक्षरेतिगाथाऽनुष्टुप्छन्दसी ॥ १६ ॥
अथ पूर्वोक्तार्थलेशं विशेषयन्नाह ॥

जीहाए विलिहंतो, न भद्दओ सारणा जहिं नत्थि ।
दंडेणवि तार्मतो, स भद्दओ सारणा जत्थ ॥ १७ ॥

व्याख्या जिह्वया विलिहन् शिष्यं चुम्बन्नाचार्यो न भद्रको न श्रेष्ठो यत्राचार्ये सारणा हिते प्रवर्त्तनलक्षणा स्मारणा वा कृत्य-स्मारणलक्षणा उपलक्षणत्वाद्वारणा अहितान्निवारणलक्षणा । तोदना संयमयोगेषु स्खलितस्यायुक्तमेतद्भवादृशां विधातुमित्यादिवचनेन प्रेरणा प्रतिनोदना तथैव पुन· २ प्रेरणा नास्ति न विद्यते तथा दण्डेनाऽपि यष्ट्याऽपि किं पुनर्दवरकादिना ताडयन् शरीरपीडां कुर्वन् स आचार्यो भद्रक· श्रेष्ठ· । यत्र गणिनि सारणा उपलक्षणत्वाद्वारणादिर्वाऽस्तीति गाथाछन्द ॥ ग० १ अधि ।

## ( १४ ) विनय आचार्य्यस्य ॥

आचार्य्ये सापेक्षै· साधुभिर्भवितव्यम् । तेषु च तेनेति दृष्टान्तं प्रदर्शयति ॥

वड्डीधन्नसुत्तरियं, कोट्ठागारं डज्झते कुडुंबिस्स ।
किं अम्हमुहा देई, केई तहियं न अल्लीणा ॥

एक कौटुम्बिकः स कर्पकाणां कारणे उत्पन्ने वृद्ध्या कालांतररूपया धान्यं ददाति । तथा च वृद्ध्या कौटुम्बिकस्य कोष्ठागाराणि धान्यस्य सुभृतानि जातानि । अन्यदा च तस्यैक कोष्ठागारं वृद्धिधान्यसुभृत वन्हिना प्रदीप्तेन दह्यते । न च केचित्कर्पका विध्यापननिमित्त तत्र प्रदह्यमाने कोष्ठागारे समागता· । किमेष कौटुम्बिकोऽस्माकं मुधा ददाति येन वय विध्यापनार्थमभ्युद्यता भवाम· ॥

एयस्स प्पभावेणं, जीवा अम्हेति एव नाऊणं ।
अन्ने तु समल्लीणा, विज्झविए तेसिं सो तुट्ठो ॥

अन्ये कर्पका एतस्य कौटुम्बिकस्य प्रभावेण च ये जीवति स्म जीवा अनुप्रत्यया जीविता इत्यर्थ । एवं ज्ञात्वा समालीनास्तत्र समागता विध्यापनाय च प्रवृत्तास्ततो विध्यापिते कोष्ठागारे स कौटुम्बिकस्तेषां तुष्टस्तत· किमकार्षीदित्यत आह ॥

जे ओ सहायगत्तं, करेसु तेसिं अवड्ढियं दिन्नं ॥
दट्ठंति न दिण्णियरे, अकासगा दुक्खजीवीया ॥

ये तु विध्यापने सहायत्वमकार्षुस्तेषामवृद्धिक कालांतरहितं धान्यं दत्त । इतरेषां तु सहायत्वमकुर्वतां दत्तमित्युत्तर विधाय न दत्त । ततस्ते अकर्पकास्ततो दुःखजीविनो जाता एष दृष्टांत· ॥
सांप्रतमुपनयमभिधित्सुराह ।

आयरियकुडुंबी व. सामाणियथाणिया भवे साहू ॥
नाणाइअगाणिभुह्मा. सुत्तत्था जाण धन्नं तु ॥

आचार्यः कुटुवीव कुटुवितुल्य इत्यर्थः। सामान्यकर्षकस्थानीयाः साधवः। आचार्यस्य निष्काटने वातादिव्याबाधाग्नितुल्या। सूत्रार्थान् जानीहि धान्यं धान्यतुल्यान् ॥

एमेव विणीयाण, करेंति सुत्तत्थसंगहं थेरा ॥
होवेति उदासीणे, किलेसभागी य समारे ॥

(एमेव) कौटुम्बिकदृष्टांतप्रकारेण ये विनीतास्तेषां स्थविरा आचार्याः सूत्रार्थसंग्रहं कुर्वन्ति सूत्रार्थान्प्रयच्छन्तीति। यस्तूदासीनस्तत्र हापयतीति न प्रयच्छतीति भावः। सचोदासीनो वर्त्तमानः केवलं सूत्रार्थयोरन्यो भवेत् क्लेशभागी च संसारे जायते ॥

संप्रति दण्डिकदृष्टांतं विभावयिषुरिदमाह ॥

उप्पण्णकारणे पुण, जइ सयमेव सहस्सा गुरू हिंमे ।
अप्पाण गच्छेमुज्झयं, परिचयती तत्थिमं नायं ॥

उत्पन्ने कारणे वक्ष्यमाणलक्षणे यदि सहसा स्वयमेव गुरुरात्मानं गच्छमुज्झयं च परित्यजति। तत्र चेदं वक्ष्यमाणज्ञातमुदाहरणं। तदेवाह ॥

सोउं परवलमायं, सहसा एक्काणिओ उ जो राया ॥
निगच्छति सो वयती, अप्पाणं रज्जमुज्झयं च ॥

यो निरपेक्षो राज्ये परबलमागतं श्रुत्वा बलवाहनान्यमेलयित्वा सहसा एकाकी परबलस्य समुखो निर्गच्छति स आत्मानं राज्यं चेत्युभयं त्यजति बलवाहनव्यतिरेकेण युद्धारंभे मरणभावात् एवमाचार्योऽपि निरपेक्षः समुत्पन्नेऽपि कारणे सहसा निष्क्रामन्नात्मानं गच्छमुभयं च परित्यजति निरपेक्षदण्डिकदृष्टान्तभावना ॥

संप्रति सापेक्षदण्डिकदृष्टांतभावनामाह ॥

सावेक्खो पुण राया, कुमारमादीहिं परवलं खविया ।
अजिए सयंपि जुज्झइ, उवमा एसेव गच्छेवि ॥

सापेक्षः पुना राजा प्रथमं कुमारादीन् युद्धाय प्रेषयति। ततः कुमारादिभिः परबलं क्षपयित्वा यदा कुमारैर्न परबलं तदा तस्मिन् जिते स्वयमपि राज्ञा युध्यते। एषैवोपमा गच्छेऽपि द्रष्टव्या। आचार्योऽपि पूर्वयतनां करोति तथापि असस्तरणे स्वयमपि हिंडते। एवं चात्मानं गच्छमुभयं च निस्तारयतीति भावः। व्य० ६ उ० ॥

आचार्यसमीपवर्तिना च शिष्येण किं विधेयमित्याह ।

तद्दिट्ठीए तम्मोत्तीए तप्पुरक्कारे तस्सण्णी तन्निवेसणे जयं विहारी चित्ताणिवाई पंथणिज्झाई वल्लिवाहिरे पासिग्रपाणे गच्छेज्जा से अभिक्कममाणे पडिक्कममाणे संकुसेमाणे पमारेमाणे विणियट्टमाणे संपरिज्जमाणे ॥ आचा० ॥ ४ अ० ४ उ० ॥

( तद्दिट्ठीए ) तस्याचार्यस्य दृष्टिस्तद्दृष्टिस्तया सततं वर्तितव्यं हेयोपादेयेषु। यदि वा तस्मिन् संयमे दृष्टिस्तद्दृष्टिस्स एव आगमो दृष्टिस्तद्दृष्टिस्तया सर्वकार्येषु व्यवहर्तव्यं तथा ( तम्मोत्तीए ) तेनोक्ता सर्वसंगेभ्यो विरतिर्मुक्तिस्तन्मुक्तिस्तया सदा यतितव्यं तथा ( तप्पुरक्कारे ) पुरस्करणं पुरस्कारः सर्वकार्येष्वग्रतः स्थापनं तस्याचार्यस्य पुरस्कारस्तत्पुरस्कारस्तस्मिन्स्वहृदये यतितव्यं तथा (तस्सण्णी) तस्य संज्ञा तत्संज्ञा तज्ज्ञानं तद्वांस्तत्संज्ञी सर्वकार्येषु स्यात् स्वमतिविरचनया कार्यं विदध्यात्तथा ( तन्निवेसणे ) तस्य गुरोर्निवेशनं स्थानं यस्यासौ तन्निवेशनः। सदा गुरुकुलवासी स्यादिति भावस्तत्र च गुरुकुले निवसन् किंभूतः स्यादित्याह (जयविहारी) यतमानो यतनया विहरणशीलो विहारी स्यात्। यतमानः प्राणमर्दनमकुर्वन् प्रत्युपेक्षणादिकाः क्रियाः कुर्यादिति। किञ्च ( चित्तनिवाती ) चित्तमाचार्याभिप्रायस्तेन निपातितुं क्रियायां प्रवर्त्तितुं शीलमस्येति चित्तनिपाती सदा स्यादिति। तथा ( पंथणिज्झाती ) गुरोः क्वचिद्गतस्य पन्थानं निर्ध्यातुं प्रलोकितुं शीलमस्येति पथनिर्ध्यायी। उपलक्षणं चैतत्। शिशयिषोः संस्तारकप्रलोकी बुभुक्षोराहारान्वेषीत्यादिना गुरोराराधकः सदा स्यात्किञ्च (पलिवाहिरे)परि समन्तात् गुरोरवग्रहात् पुरतः पृष्ठतो वा चस्थानात्सदा कार्यमृते बाह्यः स्यादेतस्माच्च सूत्रात् त्रय ईर्योद्देशका निर्गता इति। किञ्च (पासिय इत्यादि) क्वचित्कार्यादौ गुर्वादिना प्रेषितः सन् दृष्ट्वा प्राणिनां युगमात्रदृष्टिस्तदुपघातं परिहरन् गच्छेत्किञ्च (से इत्यादि) स भिक्षुः सदा गुर्वादेशविधायी एतद्व्यापारवान् भवति। तद्यथा। अभिक्रामन् गच्छन् प्रतिक्रामन्निवर्तमानः संकुचन् हस्तपादादिसंकोचनतः प्रसारयन् हस्तादीनवयवान् विनिवर्तमानः समस्ताशुभव्यापारात् सम्यक् परिस्समन्ताद्रूस्तपादादीनवयवांस्तन्निक्षेपस्थापनानि वा रजोहरणादिना मृजन् परिमृजन् गुरुकुलवासे वसेदिति सर्वत्र सम्बन्धनीयम् ॥ आचा० टी० ॥

अस्य वहुव्यक्तव्यता ( आसायणा ) शब्दे ॥

अथैवमाचार्ये रक्षिते शुश्रूषिते च को गुण इत्यत आह ॥

पुयंति य रक्खंति य, सीसा सव्वे गणीं सया पयया ॥
इह परलोए य गुणा, हवंति तप्पुयणे जम्हा ॥

गणिनमाचार्यं शिष्याः सर्वे सदा प्रयताः प्रयत्नपराः पूजयन्ति शुश्रूषन्ते च। यस्मात्तत्पूजने आचार्यपूजने इह लोके परलोके च गुणा भवन्ति इह लोके सूत्रार्थतदुपघाति परलोके सूत्रार्थाभ्यामधीताभ्यां ज्ञानादिमोक्षमार्गप्रसाधनं अथवा पारलौकिका गुणा "आयरिए वेयावच्चं करेमाणे महानिज्जरे महापज्जवसाणे भवति" इत्येवमादयः ॥ व्य० द्वि० ख० ६ अ० ॥

गुरुशुश्रूषा ( विणय ) शब्दे ॥ आचार्यस्य चतुर्विधविनये नान्तेवासी अनृणी भवतीति विनयशब्दे ॥

आचार्यस्याराधने फलं यथा ॥ "गुर्वायत्ता यस्मात्, शास्त्रारंभा भवति सर्वेऽपि॥तस्मात् गुर्वाराधन,परेण हितकाङ्क्षिणा भाव्यं " ॥ १ ॥ आवश्यकभाष्यकारेणाऽप्युक्तमेवाऽपि।

गुरुचित्तायत्ताइं, वक्खाणंगाइं जेण सव्वाइं ॥ जेण पुण सुप्पसण्णं, होइज्जं आगारिगियं ॥ १ ॥ कुसलं जइ सेयं, वायलं वए पुज्जा ! तह वियासिं न वि कूरूं, विरहंमियं कारणं पुव्वे ॥ २ ॥ व्य० १खं० १ उ० ॥

( १५ ) गुरुविनये वैद्यदृष्टान्तः ॥

आचार्यसेवायां वैद्यदृष्टान्तो यथा ॥

से जहा नाम एकेइ महावाहिगहिए अणाहूअतवंअन्ने विज्जाया सव्वेणं निव्विण्णे। तत्तओ सुविज्जदयगेण सम्मं तमवगच्छिअ जहा विहाणओ पवणे सुविकिरिअं निरूव्भजाहिच्छाचारो तुच्छपच्छभोई मुच्चमाणे वाहिणा नि

अत्तमाणवेअणे समुपलद्धनारोग्गं पवड्ढमाणतब्भावे तल्ला भनिव्वुइप्पो तप्पडिबंधाओ सिराखाराइजोगे वि वाहिसमारुगाविसायणेणं इट्ठनिप्फत्तिओ अणाकुलभावयाए किरि लवओगेण अपीडिए अव्वहिए सुहलेस्साए वड्ढइ विज्जं च बहु मन्नइ। एवं कम्मवाहिगहिए अणुहूअजम्माइवेअणे वि न्नाया दुक्खरूवेणं निव्विण्णे तत्तओ तओ सुगुरुवयणेणं अणुट्ठाणाइणा तमवगच्छीअ पुव्वुत्तविहाणओ पव्वण्णे सु किरिअं पव्वज्जं विरुद्धपमायायारे असारसप्फजोई मुच्चमाणे कम्मवाहिणा निअत्तमाणिट्ठविओगाइवेअणे समुवलब्भ चरणारोग्गं पवड्ढमाणसुहभावे तल्लाभनिव्वुईए तप्पडिबंधविसेसओ परिसहोवसग्गभावे वि तस्स संवेअणाओ कुसलासयवुड्ढीओ थिराससत्तेण धम्मोवओगाओ सया थिमिए। तेउल्लेसाए वड्ढई गुरुं च बहुमन्नइ जहोचिअं असंगपडिवत्तिए निसग्गपवित्तिभावेण। एसा गुरुई वि आहिआ भावसारा विसेसओ भगवंतबहुमाणेणं जो मं पडिमन्नइ सो गुरुत्तितदाणा अन्नहा किरिआ अकिरिआ कुलडा नारी किरिआसमा गरहिआ। तत्त वेईणं अफलजोगओ विसण्णतित्तीफलमित्थ नायं आवट्टे खु तप्फलं असुहाणुबंधे आयओ गुरुबहुमाणो अवंझकारणत्तेण अओपरमगुरुसंजोगो तओ सिद्धीरसंसयं एसो ह सुहोदए पगिट्ठतयणुबंधे भववाहितेगिच्छ नइओ सुंदरं परं उवमा इत्थ न विज्जई ॥ पं. सू. ४ सू. ॥

से जहेत्यादि। तद्यथा। कश्चित्सत्व महाव्याधिगृहीत कुष्ठादिग्रस्त इत्यर्थः। अनुभूततद्वेदनोऽनुभूतव्याधिवेदन। विज्ञाता स्वरूपेण वेदनाया.न कं हू गृहीतकरूयनकारिवद्विपर्यस्त निर्विण्णस्तत्वतस्तद्वेदनयेति प्रक्रम। तत किमित्याह। सुवैद्यव चनेन हेतुभूतेन सम्यगवैपरीत्येन त व्याधिमवगम्य यथाविधानतो यथा विधानेन देवतापूजादिलक्षणेन प्रपन्न क्रियां परिपाचनादिरूपां रुद्धयदृच्छाचार सन् प्रत्यपायभयात्तथातुच्छ पथ्यभोजी व्याध्यनुगुण्यत अनेनप्रकारेण मुच्यमानो व्याधि ना खसरायपगमेन निवर्त्तमानवेदन कंडवाद्यभावात् समुपलभ्यारोग्य सदुपलंभेन प्रवर्द्धमानतद्भाव प्रवर्द्धमानारोग्यभाव। तल्लाभनिर्वृत्त्या आरोग्यलाभनिर्वृत्त्या ततप्रतिबंधात् आरोग्यप्रतिबंधारूतो शिराक्षारादियोगेऽपि शिरावेधक्षारपात नादेऽपीत्यर्थ.। व्याधिसमारोग्यविज्ञानेन व्याधिशमायदारोग्य तदवबोधेनेत्यर्थ। किमित्याह। इष्टनिष्पत्तेरारोग्य निष्पत्तेर्हेतोरनाकुलभावतया निर्बंधनाभावात् ॥ तथा क्रियोपयोगेन इति कर्त्तव्यतया बोधेन हेतुना अपीडितो व्यथितो निवातस्थानामनौषधपानादिना। किमित्याह। शुभलेश्यया प्रशस्तभावरूपया वर्द्धते वृद्धिमाप्नोति। तथा वैद्य च बहु मन्यते। महापायनिवृत्तिहेतुरयं ममेति सम्यक् ज्ञानात् एष दृष्टांतोऽयमर्थोपनय ( एवमित्यादि ) एव कर्मव्याधिगृहीत प्राणी किंविशिष्ट इत्याह। अनुभूतजन्मादिवेदन आदिशब्दा ज्जरामरणादिग्रहः। विज्ञाता दुःखरूपेण जन्मादिवेदनाया

न तु तवैवाशक्त्या विपर्यस्त इति। तत किमित्याह। निर्विण्णस्तत्वत। ततो जन्मादिवेदनाया. किमित्याह। सुगुरुवचनेन हेतुना अनुष्ठानादिना तमवगम्य सुगुरुकर्मव्याधि च पूर्वोक्तविधानतस्तृतीयसूत्रोक्ते तद्विधानेन प्रपन्नस्सन् सुक्रियां प्रव्रज्यां विरुद्ध प्रमादाचारो यदृच्छया असारशुद्धभोजी सयमानुगुणेन अन्नेन विधिना मुच्यमान कर्मव्याधिना निवर्त्तमानेष्टवियोगादि वेदनस्तया मोहनिवृत्त्या किमित्याह। समुपलभ्य चरणारोग्य सदुपलंभेन प्रवर्द्धमानशुभभाव। प्रवर्धमानचरणारोग्यभाव बहुतरकर्मव्याधिविकारनिवृत्त्या तल्लाभनिवृत्त्या तत्प्रतिबंधावि शेषात् चरणारोग्यप्रतिबंधविशेषात् स्वाभाविकात् कारणात्प रीषहोपसर्गभावेऽपि क्षुद्व्यादिव्यसनभावेऽपि तत्संवेदनात सम्यक्ज्ञानाद्धेतो। तथा कुशलाशयवृद्ध्या क्षायोपशमिक भाववृद्ध्या स्थिराशयत्वेन चित्तस्थैर्येण हेतुना तथा धर्मोपयोगात् इति कर्त्तव्यताबोधात्कारणात् सदास्तिमित भाव इत्यविग हेण प्रशान्त। किमित्याह तेजोलेश्यया शुभप्रभावरूपया वर्द्धते वृद्धिमनुभवति। गुरु च बहु मन्यते। भावं यथाकल्प कथ मित्याह। यथोचितमौचित्येन असंगप्रतिपत्त्या स्नेहरहितस्वद् भावप्रतिपत्त्या। किमस्या उपन्यास इत्याह। निसर्गप्रवृत्ति भावेन सांसिद्धिकप्रवृत्तित्वेन हेतुना एषाऽसंगप्रतिपत्तिर्गुर्वी व्याख्याता भगवद्भि। किमित्याह। भावसारा तयौदयिकभाव विरहेण विशेषतोऽसंगप्रतिपत्ते। इहैव युक्त्यन्तरमाह। भगवद्बहुमानेन अचिंत्यचिंतामणिकल्पतीर्थकरप्रतिबंधेन कथमय मित्याह। यो मां प्रति मन्यते भावतस्स गुरुकर्मेत्यत्र तदाज्ञा भगवदाज्ञा। इत्थ। तत्व व्यवस्थित अन्यथेत्यादि। अन्यथा गुरुबहुमानव्यतिरेकेण क्रियाऽप्यक्रिया प्रत्युपेक्षणादि रूपा अक्रिया सत्क्रिया तान्यां किंविशिष्ट इत्याह। कुलटानारी क्रियासमा दुःशीलवनितोपवासक्रियातुल्या तत. किमित्याह। गर्हिता तत्ववेदिनां विदुषां कस्मादित्याह। अफलयोगत. इष्टफलादन्यत्फलं मोक्षात्सांसारिकमित्यर्थ। नयो गात् एतदेव स्पष्टयन्नाह। विषान्नतृप्तिफलमत्र ज्ञानमत्र विपाकदारुण विराधनासेवनात् एतदेवाह। आवर्त्त एव तत्फलं आवर्त्तते प्राणिनोऽस्मिन्नित्यावर्त्त संसार। स एव तत्वत स्तत्फलं विराधनाविषजन्य। किंविशिष्ट आवर्त्त इत्याह। अशुभानुबंध। तथा विराधनोत्कर्षेण एव सफल गुर्वबहुमान मभिधाय तद्बहुमानमाह ( आयन इत्यादिना ) आयतो गुरु बहुमान. सायपर्यवसितत्वेन दीर्घत्वादायतो मोक्ष स गुरु बहुमान गुरुभावप्रतिबंध एव मोक्ष इत्यर्थ। कथमित्याह। अवश्यकारणत्वेन मोक्षं प्रत्यप्रतिबद्धसामर्थ्यहेतुत्वेन। एत देवाह। अत. परमगुरुसंयोग। अतोगुरुबहुमानात्तीर्थकर संयोग। ततः संयोगाद्घटितत मरुधत्वात् सिद्धिरसंशय मुक्ति रेकांतेन। यतश्चैवमत एषोऽत्र शुभाद्यो गुरुबहुमान। कारणे कार्योपचारात्। यथाऽऽयुर्घृतमिति। अयमेव विशिष्यते प्रकृष्टतदनुबंध प्रधानशुभोदयानुबंधस्तथा २ वाधनोत्कर्षेण तथा भवव्याधिचिकित्सकगुरुबहुमान एव हेतुफलभावात्। न इत सुंदर परं गुरुबहुमानात्। उपमाऽत्र न विद्यते गुरुबहुमाने सुंदरत्वेन भगवद्बहुमानादित्यभिप्राय ॥ पं सू टी ॥

( १६ ) नमस्कार आचार्यस्य ॥

( णमो आयरियाण ) नमस्यता येषामाचार्येषदं शास्त्रतो

पकारित्वादिति ॥ ग० ३अ० १ उ० १॥

॥ आचार्य्यनमस्कारे फलं यथा ॥

आयरियनमोक्कारो, जीवं मोएइ भवसहस्साओ ॥
भावेण कीरमाणो, होइ पुणो बोहिलाभाए ॥ १ ॥
आयरियनमोक्कारो, धन्नाण भवक्खयं करंताणं ।
हिययं अणुमोयंतो, विसोत्तिया वारओ होई ॥ २ ॥
आयरियनमोक्कारो, एवं खलु वन्निओ महत्थोत्ति ।
जो मरणम्मि उवग्गे, अभिक्खणं कीरए बहुसो ॥ ३ ॥
आयरियनमोक्कारो, सव्वपावप्पणासणो ।
मंगलाणं च सव्वेसिं, तइयं हवइ मंगलं ॥ ४ ॥
आ० म० २ खं १ अ० ॥

( आचार्य्यस्य महत्त्वम्महत्तशब्दे )

( १७ ) वैयावृत्त्यं गुरोः ॥

आचार्य्यस्य वैयावृत्त्यमतिशेषशब्दे ( वेयावच्च ) शब्दे च ॥
आचार्य्यवैयावृत्ते फलं यथा ॥

गुरुवेयावच्चेणं, सदणुट्ठाणसहकारिभावाओ ॥
विउलं फलमिब्भस्स व, विसालगेणावि ववहारे ॥ २२ ॥

स्या० गुरुवैयावृत्त्येन आचार्यविषयेण भक्तादिदानग्लानताप्रतिचरणादिलक्षणेन हेतुना सदनुष्ठाने गुरुगते जिनप्रवचनार्थप्रकाशनगच्छपालनादौ सहकारिभावो य सहायककरणं स तथा तस्मात्सदनुष्ठानसहकारिभावत । किमित्याह । विपुलं महत्फलं कर्मक्षयलक्षणं गुरुकुलवासिनो भवति । कस्मिन्निवेत्याह । इभ्यस्येव सुवर्णलक्षादिमान् महाधनपतेरिव । स केन विशोपकेनाऽपि तदीयद्रव्यविंशतितमभागेनाऽपि । आस्तां सर्वेण व्यवहारे वाणिज्ये क्रियमाणे सति । तथा हि । लक्षपतिसंबन्धिना लक्षविंशतिभागेनाऽपि । आस्तां सर्वेण सहस्रपंचकलक्षणेन व्यवहारतो वणिक्पुत्रस्य महान् लाभो भवत्येव । गुरोर्वैयावृत्त्यमात्रमपि कुर्वन् महत्फलमासादयति गुरुविषयवैयावृत्त्यमात्रस्याऽपि महत्वादिति । अन्ये त्वाहु । इभ्यस्य गृहागतस्य विशोपकेनाऽपि व्यवहारे सत्कार इति गाथार्थः । पंचा० ११ वृ. ।

आचार्य्यस्य च बलाभियोगमन्तरेणैव मोक्षार्थिना स्वयमेव प्रत्युतेच्छाकार दत्वाऽभ्यर्थितेनैव वैयावृत्त्यादि कर्त्तव्यमितीच्छाकारशब्दे ॥

( १८ ) गच्छाधिपतिः केन कर्म्मविपाकेन भवति ॥

केन कर्मविपाकेनाऽऽचार्यो भूत्वा ईप्सितं लभत इति महानिशीथे ५ अध्य० यथा ॥

से भयवं नाकयरेणं कम्मविवागेणं तेणं गच्छाहिवइणा होऊण पुण इच्छितं समाविआयत्ति गोयमा ! गाणाइ भयवणं से भयवं कयरेणं से मायावइए जेणं पयगी ........संसारे वीसयलपावायपणीयविसुद्धजणे णिंदे सुगि.......मसुत्तसूकरिसमजायपमाणपागनिप्फ.......ग्गे इव तम्स भव्वे मयलदुक्खे माणमाइए ...सणम्स परमपवित्तनमस्स एं अहिंसाल-क्खणसमणधम्मस्स विग्घे सम्मग्गला निरयदारभूए सयलअकित्तीकलंककलिकलहवेरायणवनिहाणनिम्मलकुलस्सणं दुप्परिसअकज्जकज्जलकन्हमसीखपणे तेणं गच्छाहिवइणा इत्थीभावे णिविविएत्ति गोयमा! णो तेणं गच्छाहिवइ तेहिएणं अणुमवि माया कया सेणं तहा पुहवइचक्कहरे भवित्ता पयरलोगभीरूए णिव्विणकामभोगे तणमिव परिविच्चाएं तं तारिसं चोइसरयणनवनिहीतो चोसट्ठीसहस्से वरजुवईणं बत्तीससाहस्सीओ अणादिवरनरिंदछन्नउईगामकोडीओ जाव ण भ्रक्खंभजरहवासस्स णं देविंदोवमं महारायलच्छितीयं बहुपुन्नचाईए णीसंगे पव्वइएय थोवकालेणं सयलगुणोहधारी महातवस्सी सुयहरे जाए जोगेणाऊणं गुरुहिं गच्छाहिवई समणुन्नाए तहेव गोयमा! तेणं सुदिट्ठसुग्गइपहेणं जहोवइट्ठसमणट्ठेणं माणेणं उग्गाभिग्गहाविहारत्ताए घोरपरिसहोवसग्गाहियासणेणं रागद्दोसकसायविवज्जणेणं आगमाणुसारेणं सुविहिए गणं परिचालणेणं आजम्मसमणा कप्पपरिभोगवज्जणेणं छक्कायसमारंभविवज्जणेणं ईसंपिदि व्वोरालियमेहुणपरिणामविप्पमुक्को णं इह परलोगासंसाइणियाणमायाइसल्लाविप्पमुक्केणं णीसल्लालोयणनिंदणगरहणेणं जहोववइट्ठपायाछित्तकरणेणं सव्वत्था पमिबद्धत्तेणं सव्वपमायालंवणं विप्पमुक्के णइ पइणिदिट्ठअवसेसीकए अणेगभववसंचिए कम्मरासी अमोगभवे तेणं माया कया तप्पव्वईणं गोयमा ! सविवागे सेभयवं कयरा उ ण अन्नभवे तेणं महाणुभागेणं मायाकया जीएणं एरिसो दारुणविवागो गोयमा! सेणं महाणुभागस्स गच्छाहिवइणो जीवेण णूणाहिएयणा फलं लक्खइमेव भवग्गहणा ॥

आचार्य्यस्य प्रायश्चित्तं महानिशीथे. अ.६ यथा ॥

से भयवं जेणं गुरुं सहस्साकारेणं अन्नयरे ठाणे चुकेज्ज वा खलेज्ज वा सेणं आराहगेण वा गोयमा ! गुरूणं गुरुगुणेसु वट्टमाणो अखलियसीले अपवादी अणालस्सी सव्वालंवणविप्पमुक्के सममत्तुमित्तपक्खे समग्गपक्खवाए जावणं कहाभाणिरे सद्धम्मजुत्ते भवेज्जा णो एं उम्मग्गदेसए अहमाणुरए भवेज्जा सव्वहा सपयरिहिएं गुरुणा ताव अप्पमत्तेणं भवियव्वं । णो एं पमत्तेणं जइणपमादी भवेज्जा सेणं दुरंतपंतलक्खणे अदट्ठव्वे महापावे जईणं सवीरिए हवेज्जा । तेणं कयदूच्चरियं जहावत्तं सपरसीमगणाणं पकवावेय जहा दुरंतपंतलक्खणे अदट्ठव्वे महापावकम्मकारी संमग्गं पणासेउ अहयंतिएवं निंदित्ता गरहित्ताणं आलोइत्ताणं च जहा भणियं पायच्छित्तमणुचरेज्जा । सेणं कि उद्देसेणं आराहगे भवेज्जा ।

जइणं नीसल्ले नियट्टी विप्पमुक्के न पुणो संमग्गाउ परिजंसेज्जा । अट्ठाणं परिजंसस तओ णाराहेइ ॥

आलोचनाया अप्रदाने आचार्यस्य प्रायश्चित्त ( मालोयणा ) शब्दे ॥ आचार्यस्यावश्यकप्रमादे प्रायश्चित्त (मावस्सग) शब्दे।

( १९ ) अतिशया आचार्य्यस्य ॥

आचार्य्यस्य पञ्चातिशया ( अइसेस ) शब्दे ॥

आचार्यस्य बहिर्गमने दोषः ( अइसेस ) शब्दे, ( निग्गमन ) शब्दे च ॥

आचार्य्यस्य संज्ञाभूमिगमन(अइसेस)शब्दे(थंडिल्ल)शब्दे च।

गोचरचर्य्यां कारणेऽसत्याचार्य्येण न गंतव्येति ( अइसेस ) शब्दे ( गोयरचरिया ) शब्दे च ॥

आचार्य्यस्य शुक्लवस्त्रकीदृशम ( इसेस ) शब्दे ॥

उपाश्रयस्याऽन्तर्बहिर्वा निवसन्नाचार्य्यो न दुष्यतीत्य(इसेस) शब्दे वसतिशब्दे च ॥

आचार्यस्याचारप्रकल्पे भ्रष्टे कर्तव्यता (आयारपकप्प)शब्दे। आचार्य्यः स्मरन्नस्मरन् वा कल्पाकं उपस्थापयेन्नोपस्थापयेद्वा तत्र कर्त्तव्यता ( उवट्ठाण ) शब्दे ॥

आचार्य्योपसम्पत्( उवसंपया ) शब्दे ॥

आचार्य्ये प्रमादिनि शिष्याणां गणान्तरोपसंपत्तिः ( उवसंपया ) शब्दे॥

आचार्य्यादौ मृते ऽन्यस्योपसम्पत् ( उवसंपया ) शब्दे।

संयमसंरक्षणार्थमन्यत्रोपसम्पद्येत तत्र दृष्टान्तादिः ( उवसंपया )शब्दे ॥

वर्षास्वाचार्य्ये कालगतेऽन्यत्रोपसम्पत्तिः ( उवसंपया) शब्दे।

आचार्यस्य कृतिः ( कम्म ) शब्दे ॥

आचार्य्यस्य तीर्थकरसमानत्वं ( वेयावच्च ) शब्दे ॥

निक्षुणा कृतः शिष्य आचार्यस्येति ( सीस ) शब्दे ॥

आचार्य्यस्तुतिः ( थुई ) शब्दे ॥

( २० ) निर्ग्रन्थीनामाचार्य्यः ॥

श्रमणीनामाचार्य्यावश्यकता यथा ॥

आयरियउवज्झातो, तइया य पत्तिणीओ समणीणं ॥
आणसि अट्ठाएत्ती, होइ एएसि-तिएहंपि ॥

श्रमणीनामाचार्य उपाध्यायस्तृतीया प्रवर्त्तिनी च भवति । श्रमणानां त्वाचार्योपाध्यायास्ततोऽन्येषामर्यायेति । यदुक्तं सूत्रद्वयेऽपि व्याख्यातम्। व्य० २ ख ७ उ०॥

तथा च व्यवहारसूत्रम् ॥

तिवासपरियाए समणे निग्गंथे तीसवासपरियाए समणीए निग्गंथीओ कप्पइ उवज्झायताए उदिसित्तए धारित्तए । वा पंचवासपरियाए समणे निग्गंथे सट्टिवासपरियाए समणीए निग्गंथिए कप्पइ आयरियत्ताए उदिसित्तए ॥ १६ ॥

व्याख्या । त्रिवर्षपर्यायश्रमणो निर्ग्रन्थस्त्रिंशद्वर्षपर्यायायाः श्रमण्या कल्पते उपाध्यायतया उद्देष्टु। पञ्चवर्षपर्यायः श्रमणो निर्ग्रंथ षष्टिवर्षपर्यायायाः श्रमण्या निर्ग्रन्थ्या कल्पते आचार्यतया उपाध्यायतया उद्देष्टुमिति एष सूत्राक्षरार्थः ॥ सम्प्रति भाष्ये विस्तरः ॥

तइयंमिउ उद्देसे, दिसासु जा गणहरा समक्खाओ ॥
सो चेव य होइ इहं, परियातो वक्खितो नवरं ॥

तृतीये उद्देशे दिक्षु आचार्योपाध्यायप्रवर्त्तिस्थविरगणावच्छेदिरूपासु यो गणधर आचार्य उपाध्यायो वा समाख्यात स एव इहाऽपि भवति ज्ञातव्यः । नवरमिह पर्यायोऽधिको वर्णित: तत् स एव प्रपंच्यते ॥

तेवरिसो तीसिया, जहण्णुवत्ताए कप्पइ उवज्झे ॥
वितियाए सट्ठि सयरा, य जम्मणयणवास आयरितो ॥

त्रिवर्षस्त्रिवर्षपर्याय उपाध्यायः कल्पते त्रिंशकायास्त्रिंशद्वर्षपर्यायाया जन्मना जन्मपर्यायेण जघन्यतश्चत्वारिंशकायाश्चत्वारिंशद्वर्षपर्यायाया उत्कर्षतो देशोनपूर्वकोटिकायाश्चत्वारिंशत्कथं स्यादिति चेदुच्यते। दशवर्षजातायाः प्रव्रज्यायाः प्रतिपत्तिस्त्रिंशद्वर्षाणि व्रतपर्यायं,एवं चत्वारिंशत्तथा द्वितीयस्या श्रमण्या निर्ग्रंथ्याः षष्टिवर्षव्रतपर्यायाया जन्मतो जघन्यतःसप्ततिःसप्ततिवर्षपर्याय आचार्यः कल्पते।उत्कर्षतो देशोनपूर्वकोटिकाया जन्मनः सप्ततिर्वर्षाणि कथं भवंतीति चेदुच्यते। दशवर्षपर्यायायाः प्रव्रज्याप्रतिपत्तिः प्रव्रजितायाः षष्टिवर्षाणीति ।

गीयागीतावुड्ढा व, अवुड्ढा जाव तीसपरियाया।
अरिहंति तिदुसंगहं सा, दुसगहं सा भयपरेणं ॥

गीता चागीतार्था वा भवतु अगीता वा गीतार्था वा तथा वृद्धा च। वा भवतु।अवृद्धा वा यावत्त्रिंशद्वर्षपर्याया तावत्रिय मात् त्रिसंग्रहं त्रया णामाचार्योपाध्यायप्रवर्तिनीनां संग्रहमर्हन्ति द्विसंग्रह वा भय पारण त्रिंशद्वर्षपर्यायात्परतोऽभजनीना वि कल्पना त्रिसंग्रहमुपाध्यायस्य प्रवर्तिन्या वा अरोधत । एतदेव भावयति ॥

वयपरिणया य गीया, बहुपरियारा य निव्वियारा व।
होज्जउ अणुवज्झाया, अप्पवत्तिणिजाव सट्ठी ओ॥

वयसा परिणता गीतार्था बहुपरिवारा निर्विकारा च सा यावत्षष्टिस्तावदनुपाध्याया वा भवेदप्रवर्त्तिनी वाप्य भवति द्विसंग्रहिका ।

एमेव अणायरिया, थेरी गणिणा व होज्ज इयरीय ।
कालगतोसण्णाए व, दिसाए धारेंति पुव्वदिसं ॥

षष्टिवर्षेभ्य परतो गणिनी प्रवर्त्तिनी इतरा वा अप्रवर्त्तिनी स्थविरा अनाचार्या भवेत्। कथमित्याह ( कालगतोसण्णाए वेत्यादि ) कालगतायामवसन्नायां वा दिशि आचार्यलक्षणायां षष्टिवर्षेभ्य परतो वर्त्तमाना आर्यिका धारयन्ति पूर्वां दिशमेवमनाचार्या भवंति । किंकारण संयतीनामवश्यं संग्रहीष्यते तत आह ॥

बहुपच्चवाय अज्जाउ, नियमा पुण संगहे अपरिच्छया ।
संगहिया पुण अज्जा, थिरयावरसंजमा होइ ॥

आर्या पुनर्बहुप्रत्यवाया ततः संग्रहे सति नियमात् परिभूता भवति। परिभवस्यानभ्युपगमयने संगृहीता पुनरार्या किं [illegible] परसंयमा भवति। तत संग्रह इष्यते। तत्र के संयता इत्याह ।

पेसी अज्जा दीया, जे पुव्वमुदीहट्टा अगाराउ ॥
ते सव्वे भत्तव्वा, दुसंगहं जनयं नेगय ॥

पूर्वं कल्पाध्ययने द्विसंग्रहं वर्णयता पेसीअजिका आदिशब्दा-त्कुलपुत्रनोजिकादिपरिग्रहः । इत्यादिका उदाहृता अपायास्ते सर्वेऽत्रापि वक्तव्यास्ता यदपायदर्शनतः संग्रहो मन्येत तदेव दृढयति ॥

अजाउविइलखंधा, लता वाएण कंपते जले वा ॥
नात्रा अबंधणावा, उवमा एस असंगहे होइ ॥

अजातविपुलस्कंधा यथा वातेन लता कंपते जले वा । यथा अवधना बंधनरहिता नौरेवा असंग्रहे उपमयाऽप्यसंगृहीता सती बहुप्रत्यवायवातोत्कलिकाभिरितस्ततः संयमात्कम्पते इत्यर्थः ॥

दिट्ठंतो गुव्विणीए, उ कप्पट्ठगबोधिएहि कायव्वो ॥
गब्भत्थे रक्खंती, सामत्थंरवतुए अगमे ॥

अत्र लोके दृष्टान्तो गुर्विण्या कर्तव्यो लोकोत्तरे कल्पस्यकथो-धिकैः क्षुल्लकाचौरैः तत्र गच्छे पुत्रे स्वगोत्रराजादयस्तां रक्षति स एष पुत्रप्रभावः । अवटे गते चौरे क्षुल्लकस्य तन्मारणाय साम र्थ्यपर्यालोचनं सोऽप्येष पुरुषस्य प्रभावस्तत्र प्रथमतो गुर्विणी दृष्टांतं विभावयिषुस्तावदिदमाह ॥

सगोत्तरायमादीसु, गब्भत्थोवि धणं सुतो ॥
रक्खए मायरं चेव, किमुता जायवट्टितो ॥

गर्भस्थोऽपि यत स्वगोत्रराजादिषु धन जिघृक्षुषु धनं रक्षति मातरं च किं पुनर्जातः प्रवर्द्धितश्च सुतरां रक्षति । सूत्रं यथा गर्भस्थोऽपि रक्षति तथा प्रतिपादयति ॥

वणिएपरायासिट्ठे, गब्भिणिधणमच्छ धूपसूयाए ॥
तव्वं सुयस्स दाहं, धूया पवत्तवेवाहे ॥

एको वणिक् तस्य भार्या आपन्नसत्त्वा स वणिक् कालग-तस्ततः केनाऽपि राज्ञः शिष्टं देव! गुर्विण्या धनमस्ति राज्ञोक्तं तिष्ठतु तद्वित्तं । यदि प्रसूताया सुतो भविष्यति । ततः सर्वं सुतस्य दास्यामो दुहितरि च जातायां यावता भक्तं यावता च विवाहस्तावन्मात्रं दास्यामः । एव गच्छोऽपि । गर्भस्थोऽपि सुतो राज्ञः स्वगोत्रे भ्यश्च धनं रक्षति मातरं च । अन्यथा स्वगोत्र जराज्ञा चाद्यापि तव पार्श्वे धनमस्तीति बहुधा विलुप्यते ॥ भावितं लौकिकमुदाहरणमधुना लोकोत्तरं भावयति ॥

लोउत्तरिए अज्जा, खुड्डग बोहिहरणं पसरणीयं ॥
चोरो मरणं कूवे, सामत्थए चारणा लेट्ठ ॥

लोकोत्तरिकोऽयं दृष्टांतः । कचिद्ग्रामे मालवगधरानीकमाप नितं । तत्र कैश्चिद्बोधिकैश्चौरैरार्यिकाणामेकस्य क्षुल्लकस्य हरण कृतं । ते चौरा अन्यस्यैकस्य चौरस्यार्जिकाः क्षुल्लकं न समर्प्याऽन्यस्य हरणाय गताः । स चैव चौरस्तृषापीडितः सन् कूपे पानीयायावतीर्णः । ततः क्षुल्लकश्चिन्तयति । वयमिति । वयमेतावन्तस्त्याक्त बहवोऽप्यमेकस्तत किमेक स्यापि न प्रभविष्याम इति विचिन्त्य ता आर्यिका भणिताः । पाषाणपुंजमेनं कूपमंस्ना नेच्छनि न मारयिष्यतीति कृत्वा ततः क्षुल्लकेन तच्च श्रुत्वा महानेक पाषाणस्तस्योपरि मुक्तस्ततः पश्चात्ताभिः सर्वाभिरेककाल पाषाणा मुक्तास्ततः पाषाणपुंजे नाक्रान्तश्चोरोमरणमुपागमत् । तत क्षुल्लकेन तास्ततो नि-ष्कासिता यत क्षुल्लको रक्षति किंपुनर्महान् तत एतेन कारणे न उपाध्याय आचार्यश्च त्रिवर्षपंचवर्षपर्यायार्यागतस्थविर-

पर्यायाणामपि गीतार्थानामपि दीयते । व्य. ३ स्त्र. ७ उ. ।

( २१ ) आचार्ये कालगते आचार्यान्तरस्थापनं ॥

( १ ) आयरियउवज्झाए गिलायमाणे अन्नतरं विवज्ज अज्जो माएणं कालगतंसि समणंसि अयं समुक्कसियवे सेय समुक्कसणारिहि समुक्कसियवे णो समुक्कसिणारिहि णो समुक्कसियवे अत्थि यो अत्थ अन्नेकेइ समुक्कसिणारिहे से समुक्कसियवे णत्थि या अत्थ केइ अन्ने समुक्कसिणारि-हे सो चेव समुक्कसियव्वे । तेसिं चणं समुक्कट्ठंसि परोवएज्जा दुसमुक्कट्ठंति अज्जो णिक्खिवाहितस्स णं णिक्खिवमाणस्स वा णत्थि केइ अत्थे एवापरिहारे वा जे तं साहम्मियं अहाकप्पाणं णोअब्भुट्ठं तेसिं व सव्वेसिं तप्पति यं छे एवा परिहारे वा ॥ व्य० सू० उ. ४ ॥

( आयरिय उवज्झाए गिलायमाण ) मित्यादि अथास्य सूत्रस्य कः संबंध इत्यत आह ॥

आयरियत्ते पगते, अणुयत्तं तेयकालकारणंमि ।
गच्छे सावेक्खोवा, वुत्तोइ मतो वि सावेक्खो ॥

आचार्यत्वं पूर्वसूत्रेषु प्रकृतमनुवर्त्तमानं च कालकरणं तत आचार्यत्वे प्रकृते अनुवर्तमानमेवाकालकरणे इदमपि सूत्र मापतितमत्राऽप्याचार्यत्वस्य कालकरणस्य वाभिधास्यमान-त्वात् यदि वा पूर्वमर्थतः सापेक्ष उक्तोऽयमपि चाधिकृतसूत्रे णाभिधीयमानः सापेक्ष इति सापेक्षत्वप्रकरणादनंतरसस्य सूत्रस्योपनिपातः । अनेन संबंधेनायातस्य व्याख्या ॥ आचार्य उपाध्यायो वा धातुक्षोभादिना ग्लायन् अन्यतरमुपाध्यायप्र-वर्त्तिगणावच्छेदकगीतार्थभिक्षूणामन्यतमं सापेक्षः सन् वदेत् । आर्य ! मयि कालगते सति अयं समुत्कर्षयितव्यः आ-चार्यपदे स्थापयितव्यः । सचेत्परीक्षया समुत्कर्षणार्हो भवती ति । ततः समुत्कर्षयितव्यो नोचेत्समुत्कर्षणार्हस्तर्हि नो समु-त्कर्षयितव्यः । अथ यो ऽसौ पूर्वमाचार्येण समीक्षितः सोऽ भ्युद्यतविहारमभ्युद्यतमरणं वा व्यवसितस्तत्रमाह । अस्ति चात्र गच्छेऽन्यः कश्चित्समुत्कर्षणार्हः स समुत्कर्षयितव्यः अथ नास्ति कश्चिदन्यः समुत्कर्षणार्हस्तर्हि स एवान्यय्यैः समुत्क र्षयितव्यः । तस्मिंश्च समुत्कर्षिते परोगच्छे वदेत्तं दुःसमुत्क र्षं वे तव हे आर्य ! तस्मान्निक्षिप एवं तस्य निक्षिपतो नास्ति कश्चिच्छेदः परिहारो वा । उपलक्षणमेतदन्यतपो वा सप्तरा-त्रादिक ये पुनः साधर्म्मिका गत्रसाधवो यथा कल्पेन आव-श्यकादिषु यथोक्तविनयकरणलक्षणेन नोत्थाय विहरति तेषां सर्वेषां प्रत्येक तत्प्रत्ययं यथा कल्पनेऽभ्युत्थानप्रत्य यश्छेदः परिहारः सप्तरात्रं वा तप प्रायश्चित्तमिति सूत्रसंक्षे पार्थः । एतमेव भाष्यकृत्प्रपचयन्प्रथमतो गिलायमाण इत्यस्यार्थं भावयति ॥

अतिसयनरिट्ठतो वा, धातुक्खोभेण वा धुवं मरणं ।
नाउं सावेक्खगणी, भणंति सुत्तम्मि जं वुत्तं ॥

अतिशयेन श्रुतज्ञानातिशयादिना अरिष्टतो वा अरिष्टदर्शनतो वा धातुक्षोभेण वा ध्रुवं मरणं ज्ञात्वा सापेक्षा गच्छापेक्षापेता गणिनो यत्सूत्रे उक्तं ( मज्झेकालगयंमी ) त्यादि तद्भणंति सांप्रत ( मन्नतरं वएज्जा ) इत्यस्यार्थमाह ॥

अन्नयर उवज्झाया, ढिगाउ गीयत्थपंचमा पुरिसा ।
उक्कसणमणणत्तिय, एगट्ठं ठावणा चेव ॥

उपाध्यायादिका उपाध्याय प्रवर्त्ती गणावच्छेदको गणी गीतार्थश्च भिक्षुरित्येवं रूपा गीतार्थपंचमाः पुरुषाः तेषामन्यतमोऽन्यतरः समुत्कर्षण मननं स्थापना आचार्यत्वस्थापनमित्यर्थः ॥

पुव्वं गावेति गणे, जीवंतो गणहरं जहा राया ।
कुमरेउ परिच्छित्ता, रज्जरिहं ठावए रज्जे ॥

पूर्वमेव जीवन्नाचार्यो यः शक्तिमान् त गणधरं गणे स्थापयति। यथा राजा कुमारान्परीक्ष्य यः शक्तिमत्तया राज्यार्हस्तं राज्ये स्थापयति । कथं परीक्षेत्यतः परीक्षाविधिमाह ॥

दहि कुम्भ अमच्च आणत्ती, कुमारा अतिणएतहिंएको ।
पासे निरिक्खिऊणं, असिमंति पवेसणे रज्जं ॥ १ ॥
एगो राया बहुपुत्तो, सो चिंतेइ जो सत्तिमंतो ।
तं रज्जे ठावेहामि, ततोकुमारे परिच्छिउ माढत्तो ॥ २ ॥
आणत्ता पुरिसा दहि, घम्गे एगत्थओगासे ।
ठवेह तेहिं ठवेत्ता, रण्णो निवेदियं अमच्चो जाणितो॥३॥
विच्छ तुमं दहियम्भाणं, पासे अत्था हिगतोअमच्चो ।
अन्नाते कुमारा सद्दाविता, जाणिया वत्थदहिघम्मेकेकं ४
आणेह सेगया अम्रं, वहंतयं न पासंति ।
ततो ते अप्पासंता सयं चेव दहिघम्मेकेकं ॥ ५ ॥
घेत्तुंसंपट्ठियाएकोकुमारो, पासाणि निरिक्खेत्ता असं च ।
हंतयमपासंतो अमचं जणति दहिघमं अमचे ॥ ६ ॥
नेच्छइ कुमारेण असिं, उज्जिरिऊण जाणइजइनेच्छासि
सीसंतेपाडेमि अमच्चेणगहितो, दहिघमो कुमारो तं घेत्तुं
गतो रायसमीवं ॥ रण्णा एस सत्तिमंतोत्ति परिक्खि
त्ता रज्जेठवितो ॥ ७ ॥

अक्षरयोजनात्वियं। दधिकुटा एकत्र राज्ञा पुरुषैः स्थापितास्तदनंतरममात्यस्याज्ञप्तिः प्रदत्ता। यथा घटानां पार्श्वे तिष्ठ। तत कुमारा दधिघटानामानयने निरोपितास्तत्रैकः कुमारः पार्श्वात् निरीक्ष्याऽन्यमपश्यत् अमात्यस्योपरि असिरुद्गारितस्ततो मंत्रिणा दाधिघटो गृहीतस्तेन दधिघटस्य प्रवेशने कुमारेण कारिते दृष्टे तस्य कुमारस्य राज्य दत्तवान् । अत्रोपनयमाह ॥

दसविहवेयावच्चतिउ, कुसलज्जयाणमेवं तु ।
ठावेंति सत्तिमंतं, असत्तिमंते वहूदोसा ।

एवमाचार्योऽपि दशविधैवैयावृत्ये उद्यतानामुद्यतमतीनां मध्ये ( कुसलत्ति ) यो यत्र कुशलस्तस्य तत्र नियोग करोति त तत्र नियोजयति। यस्त शक्तिमंत गणधरं स्थापयाति अशक्तिमति तु स्थाप्यमाने वहवो दोषाः के ते इतिचेदुच्यते। सोऽश क्तिमत्वेन शक्नोति साधून् यथायोगमनियोक्तुं। तत आहारोपधिपरिहानिर्निर्जरातश्च ते परिभ्रश्यति। अथाशुकारणन पूर्वं न स्थापित स्यात्ततोऽप्यस्थापिते गणधरे स कालगतो न प्रकाशयितव्य इत्यादि पूर्वोक्तमपि च सातव्यम् ॥
अथैव विधिशेषमाह ।

दोमादीगीयत्थे पुव्वुत्त, गमेण सति गणं विभए ।
मीसेव अणरिहे वा, अगीयत्थे वा जएज्जाहि ॥

आचार्येण शिष्या निर्मापितास्ते द्वौ त्रयश्चत्वारो वा भवयुस्तेषु रूत्नादिषु गीतार्थेषु सति प्रभवति परिवारे पूर्वोक्तागमेन तृतीयोद्देशकोक्तेन प्रकारेण गण विभजेत् तेषु सर्वेष्वपि विभज्य पृथक् २ गणोदातव्य इत्यर्थः ॥ तथा मिश्रानाम तेषामाचार्यशिष्याणां मध्ये केचित् गीतार्था केचिद्गीतार्थास्तानपि विभजेत्। किमुक्त भवति। यो गीतार्थास्तान् गणधरपदे स्थाप्य तया पृथक् कुर्यादितरांस्त्व गीतार्थाननर्हतया अथ वा यैरर्थो देशतो गृहीतो न देशतो गृहीतस्ते मिश्रास्तान् विभजेत् एते मिश्रा अपि योग्या एते त्वयोग्या इति विभागेन स्थापयेत् तथा ये शरीरेण जुंगिकतया*सर्वथा गणधरपदानर्हास्तानपि विभजेत् वाशब्दोऽपि शब्दार्थः ॥ एकांतेनाऽयोग्यतया पृथक् स्थापयेत् अगीतार्थत्वाश्च भजेत् ।इयमत्र भावना। योऽगीतार्थानामाचार्यलक्षणोपेतास्ताननर्हतया स्थापयति ये पुनरगीतार्था अपि संभाव्य श्रुतसंपदा आचार्यलक्षणोपेतास्तान् योग्यतया पृथक् स्थापयति ॥
सम्प्रति मिश्रपदव्याख्यानार्थमाह ॥

गीयागीया मिस्सा, अहवा अत्थस्स देसो गहितो उ ।
तत्थ अगीया णअरिहा, आयरिय तस्स होंतीउ ॥

केचित् गीता गीतार्थाः केचिद्गीतार्था एते मिश्रा अथवा अर्थस्य देशो यैर्गृहीतस्ते मिश्रास्तत्र ये अगीता आचार्यलक्षणपरिभ्रष्टाश्च ते आचार्यत्वस्याऽनर्हा भवंति॥ सम्प्रति " सेय समुक्कसणारिहे समुक्कसियव्वो नासमुक्कसणारिहे णो समुक्कसियव्वे,, इत्यस्य भावार्थमभिधित्सुः प्रथमत पूर्वपक्षमुत्थापयति ॥

कहमरिहो वि अणरिहो, किंतु हु असमिक्खकारिणो
थेरा । ठावेंति जं अणरिहं, चोयग!सुण कारणमिणं तु ॥

परो ब्रूते । कथ पूर्वमाचार्यविद्यमानवेलायामर्होऽपि सन् पश्चादनर्हो जातो येनोच्यते। स चेत्समुत्कर्षणार्हस्तर्हि समुत्कर्षयितव्य । किंतु वितर्के वितर्कयामि। हु निश्चितमसमीक्षितकारिस्थविरा आसीरन्। यदनर्हं स्थापयाति। यथाय समुत्कर्षयितव्य अत्र सूरि प्राह। चोदक! शृणु कारणमिद येन पूर्वमर्होऽपि पश्चादनर्हो जात ॥
तदेव कारणमभिधित्सुर्द्वारगाथामाह ॥

उप्पियणभीतमंदिसिए, देसिए चेव फरुसंसंगहिए।
वायगनिप्फावग, अणुमीसिइच्छाअहाकप्पो ॥

( उप्पियणं ) मुहुः श्वसन तद्वारं भीतसदेशनद्वारमेतदिग्द्वारं परुषद्वारमेतानि चत्वार्यपि वस्तुनार्थविषयाणि । संग्रहद्वार वाचकनिष्पादक द्वारमन्यशिष्यद्वारमिच्छाद्वारं यथा कल्पद्वारमित्येतानि संग्रहादीनि द्वाराणि ( पणियार्थ न शेष समुक्कसणारिहे ) इत्यादि सूत्रविषयाणीति द्वारगाथा सक्षेपार्थ ॥
सम्प्रति उप्पियण द्वारं विभावयिषुराह ॥

सन्निसेज्जागयं दिस्सा, गिम्मेहिं पगिज्जिणिं।

---

* हस्तपादादिभिरविकलतयेत्यर्थः ।

कौमुदी जोगजुत्तं व, तारापरिवुडं ससिं ॥ १ ॥
गिहत्थपरतित्थीहिं, संसयत्थीहिं निचसो ।
सिविज्जंतं विहगेहिं, सरं वा कमलोज्जलं ॥ २ ॥
खज्जूमे अणुसासंतं, सम्भावंतं समुज्जए ।
गणस्स णिज्जाकुव्वंतं, संगहं विसए सए ॥ ३ ॥
इंगियागारदक्खेहिं, सया छंदाणुवत्तिहिं ।
अविकम्पियानिदेसं, रायाणं च अनायकं ॥ ४ ॥

सती नाम शोभना स्वकीया वा निषद्या सन्निषद्या तस्यां गतमुपविष्टं शिष्यैःपरिवारितमित्थंभूतमुपमयति। कौमुदी कार्त्तिकी पौर्णमासी तद्योगयुक्तं तारापरिवृतं शशिनमिव।१। तथा गृहस्थैः परतीर्थिभिः संशयार्थिभिश्च साधुभिर्नित्यशः सर्वकालं सेव्यमानं किमिवेत्यत आह ( कमलोज्जलं ) कमलपरिमण्डितं सर इव विहगैः पक्षिभिस्तथा।२। (खज्जूमान्) कुस्वभावान् अनुशासतं सम्यक् उद्यताः समुद्यतास्तान् श्रद्धापयत तेषां महतीं श्रद्धामुत्पादयत तथा गणस्य गच्छस्य अग्लिानया निर्जरार्थमात्मोत्साहेन स्वके विषये आत्मीयया शक्त्या इत्यर्थः। सग्रहं कुर्वंतं।३। तथा इंगिताकारदक्षैश्छंदोऽनुवर्त्तिभिः सदा सर्वकालमविकम्पितनिर्देशमखण्डिताज्ञं राजानमिव अनायक न विद्यते नायको यस्य स तथा। तं चक्रवर्तिनमिवेत्यर्थः। दृष्ट्वा कश्चिदगीतार्थं उत्पन्नगौरवो भवति।

उप्पन्नगारवे एवं, गणित्ति परिकंखिओ ।
उप्पियंतं गणिं दिस्सा, अगीतो भासेइ इमं ॥

उत्पन्नमनिरूपणीयतया जात गौरवं यस्य स तथा । एव महमपि गणी भवामि गणिपदमवाप्य परिपालयामि। ततः श्रान्तं भवतीत्येव परिकांक्षितः परिकांक्षावान् गणिनमाचार्य मुप्पियत मुहुर्मुहु' उच्छ्वसतं मर्तुकाममलिंगं दृष्ट्वा कश्चिदगीतोऽनीतार्थः कथमह गणधरो भविष्यामीति विचिन्त्य यथा गच्छवर्त्तिन साधव' शृण्वति। तथा मातृस्थानत इदं वक्ष्यमाणं भाषते । तदेवाह ॥

अज्ज मज्झ गणेणंति, तुब्भे जीवह मे चिरं ।
किमियं तेहिं पुट्टोउ, दिज्जए मे गणो कि ॥

अद्य पर्याप्त मम गणेन यूय मम पुण्योदयेन चिर प्रभूत कालं जीवथ । ततस्ते गच्छवर्त्तिन साधवस्तस्यागीतार्थ ब्रुवते। किमेतस्य यूयं। यया अद्य मम गणेन। एव तै पृष्टः सन् सोऽगीतार्थो वक्ति। क्षमाश्रमणै किं मे गणो दीयते। तत एवमुक्तं मयेति ।
अथवा उप्पियणद्वारस्यायमर्थ ॥

पट्टावि एव पुव्वंतु, गीयत्था उप्पियं तए ॥
आमदाहा मो पयस्स, ममतो एस अम्हवि ॥ १ ॥
गीयत्थो वयत्थो य, संपुण्णसुहलक्खणो ॥
सम्मतो एस सव्वेसिं, साहू ते ठावितो गणे ॥ २ ॥

आचार्य प्रकारांतरेणोत्पन्ने। पूर्वमस्थापितेन गणधरे म्रियमाण आचार्ये कि ( उप्पियनित्ति ) मुहुर्मुहु उच्छ्वसिति तं च तथाभूत दृष्ट्वा गीतार्थाश्चिन्तयन्ति आचार्यस्य वाद नास्ति यथा भूते यथा अमुकः साधु गणधरं स्थापयथ। मातृत् सा वाणी वयमेव गच्छवर्त्तिन साधव भणामो यथाचार्यैरमुकोगणधरपदे सन्निष्ट इति। तथा नोपाय कल्पयामो यथा गच्छनायकनामकंपनीयो भवति । एवं चिन्तयित्वा गच्छसाधवः शृण्वंति । तथाश्रुवते " आमदाहामोपयस्सत्ति । इच्छामः क्षमाश्रमणाश्च तस्यामुकस्य दास्यामो गणधरपदमस्माकमप्येष सम्मतो यत एष गीतार्थो वयस्थः संपूर्णानि शुभानि लक्षणानि यस्यासौ स संपूर्णशुभलक्षणस्तया एष सर्वेषां साधूनां समतस्ततस्ते त्वया गणे स्थापित'।एवमेतौ द्वौ प्रकारा वुप्पियणद्वारेण व्याख्यातौ । एतौ द्वावपि जनौ यदि पूर्वमाचार्येण समीक्षितौ ययानर्हाविति तदा न कश्चिदाचार्याणामसमीक्षितदोषः । गतमुप्पियणद्वारम् ॥

अधुना भीतसदेशद्वारमाह॥

असमाहियमरणं वे, करेमि जइ मे गणं न देसि ।
इति गीतेउ गीते, संदिसए गुरू तओ जीओ ॥

कश्चिदगीतार्थः पापीयान् प्रत्यासन्नमरणमाचार्यमवगम्य ब्रूते । यदि मे मह्यं गणं न ददासि ततस्तेऽसमाहितमरणतथा करो"मिवर्त्तमानसामीप्ये वर्तमानवद्वे"ति वचनात् प्राकृतत्वाद्भविष्यति । वर्त्तमाना ततोऽयमर्थः । करिष्यामि यथा दीर्घकालं संसारे भ्रमसि तत एवमुक्ते तस्य भीत आचार्यो गीतो गीतार्थो देशकालपुरुषौचित्यवेदनात् गीतार्थान् स दिशति यथैतस्मै मया गणो दत्त इति गीतार्थाश्च विदितकारणाब्रुवते।

आमंति वोत्तुं गीयत्था, जाणंताकरणं तमु ।
कयत्थंवं तुनिज्जुहे, अतिसीसेय संवसे ॥

आमं इच्छाम इति उक्ता गीतार्थास्तत्करणं जानतः कृतार्थे निर्यापिते आचार्ये तं दुष्टाभिप्रायं निर्यूहंति निष्काशयति। एवमेषोऽनर्हो भवति । अथातिशेषेऽतिशयज्ञानी जानातीति यया सांप्रतमेष निर्दोषीभूतः स वा तस्मात् स्थानात् गुरुजनसमक्षं प्रतिक्रांतस्ततः संवास्यते ॥ गत भीतसदिसणद्वारम् ॥

इदानीमदेशिकद्वारमाह ॥

अरिहोवि अणरीहो, होइ जो उ तेसिमदेसितो ॥
तुल्लदेसीव फरुसो, महुरोव असंगहो ॥

एक आचार्यस्तस्य पद्द कुरुकाः । तेषां मध्ये एक आचार्येण गणधरपदे समीहितोऽन्ये चाचार्यस्य शिष्याः सिंधुदेशादिषु विहरंति । ते सिन्ध्वादिषु विहृत्याऽऽचार्यसमीपमागताः । एकं कुरुकमाचार्यसमीहितं मुक्त्वा अन्ये सर्वे कुरुका केचित् कालगताः । केचित्प्रतिभग्ना एवं सकुरुक कुरुकदेशोद्भवस्तेषां सैन्धवादीनामनर्हो जातो येन ते तस्य भिन्नदेशिकत्वादुल्लापनं परियच्छंति । अक्षरयोजनात्वेवमर्होऽप्यनर्हो भवति । यस्तेषां तत्कालभाविनां साधूनामदेशिको भिन्नदेशिको यथा सैन्धवादीनां कुरुक इति । गतमदेशिकद्वारम् ॥

अधुना परुषद्वारमाह ॥ (तुल्लदेसीवफरुसो) तुल्यदेशीय पूर्वमसमीहितो गणधरपदे स पश्चात्परुषभावो जातः परुषत्वाच्च प्रतिचोद्यमान आक्रोशति आक्रोशांश्चासहमानानामुत्सखादिकं कुर्वन् गच्छभेद करोति। एवमेष पश्चादनर्ह । सम्प्रति (अलियियाउ अणे समुक्कसणाम्हि ) इत्यस्यार्थ विभावयिषु' सग्रहद्वारमाह (महुरो व असगहो) यैः पूर्व समीहित स सत्यपि मधुरत्वे असग्रहो न सग्रहशील अन्यस्तु संग्रहशील स समुत्कर्ष्यते नेतर इति । सांप्रतम स्मिन्नेवार्थे वाचकनिष्पादकद्वारमाह ।

वायंतगनिप्फायग, चउरो भंगाउ पढमो।
गच्छे तइओउ होइ, सुन्नो अन्नेण वा वाएइ ॥
वाचको निष्पादक इति पदद्वयसंयोगतश्चत्वारो भंगास्तद्यथा । वाचयत्यपि निष्पादयत्यपीति प्रथमः १ वाचयति न निष्पादयति द्वितीयः २ न वाचयति निष्पादयति तृतीयः ३ न वाचयति न निष्पादयति चतुर्थः ४ अत्र सत्यपि पूर्वसमीहिते यः प्रथमभंगवर्ती संस्थाप्यते नेतरो द्वितीयादिभंगवर्ती। तथाचाह। प्रथमको ग्राह्यः द्वितीयभङ्गको न स्थाप्योऽनिष्पादकत्वात् । तृतीयस्तु शून्यो वाचनाया अभावे निष्पादकत्वायोगात् । यदि वा आत्मना न वाचयति अन्येन वाचयति । तदासोऽपि योग्यः । चतुर्भंगिकस्तु सर्वथाऽनर्ह एव । सांप्रतमधिकृत एवार्थेऽन्यशिष्यद्वारमाह ॥

असतीव अन्नसीसं, ठावेंति गणम्मि जाव निम्मातो ।
एसो चेव अणरिहो, अहवा विइमो ससिस्सोवि ॥
आचार्याः कालं कर्तुकामा आत्मीयाः शिष्याः सर्वेऽप्यनिर्मीता इति तेषां मध्ये गणधरपदयोग्ये एकस्मिन्नप्यसति अन्यस्य शिष्यं प्रातीच्छिकं गणे स्थापयति च यावन्मम शिष्यो निर्मीतो निष्पन्नो भवति तावत्त्वं गणधरः । निर्मीते सति त्वया गणधरपदं निक्षेप्तव्यं । यदि न निक्षिपति ततश्छेदः परिहारः सप्तरात्रं वा तपः प्रायश्चित्तम् । एष समीक्षितोऽप्यनर्हो जातः । अथवाऽयं स्वशिष्योऽप्यनर्हस्तमेवाह ।

जो अणुमतो बहूणं, गणहरअवियतो दुस्समुक्कट्ठो ।
दोसा अणिक्खिवंते, सेसा दोसं च पावेंति ॥
आचार्यैः कालं कुर्वद्भिर्ज्ञातो य एष मम शिष्यः सूत्रतोऽर्थतश्च निर्म्मीत एतस्मादयं बहुभिर्भागैर्गणधरगुणैरभ्यधिको भविष्यति । केवलमिदानीमनिर्मीतस्ततो योऽसौ निर्म्मीतः स आचार्यैरुच्यते । यावदेनं त्वं निर्मापयसि । तावत्त्वं गणधरः । एतस्मिंस्तु निर्म्मापिते त्वया गणधरपदं निक्षेप्तव्यम् । यत एष तव पार्श्वाद्बहुभिर्भागैर्गच्छस्य प्रवचनस्य चोपग्रहकारी भविष्यति । तेनतथा प्रतिपन्नम् । आचार्ये कालगतः सच तेन निर्मापितो जातः समस्तस्यापि संघस्य प्रीतिकरः ततोयस्तेन निर्मापितो जातोऽनुमतो बहूनां स गणधरः स्थापनीयो यस्त्ववियत्तोऽप्रीतिकरः पूर्वं स्थापितः स दुस्समुत्कृष्ट इति वक्तव्यो निक्षिप गणधरपदमेवमुक्तो यदि न निक्षिपति ततस्तस्मिन्ननिक्षिपति दोषाश्छेदः परिहारः सप्तरात्रं वा तपः प्राप्नोतीति भावः । येऽपि च शेषास्तं भजते तेऽपि दोषं प्राप्नुवन्ति छेदं परिहारं सप्तरात्रं वा तेऽपि प्राप्नुवतीत्यर्थः । यदेतद्भणितमेतत्प्रसंगागतमयं पुनः स्फुटसूत्रेण निपातः ॥

अब्भुज्जयमेगयरं, ववसियकामंमि होइ सुत्तं तु ।
तेवेंति कुणसु एक्कं, गीयं पच्छा जहिच्छा ते॥
आचार्येण कोऽपि स्वशिष्यः समीहितो यथाऽयमाचार्यपदयोग्य इति ततो गीतार्थाः संदिष्टाः एष समुत्कर्षयितव्यः सच कालगते आचार्ये ब्रूते । अहमभ्युद्यतविहारं जिनकल्पादिकमभ्युद्यतमरणं वा प्रतिपत्स्ये तस्मिन्नभ्युद्यतमेकतरं विहारं मरणं । व्यवसातुमनसि भवति निपतति सूत्रम् । अत्थिया इत्थ अन्ने केइ समुक्कसणारिहे से समुक्कसियव्वे नत्थियाइ च केइ अन्ने समुक्कसणारिहे सेचेव समुक्कसियव्वे । तस्मिन्नभ्युद्यतस्यैकतरं व्यवसातुकामे अस्ति चेदत्र गच्छेऽन्य कश्चित्समुत्कर्षणार्हस्तर्हि स समुत्कर्षयितव्यो नास्ति चेदत्र कश्चिदन्यः समुत्कर्षणार्हस्ततः स एव समुत्कर्षयितव्यः । कथमिति चेदुच्यते । गीतार्था अभ्यर्थनपुरस्सरं ब्रुवते । यूयं गणधरपदं परिपालयत । एकमस्माकं कंचन गीतं गीतार्थं कुरुत निर्मापयत ततः पश्चात्तस्मिन्निर्मापिते ते भवतां यदिह यत्प्रतिभासते तत्कुरुतेतिभावः । अत्रैवाऽऽचारावसरः । एवमुक्ते तेन गणधरपदं प्रतिपाद्य कश्चनाप्येको निर्म्मापितः । पश्चात्तस्य चित्तमजायत । यथा अभ्युद्यतविहारात गच्छपरिपालनं विपुलतरं निर्जराद्वारम् तस्मात्परिपालयाम्यहमेव गच्छमिति । तथाचाह ॥

निम्माऊण णेगमंपि, मे निज्जरायदारं तु ।
निक्खिव निक्खिवामी, इत्थं इतरे उ कुव्वन्ति ॥
स गणधरपदे स्थापित एकं कंचनापि निर्म्माप्येदं चित्तमकार्षीत् इदमपि गच्छपरिपालनं महत् निर्जराया द्वारम् । एवं व्यवसिते तस्मिन् गच्छे गीतार्था ब्रुवते निक्षिप गणधरपदं स प्राह । न निक्षिपामि किन्त्विच्छामि गच्छं परिपालयितुमेवमुक्ते इतरे गच्छगीतार्थाः कुप्यन्ति ते च कुप्यन्तो यद्ब्रुवते तदाह ।

दुस्समुक्कट्ठं निक्खिव, भणंति गुरुगा अणुट्ठिहं तेय ।
एमेव अन्ने सीसे, निक्खिवणा गाहिते नवरं ॥
पूर्वं तव नेप्सितं गणधारणं पश्चादिदानीं यद्यपि रुचिस्तथापि नत्वस्मभ्यं रोचसे दुःसमुत्कृष्टः खलु तव गणधरपदं । तस्मान्निक्षिपेति एवं भणति गच्छसाधुवर्गे प्रायश्चित्तं चत्वारो गुरुका (अणुट्ठिहंतयमेवे )त्यादि योऽसौ प्रातीच्छिकः स्थापितः स चेत् यावदद्यापि न निर्म्मापयति कमपि शिष्यं तावद्यदि गच्छसाधवो भाषन्ते निक्षिप त्वं गणधरपदमिति तदा तेषां तथा भाषमाणानां प्रायश्चित्तं चत्वारो गुरुकाः । अथ तस्मिन्नन्यशिष्ये निर्मापयितुमिष्यमाणे अनुतिष्ठति अनिर्मापिते गणधरपदनिक्षेपणं करोति तदा तस्मिन्नन्यशिष्ये अनुतिष्ठति गणधरत्वं निक्षिपतः प्रातिच्छिकस्य प्रायश्चित्तमेव चत्वारो गुरुका इत्यर्थः । यथा गीतार्थेनैव गच्छसाधवः सेविष्यते तन्निमित्तमपि तस्य प्रायश्चित्तं नवरं केवलं तस्मिन्नन्यशिष्ये ग्राहिते निर्म्मापिते गणधरपदनिक्षेपणा कर्तव्या । नच तत्र तां कुर्वतस्तस्य छेदः परिहारः सप्तरात्रं वा तपः । गतमिगद्धारम् ॥

सम्प्रति यथा कल्पद्वारावसरस्तत्र ये गच्छसाधवस्ते स्वगच्छसाधुं प्रातिच्छिकं च पूर्वस्थापितं यथा कल्पेनाऽनुतिष्ठन्ति यथाकल्पानभ्युत्थानमेवाह ॥

आवस्सगसुत्तत्थे, भत्ते आलोयणा उवट्ठाणे ।
पडिलेहा कितिकम्मं, मत्तगसंथारगतिगं च ॥
आवश्यके क्रियमाणे यो विनयस्तस्य आचार्यस्य कर्तव्यस्तं च न कुर्वंति सूत्रमर्थं वा तस्य समीपे न गृह्णते । ( भत्तेत्ति ) आचार्यप्रायोग्यं तस्य भक्तं न प्रयच्छन्ति । ( आलोयणत्ति ) तस्य पुरतो नालोचयति ( उवट्ठाणत्ति ) आचार्यस्य कथवपाधादिप्रयुपेक्षणाय नोपतिष्ठते । नापि कृतिकर्म वंदनकमन्यद्वा कुर्वन्ति नापि मात्रकमपि तस्य ढौकयति त्रिकं संस्तारकत्रयमपि न प्रयच्छन्ति । तेषामपि यथा कल्पमनभ्युत्तिष्ठतां प्रायश्चित्तं छेदः परिहारः सप्तरात्रं वा तप इति । व्य० ७ नं ४ उ. ॥
आचार्ये मृते तत् स्थाने अन्यः स्थाप्यते। तथाच व्यवहारे (प्र

णिग्गंथस्स णं णवडहरतरुणगस्स आयरिय उवज्झाए विसंभेज्जा णो से कप्पइ । अणायरियउवज्झायस्स होत्तए कप्पइ । से पुव्वं आयरियं उद्दिसावेत्ता ततोपच्छा उवज्झायं से किमाहु भंते ! दुसंगहिए समणे णिग्गंथे तंजहा आयरियेणं उवज्झायेणय ॥ ११ ॥ व्य सू. ३ उ. ॥

निर्ग्रन्थस्य णमिति वाक्यालङ्कारे । नवडहरतरुणस्य वा आचार्यसहित उपाध्याय आचार्योपाध्यायस्तस्याचार्योपाध्यायस्येत्यर्थः । विष्वक्भयात् म्रियेत । तत सेनस्य नवडहरतरुणस्याचार्योपाध्यायस्य सतो भवितुं न कल्पते वर्त्तितुं किन्तु पूर्वमाचार्यमुद्देशयस्योपाध्यायाः तत पश्चादुपाध्यायमुद्देशाश्रयेत्वमाचार्योपाध्यायस्य सतो भवितुं कल्पते । सेकिमाहु (भन्ते ! भंते) से शब्दोऽत्र शब्दार्थे । अथ भदन्त ! किं कस्मात्कारणात् भगवन्त एवमाहुः । सूरिराह । द्वाभ्यामाचार्योपाध्यायाभ्यां संगृहीतोऽभिसंगृहीत श्रमणो निर्ग्रन्थस्तद्वा भवति तद्यथा आचार्योपाध्यायेन च एष सूत्रसंक्षेपार्थ ॥ ११ ॥

( १२ ) आचार्ये मृते निर्ग्रन्थीनामन्यस्य आचार्यस्य स्थाप्यते ॥ तथा च व्यवहारसूत्र ॥

निग्गन्थीएणं णवडहरतरुणियाए आयरियउवज्झाए पवित्तिणियं विसंभेज्जा णो से कप्पइ अणायरिय अणुवज्झाइयनाए अपवत्तिणिएय होत्तए कप्पइ से पुव्वं आयरियं तु दिसाविता तओ पच्छापवित्ति उवज्झायं ततोपच्छापवित्तिणियं से किमाहु भंतेति संगाहिया समणी निग्गंथी । तंजहा । आयरिएणं उवज्झाएणं पवित्तिणिएय ॥ १२॥ व्य सू ३ उ. ॥

निगान्थीणमिति पूर्ववत् नवडहरतरुण्या आचार्योपाध्याय समनामोऽप्यर्थवत् । आचार्योपाध्यायमेतत्प्रवर्तिनीच विष्वक्भयात् म्रियेत । ततस्तेनतस्या अनाचार्योपाध्यायाया उपलक्षणमेतत् प्रवर्तिनीरहितायाश्च नोकल्पते भवितु । किन्तु पूर्वमाचार्यमुद्दिश्यते । तत पश्चादुपाध्याय । तत पश्चात् प्रवर्तिनी । कथंभवितुं कल्पते ( से किमाहु ) इत्यादि अथ भदन्त ! किं कस्मात् कारणात् भगवन्त एवमाहु । सूरिराह । त्रिभिः संगृहीता श्रमणी निर्ग्रन्थी सदा भवति तद्यथा आचार्येणोपाध्यायेन प्रवर्तिन्या च एष सूत्रसंक्षेपार्थ ।

( १३ ) आचार्येऽवधावति आचार्यान्तरस्यापनं ॥

पूर्वाचार्योऽवधावेत्तर्हि नव स्थाप्य ॥ तथा च व्यवहारसूत्र आयरिय उवज्झाए ओहायमाणे अन्नयर वएज्जा अज्जो मएणं ओहायंति समणंसि अयं समुक्कसियव्वे । जाव समुक्कसिय तेसिं नापतिय छेए वा परिहारे वा ॥ १३ ॥ व्य सू ४ उ ॥

व्याख्या । आचार्य उपाध्यायो वा मोहेन रागेण वा अवधावन् ( मन्दतर ) मुपाध्यायादिकानां गीतार्थप्रभूतानां पुरुषाणां समस्ततम यदेव यावत्स्वरादिय परिपूर्णपाठो द्रष्टव्य ॥

अज्जो मम ओहं उद्धावियंमि समाणंमि अयं समुक्कसियव्वो सेय समुक्कसणारिहे समुक्कसियव्वे सियासे य नो समुक्कसणारिहे नो समुक्कसियव्वे सिया अत्थियाइ त्थ अण्णे केइ समुक्कसणारिहे से समुक्कसियव्वे नत्थियाइत्थ अन्ने केइ समुक्कसणारिहे से चेव समुक्कसियव्वे तेसिंचणं समुक्किंसि परोवएज्जा दुस्समुक्किट्ठंते अज्जोनिक्खिवाहि तस्स णं निक्खिवमाणस्स नात्थि केइ छेदे परिहारे वा ॥

अस्य व्याख्या प्राग्वत् व्य. सू. ४ उ ॥

अधुना निर्युक्तिविस्तरः । केन पुनः कारणेनाऽसाववधावतीति चेदत आह ॥

मोहेण वा रागेण, ववहारणं भेसयं पयत्तेण ॥
धम्मकहाए निमित्तेणं, अणाहसालागवेसणया ॥

अवधावन मोहेन वा कामोद्रेकरूपेण रोगेण वा । तत्र मोहविषया यतना प्राक् तृतीयोद्देशकेऽभिहिता । यदि रोगेण ततो नाधावितव्यं । किंतु प्रयत्नेन भेषजं दातव्यम् ॥ तच्च धर्मकथानिमित्तेन चोत्पादनीय । तथाप्यलाभे अनाथशालातो गवेषणा भैषजस्य कर्तव्येति निर्युक्तिगाथायाः संक्षेपार्थः ॥ एतामेव संप्रति भाष्यकृद्विवरीपुरिदमाह ।

मोहेण पुव्वभणियं, रोगेण करेंति माएजयणाए ॥
आयरियकुलगणे वा, संघो व कमेण पुव्वुत्तं ॥

यदि मोहेनावधावनं कर्तुमीहते तदा यत्पूर्वं तृतीयोद्देशके मोहचिकित्सा विषयं भणितं तत्कर्तव्यमथ रोगेण तदाऽनयाव क्ष्यमाणया प्रथमत तत प्रासुकेन तदलाभे वाऽप्रासुकेनापीत्येवरूपया यतनया पूर्वोक्त भैषज्यं प्रयत्नेन संपादनीयमित्याद्विरूपं कुर्वन्ति केते कुर्वंति । तत आचार्य्यकुलं गणसंघोवा कथमित्याह । क्रमेण परिपाट्या तामेव परिपाटीं कालनियमनपूर्विकामाह ॥

छम्मासे आयरियकुलंतु, संवच्छराणि तिन्नि भवे ॥
संवच्छरं गणो खलु, जावज्जीवं भवे संघो ॥

प्रथमत आचार्यः षण्मासान् यावत् चिकित्सां कारयति तथाप्यप्रगुणीभूत तं कुलस्य समर्पयति तत कुलं त्रीन्संवत्सरान् यावत् चिकित्सकं भवति । तत्राप्यप्रगुणीभवतं गणस्य तं समर्पयति । तदनंतरं संवत्सरं यावत् गणः खलु चिकित्सको भवति । एतच्चोक्तं भक्तविवेकं कर्तुमशक्नुवतो यः पुनर्भक्तविवेकं कर्तुं शक्नोति । तेन प्रथमतोऽष्टादशमासान् चिकित्सा कारयितव्या । विरतिसहितस्य पुन संसारे दुःप्रापकत्वात् तदनन्तरं चेत्प्रगुणीभवति । तत सुन्दरमथ न भवति । तर्हि भक्तविवेक कर्तव्य । अत्रैव देशान्तरमाह ॥

अहवा विइयादेसा, गुरुवसभे भिक्खुमादिते गच्छं ।
जत्तिय बारसवासा, तिन्नकमासो अणुपुव्वेणं ॥

अथवा द्वितीय आदेशो गुरौ च ते भिक्षादौ यथाक्रमं चिकित्सां कारयति यावज्जीवं द्वादशवर्षाणि त्रिपक्षमण्डदशमासान् कथमित्याह अनुपूर्व्वेनापश्चिम्वोऽत्र लुप्तोदष्टव्यः प्रथमत गुरुणा तदभावे चानुपूर्वेणापि । तदनन्तरं भिक्षादिना भक्तविवेक कर्तव्य । गुरुस्तु गच्छप्रवर्तकत्वात् तस्य यावज्जीव चिकित्सा तत्र प्रथमोद्देशेन च विवेक कर्तुं शक्नुवत प्रत्यष्टादशमासान् ॥ कथंचिकित्सामित्यस्तमभिहितुमाह ॥

पयत्तेण ओसहं से, करेंति सुद्धेण उग्गमादीहिं ।
पडागीए अलंभे, धम्मकहाहिं निमित्तेहिं ॥

प्रयतन प्रयत्नेनोद्गमादिभि शुद्धेन वस्तुजातेन (से) तस्य औषधं कुर्वन्ति । तदलाभे पंचपरिहान्या यावच्चतुर्गुरुकेनाप्यशुद्धे

ऽन्योन्यता यथा ॥

एगपक्खियस्स भिक्खुस्स कप्पइ इत्तिरियं दिसं वा अणुदिसं वा धारित्तए वा जहा वा तस्स गणस्स परियासि वा ॥ २४ ॥ व्य. सू ३ उ. ॥

एकपाक्षिकभिन्नपाक्षिकयोर्योन्याऽयोन्यता ( चानुपालणाकप्प ) शब्दे ॥

## ( २५ ) लक्षणं मेढीभूतः ॥

तत्र गणस्य बहुव्रतिनीसमुदायात्मकस्य प्रत्येकं परीक्षा कर्तुं न शक्यते अथाचार्ये च परीक्षिते प्रायोगणोऽपि परीक्षित एव मेढ्यादिसमानत्वेन तत्प्रवर्तकत्वादाचार्यस्य गणस्य च तदनुवर्तित्वादित्यतः प्रथममाचार्यमेव परीक्षेतेत्याह ॥

मेढी आलंबणं खंभं, दिट्ठि जाणसुउत्तमं ॥
सूरी जंहोइ गच्छस्स, तम्हा तं उ परिक्खए ॥ ८ ॥

व्याख्या यद्यस्मात्कारणात् सूरिः सदाचार्यो गच्छस्य गण स्य ( मेढित्ति ) मेढिः खले गोबंधस्थूणा तत्समानो भवति । यथा तया वलानि पङ्क्तिबद्धानि मर्यादया प्रवर्त्तते तथाचार्यो मेढीवत्तो गच्छोऽपि मर्यादया प्रवर्तत इत्यर्थः । तथालंबनं हस्ताद्याधारस्तत्समानः यथा हस्ताद्याधारो गर्तादौ पतज्जतुं धारयति । तथा ऽचार्योऽपि भवगर्ते पततं गच्छं धारयतीत्यर्थः । तथा ( खंभति ) स्तंभः स्थूणा अत्र नपुंसकत्व प्राकृत्वादेव तत्समान । यथा स्थभ प्रासादाधारः स्यात् तथाचार्योऽपिगच्छप्रासादाधार तथा ( दिट्ठित्ति ) दृष्टिर्नेत्रं तत्समान यथाऽतंतोर्नेत्र शुभाशुभवस्तुप्रदर्शकं भवति तथा ऽऽचार्योऽपि गच्छस्य भाविशुभाशुभप्रदर्शक स्यात् तथा( जाणं सूत्तमति )यान यानपात्रं सूत्तममतिप्रधानमच्छिद्रमित्यर्थः ततसमानो यथा अच्छिद्रयानपात्र समुद्रतीरं नयति जतून् तथाचार्योऽपिगच्छे भवाति तस्मात् प्रथमं ततुच्छिनोरवकारार्थत्वात् तमेवाचार्यमेव परीक्षेत गच्छपरिक्लेच्छुः साधुरिति अनुष्टुप्छन्द । एवचात्र ग्रन्थे त्रयोधिकाराः सचिता तद्यथा आचार्यस्वरूपाधिकार १ साधुस्वरूपाधिकारः २ साध्वी स्वरूपाधिकारश्च ३ तत्र प्रथममाचार्यस्वरूपाधिकार निरूपयितुकामः केश्चिद्दैः उन्मार्गप्रस्थितमाचार्यं परीक्षेतेति प्रश्नयन्नाह ॥

भयवं कहि लिंगेहिं, सूरिं उम्मग्गपट्ठिअं ॥
विआणिज्जाउ छमत्थे, मुणि ! तं मे निसामय ॥ ९ ॥

व्याख्या । हे भगवन् ! परमैश्वर्यादिसमन्वित ! कैर्लिङ्गैश्चिन्है रुन्मार्गप्रस्थितमसन्मार्गस्थित सूरिमाचार्य जायते केवलज्ञानं केवलदर्शन चात्मनोऽनेनेति छद्म तत्र तिष्ठतीति छद्मस्थस्त विजानीयात् परीक्षेतेति परप्रश्ने गुरुराह हे मुने ! यैश्चिन्है रचार्यमुन्मार्गप्रस्थित छद्मस्थ परीक्षेत तन्मे मम कथय इति शेष ( निसामयत्ति ) त्व निशामयाकर्णयेति अनुष्टुप् छन्दः ॥ ९ ॥ अथ वृत्तद्वयेनपूर्वोक्तशिष्यप्रश्नोत्तरमेवाह ॥

सच्छंदयारिं दुस्सीलं, आरंभेसु पवत्तयं ॥
पीढयाइपडिबद्धं, आउकायविहिंसगं ॥ १० ॥
मूलुत्तरगुणब्भट्ठं, सामायारीविराहयं ॥
अदिन्नालोअणं निच्चं, विकहासु परायणं ॥ ११ ॥

[illegible] ॥ स्वच्छंदेन स्वाभिप्रायेण न तु जिनाज्ञया चर तीति [illegible] तथा दुष्टशीलमाचारं यस्य स दुस्शील

स्तं तथारम्भे पृथिव्यादयुपद्रवणानि उपलक्षणत्वात्संरंभसमारंभावपि । तत्र संरंभः संकल्पः समारंभस्तु परितापकर । उक्तं च ॥

संकप्पो संरंभो, परितावकरो भवे समारंभो ॥
आरंभो उद्दवओ, सुद्धनयाणं तु सव्वेसिं ॥ १ ॥

तत्र स्वान्ययोः प्रवर्त्तकस्तं तथा पीठकमासनं आदिशब्दात् फलकपट्टिकादयस्तत्र प्रतिबद्धः कारणं विनापि ऋतुबद्धकाले तत्परिभोजीत्यर्थः ॥ ग १ अधि ॥

## ( २६ ) परीक्षा आचार्यस्य ॥

सुद्धस्सय पारिच्छा, खुड्डुयथेरेयतरुणखज्जूरे ॥
होमादिमसुद्धीए, सुद्धमसुद्धे ततोपच्छा ॥

शुरूस्य परीक्षा कर्त्तव्या कस्मिन्विषये इत्यत आह । क्षुल्लके स्थविरे तरुणे खज्जूरः स्वभावाद्धक्काचारः तस्मिस्तयाद्वयोरादिमरुल्योः एताभिः परीक्षाभिर्यदि निवर्तितस्तत शुद्धः इतरस्त्वशुरुः शुद्धस्य च गणधरपदानुज्ञा कर्त्तव्या ना शुद्धस्य ततः शुभाशुभप्रतिपादनानंतर चोदक पृच्छा उपलक्षणमेतदाचार्यस्य प्रतिवचनं च वक्तव्यं एष द्वारगाथासंक्षेपार्थः । सांप्रतमेनामेव गाथां विवरीषुः प्रथमतः क्षुल्लकविषयं परीक्षाविधिमाह ॥

उच्चफलो अहखुड्डो, सब्भाविच्छभावोपवासिउं दुक्खं ।
पुट्ठोवि होहिति न वा, पच्छिमयो सारवंतस्स ॥

तस्य रूव्यभावपरिच्छेदोपेतस्य गणधरपदयोग्यता परीक्षणाय प्रथमत क्षुल्लको दीयते । एवं द्विविधामपि शिक्षां त्व ग्राहय ततः स एव मुक्तः सन् यदि चिंतयति यथा (अहत्ति) एष क्षुल्लकः उच्चं चिरकालभाविफलं यस्मात्स उच्चफलश्चिरकालेनोपकारी तावता कालेन किमपि भविष्यतीति कोवेद तत केमनं शिक्षां ग्राहयिष्यति यदि वा शकुनिशावसिवावत्पोष्यः पोष्यते । पुनः पुनर्वृतुक्षाभावादिति भावः । अपि च पुष्टोऽपि-मत्रेष मम भविष्यति वानवा को न जानाति अन्यच्चासु धारयत सार कुर्वतो मम सूत्रस्य च महान्पलिमयो व्याधातस्ततो नैतस्य मे शिक्षया प्रयोजनमेव चिंतयन् योन ग्राहयति सोऽनर्हस्तद्विपरीतो ऽर्हस्ततो यः स्थविर एष प्रवचनोपग्रहकरो भविष्यति दृढदेहो वा यथा आचार्यरक्षित पितेति कारणतो दीक्षितस्तिष्ठति स शिक्षकस्तस्य समर्प्यते एवं द्विविधामपि शिक्षां ग्राहयति तस्मिस्तत्समर्पिते यदि स इद चिंतयति ॥

पुट्ठोवा स मरिमिति, दुराणुवत्तो न वेज्जपडियारो ।
सुत्तत्थे परिहाणी, थेरे वहुयं निरत्थयं तु ॥

एष प्रथमाशिकादिदापनतः शिक्षाग्राहणतश्च पुष्टीकृतोऽप्याशु शीघ्र मरिष्यति च शब्दः चिंतांतरसमुच्चये । यदिवा वृद्ध स्व भावात् दुरनुवर्त्य दु खेनानुवर्त्यं तेन वा अत्र वृद्धशिक्षापने कश्चित् प्रतीकार किमुक्त भवतिनास्माद्वृद्धात् कश्चित् प्रत्युपकाराऽथवा वृद्धो वृद्धत्वादेव जराग्रस्तश्च ततोस्य शिक्षणे मम सूत्रार्थपरिहाणिस्तदेव स्थविरशिक्षां ग्रहमाणे ग्रहणंनिरर्थक मिति य एन चिंतयित्वा योन शिक्षां ग्राहयति सोऽनर्हस्तद्वि परितोऽर्ह इति तदनतर योऽसौ तरुणो मेधावी त समर्प्य भाण्यते यथा एष मरुद्धिपरिपाट्या आलापके दीयमाने सीदति तत स्त्वमेतमप्याक्षेपेण पाठय । तत स इद चिंतयति ॥

अहियं पुच्छति सिक्खए, वहुं किं गुणो चरगेण ॥
होहिंति य विवड्ढंतो, एसो ममं पडिसपत्ती ॥

एष मेधावित्वादधिकं पृच्छत्यवगृह्णाति वावधारयति वहु प्रभूतं तत इत्थमस्यैव सूत्रस्यार्थस्य चरकेण प्रदानेन आकर्णितया को गुणो मम निरर्थकं कश्चिदित्यर्थः । केवलं दोषो निजसूत्रार्थपरिगलनादन्यच्च एष तु निश्चितं विवर्द्धमानः सूत्रतोऽर्थतश्च वृद्धिं गच्छन् मम प्रतिसपत्नीव प्रतिपक्षी भविष्यति । ततो न कोऽप्येनं पाठयिष्यतीति यो न शिक्षयति सोऽनर्हस्ततः खञ्जूरं दत्वा स प्रणयते । अमुं तथा ग्राहय । यडा सुकुः समाचारीकुशलश्च भवति ततो यदि ॥

कोही निरुवगारी, फरुसो सव्वस्स वामवट्टो य ।
अविणीतोत्ति व काउं, हंतुं सत्तं व निच्छुभती ॥

क्रोधी यदि वा निरुपकारी अथवा परुषः परुषभाषी तथा सर्वस्य साधुवर्गस्य वामावर्त्तः प्रतिकूलतया वर्तते यदि वा अविनीत इति कृत्वा शिक्षां ग्राहयति । अथवा आकृष्य शत्रुमिव वा हत्वा निष्काशयति तर्हि सोऽनर्हस्तद्विपरीतोऽर्हः ॥

सम्प्रति चतुर्ष्वपि यो जनेषु तद्विपरीततया यथार्हो भवति तथा भावयति ॥

वत्थाहारादीहिं,संगेण्हइ अणुवत्तए य जो जुयलं ॥
गाहेइ अपरितंतो, गाहण भिक्खावए तरुणं ॥ १ ॥
खरमउएहि अणुयत्तति, खज्जूरं जेण पडइ पासेणं ॥
गाढमवहारविजढो, तत्थोहणमप्पणो कुणइ ॥ २ ॥

यो नाम युगलं क्षुल्लकवृद्धलक्षणं वस्त्राहारादिभिः सङ्गृह्णाति आत्मवशीकरोत्यनुवर्तयति च तरुणमपरिश्रान्तः परिश्रममगणयन् ग्राहयति । ग्राहणं ग्राह्यते शिष्य एतदिति बाहुलकात् कर्मण्यनट् । ग्राहणमाचारादिसूत्रग्रासेवनां शिक्षयति तथा खज्जूरं खरमृदुभिर्वाक्यैस्तथानुवर्तयति । येन स पाशे न पतति अन्यथा गतिं न लभते इति मन्यमानस्तद्वशी भवति तथा यः स्थानादपि चलन्नपि सन् खज्जूरतया विहारविजढो भवति विहारं न करोतीति भावस्तत्र उद्गमणमङ्गीकारमात्मना करोति । यथैनमहं खरेण मृदुना चोपायेन विहारक्रमं कारयिष्यामीति एष एव भूतो योग्यः ॥

इयगुव्व सुत्थमंमर्मि, दाविज्जइ अत्थमंमर्मि चेव ।
दोहिं पि अ सीयंते, देइ गणं चोइए पुच्छा ॥

इत्येवमुपदर्शितेन प्रकारेण चतुर्ष्वपि जनेषु सूत्रोपदेशात् परीक्षितः सन् गुरुः भवति न मनागपि दोषः । ततस्तस्य सूत्रमण्डली दाप्यते अर्थमण्डली च एतयोरपि मण्डल्योर्यदि न विषीदति किंत्वपरिश्रान्ततया गच्छवर्तिनां प्रातीच्छकानां च ज्ञानाद्यभिलाषिणां चित्तग्राहको वर्तते ततस्तस्मिन् सूत्राचार्यो गणं ददाति एवमुक्ते चोदके चोदकस्य पृच्छा कर्तव्यत आह ।

चोएइ जाणिऊणं, उभयाभिन्नस्स दिज्जइ गणोत्ति ॥
सुत्ते य अणुन्नायं, भयवं चरण पडिच्छन्नो ॥ १ ॥
अपरिक्खाए परिक्ख, परिकट्ठं अत्थेण जं पुणो पव्वेइ ॥
एवं होइ विरोहो, सुत्तत्थेणं दुवेहंपि ॥ २ ॥

चोदयति प्रश्नयति परोयथा पूर्वमिदमुक्तं उभयविन्नस्य तत्त्वभावपरिच्छेदविशेषात् शास्त्रद्वयपरिकलितस्य गणो दीयते । युक्तं चैतत् । यतः सूत्रेऽपि चशब्दोऽपि समुच्चयार्थ । भगवन् धारणगणधारणमनुज्ञातं । परिक्षणे उभयभावपरिच्छेदपेनमात्रे ना

एवमुक्त्वा यद्दर्शनार्हपरीक्षामर्थेनार्यमाश्रित्य प्ररूपयथा । नन्वेवं सति द्वयोरपि सूत्रार्थयोर्नवति विरोधः । उक्तस्वरूपस्यार्थस्याधिकृतसूत्रेणासूचनात् ॥

अत्र सूरिराह ॥

संति हि आयरिय जगाणि, मन्याणि चोयग ! सुणाहि ॥
सुत्ताणुन्नातो वि हु,होइ कयाइ अणरिहोउ ॥ १ ॥
तेण परिच्छा कीरइ, सुवण्णगस्सेव तावनिहसादी ॥
तत्थ इयो दिट्ठंतो, रायकुमारेहिं कायव्वो ॥ २ ॥

चोदक ! शृणु मदीयं वचः संति हि स्फुटं तानि शास्त्राणि यान्याचार्यक्षितीयकानि किमुक्तं भवत्याचार्यपरम्परया तत्सम्प्रदायविशेषपरिकलितानि ततो यद्यप्यर्हानर्हपरीक्षालक्षणोऽर्थः सूत्रे साक्षान्नोपनिबद्धस्तथापि सूचनात् सूत्रमिति न्यायेनापि सूत्रे सूचित इति सम्प्रदायादवगम्यते इति न कश्चिद्दोषः । तथा च सूत्रानुज्ञापि हि निश्चितं कदाचिदनर्हो भवति । नच सूत्रमन्यथा सर्वज्ञप्रणीतत्वात्तेन परीक्षापि सूचितेति । तापनिकषादिभिः सुवर्णस्येव सूत्रानुज्ञातस्यापि कुलकादिभिः परीक्षा क्रियते । तत्राय वक्ष्यमाणलक्षणो दृष्टांतो राजकुमारैः कर्तव्यः ॥

तमेवाह ॥

सूरे वीरे सत्तिए, ववसायथिरे चियायधितिमंते ॥
वुद्धिविणयकरणे, सीभेवि तहा परिच्छाए ॥
निब्भयओरस्सवली, अविसाइ पुणो करेंति संठाणं ॥
नवि संभाते देति अणस्सित्तो उ व उट्ठाणुवित्ति य ॥

इहाद्यगाथापदानां द्वितीयगाथापदैर्व्याख्यानं । तत्रयासूरो नाम निर्भयः । सच कुतश्चिदपि न भयमुपगच्छति । वीरश्चौरसबलवान् तेनाक्लेशेन परबलं जयति । सात्त्विको नाम योमहत्यभ्युदये गर्वं नोपयाति न च गरिष्ठेऽपि समापतिते व्यसने विषादं । तथाचाह । अविषादि एष लक्षणमेतत् अगर्वो वा व्यवसायी अनलस उद्योगवानित्यर्थः । तथाचाह । पुनः करोति संस्थानं । किमुक्तं भवति । प्रमादतः कथंचिद्व्यवसायविकलोऽपि भूत्वा पुनः करोति संस्थां कर्तुमुपगच्छति स्थेचितव्यवसायमिति भावः । स्थिरो नाम उद्योगं कुर्वन्नपि न परितान्यति तथा चाह । विश्राम्यतीति (वियायत्ति) दानशब्दियैश्चौचित्यमाश्रित्य स्वेभ्योऽन्येभ्यश्च ददातीत्यर्थः । धृतिमान् राज्यकार्याणि कुर्वन् परनिश्रामनपेक्षमाणः तथाचाह (अणिस्सित्ति) इति ( वुद्धित्ति) औत्पत्तिक्यादिबुद्धिचतुष्टयेन । विनीतो गुर्वादिषु विनयकारी यथोचित्यं गुर्वादीनामनुवर्तक इत्यर्थः । करणे इति यद्यत्र कर्तव्यं तत्करणे कुशलः । एतेषु परीक्षा क्रियते किमेते गुणाः सन्ति न वा तत्र य एतेषु गुणैः प्येतो भवति । स गणो गणेऽर्पिर्यते । दानशीलोऽयं स्थिरस्थोऽपरिश्रान्तस्तस्मिन् कर्तव्यं करोति । कृत्वापि च पश्चादनुपतापी त्यागवान् नाम दानशीलः स च लोकादपि लोकः उदारो गणस्य बहुमानभाग् भवति ॥

उवसग्गो गोहव्वे, कणे किसेसु वा सिरिमंतो ॥
बुद्धिचउक्कविणीतो, अहवा गुरुमादिविणीतोउ ॥

धृतिमान् उपसर्गेषु गोहव्यान् इत्यादि । कृत्येष्वपि कार्येष्वविषादं प्रपन्ने । बुद्धिविनीत इत्यत्र इत्यमपि व्याख्यानं बुद्धिचतुष्टय नीते प्रापितमात्मानं येन स बुद्धिविनीतः । मनयो ( ? ) नातु कालस्य पाक्षिक परिनिरान । अथवा ( गुरुमादि ) गुरुषु गुर्वादिषु विनीतः गुर्वादिषु विनीतः ॥

दव्वाई जं जत्थ उ, जम्मि विकिव्वं तु जस्स वा जंतु ॥
कव्वइ अहीणकालं, जियकरणविणीयएगत्थ ॥

यद्यत्र द्रव्याद्युपयोगि यस्य वा यत्र यत्कृत्यं तत्सर्वमहीनकालं जितकरणं करोति कारयति । जितकरणो विनीत इति द्वावप्येकार्थौ तात्पर्यविश्रान्त्या शब्दार्थस्तु परस्परं भिन्नो जितकरणो नाम करणदक्ष उच्यते । विनीत इति विनयकरणशीलः ।

एवं जुत्तपरिच्छा, जुत्तो वेतेहिं मेहिउ अज्जोगो ॥
आहारादियरंतो, तिंतिणिमाईहिं दोसेहिं ॥

एवमेतैरनन्तरोदितैः सूत्रत्वादिभिर्गुणैर्युक्ता उचिता या परीक्षा तया युक्तोऽपि निश्चितं पारिशेष्यादमीभिर्दोषैरयोग्य । तानेवाह । आहारादि आहारोपधिपूजानिमित्तं गुणं धारयन् तिंतिणित्वादिभिश्च दोषैरयोग्य । तिंतिणीनाम यत्र तत्र वा स्तोकेऽपि कारणे करकरायण । आदिशब्दाच्चलचित्तादिपरिग्रह ॥ एतदेव व्याख्यानयति ॥

बहुसुत्ते गीयत्थे, धरेइ आहारपूयणट्ठाउ ॥
तिंतिणचलअणवट्ठिअ, दुव्वल चरणा अजोग्गो उ ॥

बहुकालोचितं सूत्रमाचारादिकं यस्य स बहुसूत्रो गीतार्थो विदितसूत्रार्थः । एतेन युक्तः परीक्षायुक्तोऽप्येतद्व्याख्यानयति एवंभूतोऽपि यो गणं धारयति ( आहारपूयणट्ठाए ) उत्कृष्टो मे आहारो भविष्यति पूजनं वा स्वपक्षतश्चेत्येवमर्थं आदिशब्दादुपधिरन्यद्वोपकरणमुत्कृष्टं मे भविष्यतीत्येवमर्थे परिग्रह । सोऽयोग्यस्तथा । योऽतितिणः स्वल्पेऽपि प्रयोजने करकरायमाणः । चलश्चलचित्तोऽनवस्थित स्वप्रतिपन्नार्थानिर्वाही । दुर्बलश्चरणचारित्रविषये दुर्बल एतेऽप्ययोग्याः ।

एवं परिक्खियम्मि, पत्ते दिज्जइ अपत्तिपडिसेहो ।
दुपरिक्खियपत्ते, पुण चारियहावेंति मायेरा ॥

एवमनन्तरोदितेषु गुणेषु च यदि परीक्षया निर्वर्तितो भवति गुणैरुपेतो दोषैश्च विप्रमुक्त इत्यर्थः । तदा स पात्रमिति कृत्वा तस्मिन्परीक्षिते पात्रे गणो दीयते । यस्तु प्रागुक्तैर्दोषैरुपेतो गुणैश्च विप्रमुक्तः सोऽपात्रमिति तस्मिन्नपात्रे गणदानस्य प्रतिषेधस्तस्मिन् गणो न दातव्य इति भाव ( दुपरिक्खिय ) इत्यादि । अथ यदा चित् सुष्ठु परीक्षितं कृतो भवेत् गणश्च तस्मै दत्त स च गणः सीदति तं दृष्ट्वाऽन्येऽपि गच्छवर्त्तिनः केचित् सामाचारीशिथिला भवितुं प्रवृत्तास्तत परीक्षिते पात्रे गणे प्रदत्ते सति गणोऽवसीदति । ये तत्र गच्छेऽन्यतीर्थधर्मका न सीदति तेऽपायेन प्रतिचोद्य वारयितव्यः । तत्र यदि वारणानन्तरमावृत्त्याऽवर्त्तते ततस्समीचीनमथ वारितोऽपि किंचित्कालमुद्यम्य पुन समाचारी हापयति । तत इयं मर्यादा कर्तव्या अयं विधि प्रयोक्तव्य इत्यर्थः । तमेवाह ।

दिट्ठंतसमोसरणे, अहवा ऐग ताहिं तु वक्खाणि ।
परिसाय बहुसढा, चंदणखोडी करंटएणय ॥

यत्र समवसरणे जायते आचार्योऽत्र प्रवेशयति । तत्र गच्छोऽनुज्ञातसमः प्रवेशनीय । प्रविश्य तत्र गच्छाऽऽचार्यस्य कथयंति । त्वं सीदन् निर्धर्मि नैव च तदयुक्तं तस्मात् उद्यमः कर्तव्यः । अथवा कुशानि हिरूमाना स्थविरा सूत्रगतं जाति तत्र स्थाने पर्षत्समाजपरिवाररूपा । मृष्टा पादघर्षणात् मृष्टा शरीरस्य केशादीनां च समारचनात् । तत स्तां तथारूपां पर्षदमवलोक्य चंदनखोडीदृष्टान्तेन खरटना कर्तव्या सा चैवम्

आयरिया दिट्ठंतमेगं सुणंति । एगो इंगालदाहओ इंगालकट्ठाइणं अण्णेणट्ठाए नदीकूलं गतो तत्थ पासइ । तरुण वुज्झमाणं गोसीसचंदणखोडिं सो तं घेत्तूण परागतो तमंतरा वणीओ पासई जाणई एसा गोसीसचंदणखोडी । ततो तेण सो भणितो किं एएण कट्ठेण तं करिस्सई । इंगालदाहगो भणइ । दहिऊण इंगाले वेच्छामि । वणिओ चिंतिते । जइ इत्ता हेऊ च मज्झाहामो तो बहुसुकं मोल्लं काहिति तो जाहे रहिओ माढवेहिति ताहे किणीहामि । एवं चिंतित्ता जाव वणिउ मुल्लस्स कएण घरं गंतु एति । तावत्तेण दिट्ठा गोसीसचंदणखोडी वणिएण आगंतुं पुच्छितो । कहिं तं कट्ठं सो भणइ । दड्ढंति । एवं भणिएण खिंसितो महाभाग फिडितो सि इसरियत्तणस्स एवं जहा सो इंगालदाहओ सोयवाणियउ ईसरियत्तणस्स वुक्को । एवं तुमंपि नाणादी दहंतो निव्वाणस्स वुक्किहिसि ॥

एतदेवाह ॥

इंगालदाहखोडी, पवेसे दिट्ठाउ वाणिएणं ॥
तुज्झामुल्लं आणयए, इंगालट्ठाए तादिट्ठा ॥ १ ॥
इय चंदणरयणनिभा, पमाय तिक्खेण परसुणा भेत्थं ॥
दुविहपडिसेवसिहिणा, तिरियणखोडि तुमे दड्ढा ॥ २ ॥

अंगारान् दहतीति अंगारदाहस्तस्य पार्श्वे गोशीर्षचंदनखोडी प्रवेशग्रामप्रवेशे च वणिजा दृष्टा । स च यावन्मूल्यमानयति । तावत्तेनांगारदाहकेनांऽगारार्थं सा खोडी दग्धा इत्यक्षरार्थः भावार्थस्तु प्रागेवोक्तः सांप्रतमुपनयमाह ॥ इयचंदणेत्यादि । इत्येवममुना प्रकारेण चंदनरत्ननिभा गोशीर्षचंदनतुल्या त्रिरत्न रत्नत्रयरूपा खोडी प्रमादरूपेण तीक्ष्णेन परशुना भित्त्वा द्विधा या प्रतिसेवा मूलगुणप्रतिसेवा उत्तरगुणप्रतिसेवा चेत्यर्थः । सैव शिखी वैश्वानरस्तेन त्वया दग्धा एवं वारितः सन् यदि निवर्तते तत प्रायश्चित्तं दत्त्वा तस्य वर्षोपका स्थविरा दातव्या । अथ न निवर्तते तर्हि तस्य गणोऽपहरणीयः । न केवलमेतेऽनर्हाः । किं चान्येऽपि तथा चाह ॥

एएण अणरिहेहि, अन्ने इयसूइया अणरिहातो ॥
के पुण ते इणमोत्त, दीणादिया मुणयव्वा ॥

एतैरनन्तरोदितैरनर्हैरन्येऽपि खलु सूचिता अनर्हाः । के पुनस्ते सूरिराह । इमे ते वक्ष्यमाणा दीनादयो ज्ञातव्यास्तानेवाह ।

दीणाजुंगियचउगे, जातीकम्मे यसिप्पसारीरे ॥
पाणाडोंबा किणिया, मोवागा चेव जातीए ॥

दीना अनर्हाः कस्मादिति चेदुच्यते । तेषां नदनाभावा दुक्तं च ॥

दीणाभासं दीणे, गति दीणजं पिउं पुरिसं ।
कं पेच्छमि नंदंतं, दीणाए दिट्ठिए तत्थ ॥

जुंगिका हीनाश्चत्वारोऽनर्हाः । तद्यथा जातौ कर्मणि शिल्पे शरीरे च । तत्र जातौ जुंगिकाश्चत्वारस्तद्यथा । पाणा डोंबा किणिका श्वपचाश्च । तत्र पाणानाम ये ग्रामस्य नगरस्य च बहि

शकारो वसति तेषां गृहाणामभावात् । कावा येषां गृहाणि सति गीत च गायन्ति । किङ्किका ये वादित्राणि परिणहन्ति । वध्यानां च नगरमध्ये नीयमानानां पुरतो वादयति । श्वपचा श्माशाका ये श्वान· पचन्ति । तत्रांश्च विक्रीणन्तीति । एतजातो जुंगिका उपलक्षणमेतत् । तेनायकल्पिका ये च ये च हरिकेशजातयोमेया ये च वरुडादयस्तेपि जातो जुंगिका द्रष्टव्या· । सम्प्रति कर्मणि शिल्पे च तानभिधित्सुराह ॥

पोसगसंवरनमडं,ख वाहमच्छंधरयगवागुरिया ॥
पडगारा य परीसह, सिप्पे सरीरे य वुच्छामि ॥

पोषका ये स्त्रीकुक्कुटमयूरान् पोषयन्ति । संवरास्तानिकाः । शोधका नटा प्रतीता ये नाटकानि नर्तयन्ति । लङ्खा ये वंशादेरुपरि नृत्तं दर्शयति । व्याधा लुब्धका मत्स्यवधा कैवर्त्ता रजका वस्त्रप्रक्षालका वागुरिका मृगजालिकाजीविन । एते कर्मणि जुंगिका । पटकारा· कुर्चिकादयश्चर्म्मकारा इत्यपरे परीषहा नापिता एते शिल्पे जुंगिका· ॥ सम्प्रति शारीरे तान् वक्ष्यामि प्रतिज्ञात निर्वाहयति ॥

हत्थे पाए कन्ने, नासाउट्ठेहिं वज्जियं जाण ॥
वामणगमडहकोडिया, काणा तह पंगुला चेव ॥

शरीरे जुंगिका· जानीहि । हस्ते सप्तमी प्राकृतत्वात् तृतीयार्थे । एवं सर्वत्र । ततोऽयमर्थ । हस्तेन उपलक्षणमेतत् । हस्ताभ्यां वा वर्जित एव पादेन पादाभ्यां वा कर्णेन कर्णाभ्यां वा नासया ओष्ठेन वा वामनका हीनहस्तपादाद्यवयवाः । मडहा कुब्जा· कुष्ठव्याध्युपहता· काणा एकाक्षा । पंगुला पादगमनशक्तिविकला एतानपि शरीरे जुंगिकान् जानीहि ॥

दिक्खेउंपि न कप्पंति, जुंगिया कारणेवि दोसोवि ॥
अन्नाइक्खिएवा, ताउं न करेंति आयरिए ॥

एते अनन्तरोदिताश्चत्वारोऽपि जुंगिका दीक्षितुमपि न कल्पते किंपुनराचार्य्यपदे स्थापयितुमित्यपि शब्दार्थः । कारणे तथाविधे समुत्पन्ने दोषका निर्दोषा वा दीक्षितुमपि सवध्यते । अज्ञाताश्चेत्कथमपि जुंगिका दीक्षिता भवेयु· ततस्तान् अज्ञात दीक्षितानज्ञात्वा कुर्वत्याचार्यगुणोपेतानप्याचार्यान् प्रवचनहेलनाप्रसक्ते· ॥

पच्छावि होंति विकला, आयरियत्तं न कप्पई तेसिं ॥
सीसे ठावेयव्वो, काणगमहिसो व निन्नम्मि ॥

पश्चादपि श्रामण्यस्थिता अक्षिगलनादिना विकला भवति । तेषामप्याचार्यगुणैर्युक्तानामप्याचार्यत्व न कल्पते । येऽप्याचार्यपदोपविष्टास्सत पश्चाद्विकला जायते । तेषामपि न कल्पते धारयितुमाचार्यत्व । किंतु तैस्तया विकलैः सद्भिरात्मन पदे शिष्य स्थापयितव्य । आत्मत्वे प्रकाशे स्थापयितव्य । क इवेत्यत आह । काणकमहिष इव । निम्ने । इयमत्र भावना । काणकोनाम चोरितमहिषो मारकोऽप्येन मह्यक्षीणिति हेतोर्ग्रामस्य नगरस्य वा बहिर्गर्तरूपे निम्ने प्रदेशे उपलक्षणमेतादिति गुपिले वा वनगहने स्थाप्यते । एव मेषोऽप्यन्यथा च प्रवचनहीलनाप्रसक्तेराज्ञादिदोषप्रसंगश्च । अथ यो वाऽस्मीय शिष्य पश्चाद्विकलैराचार्ये स्थाप्यते । स कीदृश इत्यत आह ॥

गणि अगणी वागीनो, जोवि अगीतोवि या गडमन्नो ।
लोगे स पगासिज्जइ, तहावोन्नि न किगामियरस्स ॥

गणोऽस्यास्तीति गणी साधुपरिवारवान् यो वर्तते तदभावे अगणी । वा यो गीतो गीतार्थ काश्चोचितसूत्रार्थपरिनिष्ठित तस्याऽप्यभावे योवाप्यगीतोऽप्यगीतार्थोऽपि आकृतिमान् रूपेण मकरध्वजतुल्य· स गणधरपदे निवेश्यते । यथाऽयमस्माकमाचार्यो नेतर इति । केवलमितरस्याऽपि जुंगिकाचार्यस्य यत्कृत्य तत्स्थविरा अन्येऽपि च न हापयति सर्वमपि कृत्य कुर्वतीति भाव । सम्प्रत्यनर्हान् प्रतिपादयिपुरिदमाह ॥

एयदोस विमुक्कावि, अणरिहा होंति सेज्जआणोवि ॥
अव्वाबाधादीया, तोसिं विभागो उ कायव्वो ॥

एतैरनन्तरोदितैर्दोषैर्विमुक्ता अपि भवत्यन्ये इमे अनर्हा । के ते इत्याह । अत्याबाधादयस्ततस्तेषामत्याबाधानां विभाग पार्थक्येन स्वस्वरूपवर्णनं कतर्व्य । प्रतिज्ञातमेव निर्वाहयति ॥

अव्वाबाध अवायन्ते, नेच्छइ अप्पचितए ॥
एगपुरिसे कहं निद्र, काकवञ्झा कहं जवे ॥

( अव्वाबाधेत्ति ) अत्याबाध ( आचाएणेत्ति ) अशक्नुवन् (नेच्छत्ति) नेच्छति अनिच्छन् तथा आत्मचितक एते च चारोऽपिपुरुषा अनर्हाः न केवलमेतेऽनर्हा किंत्वेकपुरुषादयोऽपि तत्र शिष्य· आह । कथमेकपुरुषो भवति । कथ वा निद्र· कथ वा काकी कथ वा वध्येति । एव शिष्येण प्रश्ने कृते सूरि सकलविनेयजनाऽनुग्रहप्रवृत्त· सर्वानप्यत्याबाधादीन् व्याख्यानयति ॥

अव्वाबाधो वाहइन, मन्नइवितिअेरेउमसमत्थो ॥
तइओन चेव इच्छइ, तिम्मि ए ए अणरिहातो ॥

अतिशयेन आबाधा यस्य सोऽत्याबाध· । न गच्छस्य द्विविधेऽप्युपग्रहे वस्त्रपात्रादिज्ञानाद्युपग्रहरूपे कर्तव्ये याधां मन्यते द्वितीयोऽशक्नुवन् गण धारयितुमसमर्थ द्विविधमप्युपग्रह गच्छस्य कर्तुमशक्त इत्यर्थ । तृतीयोऽनिच्छन समर्थोऽप्याहस्ये न गण धारयितु नेच्छति । एते त्रयोऽप्यनर्हा ॥

आत्मचिंतकमाह ॥

अब्भुज्जयमेगयरं, पडिवज्जिस्संति अत्तचिंतो उ ॥
जोवा गणे वसंतो, न वहति तत्तीनो अन्नेसिं ॥

आत्मानमेव केवल चिंतयन् मन्यते यथाऽहमभ्युद्यत जिनकल्प यथा लंदकल्पानामेकतरं प्रतिपत्स्ये इति । आत्मचिंतक· योऽपि गणेऽपि गच्छेऽपि वसन् तिष्ठन् न वहति न करोति तप्तिमन्येषां साधूनां सोऽप्यात्मचिंतक· । एतौ द्वावप्यात्मचिंतकावनर्हौ ॥

एगं मज्जति सिस्सं, पाणाउट्ठे मरंति निष्फन्ने वा ॥
अन्नमयस्स य एवं, नवरं पुणाय एण गो पाणन्ति ॥

पंचम एकपुरुष एक शिष्य मृगयते मार्गयित्वा निनयति । किमप्येकमात्मन सहाय मृगयामि । यत एष निद्रामीति तया कोपे निद्रतुल्या शिष्या म्रियेन निष्पन्ने वा प्रतिनिवर्त्यते वेति भावार्थ । इयमत्र भावना । यथा निद्रमहिला यद् यदपत्य प्रसूते तत्तन्म्रियते । एव योऽपि य प्रव्राजयति स स म्रियते अपगच्छति वा तत स निद्रेरिव निद्र । एतमन्स्यापि काकीतुल्यस्य एवमेव द्रष्टव्य । नवरं पुनरेकं निष्पति सिस्सि भवति । यस्यापि य· शिष्य· स म्रियते निष्पन्ने वा फेनरम्य निष्पति । उपलक्षणमेतत् । न चैतदपि द्रष्टव्य । वर्ष्यमपि न

प्रव्राजिते सति द्वितीयविषये लब्धिरेव नास्ति स काकीव काकी काक्यपि हि किलैकं वार प्रसूते इति प्रसिद्धिः। वंध्यातुल्यः सुप्रतीत इति न व्याख्या तदेवेद व्याख्यानं। वंध्या किलाप्रसवधर्मा एवं यस्य नैकोऽपि शिष्य उपतिष्ठते। स वंध्येव वध्येति। पुनरन्याननर्हान् प्रतिपादयिषुरिदमाह ॥

अहवा इमे अणरिहा, देसाणं दरिसणं करेतेण।।
जेपव्वावियतेणं, थेरादि पयच्छति गुरुएणं ॥

अथवेति। अनर्हाणामेव प्रकारांतरतोपदर्शने इमे वक्ष्यमाणा अनर्हास्तानेवाह। देशानां दर्शनं कुर्वते। तेन ये प्रव्राजिकाःस्थविरादयस्तान् प्रयच्छति गुरूणां न तरुणादीन् पूर्वं बहुवचनमनेकव्यक्त्यपेक्षयेत्यदोषः। स्थविरादीनेवाह।

थेरे अणरीहे सीसे, खज्जूढे एगलंभिए ॥
उक्खोवगयत्तिरिए, पये कालगते इय ॥

यःस्थविरान् प्रयच्छति शिष्यान् यो वानर्हान् योवा खज्जूमान् यदि वा एकलाभिकानथवा य एक प्रधानं शिष्यमात्मना लभते गृह्णाति शेषांस्त्वाचार्यस्य समर्पयति। स एकलाभेन चरतीति एकलाभिकः। यो वा शिष्या णामुत्क्षेपको यश्चाचार्याणामत्वरिकान् शिष्यान् करोति। योवा गुरुसकाशिनः शिष्यान् पथि कालगतान् चशब्दात् प्रतिभग्नान् कथयति। एते सर्वेऽप्यनर्हास्तत्र स्थविरादीन् व्याख्यानयति ॥

थेराउ अतिमहल्ला, अणरिहा काणकुंटमादीया ॥
खज्जूराय अवस्सा, एगालंभी पहाणा उ ॥ १ ॥
तं एगं न विवतीश्र, विसेसे देइ जे गुरुणत्तु ॥
अहवा वि एगदव्वे, लभंति जे ते देइऊगुरूणं ॥ २ ॥

स्थविरानाम अतिमहांतो वयसाऽतिगरिष्ठा इत्यर्थः। अनर्हाः काणकुंटादयः खज्जूरा अवश्याः। अयमत्र भावार्थः योऽसौ पूर्वं परीक्षित स देशदर्शनं कार्यते। तेन च देशदर्शनं कुर्वता यदि ये स्थविराः प्रव्रजिता ये च जुंगिका ये च खज्जूरा वा ते आचार्यस्य समर्प्यंते तरुणा न व्यङ्गा विनीताश्चात्मनस्तदा सोऽनर्ह इति। एगलाभिनां यः प्रधानः शिष्यस्तमेक योन ददाति अवशेषांस्तु सर्वानपि प्रव्राजितान् गुरूणां प्रयच्छति। अथवा येषामेकएव लाभो यथा यदि भक्त लभंते ततो वस्त्रादीनि न अथ वस्त्रादीनि लभते तर्हि न भक्तमपि एकमेव लभते इत्येव शीला एकलाभिनस्तया चाह। अथवा ये एक द्रव्य लभंते तान् शिष्यान् गुरूणां य प्रयच्छति। उभयलब्धिकानात्मन सवधयति सोऽप्यनर्हः ॥

उक्खोवणं देतिन्नि वा, विउवणाति से समप्पणो ॥
आयरिया णित्तेरियं, वंधइ दिसमप्पणो वर्कहिं ॥

इय किल समाचारी यावंतः किल देशदर्शनं कुर्वता प्रव्राजिता तावत सर्वे गुरूणां समर्पणीयाः यस्तु प्रव्राजितान् द्विधा कृत्वा उत्क्षेपे ए हस्तोत्पाटनेन द्वौ त्रीन् वा शिष्यान् गुरूणामुपनयति शेषान् सर्वानप्यात्मना गृह्णाति एषो क्षेपकोऽनर्हः ॥

तया ये के च न देशदर्शनं कुर्वता प्रव्राज्यते ते सर्वेऽप्यात्मन इत्वरिका वक्तनीया। यथा आचार्यसमीप गता यूय सर्वेऽप्याचार्यस्य यत्पुनराचार्याणां दिग्गमित्वरिकां बध्नाति। आत्मनस्तु यावत्कथिकां यथा यावत् यूयमाचार्यसमीपे तिष्ठत तावदाचार्यस्य काः शेषकालं ममेत्येवमित्वरिकान् कतिशिष्यान् सोऽप्यनर्हः ॥

पथंमियकालगया, पडिभग्गा वावितुब्भ जे सीसा।
एए सव्वे अणरिहा, तप्पडिवक्खा भवे अरिहा।।

यो देशदर्शनं कृत्वा समागतः सन् ब्रूते युष्माभिर्दत्ताः साधवः परिवारतया ते सर्वे युष्माकं शिष्याः पथि कालगताः प्रतिभग्ना वा इमे पुनः सर्वे मम शिष्या एते सर्वेऽप्यनर्हाः। तेषां पुनरनर्हाणामाचार्यसमीपगतानां ये तैः प्रव्राजिता शिष्यास्तानाचार्य इच्छापयति वा न वा गुरूणामत्रेच्छाप्रमाण॥ व्य. १ खं. ३ उ ॥

( १७ ) उद्देशः मैथुनादिप्रतिसेव्याचार्य्यत्वे न ॥

मैथुनप्रतिसेवने त्रिवर्षाऽभ्यन्तरे आचार्य्यत्वम्न कल्पत इत्यत्र प्रमाण ( मुद्देस ) शब्दे।

( १८ ) स्थापनाविधिराचार्य्यपदे गुरोः ॥

आचार्य्यपदेऽन्यस्थापनाविधिश्च ॥

कहंणंभंते! आयरियस्स ठवणाविहीवियाहिया जंबू! जे आयरिया विहिपुव्वं ममाउआयरियेणं पट्ठाविया तेवि आयरिया तत्थ एगे नामायरिया दव्वायरिया ठवणायरिया भावायरिया। जंबू! जे भावायरिया ते तित्थयरसमा। अहवा तउ आयरिया पण्णत्ता सिप्पायरिया कलायरिया धम्मायरिया जे ते धम्मायरिया परलोगगाहियद्वाए निजरट्ठाए आराहेयव्वा। अन्ने कलायरिया सिप्पायरिया एकइएहिं कित्तबुद्धिए आराहियव्वे। तत्थेगे धम्मायरिया सोवायकरंडसमा वण्णाइकथयप्पयगाहाईहिं जे सुद्धसज्झाए वखाणिंति ते सोवागकरंडसमा। वेसाकरंडसमाजो रीआहारणसरिसजीहावक्खाणमंवरेणं अंतरं सुत्तसार विरहिया विसुद्धसज्झाए जणं विमोहिंति णेरविंति अप्पाणं घुतंसि आलुच्च अणत्थे पाडिंति गोयमा! गणहराणं उवमाएतेवेसाकरंडसमा गाहावइकरंडसमा जे समं समुवसियसुगुरुहितो संपत्त अंगोवंगाइसुत्तत्थे सुपरिच्छियच्छेयगंथा सयसमयपरसमयणिच्छया परोवयाकरणिक्कलद्धिच्छया जणजोगाविहीए अणुओगं करिंति। ते गाहावइकरंडसमा रायकरंडसमा जे गणहरा चउदसपुव्विणोवा घडाओ घडसयं पडाओ पडसयं इच्चाइं विहाइं सयसमणिया ते रायकरंडसमा गाहावइकरंडसमाणे रायकरंडमाणे दोन्निए आयरिए तित्थयरसमाणे तेसिं ठवणविहि गाहावंधो ॥

जइगुण १ काल २ णिसिज्जा ३ विज्ज ४ चंदु ५ समा ६ नंदि ७ सगच्छोत्ता ८ मंत ९ रक १० णाम ११ वंदण १२ अणुसट्ठि १३ निरुद्ध १४ गणगुत्ता १५ संगा १६ संगहणीगाहा ॥

अडतारिसमडिकुख वारसु, सुत्ते अत्थे य वायगत्तेय।

पणयालीसपरिसगुण, जुत्तोसूरिपयजुग्गे ॥ २ ॥
देसकुलं पसिद्धिं, छत्तीसगुणगणालंकिओ दढचरित्ते ।
जयणाजुत्तो संवरम, सम्मओ मुक्खकंखी य ॥ ३ ॥
कालाइव लाइकाइ, गुण विहीणो विगुम्फगीयत्थो ॥
ठाविज्जइ सूरिपए, उज्जुत्तो सारणाइसुं ॥४॥
गुरुगुणभावे न पुणो, गुणपरिहीणो ठविज्जए सूरी ॥
अप्पत्ते सूरिपयं, दितस्स गुरुस्स गुरुदोसो ॥ ५ ॥
जह चंदूढो गणहररस्त, दोगोयमाईहिं धीरपुरिसेहिं ॥
जो तं ठवइ अपत्ते, जाणंतो सो महापावो ॥ ६ ॥
कहं नासेइ अगीअत्थो, चउरंगं सवल्लो असारंगं ॥
नट्ठमिअ चउरंगेण, हु सुलहं होइ चउरंगं ॥ ७ ॥
नासेइ संवेगो, चउरंगं सवल्लो य सारंगं ॥
नट्ठंमिय चउरंगेण, हु सुलहं होइ चउरंगं ॥ ८ ॥

एयाए विहीए सुसीसस्स परिक्खा काऊण दुसमसमयाणुभावेणं पसत्थे तिहिनक्खत्तमुहुत्ते गहिए पाभाइअकाले पट्ठविए गुरुसीसे सिज्झाए करित्ता पसत्थजिणभवणाइखित्ते अक्खए गुरुजुगे निसिज्जादुगे कातव्वे अणुओगाणुन्नवणत्थं कियलोयस्स सीसस्स सिरे गुरुणो वासं धेति मंतिऊण सीसे खिवति। सुसीसस्स से तओ पुव्वविहीए देवे वंदावेइत्ता अणुओगाणुन्नवणत्थं काउस्सग्गं किरइ। सत्तावीसुस्सा संदुवोवि गुरुसीसा तओपयमं चउवीसं थुतं पभित्ता वारातिगं पंचमंगलुचारं करेंति । सुम्हट्ठिया । गुरु अन्नोवा अक्खलियाइगुणोपवेय नंदिसुत्तं कट्टेइ । बुद्धसीसो अहोणयकायउजोभियकरकमलकुमलोपवड्ढमाणसंवेगो सुणेइ। तओ सीसो वंदितो भणेइ इच्छयारिंभंते! तुम्हे अणुओगं जाणह तओ गुरु भणइ अहमेअस्स साहुस्स दव्वगुणपज्जवेहिं खमासमणाणं हत्थेणं अणुओगं अणुजाणामि विए संदिसह किं भणामि । वंदित्ता पवेएह तइए इच्छयारि तुम्हे अम्हं अणुओगो अणुन्नाओ । इच्छामो अणुसट्टिंति सीसेण भणिए गुरु भणइ । संम्मे अवहारे यव्वं अन्नेसिं पवेयहचउत्थे तुम्हाणं पवेइयं संदिसह साहूणं पवेएमि पंचमेय इक्कणमुक्कारेण समोसरणं च गुरुं च पयक्खिणेइ एवं तिन्नि वारा छट्ठेण तुम्हाणं पवेइउ साहूणे पवेइउं संदिसह काउस्सग्गं करेमि । सत्तमे अणुओगाणुजाणावणियं करेमि काउस्सगमिचाइणा उवसग्गे कए गुरुसमप्पिय णिसिज्जा जुओ गुरुं तिपयक्खिणीकरिय वंदित्ता गुरुदाहिणओ उच्चआमन्ने निसिज्जाए णिसीअइ। तउ णिसन्नस्स लग्गवेलाए दाहिणसवणे गुरुपरंपरागयमंतपए तिन्निवारे परिकहेइ। तओ वद्धतिया उ तिन्नि अक्खमुट्ठिओ देइ करयलपुडे सीसो ताउ उवउत्तो गिहइ। तओ गुरू तस्स नामं कारिय णिसिज्जाउ उट्ठेइ। सीसो तत्थ णिसीयइ अहा सन्निहीयसंयमहिओ गुरू तस्स वंदणं देइ। इयं च तुल्यगुणाख्यापनार्थमुभयोरपि दोषाय । यदाह। आयरियनिसिज्जाए उवविसणं वंदणं च तह गुरुणो तुल्लगुणाक्खायणत्थं ए तया पुट्ठं दुवएहं पितउ वक्खाणं करेइत्ति। गुरुणा वुत्ते तत्थट्ठिओ चेव अहिणवसूरी नंदिमाइयं परिसाणुरूवं वा वक्खाणं करेइ। तस्सम्मतीए य संघो तं वंदइ। तओसोवि णिसिज्जाउ उट्ठेइ गुरुो तत्थ णिसित्ता उववूहंति। यथा आयणीपुव्वे दसमसिलोगबंधेण सिक्खा दिंति ।

नमोऽर्हत्सिद्धाचार्योपाध्यायसर्व्वसाधुभ्यः ।
यथा । धन्यस्त्वं येन विज्ञात, स्ससारगिरिदारकः ॥
वज्रवदुर्भिदश्चायं, महाभाग ! जिनागमः ॥ १ ॥
इदं चारोपितं यत्ते, पदं तत्संपदां पदम् ॥
श्रीगौतमसुधर्म्मादि, मुनिसिंहनिषेवितम् ॥ २ ॥
धन्येभ्यो दीयते भद्र, ! धन्या एवास्य पारगाः ॥
धन्या गत्वाऽस्य पारन्तु, पारं गच्छंति संसृतेः ॥ ३ ॥
भीतं संसारकांतारा, त्साधुवृन्दमिदं मुदा ॥
विमोचने समर्थस्य, भवतश्शरणागतं ॥ ४ ॥
अतो विधेयं यत्नेन, सारणावारणादिना ॥
अपायपरिहारेण, संसारारण्यपारगं ॥ ५ ॥
एवं तं उववूहिअ विणेयजणोवि अणुसासियव्वो । यथा ।
गुण्भाभिरपि नैवेष, सुस्थबोधिस्यसन्निभः ॥
संसारसागरोत्तारी, विमोक्तव्यः कदाचन ॥ १ ॥
प्रतिकूलैरपि कर्तव्य, मनुकूलैरतः सदा ॥
भाव्यमस्य गृहत्यागो, येनवस्सफलो भवेत् ॥ २ ॥
अन्यथा लोकबंधूना, माज्ञालोपः कृतो भवेत् ॥
ततो विडंबना घोरा, भवेदिह परत्र च ॥ ३ ॥
ततः कुलवधून्यायात्, कार्य्ये निर्भर्त्सितैरपि ॥
यावज्जीवं न मोक्तव्यं, पादमूलमपुण्य भोः ॥ ४ ॥
ते ज्ञानभाजनं धन्या, स्तेहि निर्म्मलदर्शनाः ॥
ते निष्प्रकंपचारित्रा, ये सदा गुरुसेविनः ॥५ ॥

इदं अणुसट्ठिं काउं दोवि णिरुद्धं करेंति दोविमज्झायस्स कालस्सय पडिक्कमंति । आयरियं पंचएण अइसया ववहारगत्थे अभिहिया ॥

भत्ते पाणे धोवणए, पसंसणा हत्थपायसोए य ॥
आयरियअइसेसा, एइसेसा हुंति णायरिया ॥ १ ॥
उप्पन्ननाणा जहनो अमंती, चुत्ती मनुष्या इमया जिणिंदा।
एवं गणी अट्टगुणोववेओ, सन्याजनो हिं सदेवमणुएसु ।२।
गुरुहिं मणामि गुरुणा, वमन्ने खलुगा णिवारयंनमि ॥
गीयागीयगुम्फट्ट, आणाइओ यहूलोगा ॥ ३ ॥

पंचविअ्रायरियाइ,यच्छंति जहन्नए वि संथरणे ॥
एवं पसत्थरंतो, सयमेव गणी अ्रडइ गामे ॥ ४ ॥

इच्चाइगुणजुत्तस्स दुच्चेठ्ठवियायरियस्स वा गणानुज्ञां करोति । तत्थय सक्करुणो पवयणाणुरागीय एवं वि खमासणपुव्वं सीसो भणइ । इत्थयारि तुम्हे अम्हदिगाइ अणुजाणावणियं नंदिकारावणियं वासणिक्खेवं करेह इच्चाइ पुव्वुत्तविहीए चेइवंदणं चेइवंदणपुव्वं काउसग करणं नंदिसुत्तस्स कढ्ढणं गंधढाणं सत्तखमासणदावणं तओ उस्सग्गाणंतरं सूरिसमीवे उवच्चिठ्ठियस्स अभिणवगणहरस्स साहुणीओ वंदणयं दिंति । तओ तस्सायरियस्स सीसे हत्थं दाऊणं सासणं देइ ॥ तंजहा ।

संपारिजए परमे,नाणाइ दुविहियतायणसमत्थो॥
भदजयजयाणदढं,ताणं जो कुणई सो धन्नो ॥ १ ॥
अत्ताणवाहिगाहिया, जइवि न सम्मं इहातुरा हुंति ॥
तहवि पुण भावविज्जा, तेसिं अवणंति तंवाहिं ॥ २॥
तातंसि भावविज्जो, भवदुक्खनिवाकियातुम्हं ॥
एए हुंदिसरणं, पवन्ना मोएयव्वा पयत्तेणं ॥ ३ ॥
गच्छस्स सिक्खिदाणं पुण एवं ॥
तुझेहिं पिण एमो, संसारम्मविमहाकम्मीद्धंमि ॥
सिद्धिपुरसत्थवाहो,' जत्तेण सया ण मुत्तव्वो ॥ ४ ॥
नाणस्स होइ भागी, थिरयरओ दंसणे चरित्तेय॥
धन्ना आवक्कहाए, गुरुकुलवासं ण मुंचन्ति ॥ ५॥
एवंचिय समणीणं, अणुसर्ठि कुणइ इत्थ आयरिओ।
तह अजचन्दणमिगावइ, णासा होइ परमगुणा ॥ ६ ॥
एवं ठवणविहीए, ठविया जे हवन्ति आयरिया ॥
विहिरहिया अणायरिया, भणिया सिरिवीरणाहेणम्
॥ ७ ॥ अंग चू. । ध. ३ अधि. ॥

नूतनाचार्य्यस्थापनविधिर्गुरुशिष्ययोरनुशासनं च पंचवस्तुके यथा ॥

एत्थाणुजाणणविही, सीसं काऊण वामपासम्मि।
देवे वन्देइ गुरू, सीसो वन्दिओ तो भणइ ॥ ३६ ॥

व्याख्या ॥ अत्र प्रक्रमे अनुज्ञाविधिरयं शिष्यं कृत्वा वामपार्श्वे आत्मनः देवान्वन्दते । गुरुराचार्य्यस्ततशिष्यो वंदित्वा अत्रांतरे ततो भणति वक्ष्यमाणमिति गाथार्थः ॥ ३६ ॥

इच्छाकारेणम्हं, दिसाइ अणुजाणहत्ति आयरिया।
इच्छामोत्ति भणित्ता, उस्सग्गं कुणइओ तयत्थं ॥ ३७॥

व्याख्या।इच्छाकारेण स्वेच्छया क्रिययाऽस्माकं दिगाद्यनुजानीतेति भणति अत्रांतरे आचार्य इच्छामि इति भणित्वा तदनतरं कायोत्सर्गं करोति तदनन्तर दिगाद्यनुज्ञार्थमिति गाथार्थ ॥

चउवीसत्थयनवकार,पारणं कढ्ढियव्वयं ताहे ।
नवकारपुव्वयं चि अ, कढ्ढइ अणुसुणंदित्ति ॥ ३८ ।

व्याख्या।चतुर्विंशतिसूत्रपाठनमस्कारपारणं नमोरिहंताणमिति स्तवमाकृष्य पठित्वा स्तवं पूर्वोक्तं ततो नमस्कारपूर्वकमेवाकर्षयति । पठन्त्यनुज्ञानंदीमिति गाथार्थः ॥

सीसो वि भाविअप्पा, सुणेइ जइ वंदओ पुणो भणइ ।
इच्छाकारेणम्हं, दिसाइ अणुजाणह तहेव ॥ ३९ ॥

व्याख्या । शिष्योऽपि भावितात्मा सन् शृणोत्युपयुक्तः अथ वंदित्वा पुनर्भणति शिष्यः । इच्छाकारेणास्माकं भगवन् ! दिगाद्यनुजानीत तथैव भणतीति गाथार्थः ॥

आह गुरु खमासमणं, हत्थे णिम्मस्स साहुस्स।
अणुजाणिअं दिसाई, सीसो वंदित्तुतो भणइ॥ ४० ॥

व्याख्या । आह गुरुस्तत्रांतरे क्षमाश्रमणानां हस्तेन स्वमनीषयाऽस्य साधोः प्रस्तुतस्यानुज्ञातं दिगादिप्रस्तुतं शिष्यो वन्दित्वा अत्रांतरे ततो भणति वक्ष्यमाणमिति गाथार्थः ॥

संदिसह किं भणामो, वन्दितु पवेअह गुरू भणइ ।
वंदितुपवे अयई, भणइ गुरुतत्थ विहिणाओ ॥ ४१ ॥

व्या. ॥ सादिशति किं भणामि अत्र प्रस्तावे वंदित्वा प्रवेदयैवं गुरु र्भणति वंदित्वा प्रवेदयति शिष्यो भणति गुरुस्तत्र विधिना तु वक्ष्यमाणमिति गाथार्थः ॥

वंदितु भणइ तुम्हं, पवेइयं संदिसह साहूणं ।
एवं सीसोभणइ, भणइ गुरू पवेयह तओउ ॥ ४२ ॥

वंदित्वा भणति ततः किमित्याह।युष्माकं प्रवेदित संदिशत साधूनां प्रवेदयामि एवं भणति शिष्यः । अत्रांतरे गुरुराह प्रवेदय ततस्तु तदनतरमिति गाथार्थः। किमित्याह वंदित्वा भणति ततः किमित्याह । युष्माकं प्रवेदितं सदिशत साधूनां प्रवेदयामि एवं भणति शिष्यः । अत्रान्तरे गुरुराह । प्रवेदय ततस्तु तदनन्तरमिति गाथार्थः ॥ किमित्याह ॥

वन्दितु णमोकारो, कढ्ढंतो से गुरुं पयाक्खिणइ ॥
सो विअ देवाईणं, वासो दाऊण तो पच्छा ॥ ४३ ॥

व्या. ॥ वंदित्वा नमस्कारमाकार्ष सशिष्यो गुरु प्रदक्षिणी करोति सोऽपिच गुरुर्देवादीनां वासान् दत्वा ततस्तदनन्तर पश्चादिति गाथार्थः ॥ किमित्याह ॥

सीसंमि पक्खिवन्तो, भणइ तं गुरु गुणेहिं वड्ढाहिं ।
एवं तु तिण्णिवारो, उववसिइ तओ गुरूपच्छा ॥ ४४ ॥

व्याख्या । शिरसि प्रक्षिप्त्वा तान् भणति तं साधुं गुरुगुणैर्वर्धस्वेति एवमेव त्रीन् वारानेतदुपविशति । ततस्तदनंतरं गुरु पश्चादिति गाथार्थः ॥

सेसं जह सामइए, दिसाइ अणुजाणणाणिमित्तंतु ।
णवरं इह उस्सग्गो, उवविसइ तओ गुरुसमीवे ॥ ४५ ॥

व्या. शेषं प्रादक्षिण्यादि तथा सामायिके तद्वेव द्रष्टव्य दिगाद्यनुज्ञानिमित्तं तु नवरमिह कायोत्सर्गो नियमतएव उपविशति ततो गुरुसमीपे स साधुरिति गाथार्थः ॥

दिंति अ नो वंदणयं, सीसाइ तओ गुरू वि अणुसर्ठि ।
दोण्हवि करेइ तह जह, अण्णोवि अवुइऊई कोई ॥ ४६ ॥

व्या. ददति च ततो वंदनं शिष्यादयः सर्व एव ततो गुरुरप्यनुशास्ति मौव"र्द्वयोरपि गच्छगणधरयोः करोति। तथा संवेगसारं यथाऽन्योपि च सत्वो बुध्यते कश्चिदिति गाथार्थः ॥

गणधरानुशास्तिमाह ॥

उत्तममिश्रं पयं, जिणवरेहिं लोगुत्तमेहिं पण्णत्तं।
उत्तमफलसंजणयं, उत्तमजणसेवित्रं लोए ॥ ४७ ॥

व्या. उत्तममिदं गणधरपदं जिनवरैर्लोकोत्तमैर्भगवद्भिः प्रज्ञप्तमुत्तमफलसंजनकं मोक्षजनकमित्यर्थः। उत्तमजनसेवितं गणधराणामुत्तमत्वाल्लोक इति गाथार्थः ॥

धएणाण णिवेसिज्जइ, धएणागच्छंति पारमेअस्स।
गन्तुंइमस्स पारं, पारं वच्चंति दुक्खाणं ॥ ४८ ॥

व्या. धन्यानां निवेद्यते एतद्धन्या गच्छन्ति पारमेतस्य विधिना परंपारं व्रजंति दुःखानां। सिध्यतीति गाथार्थः ॥

संपाविऊण परमे, णाणाइं दुक्खिस्स तायणसमत्थे।
भवभयभाणे दढं, ताणं जो कुणइ सोधएणो ॥४९॥

व्या. सम्प्राप्य परमान् प्रधानान् ज्ञानादीन् गुणान् दुःखित त्राणसमर्थान्। किमित्याह। भवभयभीतानां प्राणिनां दृढं त्राणं य करोति सधन्यो महासत्व इति गाथार्थ ॥

अएणाणवाहिगहिआ, जइवि न सम्मं इहाउरा होंति।
तहवि पुणभावविज्जा, तेसिं अवणिंति तंवाहिं ॥ ५० ॥

व्या० ॥ अज्ञानव्याधिगृहीता सन्तो यद्यपि न सम्यगिहातुरा भवति व्याधिदोषात्तथापि पुनर्भाववैद्यास्तात्विकास्तेषामपनयति व्याधिमज्ञानलक्षणमिति गाथार्थ ॥

तातंसि भावविज्जा, भवदुक्खनिवीमिया तुहंएए।
हंदिसरणं पवएणा, मोएअव्वा पयत्तेणं ॥ ५१ ॥

व्या० ॥ त्वमसि भाववैद्यो वर्तसे भवदुःखनिपीडिता सत स्त्वैते साध्वादयः हंदिसरणं प्रपन्नाः प्रव्रज्यादिप्रतिपत्या मोचयितव्याः प्रयत्नेन सम्यक्प्रकारेणेति गाथार्थ ॥

मोएइ अप्पमत्तो, परहिअकरणंमि णिच्चमुज्जुत्तो।
भवसोक्खापमिवद्धो, पमिवद्धो मोक्खमोक्खंमि ॥५२॥

व्या० ॥ मोचयति चाप्रमत्तः सन् परहितकरणे नित्योद्युक्तो य इति। भवसौख्याप्रतिवद्धोनिस्पृह। प्रतिवद्धो मोक्षसौख्ये नान्यत्रेति गाथार्थ ॥

ताएरिसो वि अतुमं, तह वि अ भणिओ सिमयणीईए।
णिअयावत्थासरिसं, भवयाणिच्चं पि कायव्वं ॥५३ ॥

व्या। तदीदृश एव त्वं पुण्यवांस्तथापि च भणितोऽसि मया समयनीत्या करणेन निजावस्थासदृशं कृतमेव भवता नित्यमपि कर्तव्यं नान्यदिति गाथार्थ। गच्छानुशास्तिमाह।

तुब्भेहिं पि न एसो, संसारारुविमहाकमिंमि।
सिद्धिपुरसत्थवाहो जत्तेण खणंपि मोत्तव्वो ॥ ५४ ॥

व्या० युष्माभिरपि नैष गुरुः संसाराटवीमहाकान्तारे गहने सिद्धिपुरसार्थवाहः। तत्रानपायनयनादयत्नेन क्षणमपि मोक्तव्यो नेति गाथार्थ ॥

ण य पमिकूलेअव्वं, वयणं एअस्स नाणरासिस्स।
एवं गिहवासचागो, जं सफलो होइ तुम्हाणं ॥ ५५ ॥

व्या ॥ न च प्रतिकूलयितव्यमशक्त्या वचनमेतस्य ज्ञानराशेर्गुरोरेव गृहवासत्यागः प्रव्रज्यया यत्सफलो भवति युष्माकमाज्ञाराधनेनेति गाथार्थ ॥

इहरा परमगुरुणं, आणाभंगो निसेविउ होइ।
विहला य होंति तं सि. निअमाइहलोअपरलोआ ॥५६॥

व्या. ॥ इतरथा तद्वचनप्रतिकूलत्वेन परमगुरूणां तीर्थकृतामाज्ञाभंगो निषेधितो भवति। निष्फला च भवतस्तस्मिन्नाज्ञाभंगे सति नियमादिहलोकपरलोकाविति गाथार्थः ॥

ताकुलवहुणाएणं, कज्जे निव्भच्छिएहिं विकहिंचि।
एअस्स पायमूलं, आमरणंतं न मोत्तव्वं ॥ ५७ ॥

व्याख्या। तत्कुलवधूज्ञातेनोदाहरणेन कार्ये निर्भर्त्सितैरपि सद्भिः कथंचिदेतस्य गुरोः पादमूलं समीपमामरणांतं न मोक्तव्यं सर्वकालमिति गाथार्थः। पं. व ४ द्वा ॥

नूतनाचार्यस्थापने गुरुशिष्ययोरनुशासनं ( जिनकल्पिक ) शब्देऽपि ॥

( १७ ) परिच्छदसहितस्यैवाचार्यत्वम् ॥

आचार्यस्य गणधारणे परिच्छदावश्यकता। तथा च व्यवहारसूत्रम् ॥

भिक्खू इच्छेज्जा गणं धारित्तए भगवं च से अपलिच्छिएणएवं सेनो कप्पई गणं धारित्तए भगवं च से पलिच्छन्ने एवं से कप्पइ गणं धारित्तए ॥

व्याख्या ॥ भिक्षुश्चशब्दः आचार्यपदयोग्यानेकगुणसमुच्चयार्थः। इच्छेत् गणं धारयितुं। भगवांश्च ( से ) तस्य भिक्षोरपि परिच्छदः परिच्छदरहितः। परिच्छदश्च द्विधा द्रव्यतो भावतश्च। तत्र द्रव्यतः परिच्छदः शिष्यादिपरिवारः भावतः सूत्रादिकं। तत्र भगवानाचार्योऽपरिच्छिन्नो द्रव्यतो भावतः पुनर्नियमात्सपरिच्छदोऽन्यथाचार्यत्वायोग्यात्। चशब्दाद्भिक्षुश्च द्रव्यतो परिच्छदो भावतः सपरिच्छदः परिगृह्यते एवं से इत्यादि एवममुनाप्रकारेण(से) तस्य न कल्पते गणं धारयितुमेव शब्दो विशेषद्योतनार्थः। सचामुं विशेषं द्योतयति। आचार्ये द्रव्यतोऽपरिच्छदे भिक्षोः सपरिच्छदस्य। न कल्पते गणं धारयितुमिति। भगवांश्च ( से ) तस्य द्रव्यतोपि परिच्छन्नः परिच्छदोपेतश्चशब्दात्सोऽपि च द्रव्यतोपि परिच्छन्नस्तत एव ( से ) तस्य कल्पते गणं धारयितुमिति विशेषद्योतनार्थः। भाष्यकारोव्याख्यानयति ॥

थेरे अपलिच्छन्ने, सयंपि वगहणा तत्थ।
छन्नो थेरो पुण वा, इअरो सीसो भवे दोहिं ॥

स्थविरोनाम आचार्य असावेव पूजावचनेन भगवच्छब्देनोच्यते। भगवानिति महात्मनः संज्ञा। स्थविरोऽपरिच्छन्नः परिच्छदरहितः चग्रहणाद्यच्छब्देऽपादानात् भिक्षुरपि स्वयमपरिच्छन्नः तत्र स्थविरोऽपरिच्छन्नो द्रव्यतः परिवाररहितो द्रष्टव्य। भावतः पुनर्नियमात् सपरिच्छदः इतरः शिष्यः पुनर्द्वाभ्यामपि द्रव्यभावाभ्यामपरिच्छन्नो भवति। तत्र भावतोऽपरिच्छन्नो नियमादयोग्य एव। इतरस्तु द्रव्यतोऽपरिच्छन्नो भावतः सपरिच्छन्नो योग्य। यथाचार्ये द्रव्यतोऽपरिच्छदे किं सर्वथा भिक्षोर्गणं धारयितुं न कल्पते उतास्ति कश्चित्कल्पनप्रकारः। अस्तीति स्मस्त्वयाचाह ॥

तोकारो खलु देसं, पमिसेहयतो कयाइ कप्पेज्जा।
ओसयंपिड थेरे, सोचिय परिच्छओ तम्म ॥ १ ॥

एवं से नोकप्पइ इत्यत्र नोशब्दो देशवचनस्तथा देशं प्रति पेधयति। तेन कदाचित्स्वयेनापि एता कल्पते इति भेदत आह। स्वयमपि आचार्ये। इत्यत्र भावना। यदाचार्यो भावत सूत्रादिनैतस्य सपरिग्रहस्तस्मिन् द्रव्यतोऽपरिच्छन्ने ॥

कल्पते ऽवसन्नस्तर्हि तस्मिन् द्रव्यतोऽपरिच्छिदे वा कल्पते खलु शब्दोविशेषणार्थः । स चैतत् विशिनष्टि । यो भावतः सपरिच्छदस्तस्य कल्पते न शेषस्य परिच्छिदे चावसन्ने । आचार्ये गणं धारयति शिष्ये च आचार्यस्य सपरिच्छदः परिवारः स एव तस्य शिष्यस्य भवति व्यवहारस्तस्या भावनात् इतरस्य न किमप्यामवति शिथिलत्वात् । इह-परिच्छदविषया चतुर्भंगिका । तद्यथा । द्रव्यतोऽपरिच्छिन्नो भावतश्चापरिच्छिन्नः १ द्रव्यतोऽपरिच्छिन्नोभावतः परिच्छिन्नः २ द्रव्यतः सपरिच्छदो भावतोऽपरिच्छिन्नः ३ द्रव्यतः सपरिच्छदो भावतश्च सपरिच्छदः ४ तत्र चतुर्थभंगवर्ती शुद्धः शेषास्त्वशुद्धाः । एष सूत्रार्थः । अधुना निर्युक्तिविस्तरः ॥

भिक्खू इच्छा गणे, धारए अपव्वाविए गणो नत्थि ।
इच्छातिगस्स अट्ठा, महातलागेण ओवम्मं ॥

भिक्षोरिच्छा गणं धारयितुं स च गणः स्वयं प्रव्राजितो नास्ति तस्मात्स्वयं साधवः प्रव्राजनीयाः ॥ अथवा यद्यपि स्वयम प्रव्राजने गणोनास्ति तथा यद्यपि यदा अवसन्न आचार्यो-जातो भवति तदा योऽसावाचार्यस्य गणः स एव तस्य भवति इच्छा च गणं धारयितु भिक्षस्य ज्ञानादिरत्नत्रयस्या-र्थाय नतु पूजासत्कारनिमित्तमत्रार्थे चौपम्यमुपमा महातडा-गेन । किमुक्तं भवति पद्मसरसा महातडागेन गणपरिवर्द्ध-स्योपमा कर्तव्या । सा चाग्रे भावयिष्यते । एष निर्युक्तिगाथा संक्षेपार्थः । नवनिक्षेपमप्रतिपाद्य ॥

भावगणेण हिगारो, सो उ अपव्वाविए न संभवति ।
इच्छातियगहणं पुण, नियमणहेउं तओ कुणइ ॥

भावगणेन नोआगमतो भावगणेनाधिकारः प्रयोजनं स च भावगणो यथोक्तरूपः स्वयं प्रव्राजितो नास्ति । तस्मात्स्वयं साधवः प्रव्राजनीयाः ते परिवारतया कर्तव्याः । अथवा प्रमादत्याचार्ये यः परिवारः तथा स को निर्युक्तिकारो पार-गाथायामिच्छात्रिकग्रहणं नियमहेतु करोतीत्युक्तं । तत्र किं नियमयति सूरिराह । निर्जरानिमित्तमेवं गणं धारयति नतु पूजादिनिमित्त । स च गणं धारयन् यतिप्रभुर्महातडागेन समानो भवति । महातडागेन समानतामेव भावयति ॥

तिमिमगरेहिं न खुब्भइ, जहंबुनाहो वियंजमाणेहिं ॥
सोय महातडागो पप्फुल्लपउमं च जं अन्नं ॥

यथांबुनाथस्तिमिमकरैर्विजृम्भमाणैर्न क्षुभ्यति न स्वस्था-नाद्व्रजति । स एव चांबुनाथ इह महातडागस्तथा विच-क्षणात् अथवा समुद्रात् यदन्यत् प्रफुल्लपद्मं महासरस्तत् महातडागम् ॥

उपनयमाह ॥

परवादीहिं न खुब्भइ, संगिण्हंतो गणं च न गिलाइ ।
होंतिय सयाभिगमो, सत्ताण सरोव्व पउमड्ढो ॥

तिमिमकरैरंबुनाथ इव परवादिभिराक्षिप्यमाणो न क्षुभ्यति न च गणं सगृह्णन् यथौचित्येनानुवर्तमानो ग्लायति । यथा वा सरः पद्माढ्यं सत्वानां सदाभिगमं भवत्येवं सदा सत्वानाम भिगमसाधुः प्रभुर्भवति ॥

एयगुणसंपउत्तो, वा विञ्जो गणहरोउ गच्छंमि ।
पडिबोहगादीएहि य, जइ होइ गुणेहिं संजुत्तो ॥

पतेन समुद्रतुल्यतारूपेण पद्माढ्यसरः समानत्वेन गुणेन वा सम्प्रयुक्तो गच्छे गणधरः स्थाप्यते । सचैतद्गुणसम्प्रयुक्तस्तदा भवति यदि प्रतिबोधादिभिर्वक्ष्यमाणगुणैर्युक्तो भवति । प्रति-बोधादयोगुणाः प्रतिबोधकादिदृष्टांतैर्भावनीया इति । ता-नेव प्रतिबोधकादीन् दृष्टांतानुल्लिंगयति ॥

पडिबोहगदेसियसिरि, घरेय निज्जामगेय बोधव्वे ॥
तत्तोय महागोवो, एमेया पडिवत्तिओ पंच ॥

प्रतिबोधकः सुप्तोत्थापकः देशको मार्गदेशी श्रीगृहिकोऽर्ज-भागारनियुक्तो निर्यामकः समुद्रे प्रवहणनेता । तथा महागोपो-ऽतीवगोरक्षणकुशल एवमेता अनंतरोदिताः पंच प्रतिपत्तयोऽ भिहिताऽर्थ आभिरिति प्रतिपत्तय उपमा । तत्र प्रतिबोधकोपमां भावयति ॥

जह आलित्ते गेहे, कोइ पसुत्तं नरं तु बोहेज्जा ।
जरमरणादिजयत्ते, संसारघरंमि तह उजिए ॥

यथा आसमंततो दीप्तगृहे कोऽपि परमबंधुः प्रसुप्तं नर प्रबोधयेत्तथा ससारगृहे जरामरणप्रदीप्ते जीवान् अविबुद्धान् भावसुप्तान् प्रबोधयति । स स्थापनीयो गणधरादेशितस्तीर्थ-करैरुक्तः प्रतिबोधकदृष्टांतः । संप्रति देशकादिदृष्टांतमाह ॥

बोहेइ अपडिबुद्धे, देसिय माईविजोएज्जा ॥
एयगुणविप्पहीणो, अपालिच्छंदे य न धरेज्जा ॥ १ ॥

( बोहेइ अपडिबुद्धे ) इति पूर्वगाथाव्याख्यायां व्याख्याता-नेव देशकादीनपि दृष्टांतान्योजयेत् । तॉश्चैवं यो प्रामादीनां पथा-नमृजुकं क्रमेण प्रापयति स देशक इष्यते । एवं ज्ञानादीनामवि-राधनां कुर्वन् यो गच्छ परिवर्द्धयति स गणधरः स्थापनीयो न शेषः । श्रीगृहकदृष्टांतभावना । यथा यो रत्नानि सुनिरीक्षि-तानि करोति स श्रीगृहे नियुज्यते एवं यो ज्ञानादीनामात्मस-यमयोश्चाविराधनया गणं वर्द्धयति स तादृशोगणस्य नेता कर्तव्यः ॥ निर्यामकदृष्टांतभावना । यथा निर्यामकस्तथा कथंचनाऽपि प्रवहणं वाहयति । यथा क्षिप्रमविघ्नेन समुद्र-स्य पारमुपगच्छति एष एव च तत्वतोनिर्यामक उच्यते । शेषो नामधारकः । एव य आचार्यस्तथा कथंचनापि गच्छं परिवर्द्ध-यति तया क्षिप्रमविघ्नेनात्मानं गच्छं च संसारसमुद्रस्य पारं नयति । स तत्वतोगणधरः शेषस्तु नाममात्रपरितुष्टः । महागो-पदृष्टांतभावना यो गाः स्वपदेषु विषमेषु वा प्रदेशेष्वटव्यां वा पतन्तीर्वारयित्वा च क्रमेण स्वस्थानमानयति । स महागोप उच्यते । एवमाचार्योऽपि यो गणमस्थानेषु प्रत्यंतदेशादिषु विहारिणं धारयति । पूर्वोऽन्यासवृत्तानि च प्रमादस्खलिता न्यपनयति स तादृशो गणपरिवर्द्धकः करणीयो न शेषः । अथवा प्रतिबोधको नाम गृहचिंतक उच्यते । यो गृहं चिंत-यन् यो यत्र योग्यस्तं तत्र व्यापारयति । तत्र व्यापार्यमाणे च प्रमादतः स्खलनं निवारयति स गृहचिंतक उच्यते । एवं यः स्थापितो यो यत्र योग्यस्तं तत्र नियुक्ते । नियुक्तांश्च प्रमादतः स्खलत शिक्षयति । स स्थापनीयो गणधरपदे नेतर इति । यश्चैतद्गुणविप्रहीणः प्रतिबोधादिगुणविकलो यश्च द्रव्यतो भावतश्चस्यर्य । इत्यः परिच्छदहीन स गण धारयेत् । न स गणधरपदे स्थापनीय इति भावः ॥

दोहिं वि अपलिच्छन्ने, एक्केकेणं व अपरिच्छन्नो य ।
अहारणा होंति इमे, भिक्खुंमि गणंधरं तंमि ॥

द्रव्यतोऽपरिच्छन्नो भावतश्चापरिच्छन्न इत्यादिचतुर्भंगी प्रागे

वोपदर्शिता। तत्र भिक्षौ गण धारयति द्वाभ्यामपि द्रव्यतो भाव- तश्च नेतव्यः। अपरिच्छिन्ने परिच्छदरहिते प्रथमभङ्ग उपात्त । एकैकेनवा अपरिच्छिन्ने द्वितीयभङ्गवर्तिनि द्रव्यतोऽपरिच्छिन्ने तृतीयभङ्गवर्तिनि वक्ष्यमाणानि उदाहरणानि भवतितान्येवाह॥

भिक्खू कुमारविरए, ठाणठपंती सियालरायाणो ।
वित्तत्थजुण्ह असती, दमगजयगदामगाईया ॥

भिक्षौ द्रव्यभावाभ्यामपरिच्छिन्ने गण धारयति कुमारदृष्टांत'। विरयो लघुश्रोतोरूपो ध्मापनवनदवे द्वितीयो दृष्टांत' । तृतीयः पंक्तिदृष्टांतः। चतुर्थ- शृगालराजदृष्टांत-। पचमो चित्रस्तेन सिंहेन सह युद्धस्याभावो दृष्टांत' । एते पचदृष्टांता अप्रशस्ता- । प्रथमभङ्गवर्तिनि प्रशस्ताश्चतुर्थभङ्गे द्वितीये द्रमकदृष्टातस्तृतीयभङ्गवर्तिनि मृतकस्य सतो दामकादिपरिग्रहो दृष्टात'। अत्रादिशब्दात् मयूरांगचूलिकादिपरिग्रहः ॥
तत्र कुमारदृष्टांतभावनार्थमाह॥

बुद्धीबलपरहीणो, कुमारपच्चंतममरकरणं तु ।
अप्पेणेव बलेणं, गिरहो वणमासणा रन्ना ॥

एको राजकुमारः बुद्धियलपरिहीनो हस्त्यादिवलपरिहीनश्चेति भाव-। एतेन द्रव्यभावपरिच्छदरहितत्वमस्याख्यात। स प्रत्यन्तदेशे स्थितो डमर देशविप्लव करोति। ततो दायादेन राज्ञा त बुद्धिबलपरिहीन ज्ञात्वा अल्पेनैव बलेन दण्डप्रेषणेन ग्रहापण तस्य राज्ञा कृत। ग्रहणानन्तर च शासना कृता। ग्राहयित्वा स विनाशित इति भाव- ॥
अत्रैवोपनयमाह।

सुत्तत्थअणुववेतो, अगीयपरिवारगमणपच्चन्तं ।
परतित्थकउं हावण, सेवगसेहादवधोउ ॥

एव सूत्रेण अर्थेन चानुपपेतोऽसम्पन्नोऽनेन भावतोऽपरिच्छिन्नतामिवाह । अगीतपरिवारोऽगीतार्थपरिवृतोऽनेन द्रव्यतोऽपरिच्छन्नत्वमुक्त। स प्रत्यत देश प्रति गमन विधाय आचार्यत्व करोति। स च तथा आचार्यत्व विदधयन् परतीर्थिकैः परिमीय नि पृष्टव्याकरण क्रियते । तदनतर श्रावकाणा मपभ्राजना। यथा चिरभाविता यूय न भवदीयोधर्म्मः शोभन । तथा च भवदाचार्य पृष्ट सन्न किमप्युत्तरं ददाति। किंतस मजस प्रलपतीति। तथा शिष्या अपि तैर्विपरिणम्यते। एव च जायते महाननर्थः शासनस्य। तदेवं यत इमे दोषास्तस्माद्रव्य परिच्छदरहितेन भिक्षुणा न गणो धारयितव्य'। गत कुमारद्वारम्॥
अधुना विरयदृष्टांतमाह॥

वणदवसत्तसमागम, विरए सिंहस्स पुंछमेवणया ।
तं दिस्सं जंबुएणो, विविरयवूढा मिगाईया ॥

विरयो नाम लघु श्रोतोरूपो जलाशय । स च योजनहस्तविस्तारो नद्यां महागर्त्तायां वा तस्याङ्कुंच त्रिहस्तविस्तारस्तस्य प्रवेशे मध्यो वेद ॥

अन्नया अडवीए वणदवो जातो सो सव्वतो समंता दहंतो वचइ ताहे मिगादयो सत्ता तस्स वणदवस्स भीया परिधावं वेढं पविट्ठा । तत्थवि सो वणदवो डहंतो आगच्छइ । तत्थ य सीहो पविट्ठो । आगितोयमिगादी जाया चिंतिंति । वेढए स वणदवो पविसउत्ति दव्जियव्वं-ति । ततो सीहं पायवडिया विनवेंति । तुम्हे अम्हं मिगरायाओ नित्थारेहि । सीहेणं भणइ । पुंछे मम धणियं लग्गा । ततो सीहेण प्लुतं कयं । सोअमहद्दत्थे विकंतो सह मिगाईहिं णिग्गीणं अन्नया पुणो वणदवो जातो । तहेव मिगादयो तत्थ पविट्ठा । तत्तो एक्को सियालो सीहेण उत्तारियपुव्वो चिंतेइ । अहं पि सीहो चेव उत्तारेहामित्ति मिगादयो भणंति । मम पुच्छे धणियं लग्गेहते लग्गा तेण सियालेण प्लुतं कयं । विरए सह मिगाएहिं पडिओ सव्वे विणट्ठा ॥ तम्हद्धाणातीआवतीसु गीयत्थेणं वीयपए जयणानिसेवणा सिए गच्छं नित्थारियं पासित्ता अगीयत्थो चिंतेइ । सव्वोवि एवमायत्ति एवं मन्नंतो निक्कारणे विन्तियपदेण गच्छेण समं विहरइ सो तहा विहरंतो नगरगाइन्नवविरए अप्पाणं गच्छं च पाडेइ ॥

एष भावार्थ । अधुनाऽक्षरार्थोविव्रियते। वनदवे जाते सत्वानां मृगादीनां विरयस्यपरिवृत्ते वेदे समागत । तेषां सिंहस्य पुच्छे लग्नाना सिंहेन सह व्यपरजला लघुश्रोतोरूपस्य जलाशयस्य क्षेपन लघन ततोदृष्ट्वा जंबुकेनाऽन्यन्दा तत्कर्तुमारब्ध। तेन च तयाकर्तुमशक्नुवता मृगादय' तस्मिन् व्यपरजसि वृढाः क्षिता एष दृष्टांत ॥
सम्प्रति दार्ष्टांतिकयोजनामाह॥

अद्धाणादिसु एवं, दट्ठुं सव्वत्थ एव मन्नन्तो ।
भवविरियं अगीतो, पाडइअन्नेवि पवरन्तो ॥

अध्वादिष्वापत्स्वेव द्वितीयपदेन यतनानिषेवणतो गच्छं निस्तारयत दृष्ट्वा अगीतोऽगीतार्थ सर्वत्रैव मारयितव्यमिति मन्यमानोनिष्कारणयतनया द्वितीयपदेन गच्छ परिपालयन् भवविरयमिति द्वितीया प्राकृतत्वात् सप्तम्यर्थे। नरकादिभवरूपे व्यपरजसि प्रपतन् अन्यानपि स्वगच्छवासिन- पातयति। गत व्यपरजोद्वारम् ॥
अधुना पंक्तिद्वारमाह ॥

जम्बुककूवे चन्दे, सीहेणुत्तारणा य पंतिए ।
जंबुक सपन्तिपमणं, एमेव अगीयाणं ॥

एगया जेट्ठामासे सियाला निसिया अडवीए कूवतडे ठिया । कूवं पलोयंति। तत्थ ते जोण्हाए उदए चंदबिंबं पासंति। चिंतेंति चंदो कूवे पडिओ। तत्थ य सीहो आगतोचिट्ठइतनो तेहिं सियालेहिं सीहो विण्णविओ तुमं मिगाहिवतीए सवि गहाहिवती कूवे पडिओ एयस्स गुणेणं अम्हे दिवसकज्जाए रत्तीए सुहं निव्वसग्गा विचरामो तनो उद्धरसि तुमं गहाहिवतिमुत्तारेति । सीहो भणति। पंतीए समं पुच्छे लग्गिला विलग्गह अहिसुत्तस्स चंदो उद्धरिहिति ताहे सव्वे प्लुतेनोत्तारेहामिति तनोन एमेण सीहपुच्छे लग्गा ततएको उत्तिण्णा सीहेण प्लुतं कातुं सव्वे उत्तारिया। उवरिं गगणे चंदं पासेंति । कूव-

तलेय आलोलिए उदएचंदं अपासमाणा उत्तरियत्ति मन्नंति । अन्नया तहेव चंदं पासेत्ता सीहेण उत्तारियपुव्वो सियालो एवं चिन्तेइ । अहमवि सीहोइव उत्तारेमि ॥ एवं चिंतित्ता सोसियालो भणइ । पतीए मम पुच्छे लग्गित्ता उयरहते उत्तिन्ना । सीयालेणं उत्तारेहामित्ति पवुत्तं कयं । ततो असमत्थोत्ति तह पुच्छे लग्गित्ता सह कूवे पडिता । तत्थेव मतो एवमट्ठाणादीसु आवईसु गीयत्थेणं वितियपदे जयणा निसेवणाए ॥

इत्यादि । उपनयः पूर्ववदेव भावार्थोऽधुना अक्षरार्थः । एकदा जंबुकाः कूपतटे मिलितास्तैः कूपे कूपमध्ये चंद्रो दृष्टः । तस्मिन् दृष्टे तदुद्धरणाय सिंहपुच्छविलग्नानां पंक्त्या प्रविष्टानां शृगालानां सिंहेनोत्तारणा कृता । तत् दृष्ट्वा अन्यदा एकेन जंबुकेन सिंहोत्तारितपूर्वेण तथा कर्तुमारब्धं । ततस्तस्य जंबुकस्य सपंक्तिकस्य कूपे पतनमेवमनेनैव दृष्टांतद्वयोक्तेन प्रकारेण गीतागीतयोर्भवकूपे गच्छेन सह पतनं तत उत्तारणं च गच्छस्य परिभावनीयमिति । गतं पंक्तिद्वारमिदानीं शृगालराजद्वारमाह ॥

नीलारागे खसदुम, हत्थीसरन्ना सियालकच्छन्नओ ॥
बहुपरिवारअगीते, विन्नूयणो हावणपरेहिं ॥

एक्को सियालो रत्तिघरं पविट्ठो घरमाणुसेण वेतितो निच्छुभिउमाढत्तो सो पुण गाईहि पारद्धो नीलीरागरंजणे पडितो किहवि ततो उत्तिन्नो नीलवन्नो जातो तं अन्ने सरन्नतरक्खु सियालादी पासिउं भणंति । को तुमं एरिसो सो भणइ अहं सव्वाहिं मृगजातीहिं खसदुमो नाम मिगराया कओ । ततो अहं एत्थमागतो पासामि । ताव कोमन्नाति ते जाणंति । अपुव्वो एतस्स एसदेवेहिं अणुग्गहितो ततो भणंति अम्हे तव किंकरा ।

संदिसह किं करेमा खसदुमो भणइ हत्थिवाहणं देह दिन्नो विलग्गो वियरति । अन्नया सियालेण उन्नुइयं । ताहे खसदुमेणं तं सियालसहावमसहमाणेण उन्नुइयं ततो हत्थिणा सियालोत्ति, नाउं सोंडा पवेतुं मारितो ॥ एवं कोइ अगीयत्थो अगीयत्थपरिवारं लन्नेत्ता पच्चंत देसं तं गंतुं आयरिउत्ति पकासेइ । सो कहिंवि विओसेहिंपे यालितो जानहिकिंविजाणइ एवं तेण अप्पा जहामितो ॥

एष भावार्थोऽधुना अक्षरार्थं । नील्यासवर्णो रागो यस्य स नीलीराग । शृगालः खसदुमोनाममृगराजो जातः । तस्य हस्तिनः सरन्नाः शृगाला उपलक्षणमेतत् । तरक्षादयश्च परिवारः । सोऽन्यदा कस्यापि शृगालस्योन्नदमाकर्ण्य शृगालोन्नादितमकरोत् । ततः शृगालोऽयमिति ज्ञात्वा हस्तिना मारित इति शेषः । एवं गीतार्थबहुपरिवारे अगीते अगीतार्थे विहरति बहुश्रुतोऽहमाचार्य इति बहुजनविश्रुत विकुर्वाण प्रश्नव्याकरणासमर्थतया परेन्य एकवर्तिन्यप्यपभ्राजना भवति । अथवा अयमन्य उपनय ॥

सेहादिकज्जेसुं वा, कुलादिसमितिसु जंपउ अयं तु ।
गीएही विस्सुयंतो, निहोडणमपत्तओ सेहि ।

वाशब्द उपनयांतरसूचकः । शैक्षकादिकार्येषु कुलादिसमवाये नियुक्तः कुलगणसंघसमवायेषु श्रावकाः सिद्धपुत्राश्च ब्रुवत अयमेव तु रवकारार्थः । बहुश्रुतो जल्पतु व्यवहारनिर्णयं करोतु यथाकस्य भवतीति । ततस्तेनाव्यवहारमुक्तं तच्च गीतार्थैर्विश्रुतं ततस्तै निहोडण मिति निहेडित यथा अगीतार्थ एष न जानाति व्यवहारमिति । ततः शेक्षे प्राकृतत्वात् षष्ठ्यर्थे सप्तमी । एकवचने बहुवचनं । शैक्षकाणामुपलक्षणमेतत् श्रावकाणां सिद्धपुत्राणां च तद्वचस्यप्रत्ययो जातः चिंतयति च एष इय त्कालमस्माभिर्गीतार्थः संभावित इति । गतं शृगालराजद्वारम् ॥

सम्प्रति ( वित्तत्थजुण्णससातित्ति ) द्वारं व्याचिख्यासुराह ॥

एक्केक्कएगजाती, पतिदिण सममेव गिण्हाइ ॥
सीहेण हु जुज्जइत्ति, पाडइ कूवम्मि वुड्ढससगेण ॥ १ ॥
एमेव जंबुग्गो, वा कूवे पडिविंवमप्पणो दिस्स ।
उवणय तत्थ मरणं सामायारीगयिअगीयाणं ॥ २ ॥

एगो सीहो सो हरिणजातीणं लुद्धो दिवसे २ हरिणं मारेऊण खाइ । तओ हरिणेहिं विन्नवित्रो किमंगरायं तुमं हरिणजातीणं एक्कयाए परिनिव्विट्ठो ता पसायं करेहि । सव्वामिगजातीणं वारएणं पइदिवसमेक्केक्कं मिगं खाहि । सीहेणं चितियं जुत्तमेस भणइ ततो सव्वे मिगा मेलित्ता सीहेण भणिया । तुब्भे कुलजुत्तत्ताए आत्मीयकुलौचित्येनेत्यर्थः । सव्वामिगजातीणं वारएणं पइदिवसं सट्ठाणट्ठियस्स एगं पेसिज्जाह । तेहिं अब्भुवगयं ।
ततो ते वि मिगा तहेव पेसंति । अन्नया ससगजातीए वारए । ससगा संपसारेंति मन्त्रयंतीत्यर्थः । कोवच्चउ-अज्ज सीहसगासे एगो वुड्ढससगो भणइ । अहं वच्चामि । जो सव्वेसिं मिगाणं संति काउं एमित्ति सो वालिओ अंतराले मरुयकूवसरिसे कूवं दट्ठु उस्सूरे सीहसगासमागतो । ताहे सीहेण भणियं किं रे तुमं उस्सूरे आगतोसि । ससगो भणइ । अहं पाए आगच्छंतो संतो अन्नेण सीहेण रुद्धो । जहा कहिं वच्चसि । ततो मए सब्भावो कहितो । ताहे सोभणइ अन्नो न होइसो मिगराया ततो मए भणियं । जइ अहं तस्स मिगरायस्स सगासं न जामि तो सो रुट्ठो सव्वे ससगा उच्छादेहित्ति । तम्हा जामि तस्स सगासं कहेमि । ततो जो तुमं वलितोहोहित्ति तस्स अम्हे आणं कहामो । ताहे अहं तेण भणितो वच्चा कहेहि भण आगच्छ मम सगासं जदि ते सत्ती अत्थि ततो सीहे भणति दंसेहि ममं तं सीहं । ततो ससओ सीहेण समागम्म दूरं अगडं दूरत्थोववदंसेति । भणइ य एत्थ पविट्ठो चिट्ठइ । जइ तपत्तियसि तो तुमं अगज्जयज्जेण

सो वि उग्गज्जइ ।। ततो तेए उग्गज्जियं उग्गज्ज पमिसद्दो उठितो ततो मुहुत्तं अच्छइजाव न पुणो को वि उग्गज्जइ ताहे सीहो विंतेइ मम नएए वित्तत्थोतो न गज्जइति । निप्फमइ वा तं एत्थेवज्जएविसितामारे मिति पमितो कूवे । अपेक्खमाणो चिंतेइ नूणंनिलुक्को ताहे सीहो गज्जइ रोक्किरइय ततो चिंतेइ न जुज्मिउ-कामो मए समं एवं जुप्फासतीए सीहो प्लुतं काउं उत्तिएणो । एवं गीयत्थस्स विजयविच्छलणा जवति। तहावि सो जाणगतणेण अप्पाणं वि सोहेइ । तहाएगो जंबुगो सो जमंतोकहवि कूवतमे समागतो कूवे पाणियं पादाइयं दिठं अत्तणो पमिविंबं । तओ उम्मयइ ताहे उच्छलिओ पमिसद्दो । तं सोउ मेहक्कार इतिराया सिया ते पमितो तं मगाएं प्लुतं काउमसमत्थोत्ति तत्थे वमतो एवमगीयत्थो वलिओ वि न सकेइ अप्पाणं पव्वु-च्छरिउमिति तस्स गणो न दायव्वो ।।

एपन्नावार्योऽधुनाक्षरार्थविवरण। सर्वा मृगजातयो मिलि-त्वा प्रतिदिवसमेकैकमेकस्या जातेः।सिंहस्य स्थानस्थितस्य समर्प्पयति। अन्यदा शशकस्य वारोजात'। सोऽपांतराले दवकूपे प्रतिविंब मरुकूपसदृशासतीवोएरू कूपे दृष्ट्वेत्यर्थः । चिरात्सिंहसकाशमागत ततश्शशके सिंहस्य पृच्छा कस्मा च्चिरादागत·। तस्याद्यसिंहकथन तत(पञ्जणाति)सिंहस्य कूप-समीपागमन तदनतर पूर्वप्रकारेण कूपे क्षेप आत्मनः प्रति-क्षेप· तत'। प्लुतेनोत्तरण । पवमेवत्यादि पवमेव यथाप्रवृ-त्त्यैवेत्यर्थः। जबू कोऽपि कूपे प्रतिविंबमात्मनोदृष्ट्वा क्षेपनक प्रति क्षेपणकमात्मन' कृतवान् तच्च तस्य मरणमव समवतार उ-पनेयो यथाक्रम गीतागीतार्थयो' कर्त्तव्य । स च प्रागेव कृत इति। सांप्रतमेतान्युदाहरणानि य भगमाश्रित्योपदर्शितानि तत्र योजयति ॥

एए उदाहरणा, दव्वे जावे य अपलिच्छन्नंमि ।
दव्वेण अपलिच्छन्ने, होंति इमे तइय जंगंमि ॥

पतान्यनतरोदितानि पचाप्युदाहरणानि अप्रशस्तानि द्रव्ये भावे च सप्तमी प्राकृतत्वात् तृतीयार्थे। द्रव्येण भावेन च अपरिच्छिन्ने इति प्रथमभगवर्तिनि वेदितव्यानि । प्रशस्ता-नि चतुर्भंगे द्रव्यतो भावतश्च परिच्छिन्ने इति वाक्यशेष ॥ द्रव्येण अपरिच्छिन्नेऽनेन द्रव्यतोऽपरिच्छिन्नो भावत परि-च्छिन्न इति वा तृतीयजगसूचितसूत्र । तथा भावे सप्तमी तृतीयार्थे। भावेनापरिच्छिन्नो भावतोऽपरिच्छिन्न इति तृतीय-भग इति न सूत्र इति न इमे वक्ष्यमाणे उदाहरणे।तत्र प्रथमतो द्वितीयभग उपात्त' ॥

दमगे वइया खीरघामि,घट्टचिताय कुक्कुमिप्पसवो।
धणपिमणसमणेरि, उसीसगाहदणघमेए ॥

एगो दमगो गोउलं गतो तत्थ गोउलिएहिं दुद्धं उदं पाइतो अन्नया से दुद्धस्स जारिया घमिया दि-ष्ठा।सोतं घेत्तूण घरं गतो खट्टाएए उभिनएल्ले उवेउ निवण्णो चिंतितमाढत्तो। एयाए दुद्धघमियाए कुक्कु-मीतो किणिस्सामि ताहे पसवो होहिति तं पसवं विक्कि-हामि ततो तं मूल्लं वट्टिए।पउंजेहामि । एवं सुवहुं धणं पिमित्ता कुलाणं समाणेतरकुलप्पसूयं कएणा।परिणित्ता आणेमि। ताहे सा कुलमदेएए उसीसएएं सेज्जं वमिस्-हिति ततोहंकिंउस्सीसएणा सज्जं वमिसिति पहाए आहणिस्सामिति पादोउच्चूढो तेए सा घमी जग्गा ।

अक्षरयोजना त्विय। द्रमकोरकः स व्रजिकायां गोकुले गत'। तेन दुग्धपानानतरं क्षीरभृता घाटकी लब्धा सा गृहगतेनखट्वा या मुच्छीर्षकमूले स्थापिता। ततश्चिनाऽभूत् किंविषयेत्यत आ ह। कुक्कुट्यः क्रेतव्यास्तदनतर तासा प्रबंधेन प्रसवः।पुदनस्त स्य मूल्येन विक्रयस्ततो वृद्धियोगेन धनपिंडन कृत्वा(समाणे तर)मिति।समानां समानकुलप्रसूतामितेतरामसमानकुलप्रसूतां कन्यां परिणीय तां कुलमदेनोच्छीर्षकेन वर्तती पादेनाहनिष्या मीति दुग्धघटिकाया भेदनमकार्षीत् ॥

अत्रोपनयमाह ॥

पव्वावइत्ताए वहूउ सिस्से, पच्छा करेस्सामि गणाहिवत्तं ।
इत्थं विकप्पेहि विसूरमाणो, सज्जायमेवं न करेड मंदो ॥

वहून् शिष्यान्प्रवाज्य पश्चात्करिष्यामि गणाधिपत्य पव मिथ्याविकल्पैस्स मदो नित्यकाल विस्तरयन् स्वाध्याय न करोति सूत्रार्थपौरुषीर्न करोतीत्यर्थ' । ताश्चाकुर्वाण पूर्व गृहीतान् सूत्रार्थान्नाशयति । यथा सद्रमको दुग्धघटिकां नाशितवान् ॥

सप्रति तृतीयभगे उदाहरणमाह ॥

गावीगोरक्खंतो, घेत्यं च जत्तिए पट्टिया तत्तो ।
दिठंतो गोवग्गे, होहिति य वच्छिगा तत्थ ॥ १ ॥
तेसिं तु दामगाइं, करेमि मोरंगचूलितोय ।
एवं तु तइयजंगे, वत्थादीपिमणमगीतो ॥ २ ॥

एगो घोसो गाविंतो रक्खंतो चिंत्तेति। अहं गोरक्ख-णमोल्लेण पमियातो गहिस्सामि ततो मे पवट्टमाणो गोवग्गो जाविस्सत्ति तम्मिय पवट्टमाणे गोवग्गे वच्छगा ओ वहुयाउ होहिंति ततो करेमि । तामां जोग्गाओ मोरंगचूलियाओ य एवं चिंतिता सो तहापकरेति एव मगीयथो वि जावेणापलिच्छन्नो तइयं जंगीट्ठा वहुगे परिवारे चिंतेतिउनि वत्थादीणी वहूणि पिमेति ॥

अक्षरयोजना त्विय। गोरक्षणे गोपालोऽचिंतयत् भृत्या मूल्येन पट्टिका अभिनवप्रसूता गा ग्रहीष्यामि ततो मे प्रवर्द्धमानो गो वर्गोभविष्यति। तत्र तस्मिन्प्रवर्द्धमाने गोवर्गे वत्सिका भवि-ष्यति। ततोऽनस्तस्या योग्यानि दामकानि करोमि । मयूरांग चूलिकाश्च मयूरांगचूलिका आभरणविशेषरूपा एव। चिंत यित्वा स तथा प्रकृतवान॥

तत्रोपनयमाह। एव नु पवमेव तुरे रकारार्थस्तृतीयभगवर्तमान स्य अगीते अगीतार्थस्य वस्त्रादिपिंडनमवगतव्यं। अन्य यद्य-पि परिवारो नास्ति तथा वस्त्रादिपु [illegible] इति [illegible] परिच्छिन्नमगीतस्य तृतीयभगे [illegible]॥

अस्य दोषानाह ॥

ताइं वहूइं पमिलेहयंतो, अद्धाणमाईसुय संवहंतो।

एमेव वा सम्मतिरित्तगंसे, वातादिखेजेसुयएव हाणी ॥

तानि वस्त्राणि वहूनि प्रतिदिवसमुभयकालं प्रतिलेखयन् अप्रतिलेखने प्रायश्चित्तापत्तेरध्वादिषु अध्वनि मार्गे आदि शब्दात् वसत्यंतरसंक्रमेणादौ च सवहन् श्राम्यति । श्रमाच्च ग्लानत्वे च संयमविराधना सूत्रहानिश्च एवमेव अनेनैवप्रकारेण वर्षास्वपि दोषा वाच्याः केवलं ( से ) तस्य उभयकाल तानि प्रतिलेखयतोऽतिरिक्तकर्म अतिरेकेण वातादिक्षोभो भवति । तथा च सति सुदीर्घ श्रुते सूत्रस्य च शब्दार्थस्य च परिहानिः ॥

अत्र परस्याऽवकाशमाह ॥

चोदेति न पिंमेतिय, कज्जेगिण्हंति यजो सलद्धीओ ॥

तस्स न दिज्जइ किं गणो, भावे उण जो उ संच्छन्नो ॥

चोदयति पुरो यया यः स लब्धिको भावेन च योऽसंछन्नो परिच्छदरहितो न पूर्वमेव वस्त्रादीनि पिंमयति । किंतु कार्ये समुत्पन्ने गृह्णाति तस्य किं कस्मात्कारणात् गणो न दीयते प्रागुक्तदोषसंभवात् अत्र सूरिराह ॥

चोयग ! अप्पच्छन्नयअसी, पूयापमिसेहनिज्जरतद्धा ।

एसंते से अणुजाणसि, पव्वइए तिन्नि इच्छासे ॥

हेचोदक ! स भावतोऽपरिच्छिन्नोऽप्रभुरहितोऽतस्तस्मात्तस्मै गणो न दीयते । एतौ तृतीयभगवर्तिन्याक्षेपपरिहारौ ( असतित्ति ) यस्य तृतीयमंगवर्त्तिन आक्षेपपरिहारावभिधातव्याविति वाक्यशेषः । तथा ( पूयत्ति ) पूजार्थे गणो ध्रियते इति कस्यापि वचनं तस्य प्रतिषेधो वक्तव्यः। किंतु निर्जरार्थं गणो धारणीय इति वाच्य । निर्जरार्थं व्यवसिताः केचित्पूजामपीच्छंति । तत्र निर्जरार्थं गण धारयतः पूजामपि प्रतीच्छतः आचार्यस्य न दोषस्तथा तनागं दृष्टांतत्वेन द्रष्टव्यं । तया यो भावतः परिच्छन्नशिष्यो लब्धिमांश्च सतत परिवारं(से)तस्याऽस्मीयस्य आचार्यस्य अनुजानाति कियतमित्याह । जघन्यतस्त्रीन्प्रव्राजितान् । किमुक्तं भवति । जघन्यतस्त्रयः प्रव्राजिताः अवश्य दातव्याः ( इच्छासेत्ति ) इच्छावो ( से ) तस्याऽचार्यस्य । इयमत्र भावना । आचार्य आत्मनो यथेच्छया त्रीन्वा बहुतरान्वा सर्वान्वा प्रव्रजितान् गृह्णातीति एप गाथासंक्षेपाथ । व्यासार्थं तु भाष्यकृद्विवक्षुः प्रथमतः ( चोयग अप्पच्छुत्ति पद ) व्याख्यानयति ॥

जयइ अविगीयस्स उ, उवगरणदीहिं जइ विसंपत्ति ।

तह वि न सो पज्जतो, वोढव्वे करीलकाओव्व ॥

चोदकेनाक्षेपे प्रागुक्ते कृते सति प्रतिवचन भण्यते । अविगीतस्य विशिष्टगीतार्थरहितस्य हु निश्चित यद्यपि उपकरणादीनामुपकरणशिष्यादीनां गाथायां वा तृतीया षष्ठ्यर्थे प्राकृतत्वात् । सपत्तिस्तथापि न सपर्याप्त समर्थो वोढव्ये उपेक्षिते गणभारं किमेवेत्यत आह ( करीलकाओव्व ) करील्लो नाम वंशजातिविशेषो दुर्बलस्तन्मया कापोतीव कस्माद्गणभारवहनेन समर्थ इत्यत आह ॥

न य जाणइ वेणइयं, कारावेउं न यावि कुव्वंति ॥

नटयस्स परिभवेणं, मुत्तत्थेणं अप्पमिवद्धा ॥

वा यस्मादर्थे यस्मान्न जानाति विनय एव वैनयिकं विनयादित्य इति स्वार्थे इकणप्रत्ययः । "धनिवचंते स्वार्थप्रत्ययकाः प्रकृतिर्लिंगवचनानि" विनयशब्देऽस्यपुंस्त्वेऽपि प्रत्यये समनीते नपुंसकलिंगता तत्रशिष्यान् कारयितुमगीतार्थत्वात् । नच तस्य पार्श्वे सूत्रमर्थो वा भावतोऽसच्छन्नत्वात् । ततः सूत्रार्थाऽन्या गाथायां सप्तमी तृतीयार्थे प्राकृतत्वात् अप्रतिबद्धाः सतः शिष्याः परिभवमेव केवलं मन्यते । जन्मनो निष्फलीभवनात् । तेन च परिभवेत् । तस्य तृतीयभंगवर्तिनो वैनयिक कारयितु जानतोऽपि न चापि नचैव ते शिष्या विनय कुर्वीति । तस्मान्न तृतीयभंगवर्ती गणधारणयोग्यः ॥

सांप्रत ( मासत्तित्ति ) पदं व्याख्यानयन् द्वितीयभंगगताक्षेपपरिहारावाह ॥

वियभंगे पमिसेहो; जं पुच्छसि तत्य कारणं सुणसु ॥

जइसेहोज्ज धरेज्जा, तदभावे किं न कारेज ॥ १ ॥

तंपि यहु दव्व संगहं, परिहीणं परिहरंति सेहादी ॥

संगहरीए य संगलं, गणधारित्तं कहं होइ ॥ २ ॥

यत्पृच्छसि त्वं यथा द्वितीयभंगे द्वितीयसंगवर्त्तिना गणधारणे कस्मात्प्रतिषेधः कृतस्तत्रकारणमिदं शृणु तदेवाह यदि(से) तस्य गणो भवेत्ततो धारयेत् तदभावे गणाभावे किंनु धारयेत्नैव किंचिदिति भावस्ततो गणाभावादेतस्य गणधारणप्रतिषेधः । अपि च तंवहु इत्यादि तमपि च भावयेत् । संच्छन्नमपि च वहु निश्चितमलब्धिकतया द्रव्यसग्रहपरिहीन वस्त्रपात्राद्युपकरणसग्रहरहितं शैक्षादयः शैक्षक आदिशब्दात् मुनिवृषभादिपरिग्रह । परिहरति वस्त्राद्यभावात् तेषां सीदनात् ततः सग्रहभृते विना सकलं परिपूर्णंगणधारित्व कथ भवति नैव भवतीति भावः तदभावाच्च तस्य तत्प्रतिषेधः । इदमलब्धिकमधिकृत्योक्त । यदि पुनर्द्वितीयभगवर्त्यपि वक्ष्यमाणगुणैरुपेतोभवति ततोऽनुज्ञाप्यतेऽपि गणधारीदोषाभावात्तथाचाह ।

आहारवत्यादि इत्यादि गाथा ३१९ पृष्ठे ३० पंक्तौ द्रष्टव्या॥

संप्रति ( पूयापमिसेहे इति ) पदं व्याख्यानयन्नाह

पूयत्थं नाम गणो, धरिज्जति एव ववसितो सुणत्ता ॥

आहारोवहिपूया, करणेन गणो धरेयव्वो ॥ १ ॥

पूजां प्राप्नुयामित्येवमर्थे नाम गणो ध्रियते इत्येवं कश्चित् व्यवसितो ऽभ्युपगतवान् । एतावता ( पूया ) इत्यंशो व्याख्यातः । अत्राचार्यः प्राहः । शृणुत यदर्थ गणोध्रियते । तत्र परोक्तप्रतिषेधमाह । आहारोपधिपूजाकरणेन उत्कृष्ट आहारः शोभन उपधिर्महती पूजा स्यादिति कारणतोऽत्र विभक्तिलोपः प्राकृतत्वात् न गणोधारयितव्यः । एतावता प्रतिषेध इति विवृत ॥

किमर्थ तर्हि गणो धारयितव्य इत्यत आह ॥

कम्माणनिज्जरहा, एवंतु गणोभवे धरेयव्वो ॥

निज्जरणहेतुववसिया, पूयंपिव केइ इच्छंति ॥ १ ॥

एवमनेन कारणेन खु निश्चित भवति गणोधारयितव्यो यदुत कर्मणां ज्ञानावरणीयादीनां निर्जरार्थ मोक्षायैव तत्ववेदिनां प्रवृत्तेराहारादीनां चैहिकत्वात्केवलं केचित्स्थविरकल्पिका निर्जराहेतोर्गणधारण व्यवसिताः । पूजामपि वक्ष्यमाणलक्षणामिच्छंति । किमुक्तभवति यद्यपि नाम तत्वत कर्मनिर्जरणनिमित्त गणो ध्रियते तथापि पूजामप्येप प्राप्नुयादिति पूजानिमित्तमपि तस्य गणधारणमनुज्ञाप्यते ॥

पूजामेवाह ॥

गणधारिस्साहारो, उवकरणं संथवो य उक्कोसो ॥

सर्वाकाशप्रदेशसंख्याया अनन्तगुणं सर्वनभः प्रदेशवर्गीकृतप्रमाणमित्यर्थः । ततोऽद्वितीयादिस्थानैरसख्यातगच्छगतै रनंतभागादिकया वृद्ध्या षट्स्थानकानामसंख्येयस्थानगता श्रेणि र्भवति एवंचैकमपि स्थानं सर्वपर्यायान्वितं न शक्यते परिच्छेत्तु किं पुन सर्वाण्यपीत्यतः केऽन्ये पर्याया येषामनन्तभागे भवतानि वर्तेरन्निति स्यान्मतिरन्ये केवलगम्या इतीदमुक्तं भवति केवलगम्या प्रज्ञापनीयपर्यायाणामपि तत्र प्रक्षेपाद्बहुत्वमेवमपि ज्ञानज्ञेययोस्तुल्यत्वात्तुल्या एव नानन्तगुणा इत्यत्राचार्यआह । यासौ सयमस्थानश्रेणिर्निरूपिता सा सर्वा चारित्रपर्यायैरूने दर्शनपर्यायसहिते तत्प्रमाणा सर्वाकाशप्रदेशानन्तगुणा इह पुनश्चरित्रमा श्रोपयोगित्वा त्पर्याया नन्तभागवृत्तित्व मित्यदोषः

इदानीं सारद्वार क. कस्यसार इत्याह ॥

अंगाणं किं सारो, आयारो तस्स किं हवइ सारो ।
अणुओगत्थो सारो, तस्सवि य परूवणासारो ॥ १६ ॥
सारोपरूवणाए, चरणं तस्स वि य होइ निव्वाणं ॥
निव्वाणस्स उ सारो, अव्वाबाहं जिणा बेंति ॥

आ. १ अ. १ उ. ॥ अगाणमित्यादि स्पष्टा केवलमनुयोगार्थो व्याख्यानभूतोऽर्थस्तस्य प्ररूपणा यया स्वविनियोग इति । अन्यच्च सारो इत्यादि स्पष्टैव । एतेषांचान्वर्थाभि धानानि दर्शयितुमाह ॥

सत्थपरिण्णा लोग, विजओ य सीउसणिज्जसम्मत्तं ॥
तह लोगसारनामं, वुत्तं तह महापरिण्णा य ॥ ३१ ॥
अट्ठमए य विमोक्खा, उवहाण सुयं च नवमगं भणियं ।
इच्चेसो आयारो, आयारग्गाणि सेसाणि ॥ ३२ ॥

सत्थ इत्यादि अट्ठमए इत्यादि स्पष्टे केवलमिलेप नवाध्ययनरूप आचारो द्वितीयश्रुतस्कन्धाध्ययनानि शेषाण्याचाराग्राणीति साम्प्रतमुपक्रमान्तर्गतोर्थाधिकारो द्वेधा अध्ययनार्थाधिकार उद्देशार्थाधिकारश्च तत्राद्यमाह ॥

जियसंजमो य लोगो, जह वज्झइ जह य तंपजहियव्वं ।
सुहदुक्खतितिक्खा वि य, संमत्तं लोगसारो य ॥ ३३ ॥
निस्संगया य छट्ठे, मोहसमुत्था परीसहोवसग्गा ।
निज्जाणंअट्ठमए नवमेय जिणेण पयंति ॥ ३४ ॥

जिअइत्यादि णिस्संग इत्यादि तत्र शास्त्र परिज्ञाया मय मर्याधिकारो ( जिय संजमोत्ति ) जीवेषुसंयमा जीवसयमा स्तेषु हिंसादिपरिहारः स च जीवास्तित्वपरिज्ञाने सति भव त्यतो जीवास्तित्व विरति प्रतिपादनमत्रार्या धिकारलोकविजये तु लोको जहवज्झइ जहायत्तं पजहियव्वं ति विजितभावलोकेन सयमस्थितेन लोको यया बध्यते अष्टविधेन कर्मणा यथा च तत्प्रहातव्यं तया ज्ञातव्य मित्ययमर्थाधिकार स्तृतीये त्वयं सयमस्थितेन जितकषायेणानु कूलप्रतिकूलोपसर्गनिपातेसुख दुःख' तितिक्षावि धेयेति । चतुर्थे त्वय प्राक्तनाध्य यनार्थसम्पन्नेन तापसादिकष्टतप सेविनामष्टगुणै श्वर्यमुद्वीक्ष्यापि दृढसम्य क्त्वेन भवितव्यमिति पंचमे त्वय चतुरध्ययनार्थस्थितेनासार परित्यागेन लोकसार रत्नत्रयो युक्तेन भाव्यमिति । षष्ठे त्वयं मागुक्तगुणयुक्तेन निस्संगता युक्तेनाप्रतिबद्धेन भवितव्यं । सप्तमेत्वय सयमादि गुणयुक्तस्य कदाचिन्मोह समुत्था परी षहोपसर्गावा । प्रादुर्भवेयुस्ते सम्यक् सोढव्याः । अष्टमे त्वयं निर्याणमत क्रिया सा सर्वगुणयुक्तेन सम्यग्विधेयेति । नवमेयं अष्टाध्ययनप्रतिपादितोऽर्थस्सम्यगेवम् वर्धमानस्वामिना विहित इति तत्प्रदर्शनं च शेषसाधूनामुत्साहार्थं । तदुक्तम्

तित्थयरो च उरणाणी, सुरमहिओसि सिज्झिसव्वय धुवंमि । अणिगूहियवलविरिओ, सव्वत्थाने सुउज्जमइ ॥
किं पुण अवसेसे हिं दुक्खक्खयकारणा सुविहिएहिं । होति न उज्जमियव्वं स पव्ववायंमि माणुस्से आचा. १ अ० १ उ. ॥

तथा च समवायांगे आचारस्य श्रुतस्कंधरूप रूपस्य प्रथमांगस्य चूलिका सर्वान्तिममध्ययन विमुत्तयभिधान माचारचूलिका तद्वर्जानां तत्राचारे प्रथम श्रुतस्कंधे नवाध्ययनानि द्वितीये षोडशनिशीथाध्ययनस्य प्रस्थानान्तरत्वेनेहानाश्रयणात् । षोडशानां मध्ये एकस्या चार चूलिकेति परिहृतत्वात् शेषाणां पञ्चदश सम० ॥ ५७ स० ॥

आयारस्स णं भगवओ सचूलिआयगस्स पणवीसं अज्झयणा प० तं० सत्थपरिण्णा लोगविजओ सीओसणी असम्मत्तं । आवन्ति धुयविमोहउवहाणसुयं महपरिण्णा ॥ १ ॥ पिंडेसणसिज्जिरिआ, भासज्झयणा य वत्थपएसा । उग्गहपडिमा सत्तिकसत्तया भावणविमुत्ती ॥ २ ॥ निसीहज्झयणं पण वीस इमं ॥

सम० ॥ २५ ॥ आयारस्स णं भगवओ सचूलियागस्स पंचासीइउद्देसणकाला प० टी० तत्राचारस्य प्रथमांगस्य नवाध्ययनात्मकप्रथम श्रुतस्कन्धरूपस्य सचूलियागस्स इति द्वितीये हि तस्य श्रुतस्कन्धे पञ्चचूलिकास्तासु च पञ्चमी निशीथाख्येह न गृह्यते भिन्नप्रस्थानरूपत्वात् तस्यास्तदन्याश्चत स्रस्तासु च प्रथमद्वितीये सप्तसप्ताध्ययनात्मिके तृतीयचतुर्थ्यौ चैकैकाध्ययनात्मिके तदेव सह चूलिकाभिर्वर्तत इति सचूलिका । कस्तस्य पञ्चाशीतिरुद्देशनकाला भवंतीति प्रत्यध्ययनं उद्देशनकालानामेतावत्संख्यत्वात्तथाहि प्रथमश्रुतस्कन्धे नवस्वध्ययनेषु क्रमेण सप्तषट् चत्वारश्चत्वारः षट् पञ्च अष्टचत्वारः सप्त चेति द्वितीयश्रुतस्कन्धेषु तु प्रथमचूलिकायां सप्तस्वध्ययनेषु क्रमेण एकादश त्रयस्त्रयः चतुर्षु द्वौ द्वौ द्वितीयायां सप्तैकसराणि अध्यनानि एवं तृतीयैकाध्ययनात्मिका एवं चतुर्थ्यपीति सर्वमीलने पञ्चाशीतिरिति तथाचनन्द्यध्ययने ॥

सेकिंतं आयारे आयारे णं समणाणं निग्गंथाणं आयारे गोयरविणयवेणइयसिक्खाभासा अभासा चरणकरणजायामायावित्तीओ आघविज्जंति । से समासओ पञ्चविहे पणत्ते तं जहा नाणायारे दंसणायारे चरित्तायारे तवायारे वीरियायारे आयारेणं परित्ता वायणा संखिज्जा अणुओगदारा संखिज्जा वेढा संखिज्जा सिलोगा संखिज्जाओ निज्जुत्तीओ संखिज्जाओ पडिवत्तीओ स णं अंगट्ठयाए पढमे अंगे दो सुयखंधा पणवीसं अज्झयणा पञ्चासीइं उद्देसणकाला पञ्चासीइं समुद्देसणकाला अट्ठारस पयसहस्साणि पयग्गेणं संखिज्जा अक्खरा अणंतागमा अणंतापज्जवा परित्ता तसा अणंता थावरा सासयकडनिबद्धनिकाया जिण

किञ्च विनय इति वीर्याचारः प्रतिपादितो द्रष्टव्यः सम्प्रति शेषाणां ज्ञानाद्याचाराणां प्ररूपणानिमित्त पश्चार्द्धमाह। सहितो नाम स यस्य ज्ञानादेरुचित कालस्तेनोपेत।किमुक्त भवति। काले स्वाध्याय करोति। काले प्रतिलेखनादिक काले च स्वोचित तप इति सम्यक् आदितो यत् यस्योपधाने तत्करणे वा स्वाभिप्राय समाहित' उपशमी ज्ञानादीनां हित स्थित औत्पत्तिके ज्ञानाद्यधिक निर्म्मलतर मात्मनोवाञ्छन् सदेव गुरुषु बहुमानपर इति भावः। एवञ्ज्ञानाद्याचारसमन्वितो गुणनिधिर्भवति। तत आह गुणनिधिर्गुणानामाकरः एष आचारकुशलः सांप्रतमेत देव गाथाद्वय विनेयजनानुग्रहाय भाष्यकृद्व्याख्यानयति। अब्भुट्ठाण गुरुमादियाणं,आसणदाण च होइ तस्सेव। गोसे वय आयरिये, सद्दिसहा किं करोमित्ति अत्र (गोसे) इति प्रातरेवेत्यर्थः "सब्भासकरणधम्मं, सेयाण अविभत्ति सीसपाडिच्छे। पडिरूवजोगो जह, पीढियाए जुजण करेमि धुव" अत्र प्रतिरूपयोगो यथा पीठिकायां प्राक् प्रतिरूपविनयाधिकारेऽभिहितस्तथा प्रतिपत्तव्यः (जुजणं) इत्यस्य व्याख्यान यत् धुवनकालहीन प्रतिरूपयोगात्करोति पारयतीतिभावः। (पूय जहाणुरूव, गुरुमादीण करेइ कमसो उ। उल्हादिजणणमफरुस, अचवलया होइ कुलुमत) अत्रह्लादिजननमिति मनः प्रह्लादजनक "अचवलायिरस्सभावो अप्फदणयायहोइ अकुयत्त। उल्लावलालनसीजर, सहितो कालेखणाणादि" अत्र स्यन्दनता भ्रूकोचितहस्तपादादिचेष्टाविकलता सम्म अहियभावो समाहितो समीवम्मि नाणादिए तु तद्धितो गुणनिहिओआगरो गुणाण गाथापचकमपि गतार्थम्॥ व्य.॥

**आयारक्खेवणी-आचाराक्षेपणी** स्त्री०आचारो लोचाऽस्नानादिस्तत्प्रकाशनेनाक्षेपणी आचाराक्षेपणी । आक्षेपणीकथाभेदे,॥ स्था० ४ ठा ॥

**आयारगोयर-आचारगोचर** पु० आचारो मोक्षार्थमनुष्ठानविशेषस्तस्य गोचरो विषय आचारगोचरः आचा०॥ ७ अ १ उ०। आचारः साधुसमाचारस्तस्य गोचरो विषयो व्रतषट्कादिराचारगोचरः साधुसमाचारविषये, व्रतषट्कादिके, आचारश्च ज्ञानादि विषय पञ्चधा गोचरश्च भिक्षाचर्य्येत्याचारगोचर ज्ञानाचारादिके, भिक्षाचर्य्यायां च, । न०॥ सेह आचारगोयर ग्गहणयाए अब्भुट्ठेयव्व भवइ स्था० ८ ठा

इहविभक्तिविपरिणामादाचारगोचरस्य ग्रहणतायां शिक्षण शैक्षमाचारगोचरं ग्राहयितुमित्यर्थः॥स्था० ८ ठा ।

आयारगोयर विणयवणइयचरणकरणजायामायावत्ति य धम्ममाइक्खीय॥ आचार' श्रुतज्ञानादिविषयमनुष्ठान कालाध्ययनादिर्गोचरो भिक्षाटनम् एतयो समाहारद्वन्द्वस्ततस्तदाख्यातमिच्छामीति योग इति॥ प्र० २ द्वा० १ उ०॥

क्रियाकलापे, पु० दश० ६ अ०॥

रायाणो रायमच्चा य, माहणा अदुव खत्तिया।
पुच्छंति निहुअप्पाणो कहं आयारगोयरं॥

व्या०॥ राजानो नरपतय' राजामात्याश्च मन्त्रिण' ब्राह्मणा प्रतीता (अदुवत्ति) तथा क्षत्रिया श्रेष्ठ्यादय' पृच्छन्ति निभृतात्मान असम्भ्रांता रचिताञ्जलय' कथ ते भवतां आचारगोचर' क्रियाकलाप' स्थित इति सूत्रार्थ ॥

तेसिं सो निहुओदंतो, सव्वभूय सुहावहो।
सिक्खा एसु समाउत्तो आइक्खेज्ज वियक्खणे॥३॥

व्या०॥ तेभ्यो राजादिभ्य' असो गणी निभृतोऽसम्भ्रान्त उचितधर्म्मः कायस्थित्या दांत इंद्रिय मनोदमाभ्यां सर्वभूत सुखावहः सर्वप्राणिहितस्त्यर्थः। शिक्षया ग्रहणासेवनरूपया सुसमायुक्त सुष्ठु एकीभावेन युक्त' आख्याति कथयति विचक्षण पण्डित इति सूत्रार्थ ।

(हदि धम्मत्थकामाण, निग्गयाण सुणेह मे। आयारगोयर भीम, सयल दुरहिट्ठियं) सूत्रव्या०॥ हदिग्त्युपदर्शने तमेन धर्मार्थकामानामिति धर्मश्चारित्रधर्मादिस्तस्यार्थ प्रयोजन मोक्षःकामयते इच्छति विशुद्धविहितानुष्ठानकरणेनेति धर्मार्थकामाः मुमुक्षवस्तेषां निर्ग्रंथानां बाह्याभ्यन्तरग्रन्थरहितानां शृणुत मम समीपात् आचारगोचर क्रियाकलाप भीमं कर्मशत्र्वपेक्षया रौद्र सकल सपूर्ण दुरधिष्ठ क्षुद्रसत्वैर्दुराश्रयमिति सूत्रार्थ'॥

**आयारग्ग-आचाराग्र** न० आचारांगस्य द्वितीये श्रुतस्कंधे तद्वक्तव्यताऽऽचारांगटीकायाम्॥ ( आचारमेरो-र्गदितस्य लेशतः, प्रवच्मितच्छेपिकचूलिकागतां। प्रारिप्सितेऽर्थे गुणवान् कृती सदा, जायेत निः शेषमशेषिताक्रिय' १) उक्तो नवब्रह्मचर्याध्ययनात्मक आचारश्रुतस्कंध' सांप्रतं द्वितीयोग्रश्रुतस्कंधः समारभ्यते। अस्य चायमभिसंबन्ध उक्तम् आचारपरिमाणम् प्रतिपादयता तद्यथा (णववंभचेरमइओअट्ठारसपयसहस्सिओ वेओ हवइ य स पचचूलो बहु बहुतरओ पयग्गेण) तत्राद्ये श्रुतस्कंधे नवब्रह्मचर्याध्ययनानि प्रतिपादितानि तेषु च न समस्तोऽपिविवक्षितोऽर्थोऽभिहितोऽभिहितोऽपि सङ्क्षेपतोऽतोऽभिहितार्थाभिधानाय सङ्क्षेपोक्तस्य च प्रपचाय तदग्रभूताश्चतस्रश्चूला उक्ता अनुक्तसंग्राहिका' प्रतिपाद्यते॥ तदात्मकश्च द्वितीयोग्रश्रुतस्कंध इत्यनेन संबंधेनायातस्यास्य व्याख्या प्रतन्यते तथा चाचारांगनिर्युक्तौ अग्रनिक्षेपम्प्रतिपाद्याह॥

उवयारेण उपगयं, आयारस्सेव उवरि माइं॥
तुरुक्खसमपव्वयस्स य, जह अग्गाइं तहे ताइं॥२॥

उपकाराग्रेणात्र प्रकृतमधिकार यस्मादेतान्याचारस्यैवोपरि वर्त्तन्ते तदुक्त शेषव्याख्याभिया तत्संबद्धानि तद्यथा वृक्षपर्वतादेरग्राणीति शेषाणि व्यग्राणि शिष्यमतिव्युत्पत्त्यर्थमस्य चोपकाराग्रस्य सुखप्रतिपत्त्यर्थमिति तदुक्तं (उवारिस्स सन्नि, ज केणवित पव्वए विहिणा, जेणहि गारो त मिउ, पव्वए होइ सुइगेज्झं) तत्रेदमिदानीं वाच्य केनैतानि निर्यूढानि किमर्थं कुतो वेत्यतआह॥ थेरेहिं अणुग्गहट्ठा, सिसहियं होउ पागडत्थ च॥आयाराउ अत्थो, आयारग्गेसु पविभत्तो गाहा॥ थेरेहीत्यादि स्थविरैः श्रुतवृद्धैश्चतुर्दशपूर्वविद्भिर्निर्व्यूढानीति किमर्थं शिष्यहित भवत्विति कृत्वा अनुग्रहार्थं तथा अप्रकटोऽर्थ प्रकटोयथास्यादित्येवमर्थ च कुतोनिर्व्यूढाचारात् सकाशात्समस्तोऽप्यर्थः आचाराग्रेषु विस्तरेण प्रविभक्त इति॥

सांप्रत यच्चस्मान्निर्व्यूढ तद्विभागेनाचष्ट इति॥

बिइ अस्स य पंचमए, अट्ठमगस्स बीयंमि उद्देसो॥
भणिओ पिंडसणेज्जा, वत्थं पाओग्गहे चेव॥४॥
पंचमगस्स चउत्थे इरिया वणिज्जइ समासेणं॥
छट्ठस्सय पंचमए, भासज्जाया वियाणाहि॥५॥
सत्तिक्काणि सत्तवि, णिज्जूढाइं महापरिन्नाओ॥
सत्थपरिन्ना भावण, णिज्जूढाउ धुयविमुत्ती॥६॥

आयारपकप्पो उ, पच्चक्खाणस्स तइयवत्थूओ ॥
आयारणामधेज्जा, विसइमा पाहुडच्छेया ॥ ७ ॥

विहयस्सेत्यादि चतस्रो । गाथाः ब्रह्मचर्याध्ययनानां द्वितीय मध्ययनं लोकविजयाख्यं तत्र पंचमोद्देशके इदं सूत्रं ( सव्वामगंधं परिन्नाय निरामगंधो परिव्वएज्जा ) तत्रामग्रहणेन हननाद्यास्तिस्रः कोटयो गृहीता गन्धोपादानादपरास्तिस्र एताः षडप्यविशोधिकोटयस्ताश्चेमा स्वतो हन्ति घातयति घ्नन्तमनुजानीते तथा पचति पाचयति पचन्तमनुजानीत इति तथा तत्रैव सूत्रं ( अदिस्समाणो कयविक्कयेहिंति ) अनेनापि तिस्रो विशोधिकोटयो गृहीतास्ताश्चेमाः क्रीणाति क्रापयति क्रीणंतमन्यमनुजानीते तथाऽष्टमस्य विमोहाध्ययनस्य द्वितीयोद्देशके इदं सूत्रं ( भिक्खू परिक्कमेज्ज वा चिट्ठेज्ज वा णीसिएज्ज वा तुयट्टेज्ज वा सु साणंसि वेत्यादि) यावत् (बहिया विहरेज्जा त भिक्खुं गाहावति उवसंकमित्तु वएज्जा अहमा उसंतो समणा तुब्भट्ठाये असणं वा ४ पाणाइं भूयाइं जीवाइं सत्ताइं समारब्भसमुद्दिस्स कीयं पामिच्च) मित्यादि एतानि सर्वाण्यपि सूत्राण्येवाश्रित्यैकादशपिंडैषणा निर्व्यूढास्तथा तस्मिन्नेव द्वितीयाध्ययने पंचमोद्देशके सूत्रं ( से वत्थं पडिग्गहं कंबलं पायपुंछणं उग्गहं च कडासणमिति ) तत्र वस्त्रकंबलपादपुंछनग्रहणात् वस्त्रैषणा निर्व्यूढा एतद्ग्रहपदात्पात्रैषणा निर्व्यूढा अवग्रह इत्येतस्मादवग्रहप्रतिमा निर्व्यूढा कडासनमित्येतस्माच्छय्येति तथा पंचमाध्ययनावंत्याख्यस्य चतुर्थोद्देशक सूत्रं ( गामाणुगामं दुइज्जमाणस्स दुज्जाय दुप्परक्कंतामित्यादि नेर्या सक्षेपेण व्यावर्णितेत्यत ईर्याध्ययनं निर्व्यूढं तथा षष्ठाध्ययनस्य धुताख्यस्य पंचमोद्देशकसूत्रं ( आइक्खइ विहयइ किट्टति धम्मकामी)त्येतस्माद्भाषाध्ययनमाकृष्टमित्येवं विजानीयास्त्वमिति तथा महापरिज्ञाध्ययने सप्तोद्देशकास्तेभ्य प्रत्येक सप्तापि सप्तैकका निर्व्यूढास्तथा शस्त्रपरिज्ञाध्ययनाद्भावना निर्व्यूढास्तथा धूताध्ययनस्य द्वितीयचतुर्थकोद्देशकाभ्यां विमुक्ताध्ययनं निर्व्यूढमिति तथाचारप्रकल्पो निशीथ स च प्रत्याख्यानपूर्वस्य यत् तृतीय वस्तु तस्याऽपि यदाचाराख्यं विंशतितमं प्राभृत ततो निर्व्यूढ इति ब्रह्मचर्याध्ययनेभ्य आचाराग्राणि निर्व्यूढान्यतो निर्व्यूहनाधिकारादेव तान्यपि शस्त्रपरिज्ञाध्ययनानि निर्व्यूढानीति दर्शयति ॥

अव्वोगडो उ भणिओ, सत्थपरिण्णाए दंडनिक्खेवो॥
सो पुण विभज्जमाणो, तहा तहा होइ णायव्वो ॥ ८ ॥

अव्याकृतोऽव्यक्तोऽपरिस्फुट इति यावत् भणित प्रतिपादितः कोऽसौ दंडनिक्षेपः दंडः प्राणिपीडालक्षणस्तस्य निक्षेपः परित्यागः संयम इत्यर्थः ।स च शस्त्रपरिज्ञायामव्यक्तोऽभिहितो यतस्तेन पुनर्विभज्यमानोऽष्टस्वप्यध्ययनेष्वसावेव तया तयानेकप्रकारो ज्ञातव्यो भवतीति ॥

कथ पुनरयं संयम संक्षेपोऽभिहितो विस्तार्यत इत्याह ।

एगविहो पुण सो, संजमोत्ति अज्झत्थ बाहिरेय दुहा ।
मणवयणकायतिविहो, चउविहो चाउज्जामोउ ॥
पंच य महव्वयाइ तु, पंचहाराइ भोयणं छट्ठा ।
सीलंगसहस्साणि य, एसो उ अब्भितरो होइ ॥ १० ॥

( एगविहो ) इत्यादि ( पंचय ) इत्यादि अविरतिवृत्तिलक्षण एकविध संयम सध्यात्मिकबाह्यभेदात् द्विधा भवति । पुनर्म्मनोवाक्काययोगभेदात्त्रिविधः स एव चतुर्याम भेदाच्चतुर्धा पुनः पञ्चमहाव्रतभेदात्पचधा । रात्रिभोजनविरतिपरिग्रहाच्च षोढेत्यादिकया प्रक्रियया भिद्यमानो यावदष्टादशशीलांगसहस्रपरिमाणो भवतीति किंपुनरसौ संयमस्तत्र तत्र प्रवचने पंचमहाव्रतरूपतया भिद्यते इत्याह ॥

आइक्खिउं विभइयुं, विन्नाउं चेव सुहुतरं होइ ।
एएण कारणेण, पञ्चमहव्वया पन्नविज्जंति ॥ ११ ॥

सयमः पञ्चमहाव्रतरूपतया व्यवस्थापितः सन्नाख्यातुं विभक्तुं विज्ञातुं च सुखेनैव भवतीत्यत कारणात्पञ्चमहाव्रतानि प्रज्ञाप्यन्ते । एतानि च पञ्चमहाव्रतान्यस्खलितानि फलवन्ति भवत्यतो रक्षायत्नो विधेयस्तदर्थमाह ॥

तेसिं च रक्खणट्ठा, भावणा पञ्चवए इक्केक्के ।
तासत्थपरिण्णाए, एसो अब्भितरो होइ ॥ १२ ॥

तेषां च महाव्रतानामेकैकस्य तद्वृत्तिकल्पाः पंच २ भावना भवंति। ताश्च द्वितीयाग्रश्रुतस्कंधे प्रतिपाद्यते अतोऽयं शस्त्रपरिज्ञाध्ययनाभ्यंतरो भवतीति ॥

सांप्रतं चूडानां यथा स्व परिमाणमाह ॥ जाउग्गह-पडिमाओ, पढमा सत्ति किगावीय चूला भावणविमुत्ति आयारपकप्पा तिन्नि इति पंच ।१३। पिंडैषणाध्ययनादारभ्य अवग्रहप्रतिमाध्ययनं यावत् एतानि सप्ताऽध्ययनानि प्रथमाचूडा सप्तसप्तैकका द्वितीया भावना तृतीया विमुक्तिः चतुर्थी आचारविकल्पो निशीथः सा पंचमी चूडेति आचा० २ श्रु० १ चू०

**आयारचूला– आचारचूला–**स्त्री० उक्तशेषानुवादिनी चूडा आचारस्य चूला आचार चूला । आचाराग्रे आचारांगस्य द्वितीयेऽग्रश्रुतस्कंधे, आचा० अ १ उ. ॥

आचाराग्राणि चूलिका इति आचा० ॥ आचारांगस्यद्वितीये अग्रश्रुतस्कंधे पञ्च चूडा स्तत्र प्रथमा(पिंडेसणसेज्जरिया,भासज्जाया य वत्थपाएसा। उग्गहपडिमत्ति)सप्ताध्ययनात्मिका द्वितीया सत्तसत्तिकया तृतीया भावना चतुर्थी विमुक्ति पञ्चमी निशीथाध्ययनमिति । आचा० अ० १ उ० १ ॥

एताश्चाचारश्रुतस्कंधस्य नवभ्यो ब्रह्मचर्याध्ययनेभ्यो निर्व्यूढा इति आचाराग्रशब्दे ॥

**आयारचूलिया–आचारचूलिका** स्त्री०आचारचूलायाम्, आयारस्सणं भगवओ सचूलियागस्स पञ्चासीइ उद्देसणकाला सम० ८५ स. ॥

आचारांगस्य विमुक्त्यभिधाने सर्वांतिमेऽध्ययने, च तिएहं गणिपिडगाण, आयारचूलियावज्जाणं सत्तावन्नं अज्झयणा ए० सम० ५७ स. ॥

आचारस्य श्रुतस्कंधद्वयरूपस्य प्रथमाङ्गस्य चूलिका सर्वान्तिममध्ययनं विमुक्त्यभिधानमाचारचूलिका तद्वर्जानामिति सम० टी. ॥

**आयारटीगा–आचारटीका–** स्त्री० शीलाचार्यविरचितायामाचारांगव्याख्यायाम्,तथाचाचारांगटीकायाम आचारटीकाकरणे। "आचारशास्त्रं सुविनिश्चितं यथा,जगाद वीरो जगते हिताय यः ॥ तथैव किञ्चिद्गदत स एव मे, पुनातु धीमान् विनयार्पिता गिरः ॥ १ ॥शस्त्रपरिज्ञाविवरण,मतिबहुगहनञ्च गन्धहस्तिकृतं।।तस्मात्सुखबोधार्थं, गृह्णाम्यहमञ्जसा सारम् ॥ २ ॥ "आचा० टी. अ १ उ. १ ॥

**आयारट्ठ–आचारस्थ–** त्रि० आचारे स्थित आचारस्थः ज्ञाना-

**पन्नता भावा आघविज्जंति पन्नविज्जन्ति परूविज्जंति दंसिज्जन्ति निदंसिज्जंति उवदंसिज्जंति । से एवं आयासे एवं नायासे एवं विण्णाया एवं चरणकरणपरूवणा आघविज्जइ सेत्तं आयारे ॥**

सेकिंतमित्यादि ।अथ किं तत् आचार इत्यादि अथवा कोऽय माचारः आचार्य आह ( आयारेण मित्यादि ) आचरणमाचारः आचर्यते इति वा आचारः पूर्वपुरुषाचरितो ज्ञानाद्यासेवन विधिरित्यर्थः । तत्प्रतिपादको ग्रंथो ऽप्याचार एव उच्यते अनेन चाचारेण करणभूतेनाथवाचारे आचारभूते णमिति वाक्यालङ्कारे श्रमणानां प्राङ्निरूपित शब्दार्थानां निर्ग्रन्थानां बाह्याभ्यन्तर ग्रन्थरहितानां आह । श्रमणा निर्ग्रन्था एव भवंति । तत्किमर्थं निर्ग्रन्थानामिति विशेषणमुच्यते । शाक्यादिव्यवच्छेदार्थं शाक्यादयोऽपीह लोके श्रमणा व्यपदिश्यते तदुक्तं ( निग्गन्थसक्कतावसगेरुयआजीवपञ्चहा समणा इति ) तेषामाचारो व्याख्यायते । तत्राऽऽचारो ज्ञानाऽऽचाराद्यनेकभेदभिन्नो गोचरो भिक्षाग्रहणविधिलक्षणः विनयो ज्ञानादि विनयः वैनयिक विनयफल कर्मक्षयादि । शिक्षाग्रहण शिक्षा आसेवनाशिक्षा च विनयशिक्षेति चूर्णिकृत् । तत्र विनेयाः शिष्यास्तया भाषा सत्या असत्या मृषा च अभाषा मृषा सत्यामृषा च चरण व्रतादिकरण पिण्डविशुद्ध्यादि उक्तञ्च ( वयसमणधम्मसंजम, वेयावच्च च बंभगुत्तिओ ।नाणा इति यतव कोह,निग्गहाई चरणमेयतु ॥ १ ॥ पिंडविसोहि समिई, भावणपडिमा इंदियनिरोहो । पडिलेहणगुत्तीओ । अभिग्गहो चेव करण तु ॥ २ ॥ (जाया माया वित्तिओत्ति ) यात्रा संयमयात्रा मात्रा तदर्थमेव परिमिताहारग्रहण वृत्तिर्विविधैरभिग्रहविशेषैर्वर्तनं । आचारश्च गोचरश्चेत्यादि द्वन्द्वान्ता आचारगोचरविनयवैनयिक शिक्षाभाषाणा माचरणकरणयात्रामात्रावृत्तय. आख्यायते इह यत्र क्वचिदन्यतरोपादानेऽन्यतरगतार्थाभिधान तत्सर्वं तत्प्राधान्यख्यापनार्थमवसेय ( से समासओ ) इत्यादि स आचार समासतः संक्षेपत पञ्चविधः प्रज्ञप्त तद्यथा ( नाणाचारो इत्यादि तत्र आयारेण मित्यादि आचारे णमिति वाक्यालङ्कारे परित्ता परिमिता तत प्रज्ञापक पाठक चाधिकृत्याद्यन्तोपलब्धेरथवा उत्सर्पिणीमवसर्पिणीं वा प्रतीत्य परित्ता अनन्ता न भवति ( आइअन्तो वलभणाओ तणाओ अहवा ओसप्पिणी मुसप्पिणीकाल पडुच्च परित्तातीयाणागयसव्वद्ध च पडुच्च अणता )इति तथा संख्येयानि अनुयोगद्वाराणि उपक्रमादीनि तानि ह्यध्ययनमध्ययन प्रति वर्तते अध्ययनानि च संख्येयानीति कृत्वा तथा संख्येया वेढा वेढो नाम छन्दोविशेष. । तथाच संख्येया श्लोकाः प्रतीता तया संख्येया निर्युक्तयस्तथा संख्येया प्रतिपत्तय प्रतिपत्तयो नाम द्रव्यादिपदार्थाभ्युपगमाः प्रतिमाद्यभिग्रहविशेषा वा ताः सूत्रनिबद्धा संख्येया ।आह च चूर्णिकृत् । "दव्वाइपयत्थपुव्वगमा, पडिमादभिग्गह विसेसा । पडिवत्ती उत्ते समासतो सुत्तपडिबद्धासंखेज्जत्ति " ( सेणमित्यादि ) स आचारो णमिति वाक्यालङ्कारे अंगार्थतया अंगार्थत्वेनार्थग्रहण परलोकचिन्तायां सूत्रादर्थस्य गरीयस्त्वख्यापनार्थं अथवा सूत्रार्थोभयरूप आचार इति ख्यापनार्थं प्रथममंगं एकारांतता सर्वत्र मागधभाषालक्षणानुसरणतो वेदितव्या स्थापनामधिकृत्य प्रथममंगमित्यर्थः ॥ तथा द्वौ श्रुतस्कन्धौ अध्ययनसमुदायरूपौ पञ्चविंशतिरध्ययनानि । तद्यथा ॥

**सत्थपरिन्ना लोगविजओ, सीओसणिज्जं सम्मत्तं ।**
**आवंतिधुय विमोहो, महापरिन्नोवहाणसुयं ॥**

एतानि नवाध्ययनानि प्रथमश्रुतस्कंधे "पिंडेसणासेज्जिरिया, भासज्जाया य वत्थपाएसा।उग्गहपडिमासत्ता,सत्तिक्कया य भावणविमुत्ती ॥ १ ॥ अत्र ( सेज्जिरियत्ति ) शय्याध्ययनमीर्याध्ययन च ( वत्थपाएसत्ति )वस्त्रैषणाध्ययनं पात्रैषणाध्ययन च अमूनि षोडशाध्ययनानि द्वितीयश्रुतस्कन्धे एव मेतानि निशीथवर्ज्जानि पञ्चविंशतिरध्ययनानि भवति । तथा पञ्चाशीतिरुद्देशनकालाः कथमिति चेदुच्यते ॥ इहाऽङ्गस्य श्रुतस्कन्धस्याध्ययनस्योद्देशकस्य चैक एवोद्देशनकालः । एव शस्त्रपरिज्ञायां सप्तोद्देशनकालाः ॥ लोकविजये षट् ॥ शीतोष्णाध्ययने चत्वार. ॥ सम्यक्त्वाध्ययने चत्वारः लोकसाराध्ययने षट् ॥ धूताध्ययने पञ्च ॥ विमोहाध्ययनेऽष्टौ ॥ महापरिज्ञायां सप्त ॥ उपधानश्रुते चत्वारः ॥ पिंडैषणाध्ययने एकादश ॥ शय्यैषणाध्ययने त्रयः ॥ वस्त्रैषणाध्ययने द्वौ ॥ अवग्रहप्रतिमाध्ययने द्वौ ॥ सप्तसप्ततिकाध्ययनेषु भावनायामेको विमुक्तावेकश्च ॥ एवमेते सर्वेऽपि पिण्डिता. पञ्चाशीतिर्भवन्ति ॥ अत्र संग्रहगाथा ॥

**सत्त य छच्च उ चउरो, पंचअट्ठेवसत्तचउरोय ।**
**एक्कारसतिन्नि य दो दो, दो दो दो सत्तेक्क एक्को य ॥१ ॥**

एव समुद्देशनकाला अपि पञ्चाशीतिर्भावनीयाः । तथा पदाग्रेण पदपरिमाणे नाष्टादश पदसहस्राणि इह यथार्थोपलब्धि. तत्पद अत्र पर आह । यद्याचारे द्वौ श्रुतस्कन्धौ पञ्चविंशतिरध्ययनानि पदाग्रेण चाष्टादश पदसहस्राणि तर्हि यद्भणित " नव बंभचेरमइओ अट्ठारसपयसहस्सिओवेओ " इति तद्विरुध्यते । अत्र हि नवब्रह्मचर्याध्ययनमात्र एवाष्टादशपदसहस्रप्रमाण आचार उक्तोऽस्मिंस्त्वध्ययने श्रुतस्कन्धद्वयात्मक. पञ्चविंशत्यध्ययनरूपोऽष्टादशपदसहस्रप्रमाण इति । तत कथ न परस्परं विरोध तदयुक्तमभिप्रायापरिज्ञानात् इह द्वौ श्रुतस्कन्धौ पञ्चविंशतिरध्ययनानि एतत्समग्रस्याऽऽचारस्य परिमाण अष्टादशपदसहस्राणि पुन. प्रथमश्रुतस्कन्धस्य नवब्रह्मचर्याध्ययनमयस्य विचित्रार्थ-निबद्धानि हि सूत्राणि भवन्ति अतएव चैषां सम्यगर्थावगमो गुरूपदेशतो भवति नान्यथा अत्राह चूर्णिकृत्" दोसुयक्खन्धा पणवीस अज्झयणाणि एय आयारग्ग सहियस्स आयारस्स पमाण भणिय अट्ठारसपयसहस्सा पुण पढमसुयखंधस्स नवबंभचेरमइयस्स पमाण विचित्त अत्थनिबद्धाणि सुत्ताणि य. गुरुवएस ओसिं अत्थो जाणियव्वोत्ति,,तथा संख्येयान्यक्षराणि पदानां संख्येयत्वात् तथा ( अणंता गमा ) इति इह गमा अर्थगमा गृह्यते । अर्थगमा नाम अर्थपरिच्छेदा. ते चानन्ता एकस्मादेव सूत्रादतिशायि मतिमेधादिगुणानां तत्तद्धर्मविशिष्टाना तत्तद्धर्मात्मकवस्तुप्रतिपत्तिभावात् ॥ एतच्च टीकाकृतो व्याख्यान ॥ चूर्णिकृत् पुनराह ॥ अभिधानाभिधेयवशतो गमा भवति ते चानन्ता अनेन च प्रकारेण वेदितव्या । तद्यथा। सुयं मे आउसंतेण भगवता एव मक्खायंति,, इदञ्च सुधर्मस्वामी जम्बूस्वामिनं प्रत्याह तत्रायमर्थ श्रुत मया हे आयुष्मन् ! तेन भगवता वर्द्धमानस्वामिना एवमाख्यातं अथवा श्रुत मया आयुष्मता भगवतो वर्द्धमानस्वामिनोऽन्ते समीपे णमिति वाक्यालङ्कारे भगवान् भगवता एवमा-

ख्यातं । अथवा श्रुतं मया आयुष्मतोऽथवा श्रुत मया भगवत्पादारविंदयुगलमामृशता । अथवा श्रुतं मया गुरुकुलवासमावसता । अथवा श्रुतं मया हे आयुष्मन् ! ( तेणति ) प्रथमार्थे तृतीया तत् भगवता एवमाख्यात । अथवा श्रुतं मया हे आयुष्मन् ! ( तेणंति ) तदा भगवता एवमाख्यातं । अथवा श्रुतं मया हे आयुष्मन् ! ( तेणति ) तत्र षट् जीवनिकायविषये तत्र वा विवक्षितेन समवसरणे स्थितेन भगवता एवमाख्यातं अथ वा श्रुत मया हे आयुष्मन् ! वर्तते यतस्तेन भगवता एवमाख्यातं एवमादयस्तं तमर्थमधिकृत्य गमा भवंति । अभिधानवशतः पुनरेव गमा. "सुयं मे आउसं आउस सुयं मे मे सुय,, आउसमित्येवमर्थभेदे तथा तथा पदानां संयोजनतोऽभिधानतो गमा भवन्ति एवमादयः किंच अनंता गमा भवति । तथा अनन्ताः पर्यायास्ते च स्वपरभेदभिन्नाः अक्षरार्थगोचरा वेदितव्याः तथा परीताः परिमितास्त्रसा द्वीन्द्रियादयः स्थावरा अनन्ता वनस्पतिकायादयः ( सासयकडनिबद्धनिकाइयत्ति ) शाश्वता धर्मास्तिकायादय. कृता. प्रयोगविस्रसा जन्याः घटसन्ध्याभ्ररागादयः । एते सर्वेऽपि त्रसादयो निबद्धाः सूत्रे स्वरूपतः उक्ताः । निकाचिता निर्युक्तिसंग्रहण्हेतूदाहरणादिभिरनेकधा व्यवस्थापिता जिनप्रज्ञप्ता भावाः पदार्था आख्यायते सामान्यरूपतया विशेषरूपतया वा कथ्यन्ते प्रज्ञाप्यन्ते नामादिभेदोपन्यासेन प्ररूप्यन्ते प्ररूप्यन्ते नामादीनामेव भेदानांसप्रपञ्चं स्वरूपकथनेन पृथग्विभक्ता. दर्श्यन्ते दर्श्यन्ते उपमाप्रदर्शनेन यथा गौरिव गवय इत्यादि निदर्श्यते हेतुदृष्टान्तोपदर्शनेनोपदर्श्यन्ते निगमनेन निगमनेन निगमनेन निःसंकं व्यवस्थाप्यन्ते साम्प्रतमाचाराङ्गग्रहणे फलं प्रतिपादयति स एवमित्यादि स इति आचारांगग्राहकोऽभिसम्बध्यते एवमात्मा एवरूपो भवति ॥ अयमत्र भाव अस्मिन्नाचारांगे भावत. सम्यगधीते सति तदुक्तक्रियानुष्ठानानुपरिपालनात्तादात्म्यमूर्त इवाचारोऽभवति । आह च टीकाकृत । तदुक्तक्रियापरिणामाव्यतिरेकात्स एवाचारो भवतीत्यर्थ. । इति तदेवं क्रियामधिकृत्योक्त सप्रति ज्ञानमधिकृत्याह ( एवं नायत्ति ) यथाआचारांगे निबद्धा भावास्तथा तेषां भावानां ज्ञाता भवति तथा ( एव विन्नायत्ति ) यथा नियुक्तिसंग्रहणीहेतूदाहरणादिभिर्विविध प्ररूपितास्तथा विविध ज्ञातारो भवति एव चरणकरणप्ररूपणा आचार आख्यायंते सत्तं आयारेत्ति ॥ न० ॥ सेकिंत आयारे आयारेणं समणाणं निग्गथाणं आयारगोयरविणयवेणइयठाणगमणचकमणपमाणजोगजुंजणभासा समितिगुत्तीसिज्जो वहिभत्तपाण उग्गमउप्पायणेसणाविसोहिं सुद्धासुद्धगहणवयणियमतवोवहाणसुप्पसत्यमाहिज्जइ से समासओ पञ्चविहो प० तं० णाणायारे, दसणायारे, चरित्तायारे, तवायारे, आयारस्स ण परित्तावायणा सखेज्जा अणुओगदारा सखेज्जाओ पडिवत्तीओ संखेज्जा वेढा सखेज्जा सिलोगा सखेज्जाओ निज्जुत्तीओ से ण अगट्टयाए पढमे अंगे दो सुयक्खधा पणवीस अज्झयणा पञ्चासीइं उद्देसणकाला पञ्चासी समुद्देसणकाला अट्ठारस पदसहस्साइं पदग्गेण संखेज्जा अक्खरा अणतागमा अणता पज्जवा परित्ता तसा अणंता थावरा सासया कडानिबद्धा णिकाइया जिणपण्णत्ता भावा आघविज्जंति पण्णविज्जंति परूविज्जंति दसिज्जंति निदंसिज्जंति उवदंसिज्जंति से एवं आए एवं विन्नाए एव चरणकरणपरूवणया आघविज्जंति परूविज्जंति नंदिसिज्जंति उवदसिज्जंति सेत्त आयारो ॥ सम० १२ स । आचाराङ्गस्य व्यवच्छेदकालश्च ॥ विगहसुणिम्मि मरंते, हरितगोत्तम्मि होतिवीसाए ॥ वरिसाणसहस्सेहिं, आयारंगस्स वोच्छेदो ॥ साम्प्रतमुद्देशार्थाधिकारः शस्त्रपरिज्ञाया अयं जीव इत्यादि तत्र प्रथमोद्देशके सामान्येन जीवास्तित्व प्रतिपाद्य शेषेषु तु षट्सु विशेषेण पृथिवीकायाद्यस्तित्वमिति सर्वेषां चावसाने बन्धविरतिप्रतिपादनमिति । एतदन्ते उपात्तवान् प्रत्येकमुद्देशार्थेषु योजनीय प्रथमोद्देशके जीवस्वपवधे वधो विरतिश्चेति एवमिति तत्र शस्त्रपरिज्ञा ॥ आचा. १ अ० १ उ० साम्प्रतमाचारादिप्रदानस्य सुखप्रतिपत्तये दृष्टान्तोपन्यासेन विधिराख्यायते ॥ यथा कश्चिद्राजाऽभिनवनगरनिवेशेच्छया भूखंडानि विभज्य समतया प्रकृतिभ्यो दत्तवास्तथा कचवरापनयने शल्योद्धारे भूस्थिरीकरणे पक्वेष्टकापीठप्रासादरचने रत्नाद्युपादाने चोपदेशं दत्तवास्तांश्च प्रकृतयस्तदुपदेशानुसारेण तथैव कृत्वा यथाभिप्रेतान् भोगान् बुभुजिरे । अयमर्थोपनयः । राजसदृशेन सूरिणा प्रकृतिसदृशशिष्यगणस्य भूखण्डसदृश. संयमो मिथ्यात्वकचवराद्यपनीय सर्वोपाधिशुद्धस्यारोपणीयस्त च सामायिकसंयमं स्थिरीकृत्य पक्वेष्टकापीठतुल्यानि व्रतान्यारोपणीयानि तत. प्रासादकल्पोऽयमाचारो विधेयसूत्रस्यश्च शेषशास्त्रादिरत्नान्यादत्ते निर्वाणभाग्भवति ॥ आचा. १ अ १ उ. ॥

**आयारंगचूला आचाराङ्गचूला** स्त्री० आचाराङ्गस्य द्वितीयेऽश्रुतस्कन्धे ( एतद्वक्तव्यताऽऽचारचूलिकाशब्दे ) प्रथमाचारचूलेति आचा० ।

**आयारकुसल आचारकुशल** पु० आचारेण ज्ञानाद्याचारेण कर्मकुशलः कर्मोच्छेदक. आचारविषये सम्यक् परिज्ञानवति, आचारे ज्ञातव्ये प्रयोक्तव्ये वा कुशलो दक्ष आचारकुशल. । आचारज्ञाने आचारप्रयोगे वा दक्षे, च । व्य० उ० ३ ।

आचारकुशलशब्दस्य व्याख्यानार्थमाह ॥

अब्भुट्ठाणे आसण, किंकरअब्भासकरणमविभत्ति । पडिरुवजोगजुंजण, नीयोगपूजा जहा कमसो ॥ अफरुस अणवल अचवल, मकुकयमरुंभगोमसीभरणासहित समाहिं यववद्धिय, गुणनिहि आयार कुसलोउ ॥ आचार कुशलो नाम यो गुर्वादी नामभ्युत्थान करोति ( आसणत्ति ) आसनप्रदान च तेषामेव गुर्वादीनां विधत्ते समागतानां पीठिकाद्युपनयतीति भावः। तथा प्रातरेवागत्य आचार्यान् वदति सदिशत किंकरोमीति स किंकर तथा ( अब्भासकरणमिति ) ये अभ्यागतास्तेषामात्मसमीपवर्त्तित्वकरणमभ्यासकरण अविभक्तिर्विभागाभाव. शिष्य प्रतिच्छिकानां विशेषकरणमितिभाव. ( पडिरुव जोगजुंजणत्ति ) प्रतिरूपः खलु विनयः कायिकादिभेदतश्चतुर्धोऽधस्तात् पीठिकायामभिहितस्तदनुगता योगा मनोवाक्कायास्तेषां योजन व्यापारणमवश्यकरण अविभक्तविभागयोजन ( नियोगत्ति ) योयत्र वस्त्राद्युत्पादने नियोक्तव्य तस्य तत्र नियोग करोति ( पूजा जहा कमसोत्ति ) गुर्वादीनां यथानुरूप क्रमशो येन पूजा क्रियते अपरुषमनिष्ठुरं मन प्रल्हादकृदित्यर्थ. तद्भाषते ( अणवलत्ति ) तत्र प्राकृतत्वात् यकारलोपः तेन अवलया इति द्रष्टव्य तस्याऽभावोऽणवलया अकुटिलत्वमित्यर्थं । अचपलः स्थिरस्वभाव. अकुक्कुयो हस्तपादमुखादिविरूपचेष्टारहित । अदंभको वचनानुगतवचनविरहित । मंभिरो नाम य उल्लपन् परं लालया सिंचति तत्प्रतिषेधादसभिर । प्राकृतत्वात्स्वार्थे कप्रत्ययविधानेन असंभिरक एष सर्वोऽपि

आयारादिपंचविभाचारयुक्ते, ॥

"नाणम्मि दंसणम्मिय, तवे चरित्तेय समणसारम्मि । ण च एत्ति जो ठवेउं, अप्पाण गणं न गणहारी । एसगणहरमेरा, आयारत्थाणवण्णिता सुत्ते,, । पं० भा० ॥

एसा गणधरमेरोमर्य्यादा सीमा इत्यर्थः (आयारट्ठाणंति पंचविहे आयारे ठ्ठाणं) आचारे स्थित आचारस्थः तेषां वर्णिता तत्र प्रणीता इत्यर्थः । पं० चू० ॥

आयारणिज्जुत्ति-आचारनिर्युक्ति-स्त्री० निर्युक्तानां सूत्रेऽभिधेय तया व्यवस्थापितानामर्थानां युक्तिर्घटना विशिष्टा योजना निर्युक्तियुक्तिरेतस्मिश्च वाच्ये युक्तशब्दलोपान्निर्युक्तिरित्युच्यते । सम० स १ आचारस्य निर्युक्तिराचारनिर्युक्तिः आचार सूत्रार्थानां विशिष्टयोजनायाम्, तथाच समवायांगे । आचारांग मधिकृत्य "संखेज्जाओ णिज्जुत्तिओ" सम० १ स. ॥ आचारांग निर्युक्तिश्च भद्रबाहुस्वामिना रचिता । तथाचाचारांगटीकायां भद्रबाहुस्वामिनमधिकृत्य । स च पूर्वमावश्यकनिर्युक्तिं विधाय पश्चादाचारांगनिर्युक्तिं चक्रे तथाचोक्त ( आवस्सयस्स दस कालियस्स तह उत्तरज्झयमायारत्ति ) आचा श्र. १ ठ. १

आयारतेण-आचारस्तेन-त्रि० विशिष्टाचारवत्पुरुषरूपे "आयारभावतेणेय कुव्वइ देवकिव्विस ४६ " दश० अ ५ उ. २ ॥

आयारदशा-आचारदशा-स्त्री० आचरणमाचारो ज्ञानादिविषयः पंचधा । आचारप्रतिपादनपरा दशा आचारदशा । दशाभेदे, दशाध्ययनात्मिका आचारदशा दशाश्रुतस्कंध इति या रूढेति स्था. ठा. १० ॥ अङ्गदशा । अण्हावि हु उ वासगा,दिय वेयातु विसेसो । आयारदशा तुहमो, जेणेत्थं वणिइया यारो । पं० भा० । आचारदशानामध्ययनविभागमाह । स्था १०ठा. ॥

आयारदसाणं दस अज्झयणा पण्णत्ता । तंजहा वीस असमाहिट्ठाणा इक्कवीसं सबला तित्तिस आसायणाओ अट्ठविहा गणिसंपया दस चित्तसमाहिट्ठाणा इक्कारस उवासगपडिमाओ बारस भिक्खुपडिमाओ पज्जोसवणा कप्पे तिस मोहणिज्जगणा ॥

समाधिस्थानानि यैरासेवितैरात्मपरोभयानामिह परत्र चयत्र वा असमाधिरुत्पद्यते तानीति भावस्तानि च विंशतिर्दुतचारित्यादीनि । तत एवाध्ययनीति तत्प्रतिपादक मध्ययनमसमाधिस्थानानीति । प्रथमतया एकविंशति शबलाः शबलं कर्बूरं द्रव्यतः पटादि भावतः सातिचार चारित्रमिह च शबलचारित्रयोगात् शबलाः साधवस्ते च करकर्मप्रकारान्तरमैथुनादीन्येकविंशतिपदानि ॥ १ ॥ तत्र चोक्तरूपाणि सेवमाना उपाधित एकविंशतिर्भवति । तदर्थ मध्ययनमेकविंशति शबला इत्यभिधीयते ॥ २ ॥ ते तो समासायणाओत्ति ज्ञानादिगुणाः आ समस्त्येन शात्यते खण्ड्यन्ते यकाभिस्ता आशातना रत्नाधिकविषया अविनयरूपाः पुरतो गमनादिकास्तत्प्रसिद्धास्त्रयस्त्रिंशद्भेदा यत्राभिधीयन्ते तदध्ययनमपि तथैवोच्यत इति ॥ ३ ॥ (अट्ठेत्यादि) अष्टविधा गणिसंपत् आचारश्रुतशरीरवचनादिका आचार्य्य गुणर्द्धिरष्टस्थानकोकरूपा यत्राऽभिधीयते तदध्ययनमपि तथैवोच्यत इति ॥ ४ ॥ (दसेत्यादि) दशचित्तसमाधिस्था नानि येषु सत्सु चित्तस्य प्रशस्तपरिणतिर्जायते तानि तथा असमुत्पन्नपूर्वकधर्म्माचिन्तोत्पादादीनि तत्रैव प्रसिद्धान्यभिधीयन्ते यत्र तत्तथैवोच्यते इति ५ (एकारे) त्यादि एकादशोपासकानां श्रावकाणां प्रतिमाः प्रतिपत्तिविशेषाः दर्शनव्रत सामयिकादिविषयाः प्रतिपाद्यंते यत्र तत्तथैवोच्यते ॥ ६ ॥ (बारसेत्यादि) द्वादशभिक्षूणां प्रतिमा अभिग्रहा मासिकीद्विमासिकी प्रभृतयोयत्राभिधीयन्ते तत्तथोच्यत इति ॥ ७ ॥ पज्जो-इत्यादि ॥ पर्याया ऋजुबुद्धिका द्रव्यक्षेत्रकालभावसंबन्धिन उत्सृज्यन्ते उज्झन्ते यस्यां सा निरुक्तविधिना पर्योसवना अथवा परीति सर्वतःक्रोधादिभावेभ्य उपशाम्यते यस्यां सा पर्युपशमना अथवा परि सर्वथा एकक्षेत्रे जघन्यतः सप्ततिदिनानि उत्कृष्टतः षण्मासान् वसनं निरुक्तादेव .पर्युषणा तस्याःकल्प आचारोमर्यादेत्यर्थः ॥ पर्योसवनाकल्पः पर्युपशमनाकल्प पर्युषणाकल्पोवेति स च ( सक्कोसजोयणं विगइनव वयामि ) त्यादिकस्तत्रैव प्रसिद्धस्तदर्थमध्ययनं स एवोच्यत इति ८ ॥ ( तीसमित्यादि ) त्रिंशन्मोहनीयकर्मणो बन्धस्थानानि बन्धनकारणानि ( वारिमज्झेकवगाहित्ता तसे पाणेविहिंसई)इत्यादिकानि तत्रैव प्रसिद्धानि मोहनीयस्थानानि तत्प्रतिपादकमध्ययन तथैवोच्यतइति ॥ ९ ॥ ( आयाइट्ठाण ) मिति आजननमाजातिः सम्मूर्च्छनगर्भोपपाततो जन्म तस्याः स्थान संसारस्तत्सनिदानस्य भवतीत्येवमर्थप्रतिपादनपरमाजाति स्थानमुच्यते ॥ इति ठा. टी. ठा. १० ॥

आयारपकप्प-आचारप्रकल्प-पुं० आचार एवाचार प्रकल्पः क्रिया आचारक्रियायाम्, आव० ४ अ. ॥ आचार आचारांगम् प्रकल्पोनिशीथाध्ययनम् तस्यैव पञ्चमचूला आचारेण सहितः प्रकल्पः आचारप्रकल्प निशीथाध्ययनसहिते आचारांगे, ध० अ ३ ॥

अट्ठावीसइविहे आयारपकप्पे आव ३ अ. ॥

सत्थपरिन्ना लोगविजओ, असिओसणिज्जं संमत्तं ॥
आवंति धुअ विमोहो, उवहाणसुअं महपरिन्ना ॥ ५१ ॥
पिंडेसण सिज्जीरिज्जा, भासज्जा या य वत्थपाएसा ॥
उग्गहपडिमासत्ति, कसततयं भावणविमुत्ति ॥ ५२ ॥
उग्घायमणुग्घायं, आरोवणातिविहमो निसीहंतु ॥
इति अट्ठाविसविहो, आयारपकप्पनामोयं ॥ ५३ ॥

अष्टाविंशतिविधे आचारप्रकल्पे आचार एवाचारप्रकल्पः क्रिया पूर्ववत् । पिंडेसणागाहा १५२ इत्यातगाथात्रयं निगदसिद्धमेव ॥

अष्टाविंशतिविधः आचारप्रकल्पः निशीथांतमाचारांगमित्यर्थः स चैव ॥

सत्थपरिन्ना १ लोकविजओ २ सीओसणिज्जा ३ संमत्तं ४ आवंति ५ धुव ६ विमोहो ७ उवहाणत्थयं ८ महपरिन्ना ९ प्रथमस्य श्रुतस्कंधस्याऽध्ययनानि । द्वितीयस्य तु पिंडेसण १ सेज्ज २ इरिया ३ भासाजाया य ४ वत्थ ५ पाएसा ६ उग्गाहपडिमा ७ सत्तसत्तिक या ४ भावणा ५ विमुत्ति ६ उग्घाइ अणुग्घाइ २ आरुहणा ३ तिविहमोनिसीहं तु इति अट्ठाविसविहो आयार पकप्पनामोत्ति ॥

उद्घातिकं यत्र लघुमासादिकं प्रायश्चित्तं वर्ण्यते । अनुद्घातिक तु यत्र गुरुमासादि आरोपणा च यत्रकस्मिन्प्रायश्चित्तेऽन्य दृष्यारोप्यत इति ॥ प्रश्न मं ५ द्वा. ॥

अष्टाविंशत्या आचारप्रकल्पैः आचार आचारांगं प्रकल्पो निशीथाध्ययनं तस्यैव पंचमचूला । आचारेण सहित. प्रकल्प आचारप्रकल्पस्तैः पंचविंशत्यध्ययनात्मकत्वात्पंचाविंशतिविध आचार उद्घातिममनुद्घातिममारोपणेति त्रिधा प्रकल्पोमीलनेऽष्टाविंशतिविधस्तत्र पंचविंशतिरध्ययनान्यमूनि॥

सत्थपरिण्णा १ लोगविजओ २ सीओसणीज्जं ३ संमत्तं ४ आवंतिलोगसारंवा ५ धुयं ६ विमोहो ७ उवहाणसुअं ८ महापरिण्णा ९ पिंडेसणा १० सिज्जा ११ इरिया १२ भासाजायं १३ वत्थेसणा १४ पाएसणा १५ उग्गहपडिमा १६ ठाणसत्तिक्कयं १७ निसीहिआसत्तिकयं १८ उच्चारणपासवणसत्तिकयं १९ सद्दसत्तिकयं २० रूवसत्तिकयं २१ पराकिरिआसत्तिकयं २२ अन्नोन्नकिरिआसत्तिकयं २३ भावणा २४ विमुत्ति २५. ध. ३. अ.

आयरणं आयायारो सो य पंचविहो णाणदंसण चरित्ततववीरियारो य तस्स पकरिसेणं कप्पणा पकप्पणा सप्रभेदनिरूपणा आ.चू. ४ अ. । नि. चू. १ उ. ॥

आचारः प्रथमांगन्तस्य प्रकल्पोऽध्ययनविशेषोनिशीथमित्यपराभिधानस्य वाऽऽचारस्य वा साध्वाचारस्य ज्ञानादिविषयस्य प्रकल्पोऽध्यवसायामित्याचारप्रकल्प. । सम० स. २८ ॥ आचारस्यप्रथमांगस्य पदविभागसमाचारीलक्षणप्रकृष्टकल्पाभिधायकत्वात् प्रकल्प आचारप्रकल्प निशीथाध्ययनं आचारांगस्य निशीथाध्ययने, स्था० ५ ठा ।

यस्मात्तत्रदशविध आचारः ज्ञानदर्शनचारित्रतपोवीर्य्याचारश्च प्रकल्पते व्याप्यते प्रज्ञाप्यते इत्यर्थ इत्यत आचारप्रकल्प इति प० चू० ॥

आचारप्रकल्पस्य नामधेयानि निशीथचूर्णौ यथा ॥

आयारपकप्पस्स उ, इमाइं गोणाइं णामधिज्जाइं ।
आयारमाइयाइं, पायच्छित्तेणहीगारो ॥ २ ॥ गाहा

आयरणं आयारो सो य पचविहो णाणदंसणचरित्ततववीरियायारोय तस्स पकरिसेणं कप्पणा पकप्पणा सप्रभेदप्ररूपणेत्यर्थ. इमाइंति वक्खमाणात्ति गोणग्रहणं पारिभासियनवासत्थं तजहा अमुहोसमुदो इंदं गोवयतीति इदगोवगो एव तस्स आयारपकप्पस्स णाम न भवति गुणणिप्फन्न भवति "गुणनिप्फन्नं गोण, तच्चेव जहत्थ मत्थवीयति न पुण खवणो जलणो, तवणो पवणो पदीवो य ॥ १॥" णामाणि, अभिधेयाणि नामधेज्जाणि अहवा धरणियाणि वा धेज्जानि णामधेज्जानि सार्थकाणीत्यर्थ । आयारो आदीजांसताणि नामाणि आयारादीणि पच पायच्छिते अहीगारेत्ति अस्यैव. द्वार सीसो पुच्छति णणु पायच्छिते अहिगारोत्ति पुच्छादि अन्याहिकार एव भणिओ आयरियो भणति सच्चं तत्थ भणिओ इह विशेषज्ञापनार्थ भणाति अप्पत्थवि आयारस रूवणा कया इह तु आयारसव्वं पायच्छित्तं परुविज्जति अहवा प्रायश्चित्ते प्रयत्न इत्यर्थ ॥

अहवा इहमणिओ तत्थ दट्ठव्वो आयारमाइयाति जं भणियंणि य इमाणि ॥

आयारो अग्गंति, पकप्पे तह चूलीया णिसीहंति ।
णिसीतं सुत्तस्य तहा, तह आणु पुव्वि अक्खातं ३।गाहा॥

एसादारगाहा वक्खमाणसरुवा आयारमाईयाणि इमा सामण्णिक्खेवलक्खणा गाहा ॥

आयारे णिक्खेवो, चउविधो दशविधो य अग्गम्मि ।
छक्कायपकप्पंमि, चूलीयाए निशीये य।।४।। नि. चू.१उ.

आचारप्रकल्पः पंचविधः तत्रा च स्थानांगे ॥

पंचविहे आयारपकप्पे पं० तं० । मासिए उग्घाइए १ मासिये अणुग्घाइए २ चउम्मासिए उग्घाइए ३ चउम्मासिये अणुग्घाइये ४ आरोवणा ५ । स्था. ५ ठा. ॥

आचारस्य प्रथमांगस्य पदविभागसमाचारी लक्षणप्रकृष्टकल्पाऽभिधायकत्वात्प्रकल्प आचारप्रकल्प निशीथाध्ययनं स च पंचविधः । पचविधप्रायश्चित्ताभिधायकत्वात्तथाह । तत्र केषुचिदुद्देशकेषु लघुमासप्रायश्चित्तापत्तिरुत्पद्यते १ केषुचिच्च गुरुमासापत्तिः२ एवं लघुचतुर्मास ३ गुरुचतुर्मासा४ रोपणाश्चेति ५तत्र मासेन निष्पन्नं मासिकं तपस्तच्च उद्घातो भागपातो यत्रास्ति तदुद्घातिकं लघ्वित्यर्थः। यत उक्तं"अद्धेण छिन्न सेसं, पुव्वद्धेणं तु संजुय काउं। देज्जाहि लहु य दाणं, गुरुदाणं तत्तियं चेवत्ति ॥ १ ॥ पंचेवात्ति ।एतद्भावना मासिकतपोऽधिकृत्योपदर्श्यते । मासस्याऽर्द्धच्छिन्नस्य शेषं दिनानां पंचदशकं तन्मासापेक्षया च पूर्वस्य पंचविंशतिकस्याऽर्द्धेन सार्द्धद्वादशकेन संयुत कृतं सार्द्धा सप्तविंशतिर्भवतीति । आरोपणा तु (चढावणित्ति भणियं होइ) योहि यथा प्रतिषेवित मालोचयति तस्य प्रतिषेवानिष्पन्नमेव मासलघुमासगुरुप्रभृतिकं दीयते । यस्तु न तथा तत्तावद्दीयते एवमायासनिष्पन्नं चान्यदारोप्यत इत्यारोपणेति ॥ ठा० टी० ठा० ५ ॥

अस्याष्टाविंशतिभेदाः समवायाङ्गे यथा ॥

अट्ठाविसविहे आयारपकप्पे प० तं० ॥ मासिया आरोवणा सपंचराइमासीया आरोवणा सदसराइमासिया आरोवणा सपन्नरसराइमासिया आरोवणा । सवीसइराइमासिया आरोवणा । सपंचवीसराइमासिया आरोवणा । एवं चेव दामासीया आरोवणा सपंचराइदोमासीया आरोवणा एवं तिमासीया आरोवणा चउमासीयाआरोवणा उवघाइयाआरोवणा अणुघाइया आरोवणा कसिणा आरोवणा अकसिणा आरोवणा। एतावता आयारकप्पे एतावताय आयरियव्वे । सम. २८ स.॥

अत्रैव निगमनमाह ।

एतावांस्तावदाचारप्रकल्प इह स्थानके आरोपणामाश्रित्य विवक्षितोऽन्यथा तद्व्यतिरेकेणाऽपि तस्यैतद्घातिकरूपस्य भावात् अथ चैतावानेवायं तावदाचारप्रकल्प. शेषस्यात्रैवांतर्भावात् स. स. २८॥

आचारप्रकल्पो महानिशीथ. । स च प्रत्याख्यानपूर्वस्य यतृतीय वस्तु तस्यापि यदाचारस्य विंशतितमं प्राभृतं ततो निर्व्यूढ इति आचा० द्वि श्रु अ. १ ॥

तथा च निशीथचूर्णौ ॥

निसीयं णवमा पुव्वा, पच्चक्खाणस्स ततियवत्थुउ ।

आयारनामधेज्जा, वासनिजापाहुडच्छेदा ॥ २१७ ॥
पुव्वगतेहिं तो पच्चक्खाणपुव्वेणाम णवमपुव्वात्तिस्स वीस वत्थु वत्थुत्ति वत्थुन्त वीस अत्थाधिकारात्तेसु तत्तिय आयारणामधिज्ज ज वत्थु तस्स वत्थुस्स वीस पाहुडच्छेदो परिमाणपरिच्छिन्नप्राभृतवत् अर्थच्छेदपाहुडछेदा प्रणति । तेसु वि जं वीसतिम पाहुडच्छेद ततो णिसीह सिरू ॥
तथाच व्यवहारकल्पे ॥
आयारपकप्पा ऊ, नवमे पुव्वंमि आसि सोधीय ।
तत्तोच्चि य निज्जूढो, इहाणियतो किं न सव्विज्जवं ॥
आचारप्रकल्प' एवं नवमे पूर्वे आसीत् शोधितश्च ततोऽनवत् इदानीं पुनरिहाचारांगे तत एव नवमान्नियूंह्याऽनीतः । तत किमेष आचारप्रकल्पो न नवति किं वा ततः शोधिर्नोपजायते । एषोऽप्याचारप्रकल्पः शोधिश्चास्मादवशिष्ट भवतीति भावः ॥ व्य० ३ उ० ॥
तथाच पञ्चकल्पभाष्ये ॥
आयरदसाकप्पो ववहारो नवमपुव्वा णि सं दोसारित्तरक्खणट्ठा सुयकडस्सुवरिठविताई अंगदसा एहा वि हु उव्वासगादीण तेणतु विसेसो आयारदसा उइमो जेणेत्थं वणिहयायारो, दसकप्पववहारा एगसुतखंधे कइ इच्छंति । केइं च दसाएकं कप्पववहारवीयं तु रयणागरयाणीयं णवमं पुव्वं तु तस्स नीसदो परिगालपरिस्सावो ॥
( जम्हा तेण भगवता आयरपकप्पा दसाकप्पव्यवहाराय नवमपुव्वनिसदभूता निज्जूढा ) तेनाऽसौपूजार्हः आचारपकप्प इति विधिः यस्मात्तत्र दशविध आचारो ज्ञानदर्शनचारित्रतपोवीर्याचारश्च प्रकल्पते ॥ व्याप्यते प्रज्ञाप्यत इत्यर्थः ॥ इत्यत आचारप्रकल्प· दशाकल्पव्यवहाराणां पूर्वोक्त निरुक्त ॥ प. चू ॥ एते दशकप्पववहारा' किं कारण ॥
निज्जूढाचरित्तसारिस्स,रक्खणट्ठाए खलियस्स।
तोहिं सोहिं किराति, तहो होति निरुग्गहतं । पं. भा. ॥
चारित्र इति चारित्तरक्खणट्ठा गाहा पंचप्रकारं चारित्रं सामायिकाद्यमथाख्यातपर्यवसान तस्य रक्षणार्थं भूति रक्षायः परिपालनार्थमित्यर्थ' । प चू ॥
सूयकडुवरिठविता, जम्हा त पंचवासपरियायो ॥
सुयकडमहज्जातिनुत्तो, ज्जोग्गो होतिसो तेसिं ॥
सूत्रकृतांगस्योपरि व्यवस्थापित आह । किमर्थं सूत्रकृतांगस्योपरि व्यवस्थापित अथोवा न व्यवस्थापितः । उच्यते ।सूत्रोपदेशादिति यस्माद् व्यवहारसूत्रे तृतीयोद्देशकेऽप्युक्तं त्रिवर्षपर्यायस्य कल्पते आचारप्रकल्प इति तथा व्यवहारस्सैव दशमोद्देशके सूत्रमस्ति त्रिवर्षपर्यायस्य कल्पते सूत्रकृतांगमुद्देष्टुं एतदर्थं सूत्रकृतांगस्योपरि कृता इति किं कारणं तेण भगवता नवमाओ पुव्वाओ नीणीओ उच्यते पं चू० ॥ पं० भा० ॥
आणुकंपा वोच्छेदो, कुसुमाजेरी तिगिच्छपारिच्छा ।
कप्पे परिसा य तहा, दिद्वंता आदिमुत्तंमि ॥ १ ॥
ओसप्पिणीमवणाणं, हाणिं णाऊण आउगवलाणं ।
होहिं तु वग्गधं, करा पुव्वगतं मि पहीणंमी ॥ २ ॥
खेतस्स य कालस्स य, परिहाणिं गहणधारणाणं च ।
वल.वीरिए संघयणे, सद्धाउच्छाहता चे व ॥ ३ ॥
किं खेत्त कालो वा, संकुयति जेण तेण परिहाणी ।
भण्णइ न संकुयति, परिहाणी तेसि तु गुणेहिं ॥४॥
भाणियव्वहुसमाए, गामा होहंति त्तमसाणसामाइय ।
खेत्तगुणहाणि काले, विउहोतिमाहाणि समये ॥५॥
समयेणंता परिहा, यंते उवएहमादीया ।
दव्वादीपज्जाया, अहोरत्तं तत्तीयं चेव ॥ ६ ॥
सुसमअम अणणुभोवणं, साहुज्जोग्गा तु सुब्भना खेत्ता
कालेवि य दुब्भक्खा, अभिक्खणं होतिमरायं ।७।
दूसमअणुभावेण यपरिहाणीहोति ओ सहवलाणं ।
तेणमणुआणं पि, तु आउगमे हादि परिहाणि ॥ ८ ॥
दारा संघयणं पि य हिय इतत्तोय हाणीय धितिबलस्स भवो विरियं सारिरवलं तंपिय परिहातिसत्तं च हायंति यसद्धाओ गहणे परियट्टणे यमणयाणं उच्छाहो उज्जोगो अणालमत्तं च एगद्वाइयणा उं परिहाणि अणुग्गहट्ठाए एस साहुणं णिज्जूढणुकंपाए दिट्ठंतेहिं इमेहिं तु पगरणे चेरुणुकंपादङ्ग विदछेहिं होयगारीणं जहउमेवी यभत्त रएहा दिएहं अहएणवयस्स एवं अप्पतच्चिय पुव्वगतं केइ मा हु मरिहिं तिन्नोउयरिऊण ततो हेट्ठाओ तारियं तेहिं । दारं । मायहु वोछिज्जीहिती चरणणुउगोत्ति तेण णिज्जूढं । वोच्छीएहे बहुयं मी चरणाभावोज्ज विज्जाहि कहं पुण तेण गेहं तु दिएहाइं तत्थीमो तु दिट्ठतो जहकोई दुरारोहो सुमुरभिकुसुमो तु कप्पदुमो पुरिसा केइ असत्ता तं आरोहुण कुसुमगहणट्ठा तेसिं अणुकंपणट्ठा कोइ ससत्तो समारुरुह घेत्तुं कुसुमा सुहमहणहतुगं गांथउं दले तेसिं तह चोदसपुव्वतरु आरुढो । भद्दबाहू तु अणुकंपट्ठा गुथितुं सुयगमस्सुप्परिं ववेवीरो । दारं । तं पुणतो वयेसेण वेव गाहितं एसच्छायें अह गाहिए दोसो असाह गाहोंति नाणमाईणं केमवन्नेरीणि तं वक्खातं पुव्वसामइए अहवा तिगीच्छ उ तुज णहियं वावा उसहं ढेज्जा तेहिं तुण कज्जसिद्धि विवरीयए भवति दारं पारिच्छपरिच्छीतु यकप्पमादि दलेति जोग्गस्स परिणामादीणं तुदारुगमादिहीं पात्तेहिं पारिच्छा आदिसुत्ते पुव्वं भणियातु जाउ विदिसुत्ते सेण घणादि परिसा पूरंताइ य भासिहि परिमा । दारं । भणितं कप्पदारं ॥ कमेण तु इदाणिं किं पुण लकमकरणं महत्तव्वोत्ति नाउणं किंपुण कप्पज्झयणे वे निम्मह

भवति सुण सुतावजे अविविदिता तु अच्छा तहियंतेऊ-समाणं । पं० भा० ॥

उसप्पिणी समणाण । गाहा । जम्हा उसप्पिणी दोसेणं । परिहायंति साहूणं आउयं बलं बुध्दियएतन्नि-मित्तं उवग्गहकरा भविस्संति पुव्वगये परिहीणे किंच खे त्तस्स य कालस्सय । गाहा ॥

खेत्ते ताव उसप्पिणिं, चेव पमित्रपरिहाणी ।
गहणधारणाणं, च तहा बलविरियं ॥

बलं सारीरं वीरियं वीर्यं व्यवसायो वा तहा संघयण सध्दा मेधा उयं च खेत्तदोसणयं परिहायंति । गाहा । अणुकंपा वोच्छेए उक्तं च सिध्दसेनक्षमाश्रमणगुरुभिः ।
पालाइणणुकंपा, संखमिकरणंमि गाहवोच्छेयं ।
मि पडुचाओ मेय पीय, भतरं भीदिणंजणवयस्स कुसुमो ॥

इति तवनियमनाणरुक्खंगाहा भेरीचंदणकंयाते इच्छि त्ति पालगिलाण गाहा । तेण भगवता अणुकंपिएण भावो च्छिज्जीस्संतीति काउंदुरारोहमिवयादवं आरुह्य अप्पाणा भावितााणि कुसुमाणि अवेसिं च दत्ताणि तवोदुवा-लसविहो णियमा इंदियनो इान्दियनियमनिग्रहःनिरोध इत्यर्थः ।इंदियनियमोसो इंदियविसयपयारानिरोहो वा सो इंदियपत्तेसुवा अत्येसुरागद्दोसनिग्गहो जाव फासिंदियं नो इंदिय अकुसल मणनिरोहो । वा कुसलमणओ ईरणं वा मणसो वा एगत्तिभावकरणं । कोहस्स उदय निरोहो वा उदयपत्तस्स वा विफलीकरणं जाव लोभस्स । तपसा नियमेन ज्ञानेन च संप्रयुक्तो वृद्धः किंच सम्यगदर्श नचारित्रतपोनियमसयमस्ते समवृद्धत्वेव तत्पुरुषः समासः। ज्ञानदर्शनतपश्चारित्रात्मक एव वृद्धः । ततस्तेन भगवता भद्र-बाहुना पूर्वरत्नाकरश्रुतसमुद्रान्मयत्नेनाहृतः च्युतमित्यर्थ न तु स्वेच्छयातेनाऽसौश्रुतकर्त्ता ऋषिरित्यपदिश्येत ऋषिरित्ययं-स्यानार्जवेति ऋषिः यस्मादसौ भगवताभार्ज्जवे सम्यकदर्शन ज्ञानचारित्रात्मके निर्वाणमार्गे व्यवस्थितः ।
इर्यादिभिश्च समितिभिर्युक्त इत्युक्तो ऋषिः ।

सेपुण अप्पणो इच्छाए सुत्तं अत्थंवा करेइ तस्स सुत्ते चउलहु अत्थे चओ गुरू । आणाउ य विराहणादि हंतो वंदणभेरीय वासुदेवस्स असिवप्पसमणे सा कता कंया पच्छा अहया नप्प समेइ एव सच्छंदविगाणिए सुत्तं मोक्खस्स असावकं भवति पितिया पासत्थाउप्पत्ति वंने यया दोएह विभेरिणं कप्पव्ववहारा पुणपुरिसंपरिक्खिऊण दिज्जंति जहा आइछुए पुरिसा परिसा परियासे लयण कुमग गहा एवं सुसिस्सदिज्जंति ॥
तत्रदौद्यघनभिन्नकुढचालनीमसकमार्जारादय अनर्हा हंसमे षजलूकजाहकादयो योग्या । प. भ. ॥
भाचारप्रकल्पश्च कस्मै कदिन्यते कस्मै नेति( उद्देस ) शब्दे ॥

आयारपकप्पोत्तिवा सपरियागस्स आरेण तिदिज्जाति निवास परियागस्स वि अपरिणामगस्स अतिपारेणा मगस्स वा न दिज्जति आयारपकप्पो पुण परिणामगस्स दिज्जति नी चू० १ उ. ।

एगविहकुसुमपुञ्जो, वया रसरिसा उकेइ अहिगा ।
सस्सवति भूमिभावित, गुणसति वप्पे पकप्पंमि । ४१६॥

अणेगजातिपहिं अणेगवण्णेहिं पुप्फावयारोकओविव ती दीसत्ति एवं सुतत्थ विकप्पिया अणेगविहा अधिकारा दट्ठव्वा कहं उच्यते ए कप्पो सो केरिसो गुणस इव प्रतुल्लो बप्परूवकं इमंसस्यंयस्यां भूऔविज्जते सासस्यवती सस्ययुक्ता काचिच्छा-लि कचिदिक्षुः कचिज्जवा कचिव्रीहयः भावितो गुणेहिं ओ सो भावितगुणः गुणगत इत्यर्थः । तवगुणा सतिमादि सती णामविशिष्ट समृध्दिनिरुपहतत्वं इतिवर्जितत्वंबहुफलं च पत्ति गुणैरुपपेतोवप्रः । इदाणि उवण उवप्पो इव पकप्पो घाछि-मादीणि वा उद्देसत्याधिका सस्यवृध्दिरिय अनेकार्यैःनिरुपहत-मिघदोषविवर्जित इति वर्जितमिव पासत्थवरगादि सलेप वर्जिता बहुत्वमिति पहि कल्पत्विसंभवात् ॥ इदमौकप्रकल्पे अनेकार्थाधिकारा इत्यर्थः ॥

एवं पुण कप्पज्भयणं कस्स ण दायव्वं केरीसगुणगुतस्स वा देयव्वं अतो भणति गाहा ।

जिणरहस्सवतार, निस्साकर एव मुक्कयोगी वा ।
छव्विहगति गुविलं मी, सो संसारे भगविदीहे । ४१७॥

जिणरहस्सो णाम जो अववादपदे अखेसिं कप्पियाण सीहत्ति णिस्साकरणामं यो किंचि अववादपदं लभित मुसड पक्खि-वइ । मुक्कयोगीणाम जेण मुक्को योगो णाणदसणचारित्त तवणियमसयमादिसुं सो एस मुक्कयोगी । परिसस्स जोदेति सो ससारे चउप्पगारे वा पदप्पगारे वा छप्पगारे वा एव मादिगति गुविले गुविलोत्ति गहणो दुक्खा वयतीति घोरा परिसे ससारे भामिहिति दिहं कालं परिसे सुण दायव्वा एप्पसिं पमिवक्खा जे ते सुदायव्वा ॥
ते य इमे गाहा ॥

अरहस्स दारए पारय, य असट्ठकरणे तुल्लोवमे समिते ।
कप्पाणु पालणादीयणा, य आराहणछिण्णसंसारो ।४१८

अतीवरहस्स तजो धरेति सो अरहस्स धारगो जो त अइरहस्सं एक दो तिणि वादिणा धरेति ण तेण अहिगारो जातं रहस्सधरणं जीवियकाल पारं णेति तेण अहिकारो असढकारणो णाम सव्वत्थादान जो अप्पाणं माया पढाति असढो हेऊणं कसिण करेति तुलसमो णाम सममट्ठिता तुला जहा ण मम्मातो पुरओ वा णमाति-एव जो रागदोसविमुक्को सो तुलासमो भणति । समितो णाम पंचहिं समितिहिं समिता य गुणसंपणोते परेतो एयं गुणसंपण्णस्ते यदि विणयकप्पाणु पालणा कया भवति । अहवा पकप्पे जं जहा भणितं तस्स अणुपालना जो करेति तस्स देयो यकप्पाणुपालणा एय दीवणे कअओर्सिं दिविय दरिसिय गामियं एवं कायव्वमिति अह वा दीवणा जो अरिहाणं अणालस्से वक्खाण ण करेति तस्सेय देयति दीवणाए य मोक्खमग्गस्स आराहणा कता भवति । आराहणायेय चउगति गुविलो दीहसण-भयमो छिण्णंमिय संसारे जं तं सिवमयलयमरुयमक्खयम-व्वाबाहमपुणरावत्तयंठाण तं पावंति तं च एतो कम्मविमुक्को

सिद्धो भवति ॥ नि० चू० २० उ० ॥

भ्रष्टाचारप्रकल्पाया निर्ग्रन्थ्याः प्रवर्त्तिनीत्व गणावच्छेदिकात्वं च नोद्दिश्यते । तथा च व्यवहारसूत्रम् ॥

णिग्गंथिस्स णवडहरतरुणगस्स आयारकप्पे नामं अज्झयणे परिब्भट्ठे सिया से य पुच्छिवे केण केण कारणेणं अज्जो आयारकप्पे नाम अज्झयणे परिब्भट्ठे सिया किं आवाहेणं उदाहु पमायेणं सेवएज्जा णो आवाहेणं पमायेणं जाव जीवाए तस्स तप्पतियं, णो कप्पति आयरियत्तं वा जाव गणावछेइयत्तं वा उदिसित्तएवा धारितए वासेयवएज्जा आवाहेणं णो पमाएणं से य संठ विस्सामिति संठवेज्जा । एवं से कप्पति आयरित्तं वा जाव गणावछेइयत्तं वा उद्दिसित्तए वा धारित्तए वा तं सेयसवच्छेसा म्मिति णो संठवेज्जा एवं से णो कप्पति आयरियत्तं वा जावगणावच्छेइयत्तं वा उद्दिसित्तए वा धारित्तएवा ॥ १४ ॥ णिग्गंथिएणं णवडहरस्स तरुणियाए आयारकप्पे नाम अज्झयणे परिब्भट्ठे सिया साय पुच्छियव्वा केण कारणेणं अज्जे आयारकप्पे नाम अज्झयणे परिब्भट्ठे सिया किं आवाहेणं पमाएणं सायवएज्जा णो आवाहेणं पमाएणं जावजीवाए तीगसे तप्पतियं णोकप्पति यं पवितिणं वा गणावच्छेइणितं वा उदिसित्तए वा धारित्तएण वा सायवदोज्जा आवाहेणं णो पमाएणं सायसंठवेस्सामिति संट्ठवेज्जा । एवं से कप्पइ पवत्तिणित्तं वा उद्दिसित्तए वा धारित्तए वा स यं सट्ठं विस्सामिति णो संट्ठवेज्जा । एवं सेनो कप्पति पविचिणित्तं वा गणावछेइणियत्तं वा उद्दिसित्तए वा धारित्तए वा- ॥ १५ ॥ व्य ५ उ. ॥

( णिग्गंथिएनवडहरतरुणाए ) इत्यादिसूत्रार्थकं अस्य व्याख्या । निर्ग्रन्थ्या नवडहरतरुण्या वक्ष्यमाणस्वरूपाया आचारप्रकल्पो नामाध्ययन परिभ्रष्टं स्यात् सा च प्रष्टव्या केन कारणेन आचारप्रकल्पो नामाध्ययनं परिभ्रष्टममवत् किमाबाधेन प्रमादेन वा एव मृष्टा सती सा यदीति गम्यते वदेत् नो आबाधेन किं तु प्रमादेन तर्हि यावज्जीव तस्यास्तत्प्रत्यय प्रमादतोऽध्ययननाशनप्रत्ययं नो कल्पते प्रवर्तिनीत्व वा गणावच्छेदिकात्वं उद्देष्टु नापि तस्या' स्वयं धारयितु अथ सा वदेत् आबाधेन नष्ट न तु प्रमादेन सा च नष्टमध्ययन संस्थापयामीत्युक्त्वा संस्थापयेत् एव तर्हि (से) तस्याः कल्पते प्रवर्तिनीत्व वा गणावच्छेदिकात्वं वा उद्देष्टुमनुज्ञातुं स्वय धारयितुमथ नष्टमध्ययन सस्थापयिष्यामीत्युक्त्वाऽपि न सस्थापयेत् एवं तर्हि ( से ) तस्या न कल्पते प्रवर्तनीत्व वा गणावच्छेदिकात्वं वा उद्देष्टु वा स्वय वा धारयितुमिति एव निर्ग्रंथसूत्रमपि भावनीय ॥

( नवडहरतरुण ) व्याख्यान च प्रागुक्तमवसेय ( तेवरिसो होइ नवो ) व्रतपर्यायेणेतिवाक्यशेष । आसोलसग तु जन्मपर्यायेणेति गम्यते । डहरग चेति ( तरुणोवत्तासत्तरुणमज्झिमो थेरओ सेसो ) आचार्यत्व वा यावत्करणादुपाध्यायत्व प्रवर्तित्वं स्थविरत्व चेति परिग्रह-शेष तथैव । अत्राह शिष्य' । पुरुषोत्तमो धर्म्म इति पूर्वं निर्ग्रंथसूत्रंवक्तव्य पश्चान्निर्ग्रंथिसूत्र । पूर्वत्र वाऽध्ययनद्वये पूर्वं निर्ग्रंथसूत्राण्युक्तानि पश्चान्निर्ग्रंथीसूत्राणि अत्र विपर्ययः कृतः । सूरिराह ॥

जइवि य पुरिसादेसो, पुव्वंतहवियविव्वज्जओ जुत्तो ।
जिण समणि उपगया य, पमायबहुला य अथिरा य ॥

यद्यपि च पुरुषोत्तमो धर्म्मः पूर्वत्राध्ययनद्वये पूर्वं पुरुषादेशस्तत्राप्यत्र विपर्ययो युक्तः केन कारणेनेत्याह । येन कारणेन श्रमण्यः प्रकृत्या तया प्रायः श्रमण्यः प्रमादबहुला अस्थिराश्च न तु श्रमणा अध्ययनस्य च नाशः प्रायः प्रमादस्ततः श्रमण्यधिकारादधिकृतसूत्रार्थस्थानत्वात पूर्वं निर्ग्रंथीसूत्रमुक्तं पश्चान्निर्ग्रंथसूत्रं ।

नवडहरतरुणीनां व्याख्यानमाह ।

तेवरिसा होइ न वा, अट्ठारसिया डहरिया होइ ।
तरुणी खलु जा जुवइ, चउरो दसगा ववुत्तासा ॥

व्रतपर्यायेण यावत्त्रिवर्षा तावन्नवतिन वा जन्मपर्यायेण याव दष्टादशिका अष्टादशवर्षप्रमाणा तावद्भवति । डहरिका तरुणी खलु तावद् द्रष्टव्या यावत् युवतिः । अथवा पूर्वोक्तास्तृतीयोद्देशके नवडहरतरुणिसूत्रे ये अभिहितास्तरुणचत्वारो दशकाश्चत्वारिंशद्वर्षाणीत्यर्थं । तेऽत्रापि तरुण्या द्रष्टव्याः । १४ । १५ ॥

सा एव गुणोवेया, सुत्तत्थेहिं पकप्पमज्झयणं ।
सयहिंज्झिया इतो आ, वि आगया न वत्तु अण्णा ॥

सा नवडहरा तरुणी एतावद्गुणोपेता सूत्रार्थाभ्यां प्रकल्पनामकमध्ययनमधीता अधीतिनी । तत' सा प्रवर्तिनित्वस्य योग्या सूरिभिः संसाधिता । अथ च तस्या' सूत्रतोऽर्थतश्चाचारप्रकल्प' परिभ्रष्ट स कथ ज्ञात इत्याह । इतश्चापि आगता अन्यगच्छादन्या साध्वी उपसंपन्ना । सा विज्ञापयति ॥ कथमित्याह ॥

अत्थेण मेधाकप्पो, समाणितो न य जिनो मइं नंतो ।
अमुगा मे संघाडं, ददंतु पुत्ता उसा गुरुणा ॥

हे भदत ! भगवन् अर्थेनाऽर्यतो मम आचारप्रकल्पः समानीतो समाप्तिं नीतः । परं न च न वै मम स जिन परिचितोऽभूत् । ततोऽमुकाया' प्रवर्तिनीत्वेन सभावितां सघाटं पूज्या ददतु । एव तया विज्ञप्त गणिना आचार्येण सा उक्ता । आर्ये ! देहि ( से ) तस्या' सघाट ॥

सा दाउं आढत्ता, नवरं पणट्ठं न किंचि आगच्छे ।
एमेव मुणंति चिट्ठति, मुणिया य सा तीये ॥

सघाटं दातु प्रवृत्ता परावर्तयितु व्याख्यातु च प्रवृत्ता इत्यर्थः । न वरिष्ठ तदध्ययन न किमप्यागच्छति केवलमेव मुणमुणन्ती अव्यक्ताक्षर किमपि ब्रुवती तिष्ठति । तत सा तया मुणिता यथा न क्लिमप्येतस्या आगच्छति ॥

पुनरवि साहनी गणिणो, मा नट्ठमुया दलाहमे अन्नं ।
अव्वक्खाणंपि मिया, वाहितुं होउमा पुच्छा ॥

तत सा पुनरपि गणिन आचार्यस्य कथयाति । यथा नष्टश्रुता तस्मान्ममान्यां सहायां ददतु । एवमुक्ते आचार्यण भिन्नाग्रयिनाऽ । मन्य । किं परिभ्रष्ट तस्या अध्ययन कि वा

न को जानाति अन्याख्यानमपि काचित्केनापि कारणेन प्रद्धिष्ठ मती दद्यात्ततस्तां व्याहृत्य तस्या इयं वक्ष्यमाणा पृच्छा कर्त्तव्या ॥

तामेवाह ॥

दंमकगहनिक्खेवे, आवसियाए निसीहिया ।
गुरुणं च अप्पणामे य जणमु आरोवणा काउ ॥

दंमकस्य प्रत्युपेक्षा प्रवर्जना व्यतिरेकेण ग्रहणे निक्षेपणे च तथा आवशिक्या नैषेधिक्याश्चाकरणे बहिः प्रदेशादागच्छता वसतौ प्रवेशे नम क्षमाश्रमणेज्य इत्येवं गुरूणामप्रणामा च प्रणामाकरणे च का आरोपणा प्रायश्चित्तं जवति ॥

पुट्टा अनिव्वहंती, किहिं नट्ठं वाहतो पमाएणं ।
माहेइ पमाएणं, मोय पमादो इमो होइ ॥

सा एव पृष्टा सती यदि न निर्वहति न यथावस्थितमुत्तरं ददाति । तदा सा अनिर्वहंती जूय प्रष्टव्या । कथं केन कारणेन न नष्टमाचारप्रकल्पनामकमध्ययनं किमाबाधेन उत प्रमादेन । तत्र यदि सा कथयति प्रमादेन । स च प्रमादोऽयं वक्ष्यमाणो जवति ॥ तमेवाह ॥

धम्मकहनिमित्तादि, उपमातो तत्थ होइ नायव्वो ।
मलयवइगणसेणा, तरंगवइयाओ धम्मकहा ॥

तत्र तस्यां संयत्यां धर्मकथानिमित्तादिकः आदिशब्दात् ग्रहचरित्त्यादिपरिग्रहप्रमादो भवति ज्ञातव्यस्तत्र धर्मकथा मलयवतीमगधसेनातरंगवती । आदिशब्दात् वसुदेवहिंरूत्यादिपरिग्रह । एतां कथामधीयानाया विस्मृतिगतं प्रकल्पनामकमध्ययनं ॥

गहचारियविज्जमन्ता, चुन्नानिमित्तादिणा पमाएणं ।
नट्ठंमि संधयंती, असंधयंतीवमानलन्नो ॥

गहचरित्त ज्योतिष्कं । ससाधना विद्या । साधनरहितोमंत्रश्चूर्णो योगचूर्णः । निमित्तमतीतादिभावकथनमादिशब्दात् कुहुकशास्त्रादिपरिग्रह इत्यादिना प्रमाणेन इत्याद्यध्ययनलक्षणेन प्रमादेन नष्टे प्रकल्पे नाम्नि अध्ययने यदि भूय सा तत्संदधाति । यदि वा न संदधाति तथापि सा संदधति वा यावज्जीव गण न लभते ॥

जावज्जीवं तु गणं, इमेहि नाएहि लोगसिद्धेहिं ॥
अतिवालवेज्ज जोहे, धणुगाऽजगफलगोण ॥ १ ॥

यावज्जीव गणं न लभते । पञ्चिरजापालकवैद्ययोधैर्लोकासिद्धैर्ज्ञातैस्तत्र योधे प्रमादाचरितं सम्यग्विदित धनुरादिभिर्धनुर्लग विभग्न दृष्ट जीवाच्छिन्नविच्छिन्नाकांक्षान्यसाञ्जितानि । न केवलमेतैर्ज्ञातैः । किन्तु भग्नफलकेन सटिनपतितमलयनवज्ञानेन ॥

तत्र प्रथममजापालकदृष्टान्तमाह ॥

निव्वेंतण उ अइया, पणामिया जेण सो पुणो न लज्जे ॥
मृगादिरूपा नट्ठा, विलहाति एमेव उत्तरिए ॥ २ ॥
कोइ अग्गलोत्तएण आयातो रक्खइ तेण ॥
नगता वइगादि, खिल्लणादिहि पमाएहि ॥ २ ॥
नासियानातो अमा, नो दवावितो जणइ पुणो ॥
मत्ताणि न पव्विमंकलापि सो एवं जणंतो वि ॥ ३ ॥

जावज्जीवं अन्नत्थ, विनहति अहमुलं सेजाट्टियं जरोवा ॥
अतिआ जरो आगतो, ततोनठा ततोहो सो पुणा विल्लन्नते रक्खिउं ॥ ४ ॥

अक्षरगमनिका । येन खेलनावृत्तादिना क्रीमता अजिकाः प्रणाशिताः स पुनर्न लजते यावज्जीवमन्यत्राऽप्यजा रक्षितु मय शूलादिरुजा अत्रादिशब्दादत्यातुरज्वरादिपरिग्रहस्ता अजा नष्टास्ततः पुनरपि लभते ॥

अधुना वैद्यज्ञानं भावयति ॥

जति से सत्थं नट्ठं, पेच्छह पेसच्छ कोसगं गंतु ॥
हीरति कल्लंकिएसुं, जोगो जूयादिदप्पेणं ॥

कोइ वेज्जोरस्से कयं वित्तीतोतेणं जूयपमादेण विसयपमादेण विज्जसत्थं नासियं सत्यकोसगाणि पच्छणगादीणि किट्टकलंकियाणि न निसीयइ । अएणया रएणं कज्जं जायं सहावितोविज्जोसो किञ्चवदेसं न किञ्चि सक्केइ वोतुं ततो रएणा जाणियं किमियं ततो सो जणइ मेपोत्यगा चोरेहि हिया पाग्पिपुच्छगं पि नत्थितो मम नट्ठं वेज्जसत्थं नत्थि पुण मम अह्मोपमातो जेण वेज्जसत्थं नासियं ताहे रप्पा एरिसा पेसिया ॥

यदि(से) तस्य शास्त्रं नष्टं तर्हि(से)तस्य यूयं गत्वा शास्त्रकौतुकं प्रेक्षध्वं ह्रियते राज्ञः समर्प्यते । दृष्टानि राज्ञा समस्तानि प्रतकण्टकप्रभृतीनि शास्त्राणि किट्टकलंकितानि ततस्तेषु कलंकितेषु दृष्टेषु ज्ञातं यथा द्यूतादिदर्प्पेण द्यूतादिना प्रमादेन विनाशितं वैद्यशास्त्रं ततो भोगच्छिन्नः पश्चादन्यत्र गत्वा वैद्यशास्त्रं पुनरप्युज्ज्वाल्य समागतो भूयोऽपि राज्ञः समीपे भोगान् याचते स च याचमानोऽपि न लभते एवं लोकोत्तरेऽप्युपनयभावना प्राग्वत्कर्तव्या ।

योधदृष्टांतभावनार्थमाह ॥

वुक्को जइ सरवेही, लहा विपलोएह से सरे गंतुं ॥
अकलंककलंकं वा, जग्गमजग्गाणि य धणूणि ॥ १ ॥
कोइ जोहो धणुव्वेयं, अहिज्जितो गुरुवएसेण ॥
अब्भासेण य सो, अघासंतो विसहेणं ॥ २ ॥
विधंति रन्ना कयप जूय, वितिन्नो कतो अन्नया तेण ॥
विसयपमाएण तं, धणुव्वेय सत्थं तं च ॥ ३ ॥
अब्भासकरणं नासियं, अन्नया युध्दकज्जेसमावमिए ॥
एन किञ्चि सक्केइ, विंधिउं पराजिणिउं ॥ ४ ॥
वारस्सा पुच्छितो, किमेयंति सो जणइ ॥
नत्थि मे पमादो नाहे रएणाजाणियं ॥

यदिनाम प्रमादाकारणतः एकस्वरवेधी वुक्कोच्छलस्तथापि (से)तस्य शरान् गत्वा प्रलोकयत् किंतत् शरजालमलक वा धनूंष्यपि जग्नान्यजग्नानि वा दृष्टं शरजालक कलंकित धनूंषि च भग्नानि ततो ज्ञात प्रमादतः सर्वं नष्ट कृतो वृत्तिव्यवच्छेदः सोऽन्यत्र गत्वा धनुर्वेदशास्त्रमुज्ज्वाल्य कृताभ्यासः पुनरागतो वृत्तिं याचमानोऽपि यावज्जीवं न लभते एव लोकोत्तरेऽप्युपनय प्राग्वत्कर्तव्य । फलकज्ञानमाह ॥

फलहियमवि एवं, जऽफलनो जग्ग लुग्गातो ॥

भोगोहारति सव्वेसिं पि य नभोगहारो भवेकज्जे ॥१॥
कोई अणेगवनप्पाति, पत्तसागादिकलिए ॥
फलए केणवि, निउत्तो सोवि सयपमाएणं ॥ २ ॥
जयपमाएण वा, न रक्खइ न य पाणिएणं ॥
पालेति सोय फलहो, लोगे णाणरूवे हि य ॥ ३ ॥
लल्लूरितो मुक्को, य न किंचि ततो वणफलादि ॥
आगच्छइ, फलह सामिणा भणियं ॥ ४ ॥
किमेयं सो भणइ, किं करेमि रक्खेमि तानअहं ।
नत्थि मे पमादो, ततो फलहसामिणा फलहो
गवेसावितो ॥ ५ ॥

तथाचाह ( फलकिकस्य ) फलकस्वामिन एवं पूर्वदृष्टान्तेपु राज्ञ इव फलगवेषणा चिन्ता जाता । यदि फलको भग्नलुग्नो भविष्यति ततोऽस्य भोगो न्हियेत गाथायां "वर्तमानसामीप्ये व र्तमानवद्वे"तिवचनतो भविष्यति वर्तमानता कस्मात् हरिष्यते इत्याह कार्ये प्रयोजने समापतिते सर्वेषामपि कुटुवजनानां भोगहारो न स्यादिति हेतो. सूत्रगवेषणे कृते फलको भग्नलुग्नो दृष्टःभग्नो गोरूपादिर्भिर्विध्वसनात् लुग्नो जलसेवनाकरणतस्त तस्तस्य वृतिश्छिन्ना ततो नाह भूय एव करिष्यामीति याचमा नोऽपि यावज्जीव न लभते वृत्तिमेव लोकोत्तरेऽप्युपनय. कर्त व्यस्तमेवाह ॥

एवं दप्पपणासिते, ण विदिंति गणं पकप्पमज्झयणे ॥
आवाहेणं नासिए, गेलण्णादिण दलयंति ॥ १ ॥

एवं पूर्वोक्तदृष्टान्तप्रकारेण दर्पतो धर्मकथाध्ययनतो व्याकरणाध्ययनतो निमित्तशास्त्राद्यध्ययनतो वा इत्यर्थ ।प्रणाशिते प्रकल्पनाम्न्यध्ययने यावज्जीवमाचार्यास्तस्या गणनदद तिआवाधितग्लानत्वादिना पुनर्नाशितो भूय. प्रज्वालिते ददयंति प्रयच्छति ।एतदेव सप्रपञ्च भावयति ॥

गेलण्णे असिवे वाओ, मोयरिया य रायदुट्ठे वा ॥
एएहिं नासियं मी, सन्धे माणिए दिंति गणं ॥ १ ॥

ग्लानत्वे वा जाते ग्लानप्रतिजागरणे वा कृते अशिवे वा समुपस्थिते अवमौदर्ये वा दुर्भिक्षे जाते भिक्षापरिभ्रमणतो राजद्विष्टे वा पलायनतो बा यदि नष्ट प्रकल्पनामकमध्ययन तत एतै. कारणैर्नाशितेऽपि पुन. सम्बन्धत्या गण ददति प्रयच्छति ।

तदेव निर्ग्रथीसूत्र भावितमधुना निर्ग्रन्थसूत्र विभाव- यिषुराह ॥

एवमेव य साहूणं, वागरणनिमित्तछन्दकहमादी ।
वीइयं गिलाणतो मे, अद्वाणो चेव थूभेय ॥

एवमेव अनेन प्रकारेण साधूनामपि सूत्र भावनीय नवर तत्र प्रमादो व्याकरणनिमित्तछन्द' कथाद्यधीयानस्य प्रतिपत्तव्य' ॥द्वितीयमाबाधलक्षण कारण सूतै ग्लाने ग्लानप्रतिजागरणे वा अवमौदर्ये अशिवादिकारणतोऽध्वनि वा गमने स्तूपे वाशब्दान्यमियमत्र भावना । यदि व्याकरणाध्ययनतो निमित्त शास्त्राध्ययनतश्छन्द. शास्त्राध्ययनतो धर्मकथाध्ययनत आदिशब्दाद्विद्यामन्त्रादिव्याक्षेपतो यदि प्रकल्पाध्ययन नाशितं तदा पश्चादुज्ज्वालितेऽपि यावज्जीव तस्मै गण सूरयो न प्रयच्छति अथ ग्लानत्वाद्याबाधतो नाशित तदा तस्मिन्पुनरुज्ज्वालिते प्रयच्छति प्रमाददोषाभावात् तत्र ग्लानत्वाविषय आबाध. प्रतीत ॥

सम्प्रति स्तूपविषयमाह ॥

महुरा खमगाया, वणदेवयआउदृआणवेउत्ति । किं मम असजतीए,अप्पत्तिय होहिती कज्ज। थूभत्ति तच्च भणिउवि वा य च्छम्मास भवो को ॥ सत्तोलमगसमग्गा, कपणखिसणमुक्का कयपरूगा ॥

मथुरायां नगर्यां कोऽपि क्षपणक आतापयति यस्यातापना दृष्ट्वा देवता आवृता तमागतमागत्य वन्दित्वा ब्रूते यन्मयाकर्तव्यतन्माज्ञापयेद्भवानिति । एवमुक्ते स क्षपकेण भण्यते । किं मम कार्यमसयत्या भविष्यति । ततस्तस्या देवताया अप्रीतिकमभूत्। अप्रीतिवत्यचेतनयोक्तमवश्य तव मया कार्य भविष्याति। ततो देवतया सर्वरत्नमय. स्तूपो निर्मितस्तत्र भिक्षवो रक्तपटा उपस्थिता. अयमस्मदीय' स्तूपस्तै. समं सघस्य षण्मासान् विवादो जातस्ततः सघो ब्रूते । को नामात्राऽर्थे शक्त केनापि कथित यथा अमुक क्षपकस्तेन' सघेन स भण्यते क्षपक! कायोत्सर्गेण देवतामाकम्पय । तत क्षपकस्य कायोत्सर्गकरण देवताया आकम्पनम् । सा आगता ब्रूते । सदिशत किंकरोमि क्षपकेण भणिता तया कुरुत यथा सघस्य जयो भवति ततो देवतया क्षपकस्य खिसना कृता । यथा एतन्मया असयत्या अपि कार्य जात एव खिंसित्वा सा ब्रूते । यूय राज्ञ समीप गत्वा ब्रूत । यदि रक्तपटानां स्तूप । ततः कल्ये रक्ता पताका दृश्यतां अथाऽस्माक तर्हि शुक्ला पताका । राज्ञा प्रतिपन्नमेवं भवतु ततो राज्ञा प्रत्ययिकपुरुषैः स्तूपो रक्षापितो रात्रौ देव तया शुक्लपताका कृता । प्रभाते दृष्टा स्तूपे शुक्ला पताका जितं सघेन व्य० सू० ५ उ ॥

थेराणं थेरभूमिपत्ताणं आयारपकप्पे णाम अज्झयणे परिब्भट्ठे सिया कप्पति तेसिं ठवेत्ताणं वा आयरियत्ते वा जावगणावच्छेइयत्तं वा उद्दिसित्तए वा धारित्त एवा ॥ व्य ५ उ. ॥

व्या०स्थविराणांऽस्थविरभूमि प्राप्तानामाचार्यपद प्राप्तानामाचारप्रकल्पो नामाध्ययन परिभ्रष्टं स्यात्कल्पते । तेषां सूत्र स स्थापयतामसस्थापयतां वाचार्यत्व वा यावत्करणादुपाध्यायत्व वा इति परिग्रह । गणावच्छेदकत्वमुद्देष्टुमनुज्ञातुं- जीर्णमहत्वकरणत. सूत्रधरणशकनात् । एष सूत्रसंक्षेपार्थ. ॥

सम्प्रति भाष्यविस्तर ।

सुत्ते अणिते लहुगा, अत्थे अणिते धरेंति चउगुरुगा ।
सुत्तेण वायणा, अत्थे सोही तो दोह्न गुणाया ॥

इदं सूत्रमापवादिकमुत्सर्गत पुन' सूत्रे 'अनागच्छति यदि गण धारयति तदा तस्य प्रायश्चित्त चत्वारो लघुका । अर्थेऽनागच्छति यदि गण धारयति चत्वारो गुरुका । आज्ञादयश्च दोषास्तस्मादुभयधारणगणोधारयितव्य । किंकारणमत आह सूत्रेणगच्छता वाचनां ददाति । अर्थेनागच्छता प्रायश्चित्तस्थानमापन्नानां शोधिं करोति । तस्मात् द्वाभ्यामपि सपन्नो गणधारणेऽनुज्ञात ॥

अवियविणासुत्तेणं, ववहारे उअपञ्चतो होइ ॥
तेण उभयधरो ऊ, गणधारि मो अणुन्नातो ॥ १ ॥

अपि च विना सूत्रेण व्यवहारे क्रियमाणे अप्रत्ययो भवति ।

तस्माद् व्यवहारे अर्थनिर्देशं कुर्वता सूत्रमवश्यमुच्चारणीयं। यथा इदं सूत्र तस्मादयमेवात्र व्यवहारस्ततः प्रत्ययो भवति तेन स गणधारी उभयपरोऽनुज्ञातः॥

असती कडजोगी पुण, अत्थेयं तं किमप्पतिधारेउं ॥
जुन्नमहल्लो सुत्तं, न तरति पच्चुक्कयारेउं ॥ १ ॥

उभयधरस्य असत्यभावे यः कृतयोगी नाम यः पूर्वम् उभयधर आसीत्। तदानीं सोऽर्थे समागच्छति गणं धारयितुं कल्पते। अथ केन कारणेन तस्य सूत्रमानशत् अत आह॥ ( जुन्न महल्लो ) इत्यादि जीर्णो नामैको नो महान् यस्तरुणक एव सन् जरसा परिणतो जात नो जीर्णो महानिति द्वितीयः। यो वृद्धोऽपि सन् दृढशरीर जीर्णोऽपिच तृतीयः। नो जीर्णो नो महानिति चतुर्थ। एष शून्यशेषाणां तु त्रयाणामेकतरो न शक्नोति प्रत्युज्ज्वालयितुमतः सूत्रं तस्य नश्यति॥

उभयधरंमि उ सीसे, विज्जंते धारणा उ इच्छाए ॥
मा परिजिवनयाणं वा, गच्छेवअणिच्छमाणंमि ॥ १ ॥

उभयधरे सूत्रार्थधरे शिष्ये विद्यमाने स्वयं गणस्य धारणा इच्छया स्वय वा गण धारयति तस्य वा शिष्यस्योभयधरस्य ददाति सह गणस्य शिष्यस्य वा भावं जानाति। यदि शिष्य स्य गणं दास्यामि तत एते मम परिजिवं करिष्यंति। अथवा मां त्यक्त्वा गच्छमादाय गमिष्यन्ति। यदि वा तमुभयधरं गणधरे स्थाप्यमानं गणो नेच्छति। ततो मा परिजिवमेतेऽकार्षुर्नयनं वा मां त्यक्त्वाऽन्यत्र गच्छस्याकार्षुरिति हेतोरनिच्छति वा गणे तस्य गणं न ददाति। किन्तु स्वयं धारयति तत्र सूत्रं तेनोभयधरेण शिष्येण वाचयत्यर्थमात्मना ददाति। प्रागुक्तदोषाभावे तस्य गणं समर्पयति॥

थेराणं थेरभूमिपत्ताणं आचारपकप्पे णाम अज्झयणे परिजिवे मिया कप्पत्ति तेसिं सण्णिसणाण का यासे क्षियाण वा उत्ताणेए वा तुयट्ठाए वा आयारपकप्पे णाम अज्झयणे दोच्चंपि तच्चंपि पमिच्छित्तए वा परिसारेत्तए वा ॥ १८ ॥व्य सू. ५ उ.॥

( थेराणं थेरभूमिपत्ताण ) मित्यादि स्थविराणां स्थविरभूमि प्राप्तानामाचारप्रकल्पो नामाध्ययनं परिभ्रष्टं स्यात् कल्पते तेषां सन्निषण्णानां वा निपद्यागनानां ( संतुयट्टणे वेति ) सम्यक्त्ववर्तनेन स्थितानां उत्तानानां वा ( पासिल्लयाणवत्ति ) पार्श्वतः तिष्ठतां वा आचारप्रकल्पनामकमध्ययनं द्वितीयमपि तृतीयमपि अपिशब्दात् चतुर्थमपि वारं प्रत्येष्टुं वा प्रतिसारयितुं वा अवमरत्नाधिकं प्रतिसारयति स्थविरा. प्रतीच्छंति एष सूत्रसंक्षेपार्थः॥

अधुना भाष्यविस्तर।

एमेव विइयमुत्तं, कारणियं सति वलेन हावेत्ति।
जं जत्यउ किंतिकम्म, निहाणममओ मराइणिए॥

यथा प्राक्तन सूत्रं कारणिकमेवमेवेदमपि सूत्रं कारणिक सूत्र प्रत्युज्ज्वालयन् सति बले विनयं न हापयति। अथ कोऽसौ विनयो यस्तेन सूत्रं प्रत्युज्ज्वालयता सति बलेन हातव्य इत्यत आह ( जजत्थ ) इत्यादि यत्कृतिकर्म वन्दनकं यत्र सूत्रे अर्थे वाऽभिहितं तत्रावमरत्नाधिके निधानसमे सूत्रमर्थं च प्रत्युज्ज्वालयता तत् न हापयितव्यं। निधानसमे इति यदुक्तं तत्र दृष्टान्तः सूचितः। स चैवं। यथा महति कुड्ये वा निधाने उत्खनितव्ये तस्य तदनुरूपमुपचारमुत्खानको यदि करोति ततस्तमुत्खनितुं शक्नोति अथ न करोति तदनुरूपमुपचार तर्हि वृश्चिकाद्युपद्रवतो न शक्नोति एव यदि स रत्नाधिकेऽवमरत्नाधिके वा सूत्रमर्थं वा प्रत्युज्ज्वालयन् अपूर्वं वा पठन् तदनुरूपं विनयं न करोति तदा निर्जरालाभस्तस्य नोपजायते। नच शास्त्रं स्थिरपरिचितं भवति विभंगं वा तस्य ज्ञानं विप्रेक्षितया प्रान्तदेवता कुर्यात्कलहं।

एतदेवाभिधित्सु प्रथमतः प्रायश्चित्तमाह॥

सुत्तंमिय चउलहुगा, अत्थंमि यचउगुरुं च गच्छेण।
किंतिकम्ममकुव्वंतो, पावति थेरोस विवक्खंमि॥

स्थविरः प्रत्युज्ज्वालयन्नपूर्वं पठन् वा सति बले यदि गर्वेण कृतिकर्म न करोति तर्हि तदकुर्वन् सूत्रे सूत्रविषये चतुरो लघुकान्प्राप्नोति अर्थे चतुर्गुरुकं॥

उवयारहीणमफलं, होइ निहाणं करेइ वाणत्थं।
इयनिज्जरा य लाभो, न होइ विभंगकलहो वा॥

यथा उपचारहीनं निधानमफलं भवति नोत्खनितुं शक्यते इति भावः। अनर्थं वा करोति वृश्चिकाद्युपद्रवकारणात् इति एवमनेनैव दृष्टान्तप्रकारेण कृतिकर्माकरणे निर्जरया लाभो न भवति प्रान्तदेवताकोपवशाद्विभागो वा तस्योपजायेत कलहो वा॥

दूरत्थो वा पुच्छइ, अहवनिसज्जाय सन्निसन्नो उ।
अच्चासन्ननिविट्ठो, ट्ठिए य चउभंगो वोधत्थो॥
अंजलिपणाम अकरणं, विप्पक्खंते दिसाहो उड्ढमुहे।
नासंतणुवउत्ते, वहसंते पुच्छमाणो उ॥
एएसु सत्तेसु वि, सुत्ते लहुतो उ अत्थे गुरुमासो।
नाभीतोवरिलहुगा, गुरुगमहो कोय कन्दुयाण॥

दूरस्थितो वा पृच्छति अथवा निषद्यायां सन्निषण्णः पृच्छति शृणोतीति भावार्थः। यदि वा अत्यासन्न ऊरुणा ऊरुं संघृष्य शृणोति निविष्टेस्थिते चतुर्भंगी बोद्धव्या। सा चैव निविष्टोवा निविष्टं पृच्छति १ निविष्ट उत्थितं पृच्छति २ उत्थितो निविष्टं पृच्छति ३ उत्थित उत्थितं पृच्छति ४ यथा अंजलेरकरणमर्थपरिसमाप्तौ प्रणामस्याऽकरण तथा दिशो विप्रेक्षमाण पृच्छति १ यदिवाऽधोमुख ऊर्ध्वमुखो वा शृणोति न गुर्वभिमुखः २ अथवा येन तेन वा सह भाषमाणः शृणोति अनुपयुक्तो ३ वा शृणोति हसन्वा पृच्छति ४ एतेषु सर्वेष्वपि स्थानेषु सूत्रे श्रूयमाणे प्रायश्चित्त लघुको मासः अर्थे गुरुमासः तथानाभित उपरि सूत्र शृण्वतः कायकण्डूयने चत्वारो लघुकाः। अर्थं शृण्वतश्चत्वारो गुरुकाः। नाभितोऽधस्तात् सूत्रश्रवणे कायकण्डूयने चत्वारोगुरुका। नवरं तपःकालयोरन्यतरेण गुरुकाः।

तह्मा वज्जं तेणं, ठाणाणे याणि पंजलुक्कुडुणा।
सोप्पव्वए यत्तेणं किंतिकम्मं वावि कायव्वं॥

यस्मादेवमविनयकरणे प्रायश्चित्तविधिस्तस्मादेतानिप्रागनन्तरमुपदर्शितानि वर्जयित्वा प्रांजलिना प्रकृतांजलिनाऽकुडुकेन प्रयत्नेनादरपरतया श्रोतव्यं। कृतिकर्म वापि वंदनकं कर्तव्यं। यद्यपि वंदनकेनोपास्थित वाचनाचार्योऽनुजानाति तथापि क्षमाश्रमण दत्त्वा कृतप्रांजलिना श्रोतव्यं।

तेणविधारेयव्वं, पच्छाविय उट्ठिएण मंमलितो।
वेदुट्ट निवरुस्सव, सारेयव्वं हवति जम्रो ॥
तेनापि श्रोत्रवत् व्याख्यानमरुल्या या श्रुत तत् मंमलीत उत्थितेन पश्चादपि धारयितव्यम्। तस्य च धारयत उपविष्टस्य ऊर्ध्व स्थितस्य निष्पन्नस्य वा क्वचित् स्खलने तेनापि वाचनाचार्येण भूयो भवति स्मारयितव्य गमयितव्यम्
अह से रागो न होज्ज, ताहे भासंत एगपासंमि।
सन्निसन्नो तु पट्टो वा, अत्थइ अणुग्ग हपवत्तो।
अथ( से ) तस्य स्थविरस्य रागो न भवेत्तर्हि व्याख्यानमंरुल्या उत्थितो भाषमाणस्य अनुभाषमाणस्य चिन्तापयत इत्यर्थः। एकपार्श्वे तत्सेवाबुद्ध्या सन्निषण्णः सम्यग्निषद्यागतस्त्वग्वर्तितो वा भाषमाणस्याऽनुग्रहप्रवृत्तस्तिष्ठति । पर आह।
थेरस्स किंतुपदं, हेयं किलेसकरणेण।
भण्णइ एगनुवयोग, सच्छजणं णा च तरुणाणं।
अथ तस्य स्थविरस्य जीर्णमहत' किमेतावन्मात्रेण क्लेशकरणेन। सूरिराह। भण्यते अत्रोत्तर दीयते। एवमाचरतस्तस्य सूत्रार्थाभ्यां सह एकत्वोपयोगोपयुक्तस्य तु सूत्रार्थ' सम्यग्लगति। तथा तरुणानां च श्रद्धाजनन कृत भवति। तथाहि। व्याख्यानमंरुल्या उत्थितमपि निजमाचार्य जीर्णं महान्तमेव विनय कुर्वन्त दृष्ट्वा चिन्तयति । यद्युष्माकमाचार्यो जीर्णो महानप्येव श्रुतस्य विनय करोति ततोऽस्माभिस्तरुणैः सुतरां कर्तव्य. आह शिष्यः। यथा जीर्णमहत आचार्यस्याऽनुग्रह' क्रियते। यथाऽनुभाषमाणस्य एकपार्श्वे सन्निपण्णस्त्वग्वर्तितो वा तिष्ठतु एवमन्यस्यापि क्रियते इति ब्रूमस्तथा चाह ।
सो उ गणी अगणी वा, अणुभासं तस्स सुणति पासंमि।
न वइ जुण्णदेहो, होरं बन्धासणो सुचिरम् ॥
सजीर्णो महान् गणी आचार्य उपाध्यायो गणावच्छेदको वा अगणी वा अन्यो य स्थाननियुक्त. सोऽनुभाषमाणस्य चिन्तापयतु एकस्मिन्पार्श्वे सन्निसण्णस्त्वग्वर्तितो वा शृणोति यतो न शक्नोति जीर्णदेहो बद्धासनो भवितु सुचिर काल मिति॥ व्य उ ५ ॥

**आयारपकप्पधर** आचारप्रकल्पधर पु० निशीथाध्ययनधारिणि,।ग १ अधि। निशीथाध्ययनसूत्रार्थधरे, च व्य उ ३। पं चू ॥
तिविहाय पकप्पधरा सुत्ते अत्थे य तदुभये चेव।
आयारपकप्पधरो, कप्पववहारधरओ अज्जो॥ व्य०।
णयसुत्तवज्जिओविहु,गयणं परियट्टि अणुराहातो। पं चू।
आयारपकप्पधरो गाहा । आचरणमाचारः क्रिया इत्यर्थः सचाष्टप्रकार. पंचसमितयो गुप्तित्रयं एष चारित्राचार आचारप्रकल्पधरो नाम निशीथेपु सूत्रार्थधर इत्यर्थ । किञ्च कल्पव्यवहारधरश्च ( अज्जोत्ति ) आमन्त्रणे निर्देशे वा ( नयवज्जिउत्ति )नयन्तीति नयाः हुपादपूरणे
दुक्खक्खयकार ओ जम्हा एएण गणपरियाट्टे अणुएहाओ आह कहमनुज्ञातः।
पच्छित्तकरण अणुपालणा, य भणिता ओ कप्पववहारे।
एतेण अत्थधारी, गणधारी जो चरणधारी।
अज्जोतिआमंतणणिद्देसे, वा एयस्स सुत्ताइं।
जार्ति तु दिट्टिवाते, पच्छित्तं दिज्जते तह तु।
तेहिं विणा विजाणाति, आयारपकप्पधारओ जम्हा।
तम्हा तु अणुएहातो, गणपरियट्टि तु सो णियमा।
पायच्छित्तं जम्हा, पायच्छित्तकरणं अणुपालयंति तहा गणे अणुपालिज्जइ तं पकप्प पकप्पववारेसु भणियं एएण सत्थधारी जो सो गणपरियट्टी अणुएहाओ चरणजुत्तो जइ भवइ गाहा पं० भा चू. ॥
करणाणुपालयाणं तु, पज्जवकसिणं समासतो णाणं करणाणुपालणदुत्तं, पज्जवकसिणं भवे तिविहं।
दुत्तिपण च्छक्ककएयं, तेरसु सोलस हवंति ठाणाइं।
करणट्ठाणपसत्था,करणट्ठाणाओअपसत्था॥
एयाइं ठाणाइं, दोहि विगाहाहि जाइं भणित्ताइं।
तेसिं परूवणमिणमो, समासतो होति बोधव्वा।
करणं तु किया होति, पडिलेहण मादिसामायारी तु॥
तं पालेज्जतु णाणे, ण तं च दुविहं मुणेयव्वं। दारं।
पज्जवकसिणसमासो, पज्जवकसणं तु चोद्दसपुव्वा।
सामाइयं पकप्पो, होति समासो मुणेयव्वो॥
पज्जवकसिणंतिविहं, सुत्ते अत्थेय तदुभये चेव।पं भा.॥
करणाणुपालयाण त दुविह पज्जवकसिण समासतश्च पज्जवकसिण नाम चोद्दसपुव्वाणि समासश्रो आयारपकप्पोसमास' संक्षेप इत्यर्थः। यथा समुद्भूतस्तराग' चन्द्रमुखीदेवता सिंहो माणवकः एकदेशेनाप्यौपम्य क्रियते। चतुर्दशपूर्वधर सर्वपर्यायेषु सूत्रार्थेषु चरणकरणादय' पदार्थो सर्व पर्यायेषु सूत्रार्थेषु चरणकरणादय' पदार्थाः प्रज्ञापयितुं समर्था.। आचारकल्पधरस्त्वेकदेशत.। ( दोण्हविचरणकरण अणुपाले उ समत्था ) तेनैकदेशाभिज्ञत्व प्रतीत्य यथा समासतोऽप्यर्थधरः कल्पव्यवहारादयो गणपरिपालण समर्था भवंतिपज्ज वकसिण तिविह सुत्ते अत्थे तदुभएय ॥ प० चू० ॥

**आयारपकप्पिय**–आचारप्रकल्पिक पु० आचारप्रकल्पाऽभिधानाध्ययनधारिणि, ( आयारपकप्पितो जोग्गो ) व्य. उ ५।

**आयारपढमसुत्त**–आचारप्रथमसूत्र न० "सुयमि आउस तेणं भगवया एवमक्खाय" मित्येवं रूपे आचाराभिधानप्रथमांगादिवाक्ये, पचा वृ ११।
एसा य परा आणा, पयमा जं गुरुकुलं ण मोत्तव्वं।
आयारपढमसुत्ते, एतोचिय दंसियं पयं॥ १॥

**आयारपणत्तिधर**–आचारप्रज्ञप्तिधर पु० आचारधरे, प्रज्ञप्तिधरे, च।
आयारपणत्तिधरं, दिट्ठीवाय महिज्जगं।
वइविक्खलियं नच्चा, न तं उवहसे मुणी॥५०॥ सूत्रं व्या०। आचारप्रज्ञप्तिधरस्तान्येव सविशेषाणीत्येव कृतमिति दश० अ ८।

**आयारपणिहि**–आचारप्रणिधि पु० आचारप्रणिधाने तत्प्रतिपादके दशवैकालिकस्य स्वनामख्यातेऽष्टमेऽध्ययने, च।

तया च दशवैकालिके ॥

व्याख्यात वाक्यशुद्ध्यध्ययनमिदानीमाचारप्रणिधानाख्य मारभते । अस्य चाऽयमभिसम्बन्ध । इहानन्तराध्ययने साधुना वचनदोषगुणाभिज्ञेन निरवद्यवचसा वक्तव्यमित्ये तदुक्तं इह तु त निरवद्य वच आचारे प्रणिहितस्य भवतीति। तत्र यत्नवता भवितव्यमित्येतदुच्यते । उक्तंच ॥

पणिहाणरहिअस्सेह, निरवज्जं पि भासियं ।
सावज्जतुल्लं विन्नेयं, अज्झत्थेणेहसम्वुडं ॥

इत्यनेनाभिसम्बन्धेनायातमिदमध्ययन अस्य चाऽनुयोग द्वारोपन्यासः पूर्ववत्तावद्यावन्नाम निष्पन्नो निक्षेपस्तत्र चा चारप्रणिधिरिति द्विपद नाम ॥

साम्प्रतं सूत्रालापकनिष्पन्नस्याऽवसर इत्यादि वचः पूर्वव त्तावद्यावत्सूत्राऽनुगमेऽस्खलितादिगुणोपेतं सूत्रमुच्चारणीय तच्चेद ।

आयारपणिहिं लद्धुं, जहा कायव्व भिक्खुणा ।
तम्भे उदाहरिस्सामि, आणुपुव्विं सुणेह मे ॥ १ ॥

अस्य व्याख्या । आचारप्रणिधिमुक्तलक्षणं लब्ध्वा प्राप्य येन प्रकारेण कर्तव्यं विहिताऽनुष्ठानं भिक्षुणा साधुना तं प्रकार तेन भवद्भ्य उदाहरिष्यामि कथयिष्यामि । आनुपूर्व्या परिपाट्या शृणुत ममेति गौतमादयः स्वशिष्यानाहुरिति सूत्रार्थः ॥

तं प्रकारमाह ॥

पुढविदगअगणिमारुय, तणरुक्खस्स वीयगा ।
तसा य पाणा जीवंति, इइ वुत्तं महेसिणा ॥ २ ॥

व्याख्या । पृथिव्युदकाग्निवायवस्तृणवृक्षसवीजा एते पञ्च केन्द्रियकायाः पूर्ववत् त्रसाश्च प्राणिनो द्वीन्द्रियादयो जीवा इत्युक्त महर्षिणा वर्द्धमानेन गौतमेन वेति सूत्रार्थः ॥

तेसिं अत्थणजोएण, निच्चं हो अव्वयं सिया ।
मणसा कायवक्केणं, एवं हवइ संजए ॥ ३ ॥

यतश्चैवमतस्तेषां पृथिव्यादीनामक्षणयोगेनाहिंसाव्यापारेण नित्य भवितव्यं वर्तितव्यं स्याद्भिक्षुणा मनसा कायेन वाक्ये न त्रिभिः कारणैरित्यर्थः । एव वर्तमानोऽहिंसकः सन् भवति सयतो नान्यथेति सूत्रार्थः ॥

एव सामान्येन षड्जीवनिकायहिंसया सयतत्वमभिधाया धुना तद्गतविधिविधानतो विशेषेणाऽऽह ॥

पुढविं भित्तिं सिलं लेलुं, नेवभिंदे न संलिहे ॥
तिविहेण करणजोएण, संजए सुसमाहिए ॥ ४ ॥

व्या० ॥ पृथिवीं शुद्धां भित्तिं तटीं शिलां पाषाणात्मिकां लेष्टुं मिट्टालकम् नैव भिंद्यात न संलिखेत् । तत्र भेदन द्वैधीभावो त्पादन सलेखनमीषल्लेखन त्रिविधेन त्रिकरणयोगेन न करोति मनसेत्यादिना सयतस्साधुस्सुसमाहित शुद्धभाव इति गाथार्थ ॥

सुद्धपुढविं न निसीए, ससरक्खंमिअ आसणे ॥
पमज्जित्तु निसीइज्जा, जाइत्ता जस्स उग्गहं ॥ ५ ॥

शुद्धपृथिव्यामशस्त्रोपहतायामनन्तरितायां न निषीदेत् । तथा रजस्के वा पृथिवीरजोवगुण्ठिते वा आसने पीठिकादौ न निषी देत । निषीदनग्रहणात्स्थानत्वग्वर्तनपरिग्रह । अचेतनायां तु प्रमृज्य तां रजोहरणे न निषीदेत् ज्ञात्वेत्यचेतनां ज्ञात्वा याच यित्वाऽवग्रहमिति यस्य सवन्धिनी पृथिवी तमनुग्रहमनुज्ञा प्येति सूत्रार्थः ॥

उक्तः पृथिवीकायविधिरप्कायविधिमाह ।

सीओदगं न सेविज्जा, सिलावुट्ठं हिमाणि अ ॥
उसिणोदगं तत्तफासुअं, पडिगाहिज्ज संजए ॥ ६ ॥

शीतोदक पृथिव्युद्भवसचित्तोदकं न सेवेत । तथा शिला वृष्टं हिमानि च न सेवेत। तत्र शिलाग्रहणेन करकाः परिगृह्य न्ते । वृष्टं वर्षण । हिम प्रतीतं प्राय उत्तरापथे भवति यद्येवं कथमयं वर्तेतेत्याह उष्णोदकं क्वथितोदकं तप्तप्रासुक तप्तं सत्प्रासुक त्रिदण्डोद्वृत्तमुष्णोदकमात्रं प्रतिगृह्णीयाद्वृत्त्यर्थं सयतस्साधु । एतच्च सौवीराद्युपलक्षणमिति सूत्रार्थः ॥ तथा ॥

उदउल्लं अप्पणो कायं, नेव पुंछे न संलिहे ॥
समुप्पेह तहा भूअं, नो णं संघट्टए मुणी ॥ ७ ॥

नदीमुत्तीर्णो भिक्षाप्रविष्टो वा वृष्टिहत उदकार्द्रमुदकाविंदु चितमात्मनः कायं शरीरं स्निग्धं वा नैव पुञ्छयेत् । वस्त्रतृणा दिभिर्नैव संलिखेत्। पाणिना अपि तु संप्रेक्ष्य निरीक्ष्य तथा भूतमुदकार्द्रादिरूपं नैव कायं सघट्टयेत् मुनिर्मनागपि न स्पृशेदिति सूत्रार्थः ॥

उक्तो ऽप्कायविधिस्तेजस्कायविधिमाह ॥

इंगालं अगणिं अच्चिं, अलायं वा सजोइअं ॥
उंजिज्जा न घट्टिज्जा, नो णं निव्वावए मुणी ॥ ८ ॥

अंगार ज्वालारहित अग्निमय पिण्डमनुगतमर्चिश्छिन्नज्वाल अलातन्त्वोल्मुक वा सज्योतिस्साग्निकमित्यर्थः । किमित्याह । नोत्सिंचेत् न घट्टयेत् तत्रोञ्जनमुत्सेचनं प्रदीपादेर्घट्टन मि थश्चालन तया नैनमग्निं निर्वापयेत् अभावमापादयेन्मुनिस्सा धुरिति सूत्रार्थः ॥

प्रतिपादितस्तेजस्कायविधिर्वायुकायविधिमाह ॥

तालिंवेंटेण पत्तेण, साहाए विहुणेण वा ।
न वीइज्ज अप्पणोकायं, वाहिरं वावि पुग्गलं ॥ ९ ॥

तालवृन्तेन व्यजनविशेषेण पत्रेण पद्मिनीपत्रादिना शाखया वृक्षडालरूपया विधूननेन वा । किमित्याह । न वीजयेत् आ त्मनः काय स्वशरीरमित्यर्थः । वाह्य वाऽपि पुद्गलमुष्णोदका दीति सूत्रार्थः ॥

प्रतिपादितो वायुकायविधिर्वनस्पतिकायविधिमाह ॥

तणरुक्खं न छिंदिज्जा, फलं मूलं च कस्सई ।
आमगं विविहं वीअं, मणसावि ण पत्थए ॥ १० ॥

तृणवृक्षमित्येकवद्भावः तृणानि दर्भादीनि वृक्षा कदम्बा दय एतान् छिंद्यात् । फल मूल वा कस्यचिद्वृक्षादेर्न छिंद्यात्। तथा आगमशस्त्रोपहत विविधमनेकप्रकार वीज मनसाऽपि न प्रार्थयेत् किमुताश्नीयादिति सूत्रार्थः ॥

तथा ।

गहणेसु न चिट्ठिज्जा, वीएसु हरिएसु वा ।
उदगंमि तहा निच्चं, उत्तिंगपणगेसु वा ॥ ११ ॥

गहनेषु वननिकुञ्जेषु न तिष्ठेत् सघट्टनादि दोषप्रसङ्गात्तथा वीजेषु प्रसारितशाल्यादिषु हरितेषु वा दूर्वादिषु न तिष्ठेत् । उदके तथा नित्य अत्रोदक मनन्तवनस्पतिविशेष । यथोक्त "उ दए अवए पणए " इत्यादि । उदकमेवान्ये । तत्र नियमतो

वनस्पतिभावात् । उत्तिङ्गपनकयोर्वा न तिष्ठेत् । तत्रोत्तिङ्गः सर्पच्छत्रादि । पनक उल्लिवनस्पतिरिति सूत्रार्थः ॥
उक्तो वनस्पतिकायविधिस्त्रसकायविधिमाह ॥

तसे पाणे न हिंसेज्जा, वाया अदुव कंमुणा ॥
उवरओ सव्व भूएसु, पासेज्ज विविहं जगं ॥ १२ ॥

त्रसप्राणिनो द्वीन्द्रियादीन् न हिंस्यात् । कथमित्याह । वाचा ऽथवा कर्म्मणा कायेन मनसस्तदन्तर्गतत्वाद्ग्रहण । अपि चोपरत सर्वभूतेषु निक्षिप्तदण्डस्सन् पश्येद्विविध जगत्कर्म्मपरतत्रं नरकादिगतिरूप निर्वेदायेति सूत्रार्थः ॥
उक्त स्थूलविधिस्सूक्ष्मविधि माह ॥

अठ्ठ सुहुमाइ पेहाए, जाइं जाणित्तु संजए ।
दयाहिगारी भूएसु, आसचिठ्ठ सएहिवा ॥ १३ ॥

अष्टौ सूक्ष्माणि वक्ष्यमाणानि प्रेक्ष्योपयोगत आसीत । तिष्ठेच्छयीत वेतियोगः । किं विशिष्टानीत्याह । यानि ज्ञात्वा संयतो ज्ञपरिज्ञया प्रत्याख्यानपरिज्ञया च दयाधिकारी भूतेषु भवत्यन्यथा दयाधि कार्य्येव नेति तानि प्रेक्ष्य तद्रहित पवा-ऽऽसनादीनि कुर्य्यादन्यथा तेषां सातिचारतेति सूत्रार्थः ॥ दश० ८ अ ॥
आचारप्रणिधिफलमाह ॥

तवं चिमं संजमजोगयं च, सज्झायजोगं च सया अहिट्ठिए ।
सूरव सेणाए समत्तमाउहे, अलमप्पणो होइ अलं परेसिं ६२

सूत्रव्याख्या । तपश्चेदमनशनादिरूप साधुलोक प्रतीत सयम योग च पृथिव्यादिविषय सयमव्यापार च स्वाध्याय योग च वाचनादिव्यापार सदा सर्वकाल अधिष्ठाता तप प्रभृतीनां कर्तव्यर्थ । इह च तपोऽभिधानात्तद्ग्रहणेऽपि स्वाध्याययोगस्य प्राधान्यख्यापनार्थं भेदाभिधान मिति । स एवभूत शूर इव विक्रान्तः भट इव सेनया चतुरङ्गरूपया इन्द्रियकषायादिरूपया निरुद्ध सन् समाप्तायुधः सम्पूर्णतप प्रभृतिखड्गाद्यायुध अलमित्यर्थ मात्मनो भवति सरक्षणाय अलञ्च परेषां निराकरणयेति सूत्रार्थ ॥
तदेव स्पष्टयन्नाह ॥

सज्झाय सज्झाणरयस्स ताइणो, अपावभावस्स तवे रयस्स । विसुज्झइ जंसिमलं पुरे कडं, समीरियं रुप्पमलं व जोइणा ॥ ६३ ॥

सूत्र व्याख्या स्वाध्याय एव सद्ध्यान स्वाध्यायसद्ध्यान तत्र रतस्य सक्तस्य त्रातु स्वपरोभयत्राणशीलस्य अपापभावस्य लब्ध्याद्यपेक्षारहिततया शुद्धचित्तस्य तपस्यनशनादौ यथाशक्तिरतस्य विशुद्ध्यते अपैति यदस्य साधोर्मलं कर्ममलं पुराकृत जन्मांतरोपात्त दृष्टांतमाह । समीरित प्रेरित रूपमलमिव ज्योतिषा अग्निनेति सूत्रार्थ ॥ ततश्च ।

सेत्तारिसे दुक्खसहे जिइंदिए, सुएणजुत्ते अममे अकिंचणे ॥ विरायई कम्मघणंमि अवगए, कसिणब्भपुडावगमेवचंदिमि त्तिवेमि ॥ ६४ ॥

सूत्रव्याख्या स तादृशोऽनन्तरगुणपरिग्रहयुक्त साधु दु खसह - परीषहजेता जितेन्द्रिय पराजितश्रोत्रेन्द्रियादि श्रुतेन युक्तो विद्यावानित्यर्थ । अमम सर्वत्रममत्वरहित । अकिञ्चनो द्रव्यभावकिञ्चनरहितो विराजते शोभते । कर्मघने ज्ञानावरणीयादिकर्ममेघे अपगते सति । निदर्शनमाह । कृत्स्नाभ्रपुटापगम इव चन्द्रमा इति । यथा कृत्स्ने वाभ्रपुटे गते सति चन्द्रो विराजते शरदि तद्वदसावपेतकर्मघनः समासादितकेवलालोको विराजते इति सूत्रार्थः । दश० ८ अ. ॥

आयारपत्त –आचारप्राप्त –त्रि० ब्रह्मव्रताद्याचाराऽपन्ने, तथाच तण्डुलवैकालिके । स्त्रियोऽधिकृत्य ( दूषण आयारपत्ताणं ) दूषण कलंकः केषां आचारप्राप्तानां ब्रह्मव्रताद्याचारापन्नाना मिति । तं० ॥

आयारपरक्कम–आचारपराक्रम–पु० आचारे ज्ञानादौ पराक्रमः प्रवृत्तिबल यस्य स आचारपराक्रमः । ज्ञानाद्याचारप्रवृत्तिबलोपेते, दश० चू २ ॥
तम्हत्ति सूत्रं ॥

तम्हा आयारपरक्कमेणं, सम्बरसमाहि बहुलेणं ॥
चरिया गुणा य नियमा, होंति साहुणदठ्ठव्वा ॥ ४ ॥

व्या. यस्मादेतदेवमनतरोदित तस्मादाचारपराक्रमेणत्याचारे ज्ञानादौपराक्रमः प्रवृत्तिबल यस्य स तथा विध इति गमकत्वाद्बहुव्रीहि । तेनैवभूतेन साधुना सवरसमाधिबहुलेनेति संवर इन्द्रियविषये समाधिरनाकुलत्वं बहुलं प्रभूत यस्य स तथाविध इति समासः पूर्ववत् तेनैवं विधेन सता अप्रतिपाताय विशुद्धये च किमित्याह । चर्या भिक्षुभावनसाधनी बाह्या अनियतवासादिरूपा गुणाश्च मूलगुणोत्तरगुणरूपा नियमाश्चोत्तरगुणानामेवपिंडविशुद्ध्यादीनांस्वकालासेवननियोगा भवति । साधूनां द्रष्टव्या इत्येते चर्यादयः साधूनां द्रष्टव्या भवति । सम्यग्ज्ञानासेवनप्ररूपणारूपेणेति सूत्रार्थ ।

आयारभंडग–आचारभाण्डक–न० पात्रपटलरजोहरणादिके,।
सव्वोवगरणमाया य साहू आयारभंडगेण समं आचारभाण्डकपात्रम् ओघ ॥

आयारभंडसेवि( न् ) आचारभाण्डसेविन्–पु० आचारः शास्त्रविहितो व्यवहारस्तेन भाण्डमुपकरणमाचारभाण्डकम् तत्सेवितु शील यस्य स आचारभाण्डसेवी । शास्त्रविहितव्यवहारेणोपकरणसेविनि, अणायारभंडसेवी जन्ममरणाणुबन्धाणि आतु० ॥

आयारमन्तर–आचारान्तर–न० ज्ञानादिके आचारविशेषे, आचारव्यवधाने, च ( आयारमन्तरेण विसयमन्तरे सेहिओ ) पा० ॥
आयारमन्तरेति आचारान्तरे क्वचित् ज्ञानाचारविशेषे विषयभूते आचारव्यवधाने वा सति ज्ञानादिक्रियाया अकरणे सतीति भाव । पा० टी०

आयारमठ्ठ –आचारार्थ –त्रि० ज्ञानाद्याचारनिमित्ते, ( आयार मठ्ठाविण य पउंजे ) दश० अ० ९ उ० ३ आचारार्थ ज्ञानाद्याचारनिमित्त विनयमुक्तलक्षण प्रयुक्ते करोतीति । दश०टी०

आयार (मंत) वं–आचारवत्–त्रि० ज्ञानाऽऽसेवनाख्यां पञ्चप्रकाराऽऽचारवति, स्था०ठा० ८ ज्ञानासेवनाख्यां ज्ञानादिपञ्चप्रकाराचारयुक्ते, अय हि गुणत्वेन श्रद्धेयवाक्यो भवति पंचावृ० १५ । भ० श २५ उ ७ । ध० अ० २ ( आयारमतागुण सुट्ठियप्पा ) आचारवतो ज्ञानाद्याचारसमन्विता इति दश० । अ० ९ उ ३ आचार शास्त्रोक्तानुष्ठानं कर्तव्यतयाऽस्त्यस्य मतुप् मस्य व शास्त्रोक्ताऽनुष्ठानयुक्ते स्त्रिया ङीप् वाच० ।

आयारवज्जिय–आचारवर्जित त्रि० आचारेण वर्जित शास्त्रो-

काचारहीने, आचारहीनादयोऽप्यत्र वाच ॥

**आयारविणय**–आचारविनय पुं० आचारो व्रतिनां समाचारः स एव विनीयते अपनीयते कर्म्मोऽनेनेतिविनय आचारविनय. विनयभेदे ।

सचतुर्द्धा यथा संयमसामाचारी १ तप सामाचारी २ गणसामाचारी ३ एकाकिविहारसामाचारी ४ च । तत्र संयमं स्वयमाचरति परं च ग्राहयति तत्र च सीदतं स्थिरीकरोति तत्रोद्यत चोपबृंहतीति संयमसामाचारी । १ । पाक्षिकादिषु तपः कर्म स्वयं करोति परंच कारयति भिक्षाचर्यां स्वयमनुतिष्ठति परं च तस्यांनियुंक्ते इति तप सामाचारी । २ । प्रत्युपेक्षणा बालवृद्धादिवैयावृत्यादिकार्येषु स्वयमु द्यतोऽन्यानगणप्रेरयतीतिगणसामाचारी । ३ । एकाकिविहारप्रतिमां स्वयंप्रतिपद्यते परं च ग्राहयतीति एकाकिविहारसामाचारी ॥ । ४ । प्रव० द्वा० ६४ दशा० ॥

सेकिं तं आयारविणए? २ चउव्विहे पण्णत्ते । तं जहा । संजमसामायारीयावि भवति तवसामायारी यावि भवति (महासामायारीयावि भवति) गणसामाहारीयावि भवति एगल्लविहारतासामायारीयावि भवति से त्तं आयारविणए ५ दशा०

अथ कथं आचारविनयेन शिक्षयति इति पृच्छन्नाह (सेकिंतमित्यादि) कण्ठ्य गुरुराह आयारविणएणमित्यादि आचारविनयेनेत्यत्र तृतीयान्तता शिक्षयति। अनेन सम्बन्धेनोक्ता अथवा कोऽसावाचारविनयो णं वाक्यालंकारे चतुर्विधः प्रज्ञप्तः । तद्यथा । संयमसमाचारी चापि भवति १ एवं तप २ गणं ३ एकल्लविहारसमाचार्यपि भवति ४ तत्र संयमः सप्तदशप्रकारस्तस्य समाचारीति समाचरणं समाचारीति समाचरणं समाचारस्तस्य भावे गुणवचनब्राह्मणादिभ्य इति ष्यञ् तस्य च षित्करणसामर्थ्यात् स्त्रियामपि वृत्तिरिति षिद्गौरादिभ्य श्चेतिङीपि सामाचारीशिक्षयिता इति शेषः । भवतिकोऽर्थे । पृथिव्यादिषु संघट्टनपरितापनोपद्रवादि परिहर्तव्य इति शिक्षयिता भवति । चापि शब्दौ पञ्चाश्रवाद्विरमणाद्यनुक्तार्थसंग्राहकौ द्रष्टव्यौ १ एवं तप सामाचार्यपि तप पाक्षिकपौषधिकैः कारयति परं स्वयं च करोति पाक्षिकादिषु तपश्चतुर्थादिरूप द्वादशविधो वात्र तप प्रकारो यथावसर द्रष्टव्यः ३ एव गणसामाचार्यपि गणशब्देन समुदाय साधूनामिति द्रष्टव्य त शिक्षयति यथा प्रतिलेखना प्रस्फोटनादि च प्रवर्तमानान् ॥ १ ॥ नोदयति बालदुर्बलग्लानवृद्धादि वैयावृत्यादिषु अप्रवर्तमानान् दृष्ट्वा तान् तया जयति । स्वयं वा तान् उचितान् दृष्ट्वा तत्र प्रवर्तते एकल्लविहारप्रतिमामन्यान् अंगीकारयति । तथा विधानश्रुतसंहननादिसमुचितान् दृष्ट्वा स्वयं च कृतकृत्यो गणे तथाविधमाचार्यादिकं स्थापयित्वा विनिश्चितानुष्ठानतुलनोपयोगीत्यर्थः । स न तां प्रतिपद्यते । अनेनाऽऽचारेणात्मानं परं च विनयति शिक्षयति ॥

व्यवहारकल्पे । आचारविनयमाह ॥

आयारे विणओ, खलु च उव्विहोहोइ आणुपुव्वीए ।
संयमसामायारी, तवे या गणविहरणा चेव ॥ १ ॥
एगल्लविहारे य, सामायारीयए च उन्नेया ।
एआसिंतुविभागं । वुच्छामि अहाणुपुव्वीए ॥ २ ॥

आचारे आचारविषय. खलु विनयश्चतुर्विधो भवति । आनुपूर्व्या परिपाट्या । तद्यथा । संयमसामाचारी १ तप.सामाचारी २ गणविहरणसामाचारी ३ एकाकिविहारसामाचारी ४ एवमेषा चतुर्भेदा सामाचारी । एतासांसामाचारीणां विभाग यथानुपूर्व्या वक्ष्यामि ते च तच्छब्दे द्रष्टव्याः

**आयारवेइ** आचारवेदी–स्त्री० आचारस्य वेदीव पुण्यभूमौ–हेम० वाच० ।

**आयारसंवया**–आचारसंपत्–स्त्री० आचरणमाचारोऽनुष्ठानम् तद्विषया स एव वा सम्पद्विभूतिस्तस्य वा सम्पत् सम्पत्तिः प्राप्तिराचारसम्पत् प्रव० द्वा० ६४ ठा० ठा० ८ आचारो नाम प्रथममंग तस्मिन् अधीते दशविधश्रमणधर्मो ज्ञातो भवति तस्मादाचाराङ्गं यो भणति सूत्रतोऽर्थत. सम्पद्युक्तो भवति य. स आचारसम्पत् दशा० अ० १ उत्त० अ० १ गणिसम्पद्भेदे ।

आचारसम्पच्चतुर्धा । संयमध्रुवयोगयुक्तता १ असंप्रग्रहः २ अनियतवृत्तिः ३ वृद्धशीलता ४ चेति । तत्र संयमश्चरणं तस्मिन्ध्रुवोनित्यो योग. समाधिस्तद्युक्तता कोऽर्थः समतोपयुक्तता १ असंप्रग्रहः समंतात् प्रकर्षेण जात्यादि प्रकृतलक्षणेन ग्रहणमात्मनोऽवधारणं सम्प्रग्रहस्तदभावोऽसंप्रग्रहो जात्याद्यनुत्सिक्ततेत्यर्थः २ अनियतवृत्तिरनियतविहाररूपाऽत्र वृद्धशीलता वपुषि मनसि च निभृतस्वभावता निर्विकारतेति यावत् स्था० ८ ठा० ध० दशा० ।

आयारसम्पदा चउव्विहा पं० तं० संजमधुवजोगजुत्ते यावि भवति १ असंपग्गहियप्पा २ अणियतवित्ती ३ वुड्ढसीले यावि ४ भवति दशा० ॥

टी० संयमध्रुवयोगयुक्तश्चापि भवति १ असंप्रतिगृहीतात्मा २ अनियवृत्तिः ३ वृद्धशील ४ श्चापि भवति तत्राचाचारोनाम प्रथममगं तस्मिन् अधीते दशविधश्रमणधर्म्मोज्ञातो भवति तस्मादारांग यो भणति सूत्रतोऽर्थतःसम्यद्युक्तो भवति । यस्स माचारसम्पत् । स च संयमेत्यादि । संयमो नाम चरण । तस्य ये ध्रुवा अवश्य कर्तव्यत्वात् योगाः प्रतिलेखनास्वाध्यायादय । तैर्युक्तो भवति । अथवा संयम सप्तदशप्रकार पञ्चाश्रवाद्विरमणमित्यादिक तस्मिन् ध्रुवो नित्योयोगो व्यापारो यस्य स संयमध्रुवयोगयुक्त । अथवा संयमेध्रुवोनित्योयोगोव्यापारोयस्यस संयमध्रुवयोग युक्तः । च शब्दात् ज्ञानादिष्वपि नित्योपयोग. । अपिशब्दग्रहणात्परमपि योजयति । इत्येका १ असंप्रगृहीत. अनुत्सेकवानात्मा यस्य सोऽसंप्रगृहीतात्मा निरभिमान इत्यर्थः । यथा अहमाचार्यो बहुश्रुतस्तपस्वी सामाचारीकुशलो जात्यादिमान्वा इत्यादिमदरहित. २ अनियता अनिश्चितावृत्तिर्व्यवहरण विहारो वा यस्य सोऽनिवृत्तिर्यथा ग्रामे एकरात्र नगरे पंचरात्रं इत्यादिका । अथवा निकेतन नाम गृहं तत्र वृत्तिर्वर्तनयस्य सनिकेतवृत्तिः न निकेतवृत्तिरनिकेतवृत्ति अथवा चतुर्थादि तपोविशेषैरेषणा समितियोगेन च निकेतवृत्ति परिचितगृहेष्वगना इतिवृद्धशीलो निभृतशील अचचलशील इतियावत् । अर्थग्रहणात् वृद्धेषु ग्लानादिषु सम्यग्वैयावृत्यादिकरणकारापणयोरभ्युक्तो भवति एव विध अथवा वृद्धशीलता वपुषिमनसि च निभृतस्वभावता निर्विकारतेतियावत् ॥ प्रव० द्वा० ॥

आचरणमाचारोऽनुष्ठान तद्विषया स एव वा सम्पद्विभूति-स्तस्य वा सम्पत्सम्पत्तिप्राप्तिराचारसम्पत् । एवमग्रेऽपि व्युत्पत्यर्थो भावनीयः ।

सा चतुर्धा यथा ॥

चरणजुओ मयरहिओ, अनिययवित्ती अचंचलोचवत्ति

चरणयुतो मदरहितोनियतवृत्तिरचंचलश्चेति तत्र चरणं चारित्र व्रतश्रमणधर्मेत्यादि सप्ततिस्थानरूप तेनयुतो युक्तश्च-रणयुत. । अन्यत्र तु सयमध्रुवयोगयुक्ततेत्येवमिदंपठ्यते । तत्राप्ययमेव परमार्थो यतः संयमश्चारित्र तस्मिन् ध्रुवोनित्यो योगः समाधिस्तेन युक्तता तत्र सततोपयुक्ततेत्यर्थ. । तथा मदैर्जातिकुलतपः श्रुताद्युद्भवैरहितो मदरहितो ग्रन्थान्तरे तु असम्प्रग्रह इति पठ्यते । तत्राऽपि सएवार्थो यत' समन्तात्प्रकर्षेण जाति. श्रुततपोरूपादिप्रत्कृष्टतालक्षणेनाऽऽत्मनो ग्रहणमहमेव जातिमानित्यादिरूपेणावधारणं सम्प्रग्रहो न तथाऽसम्प्रग्रहो जात्याद्यनुत्सिक्तत्वमित्यर्थः । अनियतवृत्ति ग्रामादिष्वनियतविहारस्वरूपता । तथाऽचचलो वशीकृतेन्द्रियोऽन्यत्र तु वृद्धशीलतेत्येव पठ्यते । तत्र वृद्धशीलता वपुषि मनसिच कामिनीमनोमोहने वयसि वर्तमानस्याऽपि निभृतस्वभावता निर्विकारतेति यावत् यतो ॥

मनसि रजसाभिभूता जायन्ते यौवनेऽपि विद्वांस' ॥

मूढधिय. पुनरितरे भवति वृद्धत्व भावेऽपिप्रव० ६४ द्वा० ॥१॥

तत्राचारश्चतुर्विध स्तद्यथा चरणकरणयुक्तता १ मदोहङ्कारस्तद्रहितता २ द्रव्यक्षेत्रकालादिष्वनियतवृत्तिता ३ गत्याद्यचपलता दश० ॥४॥

**आयारसत्थ आचारशास्त्र**—न० आचाराङ्गे आचा० अ० १॥

आचारशास्त्र सु विनिश्चित यथा, जगाद वीरो जगते हिताय य. ॥ तथाच किञ्चिद्वदत. समेऽधुना, पुनातु धीमान् विनयार्पिता गिर ॥१॥

**आयारसमाहि—आचारसमाधि**—पु० समाधि भेदे आचारसमाधिमाह । दश वैकालिके अ० ९ उ० ४

चउव्विहा खलु आयारसमाही भवइ तंजहा । नो इह लोगट्ठयाए आयारमहिट्ठिज्जा १ नो परलोगट्ठयाए आयारमहिट्ठिज्जा २ नो कित्तिवन्नसद्दसिलोगट्ठयाए आयारमहिट्ठिज्जा ३ अन्नत्थ अरिहंतेहिं हेऊहिं आयारमहिट्ठिज्जा ४ चउत्थं पयं भवइ, भवइ इत्थ सिलोगो ॥ १० ॥

चतुर्विध' खल्वाचारसमाधिर्भवति तद्यथेत्युदाहरणोपन्यासार्थ । नेह लोकार्थमित्यादि आचाराभिधानभेदेन पूर्ववत् यावन्नान्यत्राहतै रर्हत्सम्बन्धिभिर्हेतुभिरनाश्रवत्वादिभिरा-चार मूलगुणोत्तरगुणमयमधितिष्ठेत् । निरीहस्सन् यथामोक्ष एव भवतीति चतुर्थपद भवतीति । भवति चात्र श्लोक इति पूर्ववत् सचाय ॥

जिणवयणरए अतिंतणे, पडिपुन्नाययमाययट्ठिए ।

आयारसमाहिसंवुडे, भवइ य दंते भावसन्धए ॥

व्या० जिनवचनरत आगमे सक्त (अतिंतिन) न सकृत्किञ्चिदुक्त सन् असूयया भूयो २ वक्ता । प्रतिपूर्ण' सूत्रादिना । आयतमायतार्थिक इत्यत्यन्त मोक्षार्थी । आचारसमाधि संवृत्त इत्याश्रवद्वारे य समाधि तेन स्थगितास्रवद्वार भवति । दांत इन्द्रियनो इन्द्रियदमाभ्यां । भावसन्धकोभावो-मोक्षस्तत्सन्धकः । आत्मनो मोक्षासन्नकारीति सूत्रार्थ.

**आयारसुय—आचारश्रुत**—न० आचारश्च श्रुत च आचारश्रुत द्वन्द्वैकभावः । आचारश्रुतसमाहारे । सूत्रकृतांगद्वितीयश्रुत-स्कन्धस्य पञ्चमेऽध्ययने च सूत्र २ श्रु ५ अ. ॥

साम्प्रतं पञ्चममध्ययनमारभ्यते । अस्य चायमभिसम्बन्ध । इहानन्तराध्ययने प्रत्याख्यानक्रियोक्ता साचाचारसव्यवस्थितस्य सतोभवतीत्यतस्तदनन्तरमाचारश्रुताध्ययनमभिधीयते । यदि वा नाचारपरिवर्जनेन सम्यक्प्रत्याख्यानमस्खलित भवतीत्यतोनाचारश्रुताध्ययनमभिधीयते । यदिवा प्रत्याख्यानयुक्त. सन्नाचारवान् भवतीत्यतः प्रत्याख्यानक्रियानन्तरमाचारश्रुताध्ययन । तत्प्रतिपक्षभूतमनाचारश्रुताध्ययन वा प्रतिपाद्यत इत्यनेनसम्बन्धेनाऽऽयातस्यास्याऽध्ययनस्योपक्रमादीनि चत्वार्यनुयोगद्वाराणि भवति । तत्रोपक्रमान्तर्गतोऽर्थाधिकारोऽय तद्यथा अनाचारं प्रतिषिध्य साधूनामाचार. प्रतिपाद्यते । नामनिष्पन्ने तु निक्षेपे आचारश्रुतमिति द्विपदं नाम तदनयोर्निक्षेपार्थ निर्युक्तिकृदाह ॥

णामं ठवणा दविए, दव्वे भावे य होंति नायव्वा ॥

एमेव य सुत्तस्स, णिक्खेवो चउव्विहो होत्ति ॥१॥

णामठवणेत्यादि । तत्राचारो नाम स्थापना द्रव्य भावभेदभिन्नश्चतुर्धा द्रष्टव्य. । एव श्रुतमपीति । तत्राचारश्रुतयोरन्यत्राभिहितयोर्लाघवार्थमतिदेश कुर्वन्नाह ॥

आयारसुयं भणियं, वज्जेयव्वा सया अणायारा ॥

अबहुस्सुयस्स होज्जा, विराहणा इत्थ जइयव्वं ॥२॥

आचारसुयमित्यादि । आचारश्च श्रुत च आचारश्रुत । द्वन्द्वैकवद्भावस्तदुभयमपि भणितमुक्त । तत्राचार. क्षुल्लिकाचारकथायामभिहित. । श्रुत तु विनय श्रुते । भावार्थस्तु वर्जयितव्या परिहार्या. सदा सर्वकाल यावज्जीव साधुरनाचारा-स्तांश्चाबहुश्रुतोऽगीतार्थो न सम्यक् जानातीत्यतस्तस्य विराधना भवेत् । बहुशब्दोऽवधारणे बहुश्रुतस्यैव विराधना न गीतार्थस्येत्यतोऽत्र सदाचारे तत्परिज्ञाने च यतितव्य । तथाहि । मार्गज्ञ पथिक कुमार्गवर्जनेन नापथगामी भवति न चोन्मार्गदोषैर्युज्यते । एवमनाचारवर्जयन्नाचारवान् भवति न चानाचारदोषैर्युज्यत इत्यतस्तन्निषेधार्थमाह ॥

एयस्स पडिसेहो, इहमज्झयणंमि होत्ति नायव्वा ॥

तोअणगारयं इयं, होइ नामं तु एयस्स ॥ २ ॥

(एयस्स इत्यादि) एतस्याऽनाचारस्य सर्वदोषास्पदस्य दुर्गतिगमनैकहेतो प्रतिषेधो निराकरण सदाचारप्रतिपत्यर्थमिहाध्ययने ज्ञातव्य स च परमार्थतोऽनगारकारणमिति । तत । केषाञ्चिन्मतेनेतस्याध्ययनस्यानगारश्रुतमित्येतन्नाम भवतीति ॥

**आयारसुयखंध—आचारश्रुतस्कंध**—पु० आचारांगस्य नवब्रह्मचर्याध्ययनात्मक आचारश्रुतस्कन्ध इति । आचाराङ्गाद्ये आचा० श्रु द्वि. अ १ ।

**आयाराणुओग—आचारानुयोग**—पु० आचारस्यानुयोगोऽनुयोग सूत्राध्ययनात्पश्चादर्थे कथनम् । आचाराङ्गस्यार्थकथने आचाराङ्गस्य सूत्राध्ययनात्पश्चादर्थकथने च आचा० । द्वि० श्रु० अ० १ ।

( आचाराणुयोगे ) अणोर्वा लघीयस· सूत्रस्य महता थेन योगोऽनुयोग· । आचाराङ्गस्य महत्तार्थेन योगे च आचा०

आयारोवगय-आचारोपगत त्रि० चतुर्दशे योगसङ्ग्रहे । ( आयार विणयोवगए ) आचारोपगतत्वं विनयोपगतत्वं चेत्यर्थ इतिप्रश्न । ठा० ५ सं० ।

आयार विणययोवगएत्ति द्वारद्वयम् । आचारोपगत' स्यान्नमायां कुर्या दित्यर्थ· । विनयोपगत· स्यान्नमातं कुर्यादित्यर्थ । सम ० स० ३२ ।

आचारो पगत माह । आ ० क ० ।

पाडलिपुत्त हुआसण जलणसहाचेव जलणदहणे।

अमोहम्मपलिअ पयणए आमलकप्पाइनट्टविही ॥१॥

नगरे पाटली पुत्रे, श्रावकोऽभूद्धुताशनः । तद्भार्याज्वलनशिखा, दहन ज्वलनौ सुतौ ॥ १ ॥ व्रतचतुर्भिरप्यात्तं, ज्वलनात्सर नात्मन· । मायावी दहनोऽन्येद्दी,त्युक्तोऽगाद्याहिचागमत् । ॥ २ ॥ मृतोऽलोतदनालोच्य, सौधर्मेद्वावपीयतु' । पञ्चपद्य स्थितौ जातौ, शक्रान्यन्तर पर्षदि ॥ ३ ॥ पुर्यामामलकल्यायां श्रीवीर' समवासरत् । तौद्वावप्यागतौदेवौ, नाट्यं दर्शयत-स्तदा ॥ ४ ॥ ऋजुन्येकस्यरूपाणि, वक्राण्यन्यस्य चाभवन्। तदङ्गगौतम' स्वामी पप्रच्छ स्वामिनं ततः ॥ ५ ॥ तत्राभवं प्रभु प्राह, मायादोषाऽङ्गवत्यद' । आचारोपगतैकस्य, छिती यस्य च ना भवत् ॥ ६ ॥ आ० चू० ॥ आव· ॥

आयाम-आयास-पुं०आ-यस-घञ खेदे । चिन्तायास निचि विपुलमासो चिन्ताश्च चिन्तनानि आयासाश्चमन· प्रभृतीनां खेदास्तएव पाशान्तरेण चिन्ताशतान्येव निचिना निरन्तरा विपुला विस्तीर्णा शाखा शाखायस्य सतयेति प्रश्न० द्वा०५।

( आयास विलूणा कलह कम्पियग्गसिहरो ) आयास शरीरखेद· विसरणा वित्तखेद कलहोवचनलगएरूम् एत देव प्रकम्पित कम्पमानमग्रशिखर शिखाराग्र यस्य स तथा। प्रश्न० ॥ द्वा० ॥ ५ ॥

आयास हेतुत्वात्परिग्रहेच परिग्रहस्य गौणनामान्यधिकृत्य आयासो आयासः खेद' तद्धेतुत्वात्परिग्रहोऽप्यायास उक्त आहच । शरीरमनसोर्व्यायामेच ( आयासविसरणं ) आ यास विसरणं स्वदार गमने शरीरमनसोर्व्यायामं कुर्वतीति प्रक्रमम् । परदार सेवनायाच विसरणमप्राप्तो मनः खेदं पर-स्य वा मन पीडां कुर्वन्तीति । प्रश्न०द्वा० ॥ ५ ॥

आयामलिवि-आयासलिपि- स्त्री० अाद्स्यालिपेरष्टादशसु लेख्यविधानेषुपञ्चदशे लेख्यविधाने प्रज्ञा० पद १

आर-आर-पुं० परभावपेक्षया ऽहजवेवप्रव्रज्यापेक्षया गृहस्थ-त्वे मोक्षापेक्षया ससारेच ( णाहिसिआरकओ परवेहासे कम्मेहिं किच्चती ) सूत्र० श्रु० अ० २ तन्मार्गं प्रपन्नस्त्वमपि कथमास्यसि आरमिहभव कुतोवा पर परलोक यदि वा आरमिति गृहस्थत्वं परमिति प्रव्रज्या पर्यायम् । अथवा आर-मिति ससार । परमिति मोक्ष एव भूतस्त्वान्यो ऽप्युभयभ्रष्ट ( वेहासित्ति ) अन्तराल एवनयाभावन स्वकृत कर्मभि कृ-त्यसे पीड्यसेति । परलोकार्थस्याम्हलोके नरकाद्यपेक्षया मनुष्यलोके च( लेग विदित्ता आर पार च सव्व पभुयारिय स-व्वार ) सूत्र० श्रु० १ अ० ८

आरविदित्वा आरमिह लोकाख्यं पारं परलोकाख्यं यदि वा आर मनुष्यलोक परमिति नरकादिकंस्वरूपतस्तत्प्राप्तिहेतु

ततश्चविदित्वा सर्वमेतत्प्रभुर्भगवान् सर्ववारं बहुशो निवा-रितवान् इति सूत्र० टी० ।

चतुर्थ्या· पंकप्रभाया· पृथिव्याः स्वनामख्याते महानिरये च स्था० ग० ४ आ ऋ कर्तरि संज्ञायां कन् दण्डान्तर्वर्तिन्यां शलाकायां स्त्री० टाप्० ( कसंकुसारणि वाय दमणाणि आ-राच प्रवणी परायणदण्डान्तर्वर्तिनी शलाकेति प्रश्न० ।

आरओ-आरतस्-अव्य० इहलोके, ( इहलोके आरओ वा विउहा वियअसंजया ) सूत्र० श्रु० १ अ० ८

आरतः परश्चेति इहलोक परलोकयोरिति, सूत्र० टी० आरत· परतश्चेति लौकिकी वा युक्तिरितिएवं पर्यालोच्यमाना ऐहिकामुष्मिकयोर्द्विधापि स्वयंकरणेन परकरणेन वा सयता जीवोपघातकारिण इत्यर्थः सूत्र० श्रु० १ अ० ८

अर्वागित्यर्थेच आरेण पव्वाए व्य० उ० ४

त्रयाणां वर्षाणामारतोऽर्वाक् यानि प्रव्राजयतीति व्य० ॥

आरम्भ-आरंभ-पुं० आरभ घञ मुम वर्गेन्त्योवा इति प्राकृतसूत्रेणानुस्वारस्य वर्गेपरे प्रत्यासत्तेस्तस्यैव वर्ग-स्यान्त्यो वा भवति आरंभो आरंभो इति प्रा० उपक्रमे प्रथम-कृतौ वाच० प्रथमोत्पत्तौ ( ओहिन्नाणारम्भो परिनिट्ठाणं च त जेसु ) येष्ववधि ज्ञानस्यारंभ· प्रथमोत्पत्तिलक्षण इति । विशे० ( काऊण पञ्चमगलमारंभोहोइ सुत्तस्स ) आ० म० । हिंसादिकेसावद्यानुष्ठाने— सूत्र० श्रु० १ अ० २ आचा० अ० १३ उ० ७ ॥

आरंभतिरियंकट्टु आत्तताए परिव्वये-आरभ सावद्या-नुष्ठानारूपं तिर्यक्कृत्वेति सूत्र । श्रु० १ अ ३ । आरंभेसु अणिस्सिए आरभेषु सावद्यानुष्ठानरूपे ष्वनिश्रितोऽसवन्धोऽप्र-वृत्त इत्यर्थ इतिसूत्रश्रु० १ अ० ९ ॥

आरंभगंचेवपरिग्गहंचअ विउस्सियाणिस्सियआयदंमं

आरंभं सावद्यानुष्ठानच तथा परिग्रह वा व्युत्सृज्य परित्यज्य तस्मिन्नेवारंभेक्रयविक्रय पचनपाचनादिके तथा परिग्रहे धन-धान्यहिरण्यसुवर्ण चतुष्पदादिके निश्चयेन श्रितावश्रिताअनि-श्रिता इति सूत्र० श्रु० २ अ० ६ ॥

आरभ सावद्ययोगइति आचा० अ० ५ उ० ५ ॥

आरम्भणमारभ· शरीरधारणायान्नपानाद्यन्वेषणात्मक इति । आचा० ॥

आरम्भ· कृष्यादिव्यापार इति प्रश्न० द्वा० २ ॥

आरभश्चस्वयं कृष्यादि करण मिति । पञ्च० ॥

आरभो हलदंतोलूखलादिखननसूना प्रकार इति । आव० ॥

आरभ' परोपद्रव इति । आतु० ॥

आरंभो जीवानांमुपद्रवण मिति । प्रश्न० । द्वा० १ ॥

आरंभा पृथिव्याद्युपद्रवलक्षणानि । ग० । अ० १ ॥

संकप्पो संरंभो, परितावकरोभवे समारंभो ।

आरंभो उद्दवओ, सव्वनयाणं वि सुद्धाणं ॥

प्राणातिपातकरोमीति यः सकल्पोऽध्यवसाय स सरम्भ' यस्तु परस्य परितापकरो व्यापार· स समारम्भ' अपद्रावय-नो जीवितात्पर व्यपारोपयतो व्यापार आरंभ· । आहच । चूर्णिकृत् ॥

पाणव्वायं करोमिति जोसंकप्पंकरे इति ॥

चिनयतीत्यर्थ' ॥

सरम्भे वट्टइ परितावणं करेइ समारम्भे वट्टइ । एतच्च समारम्भादि त्रितय सर्वनयानामपि शुद्धानां सम्मतं अथवा शुद्धाणमित्यत्र प्राकृतत्वात्पूर्वस्याकारस्य लोपो द्रष्टव्यः ततोऽयमर्थः सर्वनयानामप्यशुद्धानामेतत्समारम्भादित्रितय सम्मत नत्वशुद्धानामिति— व्य० उ १ प्रज्ञा० २२ पद धर्म्म० अधि० ३ ग० अ० १ आचा० श्रु० २ चू० १ ॥

सव्वंपाणारम्भं पच्चक्खामिति प्राणानामारम्भ विनाशादिरूप प्रारंभमिति आतु० ॥

मन-कायमनोवाक्कायव्यापारानधिकृत्य तदेतत्त्रयव्यापारापादितचिकीर्षितप्राणातिपातादिक्रिया निर्वृत्तिरारम्भ इति आचा० अ० १ ॥

आरम्भ भूतोपमर्दनमिति । दश० ॥

आरम्भणमारंभः प्रथिव्याद्युपमर्द इति० उत० अ० ७ ॥

प्राण्युपमर्दकारिणि व्यापार इतिसूत्र० श्रु० १ अ० ॥१ ॥

प्राण्युपमर्दकारिणि विवेकिजननिन्दिते आरम्भे व्यापारे, सू श्रु. १ अ १ आरम्भेण जीवोपमर्दकारिणा व्यापारेणेति सूत्र श्रु १ अ. १ आरंभः पृथिव्यादिजीवोपमर्दः कृष्यादि विषय इति औप । आरम्भा' कृष्यादिद्वारेण पृथिव्याद्युपमर्द इति स्था ठा. २ । जेयआरम्भणिस्सिया सूत्र० । ये चान्ये वर्णापसदा नानारूपसावद्यारम्भनिश्रिता यंत्रपीडन निर्लाञ्छन कर्मागारदाहादिभि क्रियाविशेषैर्जीवोपमर्दकारिण इति सूत्र' श्रु १ अ ए । ( पुढवा इसु आरम्भ ) पृथिव्यादिकार्येषु विषयभूतेषु आरम्भ इत्यारम्भणमारंभः सघट्टनादिरूप इति पं व । प्रमत्तयोगे च । आरम्भः सावद्यानुष्ठानम् प्रमत्तयोगो वा उक्तञ्च ।

आयाणे णिक्खेवे, जासुस्सग्गे य ठाणगमणादी ।
सव्वोपमत्तजोगो, समणस्सउ होइ आरम्भो ॥१॥

आचा० अ ५ उ २ । स्था० ठा. ए । प्राणवधे, च । संघट्टनादिरूप इति प्राणवधस्य गौणनामान्यधिकृत्य आरम्भ समारम्भोऽथवेहारम्भसमारम्भयोरेकतर एव गणनीयो बहुसमरूपत्वादिति प्रश्न ० द्वा १ ।

आरम्भसमारम्भयो स्त्रैविध्यम् दशाश्रुतस्कन्धे । तत्रेमौ द्वावपित्रिप्रकारौ तद्यथा मानसिकवाचिककायिक भेदात् । तत्र मानसिको मन्त्रादिध्यानं परमारणे हेतोः प्रथम- तथा समारम्भ- परपीडाकरोच्चाटनादिनिबन्धनध्यान वाचिको यथा आरम्भ परव्यापादनक्षमक्षुद्रविद्यादे परावर्तन, सकल्पसूचको ध्वनिरेव समारम्भ परपरितापकरमन्त्रादि परावर्तन कायिको यथा आरम्भोऽभिघाताय यष्टिमुष्ट्यादिकरण समारम्भ- परितापकरो मुष्ट्या अभिघात' तथा चोत्तराध्ययने ( आरम्भे य तहे वय मण य वत्तमाण तु नियतेज्ज जय जई ) उत अ २४ । आरम्भ परप्राणापहारक्षमोऽशुभ परिणामस्तस्मिन् परिणामे प्रवर्तमानं मनो निवर्तयेत् । आरम्भ- परेषां क्लेशोच्चाटनमारणादिमन्त्रजापकरण तत्रापि प्रवर्त्तमान वचो निवारयेत् उत० टी' ( आरम्भय तहेव य काय पवत्तमाण तु नियतेज्ज जय जई ) उत्त० अ २४ । आरम्भे तथैव पुन प्राणवधाकरे यष्ट्यादि प्रयोगे काय प्रवर्तमान निवर्तयेत् इति उत्त० अ. २४ । आरम्भस्य भेदाः स्थानाङ्गे यथा स्था० ठा. ७ ।

सत्तविहे आरम्भे पं० तं. पुढवीकाय आरम्भे जाव अजीवकाय आरम्भे एवमणारम्भे वि एव सारम्भे वि एवमसारम्भे वि एवं समारम्भे वि एव मसारम्भे वि ।

टी० पुढवीत्यादि । सुगमं नवरं । प्रागभिहितं ।

आरम्भो उद्दवओ परितावकरो भवे समारम्भो ।
संरम्भो संकप्पो सुध्दणयाणं तु सव्वेसिं ॥

नत्वारम्भादयोऽपद्रावण परितापादिरूपा स्था० ठा. ७ । नैरयिकादीनां सारम्भानारम्भकत्वं चतुर्विंशतिदण्डकेन प्ररूपयन्नाह ।

नेरइयाणं भंते ? किं सारंभा सपरिग्गहा उदाहु अणारम्भा अपरिग्गहा ? गोयमा ? नेरइया सारम्भा सपरिग्गहा नो अणारम्भा अपरिग्गहा से केणट्ठेणं जाव अपरिग्गहा गोयमा ? नेरइयाणं पुढविकायं समारम्भंति, जाव तसकायं समारम्भंति सरीरा परिग्गहिया भवंति, सचित्ताचित्तमीसयाइं दव्वाइं परिग्गहियाइं भवंति से तेणं तं चेव असुरकुमाराणं भन्ते ? किं सारम्भा पुच्छा गोयमा ? असुरकुमारा सारम्भा सपरिग्गहा नो अणारम्भा अपरिग्गहा से केणट्ठेणं गोयमा ? असुरकुमाराणं पुढविकायं समारम्भंति जावतसकायं समारंभंति सरीरा परिग्गहिया भवंति कम्मा परिग्गहिया भवंति भवणा परिग्गहिया भवंति देवा देवीओ मणूसा मणूसीओ तिरिक्खजोणिया तिरिक्खजोणिणीओ परिग्गहियाओ भवंति, आसणसयणभंडमत्तोवगरणा परिग्गहिया भवंति ? सचित्ताचित्तमीसयाइं दव्वाइं परिग्गहियाइं भवंति ? से तेणट्ठेणं तहेव एवं जाव थणियकुमारा ॥

भंडमत्तोवगरणात्ति [॥ इह भाण्डानि मृण्मयभाजनानि पात्राणि कांस्यभाजनानि उपकरणानि लौहीकटाहकडुच्छु कादीनि एकेन्द्रियाणां परिग्रहो प्रत्याख्यानादवसेय' ॥

बेइन्दिया णं भंते ? कि सारंभा सपरिग्गहा तं चेव जाव सरीरा परिग्गहियाभवंति बाहिरिया भंडमत्तो वगरणा परिग्गहिया भवंति, सचित्ताचित्त जाव भवंति एवं जाव चउरिंदिया बाहिरया भंडे मत्तोवगरणात्ति ।

उपकारसाधर्म्याद्दिन्द्रियाणां शरीररक्षार्थं तत्कृतगृहकादीन्यवसेयानि ।

पंचिंदियतिरिक्खजोणियाणं भंते ! तं चेव जाव कम्मा परिग्गहिया भवंति । टंका कूडा सेला सिहरी पब्भारा परिग्गहिया भवंति । जलथलबिलगुहलेणा परिग्गहिया भवंति उज्झरनिज्झरचिल्लल पल्लल चिप्पिणा परिग्गहिया भवंति । अगडतडागदहनदीओ वावीपुक्खरिणी दीहिया गुंजालिया सरासरपंतियाओ सरसरपंतियाओ बिलपंतियाओ परिग्गहियाओ भवंति । आरामुज्जाणकाणणावणा वणखंडा वणराईओ परिग्गहियाओ भवंति ।

देव उवस्सयपव्वयकूडखाइय परिखाओपरिग्गहियाओ भवंति। पागारट्टालगचरियदारगोपुरपरिग्गहिया भवंति पासायघरसरणलेण आवण परिग्गहिया भवंति। सिंघाडगतिग चउक्कचच्चरचउम्मुहमहापहापह पहापरिग्गहिया भवंति सगडरहजाणजुग्गगिल्लिथिल्लिसीयसंदमाणियाओ परिग्गहिओ भवंति लोहीलोहकडाहकडुच्छुयापरिग्गहिया भवंति भवणा परिग्गहिया भवंति। देवादेवीओ मणुस्सा मणुस्सीओ तिरिक्खजोणिया तिरिक्खजोणिणीओ आसणसयण खंभभंडसचित्ताचित्तमीसयाइं दव्वाइं परिग्गहियाइं भवंति। से तेणट्ठेणं जहा तिरिक्खजोणिया तहा मणुस्सा वि भाणियव्वा वाणमन्तरजोइसियवेमाणिया जहा भवणवासी तहा नेयव्वा भ० श० ५ उ० ७.

जीवा णं भंते किं आयारम्भा परारम्भा तदुभयारंभा अणारम्भा गोयमा? अत्थेगइया जीवा आयारम्भा वि परारम्भा वि तदुभयारम्भा वि णो अणारम्भा अत्थेगइया जीवा णो आयारम्भा णो परारम्भा णो तदुभयारम्भा अणारम्भा से केणट्ठेणं भंते एवंवुच्चइ अत्थेगइया जीवा आयारम्भा वि एवं पडिउच्चारेयव्वं गोयमा जीवा दुविहा पन्नत्ता तंजहा संसारसमावन्नगा य असंसारसमावन्नगा य तत्थणं जे ते असंसारसमावन्नगाय तेणं सिद्धा सिद्धाणं णो आयारम्भा जाव अणारम्भा तत्थणं जे ते संसारसमावन्नगा ते दुविहा पं० तं० संजया य असंजया य तत्थणं जे ते संजया ते दुविहा पं० तं० पमत्तसंजया य अपमत्तसंजयाय तत्थ णं जे ते अपमत्तसंजया ते णं णो आयारम्भा णोपरारम्भा जावअणारम्भा तत्थणं जेते पमत्तसंजया ते सुहं जोगं पडुच णो आयारंभा णो परारंभा जाव अणारंभा असुहजोगं पडुच आयारंभा वि जाव णो अणारम्भा तत्थ णं जे ते असंजया ते अविरतिं पडुच आयारंभावि जाव णो अणारम्भा से तेणट्ठेणंगोयमा! एवं वुच्चइ अत्थेगइया जीवा जाव अणारंभा॥

टी० ॥ जीवा णं भंते ? किं आयारम्भेत्यादि। आरम्भो जीवोपघात उपद्रवणमित्यर्थः सामान्येन वाऽश्रवद्वारप्रवृत्तिस्तत्र आत्मानमारभते आत्मना वा स्वयमारभते इत्यात्मारम्भास्तथा परमारभन्ते परं वाऽऽरम्भयन्तीति परारम्भास्तदुभयमात्मपरलक्षणं तदुभयेनारभन्त इति तदुभयारम्भा आत्मपरोभयारम्भवर्जितास्त्वनारम्भा इति प्रश्नः। अत्थेगइय एकइमेव तदर्थ अस्तिशब्दस्याव्ययत्वेन बहुत्वार्थत्वादस्ति विद्यन्ते सन्तीत्यर्थः। अथवा अस्ति इय पक्षो यद्भुत। एगइयत्ति। एकका एके केचनेत्यर्थः। जीवा आत्मारम्भा अपीत्यादि। यदिच उपरतान्तरपरापेक्षया मनुष्ये सत्त्वा मारकत्वादि दर्शाणामेका-श्रया प्रतिपादनार्थं भिन्नाश्रयनाप्रतिपादनार्थो वा एका-श्रयत्वं च कालभेदेनावगन्तव्यं तथाहि कदाचिदात्मारंभाः कदाचित् परारंभाः कदाचित्तदुभयारम्भाः अत एव नो अनारम्भाः भिन्नाश्रयत्वं तु एवं एके जीवा असंयता इत्यर्थः आत्मारम्भा वापरारम्भा वेत्यादि अथैकस्वभावत्वात् जीवानां भेदमसम्भावयन्नाह से केणट्ठेणत्ति अथ केन प्रकारेण नेत्यर्थः॥ दुविहापन्नत्तत्ति। मया चान्यैश्च केवलिभिरनेन समस्तसर्वविदांमतभेदमाह मतभेदे तु मतविरोधिवचनतया तेषामसत्यवचनतापत्तिः। पाटलिपुत्रस्वरूपाभिधायकविरुद्धवचनपुरुषकदम्बकवदिति प्रमत्तसंयतस्य हि शुभोऽशुभश्च योग स्यात्संयतत्वात् प्रमादपरत्वाच्चेत्यत आह शुभयोग पडुच्चति। शुभयोग उपयुक्ततया प्रत्युपेक्षणादिकरणं अशुभयोगस्तु तदेवानुपयुक्ततया आह च (पुढवी आ उक्काए तेऊवाऊवणस्सइतसाणं। पडिलेहणापमत्तो छण्हं पि विराहओ होइ। तथा सव्वो पमत्तयोगो समणस्स उ होइ आरम्भोत्ति) अतः शुभाशुभौ योगावात्मारम्भादिकारणमिति अविरइं पडुच्चत्ति इहायम्भावो यद्यप्यसंयतानां सूक्ष्मैकेन्द्रियादीनां नात्मारम्भकादित्वं साक्षादस्तितयाप्यविरतिम्प्रतीत्येतदस्ति तेषां ते न हि ते ततो निवृत्ता अतोऽसं यतानामविरतिरत्र कारणमिति। निवृत्तानां तु कथं चिदात्माद्यारम्भकत्वेऽप्यनारम्भकत्वं यदाह " जाजयाणस्स भवे विराहणा सुत्तविहिसमग्गस्स। सा होई णिज्जरफला अज्झत्थविसोहिजुत्तस्सत्ति "॥ १॥ भ० श० १ उ० १

णेरइया णं भंते किं आयारम्भा परारम्भा तदुभयारम्भा अणारंभा गोयमा णेरइया आयारम्भाविजाव णो अणारम्भा से केणट्ठेणं भंते एवं वुच्चइ गोयमा? अविरतिं पडुच्च से तेणट्ठेणं जाव णो अणारंभा एवं जाव पंचिंदियतिरिक्खजोणिया मणुस्सा जहा जीवा णवरं सिद्धविरहिता भाणियव्वा वाणमन्तरा जाववेमाणिया जहा णेरइया सलेस्सा जहा ओहिया किण्हलेसस्स नीललेसस्स काउलेसस्स जहा ओहियाजीवा णवरं पमत्त अपमत्ताण भाणियव्वा तेउलेसस्स सुक्कलेसस्स जहा ओहिया जीवा णवरं सिद्धाए भाणियव्वा॥

टी० णेरइयाण मित्यादि व्यक्तं नवरं मणुस्सेत्यादौ अयमर्थः मनुष्येषु संयता संयत प्रमत्ताप्रमत्तभेदा पूर्वोक्ताः सन्ति ततस्ते यथा जीवास्तथाऽध्येतव्याः किन्तु संसारसमापन्ना इतरे च तेन वाच्या भववर्तित्वादेव तेषामित्येतदेवाह सिद्धविरहियेत्यादि व्यन्तरादयो यथा नारकास्तथाध्येया असंयतत्वसाधर्म्यादिति, आत्मारम्भकत्वादि भिर्धर्मैर्जीवा निरूपितास्ते च सलेश्याश्च लेश्याश्च भवन्तीति सलेश्यांस्तांस्तैरेव निरूपयन्नाह सलेसा जहा ओहियात्ति लेश्या कृष्णादि द्रव्य सान्निध्यजनितो जीवपरिणामो यदाह। कृष्णादिद्रव्यसाचिव्यात् परिणामो य आत्मनः। स्फटिकस्येव तत्राय लेश्याशब्दः प्रयुज्यते।१। तत्र लेश्यावन्तो जीवा जहा ओहियत्ति यथा नारकादि विशेषणवर्जिता जीवा अधीताः जीवाणं भंते किं आयारम्भा परारम्भे त्यादिना दण्डकेन तथा सलेश्या जीवा अपि वाच्याः सलेश्या नाम संसारसमापन्नकस्य सम्भवे नाऽसंसारसमापन्नेत्यादि विशेषण वर्जितानां शेषाणां संयतादि विशेषणानां तथापि युज्यमानत्वात्तत्र चायं पाठक्रमः सलेस्साणं भंते ? जीवा किं

आयारम्भेत्यादि तदेव सर्वं नवरं जीवस्थाने सलेश्या इति वाच्यमिति अयमेको दण्डकः कृष्णादि लेश्याभेदात् तदन्ये षट् तदेव मेते सप्त तत्र किण्ह लेसस्येत्यादि । कृष्ण लेश्यस्य नीललेश्यस्य कापोतलेश्यस्य च जीवराशे दण्डको यथौघिकजीवदण्डकस्तथा ध्येतव्य प्रमत्ताप्रमत्त विशेषण वर्ज्यः कृष्णादिषु हि अप्रशस्त भावलेश्यासु संयतत्व नास्ति यच्चोच्यते पुव्व पडिवन्नओ पुण अन्नयरीए उ लेसाए त्ति तत् द्रव्यलेश्यां प्रतीत्येति मन्तव्य ततस्तासु प्रमत्ताद्यभावस्तत्र सूत्रो च्चारण मेव ।

किण्हलेसाणं भंते जीवा किं आयारंभा ? ४ गोयमा ? आयारंभा वि जाव णो अणारम्भा से केणट्ठेणं भंते एवं वुच्चइ गोयमा ? अविरइं पडुच्च ।

एव नीलकापोतलेश्या दण्डकावपीति तथा तेजोलेश्यादे र्जीवराशेर्दण्डका यथौघिका जीवास्तयावाच्याः नवर तेषु सिद्धा न वाच्याः सिद्धानामलेश्यत्वात्तेचैव ।

तेउलेसाणं भंते जीवा किं आयारम्भा ? ४ गोयमा ? अत्थेगइया आयारम्भा वि जाव नो अणारम्भा अत्थे गइया नो अणारम्भा अत्थे गइया नो आयारंभा जाव अणारंभा से केण ट्ठेणं भंते ? एवं वुच्चइ ? गोयमा ? दुविहा तेउलेस्सा पं. तं० संजया य, असंजया इत्यादि भ. श १ उ. १ ।

आरम्भ वक्तव्यताऽऽचाराङ्गे लोकविजयाध्ययनस्य पञ्चमोद्देश्यके यथा तस्य चायभिसम्बन्ध इह भोगान् परित्यज्य लोकनिश्रया संयमदेहप्रतिपालनार्थं विहर्तव्यमित्युक्तं तदत्र प्रतिपाद्यते । इह हि संसारोद्वेगवता परित्यक्तभोगाभिलाषेण मुमुक्षुणोत्क्षिप्तपञ्चमहाव्रतभारेण निरवद्यानुष्ठानविधायिना दीर्घसंयमयात्रार्थं देहप्रतिपालनाय लोकनिश्रया विहर्तव्यं निराश्रयस्य हि कुतो देहसाधर्म्यं चेति उक्तं हि धर्मञ्चरत साधोर्लोके निश्रयपदानि पञ्चापि राजगृहपतिरपरः षट्कायगणसरीरेच ॥ १ ॥ वस्त्रपात्रान्नासन, शयनादीनि तत्रापि प्राय प्रतिदिनमुपयोगित्वादाहारो गरीयानिति ॥ २ ॥ स च लोकादन्वेष्टव्यो लोकश्च नानाविधैरुपायैरात्मीयपुत्रकलत्राद्यर्थमारम्भप्रवृत्तस्तत्र साधुना संयमदेहार्थं प्रवृत्तिरन्वेषणीयेति दर्शयति आचा० २अ ४उ

जमिणं विरूवरूवेहिं सत्थेहिं लोगस्स कम्मसमारम्भा कज्जंति तंजहा अप्पणो से पुत्ताणं धूयाणं सुण्हाणं णाईणं धाईणं राईणं दासाणं दासीणं कम्मकराणं कम्मकरीणं आदेसाए पुढोपहेणाए सामासाए पायरासाए सण्णिहिसंणिचओ कज्जइ इह मेगेसि माणवाणं भोयणाए समुट्ठिये अणगारे आगारिये आयरियसे आरियदंसी अयंसंधिति अदक्खु से णादिये णादियावये णं समणुजाणाति सव्वामगंधंपरिण्णाय णिरामगन्धो परिव्वये अदिस्समाणो कयविक्कयेसु से किण किणेण किणावये किणन्तं ण अणुजाणेज्जा से भिक्खू कालणे बालणे मायणे खेयणे खणयणे विणयणे समयणे परसमयणे भावणे परिग्गहं अममायमाणे काले अणुट्ठाई अपडिन्ने दुहा तोच्छित्ताणियाइ वत्थं पडिग्गहं कंबलं पायपुंछणं उग्गहं च कडासणं एएसु चेव जाणेज्जा लद्धे आहारे आगारे मायं जाणेज्जा से जहेयं भगवया पवेइयं लाभोत्ति ण मज्जेज्जा अलाभोत्ति ण सो एज्जा वहूंपिलद्धुं ण णिहे परिग्गहाओ अप्पाणं अवसक्केज्जा अण्णहाणं पासए परिहरेज्जा एस मग्गे आरिएहिं पवेदिते जहेत्थकुसलेणोव लिप्पिज्जा ॥ त्तिबेमि ॥

टी० जमिण मित्यादि । यैरविदितवैद्यैरिदमिति सुखदुःखप्राप्तिपरिहारक्रियाणां कायिकाधिकरणिकाप्राद्वेषिकापारितापनिकाप्राणातिपातरूपाणां वा समारम्भा इति मध्यग्रहणाद्बहुवचननिर्देशाच्च समारंभारंभयोरप्युपादान भावनीयमित्यर्थः । शरीरकलत्राद्यर्थ सरम्भसमारम्भाः क्रियतेऽनुष्ठीयंते तत्र संरंभ इष्टानिष्टप्राप्तिपरिहाराय प्राणातिपातादिक्रियानिवृत्तिररिसंकल्पावेशस्तत्साधनसन्निपातकायवाग्व्यापारजनितपरितापनादिलक्षणः समारम्भः तदत्र त्रयव्यापारापादितचिकीर्षितप्राणातिपातादिक्रियानिवृत्तिरारंभः कर्मणोवाऽष्टप्रकारस्यसमारम्भा उपार्जनोपायाः क्रियन्त इति लोकस्येतिचतुर्थ्यर्थेषष्ठी सापि तादर्थ्ये । क पुनरसौ लोको यदर्थं सरम्भसमारम्भाः क्रियन्त इत्याह त जहा अप्पणो से इत्यादि यदि वा लोकस्य तृतीयार्थे षष्ठी यदिति हेतौ यस्माल्लोकेन नानाविधैः शस्त्रैः कर्मसमारम्भा क्रियन्त इत्येतस्मिन् लोके साधुवृत्तिमन्वेष्य यदर्थं च लोकेन कर्मसमारम्भा क्रियन्ते तद्दर्शयत्यादिना दर्शयति त जहा अप्पणो इत्यादि तद्यथेत्युपप्रदर्शनार्थं नोक्तमाभामेवान्यदाप्येवं जातीयकाभिदादिक " इष्टव्य स तस्यारम्भा रिप्सार्थमात्मा शरीर तस्मै अर्थं तदर्थं कर्म समारंभाः पाकादयः क्रियते ननु च लोकार्थ समारम्भाः क्रियत इति प्रागभिहित नच शरीरं लोको भवति नैतदस्ति यत परमार्थदृश्य ज्ञानदर्शनचारित्रात्मकमात्मतत्वं विहायान्यत्सर्वशरीरा द्यपि पारक्यमेव तदाहि बाह्यस्यापौ द्गलिकस्याचे तनस्य कर्मणो विपाकभूतानि पञ्चापि शरीराणीत्यत शरीरान्यापि लोकशब्दाभिधेय इति तदित्य कश्चिच्छरीरनिमित्त कर्मारम्भत परस्तु पुत्रेभ्यो दुहितृभ्यः स्नुषा वध्वस्ताभ्यो ज्ञातय पूर्वापरसम्बन्धाः स्वजनाः तेभ्यो धात्रीभ्यो राजभ्यो दासेभ्यो दासीभ्यः कर्मकरेभ्य कर्मकरीभ्यः आदिश्यते परिज्ञाय प्रत्याख्यानपरिज्ञया प्रत्याख्याय निरामगंध सन् परिव्रजेत् संयमानुष्ठान सम्यक् पालयेत् ज्ञनो यस्मिन्नागते तदातिथियःयेत्यादेशः प्राघूर्णक स्तदर्थं कर्मसमारम्भाः क्रियन्त इति सम्बन्धस्तथा पुढोपहेणायेत्यादि पृथक् पृथक् पुत्रादिभ्य प्रहेणकार्यं तथा समासाएत्ति श्यामा रजनीतः श्यामाशः तदा तदर्थं तथा (पायरासयेति) प्रातरशनं प्रातराशस्तस्मै कर्म समारम्भाः क्रियन्त इति सामान्येनो क्त्वापि विशेषार्थ माह सण्णिहीत्यादि सम्यङ्निधीय इति सन्निधि विनाशिद्रव्याणां दध्यो दनादीनां सस्थापन तथा सम्यगति श्चयेन धीयते इति सन्निचयो विनाशिद्रव्याणामन्नया सितासृद्वीकादीनां सग्रह सन्निधिश्च सन्निचयश्च संनिधिसन्निचय प्राकृतशैल्या पुल्लिङ्गता अथवा संनिधेः संनिचयः सनिधिसंनिचयः स च परिग्रहसञ्ज्ञोदया दाजीविकाभयाद्वा धनधान्यहिरण्यका दिना क्रियत इति स च किमर्थ-

मित्याइ । इहेत्यादि इहेति मनुष्यलोके एकेषामिह लोकस्त-
न परमार्थ बुद्धीनां मानवानां मनुष्याणां भोजनायेप भोगा-
र्थमिति तदेवं विस्पष्टपे शस्त्रपातमप्रत्यार्थं कर्म समारम्भ
प्रवृत्ते लोके पृथक् प्रहेणकाय श्यामाशाय प्रातराशाय केषां-
चिन्मानवानां भोजनार्थं सन्निधिसन्निचय करणोद्यते सति
साधुना किं कर्त्तव्यमित्याह(समुट्ठिए)इत्यादि यावत् णिराम-
गन्धोपरिव्वए सम्यक् सन्ततं सगत वा संयमानुष्ठानेनोत्थितो
नानाविधशस्त्र कर्मसमारम्भोपरत इत्यर्थ नविद्यतेऽगारं गृह
मस्येत्यनगार पुत्रदुहितृस्नुषाद्याति धान्यादिरहित इत्यर्थः
सोऽनगार आराद्यात सर्वहेयधर्मेभ्य इत्यार्यश्चारित्राई
आर्या प्रज्ञा यस्यासावार्यप्रज्ञः श्रुतविशेषता सुमुखीक इत्यर्थः
आर्य प्रगुणन्यायोपपन्नं पश्यति तच्छीलश्चेत्यार्यदर्शी
पृथक् प्रहेणकस्य प्रमादिसंकल्परहितइत्यर्थः अयं सन्धीति
मन्यान सन्धीयते वासाविति सन्धिर्यस्य साधोरसावयं स-
न्धिस्तमान्दसन्धादिभिःकश्चुणित्यय सन्धिर्यथाकालमनुष्ठानवि-
धायी यो यस्य वर्तमान काल: कर्तव्यतयोपस्थितस्तत्कर-
णतया तमेव सन्धत्त इति एतदुक्तं भवति सर्वा क्रियाः प्रत्युपे-
क्षणोपयोगस्वाध्याय भिक्षाचर्याप्रतिक्रमणादिका असमपन्ना अ-
न्योन्याबाधयात्मीयकर्त्तव्यकाले करोतीत्यर्थ इति हेतौ यस्मा
द्यथाकालानुष्ठानविधायी तस्मादसावेव परमार्थ पश्यतीत्याहु ।
(अदक्खुत्तिति) व्यत्ययेनैकवचनावसरे बहुवचनमकारि तत
श्चायमर्थो योऽहार्थेआर्यप्रज्ञ आर्यदर्शी कालज्ञश्च सएव प-
रमार्थनदाक्षीत्वापर इति पाठान्तरम्वा अयं सन्धि अदक्खु
अयमनन्तरोक्तविशेषण विशिष्ट साधु सन्धि कर्तव्यकालं
अद्राक्षीदद्याक्षीतदुक्तं भवति य: परस्परावाधया हितप्राप्ति-
परिहाररूपतया विधेयः विधयावस वेत्ति विधत्तर च सपर
मार्थ ज्ञातवानिति अथवासंधिर्ज्ञानदर्शनचारित्राणामभिवृद्धिः
स च शरीरभृते न भवति तदपि नोपष्टम्भकारणांतरेण तस्य-
च सावद्यस्य परिहारः कर्तव्य इत्यत आह( सेणाए )इत्या-
दि स भिक्षुस्तज्ज्ञः कल्प नाददीत न गृह्णीयान्नाप्यपरमादा
पये इदन्ताहये नाप्यपरमनेषणीयमाददानं समनुजानीयादथवा
सव्वामगं सयमवा नाद्यात भक्षये नापरमादापयेत् ददन्त
वा नसमनुजानीयादित्याह सव्यामगन्धमित्यादि आमच गन्ध
चामगन्ध समाहारद्वन्द्वः सर्वं चैतदामगंधसर्वामगन्ध सर्वश-
ब्द प्रकारकार्त्स्न्येऽगृह्यते न द्रव्यकार्त्स्न्ये आममपरिशुद्ध ग धं
ग्रहणेन तु पूतिगृह्यते ननु च पूतिद्रव्यस्याप्यशुद्धत्वादामशब्द नै
वो पादानात्किमर्थं भेदेनोपादानमिति सत्यमशुद्धसामान्यात्
गृह्यते किन्तु न्यकार्त्स्न्ये ऽत्रगृह्यते किन्तु पूतिग्रहणेनेह
आधाकर्म्म यविशुद्ध कोटित्पता त स्याश्रगुरुतरत्वात्प्राधान्य-
ख्यापनार्थं पुनरुपादान ननश्चायमर्थः गन्धग्रहणेनात्मक-
मौद्देशिकाद्विक पूतिकर्ममिश्रजातं बादरप्राभृतिकाध्यवपूर
काधैनरकुम्मदोषा अविशुद्धकोट्यन्तर्गता गृहीता: शेषा
स्तो विशुद्ध कोट्यन्तर्गता आमग्रहणेनोपात्ता इत्यस्या इति
सर्वशब्दस्य च प्रकारकार्त्स्न्याभिधायकत्वात्केन केन चित्
प्रकारेण आममपरिशुद्धं पूति वा भवति तत्सर्वं ज्ञपरिज्ञया
ज्ञात्वा प्रत्याख्यानपरिज्ञया निरामगन्ध निर्गतो वामगन्धो
यस्मात् स तथा परिव्रजेत् मोक्षमार्गे ज्ञानदर्शनचारित्राख्ये
पतिर्मिसनात् इत्येन संयमानुष्ठान स्वन्दतनुपालयेदित्यावत
सामगृहा न प्रतिगिद्धेऽपि कीतहने तथाप्यपन्नानां विशु-
द्धकोट्या ह्यसननया मातृस्य प्रवृत्तिनिमित्ताभावात्प्रग्राहः प्रतिषे

धयिपुराह । आदिस्स । इत्यादि क्रयश्चश्च विक्रयश्च क्रय-
विक्रयौ । तयो: क्रयविक्रययोरदृश्यमानः कीदृश श्चतयोरदृश्य-
मानो भवति यतस्तयोर्निमित्तभूतद्रव्याभावादकिञ्चनोऽथवा
क्रयविक्रयोरदृश्यमानोऽनुपदिश्यमान:कश्च तयोरनुपदि-
श्यमानो भवति य:क्रीतकृतपरिभोगी भवतीत्याह च स न किंणे
इत्यादि स मुमुक्षुरकिञ्चनो धर्मोपकरणमपि न क्रीणीयात्
स्वतो वा नाप्यपरेण क्रापयेत् क्रीणन्तमपि न समनुजानी
यादथवा निरामगन्ध परिव्रजेदित्यत्रामग्रहणेन हनन को
टित्रिकं गन्धग्रहणेन पाचनकोटित्रिकं क्रयणकोत्रिक तृतुन:
स्वरूपेणैवोपात्तमतो नवकोटी: परिशुद्धमाहार विगतांगारधू-
मं भुंजीत एतद्गुण विशिष्टश्च किंभूतो भवतीत्याह से
भिक्खु(कालण्णे)काल: कर्तव्यावसरस्तजानातीति कालज्ञो वि-
दि तवेदयस्तया वालज्ञो बलंजानातीति बालज्ञ: छान्दसत्वाद्दीर्घ
त्वमात्मबलसामर्थ्य जानातीति यथाशक्त्यनुष्ठानविधायय
निगूहितबलवीर्य इत्यर्थस्तया(मायन्ने) यावत् द्रव्योपयोगिता
मात्रा तां जानातीति मात्राज्ञस्तया (खेयन्ने)खेदोऽभ्यासस्तेन
जानातीति खेदज्ञो यथा खेद: श्रम ससार पर्यटन जनितस्त
जानातीत्युक्तं च " जरामरणदौर्गत्य व्याधयस्तावदासतां । मन्ये
जन्मैव धीरस्य भूयोभूयस्त्रपाकरमिति ॥१॥ अथ क्षेत्रज्ञ: संसक्त
विरुद्ध द्रव्य परिहार्य कुलादि क्षेत्र स्वरूपपरिच्छेदकस्तथा(खण
यणे)क्षण एव क्षणकोऽवसरो भिक्षार्थ मप सर्पणादि: यस्त जा
नातीति तथा(विणयणे )विनयो ज्ञानदर्शनचारित्रौपचारिकरू
पस्तं जानातीति तथा(ससमयन्ने)स्वसमय जानातीति स्वस
मयज्ञो गोचर प्रदेशादौ दृष्ट सन् सुखेनैव भिक्षादोषा नाचष्टे
तद्यथा षोडशोद्गमदोषास्ते चामी आधाकर्म्म औद्देशिकं पूतिकर्म
मिश्रजातं स्थापना प्राभृतिका प्रकाशकरणं क्रीतं उद्यतक परिव
र्तितं अभ्याहृतं उद्भिन्न मालाहृतं आच्छेद्य अनिसृष्ट अध्यव-
पूरक श्चेति षोडशोत्पादनादोषास्ते चामी धात्रीपिंड: दूति
पिंड: निमित्तपिंड आजीवपिंड वनीमकपिंड: चिकित्सापिंड:
क्रोधपिंड: मानपिंड: मायापिंड: लोभपिंड: पूर्वसंस्तवपिंड:
पश्चात्संस्तवपिंड: विद्यापिंड: मंत्रपिंड: चूर्णयोगपिंड: मूल-
कर्मपिंड श्चेति तथा दशैषणादोषास्ते चामी सकितं म्रक्षित
निक्षिप्तपिहितसंहृतदायकोन्मिश्रापरिणत लिप्तोच्छितदोषाएषां
चोद्गमदोषा दातृकृता एव भवन्ति उत्पादनादोषास्तु साधु-
जनिता एषणादोषा श्चोभयापादिता इति तथा परसमयज्ञो
श्रीमन्मयाहर्हतीव्रतरतरणिकरनिकरावलीढगलत्स्वेदबिन्दु-
क: क्लिन्नवपुष्कस्साधु केनचिद् द्विजातिदेशेनाभिहित कि
मिति भवतां सर्वजनाचीर्ण स्नानं नसम्मतमिति स आह प्राय:
सर्वेषामेवयतीनां कामांगत्वात् जलस्नान प्रतिषिद्ध ( स्नान
मदर्पकरं कामाङ्ग प्रथम स्मृतं । तस्मात्कामं परित्यज्य
नैवस्नांति दमेरता इत्यादि तदेव समुभयज्ञस्त द्विषये प्रश्ने
उत्तर दानकुशलो भवति तथा(भावन्ने) भावश्चित्ताभिप्रायो
दातु श्रोतुर्वा तजानातीति भावज्ञ किञ्च (परिग्गह) अममा-
यमाणे)परिगृह्यत इति परिग्रह सयमातिरिक्तमुपकरणादि तम-
ममीकुर्वन् अस्वीकुर्वन्मनसाऽप्यनाददान इति यावत्स एव
विधो भिक्षु कालज्ञो मात्रज्ञ: क्षेत्रज्ञ क्षणज्ञो विनयज्ञ: समय-
ज्ञो भावज्ञ: परिग्रह ममत्वं कुर्वाणश्च किं भूतो भवतीत्याह
(कालाणुट्ठाइ)यदस्मिन् काले कर्तव्य तस्मिन्नेवानुष्ठातुं शीलम-
स्येति कालानुष्ठायी कालानतिपातन्तर्तव्योद्यतो ननु चास्यार्थस्य
से भिक्खू कालाणु इत्यनेनैव गतार्थत्वात्किमर्थं पुनरभिधीयत
इति नैषदोषस्तत्र हि ज्ञपरिज्ञैव केवलाभिहिता कर्तव्यकाल

जानातीह पुनरासेवना परिज्ञा कर्तव्यकाले कार्यं विधत्त इति किञ्च ( अपभिषे ) नास्य प्रतिज्ञा विद्यत इत्यप्रतिज्ञ प्रतिज्ञा च कषायोदयाद्विरति । तद्यथा क्रोधोदयात् स्कन्दकाचार्येण स्वशिष्ययन्त्रपीडनव्यतिकरमवलोक्य सवलवाहनराजधानी-समन्वितपुरोहितोपरि विनाशप्रतिज्ञाऽकारि । तथामानोदयाद्बाहुबलिना प्रतिज्ञा व्यधायि । यथा कथमहं शिशून् स्वज्ञातृनुत्पन्ननिरावरणज्ञानान् छद्मस्थः सन् द्रक्ष्यामीति तथामानोदयान्मल्लिस्वामि जीवेन यथा( परयन्ति )विप्रलम्भन भवति तथा प्रत्याख्यानपरिज्ञा जगृहे तथा लोभोदयात्त्वविदितपरमार्थाः साम्प्रतेक्षिणोत्पत्त्या मासा मासक्षपणादिका अपि प्रतिज्ञाः कुर्वते अथवा प्रतिज्ञो निदानो वसुदेववत्संयमानुष्ठानं कुर्वन् निदान न करोतीत्यथवा गोचरादौ प्रविष्टः सन्नाहारादिकं ममैवैतद्भविष्यतीत्येव प्रतिज्ञोयदि वा स्याद्वादप्रधानत्वात् मौनीन्द्रागमस्यैकपक्षावधारणं प्रतिज्ञा तद्रहितोऽप्रतिज्ञस्तथाहि मैथुनविषयं विहायान्यत्र न क्वचित् नियमवती प्रतिज्ञा विधेया यतउक्त ।

ण य किंचि अणुण्णायं, पडिसिद्धं वावि जिणवरिंदेहिं । मोत्तु मेहुणभावं, न विणा तं रागदोसेहिं तथा देसा जेण निरुज्झंति, जेणाणिज्झन्ति पुव्वकम्माइं, सो मोक्खो वा उ, रोगावत्थासु समणं वा । जेज्ज तिया उ हेउ भवस्स तव्वेय तत्तिय मोक्खो । गणणातीता लोया दोण्ह वि पुण्णा भवे तुल्ला

इत्यादि अथं सन्धीत्यारभ्य कालेवुट्ठा इति यावदेतेभ्य सूत्रेभ्य एकादशापिण्डैषणा निर्व्यूढा इत्येव तदप्रतिज्ञ इत्यनेन सूत्रेणेदमापन्न न काचित् केनचित्प्रतिज्ञा विधेया प्रतिपादिताश्चागमे नानाविधा अभिग्रहविशेषास्ततश्च पूर्वोत्तरव्याहतिरेव लक्ष्य तद्ध्यत आह ।

( दुहओछित्ता णियाति )द्विधिते रागेण द्वेषेण वा या प्रतिज्ञा तां छित्वा निश्चयेन नियत च याति ज्ञानदर्शनचारित्राख्ये मोक्षमार्गे संयमानुष्ठाने वा भिक्षाद्यर्थञ्च एतदुक्त भवति रागद्वेषौ छित्त्वा प्रतिज्ञा गुणवतत्यत्यय इति स एव भूतो भिक्षुः कालज्ञो बालज्ञो यावत् विधोच्छेदनकं कुर्यात् इत्याह ( वत्थ पडिग्गह इत्यादि ) यावत् एएसु चेवजाणिज्जा एतेषु पुत्राद्यर्थमारम्भप्रवृत्तेषु सन्निधिसन्निचयकरणोद्यतेषु जानीयाद्गुद्धाद्युद्भूततया परिच्छिद्य तत्परिच्छेदश्चैवमात्मकं शुद्धगृह्णीयादशुद्धं परिहरेदिति यावत् किं न जानीयाद्वस्त्रं वस्त्रग्रहणेन वस्त्रैषणा सूचिता तथा पतद्ग्रहं पात्रमेतद्ग्रहणेन च पात्रैषणा सूचिता । कवलमित्यनेनाविकः पात्रनिर्योगः कल्पश्च गृह्यते पादपुञ्छनकमित्यनेन च रजोहरणमित्येभिश्च सूत्रैरोघोपधिरौपग्राहिकश्च सूचितस्तथैतेभ्य एव वस्त्रैषणा पात्रैषणा च निर्व्यूढा तथा अवगृह्यत इत्यवग्रहः सच पञ्चधा देवेन्द्रावग्रहः राजावग्रहः ग्रहपत्यवग्रहः शय्यातरावग्रहः साधर्मिकावग्रहश्चेत्यनेनावग्रहप्रतिमा सर्वा सूचिता अतएवासौ निर्व्यूढा अवग्रहकल्पिकश्चास्मिन्नेव क्रियते तथाकटासनं कटग्रहणेन संस्तारको गृह्यते आसनग्रहणेन चासन्दकादिविष्टरमिति आस्यते स्थीयते अस्मिन्निति वा आसनं शय्या ततश्चासनग्रहणेन शय्या सूचिता अतएव निर्व्यूढेति एतानि च समस्तान्यपि वस्त्रादीन्याहारादीनि चैतेषुस्वारम्भप्रवृत्तेषुगृहस्थेषु जानीयात् सर्वामगन्धं परिज्ञाय निरामगन्धो यथा भवति तथा परिव्रजेदितिभावार्थं एतेषु चारम्भप्रवृत्तेषु परिव्रजन्यावल्लाभगृहीयाद्युतकश्चिन्नियमोऽप्यस्तीत्याह सन्धइत्यादिलब्धे प्राप्ते सत्याहारे आहारग्रहणं चोपलक्षणार्थमन्यस्मिन्नपि वस्त्रौषधादिके अनगारोऽभिकुर्मात्रांजानीयाद्यावन्मात्रेण गृहीतेन गृहस्थः पुनरारम्भे न प्रवर्तते यावन्मात्रेण वात्मनो विवक्षितकार्यनिष्पत्तिर्भवति तथाभूतां मात्रामवगच्छेदिति भावः एतच्च स्वमनीषिकया नोच्यत इत्याह से जहेयं इत्यादि तद्यथेदमुद्देशकादेरारभ्यानन्तरसूत्रं यावद्भगवता ऐश्वर्यादिगुणसमन्वितेनार्द्धमागध्या भाषया सर्वस्वभाषानुगतया सदेवमनुजायां पर्षदि केवलज्ञानचक्षुषा अवलोक्य प्रवेदितं प्रतिपादितं सुधर्मस्वामी जम्बूस्वामिने इदमाचष्टे किञ्चान्यत् लाभोत्ति इत्यादि लाभोवस्त्राहारादेर्मम संवृत्त इत्यतोऽहं लब्धिमान् इत्येव मदं नविदध्यान्न च तदभावे शोकाभिभूतो विमनस्कोभूयादित्याह च ( अलाभोत्ति ) इत्यादि अलाभे सति शोकं न कुर्यात् कथं चिन्मन्दभाग्योऽहं येन सर्वदा दानोद्यतेनापि दातुर्न लभेऽहमिति अपि तु तयोर्लाभालाभयोर्माध्यस्थ्यं भावनीयमित्युक्तं च लभ्यते साधुः साधुरेव न लभ्यते । अलब्धे तपसोवृद्धिर्लब्धे तु प्राणधारणमित्यादितदेव पिण्डपात्रवस्त्रासनरणमेषणाः प्रतिपादिताः साम्प्रतं सन्निधिप्रतिषेधं कुर्वन्नाह बहुलं पिलब्धेत्यादि बहुपिलब्धाण णिनेत्ति नस्थापयेन्न संनिधिं कुर्यात् स्तोकं तावन्न संनिधीयेत एवं बहुपि न संनिदध्या दित्यपि शब्दार्थं न केवलमाहारसन्निधिं न कुर्यादेव रमपि वस्त्रपात्रादिकं संयमोपकरणातिरिक्तं न विभृयादित्याह पमीत्यादि परिगृह्यत इति परिग्रहो धर्मोपकरणातिरिक्तमुपकरणं तस्मा दात्मान मपष्वष्के दपसर्पयेदथवा संयमोपकरणमपि मूर्च्छया परिग्रहो भवति मूर्छापरिग्रह इति वचनात्तत आत्मानं परिग्रहा दपसर्पयन्नुपकरणे तुरगवन्मूर्छां न कुर्यात् ननु च यः कश्चिद्धर्मोपकरणाद्यपि परिग्रहो न सचित्तं कालुष्यं मुनेर्भवति तथाह्यात्मीयोपकारिणि उपघातकारिणि च हेत्तः परिग्रहे सति रागद्वेषौ नेदिष्ठौ तेभ्यश्च कर्मबन्धः तत्कथं परिग्रहो धर्मोपकरणं उक्तं च ( ममाहमिति ) चैर यावदभिमानदाहज्वरः कृतान्तमुखमेव तावदिति न प्रशान्त्युन्नयः । यशः सुखपिपासितैरयमसावनर्थोत्तरैः परैरपसद कुतोऽपि कथमप्यपाकृष्यते ॥ १ ॥ नैष दोषः नहि धर्मोपकारणे ममेदमित्येव साधूनां परिग्रहयोगोऽस्ति । तथाह्यागम । अवियप्पणो विदेहमि णायरंति ममाइयं । यदिह परिगृहीत कर्मबन्धायोपकल्प्यते स परिग्रहो यत्तु पुनः कर्मनिर्जरणार्थं भवति तत्परिग्रह एव न भवतीत्याह च । अण्णहाणं इत्यादि णमिति-वाक्यालंकारे अन्यथा अन्येन प्रकारेण पश्यकः सन् परिग्रहं परिहरेद्यथाह्यविदितपरमार्थो गृहस्था सुखसाधनाय परिग्रहं पश्यन्ति न तथा साधु तयाह्ययमस्याशय आचार्यसत्कमिदमुपकरणं न ममेत्ति रागद्वेषमूलत्वात्परिग्रहाग्रहयोगोऽत्र निषेध्यो न धर्मोपकरणं तेन विना संसारार्णवपारगमनादि उक्तञ्च ( साध्यं तथाकथंचित् स्वल्पं कार्यं महच्च न तयेति । प्रवनसूते नहि शक्य पारं गन्तुं समुद्रस्य ॥ २ ॥ ) अत्र चार्हताभासैर्बोटिकैः सह महानविवादोऽस्तीत्यतो विवक्षितमर्थं तीर्थकराभिप्रायेणापि सिसाधयिषुराह । एसमग्गेइत्यादि । धर्मोपकरणं न परिग्रहायेत्यनन्तरोक्तो मार्गः । आरायानां सर्वज्ञेयधर्मोभ्य इत्यार्यास्तीर्थकृतस्तै प्रवेदित कथितो ननु यथा-बोटिकैः कुण्डिकानटिकाघटिकाजनिकश्चाद्यभिधानादि

स्वरुचिविरचितो मार्ग इति ननु वा यथा मोक्षविस्वाति-पुत्राभ्यां गौशोदर्नि स्वजीकृत्य प्रकाशितः इत्यनया दिशा अन्येऽपि परिहार्या इति। इह तु स्वशास्त्रगौरवमुत्पादयितुमार्यैः प्रवेदित इत्युक्तमस्मिन्नर्थे प्रवेदिते मार्गे प्रयत्नवताभाव्यमित्याह। जहेत्थेत्यादि कर्म्मकर्म्मभूमि मोक्षपादपबीजभूताञ्च बोधिं सर्वसंचारित्रं च प्राप्य तथा विज्ञेय यथा कुशलो विदितवेद्योऽत्रास्मिन्नार्यप्रवेदितमार्गे आत्मानं पापेन कर्म्मणा नोपलिंपयेदिति एवचोपलिंपनं भवति यदि यथोक्तानुष्ठानविधायित्वं न भवति सतां चाय पन्थाः यदुत यत् स्वय प्रतिज्ञात तदत्योच्छ्वासं यावद्विधेयमित्युक्तञ्च (लज्जां गुणौघजननीं जननीमिवार्यामत्यन्तशुद्धहृदयामनुवर्तमानाः तेजस्विनः सुखमसूनपि संत्यजन्ति सत्यस्थितिव्यसनिनो न पुनः प्रतिज्ञां १) इति शब्दोऽधिकारसमाप्त्यर्थो ब्रवीमीति॥ आरम्भप्रशंसकस्य निन्दा दर्शनशुद्धौ यथा।

जे मय आरंभयाते,जीवा होंति अप्पदोसय रा, तउ महापावयए, जे आरम्भं पसंसंति

दर्श०॥ आरम्भ प्रसक्तानां निन्दा गच्छाचारे अ. २ यथा॥

आरंभेसु पसत्ता, सिद्धंतपरंमुहा विसयगिद्धा

मुत्तुमुणिणो गोयम, वमिज्ज, मज्भेसु हियाणम्? ७४॥

व्या० आरंभेषु पृथिव्या द्युपमर्दनेषु प्रसक्ताः तत्पराः सिद्धांतपराङ्मुखा आगमोक्तानुष्ठानशून्या विषयेषु शब्दरूपरसगंधस्पर्शेषु गृद्धा लंपटा हे गौतम? ये एवंविधास्तान् मुनीन् मुक्त्वा परित्यज्य सुविहितानां सदनुष्ठानो यतानां मध्ये वसन्मुनिरिति॥ आरम्भजीविनो ऽप्रशंसा ऽनारम्भजीविनश्च प्रशंसा ऽऽचारांगे लोकसाराध्ययनस्य द्वितीयोद्देशके यथा ॥०॥ अस्य चायमभिसंबंध इह प्रागुद्देशके एक चर्याप्रतिपन्नोपि सावद्यानुष्ठाना द्विरतेरभावाच्च न मुनिरित्युक्तमिह तु तद्विपर्ययेण यथा मुनिभाव स्यात्तथोच्यत इत्यनेन सर्वेणा यातस्यास्यो द्देशकस्यादिसूत्रं॥ आचा ०॥

आवंती केयावंती लोगंसि अणारंभजीवी ते सु चेव अणारंभजीवी एत्थो वरए तं भ्फो समाणो धम्मं अमासयं चयोवजत्त यं विपरिणाम पासह एवं स्ववय संधि समुवेह माणस्स एकायतणरयस्स इयस्स इह विप्पमुक्कस्स णत्थि मग्गे विरतस्सत्ति बेमि॥

टी० आ०॥ आवत्तीत्यादि यावत् केचन लोके ऽनारम्भजीविनि आरम्भः सावद्यानुष्ठान प्रमत्तयोगो वा उक्तञ्च।

"आयाणे णिक्खेवे भासुस्सग्गे य ठाणगमणादी सव्वो पमत्त जोगो समणस्सओ होइ आरम्भो"

तद्विपर्ययेण त्वनारम्भस्तेन जीवितुं शीलमेषामित्यनारंभजीविनो यतय समस्तारम्भनिवृत्तास्तेष्वेव गृहिषु पुनरूक्तस्सरागीगपर्यभारंभ जीविनो भवन्ति एतदुक्त भवति सावद्यानुष्ठानप्रवृत्तेषु गृहस्थेषु देहसाधनार्थं मनवद्यारंभजी विनस्ताधवपंकाधारपंकजवद्धि लेपा एव भवंति। यद्येवं तत किमित्याह। एत्थोवरए इत्यादि अत्रास्मिन् सावद्यारंभे कर्त्तव्ये उपरतः सन् तत्क्षपयन् एष चार्हतो धर्मो व्यवस्थित उपरत पापारम्भान् किं कुर्वन्त्वनवद्यानुष्ठानायातं। कर्म्म जोषयन् क्षपयन् यथिवान नात इति निश्चितमेव स्वधोपरतः स्यादि-

त्याह अयं सधीति।

अदक्खु जे इमस्स विग्गहस्स अयं खणेत्ति अणेसीए समगे आयरिएहिं पवेदिते उट्ठित णो पमापए जाणित्तु दुक्खं पत्तेयं सायं पुढोछंदा इह माणवा पुढो दुक्खं पवेदितं से अविहिं समाणे अणवपमाणे पुट्ठो फासे विपणोल्लए एस समिया परियाए वियाहिए जे असत्तापावेहिं कम्मेहिं उपा हुत्ते आयंका फुसंति इति उदाहु धीरे ते फासे पुट्ठोहिया सए से पुव्वं पेय पच्छापेयं भिउरधम्मं विद्धं सणधम्मं अधुवं अणितियं॥

अयं संधीत्यादि अविवक्षितकर्म्मका अप्येककर्म्मका धातवो यथा पश्य मृगोधावत्येवमत्राप्यद्राक्षीदित्येतत क्रियायोगे ऽप्यय संधिरिति प्रथमा द्रक्ष्यतेति अयमिति प्रत्यक्षगोचरापन्न आर्यक्षेत्रे सुकुलोत्पत्ती इन्द्रियनिर्वृत्ति श्रद्धा संवेगलक्षणः सन्धिरवसरो मिथ्यात्व क्षयात्तु दयलक्षणो वा सम्यक्त्वावाप्तिहेतुभूतः कर्म्मविवर लक्षणः सन्धिः शुभाध्यवसायसंधानभूतो वा सन्धिरित्येन स्वात्मव्यवस्थित मद्राक्षी ज्ञावानित्यतः क्षणमप्येकं न प्रमाद्येत विषयादिप्रमादवशगो न्यायात्कञ्च न प्रमत्तः स्यादित्याह।(जे इमस्स इत्यादि)। इत्युपलब्धतत्वे ऽस्याध्यक्षस्य विशेषेण गृह्यते अनेनाष्टप्रकार कर्म तद्वेतर शरीरविशिष्टं वाह्ये वा क्षिप्तेण गृह्यत इति विग्रहः औदारिक शरीर तस्यायं वार्त्तमानिकः क्षण एवं भूतः सुखदुःखान्यतररूपश्च गत एव भूतश्च भावीत्येव यः अन्वेषणशीलः सोऽन्वेषी सदा अप्रमत्तः स्यादिति स्वमनीषिकापरिहारार्थमाह। (एससमगो) इत्यादि एषो ऽनतरोक्तो मार्गो मोक्षपथ आर्यैः सर्व हेयधर्म्मा रातीयवर्तिभिस्तीर्थकरगणधरैः प्रकर्षेणवैवा वेदित कथितः प्रवेदिति इति न केवलमनन्तरो वक्ष्यमाणश्च तीर्थकरैः प्रवेदित इत्याह (उट्ठिएइत्यादि,)सद्धिम क्षिगम्यो स्थितो धर्म चरणाय क्षणमप्येकं न प्रमाद्येत् किं वा (परमद्धिगम्येत्याह) जाणित्ति इत्यादि ज्ञात्वा प्राणिनां प्रत्येकं दुःख तदुपादान वा कर्म तथा प्रत्येक सात च मन आह्लादि ज्ञात्वा समुत्थितो न प्रमादन् न केवलं दुःख कर्म वा प्रत्येक तदुपादानहेतो ऽध्यवसायो ऽपि प्राणिनां भिन्न एवेति दर्शयितुमाह (पुढो इत्यादि) पृथग्भिन्नश्छन्दो ऽभिप्रायो ये येषां ते पृथक् छन्दा नानाभूतवन्ध्याध्यवसायस्थाना इत्यर्थः इहेति संसारे संज्ञिलोके वा के ते मानवा मनुष्या उपलक्षणार्थत्वादन्ये ऽपि सञ्ज्ञिना पृथक् मकव्यत्वाच्च तत्कार्यमपि कर्म पृथगेव तत्कारणमपि दुःख नानारूपमिति कारणभेदे कार्यभेदस्यावश्यंभावित्वा दित्यतः पूर्वोक्त स्मारयन्नाह (पुढो इत्यादि,) दुःखोपादान भेदात् दुःखमपि प्राणिनां पृथक् प्रवेदित सर्वस्य स्वकृतकर्मफलोपभोक्तृत्वान्नान्यकृतमन्यउपभुंक्त इत्येतन्मत्वा किं कुर्यादित्याह से इत्यादि सोऽनारम्भजीवी प्रत्येकसुखदुःखाध्यवसायी प्राणिनो विविधैरूपायैरहिंसस्तथानपवदन् अन्यथैव व्यवस्थित वस्त्वन्यथा वदन्नापवदन् मृषावादमत्रुवन्नित्यर्थः यस्य च भूतस्यापि प्राकृतत्वादर्थत्वाल्लोपः एवं परस्वमगृह्णन्नित्याद्यप्यायोज्य गताद्धिधायी च किमपरं कुर्यादित्याह (पुढो इत्यादि) सपञ्चमहाव्रत व्यवस्थित सन् यथा गृहीतप्रतिज्ञानिर्वाहणोद्यतः स्पृष्टः परीषहोपसर्गैस्तत्र ततस्तान् शीतोष्णादिस्पर्शान् दुःखजनकान् वा सम्यक्तितिक्षे तथा अनाकुलो निर्जिते प्रकारैः सहार

भावनादिभिः प्रेरयन् तत्प्रेरण च सम्यक् सहनं न तत् क्लनया दु खासिकयात्मानं भावयेदिति यावत् योहि सम्यक्करणतया परीषहान् सहेत स किं गुण· स्यादित्याह एस इत्यादि पपोऽनतरोक्तो यः परीषहानां प्रणोदकः समिया सम्यक्शमिता वा शमोऽस्यास्तीति शमी तद्भाव· शमिता पर्याय· प्रव्रज्या सम्यक्शमितया वा पर्यायः प्रव्रज्यास्येति विगृह्य बहुव्रीहिः स सम्यक् प्रर्याय' शमिता पर्यायो वा व्याख्यातो नापर इति तदेव परीषहोपसर्गाक्षोभ्यतां प्रतिपाद्य व्याधिसहिष्णुतां प्रतिपादयन्नाह जे असत्ता इत्यादि, ये अपाकृत सदनतया समतृणमणिलेष्टुकांचनाः समतापन्नाः पापेषु कर्म्मस्वसक्ताः पापोपादानानुष्ठानरता उदाहु कदाचित्तांस्तथाभूतान् साधून् भातका आशुजीवितापहारिणः शूलादयो व्याधिविशेषा· स्पृशत्यभिभवति पीडयन्ति यदि नामैव ततः किमित्याह इति उदाहु इत्यादि इत्येतद्वक्ष्य माणमुदाहृतवान् व्याकृतवान् कोऽसौ धीरो धीर्बुद्धिस्तया राजते स च तीर्थकृत् गणधरो वा कितदुदाहृतवांस्तै रातकै स्पृष्टः सन् तान् स्पर्शान् दु खानुभवान् व्याधिविशेषापादितानध्यासयेत् सहेत किमाकलय्येत्याह से पुव्व इत्यादि स स्पृष्ट' पीडित आशु जीवितापहारिभिरातकैरेतद्भावयेद्यथा पूर्वमप्येतदसातावेदनीयाविपाकजनित दु·ख मयैव सोढव्य पश्चादप्येतन् मयैव सहनीय यत संसारोदरविवरवर्ती न विद्यत एवासौ यस्यासातवेदनीयविपाकापादितारोगातंका न भवेयुस्तथाहि केवलिनोऽपि मोहनीयादिघातिचतुष्टयादुत्पन्नज्ञानस्य वेदनीयसद्भावेन तदुदयात्तत्सम्भव इति यतश्च तीर्थकरैरप्येतद्बद्धस्पृष्टनिधत्तनिकाचनावस्थायात कर्म्मावश्यवेद्य नान्यथा तन्मोक्षोऽतोनेनाप्यसातावेदनीयोदये सनत्कुमारदृष्टांतेन मयैवैतत्सोढव्यामित्याकलय्य नोद्विजितव्यमित्युक्तच " स्वकृतपरिणतानां दुर्नयानांविपाकः पुनरपि सहनीयोऽन्यत्र ते निर्गुणस्य॥ स्वयमनुभवतोऽसौ दु·खमोक्षाय सद्यो भवशतगतिहेतुर्जायतेऽनिच्छतस्ते" अपि चैतदौदारिक शरीर सुचिरमप्यौपधरसायनाद्युपबृंहित मृण्मयामघटादपि निस्सारतर सर्वथा सदा विशरारिविति दर्शयन्नाह । भेउरधम्म इत्यादि यदि वा पूर्वं पश्चादप्येतदौदारिक शरीर वक्ष्यमाणधर्म्मस्वभावमित्याह । भेदुरधम्मामित्यादि स्वयमेव भिद्यत इति भिदुर· स धर्मोऽस्य शरीरस्येति भिदुरधर्म्मं इदमौदारिक शरीर सुपोषितमापि वेदनीयोदयाच्छिरोऽदरप्र' प्रभृत्यवयवेषु स्वत एव भिद्यत इति भिदुर त विध्वंसयन् धर्म्मं पाणिपादाद्यवयवविध्वसनात् तथावश्य भावित त्रियामांते सूर्योदयवत् ध्रुव न तथाऽध्रुव तथा प्रच्युतानुत्पन्नस्थिरैकस्वभावतया कूटस्थनित्यत्वेन व्यवस्थित सन्नित्य नैव यत्तदनित्यमिति तथा तेन तेन रूपेणोदकधारावत् शस्वद्भवतीति शास्वत ततोऽन्यदशास्वत तथेष्टाहारोपभोगतया धृत्युपष्टम्भादौदारिकशरीरवर्गणापरमाणूपचयाच्चयस्तदभावे न तद्विघटनादपचय' चयापचयौविद्येते यस्य तच्चयापचयिक मतएव विविधपरिणामोऽन्यथाभावात्मको धर्म्मः स्वभावो यस्य तद्विपरिणामधर्म्मं यतश्चैव भूतमिद शरीरकमतोऽस्योपरि कोऽनुबध का मूर्च्छनास्य कुशलानुष्ठानमृतेऽन्यथा साफल्यमित्येतदेवाह पासह इत्यादि पश्यतैनं पूर्वोक्तरूप सधिभिदुरधर्मायाद्यातौदारिक पचेन्द्रिय निर्वृत्तिलाभावसरात्मक दृष्ट्वा च विविधातकजनितानस्पर्शानध्यासयेदिति एततपश्यतश्च यत्स्यात्तदाह । समुवेह इत्यादि सम्यगुत्प्रेक्ष्यमाणस्य पश्यतोऽनित्यताद्यातमिद शरीरकमित्येवमवधारयतो नास्ति मार्ग इति सबधः । किंच आङ् अभिविधौ समस्तपापारम्भेभ्य आत्मा आयत्यते आनियम्यतेतस्मिन् कुशलानुष्ठाने वा यत्नवान् क्रियत इत्यायतनं ज्ञानादित्रयमेकमाद्वितीयमायतनमेकायतन तत्र रतस्य किंच इह शरीरे जन्मानि वा विविध परमार्थभावनया शरीरानुबन्धात्प्रमुक्तो विप्रमुक्तस्तस्य नास्ति न विद्यते कोऽसौ मार्गो नरकतिर्यङ्मनुष्यगमनरूपति वर्त्तमानसामीप्ये वर्त्तमानदर्शनाम्न भविष्यतीदि नास्तीत्युक्त यदि वा तस्मिन्नेव जन्मनि समस्तकर्मक्षयोपपत्तेर्नास्ति नरकादिमार्ग' कस्येति दर्शयाति विरतस्य हिंसाद्याश्रवद्वारेभ्यो निवृत्तस्य इत्यधिकारपरिसमाप्तौ ब्रवीमीति सुधर्म्मस्वाम्यात्मानमाह ॥ यद्भगवता वीरवर्द्धमानस्वामिना दिव्यज्ञानेनार्थानुपलभ्य वाग्योगेनोक्तं तदह भवतां ब्रवीमि न स्वमतिविरचनेनेति ॥

आरम्भोपरमण च सोभन तथा चाचाराङ्गे ॥

जस्स णत्थिपुरे पच्छा मज्झे तस्स कुतो सिया ।
से हु पण्णाणमंते बुद्धे, आरंभोवरए सममेयं ति ॥
पासह जेण वंधं वहं धोरं परितावं च दारुणं ।
परिच्छिंदिं य वाहिरगं च सोयं ॥

जस्स नत्थि इत्यादि, यस्य भोगविपाकवेदिनः पूर्वभुक्तानुस्मृतिर्नास्ति नापि पाश्चात्यकालभोगाभिलाषिता विद्यते तस्य व्याधि चिकित्सारूपान् भोगान् भावयतो मध्ये वर्त्तमानकाले कुतो भोगेच्छा स्यात् मोहनीयस्योपशमान्नैव स्यादित्यर्थ· यस्य तु त्रिकालविषया भोगेच्छा निवृता स किंभूत· स्यादित्याह ॥ सेहुइत्यादि हुर्यस्मादर्थे य स्माभिवृत्तभोगाभिलापस्तस्मात्स प्रज्ञानवान् प्रकृष्ट ज्ञान जीवाजीवादिपरिच्छेत् तद्विद्यते यस्यासौ प्रज्ञानवान् यत एव प्रज्ञानवानत एव बुद्धोऽवगततत्व' यत एवभूतोऽत एवाह आरम्भोवरए सावद्यानुष्ठानमारभस्तस्मादुपरत आरम्भोपरत' एतच्चारम्भोपरमण शोभनमित्ति दर्शयन्नाह सममित्यादि यदिद सावद्यारम्भोपरमण सम्यगेतच्छोभनमेतत्सम्यक्त्व कार्य त्वाद्वा सम्यक्त्वमेतदित्येव पश्यत एवगृह्णीत यूयमिति किं मित्यारभोपरमण सम्यगिति चेदाह जेण इत्यादि येन कारणेन सावद्यारम्भप्रवृत्तो बध निगडादिभिर्वध कसादिभिर्घोर प्राणसशयरूप परिताप शारीरमानस दारुणमसह्यमवाप्नोत्य त आरम्भोपरमणं सम्यक्भूत कुर्यात् किंकृत्वेत्याह पलिछिंदि इत्यादि परिछिंद्या पनीय किं तच्छ्रोत पापोपादानं तच्चबाह्य धनधान्यहिरण्यपुत्रकलत्रादिरूप हिंसाद्याश्रवद्वारात्मकं च अभ्यन्तर च रागद्वेषात्मक विपयपिपासारूप चेति ॥ तथाच महानिशीथे २ प्र०

अत्थेगे गोयमा ? पाणी जेणो वयइ परिग्गहं जावइय गोयमा तस्स सचित्ताचित्तभेयत्तगं, पभूयं वाणजीवस्स भवेज्जा उपरिग्गहं । तावइएणं तु सोपाणि ससंगो मुक्खसाहाणं णाणाविगं ए आराहे तम्हा वज्जेपरिग्गहं अत्थेगे गोयमा पाणि जे पयहे ताए परिग्गहं आरंभं न विवज्जेज्जा जं पियं भवपरंपरा आरंभे पत्थियस्सेगवि यलजीवस्स वुब्भयरे संघट्टणा इयं कम्मं वद्धं गोयमा ? सु ए एगे वेइंदिए जीवे एगं समयं अणिच्छमाणे

वत्थानिओगेणं हत्थेणं वा पाएणं वा अन्नयरेण वा सल्ला-गाइ ओवगरणं जाएणं जे केइ पाणि आगाढं संघट्टेज्ज वा संघट्टावेज्जा वा संघट्टिज्जमाणं वा आगाढं परेहिं समणुजाणेज्जा सेणं गोयमा ? जाया तं कम्म उदयं गच्छेज्जा तया णं महया केसेणं छम्मासेणं विदिज्जा गाढं दुवालसहिं संवच्छरेहिं तमेव आगाढं परिआवेज्जा वास-सहस्सेणं गाढं दसहिं वाससहस्सेहिं तमेव आगाढं किलामेज्जा वासलक्खेणं गाढं दसहिं वासलक्खेहिं अहा णं उद्दवेज्जा तउ वासकोडीए एवं ती चउपंचिंदिएसु दट्ठव्वं सुहुमस्स पुढवीजीवस्स जत्थेगस्सवि अप्पारंभं तयं चिंते गोयमा ? सव्वकेवली सुहुमस्स पुढवीजीवस्स वावि ती जत्थसंभवे महारंभं तयं वेति गोयमा ? सव्व-केवली एवं तु समिद्धं तेहिं कम्मकुरूवेहिं गोयमा ? सेसो भट्टो अणंतेहिं जे आरंभे पवत्तए आरंभे वट्टमाणस्स बद्धपुट्ठनिकाइयं, कम्मं बद्धं भवे तम्हा, तम्हारंभं विव-ज्जए ? पुढवि इ अजीवकायंता सव्व भावे हि सव्वहा। आरंभे जे निअट्टेज्जा से अइए जम्मजरामरणसव्वदारि-दद्दुक्खाण विमुच्च इति अ० २ । तथाचबृहत्कल्पे वस्त्र-च्छेदनमधिकृत्य विन्नाय आरंभमिणं सदोसं तम्हा जहालद्धमधिट्ठिहिज्जा, वुत्तं स ए उ खलु जावदेही ण होति सो अंतकरी तु भावे ।

इयमनंतरोक्त सर्वलोकपूरणात्मकमारम्भं सदोष सूक्ष्मजीव-विराधनया सावद्य विज्ञाय तस्मात्कारणाद्यथालब्धं वस्त्रम धितिष्ठेत् न च्छेदनादिक कुर्यात् यतउक्तं भणित व्याख्याप्रज्ञप्तौ यावदय देही जीव. सैज सकम्पचेष्टावानित्यर्थः । तावदसौ कर्मणो भवस्य वा अंतकारी न भवति तथा च तदालापकः

जाव एए सजीवे सयासमियं एयइ वेयइ वज्झइ फंदइ घट्टइ खुभइ उदीरइ ॥

न त भाव परिणमइ ताव ण तस्स जीवस्स अते किरिया न भवति । आरम्भाद्यावद्य विरमेत् वृ० उ० ३ ॥

तथा च सूत्र कृताङ्गे श्रु १ अ. २ ॥

मायाहिं पियाहिं लुप्पइ नो सुलहा सुगई य पेच्चओ । एयाइ भयाइं पेहिया आरंभा विरमेज्ज सुव्वए ॥

टी० तया मायाहिं इत्यादि कश्चिन्मातापितृभ्यां मोहेन स्व-जनस्नेहेन च न धर्मं प्रत्युद्यम विधत्ते स च तत्रैव मातापित्रा-भिभिर्लुप्यते संसारे भ्राम्यते । तथाहि । विहिनमलोहमहोम-दन्मातापितृपुत्रदारवंधुस्नेह । स्नेहमयमस्मतामत किं बध-न शृंखला न्वनेन धावा ॥ ? ॥ तस्य च स्नेहाकुलितमानसस्य सदसद्विवेकविकलस्य स्वजनपोषणार्थं यत्किंचनकारिण इहैव सद्भिर्निंदितस्य सुगतिरपि प्रेत्य जन्मांतरे न सुलभाऽपि तु मातापितृभ्यामेहिनमननन्तरेव क्रियतो विषय सुखेप्सान दु दुर्गतिरेव भवनीत्युक्त भवति । तदेवमेतानि भयानि भय-कारणानि दुर्गतिगमनादीनि (पेहियत्ति) प्रेक्ष्य आत्मनाव गाऽऽनुष्ठानरूपात् विरमेत् । सुव्रत शोभनव्रत सन् दुर्भिनो

वेति पाठान्तरं ॥ ३ ॥ अनिवृत्तस्य दोषमाह ( जमिण मित्यादि )

" जमिणं जगाति पुढो जगा कम्मेहिं लुप्पति पा-णिणो । सयमेव कडेहिं गाहइ णोतस्स मुच्चेज्ज पुट्ठय ॥ ४ ॥ टी० ॥ ( जमिणमित्यादि ) यद्यस्मादनिवृत्ता नामिदं भवति किं तत् जगति पृथिव्यां ( पुढोत्ति ) पृथग्भूता व्यवस्थिताः सावद्यानुष्ठानोपचितैः कर्मभिर्वि लुप्यते नरकादिषु यातनास्थानेषु भ्राम्यते । स्वयमेव च कृतैः कर्मभि नेश्वराद्यापादितैर्गाहते नरकादिस्थानानि यानि तानि वा कर्माणि दुःखहेतूनि गाहते उपचिनोति । अनेन च हेतुसद्भाव. कर्मणामुपदर्शितो भवति न च तस्याऽशुभाचरि-तस्य कर्मणो विपाकेनास्पृष्टोऽच्छुप्तो मुच्यते जंतुः कर्मणामुदय मननुभूय तपोविशेषमतरेण दीक्षाप्रवेशादिना न तदपगम वि धत्त इति भाव ॥आरम्भ रहितएव च मुनिर्भवति तयाच सूत्रकृ ताङ्गे धम्मस्स य पारए मुणी आरंभस्स य अंतए ठिए सोयति य ण ममाइणो णो लब्भति णिय परिग्गहं॥ ए॥ धर्मस्य श्रुतचा रित्रभेदाभिन्नस्य पार गच्छतीति पारगः सिद्धांतपारगामी स म्यक् चारित्रानुष्ठायी वेति । चारित्रमधिकृत्याह । आरम्भस्य सावद्यानुष्ठानरूपस्यांते पर्यंते तदभावरूपे स्थितो मुनिर्भवति ये पुन नैवं भवति ते अकृतधर्म्माः मरणे दुःखे वा समुपस्थिते आत्मान शोचंति । णामिति वाक्यालंकारे । यदि चेष्टमरणा-द्यऽनर्थनाशे वा ( ममाइणोत्ति ) ममेदमहमस्य स्वामीत्येव-मध्यवसायिन. शोचंति । शोचमाना अप्येते निजमात्मीय परि समतात् गृह्यते आत्मसात्क्रियत इति । परिग्रहो हिरण्यादि-र्द्विपदस्वजनादिर्वा । नष्टामृत वा न लभंते न प्राप्नुवतीति । यदि वा धर्मस्य पारगं मुनिमारम्भस्यांते व्यवस्थित मेनमागत्य स्वजना मातापित्रादय. शोचति ममत्वयुक्ताः स्नेहालव. न च ते लभंते निजमप्यात्मीयपरिग्रहबुद्ध्या गृहीतमिति । आरम्भस्य दुःखविपाकत्वं सूत्रकृताङ्गे यथा ॥

वेराइं कुव्वई वेरी, तओवेरेहिं रज्जती ।
पावोवगाय आरंभा दुक्खफासाय अंतसो ॥

सांप्रत जीवोपघातविपाकदर्शनार्थमाह । ( वेराइं इत्यादि ) वैरमस्यास्तीति वेरी स जीवोपमर्दकारी जन्मशतानुबंधी-नि वैराणि करोति । ततोऽपि च वैरा दप रैर्वैरैरनुरुध्यते । वैरपरपरानुषंगी भवतीत्यर्थः । किमिति । यत पाप उप-सामीप्येन गच्छतीति पापोपगा क एते आरम्भाः सावद्यानुष्ठान रूपा । अन्तशो विपाकाकाले दुःख स्पृशतीति दुःखस्पर्शा असातोदयविपाकिनो भवतीति ॥ सूत्र० श्रु० १ अ० ८ ( सारम्भस्य सपरिग्रहस्य च मोक्षमार्गो नास्ति ) तथा सूत्रकृताङ्गे ॥

सपरिग्गहा य सारंभा इह मेगेसिमाहियं । अपरिग्गहा अणारंभा भिक्खू ताणं परिव्वए ॥ ३ ॥

सपरिग्गहा इत्यादि सह परिग्रहेण धनधान्यद्विपदचतुष्प-दादिना वर्त्तते तदभावेऽपि शरीरोपकरणादौ मूर्च्छावत सपरिग्रहा । तथा सहारम्भेण जीवोपमर्दादिकारिणा व्यापा-रेण वर्त्तन्त इति तदभावेऽप्यौद्देशिकादिभोजित्वात्सारंभा । तीर्थिकादय सपरिग्रहारम्भकत्वेनैव च मोक्षमार्गं प्रसाधय-तीति दर्शयति । इह परलोकचिंतायामेकेषां केषांचिदाख्यात भणित यथा किमनया शिरस्तुण्डमुण्डनादिकया क्रियया पर गुरोरनुग्रहात्परमक्षराबाप्तिस्तदीक्षावाप्तिर्वा यदि भवति ततो

मोऽहो भवतीत्येवं त्रायमाणास्ते न त्राणाय भवंतीति । ये तु त्रातु समर्थास्तान्पश्चार्द्धेन दर्शयति । अपरिग्रहाः । न विद्यते धर्मोपकरणादृते शरीरोपभोगाय स्वल्पोऽपि परिग्रहो येषां ते अपरिग्रहाः । तथा न विद्यते सावद्य आरम्भो येषां तेऽनारम्भास्ते चैव भूताः कर्मलघवः स्वयं यानपात्रकल्पाः संसारमहोदधेर्जन्तूत्तारणसमर्थास्तान् भिक्षुर्भिक्षणशील उद्देशिकाद्यपरिभोजी त्राणं शरणं परिसमंतात् व्रजेद्गच्छेदिति ॥ ३ ॥ कथं पुनः पुनस्तेनापरिग्रहेणाऽनारम्भेण च वर्त्तनीयमित्येतद्दर्शयितुमाह ॥

कडेसु घासमेसेज्जा, विऊ दत्तेसणं चरे ।
अगिद्धो विप्पमुक्को, अउमाणं परिवज्जए ॥ ४ ॥

टी० ॥ कडेसु इत्यादि गृहस्थैः परिग्रहारम्भद्वारेणाऽस्मार्थं ये निष्पादिता ओदनादयस्ते कृता उच्यन्ते । तेषु कृतेषु परकृतेषु परनिष्ठितेष्वित्यर्थः । अनेन च षोडशोद्गमपरिहारः सूचितः । तदेवमुद्गमदोषरहितं ग्रस्यत इति ग्रास आहारस्तमेवभूतमन्वेषयेन्मृगयेत् याचेतेत्यर्थः । तथा । विद्वान् संयमकरणैकनिपुणः परैराशंसादोषरहितैर्यन्निःश्रेयसबुद्ध्या दत्तमित्यनेन षोडशोत्पादनदोषाः परिगृहीता द्रष्टव्याः ॥ तदेवंभूते दौत्यधात्रीनिमित्तादिदोषरहिते आहारे स भिक्षुः एषणां ग्रहणैषणां चरेदनुतिष्ठेदित्यनेनाऽपि दशैषणा दोषाः परिगृहीता इति मंतव्यं । तथा । अगृद्धोऽनध्युपपन्नोऽमूर्च्छितस्तस्मिन्नाहारे रागद्वेषविप्रमुक्तः । अनेनाऽपि च ग्रासैषणा दोषाः पञ्च निरस्ता अवसेयाः स एवंभूतो भिक्षुः परेषामपमानं परावमं दर्शित्वं परिवर्जयेत् परित्यजेत् । न तपोमदं ज्ञानमदं च कुर्यादिति भावः सूत्र० श्रु० १ अ० १ ॥

आरंभेण च विद्याचरणे न लभते तथा च स्थानाङ्गे विद्याचरणे च कथमात्मा न लभत इत्याह ॥ स्था० ठा० २ ॥

दोट्ठाणाइं अपरियाणित्ता आयाणो केवली पन्नत्तं धम्मं लभेज्ज सवणयाए तंजहा आरंभे चेव परिग्गहे चेव दोट्ठाणाइं अपरियाइत्ता आयाणो केवलं बोधिं बुज्झिज्जा तंजहा आरंभे चेव परिग्गहे चेव ॥

दो ठाणाइत्यादि सूत्राण्येकादश द्वे स्थाने द्वे वस्तुनी । (अपरियाणित्तति )। अपरिज्ञाय ज्ञपरिज्ञया यथैतावारम्भपरिग्रहौ बन्धाय तथा अत्र प्रत्याख्यामीति परिहाराभिमुख्यद्वारेण प्रत्याख्यानपरिज्ञया अप्रत्याख्याय च अज्ञाददत्तवत्तयोरनिर्विण्ण इत्यर्थः ॥

अपरियाइत्तत्ति । क्वचित्पाठस्तत्र स्वरूपतस्तावदपर्यादाय अगृहीत्वेत्यर्थः आत्मनो नैव केवलिप्रज्ञप्तं जिनोक्तधर्मं लभेत श्रवणतया श्रवणभावेन श्रोतुमित्यर्थः तद्यथा आरम्भाः कृष्यादिद्वारेण पृथिव्याद्युपमर्दास्तान्परिग्रहा धर्मसाधनव्यतिरेकेण धनधान्यादयस्तानिह चैकवचनप्रक्रमेऽपि व्यक्त्यपेक्षं बहुवचनमवधारणमनुच्चयौ स्वबुध्याद्यैयावीति केवलां शुद्धां बोधिं दर्शनं सम्यक्त्वमित्यर्थो बुध्येत अनुभवेत् अथवा केवलया बोध्येति विभक्तिपरिणामात् बोध्यं जीवादीति गम्यते बुध्येत श्रद्धीतेति ॥ स्था० २ ठा

दोट्ठाणाइं अन्नो केवलं मुंडे भवित्ता आगाराओ अणगारियं पव्वेज्जा तंजहा आरम्भे चेव परिग्गहे चेव एवं णो केवलं बंभचेरं वा वि समावसेज्जा णो केवलेणं संजमेणं संजमेज्जा नो केवलेणं संवरेणं संवरेज्जा नो केवलमाभिणिबोहियणाणं उप्पाडेज्जा एवं सुअणाणं ओहिनाणं मणपज्जवनाणं केवलनाणं दो ठाणाइं परियाइत्ता आया केवलीपन्नत्तं धम्मं लभेज्ज सवणयाए तंजहा आरंभे चेव परिग्गहे चेव एवं जाव केवलनाणमुप्पाडेज्जा ॥

टी० ॥ मुण्डो द्रव्यतः शिरोलोचनं भावतः कषायाद्यपनयनेन भूत्वा सपद्य अगारात् गेहान्निष्क्रम्येति गम्यते केवलामित्यत्रेह सम्बन्धात्केवलां सम्परिपूर्णां विशुद्धां वा अनगारितां प्रव्रज्यां प्रव्रजेत् यायादिति । एवमिति । यथा प्राक् तथोत्तरवाक्येऽपि ॥ दोठाणा इत्यादि ॥ वाक्यं पठनीयमित्यर्थः ब्रह्मचर्येणाब्रह्मविरमणेन वासो रात्रौ स्वापः तत्रैव वा वासो निवासो ब्रह्मचर्यवासः तमावसेत्कुर्यादिति संयमेन पृथिव्यादि रक्षणलक्षणेन संयमयेदात्मानमिति संवरेणाश्रवनिरोधलक्षणेन संवृणुयादाश्रवद्वाराणीति गम्यते केवलं परिपूर्णं सर्वं स्वविषयग्राहकं । आभिणिबोहियणाणं ॥ अर्थाभिमुखो विपर्ययरूपत्वान्नियतोऽसंशयस्वभावत्वाद्बोधो बोधनं वेदनं माभिणिबोधः स एवाभिनिबोधिकं तच्च तज्ज्ञानञ्चेत्याभिनिबोधिकज्ञानं मिन्द्रियानिन्द्रियनिमित्तं ओघतः सर्वद्रव्यासर्वपर्यायविषयं उप्पाडेज्जत्ति ॥ उत्पादयेदिति तथा एवमित्यनेनोत्तरपदेषु नो केवलं उप्पाडेज्जति द्रष्टव्यं 'सुयणाणत्ति) श्रूयते तदिति श्रुतं शब्द एव स च भावश्रुतकारणत्वाज्ज्ञानं श्रुतज्ञानं श्रुतग्रन्थानुसारिओघतः सर्वं द्रव्यसर्वपर्यायविषयमक्षरश्रुतादिभेदमिति । तथा ओहिणाणत्ति । अवधीयते अनेनास्मादस्मिन्वेत्यवधिः अवधीयत इत्यधोऽधो विस्तृतम्परिच्छिद्यते मर्यादया वेति अवधिज्ञानावरणक्षयोपशम एव तदुपयोगहेतुत्वादिति अवधानम्वाऽवधिर्विषयपरिच्छेदनमिति अवधिश्चासौ ज्ञानञ्चेत्यवधिज्ञानं इन्द्रियमनोनिरपेक्षमात्मनोरूपिद्रव्यसाक्षात्कारणमिति तथा मणपज्जवनाणति ॥ मनसि मनसो वा पर्यवः परिच्छेदः स एव ज्ञानमथवा मानसः पर्यवाः पर्याया वा विशेषावस्था मनःपर्यवादयः तेषाम्तेषु वा ज्ञानम्मनःपर्यवज्ञानमेवमितरत्रापि समयक्षेत्रगतसंज्ञिमन्यमानमनोद्रव्यसाक्षात्कारीति । ( केवलनाणति)केवलमसहायं मत्यादिनिरपेक्षत्वादकलङ्कं वावरणमलाभावात् सकलं वा तत्प्रथमतयैवाशेषतदावरणाभावतः सम्पूर्णोत्पत्तेरसाधारणं वा अन्यसदृशत्वादनन्तं वा ज्ञेयानन्तत्वात्तच्च तज्ज्ञानञ्च केवलज्ञानमिति ठा. २ ॥

कुशलारम्भमेव चारम्भन्यम् तथा चाचाराङ्गे अ० २ उ० १ ॥

कुसले पुण णो बद्धे णो मुक्के सेज्जं च आरंभे ॥
जं च णारम्भे अणारद्धं च ण आरभे ॥

टी०॥ कुशलेत्यादि कुशलोऽत्र क्षीणघातिकर्मांशो विवक्षितः स च तीर्थकृत्सामान्यकेवली वा छद्मस्थो हि कर्म्मणा बद्धो मोक्षार्थी तदुपायान्वेषकः केवली तु पुनर्घातिकर्मक्षयाभावाद्बद्धो भवोपग्राहिकर्मसद्भावान्नो मुक्तो यदि वा छद्मस्थ एवाभिधीयते कुशलोऽवाप्तज्ञानदर्शनचारित्रो मिथ्यात्वद्वादशकषायोपशमसद्भावात्तद्दुदयवानिव न बद्धोऽद्यापि तत्सत्कर्म्मतासद्भावान्नो मुक्त इत्यादि एवंभूतश्च कुशलः केवली छद्मस्थो वा यदाचीर्णवानाचरितवान् तदपरेणापि मुमुक्षुणा विधेयमिति दर्शयति । सेज्जं च इत्यादि स कुशलो यदारम्भते आरब्ध

वान्या शेषकर्मक्षपणोपायं संयमानुष्ठानं यच्च नारभते मिथ्या त्वाविरत्यादिकं संसारकारणं तदारब्धव्यमनारंभणीय चेति ससारकारणस्य च मिथ्यात्वाविरत्यादे' प्राणातिपाताद्यष्टादशरूपस्य चैकांतेन निराकार्यत्वात्तन्निषेध च विधेयस्य संयमानुष्ठानस्य सामर्थ्यायातत्वात्तन्निषेधमाह । अणारद्ध चेत्यादि अनारब्धमनाचीर्णं केवलिभिर्विशिष्टमुनिभिर्वा तन्मुमुक्षु नारभेत नोकुर्यादित्युपदेशो यच्च मोक्षांगमाचीर्णं तत्कुर्यात् प्रस्तावने वधे दर्प्ये च द्रव्याणां द्रव्यान्तरेण गुणानां गुणान्तरेणोत्पादे वैशेषिकोक्ते व्यापारे- द्रव्यारभइचतुर्षु स्यात् कर्मणि घञ् आरभ्यमाणे । फलानुमेयाः प्रारम्भाः संस्काराः प्राक्तनाइव- रघु' चित्रार्पितारम्भइवावतस्थे ॥ कुमा० वाच० ॥ आरभ्यत इत्यारम्भः जीवे- आरभ्यते विनाश्यन्ते इत्यारंभा जीवा इति ॥ प्रश्न० द्वा० १ ॥

आरंभकम–आरंभकृत् त्रि० ( आरम्भेण कृते ) आरंभककेति वा सावज्जककेत्ति वा पयत्तककेत्ति वा ( आरभकृतमेतत् सावद्यकृतमेतत् ) प्रयत्नकृतमेतदित्ति ॥ आचा० अ० ४ उ० १

आरंभकरण–आरम्भकरण–न० व्यापारकरणे ( हिंसाइीयअदत्तादाणमेहुणपरिग्गहारंभकरणकारावणाणुमोदणअट्ठविहअणिट्ठकम्मपिंडितगुरुभारक्कन्तदुग्गजलोघदूरनिवोलिज्जमाणउम्मग्गनिमग्गदुल्लहत्तलं ) हिंसादीकादत्तादानमैथुनपरिग्रहलक्षणा ये आरम्भा व्यापारास्तेषां यानि करणकारणानुमोदनानीति ॥ प्रश्न० द्वा० ३ ॥ आरम्भणमारम्भः पृथिव्याद्युपमर्दनन्तस्य कृति' करणम् स एव वा करणमित्यारम्भकरणम् करणभेदे स्था० ठा० ३ ॥

आरंभकहा–आरम्भकथा– स्त्री० तित्तिरादीनामियत्तां तत्रोपयोग इत्यारम्भकथा विकथाभेदे सा च भक्तकथायास्तृतीयो भेद इति ॥ स्था० ठा० ४ ॥

आरंभकिरिया–आरंभक्रिया– स्त्री० क्रियाभेदे आरंभाक्रिया द्विविधा जीवारम्भक्रिया अजीवारभक्रिया तत्र जीवारभक्रिया जीवानारभते अजीवारम्भक्रिया अजीवानारभत इति ॥ आ० चू० ॥ एतद्वक्तव्यताऽऽरम्भिकीशब्देऽपि ॥

आरंभज्झाण–आरंभध्यान– न० आरम्भः परोपद्रवस्तस्यध्यानम् परोपद्रवध्याने ( आरम्भझाणे ) आरंभः परोपद्रवस्तस्यध्यानम् कुरुमोकुरुरूयोरिव द्वीपायनस्येव वा तस्मिन् इति ॥ आतु० ॥

आरंभग–आरम्भक– त्रि० आरभ एवुल् मुम् आरम्भकारके ॥ वाच० ॥ सावद्यारम्भप्रवृत्ते आचाराङ्गस्य पचमाध्ययनप्रथमोद्देशकस्योद्देशार्थ मधिकृत्य निर्युक्तौ, हिंसगविसयारंभो एगचरोत्ति न मुणि पढमगामि ।।आचा० ५अ.१ उ हिनस्तीति हिंसक आरम्भणमारम्भो विषयाणामारम्भोऽस्येति विषयारम्भक व्यधिकरणस्यापि गमकत्वात्समासः एवुलन्तस्य वा याजकादिदर्शनात्समासो विषयाणामारम्भको विषयारम्भक इति हिंसकश्च विषयारम्भश्चेति विगृह्य समाहारद्वंद्वः प्राकृतत्वात् पुल्लिङ्गता अयमर्थो हिंसक प्राणिनां विषयारम्भकश्च विषयार्थ सावद्यारम्भप्रवृत्तश्च न मुनिस्तथा विषयार्थमेक एव चरत्येकचरः स च न मुनिरित्येतदधिकारत्रय प्रथमोद्देशके ॥ आचा० ॥ अ० ५ उ० १ ॥ (सावद्यानुष्ठाने पुं० आरम्भगं चेव परिग्गहं च अविउस्सिया णिस्सिय आयदंडा आरम्भं सावद्यानुष्ठानमिति ) ॥ सूत्र० ॥ श्रु० २, अ० ६ ॥

वैशेषिकादिमतसिद्धे महत्वाद्युपचयाय अवयवानां विजातीयसंयोगे च, तत आरम्भसंयोगनाशः ॥ मुक्ता० ॥ आरम्भवादशब्दे ॥ शा० भा० उदा० ॥

आरम्भजीविन्–आरम्भजीविन् पु०आरम्भः सावद्यानुष्ठानं प्रमत्तयोगो वा तेन जीवितु शीलमेषामित्यारम्भजीविनः। सावद्यानुष्ठानप्रवृत्ते ( लोगंसि अणारम्भजीवी ) आ० चा० अ ५ उ १ ॥

आरंम्भः सावद्यानुष्ठानं प्रमत्तयोगो वा उक्तञ्च "आयाणे णिक्खेवे, भासुस्सग्गे य ठाणगमणादी, सव्वो पमत्तजोगो समणस्स ओ होइ आरम्भो ॥ तद्विपर्ययेण त्वनारम्भस्तेन जीवितुं शीलमेषामित्यनारम्भजीविनो यतश्च समस्तारम्भनिवृत्तास्तेष्वेव गृहिषु पुत्रकलत्रस्वशरीराद्यर्थमारम्भजीविनो भवन्ति एतदुक्तं भवति सावद्यानुष्ठानप्रवृत्तेषु गृहस्थेषु देहसाधनार्थमनवद्यारम्भजीविनस्साधव एकाधारएव जलधिर्हि ( ? ) भवन्ति आरम्भेण जीवितुं शीलमस्येत्यारम्भजीवी महारम्भपरिग्रहप्रकल्पितजीवनोपाये ॥ आ- चा० अ५ उ २ ॥ आरभजीवी उ भयाणुपस्सी ॥ आचा० अ उ १ सावद्यानुष्ठानस्थितिके सावद्यानुष्ठानवृत्तिके च ॥

आरंभट्ठाण– आरम्भस्थान न० सावद्यारम्भाश्रये सूत्र० ( तत्थणं जासा सव्वतो अविरइ एसट्ठाणे आरंभट्ठाणे अणारिए जाव असव्वदुःखप्पहीणमग्गे एगतमिच्छे ) असाहू तत्र पूर्वोक्तेषु येय सर्वात्मना सर्वस्मात् अविरतिर्विरति परिणामाभावः । एतत्स्थान सावद्यारम्भस्थानमाश्रयस्तदाश्रित्य सर्वाण्यपि कार्याणि क्रियते यत एवमत एतदनार्यस्थान निःशूकतया यत्किंचनकारित्वाद्यावदसर्वदुःखप्रक्षीणमार्गोऽयं तथैकांतमिथ्यारूपो साधुरिति आरम्भ एव स्थानम् वस्तु आरम्भस्थानम् प्रमत्तयोगलक्षणं वस्तुनि तथा च स्थानाङ्गे॥ स्था. ठा. १० ॥ अथ महापद्मस्यात्मनश्च सर्वज्ञत्वात्स र्वज्ञपेक्षया मतामेदात् भेदे चैकस्यायथावस्तुदर्शनेनाऽसर्वज्ञता प्रसगादित्युभयोर्भगवान् समां वस्तुप्ररूपणां दर्शयन्नाह ॥

से जहा नामए अज्जोमए समणाणं निग्गंथाणं एगे आरंभट्ठाणे प० एवामेव महापउमेवि अरहा समणाणं निग्गंथाणं एगं आरंभट्ठाणं पन्नवेहिंति ॥

टी० ॥ सेजहेत्यादि सद्व्यथार्थोऽथशब्दश्च वाक्योपन्यासार्थो यथेत्युपमार्थः । नामएत्ति ॥ वाक्यालकारे ॥ अज्जोत्ति ॥ शिष्यामंत्रण ॥ एगे आरंभट्ठाणेत्ति ॥ आरम्भएव स्थान वस्तु आरम्भस्थान मेकमेव तत्तत् प्रमत्तयोगलक्षणत्वात्तस्य यदाह सव्वो पमत्तजोगो समणस्सउ होइ आरंभोत्ति ठा० ए

आरंभट्ठि ( न् ) आरम्भार्थिन् पु० सावद्यारंभप्रवृत्ते, आरंभट्ठी अणुवयमाणे हण पाणे घायमाणे हणओ यावि समणुजाणमाणे ॥ आचा० अ०६ उ० ४

आरम्भार्थी सावद्यारम्भप्रवृत्तः कुत आरम्भार्थी यत प्राण्युपमर्दवादानुवदन्नेतद् ब्रूते तद्यथा जहि प्राणिनोपरैरेव घातयन् घ्नतश्चापि समनुजानामीति, ॥ टी० ( तेइहआरंभट्ठी ) ते अनधीताचारगोचरा निकाचर्यास्ते न स्वेदमलपरीषह तर्जिता सुखविहारिभिः शाक्यादिभिरात्मसात्परिणामिता इह मनुष्यलोके आरम्भार्थिनो भवन्ति ते वा शाक्यादयोऽन्य वा कुशीलाः सावद्यारम्भार्थिन ॥ इति

आचा० अ. ७ उ १॥

**आरम्भणिस्सिय—आरम्भनिश्रित** त्रि० आरम्भे हिंसादिके सावद्यानुष्ठानरूपे निश्चयेन श्रिता सम्बद्धा अध्युपपन्ना आरम्भनिश्रिताः हिंसादिकसावद्यानुष्ठानेऽध्युपपन्ने ( जे इह आरम्भणिस्सिया सूत्र० श्रु- १ अ २ ॥ जे य आरम्भणिस्सिया, ) ये चान्ये वर्णापसदानानारूपसावद्यारम्भ निश्रिता यत्रपीडन निर्लोञ्छनकर्माङ्गारदाहादिभिः क्रियाविशेषै र्जीवोपमर्दकारिण इति, ॥ सूत्र० श्रु० १ अ० ए ॥

( सदा आरम्भणिस्सिया ) ॥

आरम्भे प्राण्युपमर्दकारिणि व्यापारे निश्रिता आसक्ताः सम्बद्धा अध्युपपन्ना इति ॥ प्राण्युपमर्दकारिणि विवेकिजननिन्दिते आरम्भे व्यापारे निश्चयेन नितरां चाश्रिताः सम्बद्धा. पुण्यपापयोरभाव इत्याश्रित्य परलोकनिरपेक्षतयाऽऽरम्भनिश्रिता इति ॥ सूत्र० ॥ श्रु० १ अ० १ ॥

**आरंभदोस—आरम्भदोष**— पु० क्रियाफले ( पागोवजीविणो त्तिय लिप्पंतारम्भदोसेण ) पाकोपजीविन इति कृत्वा लिप्यते आरम्भदोषेणाहारक्रियाकरणफलेनेत्यर्थ इति ॥ दश० अ० १ ॥

**आरंभपडिमा आरम्भप्रतिमा** स्त्री० अष्टम्यां प्रतिमायाम् अष्टौ मासान् स्वयमारम्भं न करोतीत्यष्टमी ॥ ध० अधि २ ॥

**आरंभपरिग्गहच्चाय—आरम्भपरिग्रहत्याग**—पु० आरम्भपरिग्रहवर्जने ( भावेण जिणमयम्मि उ आरम्भपरिग्गहच्चाओ ) पं० व० ॥ भावेनेति भावतः परमार्थत' जिनमत एव रागादिजेतृत्वाज्जिन. । तन्मत एव वीतरागशासन एवेत्यर्थः आरम्भपरिग्रहत्याग. । वक्ष्यमाणारम्भपरिग्रहवर्जन जिनशासन एवान्यशासनेष्वारम्भपरिग्रहस्वरूपानवगमात्सम्यक्त्यागानुभ व इति गाथार्थ' ।

आरम्भपरिग्रहस्वरूप प्रतिपादनायाह

पुढवाइसु आरंभो परिग्गहो धम्मसाहणं मुत्तुं,
मुच्छा य तत्थवज्झो इयरो मिच्छत्तमाईओ ॥ ७ ॥

व्याख्या । पृथिव्यादिषु कायषु विषयभूतेषु आरम्भ इत्यारम्भणमारम्भ. सघट्टनादिरूप परिग्रहण परिग्रह असौ द्विविधः बाह्याभ्यंतरश्च तत्र धर्म्मसाधनं मुखवस्त्रिकादि मुक्त्वा बाह्य इति सबध । अन्यपरिग्रहणमिति गम्यते, मूर्च्छा च तत्र धर्म्मोपकरणबाह्या एव परिग्रह इति इतरस्त्वांतरपरिग्रहो मिथ्यात्वादिरेव आदिशब्दादविरति दुष्प्रयोगा गृह्यते परिगृह्यते न कारण भूतेन कर्म्मणा जीव इति गाथार्थ. ।

त्यागशब्दार्थं व्याचिख्यासुराह ॥

चाओ इमेसि संगं मणवयकाएहिँ अप्पवित्तिओ ।
एसा खलु पव्वज्जा मुक्खफला होइ नियमेणं ॥

व्याख्या । त्याग प्रोज्झनमनयो रारम्भपरिग्रहयोः सम्यक्प्रवचनोक्तेन विधिना मनोवाक्कायै त्रिभिरप्रवृत्तिरेव । आरम्भपरिग्रहे च मनसा वाचा कायेनाप्रवर्त्तनमिति भाव' एषा खल्विति एषैव प्रव्रज्या यथोक्त स्वरूपा मोक्षफला भवतीति- मोक्ष' फल यस्या सा मोक्षफला भवति नियमेनावश्य तया भावमंतरे णारम्भादौ मनोऽप्रवृत्त्यसभवादिति गाथार्थ ॥

**आरम्भपरिण्णाय आरम्भपरिज्ञात** पु० आरम्भ पृथिव्याद्युपमर्दन लक्षण परिज्ञातस्तथैव प्रत्याख्यातो येनसावारम्भपरिज्ञात' श्राद्ध अष्टम्या उपासकप्रतिमयोपेते श्राद्धे तथा च समवायाङ्गे। अष्टमी मुपासकप्रतिमामधिकृत्य( आरभपरिणाए ) ॥ सम० ११॥ आरम्भ पृथिव्याद्युपमर्दनलक्षण. परिज्ञातस्तथैव- प्रत्या ख्यातो येनासावारम्भपरिज्ञातः श्राद्धोऽष्टमीप्रतिमेति ॥

**आरम्भपसत- आरंभप्रसक्त** त्रि० आरम्भेषु पृथिव्याद्युपमर्द्दनेषु प्रसक्तस्तत्परः आरम्भतत्परे ग० अ. २ ॥

**आरंभय आरम्भज** त्रि० आरम्भ. सावद्यक्रियानुष्ठानं तस्माज्जातमारम्भजं सावद्यक्रियानुष्ठानेन जाते॥ आचा ० अ ३उ१ (आरंभजं दुक्खमिणंति णच्चा) ॥ आचा० अ २ उ १ ॥ आरम्भ सावद्यक्रियानुष्ठानम् तस्माज्जातमारम्भज किंतत् दुःख तत्कारणं वा कर्म इदमिति प्रत्यक्ष गोचरापन्न मशेषारम्भप्रवृत्त प्राणिगणानुभूयमानमित्येतत् ज्ञात्वा परिच्छिद्य निरारम्भो भूत्वाऽऽत्महिते जागृहि सावद्यक्रियानुष्ठानमारम्भजं किंतद्दुःखमिदमिति सकलप्राणिप्रत्यक्षं तथा हि कृषिसेवा वाणिज्याद्यारम्भप्रवृत्तो यच्छारीरमानसदुःख मनुभवति तद्वाचामगोचर इत्यत' प्रत्यक्षाभिधायिनेदमुक्तमितिरूपप्रदर्शने इत्येतदनुभवसिद्धं दुःखं ज्ञात्वा मृताचार्य्यधर्म्मविद ऋजवश्च भवन्तीति ( पाणाइवाए दुविहे पन्नत्ते तंजहा संकप्पओय १ आरंभओय २ ) आव० ॥ आरभाज्जातस्तत्रारम्भो हलदतालखन्नादिखनन सूनाप्रकारस्तस्माज्जंखचदनक पिपिलिकाधान्यगृहकारिकादि सघट्टन परितापा पद्रावण लक्षण इति । आव० ।

**आरंभपेसउद्दिट्ठवज्जय—आरंभप्रेषोद्दिष्टवर्जक**— पु० अष्टम्या मुपासक प्रतिमायां तथाच पञ्चाशके ।

आरंभ पेसउद्दिट्ठ वज्जए, समणभूएय ।

प० वृ० १ तथा आरभश्च स्वयं कृष्यादिकरणं प्रेषश्चप्रेषण परेषां कृष्यादिषु प्रवर्तन उद्दिष्ट चाधिकृतश्रावक मुद्दिश्य स चेतन सद्चेतनीकृत पक्वा यो वर्जयति परिहरते असावारभ प्रेषोद्दिष्टवर्जक प्रतिमेति प्रकृतमेव इह च प्रतिमाप्रतिमावतोरभेदादेवमुपन्यास ॥ १५ ॥

**आरंभरय—आरंभरत**—त्रि० सावद्यानुष्ठानरते ।

जेमयआरंभ रया,तेजीवा होंति अप्पह दोसयए,
तओमहापावयरा, जे आरंभपसंसंति । दश० ।

**आरंभवंत—आरंभवत्**—त्रि० आरम्भप्रवृत्ते पो० विव० ९

**आरंभवज्जय—आरंभवर्जक**—त्रि० आरम्भपरिहारके० यचैका दशमुपासक प्रतिमास्वष्टमी प्रतिमेति प्रश्न द्वा ५ अष्टौमासान् ह्ययमारम्भ न करोतीत्यष्टमीति । ध० अ० २ ।

**आरंभविणय—आरंभविनय**—पु० आरम्भाभावे आ० अ ४उ २।

**आरंभविणयि ( न् ) आरंभविनयिन्**— पु० आरंभविनय आरम्भाभाव. सविद्यते येषामिति मत्वर्थीय आरंभाभाववति। आचा० । अ० ४ उ० २ ।

**आरंभसंभिय—आरंभसंभृत**—त्रि० आरंभै' संभृता आरभसंभृता आरम्भपुष्टे ।आरंभ सभिया कामा नते दुःखविनोयगा । आरंभै सम्यक्भृता आरम्भपुष्टा आरम्भाश्च जीवोपमर्दकारिणोऽतो नते काम समृताः आरम्भनिश्रिताः परग्रहानिविष्टा दुःखयतीति दुःखमष्टप्रकार कर्म तद्विमोचकाभवति तस्याऽपनेतारो भवतीत्यर्थ. । सू० श्रु० १ अ० ए ।

आरंभसच्च- आरम्भसत्य- त्रि० आरंभोजीवोपघातस्तद्विषयं सत्य मारंभसत्य आरभविषये सत्ये भ० श० ८ उ० १।

आरंभसच्चमणप्पओग-आरंभसत्यमनः प्रयोग-पु० आरंभो जीवोपघातस्तद्विषय सत्यमारभसत्य तद्विषयो यो मन. प्रयोगः आरंभ सत्यविषयक मन. प्रयोगे भ० श० ८ उ० १।

आरंभसच्चमणप्पओगपरिणय-आरंभसत्यमनः प्रयोगपरिणत-त्रि० आरंभो जीवोपघातस्तद्विषय सत्यमारभसत्यं तद्विषयो यो मन. प्रयोगस्तेनपरिणत यत्ततया आरंभसत्य-विषयक मन. प्रयोगपरिणते द्रव्यादौ ( जइसच्चमणप्पओग परिणए किं आरंभ सच्चमणप्पओग परिणए अणा रंभसच्चमणप्पओग परिणए ) भ० श० ८ उ० १ ॥

आरंभसत्त-आरंभसक्त-त्रि० आरंभे सावद्यानुष्ठानरूपे सक्तो लग्न. आरंभबद्धे । सू० श्रु० १ अ १

वेराणुगिद्धे ( पाठान्तरे आरम्भसत्तो ) णिचयंकरेति, इओ चुते सुदुहमट्ठदुग्गं । तम्हाउमेधावि समिक्ख धम्मं चरेमुणी सव्वओविप्पमुक्के ॥ ८ ॥ त० टी० ।

व्या० । येन केन कर्म णा परोपतापरूपेण वैरमनुबध्यते जन्मान्तरशतानुयायि भवति तत्र गृद्धो वैरानुगृद्धः पाठान्तर वा ( आरंभसत्तोत्ति ) आरभे सावद्यानुष्ठानरूपे सक्तो लग्नो निरनुकम्पो निचय द्रव्योपचयं तन्निमित्तापादितकर्मनिचय स्याना श्युतो जन्मान्तरं गत. सन् वा करोति उपादत्ते स एव भूत उपात्तवैर. कृतकर्मोपचय इत्यतोऽस्मात्स्थानाच्च्युतो-जन्मांतर गत सन् दुःखयतीति दुःख नरकादिकयातनास्थान मर्थत परमार्थतो दुर्गं विषमं दुरुत्तरमुपैति यत एव तत्तस्मान्मेधावी विवेकी मर्यादावान् वा संपूर्णसमाधिगुणं जानानो धर्म श्रुत चारित्राख्यसमो क्ष्या लोच्यांगीकृत्य मुनि साधु. सर्वत स बाह्याभ्यंतरात्संगादि प्रमुक्तोऽपगत । संयमानुष्ठान मुक्तिगमनकहेतुभूत चरेदनुतिष्ठेत् तथारभादिसगात्प्रमुक्तोनि श्रितभावेन विहरेदिति यावत् ॥(आरंभसत्तापकरतिसग) आरंभण मारंभ सावद्यानुष्ठानम् तस्मिन् सक्तास्तत्परा इति । आ० अ० १ उ ७

आरंभसमारंभ- आरंभसमारम्भ पु० आरभ्यन्ते विनाश्यंते इत्यारंभा जीवा स्तेषां समारम्भ उपमर्द. अथवा आरभ कृष्यादि व्यापारस्तेन समारंभो जीवोपमर्द्द अथवा ऽऽरंभो जीवाना मुपद्रवणं तेन सह आरंभ. परितापन मित्यारंभ. समारम्भ. जीवोपमर्दः कृष्यादिव्यापारेण जीवोपमर्दे परितापसहिते जीवाना मुपद्रवेण च प्राणवधेच तथा च प्रश्नव्याकरणे प्राणवधस्य गौणनामान्यधिकृत्य आरंभ समारंभ प्राणवधस्य पर्याय. इति प्रश्न० । द्वा० १ ।

आरंभि ( न् ) आरंभिन्- पु० पापारम्भान्वेषिणि ॥

नाणतेमीणारंभे कंचण सव्वलोए ।
कप्पमुह विदिसप्पातिसे ॥ आ० अ० ५ उ० ॥

सर्वत्रभूत मध्वारंभी स्यात कुमार्गे परित्यागेन न पापारम्भान्वेषी भवतीत्यर्थ आचा० सूत्र० श्रु० १ अ० ९ ।

एतेहिं छहिं कायेहिं. ते विज्जं परिजाणिया ।
मणसा काय वक्कए. णारंभी ण परिग्गही ॥

व्या० । एभि. पूर्वोक्तैः षड्भिरपि कायैस्त्रस स्थावररूपैः सूक्ष्मबादर पर्याप्तका पर्याप्तकभेदभिन्नैर्नारंभी नाऽपिपरिग्रही स्यादिति संबंधः । तदेतद्विद्वान् सश्रुतिको ज्ञपरिज्ञया परिज्ञाय प्रत्याख्यान परिज्ञया मनोवाक्काय कर्मभिर्जीवोपमर्द्दकारिणमारंभं परिग्रहच परिहरेदिति ॥

आरंभिया-आरंभिकी-स्त्री० आरंभ. पृथिव्याद्युपमर्द्द. स प्रयोजनं कारणं यस्या सा ऽऽरंभिकी । स्था० ठा० २ क्रियाभेदे-भ० श० १ उ० २ ॥

आरंभिया किरिया दुविहा पं० तं० जीवआरंभिया चेव अजीव आरंभिया चेव ॥ स्था० ठा० ५ ।

जीवआरंभियाचेवत्ति-यज्जीवानारभ माणस्योपमृद्नतः कर्म बन्धन सा जीवारंभिकी अजीवारंभिया चेवत्ति यच्चाजीवान् जीवकलेवराणि पिष्टादिमयजीवाकृतीश्चवस्त्रादीन्वा रंभमाणस्य सा अजीवारंभिकीति स्था०। आव०चू०।

आरंभियाणं भंते ! किरिया कस्स कज्जइ गोयमा ! अन्नयरस्स वि पमत्तसंजतस्स, प्रज्ञा० ॥ पद २२ ॥

अन्नयरस्स वि पमत्तसंजतस्स इति ॥ अत्रापि शब्दो भिन्नक्रमः प्रमत्त सयतस्याप्यन्यतरस्य एकतरस्य कस्यचित्प्रमादे सति कायदु प्रयोग भावत. पृथिव्यादेरुपमर्द्दसम्भवात् अपिशब्दोऽन्येषामधस्तन गुणस्था न वर्तिनां नियम प्रदर्शनार्थः प्रमत्तसयतस्याप्यारंभिकी क्रिया भवति किं पुनः शेषाणां देशविरति प्रभृतीनामिति एव मुत्तरत्रापि यथायोगमपिशब्दभावना कर्तव्या ॥

आरंभोवरय-आरम्भोपरत-त्रि० सावद्यानुष्ठानादुपरते ॥

जे य पद्माणमंतो पबुद्धा आरंभोवरता सम्ममेयंति पासह । आचा० अ० ५० उ० ५ ।

आरम्भः सावद्योयोगस्तस्मादुपरता आरंभोपरता इति । आचा० ।

सेहु पन्नाणमते बुद्धे आरंभोवरए सम्ममेयंति पासह आचा० अ० ४ उ० ३ ।

सावद्यानुष्ठानमारंभस्तस्मादुपरता आरंभोपरता इति ।

आरक्ख-आरक्ष -पु० आ-रक्ष-अच्-हस्तिकुंभाध स्थले, आरक्षमग्रमवमत्य सृणि शिताग्रां । माघ. । हस्तिमस्तकचर्म्मणि, सैन्येच रक्षके, त्रि० ( सहस्रसाहस्र मारक्षं मध्यग रक्षसां कपिः भट्टि ( तेषामारक्षभूतन्तु पूर्वं दैव नियोजयेत् । मनुः वाच० ॥

चोरो य णगररक्खेण परिब्भसमाणो तत्थेवअतिगतो नि० चू० १ उ० । आ० म० ।

राज्ञामात्मरक्षक-स्था०ठा ३उग्रे उग्रवंश्ये,च आरक्षकाउग्र उग्रएरुकास्त्वाद्युग्रा इति । आ म उग्रा आदिराजेनारक्षक त्वेन व्यवस्थापितास्तद्वंश्याश्चोति स्था० ६ ठा० । भावे घञ् रक्षायां-पु० वाच० ॥

आरक्खिय-आरक्षिक- पु० कोट्टपाले । वृ० ।

आरक्खिय पुरिसेहिय अहोगयं रात्रिखज्जइ नि०चू० १उ०।
आरक्खिओ पुव्वभणिओ आरक्खिगोत्ति ।
दंडवासिगो ॥ नि० चू० १६ उ० ।

कुसुमानि सन्त्युत नेति दृष्ट्वा तेषामाकुंचनं करोति ग्रहणमित्यर्थः ततोविकटीकरणं विकसितमुकुलितार्द्धमुकुलितानां भेदनं विभजनमित्यर्थः च शब्दात् पश्चात् ग्रंथनं करोति ततो ग्राहका गृह्णंति ततोऽस्यानिवर्त्तितार्थलाभो भवति भावशुद्धिश्च चित्तप्रसादलक्षणा अस्या एव विवक्षितत्वात् अन्यस्तु विपरीतकारी मालाकारस्तस्य न भवति एवं साधुरपि कृतोपधिप्रत्युपेक्षणादिव्यापारा उच्चारादिभूमिप्रत्युपेक्षया घातविरहितकायोत्सर्गस्थेऽनुप्रेक्षते सूत्रं गुरौ तु स्थिते दैवसिकावश्यकस्य मुखवस्त्रिकाप्रत्युपेक्षणादेः कायोत्सर्गे तस्यावलोकनं करोति पश्चादाकुंचन स्वबुद्ध्याऽपराधग्रहणं ततो विकटीकरणं गुरुलघूनामपराधानां विभजनं च शब्दादालोचनं प्रतिसेवनानुलोमेन ग्रथनं ततो यथाक्रमं गुरोर्निवेदनं करोति एवं कुर्वतः भावशुद्धिरुपजायते। औदयिकभावात् क्षायोपशमिकप्राप्तिरित्यर्थः। इत्यमुक्तेन प्रकारेणालोचिते गुरोरपराधजाले निवेदिते आराधना मोक्षमार्गस्वरूपा भवति अनालोचिते अनिवेदिते भजना विकल्पना कदाचिद्भवति, कदाचिन्न भवति तत्रेत्थं भवति ।

आलोयणापरिणओ, सम्मं समुवट्ठिओ गुरुसगासं ।
जइ अंतराओ कालं, करेज्ज आराहओ तहवि ।१।

एवं तु न भवति इह्वी, एगारवेणं आहसुयमएणावाचि उच्चरियं। जो न कहेइ गुरूण नहु सो आराहओ भणिओति ॥ गाथार्थः । आव० ॥

आहाकम्मं अणवज्जेत्ति मणं पहारेता भवइ सेणं तस्स ठाणस्स अणालोइयपडिक्कंते कालं करेइ नत्थि तस्स आराहणा सणं तस्स ठाणस्स आलोइयपडिक्कंते कालं करेइ अत्थि तस्स आराहणा एएणं गमेणं नेयव्वं कीयकडं ठवियं रइयं कंतारभत्तं दुब्भिक्खभत्तं वद्दलियाभत्तं गिलाणभत्तं सज्जायरपिंडं रायपिंडं आहाकम्मं-अणवज्जेति बहुजणमज्झे भासित्ता सयमेव परिभुंजित्ता भवइ सेणं तस्स ठाणस्स जाव अत्थि तस्स आराहणा एयंपि तह चेव जाव रायपिंडं आहाकम्मं अणवज्जेत्ति अन्नमन्नस्स अणुप्पदावइत्ता भवइ सेणं तस्स एयं तह चेव जाव रायपिंडं आहाकम्मं ण अणवज्जेति बहुजणमज्झे पन्नावइत्ता भवइ सेणं तस्स जाव अत्थि आराहणा जाव रायपिंडं । भ० ५ श० ६ उ० ॥

( अणवज्जेत्ति ) अनवद्यमिति निर्दोषमिति ॥ मण पहारेत्तित्ति ॥ मानस प्रधारयिता स्थापयिता भवति । रइयंति । मोदकचूर्णादि पुनर्मोदकादितया रचितमौद्देशिकभेदरूपं ( कंतारभत्तंति )। कान्तारमरण्य तत्र भिक्षुकाणां निर्वाहार्थं यद्विहितं भक्तं तत्कान्तारभक्तं एवमन्यान्यपि नवरं, वर्द्दलिका मेघदुर्दिनं। ( गिलाणभत्तंति ) ग्लानस्य नीरोगतार्थं भिक्षुकदानाय यत्कृतं भक्तं तत् ग्लानभक्तं आधाकर्मादीनां सदोषत्वेनागमेऽभिहितानां निर्दोषताकल्पनं तत एव स्वय भोजनमन्यसाधुभ्योऽनुप्रदापन सभायां निर्दोषताभणनञ्च विपरीतश्रद्धानादिरूपत्वान्मिथ्यात्वादि,ततश्च ज्ञानादीना विराधना स्फुटैवेति ।

निग्गंथेण य गाहावइकुलं पिंडवायपडियाए पविट्ठेणं अन्नयरे अकिच्चट्ठाणे पडिसेविए तस्स णं एवं भवइ इहेव ताव अहं एयस्स ट्ठाणस्स आलोएमि पडिक्कमामि निंदामि गरिहामि विउट्टामि विसोहामि अकरणयाए अब्भुट्ठेमि अहारिहं पायच्छित्तं तवोकम्मं पडिवज्जामि तओपच्छा थेराणं अंतियं आलोएस्सामि । जाव तवोकम्मं पडिवज्जिस्सामि से य सपट्ठिए असंपत्ते थेराय पुव्वामेव अमुहा सिया । से णं भंते ! किं आराहए विराहए ? गोयमा ! आराहए नोविराहए से य संपट्ठिए असंपत्ते अप्पणाय पुव्वामेव अमुहे सिया से णंभंते ! किं आराहए विराहए गोयमा ! आराहए नो विराहए से य सपट्ठिए असंपत्ते थेराय कालं करेज्जा से णं भंते ! किं आराहए विराहए गोयमा ! आराहए नोविराहए से य संपट्ठिए असंपत्ते य अप्पणाय पुव्वामेव कालं करेज्जा सणं भंते ! किं आराहए विराहए गोयमा ! आराहए नो विराहए से य संपट्ठिए संपत्ते थेराय अमुहा सिया से णं भंते ! किं आराहए विराहए गोयमा ! आराहए नो विराहए से य संपट्ठिए असंपत्ते अप्पणाय एवं संपत्तेण वि चत्तारि आलावगा भाणियव्वा ॥ जहेव असंपत्तेणं निग्गंथेण य बहियावियारभूमिं वा विहारभूमिं वा निक्खंतेणं अन्नयरे अकिच्चट्ठाणे पडिसेविए तस्स णं एवं भवइ इहेव ताव अहं एवं एत्थवि ते चेव अट्ठ आलावगा भाणियव्वा जाव नो विराहए। निग्गंथेण य गामाणुगामं दूइज्जमाणेणं अन्नयरे अकिच्चट्ठाणे पडिसेविए तस्स णं एवं भवइ इहेव ताव एत्थवि ते चेव अट्ठ आलावगा भाणियव्वा जाव नो विराहए। निग्गंथीए य गाहावइकुलं । पिंडवायपडियाए अणुप्पविट्ठाए अन्नयरे। अकिच्चट्ठाणे पडिसेविए तीसेणं एवं भवइ इहेव ताव अहं एयस्स ठाणस्स आलोएमि जाव तवोकम्मं पडिवज्जामि तओ पच्छा पवित्तिणीए अंतिए आलोएस्सामि जाव पडिवज्जिस्सामि सा य सपट्ठिया असंपत्ता पवित्तणीय अमुहा सिया साणं भंते ! किं आराहिया विराहिया? गोयमा ! आराहिया णो विराहिया। सा य संपट्ठिया जहा णिग्गंथस्स तिण्णि गमा भणिया एवं निग्गंथीए वि तिण्णि आलावगा भाणियव्वा जाव आराहिया नो विराहिया। से केणट्ठेणं भंते ! एवं वुच्चइ आराहए नो विराहए ? गोयमा ! से जहा नाम ए केइ पुरिसे एगं महं उण्णालोमं वा गयलोमं वा सणलोमं वा कप्पासलोमं वा तणसूयं वा दुहा वा तिहा वा संखेज्जहा वा छिंदित्ता अगणिकायंसि पक्खिवेज्जा से णूणं गोयमा ! छिज्जमाणे छिन्ने पक्खिप्पमाणे

पक्खित्ते दज्झमाणे दड्ढेत्ति वत्तव्वं सिया हंता भगवं ! छिज्जमाणे छिन्ने जाव दड्ढेत्ति वत्तव्वं सिया से जहानामए केइ पुरिसे वत्थं अहतं धोयं वा तंतुग्गयं वा मंजिट्ठदोणीए पक्खिवेज्जा से णूणं गोयमा ! उक्खिप्पमाणे उक्खित्ते पक्खिप्पमाणे पक्खित्ते रज्जमाणे रत्तेत्ति वत्तव्वं सिया हंता भगवं ! उक्खिप्पमाणे उक्खित्ते जाव रत्तेत्ति वत्तव्वं सिया से तेणट्ठेणं गोयमा ! एवं वुच्चइ आराहए नो विराहए ॥ भ० ८ श० ७ उ० ।

निर्ग्रन्थप्रस्तावादिदमाह ॥

निग्गंथं च णमित्यादि ॥ इह चशब्दः पुनरर्थस्तस्य घटना चैवं निर्ग्रन्थं कश्चित्पिण्डपातप्रतिज्ञया प्रविष्टं पिण्डादिनोपनिमन्त्रयेत् तेन च निर्ग्रन्थेन पुनः ॥ अकिच्चट्ठाणेत्ति॥ कृतस्य करणस्य स्थानमाश्रयः कृत्यस्थानं तन्निषेधोऽकृत्यस्थानं मूलगुणादिप्रतिसेवारूपोऽकार्यविशेषः ( तस्स णंति ) तस्य निर्ग्रन्थस्य संजातानुतापस्यैवं भवति एवं प्रकारं मनो भवति ( एयस्स ठाणस्सत्ति ) विभक्तिपरिणामादेतत् स्थानमनन्तरासेवितमालोचयामि स्थापनाचार्यनिवेदनेन प्रतिक्रमामि मिथ्यादुष्कृतदानेन निन्दामि स्वसमक्षं स्वस्याकृत्यस्थानस्य वा कुत्सनेन गर्हे गुरुसमक्षं कुत्सनेन ( विउट्टामिति ) वित्रोटयामि तदनुबन्धं छिनद्मि विशोधयामि प्रायश्चित्ताभ्युपगमेन अकरणतयाऽकरणेनाभ्युत्तिष्ठाम्यभ्युद्यतो भवामीति ( अहारिहंति ) यथार्हं यथोचितमेतच्च गीतार्थतायामेव भवति नान्यथा ( अंतियंति ) समीपं गत इति शेषः ( थेरा य अमुहा सियत्ति ) स्थविराः पुनरमुखा निर्वाचः स्युर्वातादिदोषात्ततश्च तस्यालोचनादिपरिणामे सत्यपि नालोचनादि सम्पद्यत इत्यतः प्रश्नयति ॥ ( सेणमित्यादि ) ( आराहएत्ति ) मोक्षमार्गस्याराधकः शुद्ध इत्यर्थः भावस्य शुद्धत्वाद्भवति चालोचनापरिणता सत्यां कथञ्चित्तदप्राप्तावप्याराधकत्वं यत उक्तं । मरणमाश्रित्य आलोयणापरिणओ सम्मं संपट्ठिओ गुरुसगासे ॥ जइ मरइ अंतरा विय तहा वि सुद्धोत्ति भावाओत्ति ॥ १ ॥ स्थविरात्मभेदे न चेह द्वे अमुखसूत्रे द्वे कालगतसूत्रे इत्येवं चत्वारि असम्प्राप्तसूत्राणि सम्प्राप्तसूत्राण्येवं चत्वार्येव एवमेतान्यष्टौ पिण्डपातार्थं गृहपतिकुले प्रविष्टस्य एवं विचारभूम्यादावष्टौ एवं ग्रामगमनेऽप्यष्टावेवमेतानि चतुर्विंशतिसूत्राणि । एवं निर्ग्रन्थिकाया अपि चतुर्विंशतिसूत्राणीति अथानालोचित एव कथमाराधक इत्याशङ्कामुत्तरं चाह ॥ सेकेणमित्यादि ॥ तणसूयंवत्ति तृणाग्रं वा ॥ छिज्जमाणे छिन्नेत्ति ॥ क्रियाकालनिष्ठाकालयोरभेदेन प्रतिक्षणं कार्यस्य निष्पत्तेश्छिद्यमानं छिन्नमित्युच्यते एवमसावालोचनापरिणतो सत्यामाराधनाप्रवृत्त आराधक एवेति ॥ अहयं वत्ति ॥ अहतं नवं ( धोयंति ) प्रक्षालितं ॥ तंतुग्गयंति तन्त्रोद्गतं तुरीवेमादेरुत्तीर्णमात्रं ॥ मजिट्ठदोणीए त्ति ॥ मांजिष्ठरागभाजनं ॥ भ. टी ॥

आराधकत्वविराधकत्ववक्तव्यताऽऽराधकशब्दे १ मायिनोनाऽस्याराधनेति आलोयणाशब्दे २ शीलसम्पन्नश्रुतसम्पन्नादीनां देशाराधकत्वसर्वाराधकत्वादि पुरुषजातशब्दे ॥३॥

तदात्मके द्वात्रिंशत्तमे योगसंग्रहे च ( आराहणा य मरणंते ) मरणरूपोऽन्तो मरणान्तस्तत्रेत्ययतो द्वात्रिंशद्योगसंग्रह इति सम० स० ३२ । प्रश्न० द्वा० ५ । आव० ( इयाणि आराहणाय मरणंतित्ति आराहणाए ) मरणकाले योगाः संगृह्यन्ते तत्रोदाहरणं प्रति गाथापश्चार्द्धमाह आराहणाइ मरुदेवा ओसप्पिणिए पढमसिद्धा ॥

आसीत्पुर्यां विनीतायां, भूपतिर्भरतेश्वरः ॥
श्रुत्वा विभूषितं तं च, मरुदेवाऽभ्यधादिदं ॥ १ ॥
त्वत्पितापीदृशीं त्यक्त्वा, विभूषामेककोऽभ्रमत् ॥
उवाच भरतः क्वासौ, भूतिमं तस्य यादृशी ॥ २ ॥
चेन्न प्रत्येषि तद्यामो, निर्ययौ भरतेश्वरः ॥
मरुदेवीं करिस्कंधे, ऽधिरोप्य प्रभुसंनिधौ ॥ ३ ॥
श्रुत्वा समवसरणे, देवेभ्योऽस्याः स्तवं प्रभोः ॥
आनन्दाश्रैर्दृशौ नीलौ, गतोऽपश्यत्प्रभोः श्रियं ॥ ४ ॥
अथोचे भरतो मातः पुत्रभूषा विलोकिता ॥
कुतो ममेदृशी सा च, चिंतयंती प्रमोदतः ॥ ५ ॥
विवेशाऽपूर्वकरणं, जातिस्मृतिरभून्न तु ॥
वनस्पतेर्यदुद्वृत्ता, करिस्कन्धगतोऽप्यथ ॥ ६ ॥
उत्पन्नकेवला मङ्क्षु, प्राप प्रथमसिद्धतां ॥
ईदृगाराधनायोगा, जायते योगसंग्रहः ॥ ७ ॥ आ० कथा ।

मोक्षाराधनहेतुत्वादाराधना. आवश्यके. आवश्यकस्यैकार्थिकान्यधिकृत्य ( नाओ आराहणामग्गो ) अनु० ॥

**आराहणाभिमुह–आराधनाभिमुख–** त्रि० आराधनाया सम्पूर्णमोक्षमार्गानुपालनाया अभिमुखः सम्मुखः कृतोद्यम इत्यर्थः आराधनायां कृतोद्यमे. पा० ॥

**अराहणी–आराधनी–** स्त्री० आराध्यते परलोकापीक्षया यथावदभिधीयते वस्त्वनयेत्याराधनी. द्रव्यभावभाषाभेदे ( आराहणीओ दव्वे सच्चे मोसा विराहणी होइ ) दश० अ० ७ ॥

**आराहणोवउत्त–आराधनोपयुक्त–** त्रि० आराधनया उत्तमार्थप्रतिपत्त्या आराधनायां वा उपयुक्त उद्यतः सावधान आराधनोपयुक्तः आराधनयोपयुक्ते आराधनायामुपयुक्ते च ( आराहणोवउत्ते वितओ आराहगो होइ ) आतु० ॥

**आराहित्ता–आराध्य** अव्य ० सेवनं कृत्वेत्यर्थे, ( आराहित्ता आणाए अनुपालइत्ता ) आराध्य यथोक्तोत्सर्गापवादनयविज्ञानेन सेवनं कृत्वेति– उत्त० अ० २९ सम्पाद्येत्यर्थे, पं व. ॥ कल्प० ॥

**आराहिय–आराधित –** आ राध-णिच् क्त सेविते, वासंपादिते, पं० व० सम्यक्पालितेति । आतु० । सम.० ॥ परितोषं प्रापिते–( आराहितो रज्जसपहुवधक सीयरायाउदुवक्खरस्स ) आराधितः केनाऽपि गुणविशेषेण परितोषं प्रापित इति– वृ० ( हरिणगमेसिं देवं भत्ति बहुमाणेण आराहिया ) आ. म. अखण्डिते, ( जह चेव उ मोक्खफला आणा आराहिआ जिणिंदाण ) पं. व. ॥ निष्ठां नीते,–अहिंसालक्षणं प्रथमं संवरद्वारमधिकृत्य ( आराहिय आणाए, ) आराधितमेभिरेव प्रकारैर्निष्ठां नीतमिति — प्रश्न० सं० द्वा. । ( आराहिया विभवइ ) एभिरेव प्रकारैः सम्पूर्णैर्निष्ठां नीता भवतीति. स्था० ठा० ७ ( आराहियं पयारेहिं सम्ममेएहिं निठुवियं ) आराधितञ्चैव एभिरेव प्रकारैर्निष्ठां नीतमिति. प्रश्न० । उपा० अ० १ आराहियनाणदंसणचारित्तजोगनिस्सल्लसुद्धसिद्धालयमग्गमभिमुहाणं, सम० । नि चू १ आचा०–

**आराहियसंजम आराधितसंयम–** त्रि० परिपालितसंयमे ( आराहियसंजमाय सुरलोग पभिनियत्ता—सम० ।

आरि (य) आरित-त्रि० सवित-आरितो आर्यरितो सेवि तो वा एगट्ठं ति-आ. चू । आकारिते. आरिओ आगारिओ स्सरियो वा एगट्ठं ति आव ० ॥

आरिस. आर्ष-त्रि० विवाहभेदे, गोमिथुनदानपूर्वमार्षं इति. ध० सं० ॥

आरु (रो) ग्ग-आरोग्य-न० अरोगस्य भावः ष्यञ् रोग-शून्यत्वे, रोगाभावे, उत्त० अ.२७ ॥

आरोग्ये सति यद्व्याधि, विकारा भवंति नो पुंसां ।
तद्धर्म्मारोग्ये, पापविकारा अपि ज्ञेया ॥ ८ ॥

टी० ॥ आरोग्ये रोगाभावे सति ज्ञायमाने यद्वदिति यथा व्याधिविकारा रोगविकारा भवति नो पुंसामारोग्यवतां तद्वदिति तथा धर्म्मारोग्ये धर्म्मरूपमारोग्यं तस्मिन्सति पापविकारा अपि वक्ष्यमाणा न भवतीति विज्ञेया षो०वि ३॥ नीरोगतायाम् उत्त० अ. ३ ॥ आरोग्यं नीरुजत्वं प्राक्तनस-हजौत्पातिकरोगविरहणम् । पं० विव. ३ स्था० ठा. १० । आरोग्गसारियं मा गुसत्तण सच्चसारिओ धम्मो विज्जानिच्छि-यसारा सुहाइ संतोससाराइति १। दोषाणां समत्वं चारोग्यम् "तेषां समत्वमारोग्यं क्षयवृद्धीविपर्यय" इतिवच-नात् नं० । भावतः सम्यक्त्वे मोक्षे च लोकोत्तरतत्वप्राप्ति-भिक्षत्य आय भावारोग्य बीज चैषां परस्य तस्यैव । आदौ-भवमाद्य भावारोग्य भावरूपमारोग्यं तच्चेह सम्यक्त्वं तद्रूप-त्वाल्लोकोत्तरतत्वंतत्प्राप्तेर्बीजं चैषां लोकोत्तरतत्त्वप्राप्ति' परस्य प्रधानस्य तस्यैव भावारोग्यस्य मोक्षलक्षणस्य राग द्वेषमोहानां तन्निमित्तानां च जातिजरामरणादीनां भावरोगरूपत्वादिति. षो०वि. ४ । अरोगस्य भाव आरोग्यं सिरूत्वे ध० अधि. । २ आव० ॥ आबाधारहिते त्रि. कल्प । ज्वरादिवर्जिते, आरोग्गा अरोगा ज्वरादिवर्जिता इति स्था० ठा. ४ ( आरो-ग्गारोग्गं दारय पाया ) आरोग्या आबाधारहिता सा त्रिशला आरोग्यं आबाधारहितम् ० । कल्प । जम्म रयणि तिसला खति-याणी समण भगवं महावीर आरोआरोग्गं पसूया । आचा० श्र. ४ ।

आरुग्गदिय-आरोग्यद्विज पुं० उज्जयिनीवास्तव्ये द्विजे । तत्कथाच ध० र. ॥

अ.ंथ पुरी उज्जेणी, सक्कविन्नासिया हरिताणुव्व ।
किंतु गयलक्खकल्लिया, बहुसंखसिरीइ भवगूढा ॥१॥
तत्थारिथ देवगुत्तो, विप्पो गुत्तिंदिओ पवरगुत्तो ।
सुविहिअसदाणंदा, नंदानामेण तस्स पिया ॥ २ ॥
जाउनाणमुओ जंमए, निइरोगेहिं मुचए नव ।
अवहियनामो रोगुत्ति, चेव मो विस्सुओ जाओ ॥३ ॥
कइया वि तस्स गेहे, भिक्खवरंथं कोवि वरमुणीपुत्तो ।
पाविन्नं मुयं पाएसु, माहणेणं इमो भणिओ ॥ ४ ॥
रोगोवसमोवायं, इमस्स पहुकहसुकारवं ।
भैरगुया पारोंट. कहा न कहिज्जइ इयमुणी आह ॥५॥
तो तेण मज्झमा, मह नियपुत्तेण गंतुमुज्जाण ।
नमिऊण तयं पुट्ठो, एवं मो महरिसी आह ॥६॥
पावाओ होइ दुक्खं, तं पुण धम्मो नासए निप्पं ।
जलणपलित्तं गेहं, सलिलपवाहेण विज्झाइ ॥ ७॥
धम्मेण सुवसेणं, सिग्धं नासति सयलदुक्खाइ ।
एया रिसाइ नियमा, नयमा न य हुंति पुणो परजवे वि ॥८॥
इय सुणिऊंते बुध्दा, गिहत्थधम्मं दुवे वि गिण्हंति ।
दढधम्मो सो माहण, पुत्तो जाओ विसेसेण ॥ ९ ॥
धारिजइ इतो सायरो, कल्लोलभिन्नकुलसेलो ।
न हु अन्नं जंमनिम्मि, य सुहासुहो दिव्वपरिणामो ॥१०॥
इच्चाइ विलयंतो, रोगायंके सहेइ संयमिमो ।
सावज्जंच त्तिविगिंछं, मणसा वि न पच्छइ कयावि ॥११॥
अहहरणा दढधमु.त्त, संसिउ सो कयावि तो इच्छा ।
पत्ता असद्दहंता दुवे सुराविज्जरूवधरा ॥ १२ ॥
जंयंति इमं वालं, पउणे मोजई णो किरियं ।
तस्स पयाणहि पुट्ठं, सोकेरिसया इमो विच्चि ॥१३॥
महुअवलोहो पढमे, पहरे चारिमे ओजन्नसुरपाणं ।
नवणीयं जयं कूरं, निसि सहपियएण भुत्तव्वं ॥१४॥
तो दियपुतेणुतं, इमेसि एगंपि नेव पकरेमि ।
वयत्तंगजीरूचित्तो, जीववहो तह पुणो चेव ॥१५॥
उक्तंच ॥ मद्ये मांसे तथाक्षोद्रे तक्राद्भीतिनवोद्धृते ।
उत्पद्यंते विलीयंते, तद्वर्णाः सूक्ष्मजंतवः ॥ १६ ॥
विज्जेहि तओ भणिओ, देहसिणं धम्मसाहणं भद्द ।
जह वा तह वा पउणिय, पत्थापत्थन्नमायरसु ॥१७॥
तथाचोक्तंसव्वत्थसंजमसंजमाओ, अप्पाणमेव रक्खिज्जा ।
मुचइ अइवायाओ, पुणोविसोही नया विरई ॥१८॥
सो आह ज इ ग्वसोही, पच्छा करिस्स एतओएयं ।
किंकीरइ पढमं पि हु, भद्दा कद्दमफरिसणं च ॥ १९ ॥
इय स याण हितित्तेण, वि भणिओ वि न जाव मन्नए एसो ।
ताते पमुइयचित्ता, अमरा पइमंतिनियसरूवं ॥ २० ॥
कहिओ सक्कपसंसं, नीरोगणू कओ इमो तेहिं ।
तुट्ठो से सयणगुणो, राया पुलयकिओ जाओ ॥२१ ॥
त दट्ठुपाहट्ठमणा, जयपयमं जइणधम्ममाहप्पं ।
बुध्दा बहवे जीवा, वयपालणउज्जुया जाया ॥ २२ ॥
तप्पभइ इमो लोए, आरुग्गदिओति विसुओ जाओ ।
पालियवयाइ ज ओ, कमेण सुहभावणं एसो ॥ २३ ॥
एवमारोग्यविप्रस्य दृत्तंवरं । धीरधर्म्मा त् श्रु त्वैतच्चमत्कृत्परं भव्यलोका निशम्य प्रकंपां सदा पालयध्वं व्रतानि स्फुर-त्संपदः ॥

आरु (रो) ग्गफल-आरोग्यफल-त्रि० आरोग्य साधके ( अवितहमारोग्गफलं, घणो ऽहं जेणिमं णाय ) पंचा वृ. १५ ।

आरु (रो) ग्गबोहिलाभ-आरोग्यबोधिलाभ-पुं० आरोग्याय बोधिलाभ आरोग्यबोधिलाभ' आव ० । अरोग-

स्य भाव आरोग्य सिद्धत्व तदर्थं बोधिलाभ· अर्हत्प्रणीतध-र्मप्राप्तिरारोग्यबोधिलाभः । मोक्षायार्हत्प्रणीतधर्मप्राप्तौ,

किर्त्तिय वंदिय महिया, जे ए लोगस्स उत्तमा सिद्धा ।
आरोग्गबोहिलाभं, समाहिवरमुत्तमं दिंतु ध. २ अ.।

अरोगस्य भाव आरोग्य सिद्धत्व तदर्थं बोधिलाभ आरोग्य बोधिलाभ· प्रेत्य जिनधर्मप्राप्तिर्बोधिलाभोऽभिधीयते। सचाऽनिदानो मोक्षायैव प्रशस्यते इति।आव ४अ. (आरुग्गबोहिलाभ समा हिवर मुत्तम दिंतु) इत्यारोग्य बोधिलाभस्य प्रार्थनयुक्तत्व ( णियाण ) शब्दे व्याख्यास्यते ॥

आरु ( रो ) ग्गबोहिलाभाइपत्थणाचित्ततुल्ल–आरोग्यबोधिलाभादिप्रार्थनाचित्ततुल्य –त्रि० आरोग्यबोधिलाभादीनां आरोग्गबोहिलाभ समाहिवरमुत्तम दिंत्वित्येव रूपा या प्रार्थना तत्प्रधान यच्चित्त मनस्तेन तुल्य समानम. । तथाच पञ्चाशके – तपाऽधिकृत्य आरोग्गबोहिलाभाइ पत्थणचित्ततुल्लति, पचा० वृ १९

आरु ( रो ) ग्गसाहग–आरोग्यसाधक– त्रि० आरोग्यनिष्पादके, ध. अ. १

आरुस्स–आरुष्य–अव्य० कोप कृत्वेत्यर्थे, ( आरुस्स विज्झति तु देणपिठे ) सूत्र० श्रु १ अ ५ ( आरुस्स विज्झति ककाणओ सो ) आरुष्य क्रोध कृत्वेति सूत्र० श्रु १ अ. ५ ।

आरुह–आरुह–आ रुह ज्वा० प० अनिट्-सक० आरोहणो आरुहेश्च त्वङ्गौ ८ अ ४ वा इति प्राकृतसूत्रेणारुहेरेतावादेशौवा चढइ वलग्गइ-आरुहइ-प्रा०। चढति वलग्गति आरुहतित्ति एगट्ठ नि० चू उ १८॥

आरुहमाण–आरोहयत्–त्रि० आरोहण कुर्वति आरुहमाणे वा ओरुहमाणे वा स्था० ठा ५

आरू–आरू–पु० ऋ रू· णिच पिंगलवर्णे आरूशब्दार्थे कर्कटशूकरादौ च ततः सज्ञायां कन् ( आरु ) हिमाचल प्रसिद्धौषधीभेदे वाच० ॥

आरूढ–आरूढ–त्रि० आ० रुह, कर्त्तरि क्त-वाच० । आश्रिते ( तवनियमनाणरुक्ख आरूढो केवली अमियनाणी ) विशे०॥ आरूढ आश्रित इति श्रा चू प्राप्ते, (आरूढा गुरूनुमिकाम् ) आरूढाः प्राप्ता· अष्ट० ( आरूढेपाउपाहिव) पिं० । मत्तं च गंधहत्थिं च, वासुदेवस्स जेट्ठग । आरूढो सोहइ अहिय, सिर चुडामणी जहा । ( सिया रयण तओ समारूढो ) उत्त० अ २२

आरूढहत्थारोह–आरूढहस्त्यारोह–पु० आरूढमहामात्रे ( आरूढहत्थारोहे ) आरूढा हस्त्यारोहा महामात्रा येषु ते तथा । विपा० अध्य २

आरेग–आरेक– पु० आ-रिच्- घञ्- आकुञ्चने- अतिरेके च. वाच० ॥

आरेगा–आरेका–स्त्री० शङ्कायाम्- ( विजहित्तु विसोत्तिय ) आचा० विहाय परित्यज्य विस्रोतसिकां शकां सा च द्विधा सर्वशका देशशका च तत्र सर्वशका किमस्त्यार्हतो मार्गोन वेति । देशशका तु किं विद्यन्तेऽप्कायादयो जीवा विशेष्य प्रवचनेऽभिहितत्वात् स्पष्टचेतनात्मलिङ्गानावान्न विद्यन्ते इति चेत्येवमादिकामारेकां विहाय सम्पूर्णाननगारगुणानुपालयेत् आचा॥ अ० १ उ० २ ॥

आरेण अव्ययं आरादित्यर्थे दृ० ॥

आरोअ–उल्लस– ज्वा० पर०सेट्० उल्लासे उल्लसेरूसलोसुम्भणिल्लसपुलआअंगुञ्जोल्लारोआ· ॥ ४ ॥ २०१ ॥ इति प्राकृतसूत्रेणोल्लसरारोअ इत्यादेश । आरोअइ उल्लसइ प्रा०॥

आरोव–आरोप–पु० आरुप् णिच् करणे ल्युट् अन्यपदार्थेऽन्यधर्मस्यावभासरूपे मिथ्याज्ञाने-वाच०

अनारोपसुख मोह, त्यागादनुभवन्नपि । आरोपप्रियलोकेषु वक्तुमाश्चर्यवान् भवेत् ॥ ७ ॥ अष्ट० ॥ ४ ॥

आरोवण–आरोपण– न० आरुप्-णिच् ल्युट्-आरोपशब्दार्थे, आरोहणसम्पादने च. आर्द्रीकृतारोपणमन्वगृताम् कुमा० रघुः वाच० ॥

आरोवणा–आरोपणा– स्त्री० आरोप्यतइत्यारोपणा । प्रायश्चित्तभेदे, व्य० । आरोप्यतेइति आरोपणा । प्रायश्चित्तानामुपर्युपर्यारोपण यावत् षण्मासा· परतो वर्द्धमानस्वामितीर्थे आरोपणायाः प्रतिषेधात् ॥ व्य० उ० १ ॥

सांप्रतमारोपणाप्रायश्चित्तमाह ॥

पंचादी आरोवणा, ने यव्वा जावहुंति छम्मासा ।
ते पणगादियाणं, वएहु वरिसो उक्कोसणं कुज्जा ॥

रात्रिंदिवपचकादारभ्यारोपणापचादिः । रात्रिंदिवपचकादिका आदिशब्दाद्दशपचदशविंशति रात्रिं दिवमासिकादिपरिग्रहा ज्ञातव्याः । तावद्यावत्षण्मासा भवति नाधिक यत एव तेन प्रकारेण तेषां षण्णां मासाना मुपरि ( पणगाइया णति ) रात्रिं दिवपचका दीनां झोषणामपनयन कुर्यात् । षण्मासाना मुपरि य दापद्यते प्रायश्चित्त तत्सर्व त्यज्यते इति भाव· । उक्तं च चूर्णौ ( छम्मासाणपर ज आवज्जइ त सव्वत्थ झिज्जइति) अत्र चोदक आह । किं कारणं न दिज्जइ छम्मासाण परतो उ आरुवणा । भणइ ण मोज कारणाउक्कोसिया सेसा । षण्मासानां परत आरोपणा प्रायश्चित्त न दीयते । अत्र किंकारणमाचार्य· प्रतिवचनमाह ज कारणति निमित्तकारणहेतुषु सर्वा विभक्तय इति वचनात् अत्र हेतौ प्रथमा। ततोऽयमर्थः। येन कारणेन षण्मासानां परत शेषाणि रात्रिंदिवपंचकादीनि प्रायश्चित्तानि झोषितानि त्यक्तानि तत्कारण पुनरिदं वक्ष्यमाणमिति गुरुर्भणति ।

तदेव कारण दर्शयति ॥

आरोवणानिप्फन्नं, छउमत्थे जंजिणेहिमुक्कोसा ।
तंतस्स उत्तित्थं, ववहरणं धन्नपिढगं च ॥

छद्मस्थे छद्मस्थकाले यत् जिनै· स्वस्वकालापेक्षया उत्कृष्टतप· कर्म्म कृत तस्य तीर्थे तुरेवकारार्थो भिन्नक्रमश्च सचैव योजनीयस्तदेव तावत्प्रमाणमेवारोपणानिष्पन्न तप कर्म्म व्यवह्रियते इति व्यवहरण बहुलवचनात्कर्म्मण्यनट् व्यवहरणीयमिति भावः । किमिवेत्यत आह। धान्यपिटकमिव धान्यप्रस्थक इव। किमुक्त भवति । येन राज्ञा यो धान्यप्रस्थक· स्थापितस्तत्काले स एव व्यवहर्तव्यो न पुरातनो नाप्यन्यः स्वमतिपरिकल्पितस्तथा भगवताऽपि तीर्थकरेण येन छद्मस्थकाले यावत्प्रमाणमुत्कृष्ट तप कर्म्म कृत तस्य तीर्थे आरोपणानिष्पन्न प्रायश्चित्तमपि तावत्प्रमाणमेव व्यवहरणीय नाधिकमन्यथा

राजाज्ञावन्न तोरजप्रयुक्तदंडस्येव भगवदाज्ञावन्नतः संसा-
रदंडस्य प्रवृत्तेः ॥

एतमेव धान्यदृष्टान्तं भावयति ॥

जो जया पत्थिवो होइ, सो तया धन्नपत्थगं ।

ठावेअन्नं पुरिल्लाणं, ववहारी य दंडए ॥

यो यदा पार्थिवः पृथिवीपतिर्भवति स तदा स्वकाले धान्य
प्रस्थकमन्यं स्थापयति । तस्मिंश्च स्थापिते ये( पुरिल्लाणंति)
पुरातनेनोपलक्षणमेतत् स्वमतिपरिकल्पितेन व्यवहरति तान्
तथा व्यवहरतो दंडयति । एवं तीर्थकृदपि भगवान् यो याव
त्प्रमाणमुत्कृष्टं तपः कर्म्म छद्मस्थकाले कुर्वन् तपःकर्मपरिमाणं
स्थापयति स स्वतीर्थे तावत्प्रमाणादधिकं तपः कर्म्म व्यवहरतः
संसारदंडेन दंडयति । तस्मात्तस्य तीर्थे तावत्प्रमाणमेव
व्यवहर्तव्यमिति ॥

अथ कस्य तीर्थे कियत्प्रमाणं तपः कर्मेत्यत आह ॥

संवच्छरं तु पढमे, मज्झिमगाणट्ठ मासियं होइ ।

छम्मासपच्छिमस्स उ, माणं भणियं तु उक्कोसं ॥

प्रथमे प्रथमतीर्थकरकाले मानं तपःकर्म्मपरिमाणमुत्कृष्टं भ-
णितं संवत्सरमेव तुरेवकारार्थे मध्यमकानां द्वाविंशतितीर्थकृतां
तपःकर्म परिमाणमुत्कृष्टं भवत्यष्टमासप्रमाणं पश्चिमस्य तु
भगवतो वर्द्धमानस्वामिनः तपःकर्म परिमाणमुत्कृष्टं भ-
णितमिति । षण्मासाः । अत्रैव भूयः शिष्याशंकामाह ॥

पुण एवमवि चाउद्दसं तो,पुरिमा य रेमाविसमसोहीया।किहसुज्झंती
तउ, चोयगइण मोसुण सुचोय ॥

एवमनन्तरोदिते सूरिणाऽभिहिते पुनरपि शिष्यश्चोदयति ॥
भगवन्यदि नामैवं ततः पूर्वे आदितीर्थकरतीर्थवर्तिनश्चरमाः
पश्चिमतीर्थकरतीर्थवर्तिनो विषमशोधिका विषमप्रायश्चित्ता
भगवन् । ततः कथं ते विषमशोधिका अविशेषेण शुध्यन्ति ।
समानमनाः शुद्धिमासादयति न ननु कारणवैषम्ये कार्यवैष-
म्यं दृष्टमत्र तु विषमं प्रायश्चित्तं विशोधिस्तु सर्व्वेषामप्यविशे-
षेण तुल्या ततो दुर्घटमेतदिति भावः। अत्र सूरिर्यन्प्रायश्चित्त-
वैषम्ये कारणं यथा च कारणविषमतायामपि तुल्या विशो-
धिस्तदेतत्प्रतिपिपादयिषु प्रथमतः प्रायश्चित्तवैषम्ये कारण-
मभिधित्सुरिदमाह । चोयगेत्यादि हे चोदक ! उपपन्नप्रश्नका-
रिन् प्रायश्चित्तवैषम्ये इदं वक्ष्यमाणं कारणं वक्ष्ये तच्च
वक्ष्यमाणमवहितमना शृणु । प्रतिज्ञातमवहितमनाः शृणु ।
प्रतिज्ञातमेव निर्वाहयति ।

कालसभ निद्धयाए, देहबलंधिइबलं चउपुरिमे ।

तप्पणन्तगहीणं, कमेण जा पच्छिमो अरिहा ॥

पुरिमे पूर्वे आदितीर्थकरतीर्थकालस्य स्निग्धतया हेतुभूतया
प्राणिनां देहबलं शरीरबलं तदुपदिष्टं ततो धृतिबलं च
यत् आसीत् ततः अवसर्पिणीकालस्य तथा स्वभावतया
क्रमेण प्रतिक्षणमनन्तभागहीनं तत् तावद्यातं यावत्प
श्चिमः भगवान्वर्द्धमानस्वामी ततः शारीरबलस्य धृति-
बलस्य च विषमत्वात् विषमं प्रायश्चित्तं । तथा चाह ।

संवच्छरेणावि नमि आसि, जोगाण हाणी उ इहे-
वर्तमि । जया वि रिज्जादिअ गोयवेया, तच्छम्मया सोहय
एणंपि ॥

तेषामादितीर्थकरतीर्थवर्तिनां साधूनां द्विविधे बले शारीरे

बले धृतिबले च अत्यंतमुपचयं प्राप्ते सति संवत्सरेणाऽपि संव-
त्सरप्रमाणमपि तपः कुर्वतां न योगानां संयमव्यापाररूपाणां
हानिरासीत् ॥ मध्यतीर्थवर्तिनां द्विविधमप्येव क्रमेणानंतभा-
गहीनं पश्चिमतीर्थकरतीर्थवर्तिनामत्यंतहीनमतो मध्यमकानां
संवत्सरप्रमाणं तपः कुर्वतां महती योगहानिरिति तेषामष्टमा-
सिकमुत्कृष्टं तपःकर्म व्यवस्थापितमपश्चिमतीर्थकरतीर्थवर्तिनां
तदपि कुर्वतां योगहानिः षाण्मासिकमुत्कृष्टं तपः कर्म्म तेषां
प्रवर्तितं तदेवमुक्तं प्रायश्चित्तवैषम्ये कारणं। सम्प्रति तुल्यां विशो
धिं प्रतिपादयति । ये चापि मध्यमतीर्थकरतीर्थवर्तिनश्च धैर्यो
द्यनुपेता धैर्येण धृतिबलेन आदिशब्दात् संहननबलेन च
कालदोषतोऽनुपपेताः । तपविंति तकानपि तत्कर्मता तेषामि
व आदितीर्थकरतीर्थवर्तिनामिव धर्म्मोऽशठत्वादिकस्वभावो
येषां ते तद्धर्माणस्तद्भावस्तत्कर्मता सा शोधयति । इयमत्र
भावना । इह अशठभावेनानिगूहितबलवीर्यतया यथाशक्ति
तपःकर्मणि प्रवृत्तिर्विशोधिरांतरकरणं तच्च बाह्यतपःकर्मे
णो वैषम्येऽपि सर्वेषामप्यविशिष्टमतः सर्वेषां तुल्या विशोधिः ।
युक्तं चैतत् । तथाहि प्रथमतीर्थकरतीर्थेऽपि न सर्वेषां देहबलं च
समानमथ च सर्वेषामप्यशठभावतया प्रवृत्तेस्तुल्या विशोधि
रेवमत्रापि भावनीयामित्यदोषः । अत्रैव निदर्शनमाह ॥

पत्थगा जे पुरा आसी, हीणमाणाउ तेधुणा ।

माणजुत्ताणि धन्नाणि, सोहिं जाणितहेवय ॥

ये पुरा पूर्वे काले प्रस्थका आसन् । ते कालदोषतः क्रमेण
हीना हीनतरा जायमाना अत्यंतहीनमाना जातास्तथापि
धान्यानि मानभांमानि प्रस्थकादिपरिमाणपरिच्छेद्यानि तथैव
सख्याव्यवहारस्य सर्वदाऽप्यविशिष्टत्वात् । एवमि-
हापि प्रायश्चित्तानां वैषम्येऽपि अशठभावेन तपःकर्मणि प्र
वृत्तिरांतरकरणं सर्वेषामप्यविशिष्टमिति शोधिमपि तुशब्द
स्यापि शब्दार्थस्य भिन्नक्रमत्वात् । तथैव धान्यानां प्रस्थक-
परिच्छेद्यतामिव तुल्यां जानीहि । प्रस्थकदृष्टान्तेन सर्वत्र तुल्यां
विशोधिमवबुध्यस्वेति भावः । उक्तमारोपणाप्रायश्चित्तम् ॥
व्य० उ० १ ॥

आरोपणा पञ्चविधा । स्था० ठा० ५ ।

आरोवणा पंचविहा पन्नत्ता तंजहा पट्ठविया

ठविया कसिणा अकसिणा हाडहडा ॥

आरोपणोक्तस्वरूपा तत्र ( पट्ठवियत्ति ) बहुष्वारोपितेषु
यन्मासगुर्वादिप्रायश्चित्तं प्रस्थापयति वोढुमारभते तदपे-
क्षयाऽसौ प्रस्थापितेत्युक्ता ॥ १ ॥ ( ठवियत्ति ) यत्प्रायश्चि-
त्तमापन्नस्तत्स्थापितं कृतं न वाहयितुमारब्धमित्यर्थः ॥
आचार्यादिवैयावृत्यकरणार्थं तद्धि वहन्न शक्नोति वैयावृत्यं
कर्तुं वैयावृत्यसमाप्तौ तु तत्करिष्यतीति स्थापितोच्यत इति२॥
कृत्स्नापुनर्यत्र झोषो न क्रियते झोषस्त्वयमिह तीर्थे षण्मासां-
तमेव तपस्ततः षण्मासानामुपरि यान् मासानापन्नोऽपराधी
तेषां क्षपणमनारोपणं प्रस्थे चतुः सेतिकानिरिक्तधान्यस्येव
झाटनमित्यर्थः । झोषाभावेन सा परिपूर्णेति कृत्स्नेत्युच्यत
इतिभावः ३ अकृत्स्ना तु यस्यां षण्मासाधिकं झोष्यते तस्या
हि तदतिरिक्तझाटनेनापरिपूर्णं चादिति ॥ ४ ॥ ( हाडह-
डेति ) यल्लघुगुरुमासादिकमापन्नस्तत्सद्य एव यस्यां दीय-
ते सा हाडहडेति एतत्स्वरूपं च विशेषतो निशीथविंशति-
तमोद्देशकादवगन्तव्यमिति ॥

कति भेदा आरोपणाया उच्यते पंच तथा चाह व्य० १ उ० ॥

( पट्ठविविया ) पंचविया कसिणाऽकसिणा तहेव हाडहडा आरोपणा पञ्चविधा पञ्चप्रकारा तद्यथा प्रस्थापितिका स्थापिता कृत्स्ना हाडहडा च । एषा पञ्चप्रकाराऽप्यारोपणा प्रायश्चित्तस्य । तत्र प्रायश्चित्त पुरुषजातेः कृतकरणादौ यथायोग्य भवसेयमेष गाथासंक्षेपार्थः ।

इदानीमेतामेव गाथां व्याख्यानयन्प्रथमतः प्रस्थापितिकादि भेदचतुष्टय व्याख्यानयति ॥

पट्ठविात्तया वहंते, वेयावच्चट्ठिया ठविातिया उ ।
कसिणाऽज्झोसविरहिया, जहिं झोसो सा अकसिणाओ ॥

यदारोपित प्रायश्चित्तं वहति एषा प्रस्थापितिका आरोपणा यो वैयावृत्त्यकरणलब्धिसंपन्नः आचार्यप्रभृतीनां वैयावृत्त्य कुर्वन् यत्प्रायश्चित्तमापन्नस्तस्यारोपितमपि स्थापित क्रियते । यावत् वैयावृत्त्यपरिसमाप्तिर्भवति । द्वौ योगावेककालं कर्तुमसमर्थ इति कृत्वा सा आरोपणा स्थापितिका । कृत्स्ना नाम यत्र झोषो न क्रियते । अकृत्स्ना यत्र किंचित् झोष्यते । हाडहडा त्रिविधा तद्यथा सद्योरूपा स्थापिता प्रस्थापिता च तत्रेय सद्योरूपा ॥

उग्घायमणुग्घायं, मासादितवो उ दिज्जए सज्जं ।
मासादी निक्खित्तं, जं सेसं दिज्जए तं तु ॥

उद्घात लघु अनुद्घात गुरु यत् मासादिमासिकमादिशब्दात् द्वैमासिक त्रैमासिक वा इत्यादि तप आपन्नस्तद्यदि सद्यस्तत्कालं दीयते न कालक्षेपेण तदा सा हाडहडा आरोपणा स द्योरूपा यदि पुनर्यन्मासादिकमापन्नस्तत् वैयावृत्त्यमाचार्यादीनां करोतीति स्थापित क्रियते । तस्मिश्च स्थापिते यदन्यत् झोषमुद्घातमनुद्घात वा पद्यते तत्सर्वमपि प्रमादनिवारणार्थमनुद्घात दीयते सा हाडहडा आरोपणा ॥

स्थापिता प्रस्थापितायाः स्वरूपमाह ॥

छम्मासादि वहंते, अंतरे आवन्न जा उ आरुवणा ।
सा होति अणुग्घाया, तिन्नि विगप्पा उ चरिमा य ॥

षाण्मासिक तपो वहन् आदिग्रहणात् पांचमासिकं चातुर्मासिकं त्रैमासिक द्वैमासिक वा वहन् अतरा यदन्यदापद्यते उद्घातमनुद्घात वा तस्याप्यतिप्रमादनिवारणार्थमनुग्रहकृत्स्नेन चानुद्घात यत् आरोप्यते एषा हाडहडा आरोपणा प्रस्थापिता । एते त्रयो विकल्पाश्चरमाया हाडहडायाः अथवा इमे त्रयो विकल्पाः ॥

सा पुण जहन्नउक्कोसा, मज्झिमा तिन्नि वि विगप्पा ।
मासो छम्मासा वा, जहन्नमुक्कोसजे मज्झे ॥

सा हाडहडा आरोपणा त्रिविधा । तद्यथा जघन्या उत्कृष्टा मध्यमा च एते त्रयो विकल्पा हाडहडाया भवति । तत्र गुरुको मासो जघन्या षण्मासा गुरुच उत्कृष्टा एतयोर्द्वयो र्द्वयोर्मध्ये गुरु द्विमासादयो गुरुमासपंचकपर्यंता एषा अजघन्योत्कृष्टा हाडहडा सा चतुर्विकल्पा तद्यथा द्वैमासिकगुरुक त्रैमासिक गुरुक चातुर्मासिक गुरुक पांचमासिक गुरुकमिति ॥

आयारपगप्पशब्दे आचारप्रकल्पस्याष्टाविंशतिभेदप्रतिपाद कंसूत्रमुक्तम् । तट्टीकायामारोपणाभेदा इत्थं ॥

तत्र काचित् ज्ञानाद्याचारविषये अपराधमापन्नस्य कस्यचित् प्रायश्चित्त दत्त पुनरन्यमपराधविशेषमापन्नस्ततस्तत्रैव प्राक्तने प्रायश्चित्ते मासवहनयोग्य मासिक प्रायश्चित्तमारोपितमित्येवं मासिक्यारोपणा भवति।तथा पञ्चरात्रिकशुद्धियोग्य मासिकशुद्धियोग्य चापराधद्वयमापन्नस्तत एवं दशप्रायश्चित्ते सपञ्चरात्रिमासिकप्रायश्चित्तारोपणात्सपञ्चरात्रमासिक्यारोपणाप्यदृ ६ एव द्विमासिक्यः ६ त्रिमासिक्यः ६ चतुर्मासिक्यः ६ चतुर्विंशतिरारोपणाः तथा सार्द्धदिनद्वयस्य पक्षस्य चोपघातेनेन लघूनां मासादीनां प्राचीनप्रायश्चित्ते आरोपणा उपघातिकारोपणा यदाह ॥

अद्धेण छिन्नसेसं, पुव्वद्धेणं तु संजुयं काउं ।
देज्जाय लहुपहाणं, गुरुदाणं तत्तियं चेवत्ति ॥

यथा मासार्द्ध १५ पंचविंशतिकार्द्ध च सार्द्धद्वादशवर्ष सर्वे मीलने सार्द्धसप्तविंशतिरिति लघुमासाः । तथा मासद्वयार्द्ध मासो मासिकस्यार्द्ध पक्ष उभयमीलने सार्द्धमास इति लघुद्विमासिक २५ तथा तेषामेव सार्द्धदिनद्वयाद्यनुघातेनेन गुरूणामारोपणा अनुघातिकारोपणा २६ तथा यावतो ऽपराधानापन्नस्तावतीनां तच्छुद्धीनामारोपणा कृत्स्नारोपणा तथा बहूनपराधानापन्नस्य षण्मासांत तेषु इति षण्मासाधिकतप कर्म तेष्वेवांतर्भाव्य । शेषांतर्भाव्यशेषमारोप्यते यत्र सा अकृत्स्नारोपणेत्यष्टाविंशतिरेतच्च सम्यग्निशीथविंशतितमोद्देशकादवगम्यम् ॥ सम. २८ स० ॥

आरोपणाया स्थापनासंचय पायच्छित्तशब्दे ।

तत्प्रतिपादके निशीथाध्ययनभेदे, च आरोपणा यत्रैकस्मिन् प्रायश्चित्तेऽन्यदारोप्यत इति प्रश्न० द्वा० ५ ॥ आव० ॥ बधमोचने, प्रतिलेखने, च ( पक्खिया आरोवणा ) कल्प० - पक्खिया आरोवणत्ति। कोऽर्थःपक्षे २ संस्तारकद्वरकाणाम ग्रन्था मोक्तव्याः प्रतिलेखितव्याश्चेत्यर्थः । अथवाऽऽरोपणा प्रायश्चित्तम् पक्षे २ ग्राह्यं सर्वकाल वर्षासु विशेषत । कल्प० प्ररूपणाभेदे, च विशे० ।

तत्रारोपणा इय केत्याह ॥

किं जीवो होज्ज नमो, वा जीवोत्ति जं परोपरओ ।
अज्झारोवणमेसो, पच्चणुजोगो मयारुवणा ॥

किं जीव एव भवेन्नमस्कार नमस्कार एव वा जीवो भवति यत्परस्परावधारणाद्ध्यारोपण पर्यनुयोजन एष पर्यनुयोग आरोपणा मता सम्मतेति ॥ आ० म० ॥ आ चू. ॥

आरोवणापायच्छित्त—आरोपणाप्रायश्चित्त—न० आरोपणमेकापराधप्रायश्चित्ते पुनःपुनरासेवनेन विजातीयप्रायश्चित्ताध्यारोपणमारोपणा यथा पञ्चरात्रिन्दिव प्रायश्चितमापन्न पुन स्तत्सेवने दशरात्रिन्दिवं पुन पञ्चदशरात्रिदिवमेव यावत् षण्मासान् ततस्तस्याधिक तपो देय न भवत्यपि तु शेषतपांसि तु तत्रैवान्तर्भवनीयानि इह तीर्थे षण्मासान्तत्वात्तपस इति उक्तञ्च ॥

पंचाईयारोवणे, नेयव्वा जाव होंति छम्मासा ।
तेण परमासियाणं, छण्हुवरिं झोसणं कुज्जत्ति ॥

आरोपणायाः प्रायश्चित्तमारोपणाप्रायश्चित्त । प्रायश्चित्तभेदे । स्था० ठा. ४ ।

आरोवणिज्ज —आरोपणीय—त्रि० आरुह्—णिच्—अनीयर्—आरोपार्हे, आरोप्ये वस्तुनि—वाच० ॥

आरोवप्पिय—आरोपप्रिय—त्रि० आरोपो मिथ्योपचारः प्रियो यस्य स आरोपप्रिय मिथ्योपचारप्रिये, ॥

अनंतरापसुखं मोह, त्यागादनुभवन्नपि॥ आरोपप्रियलोकेषु, वक्रमाश्चर्यवान्भवेत् ॥ १ ॥ अष्ट० ॥

आरोवसुह–आरोपसुख – न० आरोपजे सुखे-अष्ट० ।

आरोवेज्ज–आरोप्य–त्रि० आ-रुह- णिच् कर्मणि यत्- आरोपणीये, यथा मुखं चन्द्र इत्यादौ मुखे चंद्रत्वमारोप्य॥ वाच० ॥

आरोलइ–पुञ्जिधा -पुञ्जीकरणे-पुंजेरारोलवमालौ४ ॥ १०२॥ इति प्राकृतसूत्रे । पुंजेरेतावादेशौवा, आरोलइ वमालइ.पुजइ पुञ्जयति प्रा० ॥

आरोस–आरोष-पु०म्लेच्छजातिभेदे-प्रश्न द्वा. १ ॥

आरोह–आरोह–पुं० आरुह. घञ्-आक्रमणे, नीचस्थानादूर्ध्वदेशगमने, अङ्कुरादिप्रादुर्भावे-शब्दच० गजवाजिनामुपरि गमने दीर्घत्वे वाच. ( आरोहो दिग्घत्तं ) व्य० उ.५ ॥ उत्त० अ. १ दशा० ॥ उच्चितदैर्घ्ये-स्था. ठा७ । उच्छ्रये आरोहो नाम शरीरेण नातिदैर्घ्यं नातिन्हस्वता अथवा आरोहः शरीरोच्छ्राय इति-चू. । उच्चत्वे च नितम्बे वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनीअमर. । सारमान वरारोहा, उद्भट. । आरोहनिविडवृहस्तितम्बविम्बे' माघ० वाच० ।

आरोहतीत्यारोहः हस्त्यारोहादौ, नि. चू. उ. ९ ॥

आसाणय हत्थीणय, दमगा जे पढमताए विणर्यति ॥
परियट्टंमाणुपच्छा, आरोहा जुद्धकालंमि ॥ १०२ ॥

जे पढमं विणय गाहेंति ते दमगा जे जवजे.गासणहिं धावारं वा वहेंति ते मंदा जुरूकाले जे आरहंति ते आरोहा ॥

आरोहइयव्व–आरोहयितव्य–त्रि० आरोपणीये, व्य० उ.१

आरोहग–आरोहक–त्रि० आरुह. ण्वुल. आरोहणकर्त्तरि. वाच० । हस्तिपके ( धम्पुरिसारोहगसंपउत्ताण अ‌ऽरुय गयाण ) तत्रारोहका हस्तिपका औ० ॥

आरोहण–आरोहण–न० अ.० रुह ल्युट्.नीचस्थानादूर्ध्वस्थानगमने वाच० ॥ आरोहणार्थं नवयौवनेन कामस्य सोपानमिव प्रयुक्तम् कुमा० अङ्कुरादिप्रादुर्भावे च. आरुह्यतेऽनेन-करणे ल्युट् सोपाने च. । आरोहणं स्यात् सोपानम्. । अमर' वाच० ॥

आरोहणिज्ज–आरोहणीय–त्रि आरोहणं प्रयोजनमस्य अन् प्र० आरोहणसाधने पदार्थे, आरुह. कर्मणि. अनीयर्. आरोढुं योग्य हयादौ वाच० ।

आरोहपरिणाह—आरोहपरिणाह—पु शरीरस्यारोहसम. परिणाह । शरीरोपसम्पद्भेदे. व्य० उ.५। आरोहपरीणाहो, आरोहो नाम शरीरेण नातिदैर्घ्यं नातिन्हस्वता प रिणाहो नातिस्थौल्यं नाति दुर्बलता अथवा आरोह शरीरोच्छ्रय परिणाहो वक्षोविष्कंभ एतौ द्वावपि तुल्यौ न हीनाधिकप्रमाणाविति। वृ० ।

आरोहो दीर्घत्व परिणाहो विष्कंभो विशालता तत्र यावताऽऽरोहस्तावान् यदि विष्कंभो भवति तदा एषा वपुसंपत् आरोहपरिणाहे ज्ञातव्या ॥ व्य उ० ५ ॥

आरोहपरिणाहजुत्तता–आरोहपरिणाहयुक्तता–स्त्री० आरो हो दैर्घ्य परिणाहो. विस्तरः ताभ्यां तुल्याभ्यां युक्तता आरोहपरिणाहयुक्तता । शरीरसम्पद्भेदे, उत्त० अ० १ ॥

आरोहपरिणाहयुक्तता उचितदैर्घ्यविस्तारता इत्यर्थः स्था० ठा० ४ ॥

आरोहपरिणाहसंपण्ण–आरोहपरिणाहसम्पन्न–पुं० शरीरसम्पद्भेदे । आरोहपरिणाहसंपन्ने यावि भवइ, इह चारोहो दैर्घ्यं परिणाहो विस्तारस्ताभ्यां सम्पन्न' चापि शब्दावन्यांगसुन्दरत्वस्यापकाविति यत उच्यते लौकिकैरपि यत्राकृतिस्तत्र गुणा वसन्तीति। दशा० ॥

आरोहुं–आरुह्य–अव्य० आरोहणं कृत्वेत्यर्थे (आरोहुमुणिवणियामहण्णवसागरयणपडिपुणं ) आरोहुमिति समारुह्य के मुनिवणिजः दर्श० ।

आल–आल–न० आ-अल्- पर्याप्तौ. अच् -अनल्पे श्रेष्ठे च त्रि० वाच० । प्राकृतोक्ते मत्वर्थके प्रत्ययभेदे च । आल्विल्लोल्लालवन्तमन्तेत्तेरमणामतो. ॥ २ ॥ १५९ ॥ प्रा सद्दालो जडालो फडालो रसालो प्रा व्या० । उक्तच मतुयंगमिमुणे उह आले इल्ल मण च मतुयं चेति-आव० ।

आलइय–आलगित–त्रि० आरोपित-उपा. अ० २ । आविद्धे जी० प्र. ४ ॥ परिहिते,कल्प० ।

आलइयमालमउड–आल(लि)गितमाल(ला)मुकुट–त्रि० आलगितमालमारोपितस्रक् मुकुटो यस्य स तथा तस्मिन् उपा० अ. २ आलगितो यथास्थानं परिहितो मालामुकुटो येन स तथा तस्मिन् कल्प. ॥ माला च मुकुटश्च मालामुकुटं आलगितमाविद्धं मालामुकुटं येन स आलगितमालामुकुटः । आविद्धमालामुकुटे जी. प्र ४ ( आलइयमालमउडे ) आलगितमालामुकुटः कृतकण्ठे मालः आविद्धशिरसि मुकुट इति भाव.॥ आ. म. । म. श. ३ उ. २ ॥

आलंकारियसभा–आलंकारिकसभा–स्त्री० चमरचचाराजधानीस्थे सभाविशेषे, आलंकारिका यस्यामलंक्रियत इति स्था० ठा. ५ ॥

आलंद–आलन्द–न० कालविशेषे, तत्रोदकार्द्रः करो यावता शुष्यति तत आरभ्योत्कृष्टत. पंचरात्रिदिवानि यावत्कालोऽत्र समयपरिभाषया.लंदमित्युच्यते । विशे० ॥

आलंदिय–आलंदिक–त्रि० आलंदस्यानतिक्रमेण चरतीति। आलन्दचारिणि, विशे० ॥

आलंबण–आलम्बन–न० आलम्ब्यतेऽवष्टभ्यते दुर्गपर्वतादे स्थानमधिरोढुकामैरित्यालम्बनं दर्श० । आश्रये ( आलंबणं च मे आया अवसेसं च वोसिरे ) आलम्बनं चाश्रयोऽवष्टम्भ आधार इत्यर्थः. । आतु. । ( आलयणेण केणइ ) आलम्बन इत्यालम्बनम् प्रपतनाधारणस्यालम् तेनालम्बनेन केनचिदिति आव० । ( जो मरणदेसकाले होइ आलवणं किंचि ) ( आलंबनमाधारस्तत । त० । (मेढिआलम्बण खंभ ) आलम्बन हस्ताद्याधार। ग० अधि० १ ( जमणेगत्यालंबणमपज्जवासपारकुचियं चित्तं )यच्चित्तं यन्मनोऽनेकार्थालम्बनमनेकार्थप्रतिभासां-दोलितमिति विशे० ॥ आलम्बनेन चक्षुरादिज्ञानविषयेण प्रति मादिनेति । पो० ॥ आलम्बन द्विधा रूच्यते गर्त्तादौ निमज्जतो रज्ज्वादि । भावत' संसारगर्त्तायां निपततां ज्ञानादि । वृ० । ध अधि. ३ नि. चू० उ. १ आलंबिज्जति ज तमालंबणं दुविह दव्व यम्मि वियाणाह भावे य णाणादि । नि. चू० । आ लंबि

कर्माणि ल्युट् । आलम्ब्यन्ते आश्रीयन्ते तान्यालम्बनानि । औ. आश्रयणीये, । आलम्बनादाश्रयणीयादिति॥ स्था०ठा. ३यान्या-लम्ब्यन्ते तान्यालम्बनानि नं०श २५ ल ७ कारणे प्रव ६१ १०४ ॥ नि चू. ५ उ. । कारणमालयणं मोत्त, कारण नामा लंबनम् आ म प्र.अ. १॥ (सपच्चवायण निरालंबणेण) निष्कारणे न प्रत्यपायसम्भवे वा आणायालंबनोयवस्तुवर्जितनेति ङा० अ. ए ॥ आलम्ब्यत इत्यालम्बनम् । प्रवृत्तिनिमित्ते, आव० । आलम्ब्यते निश्चलङ्क्रियते मनो येनेत्यालम्बनम् उत्त०अ.२४। प्रयोजने, ( आलंबणे य काले मग्गे जयणाए चेव परिसुरू ) आचा० अ. २ उ ३ नि० उ. १० आलंबणेत्यादितः प्रवचन सघगच्छाचार्य्यादिप्रयोजनम् आचा० । पुष्टालम्बनस्य मूलगु-णप्रतिसेवने न दोषः वृ० । अयापुष्टालंबनोनिरालम्बनो वा प्रतिसेवते । ततः ससारोपनिपातमासादयति ॥

तथाचात्र दृष्टांतमाह ।

तुच्छमवलंबमाणो, पेहति निरालंबतो य दुग्गंमि ।
सालंवनिरालंबे, अह दिहंतो णिलवंतो ॥

इहालम्बन द्रव्यभावभेदाद् द्विधा तत्र गर्त्तादौ पतद्भिर्यद्द्रव्यमाल-म्ब्यते तत् द्रव्यालंबनं तच्च द्विधा पुष्टमपुष्ट च । अपुष्ट दुर्बल कुशवल्कादि पुष्टं बलिष्ठ तथाविधकठोरवल्ल्यादि भावालय-नमपिपुष्टापुष्टभेदात् द्विधा पुष्ट तीर्थाव्यवच्छित्तिप्रथाध्ययनादि अपुष्ट शठतया स्वमतिमात्रोत्प्रेक्षितमालबनमात्र । ततश्च द्रव्यालंबन पुष्टमपुष्टमवलम्बमानो निरालम्बनो वा यथा दुर्गे गर्त्तादौ पतति यस्तु पुष्टालम्बनमवलम्बते स सुखेनैवात्मान गर्त्तादौ पतन्त धारयति । एव साधोरपि मूलगुणाद्यपराधा-न्निषेवमाणस्य सालंबनिरालंबविषयोऽयं दृष्टांतो मतव्यः ॥ किमुक्त भवति । योनिरालम्बनोऽपुष्टालम्बनो वा प्रतिसेवते स आत्मानं संसारगर्त्तायां पतत न सधारयितु शक्नोति । यस्तु पुष्टालंबन स तदवष्टंभादेव ससारगर्त्त सुखेनैवातिलङ्घयति ॥ अथ कस्मादालम्बनमन्वेषणीयमित्याह ॥

सालंवणो पडंतो, अप्पाणं दुग्गमे विधारेइ ।
इअसालंवणसेवा, धारेइ जइं असढभावं ॥ ६ ॥

कानि पुनस्तान्यालम्बनानीत्याह ॥

काहं अछित्तिअदुवा अहीहं, तवोवहाणेसु व उज्जमिस्सं ।
गणं व निइए वहुसारविस्सं, सालंबसेवी समुवेइ मुक्खं ॥

व्या० काहमित्यादिवृत्त यः कश्चिदेव चिंतयति यथा कारि-ष्याम्यहमत्र स्थितोऽछित्तिमव्यवच्छित्तिं जिनधर्मस्येति शेषो राजादेर्जैनशासनावतारणादिभिः (अदुवेति) अथवा अहमध्ये ष्ये सूत्रतोऽर्थतश्च द्वादशांग दर्शनप्रभावकाणि वा शास्त्राणि यदि वा तपोलब्धिसमन्वितत्वात्तपोविधानेषु नानाप्रकारेषु तपस्सु उज्जमिस्स इति उद्यस्यामि उद्यम करिष्यामि गण वा गच्छ वा ( नीईमुयत्ति ) सप्तम्यास्तृतीयार्थत्वान्नीतिभिः सूत्रोक्तैर्भिः सारयिष्यामि गुणै प्रवृद्धिं करिष्यामि स एव सा-लवनसेवी । एतैरनतरोदितैरालम्बनैर्यतनया नित्यवासमपि प्रतिसेवमानो जिनाज्ञानुल्लघनात्समुपैति प्राप्नोति मोक्ष सिद्धि तस्मात्तीर्थाव्यवच्छेदादिकमेव यथोक्तज्ञानदर्शनचारित्राणां समुदितानामन्यतरस्य वा यद्वृद्धिजनक तदालवन जिना-ज्ञावशादुपादेय नान्यत् ॥ १४ ॥

सम्प्रति सिसाधयिषितार्थव्यतिरेकदर्शनायाह ॥

आलंवणहीणो पुण, निवमइ खलिओ अहे दुरुत्तारे ।
इअनिक्कारणसेवी, पमइ भवोहे अगाहंमि ॥ ८ ॥

टी० ॥ आलंबनहीनः पुनर्निपतित स्खलितः क आह दुरुत्तारे गर्त्तायां दुरुत्तारायां इय एवमि कारणसेवी साधु पुष्टालंबनरहित इत्यर्थः । पतति भवौघे अगाधे पतति भवग र्त्तायां अगाधायां अगाधता पुनरस्याडुःखेनात्तरणसंभवादि-ति गाथार्थः ॥ यथा चरणविकला असहायज्ञानदर्शनपक्ष-मालम्ब्यत्येवं नित्यवासाद्ययाह ॥

जेजत्थ जया जग्गा, ओगासं ते परं अविंदंता ॥
गंतु तत्थ चयत्ता, इम पहाणंति घोसंति ॥ ए ॥

टी० ॥ ये साधवः शीतलविहारिणः यत्र नित्यवासादौ यदा यस्मिन्काले भग्ना निर्विण्णा अवकाश स्थान ते पर अ-न्यत (अविदंतित्ति) अलभमानाः गतु तत्र शोभने स्थाने अश कुर्वतः किंकुर्वंति इद पहाणति घोसति यदस्माभिरंगीकृतं सांप्रतं कालमाश्रित्येदमेव प्रधानमित्येव नाघोषयति ॥ ए ॥ आव० ३ अ० । आ. क० द्वा० १४ अत्र सार्थेन दृष्टांतः ॥

स्वल्पोदकतरुच्छायं, सार्थः काश्चिद्भयापयं ॥
प्रपन्नस्तत्रकेऽप्यस्थुः, परिश्रमजुषोऽलसाः ॥ १ ॥
तिलंतंडुलिकमाया, स्वपि छायासु निर्वृताः ॥
तैस्तैर्जल्पैश्च गरुभैः, शब्दयत्यपरानापि ॥ २ ॥
प्रधानमिदमेवात्र, स्यानामित्यर्थके च न ॥
ये तद्वचः मपद्यास्थु, स्ते क्षुत्तृड्दुःखिनोऽभवन् ॥ ३ ॥
स्वीचक्रे तद्वचोयैर्न, तमध्वानं विलंघ्यते ॥
शीघ्रं शीतोदकच्छायं, सुखभाजोऽप्यतेऽभवन् ॥ ४ ॥
यथा ते पुरुषास्तस्थुः, पार्श्वस्याद्यास्तथालसाः ॥
ये तद्ग्रमात्त निस्तीर्णाः सुखिनस्ते सुसाधवः ॥ ५ ॥

साम्प्रत यदुक्तमिद प्रधानमिति घोषयंति तद्दर्शयति ॥

निअयावासविहारं [१], चेइअभत्तिच २ आज्जिआ लाभं
३ विगईसु अपडिवधं, निद्दोसं चोइअं विंति । १० ।

पडिदारगाहा २ ॥ टी० ॥ नित्यवासेन विहरंतानित्यवास-कल्पमित्यर्थं चैत्येषु भक्तिस्तां च चशब्दात्कुलकार्यादिपरि-ग्रहः । आर्यिकाभ्योलाभस्तद्धीराद्या विगतयो अभिधीयंते ॥ तासु विगतिषु प्रतिबध आसग निर्दोष चोदिता अन्येनोध तविहारिणोब्रुवते भणंतीति गाथार्थ ॥

अधुना चेइअदारं गाहा ॥

चेइ अकुलगणसंघे, अन्नं वा किं चि काउ निस्साणं ।
अहवा वि अज्जवइरं, तो सेवती अकरणिज्जं ॥

चैत्यकुलगणसघ अन्यद्वा किंचिद्पुष्टमव्यवच्छित्यादि-कृत्वालवनमित्यर्थ । कथ नास्ति कश्चिदिह चैत्यादि प्रति-जागरूकः अतोऽस्माभिरसयमोऽङ्गीकृतः । मा भूच्चैत्यादिव्य-वच्छेद इति अथचार्य्यवैर कृत्वा निश्रांततः सेवते अकृत्य असंयम मदधर्मा इति गाथार्थ ११४ आव० अ० ३ ॥

चेइअपूआ किं, वइरसामिणो मुणिअपुव्वसारेणं ।
न कया पुरिआइ तया, मुक्खंगं सा वि साहूणं ॥ ११५ ॥

टीका ॥ अक्षरार्थः सुगम । भावार्थस्तु कथानका-

दवसेयस्तच्च कथितमेव तत्र वैरस्वामि नमालंबनं कुर्वाणा इह नेञ्ते मंदधिय । किमित्याह ॥

ओहावणं परेसिं, सतित्थ उब्भावणं च वच्छल्लं ।
न गणंति गणे माणो, पुव्वुज्झिअ पुष्फमहिमं च ॥ १६॥

टी० ॥ अपभ्राजनां लांछनं परेषां शाक्यानां स्वतीर्थोद्भावनं च दिव्यकरणेन तथा वात्सल्यं श्रावकाणां एतत्र गणयंत्यालंबनानि गणयन सत तथा पुव्वोज्झिअपुष्फमहिम च गणयतीति पूर्वावचितैः प्राग्गृहीतैः पुष्पैः कुसुमैर्महिमा यात्रा तामिति गाथार्थः १६ ॥ चैत्यनिकद्वार गतं ॥

अधुनार्यिकालाभद्वारम् । तत्रेय गाथा ॥

अज्जियलाभे गिद्धा, सएणलाभेणजे असंतुट्ठा ।
भिक्खायरिया भग्गा, अन्निअपुत्तं ववइसंति ॥
अन्निअपुत्तायरिओ, भत्तं पाणं च पुप्फचूलाए ।
उवणीअं भुंजंतो,ते एणवनावे अंतगडो ॥

टी० अक्षरार्थ निगदसिद्धः । भावार्थस्तु कथानकादवसेयः । तच्च अन्निकापुत्राचार्यशब्दे । तेन मदमतय इदमालंबनं कुर्वत इत्थमपर नेञ्ते । किमत आह ॥

गयसीमगणं ओमे, भिक्खायरिआ अपच्चलं थेरं ।
न गणंति सहो विसढो, अज्जिअलाभं गवेसेज्जा ॥

टी० गत शिष्यगणोऽस्येति समासस्त ओमे दुर्भिक्षे भिक्षाचर्यायां अपच्चलो असमर्थ भिक्षाचर्यायां अपच्चल असमर्थस्त स्थविर वृद्ध एव गुणयुक्त न गणयति नालोचयति सहा विसढा समर्था अपि शाठ्यात सहायादिगुणयुक्तत्वेऽपि शठा मायाविन आर्यिकालाभं गवेषयंतीति अन्विषत इति गाथार्थ १८ ॥

गतमार्यिकालाभद्वारं विकृतिद्वारमधुना तत्रेय गाथा ।

भत्तं वा पाणं वा, भुत्तूणं लावलाविआमि विगुर्ध्दं ।
तोत्तमपडिम्भव्वंश्रा, उदायणरिसिमिव्व वहसंती ॥ २० ॥

टी० ॥ भत्तं वा ओदनादि पानं वा द्राक्षपानादि भुक्त्या उपतुल्य(लावलाविवयति)लोपेत्त अशुद्धं विगतिसंपर्कदोषात् तथाच नि कारणे प्रतिषिद्ध एव विगतिपरिभोग ॥ उक्तंच ॥

विगतिं विगतिं भीया, विगतिमियं जो उ भुंजति साहू ।
विगति विगतिसहावा, विगति विगतिं बलानेति ॥

नन केनचित्साधुना चोदिता. संतोऽवद्यप्रतिञ्ञा पापप्रज्ञादिता उदायनर्षेरयादिरत्यालंबनतयेति गाथार्थ ।२०। आव. ३ अ. ॥

कथाचेयम् ।

आसीदुदायनो नाम, राजा वीतभयाधिपः ।
राज्यं निवेश्य जामेयं. प्रव्रज्या स्वयमग्रहीत ॥१॥
विहाराऽन्य तस्यान्यद्, व्याधिर्वैरजाणि नः ।
केवलं दधि भुंजीया. येन व्याधिर्न वर्द्धते ॥ २ ॥
राजर्षिस्तु व्रजनन्यस्मा. तत्रप्रभूतं दधि ।
सोऽगाद्वीतभयेऽन्येद्यु. स्तत्र नत्नामिस्तूपः ॥ ३ ॥
उत्तेऽमात्यैः स्वराज्यार्थी. जितपरीषहः ।
गतनिजराज्यमान. राज्यं दास्यामि सोऽवदत् ॥४॥
उक्तस्तैनार्प्यते राज्यं, चिराद्व्युद्ग्राहितोऽथ सः ।
पशुपाल्यैकया साधोः, सविषं दध्यदापयत् ॥५ ॥
इष्टाः पुनरमात्यास्ते, सर्वत्राऽप्यादिशन् पुरे ।
राजर्षेरस्य युष्माभि, र्दातव्यं सविषं दधि ॥६॥
हृत्वा तद्देवताऽन्याणी, न्महर्षे ! सविषं दधि ।
त्यजेतस्य क्रमेतेन, पुनर्व्याधिरवर्द्धत ॥७॥
पुनर्दध्यादृदे सोऽथ, पुनर्देव्यहरद्विषं ।
एवं तत्पृष्ठतो लग्ना, देवता संचचार सा ॥८॥
तस्याः प्रमादतोऽन्येद्यु, र्बुभुजे सविषं दधि ।
तत्तापातः शुभध्यानः, केवलं प्राप्य निर्वृतः ॥९॥
तस्य शय्यातरः कुंभ, कारो देवतया तदा ।
सिनपल्ल्यां कृतो राजा, राजर्षेर्भक्तिमानिति ॥१०॥
कुंभकारकृतामि ति, तन्नाम्नाऽजनि तत्पुरं ।
पांशुवृष्ट्या पुनर्वीतं, भयं सर्वं स्थलीकृतं ॥११॥
ऋषिहत्याकरमिति, कोपाद्देवतया तदा ।
कारणाद्दधिभुग्युक्तः, कर्त्तमालंबनं न सः ।१२।आ.क. ॥

सीअलखुक्खाणुचिअं, वएसु विगईगएण जावंतं ॥
हट्ठा वि भणंति सढा, किमासि उदायणो न मुणी ।२१।

टी० । शीतलं च तद्रुक्षं च शीतलरुक्षं अन्नमिति गम्यते । तस्याऽननुचित. अननुरूपः नरेंद्रप्रव्रजितत्वाद्रोगाभिभूतत्वाच्च शीतलरुक्षाननुचितस्त व्रजेषु गोकुलेषु विगतिगतेन विगतिं यतेन यापयतं ( हट्ठाविक्ति ) समर्था अपि भणति शठा. किमासीत् ( उदायणो न मुनि ) मुनिरेव विगत्ति परिभोगे सत्यपि तस्मान्निर्दोष एवायमिति गाथार्थ ॥ ७ ॥ एव नित्यवासादिषु मदधर्मा संगमस्थविरादीन्यालंबनान्याश्रित्य सीदति । अन्ये पुनः सूत्रादीन्येवाधिकृत्य तथाचाह ॥ आव० ॥

सुत्तत्थवालवुड्ढे, असहदव्वाइआवईओ अ ।
निस्साणपयं काउं, सत्थरमाणा विसीअंति ॥२२॥

सूत्रश्चार्थश्च बालश्च वृद्धश्च सूत्रार्थबालवृद्धा । तान् तथा असहश्च द्रव्याद्यापदश्च असहद्रव्याद्यापदस्तांश्च निश्राणां आलंबनानां पद कृत्वा सस्तरतोऽपि सयमानुपरोधेन वर्तमाना अभिसंत सीदति । एतदुक्त भवति । सूत्र निश्रापद कृत्वा यथाह पठामि तावत्किं ममाऽन्येन एवमर्थ निश्रापद कृत्वा शृणोमि तावत् एव बालत्व वृद्धत्वं असहत्व असमर्थत्वमित्यर्थ । एव द्रव्यापदं दुर्लभमिद द्रव्यं, तथा क्षेत्रापद क्षुल्लकमिदं क्षेत्रं, कालापद दुर्भिक्षं वर्त्तते, तथा भावापदं ग्लानोऽहमित्यादि, निश्रापद कृत्वा सस्तरतोपि विषीदन्त्यल्पसत्वा इति गाथार्थ. ॥ २२ ॥

आलंबणाण लोगो, भरिओ जीवस्स अजउकामस्स ॥
जं जं पिच्छइ लोए, तं तं आलंबणं कुणइ ॥ २३ ॥

टी० ॥ आलंबनानां प्रागनिरुपितशब्दार्थानां लोको मनुष्यलोको भृत पूर्णो जीवस्य ( अजउकामस्सत्ति ) अयतितुकामस्य तथा चायतितुकामो यद्यत्पश्यति लोके नित्यवासादि

तत्तदालंबनं करोतीति गाथार्थः ॥ २३ ॥

किंच द्विविधा भवन्ति प्राणिनो मंदश्रद्धास्तीव्रश्रद्धाश्च तत्रा-न्यत् मंदश्रद्धानामालम्बनमन्यच्च तीव्रश्रद्धानामित्याह च ॥

जे जत्थ जयाजइआ, बहुस्सुआ चरणकरणपब्भट्ठा ॥
जं ते समायरंती, आलंबणं मंदसद्धाणं ॥ २४ ॥

टी० ॥ ये केचन साधवो यत्र ग्रामनगरादौ यदा यस्मिन् काले सुखमदुःखमादौ ( यद्यन्ति ) यदा दुर्भिक्षादौ बहुश्रु-ताश्चरणकरणप्रभ्रष्टाः सतः यत्ते समाचरंति । पार्श्वस्थादिरूप तदालंबनं मंदश्रद्धानां भवतीति वाक्यशेषः । तथा ह्याचार्या मथुरामंगुः सुभिक्षेऽप्याहारादिप्रतिबंधापरित्यागात्पार्श्वस्थता-मभजत्तदेवमपि नूनं जिनैर्धर्मो दृष्ट एवेति गाथाभिप्रायः ॥ २४ ॥

जे जत्थ जया जइआ, बहुस्सुआ चरणकरणसंपत्ता ॥
जं ते समायरंती, आलंबणं तिव्वसद्धाणं ॥ २५ ॥

ये केचन यत्र ग्रामनगरादौ यदा सुखमदुःखमादौ (जइयन्ति) यदा च दुर्भिक्षादौ बहुश्रुताश्चरणकरणसंपन्ना यत्ते समा-चरंति भिक्षुप्रतिमा तदालम्बनं तीव्रश्रद्धानां भवतीति गाथार्थः ॥ आव ३ अ० ॥

आलंबनं रज्ज्वादि तद्वदापत्तार्तादिनिस्तारकत्वादालम्बनम् आलम्बनसदृशे, च भ० श १८ उ० २ ( आहारजूए आलंबणे ) आलंबनं वस्त्रादिकमिव । ज्ञा०अ० ७ ॥ ( मेढीआलम्बण ) खंभ ) आलंबनं हस्ताद्याधारः तत्समानं यथा हस्ताद्याधारो गर्तादौ पततं जन्तुं धारयति तथाचार्योऽपि भवगर्ते पततं गच्छं धारयतीत्यर्थः ग० अधि० १ ( मेढीयपमाणे आहारे आलंबणे ) आलंबनं रज्ज्वादि तद्वदापत्तार्तादिनिस्तारकत्वा-दालम्बनम् राज । आलम्ब्यते इत्यालम्बनम् भावेऽनट्प्र-त्ययः कर्म० ॥ अवष्टम्भे यथा मंदशक्तिः कश्चित् नगरे परि-भ्रमणाय यष्टिमवलम्बते ततस्तदवष्टंभते । जातसामर्थ्यविशेषः सन् तान् प्राणापानादिपुद्गलान् विसृजतीति. कर्म. प्र ॥ गृहणशब्दे निर्ग्रन्थीनां ग्रहणं वक्ष्यते ॥

आलंबणजोग-आलंबणयोग- पु० आलम्बनवाच्ये पदार्थे अर्ह-त्स्वरूपे उपयोगस्यैकतानत्वम्। एतस्य बहुवक्तव्यता योगशब्दे अष्ट० ॥ सालम्बनो निरालम्बनश्च योगः परो द्विधा ज्ञेयः । सह आलम्बनेन चक्षुरादिज्ञानविषयेण प्रतिमादिना वर्तत इति सालम्बनम् षो० वृ० १३ । योगभेदे च अष्ट० ।

आलंबणभूय- आलम्बनभूत त्रि० आलम्बनसदृशे, ( आलं-बणभूए ) आलंबनं रज्ज्वादि तद्वदापत्तार्तादिनिस्तारकत्वा-दालंबनम् । ज्ञा० अ १ ।

आलंबमाण- आलम्बमान त्रि० बाह्वादौ गृहीत्वा धारयति, देशतः करेण गृह्णाति च । वृ० ।

आलंबि ( न् ) आलम्बिन् त्रि० आ लबि णिनि आश्रयिणि, " गजाजिनालम्बिदुकूलधारिवा " । कुमा । वाच० ॥

आलंबिय-आलम्बित त्रि० लबि क्त धृते, गृहीते, च वाच० ।

आलंभ--आलम्भ पु० आलभ् घञ् नुम् सस्पर्शे १ हिंसने २ च वाच० ॥

आलंभिय-आलम्भिक-न० स्वनामख्याते नगरे, यत्र चुल्लश-तको गृहपतिरासीत् स्थानांगे चुल्लशतकमधिकृत्य ( सत्राल-म्भिकाभिधाननगरनिवासी ) स्था० ठा. १ । (आलभियणयरं मज्झं मज्झेणं णिग्गच्छइ ) भ० श ११ उ. १२ ॥ आलम्भि-कायां नगर्यां यत्प्ररूपितं तत्प्रतिपादकः उद्देशकोऽप्यालंभिक इत्युच्यते । ततोऽसौ द्वादशः भगवत्याः एकादशशतकस्य द्वादशे उद्देशे च ॥

आलंभिया--आलम्भिका--स्त्री० स्वनामख्यातायां नगर्याम् भ० श ११ उ १ ( ततोभयव आलभियं नयरीं गतो ) आ० म. । कल्प० ॥ आ० चू० ॥

अस्या वर्णको भगवत्याम् यथा ॥

तेणं कालेणं तेणं समएणं आलंभिया णामं णयरी हो-त्था वण्णओ संखवणे चेइए वण्णओ तत्थणं आलंभिया ए णयरीए बहवे इसिभद्दपुत्तप्पामोक्खा समणोवासगा परिवसंति। अड्ढे जाव अपरिभूए अभिगयजीवाजीवा-जाव विहरंति ॥ भ० श. ११ उ. ११ ।

आलत्त- आलप्त- त्रि ० आभाषिते, ( आलत्ते वाहिते, ) आलप्तोनाम आर्य ! किं तत्र वर्त्तत इत्येवमाभाषित इति वृह । ( सेवगपुरीसो उ कोइ आलत्तो ) आलप्तः समापि-त इति । व्य ० उ. २ ॥ शब्दिते ततश्चालप्ताः शब्दिता वा तूर्ष्णिभावं भजन्ते । आचा. अ. ६ उ. ४ । आलपने न (आ-लत्तमादिकभत्था ) आलप्तमालपनम् व्य उ. १० ।

आलद्ध आलब्ध त्रि० आ लभ क्त ससृष्टे, सयुक्ते, स्पृष्टे, हिंसिते, च

आलप्प--आलाप्य--त्रि ० आ. लप कर्मणि. एयत् कथनीये णिच् यत् आभाष्ये वाच० ।

आलवंत--आलपत्--त्रि० ईषद्वदति, ( आलंवंते लवते वा ) आलपति सति ईषद् वदति सति. उत्त अ. १ सकृल्लपति, च. ( आलवित्तएवा ) आलपितुवा सकृत् प्रति ०। आलपन कुर्वति, च ( आलवताण मुरयाण नादिमुइंगाणं ) मुरज-मृदंगनदिमृदंगानामालपनम्, । राज० । आ चू ।

आलय--आलय--पु आलीयतेऽस्मिन् आ. ली आधारे अच्. आधारे वाच ० आश्रये, स्था० ठा. ३ स्था ठा २ ॥ ज ० ॥ आवासे ओघ ० ॥ गृहे, त. ॥ स्थाने विशे ( हिमालयो नाम नगाधिराज ) कुमा० तत्रामरालय मरालमरालकेशरी नैष० नहि दुष्टात्मना मार्य्या निवसन्त्यालये चिरम्, रामा० ( आलय देव शत्रूणां सुघोर खाण्डव वनम् ) भा आ० प० । आलीयते साधवोऽत्रेत्यालय वृ० । वसतौ, स्था० ठा ॥ आ. चू । ( आलएण विहारेण) आलयो वसति आव । अणुत्तरेण. आलएण, आलयेन स्त्रीपंडकादिरहितवसतिसेवनेन कल्प० ॥ उपाश्रये, ॥

वृहत्कल्पे उपाश्रयस्यैकार्थिकानधिकृत्य ( उवस्सगपस्सि-गसिज्जा आलयवसधीनिसीहिया ठाणे, वृह० । शरीरे, च

निसीहिगा सरीरगं वसही थंमिल्लं च भणंति। यतोनि-सीहिया नाम आलयो वसही थंमिल्लं च सरीरस्स आलओ सरीरं जीवस्स आलयोत्ति ॥ आ. चू ॥

॥ आलयवर्तिनि, च ( आलयविहारसमिओ ) आलयः सूचकत्वादालयवर्ती सकलकवकविकलनिर्वेतीत्यर्थ ध.अधि २

भावे वञ् सम्बेये, मर्य्यादायामव्ययी० वयपर्य्यन्ते. अव्य० वाच० ॥

आलयगुण—आलयगुण—पु० वहिर्लेण्यादौ, प्रतिलेखनादौ,उपश्रमगुणे च वृ० ॥

आलयविन्नाण—आलयविज्ञान—बौद्धपरिभाषितेक्षणिकविज्ञाने, आव० ॥

आलयसामि (न्) आलयस्वामिन् पु० साध्वाश्रयप्रभौ, (सेज्जायरोत्ति भणाति आलयस्वामी उ तस्स जो पिभो) आलयस्वामी तु साध्वाश्रयप्रभुरेव-पञ्चा० वृ० १७

आलयसुद्धाइलिंगपरिसुद्ध—आलयशुद्धादिलिंगपरिशुद्ध—पुं० आलयशुद्धादीनि वसतिनिर्दोषताप्रभृतीनि यानि लिङ्गानि सुविहितचिह्नानि तैः परिशुद्धोनिश्चितसुविहितभावोयः स आलयशुद्धादिलिङ्गपरिशुद्धस्तस्मिन्. (तम्हा जहोइयगुणो आलयसुद्धाइलिंगपरिसुद्धो) पंचा० वृ० ११ ॥

आलवण्ण—आलवण्य—न० न लवण० न० त० अलवणस्यभावः ष्यञ् लवणरसानभिज्ञत्वे नास्तिलवण यत्र बहु० तद्भाववा ष्य. स्त्र-अलवणता-स्त्री० अलवणत्वंतु. न० लवणशून्यत्वे वाच० ।

आलस—आलस—त्रि० आलसति, ईषत्व्याप्रियते-अच्. क्रियामान्द्ये अलसस्यापत्यम् विदा० अञ्-अलसापत्ये-पुं० स्त्री० यून्यपत्ये हरिता० फञ् आलसायनः तस्य यून्यपत्ये-पु० स्त्री० वाच० ।

आलस्स— आलस्य—न० अलसस्य भावः ष्यञ् अनुद्यमने उत्त० १ अ० ॥

औदासीन्ये प्रमादे यत्र आलस्यमौदासीन्यं च हेतपु आलस्य च हेतुः समाधिसाधनेष्वौदासीन्यं माध्यस्थं न तु पक्षपातः द्वा० द्वा.१६ ॥ आ० म० ॥

आलाव—आलाप—पु० आलप्-करणे घञ्-न.च० आङ ईषदर्थत्वादीषल्लपनमालापः स्था० ठा० ५ ईषज्ज्ञापणे,घ० अधि० २ असकृत्सभाषण, च (आलावं वा संलावं वा) आलापः संभाषणं संलापस्तदेव पुनः पुनः भ० श० ३ उ० १ ॥

आलावत्ति सकृज्जल्प सलावचत्तिमुहुर्मुहुर्जल्पं. भ० श० ५ उ० ४ ॥ ध० अधि० २ ॥ ईषन्मथमतया वा जल्पने, चतुर्भिश्च स्थानैर्निर्ग्रन्थस्य निर्ग्रन्थ्या सममालापे न दोष. ॥

तथाच स्थानाङ्गे स्था० ठा० ४ ॥

चउहिं ठाणेहिं णिग्गंथे णिग्गंथिं आलवमाणे वा संलवमाणे वा णाइक्कमइ तं० पंथं पुच्छमाणे पंथं देसमाणे असणं वा पाणं खाइमं वा साइमं वा दलयमाणे दवावेमाणे वा ॥

स्था० टी० (चउहीत्यादि) स्फुटं किंतु आलपन्नीषत्प्रथमतया या जल्पन् सलपन् मिथो भाषणेन नातिक्रामति न लंघयति निर्ग्रन्थाचारं (एगो एगत्थिए सद्धिं नेव चिठे न सलवे) विशेषन्यायात्वा ग्रन्थेऽर्थ रूपं मार्गप्रश्नादीनां पुष्टालम्बनत्वादिति तत्र मार्ग पृच्छन् प्रश्नतेषपमार्गेमिस्गृहस्थपुरुषादीनामभावे हे आर्ये ! कोऽस्माकमितो गच्छतां मार्ग इत्यादिना क्रमेण मार्ग वा तस्यादेशयन् धर्मशीलेयं मार्गोऽस्ते इत्यादिना क्रमेण अशनादि मम्ददुर्मशीले ! गृहाणेदं अशनादीत्येव तथा अशनादि दापयन् आर्ये ! दापयास्येदं कुर्यं आगच्छेद् गृहा दावित्यादिविधिनेति ॥ प्रवादे-उच्चारणविधौ च- (एसाल वोऽमसव्वत्थ-) एव ईदृश आलाप उच्चारणविधिः वृह० (आलावोदेवदत्तादि किं भोति किं देवदत्तेति.) (अम्मयावलेउ आलावसद्दो सुओ) नि० चू० ॥

आलावग—आलापक—पुं आ लाप क. उच्चारणविधौ (एवमिक्केके आलावगा भणियव्वा) चत्तारि आलावगा, स्था० ठा. ६ ॥

आलावण—आलापन—न. आ लप णिच्. भावे ल्युट्. परस्पर कथोपकथने, आभाषण, आलापशब्देऽस्य प्रवृत्तिहेतुत्वमुक्तम् स्यादाभाषणमालाप इत्यमरः । स्वस्तिवाचनेन,च (मंगलालापनैर्होमैः) रामा ० वाच ० । सभाषणे. वृ० । सकृत्सभाषणे आव. ॥ भाषणे. (जो लावसेज्जा असणस्स हेऊ) आलापयेद् भाणयेत. सूत्र श्रु. अ. ० ॥ आ लाप्यते आलापन क्रियते एभिरित्यालापनानि. रज्ज्वादौ. भ ० श. ८ उ.९

आलावणबंध—आलापनबन्ध—पु.आलाप्यते आलीन क्रियते एभिरिति आलापनानि रज्ज्वादीनि तैर्बन्धस्तृणादीनामालापनबन्धः । बन्धभेदे. भ- श. ८ उ. ९ ।

तथाच भगवत्याम्.

सेकिंतं आलावणबंधे २ जन्नं तणभाराण वा कट्ठभाराण वा पत्तभाराण वा पलालभाराण वा वेल्लभाराण वा वेत्तलया वा गवरतरज्जुवल्लिकुशदब्भमाइएहिं आलावणबंधे समुप्पज्जइ । जहन्नेणं अंतोमुहुत्तं उक्कोसेणं संखेज्जं कालं । सेत्तं आलावणबंधे ॥

आलि—आलि—पु वनस्पतिविशेषे, । जी प्र. ३ ॥

आलीकदल्यौ वनस्पतिविशेषौ. ज्ञा०३ अ० ॥

आलिंग—आलिङ्ग— पुं० मुरजनामके, वाद्यविशेषे, राज०प्र. ३

आलिंगोमृ मयो मुरज जी०.३ प्र. उत्तालिज्जताण आलिंगाण, राज ० आ. चू ॥ (आलिंग पुक्खरेइ वा) आलिंग्य वाद्यते इत्यालिंगो मुरजवाद्यविशेषस्तस्य पुष्कर चर्मपुट तत् किलात्यतसममिति तेनोपमा क्रियते इति. आ. म. प्र १ अ. ज. ॥

आलिङ्ग्य त्रि. आ. लिग. ण्यत् आलिंगनीये प्रियादौ, वाच० ॥ मुरजनामके वाद्यविशेषे. पु. (आलिंगपुक्खरे इव) आलिंग्यो नाम या वादकेन मुरज आलिंग्य वाद्यते हृदि धृत्वा वाद्यत इत्यर्थः ॥ आलिंग्या मुरजोवाद्यविशेषः ॥ एष यकारान्त शब्द. । जी० प्र. ३

आलिंगण—आलिङ्गन—न० आ लिगि ल्युट्-आश्लेषे-अष्ट । ईषत्स्पर्शने० प्रव० द्वा. १७० नि. चू. उ. १ दश० अध्य. ६

आलिंगनवट्टि—आलिङ्गनवर्त्ति—स्त्री० शरीरप्रमाणे उपधाने (नारिसगंसि सयणिज्जंसि सालिंगणवट्टिए) सहालिंगनवर्त्या शरीरप्रमाणेनोपधानेन यत्तत्तथा-सू. प्र प्रा. २० जी० प्र. ३ । भ० श. ११ उ. ११ । ज्ञा० अ. १

आलिंगणवट्टिया—आलिङ्गनवर्त्तिका—स्त्री० शरीरप्रमाणे दीर्घे,गण्डोपधाने, आलिंगनवर्तिका नाम शरीरप्रमाण दीर्घ गण्डोपधानम् । कल्प० ॥

आलिंगणिया—आलिंगनिका—स्त्री० पुरुषप्रमाणे उपधाने, आलिंगनिकायां पुरुषप्रमाणायां शेतेति सुखा समालिंग्य

गुरू ४ तत्र प्रथमभंगेनिर्गमन ( इमेर्हितुत्ति ) पश्चिर्वइयमा णैरन्तरैश्चितितान्येव द्वाराणि दर्शयति ॥

अहिगरणविगतिजोगे, पडिणीए थध्दलुद्धनिध्दम्मे ।
अलसअणुवध्दवेरे, सच्छंदमतीपयाहियव्वो ॥

यदि स उपसंपद्यमानोऽधिकरणतः स्वस्थानान्निर्गत. ( विगतित्ति ) विकृतेर्वापस्थ्याद् ( योगत्ति ) योगोद्वहनसीरुतया ( पडिणीयत्ति ) प्रत्यनीकोऽत्र मे साधुरिति बुध्ध्या तथा "थध्दलुध्द" इत्यादिस्तब्ध इति वा लुब्ध इति वा निर्द्धर्म्म इति वा अलस इति वा स्वच्छंदमतिरिति वा विनिर्गतस्तत स्तस्य निर्गमनमशुद्धमिति कृत्वा ( पय.हयव्वोत्ति ) परिहर्त्तव्य. । तदपरिहरणे प्रायश्चित्तं तत्राधिकरणविषये प्रायश्चित्तमाह ।

गिहिसंजय अहिगरणे, लहु गुरुगा तस्स अप्पणोच्छेदो ।
विगइं न देइ घेत्तुं, उत्तुरयं व गहिये त्ति ॥

गृहिभिः संयतेश्च सहाधिकरणे विनिर्गतं यद्याचार्य्यः स्वीकरोति ततो यथाक्रम प्रायश्चित्त लघुगुरुकं । इयमत्र भावना । यदि गृहस्थेन सहाधिकरणं कृत्वा विनिर्गतस्तं यद्याचार्यःसगृह्णाति ततस्तस्याचार्यस्य परिहारस्थानं चत्वारो लघुमासाः अथ संयतेन सममधिकरण कृत्वा समागतं सगृह्णाति ततश्चत्वारो गुरुकाः । तस्य पुनरागंतुकस्य ( पणत्ति ) रात्रिंदिवपंचकप्रमाणः पर्यायस्य च्छेदः । इहाऽधिकरणादिदोषतो विनिर्गतास्ते प्रश्ने वा सति तदुक्तिवशादवसीयंते । तत्र विकृतिदोषविनिर्गतपृष्टस्य वा य उक्तिविशेषस्तं दर्शयति ( विगइमित्यादि ) आचार्यो विकृतिं घृतादि कांग्रहणां य प्रददाति तथा योगवाहिभिर्योगोत्तीर्णैः कायोत्सर्गकरणतो गृहीतोऽपि परिपूर्ण विकृतिजातेऽन्यैर्भुक्ते या उद्धरिता विकृतिस्तामपि नानुजानाति किंच ।

नववज्जिया विदेहो, पगईए दुब्बलोअहं भंते ! ।
तन्नाविय स इहिं, नयगहणं धारणं कत्तो ॥

वज्जिवाबोनाम देशीवचनत्वादिक्षुः । उक्तं च " वज्जियावगोउच्छू " इति नववज्जियववत् देहो यस्य स तथा । इयमत्र भावना । स ब्रूते अहं भगवन् ! नवेक्षुतुल्यो मम देहो यथा स इक्षुः पानीयेन विना शुष्यति तथा ममापि देहो विकृतिं विना सीदति । अन्यथाऽहं स्वभावेन दुर्बलो न विकृतिमंतरेण बलिको भवामि । तथा सर्वदैव विकृत्याचितदेहस्ततस्तद्भावितस्य सतो ममेदानीं तस्याऽभावेन बल न च सूत्रार्थस्य वा ग्रहणमशक्तत्वात् । पूर्वं गृहीतस्य सूत्रस्यावधारण कुत तत् अशक्त्या सर्वं दूरत एव विस्मृतं । ततोऽहं विनिर्गतः ॥

संप्रति योगविषये प्रत्यनीकविषये चोक्तिविशेष दर्शयति ॥

एगंतरनिव्विगत्ती, जोगोपव्वतियगोवमे अत्थि ।
वुक्कखलिएसु गेण्हइ, छिद्दाणि कहेइय गुरूणं ॥

तस्मिन् गच्छेयोग एकांतरनिर्विकृतिक. । किमुक्तं भवति । सपृष्टेवा ब्रूते । तस्याचार्यस्य गच्छे योग एकांतरोपवासेनोह्यते । एकांतरा चाम्लेन वा तथा योगवाहिनो योगोत्तीर्णस्याऽपि ते आचार्या विकृतिं न विसृजति । ततः कर्कशा सुत्र योगा इति विनिर्गतः ॥ न तथा तत्र गच्छे मे मम प्रत्यर्थिक । प्रत्यनीकोऽस्ति स कथं विसामाचारीयोगेषु "वुक्कखलिएसुत्ति" ष्ठुक्ते विस्मृते सामाचारीविशेषे स्खलिते दुःप्रत्युपेक्षणादिके मां गृह्णाति अत्यर्थं खरंटयति । अथवा वुक्कस्खलितेषु जातेषु तानि वुक्कखलितानि अपराधपदे छिद्राणीवछिद्राणि गृह्णाति गृहीत्वा गुरूणां कथयति । पश्चात् गुरवो मां खरटयति ततो विनिर्गतः ॥

सम्प्रति लुब्धस्य स्तब्धस्य चोक्तिविशेषं दर्शयति ॥

चंकमणादिउट्ठाणे, कडिगहणं काउ नत्थि वाहे एवं ॥
भुंजइ सयमुक्कोसं, तयदेति नेमिलुध्देवं ॥ १ ॥

स्तब्ध एव भाषते चंक्रमणादावुत्थाने कटिग्रहण स्वाध्यायश्च नास्ति । एतदुक्त भवति । यद्याचार्याश्चक्रमण कुर्वंति । आदि शब्दात् यदि वा कायिक्यादिभूमिं गच्छंत्यागच्छति वा तथा तथाऽप्यभ्युत्थातव्याः । तेषां नायकत्वात् । तत. एव चंक्रमणादावभ्युत्थितमस्माक कटी वा तेन गृह्यते भूयोभूय उत्थाने पलिमंथभावात् सूत्ररूपस्याऽर्थरूपस्य वा स्वाध्यायस्य हानि. । अथ नाभ्युत्थीयतेऽत. आचार्यः प्रायश्चित्तं ददाति खरटयति च । ततोऽहं विनिर्गतः लुब्ध. पुनरेवं ब्रूते यत्किमप्युत्कृष्टं शिखरिणीमोदकादि तदाचार्यः स्वयं भुक्ते न त्वस्मादृशेभ्यो ददाति । अन्येभ्यो वा बालदुर्बलप्राघुर्णकेभ्यो ददाति तत. एवमसहमानोऽह निर्गत. ॥

अथवा निर्द्धर्मालसयोरुक्तिविशेषं प्रकटयति ॥

आवासियापमज्जण, अकरणं उज्जदंमनिध्दम्मो ॥
बालावध्दादीहा, भिक्खायरिया य उन्नामा ॥ १ ॥

योनिर्द्धर्म्मा स पृष्टः सन्नेवं वक्ति आवश्यक प्रमार्जनीकरणे उद्यदंडा आचार्या. । इयमत्र भावना । यदि कथमपि निर्गच्छन् प्रविशन् वा आवश्यकीं नैषधिकीं च न करोति दंडादिक वा गृह्णन् निक्षिपन्वा न प्रमार्जयति । तत आचार्या निरनुकपा. संत. उग्रं प्रायश्चित्तरूप दंड प्रयच्छति ततोऽहं दंडभयाद्विनिर्गत । य. पुनरलस. स एवं ब्रूते । बालाद्यर्थाय बालवृद्धादीनामर्थाय । तस्मिन् गच्छे दीर्घभिक्षाचार्या अथवा कुब्जकं कर्कशं वा तत् क्षेत्रं ततो दिने दिने उन्नामा भिक्षाचर्या प्रतिदिवसमन्यत्र ग्रामान्तरे गत्वा भिक्षा नीयते इति भावस्तथा यदिकथमप्यपर्याप्तेन समागम्यते ततो गुरुः खरटयति किं वसतौ न महानसमस्ति येनापर्य्याप्त' समागत. । तस्मा द्भूयोऽपि व्रज भिक्षार्थे यतः कालोऽद्यापि बहू प्राप्य इति ततोऽहं निर्गतः ॥

साप्रतमनुवद्धवैरस्वच्छंदमत्योरुक्तिविशेषं दर्शयति ॥

पाणसुणगा व भुंजंति, एगत्तो भंभिडंपि अणुवध्दो ॥
एगागिस्स न लब्भा, वलिउं घेवंपि सच्छंदो ॥

अनुवद्धोऽनुवद्धवैरो भवति भंडित्वाऽपि भंडनं कलहस्तमपि कृत्वा पाणशुनका इव एकत्र भुंजते ॥ इयमत्र भावना ॥ यथा पाणाश्चण्डालाः शुनका. कुर्कुरा परस्परं भंडित्वा तत्क्षणादेवैकत्र भुजते । एव तत्र सयता अपि नवर मिथ्यादुष्कृत परस्पर दाप्य इति विशेष । अहं पुनर्न शक्नोमि हृदयस्थन शल्येन तै. सह एकत्र समुद्देष्टुमिति विनिर्गतः । स्वच्छदमति' पुनरेव भाषते एकाकिनः सत' स्तोकमपि न लभ्य चलितु । किमुक्त भवति । संज्ञाभूमावप्येकाकिन. सतो न गंतु प्रयच्छति किंत्वेव ब्रवते नियमात्संघाटक रूपतया केनापि सहितेन गंतव्य।ततस्तमसहमानो ऽहमत्रागतः। एतान्यधिकरणादीनि पदान्याचार्य' श्रुत्वा तं परित्यजति । एते अधिकरणादिपदैरागतस्य तस्योपसपद्यमानस्य चाप्रतीच्छतश्चाचार्यस्येद प्रायश्चित्तं ।

जइ संभ(?)एपम्मिणीए, लुद्धे अणुवस्करोस चउगुरुगा ॥
सेसा ण हुंति लहुगा, एमेव पम्मिच्छमाणस्स ॥

यो यतिभिः सह भण्डनं कृत्वा समागतः। यश्च तत्र मे प्रत्यनीकः साधुरिति कृत्वा समागच्छेत् । यश्च लुब्धो यश्चानुवरूरोपः। एतेषामुपसंपदं प्रतिपद्यमानानां प्रायश्चित्तं चतुर्गुरुकाः चत्वारो गुरुमासाः । शेषाणां भण्डनकारिविकृतिलंपटयोगभीरुस्तब्धनिर्द्धर्म्मस्वच्छदमतीनां लघुका इति चत्वारो लघुकाः । यः पुनराचार्यस्तदाचार्यानुज्ञया प्रायश्चित्तदानमतरेण च प्रतीच्छति तस्यापि प्रायश्चित्तमेवमेव । तद्यथा। यतिभण्डनकारिप्रत्यनीकलुब्धानुवरूरैरानप्रतीच्छतश्चत्वारोमासाः शेषान् पद्प्रतीच्छतश्चत्वारो लघुमासाः । अथवा ये एते दोषा उक्तास्तेषां मध्ये एकेनापि दोषेण नागतो भवेत् किंत्वे निर्वक्ष्यमाणैस्तानेवाह ।

एगे अपरिणए वा, अप्पाधारे य थेरए ।
गिलाणे वहुरोगी य, मंदधम्मे य पाहुमे ॥

यदि एक एकाकी पश्चादाचार्यः ।

यदिवा अपरिणए वा, अप्पाधारे य थेरए ।
गिलाणे वहुरोगी य, मंदधम्मे य पाहुमे ॥

यदि एकतः । अकल्पिकवस्त्रादिसहितः स च कल्पिकवस्त्राद्युत्पादने लब्धिमानथवा तदाचार्योऽल्पाधारः सूत्रार्थनैपुणविकलः स च पृष्टः सन् सूत्रार्थकथने निपुणः शक्तिमान् यदि वा तदाचार्यः परिवारो वा स्थविरो जरसा वृद्धशरीरः। स च तेषां प्रतिजागरूकः अथवा पश्चादेकोग्लानः। स च तस्य चिंताकारी यदि वा पश्चात्तत्रैको बहुरोगी नाम बहुभिः सोदैर्णैरोगैर्जर्ज्यशरीरः स च तस्य वर्त्तापकः। यदि वा पश्चात्तत्राचार्यपरिवारः सर्वोऽपि निर्द्धर्म्मा न गुर्वाज्ञां करोति केवलं तद्भयात् किमपि करोति। तया तत्र पश्चात् गुरो केनापि सह प्राभृतं वर्त्तमानमस्ति। प्राभृतं नाम अधिकरणं। स च गुरोः क्रमेण अपनतः साहाय्यकारी एव प्राग्वर्त्तमाने यदि समागतो भवति। तदा तस्य निर्गमनमशुद्धत्वाच्च परित्याज्यमिति ॥

एनामेव गाथां व्याख्यातुकाम प्रथमत एका परिणताऽल्पाधारद्वाराणि व्याख्यानयति ॥

एगाणियं पमोत्तुं, वत्थादि अकप्पएहिं वा सहियं ।
अप्पाधारावायणं, तं चेव य पुच्छिओ देइ ॥

एकमेकाकिनं पश्चादाचार्यं मुक्त्वा यदि समागतः । अथवा वस्त्राद्यकल्पिकैः प्रथममपि अगृहीतैरकल्पिकैर्वस्त्रादिभिः सहितं मुक्त्वा एतेनापरिणत इति व्याख्यातं। यदि वा अल्पसूत्रस्याऽर्थस्य वा आधार इति स आचार्यस्तमेवपृष्ट्वा शेषसाधुभ्यो वाचनां ददाति तादृशं मुक्त्वा एतेनाऽल्पाधार इति विवृतं ॥

थेरं अतिमहल्लं, अजंगमं मोत्तु आगतो गुरुं तु ॥
सो व परिसाव थेरा, अहं तु अट्ठावगोतम्मि ॥ १ ॥

स्थविरमेव व्याचष्टे अतीव महान्तमजंगमं गमनशक्तिविकलं गुरुं एपलक्षणमेतत् परिवारं वा स्थविरमुक्तरूपंमुक्त्वा यदि समागतः स च प्रतिजागरूक स्तथा च तस्य पृष्टस्य सतोऽमुमेवोक्तिविशेषं दर्शयति। स च आचार्यः स्थविरः पर्षद्वा परिवारो वा आसीत् अहं तु तेषां गुर्वादीनां वर्त्तापकः प्रतिजागरूकः एतेन स्थविर इति पदं व्याख्यातं ॥

ग्लानवहुरोगनिर्द्धर्म्मपदानि व्याख्यानयति ॥

तत्थ गिलाणोएगो, जप्पसरीरो य होइ वहुरोगी ॥
निद्धम्मा गुरुआणं, न करेंति सम्मं पमोत्तूणं ॥ १ ॥

तत्र गच्छे ग्लान एकोऽस्ति यदि वा बहुरोगी यो जाप्यशरीरो भवति। स बहुरोगी तं ग्लानं बहुरोगिणं वा विमुच्य यदि स समागतस्तथा निर्द्धर्म्मपरिषद्विषये तस्य पृष्टस्य सत उक्तिविशेषं दर्शयति । निर्द्धर्म्माधर्म्मवासनाराहितस्तस्य ममाचार्यस्य शिष्याः सर्वथा गुर्वाज्ञां कुर्वंति। मां प्रमुच्य मम पुनराज्ञां न कुर्वंति। तादृशं वा निर्द्धर्म्म परिवारं मुक्त्वा यदि समागतस्तर्हि स न प्रतिग्राह्यः। केवलमयमुपदेशस्तस्मै दातव्यः ॥

तमेवाह ॥

एयारिसं विओसज्ज, विप्पवासो न कप्पई ॥
सीसायरियपम्मिच्छे, पायच्छित्तं विहिज्जइ ॥ १ ॥

एतादृशमेकाक्यादिस्वरूपं गुरुमन्यं वा ग्लानादिकं व्युत्सृज्य परित्यज्य विशेषेण प्रवासोऽन्यत्र गमनं विप्रवासो भद्र तव न कल्पते। बहुगुणाधारो भवान् कथमीदृशं कृतवान् । तस्मात् अद्याऽपि प्रायश्चित्तं प्रतिपद्य पश्चात् गच्छ। स च समागतस्तस्य प्राक्तनाचार्यस्य शिष्यो वा स्यात् प्रतीच्छको वा एवमागतमुपसंपद्यमानं योऽप्याचार्यः प्रतीच्छति सोऽपि प्रायश्चित्तभाक्। ततः शिष्यप्रतीच्छकाचार्याणां प्रायश्चित्तं विवक्षुरिदमाह ॥

( सीसायरियेत्यादि ) शिष्ये आचार्ये प्रतीच्छके च प्रायश्चित्तं विधीयते। प्रायश्चित्तदानविधिरुच्यते इति भावः ॥

प्रतिज्ञातमेव निर्वाहयति ॥

एगे गिलाणगे वा, तिएहवि गुरुगा उ सीसमादीणं ॥
सेसे सिस्से गुरुगा, पम्मिच्छलहुगा गुरुसरिसं ॥

एकस्मिन् एकाकिनि गुरौ ग्लाने वा तत्र गच्छे तिष्ठति यदि समागतः। शिष्यः प्रतीच्छको वा आचार्येण वा तथा समागतः सन् यदि प्रतीच्छितस्तदा शिष्यादीनां शिष्यप्रतीच्छकाचार्याणां त्रयाणामपि प्रायश्चित्तं गुरुकाश्चत्वारो गुरुमासाः। यः पुनरन्यः शेषोऽपरिणताऽल्पाधारस्थविरबहुरोगमंदधर्म्मपरिचारलक्षणस्तस्मिन् शेषे यदि समागतः शिष्यः ततस्तस्य प्रायश्चित्तं गुरुकाश्चत्वारो गुरुमासाः। अथ प्रतीच्छकः समागतस्तर्हि तस्य लघुकाश्चत्वारो लघुमासाः ( गुरुसरिसमिति ) गुरोरपि प्रतीच्छकसदृशं प्रायश्चित्तं । किमुक्तं भवति यदि शिष्यं प्रतीच्छति ततः प्रायश्चित्तं चत्वारो गुरुमासाः। अथ प्रतीच्छकं तर्हि चत्वारो लघुका इति ॥

सीसपम्मिच्छे पाहुम, छेदो राइंदियाणि पंचेव ।
आयरियस्स उ गुरुगा, दोवेए पम्मिच्छमाणस्स ॥

यदि प्राभृते गुरौ केनापि सहाधिकरणावर्त्तमाने शिष्यः प्रतीच्छको वा समागतः । तदा तस्य प्रतीच्छकस्य वा प्रायश्चित्तं पचरात्रिंदिवानि पर्यायस्य छेदः । आचार्यस्य पुनर्द्वावप्येतौ प्रतीच्छतः प्रतिगृह्णतः प्रायश्चित्तं । गुरुकाश्चत्वारो गुरुमासाः । तदेव प्रथमभंगे निर्गमनदोषा उक्ता आगमनमशुद्धं तदा भवति यदा प्रजिकादिषु प्रतिबध्यमानः समागतस्तत्रापि प्रतिबंधनिमित्तं प्रायश्चित्तं सूत्रानुसारतो वक्तव्यं। गतः प्रथमो भंगः द्वितीयभंगोऽप्येतादृश एव न वरं। तथा-

गमन शुद्धं क्वचिदपि व्रजिकादौ प्रतिबंधकरणात् तृतीयचतुर्थभंगावनुक्रमेणाऽह ॥

एतद्दोसविमुक्कं, वइयादी अपडिबद्धमायातं ॥
दाऊणं पच्छित्तं, पडिवद्धं पडिच्छेज्जा ॥ १ ॥

एतैरनन्तरोदितैरधिकरणकारित्वविकृतिप्रतिपत्त्यादिदोषैर्विमुक्तमेतेन निर्गमनं शुद्धमुक्तं । तथा व्रजिकादौ अप्रतिबद्धं क्वचिदपि प्रतिबंधमकुर्वतमायातमनेनाऽऽगमन शुद्धमपि दर्शितं एष चतुर्थो भंगः । एष एवोत्सर्गतः श्रेयानिति ज्ञापनार्थं तृतीयभंगात्पूर्वमुक्तः । एवं भूतं प्रतीच्छेत् । तृतीयभंगमाह (दाऊणे) त्यादि यस्त्वधिकरणकारित्वादिदोषैर्विनिर्मुक्तो निर्गतः केवलं व्रजिकादिषु प्रतिबद्धमप्यपवादपदेन व्रजिकादिषु प्रतिबंधकारणमनुत्तन्निमित्त प्रायश्चित्त दत्वा प्रतीच्छेत् ॥

( ७ ) आलोचनायां शिष्याऽऽचार्यपरीक्षणे आवश्यकादिद्वाराणि ॥

सुद्धं पडिच्छिऊणं, अपरिच्छणा लहुय तिन्निदिवसाणं।
सिस्से आयरिए वा, पारिच्छा तत्थिमा होइ ॥

शुद्धं निर्गमनागमनादिदोषरहितं प्रतीच्छ्य प्रतिगृह्य त्रीन् दिवसान्यावत् परीक्षेत । किमेष धर्मश्रद्धावान् किं वा नेति यदि पुनर्न परीक्षते । ततोऽपरीक्षणे परीक्षणाकरणे ( लहुयत्ति ) मासलघु प्रायश्चित्तं आचार्यान्तराभिप्रायेण चतुर्मासलघु । सा च परीक्षा उभययाऽपि शिष्य आचार्यं परीक्षते आचार्यः शिष्यं उभयथापि च परीक्षा आवश्यकादिपदैस्तथाचाह ॥ ( सिस्सिइत्यादि ) तत्र तस्मिन् उपसंपद्यमाने प्रतीच्छिते सति शिष्ये आचार्ये च परस्परमियमावश्यकादिपदैर्वक्ष्यमाणा परीक्षा भवति ॥

तामेवाह ॥

आवस्सयपडिलेहण, सज्झाए भुंजणा य भासाय ।
वीयारे गेलन्ने, भिक्खग्गहणे पडिच्छंति ॥

आवश्यके, प्रतिलेखने, स्वाध्याये, भोजने, भाषायां, विचारे, बहिर्भूमौ, ग्लाने, भिक्षाग्रहणे, च परस्परमाचार्यशिष्यौ परीक्ष्येते ॥

तत्राऽऽवश्यकादिपदान्यधिकृत्य यथाचार्यः शिष्यं परीक्षते तथोपदर्शयति॥

केई पुव्वनिसिद्धा, केई सारेउ तत्थ सारेइ ।
संविग्गोसिक्खमग्गइ, सुत्तावलिमो अणाहो हं ॥

केचित्साधवोवृषभाद्यः तस्योपसंपत्कालात् पूर्वमेव आवश्यकादिपदेषु ये दोषास्तेभ्यो निषिद्धा यथा आचार्यो इदमिदं च माकार्षुरिति । ते तथैव वर्त्तमानास्तिष्ठति । ये पुनः केचित् अभिनवदीक्षितत्वादिना कारणेन प्रमाद्यंति तान् गुरु सारयति । सम्यग् यथोक्तानुष्ठाने वर्तयति । त पुनरुपसंपन्नं प्रमादस्थाने वर्त्तमानमपि न सारयति । तत्र यदि स उपसंपद्यमान संविग्नो भवति । तत सोऽप्रतिनोद्यमान स एव चिंतयति । येषु स्थानेष्वन्यानप्रमाद्यत आचार्या सारयति अहो अहमनाथ परित्यक्त एतैरिति चिंतयित्वा संविग्नविहारमिच्छन् आचार्यपादमूले गत्वा ( सुत्तावलिमो ) इति निपात पादपूरणार्थश्छिन्नमुक्तावलीप्रकाशान्यश्रूणि विमुचन् पादयोः पतितश्च शिक्षामार्गयते याचते यथा मामप्यत्याग्रेण भगवंतः शिक्षयन्तां मां शरणमुपागतं परित्यजत एव परीक्षानिर्वर्तितः परिग्राह्यः । इतरस्तु परित्याज्यः ॥

तत्राऽऽवश्यके यथा परीक्षा कर्त्तव्या तथोपदर्शयति ॥

हीणाहियविवरिए, सतिविवले पुव्वट्ठंते चोएइ ॥
अप्पणवो देती नममंति इहं सुहं वसिउं ॥

हीनं नाम यत्कायोत्सर्गसूत्राणि मदमंदमुच्चार्य शेषेषु साधुषु चिरकालं कायोत्सर्गे स्थितेषुपश्चात्स कायोत्सर्गे तिष्ठति । इत्यादि । अधिक नाम कायोत्सर्गसूत्राण्यति त्वरितमुच्चार्यात्मप्रेक्षाकरणार्थं पूर्वमेव कायोत्सर्गे तिष्ठति रत्नाधिके वोत्सारितेकायोत्सर्गेपश्चाच्चिरेण स्व कायोत्सर्गमुत्सारयति इत्यादि । विपरीत नाम प्रादोषिकान् कायोत्सर्गान् प्राभातिकानिव करोति । प्राभातिकान् प्रादोषिकानिव इत्यादि । हीनाधिकं च विपरीतं समाहारद्वंद्वस्तस्मिन्प्रमादतोवर्तमानात् अथवा सूर्ये किल अस्तमितमात्रे एव निर्व्याघाते सर्वैरपि साधुभिराचार्येण सह प्रतिक्रमितव्य । यदि पुनराचार्यस्य श्राद्धादिधर्म्मकथादिभिर्व्याघातस्ततो बालवृद्धग्लानासहान् निषद्याधर च मुक्त्वाशेषैः सूत्रार्थस्मरणार्थं कायोत्सर्गेण स्यातव्य । ये सत्यपि बले पूर्वं कायोत्सर्गे न तिष्ठति तान्पूर्वमतिष्ठतश्चोदयंति यः पुनः परीक्ष्यते तं प्रमाद्यतमपि न शिक्षयंति । ततो यदि स एवं व्यवस्याति । यथा आत्मीयान् प्रमाद्यतश्चोदयति । न मामिति सुखमिह वसितुमिति । स इत्थं भूतः पजरभग्नो ज्ञातव्यो न प्रतीच्छनीयः ॥

जो पुण चोइज्जंते, दट्ठूण नियत्तए ततो ठाणा ।
भणइ अहं भेवत्तो, चोएह ममंपि सीयंतं ॥

यः पुनश्चोद्यमाना न् शिक्ष्यमाणान् शेषसाधून् दृष्ट्वा ततः स्थानात् निवर्त्तितैर्भणति । गुरुपादमूले गत्वा मन्युभराक्रांतो गद्गदस्वरेण अहं युष्मच्चरणमागतोऽपि भगवन् युष्माभिः शिक्षाया अप्रदानतस्त्यक्तः । न चैतत् भगवतां परमकरुणापरीतचेतसामुचित । तस्मात्प्रमादमाध्माय मामपि सीदंतं शिक्षयध्वमिति एष इत्थंभूत प्रतिग्राह्यः कृता आवश्यकमधिकृत्य परीक्षा ॥

संप्रतिप्रतिलेखनस्वाध्याय भोजनभाषाद्वाराणि अधिकृत्य तामाह ॥

पडिलेहणसज्झाए, एमेव य हीणअहियविवरीयं ।
दोसेहि वा वि भुंजइ, गारत्थियढड्ढएभासा ॥

एवमेवावश्यकोक्तेनैव प्रकारेण प्रतिलेखने, स्वाध्याये, च हीनमधिक विपरीतं च कुर्वत आत्मीयान् शिक्षयते न तु त परीक्ष्यमाणमित्यादि पूर्ववत् तत्र प्रतिलेखनाया हीनाधिकता नाम यत् कालतो हीनामधिका वा प्रतिलेखनां करोति । खोटकादिभिर्वा हीनामधिकां वा । विपरीतता नाम प्रभाते यत् मुखपोतिकादि क्रमेण न प्रत्युपेक्षते । किं तु स्वेच्छया यदि वा पूर्वोल्लेखरणं निःपश्चिम प्रत्युपेक्षते । अपराह्णे तु सर्वं प्रथममित्यादि । स्वाध्याये हीनता नाम यदिप्राप्तायामपिकाल वेलायां कालप्रतिक्रमण करोति अधिकता यदतिक्रांतायामपि कालवेलायां कालं प्रतिक्रामति । वंदनादिक्रियायां वा तदनुगतां हीनाधिकां करोति विपरीतता पौरुषीपाठमतिक्रांतायां पौरुष्यां पठति । उत्कालिक पौरुष्यामिति तथा भोजनद्वारे आलोकादिविधानसूत्रोक्तेन न भुंक्ते दोषैर्वा ऽपि ( असुरसुर अचवचव अहुयमवलवियमि ) त्यादि विपरीतरूपैर्भुंक्ते ।

तत्रात्मीयानतथा भुञ्जानान् शिक्षयते न तु परीक्ष्यमाणमित्यादि पूर्ववत् ज्ञापाद्वारे या अगारस्थिते भाषागृहस्थभाषा च ढड्डरभाषा स्थूरस्वरभाषा तां भाषते । तत्रात्मीयान् तथारूपया भाषया भाषमाणान् शिक्षयते न पुनः परीक्ष्यमाणमित्यादि विभाषा पूर्ववत् ॥

शेषाणि त्रीणि द्वाराण्येकगाथया प्रतिपादयति ॥

**थंडिल्लसामायारीहिं, हवेइ अतरंतगं न पडिजये ॥**
**अन्नीणतो भिक्खं, न हिंमइ अणेसणाइ च पेल्लेइ ॥**

स्थण्डिले सामाचारीं पादप्रमार्जनडगलकग्रहण दिनावलोकनादिरूपां हापयति परिभवति विलुपतीत्यर्थः । तत्र तथा सामाचारीं विलुपत आत्मीयान् साधून् शिक्षयते न परीक्ष्यमाणमित्यादि प्राग्वत् । गत विचारद्वारम् ॥

ग्लानद्वारमाह । अतरंतग असमर्थ ग्लानमित्यर्थः । न प्रतिजागर्त्ति नापि तस्य ग्लानस्य खेलमल्लकादि कसमर्पयति । अत्रापि ग्लानमप्रतिजाग्रत आत्मीयान् साधून् शिक्षयते । नतु परिक्ष्यमाणमित्यादि भाषा पूर्ववत् । गत ग्लानद्वार ।

भिक्षाग्रहणद्वारमाह । अन्नणित' सन् भिक्षां न हिंरुते भणितोऽपि च इषद्हिंरुने सति प्रतिनिवर्तते अनेषणीयां भिक्षां गृह्णाति । आदिशब्दात् कौटिल्ये न चोत्पादयति इत्यादि परिग्रहः । त तथा भिक्षाग्रहणे प्रवर्त्तमानमपि न शिक्षयति । किं त्वात्मीयान् साधून् इत्यादि प्राग्वत् । तस्य चागमो द्वाभ्यां स्थानाभ्यां भवति । ततस्ते एव द्वे स्थाने प्रतिपादयति ॥

**जयमाणपरिहवंते, आगमणं तस्स दोहिं ठाणेहिं ।**
**पंजरभग्ग अभिमुहे, आवस्सगमादि आयरिए ॥**

तस्योपसपद्यमानस्यागमन द्वाभ्यां स्थानाभ्यां भवेत् । तद्यथा । यतमानेभ्य' परिभवद्भ्यश्च यतमाना नाम सविग्नाः परिभवत' पार्श्वस्थादय' । उक्त च ।

**सो पुण जयमाणगाण, वा साहूण मूलातो । आगतोहुज्जा परिभवंताण मूला उ,आगतो हुज्जा परिभवंता नाम पासत्य ।**

इति । तत्र यो यतमानसाधूनां मूलादागत सज्ञानदर्शनार्थं पजरभग्नो वा समागतो भवेत् । य' पुन परिभवतां मूलादागतः स चारित्रार्थमुद्यतकामः समागतो भवेत् । अनुद्यंतुकामो वा ज्ञानदर्शनार्थमिति । अथ वा यो यतमानेभ्यः समागत' स पजरभग्न' य पुन परिभवद्भ्य उद्यतुकामश्चारित्रार्थं समागत । सोऽभिमुख पजराभिमुख एतयोर्द्वयोरपि समागतयोरावश्यकादिभि पदैराचार्येण परीक्ष्यमाणानपि सीदत' पश्यति तत आचार्येभ्य' कथयति । तेन कथिते सति यद्याचार्या सम्यक् प्रतिपद्य तान्प्रमादिन' प्रति नोदयति । प्रायश्चित्त च प्रयच्छति । ततस्तत्रोपसपत्तव्य । अथ कथितेऽपि ते आचार्यास्तूष्णींतिष्ठति । भणति वा किं तव यद्येतेन सम्यग्वर्त्तते । तर्हि अन्यत्र गच्छांतरे उपसपत्तव्य । न तत्रेति अथ यतमानेभ्य समागत' पजरभग्न इत्युक्त तत्र पजरे इति किमुच्यते । तत आह ॥

**पणगाइसंगहो होइ, पंजरो जायसारणाणोयं ।**
**पच्छित्तं चडमणाहिं, तिवारणं' सउणिदिट्ठंतो ॥**

पचक नाम आचार्योपाध्यायप्रवर्त्तिस्थविरगणावच्छेदकरूप आदिशब्दात् भिक्षवो वृषभा' क्षुल्लकवृद्धाश्च परिगृह्यते । तेषां सग्रहः पचकादिसग्रहो भवति । पजर' अथवा आचार्यादीनामन्योन्य परस्पर यत् । मृदुमधुरभाषया सोपालभया शिक्षयति एष वा पजर' । यदि वा यत् प्रायश्चित्त चमढनाभिरसमाचार्यो निवारणपूर्वं खरपुरुषै स्तर्जयित्वा पश्चात्प्रायश्चित्तप्रदानेन यदा सामाचारीतो निवर्त्तन तत् पजरः अत्रार्थे शकुनिदृष्टांत' । यथा पंजरे शकुने' शलाकादिभिः स्वच्छंदगमन निवार्यते । तथा आचार्यादिपुरुषगच्छपजरे सारणाशलाकया सामाचारीरूपोन्मार्गगमन निवार्यते इति । अत्र ये यतमानानां मूलात् ज्ञानदर्शनार्थमागता ये च परिभवतां मूलात् चारित्रार्थमागच्छन् ते सग्रहीतव्याः । ये पुन' पजरभग्ना ज्ञानदर्शनार्थमागता ये च परिभवतां मूलात् ज्ञानदर्शनार्थमागमन् ते न सग्रहीतव्याः । तत्र ये सग्रहीतव्यास्ते एको वास्मादनेको वा यत आह ॥

**ते पुण एगमणेगाणं, गाणं सारणा जहा पुव्वं ॥**
**उवसंपयआउट्ठे, अणाउट्ठे अन्नहिं गच्छे ॥ १ ॥**

ते पुनरुपसपद्यमानाः कदाचिदेको वा स्यादनेको वा तत्रानेकेषां या सारणा सा यथापूर्व कल्पाध्ययने " उवसंपसो सारणा चेव तस्या पडिसारणा " इत्यादिना ग्रथेन भणिता तयाऽत्रापि द्रष्टव्या यः पुनरेकोऽसमीचीनं कुर्वन् शिक्ष्यमाण श्च यद् व्यावृत्त' शिक्षां प्रत्यभिमुखोभवति । ततस्तस्मिन् आवृत्ते षष्ठीसप्तम्योरर्थे प्रत्यभेदात्तस्यावृत्तस्य उपसपद्भवति यदिपुनर्नावर्त्तते । तदा तास्मिन् अनावृत्ते इद भण्यते । अन्यत्र गच्छमात्र स्या इति । अथवा इदमुत्तरार्द्धम् ( आवस्सगमाइआयरिए ) इति यदुक्त तस्य व्याख्यान आवश्यकादिषु गच्छवासिनः प्रमादिनो दृष्ट्वा आचार्याय कथयेत् । कथिते च सति यदि आचार्यः सम्यगावर्तते निजसाधून् सम्यक् शिक्षयते प्रायश्चित्त च तेभ्यः प्रयच्छति ततस्तास्मिन्नावृत्ते तस्य तत्रोपसपद्भवति । अ ग कथिते नावर्त्तते तूष्णीं करोति न भणति किं तवैते' स्वय सम्यग्वर्त्तंथा इति । तदाऽन्यत्र गच्छेदिति । यदुक्त प्राक् ॥

**दाऊणं पच्छित्तवज्झंतपी पडिच्छेज्जा**

इति ॥ तत् व्याख्यानयति । ( निगमणे अपरिसुद्धे, इमाए जयणाए वारेंति ) तृतीये भगे निर्गमने परिशुद्धे प्रागुक्तदोषवर्जिते आगमने अशुद्धे व्रजिकादिषु प्रतिबंधकरणादिषु प्रतिबधकरणात् द्वितीये पदे अल्पदोषतयाप्रतीच्छाबुद्धौ सत्यां प्रायश्चित्त प्रतिबधमात्रनिष्पन्न ददाति । दत्वा च प्रतीच्छंति निर्गमने पुन' प्रथमभंगे द्वितीयभंगे वा अधिकरणमेव अधिकरणादिभिः । एगेऽपरिणए वा इत्यादिभिर्वा दोषैरपरिशुद्धे न प्रतीच्छनीय किंतु वारणीय' । त वाऽनया वक्ष्यमाणयाऽयतनया वारयति ॥

तामेवाह ॥

**नत्थिसंकियसंघाए, मंडली भिक्खवाहिराणयं ।**
**पच्छित्तविउस्सग्ग, निगममुत्तस्स ठणेण ॥**

य पंजरभग्नो ज्ञानदर्शनार्थमागत तं प्रतीयं वाग्यतना यत्त्व श्रुतमभिलषसि । तन्मम पार्श्वे नास्ति अथ स ब्रूयात् मया श्रुत यथाऽमुकोग्रयोऽमुकस्यपार्श्वे युष्माभि' श्रुत इति तत इद वक्तव्य श्रुत' स ग्रथ केवलमिदनीं बहुषु स्थानेषु शंकित जात न च शकित श्रुतमन्यस्मै दीयते प्रवचने निषेधात् तस्मादन्यत्र निःशंकितश्रुतात् गवेषयस्व । यस्तु स्वच्छदमति सघाटकोद्विग्न सज्ञाभूमिमप्येकाकिना गतुं न लभ्यमिति

सामागतस्तं प्रतीदं वक्तव्य । अस्माकमाचार्यपरंपरात इय सामाचारी संज्ञामृमिमात्रमपि न गतव्यमेतच्च तव दुष्करमतोऽन्यत्र गच्छ तावदिति । यः पुनरनुबद्धवैरत्वेनागतस्तं प्रतीदं वक्तव्यं । मंमलीति । अस्माकमीदृशी सामाचारी यद्वश्यं मंमल्यांसमुद्देष्टव्यं । यद्यपि च न पठति न शृणोति वा तथापि सूत्रपौरुष्यां मंमल्यामुपविश्यार्थः श्रोतव्यः न कदाचनापि साधूनां स्वच्छंदत्वमेतच्च भवतोऽप्रीतिकर तस्मादन्यत्र गम्यतां । यस्त्वलसत्वेनागतस्तं प्रतीदं वाच्य । ( भिक्खवाहिराणं ) । भिक्षाया वहिः प्रदेशादानयनं । किमुक्तं भवति ॥ अस्माकमत्र क्षेत्रे वहवो वालवृद्धाः स ग्लानाः साधवः ते च भिक्षां न हिंमंते । ततो यदि प्रतिदिवसं भिक्षां वहिः प्रदेशादानयसि ततस्तिष्ठ परमेतत् दुष्करं नव तस्मात् यत्र सुखेन तिष्ठसि तत्र याहि किमत्र क्लेशसहनेन यस्तु निर्द्धर्मा उग्रदंका आचार्या इति विनिर्गतस्तंप्रतीदमुत्तर ( पच्छित्तत्ति ) अस्माकमियं सामाचारीयदिदुः प्रमार्जनादिमात्रमपिक्षेति । तदातत्कालमेवप्रायश्चित्त यथोक्त दीयते न कालक्षेपेण नापि पक्षपाताद्विना स्तोकन्हासेन यस्तु विकृतिलंपटो न मह्य विकृतिमनुजानातीति विनिर्गतस्त प्रतीय वाग्यतना ( अविउस्सग्गत्ति ) अस्माकमप्ययं समाचार्यागमः ॥ अभ्युत्सर्गोऽनुत्कलन विकृतेरिति व्याख्यानतो गम्यते । योगवाहिना अयोगवाहिना वा विकृतिर्न ग्राह्या इत्यर्थ । अत्राधिकरण प्रत्यनीकस्तब्ध लुब्धविपये यतनानोक्ता विचित्रत्वात् सूत्रभाष्यगते सूत्राधिकरणे यतना यथा कल्पाध्ययने तथा दृष्टव्या । शेपविपया तु विनेयजनानुग्रहायाभिधीयते तत्र य प्रत्यनीकस्तत्र मे प्रत्यनीकोऽस्तीत्यागतः स भण्यते ममापि शिष्या प्रतीच्छकाश्च ईपदपि प्रमादं न क्षमते मह्यं कथयाति । अहं च दोपानुरूपं दंमं प्रयच्छामि । अन्यथैकतरपक्षपातकरणतोगच्छमुद्रामंगः । सर्वज्ञाज्ञाविलोपश्च । तस्मादत्राऽपि तवदुष्करमिति नस्थातुमुचितं स्तब्ध पुनरेवं भण्यते । अस्माकमियं सामाचारीचंक्रमणादिकुर्वंति गुरुव स्युत्थानं अनभ्युत्तिष्ठतः प्रायश्चित्तदानमिति लुब्धं प्रत्येवा वाग्यतनानत्कृष्टद्रव्याणिमोदकादीनि अस्माकं वालवृद्धग्लानप्राघूर्णिकेभ्यो दीयते । तदेव स्वच्छन्दचारित्रप्रभृतीनां निवारणे वाग्यतनोक्ता यदि पुनरेते तथा निवारिता अपि न वक्ष्यमाणप्रकारेण प्रत्यावर्त्तंते नापि निर्गच्छंति येऽपि च विशुद्धनिर्गमा प्रतीच्छिताः संत सीदति तेषां परिस्थापने यतनामाह ( निग्गममुत्तस्स वेक्षण ) यदा परिस्थापयितुमिष्यमाणस्य स्वयं भिक्षादिनिमित्त निर्गमो भवाति । यदा रात्रौ निर्भरूया सुसन्तदा तं त्यक्त्वा नष्टव्य ॥

कथमित्याह ॥

वक्षेनाप्रकटमल्पसागारिकं किमुक्तं भवति । ये अपरिणता वालादयो वा तत्र गच्छे तेपां न कथ्यते यथाऽमुमेत्र त्यक्त्वा नष्टव्य मिति । मा रहस्यभेद कार्षुरिति कृत्वेति एप गाथार्थः ॥

सांप्रतमेनामेव गाथां विनेयजनानुग्रहाय विवृणोति ॥

नत्थेयंमिज मिच्छसि, सुयं मया आमसंकियं तं तु ।
न य संकियं तु दिज्जइ, निस्संकसुए गवेस्साहि ॥

यदिच्छसि शास्त्रं श्रोतु तदेतत मे मम पार्श्वे नास्ति । अथ ब्रूयात् । भवता श्रुतं यथाऽमुकं शास्त्र भवद्भि श्रुतमिति । तदाह । आमं तत् शास्त्र केवलमिदानीं शंकित जातं तच्च शंकित दीयते । तस्मान्निः शंकश्रुतान गवेपय ॥

( संघाडत्ति ) मंमलीति च द्वारद्वय व्याचिख्यासुराह ॥

एगागिस्स न लब्भा, वियारादी विजयणसच्छंदे ।
भोयणसुत्ते मंमली, पढमंते वा निओयंति ॥

स्वच्छन्दे स्वच्छन्दमतौ निवारणार्थमिय वाग्यतना अस्माकमेकाकिनः सतोविचारादावपि वहिर्भूम्यादावपि तत्र लभ्य गन्तुमिति । अनुवद्धवैरे । इयं वाग्यतना । अस्मदीया मुनिवृषा भोजने सूत्रे उपलक्षणमेतत् अर्थे वा पठंतोऽपि मंमल्यां नियोजयति । एतच्च तवदुष्करमिति ॥

अधुना " भिक्खवाहिराणयण पच्छित्तविउस्सग्गे " इति त्रीणि द्वाराणि व्याख्यानयति ॥

अलसं भणंति वाहि, भिक्खंवहिंमासि अम्हएत्थवालादी ।
पच्छित्तं हामहमं, अविउस्सग्गो तहा विगई ॥

अलसं प्रति भणंत्याचार्याः । अस्माकमत्र क्षेत्रे बहवो वालादयस्ते च भिक्षां न हिंमंते ततो यदि वाहिर्भिक्षां हिंमसे । तर्हि तिष्ठ अन्यथा व्रज स्थानांतरमिति । निर्द्धर्माण प्रति पुनरिद वदति अस्माकं केऽपि दुःप्रमार्जनादौ कृते प्रायश्चित्त हामहमं देशीपदमेतत् तत्कालमित्यर्थः । दीयते अन्यथा मूलत एव सामाचारीविलोपप्रसक्तेः विकृतिलंपट प्रति पुनरिय वाग्यतना योगवाहिनो वाऽस्माकं गच्छे विकृतेरव्युत्सर्गोऽनुत्कलनं भवांश्च दुर्वलशरीरोनवेक्षारिव पानीयैर्विकृत्याऽल्पस्वभावास्तस्मादन्यत्र प्रयाहीति ॥

अत्र चोदक आह ॥

तित्थ भवे मायमोसो, एवं तु भवे अणुज्ज मं तस्स ।
वुत्तं च उज्जुभूते, सोही तेल्लोकदंसीहिं ॥

यदेतत् निर्गमनाशुद्धे उपायेन प्रतिपेधनमुक्तं तत्र कस्यचित् मति स्यात् । एवं प्रतिपेधतो माया भवति । मृपावादश्च । तत्र यत् परिचिंतन तन्माया विद्यमानमपि श्रुत नास्ति शंकितं वा तिष्ठतीत्यादि कुर्वाणस्य मृपावादः । एव तु अमुना प्रकारेण पुनर्माया मृपां कुर्वते भवेत् । तस्याऽनार्जवमनृजुता मायातः कुटिलभावभावात् उक्त पुनस्त्रैलोक्यदर्शिभिरिदं शोधिकल्पे ऋजुभूते सोही उज्जुयस्सेत्यादेः प्रदेशांते श्रवणात् ततो नेद माया मृपा भापणमुचितमिति ॥

अत्र सूरिः प्रत्युत्तरमाह ॥

एसअगिते जयणा, गीते वि करेंति जुज्जई जं तु ॥
विद्देसकरं इह ए, मच्छरिव दोव फुमरुक्खो ॥ १ ॥

एपा अनतरोदिता वाग्यतना अगीते अगीतार्थे गीतेऽपि गीतार्थेऽपि निर्गमनाशुद्धे निवारणा क्रियते । स्फुटाक्षरैर्यथा एवंभूतदोपात् त्वमत्रागत एव भूतदोपश्च न सुविहितैः प्रतीच्छ्यते इति न चैव भणितगीतार्थो हि सर्वामपि सामाचारीमवबुध्यते । अववुध्यमानाश्च कथमप्रीतिं विद्वेप वा कुर्वतीति ॥

तथाचाह ॥ ( करेंति जुज्जई जतु ) यत् अत्र युज्यते युक्तिमापतति तत् गीतार्था कुर्वंति । ना प्रीत्यादिकमिति । इहरत्ति । इतरथा यद्यगीतार्थेऽपि स्फुटरूक्षैर्निवारणा क्रियते । तत स्फुटरूक्षे भापिते सति स्फुट नाम सद्भूतदोपोच्चारणं रूक्ष स्नेहोपदर्शनरहितं यदि वा स्फुटमेव परस्य रूक्षतोत्पादनात रूक्षं स्फुटरूक्षं तस्मिन् भापितेन तत भाष्यमाण वचस्तेषा विद्वेपकर विद्वेषोत्पादक भवति । अगीतार्थत्वात् चिंतयन्ति च मत्सरमात्रेणैते सूत्रमर्थं वा न प्रयच्छंति । ततो मत्सरिण

एत इति एव च चिंतयित्वा स्वपक्षे परपक्षे च मत्सरिण एते इति प्रकाशयति । ततो लोके मत्सरिप्रवादो विद्वेषकरं च तद्वचस्तेषां मा भूदिति प्रागुक्तयतनया निवारणा क्रियते वचनेमायामृषादोषसंभवः । यतः परप्रीत्यनुवादकतया परिणाममधुरतया चोभयोरपि गुणकारित्वमवश्यं तत्रा वाग्यतना क्रियते । न विप्रतारणबुद्ध्येति ॥

एतेषामेव प्रतीच्छने अपवादमाह ॥

निग्गमसुद्धमुवागए, वारिया गेण्हए समाउट्ठं ॥
अहिगरणमिणिअणुवद्धे, मेगागिजढं न साएज्जा ॥

निर्गमोऽशुद्धो यस्य स निर्गमाशुद्धस्त उपायनप्रागुक्तयतनाक्रमेण वारित समावृत्त संत गृह्णाति । किमुक्त भवति । यदि स तथा प्रतिषिद्धः सन् ब्रूते भगवन्मिथ्या मे दुष्कृतं न पुनरेव करिष्यामि । किन्तु यथा यूयं भणिष्यथ तथा करिष्यामि । मुक्तो मया पापस्वभावो दुर्गतिवर्द्धन इति । तत एव तं समावृत्त गृह्णाति किं सर्वमपि नेत्याह ॥ ( अहिगरणेत्यादि ) योऽधिकरणं कृत्वा समागतस्त यश्च मे तत्र प्रत्यनीकोऽस्तीत्युक्तवान् तं तथा अनुबद्धरोष येन च पश्चादेकाकी आचार्यस्त्यक्तस्तं च न ( साएज्जा ) न सातयेत् न सात्मीकुर्यादिति भावः ॥

केवल प्रत्यनीके अपवादोऽस्ति तमेवाभिधित्सुराह ॥

पडिणीयंमि उ भयणा, गिहंमि आयरियमादिदुट्ठंमि ॥
संजयपडिणीए पुण, न होंति उवसामिए भयणा ॥

प्रत्यनीके भजना तामेवाह । गृहिणो गृहस्थे आचार्यादिदुष्टे । किमुक्त भवति । यदि कोऽपिनाम गृहस्थ आचार्यस्य आदिशब्दादुपाध्यायप्रवर्त्तिस्थविरगणावच्छेदानां शेषभिक्षूणां च प्रद्विष्टः स चानेकधा उपशम्यमानोऽपि नोपशांतस्ततस्तस्मिन् आचार्यादिप्रद्वुष्टे गृहिण्यनुपशांते तद्भयादागत. सन् प्रतिगृह्यते । यदि पुन. स ब्रूयात् संयतोमे तत्र प्रत्यनीकोऽस्ति ततस्तस्मिन् संयतप्रत्यनीके न भवत्युपसंपत् न स प्रतिगृह्यते इत्यर्थ. । अथवा स भण्यते । गच्छ त्व क्षमयित्वा समागच्छ । एवमुक्तो यदि तत्र गत्वा तं न क्षमयति ततो न स प्रतिगृह्यते अथ तेन गत्वाऽसौ क्षामित केवल स एव न क्षमते तर्हि पश्चादागतः प्रतिग्राह्य । अथ स वक्ति मया स तदानीमेवागच्छता क्षामित. । तदा तस्मिन्नुपशांते स नियमात् प्रतिगृह्य एव न भवति भजनानिर्दोषत्वात् ॥

सो पुण उवसंपज्जे, नाणट्ठा दंसणे, चरित्ते, य ।
एएसिं नाणत्तं, वुच्छामि अहाणुपुव्वीए ॥

स पुनरुक्तप्रकारेण संगृह्यमाण उपसपद्यते ज्ञानार्थं ज्ञाननिमित्त दर्शने दर्शननिमित्त सप्तम्या निमित्ते विधानात् । दर्शनप्रभावकशास्त्रनिमित्तमित्यर्थ. । चारित्रार्थं चरित्रनिमित्त एतेषां ज्ञानाद्यर्थमुपसपद्यमानानां नानात्वभेदं यथोपन्यास या आनुपूर्वी तया वक्ष्यामि ॥

प्रतिज्ञातमेव निर्वाहयति ॥

वत्तणा संधणा चेव, गहणे सुत्तत्थ तदुभए ।
वेयावच्चे खमणे, काले आवकहाएय ॥

ज्ञानार्थं दर्शनार्थं चोपसपत्प्रत्येकं त्रिधा । तद्यथा सूत्र चार्थश्च तदुभय च सूत्रार्थतदुभय तस्मिन् सूत्रेऽर्थे तदुभयस्मिश्चेत्यर्थः । निमित्तसप्तमी चेयं । ततोऽय भावार्थ । ज्ञानार्थं दर्शनार्थं चोपसपद्यमानः प्रत्येकं सूत्रार्थ वा उपसपद्यते । अर्थार्थं वा तदुभयार्थं चेति । पुनरेकैका प्रत्येक भवति त्रिधा । तद्यथा । वर्तनेति अत्र सप्तमीलोपः प्राकृतत्वात् । वर्त्तनायां वर्तनानिमित्तमेवमेव संधनायां संधनानिमित्त ग्रहणे ग्रहणानिमित्तं तत्र पूर्वगृहीतस्य सूत्रार्थस्य तदुभयस्य वा पुनःपुनरभ्यसन वर्तना । पूर्वगृहीतस्य विस्मृतस्य पुनः संस्थापनं संधना । तथा ग्रहणे तत्प्रथमतया अपूर्वस्य सूत्रार्थस्य तदुभयस्य वा ग्रहणनिमित्त एव ज्ञाने दर्शने च प्रत्येकं भवति त्रिधा उपसंपत् चरणोपसंपद्यमानाद्विधोपसपद्यते । तद्यथा । वैयावृत्ये क्षपणे च वैयावृत्यनिमित्त क्षपणानिमित्तं च । ते द्विधा उपसंपद्यमानाः कालतो यावज्जीवं भवेयुश्च शब्दादित्वराश्च ॥

एतामेव गाथां व्याख्यानयति ॥

दंसणनाणे सुत्तत्थ, तदुभए वत्तणा य एक्केक्के ॥
उवसंपया य चारित्ते, वेयावच्चे य खमणे य ॥ १ ॥

दर्शनविशोधकानि यानि सूत्राणि शास्त्राणि वा तानि दर्शनं शेषाणि सूत्राणि शास्त्राणि वा ज्ञान । तत्र दर्शनज्ञाने च प्रत्येकमुपसपत्त्रिधा । सूत्रनिमित्तमर्थनिमित्तं यदुभयनिमित्त च । एकैकस्मिन् सूत्रादौ प्रत्येक वर्त्तना संधना ग्रहण च । किमुक्त भवति । सूत्रेऽपि वर्त्तनानिमित्तमुपसपद्यते । संधनानिमित्तमुपसपद्यते । अपूर्वग्रहणनिमित्त वा उपसपद्यते । एवमर्थेऽपि त्रितयमुभयेऽपि त्रितयमिति दर्शनेऽपि नवविधोपसपद् ज्ञानेऽपि नवविधेति । चारित्रे चारित्रविषया उपसंपत् वैयावृत्ये, क्षपणे च ॥

शुद्धअपाडिच्छणे, लहुगा अकरेंते सारणा अणापुच्छा ।
तेसु विमासो लहुतो, वत्तणादिसुत्थाणेसु ॥ १ ॥

यदेतद्गुरुसकाशे सूत्रं तत् सर्वमधीत । ततोगुरुभिरनुज्ञातो विधिना आपृच्छय भजकादिष्वप्रतिवध्यमान आगतः । आगतश्च सन् त्रीन् दिवसान् यावत् परीक्षितः शुद्धः । इत्यभूतं यो न प्रतीच्छत्याचार्यस्तस्य प्रायश्चित्त लघुकाश्चत्वारो लघुमासा । योऽपि उपसपन्नो वर्त्तनानिमित्तं संधनानिमित्तं ग्रहणनिमित्त वा स यदि वर्त्तनां संधनां ग्रहण वान करोति तदा तस्मिन् वर्तनादिकमकुर्वतीति प्रत्येक त्रिष्वपि स्थानेषु वर्तनादिषु मासोलघुकः प्रायश्चित्तं । आचार्योऽपि यदुपसपन्न प्रमाद्यंत न सारयति तदा तस्मिन्नपि सारणा । अत्र विभक्तिलोप आर्षत्वात् । अकुर्वति त्रिष्वपि वर्त्तनादिषु स्थानेषु मासलघु । एतच्च प्रायश्चित्तविधान सूत्रविषयम् । अर्थे पुनर्वर्त्तनादिमकुर्वति शिष्ये अर्थनिमित्तमुपसपन्न प्रमाद्यत वर्त्तनादिष्वसारयति गुरौ च प्रत्येकं त्रिष्वपि वर्त्तनादिषु स्थानेषु प्रायश्चित्त मासगुरु । उभयविषये च द्वयोरपि प्रत्येक वर्त्तनादि त्रिष्वपि स्थानेषु पृथक् उभय प्रायश्चित्तं मासगुरु मासलघु चेति । एतच्च गाथायामनुक्तमपि सम्प्रदायादवसितं । यथा ( अणापुच्छा ) इति । अनापृच्छायामननुज्ञायामित्यर्थः । अत्र चत्वारो भंगास्तद्यथा । अननुज्ञातोऽननुज्ञातेन सह वर्तनां करोत्येकोभंग १ अनुज्ञातो अननुज्ञातेन सहेति द्वितीय २ अननुज्ञातोऽनुज्ञातेनेति तृतीयः ३ अनुज्ञातोऽनुज्ञातेनेति चतुर्थ ४ एव संधनायां ग्रहणेऽपि च प्रत्येक चत्वारो भंगाः । एवमर्थेऽपि तदुभयस्मिन्नपि च प्रत्येक वर्त्तनादिषु चत्वारो भंगा । तत्र सूत्रविषये त्रिष्वपि वर्त्तनादिषु स्थानेषु प्रत्येकमाद्येषु भंगेषु ददानस्य गृह्णानस्य च प्रायश्चित्त मासलघु । तप कालविशेषित । तद्यथा । वर्त्तनायामाद्येषु

त्रिषु भंगेषु मासलघु संघनायां मासलघु। तपो गुरुकाललघु। ग्रहणे मासलघु द्वाभ्यां गुरुस्तद्यथा तपसा कालेन च। एव मर्थे तपःकालविशेषितं मासगुरु। तदुभयप्रायश्चित्तमर्थविषयं च प्रायश्चित्त गाथानुपात्तमपि व्याख्यानादवगतं। चतुर्थभंगःपुन० सर्वत्राऽपिशुद्धः इति न तत्र कस्याऽपि प्रायश्चित्तमिति। इहाचार्यस्याऽपि प्रमादत० सूत्रादिषु वर्त्तनादिकमकुर्वतमुपसंपन्नमसारयतः प्रायश्चित्तमतो नियमात्स आचार्येण सारयितव्यस्तया च एतदेवाह॥

सारेयव्वो नियमा, उपसंपन्नोसि जं निमित्तं तु।
तं कुण सु तुमं भंते!, अकरेमाणे विवेगोउ॥

स उपसंपन्नो नियमात्सारयितव्यः कथमित्याह। अहोभदंत! ज्ञानाद्यभ्यासकारितया परमकल्याणयोगिन्! इह शिष्यस्याऽप्याचार्येण प्रोत्साहनार्थं तथाविधयोग्यतासंभवमधिकृत्यैवाविधमप्यामंत्रणं कर्त्तव्यमिति ज्ञापनार्थं। अन्यथा भदंतेति गुर्वामत्रणे रूढत्वात्तत्रैव न्याय्यं न शिष्ये इति। यन्निमित्तमुपसपन्नस्त्वं तत्कुरु। एवमेकद्वित्रिवारं सारितोऽपि यदि न करोति वर्त्तनादिकं ततस्तस्मिन्नकुर्वति विवेक एव परित्याग एव कर्त्तव्य०। तुरेवकारार्थ०॥

( यदुक्तमणापुच्छा ) इति तत् व्याख्यानयति॥

अणणुन्नमणुएणाए, दितं पडिच्छंतभंगचउरो उ।
भंगतियंमि वि मासो, दुहतोणुएणाए सच्चो उ॥

अननुज्ञातो मकारोऽलाक्षणिकः। अननुज्ञातो ददाति इतरस्तु प्रतीच्छतीत्येवं ददानप्रतीच्छतां चत्वारो भंगास्तत्र भंगत्रिकेऽपि आद्येष्वपि त्रिष्वपि वर्तनादिषु स्थानेषु प्रत्येकं प्रायश्चित्तं मासो लघुमास०। अर्थे गुरुमासस्तदुभयास्मिन् तदुभयं प्रायश्चित्तमिति व्याख्यानात्॥ ( दुहतोणुएणाए ) इति उभयतो ददानतया प्रतीच्छकतया चाऽनुज्ञाते भगश्चतुर्थः शुद्ध एव। तुरेवकारार्थः एपोऽक्षरार्थः। भावार्थस्तु प्रागेवोपदर्शितः।

एप प्रायश्चित्तविधिर्ज्ञानार्थमुपसंपद्युक्त एव दर्शनार्थमुपसंपदि द्रष्टव्यस्तथा चाह॥

एमेव दंसणाची, वत्तणमादी पया उ जह नाणे।
वेयावच्चकरो पुण, इत्तरितो आवकहितो य॥

यथा ज्ञाने वर्तनादिपदान्यधिकृत्य प्रायश्चित्तविधिरुक्त एवमेव अनेनैव प्रकारेण दर्शनेऽपि वर्त्तमानादीनि पदान्यधिकृत्य वेदितव्यः। गता ज्ञानदर्शनोपसंपत्॥

इदानीं चारित्रोपसपत् भावनाया॥

तत्र काले ( आवकहाए य ) इति पदं व्याख्यानयाति। ( वेयावच्चे ) त्यादि वैयावृत्यकरो वैयावृत्यार्थमुपसंपन्नः पुनर्द्विधा इत्वर० स्वल्पकालभावी यावत्कथिको यावज्जीवभावी। अस्य च द्विविधस्याऽपि वैयावृत्यकरापणविधिरय एको गच्छवासी वैयावृत्यकरोऽपरः प्राघूर्णकः स च वक्ति अह वैयावृत्यं करोमि॥

तत्र विधिमाह।

तुल्लेसु जो सुलद्धी, अन्नस्स व वारएण निच्छंते।
तुल्लेसु व आवकही, तस्स मएणं च इत्तरिओ॥

यदि द्वावपि कालतस्तुल्यावित्वरौ च तत्र यद्येकोलब्धिमान् अपरोऽलब्धिकस्तर्हि तयोस्तुल्ययोर्यः स लब्धिक० स कार्यते इतरस्तु उपाध्यायादिभ्यो दीयते। अथ द्वावपि यावत्कथिकौ तत्रापि यो लब्धिमान् स कार्यते इतरोऽन्येभ्यो दीयते। यदि पुनर्द्वावपि सलब्धिकौ यावत्कथिकौ च तत्र अन्यतर उपाध्यायादेः कार्यते। अथैकोऽपि तस्य नेच्छति तत आगतुको विमुच्यते। अथ द्वावपि सलब्धिकावित्वरौ च तत आगतुक उपाध्यायादीनां वैयावृत्यं कार्यते सूत्रालापकश्च उपाध्यायादिवैयावृत्यफलप्रदर्शकस्ततः प्रोत्साहनार्थं पठनीयः॥

उवज्झायवेयावच्चं, करेमाणे समणे॥
निग्गंथे महानिज्जरे, महापज्जवसाणे होइ॥ १॥

इत्यादि। अथ नेच्छति तर्हि तस्मिन्नन्यस्य उपाध्यायादिवैयावृत्यमनिच्छति वा शब्दोभिन्नक्रमत्वात्। वारएण चेत्येव योजनीयः। द्वावपि वारकेण कार्येते कियत्कालमेक कियत्कालमपर इति। यदि वास्तव्यो वैयावृत्यकरोऽनुमन्यते। अय नाऽनुमन्यते तत आगंतुकस्तावत काल प्रतीक्षाप्यते। यावत वास्तव्यस्य वैयावृत्यस्य इत्वरकालसमाप्तिमुपयाति॥ अथ न प्रतीक्षते तर्हि विसृज्यते अथ द्वयोरपि तयोर्वैयावृत्यकरापणविधिः॥

अथ एक इत्वर एको यावत्काधिकस्तत्राह ( तुल्लेसु व )इत्यादि। तुल्ययोर्लब्ध्यासमानयोर्यावत्काथिकः स कार्यते। इतरोऽन्यस्योपाध्यायादेः सन्नियोजनीयः। अथ वास्तव्यो यावत्कयिकस्तर्हि स भण्यते विश्राम्य त्वं तावत् यावदित्वर० करोति तथा चाह। तस्य वास्तव्यस्य वैयावृत्यकरस्य मतेन इच्छया इत्वरो वा कार्यते वैयावृत्यकरस्तथा प्रज्ञापितोऽपि नेच्छति तर्हि न कार्यते। स हि पश्चादपि यास्यति। तत इतरो वास्तव्यो न करिष्यतीति। अथ इत्वरो यावत्कथिकश्च द्वावपि सलब्धिकौ तत्र यावत्कथिक० कार्यते। इतरोऽन्यस्य नियुज्यते विसृज्यते वा। अथवा इत्वरः स लब्धिकस्तत्र यावत्कथिको भण्यते। विश्रम्य तावत् वार्त्तितव्यम्। यावदेष इत्वरः सलब्धिकः करोति। पश्चात्त्वमेव करिष्यसि। अथ नेच्छति तर्हि स एव कार्यते। इतरस्त्वन्यस्मै दीयते। तस्य तत्रानिच्छायास विसृज्यते अथेत्वरोऽलब्धिको लब्धिमान् तत्र यावत्कार्थिकः कार्यते। इतर उपाध्यायादे० समर्प्यते। अथ तस्य तत्रानिच्छा तर्हि विसृज्यते। इह यदि वास्तव्यवैयावृत्यकरेणाननुज्ञातो वैयावृत्य कारयति। यदि वा नापृच्छया अन्यवैयावृत्यकरं स्थापयति तदा तस्याऽऽचार्यस्य बहवो दोषास्ताने वाह॥

अणणुन्नाए लहुगा, अचियत्तमसाहजोग दाणादी।
निज्जरं महती हु भवे, तवस्सिमाई ण करणे वी॥

वास्तव्यवैयावृत्यकरेणाननुज्ञायामुपलक्षणमेतत्तस्यानापृच्छायांवा यद्यागतुकमित्वर वैयावृत्ये स्थापयति। ततस्तस्य प्रायश्चित्त लघुकाश्चत्वारोलघुमासाः। अन्ये ब्रुवते अनापृच्छायां मासलघु। अननुज्ञायां चतुर्लघु। अन्यश्चाननुज्ञायामनापृच्छायां वा वैयावृत्यपदे अन्यस्येत्वरस्य स्थापने वास्तव्यस्य अचियत्त मप्रीतिरुपजायते। अप्रीत्या च कलह कुर्यात् ( असाहजोग्गादी ) इति यानि दानादीनि दानग्रहादीनि कुलानि योग्यानि तान्यागतुकवैयावृत्यकरस्य न साधयति। न कथयति तस्मात्स इत्वर आगंतुको वैयावृत्यकरः प्रज्ञाप्यते। त्व तपस्यादीनां क्षपकादीनां वैयावृत्यं कुरु तेषामपि क्रियमाणे वैयावृत्ये महती निर्जरा॥ तत्रैव वैयावृत्यद्वार गतम्॥

इदानीं क्षपणद्वारावसरः ॥

आयंकठी इत्तरिए, इत्तरियविगिट्ठ तह विगिट्ठे य ।
समणामंतणखमणे, अणिच्छमाणं न ओ नियोगो ॥

क्षपक उपसपद्यमानो द्विधा यावत्कालिक इत्वरश्च तत्रेत्वरो द्विधा विकृष्टतपःकारी अविकृष्टतपःकारी च । तत्र चतुर्थ षष्ठाष्टमकारी अविकृष्टतपःकृत् । दशमादितपःकारी विकृष्टतपःकृत् तयोर्द्वयोरप्युपसपद्यमानयोः ( समणामतणत्ति ) आचार्येण स्वगच्छस्यामत्रण प्रच्छन कर्तव्य । यथा आचार्याः एष विकृष्टतपःकरणार्थं समागतः किं प्रतीष्यतामुत प्रतिषिध्यतामिति । तत्र यदि तेषामनुमत भवति । तदा प्रतीष्यते अनिच्छायां प्रतिषिध्यते यदि पुनः केचिन्न मन्यते तर्हि यः कश्चिन्नेष्टवान् तमनिच्छन्त तस्य क्षपकस्य वैयावृत्ये बलान्न नियोजयेत् । बलान्नियोगस्य सूत्रे निषेधात् । यस्तु प्रतीच्छितः । स पृच्छ्यः किं त्वविकृष्ट तपः करोषि अविकृष्ट वा यदि ब्रूत अविकृष्ट ततो भूयोऽपि प्रष्टव्य त्व पारणकदिने कीदृशोभवसि । यदि प्राह ग्लानोपमः तत्राह ॥

अविगट्ठकिलम्मं तं, भणंति मा खम करोहि सज्झायं ।
सक्काकिलामिउं जेवि, विगिट्ठेणं तहिं वियरे ॥

अविकृष्टे तपसि क्लाम्यन्तमभणन्ति सूरयो माक्षपय माक्षपण कुरु न युक्तं तव क्षपण कर्तुमशक्यभावादित्यर्थः । तस्मात्कुरु स्वाध्याय तपःकरणात्स्वाध्यायकरणस्य बहुगुणत्वात् । अपि च । स्वाध्यायोऽपि परम तपः । यत उक्त ॥

बारसविहम्मि वि तवे सब्भिं तरबाहिरे कुसलदिट्ठे ॥
न वि अत्थि न वियहोहिइ, सज्झायसमं तवोकम्मं ॥

अग्लानोपमस्त्वविकृष्टतपःकारी तप कार्यते यस्तु विकृष्ट तपः करोति स यद्यपि पारणकदिने ग्लानोपमोजायते तथापिस कार्यते । यत आह ( सक्क ) इत्यादि अदि शब्दः पुनरर्थे ये पुनस्तपस्विनो विकृष्टेन तपसा पारणकदिने क्लमयितु शक्याः क्लाम्यते इतिभावः तत्र तेषु तपस्विषु वितरेत् दद्यात् तपःकरण तेषां तथा रूपाणामपि समनुजानीयात् । न तु वारणीय विकृष्टतप करणस्य महागुणत्वात् केवल भक्तपान लेपजादिकमानाय्य दातव्य । अथ ग्लानोपमो न भवति । किंतु स्वयमेव सस्तारकप्रतिलेखनादीन् व्यापारान् सर्वानप्यहीनातिरिक्तान् करोति प्रतीच्छते एव च तत्र यो विकृष्टेन तपसा ग्लानोपमो भवति । तत्रेय सामाचारी ॥

अन्नपडिच्छणे लहुगा, असति गिलाणोवमे अमंते य ।
पडिलेहणसंथारग, पाणग तह मत्तगतिगं च ॥ १ ॥

तस्मिन्गच्छे यद्यन्यः कोऽपि विकृष्टतपःकारी क्षपको विद्यते स च पारणकदिने ग्लानोपमो वा भवेद् ग्लानोपमोवा तथाऽपि तस्मिन्विद्यमाने क्षपके अन्य क्षपकमाचार्यो न प्रतच्छेत प्राक्तनस्य हि क्षपकस्य पारणकदिने ग्लानोपमस्याग्लानोपमस्य वा सतोऽवश्य कर्तव्य । न च द्वयोर्वैयावृत्यकरणे साधवः प्रभवति तस्मान्न प्रत्येषणीयः । यदि पुनः साधवोऽनुमन्यते सोऽपि प्रतीष्यता तस्यापि वैयावृत्यकरणेन समाधिमुत्पादयिष्याम इति तदाप्रतीच्छनीय यदि पुनर्गच्छे विद्यमानेऽपि विकृष्टतप कारिणि क्षपके गच्छाननुमतावाचार्योऽन्य प्रतीच्छति तदा तस्यान्यप्रतीच्छने प्रायश्चित्तम् ।
लघुकाश्चत्वारो लघुमासाः ( असतित्ति ) तथा असति प्रायोग्यद्रव्ये ये दोषास्ते च वक्तव्या । तेचामी । द्वयो क्षपकयोर्युगपत्पारणकादिने समापतिते पर्याप्त्या पारणकद्रव्ये अलाभतोऽसति असस्तरण भवेत् । असस्तरणाच्च यदेषणादि प्रेरयंति तन्निमित्त प्रायश्चित्तमाचार्यस्यापतति आज्ञाऽनगाढयश्च दोषा जायते । तथा पारणकप्रायोग्यद्रव्यसंपादनेन सस्तरणमकुर्वत्सु साधुषु विषये सोऽप्रीतिं कुर्यात् । अप्रीत्या च अनागाढमागाढं वा परितापनां प्राप्नुयात् । तया च सति तन्निष्पन्नमपि प्रायश्चित्तमाचार्यस्य अन्यच्च शिष्याः प्रतीच्छकाश्च द्वयोरपि क्षपकयोर्वैयावृत्यकरणतो भग्ना एव चिंतयेयुर्यथा अन्यान्यक्षपकवैयावृत्यकरणेन नाऽस्माक सूत्रमर्थो वा तस्मादन्यत्र व्रजाम इति । तथा ( गिलाणोवम ) इति तेषु गच्छवासिषु साधुषु वास्तव्यक्षपकवैयावृत्यकरणेन व्यापृतेषु ग्लानोपमो जायते । तदा तस्याऽऽचार्यस्य प्रायश्चित्त चतुर्गुरुकाः । ( अमंतेयत्ति ) तथा गच्छ वास्तव्यक्षपककरणव्यापृततया भक्तपान वागतुकस्याददाने स भक्तार्थं पानार्थं वा स्वय हिंडते प्रतिलेखनादिक्रियां च स्वयमेव कुर्यात् । हिंडमानश्च क्षुधा पिपासया शीतोष्णेन वा पीडितो यद्यनागाढं परित्तापनां प्राप्नोति तदा प्रायश्चित्तमाचार्यस्य चतुर्लघु अथागाढ तदा चतुर्गुरु । अथ मूर्च्छति तदा षड्लघु ॥ तथा परिताप्यमानो यदेषणां प्रेरयति तदा तन्निमित्त प्रायश्चित्तं अथ न प्रेरयति । तदा प्रभूतमदत्तोयदानागाढादिपरितापनां प्राप्नोति तन्निमित्त प्रायश्चित्त । अथ तत्र गच्छेऽन्योवास्तव्यः क्षपको न विद्यते । तदा नियमतः प्रतीच्छनीयः । केवलं सोऽपि गच्छानुमत्या । अन्यथा न किमपि तस्य गच्छः करिष्यति । तत्र यदि प्रमादतो वैयावृत्यभीरुतया गच्छो नानुमन्यते । तदा स प्रज्ञापनीयः । अथ कारणवश तस्तदा नप्रतीच्छनीयः । यदि पुनर्गच्छाननुमत्याऽपि प्रतीच्छति तदा तस्य प्रायश्चित्त चत्वारो लघुकास्तथा गच्छानुमतौ यो यत प्रतीलभ्यते ततः क्षपकप्रायोग्यमानयति । अननुमतौ च नकोऽपि किमप्यानयतीत्यसति पारणकादिने पर्याप्त्याप्रायोग्यद्रव्ये असस्तरणमसस्तरणाच्च परितापनादुःख । तन्निमित्त प्रायश्चित्तमाचार्यस्य तथा पारणकदिने ग्लानोपमो जायते तथा शेषसाधुप्रयोजनांतर व्यापृततया भक्तपानं वा ददानेषु स्वय हिंडमाने ये दोषास्तेऽपि वक्तव्या ॥ संप्रति तस्य क्षपकस्य वास्तव्यस्याऽगंतुकस्य वा कृतप्रत्याख्यानस्यापि यत् प्रतिदिवस कर्तव्य तदाह । ( पडिलेहणे ) त्यादि । तस्योपकरणं कल्पादि यथायोगमुभयकालं प्रतिलेखनीयं सस्तारकश्च तस्य कर्तव्य । तथापानकं पानीय तस्योचितमानीय दातव्य तथा मात्रकत्रिकं च उच्चारमात्रकं प्रस्रवणमात्रकं खेलमात्रकं च यथाकालं समर्पणीय परिस्थापनीयवा ॥
सांप्रतमेनामेव गाथा व्याख्यानयन् प्रथमतो ( अन्नपडिच्छणे लहुगा ) इति च व्याख्यानयति ॥

दुण्णेगतरे खमणे, अन्नपडिच्छंतसंथरे आणा ।
अप्पत्तियपरितावण, सुत्ते हाणिं अन्नहिं च इमे ॥

वास्तव्ये क्षपणे क्षपके द्वयो ग्लानोपमयोरन्यतरस्मिन्विद्यमाने यदि गच्छानापृच्छया अन्य प्रतीच्छति । तदा तस्मिनिर्य प्रतीच्छति प्रायश्चित्तं लघुकाश्चत्वार इति वाक्यशेष । तथा युगपत् द्वयोः पारणकदिने युगपत्समापतिते प्रायोग्यद्रव्य अलाभतोऽसति यदि वास्तव्यक्षपकवैयावृत्यकरणव्यापृतनामागतुकस्य वैयावृत्यकरणे वेलातिक्रमतोऽसस्तरण भवेत् तस्मिन्नासस्तरणे यदेषणादि प्रेरयति तन्निमित्तप्रायश्चित्तमाचा

येस्य तथा ( आणात्ति ) आज्ञापदकदेशेपदसमुदायोपचाराद आज्ञाभंगानवस्थामिथ्यात्विराधनादोषाः प्राप्नुयुः । तस्य वा सस्तरणे अप्रीतिरप्रीत्या च परितापननिमित्तमपि प्रायश्चित्तं तथा शिष्याः प्रतीच्छकाश्चैवं चिंतयेयुरस्माकं द्वयोः क्षपकयो वैयावृत्यकरणव्यापृतानां सूत्रे हानि रूपवक्रणमेतत् अर्थे च तस्मादन्यत्र व्रजाम । संप्रति ( गिलाणो धामअन्तंतेयत्ति ) व्याख्यानयति ( गेलएण तुल्ल गुरुगा अन्ते परितावणा य सयकरणे । णेसणगहणागहणेडुगडूहिं रुतमुच्छाय ) साधुषु वास्तव्यक्षपक वैयावृत्यकरणतः प्रयोजनान्तर व्यापृततया वा वैयावृत्यमकुर्वत्सु यथागतक क्षपको ग्लानतुल्यो ग्लानोपमो जायते । तदा सूरेः प्रायश्चित्त चतुर्गुरुकाः । तथा भक्तं पानं च अददत्सु स्वयं (दुगडूहिंरुतात्ति) चिकार्थं च हिंरुमाने स्वयं वा उपकरणस्य प्रत्युपेक्षणादेः करणे या परितापना अनागाढा वा( मूर्छायति ) मूर्छा च तन्निमित्तं प्रायश्चित्तमाचार्यस्य तत्रागाढपरि तापनानिमित्त चतुर्लघु । आगाढपरि तापननिमित्तं चतुर्गुरु मूर्छानिमित्त षट् लघु । णेसणगहणागहणे । इति स स्वयं हिंरुमानः क्षुधापिपासया वा शीतेन वा उष्णेनवा परितापितः सन् यदि नेषणीयमपि गृह्णाति तन्निमित्तं प्रायश्चित्तमग्रहणे ऽनेषणीयस्य प्रन्नूनं हिंरुमानो यद्वाप्नोति । आगाढपरि तापनादिक तन्निमित्त मपि यत एवमादयो दोषा । तस्मात्कृत्वमापृच्छय तदनुमन्या प्रतीच्छेत् । प्रतीच्छितस्य च सर्वप्रयत्नेन निर्जरार्थतया कर्तव्यमिति । इह आगत सन्प्रथमदिवसेऽपि प्रच्छनीयो यथा केन कारणेन त्वमिहागतो ऽसीति अन्यथा यदि तमपृष्ट्वैव आलोचना मदापयित्वा च संवासयति । तदा प्रयश्चित्तं तदेवाह ॥

पढमदिणंमि न पुच्छे, लहुओ मासो उ बाऽगुरुओ य ।
तइयंमि हुंति लहुगा, तिएहं तु अतिक्कमे गुरुगा ॥

यदि प्रथमे दिने न पृच्छेत् तर्हि तस्या ऽचार्यस्य प्रायश्चित्त लघुमासः द्वितीये दिने पृच्छतो मासगुरु तृतीये भवंति चत्वारो लघुमासाः । त्रयाणां तु दिनानामतिक्रमे चतुर्थादिषु दिवसे ष प्रायश्चित्त चतुर्गुरुकाश्चत्वारो गुरुमासाः । अधुना अपवादो भण्यते यदि कार्यादिप्रयोजन वशाच्चमक द्वे त्रीणि दिनानि पण्मासानपि यावन्न पृच्छति तथापि न प्रायश्चित्त भाक् तथाचाह ॥

कज्जे भत्तपरिएणा, गिलाणराया य धम्मकहवादी ।
छम्मासा उक्कोसा, तेसिं तु वइक्कमे गुरुगा ॥

कार्ये कुलगणसंघविषये व्यापृतो भवेदाचार्यः । तथाकेनापि साधुना भक्तपरिहा कृता तस्य समीपे लोकोऽयानागच्छति । तत्राचार्यो धम्मकथने व्यापृत । ग्लानप्रयोजने वा व्यापृतः ॥

( रायाएधम्मकहीति )

राजाचधर्मार्थी प्रतिदिवसमेति ततस्तस्य धर्मं कथयितव्य इति धर्मकथिकत्वेन व्यापृतः । वादीवा कश्च न प्रवलः समुत्थितः स निग्रही तव्य स्तत एतैः कारणैर्व्यापृतः सन् आचार्यो जघन्यत एक द्वे त्रीणि वा दिनानि उत्कर्षतो यावत् षण्मासास्ता वदागतुक प्रष्टुमालोचनां वा प्रदापयितुं न प्रपारयेत् । इत्यमप्रपारणे न दोषाभावः तेषां षण्णां मासानां पुनर्व्यतिक्रमे किमुक्तं भवति । षण्मासेभ्यः परतोऽपि यदि न पृच्छति ना ऽपि दापयत्यालोचनां तत प्रायश्चित्तमाचार्यस्य गुरुकाश्चत्वारो गुरुमासा ।

अन्ये तु ब्रुवते । षण्मासानां परतो यदि न प्रतीच्छत्यालोचनां ततः प्रायश्चित्तमाचार्यस्य गुरुकाश्चत्वारो गुरुमासाः । अन्ये तु ब्रुवते षण्मासानां परतो यदि न प्रतीच्छत्यालोचनां तदा लघुमासः । द्वितीयदिनेऽप्यप्रतीच्छने मासगुरु । तृतीयदिने चतुर्लघु । दिनत्रयातिक्रमे चतुर्थादिषुदिनेष्वप्रतीच्छने चतुर्गुरुका इति कार्यादिप्रयोजनवशतो व्यापृत इमां यतनां कुर्यात् ॥

अन्नेण पडिच्छावे, तस्सासति सयं पडिच्छए रात्तिं ।
उत्तरवीमंसाए, खिन्नो य निसिंपि न पडिच्छे ॥

यद्यन्यो गीतार्थस्तस्याचार्यस्य समीपेऽस्त्यालोचनार्हस्तर्हि स संदेशनीयो यथा ऽयमापच्छता । मालोचनाचास्य प्रतीच्छतामिति । अथ नास्त्यन्यो गीतार्थस्तदा तस्य गीतार्थस्या ऽसति भावप्रधानोऽय निर्देशोऽभावे स्वयमेव रात्रौप्रतीच्छित्यालोचनां अथ यथा श्रीगुप्तेन षडुलूकः षण्मासान् यावत् वाद दत्वा निर्जित एव दीर्घकालावलंबिनिविवादे रात्रावप्युत्त रविमर्षेण प्रत्युत्तरचिंतया खिन्नपरिश्रांतो निशायामपि न प्रतीच्छत्यालोचनां दत्तामिति अथवा अत्राप्यपवादस्त मेवाह ॥

दोहिंतिहिं वा दिणेहिं, जइच्छिज्जइ तेनहोइ पच्छित्तं ।
तेणपरमणुएणवणा, कुलादिरन्नो व दीवंति ॥

यदि षण्णां मासानां परतो द्वान्यां दिनाभ्यां त्रिभिर्वा दिनैः परप्रवादी नियमात् पराजेष्यते कुलादिकार्यं वा समाप्तिमुपयास्यतीत्येवं निश्चीयते । ततस्तेष्वपि दिनेष्वप्रच्छने आलोचनाया अप्रतीच्छने वा न प्रायश्चित्त भवति । अथ ज्ञायते तेष्वप्येकद्वित्रादिषु दिवसेषु न कुलादिकार्यसमाप्तिर्भविष्यति । न च परवादीजेष्यते तदा षण्मासाऽसमाप्ता चैव राज्ञः समीपे गत्वा ज्ञापनीयम् । यदाहं दिनमेकमक्षणिको भविष्यामि नान्यथा ग्रहीष्या इति कुलादिकार्येष्वपि कुलादीन्यनुज्ञापयति तथाचाह ( तेण परमित्यादि । ) तेनेत्यव्ययं तत इत्यर्थे तत षण्मासेभ्य. पर कार्यापरिच्छित्तौ संजानन्यमा नायामनुज्ञापना कुलादेर्दिनमेकयावत्कर्त्तव्या राज्ञश्च वादिविषये कारण दीपयंत्याचार्याः यथाऽहं कारणवशेन दिनमेकमक्षणिकोभविष्यामीति । एव चेन्न कुर्वंति तदा प्रायश्चित्त चतुर्गुरुकाः । तदेवमुक्तः क्षपणोपसपद्विधिरिदानीं ज्ञानार्थं दर्शनार्थं प्रतीच्छितो नियमादालोचनां दापयितव्यस्सच दाप्यमानः कथमालोचनां ददाति उच्यते ॥

आलोयणा तह चेव य, मूलुत्तरे न वरिविगडिपडमं तु ।
इत्थं सारणवायण, निवेयणं तेवि ए मेव ॥

यथा सांभोगिकानां विहारालोचनायां मूलगुणातिचारविषये उत्तरगुणातिचारविषये च भणित । तथात्राऽपि भणितव्य । किमुक्तं भवति । उपसंपद्यमानोऽप्यालोचनां ददानः पूर्वं मूलगुणातिचारानानुक्रमेणालोचयति पश्चादुत्तरगुणानिति । नवरमय विशेषः । विकटिते आलोचिते एकत्र स्थितान् भिन्नस्थितान्वा प्रत्येकं वन्दित्वा इद भणति ॥

आलोयणामि दिन्ना, इच्छामि सारणवारणचोयणं ।

तेऽप्येवमेव प्रतिभणन्तो निवेदनकुर्वन्ति ( अम्हो अम्हे विसारज्जा वारेएज्जा ) इति गता उपसंपदालोचना साम्प्रतमपराधालोचनयाऽत्र प्रकृत ॥

एमेव य अवराहे, किं तेन कया तहिं वियविसोही ।
अहिगरणादीसाहति, गीयत्थोवा तहिं नत्थि ॥

यथा विहारालोचना यामुपसंपदालोचनायां चविधिर्भणित एवमेव तथैव अपराधे अपराधालोचनायामपि द्रष्टव्यो यावत्पृष्टो वा अपृष्टो वा ब्रूते अहमपराधालोचकः समागत। ततः आचार्यैर्वक्तव्यः । केनकारणेन ते त्वया तत्रैव स्वगच्छे एव नकृता विशोधिः प्रायश्चित्तांगीकरणेन एवमुक्ते यदि साधयति कथयति अधिकरणादीनि । अधिकरण तैः सह आदिशब्दात् प्रागुक्तविकृतियोग प्रत्यनीकादि कारणपरिग्रहः। अथवा वाक्ति तत्र गीतार्थो नास्ति । तत्राऽधिकरणादिष्वविशुद्धकारणेषु समागत एव प्रतिज्ञननीयः ॥

नत्थि इहं पमियरगा, खुल्लखेत्तं उग्गमावि य पच्छित्तं।
संकीयमादीव पदे, जहक्कम्मं ते तहवि भासे ॥

अस्तीति निपातो वहुवचनार्थः प्रतिचारका नाम अपराधापन्नस्य प्रायश्चित्ते दत्ते तपः कुर्वतो ग्लानायमानस्य वैयावृत्त्यकरास्ते इह मे पार्श्वे न सति खलक्षेत्र नाम मदभिक्ष यत्र वा प्रभूतमुपकारि घृतादिद्रव्य न लभ्यते तादृशमिद क्षेत्र तथाविधदानश्रद्धश्रावकाभावात् वयमपि च स्तोकेऽप्यपराधे उग्र प्रायश्चित्त दद्मः तथा गुरुपारपर्य समागमात् तथा यानि ( नत्थी सकिय सघाभे ) त्यादि प्रागुक्तगाथोपन्यस्तानि शकितादीनि पदानि तानि सभवेन यथाक्रम तयेति समुच्चये विज्ञापेत ब्रूयात् यथा प्रायश्चित्तसूत्रमनुसृत्य प्रायश्चित्त दीयते तदिदानीं विस्मृत शंकित वा जात नचार्थ स्मरामि । ततः कथ प्रायश्चित्त प्रयच्छामि अथवा प्रायश्चित्ते प्रतिपन्ने सति तत्तपः त्वयेह कर्तव्यं । तत्रचेयमस्माक सामाचारी वहिर्भूमिमात्रमपि सघाटक विना न गतव्य यदि पुन कोऽपि गच्छति ततस्तस्मै प्रायश्चित्तमत्युग्र ददामि इत्येव यथासभव शकितादीनि ब्रूयात् न तु दद्यादालोचनामिति यस्तु निर्गमन शुद्ध आगमनेन शुद्धो वा प्रतीच्छते तस्यालोचनायां विधिर्वक्तव्यः ॥ व्य उ १ ।

नन्वकृत्येसमासेविते यत्कर्मवद्धं तदनुभवनीय मेवेत्यालोचनाया को गुण इत्या शकायाम् ॥

आसेविते वकिच्चणा, भोगादिहिं होंति संवागा ।
अणुतावो तत्तो खलु, एसा सफला मुणेयव्वा ॥ ३ ॥

( पचा ) वृ १५ आसेवितेऽप्याचरितेऽपि अनासेविते कर्म्माभावात् फलैर्वाऽऽनुपालनादित्यपि शब्दार्थः । अकृत्ये साधूनामविधेये कथमित्याह अनाभोगादिभिरज्ञान प्रभृतिभिस्तद्यथा ॥

सहसाणाभोगेण व, भीएण व पेल्लिएणव परेण व ।
मणेणायं केण व, मूढेण व रागदोसेहिं ॥

भवति जायते कुत इत्याह संवगा ससारभयादनुतापः पश्चात्ताप प्राक्कृताकृत्य विषयस्तज्जन्यकर्म्म क्षपणहेतुभूतः आलोचनायामिति गम्यते ततः किमित्याह । ततो ऽनुतापात् खलुर्वाक्यालकारे एषाआलोचना स फला सार्थिका ( मुणेयव्वाति ) ज्ञातव्येति गाथार्थ ॥

अथ कथमनुतापादालोचना सफला भवतीत्यत आह ॥

जहसंकिलेसओ इह, वंधो वेदारणओ तहा विगमो ।
तं पुण इमीए णियमा, विहिणा स इ सुप्पउत्ताए ॥

व्याख्या । यथा यद्वत् सक्लेशाद्रागादिलक्षण चित्तमालिन्या दिह कृत्यासेवने वधो ऽशुभकर्म्मोपादनं जीवस्य भवति व्यवदान दैप् शोधन इति वचनात् शुद्धिः ततो व्यवदानात्पश्चात्तापरूप चित्तविशुद्धेः सकाशात्तया तद्वद्विगमा निर्जरणमकृत्यकरणजन्याशुभकर्मणो भवति यद्येव ततः किमित्याह ( तपुणत्ति ) तत्पुनर्व्यवदानमनया नियमादवश्यतया भवति विधिना विधानेन वक्ष्यमाणेन सकृत्सदासुप्रयुक्तया भावसार प्रवर्तितयेत्यतः सफलेयमिति गाथार्थ विधिना प्रयुक्ता लोचनाव्यवदानतः सफला स्यादित्युक्तमयोक्तस्यैव विपर्ययमाह ।

इहरहा विवज्जओ वि हु, कुवेज्ज किरिया दिणायतोणेओ।
अवि होज्ज तत्थ सिद्धीआणाभंगा न ऊणएन्य।

व्याख्या । इतरथाऽविधिप्रयोगे आलोचना या विपर्ययोऽपि व्यवदानाभावेन आलोचना निष्फलत्वमपि अनर्थफलत्वं वा स्यात् न केवल विधिना सफलत्वमविधिना विपर्ययोऽपि स्यादित्यपिशब्दार्थः हुर्वाक्यालकारे । कुत एवमिदमित्याह । कुवैद्याक्रियादिज्ञाततः दुर्भिषक प्रवर्तितरोगचिकित्साप्रभृत्युदाहरणेनादि शब्दाद्विविधिविद्यासाधनादि परिग्रहः ज्ञेयो ज्ञातव्यः ।अविध्यालोचनायां विशेषमाह । अपीति सभाव्यत एतत् यदुत भवेज्जायेत पुण्यानु भावात् तत्र कुवैद्य चिकित्सायां सिद्धिः प्रयोजननिष्पत्तिरारोग्यमित्यर्थः न पुनरत्र नत्वविध्यालोचनायामिष्टसिद्धिःकुत इत्याह आज्ञाभगादासोपदेशाननुपालनादिति गाथार्थ एतदेवस्पष्टयन्नाह ॥

तित्थगराणं आणा, सम्मं विहिणा उ होइ कायव्वा ।
तस्सम्महा उकरणे, मोहादतिसंकिलेसोत्ति ॥
वंधो य संकिलेसा, तत्तोण सोवेति तिव्वतरगाओ॥
ईसिमलिणं ण वत्य सुज्झइनीलीरसादीहिं ॥ ७ ॥

व्याख्या । तीर्थकराणा जिनाना माज्ञोपदेशः सम्यक् भावत विधिना नुवक्ष्यमाणविधानेनैव भवति स्यात् कर्तव्या विधिविपर्यये दोषमाह तस्या जिनाज्ञाया अन्यथा तु करणे अविधिविधाने पुनः कुत इत्याह। मोहादज्ञानात् किमित्याह अतिसक्लेश आत्यतिक चित्तमालिन्य भवति इति शब्दः समाप्ताविति वधश्चा शुभकर्मवधः पुन सक्लेशादुक्तरूपाद्भवाति । किंचेतस्ततः सक्लेशात्स सः नैवासौ कर्मवधोऽपैत्यपगच्छति किंभूतात् संक्लेशादित्याह । तीव्रतरकादकृत्यासेवाहेतुभूतसक्लेशापेक्षयाऽतिशयोत्कटात् अविधालोचना कृताज्ञाभगजन्यादित्यर्थ ॥

इहार्थे दृष्टांतमाह ॥

ईषन्मलिनं मनाग्मलयुक्त न नैव वस्त्रवासः शुद्धयति निर्मलीभवति नीलीरसादिभिर्गुलिकाद्रव्यप्रभृतिभिर्वि हितरमालिन्यहेतुभिरादिशब्दात् रुधिरादिपरिग्रहः । यथाहिपन्मलिन प्रचुरमालिन्यहेतुना शुध्यत्येवमकृत्यासेवाकृतोवधोऽनिगाढतरवधहेतुना आज्ञाभगहेतुभूतसक्लेशेनापैनीति गाथाद्वयार्थ पचा वृ १५॥

व्यवहारे आलोचनायाश्चेमे गुणा ॥

लहुयी ल्हादीजणणं, अप्पपर नियत्ति अज्जवं सोही ।
दुक्करकरणं विणओ, निसल्लत्तं च सोहि गुणाल्लोयणीवो॥

लघुता यथा भारवाही अपहृतभारोलघुर्भवति तथा आलोचको प्युद्धृतशल्यो लघुर्भवति भति लघुता तथा ह्लादन ह्लादिणा

ठिक इप्रत्ययः प्रह्लादि स्तस्याजननमुत्पत्ति र्ह्लादिजननं- प्रमोदोत्पाद इति यावत् तथा ह्यतीचार धर्म्मततस्य चित्त- स्य मलयगिरि पवनसपर्क्केणेव आलोचना प्रदानेनाती चार धर्म्मा पगततो भवति सविज्ञानां परम मुनीनां महाप्रमोद इति । तथा ( अप्पपर नियत्तित्ति ) आलोचना प्रदानत स्वयमात्मनो दोषेभ्योनिवृत्ति कृता तांचद्दृष्ट्वाऽप्यन्ये आलोचना भिमुखा भवतीत्यन्येषामपि दोषेभ्यो निवर्तनमिति । तथा यदतीचारजात प्रति सेवित तत्परस्मै प्रकटनामात्मन आर्जवं सम्यग्विभावित भवति । आर्जव नाम अमायाविता तथा अतीचारपंकमलिनस्यात्मनश्चरणस्य वा प्रायश्चित्तजलेन अतीचार पंकप्रक्षालनतो निर्म्मलता शोधि । तथा दुष्करकरणं दुष्करकारिता तथाहि यत्प्रतिसेवन तन्नदुष्करं अनादिभवा भ्यस्तत्वात् यत्पुनरालोचयति तत् दुष्कर प्रवलमोक्षा नुयायि वीर्योल्लास विशेषेणैव तस्य कर्तुमशक्यत्वात् । तथा ( विणउत्ति ) आलोचयता चारित्रविनय सम्यगुपपादितो भवति ( नेस्सल्लंत्ति ) मिति सशल्य आत्मा नि शल्य कृतो भवतीति निःशल्यता एते शोधिगुणा आलोचनागुणाः आलो- चनाशोधिरित्यनर्थान्तरत्वात् । व्य० उ० १ ।

आलोचनायांदत्तायां ये गुणा भवन्ति ते भक्तप्रत्याख्यान शब्दे वक्ष्यन्ते ।

( ८ ) कालोचना ग्रहीतव्या तानि स्थानानि ॥

आलोचना येषु कार्येषु कर्तव्या तानि व्यवहारकल्पे यथा ( आलोयणत्ति का पुणकस्स सगासे व होइ कायव्वा । केसु व कज्जेसु भवे गमणा गमणादि एसु तु ) का किंस्वरूपालो- चनेति प्रथमत प्रतिपाद्यं तत स्तदनतर कस्य सकाशे समीपे भवति कर्तव्यालोचनेति वाच्य तथा केषु कार्येषु भवत्या- लोचना तत्र प्रतिपत्ति लाघवाय सक्षेपतो ऽत्रैव निर्वचनमाह । गमनागमनादिकेषु गमने आगमने आदिशब्दात शय्यासं- स्तारकवस्त्र पात्रपादप्रोञ्छनकग्रहणादिपरिग्रहः । तुशब्दो विशेषणे । सचैतद्विशिनष्टि गमनागमनादिष्ववश्यकर्तव्येषु सम्यगुपयुक्तस्याऽदुष्टभावतया निरतिचारस्य छद्मस्थस्याप्र मत्तस्य यते रालोचना भवतीति आह यानि नामावश्यकर्तव्या- नि गमनादीनि तेषु सम्यगुपयुक्तस्याऽदुष्टभावनया निरति- चारस्याप्रमत्तस्य किमालोचनया तामन्तरेणाऽपि तस्य शुद्ध- त्वात यथासूत्र प्रवृत्ते सत्यमेतत्केवलं याचेष्टानिमित्ता सूक्ष्म- प्रमादनिमित्ता वा सूक्ष्मा आश्रवक्रियास्ता आलोचना मात्रेण शुद्ध्यन्तीति तच्छुद्धिनिमित्तमालोचना उक्त च ॥

जया उवउत्तो नेरइयागे ये करेइ ये करणिज्जायत्त जोगा तस्य का विसोही आलोइए आणालोए वा गुरु भणइ तस्य जावइ निमित्ता सुहुमां आसवकिरिया ता उसुज्झंति आलोयणामेत्तणंति ॥

नव का नामालोचनेति यत्प्रथम द्वार तत्सुप्रसिद्धत्वादन्यत्र वा कल्पाध्ययनादिषुव्याख्यात तथापि स्थानाशून्यार्थमिचिद्- च्यते । आलोचना नाम अवश्यकरणीयस्य कार्यस्य पूर्व कार्यसमाप्त नर्ऊ वा यदि वा पूर्व मपि पश्चादपि गुरो परतो यचसा प्रकटीकरण सालोचना उपरितनेषु प्रायश्चित्तेषु केषु चित्स्थानानि केषुचित्र संभवति । तत्र येषु संभवति तत्प्रति- सिद्धयर्थमिदमाह ॥

बिइए नत्थि वियरणाता उ विवेगे तहा वि उस्सग्गो । आलोयणाइ य नियमा सीयसग्गोऽवि य कोसिं वि ॥

द्वितीये सूत्रक्रम· प्रामाण्यानुसरणात् प्रतिक्रमणं तस्मिन् द्वितीये प्रतिक्रमणलक्षणे प्रायश्चित्ते नास्ति विकटना आलो- चना तथाहि सहसाऽनाभोगतो वा यदा किंचिदाचरित भवति यथा मनोज्ञेषु शब्दादिष्विन्द्रिय गोचरमागतेषु एव मनोज्ञेषु द्वेषगमन तदा तदनंतरमेव मिथ्यादुष्कृतमिति ब्रूते तच्च तेनैव शुद्धि यातीति नालोचयाति ( वा भविवेगत्ति ) वा शब्दो वि- भाषायां विवेके विवेकार्हे प्रायश्चित्ते आलोचनाया विभाषा कदाचित् भवति कदाचिन्नभवतीतिभाव । तथाहि तत् विवेकार्हं नाम प्रायश्चित्त यत्परिस्थापनया शुध्यति यत्र- यदकल्पिकमाधाकर्म्मिकादि पूर्वमविदितत्वेन गृहीत पश्चाच्चक- थमपि ज्ञातं तत्यदा परिस्थापयत· शुभभावनाध्यारोहे केव- लज्ञानमुत्पद्यते । तदाऽसौ कृतकृत्यो जात इति नालोचयति अनुत्पन्नेतुज्ञानातिशये नियमादागत्य गुरुसमीपमालोचय- तीति । ( तहाविउस्सग्गेऽति ) यथा विवेके आलोचना विभा- षा तथा व्युत्सर्गेऽपि किमुक्त भवति । व्युत्सर्गेऽपि कदाचिदा- लोचना भवति । कदाचिन्नभवति । यथा स्वप्ने हिंसादिकमा- सेवितं तच्छुद्धिनिमित्तं च कायोत्सर्गं कृतस्तदनन्तरं च शुभ भावनाप्रकर्षित·केवलज्ञानमुत्पादि । मरण वा तस्याऽक- स्मिकमुपजातमिति नास्त्यालोचना अनुत्पन्ने तु ज्ञाने जीवित यावत्नियमादवश्यविकटना यत् आलोचयति ॥ यथा ॥

स्वप्ने मयाहिंसादिकमासेवित कार्योत्सर्गेण च विशोधित- मिति ॥

तच्चालोचनार्हस्प्रायश्चित्तमेतेषु स्थानेषु भवति । व्य० उ० १

करणिज्जेसु उजोगेसु, छउमत्थस्स भिक्खुणो ॥
आलोयणपाच्छित्तं, गुरूणं अंतिएसिया ॥

करणीया नाम अवश्य कर्तव्या योगा श्रुतोपदिष्टा सयमहेतव· क्रिया अथवा योगामनोवाक्कायव्यापारा· ( जोगो विरिय थामो उच्छाहपरक्कमो तहा चेट्ठा सत्ती सामत्थ चिय जोगस्स हवंति पज्जाया ) इति वचनात् तेचाऽवश्यकर्तव्य इमे कूर्म इव वसतौ सं- लीनगात्र सुप्रणिहितपाणिपादाऽवतिष्ठते वचनमपि सत्यमस- त्या मृषां वा ब्रूते न मृषां वेति मनसोऽप्यकुशलस्य निरोधन कुश- लस्योदीरणमेव रूपेषु करणीयेषुसम्यगुपयुक्तस्य निरतिचार- स्येति वाक्यशेष· सातिचारस्योपरितनप्रायश्चितसम्भवात् छद्मस्थस्य परोक्षज्ञानिनो नतु केवलज्ञानिन स्तस्य कृतकृत्यत्वे- नालोचनाया अयोगात् उक्तंच ( छउमत्थस्स हवइ आलोयणा न केवलिणो ) इति तच्चा तत्रोक्तेन प्रकारेण भिक्षत इत्येव- शीलो भिक्षुस्तस्य यतेरालोचनाप्रायश्चित स्यात्तदपि च गुरूणामंतिके समीपे नान्येषामिति ॥ प्रव० द्वा० ९८ धर्म. अ० ३ ॥

इह करणीया योगा इति सामान्येनोक्तम् ।
अधुनानामग्राह करणीययोगप्रतिपादनार्थमाह व्य उ. १ ।

भिक्खवियार विहारे, अण्णगुय एवमाइकज्जेसु ।
अविगडियंमि अविण तो, होज्जअसुद्धे व परिभोगो ॥

भिक्षाया विचारे विहारे अन्येष्वपि चैवमादिकेषु कार्येषु आलोचना प्रायश्चित्त भवतीति वर्तते इयमत्र भावना गुरु- मापृच्छ्य गुरुणाऽनुज्ञात सन श्रुतोपदेशेनोपयुक्त स्वयोग्य- भिक्षावस्त्रपादशय्यासंस्तारकपादप्रोञ्छनादि यदि वा आचा- र्यादेर्योग्य ग्लानशैक्षकासमर्थप्रायोग्यवस्त्र - पात्रान्नपानौषधादि गृहीत्वा समागतो विचार उच्चार भूमि-

स्तस्माद्वा समागतो विहारो वसतावस्वाध्यायिक तमकृत्वा-घसते रन्यत्र गमनं तत एवमादिग्रहणचैत्यवदनानिमित्तं पूर्व-गृहीतपीठफलकशय्यासस्तारकप्रत्यर्पणानिमित्त वहुश्रुता-पूर्वसविविग्नानां वदनप्रत्यय वा सशयव्यवच्छेदाय वा श्राद्ध-स्वज्ञात्यवपएणाविहाराणामववोधाय वा साधर्मिकाणां वा सयमोत्साहनिमित्त हस्तशतात्परतरमासन्न वा गत्वा समा-गतो यद्यपि नास्ति कश्चिदतीचारस्तथापि यन्नापि यन्ना विधि-गुरूसमक्षमालोचयितव्यम् अन्यन्ना सूक्ष्मचष्टे निमित्तानां सूक्ष्म प्रमादनिमित्तानां वा क्रियाणां शुद्धभावात् अन्य-थानिरतिचारोऽपि यदि गुरोः समक्ष नालोचयति ततोऽविनयो भवति । अशुद्धपरिभोगो वा । तथाचाह । अविकटितेऽनालो-चितेऽविनयोऽशुद्धे वा परिभोगो भवेत्आलोचिते तूभयदोषा-भाव.नत्वविनयदोषाभाव.स्यादशुद्धपरिभोगाभाव.कथमुच्यते कनाऽपि साधुना भिक्ष प्रचुरासत्कारपुरस्सरा लब्धा तस्य शकितमुपजात किंनामेय भिक्षा शुद्धा वा तत्र यद्यनालोच्य भुक्ते ततोऽशुद्धपरिभोगो भवति तेनालोचित आचार्येण पृष्ट-मन्यदिवसेषु तस्मिन् गृहे कीदृशी भिक्षा अलभ्यत कियतो वा भोजनकारिण' प्राघूर्णका वा केऽप्यागताः सखंभी वा जाता इत्यादि विभाषा एव च पृष्टे तेन यथावस्थित कथितं-तत' आचार्येण ज्ञाता शुद्धा अशुद्धा वा तस्मादालोचयितव्य॥ अन्यच्च ॥

छउमत्थो तहन्नहा वा हवेज्ज उवओगो ॥
आलोएंतोलहइ सो ज वयियाणईसोया ॥

अन्यच्च किंचान्यदित्यर्थः । छद्मास्थिक. सामान्यसाधुगत. उपयोगस्तथा यथावस्थितवस्त्वनुसारी अन्यथावा विपरीतो भवेत् । आचार्यस्तु मतिमेधाधारणादिगुणसमन्वितत्तया वहुश्रु-ततया वातिशयज्ञानी ततः शकितमालोचिते अशकितमालो चितो नि शकित करोति तथा यद्यपि गृह्णत' शकितमुपजात । तथापि । कदाचिदालोचयन् स्वप्रज्ञयाऽप्यूहेत तत शुद्धम् मशुद्ध वा स्वयमेव जानाति यदि वा तदीयामालोचनां श्रुत्वा श्रोताऽप्याचार्यादिक पूर्वोक्तेनप्रकारेणयाऽविवा आचार्यादि-कस्य पार्श्वे वहवो लोका समागच्छन्तिवहुश्चयश्चवहु श्रृणवन् कदाचिच्चमपि विषय लोकत. श्रुत्वा जानाति शुद्धमशुद्ध वा तस्मादालोचयितव्य । यदुक्त ।(गुरूण अतिपे सिया)इति तत्र स्यादित्यस्य व्याख्यानमाह ॥

आसंकमवहियंमि य होइ सिया अवहिए तयं पगयं ॥
गणतत्तिविप्पमुक्के तिक्खवे वावि आसंका ॥

स्यात्शब्द आशकमिति प्राक् तत्वाद्याशकायामवधृते चार्थे आशका नाम विभाषा यथा स्यादिति कोऽर्थ ॥ कदाचिद्भवेत् कदाचिन्न भवेत् । अवधृत नाम अवधारण तत्र तयोर्द्वयोरर्थयोर्मध्येऽवधृतेऽवधारणे प्रकृतमधिकार । अवधारणार्थोऽत्रस्याच्छब्द इतिभाव । ततोऽयमर्थ ॥ गुरु-णामन्तिकेनियमादालोचना यदि वा आशकायामपि कृत तत्रायमर्थ ॥ गुरुणामतिके स्यात्तावदालोचना यदि पुनरा-चार्यो गणतप्तिविप्रमुक्तो भवति तत स्तस्मिन्गणतात्तिविप्रमुक्ते-उपाध्यायस्य समीपे आलोचना अथोपाध्यायस्याऽपि कुत्रा-पिकार्ये श्राद्धादिकथनैर्वा व्याक्षेपस्तस्तोऽन्यस्य गीतार्थस्य तदभावे गीतार्थस्याऽपि समीपे आलोचयितव्य गतमालो-चनाप्रत्ययश्चिनम् आलोचनीयाऽतिचारा व्यवहारशब्दे ।

तिएहमइक्कमाणं आलोएज्जा पमिकमेज्जा णिंदेज्जा गराहिज्जा जाव पमिवज्जेज्जा तं जहा णाणाइक्कमस्स दंसणाइक्कमस्स चरिता इक्कमस्स एवं वइक्कमाणं अइ-याराणं अणायारा एणं स्था ठा ३ ॥

अतिक्रमाणांत्रयाणां गुरवे निवेदनम् ॥

तिएह अइक्कमाणति । षष्ठ्या द्वितीयार्थत्वा त्रीनतिक्रमाना-लोचयेत् ।गुरवे निवेदयेदित्यादि ।प्राग्वत् नवर यावत्करणात् विसोहेज्जा विउट्टेज्जा अकरणयाए अब्भुट्ठेज्जा अहारिहं तवो कम्म पायच्छित्तमित्यध्येतव्यमिति ॥ स्था. टी. । अथालोचयितव्यापराधदर्शनार्थ माह पचाशके वृ. १५ ।

आलोएयव्वा पुण अइयारा सुहुमवायरासमं ।
णाणा यारादिगया पंचविहो सोय विएणेओ ११।

व्याख्या । आलोचना विधिस्तावदय मालोचयितव्याः पुन' प्रकाशनीयास्तु अतीचारा अपराधाः सूक्ष्मबादराः लघु गुरुका न तु लघवएव वादरा एववा सम्यग् भावशुध्याज्ञा-नाचारादिगता ज्ञानदर्शनचारित्रतपोवीर्याचारविषया. पंच-विध. पचप्रकार. स च आचार. पुनर्विज्ञेयो ज्ञातव्य इति गाथार्थः ।

१ क. पुनस्सोऽतिचारः कुतोवा प्रभृत्यालोचयितव्यमिति भत्तपच्चक्खाण शब्दे ॥

( ए ) द्रव्यादिचतुर्विधमालोचनीयं॥

किंपुनस्तदालोचनीय । उच्यते । चतुर्विध । द्रव्यादि तया चाह ।

( वेयणमचित्तदव्व जणवयसट्ठाणे होइ खेत्तम्मि ।
दिण निसि सुभिक्ख दुभिक्खकाले भावम्मि हेट्ठियरे ) ॥

द्रव्यतश्चेतन सचित्तमुपलक्षणमेतत् । मिश्र वा अचित्तम-चेतन वा अकल्पिक यत्किंचित्सेवित क्षेत्रतो जनपदे वा अध्वनि वा कालतो दिने निशिवा यदि वा सुभिक्षे वा दुर्भिक्षे वा भावे हेट्ठेयरे सप्तमी तृतीयार्थे । न्हृष्टेन इतरेण वा ग्लानेन सता यतनया वा दर्पतः कल्पतो वा लोचयति । कथमित्याह ( जह वालो जपंतो कज्जमकज्ज चउज्जय भणई । तं तहा आलोएज्जा मायामयविप्पमुक्कोउ ) ।

यया वालो मातु.पितुर्वा पुरतो जल्पन् कार्याकार्यञ्च ऋजु कमकुटिल भणतितया आलोचकोऽपिमायामदाविप्रमुक्त' सन् तदालोचनीय । यथा ऋजुभावेनालोचयेत् व्य उ. ४ ॥

गोचरचर्यात' प्रतिनिवृत्तस्यालोचना पञ्च वस्तुके । यथा । ( चिंतितु जोगमखिल नवकारेण त ओ उ अरित्ता ।
पढिउण थयताहे साहू आलोअए विहिणा ॥ ३ ॥ )

पुन. चिंतयित्वा योगमखिलसामुदानिक नमस्कारेण ततश्च तदनंतर पारयित्वा णमोअरहताण मित्यनेन । तत पठि-त्वा स्तवमितिश्चतुर्विंशतिस्तवपाठानन्तर गुरुसमीप गत्वा साधुर्भावतश्चारित्रपरिणामापन्न सन्नालोचते तद्भिक्षानिवे-दन कुर्याद्विधिना प्रवचनोक्तेनेति गाथार्थ । प. व. ॥ गोचरचर्याया आगत्य गुरोरावेद्यालोचन गोचरचर्याशब्दे॥ गोचरचर्यायामकृत्य प्रतिपेद्यालोचयतो मोक्षमार्गाराध-कत्वमाराधना शब्दे ॥ भ० ॥ श ८ उ. ६ ॥ यच्चहारकल्पे ॥

( १० ) अपराधालोचनायां प्रशस्ताऽप्रशस्तद्रव्यादयः ॥
अपराधालोचनामधिकृत्य प्रशस्ताप्रशस्तद्रव्यादयो यथा व्य० ॥ १ ॥

दव्वादिचउरभिग्गह, पसत्थमपसत्थे ते दुहेक्केक्के ।
अपसत्थेवज्जेउं पसत्थएहिं तु आलोए ॥

अपराधालोचनायां दीयमानायां द्रव्यादयो द्रव्यक्षेत्रकालभावाश्चत्वारश्चतुःसंख्याका अपेक्षणीया भवति । तथा ( अभिग्गहत्ति ) दिगामभिग्रहः कर्तव्यः । ते च द्रव्यादयो दिगश्च एकैकं प्रत्येकं द्विधा द्विप्रकारास्तद्यथा । प्रशस्ता अप्रशस्ताश्च तत्र प्रशस्तान् द्रव्यादीन् अप्रशस्तांश्च दिशो वर्जयित्वा प्रशस्तैर्द्रव्यादिभिर्दिग्विशेषैश्च । किमुक्तं भवति । प्रशस्तेषु द्रव्यादिषु प्रशस्ताश्च दिशोऽभिगृह्य आलोचनां दद्यात् ॥

तत्राप्रशस्तद्रव्यादिप्रतिपादनार्थमाह ॥

भग्गघरे कुड्डेसु य, रासीसु य जे दुमा य अमणुन्ना ।
तत्थ न आलोएज्जा, तप्पडिवक्खदिसा तिन्नि ॥

यत्र स्तम्भकुड्या कुड्यादीनामन्यतमत्किमपि पतितं तत् भग्नगृहं तत्र तथा ( कुडेसुत्ति ) कुड्यग्रहणात् कुड्यमात्रा विशेषे यत्र पाठांतरं (रुद्देसुय) इति तत्र रुद्देषु रुद्रगृहेषु तथा राशिषु असनोज्ञतिलमापकोद्रवादिधान्यराशिषु ये च द्रुमा अमनोज्ञा निष्कटकिप्रभृतयोऽमनोज्ञा अप्रशस्ता सूचिते तेष्वप्याश्रयभूतेषु उपलक्षणमेतत् अप्रशस्तासु तिथिषु अप्रशस्तेषु च सन्ध्यागतादिषु नक्षत्रेषु अप्रशस्ताश्च याम्यादिदिशोऽभिगृह्य नालोचयेत् । किंतु तत्प्रतिपक्षे प्रशस्तद्रव्यादिरूपे आलोचयेत् तथा प्रशस्ताश्च तिस्रो दिशः पूर्वामुत्तरां प्रतीचींचाभिगृह्य आलोचयेत् । इदानीममनोज्ञधान्यराश्यादिषु द्रव्यादित्वयोजनामाह ॥

अमणुन्नधणरासी, अमणुन्नदुमायहोंति दव्वंमि ।
भग्गघररुद्दऊसर, पवायदड्ढा इखित्तंमि ॥

अमनोज्ञधान्यराशयो ऽमनोज्ञद्रुमाश्च भवन्ति द्रव्ये द्रष्टव्याः । भग्नगृहं प्रागुक्तस्वरूप ( रुद्दत्ति ) रुद्रगृह ( ऊसरत्ति ) ऊषर यत्र तृणादि नो गच्छति । छिन्नटका तटीप्रपातः भृगुप्रपातादिक वा दग्ध दवदग्धमादिशब्दाच्छिन्नरूढादिपरिग्रहः इत्यादि सर्व क्षेत्र द्रष्टव्य तत्र यत् अमणुन्न दुमाय होति दव्वंमीत्युक्त तदेतत् व्याख्यानयति ॥

निप्पत्तकंटइल्ले, विज्जुहते खारकडुय दड्ढे य ।
अयतउयतंव सीस, गदव्वे धणायअमणुन्ना ॥

निष्पत्रा स्वभावत पत्ररहिता करीरादय । कटकिनो बदरीबब्बूलप्रभृतयः । विद्युद्धता विद्युत्प्रपातभग्नाः क्षारस्मा सोमद्रप्रभृतयः । कटुका कटुकरसा रोहिणी कुटजनिम्बादय । दग्धादावदग्धाः एतान् द्रुमान् अमनोज्ञान् जानीहीति वाक्यशेषः तथैवममनोज्ञधान्यराशयो मनोज्ञा द्रुमाश्च द्रव्ये वर्जनीया । किंतु अयस्त्रपुताम्रसीसकराशयो द्रव्ये वर्जयितव्या ( अमणुन्नधणरासी ) इति व्याख्यानयति । अमनोज्ञानि धान्यानि चनकादि । पुनरप्यमनोज्ञधान्यराशय ॥

सम्प्रति कालतो यदृश्च सा वर्जनीयास्तानाह ॥

पडिकुट्ठिल्लगदिवसे वज्जेज्जाअट्ठमि च नवमिं च ।
छट्ठिं च चउत्थिं बारसिंच, दोण्हंपि पक्खाणं ॥

इह इल्लप्रत्ययः प्राकृतेस्वार्थे प्रतिक्रुष्टा एव प्रतिकुष्टेल्लकाः । ते च ते दिवसाश्च प्रतिकुष्टेल्लकदिवसाः । प्रतिपिद्धा दिवसास्तान्वर्जयेत् । तानेव नामत आह द्वयोरपि शुक्लकृष्णरूपयोः पक्षयोरष्टमीं नवमीं षष्ठीं चतुर्थीं द्वादशीं च । एता हि तिथयः शुभप्रयोजनेषु सर्वेष्वपि स्वभावत एव प्रतिकूलास्ततो वर्जनीयाः इद् कालतोऽप्रशस्त वर्ज्य सन्ध्यागतादिक, नक्षत्र तदेवाह ॥

संज्झागयं रविगयं, विड्डेरं सग्गहं विलंबि च ।
राहुहयं गहभिन्नं, वज्जए सत्तनक्खत्ते ॥

सन्ध्यागत नाम यत्र नक्षत्रे सूर्योऽनतर स्यास्यति । तत् आदित्यपृष्ठस्थितमन्येपुनराहुर्यस्मिन्नुदिते सूर्य उदेति तत् सन्ध्यागतमपरे त्वेव ब्रुवते यत्र रविस्तिष्ठति । तस्माच्चतुर्दश पञ्चदश वा नक्षत्र संगत यत्र रविस्तिष्ठति । पूर्वद्वारिके नक्षत्रे पूर्वदिशा गतव्ये यदा अपरयादिशा गच्छति । तदा तत् विद्वार विगतद्वारमित्यर्थः । यत्तत्क्रूरग्रहेणाक्रांत तत् सग्रह विलंबि यत् सूर्येण परिभुज्य भुक्त अन्ये त्वाहुः । सूरगतान् नक्षत्रान् पृष्ठतस्तृतीय तत् पृष्ठतस्तृतीयं विलबि इति । राहुहतं यत्र सूर्यस्य चंद्रस्य वा ग्रहणं यस्य मध्ये नग्रहोऽगमत् ग्रहभिन्नं । एतानि सप्तनक्षत्राणि चन्द्रयोगयुक्तानि वर्जयेत् । यत एतेष्विमे दोषाः ॥

संज्झागयंमि कलहो, होइ कुभत्तं विलंबिनक्खत्ते ।
विड्डेरपरविजयो, आदिच्चगए अनिव्वाणी ॥
जं सग्गहंमि कीरइ, नक्खत्तेतत्थवुग्गहोहोइ ।
राहुह यंमि यमरणं, गहभिन्ने सोणिउग्गालो ॥

संध्यागते नक्षत्रे शुभप्रयोजनेषु प्रारभ्यमाणेषु कलहो राभिर्भवति । विलवनक्षत्रे कुभक्तं विद्वारे परेषां शत्रूणां विजयः । आदित्यगते रविगते अनिर्वाणिरसुखं सग्रहे पुनर्नक्षत्रे यत्क्रियते तत्र व्युद्ग्रहः सग्रामो भवति । राहुहते मरण ग्रहभिन्ने शोणितोद्गारः शोणितविनिर्गमः । एव भूतेष्वप्रशस्तद्रव्यक्षेत्रकालभावेषु नालोचयेत् किंतु प्रशस्तेषु तत्र प्रशस्ते द्रव्ये शाल्यादिप्रशस्तधान्यराशिषु मणिकनकमौक्तिकवज्रवैडूर्यपद्मरागादिराशिषु च प्रशस्तं क्षेत्र साक्षादाह ॥

तप्पडिवक्खेखेत्ते, उच्छुवणा सालिचेइयघरेवा ।
गंभीरसाणुणाए, पयाहिणावत्तउदयएय ॥

तस्य प्रागुक्तस्याप्रशस्तस्य क्षेत्रस्य प्रतिपक्षे प्रशस्तेक्षेत्रे इक्षुवने उपलक्षणमेतत् । आरामे वा पत्रपुष्पफलोपेते ( सालित्ति ) वन शब्दोऽत्रापि सवध्यते । शालिवने चैत्यगृहे वा शब्दो विकल्पो न तथा गम्भीरे गम्भीर नाम भ्रमरत्वादिदोष वर्जित दोषजनेन च प्रायेणालक्षणीयमध्यमभाग स्थान गम्भीरमस्याप्रमिति वचनात सानुनादे यत्रोच्चरिते शब्दे प्रतिशब्द समंतात् उत्तिष्ठति । तत्सानुनादे तथा प्रदक्षिणावर्त्तमुदक यत्र नद्यां पद्मसरसि वा तत् प्रदक्षिणावर्त्तोदक तस्मिन्वा वशब्दो वा शब्दार्थ क्वचिद्वा शब्दस्यैव पाठ । प्रशस्त कालमाह ॥

उत्तदिणसेसकाले, उच्चट्ठाणा गहाय भावमि ।
पुव्वदिसउत्तरा वा, चरंति य जाव नवपुव्वी ॥

उक्तानि यानि दिनानि अष्टम्यादीनि तेभ्यो ये शेषा द्वितीयादयो दिवसास्ते च स कालश्च उक्तदिनशेषकालस्तास्मिन्प्रशस्ते व्यतीपातादिदोषवर्जिते उपलक्षणमेतत् । प्रशस्ते च करणे प्रशस्ते च मुहूर्त्ते एतत् कालतः प्रशस्तमुक्त भावतः प्रशस्तमाह । उच्च स्थान येषान्ते उच्चस्थाना ग्रहाः । भावे भावविषय प्रशस्तं । किमुक्त भवति । भावत उच्चस्थाने गतेषु तत्र ग्रहाणामुच्च स्थानमेव ( सूर्यस्य मेष उच्चः स्थान। सोमस्य वृषः। मंगलस्य मकरः। बुधस्य कन्या बृहस्पते कर्कटकः। शुक्रस्य मीन। शनैश्चरस्य तुला। सर्वेषामपि च ग्रहाणामात्मीयादुच्चः स्थानात् यत्सप्तमं स्थानं तत् नीचः स्थान। अथवा भावतः प्रशस्ता ये सोमग्रहा बुधशुक्रबृहस्पतिशशिन एतेषां सवधिषु राशिषु एतैरवलोकितेषु च लग्नेषु आलोचयेत् । तथा तिस्रोदिशः प्रशस्ता ग्राह्याः। तद्यथा पूर्वा उत्तरा वरती च वरती नाम यस्यां भगवानर्हन्विहरति समान्यत केवलज्ञानी मनःपर्ययज्ञानी अवधिज्ञानी चतुर्दशपूर्वी त्रयोदशपूर्वी यावन्नवपूर्वी यदि वा योयस्मिन् युगे प्रधान आचार्य स प्रातिहारिकान् यया विहरति। एतासां तिसृणां दिशामन्यतमस्या दिशोऽभिमुख आलोचनार्होऽवतिष्ठते तस्येयं सामाचारी ॥

निसज्जासति पमिहारी य,किइकम्मं काउयं जलुकुरुओ।
पहुपमिसेवरिसां, सुयअणुण्णवेउं निसज्जमातो ॥

आत्मीयकल्पैरपरिशुक्तैराचार्यस्य निपद्यां करोति। असति आत्मीयकल्पानामभावे अन्यस्य सत्कान् वा कल्पान् गृहीत्वा करोति। कृत्वा च यद्याचार्य पूर्वाभिमुखो निषीदति तत आलोचकोदक्षिणत उत्तराभिमुखोऽवतिष्ठते। अथाचार्य उत्तराभिमुखो निषण्ण। तत आलोचको वामपार्श्वे पूर्वाभिमुखस्तिष्ठति। वरती च दिशं प्रत्यभिमुखो भवति। तत कृतिकर्मद्वादशावर्तवंदनक कृत्वा प्रवृद्धोऽञ्जलियेन स प्रांजलिः। उत्सर्गत उत्कटुकस्थित सन् आलोचयेत्। यदि पुनर्बहुप्रतिसेवितमस्तीति चिरेणालोचनापरिसमाप्तिमुपयास्यति तावत च कालमुत्कुटुकः स्यातुं न शक्नोति। यदि वा अर्शोरोगवत उत्कुटुकस्य सतोऽर्शांसि क्षोभमुपयांति ततो बहुप्रतिसेवी। अर्शः सुबहुसु गुरुमनुज्ञाप्य निपद्यायामौपग्रहिकपादप्रोञ्छने वा अन्यस्मिवा यथार्हे आसने स्थितः आलोचयति किंपुनस्त दालोचनीय उच्यते। चतुर्विध द्रव्यादि। तथा चाह ॥

चेयणमचित्तदव्वं, जणवयसद्धाणे होइ खेत्तंमि।
दिणनिसिसुभिक्ख, दुब्भिक्खकाले भावंमिहेट्ठियरे ॥

द्रव्यतश्चेतन सचित्तमुपलक्षणमेतत्। मिश्र वा अचित्तमचेतनं वा अकाल्पिक यत्किंचित्सेवित क्षेत्रतो जनपदे वा अध्वनि वा कालतो दिने निशि वा यदि वा सुभिक्षे वा भावे हेट्ठियरे सप्तमी तृतीयार्थे हृष्टेन इतरेण वा ग्लानेन सता यतनया वा दर्पत कल्पतो वा तत् आलोचयति ॥

( ११ ) यथाभूतेषु-द्रव्यादिष्वालोचना-तादृशानां प्रतिपादनम् ॥

सम्प्रति यथाभूतेषु द्रव्यादिष्वालोचना तथाभूतद्रव्यादि प्रतिपादनार्थमाह ॥ १ व्य० १ उ. ॥

आलोयणा विहाणं,तं चेव जं दिव्वखित्तकाले य।
भावे सुद्धमसुद्धो, ससणिद्धे सातिरेगाइं ॥ १ ॥

आलोचनाविधान तदेवायाऽपि सविस्तरमभिधानस्य यद्वक्तं प्रथमसूत्रे (दव्वादिचउरभिगहे ) त्यादिना ग्रथेन तत प्रागुक्तदोषवर्जिता आलोचना प्रशस्ते द्रव्ये क्षेत्रे काले भावे च प्रागुक्तस्वरूपे दातव्या नाऽप्रशस्ते। इह प्रतिसेवितं द्विधा भवति। शुद्धमशुद्ध च। तत्र यत् शुद्धेन भावेन प्रतिसेवित यतनया च तत् शुद्धं । तच्च गुरुत्वादेते न प्रायश्चित्तविषया। यत्वशुद्धेन भावेन प्रतिसेवितमयतनया च तदशुद्ध । तच्च प्रायश्चित्तविषयेऽशुद्धत्वात् तस्मि श्चाशुद्धे प्रायश्चित्तानि केवलानि मासिकादीनि सातिरेकाणि च तत्र सातिरेकाणि ( ससिणिद्धे ) इति सस्निग्धे हस्ते मात्रके वा सति तेन भिक्षाग्रहणत उपलक्षणमेतत् तेन बीजकासघट्टनादिनाऽपि सातिरेकाणि द्रव्याणि तत्र सातिरेकाणि द्रष्टव्यानि ॥ व्य०गत्वा० ॥

( १२ ) आलोचनासमयवर्णनम् ॥

कालो पुण एताए, पक्खादी वण्णितो जिणिंदेहिं ॥
पायं विसिट्ठिगाए, पुव्वायरिया तहा चाहु ॥ ९ ॥

व्या० । कालोऽवसरः पुनः शब्देऽवेव योज्य। आलोचनाया विधिस्तावदयं। काल पुनरेतस्या आलोचनायाः पक्षादिरर्द्धमासप्रभृतिरादिशब्दाच्चतुर्मासादिग्रहः वर्णित उक्तोजिनैरर्हद्भिः प्रायो बाहुल्येन। प्रायोग्रहणं यदैव विशिष्टमपराधमापन्नस्तदैवालोचनां कदाचित्करोति ग्लानत्वोऽस्थितोदीर्घोऽध्वगताद्विर्वा न पक्षादिकमपेक्षत इत्येतदर्थसूचनार्थं किं सर्वस्यालोचनाया पक्षादिकाल इत्याह। विशिष्टकाया विशेषवत्या सामान्या पुनरावश्यकद्रव्ये प्रतिदिनं विधीयत एवेति पक्षादिकमालोचनाकालं पूज्यवचनेन दर्शयितुमाह । पूर्वाचार्या भद्रबाहुस्वामिमिश्रास्तया च तेनैव प्रकारेण पक्षादिप्रतिपादनपरतया आहुर्ब्रुवत इति गाथार्थ यदाहुस्ते ।

तदेवाह ॥

पक्खियचाउम्मासे, आलोयणणियमसो उ दायव्वा ॥
गहणं अभिग्गहाण य, पुव्वगाहिए णिवेएउं ॥१०॥

व्या० ॥ पक्षेऽर्द्धमासे भव पाक्षिकं पर्व चतुर्दशी पञ्चदशी वा। चतुर्षु मासेषु भवं चातुर्मासं पर्व च ततो द्वन्द्वैकत्वात्पाक्षिकचातुर्मासे किमित्याह ॥ आलोचना उक्तार्था ह्रस्वत्व प्राकृतत्वात् ( नियमसाउत्ति ) सकारस्य प्राकृतत्वान्नियमेन वावश्यतयैवान्यनियमा दातव्या देया। तथा ग्रहण चोपादान विधेयमभिग्रहाणां नियमानां चः समुच्चयार्थो योजितश्च पूर्वगृहीतान् प्रागुपात्तान् निवेद्य गुरोराख्यायेति गाथार्थ ॥ किंपुन पक्षादावभिमतेयमित्याह ॥

जीयमिणं आणाओ, जयमाणस्सविया दोससब्भावा ॥
पम्हसणपमायाओ, जलकुंभमलादिणाएण ॥ ११ ॥

व्या० ॥ जितमाचरित पूर्वमुनीनामिद पक्षादावनतिचारणामप्योघत आलोचनादान तया आज्ञात आप्तोपदेशात्पक्षादावालोचनेति प्रकृत तथा यतमानस्याऽपि च संयमे घटमानस्याऽपि चास्तामितरस्य दोषसद्भावादतिचारसंभवादालोचनेति प्रकृतमथकथं यतमानस्यातिचार इत्याह। ( पम्हसणाति ) विस्मरणं प्रमादश्च प्रमत्तता ताभ्यामत्रोदाहरणमाह। जलकुंभमलादि ज्ञातेन नीराधारघटमालिन्यहेतुप्रभृत्युदाहरणेन यथाहि जलकुंभे नित्य प्रक्षाल्यमानेऽपि मलसञ्चयो भवतीत्येव यतमानस्याऽप्यतिचारभाव आदिशब्दात् ग्रहकचवरादिग्रह । आह।

जहगेहं पतिदियहंपि, सोहियं तहय पक्खसंधीसु।

सोहियव्वं सविसेसं, एवमिहयंपि नायव्वम् ॥
इति गाथार्थः ॥
आलोचना परसाक्षिकी कर्तव्या पंचा० वृ. १५
आलोयणं अदाउं, सति अण्णम्मिवि तहप्पणो दाउं ।
जे विहु करेंति सोहिं, ते विसल्ला विणिद्दिट्ठा ॥
आलोचनां विकटनामदत्वाऽविधाय शुद्धिं कुर्वीति । स्वकल्पनया तथा ( सइअन्नंमि विति ) अन्यस्मिन् परस्मिन् गीतार्थे सत्यपि विद्यमानेऽपि तथेति समुच्चये आत्मनः स्वस्यैव दत्वा विधाय लज्जादेः कारणात् अनेन च परसद्भावे परस्यैव तां यच्छन् शुद्ध्यतीत्युक्तं भवति यदाह ।
छत्तीसगुणसंपन्ना, गएणते णावि अवस्सकायव्वा ।
परसक्खिया विसोही, सुट्ठवि ववहारकुसलेण ॥
पराभावे त्वात्मनोऽपि यच्छन् शुद्ध्यति केवलसिद्धान् साक्षीकृत्य यदाह । ( सिद्धा व साणायतया ) गीतार्थप्राप्तौ निवेदयिष्यामीत्यध्यवसायात् स्वयमेव प्रायश्चित्तं प्रतिपद्य तद्विदधानो गीतार्थः शुद्ध्यतीत्युक्तं भवतीति । येऽपि अपिशब्दाद्ये न कुर्वत्येव । हुशब्दोऽलंकृतौ । कुर्वन्ति शोधिं विशुद्धिं प्रायश्चित्तप्रतिपत्त्यादिना ते तदन्येऽपि सशल्याभावशल्योपेता विनिर्दिष्टाः उक्ता जिनैरिति गाथार्थः । स्वयं शल्योद्धारे सशल्यतैवेति दृष्टांतेनाह ।
किरियएणुणाविसंमंपि, रोहिउ जह वणो ससल्लोउ ।
ओहोइ अपच्छो, एवं अवएहवणो विचिनो ॥ ४० ॥
क्रियाऽइनापि व्रणचिकित्सावेदिनाप्यास्तां तदन्येन सम्यगपि सर्वथाऽप्यास्तामसम्यक् रोहितो रूढतां नीतः यथा यद्वत्व्रणो देहक्षतं सशल्यो दुष्टगर्भोपातः सन्तुशब्दोऽवधारणे भिन्नक्रमश्च भवति जायते अपथ्य एवाहित एव परिणतौ मरणकारणत्वात् एवं तद्वदन्यस्मै अनिवेदितशल्यस्यापथ्या एवानन्तमरणादिकारणत्वात्कोऽसावित्याह अपराधाव्रणोऽपि चरणरूपशरीराश्रयातिचारक्षतमपि न केवलं देहव्रण एव विज्ञेयो ज्ञातव्यस्तत्वतस्तस्यानुद्धृतत्वादन्यविनिवेदनमेव हि शल्योद्धार इति गाथार्थः ।
इदानीं यस्मै आलोचना दीयते तेनाप्यालोचयितव्यम् इत्येतदेवं प्रदर्शयन्नाह ओघ० ।
( छत्तीसेत्यादि ) जातिकुलबलरूपादिषट्त्रिंशद्गुणसमन्वितेनाऽपि अवश्यं पर साक्षिका विशुद्धिः कर्तव्या सुष्ठुअपिज्ञानक्रियाव्यवहारकुशलो न सुविहितेनेति ॥ व्य० उ १० ।
जह कुसलो वि वेज्जो, अन्नस्स कहेइ अत्तणोवाहिं
विज्जस्स य सोयंतो, पडिकम्मं समारभतो ॥
जाणं तेणविएवं, पायच्छित्तविहिमप्पणो विउणं ।
तहवि य पागडतरयं, आलोएयव्वयं होइ ॥
यथा सुकुशलोऽपि वैद्योऽन्यस्यात्मनो व्याधिं कथयति । सोऽपि वैद्यस्य श्रुत्वा व्याधिकथनं ततः प्रतिकर्म्म समारभते । एवं प्रायश्चित्तविधिनात्मनो निपुणं जाननापि तथापि प्रकटतरमालोचयितव्यं भवतीति कृत्वा अन्यस्य समीपे आलोचयितव्यम् ॥ ओघ० ॥ ग० अधि० १ ॥
( १३ ) कस्य समीपे आलोचना कर्त्तव्या ॥
आलोयणाउपनियमा गीयस्सगीए व केसिंचि । ( आलोयणाउ ) इत्यादि । सा आलोचना नियमादवश्यं तया गीतार्थमिति प्राकृतत्वात् । षष्ठ्यर्थे प्रथमा तस्य गीतार्थस्य सकाशे कर्तव्या नाऽगीतार्थस्य अत्रैव मतांतरमाह । ( अगीयकेसिंवि ) केषांचिदाचार्यणामिदं मतं उत्सर्गतस्तावदाचार्यस्य समीपे आलोचयितव्यं । यदा पुनराचार्यः संज्ञादिप्रयोजनगतो भवति । गीतार्थस्यापि समीपे तदा भिक्षाद्यालोचनीयमिति ॥
गीतार्थस्यालोचना देयेत्युक्तमथ दुर्लभत्वे तस्य यद्विधेयन्तदाह ॥ पंचा० वृ० १५ ॥
सल्लुद्धरणनिमित्तं, गीयस्सन्ने सणाउक्कोसा ॥
जोयणसयाइं सत्त, उवारसवरिसाइ कायव्वा ॥ ४१ ॥
व्या० । शल्योद्धरणनिमित्तमालोचनार्थंगीतस्यगीतार्थस्यगुरोरन्वेषणा तु गवेषणा पुनरुत्कर्षोऽप्युत्कृष्टतः कियात् क्षेत्रकालविषयेत्याह ।
योजनशतानि प्रतीतानि सप्त तु सप्तैव यावत् तथा द्वादशवर्षाणि संवत्सरान् यावत् कर्तव्या विधेयेति । इह च । शेषविशेषणानुपादानेन यद्गीतार्थग्रहणं कृतं तत्सकलोक्तगुणयुक्ताचार्यालाभे संविग्नगीतार्थमात्रस्याप्यालोचनाऽचार्यत्वज्ञापनार्थं यतः श्रूयतेऽपवदतो गीतार्थसंविग्नपाक्षिकसिद्धपुत्रप्रवचनदेवतानामलाभसिद्धानामप्यालोचना देया सशल्यमरणस्य संसारकारणत्वादित्याह च ॥
( सविग्गे गीयत्थेससई पासत्थमाई सा रूवीति) गाथार्थः ॥ प्रवच० द्वा० १२७ ॥
( तथा च व्यवहारकल्पे विहारालोचनामधिकृत्य— ) १ व्य० उ० १ ॥
पक्खियचउवसंवच्छर, उक्कोसं वच्छरउक्कोसं वारसएहवरिसाणं । समणुन्ना आयरिया, फडुगपतितायवियडंति ॥
समनोज्ञा एकसंभोगिका आचार्याः परस्पर तया स्पर्द्धकपतयश्च स्वमूलाचार्यस्य समीपे पाक्षिके तत्राभावे चातुर्मासिके तत्राप्यभावे सांवत्सरिके तत्राप्यसत्यन्यदा ( उक्कोस ) मित्यादि ॥ उत्कर्षतो द्वादशभिर्वर्षैः सूत्रे षष्ठी तृतीयार्थे प्राकृतत्वाद्दूरादप्यागत्य विहार विकटयति प्रकटयति । आलोयंतीत्यर्थः एष गाथाक्षरार्थः । भावार्थो वृद्धसंप्रदायादवसातव्यः ॥
सव्वायं संभोइया आयरिया पक्खिए आलोएंति उभोपएयणीयस्स आलोएइ । रायणितोविओ मरायणियस्स आलोएइ अहसेरायणिओ नाच्छि । जइ पुण ओमराइणितोविओगो वा गीयत्थो न भवइ । तो वा चउम्मासिए आलोएइ तथा वि असंवच्छरिए तथा वि अतसीए जत्थ मिलइ रायणियस्सओ मगीयत्थस्स वा तत्थ उक्कोसेणं वारसहिं वरिसेहिं दूरतोवि आगंतुं आलोएयव्वं । फडुगवइहिं वि आगंतु आलोएयव्वं फडुगवइयावि आगंतुं पक्खियाइ अमूलायरियस्स समीवे आलोएंति इति ॥
तथा च व्यवहारसूत्रम् ॥
जे भिक्खू अन्नयरं अकिच्चगणं पडिसेवित्ता इच्छेज्जा आलोइत्तए जत्थेव अप्पणो आयरियं उवज्झाए पासिज्जा कप्पइ तेसिं तिए आलोइत्तएवा पडिक्कमित्तए वा विउट्टित्तए वा सोहित्तए वा अकरणाए अब्भुट्ठित्तएवा

अहारिहं तवोकम्मं पायच्छित्तं पडिवज्जित्तए वा णो चेव णं अप्पणो आयरियं उवज्झाए पासेज्जा जत्थेव संभोइयं बहुस्सुयं बहु आगमं पासेज्जा कप्पइ से तंम्मत्तिए आलोइत्तए वा जाव पडिक्कमित्तए वा णो चेवणं संभोइयं साहम्मियं बहुस्सुयं बहुआगमं पासे जाव जत्थेव असंभोइयं साहम्मियं बहुस्सुय बहुआगमं पासेज्जा कप्पइसेवं संतिएआलोइत्तए वा जाव पडिवज्जित्तए वा णो चेवणं अन्नसंभोइयं साहम्मियं बहुस्सुयं आगामियं पासेज्जा वा सारूवियं बहुस्सुय बहुआगमं पासेज्जा कप्पइ तंसंतिए आलोइत्तए वा पडिक्कमित्ति वा जाव पडिवज्जीत्तए वा नो चेवणं सारूवीयं बहुस्सुयं बज्झागमं पासेज्जा जत्थेव समणो वासगंपच्छा कडंबहुस्सुयं बज्झागम पासेज्जा कप्पइ से तस्संतिए आलोइत्तए वा जावपडिवज्जित्तए वा णो चेवणंसमणो वासगं पच्छाकडं बहुस्सुयं बज्झागमं पासिज्जा जत्थेव दसमं न्नावियाइं चेइयाइ पासेज्जा कप्पइ से तस्संतिए आलोइत्तए वा जावपडिवज्जित्तए वा णो चेव समन्नावियाइं चेइयाइं पासेज्जा बहियागामस्स वा जाव सन्निवेसस्स वा पाइणाभिमुहे वा उदिणाभिमुहेवा करयलपरिग्गहियं सिरसावत्तं मत्थए अंजलिकट्टु कप्पई सेएएवं ववइत्तए एवइयामे अवराहा एवं तिक्खु त्ता य अहं अवरद्धे अरिहंताणं सिद्धाणं अंतिए आ लोएज्जा पडिक्कमेज्जा निंदेज्जा जाव पायच्छित्तं पडिवेज्जेज्जासित्तिवेमि ॥ ३३ ॥

व्याख्या । भिक्षुरन्यतरत् अकृत्यस्थानं सेवित्वा प्रतिसेव्य इच्छेव । आलोचयितुं स वालोचयितुमिच्छुर्यत्रैवात्मन आचार्योपाध्यायान्पश्येत्तत्रैव गत्वा तेषामतिके समीपे आलोचयेद तीचारं जात वचसा प्रकटीकुर्यात् प्रतिक्रामेन्मिथ्यादुष्कृत तद्विषये दद्याद्यावत्कारणात् निंदे ज्जा गरहेज्जा विउट्टेज्जा विसोहेज्जा । अकरणयाए अब्भुठेज्जा अहारिहं तवोकम्म पायच्छित्त पडिवज्जेज्जा ) इति परिग्रहः तत्र निंदाद्यात्मसाक्षिक जुगुप्सेत् गर्हेत् गुरुसाक्षिक निंद्यात् इह निंदनगर्हणमपि तात्विक तदा भवति यदा तत्करणतः प्रतिनिवर्तते ॥ तत आह ( उवट्टेज्जा ) इति तस्मादकृत्यप्रतिसेवनात् व्यावर्तेत निवर्तेत । व्यावृतावपि कृतात् पापात्तदा मुच्यते यदात्मनो विशोधिर्भवति । तत आह । आत्मान विशोधयेत् । पापमलस्फोटनतो निर्मलीकुर्यात् । सा च विशुद्धिरपुन' करणतायामुपपद्यते । ततस्तामेव । पुन करणतामाह । अकरणतया पुनरभ्युत्तिष्ठेत् पुनरकरणतया अभ्युत्थानेऽपि विशोधिः प्रायश्चित्तप्रतिपत्तिर्भवति । तत आह यथार्हं यथायोग्य तप कर्म्म तपोग्रहणमुपलक्षण छेदादिक प्रायश्चित्त प्रतिपद्येत । यदि पुनरात्मीयेष्वाचार्योपाध्यायेषु सत्सु अन्येषामतिके आलोचयति । ततः प्रायश्चित्त तस्य चतुर्गुरु यदि पुनरात्मन आचार्योपाध्यायान्न पश्येत् अभावाद्दूरव्यवधानतो वा ततो यत्रैव सांभोगिक साधर्मिक विशिष्टसामाचारीनिष्पन्न बहुश्रुत च्छेदग्रंथादिकुशल उद्भ्रामकमुपतावि-

हारिण पाठांतरं बह्वागमसमर्थतः प्रभूतागम पश्येत्तस्यांऽतिके आलोचयेद्त्रापि यावत्करणात्पडिक्कमेज्जा इत्यादि पदकदंबकपरिग्रहः । यदि पुनस्तस्य भावे अन्यस्य सकाशे आलोचयति । तदा चतुर्लघु वक्तव्यं । सांभोगिकसाधर्म्मिकबहुश्रुतस्यांतिके तस्याऽप्यभावे सारूपिकस्य बहुश्रुतस्यांऽतिके समानांतर सरूप तत्र भवः सारूपिको वक्ष्यमाणस्वरूपः तस्याऽप्यभावे यत्रैव सम्यग्भावितानि जिनवचनवासितांतःकरणानि दैवतानि पश्यति तत्र गत्वा तेषामतिके आलोचयेत् तेषामप्यभावे बहिर्ग्रामस्य यावत्करणात् ॥

नगरस्स वा निगमस्स वा रायहणिए वा खेडस्स वा । पट्टणस्स वा दोणमुहस्स वा असमस्स वा संवाहस्स वा संन्निवेसस्स वा ॥

इतिपरिग्रहः प्राचीनाभिमुखोवा उदीचीनाभिमुखो वा सूर्यदिगभिमुख उत्तरदिगभिमुखो वा इत्यर्थः ॥ इह चिरंतनव्याकरणेषु दिश्यपिस्त्रियामभिधेयामामीन्प्रत्ययः स्वार्थे भवति । तत एवं निर्देशः । पूर्वोत्तरादिग्रहणमालोचनायामेतयोरेव दिशयोरर्हत्वात् । करतलाभ्यां प्रकर्षेण गृहीतः करतलप्रगृहीतः । त तथा शिरस्यावर्तो यस्य स शिरस्यावर्तः कंठे कालवदलुकसमासः । त मस्तके अजलिं कृत्वा एव वक्ष्यमाणरीत्या वदेत् ॥

तामेव रीतिं दर्शयति । एतावंतो मे ममापराधाः एतावत्कृत्व एतावतो वारान् यावदहमपराद्ध एवमपराध एवमर्हतां तीर्थकृत कथंभूतानामित्याह । सिद्धानामुपगतमलकल्पकानामतिके आलोचयेदित्यादि पूर्ववदेष सूत्रसक्षेपार्थः ॥

अधुना निर्युक्तिभाष्यविस्तरः । तत्र यदुक्तमकृत्य स्थान सेवित्वेति तद्विषयमुपदर्शयति ।

अन्नयरं तु अकिच्चं, मूलगुणे चेव उत्तरगुणे य ।
मूलं व सव्वदेसं, ए मेव य उत्तरगुणेसु ॥

अन्यतरदकृत्यं पुनः सूत्रोक्त मूलगुणे मूलगुणविषयमुत्तरगुणे वा उत्तरगुणविषय वा तत्र मूल मूलगुणविषय सर्वदेश वा सर्व्वथामूलगुणस्योच्छेदे देशतो वा इत्यर्थः । एवमेवानेनैव प्रकारेण उत्तरगुणेष्वपि द्वैविध्य भावनीय । तद्यथा । उत्तरगुणस्याऽपि सर्वतो देशतो वा उच्छेदेनेति तत्रैव व्याख्यानांतरमाह ॥

अहवा पणगादीयं, मासादीयं वावि जाव छम्मासा
एवं तयारिहं खलु, छेदादि चउण्हवेगयरं ॥

अथवेति अकृत्यस्य स्थानस्य प्रकारांतरतोपदर्शने पचकादिकं रात्रिंदिवपचकप्रभृतिप्रायश्चित्तस्थानमकृत्य स्थान यदि वा मासादि तच्च तावद्यावत्षण्मासाः । एतत् खलु अकृत्यस्थान तपार्ह तपोरूपप्रायश्चित्तार्हंयदि वा छेदादीनां चतुर्णां प्रायश्चित्तस्थानमकृत्यस्थानं तदेवमधिकृत्य स्थान व्याख्याय यथास्वकीयाचार्योपाध्यायादीनामदर्शन संभवति । तथाप्रतिपादयाति ॥

आउयवाघायं, वाहुल्लहगीयं चपत्तकालं तु ।
अपरक्कममासज्ज व,मुत्तामिणंतादिसा जाव ॥

स्वकीयानामाचार्योपाध्यायानामायुषो व्याघातोऽभवत् । जीवितस्य बहुघातसकुलत्वात् यदि वा तस्यैवाऽऽलोचकस्यायुर्यावदाचार्योपाध्यायादिसमीपे गच्छति तावद् न प्रभवति स्तोकावशेषत्वात् । तत आयुषो व्याघात वा आश्रित्य तथा

भविष्यति कालो यत्र दुर्लभो गीतार्थ आलोचनार्हस्तत एष्यन्तं कालमधिकृत्य दुर्लभं गीतार्थं चाश्रित्य तथा जंघावल-परिहान्या रोगातंकेण वा जातोऽपराक्रम आलोचकस्ततस्तं वा प्रतीत्य सूत्रमधिकृतं प्रवृत्तं यावद्दिशादिसूत्रं । अत्र पर आह । ननुपूर्वमेकाकिविहारप्रतिमासूत्राणि व्याख्यातानि । यथा एकाकिविहारे दोषा. । तदनतरं पार्श्वस्थादिविहारोऽपि प्रतिषिद्ध । ततो नियमाद्गच्छे वस्तव्यमिति नियमितं । एवं च नियमिते कथमेकाकी जातो येनोच्यते यत्रैवात्मन आचार्यो-पाध्यायान्पश्येत्तत्रैव गत्वा तेषामंतिके आलोचयेदित्यादि ।

अत्र सूरिराह ॥

सुत्तमिणं कारणियं, आयरियादीण जत्थ गच्छंमि ।
पंचएहं हो असती, एगो व जहिं न वसियव्वं ॥

सूत्रमिदमधिकृतं कारणिकं कारणे भव कारणिकं कारणे मत्येकाकिविहारविषयमित्यर्थः । इयमत्र भावना । बहूनि स्व-स्वाशिवादीनि एकाकित्वकारणानि ततः कारणवशतोयो जात एकाकी तद्विषयमिदं सूत्रमिति न कश्चिद्दोषः अशिवा-दीनि तु कारणानि मुक्त्वा आचार्यादिविरहितस्य न वर्त्तते वस्तुं तथा चाह । यत्र गच्छे पंचानामाचार्योपाध्यायगणा वच्छेदिप्रवृत्तिस्थविररूपाणामसद्भावो यदि वा यत्र पचानाम-न्यतमोऽप्येकोन विद्यते । तत्र न वस्तव्यमनेकदोषसम्भवात्ता नेव दोषानाह ।

एवं असुभगिलाणे परिक्षकुलकज्जमादिवग्गउ ।
अच्छसतिमच्चसा जीवियघाते चरणघातो ॥

एवमुक्तेन प्रकारेण एकादिहीने गच्छे एकोऽशुभकार्ये मृतक-स्थापनादौ अपरो ग्लानप्रयोजनेष्वन्य परिज्ञायां कृतभक्तप्र-त्याख्यानस्य देशनादौ अपर कुलकार्यादौ व्यग्र इति । अन्य-स्य पचमस्याप्यन्यावस्थाप्राप्तस्य आलोचनाया असम्भवेन सत्यस्य सतो जीवनाशे चरणव्याघातश्चरणगात्रभ्रंशश्चरण-भ्रंशे च शुभगतिविनाश. । अत्र पर आह ॥

एवं होइ विरोहो आलोयणापरिणतोउ सुज्झेज ।
एगंतेए पमाणं परिणामो वीन खलु अम्हं ॥

नन्वेव सति परस्परविरोधस्तथाहि भवद्भिरिदानीमेवमुच्य-ते । सशल्यस्य सतो जीवितनाशे चरणभ्रंश । प्राक्तनेवमु-क्तमदत्तालोचनेऽप्यालोचनापरिणामपरिणतः शुद्ध इति ततो भवति परस्परविरोध । अत्र सूरिराह ( एगते णेत्यादि ) न खल्वस्माकं सामर्थ्यनिगूहनेन यथाशक्तिप्रवृत्तिविरहित के-वलपरिणाम एकातेन प्रमाण तस्य परिणामाभासत्वात्किंतु सूत्र प्रमाणीकुर्वतो यथाशक्तिप्रवृत्तिसमन्वित । नचैकाग्यभावं गच्छे वसन् सूत्रमनुवर्त्तते । ततस्तस्य तात्त्विकपरिणाम एव नेति सशल्यस्य जीवितनाशे चरणनाश । पुनरपि वक्तव्यां-तर विवक्षु प्रश्नमुत्थापयति ।

चोयग किं वा कारण, पचएह सती तहिं न वासियव्वं ॥
दिट्ठंता वाणियए, पिंडियअत्थे वसितुकामो ॥ १ ॥

चोदक आह ॥ यत्रपचानां परिपूर्णानामसद्भाव तत्र न व-स्तव्यमित्यत्र किंकारण को नाम दोष ॥ सूरिराह ॥ अत्र अस्मिन्नर्थे वाणिजोपमितार्थेन वस्तुस्तोमेन दृष्टान्त ॥ उप-मागाथायां सप्तमी तृतीयार्थे ॥ इयमत्र भावना ॥ कोऽपि व-णिक् तेन प्रभूतार्थे पोकितस्मन्नः सोऽचिन्तयत् कुत्र मया वस्त-व्यं यत्रतमर्थं परिभुंजेऽहमिति ततस्तेन परिचिन्त्येदं निश्चिक्ये ॥

तत्थ न कप्पइ वासो आहारो जत्थ नत्थि पंच इमे ।
राया वेज्जाधणिमं नेवइया रूवजक्खा य ॥

तत्र गमनं कल्पते वासो यत्रेमे वक्ष्यमाणा. पंच नाधाराः । केते इत्याह । राजा नृपति वैद्यो भिषक् अन्ये च धनवन्तो नैतिका नीतिकारिणो रूपयक्षा. धर्म्मपाठकाः कस्मादिति चेदत आह ॥

दविणस्स जीवियस्स व,वाघातो होज्ज जत्थ नत्थेतो ।
वाघाए एगतरस्स, दव्वसंघाडणा अफला ॥

यत्र नसत्येते राजादय. परिपूर्णाः पञ्च नियमतो द्रविणस्य धनस्य जीवितस्य वा व्याघातो भवेत् वैद्येन विना जीवितस्य राजादिभिर्विना धनस्य व्याघातो चैकस्य धनस्य जीवितस्य वा द्रव्यसघाटना द्रव्योपार्जना विफला परिभोगस्यासम्भवा-दथवा ॥

रण्णा जुवरण्णा वा, महरयय अमच्चतहकुमारेहिं ।
एएहिं परिग्गहियं, वसेज्ज रज्जं गुणविसालं ॥

राज्ञा युवराजेन महत्तरकेनामात्येन तथाकुमारैरेभिः पच प-रिगृहीतं राज्यं गुणविशालं भवति गुणविशालत्वात् तद्वसेत् आचार्योपाध्यायप्रवर्तिस्थविरगीतार्थान् प्रतिपाद्य १ व्य० उ १ एवमाचार्यपंचकसमेते गच्छे वस्तव्यं । यदि पुनः किंचिदप-राधं प्राप्तो भवति गच्छश्च पंचकपरिहीनस्तदाय दृष्टांतः ।

जह पंचकपरिहीणं, रज्जंरुमरभयवोरडाब्भिग्गं ।
उग्गहियसगरुपिकगं, परंपरवच्चए सामिं ॥

यथा राज्य राजादिपचकपरिहीन संतं रुमरं स्वदेशोत्थो विप्लव भय परचक्रसमुत्थं तस्कराश्चौरास्तैरुद्विग्नमुपगतं प-रित्यज्य आत्मीयं शकटपिटकमुद्गृह्य परपरस्वामिन द्राग् व्रजति यत्र स्वास्थ्य लभते ।

इयपंचकपरिहीने, गच्छे आसन्नकारणे साहू ।
आलोयणमलहंतो, परंपाव वसिष्के ॥

इत्येवमनेन दृष्टांतप्रकारेण पचकपरिहीने आचार्यादिपचक विरहिते गच्छेप्रायश्चित्तस्थानमापन्न साधुः कारणेन प्रागु-क्तेन आयुर्व्याघातादिरूपेण निजाचार्यादीनामतिके आलोचना मलभमानः सूत्रोक्तया नीत्या परपरमन्यसांभोगिकादिक तावद्व्रजति यावत्सिद्धान् गच्छति । एतदेव सविशेषमाह ।

आयरिए आलोयण, पंचएहं असति गच्छे वहियाजो ।
वोच्चत्थेचउलहुगा, गीयत्थे होंति चउगुरुगा

आचार्यस्याचार्यसमीपे आलोचनादातव्या । गच्छे पंचानामा चार्यादीनामसति गच्छाद्बहिर्गतव्य इयमत्र भावना । प्राय-श्चित्तस्थानमापन्नेन साधुना नियमत स्वकीयानामाचार्याणां समीपे आलोचयितव्य तेषामभावे उपाध्यायस्य तस्याऽप्य-भावे प्रवर्तिनस्तस्याऽभावे स्थविरस्य तस्याऽप्यभावे गणाव-च्छेदिन अथ स्वगच्छे पचानामप्यभावस्ततो वहिरन्यस्मि-न्सांभोगिके गतव्यं । तत्राप्याचार्यादिक्रमेण आलोचयितव्य । सांभोगिकानामाचार्यादीनामभावे संविग्नानामसांभोगिकानां समीपे गतव्य । तत्राप्याचार्यादिक्रमेणालोचना प्रदातव्या । यदा पुनरुक्तक्रमोल्लंघनेनालोचना प्रयच्छति तदा प्रायश्चित्त चतुर्लघु । तथा चाह ( वोच्चत्थे चउलहुगा ) इति व्यत्यस्ते विपर्याने उक्तक्रमोल्लंघने इत्यर्थ. । चत्वारो लघुका लघुमासा यदि पुनरुक्तक्रममुल्लंघयन अगीतार्थसमीपे आलोचयति । तदा

प्रायश्चित्तं चतुर्गुरु । एतदेवाह ( गीयत्थे होंति चउगुरुगा ) तदेव संविग्नानां सभोगिकात् यावत् विधिरुक्तः । सम्प्रति शेषान्प्रति विधिमाह ॥

संविग्गे गीयत्थे, सरूविपच्छाकडे य गीयत्थे ।
पडिक्कंते अब्भुट्ठिय, असतो अन्नत्थ तत्थेव ॥

संविग्ने अन्यसांभोगिकलक्षणे असति अविद्यमाने पार्श्वस्थस्य गीतार्थस्य समीपे आलोचयितव्यं तस्मिन्नपि गीतार्थे पार्श्वस्थे असति सारूपिकस्य वक्ष्यमाणस्वरूपस्य गीतार्थसमीपे तस्मिन्नपि सारूपिके असति पश्चात्कृतस्य गीतार्थसमीपे आलोचयितव्य। एतेषां च मध्ये यस्य पुरत आलोचना दातुमिष्यते । तमभ्युत्थाप्य तदनन्तरस्य पुरत आलोचयितव्य। अभ्युत्थान नाम वदनकप्रतिच्छनादिक प्रत्यभ्युपगमकारोपणा ॥ तथा चाह । ( पडिक्कते अब्भुट्ठिएत्ति ) अभ्युत्थिते वदनप्रतीच्छनादिकं प्रति कृताभ्युपगमेऽतिक्रांतो ब्रूयात् नान्यथा अय ते पार्श्वस्थादय आत्मान हीनगुण पश्यतो नाभ्युत्तिष्ठति तत आह ( असतित्ति ) असति अविद्यमाने अभ्युत्थाने पार्श्वस्थादीनां निषद्यामारचय्य प्रणाममात्र कृत्वा लोचयनीयमितरस्य तु पश्चात्कृतस्य इत्वरसामायिकारोपण लिंगप्रदान च कृत्वा यथाविधि तदतिक्रमालोचनीयं ( अन्नत्थ तत्थेवत्ति ) यदि पार्श्वस्थादिकोऽभ्युत्तिष्ठति । तदा तेनान्यत्र गतव्य येन प्रवचनलाघव न भवति । तत्र च गत्वा तमापन्नप्रायश्चित्त शुद्धतपो वहति मासादिमुत्कर्षतः षण्मासपर्यवसान यदि वा प्रागुक्तस्वरूपं परिहारतपः । अथ स नाऽभ्युत्तिष्ठति शुद्धंच तपः । तेन प्रायश्चित्त दत्त ततस्तत्रैव तपो वहति । एतदेव असति इत्यादिक व्याख्यानयति ॥

असतीए लिंगकरणं, सामाइय इत्तरं च किंतिकम्मं ।
तत्थेवय सुद्धतवो, गवेसणा जाव सुहदुक्खे ॥

असति अविद्यमाने पश्चात्कृतस्याऽभ्युत्थाने गृहस्थत्वात् लिंगकरण इत्वरकाल लिंगसमर्पण तथा इत्वरमित्वरकाल सामायिकमारोपणीय । ततस्तस्यापि निषद्यामारचय्य कृति कर्म्म वंदनक कृत्वा तत्पुरत आलोचयितव्य । तदेवमसतीति व्याख्यातमधुना तत्थेवत्ति व्याख्या। यदि पार्श्वस्थादिको नाभ्युत्तिष्ठति शुद्ध चतपस्तेन प्रायश्चित्त तथा दत्त ततस्तत्रैव तत शुद्ध तपो वहति यावत्तपो वहति । तावत्तस्यालोचना प्रदायिनः सुखदुःखे गवेषयति । सर्वमुदत वहतीत्यर्थः। पश्चात्कृतमेव विधिमाह ॥

लिंगकरणं निसेज्जा, किंतिकम्ममणिच्छत्तो पणामो य ।
एमे व देवयाए, न वरं सामाइयं मुत्तुं ॥

पश्चात्कृतस्येत्वरकालसामायिकारोपणपुरस्सरमित्वरकाल लिंगकारण रजोहरणसमर्पणं तदनतर निषद्याकरणं ततः कृतिकर्म्म वंदनक दातव्य । अथ स वदनक नेच्छति । ततस्तस्य कृतिकर्म्ममनिच्छत प्रणामो वाचा कायेन प्रणाममात्र कर्त्तव्य पार्श्वस्थादेरपि कृतिकर्म्मानिच्छायां प्रणाम कर्त्तव्य । एवमेव अनेनैव प्रकारेण देवताया अपि सम्यक्त्वभावितायाः पुरत आलोचयति ते वरसामायिकारोपणलिंगसमर्पण न च कर्तव्यमविरतत्वेन तस्यास्तद्योग्यताया अभावात् । यदुक्तं ( गवेसणा जाव सुहदुक्खे ) इति तद्व्याख्यानयति ॥

आहारउवहिसेज्जा, एएसणमादीसु होइ जइयव्वं ।
अणुमोयणकारावण, सिक्खत्तिपयम्मितो सुद्धो ॥

आहारः पिण्ड उपधिपात्रनिर्योगादिः शय्या वसतिरेषणाशब्दः प्रत्येकमभिसंबध्यते । आहारैषणायामुपध्येषणायां शय्यैषणायामादिशब्दाद्विनयवैयावृत्यादिषु च भवति । तेन यतितव्य कथमित्याह । अनुमोदनेन कारापणेन च । किमुक्तं भवति । यदि तस्याऽऽलोचनार्हस्य कश्चिदाहारादीनुत्पादयति । ततस्तस्यानुमोदनाकरणतः प्रोत्साहने यतते । अन्यथाऽन्यः कश्चिन्नोत्पादयति ततः स्वयमालोचक आहारादीन् शुद्धानुत्पादयति । अथ शुद्ध नोत्पद्यते । तत आत्मना प्रोत्साहाकल्पिकानप्याहारादीन् यतनया उत्पादयतीति । अथाकल्पिकानाहारादीनुत्पादयतः तस्य महती मलिनतोपजायते । अथ चसशुद्धिकरणार्थं तदतिक्रमागतस्ततः परस्परविरोधः । अत्राह ( सिक्खत्तिपयम्मितो सुद्धो ) यद्यपि नाम तस्यालोचनार्हस्यार्थायाकल्पिकानप्याहारादीनुत्पादयति । तथाप्यासेवनाशिक्षा तस्यांऽतिके क्रियते । वितिपदे अपवादपदे स तथा वर्तमानः शुद्ध एव एतदेव भावयति ॥

चोइयसे परिवारं, अकरेमाणे भणाइ वा सद्धे ।
अव्वोच्छित्तिकरिस्स उ, सुयभत्तीए कुणह यूयं ॥

प्रथमतः । से तस्यालोचनार्हस्य परिवारं वैयावृत्यादिकमकुर्वंतं चोदयति शिक्षयति । तथा ग्रहणासेवना शिक्षानिष्णात एष तत एतस्य विनयवैयावृत्यादिकं क्रियमाण महानिर्जराहेतुरिति । एवमपि शिक्षमाणो यदि न करोति । ततस्तस्मिन्नकुर्वाणे स्वयमाहारादीनुत्पादयति । अथ स्वयं शुद्धं प्रायोग्यमाहारादिक न लभते । ततः श्राद्धान् भणति प्रज्ञापयति प्रज्ञाप्य च तेभ्योऽकल्पिकमपि यतनया संपादयति न च वाच्य तस्यैवं कुर्वतः कथ नदोषो यत आह ( अव्वोच्छित्तीत्यादि ) अव्यवच्छित्तिकरणस्य पार्श्वस्थादेः श्रुत नकथा हेतुभूतया अकल्पिकस्याप्याहारादेः श्रुतभक्त्या पूजां कुरुत यूयं नच तत्र दोष एवमपि । इयमत्र भावना ॥ यथा कारणे पार्श्वस्थादीनां समीपे सूत्रमर्थं च गृह्णतोऽकल्पिकमप्याहारादिक यतनया तदर्थं प्रतिसेवमान शुद्धो ग्रहणशिक्षायाः क्रियमाणत्वादेवमालोचनार्हस्याऽपि निमित्तं प्रतिसेवमान शुद्ध एव आसेवनाशिक्षायास्तत्समीपे क्रियमाणत्वादिति । एतदेव स्पष्टतर भावयति ॥

दुविहा सती एतेसिं, आहारादी करेइ सव्वेसिं ।
पणहाणी य जयंतो, अत्तट्ठाए वि एमेव ॥

इह परिवाराभावे तस्याऽऽलोचनार्हस्य कर्तव्यमिति सामाचारी तेषां च पार्श्वस्थादीनां द्विविधा असती इति परिवाराभावो द्विविधः । विद्यमानाभावोऽविद्यमानाभावश्च । विद्यमानः सन् अभावाऽसन्वैयावृत्यादेरकरणात् विद्यमानाभावः । अविद्यमानः सन्नभावोऽविद्यमानाभावः । तत्र द्विविधेऽप्यभावे (स)तस्यालोचनस्याऽऽहारादिक सर्वकल्पमकल्पिक वायतनया करोति उत्पादयति । यतनया कथमकल्पिकमुत्पादयति इति चेदत आह । पचकहान्या यतमान । किमुक्त भवति । अपरिपूर्ण मासिकप्रायश्चित्तस्थानप्रतिसेवनापत्तौ गुरुलाघवपर्यालोचनया पचकादिपचकहीनमासिकप्रायश्चित्तस्थानप्रतिसेवनां करोति । तामपि यतनया पचकग्रहणमुपलक्षणं तेन दशादिहान्यापि यतमान इति द्रष्टव्य । एव सर्वत्र न केवलमालोचनार्हार्थमेव यतते किं तु कारणे समुत्पन्ने आत्मार्थमप्येवमेवं पचकहान्या यतते इति । यदुक्त सम्यक्त्वभावितायाः पुरत आलोचयितव्यमेतदेतद्भावयति ॥

कोरंटगं जहा जावि, यद्धम्मं पुच्छिऊण वा अन्नं ॥

अगति अरहं सिध्दे, जाणंतो मुध्दो जावेव ॥ १ ॥

कोरंटकं नाम नरुकच्छे उद्यानं तत्र भगवान्मुनिसुव्रतस्वामीअर्हन्नभीरुण समवसृतस्तत्र तीर्थकरेण गणधरैश्च बहूनि प्रायश्चित्तानि च दीयमानानि तत्रत्यया देवतया दृष्टानि ततः कोरंटकं गत्वा तत्र सम्यक्त्वभावितदेवताराधनार्थमष्टमं कृत्वा तत्र च सम्यक्त्वकंपितायाद्देवताया पुरतो यथोचितप्रतिपत्तिपुरस्सरमालोचयति । सा च प्रयच्छति यथार्हं प्रायश्चित्तं । अथ सा देवता कदाचित् च्युता भवेत् पश्चादन्या समुत्पन्ना तया च न दृष्टस्तीर्थकरस्तत साष्टमेनाकंपिता ब्रूते महाविदेहे तीर्थकरमापृच्छ्य समागच्छामि तत सा तेनाऽनुज्ञाता महाविदेहे गत्वा तीर्थकरं पृच्छति पृष्ट्वा च समागच्छत्यसाधवे प्रायश्चित्त कथयति । यथा च कोरंटकमुद्यानमुक्तमेव गुणशिलादिकमपि द्रष्टव्यम् अत्राऽप्यनेकेण वर्द्धमानस्वाम्यादीनां समवसरणात् । तासामपिदेवतानामभावे अर्हत्प्रतिमानां पुरत स्वप्रायश्चित्तदानपरिज्ञानकुशल आलोचयति । तत स्वयमेव प्रतिपद्यते प्रायश्चित्त तामप्यसत्यभावे प्राचीनादिदिगभिमुखोऽर्हत सिद्धानभिसमीक्ष्य जानन् प्रायश्चित्तदानविधिः । विद्वान् आलोचयति । आलोच्य च स्वयमेव प्रतिपद्यते प्रायश्चित्त सच्चनया प्रतिपद्यमान शुद्ध एव सूत्रोक्तविधिना प्रवृत्ते । यदपि विराधित तत्रापि शुद्धप्रायश्चित्तप्रतिपत्तेरिति । कोरंटक जहेत्यत्र यथागव्दोपादानात्कोरटकसमुद्दिशताऽन्यान्यप्युद्यानानि सूचितानीति प्रकटयितुमाह ।

सोहीकरणा दिट्ठा, गुणसिलमादीसु जह य साहूणं।

नोदेंति विसोहीतो, पच्छुप्पएणा व पुच्छति ॥

गुणशीलादिपूद्यानेषु याभिर्देवताभि साधूनां तीर्थकरैगणधरैश्चानेकशो विधीयमानानि शोधिकरणानि दृष्टानि ताः स्वय ददति प्रयच्छति । विशोधी प्रायश्चित्तानि या पुनः प्रत्युत्पन्ना देवतास्ता महाविदेहेषु गत्वा तीर्थकरान् पृच्छति । पृष्ट्वा च साधुभ्य कथयति ॥ आ. म. १ अ० ग.अधि. १ प्रतिमा. श्लो ६४ ॥

( १४ ) गीतार्थमवाप्य शल्यानुध्दरणादौ दोषगुणादिकं भावयता यद्विधेयत्वम् ॥

अथ गीतार्थमवाप्य शल्यानुद्धरणादौ दोषगुणादिक भावयता यद्विधेयं तदाह । पंचा० । वृ १५ ॥

मरिउं ससल्लमरणं, संसाराडविमहाकडिल्लंमि ।

सुचिरं भमंति जीवा, अणोरपारंमि ओइन्ना ॥ ४२ ॥

व्या. । मृत्वा म्रियमाण सशल्यमरण प्रतीत तत किमित्याह । संसाराटवीमहाकडिल्ले भवारण्यगुरुगहने सुचिरमति दीर्घकाल भ्रमति पर्यटन्ति जीवा देहिन अनर्वाक्पारे अर्वाक् भागपरभागवर्जिते अवतीर्णा अवगाढा इति संवेग कृत्वेतियोग तथा ॥

उध्दरियसव्वसल्ला, तित्थगराए सुच्छिया जीवा ।

मरणयकयाइं गविओ, पावाइं गया सिवं थामं । ४३ ।

व्या० । उद्धृतसर्वशल्या कृतालोचनास्तीर्थकराज्ञायां जिनादेशे सुस्थिताः सुष्ठु व्यवस्थिता मनो जीवा देहिनः भवशतकृतानि जन्मशतविहितानि दूरस्य प्रक्षिप्य दूरतोऽपास्य सामर्थ्यात् यानि यानि कर्माणि गता प्राप्ताः शिवं निरुपद्रव नामेति स्थानं सिद्धालयमिति गर्थ ।

सल्लुध्दरणं चइमंति, लोगबंधूहि दंसियं सम्मं ।

अवितहमरोगफलं, धण्णोहं जेणिमं णायं । ४४ ।

व्या ० । शल्योद्धरणमालोचना चशब्द पूर्वगाथाद्वयोक्तार्थापेक्षया समुच्चयार्थे । इदमनंतरोक्तविधान त्रिलोकबन्धुभिर्जिनैरित्यर्थः दर्शितमुक्त सम्यक् सोपपत्तिकं अवितथमव्यभिचारि आरोग्यफल भावारोग्यसाधक ततश्च धन्योऽह पुण्यवानहं येन मया इदमेतच्छल्योद्धरण ज्ञातमवगतम् ॥

ताउध्दरामि सम्मए, य एयस्स णाणरासिस्सः ।

आवेदियं असेसं, अणियाणो दारुणविवागं । ४५ ।

व्या०ता इति यस्मादिदं मया ज्ञात तत्तस्मादुध्दरामीत्यपनयामि सम्यग् न्यायेन एतत् भावशल्यं एतस्य गुरोः ज्ञानराशेः अग्रे सद्बोधनिकरस्याऽवेद्य कथयित्वाऽशेष सकलं अनिदानो निर्निदानः सन् दारुणविपाक रौद्रफल शल्यमिति प्रक्रमः ।

इयसंवेगं काउं मरुगाहरणादिएहिं विधेहिं ।

दह पुण करणजुत्तो, सामायारिं पउंजेज्जा ॥

व्या० । इति एवमनतरगाथाचतुष्कोक्तप्रकारसंवेग शुभाध्यवसायविशेष कृत्वा विधाय कैरित्याह मरुकाहरणादिभिर्ब्राह्मणोदाहरणाद्यैः समयप्रसिद्धैश्चिन्हैर्हि र्गमरणादिमुपगमेनापि शुद्धि कार्येत्येव भूतार्थगमकै सशल्यतादोषज्ञापकैर्वा आदिशब्दात्पीठमहापीठादिग्रह दृढमत्यर्थमपुनः करणयुक्तः पुनरमुमपराधं न करिष्यामीत्यभिप्रायवान् सन् सामाचारीमालोचनागतसमाचार वदनकदाननिषद्यादानादिक प्रयुञ्जीत विदध्यदालोचनाकारीति ॥

( १५ ) मरणाऽभिमुखेनाऽप्यालोचना करणीयाऽत्र ब्राह्मणदृष्टान्तः ॥

मरुकश्चवं चैतत ॥

नगरे पाटलीपुत्रे, विप्र आसीत् त्रिलोचनः ।

वेदवेदांगगर्त्तार्थ, विशारदशिरोमणिः ॥ १ ॥

तस्य पार्श्वे बटुः कोऽपि, समा यातः प्रणम्य तम् ॥

उवाच मयका मोहा, त्परदाररतिः कृता ॥ २ ॥

तस्यपापस्य मे शुध्दिः क्रियतां सोऽप्यजल्पत ।

तद्भावस्य परीक्षार्थं, यथा भो विप्रपुत्रक ! ॥ ३ ॥

तप्तां लोहमयीं नारीं, फुल्लकिंशुकसन्निभाम् ।

आलिंगय यतो नान्य,त्प्रायश्चित्तमिहास्ति ॥ ४ ॥

तेनापि पापभीतेन, प्रतिपन्नमिदं ततः ।

सोपि विज्ञाय तद्भावं, शुध्दिमन्यां न्यवेदयत् ॥ ५ ॥

अथवा मरकोदाहरणमेवं ॥

बभूव ब्राह्मणः कोऽपि वेदाङ्गेषु विशारदः ।

स्वागमाहितयोगेन, धर्मार्थोभूत्स तापसः ॥ १ ॥

ततस्तपस्यतस्तस्य, वसतस्तापसाश्रमे ।

कंदमूलाशिनोऽत्यर्थं, कष्टानुष्ठानकारिणः ॥ २ ॥

स्नानाद्यर्थं नदीतीरे, प्रयातस्यैकदा किल ।

पश्यतो मत्स्यबंधानां, मत्स्यमांसस्य भक्षणम् ॥ ३ ॥

तत्र जाताभिलापस्य, जेमिनस्य प्रयाच्य तत् ।

तस्यैवाऽजीर्णदोषेण, समुत्पन्नो महाज्वरः ॥ ४ ॥

तच्चिकित्सार्थमानीतो, वैद्यः सोऽपि च पृष्टवान् ।
किंनो त्वं नुक्तवान् ब्रूहि, सोऽप्यन्नाषत लज्जया ॥५॥
कंदमूलफलाहारा, स्तापसा यत्समुंजते ।
तद्भुक्तं न पुनस्तेन, कथितं मत्स्यन्नक्षणम् ॥ ६ ॥
वैद्योऽपि तस्य वाक्येन, ज्ञात्वा तं वातिकंज्वरं ।
तथाविधक्रियां चक्रे, नचाभूत्तज्ज्वरमुक्तता ॥ ७ ॥
पुनः पृष्टोऽथवैद्येन, तदेवाख्यातवानसौ ।
चक्रे क्रियां सतामेव, विशेषान्नत्वक्तद्गुणः ॥ ८ ॥
अन्यदावेदनाक्रांतो नीतोऽसौ मृत्युराट्सात् ।
लज्जां विहाय वैद्याय, न्यगादीन्मत्स्यन्नोजनं ॥ ९ ॥
ततोवैद्योऽन्यगादीत्तं, दुष्ठु दुष्ठु त्वया कृतं ।
यदीयंति दिनानीदं नाख्यातं रोगकारणं ॥ १० ॥
अधुनापि कृतं साधु साधो यत्साधितं त्वया ॥
निदानं ज्वररोगस्य, करोमीतो रुजः क्षयम् ॥ ११ ॥
तस्योचितं ततो वैद्यः, क्रियां कृत्वा तकं व्यधात् ॥
व्याधिव्याधाव्यपेतांगं, पुष्टदेहं महोजसमिति ॥ १२ ॥

( १६ ) अदत्तालोचने व्याधदृष्टान्तन्नावना.

कंटगमादिपविट्टे, नोध्दरइ सयं नहोइ एकहए ।
कमढीभूयवणगए, आगलणं खोन्नियामरणं ॥

इह किल व्याधा वने सचरत उपानहौ पादेषु नापनह्यति मा हस्तिन उपानहोः शब्दान श्रौदुरिति । तत्रैकस्य व्याधस्याऽन्यदा वने उपानहौ विना परिभ्रमतो द्वयोरपि पादयोः कटकादयः प्रविष्टा आदिशब्दात् श्लक्ष्ण किलिंचादिपरिग्रहः ॥ तान्प्रविष्टान् कंटकादीन्स्वय नोध्दरति । नापि भोजिकायै निजन्नार्यायै व्याधिं कथयति । ततः स तैः पादतलप्रविष्टैः कटकादिन्निः पीमितः सन् वनगतो हस्तिना पृष्ठतो धावता प्रेर्यमाणो धावन् कमठीन्नूतः स्थले कमठ इव मदगतिरनूत् ततः प्राप्तो हस्ती प्रत्यासन्न देशमिति जानन् क्षुधाक्रोन्नगत्वा ( आगलण ) मितिवैकल्य प्राप्तः । ततो मरणमेप गाथाक्षरार्थः । न्नावार्थस्त्वय ।

एगो वाहो उवाहणातो विणावणे गतो तस्स पायतला कंटगाईणं न्नरिया ते कंटगाइयानो सयमुध्दरियानो विय न्नाहीए उद्धराविया अन्नया वणे संचरंतो हत्थिणा दिट्ठो तो तस्स धावंतस्स कंटगाइया दूरतरंमंसे पविट्ठा । ताहे अतिदुक्खेण अद्दितो महापायवो इवाच्छिन्नमूलो हत्थिन्नएण पवेयणनूतो पमितो हत्थिणा विणासितो ॥ वितिए सयमुध्दरती अणुट्ठिए न्नोइयाए नीहरइ । परिमद्दणदंतमलादि पूरणं वणगयपलातो ॥

अन्यो द्वितीयो व्याध उपानहौ विना वने गतः । तस्य वने संचरतः कटकादयः पादतले प्रविष्टा स्तान्स्वयमुध्दरति ये च स्वयमुध्दर्तुं न शक्तान् अनुद्धृतान् भोजिकया निजभार्यया व्याधा नीहारयति निष्काशयति तदनतर तेषांकटकादिवेधस्थानानामगुष्ठादिना परिमर्दन तदनतर दतमलादिना आदिशब्दात् । कर्णमलादिपरिग्रहः । पूरण कटकादिवेधानां ततोऽन्यदा वनगतः मन् हस्तिना दृष्टोऽपि पलायितो जातो जीवितव्यसुखानामान्नागी एष दृष्टांतः । सांप्रत दार्ष्टांतिकयोजनामाह ॥

वाहत्थाणी साहू, वाहिगुरुकंटकादिअवराहा ।
सोही य ओसहाइ, पसत्थनाएण वणतो उ ॥

व्याधस्थानीयाः साधवः व्याधिस्थानीयो गुरुः कटकादिस्थानीया अपराधा औषधानि दतमलादीनि तत्स्थानीया शोधिः अत्र द्वौ व्याधदृष्टांतौ प्रशस्तोऽप्रशस्तश्च आद्योऽप्रशस्तो द्वितीयः प्रशस्तः । तत्र प्रशस्तेन ज्ञातेन दृष्टांतेनोपनयः कर्त्तव्यः । आचार्योऽपि यदि तान् उपेक्षते ततः कटकादीनामुपेक्षको व्याध इव सोऽपि दुस्तरामापदमाप्नोति । तथा चाह ॥

पमिसेवंते उवेक्खइ नयणं ओवीलए अकत्यंतो ।
संसारहत्थिहत्थं पावति विवरीयमियरोवि ॥

इतरोऽपि आचार्योऽपि तुशब्दोऽपिशब्दार्थः । यः प्रतिसेवमानात् उपेक्षते ननु निषेधति न वा कुर्वतोऽकुर्वाणात् प्रायश्चित्तमुत्पीमयति । न भूयः प्रायश्चित्तदानदण्डेन तापयन् कारयति सविपरीतमाचार्यपदस्य हि यथोक्तनीत्या परिपालनफलमचिरात् मोक्षगमन तद्विपरीत ससार एव हस्तिहस्त प्राप्नोति । दुस्तर ससारमागच्छतीति भावः । उपसहारमाह ॥

आलोयमणालोयणदोसा य, गुणा य वत्रिया एए ॥

एते अनन्तरोदिता आलोचनायां गुणा अनालोचनायां दोषा वर्णिताः उ० १ आगमव्यवहारिणां सकाशे आलोचना (आगमनववहारि ) शब्दे ॥

इदानी मागमव्यवहारिणामभावे समयानुसारेणो त्कृष्टश्रुतानां श्रुतव्यवहारिणां सन्निधावालोच्यत इति । जीत ।

( १७ ) स्वगणपरगणवासिकानां समीपे आलोचना

स्वगणपरगणवासिकानां समीपे आलोचना ऽङ्गचूलिकायाम् ॥

कहण्णं नंते सहुरूवे आयरिय उवज्काए पमायवंते । सगण परगण वासियाणं समीवे पावं आलोइज्जा तएणं अज्जसुहम्मे जवू एवं वयासी । जंबू जिणसासणे ववहारो वलवंतो तिय निक्खू अणागदकम्मं अन्नतरं अकिच्चट्ठाणं पमिसेवित्ता आलोएज्जा तत्थ पासेज्ज पुणो आयरियउवज्कायं बहुस्सुयं बहूआगमं कप्पइ से तस्संतिए आलोइत्तए पमिक्कमित्तए णिंदए गरिहारित्तिए विओदित्तए अकरणयाए अब्भुट्ठित्तए अहारिहं पायच्छित्तं पमिवज्जित्तए जत्थेवणो आयरियउवज्कायं पासेज्ज बहुस्सुयं बहुआगमं तत्थेव संन्नोइय उवज्काय आयरियपासेज्ज बहुस्सुयं बहुआगमं कप्पइ से तस्संतिए जाव पामि वज्जित्ता । १ । जत्थेणो संन्नोय आयरियउवज्कायं पासेज्ज तत्थेव अण संन्नोइय आयरिय उवज्कायं पासेज्ज तत्थेव बहुस्स आगमं तस्संतियं जाव पमिवज्जित्तए । ६ । जत्थेव णो अन्नसंन्नोइय आयरिय उवज्कायं पासेज्ज तत्थेव सावयं पासेज्ज बहुसुअं तस्संतिए आलोयत्तए ॥ ४ ॥ जत्थेव णो सावयं जत्थेव सार विह जत्थेव णयेतत्थेव पच्छा कम्मजाव आलो० । ५ ।

सेकिंतं आवकहिएं आव २ दुविहे प० तं पा
ओवगमणे य भत्तपच्चक्खाणे य ॥ प्रव० द्वा.६ दश० .अ १।

**आवग**–आवक–त्रि० अवति, अव ण्वुल्–रक्षके, वाच०

**आवज्ज**–आतोद्य न०( ओतोऽद्वाऽन्योऽन्यप्रकोष्ठातोद्यशिरोवेद नामनोहरसरोरुहे क्तो श्च व ॥ १ । ५६ इति प्राकृतसूत्रेणैत्वोतोऽत्व वा भवति तत्सन्नियोगे च यथा सम्भव ककारतकारयोर्वादेशः । प्रा० । वीणादौ वाद्ये, अत्रत्याबहुक्तव्यता ( आउज्ज ) शब्दे ।

**आवज्जण**–आवर्जन–न० उपयोगे व्यापारे, च केवलिसमुद्घातगन्तुमनसा केवलिना कर्तव्यमावर्जीकरणमधिकृत्य ( आवज्जणमुवओगो वावारो वा तदत्थमाइए ) तदर्थं समुद्घातकरणार्थमादौ केवलिन उपयोगो मया अधुनेद कर्तव्यमित्येवरूप उदयावलिकायां कर्म्मप्रक्षेपरूपो व्यापारोवाऽऽवर्जनमुच्यते । इति विशे० । अभिमुखीकरणे, आ० चू० ॥

**आवज्जिय**–आवर्जित–त्रि–वृज–णिच्–क्त० अभिमुखे,आ. चू०

**आवज्जियकरण**–आवर्जितकरण–न० अभिमुखीकरणे, । केवलिसमुद्घातात्पूर्वं कर्तव्ये केवलिनोव्यापारविशेषे च आ चू०
केचिदावर्जितकरणमिति वर्णयन्ति ।
तेषामप्यावर्जितशब्दस्याऽभिमुखपर्यायवाचित्वात् आवर्जितकरणसिद्धिः कथमावर्जितमनुष्यवत् यथा लोके दृष्टमेतदावर्जितो मनुष्योऽभिमुखीकृत इति तथा च सिद्धान्त.। सिद्धपर्यायपरिणामाभिमुखीकरण यत्तदावर्जितकरण येन कारणन परिणत आत्मा नियमात् सिद्धतत्पर्यायपरिणामाभिमुखो भवतीत्यर्थ. ॥

**आवज्जीकरण**–आवर्जीकरण–न० समुद्घातकरणार्थमादौ केवलिन उपयोगो मया अधुनेद कर्तव्यमित्येव उदयावलिकायां कर्म्मप्रक्षेपरूपो व्यापारो वा आवर्जनमुच्यते । तथा भूतस्य करणमावर्जीकरणम् केवलिसमुद्घातात्पूर्वं केवलिना कर्तव्ये व्यापारभेदे, विशे. ।

**आव ( ट्ट ) ( म ) ( त्त ) त**–आवर्त पु० आवर्तनमावर्तःसचसमुद्रादेश्चक्रविशेषाणांचेति । स्था० ठा.४। ३ा अ १। आ म. प्र । आवर्तयति प्राणिनं भ्रामयतीत्यावर्त' । सूत्र० श्रु १ अ. ३ । आ. वृत. भावादौ घञ् चक्राकारेण जलस्यपरिभ्रमणे । वाच० ॥ त्तस्याधूर्तादौ ॥ २ । ३० ॥इति प्राकृतसूत्रेण तस्य भवति धूर्तादीन् वर्जयित्वा बाहुलकाधिकाराद् धूर्तादावपि प्रा० । जलादीनां परिभ्रमणे आचा० श्र० १ उ ५ आवर्त आवर्तन परिभ्रमणमिति ज्ञा० अ० १ मोहावत्त महाभीम । मोहोमोहनीय कर्म्म तदेव तत्र विशिष्टभ्रमिजनकत्वादावर्तो यस्मिन्स तथा विधस्तमिति आव । स्था२ ठा ४ ॥

चत्तारि आवत्ता पण्णत्ता । त खरावत्ते उन्नयावत्ते गूढावत्ते आमिसावत्ते ठा । आवर्तन्तेपरिभ्रमति प्राणिनो यत्र स आवर्तः ससारे आचा० श्र. १ । ५ ( आवट्ट सो पसगमभिजाणति ) आचा० अ ३३ । १ ।आवट्ट इत्यादि भावावर्तो जन्मजरामरणरोगशोकव्यसनोपनिपातात्म ससार इत्युक्त हि "रागद्वेषवशाविद्ध, मिथ्यादर्शनदुस्तर ॥ जन्मावर्ते जगत् क्षिप्त, प्रमादाद् भ्राम्यते भृश ॥ १ ॥ भावश्रोतोऽपि शब्दादिकामगुणविषयाभिलाष आवर्तश्च श्रोतश्च आवर्तश्रोतसी तयोरागद्वेषाभ्यांसम्बन्ध सगस्तमभिजानत्याभिमुख्येन परिच्छिनत्ति यथा यं सग आवर्तश्रोतसो. कारण जानानाश्चपरमार्थत. कोऽभिधीयतेयोऽनर्थ ज्ञात्वा परिहरति यश्चायमर्थः । ससारश्रोतः सग रागद्वेषात्मक ज्ञात्वा य परिहरति स एव चावर्तःश्रोतसो. संगस्याभिज्ञाता ( आवट्टमेवम णुपरियट्टति भावावर्त. ससारस्तमरहट्टघटीयत्रन्यायेनानुपरिवर्त्तन्ते । तास्वेव नरकादिगतिपु भूयो २ भवन्तीति आचा० अ. ५ उ. १ ॥

( विषये आवट्टमेय तु पेहाए एत्थ विरमेज्जवेदवी ) आवट्टं तु इत्यादि रागद्वेषकषायविषयावर्तं कर्म्मबन्धावर्तं वा तुशब्दात्पु नः शब्दार्थे भावावर्तं पुनरुत्प्रेक्षात्राऽस्मिन् भावावर्ते विषय रूपे । वेदविदागमविद्विरमेदाश्रवद्वारनिरोध विदध्यात् । आचा० श्र ५ उ. ६ ससारकारणे, शब्दादिगुणे, च ( जेगुणे से आवट्टे जे आवट्टे से गुणे ) आचा० श्र. १ उ. ४ आवर्तो नामादिभेदाच्चतुर्धा । नामस्थापने क्षुण्णे द्रव्यावर्त्तः स्वामित्वकरणाधिकरणेषु यथा सम्भव योज्यः । स्वामित्वेनद्यादीनां क्वचित्यविभागे जलपरिभ्रमण द्रव्यावर्त्त. द्रव्याणां वा हंसकारण्डवचक्रवाकादीनां व्योम्नि क्रीडता मावर्तो नादावर्त्त' । करणे तु तेनैव जलद्रव्येण भ्रमता यदन्यदावर्त्तते तृणकाष्ठादि स द्रव्येणावर्त' । तथा त्रपुसीसकलोहरजतसुवर्णैरावर्तमानैर्यदन्यत्तदन्त पात्या वर्तते । स द्रव्यैरावर्तत इति । अधिकरणत्वविवक्षायामेकस्मिन् जलद्रव्ये आवर्तः ॥ तथा रजतसुवर्णरीतिकात्रपुसीसकेष्वेकस्थीकृतेषु बहुषु द्रव्येष्वावर्त. । भावावर्तो नामान्यो भावसङ्क्रान्ति' औदयिकभावोदयाद्वा नरकादिगतिचतुष्टयेषु भावावर्त । आचा. १ श्र ५ उ ॥

उत्कटमोहोदयापादितविषयाभिलाषसपादकसपत्प्रार्थनाविशेषे, सूत्र० श्रु० १ अ० ३ ॥

अह मे संति आवट्टा, कासवेणं पवेइया ।
बुद्धाजत्थ वसप्पंति, सीयंति अबुहा जहिं ॥१४॥

टीका । अथत्यधिकारांतरदर्शनार्थ. । पाठांतर वा अहो इति । तच्च विस्मये इमे इति प्रत्यक्षासन्ना. सर्वजनविदितत्वात् सति विद्यते वक्ष्यमाणा आवर्तयति प्राणिन भ्रामयतीत्यावर्तास्तत्र द्रव्यावर्त्तो नद्यादेर्भावावर्तास्तूत्कटमोहोदयापादितविषयाभिलाषसपादकसपत्प्रार्थनाविशेष एते चावर्त्ताः काश्यपेन श्रीमन्महावीरवर्द्धमानस्वामिनाऽनुत्पन्नदिव्यज्ञानेनावेदिता कथिता. प्रतिपादिता. । यत्र येषु सत्सु बुद्धा अवगततत्वा आवर्तविपाकवेदिनस्तेभ्योऽवसर्पते प्रमत्ततया तद्दूरगामिनो भवत्यबुद्धास्तु निर्विवेकतया ये ह्यवसीदत्यासक्तिं कुर्वंतीति । आवर्तने, वान्त द्वादशावर्तादिवन्दनकगते सूत्राभिधानगर्भे कायव्यापारविशेषे । आवत्तोवारसेवय आव- पौनः पुन्यभवने ।

दुक्खाणमेव आवट्टं अणुपरियट्टइ आचा० अ. २ उ ३

दुक्खाणमित्यादि । दु खानां शारीरमानसानामावर्त्त. पौनः पुन्यभवनमनुपरिवर्तते दु खावर्तावमग्नो बम्भ्रम्यत इत्यर्थ ॥ णिच् भावे अच् पुन पुनश्चालने परिघट्टने । धातूनां द्रावणे । चिन्तायाञ्च । चिन्तयाहि चित्त स्वविषयेषु पुन पुनश्चाल्यते इति तस्यास्तथात्वम् । ध्रुवाख्यघोटकचिन्हे रोमसस्थानभेदे । आवर्तिन दशावर्त्तयुक्ता प्रशसायाम् णिनि ते च । द्वावुरस्यौशिरस्यो द्वौ, द्वौ द्वौ रन्ध्रोपरन्ध्रयोः । एको भाले ह्यपाने च, दशावर्त्ता ध्रुवा. स्मृता ॥ १ ॥ पयोधिपक्षे जलभ्रमः मल्लि. वाच० ।

आवर्तो देवमणिनामहयानां महालक्षणतया प्रसिद्ध इति जं ल्लावर्ताकारे, देहिना रोमसस्थानभेदे, च वाच० आदर्शो दार्क-

णे मागे. दक्षिणः शुभकृन्नृणाम् । वामो वामेऽतिनिन्द्य स्याद्, दिगन्यत्वे तु मध्यम ॥ १ ॥ कल्प० । राजावर्त्तनामके मणौ पु वाच० । मणिलक्षणभेदे आवर्तादीनि मणीनां लक्षणानीति ॥ आ. म. प्र. जी. प्र. ३ राज. । मेघाधिपभेदे, वाच० । स्तनितकुमारेन्द्रस्य घोषस्य स्वनामख्याते लोकपाले स्तनितकुमारेन्द्रस्य महाघोषस्य स्वनामख्याते लोकपाले, च स्था ठा. ४ उ. श. ३ उ. ८ स्वनामख्याते जंबूद्वीपस्थे दीर्घवैताढ्यपर्वते, स्था० ठा. ए एकखुरे चतुष्पदस्थलचरपञ्चेन्द्रियतिर्यग्योनिकभेदे, प्रज्ञा. पद १ अहोरात्रभवे स्वनामख्याते पंचविंशतितमे मुहूर्ते, सम० स. २५ । स्वनामख्याते ग्रामे ( आवत्ते, मुहत्तासे ) ततो भगवान् आवर्ते ग्रामे बलदेवगृहे प्रतिमां प्रतिपन्न इति आ. म द्वि. । आ. चू. माक्षिकधातौ, न० वाच० स्वनामख्याते विमानभेदे, सम० स १७ । जंबुमंदरपौरस्त्ये सीताया महानद्या उत्तरस्थे स्वनामख्याते चक्रवर्तिविजयक्षेत्रे, स्था ठा. ८ । दो आवत्ता स्था० ठा. २ महाविदेहस्थे चक्रवर्तिविजयक्षेत्रे, च । जं ॥

कहिणं भंते महाविदेहे वासे आवत्तणामं विजए पणत्ते गोअमा ! णीलवंतस्स वासहरपव्वयस्स दाहिणेणं सीआए महाणईए उत्तरेणं णलिणे कूडस्स वक्खारपव्वयस्स पच्चिमेणं दहावतीए महाणइए पुरच्छिमेणं एत्थणं महाविदेहे वासे आवत्ते णामं विजए पणत्ते सेसं जहा कच्छस्स विजयस्स ॥ जं. ।

आव ( ट्ट ) पच्चावत्तसेढियसोत्थिय सोवत्थिय पूसमाणवध्धमाणगमच्छंडगमकरंडगजारामारफुल्लावलियपउमपत्त सागरतरंगवणलयपउमलयभत्तिचित्तं ॥

आवर्तप्रत्यावर्तश्रेणिप्रश्रेणिस्वस्तिकपुष्यमाणवर्द्धमानकमत्स्याण्डकमकराण्डकजारमारपुष्पावलिपद्मपत्रसागरतरंगवासन्तीलतापद्मलताभक्तिचित्रनस्वनामख्याते नाट्यविधिभेदे, राज० ॥

आव ( ट्ट ) तकूड-आवर्तकूट-न० महाविदेहस्थनलिनकूटवक्षस्कारपर्वतस्थे स्वनामख्याते कूटे, । जं ॥

आव(ट्ट)त्तण-आवर्तन-आवृत आधारे ल्युट् सूर्यस्य पश्चिमादिगवस्थितच्छायायाः पूर्वदिग्गमनसमये मध्याह्नकाले "आवर्तना तु पूर्वाह्णोऽपराह्णस्तु ततः परम्." स्मृति वाच० विलयने, ( आवट्टती तत्थ असाहुकम्मा ) आवर्त्तने विलीयंते इति ॥ सूत्र० १ श्रु. ५ अ ॥

पीडने, ( आवट्टीकम्मसु पावएसु ) आवर्त्यते पीड्यते दुःखमाग् भवतीति सूत्र० १ श्रु १ अ. ॥

आकंपने ( कहणाउट्टणआगमणपुच्छणा दीवणा य कज्जस्स ) आवर्त्तनमाकंपनं राज्ञः प्रक्षोभननम् व्य० ए उ. ।

आ. वृत भावे ल्युट् आलोडने गुणने, च धातूनां द्रावणे आवर्त्तयति संसारचक्रम् आ. वृत णिच् कर्तरि ल्यु विष्णौ, ( आवर्त्तनो निवृत्तात्मा विष्णुसह० ) जम्बूद्वीपोपद्वीपभेदे च । आवर्त्त्यतेऽनया ल्युट्ङीप् द्रव्याम् स्त्री आधारे ल्युट्ङीप धातुद्रव्यद्रावणाधा मूषायाम्, करणे, ल्युट्वेष्टने, प्राचीरादौ न० । वाच० ॥

आव(ट्ट)त्तणपेढिया-आवर्त्तनपीठिका-स्त्री० इन्द्रकीलिकानिवेशस्थाने, आवर्त्तनपीठिका यत्रेन्द्रकीलके निवेश्यत इतिजी. ३ प्र ( वज्रामयीतो आवत्तणपेढिआउ ) आवर्तनपीठिका नाम यत्रेन्द्रकीलका उक्तं च विजयद्वारचिन्तायाम् जीवाभिगममूलटीकाकारेण " आवर्तनपीठिका यत्रेन्द्रकीलको भवतीति " ॥ राज० । जी. जं० ॥

आव (ट्ट) त णिज्ज-आवर्तनीय-त्रि० आ. वृत-णिच्-अनीयर् द्रावणीये धात्वादौ, वाच० ॥

आव ( ट्ट ) तय-आवर्तक-पुं० आवर्त एव स्वार्थे कन् आवर्त शब्दार्थे प्रा. ॥

आव (ट्टा) त्तायंत-आवर्तायमान-त्रि० आवर्तं कुर्वाणे भ० श. ११ उ. ॥ प्रदक्षिणं भ्रमति, च कल्प० ॥

आवत्तायंतवट्टललियविमलसरिसनयणं ।

( आवत्तायंत्ति ) आवर्तं कुर्वाण तद्वद् ये वृत्ते च ललिते विमले च सदृशे च परस्परेण ते लोचने यस्य स तथा तं । भ. ११ श. ११ उ. ॥

( आवत्तायति ) आवर्तायमानं प्रदक्षिणं भ्रमदुत्थंविधं यत् ( प्रवरकणगगति ) प्रवरकनकं तद्वत् वृत्ते ( तडियविमलत्ति ) विमला या तडित् विद्युत् तत्सदृशे नयने लोचने यस्य स तथा तम् । कल्प० ॥

आवडिय-आपतित-त्रि० समन्तात्पतिते, ॥

आवण आपण-पुं० हट्टे, कल्प० ॥

आवरग-आवरक-न०-आ वृ-करणे अप् संज्ञायां कन् अपवरके, आच्छादके वस्त्रादौ, ॥

आवरण-आवरण-न० आव्रियते देहोऽनेन आ वृ करणे ल्युट् वाच. । आ मर्यादया वृणोतीत्यावरणम् । स्था. ४ ठा. ।

अगरक्षादिके, ज्ञा० ८ अ. ।

कवचादिके उत्त० २ अ. ।

( जाणावरणपहरणे ) आवरणं कवचादि आ. क०

आवरणे कवचादी सूत्र० १ श्रु. ८ अ ।

( जोहाणयं उप्पत्ती आवरणाणं पहरणाणं च ) आवरणानां सन्नाहानाम् स्था० ए ठा ॥

आवरणानां कंकटानाम् ज्ञा० १६ अ. ।

स्फुरकादिके ( सचावसरपहरणावरणभरियजुद्धसज्जाणं ) आवरणानि च स्फुरकादीनि । औप. । फलादिके, आचा १ अ. ५ उ. ।

आव्रियते आकाशमनेनेत्यावरणम् प्रसादनगरादिके, स्था० ए ठा. ॥

आच्छादनसाधनमात्रे, वाच स्थगने, वृ १ उ. ।

ईपद्वरणे आवरिज्ज० वा णिवारिज्जइवा आवरिज्जइति ईष. द्व्रियते । भ० ए श. ३३ उ. ।

आव्रियते चैतन्यमनेन वेदान्तिमतसिद्धे चैतन्यावरणे अज्ञाने, वाच० ।

आव्रियते आच्छाद्यतेऽनेनेत्यावरणम् यद्वा आवृणोत्याच्छादयति अन्यादिभ्य. कर्तर्यनट्प्रत्यये आवरणम् । मिथ्यात्वादिके कर्मभेदे, स च जीवव्यापाराहृतकर्म्मवर्णान्तः पाती विशिष्टपुद्गलसमूहः । कर्म० । प्रव० २१५ द्वा. ।

तच्चाद्विविधम् ज्ञानावरणं दर्शनावरणं च(नाणस्स दंसणस्स आवरण वेयणीय य ) पं सं. ३ द्वा० ।

( पढमं नाणावरणं बीयं पुणदंसणस्स आवरणं ) ज्ञायते परिच्छिद्यते वस्तु अनेनेति ज्ञानं । सामान्यविशेषात्मके वस्तुनि विशेषग्रहणात्मको बोधः । आव्रियते आच्छाद्यतेऽनेनेत्या-

वरण मिथ्यात्वादि, सचित्तजीवव्यापाराहृतकर्म्मवर्गणान्तःपाती विशिष्टः पुद्गलसमूहज्ञानस्य मत्यादेरावरणं ज्ञानावरण तथा दृश्यतेऽनेनेति दर्शन सामान्यविशेषात्मके वस्तुनि सामान्यग्रहणात्मको बोधस्तस्यावरणं दर्शनावरण प्रव. ११५ द्वा. ॥ कर्म्म । पंचप्रकार ज्ञानावरण चतुष्प्रकार दर्शनावरणम् क प्र । आवरणानि मतिज्ञानावरणश्रुतज्ञानावरणावधिज्ञानावरणमनःपर्यायज्ञानावरणकेवलज्ञानावरणचक्षुर्दर्शनावरणाचक्षुर्दर्शनावरणावधिदर्शनावरणावधिदर्शनावरणा केवलदर्शनावरणलक्षणानि नव । पचविध ज्ञानावरण नवविध दर्शनावरण आवरणानि ज्ञानावरणपञ्चकदर्शनावरणनवकस्वरूपाणि ॥ कर्म्म. ॥

पंचविहं नाणावरणं, नव नेया दंसणस्स ।

ते च नेदा ज्ञानावरणस्य ( णाणावरण ) शब्दे । दर्शनावरणस्य ( दंसणावरण ) शब्दे ।

आवरणस्य द्विविधानि स्पर्शकानि नवन्ति । सर्व्वोपघातीनि देशोपघातीनि च । सर्व्वं स्वाचार्य्यं गुणमुपघ्नन्तीत्येवं शीलानि सर्व्वोपघातीनि । स्वाचार्य्यस्य गुणस्य देशमुपघ्नतीत्येव शीलानि देशोपघातीनि । आह च नाष्यकृत् ।

मइसुयनाणावरण, दंसणमोहं च तदुवघातीणि ।
तप्फड्डगाइं दुविहाइं, सव्वदेसोवघाईणि ॥ आ म द्वि १ अ. ॥ पं. सं. ३ द्वा ।

मिथ्यात्वादिक च किङ्कस्या ऽऽवारकमित्याह ।

अहुणो जस्सोदयओ, न लप्भइ दंसणाइसामइयं ॥
लब्द पुणो व नस्सइ, तदिहावरण कसायाई ॥

सुगमा । नवरं तदिह कषायादिकर्म्मावरणमुच्यते । तत्राऽनन्तानुबन्धिकषायचतुष्टय मिथ्यात्वञ्च सम्यक्त्वस्याऽवरण । श्रुतस्य श्रुतज्ञानाऽवरण । चारित्रस्य चारित्रमोहनीयमिति ॥

तदेवाह ॥ पढमेल्लुयाण उदयत्यादि ॥

अथवा पातनान्तरमाह ।

अहवा खयाइओ, केवलाई जं जेसिं ते कई कसाया
को वा कस्सावरणं, को वक्खयाई कमो कस्स ॥ २२६ ॥

अथवा यत्केवलादिकमादिशब्दाद्दर्शनचारित्रपरिग्रहः एषा कषायाणा क्षयादितो भवत्यादिशब्दात्क्षायोपशमादि परिग्रह । ते कति कषाया को वा कस्य साहायिकस्याऽवरण को वा क्षयादिक्रमः । कस्येति गाथार्थः ॥

अथ क्रमेणोत्तरमाह ॥

पढमील्लुयाण उदए, नियमा संजोयणा कसायाणं ।
सम्मद्दंसणलंनं, नवसिध्दी या वि न लहंति ॥ २२ ॥

तत्र प्रथमील्लुकानां संयोजनाकषायाणामुदये नियमात्सम्यग्दर्शनलाभ नवसिद्धिका अपि न लभन्ते । किमुताऽनव्याः । इत्यक्षरयोजना । नावार्थस्त्वयं । प्रथमा एव देशीवचनत प्रथमिल्लुकास्तेषां प्रथमिल्लुकानामनन्तानुबन्धिक्रोधमानमायालोभानामित्यर्थः । प्राथम्यञ्चैषां सम्यक्त्वाख्यप्रथमगुणविघातित्वात् क्षपणक्रमाद्वेति । उदये विपाकाऽनुनवे सति नियमान्नियमेन अस्य व्यवहितसम्बन्धस्स च दर्शित एव । किं विशिष्टानां प्रथमिल्लुकानामित्याह । कर्म्मणा तत्फलभूतससारे संयोजनाहेतव कषाया संयोजनाकषायास्तेषामुदये नियमात्सम्यगविपरीत दर्शन सम्यग्दर्शन । सम्यक्त्व

तस्य लाभ: तं नवे सिद्धिर्येषान्ते भवसिद्धिका: ॥ ननु सर्व्वेषामपि सिद्धिर्भवे एव कार्स्नमिद्धिर्नवतीति । किमनेन व्यवच्छिद्यते । सत्यम् । किंत्विह व्याख्यानाद्भव एव भवा गृह्यन्ते । तद्भवसिद्धिका इत्यर्थः । तेऽपि न लभन्ते किमुताऽनव्याः । इति निर्य्युक्तिगाथार्थः ॥

नाष्यम् ॥

खवणं पडुच्च पढमा, पढमगुणविगाडणोत्ति वा जम्हा ।
संयोयणा कसाया, नवादिसंजोयणा उत्ति ॥

गतार्थैव ॥ विशे० ॥

आओ वउवादाणं, तेण कसाया जओ कमस्सायाा ।
चत्तारि बहुव्वयणओ, एवं बीआदओ वी मया ॥

ते च बहुवचननिर्देशाच्चत्वारः क्रोधादयो गम्यन्ते । एव देशविरत्याद्युत्तरोत्तरगुणघातित्वाद्वितीयतृतीयचतुर्थत्वेन कषायशब्दादिवाच्यत्वेन च द्वितीयादयोऽपि मताः सम्मता इति ॥ भवसिद्धियावीत्येतद् व्याख्यानयति ॥

नवसिध्दियावि नणिए, नियमा न लब्भंति तहमनव्वावि ।
अविसद्देणवगहिया, परित्तसंसारिया ईया ॥

भवसिद्धिका अपीत्युक्तेऽपि शब्दादनव्यास्त नैव लभन्त इत्यवगम्यत एव । अथवाऽपि शब्दात्परित्तससारादयोऽपि न लभन्त इति गम्यत इति गाथार्थ ॥ २३१ ॥

उक्ताः सम्यक्त्वस्याऽवरणभूता कषाया अथ देशविरत्यावरणभूतास्तानाह ॥

बिअ कसायाणुदये, अप्पच्चक्खाणणामधेज्जाणं ।
सम्मदंसणलंनं, विरया विरइं न उ लहंति ॥

सर्व्वप्रत्याख्यानं देशप्रत्याख्यानञ्च न येषामुदये लभ्यतेऽप्रत्याख्यानाः । अकारस्य सर्व्वप्रतिषेधवचनत्वादप्रत्याख्यान इति नामधेय येषामप्रत्याख्याननामधेयानां द्वितीयस्य देशाविरतिगुणस्याऽऽचारकत्वात् । द्वितीयास्ते च ते कषायास्तेषां द्वितीयकषायाणामुदये भव्या सम्यग्दर्शनलाभं लभन्त इति वाक्यशेषः ॥ अथ च वाक्यशेष ( विरयाविरई न उ लहंति ) इत्यत्र तु शब्दोपादानात् लभ्यते । एषामुदये भव्याः सम्यग्दर्शनलाभ लभन्ते ते विरताविरतिं देशविरतिम्पुनर्लभन्त इति वाक्यसङ्गतेरिति विरति वा । विरतिश्च यस्यां निवृत्तौ सा विरताविरतिस्तामिति निर्य्युक्तिगाथार्थः ॥

भाष्यम् ॥

सव्वं देसो वजओ, पच्चक्खाणं न जेसिमुदएणं ।
ते अप्पचक्खाणा, सव्वनिसेहे मओकारो ॥१॥
सम्मद्दंसणलंनं, लब्भंति नवियति वक्कसेसोयं ।
विरयाविरइविसेसे,णं तुसद्दसब्भखिओयंच ॥२३४॥

गतार्थैव ।

अथ तृतीयस्य सर्वविरतिगुणस्याऽचारकांस्तृतीयकषायानाह ॥

तइयकसायाणुदए, पच्चक्खाणावरणनामधेज्जाणं ।
देसिक्कदेसविरई, चरित्तलंनं न उ लहंति ॥

सर्वविरतिलक्षणतृतीयगुणघातित्वात्क्षपणक्रमाद्वा तृतीयास्ते च ते कषायाश्च तृतीयकषायाः क्रोधादय चत्वारः तेषा मुदये कथं नूतानामावृण्वन्त्यावरणाः प्रत्याख्यान सर्वविरति लक्षण तन्त्यावरणाः एतदेव नामधेय येषा ते प्रत्याख्यानावरण

नामधेयास्तेषां । अ.ह न त्वन्यत्र ननामधेयानामुदये सर्वथा प्रत्याख्यानं नास्तीत्युक्त । तत्राप्रतिषिद्धत्वादिहापि चावरणशब्देन प्रत्याख्यानस्य सर्वस्यापि निषेधो गम्यत इति । क एषां प्रतिविशेष इत्यत्रोच्यते । तत्र नञ्सर्वनिषेध उक्त । इह त्वाङीमर्यादायामर्थत्वात्सर्वविरतिप्रत्याख्यानमर्यादया अथवा ईषत्सावद्ययोगानुमतिमात्रविरतिरूप प्रत्याख्यानमावृणुएव तीति प्रत्याख्यानावरणा इति व्युत्पत्तेस्सर्वविरतिरूपप्रत्याख्याननिषेधार्थ एवायं वर्तते न देशविरतिप्रत्याख्याननिषेधे । आवरणशब्देस्तथाचाह देशश्च देशैकदेशो तत्र देश स्थूलप्राणातिपातादि, एकदेशस्तु तस्यव इत्य नस्पातकायाद्यतिपातस्तयोर्विरतिः तिद्ध्वित्तां लभत इति वाक्यशेषः (चरित्तलंभं न लहंति) इत्यत्र तुशब्दोपादानादव लभ्यते । चरत्यनिंदितमनेनेति चारित्रं । अष्टविधकर्मचयरिक्तीकरणाद्वाचारित्रं । सर्वविरतिक्रियेत्यर्थः । तस्य लाभस्तेषामुदये लभत देशैकदेशविरतिं पुनर्न लभत इति निर्युक्तिगाथार्थ । विशे. ॥

प्रत्याख्यानावरणवक्तव्यता (पञ्चक्खाणावरण) शब्दे ॥

अथोक्तमेवार्थं संगृह्य विभणिषुस्तथा चतुर्थकषायाणां यथाख्यातचरित्रादिविघातित्वं च दिदर्शयिषुराह ॥

मूलगुणाणं लंभं, न लहइ मूलगुणघाइणो उदये ।
संजलणाणं उदए, न लहइ चरणं अहक्खायं ॥

इह सम्यक्त्व महाव्रताणुव्रतानि च मूलभूता गुणा मूलगुणाः उत्तरगुणानामाधारभूतत्वात्तेषां मूलगुणानां लाभं न लभते । कदेत्याह । यथोक्तान् मूलगुणान् हंतु शीलंयेषां ते मूलगुणघातिनस्तेषां मूलगुणघातिनामनन्तानुबंधि अप्रत्याख्यानप्रत्याख्यानावरणानां द्वादशानां कषायाणामुदये एतच्च ( पढमिल्लुयाण उदए ) इत्यादिना सर्व भावितमेव तथा ईषज्ज्वलनात्संज्वलना सपदि ज्वलनाद्वा सज्वलना. परीषहादिसंपाते चारित्रिणमपि ज्वलयन्तीति वा सज्वलना क्रोधादय एव चत्वार कषायास्तेषामुदये न लभते लब्धं वा त्यजति चरण चारित्रं किंसर्वमपि नेत्याह । यथैव नीर्थंकरगण धरैराख्यात । अकषायमित्यर्थ । सकषायं तु लभते । नच यथाख्यातचारित्रमात्रमेवोपघ्नंति संज्वलनाः किं तु विशेष चारित्राणामपि देशोपघातिनो भवंति । तदुदये शेषचारित्र देशाभिचारसिद्धेरितिनिर्युक्तिगाथार्थ । विशे० आव म. ।

आवरणसत्थ–आवरणशास्त्र–न० आव्रियते आकाशमनेन्यावरणम् । भवनप्रासादनगरादि तल्लक्षणं शास्त्रमपि तथा वास्तुविद्यात्मके पापश्रुतभेदे, स्था० ए ठा. ।

आवरणावरणपविभत्ति–आवरणावरणप्रविभक्ति–न० नाट्यविधिभेदे, ॥

चंदावरणपविभत्तिं च सूरावरणपविभत्तिं च आवरणावरणपविभत्तिं णामं दिव्वं णट्टविहिं उवदंसेइ ॥

चन्द्रावरणप्रविभक्तिसूर्यावरणप्रविभक्तियुक्तमावरणावरण प्रविभक्तिमत्यावरणप्रविभक्तिनामकमष्टम नाट्यविधिमुपदर्शयन्ति । राज० ॥

आवरणी–आवरणी– स्त्री० आवरणकारिण्याम् विद्यायाम्, ज्ञा० १६ अ० ॥

आवरिज्जमाण–आव्रियमाण– त्रि० स्थगमाने, ( आवरिज्जमाणाया । आवरिज्जमाणत्ति) स्थगमानानि नं० १५ ठा०२ उ० ।

आवरित्ता–आवृत्य– अव्य० आवरण कृत्वेत्यर्थे ( आवरित्ता चिट्टइ ) स्था० ॥

आवरिय–आवृत्त– त्रि० आ० वृ क्त कृतावरणे, अप्रकाशीकृते, आच्छादिते, वाच० ( आवरिओ कम्मेहि ) आवृत्तःप्रच्छादित. नि० चू० १ उ० । आवरिया विरणमुहे ) आवृता अपि सन्न रूरूसन्नाहा । अपि व्य० १ उ० ॥

आवरिसण–आवर्षण– न० उदकादिना उदकप्रदाने, ॥

समज्जणआवरिसणउवलेवणसुहुमदीएवए चेव ।

आवर्षणमुदकेन उदकप्रदानमिति बृ० उ० १ ॥ आवरिसणं पाणिएण उप्फालण नि० चू० १ उ० । ( उवलेवणसम्मज्जणं वरिसण ) आवरण गन्धोदकादिनेति ग० २ अधि० थवु । उद्गादि आवरिसणं उदकेनादिशब्दाद् घृतेन तैलेन वाऽऽवर्षणं करोति बृ० ४ उ. ॥

समन्तादवर्षणे ( आवरिसेज्जा ) आसमन्ताद्वर्षेत् राज० ॥

आवरिहिय–आवर्हित– त्रि० आ० वृह उद्यमने णिच् क्त आ वर्हहिंसायाम् क. । उत्पाटिते, उन्मूलिते. वाच० ॥

आवलण–आवलन–न० मोटने (गलगवलावलणमारणाणि ) गलस्य कण्ठस्य गवलस्य शृंगस्याऽवलनं च मोटनम् प्रश्न० १ द्वा० ॥

आव ( लि ) ली–आव ( लि ) ली स्त्री० आ वल वा ङीप् पङ्क्तौ विशे० अनु० १ अ० ( कोंचावलीइ वा हारावलीइ वा वलयावलीइ वा )आवलिपदोपादान वर्णोत्कर्षप्रतिपादनार्थम् । जं० । अस्यार्थोजीवाजीवशब्दे द्रष्टव्य ॥

आवलिय–आवलित– त्रि० आ वल चलने क्त ईषच्चलिते , सम्यक्कुञ्चलिते, च । वाच० । आमोटिते, ॥

(अणावलियंओवलियं) अवलितं यथात्मनो वस्त्रस्य चवलितमिति मोटनं न भवतीति । उत्त० २६ अ० ॥

आवलिय ( या ) णिवाय–आवलिकानिपात–पु० आवलिकया क्रमेण निपात संपात आवलिकानिपात. क्रमेण सपाते,॥

ताजोगेति वत्थुस्स आवलि ( त ) याणिवाते आहितेति वदेज्जा ताउति ॥

आस्तां तावदन्यकथनीय सम्प्रत्येतावत्कथ्यते । योग इति । वस्तनो नक्षत्रजातस्य 'आवलिकानिवाये'ति)आवलिकया क्रमेण निपातश्चन्द्रसूर्ये. सह सपात आख्यातो मयेति वदेत सू० प्र. प्रा १० । चं. प्र. प्रा. १० ।

आवलिय ( या ) पविट्ठ–आवलिकाप्रविष्ट–त्रि० आवलिकासु श्रेणिषु प्रविष्टा व्यवस्थिता आवलिकाप्रविष्टा. श्रेण्या व्यवस्थिते, जी. ३ प्र. ॥

इमे णं भंते ! रयणप्पभाए पुढवीए णरगा किं संठिता प० गो० दुविहा पं० तं आवलियपविट्ठा य आवालियबाहिराय तत्थणं जे ते आवलियपविट्ठा ते तिविहा पं. तं वट्टा १ तंसा २ चउरंसा ३ जी. प्र. ३ ।

आवलिकास्ते संस्थानमधिकृत्य त्रिविधाः प्रज्ञप्तास्तद्यथा । वृत्तास्त्र्यस्राश्चतुरस्रा । जी. टी. ।

सोहम्मीसाणसु ण भंते ! कप्पेसु विमाणे किं संठिता प० गो० दुविहा० पं० तं० आवलियाए बाहिराय ॥

तत्रावलिकाप्रविष्टानि नाम यानि पूर्वादिषु चतसृषु दिक्षु श्रेण्योवस्थितानि यानि पुनरावलिकाप्रविष्टानां प्राङ्गणप्रदेशे

कुसुमप्रकर इव यतस्ततो विप्रकीर्णानि तान्यावलिकाबाह्यानि। तानि च पुष्पावकीर्णानीत्युच्यन्ते । पुष्पाणीव इतस्ततोऽवकीर्णानि विप्रकीर्णानि पुष्पावकीर्णानि इति व्युत्पत्तेः जी० टी० ४ प्र ॥

**आवलिय ( या ) पविभत्ति**—आवलिकाप्रविभक्ति—न० दिव्ये नाट्यविधिभेदे, ॥

चंदावलिपविभत्तिं च सूरावलिपविभत्तिं च हंसावलिपविभत्तिं च एगावलिपविभत्तिं च तारावलिपविभत्तिं च मुत्तावलिपविभत्तिं च आवलियपविभत्तिं णामं दिव्वं णट्टविहिं उवदंसेइ ॥

चन्द्रावलिप्रविभक्तिसूर्यावलिप्रविभक्ति, वलयावलिप्रविभक्ति हंसावलिप्रविभक्त्येकावलिप्रविभक्ति, तारावलिप्रविभक्ति, मुक्तावलिप्रविभक्ति, कनकावलिप्रविभक्ति, रत्नावलिप्रविभक्त्याभिनयात्मकमावलिप्रविभक्ति नाम पञ्चमं नाट्यविधिमुपदर्शयन्ति राज० टी० ॥

**आवलिय ( या ) बाहिर**—आवलिकाबाह्य—त्रि० इतस्ततो विप्रकीर्णे, अत्र यद्वक्तव्यन्तद् (आवलियापविट्ठ) शब्दे उक्तम् जी० ४ प्र० ॥

**आवलिया**—आवलिका—स्त्री० पङ्क्तौ बृ० ३ उ । आवलिका पङ्क्तिरभिधीयते। आलीश्रेण्यावली पङ्क्तिरिति वचनात् प० स० ( भमरावलियत्ति वा ) भ्रमरावली भ्रमरपङ्क्तिः । राज० एकान्ते स्थितायां विच्छिन्नायाम्मण्डल्यां च । या विच्छिन्ना एकान्ते भवति मण्डली सा आवलिका या पुन स्वस्थान एव सा मण्डली। व्य० ४ उ ।

अथावलिकाया मण्डल्याश्च कः प्रतिविशेष इत्यत आह ॥

छिण्णाछिण्णविसेसो, आवलियाए अंतएगत्ति ।
मंडलीए सट्ठाणं, सच्चित्ताएसु संकमति ॥

आवलिकामण्डल्योः परस्परं छिन्नाछिन्नरूपो विशेषः आवलिका छिन्ना विविक्त एकांतो भवति । मण्डलिका त्वच्छिन्ना ( आवलियतत्थछिन्ना मंडलिया होइ अच्छिन्ना उ ) इति वचनात् । एतदेव सुव्यक्तमाह । आवलिकायामुपाध्यायकोऽन्तर्मध्ये विविक्ते प्रदेशे तिष्ठति । मण्डल्या पुनः स्वस्थानमभवन च पाठयितरिसंक्रामति सचित्तादिषु तद्देशगतसचित्तादिविषय(आवलियमंडलिकमो पुव्वुत्तो छिण्णछिण्णभेदेण ) व्य० १० उ । क्रमे, सूर प्र० १० प्रा च प्र १० प्रा कालविशेषे, असंख्येयसमयसंघातात्मके कालविशेषे आवलिका । विशे० । असंख्यातैः समयैरावलिका जघन्ययुक्ता सख्येयसमयराशिमानेति । त० । अनु० । असंख्यातसमयसमुदायात्मिका आवलिका क्षुल्लकभवग्रहणकालस्य षट्पञ्चाशदुत्तरद्विशततमभागभूता इति स्था० ग. २ च० प्र प्रा २० आ० म० ।

असंखिज्जाणं समयाणं समुदयं समइ समागमेणं सा एगा आवलियत्ति पवुच्चइ । भ० ।

टी० असङ्ख्यातानां सम्बन्धिनो ये समुदया वृन्दानि तेषां या समितयो मीलनानि तासां यः समागमः संयोग इति समुदयसमितिसमागमस्तेन यत्कालमानं भवतीति गम्यते स आवलिकेति प्रोच्यते ( संखेज्जा आवलियत्ति ) किन्तु षट् पञ्चाशदधिकशतद्वयमावलिकानां क्षुल्लकभवग्रहणं भवतीति भ ६ श ७ उ. ॥ अनु० विशे० न० प० स दर्श० कर्म०ज्योतिः ॥

**आवसंत**—आवसत्—त्रि० आवासं कुर्वति ॥

(सुयंमे आउसंतेणं भगवया एवमक्खायं ) सुयमे आउसंतेणति मयेत्यस्य विशेषणात्तत आङिति गुरुदर्शितमर्यादया वसता अनेन तत्वतो गुरुमर्यादावर्तित्वरूपत्वात् गुरुकुलवासस्य तद्विधानमर्थत उक्तं ज्ञानादिहेतुत्वात् स्था १ ठा. (गारमावसंतेहिं) आगारमावसद्भिः सेवमानैः आचा० ५ अ. ३ उ. ॥

**आवसह**—आवसथ—पु० आवसत्यत्र आ वस अथच् गृहे, सूत्र० २ श्रु. २ अ. ॥

प्रति० ( आवसहं च जाणमत च ) आवसथं गृहमिति सूत्र० १ श्रु. ४ अ. । आश्रये, ( आवसह वासमुस्सिणामि ) आवसथं वा युष्मदाश्रयं समुच्छृणोमि आचा० ७ अ. २ उ. । परिव्राजकाश्रये उटजाकारे गृहे, आवसथः परिव्राजकाश्रय इति प्रश्न० १द्वा. । आवसथास्तापसाश्रया उटजादयः । दशा. ( जेणेवपरिव्वायगावसेहे तेणव उवागच्छइ परिव्वायावसहेत्ति ) परिव्राजकमठः भ० २ श. १ उ. केचनावसेपूटजाकारेषु गृहेषु वसंतीति सूत्र० २ श्रु. २ अ. आर्याच्छंदोरचिते कोपभेदे, वाच० ॥

**आवसहिय**—आवसथिक —पुं० आवसथो गृहं तेन च रतीत्यावसथिकः । प्रति० सूत्र० १ श्रु. १ अ आवसथे गृहे वसति ठण् स्त्रियां ङीप् गृहस्थे, वाच० आवसथास्तापसाश्रया उटजादयस्तत्रवसन्तीत्यावसथिकाः ॥ दशा० तीर्थिकविशेषे सूत्र० २ श्रु. ७ अ आवसथिकाः केचनावसयेपूटजाकारेषु गृहेषु वसतीति सूत्र० २ श्रु २ अ. ॥

**आवसहि**—आवसति—स्त्री० वसत्यत्र गृहे वसतिः रात्रि. सम्यक् वसतिः प्रा० स० निशीथे, वसते सम्यक्त्वञ्चावश्य गृहवासयोग्यच तत्रार्द्धरात्रेऽवश्यं भवतीति तस्य तथात्वम् वाच० ॥

**आवस्सय**—आपाश्रय—पुं० आङ्मर्यादाभिविधिवाची। आमर्यादयाऽभिविधिना वा गुणानामापाश्रय आधार इदमित्यापाश्रयः । सामायिकादिके आवश्यके,॥

विशेषावश्यके आवश्यकपर्यायनामान्यधिकृत्य ।

आवस्सयं अवस्सकरणिज्जं धुवनिग्गहो विसोहीय ।

आमर्यादयाऽभिविधिना वा गुणानामापाश्रय आधार इदमित्यापाश्रयं गुणाधार इत्यर्थः । नन्वाधारवाचक आपाश्रयशब्दः पुंल्लिङ्गे वर्तते । तत्कथमापाश्रयमिति नपुंसकत्वमितिचेन्न । प्राकृतशैलीवशतोऽदोषादिति । विशे० ।

**आवश्यक**—न० अवश्य भाव आवश्यक उन्हमनोज्ञादि त्वच्चेति मनोज्ञादेराधिकृतत्वाद्वुञ् । आ० चू २ अ ।

अवश्यम्भावे नैयत्ये,वाच० अवश्य कर्म्म आवश्यक अवश्यकर्तव्यक्रियानुष्ठाने, । न ०

आवस्सगपरिसुद्धीय, होंति भिक्खुस्स लिङ्गाइं ।

आवश्यकपरिशुद्धिश्चावश्य करणीययोगनिरतिचारतेति । दश० अ. १० । द्वा. । आव. । धर्म । अनु । पञ्चा. । स्था. १० ठा. । नियमात्कर्तव्ये, आवश्यकानि नियमत एव करणीयानीति आव० ४ अ. । अवश्यम्भावित्वाद्वाच्यत्वाद्वावश्यकं स्था०४ठा.अनु ।अवश्यकर्तव्यमावश्यकम् श्रमणादिभिरवश्यमुभयकालं क्रियते इति भावः । क्वचिदितिकर्मणि वाहुलकाद् प्रत्ययः । पृषोदराद्य इति निपातनात् शेषरूपसिद्धिः । अथवा ज्ञानादिगुणानामासमन्ताद्वश्यमात्मानं करोति । यदि वा आसमन्ताद्वश्या इन्द्रियकषायादिभावशत्रवो यस्मात्तदाव-

श्यकं । शेषाद्वेतिकप् प्रत्ययः यदि वा ज्ञानादिगुणकदम्बकं मोक्षो वा आसमन्ताद्वश्यः क्रियतेऽनेनेत्यावश्यकं । आ० म० प्र० १ अ. । प्रव० । स्था । ग । विशे० । ओघ० ।

दंसणविणए आवस्सए अ सीलव्वए निरइआरो ।

आवश्यकं अवश्यकर्तव्यं संयमव्यापारनिष्पन्नं तस्मिन्निरु विशुद्धश्चयुक्तगुणकलापे, इति । आ० क० । ज्ञा. ।

तत्प्रतिपादके सामायिकादिषडध्ययनकलापात्मके अङ्गबाह्ये श्रुतविशेषे च अनु० । विशे० । स्था० । नदी० ।

समणेणं सावएणय, अवस्सकायव्वं हवइ जम्हा ।
अंतो अहो निसस्सय, तम्हा आवस्सयं नाम २ सेत्तं आवस्सयं ॥

टी० श्रमणादिना अहोरात्रस्य मध्ये यस्मादवश्यं क्रियते । तस्मादावश्यकं । एवमवश्यकरणीयादिपदानामपि व्युत्पत्तिर्द्रष्टव्या । उपलक्षणत्वादस्य इति गाथार्थः । अन. ॥

तत्राच विशेषावश्यके । आवश्यकस्य पर्यायनामान्याभिधित्सुराह ।

पर्यायाः ॥

तस्साभिन्नत्थाइं, सुपसत्थाइं जहंतु निययाइं ।
अव्वामोहाई, निमित्तमाहपज्जाय नामाइं ॥

तस्याऽवश्यकस्य पर्यायनामान्याह इति सबन्धः । कथंभूतान्यभिन्नार्थानि सुप्रशस्तानि यथार्थो व्यवस्थितस्तथैव नियतानि निश्चितानि । किमित्याह ॥ अव्यामोहादिनिमित्त एकार्थिकानि पर्यायनामभिर्ऽतिरन्योन्यस्थानेष्वन्यान्यनामश्रवणतः शिष्यो नमुह्यति । आदिशब्दान्नानादेशजविनेयानां सुखेनैवार्थ प्रतिपत्तिर्भवति इत्यादि वाच्यमिति ॥

कानि पुनस्तानि पर्यायनामानीत्याह ।

आवस्सयं १ अवस्सकरणिज्जं २ धुव ३ निग्गहो ४ विसोहिय ५ अज्झयण ६ छक्कवग्गो ७ धनाउ ८ आराहणा ९ मग्गो १० ।

एतानि दश पर्यायनामानि ॥

तत्राऽऽवश्यकमिति कः शब्दार्थः इत्याह ।

समणेण सावएय, अवस्सकायव्वयं हवइ जम्हा ।
अंतो अहोनिसिस्सा, तम्हा आवस्सयं नाम ॥

श्रमणादिभिरहोरात्रिमध्येऽवश्यंकरणादावश्यकमितीह तात्पर्यमिति ॥

एतदेव सविशेषमाह ॥

जदवस्सं कायव्वं, तेणावस्सयमिदंगुणाणं वा ।
आवस्सयमाहारो, आमज्जायाभिविहिवाइ ॥
आवस्संवा जीव, करेइ जं नाणदंसणगुणाणं ।
संनिज्झभावणत्थयणेहि, वा वासयं गुणोओ ॥

यद्यस्मादवश्यं कर्तव्यं तेन तस्मादावश्यकमिदमित्येतत्प्राक्तनगाथाया पर्यवसितार्थकथनमेव । अथवा आङ्मर्यादाभिविधिवाची । आमर्यादया अभिविधिना वा गुणानामापाश्रय आधार इदमित्यापाश्रयं गुणाधारमित्यर्थः । नन्वाऽऽधार वाचक आपाश्रयशब्दः पुंल्लिङ्गे वर्तते । तत्कथमापाश्रयतीति नपुंसकत्वमितिचेन्न । प्राकृतशैलीवशतोऽस्येपादिति । अथवा ज्ञानादिगुणानामासमन्ताद्वश्यमात्मानं करोतीत्यावश्यकं । यथा । अन्तं करोतीत्यंतकः । सान्निध्यभावच्छादनैर्वा आवासकं गुणतः इत्यावासकमुच्यते । इदमुक्तं भवति । वसनिवासे इति गुणशून्यमात्मानं गुणैरासमन्ताद्वासयति गुणसान्निध्यमात्मनः करोतीत्यावासकं । अथवा यथावद्वासधूपादिभिस्तथा गुणैरासमन्तादात्मानं वासयति भावयति रंजयत्यावासकं । यदि वा वस आच्छादने गुणैरासमन्तादात्मानं छादयति । छद पट्ट संवरणे । दोषेभ्यः संवृणोत्यावश्यकमिति तदेतदेवमावस्सयत्याद्यं पर्यायनाम व्याख्यातं ।

शेषाण्यतिदिशन्नाह ॥

एवं चिअ सेसाइं, विउसासुय लक्खणाणुसारेण ।
कमसो वत्तव्वाइं, तहा सुयक्खंधनामाइं ॥

एवमेव शेषाण्यपि अवश्यकरणीयादीनि नामानि सिद्धान्तलक्षणाऽनुसारेण क्रमशो विदुषा वक्तव्यानि । तद्यथा । मुमुक्षुभिरवश्यं क्रियत इति अवश्यंकरणीयमिदमुच्यते । तथा अर्थतो ध्रुवत्वाच्छाश्वतत्वाद्ध्रुवं । निग्रहाने इन्द्रियकषायादयो भावशत्रवोऽनेनेति निग्रहः । अन्ये तु प्रवाहतोऽनादिकालीनध्रुवं कर्म्म तन्निग्रह्यते अनेनेति ध्रुवनिग्रह इत्येकमेवेदं पर्यायनाम व्याचक्षते । कर्ममलिनस्याऽऽत्मनो विशुद्धिहेतुत्वाद्विशुद्धिः । सामायिकादिषडध्ययनात्मकत्वादध्ययनषट्कं । वृजी वर्जने वृज्यन्ते दूरतः परिह्रियन्ते रागादयो दोषा अनेनेति वर्गः । अन्येतु षडध्ययनकलापात्मकत्वादध्ययनषट्कवर्ग इतीदमप्येकमेव पर्यायं नाम ब्रुवते । अभिप्रेतार्थसिद्धेः सम्यगुपायत्वान्न्यायः अथवा जीवकर्मसंबन्धापनयनान्न्यायः । अयमभिप्रायो यथा कारणिकैर्दृष्टो न्यायो द्वयोरर्थिप्रत्यर्थिनोर्भूम्यादिद्रव्यादिसंबन्धं चिरकालीनमप्यपनयत्येव जीवकर्मणोरनादिकालीनमप्याश्रयाश्रयिभावसंबन्धमपनयतीत्यावश्यकमपि न्याय उच्यते । मोक्षाराधनहेतुत्वादाराधना मोक्षपुरप्रापकत्वान्मार्ग इव मार्ग इति ॥ विशे० ॥ अनु० ॥ आ० ॥ चू० ॥ आ० म० प्र० ॥

आवश्यकस्य चतुर्धा निक्षेपो नामस्थापनाद्रव्यभावभेदात्

सेकिंतं आवस्सयं २ चउव्विहं पण्णत्तं । तंजहा । नामावस्सयं १ ठवणावस्सयं २ दव्वावस्सयं ३ भावावस्सयं ४ ॥

( सेकिंत आवस्सय ) मित्यादि अत्र से शब्दो मागधदेशीप्रसिद्धोऽथ शब्दार्थे वर्तते । अथ शब्दस्तु वाक्योपन्यासार्थः । स्तथा चोक्तम् ॥

अथ प्रक्रियाप्रश्नानन्तर्यमंगलोपन्यासनिर्वचनसमुच्चयेष्विति किमिति परप्रश्ने । तदिति सर्वनामपूर्वप्रक्रान्तपरामर्शार्थे । ततश्चायं समुदायार्थोऽथ किं स्वरूपं तदावश्यकं । एवं प्रश्निते सत्याचार्यः शिष्यवचनाऽनुरोधेन समाधानार्थं प्रत्युच्चार्य निर्दिशति ॥

(आवस्सयं चउव्विहं) इत्यादि अवश्यं कर्तव्यमावश्यकम् । अथवा गुणानामासमन्ताद्वश्यमात्मानं करोति इत्यावश्यकम् । यथाऽन्तं करोतीति अन्तकः । अथवा आवस्सयति प्राकृतशैल्या आवासकं । अत्र वस निवासे इति गुणशून्यमात्मानं वा समंताद्वासयति गुणैरित्यावश्यकं (चउव्विहं पण्णत्तं) चतस्रो विधा भेदा अस्येति चतुर्विधम् प्रज्ञप्तं प्ररूपितमर्थतस्तीर्थकरैः सूत्रतो गणधरैस्तद्यथा ( नामावस्सयं ) मित्यादि नामाभिधानं तद्रूपमावश्यकं नामावश्यकं आवश्यकाभिधानमेवेत्यर्थः । अथवा नाम्ना नाममात्रेणाऽऽवश्यकं जीवादीत्यर्थस्तल्लक्षणञ्चेदम् । यद्वस्तुनोऽभिधानं स्थितमन्यार्थे तदर्थनिरपेक्षं पर्यायानभिधेयं च नाम यादृच्छिकं च तथा विनेयाऽनु

प्रहार्यमेतद्व्याख्या यद्वस्तुन इन्द्रादिरभिधानमिन्द्र इत्यादि वर्णावलिमात्रमिदमेव आवश्यकलक्षणवर्णचतुष्टयावलीमात्रमिदमेव ।

आवश्यकलक्षणवर्णचतुष्टयावलिमात्र । यत्तदोर्नित्याभिसम्बन्धात्तन्नामेति सटकः ॥

अथ प्रकारान्तरेण नाम्नोलक्षणमाह। स्थितमन्यार्थे तदर्थनिरपेक्ष पर्य्यायानभिधेयञ्चेति तदपि नाम यत्कथंभूतमित्याह । अन्यश्चासावर्थश्च अन्यार्थो गोपालदारकादिलक्षणस्तत्र स्थितमन्यत्रेन्द्रादावर्थे यथार्थत्वेन प्रसिद्ध तदन्यत्र गोपालदारकादौ यदारोपितमित्यर्थः। अतएवाह । तदर्थनिरपेक्षमिति। तस्येन्द्रादिनाम्नोऽर्थः परमैश्वर्य्यादिरूपस्तदर्थः । स चासावर्थश्चेति वा तदर्थस्तस्य निरपेक्ष गोपालदारकादौ तथा तदर्थस्याऽभावात्पुनः किम्भूत तदित्याह । पर्य्यायानभिधेयमिति । पर्य्यायाणां शक्रपुरन्दरादीनामनभिधेयमवाच्य गोपालदारकादयो हीन्द्रादिशब्दैरुच्यमाना अपि शचीपत्यादिरिव शक्रपुरन्दरादिशब्दैर्नाभिधीयन्ते । अतस्तन्नामाऽपि नाम तद्वतोरभेदोपचारात्पर्य्यायानभिधेयमित्युच्यतेऽत्र।शब्दा नाम्न एव लक्षणान्तरसूचकं शचीपत्यादौ प्रसिद्ध । तन्नाम वाच्यार्थशून्ये अन्यत्र गोपालदारकादौ यदारोपित तदपि नामेति तात्पर्यम् । तृतीयप्रकारेणाऽपि लक्षणमाह । यादृच्छिकं च तथेति । तथाविधव्युत्पत्तिशून्य डित्थकपित्थादिरूप यादृच्छिक स्वेच्छया नाम क्रियते तदपि नामेत्यार्यार्थः । ॥ अनु० ॥

अथ नामावश्यकस्वरूपनिरूपणार्थं सूत्रकार एवाह ॥

**सेकिंतं नामावस्सयं २ जस्स णं जीवस्स वा अजीवस्स वा जीवाए वा अजीवाण वा तदुभयस्स वा तदुभयाण वा आवस्सएत्ति नामं कज्जइ सेत्तं नामावस्सयं ॥**

अथ किं तन्नामावस्सकमिति प्रश्ने सत्याह । ( नामावस्सय जस्स ण ) मित्यादि । अत्र द्विकलक्षणेनाऽङ्केन सूचित द्वितीयमपि ( नामावस्सय ) ति पदं द्रष्टव्य । एवमन्यत्राऽपि यथासम्भवमभ्यूह्यम् । णमिति वाक्यालङ्कारे । यस्य वस्तुनो जीवस्य वा अजीवस्य वा जीवानामजीवानां वा ( तदुभयस्स वा ) तदुभयानां वा आवश्यकमिति यन्नाम क्रियते तन्नामावश्यकमित्यादिपदेन सवन्ध ॥ नाम च तदावश्यक चेति व्युत्पत्तिरथवा यस्य जीवादिवस्तुन आवश्यकमिति नाम क्रियते। तदेव जीवादिवस्तु नामावश्यक।नाम्ना नाममात्रेणाऽवश्यकं नामावश्यकमिति व्युत्पत्तिर्वाशब्दाः पक्षान्तरे सूचका इति समुदायार्थस्तत्र जीवस्य कथमावश्यकमिति नाम सम्भवतीत्युच्यते । यथा लोके जीवस्य स्वपुत्रादेः कश्चित्तनीह को देवदत्त इत्यादि नाम करोति । तथा कश्चित्स्वाभिप्रायवशादावश्यकमित्यपि नाम करोति । अजीवस्य कथमिति चेदुच्यते । इहावश्यकावासकशब्दयोरेकार्थता प्रागुक्ता । ततश्चो ...शुष्कोऽचित्तो बहुकोटराकीर्णो वृक्षोऽन्यो वा तथाविध कश्चित्पदार्थविशेषस्सर्पादेरावासोऽयमिति लौकिकैर्व्यपदिश्यत एव । स च वृक्षादिर्यद्यप्यनन्तैः परमाणुलक्षणैरजीवद्रव्यैर्निष्पन्नस्तथाप्येकस्कन्धपरिणतिमाश्रित्यकाजीवत्वेन विवक्षित इति स्वार्थिकक्षप्रत्ययोपादानादेकाजीवस्यावासकनाम सिद्धम् ।जीवानामपि बहूनामावासकनाम सन्दृश्यते। यथा इष्टकापाकाद्यग्निर्मूषिकावास इत्युच्यते । तत्र ह्यग्नौ किल मूषिकाः सम्मूर्च्छन्त्यतस्तेषामसङ्ख्येयानामग्निजीवानां एवर्चद्वावासकधाम सिद्धम् । अजीवानान्तु यथा नीरं पक्षिणामावास इत्युच्यते । तद्धीरु बहुभिस्तृणाद्यजीवैर्निष्पद्यते । इति बहूनां जीवानामावासकंनाम भवति । इदानीमुभयस्यावासकसञ्ज्ञा भाव्यते। तत्र गृहदीर्घिका अशोकवनिकाद्युपशोभितः प्रासादादिप्रदेशो राजादेरावास उच्यते । सौधर्म्मादि विमान वा देवानामावासोऽभिधीयते। अत्र च जलवृक्षादयस्सचेतनरत्नादयश्च जीवा इष्टकाः काष्ठादयो चेतनरत्नादयश्चाजीवास्तन्निष्पन्नमुभय तस्य कप्रत्ययोपादाने आवासक संज्ञा सिद्धा । उभयानां त्वावासकसञ्ज्ञा यथा सम्पूर्णनगरादिक राजादीनामावास उच्यते। सम्पूर्णः सौधर्म्मादिकल्पो वा इन्द्रादीनामावासोऽभिधीयते। अत्र च पूर्वोक्तप्रासादविमानयोर्बहुत्वादकमेव जीवाजीवोभय विवक्षितमत्र तु नगरादीनां सौधर्म्मादिकल्पानां च महत्त्वाद्बहूनि जीवाजीवोभयानि विवक्षितानीति विशेषोऽयमिति भेदो द्रष्टव्यः एवमन्यत्राऽपि जीवादीनामावासकसञ्ज्ञा यथा सम्भव भावनीया ॥

दिङ्मात्रप्रदर्शनार्थत्वादस्य निगमयन्नाह । (सेतमित्यादि) (सेत्त)मित्यादि वा क्वचित्पाठः तदेतन्नामावश्यकमित्यर्थः ॥

इदानीं स्थापनाऽऽवश्यकनिरूपणार्थमाह ।

**सेकिंतं ठवणावस्सयं २ जण्णं कट्ठकम्मे वा पोत्थकम्मे वा चित्तकम्मे वा लिप्पकम्मे वा गंथिमे वा वेढिमे वा पूरिमे वा संघाइमे वा अक्खेवा वराडए वा एगोवा अणेगोवा सब्भावठवणा वा असब्भावठवणा वा आवस्सय ठवणा वा आवस्सएत्ति ठवणाठविज्जइ सेत्तं ठवणावस्सयं । नाम ठवणाणं कोपइविसेसो णामं आवकहिअं ठवणा इत्तरिआ वा होज्जा आवकहिआ वा ॥**

टीका । सेकितमित्यादि अथ किंतत् स्थापनावश्यकमिति प्रश्ने सत्याह । ( ठवणा आवस्सय जण्ण ) मित्यादि । तत्र स्थाप्यत शुष्कोऽयमित्यभिप्रायेण क्रियते निर्वर्त्यत इति स्थापना । काष्ठकर्म्मादिगतावश्यकवत् साध्वादिरूपा । सा चासौ आवश्यकतद्वतोरभेदोपचारादावश्यक च स्थापनावश्यके स्थापनालक्षण च सामान्यत इदमुक्तं । यत्तु तदर्थवियुक्तं तदभिप्रायेण यच्च तत्कराणि लेप्यादिकर्म्म तत्स्थापनेति क्रियते अल्पकाल च ॥ १ ॥ इति विनेयानुग्रहार्थमत्रापि व्याख्यातुशब्दो नामलक्षणस्य स्थापनालक्षणस्य भेदसूचकः।स चासावर्थश्च तदर्थो भावेन्द्रभावावश्यकादिलक्षणस्तेनवियुक्तं रहित यद्वस्तु तदाभिप्रायेण भावेन्द्राद्यभिप्रायेण क्रियते स्थाप्यते तत् स्थापनेति सवंधः। किंविशिष्ट यदित्याह । यच्च तत्करणि तेन भावेन्द्रादिना सहकारणिः सादृश्य तस्य तत्करणि तत्सदृशमित्यर्थः । चशब्दात्तदकरणिचाक्षादिवस्तु गृह्यते। अयसदृशमित्यर्थ । किंपुनस्तदेवभूतं वस्त्वित्याह । लेप्यादिकर्म्मेति लेप्यपुत्तलिकादीत्यर्थः । आदिशब्दात् काष्ठपुत्तलिकादि गृह्यते अक्षादि अनाकार कियत कालं तत् क्रियते इत्याह । अल्पः कालो यस्य तदल्पकाल मित्वरकालमित्यर्थः । च शब्दाद्यावत्कथिकं शाश्वतप्रतिमादि यत्पुनर्भविन्द्राद्यर्थरहितं साकार मनाकार वा तदर्थाभिप्रायेण क्रियते तत् स्थापनेति तात्पर्यमित्यार्यार्थ ॥

इदानीं प्रकृतमुच्यते (जण्णंति) णमिति वाक्याऽलङ्कारे यत्काष्ठकर्म्मणि वा चित्रकर्म्मणि वा वराटके वा एको वा अनेको वा सद्भावस्थापनायां वा असद्भावस्थापनायां वा। आवस्सएति। आवश्यकतद्वतोरभेदोपचारात्तद्वानिह गृह्यतेऽतश्चैको वा अनेको वा कथं भूतां अत उच्यते। आवश्यकक्रिया वाऽऽवश्यक

क्रियावन्तो वा ( ठवणा ठविज्जत्तेत्ति ) स्थापनारूपं स्थाप्यते क्रियते आवृत्त्या बहुवचनात्तत्वे स्थापनारूपाः स्थाप्यते तत् स्थापनावश्यकमित्यादिपदेन संबन्ध इति समुदायार्थः । काष्ठकर्मादिष्वावश्यकक्रियां कुर्वतो ये स्थापनारूपा साध्वादय स्थाप्यते तत् स्थापनावश्यकमिति तात्पर्यम् । अधुना अवयवार्थमुच्यते । तत्र क्रियत इति कर्म काष्ठकर्म काष्ठनिष्कुट्टित रूपकमित्यर्थः । चित्रकर्म्म चित्रलिखित रूपकं ( पोत्थकम्मवेत्ति ) अत्र पोत्थं पोत वस्त्रमित्यर्थः तत्र कर्म्म तत्पल्लवनिष्पन्नं वा ढल्लिकारूपकमित्यर्थ । अथवा पोत्थ पुस्तकं तच्चेह संपुटकरूप गृह्यते । तत्र कर्म्म तन्मध्ये वर्त्तिकालिखितं रूपकमित्यर्थः । अथवा पोत्थं तालपत्रादि तत्र कर्म्म तच्छेदनिष्पन्नं रूपकं लेप्यकर्म लेप्यरूपकं ग्रन्थिम कौशलातिशयाद् ग्रन्थिसमुदायनिष्पादितं रूपक वेष्टिमं पुष्पवेष्टनक्रमेण निष्पन्नमानन्दपुरादि प्रतीत्य रूपमथवा एक द्वे त्रीणि वस्त्राणि वेष्टयित्वा यत् किंचित् रूपकं तत्स्थापयाति तद्वेष्टिमं । पूरिम भरिम पित्तलादिमयप्रतिमावत् । संघातिमं बहुवस्त्रादिखण्डसंघातनिष्पन्न कञ्चुकवत् । अक्षश्चंदनको वराटकः कपर्दकः । अत्र वाचनान्तरे अन्यान्यपि दन्तकर्मादिपदानि दृश्यते । तान्यप्युक्तानुसारतो भावनीयानि । वा शब्दा पक्षान्तरसूचकाः । यथासम्भवमेवमन्यत्रापि एतेषु काष्ठकर्मादि आवश्यक्रियां कुर्वतः एकादि साध्वादयः सद्भावस्थापनया असद्भावस्थापनया वा स्थापनावश्यक । तत्र काष्ठकर्म्मादिष्वाकारवती सद्भावस्थापना साध्वाद्याकारस्य तत्र सद्भावात् । अक्षादिषु तु नाऽऽकारवती असद्भावस्थापना साध्वाकारस्य तत्रासद्भावादिति निगमयन्नाह । (सेत्त मित्यादितदेतत् स्थापनावश्यकमित्यर्थः । अत्र नामस्थापनयोर भेद पश्यन्निदमाह ( नाम ठवणाणं कोपइविसेसोत्ति ) नामस्थापनयो क प्रतिविशेषो न कश्चिदित्यभिप्रायः । तथाह्यावश्यकादिभावार्थशून्ये गोपालदारकादौ द्रव्यमात्रे यथावश्यकादि नाम क्रियते तत् स्थापनापि तथैव । तच्छून्ये काष्ठकर्मादौ द्रव्यमात्रे क्रियतेऽतो भावशून्य द्रव्यमात्रे क्रियमाणत्वात् विशेषाभावानयोः कश्चिद्विशेष । अत्रोत्तरमाह । ( नामं आवकहिय ) मित्यादि नाम यावत्कथिक स्वाश्रयद्रव्यस्यास्तित्वकथां यावदनुवर्तते न पुनरन्तराऽप्युपरमते । स्थापना पुनरित्वरा स्वल्पकालभाविनी वा स्याद्यावत् कथिका वा स्वाश्रयद्रव्ये अवतिष्ठमानेऽपि काचिदितराऽपि निवर्तते । काचित्तु तत्सत्तां यावदवतिष्ठत इति भावस्तथाहि । नाम आवश्यकादिक मेरुजम्बूद्वीपकलिङ्गमगधसुराष्ट्रादिक चायात् स्याश्रयो गोपालदारकदेहादिः शिलासमुच्चयादिर्वासमास्तितावदवतिष्ठति इति । तद्यावत् कथिकमेव । स्थापनात्वावश्यकत्वेन योग्य स्थापित स क्षणांतरे पुनरपि तथाविधप्रयोजनसम्भवे इन्द्रत्वेन स्थाप्यते । पुनरपि च राजादित्वेनेन्यल्पकालवर्तिन शाश्वतप्रतिमादिरुपा तु यावत्कथिकात्वर्तते तस्मात्तु अर्हदादिरूपेण सर्वदा तिष्ठतीति स्थापनेति व्युत्पते । स्थापनात्वमवसेयं नतुस्थाप्यत इति स्थापना शाश्वतत्वेन केनापि स्थाप्यमानत्वाभावादिति । तस्माद्भावशून्यद्रव्याधारसाम्येऽप्यस्त्यनयोः कालकृतोविशेष । अत्राह । ननु यथा स्थापना काचिदल्पकालीना तथा नामापि किञ्चिदल्पकालीनमेव । गोपालदारकादौ विद्यमानेऽपि कदाचिदेनकनामपरावृत्तिदर्शनमुच्यते ।

मन्यं । किन्तु प्रायो नाम यावत्कथिकमेव । यस्तु कश्चिदन्यथोपलम्भ । सोऽप्यल्पत्वान्नेह विवक्षित इत्यदोषः । उपलक्षणमात्रं चेद । कालभेदेनैतयोर्भेद कथनमपरस्यापि बहुप्रकारभेदस्य सम्भवात्तथाहि । यथेन्द्रादिप्रतिमास्थापनायां कुण्डलांगदादिभूषित सन्निहितशचीवज्रादिराकार उपलभ्यते । न तथा नामेन्द्रादौ । एवं यथा स्थापनादर्शनाद्भावः । समुल्लसति नैव मिन्द्रादिश्रवणमात्राद् । यथाच तत् स्थापनायां लोकस्योपयाचितत्वापूजाप्रवृत्ति समीहितलाभादयोदृश्यन्ते नैवं । नामेन्द्रादावित्येव मन्यदपि वाच्यमिति ।

उक्तं स्थापनावश्यकम् ।

अत्र नाम इदानीं द्रव्यावश्यकनिरूपणाय प्रश्न कारयति ।

सेकिंतं दव्वावस्सयं दव्वावसयं दुविहं पण्णत्तं । तंजहा । आगमओ अ नो आगमओ अ ॥

टी० अथ किंतत् द्रव्यावश्यकमिति पृष्टे सत्याह । ( दव्वावस्सयं दुविह ) मित्यादि तत्र द्रवति गच्छति तांस्तान् पर्यायानिति द्रव्यं विवक्षितयोरतीतभविष्यद्भावयो कारणम् अनुभूत विवक्षितभाव अनुभविष्यद्विवक्षितभाव चास्ति इति द्रव्यभूतस्य भाविनो वा भावस्य हिकारणं तु यल्लोके तत् द्रव्यं तत्वज्ञै सचेतनचेतनं कथितम् ।

व्या० । तद्द्रव्यं तत्वज्ञैः कथित तत्कथंभूतं द्रव्यं यत्कारण हेतुः कस्येत्याह । भावस्य पर्यायस्य कथमूतस्येत्याह ।

भूतस्या तीतस्य भाविनो वा भविष्यतो वा लोके आधारभूते तत्र सचेतनं पुरुषादि अचेतनं च काष्ठादि भवति ।

एतदुक्तं भवति ।

यः पूर्वं स्वर्गादिष्विन्द्रादित्वेन भूत्वा इदानीं मनुष्यादित्वेन परिणत अतीतस्येन्द्रादिपर्यायस्य कारणत्वात्सांप्रतमपि द्रव्यमिंद्रादिरभिधीयते । अमात्यादिपदपरिभ्रष्टामात्यादिवत् तथा अग्रेऽपि य इन्द्रादित्वेनोत्पस्यते स इदानीमपि भविष्यदिन्द्रादिपदपर्यायकारणत्वात् द्रव्यत इन्द्रादिरभिधीयते । भविष्यद्राजकुमारराजवत् । एवमचेतनस्यापि काष्ठादे तत् भविष्यत्पर्यायकारणत्वेन द्रव्यता भावनीयेत् इति तात्पर्यार्थः । इतः प्रकृतमुच्यते । तच्चेह द्रव्यरूपमावश्यक प्रकृतं तत्रावश्यकोपयोगाधिष्ठित साध्वादिदेहावन्दनकादिसूत्रोच्चारण लक्षणआगम । आवर्तादिका क्रिया चावश्यकमुच्यते । आवश्यकोपयोगशून्यस्तु ता एवं देहागमक्रिया द्रव्यावश्यकं । तच्च द्विविध प्रज्ञप्तमिति । तद्यथा । आगमत आगममाश्रित्य । नो आगमतो नो आगममाश्रित्य नो आगमशब्दार्थं यथावसरमेव वक्ष्याम । चशब्दो द्वयोरपि स्वस्वविषये तुल्यप्राधान्यस्थापनार्थः ।

अत्राद्यमेद जिज्ञासुराह ।

सेकिंतं आगम ओ दव्वावस्सयं २ जस्सणं आवस्सएत्ति पदं सिक्खितं ठितं जितं मितं परिजितं नाम समं घोससमं अहीणक्खरं अणच्चक्खरं अव्वाइद्धक्खरं अक्खलिअं अमिलिअं अवच्चामेलियं पडिपुण्णं पडिपुण्णघोसं कंठोठविप्पमुकं गुरुवायणोवगयं सेणं तत्थ वायणाए पुच्छणाए परिअट्टणाए धम्मकहाए नो अणुपहाए कम्हा अणुवओगे दव्वमिति कट्टु ।

टी० । से किंत मित्यादि—अथ किं तदागमतो द्रव्यावश्यकमिति आह । ( आगमतो दव्वावस्सयं जस्सण ) मित्यादि-

णमिति पूर्ववत्। जस्सत्ति यस्य आवस्सपति पयाति । आवश्यकपदाभिधेय शास्त्रमित्यर्थः । ततश्च यस्य कस्यचिदावश्यकशास्त्र शिक्षित जितं यावत्। वाचनोपगत भवति ( सेणं तत्थेति । सजन्तुस्तत्रावश्यकशास्त्रे वाचनाप्रच्छना परिवर्तनाधर्म्मकथभिर्वर्तमानोऽप्यावश्यकोपयोगे अवर्तमान आगमतः आगममाश्रित्य द्रव्यावश्यकमिति समुदायार्थः। अत्राह । नन्वागममाश्रित्य द्रव्यावश्यकमित्यागमरूपमिद आवश्यकमित्युक्तम् भवति । पतच्चायुक्त । यत आगमो ज्ञानं ज्ञान च भाव एवेति। कथमस्य द्रव्यत्वमुपपद्यते। सत्यमेत त्किंत्वागमस्य कारणमात्मा तदधिष्ठितो देहशब्दश्चोपयोग शून्यस्सूत्रोच्चारणरूप इहास्ति नतु साक्षादागम । पतच्च त्रितयमागमकारणत्वात्कारणे कार्योपचारादागम उच्यते। कारण च विवक्षितभावस्य द्रव्यमेव भवतीत्युक्तमेवेत्यदोषः। अनु०॥

शिक्षितादिपदानां व्याख्या शिक्षितादि शब्दे ॥

उदात्तादिघोषैरविकल प्रतिपूर्णघोष । अत्राह । घोष सममित्युक्तमेव तत्क इह विशेष इत्युच्यते । घोषसममिति । शिक्षाकालमधिकृत्योक्त । प्रतिपूर्ण घोष तु परावर्तनादि कालमधिकृत्येति विशेषः ॥

तदेव यस्य जन्तोरावश्यकशास्त्रं शिक्षितादिगुणोपेत भवति। स जतुस्तत्रावश्यकशास्त्रे वाचनया शिष्याध्यापनलक्षणया प्रच्छनयार्थादिर्गुरु प्रति प्रश्नलक्षणयापरावर्तनयापुन पुनस्सूत्रार्थोऽभ्यासलक्षणया धर्मकथयाहिंसादिधर्म्मप्ररूप णस्वरूपया । वर्तमानोऽप्यनुपयुक्तत्वादिति साध्याहारमागमतो द्रव्यावश्यकमित्यनेन सम्बंधः। ननु यथा वाचनादिभिस्तत्र वर्तमानोऽपिद्रव्यावश्यक भवति। तथानुप्रेक्षयापि तत्र वर्तमानस्तद्भवति नत्याह । ( नो अणुप्पेहाएत्ति ) अनुप्रेक्षया ग्रन्थार्थानुचिंतनरूपया तत्र वर्तमानो न द्रव्यावश्यकमित्यर्थ । अनुप्रेक्षायामुपयोगमन्तरेणाऽभावादुपयुक्तस्य च द्रव्यावश्यकत्वायोग्यादितिभाव । अत्राह पर । ( कम्हति ) ननु कस्माद्वाचनादिभिस्तत्र वर्तमानोऽपि द्रव्यावश्यक कस्माच्चानुप्रेक्षया तत्र वर्तमानो न तथेति प्रच्छकाभिप्राय । एव प्रष्टेसत्याह । ( अणुवओगोदव्व ) मिति कृत्वा उपयोजनउपयोगोपि जीवस्य बोधरूपोव्यापार । सचेह विवक्षितार्थे चित्तस्य विनिवेशस्वरूपो गृह्यते। न विद्यते सो यत्र सोऽनुपयोगः पदार्थे । सविवक्षितो पयोगस्य कारणमात्रत्वात द्रव्यमेव भवतीति कृत्वाऽस्मात्कारणादनन्तरोक्तमुपपद्यत इति शेष । एतदुक्तम् । भवत्युपयोगपूर्वका अनुपयोगपूर्वकाश्च वाचना प्रच्छनादयः सभवत्येव तत्रेह द्रव्यावश्यकचिन्ता प्रस्तावादनुपयोगपूर्विका गृह्यते। अतएव सूत्रेणाऽभिहितस्य, ऽप्यनुपयुक्तस्याध्याहारस्तत्रकृतोऽनुपयोगस्तुभावशून्यता तच्छून्य वस्तु द्रव्यमेव भवतीत्यतोवाचनादिभिस्तत्रवर्तमानोऽपि द्रव्यावश्यकम् । अनुप्रेक्षा तूपयोगपूर्विकैव सभवत्यतस्तत्र वर्तमानो न तथेति भावार्थः। अत्राह ।

नन्वागममतोऽप्रयुक्तो वक्ता द्रव्यावश्यकमित्येतावच्चेप्रसिद्धे - शिक्षितादिश्रुतगुणकीर्तनमनर्थकम । अत्रोच्यते । शिक्षिता गुणोत्कीर्तन कुर्वन्निद ज्ञापयति। यदुतैवं भूतमपि निर्दोष श्रुतमुच्चारयतोऽनुपयुक्तस्य द्रव्यश्रुत द्रव्यावश्यकमेव भवति किंपुन सदोषमुपयुक्तस्यतु स्खलितादिदोषदुष्टमपि निगदत श्रुतमेव भवति । एवमन्यत्रापि प्रत्युपेक्षणादिक्रियाविशेषा सर्वे निर्दोषा अप्यनुपयुक्तस्य तथाविधफलशून्या एव सपद्यन्ते उपयुक्तस्य तु मतिवैकल्पादित सदोषा अप्यमी कर्ममलापगमा यैवेत्यल विस्तरेण ॥

इह जिनमते सर्वमपि सूत्रमर्थश्च श्रोतृजनमुपेक्ष्य ( नत्थिन- एहिं विहूणं सुत्त अत्थो व जिणमए किंचि आसज्जउसोयारं नए नयविसारओपूया ) इति वचनात् इदमपि द्रव्यावश्यक न यैश्चिन्त्यते ते च मूलभेदानाश्रित्य नैगमादयः सप्त तदुक्त ॥

निगमसंगहववहा, उज्जसुए चेव होई बोधव्वे ॥
सद्दयसमभिरूढे, एवं भूते य मूलनया ॥ १ ॥

तत्रनैगमस्तावात्कियति द्रव्यावश्यकानीच्छतीत्याह ॥

**नैगमस्सुणं एगो अणुवउत्तो आगमओ एगं दव्वावस्सयं दोणि अणुवउत्ता आगमओ दोणि दव्वावस्सयाइ तिण्णि अणुवउत्ता आगमओ तिणि दव्वावस्सयाइं एवं जावइआ अणुवउत्ता आगमओ तावइआइं दव्वावस्सयाइं एवमेव वहारस्सवि संगहस्स णं एगो वा अणेगो वा अणुवउत्तो वा अणुवउत्तावा । आगमओ दव्वावस्सयं दव्वावस्सयाणि वा उज्जुसुअस्स एगे अणुवउत्तो आगमतो एगं दव्वावस्सयं पुहुत्तं नेच्छइ तिण्हं सद्दानयाणं- जाणए अणुवउत्ते अवत्थु कम्हा जइ जाणए अणु वउत्ते न भवसि सेत्तं । आगमओ दव्वावस्सयं ।**

टी० निगमस्सेत्यादि । सामान्यविशेषादि प्रकारेण नैकोऽपि तु बहवो गमा वस्तुपरिच्छेदो यस्यासौ निरुक्तविधिना ककारस्य लोपाद् नैगमसामान्यविशेषादिप्रकारैः बहुरूपवस्त्वभ्युगमपर इत्यर्थः। तस्य नैगमस्यको देवदत्तादिरनुपयुक्त आगमत एक द्रव्यावश्यक द्वौ देवदत्तयज्ञदत्तावनुपयुक्तौ आगमतो द्रव्यावश्यके त्रयो देवदत्तयज्ञदत्तसोमदत्ता अनुपयुक्ता आगमतस्त्रीणि द्रव्यावश्यकानि। किं बहुना। एव यावन्तो देवदत्तादयोऽनुपयुक्ताः तान्यतीतादि कालत्रयवर्तीनि नैगमस्याऽगमतो द्रव्यावश्यकानि एतदुक्त भवति। नैगमो हि सामान्यरूप विशेषरूप च वस्त्वभ्युपगच्छत्येव न पुनर्वक्ष्यमाणसंग्रहवत्सामान्यरूपमेव। ततो विशेषत्वादित्यस्येह प्राधान्येन विवक्षितत्वाद्यावन्त के चन देवदत्तादिविशेषा अनुपयुक्तास्तावन्ति सर्वाण्यप्यसौ द्रव्यावश्यकानि न पुन संग्रहवत्सामान्यवादित्वादेकमेव च ( ववहारस्सतित्ति ) व्यवहरण व्यवहारो लौकिकप्रवृत्तिरूपस्तत्प्रधानो नयोऽपि व्यवहारस्तस्याप्येवमेव। नैगमवदेको देवदत्तादिरनुपयुक्तोऽथागमत एक द्रव्यावश्यकमित्यादि सर्ववाच्यमिदमुक्त भवति । व्यवहारनयो लोकव्यवहारोपकारिण एव पदार्थानभ्युपगच्छति न शेषान् । लोकव्यवहारे च जलाहरणव्रणपिण्डीप्रदानादिकेघटनिम्बादि विशेषा एवोपकुर्वाणा दृश्यन्ते न पुनस्तदतिरिक्त तत्सामान्य मिति विशेषानेव वस्तुत्वेन प्रतिपद्यतेऽसौ न सामान्य व्यवहारानु पकारित्वाद्विशेष व्यतिरेकेणाऽनुपलभ्यमानत्वाच्चेत्यतो विशेषादिनैगममतसाम्येनातिदिष्ट । अत्र चातिदेशेन चेप्रार्थ सिद्धेश्चैथलाघवार्थं सग्रहमतिक्रम्य व्यवहारोपन्यासः कृत इति भावनीय ( सग्रहस्सेत्यादि ) सर्वमपि भुवनत्रयाऽन्तर्वर्त्तिच स्तूनि कुर्वं सगृह्णाति सामान्यरूपतयाऽध्यवस्यतीति संग्रहस्तस्य मते एको वा अनेको वा अनुपयुक्तोऽनुपयुक्ता वा यदा गमतो द्रव्यावश्यक द्रव्यावश्यकानि वा तत्किमित्याह ( स एगत्ति ) तदेकं द्रव्यावश्यकम् इदमत्र हृदय। सग्रहनय सा-

मान्यमेवाभ्युपगच्छति न विशेषानभिदधाति च सामान्याद्विशेषादव्यतिरिक्ता स्यु.। अव्यतिरिक्ताःस्यु. अव्यतिरिक्ता वा यद्यद्य पक्ष । तर्हि न सत्यमी निःसामान्यत्वात् खरविषाणवत् । अथापर पक्षस्तर्हि सामान्यमेव तेतद्व्यतिरिक्तत्वात्सामान्यस्वरूपवत्त सात्सामान्यव्यतिरेकेणा विशेषासिद्धेर्यानि कानिचिद्द्रव्यावश्यकानि तानि तत्सामान्याव्यत्तिरिक्तत्वादेकमेवं संग्रहस्य द्रव्यावश्यकमिति ( उज्जुसुयस्से ) त्यादि । ऋज्वतीतानागतपरकीयपरिहारणमांजवं वस्तु सूत्रयत्यभ्युपगच्छतीति । ऋजुसूत्र. । अय हि वर्त्तमानकालभाव्य वस्त्व भ्युपगच्छति नातीत विनष्टत्वान्नाप्यनागत मनुत्पन्नत्वाद्वर्त्तमानकालभाव्यपि स्वकीयमेव मन्यते स्वकार्यसाधुकत्वात् स्वधनवत्परकीयन्तु नेच्छति स्वकार्याप्रसाधकत्वात् । परधनवत्तस्मादेको देवदत्तादिरनुपयुक्तोऽस्यमत्ते आगमत एकं द्रव्यावश्यकमिति ( पुहत्त त्ति ) पुहत्तनिच्छति । अतीतानागतभेदतः परकीयभेदतश्च पृथक्त्व पार्थक्य नेच्छत्यसौ किं तर्हि वर्त्तमानकालीनं स्वत्वमेवचाभ्युपैति तच्चैकमेवेति ( तिण्हं सद्दनयाणं ) मित्यादि शब्दप्रधाना नयाः शब्दनयाः शब्दसमभिरूढैवंभूतास्ते हि शब्दमेव प्रधानमिच्छन्तीत्यर्थन्तु गौणं शब्दवासनैवार्थप्रतीतिस्त्रयाणां शब्दनयानां ज्ञापकोऽथवानुपयुक्त इत्येतदेव तु न सम्भवतीदमित्यर्थः। ( कम्हेति ) कस्मादेवमुच्यते इत्याह । यदिज्ञापकस्तर्ह्यनुपयुक्तो न भवति ज्ञानस्योपयोगरूपत्वादिदमत्र हृदयं। आवश्यकशास्त्रज्ञस्तत्रा चानुपयुक्त आगमतो द्रव्यावश्यकमिति प्राग्निर्णीतमेव स्वामी न प्रतिपद्यते यद्यावश्यकशास्त्रं जानाति कथमनुपयुक्तोऽनुपयुक्तश्चेत् कथं जानाति ज्ञानस्योपयोगरूपत्वात् यदप्यागमकारणात्मदेहादिकमागमत्वेनोक्त तदप्यौपचारिकत्वादमी न मन्यन्ते । शुद्धनयत्वेन मुख्यवस्त्वभ्युपगमपरत्वात्तस्मादेतन्मते द्रव्यावश्यकस्यासंभव इति निगमयन्नाह ( सेत्तमित्यादि) तेदेतदागमतो द्रव्यावश्यकन्तेन उक्तम् आगमतो द्रव्यावश्यकमिदानीम् ॥

इदानी नो आगमतस्तदुच्यते॥ से किं तं नो आगमओ दव्वावस्सय २ तिविहं पण्णत्तं तंजाणय सरीर दव्वावस्सय॥ टी० अथ किंतन्नो आगमतोद्रव्यावश्यकमिति प्रश्न. । उत्तरमाह नो आगमउ दव्वावस्सयं तिविह पण्णत्तमित्यादि नो आगमत इत्यत्र नो शब्द आगमस्य सर्वनिषेध देशनिषेधे वा वर्त्तते यत उक्तं पूर्वमुनिभि. ॥

आगमसव्वनिसेहे नोसद्दोअहवदेसपडिसेहे ।
सव्वे जहसरीरं भव्वस्स य आगमाभावा ॥

व्याख्या । आगमस्यावश्यकादिज्ञानस्य सर्वनिषेधे वर्त्तते नोशब्दोऽथवा तस्यैव देशप्रतिषेधे वर्त्तते । तत्र ( सव्वेत्ति ) सर्वनिषेधस्योदाहरणमुच्यते यथेत्युपदर्शने ( सरीरति ) तस्य जानत शरीरं ज्ञशरीरं नो आगमत इह द्रव्यावश्यकं भव्यस्य च योग्यस्य यच्छरीरं तदपि नो आगमत इह द्रव्यावश्यकं कुत इत्याह । आगमस्यावश्यकादिज्ञानलक्षणस्य सर्वथा अभावादिदमुक्त

भवति । ज्ञशरीरं भव्यशरीर चानन्तरमेव वक्ष्यमाणस्वरूपं नो आगमत सर्वथा आगमाभावमाश्रित्य द्रव्यावश्यकमुच्यते। नोशब्दस्याऽत्र पक्षे सर्वनिषेधवचनत्वादिति गाथार्थ ।

देशप्रतिषेधवचनेऽपि नोशब्दे उदाहरणम् । यथा ॥

किरियागमुच्चरंतो, आवासं कुणई भावसुन्नेउ ।
किरियागमा न होई, तस्स निसेहो भवेदेसे ॥

व्या० । क्रियामावर्त्तादिकं कुर्वन्नित्यध्याहार आगम * वंदनकसूत्रादिकमुच्चारयन् भावशून्यो य आवश्यक करोति सोऽपि नो आगमत इह द्रव्यावश्यकमितिशेषः । अत्र च क्रियावर्त्तादिकागमो न भवति जडत्वागमस्य च ज्ञानरूपत्वादतस्तस्यागमस्य देशे क्रियालक्षणे निषेधो भवति । क्रियाआगमो न भवतीत्यर्थः अतोनो आगमतश्तीह । किमुक्तं भवति। देशे क्रियालक्षणे आगमाभावमाश्रित्य द्रव्यावश्यकमिति गाथार्थः॥

तदेव नो आगमतः । आगमाभावमाश्रित्य द्रव्यावश्यक त्रिविध प्रज्ञप्तं तद्यथा ज्ञशरीरद्रव्यावश्यकं १ भव्यशरीरद्रव्यावश्यक २ ज्ञशरीरभव्यशरीरव्यतिरिक्त द्रव्यावश्यकम् ।३ तत्राद्यमेदं विवरीपुराह ॥

**सेकिंतं जाणयसरीरदव्वावस्सयं २ आवस्सयस्स पयत्थाहिगारं जाणयस्स जं सरीरयं ववगयचुतचावितचत्तदेहं जीवविप्पजढं शिज्जागतं वा संथारयगतं वा निसीहिआगतं वा सिद्धिसिलातलगतंवापासित्ताणं कोइ भणेज्जा अहोणंइमे णं सरीरसमुस्सएणं जिणदिट्ठेणं भावेणं आवस्सएत्ति पयं आघविअं पण्णविअं परूविअं दंसिअं निदंसिअं उवदंसिअं जहा को दिट्ठंतो अयं घयकुंभे आसी अयं महुकुंभे आसी सेत्तं जाणयसरीरदव्वावस्सयं ॥**

टी० । अय किं तत्ज्ञशरीरद्रव्यावश्यकमिति प्रश्ने निर्वचनमाह। ( जाणयसरीरदव्वावस्सयं आवस्सपत्तीत्यादि ) ज्ञातवानिति ज्ञ प्रतिक्षण शीर्यत इति शरीरं ज्ञस्यशरीर ज्ञशरीर तदेव अनुभूतभ वत्वाद् द्रव्यावश्यकं किं तदित्याह । यच्छरीरक सङ्गपर्क च वपुरित्यर्थः । कस्य संबन्धीत्याह । आवस्सपतीत्यादि आवश्यकमिति यत्पद आवश्यकपदाभिधेय शास्त्रमित्यर्थ. । तस्यार्थ पदार्थोधिकारोऽनेके वा तद्गतार्था अधिकारा गृह्यन्ते तस्य तेषांवा वाज्ञातु संबंधि कथं भूतं तदिदं ॥ज्ञशरीर द्रव्यावश्यकं भवतीत्याह व्यपगतच्युत त्यक्तदेहं जीवविप्रमुक्तमित्यक्षरयोजना । इदानीं भावार्थ. कश्चिदुच्यते तत्र । व्यपगतचैतन्यपर्यायादचैतन्यलक्षणं पर्यायान्तरं प्राप्तमत एव च्युतं उच्छवासनि श्वासजीवितादिदशविधप्रमाणेभ्य. परिभ्रष्टम् । अचैतन्यं श्वासाद्ययोग्यत्वादन्यथा लेष्ठ्वादीनामपि तत्प्रसगात्तेभ्यश्च परिभ्रशस्वभावादिभि.केश्चित् स्वभावत पवाभ्युपगम्यते । तदपोहार्थमाह । च्यावित आयुःक्षयेण तेभ्य परिभ्रंसितं।ननु स्वभावतस्तस्य सदावस्थितत्वेन सर्वदा तत्प्रसगादेव च सति कथ भूतं तदित्याह । त्यक्तदेहं दिह उपचये त्यक्तो देह आहारपरिणामजनितोपचयो येन तत्त्यक्तदेहं। अचेतनस्याहारग्रहणपरिणत्योरभावात् । एवमुक्तेन विधिना जीवेनात्मना विधमनेकधा प्रकर्षेण मुक्तं जीवविप्रमुक्तक किं तदेतदावश्यकं । ज्ञस्य शरीरमतीता वश्यकभावस्य कारणत्वाद्द्रव्यावश्यकम । अस्य च नो आगमत्वमागमस्य तदर्नीं सर्वथा भावान्नो शब्दस्य चात्र पक्षे सर्वनिषेध वचनत्वादिति भाव । ननु यदि जीवविप्रमुक्तमिदं कथ तर्ह्यस्य द्रव्यावश्यकत्व लेष्ठ्वादीनामपि तत्प्रसंगात्तत्पुद्गलानामपि कदाचिदावश्यकवेत्तृभिर्गृहीत्वा मुक्तत्वसंभवादित्याशंक्याह । ( सेज्जागत) मित्यादि यस्मादिद शय्यागत वा संस्तारगतं च नैषेधिकीगत वा सिद्धशिलातलगतं वा दृष्ट्वा को ऽपि ब्रूयादहोऽमुने न शरीरसमुच्छ्रायेण जिनदर्शितभावेन आवश्यकमित्येतत्पदं गृहीतमित्यादि यावदुपदर्शितमिति तस्मादतीतवर्तमान

कालभावि वस्त्वेकत्वग्राहिनयानुसारिणामेव वादिनां सम्मवान्नयोक्तशरीरस्य द्रव्यावश्यकत्व न विरुध्यते लेष्ठ्वादिदर्शेन पुनर्नेत्थभूत प्रत्यय. कस्याऽपि समुत्पद्यत इति । न तेषां तत्प्रसगस्तेनैव करचरणोरुग्रीवादिपरिणामेनानन्तरमेवावश्यककारणत्वेन व्यावृतत्वात्तदेव तथाविधप्रत्ययजनक द्रव्यावश्यक लेष्ठ्वादय इतिभाव इति समुदायार्थः । इदानीमवयवार्थ उच्यते । तत्र शय्या महती सर्वांगप्रमाणा तां गतशय्यास्थितमित्यर्थ. । स इतारो लघुकोऽर्द्धतृतीयहस्तमानस्तंगत तत्रस्थमित्यर्थ. । यत्र साधवस्तप.परिकर्म्मितशरीराः स्वयमेव गत्वा भक्तपरिज्ञानशन प्रतिपन्नपूर्वा. प्रतिपद्यते प्रति. पत्स्यन्ते च तत्सिद्धशिलातलमुच्यते । क्षेत्रगुणतो यथा भद्रकदेवतागुणतो वा साधूनामाराधनाः सिध्यति ।२। तत्रेति कृत्वा अन्येऽप्याचक्षते । यत्रमहर्षि. कश्चित्सिद्धस्तत् सिद्धशिलातल तद्गत तत्र स्थित सिद्धशिलातलगतम् । इह निसीहियागतं चेत्यादीन्यपि पदानि वाचनान्तरे दृश्यंते तानि च सुगमत्वात् स्वयमेव भावनीयानि । नवर नैषेधिकी शवपरिस्थापनभूमिः अपर चात्रान्तरे (पासित्ताण कोइ भणिज्जेति) प्रयः । क्वचिद्दृश्यंते स च समुदायार्थकथनावसरणे जित एव यत्र तु न श्यते तत्राध्याहारो द्रष्टव्यः । अहो शब्दो दैन्यविस्मयामन्त्रणेषु वर्त्तते । स चेह त्रिष्वपि घटते तथाह्यनित्यशरीरमिति दैन्ये आवश्यक ज्ञातमिति विस्मयेऽन्य विपार्श्वस्थितमामन्त्रयमाणस्यामन्त्रणे अनेनप्रत्यक्षतया दृश्यमानेन शरीरमेव पुद्गलसघातत्वात् समुच्छ्रयस्तेन जिनदृष्टेन तीर्थकराभिमतेन भावेन कर्मनिर्जरेणाभिप्रायेण अथवा भावेन तदावणकर्म्मक्षयोपशमलक्षणेन आवश्यकपदाभिधेय शास्त्रम् ( आघवियति ) प्राकृतशैल्या छान्दसत्वाच्च गु रो. सकाशाद्गृहीतं प्रज्ञापित सामान्यतो विनयेभ्यः कथित प्ररूपितं तेभ्य एव प्रतिसूत्रमर्थकथनतः । दर्शित प्रत्युपेक्षणादिक्रियादर्शनत. । इद क्रिया एभिरक्षरैरत्रोपात्ता । इत्थ च क्रियते इत्येव विनेयेभ्य. प्रकटितामितिभाव. । निदर्शित कथंचिदगृह्णत. परयाऽनुकम्पया निश्चयेन पुनर्दर्शित । उपदर्शितं सर्वनययुक्तिभि आह । नन्वनेन शरीरसमुच्छ्रायेणाऽवश्यकमागृहीतमित्यादि नोपपद्यते गृहणप्ररूपणादीनां जीवधर्म्मत्वेन शरीरस्याऽघटमानकत्वा सत्य । किन्तु भूतपूर्वगत्या जीवशरीरयोरभेदोपचारादित्थमुपन्यास इत्यदोषः । पुनरप्याह । ननु यद्यपि तच्छरीरक शय्यादिगत दृष्ट्वा पूर्वोक्तवक्तारो भवति तथापि कथ तस्य द्रव्यावश्यकता यत् आवश्यकस्य कारणमेव द्रव्यावश्यक भवितुमर्हति भूतस्य भाविनो वेत्यादि पूर्वोक्तवचनात् । कारण चागमस्य चेतनाधिष्ठितमेव शरीर नत्विद चेतनारहितत्वात्तस्यापि तत्कारणत्वेऽतिप्रसगात्सत्यं । किन्त्वतीतपर्यायानुवृत्यभ्युपगमपरतयानुवृत्यातीतमावश्यककारणत्वपर्यायमपेक्ष्य द्रव्यावश्यकताऽस्योच्यत इत्यदोष' । स्यादेव । यद्यत्रार्थेक कश्चिद्दृष्टान्त. स्यादिति विकल्पात् प्रच्छति यथा कोऽत्रदृष्टांत इति प्रश्ने सत्याह । यथाअय घृतकुम्भ आसीत् । अय मधुकुम्भ आसीदित्यादि । एतदुक्तं भवति । यथा मधुनि घृते वा प्रक्षिप्यापनीते तदाधारपर्यायातिक्रातेऽप्यय मधुकुम्भोऽय च घृतकुम्भ इति व्यपदेशो लोके प्रवर्त्तते । तथा आवश्यककारणत्वपर्यायेऽतिक्रातेऽपि पर्यायानुवृत्या द्रव्यावश्यकमिदमुच्यत इति भावः । निगमयन्नाह । ( सेत्तमित्यादि ) तदेतत् ज्ञशरीरद्रव्यावश्यकम ॥
उक्तोनो आगमतो द्रव्यावश्यकप्रथमभेदः । ॥

द्वितीयभेदनिरूपणायेमाह ।

**से किंतं भविअसरीरदव्वावस्सयं २ जे जीवे जोणिजम्मणनिक्खंते इमे णं चेव अत्तएणं सरीरसमुस्सएणं जिणदिट्ठेणं भावेण आवस्सयति पयं सेअकाले सिक्खिस्सति न ताव सिक्खति जहा को दिट्ठंतो अयं महुकुंभे भविस्सइ अयं घयकुंभे भविस्सइ सेत्तं भविअसरीरदव्वावस्सयं ॥**

अथ किं तद्भव्यशरीरद्रव्यावश्यकमिति प्रश्ने सत्याह (भवियसरीर दव्वावस्सय जे जीवे) इत्यादि । विवक्षितपर्यायेण भविष्यतीति भव्यो विवक्षितपर्यायार्हस्तद्योग्य इत्यर्थ. । तस्य शरीर तदेव भाविभावावश्यककारणत्वात् द्रव्यावश्यक भव्यशरीरद्रव्यावश्यकं किं पुनस्तदित्यत्रोच्यते । यो जीवो योनिजन्मभिनिष्क्रांतोऽनेन च शरीरसमुच्छ्रयेणजिनोपदिष्टेन भावेन आवश्यकमित्येतत्पद आगामिनि काले शिक्षिष्यते न तावच्छिक्षते यज्जीवाधिष्ठित शरीर भव्यशरीरद्रव्यावश्यकमिति समुदायार्थ. सांप्रतमवयवार्थ उच्यते । तत्र यः कश्चिज्जीवो जतुर्योन्या योपिद्वाच्यदेशलक्षणायाः परिपूर्णसमस्तदेहो जन्मत्वेन जन्मसमयेन निष्क्रांतो न पुनर्गर्भावस्थ एव पतितो योनिजन्मत्वनिष्क्रांत । अनेन च शरीरमेव पुद्गलसघातत्वादुत्पत्तिसमयादारभ्य प्रतिसमय समुत्सर्पणाद्वा समुच्चयस्तेन । आत्तेनआदत्तेन वा गृहीतेन प्राकृतशैलीवशादात्मीयेन वा जिनोपदिष्टेनेत्यादि पूर्ववत् ( सेयकालेत्ति ) छंदसत्वादागामिनि काले शिक्षिष्यते अध्येष्यते । सांप्रतन्तु न तावदद्यापि शिक्षते तज्जीवाधिष्ठितशरीर भव्यशरीरद्रव्यावश्यक नो आगमत्व चाप्यागमाभावमाश्रित्य मन्तव्य । तदानीं तत्र वपुष्यागमाभावान्नो शब्दस्य चात्राऽपि सर्वनिषेधवचनत्वात् । अत्राह । नन्वावश्यकस्य कारण द्रव्यावश्यकमुच्यते । यदि त्वत्र वपुष्यागमाभावः । कथ तर्हितस्य तं प्रतिकारणत्व न हि कार्याभावे वस्तु कारणत्व युज्यते अतिप्रसगात् । तत कथमस्य द्रव्यावश्यकता । सत्य । किन्तु भविष्यत्पर्यायस्येदानीमपि योऽस्तित्वमुपचरितनयस्तदनुवृत्त्यास्यद्रव्यावश्यकत्वमुच्यते । तथा च तदनुसारिण पठति भाविनि भूतवदुपचार इति अत्रार्थे दृष्टांत दिदर्शयिषु. प्रश्नं कारयति । यथा कोऽत्र दृष्टांत इति निर्वचनमाह । यथायं मधुकुम्भो भविष्यतीत्यादि । एतदुक्त भवति यथा मधुनि घृते वा प्रक्षेप्तुमिष्टे तदाधारत्वपर्याये भविष्यत्यपि लोकेऽय मधुकुम्भो घृतकुम्भो वेत्यादिव्यपदेशो दृश्यते । तथास्याप्यावश्यक कारणत्व पर्य्याये भविष्यत्यपि तदस्तित्वपरतयानुवृत्या द्रव्यावश्यत्वमुच्यते इति भाव । निगमयन्नाह । सेत्तमित्यादि तदेतद्भव्यशरीरद्रव्यावश्यकमिति । उक्तो नो आगमत द्रव्यावश्यकद्वितीयभेदः ॥

तृतीयभेदनिरूपणार्थमाह ॥

**से किं तं जाणयसरीरभविअसरीरवइरित्तं दव्वावस्तयं २ तिविहं पणत्तं । लोइअं १ कुप्पावयणिअं २ लोउत्तरिअं ३**

अथ किं तत् ज्ञशरीरभव्यशरीरव्यतिरिक्तं द्रव्यावश्यकं निर्वचनमाह ॥ ( जाणगशरीरभवियसरीरवइरित्ते दव्वावस्सए तिविहे ) इत्यादि यत्र ज्ञशरीरभव्यशरीरयो' सम्बधि

पूर्वोक्तलक्षण न घटते । तदुभाभ्यां व्यतिरिक्तं भिन्नं द्रव्याव श्यकमुच्यते । तच्च त्रिविधं प्रज्ञप्तं । तद्यथा । लौकिककुप्रावच निकं । लोकोत्तरिकम् ॥

तत्र प्रथमभेदं जिज्ञासुराह ॥

सेकिंतं लोइअं दव्वावस्सयं ? जे इमे राईसरतलवर-माडंबिअकोडुंबिअइब्भसेट्ठिसेणावइसत्थवाहप्पभिति-ओकल्लंपाउप्पभायाए रयणीए सुविमलाए फुल्लुप्पलक-मलकोमलुम्मिलिअंमि अह पंडुरए पभाए रत्तासोगप गासकिंसुअसुअमुहगुंजद्धरागसरिसे कमलागरनलिणि संडबोहए उट्ठिअंमि सूरे सहस्सरस्सिंमि दिणयरे तेअसा जलंते मुहधोअणदंतपक्खालणतेल्लफणिहसिद्धत्थयहरि आलिअ अद्दागधूवपुप्फगंधमल्लतंबोलवत्थाइ आई दव्वावस्सयाइं काउं ततो पच्छा रायकुलं वा देवकुलं वा आरामं वा उज्जाणं वा सभं वा पवं वा गच्छति सेत्तं लोइअं दव्वावस्सयं ॥

लोइयमित्यादि ॥ लोके भवं लौकिकं शेष तथैव अत्र राज ईश्वरा तलवरादय. प्रभातसमये मुखधावनादि कृत्वा तत पश्चाद्राजकुलादौ गच्छंति । तत्तेषां सम्बन्धि मुखधावनादि लौकिकं ज्ञशरीरभव्यशरीरव्यतिरिक्तं द्रव्यावश्यकं मिति समुदायार्थः ॥

( कल्लं पाउप्पभायाए ) इत्यादि कल्यमिति विभक्तिव्यत्य येन सामान्येन प्रभाते प्रभातस्यैव विशेषावस्था. प्राह इ त्यादि । प्राडु प्राकाश्ये ततश्च प्रकाशप्रभातायां रजन्यां किंचिदुपलभ्यमानप्रकाशायामिति भावः । तदनन्तरं सुवि मलायां तस्यामेव किंचित्परिस्फुटतरप्रकाशायाम् । अथशब्द आनंतर्ये तदनन्तरं पांडुरे प्रभाते कथंभूत इत्याह । फुल्लोत्पल-कमलकोमलं उन्मीलिते फुल्लं विकसितं तच्च तदुत्पलं च फुल्लो-त्पलं कमलो हरिणविशेष फुल्लोत्फलं च कमलश्च फुल्लोत्पल कमलौ तयो. कोमलमकठोरं दलानां नयनयोश्चोन्मीलितमु न्मीलनं यत्र प्रभाते । तद्यथा । अनेन च प्रागुक्तायाः सुविमल-तायाः वक्ष्यमाणसूर्योदयस्य चांतरालभाविनीं वेलाम् अरुण प्रभावस्थामाह । तदनन्तरम् ( उट्ठिए सूरिए त्ति ) अभ्यु-त्थिते आदित्ये कथं भूते इत्याह । रक्ताशोकप्रकाशकिंशुक-शुकमुखगुंजार्द्धरागसदृशे । रक्ताशोकप्रकाशस्य पुष्पित पलाशस्य शुकमुखस्य गुंजार्द्धस्य च रागेण सदृशो य. स तथा तस्मिन् आरक्ते इत्यर्थ । तथा कमलाकरनलिनिखंडबोधके कमलानामाकरा उत्पत्तिभूमयो ह्रदादिजलाशयविशेषास्तेषु यानि नलिनीखंडानि तेषां बोधको य स तथा तस्मिन् पुन किंभूते तस्मिन्नित्याह ॥ सहस्ररश्मौ दिनं क-रोतीति दिनकरस्तस्मिन् तेजसा ज्वलति । तत्रैवैते भावा सर्वेऽपि सतीति ज्ञापनार्थं सूर्यस्य विशेषणबहुत्वं अनेन चो-त्तरोत्तरकालभाविना आवश्यककरणकालविशेषणकलापेन प्र-कृष्टमध्यमजघन्योद्यमवतां सत्वानामभिमतमावश्यककरणसम-यमाह । तथाहि । केचित्प्रकृष्टोद्यमिनः किंचित्प्रकाशमानायां रजन्यां मुखधावनाद्यावश्यकं कुर्वंति । मध्यमोद्यमिनस्तु त-स्यामेव सुविमलायामरुणप्रभावसरे वा । जघन्योद्यमिनस्तु समुद्गते सवितरीति ( मुहधोवणत्यादि ) मुखधावनं च दंत-प्रक्षालनं च तैलं च फणिहश्च सिद्धार्थश्च हरितालिका च आ-दर्शश्च पुष्पाणि च माल्यं च गंधाश्च तांबूलं च वस्त्राणि च ना-न्यादियेषां स्नानाभरणपरिधानादीनां तानि फणिह. कंकत-कस्तं मस्तकादौ व्यापारयति । सिद्धार्था. सर्षपाः । हरिता-लिका दूर्वा एतद्वयं मंगलार्थं शिरसि प्रक्षिपति । आदर्शेषु मुखादि निरीक्षते वस्त्रादि धूपयति अग्रथितानि पुष्पाणि ता न्येवग्रथितानि माल्यम् अथवा विकसितानि पुष्पाणि वा तान्येवाविकसितानि माल्यमेतेषां च मस्तकादिषूपयोग. । शेषस्वरूपत उपयोगतश्चप्रतीतमेवएतानि द्रव्यावश्यकानि कृ-त्वा तत पश्चाद्राजकुलादौ गच्छति तत्र रमणीयतातिशयेन स्त्री-पुरुषमिथुनानि यत्रारमंति स विविधपुष्पजात्युपशोभित आरा-म. वस्त्राभरणादिसमलंकृतविग्रहा. सति हिताशनाद्याहारा म-दनोत्सवादिषु क्रीडार्थं लोका उद्याति यत्रतच्चंपकादितरुख-ण्डमण्डितमुद्यानं भारतादिकथाविनोदेन यत्र लोकास्तिष्ठति सा सभा शेष प्रतीतम् । अत्राह । ननु राजादिभि. प्रभाते अवश्यं क्रियत इति व्युत्पत्तिमात्रेणावश्यकत्वं भवतु-मुखधावनादीनि भावावश्यककारणं न भवन्ति । सत्यं । किंतु भूतस्य भाविनो वेत्याद्येव द्रव्यलक्षण मतव्य । किं तर्हि ( अप्पाहण्णे वि दव्वसद्दो ) तीतिवचनादाह । अप्रधानवाच-कोऽपि द्रव्यशब्दोऽवगतव्य. । अप्रधानानि च मोक्षकारणभा-वावश्यकापेक्षया संसारकारणानि राजादिमुखधावनादीनि ततश्च द्रव्यभूतान्यावश्यकानि द्रव्यावश्यकानि एतानीत्यदोष. नो आगमत्वं चेहाप्यागमाभावनोशब्दस्य च सर्वनिषेधव-चनत्वादित्यलं विस्तरेण निगमयन्नाह ॥

( सेत्तं लोइयं मित्यादि । तदेतज्ज्ञशरीरभव्यशरीरव्यति-रिक्तं लौकिकं द्रव्यावश्यकमित्यर्थ । उक्तो नो आगमतो द्रव्यावश्यकांतर्गतज्ञशरीरभव्यशरीरव्यतिरिक्तः द्रव्यावश्य-कप्रथमभेद द्वितीयभेदनिरूपणायेमाह ।

से किंतं कुप्पावयणिअं दव्वावस्सयं ? जे इमे चरग-चीरिगचम्मखंडिअभिक्खोंडपंडुरंगगोअमगोव्वतिअगि हिधम्मधम्मचिंतगअविरुद्धवेणयिकवुड्ढसावगप्पभित्तओ पासंडत्था कल्लं प्पाउप्पभाए जाए जाव तेअसा जलंते इंदस्स वा खंदस्स वा रुद्दस्स वा सिवस्स वा वेसमणस्स वा देवस्स वा नागस्स वा जूअस्स वा मुगुंदस्स वा अ-ज्जाए वा कोट्टकिरिआए वा उवलेवणसंमज्जणआव-रिसणधूवपुप्फगंधमल्लाइआइं दव्वावस्सयाइं करेंति सेत्तं कुप्पावयणिअं दव्वावस्सयं ॥

से किंतं कुप्रावचनिकं द्रव्यावश्यकमत्र निर्वचनं ( कुप्पाव-यणिय दव्वावस्सयत्ति ) इमे इत्यादि कुत्सितं प्रवचनं येषां ते कुप्रवचनास्तेषामिदं कुप्रावचनिकं द्रव्यावश्यकं किं पुनस्त-दित्याह । जे इमे इत्यादि ॥ एते चरकचीरिकादय प्रभात-समये इन्द्रस्कंधादेरुपलेपनादि कुर्वंति तत् कुप्रावचनिकं द्र-व्यावश्यकमिति समुदायार्थ ॥

देवताक्षितिराजमातापितृगुरूणामविरोधेन विनयकारित्वाद-विरुद्धा वैनयिका पुण्यपापपरलोकाद्यनभ्युपगमपरा अक्रिया-वादिनो वियुरुद्धा सर्वपाषंडिभि. सह विरुद्धचारित्वादत्राह ननु यद्येते पुण्याद्यनभ्युपगमपरा कथं तर्ह्येषां वक्ष्यमाणामिं-द्राद्युपलेपन संभवति पुण्यादिनिमित्तमेव तस्य संभवात्तस्य किं तु जीविकादिहेतोस्तेषामपि तत्संभवतीत्यदोष ॥

प्रभृतिग्रहणात् परिव्राजकादिपरिग्रह पाषण्डे व्रते तत्र तिष्ठ-तीति पाषण्डस्था । ( कल्लं पाउप्पभायाए ) इत्यादिपूर्ववद्या

वत्तेजसा ज्वलतीति । इंदस्स वेत्यादि । तत्रेंद्रः प्रतीतः स्कन्दः कार्त्तिकेयः रुद्रो हरः शिवस्त्वाकारविशेषधरः स एव व्यंतर-विशेषो वा वैश्रवणो यक्षनायकः देव सन्मान्य नागो भवन पतिविशेष यक्षभूतो व्यंतरविशेषो मुकुंदो बलदेवः आर्या-प्रशांतरूपा दुर्गाऽस्यैव महिषारूढा । तत्कुट्टनपरा कौट्टक्रिया अत्रोप वारादिद्वादिशब्देन तदायतनमप्युच्यते । अतः तस्येंद्रा-दिरूपोपलेपनसम्मार्जनवर्षणपुष्पधूपगंधमाल्यादीनि द्रव्याव-श्यकानि कुर्वंति । तत्र लेपन छगणादिना प्रतीतमेव । सम्मा-र्जन दण्डपुञ्छनादिना । वर्षण गंधोदकादिना । शेषं गतार्थम् ॥ तदेव य एते चरकादय इन्द्रादेरुपलेपनादि कुर्वंति तत कु-प्रावचनिक द्रव्यावश्यकम । अत्र द्रव्यत्वमावश्यकत्व नो आगमत्व च लौकिकद्रव्यावश्यकोक्तमिव भावनीय निगमयन्नाह ( सेत्तमित्यादि ) तदेतत् ज्ञशरीरभव्यशरीरव्यतिरिक्त कु-प्रावचनिक द्रव्यावश्यकमित्यर्थ । उक्तो नो आगमतो द्रव्या-वश्यकांतर्गतज्ञशरीरभव्यशरीरव्यतिरिक्तद्रव्यावश्यकद्वि-तीयभेदः ॥

अथातृतीयभेदनिरूपणार्थमाह ॥

से किं तं लोगुत्तरिअं दव्वावस्सयं जे इमे समणगुण-मुक्कजोगी छक्कायनिरणुकंपा हयाइव उदमा गया इव निरं-कुशाघट्टा मट्ठा तुप्पोट्ठा पंडुरपडपाउरणा जिणाणमणाणाए सच्छंदंविहरिऊणं उभओकालं आवस्सयस्स उवट्ठावय ति सेत्तं लोगुत्तरिअं दव्वावस्सयं सेत्तं जाणय सरीरभ-विअसरीरवतिरित्त दव्वावस्सयं सेत्तं नो आगमतो दव्वा-वस्सयं । सेत्तं दव्वावस्सयं ॥

अथ किं तल्लोकोत्तरिक द्रव्यावश्यकमत्र निर्वचनमाह । लोकस्योत्तराः साधवः अथवा लोकस्योत्तर प्रधान लोकोत्तर जिनशासन तेषु तस्मिन्वा भवति लोकोत्तरिकं द्रव्यावश्यक-मिति व्याख्यातमेव किं पुनस्तदित्याह । जे इमेत्यादि । य एते श्रमणगुणमुक्तयोगित्वादिविशेषणविशिष्टाः साध्वाभासा जिनानामनाज्ञया स्वच्छन्दविहृतयोभयकालमावश्यकाय प्र-तिक्रमणायोपतिष्ठते तत्तेषां प्रतिक्रमणानुष्ठान लोकोत्तरक द्र-व्यावश्यकमिति समुदायार्थ । इदानीमवयवार्थ उच्यते । तत्र श्रमणा साधवस्तेषां गुणा मूलोत्तरगुणरूपास्तत्र जीववधवि-रत्यादयो मूलगुणाः पिंडविशुद्ध्यादयस्तूत्तरगुणास्तेषु मुक्तो योगो व्यापारो यैस्ते सर्व धनादराकृतिगणत्वात् श्रमणगुण-मुक्तयोगिन एते च जीववधादिविरतिमुक्ता व्यापारा अपि मनसा कदाचित्सानुकंपा अपि स्युरित्याह । षट्सु कायेषु पृथिव्यादिषु विषये निर्गता अपगता अनुकंपा मनसा दया येभ्यस्ते तथा निरंकुशा उच्चलंतव हया इव तुरगा इव उद्दा माअरगनियानजीगोपनदं नेःपेक्षत्वात्तदनुचारिण इत्यर्थः ॥ किमरीत्येव चूतास्ते इत्याह । यथा गजा इव दुर्दान्तिदा इव निरंकुशा गुर्वाज्ञाव्यतिक्रमवन्तः स्वाः इत्यर्थ । अत एव घट्टत्ति, येषा जंघे श्लक्ष्णीकरणार्थं फेनादिना घृष्टेति भावतस्तेऽप्यव-चावयविनोरभेदोपचारात् घृष्टास्तथा । मट्ठेति । तैलोदकादिना येषा केशा शरीर वा मृष्ट ते नथैव मृष्टा अथवा केशादिषु मृष्ट विद्यते येषाते मृष्टवन्तो वत्प्रत्ययलोपान्मृष्टा तथा । (तुप्पोट्ठति) तुप्राम्रक्षिता वदनन वा वेष्टिता शीतरक्तादिनि-मित्तमोष्ठा येषा ते तुप्पोष्ठा तथा मलपरीषहासहिष्णुतादरी-कृत्वात्पांडुरो धौतपट प्रावरण येषा ते तथा जिनानामनाज्ञ-या स्वच्छन्द विरुद्धतीर्थकराज्ञा वाह्या स्वस्वरुच्याविविधचेष्टाः कृत्वा तत्रोभयकाल प्रभातसमयेऽस्तमयसमये च चतुर्थ्यर्थे षष्ठीति कृत्वा आवश्यकाय प्रतिक्रमणायोपतिष्ठंते तत्तेषामाव-श्यकम् अत्र द्रव्यावश्यकत्वं भावशून्यत्वात् फलाभावत्वा दप्रधानतया अवसेयं । नो आगमतो देशे क्रियालक्षणे आग-माभावान्नोशब्दस्य चात्र देशप्रतिषेधवचनत्वादिति अत्र च लोकोत्तरिके द्रव्यावश्यके उदाहरणं । वसंतपुरे नगरे अगीता-र्थसंविग्ने गच्छे एकोविनयति तत्र श्रमणगुणमुक्तयोगीसं विग्नाभासः साधुरेक प्रतिदिनं पुरः कर्मादिदोषदुष्टमनेषणी-य भक्तादि गृहीत्वा महता संवेगेन प्रतिक्रमणकाले आलोचय-ति । तस्य गच्छाचार्ये गीतार्थत्वात्प्रायश्चित्तं प्रयच्छन् भणति प-श्यत अहोकथमसौ भावमगोपयन् अशठतया सर्वं समालोच-यति । सुख हि प्रतिसेवना क्रियते दुःख चेत्थमालोचयितु तस्मा-देष अशठतयैव शुध्यत्यसौ तथा च तं प्रशस्यमान दृष्ट्वा अन्येऽप्य गीतार्थश्रमणाः प्रशंसति चिंतयति च गुरोरश्चैदिच्छया भाव्यस्त हिं दोषासेवनायामसकृत्पतितायामपि न कश्चिद्दोष । आलोच नाया एव साध्यत्वादित्थ चान्यदा तत्र सन्मतिगीतार्थ कश्चि-दायातस्तेन च प्रतिदिनं तमेव व्यतिकरमालोक्य सूरिरुक्तस्त्व मित्थमस्य प्रशंसां कुर्वन् विवक्षितक्षितीश इव लहयसे । तथाहि गिरिनगरवासी कश्चिदग्निभक्तो वणिक् पद्मरागरत्नानां गृहं भृत्वा प्रतिवर्षं वन्हिना प्रदीपयति तथा विवेकतया तत्र नरप तिर्लोके श्लाघमाण अहो धन्योऽयं च णिग् भगवत हुतभुजामि-त्थमौदार्यभक्त्यतिशयाद्बलैस्तर्पयतीति । अन्यदा च प्रबलपव नपटलप्रेरितस्तत्प्रदीपितदहन सराजप्रासाद समस्तमपि तन्नगर दहतिस्म । असाच राज्ञा दण्डितो नगराच्च निष्कासित स्तदेव राज्ञा तस्य प्रशंसां कुर्वता आत्मा नगर लोकश्च नाशित स्तथा त्वमपि अस्याविधिप्रवृत्तस्य प्रशंसां कुर्वन्नात्मान सम-स्तगच्छं चोच्छेदयसि यदि पुनरेनमेक शिक्षयसि तदा तथाविध न पश्य त्वपरिकारानिरपायतामनुभवसि । तथा ह्यन्येन केनचि द्राज्ञा तथैव कुर्वन् कश्चिद्वणिगाकर्णितस्तेनायं नगरदाहापा-यदर्शनात् क्षितेशेन अरण्य गत्वा किमित्थ न करोषीत्यादि वचोभिस्तिरस्कृत्यदण्डितो निष्कासितश्च एव त्वमपीत्याद्युप नयोगतार्थ । इत्यादि बहुप्रकार भणिता यावदसौ तत्प्रशंसा तो न निवर्तते तावत्तेन गीतार्थसाधुना शेषसाधवोभिहिता एष गणाधिपो महानिर्द्धर्मतास्पदमगीतार्थो यदि न परित्य-ज्यते तदा भवतां महते अनर्थाय प्रभवतीति तदेव तत्साध्वाव श्यकप्रकार सर्वं लोकोत्तरिक द्रव्यावश्यकमिति निगमयन्नाह ( सेत्तमित्यादि ) तदेतल्लोकोत्तरिक द्रव्यावश्यकं एतद्भणने-ज्ञशरीरभव्यशरीरव्यतिरिक्त त्रिविधममि द्रव्यावश्यक सम-र्थित भवत्यतस्तदपि निगमयति । सेत्तमित्यादि । एतत्समर्थन नो आगमतो द्रव्यावश्यकस्य प्रभेदस्य समर्थितत्वात्तदपि निग मयति । सेत्त नो आगमतो इत्यादि एतत्समर्थने च यत्प्रकात । द्रव्यावश्यक तस्योत्तरः भेदसप्त्यवसितमतो निगमयति सत्तं दव्वावस्सयमिति तदेतत् द्रव्यावश्यक समर्थितमित्यर्थ ।

उक्त सप्रपञ्च द्रव्यावश्यकम् ॥

साम्प्रतमवसरायातभावावश्यकनिरूपणार्थमाह ॥

से किं तं भावावस्सयं २ दुविहं पण्णत्तं तंजहा आगमतो अ नो आगमतो अ ॥

टी० ॥ अथ किंतद् भावावश्यकमित्यत्र निर्वचनमाह ॥ भा-वावश्यक दुर्विदमित्यादि वक्तृविवक्षितपरिणामस्य भवनभाव

उक्तं च भावो विवक्षितक्रियानुभूतियुक्तो हि वै समाख्यात सर्वज्ञैरिन्द्रादिवदिहेंदनादिक्रियानुभावात् व्याख्यावकुर्विवक्षितक्रियया विवक्षितपरिणामस्य इंदनादेरनुभवनमनुभवति स्तया युक्तोऽर्थः स भावस्तयोरभेदोपचार सर्वज्ञैः समाख्यातो निर्दर्शनमाह । इन्द्रादिवदित्यादि यथा इंदनादिक्रियानुभावात् परमैश्वर्यादिपरिणामेन परिणतत्वादिन्द्रादिभाव उच्यते इत्यर्थः । भावश्चासावावश्यकं च भावमाश्रित्य वा ।
तत्राद्यभेदनिरूपणार्थमाह ।

**से किंतं आगमतो भावावस्सयं २ जाणए उवउत्ते सेत्तं आगमतो भावावस्सयं ॥**

अथ किं तदागमतो भावावश्यकमत्राह ( आगमओ भावावस्सय जाणए ) इत्यादि ज्ञापकोपयुक्त आगमतो भावावश्यक इदमुक्तं भवत्यावश्यकपदार्थज्ञस्तज्जनितसंवेगविशुद्ध्यमानपरिणामस्तत्रचोपयुक्त साध्वादिरागममते भावावश्यकम् आवश्यकार्थोपयोगलक्षणस्याऽत्र सद्भावात् भावावश्यकता चात्रावश्यकोपयोगपरिणामस्य सद्भावात् । भावमाश्रित्यआवश्यकम् इति व्युत्पत्तेः अथवा आवश्यकोपयोगपरिणामानन्यत्वात्साध्वादिरपि भावस्ततश्च भावश्चासावश्यकं चेति व्युत्पत्तेरप्यसौ मतव्यइति ( सेत्तमित्यादि ) निगमनं ।
अथ भावावश्यकद्वितीयभेदनिरूपणार्थमाह ॥

**से किंतं नो आगमओ भावावस्सयं २ तिविहं पण्णत्तं । तं जहा । लोइअं कुप्पावणिअं लोगुत्तरिअं ॥**

अथ किं तन्नो आगमतो भावावश्यकमत्राह नो आगमतो भावावश्यकं त्रिविधं प्रज्ञप्तं तद्यथा लौकिकं कुप्रावचनिकं लोकोत्तरिकं च ॥
तत्र प्रथमभेदनिर्णयार्थमाह ॥

**से किं तं लोइअं भावावस्सयं २ पुव्वण्हे भारहं अवरह्णे रामायणं से त्तं लोइअं भावावस्सयं ॥**

अथ किं तल्लौकिकं भावावश्यकमित्याह ( लोइय भावावस्सय पुव्वण्हे ) इत्यादि लोके भवं लौकिकं यदिदं लोकः पूर्वाह्णे भारतमपराह्णे रामायणं वाचयति शृणोति वा तल्लौकिकं भावावश्यकं हि भारतरामायणयोर्वाचनं श्रवणं वा पूर्वाह्णापराह्णयोरेव रूढं विपर्ययेऽदोषदर्शनान्तत स्वच्छमनयोर्लोकेऽवश्यकरणीयत्वादावश्यकत्वं तद्वाचकस्य श्रोतृणां च तदर्थोपयोगपरिणामसद्भावात् वा चेत्थं तद्वाचक श्रोतारश्च पत्रकपरावर्त्तनहस्ताभिनयगाथासयमनकाकृम्रकर्मोल्लनादिक्रियायुक्ता भवति क्रिया वा नामत्वेन प्रागेवोक्ता किरियागमो न हो इति वचनात् ततश्च क्रियालक्षणे देशे आगमस्याऽभावात् आगमत्वमपि भावनीय नो शब्दस्यात्र देशनिषेधवचनत्वाद्देशे त्वागमोऽस्ति लौकिकाभिप्रायेण भारतादेरागमत्वात्तया निर्दिष्टसमये लौकिकास्तदुपयुक्ता यदवश्यं भारतादि वाचयति शृणोति वा तल्लौकिकं भावावश्यकमिति भावमाश्रित्यावश्यकं भावश्चासावावश्यकं चेति वा भावावश्यकमित्यलं विस्तरेण से त्तमित्यादि गमनम् । उक्तो नो आगमतो भावावश्यकप्रथमभेदोऽयं ॥ तद् द्वितीयभेदनिरूपणार्थमाह ॥

**सेकिंतं कुप्पावणिअं भावावस्सयं २ जे इमे चरगचीरिगभावपासंडत्थाणं २ इज्जांजलिहोमजपमन्दरुक्कनमोकारमादि भाववस्सयाइं करेंति सेत्तं कुप्पावयणिअं भावावस्सयं ॥**

टी० ( से किं तं कुप्पावणीय ) मित्यादि अत्र च निर्वचनमाह । कुप्पावयणिय भावावस्सय जे इमे त्यादि कुत्सितं प्रवचनं भावावश्यकं किंतदुच्यते । य एते चरकचीरकादयः पाषंडस्था यथावसरे इज्यांजलिहोमादीनि भावरूपान्यावश्यकानि कुर्वंति । तत्कुप्रावचनिकं भावावश्यकमिति संबंधः । तत्र चरकादिस्वरूपं प्रागेवोक्तम् । इज्यांजल्यादिस्वरूपमुच्यते । तत्र यजनमिति याग इत्यर्थस्तद्विप्रयोजलस्यांजलिरिज्यांजलिः । यागदेवतापूजावसरभावीति हृदय अथवा यजनमिज्या पूजा । गायत्र्यादि पाठपूर्वकं विप्राणां सन्ध्यार्चनमित्यर्थः । सूत्रांजलिरिज्याञ्जलि अथवा देशी भाषाया मिज्येति माता तस्या नमस्कारविधौ तद्भक्तैः क्रियमाणः करकुड्मलमीलनलक्षणोऽञ्जलिरिज्यांजलिः होमोऽग्निहोत्रिकैः क्रियमाणमग्निहवने जापो मन्त्राभ्यासः । मंदुरुक्कत्ति । देशीवचनं मन्दु सुखं तेन रुक्कं वृषभादिशब्दकरणं मन्दुरुक्कं । देवतादिपुरतो वृषभगर्जितादिकरणमित्यर्थः । नमस्कारोनमो भगवते दिवसनाथायेत्यादिकं एतेषां द्वंद्वे इज्यांजलिहोमजापमंदरुक्कनमस्कारास्ते आदिर्येषां तानि । । तथा आदिशब्दात् स्तवादिपरिग्रहः एतेषां चरकादिभिरवश्य क्रियमाणत्वादावश्यकत्वमेतत्कर्तॄणां च तदर्थोपयोगश्रद्धादिपरिणामसद्भावात् भावत्व । अत्र च चरकादयस्तदर्थोपयोगलक्षणो देश आगमो देशस्तु करशिरोव्यापारादिक्रिया लक्षणो नागमस्ततो देशागमात् भावमाश्रित्य नो आगमत्वमव गतव्य । नोशब्दस्येहापि देशनिषेधपरत्वात्तस्माच्चरकादयस्तदुपयुक्ता यथावसरं यदवश्यमिज्यांजल्यादि कुर्वात । ततः कुप्रावचनिकं । भावावश्यकं भावावश्यकशब्दस्य च व्युत्पत्तिद्वयं तथैव सेत्तमित्यादि निगमनं । उक्तो नो आगमतो भावावश्यकद्वितीयभेदः । अथ तृतीयभेदनिरूपणार्थमाह ।

**से किं तं लोगोत्तरिअं भावावस्सअं जण्णं समणे वा समणिवा सावओ वा साविआ वा तच्चित्ते तम्मणे तल्लेसे तदज्झवसिते तदज्झवसाणे तदट्ठोवउत्ते तदप्पिअकरणे तब्भावणाभाविते अण्णत्थकत्थइ मणं अकुव्वमाणे उवउत्ते जिणवयणधम्माणुरागरत्तमणे प्रत्यंतरे उभओकालं आवस्सयं करेंति सेत्तं लोगुत्तरियं भावावस्सयं ॥**

**सेत्तं नो आगमतो भावावस्सयं सेत्तं भावावस्सयं ।**

से किं त लोउत्तरियमित्यादि । अत्र निर्वचनं लोउत्तरिय भावावस्सय जण्णमित्यादि । जण्णति णमिति वाक्यालंकारे । यदिदं श्रमणादयस्तच्चित्तादिविशेषणविशिष्टा उभयकालं प्रतिक्रमणाद्यावश्यकं कुर्वंति । तल्लोकोत्तरिकं भावावश्यकमिति । तत्रकस्तत्र श्राम्यतीति श्रमणः साधु । श्रमणी साध्वी । शृणोति साधुसमीपे जिनप्रणीतां सामाचारीमिति श्रावकः श्रमणोपासकः । श्राविका श्रमणोपासिका । वाशब्दाः समुच्चयार्थाः । तस्मिन्नेवावश्यके चित्तं सामान्योपयोगरूपं यस्येति तच्चित्तः । तस्मिन्नेव मनो विशेषोपयोगरूपं यस्य स तन्मना तत्रैव लेश्या शुभपरिणामरूपा यस्येति सतल्लेश्यस्तथा तदध्यवसितं इहाऽध्यवसायोऽध्यवसितं ततश्च तच्चित्तादिभावयुक्तस्य सतस्तस्मिन्नेवावश्यकेऽध्यवसितं क्रियासम्पादनेन विषयस्येति तदध्यवसितः । तथा । तत्तीव्राध्यवसायस्तस्मिन्नेवावश्यके तीव्रमारम्भकालादारभ्य प्रतिक्षणं प्रकर्षयायिप्रयत्नविशेषल-

क्षणमध्यवसानं यस्य स तथा । तदर्थोऽपयुक्तस्तस्यावश्यकस्यार्थस्तदर्थस्तस्मिन्नुपयुक्तस्तदर्थोपयुक्तः । प्रशस्ततरसंवेगविशुद्ध्यमानस्तस्मिन्नेव प्रतिसूत्र प्रतिक्रिय चार्थोपयुक्त इत्यर्थः । तथा तदर्पितकरण करणानि तत्साधकतमानि देहरजोहरणमुखवस्त्रिकादीनि तस्मिन्नावश्यके तथोचित व्यापारनियोगेनाऽर्पितानि नियुक्तानि तानि येन स तथा । स म्यग् यथास्थान न्यस्तोपकरण इत्यर्थः । तथा तद्भावनाभावित. तस्याऽवश्यकस्य भावना अव्यवच्छिन्नपूर्वपूर्वतरसंस्कारस्य पुनः पुनस्तदनुष्ठानरूपा तया भावितो गाढभावेन परिणतावश्यकानुष्ठानपरिणामस्तद्भावनाभावितः । तदेव यथोक्तप्रकारेण प्रस्तुतव्यतिरेकतोऽन्यत्र कुत्रचिन्मनोऽकुर्वन्नु पलक्षणत्वा वाच काय चान्यत्राकुर्वन्नेकार्थिकानि वा विशेषणान्येतानि प्रस्तुतोपयोगप्रकर्षप्रतिपादनपराणि अमूनि च लिंगपरिणामतः श्रमणीश्राविकयारपि योज्यानि । तस्मात्तच्चित्तादिविशेषणविशिष्टाः श्रमणादयः उभयकालमुभयसन्ध्यं यदावश्यक कुर्वन्ति तल्लोकोत्तरिक भावमाश्रित्य भावश्रासावावश्यकं चेति वा भावावश्यकम् । अत्राप्यवश्यं करणादावश्यकत्व तदुपयोगपरिणामस्य च सद्भावात् भावत्व । मुखवस्त्रिकाप्रत्युपेक्षणरजोहरणव्यापारादिक्रियालक्षणदेशस्याऽनागमत्वात् नो आगमत्व भावनीय । सेत्तमित्यादि । अनु० ॥

निगमन तदेव स्वरूपत उक्तभावावश्यकमनेन चात्राधिकार. एतदेव संगृहय गाथयोपनिबध्नन् चतुर्विधं निक्षेपमाह । विशे० ॥

तत्र नामस्थापने क्षुण्णत्वान्नोच्यते । द्रव्याऽवश्यक तु द्विधा आगमतो नो आगमतश्च । तत्राऽगमतः प्राह ॥

आगमओदव्वावस्सय, तमावस्सयं पयं जस्स ।
सिक्खियमिच्चाइतयं, तदणुवउत्तो निगदमाणो ॥

आगमतो द्रव्यावश्यक भवति क इत्याह ॥ तदावश्यक निगदत्यवदन्नध्येता कथभूतस्तस्मिन्नावश्यकेऽनुपयुक्तस्तदनुपयुक्तः यस्याऽध्येतु । किमित्याह । यस्य तदावश्यकपदं प्रथम शिक्षितं जितमित्यादिविशेषणविशिष्ट भवति । अथ तान्येवाऽनुयोगद्वारादिसूत्रोक्तानि शिक्षितादिविशेषणानि व्याख्यानयन्नाह ॥

सिक्खिय मंतं नीयं हियमं मवियं जियं रुय । एइस क्खियवण्णाऽमियं परिजियमेरुक्कमेणामि । जहसिक्खिओयं समानामंतहंतंपि तहाठियाइ नामसमं गुरुन्नाणियं घोससरिसं संगहियमुहत्ततओतेय नाविहीणक्खमाहिय क्खरं च वोच्चत्थरयणमाल्लन्ववाइठक्करकरमेयं वच्चा रियव न्नासं न खलियमुवलहणं पिव आमिलियमसरूवयन्नमे लोव्वत्थोशत्तगन्नमहवा आमिलियपयवक्कविच्छेयं । नय विविहसत्थपल्लवाविमिस्समग्गाए विन्नमाहिय वा निच्चा मेलियकोलियययासमिव सेरिकयं वा मन्नाइनियमाणं प डिपुन्नं च्छेदसाहवत्थेणं नाकंखायरुवोट्ठं पुणरुदत्ताइ घोसेहिं ॥ कंठोठविप्पमुक्कं नारत्तं वालसुयजाणियं वा गुरुवायणो वयातं न चोरियं पुच्छयाउ वा ॥

इहानुयोगद्वारेऽप्युक्तं ॥
सेकिंतं आगमओ दव्वावस्सयं २ जस्स णं आवस्स

यत्ति पयं सिक्खियं ठियं जियं मियपरिजियं नामसमं घोससमं अहीणक्खरं अच्चक्खरं अव्वाइद्धक्खरं अक्खलिय अमिलिय अविच्चामेलियं पडिपुन्नं घोसं कंठोट्ठविप्पमुक्कं गुरुवायणोवगय सेणं तत्थ वायणाए पुच्छणाए परियट्टणाए धम्मकहाए । वतत इत्यध्याहारः ॥

नोअणुपेहाए इहापि वर्तत इति शेषः इद च सूत्र आगमओदव्वावस्सयमित्यादि प्रागुक्तगाथायाः प्रायो व्याख्यात शिक्षितादिपदानि त्विदानीं व्याख्यायते तत्रशिक्षितमिति कोऽर्थः अंतं नीत सर्वमधीमिति स्थित हृदिव्यवस्थितमप्रच्युतमित्यर्थः । जितं द्रुतमागच्छतिच्छवर्णादिभिः संख्यातमित यत्क्रमेणाऽप्येत्याऽगच्छतितत्सर्वतो जित स्वकीयेन नाम्नासम नामसमं यथा स्वनामं शिक्षित तथा तदप्यावश्यकं तथा यथैव स्वनामस्थितादिविशेषणविशिष्टं घटते । स्थितजित मितं परिमितमित्यर्थः । एवतदप्यावश्यकमतः स्वनामसममुच्यते । यद्वाचनाचार्याभिहितोदात्ताऽनुदात्तस्वरितलक्षणैर्घोषैः सदृशमेव गृहीत तत् घोषसमं न हीनाक्षरं नाप्यधिकाक्षरं ( वोच्चत्थे ) त्यादि यथा प्राप्तानीरिप्रोतरत्नमालाविपर्ययन्यस्तरत्ननिचया भवत्येव यद्यत्पासितवर्णविन्यासं विपर्ययोपन्यस्तवर्णसंतानमित्यर्थः । तदाक्षर न तथावा विद्धाक्षर इदं वर्णमात्रापेक्षं विवक्ष्यते नतु वाक्यापेक्ष पदवाक्यविपर्ययस्तस्य वक्ष्यमाणमीलितविषयत्वादिति उपलशकलाऽऽकुलभूतले हलामिव यन्न स्खलति तदस्खलितं । विसदृशानेकधान्यमेलकवद्यन्न मिलति तदमिलित । अथवा विपर्यस्तपदवाक्यग्रथ मिलित नैव यतद मिलितं ( अमिलियपयवक्कविच्छेयति ) अथवेत्यत्रापि तृतीयव्याख्यांतरसूचकः सबध्यत । अमिलितोऽसस कः पदवाक्य विच्छेदो यत्रत दाऽमिलितमुच्यते । अव्यत्यामेडित व्याख्यातुमाह । नयविविहेत्यादि विविधानि नानाप्रकाराण्यनेकानि शास्त्राणि तेषांपदवाक्यावयवरूपा बहवा पल्लवास्तैर्विमिश्रव्यत्यामेडित अथवा स्थानच्छिन्नग्रथित व्यत्याम्रेडित यया । प्राप्तराज्यस्य रामस्य राक्षसा निधन गता । कोलिकपायसवद्धेरीकथावद्वा यथोक्तरूप यन्न भवति तदव्यत्याम्रेडितं । परिपूर्ण द्विधा । सूत्रतो ऽर्थतश्च । तत्र छदसा छद समाश्रित्य मात्रादिनियतमान सूत्र परिपूर्णं । यत्वनाकांक्षादिदोषस्तदर्थतोऽपरिपूर्ण यत्क्रियाऽध्याहार नाऽपेक्षते । अध्यापकश्च तत्र च भवति तदर्थत परिपूर्णमिति भावः । परिपूर्णघोषमिति व्याख्यातुमाह (पुन्न-) मित्यादि । उदात्तादिघोषैः परावर्तनादिकाले उच्चारयति । तत्परिपूर्णघोष । इह च शिक्षाकालेऽध्यापकनिगदितोदात्तादिघोषैः सम शिक्षमाणस्य घोषसमं । शेषकाले तु परावर्तनादि कुर्वन्नुदात्तादिघोषैः परिपूर्णमुच्चारयति तत्परिपूर्णघोषम् इत्यनयोर्विशेष । कण्ठोष्ठविप्रमुक्त न तु बालमूकभाषितवदव्यक्त गुरोः सकाशाद्वाचनया उपयातमायातं न पुन पुस्तकादेव चोरितः स्वतत्रेणैवाऽधीतं वाशब्दात्कर्णाघाटकेन वा गृहीतमिति । अत्र प्रेरक. प्राह ।

आगमओऽणुवउत्तो, वत्ता दव्वंति सिद्धमावासं ।
किंसिक्खियाइ सुयगुण, विसेसणो फलमिहुत्तहियं ।

नन्वागमतोऽनुपयुक्तो वक्ता द्रव्यावश्यकमित्येतावतैव सिद्धमागतो द्रव्यावश्यक किं शिक्षित स्थित जितमित्याद्यावश्यकश्रुतगुणविशेषणैरिहा ऽभ्यधिकं फलमिति ॥ अत्रोत्तरमाह ॥

जह सव्वदोसरहियं पि, निगदओ सुतमणुवउत्तस्स ॥
दव्वसुयं दव्वावासयं, च तह स वकिरिया उवओ ॥१॥
उवउत्तस्स य खलियाइ, यं पिसुद्धस्स भाव ओसुत्तं ॥
साहइ तह किरियाओ, सव्वाओ निज्जरफलाओ ॥२॥

इहाशिक्षितादिविशेषणकलाप कुर्वन्नाचार्य इति साध्यते। ततः कथयतीति द्वितीयगाथायां क्रिया किं साधयतीत्याह- यथा शिक्षितादिगुणोपेतत्वात्सर्वदोषपरहितं सूत्रमनुपयुक्तस्य निगदतो द्रव्यश्रुतं वक्ष्यमाणद्रव्यावश्यकं चोक्तस्वरूप भवति। तथा प्रत्युपेक्षणप्रमार्जनेत्यादि क्रिया अपि सर्वा अनुपयुक्तस्य कुर्वतो ऽनप्रणिधानशून्यत्वाद्द्रव्यक्रियास्तत्फलविकला भवन्ति। तथा यथैव सामर्थ्यादिदं लभ्यते उपयुक्तस्य त्वतः प्रणिधानयुक्तस्य कारणवैकल्यादिकारणात्कथमपि स्खलितादिदोषदुष्टमपि सूत्रं निगदतो भावतः शुद्धस्य तस्य भावसूत्रमेव भवति। तथा सर्वा अपि प्रत्युपेक्षणादिक्रिया उपयुक्तस्य कुर्वतः कर्मनिर्जराफला एव भवन्त्यतः सर्वत्रापि भगवदुक्तानुष्ठानेष्वत प्रणिधानेऽतिशयः प्रयत्न कार्य इति ॥ विशे० ॥

अथ नो आगमतोऽभिधित्सुराह ॥

नो आगमओ जाणय, भव्वसरीराइरित्तमावासं ।
लोइयलोउत्तरियं, कुप्पावयणं जहा सुत्ते ॥

नो आगमतो द्रव्यावश्यकत्रिविध ज्ञशरीरद्रव्यावश्यकं भव्यशरीरद्रव्यावश्यक। तदुभयद्रव्यावश्यकव्यतिरिक्त च तत्र सम्यक्पूर्वाऽधीतावश्यकं सिद्धशिलातलगतं जीवविप्रमुक्त मुनिशरीरमनुभूतभावत्वात् ज्ञशरीरद्रव्यावश्यकं। यत्पुनरावश्यकार्थं ज्ञास्यति। न पुनरिदानीं जानाति तत्सचेतन देवदत्तादिशरीरं योग्यत्वाद्भव्यशरीरद्रव्यावश्यक। एतदुभयव्यतिरिक्त तु नो आगमतो द्रव्यावश्यकं त्रिविधम्। लौकिकं लोकोत्तर कुप्रावचनिकं च। तत्र लौकिक राजादीनां मुखप्रक्षालनाद्यावश्यक लोकोत्तरतु येऽमे श्रमणगुणविप्रमुक्ता लिंगमात्रधारिणः साध्वाभासाः प्रतिपदमनेकान्यसंयमस्थानान्यासेव्योभयकालं प्रतिक्रमणाद्यावश्यक कुर्वन्ति तद्विज्ञेयं। कुप्रावचनिक तु यत्पाखण्डिनश्चामुण्डायतनोपलेपनाद्यावश्यक कुर्वन्ति तद्द्वयोर्द्रव्य नोआगमश्चेह सर्वत्रागमे सर्वनिषेध द्रष्टव्य। एतच्च सर्वमपि नो आगमतो द्रव्यावश्यक सप्रभेदं यथा सूत्रे। अनुयोगद्वाराख्ये प्रोक्त तथा विज्ञेयमिति। इह लोकोत्तरं यत्रो आगमतो द्रव्यावश्यकमुक्त तत्रोदाहरणमाह ॥

लोउत्तरं अभिक्खण, मासेवालोयओ उदाहरणं ।
सरयणदाहगवाणिय, नाए जइ उवालद्धे ॥

लोकोत्तरं नो आगमतो द्रव्यावश्यकेऽभीक्ष्णमासेवकालोचक साध्वाभास उदाहरणं। आसेवकश्चासावालोचकश्चेति समास। आसेवकालोचकस्य च योऽगीतार्थो गुरु स खलु रत्नदाहकवणिग ज्ञातेन गीतार्थयतिभिरुपालब्धः। इत्यक्षरार्थो भावार्थस्तु कथानकगम्यस्तच्च कथ्यते।

वसन्तपुरं नाम नगरं तत्र चागीतार्थ संविग्नाभास एको गच्छ सूरिरमिदितो विचरति। तन्मध्ये चैकः साध्वाभासस्तिष्ठति। स च प्रतिदिनमुदकार्द्रहस्तादिदोषदुष्टान्यनेषणीयभक्तपानादीनि गृहीत्वावश्यककाले महान्तं संवेगमिवोद्वहन् सर्वं गुर्वन्ति केऽव्यवच्छिन्नमालोचयति गुरुरपि तस्मै प्रायश्चित्तं प्रयच्छति। तत्र प्रकृत्यगीतार्थत्वेन नित्यमेव वक्ति अहो धर्मश्रद्धालुरयं महाभागः सुखेनासेव्यते दुष्करं च यदित्थमालोच्यते। अतोऽगवत्वादेव शुद्धोऽयमेतच्च दृष्ट्वाऽन्यमुग्धसाधवश्चिन्तयन्त्यहो आलोचयितव्यमेवेत साध्यं। तत्क्रियते तर्हि कृत्याऽसेवनेऽपि न कश्चिद्दोषश्चत्येव सर्वस्मिन् गच्छे प्रायः प्रवृत्तमसमंजसमभूत। इत्थं च व्रजति काले अन्यदा गीतार्थः साधुः कश्चित्तत्र गच्छे प्राघूर्णकः समायातस्तेन चासौ विधिः सर्वोऽपि दृष्टस्तैश्चिन्तितमहोऽनेनागीतार्थगुरुणा सर्वोऽप्ययं नाशितो गच्छ स्ततस्तेन भणितो गुरुराह।

त्वमसु नित्यमकृत्यासेवक साधुमित्थं प्रशसन् वसन्तिनगरनृपतेस्तन्नगरवासिलोकस्य च सदृशः कथमित्यत्रोच्यते।

गिरिनगरं नाम नगरं तत्र चैकोवाणिक कोटीश्वरो निवसति। स च वैश्वानरभक्तत्वात्प्रतिवर्षं रत्नानामपवरकं भृत्वा वह्निना प्रदीपयति। तं च तथा कुर्वतं राजा नगरलोकश्च सर्वदा प्रशंसति। यथा अहो वैश्वानरे भक्तिरस्य यदमुं भगवंत प्रतिवर्षमित्थं रत्नैस्तर्पयत्यसौ। एवं च प्रशस्यमानोऽयमादततर प्रतिसंवत्सरं तथाऽनुतिष्ठति। ततोऽन्यदा प्रचण्डपवनोद्धूतस्तेन प्रदीपितो वह्निः सराजगृहं समस्तमपि नगरं भस्मसात्करोतिस्म। तत सनगरेण राज्ञा किमस्माभिरित्थं कर्तव्यमसौ पूर्वनिषिद्धः किंवा प्रशंसित इत्यादि बहु पश्चात्ताप कृत्वा दण्डितो निर्वासितश्च नगराद्सौ वणिगिति। एवमाचार्य त्वमपि अविधिप्रवृत्तस्याऽस्यसाधोर्नित्यमित्थंप्रशंसां कुर्वन्नमुमात्मानं गच्छं च नाशयसि। तस्मान्मथुरापुरीनरपतेस्तन्निवासिलोकस्य च सदृशोभव यतोऽनर्थभाग्न भवसि। कथमित्यत्राऽभिधीयते ॥

मथुरानगर्यामपि वैश्वानरभक्तेन केनापीश्वरवणिजा इत्थमेव रत्नभृत गृहं प्रदीपयितुमारब्धम् तत स नगरलोकेन राज्ञा दण्डित तिरस्कृतश्चासौ वणिगटव्यां गृह कृत्वा किमित्थ न प्रदीपयसीति निष्कासितो नगरादिति त्वमपीत्थंकुर्वन्नमुमात्मानं गच्छं चानर्थेभ्यो रक्षसि तदित्थं युक्तिभिः शिक्ष्यमाणोऽप्यसौ गुरुरगीतार्थत्वेन साग्रहतया निर्धर्मतया च स्वप्रवृत्तेर्ननिवर्त्तते। ततस्तेन प्राघूर्णकसाधुना गच्छसाधवोऽभिहिता। अस्यैवंभूतस्य गुरोर्वशवर्तित्वेन परिनिहियतामयमन्यथा सर्वे पामनर्थाय संपत्स्यते। ततस्तैश्चाऽनुष्ठितं तैरिति। तदेवं भूतस्य गच्छस्य सत्क नो आगमतो लोकोत्तरं द्रव्यावश्यकमभिधीयत इति तदेव सोदाहरणमुक्त द्रव्यावश्यक ॥

अधुना भावावश्यकमभिधीयते। तच्च द्विधा आगमतो नो आगमतश्च। तदेतदुभयमप्याह ॥

आगमओ भावावस्सयं, तदत्थोवओगपरिणामो ।
नो आगमओ भावे, परिणामो नाणकिरियासु ॥

आगमतो भावावश्यकमावश्यकार्थोपयोगपरिणाम नो आगमतस्तु ज्ञानक्रियोभयपरिणामो मिश्रवचनत्वान्नोशब्दस्येति। इदं च त्रिविधमपि दर्शयन्नाह ॥

लोइयलोउत्तरियं, कुप्पावयणं च तं समासेणं ।
लोउत्तरं पसत्थं, सत्थे तेणाहिगारोयं ॥

तत्रो आगमतो भावावश्यक त्रिविधं। लौकिक लोकोत्तरं कुप्रावचनिक। एवं चोपन्यासः पूर्व व्यतिरिक्तद्रव्यावश्यकेऽत्र च भावावश्यके वधानुलोम्यादिना केनापि हेतुना कृतो यावताऽनुयोगद्वारसूत्रेण इत्थमुक्त। लौकिक कुप्रावचनिक लोकोत्तरं चेति। तत्र लौकिक नो आगमतो भावावश्यक। पूर्वाह्णे भारतं अपराह्णे रामायण वाचनीयमित्यादि कुप्रावचनिक। मत्रादि

पाठपूर्वकमिज्यांजलिहोमादि लोकोत्तर पुनरुपयुक्तस्य श्रमणा देर्मुखवस्त्रिकाप्रत्युपेक्षणावर्त्तादि क्रियामिश्रमुभयकालमाव-श्यकसूत्रोच्चारण एवं सर्वत्र ज्ञानक्रियामिश्रता भावनीया। इह च त्रिविधेऽपि नो आगमतो भावावश्यके पारमार्थिकाऽनुपमाऽपवर्गसुखप्राप्तिहेतुत्वाल्लोकोत्तरमेव प्रशस्त । तदेव चेह शास्त्रेऽधिक्रियत इति । विशे०। आ० म० प्र० १ अ.। आ० चू० १ अ ॥

आवश्यकं च गुरुसाक्षिकमेव कर्त्तव्यम् ।

तथा च विशेषावश्यके ॥

आवस्सयंमि निच्चं, गुरूपादमूलंमि देसियं सव्वं होइ ।
वीसंपि हुसंवसओ, कारणओ जंदन्निसेज्जाए ॥

अनेन गुर्वामन्त्रणवचनेन आवश्यक प्रतिक्रमणं गुरुपादमूल एव नित्य कर्तव्य इति दर्शित भवति । यद्वयमस्मादभिश-य्यायां द्वितीयवसतावित्यर्थः । कारणतः कारणवशाद्विष्वगपि सवसत साधो. कल्पग्रन्थे इयं सामाचारी प्रोक्तेति शेष' का पुनरिय कल्पसमाचारीत्युच्यते ।

जइ खुड्डुलगा वसहीतो, अन्नगंतूणा कपयया साहूणो।

वसति तत्राचार्यसमीपे (पमिक्कमिउ पाउसिय) कालग्रहणोत्तर काल सूत्रार्थपौरुषीं कृत्वा अन्यस्यां गच्छतो अथांतरा श्वापदादिभय ततोऽर्थपौरुषीं हापयति तथा सूत्रपौरुषीमपि कालमपि तथा चरम कायोत्सर्गं द्वितीयमाद्य यावत्तिष्ठत्यपि-सहस्ररश्मौ तत्र यांतीति न केवल प्रतिक्रमण किंत्वेवमेव शेषाण्यपि सर्वाणि साधुभिरवश्य कर्तृत्वान्यावश्यकानि । गुरूनापृच्छ्य कर्तव्यानीत्येतद्ज्ञापितमामन्त्रणवचनाद्येन सर्वे-षामप्यावश्यकानां सामायिकमेवादौ मतं भदतशब्दश्च य स्मात्तदादौ निर्दिष्टस्तेनानुवर्तते तत्कोऽसो सर्वेष्वप्याव श्यकेषु कथमित्याह ॥ इदमिद च करोमि भदता ! इति। एतदेवाह ॥

एवं चिय सव्वावस्सयाइ आपुच्छिऊण कज्जाइं जाणा वियमामंतणवयणा । जेण सव्वेसिं सामाइयमाइयं ओ यं भदंत ! सदोयजंतदुदाइ एतेणाणुवत्तइ तओकरेमि ! भंते ति सव्वेसु ॥

गतार्थे । किमिति गुरूनापृच्छ्यैव सर्वावश्यकानि कर्तव्यानी-त्याह । किंचाकिंच गुरवो, विदति विणयपमिवातिहेऊं च । उस्सासाइए मोत्तु, तदणपुच्छाए पमिसिद्धं ॥१॥ पाठसिद्धा । यत्र तर्हि गुरुर्न भवति तत्र किं विधेयमित्याह ॥

गुरुविरहम्मि य ठवणा, गुरूवसेवोवदंसणत्थं च ।
जिणविरहम्मि वि जिण, बिंबसेवणमंतणं सफलं १
रन्नोवपरोक्खस्स वि, जह सेवामंतदेवया एव ।
तह य परोक्खस्स वि, गुरुणो सेवा विणयहेऊ २
अहवा गुरुगुणनाणो, चउगभाव गुरुसमा एसो ।
इह विणयमूल धम्मो, वएसणत्थं चउव्विहं विणयसासाण-मूलं । विणीऊंसंजाऊ भवो, विणयाविप्पमुक्कस्स कउधम्मो ३ कउतवो विणउवयारं, माणस्स भंजणापूयणा गुरुजणस्स । तित्थयराणय आणा, सुयधम्मा-राहणा किरिया ॥

पाठसिद्धा एवेति ॥

आवश्यकाकरणेऽसमाचारी दोषः ॥

न करेंती आवस्सं, हिणाहियनिविच्छ पाउयनिविन्ना !
दंमगहणादिविणयं, राइणियादीणा न करेंति ॥

आवश्यकं सूत्रत एव न कुर्वति । यदि वा हीनं अधिक वा कायोत्सर्गाणां हीनकरणतोऽधिक वाऽनुप्रेक्षार्थं कायोत्स-र्गाणामेव चिरकालकरणत. कुर्वंति । यदि वा निषण्णा उपविष्टा. प्रावृत्ताः शीताः शीतादिभयत. कल्पादिप्राचरणप्रावृत्ता निषण्णास्त्वग्वर्तनेन निपतिता. प्रकुर्वंति । व्य. १ उ. ।

आवश्यकाकरणे प्रायश्चित्तम् । महा ७ अ. ॥

से भयवं केवइयाइं पायच्छित्तस्स णं पयाइं खाइयाइं गोपायत्थियस्स पयाइं संखाइयाइं से भयवं तेसिणं संखा इयणं पायच्छित्त पयाणं किंतं पढमं पायच्छित्तस्स णं गोयमा ! पइदिणकिरियं सेभयवं किंति पइदेणकिरियं गोयमा ! जं मणुं समयाअहन्निसा-यणोवरमंजावणुट्ठेयव्वाणि संखेज्जाणि आवस्सगाणि । से भयवं केणं अट्ठेणं एवं वुचइ । जहा ण आवस्सगाणि गोयमा ! असेसकसिणट्ठकम्मक्खयकारि उत्त-मसम्मदंसणं चारित्तंअच्चंतघोरवीरुग्गकट्ठसुट्ठुकरं तव-साहणट्ठाए परूविज्जंति । नियमियविभत्तुद्दिट्ठं परिमिएणं कालसमएणं पयं पयेणाहं निसाणुसमयमाजम्मं अव-स्समेव तित्थराइसु कीरंति अणुट्ठिज्जयंति उवइसिज्जंति परुविज्जंति पन्नविज्जंति सययं एराणं अट्ठेणं एवं वुचइ । गोयमा ! जहा णं आवस्सगाणि तेसिं चणं गोयमा ! जे भिक्खू कालाइक्कमेणं वेलाइक्कमेणं समयाइक्-म्माणं आलसायमाणे अणोवओपमत्ते अविहीए अन्नेसिं व असद्धं उप्पायमाणे अन्नयरमावस्सगं पमाइयसं तेणं बलवीरिएणं सातलेहरुताए आलंवणं वा किंचि-घेत्तूणं चिराइयं पउरियाणाणं जहुतयालं समणुट्ठेज्जा-सेणं गोयमा ! महा पायच्छित्ती भवेज्जा ॥

अकएसु य पुरिमा, सणमायायं सव्वसो चउत्थं तु ।
पुव्वमपेहिय यंम्मि, निसिवो सिरिणे दिवासुवणे ५३॥

अकृतेषु पुन. कायोत्सर्गेषु वदनकेषु च एकादिषु एकद्वित्रिषु पुरिमैकाशनाचामाम्लानि ( सव्वसो चउत्थतु ) सर्व्वेस्मिंस्तु प्रतिक्रमणे अकृते चतुर्थन्तु । तथा पुव्वं सन्ध्यायामप्रेक्षित-स्थण्डिले निशि सज्ञोत्सर्गे कृते चतुर्थं । तथा दिवसे निद्राकृते चतुर्थं ॥ ५३ ॥ जीत. टी ॥

निव्वीतियपुरिमड्ढोअंबिलखपणा य आवासे ॥

आवासे आवश्यके एकादिकायोत्सर्गाऽकरणे सर्वावश्यका-करणे यथासख्यं निर्विकृतिपूर्वार्द्धाचाम्लक्षपणानि । इयमत्र भावना । आवश्यके यद्येक कायोत्सर्गं न करोति तत. प्राय-श्चित्त । निर्विकृतिक कायोत्सर्गद्व्याकरणे पूर्वार्द्धं त्रयाणामपि कायोत्सर्गकरणानामकरणे आचाम्ल सर्वस्याऽपि चाव-श्यकस्याकरणे अभक्तार्थो इति । व्य १ उ. ॥

देशत सर्वतो वाऽऽवश्यकाकरणकारणान्यभिगम्यागमन-वेत्रामधिकृत्य व्यवहारकल्पे ॥

आवस्सयं तु काउं, निव्वाघाएण होइ गतव्वं ।
वाघाएण उ भयणा, देसं सव्वं अ काउणं ॥

व्याघातस्य स्तेनादिप्रतिबन्धस्याऽभावोनिर्व्याघातेन भवति । गंतव्यं वसतिराचार्यः सममावश्यकं कृत्वा व्याघातो न पुनर्हेतु भूतेन भजनाविकल्पेन का भजनेत्यत आह । देशं वा आवश्यकंकृत्वा सर्वे वावश्यकमकृत्वा समाप्ते यैःकारणैः प्रतिबन्धस्तान्युपदर्शयति ।

तेणासावयवाला, गुम्मिय आरक्खिठवणपडिणीए ।
इत्थिनपुंसगसंसत्त, वासचिरकट्टकंटे य ॥

स्तेनाश्चौरास्ते सन्ध्यासमयेऽन्धकारकलुषिते संचरंति । श्वापदानि चाशुद्धानि भूयांसि तदा उद्यानानि हिंडंते व्याला वा भुजंगमादयो वातादिपानाय भूयांसः सचरंति तत्र गुल्मेन स समुदायेन संचरतीति गौल्मिका आरक्षिकाणामप्युपरिस्थायिनो हिंडिका पुररक्षकास्ते अकाले हिंडमानान् गृह्णति । तथा ठवणत्ति । क्वचिद्देशे एवं रूपा स्थापना क्रियते । तथा अस्तमिते सूर्ये रथ्यादिषु सर्वथा न संचरणीयमिति प्रत्यनीको वा कोऽप्यं तराविघातकरणार्थे तिष्ठन् वर्त्तते स्त्रियो नपुंसका वा कामवहुलास्तदा उपसर्गयेयुः । संसक्तो वा प्राणजातिनिरयांतराले मार्गः । ततोऽन्धकारेणेर्यापथिकी न शुद्ध्यति । वर्षे वा यत्तत् संजायते (वासचिक्खल्लोत्ति) कर्दमो वा पथि भूयानस्ति । ततो रात्रौ पादक्षेपः कर्दमे कथं क्रियते ( कंटत्ति ) कंटका वा मार्गेऽतिबहवस्ते रात्रौ परिहर्त्तु न शक्यंते । एतैर्व्याघातकारणैः समुपस्थितैः देशतः सर्वतो वा वश्यकमकृत्वा गच्छंति तत्र देशतः कथमकृत्वेत्यत आह ॥

थुतिमंगलकितिकम्मे, उस्सग्गो य तिविहकियकम्मे ।
तत्तो य पडिक्कमणे, आलोयणयाए कितिकम्मो ॥

स्तुतिमंगलमकृत्वा स्तुतिमंगलाकरणे चायं विधिः । आवश्यके समाप्ते द्वे स्तुती उच्चार्य तृतीयांस्तु तिमकृत्वा अभिशय्यां गच्छति तत्र च गत्वाचेर्यापथिकिं प्रतिक्रम्य तृतीयां स्तुतिं ददाति अथ वा आवश्यके समाप्ते एकां स्तुतिं कृत्वा द्वेस्तुती अभिशय्यां गत्वा पूर्वविधिनोच्चारयति । अथ वा समाप्ते आवश्यके अभिशय्यां गत्वा तत्र तिस्रः स्तुतीर्ददाति । अथवा स्तुतिभ्यो यद्वक्तिनकृतिकर्म्म तस्मिन्नकृतेऽभिशय्यां गत्वा तत्रेर्यापथिकींप्रतिक्रम्य मुखवस्त्रिकां च प्रत्युपेक्ष्य कृतिकर्मकृत्वास्तुती ददाति (काउस्सग्गो य तिविहत्ति) त्रिविधे कार्योत्सर्गे क्रमेण कृते तद्यथा चरमकार्योत्सर्गमकृत्वा अभिशय्यांगत्वा तत्र चरमकायोत्सर्गादिकं कुर्वंति । अथवा द्वौकायोत्सर्गौ चरमावकृत्वा यदि वा त्रीनपि कार्योत्सर्गान् अकृत्वा अथ वा कायोत्सर्गेभ्योऽर्वाक्तन यत् कृतिकर्म्म तस्मिन्नकृते उपलक्षणमेतत् । ततो अर्वाक्तने क्षामणेयदि वा ततोऽप्यर्वाक्तने कृतिकर्म्मणि अकृते अथ वा ततोऽप्यर्वाक्तने प्रतिक्रमणे अकृते यदि वा ततोऽप्यर्वाक्तने आलोचने अकृते अथवा ततोऽप्यर्वाक्तने कृतिकर्म्मणि अकृते अभिशय्यामुपगम्य तत्र तदाद्यावश्यकं कर्तव्यमिति । एवमावश्यकस्य देशतोऽकरणमुक्तमिदानीं सर्वस्याकरणमाह ।

काउस्सग्गमकाउं, कितिकम्मालोयणं जहण्णेणं ।
गमणम्मी एसविही, आगमणम्मीविहीं वोच्छं ॥

यो दैवसिकातिचारानुप्रेक्षार्थ प्रथमः कार्योत्सर्गस्तमप्यकृत्वा किमुक्तं भवति । सर्वमावश्यकमकृत्वा ऽभिशय्या गच्छंति । किमेवमेव गच्छन्ति । नतास्ति कश्चन विधिरुच्यते । अत्र्याह सूत्र । तथा चाह । (कितिकम्मालोयणं जहण्णेणति) । जघन्येन जघन्यपदे सर्वमावश्यकमकृत्वा सर्वे गुरुभ्योवंदनं कृत्वा यश्च सर्वोत्तमोज्येष्ठ स आलोच्य तदनंतरमभिशय्यांगत्वा सर्वमावश्यकमहीनं कुर्वंति । एषोऽभिसय्यायां गमने ऽभिसंजात प्रत्यागमने पुनर्योविधिस्तमिदानीं वक्ष्ये ॥

प्रतिज्ञातमेव निर्वाहयति ॥

आवस्सगं अकाउं, निव्वाघाएण होइ आगमणं ।
आघायम्मि उ भयणा, देसं सव्वं च काउणं ॥

यदि कश्चनापि व्याघातो न भवति ततोनिर्व्याघातेन व्याघाताभावेनावश्यकमकृत्वाऽभिशय्याता वसतावागमनं भवति । आगत्य च गुरुभिः सहावश्यकं कुर्वंति व्याघाते भजना कापुनर्भजनेत्यत आह । देशमावश्यकस्य कृत्वा सर्व वाऽऽवश्यकं कृत्वा तत्र देशत आवश्यकस्य करणमाह ॥

काउस्सग्गं काउं, कितिकम्मालोयणं पडिक्कमणं ।
किडकम्मं तिविहं वा, काउस्सग्गं परिण्णाय ॥

कार्योत्सर्गमाद्यं कृत्वा वसतावागत्य शेषं गुरुभिः सह कुर्वंति । अथ वा द्वौ कार्योत्सर्गौ कृत्वा यदिवा त्रीनूकार्योत्सर्गान् कृत्वा अथ वा कायोत्सर्गत्रयानंतरं यत् कृतिकर्म्म तत्कृत्वा अथवा तदनंतरमालोचनमपि कृत्वा यदि वा तत्परं यत्प्रातिक्रमणं तदपि कृत्वा अथवा तदनन्तरं यत्कृतिकर्म्म त्रिभेदं क्षामणादर्वाक्तनं परवोत्वर्थः ॥ तदपि कृत्वा पाठांतरं तिविहं ते विभूतकृतिकर्मतेपि हया त्रिविधं वा कृतिकर्म्म कृत्वा अथवा कायोत्सर्गे चरमं पाण्मासिकं कृत्वा परिज्ञाप्रत्याख्यानं तामपि वा कृत्वा । अत्रायं विधिः । सर्वे साधवश्चरमकार्योत्सर्गं वसतावागत्य गुरुसमीपे वंदनकं कृत्वा सर्वोत्तमश्च ज्येष्ठः आलोच्य सर्वे प्रत्याख्यानं गृह्णति । अथवा सर्वमावश्यकं कृत्वा एकां स्तुतिं दत्वा शेषे द्वे स्तुती कृत्वा शेषं गुरुसकाशे कुर्वंति । तदेवमुक्तं देशतः आवश्यकस्य करणमधुना सर्वत कारणमाह ॥

थुति मंगलं च काउं, आगमणं होति अभिनिसिज्जातो ।
वितियपदे भयणाओ, गिलाणमादी उ कायव्वा ॥

अथवा प्रत्याख्यानं तदनंतरं स्तुतिमंगलं च स्तुतित्रयाकर्पणरूपं तत्र कृत्वा अभिशय्यात आगमनं भवति । तत्रेयं समाचारी गुरुसमीपे ज्येष्ठ एक आलोचयति आलोच्य प्रत्याख्यानं गृह्णातीति शेषे ज्येष्ठस्य पुरत आलोचना प्रत्याख्यानं च कृत्वा वदनकं च सर्वे ददाति क्षामणं च । द्वितीयपदे अपवादपदे ग्लानादिषु प्रयोजनेषु भजना कर्तव्या । किमुक्तं भवति ग्लानादिकं प्रयोजनमुद्दिश्य वसतौ नागच्छेयुरपीति ग्लानादीन्येव प्रयोजनान्याह ॥

गेलण्णवासमहिता, पडुच्छ अंते उरे निवेअगणी ॥
अहिगरणहत्थि संभम ए, गेलण्णनिवेयणा नवरिं ॥

ग्लानत्वमेकस्य बहूनां साधूनां तत्राऽऽभवत् तत सर्वेऽपि साधवस्तत्र व्यापृतीभूता इति न वसतावागमनं अथवा वर्षे पतितुमारब्धं मिहिका वा पतितु लग्ना यद्वा (पडुच्छत्ति) प्रविष्टः कोऽप्यंतराविरूपकरणाय तिष्ठति । अंतः पुरं वा तदा नीं निर्गंतुमारब्धं । तत्र च राज्ञा उद्घोषितं यथा पुरुषेण न केनापि रथ्यासु संचरितव्य । राजा वा तदा निर्गच्छति । तत्र हयगजपुरुषादीनां संमर्दः अग्निकायोवांतराले महान् उत्थितोऽधिकरणं वा गृहस्थेन समं कथमपि जातं बृहद्रूपस्तत्र स्तदुपशमयितुं लग्ना हस्तिसम्भ्रमो वा जात । किमुक्तं भवति ।

हस्ती कथमप्याऽऽलानस्तंभं भंक्त्वा शून्यासनं स्वेच्छया तदा परिभ्रमति । एतेषु कारणेषु नागच्छेयुरपि वसति नवरमेतेषु कारणेषु मध्ये ग्लानत्वे विशेषः यदि ग्लानत्वमागाढमुपजातमेकस्यबहूनां वा तदा गुरूणां निवेदना कर्त्तव्या ॥ व्य० १ उ० ॥

कालाद्यतिक्रमेणाऽऽवश्यके प्रायश्चित्तम् । तथा च महानिशीथे ७ अ० ॥

एवं जेणं भिक्खू सुत्ताइक्कमेणं कालाइक्कमेणं आवस्सगं कुव्वीया । तस्स णं कारणिगस्स मिच्छुक्कडं गोयमा ! पायच्छि त्त वइसेज्जा जइ णं आकरिणिगतेसिं तूणं जहाजोगं चउत्थाई ॥

आवश्यके च प्रमादो न कार्य्यः । पं० व० ।

माकुणह प्पमायं, आवस्सएहिं संजमतवोतहाणेहिं ।
णित्थारं माणुस्सं, दुल्लहलाभं वियाणेत्ता ॥

(माकुण हप्पमाय,) प्रमादेना' प्रतिषेधे माकुरुत कषाययोगादिभिः प्रमाद आवश्यकरणीयमावश्यक । किंचित् तदावश्यकं संयमतपोध्यानादिभि' । एष आवश्यक' तप एव उपधानं तपो पधानं किमर्थं । यस्मान्नि' सार मानुष्यं जलबुद्बुदसमानं कुशाग्रजलबिंदुसन्निभं चेत्यादि ततश्चैवं गुणजातीयं दुर्लभं दु प्राप्यमित्यर्थः । विविधमनेकप्रकारं वा ज्ञात्वा विदित्वा ॥ प० व० ॥

आवश्यकप्रमादे प्रायश्चित्तम् ॥

सेभयवं जेणं गणी किंचि आवस्सगं पमाएज्जा गोयमा ! जेणंगणी अकारणिगे किंची खणमेगमवि पमाएसेणं अवंदंउवइसेज्जाजओणं तुम महाकारणिगे वि संते गणी खणमेगमविणकिंचि णियमावस्सगं पमाए भेणं वंदे पूएदट्ठव्वे जावणं सिद्धे बुद्धे पारगए खीणट्ठकम्ममले नीरए उवइसेज्जा सेसं तु महयाए बंधेणं सत्याणे चेव जाणिहिइ एवं पच्छित्ते विहिं सोऊणाणुट्ठती अदीणमणो जं जइय जआ थामं जे से आराहगे भणिए । महा० ७ अ० ॥

सम्प्रति श्रावकस्य व्यवहारनरतस्याऽप्यावश्यके न दुःखांतो भवतीति दर्शयितुमाह ।

आवस्सएण एएण, सावओ जइवि बहुरओ होइ ।
दुक्खाणमंतकिरियं, काही अचिरेण कालेणं

आवश्यकेनैतेनेति षड्विधभावावश्यकरूपेण नतु दंतधावनादिना द्रव्यावश्यकेण श्रावको यद्यपि बहुरजा बहुबध्यमानकर्म्मा बहुरतो वाविविधसावद्यारंभासक्तो भवति तथापीत्यध्याहाराद् दुःखानां शारीरमानसानां ( अतकिरिय ) अंतक्रियां विनाश करिष्यत्यचिरेण स्तोकेनैव कालेन-अत्र चांतक्रियायां अनंतरहेतुर्यथाख्यातचारित्रं तथापि परंपराहेतुरिदमपि जायते सुदर्शनादेरिवेति । ध० २ अधि ॥

श्रावकस्याऽऽवश्यकम् ॥

अविरुद्धो ववहारो, काले तह भोयणं च संवरणं ।
चे इहरागमसवणं, सक्कारो वंदणाईय ॥ पंचा०

नत्वावश्यककरणमित्यसगत श्रावकं प्रति व्रतादिवत्तस्याऽऽगमे विधेयतया उपदिष्टत्वात्तथा हासौ उपासकदशादौ मूलागमेनोपदेशोज्ञापक चोपलभ्यते तद्गुरूपे श्रावकप्रज्ञप्त्यादौ च तथैव च श्रावकप्रतिदिनक्रियां प्रतिपादयता ... चिरवंदणमा इत्येतावदेवोक्तमथ ब्रूते ।

समणेण सावएण य, अवस्सकायव्वयं हवइ जम्हा ।
अंतो अहो निसिस्सय, तम्हा आवस्सयं नाम ॥

इत्यस्यामनुयोगद्वारगाथायां श्रावकस्य तदुपदिष्टमिष्टसिद्धौ हेतु नैवं तत्र चैत्यवंदनादिनैवावश्यकस्य गतार्थत्वाद्यतोयदवश्यं कर्त्तव्यं तदेवावश्यकमवश्यकर्त्तव्यं च चैत्यपूजावंदनादिश्रावकस्य यदि पुनरिदं षड्विधावश्यकमवश्यकर्त्तव्यतया श्रावकस्योपदिष्टमभविष्यत्तदा य एवषड्विधावश्यककारी सएव श्रावकोऽभविष्यन्नचैवमविरतानामपि सामायिककरिणां श्रावकत्वाभ्युपगमादिति । अत्रोच्यते । यदुक्तमुपासकदशादावनुक्तत्वात् श्रावकाणामावश्यकमयुक्तमिति । तदयुक्तमनुपदिष्टत्वस्यासिद्धत्वात्तथाहि । यद्यप्युपासकदशादौ नोपदिष्टं । तत्तेषां तथाप्यनुयोगद्वारेषु तदुपदिष्टं तथाहि ॥

जं इमंसमणे समणीवा सावए वा साविया वा तच्चित्ते तम्मणे जाव उभओकालं छव्विहं आवस्सयं करेंति सेत्तं लोउत्तरियं भावावस्सयंति ॥

यच्चोक्त । चैत्यवन्दनादि श्रावकस्याऽऽवश्यकमिति तदप्यसगत ( मज्झयणछक्कवग्गो ) इत्यादि तदेकार्थिकपदोपन्यासेन तस्य षड्विधत्वेन निश्चितत्वात्तस्यातिवाचकेनाऽप्यस्य समर्थितत्वात्तथाहि । तेनोक्त । सम्यग् दर्शनसपन्न षड्विधावश्यकनिरतश्च श्रावको भवतीति गम्यते । तथा अशठसमाचरितत्वादिजीतप्रकरणानामिहोपपद्यमानत्वेन जीताभिधानपंचमव्यवहारसमर्थितत्वात्तथा । यदुक्त । ( समणेण सावएण य ) इत्यत्र गाथायां यदि षड्विधावश्यक विवक्षितमभविष्यत्तदा तत्कारिण एव श्रावका अभविष्यन्नान्ये इति । तदप्यसगतं । श्रमणपक्षेऽप्यस्य दूषणस्य समानत्वात्तथाहि । य एव षड्विधमावश्यक कुर्वन्ति त एव श्रमणा स्युस्ततश्च कारणजाते प्रतिक्रमणकारिणां मध्यमतीर्थसाधूनामश्रमणता स्यान्न चैवमथ चरमतीर्थसाधूनाश्रित्येय गाथोक्ता । सत्य । केवल यदि श्रावकाणां षड्विधाऽऽवश्यकप्रज्ञापनार्थापि स्यात्तदा किं दूषणमिति । अथ ब्रूते षड्विधावश्यकमतिचारशुद्धिरूप वर्तते । न च श्रावकाणामालोचनादि दशप्रकारशुद्धेर्मध्यात्कोपि प्रकल्पादिग्रंथेषूपलभ्यते । न च तेषामतिचारा घटते । सज्वलनोदय एव तेषामुक्तत्वादित्यत्रोच्यते । यद्यपि श्रावकाणां प्रकल्पादिग्रंथेषु शुद्धिर्न दृश्यते । तथाऽप्यसौ श्रावकजीतकल्पादेः सकाशादवश्याभ्युपगतव्या । अन्यथोपासकदशासु यदुक्त किंत्र भगवान् गौतममुनिरानन्दश्रावक प्रत्यवादीत् ॥

तु मएणं आणंदाएयस्स अट्ठस्स आलोयाहि पडिक्कमाहि निंदाहि गरिहाहि अहारिहं तवोकम्मंपायच्छित्तं पडिवज्जाहीति ॥

तत्कथं घटेताऽतएव ज्ञापकादतिचारा अपि तेषां भवतीति सिद्धं यस्मात्चारा असज्वलनोदयेऽपि भवन्ति । तथा प्रागुक्त किंत्र यदीदं चैत्यवंदनादिकमावश्यकं स्यात्तदाऽतो अहोनिसिस्सय इति मुनिवचनेन सन्ध्याद्वय एव श्रावकस्य तद्विधेय स्यात् श्रूयते । पुनरेवं ॥

दंसणसुद्धिनिमित्तं, तिकालं देववंदणाईयंति

अत सन्ध्याद्वयकरणनियम षड्विधावश्यकस्यैवोपपद्यते साधूनामिवेति किंच ॥

सव्वंति भाणिऊणं, विरई खलु जस्स सव्विया नत्थि।
सो सव्वविरइवाइ, चुक्कइ देसं च सव्वं च ॥

इत्यनया गाथया सामयिकसूत्रे सर्वशब्दवर्जे श्रावकस्योक्तं। चतुर्विंशतिस्तवस्तु सम्यग् दर्शनशुद्धिनिमित्तत्वात् सम्यग् दर्शनस्य च श्रावकस्याऽपि शोधनीयत्वात्कर्तृविशेषस्य चानभिहितत्वादाचरितत्वाच्चोपपन्न एवास्येति । किंचर्यापथिका प्रतिक्रमणस्य गमनागमनमात्रेण शब्देन भगवत्यां शखोपाख्यानकेषु पुष्कलिश्रावककृतत्वेन दर्शितत्वाद्गमनागमनशब्दस्य चेर्यापथिकापर्यायतया भगवत्यामेव तद्वृत्तेष्वाख्यानकेषु ओघनिर्युक्तिचूर्ण्यां च प्रसिद्धत्वादीर्यापथिकाकायोत्सर्गे च चतुर्विंशतिस्तवस्य प्रायश्चिन्तनीयत्वाच्चाऽसौ सिद्ध इति वन्दनकमपि गुणवत् प्रतिपत्तिरूपत्वात् गुणवत् प्रतिपत्तेश्च श्रावकस्याऽप्यविरुद्धत्वात् कृष्णादिभिश्च तस्य प्रवर्त्तितत्वात्संगतमेवास्य ननु ।"

पंचमहव्वयजुत्तो, अनलससमानपरिवज्जियमती य ।
संविग्गनिज्जरट्ठी, किई कम्मकरो, हवइ साहुत्ति ॥

अनया निर्युक्तिगाथया साधुग्रहणेन श्रावकस्य व्यवच्छेदान्न संगतं। तस्य वन्दनकं नैव ततः साधुग्रहणं तत्र तदन्यवन्दनकोपलक्षणार्थं ननु श्रावकव्यवच्छेदार्थं । यदि तु व्यवच्छेदार्थमभविष्यत्तदा साध्व्यः अपि व्यवच्छेदो भविष्यन्न चासौ संगतो मातुर्विशेषेण वन्दनकनिषेधायेदाह ।

मायरं पियरं वा वि, जेट्ठगं वा वि भायरं ।
किइकम्मं न कारेज्जा, सव्वेराई णिए तहा ॥

तथा(पंचमहव्वयजुत्तो) अनेन यथा महाव्रतग्रहणादणुव्रतयुक्तस्य व्यवच्छेदस्तथा पंचग्रहणाच्चतुर्महाव्रतयुक्तस्य मध्यतीर्थसाधोरपि व्यवच्छेदः स्यान्नचैतदिष्टमित्यतो निर्विशेषं वन्दनकमपीति प्रतिक्रमणं तु सामान्यत ईर्यापथप्रतिक्रमणभणनेनैव सिद्धमथ विचित्राभिग्रहवतां श्रावकाणां कथमेकेन प्रतिक्रमणसूत्रेण तदुपपद्यते। यतो प्रतिपन्नान्यतरव्रतस्य तदतिचारासंभवस्तदसंभवे च तदुच्चारणमसंगतमेवान्यथा महाव्रतातिचाराणामप्युच्चारणप्रसंग इति । नैवमप्रतिपन्नान्यतरव्रतस्यापितदतिचारोच्चारतो श्रद्धानादिविषयस्य प्रतिक्रमणस्यानुमतत्वाद्यत उक्तं ॥

पडिसिद्धाण करणे, किच्चाणं अकरणे पडिक्कमणं ।
असद्दहणेय तहा, विवरीयपरूवणाए य ॥

अत एव साधुरप्रतिपन्नास्वप्युपासकभिक्षुप्रतिमासु ( एगारस पडिं उवासगपडिमाहिं वारसेहिं भिक्खुपडिमाहिं ) इत्येव प्रतिक्रामति । ननु यद्येव तदा साधुप्रतिक्रमणसूत्रेणैव ते प्रतिक्रामतु को वा किमाह केवलं श्रावकप्रतिक्रमणसूत्रम गुणव्रतादिविषयस्य प्रतिसिद्धाचरणस्य प्रपंचाभिधायकत्वात् सोपयोगतरमिति तेन ते प्रतिक्रामति ननु साधुप्रतिक्रमणाद्भिन्नं श्रावकप्रतिक्रमणसूत्रमयुक्तं। निर्युक्तिभाष्यचूर्ण्यादिभिरतत्रितत्वेनार्षत्वान्नैवमावश्यकादिदशशास्त्रीव्यतिरेकेण निर्युक्तीनामभावे नोपपातिकादयुपांगानां च चूर्ण्यभावेनानार्षत्वप्रसंगात्तत प्रतिक्रमणमप्यस्ति। तथा कायोत्सर्गस्तु ईर्यापथप्रतिक्रमणात् पंचमप्रतिमाकरणात् सुभद्राश्राविकादिनिदर्शनतश्च श्रावकस्य विषयतया प्रतिपत्तव्यो यदि हि साधवोऽपि भंगभयात्साकारं कायोत्सर्गं प्रतिपद्यन्ते तदा गृहिभिः सुतरामसौ तथा प्रतिपत्तव्यः सापेक्षतया नेत्यामनैष्ठिकत्वादिति । एवं प्रत्याख्यानकमपि ननु परिष्ठापनिकादय आकाराः साधूनामेव घटंते। ततो गृहिणामयुक्तमेतन्नैवं यतो यथा गुर्वादयः परिष्ठापनिकस्याऽनधिकारिणोऽपि यथा वा भगवतीयोगवाहिनो गृहस्थ ससूत्रग्रयनधिकारिणोऽपि परिष्ठापनिकाद्याकारोच्चारणेन प्रत्याख्याति अखंडं सूत्रमुच्चारणीयमिति न्यायादेव गृहस्था अपीति न दोषस्तस्मात्षड्विधमप्यावश्यकं श्रावकस्यास्तीति प्रतिपत्तव्यमित्यलं प्रसंगेन विस्तरेणेति गाथार्थः ॥ ४४ ॥ पंचा० १ वृ० ॥ ज्ञाता० १ अ० । ध० २ अधि० ॥

**आवस्सय-आवश्यक-** न० समग्रस्याऽपि गुणग्रामस्याऽवासकमित्यावश्यकम् । अनु०। सामायिकादिके, । स्था० २ ठा० ॥

**आवासक-**न० गुणशून्यमात्मानमासमन्ताद्वासयति गुणैरित्यावासकम्-सामायिकादिके, ॥ ग० २ अधि० अथवा आऽवस्सयति प्राकृतशैल्याऽऽवासकम् ॥ गुणशून्यमात्मानं गुणैरावासयतीत्यावासकम् । गुणसान्निध्यमात्मनः करोतीति ॥ आ० म० प्र० १ अ० । अनु० ॥

सन्निज्झभावत्यापवोहिँ वावस्सयं गुणओ ।

सान्निध्यभावस्यापनैर्वा आवसकं गुणत इत्यावासकमुच्यते। इदमुक्तं भवति । वस निवासे इति गुणशून्यमात्मानं गुणैरासमन्ताद्वासयति गुणसान्निध्यमात्मनः करोतीत्यावासकम् । अथ वा यथा वस्त्रं वासधूपादिभिस्तथा गुणैरासमन्तादात्मानं वासयति भावयति रञ्जयत्यावासकम् । यदि वा वस आच्छादने गुणैरासमन्तादात्मानं छादयति छद संवरणे दोषेभ्यः संवृणोत्यावासकमिति विशे० ॥

**आवस्सयकरण-आवश्यककरण-**न० केवलिसमुद्घातात्पूर्वं केवलिना क्रियमाणे व्यापारभेदे, शब्दा ते स्वोपात्तमनुष्यायुषः प्रक्षयवशाद्भुक्तस्याऽन्तर्मुहूर्ते शेषे सिध्यत्पर्यायाभिमुखा अवश्यकरणमिति प्रश्ने प्रदर्श्यते । अन्वर्थत्वादवश्यकारणसंज्ञायाः भास्करवत् अवश्यकरणीयत्वादवश्यकरणं कुर्वतीति । कथमिदमावश्यकरणमिति कथमिदमत्वर्थेति दर्श्यते। अर्थमनुगता या संज्ञा सान्वर्था । अर्थमंगीकृत्य प्रवर्तत इत्यर्थः । कथमिह यथा भास्करसंज्ञा अन्वर्था । कथमन्वर्था भासं करोतीति भास्कर इति यो भासनार्थमंगीकृत्य प्रवर्तत इत्यर्थः। तथावश्यककरणमिति इयं संज्ञा अन्वर्था कथमिति चेत् ब्रूमहे। अवश्यं क्रियत इत्यावश्यकरणं इति। योऽवश्यकरणार्थोऽवश्यकर्त्तव्यतार्थमंगीकृत्य प्रवर्तते यस्मात्तस्मात्सर्वकेवलिभिः सिद्धिभिरवश्यं क्रियमाणत्वादवश्यकरण मित्यर्थसंज्ञासिद्धिरथवावश्यं भाव आवश्यकं द्वंद्व मनोज्ञादिभ्यश्चेति मनोज्ञादिरधिकृतत्वात् वुञ्सिद्धत्यावश्यकसिद्धि । आवश्यकं करणं आवश्यककरणं । कुतः लोके दृष्टत्वाद् मल्लस्य कक्षावधकरणंवत् यथा मल्लोयुयुत्सुनावध्वा शाटकं युध्यते। स हि प्रथममेव शाटकेन कक्षं वध्वा अतः परं कृतावश्यकं कक्षावधकरण योद्धुमारभेत। तथांतर्मुहूर्ताय शेषेण केवलिभावसिद्धता प्रथममेवेदं करणं अवश्यकर्त्तव्यमित्यावश्यककरणमिति आ० चू० २ अ० ।

**आवस्सयकिइ-आवश्यककृत्ति-**स्त्री० प्रतिक्रमणकरणे ध० ३ अधि० ॥

**आवस्सयटीगा-आवश्यकटीका ]** श्री०हरिभद्रस्वामिविरचितायामावश्यकवृत्तौ, आव० ६ अ ॥

यदर्जितं विरचयता सुबोधां, पुण्यं मयाऽवश्यक

शास्त्रटीकां । नवे नवं तेन ममैवमेव, नूयाज्जिनोक्ते ऽनुमतः प्रयासः ॥ २ ॥

इयश्च द्वाविंशतिसहस्रात्मिका "द्वाविंशतिसहस्राणि, ग्रन्थाग्रन्यनिसख्यया । अनुष्टुप्छंदसां मान, मस्या उद्देशतः कृतम्" १ आव ॥

आवस्सयणिज्जुत्ति–आवश्यकनिर्युक्ति स्त्री भद्रबाहुस्वामिविरचितेआवश्यक व्याख्याने, । तथाचाऽवश्यकनिर्युक्ति विवृण्वन् मलयगिरिराह । आम. प्र. १ अ. ।

नत्वा गुरुपदकमलं, मत्नावतस्तस्य मन्दशक्तिरपि ॥
आवश्यकनिर्युक्तिं, विवृणोमि यथागमं स्पष्टम् ॥ ३ ॥
यद्यपि च विवृतयोऽस्या, स्सन्ति विचित्रास्तथापि विषमास्ताः । सम्प्रति च जनो जऽर्थी, नूयानिति विवृतिसंरम्भः ॥ ४ ॥

तत्र प्रेक्षावतामप्रवृत्त्यर्थमादौ प्रयोजनादिकमुपन्यसनीयम न्यथा न युक्तोऽयमावश्यकप्रारम्भप्रयासो निष्प्रयोजनत्वात्कण्टकशाखामर्दनवत् निरनिधेयत्वात्काकदन्तपरीक्षावत् असवस्त्वादश दाडिमानि षडपूपा इत्यादि वाक्यवत् । स्वेच्छाविरचित शास्त्रवद्वेत्याशङ्कातः प्रेक्षावन्तो न प्रवर्तेरन् । तथा मङ्गलमप्यादौ वक्तव्यमन्यथा ।

कर्तु श्रोतॄणां चाविघ्नेनेष्टफलसिद्धियोगात् ॥
प्रेक्षावतां प्रवृत्त्यर्थ फलादित्रितयंस्फुटं ॥
मंगलं चैव शास्त्रादौ, वाच्यमिष्टार्थसिद्धये ॥ १ ॥

आवश्यकनिर्युक्तौ काश्चन निर्युक्तिगाथा अन्यकर्तृकाः प्राक्तास्ताश्च टीकाकृता तत्र व्याख्यानावसरे तथा सूचितास्तास्वपि काश्चिट्टीकाकारेण निर्युक्तिकृत्कृतत्वेन मता अपि श्र न्यकर्तृका इति क्षेपकश्रेणिशब्दे ॥ मलयगिरिवचसा दर्शयिष्यामि करणशब्देऽपि करणशब्दे ॥

आवस्सयपरिसुद्धि–आवश्यकपरिशुद्धि–स्त्री० अवश्यंकरणीययोगनिरतिचारतायाम् ॥

आवस्सयपरिसुद्धीय, होंति भिक्खुस्स लिंगाइं ॥

आवश्यकपरिशुद्धिश्चावश्यंकरणीययोगनिरतिचारता च भवति भिक्षोर्भावसाधोर्लिंगानीति दश० १० अ.।द्वा २७ द्वा ॥

आवस्सयवइरित्त–आवश्यकव्यतिरिक्त– न० अंगबाह्य श्रुतभेदे, ॥

तथाचांगबाह्य श्रुतमधिकृत्य प्रश्नसूत्रमाह ।

सेकिंतं आवस्सयं ? छव्विहं पन्नत्तं । तंजहा । सामाइयं १ चउवीसत्थओ २ वंदणयं ३ पडिक्कमणं ४ काउस्सग्गो ५ पच्चक्खाणं ६ । सेत्तआवस्सयं । सेकिं तं आवस्सयवइरित्तं । आवस्सयवइरित्तं दुविहं पन्नत्तं । तंजहा। कालियं उक्कालियंच । न० ॥

टी० ॥ अथकिं तदङ्गबाह्य सूरिराह ।

अङ्गबाह्यश्रुत द्विविधं प्रज्ञप्तं । तद्यथा । आवश्यक च आवश्यकव्यतिरिक्तं च । तत्रावश्यकम्मं आवश्यक अवश्यकर्त्तव्यक्रियानुष्ठानमित्यर्थः । अथवा गुणानामभिविधिना वश्य मात्मान करोतीत्यावश्यकं । अवश्यकर्त्तव्यसामायिकादि क्रियानुष्ठान तत्प्रतिपादकं श्रुतमपि आवश्यक । च शब्दः स्वगतानेकभेदसूचकः । ( से किं त ) मित्यादि अथकिंतदावश्यक । सूरिराह ॥

आवश्यक षड्विध प्रज्ञप्तं । तद्यथा । सामायिकमित्यादि निगद सिद्ध सेत्तमित्यादि तदेतदावश्यकं सेकितमित्यादि । अत्र किंतदावश्यक व्यतिरिक्त वा आचार्य आह । आवश्यक व्यतिरिक्त द्विविध प्रज्ञप्त । तद्यथा । कालिकमुत्कालिक च । तत्र यद्दिवसनिशा प्रथमपश्चिम पौरुषीद्वये एव पठ्यते तत्कालिक । कालेन निर्वृत्त कालिकमिति व्युत्पत्तेः । यत्पुन. कालवेलावर्जे सर्वकालेषु पठ्यते तदुत्कालिक । आह च चूर्णिकृत् तत्थकालियं दिणराइण पढम चरमपोरसी सुपढिज्जइ । जं पुणकालवेलावज्ज पढिज्जइ त उक्कालियंति । तत्राऽल्प वक्तव्यकत्वात् नं टी० ॥

आवस्सयवइरित्तेत्यादि । यदिह दिवसनिशा प्रथमपश्चिम पौरुषीद्वये एव पठ्यत तत्कालेनिर्वृत्तं कालिकमुत्तराध्ययनादियत्पुनः कालवेलावर्जे पठ्यते तदूर्ध्व कालिकादित्युत्कालिक दशवैकालिकादीनि । ग २ गा. ॥

आवस्सयवित्ति–आवश्यकवृत्ति स्त्री० आवश्यकविवरणे आ म. प्र. १ अ. ॥

आवस्सयविसुद्धि–आवश्यकविशुद्धि स्त्री० आवश्यकरणीय योगनिरतिचारतायाम, ॥

आवश्यकविशुद्धिश्चभिक्षोर्लिंगान्यकीर्तयन् । आवश्यकविशुद्धिश्चावश्यंकरणीययोगनिरतिचारता । एतानि भिक्षोर्लिंगान्य कीर्तयन् गौतमादयो महर्षय. । द्वा० २७ द्वा० ॥

आवस्सयसुयक्खंध–आवश्यकश्रुतस्कंध–पु० षण्मांश्रुतविशेषाणांस्कध' श्रुतस्कधः । आवश्यक च तत् श्रुतस्कधश्चावश्यक श्रुतस्कध. । अथवाऽऽवश्यकं च तत् श्रुतचावश्यक श्रुत । तस्यषडध्ययनसमुदायात्मक आवश्यक श्रुत स्कध. । स्वनाम ख्याते श्रुतविशेषे, । विशे. । द्वा. ॥

आवस्सयस्स जइसो, तत्थं गाइण अट्ठपुच्छी ओ ।
ते होइ सुय क्खंधो, अज्झयणा इं च नउ सेसा ॥

यद्यावश्यकस्याऽनुयोगस्तत्त्वावश्यक श्रुतविशेषस्तर्हि त्वांगादीन्याश्रित्याष्टौ पृच्छाः संभवति । तद्यथा ।

आवस्स यन्न किं अंगं, अंगाइ सुयक्खंधो सुयखंधाअ ज्झयण अज्झयणाइं उद्देसो

उद्देसा इति अत्रोत्तरमाह ॥ इह तदा वश्यक षडध्ययनसमुदायलक्षणः श्रुतस्कध. प्रत्येकमध्ययनानिच्च षडिति । शेषा पञ्चप्रकारा. प्रतिषेध्या. असंभवित्वादिति । अत्रप्रेरकः प्राह ।

ननु नंदिवरकाणे, भणियमणं गं ऽहं कओ संका ।
नणइ अक ओ संका, तस्स नियमं वदाए इ ।

ननु नद्यध्यने व्याख्यायमाने । ( इम पुण वट्ठवणं पडुच्च, अगवाहिरस्स उद्देसोसमुद्देसो अणुन्नाणुओगो पवत्त ) इत्यादिवचनादावश्यकमगबाह्यत्वादंगं न भवतीति भणितमेवेति । कुतोऽत्राशंका येन प्रश्न क्रियते । अत्र निर्वचनमाह । भण्यतेऽत्रोत्तर । श्रुतस्कधादि विषये तावदस्त्येवा शंका । तत्राऽस्यार्थस्याऽनिर्णीतत्वात् अतस्तद्विषयास्तावत्कर्त्तव्या एव पृच्छा. । अगानगरूपतायामपि यदा नंद्यध्ययनमश्रुत्वा विनेय' प्रथमत एवेद शृणोति । तथा श्रुते नंदिव्याख्यानेऽस्त्येव च शंका । किमावश्यकमगं तद्बाह्य वेति । आह । ननु नद्य·

ध्ययनं श्रुत्वा तत् आवश्यकं श्रोतव्यमितीत्थं क्रमोऽत' कथं नंद्यध्ययनस्य प्रथमव्याख्यानाकरणं येन प्रस्तुतशंका स्यादि त्याशंक्याह । ( तस्से ) त्यादि तस्य प्रथमं नंदिव्याख्यान करणस्याऽत एवांगाऽनगप्रश्ननिर्णयवचनादाचार्योऽनियमं दर्श यति । पुरुषाद्यपेक्षयाऽन्यथापि नंद्यादिव्याख्यानकरणादिति । आह । ननु मंगलार्थं सर्वेषामपि शास्त्राणामादौ नंदिव्याख्या नम् कर्त्तव्यमेवेति कथं तदनियम इत्याह ।

नाणाभिहाणमित्तं, मंगलमिट्ठं नती पवरकाणं ।

इह सव्वत्थाणे जुज्जइ, जं सावीसुं सुयक्खंधो ॥

ज्ञानपञ्चकाभिधानमात्रमेव शास्त्रादौ मंगलमिष्टं नतु तस्या नंद्याः सर्वस्या अपि शास्त्ररूपाया इहास्थाने व्याख्यानं युज्यते तथाहि पथि प्रस्थितैर्मंगलभूतं दधिदूर्वाक्षतादिवस्तूनामभि धानदर्शनादीन्येव मंगलतया गृह्यंते नतु तल्लक्षणतद्गुणवर्णा दीन्यपि क्रियंते । तथेहापि ज्ञानोत्कीर्त्तनमात्रमेव मंगलं यु ज्यते नतु नंदिव्याख्यानमिह तस्य स्थानत्वात्तथावश्यकशास्त्रा रंभे शास्त्रांतरभूताया नंद्या व्याख्यानं युज्यते अतिप्रसंगाच्च च एतच्च सर्वशास्त्रांतरभूतैव नंदी यस्मात्सा विष्वक्पृथगेव श्रुतस्कंधतया सिद्धांते प्रसिद्धा श्रुतस्कंधत्वं चास्या' पदवाक्य समूहात्मकत्वेनैव द्रष्टव्य नत्वध्ययनकलापात्मकं पारिभाषित मेकाध्ययनरूपत्वेन रूढत्वादिति । ननु यदि नंदिव्याख्यानस्य स्थानमिदं तर्हिकिमितीत्थमादावेव भवद्भिर्ज्ञानपंचकं विस्तरेण व्याख्यातमिति पौर्वापर्येण स्ववचनविरोध इत्याशंक्याह ।

इहसाणुग्गहमुइयं न उ नियमोयमहवा पवादोयं ।

दाइज्जइ कहणा, एकयाइ पुरिसादवि क्खाय ।

इहावश्यकारंभे यद्विस्तरेण ज्ञानपंचकस्याऽऽदौ व्याख्यानं तत्सानुग्रहं शिष्याऽनुग्रहमास्थायोदितमस्माभिर्नपुनरयं निय म एव ज्ञानोत्कीर्तनमात्रस्यैव नियमेन मंगलतयात्राऽभीष्टत्वा दथवा कथनया कथनविधेरपवादोऽयं दृश्यते यथेह पुरुषा द्यपेक्षया कदा क्रमेणापि शास्त्राणि व्याख्यायन्ते अन्यारंभेऽ न्यान्यद्वा व्याख्यायत इति तस्मादावश्यकश्रुतस्कंधस्याऽनुयोग इति स्थिते किमिदानीं कर्तव्यमित्याह ।

आवस्सयसुयक्खंधो, नामं सत्थस्स तस्स जेनेया ।
ताइं अज्झयणाइं, नामो आवस्सयाइणं ॥ १ ॥
कप्पोपिहविहाणं, जहत्थ मजहत्थउज्झमाति ।
नामे चेव परिहाग, त्तं जइ होहि इ जहउं ॥ २ ॥

इह प्रस्तुतशास्त्रस्यावश्यकश्रुतस्कंध इति नाम तस्यचावश्य कस्य ये सामायिकादयपच्छेदाः स्तान्यध्ययनान्यऽभिधीयंते तत आवश्यकादिपदानामावश्यक श्रुतस्कंधोऽध्ययनमित्येषां पदानां न्यासो निक्षेप पृथक्कार्यं कुतइत्यस्मत्ञेतोर्यतांकिचि न्नाम तावद्यथार्थं भवति यथा दीपो दहन इत्यादि । किंचित् त्वयथार्थं भवति यथापलाशो मंडप इत्यादि अपरं त्वर्थशून्यमव ति यथा डित्थकपित्थ इत्यादि यथार्थं च शास्त्राभिधानमिष्य ते नैतच्च समुदायार्थावगमेनैव नाम्न्येव परीक्षाविचारणाक्रिय ते ननोयाहामिदं यदि यथार्थं स्यादिति । विशे० ॥

अथ सामायिकाद्यध्ययनानामर्थाधिकारदर्शनार्थं प्रस्ताव नामाह ।

किंपुण मज्झयणं, जेणत्थत्ता हिगाराभिणिलत्तं ।
सामाइयाइयाणां, ने य इमे तंजहामंखं ॥

आह किंपुनरिह कारणं येन षडध्ययनमिदमावश्यकं षडध्य यनानि तत्र तेष्य' षडध्ययनमिति समासः अत्रोच्यते । येन षड्भिरर्थाधिकारैर्विनिर्युक्तं नियुक्त ।

निबर्द्धं तं च षडर्थाऽधिकारा सामायिकादीनां षण्णामध्ययनानां यथासंख्यमेव द्रष्टव्या इति । विशे० ॥

नन्वावश्यके किमिति षडध्ययनान्यभोऽत्रैते षड र्थाधि कारयोगात् के पुनस्ते इत्याशंक्य तदुपदर्शनार्थमाह ।

आवासगस्स णं इमे अत्थाहिगारा भवंति । तंजहा ।
सावज्जजोगविरइ, उक्कित्तणगुणवओयपडिवत्ती । खलि
अस्सय निंदणा, वणातिगिच्छं गुणधारणं चेव ॥

आवश्यकषडध्ययनस्य वक्ष्यमाणा अर्थाधिकारा भवंति। त द्यथा । सावज्जजोगगाहा व्याख्या । प्रथमेसामायिकलक्षणे अध्ययने प्राणातिपातादिसर्वसावद्ययोगविरतिरर्थाधिकारः ( उक्कित्तणत्ति ) द्वितीये चतुर्विंशतिस्तवाध्ययने प्रधानकर्मक्षे कारणत्वात्तथ्यबोधिविशुद्धिहेतुत्वात्पुनर्बोधिलाभफलत्वात्सा वद्ययोगविरत्युपदेशकत्वेनोपकारित्वाच्च तीर्थकराणं गुणो त्कीर्तनार्थाधिकार ॥ ( गुणओयपडिवत्ति ) गुणा मूलोत्तर गुणरूपा व्रतपिण्डविशुद्ध्यादयो विद्यते यस्य स गुणवांस्त स्य प्रतिपत्तिर्वंदनादिकं कर्त्तव्येति तृतीये वंदनाध्ययनेऽर्थाधि कारश्चशब्दात्पुष्टालम्बने गुणवतोऽपि प्रतिपत्तिकर्तव्येति द्रष्ट व्य । उक्तं च ॥

परियायपरिसपुरिसं, खेत्तं कालं च आगमं नाउं ।
कारणजाए ताए, जाहारिहं जस्स संजोगं ॥

( खलियस्स य निंदणत्ति ) स्खलितस्य मूलोत्तरगुणेषुप्रमा दाचीर्णस्य प्रत्यागमसंवेगस्य जतोर्विशुद्ध्यमानाध्यवसायस्या कार्यमिदमिति भावयतो निंदाप्रतिक्रमणे अर्थाधिकारः । व्रण ति गच्छतीति व्रण० । व्रणचिकित्सा कायोत्सर्गाध्ययनेऽर्थाधि कार । इदमत्र भवति । चारित्रपुरुषस्य योऽतिचाररूपो भावव्रणस्तस्य दशविधप्रायश्चित्त भेषजेन कायोत्सर्गा ध्ययने चिकित्सा प्रतिपाद्यते ( गुणधारणा चेवत्ति ) गुणधारणा प्रत्याख्यानाध्ययने अर्थाधिकार० । अयमत्र भावार्थः । मूलगुणोत्तरगुणप्रतिपत्तिस्तस्याश्च निरतिचार संधारणं यथा भवति तथा प्रत्याख्यानाध्ययने प्ररूपणां करिष्यते च शब्दादन्येऽर्थाधिकारा विज्ञेया० । एवकारोऽवधारण इति गाथार्थ० । तदेव यदादौ प्रतिज्ञातमावश्यक निक्षेप्स्या मीति इत्यादि । तत्रावश्यकश्रुतस्कंधलक्षणानि त्रीणि पदानि निक्षिप्तानि। सांप्रतं त्वध्ययनपदमवसरायात मपि निक्षेप्स्यते वक्ष्यमाणनिक्षेपानुयोग द्वारओघनिष्पन्ननिक्षेपे तस्य निक्षेप्य मानत्वादत्रापि भणने च ग्रंथगौरवापत्तेरिति ॥

इदानीमावश्यकस्य यद्व्याख्यानं यच्च व्याख्येय तदुपदर्श यन्नाह ।

आवस्सयस्स एसो, पिंडत्थो वण्णिओ समासेणं ।
एत्तो एक्केक्कं पुण, अज्झयणं कित्तइस्सामि ॥ १ ॥

तं जहा । समाइयं १ चउवीसत्थओ २ वंदणय ३
पडिक्कमणं ४ काउसग्गो ५ पच्चक्खाणं ॥

व्या० आवश्यकस्यावश्यकपदाभिधेयस्य शास्त्रस्य एष पूर्वोक्तप्रकारपिण्डादिसमुदायार्थो वर्णित' कथित० । समा सेन संक्षेपेण । इदमत्र हृदय । आवश्यकश्रुतस्कंध इति शास्त्र नाम पूर्वं व्याख्यात । तच्च सामर्थ्यं ततश्च यथा सावद्यादा

चारादीनामत एव तद्वाच्यशास्त्रस्य चारित्राद्याचारोऽभिधास्यते इत्यादिलक्षण समुदायार्थं प्रतिपादितो भवत्येव-मत्राप्यावश्यकश्रुतस्कन्ध इति सान्वर्थनामकथनादवश्य करणीय सावद्ययोगविरत्यादिक वस्त्वत्राभिधास्यत इति समुदायार्थः प्रतिपादितो भवति अत ऊर्ध्व पुनरेकैकमध्ययनं कीर्त्तयिष्यामीति गाथार्थः । तत्कीर्तनार्थमेवाह तद्यथा सामायिक चतुर्विंशतिस्तवो वदन प्रतिक्रमण कायोत्सर्गप्रत्याख्यानं । विशे० । आ० म० प्र १ अ ॥

आवस्सयाणुओग–आवश्यकानुयोग–पुं०आवश्यकव्याख्याने अनु० । आ० सू० १ अ । विशे० ॥

कयपवयणप्पणामो, वोच्छं चरणगुणसंगहं सयलं ।
आवस्सयाणुओगं, गुरुवएसाणुसारेणं ॥

व्याख्या । वोच्छमिति क्रिया वक्ष्येऽभिधास्येत्यर्थः । किमित्याह (आवस्सयाणुओगाति) अवश्य कर्तव्यमावश्यकं सामायिकादिरूपं । क्वचिद्वावासयाणुयोगमितिपाठस्तत्राप्यासमतात् ज्ञानादिगुणै शून्य जीव वासयाति तैर्युक्तं करोतीत्यावासकं सामायिकादिरूपमेव तस्य वक्ष्यमाणशब्दार्थोऽनुयोगो व्याख्यान विधिप्रतिषेधाभ्यामर्थप्ररूपणमित्यर्थः किंविशिष्ट सन्नित्याह ( कयपवयणप्पणामोत्ति ) प्रोच्यते ऽनेनास्मादस्मिन्वा जीवादय पदार्था इति प्रवचन । अथ वा प्रशब्दस्याव्ययत्वेनाऽनेकार्थद्योतकत्वात्प्रगत जीवादिपदार्थव्यापक प्रशस्त मादौ वा वचन द्वादशांग गणिपिटक आवित्य चास्य विवक्षिततीर्थकरापेक्षया द्रष्टव्य । नमस्तीर्थायेति वचनात्तीर्थकरेणापि तन्नमस्करणादिति । अथवा जीवादितत्वं प्रवक्तीति प्रवचनमिति व्युत्पत्ते द्वादशाग गणिपिटकोपयोगानन्यत्वाद्वा चतुर्विधश्रीश्रमणसघोऽपि प्रवचनमुच्यते । कृतो विहितो यथोक्तप्रवचनस्य प्रणामो नमस्कारो येन मया सोऽहं कृतप्रवचनप्रणाम किंस्वरूपमावश्यकानुयोगमित्याह (चरणगुणसगहति) चर्यते मुमुक्षुभिरासेव्यते इति चरण । अथवा चर्यते गम्यते प्राप्यते भवोदधे परकूलमनेनेति चरण । व्रतश्रमणधर्मादयो मूलगुणा गुण्यते सख्यायत इति गुणाः पिण्डविशुद्ध्याद्युत्तरगुणरूपा चरणञ्च गुणाश्च चरणगुणाः अथवा चरणशब्देन सर्वतो देशतश्च चारित्रमिह विवक्षित । गुणशब्देन तु दर्शनज्ञाने ततश्च चरण च गुणौच चरणगुणास्तेषां सगृह्णाति सग्रहश्चरणगुणसग्रहस्त स च देशतोऽपि भवतीत्याह । सकल परिपूर्ण आह । नन्वावश्यकानुयोगस्तावदावश्यकव्याख्यान । चरणगुणसग्रहस्तु ज्ञानदर्शनचारित्रसगृहीतिरूपस्ततोऽत्यतभिन्नाधिकरणत्वात्कथमनयो सामानाधिकरण्य सत्यकित ( सामाइय च तिविह सम्मत्तसुय तहाचरित्त चेत्यादि ) वक्ष्यमाणवचनादेकोऽपि सामायिकानुयोगस्तावत्सपूर्णं चरणगुणसग्राहक । किं पुन सकलावश्यकानुयोगस्ततश्च सपूर्णचरणगुणसग्रहयुक्तत्वादावश्यकानुयोगोऽपि संपूर्णचरणगुण सग्रहत्वेनोक्तो यथा दरुयोगा इएरु पुरुष इत्यदोष अथ वा चरणगुणानां सग्रहोयत्राऽऽवश्यकानुयोगेऽसौ चरणगुणसग्रह इति बहुव्रीहिपक्षे प्रेर्यमेव नास्ति केवलमस्मिन् पक्षे सकलमिति विशेषणमावश्यकानुयोगस्य चरणगुणसग्रहसंपूर्णत्वापेक्षयैव द्रष्टव्यमित्येतच्च कष्टगम्यमित्युपेक्षते । आह । ननु यदि (सामाइय च तिविह) मित्यादि वक्ष्यमाणवचनात्सामायिकस्य सपूर्णचरणगुणसग्राहकत्व तर्हि तदनुयोगस्य तद्रूपत्वे किमायात नैतदेव सामायिकादि व्याख्येय अनुयोगस्तु व्याख्यान व्याख्येयव्याख्यानयोश्चैकाभिप्रायत्वादिहाभेदेन विवक्षितत्वाददोषः इत्यलमितिचर्यति अनेन च सपूर्णचरणगुणसग्रहलक्षणेन स्वरूपविशेषणेनावश्यकानुयोगस्य महार्थतां दर्शयाति भाष्यकारः । आह । ननु यदि त्वया आवश्यकानुयोगः स्वमनीषिकया वक्ष्यते तदाऽनादेय एवाय प्रेक्षावता छद्मस्थत्वे सति स्वतत्रतयाभिधीयमानत्वाद्रथ्यापुरुषवाक्यवदिति परवचनमाशक्य तदुपन्यस्तहेतोरसिद्धतां उपदर्शयन्नाह ( गुरुवएसाणुसारेणाति ) गृणति तत्वमितिगुरवस्तीर्थकरगणधरादयस्तेषामुपदेशो भणन तदनुसारेण तत्पारतन्त्र्येणावश्यकानुयोगमह वक्ष्ये नतु स्वमनीषिकया अत स्वतंत्रयाऽभिधीयमानत्वादित्यसिद्धो हेतुरिति भावः । यो हि छद्मस्थ सन्परमगुरूपदेशानपेक्ष स्वतन्त्रमेव वक्ति रथ्यापुरुषस्येव तस्य वचोऽनादेयमिति ॥

वयमपि मन्यामहे केवलं तदिह नास्ति परमगुरूपदेशानुसारेणैवावश्यकानुयोगस्य मयाऽभिधीयमानत्वादिति । तदेव कृतप्रवचनप्रणामो गुरूपदेशनिश्रयसकल चरणगुणसंग्रहरूपमावश्यकानुयोगमह वक्ष्ये इति पिण्डार्थः ॥

आह । ननु श्रीमद्भद्रबाहुप्रणीता सामायिकनिर्युक्तिरिह भाष्ये व्याख्यास्यते । तत्कथमिदमावश्यकानुयोगोऽभिधीयते तदेवमभिप्रायापरिज्ञानात्तथाहि । सामायिकस्य षड्विधावश्यकैकदेशत्वादावश्यकरूपता तावन्न विरुध्यते । तन्निर्युक्तिरपि तद्व्याख्यानरूपैव व्याख्येयव्याख्यानयोश्चैकाभिप्रायत्वादेकत्वमित्यनन्तरमेवोक्तं । तस्मात्सामायिकस्य तन्निर्युक्तेश्च सर्वस्यावश्यकत्वात्तस्य चेह व्याख्यायमानत्वादावश्यकानुयोगरूपता भाष्यस्य न विहन्यत इत्यलविस्तरेण । अस्याश्च गाथाया प्रथमपादेन विघ्नसघातार्थं मंगलहेतुत्वादिष्टदेवतानमस्कारः कृत । शेषपादत्रयेण त्वभिधेयप्रयोजनसंबंधाभिधानमकारि । तत्रा वश्यकानुयोग वक्ष्य इति ब्रुवता आवश्यकानुयोगोऽस्य शास्त्रस्या ऽभिधेय इति साक्षादेवोक्त प्रयोजनसंबंधौ तु सामर्थ्यादुक्तौ तथाहि सपूर्णचरणगुणसंग्राहकत्व दर्शयता ज्ञानदर्शनचारित्राधारताऽस्य शास्त्रस्य दर्शिता भवति । तद्रूपाणि शास्त्राणि पाठश्रवणादिभिरनुशीलयमानानि स्वर्गापवर्गप्राप्तिनिबधनानि भवतीति प्रतीतमेव । अत स्वर्गमोक्षफलप्राप्तिरस्य शास्त्रस्य प्रयोजनमिति सामर्थ्यादुक्त भवति । अभिधेयाऽभिधायकयोश्च वाचकलक्षण सबंधोऽप्यर्थादभिहितो भवति । अस्यां च सबधप्रयोजनाभिधानादिचर्चायां यद्यपि वक्तव्यमस्ति केवलं बहुषु शास्त्रेषु प्रतिचर्चितत्वेन सुप्रतीतत्वात्तथाविधमाध्यशून्यत्वाच्च नेहोच्यते । अनेन चाऽभिधेयाभिधानेन शास्त्रस्य श्रवणादौ शिष्यप्रवृत्ति साधिता भवति । अन्यथा हि न श्रवणादियोग्यमिदं निरभिधेयत्वात्काकदन्तपरीक्षावदित्याशङ्कय नेह कश्चित्प्रवर्त्तेत । उक्तञ्च ॥

सीसपवित्तिनिमित्तं, अभिधेयपओ अणाइ संबन्धो ।
ओवत्तयाई सत्ये, नमणुन्नत्तं मुणिजिहण ॥

एव मंगलाद्यभिधाने व्यवस्थापिते कश्चिदाह । नन्वर्हदादय एवेष्टदेवतात्वेन प्रसिद्धास्तत्किमिति तान्विहाय प्रयत्ना प्रवचनस्य नमस्कार कृत । इत्यत्रोच्यते । नमस्तीर्थायेति वचनात् अर्हदादीनामपि वचनमेव नमस्करणीय अपर चार्हदादयोऽप्यस्मदादिभि प्रवचनोपदेशेनैव ज्ञायते तीर्थमपि च चिरकाल प्रवचनादेवनैव प्रवर्त्तत इत्यादिविवक्षयाऽर्हदादिभ्योऽपि प्रवचनस्य प्रधानत्वात् ज्ञानादिगुणा मकत्वाच्चेष्टदेवतात्व नविरुध्यत

प्रवचननमस्कारं च कुर्वद्भिः पूज्यैः सिद्धांततत्वावगमरसाऽनुरंजितहृदयत्वादात्मन प्रवचनभक्त्यतिशयः प्रख्यापितो भवति इत्यलमितिविस्तरेण । मंगलादिविचारविषयश्चाक्षेपपरिहारादिकमिहैव ग्रन्थकारोऽपि सक्षेपेण वक्ष्यतीति तदेवमियं गाथा सर्वोऽपि चायं ग्रन्थो महामतिभिः पूर्वसूरिभिर्गंभीरवाक्यप्रबंधै व्युत्पन्नभणितिप्रकारेण व्याख्यातः तच्च व्याख्यानमित्य युक्तमपि गौरवं पांशुरोगन्यायेन मतिमांद्यात्सांप्रतकालीनशिष्याणां न तथाविधार्थावगमहेतुतां प्रतिपद्यत इत्याकलय्य मन्दमतिनापि मया तेषां मदनतरमतीनां शिष्याणां अर्थावगमनिमित्तममुना ऋजुभणितिप्रकारेणेयं गाथा व्याख्याता । सर्वोपि च ग्रन्थोऽयमनेनोल्लेखेन व्याख्यास्यत इति प्रतिपत्तव्यं । न च वक्तव्यं येषां महामतिपूर्वपुरुषवचनैरर्थावबोधो न संपद्यते तेषां मद्बुद्धेर्भवतो वचनेन कुतोऽयंसंपत्स्यते इति यतोजायत एव समानशीलवचनैः समानशीलानामर्थप्रतिपत्तिर्यदाह ।

गामिल्लुयाए गामिल्लु, एहिं मिच्छाण हुंति मिच्छेहिं ।
मम्मं पडिवत्ती ओ, अत्थस्स नविबुहजणिएहिं ॥
नियजामायेन्नएणंति, समाणसीलंमि अपडिवत्ती ।
जायइ मंदस्स वि, न उण विविह सक्कयपबंधेहिं ॥

इत्यलंबहुभाषितेनेति गाथार्थः । आवश्यकानुयोगोऽत्राऽभिधास्यत इत्युक्तं किंपुनरस्य फलादिकं यदवगम्य वय तच्छ्रवणादौ प्रवर्त्तामहे इति प्रेक्षावच्छिष्यवचनमाशक्यावश्यकानुयोगस्य फलादीन्यभिधित्सुस्तत्संग्रहपरां द्वारगाथामाह ॥

तस्सफलजोगमंगल, समुदायत्था तहेवदाराइं ।
तब्भेयनिरुत्तक्कम, पओयणाइं चवच्चाइं ॥

व्याख्या । तस्येत्यावश्यकानुयोगस्य प्रेक्षावतांप्रवृत्तिनिमित्त फलं मोक्षप्राप्तिलक्षणं तावदत्रग्रन्थेवक्तव्यं ततोऽस्यप्रयोगः शिष्यप्रदाने संबंधोऽवसरः प्रस्तावो वाच्यः । आवश्यकानुयोगे च क्रियमाणे किं मंगलमित्येतदपि निरूपणीयं सामायिकाद्यध्ययनानां ( सावज्जजोगविरई ओ, कित्तणगुणवओ अपडिवत्ती ) त्यादिगाथया समुदायार्थश्च सावद्ययोगविरत्यादिकोऽभिधानीय । फलं च योगश्च मगलं च समुदायार्थश्चेति समासः ( तहेवदाराइंति ) तथा द्वाराणि चोपक्रमनिक्षेपादीनि कथनीयानि तेषांद्वाराणां भेदोवक्तव्य । तद्यथा आनुपूर्वी । नामप्रमाणवक्तव्यतार्थाधिकारसमवतारभेदादुपक्रम षोढा । ओघनिष्पन्ननामनिष्पन्नसूत्रालापकनिष्पन्नभेदान्निक्षेपस्त्रिधा । सूत्रनिर्युक्तिभेदादनुगमो द्विधा । नैगमादिभेदान्नया सप्तविधा इत्यादि । उपक्रमणमुपक्रमो निक्षेपणं निक्षेप इत्यादि निरुक्तं च शब्दव्युत्पत्तिरूप भणनीय । तथा ( कमत्ति ) तेषामुपक्रमादि द्वाराणांप्रथममुपक्रम एव ततो यथाक्रमं निक्षेपादय एवेत्येवरूपो योऽमीं नियत क्रम सयुक्त्याभिधानतोनिर्देष्टव्यो युक्तिं चात्रैव वक्ष्यति । तद्यथा नानुपक्रांतं निक्षिप्यतेना निक्षिप्तमनुगम्यत इत्यादि तथोपक्रमादिद्वाराणां एवं प्रयोजनं शास्त्रोपकाररूपं नगरदृष्टांतेन वाच्य । यथा सप्राकारं महानगरं किमप्यकृतद्वारलोकस्य न भवति अगमनीय भवत्येकादिद्वारोपेतमपि दुःखनिर्गमप्रवेश जायते चतुर्द्वारोपेतं तु सर्वजनाभिगमनीय सुखनिर्गमप्रवेश च संपद्यते । एवं शास्त्रमप्युपक्रमादिचतुर्द्वारयुक्तं सुबोधं सुखचिंतनधारणादिनिष्पन्नं भवतीत्येवमुपक्रमादि द्वाराणां सुखावबोधादिरूप शास्त्रोपकारः प्रयोजनमिहवक्ष्यत इति भाव । भेदश्च निरुक्तं च क्रमश्च प्रयोजन चेति द्वन्द्वं कृत्वा पश्चात्

पाश्चुपक्रमादिद्वाराणां भेद निरुक्तक्रमप्रयोजनानीत्येव षष्ठीतत्पुरुषसमासोविधेयः । च. समुच्चये वाच्यानीति यथा योगमर्थतः सर्वत्र योजितमेवेति द्वारगाथासंक्षेपार्थः ॥ २ ॥ विस्तरार्थंतु भाष्यकार एव दिदर्शयिषुर्यथोद्देश निर्देश इति कृत्वा प्रेक्षावतां प्रवृत्यर्थमावश्यकानुयोगफलप्रतिपादितां तावद्गाथामाह ।

नाणकिरियाहिं मुक्खो, तम्मयमावस्सयं जओतेणं ।
तव्वक्खाणारंभो, कारणओकज्जसिद्धित्ति ॥

व्याख्या । ज्ञानं च सम्यगववबोधरूपं क्रिया च तत्पूर्वकसावद्याऽनवद्ययोगनिवृत्तिप्रवृत्तिरूपा ज्ञानक्रिये ताभ्यां तावन्मोक्षोऽशेषकर्ममलकलंकाभावरूप साध्यत इति सर्वेषामपि शिष्टानां प्रमाणसिद्धमेव दर्शनस्य ज्ञान एवांतर्निहितत्वादिति । यदि नाम ज्ञानक्रियाभ्यां मोक्षस्तर्ह्यावश्यकानुयोगस्य किमायातं येन फलवत्तया प्रेक्षावतां तत्र प्रवृत्तिः स्यादित्याह तन्मयमावश्यकं ताभ्यां ज्ञानक्रियाभ्यां निर्वृत्तंतन्मयं ज्ञानक्रियास्वरूपमावश्यक तत्कारणत्वादिति भावः । यथा ह्यायुर्वृद्धिकारणत्वेनोपचारा ल्लोके घृतमायुरुच्यते नड्वलोदकं वा पादरोगकारणत्वात्तथैवाभिधीयते एवंप्रस्तुतानुयोगविषयीकृतं सामायिकादिषडध्ययनसूत्रात्मकमावश्यकमपि सम्यग्ज्ञानक्रियाकारणत्वात्स्वरूपमेव तदध्ययनश्रवणचिंतनतदुक्ताचरणप्रवृत्तानामवश्य सम्यग्ज्ञानक्रियाप्राप्तेस्तस्मादुक्तन्यायेन ज्ञानक्रियात्मकं यत आवश्यकमतस्तस्यावश्यकस्य व्याख्यानं अनुयोगस्तद्व्याख्यानं तस्यारंभप्रेक्षावता क्रियमाणो न विरुध्यते । आवश्यकात्सम्यक्ज्ञानक्रियाप्राप्तिद्वारेण मोक्षलक्षणफलसिद्धेः । नन्वित्थंतर्ह्यावश्यकात्सम्यग्ज्ञानक्रियाप्राप्तिस्ताभ्यां च मोक्षलक्षणफलसिद्धिरित्येवमावश्यकस्यैव परंपर्येणमोक्षात्मकं फलं स्यात् नपुनस्तदनुयोगस्य फलचिंता त्वस्यैवेह प्रस्तुतेतिचित्सत्य किन्त्वावश्यकं व्याख्येय तद्व्याख्यान चानुयोगो व्याख्यानेचन्याख्येयगत एव सर्वोऽभिप्रायः प्रकटीक्रियतेऽतोव्याख्येयस्ययत्फलं व्याख्यानस्य तत्तुतरामवसेयं तयोरेकाऽभिप्रायत्वात् तस्मात् मोक्षलक्षणं फलमभिवाञ्छता आवश्यकानुयोगेऽवश्य प्रवर्तितव्यमेव ततोऽपि ज्ञानक्रियाप्राप्ते स्ताभ्यां च मोक्षफलसिद्धिरिति ।

यदि नामावश्यकानुयोगतो ज्ञानक्रियावाप्तिस्ताभ्यां च मोक्षसिद्धिस्तथापि किमिति तत्र प्रवृतिंतव्यं न पुनर्यत्र कुत्रचित्प्रवृत्ति तत्रादावित्याह । कारणात्कार्यसिद्धिर्नोकारणादिति कृत्वा कारणे हि सुविवेचितेप्रवर्त्तमानाः प्रेक्षावंतः समीहितमप्रतिहत कार्यमासादयंति नाकारणे अन्यथा तृणादपि हिरण्यमणिमौक्तिकावाप्ते सर्वविश्वमदरिद्रं स्यात्कारणं च पारंपर्येणावश्यकानुयोग एव मोक्षस्य न पष्टि तत्रादिक ज्ञानक्रियाजननद्वारेण तस्य मोक्षसंसाधकत्वादितरस्य तु पारपर्येणापि तदसाधकत्वादिति गाथार्थः ।

उक्तं फलद्वारमधुना योगद्वारमभिधित्सुराह ।

भव्वस्स मोक्खमग्गाहि, लासिणो तिअगुरूवएसस्स ।
आउए जोगामिणं, वालगिलाणस्स वाहारं ॥

व्याख्या । यदादौ प्रतिज्ञातं शिष्यप्रदानेऽस्य योग्योऽवसरो वाच्यइति । तत्राह । समस्तद्वादशांगाऽध्ययनकालस्यादौ प्रथममिदं षड्विधमावश्यक योग्यमुपदिशति मुनयः शेषसमग्रश्रुतप्रदानकालस्यादौ प्रथममेवावश्यकप्रदानस्याऽवसरइतिभावः कस्य पुनरिदमावश्यकं योग्यमादिशति मुनय इत्याह । भव्यस्यमुक्तिगमनयोग्यस्य जतोः स च कश्चिद्दूरभव्योऽसजात.

मोक्षमार्गाभिलाषोऽपि भवति । तद्व्यवच्छेदार्थमाह । मोक्ष-मार्गः सम्यक् ज्ञानदर्शनचारित्ररूपस्तमुत्तरोत्तरविशुद्धिरूपम भिलषितुं शीलमस्य स तस्य अथ चैवंविधोऽपरिणतगुरूपदे-शोऽपि स्यात्तन्निरासार्थमाह । स्थितः कर्तव्यतया परिणतो गुरूपदेशो यस्यासौ स्थितगुरूपदेशस्तस्य किं यथायोग्यमुप-दिशतीत्याह । बालग्लानयोरिवाहारं यथोपदिशति भिषजोति गम्यते, । इदमुक्त भवति। यथा आदौ बालस्य कोमलमधुरा-दिक ग्लानस्य च पेयमुद्गयूषादिकं तत्कालोचितं उत्तरोत्त-रबलपुष्ट्यादिहेतुमाहारयोग्य भेषजं समुपदिशति तथेहापि-भव्यादिविशेषण विशिष्टस्य जतोरादाविदमेवावश्यकमुत्त-रोत्तरगुणवृद्धिहेतुभूतयोग्यमुपदिशति तीर्थकरगणधरा इति आवश्यकस्य चादौ शिष्यप्रदानाऽवसरे प्रतिपादिते तदनुयो गस्याऽसौ प्रतिपादित एव द्रष्टव्यस्तयोरेकत्वस्यानतरमेवा-ख्याततत्वादिति गाथार्थः ॥ ४ ॥

आह ननु यस्य भव्यादिविशेषणविशिष्टस्यादौ योग्यमिद-मावश्यक तस्मै योग्यमित्येतावन्मात्रमेव ज्ञात्वा तद्ददात्याचार्यो आहो स्विदन्योऽपि तत्र कश्चिद्विधिरपेक्षणीय इति शिष्यवच-नमाशङ्क्यास्मिन्नेवानुयोगद्वारे तद्दानविधानादि किंचिल्लेशतः प्रासगिकमभिधित्सुराह ।

कयपंचनमुक्कारस्स, दिंत्तिसामाइयाय विहिणा ।
आवस्सयमायरिया, कमेण तो सेसयसुअं पि ॥

व्याख्या । भव्यादिविशेषणविशिष्टस्याऽपि शिष्यस्य कृत पंचनमस्कारस्य चतुर्थ्यर्थे षष्ठी कृतपंचनमस्काराय मगला-र्थमुच्चारितपंचनमस्कृतिमगलायेत्यर्थः ॥

सामायिकादिकमावासक विधिना प्रशस्तद्रव्यक्षेत्रकालभाव रूपेण प्रशस्तदिगभिमुखन्यवस्थापनारूपेण च समयोक्तेन ददत्याचार्या नपुन योग्यमित्येतावन्मात्रकमेव ज्ञात्वेति भावः ( तत ऊर्ध्वमस्मै किं न किंचित् ददतीत्याह ) क्रमेण ततः शेष मप्याचारादिश्रुत प्रयच्छति यावत्श्रुतोदधेः पारमिति गाथार्थः

आवश्यकानुयोगप्रदानेऽप्ययमेव विधिरित्यावेदयितुमाह ॥

तणेवयाणुओगं, कमेण तेणेव याऽहिगारोयं ॥
जेणविणेयहियत्था, यत्थेरकप्पे कमो एसो ॥ १ ॥

चकारोऽपि शब्दार्थो भिन्नक्रमश्च । ततस्तेनैव पंचनमस्कार करणादिना क्रमेणानुयोगमपि सूत्रव्याख्यानरूपं ददत्याचार्या इति वर्तते अनयोश्च सूत्रप्रदानक्रमानुयोगप्रदानक्रमयोर्मध्ये तेनैव प्रस्तुतगाथाप्रक्रातेनानुयोगप्रदानक्रमेणायमस्मदभिमतो ऽधिकार अनुयोगस्यैवेह प्रस्तुतत्वादितिभावः । कुत पुनरि हानुयोगप्रदानक्रमेणैवाऽधिकारः इत्याह । येन कारणेन विनेय हितार्थं शिष्यवर्गस्योत्तरोत्तरगुणप्राप्तिमपेक्ष्येत्यर्थः । स्थविरा-णा गच्छवासिनां साधूनां योऽसौ विकल्प सामाचारविशेषस्त स्यैषोऽनतरगाथावक्ष्यमाणलक्षण क्रमः परिपाटीरूपस्तेन कारणेनाऽनुयोगप्रदानक्रमेणैवेहाधिकारोऽयमिति विशे० ॥

आवस्सिया—आवश्यिकी—स्त्री० अवश्य कर्तव्यमावश्यकम् तत्र भवाऽऽवश्यिकी अनु०। अवश्यकर्तव्यैर्योगैर्निष्पन्नाऽऽवश्य-की स्था० ठा. १० । अवश्य कर्तव्यैश्चरणकरणयोगैर्निर्वृत्ताऽऽ वश्यकी जीत । आव ३ अ । अप्रमत्तत्वेनावश्यकर्त्तव्यव्या पारे भवाऽऽवश्यकी उत्त० २६अ.। आवश्यकेषु अप्रमत्ततया ऽवश्यकर्त्तव्यव्यापारेषु सत्सु भवाऽऽवश्यिकी ग० २ अ. सामाचारीभेदे, ( पढमा आवस्सिया नाम ) उत्त २६ अ । प्रथमा सामाचारी आवश्यकी नाम्नी यतः उपाश्रयात् निर्ग-च्छन् साधुरावश्यकीति वदति उपाश्रयात् बहिर्निःसरण चाव श्यकी विना न स्यात् तेन आवश्यकीति प्रथमा सामाचारी ज्ञानाद्यालंबनेनोपाश्रयात् बहिरवश्य गमने समुपस्थितेऽव-श्यकर्तव्यमिदमतोगच्छाम्यहमित्येवं गुरु प्रतिनिवेदनाऽऽव श्यकीति हृदयम् । अनु० । बृ० १ उ. । स्था० । प्रव० ।

(गमणे आवस्सियं कुज्जा) उत्त० गमने स्वस्थानादन्यत्रगमने अप्रमत्तत्वेन अवश्यकर्त्तव्यव्यापारे भवा आवश्यिकी तां आव-श्यकीं कुर्य्यात् यतोहि साधोर्गमनंनिष्प्रयोजन नास्ति यदि अवश्यं किंचित्कार्य्यं समुत्पन्नं वर्त्तते तदैव साधुः स्वस्थाना-दुत्थितोस्ति इति भावः ।

अथाऽवश्यकीस्वरूपमाह ।

कज्जेणं गच्छंतस्स, गुरुणिओएणसुत्तणीइए ।
आवस्सियत्तिणेया, सुध्दा अथत्थजोगाओ ॥

व्याख्या० । कार्येण ज्ञानादिप्रयोजनेनानेन निष्कारणगमन-निषेध उक्तो गच्छतो वसतेर्निर्गच्छतः साधोः किंस्वच्छदेन नेत्याह । गुरुनियोगेन गुर्वनुज्ञया तत्रापि सूत्रनीत्यागमन्यायेन ( इयास ) मित्यादिलक्षणेन किमित्याह ।

आवश्यिकी अवश्यकृत्यनिर्वृत्ता निर्गमक्रियात्सूचिका वाक् इ-ति एवमुक्तन्यायेन ज्ञेयाऽवसेया किंभूतशुद्धाऽनवद्याकुतइत्या-ह । अन्वर्थयोगात् अनुगतशब्दार्थसंबधात् अन्वर्थश्चोक्त एव प्र-कारांतरेण पुनरप्युच्यते इति गाथार्थः ॥

कार्येण गच्छत इत्युक्तं किंपुनस्तदित्याह ॥

कज्जंविनाण दंसण, चरित्तजोगाण साहगं जंतु ।
जइणो सेसमकज्जं, तत्थ आवस्सियासुध्दा ॥ १९ ॥

व्याख्या । इहापि शब्दः पुनरर्थः ततश्चावश्यिकी कार्येणग-च्छतोभवति कार्यं पुनर्ज्ञानदर्शनचारित्रयोगादित्रयगतव्यापा-राणां साधक हेतुभूत भिक्षाटनादि यत् इह तादिति शेषोहश्य स्तुशब्दश्चैवकारार्थस्ततश्च तदेव नान्यत् कस्येत्याह । यतेः साधोः शेष ज्ञानादिसाधनादन्यदकार्यमप्रयोजनमसुज्ञत्वात्सा धोरिति किं वातइत्याह नैव तत्र ज्ञानाद्यसाधनप्रयोजनेगच्छत इति गम्यते आवश्यिकी पूर्वोक्तनिर्वचनाशुद्धानिर्दोषान्वर्था भावादिति गाथार्थः ।

यद्यसौ न शुद्धा तर्हि किंविधा सेत्याह ॥

वइमेत्तं णिव्विसयं, दोसायमुसत्तिएव विन्नेयं ।
कुसलेहिं वयणाओ, वइरेगेणंजओन्नणियं ॥ २ ॥

व्याख्या।वागेव वचनमेव वाङ्मात्रं सावश्यिकीति प्रकृतं वाङ्-मात्रमित्यत्रावधारणार्थमात्रशब्दस्य व्यवच्छेद्य यदाह निर्विषय निर्गोचरमनर्थकमित्यर्थः किंफलच तदित्याह दोषाय कर्मबन्धल क्षणदूषणार्थं कस्मादेवमित्याह मृषेति अनृतमिति कृत्वा प्रती-त चानृतस्य दोषार्थत्वमिति ( एवत्ति ) इहानुस्वारस्याऽश्रवणं छदोवशात् एवमुक्तस्वरूप विज्ञेय ज्ञातव्यं कुशलैर्निपुणैरन्येषां ज्ञानासत्क्वावचननादागमाद्विवक्षितवचनस्यैव प्रस्तावनार्थ-माह। व्यतिरेकेण प्रक्रमाविपर्ययेण यतोयस्माद्भणितमुक्त सामा-यिकानिर्युक्ताविति गाथार्थ ॥

यदुक्त तदाह ॥

आवस्सियाउ आवस्स, एहिं सव्वेजुत्तं जोगस्स ॥
एयस्सेसो उचिओ, इयरस्स णचेव णत्तित्ति ॥

व्याख्या । आवश्यिकी तु प्रागुक्तनिर्वचना तु पुनः शब्दार्थः आवश्यकैः प्रतिक्रमणादिभि सर्वैः समस्तैर्युक्तयोगस्य सयु-क्तकायादिचेष्टस्य शुद्धा भवतीति शेषः । तदिदव्यतिरेकभणित

तं नैवंविधस्य वाङ्मात्रत्वात्तस्या इति कथमेवं विधस्येय शुद्धा भवतीत्याह एतस्यावश्यकयुक्तस्य एष इति पूर्वतमगायोक्तोऽन्वर्थयोगः आवश्यिकीशब्दोच्चाररूपे उचितः सगतो विद्यमानत्वात् उक्तव्यतिरेकमाह ( इयरस्सत्ति ) इहोत्तरस्य पुनरर्थस्य चशब्दस्य सवधारितरस्य पुनरनावश्यकयुक्तस्य नैव उचितएष इति प्रकृतं कुतइत्याह नास्तीति कृत्वाअविद्यमानत्वादन्वर्थाभावादित्यर्थः । अतस्तस्य वाङ्मात्रमेवासाविति गाथार्थः ।

उक्ताऽवश्यिकी पंचा० १२ वृ० ॥ ध० ३ अधि० ॥

साम्प्रतमावश्यिकी नैषेधिकी द्वारद्वयावयवार्थमभिधित्सुः पातनिका गाथामाह ।

आवस्सियं च निंतो, जं चायं तो निसीहियं कुणइ ॥
एयं इच्छंनाउं, गणिवरतुज्झंतिए निउणं ॥

आवश्यिकी पूर्वोक्तशब्दार्था तां आवश्यिकीं (निंतो) निर्गच्छन् प्रविशन् इत्यर्थः । नैषेधिकीं करोति एतत् आवश्यिकीं ( निंतो ) निर्गच्छन् यां च(आयंतो)आगच्छन् प्रविशन् इत्यर्थः नैषेधिकीं करोति एतत् आवश्यिकी रूपद्वयमपि स्वरूपादिभेदभिन्नं इच्छामि ज्ञातु हेगणिवर ? युष्मदन्तिके निपुणं सूक्ष्मं एतत् ज्ञातुमिच्छामीति क्रिया विशेषणं एवं शिष्येणोक्ते सत्याह आचार्यः ॥

आवस्सियं चनिंतो, जं चायंतो निसीहियं कुणइ ।
वंजणमेयं तु दुहा, अत्थो पुणहोइसो चे व ॥

आवश्यिकीं निर्गच्छन् या च प्रविशन्नैषेधिकीं करोति एतद् व्यंजनं शब्दरूप द्विधा किमुक्तं भवति आवश्यकीं नैषेधिकीं चेति द्वयं शब्द एव भिन्नमर्थः पुनर्भवत्यावश्यकीनैषेधिक्यो स एव एकएव यस्मादवश्यकर्तव्ययोगक्रिया आवश्यकी ॥ निषिद्धात्मनश्चारेत्य क्रिया नैषेधिकी तहात्मावश्यकर्त्तव्यम् व्यापारमुल्लङ्घ्य वर्तते आह । यद्येव भेदोपन्यास किमर्थं उच्यते गमनास्थिति क्रियाभेदात् आह । आवश्यकीं निर्गच्छन्नित्युक्तं तत्र साधो किमवस्थान कद यत आह ।

एगग्गस्स पसंतस्स, नहोंति इरियाइयो गुणा होंति ।
गंतव्वमवस्सं, कारणंमि आवस्सिया होइ ॥

एकमग्रमालंबनं यस्येत्यस्याविकाग्रस्तस्य स च प्रशस्ताल बनोऽपि भवति तत आह । प्रशांतस्य क्रोधरहितस्य सनस्ति इत् किं न भवति ईर्यादय ईरणमीर्या गमनमित्यर्थः । इह ईर्या कार्यं कर्म ईर्याशब्देन गृह्यते । कारणे कार्योपचारात् ईर्या आदिर्येषामात्मसंयमविराधनादीनां दोषाणां ते ईर्यादयो न भवन्ति । तथा गुणाश्च स्वाध्यायध्यानादयो भवंति । प्राप्त तर्हि मयनस्य आगमनमेव श्रेय इत्यपवादमाह । नचावस्थाने यस्त्वकगुणसंभवाद्गन्तव्यमवश्य नियोगेन कारणे गुरुग्लानादिसंबंधिनियतस्तत्रागच्छतो दोषास्तेन कारणे गच्छन आवश्यकी भवति आह कारणेन गच्छन किं सर्वस्यै वावश्यकी भवति उत नेति उच्यते नेति कस्य नहि तदुच्यते ।

आवस्सिया उ आवस्स, एहिं सव्वेहिं जुत्तजोगिस्स ।
मणवयणकायगुत्ती, इंदियस्स आवस्सिया होइ ॥

आवश्यकी आवश्यकैः प्रतिक्रमणादिभिः सर्वैर्युक्ता योगिनो भवति दीर्घकालमपि निरतिचारस्य क्रिया स्यात्स्यति भावार्थः । तस्य च गुरुनियोगादिना प्रवृत्तिकालेऽपि(मण)इत्यादिमनोवाक्कायैर्निर्गुप्तस्य किमावश्यकी भवति । सूत्रे इंदियस्याइत्य गाथाभंगभयाद्व्यवहित उपन्यास कार्यात पूर्याग्रियग्रहणं प्राधान्यख्यापनार्थं अस्ति चाय न्याय सामान्यग्रहणे सत्यपि प्राधान्यख्यापनार्थं भेदेनोपन्यासो यथा ब्राह्मणा आयाता वशिष्ठोऽप्यायात इति उक्ता आवश्यकी । आ म द्वि. १ अ. ॥

**आवह**–आवह–पुं० आवहति आभिमुख्येन गच्छति आ-वह अच्-सप्तस्कंधापन्नवायो. प्रथमे स्कंधे भूवायौ भूवायुरावहइह प्रवहस्तदूर्ध्वम्-सि० शि० (आवहः प्रवहश्चैव विवहश्च समीरणः । परावहः संवहश्च उद्वहश्च महावहः । तथा परिवह श्रीमान्) हरि वं० आवहति प्रापयति आ-वह-अच् प्रापके त्रि० वाच०। (णो पूयणं तवसा आवहेज्जा)नापि तपसा पूजनं सत्कारमावहेत् न पूजनसत्कारनिमित्तं तप कुर्यादित्यर्थः सूत्र ७ अ०

**आवहमाण**–आवहमान– त्रि-आ-वह-शानच्-क्रमागते-वाच ।

**आवाव**-आवाप-पुं-आ-वप्-आधारे वा घञ् वाच० ।

**आवावकहा**–आवापकथा-स्त्री० विकथाभेदे व्याख्या भत्तकहा शब्दे स्था० ॥

**आवास**–आवश्य न० आवश्यके ध्य० १ उ० ॥

**आवास**–पुं० आवसन्ति येषु ते आवासाः भ. १ श ५ उ आ-वस्-आधारे-घञ् आश्रये-स्था० वासस्थाने गृहादौ वाच० जेसिं ते आवासा-येषां देवानां ते निधय आवासा आश्रया इति स्था० ए ठा आवसत्यस्मिन्नित्यावास मनुष्यादिभवे मनुष्यादिशरीरे च ( अणिच्चमावासमुवेति जंतुणा आवसंत्यस्मिन्नित्यावासो मनुष्यादिभवस्तच्छरीर वा तमनित्यं उपसामीप्येन यति गच्छति जनव प्राणिन इति आचा० । नरका वासा नरकावासशब्दे । अथासुराद्यावासविषयमभिलापं दर्शयति । सम० ।

केवइयाणं भंते असुरकुमारवासा प० गोयमा० इमीसेणं रयणप्पभाए पुढवीए असी उत्तरजोयणं सयसहस्स बाहल्लाए उवरि एगं जोयणसहस्सं ओगाहेत्ता अट्ठहत्तरिजोयणसहस्से एत्थणं रयणप्पभाए पुढवीए चउसट्ठिं असुरकुमारावास सयसहस्सा प० तेणं भवणावाहिं वट्टा अंतो चउरंसा अहो पोक्खर कण्णिआ संठाण संठिया उक्किण्णंतर विउल गंभीर खाय फलिहा अट्टालय चरिय दार गोउर कवाड तोरण पडिदुवार देस भागा जंत मुसल मुसंढि सयग्घि परिवारिया अउज्झा अडयाल कोट्ठरइया अडयालकय वण माला लाउल्लोइय महिया गोसीस सरस रत्तचंदण दद्दरदिन्न पंचंगुलितला कालागुरु पवर कुंदुरुक्क तुरुक्कडज्झंत धूवमघमघेंत गंधुद्धुयाभिरामा सुगंध वरगंधिया गंधवट्टि भूया अच्छा सण्हा लण्हा घट्ठा मट्ठा नीरया णिम्मला वितिमिरा विसुद्धा सप्पभा समरीया सउज्जोया पासाईया दरिसणिज्जा अभिरूवा पडिरूवा एवं जंजस्स कमातीतं तस्स जंजं गाहाहिं भणियं तहचेव वण्णओ ॥

टी० वृत्तप्राकाराद्यवृत्तनगरवत् अत समचतुरस्राणि तदवष्टम्भादेतस्य चतुरस्रत्वात् अधः पुष्करकर्णिकासस्थानसस्थितानि पुष्करकर्णिकापद्ममध्यभाग सचोन्नतसमचित्रबिन्दुकिनी नवनीति तथा उत्कीर्णांतरविपुलगम्भीरखातपरिखानि उत्कीर्ण

भुवनमुत्कीर्य पालीरूपं कृतमतरमतराल ययोस्ते उत्कीर्णांतरे ते विपुलगम्भीरे खातपरिखे येषां तानि तत्र खातमध उपरि च समम्परिखा उपरि विशाला अधः सकुचिता तयोरंतरेषु पाली अस्तीति भाव'। तथा अट्टालका. प्राकारस्योपर्याश्रयविशेषाः चरिका नगरप्राकारयोरंतरमष्टहस्तो मार्गः पागान्तरेण (चतुरयति) चतुरका. सभाविशेषा. ग्रामप्रसिद्धाः (दारगोउरत्ति) गोपुरद्वाराणि प्रतोल्यो नगरस्येव कपाटानि प्रतीतानि तोरणान्यपि तथैव प्रतिद्वाराणि अवांतरद्वाराणि तत एतेषां रूंद्र एतानि देशलक्षणेषु भागेषु येषां तानि तथा इह देशो भागश्चानेकार्थस्ततोन्योन्यमनयोर्विशेष्यविशेषणभावो दृश्यत इति तथा यन्त्राणि पाषाणक्षेपणयन्त्राणि मुशलानि प्रतीतानि भुशुण्ड्य प्रहरणविशेषा शतघ्न्य. शतानामुपघातकारिण्यो महाकायाः काष्ठशैलस्तम्भमय्यः ताभिः ( परियारियत्ति ) परिवारितानि परिकरितानीत्यर्थ.। तथा आयोधानि योधयितु सग्रामयितुदुर्गतत्वान्न शक्यते परबलैर्यानि तान्ययोधानि अविद्यमाना वा योधाः परबलसुभटा यानि प्रतीतान्ययोधानि तथा ( अडयालकोठगरइयत्ति ) अष्टचत्वारिंशद्भेदभिन्नाविचित्रछंदोगोपुररचितानि अन्ये भणंति अडयालशब्द किल प्रशसावाचक तथा ( अडयालकयवणमालत्ति) अष्टचत्वारिंशद्भेदभिन्नाः प्रशसार्हा कृता वनमाला वनस्पतिपल्लवस्रजो येषु तानि तथा ( लाइयत्ति ) यद्भूमेच्छगणादिनोपलेपन (उल्लोइयति) कुड्यमालानां सेटिकादिभिः सम्मृष्टीकरण ततस्ताभ्या मिवमहितानि पूजितानि ( लाउल्लोइय ) महितानि तथा गोशीर्ष चन्दनविशेषः सरसश्च रसोपेतं यद्रक्तचदन चदनविशेष. ताभ्यां दर्दराभ्यां घनाभ्यां दत्ता. पचांगुलयस्तलाहस्तका कुड्येषु येषु अथवा गोशीर्षसरसस्य रक्तचन्दनस्य सत्का दर्दरेण चपेटाभिघातेन दर्दरेषु वा सोपानवीथीषु दत्ता पचांगुलयस्त ला येषु तानि गोशीर्षसरसरक्तचन्दनदर्दरदत्तपचागुलितलानि तथा कालागुरुः कृष्णागुरुर्गंधद्रव्यविशेष प्रवर प्रधान कुन्दुरुक्कश्चीडा तुरुष्क' सिल्हक गधद्रव्यमेव एतानि च तानि ( डज्झतित्ति ) दह्यमानानि चेति विग्रह. तेषां योधूमो (मघमघेतत्ति ) अनुकरणशब्दोऽय मघमघायमानो बहलगध इत्यर्थ.। तेनोद्धुराणि उत्कटानि तानि तथा तानि च तान्य भिरामाणि रमणीयानीति समास । तथा सुगन्धय. सुरभयो ये वरगधाः प्रधानवासास्तेषां गन्ध आमोदो येष्वस्ति तानि सुगन्धि वरगधिकानि तथा गधवर्ति गधद्रव्याणां गधयुक्तिशास्त्रोपदेशेन निर्वर्तितगुटिकातद्भूतानि तत्कल्पानीति गन्धवर्त्तिभूतानि प्रवरगन्धगुणानीत्यर्थ । तथा अच्छानि आकाशस्फटिकवत्। ( सण्हत्ति ) श्लक्ष्णानि सूक्ष्मस्कधद्दलनिष्पन्नत्वात् श्लक्ष्णदलनिष्पन्नपटवत् ( लण्हत्ति ) मसृणानीत्यर्थ'। घुटितपटवत् ( घट्टत्ति ) घृष्टानि खरशाणया पाषाणप्रतिमावत् ( मट्ठत्ति ) मृष्टानीव मृष्टानि सुकुमारशाणया पाषाणप्रतिमेव शोधितानि वा प्रमार्जनिकयेव अतएव (नीरयत्ति) नीरजांसि रजोरहितत्वात् ( निम्मलत्ति ) निर्मलानि कठिनमलाभावात् (विनिमिगणि) निरधकारत्वात् ( विसुद्धत्ति ) विशुद्धानि निष्कलकत्वाच्चन्द्रवत् सकवकानीत्यर्थं तथा ( सप्पहत्ति ) सप्रभाणि स प्रभावाणि अथवा स्वेनात्मना प्रभांतिशोभते प्रकाशते चेति स्वप्रभाणि यत' ( समरीयत्ति ) समरीचीनि सकिरणानि अतएव ( सउज्जोयति ) सहउद्योतेन वस्त्वतरप्रकाशनेन वर्तन्त इति सोद्योतानि ( पासाईयत्ति ) प्रासादीयानि मन प्रसादनिकराणि ( दरिसणिज्जत्ति ) दर्शनीयानि तानि हि पश्यच्चक्षुषा न श्रम गच्छतीति भावः ( अभिरूवत्ति ) अभिरूपाणि कमनीयानि ( पडिरूवत्ति ) प्रतिरूपाणि द्रष्टार प्रतिरमणीयानि नैकस्य कस्यचिदेवेत्यर्थ.। एवमित्यादि यथासुरकुमाराणाम् सूत्रे तत्परिमाणमभिहितमेवमेवमिति यथा यद्भवनादिपरिमाण यस्य नागकुमारादिनिकायस्य क्रमते घटते तत्तस्य वाच्यमिति किविधं तत्परिमाणमतआह ।" जजगाहाहिभणिय" यद्यत्रगाथाभिः चउसट्ठिअसुराणमित्यादिकाभिरभिहित किम्परिमाणमेव तथावाच्य (तहेत्याह)। (तहचेववण्णओत्ति ) यथा असुरकुमारभवनानां वर्णक उक्तस्तथा सर्वेषामसौ वाच्य इति तथाहि ।

केवइयाणं भंते नागकुमारावासा पण्णत्ता गोयमा इमीसेणं रयणप्पभाए पुढवीए असीउत्तर जोयण सयसहस्स पमाणाए उप्पिं एगं जोयणसहस्सं ओगाहेत्ता । हेट्ठावेगं जोयण सहस्सं वज्जेत्ता मज्झे अट्ठहुत्तरेजोयण सहस्से एत्थणं रयणप्पभाए चुलसीइ नागकुमारावाससयसहस्सा पण्णत्ता तेणं भवणा इत्यादीनि सम. ॥

तथाच भगवत्याम् ॥

केवइयाणं भंते असुरकुमारा भवणावास सयसहस्सा पं गोयमा! चउसट्ठिं असुर कुमार भवणावाससय सहस्सा पं० तेणं भन्ते ! किंमया पं० गोयमा ! सव्वरयणामया अच्छा सण्हा जाव पडिरूवा तत्थणं बहवे जीवाय पोग्गलाय वक्कमंति विउक्कमंति चयंति उववज्जंति सासयाणं ते भवणा दव्वट्ठयाए वण्णपज्जवेहिं जाव फासपज्जवेहिं असासया एवं जावथणियकुमारावासा भ. श. १९ उ.७ ॥

आवासपरिमाण चासुरादीनामपि दशानां गाथया सगृह्णाति ॥

चउसट्ठि असुराणं, चउरासीइं च होइ नागाणं ॥
बावत्तरि सुवन्नाणं, वाउकुमाराण बणउओइ ॥ ३ ॥
दीवादिसाउद हीणं, विज्जकुमारिंदथणियमग्गीणं ॥
छण्हंपि जुवलयाणं, बावत्तरिमो य सयसहस्सा॥२॥सम०

(छण्हपि जुयलयाणत्ति)दक्षिणोत्तरभेदेनासुरादिनिकायोद्विभेदो भवतीति युगलान्युक्तानि तत्र षट्सु युगलेषु प्रत्येक षट्सप्ततिर्भवनलक्षाणामिति एषां चासुरादिनिकाययुगलाना दक्षिणोत्तरादिशोरय विभाग ( चउतीसा चउचत्ता, अट्ठत्तीस च सयसहस्साउ । पण्णाचत्तालीसा, दाहिणओ होंति भवणाइ ॥ १ ॥ चत्तालीसत्ति ॥ द्वीपकुमारादीनापण्णाप्रत्येक चत्वारिंशद्भवनलक्षाणि तीसा चत्तालीसा, चोत्तीसं चेव सयसहस्साउ। छायाला छत्तिसा, उत्तरओहोंति भवणाउ ॥२॥ ( छत्तीसत्ति ) द्वीपकुमारादीना पण्ण. प्रत्येक षट्त्रिंशद्भवनलक्षाणीति ॥ भ० १ श० ५ उ.।

केवइयाणांभन्ते ! पुढविकाइयावासा प०गोयमा ! असंखेज्जा पुढविकाइयावासा प० एव जाव मणुस्सत्ति ।

॥ टी० ॥ केवइयाणभन्ते पुढवीत्यादि गतार्थं । नवर मनुष्याणां गर्भव्युत्क्रान्तिकानां असख्यातानामभावात् सख्याता एवावासा सम्मूर्छिमाना त्वसंख्येयत्वेन प्रतिशरीरमावासाभावादसख्याता इति भावनीयमिति ॥ भ० श० ५ उ० १

केवइयाणभंते ! वाणमंतरावासा पं० गोयमा ! इमीसे णं रयणप्पभाए पुढवीए रयणामयस्स कंमस्स जोयण-सहस्स वाहल्लस्स उवरि एगं जोयणसयं ओगाहेत्ता हेट्ठावेगं जोयणसयं वज्जेत्ता मज्झे अट्ठसु जोयणसएसु एत्थणं वाणमंतराणं देवाणं तिरियमसंखेज्जा भोमेज्जा नगरावाससयसहस्सा पं० तेणं भोमेज्जा नगरा बाहिं वट्टा अंतो चउरंसा एवं जहा भवणवासीणं तहेव णेयव्वा । णवरं । पमागमालाउल्ला सुरम्मा पासाइया दरिसणिज्जा अभिरूवा पडिरूवा केवइयाणं भंते वाणमंतर भोमेज्जणयरावाससयसहस्सा पं० गोयमा ! असंखेज्जा वाणमंतर भोमेज्जा णयरावाससयसहस्सा प० तेणं भंते ! किंसंठिया पं० २ सेस तं चेव ॥ भ० १ए श० ७ उ० १ ॥

॥ टी० ॥ भोमेज्जनगरत्ति । भूमेरन्तर्भवानि भौमेयकानि तानि च तानि नगराणि चेति विग्रह ॥ भ० टी० ॥

अरुणोदगे समुद्दे गंतूणं पंच आवासा । द्वी० ॥

निरयावासा निरयावासशब्दे । भावेल्युट् सम्यग्वासे वाच० ॥ निवासे, प्रश्न० ४ द्वा० ॥ औप० ॥ अवस्थाने, सम० ॥ न० ७० ॥ स्था० ४ ठा० ॥ ( आगारमावसता वि ) अगारं गृहं तदावसन्तस्तस्मिंस्तिष्ठन्तो गृहस्था इत्यर्थः सूत्र० १ श्रु० ९ अ० ॥ ( तं जोऽन्नूयं च सया वसेज्जा ) आवसेत सेवेत गुर्वन्तिक एव यावज्जीवं वसेत् सूत्र० १ श्रु० १४ अ० । ( कम्मोवगाकुणिमे आवसन्ति- ) आ समन्ताद्वसन्ति तिष्ठन्तीति ॥ सूत्र० नी०, श्र० ? उ० ॥

आवासपव्वय -आवासपर्वत- पु० निवासभूते पर्वते, ( गोथूभस्स ण आवासपव्वयस्स ) स० ॥

आवासय-आवश्यक- न० श्रुतपरवशयसां दीर्घे १ । ४३ इति प्राकृतसूत्रेण प्राकृतलक्षणवशालुप्ता याद्या उपर्यधोवा येषां शकारषकारसकाराणां तेषामादेः स्वरस्य दीर्घो भवति प्रा० ॥ अवश्यकर्त्तव्ये सामायिकादिके, विशे० ॥

आवासक न० आसमन्तात् ज्ञानादिगुणैः शून्य जीवं वासयति तैर्युक्तं करोतीत्यावासकम् सामायिकादिके विशे० । आवासो नीडमावास एवावासक नीडे,पु० वासगयर तु पोसति वासगयरति प्राकृतत्वादाद्याकारस्य लोप आवासो नीडमावास एवावासकः । व्य० ? उ० ( सावासगापवित्तं मन्नमाण ) स्वकीयादावासकात्स्वनीडात् सूत्र० १ श्रु० १४ अ० ॥

आवासगाणुओग-आवश्यकानुयोग- पु० । आवश्यकव्याख्याने, " आवासयाणुओग " आ समन्ताद्ज्ञानादिगुणैः शून्य जीवं वासयति तैर्युक्तं करोतीत्यावासकं सामायिकादिरूपमेव तस्य वक्ष्यमाणशब्दार्थोऽनुयोगो व्याख्यानं विधिप्रतिषेधाभ्यामर्थप्ररूपणमित्यर्थः विशे० ॥

आवाह-आवाह-पु०-आह्वयते स्वजनास्तांबूलदानाय यत्र स आवाहः । विवाहात् पूर्वं ताम्बूलदानोत्सवे, जी ३ प्र० । अभिनवपरिणीतस्य वधूवरस्यानयने । प्रश्न० स ४ द्वा ॥ यात्रा वरगृहानयने, च प्रश्न० ५ द्वा ॥

आवाहण-आवाहन-न०-आ. वह-णिच्-ल्युट्-सान्निध्याय देवतानामाह्वाने-वाच० ॥

आवाहविवाहवरकहा-आवाहविवाहवरकथा--स्त्री० आवाहविवाहप्रधानायां परिणेतृकथायां, ( आवाहविवाहवरकहावि ) आवाहोऽभिनवपरिणीतस्य वधूवरस्याऽनयन विवाहश्च पाणिग्रहणं तत्प्रधाना या वरकथा परिणेतृकथाआवाहविवाहवरा वा या कथा सा तथा सापि न कथयित व्येतिप्रक्रमः । प्रश्न स. ४ द्वा ॥

आविइ-आविची-स्त्री० । अविचिदेशोद्भवायाम्-राज० ॥

आविधइत्ता-आविध्य-अव्य० परिधायेत्यर्थे ( पालवं वा सुवसुत्तं वा आविंधेज्ज वा पिणिधेज्ज वा ) आचा० ६ अ. ३ उ ॥

आवीक ( वीक ) म्म ( न् )-आविष्कर्मन्- न०-प्रगटक्रियायाम्-स्था० ए ठा कल्प० ॥

आविट्ठ-आविष्ट-त्रि०-आ-विष-क्त-भूतादिग्रस्ते, आवेशयुक्ते, निविष्टे,व्याप्ते,च-वाच० ॥ अधिष्ठिते,स्था ५ ठा ॥ प्रविष्टे, ( मच्छाविट्ठाव केयणे ) केतने मत्स्यबन्धने प्रविष्टा निर्गतिका । सूत्र १ श्रु ३ अ. । युक्ते, च सम० ३ स ॥

आविद्ध-आविद्ध-त्रि० आ व्यध्-क्त-ताडितेऽविद्धे, छिद्रिते, क्षिप्ते, च ( नङ्यतीपुर्ययाऽऽविद्ध ) मनु-वाच परिहिते, कल्प औप० ॥ ( आविद्धमणिसुवण्णे ) आविद्धानि परिहितानि मणिसुवर्णानि येन स । त ॥ औप० ॥ आविद्धानि परिहितानि मणिसुवर्णानि लक्षणया मणिसुवर्णानि सुवर्णमयादिभूषणानि येन स तथा तस्मिन् । कल्प ॥ ( आविद्धवग्घारियमल्लदामकलाव ) परिहितप्रलंबपुष्पमालासमूहे, । ज्ञा. २ अ ।

आविद्धवीरवलय-आविद्धवीरवलय-त्रि० आविद्धानि वीरवलयानि वीरत्वगर्वसूचकानि वलयानि येन तथा तस्मिन् सुभटोहि यदि कश्चिदन्योऽप्यस्ति वीरव्रतधारी तदाऽऽसौ मां विजित्य मोचयत्वेतानि वलयानीति स्पर्द्धयन् यानि कटकानि परिदधाति तानि वीरवलयानीत्युच्यन्ते । औप० ॥ कल्प० ॥ ज्ञा० १ अ. ॥

आविब्भाव-आविर्भाव-पुं० आविस्-भू-घञ् प्रकाशे, वाच० । ( आविब्भावतिरोभावमेत्तपरिणामिदव्वमेवाय ) आविर्भावश्चकुण्डलादिरूपेण तिरोभावश्च मुद्रिकादिभावेन आविर्भावतिरोभावौ । तावेव तन्मात्रम् तेन परिणतु प्रवर्त्तितुं शीलं यस्य तदाविर्भावतिरोभावमात्रपरिणामि सुवर्णादिक द्रव्यमेवेद नतु तदतिरिक्ता गुणा । विशे० ।

आविब्भूय-आविर्भूत-त्रि० आ-विस्-भू-कर्त्तरि-क्त-प्रकटिते,-अभिव्यक्ते, । वाच० ॥

आविल-आविल-त्रि० आकुले, ( कलुसाविलचेयसे ) सम० सूत्र० ॥ अस्वच्छे, आविलमविमलमस्वच्छमिति जी० ३ प्र० । आविलाति दृष्टिं स्तृणाति-विल स्तृतौ-क-कलुषे,-अय विल भेदने विलप्रकृतिकत्वात् वर्ग्यवमस्य इति रायमु० वाच० ॥ " भिक्खुए अणाविले-" अनाविलोऽकलुषो रागद्वेषासंपृक्ततया मलरहितोऽनाकुलो वा विषयाप्रवृत्ते -स्वच्छचेता इति सूत्र० १ श्रु १५ अ ।

आविलप्पा-आविलात्मन्-पु० । आकुलात्मनि, ( अभय करे भिक्खु अणाविलप्पा ) अनाविलो विषयकषायैरनाकुल आत्मा यस्यासावनाविलात्मा ॥ सूत्र० १ श्रु० १० अ ।

आविह-आविध-पु० आविध्यतेऽनेनआ-व्यध-घजर्थे क०या काष्ठादि

षेधनसाधने सूच्याकाराग्रे अस्त्रे, वाच ॥

आवी-आवी-स्त्री० अविरेव स्वार्थे-अण्-ङीप्-रजस्वलायां ना र्याम्, गर्भवत्यां, च। गर्भस्यदनमावीनां,प्रणाश- इयावपाएम् ता-सुश्रु० ॥ वाच ॥

आवीइमरण-आवीचिमरण-न० आसमन्ताद्वीचय इव वीचय आयुर्दलिकविच्युतिलक्षणा अवस्था यस्मिस्तदावीचि अथवा वीचिर्विच्छेदस्तदभावादवोचि दीर्घत्व तु प्राकृतत्वात्तदेवं भूत मरणमावीचिमरणम् । प्रतिक्षणमायुर्द्रव्यविचटनलक्षणे मरण- भेदे, सम० १७ स ।

" अणुसमयं निरंतर, मावीइसंन्नियं तं नणंति ।
पंचविहं दव्वे खेत्ते, काले नवे नावे य संसारे, ॥

अणुसमय समयमाश्रित्य इदं च व्यवहितसमयाश्रयणतो- ऽपि भवतीति माभूद्भ्रांतिरत आह। निरंतरं न सान्तरालमत- रालाभावात् किं तदेवविधमावीचिसङ्क्षितं आसमताद्वी चय इव वीचय प्रतिसमयमनुभूयमानायुषोऽपरायुर्दलिको- दयात्पूर्वायुर्दलिकविच्युतिलक्षणा अवस्था यस्मिन्मरणे तदा वीचि तत् आवीचीति सञ्ज्ञा सजाता यस्मिन् तदावीचिसं- ज्ञित तारकादित्वादितचि रुपमिद । अथवा वीचिर्विच्छेदस्तद भावादवीचि दीर्घत्वं तु प्राकृतत्वात् उभयत्र प्रक्रमान्मरण तदेव भूतं प्रतिक्षणमायुर्द्रव्यविचटनलक्षणमावीचिमरण पंचविधं भणति । तीर्थकरगणधरादयोऽस्मिन् संसारे जगति पचविधत्वमेवाह, ( द्रव्ये क्षेत्रे काले भवे भावे च ) द्रव्या- वीचिमरणं क्षेत्रावीचिमरण कालावीचिमरण भवावीचिमरणं भावावीचिमरण चेत्यर्थ ॥ तत्र द्रव्यावीचिमरण नाम यन्ना- रकतिर्यङ्नरामराणामुत्पत्तिसमयात्प्रभृतिनिजनिजायुः कर्मद- लिकानामनुसमयमनुभावनाविचटन तु तच्च नारकादिभेदाच्च- तुर्विधमेव नारकादिगतिचातुर्विध्यापेक्षया तद्विषय क्षेत्रमपि चतुर्विधं ततस्तत्प्राधान्यापेक्षया क्षेत्रावीचिमरणमपि चतु- र्विधम् । काल इति यथाऽऽयुष्ककालो गृह्यते नत्वयथाकालस्त- द्देवादिष्विसंभवात् स च देवायुष्ककालादिभेदाच्चतुर्विधस्त- त्प्राधान्यापेक्षया कालावीचिमरणमपि चतुर्विधमेव । चतुर्वि- धभवापेक्षया भवावीचिमरणमपि चतुर्धैव । तेषामेव च नारकादीनां चतुर्विधमायु क्षयलक्षणं भावप्राधान्यापेक्षया- भावावीचिमरणमपि चतुर्धैवेति ॥ प्रव० १५७ द्वा ।

आसमन्ताद्वीचय प्रतिसमयमनुभूयमानायुषोऽपरायुर्दलि- कोदयात्पूर्वं पूर्वायुर्दलिकविच्युतिलक्षणा अवस्था यस्मिस्तदा- वीचिकम् । अथवा अविद्यमाना वीचिर्विच्छेदो यत्र तदवी चिकम् । अवीचिकमेवावीचिकम् तच्च तन्मरण चेत्यावीचि कमरणम् । मरणभेदे, । भ० १३ श ७ उ ॥

आवीइसंणिय-आवीचिसंज्ञित-न० । आ समन्ताद्वी चय इव वीचय प्रतिसमयमनुभूयमानायुषोऽपरायुर्दलिकोदया- त्पूर्वं पूर्वायुर्दलिकविच्युतिलक्षणा अवस्था यस्मिन्मरणे तदा- वीचि तत् आवीचीतिसंज्ञा सजाता यस्मिन् तदावीचिसङ्क्षित तारकादित्वादितच् आवीचिसङ्ग्क्षे मरणभेदे, प्रव १५७ द्वा ॥

आवीकम्म-आविष्कर्मन्-न० प्रगटकर्मणि, कल्प० ॥

आवुक्रण-विज्ञापन-न० वि ज्ञा णिच्-पुक्-ल्युट्-विशेषेण बो- धने, वाच० ॥

( विज्ञपेर्वोक्कावुक्कौ । ४ । ३८ ) इति प्राकृतसूत्रेण विपर्यस्य जानातेर्यन्तस्य वोक्कआवुक्क इत्येतावादेशौ वा-वोक्कइ आवु- क्कइ-विण्णवइ । प्रा व्या. ॥

आवुट्टि-आवृष्टि-स्त्री० आ-वृष-क्तिन्. सम्यग् वर्षणे, वा-च ।

आवेढिय-आवेष्टित-त्रि० सकृद्वेष्टिते, -स्था० १० ॥ त्रि० । सर्वतोवेष्टिते, च. भ० १६ श० ६ उ. । सव्वओ समंतात् आवेढिय परिवेढिय-आवेढियाति सकृदावेष्टितम् परिवेढिय ति असकृदिति-स्था० ॥ आवेढियाति अभिविधिना चेष्टित सर्वत इत्यर्थ. परिवेढियांति पुन. पुनरित्यर्थः ॥ भ० ॥

आवेढियपरिवेढिय-आवेष्टितपरिवेष्टित- त्रि० गाढतर संवेष्टि ते, ॥ प्रज्ञा० पद १५ ॥

आवेग-आवेग-पुं०आ-विज-घञ्-त्वरायाम,अष्ट० ॥

आवेत-त्रि० उन्ने प्रदेशे कुड्येऽवष्टब्ध ऊर्ध्वीकृते,। व्य० उ० ॥

आवेयग आवेदक--त्रि० आ-विद्-णिच्-एवुल् विज्ञापके ।

आवोम-आव्योम-अव्य व्योम मर्यादीकृत्येत्यर्थे,- ( आदीप- माव्योमसमस्वभावम् )आव्योमं व्योममर्यादीकृत्येतिस्या०५श्लो

आस-अश्व-पु. अश्नुते व्याप्नोति मार्गम्-अश-क्वन्-घोटके ज्ञा. १७ अ ॥ अनु. ॥ अश्वस्तुरंग इति औप ॥ आसो सत्तीवाहो-पका० वाल्हीकादिदेशोत्पन्ने जात्यश्वे दश ६ अ. ॥ जात्या आशुगम- नशीला अश्वा -स्तेषा घोटकाः जी ३ प्र. ।

अश्वानां वर्णको ज्ञाताध्ययने यथा ।

वहवे तत्थ आसे पासंति । किं ते हरिरेणुसोणिसुत्तग- आइण्णवेढो-ज्ञा० १७ अ० ॥

वहूश्वात्राश्वान् घोटकान् पश्यति स्म किंतेत्ति किंभूतान् अ- त्रोच्यते । हरीत्यादि ॥ आइण्णवेढोत्ति । आकीर्णा जात्या अश्वा तेषां वेढोत्ति वर्णनार्या वाक्यपद्धतिराकीर्णवेष्टक । सचाय

हरिरेणुसोणिसुत्तगसकविलमज्जारपायकुक्कुडवोंडसमुग- यसामवण्णा गोहुमगोरंगगोरपाडलगोरा पवालवण्णा य धूमवण्णा य केइ ॥ १ ॥ तलपत्तरिट्ठवण्णा सालीवण्णा य नासवण्णाय । केई जंपिय तिलकीडगगय सालोयरि- ट्ठगाय पुंडपइयाय कणगपीठाय केई ॥ २ ॥ चक्काग- पट्ठवण्णा सारसवण्णाय हंसवण्णाय केई । केई अब्भवण्णा पक्कतलमेहवण्णाय वाहुवण्णाय केई ॥ ३ ॥ संझाणुरागसरिसा सुयमुहगुंजद्धरागसरिसत्थकेई । ए- लापाडलगोरा सामलयागवलसामला पुणोकेई ॥ ४ ॥ वहवे अण्णे अणिद्दे सा सामा का सीसरत्तपीया। अच्चं- तविसुद्धा वियणं आइण्ण जाइकुलविणीयागमच्छग हयवरा जहोवए सक्कमवाहिणोवि य णं सिक्खाविणीय विणया लंघणवग्गणधावणधोवणतिवई जईणसिक्खियगई किं ते मणसा वि उव्विहिंताई अणेगाई आसयाई पासंतित्ति ॥

तत्र हरिरेणवश्च नीलवर्णपांशवश्रोणिसूत्रकं च बालकानांचर्मा दिमयवरकरूप कटिसूत्रं तद्धि प्राय कालक भवति सह कपिलेन पक्षिविशेषेण यो मार्जारो विडाल स च तथा पादकुक्कुटविशेषः स च तथा बोंड कार्पासीफला तस्यसमुद्गकं सपुटमभिन्नावस्य

कार्प्पासीफलमित्यर्थः तद्वाति ऽस्तत एषामिव श्यामो व-र्णो येषां ते तथा । इह च सर्व्वत्र द्वितीयार्थे प्रथमाऽतस्ता-निति तथा गोधूमो धान्यविशेष० तद्वद्गौरमगं येषां ते तथा। तथा गौरी या पाटला पुष्पजातिविशेषस्तद्द्वये गौरास्ते तथा ततः पदद्वयस्य कर्मधारय० । गोधूमगौरांगगौरपाटला-गौरास्तान् तथा प्रवालवर्णाश्च विद्रुमवर्णान् अभिनवपल्लववर्णान् वा रक्तानित्यर्थ (धूमवएणायत्ति) धूम्रवर्णाश्चधूम्रवर्णान्वा पांडुरानित्यर्थ० (केइत्ति) कांश्चिन्न सर्व्वानित्यर्थ । इह च हरी-त्यत आरभ्य पांडुशब्दे कल्पितार्ध्द रूपकं भवति । तालपत्राणि तालाभिधानवृक्षपर्णानि रिष्टा च मदिरा तद्वद्वर्णो येषां ते ता लपत्ररिष्टवर्णास्तां स्तथा शालिवर्णान् शुक्लानित्यर्थ० । ( भा सावएणायत्ति ) भस्मवर्णाश्च भासो वा पक्षिविशेषस्तद्व-र्णाश्च कांश्चिदित्यर्थ० ( जपियतिलकीडगायत्ति ) यापिताः कालांतरं प्राप्ता ये तिलकीटा धान्यविशेषास्तद्वद्वे वर्णसाधर्म्या त्ते तथा तान् यापिततिलकीटकांश्च ( सालोयरिट्ठगायत्ति) सावलोकं सोद्योतं यद्रिष्टकं रत्नविशेषस्तद्वद्वे वर्णेनसाधर्म्या त्ते सावलोकरिष्टकास्तांश्च ( पुंडपञ्ज्यायत्ति) पुंड्राणि धवला नि पदानि पादा येषां ते तथा त एव पुण्ड्रपदिकास्तांश्च तथा कनकपृष्टान् कांश्चिदिति रूपकं ॥ २ ॥ ( चक्कागपट्टवएणात्ति) चक्रवाकः पक्षिविशेषस्तत्पृष्ठस्येव वर्णो येषां ते तथा तान् सारसवर्णाश्च । हंसवर्णान् कांश्चित् इति पद्यार्द्ध ( केइ अब्भ-वएणेति ) कांश्चिदेवाभ्रवर्णान् ( पक्कतलमेहवएणायत्ति ) पक्वः पक्वपत्रो यस्तलस्तालवृक्षः स च मेघश्चेति विग्रहस्तस्येव वर्णो येषां ते तथा तान् ( पविरलमेहवएणत्ति ) क्वचित्पाठ० तथा ( वाहुवक्षाके इति बभ्रुवर्णान् कांश्चित्पिंगलानित्यर्थ । बहुवर्णानिति क्वचित् दृश्यते रूपकमिद ॥ ३ ॥ तथा (संज्झाणु-रागसरिसत्ति ) संध्यानुरागेण सदृशा वर्णत इत्यर्थः (सुयमु-हगुंजद्धरागसरिस एके इत्ति ) शुकमुखस्य गुंजार्ध्दस्य च प्रती तस्य रागेण सदृशो रागो येषां तथा तान्। अत्र इह कांश्चिदि-त्यर्ध्द(एलापाडलगोरत्ति) एला पाटला पाटलाविशेषोऽथवाएला च पाटला चेत्येलापाटले। तद्वद्गौरा ये ते तथा तान् (सामलयाग-वलसामला पुणो केइत्ति ) श्यामलता प्रियंगुलता गवलं च महिषशृंगं तद्वत् श्यामलान् पुन कांश्चिदिति रूपकं ॥ ४ ॥ ( वहवे अएणे अणिद्देसत्ति ) एकवर्णेनान्यपदिश्यानित्यर्थ० । अतएवाह ॥ ( सामाकासीसरित्तपीयत्ति ) श्यामाकाश्च कासीस रागद्रव्यं तद्वद्वेते कासीसास्ते च रक्ताश्च पीताश्च ये ते तथा तान् शवलानित्यर्थ ( अच्चंतविसुद्धावियणंति ) नि-र्दोषाश्चेत्यर्थ । णमित्यलंकारे ( आइएण जाइकुलविणीयगयम-च्छरत्ति ) आकीर्णानां जवादिगुणयुक्तानां सबाधिनी जातिकुले येषां ते तथा ते च ते विनीताश्च गतमत्सराश्च परस्परासह-नवर्जिता निर्मत्सराश्चेति । ते तथा तान् ( हयवरत्ति ) हयाना-मश्वानां मध्ये वरान् प्रधानानित्यर्थ ( जहोवदेसकमवाहिणो वियणाति ) यथोपदेशक्रममिव उपदिष्टपरिपाट्यनतिक्र-मेणेव वोढुं शीलं येषां ते तथा तानपि च णमित्यलंकारे (सि क्खाविणयत्ति ) । शिक्षयेवाभ्यदमकपुरुषशिक्षाकरणादिव वि नीतोवासौ विनयो येस्ते तथा तान् ( लवणवग्गणधावणधोर-णतिपईजइणसिक्खियगईत्ति ) लंघन गर्तादीनां वल्गनं कूर्दन धावन वेगवत्गमन धोरण चतुरत्वं गतिविषयं त्रिपदीमल्लस्येव रंगभूम्यां गतिविशेष । एतद्रूपा जविनी वेगवती शिक्षितेव शिक्षिताागतिर्यैस्ते तथा तान् किं ते इति क्रिमपर (मणसा वि उन्विहिंताइंत्ति ) मनसाऽपि चेतसाऽपि न केवल वपुषा

( उव्विहिंताइंति ) उत्पतति ( अणेगाइं आससयाइति ) न केवलमश्वानैकैकशोऽपि तु अश्वशतानि पश्यंति स्रोंति गम-निकामात्रमेतदस्य वर्णकस्य । भावार्थस्तु बहुश्रुतबोध्यइति ॥ धावमानस्याश्वस्योदरवर्त्तिशब्दविचारो भगवत्याम् ।

आसस्सणं भंते ! खलु धावमाणस्स किं खुखुत्ति करेइ गोयमा ! आसस्स णं धावमाणस्स हिययस्स य जग यस्स य अंतरा एत्थं कक्कडए नाम वाए समुच्छिए जेणं आसस्स धावमाणस्स खुखुत्ति करेइ ॥ भ० १० श० ३ उ० ॥

॥ टी० ॥ हृदयस्य यकृतस्य दक्षिणकुक्षिगतोदरावयवविशेष स्यान्तरान्तराले । भ० टी० ॥

अश्विनीनक्षत्राधिष्ठातरि देवे, तदधिष्ठातृके अश्विनीनक्षत्रे, च अश्वनामको देवविशेष इति जं० ॥ अश्वोऽश्वदेवतोपलक्षिता ऽश्विनीति चं० २० प्रा. ॥ आशुगमनादश्व० मनसि, जी ३ प्र. ॥ प्रज्ञा. २ पद ॥

आश-पुं०-अशनमाशः । अश्भोजने-घञ्-भोजने-आ. म. प्र०१ अ ॥ (सामासाए पायरासाए) प्रातरशनं प्रातराश.प्रत्यूष स्येव भोजनमिति सूत्र. २ श्रु. १ अ. ॥

कर्म्मणि उपपदे कर्त्तरि अण्-उपपदस० तत्तद्वस्तुभक्षके । यथा हुताशः आश्रयाशः मांसाशः पलाश० हविष्याशः ॥ वाच० ॥

आसइ-( न् ) आश्रयिन्-आ-श्रि-इनि-आश्रयकारके, आश्रिते, "मयूरपृष्ठाश्रयिणा गुहेन" रघु । पर्य्यन्ताश्रयिभिः निजस्य सद शं नाम्न० किरातै कृतम् रत्ना । वाच ॥

आसइत्ता—आश्रित्य—अ० आ. श्रि—ल्यप्—अवलम्ब्येत्यर्थे, वाच० ॥

आसंकणिज्ज—आशंकनीय-त्रि० । आ-शकि-अनीयर् शंकया विषयीकार्य्ये—अनिष्टतया चिन्तनीये, च वाच. ॥

आसंग-आसंग-पुं० । अभिष्वङ्गे, । पो० ॥ स्वरूपम् ॥

आसंगेऽप्यविधाना, दसंगसत्त्युचितामित्यफलमेतत् ॥
भवनीष्टफलदमुच्चैं, स्तदप्यसंगं यतः परमं ॥ ११ ॥

आसंगेपीत्यादि ॥ आसंगेऽपि चित्तदोषे सति विधीयमाना नुष्ठाने इदमेव सुंदरमित्येवरूपे अविधान शास्त्रोक्तविधेरभावा त् शक्तिरनवरतप्रवृत्ति न विद्यते संगो यस्यां सेयमसंगाभि-ष्वंगो भाववती असंगा चासौ शक्तिश्च तस्या उचित योग्य-मिति कृत्वा फलमेतदिष्टफलरहितमेतदनुष्ठान भवति जायते । इष्टफलदमिष्टफलसपादकमुच्चैरत्यर्थ तदपि शास्त्रोक्तमनुष्ठान मसंगमभिष्वंगरहितं यतो यस्मात्परमप्रधान आसंगयुक्त हानुष्ठान तन्मात्रगुणस्थानकस्थितिकार्यं च न मोहोन्मूलनद्वा रेण केवलज्ञानोत्पत्तये प्रभवति तस्मात्तदर्थिना आसंगस्य दोषरूपता विज्ञेयेति । पो १४ वि । द्वा० । गार्ग्ये, सूत्र १ श्रु ३ अ रागे आचा० अ ५३ उ ४ ॥

आसंग—पुं० वासगेहे, " आसंगो आसवण भासयण वासगे हम्मि ' देशी व १ श्लो. ६६ ॥

आसंदय-आसन्दक-न०-आसनविशेषे, (आसनमासनकादीत्ति) आचा. १ अ. ५ उ ॥

आसंदिया—आसंदिका—स्त्री०-मंचिकायाम्- ( आसंदियं च न-

वसुत्त ) आसदिकां मंचिकाम् सूत्र. १ श्रु. ४ अ. ॥

आसंदी–आसन्दी–स्त्री-आसद्यतेऽस्याम्-आ-सद्-अन्दादिनि गौरा ङीप्-उपवेशनयोग्ये आसनयंत्रे क्षुद्रखट्वायाम्, वाच. ॥ मचके, सूत्र० २ श्रु १ अ ( आसदी पलियके य ) आसदी-त्यासनविशेष इति । सूत्र० १ श्रु. ए अ. ॥

आसंवर–आशाम्बर–पु० दिगवरे जैनसाधुभेदे,-एतेन यदाहु राशाम्बराः न स्त्रीणां निर्वाणमिति तदपास्तम् इति । न. ॥

आसंसप्पओग–आशंसाप्रयोग–पु० आशासनमाशसाऽभिलापस्तस्या. प्रयोगो व्यापारणम् करणमाशंसाप्रयोगः । आशंसैव वा प्रयोगोव्यापार आशसाप्रयोगः । आशंसाया व्यापारे, च आशसारूपे व्यापारे, । प्रव० १ द्वा ॥ आशसप्पओगो नाम निदानकारणम् इति ॥ नि. चू. १ उ ॥

दसविहे आसंसप्पओगे प० तं जहा १ इहलोगासंसप्पओगे २ परलोगासंसप्पओगे ३ दुहओलोगासंसप्पओगे ४ जीवियासंसप्पओगे ५ मरणासंसप्पओगे ६ कामासंसप्पओगे ७ भोगासंसप्पओगे ८ लाभासंसप्पओगे ए पूयासंसप्पओगे १० सक्कारासंसप्पओगे । स्था. १० ठा. ॥

दसविहेत्यादि । आशसनमाशसा इच्छा तस्या प्रयोगो व्यापारण करणमाशसैव प्रयोगो व्यापारः आशसाप्रयोगः सूत्रे च प्राकृतत्वात् ( आससप्पओगेत्ति ) भणित तत्र इहास्मिन् प्रज्ञापकमनुष्यापेक्षया मानुषत्वपर्याये यो वर्तते लोक प्राणिवर्ग स इहलोकस्तद्व्यतिरिक्तस्तु परलोकस्तत्रेहलोक प्रति आशसाप्रयोगो यथा भवेयमहमितस्तपश्चरणाच्चक्रवर्त्यादिरितीहलोकाशसाप्रयोग १ एवमन्यत्रापि विग्रह कार्य । परलोकाशसाप्रयोगो यथा भवेयमहमितस्तपश्चरणादिन्द्र समानिको वा २ द्विधा लोकाशंसाप्रयोगो यथा भवेयमिन्द्रस्ततश्चक्रवर्ती ३ अथवा इह लोके इह जन्मनि किंचिदाशास्ति एव परजन्मन्युभयत्र वेति एतत्त्रय सामान्यमतोऽन्ये तद्विशेषा । एवास्ति च सामान्यविशेषयोर्विवक्षापेक्षो भेद इत्याशसाप्रयोगाणा दशधात्व न विरुध्यते । तथा जीवितं प्रत्याशसा चिरम्मे जीवित भवत्विति जीविताशंसाप्रयोग ॥४॥ तथा मरण प्रत्याशंसा शीघ्र मे मरणमस्त्विति मरणाशंसाप्रयोग ॥ ५॥ तथा कामौ शब्दरूपे तौ मनोज्ञौ मे भूयास्तामिति कामाशंसाप्रयोगः ॥ ६॥ तथा भोगा गंधरसस्पर्शास्ते मनोज्ञा मे भूयासुरिति भोगाशसाप्रयोगः ॥७॥ तथा कीर्ति श्रुतादिलाभो भूयादिति लाभाऽऽशसाप्रयोग ॥ ८॥ तथा पूजा पुष्पादिपूजनं मे स्यादिति पूजाशसाप्रयोग ॥ए॥ सत्कार प्रवरवस्त्रादिभिः पूजन तन्मे स्यादिति सत्काराशंसाप्रयोगः ॥१०॥ स्था. टी ॥ आव ६ अ ॥

आसवण–वासगेहे, देशी. १ व. ६६ श्लो ।

आसक्ख–पक्षिविशेषे, " आसक्खओ सिरिवए " श्रीरिति व दतीति श्रीवदः प्रशस्त पक्षिविशेषः । देशी १ व ६७श्लो ।

आसक्खंध–अश्वस्कध–पुं. हयग्रीवायाम्, स्था. २ ठा. ।

आसंसा–आशंसा–स्त्री-आशंसनमाशंसा–अभिलाषे, प्रव ५ द्वा. ॥ भाव ६ अ. ॥ आशंसनमाशंसा–इच्छायाम्, स्था आशसनमाशंसा–अप्राप्तप्रापणाभिलाषे,–आचा० । २ श्रु.उ २

अदुवा आसंसा एतं परिएणाय मेहाविणे समयं एएहिं कज्जेहिं दंडं समारंभेज्जा–आचा. २ अ० २ उ. ॥

टी. ॥ अथवा आशसनमाशसा अप्राप्तप्रापणाभिलाषः तदर्थ दण्डसमादानमादत्ते तथाहि ममैतत्परूपरारि घा प्रेत्य परलोके चोपस्थास्यत इत्याशसया क्रियासु प्रवर्त्तते राजान वा ऽर्थाशाविमोहितमना विलगति–आचा ॥ विशेषावश्यके आशसादूषित प्रत्याख्यानमधिकृत्य ॥

आसंसाजा पुन्ने, सेविस्सामिति दूसियं तीए।

या एवंविधपरिणामरूपा कथंभूत परिणाम इत्याह । पूर्णे प्रत्याख्याने देवलोकादौ सुरांगनासंभोगादिभोगानह सेविष्ये इत्येवं भूतपरिणामरूपा च या आशसा तया प्रत्याख्यान दूषित भवति । विशे० ॥ आ म. द्वि. १ अ ।

तथा च सूत्रकृतांगे—

से भिक्खु अकिरिए अलूसए अकोहे अमाणे अमाए अलोहे उवसंते परिनिव्वुडे णो आसंसं पुरतो कुज्जा इमेणं मे दिट्ठेण वा सुएण वा मुएण वा एाएण वा विन्नाएण वा इमेण वा सुचरियत्तवनियमबंभचेरवासेण इमेण वा जायामायावुत्तिएणं धम्मेणं इतो चुए पेच्चा देवो सिया कामभोगा वसवत्ति सिद्धे वा अदुक्ख मसुभे एत्थ एत्थविणो सिया ॥ २ श्रु १ अ ॥

सेभिक्खु इत्यादि ॥ समूलोत्तरगुणव्यवस्थितो भिक्षुर्नास्य क्रिया सावद्या विद्यते इत्यक्रिय सवृतात्मकतया सांपरायिककर्माबधक इत्यर्थ । कुत एवभूतो यत प्राणिनामलूषकोऽहिंसकोऽनुपमर्दक इत्यर्थ । तथा न विद्यते क्रोधोयस्येत्यक्रोध एवममानोऽमायोऽलोभः कषायोपशमाच्चोपशांत शीतीभूतस्तदुपशमाच्च परिनिर्वृत इव परिनिर्वृत । एवं तावदैहिकेभ्य-कामभोगेभ्यो विरत पारलौकिकेभ्योऽपि विरत इति दर्शयति । नो आसस इत्यादि । नो नैवाशसां पुरस्कृत्य ममानेन विशिष्टतपसा जन्मांतरे कामभोगावाप्तिर्भविष्यतीति । एवभूतामाशसां न पुरस्कुर्यादित्येतदेव दर्शयितुमाह । इमेण मे इत्यादि । अस्मिन्नेव जन्मन्यमुना विशिष्टतपश्चरणफलेन दृष्टेना मर्षोपघ्यादिना पारलौकिकेन च श्रुतेनार्हद्धर्मिलब्रह्मदत्तादीनां तथा ( मुएणवत्ति ) मनन ज्ञानं जातिस्मरणादिना ज्ञानेन तथाचार्यादेःसकाशाद्विज्ञानेनाऽवगतेन ममापि विशिष्ट भविष्यतीत्येव नाशंसा विदध्यात् । तथाऽमुना सुचरितपो नियमब्रह्मचर्यवासेन तथामुना वा यात्रामात्रावृत्तिना धर्मेणानुष्ठितेनातोस्माद्भवाच्च्युतस्यप्रेत्यजन्मांतरे स्यामह देवस्तत्रभ्यस्य च मे वशवर्तिन कामभोगा भवेयुरशेषकर्माऽवियुतोवा सिद्धोऽदुःखः शुभाशुभकर्मप्रकृत्यपेक्षयेत्येवंभूतोऽह स्यामागामिकाल इत्येवमाशसां न विदध्यादिति । यदि वा विशिष्टतपश्चरणादिनाऽऽगामिनि कालेमणिमालघिमेत्यादिकाष्टप्रकारा सिद्धिर्भविष्यतीत्यनया च सिद्ध्या सिद्धोऽहमदुःखोऽशुभो वाभस्यम्य इत्येवं रूपामाशसां न कुर्यात् । तदकरणे च कारणमाह । एत्थ विइत्यादि । अत्रापि विशिष्टतपश्चरणे सत्यपि कृतश्चिन्निमित्ताद्दुष्प्रणिधानसद्भावे सति कदाचित्सिद्धिः स्यात्कदा चिच्च नैवाशेषकर्मक्षयलक्षणा सिद्धिः स्यात् । तथा चोक्तं ( जेजत्तिया उहेओ, भविस्सते चेव तत्तिया मोपक्ने ) इत्यादि । यदि वाऽणिमाद्यष्टगुणकारणे तपश्चरणादौ सिद्धि स्यात्कदाचिच्च न स्यात् तद्विपर्ययोपि वा स्यादित्येव व्यवस्थिते प्रेक्षापूर्वकारिणां कथमाशंसा कर्त्तु युज्यते इति । सिद्धिश्चाष्टप्रकारेयं

अणिमा १ गरिमा २ लघिमा ३ महिमा ४ प्राप्तिः ५ प्राकाम्यं ६ ईशित्वं ७ वशित्वं ८ यत्र कामावसायित्वमिति । तदेवमैहिकार्थमामुष्मिकार्थं च कीर्त्तिवर्णश्लोकाद्यर्थं च तपो न विधेयमिति स्थितं ॥ ५ ॥ सूत्र० टी० २ श्रु० १ अ० ॥

आसंसाविप्पमुक्क–आशंसाविप्रमुक्त– त्रि० इहलोकाद्यपेक्षया विप्रमुक्ते, प० सू० ॥ ४ ॥ आशंसया विनिर्मुक्तोऽनुष्ठान सर्वमाचरेत् । मोक्षे भवे च सर्वत्र, निःस्पृहो मुनिसत्तमः प्रव० ५ द्वा० ॥

आसंसि(न्)–आशंसिन्– त्रि० आ–शन्स–णिनि–आशंसौ आशंसाकर्त्तरि, स्त्रियां ङीप्–वाच ॥ (भिक्खुत्तो अणासंसी) अनाशंसी श्रोतृभ्यो न वस्त्राद्याकाङ्क्षति–आचा. १ श्रु० ॥

आसंसित्ता–आशंसितृ– त्रि० आ–शस्–तृच्–आविष्करेच्छावति, स्त्रियां ङीप्–वा० ॥

आसंसिय–आशंसित– त्रि० आ–शन्स्–क्त–कथिते, इच्छाविषयीभूते, भावे क्त आशंसायाम् न० वाच० ॥

आसकस–अश्वकर्ण–पुं० अश्वमुखद्वीपात्परतोऽन्तरद्वीपभेदे, (अंतरदीव) शब्दे वित्तिः । स्था ४ ठा० । प्रव २६२ द्वा ॥

आसण–आसन–न० आस्यते उपविश्यतेऽस्मिन्नित्यासनम् आतापनास्थाने, उत्त. २ अ । वसत्यादौ, सूत्र १ श्रु. २ अ । स्थाने, उत्त. १ अ १ उ । वृ ५ उ । आस्यते स्थीयतेऽस्मिन्निति शय्यायां आचा. २ श्रु. ५ उ । पीठफलकादौ आव ४ अ । स्था ७ ठा । नि चू. १ उ. । सम स. २० । आव. ५ अ । आधारलक्षणे धर्मास्तिकायादीनां लोकाकाशादिके, आ. १ अ उपवेशन योग्यनिषद्यादिकं, वृ ३ अ. । विष्टरे, प्रश्न १ द्वा० । हस्त्यासनादिके, जी. ३ प्र. । भग १ श ११ उ । उपवेशने, स्था ७ ठा. ॥

निर्ग्रन्थ्या यादृशानि आसनानि कल्पन्ते तान्याह ।

नो कप्पइ निग्गंथीए ठाणाइयाए हुं तए नो कप्पइ निग्गंथिए पडिमट्ठियाए हुं तए एवं नेसज्जियाए उक्कुडुगासणियाए दंडासणियाए लगंडसाइयाए पलमन्थियाए उत्ताणियाए अन्तरकुब्जियाए एगपासियाए ॥

नो कल्पते निर्ग्रन्थ्याः स्थानाय तया भवितु एवं प्रतिमास्थायिन्या नैषेधिकाया उत्कुटिकासनिकाया वीरासनिकाया दण्डासनिकाया लगण्डशायिन्या अवाङ्मुखाया उत्तानिकाया अन्ते कुब्जिकाया एकपार्श्वशायिन्या इति सूत्राक्षरसंस्कारः ॥

अत्र भाष्यकारो विषमपदानि व्याख्यानयति ॥

उड्ढट्ठाणं ठाणं, यंतं तु पडिमाउ हुंति भासाई ॥
पंचव्वाणिसिज्जाउ, तासि विभासाउ कायव्वा ॥ १ ॥

व्या० । स्थानायतं नामोर्ध्वस्थानरूपमायतं स्थानं तदस्यामस्ति सा स्थानायतिका । केचित्तु (ठाणाइग) मितिपठन्ति तत्रायमर्थः । सर्वेषां निषदनादीनां स्थानानामादिभूतमूर्ध्वस्थानमतः स्थानानामादौ गच्छन्तीति स्थानादिगं तदुच्यते तद्योगादार्यिकापि स्थानदिगेति व्यपदिश्यते । प्रतिमा मासिक्यादिका तास्तु निष्टर्न्तीति प्रतिमास्थायिनी (नेसज्जियायत्ति) निषद्याः पञ्च भवन्ति तासां विभाषा वक्तव्या सा चेयम् निषद्यानामोपवेशनविशेषास्ताः पञ्चविधास्तद्यथा ॥

समपादयुता गोनिषद्यिका हस्तिशुण्डिका पर्यङ्का अर्द्धपर्यङ्का चेति तत्र यस्यां समौ पादौ युतौ च स्पृशत सा समपादयुता यस्यान्तु गौरिवोपवेशन सा गोनिषद्यिका यत्र तु ताभ्यामुपविश्यैक पादमुत्पाटयति सा हस्तिशुण्डिका पर्यङ्का प्रतीता अर्द्धपर्यङ्का यस्यामेकं जानुमुत्पाटयति एव विधया निषद्यया चरतीति नैषधिकी उत्कुटिकासनन्तु सुगमत्वाद्भाष्यकृता न व्याख्यातम् ॥

वीरासनन्तु सीहासणेव जहमुक्कजाणु काणिविट्ठो ॥
दंडे लगंडउवमा, आयतखुज्जायदुण्हंपि ॥ १ ॥

वीरासन नाम यथा सिंहासने उपविष्टोऽभूत्यस्तपाद आस्ते तथा तस्यापनयने कृतेऽपि सिंहासनस्यैव निविष्टे मुक्तजानुकइव निरालंबनेऽपि यदतिदुष्कर चैतदतएव वीरस्य साहसिकस्यासन वीरासनमित्युच्यते तदस्यास्तीति वीरासनिका । दण्डासनिका लगण्डशायिका पदद्वये यथाक्रम दण्डस्य लगण्डस्य चायतकुब्जताभ्यामुपमा कर्तव्या तद्यथा। दण्डस्येवायत पादप्रसारणेन दीर्घं यदासनं तद्दण्डासन तदस्यास्तीति दण्डासनिका । लगण्डं किल दुःसंस्थित काष्ठं तद्वत्कुब्जतया मस्तकपार्ष्णिकानां भुवि लगनेन पृष्ठस्य चालग्नेरित्यर्थः । या तु यथाविध्यभिग्रहविशेषेण शेते सा लगण्डशायिनी । अवाङ्मुखादीनितुपदानि सुगमत्वान्न व्याख्यातानीति द्रष्टव्यम् । एते सर्वेऽप्यभिग्रहविशेषा संयतीनांप्रतिषिद्धा एतान्प्रतिपद्यमानानां दोषानाह ॥

जोणी खुन्भणपिट्ठण, गुरुगा पत्ताणहोइ सइकरण ।
गुरुगासवेन्नगम्मी, कारणे गहनं वग्घरणं च ॥

व्या० । ऊर्ध्वस्थानादौ स्थानविशेषस्थितताया आर्यिकाया योनि क्षोभो भवेत् तरुणा वा यथास्थितां दृष्ट्वा प्रेरयेयुः प्रतिसेवरन् अतएवैतानभिग्राहान् प्रतिपद्यमानायास्तस्याश्चतुर्गुरु भुक्तभोगिनीनां च येन कारणेन स्मृतिकरण इतरासां कौतुकं च जायते तथा वक्ष्यमाणसूत्रे प्रतिषेधयिष्यमाण सवेन्टक तुम्बकं यदि निर्ग्रन्थी गृण्हाति तदा चतुर्गुरु स्मृतिकरणादयश्च त एव दोषाः कारणेतु तस्यापि गृहण धारणचानुज्ञातम् । एतच्चाप्रस्तुतमपि लाघवार्थं स्मृतिकरणादिदोषसाम्यादत्र भाष्ये भाष्यकृताऽभिहितमिति सम्भावयामः ।

अन्यथा वा सुधिया परिभाव्यम् ॥

वीरासणगोदोही, मुत्तं सव्वे वि ताणकप्पन्ति ।
ते पुण पडुच्च चेट्ठं, सुत्ताओआभिग्गहं पप्प ॥

अन्तरोक्तासनानां मध्यात् वीरासन गोदोहिकासन च मुक्त्वा शेषाण्यूर्ध्वस्थानादीनि सर्वाण्यपि तासां कल्पन्ते आह सूत्रे तान्यपि प्रतिषिद्धानि तत्कथमनुज्ञायन्त इत्याह । तानि पुन शेषाणि स्थानानि चेष्टां प्रतीत्य कल्पंते न पुनरभिग्रहाविशेष सूत्राणि पुनरभिग्रह प्राप्य प्रतीत्य प्रवृत्तानि तत इदमुक्तं भवति । अभिग्रहविशेषास्तूर्ध्वस्थानानि संयतीनां न कल्पते। सामान्यत पुनरावश्यकादिचेष्टायां यानि क्रियन्ते तानि कल्पन्ते एवापर आह । ननु चाभिग्रहादिरूप तप कर्म निर्ज्जरणार्थमुक्तं तत किमेव संयतीनां तत्प्रतिषिध्यते उच्यते ।

तओ मोउ अणुन्ना ओ, जेण सेसं न लुप्पइ ।
अकामियं पि पेल्लिज्जा, वारिज्जत्तेण भिग्गहो ॥

व्या० । तपस्तदेव भगवद्भिरनुज्ञातं येन शेष ब्रह्मचर्यादिकं गुणकदंबक न लुप्यते कथपुन शेष लुप्यत इत्याह अकामियमित्यादि । ऊर्ध्वायतादिस्थानस्थितामार्यिकां दृष्ट्वा कश्चिदुदीर्णकर्म्मा नाम कामी काममनिच्छन्तीमपि प्रेरयेत् प्रतिसेवेत

तेन कारणेन वारित एतादृशस्तासामभिग्रहः । किन्तु ॥

जे य दंसादओपाए, जेय संसप्पगा भुवि ।
विव्रुस्स अट्टियातावि, सहन्ति जह संजया ॥

व्या० । इह द्विधा कायोत्सर्गश्चेष्टायामभिभवेत्तत्राभिभव-कायोत्सर्गस्तासां प्रतिषिद्ध इति कृत्वाऽभिधीयते ये च दंश-मशकादयः प्राणिनो ये च भुवि ससर्पकाः सचरणशीला उन्दिरकीटकादयस्ते कृतानुपद्रवान् यथासयता सहन्ते तथा ता अप्यार्यिकाश्चेष्टाकायोत्सर्गस्थिता आवश्यकादि वेलायां सम्यक् सहन्ते तत एव ता अपि कर्मनिर्जरां कुर्वन्ति आह यद्युदीर्णकर्मणा तरुणादिना प्रेर्यमाणापि सा सयती-नामुत्पादयति तत किमिति येनाभिग्रहविशेषेण वहुतरा कर्म निर्जरा भवति सर्वा यत उच्यते ॥

वसिज्जा बंभचेरंसि, भुज्जंमाणी तुकीदितु ।
तदाचित्तं तत्तउंति, थेरा आवयसन्नीरुणो ॥

व्या० । यद्यपि काचिदार्यिका धृतिवलयुक्ता युज्यमाना प्रति सेव्यमानापि भावतो ब्रह्मचर्ये वसेत् तथापि स्थविरा गौतमा दयः सूरयः प्रवचनापयश प्रमादभीरवस्तां न पूजयन्ति नप्र-शसतीत्यर्थः किंच ॥

तिव्वाभिग्गहसंजुत्ता, ठाणमोणासणे रता ।
जहा सुज्झन्ति जयउ, एगाणेगं विहारिणो ॥
लज्जं च बंभचज्जं च, रक्खंतीउतवोरता ।
गच्छे चेव विसुज्जन्ति, तहा अणसणादिहिं ॥

व्या० । तीव्रैर्द्रव्यादिविषयैरभिग्रहैः संयुक्त स्थानमौनासन विशेषेषु रता एकानेकविहारिण कचिदेकाकिविहारिणो जिनकल्पिकादय इत्यर्थः केचिच्चानेकविहारिस्थविरकल्पिका इत्यर्थ एवविधा यतयोयथा शुध्यन्ति तथा निर्ग्रन्थ्योऽपि लज्जां ब्रह्मचर्य च सूत्रोक्ताविधिना रक्षन्त्यस्तपोरता स्वाध्यायादितपः कर्मपरायणा गच्छ एव वसन्त्योऽनशनादिभिर्यथोचितैस्तपो-भि शुध्यन्ति न तीव्रैरभिग्रहैः । अपिच ॥

जोविदिड्ढंधणोहुज्जा, इत्थिविधोनुकेवली ।
वसते सोवि गच्छंती, किमुच्छीवेदसिंघणा ॥

व्या० । योपि दग्धेन्धनो भस्मीकृतवेदमोहनीयकर्मा स्त्रीचिन्हो वहिः स्त्रीलक्षणलक्षित केवली भवति सोऽपिगच्छवासे वसति किंपुनर्या सयती स्त्रीवेदेन सेन्धनासासुतरां गच्छे वसेदिति-भाव । यदप्युक्तं यदि न स्वादयति ततः कोनाम तस्याभिग्रह ग्रहणदोष तदप्ययुक्त प्रतिसेव्यमानाया आस्वादनस्य याद-च्छिकत्वात्कथमिति चेदुच्यते ॥

अलायं घट्टियं ज्झाइ, फुंफुगा सहसायइ ।
कोवितो वड्ढती वाहा, इत्थी वेदेवि सोगमो ॥

व्या । अलात उल्मुक घट्टित चालित सत् यया ध्यायति प्रज्वलति यया फुफुकाघट्टित साहसायति भृश दीप्यते यथा व्याधिरपथ्यासेवनादिना कोपितो वर्द्धते । स्त्रीवेदस्याऽपि समवगमो मन्तव्य सोपि घट्टितः प्रज्वलतीत्यर्थ । अतोयाद च्छिकमास्वादनमिति आह । सयतीनां प्रतिषिद्धा अमी अभिग्रहाः पर सयताना का वार्ता अत्रोच्यते ।

कारणमकारणेघिय, गीयत्थंमिय तहा अमीयंमि ।
एए मच्चे विषए, संजयपक्खे विभासिज्जा ॥

व्या । यान्येतानि व्युत्सृष्टकायिकत्वादीनि पदान्युक्तानि तानि कारणे सिंहादिभिरभिभूतस्य देवताकम्पननिमित्त वा गीता र्थस्याऽगीतार्थस्य वा कल्पन्ते अकारणे पुनरगीतार्थस्य न कल्पन्ते गीतार्थस्य निष्कारणे निर्जरानिमित्त कल्पन्ते अचेलत्वादिकमपि गीतार्थस्य जिनकल्प प्रतिपद्यमानस्य कल्पते एव सयतपक्षे एतान्यचेलतादीनि सर्वाण्यपि पदानि-विभाषयेत । सावश्रयके आसने निर्ग्रन्थीनां ॥

नो कप्पइ निग्गन्थीणं सावस्सयंमि आसणंसि आसइत्त एवा तु अट्टित्तएवा कप्पइ निग्गन्थाणं सावस्सयंमि आसणंसि आसइत्तएवा तु यट्टित्तएवा ।

सावश्रय नाम यस्य पृष्ठतोऽवष्टम्भो भवति । एवविधे आसने निर्ग्रन्थीनां नोकल्पते निर्ग्रन्थानां सावश्रये आसने आसितु वा कल्पते निर्ग्रन्थ्य एतादृशे आसने यद्युपविशति शेरते वा तदा तएव गर्वादयो दोषाश्चतुर्गुरु च प्रायश्चित्त द्वितीयपदे अल्प-सागारिकस्यविरोग्लानो वा उपदिशेत् । निर्ग्रन्थानामपि न कल्पते यद्युपविशन्ति तदा चतुर्लघु सूत्र तु कारणिक तदेव कारणमाह ॥

सावस्सय इत्यादि पश्चार्द्ध योवृद्ध आचार्यः स पूर्वकृते गृह-स्थैस्स्वार्द्ध निष्पादिते सावश्रयेऽप्यासने उपविष्टोऽसागरिके एकान्तेवा यद्विनेयानां वाचनां दद्यात् सत्रम् ॥

नोकप्पइ निग्गयीणं सविसाणंसि पीढंसि वा फलगंसि वा आसइत्तएवा तुयट्टि एवा कप्पइ निग्गंथाणं सविसा-णंसि पीढंसिवा फलगंसि वा आसइत्तएवा तुयट्टित्तएवा ॥

सविषाण नाम यथा कपाटस्योभयत श्रृगे भवतः । एव यत्र भिसिकादौ पीठे फलके वा विषाण शृङ्ग भवति तत्र निर्ग्र-न्थीनामासितुवा न कल्पते निर्ग्रन्थानान्तु कल्पते । निर्ग्रन्थास्तु सविषाणे पीठे फलके वा यद्युपविशन्ति शेरते च तदा चतु-र्गुरुके आज्ञादयश्च दोषा । तथा ॥

सविसाणे उड्डाहो, पात्रमादीयते पडिक्कुट्टम् ।
वितियपए वासासु, कप्पइ भिण्णे विसाणम्मि ॥

सविषाण आसने उपविशन्त्यामार्यिकायामुड्डाहो भवति । पादकर्मादयश्च दोषास्सभवन्ति । तत प्रतिकुष्ट तत्रोपवेशन मितिगम्यते द्वितीयपदे वर्षासु पीठफलकदुर्लभतायां सविषाण मपि गृह्यते तस्य च विषाणच्छित्वा परिगृह्यते एव छिन्ने विषाणे स्थविराया अन्यस्या वा कल्पते ॥

जंतु लज्झइ छित्तुं तं, थेरीणं दलंति सविसाणं ।
इंति यसे दंमपाउं, उणवणमट्टिया एवा ।

यत्र पुन स्थातु न कल्पते तत सविषाणमपि तदात्मन स्थ-विरसाध्वीनां साधवः प्रयच्छन्ति । तद्वियं च दरुपादप्रोञ्छन यन ढादयन्ति । तेनच वेष्टयित्वा स्थूलतर कुर्वन्तीत्यर्थ । मृ-त्तिकया परिवेष्टयन्ति निर्ग्रन्थानां सविषाणमपि कल्पते । पुन इत्याह ।

समणाणउ ते दोसा, न हुंति तेण तडुपणुण्णा य ।
पीढं आसणहेउं, फलगं पुण होइ सेज्जट्टा ।

श्रमणानां पुनस्ते पादकर्मादयो दोषा न भवन्ति तेनो ते अपि पीठकफलके सविषाणेऽप्यनुज्ञाते । तत्र पीठमासनहेतो फलक पुन शय्यार्थं शयननिमित्त वर्षासु गृह्यते । अत्र किमर्थं वर्षास्तु तत्रोपवेशन शयन वा क्रियते उच्याह ॥

कुत्थण आयदयट्ठा, उज्झायग अरिसवायरक्खट्ठा ।
पाणा सीतल दीहा, रक्खट्ठा होइ फलगंतु ।

आर्द्रायां भूमौ स्वाप्यमानाया निषद्याया कथन भवति शीतलायां च भूमावुपविशतां धान्यं न जीर्यति ततो ग्लानत्वेनात्मविराधनोदयार्थं च जीवदयानिमित्तं वर्षाभूमौ नोपवेष्टव्य । (उज्झायगंति) भूमेरार्द्रभावेन मलिनीभूतस्योपधेर्जुगुप्सनीयता स्यात् अर्शांसि वाकुत्स्येयु वातोवाऽधिकतर प्रकुप्येत् ततएतेषां रक्षार्थं पीठक गृहीतव्यं । तथा शीतलायां भूमौवहव पनकप्रभृतय· प्राणिन संमूर्च्छेयुः ततो भूमौ च योनीनां तेषां विराधनाभवति दीर्घजाताया वा भूमेर्निर्गत्य दशेयुरुपलक्षणमिदं । ततोपधिको न जीर्णतादयोऽपिदोषा भवन्ति । एतेषां रक्षार्थं वर्षासु फलकं गृह्यते । वृ. ५ उ० ॥

गुरोः पुरतः आसन विधि ( विणय ) शब्दे वक्ष्यामि ।

सुखस्थिरासनोपेतं-स्थिरसुखमासनमिति पतञ्जलिः द्वा. २२द्वा.

**आसणअभिग्गह**–आसनाभिग्रह–पु० यत्र यत्रोपवेष्टुमिच्छन्ति तत्र तत्रासननयने, पचा० २ वृ. ॥

तिष्ठत एव गुरोरादरेणासनानयनपूर्वकं अत्रोपविशत इति भणने दर्शनविनयभेदे, प्रव० । सम ९१ स । नि चू २ उ. । ध. ३ अधि. ॥

**आसणगय**–आसनगत–त्रि० स्वस्थाने स्थिते, उत्त० । आसनासीने ( आसणग कोण पुच्छे जाणवसेज्जाग ओकयाइवि ) उत्त ।

**आसणचाग**–आसनत्याग–पु० आसनत्यागे, पीठकाद्युपनयने द्वा० २९ द्वा. ॥

**आसणत्थ**–आसनस्थ– त्रि० उत्कुटकागोदोहिकावीरासनाद्यवस्थे, आचा. १ श्रु. ८ अ । ( आसणत्थो पडिरूमारवाहेति ) नि. चू १ उ ।

**आसणदाण**–आसनदान–न० पीठकाद्युपनयने, ध. १ अधि. ।

**आसणपयाण**–आसनप्रदान–न० आसनदानमात्रे दर्शनविनयरूपे विनयभेदे, ग. । नि. चू. ॥

**आसणाणुप्पयाण**–आसनानुप्रदान–न० गौरवमाश्रित्यासनस्य स्थानान्तरसञ्चारणे, भ. १४ श. ३ उ. । पचा. १८ वृ स्था. ७ ठा. ॥

**आसण्ण**–आसन्न–त्रि० निकटवर्तिनि, उत्त० १ अ. । स्था. आ म. पचा. ३ वृ । ध. ३ अधि । आव । प्रत्यासत्तिमति, पो "उज्जेणीए नयरीए आसन्नेणमाणं गामा" आ म ॥

**आसण्णगन्थपइन्न**–आसन्नग्रन्थप्रतिज्ञ–त्रि० परतीर्थीकादीनामुत्तरदानसमर्थे, ग. १ अधि. । सूत्रै प्रव ॥

**आसण्णसिद्धिय**–आसन्नसिद्धिक–त्रि० समासन्नीभूतनिर्वृत्तिके, पं० ॥

**आसतर**–अश्वतर–पु० वेसरे, ध० नि चू० ॥

**आसत्त**–आसक्त–त्रि० भूमिलग्ने ज्ञा. भूमौ सवासे न० ॥

**आसत्ति**–आसक्ति–स्त्री० योगिपरिभाषितेऽर्थे ज्ञा. भेदे स्था. व्याधिस्त्यैकुंततांधत्वजरूताजिघ्रतामूकताकौण्यपंगुत्वक्लैब्योदा – वर्तमत्तनाङ्पैकादशेन्द्रियवधतुष्टिनवकविपर्यंयसिद्ध्यष्टकविपर्ययलक्षणमलदशयुद्धिभेदादष्टाविंशतिधासक्तिः ॥

**आसत्तोसत्त**–आसक्तोत्सक्त–त्रि० आ अर्वाक् अधो भूमौ सक्त सामन्तो भूमौ लग्न इत्यर्थः ऊर्ध्व मन:सक्त: भूमौ लग्नोपरि च सक्त्, जी० । कल्प० ।

**आसत्थ**–अश्वत्थ–० पु न० पिप्पले नि० चू० स० ॥

**आसत्थ**–आश्वस्त–त्रि० मार्गजनितश्रमापनयनेनाश्वस्थतामुपगते, कल्प० भ०११ श.उ. ११ मनागाश्वसित ओ० ( आसत्था मजाव करपल समोसरह ) ज्ञा० ।

**आसदेत्ता**–आस्वाद्य–अव्य० आस्वादनं कृत्वेत्यर्थे ( सद्दफरिस रसरूवगन्धे आसदेत्ताभवइ) स्था. ७ ठा. ।

**आसधर**–अश्वधर-पु. अश्वधारकपुरुषे, औ. येऽश्वान् धारयन्ति ।

**आसपुरा**– अश्वपुरा–स्त्री पद्मविजये पुरीयुगले, स्था(. दो आसपुराओ ) स्था. ८ ठा०

**आसम**–आश्रम–पु० तापसावसथोपलक्षिते आश्रयविशेषे, व्य० दर्श. जी प्रथमस्तापसादिभिरावासित पश्चादपरोऽपिलोकस्तत्र गत्वा वसति वृ. नि. चू प्रश्न. औ. आचा. अनु. तीर्थस्थाने, च. स्था. ॥

(ब्रह्मचारी गृहस्थश्च वानप्रस्थोयति स्तथा) इति चतुर्षु लोक प्रसिद्धेषु अवस्थाविशेषभाक्षु मनुष्येषु ।

**आसमद्दग**–अश्वमर्दक-त्रि. घोटकानां मर्दनाधिकारिणि पुरुषे. ज्ञा ।

**आसमपय**–आश्रमपद–न तापसाश्रमोपलक्षिते स्थाने. उत्त. (कणखल नाम आसमपद) आ. म द्वि. ।

**आसमभेय**–आश्रमभेद–पु० " ब्रह्मचारी गृहस्थ श्चवानप्रस्थोयतिस्तथेत्यादिनोक्तस्वरूपे भूमिकाविशेषे, पचा० १० वृ ।

**आसमाण**–आसीन–त्रि०निषण्णे,(अजयं आसमाणोय पाण भूयाहिंहिंसइ ) आसीनो निबन्धतयाऽनुपयुक्त आकुंचनादि भावेन. । द० ४ अ ।

**आसमि**–आश्रमिन्–पु० लिङ्गिनि, पं. व. १ द्वा. ।

**आसमित**–अश्वमित्र–पु० सामुच्छेदानां निन्हवानां धर्माचार्ये, योहि महागिरिशिष्यस्य कौडिन्याभिधानस्य शिष्यो मिथिलाया नगर्यां लक्ष्मीगृहेचैत्ये अनुप्रवादाभिधाने पूर्वे नैपुणिके वस्तुनि छिन्नच्छेदनाय वक्तव्यतायां ( पडुप्पन्नसमया नेरइया वोच्छिज्जिस्सन्ति एवं जाव वैमाणियात्ति एव वितियाइ समए वुवत्तव्व ) मित्येवं रूपमालापकमधीयानो मिथ्यात्वमुपगतः सामुच्छेदिकनिन्हवान् प्रावर्तयत् इति समुच्छेदिकशब्दे विवृत्यर्थिनाऽन्वेष्टव्य· ॥ स्था० ७ ठा. । उत्त. १ अ विशे. ॥

**आसमुह**–अश्वमुख–पु० आदर्शमुखद्वीपस्य परतोऽन्तरद्वीपे, तत्स्थे मनुष्ये च अन्तरद्वीपशब्दे विवृत्तिः उत्त. ३६. अ. । प्रव । २६२ द्वा. । स्था. ४ ठा. ॥

**आसय**–आशक–त्रि० भोजिनि, आचा० ५ अ. ४ उ. । आशय स्वकीयदर्शनाद्युपगमे, सूत्र० १श्रु १ अ. । परिणामे, द्वा-२८ द्वा० । अभिप्राये, सूत्र, १ श्रु. १५ अध्यवसायविशेषे, पो० ३ विव. ।

प्रणिधिप्रवृत्तिविघ्नजय, सिद्धिविनियोगभेदत प्रायः ।
धर्मज्ञैराख्यात शुभाशय· पचधात्र विधौ ॥६॥

प्रणिधानादिरधिकृतस्तमेव संख्याविशिष्ट नामग्राहमाह । ( प्रणिधीत्यादि ) प्रणिधिश्च प्रवृत्तिश्च विघ्नजयश्च सिद्धिश्च विनियोगश्च एतएव भेदास्तानाश्रित्य कर्मणि ल्यब्लोपे पचमी । प्रणिधिप्रवृत्तिविघ्नजयसिद्धिविनियोगभेदत प्राय इति

प्राचुर्येण शास्त्रेषु धर्मज्ञैर्धर्म्मवेदिभिराख्यातः कथितः शुभाशयः शुभपरिणामः पञ्चधा पञ्चप्रकारः। अत्र प्रक्रमे विधौ कर्त्तव्योपदेशे। प्रतिपादिताशयपञ्चकव्यतिरेकेण पुण्यशुद्धिद्वय लक्षणरूपमनुबन्धि न भवतीति प्रणिधानादिना स्वरूपमन्यत्र दृष्टादृष्टजन्मवेदनीये कर्माशये क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः षो० टी० छा० ॥

आश्रय– पु० आश्रयतीत्याश्रयः धूमवलाकादौ हेतौ, अनु०। प्रत्यये, आचा. १ अ.। आधारे, अष्ट। आलये, स्था. ३ ठा.। भजनीये, ज्ञा० १० अ.॥

आस्यक– न० मुखे, ज्ञा० ए अ. । जी । आचा.( आसेणनात्थि डुरो ) आस्येन मुखेन द० ५ अ ॥

आसयंत–आश्रयत्–त्रि० गृण्हति, विशे. ईषद्भजमाने भ १३ श. ६ उ. आश्रयणीयं वस्तु. भ ११ श ११ उ. ॥

आसयभेय–आशयभेद–पु० अध्यवसायविशेषे, कथमयं वराकोधर्मकान्तारोत्तरणेन निखिलासुखविरहभाजनं भविष्यतीत्यादिरूपे, प्रति० ॥

आसयमहत्त–आशयमहत्व– न० आशयस्य विपुलत्वे, षो० १ वि० ॥

आसयविसेस–आशयविशेष– पु० चित्तोत्साहातिशये, छा० २१ छा० ॥

आसरयण–अश्वरत्न– न० चक्रवर्तिनोऽश्वोत्कृष्टे, यक्षसहस्राधिष्ठितेऽश्वे, स० १४ स० ॥

भरतस्य कमलामेलं णामेणं आसरयणं सेणावईकमेणं समभिरूढे। जं० आ० चू० १ स० ॥ स्था० ७ ठा० ॥ प्रज्ञा० १ए पद ॥

अश्ववर्णकः

तएणं तं असीइमंगलमूसिअं णवणउइमंगुलपरिणाहं अट्ठसयमंगुलमायतं बत्तीस मंगुलमूसिअसिरं चउरंगुलकण्णगं वीसइ अंगुल बाहागं चउरंगुलजाणूकं सोलस अंगुल जंघागं चउरंगुलमूसिअखुरं मुत्तोलीसंवत्त वलिअमज्झं ईसिं अंगुलपणपट्ठं संगयपट्ठं सण्णयपट्ठं सजायपट्ठं पसत्थपट्ठं विसिट्ठपट्ठं एणी जण्णुणय वितयघट्टपट्ठं वित्तलयकसणिवायअं केल्लणप्पहारपरिवज्जिअंगं तवणीज्जथासगमहिलाणं वक्खण सुफुल्लथासगविचित्तरयणरजुपासं कंचण मणि कणग पयर गणाणाविह घंटिआ जालमुत्तिआ जालएहिं परिमंडिएण पट्टेण सोभमाणेण सोभमाणकट्टेयण इंदनीलमरगयमसारगल्लमुहमंडरइअ आविद्धमाणिक्कसुत्तग विभूसिअं कणगमय पउम सुकयतिलकं देवमइविकप्पिअं सुरवरिंदवाहणज्जोगं वयं सुरूवं दुइज्जमाण पंचवाह चामरा मेलगं धरेंतं अणब्भवाहं अभेलणेयण कोकासी अवहलपत्तलच्छसेया वरणवकएणगतविअतवणिज्ज तालुज्जी हासयंसि आभिसेअघोणं पोक्खरपत्तामिव, सलिलविन्दु अचंचलं चंचल सरीरं चोक्खचरगपरिव्वायगो विवहिलीयमाणं २ खुरचलणचंचु पुरोहिं धरणिअलं अभिहणमाणं २ दोवि अचलणेजमगसमगं मुहाओ विणिग्गमंतं च सिग्घयाए मुणालतंतु उदगमविणिस्साए पक्कमंतं जाइकुलरूवपच्चयपसत्थवारसावत्तकविसुद्धलक्खणं सुकुलप्पसूअं मेहाविं भद्दयं विणीयं अणु असुकुमाललोमनिद्धच्छविं सुजायं अमरमणपवणगरुलजइणं चंवलसिग्घगामिं इसिमिव, खंतिखमाए सुसीसमिव, पच्चक्खया विणीयं उदगहुतवहपासाणं कद्दमसक्कर सवालुइल्ल तडकडगविसमपन्भार गिरिदरीत्यासु जघण पिल्लणणिरणासमत्थं अचंडपाडिअं दंडपातिअणं सुपाति अकालतालु च कालहेसिं जिअनिद्दं गवेसं जिअपरिसहं जच्चजातीयमल्लिहाणिं सुगपत्त सुवण्णकोमेलाभिरामं कमलामेलं णामेणं आसरयणं ॥

टीका ॥ तएणं त असीइमगुलमूसिअ इत आरभ्य सिणावइक्कमेण समभिरूढे इत्येतदन्तेन सूत्रेण पदयोजना । तत इति-क्रियाक्रम सूचक वचन त प्रसिद्धगुण नाम्ना कमलामेलं अश्वरत्नं सेनापतिक्रमेण सन्नाहादिपरिधानविधिना समभिरूढ आरूढः किंविशिष्टमित्याह। अशीत्यगुलानि उच्छ्रितं अंगुल चात्र मानविशेषः। नव नवत्यगुलानि एकोनशतांगुलानि एकोनशतांगुलप्रमाणः परिणाहो मध्यपरिधिर्यस्य तत्तथा। अष्टोत्तरशतांगुलानि आयतं दीर्घ सर्वत्र मकारोऽलाक्षणिकः । तुरङ्गाणां तुंगत्व खुरतः प्रारभ्य कर्णावधि परिणाहः पृष्ठपार्श्वोदरांतरावधि। आयामो मुखादिपुच्छमूल। यदाह पराशर । मुखादापुच्छक दैर्घ्यं, पृष्टपार्श्वोदरांतरात् । आनाह उच्छ्रयः पादा, दिज्ञेयो यावदासनम् ॥ १ ॥ तत्रोच्चत्वसंख्यामेलनायसाक्षादेव सूत्रकृदाह॥ द्वात्रिंशदंगुलोच्छ्रितशिरस्कं चतुरंगुल ( वत्तीसमित्यादि)। द्वात्रिंशदगुलप्रमाण कर्णकं ह्रस्वकर्णत्वस्य जात्यतुरगलक्षणत्वात्। अनेन कर्णयोरुच्चत्वेनास्थिरयौवनत्वमभिहित शकुकर्णत्वात् हयानां यौवनपाते वनितास्तनयोरिव अनयोः पातः स्यात्। दीर्घत्वात् अत्र योजनीयाः क्रमप्राप्त धान्येन पूर्वकर्णविशेषण ज्ञेय पश्चाच्छिरस्' अश्वश्रवसोरूर्ध्वं मुद्यतरत्वात् विंशत्यगुलप्रमाणा वाहा' शिरोभागाधोवर्ती जानुनोरुपरिवर्ती प्राक् चरणभागो यस्य तत्तथा। चतुरगुलप्रमाणं जानु वाहुजघासधिरूपोऽवयवो यस्य तत्तथा । षोडशांगुलप्रमाणा जघा या च सख्या पूर्वोक्ता असीवर्ती खुरावधिरवयवौ यस्य न त्तथा चतुरगुलोच्छ्रिताः खुराः पादतलरूपा अवयवा यस्य त त्तथा। एषामवयवानामुच्चत्वमीलने सर्वसख्या पूर्वोक्ता अशीत्यगुलरूपा मकार सर्वत्रालाक्षणिकः। यतु श्रेष्ठाश्वमानमाश्रित्यालौकिकपराशरग्रथे " जघन्यमध्यश्रेष्ठानामश्वानामार्यातिर्भवेत्। अंगुलानां शत हीन विंशत्या दशभिस्त्रिभि १ परिणाहाङ्गुलानि स्यात् सप्तति सप्तसप्तति' । एकाशीति' समासेन त्रिविधस्याश्वयाक्रमम् २ तथा षष्टिश्चतुष्षष्टिरष्टषष्टि समुच्छ्रय । त्रिपचसप्तकयुता विंशति स्यान्मुखायति ३ इत्यत्र सप्तनवत्यगुलान्यायति एकाशीत्यगुलानि परिणाह' अष्टषष्ट्यं गुलानि समुच्छ्रय सप्तविंशत्यङ्गुलानि मुखायतिरित्युक्तमस्ति तदपरश्रेष्ठहयानाश्रित्य । ननु चक्रवर्तिरत्नमाश्रित्य दृष्टश्चायं विशेषः। पुरुषोत्सेधे सामुद्रिके उत्तमपुरुषाणामष्टोत्तरशतांगुलान्युत्सेध । उत्तमोत्तमानां तु विंशत्युत्तरशताङ्गुलानि अनेनास्य प्रमाणोपेतत्व सूचितं । सम्प्रत्यवयवेषु लक्षणोपेतत्व सूचयति। मुक्तोली नाम अध उपरि च सङ्कीर्णा मध्ये-

त्वीपविशाला कोष्ठिका तद्वत्संवृत्तं सम्यग्वर्तुलं वलितं नमनस्वभाव न तु स्तब्धमध्यं यस्य तत्तथा । परिणाहस्यमध्यपरिभिरूपस्य चैव चिंत्यमानत्वाडुचितेयमुपमा । ईषदंगुलं यावत्प्रणत न तु प्रारब्धं अतिप्रणतस्योपवेष्टुर्दु:खावहत्वात् पृष्ठे पर्यायस्थानं यस्य तत्तथा आरोहकसुखावहपृष्ठकमित्यर्थः । सम्यग् यथा क्रमेण नत पृष्ठ यस्य तत्तथा । सुजातं जन्मदोषरहितं पृष्ठं यस्य तत्तथा । प्रशस्तशालिहोत्रलक्षणानुसारि पृष्ठं यस्य तत्तथा । किंवहुना विशिष्टपृष्ठ प्रधानपृष्ठमिति यावत् । उक्त पृष्ठे पर्याणस्थानवर्णन । अथ तत्रैवावशिष्टभागं विशिनष्टि । एणी हरिणी तस्या जानुवदुन्नतं उभयपार्श्वयोर्विस्तृतञ्च चरमभागे स्तब्ध सुदृढं पृष्ठं यस्य तत्तथा । वेत्रो जलवंश लता वा कशा चर्म्मदण्डस्तेषां निपातास्तैस्तथा अंकेल्लणप्रहारैस्तर्जेकविशैषाघातैश्च परिवर्जितं अश्ववारमनोऽनुकूलचारित्वात् अग यस्य तत्तथा । तपनीयमयाः स्थासका दर्प्पणाकारा अश्वालकारविशेषा यत्र तदेवंविध अहिलाणं मुखसंयमनविशेषो यस्य तत्तथा । वरकनकमयानि सुष्ठुशोभनानि पुष्पाणि स्थासकाश्च तैर्विचित्रा रत्नमयी रज्जुः पार्श्वयोः पृष्ठोदरान्तवर्त्यवयवविशेषयोर्यस्य तत्तथा । वध्यंते पट्टिकाः पर्याणदृढीकरणार्थमश्वानामुभयोः पार्श्वयोरिति कांचनयुतमणिमयानि केवलकनकमयानि च प्रतरकाणि पत्रिकाभिधानभूषणानि अन्तरान्तरीयेषु तानि तथाभूतानि नानाविधानि घटिकाजालानि मौक्तिकजालकानि च तै परिमंडितेन पृष्ठोन शोभमानकर्केतनादिरत्नमय मुखमंडनार्हे रचित आविद्धमाणिक्य प्रोतमाणिक्यसूत्रक हयमुखभूषणविशेषणविशेषस्तेन विभूषित कनकमयपद्मेन सुष्ठु कृतं तिलक यस्य तत्तथा देवमये न स्वर्गिचातुर्येण विविधप्रकारेण कल्पितं सर्जितं । सुरवरेन्द्रवाहनमुच्चैःश्रवा हयस्तस्य योग्य मरुलकरणाभ्यासस्तस्या भजगतावित्यस्य लघुप्रत्यये भजन प्रापकं । ये गत्यर्थास्ते प्राप्त्यर्थाः इतिवचनात् । अयभाव । यादृग खुरली अयमुच्चैःश्रवाः करोति तादृशोऽयमपि । अत्र षष्ठ्यर्थे द्वितीया प्राकृतत्वात् । यथासरूप सुदर रूवति इतस्ततो दोलायमानानि सहजचचलाङ्गत्वाङ्गलनालमौलिकर्षकृयमूलविनिवेशितत्वेन पंचसख्याकानि यानि चारूणि चामराणि तेषां मेलक एकस्मिन् मूर्द्धनि सगमस्तधरन्हतत्वामरा इत्यत्र स्त्रीनिर्देश समयसिद्ध एव । गौडमतेन धा चामरा इत्यादन्त शब्द । अत्रापीमशब्दे व्याख्यायमाने मूर्द्धालकारएवोक्तोभवति नतु कर्णाद्यलंकार दृश्यतेलोके एकचामर मूर्धालकारभूत चामर एकच कर्णालंकारभूत एकचमालालकारभूत एक च कंगलकारभूतामिति तेनयथोक्तव्याख्यानमेव सुन्दर । अथ देवमतिविकल्पितादिविशेषविशिष्ट उच्चैःश्रवानामशब्दयोग्योऽपिस्यादित्याह । अनभ्राचारीवाहोऽश्व उच्चैःश्रवास्तदन्य ( अदभ्रवाहमिति ) पाठे तु अदभ्र भूरि वहतीतिअदभ्रवाहस्तन् अमेलेदोषादिना असंकुचिते नयने यस्य तत्तथा । अनण्व कोकासिते विकसिते धवले दृढे अनश्रुपातित्वात् पद्मले पक्ष्मवती नतु पैद्दलुमिरोगवशाल्लोमरहिते अक्षिणी यस्य तत्तथा । सदावरणे शोभार्थे दंशमशकादिरक्षार्थे या प्रच्छादनपटेन च कनकानि नव्यवस्तुवर्णानि यस्य तत्तथा । स्वर्णतनु स्यूतप्रच्छादनपटमित्यर्थः । तप्त तपनीय तद्वद्रणे तालुजिह्वे यत्र तदेव विश्रमास्यं यस्यतत्तथा । तत एवंविशेषणेन कर्मधारयः । श्रीकाया लक्ष्म्या अभिषेकोऽभिषेचनं नाम शारीरलक्षण घोणायां नासिकायां

यस्य तत्तथा । क्वचित्पाठान्तरेतु (सिरिसातिसे अघोण)मिति दृश्यते तत्र शिरीषं शिरीषपुष्पं तद्वदतिश्वेताघोणायस्योति तथा पुष्करपत्रमिव कमलदलमिव सलिलस्य विन्दवोयत्र तदेवं विधं कोऽर्थः यथा पुष्करपत्र जलान्तस्य वाताहतजलविन्दुयुत भवति । तथैतदपि सलिलं पानीयं लावण्यमित्यर्थः । तस्य विन्दवः लवास्तैर्युतं विन्दुग्रहणेनाऽत्र प्रत्यंग लावण्य सूचितं लोकेऽपि प्रसिद्धमेतत् । मुखेऽस्य पानीयमिति अचच लं स्वामिकार्यकरणे स्थिर साधुवाहित्वात् चंचलं शरीरं जातिस्वभावात् । अथ यदि चंचलाङ्गस्तदायुर्मेध्यवस्तुस्वापिस्वाङ्गप्रवर्तको भविष्यतीत्याह । चोक्षः कृतस्नानश्चरको धाटिभिक्षाचर परिव्राजको मस्करी ततश्चरकसहितः परिव्राजकश्चरकपरिव्राजकः प्रथमा द्वितीयार्थे । नचोक्तपरिव्राजकमिव प्राकृतशैल्याअकारप्रश्लेषादमिलीयमान २ अश्रुभिः संसर्गशंकया आत्मान सवृण्वान्ति आभीक्ष्ण्ये चात्र द्विर्वचनम् ।

एवमग्रेऽपिभाव्यं । अथाऽस्य क्रियाविशेषैर्जात्यत्व लक्षयति । खुरप्रधानाश्चरणाःखुरचरणास्तेषां चंचुपुटा आघातविशेषास्तैर्धरणीतलमभिघ्नन्दनुभूतविलेखनं सामान्यतः पुंसइवाऽश्वस्योपलक्षणमिति एतस्य लक्षणत्वेन शालिहोत्रे प्रतिपादनाद्यतः "खुरैःखनेद्य पृथिवी मश्वोलोकोत्तरः स्मृतः" इति । अश्ववारप्रयोगनर्तितोहिहयोग्रपादावुद्दस्यति तथास्यशक्तिविशेषणद्वारेण दर्शयति द्वावपि च चरणौ यमकसमक युगपन्मुखाद्विनिर्गम दिव निस्सारयदिव कोऽर्थः । इदमग्रपादावूर्ध्वं नध्नत्तथा मुखान्तिकं प्रापयति यथा जन उत्प्रेक्षते इमौ मुखाद्विनिर्गमयाति पुनः क्रियांतरदर्शनेनैतद्विशिनष्टि । शीघ्र तया लाघवविशेषेण मृणाल पद्मनाल तस्य ततुः सूत्राकारोऽव यवविशेषः सच उदक च ते अपि निश्रयावलब्य आस्तामन्य दुर्गादिक प्रक्रामत् सचरत् । अयमर्थः । यथा अन्येषां संचरिष्णूनां मृणालततूदकादावष्टमकेन भवतः तथा नास्येति सूत्रे चैकवचनमार्षत्वात् तथा जातिर्मातृपक्ष कुलं पितृपक्षः रूपं सदाकारसंस्थानं तेषां प्रत्ययो विश्वासो येष्यस्ते च ते प्रशस्ताः प्रदक्षिणावहत्वात् शुभस्थानास्थितत्वाच्च ॥ येद्वादशावर्तास्ते यत्र तत्तथा बहुव्रीहिलक्षणः क प्रत्ययः । विशुद्धा निर्दोषा मिश्रितानि लक्षणानि अश्वशास्त्रप्रसिद्धानि यस्य तत्तथा । तत पदद्वयस्य कर्मधारय । द्वादशावर्ता अश्व इमे वराहोक्ताः । "ये पाणि गलकर्णसस्थिताः पृष्ठ मध्यनयनोपरि स्थिता । ओष्ठसक्थिभुजकुक्षिपार्श्वगास्तेललाटसहिता सुशोभनाः ॥ १ ॥ अस्यवृत्तिलेश । प्रपाणमुत्तरोष्ठतल गल कठ यत्र स्थित आवर्तो देवमणिनाम हयानां महालक्षणतया प्रसिद्धः । कर्णौ प्रतीतौ एतेषु स्थानेषु संस्थितास्तथेष्टपर्याणस्थान मध्य प्रतीतं । नयने अपि तथैव तदुपरि स्थिता तथा ओष्ठौ प्रतीतौ । सक्थिनी पाश्चात्यपादयोर्जानूपरिभागभुजौ प्राक्पादयोर्जानूपरिग कुक्षि रत्नवामो दक्षिणकुक्ष्यावर्तस्य गर्हिततत्वात् ॥ पार्श्वौ प्रसिद्धौ तद्गताः ललाट प्रतीत तदावर्तनासहिता अत्र कर्ण नयनादिस्थानानां द्विसंख्याकत्वेऽपि जात्यपेक्षतया द्वादशैव स्थानानि स्थानभेदाऽनुसारेण स्थानिभेदा अपि द्वादशैवेति ॥ तथा सुकुलप्रसूत हयशास्त्रोक्त क्षत्रियाश्च पितृक मेधावी स्वामी पदसंज्ञादि प्राप्तार्थां धारक अदुष्ट विनीत स्वामीप्रकारित्वात् । अणुकतनुकानामतिसूक्ष्माणां सुकुमालानां लोम्नां स्निग्धा छवि यत्र तत् तथा । सुष्ठु यान गमन यस्य तत्तथा । अमरमन पवनगरुडाःप्रतीता तान् वेगाधिक्ये न जयतीति अमरमनः

पवनगरुडजायि अतएव चपल शीघ्रगतिकं पश्चात्पदद्वयस्यक मधारयः। क्षान्त्या क्रोधाभावेन नत्वसामर्थ्येन या क्षमा तया ऋषिमिवानगारमिव क्षमाप्रधानत्वात्तस्य न चरणयोर्घातादा यक । न तु मुखेन दंशकं न च पुच्छाघातकरमिति । सुशिष्यमिव प्रत्यक्षतो विनीत । अत्र ताकार· प्राकृतशैली भवस्तेन प्रत्यक्षविनीतं । उदकं हुतवहोऽग्नि· पाषाणः पांशु· रेणुः कर्दम· शर्करं सवालूपवालुकं स्थान सवालुकं । अत्रार्थे श्लप्रत्ययः । बहुलसिकताकणं स्थानं तट नदीतट कटको गिरिनितम्बविषमप्राग्भारौ प्राग्वत् । गिरिदर्यः प्रतीताः । तासु लघनमतिक्रामण प्रेरण आरुढस्य पुसोऽभिमुखे दर्शनधावना दिना संज्ञाकरणपूर्वक प्रवर्तनं निस्तारणा तत्पारप्रापणा तत्र समर्थना चण्डरुद्रैः सुभटैः रणापातितदरुवत् पततीत्येवंशील दरुपाति अतर्कितमेव प्रतिपक्षं स्कधावारे पतनशीलं अनेना ऽस्योत्पतनस्वभावोऽपि सूचितः । मार्गादिखेदेष्वपि नाश्रुपातय तीत्येवं शीलमनश्रुपाति तन्ना अकालतालु अश्यामतालु पूर्वं रक्तावर्णितेऽपि यत्पुनरकालतालु इति विशेषण तत्तालुनः श्यामत्वमतीतरामपलक्षणमिति तन्निषेधख्यापनार्थ च· समु- च्चये । कालेऽराजकानां राजनिर्णयार्थकाधिवासनादिके समये न्हेषते शब्दायत्येव शील कालन्हेषि जितानिद्रावालस्ययेन तत् जितनिद्रं । त्यक्तालस्यमित्यर्थ· । कार्येष्वप्रमादित्वात् यथा श्रुतार्थे व्याख्यायमाने हयशास्त्रविरोधस्तथाहि । "सदैव निद्रा वशगा, निद्रा च्छेदस्य संभव । जायते संगरे प्राप्ते, कर्मा रस्य च भक्षणे " इति । यद्वा जितनिद्रत्वं समावसरप्राप्तत्वा दश्वरत्नत्वेनाल्पनिद्राकत्वाच्च । तथा गवेषकं मूत्रपुरीषोत्स- र्गादौ उचितानुचितस्थानान्वेषकं । जितपरिषह शीता तपाद्यातुरत्वेऽपि अखिन्न जात्य प्राधान्या जातिर्मातृपक्षस्तत्र भव जात्य जातीय निर्दोषकमित्यर्थः । निर्दोषपितृकत्व तु प्रागुक्त । ईदृग्गुणयुक्तो हि समये स्वामिने न द्रुह्यति मातृमुखा वगतस्वकारणत्वात् व्यतिकर प्रकुपितचिन्तितस्वामिद्रोहकाधि शोरवत् मल्लिविचकिलकुसुम तद्वत्शुभ्रं श्लेष्मत्वेनाना विलिप्तपूतिगाधिच घ्राण पायो यस्यतत्तथा । इकार प्राकृत शैली भव । ततः पूर्वपदेन कर्मधारयः । शुकपत्रवत् शुक पिच्छवत् सुष्ठुवर्णो यस्य तत्तथा । कोमलत्व कायेन तत. पदद्वयस्य कर्मधारयसमास' मनोभिराममम् । ज टी ॥

आसरह-अश्वरथ-पु० अश्वप्रधानो रथोऽश्वरथः ज्ञा०१अ अश्व युक्तोरथोऽश्वरथ । अश्वेन युक्ते रथे, ( चाउग्घट आसरयण दुरुहे ) नि० चू० १३ अ. ।

आसराय-अश्वराज-पु० अणहिलपट्टननगरे जाते पैरपाटकुल मण्डने गुर्जरधराधिपतौ, । अणहिल्ल वाडघपट्टणे य पोरवाल कुलमरुणा आसराय कुमरदेविलणया गुज्जरधराहिवई । प्रधानेऽश्वे, स्या० ५ ग० ।

आसव-आसव-पु० अप्कायतेजस्कायपवनवनस्पतिकायादि पिण्डरूपे । पिं० । मूलदलखर्जूरसारानिष्पन्ने, प्रज्ञा० पत्रादि- वासकद्रव्यभेदादनेकप्रकारे निर्यासमारे, जी० मादकरसे अष्ट कुसुमोत्पन्ने मद्ये उत्त० । चन्द्रहासादिके, रा० ।

आश्रव-आ-श्रवति यत् क्षरति जल यैस्ते आश्रवा सूक्ष्म रन्ध्रेषु भ० । अश्नोत्यादत्ते कर्म्म यैस्ते आश्रवा । धर्म० । आश्रवति प्रविशति कर्म्म येन स आश्रव । सूत्र० । आश्रवति अष्टप्रकारकं कर्म्म येन स । श्रा० । सम्म० । आश्रीयते उपा- र्ज्यते कर्म्म एभि' इत्याश्रवा । प्रव० । उत्त० । प्राणातिपात मृषावादादत्तादानमैथुनमिथ्यात्वादिषु । आव । परिग्रह लक्षणेषु वा. । आचा० । रा० । विषयकषायादिकेषु वा । आचा० । श्रो० । सू० । कर्म्मप्रदेशद्वाररूपेषु० । सू० पापोपादानकारणेषु । ग० । औ० । रागे-आसवे । आश्रवति प्रविशन्ति येन कर्म्माण्यात्मनीति आश्रवा' कर्म्महेतुरिति भावः । स्था० । ग० । ( एगे आसवे ) आश्रवति प्रविशति येन कर्म्माण्यात्मनीति आश्रवः कर्म्मबन्धहेतुरितिभावः । सर्वेन्द्रियकषाया व्रतक्रियायोगरूपक्रमेण पंचचतुः पचपच- विंशतिभेदः । उक्तञ्च । इन्दिय ५ कसाय ४ अव्वय ५ किरिया २५ पण चउ अपच पणवीसा । जोगतिपणेव भवे आसो भेयाउ वाया लत्ति । तदेवमय द्विचत्वारिंशति- द्विधोऽथवा द्विविधो द्रव्यभावभेदात्तत्र द्रव्याश्रवो यज्जला- न्तरगतनावादौ तथविधपरिणामेन छिद्रैर्जलप्रवेशनामावा आश्रवस्तु यज्जीवानाम्यचेन्द्रियादिछिद्रतः कर्म्मजलसचय इति सावाश्रव सामान्यादेक एवेति । सम० । स्था० ॥ आचा० । कर्म० प्रव० ।

जे आसवाते परिस्सवा । आचा० ।

य इति सामान्य निर्देश आश्रवत्यष्टप्रकार कर्म्म यैरारम्भै- स्ते आश्रवाः परिसमन्तात्श्रवति गच्छति यैरनुष्ठानविशेषैस्ते परिश्रवाः यएवाश्रवाः कर्मबन्धस्य स्थानानि तएवपरिश्रवाः ॥ कर्मनिर्जरास्पदानीदमुक्तं भवति । यानीतरजनाचरितानि स्र- गगनादीनि सुखकारणतया तानि कर्मबन्धहेतुत्वादाश्रवा' पुनस्तान्येव तत्वविदां विषय सुखपराङ्मुखानां निस्सारतया ससारसरणिदेश्यानीति कृत्वा वैराग्यजनकान्यत परिश्रवा निर्जरास्थानानि आश्रवतीत्याश्रव· कर्म बन्धके आचा० ४ अ० ६ उ. । आश्रवति तान् शोभनत्वेनाशोभनत्वे वा गृह्णातीत्या- श्रवा' । सूत्र० १ श्रु० १४ अ आ समन्तात् शृण्वंति गृण्हर्तं। गुरुवचनमाकर्णयतीत्याश्रवा· उत० १ अ गुरुवचने स्थित । आश्रवो वचने स्थित इति हैमः उत० १ अ. ।

आसवणिरोहभाव-आश्रवनिरोधभाव-पु० आश्रवस्य कर्मा दानहेतोरविरतलक्षणस्यान्तरार्थस्य निरोधो निषेधो यस्तस्य यो भाव· सत्ता स तथा सवरसत्वे, पचा० । द्वा० ।

आसवदार-आश्रवद्वार-न० । आस्रवण जीवतडागे कर्मजल- स्य सगलनमाश्रव कर्मबन्धनमित्यर्थ' । तस्य द्वाराणीव द्वाराणि उपाया आश्रवद्वाराणि स्था० ५ ग० । कर्मोपादानोपायेषु मिथ्यात्वादिषु, । स. १ स ।

पंच आसवदारा । प० मिच्छत्तं अविरई पमाया कसाया जोगा ॥ आव० १ अ० ॥

आ० चू० । प्राणातिपातादिषु । स्था० । आव । आचा ० ।

अत्थेगे गोयमा पाणी, जेए यं मण्णए विसं ।

आसवदारे णिरोहादि, इयरहे पसोक्खंचरं । महा० ॥

आसवभावणा-आश्रवभावना-स्त्री० । आसवानुचिन्तने,-ध. अ आश्रवभावना चैव ।

मनोवाक्कायकर्माणि, योगाः कर्म शुभाशुभं ।
यदाश्रवंति जंतूना, माश्रवास्तेन कीर्तिताः ॥ १ ॥
मैत्र्यादिवासितं चेतः, कर्म स्यूते शुभात्मकं ।
कषायविषयाक्रांतं, वितनोत्यशुभं मनः ॥ २ ॥
यतोन्यत्र-मैत्र्या सर्वेषु सत्वेषु, प्रमोदेन गुणाधिके ।
माध्यस्थ्येनाविनीतेषु. कृपया दुःखितेषु वा ॥ ३ ॥

सततं वासितं स्वान्तं, कस्यचित्पुण्यशालिनः ।
वितनोति शुभं कर्म, द्विचत्वारिंशदात्मकमिति ॥ ४ ॥
तथा-शुभार्जनाय निर्मिथ्यं, श्रुतज्ञानाश्रितं वचः ।
विपरीतं पुनर्ज्ञेयं, मशुभार्जनहेतवे ॥ ५ ॥
शरीरेण च सुप्तेन, शरीरी चिनुते शुभं ।
सततारंभिणा जंतु, घातकेनाशुभं पुनः ॥ ६ ॥
कषायविषया योगाः, प्रमादाचरती तथा ।
मिथ्यात्वमार्तरौद्रे चे, त्यशुभं प्रति हेतवः ॥ ७ ॥

नन्वेते बंधं प्रति हेतुत्वेनोक्ताः । यदाह वाचकमुख्यः । मिथ्या दर्शनाविरतिप्रमादकषाययोगा बंधहेतव इति तत्किमाश्रव-भावनायां बंधहेतूनामेतेषामभिधान सत्यं आश्रवभावबंध-भावनापि महर्षिभिर्भावनात्वेनोक्ता । आश्रवभावनयैव गता-र्थत्वात् आश्रवेण कषायाद्याः कर्मपुद्गला आत्मना संवद्ध्यमाना यत्र इत्यभिधीयंत यदाह सकषायत्वाज्जीवः कर्मणो योग्यान् पुद्गलानादत्ते सबन्धः स्यात् इत्यतोऽपि कर्म पुद्गलादान-हेतावाश्रवे बंधहेतूनामभिधानमदुष्टं । ननु तथापिबंधहेतूनां पाठो निरर्थकः नैवं बंधाश्रवयोरैकत्वेनोक्तत्वादाश्रवहेतूनामे-वायं पाठ इति सर्वमवदातमिति ।

आसवमाण-आस्रवत्-त्रि० शनैः प्रस्रवति-(उदयं आसवमाणं पेहाए) आचा० ४ अ १ उ. ।

आसवर-अश्ववर-पुं० अश्वानां मध्ये प्रधाने-औ० । भ० ए श ३३ उ. ।

आसवसक्कि-(ण्) आस्रवसक्तिन्-त्रि० आस्रवा हिंसाद-यस्तेषु सक्तं संगं आस्रवसक्त तद्विद्यते यस्य आस्रवसक्ती हिंसाद्यनुपगवति, आचा० । ५ अ १ उ. ।

आसवार-अश्ववार-पुं० अश्वारूढपुरुषे-भ० । ए श. ३३ उ. । ततो आसवारेण दिट्ठो-आ० म० ॥

आसवोदगा-आसवोदका-स्त्री० आसवमिव चंद्रहासादिपर-मासवमिवोदकं यासां ताः आसवोदकाः । आसवमिष्टोदकासु वापीषु । जी० ३ प्र. । रा० ।

आससेण-अश्वसेन-पुं० चतुर्दशे महाग्रहे-ज-कल्प० । पार्श्व-जिनपितरि, स० । कल्प० भरतक्षेत्रेऽवसर्पिण्यां जातस्य चतु-र्थचक्रिणः पितरि, स० । आव० ।

आसा-आशा-स्त्री० वांछायाम् ज्ञा० १ अ त० । इच्छाविशेषे प्रश्न० । भोगाकांक्षायाम् । आसं च छंदं च विगिंच धीरे आचा० । आहारोपकरणगणस्वजनशरीराद्यनभिष्वंगरूपाया-स्थित्रायाम् । अनु० । अप्रामार्थानां प्राप्तिसंभावनायाम् औ० । परद्रव्यवस्तुप्राप्त्यभिलाषे । आतु ।

आसाइ जो पडुत्तं, ढेइ सदा मत्तमप्पणो वस्स ।
इय सव्वत्यपुज्जा, परिहरियव्वा मया आसा ॥ संथा. ॥

उत्तररुचकपर्वतस्य विजयकूटवासिन्यां दिक्कुमार्याम् । स्था ८ ठा० टी० । दिशि, च वाच० ।

आसाई-आश्वयुजी-स्त्री० अश्वयुग्देवता तस्यां भवाऽश्वा-युजो । आश्विनेयमासभाविन्याममायां पूर्णिमायां । ज० ।

आसाएमाण-आशानयत्-त्रि० आशानानां कुर्वति । स्था० ४ ठा ।

आस्वादयत्-त्रि० इक्ष्वादेरिव ईषत्स्वादयति वहु त्यजति च आचा० कल्प० । वि० ।

आसागह-आशाग्रह-पुं० चित्तव्याक्षेपकारित्वात् ग्रहतुल्य-वांछायाम् ।

आराध्य भूपतिमवाप्य ततो धनानि, भोक्ष्यामहे किल वयं सततं सुखानि । इत्याशया वत विमोहितमानसानां, कालः प्रयाति मरणावधिरेव पुंसाम् ॥ १ ॥ एहिगच्छ पतोत्तिष्ठ वद मौनं समाचर । इत्याद्याशाग्रहग्रस्तैः क्रीडंति धनिनोऽर्थिभिः २ आचा० ॥

आसाढ-आषाढ-पुं० । आषाढी पूर्णिमा यत्र मासे स आषाढः । आषाढीपूर्णिमा घटिते मासे, । आषाढे मासे सकृत् कर्कसक्रां तौ उत्कर्षतोऽष्टादशमुहूर्तो दिवसो भवति । स० १८ स. ।

आसाढेणं मासे एगूणतीसं राइंदिआइं राइंदियेणं प० । स. २ए स. ॥

आषाढपुन्निमाए उक्कोसए अट्ठारसमुहुत्ते दिवसे भवइ जहन्निया दुवालसमुहुत्ता राई भवइ भ० ११ श. ११ उ । उत्त० । २६ अ ॥

आव्यक्तिकनिन्हवानां धर्माचार्ये, । विशे० । ग. । आषाढो येन हि श्वेतांव्यां नगर्यां पोलासा उद्याने च शिष्याणां प्रतिपन्ना गाढयोगानां रात्रौ हृदयशूलेन मरणमासाद्य देवेन भूत्वातद-नुकंपया स्वकीयमेव कलेवरमधिष्ठाय सर्वा समाचारीमनुप्रव र्तयता योगसमाप्तिं शीघ्रं कृत्वा वंदित्वा तानभिहितं च क्षम-णीय भदंता ! यन्मया यूयं वंदनकारिता यस्य च शिष्या इयच्चिरमसंयतो वन्दितोऽस्माभिरिति विचिंत्या व्यक्तमतमा-श्रिताः । स्था ठा. ७ । उज्जयिन्यामवधाविते स्वनामख्याते आचार्ये च । स्थिरीकरणशब्दे कथा० । नि० चू० ।

आसाढपाडिवया-आषाढप्रतिपत्-स्त्री० । आषाढपूर्णमास्या अनन्तरा प्रतिपदाषाढप्रतिपत् । श्रावणकृष्णप्रतिपदि, स्था० । ४ ठा ॥

आसाढभूइ-आषाढभूति-पुं० धर्मरुचिसूरिशिष्ये, पिंड० ।

विश्वकर्मा नाम नटः तस्य द्वे दुहितरौ ते च द्वे अप्यतिसुरूपे अतिशयाते येनवदनं कांत्या दिनकरकरोद्भासितकमलश्रिय नय-नयुगलेन चंचरीककुलवलययुगलं पीनोन्नतनिरंतरेण पयोध-रयुगलेन सहततालफलयुगल वाहुयुगलेन सपल्लवालताः त्रिवलिभंगुरेण मध्यभागेनेंद्रायुधमध्य जघनविस्तरेण जान्ह-वीपुलिनदेशं ऊरुयुगलेन गजकलभनासाभोगं जंघायुगलेन कुरुविंदवृत्तसंस्थितिचरणयुगलेन कूर्मदेहाकृतिं सुकुमारतया शिरीषकुसुमसंचयं वचनमधुरतया वसंतमासोन्मत्त कोकि-लारव अन्यदा च तत्र यथाविहारक्रमं समाययु । धर्म्मरुचयो नाम सूरयः । तेषामंतेवासी प्रज्ञानिधिराषाढभूतिः स भिक्षार्थ-मटन् कथमपि विश्वकर्मणो नटस्य गृहे प्राविशत् । तत्र च लब्ध प्रधानो मोदक द्वारे च विनिर्गत्य तेन चिंतितमेष सूरीणां भविष्यति तत आत्मार्थं रूपपरावर्त्तमाधायान्य मोदकं मार्गयामि ततः काणरूपं कृत्वा पुनः प्रविष्टो लब्धो द्वितीयो मोदक । ततो भूयोपि चिंतित एष उपाध्यायस्य भविष्यति । तत कुब्जरूपमभिनिर्वर्त्य पुनरपि प्रविष्ट लब्धः

तृतीयो मोदक। एष द्वितीयसंघाटकसाधोर्भविष्यतीति विचिंत्य कुष्ठिरूपं कृत्वा चतुर्थवेलायां प्रविष्टः लब्धश्चतुर्थो मोदकः एतानि च रूपाणि कुर्वन् मालोपरिस्थितेन विश्वकर्मणा नटेन ददृशे । चिंतितं चानेन सम्यगेषोऽस्माकं मध्ये नटो भवति । परं केनोपायेन स यतितव्य इति। एवं च चिंतयतः समुत्पन्ना तस्य शेमुषी दुहितृभ्यां क्षोभयित्वा ग्रहीतव्य इति। ततो मालादुत्तीर्य सादरमाकार्यापाढभूतिः पात्रभरणप्रमाणैर्मोदकैः प्रलोभितः भणितश्चासावहो भगवन् ! प्रतिदिवसमस्माकं भक्तदानग्रहणेनानुग्रहोऽनुविधातव्यः ततो गतस्वोपाश्रयमापाढभूतिरकथयच्चांते रूपपरावर्त्तनवृत्तांतं विश्वकर्मा निजकुटुम्बस्य भणिते च दुहितरौ यथा सादरं दानस्नेहदर्शनादिना तथाकर्तव्यं । यथा युष्माकमायत्तोभवति प्रतिदिवसमायाति च भिक्षार्थमापाढभूतिर्दुहितरावपि तथैवोपचरतः ततोऽत्यतमनुरक्तमवगम्य रहसि भणितो यथायमत्यंत तवानुरक्तस्ततोऽस्मान् परिणीय त्वं परिभुङ्क्ष्वेति अत्रांतरे च तस्योदयमियाय चारित्रावरणकर्म गलितो गुरूपदेशः प्राणे सति विवेको दूरीभूतः कुलजात्यभिमानस्ततस्तेनोक्तमेव भवतु परमहं गुरुपादांतिके लिंगं विमुच्य समागच्छामि गतो गुरुसमीपं प्रणतस्तेषां पादयुगलं प्रकटितो निजाभिप्रायः। ततो गुरुभिरवादि वत्स ! नेदं युष्मादृशां विवेकरत्नैकशरणानामवगाहितसकलशास्त्रार्थानामुभयलोकजुगुप्सनीयं समाचरितुमुचितं। तथा(दीहरसील परिपालिं, ऊण विसएसु वच्च मा रमसु । को गोपयमि बुरूरुइ उपहिंत रिउण वाहादिं )इत्यादि । ततं उवाचापाढभूतिर्भगवन् ! यथा यूयमादिशथ तथैव केवलप्रतिकूलकर्मणोदयः । प्रतिपक्षभावनारूपकवदुदुर्बलतया मदनशबरेण निरंतरं समुत्रस्यमृगनयनरमणीकटाक्षविशेषोपनिपातमादधता शतशो मे जर्जरीकृतं हृदयं एव चोक्त्वा गुरुपादान् प्रणम्य तदंतिके रजोहरणं मुक्तवान् । ततः कथमहममीषामनुपकृतोपकारिणामपारससारोदधिनिमग्नजंतुसमुद्धरणैकचेतसां सकलजगत्परमबन्धुकल्पानां गुरूणां पृष्ठं ददामीति पश्चात्कृतपादप्रचारो हा कथमहं भूयोऽप्येवंविधगुरूणां चरणकमलं प्राप्स्यामीति विचिंतयन् वसतेर्विनिर्गत्य विश्वकर्मणो भवनमायातः । परिभावितमस्य सादरमनिमेषदृष्ट्या नटदुहितृभ्यां वपुः प्रत्यभासत । सकलजगदाश्चर्यमस्य रूपं ततोऽप्यचिंतयतामिमे अहो कौमुदीशशांकमण्डलमिवास्य मनोहरकांतिवदनं, कमलदलयुगलमिव नयनयुगलं गरुत्मत इव तुंगमायतं नासानालं कुंदमुकुलश्रेणिरिव सुस्निग्धा दशनपंक्तिः, महापुरकपाटमिव विशालमस्य मांसलं, वक्षःस्थलं मृगरिपोरिव संवर्तितं कटिप्रदेशो निगूढजानुप्रदेशं जंघायुगलं सुप्रतिष्ठितकूर्मयुगलमिव चरणयुगलं ॥ ततो विश्वकर्मा अवोचत् महाभाग तवायत्ते द्वे अप्यमू कन्यके ततः स्वीक्रियतामिति । ततः परिणीते ते द्वे अपि तेन कन्यके भणिते च विश्वकर्मणा यो नामैनादृशीमप्यवस्थां गतो गुरुपादान् स्मरति सनियमादुत्तमप्रकृतिः । ततः एवं भिक्षावर्जनार्थं सर्वदैव मद्यपानविरहिताभिर्युष्माभिः स्थातव्यं । अन्यथैष विरक्तो यास्यति । आपाढभूतिश्च सकलकलाकलापपरिज्ञानकुशलो नानाविधैर्विज्ञानातिशयैः सर्वेषामपि नटानामग्रणीर्बभूव ततस्ते च सर्वेपि नटाः स्वां स्वां युवतिं स्वस्वगृहे विसृज्य च राजकुलं गताः । आपाढभूतिभार्याभ्यामपि चिंतितमद्य राजकुले गतो ऽस्माकं भर्त्ता सकलामपि च रात्रिं गमयिष्यति । ततः पिबामो यथेच्छमासवमिति तथैव कृतं । मदवशाद्व्यपगतचेतने विगतवस्त्रे द्वितीयभूमिकाया उपरि सुप्ते तिष्ठतः । राजकुले परराष्ट्रदूतः समायात इति राज्ञो व्याक्षेपो बभूव । ततो नवसरं इति कृत्वा प्रतीहारेण मुत्कलिताः सर्वेऽपि नटाः समागताः स्वं स्वं भवनं आपाढभूतिश्च निजावासे समागत्य यावत् द्वितीयभूमिकामारोहति । तावत्ते द्वे अपि निजभार्ये विगतवस्त्रे वीभत्स्ये पश्यति ततः स महात्मा चिंतयत् अहो मे मूढता अहो मे निर्विवेकता, । अहो मे दुर्विलसितं यदेतादृशमप्यशुचिकश्मलकभूतानामधो गतिनिबंधनानां कृते परमशुचिभूतमिह परलोककल्याणपरंपराजनकमाक्षेपेण मुक्तिपदनिबंधनं संयममुज्झाम्बभूव ततोऽद्यापि न मे किमपि विनष्टमपि, गच्छामि गुरुपादांतिकं, प्रतिपद्ये चारित्रं, प्रक्षालयामि पापपंकमिति, विचिंत्य गतो गृहात् । दृष्टः कथमपि विश्वकर्मणा लक्षितं इंगितादिना यथा विरक्त एष यातीति ततः सत्वरं निजदुहितरावुत्थाप्य निर्भर्त्सयति । हा दुरात्मिके ! हीनपुण्यचतुर्दशीके ! युष्मद्विलसितमेतादृशमवलोक्य सकलनिधानभूतो युष्मद्भर्त्ता विरक्तो यातीति तद्यदि निवर्त्तयितुं शक्नुथस्तर्हि निवर्त्तयथो नो चेत् प्रजीवनं याचध्वमिति ।ततस्ताः ससंभ्रमं परिहितवसनाः पृष्ठतः प्रधाव्य गच्छतः पादयोर्लग्ना वदति च। हा स्वामिन् ! क्षमस्वैकमपराधं निवर्त्तस्व मास्माननुरक्ता परिहर एवमुक्तोपि स मनागपि चेतसि न रज्यते ततस्ताभ्यामवाचि । स्वामिन् ! यद्येवं तर्हि प्रजीवनं देहि येन पश्चादपि युष्मत्प्रसादेन जीवामस्ततं एव भवत्विति दाक्षिण्यवशादनुमत्य प्रतिनिवृत्तः । ततः कृतं भरतचक्रवर्त्तिनश्चरितप्रकाशकं राष्ट्रपालं नाम नाटकं । ततो विज्ञप्तो विश्वकर्मणा सिंहरथो राजा । देव ! आपाढभूतिना राष्ट्रपालं नाम नाटकं विरचितं । तत्प्रति नर्त्यतामिति । परं तत्र राजपुत्रपंचशतैराभरणविभूषितैः प्रयोजनं । ततो राज्ञा दत्तानि राजपुत्राणां पंचशतानि तानि यथातथमापाढभूतिना शिक्षितानि ततः प्रारब्धं नाटकं नर्त्तितुं तत्र आपाढभूतिना विहितं इक्ष्वाकुवंशसंभूतो भरतश्चक्रवर्तिपदस्थितो । राजपुत्राश्च यथायोगं कृताः सामंतादयः । तत्र च नाटके यथा भरतेन भारतं षट्खण्डं प्रसाधितं । यथा चतुर्दशरत्नानि नव महानिधयः प्राप्ताः यथा वा दर्शगृहावस्थितस्य केवलालोकप्रादुर्भावो, यथा च पंचशतपरिवारेण सह प्रव्रज्या प्रतिपन्ना तत्सर्वमप्यभिनीयते ततो राज्ञा लोकेन च परितुष्टेन सर्वेणापि यथाशक्ति हारकुंडलादीन्याभरणानि सुवर्णवस्त्राणि च प्रदत्तानि। ततः सर्वजनानां धर्मलाभं प्रदाय पंचशतपरिवारं आपाढभूतिर्निर्गंतुं प्रावर्तत । ततः किमेतदिति राज्ञा निवारितस्तेनोक्तं किं भरतश्चक्रवर्त्ती प्रव्रज्यामादाय निवृत्तोयेनाहं निवर्ते। इति गतः सपरिवारो गुरुसमीपं वस्त्राभरणादिकं च समस्तं निजभार्याभ्यां दत्तवान् तच्च प्रजीवनकं किल तयोर्जातं । गृहीता दीक्षा तदपि च नाटकं विश्वकर्मणा कुसुमपुरे नर्तितुमारब्धं । तत्रापि पंचशतसंख्याः क्षत्रिया प्रव्रजतो निःक्षत्रियां पृथिवीं करिष्यंतीति नाटकपुस्तकमग्नौ प्रवेशितं । पिं० । मायापिंडे दृष्टमुदाहरणम् ॥

आपाढा—आपाढा—स्त्री० नक्षत्रभेदे ( दो आसाढा ) स्था० २ ठा० । द्वे आपाढे पूर्वापाढा उत्तरापाढा च—वाच० । ठ

आसाढायरिय—आपाढाचार्य पुं०आव्यक्तिकनिन्हवाचार्ये आ० ।

आसाढी—आपाढी—स्त्री०आपाढानक्षत्रयुक्ता पूर्णमासी आपाढी । आपाढमाससंबंधिन्यां पौर्णमास्याम्—सू० प्र० आव० ।

आसापास—आशापाश—पुं० । इच्छाविशेषरूपे बन्धने आसापासपरिगयरूपाणा. । आशा इच्छाविशेषः सैव पाशो बन्धनं तेन प्रतिबद्धाः संरुद्धा निर्यान्ति इति गम्यं प्राणा येषां ते तथा । प्रश्न० २ द्वा०( किं किंन कुणइ जीवो आसापासेण वा बद्धो),-सचा० ।

आसावल्ली—आशावल्ली—स्त्री० सोमनाथभंगसमये यवनैर्नोशितस्य कर्णदेवस्य मातरि, ती० ।

आसाय—आस्वाद—पुं० आ ईषदपि अ इति न स्वादः आस्वाद मनागस्वादे रसनेन्द्रियजन्ये ज्ञाने । आस्वाद्यतेऽनेनेति कृत्वा यत्प्रकर्षादिन्द्रियरससविड्डपजायते तस्मिन्च । द्वा० ज्ञा० । विशे० । अनिद्याये २ आचा. ८ अ० ।

आसायण—आशातन—न० आ समन्ताच्छातयति मुक्तिमार्गाद् भ्रंशयति इत्याशातनम् अनन्तानुबन्धिकषायवेदने । विशे० ।

आसायणा—आशातना—स्त्री०ज्ञानादिगुणा आ सामस्त्येन शात्यन्ते अपध्वस्यन्ते याभिस्ता आशातनाः स्था० । प्रतीपवर्तनेषु । अधिक्षेपेषु । सम्म० विनयभ्रंशेषु आव. । प्रतिषिद्धकरणेषु । आ० चू० । लघुतापादनेषु । द० । आतु० । आशातना ज्ञानदेवगुर्वादीनां जघन्यादिभेदा त्रिविधाः तत्र ज्ञानस्य, तत्र जघन्या ज्ञानाशातना ज्ञानोपकरणस्यनिष्ठीवनस्पर्शोऽतिकस्थे, च । तस्मिन्नधोवातनिसर्गोहीनाधिकाक्षरोच्चार इत्यादिका १ मध्यमा आकालिकं निरुपधानतपो वा ऽध्ययनं भ्रांत्यान्यथार्थकल्पन ज्ञानोपकरणस्य प्रमादात्पादादिस्पर्शो भूपातन चेत्यादिरूपा २ उत्कृष्टंत्वनाक्षरमार्जनं उपर्युपवेशनशयनादिज्ञानोपकरणेऽतिकस्थे उच्चारादिकरणं ज्ञानस्य ज्ञानिनां वा निंदा प्रत्यनीकतोपघातकरणमुत्सूत्रभाषण चेत्यादिस्वरूपा ३ जघन्या देवाशातना वासकुपिकाद्यास्फालनश्वासवस्त्रांचलादिस्पर्शाद्या १ मध्यमा शरीराद्यशुद्ध्या पूजनं प्रतिमाभूनिपातनं चेत्याद्या २ उत्कृष्टा प्रतिमायाश्चरणश्लेष्मस्वेदादिसंस्पर्शनभंगजननावहेलनाद्या च ॥ श्रुताशातना फलमुपदर्शनशब्दे महा० । प्रवचनाशातक आचार्य । महा० ५ अध्य० ॥

से भयवं जेणं केई कहिं कयाई पमायदोसओ पवयणमासाएज्जा । से णं किं आयरियं पावेज्जा । गोयमा ! जेणं केई कहिं वि कयाई पमायदोसओ असई कोहेण वा माणेण वा मायाए वा लोभेण वा रागेण वा दोसेण वा भएण वा हासेण वा मोहेण वा अन्नाणदोसेण वा पवयणस्स अन्नयरट्ठाणे वइमेत्तेणं पि अणगारं असमायारीपरूवमाणे वा अणुमन्नेमाणे वा पवयणमासाएज्जा से णं बोहिं पि णो पावे किंमंग ! आयरियपयंच्चं । से भयवं ! किं अभव्वे मिच्छादिट्ठी । आयरिये भवेज्जा । गोयमा ! भवेज्जा । एत्थं च णं इंगालमद्दगाईन एसे भयवं ! किं मिच्छदिट्ठी निक्खमेज्जा । गोयमा ! निक्खमेज्जा देवस्य ॥

अथवा देवाशातना जघन्या दश मध्यमाश्चत्वारिंशदुत्कृष्टाश्चतुरशीतिस्ताश्च क्रमेणैवमाहु ॥

तंबोल १ पाण २ भोअण, ३ वाहणह ४ त्थीभोग ५ सुवण ६ निट्ठवणं ७ ॥ मुत्तु ८ चारं ९ जूअं, १० वज्जे जिणमंदिरस्संतं ॥ १ ॥

इति जघन्यतो दश देवाशातनाः । प्रव० ३८ द्वा तंबोलेत्यादिगाथायां तांबूलपानभोजनोपानत्स्त्रीभोगस्वपननिष्ठीवनानि मूत्रं प्रस्रवणं उच्चार पुरीषं द्यूतमंधकादि वर्जयेत् । तीर्थकृदाशातनाहेतुत्वाज्जिनमंदिरस्यांऽतर्विवेकी जन इति ।

मुत्त १ पुरीसं २ पाणं ३ जाणा ४ सए ५ सयण ६ इत्थि ७ तंबोलं ८ निट्ठीवणं च ९ जूअं १० जूआइपलोयणं ११ विगहा १२ ॥ १ ॥ पल्हत्थीकरणं १३ पिहुपासायपसारए १४ परुप्परविवाओ १५ परिहासो १६ मच्छरिआ १७ सीहासणमाइपरिभोगो १८ ॥ २ ॥ केससरीरविभूसण १९ छत्ता २० सि २१ किरीड २२ चमरधरणं च २३ धरणं २४ जुवईहिं सविआरहास २५ खिड्डुप्पसंगाय २६ ॥ ३ ॥ अकयमुहकोस २७ मलिणंगवत्थ २८ जिणपूअणामणसोअणेगयत्तं २९ सचित्तदविआणविमुआणं ३० ॥ ४ ॥ अचित्तदव्विअबुस्सणंच ३१ तहणेगसाडिअत्तचि ३२ जिणदंसणेअणंजलि ३३ जिणंमि दिट्ठंमि अ अपूआ ३४ ॥ ५ ॥ अहवा अणिट्ठकुसुमाइपूअणं ३५ तह अणायरपवित्ती ३६ जिणपडिणीअनिवारण ३७ चेइअदव्वस्सुवेहणमो ३८ ॥ ६ ॥ सइसामत्थिउवाणह ३९ पुव्वं चिइवंदणाऽपढणंच ४० जिणभवणाइठिआणं चालीसायणा एए ॥ ७ ॥

इति मध्यमतश्चत्वारिंशदाशातना ॥ उत्कृष्टा: ८४ । ध० ।

खेलं १ केलि २ कलिं ३ कला ४ कुललयं ५ तंबोल ६ मुग्गालयं, ७ गाली ८ कंगुलिआ ९ सरीरधुवणं १० केसे ११ नहे १२ लोहिअं १३ । भत्तोसं १४ तय १५ पित्त १६ वंत १७ दसणा १८ विस्सामणा १९ दामणं, २० दंत २१ च्छी २२ नह २३ गल्ल २४ नासिअ २५ सिरो २६ सोत्त २७ छवीणंमलं २८ ॥ १ ॥ मुत्तं २९ मीलण ३० लिक्खयं ३१ विभजणं ३२ भंडार ३३ दुट्ठासणं ३४ गाणी ३५ कप्पड ३६ दालि ३७ पप्पड ३८ वडी विस्सारणं ३९ नासणं ४० अक्कंदं ४१ विकहं ४२ सरुच्छुघडणं ४३ तेरिच्छसंठावणं ४४ अग्गीसेवण ४५ रंधणं ४६ परिक्खणं ४७ निस्सीहिआभंजणं ४८ ॥ २ ॥ छत्तो ४९ वाणह ५० सत्थ ५१ चामर ५२ मणोऽणेगत्त ५३ मब्भंगणं ५४ सच्चित्ताण ५५ मचाय ५६ चायमजिए ५७ दिट्ठीऽनो अंजली ५८ साडेगुत्तरसंगभंग ५९ मउडं ६० मोलिं ६१ सिरोसेहरं ६२ हुड्डा ६३ जिंडुहगेड्डिआऽऽरमणं ६४ जोहार ६५ भंडक्किअं ६६ ॥ ३ ॥ रेक्कारं ६७ धरणं ६८ रणं ६९ विचरणं वालाण ७० पल्हत्थिअं ७१ पाऊ ७२ पायपसारणं ७३ पुडपुडी ७४ पंकं ७५ रओ ७६ मेहुणं

नारकानाहारतो निरूपयन्नाह । नेरइयाणमित्यादि । व्यक्तं केवलं अंगारोपमः अल्पकालदाहकत्वान्मुर्मुरोपमः स्थिरतरदाहत्वाच्छीतलः शीतवेदनोत्पादकत्वात् हिमशीतलो ऽत्यन्तशीतलो ऽत्यन्तशीतवेदनोत्पादकत्वात् अधोऽत्र इति क्रम इति ॥ स्था० ठा० ४ ।

तिरिक्खजोणियाणं चउव्विहे आहारे पं. तं. कंकोवमे बिलोवमे पाणमंसोवमे पुत्तमंसोवमे । मणुस्साणं चउव्विहे आहारे पं. तं. असणे जाव साइमे। देवाणं चउव्विहे आहारे पं तं वम्नमंते गंधमंते रसमंते फासमंते ॥

तिरिक्खजोणियाणमित्यादि । व्यक्तनवरं कंकः पक्षिविशेष स्तस्याहारेणोपमा यत्र स मध्यमपदलोपात्कङ्कोपमः । अयमर्थो यथा हि कंकस्य दुर्जरोऽपि स्वरूपेणाहार सुखभक्ष्यमुखपरिणामश्च भवति एवं यस्तिरश्चां सुखभक्ष्यस्सुखपरिणामश्च स कङ्कोपम इति। तथा बिले प्रवेशनस्य बिलमेव तेनोपमा यत्र स तथा । बिले हि अलब्धरसास्वादं झटिति यथा किल किंचित्प्रविशति एव यस्तेषां गलबिले प्रविशति स तथोच्यते । पाणो मातङ्गस्तन्मांसमस्पृश्यत्वेन जुगुप्सया दुःखाद्यं स्यादेवं यस्तेषां दुःखाद्यस्स पाणमांसोपमः।पुत्रमांसन्तु स्नेहपरतया दुःखाद्यतरं स्यादेवं यो दुःखाद्यतरः स पुत्रमांसोपम क्रमेण चैते शुभसमा शुभाशुभतरा वेदितव्याः वर्णवानित्यादौ प्रशंसायामतिशायने वा मतुरिति । स्था ठा० ॥ ४ ॥ टी० ॥

आहारमधिकृत्य वक्तव्यार्थो ।

सचित्ताहारट्ठी केवति किंवा वि सव्वतो चेव ।
कतिभागं सव्वे खलु परिणामे चेव बोधव्वे ॥ १ ॥
एगिंदियसरीरादि लोमाहारे तहेवमणभक्खी ।
एतेसिं तु पदाणं विभावणा होइ कायव्वा ॥ २ ॥

प्रथमोऽधिकारस्सचित्तपदापलक्षितस्स चैव ( नेरइयाण भंते ! किं सचित्ताहारा अचित्ताहारा ) इत्यादि १ द्वितीय आहारार्थिन इति २, तृतीयः । ( केवइयत्ति ) कियता कालेन आहारार्थः समुत्पद्यते इत्यादिरूप ३ । चतुर्थ किमाहारमाहारयन्तीति पदोपलक्षित ४ । पञ्चम सर्वत इति पदोपलक्षितस्स चैव-( नेरइयाण सव्वतो परिणामन्तीत्यादि ) । ५ । चैव शब्दस्समुच्चये ( कइभागंति ) गृहीतानां पुद्गलानां कतिभागमाहारयन्तीत्येवमादि षष्ठोऽधिकारः ६ तथा ( सव्व इति ) यान्पुद्गलानाहारतया गृह्णन्ति तान्कि सर्वानपरिशेषान् आहारयन्ते उत सर्वानित्येवमुपलक्षित सप्तमोऽधिकार ७ तथा अष्टमोऽधिकारः परिणाम परिणामरूपो बोद्धव्य सचेव ( नेरइयाणं भंते ! जे पोग्गले आहारत्ताए गिण्हति तेण तेसिं पुग्गला कीसत्ताए भुज्जो २. परिणमन्तीत्यादि- ) रूप ८ नवमोऽर्थाधिकारः एकेन्द्रियादीनि शरीराणि सर्वत्र-( नेरइयाण भंते ! किं एगिंदियसरीराइं । आहारेति जाव पंचिंदियसरीराइं आहारेति ) इत्यादि ९ दशमोऽधिकारो लोमाहारः लोमाहारवक्तव्यतारूप । १० । एकादशो मनोभक्षिवक्तव्यतारूप । ११ । एतेसिं तु इत्यादि । एतेषा मानन्तरोदितानां पदानामर्थाधिकाराणां विभावना विस्तरेण प्रकाशना नाम भवति कर्तव्या।सूत्रकारवचनमेतत्प्रतिज्ञातमेव निर्वाहयितुकामो यथोद्देशनिर्देश इति न्याया-प्रथमाधिकार विभावयति । प्रज्ञा० पद० २८ । भ० श०१ उ १ ॥

सचित्ताहारा ॥

नेरइयाणं भंते ! किं सचित्ताहारा अचित्ताहारा मीसाहारा ? गोयमा ! नो सचित्ताहारा अचित्ताहारा नो मीसाहारा एवं असुरकुमारा जाव वेमाणिया । उरालिय सरीरा जाव मणूसा सचित्ताहारा वि अचित्ताहारा वि मीसाहारा वि ॥

नैरयिका भदन्त ! किं सचित्ताहारा सचित्तमाहारयन्तीति सचित्ताहाराः एवमचित्ताहारा मिश्राहारा इत्यादि भावनीय भगवानाह-( गोयमेत्यादि ) इह वैक्रियशरीरिणो वैक्रियशरीरपरिपोषयोग्यान् पुद्गलानाहारयन्ति ते चाचित्ता एव संभवंति न जीवपरिगृहीता इत्यचित्ताहारा नापि मिश्राहारा एवमसुरकुमारादयः स्तनितकुमारपर्यवसाना भवनपतयो व्यन्तरज्योतिष्का वैमानिकाश्च वेदितव्याः । औदारिकशरीरिण पुनरौदारिकशरीरपरिपोषयोग्यान्पुद्गलानाहारयन्ति ते च पृथिवीकायिकादिपरिणामपरिणता इति ।

सचित्ताहारा मिश्राहारा अपि भवन्ते । तथाचाह । ( उरालियसरीरी जाव मणूसा इत्यादि ) औदारिकशरीरिण पृथिवीकायिकेभ्यः आरभ्य यावन्मनुष्याः । किमुक्तम्भवति पृथिव्यप्तेजोवायुवनस्पतिरूपा एकेन्द्रिया द्वित्रिचतुःपञ्चेन्द्रिया मनुष्याश्च एते प्रत्येक सचित्ताहारा अपि अचित्ताहारा अपि मिश्राहारा अपि वक्तव्या ॥ उक्तः प्रथमोऽधिकार ॥

सम्प्रति द्वितीयादष्टपर्यन्तान्सप्ताधिकारान् चतुर्विंशतिदण्डकक्रमेण युगपदभिधित्सु प्रथमतो नैरयिकाणामभिदधाति ।

नेरइया णं भंते ! आहारट्ठी ? हंता आहारट्ठी णेरइयाणं भंते ! केवइकालस्स आहारट्ठे समुप्पज्जइ ? गोयमा ! णेरइयाणं दुविहे आहारे पण्णत्ते । तं० आभोगनिवत्तिए य अणाभोगनिव्वत्तिए य । तत्थ णं जे से अणाभोगनिव्वत्तिए से णं अणुसमयं अविरहिए आहारट्ठे समुप्पज्जइ । तत्थ णं जे से आभोगनिव्वत्तिए से णं असंखेज्जसमइए अंतो मुहुत्तिए आहारट्ठे समुप्पज्जइ ॥

( नेरयाणमित्यादि )नैरयिका णामिति वाक्यालङ्कारे भदन्त ! आहारार्थिनो नैरयिका इति यदि आहारार्थिनस्ततो भगवानाह ( हतेत्यादि ) हतेत्यनुमतौ अनुमतमेतत् गौतम ! आहारार्थिनो नैरयिका इति यदि आहारार्थिनस्ततो भदन्त ! नैरयिका णमिति पूर्ववत् ( केवइ कालस्सत्ति ) प्राकृतत्वात् तृतीयार्थे षष्ठी । कियता कालेन आहारार्थ आहारलक्षण प्रयोजन आहाराभिलाष इति यावत्समुत्पद्यते-भगवानाह ( गोयमेत्यादि ) नैरयिकाणां द्विविधो द्विप्रकार आहारस्तद्यथा । आभोगनिर्वर्तित आहारयामीति इच्छापूर्वनिर्मापित इति यावत् । तद्विपरीतोऽनाभोगनिर्वर्तित । आहारयामीति विशिष्टेच्छामन्तरेण यो निष्पाद्यते प्रावृट्काले प्रचुरतरमूत्राद्यभिव्यङ्गशीत पुद्गलाद्याहारवत्सोऽनाभोगनिर्वर्तित इति भाव । ( तत्थणमित्यादि ) तत्राभोगानाभोगनिर्वर्तितयोर्मध्ये योऽनाभोगनिर्वर्तित आहारः ( सेणमिति ) पूर्ववत् अनुसमय प्रतिसमय २ समय २ इत्यर्थः । इत्यदीर्घकालोपभोगस्याहारस्यैक वारमपि ग्रहणे तावंत कालमनुसमयम्भवति । तत आजन्मपर्यन्त सातत्यग्रहणप्रतिपादनार्थमाह । अविरहित आहारार्थसमुत्पद्यते । अथवा सततप्रवृत्ते आहारार्थेऽपान्तराले

चुक्कस्खलितन्यायेन कथञ्चिद्विरहे भावेऽपि लोके तद्गणनया अनुसमयमिति व्यवहार प्रवर्तते । ततोऽपान्तराले विरहाभावप्रतिपादनार्थमित्युक्त । अनुसमयविरहितोऽनाभोगनिर्वर्तित आहारार्थः समुत्पद्यमान ओज आहारादिना प्रकारेणा वसेयः। ( तत्थ णमित्यादि ) तत्राभोगानाभोगनिर्वर्तितयोर्मध्ये योऽसावनाभोगनिर्वर्तित आहारार्थः सोऽसख्येयसामायिकोऽसख्येयैः समयैर्निर्वर्तितम । यथासख्येयसमयनिर्वर्तित तत् जघन्यपदेऽप्यन्तर्मुहूर्तिकम्भवति । न हीनमत आन्तर्मुहूर्तिक आहारार्थः समुत्पद्यते । किमुक्त भवति । अन्तर्मुहूर्तकाल यावत्प्रवर्तते न परतो नैरयिकाणां हि योऽसावाहारयामीत्यभिलापः स परिगृहीताहारद्रव्यपरिणामेन यज्जनितमतितीव्रतर दुःख तद्भावादन्तर्मुहूर्तान्निर्वर्तते । तत आन्तर्मुहूर्तिको नैरयिकाणामाहारार्थः (नेरइयाणमित्यादि ) नैरयिकाणामिति पूर्ववत् किंस्वरूपमाहारयन्ति भगवान्द्रव्यादिभेदतस्तमाहारयन्तीति निरूपयितुकाम आह ( गोयमेत्यादि ) ॥

किमाहारमाहारयन्ति ॥

णेरइया णं भंते ! किमाहारमाहारेंति ? गोयमा ! दव्वओ अणंतपदेसियाइं खेत्तओ असंखेज्जपदेसोगाढाइं कालओ अन्नतरकालट्टितियाइं भावतो वन्नमंताइं गंधमंताइं रसमंताइं फासमंताइं जाइं भावओ वन्नमंताइं आहारेंति ताइं किं एगवन्नाइं आहारेंति जाव किं पंचवन्नाइं आहारेंति ? गोयमा ! ठाणमग्गणं पडुच्च एगवन्नाइं पि आहारेंति । जाव पंचवन्नाइं पि आहारेंति विहाणमग्गणं पडुच्च कालवन्नाइं पि आहारेंति जाव सुक्किल्लाइं पि आहारेंति । जाइं वन्नओ कालवन्नाइं आहारेंति ताइं किं एगगुणकालाइं आहारेंति जाव दसगुणकालाइं आहारेंति संखिज्ज असंखिज्ज अणंतगुणकालाइं आहारेंति। गोयमा ! एगगुणकालाइं पि आहारेंति जाव अणंतगुणकालाइं पि आहारेंति एवं जाव सुक्किल्लाइं। एवं गंधतो वि रसतो वि । जाइं भावओ फासमंताइं ताइं नो एगफासाइं आहारेंति नो दुफासाइं आहारेंति । नो तिफासाइं आहारेंति चउफासाइं पि आहारेंति । जाव अट्ठफासाइं पि आहारेंति । विहाणमग्गणं पडुच्च कक्खडाइं पि आहारेंति जाव लुक्खाइं पि आहारेंति । जाइं फासओ कक्खडाइं आहारेंति ताइं किं एगगुणकक्खडाइं आहारेंति । जाव अणंतगुणकक्खडाइं आहारेंति गोयमा ! एगगुणकक्खडाइं पि आहारेंति जाव अणंतगुणकक्खडाइं पि आहारेंति एवं अट्ठविहफासा भाणियव्वा । जाव अणंतगुणलुक्खाइं पि आहारेंति। जाइं भंते ! अणंतगुणलुक्खाइं आहारेंति ताइं किं पुट्ठाइं आहारेंति अपुट्ठाइं ? गोयमा ! पुट्ठाइं आहारेंति नो अपुट्ठाइं आहारेंति जहा भासुद्देसए जाव नियमा छद्दिसिं आहारेंति ओसन्नं कारणं पडुच्च वन्नओ कालनीलाइं गंधओ दुब्भिगंधाइं रसओ तित्तरसकडुयाइं फासओ कक्खडगरुयसीतलुक्खाइं तेसिं पोराणे वन्नगुणे गंधगुणे रसगुणे फासगुणे विपरिणामइत्ता परिपीलइत्ता परिसाडइत्ता परिविद्धंसइत्ता अन्ने अपुव्वे वन्नगुणे गंधगुणे फासगुणे उप्पाएत्ता आयसरीरखित्तोगाढे पोग्गले सव्वप्पणयाए आहारमाहारेंइ ॥

टी० गौतम ! द्रव्यतो द्रव्यस्वरूपपर्यालोचनायां अनन्तप्रादेशिकानि द्रव्याणि । अन्यथा ग्रहणासम्भवात् न हि सख्यातप्रदेशात्मका असख्यातप्रदेशात्मका वा स्कन्धा जीवस्य ग्रहणयोग्या भवन्ति । क्षेत्रतोऽसख्येयप्रदेशावगाढानि । कालतोऽन्यतरस्थितिकानि जघन्यस्थितिकानि मध्यमस्थितिकानि उत्कृष्टस्थितिकानि चेति भावार्थः । स्थितिरिति चाहारयोग्यस्कन्धपरिणामत्वेनावस्थानमवसेय । भावतो वर्णवन्ति गन्धवन्ति रसवन्ति स्पर्शवन्ति च । प्रतिपरमाण्वेकैकवर्णगंधरसद्विस्पर्शभावात् । (जाइ भावओ वन्नमताइ) इत्यादि प्रश्नसूत्र सुगम भगवानाह । ( गोयमा ! ठाणमग्गण पडुच्चेत्यादि ) तिष्ठन्ति विशेषा अस्मिन्निति स्थान सामान्यमेकवर्णं द्विवर्णं त्रिवर्णमित्यादिरूप तस्य मार्गणमन्वेषण तत्प्रतीत्य सामान्य चिन्तामाश्रित्येति भावार्थः । एकवर्णान्यपि द्विवर्णान्यपि इत्यादि सुगम । नवर तेषामनन्तप्रादेशिकानां स्कन्धानामेकवर्णत्व द्विवर्णत्वमित्यादि व्यवहारनयमतापेक्षया । निश्चयनयमतापेक्षया तु अनन्तप्रादेशकस्कन्धीयानपि पञ्चवर्ण एव प्रतिपत्तव्यः । ( विहाणमग्गण पडुच्चेत्यादि ) ॥ विधानं व्यक्तामितरव्यवच्छिन्न धान पोषण स्वरूपस्य यत्तद्विधान विशेषः कृष्णो नील इत्यादिविशेष इति यावत्तस्य मार्गण तत्प्रतीत्य त्यक्त्वा सवर्णान्यप्याहारयतीत्यादि सुगमं । नवरमेतदपि व्यवहारतः प्रतिपत्तव्य । निश्चयत पुनरवश्य तानि पञ्चवर्णान्येव ॥ जाइ वन्नओ कालवन्नाइ पीत्यादि ॥

सुगम । यावदनन्तगुणसुक्किल्लाइ पि आहारति । एवं गंधरसस्पर्शविषयाणि सूत्राण्यपि भावनीयानि ( जाइ भंते ! अनन्तगुणलुक्खाइ इत्यादि ) यानि भदन्त ! अनन्तगुणरूक्षाणि उपलक्षणमेतत् । एव गुणकालादीन्यप्याहारयन्तीति तानि च भदन्त ! किं स्पृष्टान्यात्मप्रदेशस्पर्शविषयाण्याहारयन्ति उतास्पृष्टानि । भगवानाह । स्पृष्टानि नो अस्पृष्टानि ( जहा भासुद्देसए जाव नियमा । छद्दिसिंत्ति ) अत ऊर्ध्वं यथा भाषोद्देशके प्राक्सूत्रमभिहित तथात्रापि द्रष्टव्य । तत्र तावत् यावन्नियमा ( छद्दिसिंति ) पदं तच्चैव ।

जाइं पुट्ठाइं आहारेंति ताइं भंते! किं ओगाढाइं आहारेंति गोयमा ! ओगाढाइं आहारेंति णो अणोगाढाइं आहारेंति । जाइं भंते ओगाढाइं आहारेंति ताइं किं अणंतरोगाढाइं आहारेंति परंपरोगाढाइं आहारेंति गो० अणंतरोगाढाइं आहारेंति नो परंपरोगाढाइं आहारेंति जाइं अणंतरोवगाढाइं आहारेंति ताइं भंते! किं अणूइं आहारेंति बादराइं आहारेंति ? गोयमा ! अणूं पि आहारेंति बायराइंपि आहारेंति । जाइं भंते ! अणूं पि आहारेंति बायराइ पि आहारति ताइं किं उड्ढं आहारति अहे आहारति तिरियं आहारेंति? गोयमा ! उड्ढं पि आहारेंति अहे वि आहारेंति तिरियं पि आहारेंति जाइं भंते ! उड्ढं पि आहारेंति अहे पि आहारेंति तिरियं पि आहारेंति

ताइं आइं पि आहारंति मज्झे आहारंति पज्जवसाणे आहारंति ? गोयमा ! आइं पि आहारंति मज्झे वि आहारंति पज्जवसाणे वि आ० । जाइं भंते ! आइं पि आहारंति मज्झे वि आहारंति पज्जवसाणे वि आहारंति ताइं भंते ! किं सविसए आहारंति अविसए आहारंति ? गोयमा ! सविसए आहारंति नो अविसए आहारंति । जाइं भंते ! सविसए आहारंति ताइं किं आणुपुव्विए आहारंति । अणाणुपुव्विए । गो० ! आणुपुव्विं आहारंति नो अणाणुपुव्विं आहारंति । जाइं भंते ! आणुपुव्विं आहारंति ताइं किं तिदिसिं आहारंति । चउदिसिं आहारंति पंचदिसिं आहारंति छदिसिं आहारंति ?

अस्य व्याख्या । इहात्मप्रदेशैः सस्पर्शनेनात्मनः प्रदेशावगाढात्क्षेत्राद्बहिरपि सम्भवति ततः प्रश्नयति । ( जाइं भंते ! इत्यादि ) यानि भदन्त ! स्पृष्टान्याहारयति तानि किं अवगाढानि आत्मप्रदेशैः सह एकक्षेत्रावस्थायीनि उत अनवगाढानि आत्मप्रदेशावगाढक्षेत्राद्बहिरवस्थितानि । भगवानाह । गौतम ! अवगाढान्याहारयति नानवगाढानि । उत अवगाढानि आत्मप्रदेशावगाढक्षेत्रे किमनन्तरावगाढानि । किमुक्तं भवति । यद्यात्मप्रदेशेषु यान्यव्यवधानेनावगाढानि वैरात्मप्रदेशैस्तान्येवाहारयति उत, परम्परावगाढानि एकद्व्याद्यात्मप्रदेशव्यवहितानि । भगवानाह । गौतम ! अनन्तरावगाढानि आहारयति नो परम्परावगाढानि । यानि भदन्त ! अनन्तरावगाढान्याहारयति तानि किमणूनि स्तोकान्याहारयन्ति उत बादराणि प्रभूतप्रदेशोपचितानि । भगवानाह । अणून्यप्याहारयन्ति बादराण्यप्याहारयन्ति । इहाणुत्वबादरत्वे तेषामेवाहारयोग्यानां स्कन्धानां प्रदेशस्तोकत्वबाहुल्यापेक्षया वेदितव्ये इति । यानि भदन्त ! अणून्यप्याहारयन्ति तानि भदन्त ! किमूर्ध्वमूर्ध्वप्रदेशस्थितान्याहारयन्ति अधस्तिर्यग्वा । इह ऊर्ध्वाधस्तिर्यक्त्वं यावति क्षेत्रे नैरयिको ऽवगाढस्तावत्येव क्षेत्रे तदपेक्षया परिभावनीयं । भगवानाह । ऊर्ध्वमप्याहारयन्ति ऊर्ध्वप्रदेशावगाढान्यप्याहारयति एवमधोऽपि तिर्य्यगपि । यानि भदन्त ! ऊर्ध्वमप्याहारयन्ति अधोऽप्याहारयन्ति तिर्यगप्याहारयन्ति तानि किमादावाहारयन्ति मध्ये आहारयन्ति पर्य्यवसाने आहारयन्ति । अयमत्राभिप्रायो नैरयिका ह्यनन्तप्रादेशिकानि द्रव्याण्यन्तर्मुहूर्त्तं कालं यावदुपभोगोचितानि गृह्णन्ति ततः संशय किमुपभोगोचितस्य कालस्यान्तर्मुहूर्त्तप्रमाणस्यादौ प्रथमसमये आहारयन्ति उत मध्ये मध्येषु समयेषु आहोस्वित्पर्य्यवसाने पर्य्यवसानसमये ? भगवानाह । गौतम ! आदावपि मध्येऽपि पर्य्यवसानेऽप्याहारयन्ति । किमुक्तं भवति । उपभोगोचितस्य कालस्यान्तर्मुहूर्त्तप्रमाणस्यादिमध्यावसानेषु समयेषु आहारयन्ति उत अविषयाणि स्वोचिताहारयोग्यान्याहारयन्ति । भगवानाह । गौतम ! स्वविषयानाहारयन्ति नो अविषयान् । यानि भदन्त ! स्वविषयानाहारयन्ति तानि भदन्त ! किमानुपूर्व्या आहारयन्ति अनानुपूर्व्या ? । आनुपूर्व्वी नाम यथासन्नं । तद्विपरीता अनानुपूर्व्वी । भगवानाह । गौतम ! आनुपूर्व्या सूत्रे द्वितीया तृतीयार्थे वेदितव्या प्राकृतत्वात् यथा आचाराङ्गे-( अगणिपुट्ठा ) इत्यत्र आहारयन्ति नो अनानुपूर्व्या ऊर्ध्वमधस्तिर्य्यग्वा यथासन्नं नातिक्रम्याहारयन्तीति भावनीयानि । भदन्त ! आनुपूर्व्या आहारयन्ति तानि किं (तिदिसिंति) । तिस्रो दिशः समाहतास्त्रिदिक् तस्मिन् व्यवस्थितान्याहारयन्ति चतुर्दिशि पञ्चदिशि षड्दिशि वा इह लोकनिष्कुटपर्य्यन्ते जघन्यपदे त्रिदिग्व्यवस्थितमेकदिग्व्यवस्थितं वा अतस्त्रिदिश आरभ्य प्रश्नः कृतः । भगवानाह । गौतम ! नियमात् षड्दिशि व्यवस्थितान्याहारयन्ति । नैरयिका हि त्रसनाड्यां मध्ये व्यवस्थितास्तत्र चावश्यं षड्दिक्संभव इति । (ओसन्नकारण पडुच्चेत्यादि ) ओसन्नशब्दो बाहुल्यवाची । यथा ओसन्नं देवा सायं वेयण वेयतीत्यत्र । तत ओसन्नकारण बाहुल्यकारणं प्रतीत्य किंतद्बाहुल्यकारणमिति चेदुच्यते । अशुभानुभाव एव । तथापि प्रायो मिथ्यादृष्टयः कृष्णादीन्याहारयन्ति न तु भविष्यत्तीर्थकरादयः । तत ओसन्नेत्युक्तं । वर्णतः कालनीलादि । गन्धतो दुरभिगन्धादि । रसतस्तिक्तकटुकानि । स्पर्शत कर्कशगुरुशीतरूक्षादि इत्यादि तेषामाहार्य्यमाणानां पुद्गलानां पुराणान् अग्रेतनान् वर्णगुणान् गन्धगुणान् स्पर्शगुणान् (विपरिणामइत्ता परिपीलइत्ता परिसाडइत्ता परिविद्धंसइत्ता) एतानि चत्वार्य्यपि पदान्येकार्थिकानि विनाशार्थप्रतिपादकानि नाना देशजविनेयानुग्रहार्थमुपात्तानि विनाश्य किमिति आह । अन्यानपूर्व्वान्वर्णगुणान् रसगुणान् स्पर्शगुणानुत्पाद्य आत्मशरीरक्षेत्रावगाहान् पुद्गलान् ( सव्वप्पणयाए ) सर्व्वात्मना सर्व्वैरेवात्मप्रदेशैराहारमाहाररूपानाहारयन्ति ॥ प्रज्ञा पद २८ । जी प्र १ । भ श. ६ उ० ४ ।

नेरइया णं भंते ! जे पोग्गला अत्तमायाए आहरंति ते किं आयसरीरखेत्तोगाढे पोग्गले अत्तमाए आहारंति अणंतरखेत्तोगाढेपोग्गले अत्तमायाए आहरंति परं पर खेत्तोगाढे पोग्गले अत्तमायाए आहरंति ? गोयमा ! आयसरीरखेत्तोगाढे पोग्गले अत्तमाया एआहारंति नो अणंतरखेत्तोगाढे पोग्गले अत्तमायाए आहारंति नो परंपर खेत्तोगाढे जहा नेरइया तहा जाव वेमाणियाणं दंडओ ॥

टी० नेरइयाणमित्यादि । ( अत्तमायाएत्ति ) । आत्मना आदाय गृहीत्वेत्यर्थः । जीवाधिकारादेवेदमाह । ( आयसरीरे खेत्तोगाढेत्ति ) स्वशरीरक्षेत्रे अवस्थितानीत्यर्थ । ( अणंतरखेत्तोगाढेत्ति)। आत्मशरीरावगाढक्षेत्रापेक्षया यदनन्तर क्षेत्रं तत्रावगाढानीत्यर्थः ( परंपरखेत्तोगाढेत्ति ) आत्मक्षेत्रानन्तरक्षेत्राद्यत्परं क्षेत्रं तत्रावगाढानीत्यर्थः ) ॥ भ श ६ । उ० १० ।

नेरइयाणं भंते सव्वओ आहारंति सव्वओ परिणामंति सव्वओ ऊससन्ति सव्वओ नीससंति अभिक्खणं २ आहारंति अभिक्खणं २ परिणामन्ति अभिक्खणं ऊससंति अभिक्खणं नीससंति आहच्च आहारंति आहच्च परिणामंति आहच्च ऊससंति आहच्च नीससंति । हंता गोयमा ! णेरइया सव्वओ आहारंति एवं चेव जाव आहच्च नीससंति णेरइयाणं भंते ! जे पोग्गले आहारत्ताए गेण्हंति ते णं पोग्गलाणं सेयालंसि कतिभागं आहारेंति कइभागं आसाएंति ? गोयमा ! असंखेज्जइ भागं आहा

रंति अणंतभागं आस्साएंति णेरइयाणं भंते ! जे पोग्गले आहारत्ताए गिएहंति ते किं सव्वे आहारंति नो सव्वे आहारंति' गोयमा ! ते सव्वे अपरिसेसिए आहारंति ॥

( नेरइया ण भते इत्यादि ) प्रश्नसूत्र सुगमं । ( नेरइयाणं भते' जे पोग्गला इत्यादि ) नैरयिका णमिति पूर्ववत् भदन्त ! यान् पुद्गलानाहारतया गृएहन्ति नैरयिकास्तेषां गृहीतानां पुद्गलानां (सेकालसि) एष्यत्काले ग्रहणकालोत्तरकालग्रहणकालमित्यर्थः ( कइभागं ति ) कतिथं भागमाहारयन्ति आहारतयोपभुञ्जते । तथा । कतिभागं कतिथ भागमामाहार्य्यमाणपुद्गलानामास्वाद गृएहंति । न हि सर्वे पुद्गला आहार्यमाणान्यास्वादमायान्ति इति पृथक् प्रश्नः । भगवानाह । गौतम ! असख्येयं भागमाहारयन्ति । अन्ये तु गवादिपृथमबृहद्ग्रासग्रहण इव परिसटन्ति । आहार्य्यमाणानां च पुद्गलानामनन्तभागमास्वादयन्ति । शेषास्त्वनास्वादिता एव शरीरपरिणाममापद्यन्ते इति ॥

णेरइया णं भंते ! जे पोग्गले आहारत्ताए गेएहंति ते णं तेसिं पोग्गला कीसत्ताए भुज्जो भुज्जो परिणमंति ? गोयमा ! सो इंदियत्ताए जाव फासिंदियत्ताए अणिट्ठत्ताए अकंतत्ताए अप्पियत्ताए अमणुन्नाए अमणामत्ताए अणिच्छियत्ताए अभिज्झियत्ताए अहत्ताए नो उड्ढत्ताए दुक्खत्ताए नो सुहत्ताए एतेसिं भुज्जो भुज्जो परिणमंति असुरकुमाराणं भंते ! आहारट्ठी ? हंता ! आहारट्ठी । एवं जहा णेरइयाणं तहा असुरकुमाराणं विभाणियव्वम् जाव तेसिं भुज्जो २ परिणमन्ति । तत्थ णं जेसे आभोगनिव्वत्तिए सेणं जहन्नेणं चउत्थभत्तस्स उक्कोसेणं सातिरेगस्स वाससहस्सस्स आहारट्ठे समुप्पज्जइ ओसन्नकारणं पडुच्च वन्नओ हालिद्दसुक्किलाइं गंधओ सुब्भिगंधाइं रसओ अंबिलमहुराइं फासओ मउलहुयणिद्धुएहाइं तेसिं पोराणं वन्नगुणे जाव फासिंदियत्ताए जाव मणामत्ताए इच्छियत्ताए भिज्झियत्ताए उड्ढत्ताए नो अहत्ताए सुहत्ताए नो दुहत्ताए तेसिं भुज्जो २ परिणमंति सेसं जहा णेरइयाणं एवं जाव थणियकुमाराणं । नवरं आभोगनिव्वत्तिए उक्कोसेणं दिवसपहुत्तस्स आहारट्ठे समुप्पज्जइ ॥

नैरयिका णमिति पूर्ववत् यान्पुद्गलानाहारतया गृएहतिइह ग्रहण विशिष्टमवसेय । ततो ये उज्झितशेषा केवलाहारपरिणामयोग्या एवावतिष्ठन्ते ते ऽऽहारतया गृह्यमाणा पृष्टा इत्यर्थः । अन्यथा निर्वचनसूत्रमपेक्ष्य पूर्वापरविरोधप्रसङ्गो नच भगवद्वचने विरोधसम्भावनाऽप्यस्ति तत इदमेव व्याख्यान सम्यक् । अत एवविधपूर्वापरे विरोधाशङ्काव्युदासार्थे पूर्वसूरिभिः कालिकसूत्रस्यानुयोग कृत उक्तञ्च । "ज जह सुत्ते भणिय तहेव त जइ वियालणा नत्थि । किं कालियाणुजोगो दिट्ठो दिट्ठिप्पहाणेहिं" ॥ १ तान् किं सर्व्वान्नाहारयन्ति उत नो सर्व्वान् सर्वैकदेशभूतान् । भगवानाह । तान्सर्व्वानविशेषेणाहारयन्ति उज्झितशेषाणामेव केवलानामाहारपरिणामयोग्यानां गृहीतः स्यात् ( नेरइयाणमित्यादि ) नैरयिका णमिति पूर्ववत् । यान्पुद्गलानाहारतया गृएहन्ति ते पुद्गला णमिति पूर्ववदेव । नैरयिकाणां कीदृक्तया किं स्वरूपतया भूयः २ परिणमन्ते । भगवानाह । गौतम ! श्रोत्रेन्द्रियतया यावत्करणाच्चक्षुरिन्द्रियतया घ्राणेन्द्रियतया जिह्वेन्द्रियतयेति परिग्रहः । स्पर्शनेन्द्रियतया इन्द्रियरूपतयापि परिणममाणाः शुभरूपाः किंत्वेकांताशुभरूपाः । यत आह । ( अणिट्ठत्ताए इत्यादि ) इष्टा मनसा इच्छाविषयी कृता यथा "शोभनमिदं जात यदित्थमिमे परिणता इति" । तद्विपरीता अनिष्टास्तद्भावस्तत्ता तया इह किंचित्परमार्थतः शुभमपि केषाञ्चिदनिष्ट भवति । यथा माक्षिकाणां चन्दनकर्पूरादिरत आह ( अकतत्ताए )कांता कमनीया अकांता अत्यताशुभवर्णोपेतत्वात् अत एवाऽप्रियतया न प्रिया अप्रिया दर्शनापान कालेऽपि तत्प्रियबुद्धिमात्मन्युत्पादयंतीति भावः । तद्भावोऽप्रियता तया ( असुभत्ताए इति) न शुभा अशुभा अशुभगन्धरसस्पर्शात्मकत्वात् तद्भावस्तत्ता तया ( अमणुन्नत्ताए इति ) न मनोज्ञा अमनोज्ञा विपाककाले दुःखजनकतया न मनःप्रह्लादहेतव इति भावः । तद्भावस्तत्ता तया ( अमणामत्ताए) भोज्यतया मन आप्नुवतीति मन आपा प्राकृतत्वात्पकारस्य मकारत्वे मणाम इति सूत्रनिर्देशः । न मन आपा अमन आपा न जातुचिदपि भोज्यतया जतूनमनोज्ञान् कुर्वन्तीति भावः । तद्भावस्तत्ता तया अत एव । ( अणिच्छियत्ताए इति) अनीप्सिततया भोज्यतया स्वादितुमिष्टा ईप्सिता न ईप्सिता अनीप्सितास्तद्भावस्तत्ता तया । ( अभिज्झियत्ताए । ) अभिध्यानमभिध्या अभिलाष इत्यर्थं । अभिध्या सञ्जाता येष्विति आभिध्यितास्तारकादिदर्शनादितच् प्रत्यय । तद्भावस्तत्ता तया । किमुक्त भवति । ये गृहीताहारतया पुद्गला न ते तृप्तिहेतवोऽभूवन्निति न पुनरभिलषणीयत्वेन परिणमन्ते तया । ( अहत्ताए इति ) अधस्तया गुरुपरिणामतयेति भाव । नो ऊर्ध्वतया लघुपरिणामतया अत एव दुःखतया गुरुपरिणाम परिणतत्वात् न सुखतया लघुपरिणामपरिणतत्वाभावात् । ते पुद्गलास्तेषां नैरयिकाणां भूय परिणमन्ते एतान्येव आहारयिंन इत्यादीनि सप्त द्वाराणि । असुरकुमारादिषु भवनपतिषु चिचिंतयिषुरिदमाह ( जहा नेरइयाणमित्यादि ) यथा नैरयिकाणां तथा असुरकुमाराणामपि भणितव्य । यावद् तेसिं भुज्जो २ परिणमन्तीति पर्यन्तपद । तत्र नैरयिकसूत्रस्य विशेषमुपदर्शयति ( तत्थ ण जेसे इत्यादि ) एव चोपदर्शित सूत्रत्र मन्दमतीनां यथास्थित प्रतीतिमागच्छति ततस्तदनुग्रहाय सूत्रमुपदर्श्यते ( असुरकुमाराण भते ! आहारट्ठी ? हता आहारट्ठी असुरकुमाराण भते ! केवइ कालस्स आहारट्ठे समुप्पज्जइ । ) अत्र सप्तम्यर्थे षष्ठी कियति कालेऽतिक्रान्ते सति भूय आहारार्थ समुत्पद्यत इत्यर्थः । ( असुरकुमाराण दुविहे आहारे पन्नत्ते । तंजहा । आभोगनिव्वत्तिए अणाभोगनिव्वत्तिए य । तत्थ ण जेसे अणाभोगनिव्वत्तिए से ण अणुसमयम विरहिए आहारट्ठे समुप्पज्जइ । तत्थण जेसे आभोगनिव्वत्तिए सेण जहन्नेणं चउत्थभत्तस्स उक्कोसेण साइरेगस्स वाससहस्सस्स आहारट्ठे समुप्पज्जइ । ) अत्र तु चउत्थभत्तस्सेति सप्तम्यर्थे षष्ठी । चतुर्थभक्त आगमिकीय संज्ञा एकसि-

न्दिवसेऽतिकान्ते इत्यर्थः । भूयो जघन्येनाहारार्थः । समुत्पद्यते । एतच्च दशवर्षसहस्रायुषां प्रतिपत्तव्यमुत्कर्षतः सातिरेके अभ्यधिके वर्षसहस्रेऽतिक्रान्ते । एतच्च सागरोपमायुषामवसेयं ॥

असुरकुमाराणं भंते ! किमाहारमाहारयंति ? गोयमा ! दव्वओ अणंतपएसियाइं खेत्तओ असंखेज्जपएसोगाढाइं कालओ अन्नयरठिइयाइं भावओ वन्नमंताइं गंधमंताइं रसमंताइं फासमंताइं जाव नियमा छद्दिसिं आहारंति ओसन्नं कारणं पडुच्च वन्नओ हालिद्दसुक्किल्लाइं गंधओ सुरभिगंधाइं, रसओ अंबिलमहुराइं, फासओ मउयलहुणिद्धुण्हाइं, तेसिं पोराणं वन्नगुणं गंधगुणे फासगुणे जाव इच्छियत्ताए अभिज्झियत्ताए उड्ढत्ताए नो अहत्ताए सुहत्ताए नो दुहत्ताए एतेसिं भुज्जो २ परिणमंति * यथा चासुरकुमाराणां सूत्रमुक्तं । तथा नागकुमारादीनामपि स्तनितकुमारपर्यवसानानांवक्तव्यम्नवरमाभोगनिर्वर्त्तिताहारार्थं चिन्तायामुत्कर्षाभिधानानुसारेण * "उक्कोसेणं दिवसपुहुत्तस्स आहारट्ठे समुप्पज्जइ" * इति वक्तव्यं । एतच्च पल्योपमासंख्येयभागायुषां तदधिकायुषां चावसेयं । शेषं तथैव । तथा चाह । एवं जाव थणियकुमाराणमित्यादि * ॥

सम्प्रति पृथिवीकायिकानामेतान्सप्ताधिकारान् चिंतयितुकाम आह । पृथ्वीकायिकानाम् ॥

पुढवीकाइयाणं भंते ! आहारट्ठी हंता आहारट्ठी । पुढविकाइयाणं भंते ! केवइकालस्स आहारट्ठे समुप्पज्जइ । गोयमा ! अणुसमयं अविरहिए आहारट्ठे समुप्पज्जइ । पुढविकाइयाणं भंते ! किमाहारमाहारंति । एवं जहा । णेरइयाणं जाव ताइं भंते ! कइदिसिं आहारेइ निव्वाघाएणं छद्दिसिं वाघायं पडुच्च सिय तिदिसिं सिय चउदिसिं सिय पंचदिसिं नवरं उसन्नकारणं न भण्णइ । वन्नओ कालनीललोहियहालिद्दसुक्किल्लाइं, गंधओ सुब्भिगंधदुब्भिगंधाइं, रसओ तित्तरसकडुयकसायअंबिलमहुराइं, फासओ कक्खडफासमउयगरुयलहुयसीतउसिणणिद्धलुक्खाइं, तेसिं पोराणा वन्नगुणा । सेसं जहा । नेरइयाणं जाव आहच्च नीससंति पुढविकाइयाणं भंते ! जे पोग्गले आहारत्ताए गेण्हंति । तेसि णं भंते ! पोग्गलेणं सेयालंसि कतिभागं आहारंति । कतिभागं आसायंति ? गोयमा ! असंखेज्जइभागं आहारंति अणंतभागं आसायन्ति पुढविकाइयाणं भंते ! जे पुग्गले आहारत्ताए गेण्हंति ते किं सव्वे आहारंति नो सव्वे आहारंति जहेव णेरइया तहेव । पुढविकाइयाणं भंते ! जे पोग्गले आहारत्ताए गेण्हंति तेणं तेसिं पोग्गलाणं कीसत्ताए भुज्जो भुज्जो परिणमंति ? गोयमा ! फासिंदियवेमायत्ताए तेसिं भुज्जो २ परिणमंति । एवं जाव वणस्सइकाइया । बेइंदियाणं भंते ! आहारट्ठी ? हंता गोयमा ! आहारट्ठी । बेइंदियाणं भंते ! केवइकालस्स आहारट्ठे समुप्पज्जइ जहा णेरइयाणं नवरं तत्थणं जेसे आभोगनिव्वत्तिए सेणं असंखेज्जसमए अंतो मुहुत्तिए आहारट्ठे समुप्पज्जइ सेसं जहा पुढविकाइयाणं जाव आहच्च नीससंति नवरं नियमा छद्दिसिं बेइंदियाणं पुच्छा जे पोग्गले पक्खेवाहारत्ताए गेण्हंति तेणं तेसिं पोग्गलाणं कइभागं आहारंति । कइभागं आसायंति । एवं जहा नेरइयाणं । बेइंदिया णं भंते ! जे पोग्गले आहारत्ताए गिण्हंति । तेसिं किं सव्वे आहारंति । बेइंदियाणं दुविहे आहारे पण्णत्ते । तंजहा । लोम आहारे य पक्खेवाहारे य । जे पोग्गले लोमआहारत्ताए गिण्हंति ते सव्वे अपरिसेसे आहारंति । जे पोग्गले पक्खेवाहारत्ताए गेण्हंति तेसिं असंखेज्जइभागमाहारंति अणेगाइं च णं भागसहस्साइं अफासाइज्जमाणाणं अणासाइज्जमाणाणं विध्वंसमागच्छंति ॥ प्रज्ञा॰ पद २८ ॥

टी॰ ( पुढविकाइयाणं भंते ! इत्यादि) सर्वं पूर्ववदसुरकुमारवद्भावनीय नवरं ( निव्वाघाएण छद्दिसिमित्यादि ) व्याघातो नाम अलोकाकाशेन प्रतिस्खलनं व्याघातस्तस्याभावो निर्व्याघातः। "शब्दे यथावदव्ययपूर्वपदार्थनित्यमव्ययीभाव" इत्यव्ययीभावस्तेन वा तृतीयायामिति विकल्पेन आम्विधानात्पक्षेऽनाम् भाव॰ । नियमादवश्यतया षड्दिशि व्यवस्थितानि षड्भ्यो दिग्भ्य आगतानि द्रव्याण्याहारयंतीति भाव॰ । व्याघातम्पुनः प्रतीत्य लोकनिष्कुटादौ स्यात्कदाचित् । त्रिदिशि तिसृभ्यो दिग्भ्य आगतानि कदाचिच्चतुर्दिग्भ्यः कदाचित्पञ्चदिग्भ्य॰ । काऽत्र भावनेति चेदुच्यते । इह लोकनिष्कुटे पर्यन्ताधस्त्यप्रतराग्निकोणावस्थितो यदा पृथिवीकायिको वर्तते तदा तस्याधस्तादलोकेन व्याप्तत्वादधोदिक् पुद्गलाभाव । आग्नेयकोणावस्थितत्वात्पूर्वदिक् पुद्गलाभावो दक्षिणदिक्पुद्गलाभावश्च । एवमध पूर्वदक्षिणरूपाणां तिसृणां दिशामलोकेन व्यापन्नता अपास्य या॰ परिशिष्टा ऊर्ध्वा अपरा उत्तरा च दिग् व्याहता वर्तते तत आगतान्पुद्गलानाहारयन्ति यदा पुनस्स एव पृथिवीकायिक पश्चिमां दिशमनुसृत्य वर्तते तदा पूर्वा दिगभ्यधिका जाता । द्वे च दिशौ दक्षिणाधस्त्यरूपे अलोकेन व्याहते इति स चतुर्दिगागतान्पुद्गलानाहारयति । यदा पुनरूर्ध्वं द्वितीयादिप्रतरगतपश्चिमदिगवलम्ब्य तिष्ठति तदा अधस्त्याऽपि दिगभ्यधिका लभते केवलदक्षिणैवैका पर्यन्तवर्तिनी अलोकेन व्याहतेति पञ्चदिगागतान्पुद्गलानाहारयन्तीति शेषं सूत्र समस्तमपि पूर्ववद्भणनीय यस्तु विशेषस्तमुपदर्शयति ( न वरमुसन्नकारण न भण्णइ इत्यादि ) सुगम ( फासिंदियवेमायत्ताए इति ) विषममात्रा विमात्रा तस्या भावो विमात्रता तया इष्टानिष्टा नानाभेदत्तयेति भावो न तु यथा नारकाणामेकान्ताशुभतया सुराणां च शुभतयैवेति । एव जाव वणस्सइकाइयाणति । यथा पृथिवीकायिकानां सूत्रमुक्तमेवमप्तेजोवायुवनस्पतीनामपि भणनीय । सर्वेषामपि सकललोकव्यापितया विशेषाभावात् ( बेइंदियाणं भंते ! इत्यादि ) सुगमं नवरं । ( लोमाहारे पक्खेवाहारेयत्ति ) लोम्न आहारो

लोमाहारः । पक्षिप्यतेऽर्थान्मुखे इति प्रक्षेप स चासावाहारश्च प्रक्षेपाहार. तत्र यः खल्वोघतो वर्षादिषु पुद्गलप्रवेशो मूत्रादिगम्यस्स लोमाहार । कावलिकसुखप्रक्षेपाहार । तत्र यान्पुद्गलान् लोमाहारतया गृण्हाति तान्सर्व्वानपरिशेपानाहारयन्ति तेषां तथा २ स्वभावत्वात् । यान्पुद्गलान्प्रक्षेपाहारतया गृण्हन्ति तेषामसख्येयतम भागमाहारयन्ति । अनेकानि पुनर्भागसहस्राणि वहवो ऽसख्येया भागा इति अस्पृश्यमानानामनास्वाद्यमानानां विध्वसमागच्छति । किमुक्त भवति । वहूनि रूव्याण्यनर्वहिश्च अस्पृष्टान्येवाऽनास्वादितान्येव विध्वसमायान्ति नवर यथायोग केचिद्तिस्थौल्यत. केचिद्तिसौक्ष्म्यत. इति । प्रज्ञा० । पद ॥ २८ ॥

सम्प्रत्यस्पृश्यमानानामनास्वाद्यमानाञ्च परस्परमल्पवहुत्वमभिधित्सुराह ॥

एएसिणं भंते ! पोग्गलाणं अणासाइज्जमाणाणं अफासाइज्जमाणाणं य कयरे कयरेहिंतो अप्पा वा ? गोयमा ! सव्वत्थो वा पोग्गला अणासाइज्जमाणा अफासाइज्जमाणा पोग्गला अणंतगुणा ॥

( एएसिण भंते ! इत्यादि ) इह एकैकस्मिन्स्पर्शयोग्ये भागे अनन्ततमो भाग आस्वाद्यो भवति ततो येनास्वाद्यमाना. पुद्गलास्ते स्तोका एवाऽस्पृश्यमानपुद्गलापेक्षया तेषामनन्तभागवर्तित्वात् । अस्पृश्यमानास्तु पुद्गला अनन्तगुणाः ॥

बेइंदियाणं भंते जे पोग्गले आहारत्ताए पु० ! गोयमा ! जिब्भिंदिय फासिंदियवेमायत्ताए तेसिं भुज्जो प.० एवं जाव चउरिंदिया नवरं अणेगाइं च णं भागसहस्साइं अणुग्घाइज्जमाणाइं अफासाइज्जमाणाइं विद्धंसमागच्छंति ॥

टी० ॥ ( जिब्भिंदिय फासिंदिय वेमायत्ताए इति । ) विमात्रतात्रापि प्राग्वद्भावनीया । एव जाव चउरिंदिया । एव द्वीन्द्रियोक्तप्रकारेण । सूत्र तावद्वक्तव्य यावच्चतुरिन्द्रियाश्चतुरिन्द्रियगत सूत्रं प्राय समानवक्तव्यत्वात् । यस्तु विशेषस्स उपदर्श्यते नवरमित्यादि यान्पुद्गलान्प्रक्षेपाहारतया गृण्हति तेषां पुद्गलानामेकमसख्येयतम भागमाहारयन्ति । अनेकानि पुनर्भागसहस्राणि सख्यातीता असख्येयभागा इत्यर्थ. । अनाघ्रायमाणानि अस्पृश्यमानानि अनास्वाद्यमानानि विध्वसमागच्छन्ति तानि च यथायोगमतिस्थौल्यतोऽतिसौक्ष्म्यतश्च वेदितव्यानि । अत्रैवाल्पवहुत्वमाह ।

एतेसिणं भंते पोग्गलाणं अणुग्घाइज्जमाणाणं अणासाइज्जमाणाणं अफासाइज्जमाणाणं य कयरे कयरेहिंतो अप्पा वा ? गोयमा ! सव्वत्थो वा पोग्गला अणुग्घाइज्जमाणा अणासाइज्जमाणा अणंतगुणा अफासाइज्जमाणा अणंतगुणा तेइंदियाणं भंते ! जे पोग्गले पुच्छा गोयमा ! घाणिंदिय जिब्भिंदिय फासिंदिय वेमायत्ताए तेसिं भुज्जो भुज्जो परिणमंति । चउरिंदियाणं चक्खिंदिय जिब्भिंदिय घाणिंदिय फासिंदिय वेमायत्ताए तेसिं भुज्जो भुज्जो परिणमंति सेस जहा तेइंदियाणं पंचिंदियतिरिक्खजोणिया जहा तेइंदिया नवरं तत्थणं जेसे आभोगनिव्वत्तिए से जहन्नेणं अंतो मुहुत्तस्स उक्कोसेणं छट्ठभत्तस्स आहारट्ठे समुप्पज्जइ । पंचिंदियतिरिक्खजोणियाणं भंते ! जे पोग्गलाणं पुच्छा, गोयमा ! सोइंदिय चक्खिंदिय घाणिंदिय जिब्भिंदिय फासिंदिय वेमायत्ताए भुज्जो भुज्जो परिणमंति । मणूसा एवं चेव नवरं आभोगनिव्वत्तिए जहन्नं अंतोमुहुत्तस्स उक्को० अट्ठमभत्तस्स आहारट्ठे समुप्पज्जइ । वाणमंतरा जहा नागकुमारा एवं जोइसिया वि नवरं आभोगनिव्वत्तिए जहन्नं दिवसपु० उक्कोसेण वि दिवसपहुत्तस्स आहारट्ठे समुप्पज्जइ । एवं वेमाणिया वि नवरं आभोगनिव्वत्तिए जहण्णेणं दिवसपु० उक्को० तेतीसाए वासस हस्साणं आहारट्ठे समुप्पज्जइ । सेसं जहा असुरकुमाराणं जाव तेसिं भुज्जो भुज्जो परिणमंति सोहम्मे आभोगनिव्वत्तिए जहन्नेणं दिवसपु० उक्कोसेणं दोण्हं वाससहस्साणं आहारट्ठे समुप्पज्जइ । ईसाणे पुच्छा गोयमा ! जहन्नं दिवसपु० सातिरेगस्स उक्कोसेणं सातिरेगाणं दोण्हं वास सहस्सा । सणंदकुमाराणं पुच्छा गोयमा ! जहन्नेणं दोण्ह वाससहस्साणं उक्कोसेणं सत्तण्हं वाससहस्साणं । माहिंदे पुच्छा गोयमा ! जहन्नेणं दोण्हं वाससहस्साणं सातिरेगाणं उक्कोसेणं सत्तण्हं वाससहस्साणं सातिरेगाणं । बंभलोए पुच्छा । गोयमा ! जहन्नेण सत्तण्ह वाससहस्साणं उक्कोसेणं दसण्हं वाससहस्साणं । लंतए पुच्छा । गोयमा ! जहण्णं दसण्हं वाससहस्साणं उक्कोसेणं चोद्दसण्हं वाससहस्साणं । महासुक्केणं पुच्छा । गोयमा ! जहण्हं चोद्दसण्हं वाससहस्साणं उक्कोसेणं सत्तदसण्हं वास सहस्साणं । सहस्सारे पुच्छा गोयमा ! जहन्न सत्तदसण्ह वाससहस्साणं उक्कोसेण अट्ठारसण्हं वाससहस्साणं आणतेणं पुच्छा गोयमा ! जहन्नं अट्ठारसण्हं वाससहस्साणं उक्कोसेणं एगूणवीसाए वाससहस्साणं । पाणएणं पुच्छा गोयमा ! जहन्नं एगूणवीसाए वाससहस्साण उक्कोसेणं वीसाए वाससहस्साणं । आरणेणं पुच्छा । गोयमा ! जहन्नेणं वीसाए वाससहस्साणं उक्कोसेण एक्कवीसाए वाससहस्साणं । अच्चुएण । पुच्छा ! गोयमा ! जहन्नेणं एक्कवीसाए वाससहस्साणं । उक्कोसेणं वावीसाए वाससहस्साणं । हेट्ठिम २ गेविज्जगाण पुच्छा गोयमा ! जहन्नेणं वावीसाए वाससहस्साणं उक्कोसेणं तेवीसाए वाससहस्साणं । एवं सव्वत्थ सहस्साणि भाणियव्वाणि । हेट्ठिममज्झिमाणं पुच्छा.गोयमा ! जहन्नं तेवीसाए उक्कोसं चउवीसाए हेट्ठिमउवरिमाणं पुच्छा गोयमा ! जहन्नं चउवीसाए उक्कोसेणं पणवीसा । मज्झिमहेट्ठिमाणं पुच्छा । जहन्नं पणवीसाए उक्कोसेण छव्वीस.ए ।

मज्झिममज्झिमाणं पुच्छा, गोयमा ! जहन्नं छव्वीसाए उक्को- सेणं सत्तावीसाए । मज्झिम उवरिमाणं पुच्छा । गोयमा ! जहन्नेणं सत्तावीसाए । उक्कोसेणं अट्ठावीसाए । उवरिमहे- ट्ठिमाणं पुच्छा । गोयमा ! जहएण अट्ठावीसाए उक्कोसेणं एगूणतीसाए । उवरिममज्झिमाणं पुच्छा, गोयमा ! जहएणं एगूणतीसाए उक्कोसेणं तीसाए उवरिमउवरिमगेविज्जगाणं पुच्छा गोयमा ! जहन्नेणं तीसाए उक्कोसेणं एक्कतीसाए वाससह स्साणं । विजयवेजयंतजयंतअपराजियाणं पुच्छा । गोयमा ! जहन्नेणं एक्कतीसाए उक्कोसेणं तेत्तीसाए वाससहस्साणं । सव्वट्ठसिद्धदेवाणं पुच्छा, । गोयमा ! अजहन्नमणुक्को सेणं तेत्तीसाए वाससहस्साणं आहारट्ठे समुप्पज्जइ ॥

टी० । एएसिणं भंते ! इत्यादि । इह एकैकस्मिन् भागे स्प- र्शयोग्येऽनन्ततमोभाग आस्वादयोग्यो भवति । तस्याप्यनन्त तमोभाग आघ्रायमाणयोग्य । ततो यथोक्तमल्पबहुत्व भवति शेष सर्वं सुगम । पचेन्द्रियसूत्रे-जहन्नेण अंतो मुहुत्तस्सेति । षष्ठ्या सप्तम्यर्थत्वादन्तर्मुहूर्त्ते गते सति भूय आहारार्थः समुत्पद्यते उत्कर्षत षष्ठभक्ते ऽतिक्रान्ते एतच्च देवकुरूत्तरकु- रुतिर्य्यक्पंचेन्द्रियापेक्षया द्रष्टव्य । मनुष्यसूत्रे उक्कोसेण अठ- मभत्तस्सत्ति । उत्कर्षतो ऽष्टमभक्ते ऽतिक्रान्ते । एतच्च तास्वेव देवकुरूत्तरकुरुषु द्रष्टव्यं व्यंतरसूत्रे नागकुमारसूत्रवत् । ज्योति ष्कसूत्रमपि तथैव यस्तु विशेषस्तमुपदर्शयति । नवरं ( जह- न्नेण वि दिवसपुहुत्तस्स उक्कोसेण वि दिवसपुहुत्तस्सत्ति ) ज्योतिष्का हि जघन्यतोऽपि पल्योपमाष्टमभागप्रमाणायुष- स्ततस्तेषा जघन्यपदेऽप्युत्कृष्टपदेऽपि दिवसपृथक्त्वेऽतिक्रांते भूय आहारार्थ समुत्पद्यते । पल्योपमासंख्येयभागायुषां च स्वल्पत एव दिवसपृथक्त्वातिक्रमे भूय आहारार्थस्समुत्पद्यते । वैमानिकसूत्रे-नवर ( आभोगनिव्वत्तिए जहन्नेण दिवसपुहु- त्तस्स इति ) एतत्पल्योपमाद्यायुषामवसेयं । उक्कोसेण तेत्ती साए वाससहस्साण ति । एतदनुत्तरसुराणामवसेय । इह यस्या यावन्ति सागरोपमाणि स्थितिस्तस्यास्तावत्सु वर्ष- सहस्र स्थितिपरिमाणं परिभाव्य वैमानिकसूत्र सकलमपि स्वयं विज्ञेयमिति ॥ प्रज्ञा पद. ॥ २८ ॥

वीचिद्रव्यादिभेदेन नवाहार. ॥

नैरयिका किंवीचिद्रव्याण्यवीचिद्रव्याणि वाहारयति ।

णेरइयाण भंते ! किं वीचि दव्वाइं आहारेंति अवीचिं दव्वाइं आहारेंति ? गोयमा ! णेरइया वीचिदव्वाइं पि आहारेंति अवीचिदव्वाइं पि आहारेंति । से केणट्ठेणं भंते ! एवं वुच्चइ । णेरइया वीची तं चेव आहारेंति ! गोयमा ! जेणं णेरइया एगपदेसूणाइं पि दव्वाइं आहारेंति तेणं णेरइया वीचिदव्वाइं आहारेंति जेणं णेरइया पडि पुण्णाइं दव्वाइं आहारेंति तेणं णेरइया अवीचिदव्वाइं आहारेंति से तेणट्ठेणं गोयमा ! एवं वुच्चइ जाव आहा- रेंति एवं जाव वेमाणिया आहारेंति ॥

टी० । वीइ इत्यादि ॥ वीचिर्विवक्षितद्रव्याणां तदवयवाना च परस्परेण पृथग्भावो "विचिर पृथग्भावे" इति वचनात् तत्र विचिप्रधानानि द्रव्याणि वीचिद्रव्याणि एकादिप्रदेश न्यूनानीत्यर्थ. । एतन्निषेधादवीचिद्रव्याणि । अयमत्र भावो- यावता द्रव्यसमुदायेनाहार. पूर्य्यते स एकादिप्रदेशो नो वीचिद्रव्याएयुच्यते । परिपूर्णस्त्ववीचिद्रव्याणीति टीका- कार. । चूर्णिकारस्त्वाहारद्रव्यवर्गणा अधिकृत्येद व्याख्यात- वान् तत्र च या. सर्वोत्कृष्टा आहारद्रव्यवर्गणास्ता अवीचि- द्रव्याणि । यास्तु तान्य एकादिना प्रदेशेन हीनास्ता वीचि द्रव्याणीति ( एगपएसूणाइ पि दव्वाइंति ) एकप्रदेशोनान्यपि अपि शब्दादनेकप्रदेशोनान्यपीति ॥ भ. १४ श ६ उ ॥

अनन्तराहारा. परम्पराहारा' ।

णेरइयाणं भंते ! अणंतराहारा तत्तो निव्वत्तणया तत्तो परियाइणया तत्तो परिणामणया तत्तो परियारणया तत्तो पच्छा विउव्वणया ? हंता गोयमा ! णेरइया अणंत- राहारा तत्तो निव्वत्तणया तत्तो परियाइणया तत्तो परिणामणया तओ परियारणया तओ पच्छा विउव्वणया असुरकुमाराणं भंते ! अणंतराहारा तओ निव्वत्तणया तओ परियाइणता तओ परिणामणता तओ विउव्व- णया तओ पच्छा परियारणया ? हंता गोयमा ! असुर- कुमारा अणंतराहारा तओ निव्वत्तणया जाव तओ पच्छा परियारणया । एवं जाव थणियकुमारा । पुढवि- काइयाणं भंते ! अणंतराहारा तओ निव्वत्तणया तओ परियाइणता तओ परिणामणता तओ परियारणता तओ विउव्वणया ? हंता गोयमा ! तं चेव जाव परियारणता नो चेव ण विउव्वणता एवं जाव चउरिंदिया नवरं वाउका- इया पंचिंदियतिरिक्खजोणिया मणुस्सा जहा णेरइया वाणमंतरजोइसियवेमाणिया जहा असुरकुमारा ॥

टी० । नैरयिका णमिति वाक्यालङ्कारे । भदन्त ! परमक- ल्याणयोगिन् ! परमसुखयोगिन् ! वा अनन्तरमुपपातक्षेत्र- प्राप्तिसमयमेव आहारयन्तीत्यनन्तराहारा' । ततो निव्वत्त- णया इति । ततोऽनन्तराहारग्रहणादारभ्य क्रमेण शरीरस्येति निर्वर्तिता निष्पत्तिर्भवति । तओ परियाइणया इति । ततश्श रीरनिष्पत्तेरारभ्य पर्यादान यथायोगमङ्गप्रत्यङ्गैर्लोमाहारादि ना समन्तत पुद्गलादान । तओ परिणामणया इति । तत. पुद्गलादानादनन्तर तेषां पुद्गलानाम्परिणामनमिन्द्रियादिरूप- तया परिणमन्यापादन । ततो परियारणया इति । तत इन्द्रिया दिरूपतया परिणमन्यापादनादूर्ध्वं परिचारणा यथायोगं शब्दा- दिविषयोपभोग तत पश्चात् विकुर्वणा वैक्रियलब्धिवशात् विक्रिया नानारूपा एवमुक्ते भगवानाह-हंता गोयमेत्यादि । हंतेत्यभ्यनुज्ञायां हता गौतम ! नैरयिका अनतराहारा इत्या दि । तदेव यथा नैरयिकाणामनन्तराहारादिवक्तव्यतोक्ता तथा असुरकुमारादीनामपि स्तनितकुमारपर्य्यवसानानां वक्तव्या नवर पूर्व्वं विकुर्व्वण पश्चात्परिचारणा ते हि विशिष्टशब्दादुप- भोगवाञ्छायां पूर्वमिष्टं वैक्रियरूप कुर्व्वन्ति पश्चात् शब्दादुप भोगमित्येष नियम । शेषास्तु शब्दाद्युपभोगसंपत्तौ सत्यां दर्पवशाद्विशिष्टतरशब्दाद्युपभोगवाञ्छातो ऽन्यतो वा कुतश्चि- त्कारणाद्विकुर्व्वते । ततस्तेषां पूर्व्वं प्रविचारणा पश्चाद्विकुर्व्व- णेति पृथिवीकायविषये प्रश्नसूत्रे तथैव उत्तरसूत्रे तावद्वक्तव्य यावत्परिचारणा तेषामपि स्पर्शोपभोगसम्भवात् । नो चेव णं

विउव्वणयत्ति । न चैव तेषां विकुर्वणा वाच्या वैक्रियलब्धेर-सम्भवात् । एवमित्यादि । एवं पृथिवीकायवदप्कायादयो वातकायवर्जास्तावदध्येतव्या यावच्चतुरिन्द्रिया सर्वेषामपि वैक्रियलब्धेरसम्भवेन सूत्रस्य समानत्वात् वातकायान् प्रति विशेषमभिधित्सुः समानगमत्वात्पञ्चेन्द्रियतिर्यङ्मनुष्याणामपि वातकायैः सहातिर्देशमाह । नवरमित्यादि । जहा नेरइया इति । यथा नैरयिकास्तथा वक्तव्याः । किमुक्तं भवति । नैरयिकवद्विकुर्वणाप्येतेषां वक्तव्या वैक्रियलब्धिसम्भवात् । सा च प्रविचारणायाः पश्चादिति । वाणमंतरजोइसियवेमाणिया जहा असुरकुमारा इति । असुरकुमाराणामिव व्यन्तरादीनामपि पूर्वं विकुर्वणा पश्चात्परिचारणा वक्तव्येति भावः । सुरगणाना सर्वेषामपि तथा स्वाभाव्यात् । उक्तञ्च मूलटीकायां "पुव्वं विउव्वणा खलु पच्छा परिचारणा सुरगणाणं । सेसाणं पुव्वं परियारणाओ पच्छा विउव्वणया„ इति । प्रज्ञा. ३४ पद ।

सम्प्रत्याहारविषयमाभोगं चिचिन्तयिषुरिदमाह ।

णेरइया णं भंते ! आहारे किं आभोगनिव्वत्तिए अणाभोगनिव्वत्तिए ? गोयमा ! आभोगनिव्वत्तिए वि अणाभोगनिव्वत्तिए वि । एवं असुरकुमाराणं जाव वेमाणियाणं नवरं एगिंदिया णं नो आभोगनिव्वत्तिए अनाभोगनिव्वत्तिए । णेरइया णं भंते ! जे पोग्गले आहारत्ताए गेण्हंति ते किं जाणंति पासंति आहारंति उदाहु न जाणंति न पासंति आहारंति गोयमा ! न जाणंति न पासंति आहारंति । एवं जाव तेइंदिया । चउरिंदियाणं पुच्छा, गोयमा ! अत्थेगइया न जाणंति पासंति आहारंति, अत्थेगतिया न जाणंति न पासंति आहारंति । पंचिंदियतिरिक्खजोणियाणं पुच्छा । गोयमा ! अत्थेगतिया जाणंति पासंति आहारंति अत्थेगतिया जाणंति न पासंति आहारंति अत्थेगतिया न जाणंति पासंति आहारंति, अत्थेगतिया न जाणंति न पासंति आहारंति । एवं मणुस्साविं । वाणमंतरजोइसिया जहा णेरइया । वेमाणियाणं पुच्छा । गोयामा ! अत्थेगतिया जाणंति पासंति आहारंति अत्थेगतिया न जाणंति न पासंति आहारंति । से केणट्ठेण भंते ! एवं वुच्चइ—वेमाणिया अत्थेगतिया जाणंति पासंति आहारंति । अत्थेगतिया न जाणंति न पासंति आहारंति ? गोयमा ! वेमाणिया दुविहा पण्णत्ता, तंजहा माई मिच्छदिट्ठी उववन्नगा य अमाई सम्मादिट्ठी उववन्नगा य । एवं जहा इंदियउद्देसे पढमे भणिए तहा भाणियव्वं जाव से तेणट्ठेणं गो. एवं वुच्चइ ॥

टी० आभोगनिर्वर्त्तितो यत्र मनःप्रणिधानपूर्वमाहारं गृह्णाति शेषकालमनाभोगनिर्वर्तितः स च लोमाहारोऽवसातव्यः । एवं शेषाणामपि जीवानामाभोगनिर्वर्तितोऽनाभोगनिर्वर्तितश्चाहारो भावनीयः । नवरमेकेन्द्रियाणामतिस्तोकापटुमनोद्रव्यलब्धिसम्पन्नत्वात् । पटुतर आभोगो नोपजायते । इति तेषां सर्वदानाभोगनिर्वर्तित एवाहारो न पुनः कदाचिदप्याभोगनिर्वर्तितः । अधुनाहार्य्यमाणपुद्गलविषये ज्ञानदर्शने चिन्तयति । नेरइयाणं इत्यादि । नैरयिकाणमिति वाक्यालङ्कारे । भदन्त ! यान्पुद्गलानाहारतया गृण्हन्ति ।

भगवानाह गौतम ! जानन्त्यवधिज्ञानेन लोमाहारतया तेषामतिसूक्ष्मत्वेन नारकावधेरविषयत्वात् ॥ न च पश्यति चक्षुरिन्द्रियविषयाभावात् । द्वीन्द्रिया न जानन्ति । मिथ्याज्ञानतया तेषां सम्यक्परिज्ञानाभावात् । द्वीन्द्रियाणां हि मत्यज्ञानं तदपि चास्पष्टमतः प्रक्षेपाहारमपि न ते स्वयं गृह्यमाणमपि सम्यक् जानन्ति न च पश्यन्ति चक्षुरिन्द्रियाभावात् । एवं त्रीन्द्रिया अपि ज्ञानदर्शनविकला भावनीयाः । चतुरिन्द्रियाः । अत्थेगइयत्ति । सन्त्येकके स्वयं गृह्यमाणमप्याहारप्रक्षेपकत्वस्वरूपमपि न जानति । मिथ्याज्ञानित्वात् । तेषामपि हि द्वीन्द्रियाणामिव मत्यज्ञानं तदपि चाविस्पष्टमिति चक्षुषा पुनः पश्यति चक्षुरिन्द्रियसद्भावात् । तथाहि । पश्यन्ति मक्षिकादयो गुडादिकमिति एवमाहारयन्ति तथा सन्त्येकके चतुरिन्द्रिया ये न जानन्ति मिथ्यात्वान्न च पश्यन्ति अन्धकारादिना चक्षुर्दर्शनस्य व्याहतत्वात् अनाभोगसंभवाच्च । तिर्यक्पञ्चेन्द्रियतिरश्चां चतुर्भंगी प्रक्षेपाहारं लोमाहारञ्चाधिकृत्य भावनीया । तत्र प्रक्षेपाहारमधिकृत्यैव भावना । सन्त्येकके तिर्यक्पचेन्द्रिया ये प्रक्षेपमाहारं जानन्ति सम्यग्ज्ञानितया तपां यथावस्थितपरिज्ञानात् । पश्यन्ति चक्षुरिन्द्रियभावात् । एवमाहारयन्ति । सन्त्येकके ये जानन्ति पूर्ववन्न च पश्यन्ति दर्शनस्यान्धकारादिना अनाभोगेन वा व्याहतत्वात् । तथा सन्त्येकके ये न जानन्ति मिथ्याज्ञानतया सम्यक्परिज्ञानाभावात् । पश्यन्ति पुनश्चक्षुरिन्द्रिययोगात् । तथा सन्त्येकके ये न जानन्ति । मिथ्याज्ञानित्वान्न च पश्यति पूर्ववत् । एवमाहारयन्ति लोमाहारापेक्षया त्वेवं भावना सन्त्येकके तिर्यक् पचेन्द्रिया ये लोमाहारमपि जानन्ति विशिष्टावधिज्ञानपरिकलितत्वात् । पश्यन्ति । तथाविधक्षयोपशमभावत इन्द्रियपाटवस्यातिविशुद्धत्वात् । एवमाहारयन्ति । यथा सन्त्येकके ये जानन्ति पूर्ववत् । न च पश्यन्ति तथाविधस्येन्द्रियपाटवस्याभावात् । तथा सन्त्येकके न जानन्ति पश्यन्ति तथारूपपाटवाभावादिति एवं मनुष्याणामपि लोमाहारप्रक्षेपाहारौ प्रतीत्य चतुर्भंगी भावनीया । वाणमंतरजोइसिया जहा नेरइया । नैरयिकावधिरिव व्यन्तरज्योतिष्कावधिरपि मनोभक्षीवेऽप्याहारपुद्गलानामविषयत्वात् । वेमाणियाणं पुच्छति । वैमानिकानामपृथक् सूत्रं वक्तव्यं । वेमाणियाणं भंते ! जे पोग्गले आहारत्ताए गिण्हंति ते किं जाणंति पासंति उदाहु न जाणंति न पासंति आहारंति इति । भगवानाह गोयमेत्यादि । माया पूर्वभवकृता विद्यते येषान्ते मायिनो मायया हि यथा तथा चाररूपतया कलुषकर्म प्रादुर्भाव । कलुषे च कर्मण्युदयमागते भवप्रत्युदयादप्युपजायमानो ऽवधिर्नातिसमीचीनो भवति । एते च सम्यग्दृशो वेदितव्या ।तथामिथ्याविपर्यस्ता दृष्टिर्जिनप्रणीतवस्तुतत्त्वप्रतिपत्तिर्येषान्ते मिथ्यादृष्टय । मायिनश्च मिथ्यादृष्टयश्च मायिमिथ्यादृष्टयस्ते च ते उपपन्नाश्च मायिमिथ्यादृष्टयुपपन्नास्त एव स्वार्थिककप्रत्ययविधानात्

मायिमिथ्यादृष्ट्युपपन्नकास्ते चोपरितनोपरितनग्रैवेयकपर्यव साना विज्ञेयाः ॥ तेषां यथायोगमवश्य मिथ्यादृष्टित्वस्य मायित्वस्य च भावात् । तद्विपरीता अमायिसम्यग्दृष्ट्युपपन्नकास्ते चानुत्तरविमानवासिनस्तेषामवश्य सम्यग्दृष्टित्व पूर्वानन्तर भवे नितरां प्रतनुक्रोधमानमायालोभत्वस्योपशान्तकषायत्वस्य च भावात् । आह च मूलटीकाकारः ( वेमाणिया माइमिच्छद्दिट्ठी उववन्नगा जाव उवरिमगेवेज्जा अमायिसम्मद्दिट्ठी उववन्नगा ) अनुत्तरा एव गृह्यन्ते इति । एवं जहेत्यादि । एव मुक्तेन प्रकारेण प्राक् यथा इन्द्रियसत्के प्रथमोद्देशके भणित तथा भणितव्यं । तच्च तावत् यावत्सर्वान्तिमं । से एणमित्यादिना निगमनवाक्यं तच्चैवं—

तत्थ णं जे ते मायिमिच्छद्दिट्ठिउववन्नगा तेणं न याणंति न पासंति आहारंति तत्थ णं जे ते अमायिसम्मद्दिट्ठि उववन्नगा तेणं दुविहा पएणत्ता । तं अणंतरोववन्नगा परंपरोववन्नगा य । तत्थ णं जे ते अणंतरोववन्नगा ते न याणति न पासंति आहारंति । तत्थ णं जे ते परंपरोववन्नगा ते दुविहा पन्नत्ता । तं० पज्जत्तगा य अपज्जत्तगाय तत्थ णं जे ते अपज्जत्तगा ते न याणंति न पासंति आहारंति । जे ते पज्जत्तगा ते दुविहा पन्नत्ता। तं० उवउत्ता य अणुवउत्ता य । तत्थ णं जे ते अणुवउत्ता ते न याणंति न पासंति आहारंति। तत्थ णं जे ते उवउत्ता ते जाणंति पासंति आहारंति से तेणट्ठेणं गोयमा! एवं वुच्चइ । अत्थेगइया न जाणंति न पासंति आहारंति । अत्थेगइया जाणंति पासंति आहारंति इति ।

अस्यायमर्थः । सूत्रे ये ते मायिमिथ्यादृष्ट्युपपन्नका उपरितनोपरितनग्रैवेयकपर्य्यवसाना इत्यर्थः । ते मनोभक्ष्याहारयोग्यान्पुद्गलान् न जानति अवधिज्ञानेन तदेवावधेस्तेषामविषयत्वात् । न पश्यन्ति चक्षुषा तथाविधपाटवाभावात् । येऽप्यमायिसम्यग्दृष्ट्युपपन्नका अनुत्तरविमानवासिन इत्यर्थः । ते द्विधा अनन्तरोपपन्नका परम्परोपपन्नकाश्च । प्रथमसमयोत्पन्ना अप्रथमसमयोत्पन्नाश्चेत्यर्थः । अत्र ये ते अनन्तरोपपन्नकास्ते न जानन्ति न पश्यन्ति प्रथमसमयोत्पन्नतयाऽवधिज्ञानोपयोगस्य चक्षुरिन्द्रियस्याभावात् । किन्त्वेवमेवाहारयन्ति । तत्र ये ते परम्परोपपन्नकास्ते द्विविधास्तद्यथा पर्य्याप्ता अपर्य्याप्ताश्च । तत्र ये ते अपर्य्याप्तकास्ते न जानन्ति न च पश्यन्ति पर्य्याप्तानामसंपूर्णत्वेनावध्याद्युपयोगाभावात् । ये ऽपि पर्य्याप्तास्ते ऽपि द्विविधास्तद्यथा उपयुक्ता अनुपयुक्ताश्च । तत्र ये ते उपयुक्तास्ते जानन्ति अवधावनतो यथाशक्तिनियमेन ज्ञानस्य स्वविषयपरिच्छेदाय प्रवृत्तिसम्भवात् । पश्यन्ति चक्षुषा इन्द्रियपाटवस्य तेषामतिविशिष्टत्वात् । ये त्वनुपयुक्तास्ते न जानन्ति न च पश्यन्ति अनुपयुक्तत्वादेव । उपयुक्ता अपि कथं मनोभक्ष्याहारयोग्यान्पुद्गलान् जानन्ति इति चेदुच्यते । अनावश्यकप्रथमपीठिकायामवधिज्ञानाधिकारेऽभिहितं "संभिन्नलोगनालिं पासंति अणुत्तरा देवा" ॥ अस्यायमर्थः । संभिन्नां परिपूर्णां लोकनाडीं पश्यन्ति अनुत्तरा देवाः ... पल्योपमं यावत् ... 'संभिन्नलोगनालिं'

पासन्ति अनुत्तरधे वा" इति वचनात् । ततस्ते मनोभक्ष्याहारयोग्यानपि पुद्गलान् जानन्ति । आह च मूलटीकाकारः । ते जानन्ति आहारयंति च विशुद्धत्वादवधेरिन्द्रियविषयस्य चातिविशुद्धत्वात्पश्यन्त्यपि इति । अत्रेन्द्रियविषयस्येति इन्द्रियपाटवस्येतिभावः । उपसंहारवाक्य प्रतीतार्थं ॥

सम्प्रत्येकेन्द्रियशरीरादीनामधिकारमभिधित्सुराह ॥

नेरइयाणं भंते ! किं एगिंदियसरीराइं आहारंति जाव पंचिंदियसरीराइं आहारंति ? गोयमा ! पुव्वभावपन्नवणं पडुच्च एगिंदियसरीराइं पि आहारंति जाव पंचिंदियसरीराइं पि आहारंति । पडुप्पन्नभावपन्नवणं पडुच्च नियमा पंचिंदियसरीराइं पि एव जाव थणियकुमारा । पुढविकाइयाणं पुच्छा, गोयमा ! पुव्वभावपन्नवणं पडुच्च एवं चेव पडुप्पन्नभावपन्नवणं पडुच्च नियमा एगिंदियसरीराइं आहारंति । बेइंदिया पुव्वभावपन्नवणं पडुच्च एवं चेव पडुप्पन्नभावपन्नवणं पडुच्च नियमा बेइंदियसरीराइं आहारंति । एवं जाव चउरिंदिया जाव पुव्वभावपन्नवणं पडुच्च एवं पडुप्पन्नभावपन्नवणं पडुच्च नियमा जस्स जइ इंदिया तस्स इंदियसरीराइं ते आहारंति। सेसं जहा नेरइया जाव वेमाणिया ॥

टी ॥ नेरइयाणं भंते! इत्यादिप्रश्नसूत्रं सुगमं निर्वचनसूत्रमाह । गोयमेत्यादि । पूर्वोऽतीतो भावस्तस्य प्रज्ञापना प्ररूपणा तां प्रतीत्य एकेन्द्रियशरीराण्यपि यावत्करणात् द्वित्रिचतुरिन्द्रियशरीरपरिग्रहः । पंचेन्द्रियशरीराण्यप्याहारयन्ति । इयमत्र भावना । यदा तेषामाहार्य्यमाणानां पुद्गलानामतीतो भावः परिभाव्यते तदा ते किंचित्कदाचित् एकेन्द्रियशरीरतया परिणता आसीरन् । कदाचित् द्वीन्द्रियशरीरतया परिणता आसीरन् । कदाचित् त्रीन्द्रियशरीरतया कदाचिच्चतुरिन्द्रियशरीरतया कदाचित्पञ्चेन्द्रियशरीरतया ततो यदि पूर्वभाव इदानीमध्यारोप्य विवक्ष्यते तदा नैरयिका एकेन्द्रियशरीराण्यपि यावत्पञ्चेन्द्रियशरीराण्यप्याहारयन्तीति भवति । पडुप्पन्नभावपन्नवणं पडुच्चेत्यादि । प्रत्युत्पन्नो वार्तमानिक स चासौ भावश्च प्रत्युत्पन्नभावस्तस्य प्रज्ञापना तां प्रतीत्य नियमादवश्यतया पंचेन्द्रियशरीराण्याहारयन्ति । कथमिति चेदुच्यते । इह प्रत्युत्पन्नभावप्रज्ञापनां करोति नय ऋजुसूत्रो न शेषा नैगमादय । ऋजुसूत्रश्च क्रियमाण कृतमभ्यवह्रियमाणमभ्यवहृत परिणम्यमाण परिणतमभ्युपगच्छति । अभ्यवह्रियमाणाश्च पुद्गलास्ते उच्यन्ते ये स्वशरीरतया परिणम्यमाना वर्तन्ते । अभ्यवह्रियमाणं चाभ्यवहृत परिणम्यमानञ्च परिणतमिति तन्मतेन शरीरमेवाभ्यवह्रियते । स्वशरीरञ्च तेषां पञ्चेन्द्रियशरीरन्तेषामत उक्त नियमात्पञ्चेन्द्रियशरीराण्याहारयन्तीति । एवमसुरकुमारादय स्तनितकुमारपर्य्यवसाना भवनपतयो वक्तव्या । पृथिवीकायिकसूत्रे प्रत्युत्पन्नभावप्ररूपणाचिन्तायां नियमादेकेन्द्रियशरीराण्याहारयन्तीति वक्तव्य । तेषामेकेन्द्रियतया तच्छरीराणामेकेन्द्रियशरीरत्वात् । एव द्वीन्द्रियसूत्रे नियमाद् द्वीन्द्रियशरीराण्याहारयन्तीति वक्तव्यं । त्रीन्द्रियसूत्रे नियमात्त्रीन्द्रियशरीराणि चतुरिन्द्रियसूत्रे नियमाच्चतुरिन्द्रियशरीराणीति । तिर्य्यक्पञ्चेन्द्रिया मनुष्या व्यन्तरज्योतिष्कवैमानिकाश्च नैरयिकवद्वक्तव्याः तथा चाह ( पुढवीकाइयाणं पुच्छा ) इत्यादि ॥ प्रज्ञा० प० २८ ॥

अधुना लोमाहाराधिकार विभावयिषुरिदमाह ॥

नेरइया णं भंते ! किं लोमाहारा पक्खेवाहारा ? गोयमा ! लोमाहारा नो पक्खेवाहारा । एवं एगिंदिया सव्वे देवा य भाणियव्वा जाव वेमाणिया । बेइंदिया जाव मणुस्सा लोमाहारा वि पक्खेवाहारा वि ॥

( नेरइयाणमित्यादि ) सुगम नवर नैरयिकाणां प्रक्षेपाहारो न भवतीति वैक्रियशरीराणां तथा स्वभावत्वात् लोमाहारोऽपि च पर्याप्तानामवसेयो नापर्याप्तानामिति ॥ ( एवमेगिंदिया इत्यादि ) एव नैरयिकोक्तेन प्रकारेण एकेन्द्रिया• पृथिव्यप्तेजोवायुवनस्पतय• सर्वे देवाश्चासुरकुमारादयो यावद्वैमानिका भणितव्यास्तत्रैकेन्द्रियाणां प्रक्षेपाहाराभावो मुखाभावात् । असुरकुमारादीनां वैक्रियशरीरितया तथा स्वभावात् द्वित्रिचतुरिन्द्रियास्तिर्यक्पञ्चेन्द्रिया मनुष्याश्च लोमाहारा अपि वक्तव्या• । प्रक्षेपाहारा अपि उभयरूपस्याप्याहारस्य तेषां संभवात्

चरममर्थाधिकारमभिधित्सुराह ॥

नेरइया णं भंते ! किं ओयाहारा मणभक्खी ? गोयमा ! ओयाहारा णो मणभक्खी एवं सव्वे उरालियसरीरा वि देवा सव्वे जाव वेमाणिया ओयाहारा वि मणभक्खी वि । तत्थ णं जे ते मणभक्खी देवा तेसि णं इच्छामणे समुप्पज्जइ इच्छामो णं मणभक्खणं करित्तए तए णं तेहिं देवेहिं एवं मणसीकए समाणे खिप्पामेव जे पोग्गला इट्ठा कंता जाव मणामा तेसिं मणभक्खत्ताए परिणमंति से जहा नामए सीता पोग्गला सीतं पप्पसीतं चेव अतिवइत्ताणं चिट्ठंति उसिणा वा पोग्गला उसिणं पप्पउसिणं चेव अतिवइत्ताणं चिट्ठंति एवामेव तेहिं मणभक्खणे कए समाणे से इच्छामणे खिप्पामेव अवेति ॥

( नेरइया ण भंते ! इत्यादि ) ओज उत्पत्तिदेशे आहारयोग्यपुद्गलसमूह• । ओज आहारो येषान्ते ओजआहारा मनसा भक्षयन्तीत्येव शीला मनोभक्षिण• । तत्र नैरयिका ओज आहारा भवन्ति । अपर्याप्तावस्थायामोजस एवाहारस्य संभवात् मनोभक्षिणस्त्वेते न भवन्ति मनोभक्षणलक्षणो ह्याहारस्स उच्यते । ये तथाविधशक्तिवशान्मनसा स्वशरीरपुष्टिजनका• पुद्गला अभ्यवह्रियन्ते । यदभ्यवहरणानन्तरञ्च तृप्तपूर्व्व परमसन्तोष उपजायते नचैतन्नैरयिकाणामस्ति । प्रतिकूलकर्म्मोदयवशतस्तथारूपशक्त्यभावादेवं ( सव्वे उरालियशरीरा वि ) इति । एव नैरयिकोक्तेन प्रकारेणौदारिकशरीरिणोऽपि सर्व्वे पृथिवीकायिकादयो मनुष्यपर्य्यवसाना वक्तव्या । तद्यथा । ( पुढविकाइया ण भंते ! किं ओयाहारा मणभक्खी ? गोयमा ! ओयाहारा नो मणभक्खी त्यादि ) देवा इत्यादि देवास्सर्वे यावद्वैमानिका ओजआहारा अपि मनोभक्षिणोऽपि वक्तव्या• । तद्यथा—

असुरकुमारा णं भंते ! किं ओयाहारा मणोभक्खी ? गोयमा ! ओयाहारा वि मणभक्खी वि जाव वेमाणियाण पुच्छा गोयमा ! ओयाहारा वि मणभक्खी वि ॥

सम्प्रति मनोभक्षित्व देवानां यथा भवति तथोपदर्शयति । तत्र तेषु ससारिषु जीवेषु मध्ये णमिति वाक्यालंकारे । ये मनोभक्षिणो देवास्तेषा णमिति प्राग्वत् । मन प्रस्तावादाहारविषय समुत्पद्यते । केनोल्लेखेनेत्यत आह इच्छामो अभिलषामो णमिति पूर्व्ववत् मनोभक्षिणमिति मनसा भक्षणं मनोभक्षण कर्तुमिति तत एव तैर्मनसि कृते व्यवस्थापिते मनोभक्षणे सति तथा विध्रशुभकर्मोदयवशात् क्षिप्रमेव तत्कालमेवेति भावः । ये इष्टा• कान्ता• प्रिया मनोज्ञा• मन आपा पुद्गलास्तेषां व्याख्यानं प्राग्वत् । तेषां देवानां मनोभक्षतया परिणमन्ति कथमित्यत्रैव दृष्टान्तमाह ( से जहा नामए ) से शब्दोऽथशब्दार्थ• सचात्र वाक्योपन्यासे यथा नामेति विवक्षिता• शीता• पुद्गला• शीत शीतयोनिक प्राणिन प्राप्य ते शीतत्वमेवातिव्रज्यातिशयेन गत्वा तिष्ठन्ति किमुक्त भवति । विशेषतश्शीतीभूय शीतयोनिकस्य प्राणिनः सुखित्वायोपकल्पन्त इति । उष्णा वा पुद्गला उष्णम् उष्णयोनिक प्राप्य उष्णमेव उष्णत्वमेवातिव्रज्यातिशयेनगत्वा तिष्ठन्ति विशेषतस्स्वरूपलाभसम्पत्त्या तस्य सुखित्वायोपतिष्ठन्त इति भावः । एवमेव अनेनैव प्रकारेण तैर्देवै• प्रागुक्तरीत्या मनोभक्षणे कृते सति स तेषां देवानामिच्छा मन आहारविषयेच्छा प्रधानमन• क्षिप्रमेवापैति तृप्तिभावान्निवर्तत इति भाव । इयमत्र भावना यथा शीत पुद्गला• शीतयोनिकस्य प्राणिन• सुखित्वायोपकल्पन्ते उष्ण पुद्गला वा उष्णयोनिकस्य तथा देवैरपि मनसाऽभ्यवह्रियमाणा• पुद्गलास्तेषां तृप्तये परमसंतोषाय चोपकल्पन्ते तत आहारो विषयाभिलाषनिवृत्तिर्भवतीति । अत्र च ओज आहारादिविभागप्रतिपादिका इमास्सूत्रकृताङ्गनिर्युक्तिगाथा• ।

सरीरेणोसयाहारो तयादिफासेण लोम आहारो ।
पक्खेवाहारो पुण कावलिओ होइ नायव्वो ॥ १ ॥
ओयाहारा जीवा सव्वे अपज्जत्तगा मुणेयव्वा ।
पज्जत्तगा य लोमे पक्खेवे होंति भइयव्वा ॥ २ ॥
एगिंदियदेवाणं णेरइयाणं च णत्थि पक्खेवो ।
सेसाणं जीवाणं संसारत्थाणपक्खेवा ॥ ३ ॥
लोमाहार एगिंदियाओ णेरइयसुरगणा चेव ।
सेसाणं आहारो लोमे पक्खेवओ चेव ॥ ४ ॥
ओयाहार मणभक्खिणो य सव्वे वि सुरगणा होंति ।
सेसा हवंति जीवा लोमे पक्खेवओ चेव ॥ ५ ॥

अथ क आहार आभोगनिर्वर्तित को वाऽनाभोगनिर्वर्तित इति चेदुच्यते । देवानामाभोगनिर्वर्तित ओज आहार स चापर्य्याप्तावस्थायां लोम आहारोऽपि अनाभोगनिर्व्वर्तितस्स च पर्य्याप्तावस्थायां आभोगनिर्वर्तितो मनोभक्षणलक्षण स च पर्य्याप्तावस्थायां आभोगनिर्वर्तितो मनोभक्षणलक्षणनिर्वर्तित आहारोऽपर्य्याप्तावस्थायां लोमाहार पर्याप्तावस्थायां नैरयिकवर्ज्जानां लोमाहारो नैरयिकाणा लोमाहार आभोगनिर्वर्तितोऽपि द्वीन्द्रियादीनां मनुष्यपर्य्यवसानानां य• प्रक्षेपाहारस्स आभोगनिर्वर्तित एवेति ॥

नैरयिकादिषु आहारपुद्गलानां चयोपचयादिजीवशब्दे ।

आहारपदस्य द्वितीये उद्देशेऽर्थाधिकारा• ।

आहारभवियसन्नी लेस्सादिट्ठी य संजयकसाए ।
णाणाजोगुवओगे वेदेयसरीरपज्जत्ती ॥ १ ॥

प्रथम सामान्येन आहाराधिकारो, द्वितीयो भव्याधिकारो भव्यविशेषिताहाराधिकार• । एव तृतीय सञ्ज्ञाधिकार, चतुर्थो लेश्याधिकार , पंचमो दृष्ट्यधिकार , षष्ट संयताधिकार सप्तम

कषायाधिकारो, अष्टमो ज्ञानाधिकारो, नवमो योगाधिकारो, दशम उपयोगाधिकार, एकादशो वेदाधिकारो, द्वादश शरीराधिकार, त्रयोदश· पर्याप्त्यधिकार· । इह भव्यादिग्रहणेन तत्प्रतिपक्षभूता अभव्यादयोऽपि सूचिता द्रष्टव्या· । तथैवाग्रे वक्ष्यमाणत्वात् ॥

तत्र प्रथम सामान्येन आहाराधिकारं विभावयिषुरिदमाह ।

जीवे णं भंते ! किं आहारए अणाहारए ? गोयमा ! सिय आहारए सिय अणाहारए । एवं नेरइए जाव असुरकुमारे जाव वेमाणिए । सिद्धे णं भंते ! किं आहारए अणाहारए? गोयमा ! णोआहारए अणाहारए ।

जीवेणं भन्ते ! इत्यादि प्रश्नसूत्रं सुगम भगवानाह । गोयमे त्यादि गौतम ! स्यात्कदाचिदाहारकः कदाचिदनाहारकः कथमिति चेदुच्यते । विग्रहगतौ केवलिसमुद्घाते शैलेश्य वस्थायां सिद्धत्वे चानाहारकः शेषास्ववस्थास्वाहारक उक्तं च । " विग्गहगइमावन्ना, केवलिणो समोहया अजोगी य । सिद्धा य अणाहारा, सेसा आहारगा जीवा "॥१॥ तदेवं सामान्यतो जीवचिन्तां कृत्वेदानीं नैरयिकादिचतुर्विंशतिदण्डक क्रमेणाहारानाहारकचिन्तां करोति ( सिद्धेणं भन्ते ! किं आ हारेत्यादि ) सुगम तदेवं सामान्यतो जीवपदे नैरयिकादिषु चैकवचनेन आहारकानाहारकत्वचिन्ता कृता ॥

सम्प्रति बहुवचनेन तां चिकीर्षुराह ॥

जीवाणं भंते ! किं आहारया अणाहारया ? गोयमा ! आहारया वि अणाहारया वि । नेरइयाणं पुच्छा ? गोयमा ! सव्वे वि ताव होज्जा । आहारगा । १ । अहवा आहारगा य अणाहारगे य । २ । अहवा आहारगा य अणाहारगा य । ३ । एवं जाव वेमाणिया । नवरं । एगिंदिया जहा जीवा । सिद्धाणं पुच्छा । गोयमा ! नो आहारगा अणाहारगा ॥

प्रश्नसूत्र सुगम । भगवानाह । गौतम ! आहारका अपि अनाहारका अपि सदैव बहुवचनविशिष्टा उभये ऽपि लभ्यन्ते इति भाव· । तथाहि । विग्रहगतिव्यतिरेकेण शेषकालं सर्वेऽपि संसारिणो जीवा आहारका विग्रहगतिस्तु क्वचित्कदाचित्क स्यचित्तु भवतीति सर्वकालमपि लभ्यमाना सम्प्रति नियतामेव लभ्यते तत आहारकेषु बहुवचन अनाहारका अपि सिद्धास्सदैव लभ्यन्ते ते चाभव्येभ्यो ऽनन्तगुणा । अन्य च सर्वकालमेकैकस्य निगोदस्य प्रतिसमयमसंख्येयभागो विग्रहगत्यापन्नो लभ्यते ततो ऽनाहारकेष्वपि बहुवचन नैरयिकसूत्रे सर्वे ऽपि तावद्भवेयुराहारका· । किमुक्त भवति । यदाचिन्नैरयिका सर्वे ऽप्याहारका एव भवन्ति न त्वेको ऽप्यनाहारक· एवमिति चेदुच्यते । उपपातविरहात्तथाहि । नैरयिकाणामुपपातविरहो द्वादश मुहूर्त्ता एतावति चान्त रे पूर्वोपपन्नविग्रहगत्यापन्ना अपि आहारका जाता अन्यस्य चानुपपद्यमानत्वात् । अथवा आहारका अनाहारकपदे बहुवचनमनाहारकपदे एकवचनमिति भाव । कथमेष भङ्गो सम्भवतीति चेदुच्यते इह नरकेषु जन्तु कदाचिदेक उत्पद्यते कदाचिद् द्वौ कदाचित्त्रयश्चत्वारो यावत्संख्याता असंख्याता वा । तत्र यदा एक उत्पद्यते सो ऽपि विग्रहगत्यापन्न प्रतिसमयमसंख्यातानां वनस्पतिषु

प्रतिसमयमनंतानां विग्रहगत्योत्पाद्यमानानां लभ्यमानतया अनाहारकपदे ऽपि सदैव तेषु बहुवचनस्य सम्भवात् । तथा चाह(एवं जाव वेमाणिया नवरं एगिंदिया जहा जीवा इति) ॥ एवं नैरयिकोक्तभङ्गप्रकारेण शेषा अप्यसुरकुमारादयस्ताव द्वक्तव्या यावद्वैमानिकाः । नवरमेकेन्द्रियाः पृथिव्यप्तेजोवा युवनस्पतिरूपाः प्रत्येकं यथा उभयत्रापि बहुवचनेन जीवा उक्तास्तथा वक्तव्या·॥ सिद्धेष्वेक एव भंगो ऽनाहारका इति सकलशरीरप्रहाणितस्तेषामाहारासंभवात् । बहूनाञ्च सदा भावादिति । गतं प्रथमद्वारम् ।

द्वितीय भव्यद्वारमभिधित्सुराह ।

भवसिद्धिएणं भंते ! जीवे किं आहारए अणाहारए ? गोयमा ! सिय आहारए सिय अणाहारए एवं जाव वेमाणिए ।

भवसिद्धिएणं भंते ! इत्यादि ॥ भवैः संख्यातैरनन्तैर्वा सिद्धिर्यस्यासौ भवसिद्धिको भव्यस्स कदाचिदनाहारक· । विग्रहगत्याद्यवस्थायां भवति अन्ये च पूर्वोत्पन्नतया आहारका अभवन् । तदा एष भङ्गो लभ्यते । तृतीयभङ्गमाह–अहवा आहारगा य अणाहारगा य । अत उभयत्रापि बहुवचनं एष च भंगो यदा बहवो विग्रहगत्योत्पद्यन्ते तदा द्रष्टव्यः । शेषभंगकास्तु न संभवन्ति आहारकपदस्य नैरयिकाणां सर्वदैव बहुवचनविषयतया लभ्यमानत्वात् । एवमसुरकुमारादिषु स्तनितकुमारपर्य्यवसानेषु द्वीन्द्रियादिषु च वैमानिकपर्य्यन्तेषु प्रत्येक भङ्गत्रिकं भावनीयम् । उपपातविरहभावात् । प्रथम भङ्गस्य एकादिसंख्यतयोत्पत्ते । शेषस्य च भङ्गद्वयस्य सर्वऽपि लभ्यमानत्वात् । एकेन्द्रियेषु पुनः पृथिव्यप्तेजोवायुवनस्पतिरूपेषु प्रत्येकमेकशेष एवैको भंग । आहारका अपि अनाहारका अपि पृथिव्यप्तेजोवायुषु प्रत्येकं जायमाना अनाहारकाः शेषकालं त्वाहारका एव चतुर्विंशति दण्डकेऽपि प्रत्येकं वाच्य । तथाचाह–एवं जाव वेमाणिए। अत्र च सिद्धिविषयं सूत्रं न वक्तव्यं मोक्षपदप्राप्ततया तस्य भवसिद्धिकत्वायोगात ॥

अत्रैव बहुवचनेनाहारकानाहारकत्वचिन्तां चिकीर्षुराह ॥

भवसिद्धिया णं भंते! जीवा किं आहारगा अणाहारगा । जीवेगिंदियवज्जो तियभंगो अभवसिद्धिए वि । एवं चेव नो भवसिद्धिए नो अभवसिद्धिएणं भंते ! जीवे किं आहारए अणाहारए ? गोयमा ! नो आहारए अणाहारए एवं सिद्धे वि । नो भवसिद्धिया नो अभवसिद्धिया णं भंते! जीवा किं आहारगा अणाहारगा ? गोयमा ! नो आहारगा अणाहारगा एवं सिद्धा वि ॥

( भवसिद्धिएण भंते! इत्यादि )अत्राप्याहारद्वार इव जीव पदे एकेन्द्रियेषु च प्रत्येकमुभयत्र च बहुवचनेनैक एव भगो यथा आहारका अपि अनाहारका अपि शेषेषु नैरयिकादिषु स्थानेषु भंगत्रिक कदाचित्केवला आहारका न त्वेकोऽप्यनाहारक । अथवा कदाहारक· एकोऽनाहारक· । अथवा । आहारका अपि अथवा ऽनाहारका अपि । उभयत्रापि बहुवचनं । तथाचाह । " जीवे गिंदियवज्जो तियभंगो " इति । यथाच भवसिद्धिके एकस्मिन् बहुषु चाहारकानाहारकत्वचिन्ता

कृता तथा अभवसिद्धिकेऽपि कर्तव्या । उभयत्रापि एकवचने न भगसङ्ख्यायास्सर्वत्रापि समानत्वात् । तथा चाह । अभवसिद्धिए एव चेव । अभवसिद्धिकोऽपि भवसिद्धिक इव एकवचने बहुवचनेन वक्तव्यमिति । यस्तु न भवसिद्धिको नाप्यभवसिद्धिकः स सिद्धः स हि भवसिद्धिको न भवति भवातीतत्वात् अभवसिद्धिकस्तु रूढ्या यस्सिद्धिगमनयोग्यो न भवति स उच्यते ततो भवसिद्धिकोऽपि न भवति सिद्धिप्राप्तत्वात् । तथाच सति नोभवसिद्धिकानोअभवसिद्धिकत्वचिंतायां द्वे एव पदे । तद्यथा । जीवपदं सिद्धपदञ्च उभयत्राप्येकवचने एक एव भगो ऽनाहारक इति बहुवचनेऽप्येक एवानाहारक इति ॥ * सञ्ज्ञिद्वारम् * ॥

सन्नीणं भंते ! जीवे किं आहारए अणाहारए ? गोयमा ! सिय आहारए सिय अणाहारए । एवं जाव वेमाणिए नवरं । एगिंदियविगलिंदिया न पुच्छिज्जंति । सन्नीणं भंते ! जीवा किं आहारगा अणाहारगा गोयमा ! जीवादिओ तिगभंगो जाव वेमाणिया ॥

( सन्नीण भंते ! ) इत्यादि ॥ प्रश्नसूत्रं सुगमं निर्वचनसूत्रमाह । गोयमेत्यादि । विग्रहगत्या ऽनाहारकः शेषकालमाहारकः । ननु सञ्ज्ञी समनस्तु उच्यते विग्रहगतौ च मनो नास्ति ततः कथं संज्ञी सन्ननाहारको लभ्यते उच्यते इह विग्रहगत्यापन्नोऽपि सञ्ज्ञ्यायुष्कवेदनात्सञ्ज्ञी व्यवह्रियते यथा नारकायुष्कवेदनान्नारको न कश्चिद्दोषः । एवमित्यादि । एवमुपदर्शितेन प्रकारेण ताव द्वक्तव्यं यावद्वैमानिकाऽवैमानिकसूत्रं, नवरं मेकेन्द्रियाविकलेन्द्रिया न प्रष्टव्या । किमुक्तं भवति तद्विषयसूत्रं सर्वथा न वक्तव्यं तेषाममनस्कतया सञ्ज्ञित्वायोगात् । बहुवचनचिंतायां जीवपदे नैरयिकादिपदेषु च प्रत्येकं सर्वत्र भङ्गत्रयं तद्यथा–सर्वेऽपि तावद्भवेयुराहारका १ अथवाऽऽहारकाश्च अनाहारकश्च २ अथवाऽऽहारकाश्च अनाहारकाश्च ३ तथाचाह । " जीवाइओ तियभङ्गो जाव वेमाणिया" इति ॥ तत्र सामान्यतो जीवपदे प्रथमभंगे सकलल्लोकापेक्षया सञ्ज्ञित्वेनोत्पातविरहाभावात् । द्वितीयभंगे एकस्मिन् सञ्ज्ञिनि विग्रहगत्यापन्ने तृतीयभंगे बहुषु सञ्ज्ञिषु विग्रहगत्यापन्नेषु , एवं नैरयिकादिपदेष्वपि भंगभावना कार्या ॥

असञ्ज्ञिद्वारम् ॥

असन्नीणं भंते ! जीवे किं आहारए अणाहारए ? गोयमा ! सिय आहारए सिय अणाहारए एवं णेरइए जाव वाणमंतरे नवरं जोइसियवेमाणिया न पुच्छिज्जंति । असन्नीणं भंते ! जीवा किं आहारगा अणाहारगा ? गोयमा ! आहारगा वि अणाहारगा वि एगो भंगो । असन्नीणं भंते ! णेरइया किं आहारगा अणाहारगा ? गोयमा ! आहारगा वा अणाहारगा वा अहवा अहारए य अणाहारए य अहवा आहारए य अणाहारगा य । अहवा आहारगा य अणाहारए य । अहवा आहारगा य अणाहारगा य एवं एते छब्भंगा । एवं जाव थणियकुमारा, एगिंदियेसु अभंगकं बेइंदिय जाव पंचिंदियतिरिक्खजोणिएसु तियभंगो मणुस्सवाणमंतरेसु छब्भंगा नो सन्नी नो असन्नीणं भंते ! जीवे किं आहारए अणाहारए ? गोयमा ! सिय आहारए सिय अणाहारए । एवं मणुस्से वि । सिद्धे अणाहारए पुहुत्तेणं नो सन्नी नो असन्नी जीवा आहारगा वि अणाहारगावि मणुस्सेसु तियभंगो सिद्धा अणाहारगा ॥

( असन्नीण भंते ! इत्यादि ) अत्रापि विग्रहगतावनाहारकः शेषकालमाहारकः ( एवं जाव वाणमंतरे इति ) एवं सामान्यतो जीवपद इव चतुर्विंशतिदण्डकक्रमेण तावद्वक्तव्यं । यावद्वानव्यन्तरो वानव्यन्तरविषयसूत्रं । अथ नैरयिका भवनपतयो वानव्यन्तराश्च कथमसञ्ज्ञिनो येनासंज्ञिसूत्रे तेऽपि पठ्यत इति उच्यते । इह नैरयिका भवनपतयो व्यन्तराश्च संज्ञिभ्योऽप्युत्पद्यन्ते । सञ्ज्ञिभ्योऽपि असंज्ञिभ्यश्चोत्पद्यमाना असञ्ज्ञिन इति व्यवह्रियन्ते । सञ्ज्ञिभ्य उत्पद्यमानाः सञ्ज्ञिनस्ततो सञ्ज्ञिसूत्रेऽपि ते उक्तप्रकारेण पठ्यन्ते । ज्योतिष्कवैमानिकास्तु संज्ञिभ्य एवोत्पद्यन्ते । नासञ्ज्ञिभ्य असञ्ज्ञित्वव्यवहाराभावादिह ते न पठ्यन्ते । तथाचाह । " जोइसियवेमाणिया न पुच्छिज्जति" किमुक्तं भवति । तद्विषयसूत्रं न वक्तव्यं तेषामसञ्ज्ञित्वाभावादिति । बहुवचनचिन्तायां सामान्यतो जीवपदे एक एव भंगस्तद्यथा आहारका अपि अनाहारका अपि प्रतिसमयमेकेन्द्रियाणामनन्तानां विग्रहगत्यापन्नानामत एवानाहारकाणां सदैव लभ्यमानतयाहारकपदेऽपि सर्वदा बहुवचनभावात् । नैरयिकपदे षड्भंगाः । तत्र प्रथमो भंग आहारका इति अयं च भंगो यदाऽन्यो संज्ञी नारक उत्पद्यमानो विग्रहगत्यापन्नो न लभ्यते । पूर्वोत्पन्नास्त्वसंज्ञिन । सर्वेऽप्याहारका जातास्तदा लभ्यन्ते । द्वितीयोऽनाहारक इति एष यदा पूर्वोत्पन्नोऽसञ्ज्ञी नारक एकोऽपि न विद्यते । उत्पद्यमानास्तु विग्रहगत्यापन्ना बहवो लभ्यते तदा विज्ञेयः । तृतीय आहारकश्च अनाहारकश्च द्वित्वेऽपि प्राकृते बहुवचनचिन्तायामेषोऽपि भंगस्समीचीन इत्युपन्यस्तः । तत्र यदा चिरकालोत्पन्न एको सञ्ज्ञी नारको विद्यते । अधुनोत्पद्यमानोऽपि विग्रहगत्यापन्न एकस्तदायं भंगः चतुर्थः आहारकश्चानाहारकाश्च एकश्चिरकालोत्पन्ने एकस्मिन्नसंज्ञिनि नारके विग्रमाने बहुष्वधुनोत्पद्यमानेषु असंज्ञिषु विग्रहगत्यापन्नेषु द्रष्टव्यः पंचमः आहारकाश्चानाहारकश्चायं चिरकालोत्पन्नेषु बहुषु असञ्ज्ञिषु नारकेषु अधुनोत्पद्यमाने विग्रहगत्यापन्ने एकस्मिन्नसञ्ज्ञिनि विज्ञेयः । षष्ठ आहारकाश्चानाहारकाश्च बहुषु चिरकालोत्पन्नेषूत्पद्यमानेषु चासञ्ज्ञिषु वेदितव्यः । एवमेते षड्भंगा एवमुपदर्शितेन प्रकारेण एते षड्भंगास्तद्यथा । आहारकपदस्य केवलस्य बहुवचनेनैकः । १ । अनाहारकपदस्य केवलस्य बहुवचनेन द्वितीयः । २ । आहारकपदस्यानाहारकपदस्य च युगपत्प्रत्येकमेकवचनेन तृतीयः । ३ । आहारकपदस्यैकवचनेन अनाहारकपदस्य बहुवचनेन चतुर्थः ॥ ४ ॥ आहारकपदस्य बहुवचनेन अनाहारकपदस्यैकवचनेन पञ्चमः ॥ ५ ॥ उभयत्रापि बहुवचनेन षष्ठः ॥ ६ ॥ शेषास्तु भंगा न सम्भवन्ति । बहुवचनचिन्तायां प्रक्रान्तत्वात् । एते च षड्भंगा असुरकुमारादिष्वपि स्तनितकुमारपर्यवसानेषु वेदितव्यास्तथा चाह " एवं जाव थणियकुमारा एगिंदिएसु अभंगमिति " एकेन्द्रियेषु पृथिव्यप्तेजोवायुवनस्पतिरूपे वभंगकं भंगकाभावः । एक एव भंग इत्यर्थः । सचायं आहारका अपि अनाहारका अपि । तत्र बहवः सुप्रसिद्धा अनाहारका अपि प्रतिसमयं पृथि

वायव प्रत्येकमसङ्ख्येयाः । प्रतिसमयं वनस्पतयो ऽनन्ता सर्वदैव लभ्यन्ते इति तेऽपि बहव सिद्धा द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियतिर्यक्पञ्चेन्द्रियेषु प्रत्येकं भङ्गत्रिकं । तद्यथा । आहारका अथवा आहारकाश्चानाहारकश्च । अथवा आहारकाश्चानाहारकाश्च तत्र द्वीन्द्रियान् प्रतिभावना यदा द्वीन्द्रिय एकोऽपि विग्रहगत्यापन्नो लभ्यते तदा पूर्वोत्पन्नाः सर्वेऽप्याहारका इति प्रथमो भङ्गः । यदा पुनरेको विग्रहगत्यापन्नस्तदा पूर्वे सर्वेऽप्याहारका उत्पद्यमानस्त्वेकोऽनाहारक इति । यदा तूत्पद्यमाना अपि बहवो लभ्यन्ते तदा तृतीयः । एवं त्रीन्द्रियचतुरिन्द्रियतिर्यक्पञ्चेन्द्रियेष्वपि भावना कार्या । मनुष्यव्यन्तरेषु षड् भङ्गा । ते च नैरयिकेषु च भावनीयास्तथाचाह । " बेइंदियजावपंचिंदियतिरिक्खजोणिएसु । तियभंगो मणुस्सवाणमंतरेसु छभंगा ॥ १ ॥ " इति । नो सण्णी नो असण्णी च केवली सिद्धश्च । ततो नोसंज्ञिनोअसंज्ञित्वचिन्तायां त्रीणि पदानि तद्यथा । जीवपदं मनुष्यपदं सिद्धपदञ्च । तत्र जीवपदे सूत्रमाह "नो सन्नी नोअसन्नीए भंते ! जीवे " इत्यादि । स्यात्कदाचिदाहारक केवलिन समुद्घाताद्यवस्थाविरहे आहारकः । स्यात्कदाचिदनाहारक । समुद्घाताद्यवस्थायां सिद्धत्वावस्थायां वा भावनीय । सिद्धे अणाहारए इति । सिद्धे सिद्धविषयं सूत्रे । अणाहारए इति वक्तव्यं ( पुहुत्तणति ) पृथक्त्वेन बहुत्वेन चिन्तायामिति प्रक्रमः (आहारगा वि अणाहारगा वि इति) तत्राहारका अपि बहूनां केवलिनां समुद्घाताद्यवस्थारहितानां सदैव लभ्यमानत्वात् । अनाहारका अपि सिद्धानां सदैव भावात्तेषां चानाहारकत्वादिति ( मणुस्सेसु तियभंगो इति ) मनुष्यविषयं भङ्गत्रिकं तद्यथा । आहारका एव भङ्गो यदा न कोऽपि केवली समुद्घाताद्यवस्थागतो भवति । अथवा । आहारकाश्चानाहारकश्च । एष भङ्गो एकस्मिन्केवलिनि समुद्घाताद्यवस्थागते सति लभ्यते अथवा आहारकाश्चानाहारकाश्च । एषु बहुषु केवलिषु समुद्घाताद्यवस्थागतेषु सत्सु वेदितव्य ॥ प्रज्ञा० ॥

लेश्याद्वारम् ।

सलेस्से णं भंते ! जीवे किं आहारए अणाहारए ? गोयमा ! सिय आहारए सिय अणाहारए एवं जाव वेमाणिए सलेस्सा णं भंते ! जीवा किं आहारगा अणाहारगा ? गोयमा ! जीवेगिंदियवज्जो तियभंगो । एवं कण्हलेस्सा नीललेस्सा काउलेस्साए वि ! जीवेगिंदिय तियभंगो तेउलेस्साए पुढविआउवणस्सइकाइयाणं छ भंगा सेसाणं जीवादिओ तियभंगो जेसिं अत्थि तेउलेस्सा पम्हलेस्साए सुक्कलेस्साए य जीवादिओ तियभंगो अलेस्सा जीवा मणुस्सा सिद्धा एगत्तेण वि पुहुत्तेण वि नो आहारगा ॥

टीका । सामान्यत सलेश्यसूत्रमाह । ( सलेस्से णं भंते ! जीवे इत्यादि ) इदं सामान्यतो जीवसूत्रमिव भावनीयं । अत्रापि [illegible] सिद्धानामलेश्यत्वात् । बहुवचनचिन्तायां [illegible] एकेन्द्रियेषु च पृथिव्यादिषु प्रत्येकमेक एव भङ्गस्तद्यथा । आहारका अपि अनाहारका अपि उभयेषामपि सदा [illegible] । शेषेषु तु नैरयिकादिषु प्रत्येकं भङ्गत्रिकं । तद्यथा । सर्वेऽपि तावदाहारकाः १ अथवाऽऽहारकाश्चानाहारकश्च २ अथवा आहारकाश्चानाहारकाश्च ३ [illegible] भावना [illegible] । तथाचाह । " जीवेगिंदियवज्जो तियभंगो इति " एवमित्यादि । एवं यथा सामान्यत सलेश्यसूत्रमुक्तं तथा कृष्णलेश्याविषयमपि नीललेश्याविषयमपि कापोतलेश्याविषयमपि सूत्रं च वक्तव्यं । सर्वत्र सामान्यतो जीवपदे एकेन्द्रियेषु च प्रत्येकमभङ्गकं शेषपदेषु भङ्गत्रिकं । तेजोलेश्याविषयमपि सूत्रमेकत्वे प्राग्वत् बहुत्वे पृथिव्यब्वनस्पतिषु षड्भङ्गा तेषु कथं तेजोलेश्यासम्भव इति चेदुच्यते । भवनपतिव्यन्तरज्योतिष्कसौधर्मेशानदेवानां तेजोलेश्यावतां तत्रोत्पादभावात् । उक्तञ्चास्या एव भगवत्याः प्रज्ञापनायाश्चूर्णौ "जेण तेसु भवणवइ वाणमंतरजोइसियसोहम्मीसाणया देवा ॥ उववज्जन्ति तेण तेउलेस्सा लब्भइ १ " इति । ते षड् भङ्गा इमे सर्वे आहारकाः ॥ १ ॥ अथवा सर्वेऽनाहारका २ अथवा आहारकश्चानाहारकः ३ अथवा आहारकश्चानाहारकाश्च ४ अथवा आहारकाश्चानाहारकश्च ५ अथवा आहारकाश्चानाहारकाश्च । ६ । शेषाणां जीवपदादारभ्य सर्वत्रापि भङ्गत्रिकं । तथाचाह ( तेउलेस्साए पुढवी आउवणस्सइकाइयाणं छभंगा सेसाण जीवाइओ तियभंगो इति ) आह किं सर्वेषामविशेषेण जीवपदादारभ्य भङ्गत्रिकमुत केषां चिदित आह ( जेसिं अत्थि तेउलेसा इति ) येषामस्ति तेजोलेश्या तेषामेव भङ्गत्रिकं वक्तव्यं न शेषाणां । एतेन किमावेदितं भवति । नैरयिकविषयं तेजोवायुविषयं द्वित्रिचतुरिन्द्रियविषयञ्च तेजोलेश्यासूत्रं वक्तव्यमिति तथा पद्मलेश्यासूत्रं वक्तव्यमिति तथा पद्मलेश्या च येषां सम्भवति तद्विषयं तयोः सूत्रं वक्तव्यं तत्र पद्मलेश्या शुक्ललेश्या च । तिर्यक्पञ्चेन्द्रियेषु मनुष्येषु वैमानिकेषु च लभ्यते न शेषेष्विति । तयो प्रत्येकं चत्वारि पदानि । तद्यथा । सामान्यतो जीवपदं तिर्यक्पञ्चेन्द्रियपदं मनुष्यपदं वैमानिकपदञ्च सर्वत्राप्येकवचनचिन्तायां स्यादाहारक इति भङ्गो बहुवचनचिन्तायां भङ्गत्रिकं । तद्यथा । सर्वेऽपि तावद्भवेयुराहारकाः १ अथवा आहारकाश्चानाहारकश्च २ अथवा आहारकाश्चानाहारकाश्च ३ । तथाचाह ( पम्हलेसाए सुक्कलेसाए जीवाईओ तियभंगोत्ति ) अलेश्या जीवास्ते चायोगिकेवलिन सिद्धाश्च तत स्यात्त्रीणि पदानि । तद्यथा । सामान्यतो जीवपदं मनुष्याः सिद्धाश्च । सर्वत्राप्येकवचनेन बहुवचनेन चानाहारगा इति ॥

सम्प्रति सम्यग्दृष्टि द्वारम् ॥

सम्मदिट्ठीणं भंते ! जीवा किं आहारगा अणाहारगा ? गोयमा ! सिय आहारगा सिय अणाहारगा । बेइंदिय तेइंदिय चउरिंदियछब्भंगा । सिद्धा अणाहारगा अवसेसाणं तियभंगो । मिच्छदिट्ठीसु जीवेगिंदियवज्जो तिय भंगो । सम्मा मिच्छदिट्ठीणं भंते ! जीवे किं आहारए अणाहारए ? गोयमा ! आहारए नो अणाहारए एवमेगिंदियविगलिंदियवज्जं जाव वेमाणिए एवं पुहुत्ते वि ॥

सम्यग्दृष्टिश्चौपशमिकसम्यक्त्वेन सास्वादनसम्यक्त्वेन क्षायोपशमिकसम्यक्त्वेन क्षायिकसम्यक्त्वेन वा प्रतिपत्तव्यः सामान्यत उपादानात्तथैव चाग्रे भङ्गचिन्तायामपि करिष्यमाणत्वात् तत्रौपशमिकसम्यग्दृष्ट्यादय सुप्रतीता वेदकसम्यग्दृष्टि पुन क्षायिकसम्यक्त्वमुत्पादयन् चरमग्रासमनुभवन्नभिधीय[illegible] एवमन्येष्वपि जीवादिपदेषु प्रत्येकमेष भङ्ग स्यादाहा-

रकः स्यादनाहारक इति नवरमत्र पृथिव्यादिविषयसूत्रन्न वक्तव्य तेषां सम्यग्दृष्टित्वायोगात् उभयाभावो( पुढवाइएसु ) इति वचनाद्बहुवचनविषयसूत्रं । सामान्यतो जीवपदे आहारका अपि अनाहारका अपीत्येष एव भगः उभयेषामपि सदा सम्यग्दृष्टीनां बहुत्वेन लभ्यमानत्वात् । नैरयिकभवनपतितिर्यक्पंचेन्द्रियमनुष्यव्यन्तरज्योतिष्कवैमानिकेषु प्रत्येकं भंगत्रिक । तद्यथा कदाचित्सर्वेऽप्याहारका एव १ कदाचिदाहारका एकश्चानाहारकः २ कदाचिदाहारका अनाहारकाश्च ३ द्वित्रिचतुरिन्द्रियेषु नो षड्भगाः । ते च प्राग्वद्भावनीयाः । द्वीन्द्रियादीनां च सम्यग्दृष्टित्वमपर्याप्तावस्थायां सम्भवति । सास्वादनसम्यक्त्वापेक्षया द्रष्टव्यं । सिद्धास्त्वनाहारकाः । एतेषां क्षायिकसम्यक्त्वयुक्तत्वात् । तथा चाह ( बेइंदियतेइंदियचतुरिंदिएसु छ भंगा सिद्धा अणाहारगा अवसेसाणं तियभंगो ) मिथ्यादृष्टिष्वपि एकवचने सर्वत्र स्यादाहारकः स्यादनाहारक इति वक्तव्य । बहुवचने जीवपदे पृथिव्यादिपदेषु च प्रत्येकमाहारका अपीति उभयेषामपि सर्वदैव तेषु पदेषु बहुत्वेन लभ्यमानत्वेन शेषेषु तु सर्वेषु स्थानेषु भंगत्रिक सिद्धसूत्र चात्र न वक्तव्यं । सिद्धानां मिथ्यात्वापगमादेतदेवाह ॥ " मिच्छदिट्ठिसु जीवेगिंदियवज्जो तियभंगो सम्मामिच्छदिट्ठीणं भंते ! जीवे " ॥ इत्यादि प्रश्नसूत्र सुगम भगवानाह । गौतम ! आहारको नो अनाहारकः कस्मादिति चेदुच्यते-इह ससारिणामनाहारकत्व विग्रहगतौ न सम्यग् मिथ्यादृष्टिर्विग्रहगत्यभावतोऽनाहारकत्वाभाव । एव चतुर्विंशतिदण्डकक्रमेण सर्वत्रापि वक्तव्य । नवरमेकेन्द्रियविकलेन्द्रिया न वक्तव्यास्तेषां सम्यग् मिथ्यादृष्टित्वासभवात् । एव बहुवचनेऽपि वक्तव्य । तद्यथा ॥

* सम्मा मिच्छ दिट्ठीणं भंते! जीवा किं आहारगा ! गोयमा ! आहारगा नो अणाहारगा सम्मामिच्छदिट्ठीणं भन्ते ! नेरइया किं आहारगा अणाहारगा ? गोयमा ! आहारगा नो अणाहारगा । एवमेगिंदियविगलिंदियवज्जा जाव वेमाणिया ॥ *

इति ॥ गतं दृष्टिद्वारम् ॥

सम्प्रति संयतद्वारम् ॥

संजएणं भंते ! किं आहारए अणाहारए ? गोयमा ! सिय आहारए सिय अणाहारए एवं मणुस्से वि । पुहुत्तेणं तियभंगो असंजए पुच्छा, गोयमा! सिय आहारए सिय अणाहारए पुहुत्तेणं जीवेगिंदियवज्जो तियभंगो संजतासंजते जीवे पंचिंदियतिरिक्खजोणिए मणूसे एते एगत्तेण वि पुहुत्तेण वि आहारगा नो अणाहारगा नो संजते नो असंजए नो संजयासंजए जीवे सिद्धे य एते एगत्तपुहुत्तेण वि नो अहारगा अणाहारगा ॥

संयतत्व मनुष्याणामेव तत्र द्वे पदे । तद्यथा । जीवपदं मनुष्यपदञ्च । तत्र जीवपदे सूत्रमाह ( सजएणं भते ! जीवे इत्यादि ) सुगम नवर । अनाहारकत्व केवलिसमुद्घातावस्थायामयोगित्वावस्थायां वेदितव्य शेषकालमाहारकत्व । एव । ( मणुस्सेवित्ति ) एवं मनुष्यविषयं सूत्र वक्तव्य । तद्यथा । (सजएण भंते ! मणूसे किं आहारए अणाहारए ? गोयमा ! सिय आहारए सिय अणाहारए ) भावनान्तरमेवोक्ता ( पुहुत्तेण तियभंगोत्ति ) पृथक्त्वेन बहुवचनेन जीवपदे मनुष्यपदे च प्रत्येक भंगत्रिक । तथैव । सर्वेऽपि तावद्भवेयुराहारका एष भगो यदा न कोऽपि केवलिसमुद्घातमयोगित्वं वा प्रतिपन्नो भवति वेदितव्यः । अथवा आहारकाश्चानाहारकश्च एष एकस्मिन् केवलिनि समवहते शैलेशीगते वा प्राप्यते अथवा आहारकाश्च अनाहारकाश्च एषु बहुषु केवलिषु समवहतेषु शैलेशीगतेषु वा लभ्यते । असंयतसूत्रे एकवचने सर्वत्र स्यादाहारक इति वक्तव्यं । बहुवचने जीवपदे पृथिव्यादिषु च पदेषु प्रत्येकमाहारकाअनाहारका अपि इत्येष भङ्गः । शेषेषु तु नैरयिकादिषु स्थानेषु प्रत्येकं भंगत्रिक सयतासंयतदेशविरतास्ते च तिर्यक्पंचेन्द्रिया मनुष्या वा न शेषाः शेषाणां स्वभावत एव देशविरतिपरिणामाभावादेव चैतेषां त्रीणि पदानि । तद्यथा । सामान्यतो जीवपद तिर्यक्पञ्चेन्द्रियपद मनुष्यपदञ्चैतेषु त्रिष्वपि स्थानेषु एकवचने बहुवचने च आहारका भवन्ति । भवान्तरगतः केवलिसमुद्घाताद्यवस्थासु च देशविरतिपरिणामाभावात् नो संयतो नो ऽसंयतो नो सयतासयतो । गत सयतद्वारम् । तच्चिंतायां द्वे पदे । तद्यथा । जीवपद सिद्धपदञ्च । उभयत्रा ऽप्येकवचने बहुवचने चानाहारकत्वमेववक्तव्यं नत्वाहारकत्वम् । सिद्धानामनाहारकत्वात् ॥

सम्प्रति कषायद्वारम् ॥

सकसाईणं भंते ! जीवे किं आहा० अणा० सिय आहा० सिय अणाहा० एवं जाव वेमाणिए पुहुत्तेणं जीवेगिंदियवज्जो तियभंगो । कोहकसाईसु जीवाईसु एवं चेव नवरं देवेसु छब्भंगा माणकसाईसु मायाकसाईसु देवणेरइएसु छब्भंगा अवसेसाणं जीवेगिंदियवज्जो-तियभंगो । लोभकसाईसु नेरइएसु छब्भंगा । अवसेसेसु जीवेगिंदियवज्जो तियभंगो अकसाई जहा नो सन्नी नो असन्नी ।

(सकसाईण भंते ! जीवे) इत्यादि ॥ एकवचनविषय सूत्र सुगम । बहुवचने ( जीवेगिंदियवज्जो तियभंगोत्ति ) जीवपदे पृथिव्यादिषु च पचसु पदेषु प्रत्येक आहारका अपि अनाहारका अपि वक्तव्य । उभयेषामपि सकषायाणां सदैव तेषु स्थानेषु बहुत्वेन लभ्यमानत्वात् । शेषेषु तु स्थानेषु भगत्रिक । कोहकसाए एवचेवत्ति क्रोधकषाय्यपि एवमेव सामान्यतः सकषायवदवसेय । तत्रापि जीवपदे पृथिव्यादिपदेषु चाभङ्गकः शेषेषु तु स्थानेषु भंगत्रिकमिति भावः । किं सर्वेष्वपि शेषेषु स्थानेषु भगत्रिक नेत्याह । ( नवर देवेसु छ भगा ) देवा हि स्वभावत एव लोभबहुला भवन्ति । न क्रोधादिबहुलाः । तत क्रोधकषायिण एकादयोऽपि लभ्यन्ते । इति षड्भङ्गास्तद्यथा । कदाचित्सर्वे ऽप्याहारका एव क्रोधकषायिण एकस्यापि विग्रहगत्यापन्नस्याभ्यमानत्वात् १ कदाचित्सर्वे ऽप्यनाहारका एकस्यापि क्रोधकषायिणस्तत आहारकस्याप्राप्यमाणत्वात् क्रोधादयो हि मानाद्युदयविविक्त एवेह विवक्ष्यते । न मानाद्युदयसहितोऽपि तेन क्रोधकषायिण तत कदाचिदाहारकस्य सर्वथाऽप्यभाव ॥ २ ॥ तथा कदाचिदेक आहारक एकोऽनाहारकः ॥ ३ ॥ कदाचिदेक आहारको बहवोऽनाहारका ॥ ४ ॥ कदाचिद्बहव आहारका एकोऽनाहारक ॥ ५ ॥ कदाचिद्ब-

इव आहारका बहवोऽनाहारका ॥ ६ ॥ इति मानकषायसूत्र मायाकषायसूत्रं चैकवचने प्राग्वत् । बहुवचने विशेषमाह । ( माणकसाईसु ) इत्यादि । मानकषायिषु मायाकषायिषु बहुवचने चिन्त्यमानेषु देवेषु नैरयिकेषु च प्रत्येकं षड्भङ्गाः । नैरयिका हि भवस्वभावतः क्रोधबहुला देवास्तु लोभबहुलास्ततो देवानां नैरयिकाणाञ्च मानकषायो मायाकषायश्च प्रविरल इति प्रागुक्तप्रकारेण षड्भङ्गाः । जीवपदे पृथिव्यादिपदेषु च प्रत्येकमनेकमाहारकाणामनाहारकाणां च मानकषायिणां मायाकषायिणाञ्च प्रत्येकं सर्वेष्वपि स्थानेषु बहुत्वेन लभ्यमानत्वात् । शेषेषु तु स्थानेषु भङ्गत्रिकं । लोभकषायसूत्रमप्येकवचने तथैव बहुवचने विशेषमाह ( लोभकसाईसु इत्यादि ) लोभकषायिषु नैरयिकेषु षड् भङ्गास्तेषां लोभबहुलतया षट्संख्यसम्भवात् । जीवेष्वेकेन्द्रियेषु च प्राग्वदेक एव भंगः । आहारका अप्यनाहारका अपीति ( अकसाई जहा नो सन्नी नो असन्नीति ) अकषायिणो नोसंज्ञिनो नोऽसंज्ञिनो वक्तास्तथा वक्तव्याः किमुक्तं भवति । अकषायिणोऽपि मनुष्याः सिद्धाश्च । मनुष्या उपशान्तकषायादयो वेदितव्या ॥ अन्येषां सकषायित्वात् । तत एतेषामपि त्रीणि पदानि । तद्यथा । सामान्यतो जीवपदं मनुष्यपदं सिद्धपदञ्च तत्र सामान्यतो जीवपदे मनुष्यपदे च प्रत्येकमेकवचने स्यादाहारकः स्यादनाहारक इति वक्तव्यं । सिद्धपदेऽप्यनाहारक एवेति । बहुवचने जीवपदे आहारका अपि अनाहारका अपीति । केवलिनामाहारकाणां सिद्धानामनाहारकाणां सदैव बहुत्वेन लभ्यमानत्वात् । मनुष्यपदे भङ्गत्रिकं । सर्वेऽपि तावद्भवेयुराहारकाः १ अथवा आहारकाश्चानाहारकश्च २ अथवा आहारकाश्चानाहारकाश्च ३ भावना प्रागिवानेकशः कृता सिद्ध पदे त्वनाहारक एक एव ॥

सम्प्रति ज्ञानद्वारम् ॥

नाणी जहा सम्मद्दिट्ठी । आभिणिबोहियनाणी सुयनाणीसु बेइंदियतेइंदियचउरिंदिएसु छब्भंगा । अवसेसेसु जीवादिओ तियभंगो । जेसिं अत्थि ओहिनाणी पंचिंदियतिरिक्खजोणिया मणूसा य आहारगा नो अणाहारगा अवसेसेसु जीवादिओ तियभंगो जेसिं ओहिनाणं मणपज्जवनाणं जीवा मणूसा य एगत्तेण वि पुहत्तेण वि आहारगा नो अणाहारगा केवलनाणी जहा नो सन्नी नो असन्नी अन्नाणी मति अन्नाणी सुय अन्नाणी जीवेगिंदियवज्जो तियभंगो विभंगनाणी पंचिंदियतिरिक्खजोणिया मणूसा य आहारगा नो अणाहारगा अवसेसेसु जीवादिओ तियभंगो ॥

( नाणी जहा सम्मद्दिट्ठीति ) ज्ञानी यथा प्राक् सम्यग्दृष्टिरुक्तस्तथा वक्तव्यस्तद्यथा ॥

* नाणी णं भंते ! जीवे किं आहारए अणाहारए ? गो० सिय आहारए सिय अणाहारए नाणी णं भंते ! नेरइए किं आहारए अणाहारए ? गो० सिय आहारए सिय अणाहारए एवं बेइंदियवज्जं जाव वेमाणिए नाणी णं भंते ! जीवा किं आहारगा अणाहारगा ? गो० आहारगा वि अणाहारगा वि नाणी णं भंते ! नेरइया किं आहारगा अणाहारगा गो० सव्वे वि ताव होज्जा आहारगा १ अहवा आहारगा य अणाहारगे य २ अहवा आहारगा य अणाहारगा य एवं जाव थणियकुमारा । बेइंदियाणं पुच्छा गो० सव्वे वि ताव होज्ज १ आहारगा अहवा अणाहारगा य २ अहवा आहारगेय ३ अहवा आहारगे य अणाहारगा य ४ अहवा आहारगा य अणाहारगे य ५ अहवा आहारगा य अणाहारगा य ६ एवं तेइंदियचउरिंदिया वि भाणियव्वा अवसेसा जाव वेमाणिया जहा नेरइयाणं सिद्धाणं पुच्छा गो० ॥ *

( अणाहारगा इति ) आभिनिबोधिकज्ञानसूत्रे चैकवचने प्राग्वदवसेयं । बहुवचने द्वित्रिचतुरिन्द्रियेषु भङ्गाः । अथ शेषेषु जीवादिस्थानेष्वेकेन्द्रियवर्जेषु भङ्गत्रिकं तत्रैव ॥

* आभिनिबोहियनाणी णं भंते ! जीवा किं आहारगा अणाहारगा ? गोयमा ! सव्वेवि ताव होज्ज आहारगा १ अहवा आहारगा य अणाहारगे य २ अहवा आहारगा य अणाहारगा य ३ इत्यादि । तथा चाह । आभिनिबोहियनाणी सुयनाणी सुयबेइंदियचउरिंदियेसु छब्भंगा अवसेसेसु जीवाइओ तियभंगो तेसिं अत्थि इति *

सुगमं । नवरं जेसिं अत्थि येषां जीवानामाभिनिबोधिकज्ञानश्रुतज्ञानेस्त । तेषु भंगत्रिकं वक्तव्यं न शेषपृथिव्यादिष्विति । अवधिज्ञानसूत्रमेकवचने तथैव बहुवचनचिंतायां पंचेन्द्रियतिर्यग्योनिका आहारका एव नत्वनाहारकाः । कस्मादिति चेदुच्यते । इह पंचेन्द्रियतिरश्चामनाहारकत्वं विग्रहगतौ । न च तदानीं तेषां गुणप्रत्ययतोऽवधिसंभवो गुणानामेवासम्भवादप्यप्रतिपतितावधिर्देवो मनुष्यो वा तिर्यक्षूत्पद्यते । ततोऽवधिज्ञानिनः सन्तः पंचेन्द्रियतिरश्चोऽनाहारकत्वायोगः । शेषेषु तु स्थानेष्वेकेन्द्रियविकलेन्द्रियवर्जेषु प्रत्येकं भङ्गत्रिकं । एतदेवाह ।

" ओहिनाणीणं पंचिंदियतिरिक्खजोणिया आहारगा अवसेसेसु जीवाइओ तियभंगो । जेसिं अत्थि ओहिनाण मिति ॥ "

मनः पर्यायज्ञानं मनुष्याणामेव ततो द्वे पदे । तद्यथा । जीवपदं मनुष्यत्रापि चैकवचने बहुवचने च मनः पर्यायज्ञानिन आहारका एव वक्तव्याः नत्वनाहारका विग्रहगत्याद्यवस्थायां मनः पर्यायज्ञानासंभवात् । केवलज्ञानी यथा प्राक् नो संज्ञी नोऽसंज्ञी उक्तस्तथा वक्तव्यः । किमुक्तं भवति केवलज्ञानचिन्तायामपि त्रीणि पदानि । तद्यथा । सामान्यतो जीवपदं मनुष्यपदं सिद्धपदञ्च तत्र सामान्यतो जीवपदे मनुष्यपदे चैकवचने स्यादाहारकः स्यादनाहारक इति वक्तव्यं सिद्धपदे त्वनाहारक इति बहुवचने सामान्यतो जीवपदे आहारका अपि अनाहारका अपि मनुष्यपदे भङ्गत्रिकं । तच्च प्रागेवोपदर्शितं सिद्धपदे त्वनाहारका अपि अज्ञानिसूत्रं मत्यज्ञानिसूत्रं श्रुताज्ञानिसूत्रं च एकवचने प्रागिव बहुवचनचिन्तायां जीवपदे एकेन्द्रियेषु पृथिव्यादिषु प्रत्येकमाहारका अनाहारका अपि इति वक्तव्यं शेषेषु भङ्गत्रिकं । विभङ्गज्ञानिसूत्रमप्येकवचने तथैव बहुवचनचिन्तायां पञ्चेन्द्रियतिर्यग्योनिका मनुष्या आहारका एव वक्तव्याः । नत्वनाहारका विभङ्गज्ञानसहितस्य विग्रहगत्या तिर्यक्पञ्चेन्द्रियेषु

मनुष्येषु चोत्पत्तिसम्भवात् । अवशेषेषु स्थानेषु एकेन्द्रियविकलेन्द्रियवर्जेषु प्रत्येकं भगत्रिकं । गतं ज्ञानद्वारम् ॥

संप्रति योगद्वारम् ॥

सजोगीसु जीवेगिंदियवज्जो तियभंगो मणजोगी वइजोगी य जहा सम्मामिच्छादिट्ठी । नवरं वइजोगी विगलिंदियाण वि कायजोगीसु जीवेगिंदियवज्जो तियभंगो । अजोगी जीवमणूससिद्धा अणाहारगा । दारम् ॥

तत्र सामान्यतः सयोगिसूत्रमेकवचने तथैव बहुवचने जीवैकेन्द्रियपदानि वर्जयित्वा शेषेषु स्थानेषु भङ्गत्रिकं, जीवपदे पृथिव्यादिपदेषु च पुनः प्रत्येकमाहारका अपि अनाहारका अपीति भङ्ग उभयेषामपि सदैवतेषु स्थानेषु बहुत्वेन लभ्यमानत्वात् । मणजोगी वइजोगी जहा सम्मामिच्छादिट्ठीयत्ति । मनोयोगिनो वाग्योगिनश्च । यथा प्राक् सम्यग्मिथ्यादृष्टय उक्तास्तथा वक्तव्याः । एकवचने बहुवचने वाऽऽहारका एव वक्तव्या नत्वनाहारका इति भावः ( नवरं वइजोगी विगलिंदियाणविति ) नवरमिति । सम्यग्मिथ्यादृष्टिसूत्रादत्राय विशेष । सम्यग्मिथ्यादृष्टित्वं विकलेन्द्रियाणां नास्तीति तत्सूत्रं तत्रोक्तं । वाग्योगः पुनर्विकलेन्द्रियाणामप्यस्ति तत्सूत्रमपि वाग्योगे वक्तव्यं । तच्चैव ॥

* मणजोगीणं भंते ! जीवे किं आहारए अणाहारए ? गोयमा ! आहारए नो अणाहारए एवमेगिंदियवज्जं जाव वेमाणिए एवं पुहुत्तेण वि ॥ *

काययोगिसूत्रमप्येकवचने बहुवचने च सामान्यतः सयोगिसूत्रमिव (अजोगीणं भंते ! जीवे किं आहारए) तेनात्र त्रीणि पदानि । तद्यथा जीवपदं मनुष्यपदं सिद्धपदं च त्रिष्वपि स्थानेष्वेकवचने बहुवचनेनाहारकत्वमेव ॥

अधुना उपयोगद्वारम् ॥

सागाराणागारोवउत्तेसु जीवेगिंदियवज्जो तियभंगो सिद्धा अणाहारगा । दारम् ॥

तत्र साकारोपयोगसूत्रे च प्रत्येकमेकवचने सर्वत्र स्यादनाहारक इति वक्तव्यं सिद्धपदे त्वनाहारक इति बहुवचने जीवपदे पृथिव्यादिपदेषु चाहारका अपि अनाहारका अपीति भङ्गः । शेषेषु भङ्गत्रिकं । सिद्धास्त्वनाहारका इति सूत्रोल्लेखस्त्वयं ॥

* सागारोवओगोवउत्तेणं भंते ! जीवे किं आहारए अणाहारए ? गोयमा ! सिय आहारए सिय अणाहारए ॥ *

गतमुपयोगद्वारं ॥

वेदद्वारम् ॥

सवेदजीवेगिंदियवज्जो तियभंगो । इत्थिवेयपुरिसवेएसु जीवाइओ तियभंगो । नपुंसगवेदए जीवेगिंदियवज्जो तियभंगो । अवेयए जहा केवलनाणी ॥

सामान्यतः सवेदसूत्रमेकवचने स्यादाहारकस्स्यादनाहारक इति बहुवचने जीवपदे एकेन्द्रियाश्च वर्जयित्वा शेषेषु स्थानेषु भङ्गत्रिकं जीवपदे एकेन्द्रियेषु च पुनः प्रत्येकमभंगकं आहारका अनाहारका अपीति स्त्रीवेदसूत्रं पुरुषवेदसूत्रं च एकवचने तथैव नवरमत्र नैरयिकैकेन्द्रियविकलेन्द्रिया न वक्तव्यास्तेषां नपुंसकत्वात् बहुवचने जीवादिषु प्रत्येकं भगत्रिकं । नपुंसकवेदेऽपि सूत्रमेकवचने तथैव नवरमत्र भवनपतिव्यन्तरज्योतिष्कवैमानिका न वक्तव्याः । तेषां न नपुंसकत्वाद्बहुवचने जीवैकेन्द्रियवर्जेषु भंगत्रिकं । जीवपदे एकेन्द्रियपदेषु च पृथिव्यादिषु पुनरभंगकं प्रागुक्तस्वरूपमिति । अवेदो यथा केवली तथा एकवचने बहुवचने च वक्तव्याः । जीवपदे मनुष्यपदे च एकवचने स्यादाहारकस्स्यादनाहारक इति बहुवचने जीवपदे आहारका अपि अनाहारका अपि मनुष्येषु भंगत्रिकं सिद्धे त्वनाहारका इति वक्तव्यमिति भावः ॥ गतं वेदद्वारम् ॥

शरीरद्वारम् ॥

ससरीरे जीवेगिंदियवज्जो तियभंगो । ओरालियसरीरिसु जीवमणूसेसु तियभंगो । अवसेसा आहारगा नो अणाहारगा जेसिं अत्थि ओरालियसरीरं वेउव्वियसरीरी आहारगसरीरी य अणाहारगा जेसिं अत्थि तेयगकम्मगसरीरी जीवेगिंदियवज्जो तियभंगो । असरीरी जीवसिद्धा य नो आहारगा अणाहारगा ॥

शरीरद्वारे सामान्यतः शरीरसूत्रे सर्वत्रैकवचने स्यादाहारकः स्यादनाहारक इति । बहुवचने जीवैकेन्द्रियवर्जेषु शेषेषु स्थानेषु प्रत्येकं भगत्रिकं । जीवपदे पृथिव्यादिपदेषु च प्रत्येकमभङ्गकं प्रागुक्तमिति । औदारिकसूत्रमेकवचने तथैव नवरमत्र नैरयिकभवनपतिव्यन्तरज्योतिष्कवैमानिका न वक्तव्यास्तेषामौदारिकशरीराभावात् । बहुवचने जीवपदे मनुष्यपदेषु च प्रत्येकं भगत्रिकं । तद्यथा । सर्वेऽपि तावद्भवेयुराहारका एष भगो यदा न कोऽपि केवली समुद्घातगतयोगी वा । अथवा आहारकाश्चानाहारकश्च एष एकस्मिन्केवलिनि समुद्घातगते ऽयोगिनि वासति प्राप्यते । अथवा आहारकाश्चानाहारकाश्च एष भगो बहुषु केवलिषु समुद्घातगतेषु अयोगिषु वा सत्सु वेदितव्यः । शेषास्त्वेकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियातिर्यक्पंचेन्द्रिया आहारका एव वक्तव्या नत्वनाहारका । विग्रहगत्युत्तीर्णानामेवौदारिकशरीरसम्भवात् । वैक्रियाहारकशरीरिणश्च सर्वे ऽप्येकवचने बहुवचने चाहारका एव नत्वनाहारका नवरं येषां वैक्रियमाहारकं वा सम्भवति त एव वक्तव्या नान्ये । तत्र नैरयिकभवनपतिवायुकायिकतिर्यक्पंचेन्द्रियमनुष्यव्यंतरज्योतिष्कवैमानिकेषु आहारकं मनुष्येष्वेव । सूत्रोल्लेखश्चायं ।

* वेउव्वियसरीरिणं भंते जीवे किं आहारए अणाहारए ? गोयमा ! आहारए नो अणाहारए ! वेउव्वियसरीरिणं भंते ! नेरइए किं आहारए अणाहारए ? गोयमा ! आहारए नो अणाहारए ॥ *

इत्यादि । तैजसकार्म्मणशरीरसूत्रे चैकवचने सर्वत्र स्यादाहारकस्स्यादनाहारक इति । बहुवचने जीवैकेन्द्रियवर्जेषु स्थानेषु भगत्रिकं जीवपदे एकेन्द्रियेषु पुनरभगकं । अशरीरिणस्सिद्धास्तेन तत्र द्वे एव पदे । तद्यथा । जीवास्सिद्धाश्च । तत्रैकवचने बहुवचने चोभयत्राप्यनाहारक एव ॥ गतं शरीरद्वारम् ॥

सम्प्रति पर्य्याप्तिद्वारम् ॥

आहारपज्जत्तिपज्जत्तए सरीरपज्जत्तीपज्जत्तए इंदियपज्जत्तिपज्जत्तए आणापाणुपज्जत्तीपज्जत्तए एतासु चउसु वि पज्जत्तीसु जीवेसु माणुसेसु य तियभंगो अवसेसा

इव आहारका बहवोऽनाहारका ॥ ६ ॥ इति मानकषायसूत्रं मायाकषायसूत्रं चैकवचने प्राग्वत् । बहुवचने विशेषमाह । ( माणकसाईसु ) इत्यादि । मानकषायिषु मायाकषायिषु बहुवचने चिन्त्यमानेषु देवेषु नैरयिकेषु च प्रत्येकं षड्भङ्गाः । नैरयिका हि भवस्वभावतः क्रोधबहुला देवास्तु लोभबहुलास्ततो देवानां नैरयिकाणाञ्च मानकषायो मायाकषायश्च प्रविरल इति प्रागुक्तप्रकारेण षड्भंगा । जीवपदे पृथिव्यादिपदेषु च प्रत्येकमभङ्गकमाहारकाणामनाहारकाणां च मानकषायिणां मायाकषायिणाञ्च प्रत्येकं सदैवतेषु स्थानेषु बहुत्वेन लभ्यमानत्वात् । शेषेषु तु स्थानेषु भङ्गत्रिकं । लोभकषायसूत्रमप्येकवचने तथैव बहुवचने विशेषमाह ( लोभकसाईसु इत्यादि ) लोभकषायिषु नैरयिकेषु षड् भङ्गास्तेषां लोभबहुलतया षड्भंग्यसम्भवात् । जीवेष्वेकेन्द्रियेषु च प्राग्वदेव एव भंग । आहारका अप्यनाहारका अपीति ( अकसाई जहा नो सन्नी नो असन्नीति ) अकषायिणो नो संज्ञिनो नोऽसंज्ञिनो वक्तास्तथा वक्तव्या किमुक्तं भवति । अकषायिणोऽपि मनुष्याः सिद्धाश्च । मनुष्या उपशांतकषायादयो वेदितव्याः ॥ अन्येषां सकषायित्वात् । तत एतेषामपि त्रीणि पदानि । तद्यथा । सामान्यतो जीवपदं मनुष्यपदं सिद्धपदञ्च तत्र सामान्यतो जीवपदे मनुष्यपदे च प्रत्येकमेकवचने स्यादाहारकः स्यादनाहारक इति वक्तव्यं । सिद्धपदेष्वनाहारक एवेति । बहुवचने जीवपदे आहारका अपि अनाहारका अपीति । केवलिनामाहारकाणां सिद्धानामनाहारकाणां सदैव बहुत्वेन लभ्यमानत्वात् । मनुष्यपदे भंगत्रिकं । सर्वेऽपि तावद्भवेयुराहारकाः १ अथवा आहारकाश्चानाहारकश्च २ अथवा आहारकाश्चानाहारकाश्च ३ भावना प्राग्वदनेकशः कृता सिद्धपदे त्वनाहारक एक एव ॥

सम्प्रति ज्ञानद्वारम् ॥

नाणी जहा सम्मद्दिट्ठी । आभिणिबोहियनाणी सुयनाणीसु बेइंदियतेइंदियचउरिंदिएसु छब्भंगा । अवसेसेसु जीवाइओ तियभंगो । जेसिं अत्थि ओहिनाणी पंचिंदियतिरिक्खजोणिया मणूसा य आहारगा नो अणाहारगा अवसेसेसु जीवाइओ तियभंगो जेसिं ओहिनाणं मणपज्जवनाणं जीवा मणूसा य एगत्तेण वि पुहत्तेण वि आहारगा नो अणाहारगा केवलनाणी जहा नो सन्नी नो असन्नी अन्नाणी मइअन्नाणी सुयअन्नाणी जीवेगिंदियवज्जो तियभंगो विभंगनाणी पंचिंदियतिरिक्खजोणिया मणूसा य आहारगा नो अणाहारगा अवसेसेसु जीवाइओ तियभंगो ॥

( नाणी जहा सम्मद्दिट्ठीति ) ज्ञानी यथा प्राक् सम्यग्दृष्टिरुक्तस्तथा वक्तव्यस्तद्यथा ॥

* नाणी णं भंते ! जीवे किं आहारए अणाहारए ? गो० सिय आहारए सिय अणाहारए नाणी णं भंते ! नेरइए किं आहारए अणाहारए ? गो० सिय आहारए सिय अणाहारए एवं एगिंदियवज्जं जाव वेमाणिए नाणी णं भंते ! जीवा किं आहारगा अणाहारगा ? गो० आहारगा वि अणाहारगा वि नाणी णं भंते ! नेरइया किं आहारगा अणाहारगा गो० सव्वे वि ताव होज्जा आहारगा १ अहवा आहारगा य अणाहारगे य २ अहवा आहारगा य अणाहारगा य एवं जाव थणियकुमारा । बेइंदियाणं पुच्छा गो० सव्वे वि ताव होज्ज १ आहारगा अहवा अणाहारगा य २ अहवा आहारगेय ३ अहवा आहारगे य अणाहारगा य ४ अहवा आहारगा य अणाहारगे य ५ अहवा आहारगा य अणाहारगा य ६ एवं तेइंदियचउरिंदिया वि भाणियव्वा अवसेसा जाव वेमाणिया जहा नेरइयाणं सिद्धाणं पुच्छा गो० ॥ *

( अणाहारगा इति ) आभिनिबोधिकज्ञानसूत्रे चैकवचने प्राग्वदवसेयं । बहुवचने द्वित्रिचतुरिन्द्रियेषु भङ्गाः । अथ शेषेषु जीवादिस्थानेष्वेकेन्द्रियवर्जेषु भङ्गत्रिकं तच्चैव ॥

* आभिनिबोहियनाणी णं भंते ! जीवा किं आहारगा अणाहारगा ? गोयमा ! सव्वे वि ताव होज्ज आहारगा १ अहवा आहारगा य अणाहारगे य २ अहवा आहारगा य अणाहारगा य ३ इत्यादि । तथा चाह । आभिनिबोहियनाणी सुयनाणी सुयबेइंदियचउरिंदियेसु छब्भंगा अवसेसेसु जीवाइओ तियभंगो तेसिं अत्थि इति *

सुगमं । नवरं जेसिं अत्थि येषां जीवानामाभिनिबोधिकज्ञानश्रुतज्ञाने स्त । तेषु भङ्गत्रिकं वक्तव्यं न शेषपृथिव्यादिष्विति । अवधिज्ञानसूत्रमेकवचने तथैव बहुवचनचिंतायां पंचेन्द्रियतिर्यग्योनिका आहारका एव नत्वनाहारका । कस्मादिति चेदुच्यते । इह पचेन्द्रियतिरश्चामनाहारकत्वं विग्रहगतौ । न च तदानीं तेषां गुणप्रत्ययतोऽवधिसंभवो गुणानामेवासंभवात्प्राप्यप्रतिपतितावधिर्देवो मनुष्यो वा तिर्यक्षूत्पद्यते । ततोऽवधिज्ञानिनः सन्तः पंचेन्द्रियतिरश्चोऽनाहारकत्वायोगः । शेषेषु तु स्थानेष्वेकेन्द्रियविकलेन्द्रियवर्जेषु प्रत्येकं भङ्गत्रिकं । एतदेवाह ।

" ओहिनाणीणं पंचिंदियतिरिक्खजोणिया आहारगा अवसेसेसु जीवाइओ तियभंगो । जेसिं अत्थि ओहिनाणमिति ॥ "

मनःपर्यायज्ञानं मनुष्याणामेव ततो द्वे पदे । तद्यथा । जीवपदं मनुष्यपदं च तत्रापि चैकवचने बहुवचने च मनःपर्यायज्ञानिन आहारका एव वक्तव्या नत्वनाहारका विग्रहगत्याद्यवस्थायां मनःपर्यायज्ञानासम्भवात् । केवलज्ञानी यथा प्राक् नो संज्ञी नो ऽसंज्ञी उक्तस्तथा वक्तव्य । किमुक्तं भवति केवलज्ञानचिन्तायामपि त्रीणि पदानि । तद्यथा । सामान्यतो जीवपदं मनुष्यपदं सिद्धपदञ्च तत्र सामान्यतो जीवपदे मनुष्यपदे चैकवचने स्यादाहारकः स्यादनाहारक इति वक्तव्यं सिद्धपदे त्वनाहारक इति बहुवचने सामान्यतो जीवपदे आहारका अपि अनाहारका अपि मनुष्यपदे भंगत्रिकं । तच्च प्रागेवोपदर्शितं सिद्धपदे त्वनाहारका अपि अज्ञानिसूत्रं मत्यज्ञानिसूत्रं श्रुताज्ञानिसूत्रं च एकवचने प्रागिव बहुवचनचिन्तायां जीवपदे एकेन्द्रियेषु पृथिव्यादिषु प्रत्येकमाहारका अनाहारका अपि इति वक्तव्यं शेषेषु भङ्गत्रिकं । विभङ्गज्ञानिसूत्रमप्येकवचने तथैव बहुवचनचिन्तायां पञ्चेन्द्रियतिर्यग्योनिका मनुष्या आहारका एव वक्तव्याः । नत्वनाहारका विभङ्गज्ञानसहितस्य विग्रहगत्या तिर्यक्पञ्चेन्द्रियेषु

मनुष्येषु चोत्पत्तिसम्भवात् । अवशेषेषु स्थानेषु एकेन्द्रियविकलेन्द्रियवर्जेषु प्रत्येकं भगत्रिकं । गतं ज्ञानद्वारम् ॥

सम्प्रति योगद्वारम् ॥

सजोगीसु जीवेगिंदियवज्जो तियभंगो मणजोगी वइजोगी य जहा सम्मामिच्छादिट्ठी । नवरं वइजोगी विगलिंदियाण वि कायजोगीसु जीवेगिंदियवज्जो तियभंगो । अजोगी जीवमणूससिद्धा अणाहारगा । दारम् ॥

तत्र सामान्यतः सयोगिसूत्रमेकवचने तथैव बहुवचने जीवैकेन्द्रियपदानि वर्जयित्वा शेषेषु स्थानेषु भङ्गत्रिकं, जीवपदे पृथिव्यादिपदेषु च पुनः प्रत्येकमाहारका अपि अनाहारका अपीति भङ्ग उभयेषामपि सदैवतेषु स्थानेषु बहुत्वेन लभ्यमानत्वात् । मणजोगी वइजोगी जहा सम्मामिच्छादिट्ठीयत्ति । मनोयोगिनो वाग्योगिनश्च । यथा प्राक् सम्यग्मिथ्यादृष्टय उक्तास्तथा वक्तव्याः । एकवचने बहुवचने वाऽऽहारका एव वक्तव्या नत्वनाहारका इति भावः ( नवरं वइजोगी विगलिंदियाणवित्ति ) नवरमिति । सम्यग्मिथ्यादृष्टिसूत्रादत्राय विशेष । सम्यग्मिथ्यादृष्टित्वं विकलेन्द्रियाणां नास्तीति तत्सूत्र तत्रोक्त । वाग्योगः पुनर्विकलेन्द्रियाणामप्यस्ति तत्सूत्रमपि वाग्योगे वक्तव्य । तथैव ॥

* मणजोगीणं भंते ! जीवे किं आहारए अणाहारए ? गोयमा ! आहारए नो अणाहारए एवमेगिंदियवज्जं जाव वेमाणिए एवं पुहुत्तेण वि ॥ *

काययोगिसूत्रमप्येकवचने बहुवचने च सामान्यतः सयोगिसूत्रमिव (अजोगीण भंते ! जीवे किं आहारए) तेनात्र त्रीणि पदानि । तद्यथा जीवपदं मनुष्यपदं सिद्धपदं च त्रिष्वपि स्थानेष्वेकवचने बहुवचनेनाहारकत्वमेव ॥

अधुना उपयोगद्वारम् ॥

सागाराणागारोवउत्तेसु जीवेगिंदियवज्जो तियभंगो सिद्धा अणाहारगा । दारम् ॥

तत्र साकारोपयोगसूत्रे च प्रत्येकमेकवचने सर्वत्र स्यादनाहारक इति वक्तव्य सिद्धपदे त्वनाहारक इति बहुवचने जीवपदे पृथिव्यादिपदेषु चाहारका अपि अनाहारका अपीति भङ्गः । शेषेषु भङ्गत्रिकं । सिद्धास्त्वनाहारका इति सूत्रोल्लेखस्त्वयं ॥

* सागारोवओगोवउत्तेणं भंते ! जीवे किं आहारए अणाहारए ? गोयमा ! सिय आहारए सिय अणाहारए ॥ *

गतमुपयोगद्वारं ॥

वेदद्वारम् ॥

सवेदजीवेगिंदियवज्जो तियभंगो । इत्थिवेयपुरिसवेएसु जीवाइओ तियभंगो । नपुंसगवेदए जीवेगिंदियवज्जो तियभंगो । अवेयए जहा केवलनाणी ॥

सामान्यतः सवेदसूत्रमेकवचने स्यादाहारकस्स्यादनाहारक इति बहुवचने जीवपदे एकेन्द्रियांश्च वर्जयित्वा शेषेषु स्थानेषु भङ्गत्रिकं जीवपदे एकेन्द्रियेषु च पुनः प्रत्येकमभगकं आहारका अनाहारका अपीति स्त्रीवेदसूत्रं पुरुषवेदसूत्रं च एकवचने तथैव नवरमत्र नैरयिकैकेन्द्रियविकलेन्द्रिया न वक्तव्यास्तेषां नपुंसकत्वात् बहुवचने जीवादिषु प्रत्येकं भगत्रिकं । नपुंसकवेदेऽपि सूत्रमेकवचने तथैव नवरमत्र भवनपतिव्यन्तरज्योतिष्कवैमानिका न वक्तव्याः । तेषां न नपुंसकत्वाद्बहुवचने जीवैकेन्द्रियवर्जेषु भगत्रिकं । जीवपदे एकेन्द्रियपदेषु च पृथिव्यादिषु पुनरभगकं प्रागुक्तस्वरूपमिति । अवेदो यथा केवली तथा एकवचने बहुवचने च वक्तव्या । जीवपदे मनुष्यपदे च एकवचने स्यादाहारकस्स्यादनाहारक इति बहुवचने जीवपदे आहारका अपि अनाहारका अपि मनुष्येषु भंगत्रिकं सिद्धे त्वनाहारका इति वक्तव्यमिति भावः ॥ गतं वेदद्वारम् ॥

शरीरद्वारम् ॥

ससरीरे जीवेगिंदियवज्जो तियभंगो । ओरालियसरीरिसु जीवमणूसेसु तियभंगो । अवसेसा आहारगा नो अणाहारगा जेसिं अत्थि ओरालियसरीरं वेउव्वियसरीरी आहारगसरीरी य अणाहारगा जेसिं अत्थि तेयगकम्मगसरीरी जीवेगिंदियवज्जो तियभंगो । असरीरी जीव सिद्धा य नो आहारगा अणाहारगा ॥

शरीरद्वारे सामान्यतः शरीरसूत्रे सर्वत्रैकवचने स्यादाहारकः स्यादनाहारक इति । बहुवचने जीवैकेन्द्रियवर्जेषु शेषेषु स्थानेषु प्रत्येकं भगत्रिकं । जीवपदे पृथिव्यादिपदेषु च प्रत्येकमभङ्गकं प्रागुक्तमिति । औदारिकसूत्रमेकवचने तथैव नवरमत्र नैरयिकभवनपतिव्यन्तरज्योतिष्कवैमानिका न वक्तव्यास्तेषामौदारिकशरीराभावात् । बहुवचने जीवपदे मनुष्यपदेषु च प्रत्येकं भगत्रिकं । तद्यथा । सर्वेऽपि तावद्भवेयुराहारका एष भंगो यदा न कोऽपि केवली समुद्घातगतयोगी वा । अथवा आहारकाश्चानाहारकश्च एष एकस्मिन्केवलिनि समुद्घातगते ऽयोगिनि वासति प्राप्यते । अथवा आहारकाश्चानाहारकाश्च एष भगो बहुषु केवलिषु समुद्घातगतेषु अयोगिषु वा सत्सु वेदितव्यः । शेषास्त्वेकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियतिर्यक्पंचेन्द्रिया आहारका एव वक्तव्याः नत्वनाहारकाः । विग्रहगत्युत्तीर्णानामेवौदारिकशरीरसम्भवात् । वैक्रियाहारकशरीरिणश्च सर्वे ऽप्येकवचने बहुवचने चाहारका एव नत्वनाहारका नवरं येषां वैक्रियमाहारकं वा संभवति त एव वक्तव्या नान्ये । तत्र नैरयिकभवनपतिवायुकायिकतिर्यक्पंचेन्द्रियमनुष्यव्यन्तरज्योतिष्कवैमानिकेषु आहारकं मनुष्येष्वेव । सूत्रोल्लेखश्चायं ।

* वेउव्वियसरीरिणं भंते जीवे किं आहारए अणाहारए ? गोयमा ! आहारए नो अणाहारए वेउव्वियसरीरेणं भंते ! नेरइए किं आहारए अणाहारए ? गोयमा ! आहारए नो अणाहारए ॥ *

इत्यादि । तैजसकार्म्मणशरीरसूत्रे चैकवचने सर्वत्र स्यादाहारकस्स्यादनाहारक इति । बहुवचने जीवैकेन्द्रियवर्जेषु स्थानेषु भंगत्रिकं जीवपदे एकेन्द्रियेषु पुनरभगकं । अशरीरिणस्सिद्धास्तेन तत्र द्वे एव पदे । तद्यथा । जीवास्सिद्धाश्च । तत्रैकवचने बहुवचने चोभयत्राप्यनाहारक एव ॥ गतं शरीरद्वारम् ॥

सम्प्रति पर्याप्तिद्वारम् ॥

आहारपज्जत्तिपज्जत्तए सरीरपज्जत्तीपज्जत्तए इंदियपज्जत्तिपज्जत्तए आणापाणुपज्जत्तीपज्जत्तए एतासु चउसु वि पज्जत्तीसु जीवेसु माणूसेसु य तियभंगो अवसेसा

इति न भूयो भाव्यन्ते । ग्रन्थगौरवभयात् । न वरं । ( पक्कवयणे सिक्खाणहारया होंति इति । ) पक्कवयणे इत्यत्र तृतीयार्थे सप्तमी । एकवचनेन एकार्थेनेति भावः । सर्वत्र सिक्खा अनाहारका भवन्तीति विज्ञेयम् ॥ प्रज्ञा० २८ पद ॥

जीव क समयमनाहारकः !

तेणं कालेणं तेणं समएणं जाव एवं–वयासी जीवेणं भंते ! कं समयमणाहारए भवइ ? गोयमा ! पढमे समये सिय आहारए सिय अणाहारए, वितिए समये सिय आहारए सिय अणाहारए, तइए समये सिय आहारए सिय अणाहारए, चउत्थे समए नियमा आहारए, एवं दंमओ जीवा य एगिंदिया य चउत्थे समए सेसा तइए समए ॥ भ०–७ श. १ उ. ॥

( कं समयमणाहारएत्ति ) परभवं गच्छन् कस्मिन्समयेऽनाहारको भवतीति प्रश्नः । उत्तरन्तु यदा जीव ऋजुगत्योत्पादस्थानं गच्छति तदा परभवायुषः प्रथम एव समय आहारको भवति । यदा तु विग्रहगत्या गच्छति तदा प्रथमसमये वक्रेऽनाहारको भवति, उत्पत्तिस्थानाऽनवाप्तौ तदाहरणीयपुद्गलानामभावादत आह ( पढमे समए सिय आहारए सिय अणाहारएत्ति ) तथा यदा एकेन वक्रेण द्वाभ्यां समयाभ्यामुत्पद्यते तदा प्रथमेऽनाहारको द्वितीयेत्वाहारको यदा तु वक्रद्वयेन त्रिभिः समयैरुत्पद्यते तदा प्रथमे द्वितीये चानाहारक इत्यत आह ( वीयसमये सिय आहारए सिय अणाहारएत्ति ) तथा यदा वक्रद्वयेन त्रिभिस्समयैरुत्पद्यते तदा द्वयोरनाहारकस्तृतीये त्वाहारको यदा तु वक्रत्रयेण चतुर्भिस्समयैरुत्पद्यते तदाद्ये समयत्रयेऽनाहारकश्चतुर्थे तु नियमादाहारक इति कृत्वा(तइए समए सिय०) इत्याद्युक्तं वक्रत्रयं चेत्थं भवति । नाड्या बहिर्विदिग्व्यवस्थितस्य सतो यस्याधोलोकादूर्ध्वलोके उत्पादो नाड्या बहिरेव दिशि भवति सोऽवश्यमेकेन समयेन विश्रेणितस्समश्रेणीं प्रतिपद्यते द्वितीयेन नाडीम्प्रविशति तृतीयेनोर्ध्वलोकं गच्छति चतुर्थेन लोकनाडीतो निर्गत्योत्पत्तिस्थान उत्पद्यते । इह चाद्ये समयत्रये वक्रत्रयमवगन्तव्यं । समश्रेण्यैव गमनात् ।

अन्ये त्वाहु । वक्रचतुष्टयमपि सम्भवति । यदाहि विदिशो विदिश्येवोत्पद्यते तत्र समयत्रयं प्राग्वत् । चतुर्थसमये तु नाडीतो निर्गत्य समश्रेणीं प्रतिपद्यते पञ्चमेन तूत्पत्तिस्थान प्राप्नोति । तत्र चाद्ये समयचतुष्टये वक्रचतुष्कं स्यात्तत्र चानाहारक इति । इदञ्च सूत्रे न दर्शितं प्रायेणेत्थमनुत्पत्तेरिति ( एवं दंमओत्ति ) अमुनाऽभिलापेन चतुर्विंशतिदण्डको वाच्यस्तत्र च जीवपद एकेन्द्रियपदेषु च पूर्वोक्तभावनयैव चतुर्थे समये नियमादाहारक इति वाच्यं । शेषेषु तु पदेषु तृतीयसमये नियमादाहारक इति । तत्र यो नारकादिस्त्रसस्त्रसेष्वेवोत्पद्यते । तस्य नाड्या बहिस्तादागमनं गमनञ्च नास्तीति तृतीयसमये नियमादाहारकत्वम् । तथाहि यो मत्स्यादिर्भरतस्य पूर्वभागादैरवत-पश्चिमभागस्याऽधो नरकेषूत्पद्यते । स एकेन समयेन भरतस्य पूर्वभागात्पश्चिमभागं याति द्वितीयेन तु तत ऐरवतपश्चिमं भागं ततस्तृतीयेन नरकमिति । अत्र चाद्ययोरनाहारकस्तृतीयेत्वाहारक एतदेव दर्शयति ( जीवाय एगिंदिया य चउत्थे समये सेसा तइयसमएत्ति ॥

कस्मिन् समये सर्वाल्पाहारकः ।

जीवेणं भंते ! कं समयं सव्वप्पाहारए भवइ ? गोयमा ! पढमसमयोववन्नए वा चरिमसमयभवत्थे वा एत्थ णं जीवे सव्वप्पाहारए भवइ दंमओ भाणियव्वो जाव वेमाणियाणं । भ०–७ श १ उ ॥

कस्मिन्समये सर्वाल्पः सर्वथा स्तोको न यस्मादन्यः स्तोकतरोऽस्ति स आहारोयस्य सः सर्वाल्पाहार स एव सर्वाल्पाहारकः ( पढमसमयोववन्नएणएत्ति ) प्रथमसमय उत्पन्नस्य यस्य प्रथमो वा समयो यत्र तत्प्रथमसमय । तदुत्पन्नमुत्पत्ति यस्य स तथा उत्पत्तेः प्रथमसमय इत्यर्थः । तदाहार ग्रहणहेतोः शरीरस्या ऽल्पत्वात्सर्वाल्पाहारता भवतीति । ( चरमसमयभवत्थेवत्ति ) । चरमसमये भवस्य जीवितस्य तिष्ठति यः स तथा आयुषश्चरमसमय इत्यर्थ । तदानीं प्रदेशानां सह्वतत्वेनाऽल्पेषु शरीरावयवेषु स्थितत्वात्सर्वाल्पाहारतेति ।

वनस्पति सर्वाल्पाहारकः ।

वणस्सइकाइया णं भंते ! कं कालं सव्वप्पाहारगा वा सव्वमहाहारगा वा भवंति ? गोयमा ! पाउसवरिसा रत्तेसु णं एत्थणं वणस्सइकाइया सव्वमहाहारगा भवंति। तयाणंतरं च णं सरए, तयाणंतरं च णं हेमंते, तयाणंतरं च णं वसंते, तयाणंतरं च णं गिम्हासु, णं वणस्सइकाइया सव्वप्पाहारगा भवंति। जइ णं भंते ! गिम्हासु वणस्सइकाइया सव्वप्पाहारगा भवति । कम्हाणं भंते ! गिम्हासु वहवे वणस्सइकाइया पत्तिया पुप्फिया फलिया हरिय गेरेरिज्जमाणा सिरीए अतीव अतीव उवसोभेमाणा उवचिट्ठंति ? गोयमा ! गिम्हासु णं वहवे उसिणजोणिया जीवा य पोग्गला य वणस्सइकाइयत्ताए वक्कमति विउक्कमंति चयंति उववज्जंति । एवं खलु गोयमा ! गिम्हासु वहवे वणस्सइकाइया पत्तिया पुप्फिया जाव चिट्ठंति । से नूणं भंते ! मूला मूलजीवफुमा कंदा कंदजीव फुमा जाव वीया वीयजीवफुमा ? हंता गोयमा ! मूला मूलजीवफुमा जाव वीया वीयजीवफुमा । जइणं भंते ! मूला मूलजीवफुमा जाव वीया वीयजीवफुमा कम्हाण भंते ! वणस्सइकाइया आहारंति परिणामंति ? गोयमा ! मूला मूलजीवफुमा पुढवीजीवपमिवद्धा तम्हा आहारंति तम्हा परिणामंति कंदा कंदजीवफुमा मूलजीव पमिवद्धा तम्हा आहारंति तम्हा परिणामंति एवं जाव वीया वीयजीवफुमा फलजीवपमिवद्धा तम्हा आहारंति तम्हा परिणामंति ।

( वणस्सइ ) इत्यादि । ( कं कालंति ) कस्मिन्काले । ( पाउसेत्यादि । ) प्रावृडादौ बहुत्वाज्जलस्नेहस्य महाहारतोका प्रावृट् श्रावणादिर्वर्षारात्रो ऽश्वयुजादि । ( सरएत्ति ) शरत् मार्गशीर्षादिस्तत्र चाल्पाहारा भवन्तीति ज्ञेयं । ग्रीष्मे सर्वाल्पाहारतोका । अत एव च शेषेष्वप्यल्पाहारता क्रमेण द्रष्टव्येति । ( हरितगरेरिज्जमाणत्ति । ) हरितकाश्च ते नीलका रेरिज्यमानाश्च देदीप्यमाना हरितकरेरिज्यमाना ।

समन्नागकया तिहला, चूर्निबोमीर चंदणयं ॥ ५६ ॥
गोमुत्तं कडुरोहिणी, वग्धी अमया य रोहिणी तुग्गा ॥
गुग्गुलवया करीरय, लिंवपंचग ग्गासगणो ॥ ५७ ॥
तह आसगंधि वंज्झी, चीरूहलिद्दा य कुंदरुकुट्टा ॥
विसनाइ य धमासो, वालय वीया अरिट्ठा य ॥ ५८ ॥
मींमल मजिट्ठकंकेल्लि, कुमारि कंथेरं वेरकट्टा य ॥
कप्पारुवीय पत्तय, अगुरु तुरुष्का य तंतु वमा ॥ ५९ ॥
धत्तखयरपलासाइं, कंटकरुक्खाणवुल्लियासाणा ॥
जं कडुयरसपरिगयं, आहारं पिच्छ अणाहारं ॥ ६० ॥
इच्छाइ जं अणिट्ठं, पंकुवमंतं ग्गवे अणाहारं ॥
जं इच्छाए भुंजइ, तं सव्वं हवइ आहारं ॥ ६१ ॥

आहारपज्जत्ति-आहारपर्याप्ति- स्त्री० आहारपुद्गलग्रहणपरिणमनहेतावात्मनः शक्तिविशेषे,-प० स० ॥ यया वाह्यमाहारमादाय खलरसरूपतया परिणमयति साऽऽहारपर्याप्तिः । । कर्म० । दर्श० । जी० १ प्र । न० । प्रज्ञा० १ पद ॥ प्रव० ॥ पर्याप्तिर्नाम शक्तिस्तत्र यया शक्त्या करणभूतया भुक्तमाहारं खलरसरूपं च या करोति सा ॥ वृ० १ उ. ।

आहारपूइ-आहारपूति-स्त्री० ( असिवे ओमोयरिए, रायदुट्ठे भए व गेलन्ने । अद्धाण रोहए वा, गहणं आहारपूइए ३०८ ) इत्युक्तलक्षणायामाहाराशुद्धौ, नि० चू० १ उ ।

आहारपोसह-आहारपोषध- पु० आहार' प्रतीतस्तद्विषयस्तन्निमित्तं पोषधश्चाहारपोषधः । आहारविशेषत्यागे, "आहारपोसहो दुविहो,देसे सव्वे य देसे अ अमुगाविगतिआयंविलएक्कसि वा दो वा १ सव्वे चउविहोत्ति आहारो अहोरत्त पच्चक्खा "आव० ६ अ । आहारपोषधो देशतो विवक्षिते विकृतेरविकृते एवाऽऽम्लस्य वा सकृदेव द्विरेव वा भोजनमिति सर्वतस्तु चतुर्विधस्याहारस्याहोरात्र यावत्प्रत्याख्यान । ध० २ अधि ।

आहारसण्णा-आहारसंज्ञा- स्त्री० क्षुद्वेदनीयोदयात्कावलिकाद्याहारार्थं पुद्गलोपादानक्रियैव संज्ञायतेऽनया तस्या नित्याहारसंज्ञा ॥ भ० ७ श ८ उ । स्था० १० ठा ॥ आहाराभिलापरूपे क्षुद्वेदनीय प्रभवे आत्मपरिणामविशेषे, कर्म० ॥ अभिलाषश्च ममैवरूप वस्तु पुष्टिकारि तद्यदीदमवाप्यते तत' समीचीन भवतीत्येव शब्दार्थोल्लेखानुवक्त स्वपुष्टिनिमित्तभूतप्रतिनियत वस्तु प्राप्त्यध्यवसायरूप' । जी० १ प्र । प्रज्ञा० ७ उ ।
सज्ञाशव्दवक्तव्यता ( सण्णा ) शब्दे ।

चउहिं ठाणेहिं आहारसण्णा समुप्पज्जइ । तं जहा ओमकोट्ठयाए छुहावेयणिज्जस्स कम्मस्स उदएणं मईए तदट्ठोवओगेणं ॥ स्था० ४ ठा ॥

टी०-अवमकोष्ठतया रिक्तोदरतया मत्या आहारकथाश्रवणादिजनितया तदर्थोपयोगेन सततमाहारचिन्तयेति ॥
आहारतृष्णाख्ये कर्म्मणि,मोहाभिव्यक्तचैतन्यस्य,द्वा.३०द्वा ।

आहारादिचागणुट्ठाण-आहारादित्यागानुष्ठान न० भोजनदेहसत्काराऽब्रह्मव्यापारपरिहारकरणे । पचा० १० वृ ॥

आहारिज्जमाण-आह्रियमाण त्रि० सगृह्यमाणे, अभ्यवह्रियमाणे च, भ० १ श १ उ ॥ खाद्यमाने,स्था० १० ठा. ।

आहारिज्जस्समाण-आहरिष्यमाण त्रि०-अनागते काले आहारं करिष्यमाणे भ १ श. । १ उ० ।

आहारित्तए-अहर्तुम् अव्य०-अभ्यवहर्तुमित्यर्थे आचा० ।

आहारित-आहारित- त्रि० भुक्ते, त० ॥ आहारत्वेन गृहीते, अनु० ॥

आहारेयव्व-आहर्तव्य- त्रि० अभ्यवहार्ये स्था० ३ ठा ॥

आहारेमाण-आहारयत्-त्रि०अभ्यवहरति,स्था०६ठा. आचा० ॥

आहारेसणा-आहारैषणा-स्त्री०अभ्यवहार गवेषणायांदश१अ ।

आहारोवचय-आहारोपचय- त्रि० आहारेणोपचयोऽस्य । आहारोपचिते, " आहारोवचया देहा परीसहपभंगुरा " आचा० ७ अ २ उ. ।

आहारोवचिय-आहारोपचित-त्रि० आहाररूपतया सचितेषु, भ० १६ श २ उ. ।

आहावणा-आज्ञावना-स्त्री०उद्देशमात्रे अपरिगणनायाम् पिं० ॥

आहि-आधि-पु०शारीरमानसपीडाविशेषे, पो० १५ विव । मन' पीडायां, । भ० १ श १ उ. ।

आहिंडग-आहिण्डक-पु० भ्रमणशीले गच्छनिर्गतसाधौ,औ० ।
इदानीमाहिण्डकान् प्रतिपादयन्नाह ॥

उवएस अणुवएसा, दुविहा आहिंडगा समासेणं ।
उवएसदेसदंसण, थूभाई हुंति णुवएसा ॥ ८७ ॥

तत्र एके उपदेशहिण्डका अपरे अनुपदेशहिण्डका एवमेतत् द्विधा अहिण्डका मुणितव्यास्तत्र उवदेसन्ति । द्वारपरामर्श (देसदंसणत्ति) देशदर्शनार्थं द्वादशवर्षाणि य पर्यटतिस सूत्रार्थौ गृहीत्वा एति उपदेशहिण्डका अनुपदेशेत्वमी भवति ( थूभाई हौंति णुवएसा ) स्तूपादिगमनशीला अनुपदेशाहिण्डकाः औ० । व्य० ।

आहिंभिज्जण-आहिज्य- अव्य० परिभ्रम्येत्यर्थे, । संथा० ।

आहिक-आधिक्य- न० सजातीयपरिणामप्राचुर्ये । द्वा० ॥

आहिदेविय-आधिदैविक- न० यक्षराक्षसग्रहाद्यावेश हेतुके दुःखादौ, स्था ठा० ॥

आहिभोतिय-अधिभौतिक- न० मनुष्यपशुपक्षिमृगसरीसृपस्थावरनिमित्ते दु खादौ, स्था० ठा० ॥

आहिय-आख्यात-त्रि० प्रतिपादिते, कथिते, । सूत्र० १ श्रु १ । स्था० अनु० । आख्यानकप्रतिवद्धे, सू० प्र । आविर्भाविते, भावे क्त० अभिप्राये, इहमेगेसि आहिय । सूत्र० ॥ श्रु० अ

आहित-त्रि० प्रवचन ऋषिभाषितादौ आत्मनि वा व्यवस्थिते सूत्र । व्यवस्थापिते, स्था ४ ठा । निवेशिते, ज० । ढौकिते, अनुष्ठिते, । सूत्र० । प्रयोगविस्रसाभ्यां स्वकर्मपरिणत्या वा जनिते । आचा० । समताहिते च, सूत्र० ॥

आहियग्गि-आहिताग्नि-पु०कृतावसथादिब्राह्मणे, दश अ ८ उ १ । अग्निं गृहीत्वा रूपमचिताया स्थापितवन्तस्तेन कारणेनाहिताग्नय । आ० म० प्र ॥

आहियविसेसत्त-आहितविशेषत्व-न० शेषपुरुषवचनापेक्षया शिष्टोत्पादनमतिविशेषतायां । रा० । सत्यवचनातिशये, । सम० ।

आहीर - आभीर - पु० गोचारिप्रधाने देशभेदे । कल्प. ( आभीरदेशे अचलपुरासन्ने कृष्णवेणानद्योर्मध्यस्थ

द्वीप.।कल्प.।आहिर इतिख्याते शूद्रजातीये,सूत्र.१श्रु १अ ॥

आहु–आहोतृ–त्रि० दातरि, । ज्ञा. १ अ । औ० ॥

आहुणिज्ज–आहवनीय–त्रि० सम्प्रदानभूते ज्ञा० १ अ । औ०॥

आहुणिज्जमाण–आधूयमान–त्रि० कम्पमाने विद्रवमुपागते, । ज्ञा० ८अ । औ० ॥

आहुणिय–आधुनिक–पु० अष्टाशीतेर्महाग्रहाणां पंचमे, । दो आहुणिया, स्था० २ ठा । कल्प० । जं० । सू० प्र० ॥

आहूय–आहूत–त्रि० कृताऽऽह्वाने, वाच० । अ. ७ ।

आहूय–अव्य० उपादायेत्यर्थे, ( कम्मआहूय जंज्ञणं ) कर्माहूय ॥ आचा०

आहेउ–आधातुं–अव्य० आधानं कर्तुमित्यर्थे।सूत्र०, १श्रु ८अ.।

आहेण– न० विवाहोत्तरं वधूप्रवेशे वरगृहे क्रियमाणे भोजने । । आचा० २ श्रु० १ अ० ४ उ० ॥

आहेवच–आधिपत्य– न० । अधिपतेः कर्माधिपत्यम्–रक्षार्थम् जं० । कल्प० । स० । प्र० । प्रज्ञा० । आ० म० प्र० । ज्ञा० । वि० । स्वामितायाम् । स्था० ८ ठा. । तदाश्रितलोकेभ्यः आधिक्येन तेष्ववस्थायित्वे, औ० ॥

आहेवण–आक्षेपण–न० पुरक्षोभादिकरणे,प्रश्न० २ द्वा ॥

आहोहिय–आधोऽवधिकः– पु०–नियतक्षेत्रयित्वेविषयाव धिज्ञानिनि ॥ भ. ७ श. ७ उ. । स प्रज्ञा ।

आभोगिकः– पु०–आभोग उपयोगः स प्रयोजन यस्य तदा भोगिकम् उपयोगप्रधाने,। कल्प० ॥



इति श्रीमद्बृहत्सौधर्म्मतपागच्छीय--कलिकालसर्व्वज्ञ

श्रीमद्भट्टारक--जैनश्वेताम्बराचार्य्य १००८ श्री

श्रीविजय—राजेन्द्रसूरिविरचिते

अभिधानराजेन्द्रे "आकारादि

शब्दसङ्कलनम्"

॥ समाप्तम् ॥







अर्हम् ।

# अभिधानराजेन्द्रः ।



## ( इकार )

इ-इ-पु अस्य विष्णोरपत्यम् अ इञ् कामदेवे, गायत्री। एका०। स हि रुक्मिण्यां विष्णोरंशात् कृष्णात् जातः। तत्कथा च यथा-रुक्मिण्यां वासुदेवाच्च, लक्ष्म्यां कामो धृतव्रतः। शम्ब रान्तकरो जज्ञे, प्रद्युम्न कामदर्शन. । हरि० १६३ अ । एव व्युत्पत्तिमत्त्वेन कामदेवस्यैव इशब्दार्थता नाभिलापस्येति बहव'। कामदेवदैवत्याच्च अभिलापे औपचारिक इत्यन्ये । वाच०। कम्पे, सायके, सर्पे, सरसीरुहकेसरे, । शक्रचापे, घाणे कमलायाम्, रचनायाम्, क्रोणीभृत्कुहरे, पद्मदले, ज्ञाने, गतौ च। एका०। नञर्थकस्य अ इत्यस्येदम् अ इञ् । भेदे ३ सरोपोक्तौ, ४ निराकरणे, ५ अनुकम्पायाम्, ६ गदे, ७ विस्मये, ८ निन्दायाम् ९ सम्बोधने, च। अव्य० चादि । निपातैकाच्कत्वात् अस्य प्रगृह्यसंज्ञा तेन इ इन्द्र इत्यादौ न सन्धिः। वाच० वाक्यालङ्कारे, च। सहि निपातः पादपूरणाय प्रयुज्यते "इड्ढी वा जुई वा" इ शब्दो निपातो वाक्यालङ्कारार्थ इति । औप०। ज्ञा० १ अ० । " उसभे इ वा पढमराया इ वा, पढमभिक्खायरे इ वा, पढमजिणे इ वा पढमतित्थकरे इ वा " क सू० । इकार. सर्वत्र वाक्यालङ्कारे इति वृत्ति. । कल्प। ( सुत्तमि अणुआइ इह इं पुण अत्यतो निसंदेह ) व्य० । इ पादपूरणे इतिवृत्ति. व्य ५ उ ॥ तथा चाह वररुचि' स्वप्राकृतलक्षणे । " इजेरापादपूरणे इति" आ. म . द्वि । "इह इ भणिया पुरिसजाया" । व्य सू । इ इति पादपूरणे इति वचनात् सानुस्वारता प्राकृतत्वात् । प्राकृते हि पदान्ते सानुस्वारता भवतीति । व्य०१ उ. ।

इ-इ गतौ-भ्वादि० सकर्म० अनिट् अयति पेपीत् इयाय ईयतु ईयु इययिथ इयेथ आयन् । इ ई इति प्रश्लेषात् अय च धातु कर्त्री गतौ इत्यत्र लब्ध । सि० कौ० । वाच० ॥

इ ( क् ) । इक् स्मरणे इति वचनादिति भ० १ श० २ उ० । अधिपूर्वक एव कित् । कित्करणमधीगर्थेत्यादौ विशेषार्थम् । अदादि० पर० सक० अनिट् अध्येति अध्यैपीत् । वाच० ॥

इ (ङ्) इङ्-अध्ययने "इङ् अध्ययने इति वचनादिति" भ० १ श०१ उ० ॥ अध्ययने अधिपूर्व एव ङित् अदा० आत्म० सक० अनिट् अधीते अधीयीत अध्यैष्ट । वाच० ।

इ ( ण् ) इण् गतौ "इण् गताविति वचनादिति भ० १ श १ उ ॥ णित् इङो भेदार्थम् अदा० पर सक अनिट् एति इत यन्ति इयात् इहि एत् आयत् अगात् । वाच० ॥

इ ( त् )-इत्-त्रि० एति गच्छति इ क्विप् गत्वरे, व्याकरणोक्ते प्रक्रियाकालोच्चारिते अस्थायिनि वर्णभेदे, यथा तिप् सिप् इत्यादौ पकारादि ॥ वाच० ।

इ ( ष् )-इष्-त्रि० इष् इच्छायां क्विप् । इच्छायुक्ते १ कर्मणि क्विप् इष्यमाणे, २ त्रि०३ अन्ने, इष्यते इष् अन्तर्भूतण्यर्थे कर्मणि क्विप् ४ एषणीये, इष्-गतौ भावे क्विप् । ५ यात्रायाम्, स्त्री० वाच०

इइ ( ति ) इति-अव्य० इण् क्तिन् १ आद्यर्थे "गई इय" इति शब्द-आद्यर्थस्ततश्च "गइइंदियकाए" इत्यादि द्वारकलापेऽवधिर्वक्तव्य इति । विशे० । इयत्ताप्रदर्शने, माने, वाच० ( सम्मत्तति ) इति शब्द' इयत्ताप्रदर्शनार्थः एते क्षुधादयः सम्यक्त्वान्ता द्वाविंशतिरिति न न्यूनाधिका. परिषहा भवन्तीति । प्रव० ८४ द्वा. । उपप्रदर्शने, " महया जणसद्दे इ वा " इह सन्धिप्रयोगादितिशब्दो दृष्टव्य. स चोपप्रदर्शने इति वृत्ति. । ज्ञा० १ अ० । " इति चोदकदिट्ठत परिहृतु कथिज्जते ससब्भावो उवदसणे इति ,, । नि चू ३ उ ॥ औप । स्था० ठा० ३ । सूत्र० २ श्रु० ४ अ । विशे । " इच्चेवं सवच्छरिय थेरकप्प " इति. रूपप्रदर्शने त पूर्वोपदर्शित सांवत्सरिक स्थविरकल्पमिति वृत्ति. । कल्प० । नि० चू ४ उ. । "असोगवणेइ वा " इति शब्द उपप्रदर्शने अनुस्वारलोप' सन्धिश्च प्राकृतत्वादिति भ० १ श १ उ. । औप० । प्रश्न० । गच्छा० ।" इति भो इति भोत्ति ते अप्पमप्पस्स किच्चाइ । करणिज्जाइ पच्चणुब्भवमाणा विहरति " (इति भोत्ति) एतत् कार्यमस्ति भोशब्दश्चामन्त्रणे इति । भ० ३ श. १ उ. ॥ " उल्लेखे " इतिशब्द उल्लेखार्थ इति । र० । " तए ण से पालए देवे तस्स ण दीवस्स जाणविमाणस्स अतो बहुसमरमणिज्ज भूमिभाग विउव्वइ से जहा नामए आलिंगपुक्खरेइ वा " इत्यादि इति । शब्द उपमाभूतवस्तुपरिसमाप्तिद्योतक इति आ म प्र० । इति शब्दा सर्वेऽपिस्वस्वोपमाभूतवस्तुसमाप्तिद्योतका इति, ज० । राय०॥ "तत्थ ण जे ते किण्हा मणीतणा य तेसि ण अयमेया रूवेवण्णावासे पन्नत्ते तजहा से जहा णामए जीमूतेइ वा "इत्यादि सूत्र इतिशब्द उपमाभूतवस्तुनामपरिसमाप्तिद्योतक इति । ज० ॥ एवकारार्थे, अहवा इतिशब्द एवकारार्थे द्रष्टव्य इति नि०चू०२अ० ॥ "अहवा इतिसद्दो एवार्थे" नि० चू० अ०१। एव प्रकारार्थे, उक्तप्रकारेणेत्यर्थे, पो० प्र० १० । "महब्भय दुक्ख त्ति बेमि" ॥ इतिशब्द एवमर्थे, एवमह ब्रवीमीत्यर्थ. । आचा ६ अ० । अमुना प्रकारेणेत्यर्थे, । सूत्र २ श्रु० ४ अ० । "मिच्छा भावयणेति य इत्येव प्रकारे" स्था० ठा० ९ ॥ पूर्वप्रक्रान्तपरामर्शे, ॥ " इतिकम्म परिणाय,, इति पूर्वप्रक्रान्तपरामर्शक इति । आचा० २ अ० ६ उ० ॥

उचियं खलु कायव्वं, सव्वत्थ मया णरेण बुद्धिमता ।

इइ फलसिद्धी णियमा, एस च्चिय होइ आणत्ति ॥

इत्यनेनोचितकरणेन फलसिद्धिरिति वृत्तिः । पञ्चा० ६ वृ० "इइ विज्जामणुसंचरे" इतीत्थंरूपां विद्यां सम्यग् ज्ञानपालन रूपामन्वितिं अङ्गीकृत्य मचरेत् सम्यक् संयमाऽध्वनि यायादिति सूत्रार्थ इति ॥ उत्त०२२अ० ॥ इति संखाए" इतिःरूपप्रदर्शने, इत्येतत्पूर्वोक्तनीत्योच्चावचस्थानोत्पादादिकामिति वृत्तिः आचा०१अ०२ उ० । "थिरसघयण तिकट्टु अणुप्पविसामि" इति कृत्वा इति हेतोस्तदनु प्रविशामीति वृत्तिः । भ० १५ श. १ उ० " अधारणिज्जमितिकट्टु तुरए निगिण्हइ " इति कृत्वा इति हेतोरित्यर्थः । भ० १२श० ७उ० । समाप्तौ, ज्ञा०२ अ० । परिसमाप्तिप्रदर्शने, " से हु मुणी परिन्नाय कम्मोति वेमि " इतिशब्द एतावानयमात्मपदार्थविचारः कर्मबन्ध हेतुविचारश्च सकलोद्देशकेन परिसमापित इति प्रदर्शकः आचा ० १ अ ० १ उ० सूत्र० । सम० । विपा० । वाक्यसमाप्तौ, इति शब्दो वाक्यसमाप्त्यर्थ इति । विशे० । यथा– ' गिहत्यधम्माओ चुक्कंति " ग० । दर्श० । वाक्यार्थसमाप्तौ पंचा० । यथा–" से अट्ठी संजयोत्ति" इति शब्दो व्यवस्थितवाक्यार्थपरिसमाप्तौ, प्रश्न० सं० द्वा० ४ ॥ अधिकारपरिसमाप्तिद्योतके, यथा" से केणट्ठेण भंते। एवं इह भरहे वासे " । २ । इति सूत्रेण नामार्थं पृच्छतो गौतमस्य प्रतिवचनाय "तत्थणं विणीआए रायहाणीए भरहे णाम राया चाउरंतचक्कवट्टी समुप्पज्जित्था " इत्यादिसूत्रैर्भरतचरित्र प्रपञ्चित तच्च परिसमाप्तमित्यर्थः । जं० । स्वरूपपरामर्शे, अस्माद्धेतोरित्यर्थे,–उत्त० ।

जाणाहि मे जायण जीविणोत्ति, सेसावसेसं लभऊ तवस्सी।

जानीतावगच्छत ( मेत्ति ) सुब्व्यत्यात् मां (जायजीविणोत्ति) याचनेन जीवनं प्राणधारणमस्येति याचनजीवनं आर्षत्वादिकारः पठ्यते च " जायणजीविणोत्ति" इतिशब्दः स्वरूपपरामर्शकस्तत एव स्वरूप यतश्चैवमतो मह्यमपि ददध्वमिति भाव । कदाचिदुत्कृष्टमेवासौ यावत् इति तेषामाशयः स्यादत आह । अथवा जानीत मा याचनजीवितं याचनेन जीवनशीलत्वात् द्वितीयार्थे षष्ठी । पाठान्तरे तु प्रथमा । इतीत्यस्माद्धेतोः किमित्याह–शेषा विशेषमुद्धरितस्याप्युद्धरितमन्त प्राप्तमित्यर्थः । लभतां प्राप्नोतु तपस्वी यतिर्वराको वा । उत्त० १२ अ० ॥

जामिएगे इत्यादिषु इतिशब्दो हेत्वर्थे, स्था० ३ ठा० ॥

प्रकाशने , निदर्शने , प्रकारे , अनुकर्षे , प्रकरणे , स्वरूपे , सान्निध्ये, विवक्षानियमे, मते, प्रत्यक्षे, व्यवस्थायाम, परामर्शे, माने, प्रकर्षे, उपक्रमे च । तत्र स्वरूपद्योतकता त्रिधा ॥ ' शब्दस्वरूपद्योतकता प्रातिपदिकार्थ द्योतकता वाक्यार्थद्योतकताचेति तत्र शब्दस्वरूपद्योतकत्वे तद्योगेन प्रथमा " वेरीति मद्रस्य नाम यस्य वाचि प्रवर्तते " ॥ " अत एव गव्यत्याह , भूसत्तायामितीदृशमिति " भर्तृहरि ॥प्रातिपदिकार्थद्योतकत्वे प्रथमा । "क्रमादमुं नारद इत्यबोधि स. " । ( इत्यादौ ) माघ० । वदन्त्यपर्णेति च तां पुराविद । कुमारसम्भ० । वाक्यार्थद्योतकत्वेन प्रथमा । निपातेनाभिहिते प्रातिपदिकार्थे एव प्रथमाविधानात् । वाक्यस्य च शक्त्या लक्षणया वा एकार्थबोधकत्वाभावेन प्रातिपदिकत्वाभावात् ॥ भूसत्तायामितीदृश " भर्तृ० । " श्रुतार्थस्य परित्यागादश्रुतार्थस्य कल्पनात् । प्राप्तस्य बाधादित्येवं परिसंख्या त्रिदोषिका „ मीमांसकाः । तत्र हेतौ इतीव धारामवधीर्य „ । नैष० । "इति स्म सा कारुतरेण लेखित " नैष० । प्रकारे, "इति मदमदनाभ्यां रागिणः स्पष्टरागाः " माघ० प्रकाशार्थे, "इतिहरि" इत्यादौ अव्ययी० । इदमर्थे, धिरोधिसिद्धमितिकर्तुमुद्यत । प्रकरणे , इति कृत्यमिति कर्तव्यम् इति वृत्तम् । वाच० ॥ इण् गतौ भावे क्तिन्। आव० । गतौ; सथा० । चेष्टायाम् । आव० । ज्ञाने, वाच० । प्रवृत्तौ, च स्त्री० । स्था० ठा० ८ ।

इइ ( ति ) कह–इतिकथ–त्रि० इति इत्य कथा यस्य । अर्थशून्यवाक्यप्रयोक्तरि, अश्रद्धेयवचने, । वाच० ।

इइ ( ति ) कायव्वया–इतिकर्तव्यता–स्त्री० इत्येवं रूपा कर्तव्यानां भावः कर्तव्यता ।

सर्वत्रानाकुलता, यतिभावाव्ययपरा समासेन ।

कालादिग्रहणविधौ, क्रियेति कर्तव्यता भवति ॥

इत्युक्तलक्षणायां क्रियायाम्, इति कर्तव्यता माह ( सर्वत्रेत्यादि ) सर्वत्र सर्वस्मिन्ननाकुलता निराकुलता अत्वरा यतेर्भावः सामायिकरूपस्तस्याऽव्ययपराव्ययाभावनिष्ठाऽनाकुलता वा यतिभावाव्ययपरा न किंचिद्यतिभावाद् व्येत्यपगच्छतीति कृत्वा तथोच्यते विशेष्यत्वात् क्रियाभिसबध्यते समासेन संक्षेपेण कालादिग्रहणविधौ कालस्वाध्यायादिग्रहणविधिविषया क्रिया चेष्टा स्वशास्त्रप्रसिद्धा इतिकर्तव्यता भवति इत्येव रूपा कर्तव्यानां भावः कर्तव्यतोच्यते षो० ३ विव० ।

इइ ( ति ) ह–इतिह–अव्य० इति एवं ह किल द्वन्द्व० । उपदेशपरपरायाम्, यथाऽत्र वटे यक्ष इत्युपदेशपरंपरैव न तु केनापि दृष्ट्वा तथा कथितमिति तस्य प्रसिद्धिमात्रता इति होचर्वृत्त्या ' सि० कौ । वाच

इइ ( ति )हास–इतिहास–पु० इतिह पारम्पर्योपदेश आस्तेऽस्मिन्। आस् आधारे घञ्–६ त. वाच. पुराणे,– ( इतिहास पचमाण ) इतिहास० पुराण पचमो येषा ते तथेति । कल्प० । इतिहास० पुराणमुच्यते इति । औ०प० । पुरुषस्य द्वासप्ततिकलान्तर्गते कलाविशेषे, कल्प० " धर्मार्थकाममोक्षाणामुपदेशसमन्वितम् ॥ पूर्ववृत्तकथायुक्तमितिहास प्रचक्षते " ॥ उक्तलक्षणे पुरावृत्तप्रकाशके भारतादिग्रंथे, ॥ वाच० ।

इ ओ(त्तो) (दो) (एत्तो) इतस्–अव्य० इदम्-तसिन् इशादेशः "तो दो तसो वा" प्रा० ८ । २ । १६०इति प्राकृतसूत्रेण तो दो इत्यादेशौ वैकल्पिकौ । पचाशके। एत्तो इति । अस्मादित्यर्थे, वाच० ( इओ चुतेसु दुहमट्ठदुग्ग ) इतः स्थानाच्युतो जन्मान्तरं गत इति। सूत्र. १ श्रु. १० अ० ॥ ( इउ आउक्खए चुया) इतो मनुष्यजन्मनः सकाशादायु क्षये मरणे सति च्युता इति प्रश्न १ द्वा० । ( एत्तोऽणाभोगंमि विपक्खवणिज्जो इमो होइ) एतोत्ति इतोऽस्मादाज्ञारुचित्वात् प्रज्ञापनीयो भवतीति योग० । पंचा० २ वृ. ॥ इत स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम्। " इतो निषीदेति विसृष्टभूमि० " ॥ कुमा. । प्रयुक्तमप्य स्त्रमितो वृथा स्यात् " रघु० । वाच० ।

इंखिणिया-इंखिणिका-स्त्री० परनिन्दायाम् । " अदु इंखिणिया उपाविया " इंखिणिया परनिंदा तु शब्दस्यैवकारार्थत्वात् पापिकैव दोषवत्यैव अथवा स्वस्थानादधमस्थाने पातिकेति वृत्तिः । सूत्र० १ श्रु० २ अ० ।

इंखिणिका हि कर्णमूले घण्टिकां चालयन्ति ततो यक्षाः खल्वागम्य तासां कर्णेषु किमपि प्रष्टुर्विवक्षितं कथयन्तीत्युक्तलक्षणे नैमित्तिकविशेषे, च ( इंखिणियाख्य वा पुच्छा ) इति आ० म० प्र० । नि चू ॥

इंखिणी–इङ्खिणी–स्त्री० अन्यनिन्दायाम, ( अह सेयकरी अन्नेसि इंखिणी ) अथाऽनन्तरमसौ अश्रेयस्करी पापकारिणी इंखिणीति निन्दा अन्येषामतो न कार्येति वृत्तिः । सूत्र० १ श्रु० २ अ० ॥

इंग–इङ्ग–पु० इगि भावे घञ् । १ चलने, २ कम्पने, ३ इङ्गिते, च कर्तरि अच् । जङ्गमे, त्वया सृष्टमिदं सर्वं, यदिङ्गं यच्च नेङ्गति भा व० अद्भुते, च । वाच० ॥

इंगाल–अङ्गार–पु विगतधूमज्वाले दह्यमाने इन्धनादिके, उत्त ३६ अ. । अगार इत्येतत् प्रकरणे एवंविधाः शब्दाः ।

इंगालकम्म–अङ्गारकर्मन्–न० अंगारकरणपूर्वकस्तद्विक्रय एवं यदन्यदपि वह्निसमारम्भपूर्वकं जीवानामिष्टकादिपाकरूप तदङ्गारकर्म तस्मिन्, ॥ उपा. अ. १ ॥

इंगिअ ( य ) इङ्गित–न० प्रा० । इगि भावे क्तः । चलने, । हृद्गतभावावेदके, वाच. । निपुणमतिगम्ये प्रवृत्तिनिवृत्तिसूचके ईषद्भ्रूशिर कम्पादिके आकारे चेष्टाविशेषे, उत्त १अ । "इंगिअचिंतियपत्थियवियाणिया" उत्त अ० १ । इङ्गितेन नयनादि चेष्टाविशेषेण चिन्तितं परेण हृदि स्थापितं प्रार्थितं चाऽभिलषितं च जानन्ति यास्तया ताभिरिति वृत्ति । दशा । "आलोइय इंगियमेव णच्चा, जो छंदमाराहइ स पुज्जो" । दश ९अ३ उ अंगोपांगादिमोटनात्मके स्वचित्तविकारसूचके चेष्टाविशेषे, च ( न ज पिय इंगियपेहिय वा—इंगितमङ्गोपाङ्गादिमोटनं स्वचित्तविकारसूचकं तच्च स्त्रीणां न साधुना रागेण द्रष्टव्यमिति । उत्त ।

इंगिअज्ज–इंगितज्ञ–पु० "ज्ञोञ" पाद २–सू ८३ इति सूत्रेण अस्य लुग्वा । नयनादिचेष्टाविशेषज्ञे, प्रा० व्या० ।

इंगिअण्णु–इंगितज्ञ–पु० नयनादिचेष्टाविशेषज्ञे, प्रा० व्या० ।

इंगिअ ( य ) मरण–इंगितमरण–न० इंगिते प्रदेशे मरणमिंगितमरणम्, मरणविशेषे, तद्वक्तव्यता इंगिणीमरणशब्दे । ग । पचा । दश. ।

इंगिणी–इंगिनी–स्त्री० इंग्यते प्रतिनियतदेश एव चेष्ट्यतेऽस्यामनशनक्रियायामितीङ्गिनी श्रुतविहिते क्रियाविशेषे, तद्विशिष्ट यावत्कथिकानशनतपोभेदे, च । ध ३ अधि । उत्त । सम ।

इंगिणीमरण–इंगिनीमरण–न० इंग्यते प्रतिनियतदेश एव चेष्ट्यतेऽस्यामनशनक्रियायामिति इंगिनी श्रुतविहित क्रियाविशेषस्तद्विशिष्टमनशनमिंगिनी तया मरणमिङ्गिनीमरणम् । सम १७ स । तदुपलक्षितं वा मरणमिङ्गिनीमरणम् ॥ ध ३ अधि. । उत्त ५ अ० । प्रव । पण्डितमरणविशेषे, । तद्धि चतुर्विधाहारस्य प्रत्याख्यातुर्निष्प्रतिकर्मशरीरस्येङ्गितदेशाभ्यन्तरवर्तिन एवेति । सम १७ स । तल्लक्षणं चेदम् ॥ " इंगियदेसम्मि सयं, चउव्विहाहारचायनिप्फन्नं । उव्वत्तणाइजुत्तं, नन्नेणउ इंगिणीमरणं " ॥ २१ ॥ स्था २ ठा० ॥ अत्र नियमाच्चतुर्विधाहारविरति परपरिकर्मविवर्जनं च भवति । स्वयं पुनरिंगितदेशाऽभ्यन्तरे उद्वर्त्तनादिचेष्टात्मकं परिकर्म यथासमाधि विदधाति । प्रव द्वा० । दश. । सथा० ॥

धर्मसंग्रहेऽपि " इंगिनीमरणं चेष्टा, वतामाहारवर्जनात् ॥ " आहारवर्जनात्सर्वाहारपरित्यागात् चतुर्विधाहारपरित्यागेनेत्यर्थः । इंगिनीमरणमुक्तलक्षणं चेष्टावतां परिमितचेष्टमनिहितानां सर्वाहारत्यागाद्भवति । अथ भावः । अस्य प्रतिपत्त्या तेनैव क्रमेणायुषः परिहाणिमवबुध्य तादृशसंहननाभावात्पादपोपगमनकर्तुमशक्तः स्तोककालजीवितानुसारेण संलेखनां कृत्वा प्रव्रज्याकालादारभ्य च विकटना दत्वा चतुर्विधाहार नियमात्प्रत्याख्याति । तथाविधे एव च स्थण्डिले एकाकी छायात उष्ण उष्णतश्च छायां संक्रामन्निंगितदेशे सचेष्टः सम्यग्ध्यानपरायणः प्राणान् जहाति । अयं च परकृतपरिकर्मरहितः स्वयं तत् करोति । ध ३ अधि ।

अथ भक्तपरिज्ञातोऽस्या को विशेष इत्याह ।

आयप्परपरिकम्मं, भत्तपरिन्ना य अणुन्नाता ।
परवज्जिया य इंगिणि, चउव्विहाहारविरई या ॥

भक्तपरिज्ञायां द्वे अपरिज्ञाते तद्यथा आत्मना स्वयं परिकर्म परेण च इंगिनी पुनः परवर्जिता परस्तत्र परिकर्म न कार्यते । तथा भक्तपरिज्ञायां चतुर्विधस्य त्रिविधस्याहारस्य विरतिर्भवति इंगिन्यां तु नियमाच्चतुर्विधाहारविरतिः ।

परपरिकर्मविवर्जनमेव भावयति ।

ठाणं निसीय तुयट्टण, इत्तरियाइं जहा समाहीए ।
सयमेव य सो कुत्ति, उवसग्गपरीसहा य अहियासे ॥
संघयणधितीजुत्तो, नवदसपुव्वा सुएण अंगा वा ।
इंगिणियातोवगमं, नीहारी वा अनीहारी ॥

स्थानं ऊर्ध्वस्थानं निषीदनमुपवेशनं च त्वग्वर्तनं शयनं एतानि इत्वरकाणि स यथासमाधि स्वयमेव करोति न तु परतः कारयति । तथा दिव्यादीन् उपसर्गान् क्षुधादिपरिसहांश्च सम्यगध्यास्ते सहते । तथाहि चतुर्विधाहारप्रत्याख्यानात्तस्य पानकमपि भवति । नाप्यपवादतश्चरमाहारदानमिति । तथा संहननेन त्रयाणामाद्यानामन्यतमेन धृत्या च युक्तस्तथा श्रुतेन सूत्रतो यस्य पूर्वाणि नवदश वा केवलानि अंगानि । स इङ्गिनीमरणं प्रतिपद्यते । व्य० द्वि० १० उ० ।

निशीथचूर्णौ तु ।

जाव अव्वो णिच्छिज्जति ताव णेयव्वं पंचधाउ लेऊण इंगिणीमरणं । परणओ इंगिणीए आय वेयावच्चं परो न कहेइ णियमा चउविहाहारविरई जइ वहिं पडिवज्जइ तो अणीहारिम अह गच्छे तो णीहारिम पढमबिइयसंघयणी पडिवज्जइ जेण अहीय णवमपुव्वस्स तइय आयारवत्थु एक्कारसंगी वा पडिवज्जइ धितियवज्जकुड्डसामाण सव्वाणि उवसग्गाणि अहियासेइ । नि० चू० ११ उ० ।

इंगिनीमरणमाह ।

पव्वज्जादी काउं, नेयव्वं जाव होइवोच्छित्ती ।
पंच तुलेऊण तवो, इंगिणिमरणं परिणओ उ ॥

प्रव्रज्यादिकं प्रव्रज्या शिष्या ग्रहणं प्रतागेहं अर्थग्रहणमनियतं वा सगच्छस्य परिपूर्णस्य निवृत्तिं गच्छनिर्वृत्तिकरणेन च तीर्थस्याव्यवच्छेदः कृतः तत आह । तावद्गुरुत्वाय यावद्व्युत्क्रान्ति व्यवच्छित्ति तत्पर्यन्तं कृत्वा पश्चात्तपः तत्र सत्त्वैकत्वप्रभृतीनि तोलयित्वा स इंगिनीमरणं परिणतः प्रतिपन्नो भवति । व्य० १० उ० ॥

( अस्य सविचाराविचारत्वसपरिकर्माऽपरिकर्मत्वनिर्हारित्वानिर्हारित्वानि मरणशब्दे । )

( अस्य पण्डितमरणेषु मध्यमत्वं पण्डियमरण शब्दे ) ।

इङ्गिनी मरणं विशिष्टतरधृति संहननवतामेव भवतीति पण्डियमरणशब्दे ।

इङ्गिनीमरण चाणक्यः प्रतिपन्नस्तद्यथा ॥

पाडलिपुत्तंमि पुरे, चाणक्को नाम विस्सुओ आसी ।
सव्वारंभनियत्तो, इंगिनीमरणं अह निवत्तो ॥

पाटलीपुत्रे पुरे चाणक्यनामा मन्त्री विश्रुतः ख्यात आसीत् सर्वारम्भनिवृत्तः त्यक्तसर्वराज्यव्यापारः इंगिणीमरणं इंगितप्रदेशाद्बहिर्निर्गमरूपं मरणमथ निवृत्तः सुतः आस्त ततः गोवाटके इंगिनीमरणं प्रतिपद्य तस्मिन्करीषे सुप्तः इंगिनीमरणेन व्यवस्थितः । इदम् ।

इंगियदेसंमि सयं चउव्विहाहारचाय निप्पन्नं ।
अप्पडिकम्मे नियमा अन्नेण य इंगिणीमरणं ॥

इह यच्चाणक्यस्य इंगिनीमरणं भणितं न पुनरिंगिनीमरणमेव यतः श्रावकाणां पादपोपगमेंगिनीमरणनिषेधः । यदाह । " सव्वावि य अज्जाओ, सव्वे वि य पढमसंघयणवज्जा । सव्वे वि देसविरया, पच्चक्खाणेणओ मरति " इति । संथा० ।

इंगिनीमरणविधानम् यथा ।

इंगिणिमरणविहाणं, आपवज्जं तु विअरणं दाओ ।
संलेहणं च काओ, जहासमाही जहाकालं ॥

इंगितमरणविधानमेतत्प्रव्रज्यमेव प्रव्रज्याकालादारभ्य विकटनां कृत्वा सल्लेखनां च कृत्वा यथासमाधि रूप्यतो भाव तश्च यथा कालमिति गाथार्थः ।

पच्चक्खइ आहारं, चउव्विहं णियमओ गुरुसमीवे ।
इंगिअदेसंमि तहा, चिट्ठं पि हु इंगिअं कुणइ ॥

प्रत्याख्यात्याहारमशनादिचतुर्विधं नियमात्तान् त्रिविधं गुरुसमीपे इंगितदेशे तथा परिमिते चेष्टामपींगितं करोतीति गाथार्थः ।

उव्वत्तइ परिअत्तइ, काइअमाईसु होइ विभासाउ ।
किञ्चंपि अप्प णच्चि, अज्जं जइ नियमेण धिइबलेउ ॥

उद्वर्तते परावर्तते कायिकादिषु भवति विभाषा प्रकृतिमात्मसात्करोति वा न वा कृत्यमप्यात्मनैव युक्ते । उपाश्रित्य प्रत्युपेक्षणादिनियमेन धृतिबली स भगवानिति गाथार्थः । पं० व ० २ द्वा ।

( इङ्गितमरणवक्तव्यता मरणशब्दे वक्ष्यते । )

इंगियागारसंपन्न–इंगिताकारसंपन्न–पुं० इंगितं निपुणमतिगम्यं प्रवृत्तिनिवृत्तिसूचकं मिषद् भ्रूशिरःकम्पादि आकारः स्थूलधीसंवेद्य प्रस्थानादिभावाभिव्यञ्जको दिगवलोकनादि अनयोर्द्वन्द्वे इंगिताकारौ सम्यक् प्रकर्षेण जानातीति इङ्गिताकारसम्प्रज्ञः । इङ्गिताकारयोः प्रकर्षेण ज्ञातरि, । उत्त १ अ० ।

इंगिताकारसंपन्न–पुं० इंगिताकाराभ्यां सम्पन्नो युक्तः इंगिताकारसंपन्नः । इंगिताकाराभ्यां युक्ते. उत्त १ अ० ।

इंगियागारसंपन्ने, से विणीए त्ति वुच्चइ" इंगिताकारैस्तावद्यौत् गुरुगतं सम्यक् प्रकर्षेणजानाति इंगिताकारसम्प्रज्ञः । यद्वा इंगिताकाराभ्यां गुरुगतमेवज्ञानमेव कारणे कार्योपचाराद्इंगिताकारशब्देनोक्तं तेन सम्पन्नो युक्तः स इत्युक्तविशेषणान्वितो विनीतो विनयान्वित इति सूत्रपरामर्शेनोच्यते । तीर्थंकृद्गणधरादिभिरिति गम्यते । उत्त. १ अ० ।

इंगुई–इंगुदी–स्त्री, वनस्पतिविशेषे, तत्फलेन तैलविधानं भवतीति । आचा० श्र० उ० ॥

इंत– यत्–त्रि. आगच्छति, (इतस्स पच्चुगच्छणया) आगच्छतो गौरस्याऽभिमुखं गमनमिति भ० । श. १४ उ ३ ॥

इंद–इन्द्र–पुं०इन्दतीतीन्द्रः । अनु० । इदि परमैश्वर्ये इति धात्वनुसारादिन्दनादिन्द्र आत्मा । सर्वद्रव्योपलब्धिसर्वोपभोगरूपपरमैश्वर्ययोगात् । आत्मनि, ( जीवे ) न १ द्वा. । आ० म० । स्था ।

इन्दो जीवो सव्वोवलद्धिभोगपरमेसरत्तणओ ।

इदिपरमैश्वर्ये इन्दनात्परमैश्वर्ययोगादिन्द्रो जीवः । परमैश्वर्यमस्य कुत इत्याह ( सव्वो ) इत्यादि आवरणाभावे सर्वस्यापि वस्तुन उपलम्भाज्ज्ञानाभावेषु सर्वस्यापि त्रिजगद्वस्तुनः परिभोगाच्च परमेश्वरो जीव इति तस्य परमैश्वर्यम् विशे० ।

इन्दनादिन्द्रः परमैश्वर्ययुक्त इत्यर्थः एव भूतेन चार्थेन युक्तमिदं नाम । परमार्थतस्त्रिदशाधिपे एव वर्तते तस्य तात्त्विकपरमैश्वर्ययुक्तत्वात् । आ० म० प्र० । अनु० ॥ इन्द्रः शक्रः पुरन्दरः । सूत्र० २ श्रु० ७ अ० । अष्ट० । राज० सहस्राक्षः । प्रति । इति पर्यायाः । परमैश्वर्ययोगादिन्द्रः प्रभौ, (परमेश्वरे,) स्था. ठा० ४ । महति, च । स्था ४ ठा० । ऐश्वर्यान्विते त्रि. नृपमत्वे, उपमितसमासे उत्तरपदस्थः श्रेष्ठत्वद्योतकमनुजेन्द्रः वारणेन्द्र इत्यादि । वाच० ।

इन्द्रशब्दस्य निक्षेपः स्थानाङ्गे दर्शितो यथा

तओ इन्दा पण्णत्ता तंजहा नामिन्दे ठवणिंदे दव्विंदे ॥

( तओ इन्देत्यादि ) व्याख्या सा च सुकरैव न वरं ।

नामेन्द्रः ।

इन्दनादैश्वर्यादिन्द्र नाम संज्ञा तदेव यथार्थमिन्द्रेत्यक्षरात्मकमिन्द्रो नामेन्द्रः । अथवा सचेतनस्याचेतनस्य वा यस्येन्द्र इत्ययथार्थं नाम क्रियते स नामनामवतोरभेदोपचारात् नाम चासाविन्द्रश्चेति नामेन्द्रः । अथवा नाम्नैवेन्द्र इति इन्द्रार्थशून्यत्वान्नामेन्द्र इति ।

नामलक्षण पुनरिदम् ।

" यद्वस्तुनोऽभिधानं, स्थितमन्यार्थे तदर्थनिरपेक्षं ॥
पर्यायानभिधेयं, च नाम यादृच्छिकं च तथा"॥ १ ॥ इति

अयमर्थः यद्वस्त्वित्यादिना यथार्थमिन्द्र इत्याद्युक्तं स्थितमित्यादिना त्वयथार्थं गोपालादाविन्द्रेत्यादि यादृच्छिकमनर्थकं डित्थादीति । अथवा यदिन्दनाद्यर्थनिरपेक्षं गोपालादि वस्तुन इन्द्र इत्यादिकमभिधानमयथार्थतया शक्रादावन्यत्रार्थे स्थितं तन्नामेति । इन्द्रादिवस्तुनोवाऽभिधानमिन्दनाद्यर्थनिरपेक्षं सद्गोपालादावन्यत्रार्थे स्थितं तन्नामेति । स्था. ३ ठा० ॥

अत्ताभिप्पायकया, सन्ना चेयणमचेयणे वावि ।
ठवणादीनिरविक्खा, केवलसन्ताउ नामिंदो ॥

चेतनेऽचेतने वा द्रव्ये या आत्माभिप्रायेण स्वेच्छया इन्द्रप्रभृतिसंज्ञा कृता साऽपि स्थापनादिसापेक्षा स्यादत आह । स्थापनादीनां स्थापनाद्रव्यभावादीनां निरपेक्षा । किमुक्त

भवति । यत्र स्थापनादीनामेकमपि नास्ति किन्तु केवला एका संज्ञा तदर्थनिरपेक्षा स नामेन्द्रः । उक्तं नामेन्द्रलक्षणम् । वृ० १ उ० ॥

स्थापनेन्द्रमाह ॥

तथा इन्द्राद्यभिप्रायेण स्थाप्यत इति स्थापना लेप्यादिकर्म्म सैवेन्द्रः स्थापनेन्द्रः । इन्द्रप्रतिमा साकारस्थापनेन्द्र अक्षादिन्यासस्त्वितर इति । स्थापनालक्षणमिदम् । यत्तु तदर्थवियुक्तं, तदभिप्रायेण यच्च तत्करणम् । लेप्यादिकर्म्म तत्स्थापनेति क्रियतेऽल्पकालञ्चेति ॥ १ ॥ तथा "लेपगहत्थी हत्थित्ति एस, सब्भाविआ भवे ठवणा । होइ असब्भावो पुण, हत्थित्ति निरागिई अक्खोत्ति" ॥ २ ॥ ॥ स्था० ३ ठा० ।

अधुना स्थापनेन्द्रलक्षणमाह ॥

सब्भावमसब्भावे, ठवणा पुण इंदकेउ माईया ।
इत्तरमणित्तरा वा, ठवणा नामं तु आवकहं ॥

स्थापना स्थापनेन्द्रः पुनः सद्भावेऽसद्भावे च इन्द्रकेत्वादिका इन्द्रकेतुप्रभृतिको द्रष्टव्यः । अत्रादिशब्दादिन्द्रप्रतिमाक्षवराटकादिपरिग्रहः । इयमत्र भावना । या इन्द्र इति स्थापना अक्षवराटकादिष्वसद्भावेन या चेन्द्रकेत्विन्द्रप्रतिमादिषु सद्भावतः स स्थापनेन्द्रः । इह नामस्थापनयोः कः प्रतिविशेष उच्यते ( इतर इत्यादि ) स्थापना इत्वरा च भवति यावद्द्रव्यभाविनी अयावद्द्रव्यभाविनी चेत्यर्थः । नाम पुनर्नियमात् यावत्कथिकं यावद्द्रव्यभावी एष प्रतिविशेषः । वृ० १ उ० ॥

सम्प्रति नामेन्द्रस्थापनेन्द्रयोः प्रकारान्तरेण प्रतिविशेष-मभिधित्सुराह ।

जह ठवणिंदो वुच्चइ, अणुग्गहत्थी हि तह न नामिन्दो ।
एसे व दव्वभावे, पूयाथुतिलद्धिनाणत्तं । १ ।

यथा स्थापनेन्द्रः अनुग्रह एवार्थोऽनुग्रहार्थः स येषामस्ति अनुग्रहार्थिनस्तैर्वाग्भिः स्तूयते पुष्पादिभिरर्च्यते च न तथा नामेन्द्रो माणवकस्ततो महान् नामेन्द्रस्थापनेन्द्रयोः प्रतिविशेषः । एवमेव अनेनैव प्रकारेण द्रव्येन्द्रे भावेन्द्रे च पूजास्तुतिलब्धिभिर्नानात्वमवसातव्यम् तद्यथा । द्रव्येन्द्रोऽपि नामेन्द्र इवानुग्रहार्थिभिः न स्तूयते नापि पूज्यते यस्तु भावेन्द्रः स स्थापनेन्द्र इव स्तूयते पूज्यते च ततो द्रव्येन्द्रभावेन्द्रयोरपि महान् प्रतिविशेषः । अन्यच्च द्रव्येन्द्रः इन्द्रलब्धिहीनो यस्तु भावेन्द्रः स तल्लब्धिसंपन्नस्तथाहि स सामानिकत्रायस्त्रिंशकादिपरिवृतो विशिष्टद्युतिमान् स्फीतं राज्यमनुभवति उपयोगचिन्तायामपि भावेन्द्र उपयोगलब्धिमान् द्रव्येन्द्र उपयोगलब्ध्या परित्यक्त इति वृ० १ उ० ॥

द्रव्येन्द्रमाह ।

तथा द्रवति गच्छति तांस्तान्पर्य्यायान्द्रूयते वा तैस्तैः पर्य्यायैर्द्रोर्वा सत्ताया अवयवो विकारो वा वर्णादिगुणानां द्राव स्समूह इति द्रव्यम् । तच्च भूतभावं भाविभावं चेति आह च "दवए दूयते दोरव, यवो विगारो गुणाणसंद्दावो ॥
दव्वं भव्वं भावस्स भूयभावं च जं जोग्गंत्ति ॥ तथा "भूतस्य भाविनो वा भावस्य हि कारणं तु यल्लोके । तद्द्रव्यं तत्त्वज्ञैः सचेतनाचेतनं गदितम्" ॥ २ ॥ तथा अनुपयोगो द्रव्यमप्रधानञ्चेति तत्र द्रव्यं चासाविन्द्रश्चेति द्रव्येन्द्रः ॥ स्था० ३ ठा० ॥

स च द्विधा । आगमतो नो आगमतश्च । तत्रागमत सल्लागममधिकृत्य ज्ञानापेक्षयेत्यर्थः । नो आगमतस्तु तद्विपर्य्ययमाश्रित्य तत्रागमत इन्द्रशब्दोऽध्येताऽनुपयुक्तो द्रव्येन्द्रोऽनुपयोगो द्रव्यमिति वचनात् । अयमेवार्थो मङ्गलमाश्रित्य भाष्ये उक्तस्तथाहि "आगमओणुवउत्तो, मंगलसद्दाणुवासिओवत्ता । तन्नाणलद्धिजुत्तो, विणोवउत्तोत्ति नो दव्वंति" तथा नो आगमतस्त्रिविधो द्रव्येन्द्रस्तद्यथा ज्ञशरीरद्रव्येन्द्रो भव्यशरीरद्रव्येन्द्रो ज्ञशरीरभव्यशरीरव्यतिरिक्तो द्रव्येन्द्रश्चेति ॥ तत्र ज्ञस्य शरीरं ज्ञशरीरं ज्ञशरीरमेव द्रव्येन्द्रः ज्ञशरीरद्रव्येन्द्र एतदुक्तं भवति । इन्द्रपदार्थज्ञस्य यच्छरीरमात्मरहितं तदतीतकालानुभूततद्भावानुवृत्त्या सिद्धशिलातलादिगतमपि घृतघटादिन्यायेन नो आगमतो द्रव्येन्द्र इति । इन्द्रज्ञानशून्यत्वाच्च तस्येह सर्वनिषेध एव नोशब्दार्थः । तथा भव्यो योग्य इन्द्रशब्दार्थं ज्ञास्यति यो न तावद्विजानाति स भव्यः इति तस्य शरीरम्भव्यशरीरं तदेव भव्येन्द्रो भव्यशरीरद्रव्येन्द्रः अयमत्र भावार्थो भाविनीं वृत्तिमङ्गीकृत्येन्द्रोपयोगाधारत्वान्मधुघटादिन्यायेनैव तद्बालादिशरीरं भव्यशरीरद्रव्येन्द्र इति नो शब्दः पूर्ववत् । उक्तञ्च मङ्गलमधिकृत्य "मंगलपयत्थजाणय, देहोभव्वस्स वा स जीवो वि । नो आगमओ दव्वं, आगमरहिओत्ति जं भणियंति" ज्ञशरीरभव्यशरीरव्यतिरिक्तं द्रव्येन्द्रो भावेन्द्रकार्येष्वव्यापृत आगमतोऽनुपयुक्तद्रव्येन्द्रवत् । तथा यच्छरीरमात्मद्रव्यं वातीतभावेन्द्रपरिणामन्तच्चोभयातिरिक्तद्रव्येन्द्रो ज्ञशरीरद्रव्येन्द्रवत् । तथा यो भावेन्द्रपर्य्यायशरीरयोग्यः पुद्गलराशिर्यच्च भावीन्द्रपर्यायमात्मद्रव्यं तदप्युभयातिरिक्तो द्रव्येन्द्रः भव्यशरीरद्रव्येन्द्रवत् । सचावस्थाभेदेन त्रिविधस्तद्यथा एकभविको बद्धायुष्कोऽभिमुखनामगोत्रश्चेति । तत्रैकस्मिन् भवे तस्मिन्नेवातिक्रान्ते भावी एकभविको योऽनन्तर एव भावेन्द्रतयोत्पत्स्यते इति स चोत्कर्षतस्त्रीणिपल्योपमानि भवन्ति देवकुर्वादिमिथुनकस्य भवनपत्यादीन्द्रतयोत्पत्तिसम्भवादिति । तथा स एवेन्द्रायुर्बन्धानन्तरं बद्धमायुरनेनेति बद्धायुरुच्यते । स चोत्कर्षतः पूर्वकोटित्रिभाग यावदस्मात्परत आयुष्कबन्धाभावात् । तथा अभिमुखे सम्मुखे जघन्योत्कर्षाभ्यां समयान्तर्मुहूर्तानन्तरं भावितया नामगोत्रे इन्द्रसम्बन्धिनी यस्य स तथा । तथा भावैश्वर्ययुक्ततीर्थकरादिभावेन्द्रापेक्षयाऽप्रधानत्वाच्छक्रादिरपि द्रव्येन्द्र एव द्रव्यशब्दस्याप्रधानार्थेऽपि प्रवृत्तेः ॥ स्था० ठा० ३ ॥

॥ द्रव्येन्द्रलक्षणमाह ।

दव्वं पुण तल्लद्धी, जस्सातीता भविस्सते वा वि ।
जीवो वि अणुवउत्तो, इंदस्स गुणे परिकहेइ ॥

द्रव्यं द्रव्यविषयः पुनरिन्द्रोयस्य तल्लब्धिरिन्द्रलब्धिरतीता भविष्यति स च प्रतिपत्तव्यः । किमुक्तं भवति । यस्सेन्द्रत्वमिन्द्रत्वं प्राप्तो यश्च प्राप्स्यति स यथाक्रमं भूतभावत्वाद्भाविभावत्वाच्च द्रव्येन्द्रः । उक्तं च । "भूतस्य भाविनो वा, भावस्य हि कारणं तु यल्लोके । तद्द्रव्यं तत्त्वज्ञैः, सचेतनाचेतनं कथितम्" यो वापि इन्द्रस्य गुणान् परस्मै परिकथयति परमनुपयुक्तः सोऽपि द्रव्येन्द्रः अनुपयोगो द्रव्यमिति वचनात् वृ० १ उ० ॥ उक्तो द्रव्येन्द्रः ॥

भावेन्द्रमाह ।

भावेन्द्रस्त्विह त्रिस्थानकानुयोगाधिकस्तल्लक्षणं चेदम्भावमिन्दनक्रियानुभवनलक्षणपरिणाममाश्रित्येन्द्रः इन्दनपरिणामेन भवतीति वा स चासाविन्द्रश्चेति भावेन्द्रो यदाह "भावो विवक्षितक्रिया-नुभूतियुक्तो हि वै समाख्यातः । सर्वज्ञैरिन्द्रादिव-दिहेन्दनादिक्रियानुभवात् ॥ १ ॥ सच द्विधा आगमतो नो आगमतश्च तत्रागमत इन्द्रज्ञानोपयुक्तो जीवो भावेन्द्र एत

मिहेन्द्रोपयोगमात्रात्तन्मयतावगम्यते । नह्यग्निज्ञानोपयुक्तो माणवकोऽग्निरेव दहनपचनप्रकाशनाद्यर्थक्रियाप्रसाधकत्वा भावादिति चेन्नाभिप्रायापरिज्ञानात् । सविद्ज्ञानमवगमो भाव इत्यनर्थान्तरं । तत्रार्थाभिधानप्रत्ययास्तुल्यनामधेया इति सर्ववादिनामविसंवादस्थान यथा कोऽयघटः किमयमाह घट- शब्द किमस्य ज्ञान घट इति अग्निरिति च यज्ज्ञान तद्व्य- तिरिक्तो ज्ञाता तल्लक्षणो गृह्यते । अन्यथा तज्ज्ञानेसत्यपि नोपलभ्येताऽनन्मयत्वात् प्रदीपहस्तान्धवत् पुरुषान्तरवद्वा । नचानाकार तत्पदार्थान्तरवद्विवक्षितं पदार्थपरिच्छेदप्रसंगात् वन्धाद्यभावश्च ज्ञानाऽज्ञानसुखदुः खपरिणामान्यत्वादाकाशव च्चानत्र सर्वएव दहनाद्यर्थक्रियाप्रसाधको भस्मरुग्नाग्निना व्यभिचारादिति कृतं प्रसंगेन । नो आगमतो भावेन्द्र इन्द्र- नामगोत्रे कर्मणी वेदयन् परमैश्वर्य्यभाजनं सर्वनिषेधवचन- त्वान्नोशब्दस्य यतस्तत्र नेन्द्रपदार्थज्ञानमिन्द्रव्यपदेशनिबन्ध- ननया विवक्षितमिन्द्रनक्रियाया एव च विवक्षितत्वात् । अथवा तदाविघ्नज्ञानक्रियारूपो य परिणामः स नागम एव केवलो न चानागम इत्यतो मिश्रवचनत्वान्नोशब्दस्य नो आगमत इ त्यादयायत इति । ननु नामस्थापनाद्रव्येष्विन्द्राभिधान विव- क्षितभावशून्यत्वात् द्रव्यत्वं च समान वर्तते अतश्च क एषां विशेषः आहच " अभिहाणं दव्वत्तं, तदत्थसुत्तत्तणं च तुल्लाइ । को भाववज्जियाणं नामाईणं पइविसेसोत्ति " ॥ १ ॥ अत्रोच्यते यथा हि स्थापनेन्द्रः खलु इन्द्राकारो लक्ष्यते तथा कर्तु सद्भूतेन्द्राभिप्रायो भवति तथा दृष्टुस्तदाकारदर्शना दिन्द्रप्रत्ययस्तथा प्रणतिकृतधियश्च फलार्थिनः स्तोतुं प्रवर्तन्ते, फलं च प्राप्नुवन्ति । केचिद्देवतानुग्रहाच्च तया नामद्रव्येन्द्र- योरिति तस्मात्स्थापनायास्तावदित्थ भेद इति । आह च " आगाराभिप्पाओ, बुद्धिकीया फलं च पाएण । जह दीसइ ठवणिन्दे, न तहा नामिन्द दव्विन्दे त्ति,, । यथा च द्रव्येन्द्रो- भावेन्द्रकारणतां प्रतिपद्यते तयोपयोगापेक्षायामपि तदुपयो- गतामाद्यत्यवाप्तवांश्च न तथा नामस्थापनेन्द्रावित्यय वि- शेष इति । आह च ' भावस्स कारण जह, दव्व भावो य तस्स पज्जाओ । उवओगपरिणमओ, न तहा नाम न वा ठवणत्ति " ॥ स्था० ३ ठा० ॥

अत्र पर आह ॥

न हि जो घरं वियाणइ, सो उ घरी भवइ नो य वा अग्गी॥
नाणत्तिय भावोत्ति य, एगट्ठमतो अदोसोत्ति ॥ १ ॥

न हि यो घटं विजानाति स घटी भवति यस्य वा-ग्निविज्ञानं सोऽग्नि प्रत्यक्षे विरोधात् ततो यदुक्तं'मिन्दस्स वाहिगार वि- जाणमाणो तदुवउत्तो इति, तन्मिथ्या । अत्र सूरिराह । ज्ञान मिति भाव इति वा च शब्दादध्यवसाय इति उपयोग इति वा एकार्थमतोऽदोषः । इयमत्र भावना । अर्थाभिधानप्रत्ययास्तु- ल्यनामधेयास्त्याहि घटोऽपि बाह्यो घट इत्युच्यते घटशब्दो- ऽपि घट इति घटज्ञानमपि घट इति । ज्ञानं च ज्ञानिनोऽपृथक् घटज्ञान्यपि घट इत्युच्यते अग्निज्ञान्यपि अग्निरित्यदोषः ॥

एतदेव भावयति ॥

जमिदं नाणं इन्दो, तव्वतिरित्तेति ततोय तन्नाणी ॥
तम्हा खलु तब्भावं, वयंति जो जत्थ उवउत्तो ॥ १ ॥

यदिदमिन्द्र इति ज्ञान तस्मात्तज्ज्ञानी इन्द्रज्ञानी व्यतिरि- च्यते तस्माद्यो यत्रेन्द्रादावुपयुक्त तस्य तद्भावमिन्द्रादिभावं तत्त्वविदस्सूरयो वदन्ति । ज्ञानज्ञानिनोरभेद एव कथ सिद्ध इति चेदुच्यते विपक्षेऽनेकदोषप्रसंगात् ॥

तमेवाह ॥

चेयणस्स उ जीवा, जीवस्स उ चेयणा उ अन्नत्ति ।
दविधं अलक्खणं खलु,हविज्ज न य बन्धमोक्खाउ ॥

चैतन्यस्य जीवा जीवस्य चेतनाया अन्यत्वे द्रव्य जीवद्रव्य मलक्षणं चेतनालक्षणो जीव इति लक्षणरहित भवेत् । चेत- नाया घटादिवज्जीवादप्येकान्तव्यतिरिक्तत्वाल्लक्षणाभावे च लक्ष्यस्याऽप्यभाव इति खरशृङ्गवदत्यन्तमसन् जीवोऽप्यत्य- न्तमसन् स न बध्यते बन्धस्य वस्तुधर्मत्वान्नापि मुच्यते बन्धा- भावादिति बन्धमोक्षावपि न स्यातामव मन्येया अचेतनोऽपि संबध्यते मुच्यते चेति तदप्ययुक्तमचेतनानामप्येवंधर्मास्ति- कायादीनां बन्धमोक्षप्रसक्तेस्तस्मात्साधूक्तमिन्द्रशब्दार्थं जा- नन् तदुपयुक्तोभावेन्द्र इति । वृ० १ उ० ॥ उक्ता नामस्थाप नाद्रव्येन्द्राः ।

इदानीं भावेन्द्र त्रिस्थानकावतारेणाह ।

तओ इंदा पण्णत्ता तंजहा णाणिन्दे दंसणिंदे चरित्तेन्दे ।

( तओइदेत्यादि- ) कण्ठ्यं नवर ज्ञानेन ज्ञानस्य ज्ञाने वा इन्द्रः परमेश्वरो ज्ञानेन्द्रोऽतिशयवत् श्रुता द्यन्यतरज्ञानवशाविवे- चितवस्तुविशरः केवली वा एव दर्शनेन्द्रः क्षायिकसम्यग्द- र्शनी चारित्रेन्द्रो यथाख्यातचारित्रः एतेषां च भावेन सक- लभावप्रधानक्षायिकलक्षणेन विवक्षितक्षायोपशमिकलक्षणेन वा भावत परमार्थतो वेन्द्रत्वात् सकलसंसार्यप्राप्तपूर्वगुण- लक्ष्मीलक्षणपरमैश्वर्ययुक्तत्वात् भावेन्द्रतावसेयेति ।

भावेन्द्रलक्षणमाह ।

जो पुण जहत्थ जुत्तो, सुद्धणयाणं तु एस भाविन्दो ।
इन्दस्स व अहिगारं, वियाणमाणो तदुवउत्तो ॥१॥

यः पुनर्यथार्थेन यथावस्थितेन अर्थेन परमैश्वर्य्यलक्षणेन इदि परमैश्वर्ये इति वचनात् साक्षादिन्द्रनामगोत्राणि कर्माणि वेदयमान इत्यर्थः स भावेन्द्रः । एष शुद्धनयानां शब्दादीनां यथावस्थितार्थग्राहकाणां वर्तमानविषयिकाणां समतो न शेषोनामेन्द्रादिः । अथवा इन्द्रस्य इन्द्रशब्दस्याधिकारमर्थं जानन् तदुपयुक्तस्तस्मिन्निन्द्रशब्दार्थे उपयुक्तो भावेन्द्रः उप योगो भावनिक्षेप इति वचनात् ॥ उक्तमाध्यात्मिकैश्वर्य्यापे- क्षया भावेन्द्रत्रैविध्यम् ।

अथवा बाह्यैश्वर्य्यापेक्षया तदेवाह ।

तओ इन्दा पण्णत्ता तं जहा—देविंदे असुरिंदे मणुस्सिंदे ।

तओ इदेत्यादि भावितार्थंनवर देवा वैमानिका ज्योतिष्क वैमानिका वा रूढे । असुरा भवनपतिविशेषा भवनपतिव्यं- न्तरा वा सुरपर्युदासात् मनुजेन्द्रश्चक्रवर्त्यादिरिति ॥ स्था० ३ ठा० ॥

तेचेन्द्रा स्थानाङ्गे चतु पष्टिर्दर्शितास्तत्र देवेन्द्रा यथा ।

दो असुरकुमारिंदा पन्नत्तातंजहा चमरे चेव बली चेव । दो नागकुमारिंदा पन्नत्ता तंजहा धरणे चेव भूयाणंदे चेव । दो सुवण्णकुमारिंदा पन्नत्ता तंजहा वेणुदेवे चेव वेणुदाली चेव । दो विज्जुकुमारिंदा पं० तं० हरिचेव हरिस्सहे चेव । दो अग्गिकुमारिंदा पं० तं० अग्गिसिहे चेव अग्गि माणवे चेव । दो दीवकुमारिंदा पं० तं० पुन्ने चेव वसि-

ट्ठे चेव । दो उदधिकुमारिंदा पं० तं० जलकंते चेव जल प्पन्ने चेव । दो दिसाकुमारिंदा पं० तं० अमियगई चेव अमियवाहणे चेव । दो वाउकुमारिंदा पं० तं० वेलंबे चेव पभंजणे चेव । दो थणियकुमारिंदा पं० तं० घोसे चेव महाघोसे चेव ।

( दोअसुरेत्यादि ) अच्चुपचेवेत्येतदन्त सूत्र सुगमम् । नवर असुरादीनां दशानां भवनपतिनिकायानां मेर्वपेक्षया दक्षिणोत्तरदिग्द्वयाश्रितत्वेन द्विविधत्वाद्विंशतिरिन्द्रास्तत्र चमरो दाक्षिणात्यो वली त्वौदीच्य इत्येव सर्वत्र स्था० ॥ २ ठा० ॥

एतेषां सङ्ग्रहो यथा ॥

"चमरे १ धरणे २ तह वेणुदेव ३ हरिकंत ४ अग्गिसीहे य ५ । पुन्ने ६ जलकंते वि य, ७ अमिय ८ विलंवे य ९ घोसेय"॥ १० ॥ एते दक्षिणनिकायेन्द्रा इतरे तु " वलि १ भूयाणंदे २ वेणुदालि ३ हरिस्सहे ४ अग्गिमाणव ५ वसिट्ठे ६ जलप्पभे ७ अमियवाहणे ८ पहंजणे ९ महाघोसे " ॥ भ० टी. । ३ श० १ उ० ।

व्यंतरेन्द्रा यथा ।

दो पिसायइंदा पं० तं० काले चेव महाकाले चेव । दो भूयइंदा पं० तं० सूरूवे चेव पडिरूवे चेव । दो ज क्खिंदा पं० तं० पुण्णभद्दे चेव माणिभद्दे चेव । दो र क्खसिंदा पं० तं० भीमे चेव महाभीमे चेव । दो किं न्नरिंदा पं० तं० किन्नरे चेव किंपुरिसे चेव । दो किं पुरिसिंदा पं० तं० सप्पुरिसे चेव महापुरिसे चेव । दो महोरगिंदा पं० तं० अइकाये चेव महाकाये चेव । दो गंधव्विंदा पं० तं० । गीयरई चेव गीयजसे चेव । स्था० ॥

एवं व्यंतराणामष्टनिकायानां द्विगुणत्वात् षोडशेन्द्राः । स्था० । २ ठा० ॥ एतेषु च प्रतिनिकायं दक्षिणोत्तरभेदेन द्वौ द्वाविन्द्रौ स्याताम् ।

अणपन्निकायादीनां व्यंतरविशेष वाणव्यन्तरनिकायाना मिन्द्रा यथा ।

दो अणपन्निंदा पं० तं० संनिहिए चेव समाणे चेव । दो पणपन्निंदा पं० तं० धाए चेव विधाये चेव । दो इसिवा इंदा पं० तं० इसिच्चेव इसिवाले चेव । दो भूयवाय इंदा पं० तं० ईसरे चेव महेसरे चेव । दो कंदिंदा पं० तं० सुवत्थे चेव विसाले चेव दो महाकंदिंदा पं० तं० हासे चेव हासरई चेव । दो कुंभइंदा पं० तं० सेए चेव महासेए चेव ॥ दो पयगिंदा पं० तं० पए चेव पयगवई चेव ॥

अणपन्निकायादीनामप्यष्टानामेवव्यंतरविशेषनिकायानांद्विगु णत्वात् षोडशेति । स्था० २ ठा० ॥

ज्योतिष्कदेवानामिन्द्रा यथा ॥

जोइसियाणं देवाणं दो इंदा पं० तं० चंदे चेव सूरे चेव ॥

ज्योतिष्काणां त्वसंख्यातचन्द्र सूर्यत्वे ऽपि जातिमात्राश्रय-णाद्वावेव चन्द्रसूर्याख्याविन्द्रावुक्तौ ॥ स्था० २ ठा० ॥

सौधर्मादिकल्पेन्द्रा यथा ॥

सोहम्मीसाणेसु णं कप्पेसु दो इंदा पं० तं० सक्के चेव ईसाणे चेव एवं सणंकुमारमाहिंदेसु कप्पेसु दो इंदा पं० तं० सणंकुमारे चेव माहिंदे चेव । बंभलो य लंतगे दो इंदा पं० तं० बंभे चेव लंतए चेव महासुक्क सहस्सारेसु णं कप्पेसु दो इंदा पं० तं० महासुक्के चेव सहस्सारे चेव आणय-पाणया-रण-च्चुतेसु णं कप्पेसु दो इंदा पं० तं० पाणए चेव अच्चुए चेव ॥

सौधर्मादि कल्पानान्तु दशेन्द्राः स्था० २ ठा० ॥ अंतिम देवलोक चतुष्टय इन्द्रद्वय सद्भावादिति भ० ३ श० ९ उ० ॥ इत्येव सर्वेऽपिचतु षष्टिरिति 'देवेन्द्रस्तव'प्रकीर्णके च सर्वे इन्द्रा गाथया प्रदर्शिता स्तद्यथा ॥

वत्तीसा देविंदा, जस्स गुणेहिं उवहम्मिया ठायं ।
नो तस्स वि य च्छेयं, पायच्छायं नु वेहामो ॥ ६ ॥
वत्तीसं देविंदत्ति, भणियमित्तं निसापि यं भणइ ।
अंतरभासं ताहे, को होमा को वहल्लेणं ॥ ७ ॥
कयरे ते वत्तीसं, देविंदा को व कत्थ परिवसइ ।
केवइया कस्स ठिई, को भवणपरिग्गहो तस्स ॥ ८ ॥
केवइया च विमाणा, भवणा नगरा च हुंति केवइया ।
पुढवीण य वाहुल्लं, उच्चत्तविमाणवन्नो वा ॥ ९ ॥
कारंति व कालेणं, उक्कोसं मज्झिमजहन्नं ।
उस्सासो निस्सासो, ओही विसओ व को केसिं ॥१०॥
विणय उवयार उवहंमि,या इहा स व समुल्लवंतीए ।
पडिपुच्छि उ पियाए, भणसु अणु तं निसामेह ॥ ११ ॥
सुअणाणसागराओ,सुविणं उपडिपुच्छणाइ यं लर्द्ध ।
पुण वागरणावलिअं, नामा वलियाइ इंदाणं ॥ १२ ॥
सुणु वागरणावलिअं, रयणं वयणं सियं च वीरेहिं ।
तारावलिव्व धवलं, हियएण पसन्नचित्तेणं ॥ १३ ॥
रयणप्पभाइं कुम निकुरु, वासीसु तण तेउलेमागा ।
वीसं विकसियणयणा, भवणवई मे निसामेह ॥ १४ ॥
दो भवणवई इंदा, चमरे वइरोअण असुराणं ।
दो नाग कुमारिंदा, भूयाणंदे य धरणे य ॥ १५ ॥
दो सुयण सुवण्णिंदा, वेणुदेवेय वेणुदालिंदा ।
दो दीवकुमारिंदा, पुन्ने य तहा वसिट्ठे य ॥ १६ ॥
दो उदहिकुमारिंदा, जलकंते जलप्पभे य नामेणं ।
अमियगइ अमियवाहण, दिसाकुमाराण दो इंदा ॥१७॥
दो वा उ कुमारिंदा, वेलंब पभंजणा य नामेणं ।
दो थणिय कुमारिंदा, घोसे य तहा महाघोसे ॥ १८ ॥
दो विज्जुकुमारिंदा, हरिकंत हरिस्सहे य नामेणं ।
अग्गिसिह अग्गिमाणव, हूयासणवइ वि दो इंदा ॥१९॥
एए विकसियनयणे दस. दिसीविय सिय जसा मए कहिया ।

सुए वाणमंतराणं भवणवई आणुपुव्वीए ॥ ६७ ॥
पिसाय भूअ जक्खा य, रक्खसा किन्नरा य किंपुरिसा।
महोरगा य गंधव्वा, अट्ठविहा वाणमंतरा ॥ ६८ ॥
एए ट्ठिउ समासेणं, कहिया भे वाणमंतरा देवा ।
पत्तेयं पियवुच्छं सोऽभस इंदे माहिड्ढिए ॥ ६९ ॥
काले य महाकाले, सुरूव पडिरूव पुन्न भद्देय ।
अमरवई माणभद्दे, भीमे य तहा महाभीमे ॥ ७० ॥
किन्नर किंपुरिसे खलु, सप्पुरिसे खलु तहा महापुरिसे ।
अईकाय महाकाए, गीयरई चेव गीयजसे ॥ ७१ ॥
सन्निहि ए सामाणे, धाए विधाये इसीय इसिवाए ।
इस्सर महिस्सरेया हवइ सुवत्थे विसालेय ॥ ७२ ॥
हासे हासरई वि अ सेए अ तहा भवे महासेए ।
पयए पययवई, वि य नेयव्वा आणुपुव्विए॥ ७३ ॥
अप्पड्ढिया उ तारा, नक्खत्ता खलु तओ महड्ढिए ।
नक्खत्ते हिं तु गहा गहेहिं सूरा तउ चंदा॥ ७६ ॥
कप्पवई विय वुच्छं, वारस इंदे महिड्ढिए ॥ ६४ ॥
पढमो सोहम्मवई, ईसाणवइए सवाम्रिओ वीओ ।
तत्तो सणंकुमारो, हवइ चउत्थोउ माहिंदो ॥ ६५ ॥
पंचमए वम्हिंदो, छट्ठो पुण लंत उब्भदेविंदो ।
सत्तम ओ महसुक्को, अट्ठमउ भवे सहस्सारो ॥ ६६॥
नवमो अ आणतिंदो, दसमो पुणपाणतेंदढे विंदो।
आरण इक्कारसमो, वारसमो अच्चुए इंदो ॥ ६७ ॥
एए वारस इंदा, कप्पवई कप्पसामिया भणिया ॥
आणाईसरियं. वा तेण परं नत्थि देवाणं ।६८। दे०प०

इन्द्राणां भवनस्थित्यादिवक्तव्यता तत्तच्छब्दे ॥
अनीकानि तदधिपतयश्चाऽणीक शब्दे ॥
अग्रमहिष्यो ऽग्गमहिसी शब्दे ॥
उत्पातपर्वता उप्पायपव्वय शब्दे कल्पेन्द्रा कप्प शब्देऽपि॥
परिषद परिच्छद-शब्दे विमानानि विमाण शब्दे॥
लोकपाला लोकपाल शब्दे ॥
सामानिका सामाणिय शब्दे ॥

इन्द्राणामेकाभ्वतारित्वाद्येकावतारित्वादि-प्रश्नोत्तरमुखेन प्रतिपादितं यथा। सम्प्रति ये इन्द्रा सांति ते सर्व्वेऽप्येकातवारिणो नवेति प्रश्न ।सम्प्रति ये इन्द्रा सन्ति तेषां मध्ये केचनैकावतारिणो न सर्वे इत्युत्तरमिति । ही०२० । इन्द्रायतने, च

इंदस्स वा जावकोट्टकिरियाए वा उवलेवण संमज्जणआवरिसणधूवपुप्फगंधमल्लादिआइं दव्वावस्सयाइ करेंति ॥

अत्रोपचारादिन्द्रादिशब्देन तदायतनमप्युच्यत इति-अनु० टी० इन्द्र देवताके ज्येष्ठा नक्षत्रे, अधिष्ठातरि अधिष्ठेयस्योपचारात्।ज ७ व०।स्था०२ ठा ।अनु.।जेट्ठा इन्द्रदेवयाए।इति ज्यो०, । विष्कुम्भादिषु योगेषु षड्विंशे योगे, वाच० ॥
कृष्णस्य शुक्लस्य च पक्षस्य पञ्चदशदिवसेषु स्वनामख्याते सप्तमे दिवसे, कल्प०। सू०२०।जी०।पुरस्ये स्वनामख्याते श्रेष्ठिदारके,(तत्कथा सामाइय शब्दे) अष्टव्याकरणान्तर्गते व्याकरण विशेषे, आव. ४ अ ॥ कुटजवृक्षे रात्रौ, च धरणिः । भारतवर्षीय द्वीपभेदे, शब्द मा०। छदो ग्रंथ प्रसिद्धे, षण्मात्रा प्रस्तावे, आद्यन्तगुरुद्वयेन लघुद्वयमध्येन युते चतुर्थे भेदे, इन्द्रवारुण्याम् स्त्री० टाप् ॥ वाच० ॥

ऐन्द्र-त्रि० इन्द्रस्येदम् इन्द्रसम्बन्धिनि, (ऐन्द्र धाम हृदि स्मृत्वा ) ऐन्द्र मिति । इदिपरमैश्वर्य्ये इति धात्वनुसारादिन्द्र आत्मा तस्य सम्बन्धि ऐन्द्र धामेति । नयो० ।

इंदकंत-इन्द्रकान्त- न० विमानविशेषे सम० १९ स० ॥

इंदका ( गा ) इय-इन्द्रकायिक- पु० त्रीन्द्रियसंसारसमापन्नजीवविशेषे, प्रज्ञा० १ पद०। जी० । ( बोधव्वा इदगाईका ) उत्त० ३६ अ०। कायिका इत्यपिकुत्रचिल्लोकप्रसिद्धा स्त्रीन्द्रिया. । उत्त० टी० ॥

इंदकील-इन्द्रकील-पु० गोपुरावयवविशेषे ।औप०। ( गोमेज्जमयाइंदकीला ) सपाटितकपाटद्वयाधारभूतः प्रवेशमध्यभाग इति । राज० । गोपुरकपाटयुगसंनिवेशस्थानमिति । ज० ३ ज्ञ० ४ उ० । ज० । इन्द्रस्य कील इव अत्युच्चत्वात् मन्दरपर्व्वते इन्द्रस्य कील इव इन्द्रध्वजे । न० । वाच० ॥

इंदकुंजर-इन्द्रकुञ्जर- पु० ६ त० ऐरावते, तस्यामृतमन्थन काले इन्द्रेण गृहीतत्वात् तथात्वम् यथाह "श्वेतैर्दन्तैश्चतुर्भिस्तु, महाकायस्ततः परम् । ऐरावतो महानागोऽभवद्वज्रभृताधृतः" ॥ भा०आ० । इन्द्रगजशक्रगजादयोऽप्यत्र० । वाच० ॥

इंदकुंभ-इन्द्रकुम्भ-पु० कुम्भानामिन्द्रः इन्द्रकुम्भो राजदन्तादिदर्शनादिन्द्रशब्दस्य पूर्वनिपात । महाकलशे, राज० । महिंदकुंभसमाणा ) कुम्भाना मिन्द्र इन्द्रकुभो महाँश्चासाविन्द्रकुम्भश्च तस्य समाना महेन्द्रकुम्भसमाना महाकलशप्रमाणा इति ज० १प्र०।जी०।राज० । वीतशोकाया राजधान्या उत्तर पूर्वे दिग्भागस्थिते उद्याने, ( तीसेण वीयसोगाए रायहाणीए उत्तर पुरच्छिमे दिसीभाए इदकुंभणाम उज्जाणे इति, ज्ञा० ८ अ. । नेमिजिनस्य प्रथम शिष्ये, च ।सम० २४ स ।

इंदकुमारिया-इन्द्रकुमारिका-स्त्री स्वनाम ख्यातायां योषिति । आ म १ अ. ।

इंदकेउ-इन्द्रकेतु-पु० इन्द्रयष्ट्याम्, प्रश्न० ४ द्वा० (सोइंदकेउपासेत्ति लोकेण महिज्जत ) इति आ० चू० ॥

इंदगोवग-इन्द्रगोपक-पु०इन्द्र गोपायतीति । नि० चू० । गोपो रक्षकोऽस्य वर्षाभवत्वात्तस्य । वाच० । प्रथमप्रावृट्काल भाविनि कीटविशेषे, स हि प्रवृद्धः सन्नीषत्पाण्डुरक्तो भवतीति।राज ।आ-म-प्र०।प्रज्ञा०।ज्ञा ।आचा०।जी ( इंदगोवगसमप्पभेसु ॥ ) इन्द्रगोपको वर्षासु कीटकविशेषस्तेन च समा प्रभा येषां ते तथा तेषु रक्तेष्वित्यर्थः । ज्ञा ।अयञ्च विकलेन्द्रियजीवविशेष इति-अनु । स च संसारसमापन्नत्रीन्द्रियजीवविशेष इति-प्रज्ञा० पद १ । जी. । ( इंदगोवमाइया णेगहा एवमाइओ) इन्द्रगोपादिका इन्द्रगोपको (ममोला) इति प्रसिद्ध एवमादिकास्त्रीन्द्रिया अनेकधा जीवा इति उत्त ३ अ ।

चउरिंदिय इंदगोवादि। नि० चू० १ अ० ।

इंदगह-इन्द्रग्रह-पुं० ग्रहविशेषे । जी० ३ प्र ।

इंदग्गि-इन्द्राग्नि-पु० द्वि० व० इन्द्रश्चाग्निश्च देवताद्वन्द्व० । शक्राग्न्योर्मिलितयोर्देवतयो ।वाच०। विशाखानक्षत्राधिष्ठातरि

देवे, अनु० । "दो इंदग्गी" अष्टाशीतिमहाग्रहान्तर्गते सप्तार्वि शत्तमे महाग्रहे च। स्या० २ ठा०। विसाहा इन्दग्गिदेवयाए इति। ज्यो०। तदधिष्ठातृके विशाखानक्षत्रे च । अधिष्ठातर्यधिष्ठे यस्योपचारादिति। जं० ७ वक्ष० । कल्प० ।

इंदचंदण-इन्द्रचन्दन-न०-इन्द्रप्रिय चदनम् शा० त० हरिच-न्दने, वाच० ।

इंदचिन्निमी-इन्द्रचिर्भिटी-स्त्री०-इन्द्रस्यात्मन' प्रिया चि-र्भिटी शा०न० लताभेदे, सा च इन्द्रतुल्यवर्णकुसुमा पुष्पान्वित मञ्जरीका दीर्घवृन्ता युग्मफलान्विता कट्वी शीतवीर्य्या पित्त श्लेष्मकासव्रणदोषकृमिनाशिनी चक्षुष्या च।राजनिर्घ०।वाच०।

इंदजव-इन्द्रयव-न०-पु०-इन्द्रस्य कुटजवृक्षस्य यवाकृतिवीज त्वात् यव इव वीजम्। कुटजवृक्षस्य यवाकारे तिक्तरसे स्वना मख्याते वीजे, "ऐन्द्रो यवस्त्रिदोषघ्न, संग्राही कटुशीतल । ज्वरातिसाररक्तार्श -कृमिवीसर्पकुष्ठनुत् ॥ दीपनो गुदकी लास्रवातास्रश्लेष्मशूलजित् । भाव० प्र० । वाच० ।

इंदजसा-इन्द्रयशस्-स्त्री०-पाञ्चालदेशस्थकांपिल्यनगरस्य ब्रह्मनामकराज्ञो भार्यायाम्, तस्य च चतस्रो भार्याः । "इंद-वसु १ इदजसा २ इदसिरी ३ चुल्लणीदेवी ४ य" । उत्त १३ अ० ॥

इंदजाल-इन्द्रजाल-न०-द्वासप्ततिकलान्तर्गते कलाविशेषे,कल्प । इन्द्रेण कौशल्याद्यैश्वर्येण जाल इन्द्रनेत्रावरण यथास्थितवस्तु-दर्शनाक्षमत्वसाधनात्। इन्द्रस्य परमेश्वरस्य जाल मायेव वा मन्त्रौषधादिना अन्यथास्थितस्य वस्तुनोऽन्यथात्वेन दर्शनसा-धने ( कुहक ) ( वाजी ) १ पदार्थे, २ मायारूपे जाले च। इन्द्रेण इन्द्रकृतेन योगविशेषेण जालं कुछोपायभेदे च । इन्द्र-जालं च द्रव्यविशेषसयोगेन अद्भुतवस्तुदर्शकव्यापार' ( क्या-मेष्टरि ) इति आंगलभाषाप्रसिद्ध । मन्त्रद्रव्य विशेषेण वस्तुनोऽन्यथाकरणञ्च । वाच० ।

इंदजालि ( न् ) इन्द्रजालिन्- त्रि०-वेषरचनादिस्वपरहा सोत्पादके विस्मापके, स्या० ४ ठा० ॥

इंदजालिय-इन्द्रजालिक-त्रि०-इन्द्रजाल शिल्पतयास्त्यस्य ठन्। इन्द्रजालकारके, । इन्द्रजालिकीत्यप्यत्र स्त्रियां ङीप् वाच० । आ० म० । विशे० ।

इंदज्झय-इन्द्रध्वज-पु०-इन्द्रत्वसूचको वा ध्वज इन्द्रध्वज इति । अतिमहति ध्वजे, । प्रव० ४० द्वा० ॥

" आगासगओ कुडिभी सहस्स परिमंडियाभिरामो इंदज्झओ पुरओ गच्छइ" ॥

( आगासगओत्ति ) आकाशगतोऽत्यर्थं तुङ्गमित्यर्थ ( कुडि भित्ति ) लघुपताक सहस्रैरभिव्याप्ते । तत्सहस्रै परिमण्डितश्चा-सावभिरामश्चातिरमणीय इति विग्रह' । ( इन्दज्झओत्ति ) शेषध्वजापेक्षयाऽतिमहत्वात् इन्द्रश्चासौ ध्वजश्च इन्द्रध्वज इति । ( पुरओत्ति ) जिनस्याग्रतो गच्छतीति दशमोऽतिश य । सम० ३४ स० ॥

इंदज्झया-इन्द्रध्वजा-स्त्री०-इन्द्रसम्बन्धिन्या तत्संतोषाय स्था-पिताया ध्वजायाम्, वाच० । तदुत्पत्तिरावश्यकचूर्णौ भरत कथामधिकृत्योक्ता यथा—

ताहे सो सक्कं भणति तुब्भेहिं केरिसेण रूवेण तत्थ अत्थ हाति ताहे सक्को भणति ण सक्का तं माणुसेणं दट्टुं । ताहे सो भणति । तस्स आकिर्ति पेच्छामि । ताहे सक्को भणति जेण तुमं उत्तमपुरिसो तेण ते अहं दामि एग पदेसं ताहे एगं अंगुलिं सव्वालंकारविभूसितं काऊण दाएति सो तं दट्टूणं अतीव हरिसं गतो । ताहे तस्स अट्टाहियं महिमं करेति ताए अंगुलीए आकिर्ति काऊण पच्छा स इंदज्झया एवं वरिसे वरिसे इंदमहो पवत्तो । पढम उस्सवो भरहो भणति तुमं सि देविंदो अहं मणुस्सिंदो भित्तामो एवं होउत्ति । आ चू १ अ. ॥

इंदट्ठाण-इन्द्रस्थान-न०-भवननगरविमानरूपे चमरादिसम्ब न्ध्याश्रये, स्था० ६ ठा० ॥ तत्रेन्द्रोपपातविरहितकालो यथा-

इंदट्ठाणे णं भंते ! केवतियं कालं विरहिते उववाते णं पण्णत्ते ? गो० ! जहण्णेणं एक्कं समयं उक्कोसेणं छम्मासा

( इन्दट्ठाणेणमित्यादि ) इन्द्रस्थान भदन्त ! कियन्त कालमु-पपातेन विरहित प्रज्ञप्तम् ! भगवानाह गौतम ! जघन्येनैक समयं यावत् उत्कर्षत' षण्मासान् । जी० ३ प्र० ॥ भ० ॥

स्थानाङ्गेपि ।

एगमेगे णं इंदट्ठाणे उक्कोसेणं छम्मासे विरहिए उववाएणं

( एगेत्यादि ) एकैकमिन्द्रस्थान चमरादिसम्बन्ध्याश्रयो भव-ननगरविमानरूपस्तदुत्कर्षेण षण्मासान् यावद्विरहितमुप-पाते नेन्द्रापेक्षयेति । स्था. ६ ठा. ॥ इन्द्रोपपातविरहिते इन्द्रस्थाने किं भवतीति जीवाभिगमे प्रतिपादितम् । तद्यथा-

तेसिं णं भंते ! जया देवाणं इंदे चयति से कहमिदाणीं पकरेंति ? गो० ! चत्तारि पंच सामाणिया तट्ठाणं उव-संपज्जित्ताणं विहरंति जाव तत्थ अण्णे इंदे उववण्णे भवति ॥

पुन प्रश्नयति ( तेसिण भंते इत्यादि ) तेषां भदन्त ! ज्योति ष्कदेवानां यदा इन्द्रश्च्यवते तदा ते देवा इदानीं इन्द्रविरह काले कथं प्रकुर्वते । भगवानाह । गौतम ! यावच्चत्वार' पच वा सामानिका देवा' समुदितीभूय तत्स्थानमुपसम्पद्य विहर-ति तदिन्द्रस्थान परिपालयन्तीति चेदतआह यावदन्यस्तत्र इन्द्र उपपन्नो भवति । जी० ३ प्र० ॥

एव बाह्यज्योतिष्कदेवेन्द्रस्थानेऽपि तथाच सूर्यप्रज्ञप्तौ ।

ता तेसिणं देवाणं जाव इंदे चयति से कयमिदाणिं पकरेंति ता चत्तारि पंच सामाणियदेवा तट्ठाणं उवसं पज्जित्ताणं विहरंति जाविंदा तत्थोववण्णगा इत्थं इंदे उव वण्णे भवति ता इंदट्ठाणे केवतियं कालं विरहिते उववाते पण्णत्ते ता जहण्णेणं एक्कं समयं उक्कोसेणं छम्मासे ॥

( ता तेसिणत्ति ) ता इतिपूर्ववत् तेषां ज्योतिष्काणां देवाना यदा इन्द्रश्च्यवते तदा ते देवा इदानीं इन्द्रविरहकाले कथ प्रकुर्वन्ति भगवानाह ता इत्यादि पूर्ववत् चत्वारि पञ्च वा सामानिका देवा' समुदितीभूय तच्छून्यमिन्द्रमुपसम्पद्य विह रति तदिन्द्रस्थान परिपालयन्तीति चेदत आह । यावदिन्द्र तत्रेन्द्र उपपन्नो भवति ( ता इंद ट्ठाणेणंत्ति ) ता इति पूर्ववत् इन्द्रस्थान कियन्कालमुपपातेन विरहित प्रज्ञप्तं ? भगवानाह ( ता इत्यादि ) जघन्येन एक समय यावत् उत्कर्षेण षण्मासान्॥ सूर्य० १९ पा ॥ इन्द्राणां प्रत्येक स्थानानि तत्तदिन्द्रस्थाननिरूप

णावसरे (ठाण) शब्दे । इन्द्रयष्टिस्थापनाय कृते स्थाने च ॥

जेणेव इन्दट्ठाणे तेणेव उवागए ।

( इंदट्ठाणेत्ति ) यत्रेन्द्रयष्टिरूर्ध्वी क्रियत इति। अन्त० ।

इंदणक्खत्त-इन्द्रनक्षत्र-न०-इन्द्रस्वामिकं नक्षत्रम् । ज्येष्ठानक्षत्रे, तस्य तत्स्वामिकत्वात्तथात्वम् । इन्द्रनामक नक्षत्रम् । फाल्गुनीनक्षत्रे च । वाच० ।

इंदणाग-इन्द्रनाग- पुं०-वसंतपुरस्थे स्वनामख्याते श्रेष्ठिकुमारे, तेन च बालतपसा सामायिक लब्धमिति (सामाइय) शब्दे । आ० म० द्वि० ॥

इंदणील-इन्द्रनील-पुं०-इन्द्र इव नीलः श्यामः। वाच० । खर बादरपृथिवीकायात्मके नीलरत्नविशेषरूपे मणिविशेषे, उत्त० सूत्र० २ श्रु० ३ अ० । राज० । जी० । प्रज्ञा० । कल्प० । औप० । ( नीलम ) इति ख्याते मरकतमणौ, तल्लक्षणमुक्तं रत्नपरीक्षायाम् । " क्षीरमध्ये क्षिपेन्नीलं क्षीरञ्चेन्नीलतां व्रजेत् । इन्द्रनील इति ख्यातं सर्वरत्नोत्तमोत्तमम् " वाच० ।

इंदतोया-इन्द्रतोया-स्त्री० इन्द्रमैश्वर्यान्वित तोयमस्या , इन्द्रेण पूरित तोयमस्या वा । गन्धमादनसमीपस्थे नदीभेदे ॥ इन्द्रतोयां समासाद्य गन्धमादनसन्निधौ । भा. प० २४ वाच. ॥

इंददत्त-इन्द्रदत्त-पुं० स्वनामख्यातेऽभिनंदनजिनस्य प्रथमभिक्षादातरि, सम० २४स० आ.म. । वासुपूज्यजिनस्य पूर्वभवके एतन्नामधेये च। सम.२४स.॥ इन्द्रपुरनगरस्थे स्वनामख्याते नृपे, तत्कथा मानुष्यदुर्लभत्वे । तितिक्षायाम् शीले च सम्भवाति आ. म. । आ. क. । आ चू० । उत्त. । पं० व० । आव । व्य । विपा. । नि०चू । इन्द्रपुरं नगरं इंददत्तो राया । इति । आ. चू. ४अ०। इन्दपुरे इंददत्ते य । व्य. ४ उ० ६ उ०।

इंदपुरइंददत्ते, बावीससुआ सुरिंददत्ते अ ।

महुराए जिअसत्तू सयंवरो निव्वुई एव ॥ ८० ॥

अस्य व्याख्या ॥ कथानकादवसेया । तच्चेदं । इंदपुर नगर इंददत्तो राया तस्स इट्टाण देवी से बावीसं पुत्ता अन्ने भणंति एगाए देवीए ते सव्वे रन्नो पाणसमा अन्ना एक्का धूया अमच्चस्स सा जं परिणिय तेण दिट्ठा सा अन्नया कयाइ ण्हाया स माणी अत्थइ ताहे रायाए दिठा का एसा तेहिं भणिय तुज्झ देवी ताहे सो ताए समं एकं रत्तिपुत्तो वेला ज च रायाए उल्लविय सच्चकारो तेण तं पत्तए लिहियं सो य सार वेइ नवण्हं मासाणं दारओ जाओ तस्स दारचेमाणि तद्दिवस जायाणि तं अग्गियओ पव्वयओ बहुलिया सागरग ताणि सह जायाणि तेण कलायरियस्स उवणीओ तेण लेहाइयाओ बावत्तरिकलाओ गहियाउ जाहे नाओ गाहेइ आयरियो ताहे ताणि कट्ठति किं जिय पुव्वपरिच्चयएण ताणि रोमेंति सो वि ताणि न गणेइ गहियाओ कलाओ ते अन्ने गाहिज्जति बावीसं पि कुमारा जस्स ते अप्पिज्जति आयरियस्स तं पिट्टति मत्थएहिं य हणाति अह उवज्झाओ ते पिट्टेइ अपढते ताहे सहेंति माइमिस्सिगाए ताहे ताओ भणति । किं सुलभाणि पुत्तजम्माणि ताहे न सिक्खियाइ इय महुराए जितसत्तुराया तस्स सुया निव्वुइनाम कन्नगा सा अलंकियएगाउवणीया राया भणइ जो ते रोयइ सो ते भत्ता ताहे ताए नाय जो सूरो वीरो वक्कंतो सा पुण रज्ज देज्जा ताहे सा त बलवाहण गहाय गया इंदपुर नगर गयसपुत्ता घहवे अहवा दूओ पयट्टिओ ताहे आवाहिया मन्ने रायाणो ताहे तेण रायाणएण सुय जहासाए हट्ठतुट्ठा उसियपडाग नगर कय रंगो कओ तत्थ चक्क तत्थ एगंमि अक्खे अट्ठ चक्काणि तेसिं पुरउ धूया ठविया सा पुण पच्छिमि विंधेयव्वा राया सन्नद्धो निग्गतो सहपुत्तेहिं ता हे सा कन्ना सव्वालंकारभूसियाए मंडिया से अत्थइ सो रंगो रायाणय ते पत्तेयदण्डभोयणा जारिसो दोवती ए ए तत्थ रन्नो जेट्ठपुत्तो सिरिमालीनामकुमारो भणिओ एस दारिया रज्जं च प्रोत्तव्वं सो वि तुट्ठो अहं नूण अन्नेहिंतो रातिहिं अब्भहिओ ताहे सो भणति विंदेहित्ति ताहे सो अकयकरणो तस्स समूहस्स मज्झे तं धणु घेत्तु नेव न वातेइ किहविणेण गहियं तेण जतो वच्चइत्तो वच्चउत्ति कम्मं मुंच तं भग्ग एव कासइणा अरयवो लीणं कासइ दो तिन्नि अन्नेसिं बाहिरेण चेवणिंति तेण वि अमच्चेण सो णत्तगो णसा विओ तद्दिवसमाणिओ तत्थ अत्थइ ताहे राया ओहयमणसंकप्पो करयलपल्हत्थमुहो अहो अयं लोयमज्झे पुत्तेहिं धरिसिओत्ति अत्थइ ताहे सो अमच्चो पुच्छइ किं तुज्झ देवाणुप्पिया ओहया जाव झायह ताहे सो भणइ एएहिं अप्पहाणो कओ ताहे भणइ अत्थि पुत्तो अन्नो वि तुब्भं कहिं सुरिंददत्तो नाम कुमारो तं सो वि ताव विन्नासेउ ताहे तं राया पुच्छइ कह मम परिसोपुत्तो ताहे ताणि सिट्ठाणि रहस्साणि ताहे राया तुट्ठो भणइ सेयं तवपुत्ता एते अट्ठचक्के भेत्तूण रज्जसोक्खं निव्वुत्तिदारियं पाविज्जए ताहे सो कुमारो ठाण आलीढ गाइऊण गेण्हइ धनु लक्खाभिमुह सर संधेइ ताणि तस्स रूवाणि ते य कुमारा सव्व ओरोरावेंति अन्ने यदो न्नि पुरिसा असिव्वग्गहत्थो ताहे सो पण मं रन्नो उवज्झायस्स य करेइ सो वि से उवज्झाओ भय दाएइ एए दोन्नि पुरिसा जइ फिरुसि सीसं ते फिरुइ तेसिं दोन्नवि परिसाण तेण चत्तारि ते य बावीस अगणेंतो ताणं अट्ठण्ह रहचक्काणं छिद्दाणि जाणिऊण एगम्मि छिंदे नाऊण अच्छिरयाए दिट्ठिए तंमि लक्खत्तेण अन्नमियमण आकड्ढमाणेण साधीतीया अच्छिंमि विद्धा तत्थ उक्कुट्ठसीहनादसाधुक्कारो दिन्नो एसा दवतितिक्खा एस चेव विभासाभावे वि उपसहारो।जहा कुमारो तहा साहू,जहा ते चत्तारि तहा चत्तारि कसाया,जहा ते बावीस कुमारा तहा बावीसं परीसहा, जहा ते रूवे मणसा तहा रागदोसा,जहा पुत्तलिगा विंधेयव्वा तहा आराहणा,जहा निव्वुत्तिदारिया तहा सिद्धितितिक्खत्ति गयं ॥ आव० ४ अ० ।

" आसीदिन्द्रपुर नाम, नगर गुरुक गुणैः ।
तत्राभवच्छ्रियामिन्द्र, इन्द्रदत्तो महीपतिः ॥ १ ॥
प्रीतिपात्रं कलत्राणां, तस्य द्वाविंशतिः सुता ॥
बभूवुर्भूमिपालस्य, प्राणेभ्योऽप्यतिवल्लभाः ॥ २ ॥
अन्या भार्या भवत्तस्य, भूपस्यामात्यपुत्रिका ॥
सा च तेन परं दृष्टा, पाणिग्राहं प्रकुर्वता ॥ ३ ॥
अथान्यदा कदाचित्सा, ऋतौ स्नाता विलोकिता ।
राज्ञा पृष्टाश्च पार्श्वस्था, यथैषा कस्य का च भोः ॥ ४ ॥
ते ऊचुर्देव देवी ते, ततो राजा तया सह ॥
रात्रिमेकामुवासाथ, तस्या गर्भोऽभवत्तदा ॥ ५ ॥
सा च पूर्वममात्येन, भणिताऽऽसीद्यदा तव ॥
गर्भो भूतो भवेद्वत्से, तदा त्वं मे निवेदये ॥ ६ ॥
ततः सा गर्भसंभूतिं, राजसवासवासरं ॥
मुहूर्तं राजजल्प च पितुः सर्वं न्यवेदयत् ॥ ७ ॥
सत्यकाराय तत्सर्वं, व्यलिखत्सोऽपि पत्रके ॥
सम्यक् तां पालयामास, काले चाजनि दारकः ॥ ८ ॥
तद्दिने दासरूपाणि, ययुश्चत्वारि तद्गृहे ॥

अग्निक· पर्वतश्चाय, बहुलीसागरस्तथा ॥ ९ ॥
सुरेन्द्रदत्त इत्येषा, राजसूनो कृताभिधा ॥
कलासूरेरसौ पार्श्वे, कला· काले गृहीतवान् ॥ १० ॥
गृह्णतश्च कलास्तस्य, चनिरे तानुपद्रवान् ॥
न चासौ गाविभक्तत्वान्नृपस्तत्तु व्यजीगणत् ॥ ११ ॥
ते च द्वाविंशतिः पुत्रा ग्राह्यमाणा कलाः किल ॥
निघ्नन्तिस्म कलाचार्य, गाढीस्तस्य तथा ददु ॥ १२ ॥
सूरिणा ताडितास्ते तु, स्वमातृभ्यो न्यवेदयन् ॥
त च ता· कुपिता· शापे-श्कुरुद्वेगभाजनम् ॥ १३ ॥
एवं ते ययुरज्ञाना, सूरिणा समुपेक्षिता· ॥
इतश्च मथुरानाथ, आसीत्पर्वतको नृप· ॥ १४ ॥
तत्सुता निर्वृतिर्नाम, यौवनाऽऽद्देद सुन्दरा ॥
वरार्थं तेन सावाचि, भर्त्तारं वृणु वाञ्छितम् ॥ १५ ॥
सा पुनस्तमनुज्ञाप्या चचालेन्द्रपुरं प्रति ॥
राजपुत्रा यतस्तत्र भूयांसः सन्तिसद्गुणा ॥ १६ ॥
तत· सेन्द्रपुरं प्राप-दाप्तलोकसमन्विता ॥
तुष्टेन चेन्द्रदत्तेन राज्ञाऽकारि पुरे मह· ॥ १७ ॥
निर्वृत्या भणितं राज्ञो, राधावेधं करिष्यति ॥
य कुमारः स मे भर्त्ता भविष्यत्यपरो न तु ॥ १८ ॥
तदाकर्ण्य नृपो रंगं कारयमास तत्र च ॥
एकत्राक्षेऽष्ट चक्राणि तत्पुर· पुत्रिका तथा ॥ १९ ॥
सा च चक्षुषि वाणेन, भेत्तव्याधो विवर्तिना ॥
तत सैन्ययुतो राजा, रंगे तस्थौ सपुत्रक ॥ २० ॥
निर्वृतिश्चैकदेशेऽस्य, स्थितालङ्कृतविग्रहा ॥
यथास्त्र च निविष्टेषु, सामतनागरादिषु ॥ २१ ॥
आदिष्टो ज्येष्ठपुत्रोऽय, राज्ञा श्रीमालिनामक ।
भित्त्वा राधां गृहाणेमां, कन्यां राज्यं च पुत्रक ॥ २२ ॥
तत सोऽशिक्षितत्वेन, साध्वसोत्कंपिविग्रह ।
शशाक नैव तां भेत्तु-मेव ते शेषका अपि ॥ २३ ॥
ततो राजा स्वपुत्राणां, मूर्खतां वीक्ष्य तत्क्षणात् ।
शुशोच हस्तविन्यस्तगल्लो भूम्यस्तदृष्टिक ॥ २४ ॥
ततोऽमात्यस्तमापृच्छत्, देवः किं दैन्यवान् भवान् ।
सोऽवोचत्तु सुतैरेतैरह भो धर्षितो जने ॥ २५ ॥
ततोऽमात्योऽवदद्भूप ययान्योऽपि च ते सुत ।
विद्यते सोऽपि देवेन राधावेधे नियुज्यताम् ॥ २६ ॥
राजाऽवोचत्कुतो मेऽन्य , सुतोऽमात्योऽप्युवाच नम् ।
महीहित्रस्तत· पत्र दर्शयामास तस्य नत् ॥ २७ ॥
सजातप्रत्ययो राजा सतुष्टस्त वचाण च ।
आनयाऽमात्य तत्पुत्र, तस्य त सोऽप्यदर्शयत् ॥ २८ ॥
आलिङ्ग्य मूर्ध्नि चाघ्राय, त वभापे सुतोत्तमम् ।
कन्यां गृहाण राज्यञ्च जित्वा राधां त्वमञ्जसा ॥ २९ ॥
यदादिशति तातस्तत्करोमीत्यभिधाय स ।
धनुर्वेदोपदेशेन राधां भेत्तुमुपस्थित ॥ ३० ॥
तान्यस्य वैरूपाणि ते च द्वाविंशति सुता ।
उत्कृतासीनरौ द्वौ च नाना चक्रुरुपद्रवान् ॥ ३१ ॥
कलाचार्योऽप्यऽवोचत्त न चेद्राधा विभेत्स्यति ॥
तदेतौ च शिरो वत्स छेत्स्येते दारुणौ नरौ ॥ ३२ ॥
ततोसावविगणय्यैतान् लब्धलक्षोऽप्रमादवान् ।
चक्राणामतर ज्ञात्वा राधा द्रागिति विद्धवान् ॥ ३३ ॥
ततश्चास्फालित तूर्यं साधुकार कृतो जनै ।
राजादिस्तोषितो लोका उद्वाकन्या च तेन सा ॥३४॥ पंचा०

श्रावस्तीवास्तव्ये कपिलपितु काश्यपस्य मित्रे, कपिलस्योपाध्याये स्वनामख्याते ब्राह्मणे, उत्त० ८ अ०। तथा च कपिलकथायाम् "सावत्थीए णयरीए जियमित्तो इन्ददत्तो नाम माहणो इति" उत्त० । तत्कथा कपिलशब्दे । मथुरानगरस्थे स्वनामख्याते पुरोहिते च । तत्कथा यथा-मथुरायां इन्द्रदत्त· पुरोहितोऽस्ति स जिनशासनप्रत्यनीक· स्वगवाक्षस्थ· सन् अधोनिर्गच्छतो जनयतेर्मस्तकोपरि निजचरण वितत करोति । एवं निरन्तर कुर्वाणं त दृष्ट्वा साधुर्न कोपि कुप्यति परमेक· श्रावक· कुपितः तत्पादच्छेदप्रतिज्ञामकरोत् अन्यानि तच्छिद्राणि अलभमानेन, तेन श्रावकेण तत्स्वरूप गुरो· पुरः कथितम् । गुरुणोक्त सह्यते सत्कारपुरस्कारपरीषह· साधुनेति । तेन स्वप्रतिज्ञा कथिता । गुरुभिरुक्तम् । अस्य गृहे किं जायमानमस्ति तेनोक्त नवीनप्रासादे राजा निमन्त्र्यमाणोऽस्ति पुरोहितेन । गुरुभिरुक्त तर्हि त्व तत्प्रासादे प्रविशन्त राजान करे धृत्वा प्रासादोऽयं पतिष्यतीति कथय । अह च प्रासाद विद्यया पातयिष्यामि । ततस्तेन तथाकृते प्रासाद· पतितो राज्ञोक्तं किमिदञ्जात । श्रेष्ठिनोक्त महाराज! अनेन तव मारणाय कपटमण्डितमभूत् ततो रुष्टेन राज्ञा स पुरोहितस्तस्य श्रेष्ठिनोऽर्पित स च श्रेष्ठी इन्द्रकीलके तस्य पाद क्षिप्त्वा प्रतिज्ञापूरणार्थं च पिष्टमयं पाद कृत्वा छिन्नवान् उक्तवांश्च सर्वं तत्स्वरूपं पुरोहितेनोक्तमत पर नैवेद्य करिष्यामीति । जानुकम्पेन श्रावकेण स मुक्त । उत्त० २ अ० ॥

इत्थमिंददत्तो पुरोहिओ गवक्खट्ठिओ मिच्छदिट्ठी अहोवच्च तस्स साहुस्स मत्थए उवरि पायं कुणतो सेट्ठेण गुरुभत्तिए पायहीणो कओ" ती० ॥

इंददारु-इन्द्रदारु- पु० इन्द्रस्य तद्ध्वजस्य साधन दारु देवदारु वृक्षे इन्द्रद्रुमादयोऽप्यत्र । वाच० ॥

इंददिण्ण-इन्द्रदिन्न-पु० कौटिकगच्छस्थे सुस्थितसुप्रतिबुद्धापरनामधेययो कौटिककाकन्दकयो· शिष्ये स्वनामख्याते आचार्ये, " सुट्ठियसुप्पडिवुद्धाण कोडियकाकदगाणं वग्घावच्च सगुत्ताण अन्तेवासी थेरे अज्जइन्ददिण्णे कोसियगुत्ते ॥ इति "—कल्प० । " तदनु च सुहस्तिशिष्यौ, कौटिककाकन्दकावजायेताम् । सुस्थितसुप्रतिबुद्धौ, कौटिकगच्छस्तत सम भूत् ॥ तत्रेन्द्रदिन्नसूरि-र्भगवान् श्रीदिन्नसङ्घसूरीन्द्र ॥ इति गच्छा० ॥

अयं च खरतरगच्छपट्टावल्ल्यनुसारेण वीरजिनात्त्रयोदश ॥ तपोगच्छपट्टावलीप्रमाणतो दशम ।

इंदपव्वय-इन्द्रपर्वत- पु० इन्द्रनामकपर्वत । महेन्द्रपर्वते, इन्द्रवर्ण पर्वत । नीलवर्णे गिरिभेदे, वाच० ॥

इंदपाडिवया-इन्द्रप्रतिपत्- स्त्री० अश्वयुक्पूर्णिमायां अनन्तरभाविन्याम्महाप्रतिपदि तस्यां चास्वाध्याय इति— । स्था० ४ ठा० ।

इंदपुर-इन्द्रपुर-न० इन्द्रदत्तनृपस्य भारतवर्षस्थे स्वनामख्याते नगरे, आव० ४ अ० ए टा० ॥ आ० चू० । आ म । स्था० । इहेव जम्बूद्दीवे भारहेवासे इंदपुरणामणयरे, ॥ इति विपा० १० अ०। "पुरमिन्द्रपुरं नाम साक्षादिन्द्रपुरं किय ॥ आ० क० ॥ माणीपुरस्थे स्वनामख्याते नगरे च ॥ " माणीपुर णयर णागदत्ते गाहावई इंदपुरे अणगारे पडिलाभिए जाव सिद्धे इति ' विपा० ७ अ० ॥

इंदपुरग-इन्द्रपुरक-न० ( वेसवाडिय ) गणस्य चतुर्षु कुलेषु चतुर्थे कुले, । तइ होइ इंदपुरगं च । कल्प०-

इंदपुरोहित-इंद्रपुरोहित- पु०-६ त० । सुराचार्य्यबृहस्पतौ-वाच० ।

इंदभूइ-इन्द्रभूति-पु०-स्वनामख्याते महावीरस्य प्रथमगणधरे प्रथमगणनायके प्रथमशिष्ये, प्रव० ८ द्वा० । सम० । सूत्र० । "समणस्स भगवओ महावीरस्स जेट्ठे अंतेवासी इंदभूई अणगारे गोयमसगोत्तेणं इति । कल्प० । अन्त० । विपा० । "जिणवीरस्सेक्कारस पढमो से इंदभूयत्ति णामेण इंदभूयत्ति गोयमो वंदिऊण विविहेण" । चं०प्र० १पा०॥

तत्कथाच -" इंदभूईणामो पंचखंडियसयपरिवारो सव्वप्पहाणो मगहा विसए सो य जन्नदीक्खितो मक्खितो य मज्झिमा य अच्छति इय उज्जाणो देवुज्जावं पासित्ता हरिसियमणो चिंतेऊणं भासति तेसिं पुरओ अहो मया मंतेहिं सुरा आहूया जे जन्ने समुवट्ठिता एवं वोत्तूणं खंडिगेहिसह निगतो उज्जाणे अ पासमाणो उत्तरपुरच्छिमे दिसि जाए देवसन्निवायं पासति भासति किमेतंति । अर्धेहिं से कहितं जहा एस सिद्धत्थरायपुत्तो महावीरवद्धमाणो तवं काउं केवली जाओ किन्न सव्वण्णू सव्वभावदरिसी तं वयणं सोओ भासति अमरसिथो को अन्नो ममाहिंतो अन्नहितो जस्स देवा एति ताहे वच्चामो जणं पराजिणमि किं सो जाणति एति ण पणिहाणेण पहावितो पंचखंडियसतपरिवारो वेदपदाणय अत्थो भगवता से कहितो एन्य समंतो संबुद्धो य भणइ पंचखंडियसते एस सव्वण्णु अहं पव्वयामि तुब्भे जाहिच्छितं करेहि ते भणंति जदि तुब्भे परिसगा होता पव्वयह तो अह का अन्ना गमित्ति एवं सो पचसयपरिवारो पव्वत्तितो । आ० चू० १ अ० ॥

ते हि देवाः स्वं यज्ञवाटं परिहृत्य समवसरणभावि निपातितवन्तः तांश्च तथा दृष्ट्वा लोकोऽपि तत्रैव जगाम भगवन्तं त्रिदशालोकेन पूज्यमानं दृष्ट्वा अतीव हर्षं चक्रे प्रवादश्च सञ्जातः । सर्वज्ञो ऽत्र समवसृतस्तं देवाः पूजयन्तीति। अत्रान्तरे खल्वाकर्णितसर्वज्ञप्रवादो ऽमर्षाध्मानन्द्र भूतिर्भगवन्तं प्रतिप्रस्थितः

"सोऊण कीरमाणिं महिमं देवेहिं जिणवरिंदस्स ॥
अह अइ माणीय, अमरिसिओ इंदभूयत्ति" ॥ १ ॥

श्रुत्वा जनपरंपरात् आकर्ण्य पात्रान्तरतो दृष्ट्वा वा महिमां पूजां देवैः क्रियमाणां जिनवरेन्द्रस्य भगवतो वर्द्धमानस्वामिनः अथास्मिन् प्रस्तावे एति आगच्छति भगवत्समीपं अहमेव विद्वानिति मानोऽस्येति अहं मानी अमर्षो मत्सरविशेष स सञ्जातोऽस्य सोऽमर्षित मयि सति कोऽन्यः सर्वज्ञ इत्यपनया. न्यय सर्वज्ञवादमित्यादिसकलयकृत्रिमविमान्तरात्मा कोऽसावित्याह । इन्द्रभूतिरितिनाम्ना प्रविन स च भगवत्समीपं प्राप्य भगवन्तञ्च चतुस्त्रिंशदतिशयसमन्वितं देवासुरनरेश्वरपारिवृतं दृष्ट्वा साशङ्कस्तत्रावस्थितो ॥

एतदेव सविस्तरं भाष्यकार आह ।

मोत्तूण ममं लोगो, किं वच्चइ तस्स पायमूलंमि ।
अन्नो वि जाणइ मए, ठियंमि कत्तो चियं एयं ॥

मां सकलशास्त्रपारगं मुक्त्वा किमेष लोकस्तस्य पादमूलं व्रजति नचासौ मदपेक्षया किमपि जानाति तथाहि मयि प्रतिवादिनि स्थिते अन्योऽपि किमपि जानातीति कौतस्त्यमेतत् । नैवैतत् सम्भवतीति भाव ॥

पुनरप्याह ॥

वच्चेज्ज व मुक्खजणो, देवा उ कहमणेण विम्हयं नीया ।
वंदंति संथुणंति य, जेण सव्वण्णुबुद्धीए ॥

व्रजेद्वा तत्पादमूलं मूर्खजनो मूर्खतया युक्तायुक्तविवेकविकलत्वात् देवास्तु कथमनेन विस्मयं नीता येन विस्मयनयनेन सर्वज्ञबुद्ध्या तं वन्दन्ते संस्तुवन्ति च ।

अहवा जारिसतोच्चिय, सो नाणी तारिसा सुरा ते वि ।
अणुसरिसो संजोगो, गामनडाणं च मुक्खाणं ॥

अथवा यादृश एव स ज्ञानी तेऽपि सुरास्तादृशा एव मूर्खा इत्यर्थः । ततोऽनुसदृशोऽनुरूपः संयोगस्तस्य ज्ञानिनः एतेषां च देवानाम् । कयोरिवेत्याह- ग्रामनटयोरिव मूर्खयोर्यथा ग्राम मूर्खो नटोऽपि तथाविधविद्याविकलत्वात् मूर्ख इति परस्परं तयोः संयोगोऽनुरूपमेवमेषोऽपीति ॥

काउं हयप्पयावं, पुरतो देवाण दाणवाणं च ।
नासेहं नीसेसं, खणेण सव्वन्नुवायं से ॥

देवानां च दानवानां च पुरतोऽस्य तथाविधप्रश्नजालैर्हतप्रताप कृत्वा क्षणमात्रेण ( से ) तस्य सर्वज्ञवाद निःशेषमह नाशयामि ॥

इय वोत्तूणं पत्तो, दट्ठूणतिलोकपरिवुडं वीरं ।
चोत्तिसातिसएहिं, स संकितो वट्ठितो पुरतो ॥

इति पूर्वोक्तमुक्त्वा प्राप्तो भगवत्समीपं दृष्ट्वा च भगवन्तं वीरं त्रैलोक्यपरिवृत चतुस्त्रिंशदतिशयनिधिं स शङ्कितः पुरतोऽवस्थितः ॥

अत्रान्तरे ।

आभट्ठो य जिणेणं, जाइजरामरणविप्पमुक्केणं ।
नामेण य गुत्तेण य, सव्वन्नू सव्वदरिसीणं ॥

आभाषितः सम्भाषितो जिनेन भगवता महावीरेण जातिः प्रसूतिर्जरावयोहानिलक्षणा मरणञ्च दशविधप्राणविप्रयोगरूपमेभिर्विप्रमुक्तस्तेन कथमाभाषित इत्याह नाम्ना हेइन्द्रभूते इत्येवंरूपेण तथा गोत्रेण च यथा हेगौतमगोत्र ! किं विशिष्टेन जिनेनेत्याह । सर्वज्ञेन सर्वदर्शिना, आह- यो जरामरणविप्रमुक्त स सर्वज्ञ एवेति गतार्थमिदं विशेषणमितिचेन्न तयथाऽपरिकल्पितजात्यादिविप्रमुक्तनिरासार्थत्वात् । तथाहि—कैश्चित् गुणविप्रमुक्तमोक्षवादिभिरचेतना मुक्त इष्यते ततस्तन्निरासार्थमुक्ते । सर्वज्ञेन सर्वदर्शिनेति इत्थं नामगोत्राभ्यां सम्भाषितस्य तस्य चिन्ताऽभवत् तथा चाह—

हे इंदभूइ गोयम ! सागयमुत्ते जिणेण चिंतेइ ।
सो मं पि मे वियाणइ अहवा को मं न याणाई ॥

हेइंद्रभूते ! गोतम ! स्वागतमिति जिनेनोक्ते स चिन्तयति अहो नामापि मे विजानाति अथवा सर्वत्र प्रसिद्धोऽहं को मां न जानाति ।

जइ वा हिययगयं मे, संसय मन्नेज्ज अहव च्छिंदेज्जा ।
तनो होज्ज विम्हतो मे, इय चिंततो पुणो भणिओ ॥

यदि मे हृद्गतं संशय मन्येत जानीयात् अथवा छिन्द्यादपनयेत् ततो मे विस्मयो भवेत् भविष्यति इति चिन्तयन् पुनरपि भगवता भाणितः । किं भणित इत्याह—

किंमन्ने अत्थि जीवो, उयाहु नत्थित्ति संसओ तुज्झ ।
वेयपयाण य अत्थं, न याणसी तेसिमो अत्थो ॥

हे गौतम ! किं मन्यसे अस्ति जीव उत नास्तीति नन्वयमनुचित एव संशयो यतो ऽयं संशयस्तव विरुद्धवेदपदश्रुतिनिबन्धन इति । तान्यमूनि वेदपदानि " विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय पुनस्तान्येवानुविनश्यति न प्रेत्यसंज्ञास्तीत्यादि " तथा स वै अयमात्मा ज्ञानमय इत्यादीनि च एतेषां च वेदपदानामयमर्थो भवतश्चेतसि विपरिवर्त्तते । विज्ञानमेव घनानन्दादिरूपत्वात् विज्ञानघनः स एव एतेभ्योऽध्यक्षतः परिच्छिद्यमानस्वरूपेभ्यः पृथिव्यादिलक्षणेभ्यो भूतेभ्यः समुत्थाय उत्पद्य पुनस्तान्येवानुविनश्यति तान्येव भूतानि अनुसृत्य विनश्यति तत्रैवाव्यक्तरूपतया संलीनो भवतीति भावः न प्रेत्यसंज्ञास्ति मृत्वा पुनर्जन्म प्रेत्येत्युच्यते तत्संज्ञास्ति न परलोकसंज्ञाऽस्तीति भावः । ततः कुतो जीवः युक्त्योपपन्नश्चायमर्थ इति ते मतिः यतो नासौ प्रत्यक्षेण परिगृह्यते अतीन्द्रियत्वात् नाप्यनुमानेन यतस्तल्लिङ्गलिङ्गिसम्बन्धपूर्वकञ्च । न चात्र लिङ्गिना सह सम्बन्धः प्रत्यक्षगम्यो लिङ्गिनोऽतीन्द्रियत्वात् । नाप्यनुमानगम्यो ऽनवस्थाप्रसक्तेस्तदपि हि लिङ्गलिङ्गिसम्बन्धग्रहणपूर्वकं तत्रापि चेयमेव वार्ता, इत्यनवस्थानुषङ्गः । नाप्यागमगम्यः परस्परविरुद्धार्थतया तथागमानां प्रमाणत्वाभावात् । तथाहि केचिदेवमाहुः 'एतावानेव लोकोऽयं, यावदिन्द्रियगोचरः । भद्रे वृकपदं पश्य यद्वदन्त्य बहुश्रुताः ।" इत्यादि । अपरे प्राहुर्नैरूपमीक्षवः पुरुषा इत्यादि पुरुषे रूपं निषेधयन्ति अन्तर्भूत आत्मेत्यर्थः अन्ये पुनरेवम् " अकर्ता निर्गुणो भोक्ता " इत्यादि । अपरे एवम् " स वै अयमात्मा ज्ञानमय इत्यादि, नचैते सर्व एव प्रमाणम् परस्परविरोधात् व्यर्थाभिधायकपरस्परविरुद्धवाक्यपुरुषव्रातवत् आत्मानं विना किमस्ति नास्तीत्ययं तवाभिप्रायः । तत्र वेदपदानां चार्थं न जानासि च शब्दात् युक्तिद्वयं च । तथाहि वेदपदानामयमर्थः विज्ञानघन एवेति ज्ञानोपयोगदर्शनोपयोगरूपं विज्ञानं ततोऽनन्यत्वात् आत्मा विज्ञानघनः प्रतिप्रदेशमनन्तविज्ञानपर्यायः सपातात्मकत्वात् वा विज्ञानघन एव शब्दोऽवधारणे विज्ञानघनादनन्यघनत्वात् विज्ञानघन एव एतेभ्यो भूतेभ्यः क्षित्युदकादिभ्यः समुत्थाय कथञ्चिदुत्पद्येति घटविज्ञानपरिणतो हि आत्मा घटाद्भवति तद्विज्ञानक्षयोपशमनस्य तत्रोक्षेपत्वात् अन्यथा निरालम्बनतया तस्य मिथ्यात्वप्रसक्तेरेव सर्वत्र भावनीयम् । तत उक्तं तेभ्यः समुत्थाय कथञ्चिदुत्पद्येति पुनस्तानेव भूतानि अनु विनश्यति ते विवक्षितेषु भूतेषु व्यवहितेषु वा आत्मापि तद्विज्ञानघनात्मना उपरमते अन्यविज्ञानात्मना उत्पद्यते यदि वा सामान्यचैतन्यरूपतयाऽवतिष्ठत इति न प्रेत्यसंज्ञास्ति न प्राक्तिकघटादिविज्ञानसंज्ञाऽवतिष्ठते । साम्प्रतविज्ञानोपयोगानिभ्रितत्वात् अथवा एव व्याख्या विज्ञानघन एवैतेभ्यो भूतेभ्य समुत्थाय पुनस्तान्येवानुविनश्यतीत्येतन्न यतः प्रेत्यसंज्ञास्ति परलोकसंज्ञास्ति । यदप्युक्तं नासौ प्रत्यक्षेण परिगृह्यते इति तदप्यसमीचीनमात्मनः प्रत्यक्षसिद्धत्वात्तद्गुणस्य ज्ञानस्य स्वसंवेदनप्रमाणसिद्धत्वात्तथाहि स्वसंविदिता एवावग्रहेहापायादय उदयन्ते लीयन्ते वा ततस्तद्गुणस्य स्वसंविदितत्वात् सिद्धमात्मनः प्रत्यक्षत्वम् । अथ ब्रवीष भूतगुणश्चैतन्यं तथा वेदेप्युक्तम् "एतेभ्यो भूतेभ्यस्समुत्थायेत्यादि" ततः कथं ज्ञानस्य स्वसंविदितत्वे ते आत्मनः प्रत्यक्षत्वं ज्ञानस्यात्मगुणत्वाभावात्–तदयुक्तम् भूतगुणत्वे सति पृथिव्याः काठिन्यस्येव सर्वत्र सर्वदा चोपलम्भप्रसङ्गात् । न च सर्वत्र सर्वदा चोपलभ्यते चैतन्यं लोष्टादौ मृतावस्थायां चानुपलम्भात् । अथ तत्रापि चैतन्यमस्ति केवलं शक्तिरूपेण ततो नोपलभ्यते तदसम्यग्विकल्पद्वयानतिक्रमात् सा हि शक्तिश्चैतन्याद्विलक्षणा उत चैतन्यमेव यदि विलक्षणा ततः कथमुच्यते शक्तिरूपेण चैतन्यमस्ति न हि पटे विद्यमाने पटरूपेण घटस्तिष्ठतीति वक्तुं शक्यं तथाचाहान्योऽपि "रूपान्तरेण यदि तत्तदेवास्तीति मा रटीः । चैतन्यादन्यरूपस्य भावे तद्विद्यते कथम् " । अथ द्वितीयः पक्षस्तर्हि चैतन्यमेव तत्कथमनुपलभ्यः आवृतत्वादनुपलम्भ इतिचेत्तत्त्वावृत्तिरावरणं तच्चावरणं किं भूतानां विवक्षितपरिणामाभाव-मुत परिणामान्तर-माहोस्विदन्यदेव भूतातिरिक्तं किञ्चित् । तत्र न तावद्विवक्षितपरिणामाभाव एकान्ततुच्छरूपतया तस्यावारकत्वायोगात् अन्यथा तस्याप्यतुच्छरूपतया भावरूपतापत्तिर्भावत्वे पृथिव्यादीनामन्यतमो भावो भवेत् "पृथिव्यादीन्येव भूतानि तत्त्वामिति वचनात्" पृथिव्यादीनि च भूतानि चैतन्यस्य व्यञ्जकानि नावारकाणीति कथमावारकत्वं तस्योपपत्तिमत्-अथ परिणामान्तरं तदयुक्तं परिणामान्तरस्यापि भूतस्वभावतया भूतवद्व्यञ्जकत्वस्योपपत्तेर्नावारकत्वस्य, अथान्यदेव भूतातिरिक्तं किञ्चित्–तदतीवासमीचीनम् । भूतातिरिक्ताऽभ्युपगमे चत्वार्येव पृथिव्यादीनि भूतानि तत्त्वमिति तत्त्वसंख्याव्याघातप्रसङ्गात् अपि चेद चैतन्यं प्रत्येकं वा भूतानां धर्मः समुदायस्य वा न तावत्प्रत्येकमनुपलम्भात् नहि प्रतिपरमाणुसंवेदनमुपलभ्यते । अपि च यदि प्रतिपरमाणुसंवेदनं भवेत्तर्हि पुरुषसहस्रचैतन्यवृन्दमिव परस्परं भिन्नस्वभावमिति नैकरूपं भवेत् । अथ चैकरूपमुपलभ्यते अहं पश्यामि अहं करोमीत्येवं सकलशरीराधिष्ठितानेकस्वरूपतयानुभवात् अथ समुदायस्य धर्मस्तदप्यसत्प्रत्येकमसत्समुदायेऽपि न भवति यथा रेणुषु तैलं स्यादेतन्मद्याङ्गेषु प्रत्येकं मदशक्तिरदृष्टापि समुदायेऽपि भवन्ती दृश्यते तद्वच्चैतन्यमपि भविष्यति को दोषः तदसम्यक् प्रत्येकमपि मद्याङ्गेषु मदशक्त्यनुयायिमाधुर्यादिगुणदर्शनात् तथाहि दृश्यते माधुर्यमिक्षुरसे धातकीपुष्पे च मनाक् विकलतोत्पादि, न चैवं चैतन्य सामान्यतोऽपि भूतेषु प्रत्येकमुपलभ्यते ततः कथं समुदाये तद्भवितुमर्हति मा प्रापत्सर्वस्य सर्वत्राभावप्रसक्तातिप्रसङ्गात् । किंच यदि चैतन्यं भूतधर्म्मत्वेन प्रतिपन्नं ततोऽवश्यमस्यानुरूपो धर्म्मः प्रतिपत्तव्यः आनुरूप्याभावे जलकाठिन्ययोरिव परस्परधर्मधर्म्मिभावोऽनुपपत्तः नच भूतानामनुरूपो धर्म्मी वैलक्षण्यात् तथाहि चैतन्यं बोधस्वरूपममूर्तं च भूतानि तद्विलक्षणानि ततः कथमेषां परस्परं धर्मधर्म्मिभावः । नापि चैतन्यमिदं भूतानां कार्यमत्यन्तविलक्षणतया कारणभावस्याप्ययोगात् तथा चोक्तम् " काठिन्यावोधरूपाणि, भूतान्यध्यक्षसिद्धितः । चेतना भगवद्रूपा सा कथं तत्फलं भवेत्" अपिच यदि भूतकार्यं चैतन्यं तर्हि किं न सकलमपि जगत् प्राणिमयं भवति परिणतिविशेषसद्भावाभावादिति चेन्ननु सोऽपि परिणतिविशेषसद्भावः सर्वत्रापि कस्मान्न भवति सोऽपि हि भूतमात्रनिमित्तक एव तत कथं तस्यापि क्वचित् कदाचिद्भावः । अन्यच्च स किंरूपः परिणतिविशेष इति वाच्यं कठिनत्वादिरूप इति चेत्तथाहि काष्ठादिषु दृश्यन्ते घुणादिजन्तवो जायमानास्ततो यत्र कठिनता-

दिविशेषस्तत्प्राणिमयं न शेषमिति तदप्यसत् व्यभिचारदर्शनात्तथाह्यविशिष्टेऽपि कठिनत्वादिविशेषे क्वचिद्भवन्ति क्वचिच्च कठिनत्वादिविशेषमन्तरेणापि संस्वेदजा नभसि च मूर्च्छिता जायन्ते किंच समानयोनिका अपि विचित्रवर्णसंस्थाना· प्राणिनो दृश्यन्ते। तथाहि—गोमयाद्येकयोनिसंभविनोऽपि केचिन्नीलजलवोऽपरे पीतकायाःअन्ये विचित्रवर्णा·संस्थानमप्येतेषां परस्परं विभिन्नं यदि भूतमात्रनिमित्तं चैतन्य ततएकयोनिकाः सर्वेऽप्येकवर्णसंस्थाना भवेयुर्न भवन्ति तस्मादात्मन एव तत्तत्कर्मवशात्तथा तथोत्पद्यन्ते इति। स्यादेतत् आगच्छन् गच्छन् वा आत्मा नोपलभ्यते केवल देहे सति संवेदनमुपलभामहे देहाभावे च तस्यामेवावस्थायां न, तस्मान्नात्मा किंतु संवेदनमात्रमेवैकं तच्च देहकार्यं देहे एव च समाश्रितं कुड्यचित्रवत् नहि चित्रं कुड्यविरहितमवतिष्ठते नापि कुड्यांतरं सङ्क्रामति आगमनं वा कुड्यांतरात् किंतु कुड्य एवोत्पन्नं कुड्य एव च विलीयते एवं संवेदनमपि तदप्यसत् आत्मा हि स्वरूपेणामूर्त आन्तरमपि शरीरमतिसूक्ष्मत्वान्न चक्षुर्विषयस्तदुक्तमन्यैरपि "अन्तरा भवदेहे पि सूक्ष्मत्वान्नोपलभ्यते। निष्क्रामन् प्रविशन्वात्मानाभावो नीक्षणादपि" तत आन्तरशरीरयुक्तोऽप्यात्मा आगच्छन्गच्छन्वा नोपलभ्यते लिंगतस्तूपलभ्यते। तथाहि कृमेरपि जन्तोस्तत्कालोत्पन्नस्याप्यस्ति निजशरीरविषयः प्रतिबन्धः उपघातमुपलभ्य पलायनदर्शनात् यश्च यद्विषयप्रतिबन्ध· स तद्विषयपरिशीलनाभ्यासपूर्वकस्तथादर्शनात् न खल्वत्यन्तापरिज्ञातगुणदोषवस्तुविषये कस्याप्याग्रह उपजायते ततो जन्मादौ शरीराग्रह· शरीरपरिशीलनाभ्यासजनितसंस्कारनिबन्धन इति। सिद्धमात्मनो जन्मान्तरादागमनं तथा च केचित्पठन्ति "शरीराग्रहरूपस्य नभसः संभवो यदा। जन्मादौ देहिनो दृष्ट किं न जन्मान्तरा गति· „॥ अथागतिः प्रत्यक्षतो नोपलभ्यते तत। कथमनुमानादवसीयते नैष दोषः अनुमेयविषये प्रत्यक्षवृत्तेरनभ्युपगमात् परस्परविषयपरिहारेण हि प्रत्यक्षानुमानयो· प्रवृत्तिरिष्यते ततः कथं स एव दोष·। आह च "अनुमेयेऽस्ति नाध्यक्षमिति कैवात्र दुष्टता। अध्यक्षस्यानुमानस्य विषयो विषयो न हि" अथ तज्जातीयेऽपि प्रत्यक्षवृत्तिमन्तरेण कथमनुमानमुदयितुमुत्सहते न खलु यस्याग्निविषया प्रत्यक्षवृत्तिर्महानसेऽपि नासीत्तस्यात्र क्षितिधरादौ धूमाद्धूमध्वजानुमानं भवति तदन्यसम्यक् अत्रापि तज्जातीये प्रत्यक्षवृत्तिर्भावात् तथा ह्याग्रहोऽन्यत्र परिशीलनाभ्यासप्रवृत्त· प्रत्यक्षत एवोपलब्धस्ततस्तदुपलम्भेनेहाप्यनुमानं प्रवर्तते उक्तं च "आग्रहस्तावदभ्यासात् प्रवृत्त मुपलभ्यते। अन्यत्राध्यक्षतः साक्षात्तनो देहेऽनुमा न किम्" यो पि च दृष्टान्त। प्रागुपन्यस्त सोऽप्ययुक्तो वैधर्म्यात् तथाहि चित्रमचेतनं गमनस्वभावरहितञ्च आत्मा च चेतनः कर्मवशाद्गत्यागती च कुरुते तत कथं दृष्टान्तदार्ष्टान्तिकयो· साम्यं ततो यथा कश्चिद्देवदत्तो विवक्षिते ग्रामे कतिपयदिनानि गृहारंभं कृत्वा ग्रामान्तरे गृहान्तरमास्थायावतिष्ठते तद्वदात्मापि विवक्षिते भवे देहं परिहाय भवान्तरे देहान्तरमारचय्यावतिष्ठते। यच्चोक्तम् तच्च संवेदनं देहकार्यमिति चाक्षुषादिकं संवेदनं देहाश्रितमपि कथञ्चित् भवतु चक्षुरादीन्द्रियद्वारेण तस्योत्पत्तिसंभवात् यत्तु मानसं तत्कथं न हि तद्देहकार्यमुपपत्तिमत् युक्त्ययोगात्। तथाहि तन्मानसं ज्ञानं देहादुत्पद्यमानमिन्द्रियरूपाद्वा समुद्भूयादनीन्द्रियरूपाद्वा केशनखादिलक्षणात्तत्र न तावदाद्यः पक्ष इन्द्रियरूपादुत्पत्ताविन्द्रियबुद्धिवद्वर्तमानार्थग्रहणमसक्ते· इन्द्रियं हि वार्तमानिक एवार्थे व्याप्रियते तत्सामर्थ्यादुपजायमानं मानसमपि ज्ञानं इन्द्रियज्ञानमिव वर्त्तमानार्थग्रहणपर्यवसितसत्ताकमेव भवेत् अथ यदा चक्षूरूपविषये व्याप्रियते तदा रूपे विज्ञानमुत्पादयति न शेषकाले ततस्तदपि विज्ञानं वर्त्तमानार्थविषयं वर्त्तमाने एवार्थे चक्षुषो व्यापारात्। रूप विषयव्याप्रीयभावे च मनोज्ञानं ततो न तत्प्रतिनियतकालविषयम् एवं शेषेष्वपि इन्द्रियेषु वाच्यम् ततः कथमिव मनोज्ञानस्य वर्त्तमानार्थग्रहणप्रसक्तिस्तदसाध्वीयो यत इन्द्रियाश्रितं तदुच्यते यदीन्द्रियव्यापारमनुसृत्योपजायते इन्द्रियाणां च व्यापार प्रतिनियते एव वार्तमानिके स्वस्वविषये मनोज्ञानमपि यदीन्द्रियव्यापाराश्रितं तत इन्द्रियज्ञानमिव वार्तमानिकार्थग्राहकमेव भवेत् अन्यथा इन्द्रियाश्रितमेव तत्र स्यात् तथा च केचित्पठन्ति "अक्षव्यापारमाश्रित्य भवदक्षजमिष्यते। तद्व्यापारो न तत्रेति कथमक्षभवं भवेत्।" अथानीन्द्रिय रूपादिति पक्षस्तदप्ययुक्तस्तस्याचेतनत्वात् नन्वचेतनत्वादिति कोऽर्थः यदीन्द्रियविज्ञानरहितत्वादिति तदिष्यते एव यदि नामेन्द्रिय विज्ञानं ततो न भवति मनोविज्ञानं तु कस्मान्न भवति। अथ मनोविज्ञानं नोत्पादयतीत्यचेतनत्वं तदा तदेव विचार्यमाणमिति प्रतिज्ञार्थैकदेशासिद्धो हेतु· तदप्यसत् अचेतनत्वादिति किमुक्तं भवति स्वनिमित्तविज्ञानैःस्फुरच्चिद्रूपतयानुपलब्धे स्पर्शादयो हि स्वस्वनिमित्तविज्ञानै· स्फुरच्चिद्रूपानुपलभ्यन्ते ततस्तेभ्यो ज्ञानमुत्पद्यते इति युक्त केशनखादयस्तु न मनोज्ञानेन तथा स्फुरच्चिद्रूपा उपलभ्यन्ते कथं तेभ्यो मनोज्ञानं भवतीति प्रतिध्यायन्तु सुधिय आह च "चेतयन्तो न दृश्यन्ते केशश्मश्रुनखादय·। ततस्तेभ्यो मनोज्ञानं भवतीत्यतिसाहसम्" अपि च यदि केशनखादिप्रतिबद्धं मनोज्ञानं ततस्तदुच्छेदे मूलत एव न स्यात् तदुपघाते चोपहतं भवेन्न च भवति तस्मान्नायं पक्षः क्षोदक्षम·। किंच मनोज्ञानस्य सूक्ष्मार्थनेतृत्वस्मृतिपाटवादयो विशेषा अन्वयव्यतिरेकाभ्यां व्यत्यासपूर्वका दृष्टा तथाहि तदेव शास्त्रमीहापोहादिप्रकारेण यदि पुनः पुन· परिभाव्यते तत· सूक्ष्मसूक्ष्मतरार्थावबोध उल्लसति स्मृतिपाटवं चापूर्वमुज्जृम्भते एवं चैकशास्त्रे अभ्यासत· सूक्ष्मार्थनेतृत्वशक्तौ पाटवशक्तौ चोपजातायामन्येष्वपि शास्त्रांतरेषु अनायासेनैव सूक्ष्मार्थावबोध· स्मृतिपाटवं चोल्लसति तदेवमभ्यासहेतुकाः सूक्ष्मार्थनेतृत्वादयो मनोज्ञानस्य विशेषदृष्टा·। अथच कस्यचिदिह जन्माभ्यासव्यतिरेकेणापि दृश्यन्ते ततोऽवश्यं पारलौकिकाभ्यासहेतुका इति प्रतिपत्तव्य कारणेन सह कार्यस्यान्यथानुपपन्नत्वप्रतिबन्धेन दृष्टतत्कारणस्यापि तत्कार्यत्वविनिश्चिते·। ततः सिद्ध· परलोकयायी जीव·। सिद्धे च तस्मिन् परलोकयायिनि यदि कथाचिदुपकारी चाक्षुषादेर्विज्ञानस्य देहो भवेत् न कश्चिद्दोष क्षयोपशमहेतुतया देहस्यापि कथंचिदुपकारित्वाभ्युपगमात्. नचैतावता तन्निवृत्तौ सर्वथा तन्निवृत्ति नहि वह्नितापादितविशेषो घटो वह्निनिवृत्तौ समूलोच्छेदं निवर्त्तते केवल विशेष एव कश्चनापि यथा सुवर्णस्य द्रवता एवमिहापि देहनिवृत्तौ ज्ञानविशेष एव कोऽपि तत्प्रतिबद्धो निवर्त्तते न पुन· समूलं ज्ञानमपि यदि पुनर्देहमात्रनिमित्तकमेव विज्ञानमिष्यते देहनिवृत्तौ च निवृत्तिमत् तर्हि देहस्य तस्य भस्मावस्थायां मा भूत्तद्देहे तु तथाभूते एवावतिष्ठमाने मृतावस्थायां कस्मान्न भवति प्राणापानयोरपि हेतुत्वात्तद

भावे न भवतीति चेन्न प्राणापानयोर्ज्ञानहेतुत्वायोगात् ज्ञानादेव च तयोरपि प्रवृत्तिस्तथाहि यदि मन्दौ प्राणापानौ विवक्षुमिष्यते ततो मन्दौ भवतः दीर्घौ चेत्तर्हि दीर्घाविति यदि पुनर्देहमात्रनिमित्तौ प्राणापानौ प्राणापाननिमित्तं च विज्ञानं तर्हि नेत्यमिच्छावशात् प्राणापानप्रवर्त्तमाना दृष्टप्राणापाननिमित्तं च यदि विज्ञानं ततः प्राणापाननिर्ह्रासातिशयसंभवे विज्ञानस्यापि निर्ह्रासातिशयौ स्याताम् अवश्यं हि कारणे परिहीयमाने अभिवर्द्धमाने च कार्यस्यापि हानिरुपचयश्च भवति यथा महति मृत्पिण्डे महान् घटोऽल्पे चाल्पीयान् अन्यथा कारणमेव तत्र स्यात् भवतः प्राणापाननिर्ह्रासातिशयसंभवे विज्ञानस्यापि विनिर्ह्रासाविशयौ, विपर्ययस्यापि भावात् मरणावस्थायां प्राणापानातिशयसंभवेऽपि विज्ञानस्य ह्रासदर्शनात् । स्यादेतत् तत्तदानीं वातपित्तादिभिर्दोषैर्देहस्य विगुणीकृतत्वात् प्राणापानातिशयसंभवेऽपि चैतन्यस्यातिशयसंभवोऽत एव मृतावस्थायामपि चैतन्यं देहस्य विगुणीकृतत्वात् तदसमीचीनतरमेवं सति मृतस्यापि पुनरुज्जीवनप्रसक्तेः । तथाहि मृतस्य दोषाः समीभवन्ति समीभवनं च दोषाणामवसीयते ज्वरादिविकारादर्शनात् समत्वं चारोग्यं तथाचाहुर्वृद्धाः "तेषां समत्वमारोग्यं क्षयवृद्धी विपर्ययः" इति । आरोग्यलाभत्वाद्देहस्य पुनरुज्जीवनं भवेत् अन्यथा चेह कारणमेव चेतसो न स्यात् तद्विकाराभावाभावानुविधानात् एवं हि देहकारणता विकारस्याश्रेया स्यात् यदि पुनरुज्जीवनं भवेत् स्यादेतदयुक्तमिदं पुनरुज्जीवनप्रसंगापादनं यतो यद्यपि दोषा देहस्य वैगुण्यमाधाय निवृत्तास्तथापि न तत्कृतस्य वैगुण्यस्य निवृत्तिः न हि दहनकृतो विकारः काष्ठे दहनविनिवृत्तौ निवर्त्तमानो दृष्टः तदयुक्तमिह हि क्वचित्किंचिदनिवर्त्यं विकारारम्भकम् । यथा वह्निः काष्ठे श्यामतामात्रमपि वह्निना कृतं काष्ठे वह्निनिवृत्तौ निवर्त्तते किंचित्पुनः क्वचिन्निवर्त्त्यविकारारम्भकं यथा स एवाग्निः सुवर्णे तथाहि अग्निना क्रमात्सुवर्णं भवति अग्निनिवृत्तौ निवर्त्तते तत्र वातादयो दोषा निवर्त्यं विकारारम्भकाश्चिकित्साप्रयोगदर्शनात् । यदि पुनरनिवर्त्यं विकारारम्भका भवेयुस्तर्हि नतद्विकारनिवर्त्तनाय चिकित्सा विधीयेत वैफल्यप्रसंगात् न च वाच्यं मरणात् प्राग्दोषा अनिवर्त्त्यविकारारम्भका मरणकाले च निवर्त्यविकारा इति एकस्य एकत्रैव निवर्त्यानिवर्त्त्यविकारारम्भकत्वायोगात् । न ह्येकमेव तत्रैव निवर्त्त्यविकारारम्भकं चानुभवितुमर्हति तथा दर्शनात् । ननु द्विविधो हि व्याधिः साध्योऽसाध्यश्च । तत्र साध्यो निवर्त्यस्वभावस्तमेव चाधिकृत्य चिकित्सा फलवती असाध्योऽनिवर्त्तनीयः न च साध्यासाध्यभेदो न वा व्याधिद्वैविध्यमप्रतीतं सकललोकप्रसिद्धत्वात् व्याधिश्च दोषेण कृतस्ततः कथं दोषाणां निवर्त्यानिवर्त्यविकारारम्भकत्वमनुपपन्नमिति तदप्यसत् भवन्मते साध्यासाध्यव्याध्यनुपपत्तेस्तथाह्यसाध्यता व्याधेः क्वचिदायुःक्षया च तथाहि तस्मिन्नेव व्याधौ समानेऽप्यौषधवैद्यसंपर्के काश्चिन्म्रियते कश्चिन्न कश्चित्पुनः प्रतिकूलकर्मोदयात् प्रतिकूलकर्मोदयजनितो हि श्वित्रादिव्याधिरौषधसहस्रैरपि कश्चिदसाध्यो भवति एतच्च द्विविधमपि व्याधेरसाध्यत्वमर्हतामेव मते संगच्छते न भवतो भूतमात्रतत्त्ववादिनः क्वचित्पुनरसाध्यो व्याधिर्दोषकृतविकारनिवर्त्तनसमर्थौषधस्याभावात् वैद्यस्य वा वैद्यौषधसंपर्काभावे हि व्याधिः प्रसर्पन् सकलमप्यायुरुपक्रमते न तु वैद्यौषधसंपर्काभावादेवास्माकमपि पुनरुज्जीवनं भविष्यति न हि तदस्ति किञ्चिदौषधं वैद्यो वा यत्पुनरुज्जीवयति तदप्ययुक्तं वैद्यौषधौ हि दोषविकारनिवर्त्तनार्थमिष्येते न पुनरत्यन्तासतश्चैतन्यस्योत्पादनार्थं तथाभ्युपगमात् दोषकृताश्च विकारा मृतावस्थायां स्वयमेव निवृत्ता ज्वरादेरदर्शनात्ततः किं वैद्यौषधान्वेषणेनेति तदवस्थ एव पुनरुज्जीवनप्रसंगः । अपि कश्चिद्दोषाणामुपशमेऽप्यकस्मान्म्रियते कश्चिच्चातिदोषदुष्टत्वेऽपि जीवति तदेतद्भवन्मते कथमुपपत्तिमर्हति तथा च केचिदूचुः "दोषस्योपशमेऽप्यस्ति मरणं कस्यचित्पुनर्जीवनं दोषदुष्टत्वेऽप्येतन्न स्याद्भवन्मते" अर्हतां तु शासने यावदायुः कर्म्म विजृम्भते तावद्दोषैरतिपीडितोऽपि जीवति आयुःकर्म्मक्षये च दोषाणामधिकृतावपि म्रियते तन्न देहमात्रकारणं संवेदनम् । अन्यच्च देहः कारणं संवेदनस्य सहकारिभूतं वा भवेदुपादानभूतं वा यदि सहकारिभूतं तदिष्यत एव देहस्यापि क्षयोपशमहेतुतया कथंचिद्विज्ञानहेतुत्वाभ्युपगमात् । अथोपादानभूतं तदयुक्तमुपादानं हि तत्तस्य यद्विकारेणैव यस्य विकारो यथा मृद्घटस्य न च देहविकारेणैव विकारः संवेदस्य देहाविकाराभावेऽपि भयशोकादिना तद्विकारदर्शनात् तत्र देहउपादानं संवेदनस्य तथा च पठन्त्युपादानलक्षणमपरे अधिकृत्य हि यद्वस्तुना यः पदार्थो विकार्यते उपादानं तत्तस्य युक्तं गोगवयादिवत् एतेन यदुच्यते मातापितृचैतन्यमेतच्चेतनस्योपादानमिति तदपि प्रतिक्षिप्तं तत्रापि तद्विकारे विकारित्वं तदविकारे वा विकारित्वमिति नियमादर्शनात् । अन्यच्च यत् यस्योपादानं तत्तस्मादभेदेन व्यवस्थितं यथा मृदो घटः मातापितृचैतन्यं सुतचैतन्यस्योपादानं ततः सुतचैतन्यं मातापितृचैतन्यादभेदेन व्यवतिष्ठेत न व्यवतिष्ठते तस्माद्यत्किञ्चिदेतत् तत्र भूतधर्मो भूतकार्यं वा चैतन्यं किंचात्मनो गुण इति तद्गुणस्य प्रत्यक्षसिद्ध आत्मा अनुमानसिद्धश्च तच्चानुमानमिदं रूपादीन्द्रियाणि विद्यमानप्रयोजकानि कर्म्मकरणत्वे सति ग्राह्यग्राहकरूपत्वात् यः कर्म्मकरणे सति ग्राह्यग्राहकरूपस्सद्विद्यमानप्रयोजको यथा शदंशो यः पिण्डे कर्मकरणरूपाणि च सन्ति ग्राह्यग्राहकरूपाणि रूपादीन्द्रियाणि ततो विद्यमानप्रयोजकानीति नचेन्द्रियाणां स्वत उपलम्भकत्वं येन रूपादिग्रहणं प्रति तेषां कर्तृत्वमेवोपगम्येत न करणत्वमचेतनत्वेन स्वत उपलम्भकत्वायोजनात् तथा चात्र प्रयोगः यदचेतनं तन्नोपलब्धृ यथा घटोऽचेतनानि च द्रव्येन्द्रियाणि न चायमसिद्धो हेतुः यतः खलु द्रव्येन्द्रियाणि निर्वृत्त्युपकरणरूपाणि निर्वृत्त्युपकरणे च पुद्गलमये पुद्गलमयं च सर्वमचेतनं पुद्गलानां काठिन्यावबोधरूपतया चैतन्यं प्रति धर्म्मित्वायोगात् धर्म्मानुरूपो हि सर्वत्रापि धर्म्मी यथा काठिन्यं प्रति पृथिवी यदि पुनरनुरूपत्वाभावेऽपि धर्म्मधर्मिभावो भवेत् ततः काठिन्यजलयोरपि सम्भवेत् तन्न भवति तस्मादचेतनाः पुद्गलाः तथाचोक्तं "वाहसनावममुत्तं, विसयपरिच्छेयगं च चेयन्नं । विवरीयसहावाणि य, भूयाणि जगप्पसिद्धाणि ॥ १ ॥ ता धम्मधम्मिभावो, कहमेसिं अणुब्भवगामेय । अणुरूवत्ताभावे, काढिन्नजलाण किं न भवे ॥२॥ ततः स्वत उपलम्भकत्वाभावात् रूपादिग्रहणं प्रतीन्द्रियाणां करणभाव एव न कर्तृभाव इति स्थितम् । अथ चेदमनुमानं स भोक्तृकमिदं शरीरं भोग्यत्वात् स्थालस्थितौदनवत् भोग्यता च शरीरस्य जीवेन तथा निरसता भुज्यमानत्वात् द्वयोरपि च प्रयोगयोः साध्यसाधनप्रतिबन्धासिद्धदृष्टान्ते प्रत्यक्षप्रमाणसिद्धेति नोक्तलिङ्गलिङ्गी सत्वग्राहकरूपदोषावकाशः । आगमगम्योऽप्येष जीवः तथा चागमः "अणिंदियगुणं जीवं, दुन्नेयं मंसचक्खुणा । सिद्धा पस्सन्ति

सव्वन्नू, नाणसिद्धा य साहुणो" अत्र ज्ञानसिद्धा साधवो भवस्थकेवलिनः शेषं सुगमम् नचागमानां परस्परविरुद्धार्थतया सर्वेषामप्यप्रामाण्यमभ्युपेयं सर्वज्ञमूलस्यावश्यं प्रमाणत्वेनाभ्युपगमार्हत्वादप्यसम्यक् प्रमाणाप्रमाणविभागापरिज्ञाने प्रेक्षावतां कृतिप्रसङ्गात् । अथ कथमेतत् प्रत्येयं यथायमागमः सर्वज्ञमूल इति उच्यते—यदुक्तोऽर्थः प्रत्यक्षेणानुमानेन वा न बाध्यते नापि पूर्वापरव्याहतः सोऽवसीयः सर्वज्ञप्रणीतोऽन्यस्य तथारूपत्वासम्भवात् ततस्तस्माद्यसिद्धं तत्सर्वं सुसिद्धम् । उक्तञ्च " दिट्ठेण इट्ठेण य, जमि विरोहो न हुज्ज कहिं वि । सो आगमतत्तो ज, नाणं तं सम्मनाणं ति ॥ ततः प्रत्यक्षानुमानागमप्रमाणसिद्धत्वाद्धिदपदप्रतिष्ठितत्वाच्च सौम्य ! अस्ति जीव इति प्रतिपत्तव्यम् ॥ आ० म० द्वि० ॥ ( इह वेद पदोपन्यासस्तेन वेदानां प्रमाणत्वेनाङ्गीकृतत्वात् ) । आहच—

छिन्नंमि समयंमि, जाइजरामरणविप्पमुक्केणं ।
सो समणो पव्वइओ पंचहिं सह खंडियसएहिं ॥

उक्त प्रमाणेन जिनेन भगवता वर्द्धमानस्वामिना जरामरणाभ्यामुक्तलक्षणाभ्यां विप्रमुक्त इव विप्रमुक्तः तेन छिन्ने निराकृते शशये स इन्द्रभूतिः पंचभिः खण्डिकशतैः छात्रशतैः सह श्रमणः प्रव्रजितः सन् साधु सवृत्त इत्यर्थः । आ० म० द्वि० । आव० ॥ अ० चू० ।

कल्पसुबोधिन्यामिन्द्रभूतेः कथा विस्तरेण एवं प्रतिपादिता यदा भगवान् महावीरो विहरन् अपापापूर्यां महसेनवने जगाम तत्र च यज्ञं कारयतः सोमिलविप्रस्य गृहे बहवो ब्राह्मणाः मिलिता ( कल्प० ) अन्येऽपि उपाध्याय शङ्कर ईश्वर शिवजी जानी गङ्गाधर महीधर भूधर लक्ष्मीधर श्रीधर पिण्ड्या विष्णु मुकुन्द गोविन्द पुरुषोत्तम नारायण डुवे श्रीपति उमापति विद्यापति गणपति जयदेव व्यास महादेव शिवदेव गङ्गापति गौरीपति त्रिवाडी श्रीकण्ठ नीलकण्ठ हरिहर रामजी रावल मधुसूदन नरसिंह कमलाकर जोसी पूनो रामजी शिवराम इत्यादयो मिलिताः सन्ति अत्रान्तरे च भगवन्नमस्यार्थं मागच्छत सुरासुरान् विलोक्य ते अचिन्तयन् अहो यज्ञस्य महिमा यदेते सुराः साक्षात्समागताः अथ तान् यज्ञमण्डप विहाय प्रभुपार्श्वे गच्छतो विज्ञाय द्विजा विषण्णास्ततोऽमी सर्वज्ञं वन्दितु यान्ति इति जनश्रुत्या श्रुत्वा इन्द्रभूतिः सामर्षश्चिन्तयामास । अहो मयि सर्वज्ञे सत्यपि अपरोऽपि स्व सर्वज्ञ ख्यापयति दु श्रवमेतत् कर्णकटु कथ नाम श्रूयते । किं च कदाचित्कोऽपि मूर्ख केनापि धूर्तेन वञ्च्यते अनेन सुरा अपि वञ्चिता यदेव यज्ञमण्डप विहाय तत्समीप गच्छन्ति । अथवा यादृशोऽय सर्वज्ञस्तादृशा एवैते सुरा अनुरूप एव सयोग यत —

" पद्यानुरूपमिन्दि–न्दिरेण माकन्दकेसरो मुखरः ।
अपि च पिचुमन्दमुकुल–मौकुलिकुलमाकुल मिलति " ॥१॥
( तथापि नाहमेतस्य सर्वज्ञाटोप सहे )
यत । व्योम्नि सूर्यद्वय किं स्या–दुहायां केसरिद्वयम् ।
प्रत्याकारे च खड्गौ द्वौ, किं सर्वज्ञावह स च ॥ २ ॥

ततो भगवन्तं वन्दित्वा प्रतिनिवर्त्तमानान् सोपहासं जनान् पप्रच्छ भो भो दृष्ट स सर्वज्ञ कीदृश किंस्वरूप इति जनैस्तु " यदि त्रिलोकी गणनापर स्या–त्तस्याः समाप्तिर्यदि नायुषः स्यात् ॥ पारेपरार्ध्यं गणित यदि स्यात्, गुणेयनिश्शेषगुणोऽपि स स्यात् ॥ १ ॥

इत्याद्युक्ते सति स दध्यौ ॥

नूनमेष महाधूर्तो मायायाः कुलमंदिरम् ॥
कथं लोकसमस्तोऽपि विभ्रमे पातितोऽमुना " ॥२॥
न क्षमे क्षणमात्र तु त सर्वज्ञ कदाचन ॥
तमस्तोममपाकर्तुं सूर्यो नैव प्रतीक्षते ॥ ३ ॥
वैश्वानरः करस्पर्श केशरोल्लुञ्चन हरिः ॥
क्षत्रियश्च रिपुक्षेत्रं न सहन्ते कदाचन ॥ ४ ॥

गता गौडदेशोद्भवा दूरदेश भयाज्जर्जरा गौर्जरास्त्रासमीयुः । मृता मालवीयास्तिलाङ्गास्तिलङ्गो–द्भवा जज्ञिरे पण्डिता मद्भयेन „ ॥५ ॥ अरे लाटजाताः क याताः प्रणष्टाः प्रदिष्टा अपि द्राविडा व्रीडवार्ता ॥ अहो वादिलिप्सातुरे मय्यमुस्मिन्, जगत्युत्कटे वादिशुर्भिक्षमेतत् ॥ ६ ॥ " तस्य ममाग्रे कोऽसौ, वादी सर्वज्ञमानमुद्वहति ॥ इति तत्र गन्तुमुक्तं, तमग्निभूतिर्जगादेवम् „ ॥ ७ ॥ " किं तत्र वादिकीटे, तव प्रयासेन यामि बन्धोऽहम् ॥ कमलोन्मूलनहेतो–र्नेतव्य किं सुरेन्द्रगजः „ ॥ ॥ ८ ॥ अकथयदथेन्द्रभूतिर्यद्यपि मद्भ्रातृजय्य एवासौ । तदपि प्रवादिनाम श्रुत्वा स्यातु न शक्नोमि ॥ ९ ॥ चित्रं चैव त्रिजगति सहस्रशो निर्जिते मया वादे ॥ क्षिप्रचटस्याल्यामिव कङ्कुदुकोऽसौ स्थितो वादी ॥ १० ॥

अस्मिन्नजिते सर्वं जगज्जयोद्भूतमपि यशो नश्येत् ।
अल्पमपि शरीरस्थ शल्य प्राणान् वियोजयति ॥ ११॥
छिद्रे स्वल्पेऽपि पोतः किं, पाथोधौ न निमज्जति ।
एकस्मिन्निष्टके कृष्टे, दुर्ग सर्वोऽपि पात्यते ॥ १२ ॥

इत्यादि विचिन्त्य विरचितद्वादशतिलकः स्वर्णयज्ञोपवीतभूषितः स्फारपीताम्बराडम्बरः कैश्चित्पुस्तकपाणिभिः कैश्चित् कमण्डलुपाणिभिः कैश्चिद्दर्भपाणिभिः सरस्वतीकण्ठाभरण वादिविजयलक्ष्मीशरण–वादिमदगञ्जनवादिमुखभञ्जन–वादिगजसिंह–वादीश्वरसिंह–वादिसिंहाष्टापद–वादिविजयविशद–वादिवृन्दभूमिपाल–वादिशिरिकाल–वादिकदलीकृपाण–वादितमभान–वादिगोधूमघरट्टमर्दित–वादिमरट्ट वादिघटमुद्गर–वादिघूकभास्कर–वादिसमुद्रागस्ति–वादितरून्मूलनहस्ति–वादिसुरेन्द्र–वादिगरुडगोविन्द–वादिजनराज–वादिकंसकृष्ण–वादिहरिणहरि–वादियूथमल्ल–वादिहृदयशल्य–वादिगणजीवक–वादिशलभप्रदीपक–वादिचक्रचूडामणि–पण्डितशिरोमणि–विजितानेकवादिसरस्वतीलब्धप्रसाद इत्यादिविरुदवृन्दमुखरितदिक्चक्रैः पंचभिश्छात्रशतैः परिवृत इन्द्रभूतिर्वीरसमीप गच्छश्चिन्तयामास । अहो धृष्टेनानेन किमेतत् कृतम् । यदह सर्वज्ञाटोपेन प्रकोपितः

यतः " समीरान्निमुखस्थेन, दवाग्निर्ज्वालितोऽमुना ।
कपिकच्छूलता देह–सौख्यायालिङ्गिता ननु ॥ १ ॥ "
( किं मेतेन अधुना निरुत्तरीकरोमि यत )
तावद्गर्जति खद्योतस्तावद्गर्जति चन्द्रमाः ।
उदिते तु सहस्रांशौ न, खद्योतो न चन्द्रमाः ॥ २ ॥
सारङ्गमातङ्गतुरङ्गपूगाः पलाय्यतामाशु वनादमुष्मात् ॥
साटोपकोपस्फुटकेशरश्रीर्मृगाधिराजोऽयमुपेतवान् यत्॥३
मम भाग्यवशादेष, वादाय समुपस्थित ॥
अद्य तां रसनाकण्डू–मपनेष्ये विनिश्चितम् ॥४ ॥
लक्षणे मम दक्षत्व साहित्ये सहिता मतिः ॥
तर्के कर्कशतात्यर्थं क शास्त्रे नास्ति मे श्रम ॥ ५ ॥
अजेय किमु वज्रस्य, किमसाध्य महात्मनां ॥
क्षुधितस्य न किं खाद्य किं न वाच्य खलस्य च ॥ ६ ॥

तथा ममापि त्रैलोक्य-जित्वरस्य महौजसः ॥
अजेयं किमिवास्तीह तद्गच्छामि जयाम्यमुम् ॥ ७ ॥
इत्यादि चिन्तयन् प्रभु-मवेक्ष्य सोपानसंस्थितो दध्यौ ।
किं ब्रह्मा किं विष्णुः सदाशिवः शङ्करः किं वा ॥ ८ ॥
चन्द्रः किं स न यत्कलङ्ककलितः सूर्योऽपि नो तीव्ररुक्
मेरुः किं न स यन्नितान्तकठिनो विष्णुर्न यत् सोऽसितः ॥
ब्रह्मा किं न जरातुरः स च जराभीरुर्न यत्सोऽतनु-
र्ज्ञातं दोषविवर्जिताखिलगुणाकीर्णोऽन्तिमस्तीर्थकृत् ॥ ९ ॥
हेमसिंहासनासीनं सुरराजनिषेवितम् ॥
दृष्ट्वा वीरं जगत्पूज्यं चिन्तयामास चेतसि ॥ १० ॥
कथं मया महत्त्वं हा, रक्षणीयं पुरार्जितम् ॥
प्रासादं कीलिकाहेतो-र्भङ्क्तुं को नाम वाञ्छति ॥ ४ ॥
एकेन वाजितेनापि मानहानिस्तु का मम ॥
जगज्जैत्रस्य किं नाम करिष्यामि च सांप्रतम् ॥ ५ ॥
अविचारितकारित्वं महो मे मन्दबुद्धिता ॥
जगदीशावतारं य-ज्जेतुमेनं समागतः ॥ ६ ॥
अस्याग्रेऽहं कथं वक्ष्ये पार्श्वे यास्यामि वा कथम् ॥
सङ्कटे पतितोऽस्मीति शिवा रक्षतु मे यशः ॥ ७ ॥
कथञ्चिदपि भाग्येन चेद्भवेदत्र मे जयः ॥
तदा पण्डितमूर्द्धन्यो भवामि भुवनत्रये ॥ ८ ॥
इत्यादि चिन्तयन्नेव सुधामधुरया गिरा ॥
आभाषितो जिनेन्द्रेण नामगोत्रोक्तिपूर्वकम् ॥ ९ ॥
हे गोतमेन्द्रभूते त्वं सुखेनागतवानसि ॥
इत्युक्ते ऽचिन्तयद्वेत्ति नामापि किमसौ मम ॥ १० ॥
जगत्त्रितयविख्यातं को वा नाम न वेत्ति माम् ॥
जनस्याबालगोपालं प्रच्छन्नः किं दिवाकरः ॥ ११ ॥
प्रकाशयति गुप्तं चेत्संदेहं मे मनःस्थितम् ॥
तदा जानामि सर्वज्ञ-मन्यथा तु न किंचन ॥ १२ ॥
चिन्तयन्तमिति प्रोचे प्रभुः को जीवसंशयः ॥
विभावयसि नो वेद पदार्थं शृणु तान्यथ ॥ १३ ॥
समुद्रो मथ्यमानः किं गङ्गापूरोऽथवा किमु ॥
आदिब्रह्मध्वनिः किं वा वीरे वेदध्वनिर्विभौ ॥ १४ ॥

वेदपदानि च " विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्यसंज्ञास्तीति " त्वं तावदेतेषां पदानामर्थमेवं करोषि यत् विज्ञानघनो गमनागमनादिचेष्टावान् आत्मा एतेभ्यो भूतेभ्यः पृथिव्यप्तेजोवाय्वाकाशेभ्यः समुत्थाय प्रकटीभूय मद्याङ्गेभ्यो मदशक्तिरिव ततस्तानि भूतान्येव अनुविनश्यति तत्रैव विलयं याति जले बुद्बुद इव ततो भूतातिरिक्तस्य आत्मनो-ऽभावात् न प्रेत्यसंज्ञाऽस्तीति मत्वा पुनर्जन्म नास्तीति । परमयुक्तोऽयमर्थः शृणु तावदेतेषामर्थम् । विज्ञानघन इति कोऽर्थः विज्ञानघनो ज्ञानदर्शनोपयोगात्मकं विज्ञानं तन्मयत्वादात्माऽपि विज्ञानघनः प्रतिप्रदेशं प्रदेशमनन्तज्ञानपर्यायात्मकत्वात् स च विज्ञानघन उपयोगात्मक आत्मा कथञ्चिद्भूतेभ्यस्तद्विकारेभ्यो वा घटादिभ्यः समुत्तिष्ठते उत्पद्यत इत्यर्थः । घटादिज्ञानपरिणतो हि जीवो घटादिभ्य एव हेतुभूतेभ्यः भवति घटादिज्ञानपरिणामस्य घटादिवस्तुसापेक्षत्वात् । एवं च एतेभ्यो भूतेभ्यो घटादिवस्तुभ्यस्तत्तदुपयोगरूपतया जीवः समुत्थाय समुत्पद्य तान्येव अनुविनश्यति कोऽर्थः तस्मिन् घटादौ वस्तुनि नष्टे च्यवते वा जीवो ऽपि तदुपयोगरूपतया नश्यति अन्योपयोगरूपतया उत्पद्यते सामान्यरूपतया अवतिष्ठते ततश्च न प्रेत्यसंज्ञाऽस्ति कोऽर्थः न प्राक्तनी घटाद्युपयोगरूपा संज्ञा भवति इते वर्तमानोपयोगेन तस्या नाशितत्वादिति । अपरं च स वै अयमात्मा ज्ञानमय इत्यादि, तथा ददद्कोऽर्थः दमो दानं दया इति दकारत्रयं यो वेत्ति स जीवः किंच विद्यमानभोक्तृकमिदं शरीरं भोग्यत्वात् ओदनादिवत् इत्याद्यनुमानेनापि । तथा " क्षीरे घृतं तिले तैलं काष्ठे ऽग्निः सौरभं सुमे । चन्द्रकान्ते सुधा यद्व-त्तथात्माप्यङ्गतः पृथक् " ॥ एवं च प्रभुवचनैश्छिन्नसंदेहः श्रीइन्द्रभूतिः पञ्चशतपरिवारः प्रव्रजितः । तत्क्षणाच्च " उप्पन्नेइ वा १ विगमेइ वा २ धुवेइ वा ३ इति " प्रभुदत्तात्त्रिपदीं प्राप्य द्वादशाङ्गीं रचितवान् । कल्प० ॥

इन्द्रभूतिवर्णको यथा–

**तेणं कालेणं तेणं समएणं समणस्स भगवओ महावीरस्स जेट्ठे अंतेवासी इंदभूती णामं अणगारे गोयमगोत्तेणं सत्तुस्सेहे समचउरंससंठाणसंठिए वज्जरिसहनारायसंघयणे कणगपुलगणिघसपम्हगोरे उग्गतवे दित्ततवे तत्ततवे महातवे उराले घोरे घोरगुणे घोरतवस्सि घोरबंभचेरवासी उच्छूढसरीरे । संखित्तविउलतेउलेस्से चउद्दसपुव्वी चउणाणोवगए सव्वक्खरसण्णिवाती समणस्स भगवओ महावीरस्स अदूरसामंते उड्ढंजाणू अहोसिरे झाणकोट्ठोवगए संजमेणं तवसा अप्पाणं भावेमाणे विहरइ ॥**

( तेणमित्यादि ) तेन कालेन तेन समयेन श्रमणस्य भगवतो महावीरस्य ( जेट्ठेत्ति ) प्रथमः ( अन्तेवासित्ति ) शिष्यः अनेन पदद्वयेन तस्य सकलसंघनायकत्वमाह ( इंदभूएत्ति ) इन्द्रभूतिरिति मातृपितृकृतनामधेय ( नामति ) विभक्तिविपरिणामात् नाम्नेत्यर्थः अन्तेवासी किल विवक्षया श्रावकोऽपि स्यादित्यत आह । ( अणगारत्ति ) नास्त्यगारं विद्यते इत्यनगारः अयञ्चावर्णीतगोत्रोऽपि स्यादित्यत आह ( गोतमगोत्तेणति ) गौतमसगोत्र इत्यर्थः । अयञ्च तत्कालोचितदेहमानपेक्षया न्यूनाधिकदेहोऽपि स्यादित्यत आह ( सत्तुस्सेहेत्ति ) सप्तहस्तोच्छ्रयः अयच लक्षणहीनोऽपि स्यादित्यत आह ( समचउरंससंठाणसंठिएत्ति ) सम नामेरुपरि अधश्च सकलपुरुषलक्षणोपेतावयवतया तुल्यं तच्च तच्चतुरस्रं च प्रधानं समचतुरस्रमथवा समाः शरीरलक्षणोक्तप्रमाणा विसंवादिन्यश्चतस्रोऽश्रयो यस्य तत्समचतुरस्रम् । अश्रयस्त्विह चतुर्दिग्भागोपलक्षिताः शरीरावयवा इति । अन्ये त्वाहुः -समा अन्यूनाधिकाश्चतस्रोऽप्यश्रयो यत्र तत् समचतुरस्रम् अश्रयश्च पर्यङ्कासनोपविष्टस्य जानुनोरन्तरम् आसनस्य ललाटोपरिभागस्य चान्तरं दक्षिणस्कन्धस्य वामजानुनश्चान्तरं वामस्कन्धस्य दक्षिणजानुनश्चान्तरमिति अन्ये त्वाहुर्विस्तारोत्सेधयोः समत्वात् समं चतुरस्रं तच्च तत्संस्थानं चाकारः समचतुरस्रसंस्थानं तेन संस्थितो व्यवस्थितो यः स तथा । अयं च हीनसंहननोऽपि स्यादित्यत आह ( वज्जरिसहणारायसंघयणेत्ति ) इह संहननमस्थिसञ्चयविशेषः वज्रादीनां लक्षणमिदम्—
" रिसहो य होइ पट्टो, वज्जं पुण कीलियं वियाणाहि । उभओ मक्कडबंधो णारायं तं, वियाणाहि त्ति " तत्र वज्रं च तत्कीलिकाकीलितकाष्ठसम्पुटोपमसामर्थ्ययुक्तत्वात् । ऋषभश्च लोहादिमयपट्टवत्काष्ठसम्पुटोपमसामर्थ्यान्वितत्वात् । वज्रर्षभः स चासौ नाराचं च उभयतो मर्कटबन्धनियन्त्रकाष्ठसम्पुटोपम

सामर्थ्योपेतत्वात् वज्रर्षभनाराचं तत्संहननमस्थिसञ्चयविशेषोऽनुत्तमसामर्थ्यायोगाद्यस्यासौ वज्रर्षभनाराचसंहननः । अन्ये तु कीलिकादिमत्त्वमस्थ्नामेव वर्णयन्ति अयञ्च निन्द्यवर्णोऽपि स्यादित्यत आह (कणयपुलयनिघसपम्हगोरे) कनकस्य सुवर्णस्य (पुलगत्ति) यः पुलको लवस्तस्य यो निकषः कषपट्टके रेखालक्षणः तया ( पम्हत्ति ) पद्मपद्माणि केसराणि तद्वद्गौरो यः स तथा । वृद्धव्याख्या तु-कनकस्य न लोहादेर्य पुलकसारो वर्णातिशयस्तत्प्रधानो यो निकषो रेखा तस्य यत्पक्ष्म बहुलत्वं तद्वद्गौरो यः स तथा अथवा कनकस्य य पुलकोद्भूतत्वे सति विन्दुस्तस्य निकषो वर्णतः सदृशो य स तथा ( पम्हत्ति ) पद्मं तस्य चेह प्रस्तावात्केसराणि गृह्यन्ते ततः पद्मवद्गौरो य स तथा । तत पदद्वयस्य कर्मधारयः अयञ्च विशिष्टचरणरहितोऽपि स्यादित्यत आह ( उग्गतवेत्ति ) उग्रमप्रधृष्यं तपोऽनशनादि यस्य स उग्रतपाः यदन्येन प्राकृतपुंसा न शक्यते चिन्तयितुमपि तद्विधेन तपसा युक्त इत्यर्थः ( दित्ततवेत्ति ) दीप्तं जाज्वल्यमानदहन इव कर्मवनगहनदहनसमर्थतया ज्वलितं तपो धर्मध्यानादि यस्य स तथा (तत्ततवेत्ति) तप्तं तपो येनासौ तप्ततपाः एव हि तेन तत्तपस्तप्तं येन कर्माणि सन्ताप्यन्ते न तपसा स्वात्माऽपि तपोरूपः सन्तापितो यतोऽन्यस्यास्पृश्यमिव जातमिति ( महातवेत्ति ) आसंशादोषरहितत्वात् प्रशस्ततपाः ( उरालेत्ति ) भीम उग्रादिविशेषणविशिष्टतपःकरणात्पार्श्वस्था नामल्पसत्त्वानां भयानक इत्यर्थः। अन्ये त्वाहुः ॥ ( उरालेत्ति ) उदारः प्रधानः ( घोरेति ) घोरो निर्घृण परिषहेन्द्रियादिरिपुगणविनाशमाश्रित्य निर्दय इत्यर्थः ॥ अन्ये त्वात्मनिरपेक्ष घोरमाहुः ( घोरगुणेत्ति ) घोरा अन्यैर्दुरनुचरा गुणा मूलगुणादयो यस्य स तथा ( घोरतवस्सित्ति )घोरैस्तपोभि स्तपस्वीत्यर्थः (घोरबंभचेरवासित्ति) घोर दारुणमल्पसत्त्वैर्दुरनुचरत्वाद्यद्ब्रह्मचर्यं तत्र वस्तुं शीलं यस्य स तथा ( उच्छूढसरीरेत्ति ) उच्छूढं उज्झितमिवोज्झितं शरीर येन तत्संस्कारत्यागात्स तथा ( संखित्तविउलतेयलेसेत्ति ) संक्षिप्त शरीरान्तर्लीनत्वेन न्हस्वतां गता विपुला विस्तीर्णा अनेकयोजनप्रमाणक्षेत्राश्रितवस्तुदहनसमर्थत्वात्तेजोलेश्या विशिष्टतपोजन्यलब्धिविशेषप्रभवा तेजोज्वाला यस्य स तथा । मूलटीकाकृता तु ( उच्छूढसरीरसंखित्तविउलतेयलेसेत्ति ) कर्मधारयं कृत्वा व्याख्यातमिति ( चउद्दसपुव्वित्ति ) चतुर्दश पूर्वाणि विद्यन्ते यस्य तेनैव तेषां रचितत्वादसौ चतुर्दशपूर्वी अनेन तस्य श्रुतकेवलितामाह स चावधिज्ञानादिविकलोऽपि स्यादत आह (चउनाणोवगएत्ति) केवलज्ञानवर्जनज्ञानचतुष्कसमन्वित इत्यर्थ उक्तविशेषणद्वययुक्तोऽपि कश्चिन्न समयश्रुताविषयव्यापिज्ञानो भवति चतुर्दशपूर्वविदां षट् स्थानकपतितत्वेन श्रवणादित्यत आह-( सव्वक्खरसन्निवाइत्ति ) सर्वे च ते अक्षरसन्निपाताश्च तत्संयोगा सर्वेषां वाक्षराणां सन्निपाताः सर्वाक्षरसान्निपातास्ते यस्य ज्ञेयतया सन्ति स सर्वाक्षरसन्निपाती । श्राव्याणि वा श्रवणसुखकारीणि अक्षराणि साकल्येन नितरां वदितुं शीलमस्येति श्राव्याक्षरसन्निवादी स च एव गुणविशिष्टो भगवान् विनयराशिरिव साक्षादिति कृत्वा शिष्याचारत्वाच्च ( समणस्स भगवओ महावीरस्स अदूरसामंते विहरतीति ) योग स्यात् दूरं च विप्रकृष्टं सामन्तश्च सन्निकृष्ट तन्निषेधाददूरसामन्तं तत्र नातिदूरे नातिनिकट इत्यर्थः । किंविध सस्तत्र विहरती त्यत आह ( उड्ढंजाणुत्ति ) ऊर्ध्वे जानुनी यस्यासावूर्ध्वजानुः । शुद्धपृथिव्यासनवर्जनादौपग्रहिकनिषद्याया अभावाच्चोत्कुटुकासन इत्यर्थः ( अहोसिरेत्ति ) अधोमुखो नोर्ध्व तिर्यग्वा विक्षिप्तदृष्टिः किंतु नियतभूभागनियमितदृष्टिरिति भावः ॥ ( झाणकोट्ठोवगएत्ति ) ध्यानं धर्म्यं शुक्लं वा तदेव कोष्ठः कुसूलो ध्यानकोष्ठस्तमुपगतस्तत्र प्रविष्टो ध्यानकोष्ठोपगतो यथाहि कोष्ठके ध्यानं प्रक्षिप्तमविप्रसृतं भवत्येवं स भगवान् ध्यानतो विप्रकीर्णेन्द्रियान्तःकरणवृत्तिरिति ( संजमेणंति ) संवरेण ( तवसत्ति ) अनशनादिना चशब्दः समुच्चयार्थो लुप्तोऽत्र द्रष्टव्यः संयमतपोग्रहणं चानयोः प्रधानमोक्षाङ्गत्वख्यापनार्थं प्रधानत्वं च संयमस्य नवकर्मानुपादानहेतुत्वेन तपसश्च पुराणकर्मनिर्जरणहेतुत्वेन भवति चाभिनवकर्मानुपादानात् पुराणकर्मक्षपणाच्च सकलकर्मक्षयलक्षणो मोक्ष इति ॥ ( अप्पाणं भावेमाणे विहरइ इति ) आत्मानं वासयंस्तिष्ठतीत्यर्थः । भ० १ श० १ उ० । चंद० ॥ पद्मग्रहणेन पद्मकेसराण्युच्यन्ते अवयवे समुदायोपचारात् यथा देवदत्तस्य हस्ताग्ररूपोऽवयवोऽपि देवदत्तः तथा च देवदत्तस्य हस्ताग्रस्पृष्ट्वा लोको वदति देवदत्तो मया स्पृष्ट इति. । सू० प्र० पा० चन्द० ( गणधर शब्देऽस्य मातापितृपुरादीनि )

इंदभेसज-इन्द्रभेषज- न० इन्द्रेण प्रकाशितं भेसजम् । शुण्ठ्याम् । शब्दरत्न० । वाच० ।

इंदमह-इन्द्रमह- पु० इन्द्रः शक्रस्तस्य मह प्रतिनियतदिवसभावी उत्सव इन्द्रमहः । प्रतिनियतदिवसभाविनि इन्द्रसन्तोषार्थे महोत्सवरूपे महामहभेदे, । जी० ३ प्र० । ज० । ज्ञा० आचा० । रा० । "इंदमहेइ वा" । भ० श० ए उ० ३३ विपा० । इंदमहो आसोयपुण्णिमाए भवतीति । आ० चू० अ० ४ ॥ आव० । स्था० । प्रव० । नि० चू० । " इदाइमहापायं पइनियया ऊसवा होंति" ॥ उत्सवाः प्रायः प्रतिनियता वर्षमध्ये प्रतिनियतभाविन इन्द्रादिमहा इति । आ० म० प्र० । अयंच भरतकालादेव प्रवृत्त इति । आ० म० प्र० ( प्रवृत्तिकारणमिंदज्झया शब्दे ) ।

इंदमहकामुग-इन्द्रमहकामुक-पु० इन्द्रमहे वर्षादिकाले कामुकः कामयिता । कुक्कुरे, वर्षादावेव तेषां व्यवायधर्म्मो लोकप्रसिद्धः । वाच० ॥

इंदमुद्धाभिसित्त-इन्द्रमूर्द्धाभिषिक्त-पु० पक्षैकपक्षस्य पञ्चदशदिवसेषु स्वनामख्याते सप्तमे दिवसे, "इंदमुद्धाभिसित्तेय" च० १० पाहु० । ज्यो० । ज० ॥

इंदय-इन्द्रक-पु इन्द्रशब्दार्थे, स्या. ६ ठा० ।

इंदयणिरय-इंद्रकनिरय-पु० निरयेन्द्रकमहानिरये,स्या. ६ठा० ।

इंदराय-इन्द्रराज-पु. इन्द्रे, । "घणसमए इंदरायस्स" ति० ॥

इंदलट्ठि-इन्द्रयष्टि-स्त्री० इन्द्रकेतौ, निव्वत्तमहेव्व इंदलट्ठी विमुक्कसंधिबंधणा ॥ ज्ञा० १ अ० ॥

इंदवज्जा-इन्द्रवज्रा-स्त्री० स्यादिन्द्रवज्रा यदि तौ जगौ गः उक्ते द्वादशाक्षरपादके वर्णवृत्तभेदे, वाच० । वृत्तर० ॥

इंदवंसा-इन्द्रवंशा-स्त्री० स्यादिन्द्रवंशा ततजैरसयुतै वृत्तर० उक्ते द्वादशाक्षरपादके वर्णवृत्तभेदे, वाच ॥

इंदवसु-इन्द्रवसु-स्त्री० पांचालदेशस्थकांपिल्यनगरनिवासिब्रह्मदत्तस्य भार्यायाम् । उत्त० १३ अ० ॥

पाठो युक्त इति चेदुच्यते । विचित्रत्वात्सूत्रगतेरित्थं निर्देशो ऽर्थतस्तु यथा त्वयोक्त तथैव द्रष्टव्यम् । अपरस्त्वाह । यद्बद्धं तत्स्पृष्ट भवत्येव विशेषवन्धे सामान्यवन्धस्यान्तर्भाघात् तत किं स्पृष्टग्रहणेनेति तदयुक्त सकलश्रोतृसाधारणत्वाच्छास्त्रारम्भस्य प्रपञ्चितज्ञानग्रहार्थमर्थापत्तिगम्यार्थाभिधाने ऽप्यदोपादिति चतुरिन्द्रिय त्वप्राप्तमेव विषय गृह्णातीत्याह "रूव पुण पासइ अपुट्ठं त्विति" रूप कर्मतापन्न च चक्षुरस्पृष्टमप्राप्तमेव पश्यति पुन शब्दस्य विशेषणार्थत्वादस्पृष्टमपि योग्यदेशस्थमेव पश्यति नायोग्यदेशस्थसौधर्मादिकटकुड्यादिव्यवहित वा घटादीति निर्युक्तिगाथार्थ ॥

अथ तद्व्याख्यानाय भाष्यम् ।

पुट्ठं रेणुं व तणुम्मि, बद्धमप्पीकयं पएसेहिं ।
भिक्काइं चिय गिण्हइ, सद्दव्वाइजुत्ताइं ॥
बहुसुहुमभावुगाइं, जं पडुयरयं व सोत्तविण्णाण ।
गंधाइ दव्वाइ, विवरीयाइ जओ ताइ ॥
फरिसाणन्तरमत्तर, मत्तप्पए समीसीकयाइ ।
घेप्पति पडुयरविणाइं ज च न घाणाइकरणाइ ।
स्पृष्टमित्यस्य व्याख्यानम् ॥

( पुट्ठरेणु व तणुम्मित्ति ) । यथा रेणोस्तनौ संवन्ध इत्येतावन्मात्रेण यद्वस्तु सवद्ध तदिह स्पृष्टमुच्यत इति भाव ॥ ( बद्धमित्यादि ) यदात्मीकृतमात्मना गाढतरमागृहीतमात्मप्रदेशैस्तनुलग्नतोयवन्मिश्रीभूत तद्बद्धमुच्यते इत्यर्थ ॥ तत्र ( भिक्काइं चि ) अतिस्पृष्टान्येव शब्दद्रव्याणि गृह्णाति श्रोत्र यतस्तानि वहूनि सूक्ष्माणि भावुकानि च वासकानि चेत्यर्थ । पटुतर च श्रोत्रविज्ञान गन्धादिद्रव्याणि तु विपरीतानि स्तोकवादराभावुकानि यतोऽतस्तानि स्पर्शानन्तरमात्मप्रदेशैर्मिश्रीकृतानि स्पृष्टवद्धानि गृह्यन्ते । घ्राणादिभिः पटुतरविज्ञानानि च न भवन्ति यतो घ्राणादिकारणानीतिगाथात्रयार्थ । अथ रूव पुण पासइ अप्पुट्ठत्वित्यत्रोपपत्तिमाह ।

" अप्पत्तकारिनयण, णेय नयणस्स विसयपरिमाण । आयंगुलेण लक्खं, अइरित्त जो अणाणतु " प्रागुक्तयुक्त्या अप्राप्तकारि अप्राप्तस्यैव वस्तुनः परिच्छेदकारि यतो नयन मनश्च ततो ऽस्पृष्टमेव रूप पश्यति नयनेन्द्रियम् । विशे० ( अधिक तु विस्तरभयान्न प्रपञ्च्यते तत्तुतत्रैव द्रष्टव्यम् )

( ८ ) सम्प्रतीन्द्रियाणाम्प्रविष्टाप्रविष्टविषयचिन्तां कुर्वन्नाह ॥

पविट्ठाइं भंते ! सद्दाइं सुणेइ अपविट्ठाइं सद्दाइं सुणेइ ? गोयमा ! पविट्ठाइं सद्दाइं सुणेइ नो अपविट्ठाइं सुणेइ एवं जहा पुट्ठाणि तहा पविट्ठाणि ॥

( सद्दाइं इत्यादि ) पाठसिद्ध नवरं स्पर्शस्तनौ रेणोरिवाऽपि भवति । प्रवेशो मुखे कवलस्येवेति शब्दार्थस्य भिन्नत्वात् भिन्नविषयता स्पृष्टप्रविष्टसूत्राणामिति–प्रज्ञा० १५ पद० ।

( ९ ) श्रोत्ररसनादिचतुरिन्द्रियाणा प्राप्यकारित्वं नयनमनसोस्त्वप्राप्यकारित्वम् ।

प्राप्यकारीणीन्द्रियाण्यप्राप्यकारीणिवेति तत्र प्राप्यकारीण्येवेति कणभक्षाक्षपादमीमांसकसाङ्ख्या समारयान्ति । चक्षु श्रोत्रेतराणि तानि तथेति ताथागता । चक्षुर्वर्जानीति तु तथा स्याद्वादावदातहृदया । तत्र प्रथमे प्रमाणयन्ति ।

चक्षु प्राप्य मतिं करोति विषये वाह्येन्द्रियत्वादितो ।
यद्वाह्येन्द्रियतादिना परिगतं तत्प्राप्यकारीक्षित ॥
जिह्वावत् प्रस्न तथा च विदित तस्मात्तथा स्वीयतां ।
नाऽत्रासिद्धिमुखश्च दूषणकणस्तल्लक्षणानीक्षणात् ॥ १॥

अद्रिचन्द्रकलनेषु या पुन–र्यौगपद्यधिषणा मनीषिणाम् ।
पद्मपत्रपटलीविलोपव-त्सत्वरोदयनिवन्धनैव सा ॥२॥
प्रथमतः परिसृत्य शिलोच्चयं निकटत क्षणमीक्षणमीक्षते ।
तदनु दूरतराम्बरमण्डली तिलककान्तमुपेत्य सितत्विषम् ३
कुम्र्महेऽत्र वयमुत्तरकेलीं कीदृशी दृगिह धर्म्मिनयोक्ता ।
किन्तु मांसमयगोलकरूपा सूक्ष्मताभृदपरा किमु काऽपि ॥४॥
आदिमा यदि तदापि किमर्था लोचनानुसरणव्यसनी स्यात् ।
लोचनं किमुत वस्तुनि गत्वा सस्पृशोत्प्रिय इव प्रणयिन्याम् ।५।
प्रत्यक्षवाधः प्रथमप्रकारे प्राकारपृथ्वीधरसिन्धुरादि. ।
सलक्ष्यते पक्ष्मपुटोपदंकी प्रत्यक्षकाले कलयाऽपि नो यत् ॥६॥
पक्षेऽपरत्राऽपि स एव दोषः सर्पन्न वस्तु प्रतिवीक्ष्यतेऽक्षि ।
ससर्प्पणे वाऽस्य सकोटरत्वप्राप्त्यापुमान् किंन जरद्रुम स्यात् ।

चक्षुष सूक्ष्मतापक्षे सूक्ष्मता स्यादमूर्तता ।
यद्वाल्पपरिमाणत्व-मित्येषा कल्पनाद्वयी ॥ ८ ॥

स्याद्व्योमवद्व्यापकता प्रसक्त्या सर्वोपलम्भः प्रथमप्रकारे । प्राकारकान्तारविहारहार मुख्योपलम्भो न भवेद्वितीये ।९। न खलु न खलु शास्त्रस्वप्रमाणात्प्रथिष्ठे पटकटशकटादौ भेदकारि प्रसिद्धम् । अथ निगदसि तस्मिन् रस्मिचक्र क्रमेण, प्रसरति तत एतत्स्यादनल्पप्रकाशम् ॥ १० ॥ तथाहि-प्रोद्दाममाणिक्यकणानुकारी दीपाङ्कुरास्त्विद्रपटलीप्रभावात् । किं नैव कश्मीरजकज्जलादीन्प्रथीयसोऽपि प्रथयत्यशेषान् ॥ ११ ॥ नन्वेवमध्यक्षनिराक्रिया स्यात्पक्षे पुरस्तादुपलक्षितेऽस्मिन् । प्रौढप्रभामण्डलमण्डितोऽर्थो नाभासते यत्प्रतिमा समान ॥ १२ ॥ अथाप्यनुद्भूततया प्रभाया पदार्थसंपर्कजुषोप्यनीक्षा । सिद्धिस्तदानीं कथमस्तु तस्या ब्रवीषि चेत्तैजसताख्यहेतो. ॥ १३ ॥ रूपादिमध्ये नियमेन रूपप्रकाशकत्वेन च तैजसत्वम् । प्रभाषसे चक्षुषि संप्रसिद्धं यथा प्रदीपाङ्कुरविद्युदादौ ॥ १४ ॥ तदिदं घुसृणविमिश्रणमधुरन्ध्रीकपोलपालीनाम् । अनुहरते व्यभिचाराद्रूपक्षणसन्निकर्षेण १५ ॥ ऽन्यत्वरूपेऽपि विशेषणे स्या–द्धेतोरनैकान्तिकताञ्जनेन । तस्यापि चेत्तैजसतां तनोषि, तन्वादिना किन्तु तदाऽपराद्धम् ॥१६॥ सौवीरसौवर्चलसैंधवादि निश्चिन्वते पार्थिवमेव धीरा. क्षमानुभावोपगमोऽस्य तस्मा–द्युक्त एव प्रतिमात्यमीषाम् ॥ १७ ॥ तथाच–सौवीरसौवर्चलसैन्धवादिक स्यादाकरोद्भूतिवशेन पार्थिवम् । मृदादिवन्न व्यभिचारवेतन चामीकरेणानुगुण निरीक्ष्यते ॥ १८ ॥ चामीकरादेरपि पार्थिवत्व लिंगेन तेनैव निवेदनीयम् । शाब्दप्रमाणेन न चाऽत्रवाधा पक्षस्य यन्नास्ति तदत्र सिद्धम् ॥ १९ ॥ अञ्जनं मरिचरोचनादिक पार्थिवं ननु तवापि सम्मतम् । अञ्जनेऽपि तदमी प्रवृत्तिमा–नप्रयोजकविरुध्यमस्वरी ॥ २० ॥ हनूमल्लोललांगूल–लम्बाप्त साधनादत । न सिद्धिस्तैजसत्वस्य दृष्टसुस्पष्टदूषणात् ॥ २१ ॥ चक्षुर्न तैजसमभास्वरनिम्नभावादम्भोवदित्यनुमितिप्रतिषेधनाच्च ! सिद्धिं दधाति नयनस्य न तैजसत्वं तस्मादमुष्य घटते किमु रश्मिवत्ता ॥२२ ॥ अपिच प्रत्यक्षवाध समलक्षि पक्षे न रश्मयो यद्दृशि दृष्टपूर्वा । तथा च शास्त्रेण तथैव कालात्ययापदिष्टेऽप्युद्धपादि हेतो ॥ २३ ॥ अनुद्भवद्रूपतया भवेयुश्चेदृश्मयस्तत्र ततो न दोष । नन्वेवमेतस्य पदार्थसार्थप्रकाशकत्वं न सुवर्णवत् स्यात् ॥ २४ ॥ आलोकसाचिव्यवशात्तथास्य प्रकाशकत्व घटनामियर्ति । नन्वेवमेतत्साचिवस्य किं स्यात्प्रकाशकत्व न कुटीकुटादे २५ ।

अथास्तु काम ननु तैजसत्व-मुक्तेर्जितं किं न भवेत्त्वयास्य । तथा च मन्यस्त्वदुरुक्त एषो-ऽद्वैतप्रवादोऽजनि तैजसत्वे ॥ २६ उत्पद्यन्ते तरणिकिरणश्रेणिसम्पर्कतश्चे-त्तत्रोद्भूताः सपदि रुचयो लोचने रोचमानाः । यदुगृह्णन्ते न खलु तपनालोकसम्प्रतान-स्तस्मिन्हेतुर्भवति हि दिवा दीपभासामभासः ॥२७॥ अत्रेयं प्रतिक्रिया-मुग्रिग्राह्य कुवलयदलश्यामलिम्नाऽविलिप्ते स्फीते ध्वान्ते स्फुरति चरतो घूककाकोदराद्ये । किं लक्ष्यंते क्षणमपि रुचो लोचनेनैव यस्मादालोकस्य प्रसरणकथा काचिदप्यत्र नास्ति ॥२८॥ उत्पत्तिरुक्तततयाय तासां तत्रैव यत्रास्ति रवि प्रकाशः । काकोदराद्येरपि तर्हि नैताः कीटप्रकाशे कुशला भवेयुः ॥ २९ ॥ अविरलतिमिरव्यतिकर-परिकरितापवर कोदरे क्वचन । वृषदंश दृशि न दृष्टा मरीचयः किमु कदाचिदथ ॥ ३० ॥ अत एव विलोकयन्ति सम्य-क्तिमिराङ्कुरकरालितेऽपि कोणे । मृषकपरिपन्थिन पदार्थान् ज्वलनालोकविजृम्भणं विनैव ॥ ३१ ॥ अत्रोत्तरम्-चाकचिक्यप्रतीभास-मात्रमत्रास्ति वज्रवत् । नांशवः प्रसरन्त स्तु, प्रेक्ष्यन्ते सूक्ष्मका अपि ॥ ३२ ॥ मार्जारस्य यदीक्षण प्रणयिन केचिन्मयूखा सखे विद्येरन् न तदा कथ निशि भृशं तच्चक्षुषा प्रेक्षिते । प्रोन्मीलत्करपुञ्जपिञ्जरतनौ संजातवन्युन्दरे प्रोज्जृम्भेत तथापि हन्त धिषणा दीपप्रदीपाश्रया ॥ ३३ ॥ कृशानरनया तेषां नोचेद्धूदेति मतिस्तव प्रभवति कथ तस्याप्यस्मिन्नसौ निरपत्रपा । घटननिपुणा साक्षात्प्रेक्षाविधौ हि ततिस्त्विषां न खलु न समा धीमन् ! सा चोभयत्र विभाव्यते ॥ ३४ ॥ अमूदृगमूर्पिकारिणां तस्मादस्ति स्वयोग्यता । यया तमस्यपीक्षन्ते, न चक्षुरश्मिवत्पुनः ॥३५॥ इत्थं न चक्षुषि कथंचिदपि प्रयाति, संसिद्धिपद्धतिमियं खलु रश्मिवत्ता । तस्मात्कथं कथय तार्किकचक्षुषः स्यात् प्राप्यैव वस्तुनि मति प्रतिबोधकत्वम् ॥ ३६॥ बहिरर्थग्रहोन्मुख्यं यदि कारणजन्यता । स्यायिन्द्रिया वहिर्देशे किं बाह्येन्द्रियता भवेत् ॥ ३७ ॥ तथाद्रिमायां भिदि चेतसा स्या-द्देतस्य हेतोर्व्यभिचारचिह्नम् अप्राप्यकारि प्रकरोति यस्मान्मन्दाक्षिनी मन्दरबुद्धिमेनत् ॥ ३८ ॥ दोष स एवोत्तरकल्पनायां यदात्मन पुद्गल एव बाह्य । चेतश्च तस्माद्रुपजायमान मेतद्धि कारणजन्यताभृत् ॥ ३९ ॥ चेतः सनातननया कलितस्यरूप सर्वांपकृष्टपरिमाणपवित्रित च । प्रायः प्रिय प्रणयिनीप्रणयातिरेका-देतत्करोति हृदये ननु तर्कतज्ज्ञा ॥४०॥ एतदत्र वितनोक्रियमाण मस्तुतेनरक्षित्र प्रतिभाति । विस्तराय च भवेदिति चिन्त्यं तद्विलोक्य गुरुगुम्फितवृत्तिम् ॥ ४१ ॥ पक्षे तृतीये विषयप्रदेश शरीरदेशो यदि वा वहि स्यात् । स्यायिचमाद्य विषयाश्रितत्वं यद्वा प्रवृत्तिर्विषयोन्मुखी स्यात् ॥ ४२ ॥ प्राचीनपक्षे प्रतिवाद्यसिद्धि घनङ्कपङ्क समुपैति हेतो । स्याद्वादिना यत्प्रतिवादिनास्य नाङ्गीकृतं मयमसमाश्रितत्वम् ॥ ४३ ॥ पक्षे तथा साधनशून्यतास्मिन् दृष्टान्तदोष प्रकट पटूनाम् । जिह्वेन्द्रिय नार्थ मसमाश्रित य-द्विलोकयामासुरमी कदाचित् ॥ ४४ ॥ द्वितीयकल्पे क्रियमौ प्रवृत्ति-र्याभिमुख्येन विसर्पण स्यात् ॥ आश्रित्य हि या विषयप्रपञ्च-प्रतीतिसंपत्प्रतिबोधकत्वम् न्द्रियाः ॥४५ ॥ पक्षे पुरस्कारिणि सिद्धिबन्ध्य स्यात्साधनं जैनमतानुसारेण । यस्मान्न तत्रोचितरश्मिचक्र-मर्हन्ति वस्तुदर्शनप्रभृतत्वात् ॥ ४६ ॥ निदर्शनस्य स्फुटमेव दृष्ट वैकल्यमत्रैव हि साधनेन । पदार्थसार्थं प्रति यन्नसर्पज्जिह्वेन्द्रियं केनचिदिष्टपूर्वम् ॥ ४७ ॥ पक्षान्तरे तु व्यभिचारमुद्रा किं चेतसा नैव समुज्जजृम्भे । यस्मात्तदप्राप्यसुपर्वशैलस्वर्गे समुत्पादयति प्रतीतिम् ॥४८॥ शरीरस्य वहिर्देशे स्यायित्व यदि जल्प्यते । बाह्येन्द्रियत्वमत्र स्यात्संदिग्धव्यभिचारिता ॥ ४९ ॥ अप्राप्तार्थपरिच्छेदे नापि सार्द्धं न विद्यते । हेतोर्वा ह्येन्द्रियत्वस्य विरोधो वत कश्चन ॥ ५० ॥ क्वचित्साध्यनिवृत्त्या तु हेतुव्यावृत्तिदर्शनात् प्रतिबन्धप्रसिद्धिश्चेत्तदात्रापि कथ न सा ॥ ५१ ॥ रसन-स्पर्शन-घ्राणश्रोत्रान्येन्द्रियता बलात् । चक्षुरप्राप्यविज्ञातृ-मनोवत् प्रतिपाद्यताम् ॥ ५२ ॥ साध्यव्यावृत्तितोऽत्रापि हेतुव्यावृत्तिरीक्षता । नच कश्चिद्विशेषोऽस्ति, यैनैकत्रैव सा मता ॥ ५३ ॥ बाह्येन्द्रियत्व सकलङ्कमेव न तार्किकान् प्रीणयितुं तदीष्टे । भ्रूविभ्रमो दुर्भगगामिनीनां वैदग्ध्यभाजो भजते न चेतः ॥ ५४ ॥ किंचात्र ससूचितमादिशब्दाद् वृत्ते पुरस्कारिणि कारकत्व । यत्प्राप्यकारित्वसमर्थनाय नेत्रस्य तत्काणदृगञ्जनाभम् ॥५५॥ यस्मादिदं मन्त्रजपोपसर्प-व्योद्दामरामाव्यभिचारदोषात् । उच्चालवेतालकरालकेलि-कलंकितश्रीकामिवावज्राति ॥५६॥ तथाहि । कनकानिकषस्निग्धां मुग्धां मुहुर्मधुरस्मितां चटुलकुटिलभ्रूविभ्रान्तिं कटाक्षपटुच्छटाम् । त्रिजगति गतां कश्चिन्मंत्री समानयति क्षणात्तरुणरमणीमारान्मन्त्रान्मनोभुवि संस्मरन् ॥५७॥ कश्चिदत्र गदति स्म यत्पुनर्मन्त्रमन्त्रणगवीसमानयेत् । युक्तमेव मदिरेक्षणादिकं तेन नाभिहितदूषणोदयः ॥ ५८ ॥ मन्त्रस्य साक्षादघटना प्रियादिना परपरातो यदि वा निगद्यते । साक्षान्न तावद्यद्य विहायसो ध्वनिस्वरूपस्तव सम्मतो गुणः ॥ ५९ ॥ ततोऽस्य तेनैव सम समस्ति ससक्तिवार्ता न तु पद्ममद्भिया । अथाक्षरात्मत्वतवेदन स्या, न्मन्त्रस्तथाप्यस्त्वियमात्मनैव ॥ ६० ॥ अथापि मन्त्रस्य निवेद्यते त्वया संसक्तिरेतत्पतिदेवतात्मना । सतांपपोपप्रगुणा च सा प्रियां प्रियं प्रति प्रेरयति स्वयोगिनीम् ॥ ६१ ॥ ब्रूमहेऽत्र ननु देवतात्मनां मन्त्रवर्णविसरस्य का घटा । अम्बरस्य गुण एव तत्कथं देवतात्मनि भजेत संगतिम् ॥ ६२ ॥ आश्रयद्वारतोऽप्यस्य संसर्गो नास्ति सर्वथा । व्यापकद्वययोर्यस्मा-त्संसर्गो नामुना मत ॥ ६३ ॥ व्यापकेषु वदति व्यतिषङ्ग-यस्तु तेन मनसा ध्वनिना वा-ऽतीतवस्तुविषयेण विमृश्य स्पष्ट एव विलसन्-व्यभिचारः ॥ ६४ ॥ अयस्कान्तादनेकान्त-स्तयाऽत्र परिभाव्यताम् । आक्षेपश्च समाधिश्च ज्ञेयो रत्नाकरादिह ॥ ६५ ॥ कारकत्वमपि तन्न शोभते प्राप्यकारिणि यदीक्षणे मतम् । प्राप्य वस्तु वितनोति तन्मतिं नैव चक्षुरिति तत्त्वनिर्णय ॥ ६६॥ अद्रिचन्द्रकलनेषु यत्पद प्राक् प्ररूपितमुपैति नो घटाम् । रश्मिसचयविपञ्चित हि तत्ते च तत्र नितरां व्यपाकृता ॥ ६७ ॥ किंच । चक्षुरप्राप्यधीकृत्, व्यवधिमतोऽपि प्रकाशकं यस्मात् । अन्तःकरणं यद्वद्व्यतिरेके स्यात् पुनः रसना ॥ ६८ ॥ अथ द्रुमादिव्यवधानभाज प्रकाशकत्व ददृशे न दृष्टौ । ततोऽस्य हेतुरसिद्धतायां धौरेयभावं विभरांबभूव ॥ ६९ ॥ यतत्र युक्तं शतकोटिकाच स्वच्छोदकस्फाटिकभित्तिमुख्यैः । पदार्थपुञ्जे व्यवधानभाजि संजायते किं नयनान्न संवित् ॥ ७० ॥ दम्भोलिप्रभृतिप्रभिद्यभिदुराश्चेद्रोचिषश्चक्षुषः संसर्गोपगताः पदार्थपटलीं पश्यन्ति तत्र स्थिताम् । एवं नहि स्फुरदब्धमन्बर भित्त्वा जवं तत्क्षण-त्तेनाप्यन्तरितस्थितानिनिमिषा नालोकयेयुर्न किम् ॥ ७१ ॥ विख्याता-

स्तेन तेचेद्धिमजलजलभरात्किं भजन्ते न शान्तिं, किं चाम्भः काचकूपोदरविवरगतं निष्पतेत्तत्तदानीम् । दोषश्चेन्नैष तूर्णं यद्द्वयमुदयते नूतनव्यूहरूपः सर्पेयुस्तर्हि नैताः कथमपि रुचयो लोचनस्यापि तस्मिन् ॥ ७२ ॥ भवति परिगमश्चेद्वेगवत्त्वादमीषां कतिपयकलयास्तु क्षीरपातस्तदानीम् । न च भवति कदाचिद्बुद्बुदस्यापि तस्मात्प्रपतनमिति युक्तस्तस्य नाशः किमाशु ॥ ७३ ॥ किंच ॥ कलशकुलिशप्राकाराद्यद्रिविष्टपकन्दराकुहरकलितं विश्वं वस्तु प्रतीक्षणभङ्गुरम् । ज्वलनकलिकावर्त्तिकात्वस्मिन्निरन्तरनाभ्रमः प्रभवति वदन्नित्यं शाक्यः कथं प्रतिहन्यते ॥ ७४ ॥ तस्थौ स्थेमा तदस्मिन् व्यवधिमदमुना प्रेक्ष्यते येन सर्वम् तत्सिद्धा नेत्रबुद्धिर्व्यवधिपरिगतस्यापि भावस्य सम्यक् । कुड्याद्यन्धबुद्धिर्भवति किमु न चेन्नेदृशी योग्यतास्य प्राप्तस्यापि प्रकाशे प्रभवति न कथं लोचनाद्गन्धबुद्धिः ॥ ७५ ॥ किं वा न प्रतिभासते शशधरे कर्मापि तद्रूपवत् दूराच्चेद्विलसत्तदस्य उदये लक्ष्येत किं लाञ्छनम् । तस्माच्चक्षुषि योग्यतैव शरणं साक्षी च नः प्रत्ययस्तत्तर्कप्रगुणं प्रतीहि नयनेष्वप्राप्यधीः कर्तृताम् ॥ ७६ ॥ रत्ना० २ परि० ५ सूत्रे ।

तथा च विशेषावश्यकेऽपि नन्विन्द्रियत्वे तुल्येऽपि कथमुक्तपरीक्षिका यच्चतुर्षु स्पर्शनादीन्द्रियेषु प्राप्यकारिताऽभ्युपगम्यते नतु नेत्रमनसोरित्याह–

उवघाया णुग्गहओ, जंताइं पत्तकारीणि ।

तत्र विषयभूतं शब्दादिकं वस्तु प्राप्तं संश्लेषद्वारेणासादितं कुर्वन्ति परिच्छिन्दन्तीति प्राप्तकारीणि प्राप्यकारीणि स्पृष्टार्थग्राहीणीत्यर्थः । कुतः पुनरेतान्येव प्राप्यकारीणीत्याह । उपघातश्चानुग्रहश्चोपघातानुग्रहौ तयोर्दर्शनात्कर्कशकम्बलादिस्पर्शने, त्रिकटुकाद्यास्वादने, अशुच्यादिपुद्गलाघ्राणे, भेर्यादिशब्दश्रवणे, त्वक्क्षणनाद्युपघातदर्शनाच्चन्दनादिस्पर्शने, क्षीरशर्कराद्यास्वादने, कर्पूरपुद्गलाघ्राणे, मृदुमन्दशब्दाद्याकर्णने तु शैत्याद्यनुग्रहदर्शनादित्यर्थः । नयनस्य तु निशितकरपत्रप्रोल्लसत्खड्गादिवीक्षणेऽपि पाटनाद्युपघातानवलोकनाच्चन्दनागरकर्पूराद्यवलोकनेऽपि शैत्याद्यनुग्राहानुभवात् । मनसस्तु वह्न्यादिचिन्तनेऽपि दाहाद्युपघातादर्शनाज्जलचन्दनादिचिन्तायामपि च पिपासोपशमानुग्रहाऽसम्भवाच्चेति ।

अत्र परः प्राह ।

जुज्जइ पत्तविसयया, फरिसणरसणेन सोत्तघाणेसु ।
गिण्हंति सविसयं चिअ, जुत्ताइं भिन्नदेसं पि ॥ २०५ ॥

प्राप्तः स्पृष्टो विषयो ग्राह्यवस्तुरूपो ययोस्ते प्राप्तविषये तयोर्भावः प्राप्तविषयता सा युज्यते घटते । कस्मिन्नित्याह । स्पर्शनं रसनं चेति समाहारद्वन्द्वस्तस्मिन् स्पर्शनरसनेन्द्रिय इत्यर्थः । अनभिमतप्रतिषेधमाह । न श्रोत्रघ्राणयोः प्राप्तविषयता युज्यते । यद्यस्मात्कारणादितो विवक्षितात्स्वदेशाद्भिन्नदेशमपि स्वविषयमेव गृह्णीतोऽस्यार्थस्यानुभवसिद्धत्वात् न हि शब्दः कश्चिच्छ्रोत्रेन्द्रिये प्रविशन्नुपलभ्यते नापि श्रोत्रेन्द्रियं शब्ददेशे गच्छन् समीक्ष्यते न चान्यामन्येनापि प्रकारेण विषयस्पर्शनं घटते । दूरे एष कस्यापि शब्दः श्रूयत इत्यादि जनोक्तिश्च श्रूयते कर्पूरकुङ्कुमकुसुमादीनां दूरस्थानामपि गन्धो निर्विवादमनुभूयते च तस्मात् श्रोत्रघ्राणयोः प्राप्तविषयता न युज्यत एवेति गाथार्थः । अत्रोच्यते–

पावंति सद्दगंधा, ताइं गंतुं सयं न गिण्हंति ।
जं ते पोग्गलमइया, सकिरिया वाउवहणाउ ॥ २०६ ॥
धूमो व्व संहरण उ, दाराणु विहाणओ विसेसेणं ।
तोयं व्व नियंबाइसु, पडिघायाओ पवाउ व्व ॥ २०७ ॥

( पावंति सद्दगंधा ताइति ) शब्दगन्धौ कर्तृभूतौ ते श्रोत्रघ्राणेन्द्रिये कर्मतापन्ने अन्यत आगत्य प्राप्नुतः स्पृशत इति प्रतिज्ञा । अनभिमतप्रकारप्रतिषेधमाह । ( गंतुं सयं न गिण्हंतित्ति ) ताइति–संबध्यते अत्रापि । ततश्च ते श्रोत्रघ्राणे कर्तृभूते पुनः स्वयं शब्दगन्धदेशं गत्वा न गृह्णीतः शब्दगन्धाविति विभक्तिव्यत्ययेन संबध्यते आत्मनोऽबाह्यकरणत्वाच्छ्रोत्रघ्राणयोः स्पर्शनरसनवदिति । ननु शब्दगन्धावपि श्रोत्रघ्राणे कुतः प्राप्नुत इत्याह । ( जं ते पोग्गलमइया सकिरियत्ति ) यस्मात्कारणात्तौ शब्दगन्धौ सक्रियौ गत्यादिक्रियावन्तौ तस्मादन्यत आगत्य श्रोत्रघ्राणे प्राप्नुतः कथंभूतौ सन्तौ सक्रियौ तावित्याह । पुनः पुद्गलमयौ यदि पुनरपौद्गलिकत्वादमूर्तौ स्यातां तदा यथा जैनमतेन सक्रियेष्वाकाशादिषु गतिक्रिया नास्ति तथैव तयोरपि न स्यादित्यालोच्य पुद्गलमयत्वविशेषणमकारि पुद्गलमयत्वे सति सक्रियाविति भावः ॥ यद्येवंभूत तत्र गतिक्रियास्त्येव यथा पुद्गलस्कन्धेष्वित्याह–ननु पुद्गलमयत्वेऽपि सति शब्दगन्धयोर्गतिक्रियाऽस्तीति कुतो निश्चीयत इत्याह ( वाउवहणाउ धूमो व्वत्ति ) वायुना वहनं नयनं वायुवहनं तस्मादिदमुक्तं भवति यथा पवनाद् धूम इव गतिक्रियाभाजौ तौ तथाविशेषणद्वारानुविधानतस्तोयवत्तद्वन्तावेतौ तथा पर्वतनितम्बादिषु प्रतिघातात्प्रतिस्खलनाद्वायुवदेतौ गतिक्रियाश्रयाविति गाथाद्वयार्थः । हेत्वन्तरेणापि शब्दगन्धयोः सुयुक्तिकं गतिक्रियावत्त्वं समर्थयन्नाह—

गेण्हंति पत्तमत्थं, उवघायाणुग्गहोवलद्धीओ ॥
बाहिज्जपूइनासा-रिसादओ कहमसंबद्धे ॥ २०८ ॥

प्राप्तमन्यत आगत्यात्मना सह संबद्धं शब्दगन्धलक्षणमर्थं गृह्णीतः श्रोत्रघ्राणेन्द्रिये इति गम्यते । एतेन शब्दगन्धयोरागमनक्रिया प्रतिज्ञाता भवति कुतः प्राप्तमेव गृह्णीत इत्याह उपघातश्चानुग्रहश्चोपघातानुग्रहौ तयोरुपलब्धेः तथाहि भेर्यादिमहाशब्दप्रवेशे श्रोत्रस्य बाधिर्यरूप उपघातो दृश्यते कोमलशब्दश्रवणे त्वनुग्रहः घ्राणस्याप्यशुच्यादिगन्धप्रवेशे पूतिरोगाऽर्शोव्याधिरूप उपघातोऽवलोक्यते कर्पूरादिगन्धप्रवेशे त्वनुग्रहः शब्दगन्धासंबन्धेऽपि श्रोत्रघ्राणयोरेतावनुग्रहोपघातौ भविष्यत इति चेदित्याह ( बाहिज्जेत्यादि ) बाधिर्यं च पूतिश्च नासाकोथलक्षणो रोगविशेषः नासार्शांसि च तानि आदिर्येषां शेषोपघातानुग्रहाणां ते यथाभूता कथमुपगच्छेयुः क्व सति इत्याह ( असंबद्धेत्ति ) स्वहेतुभूते शब्दगन्धलक्षणवस्तुनीति गम्यते । इदमुक्तं भवति । श्रोत्रघ्राणाभ्यां सह संबद्धा एव शब्दगन्धाः स्वकार्यभूतं बाधिर्योपघातमनुग्रहं वा जनयितुमर्हं नान्यथा सर्वस्यापि तज्जननप्राप्तेरतिप्रसङ्गादिति गाथार्थः । तदेवं स्पर्शनरसनघ्राणश्रोत्राणां प्राप्यकारित्वं समर्थितम् ॥ विशे० ॥ आ० चू० ॥

साम्प्रतं नयनमनसोरप्राप्यकारित्वसमर्थनायाह ।

कथमप्राप्यकारित्वं तयोरवसीयते उच्यते विषयकृतानुग्रहोपघाताभावात् तथाहि यदि प्राप्तमर्थं चक्षुर्मनो वा गृह्णीयात् तर्हि यथा स्पर्शनेन्द्रियं स्रक्चन्दनादिकमङ्गारादिकं च प्राप्तमर्थं

परिच्छिन्दंस्तत्कृतानुग्रहोपघातभाग् भवति तथा चक्षुर्मनसी अपि भवेतां विशेषाभावात् न च भवतस्तस्मादप्राप्तकारिणी तेन तु दृश्यते एवं चक्षुषो विषयकृतावग्रहोपघातौ। तथाहि-घनपटल-विनिर्मुक्ते नभसि सर्वतो निविडतरतमोऽपेतकरप्रसरमभि सर्प्पयन्तमंशुमालिनमनवरतमवलोकमानस्य भवति चक्षुषो विघात शशाङ्ककरकदम्बकं यदि वा तरङ्गमालोपशोभितं जलं तरुमण्डलं च शाद्वलं निरन्तरं निरीक्ष्यमाणस्य चानुग्रहः। तदेतदपरिभावितभाषितं यतो न ब्रूम सर्वथा विषयकृतावनुग्रहोपघातौ न भवत किं त्वेतावदेव वदामो यदा विषयं विषयतया चक्षुरवलम्बते तदा तत्कृतावनुग्रहोपघातौ तस्य न भवत इति तदप्राप्यकारि । शेषकाल तु प्राप्तेनोपघातकेनोपघातो भविष्यत्यनुग्राहकेण वानुग्रहस्तत्रांशुमालिनो रश्मयः सर्वत्रापि प्रसरमुपाददाना यदांशुमालिन॰ सन्मुखमीक्ष्यते तदा ते चक्षुर्देशमपि प्राप्नुवन्ति ततश्चक्षु॰ संप्राप्तास्ते स्पर्शनेन्द्रियमिव चक्षुरुपघ्नन्ति शीतांशुरश्मयश्च स्वभावत एव शीतलत्वादनुग्राहकास्ततस्ते चक्षु॰ संप्राप्तास्सन्तस्तत्स्पर्शनेन्द्रियमिव चक्षुरनुगृह्णंति तरङ्गमालासकुलजलावलोकने च जलकणसपृक्तसमीरावयवसंस्पर्शतोऽनुग्रहो भवति शाद्वलतरुमण्डलावलोकनेपि शाद्वलतरुच्छायासंपर्कशीतभूतसमीरणसंस्पर्शात् शेषकाल तु जलाद्यवलोकने अनुग्रहाभिमान उपघाताभावादवसेयो भवति । चोपघाताभावेऽनुग्रहाभिमानो यथातिसूक्ष्माक्षरनिरीक्षणाद्विनिवर्त्य यथा सुखं नीलरत्नवस्त्राद्यवलोकने इत्यं चैतदङ्गीकर्तव्यमन्यथा समासेन सपर्के यथा सूर्यमीक्षमाणस्य सूर्येणोपघातो भवति तथा हुतवहजलशूलाद्यालोकने दाहक्लेदपाटनादयोपि कस्मान्न भवन्ति अपिच यदि चक्षु प्राप्यकारि तर्हि स्वदेशगतरजोमलाञ्जनशलाकादिकं किं न पश्यति तस्मादप्राप्यकार्येव चक्षु॰ । ननु यदि चक्षुरप्राप्यकारि तर्हि मनोवत् कस्मादविशेषेण सर्वानपि दूर व्यवहितानर्थान्न गृह्णाति यदि हि प्राप्त परिच्छिन्द्यात्तर्हि यदेवानावृतमदूरदेश वा तदेव गृह्णीयात् नावृत दूरदेशं वा तत्र चक्षूरश्मीनां गमनासंभवे संपर्कासभवात् ततो युज्यते चक्षुषा ग्रहणाग्रहणेनान्यथा तथाचोक्तम् " प्राप्यकारि चक्षुरुपलब्ध्यनुपलब्ध्योरनावरणेतरापेक्षणाच्च " । यदि हि चक्षुरप्राप्यकारि भवेत् तदावरणभावादनुपलब्धिरन्यथोपलब्धिरिति न स्यात् । नहि तदावरणमुपघातकरणसमर्थं प्राप्यकारित्वे तु मूर्तद्रव्यप्रतिघातादुपपत्तिमानव्याघातात् अतिदूरे च गमनाभावादिति प्रयोगश्चात्र न चक्षुषो विषयपरिमाणमप्राप्यकारित्वान्मनोवत् तदेतदयुक्ततरं दृष्टान्तस्य साध्यविकलत्वात् न खलु मनो प्यशेषान् विषयान् गृह्णाति तस्यापि सूक्ष्मेष्वागमगमादिष्वर्थेषु मोहदर्शनात् तस्माद्यथा मनो प्राप्यकार्यपि स्वावरणक्षयोपशमापेक्षत्वान्नियतविषय तथा चक्षुरपि स्वावरणक्षयोपशमापेक्षत्वादप्राप्यकार्यपि योग्यदेशावस्थितनियतविषयमिति न व्यवहितानुपलम्भप्रसगो नापि दूरदेशस्थितानामिति । अपिच दृष्टमप्राप्यकारित्वेऽपि तथा स्वभावविशेषाद्योग्यदेशापेक्षणं यथा ऽयस्कान्तस्य न खल्वयस्कान्तोऽयसो ऽप्राप्यकर्षणे प्रवर्तमान सर्वस्याप्ययसो जगद्वर्तिन आकर्षको भवति किंतु प्रतिनियतस्यैव । शङ्करस्वामी प्राह अयस्कान्तोऽपि प्राप्यकारी अयस्कान्तच्छायाणुभि॰ समाकृष्यमाण वस्तुन संबन्धभावात केवल ते छायाणव सूक्ष्मत्वान्नोपलभ्यन्ते इति तदेतदुन्मत्तभाषित तद्ग्राहकप्रमाणाभावात नहि तत्र छायाणुसंभवग्राहकं प्रमाणमस्ति न चाप्रमाणक प्रतिपत्तुं शक्नुमः अथास्ति तद्ग्राहक प्रमाणमनुमानम्-इह यदाकर्षण तत्संसर्गपूर्वक यथाऽयोगोलकस्य संदंशेनाकर्षणं चायसोऽयस्कान्तेन तत्र साक्षादयस्कान्ते संसर्गः प्रत्यक्षबाधित इति अर्थात् छायाणुभि॰ सह दृष्टव्य इति तदपि बालिशजल्पितं हेतोरनैकांतिकत्वात् मन्त्रेण व्यभिचारात् । तथाहि-मन्त्रः स्मर्यमाणोऽपि विवक्षित वस्तु आकर्षति न च कोऽपि तत्र संसर्ग इति । अपिच यथा छायाणव॰ प्राप्तमय॰ समाकर्षन्ति तथा काष्ठादिकमपि प्राप्त कस्मान्न कर्षन्ति शक्ति प्रतिनियमादिति चेन्मनस॰ शक्तिप्रतिनियमोऽप्राप्तावपि तुल्य एवेति व्यर्थं छायाणुपरिकल्पनम् अन्यस्त्वाह अस्ति चक्षुष प्राप्यकारित्वे व्यवहितार्थानुपलब्धेरनुमानं प्रमाणं तदयुक्तम् अपि हेतोरनैकान्तिकत्वात् । काचाभ्रपटलस्फटिकैरन्तरितस्याप्युपलब्धेः अथैवमाचक्षीथा॰ नयनरश्मयो निर्गत्य तमर्थं गृह्णन्ति नायनाश्च रश्मयस्तैजसत्वान्न तेजोद्रव्यैः प्रतिस्खल्यन्ते ततो न कश्चिद्दोषः तदपि न मनोरमं महाज्वलादौ स्खलनोपलब्धेस्तस्मादप्राप्यकारि चक्षुरिति स्थितम् नं॰ आ॰ म॰ ( मनसो ऽप्राप्यकारिता मनः शब्देपि ) तथाच विशेषावश्यके—

नयनमनसोरप्राप्यकारित्वमभिधित्सुर्नयनस्य तावदाह-

लोयणमपत्तविसयं, मणो व्व जमणुग्गहाइ सुसुंति ।
जलसूरालोयाइसु, दीसंति अणुग्गहोवधाया ॥

अप्राप्तोऽसंबद्धोऽसंश्लिष्टो विषयो ग्राह्यवस्तुरूपो यस्य तदप्राप्तविषयं लोचनमप्राप्यकारीत्यर्थः इति प्रतिज्ञा । कुत इत्याह-यद्यस्मादनुग्रहादिशून्यमादिशब्दादुपघातपरिग्रह॰ वा ह्यवस्तुकृतानुग्रहोपघातशून्यत्वादित्यर्थः अय च हेतु मनावदिति दृष्टान्त । यदि हि लोचनं ग्राह्यवस्तुना सह संबध्य तत्परिच्छेद कुर्यात् तदाग्न्यादिदर्शने स्पर्शनस्येव दाहाद्युपघात स्यात् कोमलतल्पाद्यवलोकने त्वनुग्रहो भवेत् न चैव तस्मादप्राप्यकारि लोचनमिति भाव॰ मनस्यप्राप्यकारित्वं परस्यासिद्धमिति कथं तस्य दृष्टान्तत्वेनोन्यास इति चेत्सत्यं किन्तु वक्ष्यमाणयुक्तिभिस्तत्र तात्सिद्धमिति निश्चित्य तस्येह दृष्टान्तत्वेन प्रदर्शनमित्यदोष॰ । अथ परो हेतोरसिद्धतामुद्भावयन्नाह ( जलसूरेत्यादि ) आदिशब्द आलोकशब्दश्च प्रत्येकमभिसम्बध्यते ततश्च जलादीनामालोके लोचनस्याऽनुग्रहो दृश्यते सूरादीनां त्वालोके उपघात इत्यतोऽनुग्रहादिशून्यत्वादित्यसिद्धो हेतुरित्यर्थ । इदमुक्त भवति जलघृतनीलवसनवनस्पतीन्दुमण्डलाद्यवलोकने नयनस्य परमाश्वासलक्षणोनुग्रह समीक्ष्यते सूरासितभित्त्यादिदर्शने तु जलविगलनादिरूप उपघात॰ सदृश्यत इत्यत॰ किमुच्यते ( जमणुग्गहाइसुसुंतीति ) गाथार्थ॰ ॥ अत्रोत्तरमाह—

रूजेज्ज पाविउं रवि-कराइणा फरसणं व को दोसो ॥
मणिज्जाणुग्गहं पि व उवघायाभावओ सोम्मे ॥ २१० ॥

अयमत्र भावार्थ॰ अस्मदभिप्रायानभिज्ञोऽप्रस्तुताभिधायी परो न हि वयमेतद्ब्रूमो यच्चक्षुष॰ कुतोऽपि वस्तुन सकाशात्कदापि सर्वथैवानुग्रहोपघातौ न भवतस्ततो रविकरादिना दाहात्मकतोपघातवस्तुना परिच्छेदानन्तरं पश्चाच्चिरमवलोकयत प्राप्य चक्षु प्राप्य समासाद्य स्पर्शनेन्द्रियमिव दह्येत दाहादिलक्षणस्तस्योपघात क्रियत इत्यर्थ एतावता चाप्राप्यकारित्वक्षुर्वादिनामस्माक को दोषो न कश्चिद् दृष्टस्य बाधितुमशक्य-

त्वादितिभाव । तथा यत्स्वरूपेणैव सौम्य शीतलं शीतरश्मि-जलघृतचन्द्रादिक वस्तु तस्मिंश्चिरमवलोकिते उपघाताभावादनुग्रहमिव मन्येत चक्षु. को दोषः इत्यत्रापि संवस्यते न कश्चिदित्यर्थ इति गाथार्थ' आह यद्युक्तन्यायेनोपघातकानुग्राहकवस्तुभ्य उपघातानुग्रहाभाव चक्षुषो न ब्रूषे तर्हि यद्ब्रूषे तत्कथय इत्यासङ्क्याह ॥

गंतुं न रूवदेसं, पासइ पत्तं सयं च नियमो यं ।
एत्तेण उ मुत्तिमया उवघायाणुग्गहो होज्जा ॥

अय नियम. इदमेवाऽस्माभिर्नियम्यत इत्यर्थ. किं तदित्याह रूपस्य देशो रूपदेश आदित्यमण्डलादिसमाक्रान्तप्रदेशरूप स्त गत्वा उल्लवनतस्त समालिख्य चक्षुर्न पश्यति न परिच्छिनत्त्यन्यस्याश्रुतत्वाद्रूपमिति गम्यते ( पत्तंसयचत्ति ) स्वय वा अन्यत आगत्य चक्षुर्देश प्राप्त समागत रूप चक्षुर्न पश्यति किंत्वप्राप्तमेव योग्यदेशस्थ विषय तत्प श्यति अत्राह परो नन्वनेन नियमेनाप्राप्यकारित्व चक्षुष. प्रतिज्ञात भवति न च प्रतिज्ञामात्रेणैव हेतुमन्त्या समन्तरेण समीहितवस्तु सिद्धिरतोहेतुरिहवक्तव्यः ( जमणुग्गहाऽ णुघत्ती ) त्यनेन पुर्वोक्ता गाथावयवेन विषयकृतानुग्र होप घातशून्यत्वलक्षणोयमभिहित एवेति चेदहो जराविधुरितस्येव सूरेर्विस्मरणशीलता यतो ( जमणुग्गहाऽणुघतीत्यनेन ) विषयादनुग्रहोपघातौ चक्षुषो निषेधयाति ( रुज्जेज्ज पाविज रविकराइणा फरिसणचे ) त्यादिना तु पुनरपि ततस्तौ तस्य समनुजानीत अतो न विघ्नः कोप्येष वचन क्रम इति नैतदेवमभिप्रायापरिज्ञानाद्यत. प्रथमत एव विषय परिच्छेदमात्रकालेऽनुग्रहोपघातशून्यताहेतुत्वेनोक्ता पश्चात्तु चिरमवलोकयत प्रतिपत्तु प्राप्तेन रविकिरणादिना चन्द्रमरीचिनीलादिना वा मूर्तिमता सगत एव केनाप्युपघातकेनानुग्राहकेन च विषयेणोपघातानुग्रहौ भवेताम् । अपीत्येतदेवाह । ( एतेण उ मुत्तिमया इत्यादि ) अनेनाभिप्रायेण तौ पुनरपि समनुज्ञायेते न विस्मरणशीलतया यदि पुनर्विषयपरिच्छित्तिमात्रमपि तमप्राप्यचक्षुर्न करोतीति नियम्यते तदा वह्निविषजलाधिकण्टक-करवाल-करपत्र-सौवीराञ्जनादि परिच्छित्तावपि तस्य दाहस्फोटच्छेदपाटननीरोगतादिलक्षणो पघातानुग्रहप्रसङ्गः नहि समानायामपि प्राप्तौ रविकरादिना तस्य भवन्ति दाहादयो न वन्ह्यादिभि । तस्माद्व्यवस्थितमिद विषयमप्राप्यैवं चक्षू परिच्छिनत्ति अजनदहनादिकृतानुग्रहोपघातशून्यत्वान्मनोवत् । परिच्छेदानन्तर तु पश्चात्प्राप्तेन केनाप्युपघातकेन अनुग्राहकेण वा मूर्तिमता द्रव्येण तस्यो पघातानुग्रहौ न निषिध्येते विषशर्करादिभक्षणे मूर्च्छास्वास्थ्यादय इव मनस इति । अत्राऽपर' प्राह-नयनाभ्यनारश्मयो निर्गत्य प्राप्य च रविबिम्बरश्मय इव वस्तुप्रकाशयन्तीति नयनस्य प्राप्यकारिता प्रोच्यते सूक्ष्मत्वेन च तेषां वन्ह्यादिभिर्दाहादयो न भवन्ति रविरश्मिषु तथा दर्शनात्तदेतदयुक्ततरं तेषां प्रत्यक्षादिप्रमाणाग्राह्यत्वेन श्रद्धातुमशक्यत्वात्तथाविधानामप्यस्तित्वकल्पनेऽति प्रसङ्गाद्वस्तुपरिच्छेदान्यथानुपपत्तेस्ते सन्तीति कल्प्यत इति चेन्न तानन्तरेणापि तत्परिच्छेदोपपत्ते नहि मनसोरश्मय' सन्ति न च तदप्राप्तं । वस्तु परिच्छिनत्ति वक्ष्यमाणयुक्तिभ्यस्तस्य तत्सिद्धेः न च रविरश्म्युदाहरणमात्रेणाचेतनानां नयनरश्मीनां वस्तुपरिच्छेदो युज्यते नयदन्तनालतलादिगतशरीररश्मीनामपि स्पर्श-

विषयवस्तुपरिच्छेदप्रसङ्गादित्यत्र विस्तरेणेति गाथार्थ' । तदेव मञ्जनज्वलनादिविषयविहितानुग्रहोपघातशून्यत्वलक्षणहेतोर प्राप्यकारितां चक्षुषः प्रसाध्य हेत्वन्तरेणापि तस्य तां प्रसाधयितुमाह-

जइ पत्तं गिण्हिज्जउ तग्गयमंजणरओमलाइयं ॥
पिच्छेज्ज यं न पासइ अपत्तकारि तओ चक्खु ॥ १७॥

यदि तु प्राप्तं विषय चक्षुर्गृह्णीयादित्युच्यते तदा तद्गतमात्मसबद्धमञ्जनरजोमलशलाकादिक पश्येदवगच्छेत् तस्य निर्विवादमेव तत्प्राप्तत्वेनोपलब्धे यस्माच्च न पश्यति ततोऽप्राप्तकारि चक्षुरिति स्थितम् । यद्यप्राप्यकारि चक्षुस्तर्ह्यप्राप्तत्वाविशेषात्सर्वस्याऽप्यर्थस्याविशेषेणग्राहक स्यान्न प्रतिनियत स्येति चेन्न ज्ञानदर्शनावरणादेस्तत्प्रतिबन्धकस्य सद्भावान्मनसा व्यभिचाराच्च तथा ह्यप्राप्यकारित्वे सत्यपि नाविशेषेण सर्वार्थेषु मन. प्रवर्तते इन्द्रियाद्यप्रकाशितेषु सर्वथा अदृष्टाश्रुतार्थेषु तत्प्रवृत्त्यदर्शनादित्यत्र प्रसंगेनेति गाथार्थ. । तदेवं व्यवस्थापिता चक्षुषोऽप्राप्यकारिता-विशे० ॥

तदेव नयनमनसोर्विस्तरेणाप्राप्यकारितायां साधितायां नयन पक्षेऽप्यापि दूषणशेषमुत्पश्यन् पर प्राह-

जइ नयणिंदि य पत्तकारि सव्वन्न गिण्हए कम्हा ॥
गहणागहणं किंकयमपत्त विसयत्त सामन्ने ॥ १ ॥

यद्युक्तं युक्तिभ्यो नयनेन्द्रियमप्राप्तकारि तर्हि सर्वमपि त्रिभुवनान्तर्वर्ति वस्तुनि कुरस्य कस्मान्न गृह्णाति अप्राप्तित्वाविशेषादेतत्स्पष्टीकरोति अप्राप्तो विषयो यस्य तदप्राप्तिविषय तद्भावोऽप्राप्तविषयत्व तस्मिन् सामान्येऽविशिष्टेऽपि सति यदिद कस्यचिदर्थस्य ग्रहण कस्यचिदग्रहण तत्किंकृत किं निबन्धन नेह किंचिन्निबन्धनमुत्पश्याम इतिभावः इतिगाथार्थ. । तस्माद्धो आचार्य ? तस्य चक्षुषो विषयपरिमाणोऽनैयत्यमाप्नोतीत्येतदेवाह—

विसयपरिमाणमनियममपत्त विसयति तस्स मणसोव्व ।
मणसो वि विसय नियमो नक्कमइ जओ समवत्थ ।

विषयस्य ग्राहकस्य परिमाणमनियतमपरिमितं प्राप्नोति तस्य चक्षुष इति ज्ञानहेतुमाह अप्राप्तविषय इति कृत्वा मनसइवेति दृष्टान्तप्रयोग यदप्राप्तमपि विषय परिच्छिनत्ति न तस्य तत्परिमाणं युक्तं यथा मनस । अप्राप्तं विषयमनुगच्छति चक्षुस्तस्मान्न तस्य तत्परिमाणं युक्तमिति । अथेह प्रयोगे दृष्टान्तस्य साध्यवैकल्ये सूरिरुपदर्शयति मनसो दृष्टान्तीकृतस्याप्राप्यकारिणो विषयनियमोऽस्त्येवेति शेष. । कुत इत्याह । ( मन सत्ति ) तदपिमन सर्वेष्वर्थेषु न क्रामति न प्रसरति इति गाथार्थ. । तथाहि—

अत्थगहणेसु मुज्झइ सत्तेसु वि केवलाई गम्मेसु ।
तं किं कयमग्गहणं अपत्तकारित्तसामण्णे ॥

अर्था एव मतेर्दु. प्रवेशत्वाद्गहनानि तेष्वनन्तेषु सत्स्वपि विद्यमानेष्वपि कथंभूतेष्वित्याह । केवलं केवलज्ञानमादिर्येषामवधिज्ञानागमादीनां तानि केवलादीनि तैर्गम्यन्ते ज्ञायन्ते केवलादिगम्यानि तेष्वेव भूतेष्वर्थगहनेषु सत्स्वपि कस्यचिन्मन्दमतेर्जन्तोर्मनो मुह्यति कुण्ठी भवति । तदवगमनाय न प्रभवति तान् गहनभूतान् केवलादिगम्यान् सतोऽप्यर्थान्न गृह्णाति तात्पर्य तत्र तद्वादमपि भवन्त पृच्छामि तदेतन्मनसोऽग्रहणमर्थानां किं कृत किं निबन्धनमप्राप्तकारित्वसामान्येऽप्राप्तकारित्वे

तुल्येहीन्यर्थः । तस्मान्मनसोऽपि विषयपरिमाणसद्भावादनन्तरगाथोक्तसाध्यविकलो दृष्टान्त इति स्थितमिति गाथार्थः ॥ तर्त्किकृतमग्रहणमर्थानामपीत्यपराऽभिप्रायं आशङ्कमान प्राह

कम्मोदय उवसाहा चउव्व णणु लोयणे वि तं तुल्लं ।
तुल्लो व उवालंभो एसो संपत्त विसए वि ॥

यत्केषाचिदर्थानां मनसो ग्रहणं नत्तदावरणकर्मोदयाद्वा स्वभावाद्वा इति परो ब्रूयाच्चन्वेतल्लोचनेपि तुल्यं यतस्तदप्यप्राप्यकारित्वे तुल्योऽपि कर्मोदयात् तत्स्वभावाद्वा कांश्चिदेवार्थान् गृह्णाति न सर्वानिति तदेवं नयनस्य प्राप्यकारित्वेऽतिप्रसङ्ग उक्तणं प्राप्तकारित्वादिना यद्दूषणमुक्त तत्परिहृतम् अथवा यो नयनमनसो॰ प्राप्यकारित्वमभ्युपगच्छति तस्याप्येतद्दूषणमापतत्येव यत्र च्योर्दूषणं न तदेकस्य दातुमुचितमित्येतच्चेतसि निधाय प्राह 'तुल्लोवेत्यादि' वा इत्यथवा एषोऽतिप्रसंगलक्षणउपालम्भ स्तुल्यः समानः केत्याह संप्राप्तविषयत्वेपि नयनमनसोरभ्युपगम्यमाने तथाह्यत्रापि शक्यते वक्तुं यदि प्राप्तमर्थं गृह्णाति चक्षुस्तर्हीतिसंप्राप्तनयनाञ्जनरजोमलशलाकादीन् कस्मान्न गृह्णाति। मनोऽपि प्राप्तान् सर्वानपि किमिति न गृह्णाति यत्प्राप्तिकाले पटादयो न प्राप्ता एवेति चेन्न तदप्राप्तौ हेत्वभावात्तथाहि न तावत्कटकुड्यादयस्तेषामाचारकास्तैरन्तरितानामपि मेर्वादीनां मनसोऽपरिच्छेदानुभवात्कर्मोदयात्स्वभावाद्वा प्रतिनियतमेव मन॰ प्राप्नोतीति चेत्तन्वेतदप्राप्यकारिणो नयनस्यापि समानमिति गाथार्थ । तस्मात्किमिह स्थितमित्याह ॥

सामत्थाभावाओ मणोव्व विसयपरउ पगिएहेइ ॥
कम्मक्खओवसमओ साणुग्गहओ य सामत्थं ॥ १ ॥

चक्षु॰ सिद्धान्तनिर्दिष्टं नियतविषयपरिमाणात्परतो न गृह्णातीति प्रतिज्ञा चक्षुषश्चेह कर्तृत्वं प्रक्रमाद्गम्यते सामर्थ्याभावादिति हेतुर्मनोवदिति दृष्टान्त॰ सामर्थ्याभावो नयनस्य कुत इत्याह ( कम्मक्खओ इत्यादि ) तदावरणकर्मक्षयोपशमात् स्वानुग्रहतश्चाऽप्राप्तेऽप्यपि केषुचिदेवेष्वदेशावस्थितेष्वर्थेषु परिच्छेदे कर्तव्ये लोचनस्य सामर्थ्यं भवति इदमुक्तं भवति अप्राप्तत्वे समानेऽपि येष्वर्थेषु ग्रहणविषये कर्मक्षयोपशमो भवति तथा स्वस्यात्मनो रूपालोके नमस्कारादिसामग्र्या । सकाशादनुग्रहो भवति तेष्वर्थेषु कर्मक्षयोपशमसद्भावाच्छेषसामग्र्यनुग्रहाच्चक्षुषो ग्रहणसामर्थ्यं भवति येषु त्वर्थेषु ग्रहणविषये कर्मक्षयोपशम शेषसामग्र्यनुग्रहश्च नास्ति तेषु तस्य सामर्थ्याभाव इत्यर्थापत्तित एव गम्यते तस्मादव्यवस्थितमप्राप्यकारित्वं नयनस्य । विशे॰ ॥

इहसुगतमतानुसारिण श्रोत्रमप्राप्यकारि प्रतिपद्यन्ते तथाच तद्ग्रन्थ॰ चक्षु श्रोत्र मनोऽप्राप्यकारीति तदयुक्तमिहाप्राप्यकारि तत्प्रतिपत्तु शक्यते यस्य विषयकृतानुग्रहोपघाताभावो यथा चक्षुर्मनसो॰ ।श्रोत्रेन्द्रियस्य च शब्दकृत उपघातो दृश्यते सद्योजातबालकस्य समीपे महाप्रयत्नताडितझल्लरीरणत्कारश्रवणतो यद्वा विद्युत्प्रपाते तत्प्रत्यासन्नदेशवर्तिनां निर्घोषश्रवणतो व धिरीभावदर्शनात् । शब्दपरमाणवो हि उत्पत्तिदेशादारभ्य सर्वतो जलतरङ्गन्यायेन प्रसरमभिगृह्णानां श्रोत्रेन्द्रियदेशमागच्छन्ति तत समवत्युपपात । ननु यदि श्रोत्रेन्द्रियं प्राप्तमेव शब्दं गृह्णाति नाप्राप्तं तर्हि यथा गन्धादौ गृह्यमाणेन तत्र दूरसम्पादिभेदप्रतीतिरेव शब्दोऽपि न स्यात् प्राप्तो हि विषयः परिच्छिद्यमान सर्वोपि सन्निहित एव तत्कथ तत्र दूरासन्नादिभेदप्रतीतिर्भवितुमर्हति अथ च प्रतीयते शब्दो दूरासन्नादि तया तया च लोके वक्तारः श्रूयते कस्यापि दूरे शब्द इति । अन्यच्च यदि प्राप्तः शब्दो गृह्यते श्रोत्रेन्द्रियेण तर्हि चाण्डालोक्तोऽपिशब्द॰ श्रोत्रेन्द्रियेण श्रोत्रेन्द्रियसंस्पृष्टो गृह्यते इति श्रोत्रेन्द्रियस्य चाण्डालस्पर्शदोषप्रसंग॰ तत्र श्रेयः पदवीप्रतिष्ठाममितिष्ठति श्रोत्रेन्द्रियस्य प्राप्यकारित्वं तदेतदिति महामोहमल्लीमसप्रायितं यतो यद्यपि शब्दोऽप्राप्तो गृह्यते श्रोत्रेन्द्रियेण तथा ऽपि यत उक्तित॰ शब्दस्तस्य दूरासन्नत्वे शब्देऽपि स्वभाववैचित्र्यसंभवात् दूरासन्नादिभेदप्रतीतिर्भवति । तथाहि-दूरोदात्तः शब्द॰ क्षीणशक्तित्वात् खिन्न उपलक्ष्यते स्पष्टरूपो वा ततो लोके लोको वदति दूरे शब्द॰ श्रूयते यस्य च वाक्यस्यायं भावार्थो दूरादागत शब्द श्रूयते इति स्यादेतदेवमतिप्रसग प्राप्नोति तथाहीतदपि वक्तुं शक्यते दूरे रूपमुपलभ्यते किमुक्तं भवति दूरादागतं रूपमुपलभ्यते ततश्चक्षुरापि प्राप्यकारि प्राप्नोति न चेष्यते तस्मान्नैतत्समीचीनमिति तदयुक्तं यत इह चक्षुषो रूपकृतावनुग्रहोपघातौ नोपलभ्येते श्रोत्रेन्द्रियस्य तु शब्दकृत उपघातोऽस्ति एतच्च प्रागेवोक्तं ततो नातिप्रसंगादानमुपपत्तिमत् । अन्यच्च प्रत्यासन्नोऽपि जनः पवनस्य प्रतिकूलमवतिष्ठमान॰ शब्दं न शृणोति पवनवर्त्मनि तु वर्तमानो दूरदेशस्थितोऽपि शृणोति तथाच लोके वक्तारो न वयं प्रत्यासन्ना अपि त्वदीयं वच॰ श्रुणुम॰ पवनस्य प्रतिकूलमवस्थानात् यदि पुनरप्राप्तमेव शब्दं रूपमिव जनाः प्रमिणुयुस्तर्हि वातस्य प्रतिकूलमप्यवतिष्ठमाना रूपमिव शब्द यथा वस्थित प्रत्यासन्ना॰ प्रमिणुयुर्न च प्रमिण्वन्ति तस्मात्प्राप्ता एव परमाणवः श्रोत्रेन्द्रियेण परिगृह्यन्ते इत्यवश्यमभ्युपगन्तव्य तथा च सति पवनस्य प्रतिकूलमप्यवतिष्ठमानानां श्रोत्रेन्द्रियं न शब्दपरिमाणवो वैपुल्येन पाप्नुवन्ति तेपामन्यथा वातेन नीयमानत्वात् ततो न ते शृण्वन्तीति न काचित् क्षितिः । यदपि चोक्त चाण्डालस्पर्शदोष प्राप्नोतीति तदपि चेतनाविकलपुरुषभाषितमिवासमीचीनं स्पर्शास्पर्शव्यवस्था या लोके काल्पनिकत्वात् तथाहि न स्पर्शस्य व्यवस्था लोके पारमार्थिकी तथाहि यामेव भुवमग्रे चाण्डाल॰ स्पृशन् प्रयाति तामेवपृष्ठत॰ श्रोत्रियोऽपि, तथा यामेव नावमधिरोहतिस्म चाण्डालस्तामेवारोहति श्रोत्रियोऽपि, तथा स एव मारुतश्चाण्डालमपि स्पृष्ट्वा श्रोत्रियमपि स्पृशति, न च तत्र लोके स्पर्शदोषव्यवस्था तथा शब्दपुद्गलसंस्पर्शेऽपि न भवतीति न कश्चिद्दोष । अपि च यदा लोके केतकीदलनिचय शतपत्रादिपुष्पनिचय वा शिरसि निवध्य वपुषि वा मृगमदचन्दनाद्यवलेपनमारच्य्य विपणि वीथ्यामागत्य चाण्डालोऽवतिष्ठते तदा तत्तकेतकीदलादिगन्धपुद्गला श्रोत्रियादिनासिकास्वपि प्रविशन्ति ततस्तत्रापि चाण्डालस्पर्शदोष प्राप्नोतीति तद्दोषभयानासिकेन्द्रियमप्राप्यकारि प्रतिपत्तव्य नचैतद्भवतोऽप्यागमे प्रतिपाद्यते ततो वालिशजलपितमेतदिति कृत प्रसगेनेति॥न॰।आ.म।

तथाचरत्नावनारिकायाम् "बौद्ध॰ पुनरिदमाहु॰ श्रोत्र न प्राप्य बुद्धिमाधत्ते । दिग्देशव्यपदेशान् करोति शब्दे यतो दृग्वत् ॥ ७७ ॥ तथाहि । प्राच्यामत्रविजृम्भते जलमुचा मत्पूर्जितगर्जितं प्रोन्मीलत्यनुमेय चातकरवो क्रामकृण दक्षिण॰। केकाः केकिकुटुम्बकस्य विलसन्त्येता॰ कलाः कानवादिग्देशव्यपदेशवानिति न किं शब्देस्ति संप्रत्ययः ॥ ७८ ॥ प्राप्यकारि यदि तु श्रवणं स्यात्तर्हि तत्र न कथच न सैषः।प्रस्तुत समुदयाद्यपदेश गर्करास्पृशि यथा रसनायाम् ॥ ७९ ॥ वेश्यानुरागप्रतिमं तदेतत् सुस्पृश्यदुष्टव्यभिचारदोषात्।घ्राणं यदेतद्

व्यपदेशभाज प्राप्तप्रकाश कुरुते मनीषाम् ॥८०॥ तथाच "मन्द-मन्दमुदेत्यय परिमलप्राग्भारमध्वीमणरूपाद्भूय· सौरभमुद्धमन्त्युपवने फुल्ला स्फुटं मल्लिका । गन्धो बन्धुर एष दक्षिणदिशः श्रीचन्दनात्प्राप्तवानित्येतन्ननु विद्यते तनुभृतां घ्राणात्तथा प्रत्यय· ॥ ८१ ॥ अस्ति त्वगिन्द्रियेणापि व्यभिचारविनिश्चय । शेमुषीमादधानेन दिग्देशव्यपदेशिनी ॥८२॥ तथाहि । सेय समीरलहरी हरिचन्दनेन्दु-सवादिनी वनभुव प्रसज प्रवृत्ता । स्फीतस्फुरत्पुलककण्टकितांगयष्टिमा मातनोति तरुणी करपल्लवश्च ८३ अथानुमानादधिगम्य तेषां हेतूस्ततस्तद्व्यपदेशिनीधीः । न घ्राणत· स्पर्शनतश्च तादृक् प्रत्यक्षरूपा प्रथते मनीषा ॥ ८४ ॥ श्रोत्रेपि सर्व तदिद समानमालोकमानोऽपि न मन्यसे किम् । दृग्व्यलीकामपिकामीनां य-त्समन्यते कामुक एव साध्वीम् ८५ स्मृत्वा यथैव प्रतिबन्धमाशु शङ्खादिशब्दोऽयमिति प्रतीति· । प्राच्यादिदूरादिगतेऽपि शब्दे तथैव युक्ता प्रतिपत्तिरेषा ॥ ॥ ८६ ॥ दिग्देशानां श्रुतिविषयता किंच नो युक्तियुक्ता युक्तत्वे वा भवति न कथ ध्यानरूपत्वमेषाम् । तस्माद्भिन्नप्रमिति विषयास्ते विशिषन्ति शब्द सिद्धे चैव भवतु सुतरां साधने साध्यसिद्धि· ॥८७॥ अपिच । गृह्यते यदि विनैव सगतिं किं तदानुगुणमारुते ध्वनौ । दूरतोपि धिषणा समुन्मिषे-दन्यया तु निकटेऽपि नैव सा ॥ ८८ ॥ मुहुर्महति मन्थर स्फुरति सानुलोमागमे समुल्लसितवल्लकीकणकणाकणापल्लुता । सकामतनकामिनी कलितयोजनाम्बरा न किं निशि निशम्यते सपदि दूरतः काकली ॥ ८९ ॥ पटुघटितकपटसपुटौघे भवति कथ सदनेऽपि शब्दबुद्धि·। पटुघटितकपाटसपुटौघे भवति कथ सदनेऽपि गन्धबुद्धि ॥ ९० ॥ तथाहि । कर्पूरपारीपरिरम्भभाजी श्रीखण्डखण्डे मृगनाभिमिश्रे । धूमायमाने पिहितेप्यगारे गन्धप्रबन्धो बहिरभ्युपैति ॥ ९१ ॥ द्वारावृतेऽपि सदने प्रणयप्रकर्षा-देव प्रिये स्फुरदपत्रपया स्वजन्ती·। द्वारि स्थितस्य सरसाकुलबालिकायाः कर्णातिथीभवति मन्मथसूक्तिमुद्रा ॥ ९२ ॥ एव च प्राप्त एवैष शब्द· श्रोत्रेणगृह्यते। श्रोत्रस्यापि तत· सिद्धा-निर्बाधा प्राप्यकारिता, ॥९३॥ रत्ना० २ प० ॥

( १० ) सम्प्रति इन्द्रियाणां विषयपरिमाणनिरूपणार्थमाह-

सोइंदियस्स णं भंते! केवतिए विसए पण्णत्ते ? गोयमा! जहन्नेणं अंगुलस्स असंखेज्जइभागे उक्कोसेणं बारसहिं जोयणेहिंतो छिन्ने पुग्गले पुट्ठे पविट्ठाइं सद्दाइं सुणेइ । चक्खिंदियस्स णं भंते! केवतिए विसए पण्णत्ते ? गोयमा ! जहन्नेणं अंगुलस्स संखेज्जइभागो उक्कोसेणं सातिरेगाओ जोयणसयसहस्साओ अच्छिन्ने पुग्गले अपुट्ठे अपविट्ठाइं रूवाइं पासति । घाणिंदियस्स पुच्छा, गोयमा ! जहन्नेणं अंगुलस्स असंखेज्जइभागो उक्कोसेणं नवहिं जोयणेहिं छिन्ने पोग्गले पुट्ठे पविट्ठाइं गंधाइं अग्घाइ ।

एवं जिब्भिंदियस्स वि । फासिंदियस्स वि ॥

इह श्रोत्रादीनि प्राप्तविषयपरिच्छेदत्वात् अङ्गुलासंख्येयभागादप्यागत शब्दादिद्रव्य परिच्छिन्दन्ति नयन वा प्राप्यकारीति तज्जघन्यतोऽङ्गुलसंख्येयभागाद्व्यवहित परिच्छिनत्ति किमुक्तम्भवति जघन्यतोऽङ्गुलसंख्येयभागमात्रे व्यवस्थित पश्यन्ति नतु ततोप्यतिरिक्त-मिति प्राणिप्रसिद्धश्चायमर्थ । तथाच नातिसन्निकृष्टमञ्जनरजोमलादिकं चक्षु पश्यति । उक्तञ्च- "असंखेज्जगुणं भागातो नयणवज्जाण । सखेज्जगुलभागा नयणस्स इत्ति" उत्कर्षतस्तु श्रोत्रेन्द्रिय द्वादशभ्यो योजनेभ्य आगतान् अच्छिन्नान् अव्यवहितान् नान्यै· शब्दान्तरैर्वातादिकैर्वा प्रतिहतशक्तिकानित्यर्थः पुद्गलान् अनेन पौद्गलिकशब्दो नाम्बरगुण इति प्रतिपादितम् । यथाच शब्दस्य पौद्गलिकता तथा तत्वार्थटीकायाम् प्रपञ्चितमिति न भूयः प्रपञ्च्यते स्पृष्टान् स्पृष्टमात्रान् शब्दान् प्रविष्टान् निर्वृतीन्द्रियमध्यप्रविष्टान् शृणोति न परतोऽप्यागतान् कस्मादिति चेदुच्यते परत आगतानां तेषां मन्दपरिणामत्वभावात् तथाहि परतः आगताः खलु ते शब्दपुद्गलास्तथा स्वाभाव्यात् मन्दपरिणामास्तथोपजायन्ते येन स्वविषय श्रोत्रविज्ञान नोत्पादयितुमीश्वरा । श्रोत्रेन्द्रियस्यापि तत्तथाविधमद्भुततरं बल न विद्यते येन परतोऽपि आगतान् शब्दान् शृणुयादिति चक्षुरिन्द्रियमुत्कर्षत· सातिरेकान् योजनशतसहस्रादारभ्याच्छिन्नान् कटकुड्यादिभिरव्यवहितान् पुद्गलान् अस्पृष्टान् दूरस्थितान् अत एवाप्रविष्टान् ( रूवाइत्ति ) रूपात्मकान् पश्यति परतोऽव्यवहितस्यापि परिच्छेदे चक्षुष शक्त्यभावात् नन्वङ्गुलमिह त्रिधा तद्यथा आत्माङ्गुलमुच्छ्रयाङ्गुल प्रमाणाङ्गुलञ्च तत्र "जेणं जयामणासा तेसिं जं होइ माणरूव त। तं भणियमिहायांगुलमणियपमाणं पुण इमन्तु" इत्येवं रूपमात्माङ्गुल " परमाणू तसरेणू रहरेणू अग्गय च वालस्स । लिक्खा जूया य जवा अट्ठगुणा विवड्ढिया कमसो । तत्रेन्द्रियविषयपरिमाण किमात्माङ्गुलेनाहोश्वित् उच्छ्रयांगुलेन उच्यते आत्माङ्गुलेन तथा चाह चक्षुरिन्द्रियविषयपरिमाणचिंतायां भाष्यकृत् " अप्पत्तकारि नयण मणो य नयणस्स विसयपरिमाणं । आयांगुलेण लक्ख अयरित्त जोयणाण तु "। प्रज्ञा १५ पद ।

अगुलजोयणलक्खो समहिओ नव बार मुक्कसो विसओ ।
चक्खू तिय-सोयाणं अंगुल असंखभागियंते ॥

अस्या व्याख्या-स्व च तदगुल च स्वांगुल भगवदुपन्नादेरारभ्य यस्ययद्भवति तेनांगुलेन योजनलक्ष· समधिक· किंचिद्विषयोत्थपरिच्छित्तेश्चक्षुष· नव द्वादशयोजनानि सांगुलेनेत्यत्रापि द्रष्टव्य· । उत्कर्षत उत्कृष्ट ततस्त्रिश्रोत्राणां यथाक्रम योज्य-तत्र त्रयाणां स्पर्शनरसनघ्राणानां नव योजनानि श्रोत्रेन्द्रियस्य पुनर्द्वादश जघन्यत पुनरगुलासख्येयभागिति गाथार्थ । दर्श०। ननु देहप्रमाणमुच्छ्रयांगुलेन क्रियते देहाश्रितानि चेन्द्रियाणि ततस्तेषां विषयपरिमाणमपि उच्छ्रयागुलेन कर्तुमुचित्व कथमुच्यते आत्मांगुलेनेति नैष दोष यद्यपि हि नाम देहाश्रितानीन्द्रियाणि तथापि तेषा विषयपरिमाणमात्मांगुलेनैकदेहानन्यत्वाद्विषयपरिमाणस्य तथा चामुमेवार्थमाक्षेपपुरस्सरं भाष्य कृदप्याह । "नणु भणियमुस्सयगुल, पमाणतो जीवदेहमाणाइ । देहपमाण त चिय न उ इंदियविसयपरिमाण" ॥ १ ॥ अत्र देहपमाणन्न चिय इति यत्र उच्छ्रयागुलमेयत्वं नोक्त तद्देहप्रमाणमात्रमेव नत्विन्द्रियविषयपरिमाण तस्यात्माङ्गुलप्रमेयत्वादिति अथ यदि विषयपरिमाणमिन्द्रियाणामुच्छ्रयाङ्गुलेन स्यात्तत को दोष आपद्येत पञ्चधनु शतानि मनुष्याणां विषयव्यवहाराविच्छेदस्तथाहि यद्भरतस्यात्माङ्गुल तन्किल प्रमाणाङ्गुलं तच्च प्रमाणाङ्गुलमुच्छ्रयाङ्गुलसहस्रेण भवति- "उस्सेहंगुलमेग हवइ पमाणांगुलसहस्सगुणमितिवचनात् " । ततो भरतसगरादिचक्रवर्तिनां या अयोध्यादयो नगर्यो ये तु स्कन्धावारा आत्माङ्गुलेन द्वादशयोजनायामतया सिद्धान्ते प्रसिद्धास्ते उच्छ्रयाङ्गुलप्रमित्या अनेकानि योजनसहस्राणि स्यु तथा च सति तत्रायुधशालादिषु नाडितभेर्यादिशब्दश्रवणेनसर्वेषामा

पदेन "बारसहिँजोयणेहिँ आभिगिण्हए सद्द" इतिवचनात् । अथ च समग्रनगरव्यापी समस्तस्कन्धावारव्यापी च विजयढक्कादिशब्द आगमे च प्रतिपाद्यते तथैव च जनव्यवहारस्ततः एवमागमे प्रसिद्धः पञ्चधनुःशतादिमनुष्याणां विषयव्यवहारो व्यवच्छेदं मा प्रापदित्यात्माङ्गुलेनेन्द्रियाणां विषयपरिमाणमवसातव्यं नोत्सेधाङ्गुलेन तथा चाप्युक्तम्—"जं तेण पचधणुसय, नरादिविसयविवहारवोच्छेओ । पावइ सहस्सगुणियं जेण पमाणंगुलं तत्तो" ॥ १ ॥ अत्र तस्मादात्माङ्गुलेनैवेन्द्रियाणां विषयपरिमाणं नोत्सेधाङ्गुलेनेति । उपसंहारवाक्यं स्वतः परिभावनीयम् ॥ प्रज्ञा० १५ पद ॥ अपिच यानि देहस्यात्मभूतान्येवेन्द्रियाणि तान्यपि तावत्सर्वाण्युच्छ्रयांगुलेन मीयन्ते किंपुनरिन्द्रियविषयपरिमाणमिति दर्शयति ॥

इंदियमाणे वि तयं, भयणिज्जं जंति गाउयाइणि ।

जिब्भिंदियाइमाणं, संववहारे वि रुज्झेज्जा ॥

इन्द्रियाणि श्रोत्रादीनि तानि चेह "कायम्ब पुष्फगोल य मसूरअइमुत्तयस्स कुसुम" चेत्यादिना प्रोक्तानि द्रव्येन्द्रियाणि गृह्यन्ते तेषां मानं प्रमाणमङ्गुलासंख्येयभागादिकं तत्रापि कर्त्तव्ये गृहीतव्ये बोधव्ये वा तदुच्छ्रयांगुलं भजनीय क्वापि व्यापार्यते क्वापि नेत्यर्थः स्पर्शनेन्द्रियमेकं तेन मीयते शेषाणि त्वात्मांगुलेनैवेति भावः कुत इत्याह ( जमित्यादि ) यद्यस्मात्रिगव्यूतीत्यादिमानानां युगलधर्मिणां जिह्वेन्द्रियादिमान यद्युच्छ्रयांगुलेन गृह्यते तदा सव्यवहारे कल्पद्रुमरसादिपरिज्ञानलक्षणे विरुध्येत न घटेतेत्यर्थः । इदमुक्तं भवति " बाहल्लओ य सव्वाइं अंगुल असंखभागं एमेव पुहुत्तओ नवरं अंगुलपुहत्तस्स ण इत्यादि वचनात् अंगुलप्रथक्त्वविस्तरं जिह्वेन्द्रियं निर्णीतं त्रिगव्यूतादिमानानां च जन्तूनां च तदनुसारितया विशालानि तुण्डानि जिह्वा च ततो यद्युच्छ्रयांगुलेन तेषां क्षुरप्राकारतयोक्तस्य जिह्वेन्द्रियस्यांगुलपृथक्त्वलक्षणो विस्तरो गृह्येत तदाऽल्पतया सर्वामपि जिह्वां न व्याप्नुयात् ततश्च सर्वव्यापितया रसवेदनलक्षणो व्यवहारो न घटते तस्मादात्मांगुलेनैव जिह्वादिमानं घटते ततश्च देहात्मभूतानीन्द्रियाण्यपि सर्वाण्युच्छ्रयांगुलेन यदा न मीयन्ते तदा इन्द्रियविषयपरिमाणस्य दूरे वार्त्ता इति गाथार्थः । तदेवं " उस्सेहपमाणओ मिणे देहं " इत्यत्र पारिशेष्याद्देहशब्देन यल्लभ्यते तद्दर्शयन्नाह—

तणुमाणं चिय तेणं, हविज्ज भणियं सुए वि तं चेव ।

एएण देहमाणाइ, नारयाईण मिज्जत्ति ।

तस्मादिन्द्रियपरिमाणे इन्द्रियविषयपरिमाणे चैकान्तेनोच्छ्रयांगुलेनेष्यमाणे दोषस्य दर्शितत्वात्पारिशेष्यात्तनुमानमेव तेनोत्सेधांगुलेन भवेन्न पुनरिन्द्रियपरिमाणं विषयपरिमाणं चेति भावः ॥ युगलधर्मिणां रसवेदनव्यवहारस्य चक्रवर्त्तिभरतनगर्यादिषु भेर्यादिशब्दश्रवणव्यवहारस्य चाऽव्यवच्छेदस्य दर्शितत्वादिति । किंचेन्द्रियपरिमाणं तद्विषयपरिमाणं चोच्छ्रयांगुलेन परः स्वमनीषिकयाऽर्थापत्त्यैव ब्रूते न पुनः श्रुते साक्षादेतत् क्वाप्यभिहितं किं पुनस्तर्हि साक्षात्तत्राऽभिहितमित्याह ( भणियं सुए वि तं चेवेत्यादि ) श्रुतेपि तदेव देहमानमेवोच्छ्रयांगुलेन भणितं नान्यदिति केन पुनर्निर्ग्रन्थेनस्पृतेऽभिहितमित्याह ( एएणेत्यादि ) अर्थनिर्देश एवायं सूत्रालापकस्त्वेवं दृश्यस्तद्यथा "एएणं उस्सेहंगुलपमाणेणं

नेरइय तिरिक्खजोणिय मणुस्सदेवाणं सरीरोगाहणा उ मिज्जन्ति" ॥ तदस्मिन् सूत्रे शरीरावगाहनैवोच्छ्रयांगुलमेयत्वेनोक्ता नत्विन्द्रियपरिमाणादयस्तदात्मांगुलेनैव द्रष्टव्य मिति गाथार्थः ॥ विशे० ॥

तस्मात्सर्वमिन्द्रियविषयपरिमाणमात्माङ्गुलेनैवेति स्थितं ननु भवत्वात्मांगुलेन विषयपरिमाणं तथाधिकृतसूत्रोक्तं चक्षुरिन्द्रिय विषयपरिमाण न घटते अधिकस्यापि तद्विषयपरिमाणस्यागमान्तरे प्रतिपादनात् तथाहि–पुष्करद्वीपार्द्धे मानुषोत्तर पर्वतसमीपवर्त्तिनो मनुष्याः कर्कसंक्रान्तौ प्रमाणांगुलनिष्पन्नैः सातिरेकैः एकविंशति योजनलक्षैर्व्यवस्थितमादित्यमवलोकमानाः प्रतिपाद्यन्ते ॥ शास्त्रान्तरे च तथा तद्ग्रन्थाः " इगवीसं खलु लक्खा, चउतीसं चेव तह सहस्साइं तह पंचसया भणिया, सत्ततीसाए अतिरित्ता ॥ १ ॥ इइ नयणविसयमाणं, पुक्खरवरदीवड्ढवासमणुयाणं । पुव्वेण य अवरेण य पिहिं पिहिं होइ मणुयाणं ॥ २ ॥ इत्यादि ॥ ततः कथमधिकृतसूत्रात्मांगुलेनापि घटते प्रमाणांगुलेनापि व्यभिचारिभावात् । उक्तञ्च–" लक्खेहिं एक्कवीसाए, सायरं गेहिं पुक्खरद्धम्मि ॥ उदए पेच्छन्ति नरा, सूरं उक्कोसए दिवसे ॥ ३ ॥ जं य णिंदियस्स तम्हा, विसयप्पमाणं जहा सुए भणियं ॥ आउस्सेहपमाणं गुलाणमेक्केण वि न जुत्तं ॥ ४ ॥ " प्रज्ञा० १५ पद ।

ननु पुष्करवरद्वीपस्य मानुषोत्तरपर्वतद्विधाकृतस्यार्वाग्भागवर्त्तिन्यर्द्धे मानुषोत्तरसन्निधावुत्कृष्टे दिवसे कर्कटकसंक्रान्त्यामुदये उपलक्षणत्वादस्तसमये च नरा मनुष्याः सूरमादित्यं पश्यन्ति अवलोकयंति, कियद्दूरं व्यवस्थितमित्याह

सातिरेकैरेकविंशतिलक्षैर्योजनानां । एतदुक्तं भवति " सियालीससहस्सा, दोयसया जोयणाण ते वद्धा । एगवीससट्ठिभागा कक्कडमाइम्मिपेच्छनरा " इति वचनाद्यथात्र कर्कसंक्रातावुत्कृष्टे दिवसे एतावंति दूरे व्यवस्थितं सूर्यं मनुष्या पश्यन्ति यथा–पुष्करार्द्धमानुषोत्तरसमीपे प्रमाणंगुलनिष्पन्नैः सातिरेकैरेकविंशतियोजनलक्षैर्व्यवस्थितमादित्यं तत्र दिने तन्निवासिनो लोका समवलोकयन्ति तत्र भ्रमति बाहुल्यात्सूर्याणां च शीघ्रतरगतित्वादुक्तं च " इगवीसमित्यादि " तस्मान्नयनेन्द्रियस्य सातिरेकयोजनलक्षस्वरूपं विषयपरिमाणं यथा श्रुते प्रज्ञापनादिकेऽभिहितं तथा तेन प्रकारेणात्मांगुलोत्सेधांगुलप्रमाणांगुलानामेकेनापि गृह्यमाणं न युक्तं प्रमाणांगुले निष्पन्नस्यापि योजनलक्षस्य च निष्पन्नसातिरेकैकविंशतियोजनलक्षेभ्य एकविंशतितमभागवर्त्तित्वेन बृहदन्तरत्वात्तस्मादेकत्र सातिरेकं लक्षमन्यत्र सातिरेकैकविंशतिलक्षाणि योजनानां नयनस्य विषयप्रमाणमुक्तं श्रुतस्य पूर्वापरविरोध इति परस्योक्तमिति गाथाद्वयार्थः ॥ विशे० ॥ तथा–नयनस्य विषयोऽप्रकाशकवस्तुपर्वताद्याश्रित्यात्मांगुलेन सातिरेकं योजनलक्षं स्यात् प्रकाशकेत्वादित्यचन्द्रादिवदधिकमपि विषयपरिमाणं स्यात् नात्र विषये नियमः कोपि निर्दिष्टोऽस्ति सिद्धान्ते यतः पुष्करवरद्वीपादिमानुषोत्तरपर्वतसमीपे कर्कसंक्रान्तौ मनुष्याः प्रमाणांगुलजनैः सातिरेकैरेकविंशति योजनलक्षैर्व्यवस्थितं रविं पश्यन्तः प्रोच्यन्ते शास्त्रान्तरे इति तदु० ।

सत्यमेतत् । केवलमिदं सूत्रं प्रकाश्यविषयं द्रष्टव्यं न तु प्रकाशकविषयं ततः–प्रकाशकाधिकरणमपि विषयपरिमाणं न विरुध्यते इति न कश्चिद्दोषः । कथमेव विशेषोऽर्थोऽवसीयत

इति चेदुच्यते पूर्वसूरिकृतव्याख्यानात् सकलमपि हि कालिकश्रुत पूर्वसूरिकृतव्याख्यानानुसारेणैव व्याख्यानयन्ति महाधियो न यथाक्रमात्रसन्निवेशं पूर्वगतसूत्रार्थसङ्ग्रहपरतया, कालिकस्तु तस्य क्वचित्सङ्क्षिप्तस्याप्यर्थस्य महता विस्तारेण क्वचिद्विस्तारवतोऽप्यतिसङ्क्षेपेणाभिधाने अर्वाक्तनैः स्वमति यथा वस्थितार्थतया ज्ञातुमशक्यत्वादत एवोक्तमिदमन्यत्र- " ज जह भणियमित्यादि" तस्मात् पूर्वसूरिकृतव्याख्यानान्नाधिकृत ग्रन्थविरोधः ॥ आहच भाष्यकृत् " सुत्ताभिप्पाओ य पयाभयणिज्जे तय न उ पयासए । वक्खाणओ विसेसो न हि संदेहादिलक्खणया । प्रज्ञा० १५ पद ॥

सातिरेकयोजनलक्ष नयनविषयप्रमाण ब्रुवतः सूत्रस्यायमभिप्राय॰ इय विवक्षा यदुत स्वय तेजोरूपप्रकाशराहितत्वात्परप्रकाशनीय यद्वस्तु पर्वतगर्तादिक तत्रैव तत्सातिरेकयोजनलक्षं नयनविषयप्रमाणतया द्रष्टव्य । नतु स्वयमेव तेजोयुक्तत्वेन प्रकाशे चन्द्रार्कादिक प्रकाशके वस्तुनि, एतदुक्तं भवति कश्चिन्निर्मलचक्षुर्जीव॰ सातिरेकयोजनलक्षे स्थित पर्वतादिक वीक्ष्य त इति प्रकाशनीयपर्वतगर्तादिके वस्तुनि नयनस्य तद्विषयप्रमाणमुक्तं प्रकाशकत्वादित्यादिकेऽनियमः । कुतः पुनरय सूत्राभिप्रायो गम्यत, इत्याह-व्याख्यानतो विशेषप्रतिपत्तिः कर्तव्या नतु संदेहादुभयपक्षोक्तिलक्षणत्वात्सूत्रस्य सर्वज्ञप्रणीतस्यालक्षताऽसमञ्जसाभिधायिता व्यवस्थापनीया व्याख्यानात्सूत्र विषयविभागेन धारणीय न तूभयपक्षोक्तिमानभ्रमिनैस्तद्विरोध उद्भावनीय इत्यर्थः । उक्तच । "ज जह सुत्ते भणिय तहेव जइ त वियालणा नत्थि । किं कालियाऽणुओगो दिट्ठो दिट्ठिप्पहाणेहिं । " तदेवमप्राप्तकारिता विचारप्रक्रमेण नयनस्य विषयप्रमाणमुक्तम् ॥ विशे० ॥

तथा घ्राणेन्द्रियजिह्वेन्द्रियस्पर्शनेन्द्रियाणि गन्धादीनुत्कर्षतो नवयोजनेभ्य आगतान् अच्छिन्नान् द्रव्यान्तरैरप्रतिहतशक्तिकान् परिच्छिन्दन्ति न परत आगतान् परत आगतानां मन्दपरिणामत्वाभावात् घ्राणादीन्द्रियाणां च तथारूपाणामपि तेषां परिच्छेदं कर्तुमवशक्यत्वात्-आह च भाष्यकृत् । "वारसहिंतो सुत्त, सेसाण नवहि जोयणेहिंतो । गिण्हति पत्तमत्थं पत्तो परतो न गिण्हति " ( प्रज्ञा० १५ पद ) मेघगर्जितादिशब्दमुत्कृष्टतो द्वादशयोजनेभ्य॰ समायात गृह्णाति श्रोत्रम्, उक्तशेषाणि त्विन्द्रियाणि घ्राणरसनस्पर्शनलक्षणानि गन्धरसस्पर्शलक्षणमर्थमुत्कर्षतो नवयोजनेभ्य॰ प्राप्त गृह्णन्ति ॥ इत परतोऽप्यायात शब्दादिकमेतानि न गृह्णन्ति । ननु मेघगर्जितादि विषय॰ शब्दः प्रथमप्रावृषि दूरे प्रथममेघवृष्टौ सत्यां मृत्तिकादिगन्धश्च दूरादप्यायातो गृह्यमाण॰ समनुभूयते रसस्पर्शौ तु कथमिति चेदुच्यते-दूरादागतानां गन्धद्रव्याणां रसोपि तावत्कश्चिद्भवत्येव स च तेषां जिह्वासवन्धे सति ययासभव कदाचित् केनचित् गृह्यत एव । तथा च वक्तारो भवन्ति "कटुकस्य तीक्ष्णादेर्वा वस्तुनः सवन्धी अय गन्ध" इति । यदिह कटुकत्व तीक्ष्णादित्व चोच्यते तद्रसस्यैव धर्मस्ततश्च ज्ञायते जिह्वासवन्धि तेषां कटुकादिरसोऽपि गृह्णीत इति स्पर्शोऽपि शीतादिदूरादपि शिशिर॰ पवनसर॰ सरित्समुद्रादेर्मध्येनायातस्य वातादेरनुभूयत एवेति । यद्येव तर्हि द्वादशनवयोजनेभ्य परतोप्यायाताः शब्दगन्धादय॰ किमिति न गृह्णन्त इत्याह-

दव्वाणं मंदपरिणा-मत्ता परओ न इंदियवलं पि ।
अवरमसंखिज्जंगुल-भागओ नयणवज्जाणं ॥

द्वादशनवयोजनेभ्य॰ परत॰ समायातानां शब्दादिगन्धादि द्रव्याणां मन्दपरिणामत्वान्न खलु परत॰ समायातानां तेषां तथाविधपरिणामो भवति येन श्रोत्रघ्राणादिविज्ञान जनयेयु॰ । श्रोत्रादीन्द्रियाणामपि च तथाविधं बल न भवति येन परत॰ समायातानि शब्दादिद्रव्याणि गृहीत्वा स्वविज्ञान जनयन्तु तदेवमुक्तमिन्द्रियाणां उत्कृष्ट विषयपरिमाणम् । अथ जघन्य तद्भिधित्सुराह ( अवरमित्यादि ) अवरं जघन्यं विषयप्रमाण मुच्यते किमित्याह । असख्याततमादङ्गुलादसख्येयभागादागत गन्धादिकं घ्राणादीनि गृह्णन्ति किमेतत्सर्वेषामपीन्द्रियाणां जघन्यविषयप्रमाण नेत्याह नयनवर्जानां नयनस्य तर्हि का वार्ता इत्याह-

संखिज्जइ भागाओ, नयणस्स मणस्स न विसयपमाणं ।
पोग्गलमित्तनिबंधा, भावाओ केवलस्सेवा ॥

अङ्गुलासंख्येयभागाद ङ्गुलसंख्येयभागमवधौ कृत्वा नयनस्य जघन्य विषयपरिमाणमतिसंनिकृष्टस्याञ्जनशलाकारजोमलादेस्तेनानुपलम्भादिति भाव॰ । मनसस्तु क्षेत्रतो नास्त्येव विषयप्रमाणं नियमेन दूरे आसन्ने च तत्प्रवर्तत इत्यर्थः कुत इत्याह । पुद्गलमात्रस्य निबन्धो नियमस्तस्याः भावान्मूर्तामूर्तसमस्तवस्तुविषयत्वेन पुद्गलेष्वेवेदं प्रवर्तत इत्येव भूतस्य नियमस्याभावात्केवलस्येवेत्यर्थः । इह यत्पुद्गलमात्रनिबन्ध नियत न भवति न तस्य विषयपरिमाणमस्ति यथा केवलस्य, पुद्गलमात्रनिबधाऽनियतं च मनस्ततो नास्य विषयपरिमाण यस्य तु विषयपरिमाण तत्पुद्गलमात्रनिबधरहितमपि न भवति यथाऽवधिमन पर्यायज्ञाने इति । अत्राह-नन्वनैकान्तिकोऽय हेतुर्मतिश्रुतज्ञानाभ्यां व्यभिचारात्तथाहि मूर्तामूर्तसमस्तवस्तुविषयत्वेन तावन्नैते पुद्गलमात्रनिबन्धनियताऽय च दृश्यते श्रोत्रादीन्द्रियप्रभवयोस्तयोर्द्वादशयोजनादिक क्षेत्रतो विषयप्रमाणमिति तदेतदसमीक्षिताभिधानमेव यत इन्द्रियप्रभवयोरेवतयोरिदं विषयपरिमाण इन्द्रियाणि च पुद्गलमात्रनिबन्धनियतान्येवेति कुतो व्यभिचार । मनःप्रभवयोस्तु तयोरस्ति पुद्गलमात्रनिबन्धाभाव॰ केवल तयोः क्षेत्रतो विषयपरिमाणमपि नास्त्यत॰ कुतोऽनैकान्तिकतेत्यलविस्तरेणेति । विशे० । आ० म० प्र० । नं० । आ० चू० । इन्द्रियाणि च रक्षणीयानि । उक्तच-

"इन्द्रियाणि न गुप्तानि लालितानि न चेच्छया । मानुष्यं दुर्लभं प्राप्य न भुक्तम् विशेषितम्" इति । आचा० १ श्रु० २ अ० २ उ० ।

( ११ ) अयेन्द्रियासम्भृतानां स्वरूपस्येन्द्रियासवरदोषस्य चाभिधायक गाथाकदबक ज्ञाताधर्मकथाया॰ सप्तदशेऽध्ययने यथा-

कलरिभिय महुरतंती-तल ताल वंसककुहाभिरामेसु ।
सद्देसु रज्जमाणा रमंति सोइंदियवसट्टा ॥ १ ॥
सोइंदियदुद्दंत-त्तणस्स अह एत्तिओ हवइ दोसो ॥
दिवगरुयममरिसंतो, वहबंधं तित्तिरो पत्तो ॥ २ ॥
थण-जहण-वयण-कर-चरण-णयण-गव्विय विलासियगइसु
रूवेसु रज्जमाणा, रमंति चक्खिंदियवसट्टा ॥ ३ ॥
चक्खिंदियदुद्दंत-त्तणस्स अह एओ हवइ दोसो ॥
जं जलणंमि जलंते, पयइ पयंगो अबुद्धीओ ॥ ४ ॥
अगुरुवरपवरधूवण-उयमल्लाणुलेवणविहीसु ॥

५ घरं पुच्छा इतो वीराण अट्ठं वा तिभागं वा दाऊण वा वि-
मसय ववहरइ तण तद्दिवस विकुणो लाहलको इयरो चुको
एवं तो अचिंतणेण सुत्तत्था नासन्ति ते हियते नट्ठेहिं गच्छ-
सारवणा भावेण गच्छस्स अपरिचियणाओ बहुतरं मे नासइ
इति तथाचाह * सुत्तत्थेसु अचिंतण, आदेसे वुड्ढसेहगेलन्ने ।
बाले खमगे वाइ, इड्ढीमाई अणिड्ढिया १ एएहिं कारणेहिं-तु
वन्भूतो न होइ आयरिओ । वेयावच्चे करणं, कायव्वं तस्स
सेहेहिं २ जेण कुत्र आयत्त, तं पुरिसं आयरेण रक्खेज्जा ।
नहि तुंबंमि विणट्ठे, अरया साहरया होंति ३ * आदेशे प्राघूर्णके
वृद्धे शैक्षके ग्लाने तथा बाले लघुवयसि क्षपके च यद्याचार्य-
स्वय वैयावृत्त्य करोति तर्हि सूत्रार्थयोरचिन्तन भवति तथा
वादिनि आगते ऋद्धिमति च नगरश्रेष्ठ्यादौ आदिशब्दाद्रा-
जादिपरिग्रहः । आचार्ये वैयावृत्त्याय पानकादिगते प्रवचनला-
घव भवति अनर्द्धिका एते अनीश्वरप्रव्रजिता एते इत्यर्थ । तत
एतै. कारणैराचार्य. शेषसाधूनामरकप्रायाणां तुम्बभूतो भवति
ततो वैयावृत्त्यविषये यत् करणं करणीयं तत्तस्य शेषै कर्त्तव्यं
न पुन स स्वविषये परविषये वा वैयावृत्त्ये प्रवर्तमान उपेक्षणीय
एतदेवाह ( जेणेत्यादि ) येन पुरुषेण कुलमायत्त त पुरुषमाद-
रेण रक्षेत यतो नहु नैव तुम्बे विनष्टे अरका साधारका साधा-
रा भवन्ति आह इच्छाकारेणाहं तत्र प्रथमालिकादिकमान-
यामीत्याद्यभिधाय यदा द्रव्याभावान्न संपादयति तदा
निर्जरालाभविकलस्तस्येच्छाकारस्तत. किं तेनेत्याशङ्क्याह
* वेयावच्चे अब्भु-ट्ठियस्स सद्धाए काउकामस्स । लाभो चेव
तवसिस्स होइ अद्दीणमणसस्स * वैयावृत्त्ये सयमव्यापारे
अभ्युत्थितस्य, तथा श्रद्धया प्रसन्नेन मनसा इह लोकपरलोका-
शंसाविप्रमुक्तेन कर्तुकामस्य ( लाभो चेव तवस्सिस्सत्ति )
प्रकारान्तरनिर्जरया लाभ एव तपस्विनि भवति अदव्याद्वौ
अदीन मनो यस्यासावदीनमनास्तस्यादीनमनसः ॥ आ० म०
द्वि० । पंचा० । आ० चू० ।

इच्छमाण-इच्छत्-त्रि० अभिलष्यति, पंचा० ५ विव० ॥

इच्छा-इच्छा-स्त्री० एषणमिच्छा-इषु इच्छायाम् । इष-भावे श
प्रत्यय स्था० १० ठा० । आ० म० प्र० । मायाकषायभेदे,
सम० ५२ स० । अभिलाषे, प्रश्न ५ द्वा० । पंचा० । आव० ।
सूत्र० । दशा० । स्था० । वृ० । " इच्छामि खमि ( उं ) का
उस्सग्गं " इषु इच्छायामित्यस्योत्तमपुरुषैकवचनस्य " इषुग-
मयमां छ "इति छत्वे इच्छामीति भवति इच्छाम्यभिलषामि स्था-
तुमिति । आव० ५ अ० । सम्भाव्यमान लाभस्यार्थस्याभिलाषा-
तिरेके, अनु० । आगतानागतनानार्थप्रार्थनायाम् , ध०
३ अधि० । अभिप्राये, न० । ग० । विशे० । चित्त प्रवृत्तौ, आचा०
१ श्रु० ४ अ० १ उ० । अभ्युपगमे, ध० २ अधि० प्रीतौ, द्वा०
१० द्वा० । प्रीतिमात्राधिकभावाभिलाषे, अष्ट० २७ । सुहाया-
म अष्ट० ११ । परिग्रहावस्तुविषयकवाञ्छाकरणे, सथा० ।
पचा० । अन्त करणप्रवृत्तौ, सूत्र० २ श्रु० २ अ० । इन्द्रिय-
मनोनुकूल्यायाम्प्रवृत्तौ, आचा० १ श्रु० ४ अ० २ उ० । विच-
क्षितक्रियाप्रवृत्त्यभ्युपगमे, अनु० ॥

एतस्य निक्षेपो यथा—

नामं ठवणा दविए, खित्ते काले तहेव भावे अ ।
एसो खलु इच्छाए, निक्खेवो छव्विहो होइ ॥ १ ॥

नामस्थापने गतार्थे द्रव्येच्छा सचित्तादिद्रव्याभिलाष । अनु-
पयुक्तस्य वेच्छामीत्येवं भणत क्षेत्रेच्छा मगधादिक्षेत्राभिलाष ।
कालेच्छा रजन्यादिकालाभिलाषः " रयणिमहिसारियाउ,
चोरा परदारिया य इच्छंति । तालायरा सुभिक्खं, बहुधन्ना
केइ दुब्भिक्खं " भावेच्छा प्रशस्तेतरभेदा प्रशस्तज्ञानाद्यभि-
लाषः । आव० ३ अ० । आ० चू० ॥

विस्तरेणेच्छानिक्षेपमाह ॥

जाइं इच्छइ अत्थं, नामादि तस्स सा हवई इच्छा ।
नामंमि जं तु नामं, इच्छसि नामं व जं जस्सि ॥ २ ॥

यो नाम यमर्थं नामादिलक्षणमिच्छति तस्य सा भवति
इच्छा यो नामेच्छसि तस्य नामेच्छा । स्थापनामिच्छतः स्था-
पनेच्छा । एवं द्रव्येच्छादिकमपि भावनीयम् । इच्छायाश्च
निक्षेपः षोढा । तद्यथा—नामेच्छा स्थापनेच्छा द्रव्येच्छा
क्षेत्रेच्छा कालेच्छा भावेच्छा । तत्र नामेच्छामभिधित्सुराह—
नाममित्यादिना तु नामविषया इच्छा इयं नाम देवदत्ता
दिकस्य नाम इच्छा नामेच्छेति भाव. । अथवा यस्येति नाम
स नामनामवतोरभेदोपचारात् नाम चासौ इच्छा च नामेच्छा ।

स्थापनेच्छामाह ।

एमेव होइ ठवणा, निक्खिप्पइ इच्छ एव जं ठवणं ।
सो मित्ताई जह सं-भवतु दव्वादिसुं भणसु ॥ ३ ॥

एवमेवानेनैव नामगतेन प्रकारेण भवति स्थापनेच्छा अति-
देशोक्तमेव यदिच्छेति निक्षिप्यते सा स्थापना चासाविच्छा
च स्थापनेच्छेति व्युत्पत्ते । अथवा यत. स्थापनामिच्छति
सा स्थापनेच्छा स्थापनीया इच्छा स्थापनेच्छेति व्युत्पत्ते. ।
द्रव्येच्छा द्विधा आगमतो नोआगमतश्च । तत्र आगमत इच्छा
पदार्थज्ञाता तत्र चानुपयुक्तो नोआगमतस्त्रिधा—ज्ञशरीर-
भव्यशरीरे प्राग्वत् तद्व्यतिरिक्ता च यद्द्रव्यमिति सा च त्रिधा
सचित्तद्रव्येच्छा अचित्तद्रव्येच्छा मिश्रद्रव्येच्छा । तत्र सचित्त-
द्रव्येच्छा त्रिधा-द्विपदचतुष्पदापदभेदात् । तत्र द्विपदा सचित्त
द्रव्येच्छा यत् स्त्रियमिच्छति पुरुषमिच्छति इत्येवमादि । चतु-
ष्पदसचित्तद्रव्येच्छा यदश्वमिच्छति गावमिच्छतीति । अप-
दसचित्तद्रव्येच्छा आम्रस्येच्छा मातुलिङ्गस्येच्छेत्यादि । अचि-
त्तद्रव्येच्छा सुवर्णद्रव्येच्छा हिरण्येच्छादि । मिश्रद्रव्येच्छा
सुवर्णाद्यलङ्कारविभूषितस्य द्विपदादेरिच्छा । अथवा द्रव्यादिषु
क्षेत्रकालेषु यथासंभवं स्वामित्वादि । स्वामित्व स्वकरण
करणानि भणत स्वामित्वादिभि. प्रकारैः द्रव्यक्षेत्रकाले-
च्छा वक्तव्येति भावः । तत्र स्वामित्वेन द्रव्येच्छा यथा आत्मन
पुत्रमिच्छति इत्यादि करणेन यथा मद्याद्यभ्यवहृतेन तैरिच्छा
कामेच्छा वा जायते इत्यादि । अधिकरणे यथा सुप्रतारितायां
शय्यायां स्थितस्य कामेच्छा समुत्पद्यते क्षेत्रकालावचेतनौ
ततो न तयो. स्वय स्वामित्वेनेच्छा भवति तत. करणाधि-
करणाभ्यां तत्र योजना तत्र क्षेत्रेण लब्धेन क्रीडनेच्छा
वपनेच्छा जायते । अधिकरणेन यथा गृहे स्थितस्य भोगेच्छा
कामेच्छा वा, मद्गुरुकुलवासे सम्यगनुष्ठानेच्छा वा समुपजायते
इत्यादि । काले करणे यथा यौवनकालेन धनेच्छा कामेच्छा वा
जायते इत्यादि । अधिकरणे यथा हेमन्ते रात्रौ शीतेन पीडि-
त सूर्योष्मकालमिच्छति । भावत इच्छा द्विधा-आगमतो नो
आगमतश्च तत्रागमत इच्छेति पदार्थज्ञाता तत्रोपयुक्त "उ-
पयोगो भावनिक्षेप " इति वचनात् नो आगमत आह—

भावे पसत्थमपस—त्थिया य अपसत्थियत इच्छाओ ।
इच्छाओ य पसत्थं, नाणादीयं निविट्ठमित्थं ॥ ४ ॥

आगमतो भावत इच्छा द्विधा प्रशस्ताऽप्रशस्ता च । मकारो लाक्षणिक । तत्राज्ञानादिविषया इच्छा अप्रशस्ता, प्रशस्ता ज्ञानादिविषया । व्य० प्र० ३ उ० ।

इच्छाविनिवृत्तेः फलं यथा–

कंखिज्जइ जो अत्थो, संपत्तीए न तं सुहं तस्स ॥
इच्छाविणिवित्तीए, जं खलु बुच्छप्पवाओ अं ॥ ९६ ॥

कांक्ष्यतेऽभिलष्यते योऽर्थ आदिसप्राप्त्या न तत्सुख तस्यार्थस्य इच्छाविनिवृत्त्या यत्खलु सुवुच्छप्रावादोऽयमाप्तप्रवादोय मिति गाथार्थः ।

मुत्तीए वभिचारो, तत्तो जं सा जिणेहिं पन्नत्ता ॥
इच्छा विणिवित्तीए, चेव फलं पगरिसं पत्तं ॥ ९७ ॥

मुक्त्या व्यभिचारस्तत्काङ्क्षणे तत्प्राप्त्यैव सुखभावादेतदाशङ्क्याह । तत्र यद्यस्मादसौ मुक्तिर्जिनैः प्रज्ञप्ता तीर्थकरैरुक्ता इच्छाविनिवृत्तेरेव फलं न पुनरीच्छापूर्वकमिति प्रकर्ष प्राप्तसामायिक सयतादेरारभ्योत्कर्षेण निष्ठाप्राप्तमिति गाथार्थ । किंच–

जायेच्छाए जायइ, संपत्ती तं पगुच्चिमं भणिअं ।
मुत्ती पुण तदभावे, जमणिच्छा केवली भणिया ॥ ९८ ॥

यस्यार्थस्येच्छया प्रवृत्तिनिमित्तभूत यज्जायते सप्राप्तिस्तमर्थं विनयादिकं प्रतीत्येदं भणित काङ्क्ष्यते इति । मुक्ति पुनस्तदभावे इच्छाऽभावे जायते । कुत इत्याह–यद्यस्मादनिच्छाः केवलिनो भणिता. "अमनस्का केवलिन" इति वचनादिति गाथार्थः । प० व० १ द्वा० । पक्षस्य पञ्चदशसु रात्रिषु स्वनामख्यातायामेकादश्यां रात्रौ च । ज्यो० ४ पा० ॥ ज० ॥ च० ।

ईप्सा–स्त्री० आप्तुमिच्छा आप्–सन्–अ । आप्तुमिच्छायाम्, इच्छायां च । वाच० ।

इच्छाकाम–इच्छाकाम–पु० एषणमिच्छा सैव चित्ताभिलाषरूपत्वात्काम इच्छाकामः । इच्छारूपे कामे, " इच्छा पसत्थमपसत्थिगा य " । इच्छा प्रशस्ताऽप्रशस्ता च । अनुस्वारो ऽलाक्षणिक. सुखमुखोच्चारणार्थः । तत्र प्रशस्ता धर्मेच्छा मोक्षेच्छा । अप्रशस्ता युद्धेच्छा राज्येच्छा । व्यक्ता इच्छाकामा इति । दश० २ अ० ।

इच्छागहण–इच्छाग्रहण–न० अभिप्रायपरीक्षणे, बृ० १ उ० ।

इच्छाछंद–इच्छाछन्द–पु० यथाछन्दे, "एसो उ अहा छंदो इच्छाछंदो त्ति एगट्ठा" २८ इति । आव० ३ अ० ।

इच्छाजम–इच्छायम–पु० यमभेदे,–" इच्छायमो यमेष्विच्छा, युता तद्वत्कथामुदा"–इच्छेति तद्वता यमवता कथातो या मुत् प्रीतिस्तया युता सहिता यमेष्विच्छा इच्छायम उच्यते इति । द्वा० २० द्वा० ।

इच्छाजोग–इच्छायोग–पु० इच्छाप्रधानो योगो व्यापार इच्छायोगः । योगभेदे, तल्लक्षण यथा–

चिकीर्षोः श्रुतशास्त्रस्य, ज्ञानिनोऽपि प्रमादिनः ।
कालादिविकलो योग इच्छायोग उदाहृतः ॥ २ ॥

चिकीर्षोः तथाविधक्षयोपशमाभावे ऽपि निर्व्याजमेव कर्तुमिच्छोः श्रुतोवस्य श्रुतागमस्य अर्थ्यते ऽनेन तत्त्वमिति कृत्वा ऽर्थशब्दस्यागमवचनत्वात् । ज्ञानिनोऽपि अवगतानुष्ठेयतत्त्वार्थस्यापि प्रमादिनो विकथादिप्रमादवत कालादिना विकलोऽसम्पूर्णो योगश्चैत्यवन्दनादिव्यापार इच्छायोग उद्दत प्रतिपादित ।

प्रधानस्येच्छायोगत्वे तदङ्गस्यापि तथात्वमिति दर्शयन्नाह ।

साङ्गमप्येककं कर्म्म, प्रतिपन्ने प्रमादिनः ॥
न त्विच्छायोगत इति श्रवणादत्र मज्जति ॥ ३ ॥

साङ्गमपि अङ्गसाकल्येनाविकलमपि एककं स्वल्प किंचित्कर्म प्रतिपन्ने बहुकालव्यापिनि प्रधाने कर्मण्यादृते प्रमादिनः प्रमादवत नत्विच्छायोगत इति श्रवणादत्र इच्छायोगे निमज्जति निमग्न भवति । अन्यथा हीच्छायोगाधिकारी भगवान् हरिभद्रसूरिर्योगदृष्टिसमुच्चयप्रकरणप्रारम्भे मृषावादपरिहारेण सर्वतैश्चित्यारम्भप्रदर्शनार्थं न त्विच्छायोगतो योगमित्यादिनाविवक्षत् । वाङ्नमस्कारमात्रस्याल्पस्य विधिशुद्धस्यापि सम्भवात् । प्रतिपत्तस्वपर्यायान्तर्भूतत्वेन च प्रकृतनमस्कारस्यापीच्छायोगप्रभवत्वमदुष्टमिति विभावनीयम् । द्वा० १९ द्वा० ।

इच्छाणुलोम–इच्छानुलोम–त्रि० इच्छाऽनुकूले, प्रतिपादयितुर्या इच्छा तदनुलोमा तदनुकूला इच्छा इच्छानुलोमा । भाषाभेदे, स्त्री० । भ० १० श० ३ उ० । इच्छानुलोमा नाम यथा कश्चित् किंचित् कार्यमारभ्यमाणः कंचन पृच्छति स प्राह–करोतु भवान् ममाप्येतदभिप्रेतमिति । प्रज्ञा० ११ पद ॥

इच्छाणुलोमिय–ऐच्छानुलोमिक–त्रि० इच्छा चेत प्रवृत्तेरभिप्रायस्तस्यानुलोममनुकूलम् तत्र भवमैच्छानुलोमिकम् । इच्छाभावानुकूलयताभाजि, । आचा० १ श्रु० ३ अ० ४ उ० ॥

इच्छापणीय–इच्छाप्रणीत–त्रि० । इन्द्रियमनोविषयानुकूला प्रवृत्तिरिहेच्छा तया विषयाभिमुखमभिकर्मबन्धससाराभिमुख वा प्रकर्षेण नीत इच्छाप्रणीत । इच्छया विषयाभिमुख कर्मबन्धाभिमुख ससाराभिमुख वा नीते, " इच्छापणीता वंका णिकेया " ये चैवभूतास्ते वङ्का निकेता वङ्कस्यासयमस्याऽऽमर्यादया सयमावधिभूतया निकेतभूता आश्रया इति । आचा० १ श्रु० ४ अ० २ उ० ॥

इच्छापरिमाण–इच्छापरिमाण– न० इच्छाया धनादिविषयस्याभिलाषस्य परिमाण नियमनमिच्छापरिमाणम् । देशत परिग्रहविरतिरित्यर्थ । स्था० ५ ठा० । इच्छा परिग्राह्यवस्तुविषया वाञ्छा तस्यास्तया परिग्राह्यवस्तुनाम्परिमाणमियत्ता इच्छापरिमाणम् । पञ्चा० १ विव० । धनधान्यादिनवविधपरिग्रहप्रमाणलक्षणलक्षणे पञ्चमे अणुव्रते, । तल्लक्षण यथा–

परिग्रहस्य कृत्स्नस्याऽमितस्य परिवर्जनात् ॥
इच्छापरिमाणकृतिं जगदुः पञ्चमं व्रतम् ॥ २९ ॥

परिगृह्यत इति परिग्रहस्तस्य कीदृशस्य कृत्स्नस्य नवविधस्येत्यर्थ चतु षष्टिभेदोऽप्येष नवविधपरिग्रहे अन्तर्भवतीति, न कोपि विरोध । पुन कीदृशस्य तस्य अमितस्य परिमाणरहितस्य परिवर्जनात्त्यागात् त्यागनिमित्तभूतेनेत्यर्थ इच्छाया अभिलाषस्य यत्परिमाणमियत्ता तस्य कृति करण तां पञ्चम व्रत अधिकारादणुव्रत जगद्गुरव ऋतुर्जिना इति सदद्ध । इदमत्र तात्पर्यम् परिग्रहविरतिर्द्विधा सर्वतो देशतश्च । तत्र सर्वथा सर्वभावेषु मूर्च्छात्याग सर्वतः तदेव देशतस्तत्र श्रावकाणां सर्वत. तत्प्रतिपत्तुमशक्तो देशतस्तत्र मिच्छापरिमाणरूपा प्रतिपद्यतेयत "अपरिमियपरिग्गहं समणोवासओ पच्चक्खाइ । इच्छापरिमाण उवसंपज्जइ से अ परिग्गहे दुविहे पणत्ते तंजहा सचित्त परिग्गहे अचित्तपरिग्गहे अ त्ति । ध० २ अधि० । परिग्रहात परिग्रहः अपरिमितग्रामः परिग्रहश्चेति ममाम अपरिमितप-

रिमाणस्तत्र श्रमणोपासकः प्रत्याख्याति सचित्तादेः परिमाणात् परिग्रहाद्विरमतीति भावना । इच्छायाः परिमाणं तदुपपद्यते सचित्तादिगोचरेच्छापरिमाणं करोतीत्यर्थः । स च परिग्रहः द्विविधः प्रकृतस्तथैवेति प्राग्वत् । सह चित्तेन सचित्तं द्विपदचतुष्पदादि तदेव परिग्रहस्सचित्तपरिग्रहः । अचित्तं वस्तु रत्नकुप्यादि तदेवाचित्तपरिग्रहः । आव० ६ अ० ॥

ननु गृहे स्वल्पद्रव्येऽपि सति परिग्रहपरिमाणे तु द्रव्यसहस्रलक्षादिप्रतिपत्त्या इच्छावृद्धिसम्भवात् को नाम गुण इति चेन्नैवम् इच्छावृद्धिस्तु संसारिणां सर्वदा विद्यमानैव यतो नमिराजर्षिवचनमिन्द्रं प्रति-" सुवस रुप्पस्स य पव्वया भवे, सिया हु केलाससमा असंखया । नरस्स लुद्धस्स न तेहिं किंचि, इच्छा हु आगाससमा अणंतया " एवं चेच्छाया अनन्तत्वे तदियत्ताकरणं महते गुणाय यतः "जह २ अप्पो लोहो, जह २ अप्पो परिग्गहारंभो । तह २ सुहं पवड्ढइ, धम्मस्स य होइ संसिद्धी" तस्मादिच्छाप्रसरं निरुध्य सन्तोषे यतितव्यं सुखस्य संतोषमूलत्वात् । यदाह-आरोग्गसारिअं माणुसत्तणं सच्चसारिओ धम्मो । विज्जा निच्छयसारा, सुहाई संतोससाराइं" । तदेवमेतद्व्रतस्याऽत्रापि संतोषसौख्यलक्ष्मीस्थैर्यजनप्रशंसादिफलं परत्र तु नरामरसमृद्धिसिद्ध्यादि । अतिलोभाभिभूततया चैतद्व्रतस्यास्वीकृतौ विराधनायां दारिद्र्यदास्यदौर्भाग्यदौर्गत्यादि । यतः " महारंभयाए महापरिग्गहाए कुणिमाहारेणं पंचिंदियवहेण जीवा नरयाउअं अज्जेंति " । मूर्च्छावान् हि उत्तरोत्तराशाकदर्थितो दुःखमेवानुभवति । यदाह-"उक्खणइ खणइ निहणइ, रत्तिं न सुअइ दिआ विअ ससंको । लिंपइ ठएइ सययं, लंछिअ पडिलंछिअं कुणइ" १९ । परिग्रहत्वमपि मूर्च्छयैव मूर्च्छामन्तरेण धनधान्यादेरपरिग्रहत्वात् । यदाह " अपरिग्रह एव भवे-द्वस्त्राभरणाद्यलंकृतोऽपि पुमान् । ममकारविरहिते सति, ममकारे सङ्गवान्नग्नः " ॥ १ ॥ तथा "जंपि वत्थं व पायं वा, कंबलं पायपुंछणं । तं पि संजमलज्जट्ठा, धारिंती परिहरंती अ १ न सो परिग्गहो वुत्तो, नायपुत्तेण ताइणा । मुच्छापरिग्गहो वुत्तो, इअ वुत्तं महेसिणत्ति" । तेन मूर्च्छानियमनार्थं सर्वमूर्च्छात्यागाशक्तस्यैतत् पञ्चममणुव्रतम् ॥ ध० २ अधि० । तथाच पञ्चाशके-

इच्छापरिमाणं खलु, असयारंभविणिवित्तिसंजणगं ।
खेत्ताइवत्थुविसयं, चित्ताद्यविरोहओ चित्तं ॥ १७ ॥

इच्छा परिग्राह्यवस्तुविषया वाञ्छा तस्यास्तया परिग्राह्यवस्तुनः परिमाणमियत्ता इच्छापरिमाणं खलु वाक्यालंकारे पञ्चमाणुव्रतं भवतीति प्रक्रमः । तथेच्छापरिमाणं किंफलमित्याह । असदारम्भविनिवृत्तिसंजनकमसुन्दरारम्भप्रवृत्तिनिबन्धनम् । भवति हीच्छापरिमाणे कृते इच्छाविषयीकृतकातिपयपदार्थानां किंचिन्न शुभान्यापारैरपि प्राप्तेरसुन्दरतरव्यापारेभ्यो विनिवृत्तिर्यतः-प्रवृत्तार्थप्राप्त्यर्थमेव भूतघाताद्यसुन्दरव्यापारेषु प्रायः प्राणिनः प्रवर्तन्ते इति । तच्च क्षेत्रादिवस्तुविषयं क्षेत्रादीनि कृषिविशेषप्रभृतीनि वस्तून्यर्थो विषयो गोचरोऽस्येति विग्रहस्तत्रोक्तम् ॥ "धणं धन्नं खेत्तं वत्थु रुप्प सुवण्ण कुवियं दुपय चउप्पय चेत्यादि " अत्रचादिशब्दः प्रकारवचने क्षेत्रादयः क्षेत्रप्रकारा धनादय इत्यर्थः । चित्तं मनः आदिर्येषां चित्तदेशवंशादीनां ते तथा तेषामविरोध आनुकूल्यमनुरूप चित्ताद्यविरोधस्तस्मात् चित्ताद्यविरोधतः (चित्तादविरोहओत्ति) पाठान्तरं तत्र च चित्ताद्यविरोधतो वृत्ताद्यविरोधतो वेति

व्याख्येयम् । किमित्याह ॥ चित्तं बहुप्रकारमेतत्तथाहि कश्चिन्निःस्वोऽपि विपुलवित्तो भवति अन्यस्त्वन्यथा । तथा कस्यचिद्भूरिवित्तमन्यस्य स्तोकम् । तथा क्वचिद्देशेऽत्यन्तं धान्यचतुष्पदादिसंग्रहो विधीयते अन्यत्र तु न तथा । कोऽपि राजवंश्योऽन्यो ब्राह्मणवणिग्वंश्यादिस्तस्य च प्रायो राज्यादिसंभवासंभवौ स्त इत्येवं स्वचित्तवित्तादीनामविरोधेनानेकविधपुंभिस्ताद्विधीयमानमनेकधा भवतीति गाथार्थः ॥ पञ्चा १ विव० ।

(इच्छापरिमाणव्रतस्योदाहरणम्, विस्तरतः स्वरूपञ्चानन्दकथायामाणदशब्दे ) " तत्थ पंचमाणुव्वए अनियतस्स दोसाणि य तस्स गुणा तत्थोदाहरणं । "लुद्धनंदो कुसीमूलिय लुद्धनंदो विणट्ठो सावगो पुइओ भंडागारवई थविओ ॥ आव० ६ अ० । परिग्गहे असंतुट्ठस्स दोसा संतुट्ठस्स गुणा तत्थ उदाहरणम् ॥ लुद्धणंदो कुसीसा तो उट्ठीहिं विक्कियातो णमंतणए गमणं । पुत्तेहिं णिव्वियातो अडुक्खिज्जती भग्गा लोएण दिट्ठा णो कहितं लुद्धणंदेणं पाया भग्गा सावगो पूजितो । एवं जधा णामोक्कारे । आ० चू० ६ अ० ।

अहवा वाणिगिणी रयणाणि विकिणइ लुहाए मरति सेट्ठिण भणिया पतिओ पडिक्कओ नत्थि अन्नस्स नियाणि ताए भणइ जं जोगं तं देहिं सो तत्थ देइ सुभिक्खे तीए भत्तारो आगओ पुच्छइ रयणाणि केहिं भणई वत्तियाणि मे कहिं दिन्नाणि सा भणइ गोहुम सेइयाए एक्केक्कं दिन्नं अमुगस्स वाणियगस्स सो वाणियगो तेण भणिओ रयणाणि अप्पेहि पूरं वा मोल्लं देहि सो नेच्छइ तओ रन्नो मूलं गओ एरिसे अग्घे वट्टमाणे एयस्स मणिरयणस्स एएण पत्तिय दिन्न सो विसासिओ पढमं पुण ताणि रयताणि रयणाणि सावगस्स विक्केण याणि गइयाणि तेण परिग्गहपयाणातिरित्ता इति काउ न गहियाणि सावगेण नेच्छइ सो पुइओ, । आव० ६ अ० । एवमादि ज्ञाणा पुणो इमा भावेज्ज संतोसं गहियमादीणि आयामणमाणेण एव गेण्हिस्सामो ण चिंतेज्जा । आ० चू०६ अ० ।

इदं चातिचाररहितमनुपालनीयं तथाचाह ।

इच्छापरिमाणस्स समणोवासएणं इमे पंच अइआरा जाणिअव्वा न समायरिअव्वा तंजहा खित्तवत्थुप्पमाणाइक्कमे । १ । हिरन्नसुवन्नप्पमाणाइक्कमे । २ । धणधन्नप्पमाणाइक्कमे । ३ । दुपयचउप्पयप्पमाणाइक्कमे । ४ । कुविअप्पमाणाइक्कमे । ५ ।

इच्छापरिमाणस्य श्रमणोपासकेनामी पञ्चातिचारा ज्ञातव्या न समाचरितव्या । तद्यथा । क्षेत्रवास्तुप्रमाणातिक्रमः तत्र सस्योत्पत्तिभूमिः क्षेत्रं तच्च सेतुकेतुभेदाद्द्विविधं तत्र सेतुक्षेत्रमरघट्टादिसेक्यं केतुक्षेत्रं पुनराकाशपतितोदकनिष्पाद्य वास्त्वगारं तदपि त्रिविधं खातमुत्सृतं खातोत्सृतं तत्र खातं भूमिगृहकादि उत्सृतं प्रासादादि खातोत्सृतं भूमिगृहकस्योपरि प्रासादादि एतेषां क्षेत्रवास्तुप्रमाणातिक्रमः । प्रत्याख्यानकाले गृहीतप्रमाणोल्लङ्घनमित्यर्थ इति । तथा हिरण्यसुवर्णप्रमाणातिक्रमस्तत्र हिरण्यं रजतमघटितं घटितं वानेकप्रकारं द्रव्यादि सुवर्णप्रतीतमेव तदपि घटिताघटितमेव तद्ग्रहणाचेन्द्रनीलमरकतादुपलग्रहः अक्षरगमनिका पूर्ववत् । तथा धनधान्यप्रमाणातिक्रमः तत्र धनं गुडखण्डशर्करादि गोमहिष्यजाविकादि प्रभृतयादि, धान्यं व्रीहिकोद्रवमुद्गमाषतिलगोधूमयवादि अक्षरगमनिका प्राग्वदेव । तथा द्विपदचतुष्पदप्रमाणातिक्रमः । तत्र द्विपदानि दासीदासमयूरहंसादीनि

चतुष्पदादि हस्त्यश्वमहिष्यादीनि अक्रूरगमनिका प्राग्वदेव । तथा द्विपदचतुष्पदप्रमाणातिक्रमः । तत्र कुप्यमासनशयनभ्रमकरोट्टकलोहाद्युपस्करजातमुच्यते एतद्ग्रहणाच्च वस्त्र कम्बलःपरिग्रहः । अक्रूरगमनिकापूर्ववत् । एतान् क्षेत्रवास्तुप्रमाणातिक्रमादीन् समाचरन्नतिचरति पञ्चमाणुव्रतमिति ! "एत्थ दोसा जीवघायाइया भाणियव्वा" । आव०६अ०।आव०।

तत्थ खत्तवत्थुपमाणाइसु ज पमाण गहितं त णातिकमिज्ज व्व । अहवा ज पण गहीत तो अहीत चारेणिओ अडुवेज्जा पेम्मिमूले वा देज्जा असमत्थो तं धणादिकाउ ताहे खेत्त वत्थु वा देज्जा एव पविरज्ञा विरलवित्थरो विभासियव्वो सो य सा वगो चिंतेज्जा जहा मए दव्वपमाणं ज गहित तं अज्जावि न पूरेति । एसो य धारणितो तस्स ठाणे इम देति तिमिसापि किञ्च दव्वलेक्खणे चेव इम देति ते ममापि किञ्च दव्वलेक्खणे चेव इम । एव खेत्तवत्थुप्पमाणातिक्कमण कुणतो अतियरति । एवमाइविभासा सव्वत्थ एसो विभागे चवसपुणो सयसह स्से वा कोडिए वा सव्वगणिज्जमाण । तस्स एसेव एक्को अतियारो विभागे पदे पदे अतियारो विभासियव्वो पयाण थुल्लप्पमाणे गहिते संववहारोत्तिपि वा सया ण कयविक्कयस्स दिवे २ परिमाण करेंति जं धरत्तिण न करेंति । तस्स य पव क्खातित्ति आरम्भपरिग्गिहदमणवाहणादि एएसु पदेसु विभा सियव्वं । जधाविहं एत्थ भावणा "जह २ अप्पो लोभो, जध जध ४ अप्पो परिग्गहारम्भो । तह २ सुह पवड्ढति, धम्मस्स य होति ससिद्धी " धन्ना परिग्गह उज्झि-ऊण मूलमिह सव्व पावाणं । धम्मचरणं पवन्नो, मणेण एवमविचिंतेज्जा " आ.चू ६अ

धनधान्यक्षेत्रवास्तु, रूप्यं स्वर्णं च पञ्चमे ॥
गोमनुष्यादिकुप्यं चे, त्येषां संख्या व्यतिक्रमः ॥ ४७॥

धन धान्य क्षेत्र वास्तु रूप्य सुवर्ण गोमहिष्यादिकुप्यं चेति पञ्चानां सख्या यावज्जीव चतुर्मासादिकालावधियपरिमाणं गृहीत तस्य ये अतिक्रमा उल्लघनानि ते पञ्चमे पञ्चमाणुव्रतेऽतिचारा ज्ञेयास्तत्र धन गणिमधरिममेयपरिच्छेद्यभेदाच्चतुर्धा यदाह "गणिमं पुगफलाइ , धरिम तु कुकुमगुडाइ । मेज्ज चोप्पडलोणाइ, रय णवत्थाइपरिच्छेज्ज ॥ १ ॥ धान्य चतुर्विंशतिधा व्रताधिकार एवोक्त सप्तदशधापि यत "सालि १ जव २ वीहि ३ कुद्दव, ४ रालय ५ तिल ६ मुग्ग ७ मास ८ चवल ९ चणा १०। तुवरि ११ मसूर १२ कुलत्था, १३ गोधूम १४ निप्पाव १५ अयसि १६ सिणा ॥ १७ ॥ धन च धान्य चेति समाहारः । अत्राग्रे च समाहारनिर्देशात्परिग्रहस्य पञ्चधात्वेनातिचारपञ्चक सुयोज्य भवति । क्षेत्र च वास्तुचेति समाहारद्वन्द्व तथा रूप्यं रजत घटितमघटित चानेकप्रकारमेव सुवर्णमपि रूप्य च स्वर्णं चेति समाहार गावश्च मनुष्याश्चेति गोमनुष्य तदादि र्यस्येति समास' गवादिमनुष्यादि चेत्यर्थ । तत्र गवादि गोमहिषमेषाविककरभसरभहस्त्यश्वादि मनुष्यादि पुत्रकलत्रदासदासीकर्मकरशुकसारिकादि, तथा कुप्य रूप्यस्वर्णव्यतिरिक्तं कांस्यलोहताम्रसीसकत्रपुमृद्भाण्डत्वाविसारविकारोदङ्किकाष्ठमञ्चकमञ्चिकामसूरकरथशकटहलादिगृहोपस्कारररूपमिति यद्यत्र क्षेत्रादिपरिग्रहस्य नवविधत्वेन नव सख्यातिचारप्राप्तौ पञ्चसख्यात्वमुक्तं तत्सजातीयत्वेन शेषभेदानामत्रैवान्तर्भावात् । शिष्यहितत्वेन च प्राय.सर्वत्र मध्यमगतोर्विवाक्षितत्वात् पञ्चकसंख्ययैवातिचारपरिगणनमनुचितमतो धनधान्यादिसख्ययातिचाराणां गुणनमुपपन्नमिति धर्मबिन्दुवृत्तौ । ननु प्रतिपन्नसंख्यातिक्रमा भङ्गा एव स्यु कथमतिचारा इत्यत आह ॥

बन्धनाद्योजनात् दाना-द्गर्भतो भावतस्तथा ॥
कृतेच्छापरिमाणस्य, न्याय्याः पञ्चापि न ह्यमी

बन्धनात् योजनात् दानात् गर्भतो भावत इत्यमी गृहीतसंख्यातिक्रमाः पञ्चापि पञ्चसख्याका अपि कृतेच्छापरिमाणस्य प्रतिपन्नपञ्चमव्रतस्य श्रावकस्य न न्याय्या न घटमाना व्रतमालिन्यहेतुत्वात् । अयं भाव । न साक्षात्संख्यातिक्रम किन्तु व्रतसापेक्षस्य बन्धनादिभि. पञ्चभिर्हेतुभि स्वबुद्ध्या व्रतभङ्गमकुर्वत एवातिचारा भवन्ति बन्धनादयश्च यथासङ्ख्येन धनधान्यादीनां परिग्रहविषयाणां सबध्यन्ते तत्र धनधान्यस्यबन्धनात् सख्यातिक्रमो यथा कृतधनधान्यपरिमाणस्य कोऽपि लभ्यमन्यद्वा धन धान्य च ददाति तच्च व्रतभङ्गभयाच्चतुर्मासादिपरतो गृहगतधनादिविक्रये वा कृते ग्रहीष्यामीति भावनया बन्धनात् नियन्त्रणात् रज्ज्वादिसयमनात्सत्यकारदानादिरूपाद्वा स्वीकृत्य तद्गृहे एव स्थापयतोऽतिचार ॥ १ ॥ तथा क्षेत्रवास्तुनो योजनात् क्षेत्रवास्त्वन्तरमीलनात् गृहीतसख्यातिक्रमोऽतिचारो भवति तथाहि किलैकमेव क्षेत्र वास्तु चेत्यभिग्रहवतोऽधिकतरतदभिलाषे सति व्रतभङ्गभयात् प्राक्तनक्षेत्रादिप्रत्यासन्न तद्गृहीत्वा पूर्वेण सह तस्यैकत्वकरणार्थं वृत्तिभीत्याद्यपनयने च ततच्च योजयतो व्रतसापेक्षत्वात्कथचिद्विरतिबाधनाच्चातिचारः ॥ २ ॥ तथा रूप्यस्वर्णस्य दानाद्वितरणाद्गृहीतसख्याया' अतिक्रमः । यथा केनापि चतुर्मासाद्यवधिना रूप्यादिसख्या विहिता तेन च तुष्टराजादे. सकाशादधिक तल्लब्ध तच्चान्यस्मै व्रतभङ्गभयात् ददाति पूर्णेऽवधौ ग्रहीष्यामीति भावनयेति व्रतसापेक्षत्वात्कथचिद्विरतिबाधाच्चातिचार इति ॥ ३ ॥ गोमनुष्यादेर्गर्भत सख्यातिक्रमो यथा किल केनापि सवत्सराद्यवधिना द्विपदचतुष्पदाना परिमाण कृत तेषां च संवत्सराद्यवधिमध्य एव प्रसवेऽधिकद्विपदादिभावाद्व्रतभङ्ग स्यादिति तद्भयात्कियत्यपि काले गते गर्भग्रहण कारयतो गर्भस्यद्विपदादिभावेन वहिर्गततदभावेन च कथचिद् व्रतभङ्गादतिचार ॥ ४ ॥ कुप्यस्य भावत. सख्यातिक्रमो यथा कुप्यस्य या सख्या कृता तस्या कथचिद् द्विगुणत्वे भूते सति व्रतभङ्गभयात्तेषां द्वयेनैकैकं महत्तर कारयत पर्यायान्तरकरणेन सख्यापूरणात् स्वाभाविकसख्याबाधनाच्चातिचार । अन्ये त्वाहुः तदर्थित्वेन विवक्षितकालावधे' परतोहमेतत् करोटिकादिकुप्य ग्रहीष्याम्यतो नान्यस्मै देयमिति पराप्रदेयतया व्यवस्थापयतोऽतिचार. । नामत उक्ता पञ्चातिचारा ॥ ध०२अधि ।

इच्छापरिमाणकिइ-इच्छापरिमाणकृति-स्त्री० इच्छाया अभिलापस्य यत्परिमाणमियत्ता तस्य कृति करण इच्छापरिमाणकृति । पञ्चमेऽणुव्रते, ध० २ अधि० । ( तद्वक्तव्यता इच्छापरिमाण शब्दे )

इच्छामि ( मे ) त्त-इच्छामात्र-न० अभिप्रायमात्रे, सूत्र० १ श्रु० ७ अ० ।

इच्छामुच्छा-इच्छामूर्च्छा-स्त्री० इच्छा च परधन प्रत्यभिलाष मूर्च्छा तत्रैव गाढाभिष्वङ्गरूपा तत्तुल्यादत्तस्तग्रहणस्येति । इच्छामूर्च्छा विरतस्य धर्मेषु समाविशेऽधर्मद्वारभेदे प्रश्न० ५ द्वा० ।

इच्छालोभ-इच्छालोभ-पुं० इच्छा अभिलाष सा चासौ लोभश्च इच्छालोभ । शुक्लपक्षोऽतिगृद्धो यथा । महातोते,

"इच्छालोभो उ उवहिमइरेगोत्ति" स्था० ६ ठा० । "इच्छालोभं न सेवेज्जा"। इच्छारूपो लोभः इच्छालोभश्चक्रवर्तिऋद्ध्यादिप्रार्थनादिको निदानविशेषस्तमसौ निर्जरापेक्षी न सेवेत तीर्थंकरदर्शनमोहितो ब्रह्मदत्तवन्निदानं न कुर्यादित्यर्थः । आचा० १ श्रु० ८ अ० ८ उ० । "इच्छालोभे मोत्तिमग्गस्स पलिमंथू आहारोवहिदेहेसु इच्छालोभे उ सज्जई" । स्था० ६ ठा० ।

इच्छालोभिय- इच्छालोभिक-त्रि० इच्छालोभो यस्यास्ति स इच्छालोभिकः । महेच्छे, अधिकोपधौ, स्था० ६ ठा० ( अस्य मुक्तिमार्गपरिमन्थत्वं पलिमथशब्दे )

इच्छालोल-इच्छालोल-पुं० इच्छा अभिलाषः सा चासौ लोल श्चेच्छालोलो महालोल इत्यर्थः यथा निद्रानिद्रा महानिद्रेति । अधिकोपकरणादिमेलनलक्षणे महालोभे, "इच्छालोले य उवहिमतिरिगात्' इच्छालोलस्तु स उच्यते यल्लोभाभिभूतत्वेनोपधिमतिरिक्तं गृह्णाति इति । "इच्छालोले मोक्खमग्गस्स पलिमन्थू" इच्छालोलो मोक्षमार्गस्य प्रतिमन्थुः स च "इच्छालोलेयउवहिमतिरेगा लहुओ तिविहं च तहिं अतिरेगे जे भणिय दोस। " बृ० ६ उ० ।

इच्छिय-इच्छित-त्रि० इच्छा संजाता ऽस्येति इच्छितं तारकादित्वादितच् । स्पृहायुक्ते, । वाच०

ईप्सित- त्रि० आप् सन् क० । मनोवाञ्छिते, तं० । पं० सू० । जं० । पं० भा० । ज्यो० । ज्ञा० । "इच्छियमेयं देवाणुप्पिया" इति-कल्प० । क्रियाफलेन प्राप्तुमिष्टे, कर्तुरीप्सिततमं कर्म्म । पा०।" निर्वृत्यञ्च विकार्यं च प्राप्यञ्चेति त्रिधा मतम् । तच्चेप्सिततमं कर्म्म, चतुर्धान्यत्तु कल्पितम्" भर्तृ० इच्छाविषये,-वाच०

इच्छियकामकामि (न्)-ईप्सितकामकामिन्-त्रि० ईप्सितान् मनोवाञ्छितान् कामान् शब्दादीन् कामयन्ते अर्थात् भुज्यन्ते इत्येवं शीला ये ते तथा ईप्सितकामकामिन । मनोवाञ्छितशब्दादिविषयभोक्तरि,। "इच्छियकामकामिणो इति" जं०।२वक्ष.

इच्छियत्थ-ईप्सितार्थ- पुं० मनोवाञ्छितेऽर्थे, पं० भा० "सुत्तत्थ णिज्जगओ मोक्खो वा इच्छियत्थोत्तु"- पं० भा० । एवं गुणजुत्तो विशेष्य ईप्सितानर्थाननुप्राप्नोति लभत इत्यर्थः । पं० चू० ।

इच्छियपडिच्छिय-इच्छितप्रतीच्छित-त्रि० इच्छासञ्जाताऽस्येति इच्छित प्रतीच्छा संजाताऽस्येति प्रतीच्छितम् इच्छितं च तत् प्रतीच्छितं च इच्छितप्रतीच्छितम् । इच्छाप्रतीच्छोभयधर्म्मे, । "इच्छियपडिच्छियाणं" इच्छाया अवग्रह इच्छितप्रतीच्छितेन इच्छितप्रतीच्छितम् आजवनव्यवहारस्थापना यथा यत्किंचि नम्यते तदस्माकं यद्ग्रामं तत् युष्माकम् यद्वित्तं तदस्माकं यदचित्तं तद्युष्माकम् । अथवा या स्त्रीवस्त्रग्रहणार्थमुपतिष्ठति सा अस्माकं पुरुषो युष्माकम् । यद्वा बालो युष्माकं वृद्धोऽस्माकम् । अथवा यः सार्थेन सह प्रजनां ज्ञानं सोऽस्माकं अस्माकं सार्थे युष्माकम् । यद्वा-यो यत्र नते तत्तस्यैव एवं कृतेनेच्छितप्रतीच्छितेन य आजवनव्यवहारः स इच्छाया अवग्रहः । व्य० द्वि० ४ उ० ।

ईप्सितप्रतीप्सित-त्रि० ईप्साप्रतीप्सोभयधर्मोपेते, । ज्ञा०१अ.

इष्टप्रतीष्ट-त्रि० इच्छाप्रतीच्छोभयधर्मोपेते, "इच्छियमेयं पडिच्छियमेयं इच्छियपडिच्छियमेयं" इच्छियति-इष्टं ईप्सितं वा पडिच्छियंति प्रतीष्टं प्रतीप्सितं वा अभ्युपगतमित्यर्थः इष्टप्रतीष्टं ईप्सितप्रतीप्सितं वा । धर्मद्वययोगात्-अत्यन्तादरख्यापनाय चैवं निर्देशः । ज्ञा० १ अ० । "इच्छियमेयं देवाणुप्पिया पडिच्छियमेयं देवाणुप्पिया इच्छियपडिच्छियमेयं देवाणुप्पिया" इच्छियमेयंति ईप्सित तत् पडिच्छियमेयति प्रतीष्टं युष्मन्मुखाद्यत्तदेव गृहीतमिच्छियपडिच्छियंति उभयधर्मोपेतम् । कल्प० ।

इच्छियव्व-ईप्सितव्य-त्रि० सर्वैरपि मुमुक्षुभिरीप्स्यते प्राप्तुमर्थ्यत इतीप्सितव्यः । व्यवहारे, । "तत्तो य इच्छियव्वे, आयारे चेव ववहारे" व्यवहारस्यैतान्येकार्थिकानि । व्य० १ उ० ।

एष्टव्य-त्रि० इषुवाञ्छायाम् तव्य । प्रार्थनीये, । आव० ४ अ०

इज्जंजलि-इज्याञ्जलि-पुं० यजनमिज्या इत्यर्थः तद्विषयो जलस्याञ्जलिः इज्याञ्जलिः यागदेवतापूजावसरभावीति हृदयम् । अथवा यजनमिज्या पूजा गायत्र्यादिपाठपूर्वकं विप्राणां सन्ध्यार्चनमित्यर्थस्तत्राञ्जलिः इज्याञ्जलिः अथवा देशीयभाषया इज्येति माता तस्या नमस्कारविधौ तद्भक्तैः क्रियमाणः करकुड्मलमीलनलक्षणोऽञ्जलिरिज्याञ्जलिः । यागदेवतापूजावसरभाविनि जलाञ्जलौ, विप्राणां गायत्र्यादिपाठपूर्वकसन्ध्याचेनविषयके जलाञ्जलौ,-मातुर्नमस्कारार्थन्तद्भक्तैः क्रियमाणे करकुड्मलमीलने च । अनु० । ( कुप्रावचनिकभावावश्यकमधिकृत्य व्याख्यातम् )

इज्जंति-इयन्ती-स्त्री० आगच्छन्त्याम्-" दिव्वसो सिरिमिज्जंति, दरेन परिसेहए"-दश० ८ अ० २ उ० ।

इज्जा-इज्या- स्त्री० यजनमीज्या यज्-भावे क्यप् स्त्रीत्वादाप् । यागे, ( देवपूजायाम् ) अनु० पूजायाम्, स्था० १० ठा० । भ० । औप० । यजनमिज्या पूजा गायत्र्यादिपाठपूर्वकं विप्राणां सन्ध्यार्चने, देशीभाषया मातरि च । अनु० । यजेर्दानार्थत्वात् २ दाने, सङ्गमे च । कर्मणि क्यप् ४ प्रतिमायाम्, ५ कुट्टिन्यां च । जूके, अमर० । वाच० ।

इज्जेस-इज्यैष-त्रि० इज्यां पूजामिच्छन्त्येषयति वा यः स इज्यैषः । पूजाभिलाषिणि,-भ०९श० ३३ उ० । इज्यां पूजां इच्छन्त्येषयन्ति वा ये ते इज्यैषास्त एव । स्वार्थे इकप्रत्ययविधानादिज्यैषिकाः । पूजाभिलाषिणः,-भ० ।

इज्झ-इन्ध-दीप्तौ-रुधा०-आ० अक०-सेट्-निष्ठायामनिट् वर्तमाने चातो निष्ठा । वाच० इन्धौ झा-इति-प्रा-सूत्रेण संयुक्तस्य झा इत्यादेशः । इज्झइ-इन्धे-प्रा० व्या० ४ पा० ८ अ० ।

इज्झमाण-इध्यमान-त्रि० दीप्यमाने, पुव्वावरदाहिणुत्तराग एहिं वा एहिं मदाय मदा इमे इज्झमाणा, इति । राज० ॥

इट्टगा-इष्टका-स्त्री० इष् तकन् टाप् । इष्टिका पितृदैवत्ये इति नियमान्नित्वम् । (ईंट) मृदादिनिर्मिते मृतखण्डभेदे,-दारत्तिइवार भक्खति त पुव्वकयमिट्टगाहिं उघय सुयमेति । नि० चू० १ उ० । पिं० । "पयावेह इट्टकाओ ममघरट्टयाए" पाचयत चेष्टका गृहार्थमिति । प्रश्न० २ द्वा० ॥

इट्टगापाग-इष्टकापाक-पुं० इष्टकापचने, पिं० ॥

इट्टा-इष्टा-स्त्री० इस्यानुष्टेष्टासंदष्टे ८ अ० २ पा० । इति प्रा० सूत्रेण इष्टा शब्दस्य निषेधात्त ठः । प्रा० । इष्टकायाम्, स्था० ८ठा०॥

इट्टाल-इट्टाल-न० इष्टकायाम्, "होज्ज कट्टसिलं वा वि इट्टालं वा वि एगया ठवियसं कमट्टाए, त च होज्ज चलाचलं ६५"

भवेत् काष्ठ शिला चापि इट्टाल वाप्येकदा एकस्मिन् काले प्रावृडादौ स्थापित सङ्क्रमार्थं तच्च भवेच्चलाचलमप्रतिष्ठित ननु स्थिरमेवेति सूत्रार्थ । दश० ५ अ० ॥

इट्टावाय–इष्टापाक–पु० इष्टकाया· पचनस्थाने,–'इट्टा वाएइ वा'। स्था० ८ ठा० ॥

इट्ठ–इष्ट– त्रि० इष्यते स्म प्रयोजनवशात् अर्थे क्रियार्थिभिरिती-ष्टः । स्था० २ ठा० । विपा० । औप० । भ० । ज० । इष् कर्मणि क्तः । एस्यानुष्ठेष्ठासदष्टे ८ अ० २ पा० । इति–प्रा० सूत्रेण ठः प्रा० व्या० । अभिप्रेते, " आरम्भ मिट्ठोज्जति आसवाय "–यथा ऽऽरम्भस्तथाऽऽस्रवाय कर्मोपादानायेष्टोऽभिप्रेत इति । सू० ३ उ० । अभिमते, । प्रश्न० ३ द्वा० । विशे० । पचा० । पो० । अभिला-पणीये, आव० ४ अ० । अभिलापाविषयभूते, ज्ञा० ८ अ० । अभी-प्सिते, जी० ३ प्रति० । अविरोधिनि,–द० । इच्छाविषये, त० । राज० । मनस इच्छामापन्ने, जी० १ प्र० । इन्द्रियमनःप्रमोद-दायिनि,–ज्ञा० १८ द्वा० । ईप्सिते, पचा० १२ विव० । योग्ये, । विशे० । वल्लभे, प्रिये, औप० । अष्ट० । ज्ञा० । नि० । पंचा० । " इट्ठेहिं कंतेहि य विप्पहूणा— " सूत्र० १ श्रु ५ अ० १ उ० । विहिते,–उत्त० १६ अ० । इष्टञ्च इच्छाविषय· तच्च द्विविध गौण मुख्यं च । तत्र इतरेच्छानधीनेच्छा विषयो मुख्य त द्धाधन गौणम् । तत्र मुख्यमिष्ट सुख दु खाभावश्च । तदिच्छाया इतरेच्छानधीनत्वात् । तत्साधन पाकभोजनादि गौण सुखं दु खाभावेच्छयैव तदिच्छाय समुन्मेषात् । अनिष्टमिष्टमिश्र-ञ्च त्रिविध कर्म चोच्यते । इच्छया कल्पिते,–"इष्टकृतिरष्टगुणि-ता व्येकालिता विभाजितेष्टेन" लीला· । वाच० । यज् भावे क्त-यज्ञादौ,–न० आव० १अ० । आ० म० प्र० । कर्मणि क्त–पूजि-ते,–औप० । परएरुवृक्षे०, पु० संस्कारे, न० । वाच० । ऋत्वि-ग्भिर्मन्त्रसंस्कारै–र्ब्राह्मणानां समक्षत । अन्तर्वेद्यां हि यद्दत्त-मिष्ट तदभिधीयते । १ । द्वा० १ द्वा० । प्रति० । "एकाग्नि-कर्महवन त्रेतायां यच्च हूयते । अन्तर्वेद्याञ्च यद्दत्तमिष्ट तद-भिधीयते" जातुकर्णोक्ते धर्मकार्ये, न· । "इष्ट दत्तमधीत वा विनश्यत्यनुकीर्तनात्"—देवल· । ज्ञानतोषिते, । वाच० ।

इट्ठगंध–इष्टगंध– पु० कर्मधारय० । सुगन्धौ, इष्टो गन्धो ऽस्य । सुगन्धिद्रव्ये, त्रि० वालुकायाम्, न० मेदि० । ज्ञा० । पचा० । ओ० । वाञ्छिते, । पचा,० १२ विव० । औ० ।

इट्ठतत्तदंसणवाइ [ न् ]-इष्टतत्त्वदर्शनवादिन्–पु० बौद्धभेदे, द० ।

इट्ठतर–इष्टतर–त्रि० अभीप्सिततरे, । " तेण किण्हमणी पत्तो इट्ठयराए चेव " । ते कृष्णमणय इति जीमूतादेरिष्टतरका एव कृष्णेन वर्णेन अभीप्सिततरका एवेति । राज० । जी० ।

इट्ठपुर–इष्टपुर–न० इष्ट पुरं पत्तनमिष्टपुरम् ॥ इष्टपत्तने, –"अम् विसपवाय, बोलेत्ता देसओवदेसेण । पावंति जहिट्ठपुरं भवा-डविं पि तहा जीवा" अटवी प्रभीता सप्रत्यपायां व्याघ्रादिप्रत्य-पायबहुलाम् ( बोलता ) उल्लङ्घ्य देशकोपदेशेन निपुणमा-र्गज्ञोपदेशेन प्राप्नुवन्ति यथा इष्टपुरमिष्टपत्तनम् । आ० म० द्वि० ।

इट्ठफल–इष्टफल–त्रि० इष्ट वाञ्छित फल साध्य यस्य तदिष्ट-फलम् । वाञ्छितसाधके अभिमतेऽर्थे, ईप्सितेऽर्थे च । पचा० विव० । ४ अविरोधिनि फले, द० ।

इट्ठफलसाहग–इष्टफलसाधक–त्रि० ईप्सितार्थ निष्पादके, पचा० ४ विव० ।

इट्ठफलसिद्धि–इष्टफलसिद्धि– स्त्री० अभिमतार्थनिष्पत्तौ, पं-चा० ४ विव० । अविरोधिफलनिष्पत्तौ, द० ॥

इट्ठरूव–इष्टरूप– त्रि० इष्टस्वरूपे, "सुबाहुकुमारे इट्ठे इट्ठरूवे" । विपा० २ अ० १ श्रु० ॥

इट्ठवं–इष्टवत्– त्रि० यज–इष् क्त–वतु-स्त्रीयां ङीप् । यजनकर्तरि, इच्छायुक्ते च । इष्टकर्मकर्तरि, त्रि० स्त्रियां टीप् । वाच० ॥

इट्ठसद्द–इष्टशब्द–पु० वीणादिसम्बन्धिनि शब्दे, वीणादिसंबन्धा-द्भवन्तीष्टाः शब्दादयः इति । प्रज्ञा० २३ पद ॥

इट्ठसिद्धि-इष्टसिद्धि-स्त्री० अभिमतार्थनिष्पत्तौ, "सो उ मंगलसद्दं सुणमि जहा उ इट्ठसिद्धित्ति" श्रुत्वा आकर्ण्य मङ्गलमित्येवरूपो मङ्गलभूतो वा विजयसिद्ध्यादिशब्दो मङ्गलशब्दस्त शकुने शकुनविषये यथा तु यद्वदेव इष्टसिद्धिरभिमतार्थनिष्पत्तिर्भव-ति । पचा० ४ विव० ॥

इट्ठसुय–इष्टसुत–पु० वल्लभे पुत्रे,–"इट्ठसुय पेल्लिकण कीलत" पं-चा० ७ विव० ॥

इट्ठस्सर–इष्टस्वर– पु० वल्लभस्वरे,–प्रज्ञा० २३ पद ॥

इट्ठापुत्त–इष्टापूर्त–न० इष्ट च पूर्त च द्वयोः समाहारद्वन्द्व· । पृषो-दरादित्वात् पूर्वपदस्य दीर्घ । इष्टशब्दोक्ते ऋत्विग्भिरिति लक्षिते दाने, " वापीकूपतडागादि–देवतायतनानि च । अन्न-प्रदानमाराम–पूर्तमित्यभिधीयते " इति । पूर्ते च । प्रति० वाच० । इष्टापूर्तदोक्षिणपुरुषत्वानभिज्ञो हीष्टापूर्तकारी कामो-पहतमना बध्यते-इति " इष्टापूर्त मन्यमाना वरिष्ठ नान्य-च्छ्रेयो येभिनन्दन्ति मूढा । " नाकस्य पृष्ठे तेन सुकृतेन भूत्वा इमं लोक हीनतर वा विशन्तीति वचनात्, स्या० १५ श्लो० । " स्तोकानामुपकार स्यादारम्भाद्यत्र भूयसां तत्रानुकम्पा न मता यथेष्टापूर्तकर्मसु । " द्वा० १ द्वा० । इष्टापूर्त न मोक्षाङ्ग सकामस्योपवर्णितम् । प्रति० ।

इट्ठावत्ति–इष्टापत्ति–स्त्री० ६ त० कर्मधा० वा । इष्टस्यापत्तौ, इष्टायामापत्तौ च । वादिना दर्शितापत्ते· प्रतिवादिन इष्ट-त्वे हि सा भवति इष्टापत्तौ दोषान्तरमाह । वाच० ।

इडिक्क–इडिक्क–पु० वनभवे छागे, हेम० । अपूपे, चालनीच्छा-दितशिरा इडिक्केऽध्याधिरूढवान् । आ० क० ।

इड्डि ( ड्ढि ) ( रिद्धि ) ऋद्धि–स्त्री० ऋध् भावे-क्तिन् । इत्कृ-पादौ ८ अ० २ पा० । इति प्राकृतसूत्रेणेत्वम्–प्रा० ॥ रि केवलस्य ८ अ० १ पा० । इति सूत्रेण रि इत्यादेश· प्रा० । श्रद्धर्द्धि मूर्द्धार्द्धेऽन्ते वा । ८ अ० २ पा० । इति सूत्रेण वा ढ । तपोमाहा-त्म्यरूपायामामर्षौषध्यादिकायां लब्धौ, (सम्पत्ति) उत्त० ३ अ० दश० । स्था० । भ० । विशे० । आचा० । आ० चू० । पो० ( ऋद्धिभेदा लब्धिशब्दे व्याख्यास्यन्ते–अस्य विस्तरत सर्वे भेदा लब्धिशब्दे ऋद्धेर्बहुवक्तव्यता समिद्धि शब्देऽपि ) "नत्थि णूण परे लोए, इड्ढी वा वि तवस्सिणो । अदुवा वंचिओ मित्ति, इइ भिक्खू न चिंतए " । उत्त० ३ अ० ।

ऋद्धिर्वा तपो माहात्म्यरूपा अपि परणे कस्य तपस्विन· सा च आमर्षौषध्यादि पादरजसा प्रशमन सर्वरुजां नाथय कृणा त्कर्तु त्रिभुवनविस्मय जनान् दूर· कामांस्तृणाग्रैर्वा "यस्मा द्रत्नान्यभिवर्षन्ति–काञ्चनवर्षादि सर्वमामर्षम् । असुलभीमोर-शिलामस्तकसमपातशक्ति" इत्यादिका च तस्या अप्यनुपलभ्य-मानत्वादिति भाव । उत्त० ३ अ० । ईश्वरत्वे, "णेगचित्ताभिः सो

णेगविहत्ति णाणप्पगारा का ता इड्डीओ गड्डित्ति इस्सरियत्तं तं पुण विज्जामंत तवोमतं वा विउव्वणागासगमणविभंगणाणादि ऐश्वर्यमिति- नि० चू० १ उ० । स्था० ॥ नरेन्द्रपूजाचार्यत्वादिके, स्था० ३ ठा० । शक्तौ, । भ० १० श० ३ उ० । आत्मशक्तौ प्रव० २१४द्वा० । चक्रवर्त्तिमप्यधो नयेदित्यादिकायां विकरणशक्तौ, " अप्पए महड्डिए " ऋद्धिर्विकुर्वाणा तया सहित इति । उत्त० १ अ० ॥ सम्पत्तौ, पचा० ८ । " इड्डीण मूलमेसो " ऋद्धीनां सम्पदां मूलमिव मूलं कारणमेष धर्म इति । पंचा० ८ विव० । परिवारादिके, प्रज्ञा० २ पद० । त० । ओ० स्था० । वस्त्रसुवर्णादिसम्पत्तौ, । विपा० ३ अ० । दशा० । सम० । स्था० । प्रभूतवस्त्रपात्रादिके, स्था० ५ ठा० । राज्यैश्वर्यादिके, आतु० । विभूतौ, आव० ४ अ० । स्था० । विमानवस्त्रभूषणादिकायां समृद्धौ, स्था० ३ ठा० । उप० । तृणाग्रादपि हिरण्यकोटिरित्यादिरूपायां समृद्धौ, उत्त० १ अ० । ऋद्धेर्भेदा यथा-धम्मिड्डी भोगिड्डी पाविड्डी इअ तिहा भवे इड्डी ध० २ अधि ॥

तिविहा इड्डी पन्नत्ता तंजहा देविड्डी राइइड्डी गणिड्डी । देविड्डी तिविहा पण्णत्ता तंजहा विमाणिड्डी विगुव्विणिड्डी परियाराणिड्डी । अहवा देविड्डी तिविहा पण्णत्ता तंजहा सचित्ता अचित्ता मीसिया । राइड्डी तिविहा पण्णत्ता तंजहा रण्णो अइयाणिड्डी रण्णो णिज्जाणिड्डी रण्णो बलवाहणकोस कोट्ठागारिड्डी । अहवा राइड्डी तिविहा पण्णत्ता तंजहा सचित्ता अचित्ता मीसिया । गणिड्डी तिविहा पण्णत्ता तंजहा णाणिड्डी दंसणिड्डी चरित्तिड्डी अहवा गणिड्डी तिविहा पण्णत्ता तंजहा सचित्ता अचित्ता मीसिया ॥

(तिविहा इड्डीत्यादि) सूत्राणि सप्त सुगमानि नवरं देवस्येन्द्रादे ऋद्धिरैश्वर्यं देवर्द्धिरेव राज्ञश्चक्रवर्त्यादेर्गणिनो गणाधिपतेराचार्यस्येति विमानाना विमानलक्षणा वा ऋद्धिः समृद्धिर्द्वात्रिंशल्लक्षादिक बाहुल्य महत्व रत्नादिरमणीयत्व चेति—विमानर्द्धिर्भवति च द्वात्रिंशल्लक्षादिक सौधर्मादिषु विमानबाहुल्य यथोक्तम् । बत्तीसट्ठावीसा, बारस अट्ठ चउरो सयसहस्सा । आरणे बम्भलोगे, विमाणसंखाभवे एसा ॥ १ ॥ पचासचत्तछच्चेव, सहस्सालंतसुक्क सहस्सारे ॥ सय चउरो आणय, पाणएसु तिन्नारणच्चुयए ॥ २ ॥ एक्कारसुत्तर हेट्ठी-मेसु सत्तुत्तर च मज्झिमए । सयमेग उवरिमए, पंचेव अणुत्तर विमाणत्ति ॥३ ॥ उपलक्षणं चैतत् भवननगराणामिति वैक्रियकरणलक्षणा ऋद्धिर्वैक्रियऋद्धिः । वैक्रियशरीरैर्हि जम्बूद्वीपद्वयमसंख्यातान्वा द्वीपसमुद्रान् पूरयन्तीत्युक्तञ्च भगवत्यां चमरेण भंते ! के महिड्ढिए इत्यादि । परिचारणा कामसेवा तदृद्धिः अन्यान् देवान् अन्यसत्का देवीं स्वकीया देवीरभियुज्यात्मान च विकृत्य परिचारयति इत्येवमुक्तलक्षणेति ॥ १ ॥ सचित्ता स्वशरीराग्रमहिष्यादिविषया संचेतनवस्तुसम्पद् चेतना वस्त्राभरणादिविषया । मिश्रा अलङ्कृतदेव्यादिरूपा ॥२॥ अतियान नगरप्रवेशस्तत्र ऋद्धिस्तोरणहट्टशोभाजनसंमर्दादिलक्षणा निर्याणं नगरान्निर्गमस्तत्रऋद्धि हस्तिकल्पनसामन्तपरिवारादिरूपा ॥३ ॥ बलञ्चतुरङ्गवाहनानि वेगसरादीनि कोशो भाण्डागार कोष्ठा धान्यभाजनानि तेषामगारं गृहं गेहं कोष्ठागारं धान्यगृहमित्यर्थः तेषां तान्येव वा ऋद्धिर्या सा तथा ॥४॥ सचित्तादिका पूर्ववद्भावनीयेति ॥५॥ ज्ञानर्द्धिर्विशिष्टश्रुतसंपत्—दर्शनर्द्धिः प्रवचने निश्शङ्कितादित्व प्रवचनप्रभावकशास्त्रसम्पद्वा । चारित्रर्द्धिः निरतिचारता । ६ ॥ सचित्ता शिष्यादिका अचित्ता वस्त्रादिका मिश्रा तथैवेति इहच विकुर्वणादि ऋद्ध्योऽन्येषामपि भवन्ति केवल देवादीनां विशेषवत्यस्ता इति तेषामेवोक्त इति । स्था० ३ ठा.

देवानामृद्धयो यथा ॥

सोधम्मीसाणं देवाणं केरिसगा इड्डी पण्णत्ता ? गोयमा ! महिड्डिया महज्जुइया जाव महाणुभागा इड्डी पण्णत्ता जाव अच्चुओ गेवेज्जअणुत्तरा य सव्वे महिड्डिया जाव सव्वे महाणुभावा अणिंदा जाव अहमिंदाणाम ते देवगणा पण्णत्ता समणाउसो ॥

( सोहम्मीत्यादि ) सौधर्मेशानयोर्भदन्त ! कल्पयोर्देवाः कीदृशा ऋद्ध्या प्रज्ञप्ता भगवानाह—गौतम ! महर्द्धिका यावन्महानुभागा अमीषां पदानां व्याख्यान पूर्ववत् एवं तावद्वक्तव्य यावदनुत्तरोपपातिका देवाः । जीवा० ४ प्र० २ उ० ॥

सर्वजीवानां येषु यया शक्तिर्नास्ति तया आह ॥

छहिं ठाणेहिं सव्वजीवाणं णत्थि इड्डीति वा जाव परक्कमेति वा—तं० जीवं वा अजीवं करणयाए अजीवं वा जीवं करणयाए एगसमएणं वा दो भासाओ भासित्तए सयं कडं वा कम्मं वेएमि वा मा वा वेएमि । परमाणु पोग्गलं वा छिंदित्तए वा भिंदित्तए वा अगणिकाएण समोदहित्तए बहिया वा लोगंता गमणयाए ।

( छहीत्यादि )। षट्सु स्थानेषु सर्वजीवानां संसारिमुक्तस्वरूपाणां नास्ति ऋद्धिर्विभूतिरिति इत्येव प्रकारा यथा जीवादिरजीवादिः क्रियते वा विकल्पे एवं द्युतिः प्रेमा माहात्म्यमित्यर्थः । यावत्करणात् । "जसेइ वा बलेइ वा वीरिए वा पुरिसक्कारपरक्कमेइ वात्ति" इदच व्याख्यातमनेकश इति न व्याख्यायते तद्यथा- ॥ जीव वेत्यादि—जीवस्याजीवस्य करणतायां जीवमजीव कर्तुमित्यर्थः १ अजीवस्य वा जीवस्य करणताया २ (एगसमएणंवत्ति)युगपद्वा द्वे भाषे सत्यासत्यादिके भाषितुमिति ३ स्वयं कृतं वा कर्मवेदयामि वा मा वा वेदयामि इत्यत्रेच्छावशेवेदनेऽवेदने वा नास्ति बलमिति प्रक्रमोऽय अभिप्रायो नही च्छावशतःप्राणिनां कर्मणःक्षपणाक्षपणी स्तो बाहुबलिन इवापि त्वनाभोगनिवर्तिते ते भवतोऽन्यत्र केवलिसमुद्घातादिति ४ परमाणुपुद्गलं वा छेत्तु खड्गादिना द्विधीकृत्य भेत्तुवा सूच्यादिना विद्ध्वा छेदादौ परमाणुत्वहानेरग्निकायेन वा समवदग्धमतिसूक्ष्मत्वेनादाह्यत्वात्तस्येति ५ बहिस्ताद्वा लोकाद्गमननायाम् ६ अलोकस्यापि लोकतापत्तेरितिजीवमजीव कर्तुमित्युक्तम् । स्था० ६ ठा० । गोचरचर्याभूमिभेदे, यस्यामेकां दिशमभिगृह्योपाश्रयान्निर्गत प्राञ्जलेनैव यथा समश्रेणिव्यवस्थितगृहपङ्क्तौ भिक्षां परिभ्रमन् तावद्याति यावत्पङ्क्तौ चरमगृह ततो भिक्षां गृह्णन्नेवापर्याप्तेऽपि प्राञ्जलयैव गत्या प्रतिनिवर्तते सा ऋद्धिगिति । वृ० १ उ० । वृद्धौ, सम्पत्तौ, सिद्धौ च । (ऋद्धिदर्शनेन सामायिकं लभ्यते तत्कथाच दसारणभद्रशब्दे )

इड्डि [ ड्डि ] अप्पवट्टण—ऋद्ध्यप्रवर्तन—न० ऋद्धीनामामर्षौषध्यादीनामनुपजीवनेनाप्रवर्तनमव्यापारणम् । आमर्षौषध्यादीनामप्रवर्तने, द्वा० १८ द्वा०

इड्ढीगारव-ऋद्धिगौरव-न० ऋद्ध्या नरेन्द्रादिपूजालक्षणया आचार्यत्वादिलक्षणया वाऽभिमानादिद्वारेण गौरवम् । ऋद्ध्या वा गौरवमृद्धिगौरवम् । भावगौरवभेदे,-तत्र ऋद्धिप्रत्यभिमानप्राप्तिप्रार्थनाद्वारेणात्मनोऽशुभो भावो भावगौरवमित्यर्थः । स्था० ३ ठा० ॥

इड्ढिगारवज्झाण-ऋद्धिगौरवध्यान-न०राज्यैश्वर्यादिरूपा ऋद्धिस्तया गौरवमात्मोत्कर्षरूप तस्य ध्यान दशार्णभद्रस्येव ऋद्धिगौरवध्यानम् । दुर्ध्यानभेदे,-आतु० ॥

इड्ढिपत्त-ऋद्धिप्राप्त- पु० ऋद्धिरामर्षौषध्यादिलक्षणा तां प्राप्त ऋद्धिप्राप्तः आमर्षौषध्यादिलक्षणामृद्धिप्राप्ते, । न० । ऋद्धिश्च प्राप्नोति प्रथमतो विशिष्टमुत्तरोत्तरमपूर्वार्थप्रतिपादक श्रुतमवगाहमान. श्रुतसामर्थ्यतस्तीव्रतीव्रतरशुभभावनामाधिरोहन्न प्रमत्तः सन् । उक्तञ्च "अवगाहते च स श्रुतजलधिं प्राप्नोति चावधिज्ञानम् । मनस पर्यायं वा ज्ञानं कोष्ठादिबुद्धिर्वा" इति । प्रज्ञा० २१ पद ॥

पत्तड्ढि- पु० आमर्षौषध्यादिका ऋद्धिः प्राप्ता यैस्ते प्राप्तर्द्धयः प्राप्तामर्षौषध्यादिके, "इड्ढीपत्ते य वोच्छामि" इह गाथाभङ्गभयाद्व्यत्ययोऽन्यथा निष्ठान्तस्य बहुव्रीहौ पूर्वनिपात एव भवतीति । विशे० ॥

इड्ढिपत्ताणुओग-ऋद्धिप्राप्त्यनुयोग-पु० प्राप्तामर्षौषध्यादिकस्य व्याख्याने, विशे० । ( तच्च विस्तरतो लद्धिशब्दे द्रष्टव्यम् )

इड्ढिपत्तारिय-ऋद्धिप्राप्तार्य-पु० आर्यभेदे,-"से किंत इड्ढिपत्तारिया छव्विहा पण्णत्ता तजहा अरिहंता चक्कवट्टी बलदेवा वासुदेवा चारणा विज्जाहरा" प्रज्ञा० १ पद ।स्था० ॥

इड्ढिमं ( त )-ऋद्धिमत्- त्रि० ऋद्धिरामर्षौषध्यादिका सम्पत् तदेव रूपा प्रचुरा प्रशस्ताऽतिशायिनी वा ऋद्धिर्विद्यते येषान्ते ऋद्धिमन्तः । प्राप्तामर्षौषध्यादिकर्द्धिके, । स्था० ५ ठा० । "इड्ढिम णाम ईसरोत्ति" नि० चू० १५ उ० । महर्द्धिके, "एगेण इड्ढिमतेण वाणिएण" ऋद्धिमत्त्वे महर्द्धिकतायामिति, ।सू० ३ उ० ॥ सम्पदुपेते, । दश० ७ अ० ।तद्भेदा यथा । "पचविहा इड्ढिमता मणुस्सा पण्णत्ता तजहा अरहता चक्कवट्टी बलदेवा वासुदेवा भावियप्पाणो अणगारा" । भावित. सद्भावनया वासित आत्मा यैस्ते भावितात्मानोऽनगारा इति एतेषां च ऋद्धिमत्त्वमामर्षौषध्यादिभि. अर्हदादीना तु चतुर्णा यथासंभवमामर्षौषध्यादिनाऽर्हत्वादिना चेति । स्था० ५ ठा० २ उ० ॥ "इड्ढिमतं नरिंदस्स, इड्ढिमत तु आलवे" । ऋद्धिमन्त सम्पदुपेत नर दृष्ट्वा किमित्याह । ऋद्धिमन्तमिति ऋद्धिमानयमित्येवमालपेत् । व्यवहारतो मृषावादादिदोषपरिहारार्थमिति सूत्रार्थः । दश० ७ अ० ॥

इड्ढिमपुत्त-ऋद्धिमत्पुत्र-पु० राजादौ, -इड्ढिमपुत्तो वा राजादीत्यर्थ इति ॥ नि० चू० १ उ० ॥

इड्ढिरससायगारवपर-ऋद्धिरससातगौरवपर-त्रि० ऋद्ध्यादिषु गौरवमादरस्तत्प्रधाना ऋद्धिरससातगौरवपरा । ऋद्धिरससातादरप्रधाने, ऋद्धिरससायगारवपरा बहवे करणालसा परूवेंति । प्रश्न० २ द्वा० ॥

इड्ढिरससायगुरुय-ऋद्धिरससातगुरुक-त्रि० ऋद्धिराचार्यत्वादौ नरेन्द्रादिपूजा रसा मधुराद्यो मनोज्ञा. सात सुखमेतानि गुरूण्यादरविषया यस्य सोऽयमृद्धिरससातगुरुकः । अथवा एभिर्गुरुकस्तेषां प्राप्तावभिमानतोऽप्राप्तौ च प्रार्थनातोऽशुभभावोपात्तकर्म्मभारतया लघुः । ऋद्धिरससातानामादरकारके,-ऋद्धिरससातैरलघौ च । स्था० ३ ठा० ॥

इड्ढिरससायगुरुया छज्जीवनिकायघायनिरयाए ।
जे उवदिसंति मग्गं कुमग्गमग्गस्सिता ते उ ॥ १५ ॥

( इड्ढिरसेत्यादि । ) ये केचन अपुष्टधर्माण शीतलविहारिण. ऋद्धिरससातगौरवेण गुरुका गुरुकर्माण आधाकर्माद्युपभोगेन षड्जीवनिकायव्यापादनरताश्चापरे तेभ्यो मार्ग मोक्षमार्गमात्मानुचीर्णमुपदिशन्ति तथाहि शरीरमिदमाद्यं धर्मसाधनमिति मत्वा कालसंहननादिहानेश्चाधाकर्माद्युपभोगोऽपि न दोषायेत्येवं प्रतिपादयन्ति । तच्चैव प्रतिपादयन्त कुत्सितमार्गास्तीर्थकरास्तन्मार्गाश्रिता भवन्ति तु शब्दादेतेऽपि स्वयूथ्या एतदुपदिशन्त. कुमार्गाश्रिता भवन्तीति किं पुनस्तीर्थिका इति । सूत्र० नि० १ श्रु० ११ अ० ॥

इड्ढिविभूसा-ऋद्धिविभूषा-स्त्री० ऋद्ध्या सत्कारेण निर्यामितायां विभूषायाम्, "इड्ढिविभूसा य परिकम्मे" इड्ढिसक्कारेण निज्जामिया विभूसेति । आव० ५ अ० ॥

इड्ढिसंजुत्त-ऋद्धिसंयुक्त- त्रि० ऋद्धयो नानाप्रकारा आमर्षौषध्यादयो लब्धयस्ताभि. सयुक्त समन्वित । आमर्षौषध्यादिलब्धिसमन्विते, । पो० १५ विव० ॥

इड्ढिसक्कारसमुदय-ऋद्धिसत्कारसमुदय- पु० ऋद्धिसत्कारसमुदाये, "इड्ढीसक्कारसमुदएणं मम सरीरगस्स णीहरणं करेह" ऋद्ध्या ये सत्कारा पूजाविशेषास्तेषां यः समुदाय स तथा तेन अथवा ऋद्धिसत्कारसमुदायैरित्यर्थ । समुदयश्च जनानां सङ्घ इति । भ० १५ श० १ उ० । ऋद्ध्या वस्त्रसुवर्णादिसम्पदा सत्कार. पूजाविशेषस्तस्य समुदायो य स तयेति । विपा० ३ अ० ॥

इड्ढिसिय-इड्ढिमिय- इड्ढिसियत्ति रुढिगम्या इति भ० ९श० ३३ उ० ॥

इणं-एतत्-त्रि० विप्रकृष्टवर्तिनि, दे० ना० ॥

इणमो-एतत्-त्रि० अदूरवर्त्तिनि, दे० ना० ॥

इण्हिं-इदानीम्-अ० एतत्कालेऽर्थे, दे० ना० ॥

इत्त-मत्-प्र० अस्त्यर्थे, आल्विल्लोल्लालवन्तमन्तेत्तेरमणामतो ५९ इति मतोरित्तेत्यादेश. यथा-कव्वइत्तो माणइत्तो ' प्रा० ८ अ० २ पा० ।

इत्तर-इत्वर-त्रि० इण् क्वरप् १ पथिके २ नीचे ३ क्रूरकर्मणि च ४ खरके-पु० स्त्रियां क्वरवन्तत्वात् ङीप् सा चाभिसारिकाया स्त्रियाञ्च । वाच० । स्तोके ( अल्पे ) अनु० । उत्त० । नि० चू० अल्पकाले, अल्पकालीने, ध० २ अधि० । पञ्चा० । परिमित काले, । प्रश्न०६ द्वा० । दश० । अल्पावस्थायिनि, । "इत्तरिया विरत्ती " विपर्ययोपभोगकालापर्यन्तभाविनी इत्वराऽल्पावस्थायिनी निवृत्तिरिति । आ० । इत्वरमल्पकालं यावज्जीवमनशनादिकालावधिच्छिन्नेनेत्यर्थ इति । पञ्चा । ( इत्वरानशनस्य वक्तव्यता ' अणसण ' शब्दे । त्रिकालादिगतस्थापनाया इत्वरस्य ' ठवणा ' शब्दे । इत्वर व्रतानि 'वय' शब्दे । इत्वरचारित्राणि ' चरित्त ' शब्दे । इत्वरिककल्पस्येत्वरस्य ' कप्प ' शब्दे ) प्रतिक्रमणविशेषे च । तत्र इत्वरप्रतिक्रमणं दैवसिकरात्रिकादि । स्था०

६ ग० । पडिक्कमणं देवसिअं राअं च इत्तरिअं " इत्वरं स्वल्पकालिकं दैवसिकादि इति । आव० ४ अ० ।

इत्तरकाल–इत्वरकाल–त्रि० । स्वल्पकाले, अनु० ।

इत्तरपरिग्गहा–इत्वरपरिग्रहा–स्त्री० इत्वरमल्पमुच्यते तत इत्वरमल्प परिग्रहो यस्या सा इत्वरपरिग्रहा इत्वरकालं परिग्रहो यस्याः सा तथा कालशब्दलोपोऽत्र द्रष्टव्य । अथवा इत्वरी-प्रतिपुरुषमयनशीला वेश्येत्यर्थः परिगृह्यत इति परिग्रहा कांचित्कालं भाटीप्रदानादिना सगृहीता इत्वरी चाऽसौ परिग्रहा च सा तथा पुंवद्भावश्चात्र कार्यः । प्रव० ७ द्वा० । भाटीप्रदानेन कियन्तमपि कालं दिवसमासादिकं स्ववशीकृतायां वेश्याया म् आव० ६ अ० । ( तां चासेवमानस्य स्वदारसंतोषस्य चतुर्थाणुव्रतस्य स्वदारसन्तोषस्यातिचार इति ' सदारसंतोस ' शब्दे )

इत्तरपरिग्गहिया–इत्वरपरिगृहीता–स्त्री० इत्वरकालं परिगृहीता कालशब्दलोपादित्वरपरिगृहीता, कियन्तमपि कालं दिवसमासादिकं भाटीप्रदानेन स्ववशीकृतायाम् वेश्यायाम् आव ६ अ० । ध० ।

इत्तरपरिग्गहियागमण–इत्वरपरिगृहीतागमन–न० इत्वरमल्पकाल भाटीप्रदानत केनचित्स्ववशीकृता वेश्या तस्यां गमनम् । ध० २ अधि० । भाटीप्रदानेन कियन्तमपि काल दिवसमासादिकं स्ववशीकृतायां मैथुनासेवनं, । आव० ६ अ० ॥ ( चतुर्थाणुव्रतरूपस्वदारसंतोषस्यायमतिचार इति ' सदार संतोस ' शब्दे )

इत्तरवास–इत्वरवास–पु० स्तोकनिवासे, "इह जीवियमेव पासहा, तरुणे एव वाससयस्स तुट्टत्ती । इत्तरवासे य बुज्झह, गिद्धनरा कामेसु मुच्छिया" ॥ ८ ॥ साम्प्रत सुबह्वप्यायुर्वर्षशत तच्च तदन्ते त्रुट्यति । तच्च सागरोपमापेक्षया कतिपयनिमेष प्रायत्वात् इत्वरं वासकल्प वर्त्तते स्तोकनिवासकल्पमित्येवं बुध्यध्व यूयमिति । सूत्र० १ श्रु० २ अ० ॥

इत्तरिय–इत्वरिक–त्रि० इत्वरे स्तोके काले भवमित्वरिकम् नियतकालावधिके, उत्त० ३० अ० । इत्वर. स्तोकः कालो यत्रास्ति तदित्वरिकम् । मुहूर्त्तादिप्रमाण । पंचा० १० विव० । इत्वरोऽल्प कालो यत्सत्वरादित्वर्यस्यास्ति वैयावृत्त्यादेरसावित्वरिकः, पञ्चा० १२ विव० । स्वल्पकालीने, "इत्तरियं णाम थोवं इति" नि० चू० २ उ० । ( इत्वरिकोऽनशनस्य वक्तव्यता " अणसण " शब्दे । इत्वरिकमरणवक्तव्यता ' मरण ' शब्दे । इत्वरिकोपधिप्रतिलेखना 'पडिलेहणा' शब्दे । इत्वरिकसामायिक वक्तव्यता ' सामाइय ' शब्दे इत्वरिक वैयावृत्त्यवक्तव्यता वेयावच्च शब्दे ) ॥

इत्तरी–इत्वरी–स्त्री० इत्वरी प्रतिपुरुषमयनशीला । भाटीप्रदानेन स्तोककाल परिगृहीतायां वेश्यायाम । पञ्चा० १ विव० ॥

इत्तिअ–एतावत्–त्रि० एतत्परिमाणे, । एतद परिमाणे मावत प्रत्यय. । ' यत्तदेतदोऽतोरित्तिअ एतल्लुक् च ' । ८ । २ । १५६ इति प्राकृतसूत्रेण–एतद भक्त्या मावत स्थाने इत्तिअ आदेशः । प्रा० व्या० ।

इत्तो ( इदो )–( इओ ) इतस्–अव्य० इदम्–तसिल् अस्मादित्यर्थे ' त्तो दो तसो वा ' । ८ । २ । १६० । इति प्राकृतसूत्रेण तस. स्थाने त्तो दो इत्यादेशौ वा । प्रा० व्या० । अस्मिन्नित्यर्थे च । वाच० ॥

इत्थम्–इत्थम्–अव्य० इदम् -थमु-इदंप्रकारेण इत्य भाव इत्थंभूत. । वाच.० । इदं प्रकारमापन्ने, । प्रज्ञा० २ पद । अनेन प्रकारेणेत्यर्थे च । विशे० । उक्तप्रकारेणेत्यर्थे, । द्वा० २१ द्वा० ॥ पूर्वोक्तप्रकारेणेत्यर्थे, । द० ॥

इत्थंथ–इत्थंस्थ त्रि० इत्थं तिष्ठतीति इत्थस्थः । आ० म० द्वि० । प्रज्ञा० । अनेन प्रकारेण स्थिते, विशे० । " इत्थत्थं च चयइ सव्वसो सिद्धे वा हवइ सासए " दश० ९ अ० ४ उ० ॥

इत्थि ( त्थी ) आणमणी–स्त्र्याज्ञापनी–स्त्री० आज्ञाप्यतेआज्ञासम्पादने प्रयुज्यतेऽनया सा आज्ञापनी । स्त्रिया आज्ञापनी स्त्र्याज्ञापनी । स्त्रिया आदेशदायिन्याम्भाषायाम् । प्रज्ञा० २ पद ।

इत्थि ( त्थी ) कम्म–स्त्रीकर्मन्–न० स्त्रियो नरतिरश्च स्तासां कर्म वशीकरणादिकर्म । स्त्रीणां वशीकरणादिकर्मणि, "परिग्गहित्थिकम्म च तं विज्ज परिजाणिया " सूत्र० १ श्रु० ८ अ० ॥

इत्थि– ( त्थी ) कला–स्त्रीकला–स्त्री० महिलागुणे, ते च चतुष्षष्टिसंख्याका । " चोसट्ठिं महिलागुणे " जम्बूद्वीपप्रज्ञप्तौ तु चतुष्षष्टि स्त्रीकलाश्चेमाः । नृत्यम् १ औचित्य २ चित्र ३ वादित्रं ४ मन्त्रम् ५ ज्ञानं ६ विज्ञानं ७ दम्भ ८ जलस्तम्भ ९ गीतगानं १० तालमानं ११ मेघवृष्टि १२ फलाकृष्टि १३ तन्त्रम् १४ आरामगोपनम् १५ आकारगोपन १६ धर्मविचारः १७ शकुनसारः १८ क्रियाकल्प. १९ संस्कृतजल्प. २० प्रासादनीति. २१ धर्मरीतिः २२ वर्णिकावृद्धिः २३ स्वर्णसिद्धि. २४ सुरभितैलकरणं २५ लीलासंचरणं २६ हयगजपरीक्षण २७ पुरुषस्त्रीलक्षणं २८ हेमरत्नभेदः २९ अष्टादशलिपिपरिच्छेद ३० तत्कालबुद्धिः ३१ वस्तुसिद्धिः ३२ कामविक्रिया ३३ वैद्यकक्रिया ३४ कुम्भभ्रम. ३५ सारिश्रम ३६ अञ्जनयोग. ३७ चूर्णयोग. ३८ हस्तलाघव ३९ वचनपाटवम् ४० भोज्यविधिः ४१ वाणिज्यविधि. ४२ मुखमण्डन ४३ शालिखण्डन ४४ कथाकथन ४५ पुष्पग्रन्थनं ४६ वक्रोक्ति. ४७ काव्यशक्ति ४८ सर्वभाषाविशेष ४९ अभिधानज्ञानं ५० भूषणपरिधान ५१ भृत्योपचार. ५२ गृहाचार. ५३ वेशरचन ५४ व्याकरण ५५ परनिराकरणं ५६ रन्धन ५७ केशबन्धनं ५८ वीणानादः ५९ वितण्डावादः ६० अङ्कविचार. ६१ लोकव्यवहार. ६२ अन्त्याक्षरिका ६३ प्रश्नप्रहेलिका ६४ इति । अत्रोपलक्षणादुक्तातिरिक्ता स्त्रीपुरुष कला ग्रन्थान्तरे लोके च प्रसिद्धा ज्ञेयाः । अत्र च पुरुषकलासु स्त्रीकलानां स्त्रीकलासु च पुरुषकलानां सङ्कर्ये तदुभयोपयोगित्वात् । ननु तर्हि ' चोसट्ठिं महिलागुणे इति ' ग्रन्थ विरोध उच्यते न ह्ययं ग्रन्थ. स्त्रीमात्रगुणख्यापनपर' किंतु स्त्रीस्वरूपप्रतिपादकस्तेन क्वचित् पुरुषगुणत्वेऽपि न विरोध । कलाद्वयस्योक्तसंख्याकत्व तु प्रायो बहूपयोगित्वादित्यऽलं-विस्तरेण । जं० २ वक्ष० ।

इत्थि ( त्थी ) कलेवर–स्त्रीकलेवर–न० योषिच्छरीरे,

अब्बंभे पुण विरई, मोहदुगंछा स तत्तचिंता य ।
इत्थीकलेवराणं, तव्विरएसुं च बहुमाणो ४६ ॥

अब्रह्मणि स्त्रीपरिभोगलक्षणे पुन शब्दो विशेषणे तद्भावना चैवं गुर्वादिषु स्मरण कर्त्तव्यमब्रह्मणि पुनर्विरतिर्निवृत्ति. कार्या तथा मोहजुगुप्सा स्त्रीपरिभोगहेतुवेदादिमोहनीयनिन्दा यथा यल्लज्जनीयमतिगोप्यमदर्शनीय बीभत्समुल्बण मलाविलपूतिगन्धि तद्याचते कामिकृमिस्तदेवम् । किंवा कुनोति न मनोभव वा मनसा इत्यादि । तया स्वतत्त्वचिन्तास्वरूपचिन्तन केषां स्त्रीकलेवराणां योषिद्देहानां यथा शुक्रशोणितसम्भूत नवच्छिद्र मलोल्बणमस्थिश्रृङ्खलिकामात्र हन्त योषिच्छरीरकं नहिर-

तेष्वब्रह्मनिवृत्तेषु मुनिषु । चशब्दः समुच्चये बहुमानोत्तरङ्ग-प्रीतिरूपो विधेयो यथा-धन्यास्ते वन्दनीयास्ते तैस्त्रैलोक्यं पवित्रितं । यैरेष भुवनक्लेशी काममल्लो निपातितः । पचा० १ विव०॥

इत्थि ( स्त्री ) कहा-स्त्रीकथा-स्त्री० स्त्रीणां स्त्रीषु वा कथा स्त्रीकथा । स्त्रीकथाविकथाभेदे, इयं च कथेत्युक्तापि स्त्रीविषयत्वेन संयमविरुद्धत्वाद्विकथेति भावनीयेति । स्त्रीकथाया भेदा यथा—

इत्थी कहा चउव्विहा पण्णत्ता तंजहा इत्थीणं जाइकहा इत्थीणं कुलकहा इत्थीणं रूवकहा इत्थीणं नेवत्थकहा ।

ब्राह्मणीप्रभृतीनामन्यतमाया या प्रशंसा निन्दा वा सा जात्या जातेर्वा कथेति जातिकथा । यथा-धिक् ब्राह्मणी धवाभावे, या जीवन्ति मृता इव । धन्या मन्ये जने शूद्री पतिलक्षेऽप्यनिन्दिता ॥ १ ॥ एवं मुग्राद्रिकुलोत्पन्नानामन्यतमाया यत्प्रशंसादि सा कुलकथा । यथा-अहो चौलुक्यपुत्रीणां, साहसं जगतोऽधिकं । पत्युर्मृत्यौ विशन्त्यग्नौ, या प्रेमरहिता अपि ॥ २ ॥ आन्ध्रीप्रभृतीनामन्यतमायाः रूपस्य यत् प्रशंसादि सा रूपकथा । यथा-चन्द्रवक्त्रा सरोजाक्षी, सद्गीः पीनघनस्तनी । किं लाटी नामतः सा स्या—द्देवानामपि दुर्लभा ॥ ३ ॥ तासामेवान्यतमायाः कच्छवन्धादि नेपथ्यस्य यत्प्रशंसादि सा नेपथ्यकथेति । यथा—धिङ्नारीरौदीच्या, बहुवसनाच्छादिताङ्गलतिकत्वात् । यद्यौवनं न यूनां, चक्षुर्मोदाय भवति सदा ॥ स्था० ४ ठा० ॥

तत्र जातिकथा-ब्राह्मणीप्रभृतीनामन्यतमां प्रशंसति द्वेष्टि वा कुलप्रसूतानामन्यतमां, रूपकथा आन्ध्रीप्रभृतीनामन्यतमाया रूपं प्रशंसति "आन्ध्रीणां च धुवं लीला चकितं भूतले मुखे । आसव्य राज्यभार स्व, सुखं स्वपिति मन्मथ-इत्यादिना द्वेष्टि वा तथा नेपथ्यकथान्ध्रीप्रभृतीनामेवान्यतमाया कथादिनेपथ्यं प्रशंसति द्वेष्टि वा । आव ४ अ० । जाति कथायां ब्राह्मणीप्रभृतीनामन्यतमां प्रशंसति द्वेष्टि वा, कुलकथायां पुनरुग्रादिकुलप्रसूतां वा । रूपकथा या रूपोद्देशेन विधीयते यथा । "आन्ध्रीणां रूपसौन्दर्य, कालिङ्ग्या जघनं वरम् । लाट्या विलसितं चारु कर्णाट्यास्सुरतिप्रभा"॥ अथवा निन्दति । मालविकी त्वनाख्या, वराकी रूपवर्जिता । सौराष्ट्री कच्छजातापि, त्याज्या दुर्भगशेखरा ॥ नेपथ्य केशचीवरसमारचनरूपं तद्रूपकथा नेपथ्यकथा—यथा । लाट्यास्तु कञ्चुकश्चरंश्चीसीमतको नयः । वेणिबन्धस्तु सौराष्ट्र्या, कालिङ्ग्या नीविबन्धनम् । दर्श० ॥ इत्थिकहा-पसत्था निंदा सरूवा जहा सा तणुय तणू सुभगा सोमसुही पउमपत्तनयणिल्ला गुरुयनियंबा उन्नयपओहरा ललियगयगमणा॥तहा करहगई कागसरा य दुब्भगा लवजरगा पिंगच्छी दुसीला दुम्भासा घिल्लीकोनिय इति नि० १ अधि० । आ० चू० । स्त्रीकथा दूरतस्त्याज्या तथा च- "सा तन्वी सुभगा मनोहररुचिः कान्तेक्षणा भोगिनी, तस्याहारि नितम्बबिम्बमथवा विप्रेक्षितं सुभ्रुवः । धिक्तामुष्ट्रगतिं मलीमसतनुं काकस्वरां दुर्भगा-मित्थं स्त्रीजनवर्णनिन्दनकथा दूरेस्तु धर्मार्थिनाम्" ॥ इति ॥ ध० र० । (स्त्रीकथापरित्यागस्य ब्रह्मचर्यसमाधिस्थानत्वं 'बंभचेरसमाहिट्ठाण' शब्दे 'बंभचेरगुत्ति' शब्दे च )

आयपरमोहुदीरण उड्डाहो सुत्तमाइपरिहाणी ।
बंभवए य अगुत्ती, पसंगदोसा य गमणाइ ॥१२१॥

इत्थिकहं करेंतस्स अप्पणो मोहोदीरण भवति-जस्स वा करेत्ति परस्स तस्स मोहोदीरण भवति-इत्थिकहं करेंतो सुओ होएण उड्डाहो अहो झाणोवउत्ता तवस्सिणो जाव इत्थिकहं करेंति ताव सुत्तत्थपरिहाणी आदिसद्दातो अत्थस्स अण्णेसिं च संजमो गाण बभव्वए अगुत्ती भवति भणियं च "वसहिकहणिसेज्जिंदिय, कुड्डंतरपुव्वकीलियपणीते । अतिमायाहारविभूसणा यण च बभगुत्तीओ"॥एवं अगुत्ती भवति पसंग एवं दोसो पसंगदोसो कहापसंगाओ वा दोसा भवति ते य गमणादी गमण उ णिक्खमई आदिसद्दाओ वा कुलिंगी भवति स विंगलितो वा आगारिं पडिसेवति संजतिं वा हत्थकम्मं वा करेति स्त्रीकथायां प्रायश्चित्तम् । इत्थीण कहा-इत्थिकहा सा चउव्विहा इमा—

जातीकहं कुलकहं, रूवकहं बहुविहं च सिंगारं ।
एता कथा कधिंते, चतुजमला कालगा चतुरो ॥११९॥

जातिमादिया उ ( चउजमलत्ति ) चत्तारि जमला मासलहुविज्जाति मासलामग्गे किं गुरुगा लहुगा भण्णति ( कालगा ) कालगतिगुरुगा मासा तेहिं चउहिं मासेहिं चउगुरुगत्ति भणियं भवति परिसगा चउगुरुगा चउरो भण्णति भवति जाइकहाए चउगुरु, कुलकहाए चउगुरु, रूवकहाए चउगुरुं, सिंगारकहाए चउगुरु एवं चउरो जातिए तवकालेहिं लहुगं कुलेकालगुरुं तवे लहुगं रूवे तवगुरुगं काललहु सिंगारे दोहि विगुरुं अहवा चत्तारि जमला जातिमातिसु भवति के ते कालगा चउरो चउगुरुगत्ति भणियं भवति तवकालविसेसो तहेव अहवा चउरोति सखा जमलं दो ते य तवकाला ताणि नव काला जुयलाणि चउरत्ति भणियं भवति कालगा इति बहुवयणा चउगुरु ताणि चउगुरुगाणि चउरो अमाढस्स एयस्स वक्खा णगाहा इमा ॥

माति समुत्था तिपिति, वंसकुलं अहव ओगादी ।
वण्णाकितियरूवं, गतिपेहिति भास सिंगारे ॥१२०॥

माउप्पसादा रूवं भवति जहा सोमलेणं एव जा कहा सा जाइकहा । पिउपसादा रूवं भवति जहा एगो सुवण्णगारो अव्वत्थ रूवस्सी गणिगाहिं भाडिदाउ णिज्जाति रिउकाले जातेण जाया सा रूवस्सिणी भवति एव कुलकहा सेसं कंठ । नि० चू० १ उ० ॥

इत्थि ( त्थी ) काम-स्त्रीकाम-पुं० स्त्रीप्रधानाः कामाः स्त्रीकामाः । स्त्रियोपलक्षिता वा काम्यन्त इति कामाः स्त्रीकामाः रूपादिविषयेषु मदनकामविषयभूतासु स्त्रीषु कामेषु शब्दादिषु च । स्त्रीकामेषु प्रसक्तानां नरकयातना भवतीति यथा—

एवमेव ते इत्थिकामेहिं मुच्छिया गिद्धा गढिया अज्झोववन्ना जाव वासाइं चउपंचमाइं छद्दसमाइं वा अप्पतरो वा भुज्जतरो वा कालं भुंजित्तुं भोगभोगाइं पविसुत्ता वेरायतणाइं संचिणित्ता बहूइं पावाइं कम्माइं उसन्नाइं संभारकडेण कम्मणा से जहा णामए अयगोलए वा सेलगोलए वा उदगंसि पक्खित्ते समाणे उदगतलमइवइत्ता अहे धरणितलपइट्ठाणे भवइ एवमेव तहप्पगारे पुरिसजाते वज्जबहुले धूतबहुले पंकबहुले वेरबहुले आपत्तियबहुले दंभबहुले णियडिबहुले साइबहुले अयसबहुले उस्सन्नतसपाणघाती कालमासे कालं किच्चा

धरणितलमइवत्ताइ अहे णरगतलपइट्ठाणे भवइ ॥६०॥

ते च विषयासक्ततया एतत्कुर्वन्तीत्येतद्दर्शयितुमाह ( एव मेव इत्यादि ) एवमेव पूर्वोक्तस्वभावा एवं ते निष्कृपा निरनुक्रोशा बाह्याभ्यन्तरपर्षदोरपि कर्णनासाविकर्त्तनादिना दारुपातनस्वभावा । स्त्रीप्रधानाः कामाः स्त्रीकामा यदि वा स्त्रीषु मदनकामविषयभूतासु कामेषु च शब्दादिषु इच्छाकामेषु मूर्च्छिता गृद्धा ग्रथिता अध्युपपन्नाः एते च शक्रपुरंदरादिवत् पर्यायाः कथञ्चिद्भेदं वाश्रित्य व्याख्येयाः । ते च भोगासक्ता व्यपगतपरलोकाध्यवसाया यावद्वर्षाणि चतुः पञ्च षट् सप्त वा दश वाल्पतरं वा कालं भुक्त्वा भोगासक्ततया च परपीडोत्पादनतो वैरायतनानि वैरानुबन्धाननुप्रसूयोत्पाद्य विधाय तथा सञ्चयित्वा सञ्चित्योपचित्य बहूनि प्रभूततरकालस्थितिकानि क्रूराणि क्रूरविपाकानि नरकादिषु यातनास्थानेषु क्रकचपाटनशाल्मल्यवरोहणतप्तत्रपुपानात्मकानि कर्माण्यष्टप्रकाराणि बद्धस्पृष्टनिधत्तनिकाचनावस्थानि विधाय तेन च संभारकृतेन कर्मणा प्रेर्यमाणास्तत्कर्मगुरवो वा नरकतलप्रतिष्ठानां भवन्तीत्युत्तरक्रियया पादितबहुवचनरूपयेति सवन्ध । अस्मिन्नेवार्थे सर्वलोकप्रतीतं दृष्टान्तमाह ( से जहा णामए त्ति ) तद्यथा नामायोगोलकोऽयस्पिण्डः शिलागोलको वृत्ताश्मशकलं वोदके प्रक्षिप्त समानसलिलतलमतिवर्त्याविलङ्घ्याऽधो धरणीतले प्रतिष्ठानो भवति । अधुना दार्ष्टान्तिकमाह ( एवमेवेत्यादि ) यथासावयोगोलको वृत्तत्वाच्छीघ्रमेवाधो यात्येवमेव तथा प्रकारः पुरुषजातः तमेव लेशतो दर्शयति । वज्रवद्वज्र गुरुत्वात्कर्म तद्बहुलस्तत्करणप्रचुरस्तया वध्यमानकर्म गुरुरित्यर्थः । तथा धूयत इति धूत प्राक्कृकर्म तत्प्रचुर । पुन सामान्येनाह पङ्कयतीति पङ्क पापं तद्बहुलस्तया । तदेव कारणतो दर्शयितुमाह । वैरबहुलो वैरानुबन्धप्रचुरस्तया ( पत्तियति ) मनसो दुष्प्रणिधानं तत्प्रधानस्तथा दम्भो मायया परवञ्चन तदुत्कटस्तथा निकृतिर्मायावेष भाषापरावृत्तिच्छलना परद्रोहबुद्धिस्तन्मयस्तया सातिबहुल इति सातिशयेन द्रव्येणापरस्य हीनगुणस्य द्रव्यस्य सयोग सातिस्तद्बहुलस्तत्करणप्रचुरस्तयाऽयशो ऽश्लाघा सद्वृत्ततया निन्दा यानि यानि परापकारभूतानि कर्मानुष्ठानानि विधत्ते तेषु तेषु कर्मसु करचरणच्छेदनादिषु अयशोभाग्भवतीति स एवभूत पुरुष कालमासे स्वायुष क्षये कालं कृत्वा पृथिव्या रत्नप्रभादिकायास्तलमतिवर्त्य योजनसहस्रपरिमाणमतिवर्त्य नरकतलप्रतिष्ठानोऽसौ भवति ॥ ६० ॥

एवमेव ते इत्थिकामेहिं मुच्छिया गिद्धा गढिया गरहिया अज्झोववन्ना जाव वासाइं चउपंचमाइं छद्दसमाइं अप्पयरो वा भुज्जयरो वा भुंजित्तु भोगभोगाइं कालमासे कालं किच्चा अन्नयरेसु आसुरिएसु किव्विसिएसु ठाणेसु उववत्तारो भवंति ततो विप्पमुच्चमाणे भुज्जो भुज्जो एल मूयत्ताए तमूयत्ताए जाइ मूयत्ताए पच्चायंति ॥ ७१ ।

एवमेव पूर्वोक्तैरकारणैर्यैनातिमूढत्वादिना परमार्थमजानानास्ते नार्थिका स्त्रीप्रधाना कामा स्त्रीकामा । यदि वा स्त्रीषु कामेषु च शब्दादिषु मूर्च्छिता गृद्धा ग्रथिता अध्युपपन्नाः । अत्र चात्यादरख्यापनार्थं प्रभूतपर्यायग्रहण एतच्च स्त्रीषु शब्दादिषु च प्रवर्त्तनं प्राय प्राणिनां प्रधानं संसारकारणं तथाचोक्त " मूलमेय महम्मस्स महादोससमुस्सयामित्यादि" स्त्रीमद्व्यसक्तस्यावश्यंभाविनी शब्दादिविषयासक्तिरित्यत स्त्रीकामग्रहणं तत्र चासक्ता यावन्तं कालमासते तत्सूत्रेणैव दर्शयति । यावद्वर्षाणि चतुः पञ्चषड्दशकानि । अयं च मध्यमकालो गृहीत । एतावत्कालोपादानं च साभिप्रायं प्रायस्तीर्थिका अतिक्रान्तवयसएव प्रव्रजन्ति तेषां चैतावानेव काल सम्भाव्यते यदि वा मध्यग्रहणात्तत ऊर्ध्वमधश्च गृह्यते इति दर्शयति । तस्माच्चोपात्तादल्पतरप्रभूततरो वापि कालो भवति । तत्र च ते त्यक्त्वापि गृहवास भुक्त्वा भोगभोगान् इति स्त्रीभोगे सति अवश्यं शब्दाद्यो भोगा भोगभोगास्तान् भुक्त्वा ते च किल वयं प्रव्रजिता इति न च भोगेभ्यो विनिवृत्ता यतो मिथ्यादृष्टितया ज्ञानान्धत्वात्सम्यग्विरतिपरिणामरहितास्ते चैवंभूतपरिणामाः स्वायुष कालमासे कालं कृत्वा निकृष्टतपसोपि सन्तोऽन्यतरेष्वासुरिकेषु किल्विषिकेषु स्थानेषूत्पादयितारो भवन्ति । ते ह्यज्ञानतपसा मृता अपि किल्विषिकेषु स्थानेषूत्पत्स्यन्ते तस्मादपि स्थानादायुषक्षयादिप्रमुच्यमानाश्च्युताः किल्विषिकबहुलास्तत्कर्मशेषेणैलवन्मूका एलमूकास्तद्भावेनोत्पद्यन्ते । किल्विषिकस्थानाच्च्युत सन्ननन्तरभवे वा मानुषत्वमवाप्य यथैलमूकोऽव्यक्तवाक् समुत्पद्यत इति । तथा ( तमूयत्तायेत्ति ) तमस्त्वेन जात्यन्धतया अत्यन्ताऽज्ञानावृततया वा तथा जातिमूकत्वेनापगतवाच इह प्रत्यागच्छन्तीति।सूत्र०२श्रु० २अ०।दश०॥

इत्थि ( त्थी ) कामभोग–स्त्रीकामभोग– पु० स्त्रीप्रधाना स्त्रियोपलक्षिता वा काम्यन्त इति कामा भुज्यन्त इति भोगाः स्त्रीकामभोगाः । स्त्र्यादिकामभोगेषु, स्त्रीकामभोगासक्तानां परिणाममाह—

एवमेव ते इत्थिकामभोगेहिं मुच्छिया गिद्धा गढिया अज्झोववन्ना लुद्धा रागदोसवसट्टा ते णो अप्पाणं समुच्छेदेंति, ते णो परं समुच्छेदेंति, णो अण्णाइं पाणाइं भूताइं जीवाइं सत्ताइं समुच्छेदेंति, पहीणा पुव्वसंजोगं आयरियं मग्गं असंपत्ता इति ते णो हव्वाए णो पाराए अंतरा कामभोगेसु विसन्ना ॥ १७ ॥

एवमेव पूर्वोक्तप्रकारेण स्त्रीप्रधाना स्त्रियोपलक्षिता वा काम्यन्त इति कामा भुज्यन्त इति भोगास्तेषु सातबहुलतयाऽजितेन्द्रियाः सन्तस्तेषु कामभोगेषु मूर्च्छिता एकीभावतामापन्ना गृद्धाः काङ्क्षावन्तो ग्रथिता अवबद्धा अध्युपपन्ना आधिक्येन भोगेषु लुब्धा रागद्वेषार्त्ता रागद्वेषवशगा कामभोगान्धा वा त एव कामभोगेषु आश्रवबद्धा सन्तो नात्मानं संसारात्कर्मपाशाद्वा समुच्छेदयन्ति मोचयन्ति नापि पर सदुपदेशदानत कर्मपाशावपाशितं समुच्छेदयन्ति कर्मबन्धात्त्रोटयन्ति नाप्यन्यान् दशविधप्राणवर्त्तिन प्राणान् प्राणिनस्तथा चाभूवन् भवन्ति भविष्यन्ति च भूतानि तथा वा आयुष्कधारणाज्जीवास्तांस्तथाभूत्वास्तथाविधवीर्यान्तरायक्षयोपशमापादितवीर्यगुणोपेता स्ताश्च समुच्छेदयन्ति । असदभिप्रायप्रवृत्तत्वात् । ते चैवविधास्तज्जीवतच्छरीरवादिनो लोकायतिका अजितेन्द्रियतया कामभोगावसक्ता पूर्वसंयोगात्पुत्रदारादिकात्प्रहीणा प्रभ्रष्टा आराद्याता सर्वहेयधर्मेभ्य इत्यार्यो मार्ग सदनुष्ठानरूपस्तमसम्प्राप्ता इत्येवं पूर्वोक्तया नीत्या ऐहिकामुष्मिकलोकद्वयसदनुष्ठानभ्रष्टा अन्तराल एव भोगेषु विषण्णास्तिष्ठन्ति।सूत्र०२श्रु० १ अ०।

इत्थि ( त्थी ) गण–स्त्रीगण–पु० स्त्रीसमूहे, । "णो इत्थिगणाण सेविता भवइ" नो स्त्रीगणानां पर्युपासको भवेदिति । स्था० ए॰ठा०।

इत्थि ( त्थी ) गब्भ–स्त्रीगर्भ– पु० स्त्रिया सम्बन्धी गर्भः स-

जीवपुद्गलपिण्डक• स्त्रीगर्भे । स्त्रीसम्बन्धिनि सजीवपुद्गल-पिण्डके, भ० ५ श० ४ उ० । ( तद्वक्तव्यता 'गब्भ' शब्दे )

इत्थि ( त्थी ) गुम्म–स्त्रीगुल्म– न० युवतिजने, । "इत्थिगुम्मं परिनिव्वुडे"– ॥ स्त्रीगुल्मेन युवतिजनेन सार्द्धमपरपरिवारेण स परिवृतो वेष्टित इति । दशा० १० अ० ॥

इत्थि ( त्थी ) चिंध–स्त्रीचिन्ह–न० स्त्रिया असाधारणं चिह्नम् । योनौ, स्त्रिया असाधारणे चिह्ने, स्तनादौ,–स्त्रीलक्षणे, वाच० ।

इत्थि ( त्थी ) चोर–स्त्रीचौर–पु० स्त्रियाः सकाशात् स्त्रीमेव चोरयन्ति स्त्रीरूपा वा ये चौरास्ते स्त्रीचौराः । चौरविशेषे, प्रश्न० ३ द्वा० ॥

इत्थि ( त्थी ) जण–स्त्रीजन–पु० योषिज्जने आचा० १श्रु० ४ ग्र.

इत्थि ( त्थी ) जिय–स्त्रीजित–त्रि० स्त्रिया जितः जि-क्त स्त्री-वश्ये, । स्त्रीजितस्पर्शमात्रेण सर्वं पुण्यं प्रणश्यति । न भूमौ पात-की पापात् पापिनां स्त्रीजितात्पर. । वाच० ।

इत्थि ( त्थी ) ठाण–स्त्रीस्थान–न० स्त्रिय तिष्ठन्ति येषु तानि स्थानानि निषद्या स्त्रीस्थानानि । स्त्रीणां निषद्यायाम्, " नो इत्थिठाणाइ सेवित्ता भवइ " स्था० ए ठा० ॥

इत्थि ( त्थी ) णपुंसग–स्त्रीनपुंसक–न० नपुंसकभेदे, " इत्थि णपुंसगा अपव्वावणिज्जत्ति " नि० चू० १ उ० ॥

इत्थि ( त्थी ) णाम–स्त्रीनामन्–न० कर्म्मविशेषे, स्त्रीपरिणामः स्त्रीत्वं यदुदयाद् भवति । ज्ञा० ८ अ० ॥

इत्थि ( त्थी ) णामगोमकम्म–स्त्रीनामगोत्रकर्म्मन्–न० स्त्री नाम–स्त्रीपरिणाम• स्त्रीत्व यदुदयाद्भवति तत्स्त्रीनाममिति गोत्रमभिधान यस्य तत् स्त्रीनामगोत्रम् । अथवा यत्स्त्रीप्रायो-ग्यं नाम कर्मगोत्र च तत् स्त्रीनामगोत्रकर्म्म । स्त्रीप्रायोग्ये नाम कर्म्मणि, गोत्रकर्मणि च । ज्ञा० ८ अ० ।

इत्थि ( त्थी ) तित्थ–स्त्रीतीर्थ–न० स्त्री योषित्तस्यास्तीर्थ-करत्वेनोत्पन्नायास्तीर्थं द्वादशाङ्ग सघो वा स्त्रीतीर्थम् । मल्लितीर्थ-र्थकरप्रणीते द्वादशाङ्गे, तत्सम्बन्धिनि सघे च । स्था० १० ठा० ( स्त्रीतीर्थस्याश्चर्य्यत्वम् 'अच्छेर' शब्दे )

इत्थि ( त्थी ) दोस–स्त्रीदोष–पु० स्त्रीणां दोषे, " इत्थिदोसं सकिणो होंति " स्त्रिया सह उल्लपन्तं दृष्ट्वा स्त्रीदोषाशङ्किनश्च ते भवन्तीति । सूत्र० १श्रु० ४ अ० १ उ० ( ते च स्त्रीदोषा 'इत्थी' शब्दे द्रष्टव्या )

इत्थि ( त्थी ) पच्छाकम–स्त्रीपश्चात्कृत–पु० पश्चात्कृतस्त्रीत्वे, ( इत्थिपच्छा कमो वधइ ) भावप्रधानत्वान्निर्देशस्य स्त्रीत्वं पश्चा-त्कृत भूतता नीत येनावेदकेनासौ स्त्रीपश्चात्कृत इति । भ० ८ श० ८ उ० ॥

इत्थि ( त्थी ) पण्णवणी–स्त्रीप्रज्ञापनी–स्त्री० स्त्रीलक्षणप्रति-पादिकायाम् योर्निर्मृदुत्वमस्थैर्य्यं मुग्धतेत्यादिरूपायाम्भा पायाम्, प्रज्ञा० ११ पद ।( तद्वक्तव्यता 'भासा' शब्दे )

इत्थि ( त्थी ) परिण्णज्झयण–स्त्रीपरिज्ञाध्ययन–न० सूत्रकृ-ताङ्गस्य चतुर्थेऽध्ययने, तत्र द्वावुद्देशकौ तदर्थसङ्ग्रहसूत्रकृताङ्ग नियुक्तौ यथा—

पढमे संथवसंलव, माइहि खलणाउ होंति सीलस्स ॥
बितिए इहेव खलिय–स्स अवत्था कम्मबंधो य ॥५८॥

प्रथमे उद्देशके अध्ययनार्थाधिकार• तद्यथा स्त्रीभि• सार्धं संस्तवेन परिचयेन तथा सलापेन भिन्नकथालापेनाऽङ्गप्रत्यङ्गनिरीक्षणादिना कामोत्कोचकारिणो भवेदल्पस-त्वस्य शीलस्य चारित्रस्य स्वलनाचशब्दात्तत्परित्यागो चेति । द्वितीये त्वयमर्थाधिकारस्तद्यथा शीलस्खलितस्य साधोरिहै-वास्मिन्नेव जन्मनि स्वपक्षपरपक्षकृता तिरस्कारादिका विडम्ब-यना तत्प्रत्ययश्च कर्मबन्धस्ततश्च ससारसागरपर्यटनमिति किं-स्त्रीभि• कश्चित् शीलात् प्रच्याव्यात्मवशकृतो येनैव मुच्यते कृत इति दर्शयितुमाह—

सूरा मो मन्नंता, कति वतियाहि उवहिप्पहाणाहिं ।
गहियाहु अभय पज्जोय–कूलवालादिणो बहवे ॥५९॥

बहव• पुरुषा अभयप्रद्योतकूलवालादय शूरा वयमित्येवं मन्यमाना• मो इति निपातो वाक्यालङ्कारार्थे कृत्रिमाभि• स-द्भावरहिताभिः स्त्रीभिस्त्वयोपधिर्माया तत्प्रधानाभि कृतकप टशताभिर्गृहीत्वा आत्मवशगतां नीता• केचन राज्यादपरे शीलात् प्रच्याव्यैहैव विडम्बनां प्रापिता । अभयकुमारादिकथानकानि च सूत्रादावश्यकादवगन्तव्यानि कथानकत्रयोपन्यासस्तु यथा क्रम मत्यबुद्धिविक्रमात्यन्तवृद्धिविक्रमतपस्वित्वख्यापनार्थं इति। यत एव ततो यत्कर्तव्य तदाह ॥

तम्हा ण उ वीसंभो, गंतव्वो णिच्चमेव इत्थीसु ॥
पढमुद्देसे भणिया, जे दोसा ते गणतेणं ॥ ६० ॥

( तम्हेत्ति ) यस्मात् स्त्रिय सुगतिमार्गार्गला माया प्रधाना वञ्चना निपुणास्तस्मादेतदवगम्य नैव विश्रम्भो विश्वासस्ता सां विवेकिना नित्य सदा गन्तव्यो यातव्य कर्तव्य इत्यर्थ• । ये दोषा• प्रथमोद्देशके अस्योपलक्षणार्थत्वात् द्वितीये च तान् गणयता पर्यालोचयता तासां मूर्त्तिमत्कपटानामिभृतानामात्म-हितमिच्छता न विश्वसनीयमिति । सूत्र० १श्रु० ४ अ० १ उ० । ( विस्तरतः एतदध्ययनार्था• 'इत्थी'–शब्दे )

इत्थि ( त्थी ) परिण्णा–स्त्रीपरिज्ञा–स्त्री० सूत्रकृताङ्गस्य च-तुर्थेऽध्ययने, सम० २३ स० ।

इत्थि ( त्थी ) परिग्गह–स्त्रीपरिग्रह–पु० स्त्रीया परिग्रहण- च तन्निरपेक्षत्वम् ब्रह्मचर्य्यमित्यर्थ । भ० ८ श० ८ उ० । कथायते स्तृणतेर्वा कृटि हित्वानुर्ज्ञापि स्त्री सेव तद्गुणरागहेतु गतिविभ्रमेङ्गिताकारविलोकनेऽपि " त्वग्रुधिरमांसमेदस्नाय्व स्थिशिरावणे सुदुर्गन्ध । कुचनयनजघनवदनोरुसंश्रितो म न्यते रूपम् ।१। तथा"निष्ठीवनं जुगुप्स्यन्त्यधरस्य पिपति मोहित प्रसभम् । कुचजघनपरिस्राव नेच्छति तन्मोहितो भजते । २ । इत्यादि भावनातोऽभिधास्यमाननीतितश्च परिग्रह्यमाणत्वा-त्परिग्रह स्त्रीपरिग्रह । उत्त० २ अ० । प्रव० । परिग्रहभेदे, अस्यायमर्थो न स्त्री तस्यायमङ्गप्रत्यङ्गस्थानदर्शनत्वचन-विभ्रमायाश्चित्तविक्षेपकारिणीश्चिराश्चिन्तयेत्र जातुचिच्छ्रुतपि निक्षिपेन्नेोक्तमार्गगतासु ललनासु कामबुद्धेरिति । प्रव० ८६ द्वा० । आव० । उक्त च "दुर्ग्रोयमङ्कपङ्का हि मोक्षद्वारार्गलाः स्त्रिय । चिन्तिता धर्मनाशाय चिन्तयेदिति नैव ता "। ध० ।

संगो एस मणुस्साणं, जाओ लोगंमि इत्थिओ ॥
जस्स एया परिन्नाया, सुकडं तस्स सामण्णं ॥१६॥
एवमादाय मेहावी, पंकभूया उ इत्थिओ ॥
नो ताहिं विहन्नेज्जा, चरेज्जत्तगवेसए ॥ १७ ॥

सङ्गेति आसक्तिमनुभवन्ति रागादिवमना जन्तवोऽनेनेति सङ्ग एषोऽनन्तर वक्ष्यमाणो मनुष्याणां पुंसाम् । गमेनाद् । ना-

योनीत्यविशेषाभिधानं ततो या काश्चन मानुष्यो देव्यस्तिरश्च्यो वा ( लोगंमित्ति ) लोके तिर्यग्लोकादौ स्त्रियो नार्यो घनाद्य हावभावादिभिरत्यन्तमासक्तिहेतवो मनुष्याणामित्येवमुक्तमन्यथा हि गीतादिष्वपि सजन्ति एव मनुष्याः मनुष्योपादानं च तेषामेव मैथुनसंज्ञातिरेक प्रज्ञापनादौ प्ररूपित इति अत किमित्याह । ( जस्सेत्ति ) यस्य यतेः एता स्त्रियः ( परिन्नायत्ति ) सर्वप्रकारं ज्ञाता परिज्ञातास्तत्र ज्ञपरिज्ञयेह परत्र च महानर्थहेतुतया विदिताः तथा चागमः " विभूसा इत्थि ससग्गी, पणीयं रसभोयणं । णरस्सत्तगवेसिस्स, विसं तालउडं जहा " ॥ १ ॥ प्रत्याख्यानरूपरिज्ञया च तत एव च प्रत्याख्याता ( सुकडंति ) सुकृतं सुष्ठ्वनुष्ठितं पाठान्तरं सुकरं वा सुखेनैवानुष्ठातुं शक्यं ( तस्सत्ति ) सुव्यत्ययात्तेन ( सामण्णंति ) श्रामण्यं व्रतं किमुक्तं भवत्यवद्यहेतुत्यागो हि व्रतरागद्वेषावेव तत्त्वतस्तद्धेतू तत्कलीतितश्च न स्त्रीभ्य परं तन्मूलमिति तत्प्रत्याख्यानत्वसुकृतत्वं श्रामण्यस्य यद्वोक्तनीतितः स्त्रिय एव दुस्त्यजास्ततस्तत्त्यागे सकलमेवापरमिति तत्प्रत्याख्यानतः सुकृतत्वं श्रामण्यस्योच्यते । वक्ष्यति हि "एए य सगे समइक्कमित्ता, सुहुत्तरा चेव भवंति सेसा ॥ जहा महासागरमुत्तरित्ता, णई भवे अवि गंगासमाणा ॥ १ ॥ अत किंविधेयमित्याह । ( एयमादाय ) एवमित्यनन्तरोक्तप्रकारेणात्यन्तासक्तिहेतुत्वलक्षणेनाज्ञाय स्वरूपाभिव्याख्या अवगम्य मेधाव्यवधारणशक्तिमान् पङ्क कर्दमस्तद्भूता मुक्तिपथप्रवृत्तानां विबन्धकत्वेन मालिन्यहेतुत्वेन च तदुपमास्तुरवधारणार्थः । ततः पङ्कभूता एव स्त्रियः । पठ्यते च "एवमादाय मेहावी जहा पया लहुस्सिगत्ति " । एवमनन्तरमेव वक्ष्यमाणमर्थमादाय बुद्ध्या गृहीत्वा मेधावी तमेवाह यथेत्युपदर्शने एताः स्त्रियः ( लहुस्सिगत्ति ) तुच्छाशयत्वादिना लघ्वास्ततः किमित्याह । नो नैव ताभिः स्त्रीभिर्विनिहन्यात् विशेषतः संजमजीवितव्यव्यपरोपणात्मकेनातिशयेन च सामस्त्येनदुच्छेदरूपेणातिपातयेदात्मानमिति गम्यते । इत्यसाह चरेत् धर्मानुष्ठानमासेवेत । आत्मानं गवेषयेत् कथं मयात्मा भवाब्धिस्तारणीय इत्यन्वेषयेत " आत्मगवेषक सिद्धिस्वरूपापत्ति ' रिति वचनात् । सिद्धिर्वात्मा तत कथं ममात्मा स्यादित्यन्वेषक आत्मगवेषको यद्वात्मानमेव गवेषयते इत्यात्मगवेषक किमुक्तं भवति चित्रालङ्कारशालिनीरपि स्त्रियोऽवलोक्य तद्दृष्टिन्यासस्य दुष्टताऽवगमात् इतिनि नान्यो रुपमज्ञानं आत्मान्वेषैव भवति उक्तं हि–"चित्तभित्तिं न निज्झाए, नारिं वा सुअलंकियं । भक्खरं पिव दट्ठूण, दिट्ठिं पडिसमाहरे" ॥

सम्प्रति प्रतिमादार विभूषयन् यस्यैता परिज्ञाता इत्यादि सूत्रसूचितं चैतद्गुणोज्ज्वलदार्ष्टान्तिक दृष्टान्तमाह ॥

उसभपुरं रायगिहं, पाडलिपुत्तस्स होइ उप्पत्ती ।
नंदे सगडालथूल-भद्दसिरिया वररुई य ॥ ३६ ॥
तिण्ह अणगाराणं, अभिग्गहो आसि चउण्हमासाणं ।
वसहीनिमित्तं, को हि भणिओ णिसामेह ॥ ३७
गणियाघरम्मि एक्को, बिइओ उसिओ उ वग्घवसहीए ।
तइओ सप्पवसहीए, को दुक्करकारओ एत्थ ॥ ३८ ॥
वग्घो वा सप्पो वा, सरीरपीडाकरो उ वत्तव्वो ।
नाणं व दंसणं वा, चारित्तं वा ण पवओ नेउं ॥ ३९ ॥
भगवं पि थूलभद्दो, तिक्खे चंकमिओ ण पुण छिन्नो ।
अग्गिसिहाए वत्थो, चाउम्मासे ण पुण दड्ढो ॥ ४० ॥
अन्नो वि य अणगारो, जणमाणो हंपि थूलभद्दसमो ।
कंबलओ य चंदणियाए मईलितो एगराईए ॥ ४१ ॥

( उसभ गाथापट्क ) वृषभपुरं राजगृहं पाटलिपुत्रस्य भवत्युत्पत्तिः नन्दः शकटालः स्थूलभद्रश्रीयकौ वररुचिस्त्रयाणामनगाराणामभिग्रह आसीत् ( चउण्हमासाणं ) सुव्यत्ययाच्चतुर्षु मासेषु वसतिमात्रनिमित्त कः कुत्रोषितो निशामयत । गणिकागृहे एको, द्वितीय उषितस्तु व्याघ्रवसतौ, सर्पवसतौ तृतीयः, को दुष्करकारकोऽत्र तेषु मध्ये व्याघ्रो वा सर्पो वा शरीरपीडाकरस्तु वक्तव्यो ज्ञानं वा दर्शनं वा चारित्रं वा न प्रत्यलो नेतुं भगवानपि स्थूलभद्रस्तीक्ष्णे निशितासिधारादौ चङ्क्रमितो न पुनः छिन्नः अग्निशिखायामुषितश्चातुर्मास्यां न पुनः दग्धः अन्यो पि चानगारो भणत्यहमपि स्थूलभद्रसमः कम्बलकश्चन्दनिकायामुच्चारभूमौ मलिनित इति निर्युक्ति गाथापट्काक्षरार्थः । एतदर्थस्तु वृद्धसम्प्रदायादवसेयः । उत्त० २ अ० ॥ स च थूलभद्द-शब्दे ) " जहा थूलभद्दे णित्थिपरिसहो अहियासितो तहाहियासियव्वा ण जण जहा तेण णाहियासिओत्ति ,, उत्त० २ अ० ( स्थूलभद्रकथा ' थूलभद्द शब्दे )

स्त्रीपरिषहोपपत्तौ किंविदध्यादित्याह—

से पभूतदंसी पभूतपरिण्णाणे उवसंते समिते सहिते सया जए दट्ठु विप्पडिवेदेति अप्पाणं किमेस जणो करिस्सति एस से परमारामो जाओ लोगंमि इत्थिओ मुणिणा हु एयं पवेदितं उवाहिज्जमाणे गामधम्मेहिं अवि णिव्वलासए अविओमोदरियं कुज्जा अवि उड्ढं ठाणं ठाइज्जा अवि गामाणुगामं दूइज्जा अवि आहारं वोच्छिंदिज्जा अवि चए इत्थीसु मणं पुव्वं दंडा पच्छा फासा पुव्वं फासा पच्छा दंडा इच्चेते कलहा संगकरा भवंति पडिलेहाए आगमेत्ता आणविज्जा अणासेवणाएत्ति बेमि ।

( सेइत्यादि ) स साधुः प्रभूतं प्रमादविपाकादिकमतीतानागतवर्तमानं वा कर्म्म विपाकं द्रष्टुं शीलमस्येति प्रभूतदर्शी सांप्रतेक्षितया न यत्किञ्चनकारीत्यर्थः तथा प्रभूतं सत्वरक्षोपायपरिज्ञानं संसारमोक्षकारणं परिज्ञानं वा यस्य स प्रभूतपरिज्ञानः यथावस्थितसंसारस्वरूपदर्शीत्यर्थः । किञ्च उपशान्तः कषायानुदयादिन्द्रियनोइन्द्रियोपशमाद्वा तथा पञ्चभिः समितिभिः समितः सम्यग् वा मोक्षमार्गमितस्समितस्तथा ज्ञानादिभिः सहितः समन्वितः सह हितेन वा सहितः । सदा सर्वकालं यतः सदायतः । स एवम्भूतोऽप्रमत्तो गुणैरन्तिकमावसतः प्रमादजनितस्य कर्मणोऽन्तं विधत्ते स च कदाचनानुकूलपरीषहोपपत्तौ किं विदध्यादित्याह ( दट्ठु इत्यादि ) दृष्ट्वा अवलोक्य स्त्रीजनमुपसर्गकरणायोद्यतमात्मानं विप्रतिवेदयति पर्यालोचयति तद्यथा सम्यग्दृष्टिरस्मि तथा द्विजपञ्चमहाव्रतभारदारुद्धशाकनिर्म्मलकुलवंशजन्माकार्याकारणतयोऽथितः इत्येवमात्मानं पर्यालोचयति तं च स्त्रीजनं किमेष स्त्रीजनो मम त्यक्तजीविताशस्य जिनेन्द्रियकुमारासितावस्योपसर्गादिकं कुर्यादथवा वैषयिकसुखस्य दुःखप्रतीकाररूपत्वात् किमेष स्त्रीजनः सुखविधित्सादयो वा पुत्रकलत्रादिको जनो मम मृत्युना जिघृक्षितस्य त्राणाय वा शक्तस्य

किं तत्प्रतीकारादिकं कुर्यादिति यदिवैन स्त्रीजनस्य स्वभाव चिन्तयेदिति सूत्रेणैव दर्शयति (एससे इत्यादि) स एष स्त्रीजन आरामयतीत्याराम परमश्वासावारामश्च परमाराम ज्ञाततत्त्वमपि जनं हासविभ्रासोपाङ्गनिरीक्षणादिभिर्विब्बोकैर्मोहयतीत्यर्थ. या. काश्चनास्मिँल्लोके स्त्रियस्ता मोहरूपा. विज्ञाय यावन्न परित्यजन्ति तावत् स्वत एव परित्यजेत् एतच्च तीर्थकरेण प्रवेदितमिति दर्शयितुमाह ( मुणिणा इत्यादि ) मुनिना श्रीवर्द्धमानस्वामिना उत्पन्नज्ञानेनैतत् पूर्वोक्त यथा स्त्रियो भावबन्धनरूपा. प्रवेदित प्रकर्षेणादौ व्याख्यातमिति एतच्च वक्ष्यमाण प्रवेदितमित्याह ( उब्बाहिज्ज इत्यादि ) उत्प्राबल्येन मोहोदयाद्वाध्यमान पीड्यमानः कैर्ग्रामधर्मैर्ग्रामा इन्द्रियग्रामास्तेषां धर्म्मा स्वभावा यथा स्वविषयेषु वर्त्तन तैरुद्बाध्यमानो गच्छान्तर्गत सन् गुर्वादिनानुशास्यते कथमनुशास्यत इत्यत आह ( अवि इत्यादि ) अपि सभावनायां निर्बल निस्सारमन्त.प्रान्तादिकं यद्द्रव्य तदाशकस्तद्भोजी स्याद्यदि वा निर्गत बल सामर्थ्यमस्येति निर्बल एवभूत सन्नाशीतवन्नाभावे च ग्रामधर्मोपगमदर्शनाद्बलहानिश्चाहारहान्या स्यादिति दर्शयति अप्यवमौदर्यं कुर्याद्यदि ह्यन्तप्रान्ताशिनोपि न मोहोपशम स्यात्ततस्तदपि वल्लचनकादिना द्वात्रिंशत् कवलमात्र गृह्णीयात्तेनाप्यनुपशमे कायोत्सर्गादिना कायक्लेश कुर्यादित्येतद्दर्शयति अप्यूर्ध्वस्थान तिष्ठेच्छीतोष्णादौ कायोत्सर्गेणातापनां कुर्यात्तेनाप्यनुपशमे ग्रामानुग्राममपि विहरेद्भिक्षाकारणे विहारो निषिद्धो मोहोपशमनार्थन्तु कुर्यात् किम्बहुना येन येनोपायेन विषयेच्छा निवर्तते तत्तत्कुर्यात्पर्यन्ते आहारमपि व्यवच्छिन्द्यादपि पातमपि विदध्यात् अप्युदुन्धन कुर्यान्न च स्त्रीषु मन कुर्यादित्याह ( अवी इत्यादि ) अपि समुच्चये स्त्रीषु यन्मन प्रवृत्त तत्परित्यजेत तत्परित्यागे हि कामाद्रिरूपा अपि दरत एव परित्यक्ता भवन्त्युक्तञ्च "काम । जानामि ते रूप, सङ्कल्पात्किल जायसे। न त्वां सकल्पयिष्यामि, ततो मे न भविष्यसि " किं पुन. कारण स्त्रीषु मनो न विधेयमित्याह ( पुव्व इत्यादि ) स्त्रीसङ्ग प्रसक्तानामपरमार्थदृशां पूर्वप्रथममेव तत्सङ्गाविच्छेदार्थमर्थोपार्जनप्रवृत्तस्य कृषिवाणिज्यादिक्रिया. कुर्वतोऽगणितक्षुत्पिपासाशीतोष्णादिपरीषहस्यैहिकरूपाश्च दुःखे दारुणास्ते च स्त्रीसभोगात्प्रथममेव क्रियन्त इति पूर्वमित्युक्त पश्चाच्च विषयनिमित्तजनितकर्म्मविपाकापादितनरकादिषु खविशेषाः स्पर्शा भवन्ति यदि वा स्त्र्याद्यकार्यप्रवृत्तस्य पूर्वं दण्डपाता. पश्चाद्धस्तपादच्छेदादिका स्पर्शा भवन्ति यदि वा पूर्वं स्पर्शा पश्चाद्दण्डपाता इति अथवा पूर्वं दण्डास्ताडनादिका. पश्चात् स्पर्शा सबाधनालिङ्गनचुम्बनादिकास्तत्र्था वन्यानीतावरूढराजकुमारीगवाक्षक्षिप्तपतद्राचीलग्रहणाद्राजपुरुषावलोकनताडनेन मूर्च्छिता राजकुमारी, तद्दर्शनतो वाणिगिन्द्रदत्तस्याग्रतो दण्डा पश्चात् स्पर्शा इति । पूर्वं वा सुखादिस्पर्शा पश्चाद्दण्डो ललिताङ्गकस्येवान्येषाञ्चोपपतीनामिति । किञ्च ( इच्चेए इत्यादि ) इत्येते स्त्रीसबन्धा कलह सग्रामस्तत्रासङ्ग सबन्ध कलहासङ्गस्तत्करा भवन्ति यदि वा कलह क्रोध आसङ्गो राग इत्यतो रागद्वेषकारिणो भवन्ति यद्येव तत किं कुर्यादित्याह ( पडिलेहाए इत्यादि ) ऐहिकामुष्मिकापायत स्त्रीसङ्गप्रत्युपेक्षया ( आगमितेत्ति ) ज्ञात्वा आज्ञापयेदात्मानमनासेवनयेति इति अधिकार परिसमाप्तौ ब्रवीम्यह तीर्थकरवचनानुसारेण ।

दु रु च ता परिहर्तुमिति पुनरपि तत्परिहरणोपायमाह—

**से णो काहिए णो पासणीए णो संपसारए णो ममाए णो कयकिरिए वयगुत्ते अज्झप्पसंवुडे परिवज्जए सदा पावं एयं मोणं समणुवासेज्जासि त्ति बेमि ॥**

(से णो काहिएत्ति) स स्त्रीसङ्ग परित्यागी स्त्रीनेपथ्यकथां शृङ्गारकथां वा न कुर्यादेव च तास्त्यक्ता भवन्ति तथा ( णो पासणीए ) तासां नरकवीथीनां स्वर्गापवर्गमार्गार्गलानामङ्गप्रत्यङ्गादिकं न पश्येद्यतस्तन्निरीक्ष्यमाणं महतेऽनर्थाय भवतीत्युक्त च " सन्मार्गे तावदास्ते प्रभवति पुरुषस्तावदेवेन्द्रियाणां, लज्जां तावद्विधत्ते विनयमपि समालम्बते तावदेव । भ्रूचापाकृष्टमुक्ताः श्रवणपथजुषो नीलपक्ष्माण एते, यावल्लीलावतीना न हृदि धृतिमुषो दृष्टिबाणा. पतन्ति " । तथा ( णो सपसारए ) ताभिर्नरकविश्रम्भभूमिभिः सार्द्धं न सप्रसारण पर्यालोचनमेकान्ते निजस्वस्रादिभिरपि कुर्यादित्युक्तञ्च "मात्रा स्वस्रा दुहित्रा वा न विविक्तासनो भवेत्। बलवानिन्द्रियग्राम. पण्डितोऽप्यत्र मुह्यति" त्येवमादि । तथा ( णो ममाए ) न तासु स्वार्थपरासु ममत्व कुर्यात्तथा ( णो कयकिरिए ) कृतानुष्ठिना तदुपकारिणी मण्डनादिका क्रिया येन स कृतक्रिय इत्येवभूतो न भूयान्न स्त्रीणा वैयावृत्त्यं कुर्यात्काययोग निरोध इति भावस्तथा ( वयगुत्ते ) तयैताः शुभानुष्ठानपरिपन्थिनीर्न वाग्मात्रेणाप्यालापयेदिति वाग्योगनिरोधस्तथा ( अज्झप्पसवुडे ) आत्मन्यध्यध्यात्म मनस्तेन सवृतोऽध्यात्मसंवृत. स्त्रीभोगादत्तमना. सूत्रार्थोपयुक्तनिरुद्धमनोयोग एव भूतश्च किमपर कुर्यादित्याह ( परि इत्यादि ) परि समन्ताद्वर्जयेत् परिहरेत् सदा सर्वकाल पाप किल्विष तदुपादान वा कर्म्म उपसंहरणार्थमाह ( एय इत्यादि ) एतद्यदुद्देशकादेरारभ्योक्तं मुनेरिदं मौन मुनिभावो वा तदात्मनि समनुवासयेदात्मनि विदध्यात् । आचा० १ श्रु० अ० ४ उ० २ ।

इत्थि ( स्त्री ) परिसहविजय–स्त्रीपरिषहविजय– पु० एकान्तेष्वारामभवनादिप्रदेशेषु नवयौवनमदप्रमत्तासु शुभमन.–सङ्कल्पमपहरन्तीषु प्रमदास्वत्यन्तसवृतेन्द्रियान्त करणस्याकुञ्चिकुणपपिण्ड एव इत्येवमशुभभावनावशतो यत्त स्तललितहसितमृदुभाषणसविलासनिरीक्षणचङ्क्रमणादिरूपाणां मन्मथशराणां विफलताकरणमेव स्त्रीपरिषहविजयः । स्त्रीपरिषहविफलताकरणे, । प० स० ४ द्वा० ॥

इत्थि ( स्त्री ) पोसय–स्त्रीपोषक–पु० स्त्रिय पोषयन्तीति स्त्रीपोषक । स्त्रीपोषकेऽनुष्ठानविशेषे, " ओसियाओ वि इत्थिपोसे " स्त्रिय पोषयन्तीति स्त्रीपोषका अनुष्ठानविशेषास्तेषूषिता अपि व्यवस्थिता अपि पुरुषा मनुष्या भुक्तभोगिनोऽपि स्त्रीणां वश व्रजन्तीति । सूत्र० १ श्रु० ४ अ० १ उ० ॥

इत्थि ( स्त्री ) पुंसलक्खणा–स्त्रीपुंसलक्षणा–स्त्री० स्त्रीपुंसयो. लक्षणमस्याम् । स्तनश्मश्रुप्रभृतिस्त्रीपुरुषचिह्नधारिण्यां स्त्रीयाम् पोटायाम्, । अमर. ॥

इत्थि ( स्त्री ) भाव–स्त्रीभाव–पु० स्त्रीणां कटाक्षदर्शनादिके भावे, " सिंगारियाइं इत्थिभावाइं उवदंसेमाणि " शृङ्गाररसवत स्त्रीस्वभावान् कटाक्षसदर्शनादीनीति । उपा ७ अ०

इत्थि ( स्त्री ) भोग–स्त्रीभोग–पु० स्त्रिया सह हास्यादिकरणे, तच्च जिनमंदिरस्यान्तर्निषिद्धमिति । दर्श० ॥

इत्थि ( स्त्री ) मज्झगय–स्त्रीमध्यगत–त्रि० " इत्थीनु उभ-

योऽस्त्रियासु मज्झे भवति" तत्र गते, मज्झं दोऽएहंतगत इति । नि० चू० ८ उ० ॥

इत्थि (त्थी) रज्ज-स्त्रीराज्य-न० स्त्रीस्वातन्त्र्ये, तच्चनिषिद्धमेव, स्त्रीराज्यस्यातिनिन्दनीयत्वमाह ॥

घणगज्जियहयकुहए, विज्जुदुग्गिज्झ गूढहिययाओ ।
अज्जा अवारियाओ, इत्थीरज्जं न तं गच्छं ॥ ९९ ॥

यत्र गच्छे आर्या ( अवारियाओत्ति ) अनिवारिता· अकृत्यं कुर्वन्त्य· तत्पश्चिनेकेनानिषिद्धा निरङ्कुशा इत्यर्थः वर्तन्ते । कथंभूता· आर्या· ( घण गज्जिए इत्यादि ) अत्र कुहकशब्देन धवतोऽश्वस्य उदरप्रदेशसमीपे संमूर्च्छितवायुविशेष उत्पद्यते स प्रोच्यते यत उक्त परिशिष्टपर्वणि श्रीहेमचन्द्रसूरिपादैः । " दध्यौ न स्वर्णकारोपि, चरितं योषितामहो । अश्वानां कुहकारावमिव को वेत्तुमीश्वरः ॥ १ ॥ तयैकारोऽन्यत्ययानिर्देशश्चार्षत्वात्ततोऽयमर्थ । घनगर्जितहयकुहकवद्विद्युद्वद्दुर्ग्राह्यगूढहृदया इत्यर्थः । क्रमेण गूढं मायाकरणत्वेनाऽकलनीयाशयं दुर्ग्राह्यं चास्थिरत्वेन गृहीतुमशक्यमाशयं हृदयं यासां तास्तथा संभवति चार्याणामपि कासांचित् स्त्रीजातित्वेन एवंविधत्वे यत उच्यते स्त्रीमधिकृत्य लोकेपि-"अश्वप्लुतं माधवगर्जितं च स्त्रीणां चरित्रं भवितव्यतां च । अवर्षणञ्चाप्यतिवर्षणं च देवो न जानाति कुतो मनुष्य ॥ १ ॥ तथा" जलमज्झे मच्छपयं, आगासे पक्खियाण पयपंती । महिलाण हिययमग्गो, तिन्नवि लोए न दीसंति ॥ २ ॥ तथा । यदि स्थिरा भवेत् विद्युत्, तिष्ठन्ति यदि वायव । दैवात्तथापि नारीणां, न स्थेम्ना स्थीयते मन· ॥३॥ तत्स्त्रीराज्यमुच्यते न स गच्छ आर्याणां हि स्त्रीजातित्वेन सर्वकाल तथाविधपरिवर्तकपारतन्त्र्येणैवावस्थानं समुचितं न तु स्वातन्त्र्येण कदाचिदपि यतो लोकेऽप्युच्यते-पिता रक्षति कौमारे, भर्ता रक्षति यौवने । पुत्रस्तु स्थविरे भावे, न स्त्री स्वातन्त्र्यमर्हति । ग० २ अधि० ( आर्याणां स्वातन्त्र्यनिषेध· अज्जा शब्दे विस्तरेण द्रष्टव्य ) ॥

इत्थि (त्थी) रयण-स्त्रीरत्न-न० पञ्चेन्द्रियरत्नविशेषे, स्था०, ७ ठा० । स्त्रीरत्नम यदद्भुतकामहेतुसन्निधानमिति । प्रव० २६४ द्वा० स्त्रीरत्नस्पर्शे लोहपुरुषस्य गलनं यदा स्त्रीरत्नं लोहपुरुषं स्पृशति तदा स गलति तत्कथमिति प्रश्न । स्त्रीरत्नस्पर्शाल्लोहपुरुषस्य तत्समुत्पन्नातिशयितकामविकारजनितप्रबलोष्ण-तापविशेषादित्युत्तरम् । ही० ।

इत्थि(त्थी)राग-स्त्रीराग-पु० नाभिन्याभिलाषे, । द्वा० २६ द्वा० ।

इत्थि ( त्थी ) रूव-स्त्रीरूप-स्त्र्याकारे, । तं० ।

इत्थि ( त्थी ) लक्खण-स्त्रीलक्षण-न० सामुद्रिकप्रसिद्धे ( ज० ) द्वासप्ततिकलान्तर्गते कलाविशेषे, । ज्ञा० १ अ० । औप० । कल्प० । स्त्रीलक्षणं स्तनकरचरणादिकम् । इति । तत्प्रतिपादके पापश्रुताध्ययने च । सूत्र० २ श्रु० २ अ० ।

इत्थि ( त्थी ) लिंग-स्त्रीलिङ्ग-न० स्त्रीया लिङ्गं स्त्रीलिङ्गम् । स्त्रीत्वे, तच्च त्रिधा वेद शरीरनिर्वृत्ति नेपथ्य च । प्रज्ञा० १ पद । ना० म० प्र० । नं० । स्त्रिया इव लिङ्गं तत्कार्यं यस्य तत् स्त्रीलिङ्गं स्त्रीलिङ्गव्याकरणोक्तमकारान्तयुक्ते शब्दभेदे,-पु० ६ न स्त्री० स च नदी मही ल्यादिरिति-अनु० । चिह्नेन स्तनादौ न० । गाच० ।

इत्थि ( त्थी ) लिंगसिद्ध-स्त्रीलिङ्गसिद्ध-पु० स्त्रिया लिङ्गं स्त्रीलिङ्गं स्त्रीत्वस्योपलक्षणमित्यर्थ । तच्च त्रिधा । वेदः शरीरनिर्वृत्तिर्नेपथ्यं च । तत इह शरीरनिर्वृत्त्या प्रयोजनं न वेदनेपथ्याभ्यां वेदे सति सिद्धत्वाभावात् नेपथ्यस्य चाप्रमाणत्वात् । आह च नन्द्यध्ययनचूर्णिकृत्" इत्थीए लिंगं इत्थिलिंग इत्थिउवलक्खण ति वुत्तं भवइ तं च तिविहं वेदो सरीरनिव्वत्तीए नेवत्थे च इह सरीरनिव्वत्तीए अहिगारो न वेयनेवत्थेहिं ति" । ततस्तस्मिन् लिङ्गे वर्तमानाः सन्तो ये सिद्धास्ते स्त्रीलिङ्गसिद्धाः । प्रज्ञा० १ पद० । आ० म० प्र० । न० । सिद्धभेदे, तथा च ललितविस्तरायाम् ( तीर्थसिद्धातीर्थसिद्धतीर्थकरसिद्धा अतीर्थकरसिद्धा· स्वयंबुद्धसिद्धप्रत्येकबुद्धसिद्धबुद्धबोधितसिद्धानतिपाद्योक्तम् ) एते च सर्वेपि स्त्रीलिङ्गसिद्धा· केचित् २ पुंल्लिङ्गसिद्धाः केचिन्नपुंसकलिङ्गसिद्धा· इति आह तीर्थकरा अपि स्त्रीलिङ्गसिद्धा भवन्तीत्याह यत उक्त सिद्धप्राभृते " सव्वत्थो वा तित्थयरी सिद्धा तित्थगरितित्थणो तित्थगरसिद्धा सखेज्जगुणा इति " ल० ॥

स्त्रीणां सिद्धिर्यथा ।

एगोवि णमुक्कारो, वीरवरवसहस्स वद्धमाणस्स ।
संसारसागराओ, तारइ नरं व नारिं वा ॥

इति महावीरस्तुतिप्रतिपाद्योक्तम् । स्त्रीग्रहणं तासामपि तद्भव एव संसारक्षयो भवतीति ज्ञापनार्थं वच । यथोक्तं यापनीतन्त्रे "णो खलु इत्थि अजीवो, ण यावि अभव्वा ण यावि दंसणविरोहिणी, णो अमाणुसा, णो अणारिउप्पत्ती, णो असंखेज्जाउया, णो अइकूरमई, णोण उवसंतमोहा, णो ण सुद्धाचारा णो असुद्धबोंदी ववसायवज्जिया, णो अपुव्वकरणविरोहिणी, णो ऽणवगुणठाणरहिया, णो अजोग्गा लद्धिए, णो अकल्लाणभायणं ति, कह न उत्तमधम्मसाहिगत्ति" तत्र न खल्विति । नैव स्त्री अजीवा वर्तते । किन्तु जीव एव जीवस्य चोत्तमधर्मसाधकत्वाविरोधस्तथादर्शनात् । न जीवोऽपि सर्वउत्तमधर्मसाधको भवत्यभव्येन व्यभिचारात् । तद्व्यपोहायाह न चास्व भव्यजातिप्रतिषेधोऽय । यद्यपि काचिदभव्या तथापि सर्वैवाभव्या न भवति संसारनिर्वेदनिर्वाधधर्माद्वेषशुश्रूषादिदर्शनात् । भव्योऽपि कश्चिद्दर्शनविरोधी यो न सेत्स्यति तन्निरासायाह । नो दर्शनविरोधिनी । दर्शनमिह सम्यग्दर्शनं परिगृह्यते तत्वार्थश्रद्धानरूपं न तद्विरोधिन्येवास्तिक्यादिदर्शनात् । दर्शनाविरोधिन्यपि अमानुषी नेष्यत एव तत्प्रतिषेधायाह । नो अमानुषी । मानुष्यजातौ भावात् । विशिष्टकरचरणोरुग्रीवाद्यवयवसन्निवेशदर्शनात् । मानुष्यप्यनार्योत्पत्तिरनिष्टा तदपनोदायाह ॥ नो अनार्योत्पत्तिः अनार्येष्वप्युत्पत्ते· तथा तास्वदर्शनात् । आर्योत्पत्तिरप्यसंख्येयायुर्नेष्यते भोगभूमिजत्वादत उक्तं तन्निषेधार्थं धिकृत्याह । नो असंख्येयायु· । सर्वेव सख्येयायुर्युक्ताया अपि भावात् तथा दर्शनात् । सख्येयायुरपि क्रूरमति प्रतिषिद्धा नत्रिषाचिकीर्षयाह । न।तिक्रूरमति· । सप्तमनरकायुर्निबन्धनरौद्रध्यानाभावात् ॥ तदभ्यकृष्टशुभध्यानाभाव इतिवत् । न तेन तस्य प्रतिबन्धाभावात् तत्फलवदितरफलभावेनानिष्टप्रसङ्गात् । अक्रूरमतिरपि रतिलालसाऽनुदयैव तदपोहायाह । नो न उपशान्तमोहा काचिदुपशान्तमोहापि संभवति तथा दर्शनात् । उपशान्तमोहाप्यशुद्धाचारा गर्हिता तत्प्रतिक्षेपायाह । नो नशुद्धाचारा काचित् शुद्धाचारापि भवन्तीति त्येन परपुरुषवर्जनाद्याचारदर्शनात् । शुद्धाचाराप्यशुद्धबों-

दिरसाध्वी तदपनोदायाह । नो अशुद्धवेदिः । काचित् शुद्धा तनुरपि भवति । प्राक्कर्मा तु वेद्यत' ससर्जनाद्यशुध्यदर्शनात् । कक्षास्तनादिदेशेषु शुद्धवेदिरपि व्यवसायावर्जिता निन्दितैव तन्निरासायाह । नो व्यवसायवर्जिता काचित्परलोक व्यवसायिनी शास्त्रात्तत्प्रवृत्तिदर्शनात् सव्यवसायाप्यपूर्वकरणविरोधिन्येव तत्प्रतिषेधमाह । नो अपूर्वकरणविरोधिनी । अपूर्वकरणासंभवस्य । स्त्रीजातावपि प्रतिपादितत्वात् । अपूर्वकरणवत्यपि नवगुणस्थानरहिता नेष्टसिद्ध्ये इष्टसिध्यर्थमाह । नो नवगुणस्थानरहिता तत्सभवस्य तस्या' प्रतिपादितत्वान् । नवगुणस्थानसगतापि लब्धयोग्या अकारणमाधिकृतविधिरित्येतत्प्रतिक्षेपायाह । नायोग्या लब्धेः । आमर्षौषध्यादिरूपायाः कासांचित्येनेदानीमपि दर्शनात् कथ द्वादशाङ्गप्रतिषेधः तथाविधविग्रहे ततो दोषात् । श्रेणिपरिणतौ तु कालगम्यवद्भावतो भावो विरुद्ध एव । लब्धियोग्याप्यकल्याणभाजनोपघातान्नाभिलषितार्थसाधनायालमित्यत आह नाकल्याणभाजन तीर्थकरजननात् नातः पर कल्याणमस्ति यत एवमतः कथ नोत्तमधर्मसाधिके-युत्तमधर्मसाधिकेव; अनेनतत्तत्कालापेक्षयैतावदूगुणसयमान्वितैवोत्तमधर्मसाधिकेति विद्वांसः । केवलसाधकश्चाय सति च केवले नियमान्मोक्ष इति । ल० ।

एतेन यदाहुराशाम्बराः-न स्त्रीणां निर्वाणमिति तदपास्त द्रष्टव्यम् । स्त्रीनिर्वाणस्य साक्षादनेन सूत्रेणाभिधानात् । तत्प्रतिषेधस्य युक्त्यनुपपन्नत्वात् । तथाहि-मुक्तिपथो ज्ञानदर्शनचारित्राणि । "सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्ग इति वचनात् " सम्यग्दर्शनादीनि पुरुषाणामिव स्त्रीणामप्यविकलानि दृश्यन्ते । तथाहि दृश्यन्ते स्त्रियोऽपि सकलमपि प्रवचनार्थमभिरोचयमानाः जानते च षडावश्यककालिकोत्कालिकादिभेदभिन्न श्रुत, परिपालयन्ति सप्तदशप्रकारमकलङ्कसंयम, धारयन्ति च देवासुराणामपि दुर्द्धर ब्रह्मचर्य, तप्यन्ते च तपांसि मासक्षपणादीनि, ततः कथमिव न तासां मोक्षसम्भव ।
(नग्न')-एतदस्ति स्त्रीणां सम्यग्दर्शन ज्ञान वा न पुनश्चारित्र सयमाभावात् तथाहि स्त्रीणामवश्य वस्त्र परिभोगेन भवितव्यमन्यथा विवृताङ्ग्यस्तास्तिर्यक्स्त्रिय इव पुरुषाणामभिभावनीया भवेयुः । लोके च गर्होपजायेत ततोऽवश्य ताभिर्वस्त्रं परिभोक्तव्यम । वस्त्रपरिभोगे च सपरिग्रहता सपरिग्रहत्वे च सयमाभाव इति ॥

(सैद्धान्तिक )तदसमीचीनं सम्यक्सिद्धान्तापरिज्ञानात्परिग्रहो हि परमार्थतो मूर्छाभिधीयते "मुच्छा परिग्गहो वुत्तो"इति वचनात् । तथाहि मूर्छा रहितो भरतश्चक्रवर्ती सान्त पुरोऽप्यादर्शकगृहेऽवतिष्ठमानो निष्परिग्रहो गीयते । अन्यथा केवलोत्पादो न सभवेत् । अपिच-यदि मूर्छाया अभावेऽपि वस्त्र ससर्गमात्र परिग्रहो भवेत्ततो जिनकल्पप्रतिपन्नस्य कस्य चित्साधोस्तुषारकणानुषक्ते प्रपतति शीते केनाप्यविपहोपनिपातमद्यशीतमिति विभाव्य धर्मार्थिना शिरसि वस्त्रे प्रक्षिप्ते तस्य सपरिग्रहता भवेत् । नचैतदिष्ट तस्मान्न वस्त्रससर्गमात्र परिग्रहः किन्तु मूर्छा । सा च स्त्रीणां वस्त्रादिषु न विद्यते धर्मोपकरणमात्रतया तस्योपादानात् । न खलु ता वस्त्रमन्तरेणात्मान रक्षयितुमीशते नापि शीतकालादिषु वाग्दशायां स्वाध्यायादिकं कर्तु ततो दीर्घतरसयमपरिपालनाय यतनया वस्त्र परिभुञ्जाना न ता परिग्रहवत्य । अथोच्येत सभवतिनाम स्त्रीणामपि सम्यग् दर्शनादिक रत्नत्रय पर न तत्सभवमात्रेण मुक्तिपदप्रापक भवति किन्तु प्रकर्षप्राप्तमन्यथा दीक्षानन्तरमेव सर्वेषामप्यविशेषेण मुक्तिपदप्राप्तिप्रसक्तिः सम्यग्दर्शनादिरत्नत्रयप्रकर्षश्च स्त्रीणामसम्भवी ततो न निर्वाणमिति । तदप्ययुक्त स्त्रीषु रत्नत्रयप्रकर्षस्सम्भवति सम्भवग्राहक प्रमाण विजृम्भते देशकालविप्रकृष्टेषु प्रत्यक्षस्याप्रवृत्तेस्तदप्रवृत्तौ चानुमानस्याप्यसम्भवात् । नापि तासु रत्नत्रयप्रकर्षास म्भवप्रतिपादकः कोप्यागमो विद्यते प्रत्युत सम्भवप्रतिपादकः स्थाने २ ऽस्ति यथा इदमेव प्रस्तुत सूत्रं ततो न तासां रत्नत्रयप्रकर्षासम्भवोऽथ मन्यथाः स्वभावत एवातपेनेवच्छाया विरुध्यते स्त्रीत्वेन सह रत्नत्रयप्रकर्षस्ततस्तदसम्भवोनुमीयते तदयुक्तमुक्त युक्तिविरोधात् तथाहि रत्नत्रयप्रकर्षः स उच्यते ततोऽनन्तरमुक्तिपदप्राप्तिः स चायोग्यवस्था चरमस मयभावी अयोग्यवस्थाचास्मादृगप्रत्यक्षा तत कथं विरोधगतिः नहि अदृष्टेन सह विरोधःप्रतिपत्तु शक्यते मा प्रापत पुरुषेष्वपि प्रसङ्गः ॥

(नग्न.) ननु जगति सर्वोत्कृष्टपदप्राप्ति सर्वोत्कृष्टेनाध्यवसायेनावाप्यते नान्यथा एतच्चोभयोरप्यावयोरागमप्रामाण्यबलतः सिद्धम् । सर्वोत्कृष्टदुःखस्थान सर्वोत्कृष्टसुखस्थानं च । तत्र सर्वोत्कृष्टदुःखस्थान सप्तमनरकपृथ्वी अतः पर परमदुःखस्थानस्याभावात् । सर्वोत्कृष्टसुखस्थानं तु निःश्रेयसम् । तत्र स्त्रीणां सप्तमनरकपृथिवीगमनमागमे निषिद्ध निषेधस्य च कारणं तद्गमनयोग्यतथाविधसर्वोत्कृष्टमनोवीर्यपरिणत्यभाव । ततः सप्तमपृथिवीगमनवत्त्वाभावात् सम्मूर्छिमादिवत् । अपिच यासां वादलब्धौ विकुर्वणत्वादिलब्धौ पूर्वगतश्रुताधिगतौ च न सामर्थ्यगतिस्तासां मोक्षगमनसामर्थ्यमित्यतिदुःश्रद्धेयम् ॥

(सैद्धान्तिक )नवेतदयुक्त यतो यदि नाम स्त्रीणा सप्तमनरकपृथिवीगमन प्रति सर्वोत्कृष्टमनोवीर्यपरिणत्यभावस्तत एतावता कथमवसीयते निःश्रेयसमपि प्रति तासां सर्वोत्कृष्टमनोवीर्यपरिणत्यभावः ? नहि यो भूमिकर्षणादिक कर्म कर्तु न शक्नोति स शास्त्राण्यप्यवगाढ न शक्नोतीति प्रत्येतु शक्य प्रत्यक्षविरोधात् । अथ सम्मूर्छिमादिषूभयत्रापि सर्वोत्कृष्टमनोवीर्यपरिणत्यभावो दृष्टस्ततोऽत्रावसीयते । ननु यदि तत्र दृष्टस्तर्हि कथमात्रावसीयते न खलु बहिर्व्याप्तिमात्रेण हेतुर्गमको भवति किंत्वन्तर्व्याप्त्या, अन्तर्व्याप्तिश्च प्रतिबन्धबलेन । नचात्र प्रतिबन्धो विद्यते न खलु सप्तमपृथिवीगमन निर्वाणगमनस्य कारणम् नापि सप्तमपृथिवीगमनाविनाभावि निर्वाणगमनम् चरमशरीरिणा सप्तमपृथिवीगमनमन्तरेणैव निर्वाणगमनाभावात् । न च प्रतिबन्धमन्तरेण एकस्याभावेऽन्यस्यावश्यमभावो मा प्रापत् यस्य तस्य वा कस्यचिदभावे सर्वस्याभावप्रसङ्ग । यद्येव तर्हि कथ सम्मूर्छिमादिषु निर्वाणगमनाभाव इति । उच्यते-तथा भवस्वाभाव्यात् । तथाहि सम्मूर्छिमादयो भवस्वभावत एव न सम्यग्दर्शनादिक यथावत्प्रतिपत्तुं शक्यन्ते ततो न तेषां निर्वाणसभवः । स्त्रियस्तु प्रागुक्तप्रकारेण यथावत्सम्यग्दर्शनादिरत्नत्रयसम्पद्योग्यास्ततस्तासा न निर्वाणगमनाभाव । अपिच भुजपरिसर्पा द्वितीयामेव पृथिवीं यावद्गच्छन्ति न परत परपृथिवीगमनहेतुस्तथारूपमनोवीर्यपरिणत्यभावात् तृतीयां यावत् पक्षिणश्चतुर्थीं चतुष्पदाः पञ्चमीमुरगा । अथ च सर्वेप्यूर्ध्वमुत्कर्षत सहस्रार यावद्गच्छन्ति तत्राधोगतिविषय मनोवीर्यपरिणतिवैषम्यादर्शनादूर्ध्वगतावपि च न तद्वैषम्यम् । आह च "विषमगतयोप्यधस्ता-दुपरिष्टात्तुल्यमा-

शुभ्युपदेश' उक्तच । 'संवरनिर्जररूपो बहुप्रकारस्तपोविधिः शास्त्रे रोगचिकित्साविधिरिव कस्यापि कथंचिदुपकारी " पुरुषानभिवन्द्यत्वमपि योषितां नापकर्षाय । यतस्तदपि सामान्येन गुणाधिकपुरुषापेक्षं वा । आद्ये असिद्धतादोषः तीर्थकरजनन्यादयो हि पुरन्दरादिभिरपि प्रणता किमङ्ग ! शेषपुरुषैः । द्वितीये तु शिष्या अपि आचार्यैर्नाभिवन्द्यन्त एवेति ते पि ततोऽपकृष्यमाणत्वेन निर्वृत्तिभाजो न भवेयुः । नचैवं चारुरुद्रादिशिष्याणां शास्त्रे तच्छ्रवणादिति मूलहेतोर्व्यभिचारः । एतेन स्मरणाद्यकर्तृकत्वमपि प्रतिक्षिप्तम् । अथ पुरुषविषय स्मारणाद्यकर्तृत्वमत्र विवक्षितं न तु स्मारणाद्यकर्तृत्वमात्रम् । न च स्त्रियः कदाचन पुंसां स्मारणादीन् कुर्वन्तीति न व्यभिचार इति चेत्तर्हि पुरुषेति विशेषणं करणीयं करणेऽप्यसिद्धतादोषः स्त्रीणामपि कासांचित्पारगतागमरहस्यवासितसप्तधातूनां क्वापि तथाविधावसरे समुच्छृंखलप्रवृत्तिपराधीनसाधुस्मारणादेरविरोधात् । अथामहर्द्धिकत्वेन स्त्रीणां पुरुषेभ्योऽपकर्षः सोऽपि किमाध्यात्मिकीं समृद्धिमाश्रित्य बाह्यां वा । नाध्यात्मिकीं सम्यग्दर्शनादिरत्नत्रयादेस्तासामपि सद्भावात् । नापि बाह्यामेव हि महत्यास्तीर्थकरलक्ष्म्या गणधरादयश्चक्रधरादिलक्ष्म्याश्चेतरक्षत्रियादयो न भाजनमिति तेषामप्यमहर्द्धिकत्वेनापकृष्यमाणत्वान्मुक्त्यभावो भवेत् । अथ यासौ पुरुषवर्गस्य महती समृद्धिस्तीर्थकरत्वलक्षणा सा स्त्रीषु नास्तीत्यमहर्द्धिकत्वमासां विवक्ष्यते तदानीमप्यसिद्धता स्त्रीणामपि परमपुण्यपात्रभूतानां कासांचित्तीर्थकृत्त्वाविरोधात्तद्विरोधसाधकप्रमाणस्य कस्याप्यभावादेतस्याद्यापि विवादास्पदत्वादनुमानान्तरस्य चाभावात् । मायादिप्रकर्षवत्त्वेनत्यप्यप्रशस्यतस्य स्त्रीपुंसयोस्तुल्यत्वदर्शनादागमे च श्रवणात् श्रूयते हि चरमशरीरिणामपि नारदादीनां मायादिप्रकर्षवत्त्व तत्र पुरुषेभ्यो हीनत्व स्त्रीनिर्वाणनिषेधे साधीयान् हेतुः यत्पुनर्निर्वाणकारण ज्ञानादिपरमप्रकर्षः स्त्रीषु नास्ति, परमप्रकर्षत्वात्सप्तमपृथ्वीगमनकारणपुण्यपरमप्रकर्षवदिति तेनैवोक्तं तत्र मोहनीयस्थितिपरमप्रकर्षेण स्त्रीवेदादिपरमप्रकर्षेण च व्यभिचार । नास्ति स्त्रीणां मोक्षः परिग्रहवत्त्वात् गृहस्थवदित्यपि न पेशल धर्मोपकरणचीवरस्यापरिग्रहत्वेन प्रसाधितत्वादिति स्त्रीनिर्वाणे सक्षेपेण बाधकोद्धारः । साधकोपन्यासस्तु मनुष्यस्त्री काचिन्निर्वात्यविकलतत्कारणत्वात्पुरुषवत् । निर्वाणस्य हि कारणमविकलं सम्यग्दर्शनादिरत्नत्रय तच्च तासु विद्यत एवेत्यादित एवोक्तमिति । नासिद्धमेतद्विपक्षान्नपुंसकादेरत्यन्तव्यावृत्तत्वान्न विरुद्धमनैकान्तिक वा तथा मनुष्यस्त्रीजाति कयाचिद्व्यक्त्या मुक्त्यविकलकारणवत्या तद्वती प्रव्रज्याधिकारित्वात्पुरुषवत् । न चैतदसिद्धं साधन " गुव्वणी बालवच्छा य पव्वावेउ न कप्पइ इति" सिद्धान्तेन तासां तदधिकारित्वप्रतिपादनाद्विशेषनिषेधस्य शेषाभ्यनुज्ञानान्तरीयकत्वात् दृश्यन्ते च सांप्रतमप्येता कृतशिरोलुञ्चना उपात्तपिच्छिका कमण्डलुप्रमुखयतिलिङ्गाश्चेति कुतो नैतासां प्रव्रज्याधिकारित्वसिद्धिर्यतो न मुक्तिः स्यादिति । रत्ना० ७ परि० ॥

इत्थि ( त्थी ) लिंगसिद्धकेवलनाण-स्त्रीलिङ्गसिद्धकेवलज्ञान-न० स्त्रीलिंगे वर्तमाना ये सिद्धास्तेषां केवलज्ञानं स्त्रीलिङ्गसिद्धकेवलज्ञानम् । केवलज्ञानभेदे, । आ० म० प्र० । इत्थिलिंगेण सिद्धाण जं नाण त इत्थिलिंगसिद्धकेवलनाणंति । आ० चू० १ अ० ॥

इत्थि ( त्थी ) वउ-स्त्रीवाक्-स्त्री० खट्वाखतेत्यादिलक्षणायां स्त्रीलिङ्गप्रतिपादिकायांभाषायाम्,-प्रज्ञा० ११ पद० ॥

इत्थि ( त्थी ) वयण-स्त्रीवचन-न० वचनभेदे,-स्त्रीवचन वीणा कन्यादीति । आचा०२ श्रु० १ अ० ३ उ० । प्रज्ञा० ॥

इत्थि ( त्थी ) वस-स्त्रीवश-पु० ६ त० स्त्रीवशीभूते, स्त्र्यायत्ततायां च । वाच० । व्य० । " इत्थी वसगया बाला " स्त्रीवशङ्गता यतो युवतीनामाज्ञायां वर्तन्ते बाला अज्ञा रागद्वेषोपहतचेतस इति । सूत्र० १ श्रु० ३ अ० ४ उ० ।

स्त्रीवसङ्गतानामधमत्वञ्च यथा-

सम्मुहि भुङ्गावे, किंकरे तित्थएहायए चेव ।
गच्छावरं खिहदासु-एएपुरिसाधमाउत्त ॥

जदा इत्थी भणितो रुपेहिं तदा भणति अहं उट्ठेमि ताव तुमं अधिकरणीति त्थार अवणेहित्ति तस्स त्थारे अवणीते समुत्थीतो भणति इत्थीवयणाओ दग माणेति सो य लोगस्स कितो अपभाए व सुहसुत्ते पगे रोवेंतो आणेतित्ति वग्गु भावो किंकरो पभाते उत्थितो इत्थी भणति किंकरेमि त्ति जं भणति तं करेतित्ति तित्थएहाय तो जयासि णं मग्गति च तदा इत्थी भणाति गच्छ तलाग तत्थ एहातो कलसं भरेतुमा गच्छाहित्ति गच्छावरस्त्री भोयणकाले परिवेसणाए इतो वाहित्ति भणिताहे गिहो छ्वरिखलतो भोयण उट्ठेत्ति इत्थी भणितो कम्मं करेहित्ति ताहे पडिभणति हद अम्मय हदत्ति गेण्ह अत्तय पुत्तभरं एय गेण्ह जा कम्म करेमीत्यर्थः । एते त्थ पुरिसा अधमा । नि० चू० १५ उ० ।

धिं तेसिं गामनगराणं, जेसिं इत्थी पणायिगा ।
ते य धिक्कया पुरिसा, जे इत्थीए वसंगया ॥

धिग्निन्दायां तेषां ग्रामनगराणां येषां स्त्रीप्रणायिका प्रकर्षेण स्वतन्त्रतया नायिका अत्र धिग्योगे द्वितीयाप्राप्तावपि षष्ठी प्राकृतत्वात्तथा ते ऽपि पुरुषा धिक्कृता धिक्कार प्राप्तवन्तो ये स्त्रीणां वशमायत्ततां गताः । तथा ।

इत्थीओ बलवं जत्थ, गामेसु नगरेसु वा ।
सो गामो नगरं वावी, खिप्पमेव विणिस्सई ॥

यत्र ग्रामेषु नगरेषु वा स्त्रीयो बलवत्यः स ग्रामो नगर वा क्षिप्रमेव विनश्यति । बहुवचनेनोपसंहारो जातौ बहुवचनमेकवचन भवतीति ज्ञापनार्थः ॥ व्य० प्र० १उ० ।

इत्थि ( त्थी ) विग्गह-स्त्रीविग्रह पु-स्त्रीशरीरे, । व्य-प्र० २ उ० । आचा० ।

इत्थि ( त्थी ) विण्णवणा-स्त्रीविज्ञापना-स्त्री० युवतिप्रार्थनायाम्, ( रमणीसम्बन्धे ) सूत्र० १ श्रु० ३ अ० ४ उ० ( अत्र दोषादोषविचारः इत्थी शब्दे )

इत्थि ( त्थी ) विप्पजह-स्त्रीविप्रजह-पु० स्त्रियो विविधैः प्रकारैः प्रकर्षेण च जहाति त्यजतीति स्त्रीविप्रजहः उणादयो बहुलमिति बहुलवचनाद्ध । स्त्रीपरित्यागवति, " नगेसु नो पगिज्झिज्जा इत्थीविप्पजहे अणगारे " इति-उत्त० ८ अ० ।

इत्थि (त्थी) विप्परियासिया-स्त्रीविपर्यासिका-स्त्री० स्वाप्नान्तिकक्रियाविशेषे, "इत्थिए विप्परियासो इत्थीविपरियासो । स्वप्ने स्त्रिया ब्रह्मचर्यविनाश इत्यर्थ विपर्यासो नाम दुष्प्रभचरेमिति " आ० चू० ४ अ० ॥

इत्थि ( त्थी ) विलोयण–स्त्रीविलोचन–न० तैतिलापरनामधेये चक्रसंज्ञके करणभेदे, विशे० ( तदानयनादिकरणशब्दे वक्ष्यते )

इत्थि(त्थी)वेय–स्त्रीवेद–पु० स्त्रियं यथावस्थितस्वभावतस्तत्स्वरूपविपाकतश्च वेदयति ज्ञापयतीति स्त्रीवेदः । वैपायिकादिके स्त्रीस्वभावाविर्भावके कामशास्त्रे, । "सुपुरिसा इत्थिवेय खेयन्ना" स्त्रीवेदखेदज्ञाः स्त्रीवेदो मायाबहुल इति निपुणा अपि स्त्रीणांवशमजन्तीति । सूत्र० १ श्रु० ४ अ० १ उ० । वेद्यत इति वेदः स्त्रिया वेदः स्त्रीवेदः स्त्रियाः पुमांसं प्रत्यभिलाषः । तद्विपाकवेद्यं कर्म्मापि स्त्रीवेदः । स्त्रिया पुमांसं प्रत्यभिलाषे, तद्विपाकवेद्ये नोकषायवेदनीयकर्म्मविशेषे च । प्रज्ञा० २३ पद० । यद्वशात्स्त्रियाः पुंस्यभिलाषो भवति । यथा पित्तवशान्मधुरद्रव्यं प्रति स फुंफुमादाहसमः यथा २ ज्वाल्यते तथा २ ज्वलति दहति च एवमत्रापि यथा २ संस्पृश्यते पुरुषेण तथा २ अस्या अधिकतरोऽभिलाषो जायते भुज्यमानायान्तु तत्कारीपदाहतुल्योऽभिलाषो मन्द इति स्त्रीवेदोदय । कर्म्म० । स्था० । पं० सं० । सम्प्राप्तः स्त्रीवेदकर्मोदयजनितो यः स्त्रीवेदः सकिंस्वरूप इत्यावेदयन्नाह ।

इत्थिवेदेणं भंते ! किंपकारे पं० गो० फुंफअग्गिसमाणे पागुत्ते मेत्तं इत्थियाओ ॥

( इत्थीवेदे ण भंते इत्यादि ) स्त्रीवेदेणमिति पूर्ववत् भदन्त किंप्रकार किंस्वरूप प्रज्ञप्त । भगवानाह गौतम ! फुफुकाग्निसमान फुफुका शब्दो देशीरूपत्वात् कारिपवाचकस्ततः कारिषाग्निसमानः परिमन्दमदनदाहरूप इत्यर्थः प्रज्ञप्त । जी० २ प्रति० ॥ ( स्त्रीवेदस्य स्थितिः ठिई शब्दे । स्त्रीणां स्वभावादि इत्थी शब्दे ) ॥

इत्थि ( त्थी ) वेयण्णु–स्त्रीवेदज्ञ–पु० स्त्रीवेदो मायाप्रधान इत्येवं निपुणे, । सूत्र० १ श्रु० ४ अ० १ उ० ॥

इत्थि(त्थी) संकिलिट्ठ–स्त्रीसंक्लिष्ट–त्रि० स्त्रीप्रतिषेविनि, प्रव० ।

इत्थि ( त्थी ) संग–स्त्रीसङ्ग–पु० स्त्रीषु प्रवर्त्तने, सूत्र० २ श्रु० २ अ० ॥ ( तच्च प्रधान संसारकारणमिति इत्थी शब्दे )

इत्थि (त्थी ) संपक्क–स्त्रीसम्पर्क–पु० स्त्रीभि सह संवासे, सूत्र० १ श्रु० ४ अ० १ उ० । ( सच साधुभिर्न विधेय इति इत्थी शब्दे )

इत्थि ( त्थी ) संपरिवुड–स्त्रीसंपरिवृत–त्रि० स्त्रीभि समन्तात्परिवेष्टित, " समंता परिवेढिओ परिवुडो भणति परिमाण जाव तिणि चउरो पंच वा वागरणाणि परतो बहूणि अपरिमाण कहे" अहवा तस्स चउगुरुगा आणादिया य दोसा एस सुत्तत्थो इमा णिज्जुत्तीगाहा—

मज्झे दोएहंत गतो, समंत ऊरुमादि वट्टेंतो ॥
चउदिसि तिविहाहिं तु वुडो, पास गताहिव अप्फुसंतो ॥ ६० ॥

भहवा एगदिसि ठियाहिं ति चउसुवगीहिं परिवुडो भण्णति । नि० चू० २ उ० ॥

इत्थि ( त्थी ) संवास–स्त्रीसंवास–पु० स्त्रीभि सार्द्धं परिभोगे,

जतुकुंभे जोइउवगूढे, आसुभि तत्तेणासमुवयाइ ॥
एवि त्थियाहि अणगारा, संवासेण णासमुवयंति ॥ २७ ॥

( जतुकुंभेत्यादि ) यथा जातुष कुम्भो ज्योतिषाग्निनोपगूढ समालिङ्गितोऽभितप्तोऽग्निनाभिमुख्येन तापित क्षिप्र नाशमुपैति द्रवीभूय विनश्यत्येवं स्त्रीभि सार्द्धं संवासेन परिभोगेनानगारा नाशमुपयान्ति सर्वथा जातुषकुम्भवत्त मन॰ काठिन्यं परित्यज्य संयमशरीराद्भ्रश्यन्ति । सूत्र० १ श्रु० ४ अ० १ उ० । स्त्रीभिः सार्द्धमेकत्र वसतौ, ॥

एवं विवेगमादाय, संवासो न विकप्पए दविए ॥

तदेवमनन्तरोक्तया नीत्या विपाकं स्वानुष्ठानमाश्रित्य प्राप्य विवेकमिति वा कचित्पाठस्तद्विपाक विवेकश्चादाय गृहीत्वा स्त्रीभिश्चारित्रपरिपन्थिनीभिः सार्धं संवासो वसतिरेकत्र न कल्पते न युज्यते कस्मिन्द्रव्यभूते मुक्तिगमनयोग्ये रागद्वेषरहिते वा साधौ यतस्ताभिः सार्धं संवासोऽवश्य विवेकिनामपि सदनुष्ठानविघ तकारीति । सूत्र० १ श्रु० ४ अ० १ उ० ।

इत्थि ( त्थी ) संसत्त–स्त्रीसंसक्त–त्रि० स्त्रीभिः सगते, " ऊरुकोप्परमादीहिं स घट्टंतो ससत्तो भवति दिट्ठीए वा परोप्पर संसत्तो सगतो इति " तथा च निर्युक्ति संसत्ते ऊरुमादि घट्टंतो इति ॥

दुविधं च होति मज्झं, संसत्ता दिट्ठिदिट्ठिभंतो वा ॥
भावो व तासु णिहितो, एमे वि त्थीए पुरिसेसु ॥ ६१ ॥

च सद्दाओ ससत्तं पि दुविध ऊरुमादि घट्टेत्तो ससत्तो दिट्ठिए वा इत्थीण वा मज्झे अहवा ससत्तस्स इम वक्खाणं तेण तासु भावो णिहितो णिवेसितो ताहिं वा तमिणि सेवितो परस्पर गृहानीत्यर्थः । नि० चू० । स्त्रीभि समाकीर्णे (सेविते) स्थानादौ च । स्था १०ठा. (तच्च साधुभिर्वर्जनीयमिति वज्जचेरगुत्ति शब्दे)

इत्थि ( त्थी ) सद्धा–स्त्रीश्रद्धा–स्त्री० स्त्रीश्रद्धाने, सूत्र० १ श्रु० ४ अ० १ उ० । ( तत्कथादिक इत्थी शब्दे )

इत्थि ( त्थी ) सहाव–स्त्रीस्वभाव–पु० स्त्रीया इव स्वभावो यस्य । अन्त पुररक्षके महल्लके, ६ त० स्त्रीणां शीले च । वाच० । सूत्र० । (स्त्रीस्वभावपरिज्ञाने कथानक इत्थी शब्दे)

इत्थि ( त्थी ) सेवा–स्त्रीसेवा–स्त्री–६ त० स्त्रीसम्भोगे, व्यवायसधर्मेण नारीसेवने, । वाच० । स्त्रीसेवादय इह परत्र वा अकल्याणकारिण इति । व्य० । " अन्नपानैर्हरेद्बाला यौवनस्थां विभूषया । वेश्यां स्त्रीमुपचारेण वृद्धां कर्कशसेवया " इति–आ० म० द्वि० । आ० चू० ।

इत्थी–स्त्री–स्त्री० स्त्यायतेस्तृणतेर्वा ऋट्टि ङित्वाड्डीपि स्त्रीति प्रव० ८६ द्वा० । उत्त० । " स्त्रिया इत्थी " १३० इति सूत्रेण स्त्रीशब्दस्य इत्थी इत्यादेशो वा–पक्षे–थीति । प्रा० ८ अ० २ पा० योषिति,–अनु० । पंचा० । त० ।

( १ ) स्त्रीलक्षणं तच्छब्दनिक्षेपश्च ।
( २ ) स्त्रीवक्तव्यता तद्भेदवर्णनञ्च ।
( ३ ) स्त्रीणां स्वभावादिपरिज्ञानस्यावश्यकता । तत्कृत्यवर्णनञ्च ।
( ४ ) स्त्रीसम्बन्धे दोषाः ।
( ५ ) कतमाभिः स्त्रीभिस्सार्द्धं न विहर्त्तव्यम् ।
( ६ ) इह लोके एव स्त्रीसम्बन्धविपाकः ।
( ७ ) स्त्रीसस्पर्शे दोषाः ।
( ८ ) भोगीनां विडम्बना ।
( ९ ) स्त्रियो विश्वास्याकार्यं कुर्वन्ति ।
( १० ) स्त्रीणां स्वरूपस्य शरीरस्य चातिनिन्दनीयत्वम् ।
( ११ ) स्त्रीचरित्रं वैराग्योत्पादनाय श्रुतव्यम् ।
( १२ ) स्त्रीणामशुचित्वं सर्वस्वापकर्षकत्वञ्च ।
( १३ ) स्त्रीणां बन्धनकारणत्वं तत्संगानुगतस्य दुःखानि च ।
( १४ ) स्त्रीसमर्गस्य सर्वथा परित्याज्यत्वं तत्त्यागे कारणानि च ।

(१५) स्त्रीपुंशकस्य परिग्रहित्व तासु सर्वेन्द्रियगुप्तेन भाव्यम्।
(१६) स्त्रीकरस्पर्शादिनिषेधः।
(१७) स्त्रिया सार्द्धं विहारस्वाध्यायाहारोच्चारप्रस्रवणपरिष्ठापनिका धर्मकथादिनिषेधः।
(१८) स्त्रीणां निर्ध्यानादिनिषेध।
(१९) स्त्रीस्थानदूषणं तत्प्रसङ्गत्यागस्तत्सङ्गातिक्रमे गुणाश्च।
(२०) मतान्तरीयपूर्वपक्षदूषणानि।

(१) स्त्रीलक्षणं तच्छब्दनिक्षेपो यथा।
" योनेर्मृदुत्वमस्थैर्य्य-म्मुग्धता क्लीवता तनौ। पुंस्कामितेति लिङ्गानि सप्त स्त्रीत्वे प्रचक्षते इति। तथान्यत्राप्युक्तम्। "स्तनकेशवती स्त्री स्यादिति "। स्था० ३ ठा०। जी०। स्त्रीशब्दस्य निक्षेपो यथा-तत्र नाम स्थापने क्षुण्णत्वादनादृत्य स्त्रीशब्दस्य द्रव्यादिनिक्षेपार्थं निर्युक्तिकार आह—

दव्वाभिलाव चिंधे, दव्वे भावे य इत्थिणिक्खेवो।
अहिलावे तह सिद्धी, भावे वेयंमि उवउत्तो॥ ५६॥

तत्र द्रव्यस्त्री द्वेधा। आगमतो नो आगमतश्च। आगमतः स्त्रीपदार्थज्ञस्तत्र चानुपयुक्तो ऽनुपयोगो द्रव्यमिति कृत्वा नो आगमतो ज्ञशरीरभव्यशरीरव्यतिरिक्ता त्रिधा। एकभविका बद्धाऽऽयुष्काभिमुखनामगोत्रा वेति। चिह्नयते ज्ञायतेऽनेनेति चिह्न स्तननेपथ्यादिकं चिह्नमात्रेण स्त्रीचिह्न स्त्री। अपगतस्त्रीवेदस्य केवली वा अन्यो वा स्त्रीवेषधारी यः कश्चिदिति। वेद स्त्री तु पुरुषाभिलाषरूपः स्त्रीवेदोदय। अभिलापभावौ तु निर्युक्तिकृदेव गाथापश्चार्द्धेनाह। अभिलाप्यते इत्यभिलाप स्त्रीलिङ्गाभिधानशब्द। तद्यथा। शाला माला सिद्धिरिति। भावस्त्री तु द्वेधा। आगमतो नो आगमतश्च। आगमत स्त्रीपदार्थज्ञस्तत्र चोपयुक्त उपयोगो भाव इति कृत्वा नो आगमतस्तु भावविषये निक्षेपे वेदे स्त्रीवेदरूपे वस्तुन्युपयुक्ता तदुपयोगानन्यत्वाद्भावस्त्री भवति। यथा अग्न्युपयुक्तो माणवकोऽग्निरेव भवत्येवमत्रापि। यदि वा स्त्रीवेदनिवर्तकान्युदयप्राप्तानि यानि कर्माणि तैरुपयुक्तेति तान्यनुभवन्ति भावस्त्रीति एतावानेव स्त्रियो निक्षेप इति। सूत्र० १ श्रु० ४ अ० १ उ०।

(२) स्त्रीवक्तव्यता तद्भेदवर्णनञ्च।

से किं तं इत्थीओ २ तिविहा ओ पण्णत्ताओ तंजहा तिरिक्खजोणित्थीओ मणुस्सत्थीओ देवित्थीओ से किं तं तिरिक्खजोणित्थीओ २ तिविधाओ पण्णत्ताओ तंजहा जलयरीओ थलयरीओ खहयरीओ। से किं तं जलयरीओ २ पचविधाउ पण्णत्ताउ तंजहा मच्छीउ जाव सुसुमारीउ से त्तं जलयरीउ। से किं तं थलयरीउ २ दुविहाउ पण्णत्ताओ तंजहा चउप्पदीउ य परिसप्पिणीउ य। से किं तं चउप्पदीउ २ चउव्विहाउ पण्णत्ता तंजहा एगखुरीउ जाव सणप्पईउ। सेकिंतं परिसप्पिणीउ२दुविहा पण्णत्ता तंजहा उरगपरिसप्पिणीउ य भुयगपरिसप्पिणीओ य। से किं तं उरगपरिसप्पिणीओ २ तिविधाओ पण्णत्ताओ तंजहा अहीओ अयगरीओ महोरगीओ सेत्त उरगपरिसप्पिणी। से किं तं भुयपरिसप्पिणी २ अणेगविधाओ पण्णत्ताओ तंजहा गोहीओ णउलीओ सेधाओ सेल्लाओ सरडीओ सेरंधीओ सायाओ खराओ पंचल्लोइयाओ चउप्पइयाओ मूसियाओ मुसुंसियाओ घरोलियाओ गोहियाओ जोहियाओ थिरावलियाओ सेत्तं भुयपरिसप्पिणीओ। से किं तं खहयरीओ२चउव्विहा पण्णत्ताओ तंजहा चम्मपंखीओ जाव सेत्तं खहयरीओ सेत्तं तिरिक्खजोणित्थियाओ। से किं तं मणुस्सित्थियाओ २ तिविधाओ पण्णत्ताओ तंजहा कम्मभूमियाओ अकम्मभूमियाओ अंतरदीवियाओ। से किं तं अंतरदीवियाओ २ अट्ठावीसतिविधाओ पण्णत्ता तंजहा एगुरुईओ आभीसाओ जाव सुद्धदंताओ सेत्तं अंतरदीवे। से किं त अकम्मभूमियाओ २ तीसतिविधाओ पण्णत्ता तंजहा पंचसु हेमवएसु पंचसु एरण्णवएसु पंचसु हरिवासेसु पचसु रम्मगवासेसु पंचसु देवकुरुसु पंचसु उत्तरकुरुसु सेत्तं अकम्मभूमगमणुस्सीओ। से किं तं कम्मभूमियाओ २ पण्णरसविधाओ पण्णत्ताओ तंजहा पंचसु भरहेसु पंचसु एरवएसु पंचसु महाविदेहेसु सेत्तं कम्मभूमगमणुस्सीओ३।

(सेकिंतमित्यादि) अथ कास्ता स्त्रिय सूरिराह स्त्रियस्त्रिविधाः प्रज्ञप्तास्तिर्यग्योनिस्त्रियो मनुष्यस्त्रियो देवस्त्रियश्च (सेकिंतमित्यादि) तिर्यग्योनिस्त्रियास्त्रिविधास्तद्यथा जलचर्यः स्थलचर्य खचर्यश्च (सेकिंतमित्यादि) मनुष्यस्त्रियोऽपि त्रिविधास्तद्यथा कर्मभूमिका अकर्मभूमिका अन्तरद्वीपिकाश्च। कृष्यादिकर्मप्रधाना भूमि कर्मभूमिः भरतादिका पञ्चदशधा तत्र जाता' कर्मभूमिजा एवमकर्म्मभूमिजा नवरमकर्म्मभूमिर्भोगभूमिरित्यर्थ। देवकुर्व्वादिका त्रिंशद्विधा अन्तरे मध्ये समुद्रस्य द्वीपा ये ते तथा तेषु जाता आन्तरद्वीपास्त एवान्तरद्वीपिका'। स्था० ३ ठा०॥

से किं तं देवित्थियाओ २ चउव्विहाओ पण्णत्ताओ तंजहा भवनवासिदेवित्थियाओ वाणमंतरदेवित्थियाओ जोतिसियदेवित्थियाओ वेमाणियदेवित्थियाओ से किंतं भवणवासिदेवित्थियाओ २ दसविधाओ पण्णत्ताओ तंजहा असुरकुमारभवणवासिदेवित्थियाओ जाव थणितकुमारभवणवासिदेवित्थियाओ सेत्तं भवणवासिदेवित्थियाओ। से किं तं वाणमंतरदेवित्थियाओ २ अट्ठविधाओ पण्णत्ताओ तंजहा पिसायवाणमंतरदेवित्थियाओ जाव सेत्तं वाणमंतरदेवित्थियाओ। से किं तं जोतिसियदेवित्थियाओ २ पंचविहाओ पण्णत्ताओ तंजहा चंदविमाणजोतिसियदेवित्थियाओ सूरविमाणदेवित्थियाओ गहविमाणदेवित्थियाओ णक्खत्तविमाणदेवित्थियाओ ताराविमाणजोतिसियदेवित्थियाओ सेत्तं जोतिसियदेवित्थियाओ। से किं तं वेमाणियदेवित्थियाओ २ दुविहाओ पण्णत्ताओ तंजहा सोहम्मकप्पवेमाणियदेवित्थियाओ ईसाणकप्पवेमाणियदेवित्थियाओ सेत्त वेमाणित्थियाओ। जी० २ प्रति०। (सुगमत्वाट्टीका न व्याख्याता)

स्त्रियो देवमानुषभेदाद्द्विविधा एताश्च सचित्ता अचित्तास्तु प्रस्तरलेप्यचित्रादिनिर्मिता। ध० २ अधि०। शब्देन यथा च स्त्री त्रिविधा मन्दशब्दा मध्यमशब्दा तीव्रशब्दा चेति। यथ-

सा तु स्थविरा मध्यमा तरुणी चेति। पुनरेकैका त्रिविधा अपद्धा-घणभर्तृका प्रोषितभर्तृका स्वाधीनभर्तृका चेति । वृ० १ उ० । मुग्धा मध्या प्रौढा चेति। उत्त० १६ अ० । "इत्थीओ दुविधा अदुगुञ्छिता य समणवत्तियवेसिमुद्दियदुगुच्छिता संभोइय अक्खरिया अहवा णमचरहादियाओ असन्नो अक्खरियाओ एताओ वि दुविधा सपरिग्गहा अपरिग्गहाओ य। नि० चू० १६ उ० ॥

चत्तारि धूमसिहाओ पण्णत्ताओ तंजहा वामा णाममेगा वामावत्ता ।४। एवामेव चत्तारित्थियाओ पण्णत्ता तंजहा वामा णाममेगा वामावत्ता । ४ । चत्तारि अग्गिसिहाओ पण्णत्ताओ तंजहा वामाणाममेगा वामावत्ता । ४ । एवामेव चत्तारि त्थियाओ पण्णत्ताओ तंजहा वामा णाममेगा वामावत्ता । ४ । चत्तारि वायमंडलिया पण्णत्ताओ तंजहा वामा णाममेगा वामावत्ता । ४ । एवामेव चत्तारि त्थियाओ पण्णत्ताओ तंजहा वामा णाममेगा वामावत्ता ॥ ४ ॥

धूमशिखा वामा वामपार्श्ववर्त्तिनयाऽनुकूलस्वभावतया वा वामेन एवावर्त्तते या तया चलनात्सा वामावर्त्ता १० स्त्रीपुरुषवद् व्याख्येया कम्बुदृष्टान्ते मन्यपि धूमशिखादिदृष्टान्तानां स्त्रीदार्ष्टान्तिके शब्दसाधर्म्येणोपपन्नतन्याच्छेदेनोपादानमिति ११ एवमग्निशिखापि १२ वातमण्डलिका मण्डलेनोर्ध्वप्रवृत्तो वायुरिति इह च स्त्रियो मालिन्योपतापचापल्यस्वभावा भवन्तीत्यभिप्रायेण तासु धूमशिखादृष्टान्ततयोपन्यास इति । उक्तञ्च " चवला मइलणसीला, सिणेहपरिपूरिया वियावेइ । दीवयसिहि व्व महिला, लद्धप्पसरा भय देइ त्ति" ॥

चत्तारि कूडागारसालाओ पण्णत्ताओ तंजहा गुत्ता णामेगा गुत्तदुवारा, गुत्ता णामेगा अगुत्तदुवारा, अगुत्ता णामेगा गुत्तदुवारा, अगुत्ता णामेगा अगुत्तदुवारा । एवामेव चत्तारि त्थीओ पण्णत्ताओ तंजहा गुत्ता णामेगा गुत्तिंदिया गुत्ताणामेगा अगुत्तिंदिया ४ ॥

तथा कूटस्येव आकारो यस्याः शालाया गृहविशेषस्य सा तथा । अयं च स्त्रीविषदृष्टान्त स्त्रीलक्षणदार्ष्टान्तिकार्थसाधर्म्यवशात्तत्र गुप्ता परिवारा वृता गृहान्तर्गता वस्त्राच्छादिता गूढस्वभावा वा । गुप्तेन्द्रिया तु निगृहीतानामेन्द्रियप्रवृत्तन्द्रिया एव शेषा भद्रा इत्था । स्था० ४ ठा० । पद्मिनी चित्रिणी हस्तिनी शङ्खिनीति चतुर्विधाः स्त्रिय इति । उत्त० । १६ अ० ।

एतासां लक्षणादिकम्-"पद्मिनी चित्रिणी चैव शङ्खिनी हस्तिनी तथा । शशो मृगो वृषोऽश्वश्च स्त्रीपुंसोर्जाति लक्षणम् । भवति कमलनेत्रा नासिकाक्षुद्ररन्ध्रा अविरलकुचयुग्मा चारुकेशी कृशाङ्गी । मृदुवचनसुशीला गीतवाद्यानुरक्ता सकलतनुसुवेशा पद्मिनी पद्मगन्धा १ भवति रतिरसज्ञा नातिखर्वा न दीर्घा तिलकुसुमसुनासा स्निग्धनीलोत्पलाक्षी। घनकठिनकुचाढ्या सुन्दरी बद्धशीला सकलगुणसमेता चित्रिणी चित्रवक्त्रा २ । दीर्घातिदीर्घनयना वरसुन्दरी या कामोपभोगरसिका गुणशीलयुक्ता । रेखात्रयेण च विभूषितकण्ठदेशा सम्भोगकेलिरसिका किल शङ्खिनी सा ।३। स्थूलाधरा स्थूलनितम्बभागा स्थूलाङ्गुली स्थूलकुचा सुशीला । कामोत्सुका गाढरतिप्रिया या नितम्बखर्वा करिणी मता सा ४ शशके पद्मिनी तुष्टा चित्रिणी रमते मृगे । वृषभे शङ्खिनी तुष्टा हस्तिनी रमते हये । ५ पद्मिनी पद्मगन्धा च मीनगन्धा च चित्रिणी । शङ्खिनी क्षारगन्धा च मदगन्धा च हस्तिनी । ६ वाच स्त्रीणामुपण्णस्वभावत्वं 'गिमहो इत्थित्ति" ग्रीष्मास्त्री भवतीति । औप० ॥

(३) स्त्रीणां स्वभावादि परिज्ञानस्यावश्यकता तत्कृत्यवर्णञ्च तत्र स्वभावपरिज्ञान यथा ॥

जस्सित्थिओ परिण्णाया सव्वकम्मावहाओ से दक्खू ॥

यस्य स्त्रिय स्वरूपतस्तद्विपाकतश्च परिज्ञाता भवन्ति । सर्वे कर्म्मावहन्तीति सर्वकर्म्मावहाः सर्वपापोपादानभूताः स एवाऽऽक्रीत्स एव यथावस्थित संसारस्वभावं ज्ञातवानिति । एतदुक्तं भवति स्त्रीस्वभावपरिज्ञानेन तत्परिहारेण च स भगवान् परमार्थदर्श्यभूदिति । आचा० १ श्रु० ३ अ० १ उ० ।

स्त्रीणां स्वभावादिपरिज्ञानञ्च निर्युक्तौ यथा ॥

सुसमत्थावसमत्था, कीरंति अप्पसत्तिया पुरिसा ॥
दीसंती सूरवादी, णारीवसगा ण ते सूरा ॥ ६१ ॥

परानीकविजयादौ सुष्ठु समर्था अपि सन्तः पुरुषाः स्त्रीभिरात्मवशीकृता असमर्था भ्रूक्षेपमात्रभीरव क्रियन्तेऽल्पसात्त्विकाः स्त्रीणामपि पादपतनादिचाटुकरणेन नि सारा क्रियन्ते । तथा दृश्यन्ते प्रत्यक्षेणोपलभ्यन्ते । शूरमात्मानं वदितुं शीलं येषां ते शूरवादिनोऽपि नारीवशगा सन्तो दीनतां गता एवंभूताश्च न ते शूरा इति । तस्मात् स्थितमेतदविश्वास्या स्त्रिय इति । उक्तञ्च । को वीससेज्ज तासिं, कतिवय भरियाण दुच्चियट्ठाणे । खणरत्त विरत्तेण, धिरत्थु इत्थीण हिययाणं ॥ १ ॥ अण्ण भणंति पुरओ, अण्ण पासेइ विज्ममाणीओ । अन्नं च तासिं हियए, जं च खम तं करिंति पुणो ॥ २ ॥ को एयाणं णाहिइ, वेत्तलया गुम्मगुविलहिययाणं । भावं भग्गासाणं, तत्थुप्पन्नं भणतीणं । ॥ ३ ॥ महिलायरत्तमेत्ता, उच्छुखंडं च सक्करा चेव । सा पुण विरत्तमित्ता, णिंवं कूरे विसेसेति ॥४॥ महिला दिज्ज करेज्ज व, मारिज्ज वस गविज्जवमणुस्सा तुट्ठा जीवाविज्जा, अहवणरक व पावेज्जा ॥५॥ ण वि रक्ख तेसु कयं, ण वि णेहं ण वि य दाण सम्माणं ॥ ण कुल ण पुव्वय आयन्त व शील महिलियाओ । ६ मा वीसम्भह ताणं, महिलाहिययाण कवडभरियाणं । णिण्णेह निद्दयाणं, अलियवयणजपणरयाण ॥७॥ मारेइ जियत पि हु मयं पि अणुमरइ काइ भत्तारं ॥ विसहरगइव्वचरियं, वकविवर्कं महेलाणं ॥ ८ ॥ गंगाए वालुय सा-गरे जल हिमवओ य परिमाण ॥ जाणंति बुद्धिमंता, महिला हियय ण जाणंति ॥ ९ ॥ रोवावंति रुवंति य, अलियं जपंति पत्तियावंति ॥ कवडेण य खंति निसं, मरंति ण य जंति सब्भाव ॥ १० ॥ चिंतिंति कज्जमण्णं, अण्ण संठवइ भासई अण्ण ॥ आढवइ कुणइ अण्ण, माइणणीणियरि सारो ॥ ११ ॥ असयारम्भाण तहा, सव्वेसिं लोग गरहणिज्जाणं ॥ परलोगवेरियाणं, कारणय चेव इत्थीओ । ॥ १२ ॥ अहवा को जुवईणं, जाणइ चरिय सहावकुडिलाण । दोसाण आगरो चिय, जाण सरीरे वसइ का सा ॥ १३ ॥ मूल दुच्चरियाणं, हवइ उ णरयस्स वत्तिणी विउला । मोक्खस्स महाविग्घ, वज्जेयव्वा सया नारी ॥ १४ ॥ धण्णा ते वरपुरिसा, जे चिय मोत्तूण णिययजुवईओ । पव्वइया कयनियमा, सिवमयलम णुत्तरं पत्ता ॥ १५ ॥'

अधुना यादृक् शूरो भवति तादृशं दर्शयितुमाह ॥

धम्मम्मि जो दढमई, सोसूरो सत्तिओ य वीरो य ॥
णहु धम्मणिरुस्साहो, पुरिसो सूरो सुबलिओ य ॥ ६२ ॥

धर्मे श्रुतचारित्राख्ये दृढा निश्चला मतिर्यस्य स तथा एवंभूतः स इन्द्रियनोइन्द्रियारिजयाच्छूरस्तथा सात्त्विको महासत्त्वोपि-तोऽसावेव वीरः स्वकर्मदारुणसमर्थोऽसावेवेति किमिति यतो नैव धर्मनिरुत्साहः सदनुष्ठाननिरुद्यमः सत्पुरुषाचीर्णमार्गप-रिभ्रष्टः पुरुषः सुष्ठु बलवानपि शूरो भवतीति ॥

एतानेव दोषान् पुरुषसंबन्धेन स्त्रीणामपि दर्शयितुमाह ।

एते चेव य दोसा, पुरिससमाए वि इत्थियाणं पि ।
तम्हाण अप्पमाओ, विरागमग्गंमि तासिं तु ॥६३॥

ये प्राक् शीलप्रध्वंसादयः स्त्रीपरिचयादिभ्यः पुरुषाणामभि-हिता एत एव न न्यूनाधिकाः पुरुषेण सह यः समयः संबन्धस्त-स्मिन् स्त्रीणामपि यस्माद्दोषा भवन्ति तस्मात्तासामपि विरा-गमार्गे प्रवृत्तानां पुरुषपरिचयादिपरिहारलक्षणोऽप्रमाद एव श्रेयानिति । स्त्रीपरिज्ञाध्ययने च विस्तरेण स्वापरिज्ञानमप्रति-पादितम् तद्यथा—

जे मायरं च पियरं च, विप्पजहा य पुव्वसंजोगं ।
एगे सहिते चरिस्सामि, आरतमेहुणो विवित्तेसु ॥१॥

यः कश्चिदुत्तमसत्त्वो मातरं पितरं जननीं जनयितारमेतद्ग्रह-णादन्यदपि भ्रातृपुत्रादिकं पूर्वसंयोगं तथा श्वश्रूश्वशुरादिकं पश्चात्संयोगञ्च विप्रहाय त्यक्त्वा चकारौ समुच्चयार्थौ एको मातापित्राद्यभिष्वङ्गवर्जितः कषायरहितो वा तथा सहितो ज्ञा-नदर्शनचारित्रैः स्वस्मै वा हितः स्वहितः परमार्थानुष्ठानविधा-यी चरिष्यामि संयमं करिष्यामीत्येवं कृतप्रतिज्ञः । तामेव प्रतिज्ञां सर्वप्रधानभूतां लेशतो दर्शयति आरतमुपरतं मैथुनं कामाभिलाषो यस्यासावारतमैथुनस्तदेवभूतो विविक्तेषु स्त्री-पशुपण्डकवर्जितेषु स्थानेषु चरिष्यामीत्येवं सम्यगुत्थानेनो-त्थाय विहरतीति क्वचित्पाठो ( विवित्तेसित्ति ) विविक्तं स्त्रीप-ण्डकादिरहितं स्थानं सयमानुपरोध्येषितुं शीलमस्य तथेति ।

तस्यैवं कृतप्रतिज्ञस्य साधोर्यद्भवत्यविवेकिस्त्रीजना-त्तद्दर्शयितुमाह—

सुहुमे णं तं परक्कम्म, छन्नपएण इत्थिओ मंदा ।
उवायं पि ता उ जाणंसु, जहा लिस्संति भिक्खुणो एगे॥२॥

तं महापुरुषं साधुं सुक्ष्मेणापरकार्यव्यपदेशभूतेन छन्नप-देनेति छद्मना कपटजालेन पराक्रम्य तत्समीपमागत्य यदि वा पराक्रम्येति शीलस्खलनयोग्यतापत्त्या अभिभूय काः स्त्रियः कूलवालकादीनामिव मागधगणिकाद्या नानाविधकपटशतक-रणदक्षा विविधविब्बोकवत्यो भावमन्दाः कामोद्रेकविधायि-तया सदसद्विवेकविकलाः समीपमागत्य शीलात् ध्वंसयन्ति । एतदुक्तं भवति भ्रातृपुत्रव्यपदेशेन साधुसमीपमागत्य संयमा-द्भ्रंशयन्ति तथा चोक्तम् । " पियपुत्ते भाइकिण्गा, णत्तू च किण्गा य सयणकिण्गा य ॥ एते जोव्वणकिण्गा, पच्छन्नपइ-महिलियाण " यदि वा छन्नपदेनेति गुप्ताभिमानेन । तद्यथा । "काले प्रसुप्तस्य जनार्दनस्य, मेघान्धकारासु च शर्वरीषुमिथ्या न भाषामि विशालनेत्रे, ते प्रत्यया ये प्रथमाक्षरेषु" इत्यादि ॥ ताः स्त्रियो मायाप्रधाना प्रतारणोपायमपि जानन्त्युत्पन्नप्रति-भतया विदन्ति ।पाठान्तरं वा ज्ञातवन्त्यः यथा श्लिष्यन्ते विवे-किनोऽपि साधव एके तथाविधकर्मोदयात्तासु सङ्गमुपयान्ति ॥

तानेव सुक्ष्मप्रतारणोपायान् दर्शयितुमाह—

पासे भिसं णिसीयंति, अभिक्खणं पोसवत्थं परिहिंति ।
कायं अहेवि दंसंति, बाहू उद्धट्टु कक्खमणुव्वज्जे ॥३॥

पार्श्वे समीपे भृशमत्यर्थमुरःपीडमतिस्नेहमाविष्कुर्वत्यो निषी-दन्ति विश्रम्भमापादयितुमुपविशन्तीति । तथा कामं पुष्णा-तीति पोषं कामोत्कोचकारि शोभनमित्यर्थः । तच्च तद्वस्त्रं तदभीक्ष्णमनवरतं तेन शिथिलादिव्यपदेशेन परिदधति स्वा-भिलाषमावेदयन्त्यः साधुप्रतारणार्थं परिधानं शिथिलीकृत्य पुनर्निबध्नन्तीति । तथाऽधःकायमूर्वादिकमनङ्गोद्दीपनाय दर्श-यन्ति प्रकटयन्ति तथा बाहुमुद्धृत्य कक्षामादर्श्यानुकूलं सा-ध्वभिमुखं व्रजेत् गच्छेत् संभावनायां लिट् संभाव्यते एतदन-ङ्गप्रत्यङ्गसंदर्शकत्वं स्त्रीणामिति ॥ ३ ॥ अपिच—

सयणासणेहिं जोगेहिं, इत्थिओ एगता णिमंतंति ॥
एयाणि चेव से जाणे, पासाणि विरूवरूवाणि ॥४॥

शय्यतेऽस्मिन्निति शयनं पर्यङ्कादि तथाऽऽस्यतेऽस्मिन्नित्यास-नमासन्दकादीत्येवमादिना योग्येनोपभोगार्हेण कालोचितेन स्त्रि-यो योषित एकदेति विविक्तदेशकालादौ निमन्त्रयन्त्यभ्युप-गमं ग्राहयन्ति। इदमुक्तं भवति। शयनासनाद्युपभोगं प्रति साधुं प्रार्थयन्ति । एतानेव शयनासननिमन्त्रणरूपान् स साधुर्विदि-तवेद्यः परमार्थदर्शी जानीयादवबुध्येत । स्त्रीसंबन्धिकारिणः पाशयन्ति बध्नन्तीति पाशा स्तान्विरूपरूपान् नानाप्रकारा-निति । इदमुक्तं भवति । स्त्रियो ह्यासन्नगामिन्यो भवन्ति । तथाचोक्तं । "अंब वा निंबं वा, अब्भासगुणेन आरुहइ वल्ली । एवं इत्थी तो वि, ज आसन्न तमिच्छति " । १ । तदेवं भूताः स्त्रियो ज्ञात्वा न ताभिः सार्धं साधुः सङ्गं कुर्याद्यतस्तदुपचारा-दिकः सङ्गो दुष्परिहार्यो भवति । तदुक्तं । " जं इच्छसि वेत्तु जे,पुव्विं तं आमिसेण गिण्हाहि । आमिसपासनिबद्धो,काहिइ कज्जं अकज्जं वा ॥ २ ॥ ४ ॥ किञ्च—

नो तासु चक्खु संधेज्जा, नो वि य साहसं समभिजाणे ॥
णो सहियं पि विहरेज्जा, एवमप्पा सुरक्खिओ होइ॥५॥

नो नैव तासु शयनासनोपमन्त्रणपाशावपाशिकासु स्त्रीषु चक्षुर्नेत्रं सदध्यात्संधयेद्वा न तद्दृष्टौ स्वदृष्टिं निवेशयेत्। सति च प्रयोजने ईषदवज्ञया निरीक्षेत । तथाचोक्तं । " कार्येऽपीष-न्मतिमान्निरीक्षते योषिदङ्गमस्थिरया । अस्निग्धया दृशाऽव-ज्ञया ह्यकुपितोऽपि कुपित इव ॥ १ ॥ तथा नापि च साहसम-कार्यकरणं तत्प्रार्थनया समनुजानीयात्प्रतिपद्येत । तथा ह्य-पति साहसमेतत्सङ्ग्रामावतरणवद्यज्जरकपातादिविपाकवेदि-नोपि साधोर्योषिदासञ्जनमिति । तथा नैव स्त्रीभिः सार्धं ग्रा-मादौ विहरेत् गच्छेत् । अपि शब्दाच्च ताभिः सार्धं विविक्ता-सनो भवेद्यतो महापापस्थानमेतद्यतीनां यत् स्त्रीभिः सहसा-ङ्गत्यमिति ॥ तथाचोक्तम् "मात्रा स्वस्रा दुहित्रा वा न विवि-क्तासनो भवेत् ॥ बलवानिन्द्रियग्रामः पण्डितोप्यत्र मुह्यति ॥ १ ॥ एवमनेन स्त्रीसङ्गवर्जनेनात्मा समस्तापायस्थानेभ्यो रक्षितो भवति । यतः सर्वापायानां स्त्रीसंबन्धः कारणमतः स्व-हितार्थी तत्सङ्गं दूरतः परिहरेदिति ॥ ५ ॥

कथं चैताः पाशा इव पाशिका इत्याह ।

आमंतिय उस्सविय, भिक्खुआयसा निमंतंति ॥
एताणि चेव मे जाणे, सद्दाणि विरूवरूवाणि ॥ ६ ॥

स्त्रियो हि स्वभावेनैवाकर्तव्यप्रवणाः साधुमामन्त्र्य यथाहम-मुकस्यां वेलायां भवदन्तिकमागमिष्यामीत्येवं संकेतं ग्राहयि-त्वा तथा ( उस्सवियत्ति ) संस्थाप्योच्चावचैर्विश्रम्भजनकैरा-लापैर्विश्रम्भे पातयित्वा पुनरकार्यकरणायात्मना निमन्त्रयन्त्या-

त्मनोपभोगेन साधुमभ्युपगमं कारयन्ति। यदि वा साधोर्भया-पहरणार्थं ता एव योषित प्रोचुस्तद्यथा भर्तारमामन्त्र्यापृच्छ्या-हमिहायाता तया संस्थाप्य भोजनपदधावनशयनादिकया क्रियोपचर्य तनस्त्वदन्तिकमागतेत्यतो भवता सर्वा मद्भर्तृ-जनितामाशङ्कां परित्यज्य निर्भयेन भाव्यमित्येवमादिकैर्वचोभि-र्विश्रम्भमुत्पाद्य भिक्षुमात्मना निमन्त्रयन्ते। युष्मदीयमिदं शरी-रकं यादृक्कस्य क्षोदीयसो गरीयसो वा कार्यस्य क्रमं तत्रैव नियुङ्क्ष्वमित्येवमुपप्रलोभयन्ति । स च भिक्षुरवगतपरमार्थ-स्तानेव विरूपरूपाननानाप्रकारान् शब्दादीन् विषयान् तत्स्वरू-पनिरूपणतो ज्ञपरिज्ञया जानीयादथैते स्त्रीसंसर्गापादिताः शब्दादयो विषयादुर्गतिगमनैकहेतवः सन्मार्गार्गलारूपा इत्ये-वमवबुध्येत । यथा प्रत्याख्यानपरिज्ञया च तद्विपाकगमेन परिहरेदिति। ६ ।

( ४ ) स्त्रीसम्बन्धे दोषा यथा—

मणबंधणेहिँ णेगेहिं, कलुण विणीय मुवगसिताणं ॥
अदु मंजुलाइं भासंति, आणवयंति भिन्नकहाहिं ॥७॥

मनो बध्यते यैस्तानि मनोबन्धनानि मञ्जुलालापस्निग्धाव-लोकनाङ्गप्रत्यङ्गप्रकटनादीनि । तथाचोक्तं । " णाहपियक तमामियदत्तियजियाओ तुमं मह पिओ त्ति । जीए जीयामि अहं पहवसितं मे शरीरस्स ॥ १ ॥ इत्यादिभिरनेकैः प्रप-ञ्चैः करुणालापविनयपूर्वकम् ( उवगसिताणति ) उपसं-श्लिष्य समीपमागत्याऽथ तदनन्तरं मञ्जुलानि पेशलानि विश्रम्भजनकानि कामोत्कोचकानि वा भाषन्ते । तदुक्तं "मितमहुररिभिय जंपुल्ल एहिं इसीकडक्खहसिएहिं । सवि गारेहि व राग हियं पि हियं मयच्छीए॥१॥ तथा भिन्नकथा-भी रहस्यालापैर्मैथुनसंबद्धैर्वचोभिः साधोश्चित्तमादाय तम-कार्यकरणं प्रत्याज्ञापयन्ति प्रवर्तयन्ति स्ववशं वा ज्ञात्वा कर्म-करवदाज्ञां कारयन्तीति ॥ ७ ॥ अपिच-

सीहं जहा च कुणिमेणं, निब्भयमेगचरंति पासेणं ॥
एवं थियाउ बंधंति, संवुडं एगतियमणगारं ॥ ८ ॥

यथेति दृष्टान्तोपदर्शनार्थे । यथा बन्धनविधिज्ञा सिंहं पिशि ताहिना मिषेणोपप्रलोभ्य निर्भयं गतभीकं निर्भयत्वादेवै-कचरं पाशेन गलयन्त्रादिना बध्नन्ति बध्वा च बहुप्रकारं कदर्थयन्त्येवं स्त्रियो नानाविधैरुपायैः पेशलभाषणादिभिः ( एगतियंति ) कंचन तथाविधमनगारं साधुं संवृतमपि मनोवाक्कायगुप्तमपि बध्नन्ति स्ववशं कुर्वन्तीति । संवृतग्रहणं च स्त्रीणां सामर्थ्योपदर्शनार्थम् यथाहि । संवृतोऽपि ताभि र्बध्यते किंपुनरपरोऽसंवृत इति ॥ ८ ॥ किञ्च ।

अह तत्थ पुणो णमयंती, रहकारो व णेमि आणुपुव्वी ॥
बद्धे मिए व पासेणं, फंदेते वि ण मुच्चए ताहे ॥९॥

अथेति स्वरशीकरणादनन्तरं पुनस्तत्र स्वाभिप्रेते वस्तुनि नमयन्ति प्रह्वं कुर्वन्ति । यथा रथकारो वार्धकिर्नेमिकाष्ठ चक्र-बाह्यभ्रमिरूपमानुपूर्व्या नमयन्त्येव ता अपि साधुं स्वका-र्यानुकूल्ये प्रवर्तयन्ति । स च साधुर्मृगवत् पाशेन बद्धो मोक्षा-र्थं स्पन्दमानोऽपि तत पाशान्न मुच्यत इति ॥ ९ ॥ किञ्च ।

अह सेऽणुतप्पइ पच्छा, भोच्चा पायसं व विसमिस्सं ॥
एवं विवेगमादाय, संवासो न वि कप्पए दविए ॥ १० ॥

अथासौ साधुः स्त्रीपाशावबद्धो मृगवत् कूटके पतितः सन् कुटुम्बकृते अहर्निशं क्लिश्यमानः पश्चादनुतप्यते । तथाहि । गृहान्तर्गतानामेतदवश्यं संभाव्यते । तद्यथा । " कोधाय ओको समावित्तु कोहो वणाहिं काहो विज्जउ वित्तको उ-ग्घाडउ पाहियउ परिणीयउ कोवकुमारओ परियितो जीवख कप्पहेहिं परवधइ पवेह भारओ "। तथा " यन्मया परिजन स्यार्थे-कृतं कर्म सुदारुणम् ॥ एकाकी तेन दह्येह गतास्ते फल-भागिन " ॥ १ ॥ इत्येव बहुप्रकारं महामोहात्मके कुटुम्ब-कूटके पतिता अनुतप्यन्ते । अमुमेवार्थं दृष्टान्तेन स्पष्टयति । यथा कश्चिद्विषमिश्रं भोजनं भुक्त्वा पश्चात्तत्र कृतावेगाकुलि-तोऽनुतप्यते । तद्यथा । किमेतन्मया पापेन साम्प्रतेक्षिणा सुखरसिकतया विपाककटुकमेवभूतं भोजनमास्वादित-मिति । एवमसावपि पुत्रपौत्रदुहितृजामातृस्वसृभ्रातृव्य भागिनेयादीनां भोजनपरिधानपरिणयनालङ्कारजातमृतक-र्मतद्व्याधिचिकित्साचिन्ताकुलोपगतस्वशरीरकर्तव्यः प्रन-ष्टैहिकामुष्मिकानुष्ठानोऽहर्निशं । तद्व्यापारव्याकुलितमतिः । परितप्यते । तदेवमनन्तरोक्तया नीत्या विपाकं स्वानुष्ठान-स्यादाय प्राप्य विवेकमिति वा क्वचित्पाठस्तद्विपाक विवेकं चादाय गृहीत्वा स्त्रीभिश्चारित्रपरिपन्थिनीभिः सार्धं सवासो वसतिरेकत्र न कल्प्यते न युज्यते कस्मिन्द्रव्यभूते मुक्तिग-मनयोग्ये रागद्वेषरहिते वा साधौ । यतस्ताभिः सार्धं सवा-सोऽवश्यं विवेकिनामपि सदनुष्ठानविघातकारीति ॥ १० ॥

स्त्रीसंबन्धदोषानुपदर्श्योपसंहरन्नाह ।

तम्हा उ वज्जए इत्थी, विसलित्तं च कंटगं नच्चा ॥
ओए कुलाणि वसवत्ती, आघाते ण से वि णिग्गंथे॥११॥

यस्माद्विपाककटुः स्त्रीभिः सह संपर्कस्तस्मात्कारणात् स्त्रियो वर्जयेत् । तुशब्दात्तदालापमपि न कुर्यात् । किंतद्वित्याह । विषोपलिप्तं कण्टकमिव ज्ञात्वाऽवगम्य स्त्रियं वर्जयेदिति । अपिच । विषदिग्धकण्टक शरीरावयवे भग्न सदनर्थमापा-दयेत् स्त्रियस्तु स्मरणादपि । तदुक्तं । "विषस्य विषयाणा च दूरमत्यन्तमन्तरम् । उपयुक्त विष हन्ति विषया स्मरणादपि" ॥ १॥ तथा "वरिविसखइयुम विसय, सुहुइक्क सुविसिणमरति ॥ विसयामिसपुणघाहिया, णरणरएहिं पडंति "॥ १ ॥ तथौज एकोऽसहायः सन् कुलानि गृहस्थानां गृहाणि गत्वा स्त्रीणा वशवर्ती तन्निर्दिष्टवेलागमनेन तदानुकूल्य भजमानो धर्ममा-ख्याति योऽसावपि न निर्ग्रन्थो न सम्यक् प्रव्रजितो निषिद्धाच-रणसेवनादवश्य तत्रापायसंभवादिति । यदा पुन काचित्कुत-श्चिन्निमित्तादागन्तुमसमर्था वृद्धा वा भवेत्तदा परिसहाय सा-ध्वभावे एकाक्यपि गत्वाऽपरस्त्रीवृन्दमध्यगतायाः पुरुषसम-न्विताया वा स्त्रीनिन्दा विषयजुगुप्साप्रधान वैराग्यजनन वि-धिना धर्मं कथयेदपीति ॥ ११ ॥

अन्वयव्यतिरेकाभ्यामुक्तोऽर्थः सुगमो भवतीत्यभिप्रायवानाह।

जे एयं उंछमणुगिद्धा, अन्नयरा हुंति कुसीलाणं ॥
सुतवस्सिए वि से भिक्खू नो विहरे सहाणमित्थीसु॥१२॥

ये मन्दमतयः पश्चात्कृतसदनुष्ठाना साम्प्रतेक्षिण एतदनन्त-रोक्तम् ( उछनि ) जुगुप्सनीय गर्ह्य तदत्र स्त्रीसंबन्धादिकमे-काकी स्त्रीधर्मकथनादिक वा कृत्स्न्य । तदनु तत्प्रति ये गृद्धा अध्युपपन्ना मूर्च्छितास्ते हि कुशीलानां पार्श्वस्थावसन्नकुशील-संसक्तयथाछन्दरूपाणामन्यतरा भवन्ति यदि वा काथिकप्र-स्यक संप्रसार कमामकरूपाणां वा कुशीलानामन्यतरा भवन्ति तन्मध्यवर्तिनस्तेऽपि कुशीला भवन्तीत्यर्थः । यत एवमत सुतप-स्व्यपि विकृष्टतपोनिष्टप्तदेहोऽपि भिक्षुः साधुरात्महितमिच्छ-

न स्त्रीभिः समाधिपरिपन्थिनीभिः सह न विहरेत् कश्चित्सन्धेनापि सतिष्ठेत तृतीयार्थे सप्तमी । णमिति वाक्यालङ्कारे । ज्वलिताङ्गारपुञ्जवद्दूरतः स्त्रियो वर्जयेदिति भावः ॥ १ ॥

( ५ ) कतमाभिः पुनः स्त्रीभिः सार्धं न विहर्तव्य-मित्येतदाशङ्क्याह ॥

**अविधूयराहि सुण्हाहिं, धातीहिं अदुव दासीहिं ॥**
**महतीहि वा कुमारीहिं, संथवं से न कुज्जा अणगारे ॥१३॥**

अपि शब्दः प्रत्येकमभिसंबध्यते । ( धूयराहित्ति ) दुहितृभिरपि सार्धं न विहरेत्तथा स्नुषा सुतभार्यास्ताभिरपि सार्धं न विविक्तासनादौ स्थातव्यम् । तथा धात्र्यः पञ्चप्रकाराः स्तन्यदायिन्यो जननीकल्पास्ताभिश्च साकं न स्थेयम् । अथवा सन्तां तावदपरा योषितो या अप्येता दास्यो घटयोषित सर्वापसदास्ताभिरपि सह सम्पर्कं परिहरेत् । तथा महतीभिः कुमारीभिर्वा शब्दाल्लघ्वीभिश्च सार्धं सस्तवं परिचयं प्रत्यासत्तिरूपंसोऽनगारो न कुर्यादिति । यद्यपि तस्यानगारस्य तस्यां दुहितरि स्नुषादौ वा न चित्तान्यथात्वमुत्पद्यते तथापि च तत्र विविक्तासनादावपरस्य शङ्कोत्पद्यते अतस्तच्छङ्कानिरासार्थं स्त्रीसंपर्कः परिहर्तव्य इति ॥ १३ ॥

अपरस्य शङ्का यथोत्पद्यते तथा दर्शयितुमाह ॥

**अदुणा इणं च सुहीणं वा, अप्पियं दट्ठु एगता होंति ॥**
**गिद्धा सत्ता कामेहिं, रक्खण पोसणे मणुस्सोसि ॥ १४॥**

विविक्तयोषिता सार्धमनगारमयैकदा दृष्ट्वा योषिज्जातीनां सुहृदां वा अप्रियं चित्तदुःखासिका भवत्येव च ते समाशङ्केरन् यथा सत्त्वा प्राणिन इच्छामदनकामैर्गृद्धा अध्युपपन्नास्तथाह्येवभूतोऽप्ययं श्रमणः स्त्रीवदनावलोकनासक्तचेताः परित्यक्तनिजव्यापारोऽनया सार्धं निर्ह्रीकास्तिष्ठति । तदुक्तम् । मुण्डं शिरो वदनमेतदनिष्टगन्धि, भिक्षाटनेन भरणं वहतोदरस्य । गात्रं मलेन मलिनं गतसर्वशोभं, चित्रं तथापि मनसो मदनेऽस्ति वाञ्छा ॥ १ ॥ तथातिक्रोधाध्मातमानसाश्चैवमूचुर्यथा रक्षणं पोषणं चेति विगृह्य समाहारद्वन्द्वः तस्मिन् रक्षणपोषणे सदादरः कुरु । यतस्त्वमस्या मनुष्योऽसि मनुष्यो वर्तसे यदि वा परं वयमस्या रक्षणपोषणव्यापृतास्त्वमेव मनुष्यो वर्तसे यतस्त्वयैव सार्द्धमियमेकाकिन्यहर्निशं परित्यक्तनिजव्यापारा तिष्ठतीति ॥ १४ ॥

किंचान्यत् ॥

**समणं पि दट्ठु दासी-णं तत्य वि ताव एगे कुप्पंति ॥**
**अदु भोयणेहि णत्थेहि, इत्थिदोससंकिणो होंति ॥१५॥**

श्राम्यतीति श्रमणः साधुः अपिशब्दो भिन्नक्रमः । तमुदासीनमपि रागद्वेषविरहान्मध्यस्थमपि दृष्ट्वा श्रमणग्रहणं तपःखिन्नदेहोपलक्षणार्थं तत्रैवंभूतेऽपि विषयद्वेषिण्यपि साध्वीं तावदेके केचन रहस्यस्त्रीजल्पनकृतदोषत्वात्कुप्यन्ति । यदि वा पाठान्तरं " समणं दट्ठुणुदासीणं " श्रमणं प्रव्रजन्तं उदासीनं परित्यक्तनिजव्यापारं स्त्रिया सह जल्पन्तं दृष्ट्वैव तत्राप्येके केचन तावत् कुप्यन्ति किंपुनः कृतविकारमिति भावः । अथवा स्त्रीदोषाशङ्किनश्च ते भवन्ति ते चामी स्त्रीदोषा भोजनैर्नानाविधैराहारैर्न्यस्तैः साध्वर्थमुपकल्पितैरेतदर्थमेव सत्कृतैरियमेनमुपचरति तेनायमहर्निशमिहागच्छतीति । यदि वा भोजने श्वशुरादीनां न्यस्तैरर्धदत्तैः सति सा वधूः साध्वागमनेन समाकुलीभूता सत्यन्यस्मिन् दातव्येऽन्यद्दद्यात्तनस्ते स्त्रीदोषाशङ्किनो भवेयुर्यथेयं दुःशीलाऽनेनैव सहास्त इति । निदर्शनमत्र यथा कयाचिद्वध्वा ग्राममध्यप्रारब्धनटप्रेक्षणैकगतचित्तया पतिश्वशुरयोर्भोजनार्थमुपविष्टयोस्तण्डुला इति कृत्वा राइकाः संस्कृत्य दत्तास्ततोऽसौ श्वशुरेणोपलक्षिता निजपतिना कुपितेन ताडिता अन्यपुरुषगतचित्तेत्याशङ्क्य स्वगृहान्निर्धाटितेति ॥ १५ ॥

**कुव्वंति संथवं ताहिं, पब्भट्ठा समाहिजोगेहिं ॥**
**तम्हा समणा ण समें-ति आयहियाए सण्णिसेज्जाओ ॥१६॥**

ताभिः स्त्रीभिः सन्मार्गार्गलाभिः सह संस्तवं तद्गृहगमनालापदानसंप्रेक्षणादिरूपं परिचयं तथाविधमोहोदयात्कुर्वन्ति विदधति । किंभूताः प्रकर्षेण भ्रष्टाः स्खलिताः समाधियोगेभ्यः समाधिर्धर्मध्यानं तदर्थं तत्प्रधाना वा योगाः मनोवाक्कायव्यापारास्तेभ्यः प्रच्युताः शीतलविहारिण इति । यस्मात् स्त्रीसंस्तवात्समाधियोगपरिभ्रंशो भवति तस्मात्कारणात् श्रमणाः सत्साधवो ( णसमेंति ) न गच्छन्ति । सच्छाभनाः सुखोत्पादकतयाऽनुकूलत्वान्निषद्या इव निषद्याः स्त्रीभिः कृता माया यदि वा स्त्रीवसतिरिति आत्महिताय स्वहितं मन्यमाना एतच्च स्त्रीसंबन्धपरिहरणं तासामप्यैहिकामुष्मिकापायपरिहाराद्धितमिति । क्वचित्पश्चार्द्धमेवं पठ्यते ॥ तत्राह " समणाउ जहाहि अहिताओ सन्निसेज्जाओ " अयमस्यार्थः यस्मात्स्त्रीसंबन्धोऽनर्थाय भवति तस्मात् हे श्रमण साधो तु शब्दो विशेषणार्थे विशेषेण सन्निषद्याः स्त्रीवसतिस्तत्कृतोपचाररूपा वा माया आत्महिताद्धितोर्जहाहि परित्यजेति ॥१६॥

किं केचनाभ्युपगम्यापि प्रव्रज्यायां स्त्रीसम्बन्धं । कुर्युर्येनैवमुच्यते ओमित्याह ॥

**बहवे गिहाइं अवहट्टु, मिस्सीभावं पत्थुया य एगे ।**
**धुवमग्गमेव पवयं-ति वाया वीरियं कुसीलाणं ॥ १७ ॥**

बहवः केचन गृहाण्यपहृत्य परित्यज्य पुनस्तथाविधमोहोदयान्मिश्रीभाव इति द्रव्यलिङ्गमात्रसद्भावाद्भावतस्तु गृहस्थसमकल्पा इत्येवंभूता मिश्रीभावं प्रस्तुताः समनुप्राप्ता न गृहस्था एकान्ततो नापि प्रव्रजितास्तदेवंभूता अपि सन्तो ध्रुवो मोक्षः संयमो वा तन्मार्गमेव प्रवदन्ति तथाहि ते वक्तारो भवन्ति यथाऽयमेवास्मदारब्धो मध्यमः पन्थाः श्रेयान् तथा ह्यनेन प्रवृत्तानां प्रव्रज्यानिर्वहणं भवतीति तदेतत्कुशीलानां वाचाकृतं वीर्यं नानुष्ठानकृतम् । तथाहि–ते द्रव्यलिङ्गधारिणो वाङ्मात्रेणैव वयं प्रव्रजिता इति ब्रुवते नतु तेषां सातगौरवविषयसुखप्रतिबद्धानां शीतलविहारिणां सदनुष्ठानकृतं वीर्यमस्तीति ॥ १७ ॥ अपिच ॥

**सुद्धं रवति परिसाए, अह रहस्सम्मि दुक्कडं करेंति ।**
**जाणंति य णं तहाविया, माइल्ले महासढेयंति ॥१८॥**

स कुशीलो वाङ्मात्रेणाविष्कृतवीर्यः पर्षदि व्यवस्थितो धर्मदेशनावसरे सत्यात्मानं शुद्धमपगतदोषमात्मानमात्मीयानुष्ठानं वा रौति भाषते । अथाऽनन्तरं रहस्येकान्ते दुष्कृतं पापं तत्कारणं वा ऽसदनुष्ठानं करोति विदधाति तच्च तस्यासदनुष्ठानं गोपायतोपि जानन्ति विदन्ति के तथारूपमनुष्ठानं विदन्तीति तथाविदः इङ्गिताकारकुशला निपुणाः सर्वज्ञा इत्यर्थः । यदि वा सर्वज्ञाः एतदुक्तं भवति । यद्यप्यपरः कश्चिदकृतज्ञस्तेषां न वेत्ति तथापि सर्वज्ञा विदन्ति तत्परिज्ञानेनैव

किं न पर्याप्त यदि वा मायावी महासत्वश्चायमित्येवं तथावि-
दस्तद्विदो जानन्ति । तथाहि प्रच्छन्नकार्यकारी न मां कश्चि-
ज्जानातीत्येव रागान्धो मन्यते अथ च तं तद्विदो वदन्ति ।
तथाचोक्तं । "न य लोण लोणिज्जइ णय ओपिज्जइ वय च तेल्लं
वा । किहसक्का वंचेउ अत्ता अणहूय कल्लाणे" ॥ १ ॥ १८ ॥
किंचान्यत् ॥

सयं दुक्कडं च न वदति, आइट्ठो वि पकत्थति बाले ।
वेयाणु वीइमाकासी, चोइज्जंतो गिलाइसे भुज्जो ॥१९॥

स्वयमात्मना प्रच्छन्नं यद्दुष्कृतं कृतं तदपरेणाचार्यादिना पृष्टो
न वदति न कथयति यथाहमस्याऽकार्यस्य कारीति स च
प्रच्छन्नपापो मायावी स्वयमवदन् यदा परेणादिष्टश्चोदितोऽपि
सन् बालोऽज्ञो रागद्वेषकलितो वा प्रकत्थते आत्मानं श्लाघमानोऽ
कार्यमपलपति वदति च यथाहमेवम्भूतमकार्यं कथं करिष्ये इत्येवं
धाष्टर्यात्प्रकत्थते । तथा वेदः पुंवेदोदयस्तस्यानुवीच्याऽऽनुकूल्यं
मैथुनाभिलापं तन्माकार्षीरित्येवं भूय पुनश्चोद्यमानोऽसौ ग्ला-
यति ग्लानिमुपयात्यकर्णश्रुतं विधत्ते मर्मविद्धो वा सखेदमिव
भाषते । तथा चोक्तम् । "संभाव्यमानपापोह-मपापेनापि किं
मया । निर्विषस्यापि सर्पस्य, भृशमुद्विजते जन" इति अपिच ।

उसिया वि इत्थिपोसेसु पुरिसा इत्थिवेयखेदन्ना ।
पन्ना समन्निता वेगे, नारीण वसं उवकसंति ॥ २० ॥

स्त्रिय पोषयन्तीति स्त्रीपोषका अनुष्ठानविशेषास्तेषूषिता व्यव-
स्थिता अपि पुरुषा मनुष्या भुक्तभोगिनोपीत्यर्थ स्त्रीवेदज्ञाः
स्त्रीवेदो मायाप्रधान इत्येवं निपुणा अपि तथा प्रज्ञया औत्पत्ति-
क्यादिबुद्ध्या समन्विता युक्ता अप्येके महामोहान्धचेतसो
नारीणा सम्यक् स्त्रीणां संसारावतरणवीथीनां वश तदायत्त-
तामुपसामीप्येन कषन्ति व्रजन्ति यद्यत्ता स्वप्नायमाना अपि
कार्यमकार्यं वा ब्रुवते तत्तत्कुर्वते न पुनरेतज्जानन्ति यथैता एवं
भूता भवन्तीति । तद्यथा "एता हसन्ति च रुदन्ति च कार्यहे-
तो-र्विश्वासयन्ति च नर न च विश्वसन्ति । तस्मान्नरेण कुल-
शीलसमन्वितेन, नार्यः श्मशानघटिका इव वर्जनीया ॥ १ ॥
तथा "समुद्रवीचीव चलस्वभावा सन्ध्याभ्ररेखेव मुहूर्त-
रागा । स्त्रिय कृतार्था पुरुष निरर्थक निष्पीडितालक्तकव-
त्त्यजन्ति ॥ २ ॥" अत्र च स्त्रीस्वभावपरिज्ञाने कथानकमि
दम् । तद्यथैको युवा स्वगृहान्निर्गत्य वैशिकं कामशास्त्रमध्ये-
तु पाटलिपुत्र प्रस्थित । तदन्तरालेऽन्यतरग्रामवर्तिन्यैकया
योषिताऽभिहितस्त्वयदा सुकुमारपाणिपादशोभनाकृतिस्त्व
क प्रस्थितोऽसि तेनापि यथास्थितमेव तस्य कथितम् । तया
चोक्तं वैशिक पठित्वा मम मध्येनागन्तव्यं तेनापि तथैवा-
भ्युपगतम् । अधीत्य चासौ मध्येनायातस्तया च स्नानभो-
जनादिना सम्यगुपचरितो विविधहावभावैश्चापहृतहृदयः
सम्ता हस्तेन गृह्णाति ततस्तया महता शब्देन फूत्कृत्य ज-
नागमनादारभे मस्तके वारिवर्द्धनिका प्रक्षिप्ता । ततो लोकस्य
समाकुले एवमाचष्ट यथाय गले लग्ननाडकेन मनाक् मृत ततो
मयोदकेन सिक्त गते गते च लोके किं त्वया वैशिकशास्त्रो-
पदेशेन स्त्रीस्वभावानां किं परिज्ञानमित्येव स्त्रीचरित्र दुर्वि-
ज्ञेयमिति नाभिगन्ता एतत्त्येति तथाचोक्तम् । "हृद्यन्यद्वाच्यन्य-
त्कर्मण्यन्यत् पुरोऽथ पृष्ठेऽन्यत् । अन्यत्तव मम चान्यत् स्त्रीणां
सर्वं किमन्यदिव" ॥ २० ॥

साम्प्रतमिहलोक एव स्त्रीसम्बन्धविपाक दर्शयितुमाह ॥

अवि हत्थपादछेदाए, अदुवा वद्धमंस उक्कंते ।
अवि तेय साभितावणाणि, तिच्छियखारसिंचणाइं च ॥

स्त्रीसंपर्को हि संसर्गिणां हस्तपादच्छेदनाय भवति । अपि
संभावने संभाव्यत एतन्मोहातुराणां सवन्धारूस्तपादच्छे-
दादिकम् । अथवा वर्धमांसोत्कर्तनमपि तेजसाग्निनाऽभिता-
पनानि स्त्रीसंबन्धिभिरुत्तेजितैराजपुरुषैर्भस्त्रिकाण्यपि क्रियन्ते
या दारिकास्तथा वास्यादिना तक्षयित्वा क्षारोदकसेचनानि
च प्रापयन्तीति ॥ २१ ॥ अपिच—

अदु कण्णनासच्छेदं, कंठच्छेदणं तितिक्खंति ॥
इत्थ पावसंतत्ता, न य विंति पुणो न काहिंति ॥२२॥

अथ कर्णनासिकाच्छेदं तथा कण्ठच्छेदनं च तितिक्षन्ते
स्वकृतदोषात्सहन्ते इत्येव बहुविधां विडम्बनामस्मिन्नेव मानु
षे च जन्मनि पापेन पापकर्मणा संतप्ता नरकातिरिक्तां वेदना-
मनुभवन्तीति । न च पुनरेतदेवं भूतमनुष्ठानं करिष्याम इति
ब्रुवन इत्यवधारयन्तीति यावत् । तदेवमैहिकामुष्मिका दुःख-
विडम्बना अप्यङ्गीकुर्वन्ति न पुनस्तदकरणतया निवृत्तिं प्रति-
पद्यन्त इति भाव ॥२२॥ किंचान्यत्-

सुतमेतमेवमेगेसिं, इत्थि वेदेति हु सुयक्खायं ॥
एवं पि तावदित्ताणं, अदुवा कम्मणा अवकरेंति ॥२३॥

श्रुतमुपलब्धं गुर्वादे सकाशाल्लोकतो वा एतदिति यत्पूर्वमा-
ख्यातम् । तद्यथा । दुर्विज्ञेय स्त्रीणां चित्तं दारुणः स्त्रीसंबन्ध
विपाकस्तथा चलस्वभावा । स्त्रियो दुष्परिचारा अदीर्घ
प्रेक्षिण्य प्रकृत्या लघ्व्या भवन्त्यात्मगर्विताश्चेत्येवमेकेषां स्वा
ख्यातं भवति लोकश्रुतिपरंपरया चिरतनाख्यानेषु वा परिज्ञात-
भवति । तथा स्त्रिय यथावस्थितस्वभावतस्तत्संबन्धविपा-
कतश्च वेदयति ज्ञापयतीति स्त्रीवेदो वैशिकादिकं स्त्रीस्व-
भावाविर्भावकं शास्त्रमिति । तदुक्तम् । "दुर्ग्राह्यं हृदयं य-
थैव वदनं यद्दर्पणान्तर्गतं, भाव पर्वतमार्गदुर्गविषमः स्त्रीणां न
विज्ञायते ॥ चित्तं पुष्करपत्रतोयतरलं नैकत्र संतिष्ठते नार्यो
नाम विषाङ्कुरैरिव लता दोषैः सम वर्धिता ॥ १ ॥ अपिच ।
" सुट्ठु विजयासु सुट्ठु वि, पियासु सुट्ठु लद्धपसरासु । अडईसु
महिलियासु य, वीसंभो नेव कायव्वो ॥ १ ॥ उब्भेउ
अंगुलीओ, पुरिसो सयलम्मि जीवलोयम्मि । कामें त
एण नारी, जेण न पत्ताइ दुक्खाइं ॥ २ ॥ अह एयाण पगई
सव्वस्स करेंति वेमणस्साइं । तस्स ण करेंति णवर, जस्स
अलं चेव कामेहिं ॥ ३ ॥ किंच कार्यमहं न करिष्यामीत्येव-
मुक्त्वापि वाचा ( अदुवाति ) तथा पि कर्मणाऽपि क्रियया ऽप
कुर्वन्तीति विरूपमाचरन्ति । यदि वा ऽग्रन' प्रतिपाद्यापि शा
स्तुरेवापकुर्वन्तीति ॥ २३ ॥

सूत्रकार एव तत्स्वरूपाविष्करणायाह ॥

अन्नं मणेण चिंतेति वाया अन्नं च कम्मणा अन्नं ॥
तम्हा ण सद्दहे भिक्खू बहुमायाओ इत्थिओ णच्चा ।२४।

पातालोदरगम्भीरेण मनसाऽन्यच्चिन्तयन्ति तथा श्रुतमात्रपेश
लया विपाकदारुणया वाचा अन्यद्भाषन्ते । तथा कर्मणाऽनुष्ठाने
नान्यन्निष्पादयन्ति यत एवं बहुमायाः स्त्रिय इति एवं ज्ञात्वा
तस्मात्तासां भिक्षु साधुर्न श्रद्दधीत तत्कृतया मायया ऽऽत्मानं
न प्रतारयेत् । दत्तावैशिकवत् । अत्र चैतत्कथानकम् । दत्ता-
वैशिक एकया गणिकया तैस्तैः प्रकारैः प्रतार्यमाणोऽपि तां ने-
ष्टवान् ततस्तयोक्तं किं मया दौर्भाग्यकलङ्काङ्कितया जीवन्त्या

प्रयोजनमहं त्वत्परित्यक्ताऽग्नि विशामि ततोऽसाववोचत् मायया इदमप्यस्ति वैशिके तदाऽसौ पूर्वं सुरङ्गामुखे काष्ठसमुदाय कृत्वा त प्रज्वाल्य तत्रानुप्रविश्य सुरङ्गया गृहमागता । दत्तकोपि इदमपि चास्ति वैशिके इत्येवमसौ विलपन्नपि वानिकैश्चितायांप्रक्षिप्तस्तथापि नासौ तासुश्रद्धान कृतवानेवमन्येनापि न श्रद्धातव्यमिति ॥ २४ ॥ किंचान्यत् ॥

जुवती समणं बूया विचित्तलंकारवत्थगाणि परिहिता ॥
विरता चरिस्सहं रुक्खं धम्ममाइक्खणे भयंतारो ॥२५॥

युवतिरभिनवयौवना स्त्री विचित्रवस्त्रालंकारविभूषितशरीरा मायया श्रमण ब्रूयात् । तद्यथा । विरताह गृहपासान्न ममानुकूलो भर्त्ता मह्य चासौ न रोचते परित्यक्ता चाह तेनेत्यतश्चरिष्यामि धर्ममाचक्षाणेति अस्माक हे भयत्रातर्यथाहमेव दुःखानां भाजन न भवामि तथा धर्ममावेदयाति ॥

किंचान्यत्–

अदु साविया पवाएणं, अहमासि साहम्मिणी य समणाणं ।
जतुकुंभे जहा उवज्जोइ, संवासे वि दु विसीएज्जा ॥२६॥

अथवा ऽनेन प्रवादेन व्याजेन साध्वन्तिकं योषिदुपसर्पेत । यथाह श्राविकेति कृत्वा युष्माक श्रमणानां साधर्मिणीत्येव प्रपञ्चेन नेदीयसी भूत्वा कूलवालुकमिव साधु धर्माद्भ्रंशयाति एतदुक्त भवति योषित्सान्निध्य ब्रह्मचारिणां महते ऽनर्थाय तथाचोक्तम् "तज्ज्ञान तच्च विज्ञान तत्तपः स च सयम । सर्वमेकपदे भ्रष्ट सर्वथा किमपि स्त्रिय. १ " अस्मिन्नेवार्थे दृष्टान्तमाह यथा जातुष कुम्भो ज्योतिषोऽग्ने. समीपे व्यवस्थित उपज्योतिर्वर्ती विलीयते द्रवत्येव योषितां सवासे सान्निध्ये विद्वानप्यास्तां तावदितरो योऽपि विदितवेद्योऽसावपि धर्मानुष्ठान प्रति विषीदेत शीतलविहारी भवेदिति । २६ ।

( ७ ) एवं तावत्स्त्री सान्निध्ये विपाकान् प्रदर्श्य तत्संस्पर्शज दोष दर्शयितुमाह—

जतुकुंभे जोइ उवगूढे, आसुभितत्तेण समुवयाइ ।
एवि त्थियाहिं अणगारा, संवासेण णासमुवयंति ।२७।

यथा जातुष. कुम्भो ज्योतिषाग्निनोपगूढ समालिङ्गितोऽग्निवत्तोऽग्निनाभिमुख्येन सतापित क्षिप्र नाशमुपैति द्रवीभूय विनश्यत्येव स्त्रीभिः सार्धं सवसनेन परिभोगेनानगारा नाशमुपयान्ति सर्वथा जातुषकुम्भवत् । व्रतकाठिन्य परित्यज्य सयमशरीराद्भ्रश्यन्ति । २७ ।

कुव्वंति पावगं कम्मं, पुट्ठा वेगे व माहिसु ॥
नोहं करेमि पावंति, अंके साइणी ममे सत्ति ॥ २८ ॥

तासु संसाराभिष्वङ्गिणीष्वभिसक्ता अवधीरितैहिकामुष्मिकापायाः पाप कर्म मैथुनासेवनादिकं कुर्वन्ति विदधाति । परिभ्रष्टा सदनुष्ठानादेके केचनोत्कटमोहा आचार्यादिना चोद्यमाना एवमाहुर्वक्ष्यमाणमुक्तवन्त । तद्यथा नाहमेवभूतकुलप्रसूत एतदकार्यं पापोपादानभूत करिष्यामि ममैषा दुहितृकल्पा पूर्वमङ्केशायिनी आसीत् तदेषा पूर्वाभ्यासेनैव मय्येवमाचरति न पुनरह विदितससारस्वभाव. प्राणात्ययेऽपि व्रतभङ्ग विधास्य इति ॥ किंच–

वालस्स मंदयं बीजं, जं च कम्मं अवजाणई भुज्जो ॥
दुगुणं करेइ से पावं, पूयणकामो विसन्नेसी ॥ २९ ॥

बालस्याज्ञस्य रागद्वेषाकुलितस्यापरमार्थदृश एतद् द्वितीय माद्यमज्ञत्वमेक तावदकार्यकरणेन चतुर्थव्रतभङ्गो द्वितीय तदपलपनेन मृषावाद. । तदेव दर्शयति यत्कृतमसदाचरण भूयः पुनरपरेण चोद्यमानोऽपजानीतेऽपलपति नैतन्मया कृतमिति स एवभूतोऽसदनुष्ठानेन तदपलपनेन च द्विगुणं पापं करोति । किमर्थमपलपतीत्याह । पूजन सत्कारपुरस्कारस्तत्कामस्तदभिलाषी न मे लोके अवर्णवाद स्यादित्यकार्य प्रच्छादयति । विषण्णोऽसयमस्तमेषितु शीलमस्येति विषण्णैषी । किंचान्यत् ॥

संलोकणिज्जमणगारं, आयगयं निमंतणेणाहंसु ॥
वत्थं च ताय पायं वा, अन्नं पाणगं पडिग्गहे ॥ ३० ।

सलोकनीय सदर्शनीयमाकृतिमन्तं कचनानगार साधुमात्मनि गतमात्मगतमात्मज्ञमित्यर्थ' । तदेवभूत काश्चन स्वैरिण्यो निमन्त्रणेन निमन्त्रणपुर.सरमाहुरुक्तवत्य. । तद्यथा हे त्रायिन् । साधो ! वस्त्र पात्रमन्यद्वा पानादिकं येन केनचिद्भवत' प्रयोजन तदहं भवते सर्वं ददामीति मद्गृहमागत्य प्रतिगृहाण त्वमिति

उपसहारार्थमाह ॥

णीवारमेवं बुज्झेज्जा, णो इच्छे अगारमागंतुं ॥
बद्धे विसयपासेहिं, मोहमावज्जइ पुणो मंदि ॥३१॥

एतद्योषितां वस्त्रादिकमामन्त्रणं नीवारकल्प बुध्येत जानीयात् यथाहि नीवारेण केनचिद्भक्ष्यविशेषेण सूकरादिर्वशमानीयते एवमसावपि तेनामन्त्रणेन वशमानीयते अतस्त नेच्छेदगार गृह गन्तुम् । यदिवा गृहमेवावर्त्तो गृहावर्त्तो गृह भ्रमस्त नेच्छेत् नाभिलष्येत् । किमिति यतो वद्धो वशीकृतो विषया एव शब्दादय. पाशा रज्जुबन्धनानि तैर्बद्ध परवशीकृत' स्नेहपाशानपत्रोटयितुमसमर्थ. सन्मोह चित्तव्याकुलत्वमागच्छति । किं कर्तव्यमूढो भवति पौन'पुन्येन मन्दोऽज्ञो जड इति । उक्तः प्रथमोद्देशकः । सांप्रत द्वितीय. समारभ्यते । अस्य चायमभिसंबन्ध. इहानन्तरोद्देशके स्त्रीसस्तवाच्चारित्रस्खलनमुक्तं स्खलितशीलस्य या अवस्था इहैव प्रादुर्भवति तत्कृतकर्मबन्धश्च तदिह प्रतिपाद्यते इत्यनेन सबन्धेनायातस्योद्देशकस्यादिमसूत्रम् ॥

ओए सया ण रज्जेज्जा, भोगकामी पुणो विरज्जेज्जा ॥
भोगे समणाण सुणेह, जह भुजंति भिक्खुणो एगे।१।

अस्य चानन्तरं परस्परसूत्रसंबन्धो वक्तव्य । स चायं सबन्धो विषयपाशैर्मोहमागच्छति । यतोऽत ओज एको रागद्वेषवियुत स्त्रीषु राग न कुर्यात् । परस्परसूत्रसबन्धस्तु संलोकनीयमनगार दृष्ट्वा च यदि काचिद्योषित् साधुमशनादिना नीवारकल्पेन प्रतारयेत्तत्रौज सन्न रज्येतेति तत्रौजो भण्यत' परमाणुर्भावतस्तु रागद्वेषवियुतः स्त्रीषु रागादेव वक्ष्यमाणनीत्या नानाविधा विडम्बना भवन्ति तत्कृतश्च कर्मबन्धस्तद्विपाकाच्चामुत्र नरकादौ तीव्रा वेदना भवन्ति यतोऽत एतन्मत्वा भावौज' सन् सदा सर्वकाल चाऽनर्थखनिषु स्त्रीषु न रज्येत । तथा यद्यपि मोहोदयात् भोगाभिलाषी भवेत्तथाप्यैहिकामुष्मिकापायान् परिगणय्य पुनस्ताभ्यो विरज्येत । एतदुक्तं भवति कर्मोदयाग्प्रवृत्तमपि चित्तं हेयोपादेयपर्यालोचनया ज्ञानाङ्कुशेन निवर्तयेदिति । तथा श्राम्यन्ति तपसा खिद्यन्तीति श्रमणास्तेषामपि भोगा इत्येतच्छृणुत यूयम । एतदुक्त भवति गृहस्थानामपि भोगा विडम्बनाप्राया यतीनां तु भोगा इत्येतदेव विडम्बनाप्राय किं पुनस्तत्कृतावस्था । तथाचोक्त मुण्डं शिर इत्यादि पूर्ववत् । यथा यथा च भोगानेषे ऽपुष्टधर्माणो भिक्ष-

यो यतयो विडम्बनाप्रायान् भुञ्जते तथोद्देशकसूत्रेणैव वक्ष्यमाणेनोत्तरत्र महता प्रबन्धेन दर्शयिष्यामि । अन्यैरप्युक्तम् ।
" कृशः काणः खञ्जः श्रवणरहितः पुच्छविकलः क्षुधा क्षामो जीर्णः पिठरककपालार्दितगलः । व्रणैः पूयक्लिन्नैः कृमिकुलचितैराविलतनुः शुनीमन्वेति श्वा हतमपि च हन्त्येव मदनः ॥ "
( ८ ) भोगिनां विडम्बनां दर्शयितुमाह ॥

अह तं तु भेदमावन्नं-मुच्छितं भिक्खु काममतिवट्टं ॥
पलिभिंदियाणं तो पच्छा, पादुद्धट्टु मुद्धि पहणंति ॥ २ ॥

अथेत्यानन्तर्यार्थे । तुशब्दो विशेषणार्थः स्त्रीसंस्तवादनन्तरं भिक्षुं साधुं भेदं शीलभेदं चारित्रस्खलनमापन्नं प्राप्तं सन्तं स्त्रीषु मूर्छितं गृद्धमध्युपपन्नं तमेव विशिनष्टि । कामेष्विच्छामदनरूपेषु मतेर्बुद्धेर्मनसो वा वर्तनं प्रवृत्तिर्यस्यासौ काममतिवर्तः कामाभिलाषुक इत्यर्थः । तमेवम्भूतं परिभिद्य मदभ्युपगतः श्वेतकृष्णप्रतिपन्नो मद्दासक इत्येवं परिज्ञाय यदि वा परिभिद्य परिसार्यात्मसात्कृत चोद्यार्येति । तद्यथा मया तव लुञ्चितशिरसो जल्लमलाविलतया दुर्गन्धस्य जुगुप्सनीयकक्षावक्षोवस्तिस्थानस्य कुलशीलमर्यादालज्जाधर्मादीन् परित्यज्यात्मा दत्तस्त्वं पुनरकिञ्चित्कर इत्यादि भणित्वा प्रकुपितायास्तस्या असौ विषयमूर्छितस्तत्प्रत्यापनार्थं पादयोर्निपतति । तथा चोक्तम् । " व्याभिन्नकेसरबृहच्छिरसश्च सिंहा नागाश्च दानमदराजिकृशैः कपोलैः । मेधाविनश्च पुरुषाः समरे च शूराः स्त्रीसन्निधौ परमकापुरुषा भवन्ति "
॥ १ ॥ ततो विषयेष्वेकान्तेन मूर्छित इति परिज्ञानात्पश्चात्पादं निजवामचरणमुत्क्षिप्योत्क्षिप्य मूर्ध्नि शिरसि प्रघ्नन्ति ताडयन्त्येव विडम्बनां प्रापयन्तीति" ॥ २ ॥ अन्यच्च-

जइ केसिआणं मए भिक्खु, णो विहरे सह णमित्थिए ।
केसाण वि हं लुंचिस्सं, नन्नत्थ मए चरिज्जासि ॥ ३ ॥

केशा विद्यन्ते यस्याः सा केशिका णमिति वाक्यालङ्कारे । हे भिक्षो ! यदि मया स्त्रिया भार्यया केशवत्या सह नो विहरेस्त्वं सलज्जया स्त्रिया भोगान् भुञ्जानो व्रीडां यदि वहसि ततः केशानप्यहं त्वत्सङ्गमाकाङ्क्षिणी लुञ्चिष्याम्यपनेष्यामि । आस्तां तावदलङ्कारादिकमित्यपि शब्दार्थः अस्य चोपलक्षणार्थत्वादन्यदपि दुष्करं विदेशगमनादिकं तत्सर्वमहं करिष्ये त्वं पुनर्न मया रहितो नान्यत्र चरेः । इदमुक्तं भवति मयारहितेन भवता क्षणमपि न स्थातव्यमेतावदेवाहं भवन्तं प्रार्थयामि अहमपि यद्भवानादिशति तत्सर्वं विधास्य इति ॥ ३ ॥
(९) इत्येवमतिपेशलैर्विश्रम्भजननैरापातभद्रकैरालापैर्विश्रम्भयित्वा यत्कुर्वन्ति तद्दर्शयितुमाह ॥

अह णं से होई उवलद्धो, तो पेसंति तहा भूएहिं ।
अलाउच्छेदं पेहेहि, वग्गुफलाइं आहराहित्ति ॥ ४ ॥

अथेत्यानन्तर्ये णमिति वाक्यालङ्कारे विश्रम्भालापानन्तरं यदासौ साधुरस्मदनुगत इत्येवमुपलब्धो भवत्याकारेङ्गितचेष्टया वा मद्वशग इत्येवं परिज्ञातो भवति ततः कर्पटनाटकविटाः स्त्रीभिस्तत्तदभिप्रायपरिज्ञानादुत्तरकालं तदाभूतैः कर्मकरव्यापारैः प्रेषयन्ति नियोजयन्ति । यदि वा तथाभूतैरिति लिङ्गस्थयोग्यैर्व्यापारैः प्रेषयन्ति तानेव दर्शयितुमाह । अलाबुच्छिद्यते येन तदलाबुच्छेदं पिप्पलकादिकम् ( पेहेहित्ति ) प्रेक्षस्व निरूपय लभस्वेति येन पिप्-लकादिना लब्धेन पात्रादेर्मुखादि क्रियत इति तथा वल्गूनि शोभनानि फलानि नारिकेलादीनि अलाबुकानि वा त्वमाहरानयेति । यदि वा वाक्फलानि च धर्मकथारूपाया व्याकरणादिव्याख्यानरूपाया वाचो यानि फलानि वस्त्रादिलाभरूपाणि तान्याहरेति ॥ ४ ॥ अपिच ॥

दारूणि साग पागाए, पज्जोउ वा भविस्सती राओ ।
पाताणि य मे रयावेहि, एहि ता मेपिट्ठओ मद्दे ॥ ५ ॥

यथा दारूणि काष्ठानि शाकं पत्रशाकं तत्पाकार्थं क्वचिदन्नपाकायेति पाठस्तत्रान्नमोदकादिकमिति रात्रौ रजन्यां प्रद्योतो वा भविष्यतीति कृत्वा अतो अटवी तस्तमाहरेति । तथा पात्राणि पतद्ग्रहादीनि रञ्जय लेपय येन सुखेनैव भिक्षाटनमहं करोमि । यदि वा पादावलक्तकादिना रञ्जयेति । तथा परित्यज्यापरं कर्म तावदेह्यागच्छ मे मम पृष्ठमुत्प्राबल्येन मर्दय बाधते ममाङ्गमुपविष्टाया अतः संहारय पुनरपरं कार्यशेषं करिष्यसीति ॥ ५ ॥ किंच—

वत्थाणि य मे पडिलेहेहि, अन्नं पाणं च आहरा हित्ति ।
गंधं च रओहरणं च, कासवगं मे समणु जाणाहि ॥ ६ ॥

वस्त्राणि च अम्बराणि मे मम जीर्णानि वर्तन्तेऽतः प्रत्युपेक्षस्वान्यानि निरूपय यदि वा मलिनानि रजकस्य समर्पय मदुपधिं वा मूषिकादिभयात्प्रत्युपेक्षस्वेति । तथा अन्नपानादिकमाहरानयेति तथा गन्धं कोष्ठपुटादिकं ग्रन्थिं वा हिरण्यं तथा शोभनं रजोहरणं तथा लोचं कारयितुं नहमशक्तेत्यतः काश्यपं नापितं मच्छिरोमुण्डनाय श्रमणानुजानीहि येनाहं बृहत्केशानपनयामीति ॥ ६ ॥

किंचान्यत्-

अदु अंजणिं अलंकारं, कुक्कुहयं मे पयच्छाहि ॥
लोद्धं च लोद्धकुसुमं च, वेणुपलासियं च गुलियं च ॥ ७ ॥
कुट्ठं तगरं च अगरुं, संपिट्ठं सम्मं उसिरेणं ।
तेल्लं मुहभिंजाए, वेणुफलाइं सन्निधानाए ॥ ८ ॥

अथ शब्दोऽधिकारान्तरप्रदर्शनार्थः पूर्वलिङ्गस्थोपकरणान्यधिकृत्याभिहितमधुना गृहस्थोपकरणान्यधिकृत्याभिधीयते तद्यथा ( अजणिमिति ) अञ्जनिकां कज्जलाधारभूतां नलिकां मम प्रयच्छस्वेत्युत्तरत्र क्रिया । तथा कटककेयूरादिकमलङ्कारं वा तथा ( कुकुहयंति ) खुखुणकं मे मम प्रयच्छ येनाहं सर्वालङ्कारविभूषिता वीणाविनोदेन भवन्तं विनोदयामि । तथा लोध्रं च लोध्रकुसुमं च । तथा ( वेणुफलासियंति ) वंशात्मिका श्लक्ष्णत्वक्काष्ठिका सा दन्तैर्वामहस्तेन प्रगृह्य दक्षिणहस्तेन वीणावद्वाद्यते । तथौषधगुटिकां तथाभूतामानय येनाहमविनष्टयौवना भवामीति ॥ ७ ॥ तथा ( कुट्ठमित्यादि ) कुष्ठमुत्पलकुष्ठं तथा अगरं तगरं च एते द्वे अपि गन्धिकद्रव्ये एतत्कुष्ठादिकमुशीरेण वीरणमूलेन सम्पिष्टं सुगन्धि भवति यतस्तत्तथा कुरु तथा तैलं लोध्रकुङ्कुमादिना संस्कृतं मुखमाश्रित्य ( भिंजाएत्ति ) अभ्यङ्गाय ढौकयस्व । एतदुक्तं भवति । मुखाभ्यङ्गार्थं तथाविधसंस्कृतं तैलमुपाहरेति येन कान्त्युपेतं मे मुखं जायेत ( वेणुफलाइत्ति ) वेणुकार्याणि करण्डकपेटिकादीनि सन्निधिः सन्निधानं वस्त्रादेर्व्यवस्थानं तदर्थमानयेति ॥ ८ ॥

किंच—

नंदी चुणगाइं पाहराहिं, छत्तोवाणहं च जाणाहि ॥
सत्थं च सूवच्छेज्जाए, आणीलं च वत्थयं रयावेहि ॥ ९ ॥

सुफणिं च सागपागाए आमलगा इंदगाहरणं च ।
तिलगकरणिमंजणसलागं घिंसु मे विहूणयं विजाणेहिं ।१०।

( नदी चुसगाइति ) द्रव्यसंयोगनिष्पादितोष्ठम्रक्षणचूर्णोऽभिधीयते । तमेवंभूतं चूर्णं प्रकर्षेण येन केनचित्प्रकारेणाहरानयेति । तथाऽऽतपस्य वृष्टेर्वा संरक्षणाय छत्रं तथोपानहौ च ममानुजानीहि । न मे शरीरमाभिर्विना वर्तते ततो ददस्वेति । तथा शस्त्रं दात्रादिकं सूपच्छेदनाय पत्रशाकच्छेदनार्थं ढौकयस्व । तथा वस्त्रमम्बरं परिधानार्थं गुलिकादिना रञ्जय यथा नीलमीषन्नीलं सामस्त्येन वा नीलं भवत्युपलक्षणार्थत्वाद्रक्तं यथा भवतीति ॥९॥ तथा (सुफणिं चेत्यादि) सुष्ठु सुखेन वा फण्यते क्वाथ्यते तक्रादिकं यत्र तत्सुफणिस्थालीपिठरादिकं भाजनमभिधीयते तच्छाकपाकार्थमानय । तथा आमलकानि धात्रीफलानि स्नानार्थं पित्तोपशमनायाभ्यवहारार्थं वा । तथोदकमाह्रियते येन तदुदकाहरणं कुटवर्धनिकादि अस्य चोपलक्षणार्थत्वाद् घृततैलाद्याहरणं सर्वं वा गृहोपस्करं ढौकस्वेति । तिलकः क्रियते यया सा तिलककरणी दन्तमयी सुवर्णात्मिका वा शलाका यया गोरोचनादियुक्तया तिलकः क्रियते इति । यदि वा गोरोचनया तिलकः क्रियते सा च तिलककरणीत्युच्यते । तिलकाः क्रियन्ते पिष्यन्ते वा यत्र सा तिलककरणीत्युच्यते तथाञ्जनं सौवीरकादि शलाका अक्ष्णोरञ्जनार्थं शलाका अञ्जनशलाका तामाहरेति । तथा ग्रीष्मे उष्णाभितापे सति मे मम विधूनकं व्यजनकं विजानीहि ॥

संडासगं च फणिहं च, सीहलिपासगं च आणाहि ।
आदंसगं च पयच्छाहि, दंतपक्खालणं पवेसाहि ॥ ११ ॥
पूयफलं तंबोलयं, सूई सुत्तगं च जाणाहि ।
कोसं यमो च मेहाए, सुप्पु खलगं च खारगालणं च ॥१२॥

एवं संडासिकं नासिकाकेशोत्पाटनं फणिहं केशसंयमनार्थं कङ्कतकं तथा ( सीहलिपासगति ) वीणासंयमनार्थमूर्णामयं कङ्कणं चानय ढौकयेति । एवमासमन्ताद् दृश्यते आत्मा यस्मिन् स आदर्शः स एव आदर्शकस्तं प्रयच्छ ददस्वेति । तथा दन्ताः प्रक्षाल्यन्ते अपगतमलाः क्रियन्ते येन तद्दन्तप्रक्षालनं दन्तकाष्ठं तन्मदन्तिके प्रवेशयेति ॥११॥ ( पूयफलं चेत्यादि ) पूगफलं प्रतीतं ताम्बूलं नागवल्लीदलं तथा सूचीं च सूत्रं च सूच्यर्थं वा सूत्रं जानीहि ददस्वेति । तथा कोशमिति वारकादिभाजनं तन्मोचमेहाय समाहर तत्र मोचः प्रस्रवणं कायिकेत्यर्थः । तेन मेहः सेचनं तदर्थं भाजनं ढौकय । एतदुक्तं भवति बहिर्गमनं कर्तुमहमसमर्था रात्रौ भयादतो मम यथा रात्रौ बहिर्गमनं न भवति तथा कुरु । एतच्चान्यस्याप्यधमतमकर्तव्यस्योपलक्षणं द्रष्टव्यम् । तथा शूर्पं तण्डुलादिशोधनार्थं तथोलूखलं तथा किंचन क्षारस्य सर्जिकादेर्गालनकमित्येवमादिकमुपकरणं सर्वमप्यानयेति ॥ १२ ॥

किंचान्यत् ॥

चंदालगं च करगं च, वच्चघरं च आउसो खणइ ।
सरपायं च जयाए, गोरहगं च सामणए य ॥ १३ ॥
घडिंग च सडिंडिमयं च, चेलगोलं कुमार भूयाए ।
वासं समभि आवसु, आवसहं च जाण भत्तं च ॥१४॥

चन्दालकमिति देवतार्चनिकार्थं ताम्रमयं भाजनमेतच्च मथुरायां चन्दालकत्वेन प्रतीतमिति । तथा करको जलाधारो मदिराभाजनं वा तदानयेति क्रिया । तथा वर्चोगृहं पुरीषोत्सर्गस्थानं तदायुष्मन् मदर्थं खन संस्कुरु । तथा शरा इषवः पात्यन्ते क्षिप्यन्ते येन तच्छरपातं धनुस्तज्जाताय मत्पुत्राय कृते ढौकय । तथा ( गोरहगति ) त्र्यहायणं बलीवर्दं च ढौकयेति ( सामणएत्ति ) श्रमणस्यापत्यं श्रामणिस्तस्मै श्रामणये त्वत्पुत्राय गन्त्र्यादिकृते भविष्यतीति ॥१३॥ तथा (घडिंगचेत्यादि) घटिकां मृन्मयकुल्लडिकां डिण्डिमेन पटहकादिवादित्रविशेषेण सह तथा ( चेलगोलति ) वस्त्रात्मकं कन्दुकं कुमारभूताय क्षुल्लकभूताय राजकुमाररूपाय वा मत्पुत्राय क्रीडनार्थमुपानयेति । तथा वर्षमिति । प्रावृट्कालोऽयमभ्यापन्नोऽभिमुखं समापन्नोऽत आवसथं गृहं प्रावृट्कालनिवासयोग्यं तथा भक्तं च तन्दुलादिकं तत्कालयोग्यं जानीहि निरूपय निष्पादय येन सुखेनैवाऽनागतपरिकल्पितावसथादिना प्रावृट्कालोऽतिवाह्यत इति । तदुक्तं " मासैरष्टभिरह्ना च, पूर्वेण वयसाऽऽयुषा । तत्कर्तव्यं मनुष्येण, यस्यान्ते सुखमेधते " ॥ १४ ॥ एवं च ।

आसंदियं च नवसुत्तं, पाउल्लाइं संकमट्ठाए ।
अदु पुत्तदोहलट्ठाए-आणप्पा हवंति दासा वा ॥१५॥

मौञ्जे काष्ठपादुके वा संक्रमणार्थं पर्यटनार्थं निरूपय यतो नाहं निरावरणपादा भूमौ पदमपि दातुं समर्थेति । अथवा पुत्रे गर्भस्थे दौहृदं पुत्रदौहृदमन्तर्वत्नी फलादावभिलाषविशेषस्तस्मै तत्संपादनार्थं स्त्रीणां पुरुषाः स्ववशीकृता दासा इव क्रयक्रीता इवाज्ञाप्या आज्ञापनीया भवन्ति । यथा दासा अलज्जितैर्योग्यत्वादाज्ञाप्यन्ते एवं तेऽपि वराकाः स्नेहपाशावपाशिता विषयार्थिनः स्त्रीभिः संसारावतरणवीथीभिरादिश्यन्त इति ॥ १५ ॥

अन्यच्च-

जाए फले समुप्पन्ने, गेण्हसु वा णं अहवा जहाहि ।
अह पुत्तपोसिणो एगे, भारवहे हवंति उट्टा वा ।१६।

जातपुत्रः स एव फलं गृहस्थानाम्, तथाहि पुरुषाणां कामभोगफलं तेषामपि फलं प्रधानं कार्यं पुत्रजन्मेति । तदुक्तम् । "इदं तत्स्नेहसर्वस्वं, सममाढ्यदरिद्रयोः । अचन्दनमनौशीरं, हृदयस्यानुलेपनम् ॥ १ ॥ यत्तच्छपनिकेत्युक्तं, बालेनाव्यक्तभाषिणा । हित्वा सांख्यं च योगं च, तन्मे मनसि वर्तते—" ॥२॥ यथा लोके पुत्रसुखं नाम द्वितीयं सुखमात्मन इत्यादि । तदेवं पुत्रः पुरुषाणां परमाभ्युदयकारणं तस्मिन्समुत्पन्ने जाते तदुद्देशेन याः विडम्बनाः पुरुषाणां भवन्ति । अमुं दारकं गृहाण त्वमहन्तु कर्मासक्ता न मे ग्रहणावसरोऽस्ति । अथ चैनं जहाहि परित्यज नाहमस्य वार्तामपि पृच्छाम्येवं कुपिता सती ब्रूते मयाऽयं नव मासानुदरेणोढस्त्वं पुनरुत्सङ्गेनाप्युद्वहने स्तोकमपि कालमुद्विजस इति । दासदृष्टान्तस्त्वादेशदानेनैव साम्यं भजते नादेशनिष्पादनेनैव तथाहि दासो भयादुद्विग्नोऽपि विधत्ते स तु स्त्रीवशगोऽनुग्रहं मन्यमानो मुदितश्च तदादेशं विधत्ते " यदेव रोचते मह्यं, तदेव कुरुते प्रिया । इति वेत्ति न जानाति, तत्प्रियं यत्करोत्यसौ ॥ १ ॥ ददाति प्रार्थितः प्राणान् मातरं हन्ति तत्कृते ॥ किं न दद्यात्किं न कुर्यात्स्त्रीभिरभ्यर्थितो नरः ।२। स्नाति शौचं पानीयं, पादौ प्रक्षालयत्यपि । श्लेष्माणमपि गृह्णाति, स्त्रीणां वशगतो नरः ॥ ३ ॥ तदेवं पुत्रनिमित्तमन्यद्वा यत्किंचिन्निमित्तमुद्दिश्य दासमिवादिशन्ति । अथ तेऽपि पुत्रान्

समुद्रप्रसूतकुमारवदिति । एव शरीराशुचित्वे सति शिष्य· प्रश्नयति ।

किह ताव घरकुमरीरी, कइसहस्सेहिं अपरितं तेहिं ।
वन्निज्जइ असुइविलं, जघणंति सकज्जमूढेहिं ॥ ४ ॥

हे पुज्याः ! कथ तावद् गृहकुड्या' स्त्रीदेहस्येत्यर्थः अपरित. तैरश्रान्तैः परिश्रममगणद्भि· स्वकार्यमूढै· स्वस्वार्थमौढ्यगतैः कविसहस्रैः ( जघणंति ) स्त्रीकट्यग्रभाग प्रगरूपमित्यर्थ· वर्ण्यते वचनविस्तारेण विस्तार्यते । किंभूत जघनम् अशुचिविल परमापवित्रविवरम् उक्त च " चर्म्मखण्ड सदाभिन्नमपानोद्गारवासितम् । तत्र मूढा' क्षय यान्ति प्राणैरपि धनैरपि" ॥ ४ ॥ (तत्र प्राणै· शाक्यादय· क्षयङ्गता' धनैर्धम्मिल्लादय इति )

रागेण न जाणंति· वराया कलमलस्स निद्धमणं ।
ताणं परिणंदंती, फुल्लं नीलुप्पलवणं च ॥ ५ ॥

हेशिष्य ! तीव्रकामरागेण न जानन्ति हृदये, च शब्दादन्येषां न कथयन्ति वराकास्तपस्विन· कलमलस्यापवित्रमलस्य निर्द्धमनं खालु इति ( ताणति ) ण वाक्यालङ्कारे तज्जघनं (परिणदतीत्ति ) परमविपयासक्ता वर्णयन्ति कथ वक्तार स्वार्थे इव उत्प्रेक्षते फुल्ल प्रफुल्ल विकासितमित्यर्थः नीलोत्पलवनमिन्दीवरकाननम् ॥ ५ ॥

कित्तियमित्तं वन्ने, अमिज्जमइयंमि वच्चसंघारो ।
रागो हु न कायव्वो, विरागमूले सरीरम्मि ॥ ६ ॥

कियन्मात्र कियत्प्रमाण ( वन्नेत्ति ) वर्णयामि शरीरे वपुषि हु यस्मादेवं तस्माद्रागो न कर्त्तव्यः । स्थूलभद्रवज्रस्वामिजम्बूस्वाम्यादिवत् । किंभुते अमेध्य प्रचुरमस्मिन्निति अमेध्यमये गूथात्मके इत्यर्थ । वर्चस्कसघाते परमापवित्रविष्टासमूहे ( विरागमुलेत्ति ) विशिष्टो रागो विराग' मनोज्ञराग इत्यर्थ· । तस्य मूल कारण कामासक्तानामङ्गारवतीरूपदर्शने चण्डप्रद्योतस्येव । यद्वा विगतो रागो मन्मथभावो यस्मात्स विरागो वैराग्यमित्यर्थ· तस्य मूल कारणं काष्टश्रेष्टेरिव तस्मिन्विरागमूले ॥ ६ ॥

किमिकुलसयसंकिण्णे, असुइयमचुक्खे असासयमसारे ।
सेयमलपुचडम्मी, निव्वेयं वच्चहसरीरे ॥ ७ ॥

कृमिकुलशतसकीर्णे ( असुच्यमचुक्खत्ति ) अशुचिके अपवित्रमलव्याप्ते ( अचुक्खे ) अशुद्धे सर्वथा धौतुमशक्यत्वात् । अशास्वते क्षण २ प्रतिविनश्वरत्वात् । असारे सारवर्जिते ( सेयमलपुचडम्मित्ति ) दुर्गन्धिस्वेदमलचिगचिगायमाने एवविधे शरीरे जीवा यूय निर्वेदवैराग्य व्रजत गच्छत विक्रमयशोनृपस्येवेति ॥ ७ ॥

दंतमलकन्नगुहग, सिंहाणमले य लालमलबहुले ।
एयारिसवीभत्थे, दुगुच्छणिज्जम्मि कोरागो ॥ ८ ॥

दन्तमल-कर्णमल-गृथकसिंघाणमले चशब्दः शरीरगतानेकमलग्रहणसूचनार्थ । लालामलबहुले एतादृशवीभत्से जुगुप्सनीये सर्वथा निन्द्ये वपुषि को राग ॥

को सडणपडणविकिरण-विद्धंसणचयणमरणधम्मम्मि
देहम्मी अहिलास, कुहियकढणकट्टभूयम्मि ॥ ८ ॥

देहे शरीरे कोऽभिलापो वाञ्छा किंभूते शटनपतनविकिरण विध्वसनच्यवनमरणधर्मे । तत्र शटन कुष्ठादिनाङ्गुल्यादे पतन वाहादे· खड्गच्छेदादिना विकिरणत्वं विनश्वरत्व, विध्वसनं रोगज्वरादिना जर्जरीकरणम्, च्यवनं हस्तपादादेर्देशक्षय· मरणं सर्वथा क्षयः । पुनः किंभुते कुथितकठिनकाष्टभूते । वि नष्टकर्कशदारुतुल्ये ॥ ८ ॥

कागसुणगाणभक्खे, किमिकुलभत्ते य वाहिभत्ते य ।
देहम्मि मत्थभत्ते, सुसासभत्तम्मि को रागे ॥ १० ॥

देहे को रागः । किंभूते काकश्वानयोः घूकारीभषणयोर्भक्ष्ये खाद्ये कृमिकुलभक्ते च व्याधिभक्ते च मत्स्यभक्ते स्मशान भक्ते च ॥ १० ॥

असुई अमिज्झपुन्नं, कुणिमकलेवरकुमियपरिसवंति ।
आगंतुयसंठवियं, नवछिद्दमसासयं जाणे ॥ ११ ॥

अशुचि सदाऽविशुद्धममेध्यपूर्णं विष्टाभृतम् ( कुणिमकलेवर कुमीति ) मांसशरीरहड्डयोर्गृहम् ( परिसवतीत्ति ) परिस्रवत् सर्वतो गलत् आगन्तुकसस्यापितं मातापित्रो· शोणितशुक्रपुद्गलैर्निष्पादित नवच्छिद्र नवरन्ध्रोपेतम् । अशाश्वतमस्थिरम् । एवविध वपुस्त्व जानीहीति ॥ ११ ॥

पिच्छसि मुहं सतिलयं, सविसेसं राएण अहरेणं ॥
सकडक्खं सवियारं, तरलच्छि जुव्वणत्थीए ॥ १२ ॥

( जुव्वणत्थीपत्ति )यौवनस्त्रियास्तरुण्या मुख तुण्ड नरकतुण्ड साधुसयमनृपविपक्षण त्व पश्यसि नन्दिषेणशिष्याईन्नकस्थूलभद्रसतीर्थ्यकवत् किंभूत सतिलक सपुण्ड्रम् सविशेष कुङ्कमकज्जलादिविशेषसहित केन सह रागेण ताम्बूलादिरागवता अधरेणोष्ठेन सह सकटाक्षमर्द्धवीक्षणसहितम् सविकार भ्रूचेष्टासहित यथा तपस्विनामपि मन्मथविकारजनक तरले चपले काकगोलकवत् अक्षिणी यत्र तत्तरलाक्षि इति

पिच्छसि वाहिरमट्ठं, न पिच्छसी उज्जरं कलिमलस्स॥
मोहेण न चयंतो, सीसघडिक्कं जियं पियासि ॥ १३ ॥

एव त्व वाहिर्मृष्ट वाहिर्भागे मण्डितं पश्यसि सरागदृष्ट्या वि लोकयसि न पश्यसि अन्धवन्न विलोकयसि ( उज्जरति ) मध्यगत कुचेष्टां कुर्वन् ( सीसघडी कांजियपियसित्ति ) मस्त कघटीरसमपवित्र पिवसि पान करोपि चुम्बनादिप्रकारेणेति ॥ १३ ॥

सीसघडी निग्गालं, जं निट्ठहसी दुगुंच्छसी जं च ।
तं चेव रागरत्तो, मूढो अइमुच्छिउं पियसि ॥ १४ ॥

मस्तकोद्भवापवित्ररस यन्निष्ठि नयसि मूत्कुरुयसि जुगुप्ससे कुत्सां करोपीत्यर्थ । यच्च त्वं तदेवरागरक्तो विषयासक्तो मूढो महामोह गत अतिमूर्च्छित· तीव्रगृद्धि गत· पियसि ॥ १४ ॥

पूइयसीसकवालं, पूइयनासं च पूइदेहं च ।
पूइयछिद्दविछिद्दं पुइयचम्मेण यं पिणद्धं ॥ १५ ॥

पूतिकशीर्षकपाल दुर्गन्धिमस्तककर्प्पर पूतिकनासमपवित्रनासिक पूतिदेहं दुर्गन्धिगात्रं पूतिकछिद्रविच्छिद्रम् अपवित्रलघुविवरवृद्धविवर पूतिकचर्मणा अशुभाजिनेन पिनद्ध नियन्त्रितम् ॥ १५ ॥

अंजणगुणसुविसुद्धं, न्हाणुव्वट्टणगुणेहि सुकुमालं ।
पुप्फुमीसियकेसं, जणइ वालस्स तं रागं ॥ १६ ॥

अञ्जनगुणसुविशुद्धं तत्राञ्जन लोचनकज्जल गुणा नासागोफणकरालम्बिकादयस्तैः सुष्टु विशुद्धमन्यैर्दोषनायमानं

स्नानोद्वर्त्तनगुणैः सुकुमारम् । तत्र स्नानमनेकधा ज्ञातव्यं उद्वर्त्तनं पिष्टिकादिना मलोत्तारणं गुणा धूपनादिप्रकारा यद्वा स्नानोद्वर्त्तनाभ्यां गुणास्तैर्मृदुत्वं गतं पुष्पमिश्रितं केशमनेककुसुमवासितकुन्तलमेवंविधं तन्मुखं मस्तकं शरीरं वा बालस्य मन्मथकर्कशबाणविद्धत्वेन सदसद्विवेकविकलस्य जनयति उत्पादयति रागं मन्मथपारवश्यं येन गुर्वादिकमपि न गणयति नन्दिसेणापाढभूतिमुन्यादिवत् ॥ १६ ॥

जं सीसपूरओ त्ति य, पुप्फाइँ भणंति मंदविन्नाणा ।
पुप्फाइँ चिय ताइं, सीसस्स य पूरयं सुणह ॥ १७ ॥

मन्दविज्ञाना मन्मथग्रहग्रथिलीकृताः ( जति ) यानि पुष्पाणि कुसुमानि शीर्षपूरको मस्तकाभरणमिति भणन्ति कथयन्ति पुष्पाण्येव तानि शीर्षस्य पूरकं शृणुत यूयमिति ॥

मेओवसायरसिया, खेले सिंघाणए य बुभए यं ।
अह सीसपूरओ भे, नियगसरीरम्मि साहीणो ॥ १८ ॥

मेदोऽस्थिस्थम् वसावसा चशब्दोऽनेकशरीरान्तर्गतावयवग्रहणार्थः । रसिका प्रणाद्युत्पन्ना ( खेलेत्ति ) कण्ठमुखश्लेष्मा ( सिंघाणेत्ति ) नासिकाश्लेष्मा ( पयंति ) वर्चस्कमेतन्मेदादिकं ( बुभएय ) कपाल मस्तके प्रक्षेपयन । अथ शीर्षपूरको ( भे ) भवतां निजकशरीरे स्वाधीनः स्वायत्तो वर्त्तते । १८ ।

सा किर दुप्पडिपूरा, वच्चकुडी दुप्पया नवच्छिद्दा ।
उक्कडगंधविलित्ता, बालजणो अइमुच्छियं गिद्धो ॥ १९ ॥

सा वर्चस्ककुटी विष्ठाकुटीरिका ( किरत्ति ) निश्चये दुष्प्रतिपूरा पूरयितुमशक्येत्यर्थः । किंभूता द्विपदा नवच्छिद्रा उत्कटगन्धविलिप्ता तीव्रदुर्गन्धव्याप्ता एवंविधा शरीरकुटी वर्त्तते । तां च बालजनो मूर्खलोक अतिमूर्च्छितं यथा स्यात्तथा गृद्धो लम्पटत्वं गतः ॥ १९ ॥

अथ गृद्ध इत्याह—

जं पेमरागरत्तो, अवयासेऊण गूढमुत्तोलिं ।
दंतमलचिक्कणंगं, सीसघडिकंजियं पियसि ॥ २० ॥

यस्मात्प्रेमरागरक्तः कामरागग्रथिलीकृतो लोकः ( अवयासेऊणत्ति ) अवकाश्य प्रकाश्य प्रकटीकृत्येत्यर्थः ( गूढमुत्तोलित्ति ) अपवित्रं रामाङ्गं पुष्पितं वा जुगुप्सनीय दन्तानां मल पिच्छिलं दन्तमलं तेन सह चिक्कणाङ्गं चिगचिगायमानमङ्गं शरीरमालिङ्ग्य च शीर्षघटीकाञ्जिकं कपालकपोलस्थरसं चुम्बनादिप्रकारेण ( पियसीत्ति ) पिबसि अमृतवत् जुगुप्स्यं ॥ २० ॥

दंतमुसलेसु गहणं, गयाण मंसं य ससयमीयाणं ।
बालेसु य चमरीणं, चम्मनहे दीवियाणं च ॥ २१ ॥

गजानां दन्तमुसलेषु ( गहणंति ) ग्रहणमादानं लोकानां वर्तते । मांसे शशकाद्युपलक्षणाद् शशकमृगाणां ग्रहणं वर्तते । चमरीणां बालेषु ग्रहणं द्वीपिकानां चित्रकव्याघ्रादीनां चर्म्मनखे ग्रहणं, तथाप्यङ्गेष्वनेकेषामनेकावयवग्रहणं वर्तते । को भाव इह गजादीनां निरुक्तं दन्तादिकं सर्वेषां भोगाय भवति तथा मनुष्यकायो न भोगाय सर्वति यदाऽह च्यवनेनैतादृशं शरीरं विद्यते इति ॥ २१ ॥

पूइकाए य इहं, चवणमुहे निच्चकालवीसत्थो ॥
आइक्खसु सब्भावं, किम्हिसि गिद्धो तुमं मूढ ॥ २२ ॥

इह पूतिकाये अपवित्रपुति दुर्गन्धयुक्ते मरणमुखे नित्यकालविश्वस्तः सदा विश्वास गत ( आइक्खसुत्ति ) आख्याहि कथय सद्भावं हार्दं ( किम्हिसित्ति ) कस्मादसि गृद्धस्त्वं मूढो मूर्खः यद्वा हे मूर्ख यद्वा हे मूढ ब्रह्मदत्तदर्गमुखादिवत् । २२ ।

दंता वि अकज्जकरा, वाला वि विवड्ढमाणवीभत्था ।
चम्मं पि य वीभत्थं, भण किं तसितं गओ रागं ॥ २३ ॥

दन्ता अपि अकार्यकरा बाला अपि विवर्द्धमानाः सर्पवत् बीभत्सा भयकराः चर्म्मापि च वीभत्सं भण कथय किं ( तसित्ति ) तस्मिन् शरीरे ( तमित्ति ) त्वं रागं गतः ॥ २३ ॥

सिंभे पित्ते मुत्ते, गूहम्मि य वसाइ दंतकुंडीसु ।
भणसु किमत्थं तुज्झं, असुइम्मिवि वड्ढिओ रागो ॥ २४ ॥

( सिंभेत्ति ) कफे पित्तमायुषि मूत्रे प्रस्रवणे गूथे विष्ठायां ( वसाइत्ति ) वसाया ( दन्तकुंडीसुत्ति ) हडुभाजने यद्वा मकारोऽत्राक्षणिकः दन्तकुड्यां यद्वा ( दंतकुंडीसुत्ति ) दंष्ट्रासु भण कथय किमर्थं तवाशुच्यावपि वर्द्धितो रागः ॥ २४ ॥

जंघट्ठियासु ऊरू, पइट्ठिया तट्ठिया कडीपिट्ठी ।
कडियट्ठिवेढियाइं, अट्ठारसपिट्ठिअट्ठीणि ॥ २५ ॥

( जङ्घट्ठियासु ऊरुत्ति ) जङ्घास्थिकयोरूरू प्रतिष्ठितौ स्थापितौ यद्वा जङ्घास्थितयोरूरू भवतः ( पइट्ठियत्ति ) अत्राय पदसम्बन्धः तयोरूर्वो स्थिता तत्स्थिता कटिः श्रोणिर्भवति कट्यां प्रतिष्ठिता स्थापिता ( पिट्ठित्ति ) पृष्ठिर्भवति कट्यास्थिवेष्टितानि अष्टादश १८ पृष्ठचस्थीनि भवन्ति शरीर इति ॥ २५ ॥

दो अच्छि अट्ठियाइं, सोलस गीवट्ठियामुणेयव्वा ।
पिट्ठिपइट्ठियाओ, वारस किल पंसुली हुंति ॥ २६ ॥

द्वे अक्ष्यस्थिनी भवतः षोडश ग्रीवास्थीनि ज्ञातव्यानि पृष्ठिप्रतिष्ठिताः द्वादश किलेति प्रसिद्धे पंशुल्यो भवन्ति ॥ २६ ॥

अट्ठिय कढिणे सिरन्हारुबंधणे मंसचम्मलेवम्मि ।
विट्ठा कोट्ठागारे, को वच्चघरो व मे रागो ॥

अस्थिभिः ( कढिणे ) कठिने यद्वा कठिनानि अस्थिकानि यत्र तत्तथास्मिन् सिराश्रस्नायूनां लघ्वीतराणां बन्धनं यत्र तत्तया तस्मिन्, मांसचर्म्मलेपे विष्ठाकोष्ठाकारे वर्चस्कगृहोपमे कलेवरे रे जीव तव को रागः ॥ २७ ॥

जह नाम वच्चकूवो, निच्चं भिणिभिणिभणंतकायकली ।
किमिएहिँ सुलसुलायइ, सो एहिं य पूइयं वहइ ॥ २८ ॥

यथेति दृष्टान्तोपदर्शने नामेति कोमलामन्त्रणे संभावने वा ( वच्चकूवोत्ति ) वर्चस्ककूपो विष्ठाभृतकूपो भवति किंभूतः भिणिभिणिभणंतिशब्द ( भणंतत्ति ) भणन् भृशं कथयन् काककलिर्वायसंग्रामो यत्र स भिणिभिणिभिणिन्यभणत्काककलिः कृमिकैर्विष्ठालीढद्रुमि सुलसुलेत्येव शब्द करोतीति सुलसुलायते श्रोतोभिश्च स्वल्कैः पूतिकं परमदुर्गन्धं वहति स्रवति इत्यर्थः यथा विष्ठाकूपस्तथैतदपि शरीरं ज्ञातव्यं मृतावस्थायां रोगाद्यवस्थायां चेति । २८ ।

अथ शरीरस्य मृतावस्था दर्शयन्ति गाथात्रयेण ।

उद्धियनयणं खगमुह, विकड्ढियं विप्पइन्नबाहुलयं ।
अतविकड्ढियमालं, सीसघडी पागडीघोरं ॥

भिणि भिणि भणंत सद्दं, विसप्पियं सुलुसुलिंतमंसोलं ।
मिसि मिसि मिसंत किमियं, थिवि थिवि थिवि अंतवीभच्छं ॥

पागभिएणं पसुलियं, विगराल सुक्कसंधिसंघायं ।
पडियं निच्चेयणयं, सरीरमेयारिसं जाण ॥ ३१ ॥

उद्धृते निष्कासिते काकादिभिर्नयने लोचने यस्य शवस्य यस्मिन् यस्माद्वा तदुद्धृतनयन खगमुखैर्विहङ्गतुण्डैः ( विकट्टियत्ति ) विकर्तित विशेषेण कर्तित पाटित खगमुखविकर्तितम् विप्रकीर्णौ अवकीर्णौ विरलावित्यर्थः ( बाहुलयत्ति ) बाहू प्रविष्टौ यस्य शवस्य तत् प्रकीर्णबाहु (अतविकड्डियमालति ) विकर्षितान्त्रमालं शृगालादिभिरिति ( सीस घडियापगडियत्ति ) प्रगटया शीर्षघटिकया तुम्बलिकया घोरं रौद्रम् ॥ २९ ॥ ( भिणिभिणीति भणतत्ति ) धातूनामनेकार्थत्वादुत्पद्यमान' भिणिभिणीति शब्दो यत्र तत् भिणिभिणिभणच्छब्द मक्षिकादिभिर्गणगणायमानमित्यर्थः । अङ्गादिशिथिलत्वेन विस्तारं व्रजन् ( सुलुसुलतमसपोम्रति ) सुलुसुलायमानमांसपुटम् ( मिसिमिसिमिसतकिमियति ) मिसिमिसीति मिसन्त. शब्दं कुर्वन्तः कृमयो यत्र तन्मिसिमिसिमिसत्कृमिक ( थिविथिविथिविअतवीभच्छति ) थवथवायमानैरन्त्रैर्बीभत्स रौद्रमित्यर्थः ॥ ३० ॥ प्रकटिता' प्रकटत्व प्राप्ता. पांशुलिका यत्र तत्प्रकटितपांशुलिकं विकराल भयोत्पादकम् । शुष्काश्च ताः सन्धयश्च शुष्कसन्धयस्तासां सघात. समुदायो यत्र तच्छुष्कसघात पतित गर्तादौ निश्चेतनक चैतन्यवर्जित शरीर वपु' एतादृश पूर्वोक्तधर्मयुक्त त्व (जाणत्ति ) जानीहि ' जाणे ' इति पाठे तु निश्चेतनकं शरीरमहमीदृश जानामीति ॥ ३१ ॥

वच्चाओ असुइतरं, नवहिं सोएहिं परिगलंतेहिं ।
आममल्लगरूवे, निव्वेयं वच्चहसरीरे ॥ ३२ ॥

नवभि' श्रोतोभि परिगलद्भिः वर्चस्कादुत्थात् अशुचितरमपवित्रतमम् ( आममल्लगरूवेत्ति ) अपक्वशरावतुल्ये शरीरे निर्वेदं वैराग्य व्रजत-विष्णुश्रीशरीरे विक्रमयशोराजस्येव । ३२।

दो हत्था दो पाया, सीसं उच्चं पियं कबंधम्मि ।
कलमलकोट्ठागारं, परिवहसि दुयादुयं वच्चं ॥ ३३ ॥

द्विहस्ते द्विपादे ( सीस उच्चपियति ) शीर्षमुत्प्राबल्येन चम्पित यत्र तच्छीर्षोच्चम्पित तस्मिन् यद्वा शीर्षे उत्प्राबल्येन चम्पितमाक्रमित यत्तत्तथा तस्मिन् । प्राकृतत्वात् अनुस्वार शीर्षोच्चम्पिते कलमलकोष्ठागारे एवविधे कबन्धे ( दुयादुयति ) शीघ्र २ किं उच्चैस्क परिवहसि त्वामिति अत्र यथायोग विभक्तिविपरिणामो ज्ञेय इति ॥ ३३ ॥

तं च किर रूववंतं, वच्चंतरायमग्गमाइसुं ।
परगंधेहिं सुगंधयं, मन्नंतो अप्पणो गंधं ॥ ३४ ॥

चयुनस्तच्छरीर ( किरत्ति ) सभावनायां रूपवत् व्रजत् राजमार्गे ( आइसुति ) प्राप्त तत्र परगन्धै पाटलचम्पकादिभि सुगन्धक जात तत्र च त्वमात्मनो गन्ध ( मन्नतोत्ति ) जानन् हर्षयसीति ॥ ३४ ॥

परगन्ध दर्शयति–

पाडलचंपयमल्लिय–अगरुयचंदणतुरुक्कमीसं वा ।
गंधं समोयरंतो, मन्नंतो अप्पणो गंधं ॥ ३५ ॥

पाटलचम्पकमल्लिकागुरुकचन्दनतुरुष्कमिश्र वा अथवा मिश्र सयोगोत्पन्न यक्षकर्दमादिक गन्धकस्तूर्यादिक किंभूत ( समोयरंतोति ) सर्वतो विस्तरत् एवविध परगन्धमात्मगन्धमिति (मन्नतोत्ति ) जानन् हर्षयसीति ॥ ३५ ॥

मुहवाससुरहिगंधं, वायसुहं अगरुगंधियं अगं ।
केसा न्हाणसुगंधा, कयरो ते अप्पणो गंधो ॥ ३६ ॥

मुखवासैः सुन्दरचूर्णैं सुरभिगन्ध सुष्ठु गन्ध शुभवासैस्सुरभि गन्ध वातैः शीतलादिभि सुख शुभ वा यत्र तत् वातसुखम् अगरुगन्धो धूपनादिप्रकारेण जातोऽस्येति अगरुगन्धि तमेवविधमङ्ग गात्र वर्तते ( केसान्हाणसुगधत्ति ) ये च केशा कचा ते स्नानेन सवनेन सुगन्धा वर्तन्ते अथ कथय त्व कतर. कतम. ते तवात्मनो गन्ध इति ॥ ३६ ॥

अच्छिमलो कन्नमलो, खलो सिंघाणओ य पूओ य ।
असुई मुत्तपुरिसो, एसो ए अप्पणो गंधो ॥ ३७ ॥

अक्षिमलो दूषिकादिः कर्णमल' श्लेष्मा कण्ठमुखश्लेष्मा ( सिंघाणओत्ति ) नासिका श्लेष्मा चशब्दादन्योऽपि दन्तमलजिह्वामलगुह्यमलकक्षामलादिः किंभूत' ( पओयत्ति ) पूतिको दुर्गन्ध तथा अशुचि सर्वप्रकारैरशुभं मूत्रपुरीष प्रश्रावगूथमेषोऽनन्तरोक्तस्ते तवात्मनो गन्ध ॥ ३७ ॥

( ११ ) अथ वैराग्योत्पादनार्थं स्त्रीचरित्र दर्शयति यथा–

जाओ चिय इमाओ इत्थियाओ अणेगेहिं कइवर–सहस्सेहिं विविहपासपडिबद्धेहिं कामरागमोहेहिं वन्नियाओ ताओ वि एरिसाओ–तंजहा पगइविसमाओ १ पियवयणवल्लरीओ २ कइयवपेमगिरितडीओ ३ अवराहसहस्सघरणीओ ४ पभवो सोगस्स ५ विणासो बलस्स ६ सूणा पुरिसाणं ७ नासो लज्जाए ८ संकरो अविणयस्स ९ निलओ नियडीणं १० खणी वइरस्स ११ सरीरं सोगस्स १२ भेओ मज्जायाण १३ आसाओ रागस्स १४ निलओ दुच्चरियाणं १५ माइए संमोहो १६ खलणा नाणस्स १७ चलणं सीलस्स १८ विग्घो धम्मस्स १९ अरी साहूणं २० दूसणं आयारपत्ताणं २१ आरामो कम्मरयस्स २२ फलिहो मुक्खमग्गस्स २३ भवणं दरिद्दस्स २४ अवि याओ इमाओ आसीविसो विव कुवियाओ २५ मत्तगओ विव मयणपरवसाओ २६ वग्घी विव दुट्ठहिययाओ २७ तणच्छन्नकूवो विव अप्पगासहिययाओ २८ मायाकारओ विव उवयारसयबंधणपओत्ताओ २९ आयरियसविधं पिव बहुगिज्झसब्भावाओ ३० फुंफुया विव अंतोदहणसीलाओ ३१ नगयमग्गे विव अणवट्ठियचित्ताओ ३२ अंतो दुट्ठवणो विव कुहियहिययाओ ३३ किण्हसप्पो विव अविस्ससणिज्जाओ ३४ संघारो विव छन्नमायाओ ३५ संज्झब्भरागो विव मुहुत्तरागाओ ३६ समुद्दवीची विव चलस्सभावाओ ३७ मच्छो विव दुप्परियत्तणसीलाओ ३८ वानरो विव चलचित्ताओ ३९ मच्चु विव निव्विसेसाओ ४० कालो विव निरणुकंपाओ ४१ वरुणो विव पासहत्थाओ ४२ सलिलमिव निम्नगामिणीओ ४३ किवणो विव उत्ताणहत्थाओ ४४ नरओ विव

इत्ताणणिज्जाओ ४५ खरो विव दुस्सीलाओ ४६ दुट्ठो भो विव दुद्दमाओ ४७ बालो व्व मुहुत्तहियायाओ ४८ अंधयारमिव दुप्पवेसाओ ४९ विसवल्ली अणल्लीय णिज्जाओ ५० दुट्ठगहा इव वावी अणवगाहाओ ५१ ठाणभट्ठो विव इस्सरो अप्पसंसणिज्जाओ ५२ किंपागफलमिव मुहमहुराओ ५३ रित्तमुट्ठी विव बालोभणिज्जाओ ५४ मंसपेसीगहणमिव सोवद्दवाओ ५५ जलियचुमरी विव अमुच्चमाणडहणसीलाओ ५६ अरिट्ठमिव दुल्लंघणिज्जाओ ५७ कूडकरिसावणो विव कालविसंवायणसीलाओ ५८ चंडसीलो विव दुक्खरक्खियाओ ५९ अइविसाओ ६० दुगंछियाओ ६१ दुरुवचाराओ ६२ अगंभीराओ ६३ अविस्ससणिज्जाओ ६४ अणवत्थियाओ ६५ दुक्खरक्खियाओ ६६ दुक्खपालियाओ ६७ अरइकराओ ६८ कक्कसाओ ६९ दढवेराओ ७० रूवसोहग्गमउम्मत्ताओ ७१ भुयगगइकुडिलहियायाओ ७२ कंतारगइट्ठाणभूयाओ ७३ कुलसयणमित्तभेयण कारियाओ ७४ परदोसपगासियाओ ७५ कयग्घाओ ७६ बलसोहियाओ ७७ एगंतहरणकोलाओ ७८ चंचलाओ ७९ जाइक्कभंडोवरागो विवमुहरागविरागाओ ८० अवि याइं ताओ अंतरंगभंगसयं ८१ अरज्जुओ पासो ८२ अदारुया अडवी ८३ अणालयस्स निलओ ८४ अइक्खवेयरणी ८५ अणामियावाही ८६ अवि ओगो विप्पलावो ८७ अरु उवसग्गो ८८ रइवंतो ८९ चित्तविब्भमो ९० सव्वंगओ दाहो ९१ अणब्भपावज्जासणी ९२ असलिलप्पवाहो ९३ समुद्दरओ ९४ ॥

( जाओ च्चिय इमाओ ) इत आरभ्य [ समुद्दरओ ] इति पर्यन्तं गद्य या एव इमा वक्ष्यमाणा स्त्रिय अनेक कविवरसन्दै विविधपाशप्रतिबद्धे कामरागमोहसन्मयरागमूढे ( वण्णियाओत्ति ) वर्णिता शृङ्गारादिवर्णनप्रकारेणेति ( ताओ चित्ति ) ता अपि इदशा वक्ष्यमाणस्वरूपा ज्ञातव्या तद्यथा ( पगइविसमाओत्ति ) प्रकृत्या स्वभावेन विषमा वक्रभावयुक्ता आवश्यकोक्तपतिमारिकावत् १ ( पिय० ) प्रियवचनवल्लर्यो मिष्टवाणीसमुपेतास्तासामुक्तेन जिनपालजिनरक्षितोपसर्गकारिणीरत्नद्वीपदेवीवत् २ ( कइय० ) कैतवप्रेमगिरिनद्य कुशिष्यकूलवालककृतेनिरा मागधिकागणिकावत् ३ ( अवरा० ) अपराधसहस्रगृहरूपा धनवन्तमातुलुङ्गीवत् ४ ( पभवो० ) अयस्त्रीरूपो मन्नुस्यनामप्रभव उत्पत्तिस्थानं कस्य शोकस्य सीतागतरामस्येव ५ ( विणा० ) विनाशो यस्य पुरुषवंशस्य भ्रातृवत्तु-[illegible] । उक्तञ्च । "दर्शने हरते चित्तं, स्पर्शने हरते बलम् । सङ्गमे हरते वीर्यं, नारी प्रत्यक्षराक्षसी" ॥ इति यद्वा विनाशः कस्य वंशस्य [illegible] कोणिकस्त्रीपद्मावतीवत् ६ ( मूला० ) पुरुषाणां मूलं स्थानं शरिकनागश्रीवत् ७ नाशो [illegible] [illegible] प्रार्थनस्थानिकामूर्च्छ-[illegible] । यद्वा [illegible] अस्याः सङ्गे पुरुषस्य [illegible] [illegible] । यद्वा नाशः कस्य लज्जाया पतिलज्जाया संवस्याऽऽषाढभूतियतिचारित्रलुण्टिकानटपुत्रीवत् ८ ( सक० ) सकरकृतकरूटकलकरूत इति जनोक्तिः कस्य अविनयस्य श्वेताङ्गुल्यादिपुरुषाणां भार्यावत् ९ ( निल० ) निलयो गृहं कासां प्रकृत्यान्तरदम्भानामित्यर्थः चण्डप्रद्योतप्रेषिता अभयकुमारवञ्चिकावेश्यावत् १० ( खणीति ) खानिराकरः कस्य वैरस्य जमदग्नितापसस्त्रीरेणुकावत् ११ शरीर शोकस्य वीरककाद्भिवकस्त्रीवनमालावत् १२ भेदो नाशः मर्य्यादायाः कुलरूपायाः श्रीपतिश्रेष्ठिपुत्रीवत् यथा मर्यादाया संयमलक्षणाया विनाशः आर्द्रकुमारसंयमस्यार्द्रकुमारपूर्वभवपत्नीवत् १३ ( आसाओत्ति ) आशा वाञ्छा रागस्य कामरागस्य तद्धेतुकत्वात् । यद्वा आश्रयः स्थान रागस्य उपलक्षणत्वाद् द्वेषस्यापि आर्षत्वादाकारः । यद्वा आ ईषदपि अदति न स्वाद आ अस्वादः कस्य [ रागस्सत्ति ] धर्म्मरागस्य १४ ( निल० ) निलयो गेहं केषां दुश्चरित्राणां भृगुगमचौरभगिनीवीरमतीवत् १५ ( माइ० ) मातृकायाः समूहः कमलश्रेष्ठिसुतापद्मिनीवत् १६ ( खल० ) स्खलना खण्डना ज्ञानस्य श्रुतज्ञानादेः उपलक्षणाच्चारित्रादेः रथनेमिकुरण्डमुनिप्रभृतिकादिवहुप्रसङ्गे तदभावत्वात् । अर्हन्नकक्षुल्लकवत् १७ ( चल० ) चलन शीलस्य ब्रह्मव्रतस्य ब्रह्मचारिणां तस्याः सङ्गे तत्र तिष्ठतीति भाव १८ ( विग्घो० ) विघ्नमन्तरायं धर्मस्य श्रुतचारित्रादेः १९ ( अरी० ) अरिर्निर्दयो रिपु केषां साधूनां मोक्षपथसाधकानां चारित्रप्राणविनाशकहेतुत्वात् महानरककारागृहप्रक्षेपकत्वाच्चकूलवालुकस्य मागधिकावेश्यावत् २० [ दूस० ] दूषणं कलङ्क केषां ( आया० ) ब्रह्मव्रताद्याचारपञ्चानाम् २१ आराम कृत्रिमवनं कस्य कर्मरजसः कर्मपरागस्य । यद्वा कर्म च निबिडमोहनीयादि, रजश्च काम , चश्च चौर , रच तस्यारामं वाटिका २२ ( फलिहं।त्ति० ) अर्गला यद्वा कम्पक मोक्षमार्गस्य शिवपथस्य २३ भवन गृहं दरिद्रस्य २४ ( अवियाइम्माउत्ति ) अपि च या इमा वक्ष्यमाणा स्त्रिय एवंविधा भवन्ति ( आसिवि० ) विव शब्द इवार्थे आशीविषवत् दंष्ट्राविषभुजगमवत् कुपिता कोपङ्गता भवन्ति २५ ( मत्त ) मतगज उन्मत्तमतगज इव मदनपरवशा मन्मथविह्वला भवन्ति अभयागाढीवत् २६ ( वग्घी० ) व्याघ्रीवत् दुष्टहृदयाः दुष्टचित्ता पालगो मात्रपरमातृमहालक्ष्मीवत् २७ ( तण० ) तृणच्छन्नकूप इव तृणसमूहाच्छादितान्धवत् अप्रकाशहृदया शतकश्रावकभार्यारेवतीवत् २८ ( माया० ) मायाकारक इव परवञ्चकमृगाधिवन्धक इव उपचारशतबन्धनशतप्रयुक्ता प्रयोक्त्र्यो वा तत्रोपचारशतानि उपचारिकवचनचेष्टादिशतानि बन्धनानि रज्जुखेदानि बन्धनशतानि च तेषां ( पओत्ताओत्ति ) प्रयोगकर्त्र्य २९ ( आयरि० ) अत्रापि च इवार्थे आचार्यसाविधमिवानुयोगकृतसर्गपमिव बहुभिरनेकप्रकारैरनेकपुरुषैर्वा ग्राह्यो ग्रहीतुं शक्यः । यद्वा आर्यत्वात् ( अगिज्झत्ति ) अग्राह्य सर्वेषामग्रहीतुमशक्य सद्भाव आन्तरचित्ताभिप्रायो यासां ता बहुग्राह्यसद्भावा । बहुग्राह्यसद्भावा वा ३० ( फुफु० ) फुफुक करीषाग्नि श्रोत्रस्कस्तद्वत् अन्तर्दहनशीला पुरुषाणामन्तर्दुर्माननिवाहलत्वात् । उक्तञ्च– " पुत्रश्च मूर्खो विधवा च कन्या, शठश्च मित्र चपलं कलत्रम् । विलासकालेपि दरिद्रता च विनाग्निना पञ्च दहन्ति देहम्" ३१ ( नगग० ) विषमपर्वतमार्गवत् अनवस्थितचित्ता नैकवस्थापितान्त करणा इत्यर्थ अनङ्गसेनसुवर्णकारस्त्रीवत् यद्वा नमकमार्गवत् जिनकल्पिकरूपवत् । नैकप्रविचिता यद्वा नगरमार्गवत् नूतनबणिताचाग्यवत्

नैकत्र स्थानचित्ताः ३२ (अंतोदु०) अन्तर्दुष्टव्रणवत् कुथितहृदया-
तिलकष्टोन्मत्तरामावत् ३३ ( किण्ह० ) कृष्णसर्पवत् (अवि०)
विश्वासकर्तुमयोग्या इत्यर्थः ३४ ( सघा० ) संहारवत् बहुजन्तु-
क्षयवच्छलमायाः प्रच्छन्नमातृकाः ३५ ( सज्झ० ) सन्ध्याभ्रराग-
वत् मुहूर्तरागाः । तथाविधदुष्टवेश्यावत्-३६ ( समुद्द० ) समु-
द्रवीचिवत्सागरतरङ्गवच्चलस्वभावाः चञ्चलस्वाभिप्रायाः ३७
( मच्छो० ) मत्स्यवद् दुष्परिवर्तनशीलाः महता कष्टेन परिव-
र्तन पश्चाद्वालयितुं शील स्वभावो यासां तास्तथा ३८
(वानर०) वानरवत् चलचित्ताः चपलाभिप्रायाः ३९(मच्चु विव)
मृत्युवत् मरणवत् निर्विशेषाः विशेषवर्जिताः ४०(कालोत्ति०)
दुर्भिक्षकाल एकान्तदुःषमाकालो वा यद्वा लोकोक्तो दुष्टसर्प-
स्तद्वत् निरनुकम्पा दयांशवर्जिता कीर्तिधरराजभार्या-
सुकोसलजननीवत् । ४१ ( वरु० ) वरुणवत् पाशहस्ताः
पुरुषाणामालिङ्गनादिभिः कामपाशबन्धनहेतुहस्तत्वात् ४२
( सलि० ) सलिलमिव जलमिव प्रायो नीचगामिन्यः
स्वकान्तनृपनदीप्रक्षेपिका अधमपङ्गुकामिका राज्ञीवत् ४३
[ किव० ] कृपणवत् उत्तानहस्ताः सर्वेभ्यो मातृपितृबन्धु-
कुटुम्बादिभ्यो विवाहादावादानहेतुत्वात् ४४ ( नरओ० )
नरकवत् त्रासनीया दुष्टकर्मकारित्वात् महाभयङ्कराः ब्रह्म-
णासाध्वीजीववेश्यादासीघातिका कुलपुत्रभार्यावत् ४५
[ खरो० ] खरवत् विष्ठाजकुकर्दभवत् दुःशीलाः दुष्टाचाराः
निर्लज्जत्वेन यत्र तत्र ग्रामनगरारण्यमार्गक्षेत्रग्रहोपाश्रयचैत्यगृ-
हगर्तवाटिकादौ पुरुषाणां वाञ्छाकारित्वात् । तथाविधवेश्या
दुष्टदासीरण्डिकामुण्डिकादीनामिव ४६ [ दुट्ठस्सो० ] दुष्टा-
श्ववत् कुलक्षणघोटकवत् दुर्दमाः सर्वप्रकारैर्निर्लज्जीकृता अपि
पुन पुरुषसयोगे स्वकामाभिप्रायकर्षणहेतुत्वात् ४७ [ बालो ]
बालवत् शिशुवत् मुहूर्तहृदयाः मुहूर्तानन्तर प्रायोऽन्यत्र रागधा
रकवत् कपिलब्राह्मणासक्तदासीवत् ४८ [ अंधकार० ] कृष्ण-
भूतेष्वादिभवमन्धकारमरुणवर्गसमुद्भवतमस्कायं वा त-
द्वत् दुष्प्रवेशा मायामहान्धकारगहन येन देवानामपि दुष्प्रवे
शत्वात् ४९ [ विस० ] विषवल्लीवत् हालाहलविषलतावत्
[ अणा० ] अनाश्रयणीयाः सर्वथा सङ्गादिकर्तुमयोग्यास्ता-
त्कालप्राणप्रयाणहेतुत्वात् पर्वतकराजस्य नन्दपुत्रीविषकन्या-
वत् ५० [ दुट्ठगाहा इव० ] दुष्टग्राहा निर्दयमहामकरादि-
जलजन्तुसेवितावापीवत् । अनवगाह्या महता कष्टेनापि अप्रवे-
शयोग्या सुदर्शनश्रेष्ठिवत् ५१ [ ठाणभ० ] स्थानभ्रष्टः ईश्वरो
ग्रामनगरादिनायकस्तद्वत् । यद्वा स्थान चारित्रगुरुकुल-
वासादिक तस्माद्भ्रष्ट ईश्वरश्चारित्रनायक साधुरित्यर्थ-
स्तद्वत् । यद्वा स्थान सिद्धान्तव्याख्यानरूपं तस्माद्भ्रष्ट
उत्सूत्रप्ररूपणेन ईश्वरो गणनायक आचार्य इत्यर्थः तद्व
त् । यद्वा स्थानभ्रष्टो दुष्टाचारे रक्त इत्यर्थ ईश्वर सत्यकीविद्या
धरस्तद्वत् अप्रशसनीयाः साधुजनैः प्रशसाकर्तुं योग्या नेत्यर्थः
५२ ( किंपाग० ) किंपाकफलमिव मुखे आदौ मधुरा महा
कामरसोत्पादिका पर पश्चाद्विपाकदारुणा ब्रह्मदत्तचक्रिव-
त् ५३ ( रित्तमु० ) रिक्तमुष्टिवत् पोल्लमुष्टिकवत् बाललो-
भनीया अव्यक्तजनलोभनयोग्या वल्कलचीरीतापसवत् ५४
[ मस० ] मांसपेसीग्रहणमिव सोपद्रवा यथा केनापि सामा
न्यपक्षिणा कुतश्चित् स्थानान्मांसपेशीप्राप्तौ तस्य अन्यदुष्ट
पक्षिकृतनानेकशरीरपीडाकारिण उपद्रवा भवन्ति तथा रामा-
ग्रहणेऽनेके इह भवे परभवे दारुणा उपद्रवा जायन्ते । यद्वा
यथा मत्स्यानां मांसपेशीग्रहण सोपद्रव तथा नगणामपीति

५५ [ जलि० ] अमुञ्चन्ति अत्यजमानाः [ जलियचुडुलीवि-
व त्ति ] प्रदीप्ततृणपूलिकेव दहनशीलाः ज्वालनस्वभावाः ५६
[ अरि० ] अरिष्टमिव दुर्लङ्घनीयाः ५७ [ कूड० ] कूटकार्षाप
ण इवासत्यनाणकविशेष इव कालविसंवादनशीला काल
धिलतस्वभावा अकालचारिण्य इत्यर्थः ५८ [ चंड० ] चण्ड
शील इव तीव्रकोपीव दुःखरक्षिता ५९ [ अतिविसाओत्ति० ]
अतिविषादा दारुणविषादहेतुत्वात् यद्वा [ अतीति ] अति
क्रान्तो गतोऽकार्यकरणे विषादः खेदो यासां तास्तथा यद्वा
अतीति विष अतिविषम् आ समन्तात् ददति पुरुषाणां सूरि
कान्तावत् यास्ता अतिविषादाः यद्वा अतीति भृश दीति ना-
नाविधः स्वादो विषयग्रामस्पर्शो यासां ता अतिविषादाः अथ
वा अतिविषयात् प्रबलपञ्चेन्द्रियलाम्पट्यात् षष्ठीं नरकभूमिं
यावत् सुसढमातृवत् गच्छन्ति यास्ता अतिविषयगाः प्राकृत-
त्वात् यकारलोपे सन्धिः । यद्वा स्वेन्द्रियविषयाप्राप्तौ अति
विषादा इति । यद्वा अतिवृष तीव्र पुण्य येषान्ते अतिवृषाः
मुनयस्तेषामासमन्तात् वसत्यन्तो वहिश्च कायन्ति यमयन्ति
यम इवाचरन्ति चारित्रप्राणकर्षणत्वेन यास्ताः अति वृषाकाः
यद्वा कायन्ति अग्नयन्ति समितिगृहज्वालनत्वेन यास्ताः अ
तिवृषाकाः यद्वा लोकानामतिवृषे तीव्रपुण्यधने आभृश चायन्ति
चोरयन्ति यास्ताः अतिवृषाचाः ६० ( दुगुंछि ) जुगुप्सिकाः जुगु
प्सां कर्तुं योग्या मुनीनाम् ६१ ( दुरु० ) दुरुपचाराः दुष्टोप-
चारान्वितो वचनादिविस्तारो यासां तास्तथा ६२ अगम्भीरा
गम्भीरगुणरहिता ६३ (अवि०) अविश्वसनीया विश्रम्भं कर्तु-
मयोग्या ६४ (अण०) अनवस्थिता नैकस्मिन् पुरुषे तिष्ठन्ती-
त्यर्थः ६५ (दुक्ख०) दुःखरक्षिता कष्टेन रक्षणयोग्या यौवनाव-
स्थायाम् ६६(दुक्खपा०) दुःखपालिता दुःखेन पालयितुं शक्या
बालावस्थायाम् ६७(अरइ०)अरतिकराः उद्वेगजनिका ६८(क
क्क०) कर्कशा इह परत्र कर्कशदुःखोत्पादकत्वात् ६९ दढवैरा इह
परत्रदारुणवैरकारणत्वात् ७०[रूव०]रूपसौभाग्यमदमत्ता तत्र
रूप चार्वाकृति सौभाग्य स्वकीर्तिश्रवणादिरूप मदोन्मत्तजगर्व
७१[भुय०] भुजगगतिवत् कुटिलहृदयाः ७२ [कंता०] कान्तार
गतिस्थानभूता कान्तारे दुष्टश्वापदाकुले महारण्ये गतिश्चैका-
कित्वेन गमन स्थान चैकाकित्वेन वसन तयोर्भूतास्तुल्याः दारु
णमहाभयोत्पादकत्वात् ७३ (कुलस०) कुलस्वजनमित्रभेदन-
कारिका वशाज्ञातिसुहृच्छिनाशजनिकाः ७४ [ पर० ] परदोष-
प्रकाशिका अन्यदोषप्रकटकारिका ७५ (कय० ) कृत घ्ना-
भरणपात्रादिप्रदत्त घ्नन्ति सर्वथा नाशयन्तीत्येव शीलाः कृतघ्ना
७६ [ बलसो० ] बलं पुरुषवीर्यं प्रतिसङ्गमसङ्ग वा शोधयन्ति
गालयन्तीत्येव शीला बलशोधिका । यद्वा बलेन स्वसामर्थ्य-
लक्षणेन च निशादौ जारपुरुषादीनां शोधिकास्तच्छूरिका-
रिका बलशोधिका । यद्वा बलयोरलयोरैक्यात्वरशोधिका स्वे
च्छया पाणिग्रहणकरणत्वात् धम्मिलस्त्रीवृन्दवत् ७७ (एग०)
एकान्ते विजने हरण नेतव्य पुरुषाणां विषयार्थमेकान्त-
हरणम् यद्वा एकान्ते दूरग्रामनगरदेशादौ स्वकुटुम्बादिजनर-
हिते हरण तत्र पुरुषाणा विषयार्थे ज्ञात्वा गमनमित्यर्थ तत्र
कौलाः वनसूकरतुल्याः यथा सूकरः किमपि सार कन्दा-
दिक भक्ष्य प्राप्य विजने गत्वा भक्षयति तथेमा ७८ [चच०]
चञ्चलाश्च पुत्रा ७९ [ जोइभंमो० ] ज्योतिर्भाण्डोपरागवत्
अग्निभाजनसमीपरागवत् [ मुहरा० ] मुखरागविरागा
यथाग्निभाजनसमीपे मुख रागवद्भवति अन्ते विराग तथेमा ।
यद्वा ( जोइजंमोपरागाओत्ति ) पाठे तु ज्योतिर्भाण्डस्येवो-

पि विगतार्यकार्ये प्रवर्तयन्तीति ( १ ) रु इति रोदनकरणेन पुरुषं संश्लेषं कुर्वन्ति (२) गे इति स्वपितुर्गृहगमनादिप्रस्तावे गुरुरमत्यन्तरागवन्तं कुर्वन्तीति ( ३ ) द इति दर्शनेन रक्तकृष्णादिदन्तदर्शनेन कामिनो मोहयन्तीति ( ४ ) रि इति सप्रापणे रे मां मुञ्च रे मां मा कदर्थयेत्यादिकथनेन कुरामा पुरुषं सकामं कुर्वन्तीति आर्षत्वात् रि इति । यद्वा अरि इति रतिकलहे अरे मया सह मा कुरु उपहासमित्यादि रतिकलहकरणेन पुरुषं क्रीडयन्तीति आर्षत्वात् अरि इति ( ५ ) स इति अन्योऽन्यशृङ्गारगीतादिकशब्दकरणेन साधूनपि सकामान्कुर्वन्तीति ( ६ ) ण इति सकज्जलकविकारसजलाभ्यां नेत्राभ्यां पुरुषं सकामं स्ववशगं च स्वकार्यकर्तारमपराधभोक्तारं कुर्वन्तीति ( ७ ) गुरुगदरिशनैरिति । ( भूमिलिहण विलिहणेहिं चेति ) भूमिलिखनानि भूमौ पदादिनाऽङ्कुरलेखनानि विलिखनानि विशेषतो रेखास्वस्तिकादिकरणानि तैः स्वगुह्यं पुरुषान् ज्ञापयन्तीति भूमिलिखनविलिखनैरिति चकारोऽत्र समुच्चयार्थः ( आरुहणनट्टणेहिं चेत्ति ) आरोहणानि वशाग्रादिचटनानि नर्तनानि भूमौ नृत्यकरणानि तैरारोहणनर्तनैः पुरुषादिकमाश्चर्यवन्तं कुर्वन्तीति ( बालय उवगूहणेहिं चेति ) बालका मूर्खाः कामिन इत्यर्थः तेषामुपगूहनानि प्रच्छन्नरक्षणादीनि तैर्बालकोपगूहनैः कुरवः स्वकामेच्छां पूरयन्तीति । यद्वा बालकाः केशकलापास्तैरुपगूहनानि रचनाः स्वच्छवस्त्राच्छादितादीनि तैर्मन्मथग्रस्तानधमाधमान् स्ववशं कृत्वा बलीवर्दवत् वाहयन्तीति । च शब्दात्कपिवन्नमयन्ति अश्ववारयन्ति श्रेणिकभार्याधनश्रीराज्ञीवत् । स्वार्थप्राप्तौ प्राणत्यागमपि कुर्वन्तीति (अंगुलि०) अङ्गुलीस्फोटनानि क्रीडिकाकरणानि । यद्वा अङ्गुलीनां परस्परं ताडनानि । स्तनपीडनानि कराभ्यां पयोधरचापनानि हस्ताभ्यां कुचमर्दनानि वा कटितटयातनानि श्रोणिभागपीडनानि कराभ्यां वक्रगत्या वा तैः कामिनां चित्तान्यान्दोलयन्तीति ( तज्जणाहिं चेति) तर्जनानि अङ्गुलिमस्तकतृणादिचालनानि तैर्मन्मथपीडामुत्पादयन्ति कामिना च शब्दाद् उज्ज्वलनेपथ्यकरणैराभरणशब्दोत्पादनैः सविलासगत्या चतुष्पथादौ प्रवर्तनैरित्याद्यनेकप्रकारैर्नरान् वृषभतुल्यान् कुर्वन्त्यतः सयमार्थिभिः साधुभिरासां सङ्गस्त्याज्य इति । तथा ( अवियाइत्ति ) पूर्ववत् "ताओ पासोववसिज्जे" इति प्राकृतत्वाल्लिङ्गव्यत्ययः । या कुरुराद्यः स्त्रिय सन्ति जगति [ ताओत्ति ] ता पुरुषान् पाशवत् नागपाशवागुरादिबन्धनवत् वसितु धातूनामनेकार्थत्वात् बन्धितुं वर्तन्ते इह परभवे नराणां बन्धनकारणत्वात् [ पकुम्बसुपिअजेत्ति ] ताओत्ति अग्रेपि अनुवर्तते या कुटिलादयः सन्ति ताः नराणां पङ्कवत् । अगाधा इव बहुलसमुद्रान्तिकर्दमवत् क्षपितुं वर्तन्ते [ मच्चुव्वमरिउजेत्ति ] या स्वैरिण्यादयः सन्ति ताः नराणां मृत्युवत् कृतान्तवत् मारयितुं मारणार्थमित्यर्थः प्रवर्तन्ते । [ अगणिव्वडिउजेत्ति ] या जगति गणिकादयः सन्ति ताः कामिनामग्निवद्दग्धं ज्वालयितुं परिभ्रमन्ति [ असिव्व छिन्निजिउजेत्ति ] या मृगाक्षवामाक्षतरुणी परिव्राजिकादयः सन्ति ताः कौटिल्यकरणेन साधूनपि असिवत्खड्गवच्छेत्तुं द्विधाकर्तुमुत्सहन्ते ।

अथ स्त्रीवर्णनं पद्येन वर्णयति यथा—

असिमासिमारित्थीणं, कंतारकवाडचारयसमाण ।
घोरनिउरंबकंदर, चलंतबीभत्थभावाणं ॥ १ ॥

नारीणां सर्वथा विश्वासो न विधेयः । किंभूतानाम् असिमसीसहशीनां करवालकज्जलतुल्यानाम् । अयमाशयः यथा खड्गः पाणिनेतराशयाभिर्दियतया छेदयति तथा अनार्या नार्योऽपि नरानिह परत्र दारुणदुःखोत्पादनेन छेदयन्ति । यथा च कज्जलं स्वभावेन कृष्णमस्य श्वेतपत्रादिसंगमे साति तस्य कृष्णत्वं जनयति,तथोन्मत्तनारी स्वभावेन कृष्णा दुःप्रान्तकरणत्वात्तत्सङ्गमे उत्तमकुलोत्पन्नानामुत्तमानामपि कृष्णत्वमुत्पादयन्ति यशोधनक्षयराजविडम्बनादिहेतुत्वात् । पुनः किंभूतानां कान्तारकपाटचारकसमानाम् अरण्यकपाटकारागृहतुल्यानाम् । अयमाशयः । यथा गहनं वनं व्याघ्राद्याकुलं जीवानां भयोत्पादकं भवति तथा नराणां नार्योपि भयं जनयन्ति धनजीवितादिविनाशहेतुत्वेनेति यथा प्रतोल्यां कपाटे दत्ते केनापि गन्तुं न शक्यते तथा नरे नारीकपाटहृदये दत्ते साति केनापि कुत्रापि धर्मवनादौ गन्तुं न शक्यते । यथा च जीवानां कारागृहं दुःखोत्पादकं भवति तथा नराणां नार्योपीति । पुनः किंभूतानां ( घोरनि० ) घोरा रौद्रा प्राणनाशहेतुत्वात् । निकुरम्बं घनमगाधमित्यर्थः यत्कमिति जलं तस्य दरो भगं यस्मात्प्रावात्साद्रि तपुराधिपदेवरतिराजस्येव स निकुरम्बकन्दर । कमिति अत्र यशब्द उदकवाचकः । चलन् पुरुषं प्रति भ्रमन् बीभत्सो भयङ्करः इह परत्र महाभयोत्पादकत्वादेवविधो भाव आन्तरमायावक्रस्वभावो यासां ता घोरनिकुरम्बकन्दरचलद्बीभत्सभावास्तासां घोरभावानाम् ॥ १ ॥

दोसमयगग्गरीणं, अजसमयविसप्पमाणहियियाणं ।
कइयवपन्नत्तीणं, ताणं अन्नायसीलाणं ॥ २ ॥

दोषशतगर्गरिकाणां दोषाः परस्परकलहमत्सरगालिप्रदानमर्मोद्घाटनकलङ्कप्रदानजल्पनशापप्रदानस्वपरप्राणघातचिन्तनादयस्तेषां शतानि तेषाम् । गर्गरीका भाजनविशेषास्तासां दोषशतगर्गरिकाणाम् [ अजस० ] न यश इनानि अयश शतानि तेषु विसर्पद्विस्तारं गच्छद्धृदयं मानसं यासां ता अयशःशतविसर्पद्धृदयास्तासाम् । तथा [ कइयवत्ति [ कैतवानि कपटानि नेपथ्यभाषामार्गगृहपरावर्त्तादीनि [ पन्नत्तीत्ति ] प्रज्ञाप्यन्ते याभिस्ता कैतवप्रज्ञप्तयः यद्वा कैतवानां दम्भानां प्रकृष्टा ज्ञप्तयो ज्ञानानि कमलश्रेष्ठिसुतापाङ्गिनीवद्यासां ता कैतवप्रज्ञप्तयः । यद्वा केतवेषु प्रज्ञाया बुद्धेराप्तिरादानं यासां तास्तासां कैतवप्रज्ञप्तीनाम् । तथा [ ताणति ] तासां नारीणां अज्ञातशीलानां पण्डितैरप्यऽज्ञानस्वभावानाम् । यदुक्तं- " देवाणदाणवाण, मत निमंतनिउणा जे । इत्थी चरियम्मि पुणो, ताण वि मता कह नट्ठा १ जालधरेहिं भ्रमिहरेहिं विविहेहिं अगरखेहिं । निवरक्खियाचि लोए, रमणी यमभगगाय २ मन्तपय जलमज्झे आगासे पक्खियाण पयपत्ती । महिलाण हियमग्गो, तिन्नि वि लोए न दीसंति ३" इति यथा न ज्ञातं नाङ्गीकृतं शीलं ब्रह्मस्वरूपं याभिस्ता अज्ञातशीलास्तासाम् । यद्वा नञ् कुत्सार्थत्वात्कुत्सितं ज्ञातं शीलं साध्वीनां याभिः परिव्राजिकायोगिन्यादिभिस्ता अज्ञातशीलास्तासां मुनिवरैः प्रसङ्गैकान्तजल्पनैकत्रवासनिवासः समहत्त्वानादिव्यापारो वर्जनीय इति ॥ २ ॥

अन्नं रयंति अन्नं, रमंति अन्नस्स दिति उल्लावं ।
अन्नो कडयन्तरिओ, अन्नो पयडंतरे ठविओ ॥ ३ ॥

छिद्राविपुरुषमन्तरे अन्यं स्मनायम्मर्मापम्य नरं रञ्जयन्ति अर्थीकरणादिना कामरागवन्तं कुर्वन्तीत्यर्थः । पल्ली-

शिरश्छेदे विपगण्डूपरन्ध्रप्रहाराख्ये सत्यपि दोपत्रये माध्यस्थ्यमवलम्ब्येत न च तस्य तदवलम्बनेपि निर्दोपतेति । एवमत्राप्यवश्यं भाविरागकार्यमैथुने सर्वदोषास्पदे संसारवर्द्धके कुतो निर्दोपतेति। तथाचोक्तम् "प्राणिनां वाधकं चैतच्छास्त्रेगीत महर्षिभिः । नलिकातप्तकणक प्रवेशज्ञानतस्तथा ॥१॥ मूलं चैतदधर्मस्य भवभावप्रवर्धनम् ॥ तस्माद्विपान्नवत्याज्यमिदं पापमनिच्छतेति " निर्युक्तिगाथात्रयतात्पर्यार्थः ॥ १२ ॥

सांप्रतं सूत्रकार उपहारव्याजेन गण्डपीडनादिदृष्टान्तवादिनां दोषोद्भिभावयिषयाह । ( एवमेगे इत्यादि ) एवमिति गण्डपीडनादिदृष्टान्तवलेन निर्दोषं मैथुनमिति मन्यमाना एके स्त्रीपरीपहपराजिता सदनुष्ठानात्पार्श्वे तिष्ठन्तीति पार्श्वस्था नाथवादिकमण्डलचारिणः तुशब्दात् स्वयूथ्या वा तथा विपरीता तत्त्वाग्राहिणी दृष्टिर्दर्शनं येषां ते । तथा आराद्दूरं याता गता सर्वहेयधर्मेभ्य इत्यार्या न आर्या अनार्याः । धर्मविरुद्धानुष्ठानात्त एवंविधा अध्युपपन्ना गृद्धाव इच्छामदनरूपेषु कामेषु कामैर्वा करणभूतैः सावद्यानुष्ठानेष्विति । अत्र लौकिकं दृष्टान्तमाह । यथा वा पूतनाडाकिनी तरुणके स्तनन्धये ऽध्युपपन्ना एवं तेऽप्यनार्याः कामेष्विति । यदिवा ( पूयणत्ति ) गड्डरिका आत्मीये ऽपत्येऽध्युपपन्ना एव ते ऽपीति कथानकं चात्र । यथा किल सर्वपशूनामपत्यानि निरुदके कूपे ऽपत्यस्नेहपरीक्षार्थं क्षिप्तानि तत्र चापरा मातरः स्वकीयस्तनंधयशब्दाकर्णनेपि कूपतटस्था रुदन्त्यस्तिष्ठन्ति । उरभ्री त्वपत्यातिस्नेहेनान्धा अपायमनपेक्ष्य तत्रैवात्मानं क्षिप्तवतीत्यतो ऽपरपशुभ्यः स्वापत्ये ऽध्युपपन्नेति ।

एव ते ऽपि कामाभिष्वङ्गिणां दोषमाविष्कुर्वन्नाह ।

अणागयमपस्संता, पच्चुप्पन्नगवेसगा ॥
ते पच्छा परितप्पंति, खीणे आउम्मि जोव्वणे ॥ १४ ॥
जेहिं काले परिक्कंतं, न पच्छा परितप्पए ॥
ते धीरा बंधणुम्मुक्का, नावकंखंति जीविअं ॥ १५ ॥

अनागतमेष्यत् कालमनिवृत्ता नरकादियातनास्थानेषु महादुःखमपश्यन्तो ऽपर्यालोचयन्तस्तया प्रत्युत्पन्नं वर्तमानमेव वैषयिकं सुखाभासमन्वेषयन्तो मृगयमाणा नानाविधैरुपायैर्भोगान् प्रार्थयन्तस्ते पश्चात् क्षीणे स्वायुषि जातसंवेगा यौवने वा अपगते परितप्यन्ते शोचयन्ते पश्चात्तापं विदधति । उक्तञ्च । " हत मुष्टिभिराकाशं तुषाणां कण्डनं कृतम् । यन्मया प्राप्य मानुष्यं सदर्थे नादरः कृतः ॥ १ ॥ तथा । " विहवा वेल्लवन्निब्बहइ जाई कीरंति जोव्वणमएण ॥ वयपरिणामे सरियाइं ताइंहिं अपक्खलुकुकंति ॥ १ ॥ ॥ १४ ॥ ये तूत्तमस्त्वनया अनागतमेव तपश्चरणादावुद्यमं विदधति न ते पश्चाच्छोचन्तीति तद्दर्शयितुमाह । ( जेहिंकालेइत्यादि ) यैरात्महितकर्तृभिः काले धर्मार्जनावसरे पराक्रान्तमिन्द्रियकपायपराजयायोद्यमो विहितो न ते पश्चान्मरणकाले वृद्धावस्थायां वा परितप्यन्ते न शोकाकुला भवन्ति । एकवचनानिर्देशस्तु सौत्रश्छान्दसत्वादिति । धर्मार्जनकालस्तु विवेकिनां प्रायश सर्व एव । तस्मान्म एव प्रधानपुरुषार्थ प्रधान एव च प्रायश क्रियमाणो यतः प्राञ्चति । ततश्चायं वालप्रभृत्यकृतविषयासङ्गतया कृतनपश्चरणास्ते धीरा कर्मविदारणसहिष्णवो बन्धनेन स्नेहात्मकेन कर्मणा चोन्मावल्येन मुक्ता नावकाङ्क्षन्ति असंयमजीवितम् । यदिवा जीविते मरणे वा निस्पृहा संयमोद्यममतयो भवन्तीति ॥ १५ ॥ अन्यच्च--

जहा नई वेयरणी, दुत्तरा इह संमता ।
एवं लोगंसि नारीओ, दुत्तरा अमईमया ॥ १६ ॥
जेहिं नारीण संजोगा, पूयणा पिट्ठतो कता ॥
सव्वमेयं निराकिच्चा, ते ठिया सुसमाहिए ॥ १७ ॥

य थेत्युदाहरणोपन्यासार्थः यथा वैतरणी नदीनां मध्ये ऽत्यन्तवेगवाहित्वात् विषमतटत्वाच्च दुस्तरा दुर्लङ्घ्या एवमस्मिन्नपि लोके नार्यो ऽमतिमता निर्विवेकेन हीनसत्त्वेन दुःखेनोत्तीर्यन्ते । तथाहि । ता हावभावैः कृतविद्यानपि स्वीकुर्वन्ति । तथाचोक्तं "सन्मार्गे तावदास्ते प्रभवति पुरुषस्तावदेवेन्द्रियाणां, लज्जां तावद्विधत्ते विनयमपि समालम्बते तावदेव ॥ भ्रूचापाक्षेपमुक्ताः श्रवणपथजुषो नीलपक्ष्माण एते यावल्लीलावतीनां न हृदि धृतिमुषो दृष्टिवाणाः पतन्ति,,। नदे वंवैतरणी नदीवत् दुस्तरा नार्यो भवन्तीति ॥ १६ ॥ अपिच ( जेहीत्यादि) यैरुत्तमसत्त्वैः स्त्रीसङ्गविपाकवेदिभिः पर्यन्तकटवो नारीसंयोगाः परित्यक्तास्तथा तत्सङ्गार्थमेव वस्त्रालङ्कारमाल्यादिभिरात्मनः पूजनाकामविभूषा पृष्ठतः कृता परित्यक्तेत्यर्थः । सर्वमेतत्स्त्रीप्रसङ्गादिकं क्षुत्पिपासादि प्रतिकूलोपसर्गकदम्बकं च निराकृत्य ये महापुरुषसेवितपथं प्रति प्रवृत्तास्ते सुसमाधिना स्वस्थचित्तवृत्तिरूपेण व्यवस्थिता नोपसर्गैरनुकूलप्रतिकूलरूपैः प्रक्षोभ्यन्ते । अन्ये तु विषयाभिष्वङ्गिणः स्त्र्यादिपरीपहपराजिता अङ्गारोपरिपतितमीनवदू रागाग्निना दह्यमाना असमाधिना तिष्ठन्तीति ॥ १७ ॥

स्त्र्यादिपरीषहपराजयस्य फलं दर्शयितुमाह

एते ओघं तरिस्संति, समुद्दं ववहारिणो ॥
जत्थपाणा विसन्नासि, किञ्चंती सयकम्मुणा ॥ १८ ॥
तं च भिक्खू परिणाय, सुव्वते समिते चरे ॥
मुसावायं च वज्जिज्जा--दिन्नादाणं च वोसिरे ॥ १९ ॥

य एते अनन्तरोक्तानुकूलप्रतिकूलोपसर्गजेतार एते सर्वे ओघं संसारं दुस्तरमपि तरिष्यन्ति । द्रव्यौघदृष्टान्तमाह । समुद्रं लवणसागरमिव व्यवहारिणः सांयात्रिका यानपात्रेण तरन्त्येवं भवौघमपि संसारसयमयानपात्रेण यतयस्तरिष्यन्ति । तथा तीर्णास्तरन्ति चेति । भवौघमेव विशिनष्टि । भवौघे संसारसागरे प्राणाः प्राणिनः स्त्रीविदयसङ्गाद्विषण्णा सन्तः कृत्यन्ते पीड्यन्ते स्वकृतेनानुष्ठितेन पापेन कर्मणा असद्वेदनीयोदयरूपेणेति ॥ १८ ॥ सांप्रतमुपसंहारव्याजेनोपदेशान्तरविधित्सयाह । ( तंचभिक्खूइत्यादि ) तदेतद्यथा प्रागुक्तं यथा वैतरणीनदीवत् दुस्तरा नार्यो यैः परित्यक्तास्ते समाधिस्था संसारं तरन्ति स्त्रीसङ्गिनश्च संसारान्तर्गता स्वकृतकर्मणा कृत्यन्त इति तदेतत्सर्वं भिक्षणशीलो भिक्षुः परिज्ञाय हेयोपादेयतया वुध्वा शोभनानि व्रतान्यस्य सुव्रतः पञ्चभिः समितिभिः समित इत्यनेनोत्तरगुणवेदनं कृतमित्येवम्भूतश्चरेत्संयमानुष्ठानं विदध्यात् । तथा मृषावादमसद्भूतार्थभाषणं विशेषेण वर्जयेत्तथा अदत्तादानञ्च व्युत्सृजेद्दन्तशोधनमात्रमप्यदत्तं न गृह्णीयात् । आदिग्रहणात् मैथुनादेः परिग्रह इति । तच्च मैथुनादिकं यावज्जीवमात्माहितं मन्यमानः परिहरेत् । सूत्र० १ श्रु० ३ अ० ॥

( स्त्रियां ज्ञानमपत्यं पुरुषस्यैवेति-अपच्च-शब्दे । स्त्रीपुरुषयोरन्तरं ' अणतर ' शब्दे । स्त्रीगर्भवक्तव्यता ' गब्भ ' शब्दे । स्त्रीभ्यो दृष्टिवादो न दीयत इति ' दिट्ठिवाय' शब्दे । स्त्रीणां

मोक्खसिद्धि' 'इत्थिलिंगसिद्ध' शब्दे। स्त्रीवसङ्गतस्य निन्दा 'इत्थिवस' शब्दे । स्त्रीशब्दयुक्ते स्थाने न स्थातव्यमिति 'वसही' शब्दे । स्त्रीससक्तस्थानादिनिषेधो 'बम्भचेरसमाहिट्ठाण' शब्दे 'बम्भचेर गुत्ति' शब्दे च। स्त्रीणां स्वातन्त्र्यनिषेधः' इत्थिरज्ज शब्दे ')

इदं-इदम्-त्रि०'इदि कमि नलोपश्च। पुरोवर्त्तिनि,। सूत्र०१श्रु० ३ अ०। प्रत्यक्षे,। नि० चू० १ उ०। प्रत्यक्षासन्ने च । आ० चू० ४ अ० । इणमेव खणविजाणिया" । इदमः प्रत्यक्षासन्नवाचित्वादिति । सूत्र १ श्रु० २ अ०। " आरंभ ज दुक्ख मिणति णच्चा " इदमिति प्रत्यक्षगोचरापन्नमिति । आचा० १ श्रु० ३ अ० १ उ० । सूत्र०। प्रश्न० । "दुहावेदं सुयक्खाय" ॥ प्रत्यक्षासन्नवाचित्वादिदम इति।सूत्र० १ श्रु० ८ अ०। अस्य च सर्वस्याम् विभक्तौ ॥ ' इदम इम' ८। ३ । ७२। इति प्राकृतसूत्रेण इमादेश इमो-इमे-इम। इमेण-स्त्रीयामपि-इमा सौ" पुंस्त्रियोर्नवाऽयमिमिआ सौ" ८। ३। ७३ इति प्राकृत सूत्रेण अयमिति पुँल्लिङ्गे इमिआ इति स्त्रीलिङ्गे वैकल्पिक आदेशः ।अहवा अंक, अकज्जो-इमिआ वाणिअधूआ। पक्षे इमो इमा-" षष्ठीसप्तम्योः स्सिस्सयोरत्" ८। ३। ७४। इति प्राकृतसूत्रेणेदम. स्सि स्स इत्येतयो परयोर्वा अद्भवति अस्सि अस्स। पक्षे इमादेशोपि। इमस्सि इमस्स-बहुलाधिकारादन्यत्रापि अद्भवति । एहि-एसु-आहि एभि. एषु आभिरित्यर्थः 'ङेर्मेन ह, ।८।३। ७५। इति प्राकृतसूत्रेण कृतेमादेशात्परस्य ङेः स्थाने मेन सह वैकल्पिके हादेशे, इह पक्षे इमस्सि इमम्मि। नत्थः। ८। ३। ७६। इति प्राकृतसूत्रेण इदम' परस्य ङे स्सिस्मित्या इतिप्राप्तस्तथो निषिध्यते। इह इमस्सि इमम्मि। णोऽम् शस्टाभिसि। ८। ३। ७७। इति प्राकृतसूत्रेणामशस्टाभिस्सु इदमो वा ण इत्यादेशो भवति ण पेच्छ। णे पेच्छ। णेण-णेहिं कअ। पक्षे इम इमे इमेण इमेहिं। द्वितीयैकवचनेऽमि। अमेणम्। ८। ३। ७८। इति प्राकृतसूत्रेणामा सहितस्येदम स्थाने इणम् इत्यादेशो वा भवति इण पेच्छ पक्षे इम सौ- अमि च नपुंसके। " क्लीबे स्यमेदमिणमो च" ८। ३। ७९। इति प्राकृतसूत्रेण स्यमभ्यां सहितस्य इदम इणमो इणम् च नित्यमादेशो भवति । इद इणमो इण। धण चिट्ठइ पेच्छ वा। प्रा० व्या०।

इदा (या) णि-इयाणिंह-इदानीम्-अव्य० इदमीदानीम् ।सम्प्रत्यर्थे,-वाच० इआणि कोणो क बत्तव्वय इच्छइ- । अनु०। 'इयहिए गच्छ' ॥इदानीं गच्छामीति ।स्था० ३ ठा०। 'काम खलु आउसो इदाणि ति'-आचा ० २ श्रु० १ अ० १० उ०। " मांसादेर्वा । इतिप्राकृतसूत्रेणानुस्वारस्य विकल्पेन लोपे इयाणि इयाणिं। दाणि दाणि। प्रा० व्या०।

इदुर-इदुर-न० कोष्ठिकामुखगन्त्या उपरि दीयमाने सुवादिग्यूते ढक्कनकादिके, अनु०। महति पिठके, येन समस्तापि रसवतीस्थग्यते-राज०।

इद्द-इद्दएम-पुं०भ्रमरे, दे०ना० ॥

इद्ध-इद्ध-न-इन्ध भावे क्त-आतपे, दीप्तौ, आश्चर्ये च । कर्त्तरि-क्त। दीप्ते, गन्धे च। त्रि०। वाच०।

इध-इह-अव्य०'इहहचोर्हस्य' इति प्राकृतसूत्रेण शौरसेन्यां धः। प्रा० व्या०। इद हश्शादेशः। अस्मिन्काले देशे दिशि वा इत्यर्थे, वाच० ॥

इंध-(चिएह) चिह्न-न०'चिह्ने न्धो वा'। इति वा न्धादेशः। एहापवादः पक्षे सोपि । 'कगचजतदपयवां प्रायो लुक्' ॥ इति प्राकृतसूत्रेण वा चस्य लुक्। लक्षणे, प्रा० व्या०।

इब्भ-इभ्य-पुं-इभो हस्ती तत्प्रमाण द्रव्यमर्हतीति इभ्यः। अनु०। दण्डादित्वाद् यत्। वाच०। हस्तिप्रमाणद्रविणराशिपतौ; । औप०। यद्द्रव्यस्तूपान्तरित उच्छ्रितकदलिका दण्डो हस्ती न दृश्यते ते इभ्या इति जनश्रुतिरिति। स्था० ६ ठा०। ज ०। महाधनपतौ, भ०९ श. ३३ उ०। आ० म०। अधिकतरद्रव्यो वा इभ्य इति। अनु०। " अड्डा इब्भा धणिणो। इति। प्रा० को०। नृपे, हस्तिपके च। पु-। वाच०। स्वनामख्याते वसन्तपुरस्थे श्रेष्ठिनि च। " वसन्तपुरनामास्ति, वसन्तर्त्तु समं पुरम् । श्रेष्ठी तत्रेभ्यनामाऽभू-त्प्रेयसी तस्य धारिणीति-"। आ० क०। वणिजि, दे० ना०।

इब्भग (य) इभ्यक-त्रि-स्वार्थे कन् इभ्यशब्दार्थे, । आ० म० प्र०। स्त्रियां तु टापि वा अत इत्वम्। इभ्यका इभ्यिका-इभ्याढ्यायां स्त्रियाम्। वाच०।

इब्भगब्भिज्ज- इभ्यकडिम्ज्ज-पुं-इभ्यबालके, इब्भगब्भिज्जाणि णाणाविहभक्खहत्थगयाणि स गिहेहिंतो णिग्गयाणि। आ० म० प्र०।

इब्भजाइ-इभ्यजाति-स्त्री० आर्यजातौ,

छव्विहा जाइ आरिया मणुस्सा पण्णत्ता तंजहा अंबट्ठा य कलंदा य, वेदेहा वेदिगाइया। हरिया चुंचुणा चेव, छण्नेया इब्भजाइओ ॥ १ ॥

जातिर्मातृक पक्षस्तया आर्या अपाया निर्दोषा जात्यार्या विशुद्धमातृका इत्यर्थः । अम्बष्ठेत्याद्यनुष्टुप्प्रतिकृतिः षडप्येता इभ्यजातय इति। इभमर्हन्तीतीभ्या यद्द्रव्यस्तूपान्तरित उच्छ्रितकदलिका दण्डो हस्ती न दृश्यते ते इभ्या इति श्रुति स्तेषां जातय इभ्यजातयस्ता एता इति। स्था० ६ ठा०।

इब्भदास-इभ्यदास-पुं० स्वनामख्याते श्रेष्ठिनि,। ती०।

इभ-इभ-पुं०इण्-भ- किच्च।हस्तिनि,। ज० २ व०। अनु०।

इमही-इमही-स्त्री० इ. कामस्तस्य मह्य कामिन्यः स्त्रियाम्,गा

इ (मा) (मिआ) मी-इयम् स्त्री० प्रत्यक्षायाम् " पुंस्त्रीयोर्नवायमिमिआ सौ-८। ४-७३ इति प्राकृतसूत्रेण स्त्रीलिङ्गे इमि आदेशः। आजातेः पुसः।८। ३। ३२ इति जाति वाचिनः पुल्लिङ्गाद्वा आत्वम्। इमिए, इमाए, इमिण इमाणं। प्रा० व्या०।

इय-इक-देशी० क्वापि प्रवेशार्थे,-इकमिति देशीपद क्वापि प्रवेशार्थे वर्तत इति आ० म० द्वि० एतस्य निक्षेपो यथा इकमपि चतुर्द्धा तद्यथा नामेक स्थापनेक द्रव्येक भावेक च । तत्र नामस्थापने प्रतीते। द्रव्येक "दोहारस्सविइगिइमेयाइ तु दव्वाइ " दोरे इति सूत्रे दवरके मौक्तिकान्यधिकृत्य भाविपर्यायापेक्षया हारस्य मुक्ताफलकलापस्य विनिवेशनं प्रवेशनम् " ए आ अतुदव्वम्मि" एतान्युदाहरणानि द्रव्ये द्रव्यविषयाणि "णाणाइतिय तस्साया पोयण भावसामाई"तस्येति सामादि सम्बन्धे । तस्य सामादेरात्मनि प्रोतनमात्मनि प्रवेशनं भावेकमिति। आ० म० द्वि०। आ० चू०।

इत-त्रि० गते, समिय उदाहु सम्यक् इत गतमिति । सूत्र० १ श्रु० ६ अ०। आचा०। स्था०। ज्ञाते,परिच्छिन्ने,। आचा० १ श्रु०८ अ० ७ उ०। प्राप्ते,विशे०।इतो इत स्थित इत्यनर्थान्तरम्। न०। विशे०। प्राप्ते क्तः। गतौ, ज्ञाने च। वाच०।

' इतो तो वाक्यादौ ' । इति प्राकृतसूत्रेण वाक्यादौ इति शब्देकारस्याकारः । ' इअं ज पिआ वसाणे ' इअविअ सिअ कुसुमसरो इति । प्रा० व्या० । इति एवमर्थे, "इय सिद्धाण सोक्ख" इति एवं सिद्धानां सौख्यमिति । औप० । "इय सव्वगुणाहाणं " एवमुक्तेन प्रकारेण सर्वगुणाधानम् इति । आव० । नि० चू० ॥

इयर-इतर-त्रि० इना कामेन तीर्य्यते तृ अप्। तरति पचाद्यच् वा । नीचे, पामरे, । वाच० ।

इत्तरिए अय अहमंसिपुण विसिट्ठे जाइकुल बलाइ-
गुणोववेए एवं अप्पाणं समुक्कस्से ॥

इतरोय जघन्यो हीनजातिकः कुलबलरूपादिभिर्दूरमपभ्रष्टः सर्वजनावगीतोयमिति । अहं पुनर्विशिष्टजातिकुलबलादिगुणोपेत एवमात्मान समुत्कर्षयेदिति । सूत्र० २ श्रु० २ अ० ॥ " इयराइयरहिं कुलेहिं " इतरे सामान्यसाधुभ्यो विशिष्टतराः साधव इति । आचा० १ श्रु० ६ अ० २ उ० ॥

इयरकुल-इतरकुल-न० अन्तप्रान्तकुले, आचा० १ श्रु० ६ अ० २ उ० ॥

इयरेयर-इतरेतर-त्रि० इतरद्भिन्व समासवद्भावश्च । अन्योन्य शब्दार्थे, । उत्त० १ अ० ॥

इयरेयरसंजोग-इतरेतरसंयोग-पुं० इतरेतरस्य परस्परस्य संयोगो घटना । परस्परघटनायाम्, तदात्मसंयोगभेदे च उत्त० १ अ० । ( तद्वक्तव्यतासंजोगशब्दे )

इयरेयरसावेक्ख-इतरेतरसापेक्ष्य-त्रि० परस्पराविरोधिनि, इतरेतरसापेक्षावेपां पुनरात्तवचनपरिणत्या इतरेतरसापेक्षा परस्पराविरोधिनीनि । पो० ।

इयरेयरस्सय-इतरेतराश्रय-पु० इतरेतर आश्रयति आ-श्रि-अच् अन्योन्याश्रये तर्कदोषभेदे, वाच० ।

इयरेयराभाव-इतरेतराभाव-पु० इतरेतरस्मिन्नभावः । अभावविशेषे, इतरेतराभावं वर्णयन्ति स्वरूपान्तरात्स्वरूपव्यावृत्तिरितरेतराभाव इति । स्वभावान्तरान्न पुनः स्वस्वरूपादेव तथाऽसत्त्वप्रसक्ते स्वरूपव्यावृत्तिः स्वस्वभावव्यवच्छेद इतरेतराभावो ऽव्यापोहनमानिगद्यते ॥ उदाहरणमाहुर्यथास्तम्भस्वभावात्कुम्भस्वभावव्यावृत्तिरिति । रत्ना० ।

इर-इर-धा० ईर्ष्यायाम्, कण्ड्वादित्वात् यक् । उभ० । इर्यति इर्य्यते वाच० । 'किरेरे रहिर किलार्थे वा' ८।२।८६। इति सूत्रेण किलार्थे तस्य प्रयोगबोधनात् । तस्स इर किलार्थे, प्रा० व्या० । पादपूरणे च । अव्य व्य० । ईजे इरा पादपूरणे । ८ ।२।१७ इति सूत्रात् " गेण्हइ इर कलमगोवि ' । इति- । प्रा० ।

इरमंदिर-इरमन्दिर-पु० करभे, दे० ना०

इराव-इराव-देशी-गजे, दे० ना० ।

इरिआ-ईर्या-स्त्री-कुल्याम्,-दे० ना० ।

इरिण-इरिण-देशी-कनके, दे० ना० ।

इरियज्झयण-ईर्याध्ययन-न० आचाराङ्गश्रुतस्कन्धस्य प्रथम चूलिकान्तर्गते तृतीयेऽध्ययने, तच्चाचाराङ्गपञ्चमाध्ययनावन्त्यास्यस्य चतुर्थोद्देशकसूत्रम् । गामाणुगाम दुइज्जमाणस्स दुज्जाय दुपरक्कमिन्या दिनेर्यासङ्क्षेपेण व्यावर्णितेत्यत ईर्याध्ययनं निर्यूढमिति ।

अत्र त्रय उद्देशा उद्देशार्थाधिकारमधिकृत्याह निर्युक्तिकारः

सव्वेवि यदवि इरियं विसोहि-कारगा तहवि अत्थिपविसेसो।
उद्देसं उद्देसे, वोच्छामि समासओ किंपि ॥ २८ ॥
पढमे य उवागमणि-ग्गमो य अप्पाज्झीण च जयणा ।
बितिए आरूढ छलणं, जंघा संतारपुच्छाया ॥ २९ ॥
तइयम्मि अदंसणया-अप्पकिवंधो य होइ उवहिम्मि ।
वज्जेयव्वं च सया, संसारियरायगिहगमणं ॥ ३० ॥

( सव्वेत्यादि ) सर्वेपि त्रयोपि यद्यपीर्याविशुद्धिकारकास्तथापि प्रत्युद्देशकमस्ति विशेषस्त च यथाक्रम किञ्चिद्वक्ष्यामि इति यथाप्रतिज्ञातमाह ( पढगाहा ) प्रथमोद्देशके वर्षाकालादावुपागमनं स्थान तथा निर्गमश्च शरत्कालादौ यथा भवति तदत्र प्रतिपाद्यमध्वानि यतना चेति द्वितीयोद्देशकेन वादावारूढस्य छलन प्रक्षेपण व्यवर्ण्यते जघा संतारे च पानीये यतना तथा नानाप्रकारे च प्रश्ने साधुना यद्विधेयमेतच्च प्रतिपाद्यमिति ( तइयम्मि गाहा ) तृतीयोद्देशके यदि कश्चिदुदकादीनि पृच्छति तस्य जानताप्यदर्शनता विधेयेत्ययमधिकारः तथोपधावप्रतिबन्धो विधेयस्तदपहरणे च स्वजनराजगृहगमनञ्च वर्जनीय न च तेषामाख्येयमिति । आचा० २ श्रु० ३ अ० १ उ० ॥

इरियट्ठ-ईर्यार्थ-त्रि० ईर्याविशुद्ध्यर्थे, तदर्थमाहरकरणीह नातिक्रमः 'इरियट्ठाए य' ईर्यागमन तस्या विशुद्धिर्युगमात्रनिहितदृष्टित्वमीर्याविशुद्धिस्तस्यै इदमीर्याविशुद्ध्यर्थम् । इह च विशुद्धिशब्दलोपादीर्यार्थमित्युक्तम् बुभुक्षितो हीर्यां शुद्धावशक्तः स्यादिति । स्था० ६ ठा० ( तदर्थमाहरकरणे नातिक्रम इति 'आहार' शब्दे )

इरिया-ईर्या-स्त्री-ईरणमीर्या ईरगतिप्रेरणयोरस्माद्भावे ण्यत् गमने, आचा० १ श्रु० २ अ० १ उ० । आचू० । स्था० । आव० । उत्त० । सूत्र० । ईर्यानिक्षेपणार्थं निर्युक्तिकृदाह ।

णामं ठवणा इरिया, दव्वे खेत्ते य कालभावे य ।
एसो खलु इरियाए, णिक्खेवो छव्विहो होइ ॥ २३ ॥
दव्वइरिया उ तिविहा, सचित्ताचित्तमीसगा चेव ।
खेत्तम्मि जम्मि खेत्ते, काले कालो जहिं जोए ॥ २४ ॥

तत्र द्रव्येर्या सचित्ताचित्तमिश्रभेदात्त्रिविधा ईरणमीर्या गमनमित्यर्थः । तत्र सचित्तस्य वायुपुरुषादेर्द्रव्यस्य यद्गमन सा सचित्तद्रव्येर्या एव परमाण्वादिद्रव्यस्य गमनमचित्तद्रव्येर्या । तथा मिश्रद्रव्येर्या रथादिगमनमिति । क्षेत्रेर्या यस्मिन् क्षेत्रे गमन क्रियते ईर्या वा वर्ण्यते । एवं कालेर्यापि द्रष्टव्येति । आचा० । भावेर्याप्रतिपादनायाह- ।

भावइरिया उ दुविहा, चरणई संजमगई य ।
समणस्स कहं गमणं, दोसं होइ परिसुद्धं ॥ २५ ॥

भावविषयेर्या द्विविधा चरणेर्या संयमेर्या च । तत्र संयमेर्या सप्तदशविधसंयमानुष्ठान यदि वा असंख्येयेषु संयमस्थानेष्वेकस्मात्संयमस्थानादपरं संयमस्थानं गच्छतः संयमेर्या भवति । चरणेर्या तु अत्रवभ्रमभ्रचरगत्यर्थाः चरतेर्भावे ल्युट् चरण तद्रूपेर्या चरणेर्या । चरण गति गमनमित्यर्थ तच्च श्रमणस्य कथ केन प्रकारेण भावरूपगमन निर्दोष भवतीत्याह-

आलंबणे य काले, मग्गे जयणा य चेव परिसुद्धं ।
भंगेहिं सोलसविधं, उपरिसुद्धं पसत्थं तु ॥ ९६ ॥

त प्रवचनसंघगच्छाचार्यादिप्रयोजन काल साधूनां विहरणयोग्योवसरे मार्गो जनै पदभ्यां क्षुण्णः पन्था यतना उपयुक्तस्य युगमात्रदृष्टित्वं तदेवमालम्बनकालो मार्गयतना पदैरेकैकपदव्यभिचारादेव भङ्गास्तै षोडशविधं गमन भवति तस्य च यत्परिशुद्धम् । तदेव प्रशस्तं भवतीति दर्शयितुमाह—

चउकारण परिसुद्धं, अहवा वि होज्ज कारणज्जाए ।
आलंबण जयणाए, काले मग्गेय जइयव्वं ॥ ९७ ॥

चतुर्भिः कारणैः साधोर्गमनं परिशुद्धं भवति तद्यथा आलम्बनेन दिवा मार्गेण यतनया गच्छत इति अथवा अकालेऽपि ज्ञानाद्यालम्बनेन यतनया गच्छत शुद्धमेव गमन भवत्येवंभूते च मार्गे साधुना यतितव्यमिति । आचा० २श्रु० ३ अ० १ उ० ( गमन च यथा कर्तव्यन्तथेर्य्याध्ययने आचाराङ्गे प्रतिपादिते विहार-शब्दे द्रष्टव्यम् ) "इरियं च पच्चक्खायेज्जा " ईरणमीर्य्या तां च सूक्ष्मां कायवाग्गतां मनोगतां वा प्रशस्तां प्रत्याचक्षीत इति । आचा० १ श्रु० ८अ० । ७ उ० । ईरणमीर्या गमनम् । तत्कार्य्ये कर्म्मणि च । "एगंतस्स पसतस्स, न होंति इरियादओ गुणा" ईरणमीर्य्यागमनमित्यर्थः इह ईर्य्याकार्य्य कर्म ईर्य्याशब्देन गृह्यते कारणे कार्योपचारादिति । आ० म० द्वि० । ईर्य्यासमितौ, "घणुपरक्कम किच्चा जीव च इरिय सया,, जीव प्रत्यक्षाच्चेर्य्यामीर्य्यासमितिमिति । उत्त० ईरणमीर्य्या तत्सूत्राच्चारणपुरस्सरकायोत्सर्गात्मके सामाचारिभेदे च । ग० २ अधि ।

इरियापच्चय—ईर्य्याप्रत्यय—न० ईरणमीर्य्या गमन तेन जनितमीर्य्या प्रत्ययम् । कर्मभेदे, सूत्र १ श्रु० १ अ० ( एतद्वक्तता इरियावहिय शब्दे )

इरियावह—ईर्य्यापथ—पु० ईरगतिप्रेरणयोरस्माद् भावे ण्यत् । ईरणमीर्य्या तस्याः ( तयावा ) पन्था 'ईर्य्यापथः । सूत्र० ।२ श्रु० २ अ०।। स्था० । ईरणमीर्य्या गमनं तद्विशिष्टः पन्था ईर्य्यापथः ।प्रव० २द्वार। ईर्य्या गमन तद्विषयः पन्था ईर्य्यापथ । भ० ११ श० १० उ० । आव० । गमनमार्गे,भ० ३ श० ३ उ० । कश्चेर्य्याया पन्था भवति यदाश्रिता सा भवतीति । आचा० २ अ० १ उ० । ईरणमीर्य्या तत्सम्यक्पन्था ईर्य्यापथस्तत्प्रत्ययं कर्मेर्य्यापथम् । सूत्र० १ श्रु० १ अ० । ईर्य्यापथप्रत्ययमीर्य्यापथम् । प्रति० । कर्मभेदे, सूत्र० १ श्रु० १ अ० । एतदुक्त भवति पथि गच्छतो यथा कथञ्चिदनभिसन्धेर्यत्प्राणिव्यापादन भवतीति । सूत्र० १ श्रु० २ अ० । ( अस्य बन्धनकारणत्वविचार कर्म्मबंध शब्दे ) ।

इरियावहकिरिया—ईर्य्यापथक्रिया—स्त्री० क्रियाभेदे, सा च यदुपशान्तमोहादेरेकविधकर्मबन्धनमिति । स्था० ५ ठा० । ईर्य्यापथक्रिया तूपशान्तमोहादारभ्यसयोगिकेवलिनं यावदिति । सूत्र० २ श्रु० २ अ० ( एतस्या विस्तरेण वक्तव्यता इरियावहिया शब्दे ) ।

इरियावहिय-ईर्य्यापथिक-न० ईरगतिप्रेरणयो रस्माद्भावे ण्यत् ईरणमीर्य्या तस्या पन्था ईर्य्यापथस्तत्र भवमीर्य्यापथिकम् । आचा० १ श्रु० २ अ० १ उ० । ईरणमीर्य्या तस्यास्तया वा पन्था ईर्य्यापथः स विद्यते यस्य तदीर्य्यापथिकम् । एतच्च शब्दव्युत्पत्तिमात्रम् प्रवृत्तिनिमित्त तु इदम् सर्वत्रोपयुक्तस्य निष्कषायस्य समीक्षितमनोवाक्कायक्रियस्य या क्रिया तया यत्कर्म तदीर्य्यापथिकम् । सूत्र० २ श्रु० २ अ० ।

ऐर्य्यापथिक न० ईरणमीर्य्या गमनन्तत्प्रधान पन्था मार्गः ईर्य्यापथस्तत्र भवमैर्य्यापथिकम् । केवलयोगप्रत्यये कर्मभेदे, भ० ८ श० ८ उ० । कश्चेर्य्यायाः पन्था भवति यदाश्रिता सा भवत्येतच्च व्युत्पत्तिनिमित्त यतस्तिष्ठतोपि तद्भवति प्रवृत्तिनिमित्तं तु स्थित्यभावस्तच्चोपशान्तक्षीणमोहसयोगिकेवलिनां भवति । सयोगिकेवलिनोऽपि हि तिष्ठतोपि सूक्ष्मगात्रसञ्चारो भवत्युक्तञ्च "केवलीणं भंते! अस्सिं समयसि जेसु आगासपदेसेसु हत्थ वा पाय वा ओगाहित्ताण पडिसाहरेज्जा पभूण भंते ! केवलीतेसु चेवागासपदेसेसु पडिसाहरित्तए णो इणट्ठे समट्ठे । कहं केवलिस्सण चलाइं सरीरोवगरणाइं भवति चलोवगरणाइं भवति एणत्ताए केवलिणो संचाएत्ति तेसु चेवागासपदेसेसु हत्थ वा पाय वा पडिसाहरित्तए " तदेवं सूक्ष्मेतरगानुसञ्चाररूपेण योगेन यत्कर्म्म बध्यते तदीर्य्यापथिकमीर्याहेतुकमित्यर्थः । तच्च द्विसमयस्थितिकमेकस्मिन् समये वेदितं तृतीयसमये तदपेक्षया चाकर्म्मेतीति कथमित्युच्यते यतस्तत्प्रकृतित सातावेदनीयमकषायत्वात् स्थित्यभावेन बध्यमानमेवं परिशटति अनुभावतोनुत्तरोपपातिकसुखातिशायिप्रदेशतः स्थूलसूक्ष्मशुक्लादिबहुप्रदेशमिति उक्तञ्च—

अप्पं बायरमउयं, बहुं च लुक्खं च सुक्किलं चेव ।
मंदं महव्वतंतिय सातावहुलं च तं कम्मं ॥

अल्पं स्थितित स्थितेरेवाभावात् बादरं परिणामतोनुभावतो मृद्वनुभावं बहु प्रदेशे सूक्ष्म स्पर्शतो वर्णेन शुक्लमन्दं लोपन स्थूलचूर्णं मुष्टिमुक्त कुड्यापतित लेपवत् महाव्ययमेकसमयेनैव सर्वापगमात्सतो बहुकमनुत्तरोपपातिकसुखातिशा (श) या यान्ति उक्तमीर्यापथिकम् । आचा० १श्रु० २ अ० १ उ० ( एतस्य बन्धविचारः कर्म्मबंध शब्दे ) त्रयोदशे स्थाने च । आव० । ऐर्य्यापथिक केवलयोगप्रत्यय कर्मबन्ध उपशान्तमोहादीनां सातवेदनीयबन्ध इति । सम० १३ स० (विस्तरेणैतस्य वक्तव्यता इरियावहिया शब्दे)

इरियावहियबंध—ऐर्य्यापथिकबन्ध—पु० ईर्य्या गमनम् तत्प्रधान पन्था मार्ग ईर्य्यापथस्तत्र भवमैर्य्यापथिकम् । केवलयोग प्रत्यय कर्म तस्य यो बन्धस्स तथा । ऐर्य्यापथिककर्मणो बन्धे, । तद्वक्तव्यता यथा ।

इरियावहियाणं भंते ! कम्मं किं णेरइओ बंधइ, तिरिक्खजोणिओ बंधइ, तिरिक्खजोणिणी बंधइ, मनुस्सो बंधइ, मणुस्सी बंधइ, देवो बंधइ देवी बंधइ ? । गो० ! णो णेरइओ बंधइ, णो तिरिक्खजोणिओ बंधइ, णो तिरिक्खजोणिणी बंधइ, णो देवो बंधइ, णो देवी बंधइ, पुव्वपडिवन्नए पडुच्च मणुस्सा य मणुस्सीओ य बंधंति । पडिवज्जमाणए पडुच्च मणुस्सो वा बंधइ मणुस्सी वा बंधइ मणुस्सा य वा बंधंति मणुस्सीओ य वा बंधंति अहवा मणुस्सो य मणुस्सी य बंधइ । अहवा मणुस्सो य मणुस्सीओ य बंधंति । अहवा मणुस्सा य मणुस्सी य बंधइ-

अहवा मणुस्सा य मणुस्सीओ य वधंति । तं भंते ! किं इत्थी बंधइ, पुरिसो बंधइ, णपुंसगो बधइ, इत्थीओ बंधंति पुरिसा बंधंति णपुंसगा बंधंति । णो इत्थी णो पुरिसो णो णपुंसगो बंधइ ? गोयमा ! णो इत्थी बंधइ णो पुरिसो बंधइ, जाव णो णपुंसगा बंधंति । पुव्वपडि वन्नए पडुच्च अवगयवेदा बंधंति, पडिवज्जमाणए पडुच्च अवगयवेदो वा बंधइ अवगयवेदा वा बंधंति । जइ भंते ! अवगयवेदो वा बंधइ अवगयवेदा वा बंधंति तं भंते ! किं इत्थी पच्छाकडो बंधइ १ पुरिसपच्छाकडो बंधइ २ णपुंसगपच्छाकडो बंधइ ३ इत्थी पच्छाकडा बंधंति ४ पुरिसपच्छाकडा बंधंति ५ णपुंसगपच्छाकडा बंधंति ६ । उदाहु इत्थीपच्छाकडो य पुरिसपच्छाकडो य बंधइ १ उदाहु इत्थी पच्छाकडो य पुरिसपच्छाकडो य बंधंति २ उदाहु इत्थी पच्छाकडा य पुरिसपच्छाकडो य बंधइ ३ उदाहु इत्थी पच्छाकडा य पुरिसपच्छाकडा य बंधंति ४ उदाहु इत्थीपच्छाकडो य णपुंसगपच्छाकडो य बंधइ ४ उदाहु पुरिसपच्छाकडो य णपुंसगपच्छाकडो य बंधइ ४ उदाहु इत्थी पच्छाकडो य पुरिसपच्छाकडो य णपुंसगपच्छाकडो य बंधइ ८ एवं एए छव्वीसं भंगा। जाव उदाहु इत्थी पच्छाकडा य पुरिसपच्छाकडा य णपुंसगपच्छाकडा य बंधंति ! गोयमा ! इत्थीपच्छाकडो पि बंधइ, पुरिसपच्छाकडो वि बंधइ, णपुंसगपच्छाकडो वि बंधइ । इत्थी पच्छाकडा वि बंधंति, पुरिसपच्छाकडा वि बंधंति, णपुंसगपच्छाकडा वि बंधंति । ६ । अहवा इत्थीपच्छाकडो य पुरिसपच्छाकडो य बंधइ १२ एवं एए छव्वीसं भंगा भाणियव्वा जाव। अहवा इत्थी पच्छाकडा य पुरिसपच्छाकडा य णपुंसगपच्छाकडा य बंधंति, । तं भंते ! किं बंधी बंधइ, बंधिस्सइ १ बंधी बंधइ न बंधिस्सइ २ बंधी न बंधइ बंधिस्सइ ३ बंधी न बंधइ न बंधिस्सइ ४ न बंधी बंधइ बंधिस्सइ ५ न बंधी बंधइ न बंधिस्सइ ६ न बंधी न बंधइ बंधिस्सइ ७ न बंधी न बंधइ न बंधिस्सइ ८ गोयमा ! भवागरिसं पडुच्च अत्थेगइए बंधी बंधइ बंधिस्सइ, अत्थेगइए बंधी बंधइ न बंधिस्सइ, एवं तं चेव सव्वं जाव। अत्थेगइए न बंधी न बंधइ न बंधिस्सइ । गहणागरिसं पडुच्च अत्थेगइए बंधी बंधइ बंधिस्सइ एवं जाव अत्थेगइए न बंधी बंधइ बंधिस्सइ णो चेव णं न बंधी बंधइ न बंधिस्सइ । अत्थेगइए न बंधी न बंधइ बंधिस्सइ। अत्थेगइए न बंधी न बंधइ न बंधिस्सइ । तं भंते ! किं साइयं सपज्जवसियं बंधइ, साइयं अपज्जवसियं बंधइ अणाइयं सपज्जवसियं बंधइ अणाइयं अपज्जवसियं बंधइ ? गोयमा ! साइयं सपज्जवसियं बंधइ, णो साइयं अपज्जवसियं बंधइ, णो अणाइयं सपज्जवसियं बंधइ णो अणाइयं अपज्जवसियं बंधइ ।

( नो नेरइओ इत्यादि ) मनुष्यस्यैव तद्बन्धो यस्माद्बन्धाऽुपशान्तमोहक्षीणमोहसयोगिकेवलिनामेव तद्बन्धनमिति ( पुव्वपडिवन्नए इत्यादि ) पूर्वं प्राक्काले प्रतिपन्नमैर्यापथिकबन्धकत्वं यैस्ते पूर्वप्रतिपन्नकास्तान् तद्बन्धकत्वद्वितीयादिसमयवर्तिन इत्यर्थः । ते च सदैव बहवः पुरुषा स्त्रियश्च सन्ति उभयेषां केवलिनां सदैव भावादत उक्तम् " मणुस्साय मणुस्सीओ य बंधतित्ति " (पडिवज्जमाणयेत्ति) प्रतिपद्यमानकानैर्यापथिककर्मबन्धनप्रथमसमयवर्तिन इत्यर्थः । एषां च विरहसम्भवादेकदा मनुष्यस्य स्त्रियाश्च एकयोगे एकत्वबहुत्वाभ्यां चत्वारो विकल्पा , द्विकयोगे तथैव चत्वारः, एवमेते सर्वेऽप्यष्टावेतदेवाह ( मणुस्सो वा इत्यादि ) एषां च पुंस्त्वादि तत्तल्लिङ्गापेक्षया न तु वेदापेक्षया क्षीणोपशान्तवेदत्वात् । अथ वेदापेक्षस्त्रीत्वाद्यधिकृत्याह "त भंते । किमित्यादि नो इत्थी इत्यादिना" च पदत्रयनिषेधेनावेदक. प्रश्नितः उत्तरे तु षण्णां पदानां निषेधः सप्तमपदोक्तस्तु व्यपगतवेदस्तत्र च पूर्वप्रतिपन्नाः प्रतिपाद्यमानकाश्च भवन्ति तत्र पूर्वप्रतिपन्नकानां विगतवेदानां सदाबहुत्वभावादाह ( पुव्वपडीत्यादि ) प्रतिपद्यमानकानान्तु सामायिकत्वात् विरहभावेनैकादिसम्भवाद्विकल्पद्वयमत एवाह ।(पडिवज्जमाणेत्यादि ) अपगतवेदमैर्यापथिकबन्धमाश्रित्य स्त्रीत्वादिभूतभावापेक्षया विकल्पयन्नाह। "जइ इत्यादि त भंते! ! तदा भदन्त ! तद्वा कर्म इत्थी पच्छाकडेति भावप्रधानत्वान्निर्देशस्य स्त्रीत्वं पश्चात्कृतं भूततां नीतं येनावेदकेनासौ स्त्रीपश्चात्कृत एवमन्यावपि इहैकैकयोगे एकत्वबहुत्वाभ्यां षड्विकल्पाः, द्विकयोगे तु त्रिषु द्विकयोगेषु तथैव द्वादश, त्रिकयोगे पुनस्तथैवाष्टावेते च सर्वे षड्विंशति । सूत्रे च चतुर्भङ्गयष्टभङ्गीनां प्रथमं विकल्पा दर्शिताः सर्वान्तिमश्चेति । अथैर्यापथिककर्मबन्धनमेव कालत्रयेण विकल्पयन्नाह ( त भते इत्यादि) तदैर्यापथिककर्मबन्धी बद्धवान् बध्नाति भन्त्स्यति चेत्येको विकल्प ! एवमन्ये ऽपि सप्त भङ्गा एषां च स्थापना उत्तरत्तु ( भवेत्यादि ) भवे अनेकत्रोपशमादिश्रेणिप्राप्त्या आकर्षः ऐर्यापथिककर्माणुग्रहणं भवाकर्षस्तं प्रतीत्य अस्त्येको भवत्येकः कश्चिज्जीवः प्रथमवैकल्पिकः । तथाहि पूर्वभवे उपशान्तमोहत्वे सत्यैर्यापथिकं कर्म बद्धवान् वर्तमानभवे चोपशान्तमोहत्वे बध्नाति अनागते च उपशान्तमोहावस्थायां भन्त्स्यति । १ । द्वितीयस्तु य पूर्वस्मिन् भवे उपशान्तमोहत्वं लब्धवान् वर्तमाने च क्षीणमोहत्व प्राप्तः स पूर्वं बद्धवान् वर्तमाने च बध्नाति शैलेश्यवस्थायां पुनर्न भन्त्स्यति ।२। तृतीयः पूर्वजन्मनि उपशान्तमोहत्वे बद्धवान् तत्प्रतिपतितो न बध्नाति अनागते च मोहावस्थायां भन्त्स्यति । ३ । चतुर्थस्तु शैलेशीपूर्वकाले बद्धवान् शैलेश्यां च न बध्नाति न च पुनर्भन्त्स्यति । ४ । पञ्चमस्तु पूर्वजन्मनि नोपशान्तमोहत्वं लब्धवानिति न बद्धवान् अधुना लब्धमिति बध्नाति पुनरप्येष्यत्काले उपशान्तमोहाद्यवस्थायां भन्त्स्यतीति ।५। षष्ठ पुनः क्षीणमोहत्वादि न लब्धवान् न पूर्वं बद्धवान् । अधुना तु क्षीणमोहत्वं लब्धमिति बध्नाति शैलेश्यवस्थायां पुनर्न भन्त्स्यतीति । ६ । सप्तमः पुनर्भव्यस्य,स हि अनादौ काले न बद्धवान्

अधुनापि कश्चिन्न बध्नाति कालान्तरे तु भन्त्स्यतीति । ७ । अष्टमस्त्वभव्यस्य स तु प्रतीत एव । ( गहणागरिसमित्यादि ) एकस्मिन्नेव भवे ऐर्यापथिककर्मपुद्गलानां ग्रहणरूपो य आकर्षो ऽसौ ग्रहणाकर्षस्त प्रतीत्यास्त्येकः कश्चिज्जीवः प्रथमवैकल्पिकः । तथाहि-उपशान्तमोहादिर्यदैर्यापथिक कर्म बध्नाति तदातीतसमयापेक्षया बद्धवान् वर्तमानसमयापेक्षया च बध्नाति अनागतसमयापेक्षया तु भन्त्स्यतीति। १ । द्वितीयस्तु केवली स ह्यतीतकाले बद्धवान् वर्तमाने च बध्नाति शैलेश्यवस्थायां पुनर्न भन्त्स्यतीति। २। तृतीयस्तु उपशान्तमोहत्वे बद्धवांस्तत्प्रतिपतितस्तु न बध्नाति पुनस्तत्रैव भवे उपशमश्रेणिप्रतिपन्नो भन्त्स्यतीति एकभवे चोपशमश्रेणी द्विः प्राप्यत एवेति । ३ । चतुर्थः पुनः सयोगित्वे बद्धवान् शैलेश्यवस्थायां न बध्नाति न च भन्त्स्यतीति । ४ । पञ्चमः पुनरायुषः पूर्वभागे उपशान्तमोहत्वादि न बन्धमिति न बद्धवान् अधुना तु बन्धमिति बध्नाति। तदद्धाया एव चैष्यत्समये तु पूर्वे पुनर्भन्त्स्यतीति ।५। षष्ठस्तु नास्त्येव तत्र न बद्धवान् बध्नातीत्यनयोरुपपद्यमानत्वेऽपि न भन्त्स्यतीत्यस्यानुपपद्यमानत्वात्, तथाह्यायुषः पूर्वभागे उपशान्तमोहत्वादि न बन्धमिति न बद्धवांस्तल्लाभसमये च बध्नाति ततोऽनन्तरसमयेषु च भन्त्स्यत्येव न तु न भन्त्स्यति समयमात्रस्य बन्धस्येहाभावात्, यस्तु मोहोपशमनिर्ग्रन्थस्य समयानन्तरमरणेनैर्यापथिककर्मबन्धः समयमात्रो भवति नासौ षष्ठविकल्पहेतुस्तदनन्तरमैर्यापथिककर्मबन्धाभावस्य भवान्तरवर्तित्वात् ग्रहणाकर्षणस्य चेह प्रक्रान्तत्वात्। यदि पुनः सयोगिचरमसमये व ध्नाति ततोऽनन्तरं न भन्त्स्यतीति विवक्ष्येत तदा यत्सयोगिचरमसमये बध्नातीति तद्बन्धपूर्वकमेव स्याद्वाबन्धपूर्वकं तत्पूर्वसमयेषु तस्य बन्धकत्वात् । एवं च द्वितीय एव भङ्गः स्यान्न पुनः षष्ठ इति । ६ । सप्तमः पुनर्भव्यविशेषस्य, अष्टमस्त्वभव्यस्येति । इह च भवाकर्षापेक्षेषु अष्टासु भङ्गकेषु "बंधी बधइ बधिस्सइ" इत्यत्र प्रथमे भङ्गे उपशान्तमोहः । 'बंधी बंधइ न बधिस्सइ' इत्यत्र द्वितीये क्षीणमोहः । 'बंधी न बधइ बधिस्सइ' इत्यत्र तृतीये उपशान्तमोहः । 'बंधी न बधइ न बधिस्सइ' इत्यत्र चतुर्थे शैलेशीगतः । 'न बंधी बधइ बधिस्सइ' इत्यत्र पञ्चमे उपशान्तमोहः ।'न बंधी बधइ न बधिस्सइ' इत्यत्र षष्ठे क्षीणमोहः ।'न बंधी न बधइ बधिस्सइ' इत्यत्र सप्तमे भव्यः । 'न बंधी न बधइ न बधिस्सइ' इत्यत्राष्टमे ऽभव्यः । ग्रहणापेक्षेषु पुनरेतेषु एव प्रथमे उपशान्तमोहः क्षीणमोहो वा, द्वितीये तु केवली, तृतीये उपशान्तमोहः, चतुर्थे शैलेशीगतः, पञ्चमे उपशान्तमोहः क्षीणमोहो वा, षष्ठे शून्यः, सप्तमे भव्यो भाविमोहोपशमो भाविमोहक्षयो वा, अष्टमे त्वभव्य इति अथैर्यापथिकबन्धमेव निरूपयन्नाह "तमित्यादि" तदैर्यापथिकं कर्म साइयं सपज्जवसियमित्यादिचतुर्भङ्गी,तत्र चैर्यापथिककर्मणः प्रथम एव भङ्गो बन्धोऽन्येषु तदसम्भवादिति, भ० ८ श० ८ उ० ।

**इरियावहिया**-ईर्यापथिका-स्त्री०- ईरणमीर्य्यागमनमित्यर्थे पथि जाता पथिका ईर्य्या चासौ पथिका च ईर्यापथिकेति । गमनप्रधानमार्गोत्पन्ने, आ० चू० ४ अ० ।

ऐर्य्यापथिकी-स्त्री० ईरणमीर्य्या गमनं तद्विशिष्टस्तत्प्रधानो वा पन्था ईर्यापथस्तत्र भवा ऐर्यापथिकी । स्था० २ ठा० । आव० ४ अ० । व्युत्पत्तिमात्रमिदं प्रवृत्तिनिमित्तं तु यः केवलयोगप्रत्ययः उपशान्तमोहादित्रयस्य सातवेदनीयकर्मबन्धः सा ईर्यापथिकी। प्रव० १२१ द्वा० । क्रियाभेदे-,

अजीवकिरिया दुविहा पएणत्ता तंजहा इरिआवहिआ चेव संपराइया चेव ।

यत्केवलयोगप्रत्ययमुपशान्तमोहादित्रयस्य सातवेदनीयकर्मतया जीवस्य पुद्गलराशेर्भवनं सा ऐर्यापथिकी क्रिया। इह जीवव्यापारेऽप्यजीवप्रधानत्वविवक्षया जीवक्रियेयमुक्ता कर्मविशेषावैर्यापथिकी क्रियोच्यते यतोऽभिहितम् "इरियावहिया किरिया दुविहा बज्झमाणा वेइज्जमाणा य जा पढमसमये बद्धा, बीयसमये वेइया सा बद्धा पुट्ठा वेइया णिज्जिता से य काले अकम्म वा वि भवइत्ति । स्था० २ ठा० ।

तत्स्वरूपं यथा—

एसाउ लोअवत्ती, इरिआवहिअं अओ पचक्खामि ।
इह खलु अणगारस्स, समिई गुत्तीसु गुत्तस्स ॥६०॥
सययं तु अप्पमत्तस्स, भावओ जाव चक्खुपम्हंपि ।
निवयइ ता सुहुमा हु, इरिआवहिआ किरिअ एसा ॥६१॥

इह खल्वनगारस्य साधोः समितिषु ईर्यासमित्यादिषु मनोगुप्त्यादिषु गुप्तस्य संवृतस्य सततमेवाप्रमत्तस्य उपशान्तमोहक्षीणमोहसयोगिकेवलिलक्षणस्थानकत्रयवर्तिनः । अन्येषां तु अप्रमत्तानामपि कषायप्रत्ययकर्मबन्धसद्भावेन केवलयोगनिमित्तकर्मबन्धोदयसंभवाभावात्प्रमत्तशब्देनात्रग्रहणं भगवतः पुन्यस्य यावच्चक्षुः पक्ष्मापि निपतति स्यन्दते इदं च योगस्योपलक्षणं ततोऽयमर्थो यावच्चक्षुर्निमेषोन्मेषमात्रोऽपि योगः सम्भवति तावत्सूक्ष्मा एकसामयिकबन्धत्वेनात्यल्पा सातबन्धलक्षणा क्रिया भवति । एषा हु स्फुटमैर्यापथिकीक्रिया त्रयोदशीति । प्रव० १२१ द्वा० ।आव०;

विस्तरेण तस्याः स्वरूपं सा कस्य भवति किंभूता वा क्लिष्टकर्मफला वा इत्येतद्दर्शयितुमाह—

अहावरे तेरसमे किरियाट्ठाणे इरियावहिएति आहिज्जइ इह खलु अत्तत्ताए संवुडस्स अणगारस्स इरियासमियस्स भासासमियस्स एसणासमियस्स आयाणभंडमत्तणिक्खेवणासमियस्स उच्चारपासवणखेलसिंघाणजल्लपारिट्ठावणियासमियस्स मणसमियस्स वयसमियस्स कायसमियस्स मणगुत्तस्स वयगुत्तस्स कायगुत्तस्स गुत्तिंदियस्स गुत्तबंभयारिस्स आउत्तं गच्छमाणस्स आउत्तं चिट्ठमाणस्स आउत्तं णिसियमाणस्स आउत्तं तुयट्टमाणस्स आउत्तं भुज्जमाणस्स आउत्तं भासमाणस्स आउत्तं वत्थं पडिग्गहं कंबलं पायपुंछणं गिएहमाणस्स वा णिक्खिवमाणस्स वा जाव चक्खुपम्हणि वा यमवि अत्थिविमाया सुहुमा किरिया इरियावहिया नाम कज्जइ सा पढमसमए बद्धा पुट्ठा बितीअसमए वेइया तइय समए णिज्जिता सा बद्धा पुट्ठा उदीरिया वेइया णिज्जिता सेयंकाले अकम्मयावि भवंति एवं खलु तस्स तप्पत्तियं सा वज्जति आहिज्जइ तेरसमे किरियाट्ठाणे इरियावहिएति आहिज्जइ ॥ से बेमि जे य अतीता जे य पडुपन्ना जे य आगमिस्सा अरिहंता भगवंता सव्वे ते एयाइ-

चेव तेरसकिरियाट्ठाणाइं भासिंसु वा भासेंति वा भासिस्सं-
ति वा पन्नविंसु वा पन्नविंति वा पन्नविस्संति वा एवं चेव तेर-
समं किरियाट्ठाणं सेविंसु वा सेविंति वा सेविस्संति वा॥१३॥

इह जगति प्रवचने संयमे वा वर्तमानस्य । खलु शब्दो ऽवधारणे ऽलंकारे वा । आत्मनो भावः आत्मत्वं तदर्थमात्मत्वार्थं संवृतस्य मनोवाक्कायैः परमार्थत एवंभूतस्यैवात्मभावोऽपरस्य त्वसंवृतस्यात्मतत्वमेव नास्ति सद्भूतात्मकार्यकारणात् । तदेवमात्मार्थं संवृतस्यानगारस्येर्य्यापथिकादिभिः पञ्चभिः समितिभिर्मनोवाक्कायैः समितस्य तथा तिसृभिर्गुप्तस्य पुनर्गुप्तिग्रहणमेताभिरेव गुप्तिभिर्गुप्तो भवतीत्यस्यार्थस्याविर्भावनायात्यादरख्यापनार्थं वेति । तथा गुप्तेन्द्रियस्य नवब्रह्मचर्यगुप्त्युपेतब्रह्मचारिणश्च सततस्तथोपयुक्त गच्छतस्तिष्ठतो निषीदतो मुनेस्त्वग्वर्त्तनां कुर्वाणस्य तथोपयुक्तमेव वस्त्रं पतद्ग्रहं कम्बलं वा पादपुञ्छनकं वा गृह्णतो निक्षिपतो वा यावच्चक्षुःपक्ष्मनिपातमप्युपयुक्त कुर्वत सतोऽत्यन्तमुपयुक्तस्याप्यस्ति विद्यते । विविधामात्राविमात्रा तदेवविधा सूक्ष्माक्षिपक्ष्मसचलनरूपादिकेर्यापथिका नाम क्रिया केवलिनापि क्रियते । तथाहि । सयोगिजीवो न शक्नोति क्षणमप्येकं निश्चलः स्थातुमग्निना ताप्यमानोदकवत्कार्मणशरीरानुगत सदा परिवर्तयन्नेवास्ते । तथाचोक्त "केवलीण भंते! अस्सि समयसि जेसु आगासपएसेसु" इत्यादि तदेव केवलिनोऽपि सूक्ष्मगात्रसंचारा भवन्तीह च कारणे कार्योपचारात्तया क्रियया यद्बध्यते कर्म तस्य कर्मणो या अवस्थास्ताः क्रियाः ता एव दर्शयितुमाह । ( सापढमसमये इत्यादि ) या सावकापायिण क्रिया तया यद्बध्यते कर्म तत्प्रथमसमय एव बद्धं स्पृष्टं चेति कृत्वा तत्क्रियैव बद्धस्पृष्टेत्युक्ता तथा द्वितीयसमये वेदितेत्यनुभूता तृतीयसमयेऽतिजीर्णा । एतदुक्तं भवति । कर्मयोगनिमित्त बध्यते तत्स्थितिश्च कषायायत्ता तदभावाच्च न तस्य सांपरायिकस्येव स्थिति किंतु योगसद्भावाद्बध्यमानमेव स्पृष्टतां सम्श्लेषं याति । द्वितीयसमये त्वनुभूयते तच्च प्रकृतितः सातावेदनीय स्थितितो द्विसमयस्थितिकमनुभावतः शुभानुभावमनुत्तरोपपातिकदेवसुखातिशायि देशतो बहुप्रदेशमस्थिरबन्ध बहुव्यय च । तदेवं सेर्यापथिका क्रिया । प्रथमसमये बद्धस्पृष्टा द्वितीयसमये उदिता वेदिताऽतिजीर्णा भवति ( सेयकालेत्ति ) आगामिनि तृतीयसमये तत्कर्मापेक्षया कर्मतापि च भवति । एवं तावद्वीतरागस्येर्याप्रत्ययिक कर्माश्रीयते भवत्यते । तदेतत्त्रयोदश क्रियास्थान व्याख्यातम् । ये पुनस्तेभ्योऽन्ये प्राणिनस्तेषां सांपरायिको बन्धस्ते तु यानि प्रागुक्तानीर्यापथवर्ज्यानि द्वादश क्रियास्थानानि तेषु वर्त्तन्ते तेषां तद्वर्तिनामसुमतां मिथ्यात्वाविरतिप्रमादकषाययोगनिमित्तः सांपरायिको बन्धो भवति । तत्र च प्रमादस्तत्र कषाया योगाश्च नियमाद्भवन्ति । कषायिणश्च योगा योगिनस्त्वेते भाज्याः । तत्र प्रमादकषायप्रत्ययिको बन्धोऽनेकप्रकारा स्थिति । तद्रहितस्तु केवलयोगप्रत्ययिको द्विसमयस्थितिरेवेर्याप्रत्ययिक इति स्थितम् ॥ सूत्र० २ श्रु० २ अ० । स० । आव० । आ० चू० । ( चतुर्विंशतिदण्डकऽस्या वक्तव्यता किरियाशब्दे ) ऐर्यापथिकयाः प्रतिक्रमणावश्यकता यथा ईर्यापथ प्रथमप्रतिक्रमणं कृत्वा न किञ्चिदन्यत् कुर्याच्चदशुद्धतापत्तेरिति । दश० चूलि० २ ।

तथा च महानिशीथे—

गोयमा णं अप्पडिक्कंताए इरियावहियाए न कप्पइ चेव काउं किंचि चिइवंदणा भायाइयं फलासायमभिकंखुगाणं एएणं अट्ठेणं गोयमा ! एवं वुच्चइ जहाणं गोयमा ! समुत्तत्थोभयपंचमंगलथिरपरिचयं काऊणं तओ इरियावहियं अज्झीए से भयवं कय एए विहिए तमिरियावहीए महीए गोयमा ! जहा णं पंचमंगलमहसुयं खंधे से भयवमिरियावहियमहिज्जित्ताणं । महा० १ अ० ।

एतस्याः प्रतिक्रमण स्वरूपञ्च यथा—

इच्छामि पडिक्कमिउं इरियावहियाए । विराहणाए गमणागमणे । पाणक्कमणे बीयक्कमणे हरियक्कमणे । ओसाउत्तिंगपणगदगमट्टीमक्कडासंताणासंकमणे जेमे जीवा विराहिया एगिंदिया बेइंदिया तेइंदिया चउरिंदिया पंचेंदिया अभिहया वत्तिया लेसिया । संघाइया संघट्टिया परियाविया किलामिया उद्दविया ठाणओ ठाण संकामिया जीवियाओ ववरोविया तस्स मिच्छामि दुक्कडं ।

इच्छाम्यभिलषामि प्रतिक्रमितुं निवर्त्तयितुमीर्यापथिकायां विराधनायां योऽतिचार इति गम्यते । तस्येति योगः अनेन क्रियाकालमाह 'मिच्छामि दुक्कडंति' अनेन तु निष्ठाकालमिति तत्रेरणमीर्य्या गमनमित्यर्थः तत्प्रधानः पन्था ईर्यापथः तत्र भवा ईर्यापथिका तथा किंविशिष्टायामित्यत आह । विराध्यन्ते दुःखं स्थाप्यन्ते प्राणिनोऽनयेति विराधना क्रिया तस्यां विराधनायां तस्या योऽतिचार इति वाक्यशेषस्तस्येति योगः विषयमुपदर्शयन्नाह गमनं चागमनं चेत्येकवद्भावस्तस्मिंस्तत्र गमनं स्वाध्यायादिनिमित्त वसतिरिति आगमन प्रयोजनपरिसमाप्तौ पुनर्वसतिमेवेति तत्रापि यः कथ जातोतिचार इत्यत आह । 'पाणक्कमणे, प्राणिनो द्वीन्द्रियादयस्त्रयो गृह्यन्ते तेषामाक्रमण पादेन क्षोदनं प्राण्याक्रमण तस्मिन्निति तथा बीजाक्रमणे अनेन बीजानां जीवत्वमाह-हरिताक्रमणे अनेन तु सकलवनस्पतिरेव तथा अवश्यायोत्तिङ्गपनकदगमृत्तिकामर्कटसंतानसंक्रमणे सति तत्रावश्यायोजलविशेषः इह चावश्यायग्रहणमिति स यत शेषजलसंभोगपरिहरणार्थमित्येवमन्यत्रापि भावनीयम् उत्तिंगा गर्दभाकृतयो ये जीवाः कीटिका नगराणि वा पनक उल्लि दगमृत्तिका चिखल्लः अथवा दगग्रहणादप्कायः मृत्तिकाग्रहणात्पृथिवीकाय मर्कटसंतानं कोलिकाजालमुच्यते ततश्चावश्यायश्चोत्तिङ्गाश्चेत्यादिद्वन्द्वः अवश्यायोत्तिङ्गपनकदगमृत्तिकामर्कटसंतानास्तेषां संक्रमणमाक्रमणं तस्मिन्किंबहुना कियन्तो भेदेनाख्यास्यन्ते सर्वे ये मया जीवा विराधिता दुःखेन स्थापिता एकेन्द्रिया पृथिव्यादयः द्वीन्द्रियाः कृम्यादयः त्रीन्द्रियाः पिपीलिकादयश्चतुरिन्द्रिया भ्रमरादयः पञ्चेन्द्रिया मूषिकादय अभिहता अभिमुख्येन हताश्चरणेन घट्टिताः उत्क्षिप्य विक्षिप्ता वा वर्त्तिताः पुञ्जीकृता धूल्या वा स्थिता इति श्लेषिताः श्लिष्टा भूरित्यादिषु वा लगिताः संघातिताः अन्योन्य गात्रैरेकत्र लगिता संघट्टित मनाक् स्पृष्टाः परितापिता समन्ततः पीडिताः क्लामिता समुद्घात नीताः ग्लानिमापादिता इत्यर्थः । अपद्राविता उत्त्रासिता स्थानात्स्थान संक्रामिताः स्वस्थानात्परस्थानं नीता जीविताद्व्यपरोपिता मारिता इत्यर्थ एव यो जातोतिचारः तस्यत्येतावता क्रियाकालमाह । तस्स मिच्छामि दुक्कडमनेन निष्ठाकालमाह मिथ्यादुष्कृतं पूर्ववदेव तस्येत्युभयत्र

योजना सर्वत्र कार्य्या । आव० ४ अ० । इच्छामि पडिक्कमितु तिपुव्वभणित एस संखेवत्थो इरियावहियाए" विस्तरस्तु ग-मणेत्यादि । आ० चू० ४ अ० ।

ननु द्वयोः श्राद्धयोः प्रतिक्रमणकरणसमयेऽथवा सामायिके कृते सति एकस्य हस्तादपरेण चरवलके पातिते उभयोर्मध्ये क-स्येर्यापथिकी समायाति किमुभावपि प्रतिक्रामत एको वेति । (उत्तरम्)अत्र द्वयोः श्राद्धयोः प्रतिक्रमणकरणादौ सावधान-तयैकेन चरवलको गृहितो भवति अथ यदि द्वितीयहस्तलगने-न हेतुना पतति तदा तस्येर्य्यापथिकी समायाति यदि च गृहीतो प्यसावधानतयेव तदोभयोरपीर्य्यापथिकी समायातीति । १ । तथा यः शुद्धक्रियां कुर्वाणः शुद्धाचारं च पालयन् ईर्यापथिकी मागतां न जानाति स कियद्भिर्मुहूर्तैस्तां प्रतिक्रामतीति (उत्तरम्) अत्र शुद्धक्रियायां क्रियमाणायां सोपयोगतया प्रमार्जनादिविधि-नोपवेशनादिषु ईर्यापथिकी नायाति यतस्तामाश्रित्य काल-मानमुक्तं ज्ञातं नास्ति तथापि क्रियान्तरे क्रियमाणे ईर्यापथि-की प्रतिक्राम्यते यतो महत्यां वेलायां मनोवचः कायोपयोगा-नां सम्यगवबोधो न भवतीति ॥२॥ ईर्य्या गमनं तस्याः पन्था मार्ग ईर्य्यापथ स्तत्र भवा या समितिः ईर्य्यासमितिलक्षणा सा ऐर्य्यापथिकी । समितिभेदे, स्था० ८ ठा० । (तद्वक्तव्यता इरि यासमिइ शब्दे । ऐर्य्यापथिक्यापरिमन्थुः कप्प शब्दे । उच्चा-रादौ ईर्याप्रतिक्रान्तव्या इति पडिक्कमण शब्दे )

इरियासमिइ–ईर्य्यासमिति–स्त्री० सम्यगितिः प्रवृत्तिः समितिः ईर्य्यायां गमने, समितिश्चकुर्य्यापारपूर्वतयेतीर्य्यासमितिः । समितिभेदे, । स्था०८ ठा० । आव० । पा० । सम० । प्रश्न० । तत्स्वरूप धर्मसंग्रहे यथा- त्रसस्थावरजन्तुजाताभयदान-दीक्षितस्य मुनेरावश्यके प्रयोजने गच्छतो जन्तुरक्षानिमित्त स्वशरीररक्षानिमित्त च पादाग्रादारभ्य युगमात्रक्षेत्र यावन्नि-रीक्ष्य ईरण ईर्या गतिस्तस्यां समितिरीर्यासमितिर्यदाहु "पु-रओ जुगमायाए, पेहमाणो महिं चरे । वज्जतो बीअहरिआइ, पाणे अ दगमट्टिअं ॥ १ ॥ उवाय विसम खाणु, विज्जल परिव-ज्जए । सकमेण न गच्छेज्जा, विज्जमाणे परक्कमे" २ एवविधोप-योगेन गच्छतो यते कथंचित्प्राणिवधोऽपि प्राणिवधपापं न भवति यदाह "उच्चालिअम्मि पाए, इरिआसमिअस्स संकम-ट्ठाए । वा वज्जिज्जकुलिंगी मारेज्ज तज्जोगपासज्ज ॥ १ ॥ न-य तस्स तन्निमित्तो, बन्धुहुमो विदेसिओ समए । यज्जोवओगे, सव्वभावेण सो जम्हा २ तथा " जिअदुवमरउवजीवो, अज-दारस्स निच्छओ हिंसा । पयदस्स णत्थिवधो,हिंसा मित्तेण स-मिदस्स,, । ध० ३ अधि० । प्रव० । जीवसरक्खण जुगमेत्ततर-दिट्ठस्स अप्पमादिणो सजमो व करणुप्पायणाणिमित्तं जा ग मणकिरिया सा इरियासमिती । नि० चू० १ उ० । ईर्य्यासमि-तिर्नाम रथशकटयान वाहनाक्रान्तेपु सूर्यरश्मिप्रतापितेपु प्रासु-कविविक्तेपु पथिपु युगमात्रदृष्टिना भूत्वा गमनागमन कर्त्तव्य-मिति । आव० ४ अ० । ईर्य्यासमितेर्विस्तरेण स्वरूपमाह ।

आलंबणेण काले, मग्गेण जयणाए य ।
चउकारणपरिसुद्धं, संजए इरियं रिए ।

आलम्बनेन कालेन मार्गेण यतनया च चतु कारणैरेभिरेव आलम्बनादिभि परिशुद्धा निर्दोषा चतु कारणपरिशुद्धा तां सयतो यतिरीर्यागति ( रिएज्ज ) रीयेतानुष्ठानविषयतया प्राप्नुयात् यद्वा सुव्यत्ययाच्चतु कारणपरिशुद्धया ईर्य्यारीयेत गच्छेत् आलम्बनादीन्येव व्याख्यातुमाह–

तत्थालंवणं णाण–दंसणं चरणं तहा ।
काले य दिवसे वुत्ते, मग्गाउप्पहविवज्जए ॥

वज्जए तत्र तेष्वालम्बनादिषु मध्ये आलम्बन यदालम्ब्य गम-नमनुज्ञायते निरालम्बनस्य हि नानुज्ञातमेव गमन ततः किमि-त्याह–ज्ञान सूत्रार्थोभयात्मकागमरूपं दर्शन दर्शनप्रयोजन चरण चारित्र तथा शब्दोऽनुक्तसमुच्चयार्थत्वेन द्वित्वादिभङ्ग-सूचकस्ततोयमर्थः प्रत्येकं ज्ञानादीन्याश्रित्य द्विकादिसंयो-गेन वा गमनमनुज्ञातमालम्बनेनेति व्याचष्टे कालश्च प्रस्तावा-दीर्यया दिवस उक्तस्तीर्थकृदादिभिरिति गम्यते रात्रौ ह्यच-क्षुर्विषयत्वेन पुष्टतरालम्बन विना नानुज्ञातमेव गमनं मार्गे-णेति द्वार व्याख्यातुमाह मार्ग इह सामान्येन पन्थाः स उत्पथे-नोन्मार्गेण वर्जितो रहितः उत्पथवर्जितः उक्तसवन्धः उत्पथेहि व्रजत आत्मसयमविराधनादयो दोषाः। यतनेति द्वार बुवूर्षुराह।

दव्वओ खेत्तओ चेव, कालओ भावओ तहा ।
जयणा चउव्विहा वुत्ता, तं मेवि तयओ सुण ।'

( दव्वओ इत्यादि ) सुगममेव नवर तामिति चतुर्विधयतनां मे कीर्तयतः सम्यक् प्ररूपाभिधानद्वारेण सशब्दयतः शृणवा कर्णय शिष्येति गम्यते । यथा प्रतिज्ञातमेवाह–

दव्वओ चक्खुणा पेहे, जुगमेत्तं च खेत्तओ ।
कालओ जाव रीएज्जा, उवउत्ते व भावओ ॥

द्रव्यत इति जीवादिकद्रव्यमाश्रित्येय यतना यच्चक्षुषा दृष्ट्या प्रेक्षेतावलोकयेत्प्रक्रमात् जीवादिक द्रव्यमवलोक्यं च सय मात्मविराधना परिहारेण गच्छेदिति भावो युगमात्र च चतु-र्हस्तप्रमाण प्रस्तावात्क्षेत्र प्रेक्षेत इय क्षेत्रतो यतना कालतो यतना यावत् (रीएज्जत्ति) रीयते यावन्त कालं पर्यटति तावत् कालमिति गम्यते उपयुक्तश्च भावतो दत्तावधानो यद्री यते इय भावमङ्गीकृत्य यतना । उपयुक्तत्वमेव स्पष्टयितुमाह ।

इंदियत्थे विवज्जित्ता, सज्झायं च पंचहा ।
तम्मुत्ती तप्पुरक्कारे, उवउत्तो रियं रए ॥

इन्द्रियार्थान् शब्दादीन् विवर्ज्य तदनाध्यवसानत परिहृ-त्य स्वाध्यायं चैव चः समुच्चये एवकारोऽपि शब्दार्थस्ततो यमर्थान् केवलमिन्द्रियार्थान् विवर्ज्य किंतु स्वाध्यायं चापि पञ्चधेति वाचनादिभेदत पञ्चप्रकार गत्युपयोगापघातित्वा-त्ततश्च तस्यामेव ईर्यायां मूर्ति शरीरमर्थाद् व्याप्रियमाणा यस्याऽसौ तन्मूर्त्तिस्तथा तामेव पुरस्करोति तथैवोपयुक्ततया प्राधान्येनाङ्गीकुरुते इति तत्पुरस्कारोऽनेन कायमनसोस्तत्प-रतोक्ता वचसो हि तत्र व्यापार एव न समस्ति एवमुपयुक्तः सन्नीर्यां रीयेत यतिरिति शेषः । सर्वत्र च सयमात्मविराधनैव विपक्षे दोष इति सूत्रपञ्चकार्थः । उत्त० ४ अ० ।

ईर्य्यासमितौ उदाहरण यथा–एको साहू समणगुणभाविओ इरियासमिइए जुत्तो विहरइ । एत्थन्तरे सक्कआसण चलियं । पउत्तावही साहु दट्ठु परमभत्तीए वंदइ पससइ य देवस-भामज्झगओ तओ मिच्छद्दिट्ठी एगो देवो असद्दहतो समागओ साहुस्स, वियारभूमिं पइट्ठियस्स पुरओ मच्छियप्पमाणाओ मण्डुक्कलियाओ विउव्वइ । पच्छओ य मत्तहत्थि तहा वि गइ न भिंदइ । तओ हत्थिणा उक्खिविऊण भूमिए पाडियो न य सो भय च न य सरीर गणेइ । किं तु सत्ता मे मारियत्ति । जी वदयापरिणओ अत्थइ । स देवोवि अचालिय तं साहुं पेहत्त ईदक्खुत्त तं निवेयत्ता देवलोग गओत्ति" पा० । "अहवाऽऽर

हणओ समितो असमितो देवताए पादो छिण्णो असुए संधितो इत्यधिकम् " आ० चू० ४ अ०। ( अस्या प्रवचनमातृत्वम् पवयणमायाशब्दे) (ईर्यासमितौ अनाभोगप्रतिषेवणं भवतीति पडिसेवणाशब्दे) (ईर्यासमिते परिमन्थत्व' कप्प शब्दे )

इरियासमिइजोग–ईर्यासमितियोग–पुं० ईर्यासमितिव्यापारे, "जे एवं इरियासमिइजोगेण भाविओ भवति अंतरप्पा" इति" प्रश्न० १ द्वा०।

इरियासमिय–ईर्यासमित–पुं० ईरणं गमनमीर्या तस्यां समितः ( सम्यक्प्रवृत्त प्र० २ श० १ उ० ) (उपयुक्त' । प्रव० ७२ द्वि०) इत्यावश्यक ईर्यासमित । पुरतो युगमात्रभूभागन्यस्तदृष्टिगामिनि, आचा० २ श्रु० ३ अ०। आव० " इरियासमिए सया जये' ईरणमीर्या गमन तस्यां समित सम्यकप्राप्त ईर्यासमित• ईर्यासमितता प्रथमभावना यतोऽसमित• प्राणिनोहिंस्यात् सदाऽतो यत्त• सर्वकालमुपयुक्त इति । आव० ४ अ० प्रव०। ( ईर्यासमितस्य विस्तरेण वक्तव्यता इरियासमिइ शब्दे ) ( ईर्यासमितस्य प्राणातिपातविरमणव्रतस्य प्रथम भावना भवतीति पाणाइवायवेरमण शब्दे-भावनाशब्दे च द्रष्टव्यम् )

इला–इला–स्त्री० इल्-क-भूमौ, वाच०। जम्बूद्वीपान्तर्गते वर्षभेदे, आ० क०। इलावर्धनगरस्यायां स्वनामख्यातायां देवतायाम्। आ० म० द्वि०। आ० चू० (तत्कथा इलापुत्त शब्दे ) पश्चिमरुचकवास्तव्ये दिक्कुमारीभेदे च । ति०।

इलाकूड–इलाकूट–न० क्षुल्लहिमवद्वर्षधरपर्वतस्ये इलादेव्यधिष्ठिते कूटभेदे, । स्था० ४ ठा०।

इलादेवी–इलादेवी–स्त्री० पश्चिमरुचकवास्तव्ये दिक्कुमारी भेदे, आ० क०। जं०। आ० म० प्र०। स्था०।

इलादेवीकूड–इलादेवीकूट– न० क्षुल्लहिमवद्वर्षधरपर्वतस्ये इलादेव्यधिष्ठिते कूटभेदे, जं० २ वक्ष०।

इलापुत्त–इलापुत्र–पुं० इलावर्द्धनपुरस्थे इलादेवी प्रसादाज्जाते स्वनामख्याते श्रेष्ठिसुते, तत्कथा यथा।

एकस्मिन् कुत्रचिद्ग्रामे श्रुत्वा धर्मं गुरो पुर ।
द्विज एक' सपत्नीक परिव्रज्यामुपाददे । १ ।
तप्यते स्म तपस्तीव्र प्रीतिर्नागात्परं मिथ' ।
धिग्जेति स्त्रीयूहस्ततद्भाविचिकित्सा न्यधात्पुनः । २ ।
मृत्वा तौ जग्मतु स्वर्गं तत्र सौख्येन तिष्ठत ।
इतश्च भरतेऽमुष्मिन्निलामण्डलमण्डनम् । ३ ।
इलावर्धननाम्नास्ति पुरं प्रस्पर्धितं परैः ।
सत्योपयाचिता तस्मिन्निलानाम्न्यस्ति देवता । ४ ।
एका च श्रेष्ठिनी तत्र सिषेवे तां सुतार्थिनी ।
स च द्विजामर स्वर्गाच्च्युत्वा तस्या सुतोऽभवत् । ५ ।
तस्येलापुत्र इत्याख्या चक्रेऽत्युत्सवपूर्वकम् ।
स्त्रीजीवो विचिकित्सात सजज्ञे मंखपुत्रिका । ६ ।
प्राप्तौ स्मरकरिक्रीडावन चापि यौवनम् ।
नृत्यन्ती मन्यपुत्री ना-मिलापुत्रोऽन्यदैक्षत । ७ ।
प्राग्भवप्राग्भवप्रेमानुरागस्तस्य तां प्रति ।
नैव तस्य दत्तुमन्ने तां सुवर्णेनापि तोलिताम् । ८ ।
अक्षयो निधिरस्माकमियं नेमां ददामहे ।
यदि न सहचारी स्यादस्माभिश्च शिक्षते । ९ ॥
तदेनामेव अभन्ते भूयसापि धने न च ।
मुक्त्वा कुटुम्बं तत्कामस्तेषां सोथानुगोऽभवत् । १० ।
शिक्षित सोथ तद्विद्यां विवाहायाजितु धनम् ।
वेन्नानटपुरे गत्वा ययाचेऽवसर नृप ॥ ११ ॥
इलापुत्रस्य नाट्यस्या ऽवसरोऽदायि भूभुजा ।
स्वयं शान्त पुर सोय पौरा सर्वेपि चाविशन् ॥ १२ ॥
न्यस्तस्तत्र महान् वंश फलक तस्य चोपरि ।
न्यस्तौ द्वौ द्वौ तथा लोहकीलकौ फलकान्तयो. ॥ १३ ॥
तस्योपरि ननर्तोच्चैरिलापुत्रो धनाशया ।
धनिनां द्वारि सौवर्ण-यष्ट्यां क्रीडन् मयूरवत् ॥ १४ ॥
अधस्तान्मंखपुत्र्या च गायकीवृन्दयुक्तया ।
गीतं गीत रसस्फीतं प्रीत सामाजिकैर्यतः ॥ १५ ॥
सच्छिद्रपादुकापाद' करोपात्तासिखेटकः ।
उत्पत्योत्पत्य गगने ददान• किरणानि स• ॥ १६ ॥
अप्रमत्त• सप्तसप्तपुरः पश्चान्मुखानि च ।
फलकप्रान्तकीलेषु प्रवेशयति पादुके ॥ १७ ॥
एवं कृते भवल्लोकः सर्वः सर्वस्वदानधी• ।
राज्ञा दत्ते पर त्यागे प्राक् पश्चाद्ददते परे ॥ १८ ॥
नस्यां रक्तो नृपस्तानि भूयो भूयोऽप्यदापयत् ।
तन्मृत्युमीहते राजा स पुनर्धनमीहते ॥ १९ ॥
ज्ञात तेनाप्यथ यथा नस्या राजापि रागवान् ।
स च तत्र स्थितो दृष्ट्वा निकटे श्रेष्ठिनो गृहे ॥ २० ॥
युवती• सादरं साधु प्रतिलाभनतत्परा• ।
साधुदृष्टि पुनर्भक्त-शुद्धौ तासां न वीक्षणे ॥ २१ ॥
दध्यौ निर्विषया ह्येते धिग्मां विषयरागिणम् ।
तदेवं भावयन् प्राप ज्ञान तत्रैव केवलम् ॥ २२ ॥
राज्ञोऽप्यचिन्तितध्यानात्तल्लेभे महपुत्र्यपि ।
पट्टराज्ञ्यपि तत्तद्भावयन्ती समासदत् ॥ २३ ॥
श्रुत्वापरागं स्वं लोकाद् ध्यात्वा दुश्चिन्तित च तत् ।
विरक्तो भावनासक्त प्राप भूपोऽपि केवलम् ॥ २४ ॥
चतुर्णां केवलोत्पत्तौ तत्रेयुर्व्यन्तरामरा ।
साधुवेष ददुस्तेषां वर्गं स्वर्णोत्पल व्यधु ॥ २५ ॥
आख्यद्धर्ममिलापुत्र प्रत्यबुध्यत्ततो जन ।
सम्यक्त्वाभिग्रहादीनां कोपि किंचित्प्रपन्नवान् ॥ २६ ॥
आ० क०। आ० चू०। आ० म० द्वि०। विशे०।

इलावइ–इलापति–पुं० ऐलापत्यगोत्रस्य प्रकाशके आद्यपुरुषे, नं०

इलावच्चा–इलापत्या–स्त्री० स्वनामख्यातायां तृतीयरात्रौ, । कल्प०

इलावद्धण–इलावर्द्धन– न० इलापुत्रस्य निवासस्थाने पुरभेदे, इतश्च भरतेऽमुष्मिन्निलामण्डलमण्डनम् । इलावर्द्धननामास्ति पुर प्रस्पर्धितमपरैः । इति०। आ० क०। आ० म०। आ० चू०।

इलिया–इलिका– स्त्री० तृणपत्रनिसृते द्वीन्द्रियजीवविशेषे, । आचा०। द्वीन्द्रियेलिकायाश्चतुरिन्द्रियत्वे हीरप्रश्ने पण्डितविरावर्षिगणिकृतप्रश्नेषु प्रश्नो यथा-द्वीन्द्रियेलिका स्फुटित्वा चतुरिन्द्रियभ्रमरी कथ भवति। उत्तरम्। इलिकाकलेवरमध्ये इलिकाजीवोऽपरो वा भ्रमरीत्वेनागत्योत्पद्यत इति। ही०।

इलियागइ–इलिकागति–स्त्री० इलिकाया इव गतिरिलिकागति परलोकगमनार्थे गतिविशेषे, तस्या स्वरूप यथा-"इलिका पुच्छदेशमपरित्यज्य स्वमुखेनाग्रेतन स्थान शरीरप्रसारणेन संस्पृश्य तत तया पुच्छे सहरति एव जीवोपि कश्चित्स्वभवान्तकाले स्वप्रदेशैरुत्पत्तिस्थानं संस्पृश्य परभवायु प्रथमसमये शरीर परित्यजति। पं० सं० २ द्वा०।

इल्ल—इल्ल—मतुवर्थके प्रत्यये, "मतुवत्थ च मुणेज्जह आले इल्लचण च मतुव च इति " प० स० ३ द्वा० । आव० ।

इल्ली—देशी० शार्दूले, सिंहे, वर्षत्राणे च । दे० ना० ।

इल्लीर—देशी०गृहद्वयाम्, वृष्टिवारणे गृहद्वारे च, दे० ना० ।

इल्लो—देशी०दरिद्रे, कोमले, प्रतीहारे, लवित्रे, कृष्णवर्णे च दे०ना०

इव—इव— अव्य० सादृश्ये, उत्प्रेक्षायाम्, न० । ईषदर्थे वाक्यालङ्कारद्योतकता चास्य तत्र उपमायामिवेन नित्यसमासो विभक्त्यलोपश्चेति वार्तिकेन नित्यसमास । विभक्तेर्लोपाभावश्च । वागर्थाविव सपृक्तौ वागर्थप्रतिपत्तये । रघु' अस्य च " मिवपिव विव व्व व विश इवार्थे वा ८ । २ । ८२ । इति प्राकृतसूत्रेणेवार्थे एतेषामेव प्राय प्रयोगो भवति । कुमुअ मिव-चंदणं पिव हसो विव. साअरोव्व खारोओ. सेसस्सव निम्मोओ (फुल्लनीलुप्पलवण व । त० )कमल विअ पक्के मिलुप्पलमाल इवेति । प्रा० व्या० ।

इस—इष— गतौ,सर्पणे च । दिवा० पर० सक० सेट् इष्यति पे ष्यत्-ऐषीत्-इषित एषित्वा । अनु-अन्वेषणे, गवेषणे । वाच० ।

इ( रि )सि-ऋषि-पु०पश्यन्तीति ऋषयः । औप० । उपा० । ऋणर्त्त्वृषभर्त्वृषौ वा ८ । १ । ४१ । इति सूत्रेण वैकल्पिको ' रि ' इत्यादेश. । रिसी पक्के । इत् कृपादौ । ८ । १ । १२८ । इति सूत्रेणेकारादेशः । इसी । अतिशयज्ञानिनि साधौ, औ० । अवध्यादिज्ञानवति, उपा० । ज्ञानिनि । भ० ए श० ३२ उ० । प्रत्येकबुद्धसाधौ, । पा० ॥ ऋषीणामुत्तम ह्येतन्निर्दिष्ट परमर्षिभि' । हिंसादोपनिवृत्तानां व्रतशीलविवर्धनम् ॥ ७॥ पश्यन्ति यथा वस्त्स्विति ऋषयो मुनय इति । हा० । मूलोत्तरगुणयुते साधौ, ध० ३० अधि० । मुनौ, उत्त० १२ अ० । गणधरव्यतिरिक्ता शेषा जिनशिष्या ऋषय इति । सम० । २४ स० । प० चू० । जे णामिव " ता इसिणा स एसो, । स एप ऋषिर्वर्तते येन ऋषिणाह वान्ता त्यक्तेति । उत्त० १२अ० ।

ऋषेर्लक्षणं यथा ॥

अनिए अवासो समुआणचरिआ, अन्नाय उंछं पयरिक्किया य । अप्पोवही कलहविवज्जणा य, विहार चरिआ इसिणं पसत्था ॥ ५ ॥

अनियतवासो मासकल्पादिना अनिकेतवासो वा अगृहे उद्यानादौ वास तथा समुदानचर्या अनेकत्र याचितभिक्षाचरणम् अज्ञातोञ्छ विशुद्धोपकरणग्रहणविषयं ( पयरिक्कया य ) विजनैकान्तसेविता च अल्पोपधित्वमनुल्वणयुक्त स्तोकोपधिसेवि त्वे कलहविवर्ज्जना च तथा तत्कासिना भण्डनविवर्जना विवर्जन विवर्जना श्रवणकथादिना परिवर्जनमित्यर्थ । विहारचर्या विहरणस्थितिर्विहरणमर्यादा इयमेवभूता ऋषीणां साधूनां प्रशस्ता व्याक्षेपाभावात् । आज्ञापालनेन भावचरणसाधनात्पवित्रेति सूत्रार्थ । दश० २ चूलि० । कपिलादीनामृषीणामिति । घा०२३ द्वा० । स्वनामख्याते ऋषिवादीन्द्रभेदे च । स्था० २ ठा० ।

इसिगुत्त—ऋषिगुप्त— पु० वशिष्ठसगोत्रस्यार्य्यसुहस्तिनः शिष्ये,वशिष्ठसगोत्रे स्वनामख्याते स्थविरे, । तस्मात् माणवगणो निर्गत तयाच " थेरेहिं तो ण इसिगुत्तेहिंतो वासिट्ठ सगोत्तेहिं तो एत्थ णं माणवगणे णाम गणे णिग्गए इति । स्वनामख्याते माणवगणस्य प्रथमे कुले च ॥ कल्प० ।

इसिण—इसिन— पु-अनार्यदेशभेदे, ज्ञा० १ अ० ।

इसिणिया—इसिनिका— स्त्री०इसिनामकानार्यदेशोद्भवाया नार्याम्, प्रज्ञा० १ पद ।

इसितलाग—ऋषितडाग —पु० तोशलिदेशस्थे शैलपुरनगरस्थे स्वनामख्याते सरसि, " सेलपुरेइसि तलागम्मि होति अट्ठाहिया । महिमा तोसलिदेशे शैलपुरे नगरे ऋषितडागे सरसि प्रतिवर्षे महता विच्छर्देनाष्टाहिका महती महिमा भवतीति । बृ० १ उ० । तोशलिनगरस्थे स्वनामख्याते सरसि च । "तोसलीनगरम्मि इसिवालो,, तोशलिनगरवास्तव्येन वणिजा ऋषि पालो नाम वाणमन्तर उज्जयनी कुत्रिकापणात्क्रीत्वान्ते बुद्धिमाहात्म्येन सम्यगाराधितस्ततस्तेन ऋषितडागनाम सरः कृतमिति बृ० ३ उ० ।

इसिदास—ऋषिदास—पुं० राजगृहस्थे स्वनामख्याते श्रेष्ठिनि, अणु० ३ व० ३ अ० । ( तद्वक्तव्यता धनश्रेष्ठिवत् अणुत्तरो ववाइय शब्दे )

इसिदासज्झयण—ऋषिदासाध्ययन—न० । ऋषिदासवक्तव्यता प्रतिबद्धेऽनुत्तरोपपातिकदशायास्तृतीयवर्गस्य तृतीयेऽध्ययने, अणु० । वाचनान्तरापेक्षया प्रथमेऽध्ययने च । स्था०१० ठा० ।

इसिदिन्न ( दत्त ) ऋषिदत्त— पु० भरतवर्षवासिसुमतिजिन समानकालिके ऐरावतवर्षवासिनि जिनभेदे,-"सुमई य भरहवासे इसिदिन्नजिणो य एरवणयवासे य " ति० । सम० । सुस्थितसुप्रतिबुद्धानां कौटिककाकन्दकानां शिष्ये, काश्यपगोत्रोत्पन्ने स्वनामख्याते स्थविरे च ॥ कल्प० ।

इसिदत्तय—ऋषिदत्तक—पु० स्थविरात् रिसिगुत्तान्मानवगणस्य द्वितीये कुले, कल्प० ।

इसिपरिसा—ऋषिप रपत्—स्त्री० पश्यन्तीति ऋषयोऽवध्यादि ज्ञानवन्त (उपा०१अ०) त एव परिषत्परिवारः ऋषिपरिषत् अतिशयज्ञानिसाधूनांपरिवारे, औ० ॥ महइमहालियाए परिसाए " । पश्यन्तीति ऋषियो ज्ञानिनस्तद्रूपा पर्षत्परिवार ऋषिपर्षत्तस्यै । भ० ए श० ३३ उ० ।

इसिवाल—ऋषिपाल—पु० स्वनामख्याते ऋषिवादिव्यन्तरनिकाये इन्द्रभेदे,-स्था० २ ठा० । स्वनामख्यात वाणव्यन्तरे च । स च तोशलिनगरवास्तव्येन वणिजा ऋषिपालो नाम वाणव्यन्तर उज्जयनीकुत्रिकापणात् क्रीत्वा तेन बुद्धिमहात्म्येन सम्यगाराधित इति । बृ० ३ उ० ।

इसिवालिय—ऋ षिपालित—पु० ऋषिवादिव्यन्तरनिकायेन्द्रभेदे, इसिवालियमयमहिया इति-इसिवालियस्स भद्दसुरघरकारयस्स वीरस्स जेहिंसया थुवता सव्वे इदा पवरकित्तिया ३दे० ७ प० । आर्यशान्तिसैनिकस्य माठरसगोत्रस्य शिष्ये, स्वनामख्याते स्थविरे च । तन्निर्गतायां स्वनामख्यातायां शाखायाम् स्त्री० टाप्० "थेरेहिंतो अज्जइसिवालिएहिं ता इत्थण अज्जुइसिवालिया साहा णिग्गया इति " कल्प० ।

इसिभद्दपुत्त—ऋषिभद्रपुत्र—पुं०स्वनामख्याते श्रावके, ऋषिभद्रपुत्रवत्सविज्ञगीतार्थगुरुसमीपश्रवणसमुत्पन्नप्रवचनार्थकौशलेन भावश्रावकेण भाव्यमिति । ध० र० ।

ऋषिभद्रपुत्र कथाचव—

तेणं कालेणं तेणं समएणं आलभियाणाम णयरी होत्था वए गओ ९.खवणे चेइए वण्णओ तत्थणं ३ आलंभियाए णयर ए व ्वे ्सिभद्दपुत्तपमोक्ख । समणोवासगा परि-

वसंति अट्ठे जाव अपरिन्नूए अभिगयजीवा जीवा जाव विहरंति तएणं तेसिं समणोवासयाणं अण्णदा कयावि एगयओ समुवागयाणं सहियाणं समुविट्ठाणं सण्णिए सण्णाणं अयमेयारूवे मिहोकहा समुल्लावे अब्भत्थिए समुप्पज्जित्था देवलोएसु णं अज्जो देवाणं केवइयं कालं ठिई पण्णत्ता ? तएणं से इसिभद्दपुत्ते समणोवासए देवट्ठिइगहियट्ठे ते समणोवासए एवं वयासि देव लोएसु णं अज्जो देवाणं जहण्णेणं दसवाससहस्साइं ठिई पण्णत्ता तेण परं समाहिया दुसमयाहिया जाव दससमयाहिया संखेज्जसमयाहिया असंखेज्जसमयाहिया उक्कोसेणं तेत्तीसं सागरोवमट्ठिई पण्णत्ता तेण परं वोच्छिण्णा देवा य देवलोगा य तएणं ते समणोवासगा इसिभद्दपुत्तस्स समणोवासगस्स एवमाइक्खमाणस्स जाव एवं परूवेमाणस्स एयमट्ठं णो सद्दहंति णो पत्तियंति णो रोयंति एयमट्ठं असद्दहमाणा अपत्तियमाणा अरोएमाणा जामेव दिसिं पाउब्भूया तामेवदिसिं पडिगया । तेणं कालेणं तेणं समएणं समणे भगवं महावीरे जाव समोसढे जाव परिसा पज्जुवासइ तएणं ते समणोवासगा इमी से कहाए लद्धट्ठा समाणा हट्ठतुट्ठा एवं जहा तुंगियोद्देसए जाव णमंसंति । तएणं समणे भगवं महावीरे तेसिं समणोवासगाणं तीसेय महई धम्मकहा जाव आणाए आराहए भवई । तएणं ते समणोवासगा समणस्स भगवओ महावीरस्स अंतिए धम्मं सोच्चा णिसम्म हट्ठतुट्ठा उट्ठाए उट्ठेंति उट्ठेइत्ता समणं भगवं महावीरं वंदंति णमंसंति वंदित्ता णमंसित्ता एवं वयासि एवं खलु भंते ! इसिभद्दपुत्ते समणोवासए अम्हं एवमाइक्खइ जाव एवं परूवेइ देवलोएसु णं अज्जो ! देवाणं जहण्णेणं दसवाससहस्साइं ठिई पण्णत्ता तेण परं समयाहिया जाव तेण परं वोच्छिण्णा देवा य देवलोगा य । से कहमेयं भंते ! एवं अज्जो ! त्ति समणं भगवं महावीरे ते समणोवासए एवं वयासी जेणं अज्जो ! इसिभद्दपुत्ते समणोवासए तुज्झं एवमाइक्खइ जाव परूवेइ देवलोगेसु णं अज्जो देवाणं जहण्णेणं दसवाससहस्साइं ठिई पण्णत्ता तं चेव समयाहिया जाव तेण परं वोच्छिण्णा देवा य देवलोगा य सच्चेणं एसमट्ठे अहं पुण अज्जो ! एवमाइक्खामि जाव परूवेमि देवलोगेसुणं अज्जो ! देवाणं जहण्णेणं दसवाससहस्साइं तं चेव जाव तेणपरं वोच्छिण्णा देवा य देवलोगा य सच्चेणं एसमट्ठे । तएणं ते समणोवासगा समणस्स भगवओ महावीरस्स अंतियाओ एयमट्ठं सोच्चा णिसम्म समणं भगवं महावीरं वंदंति णमंसंति वंदित्ता नमंसित्ता जेणेव इसिभद्दपुत्ते समणोवासए तेणेव उवागच्छंति उवागच्छइत्ता इसिभद्दपुत्तं समणोवासगं वंदंति णमंसंति एयमट्ठं सम्मं विणएणं भुज्जो भुज्जो खामेंति । तएणं ते समणोवासगा पसिणाइं पुच्छंति २ त्ता अट्ठाइं परियादियंति २ त्ता समणं भगवं महावीरं वंदंति णमंसंति वंदइत्ता णमंसित्ता जामेव दिसिं पाउब्भूया तामेव दिसिं पडिगया भंतेति ? भगवं गोयमे समणं भगवं महावीरं वंदइ णमंसइ २ त्ता एवं वयासी पभूणं भंते ! इसिभद्दपुत्ते समणोवासए देवाणुप्पियाणं अंतिए मुंडे भवित्ता आगाराओ अणगारियं पव्वइत्तए ? गोयमा ! णो इणट्ठे समट्ठे गोयमा ! इसि भद्दपुत्तेणं समणोवासए बहुहिं सीलव्वय गुणव्वय वेरमण पच्चक्खाण पोसहोववासेहिं अहापरिग्गएहिं तवोकम्मेहिं अप्पाणं भावेमाणे बहूहिं वासाइं समणोवासगपरियागं पाउणिहिति २ त्ता मासियाए संलेहणाए अत्ताणं झूसेहिति २ त्ता सट्ठिभत्ताइं अणसणाए छेदेइ छेदेइत्ता आलोइय पडिकंते समाहिपत्ते कालमासे कालं किच्चा सोहम्मे कप्पे अरुणाभे विमाणे देवत्ताए उववज्जिहिति । तत्थणं अत्थेगइयाणं देवाणं चत्तारि पलिओवमाइं ठिई पण्णत्ता- तत्थणं इसिभद्दपुत्तस्स देवस्स चत्तारि पलिओवमाइं ठिई भविस्सई । सेणं भंते ! इसिभद्दपुत्ते देवत्ताओ देवलोगाओ आउक्खएणं जाव कहिं उवज्जिहिइ ? गोयमा महाविदेहे वासे सिज्झिहिइ जाव अंतं काहिति सेवं भंते भंतेत्ति । भगवं गोयमे जाव अप्पाणं भावेमाणे विहरइ तएणं समणे भगवं महावीरे अण्ण या कयावि आलंभियाओ णयरीओ संखवणाओ चेइयाओ पडिणिक्खमइ पडिणिक्खमइत्ता बाहिरिया जणवयविहारं विहरइ । तेणं कालेणं तेणं समएणं आलंभिया णामं णयरी होत्था । वण्णओ संखवणे चेइए वण्णओ तत्थणं संखवणस्स चेइयस्स अदूरसामंते पोग्गले णामं परिव्वाए परिवसइ । रिउव्वेय जउव्वेय जाव नएसु सुपरिनिट्ठिए छट्ठं छट्ठेणं अणिक्खित्तेणं तवोकम्मेणं उड्ढं बाहाओ जाव आयावेमाणे विहरइ । तएणं तस्स पोग्गलस्स छट्ठं छट्ठेणं जाव आयावेमाणस्स पगइभद्दयाए जहा सिवस्स जाव विभंगे णामं अण्णाणे समुप्पण्णे सेणं तेणं विभंगे णामं अण्णाणेणं समुप्पण्णेणं बंभलोए कप्पे देवाणं ठिई जाणइ पासइ । तएणं तस्स पोग्गलस्स परिव्वायगस्स अयमेयारूवे अब्भत्थिए जाव समुप्पज्जित्था । अत्थिणं मम अतिसेसे णाणदंसणे समुप्पण्णे देवलोएसु णं देवाणं जहण्णेणं दसवाससहस्साइं ठिई पण्णत्ता तेण परं समयाहिआ दुसमयाहिया जाव असंखेज्ज-

समयाहिया उक्कोसेणं दससागरोवमाइं ठिई पण्णत्ता तेण परं वोच्छिण्णा देवा य देवलोगा य एवं संपेहेइ संपेहेइत्ता आयावणभूमीओ पच्चोरुभइ पच्चोरुभइत्ता तिदंमकुंमिआ जाव धाउरत्तवत्थाओ य गेएहांति २ त्ता जेणे व आलंभिया णयरी जेणेव परिव्वायगावसहे तेणेव उवागए भंमगणिक्खेवं करेइ करेइत्ता आलंभियाए णयरीए सिंगाडग जाव पहेसु अण्णमण्णस्स एवमाइक्खइ जाव परूवेइ अत्थिणं देवाणुप्पिया ! मम अतिसेसे णाणदंसणे समुप्पण्णे देवलोएसु णं देवाणं जहण्णेणं दसवाससहस्से तहेव जाव वोच्छिण्णा देवा य देवलोगा य तएणं आलंभियाए णयरीए एवं एएणं अभिलावेणं जहा सिवस्स तं चेव जाव से कहमेयं मण्णेण एवं ? सामी समोसढे जाव परिसापडिगया भगवं गोयमे तहेव भिक्खापरियाए तहेव बहुजणसद्दं निसामेइ तहेव सव्वं भाणियव्वं जाव अहं पुण गोयमा ! एवमाइक्खामि एवं भासामि जाव परूवेमि देवलोएसु णं देवाणं जहण्णेणं दसवाससहस्साइं ठिई पण्णत्ता तेण परं समयाहिया दुसमयाहिया जाव उक्कोसेणं तेत्तीसं सागरोवमाइं ठिई पण्णत्ता तेण परं वोच्छिण्णा देवा य देवलोगा य । अत्थि णं भंते ! सोहम्मे कप्पे दव्वाइं सवण्णाइंपि अवण्णाइंपि तहेव जाव हंता अत्थि। एवं ईसाणे वि एवं जाव अच्चुए वि एवं गेविज्जविमाणेसु अणुत्तरविमाणेसु वि ईसिप्पब्भाराए वि जाव हंता अत्थि । तएणं सा महइ महालिया जाव पडिगया । तएणं आलंभियाए णयरीए सिंगाडगतिगअवसेसं जहा सिवस्स जाव सव्वदुक्खप्पहीणे णवरं तिदंडकुंडियं जाव धाउरत्तवत्थपरिहिए परिवडियविब्भंगे आलंभियं णयरं मज्झं मज्झेणं णिगच्छइ जाव उत्तरपुरच्छिमं दिसीभागं अवक्कमइ, अवक्कमइत्ता तिदंडकुंडियं च जहा खंदओ जाव पव्वइओ सेसं जहा सिवस्स जाव अव्वाबाहं सोक्खमणुभवंति सासयं सिद्धा सेवं भंते भंतेत्ति । भ० ११ श० १२ उ० ।

इसिभासिय—ऋषिभाषित—न० ऋषयः प्रत्येकबुद्धसाधवस्ते चात्र नेमिनाथतीर्थवर्तिनो नारदादयो विंशतिः । पार्श्वनाथतीर्थवर्तिनः पञ्चदश वर्धमानस्वामितीर्थवर्तिनो दश आस्रास्तैर्भाषितानि पञ्चचत्वारिंशत्सङ्ख्यान्यध्ययनानि श्रवणाद्यधिकारवन्ति ऋषिभाषितानि अङ्गबाह्येषु उत्कालिकश्रुतविशेषेषु,

अत्रवृद्धसम्प्रदायः।"सौरियपुरे नयरे सुरवरो नाम जक्खो धणजओ सेट्ठी सुभद्दा भज्जा तेहिं अण्णया सुरवरो विण्णत्तो जहा ॥ जइ अम्हाण पुत्तो होहिइत्तो तुम्भे महिससय दोमात्ति।एव ताण सजाओ पुत्तो पत्थतरे भगव वद्धमाणसामी ताणि संबुज्झिहितित्ति सोरियपुरमागओ तओ सेट्ठीसज्झानिग्गओ संबुद्धो अणुव्वयाणि गहियाणि सो जक्खो सुविणए महिसे मग्गइ तेण विसेढिणापिट्ठमया दिन्नति।सामिणो छुब्भिसीसा धम्मघोसो धम्मजसो य एगस्स असोगवरपायवस्स हेट्ठा परियट्टति। ते पुव्वण्हंट्टिया अवरण्होवि छाया न परियत्तइ तओ एक्को भणइ तुब्भे एसा लद्धावीओ भणइ तुब्भति। तओ एक्को काइयभूमिं गओ जाव छाया तहेव अत्थइ तओ वि इओ वि गओ तत्थवि तहेव अत्थइ तेहिं नायं जहा न एक्कस्स विलद्धी। तओ समीपुच्छिओ भयवया भणियं जहा इहेव सोरियपुरे समुद्दविजओ राया आसि जन्नदत्तो तावसो। सोमजसा तावसी ताण पुत्तो नारओ ताणिओ उवित्तीणि एक्क दिवसं जिमति एक्कदिवसं उववासं करेंति। अण्णया ताणि न नारयं पुव्वण्हे असोगपायवस्स हेट्ठा ठवेऊण उञ्छंति इओ यव्वे यक्खाओ वेसमणकाइया तिरियं ज भगादेवा तेण तेण वीइवयता पेच्छति तं दारयं उहिणा आभोइति।सो ताओ चेव देवनिकायाओ तओ ते नस्साणुकपाए त ग्राय थब्भतित्ति । एवं सो उस्सुक्कवासभावो अण्णया तेहिं ज भगदेवेहिं पण्णत्ति पाइयाओ विज्जाओ पाढिओ तओ कचणकुंडियाए मणियाओ याहिं आगासे हिंमइ अण्णया वारवइ गओ वासुदेवेण पुच्छिओ किं सोयति सो न मराति कहेउ तओ अन्नकहा एव खेव काऊण अहिट्ठिओ गओ पुव्वविदेह तत्थ य सीमंधर तित्थयरं जुगबाहुवासुदेवो पुच्छइ । किं सोयति तित्थगरेण भणिय सव्व सोयंति जुगबाहुणा एक्कवयणेण वि सव्वं उवलद्ध नारओ वि त निसुणित्ता उप्पइऊण अवरविदेह गओ तत्थ वि जुगधरं तित्थयर महाबाहु वासुदेवा त चेव पुच्छइ। भगवया वि त चेव वागरियं महाबाहुस्स वि त सव्वमुवगय नारओ वि त सुणित्ता बारवइ गओ वासुदेव भणइ किं ते तदा पुच्छिय वासुदेवो भणइ किं सोयाति नारओ भणइ सव्वं सोयति । वासुदेवो भणइ किं सव्वति तओ नारओ खुभिओ न किंचि उत्तर देइ । तओ कएह वासुदेवेण भणिय । जन्य ते तं पच्छिय तत्थ एयपि पुच्छियव्वं जुत्त तिखिसिओ ताहे नारओ भणइ सव्व भट्टारओ न पडिवत्ति चितेउमारद्धो जा ईसरिया सबुद्धो पढममज्झयण सोयव्वमेव इच्चाइय वदति एव सोडिवि दढवाणित्ति ॥ पा० । उत्तराध्यनादिके (देवेन्द्रस्तवादिके) श्रुतविशेषे, आ० म० प्र० । 'इसिभासिए य जहा' ऋषिभाषितेषूत्तराध्ययनादिषु । सूत्र० ।

इसिभासियज्झयण—ऋषिभाषिताध्ययन—न० प्रश्नव्याकरणदशायास्तृतीयेऽध्ययने, । स्था० १० ठा० ॥

इसिया—इषिका—स्त्री मुञ्जागर्भभूतायां शलाकायाम्, 'से जहाणामए केइ पुरिसे मुजाओ इसियं अभिणिव्वट्टित्ता णं उवदंसेज्जा इसियति' तद्गर्भभूतां शलाकां प्रयकृत्य दर्शयेदिति । सूत्र० २ श्रु० २ अ० ।

इसिवंस—ऋषिवंश—पु० । गणधरव्यतिरिक्ताः शेषा जिनशिष्या ऋषयस्तेषां वंशे, तद्वंशप्रतिपादके समवायाङ्गादिश्रुते च । 'इसिवंसे इय' गणधरवंश इति च गणधरव्यतिरिक्ताः शेषा जिनशिष्या ऋषयस्तद्वंशप्रतिपादकत्वादृषिवंश इति च । तत्प्रतिपादन चात्र पर्यूषणाकल्पस्य समस्तस्य ऋषिवंशपर्यवसानस्य समवसरणप्रतिक्रमेण भणितत्वात्। सम० २स०।

इसिवाइ ( न् ) ऋषिवादिन्—पु० पिशाचादिव्यन्तरनिकायानामुपरिवर्तिनि व्यन्तरनिकायविशेषे, औ० ।

इसिवाइय—ऋषिवादिक—पु पिशाचादिव्यन्तरनिकायानामुपरिवर्तिनि व्यन्तरजातिविशेषे, प्रश्न० ४ द्वा० । प्रव० ।

ऋपिवादित–पुं० पिशाचादिव्यन्तरनिकायानामुपरि वर्तिनि व्यन्तरनिकायभेदे, प्रव० १९ द्वा० ।

इसिसत्त–ऋपिसप्त–पुं० ऋषिणा सप्त ऋषिसप्तः मदीयतपःप्रभावान्नपुंसको भव त्वमिति ऋषिशापाज्जाते नपुंसकभेदे, ग० १ अधि० ( अस्य प्रव्रज्याया युक्तायुक्तत्वविचारो णपुंसग शब्दे )

इसिसेट्ठ–ऋपिश्रेष्ठ–पुं० मुनिश्रेष्ठे,

जोहेसु णाए जह वीससेणे, पुप्फेसु वा जह अरविंदमाहु ।
खत्तीणसेट्ठे जह दंतवक्के, इसीण सेट्ठे तह वद्धमाणे ॥

योधेषु मध्ये ज्ञातो विदितो दृष्टान्तभूतो वा विश्वा हस्त्यश्वरथपदातिचतुरङ्गबलसमेता सेना यस्य स विश्वसेनश्चक्रवर्ती यथाऽसौ प्रधानपुष्पेषु च मध्ये यथाऽरविंदप्रधानमाहुः तथा क्षतात्त्रायन्त इति क्षत्रियास्तेषां मध्ये दान्ता उपशान्ता यस्य वाक्येनैव शत्रवः स दान्तवाक्यश्चक्रवर्ती । यथा ऽसौ श्रेष्ठः तदेवं बहून् दृष्टान्तान् प्रशस्तान् प्रदर्श्याऽधुना भगवन्तं दार्ष्टान्तिकं स्वनामग्राहमाह । तथा ऋषीणां मध्ये श्रीमान् वर्द्धमानस्वामी श्रेष्ठ इति ॥२२॥ सूत्र० । १ श्रु० ६ अ० ।

इसु–इषु–पुं० शरे, सूचकत्वात् उपमया भिक्षा ग्रहणविषयके द्रुमपुष्पिकाध्ययने, “ जह रहितो अणुवत्तो इसुणा लक्खं न विंधइ तहेव । साधू गोयरपत्तो सजमलक्खपि णायव्वो ” दश० १ अ० ।

इस्स (ईस) र–ईश्वर–पुं०ईश्–वरच्–ईश् ऐश्वर्ये ऐश्वर्येण युक्तः ईश्वरः। नि० चू० ९ उ० । ईश्वरश्च अणिमाद्यष्टविधैश्वर्ययुक्ते क्लेशकर्मविपाकाशयैरपरामृष्टे सर्वजगत्कारके पुरुषविशेषे,– “ अणिमाद्यष्टविधैश्वर्ययुक्त ईश्वर इत्येके ” । जीवा० ३ प्रति० । स्था० । आचा० । अनु० । “ तथा च पतञ्जलिः । क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वर इति । सम्म० । द्वा० ।

ईश्वरवादिनश्च सर्वं जगदीश्वरकृतं मन्यन्ते ईश्वरं च सहसिद्धज्ञानवैराग्यधर्मैश्वर्यरूपचतुष्टयं प्राणिनां च स्वर्गापवर्गयोः प्रेरकमिति तदुक्तं “ ज्ञानमप्रतिघं यस्य, वैराग्यं च जगत्पतेः । ऐश्वर्यं चैव धर्मश्च स हि सिद्धं चतुष्टयम्” ॥ १ ॥ अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः । ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वा ॥ २ ॥ तदसमीचीनम् । ईश्वरग्राहकप्रमाणाभावात् । अथास्ति तद्ग्राहकप्रमाणमनुमानम् । तथाहि यत् स्थित्वाऽभिमतफलसंपादनाय प्रवर्त्तते तद्बुद्धिमत्कारणाधिष्ठितं यथा वास्या द्वैधीकरणादौ प्रवर्तते च स्थित्वा सकलमपि विश्वं स्वफलसाधनायेति न खलु वास्यादयः स्वत एव प्रवर्त्तन्ते तासामचेतनत्वात् स्वभावत एव चेत् प्रवर्तन्ते तर्हि सदैव तेषां प्रवर्तनं भवेत् न च भवति तस्य स्थित्वा स्थित्वा प्रवर्तनं केनचित्प्रेक्षावता प्रवर्तकेन भवितव्यं सकलस्यापि च जगतः स्थित्वा स्थित्वा स्वफलं साधयतः प्रवर्तक ईश्वर एवोपपद्यते नान्य इतीश्वरसिद्धिः । तथा अपरमनुमानं यत्परिमाणसंस्थानादिलक्षणसन्निवेशविशेषभाक् तद्बुद्धिमता कृतं यथा घटादिपरिमाणसंस्थानादिसन्निवेशविशेषभाक् भूभूधरादिकमपि तदेतदयुक्तं सिद्धसाधनेन परास्य प्रसिद्धसम्बन्धत्वात् तथाहि सकलमपीदं विश्ववैचित्र्यं कर्मनिबन्धनमिच्छामो—यतो ऽमी वैताढ्यहिमवदादयः पर्वता भरतैरवतविदेहाद्यन्तरद्वीपादीनि च क्षेत्राणि तथा तथा प्राणिनां सुखदुःखादिहेतुतया यत्परिणमन्ते तत्र तथा तथा परिणमने तत्तन्निवासिनामेव तेषां जन्तूनां कर्म कारणमवसेयं नान्यत्तथा च दृश्यत एव पुण्यवति राज्यमनुशासति नृपतौ तत्कर्मप्रभावतः सुभिक्षादयः प्रवर्तमानाः कर्म च जीवाश्रितं जीवाश्च बुद्धिमन्तश्चेतनावत्त्वात् ततो बुद्धिमत्कारणाधिष्ठितत्वे चेतनावत्कृतत्वे च साध्यमाने सिद्धसाधनम् । अथ बुद्धिमान् चेतनावान् वा विशिष्ट एवेश्वरः कश्चित्साध्यते तेन न सिद्धसाधनं तर्हि दृष्टान्तस्य साध्यविकलता वास्यादौ घटादौ चेश्वरस्याधिष्ठायकत्वेन कारणत्वेन वा व्याप्रियमाणस्यानुपलभ्यमानत्वात् वर्द्धकिकुम्भकारादीनामेव तत्र तत्रान्वयव्यतिरेकता व्याप्रियमाणानां निश्चीयमानत्वात् । अथ वार्द्धक्यादयोऽपीश्वरप्रेरिता एव तत्र तत्र कर्मणि प्रवर्तन्ते न स्वतस्ततो न दृष्टान्तस्य साध्यविकलता । नन्वेवं तर्हि ईश्वरोऽप्यन्येनेश्वरेण प्रेरितः स्वकर्मणि प्रवर्तते न स्वतो विशेषाभावात् सोऽप्यन्येनेश्वरेण प्रेरित इति विकालसंध्यायां तमःसततिरिवादृष्टपर्यन्तानव्यवस्थामापादयन्ती प्रसरत्यनवस्था । अथमन्येथा वर्द्धक्यादिको जन्तुः सर्वोऽपि स्वरूपेणाज्ञस्ततः सप्रेरित एव स्वकर्माणि प्रवर्तते भगवांस्त्वीश्वरः सकलपदार्थज्ञाता ततो नासौ स्वकर्मण्यन्यं स्वप्रेरकमपेक्षते तेन नानवस्था, तदप्यसत् इतरेतराश्रयदोषप्रसङ्गात् तथाहि सकलपदार्थयथावस्थितस्वरूपज्ञातृत्वे सिद्धे सत्यन्याप्रेरितत्वसिद्धिः अन्याप्रेरितत्वसिद्धौ च सकलजगत्कारणतः सर्वज्ञत्वसिद्धिरित्येकासिद्धावन्यतरस्याप्यसिद्धिः । अपिच यद्यसौ सर्वज्ञो वीतरागश्च तत्किमर्थमन्यं जनमसद्व्यवहारे प्रवर्तयति मध्यस्था हि विवेकिनः सद्व्यवहार एव प्रवर्तयन्ति नासद्व्यवहारे, स तु विपर्ययमपि करोति ततः कथमसौ सर्वज्ञो वीतरागो वा । अथोच्यते सद्व्यवहारविषयमेव भगवानुपदेशं ददाति तेन सर्वज्ञो वीतरागश्च यश्चाधर्मकारिजनसमूहः त फलमसदनुभावयति येन स तस्मादधर्मोद्व्यावर्तते ततः उचितफलदायित्वाद्विवेकवानेव भगवानिति न कश्चिद्दोषः तदप्यसमीक्षिताभिधानं यतः पापेऽपि प्रथमं स एव वर्तयति नान्यो न च स्वयं प्रवर्त्तते तस्याज्ञत्वेन पापे धर्मे वा स्वयं प्रवृत्तेरयोगात्ततः पूर्वं पापे प्रवर्तयते तत्फलमनुभाव्य पश्चाद्धर्मे प्रवर्तयतीति केयमीश्वरस्य प्रेक्षापूर्वकारिता । अथ पापे ऽपि प्रथमं प्रवर्तयति तत्कर्माधिष्ठित एव तथाहि तदेव तेन जन्तुना कृतं कर्म्म यद्वशात्पापे एव प्रवर्त्यते ईश्वरोऽपि च भगवान् सर्वज्ञः तथा रूपं तत्कर्म साक्षात् ज्ञात्वा तं पापे एव प्रवर्त्तयति तत उचितफलदायित्वात्प्रेक्षापूर्वकारीति । ननु तदपि कर्म तेनैव कारितं ततस्तदपि कस्मात्प्रथमं कारयतीति स एवाप्रेक्षापूर्वकारिताप्रसङ्गः अथाधर्म्ममसौ न कारयति किंतु स्वत एव सोऽधर्म्ममाचरति अधर्मकारिणं तु तत्तत्फलमसदनुभावयति तदन्येश्वरवत् । यथाहि तदन्येश्वरराजादयो नाम धर्मे जनं प्रवर्तयन्ति अधर्मफलं तु प्रेक्षादिकमनुभावयन्ति तद्वद्भगवानीश्वरोऽपि, तदप्ययुक्तम–न्येऽपीश्वरा पापप्रतिषेधं कारयितुमीशा नहि नाम राजानोऽपि उग्रशासना पापे मनोवाक्कायनिमित्ते सर्वथा प्रतिषेधयितुं प्रभविष्णवः स तु भगवान् धर्माधर्मविधिप्रतिषेधविधापनसमर्थ इष्यते तत्कथं पापे प्रवृत्तं न प्रतिषेधयति अप्रतिषेधश्च परमार्थतः स एव कारयति तत्फलस्य पश्चादनुभावनादिति तदवस्थ एव दोषः । अथ पापे प्रवर्तमानं प्रतिषेद्धुमशक्त इष्यते तर्हि नैवोद्घैरिदमभिधातव्यं सर्व–

मीश्वरेण कृतमिति। अपिच यद्यसौ स्वयमधर्मं करोति तथा धर्ममपि करिष्यति फलं च स्वयमेव भोक्ष्यन्ते ततः किमीश्वर कल्पनया विधेयमिति। उक्तंच "अशक्त्याऽन्यथेश्वराः पाप-प्रतिषेधं न कुर्वते। स त्वत्यन्तमशक्तेभ्यो, व्यावृत्तमतिरिष्यते १ अथाप्यशक्त एवासौ, तथा सति परिस्फुटम्। नेश्वरेण कृतं सर्वमिति वक्तव्यमुच्चकैः ॥ २ ॥ पापवत्स्वार्थकारित्वात् धर्मादिरपि किं ततः" इति। अथ ब्रुवीथाः स्वयमसौ धर्माधर्मौ करोति तत्फलं त्वीश्वर एव भोजयति तस्य धर्माधर्मफलभोगे स्वयमशक्तत्वादिति, तदप्यसत् यतो यो नाम स्वयं धर्माधर्मौ विधातुमलं स कथं तत्फलं स्वयमेव न भोक्तुमीशो नहि पक्तुमोदन समर्थो नहि भोक्तुमिति लोके प्रतीतम्। अथवा भवत्वेतदपि तथापि धर्मफलमुन्मत्तदेवाङ्गनासंस्पर्शादिरूपमनुभावयतु तस्येष्टत्वादधर्मफलं तु नरकप्रयातादिरूपं कस्मादनुभावयति नहि मध्यस्थभावमवलम्बमाना परमकरुणापरीतचेतसः प्रेक्षावन्तो निरर्थके परपीडाहेतौ कर्मणि प्रवर्तन्ते क्रीडार्था भगवतः तथा प्रवृत्तिरिति चेत् यद्येवं तर्हि कथमसौ प्रेक्षावान् तस्य हि प्रवर्तने क्रीडामात्रमेव फलं ते पुनः प्राणिनः स्थाने स्थाने प्राणैर्वियुज्यन्ते। उक्तंच "क्रीडार्था तस्य वृत्तिश्चेत्प्रेक्षापूर्वक्रिया कुतः। एकस्य क्षणिका तृप्तिः, अन्यः प्राणैर्वियुज्यते ॥ १ ॥" अपिच क्रीडा लोके सरागस्योपलभ्यते भगवांश्च वीतरागस्ततः कथं तस्य क्रीडा सङ्गतिमङ्गति। अथ सोपि सरागः इष्यते तर्हि शेषजन्तुरिवावीतरागत्वान्न सर्वज्ञो नापि सर्वस्य कर्तेत्यापतितम्। अथ रागादिकृतो ऽपि स सर्वज्ञः सर्वस्य कर्ता च भवति तथा स्वभावत्वात् ततो न कश्चिद्दोषो नहि स्वभावे पर्यनुयोगो घटनामुपपद्यते। उक्तंच। "इदमेव नवेत्येतत्, कस्य पर्यनुयोज्यताम्। अग्निर्दहति नाकाश, कोऽत्र पर्यनुयोज्यताम्" ॥ तदेतदसम्यक् यतः प्रत्यक्षतः तथारूपे स्वभावे च गते यदि पर्यनुयोगो विधीयते तत्रेदमुत्तरं विजृम्भते। यथा स्वभावे पर्यनुयोगो भवतीति यथा प्रत्यक्षेणोपलभ्यमाने वह्नेर्दाह्यं दहतो दाहकत्वरूपे स्वभावे, तथाहि यदि तत्र कोपि पर्यनुयोगमाधत्ते यथा कथमेष वह्निर्दाहकस्वभावो जातो यदि वस्तुत्वेन तर्हि व्योमादिकं न दाहकस्वभावं भवति वस्तुत्वादविशेषादिति तत्रेदमुत्तरं विधीयते दाहकत्वरूपो हि स्वभावो वह्नेः प्रत्यक्षत एवोपलभ्यते ततः कथमेष पर्यनुयोगमर्हति न हि दृष्टेऽनुपपन्नता नाम तथाचोक्तम्। स्वभावोऽध्यक्षतः सिद्धे यदि पर्यनुयुज्यते। तत्रेदमुत्तरं वाच्य, न दृष्टेनुपपन्नता ॥१॥ ईश्वरस्तु सर्वजगत्कर्तृत्वेन सर्वज्ञत्वेन च नोपलब्धस्ततस्तत्र तथास्वभावत्वकल्पनादवश्यं पर्यनुयोगमाश्रयते। यदि पुनरदृष्टेपि तथा स्वभावत्वकल्पनापर्यनुयोगानाश्रयोऽभ्युपगम्यते तर्हि सर्वोपि वादी तं तं पक्षमाश्रयन् परेण विक्षोभितस्तत्र तत्र तथा २ स्वभावताकल्पनेन परं निरुत्तरीकृत्य लब्धजयपताक एव भवेत् ॥ उक्तंच ॥ अन्यथा "यत्किंचिदात्माभिमतं विधाय, निरुत्तरस्तत्र कृतः परेण ॥ वस्तुस्वभावैरिति वाच्यमित्थ, तदुत्तरः स्याद्विजयी समस्तः ॥ किंच ॥ सर्वं यदि जगदीश्वरकृतं मन्यते तर्हि सर्वाण्यपि शास्त्राणि सकलदर्शनगतानि तेन प्रवर्तितानीति प्राप्तं तानि च शास्त्राणि परस्परं विरुद्धार्थानि ततो धश्यं कानिचित्सत्यानि कानिचिदसत्यानि ततः सत्यासत्योपदेशदानात्कथमसौ प्रमाणम्। उक्तंच। "शास्त्रान्तराणि सर्वाणि, यदीश्वरविकल्पतः ॥ सत्यासत्योपदेशस्य, प्रमाणदानतः कथम् ॥१॥ अथ सकलानि शास्त्राणि ईश्वरकारितानि किंतु सत्यान्येव ततो न कश्चिद्दोषावकाशस्तर्हि शास्त्रान्तरवदेव नरश्वरेणान्यदपि व्यधायीति हता तव पक्षसिद्धिरिति। अन्यच्च यादृग्भूतं सस्थानादि बुद्धिमत्कारणपूर्वकत्वेनोपलब्धं तादृग्भूतमेवान्यत्रापि बुद्धिमन्तमात्मनो हेतुमनुमापयति यथा जीर्णदेवकुलकूपादिगतं न शेषं नहि सन्ध्याभ्ररागवल्मीकादिगतं सस्थानाद्यात्मनो बुद्धिमन्तं कर्तारमनुमापयति तथा प्रतीतेरभावात् तच्चतस्य सस्थानादेर्बुद्धिमत्कारणत्वेन निश्चयाभावात् तथा भूभूधरादिगतमपि सस्थानादिकं न बुद्धिमत्कारणपूर्वकत्वेन निश्चितमिति कथं तद्वशाद्बुद्धिमतः कर्तुरनुमानम्। अथ मन्येथास्तदपि सस्थानादि तादृग्भूतमेव संस्थानादिशब्दवाच्यत्वात् नचैवं तत्कर्तुर्बुद्धिमतोऽनुमाने काञ्चिदपि बाधामुपलभामहे ततः सर्वं सुस्थितमिति तदयुक्तं शब्दादिरुढवशाज्जात्यन्तरेपि प्रवर्तन्ते ततः शब्दसाम्यात्। यदि तथारूपवस्त्वनुमानं तर्हि गोत्वाच्छागादीनामपि विषाणितामनुमीयतां विशेषाभावात्। अथ तत्र प्रत्यक्षेण बाधोपलभ्यते ईश्वरानुमानेन ततो न कश्चिद्दोषः इति तदेतदतीव प्रमाणमार्गानभिज्ञतासूचकं यतो यत एव तत्र प्रत्यक्षेण बाधोपलम्भोऽत एव नान्यत्रापि शब्दसाम्यात्तथारूपवस्त्वनुमानं कर्तव्यं प्रत्यक्षत एव शब्दसाम्यस्य वस्तुतयारूप्येण सहाविनाभाववित्यस्याभावावगमात्। न च बाधकमत्र नोपलभ्यते इत्येवानुमानं प्रवर्तते किंतु वस्तुसवन्धबलात् तथाचोक्तम् "ननु बाध्यत इत्येव-मनुमानं प्रवर्तते ॥ सवन्धदर्शनात् तस्य प्रवर्तनमिहेष्यते"-इति स च सवन्धोऽत्र न विद्यते तद्ग्राहकप्रमाणाभावात् ततोऽनैकान्तिकता हेतोरित्थं चैतदङ्गीकर्तव्यमन्यथा यो यो मृद्विकारः स स कुम्भकृतो यथा घटादिर्मृद्विकारश्चाय वल्मीकस्तस्मात्कुम्भकारकृत इत्यप्यनुमानं समीचीनतामाचनीस्कन्धेत बाधकमात्रादर्शनात्। तथाहि यदि तत्र कुम्भकारः कर्ता भवेत्तर्हि कदाचिदुपलभ्येत न चोपलभ्यते तस्मादेव तदयुक्तमिति तदेतदीश्वरानुमानेपि समानम् ॥ यदि हि सर्वस्यापि वस्तुजातस्येश्वरः कर्ता घचित्कदाचिदुपलभ्येत न चोपलभ्यते तस्मादप्यवलीकमिति कृत प्रसङ्गेन ॥ ७ ॥

अथ तदभिमतमीश्वरस्य जगत्कर्तृत्वाभ्युपगम-
मिथ्याभिनिवेशरूपं निरूपयन्नाह ॥

**कर्तास्ति कश्चिज्जगतः सचैकः, स सर्वगः स स्ववशः स नित्यः। इमाः कुहेवाकविडम्बनाःस्यु-स्तेषां न येषामनुशासकस्त्वम् ॥ ६ ॥**

जगतः प्रत्यक्षादिप्रमाणोपलक्ष्यमाणचराचररूपस्य विश्वत्रयस्य कश्चिदनिर्वचनीयस्वरूपः पुरुषविशेषः कर्ता स्रष्टाऽस्ति विद्यते। तेहीत्थं प्रमाणयन्ति उर्वीपर्वततर्वादिकं सर्वं बुद्धिमत्कर्तृकं कार्यत्वाद्यद्यत्कार्यं तत्तत्सर्वं बुद्धिमत्कर्तृकं यथा घटस्तथाचेदं तस्मात्तथा। व्यतिरेके व्योमादि। यश्च बुद्धिमांस्तत्कर्ता स भगवानीश्वर एवेति। नचायमसिद्धो हेतुर्यतो भूभूधरादेः स्वस्वकारणकलापजन्यतया अवयवितया वा कार्यत्वं सर्ववादिनां प्रतीतमेव। नाप्यनैकान्तिको विरुद्धो वा विपक्षादत्यन्तव्यावृत्तत्वात्। नापि कालात्ययापदिष्टः प्रत्यक्षानुमानागमाबाधितधर्मधर्म्यनन्तरप्रतिपादितत्वात्। नापि प्रकरणसमः तत्प्रतिपन्थिधर्मोपपादनसमर्थं प्रत्यनुमानाभावात्। न च वाच्यमीश्वरः पृथ्वीपृथ्वीधरादेर्विधाता न भवति अशरीरित्वान्निर्वृत्तात्मवदिति प्रत्यनुमानं तद्बाधकमिति

यतोऽत्रेश्वररूपो धर्मी प्रतीतोऽप्रतीतो वा प्ररूपितः । न तावदप्रतीतो हेतोराश्रयासिद्धिप्रसङ्गात्। प्रतीतश्चेद्येन प्रमाणेन स प्रतीतस्तेनैव किं स्वयमुत्पादितं स्वतनुं न प्रतीयते इत्यतः कथमशरीरत्वं तस्मान्निरवद्य एवायं हेतुरिति। स चैक इति च: पुनरर्थे स पुनः पुरुषविशेष एकोऽद्वितीयः बहूनां हि विश्वविधातृत्वस्वीकारे परस्परविमतसंभावनाया अनिवार्यत्वादेकैकस्य वस्तुनोऽन्यान्यरूपतया निर्माणे सर्वमसमञ्जसमापद्येतेति । तथा ( स सर्वग इति ) सर्वत्र गच्छतीति सर्वगः सर्वव्यापी तस्य हि प्रतिनियतदेशवर्त्तित्वेऽनियतदेशवृत्तीनां त्रिभुवनान्तर्वर्तिपदार्थसार्थानां यथावन्निर्माणानुपपत्तिः कुम्भकारादिषु तथा दर्शनात् । अथवा सर्वं गच्छति जानातीति सर्वगः सर्वज्ञः सर्वे गत्यर्था ज्ञानार्था इति वचनात् सर्वज्ञत्वाभावे हि यथोचितोपादानकारणाद्यनभिज्ञत्वादनुरूपकार्योत्पत्तिर्न स्यात् । तथा स स्ववशः स्वतन्त्रः सकलप्राणिनां स्वेच्छया सुखदुःखयोरनुभावनसमर्थत्वात्तथा चोक्तम् "ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा, अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोरिति" पारतन्त्र्ये तु तस्य परमुखप्रेक्षितया मुख्यकर्तृत्वव्याघातादनीश्वरत्वापत्तिः । तथा ( स नित्य इति ) अप्रच्युतानुत्पन्नस्थिरैकरूपस्तस्य ह्यनित्यत्वे परोत्पाद्यतया कृतकत्वप्राप्तिः ।अपेक्षितपरव्यापारो हि भावः स्वभावनिष्पत्तौ कृतक इत्युच्यते यश्चापरस्तत्कर्त्ता कल्प्यते स नित्योऽनित्यो वा स्यान्नित्यश्चेदधिकृतेश्वरेण किमपराद्धम् । अनित्यश्चेत्तस्याप्युत्पादकान्तरेण भाव्यं तस्यापि नित्यानित्यत्वविकल्पकल्पनायामनवस्थादौःस्थ्यमिति तदेवमेकत्वादिविशेषणविशिष्टो भगवानीश्वरस्त्रिजगत्कर्त्तेति पराभ्युपगममुपदर्श्योत्तरार्द्धेन तस्य दुष्टत्वमाचष्टे। इमा एता अनन्तरोक्ताः कुहेवाकविडम्बनाः कुत्सिताः हेवाका आग्रहविशेषाः कुहेवाकाः कदाग्रहा इत्यर्थः त एव विडम्बना विचारचातुरीबाह्यत्वेन तिरस्काररूपत्वाद्विगोपकप्रकारा स्युर्भवेयुस्तेषां प्रामाणिकापसदानां येषां हे स्वामिन् ! त्वं नानुशासको न शिक्षादाता तदभिनिवेशानां विडम्बनारूपत्वज्ञापनार्थमेव पराभिमतपुरुषविशेषणेषु प्रत्येकं तच्छब्दप्रयोगमसूयागर्भमाविर्भावयाञ्चकार स्तुतिकारः । तथा चैवमेव निन्दनीयं प्रति वक्तारो वदन्ति " स मूर्खः स पापीयान् स दरिद्रः इत्यादि " त्वमित्येकवचनसंयुक्तयुष्मच्छब्दप्रयोगेण परेशितुः परमकारुणिकतयाऽनपेक्षितस्वपरपक्षविभागमितरशास्त्रिणामसाधारणमद्वितीयं हितोपदेशकत्वं ध्वन्यते । यतोऽत्रायमाशयो यद्यपि भगवान् विशेषेण सकलजगज्जन्तुजाते हितावहां सर्वेभ्य एव देशनावाचमाचष्टे तथापि सैव केषाञ्चिन्निबिडनिकाचितपापकर्मकलुषितात्मनां रुचिरूपतया न परिणमते अपुनर्बन्धकादिव्यतिरिक्तत्वेनायोग्यत्वात्तथा च कादम्बर्यां बाणोऽपि बभाण " अपगतमले हि मनसि स्फटिकमणाविव रजनिकरगभस्तयो विशन्ति सुखमुपदेशगुणा गुरुवचनममलमपि सलिलमिव महदुपजनयति। श्रवणस्थितं शूलमभव्यस्येति "यतो वस्तुवृत्त्या न तेषां भगवाननुशासको भवति । नचैतावता जगद्गुरोरसामर्थ्यसंभावना, नहि कालदष्टमनुज्जीवयन् समुज्जीवितेतरदष्टको विषभिषगुपालम्भनीयोऽतिप्रसङ्गात् ।स हि तेषामेव दोषः । न खलु निखिलभुवनाभोगमवभासयन्तोऽपि भानवीया भानवः कौशिकलोकस्यालोकहेतुतामभजमाना उपालम्भसंभावनास्पदम् तथा च श्रीसिद्धसेनः " सद्धर्मबीजवपनानघकौशलस्य, यल्लोकबान्धव ! तवापि खिलान्यभूवन् । तन्नाद्भुतं खगकुलेष्विह तामसेषु सूर्यांशवो मधुकरीचरणावदाताः ॥ १ ॥

अथ कथमिव तत्कुहेवाकानां विडम्बनारूपत्वमिति ब्रूमः यत्तावदुक्तं परैः "क्षित्यादयो बुद्धिमत्कर्तृकाः कार्यत्वात् घटवदिति तदयुक्तं व्याप्तेरग्रहणात् । साधनं हि सर्वत्र व्याप्तौ प्रमाणेन सिद्धायां साध्यं गमयेदिति सर्ववादिसंवादः । स चायं जगन्ति सृजन् सशरीरोऽशरीरो वा स्यात् सशरीरोऽपि किमस्मदादिवद् दृश्यशरीरविशिष्ट उत पिशाचादिवददृश्यशरीरविशिष्टः । प्रथमपक्षे प्रत्यक्षबाधस्तमन्तरेणापि च जायमाने तृणतरुपुरन्दरधनुरभ्रादौ कार्यत्वस्य दर्शनात् । प्रमेयत्वादिवत्साधारणानैकान्तिको हेतुः । द्वितीयविकल्पे पुनरदृश्यशरीरत्वे तस्य माहात्म्यविशेषः कारणमाहोस्विदस्मदाद्यदृष्टवैगुण्यम् । प्रथमप्रकारः कोशपानप्रत्याय्यनीयः तत्सिद्धौ प्रमाणाभावात् । इतरेतराश्रयदोषापत्तेश्च । सिद्धे हि माहात्म्यविशेषे तस्यादृश्यशरीरत्वं प्रत्येतव्यं तत्सिद्धौ च माहात्म्यविशेषसिद्धिरिति । द्वैतीयीकस्तु प्रकारो न संचरत्येव विचारगोचरे संशयाऽनिवृत्तेः । किं तस्यासत्त्वाददृश्यशरीरत्वं वान्ध्येयादिवत् किं वाऽस्मदाद्यदृष्टवैगुण्यात् पिशाचादिवदिति निश्चयाभावात् । अशरीरश्चेत्तदा दृष्टान्तदार्ष्टान्तिकयोर्वैषम्याद्विरुद्धो हेतुः ।घटादयो हि कार्यरूपाः सशरीरकर्तृका दृष्टा अशरीरस्य च सतस्तस्य कार्यप्रवृत्तौ कुतः सामर्थ्यमाकाशादिवत् । तस्मात्सशरीराशरीरलक्षणे पक्षद्वयेऽपि कार्यत्वहेतोर्व्याप्त्यसिद्धिः ।किं च त्वन्मतेन कालात्ययापदिष्टोऽप्ययं हेतुः धर्म्येकदेशस्य तरुविद्युदभ्रादेरिदानीमप्युत्पद्यमानस्य विधातुरनुपलभ्यमानत्वेन प्रत्यक्षबाधितधर्म्यनन्तरहेतुभणनात्तदेवं न कश्चिज्जगतः कर्त्ता।एकत्वादीनि तु जगत्कर्तृत्वव्यवस्थापनायानीयमानानि तद्विशेषणानि षण्ढं प्रति कामिन्या रूपसंपन्निरूपणप्रायाण्येव तथापि तेषां विचारासहत्वख्यापनार्थं किञ्चिदुच्यते तत्रैकत्वचर्चस्तावत् बहूनामेककार्यकरणे वैमत्यसंभावनेति नायमेकान्तः । अनेककीटिकाशतनिष्पाद्यत्वेऽपि शक्रमूर्द्धोऽनेकशिल्पिकल्पितत्वेऽपि प्रासादादीनां नैकसरघानिर्वर्तितत्वेऽपि मधुच्छत्रादीनां चैकरूपताया अविगानेनोपलम्भात्। अथैतेष्वप्येक एवेश्वरः कर्त्तेति ब्रूषे एवं चेद्भवतो भवानीपतिं प्रति निष्प्रतिमा वासना तर्हि कुविन्दकुम्भकारादितिरस्कारेण पटघटादीनामपि कर्त्ता स एव किं न कल्प्यते । अथ तेषां प्रत्यक्षसिद्धं कर्तृत्वं कथमपह्नोतुं शक्यं तर्हि कीटिकादिभिः किं तव विराद्धं यत्तेषामसदृशतादृशप्रयाससाध्यं कर्तृत्वमेकहेलयैवापलप्यते तस्माद्वैमत्यभयान्महेशितुरेकत्वकल्पना भोजनादिव्ययभयात्कृपणस्यात्यन्तवल्लभपुत्रकलत्रादिपरित्यजनेन शून्यारण्यानीसेवनमिव।तथा सर्वगतत्वमपि तस्य नोपपन्नं तद्धि शरीरात्मना ज्ञानात्मना वा स्यात् । प्रथमपक्षे तदीयेनैव देहेन जगत्त्रयस्य व्याप्तत्वादितरनिर्मेयपदार्थानामाश्रयानवकाशः । द्वितीयपक्षे तु सिद्धसाध्यताऽस्माभिरपि निरतिशयज्ञानात्मना परमपुरुषस्य जगत्त्रयक्रोडीकरणाभ्युपगमात् । यदि परमेवं भवत्प्रमाणीकृतेन वेदेन विरोधः ।तत्र हि शरीरात्मना सर्वगतत्वमुक्तम्।"विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतः पाणिरुत विश्वतः पादिति श्रुतेः "यच्चोक्तम् । तस्य प्रतिनियतदेशवर्तित्वे त्रिभुवनगतपदार्थानामनियतदेशवृत्तीनां यथावन्निर्माणानुपपत्तिरिति । तत्रेदं पृच्छ्यते स जगत्त्रयं निर्मिमाणस्तक्षादिवत्साक्षाद्देहव्यापारेण निर्मिमीते यदि वा संकल्पमात्रेण । आद्ये पक्षे एकस्यैव भूभूधरादेर्विधानेऽक्षोदीयसः कालक्षेपस्य संभवाद्गरीयसाप्यनेहसा न परिसमाप्तिः । द्वितीयपक्षे तु संकल्पमात्रेणैव

चचितकार्यकल्पनायां नियतदेशस्थायित्वेपि न किंचिद्दूषणमुत्पश्यामः नियतदेशस्थायिनां सामान्यदेवानामपि संकल्पमात्रेणैव तत्तत्कार्यसंपादनप्रतिपत्तेः ॥

किंच तस्य सर्वगतत्वेऽङ्गीक्रियमाणेऽशुचिषु निरन्तरसन्तमसेषु नरकादिस्थानेष्वपि तस्य वृत्तिः प्रसज्यते तथाचानिष्टापत्तिः। अथ युष्मत्पक्षेऽपि यदा ज्ञानात्मना सर्वजगत्त्रयं व्याप्नोतीत्युच्यते तदाऽशुचिरसास्वादादीनामप्युपलम्भसम्भावनाज्ञारकादिदुःखस्वरूपसंवेदनात्मकतया दुःखानुभवप्रसङ्गाच्चानिष्टापत्तिस्तुल्यैवेति चेत्तदेतदुपपत्तिभिः प्रतिकर्तुमशक्तस्य धूलिभिरवाकरणं यतो ज्ञानमप्राप्यकारि स्वस्थलस्थमेव विषयं परिच्छिनत्ति न पुनस्तत्र गत्वा तत्कुतो भवदुपालम्भः समीचीनः। तर्हि भवतोऽप्यशुचिज्ञानमात्रेण तद्रसास्वादानुभूतिस्तद्भावे हि स्रक्चन्दनाङ्गनारसवत्यादिचिन्तनमात्रेणैव तृप्तिसिद्धौ तत्प्राप्तिप्रयत्नवैफल्यप्रसक्तिरिति। यत्तु ज्ञानात्मना सर्वगतत्वे सिद्धसाधनं प्रागुक्तं तच्छक्तिमात्रमपेक्ष्य मन्तव्यं तथा च वक्तारो भवन्ति। "अस्य मतिः सर्वशास्त्रेषु प्रसरति इति"। न च ज्ञानं प्राप्यकारि तस्यात्मधर्मत्वेन बहिर्निर्गमाभावाद्बहिर्निर्गमे चात्मनोऽचैतन्यापत्त्याऽजीवत्वप्रसङ्गान्नहि धर्मो धर्मिणमतिरिच्य क्वचन केवलो विलोकितः। यच्च परे दृष्टान्तयन्ति "यथा सूर्यस्य किरणा गुणरूपा अपि सूर्यान्निष्क्रम्य भुवनं भासयन्त्येवं ज्ञानमप्यात्मनः सकाशाद्बहिर्निर्गत्य प्रमेयं परिच्छिनत्तीति" तत्रेदमुत्तरं किरणानां गुणत्वमसिद्धं तेषां तैजसपुद्गलमयत्वेन द्रव्यत्वात्। यश्च तेषां प्रकाशात्मा गुणः स तेभ्यो न जातु पृथग्भवतीति। तथाच धर्मसंग्रहण्यां श्रीहरिभद्राचार्यपादाः "किरणा गुणा न दव्वं, तेसिं पयासो गुणो न वा दव्वं। जं नाणं आयगुणो, कहमदव्वो स अन्नत्थ ?॥ १॥ गंतूण न परिच्छिंदइ, नाणं नेयं तयम्मि देसम्मि। आयत्थम्मि य नवरं, अचिंतसत्तीउ विन्नेयं। २। लोहोवलस्स सत्ती, आयत्था चेव भिन्नदेसम्मि। लोहं आगरिसंती दीसइ इह कज्जपच्चक्खा ॥ ३॥ एवमिह नाणसत्ती, आयत्था चेव हंदि लोगंतं। जइ परिछिंदइ सव्वं,को णु विरोहो भवे तत्थ '॥ ४॥ इत्यादि अथ सर्वगं सर्वज्ञं इति व्याख्यानं तत्रापि प्रतिविधीयते। ननु तस्य सार्वज्ञ्यं केन प्रमाणेन गृहीतं प्रत्यक्षेण परोक्षेण वा। न तावत्प्रत्यक्षेण तस्येन्द्रियार्थसन्निकर्षोत्पन्नतयाऽतीन्द्रियग्रहणासामर्थ्यात्। नापि परोक्षेण तद्धि अनुमानं शाब्दं वा स्यात्। न तावदनुमानं तस्य लिङ्गग्रहणलिङ्गिलिङ्गसम्बन्धस्मरणपूर्वकत्वान्न च तस्य सर्वज्ञत्वेऽनुमेयं किंचिदव्यभिचारि लिङ्गं पश्यामस्तस्याऽत्यन्तविप्रकृष्टत्वेन तत्प्रतिबद्धलिङ्गसम्बन्धग्रहणाभावात्। अथ तस्य सर्वज्ञत्वं विना जगद्वैचित्र्यमनुपपद्यमानं सर्वज्ञत्वमर्थादापादयतीति चेन्न अविनाभावाऽभावात्। न हि जगद्वैचित्री तत्सार्वज्ञ्यं विनाऽन्यथा नोपपन्ना। द्विविधं हि जगत् स्थावरजङ्गमभेदात् तत्र जङ्गमानां वैचित्र्यं स्वोपात्तशुभाऽशुभकर्मपरिपाकवशेनैव। स्थावराणां तु सचेतनानामियमेव गतिः अचेतनानां तु तदुपभोगयोग्यतासाधनत्वेनानादिकालसिद्धमेव वैचित्र्यमिति। नाप्यागमस्तत्साधकः। स हि तत्कृतोऽन्यकृतो वा स्यात्। तत्कृत एव चेत्तस्य सर्वज्ञतां साधयति। तदा तस्य महत्त्वक्षतिः स्वयमेव स्वगुणोत्कीर्त्तनस्य महतामनधिकृतत्वात्। अन्यच्च तस्य शास्त्रकर्तृत्वमेव न युज्यते। शास्त्रं हि वर्णात्मकम्। ते च ताल्वादिव्यापारजन्याः। स च शरीर एव सम्भवी। शरीराऽभ्युपगमे च तस्य पूर्वोक्ता एव दोषाः। अन्यकृतश्चेत्सोऽन्यः सर्वज्ञोऽसर्वज्ञो वा। सर्वज्ञत्वे तस्य द्वैतापत्त्या प्रागुक्ततदेकत्वाभ्युपगमबाधः। तत्साधकप्रमाणचर्चायामनवस्थापातश्च। असर्वज्ञश्चेत् कस्तस्य वचसि विश्वासः अपरं च भवदभीष्ट आगमः प्रत्युत तत्प्रणेतुरसर्वज्ञत्वमेव साधयति पूर्वाऽपरविरुद्धाऽर्थवचनोपेतत्वात्। तथाहि "न हिंस्यात्सर्वभूतानि" इति प्रथममुक्त्वा पश्चात्तत्रैव पठितम् "षट्शतानि नियुज्यन्ते पशूनां मध्यमेऽहनि। अश्वमेधस्य वचनान्न्यूनानि पशुभिस्त्रिभिः।" तथा 'अग्नीषोमीयं पशुमालभेत' "सप्तदश प्राजापत्यान् पशूनालभेत" इत्यादिवचनानि कथमिव न पूर्वापरविरोधमनुरुध्यन्ते। तथा "नानृतं ब्रूयात्" इत्यादिनाऽनृतभाषणं प्रथमं निषिध्य पश्चाद् "ब्राह्मणार्थेऽनृतं ब्रूयादित्यादि" तथा "न नर्मयुक्तं वचनं हिनस्ति न स्त्रीषु राजन्न विवाहकाले। प्राणात्यये सर्वधनापहारे पञ्चाऽनृतान्याहुरपातकानि ॥ १॥ तथा "परद्रव्याणि लोष्टवत्" इत्यादिना अदत्तादानमनेकधा निरस्य पश्चादुक्तं "यद्यपि ब्राह्मणो हठेन परकीयमादत्ते छलेन वा, तथापि तस्य नाऽदत्तादानम्। यतः सर्वमिदं ब्राह्मणेभ्यो दत्तम्। ब्राह्मणानां तु दौर्बल्याद्वृषलाः परिभुञ्जते तस्मादपहरन् ब्राह्मणः स्वमादत्ते स्वमेव ब्राह्मणो भुङ्क्ते वस्ते स्वं ददातीति। तथा "अपुत्रस्य गतिर्नास्ति" इति लपित्वाऽनेकानि सहस्राणि कुमारब्रह्मचारिणां दिवं गतानि विप्राणामकृत्वा कुलसंततिं, मित्यादि कियन्तो वा दधिमाषभोजनात्कृपणा विडम्ब्यन्ते। तदेवमागमोपि न तस्य सर्वज्ञतां वक्ति। किंच सर्वज्ञः सन्नसौ चराचरं चेद्विरचयति तदा जगदुपप्लवकरणवैरिणः पश्चादपि कर्त्तव्यनिग्रहान् सुरवैरिणः एतदधिक्षेपकारिणश्चास्मदादीन् किमर्थं सृजतीति तन्नायं सर्वज्ञः। तथा स्ववशत्वं स्वातन्त्र्यं तदपि तस्य न क्षोदक्षमम्। स हि यदि नाम स्वाधीनः सन् विश्वं विधत्ते परमकारुणिकश्च त्वया वर्ण्यते तत्कथं सुखितदुःखिताद्यवस्थाभेदवृन्दस्थपुटितं घटयति भुवनमेकान्तशर्मसंपत्कान्तमेव तु किं न निर्मिमीते। अथ जन्मान्तरोपार्जिततत्तदीयशुभाशुभकर्मप्रेरितः संस्तथा करोतीति दत्तस्तर्हि स्ववशत्वाय जलाञ्जलिः। कर्मजन्ये च त्रिभुवनवैचित्र्ये विशिष्टहेतुकविष्टपसृष्टिकल्पनायाः कष्टैकफलत्वादस्मन्मतमेवाङ्गीकृतं प्रेक्षावता। तथा चायाताऽयं "घट्टकुट्यां प्रभातमिति" न्यायः। किंच प्राणिनां धर्माधर्मावपेक्षमाणश्चेदयं सृजति प्राप्तं तर्हि यदयमपेक्षते तन्न करोति इति। नहि कुलालो दण्डादि करोति एवं कर्मापेक्षश्चेदीश्वरो जगत्कारणं स्यान्नहि कर्मणीश्वरोऽनीश्वरः स्यादिति। तथा नित्यत्वमपि तस्य स्वगृह एव प्रणिगद्यमानं हृद्यम्। स खलु नित्यत्वेनैकरूपः सन् त्रिभुवनसर्गस्वभावोऽतत्स्वभावो वा प्रथमविधायां जगन्निर्माणात् कदाचिदपि नोपरमेत। तदुपरमे तत्स्वभावत्वहानिः। एवं च सर्गक्रियाया अपर्यवसानादेकस्यापि कार्यस्य न सृष्टिः। घटो हि स्वारम्भक्षणादारभ्यापरिसमाप्तेरुपान्त्यक्षणं यावन्निश्चयनयाभिप्रायेण न घटव्यपदेशमासादयति जलाहरणाद्यर्थक्रियायामसाधकतमत्वात्। अतत्स्वभावपक्षे तु न जातु जगन्ति सृजेत्तत्स्वभावायोगाद्गगनवत्। अपिच तस्यैकान्तनित्यस्वरूपत्वे सृष्टिरिव संहारोपि न घटते नानारूपकार्यकारणे नित्यत्वापत्तेः। स हि येनैव स्वभावेन जगन्ति सृजेत्तेनैव तानि संहरेत्स्वभावान्तरेण वा तेनैव चेत् सृष्टिसंहारयोर्यौगपद्यप्रसङ्गः स्वभावाभेदात्। एकस्वभावात्कारणादनेकस्वभावकार्योत्पत्तिविरोधात्। स्वभावान्तरेण चेन्नित्यत्वहानिः। स्वभावभेद एव हि लक्षणमनित्यतायाः। यथा

पार्थिवशरीरस्याहारपरमाणुसहकृतस्य प्रत्यहमपूर्वापूर्वोत्पादेन स्वभावभेदादनित्यत्वम् । एवञ्च भावानां सृष्टिसंहारयोः शम्भौ स्वभावभेदः । रजोगुणात्मकतया सृष्टौ,तमोगुणात्मकतया संहरणे, सात्त्विकतया च स्थितौ, तस्य व्यापारस्वीकारात् एवं चावस्थाभेदस्तद्भेदे चावस्थावतोऽपि भेदादित्यन्वक्षति । अथास्तु नित्यस्तथापि स कथं सततमेव सृष्टौ न चेष्टते । इच्छावशाच्चेन्ननु ता अपीच्छाः स्वसत्तामात्रनिबन्धनात्मलाभाः सदैव किं न प्रवर्तयतीति स एवोपालम्भः । तथा शम्भोरष्टगुणाधिकरणत्वे कार्यभेदादनुमेयानां तदिच्छानामपि विषमरूपत्वान्नित्यत्वहानिः केन निवार्यते इति । किंच प्रेक्षावतां प्रवृत्तिः स्वार्थकारुण्याभ्यां व्याप्ता ततश्चायं जगत्सर्गे व्याप्रियते स्वार्थात्कारुण्याद्वा न तावत्स्वार्थात्तस्य कृतकृत्यत्वात् । न च कारुण्यात्परदुःखप्रहाणेच्छा हि कारुण्यं ततः प्राक् सर्गाज्जीवानामिन्द्रियशरीरविषयानुत्पत्तौ दुःखाभावेन कस्य प्रहाणेच्छा कारुण्यम् । सर्गोत्तरकाले तु दुःखिनोऽवलोक्य कारुण्याभ्युपगमे दुरुत्तरमितरेतराश्रयम् । कारुण्येन सृष्टिः सृष्ट्या च कारुण्यमिति । नास्य जगत्कर्तृत्वं कथमपि सिध्यति तदेवमेवंविधदोषकलुषिते पुरुषविशेषे यस्तेषां सेवाहेवाकः स खलु केवलं बलवन्मोहविडम्बनापरिपाक इति । अत्र च यद्यपि मध्यवर्तिनो नकारस्य घण्टालालान्यायेन योजनादर्थान्तरमपि स्फुरति यथा 'इमाः कुहेवाकविडम्बनास्तेषां न स्युर्येषां त्वमनुशासक इति' तथापि सोऽर्थः सहृदयैर्न हृदये धार्यो।याऽन्ययोगव्यवच्छेदस्याधिकृतत्वादिति काव्यार्थः । स्या० ६ श्लोक ।

ईश्वरस्य जगत्कर्तृत्वं यथा ।

उवगरणाभावाउ निच्चेट्ठामुत्तयाइ उ वावि ।
ईसरदेहारंभे वि तुल्लया वा णवत्था वा ॥

नायमीश्वरः जीवादिरूपकर्मशरीरादिकार्याण्यारभते उपकरणाभावाद्दण्डाद्युपकरणरहितकुलालवत्,न च कर्म विना शरीराद्यारम्भिजीवादीनामन्यदुपकरणं घटते । गर्भाद्यवस्थास्वन्योपकरणासम्भवाच्छुक्रशोणितादिग्रहणस्याप्यकर्मणोऽनुपपत्तेः । अथवा ऽन्यथा प्रयोगः क्रियते निश्चेष्टत्वादिना कर्मशरीराद्यारभते निश्चेष्टत्वादाकाशवत्तथा ऽमूर्तत्वादादिशब्दादशरीरत्वान्निष्क्रियत्वात्सर्वगतत्वादाकाशवदेव तथा एकत्वादेकपरमाणुवदित्यादि । अथोच्यते शरीरवानीश्वरः सर्वाण्यपि देहादिकार्याण्यारभते । नन्वीश्वरदेहारम्भेऽपि तर्हि तुल्यता पर्यनुयोगस्य तथाहकर्मा नारभते निजशरीरमीश्वरो निरुपकरणत्वाद्दण्डादिरहितकुलालवदिति । अथान्यः कोपीश्वरस्तच्छरीरारम्भाय प्रवर्तते ततः सापि शरीरवानशरीरो वा यद्यशरीरस्तर्हि नारभते निरुपकरणत्वादित्यादि सैव वक्तव्यता अथ शरीरवान् तर्हि तच्छरीरारम्भेऽपि तुल्यता सोप्यकर्मा निजशरीरं नारभते निरुपकरणत्वादित्यादि । अथ तच्छरीरमन्यः शरीरवानारभते तर्हि तच्छरीरारम्भेऽपि तुल्यता नारभते ऽनन्तस्याप्यन्यस्यैवमनवस्था । अनिष्टं च सर्वमेतत्तस्मान्नेश्वरो देहादीनां कर्ता किंतु कर्म सहितोयो जीव एव निष्प्रयोजनश्चेश्वरो देहादीन् कुर्वन्नुन्मत्तकल्प एव स्यात् । सप्रयोजनकर्तृत्वे पुनरनीश्वरप्रसङ्गः । न चानादिशुद्धस्य देहादिकारणेच्छा युज्यते तस्यारागादिरूपत्वात्॥ विशे० ॥ तथाच 'इणमन्न तु अन्नाणं, इहमेगेसिमाहियं ईसरेण कडेलोए' इत्युपक्रम्य 'असोत्तत्तमकासीय अयाणंतामुसंवदे ' इत्युपसंहार । सूत्र० १ श्रु०१ अ० ।

"ईश्वरकर्तृके सुखदुःखे अपि न भवतः यथासावीश्वरो मूर्तोऽमूर्तो वा । यदि मूर्तस्ततः प्राकृतपुरुषस्येव सर्वकर्तृत्वाभावः । अथाऽमूर्तस्तथा सत्याकाशस्येव सुतरां निष्क्रियत्वम् । अपिच यद्यसौ रागादिमांस्ततोऽस्मदाद्यव्यतिरेकाद्विश्वस्याकर्तैव । यथासौ विगतरागस्ततस्तत्कृतं सुभगदुर्भगेश्वरदरिद्रादि जगद्वैचित्र्यम् न घटां प्राञ्चति ततो नेश्वरः कर्तेति । सूत्र० ॥ यथा कथंचिदीश्वरस्य कर्तृत्वं सूत्रकृताङ्गे प्रतिपादितम् ।

तथेश्वरोपि कर्ता आत्मैवहि तत्र तत्रोत्पत्तिद्वारेण सकलजगद्व्यापनादीश्वरः । तस्य सुखदुःखोत्पत्तिकर्तृत्वं सर्ववादिनामविगानेन सिद्धमेव । यच्चात्र मूर्तादि दूषणमुपन्यस्तं तदेवंभूतेश्वरसमाश्रयेण दूरोच्छेदितमेवेति ॥ सूत्र० १ श्रु० १ अ० २ उ० । ऐश्वर्येण ज्ञानाद्यतिशयलक्षणेन युक्त ईश्वरः परमब्रह्मवादीनां मुक्तेऽबौद्धानामुत्कृष्टे अर्हतां जिने च । द्वा० १६ द्वा० - यो० वि० ।

तेषामीश्वरत्वं यथा-

महेशानुग्रहात्केचि-द्योगसिद्धिं प्रचक्षते ।
क्लेशाद्यैरपरामृष्टः, पुंविशेषः स चेष्यते । १ ।

केचित्पातञ्जला महेशानुग्रहात् योगस्योक्तलक्षणस्य सिद्धिमयोगकर्मलक्षणां प्रचक्षते प्रकथयन्ति स च महेशः पुंविशेषः पुरुषविशेषः इष्यते । कीदृश इत्याह क्लेशाद्यैः क्लेशकर्मविपाकाशयैरपरामृष्टोऽस्पृष्टस्त्रिष्वपि कालेषु तथाच सूत्रं "क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष इष्यते । कीदृश इत्याह- ईश्वर इति अत्र क्लेशा अविद्यास्मिता रागद्वेषाभिनिवेशा वक्ष्यमाणलक्षणाः क्लेशमूला कर्माशयो दृष्टादृष्टजन्मवेदनीय अस्मिन्नेव जन्मन्यनुभवनीयो दृष्टजन्मवेदनीयो जन्मान्तरानुभवनीयोऽदृष्टजन्मवेदनीयस्तीव्रसंवेगेन हि कृतानि पुण्यानि देवताराधनादीनि कर्माणि इहैव जन्मनि फलं जात्यायुर्भोगलक्षणं प्रयच्छन्ति । यथा नन्दीश्वरस्य भगवन्महेश्वराराधनबलादिहैव जन्मनि जात्यादयो विशिष्टाः प्रादुर्भूता न चैतदनुपपत्तिः सदनुष्ठानेन प्रतिबन्धकापनयने केदारान्तरे जलापूरणवत्पश्चात्यप्रकृत्यापूरणेनैव सिद्धिविशेषोपपत्तेस्तदुक्तम् । " जन्मौषधिमन्त्रतपः समाधिजाः सिद्धयः सिद्धिश्चोत्कर्षविशेषः कायकारणस्य जात्यन्तरपरिणामः प्रकृत्या पूराभिन्निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवदिति । सति मूले तद्विपाको जात्यायुर्भोग सति मूले क्लेशरूपबीजे तेषां कुशलाकुशलं कर्मणां विपाकः फलं जात्यायुर्भोगा भवन्ति जातिर्मनुष्यादिरायुश्चिरकालं शरीरसंबन्धो भोगा विषया इन्द्रियाणि सुखदुःखसंवित्कर्मकरणभावसाधनव्युत्पत्त्या भोगशब्दस्य, इदमत्र तात्पर्यम् । चित्तहि द्विविधं साशयमनाशयं च । तत्र योगिनामनाशयं तदाह ।ध्यानजमनाशयम् अत एव तेषामशुक्लाकृष्णं कर्म तदाह कर्माशुक्लाकृष्णं योगिनस्त्रिविधमितरेषां शुभफलदं कर्म यागादिशुक्लम् अशुभफलदं ब्रह्महत्यादिकृष्णम् उभयसंकीर्णं शुक्लकृष्णम् । तत्र शुक्लं दानतपःस्वाध्यायादिमतां पुरुषाणां कृष्णं नारकिणां, शुक्लकृष्णं मनुष्याणां योगिनां तु विलक्षणमिति साशयचित्तमयोगिनाम् तत्र फलत्यागानुसन्धानात्- वाप्फलजनकं कर्माशयस्ततस्तद्विपाकानुगुणानामेवाभिव्यक्तिर्वासनानां द्विविधा हि कर्मवासनाः स्मृतिमात्रफलाजात्यायुर्भोगफलाश्च तत्राद्या येन कर्मणा यादृक् शरीरमारब्धं देवमानुषतिर्यगादिभेदेन जात्यन्तरशतव्यवधानेन पुनस्तथाविधस्यैव शरीरस्यारम्भे तदनुरूपामेव स्मृतिं जनयन्ति,

अन्यादर्शी च न्यग्भावयन्ति देवादिभवे नारकादि शरीरोपभोगस्मृतिवत्। नचातिव्यवहितयोः स्मृतिसंस्कारयोर्जन्यजनकभावानुपपत्तिर्दूरानुभूतस्याप्यविचलितचित्ते वासनात्मना स्थितस्योद्बोधविशेषसहकारेण स्मृतिविशेषपरिणामे व्यवधानाभावात्तदुक्तम् । जातिदेशकालव्यवहितानामप्यानन्तर्यं स्मृतिसंस्कारयोरेकरूपत्वात् ताश्च सुखसाधना वियोगाध्यवसायसङ्कल्पस्य मोहलक्षणस्य बीजस्यानादित्वादादिरहितास्तदुक्तं तासामनादित्वमाशिषो नित्यत्वात् द्वितीयाया अपि चित्तभूमावेवानादिकालं संचिता यथा यथा पाकमुपयान्ति तथा तथा गुणप्रधानभावेन स्थिता जात्यायुर्भोगलक्षणं कार्यमारभन्त इति । तदेतत्कर्माशयफलं जात्यादिविपाक इति । यद्यपि सर्वेषामात्मनां क्लेशादिस्पर्शो नास्ति तथापि ते चित्तगतास्तेषां व्यपदिश्यन्ते यथा योधगतौ जयपराजयौ स्वामिनः, अस्य तु त्रिष्वपि कालेषु तथाविधोऽपि क्लेशादिपरामर्शो नास्तीति विलक्षणोऽयमन्येभ्यः ॥ १ ॥

ज्ञानमप्रतिघं यस्य, वैराग्यं च जगत्पतेः ।
ऐश्वर्यं चैव धर्मश्च, सहसिद्धं चतुष्टयम् ॥ २ ॥
सात्त्विकः परिणामोऽत्र, काष्ठां प्राप्ततयेष्यते ।
नाक्रमेणाखिलप्राप्त, इति सर्वज्ञतास्थितिः ॥ ३ ॥
ऋषीणां कपिलादीना-मप्ययं परमो गुरुः ।
तदिच्छया जगत्सर्वं, यथाकर्म विवर्त्तते ॥ ४ ॥

ज्ञानादयोह्यत्राप्रतिघा सहजाश्च शुद्धसत्वस्यानादिसंबन्धात् यथा हीतरेषां सुखदु समोहतया विपरिणतं चित्तं निर्मले सात्विके धर्मात्मपक्षे प्रतिसंक्रान्तचिच्छायासंक्रान्तं संवेद्यं भवति नैवमीश्वरस्य किन्तु तस्य केवल एव सात्विकः परिणामो भोग्यतया व्यवस्थित इति । किंच प्रकृतिपुरुषसंयोगवियोगयोरीश्वरेच्छाव्यतिरेकेणानुपपत्तेरनादिज्ञानादिमत्त्वमस्य सिद्धम् । २ । अत्रेश्वरे सात्त्विकपरिणामः काष्ठाप्राप्ततयाऽत्यन्तोत्कृष्टत्वेनेष्यते तारतम्यवतां सातिशयानां धर्माणां परमाणावल्पत्वस्येवाकाशे परममहत्त्वस्येव काष्ठाप्राप्तिदर्शनात् । ज्ञानादीनामपि चित्तधर्माणां तारतम्येन परिदृश्यमानानां क्वचिन्निरतिशयत्वे सिद्धे न पुनः रक्रमप्रमाणाखिलकर्येन्द्रियद्वाराप्राप्तमुपनीतमिति हेतोः सर्वविषयत्वादेतश्चित्तस्य सर्वज्ञतया स्थितिः प्रसिद्धिस्तदुक्तम् 'तत्र निरतिशयं सर्वज्ञबीजम्' । ३ । अयमीश्वरः कपिलादीनामपि ऋषीणां परम उत्कृष्टो गुरुस्तदुक्तं 'स पूर्वेषामपि गुरुः कालेनानवच्छेदादिति तस्येश्वरस्येच्छया सर्वं जगत् यथाकर्म कर्मानतिक्रम्य विवर्त्तते उच्चावचफलभाग्भवति न च कर्मणैवान्यथासिद्धिरेककारकेण कारकान्तरानुपक्षयादिति भावः । ४ । एतद्दूषयति—

नैतद्युक्तमनुग्राह्य-तत्स्वभावत्वमन्तरा ।
नाणुः कदाचिदात्मा स्या-द्देवतानुग्रहादपि ॥ ५ ॥
उभयोस्तत्स्वभावत्व-भेदे च परिणामिनि ।
अत्युत्कर्षश्च धर्माणा-मन्यत्राति प्रसङ्गकः ॥ ६ ॥

एतदीश्वरानुग्रहजन्यत्वं योगस्य न युक्तमनुग्राह्यो तत्स्वभावत्वमनुग्राह्यस्वभावत्वमन्तरा विना यतः देवतायाअनुग्रहादपि अणुतरात्मा भवतीति कालक्षणो कदाचिदपि अणुरात्मा न स्यात् स्वभावापरावृत्तेः । ५ । उभयोरीश्वरात्मनोस्तत्स्वभावत्वभेदे च व्यक्तिकालफलादिभेदेन विभिन्नानुग्राह्यानुग्राहकस्वभावभाजत्वे च परिणामिता स्यात् स्वभावभेदस्यैव परिणामभेदार्थत्वात्तथाचाय सिद्धान्तः । ज्ञानादिधर्माणामप्युत्कर्षेणेश्वरसिद्धिरित्यपि च नास्ति यतो धर्माणामप्युत्कर्षः साध्यमानो ज्ञानादाविवान्यत्राज्ञानादावतिप्रसङ्गकोऽनिष्टसिद्धिकृत् अत्युत्कृष्टज्ञानादिमत्तयेश्वरस्येव तादृशाज्ञानादिमत्तया तत्प्रतिपक्षस्यापि सिद्ध्यापत्तेरित्थं च ज्ञानत्वमुत्कर्षापकर्षाऽऽश्रयवृत्ति उत्कर्षापकर्षाश्रयवृत्तित्वान्महत्त्ववदित्यत्र ज्ञानत्वं न तथा चित्तधर्ममात्रवृत्तित्वादज्ञानत्ववदिति प्रतिरोधो द्रष्टव्यः । प्रकृतिपुरुषसंयोगवियोगौ च यदि तात्त्विकौ तदात्मनोऽपरिणामित्वं न स्यात् तयोर्द्विष्ठत्वेन तस्य जन्यधर्माश्रयत्वक्षतेः । नो चेत्कयोः कारणमीश्वरेच्छा । किंच प्रयोजनाभावादपि नेश्वरो जगत् कुरुते । न च परमकारुणिकत्वाद्भूतानुग्रह एवास्य प्रयोजनमिति भोजस्य वचनं साम्प्रतम् । इत्थं हि सर्वस्यायमिष्टमेव सपादयेदित्यधिकं शास्त्रवार्तासमुच्चयविवरणः ।

आर्थं व्यापारमाश्रित्य, तदाज्ञापालनात्मकम् ।
युज्यते परमीशस्या-नुग्रहस्तत्र नीतितः ॥ ७ ॥
एवं च प्रणवेनैत-ज्जपात्प्रत्यूहसंक्षयः ।
प्रत्यक् चैतन्यलाभश्चे-त्युक्तं युक्तं पतञ्जलेः ॥ ८ ॥
प्रत्यूहा व्याधयः स्त्यानं, प्रमादालस्यविभ्रमाः ।
संदेहा विरती भूम्य-लाभश्चाप्यनवस्थितिः ॥ ९ ॥
धातुवैषम्यजो व्याधि-स्त्यानं चाकर्मनिष्ठता ।
प्रमादो यत्न आलस्य-मौदासीन्यं च हेतुषु ॥ १० ॥

आर्थं ततः सामर्थ्यप्राप्तं न तु प्रसह्य तेनैव कृतं तदाज्ञापालनात्मकं व्यापारमाश्रित्य परं केवलं तत्र नीतितोऽस्मत्सिद्धान्तनीत्या ईशस्यानुग्रहो युज्यते तदुक्तम् । आर्थं व्यापारमाश्रित्य तत्र दोषोऽपि विद्यत इति ॥ ७ ॥ एवं चार्थव्यापारेणेशानुग्रहादरे च प्रणवेनोंकारेणैतस्येश्वरस्य जपात्प्रत्यूहानां विघ्नानां संक्षय विषयप्रातिकूल्येनान्तः करणाभिमुखमञ्चति यत्तत्प्रत्यक् चैतन्यं ज्ञानं तस्य लाभश्चेति पतञ्जलेरुक्तं युक्तं तस्य वाचकः प्रणवस्तज्जपस्तदर्थभावनं ततः प्रत्यक्चैतन्याधिगमोऽन्तरायाभावाश्चेति सूत्रप्रसिद्धेर्गुणविशेषवत् पुरुषस्य प्रणिधानस्य महाफलत्वात् ॥ ८ ॥ व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वानिचित्तविक्षेपास्तेऽन्तराया इति ॥ ९ ॥ धातुवैषम्यजो धातूद्रेकादिजनितो व्याधिर्ज्वरातीसारादिः स्त्यानं चाकर्मनिष्ठतादित एव कर्मप्रारम्भः प्रमादो यत्न आरब्धेऽप्यनुत्थानशीलता आलस्यं च हेतुषु समाधिसाधनेष्वौदासीन्यं माध्यस्थ्यं न तु पक्षपातः १० ।

विभ्रमो व्यत्ययज्ञानं, संदेहः स्यान्नवेत्ययम् ।
अखेदो विषयावेशा-त्खेदविरतिः किल ॥ ११ ॥
भूम्यलाभः समाधीना, भुवःप्राप्तिः कथंचन ।
लाभेऽपि तत्र चित्तस्या-प्रतिष्ठात्वनवस्थितिः ॥ १२ ॥
रजस्तमोमयाद्दोषा-द्विक्षेपाच्चेतसो ह्यमी ।
सोपक्रमाजपाभ्यासा, यान्ति शक्तिं हतिं परे ॥ १३ ॥
प्रत्यक् चैतन्यमप्यस्मा-दन्तर्ज्योतिः प्रयामयम् ।
बहिर्व्यापाररोधेन, जायमानं मतं हि नः ॥ १४ ॥
योगातिशयतश्चायं, स्तोत्रकोटिगुणः स्मृतम् ।
योगदृष्ट्या बुधैर्दृष्टो, ध्यानविश्रामभूमिका ॥ १५ ॥

विभ्रमो व्यत्ययज्ञानं रजने रज्जुबुद्धिवदिष्टसाधनेपि योगः इष्टसाधनत्व निश्चय सन्देहोयं योग· स्याद्वा नवेत्याकारविपर्यायविशिष्टोऽहोन्द्रियार्थव्याक्षेपलक्षणादखेदोलुपरमलक्षण· कि त्वाविरतिर्भवेत् ११ ( लुम्यलाभगति ) कुतोपि हेतो समाधीनां ध्रुव· स्थानस्याप्राप्तिर्भूम्यलाभ· लाभेपि ससाधिभूप्रावपि तत्र समाधिभुवि चित्तस्याप्रतिष्ठानिवेशस्त्वनवस्थिति· ॥ १२ ॥ अमी हि रजस्तमोमयाद्दोषाच्चेतसोविक्षेपे एकाग्रताविरोधिनः परिणामा· सोपक्रमा अपवर्तनीयकर्मजनिता· सन्तो जपाद्भगवत्प्रणिधानान्नाश यान्ति परिनिरुपक्रमा शक्ति हंति दोषानुबन्धशक्तिभङ्गमुत्तरथापि योगप्रतिबन्धसामर्थ्यमेवापगच्छन्तीति भाव· ॥ १३ ॥ अस्माद्भगवज्जपाद्बहिर्व्यापाररोधेन शब्दादिबहिरर्थग्रहत्यागेनान्तर्ज्योतिः प्रयाज्ञानादिविशुद्धिविस्तारस्तन्मयं प्रत्यक्चैतन्यमपि हि जायमानं मतं नोस्माकं तथैव भक्तिश्रद्धाद्यतिशयोपपत्ते· ॥ १४ ॥

योगातिशयतश्चाभ्यन्तरपरिणामोत्कर्षाच्चायं जपः स्तोत्रकोटिगुण स्मृतश्चिरंतनाचार्यै· वाग्योगापेक्षया मनोयोगस्याधिकत्वादत एव मौनविशेषेणैव जप· प्रशस्यते तथा बुधैर्विगारदैर्योगदृष्ट्या योगजप्रातिभज्ञानेन ध्यानस्य विश्रामभूमिका पुनरारोहस्थान दृष्ट· ॥ १५ ॥

ननु यदि यादृश ईश्वरोऽभ्युपगतस्तादृशस्य भवद्भिरनभ्युपगमात्कथमार्थव्यापारेणापि तदनुग्रहसिद्धिरित्याशङ्कायां विपयविशेषपक्षपातेनैव समाधानाभिप्रायवानाह ॥

माध्यस्थ्यमवलम्ब्यैव, देवतातिशयस्य च ।
सेवा सर्वैर्बुधैरिष्टा, कालातीतोऽपि यज्जगौ ॥ १६ ॥

माध्यस्थ्यमनिर्णीतविशेषकदाग्रहाभिनिवेशाभावलक्षणमवलम्ब्य देवतातिशयस्य च विशिष्टदेवतायस्य च सेवा स्तवनध्यानपूजनादिरूपा सर्वैर्बुधैरिष्टा तन्निमित्तकफलार्थत्वेनाभिमता स्तवनादिक्रियाया· स्वकर्तृकाया· फलदानसमर्थत्वेपि स्तवनीयाद्यालम्बनत्वे ततस्तस्यास्तोत्रादे· फललाभस्य स्तोतव्यादिनिमित्तकत्वव्यवहारादथ्यस्मात्कालातीतोपि शास्त्रकृद्विशेषो जगौ । १६ ।

अन्येषामप्ययं मार्गो, मुक्ताविद्यादिवादिनाम् ।
अभिधानादिभेदेन, तत्त्वनीत्या व्यवस्थितः ॥ १७ ॥
मुक्तो बुद्धोऽर्हन्वापि य-दैश्वर्येण समन्वितः ।
तदीश्वरः स एव स्या-त्संज्ञाभेदोऽत्र केवलम् ॥ १८ ॥

अन्येषामपि तीर्थान्तरीयाणां किं पुनरस्माकमयमस्मदुक्तो मार्गो देवताविगोचरो मुक्ताविद्यादिनामाविद्यादिवादिनां च मतेनाभिधानादीना नामविशेषणादीनां भेदेपि तत्त्वनीत्या परमार्थत एकविषयतया व्यवस्थित प्रतिष्ठित ॥१७॥

मुक्त परमब्रह्मवादिनां बुद्धो बौद्धानाम् अर्हन् जैनानां वापीति समुच्चयं यद्यस्मादैश्वर्येण ज्ञानाद्यतिशयलक्षणेन समन्वितोयुक्तो वर्तते तत्तस्मादीश्वरोऽस्मदुक्त· स एव मुक्तादि स्यात् संज्ञाभेदो नामनानात्वमत्र मुक्तादिप्रज्ञापनायां केवलम् ॥ १८ ॥

अनादिशुद्ध इत्यादि-र्यो भेदो यस्य कल्प्यते ।
तत्र तन्त्रानुसारेण, मन्ये सोऽपि निरर्थकः ॥ १९ ॥
विशेषस्यापरिज्ञाना-द्युक्तानां जातिवादतः ।
प्रायो विरोधतश्चैव, फलाभेदाच्च भावतः ॥ २० ॥
अविद्या क्लेशकर्मादि, यतश्च भवकारणम् ।
ततः प्रधानमेवैतत्, संज्ञाभेदमुपागतम् ॥ २१ ॥

अनादिशुद्ध इत्येवंरूप आदिर्यस्य स तथा । तत्रानादिशुद्ध· सर्वगतश्च शैवानां सोऽहंत्र सर्वगतश्च जिनानां स एवप्रतिक्षणभङ्गुरः सौगतानां यः पुनर्भेदो विशेषो यस्येश्वरस्य कल्प्यते तस्य तस्य तन्त्रस्य दर्शनस्यानुसारेणानुवृत्त्यामन्ये प्रतिपद्ये सोपि विशेषः किंपुन प्रागभिहितः संज्ञाभेद इत्यपि शब्दार्थ· निरर्थको निष्प्रयोजन· ॥१९॥ विशेषस्य मुक्तादेर्देवताविशेषगतस्यापरिज्ञानादर्वाग्दर्शितप्रत्यक्षेण तथा युक्तानामनुमानरूपाणां जातिवादतोऽसिद्धादिहेतुदोषोपपातेनानुमानाभासत्वात्प्रायो बाहुल्येन विरोधतश्चैव वेदान्तिबौद्धादियुक्तीनामेकेषां हि नित्य एवात्मा प्रपञ्चाधिष्ठातृत्वादपरेषां चार्थक्रियाकारित्वस्य स्वभावभेदनियतत्वेनानित्य एवेति फलस्य क्लेशक्षयलक्षणस्य गुणप्रकर्षविशेषवत्पुरुषाराधनसाध्यस्य क्वचिन्नित्यानित्यत्ववादौ विशेषे आराध्यगते सत्यभेदादविशेषाच्च भावतः परमार्थत गुणप्रकर्षविषयस्य बहुमानस्यैव फलदायकत्वात्तस्य सर्वज्ञमुक्तादावविशेषादिति ॥ २० ॥ अविद्या वेदान्तिनां, क्लेशः सांख्यानां, कर्म जैनानाम्, आदिशब्दाद्वासना सौगतानां पाशः शैवानां यतो यस्माच्चकारो वक्तव्यान्तरसूचनार्थं भवकारणं संसारहेतुस्ततस्तस्मादविद्यादीनां भवकारणत्वाद्धेतो प्रधान मेवैतदस्मदभ्युपगतं भवकारणं सत्संज्ञाभेद नामनानात्वमुपागतम् ॥ २१ ॥

अत्रापि परपरिकल्पितविशेषनिराकरणायाह ।

अस्यापि योऽपरो भेद-श्चित्रोपाधिस्तथा तथा ।
गीयतेऽतीतहेतुभ्यो, धीमतां सोप्यपार्थकः ॥ २२ ॥

अस्यापि प्रधानस्यापि योऽपरो भवकारणत्वात्सर्वाभ्युपगतादन्यो भेदोविशेषश्चित्रोपाधिर्नानारूपमूर्तत्वामूर्तत्वादिलक्षणस्त थातथा तत्तद्दर्शनभेदेन गीयते वर्ण्यते अतीतहेतुभ्योऽनन्तरमेव विशेषस्यापरिज्ञानादित्यादिश्लोकोक्तेभ्यो धीमता बुद्धिमता सोपि किंपुनर्देवतागत इत्यपि शब्दार्थ· । अपार्थकोऽपगतपरमार्थप्रयोजनः सर्वैरपि भवकारणत्वेन योगापनेयस्यास्यापगमादन्यस्य विशेषस्य सतोऽप्यकिंचित्करत्वात् ।२२॥

ततोऽस्थानप्रयासोयं, यत्तद्भेदनिरूपणम् ।
सामान्यमनुमानस्य, यतश्च विषयो मतः ॥ २३ ॥

यत एवं तत सतो विशेषस्यापार्थकत्वाद्धेतोरस्थानप्रयासोय तत्त्वचिन्तकानां यत्तद्भेदस्य देवादिविशेषस्य निरूपण मेवपण यतश्चानुमानस्य देवताविशेषादिग्राहकत्वेनाभिमतस्य सामान्य विषयो मतोऽतोपि सर्वविशेषानुगतस्य तस्याप्रतीतेरस्थानप्रायासोऽयम् इत्थ च भवकारणमाभ्रज्ञानात्तदपनयनार्थं गुणवत्पुरुषविशेषाराधन कर्तव्य विशेषविमर्शस्तु निष्प्रयोजन इति कालातीतमत व्यवस्थितम् । एतस्माच्चास्माकमपि । विशेषविमर्शाक्रमस्य स्वाग्रहच्छेदाय सामान्ययोगप्रवृत्त्यर्थमनुमतम् अन्यस्य तु निरभिनिवेशस्य शास्त्रानुसारेण विशेषविमर्शोपि भगवद्भिशिष्टोपासनारूपतया श्रद्धामलक्षालनेन तत्त्वज्ञानगर्भवैराग्यजीवानुभूतत्वाद्विशिष्टनिर्जराहेतुरिति न सर्वथा तद्वैफल्यमित्यभिप्राय· ॥ २३ ॥

आस्थितं चैतदाचार्यै-स्त्याज्ये कुचितिकाग्रहे ।
शास्त्रानुसारिणस्तर्का-त्सामभेदानुपग्रहात् ॥ २४ ॥

एतच्च कालातीतमतमाचार्यैः श्रीहरिभद्रसूरिभिरास्थितमङ्गीकृतं कुचितिकाग्रहे कौटिल्यावेशे त्याज्ये परिहार्ये कुचितिकाख्या गार्थमित्यर्थ· । शास्त्रानुसारिणस्तर्कादर्थसिद्धौ सत्यामिति

गम्यं नाभेदस्य संज्ञाविशेषस्यानुपग्रहादनभिवेशात्तत्वार्थ-सिद्धौ नाममात्रभेदो हि योगप्रतिपन्थी न तु धर्मवादेन विशेषविमर्शोपीति भावस्तदिदमुक्तम् । " साधुचैतद्यतो नीत्या, शास्त्रमत्रप्रवर्तकम् । तथाभिधानभेदात्तु-भेद कुचिति-काग्रह. ॥ विपश्चितां न युक्तोय-मैदम्पर्यप्रियाहिते । ययोक्तास्त त्पुनश्चारु, हन्तात्रापि निरूप्यताम् ॥ उभयो. परिणामित्वं, तथाभ्युपगमाद् ध्रुवम् । अनुग्रहात्प्रवृत्तेश्च, तथाभ्रा भेदत. स्थि तम् ॥ आत्मनां तत्स्वभावत्वे, प्रधानस्यापि सस्थिते । ईश्व-रस्यापि सन्न्याया-द्विशेषोधिकृतो भवेत् ॥४॥ इति॥

अथ विशेषविमर्शे शास्त्रतर्कयोर्द्वयोरुपयोगप्रस्थानमाह ।

अस्थानं रूपमन्धस्य, यथा सन्निश्चयं प्रति ।
तथैवातीन्द्रियं वस्तु, छद्मस्थस्यापि तत्वतः ॥२५॥

अस्थानमविषयो रूपं नीलकृष्णादिलक्षणमन्धस्य लोचन-व्यापारविकलस्य यथा सन्निश्चय विशदालोचन प्रत्याश्रित्य तथैवोक्तन्यायेनैवातीन्द्रिय वस्त्वात्मादिविशेषरूपं छद्मस्थस्या र्वाग्दृशः परमार्थतत्वत. परमार्थनीत्या ॥ २५ ॥

हस्तस्पर्शसमं शास्त्रं, तत एव कथञ्चन ।
अत्र तन्निश्चयोपि स्या-त्तथा चन्द्रोपरागवत् ।२६॥

हस्तस्पर्शसम तद्वस्तूपलब्धिहेतुहस्तस्पर्शसदृश शास्त्रमती-न्द्रियार्थगोचर तत एव शास्त्रादेव कथञ्चन केनापि प्रकारे-णात्र छद्मस्थे प्रमातरि तन्निश्चयोऽप्यतीन्द्रियवस्तुनिर्णयो ऽपि स्यात्तथा वर्द्धमानत्वादिविशेषेण चन्द्रोपरागवच्चन्द्रराहु-स्पर्शवत् । यथा शास्त्रात्सर्वविशेषानिश्चयेऽपि चन्द्रोपराग' केनापि विशेषेण निश्चीयते एव तथान्यदपि अतीन्द्रिय वस्तु तत्तच्छद्मस्थेन निश्चीयत इति भाव ॥ २६ ॥

इत्थं ह्यस्पष्टता शाब्दे, प्रोक्ता तत्र विचारणम् ।
माध्यस्थ्यनीतितो युक्तं, व्यासोपि यददो जगौ ॥ २७ ॥

इत्थमुक्तदृष्टान्तेन हि शाब्दे ज्ञानस्पष्टता प्रोक्ता तत्र स्पष्टे शा ब्दज्ञाने माध्यस्थ्यनीतितो विचारण युक्त तर्कस्य प्रमाणानु-ग्राहकत्वात्तेनैवेदपर्यशुद्धेस्तस्याश्च स्पष्टताप्रायत्वात् यदस्मा-दद्रो वक्ष्यमाण व्यासोऽपि जगौ ॥ २७ ॥

आर्षधर्मोपदेशं च, वेदशास्त्राविरोधिना ।
यस्तर्केणानुसंधत्ते, स धर्म वेद नेतरः ॥ २८ ॥
शास्त्रादौ चरणं सम्यक्, स्याद्वादन्यायसंगतम् ।
ईशस्यानुग्रहस्तस्मा-दृष्टेष्टार्थाविरोधिनः ॥ २९ ॥
यद्वात्व्यं जिनैः सर्वे-दत्तमेव तदेकदा ।
दर्शनज्ञानचारित्र-मयो मोक्षपथः सताम् ॥ ३० ॥
जिनेभ्यो याचमानेभ्यो, लभ्यं धर्ममनाश्रयं ।
तं विद्वस्तं विना भाग्यं, केन मूल्येन लभ्यते ॥ ३१ ॥
अनुष्ठानं ततः स्वामि-गुणरागपुरःसरम् ।
परमानन्दतः कार्य, मन्यमानैरनुग्रहम् । ३२ ।

आर्षमित्याद्यन्य स्पष्टम् । द्वा० १६ द्वा० । यो० विं० ।

विशेषस्यापरिज्ञानात्, युक्तीनां जातिवादतः ।
प्रायो विरोधतश्चैव, फलाभेदाच्च भावतः ॥

विशेषस्य मुक्तादिदेवता विशेषगतस्याऽपरिज्ञानादसंवेदना-दर्वाग्दर्शि प्रत्यक्षेण तथा युक्तीनामनुमानरूपाणां जातिवादतो-ऽसिद्धादिहेतुदोषोपघातेनानुमानाभासत्वात् । प्रायो बाहुल्येन चैवेति पूर्ववत् । तथाहि साङ्ख्य शैवश्च सर्वक्षणिकवादिन-सौगत प्रत्याह । तु यथा भवदाराध्यो बुद्धोऽर्थक्रियां देशना-दिकां स्वक्षणे पूर्वं पश्चाद्वा कुर्यादिति त्रयी गतिः । तत्र न तावदाद्य. पक्षः कर्त्तीकरणीय समकालभाविनि व्यापारा-भावात् । इतरथैकक्षणवर्तिनां समर्थार्थक्षणानामितरेतरकार्य-करणभावः प्रसज्येत । न चैतद्दृष्टमिष्टं वा अथ स्वक्षणात् कर्ध्वंकार्यं विधत्ते इति मन्येथा एतदप्यसाधीयो विनष्टस्य कार्यकरणाक्षमत्वात् अन्यथा मृतस्य शिखिन. केकायित स्यात् । एवं च क्षणिकादर्थाद्व्यावर्तमानाऽर्थक्रियावीराद्-ईशकुनिन्यायेन नित्यानेव भावनाश्रयतया प्रतिपद्यते इति नित्यरूपोऽत एवानादिशुद्ध ईश्वरनामा आप्तविशेषोऽभ्युप-गन्तुं मुधोपाचित इति । बौद्धः पुन आह । ईश्वरोऽप्रच्युतानु-त्पन्नस्थिरैकस्वभावो भवद्भिरभ्युपगम्यते । नच नित्यस्य कथंचिदप्यर्थक्रिया युज्यते । नित्यो ह्यर्थक्रमेण यौगपद्येन वार्थक्रियां कुर्वीत । न तावत्क्रमेण सन्निहितसर्वशक्ते' सह-कारिभिश्चानाधेयातिशयस्य युगपदेव त्रैकालिकसर्वकार्यकर-णप्रसङ्गात् । नापि यौगपद्येन यतस्तत्र युगपदेव सर्वकार्य-करणेन कृतस्य पुन करणाभावेन च द्वितीयक्षणेऽर्थक्रिया-विरहलक्षण बलादसत्वमाढौकमान न केनापि निरोद्धुं पार्यते इति प्रतिक्षण परिवर्तमानाऽपरापररूप सर्वार्थक्रियाऽक्षमोऽ भ्युपगन्तु युक्तोऽसाविति । फलाभेदाच्च फलस्य भेदक्लेशक्ष-णस्य गुणप्रकर्षरूपपुरुषाराधनासाध्यस्य कश्चिन्नित्यानित्य-त्वादौ विशेषे आराध्यगते सत्यप्यभेदादविशेषात् । भावत परमार्थतः गुणप्रकर्षविषयस्य बहुमानस्यैव फलदायकत्वात् तस्य सर्वत्र मुक्तादावविशेषादिति । यो० विं० ।

परतीर्थिकाभिमतेश्वरस्य निराकरणम् ।

नन्विय त्रिभुवनभवनान्तर्वर्त्तमानान्तरितानन्तरितपदार्थ-प्रथा त्वत्तीर्थनाथवृत्तिर्न भवति यतो भूभूधरप्रभृतिपदार्थ-प्रबन्धविधानद्वारा प्रमथपतेरेवेयमुपपद्यते यदेतदनुमानमत्र प्रकल्प्यते न्यायतात्पर्यावबोधप्रधानमनोवृत्तिविद्वद्वृन्देन वि-वादपदभूत भूभूधरादिबुद्धिमद्धेतुकं यतो निमित्ताधीनात्म-लाभं यन्निमित्ताधीनात्मलाभ तद्बुद्धिमद्धेतुकं यथा मन्दिर तथा पुनरेतत्तेन तथा न तावन्निमित्ताधीनात्मलाभत्व वादिन प्रतिवादिनो वा प्रतीत यतो भूभूधरादेरात्मीयात्मीयनिमि-त्तव्रातनिर्वर्तनीयता भुवनभाविभवभृत्प्रतीतैव । नापि दोला-यमानवेदननिमित्त मतिमन्निर्वर्तनीयेतरास्वरादिपदार्थतोऽत्य-न्तव्यावृत्तत्वेन । नापि विरुद्धतावरोधबुद्धेरसम्भवादितोऽत्य न्तव्यावृत्तत्वेनैव नापि तुरीयव्याप्यामता प्रतिबद्धमिन्द्रियवे-दनेनानुमाननाम्ना राद्धान्ताभिधानेन वा मानेनाबाधिताभि प्रेतधर्मधर्म्यनन्तरप्रतिपादितत्वेन । नापि प्रत्यनुमानापमानता निबन्धनभेतत्परिपन्थिधर्मोपपादनप्रत्यलानुमानाभावेन । ननु भवतीद तावदनुमान परिपन्थिधर्मोपपादनप्रत्यलम् । यथा भूनाधिनूर्भूभृधरादिविधाता न भवति वपुर्वन्ध्यत्वेन निर्वृत्या-त्मवत्तदनवदात यतोऽत्र त्रिनेत्ररूपो धर्मी धर्मधनेन प्रतिपन्नोऽ-प्रतिपन्नो वा प्ररूपित. । न तावदप्रतिपन्नो यदेवमाधारदारा प्रतीतत्वोपद्रवो वपुर्वन्ध्यत्वाव्याप्योपनिपाती भवननिरोद्धु न पार्यते । यदि पुन प्रतिपन्नोय धर्मी तदा येन मानेन प्रतिपत्तिर्नि-म्नयप्रत्यर्थिनोऽभिधीयते तेन तत्त्वादिविधानव्युत्पन्नमतेरेवेय-मिति तत्रोपादीयमाना वपुर्वन्ध्यता बाधितवर्त्मैवेति न नाम प्रव-

र्तिुं पर्याप्नोति। तदेवं निमित्ताधीनात्मलाभताव्याप्यमत्यन्तपूतरूपं पर्वतादेर्धर्मिहेतुनाप्रतिपादनावदातमेवेति तत्राभिधीयते यदिद तावन्निमित्ताधीनात्मलाभत्वं व्याप्यमालपितं तद्द्रव्यद्वारा पर्यायद्वारा वेति भेदोभयी। यद्याद्य पन्थाः प्रथ्यते तदानीमप्रतीतिर्नाम व्याप्येपतापः। यतो द्रव्यरूपतया पृथ्वीपर्वतादेर्नित्यत्वमेव प्रतिवादिनाऽभ्युपेयते। ननु भूभूधराद्यमुत्पादवदवयवित्वेन यदेव तदेवं यथेन्दीवरमवयविरूपं पुनरिद तदुत्पादं वेत्यनुमानेन तन्नित्यता निर्मूलोन्मूलितैवेति नैतद्धीमद्वृत्तिविधानप्रधानं यतो भूभूधरादेरवयवित्वमवयवारब्धत्वेन। यद्यावयवव्रातवर्तमानतया मन्यते न प्रथमविधा विबुधावधानधाम यतो न नामैतत्पृथ्वीपृथ्वीधरप्रभृतिद्रव्यमभूतपूर्वमवयववृन्देन निर्वर्तितमिति प्रतिवादिनः प्रतीतिर्विद्यते। यदि पुनरवयववृत्तिभेदोभिधीयते तदानीमवयवत्वेन दोदूयमानमनेन यतोऽवयवोयमवयवोयामितीत्य बुद्धिवेद्यमवयवत्वमवयवितानवृत्ति भवति न पुनरुत्पादपराधीनं नित्यत्वेन। ननु नार्वैनेन दुर्भेदप्रतिपादनेन प्रतीतोयमवयवी तावद्वादिवितततरविवादेन पद्मपत्रपात्रदात्रादिरिति न नाम न प्रतीतोऽपि त्वात्मापि तथा नियमेन प्रतीतो वर्तते न पुनरुत्पादवानित्यनुमेयतत्तुल्यतद्विरुद्धवृत्तितोपद्रव । यदि तु पर्यायद्वारा निमित्ताधीनात्मलाभत्वं भूभूधरादेरभिधीयते तदा नरामरादिपर्यायद्वारेणोत्पद्यमानात्मनोपि बुद्धिमदुत्पाद्यत्वमापद्यते। ननु नरामराद्युत्पादनप्रत्यलधर्माधर्मोपाद्यानाभवायतनभूता तथाविधा तनुरेवोत्पद्यते न पुनरात्मा लवमात्रतोप्यनादिनिधनत्वेन यदि पुनरात्माप्युत्पत्तिविपत्तिधर्मो भवति तदानीं भूतमात्रतत्त्ववादिमतापत्तिरात्मनः पूर्वोत्तरभवानुयायिनो भेदिनोऽनभ्युपेतत्वेनेति, तन्न वन्धुरं यतो यद्यात्मनोऽभिन्नरूपतैवावेद्यते तदान्यतरनरामरादिभववर्त्यैवायमपरिमेयानुभवनीयतत्तद्भवपर्यायप्रबन्धानुभवनेन क्षितीयादिभवानुभवावाभ्भवितुमुपपद्यते, वेद्यते त्वनेनेय भवपर्यायपरंपरेति । तद्रूपतया यमुत्पत्तिमानिति नियम्यते। नाप्येवभूतमात्रतत्त्ववादितापत्तिरात्मनो द्रव्यरूपतया नित्यताभ्युपायेन पूर्वोत्तरभवप्रतीतित । तन्मतेन तु न नाम द्रव्यतया नित्य वेदन वर्त्तते यतो भूतधर्मनयानेन प्रतिपादितमेतत्। तथैनदनुमानधर्मीन्द्रियोद्भूतबोधेनाहतो बाध्यते रूप ध्वनिरपि नयनोत्थप्रथाप्रत्येयमित्यादिवत्। यतोत्र दोदूयमानविधानतत्परनरव्यापार पृथ्वीपृथ्वीधरान्तरपुरन्दरधनुरादिर्भावव्रातो धर्मीप्ररूपित । तत्र त्वभ्रतरुविद्युदादेरिदानीमप्युत्पद्यमानतया वेद्यमानतनोर्विधातानोपलभ्यते । ननु भवत्येव बाधैय यद्येतद्विधानावधानप्रधानः पुमानिन्द्रियप्रभवप्रभालम्बनीकृतोऽभ्युपेतो भवति यावताऽतीन्द्रियोयमिति नायमुपद्रव प्रभवति तदनभिधानीयम्। यतो व्याप्तिप्रतिपादनप्रत्यक्षं मानमत्रेन्द्रियद्वारोद्भूत वेदन तवाभिमतम्। धूमानुमानवत् धूमानुमितेरपि न पारावारोद्भवौर्वतनूनपात्तदितरतनूनपात्तुल्यत्वेन व्याप्तिप्रतीतीन्द्रियोद्भवेदनवेद्यभावाभ्युपगमेनैवानेनानुमानेन भवितव्यमन्यथा तु नेन व्याप्तिप्रतीतिर्दुरुपपादैव । ततोऽपि तत्र व्याप्यनालम्बनीभूतेन नेन बुद्धिमन्निमित्तेनानुमेयतापि नाद्रियते । तथात्वेन प्रतिपादितत्वे तत्तदतीन्द्रियबोधावधानतया नियमेनाभ्युपेतव्यम् यदि तु तथाभ्युपेयते तदा नेतन्निमित्तं तरुविद्युदादेरुपलभ्यते । ततोऽनेन वेदनेनात्र बाधो भवत्येव । ननु धूमानुमानन्यायेन तनूनपातोप्येवमनेन वेदनेन बाधो भवति यतो न तत्रापि विधीयमानानुमानेन प्रमात्रा तनूनपादिन्द्रियवेदनेन वेद्यते। तदमनोरमं यतोऽत्रानुमातुर्व्यवधिर्विद्यते व्यवधिमान् पुन पदार्थोनेन्द्रियालम्बनीभवतीति तदनालम्बनीभूत. पर्वततनूनपान्न तेन बाधितुं पार्यते । यदा पुन. प्रमाता तत्र प्रवृत्तो भवति तदानीमव्यवधानवानय तनूनपात्तेनोपलभ्यते। तरुविद्युल्लताभ्रादिबुद्धिमन्निमित्तं तु तत्र प्रवर्तमानेनापि निरवधानवतापि नोपलभ्यते ततो भवति तत्रेन्द्रियोद्भवबोधबाधेति ततोपि तथाविधधर्म्यनन्तरनिमित्ताधीनात्मलाभत्वरूपव्याप्यप्रतिपादनेन त्वन्मतेन तुरीयव्याप्त्याभत्वोपनिपातः मन्मतेन त्वन्तर्व्याप्तेरभावेनानियतप्रतिपत्तिनिमित्तताऽत्र व्याप्यपराभूति. तथेदं निमित्ताधीनात्मलाभत्वम् । यदि तन्मात्रमेव व्याप्यत्वेन प्रतिपाद्यते तर्ह्यनभिप्रेतपदार्थप्रतीतिनिर्वर्तनपर्याप्तमनुपलब्धपूर्वोत्पत्तिव्यापारेन्द्रमूर्ध्नो मर्त्यपूर्वत्वप्रतीत्यर्थोपात्तमृन्मयत्ववत् । न नाम निपेन्द्रमूर्ध्नोर्मृन्मयत्वमपि विद्यते । ननु यद्यपि मृन्मयत्व तुल्यमेवोभयत्रापि तथापि नेन्द्रमूर्ध्नोन्यो मानवपूर्वत्वेन प्रतीतो विद्यते । ततो विवादपदापन्नोप्यय तत्तुल्यत्वेन न मर्त्यनिर्वर्त्यो भवति तन्नावदातं यतोऽत्रापि न भूभूधरभुवनादि प्रायः पदार्थोऽन्यो बुद्धिमन्निमित्तोपेत. परिभावितो वर्तते। ततो विवादपद्धतिप्रतिबद्धोप्ययं न तथा भवितुं लभते। ननु निपादिर्विद्यते बुद्धिमन्निमित्तोपेत. परिभावितोऽतो विवादापन्नोपि तथाऽनुमातुमनुरूप. । तदवद्य यतोऽन्यत्रापि निपादिरवमानवनिर्वर्त्यो विभावितो विद्यते। तत पुरंदरमूर्ध्नापि तन्निर्वर्त्येन नितरां भवितव्यम्। ननु नरनिर्मितनिपादित. पुरंदरमूर्ध्नो वैरूप्यमुपलभ्यते ततो न तत्र मर्त्यनिर्वर्त्यतानुमानमुपपन्न यद्येद तदानीमतद्वैरूप्य निपादितो भूभूधरभुवनादेरपि परिभाव्यते यतो निपादिनाऽनुपलब्धबुद्धिमद्व्यापारात्मनाप्युपलब्धेन नियमतो निर्वर्तितोय मतिमतेति बुद्धिरुत्पाद्यते, न पुनर्भुवनादिना । ततो न निमित्ताधीनात्मलाभत्वमात्रं बुद्धिमद्धेतुत्वप्रतीतिविधानबन्धुरं यदा तु धरित्री धरित्रीधरत्रिभुवनादिविधान न प्रतीत तदानीं त्रिनयनो भुवनभवनान्तर्भावि भावव्रातप्रद्योतनप्रवलवेदनप्रदीपवानिति निर्धनदानमनोरथप्रथैवेयमितीत्यादिवचनद्वयेन स्यादिकवचनत्रयेण वर्णैस्तुत्रिभिरधिकैर्दशभिरयं व्यधायि शिवसिद्धिविध्वस इति+ते, सि, टा, ङस्, इयत्या एव विभक्तय. तथदधन, पवभम यरलव. एते एवात्र वर्णाः । १ रत्ना० । ( जिनानामीश्वरत्वं जिनमहत्त्वद्वात्रिंशिकायामपि सा च ' जिण ' शब्दे )

आढ्ये, वाच० । प्रभौ, । दशा० ९ अ० । सम० । दर्श० । ग्रामनगरादिनायके, तं० । ईश ऐश्वर्ये ऐश्वर्येण युक्त ईश्वरः ग्रामभोगिकादिके, अणिमाद्यष्टविधैश्वर्ययुक्ते च । जी०३ प्रति० नि० चू० । "ईसर भोइय माई' ईश्वरो भोगिकादिर्ग्रामस्वामिप्रभृतिक उच्यते, वृ० ६ उ० । पञ्चा० । नियुक्ते, आचा० । युवराजादिक, भ० ९ श० ३३ उ० ॥ राज० । माण्डलिके, अमात्ये च । ईश्वरो युवराजो माण्डलिकोऽमात्यो वेति । अनु० । स्था० । ईश्वरो युवराजस्तदन्ये च महर्द्धिका इति । भ० २ श० १ उ० । ऐश्वर्यान्वितस्त्रियां टाप्० । प्रभवादिमध्ये एकादशे वत्सरे च ॥ तत्फलम् । सुभिक्षं क्षेममारोग्यं, कार्पासस्य महर्घता । लवणं मधु गव्यं च, ईश्वरे दुर्लभं प्रिये । वाच० । स्वनामख्याते भूतवादिव्यन्तरविशेषनिकायेन्द्रे, स्था०२ ठा० । जम्बूद्वीपस्य बाह्यवेदिकाया उत्तरदिशि स्थिते स्वनामख्याते महापातालकलशे । स्था०४ ठा० । (तद्वक्तव्यता 'महापाताल' शब्दे) मेरोरुत्तरस्यां दिशि वर्तमाने स्वनामख्याते महापातालकलशे च । जी० ३ प्रति० । (तद्वक्तव्यता 'महापातालकलस' शब्दे)

( राजपुरीनगरस्थे स्वनामख्याते नृपे, तत्कथा कुकुमेस्सर-शब्दे ) स्वनामख्याते मुनिवरे च, स चागीतार्थदोषेण दुःख-मवाप्य गोशालको जातस्तथा च महानिशीथे ।

से भयवं णो वि याणाहिं, ईसरो कोवि मुणिवरो ।
किंवा अगियत्थ दोसेणं, पत्तं तेणं कहाहिणो ॥
चउवीसिगाए अन्नेवि, एत्थ भरहम्मि गोयमा ।
पढमे तित्थंकरे जइया, विहीपुव्वेण निव्वुमे ॥
तइया निव्वाणमहिमा ए-गंतरूवे सुरासुरे ।
निवयंते उप्पयंते, दट्ठुय एवं तवामित्रो ॥
अहो अच्छेरयं अज्ज-मलोयम्मि य पच्छिमो ।
ण इंदजालसुमिणं वा, विदिट्ठे कत्थइ पुणो ॥
एवं विविहापोहाए, पुव्वीं जाइं सरित्तुमो ।
मोहं गंतूण खणमेक्कं, मारुयासासिओ पुणो ॥
थरथरस्स य कंपंतो निंदिउं गरहिउं चिरं ।
अत्तारं गोयमा ! धणियं, सामत्तं गहिय मुज्झओ ॥
अह पंचमुट्ठियं लोयं,जा वा ढवइ महायसो ॥
से विणयं देवया तस्स. रयहरणं ताव ढोयई ।
उग्गं कंठं तवचरणं, तस्स दट्ठूण ईसरो ॥
लोओ पूयकरेमाणा, जाव उ गंतूण पुच्छइ ।
केणं तं दिक्खिओ कत्थ, उप्पन्नो को कुले तव ॥
सुत्तत्थं कस्स वा मूले, साइसयं हेसमज्झिय ।
सो पच्चागवुढे जाव, सव्व तस्स विवागरे ॥
जाईकुलं दिक्खा सुत्तं, अत्थं जह य समज्झियं ।
तं सोऊण अहन्नो सो, इमं चिंतेइ गोयमा ॥
अलिया अणारिओ एस, लोगट्ठे तेण परिसुसे ।
ता जारिसमे सन्नासेइ, तारिसं सो वि जिणवरो ॥
ण किंचेत्थ वियारेणं, मुम्हिकेई वरं ठिए ।
अहवा णाहिहि सो भयवं, देवदाणवपणमिओ ॥
मणासायं पि जं मज्झ, तं पि छिंन्दिज्ज संसयं ।
तावे स जो हो उ सो होउ, किं वियारेण एत्थ मे ॥
अभिणंदामीह पव्वज्जं, सव्वदोसविमोक्खणिं ।
ता पभिओ जिणंदस्स, सया से जातणक्खई ॥
चुवणेसं जिणवरं, तो वि गणहरमासियं ।
ठिओ परिनिव्वुयम्मि, भगवंते धम्मतित्थयरे ॥
जिणाभिहियं सुत्तत्थं, गणहरो जाय रूवई ।
तावमालावगं एय, वक्खाणम्मि समागयं ॥
पुढवीकाइगमे एगो, वावा एसो असंजओ ।
ता ईसरो वि चिंतेइ, सुहुमे पुढविकाइए ॥
सव्वत्थउद्दविज्जत्ति, को ताई रक्खिउं तरले ।
हुई करेइ अत्ताणं, एत्थं एस महायसो ॥
असद्धेयं जणे मयछे, किमट्ठयपन्नइक्खइ ।
अचंतकरुयमं एवं, वक्खाणं तस्स वीफुमं ।
कंठं सोसोयरं लाजे, एरिसं कोणुचिट्ठए ।
ता एयं विप्पएत्तूणं, सामग्गं किंचिमज्झिमं ॥
जं वा तं वा कहे धम्मं, तालोजन्हाण उट्टए ।
अह वा हाहा अहं मूढो, पावकम्मा णराहमो ॥
णवरं जइ णाणुचिट्ठामि, अन्नो न चिट्ठंती जणे ।
जेणायमणंतनाणीहिं, सव्वन्नूहिं पवेदियं ॥
जो एहिं अन्नहा वाए, तस्स अाठो ण वज्जई ।
ताहमेयस्स पच्छित्तं, घोरमइदुक्करं चिरं ॥
लहुं सिग्घमुसिग्घयरं, जाव मरयूण मे भवे ।
आसायणाकयं पावं, आसंजेण विहुव्वती ॥
दिव्वं वाससयं पुन्नं, अह सो पच्छित्तमणुचरे ।
तं तारिसं महाघोरं, पायच्छित्तं सयं मई ॥
काउं पच्छियबुध्दस्स, सया मे पुण वीगओ ।
तत्थावि जा मुणेवक्खा, ता वहिगारामिमागयं ॥
पुढवादीणं समारंभं, साहू तिविहेण वज्जए ।
दढमूढो हुओ जोई, ताईसरो मुक्कमूलओ ॥
विंवं तेवं जहिच्छजए, को ण ताईसमारभे ।
पुढवीए नावए सेव, समासीणो विचिष्ठई ॥
अग्गीए रध्दयक्खाइ, असणखाइमसाइम ।
अन्नं व विणा पाणेणं, खणमेक्कं जीवए कहं ॥
ता किं पि तं पत्थवक्खेज्ज, संपत्तुयमच्छंतियं ।
इमस्सेव समागच्छे, ण उ णायं कोइ सद्दहे ।
ता चिट्ठंतु ताव एसेत्थं, वरं सो चेव गणहरो ।
अहवा एसो उणमज्झं, एकोवि भणियंकरे ।
अलिया एवंविहं धम्म, किंचुद्देसे य तं पिओ ॥
साहिज्जइ जो स वि किंचि, ण तु सामचंतकम्मयमं ॥
अहवा चिट्ठतु तावेव, अहयं सयमेव वागरं ॥
सुहं सुहेण जं धम्मं, सव्वोवि अणुट्ठए जणो ॥
न कालं कम्मयमस्सज्ज, धम्मसिमति जा विचिंतइ ॥
घमं भितो सणीताव, निवाभिउ तस्सोवरि ।
गोयम ! निहणं गओ ताहे, उववन्ना सत्तमा एसो
सासण सुयनाणसंसग्ग, पीमणीयत्ताइ ईसरो ।
तत्थं तं दारुणं दुक्खं, नरए अणुभविउ चिरं ॥
इहागओ समुद्दम्मि, महामच्छो भवे उण ।
पुणोवि सत्तमाएय, तित्तीसं सागरोवमे ॥
दुव्विसहं दारुणं दुक्खं, अणुचिट्ठिऊण इहागओ ।
तिरियपक्खीसु उववन्नो, कागत्ताए स ईसरो ॥
तओ वि पढमियं गंतु, उवट्टित्ता इहागओ ।
दुट्ठसाणो भवेत्ताण, पुणरवि पढमियं गओ ॥
उव्वट्टित्ता तओ इहइं, खरो होहं पुणो मओ ।

उववज्ञा रासहत्ताए, छव्भवगहणे निरंतरं ॥
नाहे माणुस्स जाईए, एसिमुप्पन्नो मओ ।
उववन्नो वयणरत्ताए, माणुसत्तमभागओ ॥
नओ वि मरिउ समुप्पन्नो, मज्जारत्ता स ईसरो ।
पुणो वि नरयं गंतु ( इह, )सीहत्तेण पुणो मओ ॥
उववज्जियं चउत्थीए, सीहत्तेण पुणो विहं ।
मरिऊणं चउत्थीए, गंतुं इह समागओ ॥
तओ वि नरयं गंतुं, चक्कियत्तेण ईसरो ।
नओ वि कुट्ठिहोऊणं, बहुदुक्खद्दिओ मओ ॥
किमिएहिं खज्जमाणस्स, पन्नासं सहिवच्छरे ।
जा काम निज्जरा जाया, तीए देवेसु वज्जिओ ॥
नओ इहईनरिस्सत्तं, लम्भूणं सत्तमिं गओ ।
एवं नरगतिरिच्छेसु, कुच्छिय मणुएसु ईसरो ॥
गोयम ! सुइपरिव्भमिउं, घोरदुक्खसुदुक्खिओ ।
संपइ गोसालओ जाओ, एससउ वीसरज्जिओ ॥
तम्हा एहि वियाणित्ता, अचिरागीयत्थेमुणी ।
भवेज्जा विदियपरमत्थे, सारासारपरत्तुए । इति ॥

महा० ६ अ० ॥ स्वनामख्यातेऽभिनन्दनजिनस्य यक्षे च । तथा च प्रवचनसारे श्रीअभिनन्दनस्येश्वरो यक्षः श्यामकान्तिर्गजवाहनश्चतुर्भुजो मातुलिङ्गाक्षसूत्रयुक्तदक्षिणकरकमलद्वयो नकुलाङ्कुशान्वितो वामपाणिद्वयश्चेति । प्रव० २७द्वा० ।

इस्सर (ईस) रकड–ईश्वरकृत–त्रि० ईश्वरविरचिते, "ईसरेण कडेलोए" । सूत्र० १ श्रु० १ अ० ३ उ० । ( जगत ईश्वरकृतत्वनिराकरणम् 'इस्सर' शब्दे– )

इस्सर ( ईस ) रकडवाइ [ न् ] –ईश्वरकृतवादिन्–पुं० जगदीश्वरकृतत्ववादिनि वादिविशेषे, सूत्र० १ श्रु० १ अ० ३ उ० ( तन्मतनिराकरणमिस्सरशब्दे )

इस्सर ( ईस ) रकारय–ईश्वरकारक–पु० जगदीश्वरकृतत्ववादिनि वादिविशेषे,– सूत्र० १ श्रु० १ अ० ३ उ० । ( तन्मतनिराकरण 'मिस्सर'शब्दे ) ॥

इस्सर ( इसर ) रवाइ ( न् ) ईश्वरवादिन्–पु० । ईश्वरस्य जगत्कारणतद्वादिनि प्रवादिविशेषे; सूत्र० १ श्रु० १ अ० ३ उ० । तन्मतमाचाराङ्गे दर्शितम्–तद्यथा वैशेषिकास्तनुभवनकरणादिकमीश्वरकर्तृकमिति प्रतिपन्नास्तदुक्तम् "अन्यो जन्तुरनीश स्या–दात्मनः सुखदुःखयोः । ईश्वरप्रेरितो गच्छे–त्स्वर्गं वा स्वभ्रमेव वे' त्यादिक प्रवादमात्मीयप्रवादेन पर्यालोचयेत्तथा ह्यभ्रधनुरादीनां विस्रसापरिणामलब्धात्मलाभानां तदतिरिक्तेश्वरादिकारणपरिकल्पनायामतिप्रसङ्गः स्यात्तथा घटपटादीनां दण्डचक्रचीवरसलिलकुलालतुरीवेमसलाकाकुविन्दादिव्यापारानन्तरवाप्तात्मलाभानां तदनुपलब्धव्यापारेश्वरस्य कारणपरिकल्पनायां रासभादेरपि किं न स्यात्तत्तु करणादीनामप्यनन्य स्वकृतकर्मोपादितं वैचित्र्य कर्मणोऽनुपलब्धे कुत एतदिह चेत्समान पर्यनुयोगोऽपि च तुल्ये मातापित्रादिके कारणे अपत्यवैचित्र्यदर्शनात्तदधिकेन निमित्तेन भाव्य तच्चाऽस्मान्युपगमेऽप्यदृष्टमेवेति दृष्टस्य नान्यथा सुखदुःखसमुद्भवगादिजगद्वैचित्र्य स्यादिति । आचा० १ श्रु० । भ० ।

( विस्तरेणैतन्मतनिराकरणमिस्सरशब्दे )

इस्सर ( ईस ) रविभूइ–ईश्वरविभूति–स्त्री० ६ तत्पुरुष० ईश्वरस्य विभूतौ, नृपे च । वाच० ।

इस्सर ( ईस ) रसरिस–ईश्वरसदृश–त्रि० ईश्वरस्थानीये, ( ईसरसरिसो गुरु ) ईश्वरसदृश ईश्वरस्थानीय इति । व्य० १ उ० । वाच० ॥

इस्सर ( ईस ) रिय ( या ) मय–ऐश्वर्यमद–पुं० ऐश्वर्येण मदः ऐश्वर्यमदः । मदस्थानभेदे,–स्था० ८ ठा० । सम० । प्रश्न० ।

इस्सर ( ईस ) रिय ( प ) सिद्ध–ऐश्वर्यसिद्धि–स्त्री० ईश्वरत्वसिद्धौ,–साचाष्टगुणा तद्यथा–"अणिमा लघिमा गरिमा प्राकाम्यमीशित्व वशित्वं प्रतिघातित्व यत्र कामावसायित्वम् इति– । सूत्र० १ श्रु० १ अ० ३ उ० ।

इस्सर ( ईस ) रीकय–ईश्वरीकृत– त्रि० अनीश्वरे–ईश्वरीकृते, ( ईसरेण अदुवा गामेण अणिस्सरे ईसरीकए ) ईश्वरेण प्रभुणा अथवा ग्रामेण जनसमूहेनानीश्वर ईश्वरीकृत इति । सम० ३९ स० । दशा० ।

इस्सास-इष्वास-पुं०इषवोऽस्यन्तेऽनेन । असु क्षेपे करणे घञ् षष्ठीतत्पु० । धनुषि, शरक्षेपके, त्रि० (तीरन्दाज) मेदि० । वाच० ।

इह–इह–अव्य० "इदम इमः ८ । ३ । ७२ । इति प्राकृतसूत्रेणेदम इमादेश । ङेर्मेन हः ८ । ३ । ७५ । इति प्राकृतसूत्रेण इदमः कृते मादेशात्परस्य ङेःस्थाने मेन सह ह आदेशो वा । प्रा० । ङे स्सिम्मित्या ८ ।३। ५९ । इति प्राकृतसूत्रेण त्थादेशः प्राप्त 'नत्थः' ८ । ३ । ७६ । इति प्राकृतसूत्रेण निषिद्धः । इह इमस्सि इमम्मि । प्रा० । अस्मिन्काले देशे दिशि वा इत्यर्थे, तदखिलमिहभूत भूतगत्या जगत्या । नैष० । अनुभूयमाने लोके च । वाच० । ( इह सावसेसकम्मा ) इह तिर्यग्लोके किंभूताः सावशेषकर्माण । "ज वि य इह माणुसत्तण आगया" येऽपि चेह मर्त्यलोके मनुष्यत्वमागता इति । "अबुहा इह हिंसति तसे पाणे" इह जीवलोके हिंसन्ति घ्नन्ति त्रसान् प्राणान् । प्रश्न० १ द्वा० । "इह खलु छज्जीवणिकायाणामज्झयण" इहेति लोके प्रवचने वेति । दश० ४ अ० । "इहं वा भवे अन्नेसु वा भवग्गहणेसु" ( इह त्ति ) बिन्दुलोपात् इह वास्मिन् वाऽनुभूयमाने भवे मनुष्यजन्मनीति । पा० । इह खलु अणादिजीवे इहलोक इति– पं० सू० । जेणेह णिव्वहे भिक्खू इहास्मिन् लोके इति– सूत्र० १ श्रु० ९ अ० । 'इहेव माणुस्सए भवे' इहैव प्रत्यक्षे मानुष्यके भवे इति । स्था० ८ ठा० । 'के वा इओ चुयो इहपेच्चा भविस्सामि' कोवादेवादिरितो मनुष्यादेर्जन्मनश्च्युतो विनष्ट इह ससारे प्रेत्य जन्मान्तरे भविष्याम्युत्पत्स्यामीति–। वाक्योपन्यासे, " इह खलु पाईण वा पडीण वा दाहिण वा उदीण वा " इहेति वाक्योपन्यासे प्रज्ञापकक्षेत्रे वेति । आ० चा० १ श्रु० १ अ० ।

इहगय–इहगत– त्रि० इह व्यवस्थिते, " से भते किं इह गए पोग्गले परियाइत्ता विकुव्वइ " इह पृच्छको गौतमस्तदपेक्षया इहशब्दवाच्यो मनुष्यलोकस्ततश्च इह गतान् नरकलोकव्यवस्थितानिति । भ० ७ श० । उ० ।

इहत्थ–इहार्थ– त्रि० इहैव जन्मन्यर्थप्रयोजनम्भोगसुखादिर्यस्य स । भोगपुरुषे, । स्था० ४ ठा० ।

इहस्थ–त्रि० इहैव जन्मन्यास्था वा इदमेव साध्विति बुद्धि-

र्थस्य स इहास्थ । भोगपुरुषे, इह लोकपरिबद्धे च । स्था० ४ ठा०

इहस्थ–इहैव विवक्षिते ग्रामादौ तिष्ठतीति इहस्थस्तत्प्रतिबन्धात् । विवक्षिते ग्रामादौ प्रतिबद्धे,–स्था० ४ ठा० ।

इहपरलोयविरुद्ध–इहपरलोकविरुद्ध– त्रि० इह लोकविरुद्धे निन्दादिके, परलोकविरुद्धे खर कर्मादिके, इहलोकपरलोकविरुद्धे गर्दभादिके च । ध० र० । इह लोके विरुद्धकारिणो वधबन्धादयो दोषाः परलोके च नरकगमनादय इति । तथाचाह–

इह परलोयविरुद्धं, न सेवए दाणविणयसीलड्ढो ।
लोयप्पिओ जणाणं, जणेइ धम्मम्मि बहुमाणं ॥

इह लोकविरुद्धं परनिन्दादि यदुक्तं । "सव्वस्स चेव निंदा विसेसओ तह य गुणसमिद्धाणं । उजुधम्म करण हसण रीढा जण पूयणिज्जाणं " । १ । बहुजण विरुद्धसंगो, देसादाचार लंघणं तह य । उव्वण भोगो य तहा दाणाइवियडं मन्नेसिं । २ । साहु वसणम्मि तोसो सइसामत्थम्मि अपडियारो य । एमाइयाइ इत्थं लोगविरुद्धाइ नेयाणित्ति " । ३ । परलोकविरुद्धं खरकर्मादि तद्यथा । "बहुधा खरकर्मित्वं सीरपतित्वं च शुल्कपालत्वम् । विरतिं विनापि सुकृती करोति नैवंप्रकाराणाम्" । उभयलोकविरुद्धं द्यूतादि । तद्यथा ॥ "द्यूतं च १ मांसं च २ सुरा च ३ वेश्या ४ पापर्द्धि ५ चौर्य ६ परदारसेवा ७ । एतानि सप्त व्यसनानि लोके-पापाधिके पुंसि सदा भवन्ति ॥ इहैव निन्द्यते शिष्टै–र्व्यसनासक्तमानसः । मृतस्तु दुर्गतिं याति, गतत्राणो नराधमः " इति । ध० र० ।

इहपरलोयावाय–इहपरलोकापाय– पुं० ऐहिकामुष्मिकविरोधिनि-तथाचावश्यके–

रागद्दोसकसाया, सवाइ किरियासु वट्टमाणाणं ।
इहपरलोगावाए, झाइज्जा वज्जपरिवज्जी ॥

रागद्वेषकषायाश्रवादिक्रियासु वर्तमानानामिह परलोकापायान्ध्यायेत् । यथा रागादिरैहिकामुष्मिकविरोधिनी । उक्तञ्च "रागः सम्पद्यमानोपि, दुःखदो दुष्टगोचरः । महाव्याध्यभिभूतस्य, अपथ्यान्नाभिलाषवत् । १ । द्वेषः सम्पद्यमानोऽपि, तापयत्येव देहिनम् । कोटरस्थो ज्वलन्नाशु, दावानल इव द्रुमम् । २ । दृष्टा तदेवंमिन्नस्य, रागस्यामुष्मिकं फलम् । दीर्घः संसार एवोक्तः, सर्वज्ञैः सर्वदर्शिभि रित्यादि । ३ । दोसाऽनलसंसत्तो, इहलोगे चेव दुक्खिओ जीवो । परलोगम्मि य पावो, पावपनियानलं तत्तो ॥ ४ ॥ इत्यादि- तथा–कषायप्रायाः क्रोधादयस्तदपाया पुनः । " कोहो पीइं विणासेइ माणो विणयनासणो । माया मित्ताणि नासेइ, लोभो सव्वविणासणो ५ कोहो य माणो य अणिग्गहीया, माया य लोभो य पवड्ढमाणा । चत्तारि एए कसिणो कसाया, सिंचंति मूलाइं पुणब्भवस्स" । ६ । तथा आश्रवाः कर्मबन्धहेतवो मिथ्यात्वादयस्तदपायाः पुनः । मिच्छत्तमोहियमती, जीवो इह लोग एव दुक्खाइं । निस्सोवमाइयादो, पावति य समाइगुणहीणे । ७ । "अज्ञानं खलु कष्टं क्रोधादिभ्योपि सर्वदोषेभ्यः । अर्थं हितमहितं वा न वेत्ति येनावृतो लोकः " । ८ । जीवा पावंतिएह पाणवधादविरातियपावेए । नियसु य घायणमादी, दोसे जणगरहिए पावे । ९ । परलोगम्मिवि एवं, आसवं किरियाहि अज्जिए कम्मे । जीवाणचिरगवायणि-रयादिगतिगमताण १० इत्यादिआदिशब्दः स्वगतानेकभेदज्ञापकः प्रकृतिस्थित्यनुभावप्रदेशबन्धः भेदग्राहकः इत्यन्ये । क्रियासु कायिक्यादिभेदा पञ्च-

एताः पुनरुत्तरत्र सङ्क्षेपेण वक्ष्यामः । विपाकः पुनः " किरियासु वट्टमाण,काइगमाईसु दुक्खिया जीवा । इहचेव यपरलोगे संसारपवट्टगा भणिया" ततश्चैव रागादिक्रियासु वर्तमानानामपायान्ध्यायेत् । किं विशिष्टः सन्नित्याह । वर्ज्यपरिवर्जी तत्र वर्जनीयं वर्ज्यमकृत्यं परिगृह्यते तत्परिवर्जी अप्रमत्त इति गाथार्थः । आव० ४ अ० ।

इहभव–इहभव– पुं० अत्र भवे,–दशा० १ अ० ।

इहभवेएगेभवे तस्स विप्पनासासि सव्वनासोत्ति एवं जप्पंति मुसावायी ।

इह भवे एव प्रत्यक्षजन्मैव एको भव एक जन्म नान्यः परलोकोऽस्तिप्रमाणाविषयत्वात् तस्य शरीरस्य विविधैः प्रकारैः प्रकृष्टो नाशः प्रणाशस्तस्मिन् सति सर्वनाश इति नात्मा शुभाशुभरूपं वा कर्मावेिनष्टमवशिष्यते । एतमेवोक्तप्रकारेण (जपति) जल्पन्ति मृषावादिनः मृषावादिना चैषां जातिस्मरणादिना जीवपरलोकसिद्धेरिति । प्रश्न २ द्वा० । ( परलोकसिद्धेर्बहुवक्तव्यता परलोगशब्दे ) यो यादृगिह भवे परत्र भवे स तादृशोऽन्यादृशो वेति निर्णीतं यथा, अणते निश्ए लोए । नास्यान्तोऽस्तीत्यनन्तः न निरन्वयनाशेन नश्यति इत्युक्तं भवतीति । तथाहि यो यादृगिह भवे स तादृगेव परभवेऽप्युपपद्यते पुरुषः पुरुष एवाङ्ग नाङ्गनैवेत्यादि-सूत्र० १श्रु० १ अ० ।

विस्तरेणैतदुक्तता सुधर्मगणधरसवादे यथा–

किं मन्ने जारिसो इह, भवम्मि सो परभवे वि ।
वेयपयाण य अत्थं, न याणसी तेसि मो अत्थो ॥

त्वमेव मन्यसे यो मनुष्यादिर्यादृश इहभवे स तादृशः परभवेपि नन्वयमनुचितस्ते संशयो यतो धर्मो विरुद्धवेदपदश्रुतिनिबन्धनो वर्तते । तानि चामूनि " पुरुषो वै पुरुषत्वमश्नुते, पशवः पशुत्वमित्यादि । तथा "शृगालो वै एष जायते यः सपुरीषो दह्यते इत्यादि–एषां च वेदपदानामसुमेवार्थं मन्यसे त्वं पुरुषो मृतः सन् परभवे पुरुषत्वमेवाश्नुते प्राप्नोति । यथा पशवो गवादयः पशुत्वमेवेत्यादि । अमूनि किल भवान्तरगतजन्तुसादृश्यप्रतिपादकानि । तथा शृगालो वैत्यादीनि वैसादृश्याख्यापकानीत्यतस्तव संशयः । अयं चायुक्त एव यतो अमीषां वेदपदानां नायमर्थः किन्तु वक्ष्यमाणलक्षण इति । अत्र भाष्यम् ।

कारणसरिसं कज्जं, वीयस्सेवंकुरोत्ति मन्नंतो ।
इहभवसरिसं सव्वं, जमवेसि परेसि तमज्जुत्तं ॥

सुधर्माणं प्रति भगवानुवाच । इह कारणानुरूपमेव कार्यं भवति यथा यववीजानुरूपो यवाङ्कुरः इह भवकारणं चान्यजन्म ततस्तेनापि इहभवसदृशेन भवितव्यमित्येवं मन्यमानस्त्वं यदिह भवसदृशं सर्वं पुरुषादिकं परभावेप्यवैषि तदयुक्तमेवेति कुत इत्याह ।

जाइ सरोसिंगाउ, भूतणओ सासवाणुलित्ताउ ।
संजायइ गोलोमा–विलोमसंजोगउ दुव्वाइ ॥
रुक्खायुवेदेजोणि–विहाणेयविसरसोहिंसो ।
दीसइ जम्हा जम्मं, सुहम्मतो नायमेगत्तो ॥

ततः कारणानुरूपं कार्यमिति । सुधर्मन्नायमेकान्ततो यतः शृङ्गादपि शरो जायते तस्मादेव च सर्पपानुलिप्तादुद्भूतृणकशष्पसंघातो जायते । तथा गोलोमाविलोमाभ्या दूर्वा प्रभवति

इत्येव वृक्षायुर्वेदे विलक्षणानेकद्रव्यसंयोगजन्मानो वनस्पतयो दृश्यन्ते। तथा योनिविधाने च योनिप्राभृते विसदृशानेकद्रव्यसंयोगयोनयः सर्वाहिंसादिप्राणिनो मणयो हेमादयश्च पदार्था नानारूपाः समुपलभ्यन्ते अतः कथं कार्यस्य कारणानुरूपतेति। अथवा यत एव कारणानुरूपं कार्यमत एव भवान्तरे विचित्ररूपता जन्तूनामिति दर्शयति।

अहव जइञ्चियविया-णुरूविजम्मं मयं तओ चेव ।
जीवं गिएणभवाओ, भवंतरे चित्तपरिणामं ॥
जेण भवंतरवीयं, कम्मविचित्तं तओऽभिहियं ।
हेउविचित्तत्तणओ, भवंकुरविचित्तया तेणं ॥
जइ पडिवन्नं कम्मं, हेउ विचित्तत्तओ विचित्तं च ।
तो तप्फलं विचित्तं, पडिवसंसारिणो सोम्म ॥

अथवा यत एव बीजानुरूपं कारणानुगुणं कार्याणां जन्म मत तत एवेह भवाद्भवान्तरे जीव गृहाण प्रतिपद्यस्व । कथंभूतं जातिकुलबलैश्वर्यरूपादि विचित्रपरिणामम्। यदि नाम बीजानुरूपं जन्म तथापि कथं भवान्तरे विचित्रता जीवानामित्याह। जेण भवकुरेत्यादि येन यस्मान्नारकातिर्यगादिरूपेण भवन भवः स एवाङ्कुरस्तस्य बीजमिह कर्मैवावसेयं तच्च मिथ्यात्वाविरत्यादिहेतुवैचित्र्याद्विचित्रं तस्मान्मयाभिहितं तस्मात्तज्जन्यस्य भवाङ्कुरस्यापि जात्यादिभेदेन विचित्रता । ततो यदि त्वया कर्म प्रतिपन्नं हेतुवैचित्र्याच्च यद्विच तद्वैचित्र्यमभ्युपगत तत संसारिणो जीवस्य तत्फलमपि नारकतिर्यङ्मनुष्यामररूपेण भवनरूपं सोम्य ! विचित्ररूपं प्रतिपद्यस्वेति।

अत्र प्रमाणमुपचरयन्नाह ।

चित्तं संसारित्तं, विचित्तकम्मफलभावओ हेऊ ।
इहचित्तं चित्ताणं, कम्माणफलं च लोगम्मि ॥

चित्रं संसारिजीवानां नारकादिरूपेण संसारित्वमिति प्रतिज्ञा विचित्रस्य कर्मणः फलरूपत्वादिति हेतुः। इह यद्विचित्रहेतुकं तद्विचित्रमुपलभ्यते यथेह विचित्राणां कृषिवाणिज्यादिकर्मणां लोक इति । तदेव कर्मवैचित्र्ये प्रमाणमाह ।

चित्ता कम्मपरिणई, पोग्गलपरिणामओ जहा वज्झा।
कम्माण चित्तया पुण, तव्हेउ विचित्तभावाउ ॥

इह चित्रा कर्मपरिणतिः पुद्गलपरिणामात्मकत्वादिह यत्पुद्गलपरिणामात्मकं तद्विचित्रपरिणतिरूपं दृश्यते । यथा बाह्योऽभ्रादिविकारो वा पृथिव्यादिविकारो वा यत्तु विचित्रपरिणतिरूपं न भवति तत्पुद्गलपरिणामात्मकमपि न भवति यथा आकाशम् । यः पुनः पुद्गलपरिणामसाम्येपि कर्मणामावर्णादिभेदेन विशेषतो विचित्रता सा तद्धेतुवैचित्र्यादवगन्तव्या विचित्राश्च मिथ्यात्वादयः प्रद्वेष मनिह्नवादयश्च कर्महेतव इति। अथ परास्युपगमेनैव परभवे जीवानां वैसदृश्यं साधयन्नाह।

अहवा इहभवसरिसो, परलोगो वि जइ सम्मओ तेणं ।
कम्मफलं पि इहभव-सरिसं पडिवज्ज परलोए॥
किं भणियमिणं मणुया, णाणागइकम्मकारिणो संति।
जइ ते तप्फलभाजो, परे वि तो सरिसया जुत्ता ॥

अथवा यदि इह भवसदृशः परलोकसंमतो भवतः ततः कर्मफलमपि परलोके इह भवसदृशं इहत्य विचित्रशुभाशुभक्रियानुरूपं विचित्रं प्रतिपद्यस्वेति । एवं मुकुलित प्रतिपर्यन्तदेव भावयति ( किंभणियमित्यादि ) किमेतावता प्रतिपादित भवति इह तावन्मनुष्याः नानागतिहेतुभूतविचित्रक्रियानुष्ठायिनः सन्तीति प्रत्यक्षत एव दृश्यन्ते ततो यदि ते परलोके तत्क्रियाफलभाज इष्यन्ते ततो यथैहत्यक्रियाणां स सदृशता तथा परलोकगतजन्तूनामपि सैव युक्ता । ननु योऽत्र यादृशः स परत्रापि तादृश एवेति अत्र पराभिप्रायमाशङ्क्य परिहरन्नाह।

अह इहसफलं कम्मं, न परेत्तो सव्वहा न सरिसत्तं।
अकयागमकयनासा, कम्माभावो ह वा पत्तो ।
कम्माभावेह कओ, भवंतरं सरिसया व तदभावे ।
निक्कारणउब्भन्ना, जइ तो नासो वि तह चेव ।

अथैवं ब्रूषे इह सफलं कर्मेति इह भव सवन्धे तत्कृष्यादि क्रियारूपं कर्म सफलं ननु परभविकदानादिक्रियारूपं कर्म। ततश्च तत्फलं भवान्तरपरलोके जन्तुवैसदृश्यम् । अत्रोत्तरमाह । ( नो सव्वहेत्ति ) तत एव सति यत्त्वयाभिप्रेत तत्सर्वथा परभवे जीवानां सदृशत्वं न स्यात्तद्धि कर्मणा जन्यते ॥ तच्च नास्ति पारभविकक्रियाणां त्वया निष्फलत्वाभ्युपगमत्वान्निष्फलत्वे च कर्माभावादयः कर्माभावेपि भवेत्सादृश्यं तर्ह्यकृतस्यैव तस्य निर्हेतुकस्यागमः प्राप्नोति कृतस्य च दानहिंसादिक्रियाफलरूपस्य कर्मणो नाशः प्रसज्जति । अथवा सुकृत एव कर्मणा ममाव प्राप्त दानहिंसादिक्रियाणां निष्फलत्वाभ्युपगमान्मुक्त एव कर्मणो बन्धोपि न स्यादिति भाव । ततः किमित्याह। कर्माभावेच कारणमाभावात्कुतो भवान्तरं तदभावे च दूरोत्सारितमेव सादृश्यम्। अथ कर्माभावेपि भव इष्यते तर्हि निष्कारण एवासौ स्याद्यदि चैवमयमिष्यते ततो नाशोपि तस्य भवस्य निष्कारण एव स्यादतो व्यर्थस्तपोनियमाद्यनुष्ठानप्रयासः। निष्कारणे च भवे ऽभ्युपगम्यमाने वैसादृश्यमपि जीवानां निष्कारणं किं नेष्यते विशेषाभावादिति ।

अथ प्रेरकमाशङ्क्य परिहरन्नाह।

कम्माभावे वि मई, को दोसो होज्ज जइ सभावोयं ।
जह कारणाणुरूवं, घमाऽऽकज्जं सहावेणं ॥

अथ परस्यैवंभूता मतिः स्याद्यदुत कर्माभावेऽपि यदि सदृशवरूप स्वभाव एवाय स चेत्तर्हि का दोषः स्याद्विनापि कर्म यदि स्वभावादेव भवः स्यात्तर्हि किं दूषणं भवेन्न किंचिदित्यर्थः। दृष्टान्तमाह । यथा कर्म विनापि मृत्पिण्डादिकारणानुरूपघटादिकार्यं स्वभावेनैवोत्पद्यमान दृश्यते तथा सदृशप्राणिजन्मपरपराद्भवो भवोपि स्वभावादेव भविष्यति । अत्रोच्यते। ननु घटोऽपि स्वभावत एव जायते कर्तृकरणाद्यपेक्षित्वात्तस्य, ततश्चेहापि कर्तुरात्मनः पारभविकस्य च शरीरादिकार्यस्य करणं संभाव्यते। तच्च कर्तृकार्याभ्यां भिन्नं लोकेपि दृश्यते ।कुलालघटाभ्यां चक्रादिवच्चेहात्मनः शरीरादिकार्यं कुर्वत करणं तत्कर्मेति प्रतिपद्यस्वेति। स्यादेतदृष्टादे प्रत्यक्षसिद्धत्वाद्भवन्तु कुलालादयः कर्तारः, शरीरादिकार्ये त्वभ्रादिविकारवत्स्वभावतोपि भविष्यति ततो न कर्मसिद्धिस्तदयुक्तम् । यतो न स्वाभाविकं शरीरादि आदिमत्प्रतिनियताकारत्वाद्घटवदिति। किंच कारणानुरूपमेव कार्यमित्येव परभवे सादृश्यं त्वया ऽभ्युपगम्यते तदपि स्वभाववादिनस्तवाभ्रादिविकारदृष्टान्ते परिहीयते। अभ्रादिविकारस्य स्वकारणभूतपुद्गलद्रव्यादतिविलक्षणत्वादिति । अपिच ।

होज्ज सहावो वत्थुं, निक्कारणया च वत्थुधम्मो वा ।

जइ वत्थुं नत्थि तओ, णुवलद्धीओ खपुप्फं च ॥
अच्चंतमणुवलद्धो, विअ अह तउ अत्थि नत्थि तो कम्मं।
हेऊ वि तदत्थित्तो, जो नणुकम्मस्स विसयव्व ॥
कम्मस्स वाभिहाणं, होज्ज सन्नावो त्ति होउ को दोसो।
निच्चं च सो सन्नावो, सरिसो पत्थ च को हेऊ ॥

एतद्गाथात्रयमपि प्रायः प्रागेव व्याख्यातार्थं नवरं निच्चमित्याह तृतीयगाथोत्तरार्द्धम्। इदमत्र हृदयं स स्वभावो नित्यं सदृशः एव त्वयाऽभ्युपगन्तव्यो भवान्तरे सदृशस्यैव मनुष्यादिभवस्य जननात्तस्य च स्वभावस्य नित्यसदृशत्वे को हेतुर्न कश्चिदित्यभिप्रायः । स्वभावतः यद्ययं स्वभावः सदृश इति चेन्ननु भवविसदृशतायामप्येतद्वक्तुं शक्यत एवेति। किंच

मुत्तो वा मुत्तो वा, जइ मुत्तो तो न सव्वदा सरिसो ।
परिणामो पयं पिव, न देहहेऊ जइ अमुत्तो ।
उवगरणाभावाओ, न य हवइ सुहम्म सो अमुत्तो वि ।
कज्जेसु मुत्तिमत्ता, सुहसंवित्ताहिओ चेव ।

सस्वभावो मूर्तोऽमूर्तो वा यदि मूर्तस्तर्हि कर्मणा सह तस्य को विशेषः, सञ्ज्ञान्तरमात्रविशिष्टकर्म्मैवेत्थमुक्तं स्यादिति। न चासौ सर्वदैव सर्वथा सदृशो युज्यते परिणामित्वाद्दुग्धादिवदथवा मूर्त्तत्वादेवाभ्रादिविकारवदिति। अमूर्तोऽसौ स्वभावस्तर्हि नैष देहादीनामारम्भको ऽनुपकरणत्वाद्दण्डादिविकलकुलालवदमूर्तत्वादाकाशवत् ( नय हवइ सुहम्मसो अमुत्तो वित्ति ) किंच सुधर्मन्नितोऽपि स स्वभावो ऽमूर्तो न युक्तः शरीरादेस्तत्कार्यस्य मूर्तिमत्त्वाद्यद्यमूर्त्तस्य नभस इव मूर्त्तं कार्यमुपपद्यते। तथा सुखसंवित्त्यादेश्च नाय मूर्त्तं । इदमुक्तं भवति । कर्म्म तावद्भवता नेष्यते स्वभाववादित्वात्ततश्च शरीरादीनि सुखदुःखसंवित्त्यादीनि च स्वभावस्यैव कार्याण्येष्टव्यानि न तस्य वा मूर्त्तत्वेनैतान्युपपद्यन्ते । ततो यथा द्वितीयगणधरवादे कार्यस्य मूर्तत्वात्सुखसंवित्त्यादेश्च कर्मणोमूर्तत्वं साधितं तथेह स्वभावस्यापि साधनीयम्। तथाच प्रागुक्तम् आह। "नणु मेत्तमेयमुत्तं,चिय कज्जमुत्ति मत्ताव। इह जह मुत्तित्तणओ, घमस्स परमाणवो मुत्ता। तह सुह संवित्तीउ, सविधिवेयणुब्भवाओ य। वज्जबलाहाणीउ, परिणामा माज्ञयविण्णेयमिति"

अथनिष्कारणता स्वभावमिति द्वितीयविकल्पमधिकृत्याह

अहवा कारणउ च्चिय, सन्नावउत्तो वि सरिसया कत्तो।
किमकारणाउ न भवे, विमारिसया किंच विच्छित्ती ॥

अथ स्वभावत एव भवोत्पत्तिरित्यत्र अकारणत एवेत्ययमयोभिप्रेतः ( ताविति ) तथापि हन्त ! परभवे सदृशता कुत कोऽभिप्राय इत्याह। यथा कारणतः सदृशता भवति तथा किमित्यकारणत एव विसदृशता न स्यादकस्माच्चाकारणतो भवविच्छित्ति: कस्मान्न स्यादकस्माच्च भवेत्खरविषाणादिरपि भवेच्छरीरादीनां च कारणत्वात्तेन चाभ्रादीनामिव प्रतिनियता कारणत्वादिरूपता न स्यात्तस्मान्नाकारणता स्वभावत इति ।

अथ वस्तुधर्म्मोसाविति तृतीयविकल्पमाश्रित्याह।

अहव सहावो धम्मो, वत्थुस्स न सो वि सरिसओ निच्चं।
उप्पायट्ठिइभंगा, चित्ता जं वत्थुपज्जाया ॥

अथ वस्तुनो धर्मस्वभाव सोपि सर्वदैव सदृशो न घटत इति। किं कथं सर्वदैव शरीरादीनां सदृशतां जनयेत्कथं पुनरस्य सदैव सदृशता न घटत इत्याह ॥ ( उप्पायेत्यादि ) यद्यस्मादुत्पादस्थितिभङ्गादयश्चित्रा वस्तुपर्याया न च ते सदैवावस्थितसादृश्याः नीलादीनां वस्तुधर्माणां प्रत्यक्षत एवान्यान्यरूपतया परिणतिदर्शनात्। किंच वस्तुधर्मोसौ भवत्स्वभाव आत्मधर्मो वासौ स्यात्पुद्गलधर्मो वा । यद्यात्मधर्मस्तर्हि नासौ शरीरादीनां कारणम् अमूर्तत्वादाकाशादिवदथ पुद्गलधर्मस्तर्हि कर्म्मैवासौ कर्मणोपि हि पुद्गलास्तिकायधर्मत्वेनास्माभिरभ्युपगतत्वादिति । किंच ॥

कम्मस्स वि परिणामो, सुह धम्मधम्मो सपोग्गलमयस्स।
हेऊ चित्तो जगओ, होइ सहावोत्ति को दोसो ॥

सुधर्मन्नसौ वस्तुधर्मो भवत्स्वभावो धर्मो भवति को दोषो न कश्चित् युक्तियुक्तत्वात्किविशिष्टो धर्म इत्याह । परिणामकस्य कर्मणः कथम्भूतस्य पुद्गलमयस्य कथम्भूतो यः कर्म्मपरिणाम इत्याह । हेतु कस्य जगतो जगद्वैचित्र्यस्य तदेव कर्मलक्षणस्य वस्तुनःपरिणामरूपो धर्मो भवति स्वभावो नात्र काचिद्दोषापत्तिरस्माकमपि सम्मतो ऽयमर्थ केवलं सर्वदा सदृशोसौ न भवति किन्तु चित्रो मिथ्यात्वादिहेतुः वैचित्र्याद्विचित्रो विविधस्वभावः । अतो न तस्मात्परभवे सादृश्यमेव किन्तु विचित्ररूपतेति यदिवा किमनेनाव्यापकेन मिथ्यारूपेण चैकान्तवादेन, सर्वव्यापकमवितथरूपं चानेकान्तवादमेव दर्शयन्नाह ।

अहवा सव्वं वत्थु, पइक्खणं चिय सुहम्म धम्मेहिं।
संभवइ चेइ केहि वि, केहि वि तदवत्थमच्चंतं ॥
तं अप्पणो विसरिसं, न पुव्वधम्मेहिं पच्छिमिल्लाणं ।
सयलस्स तिहुयणस्स व, सरिसं सामन्न धम्मेहिं ॥

अथवा सुधर्मन्किमेक एव परभवः सर्वमेव हि घटपटादिकं भुवनान्तर्गत वस्तु कैश्चित्पूर्वपर्यायैः समानासमानपर्यायैः प्रतिक्षणमुपपद्यते। कैश्चित्पुनरुत्तरपर्यायैः समानासमानपर्यायैर्व्येति व्युपरमति। कैश्चित्तदवस्यमेवास्ते। ततश्चैव सति तद्व्यात्मनो पूर्व धर्मैरुत्तरोत्तरधर्माणां न सदृशं किं पुनरन्यवस्तूनाम्। सामान्यधर्मैस्तु सर्वस्यापि त्रिभुवनस्य समानं किंपुनरेकस्यैव निजपूर्वजन्मन इति ।

तत किं स्थितमित्याह ।

को सव्वहेव सरिसो, सरिसो वा इहभवे परभवे वा ।
सरिसासरिसं सव्वं, निच्चानिच्चाऽरूवं च ॥

को ह्ययोऽर्थोन्तैरात्मना वा स इहभवेपि सर्वथा सदृशोऽसदृशो वा किंपुनः परभवे। तस्मात्सर्वमपि वस्तु स्वधर्म्मैणापि सह समानासमानरूपमेवेहभवेपीति कुतः परभवे सादृश्यमेव प्रतिज्ञायते। इति भवत इति भावः। तथा सर्वमपि नित्यानित्याद्यनन्तधर्म्मात्मकमिति ।

अमुमेवार्थं दृष्टान्तेन प्रतिपादयितुमाह ।

जह नियएहिं वि सरिसो, न जुवा जुवि बालवुड्ढधम्मेहिं।
जगओ विसमो सत्ताइ, एहिं तह परभवे जीवो ॥

यथेह युवा निजैरप्यतीतानागतैर्बालवृद्धत्वादिपर्यायैरात्मनोपि सर्वथा न समान सत्तादिभिस्तु समान्यपर्यायैर्जगति न केनाचिन्न समानस्तथायमपि जीवः परलोक गत सर्वेणापि सह समानासमानरूप एवेति। कुत सर्वथा सादृश्यमिति।

एतदेव दृष्टान्तेन भावयति ॥

मणुओ देवीभूओ, सरिसो सत्ताइएहिं जगओ वि।

देवीईहिं वि सरिसो, निच्चानिच्चो वि एमेव ॥

मनुष्यो मृत्वा देवत्वमापन्नो जगत्त्रयस्यापि सत्त्वादिभिः पर्यायैः सदृशो देवत्वादिभिस्तु विसदृशः इति नैकान्तेन क्वापि सदृशता । तथा द्रव्यतयासौ नित्यः पर्यायतया त्वनित्य इत्याद्यपि वक्तव्यमित्याह । नन्वस्माभिरपि नैकान्तेन परभवे सादृश्यमभ्युपगम्यते किंतु समानजात्यन्वयमात्रमेवेष्यते पुरुषादिर्मृतः पुरुषादिरेव भवतीति । एतदप्ययुक्तं कर्मजनितो हि परभव इति साधितम् । तच्च मिथ्यात्वादिविचित्रहेतुजन्यत्वाद्विचित्रमेवेत्यतस्तज्जन्यः परभवो विचित्र एव युज्यते न तु समानजात्यन्वयः सिध्यतीति । किंच ॥

उक्करिसा वक्करिसा, न समाणाए वि जेण जाईए ।
सरिसग्गाहे जम्हा, दाणाइ फलं विही तम्हा ॥

सदृशग्रहे समानजातीयताग्रहे सति येन यस्मादीश्वरदरिद्रकुलीनाकुलीनादिरूपेणोत्कर्षापकर्षौ न घटा प्राञ्चतः । यो हि यादृगिहभवे स यदि परभवेऽपि तादृश एव तर्हि य इहभवे ईश्वरः स परभवेऽपि तादृग् एव एव दरिद्रेष्वपि वाच्यं ततश्चेह भवात्परभवे सर्वप्रकारैरप्युत्कर्षापकर्षौ न स्यातां किंत्वेकान्तसदृशतैव भवेत् (तम्हत्ति) तस्माल्लोकन्योय सादृश्यग्रह इति प्रक्रमाद्गम्यम् । अथैतमाचक्षीथाः मा भूतामुत्कर्षापकर्षौ का नो हानिरित्याह ( जम्हा दाणाइ फलं विहित्ति ) चकारस्य गम्यमानत्वाद्यस्माच्चेत्थं परलोकोत्कर्षापकर्षयोरभावे दानादिफलं वृथा सपद्यते लोको हि परत्र देवादिसमृद्धिप्राप्त्या आत्मन उत्कर्षार्थं दानादि प्रवृत्तिं विदधाति यदि चोक्तयुक्त्या उत्कर्षाद्यभावादरिद्रो दानतपस्तीर्थावगाहनाद्यपि कृत्वा ऽमुत्र दरिद्र एव स्यात्तर्हि क तद्दानादिफलमित्यपार्थिका दानादौ प्रवृत्तिस्तस्माच्च विधेयः सादृश्यग्रह इति । अपिचैतस्मिन् सादृश्यग्रहे वेदपदानामप्यप्रमाण्यमापद्यत इति दर्शयन्नाह ।

जं च सिआलो वइए, स जायए वेयविहियमिच्चाइ ।
मग्गीयं जं च फलं, तमसंबद्धं गोरिसयाए ॥

यच्च शृगालो वै एष जायते य स पुरीषो दह्यत इत्यादि वेदविहितं तदपि परभवसदृशताग्रहे सबद्ध एव स्यात्पुरुषादेरमुत्र शृगालताद्यनुपपत्तेः तथा यदप्याग्निहोत्रं जुहुयात्स्वर्गकामः स त्वन्यथाऽग्निष्टोमेन यमराज्यमभिजायत इत्यादिकं स्वर्गीय फलसूचकत्वात्स्वर्गीय फलं तदप्यसंबद्धं भवेन्मनुष्यस्य त्वदभिप्रायेण देवत्वानुपपत्तेरिति पुरुषो वै पुरुषत्वमश्नुते पशवः पशुत्वमित्यादीनां च वेदानामयमर्थः । कोपि पुरुषः खल्विह जन्मनि प्रकृत्या भद्रको विनीतः सानुक्रोशोऽमत्सरश्च मनुष्यनामगोत्रे कर्मणि च मृतः सन् पुरुषत्वमश्नुते न तु नियमेन सर्व एव अन्यस्यान्यकर्मवशगस्यान्यथाप्युत्पत्तेः । एवं पशवोऽपि केचिन्मायादिदोषवशात्पशुनामगोत्रे कर्मणि बद्धा परभवे पशवो जायन्ते न तु सर्वेऽपि नियमेन कर्मापेक्षित्वाद्वैचित्र्यगतेरिति । विशे० ( च्युतिस्तमये इहभव परभवौचित्य तत्र शब्दे चिन्तयिष्यामि )

इहभवियाउय–इहभविकायुष्–न० वर्तमानभवायुषि, । भ० ५ श० ३ उ० ।

इहय–इहक–त्रि० " स्वार्थे कश्चवा ८ ।२। १६४ ।" इति प्राकृतसूत्रेण स्वार्थे कः । प्रा० । अस्मिन्नित्यर्थे —वाच० ।

इहरा–इतरथा–अव्य० "इहरा इतरथा " पा० ४।२।२ इति प्राकृतसूत्रेण इहरा इति इतरथार्थे वा प्रयोक्तव्य । पक्षे यथा प्राप्तम् अन्यथार्थे,"इहरा नीसासमेहिं" पक्षे इअरहा । प्रा० । नि० चू० । " इहरा संपरूवघाओ " इतरथा अन्यथेति । दर्श० । " इहरा समूहसिद्धो " इतरथोक्तप्रकारादन्यथा समूहो रत्नानां सिद्धो निष्पन्न इति–सम्म० इहरा वि य वीयमेयस्स" इतरथान्यथा भावव्यतिरेकेणेत्यर्थः इति । पचा० २ विव० । " इहरा अणत्थगंतं " पंचा० ६ विव० ।

इहलोइय ऐहलौकिक–त्रि० इहलोके भवः ठञ् द्विपदवृद्धिः वाच० । ऐहिके,-'अन्नस्स पाणस्सिह लोइयस्स' अन्नस्य पानस्य वा कृते ऽन्यस्य वैहिकार्थस्य वस्त्रादेः कृते इति । सूत्र० १ श्रु०७अ० । इहलोकप्रयोजने,'इहलोइया वि किं पुण' ऐहलौकिकी इहलोकप्रयोजनापि कृष्यादिकापीत्यर्थः । पचा० ४ विव० इहलोकगते, " इहलोइया विहाणित्ति " ऐहलौकिक्यपि इह लोकगतापि न केवलं परलोकगता हानिरिति। पचा० ३ विव०। इहलोककृते, इहजन्मभवे च " इयलोइयाइं परलोइयाइं भीमाइं अणेगरूवाइं अविसुब्भिदुब्भिगंधाइं सद्दाइं अणेगरूवाइं" इहलोके भवा ऐहलौकिका मनुष्यकृता के ते स्पर्शा दुःखविशेषाः । यदिवा इहैव जन्मनि ये दुःखयन्ति दण्डप्रहारादयः प्रतिकूलोपसर्गास्त इहलौकिका इति। आचा० १श्रु० ए अ० ३ उ० । इहलोके भव ऐहलौकिकः । व्यवसायभेदे, य इह भवे वर्तमानस्य निश्चयोऽनुष्ठानं वा स ऐहलौकिको व्यवसाय इति स्था० ३ ठा० ।

इहलोय–इहलोक–पुं० इदम् प्रथमार्थे ह । कर्म०इहलोकः समानलोकः सदृशलोको यथा मनुजो मनुष्यस्य तिर्यङ् तिरश्च इति दर्श० । अस्मिन् लोके, आचा० १श्रु०५ अ०४ उ० "इहलोगदुहावहविऊ" इहास्मिन्नेव लोके हिरण्यस्वजनादिकं दुःखमावहतीति । सूत्र० १ श्रु० २ अ०२ उ० । मनुष्यलोके, स्था० ३ ठा० । आव० । " इहलोगपडिणीए " इहलोकस्य प्रत्यक्षस्य मानुषत्वलक्षणपर्यायस्य प्रत्यनीक इति । भ०८ श०८उ० इहलोगो मणुस्सस्स लोगो इति । आ० चू० । अस्मिन् जन्मनि, आचा०१ श्रु० ५ अ०४ उ० । मनुष्यजन्मनि, स्था० ४ ठा०

इहलोगगवेसग–इहलोकगवेषक– त्रि० अन्योन्यभक्तपानाद्युपभोगेन केवलस्येहलोकस्यैवान्वेषके, वृ० १ उ० ।

इहलोगपडिणीय–इहलोकप्रत्यनीक– त्रि० इहलोकस्य प्रत्यक्षमानुषत्वलक्षणपर्यायस्य प्रत्यनीक इन्द्रियार्थप्रतिकूलकारित्वात्पञ्चाग्नितपस्विवदिहलोकप्रत्यनीकः । इन्द्रियार्थप्रतिकूलकारिणि, गतिमप्रतीत्य मनुष्यलोकप्रत्यनीकरूपे प्रत्यनीकभेदे,–इहलोकोपकारिणां भोग साधनादीनामुपद्रवकारिणि, इहलोको मनुष्यलोकस्तस्य प्रत्यनीकता तद्वितथप्ररूपणेति इहलोकप्रत्यनीकः । मनुष्यलोकस्य वितथप्ररूपणाकर्तरि च । स्था० ३ ठा० ।

इहलोकपडिबद्ध–इहलोकप्रतिबद्ध–त्रि० निर्वाहादिमात्रार्थिनि प्रव्रज्याभेदे स्त्री–टाप् इहलोकप्रतिबद्धा निर्वाहादिमात्रार्थिनामिति–स्था० ४ ठा० ( विशेषार्थस्तु पवज्जा शब्दे )

इहलोइयपरलोइय–ऐहलौकिकपारलौकिक–त्रि० इह परत्र च भव ऐहलौकिकपारलौकिक । इह परत्र च भवे, तदात्मके व्यवसायभेदे च । यस्त्विह परत्र च स ऐहलौकिकपारलौकिक इति । स्था० ३ ठा० ।

इहलोइयपारलोइयकज्ज–ऐहलौकिकपारलौकिककार्य–न० वर्तमानभवपरभवप्रयोजनमात्ये,—

इहलोइयपारलोइय-कज्जाणं पारलोइयं अहिगं ।
तं पि हु भावपहाणं, सो चिय इयकज्जगम्मोत्ति ॥
ऐहलौकिकपारलौकिककार्ययोर्वर्तमानभवपरभवप्रयोजनयोः साध्ययोर्मध्ये पारलौकिकं पारभविकं प्रधानतरं विशेषतस्तस्य साधनीयत्वात्तदसाधने बहुतमानर्थसम्भवात्पारलौकिककृत्यं च जिनपूजेत्यतो नान्यदुपयोगस्थानं लघुतरं प्रवरसाधनानामिति । तत्र च यत्प्रधानं तद्दर्शयितुमाह । ( तं पि हुत्ति ) तत्पुनः पारलौकिककार्यं भाव आत्मपरिणामः प्रधानं साधकतयोत्तमो यस्मिंस्तद्भावप्रधानं शुभभावसाध्यमतोऽसौ भावविशेषो विशिष्टपारलौकिककार्यार्थिनां समाश्रयणीय इति हृदयम् । यदि भावप्रधानं ततः किमित्याह ( सोवियत्ति ) स पुनः पारलौकिककार्यहेतुभूतो भाव इति कार्यगम्य इत्येवंविधमनन्तरोक्तं यत्कार्यं भावस्य कृत्यं पूजार्थप्रवरपुष्पाद्युपादानरूपं तेन यो गम्यो निश्चेतव्यः स इति कार्यगम्य । इति शब्दः समाप्ताविदमुक्तं भवति । परलोकसाधनं हेतुभूतशुभभावकार्यत्वात्प्रवरसाधनोपादानस्य शुभभावं सफलयद्भिस्तद्विधेयं भवतीति गाथार्थः । पञ्चा० ४ विव० ।

**इहलोगभय–इहलोकभय–** न० इहलोकः समानलोकः सदृशलोको यथा मनुजो मनुष्यस्य तिर्य्यङ् तिरश्चस्तस्माद्भयमिहलोकभयम्– । दर्श० । मनुष्यादिकस्य सजातीयादन्यस्मान्मनुष्यादेरेव सकाशाद्भयं भवति तदिहलोकभयम्–। इहाधिकृतभीतिमतो जातौ लोकस्ततो भयमिति व्युत्पत्तिः । स्था०७ ठा० । आव० । सम० । भयभेदे,–तच्च यथा राजामात्यरक्षकादेरकार्यकरणं प्रति प्रजादीनां सिंहादेर्वा मृगादीनामिति-दर्श० ।

**इहलोगवेयण–इहलोकवेदन–** न० इहास्मिन् लोके जन्मनि वेदनमनुभवनमिहलोकवेदनम्– । इहलोकानुभवने,– आचा० १ श्रु० ५ अ० ४ उ० ।

**इहलोगवेयणवेज्ज–इहलोकवेदनवेद्य–** त्री० इहास्मिन् लोके वेदनमनुभवनमिहलोकवेदनं तेन वेद्यमनुभवनीयमिहलोकवेदनवेद्यम् । इहलोकानुभवेनानुभवनीये, आचा० १ श्रु० ५ अ० ४ उ० ।

**इहलोगवेयणवेज्जावडिय,– इहलोकवेदनवेद्यापतित–** त्रि० ऐहिकभवानुबन्धिनि, "इह लोगवेयणवेज्जावडिय । जं आउट्टीकम्मं न परिग्णाय विवेगमेति" इहास्मिन् लोके जन्मनि वेदनमनुभवनमिह लोकवेदनं तेन वेद्यमनुभवनीयमिहलोकवेदनवेद्यं तत्रापतितमिहलोकवेदनवेद्यापतितम्– । इदमुक्तं भवति-प्रमत्तयतिना ऽपि यदकामतः कृतं कर्म कायसंघट्टादिना तदैहिकभवानुबन्धि तेनैव भवेन क्षप्यमाणत्वादिति । आचा० १ श्रु० ५ अ० ।

**इहलोगसंवेगिणी– इहलोकसंवेगिनी–** स्त्री० इहलोको मनुष्यजन्म तत्स्वरूपकथनेन संवेगिनी इहलोकसंवेगिनी सर्वमिदं मानुषत्वमसारमध्रुवं कदलीस्तम्भसमानमित्यादिरूपे संवेगिन्या कथाया' प्रथमे भेदे, स्था० ४ ठा० ।

**इहलोगावेक्खा–इहलोकापेक्षा–** स्त्री० इहलोकालम्बने,
विहियाणुट्ठाणमिणंति–एवमेयं सयाकरेत्ताए ।
होइ चरणस्स हेऊ, णो इह लोगादवेक्खाए । ४ ।

विहितमाप्तागमे विधेयतयानुमतं यदनुष्ठानं क्रिया तद्विहितानुष्ठानमिदं जिनभवनादिकरणलक्षणमिति । अनेनोल्लेखेन एवमनेन भावस्तवानुरागलक्षणेन सूत्रविधिलक्षणेन वा प्रकारेण एतज्जिनभवनादिविधानं सदा सर्वकालं कुर्वतां विदधतां भवति जायते । चरणस्य सर्वविरतिरूपचारित्रस्य हेतुर्निमित्तम् । तदेव जिनभवनादि । उक्तविपर्यये यद्भवति तदाह नो नैव इह लोकाद्यपेक्षया ऐहभविककीर्त्यादिपारभविकदेवत्वराज्यादिपदार्थालम्बनेन । चरणस्य हेतुर्भवति एतज्जिनभवनादिविधानं निदानदूषितत्वादिति गाथार्थः । पञ्चा०६विव० ।

**इहलोगासंसप्पओग–इहलोकाशंसाप्रयोग–** पु० । इहलोको नरलोकस्तत्राशंसा राजा स्यामित्याद्यभिलाषस्तस्याः प्रयोगो व्यापार इह लोकाशंसाप्रयोगः । धर्म० २ अधि० । अपश्चिममारणान्तिकसंलेखनाजोषणाराधनायाः अतिचारविशेषे,– उपा० । स च श्रेष्ठी स्यां जन्मान्तरे ऽमात्यो वेत्येवं रूपा प्रार्थनेति । उपा० १ अ० । आव० आव० ॥

# ( ईकार )

**ई–ई–** अव्य० क्विप्- विषादे, दुःखभावनायाम्, क्रोधे, अनुकम्पायां, प्रत्यक्षे, सन्निधौ, सम्बोधने,- वाच० "ई कुत्सार्थे पि पापेपि निषेधे, नयनभ्रमे । ६। एका० । पादपूरणे च । "ई जेरा पादपूरणे" ८ । २ । १७। इति। प्रा० मेदिन्यामयं सान्ततया पठितः । पृषोदरादित्वात्साधुः । वाच० ।

**ई–** स्त्री० लक्ष्म्याम्, वाच० । ई रमा मदिरा मोहे, महानन्दे शिरोभ्रमे । स्त्रीलिङ्गोयमुणाद्यन्तो, नातोस्माल्लोपनं सुपः । ७ । ई यैयोत्रजसो रूपं, स्यादमारूपमीः शसि । ईशब्दो व्ययपर्याये व्ययं वृद्धे प्रदर्शितम् । ८ । एका० ।

**ईति–ईति–** पु० ईयते ई-क्तिच् (१) डिम्बे, २ उत्पादिते,-त्रि०। ३ प्रवासे, । " अतिवृष्टिरनावृष्टिः शलभा मूषिकाः खगाः । प्रत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः 'इत्युक्ते ४ कृष्युपद्रवभेदे च। स्त्री० निरातङ्का निरीतय' रघु । वाच० ईतिर्धान्याद्युपद्रवकारी प्रचुरमूषिकादिप्राणिगण इति । सम० ३४ स० । ज० । प्रचुरशलभशुकमूषिकाद्या धान्यादिविनाशका इति । प्रव० ४० द्वा० । प्रायो वर्षासु शस्योपद्रवकारिणो मूषिकादय इति । दर्श० ॥

**ईरण–ईरण–** न० ईर्-भावे ल्युट् प्रेरणे, आव० ४ अ० । " इन्द्रियाणि समीरए ' इन्द्रियाणीषानिष्टविषयेभ्य सकाशाद्रागद्वेषाकरणतया सम्यगीरयेदिति । आचा० १ श्रु० ए अ० उ० । गतौ, आ० म० द्वि० । स्था० । आचा० । कथने, 'घोरे धम्मे उदीरए ' उत्प्राबल्येन ईरितं कथितं प्रतिपादितस्तीर्थकरगणधरादिभिरिति । आचा० १ श्रु० ८ अ० ७ उ० । युज्

ईरणा तत्रैव स्त्री० । नन्द्या-ल्यु प्रेरके, त्रि० समीरणः प्रेरयिता भवेति-कुमा० । वाच० ।

ईरिय-ईरित- त्रि०प्रेरिते,-आव ४ अ० । दर्श० । चोदिते- "समीरिया कोट्टवलिं करिंति" समीरिताः पापेन कर्मणा चोदितास्ताम्नारकान् कुट्टयित्वा खण्डशः कृत्वा नगरवलिव-न्नितश्चेतश्चाक्षिपन्तीत्यर्थः इति । सूत्र० १ श्रु० ५ अ०२ उ० कथिते, प्रतिपादिते, आचा० १ श्रु० ६ अ० ४ उ० । " संक्षे-पान्निरपेक्षाणां यतीनां धर्म ईरित " ईरितः प्रोक्त इति-धर्म० ४ अधि० । जनिते,-कृते च । " ससद्दफासाफरुसा उदीरिया" उत्प्राबल्येनेरिता जनिता कृता इत्यर्थ इति । आचा० ।

ईसओ-देशी, रोझाख्ये मृगे, दे० ना० ।

ईसक्ख-ईशाख्य- त्रि० ईश ईश्वर इत्याख्या प्रसिद्धिर्येषां ते ईशाख्याप्रसिद्धे ईश्वरे, ईशनमीशो भावे घञ् प्रत्ययः । ऐश्वर्यमित्यर्थः । ईश ऐश्वर्ये इति वचनात् । तत ईशमैश्व-र्यमात्मनः ख्यान्ति अन्तर्भूतण्यर्थतयाऽऽख्यापयन्ति प्रथय-न्तीति ईशाख्याः । आत्मन ऐश्वर्यस्य प्रसिद्धिकारके,-जी०-३ प्रति० । प्रज्ञा० ।

ईसत्त-ईशत्व- न०सर्वत्र प्रभविष्णुतारूपे सिद्धिविशेषे, द्वा०-२६ द्वा० ।

ईसत्थ-इषुशास्त्र- न० । चतुष्षष्टिकलान्तर्गते कलाभेदे, ज्ञा० १ अ० । सच धनुर्वेद - प्रश्न० ५ द्वा० । ईसत्थति प्राकृतशै-ल्या इषु शास्त्र नागबाणादिदिव्यास्त्रादिसूचक शास्त्रम् इति-जं० २ वक्ष० । सम० तथाचावश्यके भगवत ऋषभदेवस्य वर्णनमुपक्रम्योक्तम् "ईसत्थ धणुवेयो" इषु-शास्त्र नाम धनु-र्वेद स च तदैव राजधर्मे सति प्रावर्त्ततेति- आ० म० प्र० ।

ईस-ईश- पु०ईश- क- ईश्वरे, प्रज्ञा० २ पद । जी० । परमे-श्वरेषु, महादेवे, रुद्रसङ्ख्यातुल्यसङ्ख्याकत्वात् एकादश-संख्यायाम्, आर्द्रानक्षत्रे च । वाच० । ईशानमीशो भावे घञ्० ऐश्वर्ये, ईश ऐश्वर्ये इति वचनात् प्रज्ञा० २ पद ।

ईस-देशी० कीलके, दे० ना० ।

ईसमित्त-ईशमित्र- न०कुबेरे, - प्रा० को० ।

ईसर-देशी० मन्मथे, दे० ना० ।

ईस सह-ईशसख-पु० षष्ठीतत्पु० टच्-समा० कुबेरे-बहु० न टच् ईशसखा इत्येव ईशमित्रादयोप्यत्र- वाच० ।

ईसा-ईर्ष्या-स्त्री० परगुणासहने, उत्त० ३४ अ० ।

ईर्ष्या०स्त्री०ईर्ष्य भावे स्त्रीत्वात् टाप् । अक्षमायामपरवृद्ध्यसहि-ष्णुतायाम्, । वाच० । प्रतिपक्षाभ्युदयोपलम्भजनितो मत्सर-विशेष ईर्ष्येति । आव०४ अ० । सम० । आ० म० द्वि० । पै-शून्य साहस द्रोहमीर्ष्या सूयाऽर्थ दूषणम् । वाग्दण्डजञ्च-पारुष्य क्रोधजो ऽपि गणोऽष्टक । मनु० । एतेषाञ्च । क्रोधप्रव-र्तकत्वात् क्रोधजत्वम् । अत एव । "क्रुधद्रुहेर्ष्यासूयार्थानां य प्रति कोप -पा० द्रुहादयो ऽपि-कोपप्रभावा एव गृह्यन्तेऽतो विशेषण सामान्येन य प्रति कोप इति सि० कौ० । धरणेन्द्रभव नपतीनामग्रमहिषीनां प्रथमपर्षदि- स्था० ३ ठा० ।

ईषा स्त्री० ईश्-क-टाप्-शकटस्य दीर्घकाष्ठे, हलयुगयोर्मध्यस्थकाष्ठे, लाङ्गलदण्डे च । वाच० ।

ईसाण-ईशान- पु० सकलविमानप्रधानेशानावतंसकविमान-विशेषे, अनु० । सकलविमानप्रधानेशानावतसकविमानवि-शेषोपलक्षिते स्वनामख्याते ऊर्ध्वलोकविशेषे,- अनु० । कल्पभेदे,-स्था०१० ठा० । विशे० । आ० चू० । देवलोक-भेदे, । तल्लोकवासिनि कल्पोपपन्नके वैमानिकदेवभेदे, प्रव० द्वा० । विशे० ईशानकल्पस्थे ईशानदेवेन्द्रे च । स्था० १० ठा० विशे० । सम० । ईशानस्थानशब्दे वक्तव्यता- ( इशानेन्द्रवक्त व्यता ठाणशब्दे ईसाणिंदशब्दे ऽपि- ) । प्रभौ, । " उतामृत-त्वस्येशानः " अमृतत्वस्यामरणभावस्य मोक्षस्येशानः प्रभु-रिति । विशे० । आ० म० द्वि० । ईश-ताच्छील्ये चानश्-ऐश्वर्य-शीले,- रुद्रमूर्तिभेदे,- पुं० । "अहोरात्रभवेषु त्रिंशन्मुहूर्तेषु स्वनामख्याते एकादशे मुहूर्ते,-जं०७ वक्ष० । दश० प० । कल्प० । ज्यो० । समवायांगे तु षोडशो मुहूर्त इति । सम० ३ स० ।

ईसाणकप्प-ईशानकल्प-पु० मेरोरुत्तरवर्त्तिनि परिपूर्णचन्द्र-मण्डलसस्थानसंस्थिते कल्पविशेषे, राज० । तद्वक्तव्यता ठिइशब्दे- )

ईसाणवडिंसय-ईशानावतंसक- पुं० ईशानकल्पस्थसकल-विमानप्रधाने स्वनामख्याते विमाने,-अनु० । तथाच-प्रज्ञा-पनायाम्पञ्चविमानावतसकान्प्रतिपाद्योक्तम् "मज्झइत्थे ईसाण वडिंसए" मध्ये ईशानावतसक इति-प्रज्ञा० २ पद० ॥

ईसाणिंद-ईशानेन्द्र-पुं० । ईशानकल्पस्थवैमानिकदेवानामिन्द्रे, तद्वर्णको यथा-

तेणं कालेणं तेणं समएणं ईसाणे देविंदे देवराया सूल पाणी वसहवाहणे उत्तरड्ढलोगाहिवई अट्ठावीसविमाण वाससयसहस्साहिवई अरयंवर वत्थधरे अलइयमालमउ-डे नवहेमचारुचित्तचलचंचलकुंडलविलिहिज्जमाणगंडे जाव दसदिसाओ उज्जोवेमाणे उज्जोवेमाणे ईसाणकप्पे ईसाणवडिंसए विमाणे जहेव रायप्पसेणइज्जे जाव दिव्वं देविड्ढि ॥

( जहेव रायप्पसेणइज्जेत्ति ) यथैव राजप्रश्नीयाख्ये अध्य-यने सूरिकाभदेवस्य वक्तव्यता तथैवचेहेशानेन्द्रस्य किमन्ते त्याह ( जावदिव्वे देवड्ढिमिति )सा चेयमर्थसक्षेपतः सभायां सुधर्मायामीशाने सिंहासने अशीत्या सामानिकसहस्रैश्चतुर्भि-र्लोकपालैरष्टाभिः सपरिवाराभिरग्रमहिषीभिः सप्तभिरनीकैः समभिरनीकाधिपतिभिश्चतसृभिश्चाशीतिभिरात्मरक्षकदेवस-हस्राणामन्यैश्च बहुभिर्देवैर्देवीभिश्च परिवृतो महता नृत्तना-द्यादिरवेण दिव्यान् भोगभोगान् भुञ्जानो विहरति स्म ।

जाव जामेव दिसिं पाउब्भूए तामेव दिसिं पडिगए भंते! त्ति भगवं ! गोयमे समणं भगवं महावीरं वंदइ नमंसइ २ त्ता एवं वयासी अहो णं भंते ! ईसाणे देविंदे देव राया महिड्ढिए ईसाणस्स णं भंते ! सा दिव्वा देविड्ढी कहिं गते कहिं अणुपविट्ठे ? गोयमा ! सरीरं गए से केणट्ठेणं भंते ! एवं वुच्चई सरीरं गए ? गोयमा ! से जहा नामए कूडागार सालासिया दुहओलित्ता गुत्तागुत्त दुवारा णिवाया णिवायगंभीरा तीसेणं कूडागारं जाव कूडागारसालादिट्ठंतो भाणियव्वा इसाणेणं भंते ! दे-विंदे देवरन्नो सा दिव्वा देविड्ढी दिव्वा देवजुत्ती दिव्वे देवाणुभावे किन्नालद्धे किन्नापत्ते किन्ना अभीसमन्नागए

केवा एस आसी पुव्व भवे किन्नामए वा किंगोत्तेवा-कयरेसि गामसि वा नयरंसि वा जाव सन्निवेसंसि वा किं वा दच्चा किं वा भोच्चा किं वा किच्चा किं वा समयारित्ता कस्स वा तहारूवस्स समणस्स वा माहणस्स वा अंतिए एगमवि आयरियं धम्मियं सुवयणं सोच्चा निसम्म जण्णं ईसाणेणं देविंदेणं देवरस्रा सा दिव्वा देविड्ढी जाव अभिसमण्णागया एवं खलु गोयमा ! ।

इतश्च जम्बूद्वीपमवधिनाऽऽलोकयन् भगवन्तं महावीरं राजगृहे ददर्श दृष्ट्वा च ससम्भ्रममासनादुत्तस्थौ उत्थाय च सप्ताष्टानि पदानि तीर्थकराभिमुखमाजगाम । ततो ललाटतटघटितकरकुड्मलो ववन्दे वन्दित्वा चाभियोगिकदेवान् शब्दयाञ्चकार । एव च तानवादीत् गच्छत भो राजगृहं नगरं महावीरं भगवन्तं वन्दध्वं योजनपरिमण्डलञ्च क्षेत्रं शोधयत कृत्वा चैव मम निवेदयत । ते पि तथैव चक्रुः । ततोसौ पदात्यनीकाधिपतिं देवमेवमवादीत् भो २ देवानुप्रिय ! ईशानावतंसके विमाने घण्टामास्फालयन् घोषणां कुरु यदुत गच्छन्ति भो ईशानेन्द्रो महावीरस्य वन्दनाय ततो यूयं शीघ्रं महर्द्ध्या तस्यान्तिकमागच्छत । कृताया च तेन तस्यां बहवो देवाः कुतूहलादिभिस्तत्समीपमुपागतास्तैश्च परिवृतोसौ योजनलक्षप्रमाणयानविमानारूढो ऽनेकदेवगणपरिवृतो नन्दीश्वरद्वीपे कृतविमानसंक्षेपो राजगृहनगरमाजगाम । ततो भगवन्तं त्रिः प्रदक्षिणीकृत्य चतुर्भिरङ्गुलैर्भुवमप्राप्त विमानं विमुच्य भगवत्समीपमागत्य भगवन्तं वन्दित्वा पर्युपास्ते स्म । ततो धर्मं श्रुत्वैवमवादीत् । भदन्त ! यूयं सर्वं जानीथ पश्यथ केवलं गौतमादीनां महर्षीणां दिव्यं नाट्यविधिमुपदर्शयितुमिच्छामीत्यभिधाय दिव्यं मण्डपं विकुर्वितवान् । तन्मध्ये मणिपीठिकां तत्र च सिंहासनं ततश्च भगवन्तं प्रणम्य तत्रोपविवेश । ततश्च तस्य दक्षिणाद्भुजादष्टोत्तरं शतं देवकुमाराणां वामाच्च देवकुमारीणां निर्गच्छतिस्म । ततश्च विविधातोद्यरवगीतध्वनिरञ्जितजनमानसं द्वात्रिंशद्विधं नाट्यविधिमुपदर्शयामासेति ( तएणं से ईसाणे देविंदे २ तं दिव्वं देविड्ढी ) यावत्करणादिदमपरं वाच्यं यदुत " दिव्वं देवजुइं दिव्वं देवाणुभावं पडिसाहरइ पडिसाहरइत्ता खणेणं जाए एगभूए तएणं ईसाणे ३ समणं भगवं महावीरं वंदित्ता नमंसित्ता नियगपरियालसपरिवुडमेति " ( परियालत्ति ) परिवार । ( कूडागार सालादिट्ठंतोत्ति ) कूटाकारेण शिखराकृत्योपलक्षिता शाला या सा तथा तया दृष्टान्तो यः स तथा । सचैव भगवन्तं गौतमं एवमवादीत् ईशानेन्द्रस्य सा दिव्या देवर्द्धिः क्व गता । गौतम ! शरीरकमनुप्रविष्टा । अथ केनार्थेनैवमुच्यते ? गौतम ! यथा नाम कूटाकारशाला स्यात् तस्याश्चादूरे महान् जनसमूहस्तिष्ठति स च महाभ्रादिकमागच्छन्तं पश्यति दृष्ट्वा च तां कूटाकारशालामनुप्रविशति एवमीशानेन्द्रस्य सा दिव्या देवर्द्धिः शरीरकमनुप्रविष्टेति । भ० ३ श० १ उ० । ( शक्रेशानयोर्विवाद विवायशब्दे ) शक्रस्येशानसमीपे प्रादुर्भावः पाउब्भाव शब्दे ) ( ईशानेन्द्रस्य पूर्वभवकथा नामलि शब्दे वक्ष्यामि यावत्तस्य तत्र स्थिति )

ईसालु–ईर्ष्यालु–त्रि० ईर्ष्या लाति–ला–वा–रु–ईर्ष्यायुक्ते, वाच० । ईर्ष्यालवो हि अन्तरुपतापपरा एव भवन्ति निष्कारणमेवेति । यत "यद्यपि का नो हानि परकीयां चरति रासभो द्राक्षाम् । असमञ्जसं तु दृष्ट्वा तथापि परिखिद्यते चेतः " इति । ध्व्य० । नपुंसकभेदे, । स च यस्य प्रतिसेव्यमानां वनितां विलोक्य प्रकाममीर्ष्याऽभिलाषो जायते स ईर्ष्यालुरिति । ग० १ अधि० । ध० । प्रव० । ईर्ष्यालुर्नाम यस्य प्रतिसेव्यमानं दृष्ट्वा ईर्ष्या मैथुनाभिलाष उत्पद्यते सोऽपि निरूढवेदः कालान्तरेण त्रैराशिको भवतीति–चू० ४ उ० ।

ईसालु–ईर्ष्यावत्– त्रि० " आल्विल्लोल्लालवन्तमन्तेत्तेरमणामतो " ८ । २ । १५९ । इति प्राकृतसूत्रेण मतोः स्याने आलुरादेशः । ईर्ष्यायुते,– प्रा० ।

ईसि–( ईसिं ) ( ईसी ) ईषत् अव्य०–ईष अति–इः स्वप्नादौ ८ । १ । इतिप्राकृतसूत्रेणेत्वम् । वा स्वरेमश्च–८ । १ । २४ । इतिप्राकृतसूत्रेण बाहुलकाधिकारान्मकारादन्यस्यापि व्यञ्जनस्य मकारः " अन्त्यव्यञ्जनस्य " ८ । १ । ११ इति प्राकृतसूत्रेण वा लुक्– प्रा० । अल्पे, – सम० ३४ स० । स्तोके,– प्रज्ञा० ३६ पद० अल्पभावे, नि० चू० १ उ० । मनागित्यर्थे,–प्रज्ञा० १७ पद जी० । औप० । आ० म० प्र० । ज० "ईसिं असोगवरपायवे " ईषत् मनागिति– राज० । " ईसिं पाडेई " मनागनगारं भूम्यां पातयति– इति – भ०१६ श० ३ उ० । " ईसिं खंध समल्लीणे " । इह स्कन्धस्युरुमित्युच्यते तस्याशोकवरपादपस्य ईषन्मनाक् सम्यग्लीनस्तदासन्न इत्यर्थः । राज० । किञ्चिदर्थे च– सूक्ष्मार्थे च । ईषत्प्राग्भाराख्ये लोकाग्रस्थे पृथिवीविशेषे च– स्था०९ ठा० । औप० ( तद्वक्तव्यता ईसिपब्भारा शब्दे )

ईसिअ–दशी० शवरशिरः पत्रपुटे वशयिते च । दे०ना० ।

ईसिं–( ईसिं ) ( ईसी ) उट्ठावलंवि ( न् )–ईषदोष्ठावलम्बिन्–त्रि० ईषत् मनाक् ततः परमास्वादतया झटित्येवाग्रतो गच्छति ओष्ठे अवलम्बते लगतीत्येवं शील ईषदोष्ठावलम्बी । मनागोष्ठावलम्बिनि । " ईसिंउट्ठावलंविणी "— प्रज्ञा० १७ पद० ।

ईसि–( ईसिं ) ( ईसी ) तंबच्छिकरणी–ईषत्ताम्राक्षिकरणी– स्त्री० ईषन्मनाक् ताम्रे अक्षिणी क्रियेते अनया इति ईषत्ताम्राक्षिकरणी । मदिरायाम्–मद्यस्य प्रायः सर्वस्यापि तथा स्वभावत्वादिति– प्रज्ञा० १७ पद० ।

ईसि ( ईसिं–इसी ) तुंग–ईषत्तुङ्ग– त्रि० मनागुच्चे, जं०६वक्ष० ।

ईसिदंत–ईषद्दन्त– पु० मनाग्दन्ते, औप० ।

ईषद्दान्त– त्रि० मनागाहितशिक्ष्ये गजादौ,–जं० ३ वक्ष० ।

ईसि ( ईसिं–ईसी ) पण्णवणिज्ज–ईषत्प्रज्ञापनीय– त्रि० । मनाक्प्रज्ञापयितुं शक्ये,–पञ्चा० १२ विव० ।

ईसि ( इसिं इसी ) पब्भार– ईषत्प्राग्भार– त्रि० ईषत्कुब्जे पञ्चा० १८ विव० ।

ईसि ( ईसिं,–इसी ) पब्भारगय–ईषत्प्राग्भारगत–त्रि० ईषदवनते, अत एव अ० । ईषत्कुब्जे, नद्यादिकुस्तटीस्थिते च । ( ईसीपब्भारगओ ) ईषत्प्राग्भारगत ईषत्कुब्जो नद्यादिकुस्तटीस्थितो वासो स्यादिति । पञ्चा० १८ विव० ।

ईसि ( ईसिं–ईसी ) पब्भारा–ईषत्प्राग्भारा– स्त्री०ईषदल्पा रत्नप्रभादिपृथिव्या इव महान् प्राग्भारो महत्त्वं यस्या सा ईषत्प्राग्भारा । औप० । ईषदल्पो रत्नप्रभाद्यपेक्षया प्राग्भारउच्छ्रयादिलक्षणो यस्या सा ईषत्प्राग्भारा । ऊर्ध्वलोकाग्रस्थ सिद्धानां निवासभूते पृथिवीभेदे,–( ईसिपब्भारापुढवी ) ईषत्प्राग्भारा ऊर्ध्वलोके भवतीति । स्था० ४ ठा० । ( ईसीप-

ब्भाराणामा य) (इसित्ति) अल्पभावे प्र इति प्रायो वृत्त्या भार इति भारक्रतस्स पुरिसस्स पायं पायसो ईसेणय भवति जाए वट्टित्ता सा पुढवी ईसीपब्भारा णाम इति एतमभिहणंतस्स मायद्व्वट्ठसिद्धविमाणाओ उवरिं वा रसेहिं जोयणेहिं भवति तेण सा ऊर्ध्वलोगचूला भवतीति । नि० चू० १ उ० ।

अस्या अथ स्वरूपो ह्यौपपातिके यथा ।

बहुसमरमणिज्जाओ भूमिभागाओ उड्ढं चंदम्मि सूरियगहगणणक्खत्ततारारूवाणं बहूइं जोयणसहस्साइं बहूइं जोयणसयसहस्साइं बहूइं जोयणकोमीओ बहुजोयणकोमाकोमीओ उद्धंतरं उप्पइत्ता सोहम्मीसाणं कुमारमाहिंदबंभलंतगमहासुक्कसहस्सारआणतपाणतआरणच्चु– यतिन्निय अट्ठारे गेविज्जविमाणवासते विती वइत्ता-विजयवेजयंतजयंतअपराजियसव्वट्ठसिद्धस्स य हात्रिमाणस्स सव्वउपरिल्लातो थूभियग्गतो डुवालसजोयणाइं अबाहाए एत्थ णं इमीपब्भारा णाम पुढवी पण्णत्ते पणयालीसं जोयणसयसहस्साइं आयामविक्खंभेणं एगा जोयणकोमी बयालीसं सयसहस्साइं तीसं च सहस्साइं दोण्णि य अउणापण्णे जोयणसए किंचि विसेसाहिए परिरएणं इसियपब्भाराएणं पुढवीए बहमज्झदेसभाए अट्ठजोयणणक्खत्ते अट्ठजोयणाई बाहुल्लेणं तयाणंतरं च णं माताए २ परिहायमाणी २ सव्वेसु चरिमपेरंतेसु मच्छियपत्तातो तणुयतरा अंगुलस्स असंखेज्जइभागबाहुल्लेणं पण्णत्ता ।

( बहुसमेत्यादि ) बहुसत्वेन रमणीयो यः स तथा स्यात् ( अवाहेत्ति ) अवाधयान्तरेण । औप० । ईपत्प्राग्भारायाः पृथिव्या बहुमध्यदेशभागे अष्टयोजनिकमायाम-विष्कम्भाभ्यामष्टयोजनप्रमाण क्षेत्र चाष्टौ योजनानि बाहल्येन चोच्चत्वेनोच्चैस्त्वेनेति भाव प्रज्ञप्ता तदनन्तर सर्वासुदिक्षु विदिक्षु च मात्रया स्तोकया २ प्रदेशप्रहाण्या परिहीयमाना सर्वेषु चरमान्तेषु मक्षिकापत्रतोऽप्यतितन्वी अङ्गुलासख्येयभाग बाहुल्येन प्रज्ञप्ता स्थापना । प्रज्ञा० २ पद ।

ईसीपब्भाराए, सायाए जोयणस्स लोगंतो ।
बारसहिं जोयणेहिं, सिद्धीसव्वट्ठसिद्धातो ॥

ईषत्प्राग्भारा सिद्धभूमिस्तस्या सीताया इति द्वितीय नाम ऊर्ध्व योजने इति कान्ते लोकान्त सापि च ईषत्प्राग्भाराख्या सिद्धि सर्वार्थसिद्धाद्वारविमानादूर्ध्व द्वादशभिर्योजनैर्भवति । अन्ये तु व्याचक्षते सर्वार्थसिद्धाद्विमानात् द्वादशभियोजनैर्लोकान्तऊत्रवक्तणोपि तत्त्व पुन केवलिनो विदन्ति तस्मिन् लोकान्ते ईषत्प्राग्भारोपलक्षिते मनुष्यक्षेत्रपरिमाणे सिद्धा प्रतिष्ठिता । उक्तञ्च 'अत्थीसीपब्भारोवलक्खियं मणुयलोय परिमाणं । लोगग्गनभोभागो सिद्धक्खेत्तं जिणक्खायं, सम्प्रति परिधिप्रतिपादनेऽस्या प्रस्तावायात प्रमाणमभिधित्सुराह ।

एगा जोयणकोमी, बायालीसं च सहस्साइं ।
तीसं चेव सहस्सा, दो चेव सया अउणपन्ना ॥

इह ईषत्प्राग्भारा य आयामविष्कम्भाभ्यां पञ्चचत्वारिंशद्योजनलक्षाणि प्रमाणम् । अतो विष्कंभवग्गद, गुणकरणी वट्टस्स परिरओ होइ । इति परिधिगणितेन परिधिपरिमाणमेका योजनानां कोटी द्वाचत्वारिंशल्लक्षाणि त्रिंशत्सहस्राणि द्वे शते एकोनपञ्चाशदधिके १४२३०२४९ शेष त्वधिकमल्पत्वान्न विवक्षितं प्रज्ञापनातो वाऽवसेयमिति ।

सम्प्रति तस्या एव बाहुल्य प्रतिपादयति ।

बहु मज्झ देसभागे, अट्ठेव य जोयणाणि बाहल्लं ।
चरिमंते सुय तणुई, अंगुल संखेज्जई भागं ॥

मध्यदेशभाग एव बहुमध्यदेशभागो बहुशब्दस्य स्तोकपरिहारार्थमात्रत्वात् । स च बहुमध्यदेशभाग आयामविष्कम्भाभ्यामष्टयोजनप्रमाणस्तत्र बाहुल्यमुच्चैस्त्वमष्टैवायोजनानि ततो यथोक्तप्रमाणात् बहुमध्यदेशभागात् चरमेषु सर्वासु दिक्षु विदिक्षु च योजन गत्वा अङ्गुलपृथक्त्व तथाङ्गुलप्रमाण ( परिहाइत्ति ) परिहीयते एवमनेन प्रकारेण हानिभावे सति तस्यास्तावत्प्रमाणमहत्याः पृथिव्याः । अपि शब्दो भिन्नक्रमो मक्षिकापत्रादपि तनुतरा किमुक्तं भवति । घृतपूर्णतयाविधकरोटिकाकारेति भावस्थापना । आ० म० द्वि० ।

अस्याः स्वरूपमौपपातिके यथा—

ईसीपब्भाराणं पुढवीसेया संखतलविमल सोल्लियमुणालदगरयतुसार गोक्खीरहारवण्णा उत्ताणयछत्तसंठाणसंठिया सव्वज्जुण सुवण्णमई अच्छासण्हालण्हा घट्टामट्टा णीरया णिम्मला णिप्पंका णिक्कंकडच्छायासमरीचियासुप्पभा पासादिया दरिसणिज्जा अभिरूवा पडिरूवा ईसीपब्भारा । औप० ।

सा च ईषत्प्राग्भारा पृथिवी श्वेता श्वेतत्वमेवोपमया प्रकटयति ( संखदलविमलेत्यादि ) शङ्खदलस्य शङ्खदलचूर्णस्य विमलो निर्मलः स्वस्तिकः शङ्खदलविमलस्वस्तिकः स च मृणालं चन्द्रकरजश्च तुपार च हिम च गोक्षीरं च हारश्च तेपामिव वर्णो यस्याः सा । तथा उत्तानकमुत्तानीकृत यच्छत्र तस्य यत्संस्थानं येन संस्थिता उत्तानच्छत्रसंस्थानसंस्थितत्वं च प्रागुपदर्शितस्थापनातो भावनीयम् । ( सव्वज्जुणसुवण्णमयी ) सर्वात्मना श्वेतसुवर्णमयी । प्रज्ञा० २ पद । आ० म० द्वि० ।

सव्वट्ठविमाणाउ, सव्वु परिसाउथुभिय ।
बारसहिं जोयणेहिं, ईसिपब्भार पुढवीउ ॥ १६ ॥
निम्मलदगरयवन्ना, तुसार गोक्खीरहारसरिवंना ।
उत्ताणगउत्त संठाणा, भणिया जिणवरिंदेहिं ॥१७॥
ईसी पब्भाराए, मायाए जोयणम्मि लोगंते ।
बारसहिं जोयणेहिं, सिद्धा सव्वट्ठसिद्धाओ ॥१८॥
पणयालीसं आयाम, वित्थडा होइ सत्तसहस्साइं ।
तं पि तिगुणं विसेसं, परिरओ होइ बोधव्वो ॥१९॥
एगा जोयणकोमी, बायालीसं च सयसहस्साइं ।
तीसं च सहस्साइं, दो य सया अउणवीसाउ ॥२०॥
खेत्तसमयविधिना अ–ट्ठेवजोयणाइं बाहल्लं ।
परिहाइचरिमंते, मच्छियपत्ता तणुयया ॥२१॥
गंतृण जोयणं जोय, णंनु परिहाइ अंगुलपहत्तं ।
संखतलसंनिगासा, पेरंता होंति पत्तणुसा ॥२२॥

अक्कण सुनगमया, नामेण सुदंसणा पज्ञासा य ।
संखतल संनिगासा,वत्तागारा य सा पुढवी।।९३।।ती०८०५.

उत्तराऽध्ययनेऽपि यत्सस्थाना यत्प्रमाणा यद्वर्णा च तदभिधानायाह ।

वारसहिं जोयणेहिं, सव्वट्ठस्सुवरिंभवे ।
ईसीपब्भारनामा, पुढवी छत्तसंठिया ॥

द्वादशभिर्योजनैः प्रकृत्यादित्वात्तृतीया सर्वार्थस्य सर्वार्थनाम्नो विमानस्योपर्यूर्ध्वं प्रवर्त्तस्मादीषत्प्राग्भारेतिनाम यस्या सा ईषत्प्राग्भारनामा । अनो बहुव्रीहेरिति निषेधाभान्तत्वेपि ङीप् न भवति। ईषदादिनामोपलक्षण चैतदनेकनामयाभिधेयत्वात्तस्या उक्तहि "ईसीती वा ईसीपब्भारा वा तणुतणुत्तीति वा सिद्धीति वा सिद्धालयत्ति वा मुत्तीइ वा मुत्तालएइ वा लोयगोइ वा लोयगाथूभइ वा लोयपडिबुज्झणाइ वा सव्वपाणभूयजीवसत्तसुहावहाइवेत्यादि " पृथिवी भूमिः छत्रमातपत्र तत्सस्थितमिव संस्थित संगानमस्या इति छत्रसंस्थिता । इह च विशेषानभिधानेपि उत्तानमेव छत्र गृह्यते यत आह । भगवान् भद्रबाहु । उत्ताणयछत्तय सठियाओ भणिया जिणवरेहिंति,-

पणयालीस सय सहस्सा, जोयणाणं तु आयया ।
तावइयं विच्छिन्ना, तिगुणा तस्सेव साहिय परिरया ॥
अट्ठजोयण वाहल्ला, सामज्झम्मि आहिया ।
परिहायमाणपरं, तामच्छीय पत्ताओ तणुयरी ॥

पञ्चचत्वारिंशत्सहस्राणि योजनानां तु पूरणे आयतता दीर्घता ( तावइय चेवत्ति ) तावतश्चैव प्रमाणात्सहस्राद्विस्तरतोपि च पञ्चत्वारिंशच्छतसहस्रप्रमाणेति भावस्त्रिगुणा ( तस्सेवत्ति ) प्राग्वत् । तस्माडुक्तरूपाद्यो या परिधय परिधिरिह च त्रिगुण इत्यभिधानेऽपि विशेषाधिक रूप्यत्य " सव्ववट्टति गुण सविसेसमिति " वचनादन्यथाहि पञ्चत्रिंशल्लक्षाधिकयोजनकोटिरेवैतत् परिमाण स्यात्तथा च सूत्रान्तरविरोधो यत्सूत्रोक्त "एगा जोयणकोमी बायालीस भवे शय सहस्सा । तीस चेव सहस्सा दो चेव सया अउणवन्नत्ति" । पठन्ति च "तिओणसाहियपरिरयात्ति" अष्टौ अष्टसंख्यानि योजनानि बाहुल्यं स्थौल्यमस्या इत्यष्टयोजनत्वाद्बाहुल्या ( से ) तस्येपत्प्राग्भारा किं सर्वत्राप्येवमाह । आदिमध्य मध्यप्रदेशा व्याख्याता किमित्येवमत आह । परिसमन्ताद्धीयमाना ( परिहियमानी चरिमतेत्ति ) चरिमान्तेषु सकलदिग्भागवर्तिषु पर्यन्तप्रदेशेषु मक्षिकाया॰ पत्र पक्षो मक्षिकापत्रमपिशब्दस्य गम्यमानत्वात् तस्मादपि तनुतरी अतिपरिकृशेति यावत् । हानिश्चात्र विशेषानविधानेपि प्रतियोजनमङ्गुलपृथुत्व रूपव्या तथाचान्यत्रावाचि " गतूण जोयण तु परिहोइ अगुलपुहत्ति" अत्र केचित्पठन्ति ॥

अज्जुण सुवण्णगमई, सा पुढवी निम्मला सभावेण ।
उत्ताणगछत्तगसं-ठिया य भणिया जिणवरेहिं ॥
संखककुंदसकासा पंमरा निमला सुसुभा ॥

तत्र च अर्जुनं शुक्लं तच्च तत्सुवर्णक तेन निर्वृताऽर्जुनसुवर्णकमयी सतीपत् प्राग्भारा (निम्मला) स्वच्छा । किमुपाधिवशात इत्याह । स्वभावेन स्वरूपेण उत्तानकमूर्ध्वमुख यच्छत्रमेव छत्रक तत्सस्थिताच भणितोक्ता जिनवरैः प्राक् सामान्यतः छत्रसंस्थितेव प्रणितोक्ता जिनवरैः । प्रागित्युक्तमिह तत्तानत्व तद्विशेष उच्यत इति न पौनरुक्त्यम् । सखाककुदानि प्रतीतानि तत्सकाशा वर्णतस्तत्सदृशी अत एव ( पण्डुरत्ति ) पाण्डुरा श्वेता निर्मला निष्कलङ्का शुभा अत्यन्तकल्याणवहा सुखावहा सुखहेतुत्वेन इति सार्द्धसूत्रत्रयार्थः । उत्त० ३६ अ० । ईषत्प्राग्भाराया अष्टौ नामधेयानि यथा ।

इसिप्पब्भाराएणं पुढवीए अट्ठनामधेज्जा पण्णत्ता तं जहा ईसीइ वा ईसिप्पब्भाराइ वा तणुइ वा तणुतणुइ वा सिद्धिइ वा सिद्धालएइ वा मुत्तीइ वा मुत्तालएइ वा स्था० ८ ठा० ।

प्रज्ञापनायां द्वादश नामधेयानि यथा—

ईसीपब्भाराएणं पुढवीए दुवालस नामधेज्जा पण्णत्ता तंजहा-ईसीति वा, ईसीपब्भाराइ वा, तणुत्ति वा, तणुतणुयरीति वा, सिद्धित्ति वा, सिद्धालएत्ति वा, मुत्तिइ वा, मुत्तालएइ वा, लोयग्गेति वा लोयग्गथुभियाति वा, लोयपडिबुज्झणाइ वा सव्वपाणभूयजीवसत्तसुहावहाइ वा । प्रज्ञा० २ पद ।

ईसीइवत्ति-पदैकदेशे पदसमुदायोपचारात् ( तणुत्तिवा ) तन्वी वा शेषपृथिव्यपेक्षयाऽतितनुत्वात् । तनुभ्योऽपि जगत्प्रसिद्धेभ्यस्तन्वी मक्षिकापत्रतोऽपि पर्यन्तप्रदेशेऽतितनुत्वात्तनुतन्वी । सिद्धिरिति वा-सिद्धिक्षेत्रस्य प्रत्यासन्नत्वात् । सिद्धिक्षेत्रस्य प्रत्यासन्नतयोपचारात्सिद्धा नामालय॰ सिद्धालय एव मुक्तिरिति वा मुक्त्यालय इतिवेत्यपि परिभावनीयम् । तथा लोकाग्रे वर्त्तमानत्वाल्लोकाग्रमिति लोकाग्रस्य स्तूपिकेव लोकाग्रस्तूपिका तथा लोकाग्रेण प्रत्यूह्यते इति लोकाग्रप्रतिवाहिनी ( लोयगपडिवुज्झत्ति ) लोकाग्रमिति प्रतिबुध्यते अवसीयते या लोकाग्र वा प्रतिबुध्यते यया सा तथेति ( सव्वपाणेत्ति ) प्राणा द्वित्रिचतुरिन्द्रिया इति भूतास्तरवो जीवा पञ्चेन्द्रियाः शेषा॰ प्राणिन॰ सत्त्वा उक्तञ्च-"प्राणा द्वित्रिचतु प्रोक्ता भूताश्च तरव स्मृता । जीवा पञ्चेन्द्रिया ज्ञेया शेषा सत्त्वा उदीरिताः " सर्वेषां प्राणभूतजीवसत्त्वाना सुखावहा उपद्रवकारित्वाभावात्सर्वप्राणभूतजीवसत्त्वसुखावहा॰ । प्रज्ञा० २ पद ॥ एतेपाञ्च पृथिव्यादितया तत्रोत्पन्नानां सा सुखावहा शीतादिदुःखहेतूनामभावादिति। औप० । ईषदिति वा नामरत्नप्रभाद्यपेक्षया ह्रस्वत्वात्तस्य एव प्राग्भारस्यह्रस्वत्वात्तस्या ईषत्प्राग्भारेति वा अत एव तनुरिति वा तन्वीत्यर्थ । अतितनुत्वात्तनुतनुरिति वा । सिध्यन्ति तस्यामिति सिद्धिरिति वा । सिद्धानामाश्रयत्वात्सिद्धालय इति वा । मुच्यन्ते सकलकर्मभिस्तस्यामिति मुक्तिरिति वा मुक्तानामाश्रयत्वान्मुक्तालय इति वेति । स्था० ८ ठा० । ईसीति वा ईषदल्पा पृथिव्यन्तरापेक्षया इति-शब्द उपदर्शने वा शब्दो विकल्पने। औप० ।

ईसि ( ईसिं ) ( ईषी ) पुरेवाय-ईषत्पुरोवात- त्रि० मनाक् सस्नेहवाते,-भ० ५ श० १ उ० ।

ईसि ( ईसिं ) ( ईसी ) मत्त-ईषन्मत्त- त्रि० यौवनारम्भवर्तित्वान्मनाग्मत्ते गजादौ, ज० ३ वक्ष० । औप० ।

ईसि ( ईसिं ) (इसी)रहस्स-ईषद्ध्रस्व- त्रि० ईषत्स्पृष्टे ह्रस्वे- "ईसिं रहस्स पचक्खर उच्चारणद्धाए" (ईसिंति) ईषत्स्पृष्टानि

ह्रस्वानि च यानि पञ्चाक्षराणि तेषां यदुच्चारणं तस्य योऽद्धा कालस्तस्य तयेति । औप० ।

ईसि (ईसिं) (ईसी) विच्छेयकडुआ–ईषद्विच्छेदकटुका–स्त्री० ईषद् मनाक् व्यवच्छेदे सति तत ऊर्ध्वं कटुका एलादिद्रव्यसम्पर्केत उपलक्ष्यमाणत्यक्तवीर्य्येति । मनाग्व्यवच्छेदे सति उपलक्ष्यमाणत्यक्तवीर्य्यायाम्मदिरायाम, । प्रज्ञा० १७ पद ।

ईसिं (ईसि) (ईसी) सिलिंद (ध) पुप्फप्पगास–ईषच्छिलीन्ध्र (सिलीन्ध्र) पुष्पप्रकाश–त्रि० ईषन्मनाक् शिलीन्ध्रपुष्पप्रकाशानि शिलीन्ध्रपुष्पसदृशवर्णानि- ईषच्छिलीन्ध्रपुष्पसदृशवर्णे, जी० ३ प्रति । ईषच्छ्वेते " ईसिं सिलिंधपुप्फप्पगासा- इति मनाक् सिलीन्ध्रकुसुमप्रख्यानि ईषत्सितानि इत्यर्थः । सिलीन्ध्रं भूमिस्फोटक छत्रकम्– । औप० ।

ईसित्त–ईशित्व– न० अप्रसिद्धन्तर्गते सिद्धिविशेषे, ईशित्वञ्च वशित्वञ्च तथा कामावसायिता– सूत्र० २ श्रु० १ अ० ।

ईहण–ईक्षण–न० ईक्ष भावे ल्युट् दर्शने, करणे ल्युट् २ नेत्रे, नत्र दर्शने० । वाच० ।

ईहणिय–ईक्षणिक–त्रि० ईक्षणं हस्तरेखादीक्षणेन शुभाशुभदर्शनं शिल्पमस्य ठन् शुभाशुभफलकथनेनोपजीविनि सामुद्रिके, स्त्रियां टाप् मद्गुना देवावृत्ताश्च नक्षाश्चेक्षणिकैः सह । मनु० । वाच० ।

ईहा–ईहा–स्त्री०ईह-अ-चेष्टायाम, उद्यमे, वाञ्छायाञ्च । वाच० । वितर्के–सम० । ईहचेष्टायाम् ईहनमीहा (आभिनिबोधिकज्ञान) मतिज्ञानविशेषे, विशे० । आ० चू० । आ० म० प्र० । औघ० । प्रव० । प्रज्ञा० । सा च सतामन्वयिनां व्यतिरेकिणां चार्थानां पर्य्यालोचना । विशे० । तथाच भाष्यम् । " ईहासेसासव्व" ऐहागभिधानानि त्वीहा विमर्षणमार्गणगवेषणा सञ्ज्ञालक्षणानि सर्वाण्यपि ईहान्तर्भावीनि द्रष्टव्यानीति । विशे० । प्रज्ञा० । वियालणति वा मग्गणति वा ईहणति वा एगट्ठंति । आ० चू० १ अ० । अन्वयव्यतिरेकधर्मपर्य्यालोचनरूपा ईहेति विशे० । ईहा दीर्घपर्य्यालोचनमिति । नं० । " नहवियारणेईहा" तयेत्यानन्तर्य्ये विचारण पर्यालोचनमर्थानामिति वर्तते । ईहनमीहा तां ब्रुवन इति योग । आ० म० प्र० । नं० । ईहा स्थाणुरयं पुरुषो वेत्येव सदर्थालोचनाभिमुखा मतिश्चेष्टेति ज्ञा० ३ अ० । दशा० । नं० । "थाणुमनुसाणुगया, जह ईहादेवदत्तस्स" ईहा सदर्थपर्य्यालोचनात्मिका स्थाणु मनुष्याऽनुगता किमयं स्थाणु किं वा पुरुष इत्येवरूपा यथेहा देवदत्तस्यजीवतो धर्म इति । ग० २ अ० । पर्यपर्य्यालोचनमीहेति दर्श० । " ईहएवावि " पूर्वापराविरोधेन पर्य्यालोचयति अपिशब्दः पर्य्यालोचने किंचित्स्वयमुत्प्रेक्ष्यत इति सूचनार्थः नं० । आ० म० प्र० । सदर्थाभिमुखो वितर्क इति० । ज्ञा० १ अ० । गुरुतरस्त्वन्वेषणरूपा चेष्टा ईहेत्युच्यत इति । औघ० । अवगृहीतविषयाकाङ्क्षमीहेति । सम्म० । तदर्थगतसद्भूतविशेषालोचनमीहेति । रा० । ईहा किमिदमित्यमुनान्यथेत्येव महार्यालोचनाभिमुखा मतिचेष्टा इति । औप० । "ईहाया स्वरूपयथा । ईह चेष्टायामीहनमीहा सद्भूतार्थपर्यालोचनरूपा चेष्टा इत्यर्थ विमुक्त भवति । अवग्रहादुत्तरकालमवायात्पूर्वं सद्भूतार्थविशेषोपादानाभिमुखा असद्भूतार्थविशेषपरित्यागाभिमुखा प्रायोऽत्र मधुरत्वादय शङ्खादिशब्दधर्मा दृश्यन्ते न कर्कशनिष्ठुरतादयः शार्ङ्गादि शब्दधर्मा इत्येवंरूपो मतिविशेष ईहा । आहच भाष्यकृत् "भूयाभूयविशेषा दाणच्चायाभिमुहमीहा" प्रज्ञा० १५ पद । न० । आ० म० प्र० । अवगृहीतार्थविशेषाकाङ्क्षणमीहेति अवगृहीतोऽवग्रहेण विषयीकृतो योऽर्थोऽवान्तर मनुष्यत्वादिजातिविशेषलक्षणस्तस्य विशेषः । कर्णाटलाटादिभेदस्तस्याकाङ्क्षण भवितव्यता प्रत्ययरूपतया ग्रहणाभिमुख्यमीहेत्यभिधीयते । रत्ना० १ परि० ।

तथाच–ईहां व्याचिख्यासुराह ।

इय सामण्णग्गहणा, णंतरमीहा सदत्थमीमंसा ।
किमिदं सद्दो सद्दो, को होज्जव संखसंगाणं ॥

इति शब्दउपदर्शने इत्येव प्रागुक्तेन प्रकारेण नैश्चयिकार्थावग्रहे यत्सामान्यग्रहण रूपाद्यव्यावृत्त्या व्यक्तवस्तुमात्रग्रहणमुक्त तथा व्यवहारार्थावग्रहेपि यदुत्तरविशेषापेक्षया शब्दादिसामान्यस्य ग्रहणमभिहितं तस्मादनन्तरमीहा प्रवर्तते कथंभूतेयमित्याह सतस्तत्र विद्यमानस्य गृहीतार्थस्य विशेषविमर्शद्वारेण मीमांसा विचारणा केनोल्लेखेनेत्याह । किमिदं वस्तु मया गृहीत शब्दोऽशब्दो वा रूपरसस्पर्शरूप इद च निश्चयार्थावग्रहादनन्तरभाविन्या ईहाया स्वरूपमुक्तम् । अथ व्यवहारार्थावग्रहानन्तरभाविन्याः स्वरूपमाह । ( को होज्जवेत्यादि ) वा इत्यथवा व्यवहारावग्रहेण शब्दे गृहीते इत्यमीहा प्रवर्तते शाङ्खशार्ङ्गयोर्मध्ये कोऽय भवेच्छब्दः शाङ्ख शार्ङ्गो वेति । ननु किं शब्दोऽशब्दोवेत्यादि किं संशयज्ञानमेव कथमीहा भवितुमर्हति सत्य किन्तु दिग्मात्रमेवेदमिह दर्शित परमार्थतस्तु व्यतिरेकधर्मनिराकरणपरोऽन्वयधर्मघटनप्रवृत्तश्चापायाभिमुख एव बोध ईहा दृष्टव्या । तद्यथा ' अरण्यमेतत्सविताऽस्तमागतो, न चाऽधुना सभवतीह मानव' । प्रायस्तदेतत्खगादिभाजा, भाव्य रतिप्रियतमारिसमानामेति ' एतच्च प्रागुक्तमपि मन्दमतिस्मरणार्थं पुनरप्युक्तमिति गाथार्थः । विशे० । प्रव० ।

ईहा पञ्चविधा यथा– ।

कति विहाणं भंते ! ईहा पण्णत्ता ? गोयमा ! पंचविहा पण्णत्ता तंजहा सोइंदियईहा जाव फासिंदियईहा एवं जाव वेमाणियाणं नवरं जस्स जइ इंदिया ॥

प्रज्ञा० १५ पद । ईहापि मन सहितेन्द्रियपञ्चकजन्यत्वात् पोढैव– प्रव० २१ द्वा० । तथाचाह ॥

से किं तं ईहा ईहा छव्विहा पण्णत्ता तंजहा सोइंदियईहा चक्खिंदियईहा घाणिंदियईहा जिब्भिंदियईहा फासिंदियईहा नो इंदियईहा तीसेणं इमे एगट्ठिया णाणाघोसा णाणावंजणा पंच नामधिज्जा भवंति तंजहा आभोगणया मग्गणया गवेसणया चिंता वीमंसा सेत्तं ईहा ।

अथ केयमीहा । ईहा षड्विधा प्रज्ञप्ता तद्यथा । श्रोत्रेन्द्रियेहा इत्यादि । तत्र श्रोत्रेन्द्रियेणेहा श्रोत्रेन्द्रियेहा । श्रोत्रेन्द्रियार्थावग्रहमधिकृत्य या प्रवृत्ता ईहा सा श्रोत्रेन्द्रियेहा इत्यर्थ । एव शेषा अपि भावनीया ( तीसेणमित्यादि ) सुगम नवर सामान्यत एकार्थिकानि विशेषचिन्तायां पुनर्भिन्नार्थानि तत्र ( आभोगणयत्ति ) आभोग्यतेऽनेनेति आभोगनम् अर्थावग्रहसमयमनन्तमेव सद्भूतार्थविशेषाभिमुखमालोचन तस्य भाव आभोगनता । तया मार्ग्यते अनेनेति मार्गणं सद्भूतार्थविशेषाभिमुखमेव तदूर्ध्वमन्वयव्यतिरेकधर्मान्वेषण तद्भावो

मार्गणता तथा गवेष्यतेऽनेनेति गवेषण तत ऊर्ध्वं सद्भूतार्थविशेषाभिमुखमेव व्यतिरेकधर्मपरित्यागतोन्वयधर्माध्यासालोचन तद्भावो गवेषणता । ततो मुहुर्मुहुः क्षयोपशमविशेषतः स्वधर्मानुगतसद्भूतार्थविशेषचिन्तनं चिन्ता तत ऊर्ध्वं क्षयोपशमविशेषात्स्पष्टतर सद्भूतार्थविशेषाभिमुखमेव व्यतिरेकधर्मपरित्यागतोऽन्वयधर्मापरित्यागता ऽन्वयधर्मविमर्शनं विमर्श । सेत्तमीहेति निगमनम् । न० टी० । अत्र केचिदीहां संशयमात्र मन्वन्ते–तदयुक्तम् । सशयो हि नामाज्ञानमिति ज्ञानांशरूपा चेहा ततस्सा कथमज्ञानरुपा भवितुमर्हतीति–नं० । उक्तच । ईहा संसयमेत्तं केइ मन्नंयं जओ तमन्नाण । मइनाणं सो चेहा कहमन्नाणतई जुत्त " । आ० म० । नन्वीहापि किमयं शाङ्ख किंवा शार्ङ्ग इति एवंरूपतया प्रवर्तते सशयोपि चैवमेव तत कोऽनयो प्रतिविशेष । उच्यते इह यद् ज्ञानं शाङ्खशार्ङ्गादि विशेषाननेकालम्बनेन चासद्भूतं विशेषमपासितु शक्नोति किन्तु सर्वात्मना सशयानमिव वर्तते कुण्ठीभूत तिष्ठतीत्यर्थः । सदसद्भूतविशेषापर्युदासपरिकुण्ठित संशयज्ञानमुच्यते, यत्पुन सद्भूतार्थविशेषविपये हेतूपपत्तिव्यापारपरतया सद्भूतार्थविशेषोपादानाभिमुखमसद्भूतविशेषत्यागाभिमुखं च तदीहा । आहच भाष्यकृत् "जमणेगत्थालवण-मपज्जुदासपरिकुण्ठियं चित्त । सइव्व सव्वप्पणओ, तं ससयरूवमन्नाण ॥ १ ॥ ज पुण सयत्थहेऊ, वयत्ति वावारतप्परममोह । भूयाभूयविसेसो, पादाणाभिमुहमीहा " न० । बुद्धिभेदे,–अवग्रह बुद्धि अपायधारणे मतिरिति–न० । बुद्धिगुणभेदे, पचा० ७ विव० । मतिसम्पद्भेदे, स्था० ८ ठा० । सा च तदर्थविशेषालोचनमिति–दशा० ४ अ० । अवगृहीतस्यार्थस्यासद्भूतविशेषपरित्यागेन सद्भूतविशेषादानाभिमुखो बोधविशेष ईहेति–व्य० द्वि० १० उ० ॥

**ईहामई**–**ईहामति**– स्त्री० ईहैव मति । तदर्थविशेषालोचनरूपे मतिभेदे,–"भेयमाहणमिहेहो' स्था० ५ ठा०–तस्याश्च षड्विधत्व । तथा–"छव्विहा ईहामई पण्णत्ता तंजहा खिप्पमीहई बज्जुमीहइ जाव आसिदिरूमीहइ " स्था० ६ ठा० ( टीका अवग्गहमइ शब्दे– )

**ईहामिय**–**ईहामृग**– पुं० ईहां मृगयते अण् ईहाप्रधानो मृगः । पशुभेदे वृके,–औप० । राज० । ज्ञा० । आ० म० प्र० । जी० कल्प० । ईहामृगा वृका वरगमा जीवा इति लोके । कल्प० । ईहामिय उसभ तुरग मकर विहग वालग किंनर रूरू सरभ कुंजर वणलय पउमलय भत्तिचित्त तत्र ईहामृगा वृका–भ० ११श० ११उ० । कल्प० । दिव्ये नाट्यविधिविशेषे,–तथाच राजप्रश्नीये सूर्याभस्याज्ञया श्रमणस्य भगवतो महावीरस्यान्तिके समागतैर्देवकुमारैर्देवकुमारीभिश्च दर्शित द्वात्रिंशद्भेद नाट्यविधिमुपक्रम्योक्तम्–तत्तेण ते बहवे देवकुमारा य देवकुमारीय ता य समणस्स भगवओ महावीरस्स ईहामिय उसभ तुरगणरमगर विहग वालग किन्नर रुरु सरभ चर कुंजर वणलय पउमलय भत्तिचित्त णाम दिव्व णट्टविहं उवदंसेइ– ईहया समिया ईहासाध्यो मृगः । कृत्रिममृगे, अलकारशास्त्रलक्षित नाटकभेदे, राज० ।

**ईहिय**–**ईक्षित**– त्रि० ज्ञाते "जस्सिमाओ सव्वओ सुप्परिलेहिआओ भवन्ति सुष्ठु शङ्कादिव्युदासेन प्रत्युपेक्षिता प्रति उप सामीप्येन ईक्षिता ज्ञाता भवन्तीति । आचा० ।

**ईहित**– त्रि० ईह क्त चेष्टिते, निष्पादिते, । "सद्धीमा गंतुमीहिय" अरूावतान्येन भक्तिमताऽपरानागन्तुकानुद्दिश्येहितं चेष्टित निष्पादितमिति–सूत्र० १ श्रु० १ अ० ३ उ० । "नजई नाणीहियं,, नचानीहितमविचारित ज्ञायतेऽपायविपयं तायातीति । विशे० ॥

---



इति श्री–बृहत्सौधर्मतपागच्छीय–कलिकालसर्वज्ञ
श्रीमद्भट्टारक–जैनश्वेताम्बराचार्य श्री १००८
श्री विजयराजेन्द्रसूरि–विरचिते अभिधानराजेन्द्रे इकारेकारादि शब्द
सङ्कलनं समाप्तम् ।



———:※※:———

# अभिधानराजेन्द्रः ।

## ( उकार )

उ—उ—अव्य० उ-क्विप् न तुक् सम्बोधने, कोपवचने, अनुकम्पायाम्, नियोगे, अङ्गीकारे, प्रश्ने च । हेमचन्द्रः । अवधारणे, आ० म० द्वि० । चकारार्थे, न० । अन्तिके, विशे० भृशार्थे, (भृश शब्दस्यार्थे ) आ० म० द्वि० । ( उपयोगकरणे, ) "उत्ति उवओगकरणे उ इत्येतदक्षरमुपयोगकरणे, "उ त्ति य उस्सक्कणाकम्मे" उ इति अप्वष्कणाकर्मणि वर्तते। आ०म०द्वि०। अतति सातत्येन तिष्ठति अत- कु- शिवे, वाच० । ब्रह्मणि, गा० तोये, तोयधौ, धरणिधरे, अवसाने, वितर्के, वञ्चनायाम्, व्यसने, अव्य० हरमौलौ, शुचौ, हर्गे, तपसि, द्रुमाङ्गे, चन्द्राभायां, गिरौ, भूमौ विलोकने, एका० । उपाध्याये, तस्याऽऽद्याक्षरेण ग्रहणात् । गा० । उशब्दात् स्वरूपार्थे कार' उकार' पञ्चमस्वरे, स च उदात्तानुदात्तस्वरितभेदात् प्रथम त्रिधा । पुन अनुनासिकाननुनासिकभेदेन प्रत्येक द्विधेति पर् विध । कारतकारानुत्तरस्तु ह्रस्वदीर्घप्लुतभेदेन प्रत्येक त्रिविधोऽपिप्रत्येकं प्रागुक्तभेदषट्कात् अष्टादशविध । चन्द्रमालूले च । तत्र मकारान्तस्यैव तन्नामेतेति ग्रहव । उ इत्येतदक्षरस्य निपातत्वात् प्रगृह्यसंज्ञति । अचूपरत्वे न सन्धि उ उमेश० । सच चादिगणीय । वाच० ।

उअत्तत—उद्वर्तमान—त्रि० उद्वृत्य वर्तमाने, । उअत्तंतम्मि वहो पाणाण तेण पुव्व उसित्त । उअत्तंतम्मि इति प्राकृतत्वात्पुंस्त्वनिर्देश । वृ० १ उ० ।

उअविय-उद्गपित०त्रि० । चीच्छ्रे, "इहरा भेणिसिज्झत्त उअविअं चेव गुरुमाई" वृ० १ उ० ।

उइ ( दि ) ओइ (दि) अ—उदितोदित-त्रि० उदितश्चासावुन्नतकुलत्वसमृद्धिनिरवद्यकर्मनिरत्युदयवान् । उदितश्च परमसुखसन्दोहोदयेनेत्युदितोदित । सर्वथोदयवति पुरुषे, यथा भरत । उदितोदितत्व चास्य सुप्रसिद्धम् । स्था० ४ ठा० । पुरिमताला‌ऽधिपतौ राजभेदे, उदितोदितस्य राज्ञ श्रीकान्तपतेः पुरिमतावपुरे राज्यमनुशासत श्रीकान्तपतेर्निमित्त वाणारसी वास्तव्येन धर्मरुचिना राज्ञा सर्वर्द्धेन समागतम् । न० । आ० चू० ।

उइ ( दि ) ण्ण—उदीर्ण— त्रि० उदयप्राप्ते, सूत्र० १ श्रु० ५ अ० १ उ० । प्रश्न० । उत्त० । प्रज्ञा० । उदित स्था० ५ ठा० । उत्त० । ज० । विपाकोदयमागते, । प्रज्ञा० २० पद । आचा० । उदीरणाकरणेनोदिते, भ० १ श० ३ उ० । उत्कटे, स्था० ५ ठा० ।

उर्दीच्य— त्रि० उत्तरे, उत्तरदिग्भवे, आ० म० द्वि० ।

उइ ( दि ) ण्णकम्म—उदीर्णकर्मन्— त्रि० उदीर्णमुदयप्राप्त कटुविपाकं कर्म येषां ते तथा । मिथ्यात्वहास्यरत्यादीनामुदये वर्तमानेषु,—" उदीण्णकम्माण उदिण्णकम्मा पुणो पुणो ते सरह दुहेति' सूत्र० १ श्रु० ५ अ० १ उ० ।

उइ [ दि ] ण्णबलवाहण—उदीर्णबलवाहन— पु० स्त्री० उदीर्णमुदयप्राप्तं बलं येषां तानि उदीर्णबलानि । उदीर्णबलानि वाहनानि यस्य स उदीर्णबलवाहनः । उदयप्राप्तबलयुग्वाहने, बल चतुरङ्ग गजाश्वरथसुभटरूप वाहन शिबिकावेसरप्रमुखम्, बलं च वाहनं च बलवाहने, उदीर्णे उदयप्राप्ते बलवाहने यस्य स उदीर्णबलवाहनः । उत्त० १८ अ० । उदीर्णमुदयप्राप्त बलं चतुरङ्ग वाहन च गिल्लिथिल्ल्यादिरूप यस्य सोयमुदीर्णबलवाहन० । बल शारीर सामर्थ्यं वाहन गजाश्वादि, पदान्युपलक्षण चैतत् । उदयप्राप्तबलवाहनविशिष्टे, " कपिल्ले णयरे राया उदिण्णबलवाहणे णामेण संजओ णाममिगवव्वणिगए " उत्त० १ अ० ।

उइ [ दि ] ण्णमोह—उदीर्णमोह— त्रि० ६ ब० । उत्कट (वेद) मोहनीये " अणुत्तरोववाइयाण भते ! देवा किं उदिण्णमोहा उवसतमोहा खीणमोहा " भ० ५ श० ४ उ० ।

उइ [ दि ] ण्णवेय—उदीर्णवेद— त्रि० उदीर्णो विपाकाण्शो वेदो यस्य स तथा ॥ वेदानां विपाकमप्राप्ते, उदीर्णवेदो हि पुमान् स्त्रियं कामयते, साऽपीतरं, नपुंसकस्तूभयमिति ॥ आचा १ श्रु० १ अ० । ७ ।

उइ [ दि ] य—उदित— त्रि० वद्-क्त० संप्र० गदिते, निष्पन्नस्यैव खलु जिनबिम्बस्योदिता प्रतिष्ठा—। षो० । उद्गते, ठा० १ अ० "उमायति वा उइउत्ति वा एगट्ठमिति । नि० चू० १०उ० ।

उइ ( दि ) यत्थमिय—उदितास्तमित—त्रि० उदितश्चासौ तथैव अस्तमितश्च भास्कर इव सर्वसमृद्धिप्राप्तत्वाद्दुर्गतिगतत्वाच्चेति उदितास्तमित. । पूर्वमुदिते पश्चादस्तमिते, यथा ब्रह्मदत्तचक्रवर्ती । स हि पूर्वमुदित उन्नतकुलोत्पन्नत्वादिना स्वभुजोपार्जितसाम्राज्यत्वेन च पश्चादस्तमित. । अतथाविधकारणकुपितब्राह्मणप्रयुक्तपशुपालधनुर्गोलिकाप्रक्षेपणोपायप्रस्फोटिताक्षिगोलकतया मरणानन्तराप्रतिष्ठानमहानरकवेदनाप्राप्ततया चेति, स्था० ४ ठा० ।

उई ( दी ) ण—उदीचीन—त्रि० उत्तरे,—स्था० ५ ठा० ।

उई ( दी ) णा—उदीचीना—स्त्री० उत्तरस्यां दिशि, "दो दिसाउ कप्पइ पाईण चेव उदीणं चेव " स्था० २ ठा० । उई ( दी ) णदाहिण वित्थिण्णे अद्धचंदसठाणसंठिए उदग्दक्षिणविस्तीर्णोऽर्द्धचन्द्रसंस्थानसंस्थित । राज० ।

उई ( दी ) णपाईण—उदीचीनप्राचीन—स्त्री० उदगेव उदीचीनं प्रागेव च प्राचीनमुदीचीन च तदुदीच्या आसन्नत्वात् प्राचीन च तत्प्राच्या प्रत्यासन्नत्वादुदीचीनप्राचीनं दिगन्तरम् । क्षेत्रदिगपेक्षया पूर्वोत्तरदिशि, (जम्बूद्वीवे ण दीवे सूरिया उदीणपाईणमुग्गच्छ ) भ० ५ श० १ उ० ।

उई(दी)णवाय—उदीचीनवात—पु०उदीचीन उत्तर वात उदीचीनवात । उदीच्या दिश समागच्छति वादरवायुकादिकभेदे, प्रज्ञा० १ पद० । स्था० ।

उई ( दी ) त्ता—उदीरयित्वा—अव्य० उत्प्राबल्येन ईरयित्वा कथयित्वेत्यर्थे, "अणुत्तर धम्ममुईरइत्ता" । सूत्र०१ श्रु० ६अ.

उई ( दी ) रण—उदीरण—न० उद्-ईर-ल्युट् उच्चारणे-वाच०

अनुदयप्राप्तस्य ( दलिकस्य ) करणेनाकृष्योदये प्रक्षेपणे, स्था० ४ ठा० ।

उई ( दी ) रणा–उदीरणा–स्त्री० अनुदयप्राप्त कर्म दलिकमुदीर्यत उदयावलिकायां प्रवेश्यते यया सा उदीरणा । उदयावलिकातो बहिर्वर्तिनीनां स्थितीनां दलिकं कषायैः सहितेन वा योगसंज्ञितेन वीर्यविशेषेण समाकृष्योदये प्रवेशनरूपे करणभेदे, प० सं० । तेषामेव कर्मपुद्गलानामकालप्राप्तानां जीवसामर्थ्यविशेषादुदयावलिकायां प्रवेशनमुदीरणा तेषामेव कर्मपुद्गलानां बन्धसंक्रमाभ्यां लब्धात्मलाभानां निर्जरणसंक्रमणकृतस्वस्वरूपप्रच्युत्यभावे सद्भावः सत्ता । कर्म० । आन्तरशक्तिविशेषे, । द्वा० । "जीवाणं दोहिं ठाणेहिं पावकम्मं उदीरेइ तंजहा। अब्भोवगमियाए चेव वेयणाए उवक्कमियाए चेव वेदणाए एवं वेदेंति एवं णिज्जरेंति अब्भो० वे० उव० वेय० " ( व्याख्या स्व स्व शब्दे ) स्था० २ ठा० । सूत्र० । अस्या निःशेषा वक्तव्यता यथा तत्र चैते अर्थाधिकारास्तद्यथा लक्षणं, भेदः, साद्यनादिप्ररूपणा, स्वामित्वम्, उदीरणा, प्रकृतिस्थानानि, तत्स्वामित्वं चेति ॥

तत्र पुरतो लक्षणभेदयोः प्ररूपणार्थमाह ॥

जं करणे णोकड्डिय, उदए दिज्जइ उदीरणा एसा ॥
पगइट्टिइ अणुभाग–प्पएसमूलुत्तरविभागा ॥ २२५ ॥

अत्र पूर्वार्द्धेन लक्षणं तदनन्तरं प्ररूपणार्थमाह । यत्र यत्परमाण्वात्मकं दलिकं करणेन योगसंज्ञिकेन वीर्यविशेषेण कषायसहितेन असहितेन वा उदयावलिका बहिर्वर्तिनीभ्यः स्थितिभ्योऽपाकृष्य उदये दीयते उदयावलिकायां प्रक्षिप्यते एषा उदीरणा च वक्तव्या "उदयावलिया बाहिरल्लाट्ठिईहिंतो कसायसहिएणं वा जोगसन्नेणं करणेणं दलियमाकड्डिय उदयावलियाए पवेसयाणं" उदीरणत्ति सा च किंभूतेत्यत आह । प्रकृतिस्थित्यनुभागप्रदेशमूलोत्तरविभागा। प्रकृतिस्थित्यनुभागप्रदेशैर्मूलप्रकृतिभिरुत्तरप्रकृतिभिश्च कृत्वा विभागो भेदो यस्याः सा तथा । इदमुक्तं भवति । सा उदीरणा चतुर्विधा तद्यथा प्रकृत्युदीरणा स्थित्युदीरणा अनुभागोदीरणा प्रदेशोदीरणा च। एकैकापि द्विधा मूलप्रकृतिविषया उत्तरप्रकृतिविषया च । तत्र मूलप्रकृतिविषया अष्टधा उत्तरप्रकृतिविषया चाष्टपञ्चाशदधिकशतभेदा तदेवमुक्तौ लक्षणभेदौ । सम्प्रति साद्यनादिप्ररूपणा कर्तव्या । सा च द्विधा मूलप्रकृतिविषया उत्तरप्रकृतिविषया च ॥

तत्र प्रथमतो मूलप्रकृतिविषयामाह ॥

मूलप्पगईसु पंचण्हं, तिहा दोण्हं चउव्विहा होइ ॥
आउस्स साइ अधुवा, दसुत्तरसयउत्तरासिं पि ॥ २२६ ॥

मूलप्रकृतिषु मध्ये पञ्चानां मूलप्रकृतीनां ज्ञानावरणदर्शनावरणान्तरायाणां यावन्मोहगुणस्थानं यस्य समयावलिकाशेषो न भवति तावत्सर्वजीवानामुदीरणाऽवश्यं भाविनी नामगोत्रयोस्तु यावत्सयोगिचरमसमयस्तावत् । तत एषामनादिरुदीरणा ध्रुवा अभव्यानां अध्रुवा, भव्यानां तु द्वयोर्वेदनीयमोहनीययोरुदीरणा चतुर्विधा तद्यथा सादिरनादिर्ध्रुवा ऽध्रुवा च । तत्र वेदनीयस्य प्रमत्तगुणस्थानकं यावत् उदीरणा न परत । मोहनीयस्य सूक्ष्मसंपरायगुणस्थानकं यावत् न परत । ततोऽप्रमत्तादिगुणस्थानकेभ्यः प्रतिपतितो वेदनीयस्य उपशान्तमोहगुणस्थानकेभ्यः प्रतिपतितमोहनीयस्योदीरणा सादिः तत्स्थानमप्राप्तस्य पुनरनादिः । ध्रुवाध्रुवे पूर्ववत् । आयुषः पुनरुदीरणा सादिरध्रुवा च । तथा ह्यायुषः पर्यन्तावलिकायां नियमादुदीरणा न भवन्ति । ततो ऽध्रुवा पुनरपि परभवोत्पत्तिप्रथमसमये प्रवर्तते ततः सादिरिति तदेवं मूलप्रकृतिषु साद्यनादिप्ररूपणा । सम्प्रत्युत्तरप्रकृतिषु तां चिकीर्षुराह ( दसुत्तरेत्यादि ) सादिरध्रुवा चेत्यनुवर्त्यते । उत्तरासामपि उत्तरप्रकृतीनामपि । दशोत्तरशतसंख्यानां पञ्चविधज्ञानावरणदर्शनावरणचतुष्टयमिथ्यात्वतैजससप्तकवर्णादिविंशतिस्थिरास्थिरशुभाशुभगुरुलघुनिर्माणान्तराय । पञ्चकरूपाष्टाचत्वारिंशद्वर्जानां सर्वशेषप्रकृतीनामित्यर्थः । उदीरणा द्विधा तद्यथा । सादिरध्रुवा चासाच साद्यध्रुवता अध्रुवोदयत्वादेव सिद्धा ।

मिच्छत्तस्स चउद्धा, तिहा य आवरणविग्घचउदसगे ।
थिरसुभ सेयर उवग्घा, यवज्जधुवबंधिनामे य ॥ २२७ ॥

मिथ्यात्वस्योदीरणा चतुर्धा । तद्यथा सादिरनादिः ध्रुवा अध्रुवा च तत्र सम्यक्त्वं गतस्य पुनरनादिर्भवति । ततो ऽसौ सादिः तत्स्थानमप्राप्तस्य त्वनादिः । अभव्यानां ध्रुवा, भव्यानामध्रुवा । तथा ज्ञानावरणपञ्चकदर्शनावरणचतुष्टयान्तरायपञ्चकरूपाणां चतुर्दशप्रकृतीनामुदीरणा त्रिप्रकारा । तद्यथा अनादिर्ध्रुवा अध्रुवा च । तथा ह्येतासां प्रकृतीनां ध्रुवोदयत्वेनानादिरुदीरणा । अभव्यानां ध्रुवा । भव्यानां तु क्षीणमोहगुणस्थानके आवलिकाशेषे व्यवच्छेदे भवा ध्रुवा । तथा स्थिरशुभे सेतरे । अस्थिराशुभसहितयोस्तयोरुपघातं वर्जयित्वा शेषाणामध्रुवबन्धिनीनां च तैजससप्तकागुरुलघुवर्णादिविंशतिनिर्माणलक्षणानां सर्वसंख्यया त्रयस्त्रिंशत्संख्यानामुदीरणा त्रिधा । तद्यथा अनादिर्ध्रुवा अध्रुवा च । तत्रानादित्वं ध्रुवोदयत्वात् ध्रुवा अभव्यानाम् । अध्रुवा भव्यानां सयोगिकेवलिचरमसमये व्यवच्छेदाभावात् । शेषाणां चाध्रुवोदयानां दशोत्तरशतसंख्यानामध्रुवोदयत्वात् उदीरणा सादिरध्रुवा च प्रागेवोक्ता । तदेवं कृता साद्यनादिप्ररूपणा ।

सम्प्रति मूलप्रकृत्युदीरणास्वामिनमाह ।

घाईणं छउमत्था, उदीरगा रागिणो य मोहस्स ।
तइया उ ण प्पमत्ता, जोगंता उ त्ति दोण्हं च ॥ २२८ ॥

घातिप्रकृतीनां ज्ञानावरणीयान्तरायदर्शनावरणीयान्तरायरूपाणां सर्वेऽपि छद्मस्थाः क्षीणमोहपर्यवसाना उदीरका मोहनीयस्य तु रागिणः सरागास्सूक्ष्मसंपरायपर्यवसाना उदीरका तृतीयवेदनीयस्य आयुषश्च प्रमत्ता प्रमत्तगुणस्थानकपर्यन्ता सर्वेऽप्युदीरका । केवलमायुषः पर्यन्तावलिकायां नोदीरका भवन्ति । तथा द्वयोरप्यनामगोत्रयोर्योग्यन्ता सयोगिकेवलिपर्यवसाना सर्वेऽप्युदीरका । इतिशब्दो भिन्नक्रमो गाथापर्यन्ते योजनीयः । स च मूलप्रकृत्युदीरणापरिसमाप्तिद्योतको वेदितव्यस्तदेवं मूलप्रकृत्युदीरणास्वाम्युक्तं ।

साम्प्रतमुत्तरप्रकृत्युदीरणास्वामिनमाह ।

विग्घावरणधुवाणं, छउमत्थो जोगिणो उ धुवा ।
उवघायस्स तणुत्था, तणुकिट्टीणं तणुयरागा ॥ २२९ ॥

विघ्न इति अन्तरायं ततोऽन्तरायपञ्चकज्ञानावरणपञ्चकदर्शनावरणचतुष्टयरूपाणां चतुर्दशानां ध्रुवोदयप्रकृतीनां सार्थच्छद्मस्था उदीरका । तथा (धुवाणत्ति) नाम ध्रुवोदयानां

त्रयस्त्रिंशत्संख्यानां तैजससप्तकवर्णादिविंशतिस्थिरास्थिर-शुभाशुभगुरुलघुनिर्माणरूपाणां योगिनः सयोगिकेवलिपर्यन्ता उदीरकाः। उपघातिनाम्नस्तु तनुस्थाः शरीरस्थाः शरीरपर्याप्त्यपर्याप्त्युदीरकाः तनुकिट्टीकृतां सूक्ष्मकिट्टीकृताम् अर्थात् लोभसत्कानां ननुकरागाः सूक्ष्मसपराया यावच्चरमसमयावलिका न भवति तावदुदीरकाः।

तसवायरपज्जत्ते, सेयरगइजाइ दिट्ठिवेयाणं ।
आऊणं तन्नामा, पत्तेयसरीरस्स उ तणुत्था ॥२३०॥

त्रसबादरपर्याप्तानां सेतराणां सम्प्रति ज्ञापना स्थावरसूक्ष्मपर्याप्तसहितानामित्यर्थः । तथा चतसृणां गतीनां, पञ्चानां च जातीनां, तिसृणां दृष्टीनां दर्शनानां मिथ्यादर्शनादीनां, त्रयाणां वेदानां नपुंसकवेदादीनां, चतुर्णां चायुषां सर्वसंख्यया पञ्चविंशतिप्रकृतीनां यथास्वं तन्नामास्तन्नामप्रकृतिनामान उदीरणास्तद्यथा त्रसनाम्नस्त्रसास्ते च शरीरे अपान्तराले गतौ च वर्तमाना उदीरकाः । एवं सर्वेषामपि भावनीयम् तथा प्रत्येकनामानः शरीरस्य तनुस्था देहस्थाः तुरेवार्थे देहस्था एव भवन्तीति गाथार्थः ॥ २३० ॥

आहारयओ णिच्चा, सरीर छुगवेयप्पमोत्तूणं ।
ओरालाए एवं, तदुवंगाए तसजियाओ व्व ॥२३१॥

ये नरा मनुष्यास्तिर्यञ्च आहारका ओजोलोमप्रक्षेपाहारकाणामन्यतममाहारं गृह्णन्ति तत औदारिक उपलक्षणमेतत् औदारिकबन्धनचतुष्टयस्यौदारिकसंघातस्य । औदारिकाः किं सर्वेपि नित्या शरीरषट्कवेदकान् प्रमुच्य शरीराद्धिकं आहारकवैक्रियलक्षणानां तत्स्यानात्परित्यज्यन्ते हीनौदारिकसङ्घातस्य औदारिकाः किं सर्वेपि नेत्याह । शरीरषट्कवेदकान् प्रमुच्य शरीरद्विकमाहारकवैक्रियलक्षण तत्स्थावरा एवमुक्तेन प्रकारेण ( तदुवगापत्ति ) तदङ्गोपाङ्गनाम्नः औदारिकाङ्गोपाङ्गनाम्न उदीरका वेदितव्या । केवलं ते त्रसकायिका एव न स्थावरास्तेषां तदुदयाभावात् ।

वेउव्विगाय सुरने-रइया आहारगा नरो तिरिओ ।
सन्नी वायरपवणो, लद्धिपज्जत्तगो होज्जा ॥२३२॥

वैक्रियशरीरनाम्नः उपलक्षणमेतत् वैक्रियसंघातस्य सुरा नैरयिका वा गृह्णन्तो यश्च नरस्तिर्यङ् वा सञ्ज्ञी वैक्रियलब्धिवान् यश्च बादरपवनो दुर्भगनामोदयी लब्धिपर्याप्तको वैक्रियशरीरलक्षणलब्ध्या पर्याप्तस्ते सर्वेप्युदीरकाः ।

वेउव्वियंग उवंगतणु-तुल्ला पवणवायरं हिच्चा ।
आहारगा य विरओ, विउव्वंतो पमत्तेय ॥२३३॥

वैक्रियाङ्गोपाङ्गनाम्न उदीरकास्तनुतुल्या वैक्रियशरीरनाम्न उदीरकाः प्रागुपदिष्टास्त एव वैक्रियाङ्गोपाङ्गनाम्नोऽपि वेदितव्या इत्यर्थः । किं सर्वेऽपि नेत्याह । बादरपवन बादरवायुकायिकं हित्वा परित्यज्य शेषा द्रष्टव्याः । आहारकशरीरनाम्नोपि विरतसंयतस्तत् आहारकशरीरं कुर्वन् प्रमत्त प्रमादमुपगतस्सन् उदीरको भवति ।

छण्हं ताणं संघय-णाणं सगला तिरिय नरा ।
देहत्था पज्जत्ता, उत्तमसंघयणाणो सेढी ॥ २३४ ॥

सकला पञ्चेन्द्रियास्तिर्यञ्चो मनुष्याश्च देहस्थाः शरीरनामोदये वर्तमाना लब्ध्या पर्याप्ता एषां संहनननामुदीरका भवन्ति । उदयप्राप्तानामेवोदीरणा प्रवर्तते नान्येषां ततो यत्स्थान यत्संस्थान संहनन वा उदयप्राप्त वा भवति तत्तदा उदीयते । नान्यदा चेति द्रष्टव्यम् । तथा उत्तमसंहननो वज्रर्षभनाराचसंहननः श्रेणीः क्षपकश्रेणीर्भवति न शेषसंहननः । तेन क्षपकश्रेणिं प्रतिपन्ना वज्रर्षभनाराचसंहननमेवोदीरयन्ति न शेषसंहननानि उदयाभावादित्यवसेयम् ।

चतुरंसस्स तणुत्था, उत्तरतणु सगलभोगभूमिगया ।
देवा इयरे हुंडा, तस तिरिय नरा य सेवट्टा ॥२३५॥

चतुरस्रस्य समचतुरस्रसंस्थानस्य तनुस्थाः शरीरस्थाः उत्तरतनव आहारकोत्तरवैक्रियशरीरिणो मनुष्यास्तिर्यञ्चः सकलाः सकलेन्द्रिया पञ्चेन्द्रिया इत्यर्थः । तथा भोगभूमिगता देवाश्च उदीरका भवन्ति (इयरेहुंडत्ति) इतरे उक्तशेषाः एकेन्द्रियविकलेन्द्रियनैरयिका अपर्याप्तकाश्च पञ्चेन्द्रियतिर्यङ्मनुष्या एते सर्वेऽपि शरीरस्थाः हुण्डसंस्थानस्योदीरका भवन्ति (तस तिरियनरा यसेवट्टित्ति) अत्र इतरे इत्यनुवर्तते उक्तशेषास्त्रसा द्वीन्द्रियादयः । पञ्चेन्द्रियतिर्यङ्मनुष्याश्च सेवार्ताः सेवार्तसंहननोपेताः सेवार्तसंहननस्योदीरकाः

संघयणाणि न उत्तरे, तणुसु तन्नामगा भवंतरगे ।
आणुपुव्वीणं परघा-इस्स उ देहीण पज्जत्ता ॥२३६॥

उत्तरतनुषु वैक्रियाहारकशरीरेषु संहनना न भवन्तीति षण्णां संहनननामैकतरमपि संहननं न भवति तेन एकस्यापि संहननस्योदीरका न भवन्ति । तथा आनुपूर्वीणां नारकानुपूर्व्यादीनां चतसृणां तन्नामिका तत्तदानुपूर्व्योपि नारकादिनामानो भवापान्तरालगतौ वर्त्तमाना उदीरका वेदितव्याः । तद्यथा-नारकानुपूर्व्या नारको भवापान्तरालगतौ वर्तमान उदीरकः स्तिर्यगानुपूर्व्यास्तिर्यङ् इत्यादि । तथा पराघातनाम्न शरीरपर्याप्तापर्याप्ताः सर्वेप्युदीरकाः ।

वायर पुढवी आयव, णामवज्जियत्तु सुहुमतसा ।
उज्जोयणमतिरिए, उत्तरदेहे य देवजई ॥२३७॥

आतपनामा बादरपृथ्वीकायिक उदीरकः चशब्दस्यानुक्तार्थसमुच्चायकत्वात् बादरपृथ्वीकायिको पर्याप्तो द्रष्टव्यः । तथा सूक्ष्मान् सूक्ष्मैकेन्द्रियान् सूक्ष्मत्रसांश्च तेजोवायुकायिकान् वर्जयित्वा शेषास्तिर्यञ्चः पृथिव्यम्बुवनस्पतयो विकलेन्द्रियाः पञ्चेन्द्रियाः लब्धिपर्याप्ता उद्योतनामानो यथासम्भवमुदीरकाः भवन्ति । तथा उत्तरदेहे उत्तरशरीरे यथासम्भव वैक्रिये आहारके च वर्तमानो देवोयतिश्च उद्योतनामा उदीरको भवति । २३७ ।

सगलो पसत्थगई, उत्तरतणुदेवभोगभूमिगया ।
इट्ठसराय तसो वि य, इतरासिं सनेरइया ॥२३८॥

सकलः पञ्चेन्द्रियतिर्यङ्मनुष्यो वा शरीरपर्याप्तापर्याप्त प्रशस्तविहायोगति उदये वर्तमानस्तथा उत्तरस्यां तनौ वैक्रियशरीररूपायां वर्तमानाः सर्वे तिर्यञ्चो मनुष्याश्च तथा सर्वे देव भोगभूमिकागता द्रष्टव्या । इष्टगते प्रशस्तविहायोगतेरुदीरकः । तथा इष्टस्वराः सुस्वरनामानस्त्रसा द्वीन्द्रियादयोऽपि शब्दात्सामुकाश्च पञ्चेन्द्रियतिर्यगादयो भाषापर्याप्त्यापर्याप्ता यथासंभवमुदीरकाः । तथा इतरस्यामप्रशस्तविहायोगतिदुःस्वरनामानस्त्रसा विकलेन्द्रिया सनैरयिका नैरयिकसहितास्तथा पञ्चेन्द्रियतिर्यग्मनुष्या केचन यथासम्भवमुदीरका वेदितव्याः ।

उस्सासस्स सराण य, पज्जत्ता आणपाणभासासु ।
सव्वागूणुस्सासो, भासा वि य जाणुरुज्जाति ॥२३९॥

उच्छ्वासस्वरशब्दयोः पतत्प्राणभाषाशब्दाभ्यां सह यथासङ्ख्येन योजना । सा चैवं उच्छ्वासनाम्नः प्राणापानपर्याप्तापर्याप्ताः सर्वेऽप्युदीरकाः ( सराणपत्ति ) द्वित्वेऽपि बहुवचनं प्राकृतत्वात् । तत स्वरयोः सुस्वरदुःस्वरयो प्रागुक्ता उदीरका सर्वेऽपि भाषापर्याप्तापर्याप्ता द्रष्टव्याः । यद्यपि स्वरयो प्रागेवोदीरका उक्तास्तथापि ते भाषापर्याप्तापर्याप्ता एवोदीरका वेदितव्या इति विशेषोपदर्शनार्थं पुनरुपादानम् । तथा सर्वेऽपि कवलिनामुच्छ्वासभाषे यावन्नाद्यापि निरोधमुपगच्छतस्तावदुदीरितेऽत्र निरोधानन्तरमुदयाभावाच्चोदीरणा भवति ।

देवोसुभगाएय, णामगब्भवकंति उदयकित्तीए ।
पज्जत्तो वज्जियास, सुहुमे नेरइया सुहुमतेसु तसे ॥२४०॥

देवा इत्यादौ जातावेकवचनं केचिद्देवा केचित्तिर्यङ्मनुष्या गर्भव्युत्क्रान्ता सुभगादेयनामानि उदीरकोपेतास्तदुदये वर्तन्ते । तथा सूक्ष्मैकेन्द्रियसहितान् नैरयिकान् सूक्ष्मत्रसांश्च वर्जयित्वा शेषाः पर्याप्तकनामोदये वर्तमाना यशःकीर्त्तेरुदीरकाः ॥

गोउत्तमस्स देवा, नरा य वयणो चउएहमियराइ ।
तव्वइरित्ता त्तिरय–गरस्स सव्वसायापज्जत्ते ॥२४१॥

सर्वे देवा मनुष्या अपि केचिदुच्चैः कुलसमुत्पन्नास्तथा प्रकृतिनो नीचैर्गोत्रिणोऽपि पञ्चमहाव्रतसमलङ्कृतगात्रयष्टय उच्चैर्गोत्रस्योदीरकास्तथा इतरासां चतसृणां प्रकृतीनां दुर्भगानादेयायशःकीर्त्तिनीचैर्गोत्राणां तद्व्यतिरिक्तानामुक्तव्यतिरिक्ता नां वेदितव्यास्तत्र दुर्भगानादेययोरेकेन्द्रियविकलेन्द्रियसमूर्च्छिमतिर्यङ्मनुष्यनैरयिका । अयशःकीर्तेः सर्वे सूक्ष्माः सर्वे च नैरयिकाः सर्वे सूक्ष्माश्च सर्वेऽप्यपर्याप्तकनामोदये वर्तमाना । नीचैर्गोत्रस्य पुनः सर्वे नैरयिकाः सर्वे तिर्यञ्चो मनुष्या अपि विशिष्टकुलोत्पन्नान् व्रतिनश्च मुक्त्वा शेषाः सर्वेऽप्युदीरका द्रष्टव्याः । तथा तीर्थकरनाम्नः सर्वज्ञतायां सत्यां भवेदुदीरणा नान्यदा उदयाभावात् ।

इंदिअपज्जत्तीए, दुसमयपज्जत्तगा य पाउग्गा ।
निद्दा पयलाणंखी–णराग खवगेय परिवज्जिय ॥२४२॥

इन्द्रियपर्याप्तापर्याप्तास्ततो द्वितीयसमयादारभ्य इन्द्रियपर्याप्त्यनन्तरसमयादारभ्य इत्यर्थः । निद्राप्रचलाप्रायोग्या भवन्ति । किं सर्वे नेत्याह । क्षीणरागान् क्षपकांश्च परित्यज्य उदीरणा हि उदये सति नान्यथा न च क्षीणक्षपकयोर्निद्राप्रचलयोरुदय सम्भवति " निद्दादुगस्स उदओ खीणखवगे परिच्चज्जति " प्रामाण्यात् ततस्तान् वर्जयित्वा शेषा निद्राप्रचलयोरुदीरका वेदितव्या ॥

निद्दानिद्दाईण वि, असंखवासा य मणुयतिरिया य ॥
वेउव्वियाहारतणू, वज्जित्ता अप्पमत्ते य ॥२४३॥

असङ्ख्येयवर्षायुषो मनुष्यतिर्यञ्चो वैक्रियशरीरिणो प्रमत्तसंयताश्च मुक्त्वा शेषाः सर्वेऽपि निद्रानिद्राप्रचलास्त्यानर्द्धीनामुदीरका वेदितव्याः ।

वेयणीयणप्पमत्ता, ते ते वंधगा कसायाण ।
हासाई छक्कसयं, अपुव्वकरणस्स चरमते ॥२४४॥

वेदनीययोः सातासातरूपयोः प्रमत्ताप्रमत्तगुणस्थानकपर्यन्ता सर्वेऽप्युदीरका । तथा ये जीवा येषां कषायाणां बन्धकास्ते तेषां कषायाणामुदीरका वेदितव्या । यतो यानेव कषायान् वेदयते तानेव बध्नाति । "जे वेयइ सबंधे" इति वचनात् । उदये च सत्युदीरणा ततो युक्तमुक्तं "ते ते बंधगा कसायाणमिति" तत्र मिथ्यादृष्टिसास्वादना अनन्तानुबन्धिनामुदीरकास्तेषां तद्वेदकत्वात् । अप्रत्याख्यानावरणानां देशविरतिपर्यन्ता सञ्ज्वलनक्रोधमानमायालोभानां स्वस्वबन्धव्यवच्छेदादर्वाक् उदीरकाः हास्यादिषट्कस्यापूर्वगुणस्थानका उदीरका ।

जावूण खणो पढमो, संहरइ हामाणमेव मियरासिं ।
देवा नेरइया भव–ट्ठिइं केइ नेरइया ॥२४५॥

यावत् प्रथमः क्षणः किञ्चिदूनो भवति प्रथममन्तर्मुहूर्त्तं यावदित्यर्थः तावन्नियमादेवा सुस्वररतिहास्यानामुदीरका वेदितव्या । परस्त्वनियम एव किञ्चिदून प्रथमक्षणं यावन्नैरयिका इतरासामसातावेदनीयारतिशोकप्रकृतीनां नियमादुदीरका । परस्तु तीर्थकरकेवलज्ञानलाभादौ विनिर्यासोऽपि भवति । केचिदपुनर्नैरयिकाः सकलामपि भवस्थितिं यावत् असातवेदनीयारतिशोकानामुदीरका भवन्ति । एवमेकैकप्रकृत्युदीरणास्वामित्वमुक्तम् । सम्प्रति प्रकृत्युदीरणास्थानमाह ।

पंचएहं च चउएहं च एकाईजा दसएहं तु ।
तिगहीणाए मोहे, मिच्छे सत्ताए जाव दसए ॥२४६॥

द्वितीयकर्मणि दर्शनावरणीयलक्षणे पञ्चानां चतसृणां प्रकृतीनां युगपदुदीरणा भवति । तत्र चतसृणां चक्षुरचक्षुरवधिदर्शनावरणरूपाणां ध्रुवा लब्धस्थानादुदीरणा । एतासां मध्ये निद्रापञ्चकमध्यादन्यतमप्रकृतिप्रक्षेपे पञ्चानामुदीरणा । तथा मोहे मोहनीये एकादित्रिकहीना तावद् द्रष्टव्या यावद्दशानामेतदुक्तं भवति मोहनीये कर्मणि उदीरणामधिकृत्य एकादीनि त्रिकहीनानि दशपर्यन्तानि नव प्रकृत्या स्थानानि भवन्ति । तद्यथा | १ | २ | ४ | ५ | ६ | ७ | ८ | ९ | १० | सम्प्रत्येषामुदीरणास्थानानां स्वामिनमाह ॥ 'मिच्छे सत्ताइ जाव' दश मिथ्यादृष्टेः सप्तादीनि दशपर्यन्तानि चत्वारि उदीरणास्थानानि भवन्ति । तद्यथा सप्त अष्टौ नव दश । तत्र मिथ्यात्वमप्रत्याख्यान प्रत्याख्यानावरणसञ्ज्वलनक्रोधादीनामन्यतमे त्रय क्रोधादिका । यत एकस्मिन् क्रोधे उदीयमाने सर्वे क्रोधा उदीर्यन्ते । एवं मानमायालोभेषु द्रष्टव्या । न च युगपदुदीरणेत्यन्यतमे त्रयो गृह्यन्ते तथा त्रयाणां वेदानामन्यतमो वेद । तथा हास्यरत्यरतियुगले रतिशोकयुगलयोरन्यतरद्युगलम् । एतासां सप्तप्रकृतीनां मिथ्यादृष्टौ उदीरणा ध्रुवा । अत्र च भङ्गाश्चतुर्विंशतिस्तद्यथा हास्यरत्यरतियुगले अरतिशोकयुगले च प्रत्येकमेकैको भङ्गः प्राप्यते इति द्वौ भङ्गौ तौ च प्रत्येकं त्रिष्वपि वेदेषु प्राप्येते इति । द्वौ त्रिभिर्गुणितौ जाता षट् । ते च प्रत्येकं क्रोधादिषु चतुर्षु प्राप्यन्ते इति षट् चतुर्भिर्गुणिताश्चतुर्विंशतिरिति । एतस्मिन्नेव सप्तके भये वा जुगुप्सायामनन्तानुबन्धिना वा क्षिप्ते अष्टानामुदीरणानां भयादौ प्रत्येकमेकैका भङ्गकानां चतुर्विंशतिः प्राप्यते इति तिस्रश्चतुर्विंशतयोऽत्र द्रष्टव्या । ननु च मिथ्यादृष्टेरवश्यमनन्तानुबन्धिनामुदय सम्भवति उदये च सत्यवश्यमुदीरणा तत्कथं मिथ्यादृष्टिरनन्तानुबन्ध्युदयरहितः प्राप्यते सप्तानामष्टानां वा अनन्तानुबन्धरहितानामुदीरणा सम्भवेत् । उच्यते इह सम्यग्दृष्टीनां सतां केनचित् प्रथमतोऽनन्तानुबन्ध्युदयरहितः प्रयोजतः तत्रैव च स विश्रान्तो न मिथ्यात्वादिक्षयाय उक्तस्तयाविधसामग्र्यभावात् । ततः कालान्तरे मिथ्यात्वं गतः सन् मिथ्यात्वप्रकृतयो भूयोऽप्यनन्तानुबन्धिनो बध्नाति । ततो बन्धा–

वलिकाया यावन्नाद्याप्यतिक्रामति तावत्तेषामुदयो न भवति उदयाभावाच्च उदीरणाया अप्यभावः । बन्धावलिकायां पुनरतीतायामुदयसम्भवाद्भवत्येवोदीरणा । ननु कथं सबन्धसमयादारभ्य आवलिकायामतीतायामुदयोपि संभवति ततो ऽबाधाकालक्षये सति उदयः । अबाधाकालश्चानन्तानुबन्धिनां जघन्यतोऽन्तर्मुहूर्त्तमुत्कर्षतश्चत्वारि वर्षसहस्राणि इति । नैष दोषः यतो बन्धसमयादारभ्य तेषां तावत्सत्ता भवति । सत्तायां च सत्यां पतद्ग्रहता तस्यां च सत्यां शेषप्रकृतिदलिकं सङ्क्रामति सङ्क्रम्य तस्य च स सङ्क्रमावलिकायामतीतायामुदयः उदये च सत्युदीरणा । ततो बन्धसमयादनन्तरमावलिकायामतीतायामुदीरणाभिधीयमाना न विरुध्यते । तथा तस्मिन्नेव सप्तके भयजुगुप्सानन्तानुबन्धिनां चन्दिषु प्रक्षिप्तेषु दशानामुदीरणा । अत्रत्यैव भङ्गकानां चतुर्विंशतिस्तदेव मिथ्यादृष्टेर्मोहनीयस्योदीरणास्थानान्युक्तानि ।

साम्प्रतं सासादनसम्यग्दृष्ट्यादीनामाह ।

**सासायणम्मि सत्ताइ, नव अविरए छाइ परम्मि पंचाइ। अट्ठविरए चउराइ, सत्त छच्चोवरिल्लम्मि ॥ २४७ ॥**

सासादने सम्यग्दृष्टौ सम्यग्मिथ्यादृष्टौ च सप्तादीनि नवपर्यन्तानि त्रीणि त्रीण्युदीरणास्थानानि भवन्ति तद्यथा सप्त अष्टौ नव । तत्र सासादनसम्यग्दृष्टौ अनन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानावरणसंज्वलनक्रोधादीनामन्यतमे चत्वारः क्रोधादिकाः । त्रयाणां वेदानामन्यतमो वेदः । द्वयोर्युगलयोरन्यतरद्युगलमिति । सप्तमिति सप्तानामुदीरणा ध्रुवा । अत्र प्रागुक्तक्रमेण भङ्गकानामेका चतुर्विंशतिः । सम्यग्दृष्टिमिथ्यादृष्टेस्त्वनन्तानुबन्धिवर्जास्त्रयोऽन्यतमे क्रोधादयः त्रयाणां वेदानामन्यतमो वेदः । द्वयोर्युगलयोरन्यतरद्युगलं सम्यग्मिथ्यात्वं चेति सप्तानामुदीरणा । अत्र च द्वे चतुर्विंशती भङ्गकानां भयजुगुप्सयोस्तु युगपत्प्रक्षिप्तयोः सप्तानामुदीरणा । अत्रापि तिस्रश्चतुर्विंशतयोऽत्र चैका चतुर्विंशतिः । अस्मिन्नेव षट्के भयजुगुप्सावेदकसम्यक्त्वानामन्यतरक्षिप्ते सप्तानामुदीरणास्थानानि भवन्ति । तद्यथा षट् सप्त अष्टौ नव । तत्रौपशमिकसम्यग्दृष्टेः क्षायिकसम्यग्दृष्टेर्वा अविरतस्य अनन्तानुबन्धिवर्जास्त्रयोऽन्यतमक्रोधादिकाः । त्रयाणां वेदानामन्यतमो वेदः द्वयोर्युगलयोरन्यतरद्युगलमिति षण्णामुदीरणा। अत्र चैका चतुर्विंशतिर्भङ्गकानां " परम्मि पंचाइ अट्ठत्ति " विरतसम्यग्दृष्टिपरस्मिन् देशविरते पञ्चादीनि अष्टपर्यन्तानि चत्वारि उदीरणास्थानानि । तद्यथा पञ्च षट् सप्त अष्टौ तत्र प्रत्याख्यानावरणसंज्वलनक्रोधादीनामन्यतमौ द्वौ क्रोधादिकौ । त्रयाणां वेदानामन्यतमो वेदः । द्वयोर्युगलयोरन्यतरद् युगलम् । एतासां पञ्चानां प्रकृतीनां देशविरतस्योदीरणा ध्रुवा । एषा चौपशमिकसम्यग्दृष्टेः क्षायिकसम्यग्दृष्टेर्वा अवगन्तव्या । अत्रच प्रागुक्तक्रमेण चतुर्विंशतिर्भङ्गकानाम् । सम्प्रति प्रमत्ताप्रमत्तसंयतयोर्द्वयोरपि युगपत् उदीरणास्थानान्याह ' विरए चउराइ सत्तत्ति ' विरते प्रमत्ते अप्रमत्ते च चतुरादीनि सप्तपर्यन्तानि चत्वारि उदीरणास्थानानि भवन्ति । तद्यथा चत्वारि पञ्च षट् सप्त । तत्र संज्वलनक्रोधादीनामन्यतम एकः क्रोधादिः । त्रयाणां वेदानामन्यतमो वेदः । द्वयोरन्यतरद्युगलमित्येतासां चतसृणां प्रकृतीनां विरतस्य क्षायिकसम्यग्दृष्टेरौपशमिकसम्यग्दृष्टेर्वा उदीरणा ध्रुवा अत्रैका भङ्गकानां तिस्रश्चतुर्विंशतयः । तथा तस्मिन्नेव चतुष्के भयजुगुप्सावेदकसम्यक्त्वानामन्यतमस्मिन् प्रक्षिप्ते पञ्चानामुदीरणा । अत्र भङ्गकानां भयजुगुप्सावेदकसम्यक्त्वेषु युगपत् प्रक्षिप्तेषु सप्तानामुदीरणा अत्रैका चतुर्विंशतिर्भङ्गकानां भयजुगुप्सानाम् । सम्प्रत्यपूर्वकरणस्योदीरणास्थानान्याह (छच्चोवरिल्लम्मित्ति) वरिता उपरितेन अपूर्वकरणेन चतुरादीनि षट्पर्यन्तानि त्रीण्युदीरणास्थानानि आह । तद्यथा चतस्रः पञ्च षट् । तत्र चतुर्णां संज्वलनक्रोधादीनामेकतमः । क्रोधादित्रयाणां वेदानामन्यतमो वेदः । द्वयोर्युगलयोरन्यतरद्युगलमित्येतासां चतसृणां प्रकृतीनां विरतस्य क्षायिकसम्यग्दृष्टेर्वा उदीरणाऽत्र द्वे चतुर्विंशती भङ्गकानामेताश्चापूर्वकरणसत्का भयजुगुप्सयोस्तु युगपत्प्रक्षिप्तयोः षण्णामुदीरणा । अत्र चैका चतुर्विंशतिर्भङ्गकानाम् एताश्चापूर्वकरणसत्काश्चतुर्विंशतयः । अस्मिन्नेव चतुष्के भयजुगुप्सायां वा क्षिप्तायां पञ्चानामुदीरणा । अत्र द्वे चतुर्विंशती भङ्गकानां भयजुगुप्सयोस्तु युगपत्प्रक्षिप्तयोः षण्णामुदीरणा । अत्रैका चतुर्विंशतिः । चतुर्विंशतयः परमार्थतः प्रमत्ताप्रमत्तचतुर्विंशतिका भिन्नस्वरूपा इति न पृथक् गणयिष्यन्ते ।

सम्प्रत्यनिवृत्तिबादरस्योदीरणास्थानान्याह ।

**अनियट्टम्मि दुगेगं, लोभो तणुरागजोग्गचउवीसा । एकग छक्केकार-दसनत्तचउक एकाउ ॥२४८॥**

( अनियट्टित्ति ) अनिवृत्तिबादरे द्वे उदीरणास्थाने । तद्यथा द्वे प्रकृती एका च तत्र चतुर्णां संज्वलनक्रोधादीनामेकतमे क्रोधादित्रयाणां वेदानामन्यतमो वेदः । अत्र त्रिभिर्वेदैश्चतुर्भिः संज्वलनैर्द्वादश भङ्गाः । वेदेषु क्षीणेषूपशान्तेषु वा संज्वलनक्रोधादीनामेकतमं क्रोधादित्रयाणां वेदानामन्यतममुदीरयन्ति । तत्र चत्वारो भङ्गाः ( लोभोतणुरागत्ति ) तनुरागयोग्यस्य सूक्ष्मसंपरायस्य सूक्ष्मलोभकिट्टीर्वेदयमानस्य लोभ एवैको मोहनीयमध्ये उदीरणायोग्यो भवति । सम्प्रति चतुरादिषु दशपर्यन्तेषु उदीरणास्थानेषु विरतायां यावत्यश्चतुर्विंशतयो भवन्ति तावतीर्निरूपयति- ( चउवीसेत्ति ) दशोदीरणायामेका चतुर्विंशतिः, नवोदीरणायां षट्, अष्टोदीरणायामेकादश सप्तोदीरणाया दश षडुदीरणायां सप्त पञ्चकोदीरणायां चतस्रः, चतुरुदीरणायामेकेति । एताश्चतुर्विंशतयः प्रागेव भवन्ति । केवलं सञ्ज्ञिनाममात्रमिहैकं स्वधिया परिभावनीयम् । तदेवमुक्तानि मोहनीयस्योदीरणास्थानानि दश । तद्यथा एकचत्वारिंशद् द्विचत्वारिंशत्पञ्चाशत् एकपञ्चाशत् द्विपञ्चाशत् त्रिपञ्चाशत् चतुःपञ्चाशत् पञ्चपञ्चाशत् षट्पञ्चाशच्चेति । तत्र तैजससप्तकं वर्णादिविंशतिरगुरुलघुस्थिरास्थिरे शुभाशुभे निर्माणमित्येतासां त्रयस्त्रिंशत् प्रकृतीनामुदीरणा ध्रुवा । तत्र मनुष्यगतिपञ्चेन्द्रियजातित्रसबादरपर्याप्तसुभगादेययशःकीर्तिरूपे अष्टके प्रक्षिप्ते सति एकचत्वारिंशद्भवति एतासां चैकचत्वारिंशत्प्रकृतीनां केवलिसमुद्घातगतः कार्मणकाययोगे वर्तमानः केवली उदीरको भवति । एषैव चैकचत्वारिंशत्तीर्थकरनामसहिता द्विचत्वारिंशद्भवति । तस्याश्च तीर्थकरकेवली समुद्घातगतः कार्मणकाययोगे वर्तमान उदीरकः । तस्यामेवैकचत्वारिंशति औदारिकसप्तकं षण्णां संस्थानानामेकतमत्संस्थानं वज्रऋषभनाराचसंहननम् । उपघातप्रत्येकमित्येकादशके प्रक्षिप्ते सति द्विपञ्चाशद्भवति । अत्र षण्णां संस्थानां षड् भङ्गास्ते च वक्ष्यमाणाः सामान्यमनुष्यभङ्गग्रहणेन गृहीता द्रष्टव्याः ।

एवमुत्तरत्रापि। एतस्याश्च द्विपञ्चाशत्सयोगिकेवलिसमुद्घातगतौदारिकमिश्रकाययोगे वर्तमाने उदीरकः एषैव च द्विपञ्चाशत्तीर्थकरनामसहिता त्रिपञ्चाशत्केवलमिह सस्थान समचतुरस्रमेव वक्तव्यम् । अस्या अप्युदीरका सयोगकेवलतीर्थकरौदारिकमिश्रकाययोगे वर्तमाना वेदितव्या । तथा सैव द्विपञ्चाशत् पराघात उच्छ्वासनामप्रशस्ताप्रशस्तविहायोगतिरन्यतरा विहायोगति सुस्वरदुःस्वरयोरन्यतरनामेति प्रक्षेपात्रिपञ्चाशत् षट्पञ्चाशद्भवति । एव च सयोगिकेवल्यौदारिककाययोगे वर्तमान उदीरक सप्तपञ्चाशद्देववाग्योगनिरोधे षट्पञ्चाशत् उच्छ्वासेऽपि च निरुद्धे चतुःपञ्चाशत् अत्र द्विपञ्चाशच्चतुःपञ्चाशदूर्ध्वेषु शेषेषु तु पञ्चसु तीर्थकृताम् । तदेवमुक्तानि केवलिनामुदीरणास्थानानि । सम्प्रत्येकेन्द्रियाणामभिधीयन्ते । एकेन्द्रियाणामुदीरणास्थानानि पञ्च । तद्यथा द्विचत्वारिंशत्पञ्चाशत् एकपञ्चाशत् द्विपञ्चाशत् त्रिपञ्चाशच्चेति तत्र तिर्यग्गतितिर्यगानुपूर्व्यौ । स्थावरनाम एकेन्द्रियजाति बादरसूक्ष्मयोरेकतरयो पर्याप्तापर्याप्तयोरेकतर दुर्भगमनादेययश कीर्त्ययश कीर्त्योरेकतरमित्येता नव प्रकृतय । प्रागुक्ताभिर्ध्रुवोदीरणाभिस्त्रयस्त्रिंशत्सख्याकाभि सह सम्मिश्रा द्विचत्वारिंशद् भवन्ति । अत्र च भङ्गा पञ्च । तद्यथा बादरसूक्ष्माभ्या प्रत्येक पर्याप्तापर्याप्ताभ्यामयश कीर्त्या सह चत्वारि, बादरपर्याप्तयश कीर्तिभिश्चैक । सूक्ष्मापर्याप्ताभ्या सह यश कीर्तेरुदयो न भवति, तदभावाच्च नोदीरणेति कृत्वा तन्निश्रिता विकल्पा न भवन्ति । एषा द्विचत्वारिंशदपान्तरालगतौ वर्तमानस्य वेदितव्या । तत शरीरस्थस्यौदारिकशरीरौदारिकसघातौदारिकबन्धनचतुष्टयहुण्डसस्थानोपघातप्रत्येकसाधारणाभ्यामयश कीर्त्या सह द्वौ सूक्ष्मस्य पर्याप्तापर्याप्तकप्रत्येकसाधारणैरयश कीर्त्या सह चत्वारि इति दश बादरवायुकायिकस्य वैक्रिय कुर्वत औदारिकषट्कस्थाने वैक्रियषट्कमवगन्तव्यम् । ततश्च तस्यापि पञ्चाशदेवोदीरणा योग्या भवन्ति केवलमिह बादरपर्याप्तप्रत्येकायश कीर्तिपदे एष एव भङ्ग तैजसकायिक वायुकायिकयोर्हि साधारणयशःकीर्त्योरुदयो न भवति तदभावाच्च नाप्युदीरणा ततस्तदाश्रिता भङ्गा न प्राप्यन्ते । तदेव सर्वसख्यया पञ्चाशदेकादश भङ्गास्तत शरीरपर्याप्तापर्याप्तस्य पराघात उच्छ्वासक्षिप्ते एकपञ्चाशद्भवति । अत्र भङ्गा षट् । तद्यथा-बादरस्य प्रत्येकसाधारणयश कीर्त्ययश कीर्तिपदैश्चत्वार । सूक्ष्मप्रत्येकसाधारणाभ्यामयश कीर्त्या सह द्वौ बादरवायुकायिकस्य च वैक्रिय कुर्वत शरीरपर्याप्तापर्याप्तपराघाते क्षिप्ते एका प्रागुक्ता पञ्चाशत् भवति पञ्चाशदत्र च प्रागवदेक एव भङ्ग । सर्वसख्यया चैकपञ्चाशदत सप्त भङ्गा । तत प्राणापानपर्याप्तापर्याप्तस्य उच्छ्वासे क्षिप्ते द्विपञ्चाशद्भवति । अत्रापि भङ्गा षट् । तद्यथा बादरस्योद्योतेन सहितस्य प्रत्येकसाधारणयश कीर्त्ययश कीर्तिपदैश्चत्वार । आतपसहितस्य प्रत्येकयश कीर्त्ययश कीर्तिपदैर्द्वौ भङ्गौ । बादरवायुकायिकस्य वैक्रिय कुर्वत प्राणापानपर्याप्तापर्याप्तस्य उच्छ्वासे क्षिप्ते प्रागुक्ता एकपञ्चाशत् द्विपञ्चाशत् भवति । तत्र च प्रागवदेक एव भङ्ग । तैजसकायिकवायुकायिकयोर्हि आतपोद्योतयश कीर्तीनामुदयाभावात् उदीरणा न भवति । ततस्तदाश्रिता भङ्गा अत्र न प्राप्यन्ते । सर्वसख्यया द्विपञ्चाशद्भङ्गास्त्रयोदश तथा-प्राणापानपर्याप्तापर्याप्तस्य उच्छ्वाससहितायां द्विपञ्चाशत् । आतपोद्योतयोरन्यतरस्मिन् क्षिप्ते त्रिपञ्चाशद्भवति अत्र भङ्गा षट् । अत्र भङ्गा ये प्रागातपोद्योतत्वान्यतरसहितायां द्विपञ्चाशदभिहिता सर्वसख्यया चैकेन्द्रियाणां भङ्गा द्विचत्वारिंशत् द्वीन्द्रियाणामुदीरणास्थानानि षट् । तद्यथा द्विचत्वारिंशदपान्तरालगतौ वर्तमानस्यावसेया । अत्र च भङ्गास्त्रय तद्यथा अपर्याप्तकनामोदये वर्तमानस्यायश कीर्त्या सह एको भङ्ग पर्याप्तकनामोदये वर्तमानस्य यशः कीर्त्ययश कीर्तिभ्यां द्वाविंशति । तत शरीरस्थस्यौदारिकसप्तक हुण्डकसस्थानसेवार्तसहननमुपघाननामप्रत्येकनामेत्येकादशक प्रक्षिप्यते तिर्यगानुपूर्वी चापनीयते । ततो जाता द्विपञ्चाशत् । अत्र च भङ्गास्त्रयस्ते च प्रागिव द्रष्टव्या । तत शरीरपर्याप्तापर्याप्तस्य विहायोगतिपराघातयो प्रक्षिप्तयो चतुःपञ्चाशत् भवति । अत्र यश कीर्त्ययश कीर्तिभ्यां द्वौ भङ्गौ तत प्राणापानपर्याप्तस्य उच्छ्वासे क्षिप्ते पञ्चाशत् सुस्वरदुःस्वरयोरेकतरस्मिन् पञ्चाशद्भवति । अत्रापि प्रागिव द्वौ भङ्गौ । अथवा शरीरपर्याप्तौ उच्छ्वासे अनुदिते तदुद्योतनाम्नि तूदिते पञ्चपञ्चाशद्भवति । अत्र दुःस्वरसुस्वरयशः कीर्त्ययश कीर्तिभ्यां द्वौ भङ्गौ सर्वेऽपि षट्पञ्चाशति षट् भङ्गाः ततो भाषापर्याप्तापर्याप्तस्य स्वरसहितायां षट्पञ्चाशति उद्योतनाम्नि प्रक्षिप्ते सप्तपञ्चाशद् भवति अत्र सुस्वरदुःस्वरयोर्यश कीर्त्ययश कीर्तिपदैश्चत्वारो भङ्गा सर्वे द्वीन्द्रियाणां भङ्गा द्वाविंशति । एव त्रीन्द्रियजातिश्चतुरिन्द्रियाणां चतुरिन्द्रियजातिरभिधातव्या । प्रत्येक भङ्गा द्वाविंशतिरवसेया । सर्वसख्यया विकलेन्द्रियाणां भङ्गा षट्षष्टि । तिर्यक्पञ्चेन्द्रियाणां वैक्रियशरीररहितानामुदीरणास्थानानि षट् । तद्यथा द्विचत्वारिंशत् द्विपञ्चाशत् षट्पञ्चाशत् सप्तपञ्चाशच्चेति । तत्र तिर्यग्गतितिर्यगानुपूर्वी पञ्चेन्द्रियजातित्रसनामबादरनामपर्याप्तापर्याप्तयोरेकतर सुभगादेययुगलदुर्भगानादेययुगलयोरेकतर युगल यश कीर्त्ययश कीर्त्योरेकतरोऽन्ये तावच्च प्रकृतय प्रागुक्तास्त्रयस्त्रिंशत्सख्यकाभिर्ध्रुवोदीरणाभि सह चत्वारिंशत् अपान्तरालगतौ वर्तमानस्य वेदितव्या । अत्र च भङ्गा पञ्च । तत्र पर्याप्तकनामोदये वर्तमानस्य सुभगादेययुगलदुर्भगानादेययुगलाकीर्त्ययश कीर्तिभिश्चत्वारो भङ्गा । अपर्याप्तकनामोदये वर्तमानस्य दुर्भगानादेयायश कीर्तिभिः एक एव भङ्ग । इह सुभगादेये दुर्भगानादेये वा युगपदुदयमायातस्तत उदीरणापि युगपदेवेति पञ्चैव भङ्गा । अपरे पुनराहु । सुभगादेययोर्दुर्भगानादेययोर्वा नैरयिका वा तेन युगपदेका भजयोर्भावनियमोऽन्यादर्शनात् । तत पर्याप्तकनामोदये वर्तमानस्य सुभगदुर्भगादेयानादेययश कीर्त्ययश कीर्तिभिरष्टौ भङ्गा । अपर्याप्तकनामोदये वर्तमानस्य तु दुर्भगानादेयायश कीर्तिभिरेक इति । सर्वसख्यया द्विचत्वारिंशत् नव तत शरीरस्थस्यौदारिकसप्तक षण्णां सस्थानानामेकतमसहननमुपघात प्रत्येकनामेत्येकादशक प्रक्षिप्यते तिर्यगानुपूर्वी चापनीयते ततो द्विपञ्चाशद्भवति अत्र भङ्गानां पञ्चचत्वारिंशत् तद्यथा पर्याप्तकस्य षड्भि सस्थानै षड्भि सहननै सुभगादेयानादेयायश कीर्तिभिरेक इति । तत्र पर्याप्तकस्य षड्भि सस्थानै षड्भि सहननै सुभगदुर्भगाभ्यामादेयानादेयाभ्या यश कीर्त्ययश कीर्तिभ्यां द्वे शते अष्टाशीत्यधिके । अपर्याप्तकस्य तु प्रागुक्तस्वरूप एक एवेति । तस्यामेव द्विपञ्चाशति शरीरपर्याप्तापर्याप्तपराघातप्रश-

स्याप्रशस्तान्यतरविहायोगतौ च प्रक्षिप्तायां चतुःपञ्चाशद्भवति । अत्र पर्याप्तानां प्राक् चतुश्चत्वारिंशतं भङ्गकानामुक्तम् । तदेवमुक्तविहायोगतिद्विकगुणितमवगन्तव्यम् तथा च सत्यत्र भङ्गानां द्वे शते अष्टाशीत्यधिके भवत मतान्तरेण पुन पञ्च शतानि षट्सप्तत्यधिकानि तत. प्राणापानपर्याप्तापर्याप्तस्य उच्छ्वासक्षिप्ते पञ्चपञ्चाशद्भवति । अत्रापि प्रागिव भङ्गानां द्वे शते अष्टाशीत्यधिके मतान्तरेण पञ्चशतानि षट्सप्तत्यधिकानि ततः प्राणापानपर्याप्तापर्याप्तस्य उच्छ्वासाक्षिप्ते पञ्चपञ्चाशद्भवति अत्रापि प्रागिव सर्वसंख्यया पञ्चाशति स्वमतेन भङ्गकानां पञ्च शतानि षट्सप्तत्यधिकानि । मतान्तरेण तु द्विपञ्चाशदधिकानि एकादश शतानि । ततो भाषापर्याप्तापर्याप्तस्य सुस्वरदुःस्वरयोरन्यतरस्मिन् क्षिप्ते षट्पञ्चाशद्भवति । तत्र स्वमतचिन्तायां उच्छ्वासेन द्वे शते अष्टाशीत्यधिके भङ्गकानां प्राक् लब्धे ते इह स्वरद्विकेन तु गण्यते ततो लब्धानि पञ्च शतानि षट्सप्तत्यधिकानि। मतान्तरेण पुनरिह द्विपञ्चाशद्भवति। अत्र स्वमतचिन्तायां प्रागिव द्वे शते अष्टाशीत्यधिके भङ्गकानां मतान्तरेण पञ्च शतानि षट्सप्तत्यधिकानि सर्वसंख्यया स्वमतेन षट् पञ्चाशति भङ्गा अष्टशतानि चतुःषष्ट्यधिकानि । मतान्तरेण सप्तदश शतान्यष्टाविंशत्यधिकानि तत स्वरसहितायां षट् पञ्चाशतशतानि षट्सप्तत्यधिकानि। मतान्तरेण द्विपञ्चाशदधिकानि एकादश शतानि त एवात्राऽपि द्रष्टव्या । तथा तथैव तिर्यक्पञ्चेन्द्रियाणां वैक्रियं कुर्वतामुदीरणास्थानानि पञ्च भवन्ति तद्यथा एकपञ्चाशत् त्रिपञ्चाशत् चतुःपञ्चाशत् षट्पञ्चाशच्चेति। तत्र वैक्रियसप्तक समचतुरस्रसंस्थानमुपघात प्रत्येकमिति प्रकृतिदशक प्रागुक्तायां तिर्यक्पञ्चेन्द्रियाणां प्रायोग्या द्विचत्वारिंशत्प्रक्षिप्यते तिर्यगानुपूर्वी चापनीयते तत एकपञ्चाशद्भवति । अत्र सुभगादेययुगदुर्भगानादेययुगलयश कीर्त्ययशःकीर्तिपर्याप्तपदैश्चत्वारो भङ्गाः । मतान्तरेण पुन सुभगदुर्भगाभ्यामादेयानादेयाभ्यां यश कीर्त्ययशःकीर्तिभ्यां च पर्याप्तकेन सहाष्टौ भङ्गा. तत. शरीरपर्याप्तापर्याप्तस्य पराघाते प्रशस्तविहायोगतौ च प्रक्षिप्तायां पञ्चाशद्भवति । अत्रापि प्रागिव चत्वारो भङ्गा. । मतान्तरेण पुनरष्टौ तत प्राणापानपर्याप्तापर्याप्तस्य उच्छ्वासनाम्नि प्रक्षिप्ते चतुःपञ्चाशद्भवति । अत्रापि प्रागिव स्वमतेन भङ्गाश्चत्वारो मतान्तरेणाष्टौ सर्वसंख्यया चतुःपञ्चाशत् । स्वमतेनाष्टौ भङ्गा । मतान्तरेण षोडश । ततो भाषापर्याप्तापर्याप्तस्य उच्छ्वाससहितायां पञ्चपञ्चाशति उद्योते क्षिप्ते षट्पञ्चाशद्भवति अत्रापि भङ्गा स्वमतेन चत्वारो मतान्तरेणाष्टौ । सर्वसंख्यया वैक्रिय कुर्वतां तिर्यक्पञ्चेन्द्रियाणां भङ्गा अष्टाविंशति मतान्तरेण षट्पञ्चाशत् । सामान्येन तिर्यक्पञ्चेन्द्रियाणां स्वमतेन भङ्गाश्चतुर्विंशतिशतानि द्वादशाधिकानि, मतान्तरेण एकोनपञ्चाशच्छतानि द्विषष्ट्यधिकानि ।

सम्प्रति मनुष्याणामुदीरणास्थानानि प्रतिपाद्यन्ते । तत्र केवलिनां प्रागेवोक्तानि अन्येषां तु पञ्च । तद्यथा द्विचत्वारिंशद् द्विपञ्चाशच्चतुःपञ्चाशत्पञ्चपञ्चाशत् षट्पञ्चाशच्चेति । एतानि सर्वाण्यपि यथा प्राक् तिर्यक्पञ्चेन्द्रियाणामुक्तानि तथैवात्रापि वक्तव्यानि नवरं तिर्यग्गतितिर्यगानुपूर्व्योः स्थाने मनुष्यगतिमनुष्यानुपूर्व्यौ वक्तव्ये पञ्चपञ्चाशत् षट्पञ्चाशच्च उद्योतरहिता वक्तव्या वैक्रियाहारकसंयतान्मुक्त्वा स्वमतेन द्विचत्वारिंशानि पञ्च द्विपञ्चाशति पञ्च शतानि षट्सप्तत्यधिकानि परमतेन तु यथ क्र-

मम् | ९ | २ | ८ | ९ | ५ | ७ | ६ | ५७६ | ११७२ | वैक्रियमपि कुर्वतां मनुष्याणामुदीरणास्थानानि पञ्च भवन्ति । तद्यथा एकपञ्चाशत् त्रिपञ्चाशच्चतुःपञ्चाशत् षट्पञ्चाशच्चेति । तत्र एकपञ्चाशत् त्रिपञ्चाशच्च यथा प्राग्वैक्रिय मुक्त्वा तथात्रापि द्रष्टव्या चतुःपञ्चाशत् उच्छ्वाससहितायां प्रागिव स्वमतेन चत्वारो भङ्गाः मतान्तरेणाष्टौ । उत्तरवैक्रिय कुर्वतां संयतानामुद्योतनामोदयं गच्छति नान्येषां ततस्तेन सह चतुःपञ्चाशदुच्छ्वासप्रशस्त एवैको भङ्गो भवति संयतानां दुर्भगानादेयायशःकीर्त्युदयाभावात् । सर्वसंख्यया चतुःपञ्चाशत् । स्वमतेन भङ्गाश्चत्वारो मतान्तरेणाष्टौ । अथवा संयतानां स्वरे अनुदिते उद्योतनाम्नि उदिते पञ्चपञ्चाशद्भवति । अत्रापि प्रागिव एक एव भङ्गः सर्वसंख्यया पञ्चपञ्चाशति स्वमतेन पञ्च भङ्गा मतान्तरेण नव पञ्चपञ्चाशति सुस्वरसहितायामुद्योते क्षिप्ते षट्पञ्चाशद् भवति तस्यामेक एव प्रशस्तो भङ्ग. । सर्वसंख्यया वैक्रियमनुष्याणामन्यमतेनैकोनविंशतिभङ्गा मतान्तरेण पञ्चत्रिंशत् ।

सम्प्रत्याहारक कुर्वतामुदीरणास्थानान्युच्यन्ते आहारकसंयतानामुदीरणास्थानानि पञ्च । तद्यथा एकपञ्चाशत् त्रिपञ्चाशच्चतु. पञ्चाशत् पञ्चपञ्चाशत् षट्पञ्चाशच्चेति । तत्राहारकसप्तकं समचतुरस्रसंस्थानमुपघातं प्रत्येकमिति प्रकृतिदशकं प्रागुक्तायां मनुष्यगतिप्रायोग्याया द्विचत्वारिंशति प्रक्षिप्यते मनुष्यानुपूर्वी चापनीयते । तत. एकपञ्चाशद्भवति केवलमिह सर्वाण्यपि पदानि प्रशस्तानि एवेति कृत्वा एक एव भङ्ग । शरीरपर्याप्तापर्याप्तस्य प्रशस्तविहायोगतिपराघातयो प्रक्षिप्तयोस्त्रिपञ्चाशद्भवति। अत्राप्येक एव भङ्ग शरीरपर्याप्त. । तत प्राणापानपर्याप्तापर्याप्तस्य उच्छ्वासे क्षिप्ते चतुःपञ्चाशद्भवति । अत्राप्येक एव भङ्ग । सर्वसंख्यया चतुःपञ्चाशति द्वौ भङ्गौ ततो भाषापर्याप्तापर्याप्त उच्छ्वाससहितायां चतुःपञ्चाशति सुस्वरे क्षिप्ते पञ्चपञ्चाशद्भवति । अत्रापि प्राग्वदेक एव भङ्ग । अथवा प्राणापानपर्याप्तापर्याप्तस्य स्वरे अनुदिते उद्योतनाम्नि उदिते पञ्चपञ्चाशद् भवति अत्राप्येक एव भङ्ग. सर्वसंख्यया पञ्चपञ्चाशति द्वौ भङ्गौ । ततो भाषापर्याप्तापर्याप्तस्य स्वरसहितायां पञ्चपञ्चाशति उद्योते क्षिप्ते षट्पञ्चाशद्भवति । अत्राप्येक एव भङ्ग आहारकशरीरिणां सर्वसंख्यया सप्त भङ्गा. । तदेव मनुष्याणां सामान्यवैक्रियशरीराहारकशरीरकेवलिनां भङ्गा. सर्वसंख्यया त्रयोदश शतानि चतुस्त्रिंशदधिकानि भवन्ति। परमतेन षोडश शतानि पञ्चाशदधिकानि ।

देवानामुदीरणास्थानानि षट् । तद्यथा द्विचत्वारिंशत् एकपञ्चाशत् त्रिपञ्चाशत् चतुःपञ्चाशत् पञ्चपञ्चाशत् षट्पञ्चाशच्चेति । तत्र देवगतिदेवानुपूर्वीपञ्चेन्द्रियजाति. । त्रसनामबादरनामपर्याप्तनामशुभगादेययुगलदुर्भगानादेययुगलयोरेकतर युगलं यशःकीर्त्ययशःकीर्त्योरेकतरेत्येता नवप्रकृतयो नवोदीरणाभिरध्रुवोदीरणात्मिकाभि सह सम्मिश्रा द्विचत्वारिंशद्भवति । अत्र शुभगादेयदुर्भगानादेययुगलयशःकीर्तिभ्यां चाष्टौ भङ्गा ततश्शरीरस्थस्य वैक्रियसप्तक समचतुरस्रसंस्थानमुपघात प्रत्येकमित्येता दश प्रकृतय प्रक्षिप्यन्ते देवानुपूर्वी चापनीयते । तत एकपञ्चाशत् भवति । अत्रापि प्रागिव स्वमतेन चत्वारो भङ्गा मतान्तरेणाष्टौ । तत. शरीरपर्याप्तापर्याप्तस्य पराघातप्रशस्तविहायोगत्यो·

प्रक्षिप्तयोः त्रिपञ्चाशद्भवति । अत्रापि प्रागिव स्वमतेन चत्वारो भङ्गा मतान्तरेणाष्टौ। देवानां प्रशस्तविहायोगतेरुदया भावात् तदाश्रिता भङ्गा न प्राप्यन्ते । तत प्राणापानपर्याप्तापर्याप्तस्य उच्छ्वासे क्षिप्ते चतु पञ्चाशद्भवति । अत्रापि स्वमतेन चत्वारो भङ्गाः मतान्तरेणाष्टौ । अथवा शरीरपर्याप्तापर्याप्तस्य उच्छ्वासे अनुदिते उद्योतनाम्नि तूदिते चतुःपञ्चाशद्भवति अत्रापि प्रागिव स्वमतेन भङ्गाश्चत्वारो, मतान्तरेणाष्टौ । अथवा शरीरपर्याप्तापर्याप्तस्य उच्छ्वासे अनुदिते उद्योतनाम्नि तूदिते च सर्वसंख्यया चतु पञ्चाशत् स्वमतेनाष्टौ भङ्गा मतान्तरेण षोडश ततो भाषापर्याप्तापर्याप्तस्य उच्छ्वाससहितायां चतु पञ्चाशति सुस्वरे क्षिप्ते पञ्चपञ्चाशद्भवति अत्रापि स्वमतेन भङ्गाश्चत्वारो मतान्तरेणाष्टौ सर्वसंख्यया पञ्चपञ्चाशत् । स्वमतेनाष्टौ भङ्गा मतान्तरेणापि तु षोडश भाषापर्याप्तापर्याप्तस्य सुस्वरसहितायां पञ्चपञ्चाशति उद्योते क्षिप्ते षट्पञ्चाशद्भवति । अत्रापि स्वमतेनैव चत्वारो भङ्गा मतान्तरेणाष्टौ सर्वसंख्यया देवानां स्वमतेन द्वात्रिंशद्भङ्गा मतान्तरेण चतुःषष्टिः । नैरयिकाणामुदीरणास्थानानि पञ्च । तद्यथा-द्विचत्वारिंशदेकपञ्चाशत् त्रिपञ्चाशच्चतुःपञ्चाशत्पञ्चपञ्चाशच्चेति । तत्र नरकगतिनरकानुपूर्व्यौ पञ्चेन्द्रियजातित्रसबादरपर्याप्तदुर्भगानादेयायशःकीर्तिश्च इत्येता नव प्रकृतयो ध्रुवोदीरणाभिस्त्रयस्त्रिंशत्संख्यकाभिः सह सम्मिश्रा द्विचत्वारिंशद्भवति । अत्र च सर्वाण्यपि पदानि अप्रशस्तान्येवेति कृत्वा एक एव भङ्गः । ततश्शरीरस्थस्य वैक्रियसप्तकहुण्डकसंस्थानमुपघातप्रत्येकमिति दश प्रकृतयः प्रक्षिप्यन्ते । नरकानुपूर्वी चापनीयते । तत एकपञ्चाशद् भवति । अत्राप्येक एव भङ्गः । ततः शरीरपर्याप्तापर्याप्तस्य पराघातप्रशस्तविहायोगत्यो प्रक्षिप्तयोः त्रिपञ्चाशद्भवति । अत्राप्येक एव भङ्गः । ततः प्राणापानपर्याप्तापर्याप्तस्य उच्छ्वासे क्षिप्ते चतु पञ्चाशद्भवति । अत्राप्येक एव भङ्गः । ततो भाषापर्याप्तापर्याप्तस्य दुःस्वरे क्षिप्ते पञ्चपञ्चाशद्भवति । अत्राप्येक एव भङ्गः । सर्वसंख्यया नैरयिकाणां पञ्च भङ्गाः । तदेवमुक्तानि नामकर्मणोदीरणास्थानानि ।

सम्प्रत्येतान्येव गुणस्थानकेषु दर्शयति ।

गुणिएसु नामस्स तउ, सत्त तिग्नि अट्ठ च अप्पं च ।
अप्पमत्ते दो एक, पंचसु एक्कम्मि अट्ठ ॥ २४९ ॥

नाम्नोनामकर्मणोर्गुणिषु गुणस्थानेषु मिथ्यादृष्टिप्रभृतिषु सयोगिकेवलिपर्यन्तेषु यथासंख्यया नवादिषु संख्यासुदीरणास्थानानि भवन्ति । तत्र मिथ्यादृष्टिषु नवोदीरणास्थानानि । तद्यथा द्विचत्वारिंशत् पञ्चाशद् द्विपञ्चाशत् त्रिपञ्चाशदेकपञ्चाशद् द्विपञ्चाशत् त्रिपञ्चाशत् चतुःपञ्चाशत् षट्पञ्चाशच्चेति । अमूनि च सर्वाण्यपि मिथ्यादृष्टीन्येकेन्द्रियादीन्याधिकृत्य स्वय परिभावनीयानि । सास्वादनसम्यग्दृष्टेरुदीरणास्थानानि सप्त । तद्यथा द्विचत्वारिंशत् पञ्चाशत् एकपञ्चाशत् द्विपञ्चाशत् पञ्चपञ्चाशत् षट्पञ्चाशत्सप्तपञ्चाशच्चेति । तत्र द्विचत्वारिंशत् बादरैकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियतिर्यक्पञ्चेन्द्रियमनुष्यदेवानां सास्वादनसम्यग्दृष्टीनामपान्तरालगतौ वर्तमानानामवसेया । तथा एकेन्द्रियाणां शरीरस्थानां पञ्चाशत् देवानां शरीरस्थानामेकपञ्चाशद्विकलेन्द्रियतिर्यक्पञ्चेन्द्रियमनुष्याणां शरीरस्थानां द्विपञ्चाशत् एव नैरयिकाणां पर्याप्तानां सासादनसम्यक्त्वे वर्तमानानां पञ्चपञ्चाशत् । तिर्यक्पञ्चेन्द्रियमनुष्यदेवानां पर्याप्तानां षट्पञ्चाशत् । तिर्यक्पञ्चेन्द्रियाणामुद्योतवेदकानां पर्याप्तानां सप्तपञ्चाशत् । सम्यग्मिथ्यादृष्टेस्त्रीण्युदीरणास्थानानि । तद्यथा पञ्चपञ्चाशत्सप्तपञ्चाशच्चेति । तत्र देवनैरयिकाणामेव पञ्चपञ्चाशदविरतसम्यग्दृष्टेरष्टावुदीरणास्थानानि तद्यथा द्विचत्वारिंशदेकपञ्चाशच्चेति । तत्र नैरयिकदेवतिर्यक्पञ्चेन्द्रियमनुष्याणां द्विचत्वारिंशद् देवनैरयिकाणामेकपञ्चाशत् तिर्यक्पञ्चेन्द्रियमनुष्याणां द्विपञ्चाशत्, देवनैरयिकतिर्यङ्मनुष्याणां त्रिपञ्चाशत् देवनैरयिकाणामेकपञ्चाशत् सप्तपञ्चाशच्चेति । तिर्यक्पञ्चेन्द्रियवैक्रियतिर्यङ्मनुष्याणां त्रिपञ्चाशच्चतुःपञ्चाशदेतेषामेव पञ्चपञ्चाशदपि तदेव तिर्यक्पञ्चेन्द्रियमनुष्याणां षट्पञ्चाशत् तिर्यक्पञ्चेन्द्रियाणामुद्योतवेदिकायां सप्तपञ्चाशत्, देशविरतस्योदीरणास्थानानि षट् । तद्यथा एकपञ्चाशत् त्रिपञ्चाशच्चतुःपञ्चाशत् पञ्चपञ्चाशत् षट्पञ्चाशत् सप्तपञ्चाशच्चेति । तत्र एकपञ्चाशत् त्रिपञ्चाशच्चतुःपञ्चाशत् पञ्चपञ्चाशच्चेति । तिर्यग्मनुष्याणां वैक्रियशरीरे वर्तमानानामवगन्तव्या । तिर्यग्मनुष्याणामेव स्वभावस्थानां वैक्रियशरीरिणां षट्पञ्चाशत् तेषामेव तिर्यक्पञ्चेन्द्रियाणामुद्योतसहितानां सप्तपञ्चाशत् प्रमत्तसयतानामुदीरणास्थानानि पञ्च तद्यथा एकपञ्चाशद् द्विपञ्चाशत् त्रिपञ्चाशत् चतुःपञ्चाशत् पञ्चपञ्चाशत् षट्पञ्चाशच्चेति । तत्र पञ्चाप्येतानि वैक्रियशरीरिणामाहारकशरीरिणां वा स्वप्रथमानि षट्पञ्चाशत् पुनरौदारिकस्थानमवगन्तव्यम् । अप्रमत्तसयतानां द्वे उदीरणास्थाने तद्यथा पञ्चपञ्चाशत् षट्पञ्चाशच्चेति । तत्र षट्पञ्चाशदौदारिके स्थाने इह केषाचित् वैक्रियशरीरस्थानामाहारकशरीरस्थानां वा सयतानां वा सर्वपर्याप्तापर्याप्तानां कियत्कालमप्रमत्तभावो पि लभ्यते इति तेषां द्वे अप्युक्तरूपे उदीरणास्थाने । एकं पञ्च सुहर्मा पञ्चसु गुणस्थानकेषु अपूर्वकरणानिवृत्तबादरसूक्ष्मसपरायोपशान्तमोहक्षीणमोहरूपेषु एकमुदीरणास्थान भवति । षट् पञ्चाशत् सा च औदारिकशरीरस्थानमिति ( एक्कम्मिअट्ठत्ति ) एकस्मिन् सयोगिकेवलगुणस्थानिके अष्टावुदीरणास्थानानि तद्यथा एकचत्वारिंशत् द्विचत्वारिंशत् द्विपञ्चाशत् त्रिपञ्चाशत् चतुःपञ्चाशत् पञ्चपञ्चाशत् षट्पञ्चाशत् सप्तपञ्चाशच्चेति । एतानि च प्रागेव सप्रपञ्चं भावितानि इति नेह भूयो भाव्यन्ते । तदेव चिन्तितानि गुणस्थानकेषु उदीरणास्थानानि ।

सम्प्रति कस्मिन्नुदीरणास्थाने कति भङ्गा प्राप्यन्ते इति चिन्तायां तन्निरूपणार्थमाह ।

ठाणकमेण भगा, वि एक्कतीसेक्कारस ।
इगवीस वा बारस-सए य इगवीसउणवमया ॥२५०॥
छह अहिया नव सया य, एगहिया य अउणुत्तारि ।
णाओ चउदस सयाणि, गुण नउइसया पच ॥२५१॥

स्थानकमेण एकचत्वारिंशत्येको भङ्गः । स च तीर्थकरकेवलिन द्विचत्वारिंशति त्रिशद्भङ्गाः । तत्र नैरयिकानधिकृत्य एक एकेन्द्रियानधिकृत्य पञ्च द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियानधिकृत्य प्रत्येक त्रिक त्रिक प्राप्यते इति नव । तिर्यक्पञ्चेन्द्रियानधिकृत्य पञ्च,मनुष्यानप्यधिकृत्य पञ्च,तीर्थकरमधि-

कृत्य एक । देवानधिकृत्य चत्वार । ये पुन· सुभगादेययोर्दुर्भगानादेययोश्च केवलकेवलयोरप्युदयमिच्छन्ति तन्मतेन द्विचत्वारिंशति त्रिचत्वारिंशद्भङ्गा· । यतस्तन्मतेन तिर्यक्पञ्चेन्द्रियानधिकृत्य नव, मनुष्यानधिकृत्य नव,देवानधित्याष्टौ भङ्गा प्राप्यन्ते शेष तथैव । पञ्चाशत्येकादश भङ्गास्ते चैकेन्द्रियान्देवानधिकृत्य प्राप्यन्ते । अन्यत्र पञ्चाशत· प्राप्यमाणत्वात् । एकपञ्चाशत्येकविंशति भङ्गा· । तत्र नैरयिकानधिकृत्य चत्वारो वैक्रियमनुष्यानधिकृत्य चत्वारः आहारकशरीरिण· संयतानधिकृत्य नव देवानाश्रित्य चत्वार इत्येकविंशतिः । मतान्तरेण पुनर्वैक्रियतिर्यङ्मनुष्यदेवानधिकृत्य प्रत्येकमष्टावष्टौ भङ्गा प्राप्यन्त इत्येकपञ्चाशति तदपेक्षया त्रयस्त्रिंशद्भङ्गाः । ( सत्तरससतिसययत्ति ) त्रिंशद्द्वादशाधिका त्रिशति भङ्गानां द्विपञ्चाशतिरवगन्तव्या । तत्र एकेन्द्रियानाश्रित्य त्रयोदश द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियानधिकृत्य प्रत्येक त्रिक प्राप्यते इति नव । तिर्यक्पञ्चेन्द्रियानधिकृत्य पञ्चचत्वारिंशतं मनुष्यानप्यधिकृत्य पञ्चचत्वारिंशतम् । अत्रापि मतान्तरेण तिर्यक्पञ्चेन्द्रियान् मनुष्यांश्चाधिकृत्य प्रत्येक द्वे द्वे शते भङ्गानामेकोनवत्यधिके प्राप्येते इति तदपेक्षया द्विपञ्चाशद्भङ्गानां शतानि षट् प्राप्यन्ते । त्रिपञ्चाशति भङ्गानामेकविंशति, तद्यथा मनुष्यांश्चाधिकृत्य प्रत्येकं द्वे द्वे शते भङ्गानामेकोननवत्यधिके प्राप्येते तदपेक्षया मनुष्यदेवानधिकृत्य प्रत्येकमष्टाष्टौ भङ्गा· प्राप्यन्ते इति तदपेक्षया त्रिपञ्चाशति त्रयस्त्रिंशद्भङ्गा· चतु·पञ्चाशति भङ्गानां षट् शतानि षडुत्तराणि तद्यथा नैरयिकाणां प्रत्येकमष्टावष्टौ भङ्गा प्राप्यन्ते इति तदपेक्षया त्रिपञ्चाशति त्रयस्त्रिंशद्भङ्गा· चतु·पञ्चाशति भङ्गानां षट्तिर्यक्पञ्चेन्द्रियान् स्वभावस्थानधिकृत्य द्वे शते अष्टाशीत्यधिके वैक्रियतिर्यक्पञ्चेन्द्रियानधिकृत्याष्टौ स्वभावस्थान्मनुष्यानधिकृत्य द्वे शते अष्टाशीत्यधिके वैक्रियमनुष्यानधिकृत्य द्वे शते अष्टाशीत्यधिके वैक्रियतिर्यक्पञ्चेन्द्रियानधिकृत्याष्टौ स्वभावस्थान् मनुष्यानधिकृत्य द्वे शते अष्टाशीत्यधिके वैक्रियमनुष्यानधिकृत्य चत्वारः संहतान् वैक्रियशरीरिण· संयतानधिकृत्य द्वौ देवानधिकृत्योद्योतेन सहैक । आहारिकशरीरिण संयतानधिकृत्य पञ्च शतानि षट्सप्तत्यधिकानि वैक्रियतिर्यक्पञ्चेन्द्रियानधिकृत्य षोडश मनुष्यानधिकृत्य पञ्च शतानि षट्सप्तत्यधिकानि वैक्रियमनुष्यानधिकृत्य नव देवानधिकृत्य षोडश भङ्गाः प्राप्यन्ते शेष तथैवेति तदपेक्षया चतुःपञ्चाशदधिकानि द्वादश शतानि पञ्चशतानि भङ्गानां नव शतानि एकाधिकानि । तद्यथा नैरयिकानधिकृत्यैक द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियानधिकृत्य प्रत्येकं चत्वार २ प्राप्यन्ते इति द्वादश । तिर्यक्पञ्चेन्द्रियान्स्वभावस्थानधिकृत्य प्रत्येक चत्वार प्राप्यन्ते इति द्वादश तिर्यक्पञ्चेन्द्रियान् स्वभावस्थानधिकृत्य द्वे शते अष्टाशीत्यधिके वैक्रियशरीरिणोऽधिकृत्य चत्वार वैक्रियसंयतानधिकृत्योद्योतेन सहैक आहारकशरीरिणोऽधिकृत्य चत्वार तीर्थकरमधिकृत्यैक देवानधिकृत्याष्टाविति । मतान्तरेण तिर्यक्पञ्चेन्द्रियानधिकृत्य द्विपञ्चाशदधिकान्येकादश शतानि । वैक्रियतिर्यक्पञ्चेन्द्रियानधिकृत्य षोडश मनुष्यान् स्वभावस्थानधिकृत्य पञ्च शतानि षट् सप्तत्यधिकानि वैक्रियमनुष्यानधिकृत्य नव देवानधिकृत्य षोडश भङ्गा प्राप्यन्ते शेषं तथैवेति । तदपेक्षया पञ्चपञ्चाशति पञ्चाशीत्यधिकसप्तदश शतानि षट्पञ्चाशति भङ्गानामेकोनसप्तत्यधिकानि चतुर्दश शतानि तद्यथा द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियानधिकृत्य प्रत्येक षट् प्राप्यन्ते इति अष्टादश । तिर्यक्पञ्चेन्द्रियान् स्वभावस्थानधिकृत्याष्टौ शतानि चतुर्दशशतानि चतु·षष्ट्यधिकानि वैक्रियशरीरिणोऽधिकृत्य चत्वार मनुष्यानधिकृत्य पञ्चशतानि षट्सप्तत्यधिकानि, वैक्रियशरीरिण· संयतानधिकृत्योद्योतेन सहैकः । आहारकशरीरिणः संहतानधिकृत्यैक· तीर्थकरमाश्रित्यैक· देवानधिकृत्य चत्वार । अत्र मतान्तरेण तिर्यक्पञ्चेन्द्रियानधिकृत्य सप्तदश शतानि भङ्गानां भवन्ति सप्तपञ्चाशद्भङ्गानां पञ्चाशति एकोननवत्यधिकानि प्रत्येक चत्वार· २ प्राप्यन्ते इति द्वादश । तिर्यक्पञ्चेन्द्रियानधिकृत्य पञ्च शतानि एकादश शतानि भङ्गानां प्राप्यन्ते षट्सप्तत्यधिकानि तीर्थकरमाश्रित्यैक इति । अत्रापि मतान्तरेण तिर्यक्पञ्चेन्द्रियानधिकृत्य द्विपञ्चाशदधिकानि एकादश शतानि भङ्गानां प्राप्यन्ते शेष तथैवेति । तदपेक्षया सप्तपञ्चाशत् पञ्चषष्ट्यधिकान्येकादश शतानि भङ्गानां भवन्ति ।

( अनयोर्व्याख्या पुस्तकान्तरे एव दृश्यते । तद्यथा )

" स्थानक्रमेण एकचत्वारिंशत्येको भङ्ग· । स च तीर्थकरकेवलिनः द्विचत्वारिंशति त्रिशद्भङ्गाः । तत्र नैरयिकानधिकृत्य एक· एकेन्द्रियानधिकृत्य पञ्च द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियानधिकृत्य प्रत्येक त्रिक त्रिक प्राप्यते इति नव । तिर्यक्पञ्चेन्द्रियानधिकृत्य पञ्च, मनुष्यानप्यधिकृत्य पञ्च, तीर्थकरमधिकृत्य एक· देवानधिकृत्य चत्वार· । ये पुनः सुभगादेययोर्दुर्भगानादेययोश्च केवलकेवलयोरप्युदयमिच्छन्ति तन्मतेन द्विचत्वारिंशति द्विचत्वारिंशद्भङ्गा यतस्तन्मतेन तिर्यक्पञ्चेन्द्रियाण्यधिकृत्य नव, मनुष्यानधिकृत्य नव, देवानधिकृत्याष्टौ भङ्गा· प्राप्यन्ते शेष तथैव । पञ्चाशत्येकादश भङ्गास्ते चैकेन्द्रियानेवाधिकृत्य प्राप्यन्ते अन्यत्र पञ्चाशतोऽप्राप्यमाणत्वात् एकपञ्चाशत्येकविंशतिभङ्गाः तत्र नैरयिकानधिकृत्य चत्वारो वैक्रियमनुष्यानप्यधिकृत्य चत्वारः आहारिकशरीरिणः संयतानधिकृत्य एकः देवानाश्रित्य चत्वार इत्येकविंशतिः । मतान्तरेण पुनर्वैक्रियतिर्यङ्मनुष्यदेवानधिकृत्य प्रत्येकमष्टावष्टौ भङ्गाः प्राप्यन्ते इत्येकपञ्चाशति तदपेक्षया त्रयस्त्रिंशद्भङ्गा· ( सत्तरससतिसययत्ति ) स द्वादशाधिका त्रिशतिभङ्गानां द्विपञ्चाशत्यवगन्तव्या । तत्र एकेन्द्रियानाश्रित्य त्रयोदश द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियानधिकृत्य प्रत्येकं त्रिकं प्राप्यते इति नव, तिर्यक्पञ्चेन्द्रियानाधिकृत्य पञ्चचत्वारिंशतं मनुष्यानप्यधिकृत्य पञ्चचत्वारिंशतमिति । अत्रापि मतान्तरेण तिर्यक्पञ्चेन्द्रियान् मनुष्यांश्चाधिकृत्य प्रत्येक द्वे द्वे शते भङ्गानामेकोननवत्यधिके प्राप्येते इति तदपेक्षया द्विपञ्चाशति भङ्गानां शतानि षट् प्राप्यन्ते । त्रिपञ्चाशति भङ्गानामेकविंशति । तद्यथा नैरयिकानधिकृत्य एकः एकेन्द्रियानाधिकृत्य षट् वैक्रियतिर्यक्पञ्चेन्द्रियानाधिकृत्य चत्वारः वैक्रियमनुष्यानप्यधिकृत्य चत्वार आहारिकशरीरिणोऽधिकृत्य पुनरेकस्तीर्थकरमप्याश्रित्यैक देवानप्यधिकृत्य चत्वार अत्रापि मतान्तरेण वैक्रियतिर्यक्पञ्चेन्द्रियमनुष्यदेवानधिकृत्य प्रत्येकमष्टावष्टौ भङ्गा प्राप्यन्ते इति तदपेक्षया त्रिपञ्चाशति त्रयस्त्रिंशद्भङ्गा चतुःपञ्चाशति भङ्गाना षट् शतानि षडुत्तराणि । तद्यथा नैरयिकानधिकृत्यैक द्वीन्द्रियांस्त्रीन्द्रियांश्चतुरिन्द्रियानधिकृत्य प्रत्येक द्वौ द्वौ प्राप्येते इति षट् । तिर्यक्पञ्चेन्द्रियान् स्वभावस्थानधिकृत्य द्वे शते अष्टाशीत्यधिके वैक्रियतिर्यक्पञ्चेन्द्रियानधिकृत्याष्टौ स्वभावस्थान्मनुष्यानधिकृत्य द्वे शते अष्टाशीत्यधिके वैक्रिय-

मनुष्यानधिकृत्य चत्वार संयतान् वैक्रियशरीरिणोधिकृत्य चत्वारः । सयतानधिकृत्य द्वौ, देवाधिकृत्योद्योतेन सहैकः, आहारिकशरीरिण सयतानधिकृत्य द्वौ, देवानाधिकृत्य षोडश, मनुष्यानधिकृत्य पञ्च शतानि षट्सप्तत्याधिकानि चाष्टाविति । अत्रापि मतान्तरेण प्रकृतिकतिर्यक्पञ्चेन्द्रियानधिकृत्य पञ्च शतानि षट्सप्तत्यधिकानि वैक्रियतिर्यक्पञ्चेन्द्रियानधिकृत्य षोडश मनुष्यानाधिकृत्य पञ्च शतानि षट्सप्तत्यधिकानि वैक्रियमनुष्यानधिकृत्य नव, देवानधिकृत्य षोडश भङ्गाः प्राप्यन्ते शेष तथैवेति । तदपेक्षया चतुःपञ्चाशति द्व्यधिकानि द्वादश शतानि पञ्च शतानि भङ्गानां नव शतानि एकाधिकानि तद्यथा नैरयिकानधिकृत्यैकः द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियानधिकृत्य प्रत्येक चत्वारः प्राप्यन्ते इति द्वादश । तिर्यक्पञ्चेन्द्रियान् स्वभावस्थानधिकृत्य प्रत्येक चत्वार प्राप्यन्ते इति द्वादश । तिर्यक्पञ्चेन्द्रियानाधिकृत्य पञ्च शतानि षट्सप्तत्यधिकानि वैक्रियशरीरिणोधिकृत्याष्टौ, मनुष्यान् स्वभावस्थानधिकृत्य द्वे शते अष्टाशीत्यधिके, वैक्रियशरीरिणोधिकृत्य चत्वार ,वैक्रियसयतानधिकृत्योद्योतेन सहैक , आहारिकशरीरिणोधिकृत्य द्वौ, तीर्थकरमधिकृत्यैकः, देवानधिकृत्याष्टाविति । मतान्तरेण तिर्यक्पञ्चेन्द्रियानधिकृत्य द्विपञ्चाशदधिकान्येकादश शतानि वैक्रियतिर्यक्पञ्चेन्द्रियानाधिकृत्य षोडश मनुष्यान् स्वभावस्थानधिकृत्य पञ्च शतानि षट्सप्तत्यधिकानि, वैक्रियमनुष्यानधिकृत्य नव, देवानधिकृत्य षोडश भङ्गा प्राप्यन्ते । शेष तथैवेति तदपेक्षया पञ्चपञ्चाशति पञ्चाशीत्यधिकानि सप्तदश शतानि षट्पञ्चाशति भङ्गानामेकोनसप्तत्यधिकानि चतुर्दश शतानि तद्यथा द्वीन्द्रियत्रीन्द्रिय चतुरिन्द्रियानधिकृत्य प्रत्येक षट् प्राप्यन्ते इति अष्टादश, तिर्यक्पञ्चेन्द्रियान् स्वभावस्थानधिकृत्याष्टौ शतानि चतु षष्ट्यधिकानि, वैक्रियशरीरिणोधिकृत्य चत्वारः मनुष्यानधिकृत्य पञ्चशतानि षट्सप्तत्यधिकानि वैक्रियशरीरिण सयतानाधिकृत्य उद्योतेन सह एक , आहारकशरीरिण. सयतानाधिकृत्यैक तीर्थकरमाश्रित्यैकः, देवानाश्रित्य चत्वारः । अत्र मतान्तरेण तिर्यक्पञ्चेन्द्रियानधिकृत्य सप्तदश शतान्यष्टाविंशत्यधिकानि, वैक्रियतिर्यक्पञ्चेन्द्रियानधिकृत्याष्टौ, मनुष्यानधिकृत्य द्विपञ्चाशदधिकानि भङ्गानां भवन्ति । सप्तपञ्चाशति भङ्गानां पञ्चशती एकोननवत्यधिका । तद्यथा द्वीन्द्रिय त्रीन्द्रिय चतुरिन्द्रियानधिकृत्य प्रत्येक चत्वार २ प्राप्यन्ते इति द्वादश, तिर्यक्पञ्चेन्द्रियानधिकृत्य पञ्चाश ( तानि ) ति एकादश शतानि भङ्गाना प्राप्यन्ते षट्सप्तत्यधिकानि । तीर्थकरमाश्रित्यैक इति। अत्रापि मतान्तरेण तिर्यक्पञ्चेन्द्रियानधिकृत्य द्विपञ्चाशदधिकानि एकादश शतानि भङ्गानां प्राप्यन्ते। शेष तथैवेति । तदपेक्षया सप्तपञ्चाशति पञ्चषष्ट्यधिकान्येकादश शतानि भङ्गानां भवन्ति "॥

सम्प्रति गतिमाश्रित्य स्थानप्ररूपणां करोति ।

पणनवगउक्काणि, गइसुट्टाणि सेसकम्माणं ।
एगेगमेव भेने य, साहित्तिगे य पगईओ ॥२५२॥

नरकगतावुदीरणास्थानानि पञ्च तद्यथा द्विचत्वारिंशत् एकपञ्चाशत् त्रिपञ्चाशत् चतु पञ्चाशत् पञ्चपञ्चाशच्चेति । तिर्यग्गतावेकचत्वारिंशत् वर्ज्यानि शेषाणि नवोदिरणास्थानानि मनुष्यगतावपि सयोगिकेवल्यादीनधिकृत्य पञ्चाशत्वर्ज्यानि शेषाणि नवोदीरणास्थानानि देवगतौ षडुदीरणास्थानानि मनुष्यगतिसयोगिकेवली तद्यथा द्विचत्वारिंशदेकपञ्चाशत् त्रिपञ्चाशत् चतुः पञ्चाशत् पञ्चपञ्चाशत् षट्पञ्चाशच्चेति । एतानि च सर्वाण्यपि प्राक् सप्रपञ्चं भावितानीति नेह भूयो भाव्यन्ते । तदेवमुक्तानि नामकर्म्मण सप्रपञ्चमुदीरणास्थानानि । सम्प्रति शेषकर्मणामुदीरणास्थानप्रतिपादनार्थमाह ( सेसकम्माणत्ति ) शेषकर्मणां ज्ञानावरणवेदनीयायुर्गोत्रान्तरायलक्षणानामुदीरणास्थानमेकैकमवगन्तव्य तद्यथा ज्ञानावरणान्तराययो पञ्चप्रकृत्यात्मकमेकैकमुदीरणास्थान वेदनीयायुर्गोत्राणान्तु वेद्यमानैकप्रकृत्यात्मक नह्यमीषां द्व्यादिका प्रकृतयो युगपदुदीर्यन्ते युगपदुदयाभावात् एतच्च ज्ञानावरणीयवेदनीयानामेकैकमुदीरणास्थानं प्रागेकैकप्रकृत्युदीरणायां स्वामित्वं साधयित्वा निश्चित्य गुणस्थानेषु नारकादिषु गतिषु स्वयमेव ज्ञेय ज्ञातव्यम् । तदेवमुक्ताः प्रकृत्युदीरणाः । सम्प्रति स्थित्युदीरणाभिधानावसरस्तत्र चेति अर्थाधिकारास्तद्यथा लक्षण भेदः साद्यनादिप्ररूपणा अद्धाच्छेद स्वामित्व चेति ॥

तत्र लक्षणभेदयो प्रतिपादनार्थमाह ।

संपत्तिए य उदये, पओगओ दिस्सए उईरणा सा ।
सेचिकाठिईहिं जाही, दुविहा मूलोत्तगाए य ॥२५३॥

इह द्विविध उदयः सम्प्राप्त्युदयोऽसम्प्राप्त्युदयश्च । तत्र यत्कर्म दलिक कालप्राप्त सदनुभूयते स सम्प्राप्त्युदय । तथाहि कालक्रमेण कर्मदलिकस्योदये हेतुद्रव्यक्षेत्रादिसामग्रीसम्प्राप्तौ सत्यामुदय सम्प्राप्त्युदय । यत्पुनरकालप्राप्त कर्म तद्दलिकमुदिरणा । तथाचाह या स्थितिरकालप्राप्तापि सती प्रयोगेण-उदीरणाप्रयोगेण सम्प्राप्त्युदये पूर्वोक्ते स्वरूपे प्रक्षिप्ता सती दृश्यते केवलचक्षुषा सा स्थित्युदीरणा । एष लक्षणनिर्देश । अधुना भेद उच्यते (सेचिकेत्यादि) इह यासां स्थितीनां भेद परिकल्पना सम्भवति ता पुरुषपरिभाषया सेचिका इत्युच्यन्ते ताश्च द्विधा उदीरणायाः प्रायोग्या अप्रायोग्याश्च काश्चाप्रायोग्या इति चेदुच्यते बन्धावलिका गता सङ्क्रमावलिकागताश्च उदयावलिकागताश्च प्रायोग्या "चकम्मबंध उदयवट्टणालिईण करणाइ' इति वचनप्रामाण्यात् शेषाश्च सर्वा अपि प्राय प्रायोग्या तत्रोदये सति यासां प्रकृतीनामुत्कृष्टबन्ध सम्भवति तासामुत्कर्षत आवलिका द्विकहीना सर्वाप्युत्कृष्टा स्थितिरुदीरणाप्रायोग्या तथाहि उदयोत्कृष्टबन्धानां तु ययास नवमुदीरणा प्रायोग्या । आवलिकाद्विकहीनायाश्चोत्कृष्टा स्थितेर्यावन्त समयास्तावन्त उदीरणाया भेदा तथाहि उदयावलिकाया उपरिवर्तिनी समयमात्रा स्थिति कस्याप्युदीरणाप्रायोग्यस्य तावत्यवशेषीभूता तिष्ठति एवं कस्यापि द्विसमयमात्रा कस्यापि त्रिसमयमात्रा एव । तावद्वाच्यम् आवलिका द्विकहीना कस्यापि सर्वाप्युत्कृष्टा स्थितिरिति । अक्षरयोजना त्वियम् सेचिकास्थितिभ्य उदीरणाप्रायोग्याभ्यो यकाभ्यो यावतीभ्य आवलिकाद्विकहीनोत्कृष्टस्थितिसमयप्रमाणाभ्य इत्यर्थ उदीरणाप्रयोगेण समाकृष्य स्थिति सम्प्राप्त्युदये दीयते तावती तावद्भेदप्रमाणा सा एषा उदीरणा । तदेव कृता भेदप्ररूपणा । सम्प्रति साद्यनादिप्ररूपणा सकर्त्तव्या । सा च द्विधा मूलप्रकृतिविषया उत्तरप्रकृतिविषया च ।

तत्र मूलप्रकृतिविषयां साद्यनादिप्ररूपणार्थमाह ।

मूलट्ठिइ अजहन्ना, मोहस्स चउव्विहा तिहा सिया ।
वेउणिया उण दुहासे, सांनगप्पा उ उज्जासि ॥२५४॥

स्यान्तर्मुहूर्तं द्विकोना सप्ततिसागरोपमकोटाकोटिप्रमाणा उत्कृष्टा स्थितिरुदीरणायोग्या भवति । तथा आहारकसप्तमप्रमत्तेन सता तद्योग्योत्कृष्टसंक्लेशेनोत्कृष्टस्थितिकं बद्ध तत्कालोत्कृष्टस्थितिक मूलप्रकृत्यभिन्नप्रकृत्यन्तरदलिकं च तत्र सङ्क्रमितमतस्ततसर्वोत्कृष्टा तत्सत्सागरोपमकोटाकोटीस्थितिक जात बन्धानन्तर चान्तर्मुहूर्तमतिक्रम्य आहारकशरीरमारभते । तदारभमाणा लब्ध्युपजीवनेनौत्सुक्यभावतः प्रमादभाग्भवति ततस्तस्य प्रमत्तस्य सत आहारकशरीरमुत्पादयतः आहारकसप्तस्यान्तर्मुहूर्त्तोना उत्कृष्टा स्थितिरुदीरणायोग्या । अत्र प्रमत्तस्य सत आहारकशरीरारम्भत्वात् उत्कृष्टस्थित्युदीरणा स्वामित्वप्रमत्तसयत एव वेदितव्या । शेषप्रकृतीनां सूत्रकृदेव विशेषमाचष्टे (निरयगणवाविति) नरकगतेरपिशब्दात् नरकानुपूर्व्याश्च तिर्यक्पञ्चेन्द्रियो मनुष्यो वा उत्कृष्टां स्थितिं बध्वा उत्कृष्टस्थितिबन्धानन्तर चान्तर्मुहूर्ते व्यतिक्रान्ते सति तिसृषु अधस्तनपृथवीषु मध्ये अन्यतरस्यां समुत्पन्नस्तस्य प्रथमसमये नरकगतेरन्तर्मुहूर्त्तहीने सर्वापि स्थितिर्विंशतिसागरोपमकोटाकोटीप्रमाणा उदीरणा योग्या भवति । नरकानुपूर्वी चापान्तरालगतौ समयत्रयं यावदुत्कृष्टस्थितिरुदीरणायोग्या भवति । अधस्तनपृथिवीत्रयग्रहणे किं प्रयोजनमिति चेदुच्यते । इह नरकगत्यादीनामुत्कृष्टां स्थितिं बध्नन् अवश्यं कृष्णलेश्यापरिणामोपेतो भवति कृष्णलेश्यापरिणाम पञ्चमपृथिव्यामुत्पद्यते । मध्यमकृष्णलेश्यापरिणाम षष्ठपृथिव्यामुत्कृष्टकृष्णलेश्यापरिणामः सप्तमपृथिव्यामित्यधस्तनपृथिवीत्रयग्रहणं कृतम् ॥

देवगतिदेवमणुआ-णुपुव्वि आयावविगलसुहमतिगे ।
अंतोमुहुत्तभागा, ताव ए गूणंतदुक्कस्स ॥ २५७ ॥

देवगतिर्देवानुपूर्वीमनुष्यानुपूर्वीणामातपस्य विकलत्रिकस्य द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियजातिरूपस्य सूक्ष्मत्रिकस्य सूक्ष्मसाधारणापर्याप्तकलक्षणस्य स्वस्वोदये वर्त्तमाना अन्तर्मुहूर्त्तभागा उत्कृष्टा स्थितिबन्धाध्यवसायानन्तमुहूर्त्तं काल यावत्परिभ्रष्टा सन्तस्तावदूनामन्तर्मुहूर्त्तोनां तत्तदुत्कृष्टां देवगत्यादिना उत्कृष्टां स्थितिमुदीरयन्ति । इयमत्र भावना । इह कश्चित् तथाविधपरिणामविशेषभावता नरकगतेरुत्कृष्टां स्थितिं दशसागरोपमकोटाकोटीप्रमाणां बद्धुमारभते ततस्तस्यां देवगतिस्थितौ बध्यमानायामावलिका उपरि बन्धावलिकाहीना आवलिकामात्रहीना जाता देवगतिं च बध्नन् जघन्येनाप्यन्तर्मुहूर्त्तं काल यावत् बध्नाति बन्धानन्तर च काल कृत्वा अनन्तरसमये देवो जातस्ततस्तस्य देवस्यानुभवतो देवगतिरन्तर्मुहूर्तोना विंशतिसागरोपमकोटाकोटीप्रमाणा उत्कृष्टा स्थित्युदीरणायोग्या भवति । ननूक्तयुक्त्यनुसारेणावलिकाधिकान्तर्मुहूर्तोना प्राप्नोति कथमुच्यते अन्तर्मुहूर्त्तोनेति नैष दोषः यत आवलिका प्रक्षेप्येति तदन्तर्मुहूर्त्तमेव केवल गृहान्तरमवगन्तव्यमित्येव देवानुपूर्व्या अपि वाच्यम् । तथा कश्चिन्नरकानुपूर्व्या उत्कृष्टां स्थितिं विंशतिसागरोपमकोटाकोटीप्रमाणं बध्वा ततः शुभपरिणामविशेषतो मनुष्यानुपूर्व्या उत्कृष्टां स्थितिं पञ्चदशसागरोपमकोटाकोटीप्रमाण बद्धुमारभते ततस्तस्यां मनुष्यानुपूर्व्या स्थितौ बध्यमानायामावलिकायामुपरि बन्धावलिकाहीनामावलिकामुपरितनीं सकलामपि नारकानुपूर्वी स्थितिं संक्रमयति ततो मनुष्यानुपूर्व्या अपि विंशतिसागरोपमकोटाकोटीप्रमाणा स्थितिरावलिकामात्रहीना जाता मनुष्यानुपूर्वी च बध्नन् जघन्येनाप्यन्तर्मुहूर्तं काल यावद्भवति तच्चान्तर्मुहूर्त्तमावलिकोनविंशतिसागरोपमकोटाकोटीप्रमाणा उदीरणा योग्या । ननु मनुष्यगतेरपि पञ्चदशसागरोपमकोटाकोट्योर्बन्धेनोत्कृष्टा स्थितिः प्राप्यते तथा मनुष्यानुपूर्व्या अपि नत्वेकस्या अपि विंशतिस्तत उभयोरपि संक्रमोत्कृष्टे संक्रमोत्कृष्टत्वात् विशेषे च कथ मनुष्यगतेरिव मनुष्यानुपूर्व्या अपि आवलिकात्रिकहीनोत्कृष्टा स्थितिरुदीरणायोग्या न भवति तन्न युक्त मनुष्यानुपूर्व्या अनुदयसंक्रमोत्कृष्टत्वात् तदुक्त " मणुयाणुपुव्विमीसग, आहारग देवजुअलविगलाणि । सुहुमा तिग तित्थ अणुदय संकमण उक्कोसा , अनुदयः संक्रमोत्कृष्टानां च जघन्यतोऽप्यन्तर्मुहूर्तोनायाः एवोत्कृष्टस्थितेरुदीरणायोग्यत्वात् मनुष्यगतिस्तूदयसंक्रमोत्कृष्टा तदुक्त " मणुयगई साईय सम्म विरहा सइय लवेय सुन । खगई रिसभ चउरंस पणुच्च उदसंकमुक्कोसा "ततस्तस्या आवलिकात्रिकहीने चोत्कृष्टा स्थितिरुदीरणायोग्या भवति एवमातपादीनामप्यन्तर्मुहूर्तोना उत्कृष्टा स्थितिरुदीरणा योग्या भवतु आतपानामनुबन्धोत्कृष्ट ततस्तस्य स्थितीनां प्रकृतीनामन्तर्मुहूर्त्तोना उत्कृष्टा स्थितिरुदीरणायोग्या भवतु आतपानामनुबन्धोत्कृष्टा ततस्तस्य बन्धोदयावलिकाद्विकरहिते चोत्कृष्टस्थितिरुदीरणा प्रायोग्या भावनीया । ननु अनुदयसंक्रमोत्कृष्टा स्थितीनां प्रकृतानामन्तर्मुहूर्त्तोना उत्कृष्टा स्थितिरुदीरणा योग्या भवतु कथमुच्यते अन्तर्मुहूर्तोनेति उच्यते इह देव एवोत्कृष्टे संक्लेशे वर्तमान एकेन्द्रियाणामेकेन्द्रियप्रायोग्याणामातपस्थावरैकेन्द्रियजातीनामुत्कृष्टां स्थितिं बध्नाति नान्य स च तां बध्वा तत्रैव देवभवे अन्तर्मुहूर्तं काल यावत् भवति ततस्तत काल कृत्वा बादरपृथ्वीकायिकेषु मध्ये समुत्पद्यते समुत्पन्नस्सन् शरीरपर्याप्त्या पर्याप्तः आतपनामोदये वर्त्तमानस्तदुदीरयति तत एव सति तस्यान्तर्मुहूर्त्तोनैवोत्कृष्टा स्थितिरुदीरणा योग्या न भवति आतपग्रहण चोपलक्षण तेनान्यासामपि स्थावरैकेन्द्रियजातिनरकद्विकतिर्यग्द्विकौदारिकसप्तकान्त्यसंहनननिद्रापञ्चकरूपाणामेकोनविंशतिसंख्याकानामनुदयबन्धोत्कृष्टानामन्तर्मुहूर्तोना उत्कृष्टा स्थितिरुदीरणायोग्या वेदितव्या । तत्र स्थावरैकेन्द्रियजातिनरकद्विकाना भावना कृता शेषाणां क्रियते । तत्र नारकस्तिर्यग्द्विकौदारिकसप्तकान्त्यसंहननानामुत्कृष्टां स्थितिं बध्वा ततो मध्यमपरिणामस्तत्र तत्र चान्तर्मुहूर्ते गते सति निद्रोदये उत्कृष्टोदीरणा करोति ।

तित्थयरस्स पल्लासं, खिज्जऽमे जहन्नगे इत्तो ।
थावर जहन्नसंते, ण समं अहिगं व बंधंतो ॥२५८॥
गंतूणावलिमित्तं, कसाय बारसगभय दुगंछाणं ।
निद्दा य पचगस्स य, आया उज्जो य नामस्स ॥२५९॥

इह पूर्वं तीर्थंकरनाम्न स्थितिशुभैरध्यवसायैरपवर्त्यापवर्त्य पल्योपमासंख्येयभागमात्रा शेषीकृता ततोऽनन्तरसमये उत्पन्नकेवलज्ञान स नामुदीरयति उदीर्यतश्च प्रथमसमये उत्कृष्टा उदीरणा सर्वदैव च इयन्मात्रैव स्थितिरुत्कृष्टा तीर्थकरनाम्नः उदीरणायोग्या प्राप्यते नाधिकेति । तदेवमुत्कृष्टस्थित्युदीरणास्वामित्वमुक्तम् । सम्प्रति जघन्यस्थित्युदीरणास्वामित्वमाह । ( जहन्नगे इत्तो त्ति ) इत ऊर्ध्वं जघन्ये जघन्यस्थित्युदीरणाया स्वामित्वमभिधीयते प्रतिज्ञातमेव निर्वाहयन्ति ।(थावरजहन्नेत्यादि) स्थावरस्य सतो ऽसज्जघन्यस्थित्युदीरणा सर्वस्तोक स्थितिसत्कर्मा तेन समधिकं वा मनागमात्रे-

णान्निनवकर्मा स एव जघन्यस्थितिकर्मा स्थावर एकेन्द्रियो यन्नन् बन्धावलिकायामतीतायामित्यर्थः । आद्य द्वादशकषायभयजुगुप्सानिद्रापञ्चकातपोद्योतनाम्नामेकविंशतिप्रकृतीनां जघन्यां स्थित्युदीरणां करोति इहातपोद्योतवर्जानामेकोनविंशतिप्रकृतीनां ध्रुवबन्धित्वादातपोद्योतयोस्तु प्रतिपक्षाभावात् अन्यत्र जघन्यतरा स्थितिर्न प्राप्यते ततः एकेन्द्रिय एव यथोक्तस्वरूपम् । आसां प्रकृतीनां जघन्यस्थित्युदीरणास्वामी ।

एगिंदिय जोग्गाणं, इयरा बंधित्त आलिगं गंतु ।
एगिंदियागए त-द्विय जाईणमवि एव्वं ॥ २६० ॥

एकेन्द्रियाणामेव उदीरणा सम्प्रति या योग्याः प्रकृतयस्ता एकेन्द्रिययोग्याः । एकेन्द्रिया जातिस्थावराः सूक्ष्मसाधारणनामानस्तासामेकेन्द्रियो जघन्यास्मिन् स्थिति सत्सत्कर्मा इतरा एकेन्द्रियजात्यादिप्रतिपक्षभूता द्वीन्द्रियजात्यादिकाः प्रकृतीर्बध्नाति । तद्यथा एकेन्द्रियजातिर्द्वीन्द्रियजातित्रीन्द्रियजातिचतुरिन्द्रियजातिस्थावरसूक्ष्मसाधारणानां त्रसबादरप्रत्येकनामानि ततः एकेन्द्रियजात्यादीनि बध्नाति ततो बन्धावलिकां गत्वा अतिक्रम्य बन्धावलिकायाश्चरमसमये एकेन्द्रियजात्यादीनां जघन्यां स्थित्युदीरणां करोति । इयमत्र भावना एकेन्द्रियः सर्वजघन्यस्थितिसत्कर्मा द्वीन्द्रियजातीः सर्वा अपि परिपाट्या बध्नाति ततस्तावद्बन्धानन्तरमेकेन्द्रियजातिर्बद्धुमारभते ततो बन्धावलिकायाश्चरम समये पर्यवद्धायास्तस्या एकेन्द्रियजातिर्जघन्यां स्थित्युदीरणां करोति । इह बन्धावलिकाया अनन्तरसमये बन्धावलिका प्रथमसमयबद्धा । अपि च ता उदीरणामायान्ति ततो जघन्या स्थित्युदीरणा न प्राप्यते इति कृत्वा बन्धावलिकायाश्चरमसमये इत्युक्त यावता कालेन प्रतिपक्षभूता प्रकृतीर्बध्नाति तावता कालेनान्यूना एकेन्द्रियजातिस्थितिर्भवति ततस्तोकतरा प्राप्यते, इति प्रतिपक्षभूतप्रकृतिबन्धोपादानम् । एव स्थावरसूक्ष्मसाधारणनामापि भावना कर्त्तव्या केवलमेतयोः प्रतिपक्षभूताः प्रकृतयः त्रसबादरप्रत्येकनामानो वक्तव्या । ( एगिंदियागएत्ति ) जातीनामपि द्वीन्द्रियादिजातीनामपि एव पूर्वोक्तप्रकारेण एकेन्द्रियादागतस्तत्स्थितिक एकेन्द्रिययोग्यतया जघन्यस्थितिका जघन्या स्थित्युदीरणां करोति । अत्रापीय भावना । एकेन्द्रियो जघन्यस्थिति सत्कर्मा एकेन्द्रियभवादुद्वृत्य द्वीन्द्रियेषु मध्ये समुत्पन्नस्तत पूर्वबद्धां द्वीन्द्रियजातिमनुभवितुमारभते । अनुभवप्रथमसमयादारभ्य च एकेन्द्रियजातिर्दीर्घं काल यद्धु लब्धस्ततस्तस्यैव द्वीन्द्रियजातिर्बद्धुमारभते ततो बन्धावलिकायाश्चरमसमये तस्या द्वीन्द्रियजातिरेकेन्द्रियजातिभवोपार्जितस्थितिसत्कर्मापेक्षया, अन्तर्मुहूर्त्तं चतुष्टयबन्धावलिकाचरमसमये ग्रहणे न कारण प्रागेवोक्तम् । एव त्रीन्द्रियचतुरिन्द्रियजात्योरपि भावना कार्या ।

वेयणियनो कसाया, सम्मत्तसंघयणपंचनीयाए ।
निरिय दुगअरसदुभगणा, पुव्वाणं च सनिगए॥२६१॥

सातासातवेदनीयहास्यरत्यरतिशोकपर्याप्तकानिमपञ्चसंहननानि नीचैर्गोत्रतिर्यग्गतितिर्यगानुपूर्व्ययशःकीर्त्तिदुर्भगानादेयरूपाणामष्टादशप्रकृतीनां संज्ञिपञ्चेन्द्रियगते जघन्या स्थित्युदीरणा । भावना त्वियम् । एकेन्द्रियो जघन्यस्थितिसत्कर्मा एकेन्द्रियभवादुद्वृत्य पर्याप्तसंज्ञिपञ्चेन्द्रियेषु मध्ये समुत्पन्नः उत्पत्तिप्रथमसमयादारभ्य च सातवेदनीयमनुभवन् असातवेदनीय बृहत्तरमन्तर्मुहूर्त्तं काल यावत् बध्नाति ततः पुनरपि सात बद्धुमारभते ततो बन्धावलिकायाश्चरमसमये पूर्वबद्धस्य सातवेदनीयस्य जघन्यां स्थित्युदीरणां करोति एवमसातवेदनीयस्यापि द्रष्टव्यं केवल सातवेदनीयस्थाने असातवेदनीयमुच्चारणीयम् । असातवेदनीयस्य सातवेदनीयमिति हास्यरत्यरसातवद्भावना कार्या आसमाप्तम् । अपर्याप्तकनाम एकेन्द्रियो जघन्यस्थितिसत्कर्मा एकेन्द्रियभवादुद्वृत्य पर्याप्तसंज्ञिपञ्चेन्द्रियमध्ये समुत्पन्न उत्पत्तिप्रथमसमयादारभ्य च पर्याप्तकनाम बृहत्तरमन्तर्मुहूर्त्तं काल यावद् बध्नाति ततः पुनरपि अपर्याप्तकनाम बद्धुमारभते बन्धावलिकायाश्चरमसमये पूर्वबद्धस्यापर्याप्तकनाम्नो जघन्यां स्थित्युदीरणां करोति संहननपञ्चकस्य तु मध्ये वेद्यमान संहनन मुक्त्वा शेषसंहननं प्रत्येकं बन्धकालोऽतिदीर्घो वक्तव्यः । ततो वेद्यमानसंहननस्य बन्धे बन्धावलिकाचरमसमये स्थित्युदीरणा नीचैर्गोत्रमसातवद्वेदितव्यम् । तथा तेजस्कायिको वायुकायिको बादरसर्वजघन्यस्थितिसत्कर्मा पर्याप्तसंज्ञितिर्यक्पञ्चेन्द्रियेषु मध्ये समुत्पन्नस्ततो बृहत्तरमन्तर्मुहूर्त्तं काल यावन्मनुजगतिं बध्नाति तद्बन्धानन्तरं च तिर्यग्गतिं बद्धुमारभते । तत आवलिकायाश्चरमसमये तस्यास्तिर्यग्गतिर्जघन्यां स्थित्युदीरणां करोति एव तिर्यगानुपूर्व्या अपि वक्तव्य नवरमपान्तरालगतौ तृतीयसमये जघन्या स्थित्युदीरणा वाच्या अयशःकीर्त्तिदुर्भगानादेयानां चासातस्यैव भावना कार्या केवलमिह प्रतिपक्षप्रकृतीनां यशःकीर्तिसुभगादेयानां बन्धो वाच्यः ।

अमणागयस्स चिरठिअंत, सुरनरयगइउवंगाणं ।
अणुपुव्वीति समइग, नराए एगेंदिआ गयगे ॥२६२॥

अमनस्कादसंज्ञिपञ्चेन्द्रियादुद्वृत्य देवेषु वा मध्ये समागतस्य सुरगतिनरकगतिवैक्रियाङ्गोपाङ्गनाम्ना स्वस्वायुर्दैर्घ्यस्थित्यन्तरे जघन्या स्थित्युदीरणा । एतदुक्त भवति असंज्ञिपञ्चेन्द्रियः सर्वजघन्यां सुरगतिस्थितिं बद्ध्वा बन्धानन्तरं च दीर्घकालं तत्रैव स्थित्वा देवेषु नारकेषु वा मध्ये पल्योपमासंख्येयभागमात्रायुःस्थितिकः समुत्पन्नस्ततस्तस्य देवस्य नारकस्य वा स्वस्वायुषश्चिरस्थित्यन्ते चरमसमये वर्त्तमानस्य यथायोग देवगतिनरकगतिवैक्रियाङ्गोपाङ्गनाम्नां जघन्या स्थित्युदीरणा स एवासंज्ञिपञ्चेन्द्रियो देवस्य नरकस्य वा भवस्यापान्तरालगतौ वर्त्तमानो यथासंख्य देवानुपूर्वीनारकानुपूर्व्योश्च तृतीयसमये जघन्यां स्थित्युदीरणां करोति । ( नराए एगेंदिआगयगेत्ति ) एकेन्द्रियः सर्वजघन्यमनुष्यानुपूर्वीस्थितिः सत्कर्मा एकेन्द्रियभवादुद्वृत्य मनुष्येषु मध्ये उत्पद्यमानो ऽपान्तरालगतौ वर्त्तमानो मनुष्यानुपूर्व्यास्तृतीयसमये जघन्यस्थित्युदीरणास्वामी भवति ।

समया हिगालगाए, पढमट्टिइओ सेसवेलाए ।
मिच्छत्ते वेगासु य, संजलनासु वि य सम्मत्ते ॥२६३॥

इह अन्तरकरणे कृते अधस्तनी स्थितिः प्रथमा स्थितिरित्युच्यते । उपरितनी तु द्वितीयेति । तत्र प्रथमस्थितेः शेषवेलायां समयाधिकावलिकाप्रमाणाया मिथ्यात्ववेदत्रिकं संज्वलनचतुष्टय सम्यक्त्वानां जघन्यस्थित्युदीरणा भवति नवरं सम्यक्त्वसंज्वलनयोः क्षये उपशमे वा जघन्या स्थित्युदीरणा द्रष्टव्या ।

पल्लासंखियभागणुदए, एगिंदिआगए मिस्से ।
वेसत्तभागवेउ-व्विआए पवेणस्स तस्स ॥२६४॥

पल्योपमासंख्येयभागानभ्युदये एक सागरोपमं तावन्मात्र सम्यग्मिथ्यात्वस्थितिसत्कर्मा एकेन्द्रियभवादुद्धृत्य सांज्ञिपञ्चेन्द्रियमध्ये समयतस्तस्य यत समयादारभ्य अन्तर्मुहूर्त्तानन्तर सम्यङ्मिथ्यात्वस्योदीरणापगमिष्यति तस्मिन्सम्यङ्मिथ्यात्वप्रतिपन्नस्य चरमसमये सम्यङ्मिथ्यात्वस्य जघन्या स्थित्युदीरणा एकेन्द्रियस्तत्कर्मणो जघन्यस्थितिसत्कर्मणश्च सकाशादधोवर्त्तमान सम्यङ्मिथ्यात्वमुदीरणायोग्यं न भवति तावन्मात्रस्थितिके तस्मिन्नवश्य मिथ्यात्वोदयसम्भवस्तद्भवनसमवात् । तथा यै सप्तभिर्भागैस्सागरोपम भवति तौ द्वौ सप्तभागौ यस्य वैक्रियषट्कस्य वैक्रियशरीरवैक्रियसघातवैक्रियबन्धनचतुष्टयरूपस्य तद्द्विसप्तभागैर्वैक्रिय ततो विशेषणसमास· प्राकृतत्वात् स्त्रीत्वनिर्देश· । इहापि " पल्लासखियभागेण " इत्यनुवर्त्तते ततश्च द्विसप्तभागैर्वैक्रियषट्कस्य पल्योपमासख्येयभागहीनस्य पवनस्य बादरवायुकायिकस्य तस्य वैक्रियपर्यन्तसमये जघन्या स्थित्युदीरणा । एतदुक्त भवति बादरवायुकायिक पल्योपमासख्येयभागहीनसागरोपमद्विसप्तभागप्रमाणैर्वैक्रियषट्कस्य जघन्यस्थितिसत्कर्म बहुशो वैक्रियमारभ्य चरमसमये वैक्रियारम्भे चरमसमये वर्त्तमानो जघन्यस्थित्युदीरणां करोति अनन्तरसमये च वैक्रियषट्कमेकेन्द्रियसत्कर्म जघन्यषट्कर्मापेक्षया स्तोकतरमिति कृत्वा उदीरणायोग्य न भवति । किंतूद्वलनायोग्यम् ।

चउरुवसमत्तपेम्मं, पच्छामिच्छं खवेत्तु तेत्तीसा ।
उक्कोससंजमद्धा, अंते सुतणुउवंगाणं ॥२६५॥

ससारपरिभ्रमणेन चतुरो वारान् प्रेम मोहनीयमुपशमय्य ततो मिथ्यात्वमुपलक्षणमेतत् सम्यक्त्वं सम्यग्मिथ्यात्व क्षपित क्षपयित्वा त्रयस्त्रिंशत्सागरोपमस्थितिको देवो जात । ततो देवभवाच्च्युत्वा मनुष्येषु मध्ये समुत्पन्नस्ततो वर्षाष्टकानन्तर तत्समयसयमप्रतिपन्नेऽप्रमत्तभावे चाहारकसप्तकं बध्वास्ततो देशानां पूर्वकोटिं यावत्सयम परिपालितवास्ततो देशोनपूर्वकोटिपर्यन्ते आहारकशरीर कृत्वा(सुतणुत्ति)आहारकशरीरम् ( उवगत्ति ) आहारकाङ्गोपाङ्ग बहुवचनादाहारकबन्धनचतुष्टयाहारकसघातपरिग्रह तेषां जघन्यां स्थित्युदीरणां करोति इह मोहोपशम कुर्वन् शेषनामकर्मप्रकृतीनां घातादिभि प्रभूत स्थितिसत्कर्म घातयति । देवभवे चापवर्त्तनाकरणेनापवर्तयति तत आहारकसप्तक बन्धकाले स्तोकमेव स्थितिसत्कर्म सक्रमयति ततो देशोनपूर्वकोट्युपादानम् ।

छउमत्थ खीणरागे, चउदसमसमयाहि गालिगट्ठिइए ।
सेसाणुदीरणंते, भिन्नमुहुत्तो ठिईकालो ॥२६६॥

छद्मस्थक्षीणरागस्य पञ्चविधज्ञानावरणचक्षुरवधिकेवलदर्शनावरणपञ्चविधान्तरायलक्षणानां चतुर्दशप्रकृतीनां समयाधिकावलिका शेषायां स्थितौ जघन्या स्थित्युदीरणा शेषाणां च प्रकृतीनां मनुजगतिपञ्चेन्द्रियजातिप्रथमसहननौदारिकसप्तकसस्थानषट्कोपघातप्रशस्ताप्रशस्तविहायोगति त्रसबादरपर्याप्तप्रत्येकशुभगसुस्वरादेययश कीर्त्तितीर्थकरोच्चैर्गोत्रलक्षणाना द्वात्रिंशत्प्रकृतीना पूर्वोक्तानां च नाम ध्रुवोदीरणाया त्रयस्त्रिंशत्प्रकृतीनां सर्वसख्यया पञ्चषष्टिसख्याकानां सयोगिकेवलचरमसमये जघन्या स्थित्युदीरणा तस्याश्च जघन्याया कालो भिन्नमुहूर्तोऽन्तर्मुहूर्त्तमित्यर्थ· । आयुषामप्युदीरणान्ते जघन्या स्थित्युदीरणा । सम्प्रति भागोदीरणावसरस्तत्र च इमे अर्थाधिकारास्तद्यथा सञ्ज्ञाशुभाशुभविपाकसूचनार्थमाह ।

अणुभागुदीरणाए, सन्ना य सुभासुभ विभागो य ।
अणुभागबंधभणिआ, ताणत्तं पच्चया चेमे ॥२६७॥

अनुभागोदीरणायां सञ्ज्ञाशुभाशुभविपाकश्च यथा शतकाख्ये ग्रन्थे ऽनुभागा बन्धाभिधानावसरे भणितास्तथाऽत्रापि द्रष्टव्या· । तत्र सञ्ज्ञासञ्ज्ञिद्विभेदात् स्थानसंज्ञा घाति सञ्ज्ञा च । सञ्ज्ञा चतुर्विधा एकस्थानको द्विस्थानकस्त्रिस्थानकश्चतुःस्थानकश्च । घातिसञ्ज्ञा त्रिप्रकारा तद्यथा सर्वघाती देशघाती अघाती च । तथा शुभकर्मणामनुभाग· क्षीरखण्डोपम । अशुभकर्मणां त्वशुभघाति घोषातकीनिम्बरसोपम· । एषा च स्थानसञ्ज्ञा घातिसञ्ज्ञा शुभाशुभप्ररूपणा च प्रागनुभागसक्रमाभिधानावसरे सप्रपञ्च कृतेति न भूयो-विज्ञायते । विपाकश्चतुर्विध पुद्गलविपाक· क्षेत्रविपाको भवविपाको जीवविपाकश्च । तत्र पुद्गलानधिकृत्य यस्य रसस्य विपाकोदय· स पुद्गलविपाक । स च सस्थानषट्कसहननषट्कातपशरीरपञ्चकाङ्गोपाङ्गत्रयोद्योतनिर्माणस्थिरास्थिरवर्णादिचतुष्कागुरुलघुशुभाशुभपराघातोपघातप्रत्येकसाधारणनाम्ना षट्त्रिंशत्प्रकृतीनामवगन्तव्य । तथाहि सस्थानेनामादीनि औदारिकादिपुद्गलानेवाधिकृत्य स्वविपाकमुपदर्शयन्ति तत आसां रस पुद्गलविपाक एव । नन्वनया युक्त्याऽरत्योरत्योरपि रस पुद्गलविपाक एव प्राप्नोति । तथाहि कण्टकादिसस्पर्शादरतिविपाकोदयो भवति स्रक्चन्दनादिसस्पर्शाच्च रतेः तत्कथ स नोक्त· । उच्यते रत्यगतिविप.कस्य पुद्गलव्यभिचारात् । तथाहि कण्टकादिसस्पर्शव्यतिरेकेऽपि प्रियस्मरणादिना कदाचिद्रत्योर्विपाकादयो दृश्यन्ते ततोऽनयोरनुभागजीवविपाक एव युक्तो न पुद्गलविपाक एव क्रोधादिविपाको भावनीय । उक्त च ।

अरइ रईण उदयो किन्न भवे पोग्गलानि सपप्पा ।
अप्पुट्ठेहिं विकन्नो एव कोहाइयाण पि ॥

अस्याश्चाक्षरगमनिका । अरतिरत्योरुदयो विपाकोदय· पुद्गलान् प्राप्य किन्न भवति भवत्यवेति भाव । तत कथ तयो रसपुद्गलविपाको नोच्यन्ते अत्राचार्य काक्का प्रत्युत्तरमाह ( अप्पुट्ठेहिं वि कन्नो ) अत्र भ्पत्तम्यर्थे तृतीया ततो ऽयमर्थ । अस्पृष्टेष्वपि पुद्गलेषु किं न तयोरत्यरत्यो विपाकोदयो भवति भवत्येवेति भाव । तत पुद्गलव्यभिचारात् तयो रसपुद्गलविपाको न भवति किं तु जीवविपाक एव एव क्रोधादीनामपि वाच्यम् । तथा क्षेत्रमधिकृत्य यस्य रसस्य विपाकोदय· स रस क्षेत्रविपाक· । स च चतसृणामानुपूर्वीणामवगन्तव्य । तथा भवमधिकृत्य यस्य रसस्य विपाकोदय स रसो भवविपाक स च चतुर्णामायुषामवसेय । अयोच्यते तत· कथ तासां रसो भवविपाको नाभिधीयते तद्युक्त व्यभिचारात् । तथाहि आयुषां स्वभवमन्तरेण परभवे सक्रमेणाप्युदयो भवति तत सर्वथा स्वभवाव्यभिचारात्तानि भवविपाकान्युच्यन्ते गतीनां पुन परभवेऽपि सक्रमेणोदयो भवति तत स्वभवव्यभिचारात् न ता भव-

विपाकशून्या । उक्तं च " आउयभवविवागा गईउ आउ-स्स परभवे जम्हा । नो सव्वहा वि उदओ गईण पुण संकमेणत्थि " सुगमा शेषाणा त्वष्टसप्ततिसंख्यानां प्रकृतीनां जीवविपाको रसः जीवमधिकृत्य विपाको यस्यासौ जीवविपाकः ( नाणत्त पच्चयामेत्ति ) नानात्व विशेषो यस्तत्र शतकाख्ये ग्रन्थे अनुभागबन्धेनोक्त तदिह बन्धे उक्तस्य च विशेषमित्यर्थस्तथा तत्र बन्धमाश्रित्य अन्ये एवं मिथ्यात्वादय प्रत्ययाः उक्ता । इह उदीरणामाश्रित्य अन्ये एवं वक्ष्यमाणा ज्ञातव्याः तत्र नानात्वप्ररूपणार्थमाह ।

मीसुदुट्ठाणे मन्दघाइ, दुट्ठाण एगट्ठाणे य ।
सम्मत्तमंतरायं च, देसघाई अचक्खुवृत्र ॥ ६९० ॥

सम्यङ्मिथ्यात्व स्थानसंज्ञामधिकृत्य द्विस्थानक द्विस्थानकरसोपेत घातिसंज्ञामधिकृत्य सर्वघातिरसयुक्तं पुनरुत्कृष्टोदीरणामधिकृत्य द्विस्थानकरसोपेतं जघन्योदीरणां त्वधिकृत्य एकस्थानकं घातिसंज्ञामधिकृत्य च देशघाति वेदितव्यम् । एतच्च तत्र सर्वथा नोक्तं किंत्विहैव यत्र तत्रानुसारेण भागवन्धमाश्रित्य शुभाशुभप्ररूपणा कृता । नच सम्यक्त्वसम्यङ्मिथ्यात्वयोर्बन्ध संभवति नत एतद्वर्जा एव तत्राशुभप्रकृतयो निर्दिष्टा उदीरणा त्वेनयोरपि भवति तत इह विशेषेणैव तयोरुपादानम् । तथान्तरायपञ्चकप्रकारम् । उत्कृष्टामनुभागोदीरणामधिकृत्य द्विस्थानके एकस्थानके च घातिसंज्ञामधिकृत्य देशघाति वेदितव्यम् । बन्ध प्रतीत्य पुनश्चतुःप्रकारेऽपि रसस्तद्यथा-चतुःस्थानके त्रिस्थानके द्विस्थानके एकस्थानके च । अचक्षुर्दर्शन घातिसंज्ञामधिकृत्य देशघाति ।

ठाणेसु चउसु अपुमं, दुठाणे कक्खडगुरुकंच ।
अणुपुव्वीओ तीसं, नरतिरियगंत जोगाऽ य ॥६९१॥

नपुंसकवेदो बन्ध प्रतीत्य त्रिप्रकारे रसे । तद्यथा चतुःस्थानके त्रिस्थानके द्विस्थानके च । अत्र नुत्कृष्टामनुभागोदीरणामधिकृत्य चतुःस्थानके अनुत्कृष्टां त्वधिकृत्य चतुःस्थानके त्रिस्थानके एकस्थानके च । ननु बन्धाभावे कथमुदीरणायामेकस्थानको रसो नपुंसकवेदस्य प्राप्यते उच्यते क्षपणाकाले रसघाते कृते तस्य एकस्थानकस्यापि रससंभवात् । तथा कर्कशनाम गुरुनाम च बन्ध प्रतीत्य चतुःस्थानके त्रिस्थानके द्विस्थानके च । इह त्वनुभागोदीरणामधिकृत्य द्विस्थानके तथा चतस्र आनुपूर्व्यो भावचारित्रस्थामुदयं प्रति एकान्तयोग्याः किंदात प्रकृतयस्तद्यथा-मनुष्यायुस्तिर्यगायुर्मनुष्यगतिरेकेन्द्रियजातिर्द्वीन्द्रियजातिस्त्रीन्द्रियजातिश्चतुरिन्द्रियजातिश्चा-दारिकसप्तकम् । आद्यन्तवर्जसंस्थानचतुष्टयं संहननषट्कमातपस्थावरसूक्ष्मपर्याप्तसाधारणं चेति । ता अपि बन्ध प्रतीत्य चतुःस्थानके त्रिस्थानके द्विस्थानके च । इह त्वनुभागोदीरणामुत्कृष्टामनुत्कृष्टां चाधिकृत्य द्विस्थानके रसे वेदितव्या ।

वेया एगट्ठाणे, दुट्ठाणे वा अचक्खु चक्खु अवेदा ।
इत्थिनपि पुमावि, अवरं तु सम्मगवाणि ॥६९२॥

स्त्रीवेद-पुरुषवेदोऽनुभागोदीरणामुत्कृष्टामधिकृत्य द्विस्थानके अनुत्कृष्टां त्वधिकृत्य त्रिस्थानके एकस्थानके वा ज्ञातव्यौ । एवमचक्षुश्चक्षुर्दर्शनावरणे च बन्धं प्रतीत्य पुनश्चतुःस्थानके त्रिस्थानके द्विस्थानके एकस्थानके पुरुषवेदो ज्ञेयः । दर्शनावरणे चक्षुर्दर्शनावरणे च चतुःप्रकारे ऽपि । तद्यथा चतुःस्थानके त्रिस्थानके द्विस्थानके एकस्थानके च । ननु " देसघाइ अचक्खुचक्खू यत्ति " प्रागेवोक्त तत्किमर्थं पुनरिहाचक्षुर्दर्शनावरणोपादानमुच्यते स्थाननियमार्थम् । पूर्वं हि देशघातित्वमेवाचक्षुर्दर्शनावरणस्योक्तमत्र तु रसस्थाननियमः । ( जस्सत्थिएत्ति ) यस्य जीवस्य एकमप्यक्षरं सर्वपर्यायैः परिज्ञातं वर्त्तते तस्य श्रुतकेवलिनो मतिश्रुतावधिदर्शनावरणप्रकृतीनामनुभागोदीरणायामेकस्थानको रसः प्राप्यते संज्वलनानां तु बन्धे अनुभागोदीरणायां च चतुःप्रकारेऽपि रसः । तद्यथा । चतुःस्थानकः त्रिस्थानको द्विस्थानकः एकस्थानकश्च ।

मणनाणं सेससमं, मीसगसम्मत्तमाविय पावेसु ।
छट्ठाणवडियहीणा, उक्कोसाणुभागुदीरणा कुणइ ॥६९३॥

मनःपर्यायज्ञानं शेषैः कर्मभिः समं वेदितव्यम् । इयमत्र भावना । यथा शेषकर्मणामनुभागोदीरणा चतुःस्थानकस्य त्रिस्थानकस्य द्विस्थानकस्य चरमस्य भवति तथा मनःपर्यायज्ञानावरणकर्मणामनुभागोदीरणा वरणस्यापि द्रष्टव्या एवं पुनर्मनःपर्यायज्ञानावरणस्य चतुःप्रकारोऽपि रसो भवति शेषकर्मणां तु बन्धे त्रिप्रकारस्तद्यथा चतुःस्थानकस्त्रिस्थानको द्विस्थानकश्च । तानि च शेषकर्माण्यमूनि । तद्यथा केवलज्ञानावरण निद्रापञ्चक केवलदर्शनावरण च सातासातवेदनीये, मिथ्यात्व द्वादश कषाया षट् नोकषायाः नरकायुर्देवायुः नरकगतिर्देवगतिः पञ्चेन्द्रियजातिस्तैजससप्तकं वैक्रियसप्तकमाहारकसप्तकं समचतुरस्रसंस्थानं हुण्डकसंस्थान वर्णपञ्चक गन्धादिक रसपञ्चकं स्निग्धरुक्षमृदुलघुशीतोष्णरूप षट्कम् अगुरुलघूपघात पराघात मुच्छ्वासोद्योतप्रशस्ताप्रशस्तविहायोगतित्रस बादरपर्याप्तप्रत्येकस्थिरास्थिरशुभाशुभदुर्भग सु स्वरसुस्वरानादेययशःकीर्त्तिनिर्माणतीर्थकरोच्चैर्गोत्रनीचैर्गोत्राणि च । एतेषां च एकोत्तरशतं संख्यानां शेषकर्मणामुत्कृष्टामनुभागोदीरणामधिकृत्य चतुःस्थानको रसः । अनुत्कृष्टां त्वधिकृत्य चतुःस्थानकस्त्रिस्थानको द्विस्थानकश्च मतिश्रुतावधिमनःपर्यायज्ञानावरण चक्षुरचक्षुरवधिदर्शनावरणानामुत्कृष्टामनुभागोदीरणामधिकृत्य रसः । स च घाती अनुत्कृष्टां त्वधिकृत्य सर्वघाती देशघाती वा । केवलज्ञानावरणनिद्रापञ्चकमिथ्यात्वद्वादशकषायाणामुत्कृष्टामनुत्कृष्टां वा अनुभागोदीरणामधिकृत्य रसघाती सर्वघाती सातासातवेदनीयायुश्चतुष्टयसकलनामप्रकृतिगोत्रद्विकानामुत्कृष्टामनुत्कृष्टां वा उदीरणामधिकृत्य रसः सर्वघाती अनुत्कृष्टां त्वधिकृत्य सर्वघाती वा प्रतिपत्तव्यः । इदानीमशुभप्रकृतिविपर्यासविशेषमाह ( मीसगसम्मत्तेत्ति ) अपि च सम्यङ्मिथ्यात्व सम्यक्त्व चानुभागोदीरणामधिकृत्य पापेषु पापकर्मसु मध्ये ऽवगन्तव्यम् । घातित्वभावतया तयो रसस्य अशुभत्वात् शेषप्रकृतयस्तु यथाशतकग्रन्थे अनुभागबन्धे शुभाशुभाश्चोक्तास्तथात्राप्यवगन्तव्याः । कीदृशे अनुभागसत्कर्मणि वर्त्तमान उत्कृष्टामनुभागोदीरणा करोति उच्यते-(छट्ठाणवडियहीणेत्ति) अनुभागसत्कर्मणि षट्स्थापना पतितहीनादपि उत्कृष्टामनुभागोदीरणां करोति इत्यतेः प्रवचने एतदुक्तं भवति यत्सर्वोत्कृष्टमनुभाग सत्कर्म तस्मिन् अनन्तभागहीने वा संख्यातभागहीने वा असंख्येयगुणहीने वा अनन्तगुणहीने वा उत्कृष्टा अनुभागोदीरणा प्रवर्त्तते यतोऽनन्तानन्तस्पर्धकानामनुभागे

क्षपते अनन्तानि स्पर्द्धकानि उत्कृष्टरसान्यद्यापि तिष्ठन्ति। ततोऽनन्तभागेऽपि शेषे मूलानुभागसत्कर्मापेक्षयाऽनन्तगुणहीना उत्कृष्टानुभागोदीरणा लभ्यते किं पुनरसंख्येयगुणहीनादावनुभागकर्मणीति।

सम्प्रति विपाके विशेषमाह।

विरियंतरायकेवल-दंसणमोहणीयणाणवरणाणं।

असमत्तपज्जएसु, सव्वदव्वेसु वि विवागो ॥२७२॥

वीर्यान्तरायकेवलदर्शनावरणाष्टाविंशतिविधमोहनीयपञ्चविधज्ञानावरणानां पञ्चत्रिंशत्प्रकृतीनां समस्तपर्यायेषु सर्वद्रव्येषु सर्वजीवद्रव्येषु विपाकः। तथाहि इमा वीर्यान्तरायाः पञ्चत्रिंशत् प्रकृतयो द्रव्यतः सकलमपि जीवद्रव्यमुपघ्नन्ति पर्यायतस्तु न सर्वानपि यथा मेघैरतिनिचिततरैरपि सर्वात्मनान्तरितयोरपि सूर्याचन्द्रमसोर्न तत्प्रभा सर्वथा अपनेतु शक्यते उक्तं च "सुट्ठु वि मेहसमुदए, होइ पहा चंदसूराणंपि" तथा अत्रापि भावनीयम्।

गुरुलघुगाणंतपए, सिएसु चक्खुस्स रूवदव्वेसु।

ओहिस्स गहणधारण, जो गइससंतरायाणं ॥२७३॥

चक्षुष्पश्चक्षुर्दर्शनावरणगुरुलघुकाः अनन्तप्रादेशिकाः स्कन्धास्तेषु विपाकः अवधिदर्शनावरणस्य रूपिद्रव्येषु शेषान्तरायाणां दानलाभोपभोगान्तरायाणां ग्रहणधारणयोग्येषु पुद्गलद्रव्येषु विपाको न शेषेषु यावत्येव हि विषये चक्षुर्दर्शनादीनि व्याप्रियन्ते तावत्येव विषये चक्षुर्दर्शनावरणादीन्यपि तत उक्तरूपो विषयविषमो न विरुध्यते। शेषप्रकृतीनां तु यथा प्राग्विपाकोऽभिहितः पुद्गलविपाकादिस्तथैवात्रावगन्तव्यः। संप्रति प्रत्ययप्ररूपणा कर्त्तव्या प्रत्ययोऽपि द्विधा परिणामप्रत्ययो भवप्रत्ययश्च। तत्र परिणामप्रत्ययमधिकृत्याह ॥

वेउव्वीय तेयग, कम्मवन्नरसगंधनिद्धलुक्खाउ ॥

सीउण्हथिरसुभेयर, अगुरुलघुगा य नरतिरिय ॥२७४॥

वैक्रियसप्तकं तैजसकार्मणग्रहणात्तैजससप्तकं गृहीतम्। तथा वर्णपञ्चकं गन्धद्विकं रसपञ्चकं स्निग्धरूक्षशीतोष्णस्थिरास्थिरशुभाशुभगुरुलघूनि चानुभागोदीरणामधिकृत्य तिर्यग्मनुष्याणां परिणामप्रत्ययानि वैक्रियसप्तकं तिर्यङ्मनुष्यगतिमनुष्याणां गुणविशेषसमुत्थलब्धिप्रत्ययं ततस्तदुदीरणापि तेषां गुणपरिणामप्रत्यया तैजससप्तकादयस्तु तिर्यङ्मनुष्यैरन्यथाऽन्यथा विपरिणमय्य उदीर्यन्ते ततस्तासामपि प्रकृतीनामनुभागोदीरणा तिर्यग्मनुष्याणां परिणामप्रत्यया।

चउरंस मउय लहुगा, परघाउज्जोयइट्ठखगइसरा ॥

पत्तेगतणू उत्तरतणू, सो दोसोवि य तणुतइया ॥२७५॥

समचतुरस्रसंस्थानमृदुलघुपराघातोद्योतप्रशस्तविहायोगतिसुस्वरप्रत्येकनामानोऽष्टौ प्रकृतयः। उत्तरतन्वर्थं वैक्रियाहारकलक्षणयोरनुभागोदीरणामधिकृत्य परिणाममधिकृत्य परिणामप्रत्यया वेदितव्या यत उत्तरवैक्रिये आहारके वा शरीरे सति समचतुरस्रसंस्थानामनुभागोदीरणां प्रवर्तमाना उत्तरवैक्रियादिशरीरपरिणामापेक्षा। ततः एषापि परिणामप्रत्यया वेदितव्या तथा तृतीया तनुराहारकशरीरमाहारकशरीरग्रहणाच्चाहारकसप्तकं गृहीतं द्रष्टव्यम्। तत अनुभागोदीरणामधिकृत्य परिणामप्रत्ययं वेदितव्यम्। आहारकसप्तकं हि मनुष्याणां गुणपरिणामप्रत्ययं भवति ततस्तदनुभागोदीरणामधिकृत्य परिणामप्रत्ययं वेदितव्यम्। आहारकसप्तकं हि मनुष्याणां गुणपरिणामप्रत्ययं भवति ततस्तदनुभागोदीरणापि गुणपरिणामप्रत्ययैवेति ॥

देसविरयविरयाणं, सुभगाएज्जसकित्तिउच्चाणं ॥

पुव्वाणुपुव्वगाए, असंखभागो त्थियाईणं ॥२७६॥

देशविरतानां विरतानां च सुभगादेययशःकीर्त्युच्चैर्गोत्राणामनुभागोदीरणा परिणामकृता तथाहि सुभगादिप्रत्यक्षभूतदुर्भगादिप्रकृत्युदये युतेऽपि यो देशे विरतिं वा प्रतिपद्यते तस्यापि देशविरत्यादिगुणप्रभावत सुभगादीनामेव प्रकृतीनामुदयकोटिपूर्वकमुदीरणायोग्या गुणपरिणामे च प्रत्ययतो वेदितव्या। इदमुक्तं भवति। स्त्रीवेदादीनामतिजघन्यानुभागस्पर्द्धकादारभ्य क्रमेण सख्येयो भागो देशविरतादीनामुदीरणायोग्यो गुणप्रत्ययतो भवति। परस्त्वनुभागोदीरणामिति।

तित्थंकरघाईण य, परिणामप्पच्चयाणि सेसाओ।

भवपच्चया उ पुत्ता, वियपुव्वुत्तसेसाणं ॥२७७॥

तीर्थकरघातिकर्माणि च पञ्चविधज्ञानावरणनवविधदर्शनावरणनवनोकषायवर्ज्यो मोहनीयपञ्चविधान्तरायरूपाणि सर्वसंख्यया एकोनचत्वारिंशत्प्रकृतयोऽनुभागोदीरणामधिकृत्य तिर्यङ्मनुष्याणां परिणामप्रत्यया। एतदुक्तं भवति। आसां प्रकृतीनामनुभागोदीरणा तिर्यङ्मनुष्याणां परिणामप्रत्यया भवति परिणामो ह्यन्यथाभावेनमयनम्। तत्र तिर्यञ्चो मनुष्या वा गुणप्रत्ययेन अन्यथा बद्धानामन्यथा परिणामय्य एतामुदीरणां कुर्वन्ति। (सेसाओ भवपच्चयाउत्ति) शेषाः प्रकृतयः सातासातवेदनीयआयुश्चतुष्टयपञ्चकौदारिकसप्तक संहननषट्कप्रथमवर्ज्यं संस्थानपञ्चककर्कशगुरुस्पर्शानुपूर्वीचतुष्टयोपघाततपोच्छ्वासप्रशस्तविहायोगतित्रसस्थावरबादरसूक्ष्मपर्याप्तापर्याप्तसाधारणदुर्भगदुःस्वरानादेयायशःकीर्तिनिर्माणनीचैर्गोत्ररूपाः षट्पञ्चाशत्संख्या अनुभागोदीरणामधिकृत्य भवप्रत्यया वेदितव्याः। एतासामनुभागोदीरणा भवप्रत्ययतो भवतीत्यर्थः। (पुव्वुत्ताविच्चि) पूर्वोक्ता अपि प्रत्ययाः पूर्वोक्तशेषाणां प्रागुक्ततिर्यङ्मनुष्यव्यतिरिक्तानां भवप्रत्यया अनुभागोदीरणा वेदितव्या। तथाहि देवनारकैव्रतरहितैश्च तिर्यङ्मनुष्यैर्नवानां नोकषायाणां पश्चानुपूर्व्या उत्कृष्टानुभागस्पर्द्धकादारभ्येत्यर्थः। असंख्येया अनुभागा भवप्रत्ययादेवोदीर्यन्ते। तथा वैक्रियसप्तकं तैजससप्तकवर्णपञ्चकगन्धद्विकरसपञ्चकस्निग्धरूक्षशीतोष्णस्पर्शस्थिरास्थिरशुभाशुभगुरुलघुप्रकृतीनां देवा नैरयिकाश्च भवप्रत्ययतोऽनुभागोदीरणां कुर्वन्ति। तथा समचतुरस्रसंस्थानस्य भवधारणीये शरीरे वर्त्तमाना भवप्रत्ययादनुभागोदीरणां देवाः कुर्वन्ति। मृदुलघुस्पर्शपराघातोद्योतप्रशस्तविहायोगतिसुस्वरप्रत्येकनाम्नामुत्तरवैक्रियशरीरिणामुक्ताः शेषाणां भवप्रत्ययतोऽनुभागोदीरणा प्रवर्त्तते। सुभगादेययशःकीर्त्युच्चैर्गोत्राणामनुभागोदीरणा गुणहीनास्य भवप्रत्ययतोऽवसेया। गुणवता तु गुणप्रत्यया। तथा सर्वेषां घातिकर्मणामनुभागोदीरणा भवप्रत्यया देवनारकाणां तदेव प्रत्ययप्ररूपणा। सम्प्रति साद्यनादिप्ररूपणा कर्तव्या सा च द्विधा मूलप्रकृतिविषया उत्तरप्रकृतिविषया च। तत्र प्रथमतो मूलप्रकृतिविषयां तां कुर्वन्नाह।

घाईणं अजघन्ना, दोण्हमणुक्कोसिया तिविहाओ।

वेयणिएणुक्कोसो, अनुजहन्ना मोहणीये ॥ २७८ ॥

साइअणाइधुव, अधुवा य तस्सेसिगाय दुविगप्पा ।
आउस्स साइअधुवा, सव्वविगप्पाउ विन्नेया ॥ १७७॥

मोहनीयवर्ज्यानां त्रयाणां घातिकर्मणामजघन्या अनुभागोदीरणा त्रिधा त्रिप्रकारा तद्यथा अनादिर्ध्रुवा अध्रुवा च तथा येषां क्षीणकषायस्य समयाधिकावलिकायां शेषायां स्थितौ जघन्या अनुभागोदीरणा च सादिरध्रुवा च। शेषकाल त्वजघन्या सा चानादिर्ध्रुवोदीरणात्वात् । ध्रुवाध्रुवे अभव्यभव्यापेक्षया तथा द्वयोर्नामगोत्रयोरनुत्कृष्टानुभागोदीरणा त्रिधा तद्यथा अनादिर्ध्रुवा अध्रुवा च तथा ह्यनयोरुत्कृष्टानुभागोदीरणा सयोगिकेवलिनि सा च सादिरध्रुवा च। शेषकाल त्वनुत्कृष्टा सा चानादिर्ध्रुवोदीरणात्वात्। ध्रुवाध्रुवे पूर्ववत्। तथा वेदनीये अनुत्कृष्टा मोहनीये वा जघन्यानुभागोदीरणा चतुःप्रकारा तद्यथा सादिरनादिर्ध्रुवाध्रुवा च। तथाहि क्षपगान्तश्रेण्यां सूक्ष्मसंपरायगुणस्थाने यद्भव्यसातवेदनीयं तस्य सर्वार्थसिद्धिसंप्राप्तौ प्रथमसमये या उदीरणा प्रवर्त्तते सा उत्कृष्टा। सा च सादिरध्रुवा च ततोऽन्या सर्वाप्यनुत्कृष्टा सा चाप्रमत्तगुणस्थानकादौ न भवति तत प्रतिपाते च भवति ततोऽसौ सादिः तत्र स्थानमप्राप्तस्य पुनरनादिः ध्रुवाध्रुवे पूर्ववत्। तथा मोहनीयस्य जघन्यानुभागोदीरणा सूक्ष्मसंपरायस्य क्षपकस्य समयाधिकावलिका शेषायां स्थितौ भवति सा च सादिस्तदनन्तरसमये वा भावादध्रुवा शेषकालं त्वजघन्या सा चोपशान्तमोहगुणस्थानके न भवति। ततः प्रतिपाते च भवति ततोऽसौ सादिः। तत्स्थानमप्राप्तस्य पुनरनादिः। ध्रुवाध्रुवे पूर्ववत्। ( तस्सेसियदुविगप्पत्ति ) तच्छेषा रीतिः उक्तभीतिव्यतिरिक्ता विकल्पा द्विप्रकारा ज्ञातव्या तद्यथा सादयो ध्रुवाश्च। तथाहि चतुर्णां घातिकर्मणामुत्कृष्टा अनुत्कृष्टा च अनुभागोदीरणा मिथ्यादृष्टौ पर्यायेण लभ्यते। ततो द्वे अपि साध्रुवे उत्कृष्टा च प्रागेव भाविता। तथा नामगोत्रवेदनीया जघन्या अजघन्या चानुभागोदीरणा मिथ्यादृष्टौ पर्यायेण लभ्यते ततो द्वे अपि साध्रुवे उत्कृष्टा च प्रागेव भाविता। आयुषां तु सर्वे विकल्पाः साध्रुवाः सा च साध्रुवता अध्रुवोदीरणात्वादवसेया। तदेवं कृता मूलप्रकृतिविषया साद्यनादिप्ररूपणा। संप्रत्युत्तरप्रकृतिविषयां तां चिकीर्षुराह ।

मउलहुगाणक्कोसा, चउव्विहा तिएहमवि य जहन्ना ।
एगवुत्ता य अधुवा, वीमाए होय एक्कोमा ॥१८०॥
तेवीसाए अजहन्ना, तिया पयासिमेमविगप्पा ।
सव्वविगप्पा समा, एवावि अधुवा य साइ य ॥१८१॥

मृदुलघुस्पर्शयोरनुत्कृष्टा अनुभागोदीरणा चतुर्विधा तद्यथा सादिरनादिर्ध्रुवा अध्रुवा च तथा ह्यनयोरुत्कृष्टानुभागोदीरणा आहारकशरीरस्य संयतस्य भवति। सा च सादिरध्रुवा च ततोऽन्यासर्वाप्यनुत्कृष्टा सापि चाहारकशरीरमुपसंहरत सादि तत्स्थानमप्राप्तस्य पुनरनादिः। ध्रुवाध्रुवे पूर्ववत्। तथा त्रयाणा मिथ्यात्वमुक्तं केवलानामजघन्यानुभागोदीरणा चतुर्विधा तद्यथा सादिरनादिर्ध्रुवाऽध्रुवा च। तत्र सम्यक्त्वं संयम च युगपत्प्रतिपद्यमानस्य जन्मामिथ्यात्वस्य जघन्यानुभागोदीरणा सा चानादिरध्रुवा च। ततोऽन्या सर्वाप्यजघन्या सा च सम्यक्त्वात्प्रतिपतितसादिः तत्स्थानमप्राप्तस्य पुनरनादिः। ध्रुवाध्रुवे पूर्ववत्। कर्कशगुरुस्पर्शयोर्जघन्यानुभागोदीरणा आहारकशरीरसंयतस्य केवलिसमुद्घातान्निवर्तमानस्य षष्ठसमये भवति सा च सादिरध्रुवा च। समयमात्रत्वात्ततोऽन्या सर्वाप्यजघन्या सापि केवलिसमुद्घातान्निवर्तमानस्य सप्तमे समये भवतीत्यादि सादिः। ध्रुवाध्रुवे पूर्ववत्। तथा तैजससप्तकमृदुलघुवर्ज्यशुभवर्णाद्येकादशगुरुलघुस्थिरशुभनिर्माण-नाम्नां विंशतिप्रकृतीनामनुत्कृष्टाऽनुभागोदीरणा त्रिधा तद्यथा अनादिर्ध्रुवा अध्रुवा च। तथा ह्येतासामुत्कृष्टानुभागोदीरणा सयोगिकेवलिचरमसमये ततोऽन्या सर्वाप्यनुत्कृष्टा सा चानादिर्ध्रुवोदीरणत्वात्। ध्रुवाध्रुवे पूर्ववत्। तथा पञ्चविधज्ञानावरणचक्षुरचक्षुरवधिकेवलदर्शनावरणकृष्णनीलदुरभिसुरभितिक्तकटुरूक्षशीतास्थिराशुभपञ्चविधान्तरायरूपाणां त्रयोविंशतिप्रकृतीनामजघन्या अनुभागोदीरणा त्रिधा तद्यथा अनादिर्ध्रुवाध्रुवा च । तथा ह्येतासां स्वस्वोदीरणापर्यवसाने जघन्यानुभागोदीरणा सा च सादिरध्रुवा च। ततोऽन्या सर्वाप्यजघन्या सा चानादिर्ध्रुवोदीरणत्वात् ध्रुवाध्रुवे पूर्ववत् ( पयाणसेसविगप्पत्ति ) एतासां पूर्वोक्तानां शेषप्रकृतीनां शेषविकल्पा मृदुलघुविंशतीनां जघन्या जघन्योत्कृष्टा मिथ्यात्वगुरुकर्कशत्रयोविंशतीनां चोत्कृष्टजघन्याः सादयोऽध्रुवाश्च भवन्ति। तथाहि मृदुलघुविंशतीनां जघन्या अजघन्या चानुभागोदीरणा मिथ्यादृष्टौ पर्यायेण लभ्यते ततो द्वे अपि साध्रुवे उत्कृष्टा च प्रागेव भाविता। तथा कर्कशगुरुमिथ्यात्वत्रयाविंशतीनां चोत्कृष्टजघन्या सादयो ध्रुवाश्च भवन्ति। तथाहि मृदुलघुविंशतीनामुत्कृष्टा अनुत्कृष्टा चानुभागोदीरणा मिथ्यादृष्टौ पर्यायेण लभ्यते अशुभप्रकृतित्वात् ततो द्वे अपि साध्रुवे जघन्या च प्रागेव भाविता। शेषाणामुक्तव्यतिरिक्तानां प्रकृतीनां दशोत्तरशतसङ्ख्यानां सर्वे विकल्पा उत्कृष्टानुत्कृष्टजघन्याजघन्यरूपाः सादयोऽध्रुवाश्चावगन्तव्याः। सा च साध्रुवता अध्रुवोदीरणत्वादवसेया। कृता साद्यनादिप्ररूपणा। संप्रति स्वामित्वमभिधातव्यं तच्च द्विधा उत्कृष्टोदीरणाविषयं जघन्योदीरणाविषयं च तत्र प्रथमत उत्कृष्टोदीरणाविषयं स्वामित्वमाह ॥

दाणाइ अचक्खूणं, जेट्ठा आयमि हीण लद्धिस्स ।
सुहुमस्स चक्खुणो पुण, तेइंदियसव्वपज्जत्ते ॥ १८२॥

सूक्ष्मस्य सूक्ष्मैकेन्द्रियस्य हीनलब्धिकस्य सर्वस्तोकदानाद्यचक्षुर्दर्शनविज्ञानलब्धियुक्तस्यादौ प्रथमसमये वर्तमानस्य पञ्चविधान्तरायाचक्षुर्दर्शनावरणरूपाणां षण्णां प्रकृतीनामुत्कृष्टानुभागोदीरणा भवति। तथा त्रीन्द्रियस्य सर्वाभिः पर्याप्तस्य पर्याप्तिचरमसमये चक्षुर्दर्शनावरणस्योत्कृष्टा अनुभागोदीरणा ।

निद्दयपंचगस्स य, मज्झिमपरिणामसंकिलिट्ठस्स ।
अपुमादि असायाणं, निरये जेट्ठठिई सम्मत्तो ॥१८३॥

मध्यमपरिणामस्य तत्प्रायोग्यसंक्लेशयुक्तस्य सर्वाभिः पर्याप्तिभिः पर्याप्तस्य निद्रापञ्चकस्योत्कृष्टानुभागोदीरणा अन्यन्तविशुद्धस्य अत्यन्तसंक्लिष्टस्य वा निद्रापञ्चकस्योदय एव भवतीति कृत्वा मध्यमपरिणामग्रहणम् । तथा अपुमादीनां नपुंसकवेदादीनां रतिशोकभयजुगुप्सानामसातस्य चोत्कृष्टानुभागोदीरणास्वामी नैरयिको ज्येष्ठस्थितिक उत्कृष्ट-

स्थितिकः समाप्त सर्वपर्याप्तिभिः पर्याप्तः सर्वसंक्लिष्टो वेदितव्य'

पंचेदियतसबायर–पज्जत्तगसायसुसुरगईणं ।
वेउव्वियसासाणं, देवो जेट्ठठिई सम्मत्तो ॥ १७४ ॥

देवो ज्येष्ठस्थितिकः उत्कृष्टस्थितिकस्त्रयस्त्रिंशत्सागरोपमस्थितिकः समाप्त सर्वाभिः पर्याप्तिभिः पर्याप्तः सर्वविशुद्धः पञ्चेन्द्रियजातित्रसबादरपर्याप्तसातवेदनीयसुस्वरदेवगतिवैक्रियसप्तकोच्छ्वासरूपाणां दशप्रकृतीनामुत्कृष्टानुभागोदीरणास्वामी।

सम्मत्तमीसगाणं, से काले गहिहि तिस्थमिच्छत्तं ।
हस्सरईणसहस्सा—रगस्सपज्जत्तदेवस्स ॥ १७५ ॥

योऽनन्तरे समये मिथ्यात्वं ग्रहीष्यते तस्य सर्वसंक्लिष्टस्य सम्यक्त्वसम्यग्मिथ्यात्वयोर्यथासंख्यं संभवमुदये सत्युत्कृष्टानुभागोदीरणा । तथा सहस्रारकदेवस्य सर्वाभिः पर्याप्तिभिः पर्याप्तस्य हास्यरत्योरुत्कृष्टानुभागोदीरणा ।

गइहुंडुवघायाणि–ट्ठखगइनीयाण दुहचउक्कस्स ।
निरउक्कसम्मत्ते, असमत्ता पन्नरसंते ॥ १७६ ॥

नैरयिक उत्कृष्टस्थितौ वर्त्तमानः सर्वाभिः पर्याप्तिभिः पर्याप्त सर्वोत्कृष्टसंक्लेशयुक्तो नरकगतिहुंडसंस्थानोपघातोऽप्रशस्तविहायोगतिनीचैर्गोत्राणां ( दुहचउक्कस्सत्ति ) दुर्भगदुःस्वरानादेयायशःकीर्तिरूपस्य सर्वसंख्यया नवानां प्रकृतीनां हुंडसंस्थानमुत्कृष्टानुभागोदीरणास्वामी । तथा अपर्याप्तकनाम्नो मनुष्योऽपर्याप्तश्चरमसमये वर्तमानः सर्वसंक्लिष्ट उत्कृष्टानुभागोदीरणास्वामी । संक्लिष्टतिर्यक्पञ्चेन्द्रियादपर्याप्तान्मनुष्योऽपर्याप्तसंक्लिष्टतर इति तिर्यग्मनुष्यग्रहणम् ।

कक्खडगुरुसंघयणा, पुच्छी पुमसंठाणतिरियनामाणं ।
पंचिंदियतिरिक्खो, अट्ठमवासट्ठवासाउ ॥ १७७ ॥

कर्कशगुरुस्पर्शयोरादिवर्ज्यानाञ्च पञ्चानां संहननानां स्त्रीवेदपुरुषवेदयोः आद्यन्तवर्ज्यानां चतुर्णां संस्थानानां तिर्यग्गतेश्च सर्वसंख्यया चतुर्दशप्रकृतीनां तिर्यक्संक्लिष्टपञ्चेन्द्रियोऽष्टवर्षायुरष्टमे वर्तमाने सर्वसंक्लिष्ट उत्कृष्टानुभागोदीरणास्वामी।

मणुओरालियसत्तग–वज्जरिसहनारायसंघयण ।
मणुओतिपल्लपज्ज–त्तो आउगं पि संकिट्ठो ॥ १७८ ॥

मनुष्य पल्योपमायुःस्थितिक सर्वाभिः पर्याप्तिभिः पर्याप्त सर्वविशुद्धो मनुष्यगतौदारिकसप्तकवज्रर्षभनाराचसंहननरूपाणां नवानां प्रकृतीनामुत्कृष्टानुभागोदीरणास्वामी । तथा– सर्वोत्कृष्टस्वस्वस्थितौ वर्तमान सर्वाभिः पर्याप्तिभिः पर्याप्तश्च स्वकीयानामायुषां सर्वविशुद्धो नारकायुषस्तु सर्वसंक्लिष्ट उत्कृष्टानुभागोदीरको भवति ।

हस्सछिइपज्जत्ता, तन्नामविगलजाइसुहुमाणं ।
थावर निगोयएगिं–दियाणमवि बायरो नवरि ॥१७९॥

ह्रस्वस्थितिका पर्याप्तकास्तन्नामानो द्वीन्द्रिया जातिसूक्ष्मकर्मानुसारिनाम्नो विकलेन्द्रियजातीनां सूक्ष्मनाम्नश्चोत्कृष्टानुभागोदीरणास्वामिन । एतदुक्तं भवति द्वित्रिचतुरिन्द्रियाः सूक्ष्माश्च सर्वजघन्यस्थितौ वर्तमाना सर्वाभिः पर्याप्तिभिः पर्याप्ता सर्वसंक्लिष्टा यथासंख्यं द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियजातिनाम्नां सूक्ष्मनाम्नोश्चोत्कृष्टानुभागोदीरणास्वामिन ह्रस्वस्थितौ वर्तमानाः सर्वसंक्लिष्टा भवन्ति इति कृत्वा तदुपादानम् । तथा स्थावरसाधारणैकेन्द्रियजातिनाम्ना जघन्यस्थितौ वर्तमानो बादरैकेन्द्रियः सर्वपर्याप्तिभिः पर्याप्तः सर्वसंक्लिष्टः स्थावरनाम्न स्थावरसाधारणनाम्न साधारण एकेन्द्रियजातेर्द्वावपि उत्कृष्टानुभागोदीरणास्वामिनौ भवतः । बादरस्य महान् सर्वसंक्लेशो भवतीति कृत्वा तदुपादानम् ।

आहारतणूपज्जत्ते, गोउचरं समयओ य लहुगाणं ।
पत्तेयखगइपराघा–याहारतणूण य विसुद्धो ॥ १८० ॥

समचतुरस्रसंस्थानमृदुलघुस्पर्शप्रत्येकप्रशस्तविहायोगतिपराघाताहारकसप्तकरूपाणां त्रयोदशप्रकृतीनामाहारकशरीरी संयतस्य सर्वपर्याप्तिभिः पर्याप्तः सर्वविशुद्ध उत्कृष्टानुभागोदीरणास्वामी ।

उत्तरवेउव्विउज्जो–यणामधाऽखरपुढवी ।
निरयगईणं भणिआ, तइए समयाणुपुव्वीणं ॥१८१॥

उत्तरवैक्रिये वर्तमानो यतिः सर्वाभिः पर्याप्ताभिः पर्याप्त सर्वविशुद्ध उद्योतनाम्न उत्कृष्टानुभागोदीरणास्वामी तथा खरपृथ्वीकायिक उत्कृष्टायां स्थितौ वर्तमानः सर्वपर्याप्तिपर्याप्तः सर्वविशुद्ध आतपनाम्न उत्कृष्टानुभागोदीरणास्वामी तथा मनुष्यदेवतानुपूर्व्योर्विशुद्धा नरकतिर्यगानुपूर्व्यो संक्लिष्टा निजकगतीनां तृतीयसमये वर्तमाना उत्कृष्टानुभागोदीरकाश्च भवन्ति ।

लोगंते सेसाणं, सुभाणमियरासिं चउसु वि गईसु ।
पज्जत्तकम्मिच्छसो, हीणमणोकिलट्ठस्स ॥१८२॥

योगिनः सयोगिकेवलिनस्ते सर्वापवर्तमानस्य शेषाणामुक्तव्यतिरिक्तानां शुभप्रकृतीनां तैजससप्तकमृदुलघुवर्ज्यशुभवर्णादिकादशकागुरुलघुस्थिरशुभशुभगादेययशःकीर्तिनिर्माणोच्चैर्गोत्रतीर्थकरनाम्नां पञ्चविंशतिसंख्यानामुत्कृष्टानुभागोदीरणा भवति इतरासां च शुभप्रकृतीनां मतिश्रुतमनःपर्यायकेवलज्ञानावरणकेवलदर्शनावरणमिथ्यात्वषोडशकषायकर्कशगुरुवर्ज्यशेषकुवर्णादिसप्तकाऽस्थिराशुभरूपाणामेकत्रिंशत्प्रकृतीनां चतसृष्वपि गतिषु मिथ्यादृष्टेः सर्वपर्याप्तिपर्याप्तस्य उत्कृष्टे संक्लेशे वर्तमानस्योत्कृष्टानुभागोदीरणा भवति तथा अवधिज्ञानावरणदर्शनावरणयोस्तस्यैव चतुर्गतिकस्य मिथ्यादृष्टेरनवधिकस्य चावधिलब्धिरहितस्योत्कृष्टानुभागोदीरणा भवति अवधिलब्धियुक्तस्य हि प्रभूतोऽनुभागः क्षयं याति तत उत्कृष्टो न लभ्यते इति न लब्धिकस्येत्युक्तम् । तदेवमुक्तमुत्कृष्टानुभागोदीरणास्वामित्वम् ।

सम्प्रति जघन्यानुभागोदीरणास्वामित्वं प्रतिपादयन्नाह ॥

सुयकेवलिणो मइसुय–अचक्खुचक्खुणुदीरणा मंदा ॥
विपुलपरमोहिगाणं, मणणाणोहि दुगस्सावि ॥ १८३ ॥

मतिश्रुतज्ञानावरणचक्षुरचक्षुर्दर्शनावरणानां श्रुतकेवलिनश्चतुर्दशपूर्वधरस्य क्षीणकषायस्य समयाधिकावलिका शेषायां स्थितौ वर्तमानस्य मन्दा जघन्यानुभागोदीरणा वर्तते । तथा क्षीणकषायस्य विपुलमतिमनःपर्यायज्ञानस्य समयाधिकावलिका शेषायां स्थितौ वर्तमानस्यावधिज्ञानावरणावधिदर्शनावरणयोर्जघन्यानुभागोदीरणा ।

खवणाएविग्घकेवल, संजलणाण य नो कसायाण ॥
सयसयउदीरणंते, निद्दापयलाणमुवसंते ॥ १८४ ॥

क्षपणायोग्यितस्य पञ्चविधान्तरायकेवलज्ञानावरणकेवलदर्शनावरणसंज्वलनचतुष्टयनवनोकषायरूपाणां विंशतिप्रकृ-

तीनां स्वस्वोदीरणापर्यवसाने जघन्यानुभागोदीरणा । तथा निद्राप्रचलयोरुपशान्तमोहे जघन्यानुभागोदीरणा वक्तव्यते तस्य सर्वविशुद्धत्वात् ॥

निद्दानिद्दाईणं, पमत्तविरये विसुज्झमाणम्मि ॥
वेयगसम्मत्तस्स, सगखवणोदीरणा चरमे ॥ ९९५ ॥

निद्रानिद्रादीनां निद्रा २ प्रचला २ स्त्यानर्द्धीनां प्रमत्तस्य यतनस्य विशुध्यमानस्य अप्रमत्तभावाभिमुखजघन्यानुभागोदीरणा प्रवर्तते । तथा क्षायिकसम्यक्त्वमुत्पादयतो मिथ्यात्वसम्यङ्मिथ्यात्वयोः क्षपिते । तयोर्वेदकसम्यक्त्वस्य क्षायोपशमिकस्य क्षपणकाले चरमोदीरणायां समयाधिकावलिकाशेषायां स्थितौ सत्यां प्रवर्तमानायां जघन्यानुभागोदीरणा भवति सा च चतुर्गतिकानामन्यतरस्य वेदितव्या ॥

से काले सम्मत्तं, ससंजमगिण्हओ य तेरसगं ॥
सम्मत्तमेव मीसे, आऊण जहन्नट्ठिईसु ॥ ७०६ ॥

अनन्तरे काले द्वितीयसमये यः सम्यक्त्वं संयमसहितं ग्रहीष्यति तस्य त्रयोदशानां मिथ्यात्वानन्तानुबन्धिचतुष्टयाप्रत्याख्यानावरणरूपाणां प्रकृतीनां जघन्यानुभागोदीरणा । अयमिह संप्रदायः । योऽनन्तरसमये सम्यक्त्वं संयमसहितं ग्रहीष्यति तस्य मिथ्यादृष्टेर्मिथ्यात्वानन्तानुबन्धिनाम्, तथा यो विरतिसमये संयमं ग्रहीष्यति तस्याप्रत्याख्यानावरणकषायाणां जघन्यानुभागोदीरणा मिथ्यादृष्टयपेक्षया हि अविरतिसम्यग्दृष्टिरनन्तगुणविशुद्धस्ततोऽपि देशविरतोऽनन्तगुणविशुद्ध इत्युक्तक्रमेणैव जघन्यानुभागोदीरणासंभवः । तथा सम्यक्त्वमवमंस्यते इति यः सम्यग्मिथ्यादृष्टिरनन्तरसमये सम्यक्त्वं प्रतिपत्स्यते तस्य सम्यग्मिथ्यात्वस्य जघन्यानुभागोदीरणा सम्यङ्मिथ्यादृष्टिर्युगपत् सम्यक्त्वं संयमं च न प्रतिपद्यते तथा विशुद्धेरभावात् किन्तु केवलं सम्यक्त्वमेवेतिकृत्वा तदेव केवलमुक्तम् । तथा चतुर्णामायुषामात्मीयामात्मीयजघन्यस्थितौ वर्तमाना जघन्यमनुभागमुदीरयन्ति । तत्र त्रयाणामायुषां सक्लेशादेव जघन्यस्थितिबन्धो भवतीति कृत्वा जघन्यानुभागोऽपि तत्रैव लभ्यते । तथा नरकायुषो विशुद्धिवशाज्जघन्यः स्थितिबन्धः ततो जघन्यानुभागोऽपि नरकायुषस्तत्रैव लभ्यते । तथा च सति त्रयाणामायुषामतिसंक्लिष्टो जघन्यानुभागोदीरकः नरकायुषस्त्वतिविशुद्ध इति ॥

पोग्गलविवागियाणं, भवाइसमये विसेसमवि चासि ।
आउतणुणं तोणई, सुहुमो वाउअप्पाउ । ७०७ ।

पुद्गलविपाकिन्यः प्रकृतयः तासां सर्वासामपि भवादिसमये भवप्रथमसमये जघन्यानुभागोदीरणा एतच्च सामान्येनोक्तं तत्र अमुकस्यामुकः उदीरक इत्येवंरूपं विशेषमपि चासां प्रकृतीनां वक्ष्यामि । प्रतिज्ञातमेव निर्वाहयति । ( आउ इत्यादि ) आद्ययोस्तन्वोरौदारिकवैक्रियरूपयोरिति सूक्ष्मो वायुकायिकश्चाल्पायुर्जघन्यानुभागोदीरकः । इह शरीरग्रहणेन बन्धनसंघाता अपि गृहीता द्रष्टव्याः । तत एतदुक्तं भवति औदारिकशरीरौदारिकसंघातौदारिकबन्धनचतुष्टयरूपस्यौदारिकषट्कस्याप्यपर्याप्तकसूक्ष्मैकेन्द्रियो वायुकायिकः वैक्रियषट्कस्य च पर्याप्तो बादरवायुकायिकोऽल्पायुर्जघन्यानुभागोदीरको भवति ।

बेइंदिअप्पाउग, निरयचिरठिइ असण्णिणो वावि ।
अंगोवंगाण समं, तइ णो अणुकालम्मि । ७०८ ।

द्वयोरङ्गोपाङ्गयोरौदारिकाङ्गोपाङ्गवैक्रियाङ्गोपाङ्गनाम्नोर्यथासंख्यमल्पायुर्द्वीन्द्रियस्तथा असंज्ञी सन् जातो नारकश्चिरस्थितिकः स च जघन्यानुभागोदीरको भवति इयमत्र भावना द्वीन्द्रियोऽल्पायुरौदारिकाङ्गोपाङ्गनाम्न उदयप्रथमसमये जघन्यमनुभागमुदीरयति तथा संज्ञिपञ्चेन्द्रियः पूर्वोक्तदिने वैक्रियाङ्गोपाङ्गस्तोककालं बध्वा स्वभूमिकानुसारेण चिरस्थितिको नैरयिको जातस्तस्य वैक्रियाङ्गोपाङ्गनाम्न उदयप्रथमसमये वर्तमानस्य जघन्यानुभागोदीरणा । तथाऽऽहारकस्य प्राकृतत्वात् अत्र स्त्रीत्वनिर्देशः शरीरग्रहणेन च बन्धनसंघाता अपि गृह्यन्ते तत आहारकसप्तकस्य यतेराहारकशरीरमुत्पादयत संक्लिष्टस्य अल्पे काले प्रथमसमये इत्यर्थः जघन्यानुभागोदीरणा ।

अमणो समचउरंसं, रिसहस्स ओसगचिरट्ठिई सेसे ।
संघयणाणयमाणु, ओहं कुवगवायाणमवि सुहुमो । ७०९ ।

असंज्ञिपञ्चेन्द्रियोऽल्पायुरिति संक्लिष्टप्रथमसमये तद्भवस्थ आहारकः समचतुरस्रसंस्थानवज्रर्षभनाराचसंहननयोर्जघन्यमनुभागमुदीरयति अल्पायुर्ग्रहणं सर्वे शार्थम् । तथा संज्ञिपञ्चेन्द्रियः एवात्मीयायामुत्कृष्टस्थितौ वर्तमान आहारको भवप्रथमसमये शेषे इति । तथा शेषाणां संहननानां सेवार्तवज्रर्षभनाराचवर्जानां पूर्वकोट्यायुर्मनुष्या आहारकस्वभवप्रथमसमये वर्तमाना जघन्यानुभागोदीरकाः इह दीर्घायुर्ग्रहणं विशुद्धतिर्यक्पञ्चेन्द्रियापेक्षया च प्रायोग्या मनुष्या अल्पवला इति मनुष्योपादानम् । तथा सूक्ष्मैकेन्द्रियः सुदीर्घायुः स्थितिकः आहारकप्रथमसमये हुण्डोपघातिनाम्नोर्जघन्यानुभागोदीरकः

मेवट्टस्स बेइंदिय, बारसवासस्स मउयलहुगाणं ।
सन्निविसुद्धाणुण-हारगस्स वीसा अइकिलिट्टे । ७०० ।

द्वीन्द्रियसंज्ञिपञ्चेन्द्रियस्य स्वभूमिकानुसारेणातिविशुद्धस्यानाहारकस्य जघन्यानुभागोदीरणा । तथा तैजससप्तकमृदुलघुवर्जशुभवर्णादिकादशकागुरुलघुस्थिरशुभनिर्माणरूपाणां विंशतिप्रकृतीनां संक्लिष्टोऽपान्तरालगतौ वर्तमानोऽनाहारकोमिथ्यादृष्टिर्जघन्यानुभागोदीरणास्वामी वेदितव्यः ।

पत्तेगमुरालसमं, इयरं हुंडेण तस्स परघाओ ।
अप्पाउस्स य आया, उज्जोयाणमवि तज्जोगो ॥ ७०१ ॥

प्रत्येकनाम औदारिकेण समं वक्तव्यम् । औदारिकस्येव प्रत्येकनाम्नोऽपि सूक्ष्मैकेन्द्रियसमये वर्तमानो जघन्यानुभागोदीरको वेदितव्य इत्यर्थः । तथा हुण्डेन समानमेतत् साधारणनाम्नो वक्तव्यम् । तथा सूक्ष्मैकेन्द्रियस्याहारकस्य प्रथमसमये हुण्डनाम्नोर्जघन्यानुभागोदीरणा प्रागभिहिता तथा साधारणनाम्नोऽपि वक्तव्येत्यर्थः । तथा सूक्ष्मैकेन्द्रियः सूक्ष्मपर्याप्तस्याल्पायुष इति संक्लिष्टस्यापर्याप्तचरमसमये वर्तमानस्य पराघातनाम्नो जघन्यानुभागोदीरणा । तथा आतपोद्योतनाम्नोस्तद्योग्यः पृथिवीकायिकः शरीरपर्याप्तापर्याप्तः प्रथमसमये वर्तमानः संक्लिष्टो जघन्यानुभागोदीरकः ।

जोगाउज्जोयकरणं, तित्थगरस्स नवगस्स जोगते ।
करकरगुरुणमते, नियत्तमाणस्स केवलिणो ॥ ७०२ ॥

आयोजिकाकरणं नाम केवलिसमुद्घातादर्वाक् भवति तत्राङ् मर्यादायाम् आमर्यादया केवलदृष्ट्या योजनव्यापारणमायोजनं च तथातिशुभयोगानामवस्येयमायोजनमायोजिका तस्याः करणमायोजिकाकरणं केचिदाचार्या वर्जितकरणमित्याहुस्तत्रायं शब्दार्थः आवर्जितनामानिमुखीकृतस्तथा च

लोके वक्तारः आवर्जितोऽयं मया संमुखीकृत इत्यर्थः । ततश्च तथा भव्यत्वेनावर्जितस्य मोक्षगमनं प्रत्यभिमुखीकृतस्य करणं शुभयोगव्यापाराणामावर्जितकरणम् । अपरे " आउस्सियकरण"मिति पठन्ति तत्राय शब्दसंस्कारेऽवश्यकरणम् तथाहि समुद्घातं केचित्कुर्वन्ति केचिन्न कुर्वन्ति । इदं त्वावश्यकरणं सर्वेऽपि केवलिनः कुर्वन्तीति तच्चायोजिकाकरणमवश्यंकरणम् तथाहि समुद्घातं केचित्कुर्वन्ति च । करणमसंख्येयसमयात्मकमन्तर्मुहूर्तप्रमाणम् । यत उक्तम् । प्रज्ञापनायाम्-" कइ समए णं भंते ! आउज्जियाकरणे पण्णत्ते गोयमा ! असंखिज्जसमइए अंतोमुहुत्तिए पण्णत्ते । इति तच्च " तत्राद्या प्रारभ्यते । तावत्तीर्थकरकेवलिनः तीर्थकरनाम्नो जघन्यानुभागोदीरणा आयोजिकाकरणा हि प्रभूतानुभागोदीरणा प्रवर्तते इत्यर्वाग् ग्रहणम् तथा नीलकृष्णदुरभिगन्धतिक्तकटुशीतरूक्षस्थिराशुभरूपस्य प्रकृतिनवकस्य सयोगिकेवलिचरमसमये जघन्यानुभागोदीरणा तस्यैव सर्वविशुद्धत्वात् । कर्कशगुरुस्पर्शयोस्तु केवलिसमुद्घातिनि वर्तमानस्य केवलिनः प्रथमसंहारसमये जघन्यानुभागोदीरणा ।

सेसाण य गइवेज्झ–मज्झिमपरिणामपरिणयउ होज्जा ।
पच्चयसुभासुभविय, चियह्ए नउ विहागे य ॥३०३॥

शेषाणां सातवेदनीये गतिचतुष्टयजातिपञ्चकानुपूर्वीचतुष्टयोच्छ्वासविहायोगतिद्विकत्रसस्थावरबादरसूक्ष्मपर्याप्तापर्याप्तसुभगसुस्वरदुःस्वरानादेयायशःकीर्त्यशःकीर्त्युच्चैर्गोत्रनीचैर्गोत्राख्यानां चतुस्त्रिंशत्संख्यानां प्रकृतीनां तत्प्रकृतीनां सादेयवर्तमानाः सर्वेऽपि जीवा मध्यमपरिणामपरिणता जघन्यानुभागोदीरणामपरिसाता जघन्यानुभागोदीरणास्वामिनो भवन्ति । सा च सर्वासां प्रकृतीनां सामान्येन जघन्योत्कृष्टानुभागोदीरणा । स्वामित्वपरिज्ञानार्थमुपायोपदेशमाह ( पच्चेत्यादि ) प्रत्ययपरिणामप्रत्ययो भवत्यप्रत्ययश्च प्रकृतीनां शुभत्वमशुभत्वं च विपाकादि एतान् सम्यक् चिन्तयित्वा परिभाव्य जघन्योत्कृष्टानुभागोदीरणास्वामी यथायज्ज्ञेयोऽवगन्तव्य । तथाहि । परिणामप्रत्ययानुभागोदीरणा प्राय उत्कृष्टा भवति भवप्रत्यया तु जघन्या शुभानाञ्च संक्लेशप्रयोजनं जघन्यानुभागोदीरणा अशुभानां च विशुद्धौ विपर्यासे तूत्कृष्टा इत्यादि परिभाव्य तत्तत्प्रकृत्युदयवतां जघन्योत्कृष्टानुभागोदीरणास्वामित्वमवगन्तव्यम् । इति तदेवमुक्ता अनुभागोदीरणा । संप्रति प्रदेशोदीरणाभिधानावसरस्तत्र च इमावर्थाधिकारौ । तद्यथा साद्यनादि प्ररूपणार्थमाह सा च द्विधा मूलप्रकृतिविषया उत्तरप्रकृतिविषया च तत्र मूलप्रकृतिविषयां साद्यनादिप्ररूपणां चिकीर्षुराह ।

पंचएह्मणुक्कोसा, तिहा पएसे चउव्विहा दोएहं ।
सेसविगप्पा दुविहा, सव्वविगप्पा य आउस्स ।३०४।

ज्ञानावरणदर्शनावरणनामगोत्रान्तरायरूपाणां पञ्चानां मूलप्रकृतीनामनुत्कृष्टा प्रदेशविषया उदीरणा त्रिधा त्रिप्रकारा तद्यथा अनादिर्ध्रुवाध्रुवा च । तथाह्येतासामुत्कृष्टा प्रदेशोदीरणा गुणितकर्मांशस्य स्वस्वोदीरणापर्यवसाने लभ्यते सा च सादिरध्रुवा च । ततोऽन्या सर्वाप्यनुत्कृष्टा सा चानादिर्ध्रुवोदीरणत्वात् ध्रुवाध्रुवे अभव्यभव्यापेक्षया तथा द्वयोर्वेदनीयमोहनीययोरनुत्कृष्टा प्रदेशोदीरणा चतुर्विधा तद्यथा सादिरनादिर्ध्रुवाध्रुवा च । तथाहि वेदनीयस्योत्कृष्टा प्रदेशोदीरणा प्रमत्तभावाभिमुखस्य सर्वविशुद्धस्य मोहनीयस्य पुनः स्वोदीरणापर्यवसाने सूक्ष्मसंपरायस्य ततो द्वयोरपि एषा साद्यनादीअध्रुवा ततोऽन्या सर्वाप्यनुत्कृष्टा सापि चाप्रमत्तगुणस्थानकात्प्रतिपतितो वेदनीयस्योपशान्तमोहगुणस्थानकाच्च प्रतिपतितो मोहनीयस्य सादिः तत्स्थानमप्राप्तस्य द्वयोरप्यनादिः ध्रुवाध्रुवे पूर्ववत् ( सेसविगप्पति ) एतासां सप्तानामपि मूलप्रकृतीनां शेषा उक्तव्यतिरिक्ता विकल्पा जघन्योत्कृष्टा द्विधा द्विप्रकारास्तद्यथा सादयोऽध्रुवाश्च । तथाह्येतासां सप्तानामतिसंक्लिष्टो मिथ्यादृष्टौ जघन्या प्रदेशोदीरणा सा च सादिरध्रुवा च । संक्लेशपरिणामाच्च च्युतस्य मिथ्यादृष्टिरप्यजघन्यतः सापि सादिरध्रुवा च । उत्कृष्टा च प्रागेव भाविता आयुषः सर्वेऽपि विकल्पा जघन्योत्कृष्टानुत्कृष्टा द्विविधास्तद्यथा सादयोऽध्रुवाश्च । सा च साद्यध्रुवता अध्रुवोदीरणत्वादवसेया । संप्रत्युत्तरप्रकृतीनां साद्यनादिप्ररूपणामाह ।

मिच्छत्तस्स चउद्धा, सगयालाएहि तिहा अणुक्कोसा ।
सेसविगप्पा दुविहा, सव्वविगप्पा य सेसाणं ॥३०५॥

मिथ्यात्वस्यानुत्कृष्टा प्रदेशोदीरणा चतुर्विधा । तद्यथा–सादिरनादिर्ध्रुवाध्रुवा च तथाहि योऽनन्तरसमये सम्यक्त्व संयमसहितं प्रतिपत्स्यते तस्य मिथ्यादृष्टेर्मिथ्यात्वस्योत्कृष्टा प्रदेशोदीरणा सा च सादिरध्रुवा च समयमात्रत्वात् ततोऽन्या सर्वाप्यनुत्कृष्टा सापि च सम्यक्त्वात्प्रतिपतितो भवति सादिः तत्स्थानमप्राप्तस्य पुनरनादिः । ध्रुवाध्रुवे पूर्ववत् । तथा सप्तचत्वारिंशत्प्रकृतीनामनुत्कृष्टा प्रदेशोदीरणा त्रिधा । तद्यथा । अनादिर्ध्रुवा ध्रुवत्वात् । तथाहि । पञ्चविधज्ञानावरणपञ्चविधान्तरायचतुर्विधदर्शनावरणरूपाणां चतुर्दशप्रकृतीनां क्षीणकषायस्य गुणितकर्मांशस्य स्वस्वोदीरणापर्यवसाने उत्कृष्टा प्रदेशोदीरणा । सा च सादिरध्रुवा च ततोऽन्या सर्वाप्यनुत्कृष्टा सा च अनादिः ध्रुवोदीरणत्वाद् ध्रुवाध्रुवे पूर्ववत् । तथा तैजससप्तकवर्णादिविंशतिस्थिरास्थिरशुभाशुभगुरुलघुनिर्माणनाम्नां त्रयस्त्रिंशत्संख्याकानां प्रकृतीनां गुणितकर्मांशोऽस्य सयोगिकेवलिनश्चरमसमये उत्कृष्टा प्रदेशोदीरणा । सा च सादिरध्रुवा च । ततोऽन्या सर्वाप्यनुत्कृष्टा सा चानादिर्ध्रुवोदीरणत्वादासां ध्रुवाध्रुवे पूर्ववत् ( सेसविगप्पादुविहत्ति ) उक्तशेषा विकल्पा जघन्याजघन्योत्कृष्टरूपा द्विविधास्तद्यथा सादयो ध्रुवाश्च । तथाहि सर्वासामप्युक्तप्रकृतीनामतिसंक्लिष्टपरिणामेति मिथ्यादृष्टौ जघन्या प्रदेशोदीरणा लभ्यते अतिसंक्लिष्टस्य परिणामप्रच्यवने वा जघन्या ततो द्वे अपि साद्यध्रुवे उत्कृष्टा च प्रागेव भाविता शेषाणां चोक्तव्यतिरिक्तानां प्रकृतीनां दशोत्तरशतसंख्यानां सर्वेऽपि विकल्पा जघन्याजघन्योत्कृष्टा द्विविधास्तद्यथा सादयो ध्रुवाश्च साद्यध्रुवता च ध्रुवोदीरणत्वादवसेया । कृता साद्यनादिप्ररूपणा । संप्रति स्वामित्वमभिधातव्यं तच्च द्विधा उत्कृष्टजघन्याप्रदेशोदीरणास्वामित्वात् । तत्र प्रथमत उत्कृष्टोदीरणास्वामित्वमाह ।

अणुभागुदीरणा ए, जहएणसामीव एस जेट्ठाए ।
घाईणं अन्नयरो, ओहीण वि णोहिलंभेण ॥३०६॥

घातिकर्मणां सर्वेषामपि अनुभागोदीरणायां यो यो जघन्यानुभागोदीरणास्वामी प्राक् प्रतिपादित स एवोत्कृष्टप्रदेशोदीरणाया स्वामी गुणितकर्मांशो वेदितव्य नवरमन्यत इति श्रुतकेवली इतरो वा अवधिज्ञानावरणावधिदर्शनावरणयोरवधिलब्धिहीनोत्कृष्टप्रदेशोदीरकोऽवसेयः । ( असीति ) वेदमतिसंक्लिष्टमुक्तमिति विशेषतो विभाव्यते अवधिज्ञानावरणवर्ज्यानां चतुर्णां ज्ञानावरणानां चक्षुरचक्षुः केवलदर्शनावरणानां

क्षीणकषायश्चतिकेवलिन इतरस्य वा गुणितकर्मांशस्य समयाधिकावलिका शेषायां स्थितौ उत्कृष्टा प्रदेशोदीरणा अवधिज्ञानावरणयोः पुनरवधिलब्धिरहितस्य क्षीणकषायस्य समयाधिकावलिका शेषायां स्थितौ उत्कृष्टा प्रदेशोदीरणा निद्राप्रचलयोरुपशान्तकषायस्य प्रमत्तसंयते अप्रमत्तभावाभिमुखे स्त्यानर्द्धित्रिकस्य मिथ्यात्वानन्तानुबन्धिकषायाणामनन्तरसमये सम्यक्त्वं संयमसहितं प्रतिपत्तुकामस्य मिथ्यादृष्टेश्चरमसमये सम्यग्मिथ्यात्वस्य सम्यक्त्वप्रतिपत्त्युपान्त्यसमये अप्रत्याख्यानावरणकषायाणां प्रदेशविरतस्यानन्तरसमयाधिकावलिका शेषायां चरमसमये क्षपकस्य हास्यादिषट्कस्यापूर्वकरणगुणस्थानकचरमसमये सर्वत्र गुणितकर्मांशस्योत्कृष्टा प्रदेशोदीरणा वेदितव्या ।

वेयणियाण गहिहि, से कालिअप्पमाईयिय विरओ ।

संघयणपगतणुजुग, उज्जो वा अप्पमत्तस्स ॥ ३०७ ॥

य प्रमत्तो द्वितीये समये अप्रमादं ग्रहीष्यति सोऽप्रमत्तो भविष्यति प्रमत्तो न पञ्चकवैक्रियसप्तकाहारकसप्तकोद्योतनाम्नामुत्कृष्टा प्रदेशोदीरणा ।

देवनिरयाउ गाणं, जहन्नजेट्ठट्ठिई गुरुअ साए ।

इयराउ वि अट्ठम वासे, णेयो अट्ठवासाउ ॥ ३०८ ॥

देवनारकायुषोर्यथाक्रमं देवनारकौ जघन्योत्कृष्टस्थितिकौ गुरुके स्वायुषि वर्तमानौ उत्कृष्टप्रदेशोदीरकौ वेदितव्यौ । एतदुक्तं भवति । देवो दशवर्षसहस्रायुस्थितिको गुरुके स्वोदये वर्तमानो देवायुष उत्कृष्टप्रदेशोदीरकस्तथा नैरयिकस्त्रयस्त्रिंशत्सागरोपमायुः स्थितिको गुरुके स्वोदये वर्तमानो नारकायुष उत्कृष्टप्रदेशोदीरकः प्र त हि दुःखमनुभवन् प्रभूतान् पुद्गलान् परिशातयति इति तदुपादानम् । इतरयोरपि तिर्यग्मनुष्यायुषोर्यथासंख्यं तिर्यग्मनुष्योऽष्टवर्षायुषोऽष्टमे वर्षे वर्तमानो गुरुके स्वोदये युक्त उत्कृष्टप्रदेशोदीरको भवति

एगंतनिरिगजाइगा, तिरिग विसिट्ठ तसु तह अपज्जत्ता ।

मणुसमणुअंत, तिरियगइ देसविरयस्स ॥ ३०९ ॥

एकान्तेन तिर्यक्ष्वेवोदयं प्रति प्रायोग्याः प्रकृतयस्तासामेकेन्द्रियजातिद्वीन्द्रियजातित्रीन्द्रियजातिचतुरिन्द्रियजात्यातपस्थावरसूक्ष्मसाधारणनाम्नामष्टानां निजकाविशिष्टेषु निजनिजप्रकृत्युदयेषु यथा एकेन्द्रियजातिस्थावरनाम्नो बादरपृथिवीकायिकसर्वविशुद्धे आतपनाम्न खरबादरपृथ्वीकायिके सूक्ष्मस्य पर्याप्तस्य साधारणस्य द्वीन्द्रियादिजातिनाम्नां तत्तन्नामसु पर्याप्तेषु सर्वविशुद्धेषु उत्कृष्टा प्रदेशोदीरणा देशविरतस्य तस्य सर्वविशुद्धत्वात् ।

आणुपुव्वी उदुगाणं, सम्मट्ठिीउ दुभगाईणं ।

नीयस्स य तकाले, गई इ विरयान्ति सो चेव ॥ ३१० ॥

चतसृणामानुपूर्वीणां तस्यां तस्यां गतौ वर्तमानस्तृतीये समये सर्वविशुद्धः सम्यग्दृष्टिरुत्कृष्टप्रदेशोदीरकः केवलं नरकतिर्यगानुपूर्व्योः क्षायिकसम्यग्दृष्टिर्वक्तव्या देवनारकगत्योरपि स एव क्षायिकसम्यग्दृष्टिरुत्कृष्टप्रदेशोदीरकः तथा योऽनन्तरसमये संयमं प्रतिपत्स्यते स एवाविरतसम्यग्दृष्टिर्दुर्भगादीनामनादेयायशःकीर्तीनां नीचैर्गोत्रस्योत्कृष्टप्रदेशोदीरकः ।

जोगं उदीरगाणं, जोगंते सरदुगाणुपाणूण ।

नियगंते केवलिणो, सव्वविसुद्धीए सव्वासिं ॥ ३११ ॥

योग्यन्तदीरणायोगी सयोगी केवली अन्ते चरमसमये उदीरको यासां ता योग्यन्तोदीरकास्तासां मनुजगतिपञ्चेन्द्रियजात्यौदारिकसप्तकतैजससप्तकसंस्थानषट्कप्रथमसंहननवर्णादिविंशत्यगुरुलघूपघातपराघातविहायोगतिद्विकत्रसबादरपर्याप्तप्रत्येकस्थिरास्थिरशुभाशुभसुभगादेययशःकीर्तिनिर्माणतीर्थकरोच्चैर्गोत्राणां द्विषष्टिसंख्यानां प्रकृतीनां सयोगिकेवली चरमसमये उत्कृष्टप्रदेशोदीरकः । तथा केवलिनः स्वरद्विकप्राणापानयोर्निजकान्ते स्वस्वनिरोधकाले उत्कृष्टा प्रदेशोदीरणा तथाहि स्वरनिरोधकाले सुस्वरदुःस्वरयोः प्राणापाननिरोधकाले च प्राणापाननाम्न उत्कृष्टा प्रदेशोदीरणा इह सर्वकर्मणामुत्कृष्टप्रदेशोदीरणायामेषा परिभाषा " यो यः स्वस्वोदीरणाधिकारी स स तस्य कर्मणः स्वामी वेदितव्यः " । आयुर्व्यतिरेकेण चान्यत्र सर्वत्रापि गुणितकर्मांशत्वेन दानान्तरायादीनामपि पञ्चानां प्रकृतीनामुत्कृष्टप्रदेशोदीरणास्वामित्वं चेति ॥

सम्प्रति जघन्यप्रदेशोदीरणास्वामित्वमाह ।

तप्पगइ उदीरगाि, संकिलिट्ठभावे असव्वपगईण ।

एयो जहन्नसामी, अणुभागो य तित्थयरे ॥ ३१२ ॥

यस्तासां प्रकृतीनामुदीरकः सोऽतिसंक्लिष्टभावोऽतिसंक्लिष्टपरिणामः क्षपितकर्मांशः सर्वप्रकृतीनां स्वस्वयोग्यानां त्रयाणां दर्शनावरणीयानां सातासातवेदनीययोर्मिथ्यात्वस्य षोडशानां कषायाणां नोकषायाणां सर्वसंख्यया पञ्चचत्वारिंशत्संख्यानां प्रकृतीनां मिथ्यादृष्टिः सर्वपर्याप्तिपर्याप्तः सर्वसंक्लिष्टो निद्रापञ्चकतत्प्रायोग्यसंक्लेशयुक्तो जघन्यप्रदेशोदीरणास्वामी । तथा योऽनन्तरसमये मिथ्यात्वं यास्यति सोऽतिसंक्लिष्टः सम्यक्त्वसम्यग्मिथ्यात्वयोर्जघन्यप्रदेशोदीरणास्वामी भवति । तथा गतिचतुष्टयपञ्चेन्द्रियजात्यौदारिकसप्तकवैक्रियसप्तकतैजससप्तकसंस्थानषट्कवर्णादिविंशतिषट्संहननोपघातागुरुलघूच्छ्वासोद्योतविहायोगतिद्विकत्रसबादरपर्याप्तप्रत्येकस्थिरास्थिरशुभाशुभदुर्भगसुस्वरदुःस्वरादेयानादेययशःकीर्तिनिर्माणोच्चैर्नीचैःपञ्चविधान्तरायरूपाणां एकोननवतिसंख्यानां प्रकृतीनां संज्ञिपर्याप्तसर्वोत्कृष्टसंक्लेशयुक्तो जघन्यप्रदेशोदीरणास्वामी आहारकस्य वाऽऽहारशरीरी तत्प्रायोग्यसंक्लेशयुक्त आनुपूर्वीणामपि आतपस्य खरबादरपृथ्वीकायिकः सर्वसंक्लिष्ट एकेन्द्रियजातिस्थावरसाधारणनाम्नामेकेन्द्रियः सर्वोत्कृष्टसंक्लेशयुक्तः सूक्ष्मनाम्नः सूक्ष्मैकेन्द्रियसर्वसंक्लिष्टो जघन्यप्रदेशोदीरणास्वामी अपर्याप्तकनाम्नः पुनरपर्याप्तमनुष्यः सर्वसंक्लिष्टश्चरमसमये वर्तमानो जघन्यप्रदेशोदीरको भवति । तथा द्वित्रिचतुरिन्द्रियजातीनां यथाक्रमं द्वित्रिचतुरिन्द्रियाः सर्वसंक्लिष्टा जघन्यप्रदेशोदीरणास्वामिनः ( अणुभागोयतित्थयरत्ति ) तीर्थकरनाम्न एव जघन्यानुभागोदीरणास्वामी प्राक् प्रतिपादितः स एव जघन्यप्रदेशोदीरणास्वामी अपि वेदितव्यः तीर्थकरकेवली यावदद्यापि योजिकाकरणमारभते तावत्तीर्थकरनाम्नो जघन्यप्रदेशोदीरको वेदितव्य इत्यर्थः ।

ओहि अोहिजुए अइ-सुहवेयआउगाए तु ॥

पढमस्स जहन्नाईउ, समाणुक्कोसगाट्ठिईउ ॥ ३१३ ॥

अवधिज्ञानावरणावधिदर्शनावरणयोरवधिलब्धियुक्तः सर्वसंक्लिष्टो जघन्यप्रदेशोदीरणास्वामी । अवधिलब्धिकः क्षयादिना यहव पुद्गला परिक्षीणा इत्यवधिलब्धिग्रहणम् । तथा चतु–

णामप्यायुषां स्वभूमिकानुसारेणातीव सुखमनुभवन् जघन्यप्रदेशोदीरको भवति। तत्र प्रथमस्य नरकायुषो दशवर्षसहस्रप्रमाणं जघन्यस्थितौ वर्तमानो नैरयिकः स हि शेषनारकापेक्षया अतिशयेन सुखी शेषाणां च तिर्यग्मनुष्यदेवायुषामुत्कृष्टस्थितौ वर्तमाना नैरयिकाः स हि शेषनारकस्वस्वयोग्यतानुसारेण परमसुखिनो ययासंख्यतिर्यङ्मनुष्यदेवा जघन्यप्रदेशोदीरणास्वामिनो वेदितव्याः। इति उदयोदीरणयोः स्वामित्वेन भेदो नास्ति ॥

उई (-दी) रिज्जमाण-उदीर्यमाण-त्रि० उद्-ईर-य-शानच्। उदीरणानाममनुदये प्राप्ते चिरेणागामिना कालेन यद्वेदितव्यं कर्मदलिकं तस्य विशिष्टाऽध्यवसायलक्षणेन करणेनाकृष्योदये प्रक्षेपणं सा चाऽसंख्येयसमयवर्तिनी तथा च पुनरुदीरणया उदीरणाप्रथमसमय एव। भ० १ श० १उ०। उदयमुपनीयमाने,-प्रज्ञा० २३ पद। "उदीरिज्जमाणो उदीरए" भ० १ श० १ उ०।

उई (दी) रिय-उदीरित-त्रि०। उत्प्राबल्येनेरितो जनित। कृते, "ससद्दफासाफरुसा उदीरिया" अर्जिकृते, आचा०। "महागुरूणिस्स यराउदीरिता" उत्प्राबल्येनेरित कथितः। प्रतिपादिते, 'धीरे धम्मे उदीरिए' आचा० ७ अ० ३ चू०। उत्प्राबल्येन प्रेरिते, राइयाण वेइयाण चालियाण घट्टियाण खोभियाण उदीरियाणं केरिसए सद्दे भवति। राज०। जी०। उदयमुपनीते, प्रज्ञा० २३ पद। भ० १। उदीरितास्तु स्वभावतोऽनुदितान् पुद्गलान् उदयप्राप्ते कर्मदलिके करणविशेषेण प्रक्षिप्य यान् वेदयते इति तत्त्वम्। भ० १ श० १ उ०।

उई (दी) रेंत-उदीरयत्-त्रि० वस्त्वन्तर प्रेरयति,-स्था० ७ठा०।

उउ-ऋतु-पुं० ऋ तु किच्च। "उदृत्वादौ" ८। १। ३। "ऋत्वित्यादिषु शब्देष्वादेर्ऋत उद् भवति-प्रा०। ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोडश स्मृता इति मनूक्ते स्त्रीणां शोणितदर्शनयोग्यगर्भधारणसमर्थे काले, । वाच० । नि० चू०। लोकरूढ्या षष्टचहोरात्रप्रमाणद्विमासात्मके कालविशेषे, व्य० २ उ०। जी०। स्था०। भ०। जी०। "दो मासा उऊ"। भ० ६ श० ७ उ०। अनु०। स्था०। ज्ञा०। औ०। जं०। ते च षट्-"तत्य खलु इमे छ उऊ पन्नत्ता तंजहा पाउसे १ वरिसारत्ते २ सरदे ३ हेमन्ते ४ वसन्ते ५ गिम्हे ६। ता सव्वे वि ण एए चंदउऊ दुवे दुवे मासाति चउप्पण्णेण आदाएण गणिज्जमाणा सातिरेगाइं एगूणसट्ठि २ रातिंदिनाइं रातिंदियग्गेणं आहितेत्ति"। तत्राऽस्मिन् मनुष्यलोके प्रतिसूर्यायनं प्रतिचन्द्रायनं च खल्विमे षट् ऋतवः प्रज्ञप्तास्तद्यथा-प्रावृट्, वर्षारात्रः शरदो, हेमन्तो, वसन्तो, ग्रीष्म। इह लोके अन्यथाऽभिधाना ऋतवः प्रसिद्धास्तद्यथा प्रावृट् शरद्, हेमन्त शिशिरो, वसन्तो ग्रीष्मश्चेति। जिनमते तु यथोक्ताभिधाना एव ऋतवः। तथाचोक्तम् "पाउस वासारत्तो, सरओ हेमंत वसंत गिम्हो य। एए खलु छ प्पि उऊ, जिणवरदिट्ठा मए सिट्ठा" चं० प्र० १२ पाहु०। सू० प्र०। स्था०। जं०।

ऋतुपरिमाणविचार।

एतो उउपरिमाणं, वोच्छामि अहाणुपुव्वीए।

अतो मण्डलेषु नक्षत्रसूर्यशशिनां प्रतिमुहूर्तं गतिपरिमाणप्रतिपादितानामनन्तरमृतुपरिमाणं सूर्यर्तुपरिमाणं चन्द्रर्तुपरिमाणं च यथानुपूर्व्या क्रमेण वक्ष्यामि। प्रतिज्ञातमेव निर्वाहयितुकामः प्रथमतः सूर्यर्तुपरिमाणं प्रतिपादयति।

वे याइच्चा मासा, एकसट्ठिं ते भवतहोरत्ता।
एयं उउपरिमाणं, अवगयमाणा जिणा विंति ॥

यौ द्वावादित्यौ मासौ सूर्यमासौ यावदहोरात्रपरिगणनया एकषष्टिरहोरात्रा भवन्ति। तथाहि सूर्यमासस्त्रिंशदहोरात्र एकस्य चाहोरात्रस्य चार्द्धं ततो द्वौ सूर्यमासावेकषष्टिरहोरात्रा भवन्ति। एतत् एतावत् क्रमतः सूर्यर्तोः परिमाणमपगतमाना। मानग्रहणमुपलक्षणमपगतसकलक्लेशमानादिवर्गाः जिनास्तीर्थकृतो ब्रुवते।

सांप्रतमीप्सितसूर्यर्त्वानयने करणमभिधित्सुराह।

सूरउउस्साणयणे, पव्वपंचरसगुणं नियमा।
तिहि संखित्तं संतं, बावट्ठिभागपरिहीणं ॥
दुगुणे गट्ठीए जुयं, वावीसए भाइए नियमा।
जं लद्धं तस्स पुणो, छहिहिय सेस उऊ होइ ॥
सेसाणं अंसाणं, बेहिं उ भागाहि तेसि जं लद्धं।
ते दिवसा नायव्वा, होंति सचरस्स अयणस्स ॥

सूर्यस्य सूर्यसबन्धिन ऋतोरानयने पर्वपर्वसरस्थानं नियमात् पञ्चदशगुणं कर्त्तव्यम्। पर्वणां पञ्चदशतिथ्यात्मकत्वात्। इयमत्र भावना। इह ऋतव आषाढादिप्रभवा युगं च प्रवर्तते श्रावणबहुलपक्षे प्रतिपद आरभ्यते। ना युगादितः प्रवृत्तानि यानि पर्वाणि तत्संख्या पञ्चदशगुणा क्रियते कृत्वा च पर्वणामुपरि या विवक्षितदिनमभिव्याप्य तिथयस्तास्तत्र संक्षिप्यन्ते इत्यर्थः। ततो "बावट्ठीभागपरिहीणाति" प्रत्यहोरात्रमेकैकेन द्वाषष्टिभागेन परिहीयमाने ये निष्पन्ना अवमरात्रास्तेऽप्युपचारात् द्वाषष्टिभागास्ते परिहीनपर्वसंख्यानं कर्त्तव्यं ततो (दुगुणत्ति) द्वाभ्यां गुण्यते गुणयित्वा च एकषष्ट्यायुतं क्रियते। ततो द्वाविंशेन शतेन भाजितं यल्लब्धं तस्य षड्भिर्भागे हृते यच्छेषं स ऋतुरनन्तरगतीतो भवति। येऽपि अंशा शेषा उद्धरिता तेषां द्वाभ्यां भागे हृते यल्लब्धं ते दिवसाः प्रवर्तमानस्य ऋतोर्ज्ञातव्याः। एष करणगाथाक्षरार्थः। सम्प्रति करणभावना क्रियते। तत्र युगे प्रथमे दीपोत्सवे केनापि पृष्टः कः सूर्यर्तुरनन्तरमतीतः को वा सम्प्रति वर्तते। तत्र युगादितः सप्तपर्वाण्यतिक्रान्तानीति सप्त ध्रियन्ते। तानि पञ्चदशभिर्गुण्यन्ते। जातं पञ्चोत्तरशतम्। एतावति विकाले द्वाववमरात्रावभूतामिति द्वौ ततः पात्येते स्थितं पश्चात् त्र्युत्तरं शतं (१०३) ततो द्वाभ्यां गुण्यते जाते द्वे षडुत्तरे (२०६) तत्रैकषष्टिः प्रक्षिप्यते द्वे शते सप्तषष्ट्यधिके (२६७) तयोर्द्वाविंशतेन भागो ह्रियते लब्धौ द्वौ तौ षड्भिर्भाग न सहेते इति न तयोः षड्भिर्भागहारः। शेषास्त्वंशा उद्धरन्ति त्रयोविंशतिः। तया समर्द्धिभाना एकादश अर्द्धं च सूर्यर्तुरापाढादिस्तत आगत द्वावृतू अतिक्रान्तौ तृतीयश्च ऋतुः संप्रति प्रवर्तते। तस्य च प्रवर्तमानस्यैकादश दिवसा अतिक्रान्ता द्वादशो वर्तते इति। तथा युगे प्रथमायामक्षयतृतीयायां केनापि पृष्टः के ऋतवः पर्यतिक्रान्ता को वा सम्प्रति वर्तते तत्राक्षयतृतीयायां प्रथमाया प्राङ्युगस्यादितः पर्वाण्यतिक्रान्तान्येकोनविंशतिः ततः एकोनविंशतिः पञ्चदशभिर्गुण्यते जाते द्वे शते पञ्चाशीत्यधिके (२८५) अक्षयतृतीयायां किल पृष्टमिति पर्वणामुपरितन्यस्तिनयः प्रक्षिप्यन्ते जाते द्वे शते अष्टाशीत्यधिके (२८८) तावति काले अवमरात्राः पञ्च भवन्ति। पञ्च ततः पात्यन्ते

जाते द्वे शते त्र्यशीत्यधिके ( २८३ ) ते द्वाभ्यां गुण्येते जातानि पञ्च शतानि षट्षष्ट्यधिकानि ( ५६६ ) तान्येकषष्टिसहितानि क्रियन्ते जातानि षट् शतानि सप्तविंशत्यधिकानि (६२७) तेषां द्वाविंशेन शतेन भागो ह्रियते लब्धा• पञ्च पश्चाद् शाडुद्धरन्ति सप्तदश तेषामर्द्धं लब्धाः सार्द्धा अष्टौ । आगतं पञ्च ऋतवोऽतिक्रान्ता• षष्ठस्य च ऋतोः प्रवर्तमानस्याष्टौ दिवसा गता नवमो वर्तते । तथा युगे द्वितीये दीवोत्सवे केनापि पृष्टं कियन्त ऋतवोऽतिक्रान्ता• को वा सम्प्रति वर्त्तते । तत्रैतावति काले पर्वाण्यतिक्रान्तानि एकत्रिंशत्पञ्चदशभिर्गुण्यन्ते जातानि चत्वारि शतानि पञ्चषष्ट्यधिकानि ( ४६५ ) अवमरात्राश्चैतावति काले व्यतिक्रामन्त्यष्टौ ततोऽष्टौ पात्यानि शेषाणि चत्वारि शतानि सप्तपञ्चाशताधिकानि ( ४५७ ) तानि द्विगुणीक्रियन्ते जातानि नवशतानि चतुर्दशोत्तराणि ( ९१४ ) तथैकषष्टिप्रक्षेपे जातानि नव शतानि पञ्चसप्तत्यधिकानि (९७५) एतेषां द्वाविंशत्यधिकशतेन भागहरणे, लब्धाः सप्त उपरिष्टादशाद्युद्धरन्ति एकविंशतिशतं ( १२१ ) तस्य द्वाभ्यां भागे हृते लब्धा• षष्टिः सार्द्धाः सप्तानां च ऋतूनां षड्भिर्भागे हृते लब्ध एकक• एक उपरिष्टात्तिष्ठन्ति आगतमेकसंवत्सरोऽतिक्रान्तः । एकस्य च संवत्सरस्योपरि प्रथम ऋतु प्रावृड्नामा निर्गतो द्वितीयस्य च षष्टिर्दिनान्यतिक्रान्तान्येकषष्टितम वर्तते इति एवमन्यत्रापि भावना कार्या ।

सांप्रतममूनामृतूनां नामान्याह ॥

पाउस वासारत्ता, सरओ हेमंत वसंत गिम्हो य ।

एए खलु छप्पि उऊ, जिणवरदिट्ठा मए सिट्ठा ॥

प्रथम ऋतुः प्रावृड्नामा द्वितीया वर्षारात्रा तृतीया शरच्चतुर्थो हेमन्त•, पञ्चमो वसन्त, षष्ठो ग्रीष्म । एते एवषट् ऋतव• एवं नामतो जिनवरदृष्टा• सर्वज्ञदृष्टा मया शिष्टा• कथिता• । साम्प्रतमेतेषामृतूनां मध्ये क ऋतु कस्यां तिथौ समाप्तिमुपयातीति परस्य प्रश्नमाशङ्क्य तत्परिज्ञानाय करणमाह ।

इच्छा उऊ दुगुणितो, रूवोणगुणिओ उ पव्वाणि ।

तस्सद्धं होइ तिही, जत्तसमत्ता उऊ तीसं ॥

यस्मिन् ऋतौ ज्ञातुमिच्छा स ऋतुः ध्रियते तत्संख्या ध्रियते इत्यर्थ तत स द्विगुणित सन् रूपेण क्रियते । ततः पुनरपि स द्वाभ्यां गुण्यते गुणयित्वा च प्रतिराश्ये तद्द्विगुणितश्च सन् भवन्ति तावन्ति पर्वाणि द्रष्टव्यानि तस्य च प्रतिराशि तस्यार्द्धं क्रियते । ततश्चार्धं यावत् भवति तावत्यास्तिथय प्रतिपत्तव्या । यासु युगमाविनीस्त्रिंशदपि ऋतवः समाप्ता समाप्तिमेष्यन्तीति करणगाथाक्षरार्थः । सम्प्रति करणभावना विधीयते । किल प्रथम ऋतुर्ज्ञातुमिष्टो यथा युगे कस्यां तिथौ प्रथमत• प्रावृड्लक्षण ऋतु समाप्तिमुपयातीति । तत्र एकको ध्रियते स द्वाभ्यां गुण्यते जाते द्वे स्वरूपोन• क्रियते । जात एकक एव स भूयोऽपि द्विगुण्यते द्वे रूपे प्रतिराश्यते तयोरर्द्धं जातमेकं रूपमागतं । युगादौ द्वे पर्वणी अतिक्रम्य प्रथमायां तिथौ प्रतिपादि प्रथम प्रावृड्नामा ऋतु समाप्त । तथा द्वितीये ऋतौ ज्ञातुमिच्छति द्वौ स्थाप्येते तयो द्वाभ्यां गुणने जाताश्चत्वारस्ते रूपोना क्रियन्ते । जातास्त्रयस्ते भूयो द्विगुण्यन्ते जाता षट् ते प्रतिराश्यन्ते प्रतिराशीनां चार्द्धं क्रियते जातास्त्रय आगतं युगादितः षट् पर्वाण्यतिक्रम्य तृतीयायां तिथौ द्वितीय ऋतुः समाप्तिमुपागमत । तथा तृतीये ऋतौ ज्ञातुमिच्छति त्रयो ध्रियन्ते । द्वाभ्यां गुण्यन्ते जाताः षट् ते रूपोना कृताः सन्तो जाता पञ्च ते भूयो द्विगुण्यन्ते जाता दश ते प्रतिराशीनां चार्द्धे लब्धा• पञ्च । आगत युगादित आरभ्य दश पर्वाण्यतिक्रम्य पञ्चम्यां तिथौ तृतीय ऋतुः समाप्तिमियाय । तथा षष्ठ ऋतौ ज्ञातुमिच्छति षट् स्थाप्यन्ते । ते द्वाभ्यां गुण्यन्ते जाता द्वादश रूपोना• सन्तो जाता एकादश ते द्विगुण्यन्ते । जाता द्वाविंशतिः । सा प्रतिराशि तयोश्चार्द्धं क्रियते । जाता एकादश । आगतं युगादितो द्वाविंशतिपर्वाण्यतिक्रम्य एकादश्यां तिथौ षष्ठ ऋतु• समाप्नोति । तथा युगे नवमे ऋतौ ज्ञातुमिच्छति नव स्थाप्यन्ते ते द्वाभ्यां गुण्यन्ते जाता अष्टादश ते रूपोना• क्रियन्ते । जाता सप्तदश ते भूयो द्विगुण्यन्ते जाताश्चतुस्त्रिंशत् । संप्रतिराश्यते तस्या अर्द्धं क्रियते जाताः सप्तदश आगत युगादितश्चतुस्त्रिंशत्पर्वाण्यतिक्रम्य द्वितीये संवत्सरे पौषमासे शुक्लपक्षे द्वितीयस्यां तिथौ नवम ऋतुः परिसमाप्तिं गच्छति । तथा त्रिंशत्तमे ऋतौ जिज्ञासति त्रिंशद् ध्रियते सार्द्धिगुण्यते जाता षष्टिः सा रूपोना क्रियते जाता एकोनषष्टिः सा भूयो द्वाभ्यां गुण्यते जातमष्टादशोत्तरं शत तत् प्रतिराश्यते तस्यार्द्धं क्रियते जाता एकोनषष्टि । आगत युगादितोऽष्टादशोत्तरपर्वाण्यतिक्रम्य एकोनषष्टितमायां तिथौ । किमुक्त भवति । पञ्चमे संवत्सरे प्रथमे आषाढमासे शुक्लपक्षे चतुर्दश्यां त्रिंशत्तम ऋतु• समाप्तिमुपायासीत् व्यवहारत• प्रथमाषाढपर्यन्त इत्यर्थ सम्प्रति वर्षाकाले शीतकाले ग्रीष्मकालेषु चतुर्मासप्रमाणेषु यस्मिन् पर्वणि कर्ममासापेक्षयाऽधिकोऽहोरात्र• सूर्यर्तुपरिसमाप्तौ भवति तत्प्रतिपादयन्नाह ॥

तइयम्मि उ कायव्व, अतिरत्तं सत्तम पव्वम्मि ।

वासहिमागिम्हकाले, चाउम्मासे विहीयत्ते ॥

वर्षाहिमग्रीष्मकालेषु प्रत्येक चतुर्मासेषु चतुर्मासप्रमाणेषु पृथक् अतिरात्रा अधिका अहोरात्रा विधीयन्ते तद्यथा एकातृतीयपर्वण्यपरा सहिमपर्वणि । इयमत्र भावना । सूर्यर्तुचिन्तायां कर्ममासापेक्षया वर्षाकाले श्रावणादौ तृतीये पर्वणि गते कोऽधिकोऽहोरात्रो द्वितीय• सप्तमे पर्वणि हेमन्तकालेपि एकस्तृतीये पर्वणि द्वितीयः सप्तमे ग्रीष्मकालेपि एकस्तृतीये पर्वणि द्वितीय• सप्तमे । अत्राह पूर्वपूर्वावमरात्रसहितमुक्तम् ।

इदानीं त्वधिकरात्रोपेतमिति किमत्र पर्वकरणमत आह ॥

उउसहियं अतिरत्तं, जुगसहियं होइ ओमरत्तं तु ।

रविसहियं अइरत्तं, सहितहियं अमरत्तं तु ॥

इह पर्वऋतुसहित विवक्षते तदा विवक्षित तृतीयादिकवर्षाकालादिसम्बन्धि अतिरात्रमधिकरात्रम । सूर्यर्तुपरिसमाप्तिचिन्तायां तस्मिन् विवक्षिते तृतीयादौ पर्वणि कर्ममासापेक्षयाधिकोऽहोरात्रो भवति । तथाहि कर्ममासस्त्रिंशता दिनै• सूर्यमासस्त्रिंशता मासद्वयात्मकश्च ऋतु । तत• सूर्यर्तुपरिसमाप्तौ कर्ममासापेक्षयैकोऽधिकोहोरात्रो भवतीति । तथा युग चन्द्राभिवर्द्धितरूप संवत्सरपञ्चकात्मके च पञ्चापि संवत्सराश्चन्द्रमासापेक्षया ततो यदि पर्वयुगसहितं चन्द्रमासोपेत चिन्त्यते तदा विवक्षित पर्वतृतीयादिकं वर्षाकालादिसम्बन्धि अवमरात्रोपेत भवति कर्ममासापेक्षया तस्मिन् तृतीयादौ पर्वणि निरग्रेऽवमोऽहोरात्र पततीति भाव । एतदेवाह

उक्खित-उत्क्षित-त्रि० सिक्ते, "चंदणोक्खित्तगाय सरीरे" सूत्र. २ श्रु० २ अ० ।

उत्क्षिप्त त्रि० उत् क्षिप्-क्त ऊर्ध्वमाकाशे क्षिप्ते, ज्ञा० १० अ० । जत्राऽऽदुद्धृते, ज्ञा०१७ अ० । उत्पाटिते, आव० १ अ० । प्रथमत समारभ्यमाणे गेयभेदे, रा० । जं० । उच्चाटिते च धुस्तूरे पु० वाच० ।

उक्खित्तकण्णणास-उत्क्षिप्तकर्णनास-त्रि० ब० उत्पाटितकर्णनासिके, वि० १ अ० ।

उक्खित्तचरग-उत्क्षिप्तचरक-पुं० स्वप्रयोजनाय पाकभाजनादुद्धृत तदर्थमभिग्रहविशेषाच्चरतितद्गवेषणाय गच्छतीत्युत्क्षिप्तचरक' । स्था० ५ ठा० । दायकेन पूर्वमेव भाजनादुद्धृतस्य गवेषके, प्रतिग्रहविशेषधारिणि, ध० ३ अधि० । भिक्षाचरकभेदे, औप० । प० व. ।

उक्खित्तणाय-उत्क्षिप्तज्ञात-न० मेघकुमारजीवेन हस्तिभवे वर्तमानेन य पाद उत्क्षिप्तस्तेनोपलक्षित मेघकुमारचरितमुत्क्षिप्तमेवोच्यते । उत्क्षिप्तमेव ज्ञातमुदाहरण विवक्षितार्थसाधनमुत्क्षिप्तज्ञातम् । मेघकुमारचरितरूपे ज्ञाताधर्मकथाया प्रथमाऽध्ययनोक्ते मेघकुमारचरिते, ज्ञातत्वाचाऽस्यैव न्यायनीयोदयादिगुणवन्तः सहन्त एव देहकष्टमुत्क्षिप्तैकपादो मेघकुमारजीवो हस्ती वेति । एतदर्थाभिधायके ज्ञाताधर्मकथाया. प्रथमे ऽध्ययने च । ज्ञा० १ अ० । स० आव० । प्रश्न०

उक्खित्तणिक्खित्तचरय-उत्क्षिप्तनिक्षिप्तचरक-पु० पाकभाजनादुत्क्षिप्य निक्षिप्त तत्रैवान्यत्र च स्थाने यत्तदुत्क्षिप्तनिक्षिप्तम् । अथवा उत्क्षिप्त च निक्षिप्त च यश्चरति स तथोच्यते अभिग्रहविशेषधारिणि भिक्षाचरके, औ० । सूत्र० ।

उक्खित्तपसिणवागरण-उत्क्षिप्तप्रश्नव्याकरण-त्रि० उत्क्षिप्तानीवोत्क्षिप्तानि अविस्तारिरूपाणि प्रच्छनीयत्वात्प्रश्नाव्याक्रियमाणत्वाच्च व्याकरणानि यानि तानि तथा । सङ्क्षिप्तप्रश्नोत्तरेषु । भ० १६ श० ५ उ० ।

उक्खित्तपुव्ववसहि-उत्क्षिप्तपूर्ववसति-पुंक०स० अस्यां वसत यूयमिति साधूनामादौ दर्शितायां वसतौ, आचा०२ श्रु० २ अ० ३ उ० ।

उक्खित्तभत्त- उत्क्षिप्तभक्त न० पूज्यभक्ते, पूज्यभक्तमुत्क्षिप्तभक्त पट्टकभक्तमेतान्येकार्थिकानि । बृ० २ उ० ।

उक्खित्तविवेग-उत्क्षिप्तविवेक-पु० उत्क्षिप्तस्य शुष्कौदनादिभक्ते निक्षिप्तपूर्वस्याचामाम्लप्रत्याख्यानवतामयोग्यस्याऽऽद्रवविकृत्यादिद्रव्यस्य विवेको नि शेषतया पृथक्करणमुद्धरण मुत्क्षिप्तविवेक । आचामाम्लादिप्रत्याचक्षाणानां भोक्तव्यद्रव्यस्याऽऽ कल्पनीयद्रव्येण संस्पर्शे तदुद्धरणरूपे प्रत्याख्यानाकारे, । 'आयंबिलं पच्चक्खाइ अण्णत्थणा भोगे ण सहसागारेणं लेवालेवेण उक्खित्तविवेगेण" पचा० ५ विव० । ध० । आ० चू० ।

उक्खित्ताय-उत्क्षिप्तक-न उत् क्षिप्-क्त-ककारात्पूर्व दीर्घत्व प्राकृतत्वात- । प्रथमत समारभ्यमाणे गेयादौ, जं० १ वक्ष० जी० । रा० । स्था० ।

उक्खिप्प -उत्क्षिप्य- अव्य० उत् क्षिप् ल्यप् "ऊर्ध्वं क्षिप्त्वेत्यर्थे उक्खिप्पपाद रीएज्जा" आचा २ श्रु २ अ ३ उ ।

उक्खिप्पमाण-उत्क्षिप्यमाण-त्रि० ऊर्ध्वं क्षिप्यमाणे, ( उक्खिप्पमाणेहिं ) प्रकीर्णकैरुत्क्षिप्यमाणैरित्यर्थ । प्रश्न० ४४ द्वा० ।

उक्खिवंत-उत्क्षिपत्-त्रि० उत् क्षिप्-शतृ- । उत्क्षिपेर्गुलुगुञ्छोत्थघाल्लत्थ, ८ । ४ । ४३ इत्यादिसूत्रस्य वैकल्पिकत्वाद् गुलुगुञ्छादय' प्रेरणे, प्रा० ।

उक्खिवणा-उत्क्षेपणा-स्त्री० उद्घाटनायां साधूनां सघाद्बहिःकरणे, " अच्छिंदओ य उक्खवणा " बृ० १ उ० ।

उक्खुम्म-तुम्-धा० भेदे, तुदा० कुटा०पर सक सेट् (तुभेस्तो ट्टतुदखुडोक्खुडोल्लुक्कणिल्लुक्कलुक्कोच्चूराः ८ ।४। ११६। इति तुभेरुक्खुमादेश उक्खुरुदतुभति प्रा० ।

उक्खेव-उत्क्षेप पु० उत्-क्षिप्-घञ् उत्पाटने, ओ० कर्तरि अच् उत्क्षेपकारके, त्रि० वाच० प्रारम्भ वाक्ये, निर० । उपक्षेप-पु उपोद्घाते, "उक्खेवो तइयस्स" उपा० १अ हस्तादुत्पाटने, ( उक्खेवेण देतिणिवावि ठवणाति ) व्य. ३ उ० ।

उक्खेवग--उत्क्षेपक--त्रि० उद् क्षिप् ण्वुल् ऊर्ध्वप्रक्षेपे, उत्क्षिप्याहारके चौरे च । वाच० वशदलादिमये मुष्टिग्राह्यदण्डकमध्यभागे, वायूदीरणके वस्तुनि, भ०९ श० ३३ उ० । ज्ञा१ । प्रश्न० ८ ।

उक्खेवण--उत्क्षेपण--न० उत-क्षिप् ल्युट् उत्खनने; समुद्धरणे, सूत्र० २ श्रु० १ अ० । न्यायवैशेषिकप्रसिद्धे पञ्चानां कर्मणामन्यतमस्मिन्, तच्च यदूर्ध्वाध. प्रदेशाभ्या सयोगविभागकारण कर्मोत्पद्यते । यथा शरीरावयवे तत्सम्बन्धे वा मूर्तिमति मुसलादौ द्रव्ये ऊर्ध्वभाग्भिराकाशप्रदेशाद्यैः सयोगकरणमधोदिग्भागावच्छिन्नैश्च तैर्विभागकारण प्रयत्नवशाद्यत्कर्म तदुत्क्षेपणमुच्यते । सम्म० ।

उग्गलफलग-उग्गालफलक-न० आर्यकप्रभृतीनांवंऽया समागते चम्पकपट्टादिफलके, व्य ४ उ० ।

उग्गहिया--उद्गृहीता-त्रि० पञ्चम्यामनेषणायाम, आचा० २ श्रु० १ अ. १० उ ।

उग्ग-उद्-घट-धा उद् घट चेष्टायाम, णि. उद् घटेरुग्ग ८ । ४ । ३३ । उत्पूर्वस्य घटेर्ण्यन्तस्य उग्ग इत्यादेशः । उग्गइ उद्घटयति । प्रा० ।

उग्ग-पु० उच् रक् गश्चान्तादेश । क्षत्रियादूढायां शूद्रायामुत्पन्ने सकीर्णवर्णे, वाच० उग्रदण्डकारित्वादुग्रः कल्प० । आ० म० प्र० । आदिदेवावस्थापिते आरक्षवंशजे क्षत्रियभेदे, ज्ञा० १ आ० । स्थ० । आचा० । सू० । कल्प० । अनु० । औ० भ० । दुष्टे, अतिउग्ग दुण्णिरूम्भ आयरिया उग्गा इउच्चंति बुत्त भवति नि० चू० । स्वभावत उदात्ते, भ० १० ४ उ० । प्रज्ञा० तीव्रे, त० । अप्रधृष्ये, ज्ञा० १ अ० । रा० । च० । संस्था । उत्कटे, उत० २० अ० ।

उग्गकुल-उग्रकुल-न० ६ त आरक्षिकाणां कुले, आचा० २ श्रु० १ अ० २ उ० ।

उग्गच्छ-उद्गत्य-अव्य० क्रमेण तत्रोद्गमन कृत्वेत्यर्थे, भ० ५ श० १ उ० ।

उग्गगंध-उग्रगन्ध-पु० उग्र गन्ध पुष्पादावस्य चम्पके, कट्फले, अर्जकवृक्षे, लशुने, च । हिङ्गुनि, न० । उत्कटगन्धाढ्ये, त्रि० । यवान्याम, वचायाम, अजमोदाया, च । स्त्री० टाप् मेदिनी० ।

उग्गतव–उग्रतपस्–त्रि० उग्रमप्रधृष्य तपोऽनशनादि यस्य स तथा । रा० । वि० । ज० । तीव्रतपसि, सथा० । यदन्येन प्राकृतेन पुंसा न शक्यते चिन्तयितुमपि मनसा ( तेन ) विविधेन तपसा युक्ते, रा० । उत्त० । स्था० । ज्ञा० । नि० ।

उग्गतेय–उग्रतेजस्–त्रि० ६ व० । तीव्रप्रभावे, तीव्रविषे, "आसीविस उग्गतेयकप्पा" प्रश्न० १ सं० द्वा० ।

उग्गपव्वइय–उग्रप्रव्रजित–पुं० उग्रा सन्त प्रव्रजिता । दीक्षामाश्रितेषु, आदिदेवेनारक्षकत्वेन नियुक्तानां वंशजेषु, औ० ।

उग्गपुत्त–उग्रपुत्र–पु० ६ त उग्राणां पुत्रा । उग्राणां कुमारेषु, क्षत्रियजातिविशेषेषु, सूत्र० २ श्रु० १३ अ० म० ॥

उग्गपुरिस–उग्रपुरुष–पु० उग्रपुरुषविशेषे, स्था० । ( व्याख्या पुरिसशब्दे- )

उग्गम–उद्गम–पु० उद्गमनमुद्गम· पिण्डादेः प्रभवे,

तत्थुग्गमोपसूई, पभवो एमादि होंति एगट्ठा ।
सो पिंडस्सिह पगओ, तस्स य दोसा इमे होंति ॥

तत्रेत्युत्पादनैषणासु मध्ये उद्गमनमुद्गम· । प्रसवन प्रसूति । प्रभवन प्रभव· ( एमाइत्ति ) एवमादयः आदिशब्दादुत्पत्त्यादिपरिग्रह भवन्ति स्युरेकार्था । अनन्याभिधेया· शब्दा इति गम्यम् ( सोत्ति ) स चोद्गम· सचेतनाचेतनमिश्रद्विपदादिद्रव्यविषयत्वेन बहुविषयोपि सन् पिण्डस्य भैक्ष्यस्याधिकृतः प्रस्तुत· । इह पिण्डाधिकारे दोषा दूषणानि तस्य पिण्डोद्गमस्य इमे वक्ष्यमाणा भवन्ति वर्तन्ते । ये हि साध्वर्थं पाकस्थापनप्रकाशनादयो भक्तादिवस्तुनो भक्तस्थापितत्वप्रकटत्वादिरूपेण भवनलक्षणमुद्गम दूषयन्ति ते उद्गमदोषा इति गाथार्थ । पंचा० १३ विव० । तत्र प्रथमत उद्गमस्य एकार्थिकानि नामानि नामादिकाश्च भेदान् प्रतिपादयति ॥

उग्गम उग्गोवण मग्गणाय एगट्ठियाणि एयाणि ।
नामं ठवणा दविए भावम्मि य उग्गमो होइ ॥

उद्गम उद्गोपना मार्गणा च एकार्थिकान्येतानि नामानि स च उद्गमश्चतुर्धा भवति तद्यथा ( नामंति ) नामोद्गम· यत् उद्गम इति नाम अथवा जीवस्य अजीवस्य वा यदुद्गम इति नाम स नामनामवतोरभेदोपचारात् । यद्वा नाम्ना उद्गमो नामोद्गम इति व्युत्पत्तेर्नामोद्गम· । स्थापनोद्गम उद्गम स्थाप्यमानो द्रव्यं द्रव्यविषयो भावेभाव विषय । तत्र द्रव्योद्गमो द्विधा आगमतो नो आगमतश्च । नो आगमतोपि त्रिधा । ज्ञशरीर भव्यशरीरतद्व्यतिरिक्तभेदात् । तत्र आगमतो नो आगमतश्च ज्ञशरीरभव्यशरीररूपौ द्रव्यगवेषणावत् भावनीयौ । ज्ञशरीरभव्यशरीरव्यतिरिक्तं तु द्रव्योद्गमम् ॥

तथा नो आगमतो भावोद्गमं च प्रतिपादयति ॥

दव्वम्मि लड्डुगाई, भावे तिविहोग्गमो मुणेयव्वो ॥
दंसणनाणचरित्ते, चरित्तुग्गमेणेत्थ अहिगारो ॥ ७३ ॥

द्रव्ये द्रव्यविषये उद्गमो लड्डुकादौ लड्डुकादिविषयो लड्डुकादे संबन्धी वेदितव्य· । अत्रादिशब्दाज्ज्योतिरादिपरिग्रह । तथा भावे भावविषये त्रिविधस्त्रिप्रकारो ज्ञानस्य· । तद्यथा दर्शने दर्शनविषयो ज्ञाने ज्ञानविषयश्चारित्रे चारित्रविषय· । अत्र तु चारित्रोद्गमेनाधिकारप्रयोजनम् चारित्रस्य प्रधानमोक्षाङ्गत्वात् । तथाहि ज्ञानदर्शने सती अपि न चारित्रमन्तरेण कर्मक्षयाय प्रभवत श्रेणिकादौ तथोपलम्भात् चारित्र पुनरवश्यं ज्ञानदर्शनाविनाभावित्वरूपेणापि वाश्रिनवकर्मोपादाननिषेधपूर्वोपार्जितकर्मापगमकरणस्वरूपम् ततस्तत्प्रधानमोक्षस्याङ्ग तत्प्रधानानुयायिन्यश्च प्रेक्षावतां प्रवृत्तय· । ततोत्र चारित्रोद्गमेन प्रयोजनम् । लड्डुकादेरित्यत्रादिशब्देन द्रव्यं ज्योतिरुद्गमादिरूप द्रव्योद्गमं विवरीतुमाह ॥

जोइसतणोसहीणं,मेहरिणकराणमुग्गमो दव्वे ।
सो पुण जत्तो य जया, जहा य दव्वुग्गमो दव्वो ॥७३॥

ज्योतिषां चन्द्रसूर्यादीनां तृणानां दर्भाणामौषधीनां शाल्यादीनां जीमूतानां ऋणस्य उत्तमर्णा यदा तद्द्रव्यस्य कराणां राजदेयभागानाम् । उपलक्षणमेतत् । अन्येषामपि द्रव्याणां य उद्गम· स द्रव्यसम्बन्धी वेदितव्य· । स पुनर्द्रव्योद्गमो यतो यस्मात्स्थानात्सकाशात्स यदा यस्मिन् काले यथा च येन प्रकारेण भवति तथा वाच्य । तत्र ज्योतिषां मेघानां च आकाशदेशात् तृणानामौषधीनां च भूमेर्ऋणस्य व्यवहारादेः कराणां नृपतिनियुक्तपुरुषादेः तथा यदि ज्योतिषां मध्ये सूर्यस्य प्रभाते शेषाणां तु कस्यापि कस्यांचिद्वेलायां तृणादीनां प्राय· श्रावणादौ तथा यथेति ज्योतिषां मेघानां चाकाशे प्रसरणेन तृणानामौषधीनां च भूमौ स्फोटयित्वा ऊर्ध्वं निस्सरणेन ऋणस्य पञ्चकगतादिवर्द्धनरूपेण कराणां प्रतिवर्षं गृहस्य द्रम्मद्वयादिग्राह्यमित्येवंरूपेण । एव शेषाणामपि द्रव्याणां यतो यदा यथा च यथासम्भवमुद्गमो भावनीय· । इह प्राक् " दव्वम्मिलड्डुगाइ" इत्युक्तं तेन च लड्डुकप्रियकुमारकथानक सूचितमतस्तदेवेदानीं गाथात्रयेणोपदर्शयति ।

वासहरा अणुजत्ता, अत्थाणी जोग्गकिडुकाले य ।
घडगसरावेसु कया उ, मोयगा लड्डुगपियस्स ॥७४॥
जोग्गा अजिण्णमारुय, निसमुब्भवो सुइसमुत्थो ।
आहारुग्गमचिंता, असुइ त्ति दुहा मलप्पभवो ॥७५॥
तस्सेवं वेरग्ग–ग्गमेण सम्मत्तनाणचरणाणं ।
जुगवंकमुग्गमो वा, केवलनाणुग्गमो जाउ ॥७६॥

वासगृहात् वासभवनात् अनुयात्रानिर्गम । तत आस्थान्य योग्या क्रीडा सा व्यधीयत । तत काले भोजनवेलायां तस्य लड्डुकप्रियस्य मोदकप्रियस्य कुमारस्य योग्या घटेषु सरावेषु च कृत्वा मोदका जनन्या प्रेषिता । ते च परिजनेन सह स्वेच्छ तेन भुक्तास्ततो भूयोपि योग्यक्रीडानिरीक्षणासक्तचित्ततया तस्य रात्रौ जागरणभावतस्ते मोदका न जीर्णास्ततोऽजीर्णदोषप्रभावतोऽतीव प्रतिगन्धिमारुतनिसर्गोऽभवत् । तत आहारोद्गमचिन्ता जाता । यथा त्रिसमुत्था घृतगुड कणिक्कासमुद्भवा एते मोदकास्तत शुचिसमुत्था । सूत्रे च जातावेकवचनम् । केवल द्विधा मलप्रभवोऽय देहस्ततस्तत्स्पर्कनोऽशुचयो जाता इत्येव तस्य वैराग्योद्गमेन ज्ञानदर्शन चारित्राणां युगपत्क्रमेण वा उद्गमो जातस्तत· केवलज्ञानोद्गम इति गाथाक्षरार्थ· । भावार्थस्तुकथानकादवसेयस्तच्चेदम् । श्रीस्थलक नाम नगर तत्र राजा भानुस्तस्य भार्या रुक्मिणी तयो सरूपनामा तनय· स च यथासुख पञ्चभिर्धात्रीभि· परिपाल्यमान प्रथममुरुकुमार इवानेकसुजनहृदयाभिनन्दित कुमारभावमधिरुरोह । तत शुक्लपक्षचन्द्रबिम्बमिव प्रतिदिवसं कलाभिरभिवर्धमान· क्रमेण कमनीयकामिनीजनमन प्रह्लादकारिणीं यौवनिकामधिरूढवान् । तस्मै च स्वभावत एष

रोचन्ते मोदकास्ततो लोके तस्य मोदकप्रिय इति नाम प्रसिद्धिमगमत् । स च कुमारोऽन्यदा वसन्तसमये वासभवनात्प्रातरुत्थाय आस्थानमण्डपिकायामाजगाम । तत्र च निजशरीरलावणिमापाकृतसुरसुन्दरीरूपाहङ्कारमनोहरविलासिनीजनगीतनृत्यादिक परिभावयितु प्रावर्त्तत । तत्र च स्थितस्य भोजनवेलायामागतायां भोजननिमित्त जननी प्रधानसरावसम्पुटेषु शेषपरिजननिमित्तं च घटेषु कृत्वा मोदकान् प्रेषितवती। ततस्तेन परिजनेन सह मोदका यथेच्छ बुभुजिरे । ते च रात्रावपि गीतनृत्यादिव्याक्षिप्तचित्ततया जागरणभावतो न जीर्णास्ततो ऽजीर्णदोषप्रभावतोऽपानवातोऽतीव पूतिगन्धिर्निर्जगाम । तद्गन्धपुद्गलाश्च सर्वतः परिभ्रमन्तस्तन्नासिकां प्रविविशुः । ततस्तथारूप पूतिगन्धमाघ्राय चिन्तयामास । यथामी मोदका घृतगुडकणिक्कादिनिष्पन्नास्ततः शुचिद्रव्यसमुत्थाः एवैते । केवलमय यो देहो जननीशोणितजनकशुक्ररूपो द्विधा मलप्रभवत्वादशुचिरूपस्तत्सम्पर्कवशतोऽशुचिरूपो जात । दृश्यन्ते च कर्पूरादयोऽपि पदार्थाः स्वरूपतः सुरभिगन्धयोऽपि देहसम्पर्कतः क्षणमात्रेण दुरभिगन्धयो जायमानाः । क्षणान्तरे शरीरगन्धस्यैव पूत्यात्मकस्योपलम्भात्तत इत्थमशुचिरूपस्यानेकापायशतसकुलस्य शरीरस्यापि कृते ये गृहमासाद्य नरकादिकुगतिविनिपातकारीणि पापकर्माणि सेवन्ते ते सचेतना अपि मोहमयनिद्रोपहतविवेकचेतनत्वादचेतना एव परमार्थतो वेदितव्याः । यदपि च तेषां शास्त्रादिपरिज्ञान तदपि परमार्थत शरीरायासफलम । यद्वा तदपि पापानुबन्धिकर्मोदयतस्तयाविधक्षायोपशमनिबन्धनत्वादशुभकर्मकार्यमेवेति तत्त्ववेदिनामुपेक्षास्पदम् । विद्वत्ता हि सा तत्त्ववेदिनां प्रशंसार्हा या यथावस्थितवस्तुविविधहेयोपादेयहानोपादानप्रवृत्तिफला यां तु सकलजन्माभ्यासप्रवृत्त्या कथमपि परिपाकमागतापि सती सदैव तथाविधपापकर्मोदयवशात एकान्ताशुचिरूपेष्वपि युवतिजनवदनजघनवक्षोरुहादिशरीरावयवेषु रामणियकव्यावर्णनफला सा इह लोकेपि शरीरायासफला परलोके च कुगतिविनिपातहेतुरित्युपेक्षणीया ये पुन परमर्षय सर्वदैव सर्वज्ञमतानुसारितर्कागमशास्त्राभ्यासतो विदितयथावस्थितहेयोपादेयवास्तव इत्थ शरीरस्याशुचिरूपतां परिज्ञाय युवतिकलेवरेषु नाभिरज्यन्ते नापि कर्माणि स्वशरीरकृत पापानि समाचरन्ति किंतु शरीरादिनिस्पृहतया निरन्तर सम्यक्शास्त्राभ्यासतो ज्ञानामृताम्भोधिनिमग्नाः समनित्रशत्रवः परीषहादिभी रञ्जिताः सकलकर्मनिर्मूलनाय यतन्ते धन्यास्ते तत्त्ववेदिनस्तानह नमस्करोमि । तदनुष्ठित च सर्वमिदानीमनुतिष्ठामि इत्येव तस्य मोदकप्रियस्य कुमारस्य वैराग्योद्गमेन सम्यग्दर्शनज्ञानचारित्राणामुद्गमो बभूव । तत केवलज्ञानोद्गम इति तदेवमुक्त मोदकप्रियकुमारकथानकम । सम्प्रति यदुक्त चारित्रोद्गमेनाधिकार इति तत्र चारित्रोद्गमेनाधिकारः शुद्धस्य इष्टव्यो नाशुद्धस्य । अशुद्धस्य मोक्षलक्षणकार्यसपादकत्वायोगात न खलु बीजमुपहतमङ्कुर जनयति । सर्वथाप्यनुपहतस्यैव कारणस्य कार्यजनकत्वात् चारित्रस्य च शुद्धौ कारण द्विधा तद्यथा । आन्तर बाह्य च । ते द्वे अपि प्रतिपादयति ।

दंसणणाणप्पभवं, चरणं सुद्धेसु तेसु तस्सुद्धी ।
चरणेण कम्मसुद्धी, उग्गमसुद्धो चरणसुद्धा य ॥

इह यतो ज्ञानदर्शनप्रभव चारित्र ततस्तयो शुद्धयोस्तस्य चारित्रस्य शुद्धिर्भवति नान्यथा । तस्मादवश्य चारित्रशुद्धिनिमित्त चारित्रार्थिना सम्यग्ज्ञानसम्यग्दर्शने च यतितव्यम् । यतश्च निरन्तरं सद्गुरुचरणकमलपर्युपासनापुरस्सर सर्वज्ञमतानुसारितर्कागमशास्त्राभ्यासकरणम् । एतत चारित्रशुद्धेरान्तर कारणमुक्तम । अथ चारित्रशुद्धयापि किं प्रयोजन येनेत्थ तच्छुद्धिरन्वेष्यते । अत आह । " चरणेणकम्मसुद्धी " चरणेन विशुद्धेन कर्मणा ज्ञानावरणीयादिकस्य शुद्धिरपगमो भवति । तदपगमे चात्मनो यथावस्थितस्वरूपलाभात्मको मोक्षस्ततो मोक्षार्थिना चरणशुद्धिरपेक्ष्यते तथा न केवलयोरेव ज्ञानदर्शनयोः शुद्धौ चारित्रशुद्धिः किन्तूद्गमशुद्धौ च चारित्रशुद्धिरेतेन बाह्य कारणमुक्तम । ततश्चरणशुद्धिनिमित्त सम्यग्दर्शनज्ञानवतापि नियमत उद्गमदोषपरिशुद्ध आहारो ग्राह्यः । ते च उद्गमदोषा षोडश । तानेव नामतो निर्दिशति ।

आहाकम्मुद्देसिय, पूइकम्मे य मीसजाए य ।
ठवणा पाहुडियाए, पाऊपरकीयपामिच्चे ॥
परियट्टिए अभिहडे, अभिन्ने मालोहडेई य ।
अच्छिज्जे अणिसिट्ठे, अज्झोयरए य सोलसमे ॥

( एतद्व्याख्या अहाकम्म शब्दे ) दर्श० । पं०चू० । ध० । केचित्पञ्चदश मन्यन्ते ते चैवं व्याख्यानयन्ति नतु चामी षोडश उच्यन्ते "अज्झोयरओमीसजायचट्टोहिं पि एक्को चेव" भेदआधाकर्मादीनां व्याख्या अन्यत्र अहाकम्मादिशब्देषु विशोधिकोट्यविशोधिकोटिविभागः ।

संप्रत्येतेषामेव विभागमाह ॥

एसो सोलस भेओ, दुहा कीरइ उग्गमो ।
एगा विसोहिकोमी, अविसेही उ वावए ॥

षोडशभेद उद्गमः सामान्येन द्विधा तद्यथा एकाविशोधिकोटिः एको भेदो विशोधिकोटिरूपः । अपरा चाविशोधिकोटिरविशोधिकोटिरूपः । द्वितीयो भेद इत्यर्थः । तत्र यद्वा दोषदुष्टे भक्ते तावन्मात्रे अपनीते सति शेष कल्पते स दोषो विशोधिकोटिः शेषस्त्वविशोधिकोटिः ।

तत्र प्रथमतोऽविशो धिकोटिमाह ।

आहाकम्मुद्देसिय, चरमतिगं पूइमीसजाए य ।
वायरपाहुडिया वि य, अज्झोयरए चरिमदुगं ॥

आधाकर्मप्रभेदमौद्देशिकस्य विभागौद्देशिकस्यान्त्यभेदत्रय तथा पूतिभक्त पानरूप मिश्रजात पाषण्डिगृहमिश्ररूप साधुगृहमिश्ररूपम् । बादराप्राभृतिका अध्यवपूरकस्य च चरमद्विक स्वगृहपाषण्डिमिश्रस्वगृहसाधुरूपम । एते उद्गमदोषा अविशोधिकोटिरूपाः अनया चाविशोधिकोट्या स्पृष्टं शुद्ध भक्तम ।

यद्दोषदुष्टं भवति तद्दोषमाह ।

उद्गमकोमीअवयव-लेवालेवे य अकयए कप्पे-
कंजिय आयामगवाउ, लेयसंसट्ठपूइओ

उद्गमकोट्या उद्गमदोषरूपया अविशोधिकोट्या अवयवेन शुष्कसिक्थादिना तया लेपेन तक्रादिना अलेपेन वल्लचनकादिना संसृष्ट तद्भक्त तस्मिन्नुज्झितेपि कृते अकृते कल्प्ये । अकृतकल्पत्रये इत्यर्थः पात्रे यत्पश्चात्परिगृह्यते तत्पूरितमव गन्तव्यम् । इह कश्चित् मतिदौर्बल्यादित्य विकल्पते । यथा तदेव साधूनाधाय निर्वर्तित तदेवैकमोदनमाधाकर्म भवति न शेषमवश्रावणकाञ्जिकादि तत्संसृष्ट पूति न भवतीति ततस्तदभिप्रायनिराकरणार्थमाह ( कंजिपत्यादि ) इह

साम्वर्यमोदने निर्वर्त्यमाने यत्तत्सकाञ्जिकादि तदप्याधाकर्मादि तदवयवरूपत्वात् । ततः काञ्जिकेन आयामेन अवर्णेन वा उष्णोदकेन च यत्संसृष्टं तदपि पूतिर्भवति । एतदेव रूपकत्रयेण भाष्यकृत् व्याख्यानयति ॥

सुक्केण वि जं छिक्कं तु, असुइणा धावए जहा लोए ।
इह सुक्केण वि छिक्कं, धोवइ कम्मेण भाणं तु ।
लेवालेवत्ति जं वुत्तं, जं पि दव्वमलेवुडं ।
तं पि घेत्तूण कप्पंति, तक्काइ्मलेवडं ।
आहाइ जं कीरइ तं तु कम्मं, वज्जेहि उप्पाममग्गणं व ।
सौवीर विस्सामणतंडुलोया, कम्मंति तो तग्गहणं करेति ।

सुगमं नवरम् । आद्यरूपकेणावयव इति पदं व्याख्यातं द्वितीयरूपकेण लेवालेवत्ति तत्राय भावार्थः यदपि वल्लचनकादि द्रव्यमलेपकृत् तदपि प्रथममनाभोगादिकरणतः पात्रे गृहीत्वा पश्चात्कथमपि परिज्ञाते परित्यज्य पात्रं कल्पयति । कल्पत्रयेण प्रक्षालयति । किं पुनस्तक्रादिक लेपकृद् गृहीत्वा तत्र सुतरां कल्पत्रयेण प्रक्षालनं कर्त्तव्यमिति परिज्ञापनार्थं । लेपालेप इत्युक्तम् । तथा यदेव मुख्यवृत्त्या साधूनाधाय क्रियते तदेवाधाकर्मनान्यदिति बुद्ध्या शिष्या वर्जयिष्यन्ति ओदनमेकैकं केवलं न शेष तन्दुलोदकादिकं ततो गुरवो भद्रबाहुस्वामिनः सौवीरां विश्रामणतन्दुलोदकान्यप्याधाकर्मेति परिज्ञापनार्थं तद्ग्रहणं सौवीरादिग्रहणं विशेषतः कुर्वन्ति । तदेवं शोधिकोटिरुक्ता ।

सम्प्रति विशोधिकोटिमाह ।

सेसा विसोहिकोडी, भत्तं पाणं विगिंच जहसत्तिं ।
अणलक्खिय मीसदव्वे, सव्वविवेगं य वा सुज्झो ॥

शेषा औद्देशिकं नवविधमपि च विभागौद्देशिकमुपकरणं पूतिर्मिश्रस्याद्यो भेदः स्थापना सूक्ष्मप्राभृतिका प्रादुष्करणं कृतं प्रामित्यकं परिवर्त्तितमभ्याहृतमुद्भिन्नं मालापहृतमाच्छेद्यमनिसृष्टमध्यवपूरकस्याद्यो भेदश्चेत्येवरूपाणि विशोधिकोटिः विशुध्यति शेषं शुद्धं भक्तं यस्मिंस्तदुद्धृते यद्वा विशुध्यति पात्रमकृतकल्पत्रयमपि यस्मिन्नुज्झिते सा विशोधिः सा चासौ कोटिश्च भेदश्च विशोधिकोटिः । उक्तं च "उद्देसियम्मि नवगं, उवगरणं ज च पूइय होइ, । जावंति य मीसगयं च, अज्झोयरए पढमपयं । परियट्टिए अभिहडे, उब्भिन्ने मालोहडेइ य अच्छिज्जे अणिसट्ठे, पाउयरकीयपामिच्चे । सुहमा पाहुडिया वि य, ठवियगपिंडो य जो भवे दुविहो । सव्वो वि एस रासी, विसोहिकोडी मुणेयव्वो । अत्र विधिमाह (विगिंच जहसत्ति) अनया विशोधिकोट्या यत्संसृष्टमन्नं पानं वा तद्यथाशक्ति विगिंच परित्यज । इयमत्र भावना । भिक्षामटता पूर्वं पात्रे शुद्धं भक्तं यस्मिन्नेव तत्रैवानाभोगादिकरणवशतो विशोधिकोटिदोषदुष्टं गृहीतं पश्चाच्च कथमपि ज्ञातं यथैतद्विवक्षितं विशोधिकोटिदोषदुष्टं मया गृहीतमिति ततो यदि तेन विनापि निर्वहति तर्हि सकलमपि तद्विधिना परिस्थापयति । अथ न निर्वहति तर्हि यदेव विशोधिकोटिदोषदुष्टं तदेव तावन्मात्रं सम्यक् परिज्ञाय त्यजति । पुनरलक्षितेन सदृशवर्णगन्धादितया पृथक् परिज्ञातुमशक्येन मिश्रितं भवति । यदा द्रव्येण भक्तादिना अन्यत् भक्तादि तदा सर्वस्यापि तस्याविवेकः इते च सर्वात्मना विवेके यद्यपि केचित् सूक्ष्मा अवयवा अगिना भवन्ति यद्यपि तत्र पात्रेऽकृतकल्पेऽप्यन्यत्परिगृह्णन् शुद्धो यतिस्त्यक्तभक्तादेर्विशोधिकोटित्वात् । विवेकश्चतुर्धा भवति । तद्यथा द्रव्यतः क्षेत्रतः कालतो भावतश्च । तथाचाह ॥

दव्वाईओ विवेगो, दव्वे जं जं जहिं खित्ते ।
काले अकालहीणं, असढो जं पस्सई भावो ॥

द्रव्यादिको द्रव्यक्षेत्रकालभावविषयो विवेकः तत्र यद्द्रव्यं परित्यजति स द्रव्यविवेकः । तथा परित्याज्य यत्र परित्यज्यते स क्षेत्रविवेकः क्षेत्रेविकः क्षेत्रविवेकः इति व्युत्पत्तेः । तथा यद्विशोधिकोटिदोषदुष्टमकालहीनं शीघ्रं परित्यजति एष कालतो विवेकः । इह यदेव दोषदुष्टं भक्तादिपरिज्ञातं तदेव तत्कालविलम्बाभावेन परित्यक्तव्यम् । परित्यागबुद्ध्या वा पृथक् भिन्ने स्थाने कर्तव्यमन्यथा भावतस्तत्परिग्रहात्संयमहानिप्रसक्ते । तत उक्तमकालहीनमिति तथा यः असठो ऽरक्तद्विष्टः सन् दोषदुष्टं पश्यति दृष्ट्वा वा कालहीनं शीघ्रं परित्यजति स भावे भावतो विवेकः । इह निर्वाहे सति विशोधिकोटिदोषसन्मिश्रं सकलमपि परित्यक्तम् । अनिर्वाहे तु तावन्मात्रं तत्र विधिमुपदर्शयितुकामः प्रथमतश्चतुर्भङ्गिकामाह ।

सुक्कोल्लसरिसपाए, असरिसपाए य एत्थ चउभंगो ।
तुल्ले तुल्लनिवाए, तत्थ दुवे दुन्नतुल्लाउ ॥

अत्र शुष्कस्य आर्द्रस्य च सदृशे समाने ऽन्यस्मिन् वस्तुनि मध्ये पाते सति तथा ऽसदृशे असमाने ऽन्यस्मिन् वस्तुनि मध्ये पाते सति चतुर्भङ्गी भवति । सूत्रे च पुंस्त्वनिर्देश आर्षत्वात् । चत्वारो भङ्गा भवन्तीत्यर्थः ते चामी । शुष्के शुष्कं पतितं, शुष्के आर्द्रम्, आर्द्रे शुष्कम्, आर्द्रे, आर्द्रमिति । तत्र येन २ पदेन यौ यौ भङ्गौ लब्धौ तौ तौ तथा दर्शयति (तत्थ त्ति) तत्र तुल्ये समाने सति अन्यस्मिन् वस्तुनि मध्ये तुल्यनिपाते सति चतुर्भङ्गी सदृशस्य वस्तुनः प्रक्षेपे द्वौ प्रथमचतुर्थरूपौ भङ्गौ लब्धौ तौ च "सुक्कोल्लसरिसपाए" इत्यनेन पदेन सूचितौ । तथा द्वौ भङ्गौ द्वितीयतृतीयरूपौ । अतुल्यात् विसदृशत्वात् प्रक्षिप्यमाणौ लब्धौ । तौ च "असरिसपाए य" इत्यनेन पदेनोक्तौ तदेव चतुर्भङ्गिकामभिधाय सम्प्रत्यनेनैवोद्धरणविधिमाह ।

सुक्के सुक्कं पडियं, विगिंचिउं होइ तं सुहं पढमे ।
बीयंमि दव्वं छोढुं, गालंति दव्वं करं दाउं ॥
तइयंमि करं छोढुं, उक्खिवइ ओयणाइ जं तरइ ।
दुल्लहदव्वं चरिमे, तत्तियमेत्तं विगिंचंति ।

शुष्के वल्लचनकादौ मध्ये यत् शुष्कं वल्लचनकादि पतितं तत्सुखं जलादिकमनन्तरेण "विगिंचिउ होइ" । परित्यक्तुं भवति । परित्याज्यं भवतीत्यर्थः । एष प्रथमो भङ्गः । तथा द्वितीयो भङ्गः तथा द्वितीये भङ्गे शुष्के वल्लचनकादौ मध्ये आर्द्रे तीमनादिविशोधिकोटिदोषवत्पतितमित्येवरूपे द्रवं काञ्जिकादि तत्र मध्ये ऽप्रसृतं प्रक्षिप्य पश्चात्पात्रमवनम्य पात्रकर्णैकदेशे च शुद्धभक्तपानरक्षणार्थं करं च दत्वा सर्वं द्रवं गालयन्ति । तथा तृतीये शुद्धम् । आर्द्रे तीमनादौ मध्ये पतितं शुष्कतरं वल्लचनकादिरूपमोदनमित्येवरूपे तत्र तीमनादौ मध्ये करं हस्तं प्रक्षिप्य ओदनादि यद् यावन्मात्रं शक्नोति तावन्मात्रमशठः सन् उत्क्षिपति आकर्षति ततः शेषं तीमनादिकं लभते । तथा चरमे आर्द्रे आर्द्रं पतितमित्येवरूपे यदि तद्द्रव्यं दुर्लभमन्यत्र न प्राप्यते तत्र तद्देशतस्तावन्मात्रं परित्यजन्ति । तथाचाह ।

संथरे सव्वमुज्झंति, चउभंगो असंथरे ।
असादा सुज्झई जेसु, मायावी जेसु वज्झई ॥

संस्तरे निर्वाहे सति सर्वमपि पात्रे स्थित विशोधिकोटिस-मुज्झति । असंस्तरे अनिर्वाहे पुनश्चतुर्भङ्गी चत्वारोऽन्तरो का भङ्गा' । सूत्रे च पुंस्त्वनिर्देश आर्षत्वात् । कथंभूतास्ते भ-ङ्गा इत्याह ॥ येषु भङ्गेषु असठोऽरक्तद्विष्ट सन् वर्त्तमान शु-द्ध्यति शुद्धमापद्यते । मायावी च येषु बध्यते तदेव विशोधि-रूप कोटिद्वय सप्रपञ्चमुक्तमिदानीं तदेवोपसंहारव्याजेन संक्षेपत आह ।

कोडीकरणं दुविहं, उग्गमकोडी विसोहिकोडी य ।
उग्गमकोडीछक्कं, विसोहिकोडी अणेगविहा ॥

कोडीकरणं दुविहं द्विप्रकार द्विधा कोटिरित्यर्थ. तद्यथा उद्गमकोटिर्विशोधिकोटिश्च । तत्रोद्गमकोटिषट्कमाधाकर्मिक-कोद्देशिकान्त्यतो दानृकादिषड्भेदा । विशोधिकोटि. पुनरनेक-विधा । औद्देशिकादिरूपा । सम्प्रत्यन्यथाकोटीः प्रतिपादयति

नव चेव अट्ठारसगं, सत्तावीसा तहेव चउपन्ना ।
नउइं दो चेव सयाउ, सत्तरा होइ कोडीणं ॥

प्रथमत. कोटयो नव भवन्ति । तद्यथा स्वयं हननमन्येन घातनमपरेण हन्यमानस्यानुमोदनम् । तथा स्वय पचनमन्येन पाचनं तत्परेण पच्यमानस्यानुमोदनं तथा स्वय करणम् अन्ये-न कारण करणपरेण क्रियमाणस्यानुमोदनम् । इहाद्याः षट् विशोधिकोटयोऽनियमास्तु तिस्रो विशोधिकोटय. । एता अपि नवकोटी' कोपि रागेण सेवते कोपि द्वेषेण ततो द्विकेन गुणिता अष्टादश भवन्ति । अथवा एव ताः कोऽपि मि-थ्यादृष्टि' कुशास्त्रसंपर्कसमुत्थवासनावसतो नि शङ्क से-वते । कोपि सम्यग्दृष्टि सन् विरतोऽप्यनाभोगादिकार-णतोऽपरिज्ञानत' कोपि पुन' सम्यग्दृष्टिरपि सन् अविरतत्वेन गार्हस्थ्यमवलम्बमानः ततो मिथ्यात्वादिरूपेण त्रिकेण नव-गुणिता सप्तविंशतिर्भवति । रागद्वेषौ त्वत्र पृथग्विवक्ष्येते यदा पृथग्विवक्ष्येते तदा ताभ्यां सप्तविंशतिर्गुणिता चत' पञ्चाशद्भ वति । तथा तथैव नव कोटय कदाचित् पुष्टमालम्बनमधि-कृत्य दशविधक्षान्त्यादिधर्मपरिपालनार्थं सेव्यन्ते । यथा दु-र्भिक्षे । यदा तु पृथक् विवक्ष्येते तदा ताभ्यां सप्तविंशति-र्गुणिता कान्तारे वान्येन फलादिना ऽभ्यवहृते नाह देह धृत्वा क्षान्तिमार्दवार्जव यत्र ग्राह्य पालयिष्यामीति (हतीति) एवम-न्येन घातनाद्यपि भावनीयम् । ततो नव दशभिर्गुणिता जाता नवति । इय च सामान्योक्त. चारित्रनिमित्ता केचित्पुनश्चारि-त्रनिमित्ता विशिष्टज्ञानशास्त्रसंग्रहनिमित्ता च यथास्मिन् कान्ता राद्यावनेन फलादिना ऽभ्यवहृतेन देहमह धृत्वा क्षान्त्यादिक पालयिष्यामि प्रभृतानि च शास्त्राण्यधिष्ये इति (हतीत्यादि) एषा च ज्ञानस्य प्राधान्यविवक्षणात् ज्ञाननिमित्ता प्रणयते । केचित् पुनश्चारित्रनिमित्ता दर्शनस्थिरीकरणहेतुशास्त्रपरि-ज्ञाननिमित्ता च यथाऽस्मिन् कान्तारादावनेन फलादिनाऽभ्यव-हृतेन देह परिपालय क्षान्त्यादिक पालयिष्यामि दर्शन च निर्म ल विधास्ये इति ( हतीत्यादि ) एषा च दर्शनस्य प्राधान्य-विवक्षणाद्दर्शननिमित्ताभिधीयते । तत एवंप्रकारा नवतिरापि त्रिभिर्नवतिर्गुण्यते ततो द्वे शते सप्तत्यधिके कोटीनां भवति । उक्तंच "रागाइ मिच्छाइरागाई समणधम्म नाणाई । नव नव स-त्तावीसा, नवनउईए उ गुणकारा" या तु दर्शनस्थिरीकरणार्थं प्रभूतशेषशास्त्रावगाहनार्थं चारित्रार्थं च सेव्यते सा सामा-न्यतश्चारित्रनिमित्तायामन्तर्भाव्यते ततोतस्तत्रोक्तभेदसंख्या-नियमव्याघात । सम्प्रत्युद्गमद्वारदोषाणां वक्ष्यमाणोत्पादना-द्वारदोषाणां च यत. संभवस्तदुत्थितान् विवक्षुरेनाह ।

सोलस उग्गमदोसे, गिहिणेउ समुट्ठिए वियाणाहि ।
उप्पायणा यदोसे साहू उ समुट्ठिओ जाण ॥

एतान् अनन्तरोक्तान् षोडशसंख्यान् उद्गमदोषान् गृहिण' सकाशादुत्थितान् विजानीहि । तथा ह्याधाकर्मादिदोषदुष्टं भक्तादिगृहस्थैरेव क्रियते ये तु उत्पादनाया दोषा वक्ष्यमा-णास्तान् साधुतः साधोः सकाशादुत्थितान् जानीहि । धात्री-त्वादीनां साधुभिरेव क्रियमाणत्वात् । तदेवमुक्तमुद्गम-द्वारम् । पिं० । पञ्चा० । इहाधाकर्म्म औद्देसिकचरमभेदत्रयम् । आहारादतिमिश्रजातान्त्यभेदद्वय बादरप्राभृतिका अध्यवपूर्वि-कान्त्यभेदद्वय चाविशोध्यन्ते कोटि पुरीषलवेनेव तदवयवे-नापि स्पृष्टं सर्व्वमाहरतोप्यविशुद्धकोटय । तत्संपृक्त चाग्नादि-संस्तरे साधवः सर्वं त्यजन्ति । असंस्तरे तु विविच्य तदेव त्यजन्ति घृतादिकमपि तावन्मात्रमेव त्यजन्ति शेष यद्यपि तद-वयवयोगस्तथापि शुद्धत्वमिति । जीत० । प्रव० । स्था० ।

उग्गमं से य पुच्छेज्जा, कस्सट्ठा केण वा कडं ।
सोच्चा निस्संकियं सुद्धं, पडिगाहिज्ज संजए ॥

उद्गम तत्प्रसूतिरूप ( से ) तस्य शङ्कितस्याशनादे. पृच्छेत् तत्स्वामिन कर्मकर वा यथा कस्यार्थमेतत्केन वा कृतमिति श्रुत्वा तद्वचन न भवदर्थं किंत्वन्यार्थमित्येवभूत नि शङ्कित शुद्ध सत् ऋजुत्वादिभावगत्या प्रतिगृह्णीयात्संयत. विपर्यय-ग्रहणे दोषादिति सूत्रार्थः । तथा " असण पाणग वावि खाइम साइम तहा । पुप्फेसु होज्जउम्मीसं बीएसु हरिएसु वा " दश० ५ अ० ४० ।

षोडशानामुद्गमदोषाणां प्रायश्चित्तमभिधित्सुराह ।

गुरुगा आह य चरमातिग, मीसवायरसपच्चवायहडे ।
कडपूइए य गुरुगो, अज्झोयरए य चरमदुगे ॥

आधाकर्म गृह्णत' प्रायश्चित्त चत्वारो गुरुका (चरमातियत्ति) औद्देशिक द्विविधमोघेन विभागेन च । तत्र विभागतो द्वादश विध तद्यथा उद्दिष्ट कृत कर्म्म च । उद्दिष्ट चतुर्विधमौद्देशिक समुद्देशिकमादेशिक समादेशिकम् । कृतमपि चतुर्विध तद्यथा उद्देशकृत समुद्देशकृतमादेशकृत समादेशकृत च । कर्मापि चतु प्रकार तद्यथा उद्देशकर्म समुद्देशकर्म आदेशकर्म समा-देशकर्म च । त्रयचतुष्कका द्वादश इह यावन्त केचन भिक्षा-चरा. समागच्छन्ति तावत सर्वान् उद्दिश्य यत् क्रियते तदौ-द्देशिकमुच्यते । पाषण्डिन उद्दिश्य क्रियमाण समुद्देश श्रम-णानुद्दिश्यादेशं निर्ग्रन्थानधिकृत्य समादेशम् । उक्तंच " जा-वति य उद्देसो, पासंडीण भवे समुद्देसो । समणाण आदेसो, निग्गथाण समादेसो " एतस्मिन् द्वादशविधे विभागोद्देशके यच्चरम त्रिक समुद्देशकर्म आदेशकर्म समादेशकर्म च तत्र गृह्यमाणे प्रत्येक चत्वारो गुरुकास्तप'कालविशेषिता' ( मी-सति ) मिश्रजात त्रिविधं यावन्तिकमिश्रं पाषण्डिकमिश्र स्वगृहमिश्रं च । तत्र पाषण्डिकमिश्रे स्वगृहमिश्रे च प्रत्येक चत्वारो गुरुकास्तप कालगुरव (बायरत्ति) द्विविधा प्राभृतिका सूक्ष्मा बादराच तत्र बादरायां गृह्यमाणायां चत्वारो गुरुका. ( सपच्चवायाहडेत्ति ) यत्र यत्र ग्रामादौ सप्रत्यपाय-

मत्याहृतं तत्र तत्र चत्वारो गुरुका । तदेव येषूक्तम भेदेषु गुरुकास्ते उक्ता । संप्रति येषु मासगुरु तान् प्रतिपादयति (कम्मुद्देसिय इत्यादि) कृते औद्देशिके चतु प्रकारेऽपि प्रत्येक मासगुरुक तप कालविशेषितम् । तद्यथा यावन्तिके मासगुरु समुद्देशकृते तपोगुरुकं मासगुरु, आदेशकृते कालगुरुक मासगुरु समा देश कृते मासगुरु द्वाभ्यां गुरुकं तपोगुरुक कालगुरुक च (पूतिपत्ति) भावपूतिकं द्विविध सूक्ष्म बादर च । तत्र सूक्ष्मे नास्ति प्रायश्चित्त बादर द्विविधम् उपकरणे भक्तपाने च । अत्र भक्तपानपूतिकं मासगुरु (अज्झोयरएय चरम दुगत्ति) अध्यवपूरक त्रिविध तद्यथा यावन्तिकमध्यवपूरक पाषण्डाध्यवपूरकं स्वगृहाध्यवपूरकं च । तत्र पाषण्डाध्यवपूरके स्वगृहाध्यवपूरके च प्रत्येक मासगुरु उक्तानि गुरुकप्रायश्चित्तान्यधुना लघुकप्रायश्चित्तान्यभिधित्सुराह ।

ओहविभागुद्देसे. चिरठविए पागडे य उवगरणे ।
लोउत्तरपामिच्चे, परियट्टियकीय पर भावे ॥
नगगामभिहडम्मि विजहन्न जावंति आयरे लहुओ ।
इत्तरठविए सुहुमा. पणगं लहुगा य सेसेसु ॥

ओघौद्देशिके मासलघु विभागौद्देशिके उद्देसे मासलघु, समुद्देसे मासलघु तपो गुरु आदेशे मासलघु कालगुरु, समादेशे मासलघु । द्वाभ्यां गुरु । स्थापित द्विविध चिरस्थापित मित्वरस्थापित च । तत्र चिरस्थापिते मासलघु, प्रादुष्करण प्रकाशकरणम् । तत्र प्रगटकरणे मासलघु, उपकरणपूतिके मासलघु, प्रामित्यं द्विविधं, लौकिक लोकोत्तरिक च । लोकोत्तरिके मासलघु । परिवर्त्तितमपि द्विधा लौकिक लोकोत्तरिक च । तत्र लोकोत्तरिके परिवर्तिते मासलघु । क्रीत द्विविधम् । द्रव्यक्रीत भावक्रीत च । तत्र द्रव्यक्रीत द्विविधम आत्मद्रव्यक्रीत परद्रव्यक्रीतं च । भावक्रीतमपि द्विधा आत्मभावक्रीत परभावक्रीत च तत्र परभावक्रीते मासलघु स्वग्रामाभ्याहृते मासलघु (गंभित्ति) ग्रन्थिपिहितमुच्यते । यत्र गुरुघृतादिभाजनमुखे पोतेन चर्मणा वा स्थगयित्वा दवरकेणोप रिग्रन्थिर्दीयते ग्रन्थिसहिता मुद्रा वा तदुपचारात् ग्रन्थिरित्यर्थ तस्मिन्नुद्भिद्यमाने मासलघु मालापहृत त्रिविध जघन्यमुत्कृष्टं च तत्र मालापहृते मासलघु तथा यावन्तिके ऽध्यवपूरके मासलघु तदेव यत्र मासलघुत्वास्थानमुक्तमिदानीं यत्र पञ्चरात्रिंदि वानि तदुच्यते (इत्तरठविय इत्यादि) इत्वरस्थापिते पञ्चरात्रिंदिव निसृष्टप्राभृतिकायामपि पञ्चरात्रिंदिवानि (लहुकाय सेसेसुत्ति) येन्ये उद्गमदोषास्तेषु सर्वेष्वपि प्रत्येक चत्वारो लघुकास्तद्यथा । औद्देशिके कर्मणि यावन्तिके १ मिश्रजात २ प्रादुष्करणे ३ आत्मद्रव्यक्रीते ४ परद्रव्यक्रीते ५ आत्मभावक्रीते लौकिके प्रामित्ये ७ लौकिके परिवर्तिते ८ परग्रामाभ्याहृते प्रत्यपाये ९ पिहितोद्भिन्ने १० कपाटोद्भिन्ने ११ ऊर्ध्वमालापहृते १२ आच्छेद्ये १३ अनिसृष्टे १४ एतेषु चतुर्दशसु स्थानेषु चत्वारो लघुका वृ० १ उ० । जीतकल्पे तु यथाक्रममाचाम्ल पुरिमार्द्धनिर्विकृतिक वा प्रायश्चित्तम् ।

उद्देसियचरिमतिगे. कम्मेपासंडसघरमीसे य ।
बायरपाहुडियाए. सपच्चवायाहडे लोभे ॥
अइर अणंत निक्खित्ते. पिहिये साहरिय मीसियाईसु ।
संजोग सइंगाले. दुविहनिमित्ते य खमणं तु ॥

औद्देशिकचरमत्रिके कर्मोद्देशकर्मसमादेशाख्ये कर्मणि आधाकर्माख्यपाषण्डाभिश्रेषु गृहाभिश्रे च सुष्ठतिशयेन गृहा सुगृहा अनगारास्तैःसह मिश्रजातं इत्यर्थः । बादरप्राभृतिकायां सप्रत्यपाये परग्रामात् हृते लोभपिण्डे अदूरतिरोव्यवधाने नितरां तिरोव्यवहितमनन्तरितमित्यर्थ तच्चानन्तरितमनन्तर काये निक्षिप्तम् । तथा संहृतमनन्तरकायेन पिहितम् तथा मिश्रितम् आदिग्रहणादनन्तरकायापरिणतमनन्तरकायच्छर्दितच । तेषु अन्तरेऽन्तरनिक्षिप्तसंहृतपिहितमिश्रितादिषु संयोगसागारयो सर्वप्रकारयोः संयोगसागारान्वितभाजने च द्विविधनिमित्ते च वर्तमाननिमित्त भविष्यति । निमित्तकथने क्षपणं तु इह सूत्रे धिक् पदमधिकमक्षराधिकार्थं सस्चक भवति । अत्र च तु शब्दोऽधिकस्तेन गुर्वचित्तापिहिते गुरुसंहृते गुरुणि शिलापुत्रकादिके दर्वीकरोटिकादेरपरिभोगासंहृते उत्क्षेपोत्सारिते गलत्कुष्टपादुकारूढयोश्चेति सूच्यते एतेषु सर्वेषु क्षपणं प्रायश्चित्तमित्यर्थ । अध्यवपूरकादिदोषप्रायश्चित्त माह ।

अज्झोयरकम्मपूइय, मायाणं ते परंपरगए ।
मीसाणंताणंतर गयाई एगमासणयं ॥

सूचकत्वात् सूत्रस्य (अज्झोयरत्ति) अध्यवपूरकान्त्यभेदद्वये (कम्मत्ति) कर्मोद्देशकृतसमुद्देसकृतदेशाख्ये विभागौद्देशिकद्वितीयभेदचतुष्टये (पूइयत्ति) भक्तपानपूतिकर्मणि मायायां मायापिण्डे (अणतेत्ति) एकारो लाक्षणिक (परंपरगयत्ति) गतशब्दो निक्षिप्तवाची चकारात्पिहितादिग्रह । ततश्च सचित्तोनन्तकायपरंपरानिक्षिप्तपिहितसंहृतछर्दित चेत्यर्थ । तथा मिश्रानन्तानन्तरगतादिके च अत्रापि गतशब्दो निक्षिप्तार्थ आदिशब्दात्पिहितादिग्रहस्तेन सचित्ताचित्तरूपानन्तकायादिविहितनिक्षिप्तपिहितसंहृतोन्मिश्रापरिणतछर्दित इत्यर्थ (एगमासणयति) एकैकाशन प्रायश्चित्तम् । इदानीं येषु पुरिमार्द्धप्रायश्चित्त तान् गाथात्रयेणाह ॥

ओहविभागुद्देसो-वगरणपूइय ठवियपागडिए ॥
लोगुत्तरपरियट्टिय, पमेय परभावकीए व ॥
सग्गामाहडदद्दर-जहन्नमालोहउज्झरेपढमे ॥
सुहुमेतिगिच्छासंथव, तिगम विवयदायमोवहए ॥
पत्तय परंपरठविय-पिहियं मीसे अणंतराईसु ॥
पुरिमढं सकाए, जं संकइ त समावज्जे ॥

सामान्यौद्देशिक विभागोद्देशोद्दिष्टोद्देशसमुद्देशोद्दिष्टसमादेशाख्य विभागोद्देशिकप्रथमभेदचतुष्टयम् । उपकरण पूतिकाचिरस्थापनाकपटकरणम् । एषा द्वन्द्वस्तस्मिन् लोकोत्तरपरिवर्तते प्रामित्ययो परभावक्रीते अत्रापि द्वन्द्व ॥४१॥ स्वग्रामाहृते दर्दरोद्भिन्ने जघन्यमालापहृते (दज्झरे पढमेत्ति) चकारोऽत्रालाक्षणिकत्वाद् यावदर्थिक मिश्रारव्ये ऽध्यवपूरकप्रथम भेदे इहापि द्वन्द्व सूक्ष्मचिकित्सावचनमप्रातिका पूर्वे पश्चात्संस्तवमुदकार्द्रम्रक्षितसिश्रकर्दमम्रक्षितरूप प्रथ्वीमुम्रक्षितमुदकार्द्रम्रक्षितमिश्रमृद्रि तोरूढ्यारयति द्विधप्रत्येक म्रक्षितचेति त्रिक म्रक्षित पिञ्जन तोचयन्ती कर्त्तयन्ती दायका य दत्त तत्तद्दायकोपहृतम् । एषामपि द्वन्द्व तस्मिन् यथोक्तम । "बाले वुड्ढे मत्ते उम्मत्तेवणयजरिए याएएति से वसवन्ना एसिं दायगोवहयं ॥१॥" तदत्र पुरिमार्द्धप्रस्तावनाज्ञेयम् । एतेभ्यो दायकेभ्यो ग्रहणमाचामाम्लप्रायश्चित्तस्योक्तत्वात् ।

( पत्तेयपरपरगवियपिहियत्ति ) सुब्लोपः प्राकृतत्वादेकशब्दस्य चोपलक्षणत्वात् सचित्तपृथिव्यादिषट्कायपरस्थापितत पिहितेष्विति ज्ञेयम् । स्थापित निक्षिप्तमुच्यते । बहुवचनात्संहृतच्छर्दितयाश्च ( मीसयणतराङ्गसुत्ति ) सूचकत्वात्सूत्रस्य मिश्रपृथिव्यादिषट्कायानन्तरनिक्षिप्तसंहृतोन्मिश्रापरिणतच्छर्दितेष्वित्यर्थः । उन्मिश्रापरिणतयोश्चानन्तरे विशोधने योज्यम् । किं तर्हि मिश्रषट्कायोन्मिश्रं मिश्रषट्कायापरिणत चेत्येव योज्यम् एषु सर्वेषु मासार्धप्रायश्चित्तशङ्कायां दोषमाशङ्कते तस्यामप्येकान्तदोषश्च प्रायश्चित्तमापद्यते । जीत० । नि० । चू० । आव० ( नावादिविषय उद्गमदोषो णावादिशब्दे )

उग्गमउप्पायणेसणासुपरिसुद्ध-उद्गमोत्पादनैषणासुपरिशुद्ध-त्रि० उद्गमश्च आधाकर्मादि षोडशविध उत्पादना च धात्रीदूत्यादिका षोडशविधैव उद्गमोत्पादने एतद्विषया या एषणा पिण्डविशुद्धिस्तया सुष्ठु परिशुद्धो य स उद्गमोत्पादनैषणासुपरिशुद्धः । द्वाचत्वारिंशत्पिण्डदोषरहिते,-प्र०७श०१उ० ।

उग्गमदोस-उद्गमदोष- पुं० उद्गमनमुद्गम पिण्डादेः प्रभव इत्यर्थः । तस्य दोषः । स्था० ३ ठा० । उद्गमविषयो दोष । आधाकर्मादिषु पिण्डप्रभवदोषेषु, आचा० । उत्त० । ( ते च उग्गमशब्दे दर्शिता )

उग्गममाण-उद्गच्छत्-त्रि० प्रवृद्धिं गच्छति,"सव्वा वि किसलओ खलु, उग्गममाणे अणंतओ भणिओ" । प्रज्ञा० १ पद ।

उग्गमविसोहि-उद्गमविशोधि-स्त्री० भक्तादिनिरवद्यतारूपे उद्गमोपाधिके, विशोधिभेदे च । स्था० १० ठा० ।

उग्गमित-उद्गमित-त्रि० उपार्जिते, 'वत्थपादातिउग्गमउग्गमिया । नि० चू० २ उ० ।

उग्गमोवघाय-उद्गमोपघात-पुं० उद्गमनमुद्गमः पिण्डादेः प्रभव इत्यर्थः । इह चाभेदविवक्षया उद्गमदोष एवोद्गमोऽतस्तेन (स्था०३ठा०) आधाकर्मादिना षोडशविधेनोपहनन विराधनं चारित्रस्याकल्प्यता भक्तादे स उद्गमोपघात । स्था० १० ठा० । पिण्डादेरकल्पनीयताकरणे उपघातभेदे, । स्था० ३ ठा० ॥

उग्गय-उद्गत- त्रि० । उद्-गम्-क्त- । अग्रिमभागे, । मनागुद्गते, राय० । ऊर्ध्वगते, व्यवस्थिते च । ज्ञा० १ अ० । संभूते, आव० ३ अ० । उदिते, । उग्गय इति वा उद्गच्छत्ति वा एगट्ठमिति । नि०चू० १० उ० । भावे क्तः । उद्गतौ, । 'कन्नुग्गयणगधारं' । कण्ठाद्या यदुद्गतमुद्गतिः । स्वरोद्गमलक्षणा क्रिया तेन । स्था० ७ ठा० ।

उग्रक- त्रि० उत्कटे, स्था० ७ ठा० ।

उग्गयमुत्ति-उद्गतमूर्ति-पुं० स्त्री० मूर्तिः शरीरमुद्गते रवौ प्रतिश्रयाद् बहिः प्रवादवती मूर्तिरस्येत्युद्गममूर्तिको मध्यमपदलोपी समासः । सूर्योद्गतावेव आहारग्राहके, बृ० २ उ० । नि०चू० ।

उग्गयवित्ति-उद्गतवृत्ति- पुं० स्त्री० उद्गते आदित्ये वृत्तिर्जीवनोपायो यस्य स उद्गतवृत्तिक । सूर्योद्गमने सति भिक्षयित्वा भोक्तरि,"उग्गयवित्तीमुत्ती मणसकप्पे य होंति आएसा' उद्गते रवौ वृत्तिर्वर्तनं यस्य स उद्गतवृत्ति । पाठान्तरेणोद्गतमूर्त्तिरिति वा । उद्गते सूर्ये वृत्ति शरीर वृत्तिनिमित्त बहिः प्रचारो यस्य स उद्गतवृत्तिः । बृ० २ उ० । नि०चू०१उ० "भिक्खू य उग्गयवित्तिण आणत्यमिय सकप्पे सघकिप्" बृ० २ उ० । ( व्याख्या राइभोयणशब्दे )

उग्गवई-उग्रवती-स्त्री० लोकोत्तररीत्या नन्दानाम्न्यां प्रथमतिथिरात्रौ, ज० ७ वक्ष० । सू० प्र० । च० प्र० ॥

उग्गविस-उग्रविष-पुं० उग्रं दुर्जरत्वाद्विषं यस्य स उग्रविषः । दुर्जरविषे सर्पे, ज्ञा० ९ अ० । जी० । उपा० । प्रज्ञा० ॥

उग्गविहार-उग्रविहार-पुं० क० स० उत्कृष्टे विहरणे, "अत्युग्रकर्मदहनो दहनोग्रविहारत " । ध० ४ अधि० ।

उग्गविहारि-उग्रविहारिन्-त्रि० सदनुष्ठानत्वादुदात्ताचारे, प्र० १० श० ४ उ० ।

उग्गसेण-उग्रसेन-पुं० । उग्रा सेना यस्य । धृतराष्ट्रपुत्रभेदे, कुरुवंश्ये नृपभेदे, यदुवंश्ये नृपभेदे, वाच० । "वसुदेवहिण्डया मस्य वक्तव्यता तत एवाऽवसेया । उग्गसेणपामोक्खाणं सोलएहं राइसहस्साणं"आ० म० द्वि० । अन्त० । "अह च भोगरायस्स तं च सिअधगवणिहणो" दश० २ अ० । ग० ।

उग्गसेणगढ-उग्रसेनगढ-न० । जीर्णगढे, "उग्गसेणगढ ति वा खगारगढ ति वा, जुण्णगढं ति वा, जुण्णगढस्स णामाइ"ती० ।

उग्गह-अवग्रह-पुं० अवग्रहः अनिर्देश्यसामान्यमात्ररूपार्थग्रहणरूपे श्रुतनिश्रितमतिज्ञानभेदे, तं आह च चूर्णिकृत् "सामणस्स रूवाढि विससणरहियस्स अणिद्दसस्स अवग्गहेणम वग्गहे-इति" । न० । विशे० । रूपरसादिभेदैरनिर्देश्यस्याप्युक्तस्वरूपस्य सामान्यार्थस्यावग्रहणं परिच्छेदनमवग्रह । "अत्थाणं उग्गहण अवग्गह इति " निर्युक्तिगाथां व्याख्यानयन् भाष्यकृदाह " सामण्णत्थावग्गहणमुग्गहो " विशे० । (व्याख्या आभिणिबोहिय शब्दे) सम्म० । आ० म० प्र० । तत्र विषयविषयिसन्निपातानन्तरमाद्यग्रहणमवग्रहो विषयस्य द्रव्य द्रव्यपर्यायात्मनोऽर्थस्य विषयिणश्च निर्वृत्त्युपकरणलक्षणस्य द्रव्येन्द्रियस्येत्युपलब्ध्युपयोगस्वभावेन्द्रियस्य विशिष्टपुद्गलपरिणतिरूपस्यार्थग्रहणयोग्यतास्वभावस्य च यथाक्रमेण सन्निपातो योग्यदेशावस्थान तदनन्तरोद्गत सत्तामात्रदर्शनस्वभावदर्शनमनुत्तरपरिणामस्वविषयव्यवस्थापनविकाररूपप्रतिपाद्यमवग्रहः । ध्य० द्वि० १० उ० ।

( १ ) अवग्रहभेदाः ।
( २ ) अवग्रहे दण्डकः ।
( ३ ) अवग्रहनिक्षेप ।
( ४ ) द्रव्यादितश्चातुर्विध्यं देवेन्द्रादित पञ्चविधत्व तत्र बलीयस्त्वे तारतम्यनिरूपणम् ।
( ५ ) अदत्तादानदोषनिवृत्त्यर्थमवग्रहानुज्ञापनम् ।
( ६ ) विधवाप्यनुज्ञापनीया ।
( ७ ) साधर्मिकावग्रहे उपनिमन्त्रणम् ।
( ८ ) अवग्रहयोग्य क्षेत्रमवग्रहप्रतिषेधश्च ।
( ९ ) ब्राह्मणाद्यवगृहीते अवग्रहः ।
( १० ) पथ्यवग्रहः ।
(११) आम्रेक्षुवनादावषग्रहे आम्रफलादिभोजन बहुवचनाद्यावग्रहश्च ।
( १२ ) स्वामिना त्यक्ते अत्यक्ते चावग्रहः ।
( १३ ) राजावग्रहो देवेन्द्रावग्रहश्च ।
( १४ ) राजपरिवर्ते ऽवग्रहः ।
( १५ ) अवग्रहक्षेत्रमानम् ।
( १६ ) क्षेत्रत्यागसमयागतेषु अपरेष्यवग्रहपरिवृत्तिः ।
( १७ ) अवग्रहे सप्त प्रतिमा ।

( १ ) अवग्रहभेदानाह-

से किं तं उग्गहे२ दुविहे पण्णत्ते तंजहा अत्थोग्गहे य वंजणुग्गहे य । से किं तं वंजणुग्गहे ? वंजणुग्गहे चउव्विहे पण्णत्ते तंजहा सोइंदियवंजणुग्गहे घाणिंदिय वंजणुग्गहे जिब्भिंदियवंजणुग्गहे फासिंदियवंजणुग्गहे. सेत्तं वंजणुग्गहे। से किं तं अत्थुग्गहे २ छव्विहे पण्णत्ते तंजहा सोइंदियअत्थुग्गहे चक्खिंदियअत्थुग्गहे घाणिंदियअत्थुग्गहे जिब्भिंदियअत्थुग्गहे फासिंदियअत्थुग्गहे नोइंदियअत्थुग्गहे । तस्स णं इमे एगट्ठिया णाणाघोसा णाणावंजणा पंचनामधिज्जा भवंति । तंजहा उगिण्हणया उगिण्हओ अवधारणया सवणया अवलंबणया मेहा सेत्तं उग्गहे ॥

अथकोऽयमवग्रहः सूरिराह । अवग्रहो द्विविधस्तद्यथा अर्थावग्रहश्च व्यञ्जनावग्रहश्च ॥ नं० । ( तस्सणमित्यादि ) तस्य सामान्येनावग्रहस्य णमिति वाक्यालंकारे अमूनि वक्ष्यमाणानि एकार्थिकानि ( नाना घोसाणित्ति ) घोषा उदात्तादयः स्वरविशेषाः । आह चूर्णिकृत् "घोसाउ उदत्तादओ सरविसेसा" नाना घोषा येषां तानि नानाघोषाणि । तथा नाना व्यञ्जनानि कादीनि येषां तानि नानाव्यञ्जनानि । पञ्चनामान्येव नामधेयानि भवन्ति तद्यथेति तेषामेवोपदर्शने ( उगिण्हणया इत्यादि ) यदा पुनरवग्रहविशेषाननपेक्ष्यामूनि पञ्चापि नामधेयानि चिन्त्यन्ते तदा परस्परं भिन्नार्थानि वेदितव्यानि । तथाहि इहावग्रहस्त्रिधा तद्यथा व्यञ्जनावग्रहः सामान्यार्थावग्रहः विशेषसामान्यार्थावग्रहश्च । तत्र विशेषसामान्यार्थावग्रहः औपचारिकः स चानन्तरमेवाग्रे दर्शयिष्यते । नं० । कर्म० । विशे० ।

तत्थुग्गहो दुरूवो, गहणं जहोज्जवंजणत्थाणं ।
वंजणओ य जमत्थो, तेणाई एतयं वोच्छं ॥

तत्रावग्रहणमवग्रहो द्विरूपो यथा भवति तथा प्रोच्यते । कथमित्याह यद्यस्माद्ग्रहणं व्यञ्जनार्थयोरेव भवेदन्यस्य ग्राह्यस्याभावात्ततश्च विषयद्वैविध्यादवग्रहो द्विविध इति भावः । अपरं यद्यस्मात्कारणाद्वक्ष्यमाणन्यायेन प्राप्यकारिष्विन्द्रियेषु व्यञ्जनावग्रहादनन्तरमेवार्थो ऽर्थावग्रहो भवति तेनादौ प्रथमतस्तकं व्यञ्जनावग्रहमेव वक्ष्ये इति गाथार्थः । विशे० । न० । आ० चू० । प्रव० । भ० ( व्यञ्जनावग्रहादीनां व्याख्याऽन्यत्र व्यञ्जनावग्रहे मल्लकप्रतिबोधकदृष्टान्तश्च आभिणिबोहिय शब्दे ) ।

( २ ) अवग्रहे दण्डक ।

नेरइयाणं भंते ! कतिविहे उग्गहे पण्णत्ते? गोयमा ! दुविहे उग्गहे पण्णत्ते तंजहा अत्थोवग्गहे वंजणोवग्गहे एवं असुरकुमाराणं जाव वेमाणियाणं पुढविकाइयाणं भंते! कतिविहे उग्गहे पण्णत्ते? गोयमा ! दुविहे उग्गहे पण्णत्ते तंजहा अत्थोग्गहे य वंजणोग्गहे य पुढविकाइयाणं भंते! वंजणोग्गहे कइविहे पण्णत्ते? गोयमा! एगे फासिंदियवंजणोग्गहे पण्णत्ते । पुढविकाइयाणं भंते ! कइविहे अत्थोग्गहे पण्णत्ते। एगे फासिंदिय अत्थोग्गहे पण्णत्ते एवं जाव वणस्सइकाइयाणं एवं बेइंदियाणवि । नवरं बइंदियाणं वंजणोग्गहे दुविहे पण्णत्ते एवं तेइंदिय चउरिंदियाण वि नवरं इंदियपरिवुड्ढी कायव्वा । चउरिंदियाणं वंजणोग्गहे तिविहे पण्णत्ते अत्थोवग्गहे चउव्विहे पण्णत्ते सेसाणं जहा नेरइयाणं जाव वेमाणियाणं ।

टीका सुगमत्वान्न गृहीता अवधारणमवग्रहः । सुन्दरा एत इत्यवधारणम् । उत्त० । सम्म०,० । आ० चू० । अयं गृह्णातीत्यवग्रहः । उपधौ,-ओघ० । पतद्ग्रहे, "सरसुरो लोएण उग्गहं च घेत्तूण-" पचा० ३ विव० । "भगद्वारे अवग्रह इति योनिद्वारस्य सामायिकी संज्ञा" सू०२ उ० । प्रव० । अवगृह्यते स्वामिना स्वीक्रियते यः सोऽवग्रहः । राजावग्रहादौ, प्रति० । अवग्रहणीये वस्तुनि,-प्रश्न० ३ द्वा० । आश्रये, "उग्गहं च अजाइत्ता, अविदिन्ने उ उग्गहे" ध० ३ अधि० ।

( ३ ) अवग्रहनिक्षेपो यथा ।

नामं ठवणा दविए, खित्ते काले तहेव भावे य ।
एसो अवग्गहस्स, निक्खेवो छव्विहो होइ ॥

सचित्तादिद्रव्यग्रहण द्रव्यावग्रहः क्षेत्रावग्रहो यो यं क्षेत्रमवगृह्णाति तत्र वसाम । ततः सक्रोश योजन कालावग्रहो यो य कालमवगृह्णाति वर्षासु चतुरो मासान् ऋतुबद्धे मासं भावावग्रहः । प्रशस्तेतरभेदः । प्रशस्तो ज्ञानाद्यवग्रह इतरस्तु क्रोधाद्यवग्रह इति । अथवावग्रहः पञ्चधा ।

द्रव्यादितश्चातुर्विध्यमाह ।

( ४ ) द्रव्यादितश्चातुर्विध्य देवेन्द्रादित. पञ्चविधत्वं तद्बलीयस्त्वे तारतम्यनिरूपण च । तत्र ।

दव्वे खेत्ते काले, भावे विय उग्गहो चउब्भाउ ।
देविंदराय उग्गहो, गिहवइसागारियसाहम्मी ॥३४॥
दव्वुग्गहोउ तिविहो, सचित्ताचित्तमीसिओ चेव ।
खेत्तुग्गहो वि तिविहो, दुविहे कालुग्गहो होइ ॥३५॥

द्रव्यावग्रहः क्षेत्रावग्रहः कालावग्रहो भावावग्रहश्चेति । एवं चतुर्विधोऽवग्रहः । यदिवा सामान्येन पञ्चविधोऽवग्रहस्तद्यथा देवेन्द्रस्य लोकमध्यवर्ती रुचकदक्षिणार्द्धमवग्रहः राज्ञश्चक्रवर्त्यादेर्भरतादिक्षेत्र गृहपतेर्ग्राममहत्तरादेर्ग्रामपाटकादिकमवग्रहः । तथा सागारिकस्य शय्यातरस्य पाटशालादिकसाधर्म्मिकाः साधवो ये मासकल्पेन तत्रावस्थितास्तेषां वसत्यादिरवग्रहः । सपादयोजनमिति तदेव पञ्चविधोऽवग्रहः । वसत्यादिपरिग्रहं च कुर्वता सर्वार्थतेति यथावसरमनुज्ञाप्या इति । आ०म० प्र० । आचा० । प्रव० । भ० ।

तेणं कालेणं तेणं समयेणं सक्के देविंदे देवराया वज्जपाणी पुरंदरे जाव भुंजमाणे विहरइ इमं च णं केवलकप्पं जंबुदीवे २ विउलेणं ओहिणाणेणं आभोएमाणे २ पासइ समणं भगवं महावीरं जंबुदीवे दीवे जहा ईसाणे तईयसए तहेव सक्केणवि णवरं आभिओगेणं सद्दावेइ पायत्ताणियाहिवई हरीणेगमेसि सुघोसघंटापालओ विमाणकारी पालगं विमाणं उत्तरिल्ले णिज्जाणमग्गे दाहिणपुरच्छि-

मिव्वे रत्थिकरपव्वए सेसं तं चेव णामगं सावेसा पज्जुवासइ धम्मकहा जाव पडिगया तएणं से सक्के देविंदे देवराया समणस्स जगवओ महावीरस्स अंतियं धम्मं सोच्चा णिसम्म हट्ठतुट्ठसमणं जगवं महावीरं वंदइ णमंसइ वंदइत्ता णमंसइत्ता एवं वयासी कइणं जंते? उग्गहे पण्णत्ते सक्का! पंचविहे उग्गहे पण्णत्ते तंजहा देविंदोग्गहे रायोग्गहे गहवइउग्गहे सागारियउग्गहे साहम्मियउग्गहे जे इमे अज्जत्ताए समणा णिग्गंथा विहरंति एएसिणं अहं उग्गहं अणुजाणामीति कट्टु समणं जगवं महावीरं वंदइ णमंसइ वंदइत्ता णमंसइत्ता तमेव दिव्वं जाणविमाणं दुरूहइ दुरूहइत्ता जामेव दिसिं पाउब्जूए तामेव दिसिं पमिगए जंतेत्ति । जगवं गोयम ! समणं जगवं महावीरं वंदइ णमंसइ वंदइ २ त्ता एवं वयासी जं णं जंते ! सक्के देविंदे देवराया तुब्जे एवं वन्दति सच्चेणं एसमट्ठे हंता सच्चेणं । ज० १६ श० २ उ० ।

अथ कतिऽविधोऽयमवग्रह उच्यते

देविंदरायगहवइ, उग्गहो सागारिए अ साहम्मि ।
पंचविहम्मि परूविए, नायव्वा जो जहिं कमइ ॥

देवेन्द्रः शक्र ईशानो वा स यावत क्षेत्रस्य प्रभवति तावान् देवेन्द्रावग्रहः राजा चक्रवर्तिप्रभृतिको महर्द्धिकः पृथ्वीपतिः स यावतः षट्खण्डभरतादेः क्षेत्रस्य प्रभुत्वमनुभवति तावान् राजावग्रहः । गृहपतिः सामान्यमण्डलाधिपतिस्तस्याऽप्यधिपत्यविषयभूत यद्भूमिखण्डं स गृहपत्यवग्रहः । सागारिकः शय्यातरस्तस्य सत्तायां यद्गृहपाटकादिकं स सागारिकावग्रहः । साधर्मिका समानधर्माणः साधवस्तेषां सवन्धि सक्रोशयोजनादिक यद्राभव्य क्षेत्र स साधर्मिकावग्रहः । एष पञ्चविधोऽवग्रहः । एतस्मिन् पञ्चविधेऽवग्रहे वक्ष्यमाणभेदे प्ररूपिते सति ज्ञातव्यो विधिरित्युपस्कारो यो यत्र देवेन्द्रादौ क्रमतऽवतरति स तत्रावतारणीय इति सग्रहगाथासमासार्थः ।

सांप्रतमेनामेव विवरीषुरमीषां पञ्चानां मध्ये कः कस्माद्बलीयानिति जिज्ञासायां तावदिदमाह ।

हेट्ठिल्ला उवरिल्लेहिं, वाहिया न उ लहंति पाहन्नं ।
पुव्वाणुन्नाजिनवं, चउसुजयपच्छिमेजिनवा ॥

अधस्तना देवेन्द्रावग्रहादय उपरितनै राजावग्रहादिभिर्यथाक्रम बाधिता द्रष्टव्याः । अत एव नतु नैव लभन्ते प्राधान्यमुत्तमत्वम् । किमुक्त भवति । राजावग्रहे राजैव प्रभवति न देवेन्द्रस्ततो देवेन्द्रानुज्ञातेप्यवग्रहे यदि राजा नानुजानीते तदा न कल्प्यते तदवग्रहे स्थातुम् । अथानुज्ञातो राज्ञा स्वविषयावग्रह पर न गृहपतिना ततस्तदवग्रहेपि न युज्यतेऽवस्थातुम् । अथानुमत गृहपतिना स्वभूमिखण्डेऽवस्थान पर न सागारिकेण स्वावग्रहे ततोऽपि न कल्प्यते वस्तुम् । अथानुज्ञातः सागारिकेण स्वावग्रहः परं न साधर्मिकैस्तथापि न कल्प्यते इत्येवमुपरितनैरधस्तना बाध्यन्ते तथानुपूर्वामनुज्ञामजिनवांचतुर्षु भजना विकल्प्य केषाचित्साधूनां पूर्वानुज्ञा तदपरेषाम जिनवति भजना कार्येत्यर्थ । अथ केय पूर्वानुज्ञा काऽजिनवानुज्ञेत्युच्यते । ईहाया अवग्रहः पुरातनसाधुभिरनुज्ञापितः स यत्पाश्चात्यैरेवमेव परिभुज्यते न भूयोऽनुज्ञाप्यते सा पूर्वानुज्ञा यथा चिरंतनकालवर्तिभिः साधुभिर्देवेन्द्रे यदवग्रहमनुज्ञापित सैव पूर्वानुज्ञा । सांप्रतकालीनसाधूनामप्यनुवर्तते न पुनर्भूयोप्यनुज्ञाप्यते अभिनवाज्ञानामभावाद् । यदा किलान्यो देवेन्द्रः समुत्पद्यते तदा तत्कालवर्तिभिः साधुभिर्यदसावभिनवोत्पन्नतयाऽवग्रहोऽनुज्ञाप्यते सा तेषामनभिवाऽनुज्ञा तदपरेषां पूर्वानुज्ञा एव शेषनृपतिगृहपतीनामपि पूर्वाभिनवानुज्ञे भावनीये । सागारिकोपि प्रथमत उपागतैः साधुभिर्यदुपाश्रयमनुज्ञाप्यते सा तेषामभिनवानुज्ञा तेषु साधुषु तत्र स्थितेषु यदन्ये साधवः समागत्य तदनुज्ञापितावग्रह परिभुञ्जते सा पूर्वानुज्ञा तदेव चतुर्ष्ववग्रहेषु पूर्वाभिनवानुज्ञयो र्भजना भाविता । तथा पश्चिमे साधर्मिकावग्रहे भिनवानुज्ञैव भवति न पूर्वानुज्ञा । तथाहि यो यदावग्रहार्थ साधर्मिकमुपसपद्यते स सर्वोपि तदानीं तमनुज्ञाप्यैवावतिष्ठते नान्यथेत्यभिनवानुज्ञैवैका ।

अथामीषां पञ्चानामपि भेदानाह ।

दव्वाई एक्केक्के, चउहा खित्तं तु तत्थ पाहन्ने ।
तत्थेव य जे दव्वा, कालो जावो असामित्ते ॥

एकैकोऽवग्रहश्चतुर्धा द्रव्यतः क्षेत्रतः कालतो भावतश्च । तत्र प्रथमतः क्षेत्रावग्रहः प्ररूप्यते कुतोहेतोरिति चेदुच्यते क्षेत्र पुनः स्वतन्त्रेषु द्रव्यादिषु मध्ये प्राधान्येन वर्तते इहावग्रहस्य प्ररूप्यमाणत्वात्तस्य च तत्वतः शक्रादिक्षेत्ररूपतयाभिधीयमानत्वादिति भावः । यतश्च तत्रैव क्षेत्रे यानि द्रव्याणि यश्च कालो भावश्च एतेषां क्षेत्रमध्ये भूतत्स्वामित्वे वर्तते क्षेत्रस्यैव सवन्धित्वादन्येषां तस्मिंश्च प्रथम प्ररूपिते द्रव्यादयस्तदन्तर्गताः प्ररूपिता एव भवन्तीति प्रथमतः क्षेत्रावग्रह प्ररूपयति ।

पुव्वावरायया खलु, सेढीलोगस्स मज्झयारम्मि ।
जो कुणइ दुहा लोगं, दाहिण तह उत्तरद्धं च ॥

इह सर्वस्यापि लोकस्य मध्यकारे मध्यभागे मन्दरस्य पर्वतस्योपरि श्रेणिराकाशप्रदेशपङ्क्तिरेकप्रादेशिकी पूर्वापरयोर्दिशोरायता प्रदीर्घा समस्ति या श्रेणिर्लोकमेकरूपमपि द्विधा करोति । तद्यथा दक्षिणलोकार्द्धमुत्तरलोकार्द्धं च । तत्र दक्षिणलोकार्द्धस्य शक्रः प्रभुत्वमनुभवति उत्तरलोकार्द्धस्य पुनरीशानकल्पनायकस्तथा दक्षिणलोकार्द्धे यान्यावलिकाप्रविष्टानि पुष्पावकीर्णानि वा विमानानि शक्रस्यैव भाव्यानि यानि पुनरुत्तरार्द्धे तानि सर्वाण्यपि द्वितीयकल्पाधिपतेः । अथ यानि मध्यमश्रेण्यां तानि कस्याभवन्तीत्याह ।

साधारण आवलिया, मज्झम्मि अवड्ढचंदकप्पाणं ।
अड्ढं च परिक्खेत्ते, तेसिं अड्ढं च सक्खित्ते ॥

अपार्द्धचन्द्रकल्पयोरर्द्धचन्द्राकारयो सौधर्मेशानकल्पयो पूर्वापरायतायां मध्यमश्रेण्यां या विमाननामावलिकासा साधारणा शक्रेशानयो । किमुक्त भवति । तस्यां मध्यमश्रेण्यां पूर्वस्यामपरस्यां च दिशि त्रयोदशस्वपि प्रस्तटेषु यानि विमानानि तानि कानिचित् शक्रस्य कानिचिदीशानस्याभाव्यानि । तत्र यानि वृत्ताकाराणि तानि सर्वाण्यपि शक्रस्यैव, यानि पुनरुयस्राणि चतुरस्राणि वा तान्येक शक्रस्य एकमीशानस्येत्येवमुभयोरपि साधारणानि तथाचोक्तम् "जे दक्खिणेन इंदा, दाहिणओ आवली भवे तेसिं । जे पुण उत्तरइंदा, उत्तरओ

श्रावली तेसिं। पुव्वेण पच्छिमेण य जे वट्टा ते विदाहिणल्लस्स। तंसचउरंसगा पुण, सामन्ना हुंति दुण्हंपि" तेषां च मध्यमश्रेणिगतानां विमानानामर्द्धं स्वस्वक्षेत्रे कल्पसीमानि प्रतिष्ठित तदपरमर्द्धं परक्षेत्रे परकल्पसीमनीति ।

अथ शक्रमुद्दिश्य क्षेत्रावग्रहप्रमाणमाह ।

सेढीइ दाहिणेणं, जो लोगा उड्ढमासकविमाणा ।
हेट्ठावि अ लोगंते, खित्तं सोहम्मरायस्स ॥

सौधर्मराजस्य सौधर्म्मकल्पाधिपतेरेतावत्क्षेत्रमाधिपत्यविषयभूत तिर्यग्दिग्मधिकृत्य श्रेण्या पूर्वोक्ताया दक्षिणे दक्षिणस्यां दिशि यावल्लोक इति तीर्यग्लोकपर्यन्त ऊर्ध्वदिशमाश्रित्य आ पादपूरणे यानि स्वामिनि विमानानि स्तूपध्वजकलितानि अधोदिग्मुद्दिश्य यावदधस्ततो लोकान्त इति भावितो देवेन्द्रक्षेत्राऽवग्रहः ।

सम्प्रति चक्रिण क्षेत्रावग्रहमाह ।

सरगोयरो अ तिरियं, बावत्तरिजोयणाइं उड्ढं तु ।
अह लोगगामगत्ताइ, हेट्ठओ चक्किणो खित्तं ॥

यावच्छरस्य बाणस्य गोचरो विषयस्तावच्चक्रिणस्तिर्यक्क्षेत्रम् । इदमुक्त भवति। चक्रवर्ती दिग्विजययात्रां कुर्वन् मागधादिषु तीर्थेषु यन्नामाङ्कितं बाण निसृजति स पूर्वदक्षिणापरसमुद्रेषु द्वादशयोजनान्त यावद्गच्छति एतावदन्तश्चक्रिणस्तिर्यगवग्रह । स एव बाण• क्षुल्लहिमवत्कुमारदेव साधनार्थं चक्रिणैव निसृष्ट ऊर्ध्वं द्वासप्ततियोजनानि यावद्गच्छति तावानूर्ध्वमवग्रह• । अध पुनरधोलोकग्रामास्तथा गर्ता आदिशब्दाद्वापीकूपभूमिगृहादिपरिग्रहः । इयमत्र भावना । जम्बूद्वीपापरविदेहवर्तिनलिनावती वप्राभिधानविजययुगलसमुद्भवा योजनसहस्रा क्षेत्रा समयप्रसिद्धा। ये अधोलोकग्रामास्तेषु ये चक्रवर्तिन समुत्पद्यन्ते तेषां त एवाध क्षेत्रावग्रहास्तदपरेषां तु गर्ता कूपभूमिगृहादिकमिति प्ररूपितो राज्ञः क्षेत्रावग्रह ।

अथगृहपतिसागारिकयोस्तमाह ।

गहवइणो आहारो• चउदिसि सागारियस्स घरवग्गा ।
हेट्ठा अवागमाई, उड्ढं गिरिगहधयरुक्खा ॥

गृहपतेर्मण्डलेश्वरस्य यावानाधारो विषय प्रभुत्वविषयभूतश्चतसृषु दिक्षु तावानस्योत्कृष्टतिर्यगवग्रह• । सागारिकस्य शय्यातरस्य गृहवर्गागृहवृत्तिपरिक्षेप उत्कृष्टतिर्यगवग्रह द्वयोरपि चाधस्तादपागर्तागर्तादय• अपागर्तो ह्रदो वा अगड• कूप आदिशब्दाद् वाप्यादय ऊर्ध्वं गिरिगेहध्वजवृक्षाः गिरय पर्वता गृहध्वजा गृहोपरिस्थितन्य पताका वृक्षा सहकारादय• । साधर्मिकाणां तु क्षेत्रावग्रह पुनोपि हेनोरत्र नोक्त परं बृहद्भाष्ये इत्थमभिहित "भित्तीमाई सकोस जोयण माइम्मियाण वोधव्व। उड्ढमिजा एगादिसि उज्जाण वा मर्यादा" सरूपादी उद्यानं यावदुत्कृष्ट क्षेत्रावग्रह• शेष सुगमम् ।

अथ जघन्यक्षेत्रावग्रहमभिधातुकाम आह ।

अजहन्नमणुक्कोसो, पढमो जो आविचक्कवट्टीणं ।
सेसाणिव रोहगाइ, सुजहन्नओगहवइणं च ॥

प्रथमो देवेन्द्रावग्रहोऽजघन्योत्कृष्टो न जघन्यो नचोत्कृष्ट किन्तु मध्यमप्रकारोदित सर्वदैवैकरूपत्वात् यश्चाप्यवग्रह• चक्रवर्तिनां सम्बन्धी सोऽप्यजघन्योत्कृष्ट• चक्रवर्तिनामाधिपत्यस्यैकरूपत्वात् । शेषनृपाणां चक्रवर्तिव्यतिरिक्तानां नृपतीनां गृहपतीनां च रोधकादिषु जघन्य• क्षेत्रावग्रहो द्रष्टव्य• । रोधनं रोधक• परचक्रेण नगरादेर्वेष्टनम् आदिशब्दादन्यस्याप्येवंविधस्य परिग्रहः । इयमत्र भावना । कोऽपि बलवान् राजा माण्डलेश्वरो वा कस्याप्यल्पबलस्य नरपतेर्गृहपतेर्वा ग्रामनिर्वृतमात्मसात्कृत्य यदा तदीय नगरादि निरुध्यावतिष्ठते तदा तस्य तावान्नगरादिमात्रको जघन्य ।

नगराइ निरुद्धघरे, रायाणुन्नाउ दुचरिमजहन्नो ।
उक्कोसे उ अनियओ, अचक्किमाई चउण्हंपि ॥

द्वौ चरमौ सागारिकसाधर्मिकौ तयोरयं जघन्यःक्षेत्रावग्रहो नगरादौ केनचिद्राज्ञा निरुद्धे बहिर्वास्तव्यजनैरभ्यन्तरत• प्रविशद्भिः शय्यातरगृहं साधर्म्मिकोपाश्रयो वा यदा प्रेर्यते तदा या काचित्तेषामनुज्ञा यथैतावति प्रदेशे युष्माभि स्थातव्यमेतावत्यस्माभिरिति स जघन्यक्षेत्रावग्रहः । उत्कृष्टः पुनरवग्रहोऽनियत• कस्याप्यल्पीयान् कस्यापि भूयानिति भाव• । केषामित्याह अचक्र्यादीनां चतुर्णामपि यश्चक्रवर्ती न भवति किं तु सामान्यपार्थिव स नञ पर्युदासप्रतिषेधात्तत्सदृशग्राहकत्वादचक्री भण्यते । आदिशब्दाद् गृहपत्यादयो गृह्यन्ते ।

अथसागारिकावग्रहस्य विशेषत उपयोगित्वाद्विधिमाह ।

अणुन्नाए वि सव्वम्मि, उग्गह घरसामिणा ।
तहावि न सीमं छिंदंति, साहू तप्पियकारिणो ॥

गृहस्वामिना शय्यातरेण भाजनधावनकायिक्यादिव्युत्सर्जनस्वाध्यायादिकं यत्र यत्र भावनां रोचते तत्र तत्र कुरुते ते च यद्यप्यसावप्यवग्रहेऽनुज्ञातस्तथापि साधवस्तस्य सागारिकस्य प्रियकारिण समाधिविधित्सव सीमां मर्यादां न भिन्दन्ति निर्धारयन्ति व्यवस्थां पालयन्तीत्यर्थं । तामेव सीमामभिधत्ते ।

ठाणट्ठया भायण धावणाई,वोसट्ठया अत्थण हेउगम्मि ।
अभिग्गहं चेव अहिट्ठियंते,मासो वअन्नो व करेज्जमंतुं ॥

स्थानार्थं भाजनधावनयोधनाद्यर्थं द्वयोरुच्चारप्रश्रवणयोरर्थाय ( अत्थाणत्ति ) उपविश्यावस्थान तद्धेतुकं च तन्निमित्तकं मितावग्रहमेव परिमितमेवावग्रहमधितिष्ठन्ति । किमुक्तं भवति। साधवो व्यवस्थां स्थापयन्त शय्यातरमामन्त्र्य ब्रुवते श्रावक ! वयमियति प्रदेशेऽभ्याशिष्यामहे नेत• परम् । अत्र भाजनानि धाविष्यामो नान्यत्र यदि नाम ग्लानादेरात्राबुच्चारसंभवो भवेत्ततोऽत्र परिष्ठापयिष्यते। अत्र पुन कायिकी व्युत्सृज्यते इह पुन• साधवो भाजनरञ्जनादिक कुर्वन्त कियतीमपि वेलामासिष्यन्ते एवं व्यवस्थाप्य मितमेवावग्रहमाधितिष्ठन्ति। कुत इत्याह अमात्यो वा सागरिकोऽन्यो वा तदीयो वयस्यस्वजनादि स वालवृद्धाकुलेन गच्छेनातिप्राचुर्येणाक्रान्ते कायिक्यादिना वा विनाशितेऽवग्रहे मन्युमप्रीतिक कुर्यात् । अपि च तथा साधुभिरप्रमत्तैस्तत्र स्थातव्यं तथा शय्यातरश्चिन्तयेत् अहो निभृतस्वभावा अमी मुनयो यदेतावन्तोऽपि सन्त स्वसमयोदितमाचारमाचरन्तोऽपि परस्पर विकथादिकमकुर्वन्तो निर्व्यापारा इव लक्ष्यन्ते तत्सर्वथा कृतार्थोऽस्म्यहममीषां भगवतां शय्याया प्रदानेन तीर्णप्रायो मयायमपारोऽपि संसारपारावार इति प्ररूपित• क्षेत्रावग्रह ॥

सम्प्रति द्रव्यावग्रहमाह ॥

वयगमचित्तमीसग, दव्वा खलु उग्गहेसु एएसु ।
जो जेण परिग्गहिओ, सो दव्वे उग्गहो होइ ॥

एतेषु देवेन्द्राद्यवग्रहेषु यानि चेतनानि स्त्रीपुरुषादीनि अचि-

त्तानि वस्त्रपात्रादीनि मिश्राणि सभाण्डोपकरणस्त्रीपुरुषादीनि यानि द्रव्याणि स द्रव्ये द्रव्यविषयेऽवग्रहः । कथम्भूत इत्याह । यो येन शक्रादिना परिगृहीतः स तस्य संबन्धी द्रव्यावग्रहः । किमुक्तं भवति । देवेन्द्रावग्रहेऽत्र यानि सचित्तासचित्तमिश्राणि द्रव्याणि तानि सर्वाण्यपि देवेन्द्रद्रव्यावग्रहः । एवं राजावग्रहादिष्वपि भावना कार्या ॥

अथ कालावग्रहमाह

दोसागराउ पढमो, चक्की सत्तसय पुव्वचुलसीई ।
सेसानिवंसि मुहुत्तं, जहन्नमुक्कोसए भयणा ॥

प्रथमो देवेन्द्रावग्रहः स द्वे सागरोपमे यावद्भवति शक्रस्य द्विसागरोपमस्थितिकत्वात् चक्री चक्रवर्त्यवग्रहे जघन्यतः सप्तवर्षशतानि ब्रह्मदत्तवत् । उत्कर्षतः पुनश्चतुरशीतिपूर्वशतसहस्राणि भरतचक्रवर्तिवत् । तथा च चूर्णि " चक्कवट्टि उग्गहो जहन्नेण सत्तवाससया बंभदत्तस्स उक्कोसेण चुरासीइ पुव्वसय सहस्साइ भरहस्स " अत्र पर प्राह । तत्र ब्रह्मदत्त कुमारतायामष्टाविंशतिमाण्डलिकत्वे षट्पञ्चाशत दिग्विजयं षोडशवर्षाण्यतिक्रम्य षड्वर्षशतान्येव चक्रवर्तिपदवीमनुबभूव । भरतोऽपि सप्तसप्ततिपूर्वलक्षाणि कुमारतामनुभूय वर्षसहस्रं माण्डलिकत्वमनुपाल्य षष्टिवर्षसहस्राणि विजययात्रायां व्यतीत्य ततः किञ्चिदूनानि षट्पूर्वलक्षाणि सर्वं भूमिश्रियं बुभुजे ततः कथमनयोः सप्तवर्षशतानि चतुरशीतिपूर्वलक्षाणि च यथाक्रमं चक्रवर्त्यवग्रहः प्रतिपाद्यमानो न विरुध्यते । नैष दोषः यतो योग्यतामङ्गीकृत्य भरतादयो जन्मन एव चक्रवर्तिनो मन्तव्याः । यत उत्पन्नमात्र एव चक्रवर्तिनि तदीयतथाविधाद्भुतभाग्यसंभारसमावर्जितास्तदानव्यक्षेत्रनिवासिदेवता उत्पन्नोऽयं सकलमहीवलयस्वामीति प्रमोदभाजस्तदानुकूल्यवृत्तयस्तथाविधाभिलाषिणस्तत्प्रत्यनीकयुक्तप्रत्यूहापहाराय प्रवर्तन्त इति समीचीनमेव यथोक्तमवग्रहकालमानम् । अन्यथा वा बहुश्रुतैरुपयुज्य निर्वचनीयमिति ( सेसनिवसिमुहुत्तति ) चक्रवर्तिनं मुक्त्वान्य शेषः नृपस्तस्य जघन्यतो मुहूर्त्तं कालावग्रहः । कृतराज्याभिषेकस्यान्तर्मुहूर्त्तादूर्ध्वं मरणाद्राज्यपदपरिभ्रंशाद्वा शेषनृपतीनामुत्कृष्टे कालावग्रहे भजना कार्या । किमुक्तं भवति । अन्तर्मुहूर्त्तादारभ्य समयवृद्ध्या वर्द्धमानानि चतुरशीतिपूर्वलक्षाणि यावद्यान्यायु स्थानानि तेषां मध्ये यद्येषां नृपतीनामायुस्थानं निर्वर्तितं यो वा यावन्तं कालं राज्यैश्वर्यमनुभवति तस्य स उत्कृष्टः कालावग्रहः ॥

एवं गहवइसागा–रिए वि चरिमे जहन्नओ मासा ।
उक्कोसो चउमासा, दोसुवि भयणा उ कज्जम्मि ॥

एवं गृहपतिसागारिकयोरपि शेषनृपतिवज्जघन्योत्कृष्टश्च कालावग्रहो द्रष्टव्यः । इह च यद्यपि शेषनृपतिगृहपतिसागारिकाणामायूंषि पूर्वकोटिपर्यवसितान्यपि सम्भाव्यन्ते तथापि चूर्णिकृता किमपि बाहुल्यादिकारणमुद्दिश्य चतुरशीति पूर्वलक्षपर्यन्तान्येवाभिहितानीत्यत्रापि तदनुरोधेन तथैव व्याख्यातानि । तथा चरमे साधर्मिकावग्रहे ऋतुबद्धे मासकल्पविहारिणा जघन्यो मासमेकमुत्कृष्टो वर्षासु चतुरो मासान् कालावग्रहः ( दोसु वि भयणाउ कज्जम्मित्ति ) द्वयोरपि जघन्योत्कृष्टयोः कार्ये समापतिते भजना । किमुक्तं भवति ग्लानादिभिः कारणैः कदाचिदृतुबद्धे मासो वर्षासु चत्वारो मासा न प्रतिपूर्यन्तेऽतिरिक्ता वा भवेयुः । गतः कालावग्रहः ।

अथ भावावग्रहमाह ।

चत्तारो दइअम्मि, खओवसमियम्मि पच्छिमो होइ ।
मणसीकरणमणुन्नं च, जाण जं जत्थ कम्मइ ॥

चत्वारो देवेन्द्रराजगृहसागारिकाणामवग्रहा औदयिकेभावे वर्त्तन्ते ममेदं क्षेत्रमित्यादि मूर्छायास्तेषु सद्भावात्तस्याश्च कषायमोहनीयोदयजन्यत्वात् । पश्चिमः साधर्मिकावग्रहः स क्षायोपशमिके भावे वर्तते कषायमोहनीयक्षयोपशमयुक्तया ममेदं क्षेत्रं ममायमुपाश्रय इत्यादिमूर्छायाः साधूनामभावात् । एवं भावावग्रहः । तदेवं प्ररूपितः पञ्चविधोऽप्यवग्रहः । अथ यदुक्तं द्वारगाथायां " पंचविहम्मि परूवियनायव्वो जो जहिं कमइत्ति " तदिदानीं भाव्यते " मणसीकरणमणुन्नं चेत्यादि " मनसि करणमनुज्ञां च जानीहि । यद्यत्र देवेन्द्रावग्रहादौ क्रामति अवतरति तत्र मनसि चेतसि करणमनुजानीताम् । यस्यावग्रह इति मनस्येवानुज्ञापनमिति हृदयं यत्पुनर्वचसानुज्ञाप्यते साऽनुज्ञा ऽन्तर्भूतएवार्थत्वादनुज्ञापनेति भावः तत्र देवेन्द्रराजावग्रहयोर्मनसैवानुज्ञापनं करोति गृहपत्यवग्रहस्य मनसा वा वचसा वा सागारिकसाधर्मिकावग्रहयोर्नियमाद्वचसाऽनुज्ञापना । यथानुज्ञापना यथानुजानीतास्माकं शय्यां वस्त्रपात्रशैक्षादिकं चेत्यादि ।

अथ भावावग्रहं प्रकारान्तरेणाह ॥

भावावग्गहो अहव दुहा, मइगहणे अत्थ वंजणो उ मई ।
गहणे जत्थ उ गिण्हइ, मणसीकरणअकरणतिविहं ॥

अथवा भावावग्रहो द्विधा मतिभावावग्रहो ग्रहणभावावग्रहश्च । तत्र मतिर्मतिज्ञानरूपो भावावग्रहो भूयोपि द्विधा व्यञ्जनावग्रहोऽर्थावग्रहश्च गाथायां बन्धानुलोम्येन पूर्वमर्थशब्दस्य निर्देशः ग्रहणे ग्रहणविषये भावावग्रहः । यत्र तु यस्मिन् पुनर्देवेन्द्राद्यवग्रहादौ यदा साधुः किं चिद्वस्तुजातं गृह्णाति सचित्तमचित्तं मिश्रं वा तस्य तदाग्रहणं भावावग्रहः ( मणसिकरणत्ति ) मनसि करणस्योपलक्षणत्वादनुज्ञापनायाश्चाकरणे त्रिविधं प्रायश्चित्तम् । एतदेव सविशेषमाह ।

पंचविह परूविए स, उग्गहो जाणएण घेत्तव्वो ।
अन्नाएउग्गहिए, पायच्छित्तं भवे तिविहं ॥

पञ्चविधेऽवग्रहे प्ररूपितेसतीदं तात्पर्यमभिधीयते स एव विधोवग्रहो ज्ञापकेनपञ्चप्रकारोवग्रहःस्वरूपवेदितो गृहीतव्यो नाज्ञापकेनकुतः इत्याह अज्ञातेऽनधिगमे सति यद्यवग्रहमवगृह्णाति ततस्तस्मिन्नवगृहीते त्रिविधं प्रायश्चित्तं भवति तदेवाह ।

इक्कडकठिणे मासो, चाउम्मासो अपीढफलएसु ।
कट्ठेकलिंचे पणगं, छारे तह मल्लगाईसु ॥

इक्कड़ःढंढणी कठिनः शस्तम्बस्तयोः संस्तारके मासलघु काष्ठमयेषु पीठेषु फलकेषु च प्रत्येकं चत्वारो मासलघवः काष्ठं च काष्ठशकलं कलिञ्चं वंशदलं काष्ठकलिञ्चं तत्र तथा क्षारे भस्मनि मल्लकादिषु मल्लकं शरावमादिशब्दात्तृणडगलादिपरिग्रहः । एतेषु सर्वेष्वपि पञ्चकं पञ्चरात्रिंदिवानि इति त्रिविधप्रायश्चित्तमज्ञातावग्रहरूपस्यावग्रहणे द्रष्टव्यम् । उक्तोऽवग्रहकल्पिकः । व्य० १ उ० ।

साम्प्रतं द्रव्याद्यवग्रहप्रतिपादनायाह ।

दव्वुग्गहो उ तिविहो, सच्चित्ताचित्तमीसिओ चेव ।
खेत्तुग्गहो वि तिविहो, दुविहं कालुग्गहो होइ ॥

ऽव्यावग्रहस्त्रिविधः शिष्यादेः सचित्तो रजोहरणादेरचित्तः शिष्यरजोहरणादेर्मिश्रः। क्षेत्रावग्रहोऽपि सचित्तादिस्त्रिविध एव। यद्वा ग्रामनगरारण्यभेदादिति। कालावग्रहस्तु ऋतुबद्धवर्षाकालभेदाद्द्विधेति। भावावग्रहप्रतिपादनार्थमाह ॥

मइउग्गहो य गहणो-ग्गहो य भावग्गहो दुहा होइ।
इंदियणोइंदियअत्थ-वंजणोग्गहोहोइ दसहा य॥

भावावग्रहो द्वेधा तद्यथा मत्यवग्रहो ग्रहणावग्रहश्च। तत्र मत्यवग्रहो द्विधा अर्थावग्रहो व्यञ्जनावग्रहश्च तत्रार्थावग्रह इन्द्रियनोइन्द्रियभेदात् षोढा व्यञ्जनावग्रहस्तु चक्षुरिन्द्रियमनोवर्ज चतुर्धा स एष सर्वोऽपि मतिभावावग्रहो दशधेति।

ग्रहणावग्रहार्थमाह॥

गहणोग्गहम्मि अपरि-ग्गहस्स गहणस्सगहणपरिणामो।
कह पाडिहारियापाडिहा-रियं व होइ जइयव्वं॥

अपरिग्रहस्य साधोर्यदा पिण्डवसतिवस्त्रपात्रग्रहणपरिणामो भवति तदा स ग्रहणभावावग्रहो भवति तस्मिंश्च सति कथं केन प्रकारेण ममेदं वसत्यादिकं प्रातिहारिकमप्रातिहारिकं वा भवत्येव यतितव्यमिति। प्रागुक्तश्च देवेन्द्राद्यवग्रहः पञ्चविधोऽप्यस्ति स ग्रहणावग्रहे द्रष्टव्य इति। आचा० ७ अ०।

एमेव वहूणंपि, पिंडे नवरोग्गहस्स उ विभागो।
किं कतिविहो कस्स कम्मिव, केवइयं वा भवे काले॥

अत्र प्रथमपदव्याख्याऽनुपयुक्तत्वान्न गृहीता अत्रावग्रहस्य विभागो वक्तव्यस्तमेवाह। किं कतिविधः कस्य वा कस्मिन्वा कियन्तं कालं भवत्यवग्रह। तत्र किमित्याद्यद्वारव्याख्यानार्थमाह

किं उग्गहोत्ति भणिए, तिविहो उ होति चित्तादी।
एक्केको पंचविहो, देविंदादी मुणेयव्वो॥

किमवग्रह इति भणिते पृष्टे सूरिराह। त्रिविधो भवत्यवग्रहश्चित्तादिः सचित्तोऽचित्तो मिश्रश्च। पुनरेकैकः कतिविध इति प्रश्नमुपजीव्याह एकैकः। पञ्चविधः पञ्चप्रकारो ज्ञातव्यः कोऽसावित्याह देवेन्द्रादिः देवेन्द्रावग्रहो राजावग्रहो माण्डलिकावग्रहः शय्यातरावग्रहः साधर्मिकावग्रहश्च।

गतं कतिविधद्वारमिदानीं कस्य न भवतीति प्रतिपादयति।

कस्स पुण उग्गहोत्ति, परपासंडीण उग्गहो नत्थि।
निण्हे सेवे संयति, अगीते गीतणक्के या॥

कस्य पुनरवग्रहो भवतीति शिष्यप्रश्नमाशङ्क्य प्रोच्यते परपाषण्डिनामवग्रहो नास्ति ये च निह्नवा ये च सन्नायाश्च संयत्यो गीतार्थैरपरिग्रहीता ये चागीतार्था गीतार्थनिश्रामनुपपन्ना यश्च निष्कारणमेकाकी गीतार्थ एतेषां सर्वेषामप्यवग्रहो नास्ति (अस्य बहुवक्तव्यता वसवयाशब्दे)

वुड्ढावासातीते, कालातीतेन उग्गहो तिविहो।
आलंवणे विसुद्धो, उग्गहो उ कज्जवुच्छेओ॥

वृद्धावासातीते स्थानेन प्रतिजङ्घनया वा आरोगीभूतेन वा स्वपेन वा वृद्धावासे वा अतीते काले अतीत ऋतुबद्धकाले मासाधिके अवग्रहस्त्रिविधोऽपि न भवति। सचित्तस्याचित्तस्य मिश्रस्य च ग्रहणं न कल्पते इति भाव। पुन स्याह। आलम्बने वृद्धावासलक्षणे विशुद्धे परिसमाप्ते यस्मात्कार्यभूतो ऽवग्रहस्तस्यापि व्यवच्छेदो भवति कारणाभावे कार्यस्याभावात् वस्तु मन्यते। कालातीत विनावग्रहस्य व्यवच्छेदस्य प्रति दृष्टान्तमाह।

आगासकुच्छिपूरो, उग्गहपडिमेहियम्मि कालम्मि।
न हु होति उग्गहो सो, कालो दुगे वा अणुण्णातो॥

यथा कोऽपि पुरुषो बुभुक्षया पीडितः सन् चिन्तयति पूरयाम्युदरमाकाशेन मे बुभुक्षापगच्छति। स यथा आकाशस्य एवमेवावग्रहे प्रतिषेधितो य. कालो वर्त्तते तस्मिन्नुत्पादितः सोऽवग्रहो ऽवग्रहो न भवति प्रतिषिद्धकालाचीर्णत्वात्। अथवा प्रकारान्तरेण कालद्विकेनानुज्ञातोऽवग्रह. कथमिति चेदाह।

गिण्हाणं चरिमासो, जहिँ कत्तो तत्थ जति पुणो वासं।
वायंति अन्नखेत्तो, संती दोसुं पि तो लाभो॥

यत्र ग्रीष्माणामुष्णकालस्य चरम पश्चादापाढनामा मास. कृतस्तत्र यदि पुनरन्यक्षेत्रेऽसति तथाविधान्यक्षेत्राभावतो वर्षे च वर्षाकालं तिष्ठति ततो द्वयोरपि कालयोर्ग्रीष्मचरममासयोर्वर्षाचेत्यर्यतो लाभो भवति। एवं करणवतो द्वयोरपि कालयो. सचित्तादिलाभो ऽनुज्ञात इत्यर्थ.।

एमेव य समतीते, वासे तिन्नि दसगा उ उक्कोसो।
वासनिमित्त वियाणं, उग्गहो मासउक्कोसे॥

एवमेव अनेनैव प्रकारेण वर्षे वर्षाकाले समतीते यदि मेघो वर्षति ततो ऽन्यद्दिवसदशकं स्थीयते तस्मिन्नपि समाप्तिमुपगते यदि पुनर्वर्षति ततो द्वितीयं दिवसदशकं स्यातव्यं तस्मिन्नप्यतीते पुनर्वृष्टौ तृतीयमपि दशकं तिष्ठति। एवमुत्कर्षतस्त्रीणि दिवसदशकानि वर्षानिमित्तस्थितानामुत्कृष्टो ऽवग्रह. षण्मासप्रमाणो भवति। तद्यथा एको ग्रीष्मचरममासश्चत्वारो वर्षाकालमासा षष्ठो मार्गशीर्षो दिवसदशकत्रयलक्षण इति। व्य० ४ उ०। नि० चू० ५॥

अदत्तादानदोषनिवृत्त्यर्थमवग्रहोऽनुज्ञापनीय॥

समणेभविस्सामि अणगारे अकिंचणे अपुत्ते अपसुपरदत्तभोगी पावं कम्मं णो करिस्सामीति समुट्ठाए सव्वं भंते! अदिण्णादाणं पच्चक्खामि से अणुपविसित्ता गामं वा जाव रायहाणिं वा णेव सयं अदिन्नं गिण्हेज्जा णेवन्नेणं अदिन्नं गिण्हावेज्जा णेवन्नेणं अदिन्नं गिण्हंतं पि समणुजाणेज्जा। जेहिं वि सद्धिं पव्वइए तेसिं पियाइं छत्तयं वा मत्तयं वा डंडगं वा जाव चम्मच्छेदणगं वा तेसिं पुव्वामेव उग्गहं अणणुण्णविया अपडिलेहिया अपमज्जिया णो गिण्हेज्जवा पगिण्हेज्ज वा तेसिं पुव्वामेव उग्गहं अणुण्णविय पडिलेहिय पमज्जिय तओ संजयमेव उगिण्हेज्ज वा पगिण्हेज्ज वा से आगंतारेसु वा ४ अणुवीइउग्गहं जाएज्जा। जे तत्थ ईसरे जे तत्थ समाहिट्ठाए ते उग्गहं अणुण्णवेज्जा कामं खलु आउसो अहालंदं अहापरिण्णातं वसामो जाव आउसो जाव आउसंतस्स उग्गहे जाव साहम्मियाए जाव उग्गहं उगिण्हिस्सामो तेण परं विहरिस्सामो॥

श्रमणोऽस्मीति श्रमणस्तपस्वी यतोऽहमतः एवंभूतो भविष्यामीति दर्शयति। अनगारोऽगा वृक्षास्तैर्निष्पन्नमगारं तन्न विद्यत इति अनगारस्त्यक्तगृहपाश इत्यर्थस्तथा अकिंचनो न

विद्यते किमप्यस्येत्यकिंचनः निष्परिग्रह इत्यर्थः। तथा अपुत्र स्वजनबन्धुरहितो निर्मम इत्यर्थः । एवमपशुः द्विपदचतुष्पदादिरहितः यत एवमतः परदत्तभोजी सन् पापं कर्म न करिष्यामीत्येवं समुत्थायैतत्प्रतिज्ञो भवामीति दर्शयति । यथा सर्वं भदन्तादत्तादानं प्रत्याख्यामि दन्तशोधनमात्रमपि परकीयमदत्तं न गृह्णामीत्यर्थः तदनेन विशेषणकदम्बकेनापरेषां शाक्यसरजस्कादीनां सम्यक् श्रवणत्वं निराकृतं भवति । सचैवंभूतोऽकिंचनः श्रमणोऽनुप्रविश्य ग्रामं वा यावद्राजधानीं वा नैव स्वयमदत्तं गृह्णीयान्नैवापरेण ग्राहयेन्नाप्यपरं गृह्णन्तं समनुजानीयाद्यैर्वा साधुभिः सह सम्यक्प्रव्रजितास्तिष्ठति वा तेषामपि सबन्ध्युपकरणमननुज्ञाप्य न गृह्णीयादिति दर्शयति । तद्यथा छत्रकमिति छदृ अपवारणे छादयतीति छत्रं वर्षाकल्पादि । यदि वा कारणिकः क्वचित् कुङ्कणदेशादावतिवृष्टिसंभवाच्छत्रकमपि गृह्णीयाद्यावच्चर्मच्छेदनकमप्यननुज्ञाप्य प्रत्युपेक्ष्य च नावगृह्णीयात् सकृत्प्रगृह्णीयादनेकशः तेषां च सविधि यथा गृह्णीयात्तथा दर्शयति । पूर्वमेव तानुनुज्ञाप्य प्रत्युपेक्ष्य चक्षुषा प्रमृज्य रजोहरणादिना सकृदनेकशो वा गृह्णीयादिति किञ्च ( सेइत्यादि ) स भिक्षुरागन्तागारादौ प्रविश्यानुविचिन्त्य च पर्यालोचयति विहारयोग्यं क्षेत्रं ततोऽवग्रहं वसत्यादिकं याचेत। यश्च याच्यस्तं दर्शयति। यस्तत्रेश्वरो गृहस्वामी तथा यस्तत्राधिष्ठाता गृहपतिना निक्षिप्तभरः कृतस्तानवग्रहं क्षेत्रावग्रहमनुज्ञापयेद्याचेत कथमिति दर्शयति ( काममिति) तवेच्छया खल्विति वाक्यालंकारे। आयुष्मन्! गृहपते ( अहालंदमिति ) यावन्मात्रं कालं भवाननुजानीते ( अहापरिण्णायति ) यावन्मात्रं क्षेत्रमनुजानीषे तावन्मात्रं कालं तावन्मात्रं च क्षेत्रमाश्रित्य वयं वसाम इति यावदिहायुष्मन् यावन्मात्रं कालमिहायुष्मतोऽवग्रहो यावन्तश्च साधर्म्मिकाः साधवः समागमिष्यन्ति तावन्मात्रमवग्रहं गृहीष्यामस्ततः ऊर्ध्वं विहरिष्याम इति । आचा० २ श्रु० ७ अ० १ उ० ॥

( ६ ] विधवाप्यनुज्ञापनीया ।

सागारियअहिगारे, अणुवत्तं तम्मि को विसो होति ।
संदिट्ठो वपत्तू वा, विहवा सूत्तस्स संबंधो ॥

इह पूर्वसूत्रात्सागारिकाधिकारः शय्यातराधिकारोऽनुवर्त्तते तस्मिन् अनुवर्त्तमाने सूत्रे कोऽपि स सागारिकः कोऽपि प्रभुरिति प्रतिपाद्यमित्येष विधवा सूत्रस्य संबन्धः। अस्य व्याख्या । न विद्यते धवो भर्त्ता यस्याः सा विधवा ततो दुहिता ज्ञातिकुलवासिनी पितृगृहवासिनी वा इत्यादि । अथवा समासकरणादिदं रूपम् या दुहिता विधवा या च ज्ञातिकुलवासिनी दुहिता। ज्ञातिकुलवासिनी नाम या गृहजामातुर्दत्ता साप्यवग्रहमनुज्ञापयितव्या किमङ्ग ! पुनः पिता वा भ्राता वा पुत्रो वा स सुतरामनुज्ञापयितव्यः । तथा चाह ( से यावती त्यादि ) ततो ह्यवग्रहमवगृहीतव्यावति सूत्राक्षरार्थः॥

सम्प्रति भाष्यकारो व्याख्यानमाह।

विगयधवा खलु विधवा, धवं तु भत्तारमहु नेरुत्ता ।
धारयति धीयते वा, दधाति वा तेण उ धवोत्ति

विगतधवा खलु विधवा । विगतो धवोऽस्या इति व्युत्पत्तेः धवं तु भर्त्तारमाहुर्नैरुक्ता निरुक्तिशास्त्रविदः । कथा व्युत्पत्त्येत्याह । धारयति तां स्त्रियं धीयते वा तेन पुंसा सा स्त्री दधाति सर्वात्मना पुष्णाति तेन कारणेन निरुक्तिवशात् धव इत्युच्यते ॥

विधवा वा गुण्णविज्जइ, किं पुण पिय माइभायपुत्तादी।
सो पुण पभुवाऽपभुवा, अपभू पुण तत्थिमो होइ ॥

विधवाऽप्यनुज्ञाप्यते किं पुनः पिता माता भ्राता पुत्रादिर्वा स सुतरामनुज्ञाप्यः केवलं पुनः पुत्रभ्रातृप्रभृतिको द्विधा । प्रभुर्वा भवेदप्रभुर्वा । तत्र पुनरप्रभव इमे वक्ष्यमाणा भवन्ति तानेव निर्युक्तिकृदाह ।

आदेसदासभइए, विरिक्कजामाइए उ दिण्णा य ।
अस्सामिमासो लहुतो, सेसपभुणुग्गहेणं वा ॥

आदेशः प्राघूर्णको दासो ऽकिंचनो भृतकः कर्म्मकरो विरिक्तो गृहीतारिक्तादिभागः पुत्रो भ्राता अन्यो वा तथाऽन्यत्र पृथग्गृहे जामातरि एतेऽस्वामिनोऽप्रभवः एतान् यदि अनुज्ञापयति तदा प्रायश्चित्तं मासलघु शेषाः प्रभवः स्वामिनस्तान् अनुज्ञापयेत ( अणुग्गहेणवाति ) अप्रभूणामपि येषां प्रभुणानुग्रहः कृतो यथा त्वया कृतं दत्तं वा तत्प्रमाणमिति तेन वा अनुग्रहेणाप्रभूनपि अनुज्ञापयेत नान्यथा ।

अप्रभूणामनुज्ञापने दोषमाह ।

दियरातो निच्छुहणा, अप्पहुदोसा आदिन्नदाणं च ।
तम्हा उ अणुण्णवए, पभुं च पभुणा च संदिट्ठं ॥
गहपतिगहवतिणिं वा, अविभत्तसुतो आदिट्ठकणा वा ॥

अप्रभूणामनुज्ञापने दोषा दिवा रात्रौ वा निष्काशनं तत्र जनगर्हाविनाशादयो दोषा न केवलं निष्काशनमदत्तादानं च । यस्मादप्रभूणामनुज्ञापने एते दोषास्तस्मात्प्रभुं प्रभुसंदिष्टं वाऽनुज्ञापयेत्। तमेव दर्शयति (गहपतित्ति) वाशब्दाद्दाविभक्तभ्रातृपितृव्यादिर्वा प्रभवति । अथवा या दुहिता विधवा निसृष्टा गृहे प्रमाणीकृता सापि प्रभवति । यदि वा यः स्वयं दातुं प्रभुणा आदिष्टः सोऽपि प्रभवति । एताननुज्ञापयेत् । व्य० ७ उ० ।

( ७ )अवगृहीते चावग्रहे उत्तरकालविधिः साधर्मिकागमने उपनिमन्त्रणम् ।

से किं पुण तत्थोग्गहंसि एवोग्गहियंसि जे तत्थ साहम्मिया संभोतिय समणुण्णा उवागच्छिज्जा जे तेण सयमेसियाए असणे वा ४ तेए ते साहम्मिया संभोइया समणुण्णा उवणिमंतेज्जा णो चेव णं परवडियाए उगिज्झिय उगिरिहय उवणिमंतेज्जा से आगंतारेसु वा ४ जाव से किं पुण तत्थोग्गहंसि एवोग्गहियंसि जे तत्थ साहम्मिया अण्णसंभोइया समणुण्णा उवागच्छेज्जा । जे तेणं संयमासियए पीढे वा फलए वा सेज्जासंथारए वा तेण ते साहम्मिए अण्णसंभोइए समणुण्णे उवणिमंतेज्जा णो चेव णं परिवडियाए उगिज्झिय उगिरिहय उवणिमंतेज्जा से आगंतारेसु वा ४ जाव ।

(से इत्यादि) तदेवमवगृहीतेऽवग्रहे स साधुः किं पुनः कुर्यादिति दर्शयति। ये तत्र केचन प्राघूर्णकाः साधर्म्मिकाः साधवः सभोगिकाः एकसामाचारीप्रविष्टाः समनोज्ञा उद्युक्तविहारिणः उपागच्छेयुरतिवयसो भवेयुस्ते चैवंभूता ये तेनैव साधुना परलोकार्थिना स्वयमेषितव्यास्तं च स्वयमेवागता भवेयुस्तांश्चाशनादिना स्वयमाहृतेन स साधुरुपनिमन्त्रयेद्यथा गृहीत यूयमेतन्मयानीतमशनादिकं क्रियतां ममानुग्रह इत्येवमुपनिमन्त्र-

यन्नचैव ( पज्याडियाएत्ति ) परानीत यदशनादि तत् प्रग्राम-नगृह्याधिन्य नोपानिमन्त्रयेत् । किं तर्हि स्वयमेवानीतेन निमन्त्र-येदिति । तथा ( सेज्याादि ) पूर्वसूत्रवत्सर्वं नवरमसांभो-गिकान् पीठफलकादिनोपनिमन्त्रयेद्यस्तेषां तदेव पीठकादि स्वतोग्य नानिनार्दिति ।

( सूत्रम् ) अत्थि या इत्था केइ उवस्स य परियावन्नए यअचित्ते परिहरणे रिह सव्वे व उग्गहस्स पुव्वाणुण्ण-वणा चिट्ठइ अहालंदमवि उग्गहो ॥

अस्य सम्बन्धमाह ।

असहीणेसु वि साहम्मि, तेसुट्ठितिएसु उग्गहो वुत्तो ।
अयमपरो आरंभो, गिहीवि जहि उग्गहे होइ ॥

अत्रार्थीनेष्वपि क्षेत्रान्तर गतेषु साधर्मिकेषु स्थेयोऽवग्रह-प्रोक्त । अय पुनरपर प्रक्रनसूत्रस्यारम्भो गृहिभिर्विजढ परि-त्यक्तो य प्रतिश्रयस्तद्विषयेऽवग्रहो भवति । अनेन सम्बन्धेना-यानस्यास्य व्याख्या । अस्ति चात्रानन्तरस्तत्र प्रस्तुते प्रतिश्रये किंचिदाहारार्थ भक्तादिकं गृहस्थसत्कमुपाश्रये पर्यापन्नं वि-स्मृत परित्यक्तमुपाश्रयपर्यापन्नम् अचित्त प्रासुक परिहर-णार्थं साधूना परिभोक्तु योग्य तत्र सैवावग्रहस्य पूर्वानुज्ञा-पना तिष्ठति तत्रोपाश्रये तिष्ठद्भि पूर्वमेवानुजानीत प्रायोग्यमि-त्येव यदवग्रहोऽनुज्ञापित सैवानुज्ञापना पश्चादुपाश्रयं पर्या-पन्नग्रहणेऽप्यवतिष्ठते न पुनरभिनवमनुज्ञापतं कर्त्तव्यमिति भाव । कियन्तं कालमित्याह । यथालन्दमपि मध्यमलन्दमा-त्रमपि काल यावदवग्रह इति सूत्रार्थ ।

अथामुमेव सूत्रार्थं भाष्यकृत्प्रतिपादयति ।

आहारो उवही वा, आहारो भुंजणारिहे कज्जा ।
दुविहपरिहारअरिहो, उवही वि य कोयि णावि कोयि ॥

इह सूत्रे किंचिद्ग्रहणं न आहार उपधिर्वा गृहीत परिहर-णार्हग्रहणेन तु सम्प्रवरपरिभोगार्हो । तत्राहार कश्चिद्भोज-नार्हो भवति कश्चित्तु न भवतीति । उपधिरपि कश्चिद्द्विविध-परिहारसमाधारणार्हपरिभोगरूपस्यार्हो भवति कश्चिन्न न भवति । तथाहि ।

संसत्तासवपिसियं, आहारो अणुवभोज्ज इच्चादि ।
सुसिरतिणवक्कडयो, परिहारे अणरिहो उवही ॥

ससक्त द्वीन्द्रियादिजन्तुमिश्रं भक्तपानम् । आसवो मद्यम् पिशित पुद्गलम् । इत्यादिक आहारो अनुपभोज्य । साधूनामुप-भोक्तुमयोग्य शुषिरतृणवल्कलादिक उपधिरपि परिहारस्या-नर्हो मन्तव्या । अर्थादापन्न ओदनादिक आहारो वस्त्रादि-कश्चोपधि परिभोगार्ह इति ।

वासेन अणुन्नवणा. पायोग्गे होइ तप्पढमयाए ।
सो चेव उग्गहो खलु, चिट्ठइ कालो उ छंदक्खा ॥

साधुभि प्रतिश्रये तिष्ठद्भिस्तत्प्रथमतया या प्रायोग्यस्यानु-ज्ञापना कृता भवति सा पत्योपाश्रयपर्यापन्नस्यापि ग्रहणे अव-गृह्णस्तिष्ठति । न पुनस्तया ऽनुज्ञाप्यते । या तु सूत्रे लन्दाख्या लन्द इत्यभिधान स कालः प्रतिपत्तव्य इति कृता सूत्रव्या-ख्या भाष्यकृता ।

सम्प्रति निर्युक्तिविस्तर ।

पुव्वमहा दुविहं, दव्वे आहार जाव अवरण्हे ।
उवस्सिम ततियदिवसे, इतरे गाहियम्मि जयणाए ॥

पूर्व प्रथम निरूप्य यत्र कृपना समन्तात् अर्थमन्त्रालोकयन्तो द्विविधे द्रव्ये उपयोग प्रयच्छन्ति । द्विविध द्रव्य नाम आहा-र उपधिश्च । तत्रापूपसक्तादयो गृहिणो विस्मृत्य परित्यज्य वा गता भवेयु । तेषु गतेषु यावदपराह्णो भवति तावदाहारं न गृह्णन्ति परतस्तु गृह्णन्ति उपधेस्तु तृतीये दिवसे गते ग्रहणं कुर्वन्ति इतरन्नाम अर्थजातं तत्कदाचिदगारिणां विस्मृतं भवे-त् तदेकान्तं निरूपणीयम् ( गहियंतित्ति ) यदि धनिकादि-भिर्गृहीतं तथा प्रातिवासिकैर्नष्टो भवेत्तथा तत्रापि यत्तेषां वि-स्मृत तद्यथोक्तविधिना गृह्णन्ति । एष निर्युक्तिगाथासमासार्थ । सांप्रतमेनामेव विवृणोति ॥

पायं सायं मज्झे-न्ने यउसभा उवस्सयसमंता ।
एहिंति अपिहाए, लहुगो वेसाइमे तत्थ ॥

प्रात प्रभाते सायं सन्ध्यायां मध्याह्ने च कालत्रये वृषभा उपा-श्रयं समन्तात् प्रत्युपेक्षन्ते अप्रत्युपेक्षमाणाना लघुको मासम् । दोषाश्चेमे । तत्राप्रत्युपेक्षणे भवन्ति ॥

साहम्मियअण्णधाम्मिय, गारच्छिणिक्खिवणवोसिरणज्जु ।
गिण्हणकड्डणववहार, पच्छकड्डुड्डाहणिव्विसए ॥

सधर्मिणी संयमी अन्यधर्मिणी परतीर्थिका अगारस्थी अविरतिका एता प्रच्छिन्ना सत्यः साधुप्रतिश्रयसमीपे अर्थ-जातस्य निक्षेपणं कुर्युः । यद्वा बालकं व्युत्सृज्य गच्छेयु । परि षहपराजितो वा कोऽपि संयतो रज्जुबन्धनेन म्रियेत । तत्र राज-पुरुषैर्ज्ञाते सति ग्रहणाकर्षणव्यवहारः पश्चात्कृतोड्डाहनिर्विष याज्ञापनादयो दोषा भवन्ति । इदमेव भावयति ॥

नोदणकुविय साहम्मिणि, परतित्थिणिगीउदिट्ठिरागेण ।
अणुकंपजहिच्छदा-रिज्जवालं अगारी वा ॥

सधर्मिणी काचिच्च खण्डितशीला गर्भवती उड्डाहोऽयमि-ति मन्यमाने साधुभिर्गाढं नितरां रजोहरणादिलिङ्गं बहि-कृत्वा भवेत् तत सा मदीयलिङ्गमपहृतमिति मन्यमाना तयानो-दनया कुपिता सती स्वयमपत्यजातं तदाश्रयसमीपे परि-त्यजेत् परतीर्थिनी तु दृष्टिरागेण अस्माकमपयश प्रवाहो भविष्यतीति कृत्वा संयतानामुपाश्रयसन्निधौ बालकं व्युत्सृजेत् पर लोकाश्चिन्तयिष्यति एतैरेवैतज्जनितमिति । अथवा अगारी काचिदनुकम्पया यदृच्छया बालक तत्र प्रक्षिपेत् तत्रानुकम्प-या नाम दुष्कालादौ काचिद्दुस्था येपिज्जीवनाय स्वापत्यं तदाश्रयान्तिके त्यजति यरमेते अनुकम्पापरायणा अमुं बाल-क शय्यातरस्यापरस्य वा ईश्वरस्य गृहे निक्षेप्स्यन्तीति यदृच्छया अभिसन्धिमन्तरेणैवमेव व्युत्सृजति ॥

हाउं व तरउं वा, अचयंता तेणगा भिवत्थादी ।
एएहिं वि य जणियं, नहिं व दोसा उजुणदिट्ठा ॥

स्तेनकादयो वस्त्रादिक हर्तुं वा तरीतु वा ( अचयता ) अशक्नुवन्त साधूनां प्रतिश्रयसन्निधौ परित्यजेयु । उपलक्षण-मिद तेनान्यतीर्थिकादय प्रत्यनीकतया हिरण्यसुवर्णादिकम-पहृत्य तत्र निक्षिपेयु ततो यदि वृषभा त्रिसन्ध्य च नाति प्रत्युपेक्षन्ते तदा लोको ब्रूयात् एतैरेवैतदपत्यजातरू जनित सुवर्णादिमत्र प्रक्षिप्तमिति । यस्तु देहे द्रोहो द्रव्यार्थवैरादिक-रणव्यपरोपितस्य पुरुषादे शरीरमित्यर्थस्तत्र प्रातिचरणा कर्तव्या । सम्यक् प्रतिचर्य यदि कोऽपि न पश्यति तदा परि-ष्ठापनीयमिति दृश्यम् । नच परावग्राहपरकीयनिवेशनादौ (निवेशर्थान परित्यजन्ति । किंतु परेरपि गृहन्ति नच नाम इति

अप्पडिचरपडिचरणं, दोसा य गुणा य वसिया एए ।
एतेण सुत्तं न कतं, सुत्तनिवातो इमो तत्थ ॥

अप्रतिचरणप्रतिचरणयोः प्रतिश्रयस्याप्रत्युपेक्षणाप्रत्युपेक्षणयोर्यथाक्रममेते दोषा गुणाश्च वर्णिताः । परमेतेन पर्यन्तसूत्रं न कृतं न विहितं किंतु सामाचारीप्रकाशनार्थं सर्वमेतद्व्याख्यातमिति । सूत्रनिपातः पुनरयं तत्रेति सूत्रनिपातस्यैवोपदर्शनार्थः ॥

आगंतुगागारट्ठियाणं, कज्जे आदेसमादिणा कोइ ।
वसिउं विस्समिउं वा, उज्झितुगया अणाभोगा ॥

इह यत्रागारिण आगत्यागत्य तिष्ठन्ति तदागन्तुकागारम् । तत्र कार्ये कारणविशेषत स्थितानां प्रकृतसूत्रमवतरति कथमित्याह । आदेशप्राघूर्णकास्तत्र केचित्पथिका आगन्तुकागारे रजन्यां वासमुपगता दिवा वा भोजनार्थं विश्रामं कृतवन्तस्तत उषित्वा विश्रम्य वा किंचित् द्रव्यजातमनाभोगमानिच्छन्तो गताः । किंतु स त्यजेदित्याह ।

समिइसत्तुसागरस-सिणेहगुडलोणमादि आहारो ।
ओहे अवग्गहम्मि य, होउवही अट्ठजातं वा ॥

इहाहार उपधिश्चेति द्विविधं द्रव्यं भवति । तत्राहारः सभितिसक्तुशाकरसस्नेहगुडलवणादिकः । समितिः कणिक्का शेषं प्रतीतम् । उपधिस्तु द्विधा भवति ओघ उपधिः उपग्रहे चा । ओघोपधिरुपग्रहोपधिश्चेत्यर्थः । अर्थजातं द्रव्यं यद्वा । परित्यक्तं भवेत् तत्राहारोपधिविषयं तावद्विधिमाह ।

काऊण स सागरिए, पडियरणा हारजात अवरण्हे ।
एमेव य उवहिस्सवि, सुण्णे दोसा य गहणाइ ॥

आहारसागारिके प्रदेशे कृत्वा तावत्प्रतिचरणं कुर्वन्ति यावदपराह्णः संजायते । एवमेवोपधेरपि शून्ये भूभागे स स्थापनीयः अन्तिकं वा अपह्रतमेव तत्र जनदृष्टे मतिदोषा ग्रहणकर्षणादयो भवेयु ॥

अहवा कुणेज्ज कोयि, उग्गामगवेरियं च हंतूणं ।
देहाण महत्थी वा, परिसहपराजितो वा वि ॥

अथवा कश्चिदुद्भ्रामकं पारदारिकं वैरिणं वा हत्वा प्रत्यनीकतया तत्र प्रक्षिपेत् । स्त्री वा काचिदत्यन्तदुःखिता वैहायसमरणमुपाश्रयसमीपे कुर्यात् । परीषहपराजितो वा सयत एव कोऽपि रज्जुबन्धनेन म्रियेत " वरं प्रदग्धुं ज्वलितं हुताशनं नवापि भग्नं चिरसंचितं व्रतं " मिति कृत्वा ।

दवियट्ठ संखडे वा, पुरिसत्था मेहुणो विसेसो वि ।
एमेय समागम्मि, चित्तं काए गिण्हणादीणि ॥

कोऽपि कश्चित्पुरुषः द्रव्यार्थं जातनिमित्तं यद्वा असखडं कलहो वैरमित्यर्थः तेन वा कंचिद् व्यपरोप्य सयतोपाश्रयसमीपे परित्यजेत् एवं स्त्रियमपि कांचिद्विनाश्य प्रक्षिपेत् । नवरं मैथुने विशेषः । किमुक्तं भवति सपत्नी चतुर्थव्रतविघ्नकारिणी मत्वा अपरोऽप्यत्र तत्र व्युत्सृजेत् अनायासप्रयासा भूयादिति कृत्वा । एवमेव श्रमणेऽपि गन्तव्यम् । तमपि कश्चिदुपकरणद्रव्यार्थं वैरेण वा मारयेदित्यर्थः । तत्र साधून् शङ्केरन् ततो ग्रहणाकर्षणादीनि पदानि प्राप्नुवन्ति यत एवमतः ।

कालम्मि पहुप्पंते, वचरमादी ठवितु पडियरणं ।
रक्खंति साणमादी, उग्गजादिहुमग्गेहिं ॥

त्रिसध्यं वृषभैः सम ततो वसतिः प्रत्युपेक्षणीया । प्रत्युपेक्षितायां च यदि किञ्चित् कल्पस्यकादिकं पश्यति कालश्च पूर्यते ततश्चत्वरादिषु स्थापयित्वा प्रतिचरणं कुर्वाण प्रच्छन्नावकाशस्थिताः श्वानमार्जारादिना विनाश्यमानाञ्चत् रक्षन्ति यावत्कल्पस्यकादिकमन्यैर्दृष्टमिति ।

वोलं पभायकाले, करिंति जणजाणणट्ठयावसमा ।
पडियरणा पुण देहे, परग्गहेणेव उज्झंति ॥

यत्तत्र हिरण्यसुवर्णादि केनचित्परित्यक्तं भवति तत्प्रभातकाल एव प्रत्युपेक्षमाणाः सम्यक् निरीक्ष्य वृषभा जनज्ञापनार्थं वोलं कुर्वन्ति । यथा केनचित्पापिनेदं हिरण्यादिकमस्मदपयशोऽर्थनिहितम् पूर्वाशैक्षादयश्च द्विविधस्यापि द्रव्यस्य द्वारकर्तव्याः । किं कारणमाह ते पराह्णं यावत्प्रतिचरन्तीत्युच्यते ।

वोच्छिज्जई ममत्तं, परेण तेसिं च तेण जति कज्जं ।
गिण्हंता वि विमुक्का, जातिवि ण वोच्छिज्जती भावो ॥

अपराह्णात्परतस्तेषां पथिकानामाहारममत्वं व्यवच्छिद्यते । तेषां साधूनां च यदि तेनाहारेण कार्यं भवति ततो गृह्णतोऽपि विमुक्ताः । यद्यपि च भावस्तेषां तदुपरि न व्यवच्छिद्यते तथाप्यपराह्णमयादूर्ध्वं गृह्णतां न कश्चिद् दोषः । उपधिं तु तृतीयदिवसे पूर्णे गृह्णन्ति एतावता तद्विषयममत्वस्य व्यवच्छेदात् ।

अव्वोच्छिन्ने भावे, विरागयाणं पि तं पयंसिंति ।
पण्णवणमणिच्छंते, कप्पं तु करेंति परिभुत्ते ॥

अथ तेषामद्यापि भावो न व्यवच्छिद्यते ततोऽव्यवच्छिन्ने भावे तेषां स्ववस्त्राणि गवेषयतां चिरादायातानामपि तमुपधिं तु दर्शयन्ति । एवं च तेषां प्रज्ञापनां कुर्वन्ति । अस्माभिरेतानि वस्त्राणि स्वीकृतानि ततोऽनुग्रहं मन्यमानाः साधूनामनुजानीथ एवमुक्ते यद्यनुजानते ततः सुन्दरम् । अथ नेच्छन्त्यनुज्ञातुं तानि वस्त्राणि परिभुक्तानि ततः आत्मव्रतरक्षणार्थं कल्पं कुर्वन्ति ।

अथार्थजातविषयविधिमाह ।

पत्तो नियत्तपट्ठा, करीदि दापंति पत्थणां एधे ।
दरिसिंसवि अपिच्छंतो, को पुच्छति केण ठवियं च ॥

इहोपाश्रये यद्यर्थजातं पतितमुपलभ्यते तदा तदप्यल्पसागारिके स्थाप्यते । शैक्षकादयश्च दूरे कर्तव्याः । प्रत्यवविवृतैश्च भूयस्तत्रैव समायातैर्गृहिभिः पृष्टाः कुत्रास्माकं तदर्थजातमिति ततः करादिना हस्ताङ्गुल्यादिसङ्ज्ञया दर्शयन्ति । अत्र प्रदेशे एनं प्रेक्षध्वम् । अथ ते न पश्यन्ति ततः स्वयमेव तदर्थजातं दर्शयन्ति । यदि ते पृच्छेयुः केनेदमत्र स्थापितं ततो वक्तव्यं के पृच्छन्ति केन स्थापितं चेति । एवं तावदुपाश्रयपर्यापन्ने आहारादौ विधिरुक्तः ।

अथ शय्यातरादिगृहपर्यापन्ने विधिमाह ।

भरुमाहड्डनयणट्ठे, गहियागहिएसु सिज्झादी ।
गेण्हंति असंचइओ, संचइयं वा असंथरणे ॥

भटा राजपुरुषास्तदादिभयात् नष्टे शय्यातरादौ अथवा शय्यिकाः प्रातिवेस्मिकास्तैर्गृहीतुमिर्धनिकैरागृहीता ऋणं दापयितुमारब्धास्ततस्तेषु शय्यिकादिषु नष्टेषु तत्र य आहारोऽसंचयिको दधिघृतादिस्त गृह्णन्ति । अथ असंस्तरणे तत्र संचयिकमप्युपध्यादिकं गृह्णन्ति ।

सो विक्खेतरणट्ठे, एमेव य होइ उवहिगहणं पि ।
पुव्वागएसु कहणं, भुजंति दिसो व मट्ठेवि ॥

प्रातिवेश्मिकादिसापेक्षो वा नष्टो भवेत् इतरो वा निरपेक्षः । सापेक्षो नाम भूयस्तत्रैवागन्तुकास्तद्विपरीतो निरपेक्षस्त्वोभयस्मिन्नपि नष्टे एवमेवाहारवदुपधेरपि ग्रहणं कुर्वन्ति ।

सापेक्षनष्टेषु च प्रत्यागतेषु कथयन्ति कथिते च दत्तमनुज्ञातं सत्परिभुञ्जन्ति । ये तु निरपेक्षनष्टास्तेषु निर्विवादमेव परिभुञ्जते । एव ( अट्ठेवित्ति ) अर्थजातेऽपि ग्रहण मन्तव्यम् ।

अथैत्राक्षेपरिहारावाह ।

**पाउग्गमणुण्णवियं, जति मण्णसि एवमतिपसंगोत्ति ।**

**आउरत्तेसज्जत्रमा, तह संजमसाहगं जं तु ॥**

यद्येव मन्यसे प्रायोग्यं साधूनामुचितं यत्तदेव साधुनामनुज्ञापित नेतरत्प्रायोग्यमर्थजातादि तत एवमननुज्ञापितमप्यर्थजातं गृह्णतामतिप्रसङ्गो भवति तत्राप्यभिधीयते नैकान्तेनार्यजातमप्रायोग्य यत आतुरो रोगी तस्य भेषजोपमा कर्त्तव्या । यथा पुनरस्याभिनवोदीर्णे ज्वरादौ यदौषध प्रतिषिध्यते तदेवान्यस्यामवस्थायां तस्यैवानुज्ञाप्यते एवमर्थजातमपि पुष्टकारणाभावे प्रतिषिद्धम् । यत्तु दुर्भिक्षादौ संयमस्य साधक तदनुज्ञातमेव । वृ० ३ उ० ।

किंच ।

**से किं पुण तत्थोग्गहंसि पवोग्गहियंसि जे तत्थ गाहावईए वा गाहावइपुत्ताए वा सूती वा पिप्पलए वा कण्णसोहणए वा णहच्छेदणए वा तं अप्पणो एगस्स अट्ठाए पडिहारियं जाइत्ता णो अण्णमण्णस्स देज्ज वा अणुपदेज्ज वा सयं करणिज्जं तिकट्टु सेत्तमादाए तत्थ गच्छेज्जा२ पुव्वामेव उत्ताणए हत्थे कट्टु भूमीए वा ठवेत्ता इमं खलु इमं खलु इमं खलु त्ति आलोएज्जा णो चेव णं सयं पाणिणा परपाणिंसि पच्चप्पिणेज्जा ॥**

( ८ ) स सागारिकानुदकस्त्रीकमुपाश्रयमवग्रहं नानुज्ञापयेत्, यत्र कर्मकरा आक्रोशन्ति यावत्स्नान्ति तत्रापि नावग्रहः ।

**से भिक्खू वा भिक्खुणी वा सेज्जं पुण उग्गहं जाणेज्जा अणंतरहियाए पुढवीए ससणिद्धाए पुढवीए जाव संताणाए तहप्पगारं उग्गहं णो उगिण्हेज्जा २ से भिक्खू वा भिक्खुणी वा सेज्जं पुण उग्गहं जाणेज्जा थूणंसि वा ४ तहप्पगारे अंतलिक्खजाए दुब्बद्धे जाव णो उग्गहं उगिण्हेज्जा २ से भिक्खू वा २ सेज्जं पुण उग्गहं जाणेज्जा कुलियंसि वा जाव णो उगिण्हेज्ज वा से भिक्खू वा २ खंधंसि वा अण्णयरे वा तहप्पगारे जाव णो उगिण्हेज्ज वा २ सेज्जं पुण उग्गहं जाणेज्जाससागारियं सगणियं सउदयं सइत्थि सखुड्डं सपसुसभत्तपाणं णो अण्णस्स णिक्खमणपवेस जाव धम्माणुजोगचिंताए सेवं णच्चा तहप्पगारे उवस्सए ससागारिए जाव सक्खुड्डपसुभत्तपाणे णो उग्गहं उगिण्हेज्ज वा २ से भिक्खू वा २ सेज्जं पुण उग्गहं जाणेज्जा गाहावइकुलस्स मज्झं मज्झेण गंतुं पंथे पडिबद्धं वा णो अण्णस्स जाव से एवं णच्चा तहप्पगारे उवस्सए णो उग्गहं उगिण्हेज्ज वा २ से भिक्खू वा २ सेज्जं पुण उग्गहं जाणेज्जा । इह खलु गाहावई वा जाव कम्मकरीओ वा अण्णमण्णं अक्कोसंति वा तहेव तेल्लादिसिणाणादिसीओदगवियडादि णगिणाइ वि य जहा सेज्जाए आलावगा ।**

**णवरं उग्गहवत्तव्वता । से भिक्खू वा २ सेज्जं पुण उग्गहं जाणेज्जा आइण्णं संलेक्खाणो अण्णस्स जाव चिन्ताए तहप्पगारे उवस्सए णो उग्गहं उगिण्हेज्ज जाव एयं खलु तस्स भिक्खुस्स वा २ ससामिग्गयं उग्गहपडिमाए । पढमो उद्देसओ सम्मत्तो ॥**

( ९ ) ब्राह्मणाद्यवगृहीतेऽवग्रहः ।

**से आगंतारेसु वा ३ अणुवीयि उग्गहं जाएज्जा जे तत्थ ईसरे समाहिट्ठाए ते उग्गहं अणुण्णवित्ता कामं खलु आउसो अहालंदं अहापरिण्णायं वसामो जाव आउसो जाव आउसंतस्स उग्गहे जाव साहम्मियाए ताव उग्गहं उगिण्हिस्सामो तेण परं विहरिस्सामो । से किं पुण तत्थ उग्गहंसि पवोग्गहियंसि जे तत्थ समणाण वा माहणाण वा दंडए वा छत्तए वा जाव चम्मच्छेदणए वा तणो अंतोहिंतो बाहिं णीणेज्जा बाहियाओ णो अंतोपवेसेज्जा णो सुत्तं वा णं पडिबोहेज्जा णो तेसिं किंचि वि अप्पत्तियं पडिणीयं करेज्जा ॥**

स भिक्षुरागन्तागारादावपरब्राह्मणाद्युपभोगसामान्ये कारणिकः सन्नीश्वरादिकं पूर्वक्रमेणावग्रहं याचेत । तस्मिंश्चावगृहीते अवग्रहे यत्तत्र श्रमणब्राह्मणादीनां छत्राद्युपकरणजात भवेत्तत्रैवाभ्यन्तरतो बहिर्निष्कामयेन्नापि ततोऽभ्यन्तरं प्रवेशयेन्नापि ब्राह्मणादिक सुप्त प्रतिबोधयेन्नच तेषां ( अप्पतियति ) मनसः पीडां कुर्यात्तथा प्रत्यनीकतां प्रतिकूलतां न विदध्यादिति । आचा० २ श्रु० ७ अ० २ उ० ।

( १० ) पथ्यप्यवग्रहोऽनुज्ञापयितव्यः ।

अणुन्नवेयन्तो अस्य संबन्धमाह ।

**उग्गहहुम्मि दिट्ठे, कहियं पुण सो अणुण्णवेयव्वो ।**

**अद्धाणादीएसु वि, संभावणसुत्तसंबंधो ॥**

अवग्रहस्य प्रभोर्दृष्टे क्व पुनः सोऽवग्रहोऽनुज्ञापयितव्यः इति चिन्तायामधिकृतसूत्रेणोच्यते पथ्यप्यवग्रहोऽनुज्ञापयितव्यः । अपि शब्दः संभावनायामास्तां ग्रामे नगरे वा किंतु संभावनायामध्वन्यपि । तथाचाह अध्वादिकेष्वप्यनुज्ञापयितव्यः । एष संभावनासूत्रस्य संबंध । संप्रति भाष्यविस्तरः ।

**अद्धाण पुव्वभणियं, सागारियमग्गणा इहं सुत्ते ।**

**मग्गए परिग्गहिए सा, गारियसेसभयणा य ॥**

अध्वानि यद्वक्तव्यं तत्सर्वं कल्पाध्ययने भणितमितीह पुन सूत्रेऽध्वान व्रजतां सागारिकमार्गणा शय्यातरमार्गणा क्रियते तथा केनचित्परिगृहीते वृक्षादौ सति शेषसागारिके भजनाय विस्तारन्ति तर्हि यावद्भिस्तद्गृहीतवृक्षादि तावत शय्यातरान् करोति असंस्तरणे एकमपि शय्यातरमिति भावार्थः ।

संप्रति पूर्वार्द्धव्याख्यानमाह ।

**दिणे दिणे जस्स उवाहियंती, जं भी हवंते व पमाजियं वा ।**

**सागारिये होंति स एगए व, रीढाए मुत्तु जहिं वसंति ॥**

दिने दिने यस्य भर्ग गन्त्रीं वहन्तीमुपजीयन्ते आश्रयन्ति साधवो यदि वा पमालिका नाम यत्र मध्याह्ने साधर्मिकास्तिष्ठन्ति यत्र वा वसन्ति तत्र वस्त्रादिमयं कुवलयन कुर्वन्ति तां वा यस्य दिने उपजीयन्ते तदा स एवैक सागारिकः

शय्यातरो भवति। रीढागतेषु तु अयहज्जया यत्र तत्र गतेषु साधुषु यत्र रात्रौ वसन्ति तद्दिवस स शय्यातरः। इयमत्र भावना। यस्य न नियमेन भक्तं वा पानादिकं वा प्रतिदिनमुपढौक्यन्ते किंतु यदृच्छया कस्मिन् दिने कस्यापि तदा यां यां रात्रिं यस्य भक्ताद्यादिकमुपढौक्यन्ते तस्मिन् २ दिने स शय्यातरः

वीसमंता वि छायाए, जे तहिं पढमंतिया।
पुच्छिउं तेवि चिट्ठेय, पंतिए किमु जहिं वसो ॥

विश्राम्यन्तोऽपि छायायां ये तत्र पथिका प्रथम स्थितास्तिष्ठन्ति तानपि दृष्ट्वा तत्र तिष्ठेत नान्यथा किं पुनर्यत्र च साधुस्तत्र सुतरां ते अनुज्ञापयितव्यास्ततो भवन्ति ते शय्यातराः संप्रति प गए परिग्गहिए सागारिय सेसए भयणा" इति व्याख्यानयन्नाह

वसतिं वा जहिं रत्तिं, एगेणेगपरिग्गहे।
ताचिए उत्तरे कुज्जा, वा वंते गमसंघगे ॥

यत्र वृक्षस्याधस्तादन्यत्र वा एकस्य वा परिग्रहे अनेकस्य वा परिग्रहे अनेकस्य वा पथिकस्य संघस्तस्य परिग्रहे साधवो रात्रौ वसन्ति तर्हि सर्वानपि तान् शय्यातरान् कुर्युः। अथ न संस्तरन्ति तदात्ममध्ये एक शय्यातरं स्थापयति। शेषान् निर्विशन्ति। एषा शेषे सागारिके भजना। व्य० ७ उ० ४ उ०।

आम्रेक्षुवनादावग्रहे आम्रफलादिभोजनं लशुनवनादावग्रहश्च। तत्र आम्रवनादौ अवग्रहे आम्रफलभोजनम्।

से भिक्खू वा भिक्खुणी वा अभिकंखेज्जा अंबवणं उवागच्छित्तए जे तत्थ ईसरे जे तत्थ समाहिट्ठाए ते उग्गहं अणुजाणावेज्जा कामं खलु जाव विहरिस्सामो से किं पुण तत्थोग्गहंसि वा एवोग्गहियंसि वा भिक्खू वा भिक्खुणी वा इच्छेज्जा अंबं भोत्तए वा सेज्जं पुण अंबं जाणेज्जा स अंडं जाव ससंताणं तहप्पगारं अंबं अफासुयं जाव णो पडिगाहेज्जा। से भिक्खू वा २ सेज्जं पुण अंबं जाणेज्जा अप्पंडं जाव संताणगं अतिरिच्छच्छिन्नं अवोच्छिन्नं अफासुयं जाव णो पडिगाहेज्जा। से भिक्खू वा २ सेज्जं पुण अंबं जाणेज्जा अप्पंडं जाव संताणगं तिरिच्छच्छिन्नं वोच्छिन्नं फासुयं जाव पडिगाहेज्जा। से भिक्खू वा भिक्खुणी वा अभिकंखेज्जा अंबभित्तगं वा, अंबपेसियं वा, अंबचोयगं वा, अंबसालगं वा, अंबदालगं वा, भोत्तए वा पायए वा सेज्जं पुण जाणेज्जा अंबभित्तगं जाव अंबदालगं वा स अंडं जाव संताणगं अफासुयं जाव णो पडिगाहेज्जा। से भिक्खू वा भिक्खुणी वा सेज्जं पुण जाणेज्जा अंबभित्तगं वा अप्पंडं वा जाव संताणगं अतिरिच्छच्छिन्नं वा अफासुयं जाव णो पडिगाहेज्जा। से भिक्खू वा भिक्खुणी वा सेज्जं पुण जाणेज्जा अंबभित्तगं वा अप्पंडं जाव संताणगं तिरिच्छच्छिन्नं वोच्छिन्नं फासुयं जाव पडिगाहेज्जा ॥

स भिक्षुः कदाचिदाम्रवनेऽवग्रहमीश्वरादिकं याचेत तत्रस्थश्च सति कारणे आम्रं भोक्तुमिच्छेत्तच्चाम्रं साण्डं ससन्तानकमप्रासुकमिति च मत्वा न प्रतिगृह्णीयादिति। किंच (सेत्यादि) स भिक्षुर्यत्पुनराम्रमल्पाण्डमल्पसन्तानकं वा जानीयात्किन्त्वतिरश्चीनच्छिन्नं तिरश्चीनमपाटितम्। तथा अव्यवच्छिन्नं न खण्डितं यावदप्रासुकं न प्रतिगृह्णीयादिति। तथा (सेत्यादि) स भिक्षुरल्पाण्डमल्पसन्तानकं तिरश्चीनच्छिन्नं तथा व्यवच्छिन्नं यावत्प्रासुकं कारणे सति गृह्णीयादिति। एवमाम्रावयव एव सबन्धिसूत्रत्रयमपि नेयमिति। नवरम् (अंबभित्तय) आम्रार्द्धमाम्रपेसी आम्रफाली (अंबचोयगति) आम्रच्छल्ली सालगं रसं (दालगत्ति) आम्रश्लक्ष्णखण्डानीति ॥

इक्षुवनादावग्रहः

से भिक्खू वा भिक्खुणी वा अभिकंखेज्जा उच्छुवणं उवागच्छित्तए जे तत्थ ईसरे जाव उग्गहंसि अह भिक्खू इच्छेज्जा उच्छुं भोत्तए वा पायए वा सेज्जं उच्छुं जाणेज्जा से अंडं जाव णो पडिगाहेज्जा अतिरिच्छच्छिन्नं तहेव तिरिच्छच्छिन्नं तहेव से भिक्खू वा भिक्खुणी वा सेज्जं पुण अभिकंखेज्जा अंतरुच्छुयं वा उच्छुगंडियं वा उच्छुचोयगं वा उच्छुसालगं वा उच्छुडालगं वा। भोत्तए वा पायए वा सेज्जं पुण जाणेज्जा। अंतरुच्छुयं वा जाव डालगं वा स अंडं जाव णो पडिगाहेज्जा वा से भिक्खू वा भिक्खुणी वा सेज्जं पुण जाणेज्जा अंतरुच्छुयं वा जाव डालगं वा अप्पंडं जाव पडिगाहेज्जा अतिरिच्छच्छिन्नं तिरिच्छच्छिन्नं तहेव पडिगाहेज्जा

लशुनवनादावग्रहः

से भिक्खू वा भिक्खुणी वा अभिकंखेज्जा लहसणवणं उवागच्छित्तए तहेव तिण्णिवि आलावगा णवरं लहसुण से भिक्खू वा भिक्खुणी वा अभिकंखेज्जा लहसुणं वा लहसुणकंदं वा लहसुणचोयगं वा लहसुणडालगं वा भोत्तए वा पायए वा सेज्जं पुण जाणेज्जा लहसुणं वा जाव लहसुणबीयं वा स अंडं जाव णो पडिगाहेज्जा। एवं अतिरिच्छच्छिन्ने वि तिरिच्छच्छिन्ने पडिगाहेज्जा ॥ आचा० २ श्रु० ७ अ० २ उ०।

सागारिकेण नाटकप्रदानेन स्वीकृतेऽवग्रह (सागारियशब्दे)

(१२) स्वामिना त्यक्ते अत्यक्ते वाऽवग्रहः।

(सूत्रम्) से वत्थूसु अव्वावडेसु अव्वोगडेसु अपरपरिग्गहेसु अमरपरिग्गहिएसु सव्वे व उग्गहस्स पुव्वाणुण्णवणा चिट्ठइ। अहालंदमवि उग्गहे ॥

अस्य सबन्धमाह।

गिहिउग्गह सामिजढे, इति एसो उग्गहो समक्खातो।
सामिजढे अजढे वा, अयमण्णो होइ आरंभो ॥

स्वामिना जढ परित्यक्तो यो गृहिणां संबन्धी अवग्रहस्तद्विषय इत्येषो ऽवग्रहोऽवग्रहविधि समाख्यात। अय पुनरन्यः प्रस्तुतसूत्रस्यारम्भ स्वामिना त्यक्ते अत्यक्ते वा अवग्रहो भवति अनेन सबन्धेनायातस्यास्य व्याख्या (से) तस्य निर्ग्रन्थस्य वास्तुषु गृहेषु कथम्भूतेषु अव्यापृतेषु शटितपतिततया व्यापारविरहितेषु अव्याकृतेषु दायादिभिरविभक्तेषु।

अथवा पुनीतकाले केनाप्यनुज्ञानमिति न ज्ञायते यत्तदव्याकृतं तेषु। तथा अपरपरिगृहीतेषु परैरन्यैरनधिष्ठितेषु अमरपरिगृहीतेषु देवैः स्वीकृतेषु सैवावग्रहः नअपूर्वानुज्ञापना तिष्ठति। यथा हंदमप्यवग्रहे किमुक्तं भवति यावन्तं कालं तानि वस्तूनि तेषां पूर्वस्वामिनामवग्रहे वर्तन्ते तावन्तं कालं सैव पूर्वानुज्ञापना तिष्ठति न पुनर्भूयोऽप्यवग्रहोऽनुज्ञापनीय इति सूत्रार्थः ।

सम्प्रति निर्युक्तिविस्तरः ॥

खित्तं वत्थुं सेतुं, केतुं साहारणं च पत्तेयं ।

अव्वोवरुमव्वो अरु-अपरममरपरिग्गहं चेव ॥

इह वास्तु सामान्यतो द्विधा क्षेत्रं वास्तु गृहं वास्तु च। क्षेत्रं द्विधा सेतु केतुगृहं च तत्र अरघट्टजलेन यत्सिच्यते तत्सेतु। वृष्टिजलेन तु यन्निष्पद्यते तत्केतु । गृहं पुनः खातोच्छ्रितोभयभेदात् त्रिधा वक्ष्यते। क्षेत्रं गृहं चोभयमपि द्विधा। साधारणं प्रत्येकं च। साधारणे बहूनाम्, सामान्यं प्रत्येकम् एकस्वामिनस्त्व पदानि पश्चार्द्धेन सग्रहीतुमाह। अव्यापृतमव्याकृतमपरपरिगृहीतममरपरिगृहीतं चेति। अथ साधारणपदं विवृणोति।

होइ य गणगोट्ठीणं, सेणिसाधारणं च दुगमाई ।

वत्थुम्मि एत्थ पगयं, उस्सियखाते तदुभयम्मि ॥

गणगोष्ठीनां श्रेणीनां वा ( दुगमाइत्ति ) द्वित्रिप्रभृतिसंख्याकानां द्व्यादिजनप्रतिबद्धानां वा यत्क्षेत्रं वास्तु वा सामान्यं तत्साधारणमुच्यते । अत्र तु वास्तुना अधिकारो न क्षेत्रेण तच्च वास्तु त्रिधा । उच्छ्रितं खातं तदुभयं च उच्छ्रितं प्रासादः । खातं भूमिगृहं तदुभयमधो भूमिगृहयुक्तः प्रासादः ।

अव्यापृतादिपदानि व्याचष्टे ।

साभियमियं न कीरइ, जहिगं अव्वावडं तयं वत्थू ।

अव्वोगडमविभत्तं, अणहिट्ठियमण्णपक्खेणं ॥

यत्र शटितं पतितं यत्र व्यापारः केनापि न क्रियते यत्तद्वास्तु अव्यापृतमुच्यते। अव्याकृतं नाम यद्दायादैरविभक्तम् अपरपरिगृहीतं नाम यदन्यपक्षेणान्यदीयवर्ज्जनेनाधिष्ठितं नास्य परिगृहीतं स्वयमेव तस्य शय्यातर इति भावः । इदानीमेव भावयति ।

अवरो सुव्वियसामी, जेण वि दिण्णं तु तप्पढमताए ।

अमरपरिग्गहियं पुण, हवालिया रुक्खमादी य ॥

अपरो नाम तत्प्रथमतया साधूनां यहत्त स एव तस्य स्वामी नान्यः कश्चित् । न परोऽपर इति समासाश्रयणात्। अमरपरिगृहीतं पुनर्देवकुलिका वा वृक्षादिकं वा वानमन्तराधिष्ठितं मन्तव्यम्। अथाव्याकृतादिषु दृष्टान्तानुपदर्शयति ।

अव्वावडं कुटुंबी, काणिक्कावोगडं य रायगिहे ।

अपरपरोमादेवउ, अमरमक्खे पि सायघरे ॥

अव्यापृते गृहे कुटुम्बिदृष्टान्तः । अव्याकृते तु राजगृहे ( काणिक्कत्ति ) पाषाणमयः पक्वेष्टका वा घटिकामद्दत्यश्च काणिका उच्यन्ते तन्मध्ये गृहकारापको वणिग् दृष्टान्तः । परपरिगृहीते ऽपि स एव दृष्टान्तः । अपरपरिगृहीते वृक्षपिशाचगृहं वा निदर्शनं भवतीति निर्युक्तिगाथासमासार्थः ।

अथैनामेव विवरीषुः कुटुम्बिदृष्टान्तमाह ।

नम्मवणं पासाए, संखडिजक्खसु मिणायकंठे य ।

अन्नं नावारेणं, कुणंति अव्वावडं तेणं ॥

कुटुम्बिणा सुंदरं घरं कारियं समत्तं नमि समए तत्थ अन्नो पविसामिमित्ति चिन्तेइ नवरं वाणमंतरेण रत्तिं भण्णति। जइ पविसिहिसि तो ते कुलं उत्थाएमि तेण कंठियाहिं फालिहिऊण मुक्कं वावारं वासे न करेइ। अन्नया साहूहिं आगएहिं सो कुटुम्बी अणुन्नविओ तेण भणइ दिवयाए परिग्गहियं। ततो से अवाओ पविस्सइ। साहूहिं भणितो अणुजाणसु तुमं लभिस्सामो वयं देवयाए तओ तेण अणुन्नाए तेहिं काउस्सग्गेण जक्खो आकंपिओ भणइ। उवरिल्लभूमियं मोत्तुं वासत्था अत्थ हते ठिया तेसु गतेसु जे अन्ने साहुणो इंति ते तत्थेव ठायंति। सच्चेव उग्गहस्स पुव्वाणुण्णवणा । अथ गाथाक्षरार्थः। कुटुम्बिना प्रासादस्य निर्मापणं कृतं ततः संखडिः कर्तुमारब्धो यक्षेण च स्वप्ने निवेदितं यदि प्रासादं प्रवेक्ष्यसि ततः सकुटुम्बं भवन्तं व्यपरोपयिष्यामीति तेन कण्टिकाभिः परिक्षिप्तं तद्गृहम् अन्यमपि च व्यापारं तत्र न करोति तेनाव्यापृतमुच्यते । अव्याकृते दृष्टान्तावाह।

दत्तू असीयंवघरं महल्लं, कालेण तं खीणधणं च जायं ।

ते उंबरीयस्स जयाउ कुट्टी, दाउं य मोल्लंवघरं जईणं ॥

सगेण इब्भिमंतेण वाणिएण रायगिहे नयरे स जालमाला वा पाइपकट्टगाहिं गिहं कारियं सोय तम्मि निम्माविय पंच तीहुओ पुत्तो सो पुल्ली जाओ। क्षीणविभव इत्यर्थः । तत्थय उवरीउकरो घिप्पइ ते तं दाउं अवयंता एगपासे कुट्टियं काउं ठिया तं च तेहिं सजयाण दिन्नं। अथाक्षरगमनिका। अरूभिमत्वे महर्द्धिकतायां कस्यापि वणिजो गृहं महल्लं महाजनाकुलमासितं कालेन ततः क्षीणधनं च शब्दादल्पमानुषं च संजातं ते च तदीयाः पुत्रा उवरीयस्य प्रत्युदुम्बरं रूपको दातव्य इत्येवंलक्षणस्य करस्य भयादेकस्मिन् पार्श्वे कुटीं कृत्वा मोल्लं च गृहपतीनां दत्वा कुटीरके स्वयं स्थिताः । एतदव्याकृतमुच्यते। अथ पूर्वानुज्ञापनां व्याख्याति।

पुव्विट्ठियणुण्णविय-ठायं तत्थेवि तत्थ ते य गता ।

एवं सुण्णवसुण्णे, सो चेव य उग्गहे होइ ॥

अव्यापृते अव्याकृते वा पूर्वं साधवोऽनुज्ञाप्य स्थिता तेषां मासकल्पे वर्षावासे वा पूर्णे शून्यभूते तत्र प्रतिश्रये अपूर्णे वा कल्पे अशून्यपदोपाश्रये अन्ये साधवस्तिष्ठन्ति ततः पूर्वसाधवः कल्पं समाप्यान्यत्र गताः परं शून्ये अशून्ये वा तत्र तिष्ठतां तेषां स एवावग्रहो भवति न पुनर्भूयोऽनुज्ञापयन्ति ।

अपरपरिगृहीतं व्याचष्टे ।

अपरपरिग्गहितं पुण, अपरे जत्ती जइ उ चिंति ।

अव्वोकडंपि तं चिय, दोण्हि वि अच्छी अ परसद्दो ॥

पुनःशब्दो विशेषणार्थः स चैतद्विशिनष्टि अपरिगृहीतं नाम येन साधूनां तद्दत्तं स एव स्वामी नान्य इति तावदपरिगृहीतस्यैकोऽर्थः प्रयुक्तः। यद्वा न परे अपरा यतयस्तत्रोपयन्ति तेनतदपरपरिगृहीतमव्याकृतमपि तदेव मन्तव्यम् । सर्वेषामपि साधूनां साधारणमिति कृत्वा तदेव द्वावप्यर्थावपरशब्दे भवतः । एको न परोऽपरस्तेन परिगृहीतमपरपरिगृहीतम् द्वितीयोऽपरेः साधुभिः परिगृहीतमपरपरिगृहीतमिति । अमरपरिगृहीतं तु वृक्षे वृक्षस्याधस्तात् गृहं मन्तव्यम्। तत्र गृहे यदि पूर्वं साधवो ऽनुज्ञाप्य स्थितास्तदा शेषाणां स एवावग्रहो भवति।

अथ वृक्षविषयं विधिमाह ।

सुयाऽपरिग्गहिते, दुगम्मि नपणम्मदिलु सज्झायं ।

एगेण अणुणविए, सो चेव य उग्गहो होइ ॥

भूतादिना व्यन्तरेण परिगृहीतो यो द्रुमस्तत्र स्वाध्यायार्थं कदाचित्कर्तव्यं भवति । तं च व्यन्तरमनुज्ञाप्य स्वाध्याय करोति । एवमेकेनापि तस्मिन्ननुज्ञापिते शेषाणां साधूनां स वृक्ष उदावग्रहो भवति । अथासौ वृक्षः परपरिगृहीतो ऽप्यस्ति ततः

सामी अणुणविज्जइ, दुमस्स जस्सोग्गहो व्व असहीए ।
कूरसुरपरिग्गहिते, दुमम्मि कणिट्ठगाण गमो ॥

यस्तस्य द्रुमस्य स्वामी सोऽनुज्ञाप्यते । अथासौ न स्वाधीनस्ततोऽस्वाधीने तस्मिन् यस्यायमवग्रहः सोऽनुजानीतामिति वक्तव्यम् । अथासौ द्रुमः क्रूरसुरपरिगृहीतस्ततो येषामगारिणां सत्कस्तेषामागन्तुमसौ न ददाति तत्र कणेष्ठका गृहगमो मन्तव्यः । त सुर कायोत्सर्गेणानुकम्प्य स्वाध्यायादि कुर्वन्तीति भाव । तत्र चायं विधिः ।

निच्चुंतेण व अणे, ईसालुसुरेण जं अणुणायं ।
तत्थ वि सो चेव गमो, सागारपिंडम्मि मग्गणता ॥

ईर्ष्यालुसुरेण अन्येन गृहिणा आगच्छता वृक्षमूलादिकं साधूनामनुज्ञात तत्रापि स एव गम पूर्वानुज्ञापनावस्थानलक्षणे विज्ञेयो नवरं तत्र स्थितानां सागारिकपिण्डस्यमार्गणा कर्तव्या । तामेवाह ।

जक्खो वि य होइ तरो, बलिमादी गिण्हणा भवे दोसा ।
सुविणा उवरिं एवा, संखडिकारोवणाणिक्खं ॥

येन यक्षेण स द्रुमः परिगृहीतः स एव तत्र स्थितीनां तरूणां शय्यातरो भवति । ततो यस्तस्य बलिकूरादि निवेद्यते स शय्यातरपिण्ड इति कृत्वा परिह्रियते । वृ० ३ उ० ।

राजावग्रहो देवेन्द्राऽवग्रहश्च ।

( सूत्रम् ) से अणुकट्टेसु वा अणुभित्तिसु वा कुणरियासु वा अणुफारियासु वा अणुपंथेसु वा अणुमग्गेसु वा संघवग्गहस्स पुव्वाणुण्णवणा चिट्ठइ अहालंदमविग्गहे ।

अस्य सबन्धमाह ।

जे चेव दोण्णि य गता, सागारियरायउग्गहो होति ।
तेसिं इह परिमाणं, णिवोग्गहम्मी विसेसेणं ॥

यावेव द्वौ सागारिकराजावग्रहौ पूर्वसूत्रयो प्रकृतौ तयोरेवेह सूत्रे परिमाणमुच्यते तथापि नृपावग्रहपरिमाण विशेषेणाभिधीयते अनेन सबन्धेनायातस्यास्य व्याख्या ( से ) तस्य निर्ग्रन्थस्य अनुकुड्येषु वा कुड्यसमीपवर्तिषु प्रदेशेषु एवमनुभित्तिषु वा अनुपरिखासु वा अनुपथेषु वा अनुमर्यादासु वा इह परिखानगरप्राकारयोरपान्तराले हस्ताष्टकप्रमाणो मार्गः । परिखा खातिका मर्यादा सीमा शेष प्रतीतम् । एतेषु सैवावग्रहस्य पूर्वानुज्ञापना तिष्ठति यथालन्दमपि कालमवग्रह इति सूत्रार्थः ।

अथ निर्युक्तिविस्तरः ।

अणुकुट्टे भित्तीसुं, वरियाए गारपंथपरिहासु ।
अणुमग्गे सीमाए, णायव्वं जं जहिं कमति ॥

अनुशब्द प्रत्येकमभिसंबध्यते अनुकुड्यानुभित्त्यो अनुवरिकाप्राकारपथपरिखासु च ( अणुमग्गसीमाए ) मर्यादा सीमा ततोऽनुमर्यादायामनुसीमायामित्येकोऽर्थः । पथ्यनुज्ञातव्यम् । यथात्र सागारिकराजावग्रहानुज्ञापनम् ।

एना निर्युक्तिगाथां व्याख्यानयति ।

उवकुड्डं अणुकुड्डं, कुड्डसमीवं व होइ एगट्ठं ।
एमेवाससएसु वि, तेसिं पमाणं इमं होइ ॥

अनुशब्दस्य समीपार्थद्योतित्वादनुकुड्यमुपकुड्यं कुड्यसमीपमिति चैकार्थम् । एवमेव शेषेष्वपि अनुभित्त्यादिषु पदेषु मन्तव्यम् । तेषामनुकुड्यादीनामवग्रहविषयमिदं प्रमाणं भवति ।

वतिभित्तिकडगकुड्डे, पंथेपगए उग्गहो रयणी ।
अणुवरियाए अट्ठउ, चउरो रयणी उ परिहाए ॥

वृत्तौ वंशादिपरिक्षेपरूपायां भित्ताविष्टकादिनिर्मितायां कटके वलये च कुड्ये पथि धर्ममर्यादाया ( वरपणित्ति ) एकहस्तमात्रावग्रहो भवति । अनुवरिकायामष्टौ हस्ताः परिखायां चत्वारो रत्नयः । इदमेव भावयति ।

वतिसामिणोवतीतो, हत्थो सोवग्गहो ण खंतिस्स ।
तहिं ममकारो जति वि य, पणणिम्मग्गन्नमीए ॥

गृहपतिविवक्षिताया वृत्ते स्वामी तस्य वृत्ते परतो हस्तमात्रमवग्रहो भवति शेषस्तु सर्वोऽपि नरपतेरवग्रहो मन्तव्यः । अथ किंकारण वृत्तिस्वामिनो वृत्तेःपरतोऽप्यवग्रहो भवति इत्याह तस्य गृहपतेः परतो हस्तप्रमाणे भूभागे ममकारो भवति । अतो यद्यपि ( निम्माणित्ति ) मूलपादान्ते च तावद्विवक्षितगृहसत्का भूमिस्तथापि वृत्ते परतो हस्तमेकं तस्यावग्रहः एव भित्तिकुड्यादिष्वपि भावनीयम् ।

हत्थं हत्थं मोत्तुं, कुड्डादीणं तु मज्झिमो रण्णो ।
जत्थ न पूरइ हत्थो, मज्झे तिभागो वही रण्णो ॥

तेषामेव कुड्यादिनां हस्त हस्तमुभयोरपि गृहयोर्मुक्त्वा मध्यमः सर्वोऽपि राज्ञोऽवग्रहः । यत्र तु गृहस्यापान्तरालस्यातिस्तोकतया हस्तो न पूर्यते तत्र मध्यमत्रिभागो राज्ञः शेषौ द्वौ गृहस्वामिनो । एतदवग्रहपरिमाणमुक्तम् । अत्र चोच्चारादीनि स्थानानिषदनादीनि वा कुर्वन् यदि कुड्यादीनां हस्ताभ्यन्तरे करोति ततो गृहपत्यवग्रहो मनसि क्रियते हस्ताद्बहिश्चरिकाप्राकारपरिखादिषु च राजावग्रहोऽनुज्ञाप्यते । अटव्यामपि यद्यसौ राजा प्रभवति तदा तस्यैवावग्रह स्मर्यते । अथासौ तत्र न प्रभवति ततो देवेन्द्रावग्रहो मनसि क्रियते । वृ० ३ उ० ।

( १५ ) राजपरिवर्तेऽवग्रहः

"सेरज्जपरियट्टेसु" इत्यादिसूत्रद्वयस्य संबन्धप्रतिपादनार्थमाह ।

सागरियसाहम्मिय–उग्गहगहणभत्तमाणम्मि ।
सुत्तमओतिमसुत्तं, उवंति राउग्गहे थेरा ॥

पूर्वसूत्रेभ्यः सागारिकावग्रहग्रहणमनुवर्तते ततोऽपि परतरेभ्यः साधर्मिकावग्रहण तस्मिन् अनुवर्तमाने अवग्रहग्रहणप्रस्तावात् सप्तमोद्देशकस्यान्तिम सूत्रम् । सूत्रद्वय राजावग्रहे स्थविराः कर्त्तारः स्थापयन्ति एषोऽधिकृतसूत्रद्वयसंबन्धोऽनेन सम्बन्धेनायातस्यास्य व्याख्या (से) तस्य भिक्षो राजपरावर्तेषु राजपरावर्तो नामाग्रेतनो राजा कालगतो नवोऽभिषिक्तस्तेषु । पुनः कथंभूतेषु इत्याह सस्तृतेषु न कोऽपि तद्राज्य विलुम्पतीति भावः । तथा अव्याकृतेषु येषां दायादानां सामान्यं तद्राज्य तैरविभक्तेषु । अनवच्छिन्नेषु तस्मिन्नेव वंशे अनुवर्तमानेषु अत एवापरपरिगृहीतेषु सैवावग्रहस्य पूर्वा अनुज्ञापना तिष्ठति या तस्य वंशस्यादावनुज्ञापना कृता कियन्त काल पुनः सैव पूर्वानुज्ञा तिष्ठति तत आह यथालन्दमप्यवग्रहः । किमुक्तं भवति यावन्त काल स वंशोऽनुवर्तते तावन्तमपि कालमवग्रहे

राजावग्रहे सैव पूर्वानुज्ञापना वर्तते न पुनरन्यस्मिन् राज्ञि नृपविष्टे स भूयोऽवग्रहोऽनुज्ञापयितव्यः । एष प्रथमसूत्रस्यार्थः । द्वितीयस्योच्यते ( से ) तस्य भिक्षो राजपरावर्तेषु अन्येषु राज्ये प्रतिपन्नेषु असंस्तृतेषु अविच्छिन्नपूर्वराज्यसंस्थितिषु व्याकृतेषु अन्यवंशीयैर्दायादैर्वा विभज्य समीकृतेषु व्यवस्थितेषु पूर्ववंशेषु अत एव परपरिगृहीतेषु भिक्षुभावस्यार्थाय भिक्षुभावो नाम ज्ञानदर्शनचारित्राणि तेषामेव भिक्षुशब्दप्रवृत्तिनिमित्तत्वादेतदेव प्रथमोद्देशके सप्रपञ्चं भावितं तस्यार्थाय स भिक्षुभावः परिपूर्णो भूयादित्येवमर्थमित्यर्थः । अन्यथा सचित्तादीनामनुज्ञापनेऽदत्तादानं स्यात् । द्वितीयेऽपि वारमवग्रहोऽनुज्ञापयितव्यः एष द्वितीयस्यापि सूत्रार्थः ।

साम्प्रतमेनामेव व्याख्यां भाष्यकृदप्याह ।

संथडमो अविच्छिन्नं, पडिवक्खो वा न विज्जती जस्स ।
अणहिट्ठियमन्नेण व, अव्वोगडदाइसामन्नं ॥

संस्तृतं नाम राज्यं यदविच्छिन्नं मो इति पादपूरणे यस्य वा प्रतिपक्षो न विद्यते नाप्यन्येन केनाप्यधिष्ठितम् । अव्याकृतं नाम दायिनां सामान्यं न पुनस्तैर्विभक्तम् ।

अव्वोगडं अविगडं, संदिट्ठं वा वि जं हवेज्जाहि ।
अवो च्छिन्नपरंपर-मागयतस्सेव वंसस्स ॥

अव्याकृतं नाम यदविकृतं न केनापि विकारमापादितम् यदि वा यद्भवेत् पूर्वराजेन संदिष्टं यथा एतस्मै राज्यं देयमिति तत् अव्याकृतम् । अव्यवच्छिन्नं नाम यत्तस्यैव वंशस्य परम्परया समागतमिति ।

पुव्वाणुन्ना जा पुव्व-एहिं राईहिं इह अणुन्नाया ।
संडंतु होइ कालो, चिट्ठइ जा उग्गहो तेसिं ॥

पूर्वानुज्ञा नाम या पूर्वकै राजभिरनुज्ञाता, "अहालंदमवी-" त्यत्र लंदो नाम भवति कालस्ततोऽयमर्थो यावन्तं कालं तेषामवग्रहस्तावन्तमपि कालमेवावग्रहे पूर्वानुज्ञा । तदेव प्रथमसूत्रव्याख्या कृता । सम्प्रति द्वितीयसूत्रव्याख्यानार्थमाह ।

जं पुण असंथडं वा, सगडं तह वोगडं व वोच्छिन्नं ।
नंदमुरियाण व जहा, वोच्छिन्नो जत्थ वंसो उ ॥

यत्पुनरसंस्तृतं शकटमिव शत्रुस्तया सर्वतोऽभ्युद्गतम् तथा व्याकृतं दायादैरन्यवंशैर्वा विभज्य अङ्गीकृतम् । व्यवच्छिन्नं यत्र नन्दमौर्याणामिव वंशो व्यवच्छिन्नः ।

तत्थ उ अणुन्नविज्जइ, भिक्खुब्भावट्ठमुग्गहो नियमं ।
भिक्खू भिक्खुब्भावो, अहवा नाणाइयाईओ ॥

तत्र नियमेनावश्यंभावेन भिक्षुभावार्थी यथावस्थितभिक्षुभाव तत्रैव भिक्षुभाव इत्याह । टीकादिशब्दादिशब्दात्सम्यग्ज्ञानादिपरिग्रहः । भिक्षुभावोऽथवा तृतीयव्रतादिकं भिक्षुभाव । तत्रैव भिक्षुशब्दस्य परमार्थत्वात्तदेव कृता सूत्रव्याख्या । सम्प्रति निर्युक्तिविस्तरः ।

रन्नो कालगयम्मि, अथिरम्मि अणुन्नवे तम्मि ।
आणादिणो य दोसा, विराहणा इमेसु ठाणेसु ॥

राज्ञि कालगते ये द्वौ वा त्रयो वा दायिनस्तेषां मध्ये यः स्थिरः सोऽनुज्ञापयितव्यः । यदि पुनरस्थिरमनुज्ञापयन्ति तदा तेषां प्रायश्चित्तं चत्वारो गुरुकाः आज्ञादयश्च दोषास्तथा विराधना आत्मविराधना संयमविराधना वा । एषु वक्ष्यमाणेषु स्थानेषु तान्येवाह ।

भुवमहो तस्स सइ, समत्थेयरमउ मंनाहे ।

दोसो गयपरदोसो, अणणुन्नवणे थिरे गुरुगा ॥

ध्रुवमन्यस्मिन्नन्यवंशजे अस्थिरे तस्य वा पूर्वराजस्य सम्बन्धिनां दायिनामेकस्मिन् अस्थिरे स यतिरनुज्ञापितः सन् चिन्तयति स तथा विचिन्तनास्ति । तथा भावस्यान्यथाभाव इति स एको मुक्तसन्नाहो वर्तते । तं च विश्वस्तं ज्ञात्वाऽन्यदा सोऽन्येन दायादिना मारितो राज्यमधिष्ठितम् ततः स राजा चिन्तयति । सयतैर्ममामित्रपरिगृहीतैर्येन कारणेनासाववग्रहमनुज्ञापितस्ततः स प्रासिद्धो द्वयोरेकतरस्य प्रद्वेषं कुर्यात् । किमुक्तं भवति निर्विषयत्वादि कुर्यात् । जीवचारित्रयोर्वा भेदं कुर्यात्तस्मात् यः स्थिरः सोऽनुज्ञापयितव्योऽननुज्ञापने प्रायश्चित्तं चत्वारो गुरुकाः ।

अणणुन्नविए दोसा, पच्छा वा अप्पितो अवस्से वा ।
पत्तेपुव्वमभंगढ, निच्छुभणे य दोसपत्थारो ॥

यदि स्थिरो नानुज्ञाप्यते तदा एतस्मिन्ननुज्ञापिते दोषाः सर्वे सामायपार्श्वरूपाः समीपमागता निर्ग्रन्था न पुनरवज्ञां कृत्वा स्थितास्तेन प्रद्वेषितो निष्काशनादि कुर्यात् तस्मादव्यवच्छिन्नवंशे सोऽवश्यमवग्रहमनुज्ञापयितव्यः । किं पूर्वं पश्चात् मध्ये वा तत्र यदि सर्वैरन्यैः पार्श्वस्थैरनुज्ञापिते स पश्चादनुज्ञाप्यते ततः स चिन्तयति अहमेतेषामप्रियोऽवज्ञा यतो ममैतैः क्रियते तेन पश्चादागता । अथ प्राप्ते राज्ये पूर्वमनुज्ञाप्यते तदा कदाचिदभद्रं मन्येत ततो ( निच्छुभणति ) निष्काशनं कुर्यात्प्रद्वेषतः प्रस्तारो जीवनात् व्यपरोपणं क्रियेत तस्मान्मध्येऽनुज्ञापयितव्यः । यदि पुनर्भद्रक इति ज्ञातो भवति चाननुज्ञाप्यमानो मद्भ्रामिति मन्यते तदा पूर्वमप्यनुज्ञापनीयः । अथ कथमस्थिरो ज्ञातव्यः कथं वा भद्रकः कथं वा पूर्वकमनुज्ञाप्यमानो मद्भ्र मन्यते इति तत आह ।

ओहादी आभोगण, निमित्तविसएण वा वि नाऊण ।
भद्दगपुव्वमणुन्ना, वपंतमभाय मज्झम्मि ॥

अवध्यादीनामतिशयनादिशब्दान्मनःपर्यवज्ञानश्रुतातिशयविशेषपरिग्रहोऽथवा निमित्तविशेषेण । अथात्मनोऽवध्याद्यतिशयो निमित्तविशेषो वा न विद्यते तदा अन्यानवध्याद्यतिशयिनो निमित्तविशेषं ज्ञात्वा दृष्ट्वा भद्रकमनुज्ञापयेत । प्रान्तमनुज्ञातं वा मध्ये ।

एएणं विहिणा उ, सो णुन्नवितो जहेव रज्जेहिं ।
राया किं देमित्ति य, जं दिन्नं अम्हराईहिं ॥

एतेनानन्तरोदितेन विधिना सोऽनुज्ञापितो राजा यदा वदेत किं ददामीति तदा वक्तव्यं यद्दत्तमन्यै राजभिस्तद्देहीति ।

जाणंतो अणुजाणइ, अजाणओ भणति तहिं किं दिन्नं ।
पाओग्गंति य भणिए, किं पाउग्ग इमं सुणसु ॥

एवमुक्ते जानानः सर्वमनुजानाति अज्ञायको भ्रूते तैरन्यैः राजादिभिः किं दत्तं तत्र प्रायोग्यमिति भणितव्यम् । तस्मिन् भणितेषु न भ्रूते किं प्रायोग्यमिति ततो वक्तव्यं शृणुत इदं प्रायोग्यं तदेवाह ।

आहार उवहिमेज्जा, ठाणनिसीयणतुयट्टगमणादी ।
थीपुरिसाण य दिक्खा, दिन्ना णो पुव्वराईहिं ॥

नोऽस्माकं पूर्वराजैराहार उपधिः शय्या स्थानमूर्ध्वस्थानं निषदनं त्वग्वर्त्तो गमनमादिशब्दादागमनपरिग्रहस्तथा स्त्रीपुरुषाणां दीक्षा अनुज्ञातेन दत्ता ।

जहो एव्वं विरइ-प्पंते पुण दिक्खवज्जमियराणि ॥
इम सिट्ठा इम काउं, निग्गं ते गुरुगा य आणादी ॥

एवं कथिते सति यो नरुक' स सर्वविरतिप्राप्त· पुनर्दीक्षा-वर्जमितराणि सर्वाण्यप्याहारादीनि अनुजानाति प्रव्रज्या पुनर्नाज्ञापयति तत्र यदि तस्य राज्ञोऽनुशिष्टमकृत्वा आदिशब्दात् विद्यादि वा प्रभुकरणं वा अकृत्वा यदि तद्विषयात् निर्गच्छन्ति तदा तेषां प्रायश्चित्तं चत्वारो गुरुका आज्ञादयश्च दोषाः ।

चेइय सावगपव्वइउ-काम अंतरंतबालवुड्ढा य ।
जत्ता अजंगमा वि य, अभत्ति तित्थस्स परिहाणी ॥

अन्यच्च चैत्यानि तेन परित्यक्तानि श्रावका ये च प्रव्रजितुकामास्तथा । अतरन्तो ग्लाना बाला वृद्धा अजङ्गमाश्चैते सर्वे परित्यक्ता अभक्तितस्तीर्थकराज्ञाखण्डनात् । तीर्थस्य च परिहाणिरापादिता । तथा हि ये तत्र विषये प्रव्रजितुकामास्ते न प्रव्रजिष्यन्ति श्रावका अपि सम्यक्त्वमणुव्रतानि च गृह्णन्तो न ग्रहीष्यन्ति ततो भवति तीर्थस्य व्यवच्छेद' । यद्येवं तर्हि तत्रैव तिष्ठन्तु । तत्राप्याह ॥

अत्थंताण वि गुरुगा, अभत्ति तित्थस्स हाणि जा वुत्ता ।
नागमाण जाण चेत्ता, अत्थंति अणेत्थ वच्चंति ॥

तत्र तिष्ठतामपि प्रायश्चित्तं चत्वारो गुरुका मासा देशान्तरे भव्यपौण्डरीकस्याप्रतिबोधेन लोभतो भ्रष्टत्वात् । तथा तीर्थकराणामभक्तिं तिष्ठद्भिः कृत्वा तदाज्ञाखण्डनात्तीर्थस्य हानिरापादिता तथा स्वयमेव तेन राज्ञोक्तं स्त्रीपुरुषा न दीक्षितव्या इति । यद्येवं तर्हि किं कर्तव्यमत आह । स्वयं भणन्तं प्रज्ञापयन्तोऽन्यैर्ज्ञापयन्तस्तिष्ठन्ति । तथापि चेत्स नेच्छेत्तर्हि ततो देशात् व्रजन्ति ।

अह पुण हवेज्ज दोन्नी, रज्जाइं तस्स नरवरिंदस्स ।
तहियं अणुजाणंतो, दोसुवि रज्जेसु अप्पबहुं ॥

अथ पुनस्तस्य नरवरेन्द्रस्य स्वयमन्यैर्वा प्रज्ञाप्यमानस्य कदाचिद्द्वे राज्ये भवतस्तत्र तयोर्द्वयोराज्ययोर्मध्ये एकत्राप्यनुजानाति । यथा मम द्वे राज्ये तत्र तयोर्द्वयोर्मध्ये यत्रैकत्र भवद्भ्यो रोचते तत्र प्रव्राजयत द्वितीये नानुजानामि । एवमुक्ते अल्पबहु परिभाव्य यत्र भूयान् तीर्थप्रव्रज्यादिलाभस्तत्र स्थातव्यमेतदेव स्पष्टतरमाह ॥

एक्कहि विदिन्नं रज्जे, रज्जे एगत्थ होइ अविदिन्नं ।
एगत्थ इत्थियत्तो, पुरिसव्वायाय एगत्थ ॥

एकत्र एकस्मिन् राज्ये वितीर्णमनुज्ञातं भवति । एकस्मिन् राज्ये वितीर्णे यत्रानुज्ञातं तत्र स्त्रियः पुरुषा वा अनुज्ञाता । अथवा एकत्र राज्ये स्त्रियोऽनुजानीत एकत्र पुरुषाननुजानीते ।

थेरा तरुणा य तहा, दुग्गया अड्ढा य कुलपुत्ता ।
जाणवयानागरया, अब्भंतरगो कुमारा य ।

अथवा एकत्र राज्ये स्थविराननुजानात्येकत्र तरुणान् । अथवा एकत्र दुर्गतकान् परत्र आढ्यान् । यदि वैकत्र कुलपुत्रानपरत्राभीरान् एवमेकत्र जानपदानन्यत्र नागरकान् । एकत्राभ्यन्तरकान् अभ्यन्तरका नाम ये राजानमतिप्रत्यासन्नाश्चूयाबलान्ति कुमारा राज्ञो दायादाः । एवमनुज्ञाते किं कर्तव्यमित्याह ।

ओहीमादीउ जत्थ· बहुतरया उ पव्वयीत तहिं ।

ते विंति समणुजाणसु, असती पुरिसेव जे बहुगा ॥

अवध्यादिनादिशब्दात् श्रुतातिशयविशेषेण निमित्तविशेषेण वा ज्ञात्वा यत्र बहुतरका अनुज्ञाता सन्ति अवध्यादिनिमित्तविशेषस्य वा अभावे ये बहव पुरुषास्तानेवानुज्ञापयति न शेषान् स्तोकानप्रभूतानिति ॥

एयाण वि धरति तहिं, कम्मघणो पुण भणेज्ज तत्थ ।
इम दिट्ठा उ अमंगल्ल, मा वा दिक्खेज्ज अत्थत्ता ॥

एतानि अनन्तरोदितानि प्राप्तोऽपि भूतानुभावक सन् तत्रात्मीये राज्ये वितरति । य पुन कर्मघनो निबिडपापकर्मा तत्रानुज्ञापनायां क्रियमाणायामिदं ब्रूयात् दृष्टा अपि सन्तो यूयममङ्गलास्तस्मादप्रतिष्ठन्तो मा कञ्चन दीक्षयेयुरिति । वा शब्दो व्यपेक्षया विकल्पने ।

मा वा दच्छामि पुणो, अभिक्खणं वेंति कुणति निव्विसए ।
पत्रवंतो भणति तती, नन्दाहिवाति सति तुमंति ॥

यदि वा मा पुनर्भूयो द्रक्ष्याम्येनान् । अभीक्ष्णं वा ब्रुवन्ति स्वयमन्यैर्वा पुन· पुनर्विज्ञपन्तीति कृत्वा निर्विषयान्करोति ततो य· प्रभवन् वक्ष्यमाणगुणोपेतो ब्रूते नासि त्वं सकलस्य भरतस्यापि पतिर्येन निर्विषयत्वाज्ञापनेऽस्माकं भय स्यात्तत्र स्यात् न दास्यसि ततोऽन्यत्र यास्याम' । तथा इदमपि ब्रूते ।

केवइयं वा एयं, गोपयमेत्तं इमं तुहं रज्जं ।
जं पेल्लिउ नासिपगं, मंतिय मुहुत्तमित्तेण ॥

कियद्वा एतद्गोष्पदमात्रमिदं च राज्यं यत् प्रेर्य मुहूर्तमात्रेण त दृष्टा गम्यते । एवमुक्ते स राजा प्राह ।

जं होउ तं होउ, पत्ववामि अहं तु अप्पणो रज्जे ।
सो भणइ नीहमिज्जं, रज्जा तो किं बहुं णाउं ॥

स राजा ब्रूते यत् यावन्मात्रं तावन्मात्रं वा भवतु आत्मनो राज्ये तावदहं प्रभवामि । तस्मात्किमत्र बहुना मम राज्याद्धृय निर्गच्छतेति । एवमुक्ते यत्कर्तव्यं तदाह ।

अणुसट्ठी धम्मकहा, वज्जनिमित्तादिएहिं आउट्टो ।
आट्ठिए य सुप्पकरण, जहा कयं विण्हुणा पुव्विं ॥

अनुशिष्ट्या अनुशासनेन धर्मकथया विद्यया निमित्तेन आदिशब्दान्मन्त्रेण चूर्णयोगैर्वा त राजानमावर्तयेत् अनुकूलयेत् । अत्रैवमपि न तिष्ठति तर्हि तस्मिन् अस्थिते प्रभोरन्यस्य करणं कर्तव्यम् । यथा कृतं विष्णुना विष्णुकुमारेण । अथ कीदृशस्तं राजानमन्यप्रभुकारणे प्रेरयन्तीत्यत आह ।

वेउव्वियलद्धी वा, ईसत्थे विज्जतो रसवल्ली वा ।
तवलद्धिपुलातो वा, पंढोति तमंतरे गुरुगा ॥

यो वैक्रियलब्धिमान् यो वा इषुशास्त्रे निर्मातोऽनेकैरपि पुरुषसहस्रैर्दुर्जयः । अथवा विद्यावलवान् यदि वौरसबली सार्मिको ऽथवा तपोलब्धिपुलाक स तमन्यप्रभुकरणेन प्रेरयति । यस्तु सत्यामपि शक्तौ प्रभुमन्यं न करोति तस्मिन्नितरस्मिन्प्रायश्चित्तं चत्वारो गुरुका· । कथमन्य प्रभु करोतीत्यत आह ।

त घेत्तुं बंधिऊण, पुव्वरज्जं ठवेति उ समत्थो ।
असती अणुवसमंते, निग्गंतव्वं तओ ताहे ॥

त राजानं गृहीत्वा बन्धनेन च बद्ध्वा समर्थस्तस्य पुत्रं राज्ये स्थापयति । असति सामर्थ्ये अनुशिष्ट्यादिभिरुपशमयति । स च तथोपशम्यमानोऽपि नोपशाम्यति तर्हि ततो देशान्निर्गन्तव्यम् । तथा चाह यतनामाह ।

भत्तादिफासुएणं, अलब्भमाणे य पणगहाणीए ।
अद्धाणे कायव्वा, जयणा उग्गा जहिं भणिया ॥

अध्वनि मार्गे प्राशुके भक्तादावलभ्यमाने पञ्चकहान्या यतना कर्त्तव्या । यत्र ग्रामे नगरे अरण्ये वा पूर्वं कल्पाध्ययने भणिता । व्य० द्वि० ७ उ० ।

( १५ ) अवग्रहक्षेत्रमानम् ।

( सूत्रम् ) सगामंसि वा जाव संनिवेसं वा कप्पइ निग्गंथाण वा निग्गंथीण वा सव्वओसमंता सकोसं जोयणं उग्गहं तु गिण्हित्ताणं चिट्ठित्तए ॥

अस्य संबन्धमाह ।

गामाइयाण वेमि, उग्गहपरिमाणजाणणासुत्तं ।
कालस्स वा परिमाणं, वुत्तं इहइं तु खेत्तस्स ॥

तेषामनन्तरसूत्रोक्तानां ग्रामादीनां कियानवग्रहो भवतीति शङ्कायामवग्रहपरिमाणज्ञापनार्थमिदं सूत्रमारभ्यते । यद्वा पूर्वसूत्रेषु " अहालंदमवि उग्गहे इत्यादि " भणता अवग्रहविषयकालस्य परिमाणमुक्तमिह तु क्षेत्रस्य तदेवोच्यते । एतेन संबन्धेनायातस्यास्य व्याख्या अथ ग्रामे वा नगरे वा यावत्संनिवेशे वा कल्पते निर्ग्रन्थानां चावग्रहं सर्वतः सर्वासु दिक्षु समन्तात् चतसृष्वपि विदिक्षु सक्रोशं योजनमवग्रहमवगृह्य स्थातुमिति सूत्रार्थः । अथ भाष्यविस्तरः ।

उड्ढमहे तिरियं पि य, सकोसं होइ सव्वतो खित्तं ।
इंदपदमाइएसुं, विदिसिं सेसेसु चउ पंच ॥

ऊर्ध्वदिगधो दिक् (तिरियपियंति) तिर्यक्पूर्वदक्षिणापरोत्तरालक्षणाश्चतस्रो दिशः एतासु षड्दिक्षु गिरिमार्गस्थितानां सर्वतः सक्रोशयोजनं क्षेत्रं भवति तच्च इन्द्रपदादिषु संभवति इन्द्रपदो नाम गजाग्रपदगिरिस्तत्र ह्युपरिष्टात् ग्रामो विद्यते । अधोऽपि ग्रामो मध्यमश्रेण्यामपि ग्रामस्तस्य चतसृष्वपि दिक्षु ग्रामाः सन्ति ततो मध्यमश्रेणिग्रामे स्थितानां षट्सु दिक्षु क्षेत्रं भवति । आदिशब्दादन्योऽपि य ईदृशः पर्वतस्तस्य परिग्रहः शेषेषु पर्वतेषु चतसृषु पञ्चसु वा क्षेत्रं सक्रोशं योजनं क्षेत्रं भवति समभूमिकायां व्याघाताभावे दिक्चतुष्टयक्षेत्रं व्याघातं प्रतीत्य पुनरिदम् ।

एगं व दो व तिण्णि व, दिसा अकोसं तु सव्वतो वा वि ।
सव्वत्तो तं अकोसं, अणुज्जणोउ जा खेत्तं ॥

एकदिग्भाविना पर्वतादिव्याघातेन किंचिद् ग्रामादिकमेकस्यां दिशि अक्रोशं भवति सक्रोशयोजनावग्रहरहितमित्यर्थः । एवं दिग्द्वयभाविना व्याघातेन द्वयोर्दिशोरक्रोशं त्रिदिग्भाविना तिसृषु दिक्षु दिक्चतुष्टयभाविना तु सर्वतोऽप्यक्रोशं भवति । तत्र च सर्वतोऽक्रोशे ग्रामादौ याद्यान् यावत्क्षेत्रं तत परमक्षेत्रमिति । किं च ।

संजमआयविराहण, जत्थ भवे देहउवधितेणा वि ।
त खलु ण होइ खेत्तं, उग्गहगव्वं च किं तत्थ ॥

यत्र ग्रामादौ ग्रामानां संयमात्मविराधना भवति यत्र च देहोपधिस्तेना भवन्ति तत् खलु क्षेत्रं न भवति । किंवा तत्रावग्रहीतव्यं येन क्षेत्रमुच्यते । अथ किं पुनः क्षेत्रमित्याह ।

खेत्तं चलमचलं वा, इंदमणिंद सकोसमकोसं ।
वाघातंमि अकोस, अरुविजले मावए तेणे ॥

यत्रावग्रहो विचारयितुमुपक्रान्तस्तत् क्षेत्रं चलमचलं वा भवेत् । चलं व्रजिकादि अचलं ग्रामादि । पुनरेकैकं द्विधा इन्द्रमिन्द्रकीलादियुक्तमनिन्द्रं वा तद्विपरीतम् । तत्र यद्चलमनिन्द्रं वा तस्मात्सक्रोशमक्रोशं वा पश्चानुपूर्व्या । अथ तानेव भेदान् व्याचिख्यासुरिदमाह । ( वाघायम्मीत्यादि ) यत्र यस्यां दिशि व्याघातस्तत्रस्यमक्रोशं भवति । कः पुनर्व्याघात इति चेदत आह । अटवी तस्यां दिशि वर्त्तते (अउत्ति) समुद्रो नदी वा ये श्वापदा वा सिंहव्याघ्रादयस्तत्र सन्ति । स्तेना वा उपधिशरीरहरा विद्यन्ते एतैः कारणैः ग्रामादिकानिरुद्धा ग्रामा गोकुलाद्यभावादवग्रहीतव्यं किमपि तत्र नास्ति । अथ सक्रोशमाह ।

सेसे सकोसमंडल, मूलनिबंधणअणुमयंताणं ।
पुव्वट्ठिताण उग्गहो, समगंतरपल्लिगा दोण्हं ॥

शेष नाम यदनन्तरोक्तव्याघातरहितं तत्र मूलनिबन्धनं मण्डलमनुमतां सर्वतः सक्रोशं योजनमवग्रहो भवति । कथमिति चेदुच्यते । मूलग्रामादेकैकस्यां दिशि योजनार्द्धमर्द्धक्रोशेन समधिकं तावदवग्रहो भवति । स च पूर्वापराभ्यां दक्षिणोत्तराभ्यां वा कृत्वा सक्रोशं योजनं भवति । यद्वा गतिप्रत्यागतिभ्यामेकस्यामपि दिशि योजनं मन्तव्यं तत्र सक्रोशे अक्रोशे वा ये पूर्वस्थितास्तेषामवग्रहो भवति । यत्र समकमनुज्ञापितं तत् क्षेत्रं साधारणम् । अथ सबद्धेषु क्षेत्रेषु समकमेवानुज्ञापितं ततो यदि द्वे अन्तरपल्लिके तत एकेषामेका अपरेषामप्येका । अथैकैवान्तरपल्लिका ततो द्वयोरपि साधारणः । अथ बहवस्तत्रान्तरपल्लिकास्ततः को विधिरित्याह ।

खेत्तग्गंतो दूरे, आमण्णं वा ठिताण समगंतुं ।
अद्धद्धं वा दुगाई, गच्छाण साहारणा होइ ॥

द्वित्रिप्रभृतिषु सबन्धेषु क्षेत्रेषु समकमनुज्ञाप्य स्थितानां काश्चिदन्तरपल्लिकाः क्षेत्रान्तः क्षेत्रस्याभ्यन्तरे भवन्ति ( दूरेत्ति ) काश्चित्तु दूरे याभ्यः समुदानमूलग्राममानीयमानं क्षेत्रातिक्रान्तं भवतीति कृत्वा प्रथममालिकायां तन्निवार्हते ( आसन्नेत्ति ) काश्चित्पुनरासन्ने याभ्य समुदानं मूलग्राममानीयमानं क्षेत्रातिक्रान्तं न भवति ततो यावत्यस्ता अन्तरपल्लिकास्तासां सर्वासामपि अर्द्धं वा अर्द्धार्द्धं वा चतुर्भाग इत्यर्थः । वा शब्दात्त्रिभागादिकं चाद्धिकादीनां द्वित्रिप्रभृतीनां गच्छानां साधारणं भवति । अथात्रैव भाष्यनोभाष्यविधिमाह ।

तणडगलछारमल्लग, संथारगभत्तपाणमादीणं ।
सच्चित्तं ते अस्सामी, खेत्तिय ते मोत्तु णुण्णवणा ॥

तृणडगलक्षारमल्लकसंस्तारकभक्तपानादीनां सति विद्यमाने प्राघूर्णे लाभे क्षेत्रिका अस्वामिनः अक्षेत्रिकाणामप्येतान्याभवन्तीत्यर्थः ( ते मोत्तु णुण्णवणत्ति ) येषां तृणादीनां क्षेत्रिकैरनुज्ञापना कृता तानि मुक्त्वा तान्यक्षेत्रिकाणां नो भवन्तीति भावः । किं पुनः क्षेत्रिकाणां भवतीत्युच्यते ।

ओहो उवग्गहो विय, सचित्तं वा वि खेत्तियस्सेते ।
मोत्तूणं पडिहारिय, संथरंतेवणुण्णवणा ॥

ओघोपधिरुपग्रहोपधिश्च । सचित्तं वा शैक्षादिकम् । एतानि क्षेत्रिकस्याभवन्ति । यद्यक्षेत्रिका एतेषामेकतरं गृह्णन्ति तदा प्रायश्चित्तं परं मुक्त्वा प्रातिहारिकं द्विविधमप्युपधिं ते गृहस्थेभ्यो मार्गयन्तो न प्रायश्चित्तभाज इति हृदयम् । ये पुनरप्रातिहारिकस्तं न लभन्ते । अथ शीतादिना परिताप्यन्ते ततः

एवमसंस्तरद्भिर्वस्त्रादेरनुज्ञापना कर्तव्या क्षेत्रिकैरपि संस्तरद्भि तेषामनुज्ञाकर्तव्या ।

जइ पुण संथरमाणा, ण दिंति इतरे व तेसिं गएहंति ।

तिविधं आदेसो वा, तेण वि ण जाय परिहाणी ॥

यदि पुन संस्तरन्त· क्षेत्रिकाः असंस्तरन्त· सक्षेत्रिकाणां वस्त्रादिक न प्रयच्छन्ति इतरे वा अक्षेत्रिका असंस्तरन्तोऽपि तेषां क्षेत्रिकाणामनापृच्छ्य वस्त्रमोदिका वा गृण्हन्ति ततस्त्रिविध जघन्यमध्यमोत्कृष्टनिष्पन्न पञ्चकमासलघुचतुर्लघुलक्षण प्रायश्चित्तम । सूत्रस्यादेशाघा नवम तेन च स्त्रादिना जायते परिहाणिस्तन्निष्पन्नमपि तेषां प्रायश्चित्तम ।

इदमेव व्यक्तीकरोति ॥

जे खेत्तिया मोत्तिए दिंति थागं, लंभेवि जागंतु वयं तहाणं ।

पेच्छंति वा गंतु असंथरम्मि, चिरं व दोएहंपि विराहणाओ ॥

ये क्षेत्रिका वयमिति कृत्वा भक्तपानादे· प्राचुर्येण लाभेऽपि अन्येषां(थाग)अवकाश न प्रयच्छन्ति तत आगन्तुकानां व्रजतां या परिहाणिर्भवति ततस्तेषां प्रायश्चित्तम । अथ क्षेत्रिणामसंस्तरणेऽप्यागन्तुका· प्रेरयन्ति प्रेष्य विना तिष्ठन्ति ते चागन्तुका आदेशिका प्राघूर्णकाश्च ततश्चिर वा प्रभूत काल वा शब्दादल्प वा काल न संस्तरण तेषां भवेत् ततो द्वयेषामप्यागन्तुकाना वास्तव्यानां च या विराधना तन्निष्पन्न प्रायश्चित्तम । यत एवमत· ।

अत्थि हु वसभग्गामा, कुदेसणगरोवमासुहविहारा ।

बहुवरगुणग्गहकरी, सामच्छेदेण वसियव्वं ।

सन्ति विद्यन्ते वृषभग्रामा इत्याचार्य आत्मद्वितीया गणावच्छेदकश्चात्मतृतीय एव पञ्चको गच्छो भवति । ईदृशास्त्रयो गच्छा· पञ्चदश जना एते यत्र ऋतुवद्धे निर्वहन्ति वर्षासु पुन· सतको गच्छस्तद्यथा आचार्य आत्मतृतीयो गणावच्छेदक आत्मचतुर्थ । ईदृशास्त्रयो गच्छा पञ्चविंशतिजना भवन्ति । एते यत्र वर्षावासे जघन्येन निर्वहन्ति ते वृषभग्रामा उच्यन्ते ते च कीदृशा इत्याह । कुदेशस्य यन्नगर तेनोपमा येषां ते कुदेशनगरोपमास्ते च सुखविहारा सुलभभक्तपाना निरुपद्रवाश्च । अत एव बहूनामन्यतरोक्तप्रमाणानां त्रिप्रभृतीनां गच्छानामुपग्रहकरस्ततस्तेषु सीमाच्छेदेन बहुभिरपि गच्छैर्वस्तव्यम् । न कैरपि परस्पर मत्सरो विधेय इति भाव । सीमाच्छेदो नाम साहिका ग्रामार्द्धवाटकादिविभजनम् । यथा अस्यां साहिकायां भवद्भि· पर्यटनीयम् अस्यां पुनरस्माभिरित्यादि । यद्वा ये तत्र क्षेत्रे समक प्राप्तास्तैः समच्छेदेन वस्तव्य यथा युष्माकं सचित्तमस्माकमचित्तम् । अथवा युष्माकमन्त अस्माक बहि युष्माक स्त्रियो ऽस्माक पुरुषा युष्माक श्राद्धा अस्माकमश्राद्धा । अथवा यो यल्लप्स्यते तत्तस्यैव न दातव्यम् । इदमेव व्याख्यानयति ॥

एकवीस जहएणेणं, पुव्वट्ठिते उग्गहो इतरे ।

पल्लीपग्गिहमज्झे वा, सीमाए अंतरगासे ॥

पूर्वोक्तनीत्या वर्षासु एकविंशतिजना उपलक्षणत्वादृतुवद्धे पञ्चदश जना यत्र जघन्येनसंस्तरन्ति स वृषभग्राम उच्यते । उत्कर्षतस्तु द्वयोरपि कालयोर्द्वात्रिंशत्सहस्रसंख्याको गच्छो यत्र संस्तरति स वृषभग्राम· । यत्र ये पूर्वस्थितास्तेषामवग्रह· इतरे भक्तपानमात्रसद्ग्राहास्तिष्ठन्ति तत्र च सीमाच्छेदो विधातव्य । कथमित्याह ( पल्लीत्यादि ) युष्माभिरन्तरपल्ल्यां पर्यटनीयमस्माभि· प्रतिवृषभग्रामे प्रतिवृषभो नाम मूलग्रामाद् द्वियोजने महाग्राम· । अथवा अन्तरपल्ल्या· प्रतिवृषभस्य वा अर्द्ध युष्माकमर्द्धमस्माकमेव सीमायां मूलग्रामस्य प्रतिवृषभग्रामस्य चान्तरा यो ग्रामस्तस्याप्यर्द्ध युष्माकमर्द्धमस्माकमेतच्चलमनिन्द्र च क्षेत्र मन्तव्यम् ।

अथाचलसेन्द्रक्षेत्रमाह ॥

इंदक्कीलमणोग्गहो, जत्थ य राया जहिं च पंच इमा ।

सत्थसन्तपुरोहिया, सेणावतिसत्थवाहे य ॥

इन्द्रकीलको नाम इन्द्रस्थूणा सा यत्रोत्तिष्ठति इद मातृकायास्तत्रायमवग्रहो न भवति । अनिन्द्रकीलकोऽपि यत्र राजा मूर्द्धाभिषिक्त परिवसति ( रायाजहिंपचप्ति ) यत्र पञ्च वसन्ति । श्रेष्ठी अमात्यः पुरोहित· सेनापति· सार्थवाहश्चेति ॥

अहण मीए व समो–सरे वा विराहणा अणायाणे ।

एतेसु एत्थि उग्गहो, वसहीए य मग्गणं अखेत्ते ॥

अथ शीर्षक नाम यत पर समुदायेन गन्तव्य सम्यग्मार्गवहनाचत्र मिलितानाम् समवसरण नाम कुलसमवायो गणसमवायः संघसमवायो वा एतेषु वसता तदवग्रहस्य मार्गणा कर्तव्या । अथ किमर्थमेतेष्ववग्रहो न भवतीत्युच्यते ।

बहुजणसमागते तेसु, होति बहुगच्छमणिवातो य ।

मा पुव्वं तु तदट्ठा–पेल्ले व अकोविया खेत्तं ॥

तेष्विन्द्रकीलकादिषु बहु प्रभूतस्य जनस्य समागमो भवति अभ्रशीर्षकादिषु च बहूनां गच्छानां सन्निपातो मीलको भवति । अतः कश्चिदकोविदस्तदर्थं क्षेत्रमिदमस्माकमेवाभाव्य भवत्विति कृत्वा पूर्वमन्ये इह प्रथमं समागत्य मा क्षेत्र प्रेरयेयुरित्यतेषु भावावग्रहो ऽधिक्रियते । इदमेव भावयति ।

सच्चादलं ता उवहिम्मि सिच्छा,

सिच्छे रहस्सम्पि करेज्ज गंतुं ।

एमावयंते यणमच्छरणं,

तित्थस्स सच्छी दुहतो वि हाणी ॥

तथेन्द्रकीलादौ श्राद्धा केषांचिदाचार्याणामुपधिं वस्त्राद्युपकरणं दातु लग्नास्ते च न वर्तन्ते अस्माकमिद गृहीतुमिति भणित्वा ते निषिद्धा· तत· श्राद्धा पृच्छेयु· प्रेषणीयान्यन्यानि वस्त्राणि किमिति न कल्प्यन्ते ततो दृश्यत्वाभास्माकममूनि आभवन्तीति लक्षण तेषा पुरत कथयितव्यम् । तदेव विशिनष्टि कथिते सति ते श्राद्धा मन्युमप्रीतिं वा कुर्वीरन् । ये च सलब्धयो धर्मकथादिलब्धिसंपन्नास्ते मत्सरिणः वय किमपि तावन्न लप्स्यामहे अत किमर्थमेव प्रयास कुर्म इत्यनुशयेन तीर्थं धर्मकथादिना न प्रभावयन्ति । ततो ( दुहतो विहाणित्ति ) द्वयोरपि सचित्ताचित्तलाभयो· परिहाणिर्भवति । तत्र सचित्तहानि कोऽपि देशविरतिं वा न प्रतिपद्यते । अचित्तहानिराहार वस्त्रादि तथाविध न प्राप्यते अत एव तेषु नावग्रहो भवति । वसतिं प्रतीत्य पुनरेतेष्वपि भवति कथमित्याह ।

एगालयट्ठियाणं, तुमग्गणा दूरिमग्गणा नत्थि ।

आसण्णे तुन्नियाणं, तत्थ इमा मग्गणा होइ ॥

एकालय एकस्यां वसतौ स्थितानामवग्रहस्य मार्गणा भवति तत्र य पूर्वं तस्यां वसतौ स्थितस्तस्य सचित्तमचित्त वा आभवति असमक तौ बहव स्थितास्तदा साधारणा सा वसति । ये तु तस्या वसतेर्दूरे स्थितास्तेषामवग्रह-

स्य मार्गणा नास्ति । ये पुनरासन्ने स्थितास्तेषामियमवग्रहस्य मार्गणा भवति ।

सज्झायकाल्लकाइय-निल्लेवण अत्थणा असति अंतो ।
वसहिगमो पेल्लंते, वसहा पुण जसेसु पुण ॥

अन्त प्रतिश्रयस्याभ्यन्तरे यदि स्वाध्यायभूमेः कायिकभूमेः पात्रनिर्लेपनभूमेरासन ध्यानादिनिमित्तमुपवेशन तद्भूमेश्चाभावस्ततो या वहि स्वाध्यायभूमिप्रभृतयस्ताः समकमनुज्ञापिता साधारणाः । अथैके पूर्वस्थिता अपरे च पश्चात्तत्र पूर्वस्थितानामवग्रहः पश्चादागतास्तु पूर्वस्थितानननुज्ञापयन्ति यदि न प्रेर्यमाणा अवकाशेन जानन्ति इतरे च ते तमप्रेर्यमाणं प्रेरयन्ति ततो वसतिविषयेऽपि स एव प्रायश्चित्तादिगमो भवति । य पूर्वं क्षेत्रे प्रेरयतामुपलक्षणत्वादननुज्ञापयितु चोक्त वसतिः पुनरिह या समापूर्णा श्रमणराजकुला तस्याः प्रेरणायां दोषाः मन्तव्याः । उक्तमचत्रक्षेत्रम ॥

अथ व्रजमाह ।

वइगामत्थो सेणा, संवट्ट चउविहं चलं खेत्तं ।
एतेसिं णाणत्तं, वोच्छामि अहाणुपुव्वीए ॥

व्रजिकार्थसेनासंवर्त्त इति चतुर्विधं चलक्षेत्रम् । एतेषां चतुर्णामपि नानात्वं वक्ष्यामि यथानुपूर्व्या प्रतिज्ञातमेव करोति ।

जेणोग्गहिता वइगा, मार्गतह दूहज्जंमिपरिभोगा ।
समवइगपुव्वउग्गह साहारण जं च णीसाए ॥

येन साधुना सा व्रजिका पूर्वमवगृहीता स व्रजिकावग्रहस्य स्वामी भवति । तस्य व्रजिकावग्रहस्य किं प्रमाणमिति चिन्तायां नैगमपक्षाश्रिता इमे आदेशाः । तत्रैक आचार्यदेशीयो भणति यावत्प्रमाण भूभाग गावश्चरन्त्यश्चरन्तु व्रजन्ति तावान् व्रजिकाया अवग्रहः । अपरो ब्रवीति । ( तहत्ति ) तीर्थं जलपानस्थानमित्येकोऽर्थस्तत्र जलपानार्थं गावो यावद्गच्छन्ति अन्यः प्राह (दुहत्ति) यत्रोपस्थाने गावो दुह्यन्ति । आचार्य प्राह अथोऽप्येते अनादेशाः । अयन्तु समीचीन आदेशः (जंमिपरिभोगेत्ति) यावति भूभागे भगिरूका गन्त्वस्तिष्ठन्ति यावच्च व्रजिकाया समीपे गोभि परिभुक्त एतावद्व्रजिकावग्रहस्य प्रमाण मन्तव्यम । तत्र च यदि समकं द्वौ साधुवर्गावेकस्यां व्रजिकाया स्थितौ तदा साधारणा सा व्रजिका । अथैकः पूर्वं स्थितो द्वितीयस्तु व्रजिकान्तरेण सम पश्चादायातस्तत पूर्वस्यावग्रहो भवति । अथ परस्परनिश्रया स्थितस्तत साधारण तत क्षेत्रम । यस्याश्च व्रजिकाया निश्रया द्वितीया व्रजिका स्थिता तस्यां ये साधवस्तेषामवग्रह आभवतीति संग्रहगाथासमासार्थ ।

अथैनामेव विवरीषुरनादेशत्रय निरस्याचार्यो न त तावद्भावयति ।

णिगोयरे णेवणगोणियाणं, णोवद्धदुज्झंतेति व जत्थ गावे ।
अन्नत्थगेणोदिसु जत्थ खुत्तं,मउग्गहो सेसमणुग्गहो तु ॥

न गोचरो गवां चारिस्थान नैव च गवां यत्र पान नैव यत्रोपस्थाने गावो दुह्यन्ते किंतु व्रजिकाया अभ्यासमेव गवादिभि र्यावद्भुक्तम । आदि शब्दात्स्त्रीभिश्चयावदाक्रान्त तावानवग्रह शेष तु गोचरादिस्थान सर्वमप्यनवग्रह ।

जइ समग दो वइगा-ठिनानुसाधारणं ततो खेत्तं ।
अणुवज्जापसहिता, तत्थेवागेट्टिता अप्पत्ता ॥

यदि समकमेकस्या व्रजिकायां द्वौ गच्छौ स्थितौ ततः साधार॰ तत्क्षेत्रम । अथ काचिद्व्रजिका पूर्वं साधुभिरवगृहीता-तत्रान्ये साधवो ऽन्यया व्रजिकया सहिता पश्चादागतास्तत्र च व्रजिकायां स्थितास्तदा ते पश्चादागता अप्रभवः पूर्वस्थिता एव स्वामिन इति ।

अन्नोन्नं णीसाए,ठिताए साधारणं तु दोएहं पि ।
णीसट्ठिताए अपत्ते, तत्थ वत्थव्वयवसंता ।

अथ पूर्वस्थिता॰ पश्चादागता अन्योन्य परस्पर निश्रया स्थितास्तेषां द्वयेषामपि साधारणं क्षेत्रम् । अथ पूर्वस्या व्रजिकाया निश्रया स्थितायाः आगन्तुकव्रजिकायां ये साधवो वर्तन्ते ते ऽत्र तत्र अन्यत्र ये वसन्तो ऽवग्रहस्याप्रभवो न स्वामिनः किमर्थमन्यस्या व्रजिकाया निश्रां सा व्रजिका प्रतिपद्यते । उच्यते ।

दुग्गादि आवीरअहिट्ठिए वा, करेण वाणेव ठिएहिं पुव्वं ।
भएण तेयस्सव कारणेणं, वयंतगाणं खलु होइ णिस्सा ॥

दुर्गे स्तेनपरचक्राद्यगम्यस्थाने स्थिता साऽन्या व्रजिका । यद्वा वीरेण स्वामिना अधिष्ठिता अथवा तैः प्रथमव्रजिकासबन्धिभिर्गोकुलिकैस्तत्र निपान जलपानस्थानं कुतस्त्यमस्ति ततो यस्य वा कारणेन तस्यां व्रजिकायां तिष्ठतामपरेषां गोकुलिकानां निश्रा भवति एवमादिका व्रजिका येन कारणेन पूर्वस्या निश्रा प्रतिपद्यते तदभिहितम । अथ गन्तुकायाः निश्रा यया पूर्वं प्रतिपद्यते तथा दर्शयति ।

भयेण उत्थेउमणा, वइगा अप्पाय तत्थ जइ पज्जा ।
पच्छापत्ते निस्सा, जे पुव्वट्ठियाए ते पभुणे ॥

काचिद् व्रजिका भयेनोत्थातुमना प्रचलितुकामा अन्या च नवा व्रजिका यदि तत्रागच्छेत्सा च बद्धवता परिग्रहीता तत पश्चात्प्राप्ताया अपि तस्या निश्रा पूर्वं प्रतिपद्यते ततो ये पूर्वस्थिताः साधवस्ते अवगृहस्य न प्रभवः किंतु पश्चात्प्राप्ता इति । अथ व्रजिकाया एव प्रकारान्तरमाह ।

वइयाए उट्ठियाए, अत्थंते अहव होज्ज गेल्लन्नं ।
अण्णा तत्थ पविट्ठा, तम्मिव अप्पुम्मि वा होतु ॥

यस्यां व्रजिकायां साधव स्थिताः । अन्या च तत्रागन्तुकामा तैः श्रुता तत उत्थितायामपि व्रजिकायां तिष्ठताम् । अथवा ग्लानत्व कस्यापि साधोर्भवेत् ततस्तत्रैव स्थितानामन्ये गोकुलिका साधुभि सहितास्तत्र व्रजिकास्थाने प्रविष्टास्ते च तत्र अन्यत्र तीर्थे गा पानीय पातु ययुरन्यत्र वा ततो ऽत्रावग्रहमार्गणा क्रियते ।

जइ वा कुडीपकालिमु, पुव्विल्लकतासु ते ठिता संता ।
आणम्मिवि पज्जेत्ता, तहे अस्सामिणो होंति ॥

वा शब्द प्रकारान्तरद्योतकः यदि ते आगन्तुका पूर्वगोकुलिककृतासु कुटीपकालिकासु स्थितास्ततो ऽन्यस्मिन्नपि तीर्थे गा पाययन्तोऽस्वामिनो भवन्ति ततो यदि ते पूर्वस्थिताः साधवो निष्कारणिकास्तदा न प्रभवः । अथ ग्लानादिकारणे स्थितास्तदा त स्वामिनो नागन्तुकास्तत्रावग्रहस्य प्रभवः

अन्नत्थ वावि काउ, पाइंति कइल्ल पज्जइ निव्वाणो ।
ते खलु न हुति पहुणो, म भवे तहे पहू हुंति ॥

यद्वा पूर्वकृता कुटीपकालिका वर्जयित्वा अन्यत्र स्थाने स्थिता आगान्तुका गोकुलिका यदि पूर्वैः कृते निपाते गा पाययन्ति तदा ते आगन्तुका साधवो न प्रभवो भवन्ति । यदि तु स्वयंकृते तीर्थे स्वाभाविके निपाते पाययन्ति तदा आगन्तुका साधव प्रभव इति ।

एमेव मासकप्पे, अतीरिए उट्ठिया य पत्तियरा ।
पुव्विल्ला हुंति पउ–पुन्ने हठिए न लहंति ॥

एवमेव अतिरिक्ते असंपूर्णे मासकल्पे उत्थिता या पूर्वव्रजिका तत्र प्राप्ता तत· पूर्व्वसाधव एव प्रभव । अथ मासकल्प पूर्णस्ते च दृष्ट्वा अप्राप्ता अपि तत्रैव स्थितास्ततो नावग्रह लभन्ते पश्चात्प्राप्ता एव तत्र प्रभव इति ।

फासुगगोयरभूमी, उच्चारे चेव वसवसहीए ।
दट्ठावि लभंते व, तदभावे पच्छ जे पत्ता ॥

अथ तत्र प्रासुका गोचरभूमिः उच्चारभूमिश्च विद्यते वसतिश्च लभ्या प्राप्यते । अन्यच्च तत्र तथाविधनास्ति ततो दृष्ट्वा अपैव मनन्तरोक्तयुक्त्या लभन्ते तदभावे अनन्तरोक्तकारणाभावे ये पश्चात्प्राप्तास्त एव लभन्ते । गत व्रजिकाद्वारम ।

अथ सार्थद्वारमाह ।

जेण गहिओ सत्थो, जेण य सत्थ होइ समदोएहंति ।
जा वइया परिमत्था, पुव्वट्ठियसाहारणं जं च ॥

येन साधुना सार्थ· पूर्वं गृहीतो येन वा सार्थवाह· पूर्वमनुज्ञापितस्तस्यावग्रह आभवति । अथ समकमनुज्ञापितस्ततो द्वयोरप्यवग्रह यावन्तश्च प्रति सार्था मीलनार्यमर्थाल्लघुतरास्तत्र समागत्य मिलन्ति तेषु ये साधवस्ते पूर्वस्थित नामुपसम्पन्ना भवन्ति । यत्र परस्परनिश्रया द्वौ सार्थौ तिष्ठतस्तत साधारण मन्तव्यमिति । एतदेव स्पष्टयति ।

सत्थे सहप्पधाणा, एक्केणक्केण सत्थवाहेउ ।
ओपुच्छियावि दिण्णो, दोण्हवि मिलिया व एगत्था ॥

सार्थे ये केऽपि अथवा प्रधाना पुरुषास्ते एकेनानुज्ञापिता एकेन साधुना सार्थवाह आदिष्टस्तान्यां चोभयोरपि वितीर्णमनुज्ञापित ततो येन कृतं नातिक्रम्यते तेन यस्मै प्रदत्त तस्यावग्रह ॥ अथ द्वावप्यनतिक्रमणीयौ ततो द्वयोरपि साधारण क्षेत्रम् । अथ द्वावप्येकत्र मिलितौ अनुज्ञापितौ ततो येन पूर्वमनुज्ञापितस्तस्यावग्रह इति ।

इंतं महल्लसत्थं, डहरा गोपामिच्छउण तो पभुणो ।
तुरियं वा आधावति, मएण एमेव असामी ॥

महल्ल बृहत्तर कमपि सार्थमागच्छन्त डहरको लघुतर । सार्थप्रतिक्षते ततो ये लघुतरसार्थवासिन साधवस्ते नावग्रहस्य प्रभव । यो वा सार्थो भयेन त्वरित बृहत्तरसार्थं मिलनाय धावति तत्रापि ये साधवस्ते एवमेव स्वामिन ।बृहत्तरवासिन एवावग्रहस्य स्वामिन इति भाव· ।

अह वीमज्जंगिणादी, दुग्गं वा एत्थ दोवि वसिऊणं ।
वाले हामो पभाए, णिस्सा साधारणं कुणइ ॥

द्वौ सार्थमेकत्र मिलितौ परस्परमित्थ निश्रां कुरुते यथा यदिदमटवीमध्ये नदी दुर्गं वा विद्यते अत्र द्वयेऽपि जना रात्रावुषित्वा प्रभाते चलिष्याम । पुरतो गमिष्याम· इति परस्पर साधारणा निश्रा यत्र कुरुतस्तत्र सचित्तादिक सर्वमपि साधारणम् । गत सार्थद्वारम । अथ सेनाद्वारमाह ।

सेणाए जत्थ राया, अरणे अहो जत्थ पविट्ठो ।
मो सेसम्मि उग्गहो, जो उ वइगा य सो इहइं ॥

यत्र यस्या सेनाया राजा भवति तत्रावग्रहो न भवति यत्र वा ग्रामादौ क्षेत्रे स राजा प्रविष्टस्तत्र यद्यप्यन्ये साधव पूर्वं स्थिता सन्ति तथापि यावन्त काल स तत्रास्ते तावन्नावग्रह ॥ शेष नाम यत्र ग्रामादौ राजा न प्रविष्टो यो वा शून्यमेनो राजक इत्यर्थस्तत्रावग्रहो भवति पर तत्र यो व्रजिकायां गम उक्तः स इहापि मन्तव्य । गत सेनाद्वारम् ।

अथ संवर्तद्वारमाह ।

नागर गो संवट्टो, अणोग्गहो जत्थ वा य निहो मो ।
सेसम्मि उग्गहो जो, गामाउ सत्थम्मि सो इहइं ॥

नागरको नगरसम्बन्धी संवर्त्तोऽनवग्रहो न तत्रावग्रहो भवति । यत्र वा ग्रामादौ स नागरक संवर्त प्रविष्टस्तत्रापि नावग्रह· । शेषो ग्रामेयकसंवर्त्तस्तत्रावग्रहो भवति पर य एव सार्थे ग्राम उक्त· स एवेह द्रष्टव्यः ॥ बृ० ३ उ० ।

( १६ ) क्षेत्रत्यागसमय एवागता अपरे तर्हि स एवावग्रह ।

( सूत्रम् ) जद्दिवसं समणे निग्गंथा सिज्जासंथारयं विप्पजहंति । तद्दिवसं अवरे समणा निग्गथा हव्वमागच्छिज्जा सव्वे व उग्गहस्स पुव्वाणुण्णवणा चिट्ठइ अहालंदमविग्गहे ॥

अस्य सूत्रस्य क सबन्ध इत्याह ।

उग्गहए व उवगतो, सागारिय उज्झहा उ साधम्मी ।
गहितं व होइ खित्तं, केवतिकालं स संबंधो ॥

पूर्वसूत्रे तावदवग्रह एव प्रकृत· प्रस्तुतो वर्त्तते । "दोयपि अप्पुणवित्ता" इति वचनात् । इदमपि प्रकृतसूत्रमवग्रहविषयम् । यद्वा पूर्वसूत्रद्वये सागारिकावग्रह उक्त· इह तु सागारिकावग्रहादनन्तर साधर्मिकावग्रह प्रतिपाद्यते । अथवा पूर्वसूत्रेषु संस्तारक प्रत्यर्प्य विहार कर्तव्य इत्युक्तमत्र तु विहारे कृते तै साधुभिर्विहरितमपि तत्क्षेत्र कियन्त कालमवग्रहयुक्त भवतीति निरूप्यते एष सबन्धः । अनेनायातस्यास्य व्याख्या(जद्दिवसमिति)प्राकृतत्वात्सप्तम्यर्थे द्वितीया ततो यस्मिन्दिवसे श्रमणा निर्ग्रन्था शय्या च वसति संस्तारकश्च । तृणफलकात्मक शय्यासंस्तारकम् अत्र शय्याग्रहणेन ऋतुबद्धकाल सूचित· संस्तारकग्रहणेन तु वर्षाकाल । अथ कारणजाते ऋतुबद्धो य संस्तारको गृह्यते इति कृत्वा संस्तारकग्रहणेन द्वावपि गृहीतौ तत मासकल्पे वर्षावासे वा पूर्वे शय्या संस्तारक वा यस्मिन् दिवसे पूर्वस्थिता साधवो विप्रजहति परित्यजन्ति तद्दिवस एवापरे श्रमणा निर्ग्रन्थास्तत्र क्षेत्रे हव्वं शीघ्रमागच्छेयु· तत क्षेत्रेवग्रहस्य पूर्वानुज्ञापना तिष्ठति । किमुक्त भवति । य एव तत· क्षेत्रान्निर्गतास्तेषामेवावग्रहेण तत्क्षेत्र यत्तु तद्दिवसमन्ये आगतास्त क्षेत्रोपसम्पन्ना इति कृत्वा यत्तत्र सचित्तादिक तत्पूर्वस्थितानामाभाव्य कियन्त काल यावदित्याह ( अहालंदमविग्गहे ) इह यस्या वेलाया त साधवो निर्गतास्तावती वेला यावद् द्वितीयेऽप्यह्नि तेषामेवावग्रहो भवतीति वक्ष्यते । यतो यथालन्दमिहाहोरात्ररूपप्रमाण मध्यम गृह्यते एतावन्तमपि काल तदीय एवावग्रह तत्क्षेत्रम् अतो यद्यागन्तुकास्तत्र सचित्तादिग्रहण कुर्वन्ति तदा साधर्मिका स्तैन्यप्रत्यय प्रायश्चित्तमापद्यन्ते । अत्र तु सचित्तेनाधिकार इति सूत्रार्थ । अथ निर्युक्तिविस्तर । तत्र सचित्तावग्रहशैक्षविषय इति कृत्वा प्रथमतस्तदुत्पत्तिं दर्शयति ।

सुत्तत्थतदुभयेवि–सारए य धम्मकहिवाई ।
कालधुअम्मि व संते, उवसंतो स अण्णगामजणो ॥

कालधर्मे ऋतुबद्धवर्षावासलक्षणे क्वचित्क्षेत्रे वसतां स्वग्रामजनसकाशे याऽन्यग्रामान्तरवासिनः जनश्चादेशान्तरीर इह·

कथमित्याह । सूत्रमर्थस्तदुभयविशारद आचार्य सातिशय प्रवचनव्याख्यान करोति । क्षपको मासक्षपणादितपस्तप्यते धर्मकथाक्षीराश्रवादिलब्धिसम्पन्नतया वैराग्यजननीं धर्मकथां विदधाति । वादी परवादिन निरुत्तरीकरोति । एवमादिभिः प्रभावकैः स्वग्रामीणोऽन्यग्रामीणश्च श्रुयात् ज्ञात प्रव्रज्यायां-परिणत इति ॥

नीरोगेण सिवेण य, वासा वासासु णिग्गया साहू ।
अन्ने वि य विहरंता, तं चेवय आगता खित्तं ॥

नीरोगेण ग्लान्यभावेन शिवेन च राजादौ स्थाद्युपप्लवाभावेन वर्षावास कृत्वा ते साधवो निर्गता । इह वर्षावासे श्रुयात् काल एकत्र स्थीयते तत प्रवृतलोकस्योपशमो भवतीत्यभिप्रायेण वर्षावासग्रहणं कृतम् । अन्यथा ऋतुबद्धेऽपि मासकल्पानन्तरमेव विहार सम्भवति एव ते तत क्षेत्रान्निर्गता अन्ये च साधवो विहरन्तस्तदेव क्षेत्रमागतास्तत्रावग्रहचिन्तां चिकीर्षुराह ।

खित्तोग्गहप्पमाणं, तद्दिवसं केति के तहोरत्तं ।
जं वेला णिग्गयाणं, तं वेलं अण्णदिवसम्मि ॥

इह केचिदाचार्याः क्षेत्रावग्रहस्य कालप्रमाण ब्रुवते यस्मिन्दिवसे न निर्गतास्तमेवैक दिवसमवग्रहस्तत ऊर्ध्व रात्राव-वग्रहो व्यवच्छिद्यते । केचित्तु भणन्ति अहोरात्रमवग्रह । द्वितीये ऽहि सूर्योदयेऽवग्रहो व्यवच्छिद्यत इति भाव । सूरिराह द्वावप्येतावनादेशौ अथ पुनरादेशो यस्यां वेलायां निर्गतास्तस्यामेव वेलायां यावदन्यस्मिन् दिवसे अवग्रहो भवति तत परं व्यवच्छिद्यते इत्थ कालत प्रमाणमुक्तम् । क्षेत्रतस्तु सर्वत क्रोशयोजनमवग्रहस्तत ऊर्ध्वमनवग्रह इति ।

खित्तम्मि य वसहीय य,उग्गहे तहिं सिक्खमग्गणा होइ।
ते वि य पुरिसा दुविहा, रूवं जाणं अजाणं व ॥

इहावग्रह क्षेत्रे वा भावे वा वसतौ वा यदिन्द्रकीलादिविवर्जित ग्रामनगरादि तदिह क्षेत्र मन्तव्य तत्रावग्रह प्रतीत्य शैक्षमार्गणा कर्त्तव्या । कस्य भवति कस्य वा नेति विचारयितव्यमित्यर्थ । यत्पुनरिन्द्रकीलकादियुक्त तदवग्रहयोग्य क्षेत्रं न भवतीत्यक्षेत्रमभिधीयते तत्र वसतिविषया शैक्षमार्गणा भवति । सा चोपरिष्टात्करिष्यते । क्षेत्रविषयां तावत्करोति ( ते वि य इत्यादि ) ये पुरुषास्तत्र क्षेत्रे प्रव्रज्यां ग्रहीतुमायातास्ते द्विविधा एके रूप जानन्तो परे अजानन्त । इदमेव व्यक्तीकरोति ।

जाणंता जानता, चउव्विहा तत्थ होंति जाणंता ।
उभयं रूपं सद्द, चउत्थओ होइ जसकित्ती ॥

जानन्तोऽजानन्तश्चेति शैक्षा द्विविधा । तत्र जानन्तस्तावच्चतुर्विधास्तद्यथा एक शैक्षो विवक्षितक्षेत्रस्थितस्याचार्यादिरुभय रूप शब्द च जानाति । धर्मकथाश्रवणार्थ शिष्य समागतो रूपेण च तमुपलक्षयतीत्यर्थ । द्वितीयो रूपं जानाति न शब्दम् तृतीय शब्द न तद्रूप चतुर्थश्च पुनर्यश कीर्ति जानाति यश सर्वदिग्गामिनी प्रसिद्धि सैवैकदिग्गामिनी कीर्त्तिर्यश उपलक्षिता कीर्त्तिर्यश कीर्त्तिरिति समास । यस्तु रूपशब्दयश कीर्त्तीनामेकमपि न जानाति सोऽज्ञानान उच्यते अत द्वितीयतृतीयौ कृत्वा यथाक्रममभूतव भवन व्याचष्टे ।

उच्चारोन्नियामिमानि मृ, पासति रूपं विणिग्गयस्सागो ।
रत्ति इ चिताणितो, कालगयाहीं सुणति सद्दं ॥

चाउत्थो जसकित्तिं, भणइ सगेमेव सागिहवासी वा ।
उभयं रूवं सद्द, किंचि व ण जाणते चरिमो ॥

उच्चारभूमिचैत्यवन्दनादिषु कार्येषु विनिर्गतस्याचार्याद रूप पश्यति चैको द्वितीय शैक्ष पश्यति न पुन स्वरेण जानीते उपाश्रये तस्यानागमनात् । तृतीयस्तु शैक्ष कर्णादिकर्षक कृषीवलस्तत्प्रभृतिकः सकलमपि दिवस क्षेत्रादौ स्थित्वा रात्रौ प्रदोषे गृहमुपागच्छन् प्रभाते च भूयोऽपि निर्गच्छेत् । धर्मकथायांप्रवर्तते न तु रूपमवलोकते चतुर्थस्तु शैक्ष स्वग्रामवासी वा दूरस्थ सन् तद्रूप पश्यति न च धर्मकथादिशब्दं शृणोति किन्तु लोकमुखेन तेषामाचार्यादीनां यश कीर्त्तिं शृणोति । यस्तु चरमोऽजानान शैक्ष स रूपशब्दात्मकमुभय कीर्ति च न जानाति पर गृहवासनिर्विण्णतया प्रव्रज्यां ग्रहीतुमायात । वास्तव्यशैक्ष पञ्चविध उक्त ।

वायाउउत्ति एवं, पंचविहो आणुपुव्वीए ।
एएसि सेहाणं, पत्तेयं मग्गणा इणमो ॥

वाचाहूतो नाम आगन्तुक शैक्ष सोऽप्येवमेव तस्य शैक्षवत्पञ्चविध आनुपूर्व्या यथोक्तपरिपाट्या वक्तव्य । अथैतेषां द्वानामपि शैक्षाणां प्रत्येक पृथक् २ इयमेतेषु द्वारेषु मार्गणादि चारणा भवति तान्येव द्वाराण्यभिधित्सु श्लोकचतुष्टयमाह ।

अव्वावाए पुणो होइ, जावज्जीवपराजिए ।
वाघाओ संपए वावि, उद्दिओ विहरंतिते ॥
पढमे विय दिवसे तु, कहकप्पो उ जाणते ।
जाणाविए कहं कप्पो, पच्छन्ने तहमेविया ॥
इत्ता अणुकए यावि, कहं कप्पो णिधारणे ।
एगगामे अभिच्छंते, कहं कप्पो विहिज्जते ॥
दुविहा मग्गणा स सि, एगपिहा य परिच्छए ।
परिसेहियवर्चते, कहं कप्पो विहसाइ ॥

न विद्यते व्याघात प्रव्रज्याविघ्नो यस्यासा अव्याघात शैक्षपूर्वसाधुषु क्षेत्रान्निर्गतेष्वपि प्रव्रज्यां गृह्णाति न पुन कालक्षेप करोतीति भाव ( पुणेहोइत्ति ) पुनर्भूयोऽपि यदा किलते साधव समायास्यन्ति तदा प्रव्रजिष्यामीति कश्चित् शैक्षो ब्रुयात् ( जावज्जीवपराजिएत्ति ) यदा यदा अह प्रव्रजितुमभिलषामि तदा २ भवैर्विघ्नैरुत्थिष्यमानैर्यावज्जीवमह पराजित अत एव मे सांप्रतमपि व्याघात उत्थितो यदेव साधवो विहार कृतवन्त इति कश्चिद् ब्रुयात् । एषा शैक्षाणामेकतरे प्रथमद्वितीयदिवसयो प्रव्रजितुमुपस्थिते ज्ञायके कथञ्चन प्रकारेण कल्प पूर्वसाधुसमीपे प्रेषणादिको विधिर्विधीयते तथा वास्तव्ये चाचनाहृते वा त्वमस्माक न भवसीति ज्ञापिते कथ कल्पो भवेत् । ऋजुर्नाम य आचार्यादिरेनान् शैक्षान् पूर्वसाधुसमीपे प्रहिणोति तद्विपरीतो अनृजु । एतयोश्चिन्ता कर्त्तव्या । अभिधारणमेकमनेकान् वा साधून् सम्यगाश्रय शैक्षस्य गमन तत्र कथमाभाव्यानाभाव्यता क्रियते ( एगगामेत्ति ) यत्र ग्रामे क्षेत्रिका स्थितास्तत्रैव केनापि धर्मकथिना कोऽपि मिथ्यादृष्टिरुपशमित स कस्याभवति ( अइच्छतेत्ति ) कस्याप्याचार्यमभिधार्यातिक्रामति विवक्षितक्षेत्रमतीत्याग्रतो गच्छति शैक्षे कथ कल्पो विधीयते । तथा शिष्ये शिष्यविषया द्विधा अज्ञातके शैक्षके द्विप्रकारा मार्गणा भवति प्रतीच्छके च एकविधा केवलमहानक विषया मार्गणा ( परिसेहियच-

चतेत्ति ) भगवता प्रतिषिद्धज्ञानप्रतिचारणाभ्यापूनैः शैक्षो न प्रव्राजनीयो ये तु त प्रव्राज्यान्यत्र प्रेषयन्ति तैः प्रेषिते तस्मिन् गच्छान्तरं प्रव्रजति कथ कल्पो विधीयते । इत्येतत्सर्वं निरूपणीयम्।तत्र सगारः सकेतः स दत्तो यस्य शैक्षस्य स सगारदत्तः । आहिताग्न्यादेराकृतिगणत्वात्क्तान्तस्य परनिपात । तस्मिन्नपि कथ कल्पो विधीयते । इत्येतत्सर्वं निरूपणीयमिति द्वारश्लोकचतुष्टयसमासार्थ । अथ विस्तरार्थं विभाणिषु प्रथमतो ये पूर्वमुभयज्ञादयः पुरुषा उक्तास्तद्विषयवक्ष्यमाण प्रेषणभेदसग्रहायाह ।

चत्तारि णवगजाणं–तगम्मि जाणादिए वि चत्तारि ।
अभिधारणम्मि एए, खित्तम्मि विपरिणया वा वि ॥

य पूर्वमुभयज्ञरूपज्ञादिभेदाच्चतुर्धा ज्ञापक उक्तस्तत्र प्रत्येकं चत्वारो नवका प्रेषणनवप्रकाररूपा भवन्ति तथा यो ऽज्ञानान सन् साधुभिस्त्वमस्माक न भवसि किंतु पूर्वसाधूनामित्येवं ज्ञापित तत्रापि चत्वारो नवका । अभिधारण नाम मनसि करण तत क्षेत्रिक मनसिकृत्य यद्येते अव्याघातादय आगता तदा विपरिणता अपि क्षेत्रस्वामिन एव भोग्या इति सग्रहगाथासमासार्थ । अथैनामेव विवरीषुरव्याघातद्वारमङ्गीकृत्य तावदाह ।

पियमप्पियमभावे, दट्ठुं पुच्छति भावसाहंति ।
कुत्थगता ते भगवं, पुट्ठव्वे भणंति किं तेहिं ॥

क्षेत्रिकेषु निर्गतेषु य. साधुरुभयज्ञः शैक्षः सन् प्रव्रजामीत्यभिप्रायेणागतो यावदागन्तुकान् साधून् पश्यति ततस्ते साधवस्तस्य प्रियमप्रिय वा भाव प्रहसितमुखतया दीनमुखतया वा दृष्ट्वा पृच्छन्ति किमेव प्रहृष्टवदनश्चिन्तापरो वा पश्यसि एव दृष्ट्वा तेन स्वरूपे कथिते सति ( साहति ) सद्भाव कथयन्ति यथागतास्ते अन्यविहारेणेति समास्वस्यानेव पृच्छेत् कुत्र गतास्ते भगवन्तः एव पृष्टा सन्तो भणन्ति किं तैर्भवत प्रयोजनम् स प्राह—

पव्वइहिंति य भणिते, अनुगच्छगया वयंति दिक्खेओ ।
तेसिं समीवं णेमो, णयवाहण ते नयं सोयं ॥

प्रव्रजिष्याम्यहमिति तेन भणिते साधवो वदन्ति ते क्षेत्रिका अमुकत्र ग्रामादौ गता वय भवन्त दीक्षयित्वा प्रव्राज्य तेषां समीपे नयाम. । स च तकमनन्तरोक्त वचनं तव नैव व्याहन्ति न विकुट्टयति तथेति प्रतिपद्यते इत्यर्थ एषोऽव्याघात उच्यते ।

सघाडग एगेणं, पंचवपसेव मुंडिए तिष्ठि ।
तरुणेमज्झेथेरे, एक्केक्के तिष्ठि नव एते ॥

तत साधवस्त प्रव्राज्य सघाटकेन सह क्षेत्रिकाणामन्तिक प्रेषयन्ति। अथ सघाटको न पूर्यते तत एक साधुं सहाय दत्त्वा चालयन्ति तस्याप्यभावे एकाकिनमपि विसर्जयन्ति पर पन्थानमुपदिशेयु । यत तरुणस्य त्रय प्रकारा मध्यमस्थविरयोरप्येवमेव प्रत्येक त्रय एते नव भवन्ति एष प्रथमो नवकः ।

पढमदिणेसग्गामे, एको णवगो वितिज्जए वितिओ ।
एमेव परग्गामे, पढमे वितिए य जे णवगा ॥

एष एक प्रथमो नवक प्रथमदिने स्वग्रामे प्रव्राज्य प्रेषयतां मन्तव्य । द्वितीये दिवसे एवमेव द्वितीयो नवक एव ग्रामे द्वौ नवकौ उक्तौ परग्रामेऽप्येवमेव प्रथमद्वितीयदिवसयोर्द्वौ नवकौ एवमेते चत्वारो नवका मुण्डित प्रेषयतां भवन्ति ।

एमेव य मुंडियस्स वि, चउरो नवगा हवंति कायव्वा ।
एमेव य इत्थीणवि, णवगाण चउक्कगा दुष्णि ॥

एवमेव वा मुण्डितस्यापि प्रेष्यमाणस्य चत्वारो नवकाः कर्तव्या भवन्ति एवमेते द्वे नवकचतुष्टये पुरुषाणामुक्ते स्त्रीणामप्येवमेव द्वौ नवकानां चतुष्कौ सघाटकात्मद्वितीयादिभि प्रकारैः कर्त्तव्यौ । अथ क्षेत्रिकाणामन्तिके न प्रेषयन्ति किंतु स्वयमेव स्वीकुर्वन्ति ततश्चत्वारो गुरुका. ।

अथ किमर्थममुण्डित प्रेषयन्तीत्युच्यते ।

सागारियसंकाए, णिच्छति विच्छंति वा सयं मासे ।
तत्थ अच्छु पुणरवि, पच्छिह मसुंडिता एवं ॥

सागारिका. संज्ञातकास्तेषां शङ्कया मामसी उपव्राजयेयुरिति बुद्ध्या स्वग्रामे नेच्छति स शैक्ष. प्रव्रजितुम्। यद्वा अमी साधवः प्रव्राजित न मां ग्रहीष्यन्ति यदि च तान् साधून् न द्रक्ष्यामि तत पुनरपि अत्रैव प्रत्येष्यामि प्रत्यागमन करिष्ये इति बुद्ध्या नागन्तुकैरात्मान मुण्डापयति एवममुण्डित प्रेषयन्ति एत तावदुभयज्ञविषयो विधिरुक्तः ।

अथ रूपज्ञादिविषय तमेवातिदिशन्नाह ।

एमेव य णवगकमो, सद्दं रूवं च होइ जाणंतो ।
जो पुण किंत्ति जाणति, ण ते वयं सिस्सते तस्स ॥

एष एव नवकक्रमः शब्द रूप च जानाति शैक्षे वक्तव्य. शब्दमेव रूपमेव इत्यर्थ । य पुन शैक्ष. कीर्तिमेव जानाति न रूप न वा शब्द तस्य शिष्यत्वे निवेद्यते ते वय न भवामो येषां सकाशे भवान् प्रव्रजितुमायात इति ततो ब्रूयात् ।

किं न व कप्पइ तुब्भे, दिक्खेउं तेसि तो न अम्हाणं ।
तत्थ वि सो चेव गमो, णवगाणं जो पुरा भणितो ॥

किंवा युष्माकं दीक्षयितु न कल्प्यते तत साधुभिर्वक्तव्य तेषामेव त्वमाभवसि नास्माकमेवमुक्ते यद्यसौ भणति यद्येव तर्हि मां प्रव्राज्य तत्र प्रेषयत अमुण्डित वा विसर्जयत ततस्तत्रापि स एव गम प्रकारो य सघाटकात्मद्वितीयादिभिर्भेदैर्निष्पन्नानां नवकानां पुरा भणितः ॥ अथ " अभिधारणम्मि एए, खित्तमि वि परिणया वावि" इति पश्चार्द्धं व्याचष्टे ।

विपरिणया निज्जातिते, अम्हे तुब्भ भणंत संतेहिं ।
तह वि य ण वि ते तेसिं, अव्वाहयमादिया होंति ॥

ये अव्याघातादयो वाता शैक्षा अत्र प्रस्तुतास्ते क्षेत्रिकमभिधार्य प्रथममागता अपि कुतोऽपि हेतोस्त प्रति विपरिणतास्ततो यद्यागन्तुकान् भणन्ति वय युष्माकं सकाशे प्रव्रजिष्यामोऽलं पर्याप्त तै पूर्वसाधुभिरिति तथा ऽप्येव ब्रुवाणे अपि ते अव्याघातादयस्ते चागन्तुकाना न भवन्ति किंतु क्षेत्रिकस्यैव भवन्ति। गतमव्याघातद्वारम् । अथ पुणो दाह ति द्वारमाह ॥

एहिंति पुणो दाइं, पुट्ठे सिच्छिमिट य मणसाणा ।
बहुदोसे माणुस्से, अणुसासणणवग तह चेव ॥

आगन्तुकसाधूनां समीपे कुत्र गता इति पृष्टे ततस्तै शिष्टा अमुकत्र गता इति कथिते स शैक्षो ब्रूयात् ( एहिंतिपुणो हाइति ) यदा ते पुनरप्यत्रागमिष्यन्ति तदा प्रव्रजिष्यामि य एव भणति स वक्तव्य । सौम्य ! बहुदोषे बहन्तराये मानुष्ये मा प्रमाद कुरु एवमनुशासन कृत्वा तथैव नवकगमेन प्रेषण कर्त्तव्यम् । अनुशासनमेव विशेषत उपदर्शयति ।

जं कल्लं कायव्वं, णरेण अज्जेव तं वरं काउं ।

मच्चू अकलुणहियओ, न हु दीसति आवयंतो वि ॥

यदा दीक्षाग्रहणादिकार्यं कर्तव्यं द्वितीयदिने तदैव कर्तुं वरं प्रशस्यं यतो मृत्युरकरुणहृदयः स्वभावादेव कठोराशयस्तथा कथमप्यापतति। यथा आपतन्नपि न दृश्यते उक्तं " स्वकार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम्। को हि तद्वेत्ति कस्याद्य, मृत्युसेना पतिष्यति। " तथा।

तुरह्रा धम्मं काउं, मा हु पमायं खणं पि कुव्वीय।

बहुविग्घो हु मुहुत्तो मा, अवरण्हं पडिच्छाहि ॥

नव्यास्त्वरध्वं धर्मं कर्तुं मा क्षणमपि प्रमादं कुरुध्वं कुत इत्याह॥ बहवश्चत्वारिविषविश्वविकाशामुपघातामिदाहादिभेदादनेके विघ्ना जीवितान्तरायाः। यस्मादसौ बहुविघ्नो हुशब्दो यस्मादर्थे अपिशब्दस्य चानुक्तस्यापि गम्यमानत्वात्। यस्मान्मुहूर्तोऽपि बहुविघ्न आस्तां प्रहरदिवसादिरतो महाभाग मा प्रव्रज्याग्रहणे अपराह्णमपि प्रतीक्षिष्ठाः। एवमेव कृत्वा चतुर्भिर्नवकैस्तथैव प्रेषणीयम्। गत पुणो वाहंति द्वारम्।

अथ यावज्जीवपराजितद्वारमाह॥

बहुसो उवट्ठियस्सा, विग्घा उट्ठिंति जज्जियति जोमि।

अणुसासणपन्नवणा, णवगा य भावसमुसुयरे ॥

कौत्रिकाणां गमनवृत्तान्तं ज्ञात्वा कोऽपि शैक्षो ब्रूयाद्बहुशोऽनेकशः प्रव्रज्याग्रहणोपायस्थितोऽहं परं वारं वारं विघ्ना नवनवा उत्तिष्ठन्ति अतो यदद्य यावज्जीवमहं तैर्विघ्नैर्जितोऽस्मि यदेते साधवो विहृतवन्तः अतः परं तेषु समागतेषु प्रव्रजिष्यामि। एवं ब्रुवाणस्यानुशासनं कर्त्तव्यम्। भद्र ! साम्प्रतं तव चारित्रावारकाणामनुदयो वर्त्तते अतो मा प्रमादी को जानाति भूयोऽपि तेषामुदयो भवेत्। आवश्यकादिनिहितश्च कर्मवर्त्मदृष्टान्तस्तत्पुरतः प्ररूपणीयः। एवमनुशिष्य प्रस्थापनं कर्त्तव्यं तत्र च तथैव मुण्डितेन तयोः प्रत्येकं चत्वारो नवका भवन्ति। एवं प्रथमद्वितीयदिवसयोर्व्याहतादीनां कल्पना विधीयते। अथ ज्ञापिते कथं कल्पो वास्तव्ये वाताहतेऽपि चेति द्वारमाह।

वाताहते वि णवगा, ता हव जाणाविए अइयरे य।

एमेव य अत्थव्वे, णवगाण गमो अजाणंते ॥

वाताहतो द्विधा ज्ञापित इतरश्च। यः कौत्रिकाणां यशःकीर्तिमपि न जानाति स आगन्तुकसाधुभिस्त्वमस्माकं न भवसि ये गतास्तेषामेवाभवसीति सद्भावावगमं कारितो ज्ञापित उच्यते। इतरो नाम यश कीर्तिज्ञस्तत्र ज्ञापिते इतरस्मिन् वाताहते प्रव्रजितुमायाते तथैव चत्वारो नवका भवन्ति। वास्तव्योऽपि शैक्षोऽस्य कौत्रिकाणां यशःकीर्तिमपि न जानाति तत्रापि नवकानां गमः एवमेव मन्तव्यः। अथ वास्तव्यो वाताहतो वा यः कीर्तिमपि न जानाति स कीदृशो भवेदुच्यते।

अत्थव्वे वायाहए, सेवगपरतित्थियवणियएए य।

सव्वे ते उज्जुगाओ–प्पिणाऽसुब्बाइ वा जत्थ ॥

वास्तव्यो वा वाताहतो वा यो राजकुलसेवको यो वा परतीर्थिको यश्च वणिक् एते असन्निहितत्वेन यशःकीर्तिमपि गुरूणां न जानीयुः परं प्रथमद्वितीयदिवसयोः प्रव्रजितुमायातास्तेऽपि कौत्रिकाणामासाद्या। अथ ऋजुअनृजुद्वारचिन्ता क्रियते। य आचार्यं ऋजुर्भवति स सर्वानप्येतान् कौत्रिकाणामर्पयति। यत्र वा कौत्रिका भवन्ति तत्र मघादिकादिभिः प्रकारैः प्रस्थाप्य तानां मनः सीदयति।

माइल्ले बारसगं, जाणगजाणं वि एय चत्तारि।

पच्छन्ने वायहए, ण लभति चउरो अणुग्घाया ॥

यस्तु मायावी अनृजुः सन् प्रेषयति तत्र च प्रकाराणां द्वादशकं भवति। तानेवाग्रे वक्ष्यति। तथा ज्ञापके ज्ञापिते च समुदिताश्चत्वारः प्रकारा भवन्ति। तद्यथा ज्ञापकं प्रथमदिवसे न प्रेषयति। १ द्वितीये तमेव न प्रेषयति। एवं ज्ञापितस्यापि द्वौ प्रकारौ एतैर्वक्ष्यमाणैश्च प्रकारैर्वास्तव्यं वाताहतं वा अप्रेषयतश्चत्वारोऽनुद्घाता मासाः न च तान् शिक्षान् लभते कुलस्थविरादिभिर्विवादात्कौत्रिकाणां दाप्यंत इत्यर्थः॥

अथात्रैव प्रायश्चित्तवृद्धिमाह

सत्तरत्तं तवो होति, ततो छेदो पहावई।

छेदेण छिण्णपरियाए, ततो मूलं ततो दुगं ॥

प्रागिव इष्टव्यम् प्रकारद्वादशकमाह।

तरुणे मज्झिमथेरे, तद्दिणविइए य छक्कं छक्कं।

एमेव परग्गामे, छक्कं एमेव इत्थीसु ॥

पुरिसित्ति गाण एते, दो बारसगा उ मुंडिए होंति।

एमेव य सग्गिहम्मि य, जाणगजाणविए भयणे ॥

तरुणमध्यमस्थविरान्प्रत्येकं तद्दिवसे द्वितीयदिने वा प्रेषयतः एकं प्रकारषट्कं भवति एतच्च स्वग्रामविषयं परग्रामं एवमेव प्रकारषट्कं सर्वेऽप्येते द्वादश प्रकाराः पुरुषेषु भणिताः एवमेव च स्त्रीस्वपि प्रकारद्वादशकं भवति। एते द्वे द्वादशके पुरुषस्त्रीणां मुण्डितविषये भवतः। एवमेव च शैक्षकेऽपि शैक्षद्वादशद्वयं तदेव ज्ञापिते च प्रत्येकं ( भयणत्ति ) भङ्गकविकल्पास्तेषां चत्वारि द्वादशकानि भवन्ति। अथवा॥

अव्वाहायपुणोघात, जावज्जीवपराजिया।

तद्दिणपेसणीया–सग्गामे पकारबारसहा ॥

अव्याघातपुनरागतप्रव्राजितयावज्जीवपराजिताश्चेति त्रयः शैक्षाः। एतान् तद्दिने वा प्रेषयन् प्रकारषट्कम्। एतच्च स्वग्रामे इतरस्मिन् वा परग्रामे भवतीति कृत्वा द्वाभ्यां गुणितं द्वादशधा भवति। अथ ऋजु अनृजुलक्षणमाह।

जाणंतमजाणंते, णाइवायसेवाअमाइल्लो।

सो नेव उज्जुओ खलु, अणुज्जुओ जाणअप्पेति ॥

जानतोऽजानतो वा शैक्षान् योऽमायावी सकौत्रिकाणां समीपे स्वयं याति परहस्तेन वा प्रेषयति स एव ऋजुक उच्यते। अनृजुस्त्वसौ अभिधीयते यो न समर्पयति न वा प्रेषयति। अथैते वास्तव्यवाताहता जानन्तोऽजानन्तो वा अनृजुभिः प्रव्राजितास्ते स्वयं पश्चात्परिज्ञायन्ते। उच्यते ततोऽनुयानादिषु यत्र मिलितास्तत्र कौत्रिकैः कश्चिदनृजु प्रव्राजितो वाताहृतः पृष्टः कथं भवान्प्रव्रजितः स भणति।

तुज्झे वि य नीमाए, अहमागतो दिक्खितो वत्तेहिं।

अम्हे किं न पवइया, पुट्ठा वणते परिकहेसुं ॥

युष्माकमेव निश्रया अहमागतः। अमीभिः स्थविरादीक्षितः मया भूगममी पृष्टास्तत एभिराख्यातं वयं किं प्रव्राजिता न भवामो यदेव तान् मार्गयसि। यद्वा न पृष्टा सन्तः किमपि व्याख्यातवन्तः। एवं रूपशब्दे यशःकीर्तिज्ञो वक्ति। यस्तु कीर्तिमपि न जानाति स ब्रूयात्।

वायाहओ तु पुट्ठो, भणाइ अमुगदिए अमुगकालम्मि।

एतेहिं दिक्खितो हं, तुम्हे वि सुणासि तत्थासी ॥
तुशब्दस्य विशेषणार्थतया यो घाताहतो यश कीर्त्योरपि अज्ञायक. स पृष्टे भणति । अमुकदिने प्रतिपदादौ अमुष्मिन्काले मार्गशीर्षादौ मासे दीक्षितोऽहमेतै दीक्षानन्तर च शृणोमि । यथा स्वयमपि तत्रासीरागिति ।

एमेव य जसकीत्ति, जाणंते जदा तदा जाणाति ।
तस्स वि तहेव पुच्छा, पावयणिओ वा जहा जातो ॥
एवमेव वास्तव्यो ऽपि यो यश कीर्तिं जानाति तस्यापि तथैव स्नानादौ यदा पृच्छा कृता भवति तदा जायते । यदा वा असौ प्रावचनिको बहुश्रुतो जातस्तदा स्वयमेव जानाति नाहममीषामाभाव्य. । एव तावत् सचित्तविषयो विधिरुक्त ।

अथाचित्तादिविषय तमेव निर्दिशन्नाह ।

एमेव य अचित्ते, दुविहे उवहिम्मि मीसते चेव ।
पुच्छा अपुव्वमुवहिं, दट्ठूण अणुज्जु पूयाणं ।
एवमेते अचित्ते द्विविधे ओघोपगहोपधिभेदाद् द्विप्रकारे उपधौ मिश्रके च सापधिकशैक्षे विधिर्मन्तव्य । कथं पुनरसावाभाव्यो वा ज्ञायते इत्याह । अपूर्वसारतरमुपधिं दृष्ट्वा अनृजुभूतानां तेषामन्तिके पृच्छा भवति । क्वचित्कैरय कदा कुत्र वा गृहीत इत्येवं त प्रष्टव्या इति भाव ।

एवं वासावासे, उडुबद्धे पंथे जत्थ वा ठाति ।
सव्वत्थ वा होति उग्गहो, केसिं वि पदीवदिट्ठंतो ॥
एव वर्षावासे ऋतुबद्धे वा मासद्वय दिवसपञ्चक च पूर्वावग्रह इति । पथि वा व्रजतो यत्र क्वापि आचार्यस्तिष्ठति तत्र सर्वत सक्रोश योजनमवग्रहो भवति तत्राप्येवमेव सचित्तादीनामाभाव्यानाभाव्यविधिरवसातव्य' । केषांचिदाचार्याणामयमऽभिप्राय. मार्गे गच्छतां पृष्ठतो नास्त्यवग्रह. ॥ अथ वा नादेश. कुत इत्याह प्रदीपदृष्टान्तोऽत्र भवति । यथाहि प्रदीप. सर्वत प्रकाशयाति नैकामपि दिश प्रकाशशून्यां करोति एवमवग्रहोऽपि सर्वतो भवति न कुत्रचिन्न भवत्यपीति । एव तावत् क्षेत्रे सचित्तादिविषयो विधिरुक्तः ।

अथाक्षेत्रे तमेव निर्दिशति ।

अक्खित्ते वसधीए, जाणविए वि एमेव ।
उज्जुगमणुज्जुगे या, सो चेव गमो हवइ तत्थ ॥
अक्षेत्रे इह कालादियुक्ते नगरादौ सक्रोश योजनमवग्रहो भवति किं तु तत्र यस्यां वसतौ य पूर्वस्थितस्तस्यां सचित्तादिक यदुपतिष्ठते तत्तस्याभवति न पश्चादागतानां तत्रापि य एव क्षेत्रे गम उक्त. स एव सर्वोऽपि ज्ञापके ज्ञापिते च ऋजुके अनृजुके च वक्तव्य इति । अथ कथ कल्पोऽभिधारणीय इति निर्वचन्नाह ।

अणिदिट्ठ सण्ण सण्णि, गहितागहिए य सच्छंदो ।
णिद्दिट्ठलिंगसाहितो, सण्णी तस्सेव एससस्स ॥
अभिधारण प्रव्रज्यार्थमाचार्यादेर्मनसा सकल्पनम् तच्च द्विधा अनिर्दिष्ट निर्दिष्ट च अनिर्दिष्टं नाम धारयन् कमप्याचार्य विशेषतो न निर्दिशति स च अभिधारको द्विधा सञ्ज्ञी असञ्ज्ञी च पुनरेकैको द्विधा गृहीतलिङ्गोऽगृहीतलिङ्गश्च एष सर्वोऽप्योघत सामान्येनाचार्यविशेषमनिर्दिश्य प्रव्रजन् स्वच्छन्द आभाव्यो भवति यस्यान्तिके प्रव्रजति तस्यैवासौ शिष्य इत्यर्थ । निर्दिष्ट पुनरभिधारण तदुच्यते यत्रामुकस्याचार्यस्य समीपे प्रव्रजिष्यामीति निर्देशं करोति एषोऽपि द्विधा सञ्ज्ञी असञ्ज्ञी च । तत्र एकैको द्विधा लिङ्गसहितो लिङ्गरहितश्च । तत्र लिङ्गसहित सञ्ज्ञी यमाचार्यमभिधार्य गच्छति । विपरिणतोऽपि तस्यैवासौ भवति नान्यस्य ।

निद्दिट्ठव असण्णी, गहियागहिए य अगहिए सण्णी ।
तस्सेव अविपरिणतोवि, परिणते जस्स इच्छाया ॥
असञ्ज्ञी नाम गृहीतलिङ्गोऽगृहीतलिङ्गो वा भवतु । यस्तु संज्ञी श्रावक सोऽगृहीतलिङ्ग एते द्वयोऽप्यपरिणते भावे य निर्दिष्टमाचार्यमभिधार्य गच्छन्ति तस्यैव भवन्ति । अथ तं प्रति भावो विपरिणतस्ततो यस्य सकाशे तेषां प्रव्रजितुमिच्छा तस्यैव ते शिष्या' ॥

अथ किंकारण लिङ्गसहितो व्रजतीत्याह ॥

चारियसमुदाणट्ठा, तेण व गिहत्थन्ति धम्मसड्ढा वा ।
एएहि लिंगसहितो,सण्णी व सिया असण्णी व ॥
चारिको हेरिकस्तद्विषया शङ्का मा भूदिति बुद्ध्या लिङ्गं गृहित्वा व्रजति तथा समुदान भैक्ष तदर्थ लिङ्ग गृह्णाति गृहीतलिङ्गो हि सुखेनैव भिक्षामाप्नोति । स्वभावापान्तराले गृहिभ्रान्त्या धर्मश्रद्धालवो वा तिष्ठन्ति एतै. कारणै. सञ्ज्ञी वा असञ्ज्ञी साधुसमाचारीनिपुणो लिङ्गसहित. स्यादिति । इह यो निर्दिशन् प्रव्रजति एकमनेकान् वा निर्दिशेत् तत्र योऽनेकान् निर्दिशति स एव सकल्पयति यो मे प्रतिभापिष्यते तस्य सकाशे प्रव्रजिष्यामि । तद्विषय विधिमाह ।

णेगा उदिस्स गतो, लिंगेणं फालितो तु एकेणं ।
दट्ठुं व अचक्खुस्स, णिद्दिट्ठाणं गतो तस्स ॥
अनेकानाचार्यानुद्दिश्य लिङ्गेन सहितानां बहूनां निर्दिष्टानामन्तिके गतस्तत्र चैकेनास्फालित सादरमाभाषितो यदि तमभ्युपगतस्तदा तस्यैवासौ शिष्य । अथाभाषितोऽपि तमचक्षुष्यमनिर्दिष्ट दृष्ट्वा निर्दिष्टमेव कमप्यन्यमुपगतस्तदा तस्याभवति । इदमेव सविशेषमाह ।

निद्दिट्ठमनिद्दिट्ठं, अब्भुवगयलिंगिणो लभइ अण्णो ।
लिंगी व अलिंगी वा, सच्छंदेण य अणिद्दिट्ठो ॥
निर्दिष्टमनिर्दिष्ट वा आचार्यमभिधार्य गच्छन् लिङ्गी लिङ्गसहित शैक्षो यमाचार्यमभ्युपगतस्तस्यैवाभवति नैवान्यस्त लभते । यस्त्वनिर्दिष्टो नाद्यापि कमप्यभ्युपगत'स लिङ्गी वा भवतु अलिङ्गी वा स्वच्छन्देन यमभिलषति तस्याभवति ।

एमेव असिह सण्णी, णिद्दिट्ठस्सुवगतो ए असण्णस्स ।
अब्भुवगतो वि ससिहो, जस्सिच्छति दो असण्णीव ॥
लिङ्गसहित सञ्ज्ञी निर्दिष्टाना बहूनां मध्ये यमेवाभ्युपगतस्तस्यैवाभवति एवमेव शिखाकोऽपि सञ्ज्ञी बहून् निर्दिश्यागतो वा यस्यैव निर्दिष्टस्यान्तिके उपगत प्रव्रजितुं परिणतस्तस्यैवासौ शिष्यो भवति नान्यस्य यस्तु सशिखाक' सञ्ज्ञी स कमप्यभ्युपगतोऽपि यदि पश्चाद्विपरिणतस्तदा यस्यान्तिके प्रव्रजितुमिच्छति तस्याभवति ( दोहअसन्नीत्ति ) द्वौ वा शिखाकसशिखाकलक्षणौ यौ असञ्ज्ञिनौ तावपि पूर्वे कचनाभ्युपगतौ पश्चाद्विपरिणतौ स्वच्छन्देन यदुपकण्ठे प्रव्रजतस्तस्याभाव्यौ । अस्यैवार्थस्य सुखावबोधाय भङ्गकानाह ।

निद्दिट्ठससस्साचि, अब्भुवगतेतरअट्ठ लिंगिणो भंगा ।
एवमसिहे वि ससिहे वि, अट्ठ सव्वे चउव्वीसं ॥
कमप्याचार्यं निर्दिश्य गच्छन् निर्दिष्ट. सञ्ज्ञी श्रावक अभ्यु-

पगत प्रव्रजितु परिणत । एतैस्त्रिभि पदैः (इयरत्ति) प्रतिपक्षपदसहितैरष्टौ भङ्गा लिङ्गिनो लिङ्गसहितस्य गच्छतो भवन्ति। तथाहि निर्दिष्टः सञ्ज्ञी अभ्युपगत· १ निर्दिष्टः सञ्ज्ञी अनभ्युपगत ।२। निर्दिष्टो ऽसञ्ज्ञी अभ्युपगत· ३ निर्दिष्टो ऽसंज्ञी अनभ्युपगत ४ अनिर्दिष्टपदेनाप्येव चत्वारो भङ्गा लभ्यन्ते एते अष्टौ भङ्गा लिङ्गिन उक्ता· । अशिखाके चैवमेव प्रत्येकमष्टौ भङ्गा भवन्ति सर्वेऽप्येते मीलिताश्चतुर्विंशतिभङ्गा जायन्ते एतेषु विधिमाह ।

पढम विति ततिय पंच, सत्तम नवम तेरसेसु भंगेसु ।
विपरिणतो वि तस्सेव, होइ सेसेसु सच्छंदो ॥

प्रथमद्वितीयतृतीयपञ्चमसप्तमनवमत्रयोदशेषु विपरिणतोऽपि य निर्दिष्ट्यागतो य वा अभ्युपगतस्तस्यैवाभवति शेषेषु चतुर्थषष्ठाष्टमदशमैकादशद्वादशचतुर्दशादिषु चतुर्विंशतिषु स तद्दशसु भङ्गेषु स्वच्छन्द स्वेच्छ· य प्रतिभावी तस्यैवाभवतीत्यर्थ । इदमेव व्यक्तीकुर्वन्नाह ।

सव्वो लिंगी असिहो य, भावतो जस्स अब्भुवगतो सो ।
णिद्दिट्ठमसण्णिलिंगी, तस्सेवाणब्भुवगतो त्ति ॥

सर्वो लिङ्गी अशिखाकश्च श्रावको यस्यान्तिके ऽभ्युपगत· स एव त लभते। किमुक्त भवति यो लिङ्गसहितो ऽभ्युपगत स निर्दिष्टोऽनिर्दिष्टो वा सञ्ज्ञी असञ्ज्ञी वा भवतु यश्चाशिखाक· श्रावको ऽभ्युपगत सोऽपि निर्दिष्टो वा भवतु एप सर्वोऽपि यमेवाभ्युपगतो विपरिणतोऽपि तस्यैवाभवति एतेन प्रथमतृतीयपञ्चमसप्तमनवमत्रयोदशभङ्गास्सूचिता । तथा यो लिङ्गी निर्दिष्ट संज्ञी च स यद्यप्यनभ्युपगतस्तथापि यमेव निर्दिश्यागतस्तस्यैवाभवति न पुनर्विपरिणतोऽप्यन्यस्यानेन द्वितीयो भङ्गो गृहीत ।शेषेषु तु सप्तदशस्वपि गतेषु यत्राभ्युपगतस्तत्राविपरिणतस्तस्यैव विपरिणतस्तु स्वेच्छया यत्र तु नाभ्युपगतस्तत्र विपरिणतो ऽविपरिणतो वा यथा स्वच्छन्दमाभाव्य इति गत कथ कल्पो ऽभिधारण इति द्वारम् ।

अथैकग्रामे इति द्वारमाह ।

असन्नी उवसमितो अ-प्पणो इच्छीइ अमुहि तस्स ।
दट्ठूण च परिणए, उवसमित जस्स वा खेत्तं ॥

केनचिद्धर्मकथिना कश्चिदसंज्ञी मिथ्यादृष्टिरुपशमित प्रव्रज्याभिमुखीकृत स यावदद्यापि सम्यक्त्व प्रतिपद्यते तावत्प्रव्रजन् क्षेत्रिकस्याभवति । अथ सम्यक्त्व प्रतिपन्नस्तस्य क्षेत्रस्यस्याचार्यस्य सत्क ततो ऽसावात्मन इच्छया आभवति यदि क्षेत्रिकस्योपविष्टस्ततस्तस्यैव अथोपशामयत उपस्थितस्तत्रोपशमयत् एव एतौ द्वौ मुक्त्वा अन्यस्य नाभवति (अमुहित्ति ) अथान्यक्षेत्राद्बहिरुपशमितस्तदा तस्योपशामकस्याभवति । अथ केनापि नो कथित परमन्य कमप्याचार्यादिकं दृष्ट्वा स्वयमेव प्रव्रज्यायां परिणतस्ततोऽसौ क्षेत्राद्बहिरुपशान्त उपशामक आभवति । मूर्तिदर्शनकारिणोपशमनकारिण इत्यर्थ । अथ क्षेत्रान्तरुपशान्तस्ततो यस्य सत्क क्षेत्र तस्याभाव्य । अमुमेवार्थं सविशेषमाह ।

परखित्ते वसमाणो, अइक्कमतो व ण लभति असन्नादिय ।
दट्ठूण पुव्वसण्णी, गाहितसट्ठाणि सो लभति ॥

परक्षेत्रे मासकल्पे वर्षावासे वा वसन् अतिक्रामन् वा परक्षेत्रमध्येन गच्छन् तत्रावस्थितो ऽसंज्ञिनमप्रतिपन्नसम्यक्त्वस्य समुपशमितमपि न लभते । अथ कश्चिन्मिथ्यादृष्टि सम्यक्त्वमादिशब्दादणुव्रतानि वा ग्राहयित्वा क्षेत्रान्तर गत चूर्णो तद्र चन्द्र नदेव क्षेत्रमायात स च अणुपशमित इदानीं पूर्व सञ्ज्ञी लभ्यते ततस्त पूर्वसञ्ज्ञिन सम्यक्त्वादिग्राहित स उपशमकच्छन्देन लभते। किमुक्त भवति। उपशमिकं क्षेत्रिकं वा यमभिरोचयति तस्याभवति । एव त्रयाणां वर्षाणामागतो मन्तव्यः । त्रिषु वर्षेषु पूर्णेषु स पूर्वसञ्ज्ञी क्षेत्रिकस्यैवाभाव्यो नोपशमयत·॥ आह च चूर्णिकृत् "तिसु वरिसेसु पुण्णेसु खेत्तियस्स वा भवति । तोऽवसामितस्सत्ति" गतमेकग्रामद्वारम् ॥

अथातिक्रामन् द्वारमाह ।

सगंतो अण्णखित्ते, अभिधारितो उ भावतो तस्स ।
खित्तम्मि खित्तियस्स, बाहिं वा परिणतो तस्स ॥

शैक्ष कञ्चिदाचार्य मार्गयन् व्रजति तस्य चान्यक्षेत्रे परकीयक्षेत्राभ्यन्तरे पथि गच्छत· कश्चिद्धर्मकथी मिलित स यद्याकर्षणहेतोस्तस्य धर्म कथयति तदा यमाचार्यमभिधारयन् व्रजति तस्याभवति । अथ भावत· स्वभावादेव कथयति ततस्तस्य धर्मकथिकस्याभवति। तुशब्दो विशेषणे स चैतद्विशिनष्टि यदि क्षेत्राभ्यन्तरे स्वभावत कथयति तत क्षेत्रिपरिणत प्रव्रज्याभिमुखीभूत क्षेत्रिकस्य भवति वहिस्तु परिणतस्तस्य कथयत आभाव्य इति । इदमेव व्याचष्टे ॥

अभिधारित्तो वच्चति, पुच्छित्तो साहुवचतो तस्स ।
परिसगतो व कहइ, कड्ढण हेउं न तं लभति ॥

कञ्चिदाचार्यमभिधारयन् शैक्षो व्रजति तस्य कोऽपि साधुः पथि गच्छन् मिलितस्तेन च पृष्टोऽमुक आचार्य कुत्रास्ते साधुराह किं तेन भवत प्रयोजनम् । स प्राह । तस्यान्तिके प्रव्रजितुकामोऽहं पर दृष्ट्वा तस्य व्रजत एवाकर्षणहेतो ( साहत्ति ) धर्म कथयति यद्वा ग्रामे क्वापि पर्षदन्तर्गतस्य धर्म कथयत उपस्थितस्ततो वन्दित्वा तथैव स्वाभिप्राये कथिते स आकर्षणहेतोर्विशेषतो धर्म्म कथयति कथितं च यद्यसौ प्रव्रजितुमभिलषति ततो न त शैक्ष लभते। अभिधारिताचार्यस्यैव स आभवति ॥

उज्जुकहए परिणतं, अंतोखित्तस्स खित्तिओ लभइ ।
खित्तबहिं तु परिणयं, लभउज्जुकहीण खलु माई॥

अथासौ कथको धर्मकथी ऋजुक सद्भावत कथयति नाकर्षणहेतो· स च प्रव्रज्यायां परिणत क्षेत्रान्त परिणते क्षेत्रिको लभते क्षेत्राद्बहि· परिणत तु ऋजुको धर्मकथी लभते न खलु मायी मायावान् ।

परिणमइ अंतरा अं-तरा य भावोणियत्ति तत्तो से ।
खित्तम्मि खित्तियस्स, बहिं तु परिणतो तस्स ॥

अथ अन्तरान्तरा तस्य भाव प्रव्रज्यायां परिणमते निवर्त्तते वा तत क्षेत्रे परिणत क्षेत्रिकस्याभवति बहिस्तु परिणतस्तस्य धर्मकथिकस्याभवतीति । गतमतिक्रामन् द्वारम् ॥ अथ द्विधा मार्गणा शिष्ये एकविधा च प्रतिच्छके इति यदुक्तं तत्र प्रतीच्छकविषयां तावदेकविधां केवलराज्ञातीयविषयां मार्गणामाह ॥

माया पिया य भाया, भगिणी पुत्तो तहेव धुत्ता य ।
छप्पेते नालबद्धा, सेसेए भवति आयरिया ॥

माता पिता भ्राता भगिनी पुत्रस्तथैव दुहिता वा षडप्येते अनन्तरवल्लीमधिकृत्य नालबद्धा मन्तव्या । एते च अभिधारयन्त प्रतीच्छकस्याभवन्ति । उपलक्षणमिदं तेन परावल्लीबद्धा अपि वक्ष्यमाणा षोडश जना अभिधारयन्तस्तस्यैवाभवन्ति ।शेषास्तु ये नालबद्धा भवन्ति तेषु आचार्याः

आह । पौर्णमास्यामिह च चन्द्र इत्युक्ते मा भूत् रामचन्द्रादावपि सम्प्रत्यय इत्युडुपतिग्रहणम् । उडुपतिरपि च कश्चिदेकाक्येव भवति मृगपतिवदत उक्तं नक्षत्रपरिवारित । सोऽप्यपरिपूर्णोऽपि द्वितीयादिषु सम्भवतीति परिपूर्ण पौर्णमास्यामित्युक्तमेव भवति बहुश्रुतोऽसावपि हि नक्षत्राणामिवानेकसाधूनामधिपतिस्तथा तत्परिकरितः सकलकलोपेतत्वेन प्रतिपूर्णश्च भवतीति सूत्रार्थ । उत्त० ११ अ० । चन्द्रमण्डले, ज्यो० जलेशे, वरुणे च० । वाच० ॥

उडुवर-उडुवर-पुं०सूर्ये, "तिण्णि सहस्से सगले छच्च सए उडुवरो हरइ," तं० ।

उडुवाडियगण-उडुपाटितगण-पुं०भद्रजशानिर्गते गणे,"थेरेहिंतो भद्दजसेहिंतो भारद्दायसगोत्तेहिंतो एत्थ ण उडुवाडियणाम गणे णिग्गए" कल्प० ।

उडुविमाण-उडुविमाण-न० सौधर्मेशानयोः प्रथमप्रस्तटवर्तिनि चतसृणां विमानावलिकानां मध्यभागवर्तिनि वृत्ते स्वनामख्याते विमानकेन्द्रे,"उडुविमाणे णं विमाणे पणयालीस जोयणसयसहस्साइं आयामविक्खम्भेणं"पं०स० । सौधर्म्मकल्पे प्रथमे विमाने, स्था० ४ ठा० ।

उड्ड-उ ( ओ ) ड्र-पुं० प्राच्यदेशभेदे, स च मिथिलादेशात्पूर्वस्यां दिशीति प्रतीयते । वाच० ॥ तद्देशजे मनुष्ये च । स च देशोऽनार्य्यक्षेत्रम् । तद्वासी जनश्च म्लेच्छजातीय । प्रव० २७ अधि० । सूत्र० । प्रश्न० । वाच० । सर्वत्र उड्रशब्दश्रवणात् उकारादित्वम् । रघुनन्दनेन तु ओड्रश " देशाव्यवस्थितमित्युक्तत्वात् " ओकारादित्वमपि अस्य देशवाचित्वात् तस्य राजा तदस्याभिजन इत्यर्थे च । अण् ओड्र । तद्राजे, तद्वासिनि च । बहुषु तस्य लुक् । उड्र तद्राजेषु तन्निवासिषु च । वाच० ।

उड्डंचग-उड्डञ्चक-पुं० व्याकुष्टौ, उड्डचगा वाउट्टी, नि० चू०१उ० उड्डचका उद्घट्टकास्तान् कुर्वन्ति " बृ० १ उ० ॥

उड्डं ( डं ) डग-उद्दण्डक-पुं० वानप्रस्थतापसभेदेषु, ऊर्ध्वीकृतदण्डा ये सञ्चरन्ति । औ० । भ० ॥

उड्डय-उच्चारित-न० ( डकार ) इति प्रसिद्धे उद्गारे, " जभाइएण उड्डएण वायणिसग्गेण " आव० ५ अ० । ध० ।

उड्डावण-उड्डापन-न०आकर्षणे, "हिययउड्डावणे का उद्दावणहेउ" हृदयोड्डापन चित्ताकर्षणहेतुः । ज्ञा० १४ अ० ।

उड्डाह-उड्डाह-पु० उपघाते, "गेण्हणे दिट्ठ उड्डाहो, उड्डाह उपघात प्रवचनस्य भवति । ओ० । प्रवचनलाघवे, उड्डाहो नाम अहो अमीषामनुकम्पा ये विविक्तानामपि अस्माक चीवराणि न प्रयच्छन्ति । बृ० १ उ० । उड्डाहो नाम एते मायावन्त पापा वा परोपघातकारिणश्च । बृ० ३ उ० । मालिन्ये, व्य० प्र०२उ० । खिसायां च । "वोच्छेय पओसाई उड्डाहमनाणि वाओ य"प्रवचनस्य उड्डाहः खिसा । पिं० । नि० चू० ॥

उड्डेंत-उड्डीयमान-त्रि० प्रत्यासन्नमाकाशे परिभ्रमति, रा० ।

उड्डोय-देशी०पु०( डकार ) इति प्रसिद्धे उद्गारे, उड्डोए वा वातणिसग्गे वा करेमाणे आचा० २ श्रु० ।

उड्ढ-ऊर्ध्व-त्रि० उद्-हाङ्-ड-पृषो० ऊरादेश । उच्चे, उपरि उपरितने च । वाच० । उद्धं दूर वीइवइत्ता । स० । ऊर्ध्वमुपरि, अनु० । ऊर्ध्वलोके, प्रश्न० अध० ३ द्वा० । स्था० । सर्वोपरिस्थिते मोक्षे, " घडिया उड्ढमाया य णावकखे कयाइ वि " ऊर्ध्वलोकाग्रस्थान मोक्षम् । उत्त० ६ अ० " तम्हा उड्डत्ति पासहा अदक्खु कामाइ रोगव" ऊर्ध्वं मोक्ष योषित्परित्यागादूर्ध्वं यद् भवति " सूत्र० १ श्रु० २ अ० । उत्पाटिते, हेम० । अनुपविष्टे, दण्डायमाने, उत्क्षिप्ते, वाच० । शुन्ने च । अनु० । वमने, न० । बृ० १ उ० ।

उड्ढंक-उड्ढंक-न० मार्गस्योन्नते भूभागे, सूत्र० १ श्रु० २ अ० ।

उड्ढं ( ड्ढ ) जाणु-ऊर्ध्व ( र्द्ध ) जानु-त्रि० ऊर्ध्वे जानुनी यस्यासावूर्ध्वजानु । शुद्धपृथिव्यासनवर्जनादौपग्रहिकनिषद्याया अभावाच्चोत्कुटुकासने, " उड्ढ जाणू अहोसिरे झाणकोट्ठोवगए " भ० १ श० १ उ० । जं० । सू० प्र० । औ० । वि० । चन्द्र० । ज्ञा० । सो उड्ढंजाणू अहोसिरो चिंततो चिट्ठइ आव०४अ०

उड्ढकंडूयग-ऊर्ध्वकण्डूयक-त्रि० तापसभेदेषु, ये नाभेरुपर्येव कण्डूयन्ति नाधः । भ० ११ श० ९ उ० ।

उड्ढकाय-ऊर्ध्वकाय-पु०न० ऊर्ध्वं कायस्य एकदे० ३ त० । देहस्योर्ध्वभागे, काके च । " ते उड्ढकाएहिँ पखज्जमाणा अवरेहिँ खज्जति सणप्फएहिँ " ऊर्ध्वैः काकैः वैक्रियैः प्रखाद्यमानाः । सूत्र० १ श्रु. ५ अ. ७ श्रु० ।

उड्ढगारवपरिणाम-ऊर्ध्वगौरवपरिणाम-पुं० आयुःपरिणामभेदे, येन आयुः स्वभावेन जीवस्योर्ध्वदिशि गमनशक्तिलक्षणपरिणामो भवति स ऊर्ध्वगौरवगमनशक्तिलक्षणपरिणामो भवति स ऊर्ध्वगौरवपरिणामः । इह गौरवशब्दो गमनपर्य्यायः । स्था०१० ठा ।

उड्ढचर-ऊर्ध्वचर-त्रि०उपरिचरे गृध्रादौ,आचा०१श्रु०८ अ०८उ.

उड्ढणिरोह-ऊर्ध्वनिरोध-पु० वमननिरोधे, "उड्ढणिरोहे कुट्ठ, ऊर्ध्वं वमन तन्निरोधे कुष्ठं भवति । बृ. ३ उ० ।

उड्ढत्ता-ऊर्ध्व ( र्द्ध ) ता-स्त्री०मुख्यतायाम्, अहत्ताए नो उड्ढत्ताए दुक्खत्ताए नोसुहत्ताए भुज्जो परिणमति, भ० ६ श ३ उ० ।

उड्ढत्तासामण्ण-ऊर्ध्व ( र्द्ध ) तासामान्य-न० ऊर्ध्वमुल्लेखिताऽनुगताकारव्यत्ययेन परिच्छिद्यमानमूर्द्धतासामान्यम् । सामान्यभेदे,तत्स्वरूप यथा पूर्वापरपरिणामसाधारणद्रव्यमूर्ध्वतासामान्यं कटककङ्कणाद्यनुगामिकाञ्चनवदिति पूर्वापरपर्याययोरनुगतमेक द्रव्य द्रवति तांस्तान् पर्यायान् गच्छतीति व्युत्पत्त्या त्रिकालानुयायी यो वस्त्वंशस्तदूर्ध्वतासामान्यमित्यभिधीयते निदर्शनमुक्तामेव । र० ॥ (अत्र क्षणिकवादिबौद्धपूर्वपक्ष उत्तर च खणियशब्दे)

अथ सामान्यं द्विप्रकारं दर्शयन्नाह ।

ऊर्ध्वतादिमसामान्यं, पूर्वापरगुणोदयम् ।
पिण्डाश्रितादिसंस्थाना-नुगेका मृद्यथा स्थिता ॥ ४ ॥

पूर्वं प्रथमोऽपरोऽग्रेतनो यो गुणो विशेषस्तयोरुदयकरण पूर्वापरगुणोदय पूर्वापरपर्याययोरनुगतमेक द्रव्य त्रिकाली यो वस्त्वंशस्तदूर्ध्वतासामान्यमित्यभिधीयते । निदर्शनमुक्तमेव । यथा पिण्डो मृत्पिण्डः आश्रित कुसूल इत्यादयोऽनेके संस्थाना आकृतयस्तासु अनुगता पूर्वापरसाधारणपरिणामद्रव्यरूपा मृत्तिका तथाकारा स्थिता एतदूर्ध्वतासामान्य कथ्यते यदि च पिण्डकुसूलादिपर्यायेषु अनुगतमेक मृद्द्रव्यं न कथ्यते तर्हि घटादिपर्यायेषु अनुगत घटादिद्रव्यमपि न कथ्यते तदा च सर्वं विशेषरूपं भवतः क्षणिकवादिबौद्धमतमायाति,अथवा सर्वद्रव्येषु एकमेव द्रव्याणां गच्छतीति तत घटादिद्रव्ये अथवा तदन्तर्वर्तिसामान्यमृदादिद्रव्ये वानुभवानुसारेण परोर्ध्वतासामान्यमवश्यमङ्गीकर्त्तव्यम् । घटादिद्रव्याणि स्तोकपर्यायव्यापीनि पुनर्मृदादिद्रव्याणि बहुपर्यायव्यापीनि सन्ति इत्थं नरनारकादिद्रव्याणां विशेषो ज्ञातव्य ।

तत्सर्वमपि नैगमनयमतम् । नया शुद्धसंग्रहनयमते तु सदद्वैतनवादेन एकनैव द्रव्यमापद्यते इति ज्ञेयम् । द्र० ॥

**उड्ढदिसाइक्कम**--ऊर्ध्वदिगतिक्रम-- पुं० दिग्व्रतस्यातिचारभेदे, उपा० १ अ० ।

**उड्ढदिसिप्पमाणाइक्कम**-ऊर्ध्व (र्द्ध) दिक्प्रमाणातिक्रम-पुं० दिग्व्रतग्रहणे, ऊर्ध्वदिशि यावत्प्रमाणं परिगृहीतं तस्यातिलङ्घनरूपे, दिग्व्रतातिचारे, आव० ६ अ० ॥ उपा० ।

**उड्ढदिसिगमण**-ऊर्ध्वदिग्गमन-न० ऊर्ध्वं दिक् तत्सम्बन्धि तस्या गमनम् । एतावती दिगूर्ध्वपर्वताधोरोहणादवगाहनीया न परत इत्येवंकृते दिग्व्रतभेदे, आव० ६ अ० ।

**उड्ढदेह**-ऊर्ध्वदेह- पुं०-न० ऊर्ध्वं देहस्य शरीरस्योर्ध्वदेहे "खाणु व्व उड्ढदेहो, काउस्सग्गं तु ठाइज्जा" स्थाणुरिवोर्ध्वदेहो निष्प्रकम्प । आव० । ६ अ० ॥

**उड्ढपात्र**-ऊर्ध्वपाद-त्रि०६ त० ऊर्ध्वचरणे, "कंदतो कंदुकुंभीसु उड्ढपाओ अहोसिरो" उत्त० १९ अ० ॥ "उड्ढपाया सुवंग तहा तुम मरणं करहोहित्ति" आ० म० प्र० ॥

**उड्ढवद्ध**-ऊर्ध्वबद्ध-त्रि० वृक्षशाखादौ बद्धे " रसतो कंदुकुंभीसु, उड्ढबद्धो अबंधवो " ॥ उत्त० १९ अ० ।

**उड्ढभागि (ण्)** ऊर्ध्वभागिन्-त्रि० गगनतलभागिनि, उड्ढवाएसु उड्ढभागी भवति ऊर्ध्वं गतेषु वातेषूर्ध्वभागी भवत्यकायो गगनगत. वातवशाद्दिवि सम्मूर्च्छने जन्म । सूत्र० २ श्रु० ३ अ० ।

**उड्ढमुइंग**-ऊर्ध्वमृदङ्ग-पुं०ऊर्ध्वमुखे मृदङ्गभेदे, भ० ११श०१०उ० ।

**उड्ढमुइंगाकारसंठिय**-ऊर्ध्वमृदङ्गाकारसंस्थित-त्रि० ऊर्ध्वमूर्ध्वमुखो यो मृदङ्गस्तदाकारेण संस्थितो य स तथा। शरावसम्पुटाकारे, भ० ११ श० १० उ० ।

**उड्ढमुह**-ऊर्ध्वमुख-त्रि ऊर्ध्वं मुखमस्य । ऊर्ध्वगतप्रथमप्रसरे, ऊर्ध्वस्थिताग्रभागे , उन्नमितवदने च । स्वाङ्गत्वात् स्त्रियां ङीप् । ऊर्ध्वं मुखस्य एकदेशी तत्पुरुष । मुखस्योर्ध्वभागे, न० वाच० । " उड्ढमुहलोमजालसुकुमालणिद्धमउअआवत्तपसत्थलोमविरइ अरसरिवच्छच्छण्णविउलवच्छे " ॥ ऊर्ध्वं मुखं भूमेरुद्गच्छतामङ्कुराणामिव येषां तानि ऊर्ध्वमुखानि यानि लोमानि तेषां जाल समुहो यत्र स तथा । अनेन च श्रीवत्साकारव्यक्तिर्दर्शिता । अन्यथाऽ लोमोत्क्षिप्तेः श्रीवत्साकारानुद्भव स्यात् । सुकुमारस्निग्धानि नवनीतपिण्डादिद्रव्याणि तानीव मृदुकानि आवर्तैश्चिकुरसंस्थानविशेषै प्रशस्तानि माङ्गल्यानि दक्षिणावर्त्तानीत्यर्थ । यानि लोमानि तैर्विरचितो य. श्रीवत्सो महापुरुषाणां वक्षान्तर्वर्ती अभ्युन्नतोऽवयवस्तत पूर्वपदेन कर्मधारयस्तेन छन्नमाच्छादितं विपुलवक्षो यस्य स तथा ॥ जं० ३ वक्ष० ॥

**उड्ढरहिय**- और्ध्वरथिक- पुं० रूमके,और्ध्वरथिकशब्दोऽ स्ति 'कष्टेनेष्टविशिष्टार्थां महापुरीमिव मनुजगतिमनुप्रविशन्ति जन्तवोऽनुप्रविश्यापि चास्यामौर्ध्वरथिका ध्वाङ्क्षतस्करसभारा निरीक्षितुमपि नैव क्षमन्ते । उत्त० १ अ० । उत्तराध्ययनवृहद्वृत्तिप्रथमपत्रे स कस्य वाचक इति हीरविजयसूरिं प्रति कल्याणविजयगणिकृतप्रश्नो यथा अस्योत्तरं हीरविजयसूरिकृतम् ॥ तथा च ऊर्ध्वरथिकशब्दमाश्रित्य सिद्धान्तविषमपदपर्यायान्तर्गतोत्तराध्ययनविषमपर्याये रूमकवाचकत्वमुक्तमस्ति ॥ ३ ॥ ही० ।

**उड्ढरेणु**-ऊर्ध्वरेणु-स्त्री० पुं० जालप्रभाभिव्यङ्ग्य स्वत परतो वा ऊर्ध्वाधस्तिर्यक्चलनधर्म्मा रेणुरूर्ध्वरेणु. । प्रव०२५४द्वा० ॥ ऊर्ध्वाधस्तिर्यक्चलनधर्मोपलक्ष्ये रेणौ, तद्रूपेऽष्टश्लक्ष्णश्लक्ष्णिकालक्षणे प्रमाणभेदे, भ० ६ श ७ उ० । ज्यो० ॥

**उड्ढरोम**-ऊर्ध्वरोमन्-पुं० ऊर्ध्वानि रोमाण्यस्य । ऊर्ध्वमुखतया विकटरोम्णि यमदूतादौ, कुशद्वीपसीमापर्वते च । ऊर्ध्वमुखरोमयुक्ते त्रि० वाच० । "रोमसयकुच्छं व तस्स कविलफरुसाउ उड्ढलोमाओ, पत्थे कर्कशस्पर्श ऊर्ध्वरोमिकेन तिर्यग्गवनतेनेत्यर्थ दृष्टिकं उत्तरोष्ठरोमणि, उपा० । २ अ० ॥

**उड्ढलोग (य)** ऊर्ध्वलोक-पुं० ऊर्ध्वमुपरि व्यवस्थितो लोक ऊर्ध्वलोक अथवा ऊर्ध्वशब्द. शुभपर्यायस्तत्र च क्षेत्रस्य शुभत्वात्तदनुभावाद् द्रव्याणां प्राय. शुभा एव परिणामा भवन्त्यत. शुभपरिणामद्रव्यायोगादूर्ध्व शुभो लोक ऊर्ध्वलोक. । उक्तञ्च "उड्ढंति उवरि जं चिय, सुभखेत्त खेत्तओ य दव्वगुणा । उप्पज्जति सुभावा, तेण तओ उड्ढलोगत्ति" रुचकप्रतरद्वयस्य मध्ये एकस्मादुपरितनप्रतराद्वारभ्योर्ध्व नवयोजनशतानि परिहृत्य परतः किञ्चिन्न्यूनसप्तरज्ज्वायते क्षेत्रलोकभेदे, अनु० । आ० म० द्वि० ।

**उड्ढलोगचूला**-ऊर्ध्वलोकचूडा- स्त्री० " उड्ढलोगस्स चूला सिहा" ऊर्ध्वलोकस्य चूडा शिखा। ऊर्ध्वलोकचूडा । ईषत्प्राग्भाराख्ये क्षेत्रचूडाभेदे, नि० चू० १ उ०। "ईसीपब्भारा णामा य ईसित्ति" अप्पभावे य इति प्रायोवृत्त्या । भारगत्तिभारकंतस्स एरिसस्स गय पायसा ईसेणय भवति जाव एव ठिता सा पुढवी ईसीपब्भारा णाम इति एतमभिहाणतस्स सायदव्वट्ठसिद्धिविणाउ उवरिं बारसेहिं जोयणेहिं भवति तेण सा उड्ढलोगचूला भवति । नि० चू० १ उ० ॥

**उड्ढलोगवत्थव्व**-ऊर्ध्वलोकवास्तव्य- त्रि० ऊर्ध्वलोकवासिनि, " उड्ढलोगवत्थव्वाओ अट्ठ दिसाकुमारीओ " ऊर्ध्वलोकवास्तव्या नन्दनकूटनिवासिन्य इत्यर्थ । ज्ञा० ८ अ० ।

**उड्ढलोग (य) विभत्ति**-ऊर्ध्वलोकविभक्ति-स्त्री० स्थानाश्रयणात्क्षेत्रविभक्तिभेदे, । सा च ऊर्ध्वलोकविभक्ति सौधर्माद्या उपर्युपरि व्यवस्थिता द्वादश देवलोका नवग्रैवेयकानि पञ्चमहाविमानानि तत्रापि विमानकेन्द्रकावलिप्रविष्टपुष्पावकीर्णकवृत्तत्र्यस्रचतुरस्रविमानस्वरूपनिरूपणामिति ॥ सूत्र० १ श्रु० ५ अ० ।

**उड्ढवाइयगण**--ऊर्ध्ववातिकगण--पुं०श्रमणस्य भगवतो महावीरस्य नवगणानां पञ्चमे गणे, स्था० ९ ठा० । " थेरेहिंतो भद्दजसेहिंतो भारद्दायसगोत्तेहिंतो एत्थ ण उड्ढवाडिय णामं गणे णिग्गए " कल्प० ॥

**उड्ढवाय**--ऊर्ध्ववात पुं० ऊर्ध्वमुत्क्षिपन् यो वाति वात. स ऊर्ध्ववात । वादरवायुकायभेदे, जीवा० १ प्रति० । स्था० । प्रज्ञा०१ ।
ऊर्ध्वंगतो वात. सुश्रुतोक्ते स्वाभाविकगतिरोधेन ऊर्ध्वगते वायौ,- स च मूत्रादिवेगधारणाद् भवति । वाच० ॥

**उड्ढा**--ऊर्ध्वम्-अव्य० दिग्भेदे, स्था० ६ ठा० ।

**उड्ढाइक्कम**-ऊर्ध्वादिक्रम-पुं०ऊर्ध्वादिषु ऊर्ध्वाधस्तिरश्चीषु दिक्षु क्रमः क्रमण विवक्षितक्षेत्रात्परत इति गम्यते अथ ऊर्ध्वादिक्रम । ऊर्ध्वदिक्प्रमाणातिक्रमाधोदिक्प्रमाणातिक्रमतिर्यग्दिक्प्रमातिक्रम--लक्षणे दिग्व्रतातिचारत्रये, पञ्चा० १ विव ।

**उड्ढोववरणग**-ऊर्ध्वोपपन्नक-पुं० सौधर्मादिभ्यो द्वादशेभ्यः कल्पेभ्य. ऊर्ध्वं ग्रैवेयकानुत्तरविमानेषूपपन्ना उत्पन्ना. । कल्पातीतेषु देवेषु जं०७वक्ष०। जी०।ऊर्ध्वलोकेषूपपन्नेषु, स्था० २ठा०।

जे देवा उड्ढोववन्नगा ते दुविहा पन्नत्ता । कप्पोववन्नगा विमाणोववन्नगा ।
ऊर्ध्वलोकस्तत्रोपपन्नका उत्पन्ना ऊर्ध्वोपपन्नकास्ते च द्विधा कल्पोपपन्नका सौधर्म्मादिदेवलोकोत्पन्नकास्तथा विमानोपपन्नकाः ग्रैवेयकानुत्तरलक्षणविमानोत्पन्नाः कल्पातीता इत्यर्थः । स्था० २ ठा० ।

उण-पुनर्-अव्य० पनस्तुतौ वा अरि पृषो प्राकृते स्वरादसयुक्तस्यानादेः' इत्यनुवृत्तिसहितस्य । कगचजतदपयवां प्रायो लुगि ' ति सूत्रस्य क्वचिदादेरपि लुग्विधानात्पकारस्य वा लुक् स उण स पुन । प्रा० । द्वितीयवारे, प्रथमे भेदे च । अमरः ( पुणशब्दे सर्वेऽर्थाः प्रदर्शयिष्यन्ते )

उण्ण ( उरण ) ऊर्ण-त्रि० ऊर्णा अस्त्यस्य कारणत्वेन अर्श० अच् । मेषलोमरचिते वस्त्रादौ, मेषलोम्नि,स्त्री० ललाटस्था चिन्हभेदे, वाच० । शब्दे, स च वर्णात्मकोऽर्थ स्यानोर्णार्थालम्बन तदन्यथोगपरिभवनम्, षो० । ३ विव० ।

उण्णइज्जमाण-उन्नीयमान-त्रि० उन्नतिं क्रियमाणे, उन्नतिं प्राप्यमाणे, औ० ॥

उण्णकप्पास-ऊर्णकार्पास-पु० कर्म० स० । मेषलोम्नि, उण्णत्तिलासाणगद्दए भवति तस्स रोमा कव्वणिज्जा कप्पासो भण्णत्ति अहवा उण्णए कप्पासो । जे भिक्खू साणकप्पासा उ वा उण्णकप्पासाउ वा । नि० चू० १ उ० ।

उण्णणाभ-ऊर्णनाभ-पु० ऊर्णेव सूत्र नाभौ गर्भेऽस्य अच् समा० । लूतायाम्, दीर्घादिरयमिति केचित् । वाच० "ऊर्णनाभ इवांशून्या, चन्द्रकान्त इवाम्भसाम्" उर्णनाभोऽत्र कर्मठको व्याख्यात । सम० ।

उण्णमणी-उन्नमनी-स्त्री० उण्णामिय जासियं वि, उण्णमणी इति निरुक्ते द्वितीयगौणानुज्ञायाम्, प०भा० । न० ॥

उण्णामिय-उन्नम्य-अव्य० उद् नम् ल्यप् । उन्नतीकृत्येत्यर्थे, । "उद्दिसिय २ उण्णमिय २ णिज्झापज्जा" आचा० २ श्रु० १ अ० ५ उ० ।

उण्णय-उन्नत(य)-त्रि० उद्० नम्० क्त० । उच्चे, रा० । अभ्युन्नते, ज० २ वक्ष० । तुङ्गे, त० । प्रश्न० । गुणवति, औ० "अज्जवय चरियदाम्गोपुरतोरणउण्णयसुविभत्तरायमग्गा " । उन्नतानि गुणवन्ति उच्चानि च । ज्ञा० १ अ० । स्था० । उन्नत ऊर्ध्वत शरीरेणोच्छ्रित भावतस्त्वभिमानग्रहग्रस्तः । सूत्र० १ श्रु० १६ अ० । स्था० ( पुरिसजाय शब्दे विवरणम् ) उच्छ्रिन्न नत पूर्वप्रवृत्त नमनमभिमानाद्युन्नतमुच्छ्रितो वा नयो नीतिरभिमानादेव उन्नयो नयाभाव इत्यर्थः । मानविशेषे, पु० तत्परिणामजनके कर्मणि च नपु० । भ० १२ श० ५ उ० । मोहनीये, स० । उण्णयरइयतलिणतवसुइणिद्धणक्ख —उन्नतरति दतलिनताम्रशुचिस्निग्धनख-उन्नता ऊर्ध्व नता रतिदा रमणीया स्तलिना प्रतलास्ताम्रा ईषद्रक्ताः शुचयः पवित्रा स्निग्धाः स्निग्धच्छाया नखा यस्य । सुलक्षणयुक्तपादाङ्गुलीके, त्रि० जी० ३ प्रति० ।

उण्णयतणुतंबणिद्धनख-उन्नततनुताम्रस्निग्धनख-त्रि०उन्नता अनिम्नास्तनव प्रतलास्ताम्रा अरुणाः स्निग्धा कान्ताः नखा पादाङ्गुल्यवयवा यस्य स तथा । सुलक्षणयुक्तपादाङ्गुलीके, औ० । जी० । त० ।

उण्णयमण-उन्नतमनस्-त्रि० प्रकृत्या औदार्य्यादियुक्तमनसि, स्था० ४ ठा० ।

उण्णयमण्ण-उन्नतंमन्य-त्रि० उन्नतमात्मान मन्यते यः स तथा आत्मानमुन्नतिमन्त मन्यमाने, आचा० १ श्रु० ५ अ० ४ उ० ।

उण्णयमाण-उन्नतमान-त्रि० उन्नतो मानोऽस्येत्युन्नतमानः । गर्वाध्माते, " उण्णयमाणे य णरे महतमोहेण मुज्झसि " उन्नतो मानोऽस्येति उन्नतमानः । उन्नत चात्मान मन्यते स चैवभूतो नरो मनुष्यो महता मोहेन प्रबलमोहनीयोदयेनाज्ञानोदयेन वा मुह्यति कार्य्याकार्य्यविकलो भवति । आचा० १ श्रु० ५ अ० ४ उ० ।

उण्णयावत्त-उन्नतावर्त-पु० उन्नत उच्छ्रित स चासावावर्तश्चेति उन्नतावर्तः । आवर्तभेदे, स च पर्वतशिखरारोहणमार्गस्य-वातोत्कलिकाया वा । स्था० ४ ठा० ।

उण्णयासण-उन्नतासन-न० उच्चासने, रा० । ज० । जी० ॥

उण्णा-उ ( ऊ ) र्णा-स्त्री०ऊर्णूयते आच्छाद्यते,ऊर्णु ड्रा ह्रस्वः मेषादिलोम्नि, ललाटस्थलोमसमूहात्मके चिह्नभेदे, वाच० । दीर्घादिरयमिति बहवः वाच० स्था० आ० म० प्र० ।

उण्णाग-उन्नाक-पुं०स्वनामख्याते सन्निवेशे, यत्र महावीरस्वामिना विहृतम् । "ततो सामी उण्णाग वच्चाति तत्यन्तए वहूवरं सपडिहुत्त एइंताणि पुण दोवि विरूवाणि दतुराणि य तत्थ गोसालो भणइ अहो इमो सुसजोगे" आ०म०द्वि० ।

उण्णाम-उन्नाम-पु०प्रणतस्य मदानुप्रवेशादुन्नमनमुन्नाम मानविशेषे, तत्परिणामजनके मोहनीयकर्मणि च । न० । भ० १२ श० ५ उ० । स० ॥

उण्णिद्द-उन्निद्र-त्रि० उद्गता निद्रा मुद्रा यस्य । विकसिते, निद्राशब्दस्य मुद्रामुकुलीभावरूपनेत्रनिमीलनार्थकत्वेन तथात्वम् निद्रारहिते च । वाच० उन्निद्रं विजृम्भित हसित उद्धूर्मित्यादि पर्य्यायाः । विशे० ।

उण्णिय-और्णिक-त्रि०ऊर्णया निमित्त सयोग उपपातो वा ठञ् । तन्निमित्तादौ, स्त्रियां ङीप् । वाच० । ऊर्णमये सूत्रादौ, आ० म० प्र० । ऊर्णरोमनिष्पन्ने वस्त्रे, वृ० २ उ० । नि० चू० ॥ उष्ट्रलोममये रजोहरणे, स्था०५ ठा० । जीत० ॥

उन्नीत-त्रि० उद्-नी क्त-ऊर्ध्वं नीते, वितर्किते च । वाच० । पृथग्व्यवस्थापिते, "द्वाभ्यां नयाभ्यामुन्नीतमपि शास्त्र कणाशिना" । नयो० ।

उण्णु-(न्नु) इतो-उन्नुइतो-देशीपदमेतत् । गर्वे वर्तते इत्यस्मिन्नर्थे,पव भणितो सतो उण्णुइतो सो कहेइ सव्व तुण्य०द्वि०१०उ० ।

उण्ह-उष्ण-पु० । उषति दहति जन्तूनित्युष्णः उष् नक् उत्त०१ अ० । सूर्यादिपरितापे, पि० । आहारपाकादिकारणे, ज्वलनाद्यनुगते स्पर्शभेदे, कर्म० । ग्रीष्मर्तौ, पलाण्डौ च । अर्श० अच् । तद्वति, आलस्यरहिते, दक्षे च । वाच० । सीएण उण्हेण सिएण लुक्खेण काळण रूहेण सणेण" आचा० १ श्रु० ५ अ० ६ उ० । ( उण्णशब्दनिक्षेप सीउण्ह शब्दे )

उण्ह (उसिण) परि (री) सह-उष्णपरि (री) षह-पु० उष दाहे इत्यस्यौणादिकनक्प्रत्ययान्तस्य उष्ण निदाघादितापात्मकम्-तदेव परीषह उष्णपरीषह । उत्त०१ अ० । प्र० । स च'उष्णेन तप्तो नैवोष्णं निन्देच्छायां च न स्मरेत् । वीजनं व्यजन गात्राभिषेकादि न वर्जयेत्' । ध०३अधि० ॥ पाठान्तरेण । "उष्णतप्तो न त निन्देच्छायामपि न सस्मरेत् । स्नानगात्राभिषेकादि-वर्जन वाऽपि वर्जयेत्" । आ० म० द्वि० ।

पुट्ठे गिम्हाहि तावेणं, विमणेसुप्पिवासिए ॥
तत्थ मंदा विसीयंति, मच्छा अप्पोदए जहा ॥ ५ ॥

ग्रीष्मे ज्येष्ठाषाढाख्ये अग्निनापस्तेन स्पृष्टःस्पृष्टो व्याप्तः सन् । विमना विमनस्कः सुष्टु वा अतिशयेन पातुमिच्छा पिपासा तां प्राप्तो नितरां नृभभिभूतो बाहुल्येन दैन्यमुपयातीति दर्शयति ॥ तत्र तस्मिन्नुष्णपरीषहोदये मन्दा जडा अशक्ता विषीदन्ति । पराभङ्गमुपयान्ति । दृष्टान्तमाह । यथा मत्स्या अल्पोदके विषीदन्ति । गमनाभावान्मरणमुपयान्त्येव सत्वाभावात्संयमात् भ्रश्यन्त इति । इदमुक्तं भवति । यथा मत्स्या अल्पत्वादुदकस्य ग्रीष्माग्नितापेन तप्ता अवसीदन्त्येवमल्पसत्वाश्चारित्रप्रतिपत्तावपि जलमलस्वेदक्लिन्नगात्रा बहिरुष्णाभितप्ताः शीतलान् जलाश्रयान् जलाधारगृहचन्दनादीनुष्णप्रतीकारहेतूननुस्मरन्त आकुलितचेतसः संयमानुष्ठानं प्रति विषीदन्ति॥५॥सूत्र०१श्रु० ३अ०।

उसिणपरियावेणं, परिदाहेण तज्जिए ।

घिंसु वा परियावेणं, सायं नो परिदेवए ॥ ८ ॥

उष्णमुष्णस्पर्शवद्भूशिलादि तेन परितापः तेन तथा परिदाहेन बहिः स्वेदमलाभ्यां वह्निना चान्तश्च तृष्णया जनितनिदाघस्वरूपेण तर्जितो भर्त्सितोऽत्यन्तपीडित इति यावत् । तथा ग्रीष्मे वाशब्दात् शरदि वा परितापेन रविकिरणादिजनितेन तर्जित इति सम्बन्धः । किमित्याह । सातं सुखं प्रतीति शेषं न परिदेवेत किमुक्तं भवति । नारीकुचोरुकरपल्लवोपगूढैः क्वचित्सुखं प्राप्ता क्वचिदङ्गैर्ज्वलितैस्तीक्ष्णैः पक्वाः स्म नरकेष्वित्यादि परिभावयन् हा कथं मम मन्दभाग्यस्य सुखं स्यादिति न प्रलपेत । यद्वा सातमिति सातहेतुं प्रति यथा हा कथं कदा वा शीतकाले शीतांशुकरकलापादयो वा मम सुखोत्पादकाः संपत्स्यन्त इति न परिदेवेत इति सूत्रार्थः ॥

उपदेशान्तरमाह ।

उण्हाहितत्तो मेहावी, सिणाणं नो वि पत्थए ।

गायं नो परिसिंचिज्जा, न वीएज्जा य अप्पयं ॥९॥

मेधावी मर्यादानतिवर्ती स्नानं शौचं देशसर्वभेदभिन्नं नाभिप्रार्थयेत नैवाभिलषेत् पतन्ति च ( नो वि पत्थएत्ति ) अपिभिन्नक्रमत्वात्प्रार्थयेदपि न किन्तु पुनः कुर्यात्तथागात्रं शरीरं नो परिसिञ्चन् सूक्ष्मादकबिन्दुभिरार्द्रीकुर्यात् न वीजयेच्च तालवृन्तादिना (अप्पयंति)आत्मानमथवाऽल्पमेवाल्पकं किं पुनर्बह्विति सूत्रार्थः । साम्प्रतं शिष्याचारमनुस्मरन् उवरितावेणन्यादिसूत्रावयवसूचितमुदाहरणं निर्युक्तिकृदाह-

तगराए अरिहमित्तो, अरिहण्णे तोयभद्दा य ।

वणियमहिलं चइत्ता, तत्तम्मि सिलायले विहरे ॥

तगरग्रामे ईन्मित्रो दत्तोर्हन्नकश्च भद्रा चार्यां ग्महिलां त्यक्त्वा शिलातले विहरेत्ति व्यवहार्पाडिति गाथाक्षरार्थो भावार्थस्तु वृद्धसम्प्रदायादवसेयः । स चायं नगरा नयरी तत्थ अरहमित्तो नाम आयरिओ तस्स समीवे दत्तो नाम वाणियओ भद्दाए भारियाए पुत्तेण य अरहत्तएणं सद्धिं पव्वइओ। सो त खुड्डग कयाइ भिक्खाणहिमाडेइ पढमालियाईहिं किं भिक्खिएहिं पोसेन्ति सो सुकुमालो साहूण अपत्तियणतगति किं चि भणिइ। अन्नया सो खतो कालगतो साहूहिं दो तिन्नि वा दिवसे दाउ भिक्खस्स उपरितो सो सुकुमालसरीरो गिम्हे उवरिहिद्वाए मज्जितो पस्सेयतण्हाभिभूतो छायाए वीसमतो पोसियवच्छाए वणियमहिलाए दिट्ठो उरालसुकुमालसरीरोत्ति काउ तीसे तहिं अज्झोववाओ जाओ । चेडीए सद्दाविओ किं मग्गसि । भिक्खं दिन्ना से मोयगा पुच्छिओ कीस तुमं धम्मं करेसि। भणति सुहनिमित्तं।सा भणति तो मए चेव समाणं भोगे भुंजाहि । सो य उण्हेण तज्जिओ उवसग्गज्जिओ य पडिभग्गो भोगे भुंजति । सो साहूहिं सव्वे-हिं मग्गिओ नो दिट्ठो अप्पसागारिअ पविट्ठो पच्छा से माया उम्मतिया जाया पुत्तसोगेण णयरं परिभमती अरहन्नय विलवती जं जहिं पासति त तहिं सव्वं भणति अत्थि ते कोवि अरहन्नको दिट्ठो एवं विलवमाणा भमति जाव अन्नया तेण पुत्तेण ओलोयणगए दिट्ठा पच्चभिन्नाया तहेव उत्तरिता पाएसु पडिओ त पेच्छिऊण तहेव सत्थचित्ता जाया ताए भण्णति पुत्त पव्वयाहि मा दोग्गइं जाहि । सिस्सो भणति न तरामि काउं संजमं यदि पर अणसणं करेमि एवं करेहि मा असयतो भवाहि मा संसारं भमिहिसि । पच्छा सो तहेव तत्ताए सिलाए पाओवगमणं करेति मुहुत्तेण सुकुमालसरीरो उण्हेण विलावो पुव्विं तेण णाहियासिओ पच्छा तेण अहियासितो एवं अहियासियव्वं उण्हे 'उत्त०पा० तगराख्यग्रामेऽर्हन्मित्राचार्यपार्श्वे दत्तनामा वणिक् भद्रा भार्या र्हन्नकपुत्रेण समं प्रव्रजितः । पित्रा सर्ववैयावृत्यकरणेन इतस्ततः परिभ्रम्य भव्यभिक्षाभोजनसम्पादनेन स बालोऽत्यन्तं सुखीकृत उपविष्ट एव भुङ्क्ते कदापि भिक्षार्थं न भ्रमति । तद्भिक्षार्थं स्वभिक्षार्थञ्च पितुरेव भ्रमणात् । अन्यदा पितरि मृते साधुभिः प्रेरितः स बालो ग्रीष्मे मासे भिक्षार्थङ्गतः । तापाभिभूत प्रोत्तुङ्गगृहच्छायायामुपविशति पुनस्ततं उत्तिष्ठति शनैः शनैर्याति एवं कुर्वन्तमतिसुकुमारं तमर्हन्नककुमारं रूपेण कन्दर्पावतारं दृष्ट्वा काचित्प्रोषितवणिग्भार्या आकार्य गृहे स्थापितवती तया सह स विषयासक्तोऽभूत् । अथ तन्माता साध्वी पुत्रमोहेन गृथिलीभूता अरे अर्हन्नक ! अर्हन्नक ! इति निर्घोषयन्ती चतुष्पथादिषु भ्रमति । एकदा गवाक्षस्थेन अर्हन्नकेन तादृशावस्था माता दृष्टा संजातात्यन्तसंवेगः स गवाक्षादुत्तीर्य पादयोः पतित्वा मातरमेवमाह । हे मातः सोऽहमर्हन्नक इति तद्वच श्रवणात् स्वस्थचित्ता माता तमेवमाह । वत्स भव्यकुलजातस्य तव केयमवस्था । स प्राह । मातश्चारित्रं पालयितुमहं न शक्नोमि । सा प्राह तर्हि अनशनं कुरु मातृवचसा स तप्तशिलायां सुप्त्वा पादोपगमनञ्चकार सम्यगुष्णपरीषहं विषह्य समाधिभाग् देवत्वं प्राप्तवान् । एवं अन्यैरपि साधुभिरुष्णपरीषहः सोढव्यः । उत्त० २ अ० ।

( परीसहशब्देऽन्यत् )

उण्ह ( उसिण ) परियाव-उष्णपरिताप-पु० उष्णमुष्णस्पर्शवद्भूशिलादि तेन परितापः । उत्त० २ अ० । आतापनादौ, भूशिलाद्यौष्ण्यहेतुके दाहे, उत्त० १ अ० ।

उण्हफासणाम-उष्णस्पर्शनामन्-न० नामकर्मभेदे, यदुदयाज्जन्तुशरीरं हुतभुजादिवद् भवति तदुष्णस्पर्शनाम । कर्म० ।

उण्हयर-उष्णतर-न० कषाय शोकवेदोदययोश्च दाहकत्वादुष्णं सर्वं वा मोहनीयमष्टप्रकारं वा कर्मोष्णं ततोऽपि तद्दाहकत्वादुष्णतरम् । तपसि, " मज्झं तिव्वकसाओ, सोगभिभूओ उइण्णवेओ य । उण्हयरो होइ तवो, कसायमाई वि ज रुहइ " आचा० नि० २ अ० । ( सीउण्ह शब्दे विवृतिः )

उण्हवण-उष्णापन-न० उष्णीकरणे, पिं० ॥

उण्हाभि ( हि ) तत्त-उष्णाभितप्त-त्रि०उष्णेनात्यन्तपीडिते, "उण्हाहितत्तो मेहावी सिणाणं नो विपत्थए" उत्त० २ अ० ।

उण्हाभिहय-उष्णाभिहत-त्रि०सूर्यखरप्रतापाभिहते " उण्हाभिहए तण्हाभिहए दवग्गिजालाभिहए " जी० ३ प्रति० ।

उण्हीस-उष्णीष-पु०न०उष्णमीषते हि नास्ति उष्णम् ईष शकंधपररूपम् । "सूक्ष्मश्नष्णस्नह्नह्णक्ष्णां ण्हः ।८।२।७५। सूत्रेण ष्ण भागस्य णकाराक्रान्तो हकारः । प्रा० । शिरोवेष्टनवस्त्रे, (पागडी)

किरीटे च । " पवित्र केश्यमुष्णीष, वातातपरजोऽपहम् । वर्षानिवारजोघर्म-हिमादीनां निवारणम् " वाच० ॥

**उएहोदग–उष्णोदक**–न० क स अग्निना तप्तजले, कथ्यमानपादशेषार्द्धावशेषपादादिहीनके जले, " अष्टमेनांशशेषेण, चतुर्थेनार्धकेन वा । अथवा क्वथनेनैव, सिद्धमुष्णोदकं वदेदिति । वाच० पुप्फोदएहि य गन्धोदएहि य उएहोदएहि य सुभोदएहि य कल्प० ।

**उएहोला–उष्णोपला**–स्त्री० तैलपायिकानामके कीटभेदे, सङ्गमकः सौधर्मकल्पवासी देव वीरमुपसर्गयन् " उएहोला विउव्वइ उएहोला णाम तेल्लपाइया तो ताते तिक्खेहिं तुएडेहिं अतीव दसति " आ० म० द्वि० ।

**उत्त–उक्त**–त्रि० वच दुहा गौणे कर्मणि क्त । यस्य ज्ञानाय कथ्यते तादृशे, अनुक्तेनापि वक्तव्य, सुहृदा हितमिच्छता । गौणकर्मसमभिव्याहारे तु मुख्ये कर्मणि क्तः । वाच० । अभिहिते, "तत्थुत्तो त जिणवयणाइ" पचा० ६ विव० । भणिते, आज्ञुरुक्ते, नि० । वुत्त उक भणितमिति वुत्तशब्दस्योक्तेत्यनुवाद । आव० ५ अ० ॥ उत्तराध्ययने तु व्युक्तेत्यनुवादः । उत्त० १ अ० ॥

**उत्त**–त्रि० उन्द क्लेदने क्त–वा तस्य नः । क्लिन्ने आर्द्रवस्तुनि, वाच० । स्वनामख्याते वनस्पतिभेदे, पु० । अनु० ।

**उप्त**–त्रि० वप्–क्त । निक्षिप्ते, ध० १ अधि० । कृतवापे धान्यादौ क्षेत्रे, वाच० । कर्षक इव वीजवपन कृत्वा निष्पादिते, " देव उत्ते अपल्लोए वनउत्तेत्तियावरे " । सूत्र० १ श्रु० १ अ० ३ उ० ।

**उत्तण–उत्तृण**–न० उद्गत तृणमुत्तृणम् । ऊर्ध्वगते तृणे, " खित्तखिल्लभूमिवल्लराइ उत्तणघणसकडाइ डज्झतु " उत्तृणै स्तृणैर्घनमत्यर्थं सकटानि सङ्कीर्णानि यानि तानि तथा । प्रश्न० १ द्वा० उद्गतानि तृणानि यत्र उद्गततृणके, "उत्तणाणि वणाणि णिप्पण्णसस्सा वा मेइणी" उद्गतानि तृणानि येषु वनेषु तानि तथा । अनु० ।

**उत्तत्थ–उत्त्रस्त**–त्रि० उद्गतत्रासे, प्रश्न० अध० ३ द्वा० । भयाज्ञातोत्कम्पादिभयभावे, "उत्तत्था तसिया उव्विग्गा सजायभया " भ० ३ श० १ उ० । "उत्तत्थसुसुभयसतत्था" प्रश्न० अध० ३ द्वा० ।

**उत्तप्पसरीर–उत्तप्तशरीर**–त्रि० देदीप्यमानशरीरे, रा० ।

**उत्तम–उत्तम**–त्रि० उद्–तमप्० । स्वरूपत सुन्दरे, कल्प० । भ० । प्रशसास्पदीभूते, ज० २ वक्ष० । औ० । सर्वोत्कृष्टे, आव० २ अ० । महति, सूत्र० १ श्रु० १३ अ० । प्रधाने, पचा० ए विव० प्रश्न० । सस्या । "अय से उत्तमे धम्मे, पुव्वट्ठाणस्स पग्गहे" आचा० १ श्रु० ८ अ० । "बभचेर उत्तमतवनियमनाणदसणचरित्तविणयमूल" प्रश्न० ३ द्वा० । प्रज्ञा० । सयमे, पु० दशा० ५ अ० । गिरीणामुत्तमत्वाद्रुत्तम । मेरौ, "ता उत्तमसि पव्वयसि" च० प्र० १ पाहु० । सू० प्र० । अन्त्ये, त्रि० उत्तमैकान्त्यां च० पा० उत्तमशब्दोऽन्त्यार्थः उत्तानपादस्य पुत्रभेदे, ध्रुवस्य भ्रातरि पुं० वाच० ॥

**उत्तमस्**–त्रि० ऊर्ध्व तमसोऽज्ञानाद्यत्तत्तथा अज्ञानरहिते, ज्ञा० १ अ०

कित्तियवंदियमहिया, जे लोगस्सुत्तमा सिद्धा ॥

कीर्तिता स्वनामभिः प्रोक्ता वन्दितास्त्रिविधयोगेन सम्यक् स्तुता महिताः पुष्पादिभिः पूजिता । क एते इत्यत आह ये एत लोकस्य प्राणिलोकस्य मिथ्यात्वादिकर्ममलकलङ्कभावेनोत्तमा प्रधाना ऊर्ध्वं वा तमस इत्युत्तमसः । उत्प्राबल्येनोर्ध्वगमनोच्छेदनेष्विति वचनात् । प्राकृतशैल्या पुनरुत्तमा उच्यन्ते । (सिद्धा इति ) सित ध्मातं धन्धमेषामिति सिद्धा कृतकृत्या इत्यर्थ । ल० ।

अस्यैव व्याख्यां निर्युक्तिकृदाह ।

मिच्छत्तमोहणिज्जा, नाणावरणाचरित्तमोहाउ ।
तिविहतमा उम्मुक्का, तम्हा ते उत्तमा हुंति ॥ ५५ ॥

मिथ्यात्वमोहनीयास्तथा ज्ञानावरणास्तथा चारित्रमोहादित्यत्र मिथ्यात्वमोहनीयग्रहणेन दर्शनसप्तक गृह्यते । तत्रानन्तानुवन्धिनश्चत्वार कषायास्तथा मिथ्यात्वादित्रयं च ज्ञानावरण मतिज्ञानावरणभेदात्पञ्चविधं चारित्रमोहनीय पुनरेकविंशतिभेद तत्रानन्तानुवन्धिरहिता द्वादशकषायास्तथा नव नोकषाया इति अस्मादेव यतस्त्रिविधतमसः किमुन्मुक्ताः प्राबल्येन मुक्ताः पृथग्भूता इत्यर्थ । तस्मात्ते भगवन्तः किमुत्तमा भवन्ति ऊर्ध्व तमोवृत्तेरिति गाथार्थः ॥ आव० २ अ० । आ० चू० ।

**उत्तमंग–उत्तमाङ्ग**–न० क स. सर्वावयवानां प्रधानावयवे, स० । शिरसि च । सूत्र० १ श्रु० ५ अ० २ उ० । उत्त० । नं० । मस्तकस्य अङ्गभूतत्वेन चक्षुरादीन्द्रियाधारत्वात्, वाच० । तात्स्थ्यात्केशेषु, "लोयविरलुत्तमंग" अत्र उत्तमाङ्गशब्देन उत्तमाङ्गस्थाः केशा उच्यन्ते । पिं० ॥

**उत्तमकट्ठपत्त–उत्तमकष्टप्राप्त**–त्रि० परमकष्टावाप्ते, भ० ७ श० ६ उ०

**उत्तमकाष्ठाप्राप्त**–त्रि० उत्तमावस्थां गते, परमकाष्ठाप्राप्ते, "दुसमदुसमाए समाए उत्तमकट्ठपत्ताए भरहस्स केरिसए आगार भावपडोयारे पण्णत्ते " भ० ७ श० ६ उ० । परमप्रकर्षप्राप्ते, प्रकृष्टावस्थां गते, सू० प्र० १ पाहु० ।

**उत्तमकट्ठा–उत्तमकाष्ठा**–स्त्री० प्रकृष्टावस्थायाम्, ज० २ वक्ष० ।

**उत्तमकुल–उत्तमकुल**–न० उग्रभोगादिके चान्द्रादिके वा कुले, " उत्तमकुले वि जाय णिच्छाहिज्जइ तपगच्छ " ग० २ अधि०

**उत्तमगुण–उत्तमगुण**–पु० प्रधानगुणे, पचा० ४ विव० ।

**उत्तमगुणवहुमाण–उत्तमगुणवहुमान**–पु० उत्तमगुणेषु प्रधानगुणेषु जिनेषु वीतरागत्वादिषु वा जिनगुणेषु, वहुमान पक्षपातः उत्तमगुणवहुमानः उत्तमगुणपक्षपाते, " उत्तमगुणवहुमाणो पयमुत्तमसत्तमज्झयारम्मि " पंचा० ४ विव० ।

**उत्तमगुणोघ–उत्तमगुणौघ**–पु० अनहंकारिणि, " ण करोति अहंकार परिसम्रो उत्तमगुणो य " पं० भा० ॥

**उत्तमजणसेविय–उत्तमजनसेवित**–त्रि० गणधरसेविते, गणधराणामुत्तमत्वात् । "उत्तममिय पय जिण-वोहिं लोगुत्तमेहिं पण्णत्त । उत्तमकयसजणय, उत्तमजणसेविता लोए " पचा० ११ विव० ।

**उत्तमजत्ता–उत्तमयात्रा**–स्त्री० प्रधानयात्रायाम्, पचा० ए विव.

**उत्तमजोगित्त– त्तमयोगित्व**– न० अयोगित्वलक्षणे सवरद्वारे, स्था० ५ ठा० ॥

**उत्तमट्ठ–उत्तमार्थ**– पु० उत्तमश्चासावर्थश्च उत्तमार्थ । प्रकृष्टपदार्थे, " इच्चेय महव्वयउच्चारणा नवत्तया जुत्तपायनणे परमट्ठे उत्तमट्ठे " उत्तमश्चासावर्थश्चोत्तमार्थ । प्रकृष्टपदार्थे, मोक्षफलसाधकत्वेन महाव्रताना सर्ववस्तुप्रदानत्वादिति । पा० ॥ उत्तमः प्रधानोऽर्थो मोक्षो यस्मात्स उत्तमार्थ । पर्यन्तसमयाराधनरूपे जिनाज्ञाराधने, "निरट्ठिया णिप्परुडे उ तस्स, जे उत्तमट्ठं विवज्जा समेइ" उत्त० २ अ० । अनशने, "इच्छामि भंते उत्तमट्ठ पडिक्कमामि" (अणसणशब्दे विवरणमुक्तम्) कालधर्मे, आव ४ अ० ।

**उत्तमट्ठगवेसय–उत्तमार्थगवेषक**–त्रि० मोक्षाभिलाषिणि. " ण वि रुट्ठो ण वि तुट्ठो, उत्तमट्ठगवेसओ " उत्त० २५ अ० ॥

**उत्तमट्ठपत्त–उत्तमार्थप्राप्त**– त्रि० उत्कृष्टानर्थान्प्राप्ते, "दुसुमाए समाए उत्तमट्ठपत्ताए भरहस्स केरिसए आयारभावपडोयारे पण्णत्ते" उत्तमांस्तत्कालापेक्षयोत्कृष्टानर्थानायुष्कादीन् प्राप्ता उत्तमार्थप्राप्ता । भ० ६ श० ७ उ० ॥

उत्तमट्ठाण–उत्तमस्थान– न० मोक्षस्थाने, " धीरो अमूढसण्णी-सो गच्छइ उत्तमट्ठाणं " ॥ आतु० ॥

उत्तमड्ढि ( रिद्धि ) उत्तमर्द्धि– स्त्री० प्रधानविभवे, "सेया य उत्तमा खलु उत्तमरिद्धीए कायव्वा " पचा० ६ विव० ॥

उत्तमणिदंसण–उत्तमनिदर्शन–न०इन्द्रादिलक्षणेषु, प्रधानसत्वज्ञानेषु, पचा० १६ विव० ॥

उत्तमणिदंसणजुय–उत्तमनिदर्शनयुत– त्रि० अहीनोदाहरणवति, "उत्तमणिदंसणजुअं विचित्तणयगब्भणरं चेव " प०व० ॥

उत्तमधम्मपसिद्धि–उत्तमधर्मप्रसिद्धि–स्त्री०प्रधानधर्मस्य पूजाकाले, प्रकृष्टपुण्यकर्मबन्धरूपस्य अशुभकर्मक्षयरूपस्य च कालान्तरक्रमेण यथाख्यातचारित्ररूपस्य निष्पत्तौ, जिनशासनप्रकाशे च । "उत्तमधम्मपसिद्धि–पूयाए जिणवरिंदाण" पचा०४विव० ।

उत्तमपसत्यज्झाण–उत्तमप्रशस्तध्यान– न० प्रवृत्तशुभयोगे, " उत्तमपवसत्यज्झाणो, हियएण इम विचिंतेइ " प०व० ॥

उत्तमपुरिस–उत्तमपुरुष–पु० । तीर्थकृच्चक्रवर्तिबलदेववासुदेवलक्षणेषु प्रधानपुरुषेषु, "अरहंतचक्कवट्टी, बलदेवा चेव वासुदेवा य । एए उत्तमपुरिसा नहु तुच्छकुलेसु जायंति आ० म० द्वि० । "णव दसारमंडलाहोत्था तंजहा उत्तमपुरिसा मज्झिमपुरिसा उत्तमपुरुषास्तीर्थकरादीनां चतु पञ्चाशदुत्तमपुरुषाणां मध्यवर्तित्वात्" । स० । कुम्मुण्णया जोणी उत्तमपुरिसमाऊण" स्था०३ ठा०

उत्तमपोग्गल–उत्तमपुद्गल–पु० आत्मनि, प्रधानवार्ता वा पुद्गलशब्दस्तत्नश्चायमर्थ उत्तमोत्तमे महतोऽपि महीयसि, "से परिप उत्तमपोग्गले "सूत्र० १ श्रु० १३ अ० ॥

उत्तमफलसंजणय–उत्तमफलसंजनक–त्रि० मोक्षजनके, प० व० ।

उत्तमबलविरियसत्तजुत्त–उत्तमबलवीर्यसत्वयुक्त–त्रि० उत्तमैर्बलवीर्यसत्त्वैर्युक्ते, उत्तमयोर्बलवीर्ययोः सत्वेन ( सत्तया ) युक्ते च । भ० ए श० ३३ उ० ।

उत्तममग्ग–उत्तममार्ग–पुं०ज्ञानस्य प्राधान्यं व्यवहारस्य च गौणता यत्र तस्मिन्, द० ॥

उत्तमाविउव्वि ( ए )–उत्तमविकुर्विन्–त्रि० उत्तमं विकुर्वन्तीत्येवंशीला । उत्तमविकुर्वणशीलेषु, जी० ४ प्रति० ।

उत्तमसुत्त–उत्तमसूत्र–न० कर्म० स० । छेदश्रुते, दृष्टिवादे च । किंपुण त उत्तमसुत्तं उच्यते "छेयसुत्तमुत्तमसुयं अहवा दिट्टिवाओ भण्णइ । छेयसुय कम्हा, उत्तमसुत्तं भणंति जम्हा । तत्थ स पायच्छित्तो विधी भण्णति–जम्हा य तेण चरणविसुद्धी करेति तम्हा त उत्तमसुत्तं दिट्ठिवाओ वा"नि० चू० १ए उ० ।

उत्तमसुयवग्गिय–उत्तमश्रुतवर्णित–त्रि० प्रधानागमाभिहिते, पंचा० ए विव० ।

उत्तमा–उत्तमा–स्त्री० पूर्णभद्रस्य यक्षेन्द्रस्य तृतीयायामग्रमहिष्याम्, स्था० ४ ठा० । भ० ( अग्गमहीमीशब्दे सा उक्ता ) लोकोत्तरीत्या प्रतिपदादौ, च० १ पाहुण कल्प० । ज० । ज्यो० ॥

उत्तमागार–उत्तमाकार–पु० उत्तरङ्गादिरूपे उपरितनेष्वाकारेषु, तेसिणं दाराणं उत्तमागारा सोलसविहेहिं रयणेहिं उवसोभिया, रा० ॥

उत्तमोत्तम–उत्तमोत्तम–त्रि०महतोऽपि महीयसि, सू०१ श्रु०१३अ०

उत्तर–उत्तर–न० उत्तीर्यते प्रकृताभियोगोऽनेन उद् तृ०अच् उद् तरप् वा । राजसमीपे वादिकृताभियोगापनोदके उत्तराख्ये व्यवहाराङ्गे, द्वितीयपादे, प्रश्नश्चोद्यधिया प्रश्नस्तस्य खण्डनमुत्तरम्. इत्युक्ते दोषभञ्जनवाक्ये, जिज्ञासितविषयावेदके वाक्ये, अनन्तर, वाच० ॥

अस्य निक्षेपः ॥

णामं ठवणा दविए, खेत्तदिसा ताव खेत्तपक्खए ।
पइकालं संचयपहा– णाणायणकमगणणतो भावे ।
जहण्णुत्तरं खलु, उक्कोसं वा अणुत्तरं होइ ।
सेसाइं अणुत्तराइं, अणुत्तराइं च णायाइं ॥

इह च सुपो यत्रादर्शन तत्र सूत्रत्वेन छान्दसत्वाल्लुक् तथोत्तरनिक्षेपप्रस्तावात्सूचकत्वात्सूत्रस्य 'कमउत्तरेण य गय 'मित्युत्तरग्रन्थश्रवणाच्च (नामाति) नामोत्तर (ठवणत्ति) स्थापनोत्तरमित्याद्यभिलापः कार्यस्तत्र नामोत्तरमिति नामैव यस्य वा जीवादेरुत्तरमिति नाम क्रियते।स्थापनोत्तरमक्षरादि उत्तर मिति वर्णविन्यासो वा द्रव्योत्तरमागमतो ज्ञानानुपयुक्तो नोआगमतो ज्ञशरीर भव्यशरीरे तद्व्यतिरिक्तं चातद्व्यतिरिक्तं त्रिधा सचित्ताचित्त मिश्रभेदेन तत्र च सचित्त पितुः पुत्र अचित्त क्षीराद्दधि, मिश्र जननी शरीरतो रोमादिमदपत्यम् । इहच द्रव्यपर्यायोभयात्मकत्वेऽपि वस्तुनो द्रव्यप्राधान्यविवक्षया पित्रादीनां द्रव्योत्तरत्व भावनीयम् । क्षेत्रोत्तर मेर्वाद्यपेक्षया यदुत्तरं यथोत्तरा कुरवः यद्वा पूर्वं शालिक्षेत्रं तदेव पश्चादिक्षुक्षेत्र दिगुत्तरमुत्तरा दिग्दक्षिणदिगपेक्षत्वादस्य । तापक्षेत्रोत्तरं यत्तापदिगपेक्षयोत्तरमित्युच्यते यथा सर्वेषामुत्तरो मन्दराद्रि प्रज्ञापकस्य वामं प्रत्युत्तरमेकदिगवस्थितयोर्देवदत्तयज्ञदत्तयोर्देवदत्तात्परो यज्ञदत्त उत्तर । कालोत्तर समयादावलिका आवलीकातो मुहूर्त्तमित्यादि । सञ्चयोत्तरं यत्सञ्चयस्योपरि यथा धान्यराशेः काष्ठम् । प्रधानोत्तर त्रिविधं सचित्ताचित्तमिश्रभेदात् । सचित्तप्रधानोत्तरमपि त्रिविधमेव तद्यथा द्विपद चतुष्पदमपदं च । तत्र द्विपदमनुत्तरपुण्यप्रकृतिनीर्थकरनामाद्यनुभवनस्तीर्थकरश्चतुष्पदमनन्यसाधारणशौर्यधैर्यादियोगत सिंह ,अपद स्यत्वसुरसेव्यत्वादि भिर्जात्यजाम्बूनदादिमयी जम्बूद्वीपमध्यास्थिता सुदर्शना जम्बू अचित्तमचिन्त्यमहात्म्यश्चिन्तामणिः मिश्रं तीर्थकर एव गृहस्थावस्थायां सर्वालङ्कारालङ्कृत । ज्ञानोत्तर केवलज्ञान विलीनसकलावरणत्वेन समस्तवस्तुस्वभावावभासितया च । यद्वा श्रुतज्ञान तस्य स्वपरप्रकाशकत्वेन केवलादपि महर्द्धिकत्वात् । उक्त च"सुयनाण महिड्ढीय, केवल तयणतर । अप्पणो य परेसिं च जम्हा त परिभावणत्ति" क्रमोत्तर क्रममाश्रित्य यद्भवति तच्चतुर्विध द्रव्यतः क्षेत्रत कालतो भावतश्च । तत्र द्रव्यत परमाणोर्द्विप्रदेशिकस्ततोऽपि त्रिप्रदेशिक एव यावदन्त्योऽनन्तप्रदेशिकः स्कन्ध क्षेत्रत एकप्रदेशावगाढाद् द्विप्रदेशावगाढ ततोऽपि त्रिप्रदेशावगाढ एवं यावदवसानवर्त्यसंख्येयप्रदेशावगाढ । कालतः एकसमयस्थितेर्द्विसमयस्थितिस्ततोऽपि त्रिसमयस्थितिरेव यावद् संख्येयसमयस्थिति । भावत एकगुणकृष्णाद्द्विगुणकृष्णस्ततोऽपि त्रिगुणकृष्ण एवं यावदनन्तगुणकृष्णो यतो वा क्षायोपशमिकादिभावादनन्तर यः क्षायिकादिर्भवति ( गणनुत्तरत्ति ) गणना उत्तरमेककाद् द्विकस्ततोऽपि त्रिक एवं यावच्छीर्षप्रहेलिका । भावोत्तर क्षायिको भावस्तस्य केवलज्ञानदर्शनाद्यात्मकत्वेन सकलौदयिकादिभावप्रधानत्वादेवमस्य प्रधानोत्तर एवान्तर्भावाद्यत्क भेदेनाभिधानम् । यद्वमन्यत्यामिदमुच्यते एव हि नामादिचतुष्टय एव सर्वनिक्षेपाणामन्तर्भावात्तदेवाभिधेय तत इहान्यत्र यन्नामादिचतुष्टयाधिकनिक्षेपाभिधान तच्छिष्यमतिव्युत्पादनार्थं

सामान्यविशेषोभयात्मकत्वख्यापनार्थं च सर्ववस्तूनामिति भावनीयमिति गाथार्थः ॥ इहानेकधोत्तराभिधानेऽपि क्रमोत्तरमेवाधिकरिष्यते विषयज्ञाने च विषयी सुज्ञातो भवतीति मन्वानो यत्रास्य सम्भवो यत्र चासंभवो यत्र चोभय तदाह । ( जहण्णत्ति ) जघन्य सोत्तर खलुरवधारणे सोत्तरमेव ( उक्कोसगन्ति ) उत्कृष्टं वाशब्दस्यैवकारार्थस्य भिन्नक्रमत्वादनुत्तरमेव भवति शेषाणि मध्यमान्युत्तराणीति । अर्थआदित्वेनाजन्तत्वान्मतुब्लोपाठोत्तरवन्त्यनुत्तराणि च ज्ञेयानि द्रव्यक्रमोत्तरादीनि हि जघन्यान्येकप्रदेशिकादीन्युपरि द्विप्रदेशिकादिवस्त्वन्तरभावात्सोत्तराण्येव तदपेक्षयैव तेषां जघन्यत्वात् । उत्कृष्टानि त्वन्त्यान्यनन्तप्रदेशिकादीन्यनुत्तराण्येव तदुपरि वस्त्वन्तराभावादन्यथोत्कृष्टत्वायोगात् । मध्यमानि तु द्विप्रदेशिकादीनि त्रिप्रदेशिकाद्यपेक्षया सोत्तराण्येकप्रदेशिकाद्यपेक्षया त्वनुत्तराण्युपरितनवस्त्वपेक्षयैव सोत्तरत्वादिति गाथार्थः ॥ उत्त० १ अ० । ( शेषग्रन्थ उत्तरज्झयणशब्दे ) अधिके, सूत्र० १ श्रु० २ अ० । उत्कृष्टे, उत्त० ३ अ० । प्रधाने, सूत्र० १ श्रु० ६ अ० । स्था० । त० । अनु० "उत्तरा महुरुल्लाव पुत्ता ते ताव खड्डया" उत्तरा प्रधाना. उत्तरोत्तरजाता वा सूत्र० १ श्रु० ३ अ० । वृद्धौ, "कइपएसुत्तर" कति प्रदेशा उत्तरे वृद्धौ यस्या सा तया भ० १३ श० ४ उ० । उपरि वर्तिनि, अनुत्तरविमानाख्येषु देवेषु, सर्वोपरिवर्तित्वात्तेषाम् । उत्त०२ अ० । ऐरावते भविष्यति ह्राविंशे तीर्थकरे, स० । ति० । प्रव०

पक्कुल्लावत्तया वा, कज्जं पि न सेसया उदीरेंति ।
पाएण अहो तोत्तिव, उत्तरि सोवाहणेणं ति ॥

पादेन सोपानहा आहत इत्युत्तरसदृशोत्तरकारी उत्तर । अयमत्र भावना । केनापि कश्चित्सोपानहा पदेनोपहत तेन च गत्वा राजकुले निवेदित कारणिकैश्च स आकारित । किंत्वयैष आहत.न मया किं तु सोपानहा पादेन एव सोऽपि दुर्व्यवहार कुर्वन् गीतार्थन सूत्रोपदेशत. उपालब्ध सन्नेतादृशैरुल्लवचनैरुत्तर ददाति । तत कटूत्तरकरणात्स उत्तर इत्युक्तलक्षणे अप्रशस्तीये व्यवहारिणि, व्य० प्र० १ उ० । स्थविरस्यार्यमहागिरे. प्रथमशिष्ये, व्य० द्वि० १ उ० । " तणविणणसजयछा मूलगुणा उत्तरा पज्जणया " उत्तरा उत्तरगुणरूपा " वृ० १ उ० ।

उत्तरंग–उत्तराङ्ग–न० द्वारस्योपरि तीर्यग्व्यवस्थितमङ्गमुत्तराङ्गम् द्वारस्योपरि तीर्यग्व्यवस्थिते काष्ठे, ज० १ वक्ष० " जोई सामए उत्तरगे " जी० ३ प्रति० ।

उत्तरकंचुय–उत्तरकञ्चुक–पुं० तनुत्राणविशेषे, विपा० २ अ० ।

उत्तरकट्ठोवगय–उत्तरकाष्ठोपगत–त्रि० उत्तरां दिशमुपगते, स० ।

उत्तरकरण–उत्तरकरण–न० उत्तरत्र करणमुत्तरकरणम् । द्रव्यकरणभेदे, तच्च " उत्तरकरण वजण अत्थो उ उवक्खरो सव्वे " उत्तरत्र करणमुत्तरकरणम् कर्णवेधादि । यदि वा तन्मूलकरण घटादिक येनोपस्कारेण दण्डचक्रादिना अभिव्यज्यते स्वरूपत प्रकाश्यते तदुत्तरकरण कर्तुरुपकारक. सर्वोऽप्युपस्कारार्थ इत्यर्थ ( प्रपञ्चत करणशब्दे ) भावकरणभेदे, " उत्तरकमसु य जो वत्रणवणादी भोअणादीसु " सूत्र० १ श्रु० १ अ० । ( उत्तरकरण क्रमश्रुतयैवनवर्णादिचतूरूपम करणशब्दे दर्शयिष्यते ) मूलत स्वहेतुत उत्पन्नस्य पुनरुत्तरकाल विशेषाधानात्मके करणे, " उत्तरकरणेण कय, ज किंचि सखय तु णायव्व " उत्त० नि० । जे भिक्खू सूचीए उत्तरकरण अन्नउत्थिएण वा गारत्थिएण वा कारेति कारेंत वा साइज्जइ नि० चू० १ उ० । ( सन्या उत्तरकरण सूई शब्दे )

( सूत्रम् ) तस्स उत्तरि ( री )करणेणं पायच्छित्तकरणेणं

अत्रत्योत्तरकरणेति सूत्रावयव विवृण्वन्नाह ।

खंडिअविराहिआणं, मूलगुणाणं स उत्तरगुणाणं ।
उत्तरकरणं कीरइ, जह सगडरहंगगेहाणं ॥ ९९ ॥

खण्डितविराधितानां खण्डिता सर्वथा भग्ना विराधिता देशतो भग्ना मूलगुणानां प्राणानां प्राणातिपातादिनिवृत्तिरूपाणां सह उत्तरगुणैः पिण्डविशुद्ध्यादिनिवर्त्तन्त इति सोत्तरगुणास्तेषामुत्तरकरण क्रियते आलोचनादीनां पुन. संस्करणामित्यर्थ. । दृष्टान्तमाह यथा शकटरथाङ्गगेहानां वहिश्चक्रगृहाणामित्यर्थ. । तथाच शकटादीनां खण्डितविराधितानामक्षरावलिकादिनोत्तरकरण क्रियत इति गाथार्थः । आव० ५ अ० ।

उत्तरकिरिय–उत्तरक्रिय–न० उत्तरा उत्तरवैक्रियशरीराश्रया गतिलक्षणा क्रिया यत्र गमने तदुत्तरक्रियम् । उत्तरवैक्रियशरीराश्रयगत्या गमने, "जयाण वा उ याए, उत्तरकिरिय रीयइ" अनु० ॥

उत्तरकुरा ( रु ) –उत्तरकुरु–पुं० स्त्री० प्राकृते चैकवचनमाकारान्तता च । जी० ३ प्रति० ॥ जम्बूद्वीपे मन्दरस्य पर्वतस्य उत्तरेण गन्धमादनमाल्यवद्भ्यामावृत्तेऽर्द्धचन्द्राकारे उत्तरतो विस्तृते स्वनामख्याते कुरुभेदे, स्था० २ ठा० ॥ एते चाकर्मभूमिभेदा । स्था० ६ ठा० । प्रव० । तेषां प्रमाणादिव्यवस्था चेत्यम् ।

कहिणं भंते महाविदेहे वासे उत्तरकुराणामंकुरा पण्णत्ता गोयमा ! मंदरस्स पव्वयस्स उत्तरेणं णीलवंतस्स वासहरपव्वयस्स दक्खिणेणं गंधमायणस्स वक्खारपव्वयस्स पुरच्छिमेणं मालवंतस्स वक्खारपव्वयस्स पच्चच्छिमेणं एत्थ णमुत्तरकुरा णामं कुरा पण्णत्ता । पाईणपडी णा य या उदीणदाहिणविच्छिण्णा अद्धचंदसंठाणसंठिआ इक्कारसजोयणसहस्साइं अट्ठयबायाले जोअणसए दोण्णि अ एगूणवीसइभाए जोयणस्स विक्खंभेणं तीसे जीवा उत्तरेणं पाईणपडीणा य या दुहा वक्खारपव्वय पुट्ठा तंजहा पुरच्छिमिल्लाए कोडिए पुरच्छिमिल्लं वक्खारपव्वयं पुट्ठा एवं पच्चच्छिमिल्लाए जाव पच्चच्छिमिल्लं वक्खारपव्वयं पुट्ठा ते व णं जोयणसहस्साइं आयामेणं तीसेणं धणुं दाहिणेणं सट्ठिं जोअणसहस्साइं चत्तारि अ अट्ठारसे जोअणसए दुवालसए एगूणवीसइभाए जोयणस्स परिक्खेवेणं ॥

क भदन्त ! महाविदेहे वर्षे उत्तरकुरवो नाम्ना कुरव प्रज्ञप्ता गौतम ! मन्दरस्य पर्वतस्योत्तरतो नीलवतो वर्षधरपर्वतस्य दक्षिणतो गन्धमादनस्य वक्षस्कारपर्वतस्य पूर्वतो वक्ष्यमाणस्वरूपस्य माल्यवत पश्चिमत । अत्रान्तरे उत्तरकुरवो नाम्ना कुरव. प्रज्ञप्ता. प्राक् पश्चिमायता उत्तरदक्षिणविस्तीर्णा अर्द्धचन्द्राकारा एकादशयोजनसहस्राण्यष्टौ शतानि द्वाचत्वारिंशदधिकानि द्वौ चैकोनविंशतिभागौ योजनस्य विष्कम्भेन । अत्रोपपत्तिर्यथा महाविदेहविष्कम्भात् ( ३३६८४ ) कला ( ४ ) इत्येव रूपान्मेरुविष्कम्भेऽपनीते शेषस्यार्द्धे कृते उक्ताङ्कराशि स्यात् ननु वर्षवर्षधरादीनां क्रमव्यवस्या प्रज्ञापकापेक्षया अस्ति । यथा प्ररूपकासन्न भरत ततो हिमवानित्यादि ततो विदेहकथनानन्तर क्रमप्राप्ता देवकुरुर्विमुच्य कथमुत्तरकुरुणा निरूपणमुच्यते चतुर्दिग्मुखे विदेहे प्राय सर्व प्रादक्षिण्येन व्यवस्थाप्यमान समये श्रूयते तत प्रथमत उत्तरकु-

स्कथनं ततः पार्श्वस्थौ विद्युत्प्रभसौमनसौ विहाय गन्धमादनमाल्यवद्वक्षस्कारप्ररूपणं भरतासन्नविजयान् विहाय कच्छमहाकच्छादिविजयकथनं चेति । अथैतासां जीवामाह ( तीसेऽन्यादि ) तासामुत्तरकुरूणां सूत्रे एकवचनं प्राकृतत्वाज्जीवा उत्तरतो नीलवद्वर्षधरासन्ना कुरुचरमप्रदेशश्रेणिः पूर्वापरायता द्विधा पूर्वपश्चिमभागाभ्यां वक्षस्कारपर्वतं स्पृष्टा एतदेव विवृणोति । तद्यथा पौरस्त्यया कोट्या पौरस्त्यं वक्षस्कारपर्वतं माल्यवन्तं स्पृष्टा पाश्चात्यया पाश्चात्यं गन्धमादननामानं वक्षस्कारपर्वतं स्पृष्टा त्रिपञ्चाशद्योजनसहस्राणि आयामेन तत्कथमित्युच्यते । मेरोः पूर्वस्यां दिशि भद्रशालवनमायामतो द्वाविंशतियोजनसहस्राणि एवं पश्चिमायामपि उभयोर्मीलने जातं चतुश्चत्वारिंशत्सहस्राणि मेरुविष्कम्भे दशसहस्रयोजनात्मके प्रक्षिप्ते जातं चतुःपञ्चाशत्योजनसहस्राणि एकैकस्य वक्षस्कारगिरेः वर्षधरसमीपे पृथुत्वं पञ्चयोजनशतानि ततो द्वयोर्वक्षस्कारगिर्योः पृथुत्वपरिमाणं योजनसहस्रं ततः पूर्वराशेरपनीयते जातः पूर्वराशिस्त्रिपञ्चाशद्योजनसहस्राणीति । अथैतासां धनुःपृष्ठमाह ( तीसेणं धणुं दाहिणेणमित्यादि ) तासां धनुःपृष्ठं दक्षिणतो मेरोर्वासन्न इत्यर्थः । षष्टियोजनसहस्राणि चत्वारि च योजनशतानि अष्टादशानि अष्टादशाधिकानि द्वादश चैकोनविंशतिभागान् योजनस्य परिक्षेपेण । तथाहि एकैकवक्षस्कारगिरेरायामस्त्रिंशद्योजनसहस्राणि द्वे च नवोत्तरे षट् च कलाः । ततो द्वयोर्वक्षस्कारयोरायामस्मीलने यथोक्तं मानमिति ॥ जं० ४ वक्ष० ।

अथैतासां स्वरूपप्ररूपणायाह ॥

उत्तरकुराएणं भंते ! कुराए केरिसए आगारभावपडोयारे पण्णत्ते ? गोयमा बहुसमरमणिज्जभूमिभागे पण्णत्ते से जहाणामए आलिंगपुक्खरेति वा जाव एवं एगोरुगदीववत्तव्वया जाव देवलोगपरिग्गहाणं ते मणुयगणा पण्णत्ता समणाउसो ॥

( उत्तरकुराएणं भंते इत्यादि ) उत्तरकुरूणां सूत्रे एकवचनं प्राकृतत्वात् कीदृशः आकारभावस्य स्वरूपस्य प्रत्यवतारसम्भवः प्रज्ञप्तः ? भगवानाह गौतम ! बहुसमरमणीयो भूमिभाग उत्तरकुरूणां प्रज्ञप्तः ( सेजहानामए इत्यादि ) जगत्युपरि वनखण्डवर्णकवत् तावद्वक्तव्यं यावत्तृणानां मणीनां च वर्णो गन्धः स्पर्शः शब्दश्च सवर्णकः परिपूर्णं उक्तो भवति ॥ पर्यन्तसूत्रं चेदं "दिव्वं नट्टसज्जं गेयं पगीयाणं भवे एयारूवे सिया हंता सिया इति" जी० ३ प्रति ॥ अत्र क्रमव्यत्ययः ॥ ( सूत्रपाठे जाव एव एगोरुगदीववत्तव्वया इति । एकोरुकद्वीपवर्णक एव स्मारितः वृत्तिकृता तु एतादृशं पाठममन्यमानेन एकोरुकवक्तव्यतायामाकिञ्चिदुक्त्या इहैव व्याख्यातमित्यस्माभिरपि अन्तरद्वीपशब्दे एकोरुकवक्तव्यता सूत्रस्त्रैरेव प्रदर्शिता इह तु तादृशानि सूत्राणि परिकल्प्य टीका संयोजिता ) उत्तरकुरुषु आकारप्रत्यवतारस्य वर्णकमुपममुपमाभरतवर्षस्येव भावनीया सा ओसप्पिणीशब्दे व्याख्यास्यते नवरम् ॥

उत्तरकुराणं कुराए छव्विहा मणुस्सा अणुसज्जंति । तंजहा पम्हगंधा १ मियगंधा २ अममा ३ सहा ४ तेयली ५ सणिचारी ६

( उत्तरकुराएणं भंते इत्यादि ) उत्तरकुरुषु कुरुषु भदन्त ! कतिविधा जातिभेदेन कतिप्रकारा मनुष्या अनुसजन्ति सन्तानेनानुवर्त्तन्ते ? भगवानाह-गौतम ! षड्विधा मनुजा अनुसजन्ति तद्यथा पद्मगन्धा इत्यादि जातिवाचका इमे शब्दाः अत्र विनेयजनानुग्रहाय उत्तरकुरुविषयसूत्रसंकलनार्थं संग्रहणीगाथात्रयमाह–

उसुजीवा धणुपट्ठं, भूमी गुम्मा य हेरुउद्दाला ।
तिलगलयावणराई, रुक्खामणुया य आहारे ॥
गेहा गामा य असी, हिरण्णरायाय दासमाया य ।
अरिवरसा मित्तवि, वाहमहनट्ठसगडा य ॥
आसा गावो सीहा, सालीथाणुयगड्डदंसाही ।
गहजुद्धरोगठिइ, उव्वट्टणा य अणुवट्टणा चेव ॥

अस्य व्याख्या प्रथममुत्तरकुरुविषयमिषुजीवाः धनुःपृष्ठप्रतिपादनकं सूत्रं तदनन्तरं ( भूमिरित्ति ) भूमिविषयं सूत्रं ततो ( गुम्मा इति ) गुल्मविषयं सूत्रं तदनन्तरं हेरुतालवनविषयं सूत्रं ततः । ( उद्दाला इति ) उद्दालविषयं तदनन्तरं (तिलग इति ) तिलकपदोपलक्षितं ततो लताविषयं तदनन्तरं वनराजिविषयं ततो ( रुक्खा इति ) दशविधकल्पपादपविषया दश सूत्रदण्डकाः ( मणुया य इति ) त्रयो मनुष्यविषयाः सूत्रदण्डकास्तद्यथा आद्यः पुरुषविषयो द्वितीयः स्त्रीविषयस्तृतीयः सामान्यत उभयविषयः । ततः ( आहारे इति ) आहारविषयस्तदनन्तरं ( गेहा इति ) गृहविषयौ दण्डकौ आद्यो गृहाकारवृक्षाभिधायी अपरो गेहाद्यभावविषय इति ततो ( गामा इति ) ग्रामाद्यभावस्तदनन्तरम् ( असीति ) अस्याद्यभावविषयस्ततो हिरण्याद्यभावविषयस्तदनन्तरं राजाद्यभावविषयस्ततो दासाद्यभावविषयस्ततो मात्रादिविषयस्तदनन्तरमरिवैरिप्रभृतिविषयस्तदनन्तरं मित्राद्यभावविषयस्तदनन्तरं विवाहपदोपलक्षितस्तत्प्रतिषेधविषयः तदनन्तरं महप्रतिषेधविषयः ततो नृत्तपदोपलक्षितप्रेक्षाप्रतिषेधः तदनन्तरं शकटादिप्रतिषेधविषयः ततोऽश्वादिपरिभोगप्रतिषेधविषयः तदनन्तरं स्त्रीगत्यादिपरिभोगप्रतिषेधविषयः । ततः सिंहादिश्वापदविषयः तदनन्तरं शाल्याद्युपभोगप्रतिषेधविषयस्ततः स्थाण्वादिप्रतिषेधविषयस्तदनन्तरं गर्तादिप्रतिषेधविषयस्ततो दंशाद्यभावविषयस्ततोऽह्यादिविषयस्तदनन्तरं ग्रह इति ग्रहदण्डादिविषयस्ततो युद्ध इति युद्धपदोपलक्षितो डिम्बादिप्रतिषेधविषयः सूत्रदण्डकस्ततो रोग इति रोगपदोपलक्षितो दुर्भूतादिप्रतिषेधविषयस्तदनन्तरं स्थितिसूत्रं ततोऽनुषञ्जनसूत्रमिति ॥

सम्प्रति उत्तरकुरुनामयमकपर्वतवक्तव्यतामाह–

कहिणं भंते ! उत्तरकुराए जमगा नामं दुवे पव्वता पण्णत्ता ? गोयमा ! नीलवंतस्स वासहरपव्वयस्स दाहिणेणं अट्ठचोत्तीसं जोयणसते चत्तारिय सत्तभागे जोयणसहस्स आबाधाए सीताए महाणतीए उभओ कूले एत्थ णं उत्तरकुराए कुराए जमगा णाम दुवे पव्वता पण्णत्ता एगमेगेणं जोयणसहस्समउड्ढं उच्चत्तेणं अड्ढाइज्जाइं जोयणसयाइं उव्वेहेणं मूले एक्कमेक्कं जोयणसहस्सं आयामविक्खंभेणं मज्झे अद्धट्ठमाइं जोयणसताइं आयामविक्खंभेणं उवरिं पंचजोयणसयाइं आयामविक्खंभेणं मूले तिण्णि जोयणसहस्साइं एकं वा बट्ठं जोयणसयं किंचि विसेसाहियं परिक्खेवेणं दो जोयणसहस्साइं तिण्णि य बावत्तरं जोयणसते किंचि विसेसूणे परिक्खेवेणं उवरिं पण्णरस एक्कासीते जोयणसते किंचि विसेसाहिया परिक्खेवेणं पण्णत्ता मूलविच्छिण्णा मज्झे संखित्ता उप्पि तणुया गोपुच्छसंठाणसंठिता सव्वकणगामया अच्छा सण्हा जाव पडिरूवा पत्तेयं २ पउमवरवेतिया परिक्खित्ता पत्तेयं २ वणसंडपरिक्खित्ता वण्णओ दोण्हं वि तेसिणं जमगपव्वयाणं उप्पिं बहुस

भरमणिज्जभूमिभागे पण्णत्ते बहवत्रो जाव आसयंति ।

के भदन्त ! उत्तरकुरुषु कुरुषु यमकौ नाम द्वौ पर्वतौ प्रज्ञप्तौ ? भगवानाह गौतम ! नीलवतो वर्षधरपर्वतस्य दाक्षिणात्याच्चरमान्ताच्चरमरूपात् पर्यन्तादष्टौ योजनशतानि चतुस्त्रिंशानि चतुस्त्रिंशदधिकानि चतुरश्च योजनस्य सप्त भागान् अवाधया कृत्वा अपान्तराले मुक्त्वेति भावः। अत्रान्तरे शीताया महानद्याः पूर्वपश्चिमयोर्दिशोरुभयोः कूलयोरत्र एतास्मिन् प्रदेशे यमकौ नाम द्वौ पर्वतौ प्रज्ञप्तौ । तद्यथा एक पूर्वकूले एकः पश्चिमकूले प्रत्येकं योजनसहस्रमुच्चैस्त्वेन अर्द्धतृतीयानि योजनशतानि ऊर्द्धेन अवगाहेन मेरुव्यतिरेकेण शेषशाश्वतपर्वतानां सर्वेषामपि शेषेणोच्चैस्त्वापेक्षया चतुर्भागस्यावगाहभावात् मूले एकं योजनसहस्रं विष्कम्भेन ( १००० ) मध्ये अर्द्धशतोनाष्ट योजनशतानि ( ७५० ) उपरि पञ्चयोजनशतानि ( ५०० ) मूले त्रीणि योजनशतानि एकं च द्वाषष्ट्यधिकं योजनशतं किञ्चिद्विशेषाधिकं परिक्षेपेण प्रज्ञप्तौ ( ३१६२ ) मध्ये द्वे योजनसहस्रे त्रीणि योजनशतानि द्वासप्तत्यधिकानि ( २३७२ ) किञ्चिद्विशेषाधिकानि परिक्षेपेण प्रज्ञप्तौ । उपरि एकं योजनसहस्रं पञ्चशतानि एकाशीतीनि एकाशीत्यधिकानि योजनशतानि किञ्चिद्विशेषाधिकानि ( १५८१ ) परिक्षेपेण एवं च तौ मूले विस्तीर्णौ मध्ये सङ्क्षिप्तौ उपरि तनुकावत एव गोपुच्छसंस्थानसंस्थितौ ( सव्वकणगमया इति ) सर्वात्मना कनकमयौ ( अच्छा जाव पडिरूवा इति ) प्राग्वत् तौ च प्रत्येकं २ पद्मवरवेदिकया परिक्षिप्तौ प्रत्येकं २ वनखण्डपरिक्षिप्तौ पद्मवरवेदिकावर्णको वनखण्डवर्णकश्च जगत्युपरि पद्मवरवेदिकावनखण्डवर्णकवत् वक्तव्यः ( जमकपव्वयाणमित्यादि ) यमकपर्वतयोरुपरि प्रत्येकं बहुसमरमणीयो भूमिभागः प्रज्ञप्तः भूमिभागवर्णनं च "से जहा नामए आलिंगपुक्खरेइ वा" इत्यादि प्राग्वत् तावद्वक्तव्यं यावद्वाणमंतरा देवा देवीउ य आसयंति सयंति जाव पच्चणुब्भवमाणा विहरंति ॥

तेसि णं बहुसमरमणिज्जाणं भूमिभागाणं बहुमज्झदेसभाए पत्तेयं २ पासायवर्डेसका पण्णत्ता तेणं पासायवर्डेसका वावट्ठिं जोयणाइं अद्धजोयणं च उड्ढं उच्चत्तेण एकतीसं जोयणाइं कोसं च विक्खंभेणं अब्भुग्गतमूसित वण्णओ भूमिभागाओ उल्लोत्ता दो जोयणाइं मणिपेढियाओ उवरि सीहासणा सपरिवारा जाव जमगा चिट्ठंति ।

( तेसिणमित्यादि ) तयोर्बहुसमरमणीययोर्भूमिभागयोर्बहुमध्यदेशभागे प्रत्येकं प्रत्येकं प्रासादावतंसकः प्रज्ञप्तः । तौ च प्रासादावतंसकौ द्वाषष्टिर्योजनानि अर्द्धयोजनं चोर्द्धमुच्चैस्त्वेन एकत्रिंशद्योजनानि क्रोशं चैकं विष्कम्भेन " अब्भुग्गय मूसिय पहसियाइव्वे " त्यादि यावत् पडिरूवा इति प्रासादावतंसकवर्णनमुल्लोचवर्णनं भूमिभागवर्णनं मणिपीठिकावर्णनं सिंहासनवर्णनं विजयदूष्यवर्णनमङ्कुशवर्णनं दामवर्णनं च निरवशेषं प्राग्वद्वक्तव्यम् नवरमत्र मणिपीठिकाया प्रमाणमायामविष्कम्भाभ्यां द्वे योजने बाहल्येन एकं योजनं शेषं तथैव ( तेसिणं सिंहासणाणमित्यादि ) तयोः सिंहासनयोः प्रत्येकम् (अवरुत्तरेणति) अपरोत्तरस्या वायव्यामित्यर्थः उत्तरपूर्वस्यां च दिशि अत्र एतासु तिसृषु दिक्षु यमकयोर्यमकनाम्नोर्यमकपर्वतस्वामिनोर्देवयोः प्रत्येकं प्रत्येकं चतुर्णां सामानिकसहस्राणां योग्यानि चत्वारि भद्रासनसहस्राणि प्रज्ञप्तानि । एवमनेन क्रमेण सिंहासनपरिवारो वक्तव्यो यथा प्राक् विजयदेवस्य (तेसिणमित्यादि) तयोः प्रासादावतंसकयोः प्रत्येकमुपरि अष्टावष्टौ मङ्गलकानि प्रज्ञप्तानि-इत्याद्यपि प्राग्वत्तावद्वक्तव्यं यावत् सयसहस्सपत्तगा इतिपदम् ।

सम्प्रति नामनिबन्धनं पिपृच्छिषुरिदमाह ॥

से केणट्ठेणं भंते एवं वुच्चंति जमगा पव्वया २ गोयमा ! जमगेसु णं पव्वतेसु तत्थ २ देसे २ तहिं २ बहूउ खुड्डियाउ वावीउ जाव विलपंतियाउ तासु णं खुड्डा खुड्डिया जाव विलपंतियासु बहूइं उप्पलाइं जाव सतसहस्सपत्ताइं जमगप्पभाइं जमगवण्णाइं जमगा एत्थ णं दो देवा महिड्डिया जाव पलिओवमट्ठितिया परिवसंति तेणं तत्थ पत्तेयं २ चउण्हं सामाणियसाहस्सीणं जाव जमगाणं पव्वयाणं जमिगाण य रायहाणीणं अण्णेसिं च बहूणं वाणमंतराणं देवाण य देवीण य आहेवच्चं जाव पालेमाणा विहरंति । से तेणट्ठेणं गोयमा एवं वुच्चइ जमगपव्वया २ अदुत्तरं चणं गोयमा ! जाव णिच्चा ।

अथ केनार्थेन केन कारणेन एवमुच्यते यमकपर्वतौ यमकपर्वताविति भगवानाह गौतम ! यमकपव्वतयोः णमिति वाक्यालङ्कारे क्षुल्लिकासु वापीषु पुष्करिणीषु यावद्विलपङ्क्तिषु बहूनि उत्पलानि यावत्सहस्रपत्राणि यमकप्रभाणि यमका नाम शकुनिविशेषास्तत्प्रभाणि तदाकाराणि एतदेव व्याचष्टे यमकवर्णाभानि यमकसदृशवर्णानीत्यर्थः यमकौ च यमकनामानौ च तत्र तयोर्यमकपर्वतयोः स्वामित्वेन द्वौ देवौ महर्द्धिकौ यावन्महाभागौ पल्योपमस्थितिकौ परिवसतस्तौ च तत्र प्रत्येकं प्रत्येकं चतुर्णां सामानिकसहस्राणां चतसृणामग्रमहिषीणां सपरिवाराणां तिसृणामभ्यन्तरमध्यबाह्यरूपाणां यथासंख्यमष्टादश द्वादश देवसहस्रसंख्याकानां सप्तानामनीकाधिपतीनां षोडशानामात्मरक्षकदेवसहस्राणां (जमगपव्वयाणं जमगाण य रायहाणीयमिति) स्वस्य स्वस्य यमकपर्वतस्य स्वस्याः यमिकाभिधायाः राजधान्या अन्येषां च बहूनां वानमन्तराणां देवानां देवीनां च स्वस्वयामिकाभिधराजधानीवास्तव्यानामाधिपत्यं यावद्विहरतः यावत्करणात् "पोरेवच्चं सामित्तं भट्टित्तमित्यादि" परिग्रहस्ततो यमकाकारयमकवर्णोत्पलादियोगात् यमकाभिधदेवस्वामिकत्वाच्च तौ यमकपर्वताविप्युच्येते । यथा चाह ( सेएणट्ठेणमित्यादि । )

सम्प्रति यमकाभिधराजधानीस्थानम् ।

कहिणं भंते जमगाणं देवाणं जमगाओ नाम रायहाणीओ पण्णत्ताओ ? गोयमा ! जमगाणं पव्वयाणं उत्तरेणंति तिरियमसंखेज्जदीवसमुद्दे वितिकमित्ता अण्णम्मि जंबूदीवे वारसजोयणसहस्साइं उगाहित्ता एत्थ णं जमगाणं देवाणं जमिगाओ णाम रायहाणीओ पण्णत्ताओ वारसजोयणसहस्साइं जहा विजयस्स जाव महिड्डिया ॥

जमगा देवाः क भदन्त ! यमकयोर्देवयोः सवन्धिन्यौ यमिके नामराजधान्यौ प्रज्ञप्ते भगवानाह गौतम ! यमकपर्वतयोरुत्तरतोऽन्यस्मिन् असंख्येयतमे जम्बूद्वीपे २ द्वादशयोजनसहस्राण्यवगाह्य अत्रान्तरे यमकदेवयोः सवन्धिन्यौ यमकराजधान्यौ प्रज्ञप्ते ते चाविशेषेण विजयराजधानीसदृश्यौ वक्तव्ये जी० ३ प्रति० ॥

सम्प्रति ह्रदवक्तव्यतामभिधित्सुराह ॥

जंबूमंदरउत्तरेणं उत्तरकुराए कुराए पंचमहद्दहा पण्णत्ता तंजहा नीलवंतदहे एरावणदहे उत्तरकुरुदहे चंददहे मालवंतदहे ।

नीलवन्तमहाह्रदो विचित्रचित्रकूटपर्वतसमवक्तव्यतास्त्यां यम

काभिधानाभ्यां स्वसमाननामदेवावासाभ्यां पर्वताभ्यामनन्तर ह्रदद्वयस्ततो दक्षिणत शेषाश्चत्वार इति एते च सर्वेऽपि प्रत्येक दशभिर्दशभि काञ्चनकाभिधानैर्योजनशतोच्छ्रितैर्योजनशतमूलविष्कम्भैः पञ्चाशद्योजनमानमस्तकविस्तारैः स्वसमाननामदेवाधिवासैः प्रत्येकं दशयोजनान्तरैः पूर्वापरस्थवस्थितैर्गिरिभिरुपेता एतेषां च विचित्रकूटादिपर्वतहृदनिवासिदेवानामसङ्ख्येयतमजम्बूद्वीपे द्वादशयोजनसहस्रप्रमाणास्तन्नामिका नगर्यो भवन्तीति ॥

नीलवद्ह्रदादीनां विशेषवर्णकं ।

कहि णं भंते ! उत्तरकुराए२ नीलवंतदहे नाम दहे पण्णत्ते ? गोयमा ! जमगाणं पव्वयाणं दाहिणेणं अट्ठचोत्तीसे जोयणसये चत्तारि सत्तभागे जोयणस्स अबाधाए सीताए महाणतीये बहुमज्झदेसभाए एत्थणं उत्तरकुराए २ नीलवंतदहे नामं दहे पण्णत्ते उत्तरदक्खिणाए पाईणपडीणविच्छिण्णे एगं जोयणसहस्सं आयामेणं पंचजोयणसयाति विक्खंभेणं दसजोयणाइं उव्वेहेणं अच्छे सण्हे रययामयकूले चउक्कोणे समतीरे जाव पडिरूवे उभओपासिं दोहि य पउमवरवेतियाहिं दोहिं वणसंडेहिं सव्वतो समंता संपरिक्खित्ते दोण्हवि वण्णओ नीलवंतदहस्स णं तत्थ २ जाव बहवेत्ति सोमाणपडिरूवका पण्णत्ता वण्णओ भाणियव्वो तोरणेत्ति ॥

क्व भदन्त ! उत्तरकुरुषु कुरुषु नीलवन्नामह्रदो नाम ह्रद प्रज्ञप्त ? भगवानाह गौतम ! यमकपर्वतयोर्दाक्षिणात्याच्चरमान्तादर्वाक् दक्षिणाभिमुखमष्टौ चतुस्त्रिंशानि चतुस्त्रिंशदधिकानि योजनशतानि चतुरश्च सप्त भागान् योजनस्य अबाधया कृत्वेति गीयते अपान्तराले मुक्त्वेति भाव । अत्रान्तरे शीताया महानद्या बहुमध्यदेशभागे ( एत्थणंति ) एतस्मिन्नवकाशे उत्तरकुरुषु कुरुषु नीलवत ह्रदो नाम ह्रद प्रज्ञप्त स च किं विशिष्ट इत्याह उत्तरदक्षिणायत प्राचीनापाचीनविस्तीर्ण उत्तरदक्षिणाभ्यामवयवाभ्यामायत उत्तरदक्षिणायत प्राचीनापाचीनाभ्यामवयवाभ्यां विस्तीर्ण प्राचीनापाचीनविस्तीर्ण । एक योजनसहस्रमायामेन पञ्चयोजनशतानि विष्कम्भेन दशयोजनान्युद्वेधेन उण्डत्वेन अच्छस्फटिकवद्बहिर्निर्मलप्रदेश श्लक्ष्ण श्लक्ष्णपुद्गलनिर्मापितबहि प्रदेश । तथा रजतमयं रूप्यमय कूलं यस्यासौ रजतमयकूल इत्यादि विशेषणकदम्बकं जगत्युपरि वाप्यादिवत् तावद्वक्तव्य यावदिदं पर्यन्तपद " पडिहत्थभमतमच्छकच्छपअणेगसउणमिहुणपरिचरिए इति" ( उभयेपासेत्यादि ) स च नीलवन्नामह्रद शीताया महानद्या उभयो पार्श्वयो बहिर्विनिर्गत स तथाभूत सन् उभयो पार्श्वयोर्द्वाभ्यां पद्मवरवेदिकाभ्यां द्वितीयं पार्श्वं विनीयया पद्मवरवेदिकया इत्यर्थ । एवं द्वाभ्यां वनखण्डाभ्यां सर्वत सर्वासु दिक्षु समन्तत सामस्त्येन संपरिक्षिप्त पद्मवरवेदिकावनखण्डवर्णकश्च प्राग्वत् । ( नीलवत दहस्स ण तत्थ तत्थेत्यादि) नीलवद्ह्रदस्य णमिति वाक्यालङ्कारे तत्र देशे तस्य२ देशस्य तत्र तत्र प्रदेशे बहूनि त्रिसोपानप्रतिरूपकाणि प्रतिविशिष्टरूपकाणि त्रिसोपानानि प्रज्ञप्तानि वर्णकस्तेषा प्राग्वद्वक्तव्य । ( तेसिणमित्यादि ) तेषां च त्रिसोपानप्रतिरूपकाणा पुरत प्रत्येक २ तोरण प्रज्ञप्त (तेणतोरणाइत्यादि ) तोरणवर्णन पूर्ववद्वक्तव्यम् यावद्वचो "सयमहस्सपत्तगा" इति पदम ॥

तस्सण नीलवंतदहस्सणं दहस्स बहुमज्झदेसभाए एत्थ णं एगे महं पउमे पण्णत्ते जोयणं आयामविक्खंभेणं तं तिगुणं सविसेसं परिक्खेवेणं अद्धजोयणं बाहल्लेणं दसजोयणाइं उव्वेहेणं दो कोसे ऊसिते जलंतीतो सातिरेगाइं दसजोयणाइं सव्वग्गेणं पण्णत्ते तस्सणं पउमस्स अयमेतारूपे वण्णावासे पण्णत्ते तंजहा वइरामता मूला रिट्ठामते कंदे वेरुलिया मएणाले वेरुलियामता बाहिरपत्ता जंबूणयमया अब्भतरपत्ता तव णिज्जमया केसरा कणगामई कण्णिया णाणामणिमया पुक्खरत्थिरया साणं कण्णिया अद्धजोयणं आयामविक्खंभेणं तं तिगुणं सविसेसं परिक्खेवेणं कोस बाहल्लेणं सव्वकणगामई अच्छा सण्हा जाव पडिरूवा तीसेणं कण्णियाए उवरिं बहुसमरमणिज्जदेसभाए पण्णत्ते जाव मणीहिं तस्सणं बहुसमरमणिज्जस्स भूमिभागस्स बहुमज्झदेसभाए एत्थणं एगे महं भवणे पण्णत्ते कोसं च आयामेणं अद्धकोसं च विक्खंभेणं देसूणं कोसं उड्ढं उच्चत्तेणं अणेगक्खंभसतसण्णिविट्ठं सभावण्णओ । तस्स णं भवणस्स तिदिसि ततो दारा पण्णत्ता तंजहा पुरच्छिमेणं दाहिणेणं उत्तरेणं तेणं दारा पंचधणुसयाइं उड्ढं उच्चत्तेणं अड्ढाइज्जाइं धणुसयाइं विक्खंभेणं तावतियं चेव पवेसेणं से ताव कणगथूभियागा जाव वणमालाउत्ति तस्सणं भवणस्स अंतो बहुसमरमणिज्जभूमिभागे पण्णत्ते से जहानामए आलिंगपुक्खरेति वा जाव मणीणं वण्णओ तस्स णं बहुसमरमणिज्जस्स भूमिभागस्स बहुमज्झदेसभाए एत्थणं मणिपेढिया पण्णत्ता पंचधणुसयाइं आयामविक्खंभेणं अड्ढाइज्जाइं धणुसताइं बाहल्लेणं सव्वमणामणिमती ।

( तस्सणमित्यादि ) तस्य नीलवन्नाम्नो ह्रदस्य बहुमध्यदेशभागे अत्र महदेकं पद्म प्रज्ञप्तम् योजनमायामतो विष्कम्भतश्च अर्द्धं योजन बाहल्येन दशयोजनानि उद्वेधेन उण्डत्वेन जलपर्यन्तात् द्वौ क्रोशावुच्छ्रित सर्वाग्रेण सातिरेकाणि दशयोजनानि प्रज्ञप्तानि ।तस्य पद्मस्य अयं वक्ष्यमाण एतद्रूपोऽनन्तरमेव वक्ष्यमाण स्वरूपो वर्णावासो वर्णकनिवेश प्रज्ञप्तस्तद्यथा वज्रमय मूल रिष्टरत्नमय कन्दो वैडूर्यरत्नमयो नाल वैडूर्यरत्नमयानि बाह्यपत्राणि जाम्बूनदमयानि अभ्यन्तरपत्राणि तपनीयमयानि केसराणि कनकमयी पुष्करकर्णिका नानामणिमयी पुष्करस्थिबुका ( साणंकण्णिका अद्धमित्यादि) सा कर्णिका अर्द्धयोजनमायामविष्कम्भाभ्यां क्रोशमेक बाहल्यत सर्वात्मना कनकमयी अच्छा यावत्प्रतिरूपा यावत्करणात् "सण्हा घट्ठामट्ठा नीरया इत्यादि परिग्रह " ( तीसेणं कण्णियाए इत्यादि ) तस्या कर्णिकाया उपरि बहुसमरमणीयो भूमिभाग प्रज्ञप्तस्तद्वर्णनं च " सेजहानामए आलिंगपुक्खरे इ वा इत्यादिना ग्रन्थेन विजयराजधान्या उपकारिकालयनस्येव तावद्वक्तव्यं यावन्मणीना स्पर्शवक्तव्यता परिसमाप्ति (तस्सणमित्यादि )तस्य बहुसमरमणीयस्य भूमिभागस्य बहुमध्यदेशभागे अत्र महदेकं भवन प्रज्ञप्त क्रोशमायामतोऽर्द्धक्रोश विष्कम्भतो देशोन क्रोशमूर्द्धमुच्चस्त्वेन अनेकस्तम्भशतसन्निविष्टमित्यादि तद्वर्णन विजयराजधानीगतसुधर्म्मासभाया इव तावद्वक्तव्यं यावदिदं सूत्र ( दिव्वतुडियसद्दसपणादितेइति ) तदनन्तर सूत्रमाह । ( सव्वरयणामए इत्यादि ) सर्वात्मना रत्नमय अच्छं यावत्

प्रतिरूप यावत् करणात् 'सएहे जएहे घट्ठे मट्ठे इत्यादि' परिग्रहः॥ ( तस्सणमित्यादि ) तस्य भवनस्य त्रिदिशि त्रिसृषु दिक्षु एकैकस्यां दिशि एकैकद्वारभावेन त्रीणि द्वाराणि प्रज्ञप्तानि तद्यथा पूर्वस्यामुत्तरस्यां दक्षिणस्यां (तेण दारा इत्यादि) तानि द्वाराणि पञ्चधनुःशतानि ऊर्द्धमुच्चैस्त्वेन अर्द्धतृतीयानि धनुःशतानि विष्कम्भेन तावदेव अर्द्धतृतीयानि धनुःशतानीति भावः प्रवेशेन (सेयावरकणगथूभियागाइत्यादि) द्वारवर्णन विजयद्वारस्येव तावद्वक्तव्यं यावत् 'वणमालाओ' इति वनमालावक्तव्यतापरिसमाप्तिः (तस्सणमित्यादि) तस्य भवनस्य उल्लोचान्तर्बहुसमरमणीये भूमिभागे मणीनां वर्णगन्धरसस्पर्शवर्णनं प्राग्वत् ( तस्सेत्यादि ) तस्य बहुसमरमणीयस्य भूमिभागस्य बहुमध्यदेशभागे मणिपीठिका प्रज्ञप्ता पञ्चधनुःशतानि आयामविष्कम्भाभ्यामर्द्धतृतीयानि धनुःशतानि बाहुल्येन सर्वात्मना मणिमयी अच्छा यावत् प्रतिरूपा इति प्राग्वत् ॥

तीसेणं मणिपेढियाए उवरिं एत्थणं एगे महं देवसयणिज्जे पण्णत्ते देवसयणिज्जस्स वण्णओ से णं पउमे अण्णेणं अट्ठसत्तेणं तदद्धुच्चत्तप्पमाणमेत्तेणं पउमाणं सव्वतो समंता संपरिक्खित्ते तेणं पउमा अद्धजोयणं आयामविक्खंभेणं तं तिगुणं सविसेसं परिक्खेवेणं कोसं बाहल्लेणं दसजोयणाइं उव्वेहेणं कोसं ऊसिया । जलं ताओ सातिरेगातिं दसजोयणातिं सव्वग्गेणं पण्णत्ताइं तेसिणं पउमाणं अयमेतारूवे वण्णावासे पण्णत्ते तंजहा वतिरामयामूला जाव णाणामणिमया पुक्खलत्थिगया ता उणं कणिया उक्कोसं आयामविक्खंभेणं तं तिगुणसपरिक्खेवेणं अद्धकोसं बाहल्लेणं सव्वकणगामईउ अच्छउ जाव पडिरूवाउ तासि णं कणिणया उप्पि बहुसमरमणिज्जा भूमिभागा जाव मणीणं वण्णो गंधो फासो तस्सणं पउमस्स अवरुत्तरेणं उत्तरपुरच्छिमेणं एत्थणं नीलवंतदहकुमारस्स देवस्स चउण्हं सामाणियसाहस्सीणं चत्तारि पउमसाहस्सीउ पण्णत्ताउ एवं सव्वो परिवारो नवरि पउमाणं भाणियव्वो । सेणं पउमे अण्णेहिं तेहिं पउमपरिक्खेवेणं सव्वतो समंता संपरिक्खित्ते तंजहा अब्भिंतरएणं मज्झिमएणं बाहिरएणं अब्भिंतरएणं पउमपरिक्खेवे बत्तीसं पउमसयसाहस्सीउ पण्णत्ताउ मज्झिमएणं पउमपरिक्खेवो चत्तालीस उपउमसयसाहस्सीओ पण्णत्ताओ बाहिरएणं पउमपरिक्खेवे अडयालीस पउमसयसाहस्सीउ पण्णत्ताओ एवामेव स पुव्वावरेणं एगा पउमकोडीउ वीसं च पउमसतसहस्सा भवंतीतिमक्खाया। से केणट्ठेणं भंते एवं बुच्चति नीलवंतदहे ? गोयमा ! णीलवंतदहेणं तत्थ २ जाव उप्पलोति जाव सयसहस्सपत्ताइं नीलवंतप्पभाति नीलवंतवण्णाभाति नीलवंतदहकुमारेय एत्थ सो चेव गमो जाव णीलवंतदहे २ ॥

तीसेणमित्यादि ) तस्या मणिपीठिकाया उपरि अत्र महदेकं देवशयनीयं प्रज्ञप्तम् । शयनीयवर्णकः प्राग्वत् । ( तस्सणमित्यादि ) तस्य भवनस्योपरि अष्टावष्टौ स्वस्तिकादीनि मङ्गलकानि इत्यादि पूर्ववत्तावद्वक्तव्यम् यावत् बहव सहस्रपत्रहस्तका इति सूत्रत इदमधिकं दृश्यते " ( सेणमित्यादि ) तत् पद्ममन्येन अष्टशतेन पद्मानां तदर्द्धोच्चत्वप्रमाणमात्राणां तस्य मूलपद्मप्रमाणस्यार्द्ध तदर्द्ध तच्च तदुच्चत्वप्रमाणं च तदर्द्धोच्चत्वप्रमाण तदर्द्धोच्चत्वप्रमाण मात्रा येषां तानि तथा तेषां सर्वासु दिक्षु समन्तत सामस्त्येन सपरिक्षिप्त तदर्द्धोच्चत्वप्रमाणमेव तेषां भावयति ( पउमा इति ) तानि पद्मानि प्रत्येकमर्द्धयोजनमायामविष्कम्भाभ्यां क्रोशमेकं बाहुल्येन दशयोजनानि उद्वेधेन क्रोशमेकं जलपर्यन्तादुच्छ्रितं सातिरेकाणि दशयोजनानि सर्वाग्रेण ( तेसिणमित्यादि ) तेषां पद्मानामयमेतद्रूपो वर्णावासः प्रज्ञप्तः वज्रमयानि मूलानि रिष्टरत्नमया कन्दा वैडूर्यरत्नमया नालाः तपनीयमयानि बाह्यपत्राणि जाम्बूनदमयानि बाह्यपत्राणि तपनीयमयानि केसराणि कनकमय्यः कर्णिका नानामणिमया पुष्करास्थिभागाः (ताउण कन्निआउ इत्यादि) ताः कर्णिकाः क्रोशमायामविष्कम्भाभ्यामर्द्ध क्रोशं बाहुल्येन सर्वात्मना कनकमय्यः अच्छाउ जाव पडिरूव इति प्राग्वत्। ( तेसिणं कन्नियाणमित्यादि ) तासां कर्णिकानामुपरि बहुसमरमणीयो भूमिभागः प्रज्ञप्तः तस्य वर्णकः पूर्ववत्तावद्वक्तव्यो यावन्मणीनां स्पर्श (तस्सणमित्यादि ) तस्य मूलभूतस्य पद्मस्य अपरोत्तरेण अपरोत्तरस्यामवमुत्तरस्यामुत्तरपूर्वस्यां सर्वसकलनया तिसृषु दिक्षु अत्र नीलवतो नागकुमारेन्द्रस्य नागकुमारराजस्य चतुर्णां सामानिकसहस्राणां योग्यानि चत्वारि पद्मसहस्राणि प्रज्ञप्तानि ( एतेणमित्यादि ) एतेनानन्तरोदितेनाभिलापेन यथा विजयस्य सिंहासनपरिवारोऽभिहितस्तथा इहापि पद्मपरिवारो वक्तव्यस्तद्यथा पूर्वस्यां दिशि चतसृणामग्रमहिषीणां योग्यानि चत्वारि महापद्मानि दक्षिणपूर्वस्याम्भ्यन्तरपर्षदोऽष्टानां देवसहस्राणां योग्यान्यष्टौ पद्मसहस्राणि दक्षिणस्या मध्यपर्षदो दशाना देवसहस्राणां योग्यानि दशपद्मसहस्राणि दक्षिणापरस्यां बाह्यपर्षदो द्वादशानां देवसहस्राणां द्वादश पद्मसहस्राणि पश्चिमायां सप्तानामनीकाधिपतीना योग्यानि सप्तमहापद्मानि प्रज्ञप्तानि तदनन्तर तस्य द्वितीयस्य पद्मपरिवेषस्य पृष्ठतश्चतसृषु दिक्षु षोडशानामात्मरक्षकदेवसहस्राणां योग्यानि षोडशपद्मसहस्राणि प्रज्ञप्तानि । तद्यथा चत्वारि पद्मसहस्राणि पूर्वस्यां दिशि चत्वारि पद्मसहस्राणि पश्चिमायां चत्वारि पद्मसहस्राणि उत्तरस्यामिति । तदेव मूलपद्मस्य त्रय पद्मपरिवेषा अभूवन् अन्येऽपि च त्रयो विद्यन्ते इति तत्प्रतिपादनार्थमाह । ( सेणपउमे इत्यादि ) तत्पद्ममन्यैरनन्तरोक्तपरिक्षेपत्रिकव्यतिरिक्तैस्त्रिभिः पद्मपरिवेषैः सर्वतः सर्वासु दिक्षु समन्तत सामस्त्येन सपरिक्षिप्तम्। तद्यथा अभ्यन्तरेण मध्यमेन बाह्येन च । तत्राभ्यन्तरपद्मपरिक्षेपे सर्वसंख्यया द्वात्रिंशत् पद्मशतसहस्राणि प्रज्ञप्तानि (३२०००००) मध्यमे परिक्षेपे चत्वारिंशत् पद्मशतसहस्राणि(४००००००) बाह्यपद्मपरिक्षेपे अष्टाचत्वारिंशत् पद्मशतसहस्राणि प्रज्ञप्तानि ( ४८००००० ) एवमेव अनेनैव प्रकारेण ( सव्वावरेणति ) सह पूर्वं यश्च येन वा सपूर्वं तत् अपर च सपूर्वापर तेन सपूर्वापरेण पूर्वापरसमुदायेनेत्यर्थ एका पद्मकोटी विंशतिश्च पद्मशतसहस्राणि भवतीत्याख्यातं मया शेषैश्च तीर्थकृद्भिरेतेन सर्वतीर्थकृतामविसंवादिवचनतामाह । कोट्यादिका च संख्या स्वमीलितायां द्वात्रिंशदादिशतसहस्राणामेकत्र मीलने यथोक्तसंख्याया अवश्य भावात् सप्रति नामान्वर्थं पिपृच्छिषुराह । अथ केनार्थेन एवमुच्यते नीलवद्द्रहो नीलवद्द्रह इति भगवानाह । गौतम ! नीलवद्द्रहे तत्र तत्र देशे तस्य तस्य देशस्य तत्र तत्र प्रदेशे बहूनि उत्पलानि पद्मानि यावत् सहस्रपत्राणि नीलवद्द्रहप्रभाणि नीलवद्धाम इदाकाराणि नीलवद्वर्णानि नीलवद्धाम वर्षधरपर्वतस्तद्वर्णानीति भाव । नीलवन्नामा च नागकुमारेन्द्रो नागकुमार-

राजो महर्द्धिक इत्यादि यमकदेववन्निरवशेषं वक्तव्यं यावद्वि-हरति । ततो यस्मात्तान्येतानि पद्मानि नीलवद्वर्णानि नीलवन्नामा च तदधिपतिर्देवस्ततस्तद्योगादसौ नीलवन्नामा ह्रद । तथाचाह ( से एएणट्ठेणमित्यादि ) कहि णं भंते ! नीलवतद्दहस्सेत्यादि राजधानीविषयं सूत्रं समस्तमपि प्राग्वत् ॥

नीलवद्ध्रदे काञ्चनपर्वताः ।

नीलवंतेणं पुरच्छिमपच्चच्छिमेणं दस दस जोयणाति अवा-हाए एत्थणं दस दस कंचणगपव्वता पण्णत्ता तेणं कंचणग-पव्वता एगमेगं जोयणसतं उड्ढं उच्चत्तेणं पणवीसं २ जोयणाति उव्वेहेणं मूले एगमेगं जोयणसतं विक्खंभेणं मज्झे पण्णत्तरिं जोयणाइं आयामविक्खंभेणं उवरिं पण्णासं जोयणाइं विक्खंभेणं मूले तिण्णि सोले जोयणसते किंचि-विसेसाहिता । परिक्खेवेणं मज्झे दोण्णि सत्ततीसे जोयणसते किंचि विसेसाहिता परिक्खेवेणं उवरिं एगं अट्ठावन्नं जोयण-सतं किंचि विसेसाहिया । परिक्खेवेणं मूले विच्छिण्णा मज्झे संखित्ता उप्पिं तणुया गोपुच्छसंठाणसंठिया सव्वकंचणमया अच्छा पत्तेयं २ पउमवरवेइयं पत्तेयं २ वणखंडपरिक्खित्ता तेसिणं कंचणगपव्वताणं उप्पिं बहुसमरमणिज्जे भूमिभागे जाव आसयन्ति पत्तेयं २ पासायवडेंसगा सड्ढा वावट्ठिं जोय-णिया उड्ढं एकतीसं जोयणाइं कोसं च विक्खंभेणं मणि-पेढिया दो जोयणिया सिंहासणा सपरिवारा । से केणट्ठेणं भंते एवं वुच्चइ कंचणगपव्वया गोयमा ! कंचणगेसु णं पव्वतेसु तत्थ २ वाविउ उप्पलाइं जाव कंचणवण्णा भाति कंचणगा जाव देवा महिड्ढिया जाव विहरंति उत्तरेणं कंचणगाणं कंच-णित्ताउ रायहाणीओ अण्णम्मि जंबु तहेव सव्वं भाणियव्वं ( नीलवंतदहस्सणमिति ) नीलवतो ह्रदस्य ( पुरच्छिमपच्चच्छिमेणं ) पूर्वस्यां पश्चिमायां च दिशि प्रत्येकं दशयोजनान्यबाधया कृत्वेति ग-म्यतेऽपान्तराले मुक्त्वेतिभाव । दश दश काञ्चनपर्वता दक्षिणोत्तर-श्रेण्या प्रज्ञप्ता ते काञ्चनपर्वता प्रत्येकमेकं योजनशतमूर्ध्वमुच्चैस्त्वेन पञ्चविंशतियोजनान्युद्वेधेन मूले एकं योजनशतं विष्कम्भेन मध्ये पञ्चसप्ततियोजनानि विष्कम्भेन उपरि पञ्चाशद्योजनानि विष्क-म्भेन मूले त्रीणि षोडशोत्तराणि योजनशतानि (३१६) किञ्चि-द्विशेषाधिकानि परिक्षेपेण मध्ये द्वे सप्तविंशे योजनशते (२२७) किञ्चिद्विशेषोन परिक्षेपेण उपरि एकमष्टापञ्चाशद्योजनशतं (१५८) किञ्चिद्विशेषोन परिक्षेपेण अत एव मूले विस्तीर्णा मध्ये संक्षिप्ता उपरि तनुका अत एव गोपुच्छसंस्थानसंस्थिताः सर्वात्मना कन-कमया ( अच्छा जावपडिरूवाइनि ) प्राग्वत् । तथा प्रत्येकं प्रत्ये-कं पद्मवरवेदिकया परिक्षिप्ता । प्रत्येकं वनखण्डपरिक्षिताश्च पद्मवरवेदिका वनखण्डवर्णनं प्राग्वत् । ( तेसिणमित्यादि ) तेषां काञ्चनपर्वतानामुपरि बहुसमरमणीयो भूमिभागः प्रज्ञप्तः तेषां च वर्णनं प्राग्वत् तावद्वक्तव्यं यावत्तृणानां मणीनां च शब्दवर्णनमिति ( तेसिणमित्यादि ) तेषां च बहुसमरमणीयानां भूमिभा-गानां बहुमध्यदेशभागे प्रत्येकं प्रत्येकं प्रासादावतंसकः प्रज्ञप्तः प्रासादवक्तव्यता सर्वा यमकपर्वतोपरि प्रासादावतंसकयोरिव निरवशेषा वक्तव्या यावत्परिवारसिंहासनवक्तव्यतापरिसमाप्ति मत्रापि नामान्वर्थं पिपृच्छिषुराह—सेकेणट्ठेणमित्यादि प्राग्वत्न-वरं यस्मादुत्पलादीनि काञ्चननामानश्च देवास्तत्र परिवसन्ति

तत्काञ्चनप्रभोत्पलादियोगात् काञ्चनकाभिधदेवस्वामिकत्वाच्च ते काञ्चनका इति तथाचाह । सेएणट्ठेणमित्यादि काञ्चनिकाश्च राजधान्यो यामिका राजधानीवद्वक्तव्या ॥

उत्तरकुरुह्रदाः ॥

कहि णं भंते उत्तरकुराए उत्तरकुरुद्दहे नाम दहे पण्णत्ते ? गोयमा ! नीलवंतद्दहस्स २ दाहिणेणं अट्ठचोत्तीसे जोयण-सए एवं चेव गमो णेयव्वो जो णीलवंतद्दहस्स सव्वेसिं सरि-सके दहसरिसनामा य देवा सव्वेसिं पुरच्छिमपच्चच्छिमेणं कंचणपव्वता दस २ एकप्पमाणा उत्तरेणं रायहाणी अण्णम्मि जंबुद्दीवे चंददहे एरावणद्दहे मालवंतद्दहे एवं एकेको णेयव्वो ॥ क भदन्त ! जम्बूद्वीपे उत्तरकुरुषु कुरुषु उत्तरकुरुह्रदो नाम ह्रदः प्रज्ञप्तः । भगवानाह । गौतम ! नीलवतो ह्रदस्य दाक्षिणात्याच्च-रमपर्यन्तादर्वाक् चतुस्त्रिंशानि चतुस्त्रिंशदधिकानि योजनशतानि चतुरश्च योजनस्य सप्त भागा अवाधया कृत्वेति गम्यते शीता-या महानद्या बहुदेशभागे अत्र उत्तरकुरुर्नाम ह्रदः प्रज्ञप्तः यथै-व प्राक् नीलवतो ह्रदस्य आयामविष्कम्भोद्वेधपद्मवरवेदिका-वनखण्डत्रिसोपानप्रतिरूपकतोरणमहामूलभूतपद्माष्टशतपद्मपरि वारपद्मशेषपरिधिपरिक्षेपत्रयवक्तव्यतोक्ता तथाऽन्यूनातिरिक्ता वक्तव्या । ( मूलटीकायां पाठभेदः ) नामकारण पिपृच्छिषुरिदमाह-

"से केणट्ठेणं भंते इत्यादि प्राग्वत्' नवरमुत्पलादीनि यस्मात् उत्तरकुरुह्रदप्रभाणि उत्तरकुरुह्रदाकाराणि तेन तानि तदाकार-योगात् उत्तरकुरुनामाऽत्र तत्र देव परिवसति तेन तद्योगात् ह्रदोऽप्युत्तरकुरुः नन्वेवमितरेतराश्रयदोषप्रसङ्ग उभयेषामपि नाम्नामनादिकालं तथाप्रवृत्तेः । एवमन्यत्रापि निर्दोषता भाव-नीया । उत्तरकुरुनामा च तत्र देव परिवसति तद्वक्तव्यता च नीलवन्नागकुमारवद्वक्तव्या ततोऽप्यसावुत्तरकुरुरिति । राजधानी-वक्तव्यता काञ्चनकपर्वतवक्तव्यता च राजधानीपर्यवसाना प्राग्वत् । चन्द्रह्रदवक्तव्यतामाह । ( कहिण भंते इत्यादि ) प्रश्नसूत्रं सुगमं भगवानाह—गौतम ! उत्तरकुरुह्रदस्य दाक्षिणा-त्याच्चरमान्तादर्वाक् दक्षिणस्यां दिशि अष्टौ चतुस्त्रिंशानि योज-नशतानि चतुरश्च सप्त भागान् योजनस्य अवाधया कृत्वेति शेष । शीताया महानद्या बहुमध्यदेशभागे अत्र अस्मिन्नवकाशे उत्तर-कुरुषु चन्द्रह्रदो नाम ह्रदः प्रज्ञप्तः । अस्यापि नीलवद्ध्रदस्येव आयामविष्कम्भोद्वेधपद्मवरवेदिकावनखण्डत्रिसोपानप्रतिरूपक-तोरणमूलभूतमहापद्माष्टशतपद्मपरिवारपद्मशेषपद्मपरिक्षेपत्रयव-क्तव्यता वक्तव्या । नामान्वर्थसूत्रमपि तथैव नवरं यस्मात् उत्पलादीनि चन्द्रह्रदप्रभाणि चन्द्रह्रदाकाराणि चन्द्रवर्णानि चन्द्रनामा च देवस्तत्र परिवसति तस्माच्चन्द्रह्रदाभोत्प-लादियोगात चन्द्रदेवस्वामिकत्वाच्चन्द्रह्रद इति । चन्द्रा-राजधानीवक्तव्यता काञ्चनकपर्वतवक्तव्यता च राजधानीपर्य-वसाना प्राग्वत् । सांप्रतमैरावतह्रदवक्तव्यतामाह । कहिण भंते इत्यादि प्रश्नसूत्रं पाठसिद्ध निर्वचनमाह । गौतम ! चन्द्रह्रद-स्य दाक्षिणात्याच्चरमान्तादर्वाक् दक्षिणस्यां दिशि अष्टौ चतु-स्त्रिंशादियोजनशतानि चतुरश्च सप्त भागान् योजनस्यावाधया कृत्वेति शेष । शीताया महानद्या बहुमध्यदेशभागे अत्र एतस्मिन्न-वकाशे ऐरावतह्रदो नाम ह्रदः प्रज्ञप्त । अस्यापि नीलवन्नाम्नो ह्रदस्येवायामविष्कम्भादिवक्तव्यता पर्यवसाना वक्तव्या । अन्व-र्थसूत्रमपि तथैव नवरं यस्मादुत्पलादीनि ऐरावणह्रदप्रभाणि ऐरावतो नाम हस्ती तद्वर्णानि च ऐरावतश्च नामा तत्र देव

परिवसति तेन ऐरावत न्हद इति ऐरावतराजधानीवत् काञ्चनकपर्वतवक्तव्यताऽपि राजधानीवक्तव्यता पर्यवसाना तथैव अधुना माल्यवन्नामन्हदवक्तव्यतामाह ( कहिण भंते इत्यादि ) सुगम भगवानाह गौतम ! ऐरावतन्हदस्य दाक्षिणात्याच्चरमान्तादर्वाक् दक्षिणस्यां दिशि अष्टौ चतुर्स्त्रिशानि योजनशतानि चतुरश्च सप्तभागान् योजनस्य अबाधया कृत्वेति शेष. । शीताया महानद्या बहुमध्यदेशभागे अत्र एतस्मिन्नवकाशे उत्तरकुरुषु कुरुषु माल्यवन्नामा न्हद. प्रज्ञप्त. । स च नीलवद्ध्रदवत् आयामविष्कम्भादिना तावद्वक्तव्यो यावत् पद्मवक्तव्यतापरिसमाप्ति । नामान्वर्थसूत्रमपि तथैव यस्मादुत्पलादीनि माल्यवद्ध्रदप्रभाणि माल्यवद्ध्रदाकाराणि माल्यवन्नामा वक्षस्कारपर्वतस्तद्वर्णानि तद्वर्णाभानि माल्यवन्नामा च तत्र देव परिवसति तेन माल्यवद्ध्रद इति, । माल्यवती राजधानी विजयाराजधानी वद्वक्तव्या काञ्चनकपर्वतवक्तव्यतापर्यवसाना प्राग्वत् । जी० ३ प्रति० । ( उत्तरकुरुगतजम्बूसुदर्शनवर्णकोऽन्यत्र)उत्तरकुर्वधिपतौ देवे,पु० अथोत्तरकुरुनामार्थं पिपृच्छिषुरिदमाह ।

से केणट्ठेणं भंते ! एवं वुच्चइ उत्तरकुरा २ गोयमा! उत्तरकुराए उत्तरकुरुणामं देवे परिवसइ महिड्ढिए जाव पलिओमट्ठिइए से तेणट्ठेणं गोयमा ! एवं वुच्चइ उत्तरा २ उत्तरकुराए उत्तरकुरुणामं देवे परिवसइ महिड्ढिए जाव पलिओवमट्ठिई से तेणट्ठेणं गोयमा ! एवं वुच्चइ उत्तरकुराए अदुत्तरं च णं जाव सासए ।

से केणट्ठेणमित्यादि प्रतीत नवरम् उत्तरकुरुनामाऽत्र देव परिवसति तेनेमा उत्तरकुरव इत्यर्थ । जं०२वक्ष० । द्वाविंशतीर्थकृतो निष्क्रमणशिविकायाम्, स्त्री० । स० ।

उत्तरकुरुकूड—उत्तरकुरुकूट—न० माल्यवद्वक्षस्कारपर्वतस्य तृतीय कूटे, स्था०९ ठा० । मेरोरुत्तरपूर्वस्यां दिशि, माल्यवद्वर्षधरपर्वतस्य तृतीय कूट हिमवत्कूटप्रमाण कूटसदृग्नामकश्चात्र । देवः । जं०४ वक्ष० । महाविदेहे, गन्धमादनस्य वक्षस्कारपर्वतस्य चतुर्थे कूटे, स्था० १० ठा० । जं० ।

उत्तरकुरुदह—उत्तरकुरुन्हद—पु० उत्तरकुरुषु तृतीये ह्रदे, स्था० ६ ठा० । ( तन्मानादिरुत्तरकुरुशब्दे उक्तम् ) ॥

उत्तरकुरुमाणुसच्छरा—उत्तरकुरुमानुषाप्सरस्—स्त्री०उत्तरकुरुषु मानुषरूपासु अप्सरस्सु, प्रश्न० आश्र० ४ द्वा० ।

उत्तरकूलग—उत्तरकूलग—पु० वानप्रस्थतापसभेदेषु, यैर्गङ्गायामुत्तरकूल एव वस्तव्यम् । नि० । भ० ॥

उत्तरकोडि—उत्तरकोटि—स्त्री० गान्धारग्रामस्य सप्तम्यां मूर्छनायाम्, स्था० ७ ठा० ।

उत्तरगंधारा—उत्तरगान्धारा—स्त्री० गान्धारग्रामस्य पञ्चम्यां मूर्छनायाम्, ॥ स्था० ७ ठा० ॥

उत्तरगुण—उत्तरगुण—पु०मूलगुणापेक्षया उत्तरभूता गुणा वृक्षशाखा इवोत्तरगुणा । भ०७ श० २ उ० । सर्वत. पिण्डविशुद्ध्यादिषु, देशतो दिग्व्रतादिषु, पञ्चा० ५ विव० ।

शेषाः पिण्डविशुद्ध्याद्याः, स्युरुत्तरगुणाः स्फुटम् ।
एषां चानतिचाराणा, पालनं ते त्वमी मताः ॥ ४७ ॥

शेषा उक्तमूलगुणेभ्योऽवशिष्टास्ते के इत्याह । पिण्डविशुद्ध्याद्या इति पिण्डविशुद्धिराहारादिनिर्दोषता सा आदौ येषां भेदाना ते पिण्डविशुद्ध्याद्या सप्ततिभेदा इत्यर्थ । उत्तरगुणा उत्तरगुणसङ्गका. स्फुट प्रकट स्युर्भवेयुरिति सबन्धस्तत्रादिशब्दगृहीता भेदास्त्विमे "पिंडविसोही समिई, भावणपडिमा य इंदियनिरोहो । पडिलहणगुत्तीओ, अभिग्गहा चेव करणतु" धर्म०३अधि० ( पाठान्तरेण ) " पिंडस्स जा विसोही, समिईओ भावणा तवो दुविहा । पडिमा अभिग्गहा वि य, उत्तरगुण मो वियाणाहि" १सूत्र०श्रु०१४अ०।(एतद्व्याख्या प्रायश्चित्तशब्दे ) पिण्डविशुद्ध्यादय सार्था स्वस्वस्थाने ) महाव्रतावृतेषु, सूत्र० । व्य० नि० चू० । पञ्चा० । जीत० । आव० । (मूलगुणानामिवोत्तरगुणानामपि भङ्गो नेष्ट इत्यतिचारशब्दे उक्तम् )

उत्तरगुणकप्पिय—उत्तरगुणकल्पिक—पु०

आहारउवहिसेज्जा, उग्गमउप्पादणेसणा सुद्धा ।
जो परिगिण्हति णियर्य, उत्तरगुणकप्पिओ स खलु ॥

य आहारोपधिशय्या उद्गमोत्पादनैषणा । शुद्धा नियत निश्चित परिगृह्णाति स खलु उत्तरगुणकल्पिको मन्तव्यः । इत्युक्तरूपे उत्तरगुणयुक्तसामाचारीभेदे, वृ० ६ उ० ।

उत्तरगुणपच्चक्खाण—उत्तरगुणप्रत्याख्यान—न० मूलगुणापेक्षया उत्तरभूता गुणा वृक्षशाखा इवोत्तरगुणास्तेषु प्रत्याख्यानमुत्तरगुणप्रत्याख्यानम् । प्रत्याख्यानभेदे, ॥ तद्भेदा यथा—

'उत्तरगुणपच्चक्खाणे णं कइविहे पण्णत्ते ? गोयमा ! दुविहे पण्णत्ते तंजहा सव्वुत्तरगुणपच्चक्खाणे य देसुत्तरगुणपच्चक्खाणे य । सव्वुत्तरगुणपच्चक्खाणे णं भंते ! कइविहे पण्णत्ते ? गोयमा ! दसविहे पण्णत्ते तंजहा अणागयमइक्कंतं, कोडिसहीयं नियंटियं चेव । सागारमणागारं परिमाणकडं निरवसेसं ॥

अनागतादीनां च व्याख्याऽन्यत्र ॥ भ०७ श० २ उ० । "मूलगुणउत्तरगुणा, जे मे णाराहिया पमाएण । तमहं सव्व णिंदे, पडिक्कमे आगामिस्साणं" इति रूपम् । आतु० पंचा० आ० क० ।

उत्तरगुणपडिसेवणा उत्तरगुणप्रतिसेवना—स्त्री० उत्तरगुणविषये प्रतिसेवनायाम्, "इदाणिं उत्तरगुणपडिसेवणा भण्णति ते उत्तरगुणा पिंडविसोहाइ अणेगविहा तत्थ पिंडे ताव दप्पिय कप्पिय च पडिसेवण भण्णत्ति" ॥ नि० चू० १ उ०(सर्वं पडिसेवणाशब्दे वक्ष्यते )

उत्तरगुणलद्धि—उत्तरगुणलब्धि—स्त्री० उत्तरगुणा. पिण्डविशुद्ध्यादयस्तेषु चेह प्रक्रमात्तपो गृह्यते तस्य लब्धि । तपोलब्धौ, "उत्तरगुणलद्धिखममाणस्स विज्जाचारणलद्धिणामं लद्धि समुप्पज्जइ" । भ० २० श० ६ उ० ॥

उत्तरगुणसद्धा-उत्तरगुणश्रद्धा-स्त्री०प्रधानतरगुणाभिलापे,पंचा.

उत्तरगुणासेवणासिक्खग—उत्तरगुणासेवनाशिक्षक-त्रि० उत्तरगुणविषये सम्यक् पिण्डविशुद्ध्यादिकान् गुणान् आसेवमाने, सूत्र० १ श्रु० १५ अ० ।

उत्तरचावाला—उत्तरचावाला—स्त्री० नगरभेदे, ताहे सामी उत्तरचावाल उच्चती तत्थ अतरा कणखल नाम उत्तमपदम् ।" आ० चू० २ अ० । तत स्वामी उत्तरचावालां गत तत्र पक्षक्षपणपारणे नागसेनगृहे क्षीरभोजनेन प्रतिमानानि प्रादुर्भूतानि । आ० क० । आ० म० द्वि० ॥

उत्तरचूल—उत्तरचूड—न० वन्दनक दत्त्वा शब्देन मस्तकेन वन्दे इत्यभिधानरूपे एकोनविंशत्तमे वन्दनकदोषे, ध २ अधि०। आव०।

उत्तरचूलिया—उत्तचूलिका—स्त्री०"बाऊणं चउणग मत्थण वदामि

चूलियाए सा " यद्वन्दनकं दत्वा पश्चान्महता शब्देन मस्तकेन वन्दे इति यत्र सूत्रे तदुत्तरचूलिका मन्तव्या। वृ०३ उ०। आव०चू०।

उत्तरज्झयण-उत्तराध्ययन- न० बहुव० उत्तराणि प्रधानानि अध्ययनानि रूढिवशाद्विनयश्रुतादीनि षट्त्रिंशदुत्तराध्ययनानि सर्वाण्यपि चाध्ययनानि प्रधानान्येव तथापि अमून्येव रूढ्या उत्तराध्ययनशब्दवाच्यत्वेन प्रसिद्धानि । न० । अङ्गबाह्ये कालिकश्रुतभेदे, पा० ।

उत्तराध्ययनशब्दनिरुक्तिं निर्युक्तिकृद्विस्तरेणाह ।

णामं ठवणा दविए, खेत्तदिसा ताव खेत्तपभवए ।
पइकालं संचयपहा-णणाणयकमगणणतो भावे ॥
जहण्णं उत्तरं खलु, उक्कोसं वा अणुत्तरं होइ ।
सेसाइं अणुत्तराइं, अणुत्तराइं च णामाइं ॥

( नामोत्तरव्याख्या उत्तरशब्दे दर्शिता ) उत्तरस्यानेकविधत्वेन यदत्र प्रकृत तदाह ।

कम उत्तरेण पगयं, आयारस्से व उवरिमाइं तु ।
तम्हाउ उत्तरा खलु, अज्झयणा होंति णायव्वा ॥

क्रमापेक्षमुत्तर क्रमोत्तर शाकपार्थिवादित्वान्मध्यमपदलोपी समासस्तेन प्रकृतमधिकृतमिह च क्रमोत्तरेणेति भाव क्रमोत्तरेणैतानि हि श्रुतात्मकत्वेन क्षायोपशमिकभावरूपाणि तद्रूपस्यैवाचाराङ्गस्योपरिपाठ्यमानत्वेनोत्तराणीत्युच्यन्ते अत आह ( आयारस्से व उवरिमाइं तु)एवकारो भिन्नक्रमस्ततश्चाचारस्योपर्येवोत्तरकालमेवेमानीति हादि विपरिवर्तमानतया प्रत्यक्षाणि पठितवन्त इति गम्यते । तुर्विशेषणे विशेषश्चाय यथा शय्यंभव यावदेष क्रमस्तदाचारतस्तु दशवैकालिकोत्तरकालं पठ्यन्त इति ( तम्हाउत्ति ) तु पूरणे यत्तदोश्च नित्यमभिसंबन्धस्ततो यस्मादाचारस्योपर्येवेमानि पठितवन्तस्तस्मादुत्तराण्युत्तरशब्दवाच्यानि खल्वर्वाक्यालङ्कारेऽवधारणे वा तत उत्तराण्येवाध्ययनानि विनयश्रुतादीनि भवन्ति ज्ञातव्यानि अन्यच्च बोद्धव्यानि प्राकृतत्वाच्च लिङ्गव्यत्यय इति गाथार्थ । आह यद्याचारस्योपरि पठ्यमानत्वेनोत्तराण्यमूनि तत्किमन्त एवाचारस्य प्रसूतिरेषामपि तन एवाभिधेयमपि यदेव तस्य तदेवान्यथेतिसंशयापनोदायाह ।

अंगप्पभवा जिणभा-सिया य पत्तेयबुद्धसंवाया ।
बंधे मोक्खे य कया, छत्तीसं उत्तरज्झयणा ॥

अङ्गात् दृष्टिवादादेः प्रभव उत्पत्तिरेषामित्यङ्गप्रभवानि यथा परीषहाध्ययनम् । वक्ष्यति हि "कम्मप्पवायपुव्वे, सत्तरसे पाहुडम्मि ज सुत्तं । नणय सोदाहरणं, तं चेव इहावि नायव्व" जिनभाषितानि यथाद्रुमपत्रकाध्ययन तद्धि समुत्पन्नकेवलेन भगवता महावीरेण प्रणीत यद्वक्ष्यति " तन्निस्साए भगव, सीसाणं देइ अणुसद्वि ति " च समुच्चये प्रत्येकबुद्धाश्च संवादश्च प्रत्येकबुद्धसंवादस्तस्मादुत्पन्नानीति शेषः । तत्र प्रत्येकबुद्धाः कपिलादयस्तेभ्य उत्पन्नानीति । यथा कापिलाध्ययनम् वक्ष्यति हि " धम्मदुयागीअ" तत्र कपिलेनेति क्रम संवादसंगत प्रश्नोत्तरवचनरूपस्तत उत्पन्नानि यथा केशीगौतमीये वक्ष्यति च "गौतमकेशीओ या महाय सम्रुचिय तु उम्हेयमित्यादि " ननु स्थविरैर्विरचितान्यपैतानि यत आह चूर्णिकृत् । " सुत्तं देशाण भलागमोत्ति नन्वध्ययनेऽप्युक्तम् "जस्स जे तिया सिस्सा उप्पत्तिया ए वेणइयाए कम्मयाए पारिणामिया चउव्विहाए बुद्धीए उववेया तस्स तत्तियाइं पइन्नगसहस्साइं" प्रकीर्णकानि चामूनि तत्कथ जिनदेशितत्वादि न विरुध्यते । उच्यते तथा स्थितानामेव जिनादिवचसामिह दृष्टत्वेन तद्देशितत्वाद्युक्तमिति न विरोधः । बन्ध आत्मकर्मणोरत्यन्त संश्लेषस्तस्मिन् मोक्षश्च तयोरेवात्यन्तिक पृथग्भावस्तस्मिंश्च कृतानि कोऽभिप्रायो यथा बन्धो भवति यथा च मोक्षस्तथा प्रदर्शकानि । तत्र बन्धे यथा " आणाअणिद्देसकरेत्ति " मोक्षे यथा " आणानिद्देसकरेत्ति " आभ्यां यथाक्रममाश्रवविनयो मिथ्यात्वाद्यविनाभूतत्वेन बन्धस्य विनयश्चान्तरतपोरूपत्वेन मोक्षस्य कारणमिति तत्वतस्तौ यथा भवतस्तदेवोक्तं भवति मोक्षप्राधान्येऽपि बन्धस्य प्रागुपादानमनादित्वोपदर्शनार्थम् । यद्वा " बंधे मोक्खेयत्ति " च शब्द एवकारार्थो भिन्नक्रमश्च । ततो बन्ध एव सति यो मोक्षस्तस्मिन् कृतान्यनेनानादिमुक्तमन्तव्यवच्छेदश्च कृतस्तत्र हि मोक्षशब्दार्थानुपपत्तिः सकलानुष्ठानवैकल्यापत्तिश्च किमेवं कतिचिदेव नेत्याह । षट्त्रिंशत्संख्यानि कोऽर्थः सर्वाण्येतदुत्तराध्ययनानीति गाथार्थः । उत्त० १ अ० ।

। तानि च षट्त्रिंशदमूनि ॥

छत्तीसउत्तरज्झयणा पण्णत्ता तंजहा । विणयसुयं १ परीसहा २ चाउरंगीज्जं ३ असंखयं ४ अकामसकाममरणीज्जं ५ पुरिसविज्जा ६ उरभिज्जं ७ काविलियं ८ नमिपव्वज्जा ९ दुमपत्तयं १० बहुसुयपुज्जा ११ हरिएसिज्जं १२ चित्तसंभूयं १३ उसुयारिज्जं १४ सभिक्खुगं १५ समाहिट्ठाणाइं १६ पावसमणिज्ज १७ संजइज्जं १८ मियाचारिया १९ अणाहपव्वज्जा २० समुद्दपालिज्जं २१ रहनेमिज्जं २२ गोयमकेसीज्जं २३ समितीओ २४ जन्नतिज्जं २५ सामायारी २६ खलुंकेज्जं २७ मोक्खमग्गगई २८ अप्पमाओ २९ तवोमग्गो ३० चरणविही ३१ पमायट्ठाणाइं ३२ कम्मपयडी ३३ लेसज्झयणं ३४ अणगारमग्गे ३५ जीवाजीवविभत्ती य ३६ ॥ छत्तीसं उत्तरज्झयणा ॥ स० । व्य० । आव० ४ अ० ।

उत्तरज्झाय -उत्तराध्याय- पु० उत्तरा प्रधाना अध्याया अध्ययनानि । उत्तराश्च ते अध्यायाश्च उत्तराध्यायाः । विनयादिषु षट्त्रिंशत्सुत्तराध्ययनेषु, "छत्तीस उत्तरज्झाए भवसिद्धिए सम्मसत्तिवेत्ति" उत्त०३६अ० ॥

उत्तरड्ढकच्छ-उत्तरार्द्धकच्छ-पु० कच्छविजयस्य वैताढ्यपर्वतेन विभक्तस्य उत्तरार्द्धे, ॥

कहि णं भंते जंबूद्दीवे दीवे महाविदेहे वासे उत्तरड्ढकच्छे णामं विजए पण्णत्ते ? गोयमा ! वेयड्ढस्स पव्वयस्स उत्तरेण णीलवंतस्स वासहरपव्वयस्स दाहिणेण मालवंतस्स वक्खारपव्वयस्स पुरच्छिमेणं चित्तकूडस्स वक्खारपव्वयस्स पच्चच्छिमेणं एत्थ णं जंबूद्दीवे दीवे जाव सिज्झंति तहेव णेअव्वं जं० ४ वक्ष० । टीकासुगमत्वान्न गृहीता ॥ ( सिन्धुकूटाद्यन्यत्र ) कच्छविजयविभाजकस्य वैताढ्यपर्वतस्याष्टानां कूटानामष्टमे कूटे, जं० ४ वक्ष० ।

उत्तरड्ढभरह-उत्तरार्द्धभरत- न० वैताढ्यपर्वतेन द्विधा विभक्तस्य भरतवर्षस्य उत्तरार्द्धे ॥

अथोत्तरार्द्धभरतवर्षं कास्तीति प्रश्नसूत्रमाह ॥

कहि णं जंबुद्दीवे उत्तरड्ढभरहे णामं वासे पण्णत्ते? गोयमा! चूल्लहिमवंतस्स वासहरपव्वयस्स दाहिणेणं वेअड्ढस्स पव्वयस्स उत्तरेणं पुरच्छिमलवणसमुद्दस्स पच्चच्छिमेणं पच्चच्छिमलवणसमुद्दस्स पुरच्छिमेणं । एत्थ णं जंबुद्दीवे दीवे उत्तरड्ढभरहे णामं वासे पण्णत्ते पाईणपडीणायए उदीणदाहिणविच्छिण्णे पलिअंकसंठिए दुहा लवणसमुद्दपुट्ठे पुरच्छिमिल्लाए कोडीए पुरच्छिमिल्लं लवणसमुद्दं पुट्ठे पच्चच्छिमिल्लाए जाव पुट्ठे गंगासिंधुहिं महाणईहिं तिभागपविभत्ते दोण्णि अट्ठतीसे जोयणसए तिण्णि अ एगूणवीसइभागे जोयणस्स विक्खंभेणं तस्स बाहापुरच्छिमपच्चच्छिमेणं अट्ठारसबाणउए जोयणसए सत्तए एगूणवीसइभागे जोयणस्स अद्धभागं च आयामेणं तस्स जीवा उत्तरेणं पाईणपडीणायया दुहा लवणसमुद्दं पुट्ठा तहेव जाव चोद्दसजोयणसहस्साइं चत्तारि अ एक्कहत्तरे जोयणसए छच्च एगूणवीसइभाए जोयणस्स किंचिविसेसूणे आयामेणं पण्णत्ता। तीसे धणुपिट्ठे दाहिणेणं चोद्दसजोयणसहस्साइं पंचअट्ठावीसजोयणसए एक्कारसयएगूणवीसइभाए जोयणस्स परिक्खेवेणं ॥

दक्षिणार्द्धभरतसमगमकत्वेन व्यक्तं नवरं ( पलिअंकत्ति ) पर्यङ्कवत्संस्थित संस्थानं यस्य तत्तथा द्वे शते अष्टात्रिंशदधिके त्रीँश्चैकोनविंशतिभागान् योजनस्य विष्कम्भेनेति अस्य शरस्तु प्राच्यशरसहितस्वक्षेत्रविस्तारो योजनत॰ [ ५२६ ] कलावतस्तु- [१००००] अथास्य बाहे आह इत्यादि तस्योत्तरार्द्धभरतस्य बाहा पूर्वोक्तरूपा पूर्वापरयोर्दिशोरेकैकाष्टादशयोजनशतानि द्विनवतियोजनाधिकानि सप्त चैकोनविंशतिभागान् [ $\frac{७}{१९}$ ] योजनस्य अर्द्धभाग चैकोनविंशतितमभागस्य योजनस्याष्टत्रिंशत्तमभागमित्यर्थः ॥ अत्र करणं यथा गुरुधनु॰पृष्ठ कलारूप [ २७६०४३ ] अस्मात्[२०४१३२]कलारूप लघुधनु॰ पृष्ठं शोध्यते जात [७१९११] अर्द्धे कृते जात कला [ ३५९५५ ] कलार्द्धं च तासां योजनानि [ १८९२ ] कला॰ [७]कलार्द्धं चेति एतच्चैकैकस्मिन् पार्श्वे बाहाया आयाममानम् । अथास्य जीवामाह ( तस्सजीवा उत्तरेणमित्यादि ) तस्य जीवा प्रागुक्तस्वरूपा उत्तरेण क्षुद्रहिमवद्गिरिदिशि प्राचीनायता द्विधा लवणसमुद्रं स्पृष्ट्वा तथैव दक्षिणार्द्धभरतजीवा सूत्रादेव "जावत्ति पच्चच्छिमिल्ल लवणसमुद्द पुट्ठेति" पर्यन्त सूत्रं ज्ञेयमिति भाव॰ ( चउद्दसत्ति ) चतुर्दशयोजनसहस्राणि चत्वारि चैकसप्तत्यधिकानि योजनशतानि षट् चैकोनविंशतिभागान् योजनस्य किञ्चिद्विशेषोना॰ प्रज्ञप्ता॰ । अत्र करणं यथा कलीकृतो जम्बूद्वीपव्यास [ १९ ] शून्य [ ५ ] इषुनितः [ १०५ ] शून्य [४] इषुगुण॰ [ १७५ ] शून्य [ ८ ] चतुर्गुण [ ७५६ ] शून्य [ ८ ] एष उत्तरभरतार्द्धजीवावर्ग । अस्य वर्गमूले लब्धा कला॰ [२७४८५४] शेषकलाशा॰ [ २९७७८४ ] छेद॰ [ ५४९६०८ ] लब्धकलानां [ १९ ] भागे योजन ( १४४७१ ) [ $\frac{६}{१९}$ ] उद्धरितै॰ शेषकलांशैर्मध्ये प्रक्षिप्ते षष्ठिकला किञ्चिद्विशेषोना विवक्षिता इति । अथास्य धनु पृष्ठमाह-[ तीसेइत्यादि ] तस्या उत्तरार्द्धभरतजीवाया दक्षिणपार्श्वे धनु पृष्ठम् । अर्थादुत्तरार्द्धभरतस्य चतुर्दशयोजनसहस्राणि पञ्चशतान्यष्टाविंशत्यधिकानि एकादश चैकोनविंशतिभागान् योजनपरिक्षेपेण परिधिना प्रज्ञप्तमिति शेष॰ । अत्र करणम् । यथा उत्तरार्धभरतस्य कलीकृत इषु [ १०००० ] अस्य वर्गः [ १ ] शून्य [ ८ ] स च षड्गुण॰ [ ६ ] शून्य ( ८ ] सोऽप्युत्तरार्द्धभरतजीवावर्गेण [ ७५६०००००००० ] इत्येवरूपेण मिश्रितो जात॰ (७६२) शून्यम् ( ८ ) एष उत्तरार्द्धभरतस्य जीवावर्गः । अस्य मूले लब्धा॰ कलाः ( २७६०६३ ] शेषकलांशाः ( २६२१५१ ) छेदराशिः ( ५५२०२६ ) कलानामेकोनविंशत्या भागे ( १४५२८ ) [ $\frac{११}{१९}$ ] अत्र शेषांशानामविवक्षितत्वान्नैकादशकलानां साधिकत्वसूचा । अत्र दक्षिणार्द्धभरतादिक्षेत्रसबन्धिशरादिचतुष्कस्य सुखेन परिज्ञानाय यन्त्रस्थापना, ।

| क्षेत्रनाम | शर प्रमाणम् | बाहाप्रमाणम् | जीवाप्रमाणम् | धनु॰पृष्ठम्- |
|---|---|---|---|---|
| दक्षिणभरतार्द्ध | २३८ योजन भाग. ३।१९ | ❀ | ९७४८ योजन भागः १२।१९ | ९७६६ योजन भागः १।१९ |
| वैताढ्यपर्वत॰ | २८८ योजन भाग ३।१९ | ४८८ योजन भाग॰ १६।१९ | १०७२० योजन भागः १२।१९ | १०७४३ योजन भागः १५।१९ |
| उत्तरभरतार्द्ध | ५२६ योजन भाग॰ ६।१० | १८९२ योजन भाग. २।१९ | १४४७१ योजन भाग॰ ६।१९ | १४५२८ योजन भागः ११।१९ |

यथा एषां च शरादीनां करणविधिप्रसङ्गतोऽत्र दर्शित॰ अतः परमुत्तरत्र क्षुद्रहिमवदादिसूत्रेषु स न दर्शयिष्यते विस्तरभयात् तज्जिज्ञासुना तु क्षेत्रविचारवृत्तितोऽवसेय इति ॥

अथोत्तरार्द्धभरतस्वरूप पृच्छति ॥

उत्तरभरहस्स णं भंते ! वासस्स केरिसए आयरभावपडोयारे पण्णत्ते गोयमा ! बहुसमरमणिज्जे भूमिभागे पण्णत्ते से जहा णामए आलिंगपुक्खरेइ वा जाव कित्तिमेहिं चेव । अकित्तिमेहिं चेव । उत्तरड्ढभरहे णं भंते ! वासे मणुआणं केरिसए आयारभावपडोयारे पण्णत्ते ? गोयमा ! तेणं मणुया बहुसंघयणा जाव अप्पेगइआ सिज्झंति जाव सव्वदुक्खाणमंतं करेंति ॥

उत्तरभरहस्सणमित्यादि व्यक्तम् । अत्रैव मनुष्यस्वरूप पृच्छति "उत्तरड्ढभरहे" इत्यादि इदमपि प्राग्वत् यावदेके केचन सर्वदुःखानामन्तं कुर्वन्तीति नन्वत्रत्यमनुष्याणामर्हदाद्यभावेन मुक्त्यङ्गभूतधर्मश्रवणाद्यभावात् कथं मुक्त्यवाप्ति सूत्रस्यौचित्यमञ्चति इति चेदुच्यते चक्रवर्तिकाले अप्रावृतगुहाद्वयावस्थानेन गमनागमनाद्दक्षिणार्द्धभरतवासिसाध्वादिभ्यो वाऽन्यदापि विद्याधरश्रमणादिभ्यो वा जातिस्मरणादिना वा मुक्त्यङ्गावाप्तेर्मुक्त्यवाप्तिसूत्रमुचितमेवेति ॥ ( ऋषभकूटवक्तव्यताऽन्यत्र ) वैताढ्य-

पर्वतस्याष्टमकूटस्योत्तरार्द्धभरतकूटस्य स्वामिदेवे च। जं०१वक्ष०।

उत्तरड्ढभरहकूड-उत्तरार्द्धभरतकूट-न०जम्बूद्वीपे वैताढ्यपर्वतस्याष्टमे कूटे, उत्तरार्द्धभरतनाम्नो देवस्य वासभूत कूटमुत्तरार्द्धभरतकूटम् मध्यमपदलोपी समासः। तदधिपे च। जं० १ वक्ष०। ( अस्य मानादिवैताढ्यपर्वतवक्तव्यतायां वक्ष्यते)

उत्तरड्ढभरहा-उत्तरार्द्धभरता-स्त्री०उत्तरार्द्धभरतकूटस्य स्वामिन उत्तरार्द्धभरतकूटनाम्नो राजधान्याम्॥ जं० १ वक्ष०।

उत्तरड्ढमाणुस्सक्खेत्त-उत्तरार्द्धमानुष्यक्षेत्र- न० मनुष्यक्षेत्रस्यार्द्धमर्द्धमनुष्यक्षेत्रमुत्तरं च तदर्द्धमनुष्यक्षेत्रम्। मनुष्यक्षेत्रस्योत्तरेऽर्द्धे, तत्र भवोऽप्युत्तरार्द्धमानुष्यक्षेत्र उत्तरार्द्धमनुष्यक्षेत्रभवे 'उत्तरड्ढमाणुस्सक्खेत्ताए छावट्ठिं चंदा य भासिंसु'। स०।

उत्तरण-उत्तरण-न०वाहुजङ्घादिना सकृद् वा नद्यादेः पारगमने स्था०५ठा०। नावादिना सङ्घट्टादिभिः प्रकारैर्नद्यादेः पारगमने, वृ० ६ उ०। ( संयतैर्यथा नदी उत्तीर्य्यते तथा णई शब्दे वक्ष्यते) अवतरणे च॥ "उत्तरण चंदसूराण" भगवतो महावीरस्य वन्दनार्थमवतरणमाकाशात्समवसरणभूम्यां चन्द्रसूर्ययोः शाश्वतविमानोपेतयोर्वभूवेदमप्याश्चर्य्यमेवेति॥ स्था० १० ठा०॥

उत्तरदारियणक्खत्त-उत्तरद्वारिकनक्षत्र-न० उत्तरं द्वारं येषामस्ति तानि उत्तरद्वारिकाणि तानि च नक्षत्राणि। उत्तरस्यां दिशि गम्यते येषु तादृशेषु नक्षत्रेषु, "साइयाणं सत्त णक्खत्ता उत्तरदारिया पण्णत्ता तंजहा साई विसाहा अणुराहा जिट्ठा मूलो पुव्वासाढा उत्तराआसाढा" स्था० ७ ठा०।

उत्तरदाहिणायय-उत्तरदक्षिणायत-त्रि० उत्तरदक्षिणस्यामायते, "उत्तरदाहिणायए पाईण विच्छिण्णे। जं०४ वक्ष०।

उत्तरपओगकरण-उत्तरप्रयोगकरण-न० निष्पन्नस्योत्तरम्। निष्पादनरूपे जीवप्रयोगकरणभेदे आ० चू० २ अ० ( तस्य स्वरूपं करणशब्दे प्रपञ्चतो वक्ष्यते)

उत्तरपगइ-उत्तरप्रकृति-स्त्री० ज्ञानावरणदर्शनावरणादीना पञ्चनवाद्यासु अवान्तरप्रकृतिषु भेदेषु, उत्त० ३३ अ०। यथा ज्ञानावरणीय पञ्चधा मतिश्रुतावधिमनःपर्य्यायकेवलावरणभेदात्। तत्र केवलावारक सर्वघाति। शेषाणि देशसर्वघातीन्यपि दर्शनावरणीय नवधा निद्रापञ्चकदर्शनचतुष्टयभेदात्। तत्र निद्रापञ्चक प्राप्तदर्शनलब्ध्युपयोगोपघातकारि दर्शनचतुष्टय तु दर्शनलब्धिप्राप्तेर्वाधापि केवलदर्शनावरण सर्वघाति शेषाणि तु देशात। वेदनीय द्विधा सातासातभेदात्। मोहनीयं द्विधा दर्शनचारित्रभेदात् तत्र दर्शनमोहनीयं त्रिधा मिथ्यात्वादिभेदात यदनन्त्येकविधम्। चारित्रमोहनीयं षोडशकषायनवनोकषायभेदात् पञ्चविंशतिविधम्। अत्रापि मिथ्यात्व सज्वलनवर्ज्यं द्वादशकषायाश्च सर्वघातिन्य। शेषास्तु देशघातिन्य इति। आयुष्क चतुर्धा नारकादिभेदात्। नाम द्विचत्वारिंशद्भेद गत्यादिभेदात् त्रिनवतिभेद चोत्तरोत्तरप्रकृतिभेदा। गतिश्चतुर्धा। जातिरेकेन्द्रियादिभेदात्पञ्चधा। शरीरमौदारिकादिभेदात्पञ्चधा औदारिकवैक्रियाहारकभेदादङ्गोपाङ्ग त्रिधा। निर्माणनाम सर्वजीवशरीरावयवनिष्पादकमेकधा। बन्धननाम औदारिककर्म्मवर्गणाकत्वापादक पञ्चधा। सघातनामौदारिकादिकर्म्मवर्गणारचनाविशेषसस्थापक पञ्चधा। सस्थानानि चतुरस्रादि षोढा। सहनन वज्रऋषभनाराचादि षोढैव स्पर्शोऽष्टधा। रस पञ्चधा। गन्धो द्विधा। वर्ण पञ्चधा। आनुपूर्वी नारकादिचतुर्धा। विहायोगति प्रशस्ताप्रशस्तभेदात् द्विधा। अगुरुलघूपघातपराघातातपोद्योतोच्छ्वासप्रत्येकसाधारणत्रसस्थावरशुभाशुभसुभगदुर्भगसुस्वरदु स्वरसूक्ष्मवादरपर्याप्तकापर्याप्तकस्थिरास्थिरत्वानादेयायशःकीर्त्ययशःकीर्तितीर्थकरनामानि प्रत्येकमेकविधानीति। गोत्रमुच्चनीचभेदात् द्विधा। अन्तराय दानलाभभोगोपभोगवीर्यभेदात्पञ्चधा। आचा० १ श्रु० २ अ० १ उ०॥

उत्तरपच्चत्थिमिल्ल-उत्तरपश्चिम-पु० वायव्यकोणे, चं० १ पाहु०॥

उत्तरपुरच्छिम-उत्तरपौरस्त्य- पु० ईशानकोणे, जी० १ प्रति०। प्र०। रा०। क०। औ०। "तीसे णं मिहिलाए वहिया उत्तरपुरच्छिमे दिसीभाए एत्थण माणिभद्दे णामं चेइए होत्था" सू० प्र० १ पाहु०। चं०प्र०॥

उत्तरपुरच्छिमा-उत्तरपौरस्त्या-स्त्री०ऐशान्यां दिशि,स्था०१०ठा०।

उत्तरपोट्ठवया-उत्तरप्रौष्ठपदा- स्त्री० उत्तरभाद्रपदा नक्षत्रे, असमासे "उत्तरा पोट्ठवया-उत्तरा प्रौष्ठपदा" सूर्य० ४पाहु०॥

उत्तरफग्गुणी-उत्तरफाल्गुनी- स्त्री० फलति-फलनिष्पत्तौ फलेर्गुक्च उणा० उनन् गुक्च गौरा० ङीप्-कर्म०। अभिजिदादिषु एकोनविंशे नक्षत्रे, जं० ७ वक्ष०। वाच०। "उत्तरफग्गुणी णक्खत्ते दुतारे पण्णत्ते" स्था०२ ठा०। उत्तरफाल्गुनीनक्षत्रस्य "अर्यमा देवता' ज्यो०॥

उत्तरफग्गुणीसणिच्छरसंवच्छर-उत्तरफाल्गुनीशनैश्चरसंवत्सर पु-शनैश्चरसवत्सरभेदे, यत्र उत्तरफल्गुनीनक्षत्रेण सह शनैश्चरो योगमुपयाति। जं० ७ वक्ष०।

उत्तरवलिस्सह- उत्तरवलिकसह- पुं०—स्थविरमहागिरेः प्रथमे शिष्ये, ततो निर्गते स्वनामख्याते गणे च। "थेरेहिंतोणं उत्तरवलिस्सहेहिंतो तत्थ ण उत्तरवलिस्सहे नाम गणे निग्गए" कल्प०॥ महावीरस्य नवाना गणानां द्वितीये गणे, "उत्तरवलियस्स य गणे उत्तरवलिस्सहगणेत्ति वा" द्विधा रूपोपलब्धिः अनुवादानुपलम्भान्न तत्त्वनिश्चयः॥ स्था० ९ ठा०

उत्तरभद्दवया-उत्तरभद्रपदा-स्त्री० अभिजिदादीना नक्षत्राणां षष्ठे नक्षत्रे, ज्यो०। "उत्तरभद्दवयाणक्खत्ते दुतारे पण्णत्ता" स्था० ९ ठा०। जं०। ( उत्तराभाद्रपदनक्षत्राणामभिवृद्धिर्देवता विषयः सर्वो णक्खत्तशब्दे वक्ष्यते)

उत्तरभद्दवयासणिच्छरसंवच्छर-उत्तरभद्रपदाशनैश्चरसंवत्सरपु० शनैश्चरसवत्सरभेदे, यत्र सवत्सरे उत्तरभाद्रपदानक्षत्रेण सह शनैश्चरो योगमुपादत्ते॥ जं०७ वक्ष०।

उत्तरमंदा-उत्तरमन्दा-स्त्री० मध्यमग्रामस्य प्रथममूर्छनायाम्, स्था०७ठा०। गन्धारस्वरान्तर्गतायां सप्तम्यां मूर्छनायाम्, जी०।

उत्तरमंदामुच्छिया-उत्तरमन्दामूर्च्छिता- स्त्री० मूर्च्छन मूर्च्छा सा सजाता अस्या इति मूर्च्छिता उत्तरमन्दया मूर्च्छिता उत्तरमन्दामूर्च्छिता। उत्तरमन्दाभिधया गन्धारस्वरान्तर्गतया सप्तम्या मूर्च्छनया मूर्च्छितायां वीणायाम्, "से जहा णामए वयालियाए वीणाए उत्तरमंदामुच्छियाए अंके सुपइट्ठियाए" इह गन्धारस्वरान्तर्गतानां च मूर्च्छनानां मध्ये सप्तमी उत्तरमन्दा मूर्च्छना किञ्चातिप्रकर्षप्राप्ता ततस्तदुपादान तया च मुख्यवृत्त्या वादयिता मूर्च्छितो भवति परमभेदोपचाराद्वीणापि मूर्च्छितेत्युक्ता। जं० १ वक्ष०। जी०॥

उत्तरमहुरा-उत्तरमथुरा- स्त्री० नगरीभेदे, "तेणं कालेणं तेणं समएणं उत्तरमहुरा णाम णयरी होत्था। तत्थ य धणधन्नणामाणिकणगरयणपडिपुन्नो जउणामसेट्ठी परिवसइ" दर्श०। ( व्रजान्तर्गता मथुरा नगर्येवेयमुत्तरमथुरेति समाख्यते)

उत्तरवाय–उत्तरवाद–पुं० उत्तरवादे, "आणाए मामग धम्म एस उत्तरवादे इह माणवाण, वियाहिते" आचा० १ श्रु०६ अ०१ उ०।

उत्तरवेउव्विय–उत्तरवैक्रिय–त्रि० भवधारणीयापेक्षयाऽन्यस्मिन्, "उत्तरवेउव्विय रूव विउव्वइ"रा० । कल्प० ।

उत्तरवि ( वै ) कुर्विक–त्रि०उत्तरमुत्तरकालभावि न स्वाभाविकमित्यर्थः विकुर्विक विकुर्वण विकुर्वणेन निर्वृत्त वैकुर्विक विशिष्टवस्त्रविशिष्टाभरणसुश्लिष्टतत्परिधानसमाचीनकुङ्कुमाद्युपलेपनजनितमतिमनोहारि रामणीयक यस्य स तथा । व्य० १प्र०२ उ०। उत्तरकालभाविवस्त्राभरणादिविचित्राकृतिभविभूषाभाविते, "दट्ठूण णमं काई उत्तरवेउव्विय मयणखिन्ना " बृ०६ उ० ।

उत्तरवेउव्विया–उत्तरवैकुर्विकी–स्त्री० अपरभवान्तरवैरिमारकप्रतिघातनार्थमुत्तरकाल या विचित्ररूपा वैक्रयिकी अवगाहना सा उत्तरवैकुर्विकी । शरीरावगाहनाभेदे, ॥ जी० १ प्रति० ।

उत्तर ( रा ) समा–उत्तरसमा–स्त्री० मध्यमग्रामस्य चतुर्थमूर्च्छनायाम्, स्था० ७ ठा ० ॥

उत्तरसाला–उत्तरशाला–स्त्री० गृहविशेषे, "जत्थ वा कीडापुव्व गच्छति ण वसति ते उत्तरसाला गिहा वत्तव्वा । जे वा पच्छा कीरति ते उत्तरसाला गिहा अच्छा तिगादिमरूवा उत्तरसाला, हय गयाण वा साला उत्तरसाला, गिहाण इम वक्खाणं गाहा "मूल गिहमसवक्का' गिहाय उत्तरा होंति । जत्थ व ण वसत्ति राया, पच्छा कीराति जावत्ते" नि० चू० ८ उ० ।

उत्तरा–उत्तरा–स्त्री० नक्षत्रभेदे, तिस्र उत्तराः । उत्तरे फाल्गुन्यौ उत्तराऽऽषाढा । उत्तरा भाद्रपद् "आषाढा उत्तरा चेव" स्था० २ ठा० ॥ "पुव्वासाढा तहा उत्तरा चेव" अनु०॥ (णक्खत्तशब्दे वक्तव्यता ) मध्यमग्रामस्य तृतीयमूर्च्छनायाम्, स्था० ७ ठा० । स्वनामख्याते दिग्भेदे, स्था० १० ठा० ॥ रुचकपर्वतेऽष्टानां दिक्कुमारीणां षष्ठ्यां दिक्कुमार्याम्, स्था०८ ठा०॥अहिच्छत्राख्ये वापीरूपे तीर्थभेदे, " ससिकरणिम्मलसलिलपडिपुण्णा उत्तराभिहाणा वावि तत्थ मज्जणे कए तवड्ढे माहिआले वेण कुट्ठीण कुट्ठरोगोवसमो हवइ' ती० ॥ दिगम्बरमतप्रवर्तकस्य शिवभूतेर्भगिन्याम्,विशे०।आ०म०द्वि०।तस्य वक्तव्यता वोडियशब्दे वक्ष्यते।

उत्तरात्–अव्य० उत्तरादिग्देशकालविषये, । उत्तरमुत्तरस्मादुत्तरस्मिन्नित्यर्थे, वाच० ।

उत्तराणंदा–उत्तरानन्दा–स्त्री० ऊर्ध्वलोकवास्तव्यानां दिक्कुमारीणां द्वितीयदिक्कुर्य्याम्, आ०क० ।

उत्तरापह–उत्तरापथ–पुं० उत्तरा उत्तरस्यां पन्था अच् समा० उत्तरस्यां दिशि स्थिते पथि, देशभेदे च । उत्तरपथजन्मान कीर्तयिष्यामि तानपि । कौलकाम्बोजगान्धारा–किरातान्ववरैः सह । वाच० । "पूर्वदिसातो उत्तरापह गतो " आ० म० द्वि० । " जहा उत्तरापह पच्छा दक्खे तरुण तण उट्ठेइ " आव० ६अ० । " उत्तरापहे टकणा णाम मेच्छा । आ० चू० २ अ० । आ०म०प्र०

उत्तरायण–उत्तरायन–न० उत्तरा उत्तरस्यामयन सूर्यादेः ( पूर्वपदात्सञ्ज्ञायाम् ) पा० सूत्रेण णत्वम् । वाच० । सूर्यादेरुत्तरदिग्गमने, स्था० ३ ठा० । उत्तर च तदयनम् । षण्मासात्मके सूर्यस्य सर्वाभ्यन्तरमण्डलप्रवेशसमये, ( तस्य सकरणवक्तव्यता अयणशब्दे उक्ता ) ।

उत्तरायणगय– उत्तरायणगत– पुं० सर्वाभ्यन्तरमण्डलप्रविष्टे कर्कसङ्क्रान्तिदिने, स० ॥

उत्तरायणणियट्ट–उत्तरायननिवृत्त–पुं० उत्तरायणाडुत्तरदिग्गमनान्निवृत्तः । प्रारब्धदक्षिणायने, "उत्तरायण णियट्टेण,सूरिए " स्था० ३ ठा० । स० ॥

उत्तरासंग–उत्तरासङ्ग–पुं० उत्तरीयस्य देहे न्यासविशेषे, भ० २ श० ५ उ० " एगसाडिय उत्तरासग करेइ " आ० म० प्र०।

उत्तरासंगकरण–उत्तरासङ्गकरण– न०'उत्तरीयस्य न्यासविशेषे, "एगसाडिएण उत्तरासगकरणेण एकत्तीकरणेण" ज्ञा०१अ०।

उत्तरासाढा–उत्तराषाढा–स्त्री क० स० अश्विन्यादिनक्षत्रेषु एकविंशे नक्षत्रे, वाच० । अभिजिदादिषु अष्टाविंशे च नक्षत्रे, ज० ७ वक्ष० । " उत्तरासाढाणक्खत्ते चउ तारे " प०स० । स्था० । उत्तराषाढानक्षत्रस्य विश्वकृद्देवता । ज्यो०(णक्खत्तशब्देऽन्यत्)

उत्तरासाढासणिच्छरसंवच्छर–उत्तराषाढाशनैश्चरसंवत्सर– पुं० शनैश्चरसवत्सरभेदे, यत्र उत्तराषाढानक्षत्रेण सह शनैश्चरो योगमुपादत्ते ज० ७ वक्ष० ॥

उत्ताराहुत्त–उत्तराहूत– त्रि० उत्तराभिमुखे, " थोवावसेसियाए सज्झाए ठाइ उत्तराहुत्तो ' आव० ४ अ० ।

उत्तरिज्ज– ( रि अ ) उत्तरीय–न०उत्तरस्मिन् देहभागे भवः । गहादित्वात् छः" वोत्तरिया नीय तीय कृद्येज्जः " ८ । १ । ४८ । इत्युत्तरीय शब्दे ईयभागस्य द्विरुक्तो जो वा । उत्तरिज्ज उत्तरीअ । प्रा० ॥ उपरिकायाच्छादनवस्त्रे, ज्ञा० १ अ० । प्रश्न० । उत्तरासङ्गे, कल्प० । ज्ञा० । "उत्तरिज्जय विकड्ढमाणी" उपा०। ८ अ० । शय्याया उपर्य्याच्छादके प्रच्छदे, " उत्तरिज्ज णाम– पाउरण अहवा सेज्जाए उवरिमल्ल प्रच्छदादि " नि० चू०१५उ०।

उत्तरित्तए–उत्तरीतुम्–अव्य० उद्० तृ० तुमुन् । बाहुजङ्घादिना नद्यादिक लङ्घयितु सकृद् वा लङ्घयितुमित्यर्थे, "दुक्खुत्तो तिक्खुत्तो वा उत्तरित्तए वा सतरित्तए वा" बृ०४ उ० ।

उत्तरिय–औत्तरिक–त्रि० उत्तरःप्रधान स एवौत्तारिकः । प्रधाने, स्था० १० ठा० ।

उत्तरिल्ल–औत्तराह–त्रि० उत्तरस्मिन् कालादौ भवः उत्तरादाहञ् पा० उत्तर आहञ् । उत्तरकालादौ भवे, वाच० । " उज्जुवालियाए नईए तीरे उत्तरिल्ले कूले " आ० म० द्वि० ॥ "उत्तरिल्लाण असुरकुमाराण उत्तरिल्लाण णागकुमाराण "प्रज्ञा० २पद ।

उत्तरीकरण–उत्तरीकरण–न० अनुत्तरस्योत्तरस्य पुनः सस्काद्वारेणोपरि करणमुत्तरीकरणम् । ध० २ अधि० । अनुत्तरमुत्तर क्रियते इति उत्तरीकरणम् कृतिः कारणमिति, आव०५ अ० । यस्यातिचारस्य पूर्वमालोचनादिकृत तस्यैव पुन शुद्धये कायोत्सर्गस्य करणे"इच्छामि ठाउ काउस्सग्ग जो मे देवसिओ तस्सुत्तरीकरणेण पायच्छित्तकरणेण "ध०२ अधि० ( उत्तरकरण– शब्दे प्रपञ्चतो व्याख्यातम् )

उत्त(र)रूट्ठ–उत्तरौ( रौ )ष्ठ–पुं० उत्तर उपरितन ओष्ठो वा वृद्धिः । श्मश्रुणि,भमुहा अहरूट्ठा, उत्तरूट्ठा अह पुण एव जाणिज्जा कल्प०

उत्ताड ( ल ) ण– उत्ताडन––न० उद् तड् णिच्० ल्युट्० आलिङ्गकुस्तुम्बगोमुखीमर्दलानां वादने, रा० ।

उत्ताडि ( लि ) ज्जत–उत्ताड्यमान–त्रि० वाद्यमाने, आलिङ्गकुस्तुम्बगोमुखीमर्दले, । उत्ताडिज्जताण दद्दरियाण कुडवाणं कालिसियाण मक्कियाण उत्तालिज्जताण आलिंगणह कुतुंबीण गोमुहीण मद्दलाण । रा० ।

उत्ताण–उत्तान– त्रि० उद्गतस्तानो विस्तारो यस्य अभिग्रह विशेषादूर्ध्वमुखशायिते, पचा० १८ विव० । ध० । ऊर्ध्वमुखे च

वाच० । नाटके उदके, पुरुषजाते च । स्था० ४ ठा० (पुरुसजायश्च शब्दे उत्तानसूत्रे प्रकटीभविष्यति )

उत्ताणग-उत्तानक-पुं० उत्तान एव उत्तानकः । पृष्ठेनोऽर्ध्वानतादौ, आ० म० द्वि० । उच्चयवृक्षे, वाच० । "जीवेण जंत गब्भगहसमाणे उत्ताणए वा पासल्लए वा" भ० १ श० ७ उ० ॥

उत्ताणणयणपेच्छणिज्ज-उत्ताननयनप्रेक्षणीय- त्रि० उत्तानैर्नयनैः प्रेक्षणीयम् । सौभाग्यातिशयादनिमिषैर्लोचनैः प्रेक्षणीये, ज्ञा० १ अ० । नि० । उत्ताणणयणपेच्छणिज्जा पासादीया दरसणिज्जा अभिरूवा पडिरूवा, औ० ॥

उत्ताणत्थ-उत्तानार्थ- त्रि० ६ ब० प्रगटार्थे, सूत्रादर्शेषु टीकायां तु दृष्ट इति कृत्वा लिखित उत्तानार्थश्च । सूत्र०१श्रु०९अ०

उत्ताणहत्थ-उत्तानहस्त- त्रि० प्रतिगृहीतुमूर्ध्वमुखहस्ते, "किवणो विव उत्ताणहत्थाओ" स्त्रियः कृपणवत्सर्वेभ्यो मातापितृबन्धुकुटुम्बादिभ्यो विवाहादावादानहेतुत्वात्, तं० ॥

उत्ताणिय-उत्तानिक-पुं०अभिग्रहविशेषात् उत्तानशायिनि,दशा.

उत्तार-उत्तार- पुं० उद्- तृ- णिच्- अच्- "उत्तरणे, अणुसोओ संसारो, पडिसोओ तस्स उत्तारो" दश० २ अ० । उद्वमने, उल्लङ्घने, पारगमने च । उच्चैस्तारः प्रा० स० अत्यन्तोच्चशब्दादौ, त्रि० । वाच० ॥

उत्तारिय-उत्तार्य-त्रि० उद् तृ. णिच् कर्मणि यत् उद्वमनीये,ल्यप् उद्वमन कृत्वेत्यर्थे, अव्य० उद्-तृ-कर्मणि ण्यत् उद्वमनीये,त्रि-वाच०

उत्तारित- त्रि० अवरोहिते, "देवाहिदेवस्स पडिमा कायव्वा वीयभए उत्तारिया " आ० म० द्वि० ॥

उत्तारेमाण-उत्तारयत्- त्रि० अवरोहिते, स्था० ५ ठा० ॥

उत्ताल-उत्ताल-त्रि० उद् चुरा० तल प्रतिष्ठायाम्, अच्-प्रतिष्ठिते, महति, । वाच० । तालस्तु कंसिकादिवाद्यविशेष उत्प्राबल्येन बलीनमस्यानताल वा उत्तालम् । गेयदोषभेदे, " गायतो मा पगाहि उत्तालं " स्था० ७ ठा० अनु० । जी० । जं० ॥

उत्तासइत्ता-( तृ ) उत्त्रासयिता-( तृ )-त्रि० लोष्टप्रक्षेपादिभि उत्त्रासकारके, "से हता छेत्ता भेत्ता लुंपित्ता उत्तासइत्ता अकरु करिस्सामि" आचा० २ श्रु० २ अ० १ उ० ।

उत्तासणय-उत्त्रासनक-त्रि० त्रसी उद्वेगे इतिवचनात् । उत्त्रास्यनेऽनेनेति उत्त्रासनः उत्त्रासन एव उत्त्रासनकः । स्मरणेनाप्युद्वेगजनके, भ० ३ श० २ उ० । भयकरे, ज्ञा० ८ अ० । प्रश्न० । उत्त्रासकारिणि, ज्ञा० ५ अ० । "भीमा उत्तासणा परम कण्हावण्णेण पण्णत्ता" । प्रश्न० २ पट० ।

उत्तासणिज्ज-उत्त्रासनीय- त्रि० महाभयंकरे, । "नरओविव उत्तासणिज्जाओ" स्त्रिय नरकवत् उत्त्रासनीया दुष्टकर्मकारित्वात् महाभयकराः लक्षणा साध्वी जीवयशादासीघातिका कुलपुत्रभार्यावत् । तं० ॥

उत्तासिय-उत्त्रासित- त्रि० अपद्राविते आव० ४ अ० ॥

उत्ति-उक्ति- स्त्री० वच- क्तिन्- सम्प्र० शब्दशक्तौ, एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ वाच० । वाचि,अनु० । विशे० । भणितौ, "महोयहिणोदि उत्तीहि य नायसागरेहिं" पञ्चा० एविव० ॥

उत्तिंग-उत्तिङ्ग-पुं० भूम्यां वृत्तविवरकारिणि गर्दभाकारे जीवे, आ० । रत्न०द्वि० । "उत्तिंगो पत्तगद्दभो" नि० चू० १३ उ० ॥ गर्दभाकृतयः जीवा ' कल्प० । आव० । पि-

पीलिकासंतानके, दशा० ३ अ० । आचा० । कीटिकानगरे, वृ० ४ उ० । तृणाग्र उदकबिन्दौ, आचा० २ श्रु० १ अ० १ उ० । सर्पच्छत्रादौ, च ," गहणे सुगमणिच्छिज्जा वीएसु हरिएसु वा । उदगम्मि तहा निच्चं उत्तिंगपणगेसु वा" दश० ८ अ० । छिद्रे,न० न०। नि० चू० १८ उ० । "णावाए उत्तिंगं हत्थेण वा पाएण सणेवा, उत्तिङ्गं रन्ध्रम्, आचा० २ श्रु० अ० उ० ॥

उत्तिंगलेण-उत्तिङ्गलयन- न० उत्तिङ्गानां लयन भूमौ उत्कीर्णगृहमुत्तिङ्गलयनम् । लयनसूक्ष्मभेदे, । कल्प० ॥

उत्तिण्ण-उत्तीर्ण-त्रि० उद् तृ-कर्तरि क्त-निवृत्ते, अष्ट० । पारगते कर्मणि क्तः कृतोत्तरणे नद्यादौ, वाच० ।

उत्तिम-उत्तम-त्रि० उद् तमप् "इः स्वप्नादौ" ८ । १ । ४६ । इत्यादेरस्य इत्वम् । उत्कृष्टे, प्रा० । वाच० । आर्षे उत्तम इत्येव बाहुल्येनोपलभ्यते इति तथैव उत्तमप्रकरणे दर्शितम् ।

उत्तिमट्ठ-उत्तमार्थ-पुं० अनशने, नि० चू० १ उ० ।

उत्तिमट्ठपडिवण्ण-उत्तमार्थप्रतिपन्न-पुं० स्त्री० अनशनप्रतिपन्ने, नि० चू० १ उ० ।

उत्तेइय-उत्तेजित-त्रि० उद्. तेज्-णिच्. क्त । अधिकं दीपिते, दश० ३ अ० । उत्क्षिप्तो जनानीते "सयमाक्त्र विवेकेन शास्त्रेणोत्तेजितं मुनेः" । अष्ट० ।प्रेरिते, भावे. क्त. प्रेरणायाम्, उद्दीपने च । न० अश्वगतिभेदे, न० वाच० ।

उत्तेम-उत्तेम-पुं० बिन्दौ, "उत्तेमा वत्थुयायनं समत्ति" ॥ पिं०

उत्थ-उक्थ-न० वच्. थक्. । अप्रगीतमन्त्रसाध्ये स्तोत्रे चतुर्विंशस्तोत्रभेदे, उपचारात् तत्साध्ये उक्थयागे च । वाच० । विशे० ॥

उत्थंध-रुध्-धा० आवरणे, रु० उभ० द्वि० अनिट् । रुधेरुत्थघ इत्यादेशो वा भवति । उत्थघइ रुधइ । प्रा० । रुणद्धि रुन्धे इरित् अरुधत् अरौत्सीत् वाच० ॥

उद्-क्षिप्-धा० तु० ऊर्ध्वक्षेपे, उत्थंघइ उक्खिवइ उत्क्षिपति । प्रा० ॥

उत्थरमाण-उत्तरत्-त्रि० अभिभवति, "उत्थरमाणे सव्व महाबलो पुन्नमेहणिग्घोसो" आव० ४ अ० ।

उत्थल्ल-उत्स्थल-न० उत् उन्नतानि स्थलानि धूल्युच्छ्रयरूपाणि उत्स्थलानि धूलिपुञ्जेषु, भ० ७ श० ६ उ० ।

उत्थिय-अवस्तृत-त्रि० आच्छादिते, "सुहएण चत्तचउत्तं तु गोत्थिया होति पत्तेसु " पंचा० ८ विव० ।

उत्थुभण-अवस्तोभन-न० अनिष्टोपशान्तये, निष्ठीवनेन थुथुकरणे, एतच्च कौतुकभेदत्वेन साधुभिर्वर्ज्यम् वृ०१ उ० । प० व० ।

उदउल्ल-उदकार्द्र-त्रि० ३ त० । गलदुदकबिन्दुयुक्ते, दश० ५ अ० । "उदउल्ल वीयसंसत्त" दश० ६ अ० । "उदउल्लं अप्पणो काय नेव पुंछे ण संलिहे" दश०८ अ० । "उदउल्ल वा काय उदउल्ल वा वत्थं ससणिद्धं वा काय ससणिद्धं वा वत्थं न मुसेज्जा न संफुसेज्जा " । दश० । ४ अ० ( अह पुण एव जाणेज्जा णो पुरेकम्मकरेण हत्थेण वा असण वा ४ अफासुय अणेसणिज्ज जाव णो पडिगाहिज्जा इत्यादि पुर कम्मशब्दे वक्ष्यते ) आचा० २ श्रु०१ अ०५ उ । उदकार्द्र पुनर्यद्विन्दुसहितं भाजनादि गलद्बिन्दुरित्यर्थ । ओ० । नि० चू०,। उदगउल्लेत्यपि रूप क्वचिद् दृश्यते ॥ कल्प० ॥

उदउल्लाहड-उदकार्द्राहृत- त्रि० उदकार्द्रे हस्तेन पुरःकर्म सस्पर्शेनानीते पिण्डे, " सागारिय पिंडुद्देसिय उदउल्लाहडे

चाउम्मासिय सागारिय पिंडुद्देसिय उदउल्लाहडे'नि०चू०२०उ०।

उदओदर–उदकोदर–न० जलोदररोगे, जं० २ वक्त०।

उदंक–उदङ्क–पु० उदङ्को ये नोदकमुदच्यते तस्मिन्, ज०२वक्त०।जी

उदंच–उदञ्च्–त्रि० उद् अनच् क्विन्-उदकशब्दार्थे, प्रथमान्तार्थे, दिग्देशादौ, वाच०।

उदंचण–उदञ्चन–न० उद् अनच् णिच् करणे ल्युट्। पिधानार्थे पात्रे, (ढक्कन) भावे ल्युट्। ऊर्ध्वक्षेपणे, कर्त्तरि ल्युट्। उत्क्षेपके, त्रि० वाच०। अनु०।

उदंत–उदन्त–पुं० उद्गतोऽन्तो निर्णयो यस्मात्। वार्तायाम्, । ज्ञा० ८ अ० " गोसे मे वहेज्जह उदंतं" व्य० द्वि० ४ उ०। आ० म० प्र०। साधौ, स्वार्थे कन्। तत्रैव उद्गतोऽन्तो ऽस्य पाकवशात् प्रा० व० गतलोप०। पाकवशात् प्राप्तान्ते, वाच०॥

उदंतवाहय–उदन्तवाहक–त्रि० वार्त्ताहरे, वाच०।

उदक्क–उदर्क–पुं० उद् अर्क–अच् वा घञ् उत्तरकाले, भाविफलके शुभाशुभकर्मणि, वाच०। उदये, " केषांचिद्विषयज्वरातुरमहो चित्तं परेषां विषा-वेगोदर्ककुतर्कमूर्च्छितमथान्येषां तु वैराग्यतः " अष्ट०।

उदग (य) उदक–नं० उन्द एवुल् नि नलोपश्च। जले, (चत्तारि उदगा पण्णत्ता उत्ताणे णाममेगे उत्ताणोदए इत्यादि पुरिसजायशब्दे उत्तानसूत्रावसरे व्याख्यास्यते)(चत्तारि उदगा पण्णत्ता तं जहा कद्दमोदए खंजणोदए वालुओदए सेलोदए इति सदृग्रान्तो भावशब्दे) उदगं च दुविह वासु दग च। नि०चू०१०उ०। त०। सिरापानीये, दश०४अ०। "जेण उदएण मट्टियाएण य" औ०। "तिर्हि उदगेर्हि मज्जावेत्ता"त्रिभिरुदकैर्गन्धोदकोष्णोदकशीतोदकैर्माजयित्वा ( स्था० ३ ठा० ) उदकात्सिद्धिरिति वादिनः॥

एगे य सीओदगमेवणेण, हुएण एके पवयंति मोक्खं ॥

तथैके वारिभद्रकादयो भागवतविशेषाः शीतोदकसेवनेन सचित्ताप्कायपरिभोगेन मोक्षं प्रवदन्ति। उपपत्तिं च ते अभिदधतियथोदकं बाह्यमलमपनयति एवमान्तरमपि वस्त्रादेश्च यथोदकाच्छुद्धिरुपजायते एवं बाह्यशुद्धिसामर्थ्यदर्शनादान्तरापि शुद्धिरुदकादेवेति मन्यन्ते।

एतेषामुत्तरं यथा॥

उदगेण ये सिद्धिमुदाहरंति, सायं च पायं उदगं फुसंता।
उदगस्स फासेण सिया य सिद्धि, सिज्झंसु पाणा बहवे दगंसि

तथा ये केचन मूढा उदकेन शीतवारिणा सिद्धिं परलोकमुदाहरन्ति प्रतिपादयन्ति सायमपराह्णे विकाले वा प्रातश्च प्रत्यूषसि च आद्यन्तग्रहणात् मध्याह्ने च तदेवं सन्ध्यात्रयेऽप्युदकं स्पृशन्तः स्नानादिकाः क्रिया जलेन कुर्वन्तः प्राणिनो विशिष्टां गतिमाप्नुवन्तीति केचनोदाहरन्ति । एतच्चासम्यक् । यतो यद्युदकस्पर्शमात्रेण सिद्धिः स्यात् तत उदकसमाश्रिता मत्स्यबन्धादयः क्रूरकर्माणो निरनुक्रोशा बहवः प्राणिनः सिद्ध्येयुरिति। यदपि तैरेवोच्यते। बाह्यमलापनयनसामर्थ्यमुदकस्य दृष्टमिति तदपि विचार्यमाणं न घटते। यतो यथोदकमनिष्टमलमपनयत्येवमभिमतमप्यङ्गराग कुङ्कुमादिकमपनयति। ततश्च पुण्यस्याऽपनयनादिष्टविघातकृद्विरुद्धः स्यात्। किंच यतीनां ब्रह्मचारिणामुदकस्नानं दोषायैव। तथाचोक्तम्। "स्नानं मदर्पकरं, कामाङ्ग प्रथमं स्मृतम्। तस्मात्कामं परित्यज्य, न ते स्नान्ति दमेरताः॥ अपि च। नोदकक्लिन्नगात्रो हि, स्नात इत्यभिधीयते। स स्नातो यो व्रतस्नातः, स बाह्याभ्यन्तरः शुचिः॥१४॥

मच्छा य कुम्मा य सिरीसिवा य, मग्गू य उट्टादगरक्खसा य।
अट्टाणमेयं कुसला वयंति, उदगेण जे सिद्धिमुदाहरंति।१५।

किञ्च यदि जलसंपर्कात्सिद्धिः स्यात्ततो ये सततमुदकावगाहिनो मत्स्याश्च कूर्माश्च सरीसृपाश्च तथा मद्गवस्तथोष्ट्रा जलचरविशेषास्तथोदकराक्षसा जलमानुषाकृतयो जलचरविशेषा एते प्रथमं सिद्ध्येयुर्न चैतद्दृष्टमिष्टम् ततश्च ये उदकेन सिद्धिमुदाहरन्त्येतदस्थानमयुक्तमसांप्रतं कुशलानिपुणा मोक्षमार्गाभिज्ञा वदन्ति।१५।

किञ्चान्यत्।

उदयं जइ कम्ममलं हरेज्जा, एवं सुहं इच्छामित्तमेवं॥
अंधंवणेयारमणुस्सरित्ता,पाणाणि चेवं विणिहंति मंदा।१६।

यद्युदकं कर्ममलमपहरेदेवं शुभमपि पुण्यमपहरेत्। अथ पुण्यं नापहरेदेवं कर्ममलमपि नापहरेत्। अत इच्छामात्रमेवैतद्यदुच्यते जलं कर्मापरिहारीति। एवमपि व्यवस्थिते ये स्नानादिकाः क्रियाः स्मार्तमार्गमनुसरन्तः कुर्वन्ति ते यथा जात्यन्धा अपरं जात्यन्धमेव नेतारमनुसृत्य गच्छन्तः कुपथप्रतयो भवन्ति नाभिप्रेतं स्थानमवाप्नुवन्ति। एवं स्मार्त्तमार्गानुसारिणो जलशौचपरायणा मन्दा अज्ञाः कर्त्तव्याकर्तव्यविवेकविकलाः प्राणिन एव तन्मयान् तदाश्रितांश्च पुत्तरकादीन् विनिघ्नन्ति व्यापादयन्ति अवश्यं जलक्रियया प्राणव्यपरोपणस्य सम्भवादिति॥ १६॥

अपि च

पावाइँ कम्माइँ पकुव्वतोहिं, सिओदगं तू जइ तं हरिज्जा।
सिज्झंसु एगे दगसत्तघाति, मुसं वयंते जलसिद्धिमाहु।१७।

पापानि पापोपादानभूतानि कर्माणि प्राण्युपमर्दकारीणि कुर्वतोऽसुमतो यत्कर्मोपचीयते तत्कर्म यद्युदकमपहरेत्। यद्येवं स्यात् तर्हि यस्मादर्थे यस्मात्प्राण्युपमर्दकर्मोपादीयते जलावगाहनाच्चाऽपगच्छति तस्मादुदकसत्त्वघातिनः पापभूयिष्ठा अप्येवं सिद्ध्येयुः। न चैतद्दृष्टमिष्टं वा। जलावगाहनात्सिद्धिमाहुस्ते मृषा वदन्ति॥

किंचाऽन्यत्॥

आहंसु महापुरिसा, पुव्विं तत्ततवोधणा।
उदयेण सिद्धिमावन्ना, तत्थ मंदो वसीयति ॥१॥

केचन अविदितपरमार्था आहुरुक्तवन्तः। किं तदित्याह। यथा महापुरुषाः प्रधानपुरुषा वल्कलचीरितारागणर्षिप्रभृतयः। पूर्वं पूर्वस्मिन् काले तप्तमनुष्ठितं तप एव धनं येषां ते तप्ततपोधनाः पञ्चाग्न्यादितपोविशेषेण निष्टप्तदेहास्त एवंभूता शीतोदकपरिभोगेन उपलक्षणार्थत्वात् कन्दमूलफलाद्युपभोगेन च सिद्धिमापन्नाः सिद्धिं गतास्तत्रैवंभूतार्थसमाकर्णने तदर्थसद्भावावेशात् मन्दोऽज्ञः स्नानादित्याजितः प्राशुकादेकपरिभोगभग्नः संयमानुष्ठाने प्रविषीदति। यदि वा तत्रैव शीतोदकपरिभोगे विषीदति लगति निमज्जतीति यावत्। नचासौ वराक एवमवधारयति यथा तेषां तापसादिव्रतानुष्ठायिनां कुतश्चिज्जातिस्मरणादिप्रत्ययादाविर्भूतसम्यग्दर्शनानां मौनीन्द्रभावसंयमप्रतिपत्त्या अपगतज्ञानावरणादिकर्मणां भरतादीनामिव मोक्षावाप्तिर्न तु शीतोदकपरिभोगादिति॥ १॥ किंचान्यत्॥

अभुंजिया नमि विदेही, रामगुत्ते य भुंजिया॥
बाहुए उदगं भोच्चा, तहा तारा गणे रिसी॥ २॥

केचन कुतीर्थिकाः साधुप्रतारणार्थमेवमूचुः। यदि वा स्वयूथ्याः शीतलविहारिणः एतद्वक्ष्यमाणमुक्तवन्तस्तद्यथा नमी राजा विदेहो नाम जनपदस्तत्र भवा वैदेहास्तन्निवासिनो लोकास्तेऽस्य

सन्तीति वैदेही । स एवंभूतो नमी राजा अशनादिकमभुक्त्वा सिद्धिमुपगतस्तथा रामगुप्तश्च राजर्षिराहारादिकं भुक्त्वैव तृतज्ञान एव सिद्धिं प्राप्त इति ॥ तथा बाहुक शीतोदकादिपरिभोगं कृत्वा तथा नारायणो नाम महर्षिः परिणतोदकादिपरिभोगात्सिद्ध इति ॥ २ ॥ अपिच—

असिले देवले चेव, दीवायणमहारिसी ।
पारासरे दगंजोचा, बीयाणि हरियाणि य ॥ ३ ॥
एते पुव्वं महापुरिसा, आहिता इह संमता ।
भोचा बीओदगं सिद्धा, इति मेयमणुस्सुअं ॥ ४ ॥

असितो नाम महर्षिर्देवलो द्वैपायनश्च तथा पराशराख्य इत्येवमादय शीतोदकबीजहरितादिपरिभोगादेव सिद्धा इति श्रूयते ॥ ३ ॥ एतदेव दर्शयितुमाह । ( एते इत्यादि ) एते पूर्वोक्ता नम्यादयो महर्षयः ( पुव्वमिति ) पूर्वस्मिन्काले त्रेताद्वापरादौ महापुरुषा इति प्रधानपुरुषा आसमन्तात् ख्याता प्रख्याता राजर्षित्वेन प्रसिद्धिमुपगताः इहाप्यार्हतप्रवचने ऋषिभाषितादौ केचन समता अभिप्रेता इत्येवं कुतीर्थिका स्वयूथ्या वा प्रोचुस्तथया एते सर्वेऽपि बीजोदकादिक भुक्त्वा सिद्धा इत्येतन्मया भारतादौ पुराणे श्रुतम् ॥ ४ ॥

एतदुपसंहारद्वारेण परिहरन्नाह ॥

तत्थ मंदा विसीयंति, वाहच्छिन्नाव गद्दभा ।
पिट्ठतो परिसप्पंति, पिट्ठसप्पी च संभमे ॥ ५ ॥
इहमेगे उ भासंति, सातं सातेण विज्जती ।
जे तत्थ आरिअं मग्गं, परमं च समाहिए ॥ ६ ॥

( तत्येत्यादि ) तत्र तस्मिन् कुश्रुत्युपसर्गोदये मन्दा अज्ञा नानाविधोपसाध्यां सिद्धिगमनमवधार्य विषीदन्ति संयमानुष्ठानेन पुनरेतद्वदन्त्यज्ञा । तद्यथा येषां सिद्धिगमनमभूत् तेषां कुतश्चिन्निमित्तात् जातजातिस्मरणादिप्रत्ययानामवाप्तसम्यग्ज्ञानचारित्राणामेव वल्कलचीरिप्रभृतीनामिव सिद्धिगमनमभूत् न पुनः कदाचिदपि सर्वविरतिपरिणामभावलिङ्गमन्तरेण शीतोदकबीजाद्युपभोगेन जीवोपमर्दप्रायेण कर्मक्षयोऽवाप्यते । विषीदने दृष्टान्तमाह । वहन वाहो भारोद्वहन तेन छिन्नाः कर्षितास्त्रुटिता रासभा इव विषीदन्ति । यथा रासभा गमनपथ एव प्रोज्झितभारा निपतन्ति एवं ते प्रोज्झ्य संयमभार शीतलविहारिणो भवन्ति । दृष्टान्तान्तरमाह । यथा पृष्ठसर्पिणो भग्नगतयोऽग्न्यादिसम्भ्रमे सत्युद्भ्रान्तनयना समाकुला प्रनष्टजनस्य पृष्ठत पश्चात्परिसर्पन्ति नाग्रगामिनो भवन्त्यपि तु तत्रैवाग्न्यादिसम्भ्रमे विनश्यन्त्येव तेऽपि शीतलविहारिणो मोक्ष प्रति प्रवृत्ता अपि तु न मोक्षगतयो भवन्त्यपि तु तस्मिन्नेव संसारे अनन्तमपि काल यावदासन इति ॥ ५ ॥ मतान्तरं निराकर्तु पूर्वपक्षयितुमाह ( इह मेग इत्यादि ) इहेति मोक्षगमनप्रस्तावे एके शाक्यादय स्वयूथ्या वा लोचादिनोपतप्ता । तुशब्द पूर्वस्मात् शीतोदकपरिभोगादिविशेषमाह । भाषन्ते ब्रुवते । मन्यन्ते च इति क्वचित्पाठ । किं तदित्याह सात सुख सातेन सुखेनैव विद्यते भवतीति । तथाच वक्तारो भवन्ति । "सर्वाणि सत्त्वानि सुखे रतानि, सर्वाणि दुःखाच्च समुद्विजन्ति । तस्मात्सुखार्थी सुखमेव दद्यात्, सुखप्रदाता लभते सुखानि" ॥ १ ॥ युक्तिरप्येवमेव स्थिता । यत कारणानुरूप कार्यमुत्पद्यते । तद्यथा शालिबीजाच्छाल्यङ्कुरो जायते न यवाङ्कुर इत्येव प्रीत्यात्मनुत्पन्नमुक्तिसुखमुपजायते ननु लोचादिरूपात् दुःखादिति । तथा ह्यागमेऽप्येवमेव व्यवस्थितम् ॥ मणुण्णं भोयणं भोचा, मणुण्णं सयणासणं । मणुण्णसि अगारंसि, मणुण्णं भायए मुणी ॥ १ ॥ तथा मृद्वी शय्या प्रातरुत्थाय पेया, भुक्तमध्ये पानकं चापराह्ने । द्राक्षाखण्डं शर्करा चार्धरात्रे, मोक्षश्चान्ते शाक्यपुत्रेण दृष्टः ॥ १ ॥ इत्यतो मनोज्ञाहारविहारादेश्चित्तस्वास्थ्यं ततः समाधिरुत्पद्यते समाधेश्च मुक्त्यवाप्तिरतः स्थितमेतत्सुखेनैव सुखावाप्तिर्न पुनः कदाचनापि लोचादिना कायक्लेशेन सुखावाप्तिरिति स्थितम् इत्येवं व्यामूढमतयो ये केचन शाक्यादयस्तत्र तस्मिन्मोक्षमार्गप्रस्तावे समुपस्थिते आराज्जातः सर्वहेयधर्मेभ्य इत्यार्यो मार्गो जैनेन्द्रशासनप्रतिपादितो मोक्षमार्गस्तं ये परिहरन्ति । तथाच । परमं च समाधिज्ञानदर्शनचारित्रात्मकं ये त्यजन्ति तेऽज्ञाः संसारान्तर्वर्तिनः सदा भवन्ति । तथाहि । यत्तैरभिहितं कारणानुरूपं कार्यमिति तन्नायमेकान्तो यतः शृङ्गाच्छरो जायते गोमयाद्वृश्चिको गोलोमाविलोमादिभ्यो दूर्वेति । यदपि मनोज्ञाहारादिकमुपन्यस्तं सुखकारणत्वेन तदपि विसूचिकादिसम्भवाद्व्यभिचारीति । अपिचेदं वैषयिकं सुखं दुःखप्रकारहेतुत्वात् सुखाभासतया सुखमेव न भवति । तदुक्तम् । दुःखात्मकेषु विषयेषु सुखाभिमान , सौख्यात्मकेषु नियमादिषु दुःखबुद्धिः । उत्कीर्णवर्णवदपङ्क्तिरिवान्यरूपा, सारूप्यमेति विपरीतगतिप्रयोगात् ॥ १ ॥ इति कुतस्तत्परमानन्दरूपमस्यात्यन्तिकैकान्तिकस्य मोक्षसुखस्य कारणं भवति यदपि लोचभूशयनभिक्षाटनपरपरिभवक्षुत्पिपासादशमशकादिकं दुःखकारणत्वेन भवतोपन्यस्तं तदप्यल्पसत्त्वानाम परमार्थदृशां महापुरुषाणां तु स्वार्थाभ्युपगमप्रवृत्तानां परमार्थचिन्तकानां महासत्त्वतया सर्वमेवैतत्सुखायैवेति । तथा चोक्तम् । तणसंथारनिविष्टो वि, मुनिवरो भट्ठरागमयमोहो ॥ जं पावइ मुत्तिसुहं, कत्तो तं चक्कवट्टी वि ॥ १ ॥ तथा । सख्य दुष्कृतसंख्यया च महतां क्षान्त पद वैरिण , कायस्याशुचिता विरागपदवी सवेगहेतुर्जरा ॥ सर्वत्यागमहोत्सवाय मरणं जातिः सुहृत्प्रीतये, सपद्भिः परिपूरितं जगदिदं स्थानं विपत्तेः कुत इति ॥ १ ॥ अपिचैकान्तेन सुखेनैव सुखेऽभ्युपगम्यमाने विचित्रससाराभाव स्यात्तथा स्वर्गस्थानां नित्यसुखिनां पुनरपि सुखानुभूतेस्तत्रैवोत्पत्तिः स्यात्तथा नारकाणां च पुनर्दुःखानुभवात्तत्रैवोत्पत्तेर्न नानागत्या विचित्रता संसारस्य स्यान्नचैतत् दृष्टमिष्टं चेति ॥ ६ ॥ सूत्र० १ श्रु० ३ अ० ( उदकस्य विषयान्तराणि आउक्काय शब्दे उक्तानि ) भाविष्यति सप्तमे तीर्थकरे, स० । वनस्पतिविशेषे, यथोक्तम् "उदए अवए पणए इत्यादि " दश ८ अ० । प्रज्ञा० । जलाशयमात्रे, भ० १श०८ उ० । 'मेदार्य्यगोत्रे, स्वनामख्याते पेढालपुत्रे, पार्श्वापत्यीये निर्ग्रन्थे,

अहेणं उदए पेढालपुत्ते भगवं पासावच्चिज्जे णियंठे मेयज्जे गोत्तेणं, पासावगिच्चो पुच्छियाइओ अज्ज गोयमं उदगो सावगपुच्छा धम्मं सोउ कहियम्मि उवसंता । सूत्र० २ श्रु० ७ अ० ।

( उदकस्य गौतमस्वामिन प्रति प्रश्न पच्चक्खाणशब्दे वक्ष्यते ) तद्विषयकत्वेन नैवेत्रोपन्यासिष्यमाणत्वात् अथ संस्यति ॥ सूत्रकृताङ्गद्वितीयश्रुतस्कन्धे नालन्दीयाध्ययनाभिहित स्त्वयथा—उदकनामानगारः पेढालपुत्रः पार्श्वजिनशिष्यो योऽसौ राजगृहनगरवाहिरिकाया नालन्दाभिधानाया उत्तरपूर्वस्यां दिशि हस्तिद्वीपवनखण्डे व्यवस्थितस्तदेकदेशस्थं गौतमं संशयविशेषमापृच्छ्य विच्छिन्नसंशयः सन् चातुर्याम धर्मं विहाय पञ्चयाम धर्मं प्रतिपेदे इति ॥ सच उत्सर्पिण्यां सप्तमस्तीर्थकरो भविष्यति, स० । कालोदायिप्रभृतिष्वेकादशस्वन्ययूथिकेषु चतुर्थे, भ० ७ श० १० उ० ।

उदग ( दग ) गब्भ—उदकगर्भ— पु० ( उदकस्य ) दकस्यो-

दस्य वा गर्भ इव गर्भः । स्था० ४ ठा० । कालान्तरेण जलप्रवर्षणहेतौ पुफलपरिणामे, भ० २ श० ५ उ० ॥

चत्तारि उदगगब्भा पण्णत्ता तंजहा हेमगा अब्भसंथडा सीओसिणा पंचरूविया ॥

दकस्योदकस्य गर्भा इव गर्भा दकगर्भाः कालान्तरे जलवर्षणस्य हेतवः तत्संसूचका इति तत्त्वमिति । अवश्यायः कृपाजल महिका धूमिका शीतान्यात्यन्तिकानि एवमुष्णो धर्म्म एते हि यत्र दिने उत्पन्नास्तस्मादुत्कर्षेणाव्याहता सन्तः षड्भिर्मासैरुदकं प्रसुवते अन्यैः पुनरेवमुक्तम् । " पवनाभ्रवृष्टिविद्यु-द्गर्जितशीतोष्णरस्मि परिवेषा । जलमत्स्येन सहोक्तो, दशधा चाम्बुप्रजननहेतु ॥१॥ " तथा-शीतवाताश्च बिन्दुश्च, गर्जितं परिवेषणम् । सर्वगर्भेषु शसन्ति, निर्ग्रन्था, साधुदर्शना ॥ २ ॥ तथा-सप्तमे सप्तमे मासे, सप्तमे सप्तमेऽहनि । गर्भाः पाकं नियच्छन्ति, यादृशास्तादृश फलम् ॥ १ ॥" हिमं तुहिनं तदेव हिमकं तस्यैते हैमकाः हिमपातरूपा इत्यर्थः ॥ ( अब्भसघडत्ति ) अभ्रसस्तृतानि मेघैराकाशाच्छादनानीत्यर्थः आत्यन्तिके शीतोष्णे पञ्चानां रूपाणां गर्जितविद्युज्जलवाताभ्रलक्षणानां समाहारः पञ्चरूपं तदस्ति येषां ते पञ्चरूपिका उदकगर्भा इह मतान्तरमेवम् । "पौषे समार्गशीर्षे, संध्यारागाम्बुदासपरिवेषाः । नात्यर्थं मार्गशिरे, शीतं पौषेऽतिहिमपातः ॥ १ ॥ माघे प्रबलो वायु-स्तुषारकलुषद्युती रविशशाङ्कौ । अतिशीतं सघनस्य च, भानोरस्तोदयौ धन्यौ ॥ २ ॥ फाल्गुनमासे रूक्ष-श्चण्डः पवनोऽभ्रसम्प्लवाः स्निग्धाः । परिवेषाश्च सकला, कपिलस्ताम्रो रविश्च शुभः ॥ ३ ॥ पवनघनवृष्टियुक्ताश्चैत्रे गर्भाः शुभाः सपरिवेषाः । घनपवनसलिलविद्युत्स्तनितैश्च हिताय वैशाखे इति ॥४॥" तानेव मासभेदेन दर्शयति "माहे उ हेमगा गब्भा, फग्गुणे अब्भसंथडा । सीओसिणाओ य चित्ते, वइसाहे पंचरूविया ॥ १ ॥ " स्था०४ ठा० । तस्य कालस्थितिः कायट्ठिइशब्दे )

**उदगजीव**–उदकजीव–पुं० उदकमेव जीवः । उदकरूपे जीवे, सचित्ताप्काये, आचा० १ श्रु० १ अ० २ उ० ( आउक्कायशब्दे विषय उक्त )

**उदगजोणिय**–उदकयोनिक–पुं० उदकं योनिरुत्पत्तिस्थानं येषां ते, जलसम्भवेषु जीवेषु, " इहेगतिया सत्ता उदगजोणिया उदगसंभवा " सूत्र० २ श्रु० ३ अ० ।

उदकस्य योनयः परिणामकारणभूता उदकयोनयस्त एवोदकयोनिकाः । उदकजननस्वभावेषु, " णो बहवे उदगजोणिया जीवा य पोग्गला य उदगत्ता य वक्कमंति" स्था० ३ ठा०३उ० ।

**उदगणाय**–उदकज्ञात–न० उदकं नगरपरिखाजलं तदेव ज्ञातमुदाहरणमुदकज्ञातम् । ज्ञाताधर्मकथायाः प्रथमश्रुतस्य द्वादशाऽध्ययनोक्ते उदाहरणे, तत्प्रतिपादकेऽध्ययने च । ज्ञा०१ श्रु०१अ० । आ चू० । आव० । तत्रैव ।

जइ णं भंते समणेणं भगवया महावीरेणं जाव संपत्ते णं एक्कारसमस्स णायज्झयणस्स अयमट्ठे पण्णत्ते । बारसमस्स णं भंते समणेणं भगवया महावीरेणं जाव संपत्तेणं के अट्ठे पण्णत्ते । एवं खलु जंबू तेणं कालेणं तेणं समएणं चंपाणामं णयरी होत्था । पुण्णभद्दे चेइए तीसेणं चंपाए णयरीए जियसत्तू णामं राया होत्था । तस्स णं जियसत्तुस्स रण्णो धारिणी णाम देवी होत्था । अहीणपडिपुण्ण जाव सुरूवा तस्स णं जियसत्तुस्स रण्णो पुत्ते धारिणीए अत्तए अदीणसत्तू णामं कुमारे जुवराया वि होत्था । सुबुद्धी अमच्चे जाव रज्जधुरा चिंतए समणोवासए अभिगयजीवाजीवे तीसेणं चंपाए णयरीए बहिया उत्तरपुरच्छिमेणं एगे फरिहोदए यावि होत्था । मेयवसामंसरुहिरपूयपडलपोच्चडे मयगकलेवरसंछण्णे अमणुण्णे वण्णेणं जाव फासेणं जे जहा णामए अहिमडेति वा गोमडेति वा जाव मयकुहियविणिट्ठकिमिणवावण्णदुरभिगंधकिमिजालाउले संसत्ते असुइविगयवीभच्छदरसणिज्जे भवेयारूवे सिया । णो इणट्ठे समट्ठे एत्तो अणिट्ठतराए चेव जाव गंधेणं पण्णत्ते । तए णं से जियसत्तू राया अण्णया कयाइं ण्हाए कयबलिकम्मे जाव अप्पमहग्घाभरणालंकियसरीरे बहूहिं राईसर जाव सत्थवाहपभिईहिं सद्धिं भोयणमंडवंसि भोयणवेलाए सुहासणवरगए विपुलं असणं ४ भुंजेमाणा जाव विहरइ । जिमियभुत्तुत्तरागए जाव सुइभूए तंसि विपुलंसि असणं ४ जाव विम्हए ते बहवे ईसर जाव पभिई एवं वयासी अहो णं देवाणुप्पिया इमे मणुण्णे असणं ४ वण्णेणं उववेए जाव फासेणं उववेए अस्सायणिज्जे विस्सायणिज्जे पीणणिज्जे दीवणिज्जे सव्विंदियगायपल्हायणिज्जे तए णं ते बहवे राईसर जावप्पभिईओ जियसत्तूरायं एवं वयासी तहेव णं सामी जण्णं तुब्भे वयह अहो णं इमे मणुण्णं असणं पाणं खाइमं साइमं वण्णेणं उववेए जाव पल्हायणिज्जे तए णं जियसत्तू राया सुबुद्धी अमच्चं एवं वयासी अहो णं सुबुद्धि अमच्चे इमे मणुण्णे असणं पाणं खाइमं साइमं जाव पल्हायणिज्जे तए णं सुबुद्धी अमच्चे जियसत्तू रायस्स य एयमट्ठं णो आढाई णो परियाणाइं जाव तुसिणीए संचिट्ठइ । तए णं जियसत्तू राया सुबुद्धी अमच्चं दोच्चंपि तच्चंपि एवं वयासी अहो णं सुबुद्धी अमच्चे इमे मणुण्णे तं चेव जाव पल्हायणिज्जे तए णं सुबुद्धी अमच्चे जियसत्तुणा दोच्चंपि तच्चंपि एवं वुत्ते समाणे जियसत्तू रायं एवं वयासी । णो खलु सामी अहं एयंसि मणुण्णंसि असणं पाणं खाइमं साइमंसि केइ विम्हए एवं खलु सामि सुब्भिसद्दा वि पोग्गला दुब्भिसद्दत्ताए परिणमंति, दुब्भिसद्दा वि पोग्गला सुब्भिसद्दत्ताए परिणमंति सुरूवा वि पोग्गला दुरूवत्ताए परिणमंति । दुरूवा वि पोग्गला सुरूवत्ताए परिणमंति । सुब्भिगंधा वि पोग्गला दुब्भिगंधत्ताए परिणमंति । दुब्भिगंधा वि पोग्गला सुब्भिगंधत्ताए परिणमंति, सुरसा वि पोग्गला दुरसत्ताए परिणमंति, दुरसा वि पोग्गला सुरसत्ताए परिणमंति । सुहफासा वि पोग्गला दुहफासत्ताए परिणमंति, दुहफासा वि पोग्गला सुहफासाए परिणमंति । पओगवीससा परिणया वि य णं सामी पोग्गला पण्णत्ता तए णं से जियसत्तू राया सुबुद्धिस्स अमच्चस्स एवमाइक्खमाणस्स ४ एयमट्ठं णो आढाइ णो

परियाणइ तुसिणीए संचिट्ठइ तए णं से जियसत्तू राया अण्णया कयाइ एहाए जाव विभूसिए आसखंधवरगए महया भडचडगरआसवाहणियाए णिज्जायमाणे तस्स फरिहोदयस्स अदूरसामंते णं वीइवयइ तए णं जियसत्तू राया तस्स फरिहोदगस्स असुभेणं गंधेणं अभिभूए समाणे सएणं उत्तरिज्जेणं आसगं पिहेइ एगंतं अवक्कमइ अवक्कमइत्ता ते बहवे राईसरजाव-पभिइओ एवं वयासी। अहो णं देवाणुप्पिया इमे फरिहोदए अमणुण्णे वण्णेणं गंधेणं रसेणं फासेणं से जहा णामए अहिमडेइ वा जाव अमणामतराए चेव तए णं ते राईसरपभिइए जाव एवं वयासी । तहेव णं सामी जण्णं तुब्भे एवं वयह अहो णं इमे फरिहोदए अमणुण्णे वण्णे-णं गंधेणं रसेणं फासेणं से जहा णामए अहिमडेइ वा जाव अमणामतराए तए णं से जियसत्तू राया सुबुद्धि अमच्चं एवं वयासी अहो णं सुबुद्धि इमे फरिहोदए अम-णुण्णे वण्णेणं गंधेणं रसेणं फासेणं से जहा णामए अहि-मडेति वा जाव अमणामतराए तए णं सुबुद्धि अमच्चे जाव तुसिणीए संचिट्ठइ तए णं से जियसत्तू राया सुबुद्धि अमच्चं दोच्चं पि तच्चं पि एवं वयासी अहो णं तं चेव तए णं से सु-बुद्धी अमच्चे जियसत्तुणा रण्णा दोच्चंपि तच्चंपि एवं वुत्ते समाणे एवं वयासी णो खलु सामी अम्हं एयंसि फरिहोद-गंसि केइ विम्हए एवं खलु सामी सुब्भिसद्दा वि पोग्गला दुब्भिसद्दत्ताए परिणमंति तं चेव पओगवीससा परिणया वि य णं सामी पोग्गला पण्णत्ता तए णं जियसत्तू राया सुबुद्धि अमच्चं एवं वयासी मा णं तुमं देवाणुप्पिया अप्पाणं च परं च तदुभयं च बहूहि य असब्भावुब्भावणाहि मिच्छत्ताभि-णिवेसेण य वुग्गाहेमाणे वुप्पाएमाणे विहराहि । तए णं सु-बुद्धिस्स अमच्चस्स इमेयारूवे अज्झत्थिए समुप्पज्जित्था अहो णं जियसत्तू राया संते तच्चे तहिए अवितहे संभूए जिणपण्णत्ते भावे णो उवलभंते तं सेयं खलु मम जियसत्तु-स्स रण्णो संताणं तच्चाणं तहियाणं अवितहाणं संभूयाणं जिणपण्णत्ताणं भावाणं अभिगमणट्ठयाए एयमट्ठं उवायणा-वेत्तए एवं संपेहेइ संपेहेइत्ता तिपत्तिएहिं पुरिसेहिं सद्धिं अंतरावणाओ णवए घडए गिण्हइ २ त्ता संझाकालसमयंसि पवि-रलमणुस्संसि णिसंत पडिणिसंतंसि जेणेव फरिहोदए तेणेव उवागच्छइ उवागच्छइत्ता तं फरिहोदगं गिण्हावेइ णवएसु घडएसु पक्खिवावेइ २ त्ता सज्जक्खारं पक्खिवावेइ लंछिय-मुद्दिए कारवेइ सत्तरत्तं परिवसावेइ दोच्चंपि णवएसु घडएसु गालावेइ २ त्ता णवएसु घडएसु पक्खिवावेइ २ त्ता सज्जक्खारं पक्खिवावेइ २ त्ता लंछिय मुद्दिय कारावेइ सत्तरत्त परिवसावेइ २ त्ता तच्चंपि णवएसु घडएसु जाव संवसावेइ २ त्ता एवं खलु एएणं उवाएणं अंतरा गलावेमाणे अंत-रापक्खिवावेमाणे अंतरा अवसावेमाणे २ सत्तसत्तए रा-इंदिइं परिवसावेइ २ त्ता तए णं से फरिहोदए सत्तमंसि २ परिणममाणंसि उदगरयणे जाए यावि होत्था । अच्छे पत्थे जच्चे तणुए फालियवण्णाभे वण्णेणं उववेए ४ आसाय-णिज्जं जाव सव्विंदियगायपल्हायणिज्जं तए णं सुबुद्धी अमच्चे जेणेव से उदगरयणे तेणेव उवागच्छइ २ त्ता करयलंसि आसादेइ तं उदगरयणं वण्णेणं गंधेणं रसेणं फासेणं उव-वेयं आसायणिज्जं जाव सव्विंदियगायपल्हायणिज्जं जाणि-त्ता हट्ठतुट्ठे बहूहिं उदगसंभारणिज्जेहिं दव्वेहिं संभारेइ २ त्ता जियसत्तुस्स रण्णो पाणियधारियं पुरिसं सद्दावेइ २ त्ता एवं वयासी तुमं णं देवाणुप्पिया इमं उदगरयणं गिण्हा-हि २ जियसत्तुस्स रण्णो भोयणवेलाए उवट्ठवेइ तए णं से जियसत्तू राया पाणियधरए पुरिसे सुबुद्धिस्स अमच्चस्स एय-मट्ठं पडिसुणेइ २ त्ता तं उदगरयणं गिण्हइ २ त्ता जिय-सत्तुस्स रण्णो भोयणवेलाए उवट्ठवइ तए णं से जियसत्तू राया तं विपुलं असणं पाणं खाइमं साइमं आसाएमाणा विसा-एमाणा जाव विहरइ जिमियभुत्तुत्तरागए वि य णं जाव परम सुइभूए तंसि उदगरयणंसि जाव विम्हए ते बहवे राईसर-जाव एवं वयासी । अहो णं देवाणुप्पिया इमे उदगरयणे अच्छे जाव सव्विंदियगायपल्हायणिज्जे तए णं ते बहवे राईसर जाव एवं वयासी तहेणं सामी जण्णं तुब्भे वयह जाव तं चेव पल्हायणिज्जे तए णं जियसत्तू राया पाणियधरयं पुरिसं सद्दावेइ २ त्ता एवं वयासी एस णं देवाणुप्पिया-उदगरयणे कओ आसादिए तए णं से पाणिधरए जियसत्तू रायं एवं वयासी एस णं सामी मए उदगरयणे सुबुद्धिस्स अंतियाओ आसाइए तए णं जियसत्तू राया सुबुद्धि अमच्चं सद्दावेइ २ त्ता एवं वयासी । अहो णं सुबुद्धी अहं तव अणिट्ठे ५ जेणं तुमं ममं कल्लाकल्लिं भोयणवेलाए इमं उद-गरयणं ण उवट्ठवेसि तए णं तुमे देवाणुप्पिया उदगरयणे-कओ उवलद्धे तए णं सुबुद्धी अमच्चे जियसत्तू रायं एवं वयासी एस णं सामी सफरिहोदए तए णं से जियसत्तू राया सुबुद्धी अमच्चं एवं वयासी केणं कारणेणं । सुबुद्धी अमच्चे एस फरिहोदए तए णं सुबुद्धी अमच्चे जियसत्तू रायं एवं वयासी एवं खलु सामी तुम्हे तइया मम एवमाइक्खमाणस्स ४ एयमट्ठं णो सद्दह तए णं ममं इमेयारूवे अज्झत्थिए चिंति-ए पत्थिए मणोगए संकप्पे समुप्पज्जित्था । अहो णं जियसत्तू राया संते जाव भावे णो सद्दहइ णो पत्तियइ णो रोयइत्ति तं सेयं खलु मम जियसत्तुस्स रण्णो संताणं जाव संभूयाणं जिणपण्णत्ताणं भावाणं अभिगमणट्ठयाए एयमट्ठं उवायणा-वेत्तए एवं संपेहेइ २ त्ता एवं चेव जाव पाणियधरियं पुरिसं सद्दावेइ २ त्ता एवं वयासी तुमं णं देवाणुप्पिया उदगरयणं जियसत्तुस्स रण्णो भोयणवेलाए उवणेहि तं एएणं कारणेणं-

सामी एस से फरिहोदए तएणं जियसत्तू राया सुबुद्धिस्स अमच्चस्स एवमाइक्खमाणस्स ४ एयमट्ठं णो सद्दहइ २ त्ता असद्दहमाणो ३ अभिंतरट्ठाणिज्जे पुरिसे सद्दावेइ २ त्ता एवं वयासी गच्छह णं तुब्भे देवाणुप्पिया अंतरावणाओ णवघमए गिएहह जाव उदगसंभारणिज्जेहिं दव्वेहिं संभारेह। ते वि तहेव संभारेइ जियसत्तुस्स रएणो उवणेइ तए णं जियसत्तू राया तं उदगरयणं करयलंसि आसाएइ आसायणिज्जं जाव सव्विंदियगायपल्हायणिज्जं जाणित्ता सुबुद्धिं अमच्चं सद्दावेइ २ त्ता एवं वयासी सुबुद्धि एएणं तुमे संतातत्थ जाव संभूया भावा कओ उवलद्धा तएणं सुबुद्धी अमच्चे जियसत्तू रायं एवं वयासी एएणं सामी मए संताजाव भावा जिणवयणाओ उवलद्धा तएणं जियसत्तू राया सुबुद्धिं अमच्चं एवं वयासी तं इच्छामिणं देवाणुप्पियाणं तव अंतिए जिणवयणं णिसामित्तए। तएणं सुबुद्धी अमच्चे जियसत्तुस्स रएणो विचित्तं केवलिपएणत्तं चउज्जामं धम्मं परिकहेइ तमाइक्खेति जहा जीवा बुज्झंति जाव पंच अणुव्वयाणि। तएणं जियसत्तू राया सुबुद्धिस्स अमच्चस्स अंतिए धम्मं सोच्चा णिसम्म हट्ठतुट्ठे सुबुद्धिं अमच्चं एवं वयासी सद्दहामिणं देवाणुप्पिया णिग्गंथं पावयणं ३ जाव से जहेयं तुब्भे वयह तं इच्छामिणं तव अंतियं पंचाणुव्वइयं सत्तसिक्खावइयं जाव उवसंपज्जित्ताणं विहरित्तए अहासुहं देवाणुप्पिया मा पडिबंधं करेह। तएणं जियसत्तू राया सुबुद्धिस्स अमच्चस्स अंतिए पंचाणुव्वइयं जाव दुवालसविहं गिहिधम्मं पडिवज्जइ। तएणं जियसत्तू राया समणोवासए जाए अभिगयजीवाजीवे जाव पडिलाभेमाणे विहरइ। तेणं कालेणं तेणं समएणं थेरा जेणेव चंपाणयरी जेणेव पुण्णभद्दे चेइए तेणेव समवसड्ढे जियसत्तू राया सुबुद्धियणिग्गए सुबुद्धी धम्मं सोच्चा ज णवर देवाणुप्पिया जियसत्तू रायं आपुच्छामि जाव पव्वयामि अहासुहं देवाणुप्पिया मा पडिबंधं करेह तए णं से सुबुद्धी अमच्चे जेणेव जियसत्तू राया तेणेव उवागच्छइ २ त्ता एवं वयासी एवं खलु सामी मए थेराणं अंतिए धम्मे णिसम्मे सेवियधम्मे इच्छिए पडिच्छिए तए णं अहं सामी संसारभओव्विग्गे भीए जाव इच्छामि णं तुब्भेहिं अब्भणुण्णाए समाणे जाव पव्वइत्तए तएणं जियसत्तू राया सुबुद्धिं अमच्चं एवं वयासी इच्छामि ताव देवाणुप्पिया कइ वयाई वासाइं उरालाइं जाव भुंजमाणा तओ पच्छाए गयाओ थेराणं अंतिए मुंडे भवित्ता जाव पव्वइस्सामो। तए णं सुबुद्धी णामं अमच्चे जियसत्तुस्स रएणो एयमट्ठं पडिसुणेइ तएणं तस्स जियसत्तुस्स रएणो सुबुद्धिणा सद्धिं विपुलाइं माणुस्सगाइं भोगभोगाइं जाव पच्चणुब्भवमाणस्स दुवालसवासाइं वीइक्कंताइं। तेणं कालेणं तेणं समएणं थेरागमणं जियसत्तू राया धम्मं सोच्चा एवं जं णवरं देवाणुप्पिया सुबुद्धिं अमच्चं आमंतेमि जेट्ठपुत्तं रज्जे ठवेमि तएणं तुब्भे णं जाव पव्वयामि अहासुहं देवाणुप्पिया मा पडिबंधं करेह। तए णं जियसत्तू राया जेणेव सए गिहे सुबुद्धिं अमच्चं सद्दावइ एवं वयासी एवं खलु मए थेराणं जाव पव्वयामि तुमं णं किं करेसि तए णं सुबुद्धी अमच्चे जियसत्तू रायं एवं वयासी जाव केअसे आहारे वा जाव पव्वयामि तं जइ णं देवाणुप्पिया जाव पव्वाहि गच्छ णं देवाणुप्पिया जेट्ठपुत्तं कुडुंबे ठावेहिं सहस्सपुरिसवाहिणी सीयं दुरुहित्ताणं मम अंतिए सीयाओ जाव पाउब्भवह तएणं से सुबुद्धी अमच्चे सीया जाव पाउब्भवइ। तए णं जियसत्तू राया कोडुंबियपुरिसे सद्दावेइ २ त्ता एवं वयासी गच्छह णं तुब्भे देवाणुप्पिया अदिएसत्तुस्स कुमारस्स रायाभिसेयं उवट्ठवेह। तहेव कोडुंबियपुरिसा अभिसिंचइ जाव जियसत्तू राया पव्वइए। तए णं जियसत्तू रायरिसी एकारसअंगाइं अहिज्जित्ता बहूणि वासाणि परियायं पाउणित्ता मासियाए संलेहणाए सिद्धे। तए णं सुबुद्धी एक्कारसअंगाइं अहिज्जित्ता बहूणि वासाणि जाव सिद्धे एवं खलु जंबू समणेणं भगवया महावीरेणं जाव संपत्तेणं बारसमस्स णायज्झयणस्स अयमट्ठे पएणत्ते त्तिबेमि। "मिच्छत्तमोहिमणा–पावपसत्ता वि पाणिणो विगुणा। फरिहोदगं च गुणणो, हवंति वरगुरुपसायाओ१" बारसमं णायज्झयणं सम्मत्तं १२॥ ज्ञा०।

उदगता–उदकता– स्त्री० अप्कायरूपतायाम्, "णो बहवे उदगजोणिया जीवा य पोग्गला य उदगता य वक्कमति" स्था०३ठा०।

उदगदोणि–उदकद्रोणि– स्त्री० जलभाजने, यत्र तप्तलोह शीतलीकरणायाक्षिप्यते, "उदगदोणी छिन्नतिए" भ० १६ श०। १ उ०। दश० "फलिहगालणा वाणमल उदगदोणियं" उदकद्रोण्योऽरहट्टजलधारिका इति। दश० ७ अ०॥

उदगपरिणय–उदकपरिणत– त्रि० उदकदायकावस्थां प्राप्ते, स्था० ३ ठा० ३ उ०॥

उदगपसूय–उदकप्रसूत– त्रि० जलोत्पन्ने कन्दादौ, "उदगपसूयाणि कदाणि वा मूलाणि वा पत्ताणि वा" आचा०२ श्रु०१ अ०॥

उदगपोग्गल–उदकपौद्गल– न० उदकप्रधान पौद्गल पुद्गलसमूहे मेघे, "तत्थ समुट्ठिय उदगपोग्गलं परिणय वा सिउकाम अन्न देस साहरति" स्था० ३ ठा० ३ उ०॥

उदगमच्छ–उदकमत्स्य– पु० इन्द्रधनु खण्डे, 'एष चाशुभसूचक उत्पातविशेष, भ० ३ श० ६ उ०॥ अनु०॥

उदगमाल–पुं० उदकमाला–स्त्री०६त० उदकशिखायाम्, वेलायाम्, स्था० १० ठा०॥

लवणस्सणं समुद्दस्स केमहालए उदगमाले पएणत्ते? गोयमा! दसजोयणसहस्साइं उदगमाले पएणत्ते॥

भदन्त! लवणस्य समुद्रस्य किंप्रमाणा महत्या उदकमाला समपानीयोपरिभूता षोडशयोजनसहस्रोच्छ्रया प्रज्ञप्ता? भगवानाह गौतम! दशयोजनसहस्राणि उदकमाला प्रज्ञप्ता। जी०३ प्रति०

उदगरयण–उदकरत्न– न० उदकमेव रत्नमुदकरत्नम् । उदकजातौ, उत्कृष्टे, "अस्सिंहि इमस्स वम्मियस्स पढमाए वप्पाए भिगाए उराले उदगरयणे अस्सादिए" भ० १५ श० १ उ० ॥

उदगरस–उदकरस– पु० जलरसे, तओ समुद्दा पगईए उदगरसे ण पमत्ता तजहा कालोदे, पुक्खरोदे, सयम्भूरमणे, स्था०३ठा०१उ० "अप्पेगइयाउ उदगरसे ण पमत्ता" जं० १ वक्ष० ॥

उदग ( दग ) लेव–उदकलेप–पु० नाभि प्रमाणजलावगाहने, "अतो मासस्स तओ दगलेवे करेमाणे सबले" स० । दशा० । जलले‍पे, "बहु परियावणे पाणीसु उदगलेवे तहप्पगारं असणं जाव पडिगाहेज्जा" आचा० २ श्रु० १ अ० ११ उ० ।

उदगवत्थि–उदकवस्ति–स्त्री० जलभृद्दृतौ, जलाधारचर्ममयभाजने, "उदगवत्थि पगमूसह" ज्ञा० १८ अ० ।

उदगवद्दलय–उदकवार्दलक–न० भाविरेणुसतापोपशान्तये जलवर्षके वार्दलके, आ० म० द्वि० ।

उदगबिंदु–उदकबिन्दु–पु० जललवे, पञ्चा० ४ विव० ।

उदगवेग–उदकवेग–पु० उदकरये "तिक्खम्मि उदगवेगे विसमम्मि विज्जलम्मि वच्चन्तो" व्य० प्र० १ उ० ।

उदगसंभाराणिज्ज–उदकसंभारणीय–न० वालकमुस्तादौ, उदकवासादौ, "हडतुडे बहुहिं उदगसंभारणिज्जेहिं,, ज्ञा० १२ अ०

उदगसत्थ–उदकशस्त्र–न० उदकं शस्त्रमुदकमेव शस्त्रम् । अप्कायाङ्गके स्वकायपरकायशस्त्रे, आचा० १ श्रु० १ अ० ३ उ० ।

उदगसिहा–उदकशिखा–स्त्री० वेलायाम्, स्था० १० ठा० ।

उदग ( दग ) सीमय–उदक ( दक ) सीम–पु० उदक ( दक ) स्य शीताशीतोदपानीयस्य सीमा यत्रासौ उदक ( दक ) सीमः मनःशिलाकस्य वेलन्धरनागराजस्यावासपर्वते, जी० ३ प्रति० ( तद्वक्तव्यता वेलन्धरशब्देवक्ष्यते )

उदग ( दग ) धारा–उदकधारा–स्त्री०उदकबिन्दुप्रवाहे,ज्ञा० ९ अ० ।

उदगुप्पीला–उदकोत्पीडा–स्त्री० तडागादिषु जलसमूहे, ॥भ०॥ ३ श० ९ उ० ॥

उदग्ग–उदग्र–त्रि० उन्नतमग्रं यस्य । उन्मत्ते, स्था० ४ ठा० ॥ उन्नतपर्यवसाने, भ० २ श० १ उ० । उत्त० । उत्कटे, उत्त० १४ अ० । प्रधाने, "जहा से तिक्ख दाढे, उदग्गे दुप्प हसए" सीहेमियाण पवरे एव हवइ बहुस्सुए" उत्त० १३ अ०

उदग्गचारित्ततव उदग्रचारित्रतपस् पु० स्त्री० उदग्रं प्रधानं स्वाख्याताम् सर्वविरतिलक्षण दशविधरूपं चारित्रतपो द्वादशविध यस्य स उदग्रचारित्रतपा । प्रधानचारित्रतपस्के, " चित्तो वि कामेहि विरत्तकामो, उदग्गचारित्ततवो महेसी, उत्त० १३ अ० ॥

उदत्त–उदात्त–पु० उद्– आ० दा० क्त. वर्णोत्पत्तिस्थानेषु उर्ध्वभागे निष्पन्नेऽचि उच्चारिते स्वरे,तद्युक्ते, त्रि० । "अविकत्थन क्षमावा–नतिगम्भीरो महासत्त्वः । स्थेयान् निगूढमानो, धीरो दान्तो दृढव्रतः कथितः " सा० द० उक्ते(पूर्वपदलोपेन)नायकभेदे, वाच०।कर्तरि क्तः ।उदारे "अय निजः परो वेति, गणना लघुचेतसाम् । उदारचरितानां तु वसुधैव कुटुम्बकम् ' ॥ पं० १४ विवृ० । महति, समर्थे, दातरि, च त्रि० । भावे क्त दाने, वाग्यजेडे, अलङ्कारभेदे च । वाच० ।

उदत्ताभ–उदात्ताभ–पुं० गौतमगोत्रविशेषभूते पुरुषे, तत्प्रवर्तिते गोत्रे, तत्र जाते च । " ते उदात्ताभा " स्था० ७ ठा० ।

उदय–उदय–पु० उद्. इ. अच्. प्रादुर्भावे, आचा० १ श्रु० १ अ० ६ उ० । उत्पत्तौ,–विशे० । ज्योतिषोक्ते राशीनामुदयरूपे लग्ने,। आधारे अच् । "यैर्यत्र दृश्यते भास्वान् स तेषामुदयः स्मृतः" इत्युक्तलक्षणे रवेर्दृष्टियोग्यस्थाने, उदयाचले, पूर्वपर्वते, वाच० । कर्मपुद्गलानां यथास्थितिबद्धानामबाधाकालक्षयेणापवर्तनविशेषतो वा उदयप्राप्तानामनुभवने, विपाकवेदने, क० प्र० । कर्म० । दश० । प्रव० । उदयावलिकाप्रविष्टानां कर्मपुद्गलानामुद्भूतसमर्थतायाम्, आ० म० प्र० । विपाके,–दश० १ अ० ।

( १ ) प्रकृत्युदयः तत्र नानात्वं च ।
( २ ) जघन्योत्कृष्टस्थित्युदय ।
( ३ ) अनुभागोदयः ।
( ४ ) प्रदेशोदयनिरूपणावसरे साद्यनादिप्ररूपणास्वामित्व ।
( ५ ) कस्मिन्गुणस्थाने कियत्यः प्रकृतयो भगवतः क्षीणाः ।
( ६ ) उदयहेतुः ।

( १ ) तद्वक्तव्यता चैव तत्र प्रकृत्युदयो यथा–

उदओ उदीरणाए, तुल्लो मोत्तूण एक्कचत्तालं ।
आवरणविग्घसंजलण–लोभवेए य दिट्ठिदुगं ॥३७८॥
आलिगमहिगं वेएति, आउगाणं अप्पमत्तावि ॥
वेयणियाणि दुयदुसमय–तणुपज्जत्ता दायनिद्दाउ ।३७९।
मणुयगइजाइतसवा–यरं च पज्जत्तसुभगमाएज्जं ॥
जसकित्तिमुच्चगोत्तं–पंचाजोगिकेइ तित्थयरं ॥ ३८० ॥

उदय उदीरणायाः तुल्यः किमुक्तं भवति उदीरणाया प्रकृत्यादयः प्रागुक्ता या च साद्यनादिप्ररूपणा यच्च स्वामित्वमेतत् सर्वमन्यूनातिरिक्तमुदयेऽपि द्रष्टव्यम् । उदयोदीरणयोः सहभावित्वात् । तथाहि यत्र उदयस्तत्रोदीरणा यत्र उदीरणा तत्रोदयः किं सर्वत्राप्येवमिति चेत् उच्यते । अत आह ।मुक्त्वा एकचत्वारिंशत् प्रकृतीनामासामुदीरणामन्तरेणापि कियत् कालमुदयस्य प्राप्यमाणत्वात् । तथाहि ज्ञानावरणपञ्चक दर्शनावरचतुष्टयान्तरपञ्चकसंज्वलनलोभवेदत्रयसम्यक्त्वसमग्रमिथ्यात्वरूपा विंशतिः प्रकृतीः स्वस्वोदयपर्यवसाने आवलिकामात्र कालमधिकृत्य वेदयन्ति । उदीरणामन्तरेणाऽपि केवलेनोदयेनावलिकामात्रं कालमनुभवन्तीत्यर्थः ॥ तत्रावलिकामात्र त्रयाणां वेदानां मिथ्यात्वस्य चान्तरकरणस्य प्रथमस्थितौ आवलिकाशेषायाम् शेषाणां स्वस्वसत्तापर्यवसाने । तथा चतुर्णामप्यायुषां स्वस्वपर्यवसाने आवलिकामात्र कालमुदय एव भवतीति नोदीरणा मनुष्यायुर्वेदनीययोर्वा प्रमत्ताप्रमत्तसयतप्रभृतय उदीरणामन्तरेणापि केवलेनैवोदयेन वेदयन्ते न तथा तनुपर्याप्ताः शरीरपर्याप्त्या पर्याप्ताः सन्तो द्वितीयस्य समयादारभ्य शरीरपर्याप्त्यनन्तरसमयादारभ्य इन्द्रियपर्याप्तिचरमसमय यावत् उदीरणामन्तरेणापि केवलेनैवोदयेन निद्राः पञ्चापि वेदयन्ते । तथा मनुष्यगतिपञ्चेन्द्रियजातित्रसबादरपर्याप्तसुभगादेययशःकीर्त्युच्चैर्गोत्ररूपा नवप्रकृतियोगिकेवलिन उदीरणामन्तरेण स्वकाल यावत् केवलिनि नैवोदयेन वेदयन्ते । तथा तनुपर्याप्ताः शरीरपर्याप्तापर्याप्ताः सन्तो द्वितीयस्य समयादारभ्य शरीरपर्याप्त्यनन्तरसमयादारभ्य इन्द्रियपर्याप्तिचरमसमय यावत् उदीरणामन्तरेणापि । क० प्र० ।

होइ अणाइअणंतो, अणिसंतो धुवोदयाणुदओ ।
साइसपज्जवसाणो, अधुवाणं तहयमिच्छस्स ॥

ईह्क् प्रकृतयो द्विधा तद्यथा ध्रुवोदया अध्रुवोदयाश्च । तत्र कर्मप्रकृतिका उदयचिन्तायामप्यष्टपञ्चाशदशतधिक प्रकृतीना शत मन्यते अत ऊर्ध्वं वा करणाष्टकपरिसमाप्तेः कर्मप्रकृतिभिः प्रायो व-

क्ष्यते । ततो ध्रुवोदया प्रकृतयोऽष्टचत्वारिंशत्सङ्ख्या वेदितव्यास्तद्यथा ज्ञानावरणपञ्चकमन्तरायपञ्चकं दर्शनावरणचतुष्टयं मिथ्यात्वं वर्णादिविंशतिस्तैजसकार्म्मणसमकस्थिरास्थिरेषु शुभाशुभे अगुरुलघुनिर्म्माणमिति । एतासामष्टचत्वारिंशत्संख्याकानां प्रकृतीनामुदयो त्रिधा । तद्यथा अनाद्यनन्तः अनादिसपर्यवसानस्तत्र अभव्याश्रितानां च ततः कदाचिदपि व्यवच्छेदासम्भवात् भव्यानधिकृत्यानादिसपर्यवसानः तेषां मोक्षं प्रतिस्थितानामवश्यमुदयव्यवच्छेदसम्भवात् । अध्रुवाणामध्रुवोदयानां प्रकृतीनामुक्तव्यतिरिक्तानां विंशोत्तरशतसङ्ख्यानामुदयसादिपर्यवसानः अध्रुवोदयतः परावृत्त्य २ तासामुदयभावात् न केवलमध्रुवोदयानामुदयः सादिसपर्यवसानः किन्तु मिथ्यात्वस्य च । तथाहि-सम्यक्त्वात्प्रतिपतितमधिकृत्य मिथ्यात्वस्योदयः । सादिः पुनरपि सम्यक्त्वकल्पाद्व्यवच्छेदादध्रुवः । तदेव मिथ्यात्वस्योदयस्त्रिविध आवेदितस्तद्यथा-अनाद्यनन्तानादिसपर्यवसान । एतौ च द्वावपि भङ्गौ ध्रुवोदयत्वात्तद्ग्रहणेन गृहीतौ तृतीयस्तु भेदः सादिपर्यवसानलक्षणस्तदयमिच्छसे इत्यनेनावयवेन साक्षादुक्त इति

पयमिठिइमाइया भेया, पुव्वुत्ता इहावि विन्नेया ।
उदीरणउदयाणं, जह नाणत्तं तयं वोच्छं ॥

यथा-किल पूर्वं बन्धविधौ प्रकृतिस्थित्यादयो भेदा उक्तास्तद्यथा प्रकृतिबन्धः स्थितिबन्धोऽनुभागबन्धः प्रदेशबन्धश्च । तथा इहाप्युदयाधिकारे ज्ञेयास्तद्यथा प्रकृत्युदयः स्थित्युदयोऽनुभागोदयः प्रदेशोदयश्च । तत्राचार्यः स्वयमेवाग्रे सप्रपञ्चमुदीरणाकरणं वक्ष्यति उदयोदीरणयोश्च प्रायः स्वामित्वं प्रत्यविशेषः सहभावित्वात् । तथाहि-यत्रोदयस्तत्रोदीरणा यत्रोदीरणा तत्रोदयः । ततो यथा प्रकृत्यादयो भेदा उदीरणाधिकारे वक्ष्यन्ते यच्च स्वामित्वप्ररूपणादिकं तदेतत्सर्वमन्यूनानतिरिक्तमत्रापि भावनीयम् । यत्पुनर्नानात्वं तदभिधित्सुराह(उदीरणेत्यादि) उदीरणोदययोः प्रकृत्यादिभेदविषये यतो नानात्वं तद्वक्ष्ये शेषं तदुदीरणावद्द्रष्टव्यमिति भावः ।

तत्र प्रकृतिभेदविषये नानात्वं दिदर्शयिषुर्गाथाद्वितयमाह ।

चरिमोदयपुव्वाणं, अजोगिकालं उदीरणा विरहे ।
देसूणं पुव्वकोडी, मनुयाउगवेयणीयाणं ॥
तइयच्चिय पज्जत्ती, जाता निद्दाणहोइ य चउण्हं ।
उदओ आवलिअंते, तेवीसाए उ सेसाणं ॥

चरमोदयाना चरमे अयोगिकेवलिचरमसमये उदयो यासां नामप्रकृतीनां ताश्चरमोदयास्ताश्चेमा नव । तद्यथा मनुष्यगतिपञ्चेन्द्रियजातित्रसनामबादरनामपर्याप्तनामसुभगनामादेययशःकीर्तिनामतीर्थकृतां च भगवतामयोगिकेवलिनां तीर्थनाम च । एतासां नवानां प्रकृतीनामुच्चैर्गोत्रस्य च अयोगिकालस्तावत् कालः यावत् उदीरणाविरहेऽपि उदीरणाया अभावेऽप्युदय एव केवलः प्रवर्तते । तथा मनुष्यायुः सातवेदनीयमसातवेदनीयं चेत्येवरूपाणां तिसृणां प्रकृतीनां प्रमत्तसंयतगुणस्थानकात्परतः शेषेषु गुणस्थानकेषु वर्तमानानामुत्कर्षतो देशोनां पूर्वकोटीं यावत् उदीरणामन्तरेण केवल उदयो भवति । स चोत्कर्षतः इयान् कालः सयोगिकेवलिगुणस्थानके द्रष्टव्यः शेषस्य गुणस्थानकस्य सर्वस्याप्यन्तर्मुहूर्तप्रमाणत्वात् । अथ कस्मात्सातासातवेदनीयमनुष्यायुषां प्रमत्तसंयतगुणस्थानकात्परतः उदीरणा न प्रवर्तते । उच्यते अमीषां ह्युदीरणा सङ्क्लिष्टाध्यवसायवशात् प्रवर्तते तथा स्वाभाव्यात् विशुद्धविशुद्धतराध्यवसायवर्तिनश्चाप्रमत्तसंयतादयस्ततस्तेषां वेदनीयद्विकमनुष्यायुषोरुदीरणाया अभावः । तथा शरीरपर्याप्त्या पर्याप्तानां सतां शरीरपर्याप्तिं पर्याप्त्यनन्तरसमयादारभ्य यावत्तृतीया पर्याप्तिरिन्द्रियपर्याप्तिः परिसमाप्तिमुपैति तावत्पञ्चानामपि निद्राणां तथा स्वाभाव्यात् नोदीरणा प्रवर्तते किन्तूदय एव केवलस्तथा शेषाणां ज्ञानावरणपञ्चकदर्शनावरणचतुष्टयान्तरायपञ्चकसंज्वलनलोभवेदत्रयसम्यक्त्वमिथ्यात्वनारकायुष्तिर्यगायुर्देवायूरूपाणां त्रयोविंशतिप्रकृतीनामावलिकाः । ततोऽन्तर्मुहूर्ता-थामावलिकायामुदय एव केवलोदीरणा । तथाहि-पञ्चानां ज्ञानावरणप्रकृतीनां चक्षुरचक्षुरवधिदर्शनावरणरूपस्य दर्शनावरणचतुष्टयस्य क्षीणकषायस्य पर्याप्तावलिकायां वर्तमानस्यावलिकायां प्रविष्टत्वान्नोदीरणेत्युदय एव केवलः । एषामेव संज्वलनलोभस्य सूक्ष्मसंपरायपर्यन्तावलिकायां मिथ्यात्वस्त्रीपुनपुंसकवेदानामन्तरकरणे कृते प्रथमस्थित्यामावलिका शेषाणां नारकायुस्तिर्यगायुर्देवायुषां स्वस्वभवपर्यन्तावलिकायामुदय एव केवलो नोदीरणा । आवलिकान्तर्गतस्य कर्म्मणः सर्वस्याप्युदीरणा तदन्वयात् इह मनुष्यायुष उदीरणाविरहेऽप्युदयकालः प्रागेव देशोनपूर्वकोटीप्रमाणमुक्तस्ततो मनुष्यायुषो मिथ्यादृष्ट्यादीनां पर्यन्तावलिकायामुदीरणाविरहेऽपि य उदयकाल आवलिकामात्रः स तदन्तर्गत एव वेदितव्य इति पृथग्नोक्तः । पूर्वकोट्यभिधाने ह्यावलिकामात्रं तदेकदेशतया भूतसामर्थ्यात् उक्तमवशेषं शेषाणां तु प्रकृतीनां यावदुदयस्तावदुदीरणा यावदुदीरणा तावदुदय इति तदेव दर्शितः प्रकृत्युदये उदीरणातो विशेषः । सम्प्रत्यत्रैव साद्यादिप्ररूपणा कर्तव्या सा च द्विधा मूलप्रकृतिविषया उत्तरप्रकृतिविषया च तां द्विविधामपि चिकीर्षुराह ।

मोहे चउहा तिविहे, वोससत्तण्हमूलपगईण ।
मिच्छत्तउदयजहा, अधुवधुवाणं दुविहतिविहो ॥

मोहो मोहनीयस्य कर्म्मण उदयश्चतुर्धा चतुःप्रकारस्तद्यथा सादिरनादिरध्रुवो ध्रुवश्च । तथाहि-उपशान्तगुणस्थानकात्प्रतिपातिनो भवेत् सादिस्ततस्तत्स्थानमप्राप्तस्यानादिः । ध्रुवाध्रुवावभव्यभव्यापेक्षया, अत्र शेषाणां सप्तानां मूलप्रकृतीनामुदयस्त्रिविधस्त्रिप्रकारस्तद्यथाऽनादिर्ध्रुवोऽध्रुवश्च । तथाहि-ज्ञानावरणदर्शनावरणान्तरायाणामुदयः क्षीणमोहान्तसमयं यावत् वेदनीयनामगोत्रायुषां सयोगान्तसमयम् । न च क्षीणो भूयः प्रादुर्भवति ततः एतासां सप्तानामप्युदयोऽनादिर्भव्यानामध्रुवः क्षपकश्रेण्यामाह । यथोक्तकाले तथा उदयव्यवच्छेदभावादभव्यानां ध्रुवः कदाचिदपि व्यवच्छेदासम्भवात् । कृता मूलप्रकृतिषु साद्यादिप्ररूपणा । सांप्रतमुत्तरप्रकृतिभूतां करोति ( मिच्छत्तुदउ इत्यादि ) मिथ्यात्वस्योदयश्चतुर्धा चतुष्प्रकारस्तद्यथा सादिरनादिर्ध्रुवोऽध्रुवश्च । तत्र सम्यक्त्वात्प्रतिपतितस्य भवेत् सादिस्ततस्तत्स्थानमप्राप्तस्य पुनरनादिर्ध्रुवाध्रुवावभव्यभव्यापेक्षया । तथा अध्रुवाणामध्रुवोदयानां प्रकृतीनामुदयो द्विविधो द्विप्रकारस्तद्यथा । सादिरध्रुवश्च । सा च साद्यध्रुवता अध्रुवोदयवद्भावनीया । तथा ध्रुवाणां ध्रुवोदयानां प्रकृतीनां प्रागुक्तस्वरूपाणां मिथ्यात्ववर्ज्यशेषसप्तचत्वारिंशत्प्रकृतीनामुदयस्त्रिप्रकारस्तद्यथा अनादिर्ध्रुवोऽध्रुवश्च तथाहि घातिध्रुवोदयानां प्रकृतीनां क्षीणमोहगुणस्थानकचरमसमयं यावदुदयानामध्रुवोदयानामयोग्यन समयस्ततस्तत्स्थानमप्राप्तानां सर्वेषामपि संसारजीवानामुदयो ध्रुवोदयो नाम नादिध्रुवाध्रुवौ प्राग्वत् । उक्तः प्रकृत्युदयः

( २ ) सम्प्रति स्थित्युदयमाह-

उदओ ठिइक्खएणं, संपत्तीए सभावतो पढमो ।

मति तम्मिन्नावलीओ, पओगउदीरणा उदओ ॥

इह उदयो द्विधा। तद्यथा स्थितिक्षयेण प्रयोगेण वा। तत्र स्थितिरवाध्यकालरूपा तस्याः क्षयेण इत्यर्थेऽबाकालसमवनावरूपाणामुदयहेतूनामप्राप्तौ सत्यां यः स्वभावत उदयः स स्थितिक्षयेणोदय उच्यते। यो पुनस्तस्मिन्नुदये प्रवर्तमाने सति प्रयोगत उदीरणाकरणरूपेण प्रयोगेण दलिकमाकृष्यानुभवति स द्वितीय उदीरणोदयाभिधान उच्यते। स च उदयसामान्यतो द्विधा। तद्यथा– जघन्य उत्कृष्टश्च। तयोत्कृष्टस्थित्युदीरणाउत्कृष्टस्थित्युदयस्थित्यात्यधिकस्तथा चाह—

उदीरणाजोग्गाणं, अब्भहिडिइए य जोग्गो उ ।

हस्सुदएगट्ठिइणं, निहाणा सगिलाणए ॥

उदीरणायोग्यानामुत्कृष्टस्थितीनां प्रकृतीनामुदीरणायोग्येभ्यः स्थितिभ्यः उदययोग्याः स्थितय एकया उदययोग्यया स्थित्या अभ्यधिका वेदितव्याः। तथा युत्कृष्टायां स्थितौ वध्यमानायामवधिकालेऽपि यावद्दलिकं प्ररूपयति तथा बन्धावलिकायामतीतायामनन्तरस्थितौ विपाकोदयेन वर्तमान उदयावलिकान्त उपरिवर्तिनीः सर्वा अपि स्थितीरुदीरयति उदीर्य च वेदयते ततो बन्धावलिकाहीनयोः शेषयोः सर्वस्या अपि स्थितेरुदयोदीरणे तुल्ये वेद्यमानायां च स्थितौ उदीरणा न प्रवर्तते किन्तूदय एव केवलस्ततो वेद्यमानायां समयमात्रस्थितिभ्योऽधिका उत्कृष्टस्थित्युदीरणा। तत उत्कृष्टस्थित्युदयावन्धावलिकोदयावलिकाहीनाश्चानुत्कृष्टस्थित्युदय उदयोत्कृष्टप्रधानप्रकृती वेदितव्या। शेषाणां तु यथायोगं तत्राप्युक्तनीत्या उदयस्थित्याऽभ्यधिकोऽवगन्तव्य। सम्प्रति जघन्यस्थित्युदये विशेषमाह। (हस्सुदएत्यादि) प्रागुक्तानां मनुष्यगतिपञ्चेन्द्रियजातित्रसबादरपर्याप्तसुभगादेययशःकीर्तितीर्थकरनामोच्चैर्गोत्रायुश्चतुष्टयसातासातवेदनीयनिद्रापञ्चकज्ञानावरणपञ्चकान्तरायपञ्चकदर्शनावरणचतुष्टयसञ्ज्वलनलोभवेदत्रयसम्यक्त्वमिथ्यात्वरूपाणामेकचत्वारिंशत्संख्याकानां प्रकृतीनां निद्रापञ्चकोनानां सतीनां षट्त्रिंशत्संख्यानां ह्रस्वो जघन्यः स्थित्युदय एकस्थितिरवसेया। निद्रायां पुनरेकैकस्थितीनां समये वेदितव्य। किमुक्तं भवति। उक्तरूपाणां षट्त्रिंशत्प्रकृतीनां जघन्य स्थित्युदय समयमात्रैकस्थित्युदयप्रमाणो वेदितव्य इति। समयमात्रा चैका स्थितिश्चरमा स्थितिरवसेया। निद्रापञ्चकस्य इष्टुदीरणाया अभावेऽपि शरीरपर्याप्त्यनन्तरं विपाकोदयकाले अपवर्तनाऽपि प्रवर्तते। तत एका स्थितिर्न प्राप्यते इति। तद्वर्जतशेषं तु सर्वमपि साद्यादिप्ररूपणादिकं स्थित्युदीरणायामेव निरवशेषमवगन्तव्यम्। उक्तः स्थित्युदय ॥

(३) सम्प्रत्यनुभागोदयमाह ।

अणुभागुदओ वि उदीरणा–ए तुल्लो जहण्णए नवरं ।

आवलिगंतेन सम्म–त्तं वेयखीणलोभाणं ॥

अनुभागोदयोऽप्युदीरणायास्तुल्यो यथानुभागोदीरणा सप्रपञ्चमत्र वक्ष्यते तथाऽनुभागोदयोऽपि वक्तव्य इति भाव। किं सर्वथा साम्यमिति चेदत आह। नवरमयं विशेषोऽजघन्यमनुभागोदय सम्यक्त्ववेदानां क्षीणान्तानां क्षीणमोहगुणस्थानकपर्यवसानानां ज्ञानावरणपञ्चकान्तरायदर्शनावरणचतुष्टयरूपाणां चतुर्दशानां प्रकृतीनां सञ्ज्वलनलोभस्य च आवलिकान्ते जानीयात्। इयमत्र भावना। ज्ञानावरणपञ्चकान्तरायपञ्चकदर्शनावरणचतुष्टयवेदत्रयसंज्वलनलोभसम्यक्त्वरूपाणामेकोनविंशतिप्रकृतीनां स्वस्वपर्यवसानसमये उदीरणाया व्यवच्छेदे सति परत आवलिकां गत्वा आवलिकाचरमसमये जघन्यानुभागोदयस्य प्राप्यमाणत्वादिति। नेदयमुक्तोऽनुभागोदयः। पं० सं०।

(४) सम्प्रति प्रदेशोदयाभिधानावसरस्तत्र चेमौ अर्थाधिकारौ तद्यथा साद्यनादिप्ररूपणास्वामित्वं। साद्यनादिप्ररूपणा द्विविधा। मूलप्रकृतिविषया उत्तरप्रकृतिविषया च। तत्र मूलप्रकृतिविषय साद्यनादिप्ररूपणार्थमाह।

अजहण्णाणुक्कोसा, चउव्विहा छिण्ह चउव्विहा मोहे ।

आउस्स साइअधुवा, सेसविगप्पा य सव्वेसिं । ३९३ ।

मोहनीयायुर्वर्जानां षण्णां कर्मणामजघन्य प्रदेशोदय चतुर्विधस्तद्यथा सादिरनादिर्ध्रुवोऽध्रुवश्च। तथाहि कश्चित् क्षपितकर्मांशो देवलोके देवो जातः स च तत्र संक्लिष्टो भूत्वा उत्कृष्टां स्थितिं बध्नन् उत्कृष्टप्रदेशाग्रमुद्वर्त्तयति ततो बन्धावसाने कालं कृत्वा एकेन्द्रियेषु उत्पन्नस्तस्य प्रथमसमये प्रागुक्तानां षण्णां कर्मणां जघन्यप्रदेशोदयः। स चैकसामायिक इति कृत्वा सादिरनादिर्ध्रुवश्च। ततोऽन्यः सर्वोऽप्यजघन्य सोऽपि तस्य द्वितीयसमये भवन् सादिः तत्स्थानमप्राप्तस्य पुनरनादिर्ध्रुवाध्रुवौ पूर्ववत्। तथा तेषामेव षण्णां कर्मणामनुत्कृष्टः प्रदेशोदयस्त्रिधा त्रिप्रकारस्तद्यथा अनादिर्ध्रुवोऽध्रुवश्च। तथाहि अमीषां षण्णां कर्मणामनुत्कृष्टः प्रदेशोदय प्रागुक्तस्वरूपस्य गुणितकर्मांशस्य स्वस्वोदयान्तगुणश्रेणिशिरवर्तमानस्य प्राप्यते सचैकं सामायिक इति कृत्वा सादिरध्रुवश्च। ततोऽन्यः सर्वोऽप्यनुत्कृष्ट स चानादि सदैव भावात्। ध्रुवाध्रुवौ पूर्ववत्। तथा मोहे मोहनीये अजघन्योत्कृष्टश्च प्रदेशोदयश्चतुर्विधस्तद्यथा सादिरनादिर्ध्रुवोऽध्रुवश्च। तथाहि- क्षपितकर्मांशस्यान्तरकरणे कृते अन्तरकरणे पर्यन्तभाविगोपुच्छाकारसंस्थितावलिकामात्रदलिकान्तसमये मोहनीयस्य जघन्यप्रदेशोदय। स चैकसामायिक इति कृत्वा सादिरध्रुवश्च। ततोऽन्यः सर्वोऽप्यजघन्य सोऽपि ततो द्वितीयसमये भवन् सादिः तत्स्थानमप्राप्तस्य पुनरनादि ध्रुवाध्रुवौ पूर्ववत्। तथा गुणितकर्मांशस्य सूक्ष्मसंपरायगुणस्थानकान्तसमये उत्कृष्टप्रदेशोदय। स चैकसामायिक इति कृत्वा सादिरध्रुवश्च ततोऽन्यः सर्वोऽप्यनुत्कृष्टः स चोपशमश्रेणितः प्रतिपतितो भवन् सादिस्तत्स्थानमप्राप्तस्य पुनरनादिर्ध्रुवाध्रुवौ पूर्ववत्। आयुषि चत्वारोऽपि भेदा उत्कृष्टा जघन्यरूपा साद्यध्रुवा। चतुर्णामपि भेदानां यथायोग नियतकालं भावात्। तथा सर्वेषां कर्मणां प्रागुक्तानां षण्णां मोहनीयस्य उक्तशेषौ विकल्पौ उत्कृष्टजघन्यरूपौ साद्यध्रुवौ तौ च प्रागेव भाविनौ कृता मूलप्रकृतीनां साद्यनादिप्ररूपणा।

संप्रत्युत्तरप्रकृतीनां चिकीर्षुराह।

अजहण्णाणुक्कोसो, सगयाला एगचउतिहा चउहा ।

मिच्छत्ते सेसाणं, दुविहा सव्वे य सेसाणं । ३९४ ।

तैजससप्तकवर्णादिविंशतिस्थिरास्थिरनिर्माणागुरुलघुशुभाशुभज्ञानावरणपञ्चकान्तरायपञ्चकदर्शनावरणचतुष्टयरूपाणां सप्तचत्वारिंशत्प्रकृतीनामजघन्यप्रदेशोदयश्चतुर्विधस्तद्यथा सादिरनादिर्ध्रुवोऽध्रुवश्च। तथाहि–क्षपितकर्मांशो देव उत्कृष्टे सङ्क्लेशे वर्तमान उत्कृष्टां स्थितिं बध्नन् उत्कृष्टप्रदेशमुद्वर्तयति। ततो बन्धावसाने कालं कृत्वा एकेन्द्रियेषूत्पद्यते तस्य प्रथमसमये प्रागुक्ताना सप्तचत्वारिंशत्प्रकृतीना जघन्यप्रदेशोदयः। नवरमाधिकृत्य ज्ञानावरणावधिदर्शनावरणयोर्बन्धावलिकाचरमसमये देवस्य जघन्यप्रदेशोदये वेदितव्यः। सचैकसामायिक इति कृत्वा सादिरध्रुवश्च ततोऽन्यः सर्वोऽप्यजघन्य। स च द्वितीयसमये भवन् सादि।

तत्स्थानमप्राप्तस्य पुनरनादिः । ध्रुवाध्रुवौ पूर्ववत् । तथा अमूपामेव सप्तचत्वारिंशत् प्रकृतीनामुत्कृष्टः प्रदेशोदय । स चैकसामायिक इति कृत्वा सादिरध्रुवश्च ततोऽन्यः सर्वोऽप्यनुत्कृष्टः स चानादि सदैव भावात् ध्रुवाध्रुवौ पूर्ववत् । तथा मिथ्यात्वे मिथ्यात्वस्य जघन्योऽनुत्कृष्टश्च प्रदेशोदयश्चतुर्विध तद्यथा सादिरनादिर्ध्रुवोऽध्रुवश्च । तथाहि-क्षपितकर्मांशस्य प्रथमसम्यक्त्वमुत्पादयतः कृतान्तरकरणस्य औपशमिकस्य सम्यक्त्वात्प्रच्युतस्य मिथ्यात्व गतस्यान्तरकरणपर्यन्तमाविगोपुच्छाकारसंस्थितावलिकामात्रदलिकान्त समये वर्तमानस्य जघन्यतः प्रदेशोदयः स चैकसामायिक इति कृत्वा सादिरध्रुवश्च ततोन्यः सर्वोप्यजघन्य सोपि द्वितीयसमये भवन् सादिः वेदकसम्यक्त्वाद्वा प्रतिपतितः सादिः तत्स्थानमप्राप्तस्य पुनरनादिः ध्रुवाध्रुवौ पूर्ववत् । तथा कश्चिद्गुणितकर्मांशो यदा देशविरतिगुणश्रेण्या वर्तमानः सर्वविरतिं प्रतिपद्यते ततस्तन्निमित्ता गुणश्रेणिं करोतीति कृत्वा च तावद्गतो यावत् द्वयोर्गुणश्रेण्योर्मस्तके तदानीं च कश्चिन्मिथ्यात्व गच्छति । ततस्तस्य मिथ्यात्वस्योत्कृष्ट प्रदेशोदयः सचैकसामायिक इति कृत्वासादिरध्रुवश्च ततोऽन्यः सर्वोऽप्यनुत्कृष्टः सोऽपि ततो द्वितीयसमये भवन् सादिः वेदकसम्यक्त्वाद्वा प्रतिपतति सादिः तत्स्थानमप्राप्तस्य पुनरनादिः ध्रुवाध्रुवौ पूर्ववत् । एतासा च सप्तचत्वारिंशत्प्रकृतीना मिथ्यात्वस्य च उक्तशेषौ विकल्पौ जघन्योत्कृष्टरूपौ द्विधा द्विप्रकारौ तद्यथा सादी अध्रुवौ तौ च भावितावेव शेषाणामध्रुवोदयानां प्रकृतीनां दशोत्तरशतसंख्याना सर्वेऽपि विकल्पा जघन्याजघन्योत्कृष्टानुत्कृष्टरूपा द्विधा ज्ञातव्या तद्यथा सादयोऽध्रुवाश्च सा च साद्यध्रुवता च अध्रुवोदयत्वादवसेया कृता साद्यनादिप्ररूपणा ।

सम्प्रति स्वामित्वमभिधानीय तच्च द्विधा उत्कृष्टप्रदेशोदयस्वामित्व जघन्यप्रदेशोदयस्वामित्व च । तत्रोत्कृष्टप्रदेशोदयस्वामित्वप्रतिपादनार्थ सम्भवतीति गुणश्रेणिः सर्वा अपि प्ररूपयति ॥

सम्मत्तुप्पासावि य, विरए संजोयणाविणासे य ।
दंसणमोहक्खवगे, कसायओ सामगुवसंते ॥ ३०५ ॥
खवगे य खीणमोहे, जिणे य दुविहे असंखगुणसेढी ।
तदओ तव्विवरीओ, कालो संखेज्जगुणसेढी ॥ ३०६ ॥

इह एकादशगुणश्रेणय तद्यथा सम्यक्त्वोत्पादे प्रथमा, द्वितीया श्रावके देशविरततृतीया विरते सर्वविरते,प्रमत्ते चतुर्थी,संयोजनानामनन्तानुबन्धिनां विसंयोजने पञ्चमी, दर्शनमोहनीयतृतीयक्षपणे षष्ठी, चारित्रमोहनीयोपशमके सप्तमी, उपशान्तमोहनीये अष्टमी, मोहनीयक्षपके नवमी, क्षीणमोहे दशमी, सयोगिकेवलिनि अयोगिकेवलिनित्वेकादशीति ( असंखगुणसेढीउदयओत्ति ) सर्वस्तोकसम्यक्त्वोत्पादगुणश्रेण्यां दलिकं ततोऽपि देशविरतिगुणश्रेण्यामसंख्येयगुण ततोऽपि सर्वविरतिगुणश्रेण्यामसंख्येयगुणमेव तावद्वाच्य यावदयोगिकेवलि गुणश्रेण्यां दलिकमसंख्येयगुण तस्मात् प्रदेशोदयमप्याश्रित एता गुणश्रेणयो यथाक्रममसंख्येयगुणा वक्तव्याः ( तव्विवरीओत्ति ) सर्वास्वपि एतासु गुणश्रेणिषु कालस्तद्विपरीत उदयविपरीत संख्येयगुणश्रेण्या तद्यथा अयोगिकेवलिगुणश्रेणिकालसंख्येयगुण एव तावद्वाच्य यावत् सम्यक्त्वोत्पादगुणश्रेणिकाल संख्येय । गुणस्थापना एषा सम्यक्त्वोत्पादगुणश्रेणि । पुनर्यथोत्तरमसंख्येयगुणदलिकाकालतश्च संख्येयगुणा उपरिष्टाच्च पृथक्त्वेन यथोत्तर विशाला विशालतरा । अथोच्यते कथ दलिक यथोत्तरमसंख्येयगुण प्राप्यते उच्यते । सम्यक्त्वमुत्पादयन् मिथ्यादृष्टिर्भवति ततस्तस्य स्तोक गुणश्रेणिदलिक सम्यक्त्वोत्पत्तौ सत्या पुनः प्रागुक्तगुणश्रेण्यपेक्षया संख्येयगुणदलिका गुणश्रेणिः विशुद्धत्वात् ततोऽपि सर्वविरतस्य गुणश्रेणिरसंख्येयगुणदलिका तस्यातिविशुद्धत्वात् । एवमुत्तरोत्तरविशुद्धप्रकर्षवशात् यथोक्तमसंख्येयगुणदलिका भावनीया ॥

सम्प्रति का गुणश्रेणिः कस्यां गतौ प्राप्यते इत्येतन्निरूपणार्थमाह ।

तिन्निवि पढममिल्लिओ, मिच्छत्तगए वि होज्ज अन्नभवे ॥
पगयं तु गुणियकम्मे, गुणसेढी सीसगाणुदये ॥ ३०७ ॥

आद्यास्तिस्रो गुणश्रेणय सम्यक्त्वोत्पाददेशविरतिसर्वविरतिनिमित्ता झटित्येव मिथ्यात्व गतस्य अप्रशस्तेन चरममरणे झटित्येव मृतस्य अन्यभवे नारकादिरूपपराभवे किञ्चित्कालमुदयमाश्रित्य प्राप्यन्ते शेषास्तु गुणश्रेणयः परभवनारकादिरूपे न प्राप्यन्ते नारकादिभवो हि अप्रशस्ते मरणे न प्राप्यते न च शेषासु गुणश्रेणिषु सतीष्वप्रशस्तमरणसम्भवः किन्तु क्षीणास्वेव । तथा चोक्तम् । "झत्तिगुणाओ पडिए, मिच्छत्तगयम्मि आइमा तिन्नि । लब्भति न सेसा साओ,ज हीणासु असुभमरणं" तथा प्रकृतमत्र उत्कृष्टप्रदेशोदयस्वामित्वे गुणितकर्मांशेन गुणश्रेणिशिरसामुदये वर्तमानेन ।

आवरणविग्घमोहाणं, जिणोदइयाण वा वि नियगंते ।
लहुखवणाए ओहीण-णो हि लद्धिस्स उक्कस्स ॥ ३०८ ॥

आवरण पञ्चप्रकार ज्ञानावरण चतुःप्रकार दर्शनावरण ( विग्घत्ति ) पञ्चप्रकारमन्तरायमेतासां चतुर्दशप्रकृतीनां लघुक्षपणायां शीघ्रक्षपणायामर्थमभ्युद्यतस्य । द्विविधा हि क्षपणा लघुक्षपणा चिरक्षपणा च । तत्र योऽष्टवार्षिक एव सप्तमासाभ्यधिक संयम प्रतिपन्नस्तत्प्रतिपत्त्यनन्तर चान्तर्मुहूर्तेन क्षपकश्रेणिमारभते तस्य या क्षपणा सा लघुक्षपणा । यत्तु प्रभूतेन कालेन संयम प्रतिपद्यते संयमप्रतिपत्तिरप्यूर्ध्वं प्रभूतेन कालेन क्षपकगुणश्रेणिमारभते तस्य या क्षपणा सा चिरक्षपणा तया च प्रभूताः पुद्गला परिसटन्ति स्तोका एव च शेषीभवन्ति ततो न तया उत्कृष्टः प्रदेशोदयो लभ्यते । उक्त लघुक्षपणया अभ्युत्थितस्येति तस्या गुणितकर्मांशस्य क्षीणमोहगुणस्थानक चरमसमये गुणश्रेणिशिरसि वर्तमानस्योत्कृष्ट प्रदेशोदयो भवति नवरम् । ( ओहीणणोहिलद्धिस्सति ) अवध्यो ऽवधिज्ञानमुत्पादयतो बहवः पुद्गला परिक्षीयन्ते ततो नावधियुक्तस्योत्कृष्टप्रदेशोदयलब्ध्याभ्यनवधिलब्धियुक्तस्येत्युक्तम् । तथा मोहानां मोहनीयाना प्रकृतीनां सम्यक्त्वसंज्वलनचतुष्टयवेदनयाख्यातमष्टानां गुणितकर्मांशस्य क्षपकस्य स्वस्वोदयचरमसमये उत्कृष्ट प्रदेशोदय । तथा जिने केवलिनि उदयो यासां ता जिनोदयकास्तासां मध्ये औदारिकसप्तकतैजससप्तकसंस्थानषट्कप्रथमसंहननवर्णादिविंशतिपराघातोपघातादिगुरुलघुविहायोगतिद्विकपर्याप्तप्रत्येकस्थिरास्थिरशुभाशुभनिर्माणरूपाणां द्विपञ्चाशत्प्रकृतीनां गुणितकर्मांशस्यायोगिकेवलिगुणस्थानकचरमसमये उत्कृष्टः प्रदेशोदयः सुस्वरदुःस्वरनिरोधकाले उच्छ्वासनाम्न पुनरुच्छ्वासनिरोधकाले तथा अन्यतरवेदनीयमनुष्यायुर्मनुष्यगतिपञ्चेन्द्रियजातित्रसबादरपर्याप्तसुभगादेययशःकीर्तितीर्थकरोच्चैर्गोत्राणां द्वादशप्रकृतीनां गुणितकर्मांशस्यायोगिकेवलिनश्चरमसमये उत्कृष्ट प्रदेशोदयः ।

उवसंतपढमगुणसेढीए, निद्दादुगस्स तस्सेव ।
यावइ सीभगमुवयंति, जाव देवस्स सुरनवगं ॥ ३०९ ॥

उपशान्तकषायस्यात्मीयप्रथमगुणश्रेणीशिरसि वर्तमानस्य सुरनवकस्य वैक्रियसप्तकदेवद्विकरूपस्योत्कृष्ट प्रदेशोदय । तथास्यैवोपशान्तकषायस्यात्मीयप्रथमगुणश्रेणीशीर्षकोदयानन्तरसमयप्राप्यतीति तस्मिन् पाश्चात्यसमये जाते देवस्य तत स्वप्रथमगु-

णश्रेणीशिरसि वर्तमानस्य वैक्रियसप्तकदेवद्धिकरूपस्योत्कृष्टः प्रदेशोदयः ।

मिच्छत्ती मीसाणं—ताणुबंधअसमत्थीए गिट्टीए ।
तिरिउदए गंताण य, बिइया तइया य गुणसेढी ॥ ४०० ॥

इह केनचित् देशविरतेन सता देशविरतिप्रत्यया गुणश्रेणिः कृता ततः संयमं प्रतिपन्नस्ततः संयमप्रत्यया गुणश्रेणिः कृता ततो यस्मिन्काले द्वयोरपि गुणश्रेण्योः शिरसि एकत्र मिलतः तस्मिन् काले वर्तमानो गुणितकर्मांशः कश्चिन्मिथ्यात्वं प्रतिपद्यते तस्य तदा मिथ्यात्वानन्तानुबन्धिनामुत्कृष्टः प्रदेशोदयः । यदि पुनः सम्यग्मिथ्यात्वं प्रतिपन्नस्तर्हि ३ सम्यङ्मिथ्यात्वस्य स्त्यानर्द्धित्रिकस्य पुनर्मिथ्यात्वं गतस्यागतस्य वा उत्कृष्टः प्रदेशोदयो वाच्यः । यदि स्त्यानर्द्धित्रिकस्य प्रमत्तस्य संयतेऽप्युदयः प्राप्यते तथा तिर्यक्षु इव उदय एकान्तेन यासां तास्तिर्यगुदयैकान्ता एकद्वित्रिचतुरिन्द्रियस्थावरसूक्ष्मसाधारणनामानस्तयोः पर्याप्तनाम्नश्च तिर्यग्भवप्राप्तौ सत्यां देशविरतिसर्वविरतिगुणश्रेणिशिरसोरेकत्र योगे वर्तमानस्य मिथ्यादृष्टेः स्वस्वोदये वर्तमानस्योत्कृष्टः प्रदेशोदयः ।

अंतरकरणे करणं, होहिंत्ति जयदेवस्स तं मुहुत्तं तो ।
अट्ठएहकसायाणं, छएहं पि य नो कसायाणं ॥ ४०१ ॥

इह कश्चिदुपशमश्रेणिं प्रतिपन्नोऽनन्तरसमये अन्तरकरणं भविष्यतीति तस्मिन् पाश्चात्यसमये कालं कृत्वा देवो जातः तस्य देवस्य उत्पत्त्यन्तर्मुहूर्त्तात् परतो गुणश्रेणिशिरसोरेकत्र योगे वर्तमानस्य मिथ्यादृष्टेः स्वस्वोदये वर्तमानस्योत्कृष्टः प्रदेशोदयः । इह कश्चित् उपशमश्रेणिं प्रतिपन्नोऽनन्तरसमये अन्तरकरणं भविष्यतीति एतस्मिन् पाश्चात्यसमये कालं कृत्वा देवो जातः तस्य देवस्य उत्पत्त्यनन्तरमन्तर्मुहूर्तात्परतो गुणश्रेणिशिरसि वर्तमानस्याप्रत्याख्यानप्रत्याख्यानावरणकषायाष्टके वेदत्रिकवर्जानां षण्णां नोकषायाणामुत्कृष्टः प्रदेशोदयः ।

हस्सठिइ बंधित्ता, अद्धा जोगाइठिइनिसगेणं ।
उक्कस्सपएपढमो—दयम्मि सुरनारगाऊणं ॥ ४०२ ॥

अद्धा बन्धकालः योगः मनोवाक्कायनिमित्तं वीर्यम् आदिस्थितिः प्रथमा स्थितिः तस्या दलिकनिक्षेपः आदिस्थितिनिर्दलिकनिक्षेपः । एतेषामुत्कृष्टपदे सति किमुक्तं भवति उत्कृष्टेन बन्धेन कालेन उत्कृष्टे योगे वर्तमानो ह्रस्वां जघन्यां स्थितिं बध्वा प्रथमस्थितौ च दलिके निक्षेपस्तमुत्कृष्टं कृत्वा मृतः सन् देवो नारको जातः तस्य प्रथमोदये प्रथमस्थित्युदये वर्तमानस्य देवायुषो नारकस्य नारकायुष उत्कृष्टः प्रदेशोदयः । ( अद्धाजोगुक्ति ) भोगभूमिषु तीर्यक्षु मनुष्येषु वा विषये कश्चित् तीर्यगायुः कश्चित् मनुष्यायुरुत्कृष्टं पल्योपमस्थितिकं बध्वा लघु शीघ्रं च मृत्वा त्रिपल्योपमायुष्के तीर्यक्षु परो मनुष्येषु मध्ये समुत्पन्नस्तत्र च सर्वाल्पजीवितमन्तर्मुहूर्त्तप्रमाणं वर्जयित्वा अन्तर्मुहूर्तमेकमपवृत्त्येत्यर्थः शेषमशेषमपि स्वस्यापवर्त्तनाकरणेनापवर्त्तयतस्ततोऽपवर्तमानानन्तरप्रथमसमयस्तयोस्तिर्यङ्मनुष्ययोर्यथासंख्यं तिर्यगपि मनुष्यायुषोरुत्कृष्टः प्रदेशोदयः ।

दूभगणाएज्जजसगई. दुग आणुपुव्वितियसगनीयाणं ।
दंसणमोहे खवणे, देसविरइए य गुणसेढी ॥ ४०३ ॥

इहाविरतसम्यग्दृष्टिर्दर्शनमोहनीयत्रितयं क्षपयितुमभ्युद्यतो गुणश्रेणिं करोति । ततः स एव देशविरतिप्रतिपन्नस्ततः सर्वविरतिनिमित्तां गुणश्रेणीं करोति । तत्करणपरिसमाप्तौ सत्यां संक्लिष्टो भूत्वा पुनरप्यविरतो जातः तस्य तिसृणामपि गुणश्रेणीनां शिरसि वर्तमानस्य तस्मिन्नेव भवे स्थितस्य दुर्भगानादेयायशःकीर्तिनीचैर्गोत्राणामुत्कृष्टप्रदेशोदयः । अथ तिर्यक्षु उत्पन्नस्तर्हि तस्य पूर्वोक्तानां तिर्यग्द्विकसहितानामुत्कृष्टप्रदेशोदयः मनुष्यो जातस्तर्हि मनुष्यानुपूर्वीसहितानामिति ।

संघयणपंचगस्स य, बियादीतिन्नि होंति गुणसेढी ।
आहारगउज्जो वा—णुत्तरतणु अप्पमत्तस्स ॥ ४०४ ॥

इह कश्चिन्मनुष्यो देशविरतिप्रतिपन्नस्ततः सदेशविरतिप्रत्ययां गुणश्रेणिं करोति । यतः स एव विशुद्धिप्रकर्षवशतः सर्वविरतिप्रतिपन्नस्ततः सर्वविरतिप्रत्ययां गुणश्रेणिं करोति । ततः स एव तथाविधशुद्ध्यवशतोऽनन्तानुबन्धिनां विसंयोजनायोद्यतस्ततस्तन्निमित्तां गुणश्रेणिं करोति । एवं द्वितीयादयस्तिस्रो गुणश्रेणयो भवन्ति ताश्च कृत्वा तासां शिरसि सुवर्तमानस्य प्रथमसंहननवर्जानां पञ्चानां संहननानां यथायोग्यमुदयप्राप्तानामुत्कृष्टप्रदेशोदयः तथा उत्तरतनौ शरीरे आहारके वर्त्तमानस्याप्रमत्तभावं गतस्य प्रथमगुणश्रेणिशिरसि वर्तमानस्याहारकसप्तकोद्योतयोरुत्कृष्टः प्रदेशोदयः ।

बेइंदियमावणणो, कम्मं काऊण तस्सिमं खिप्पं ।
आयावस्स उ तव्वे, पढमसमयम्मि य वट्टंतो ॥ ४०५ ॥

गुणितकर्मांशः पञ्चेन्द्रियसम्यग्दृष्टिर्जातः सम्यक्त्वनिमित्तां गुणश्रेणिं कृतवान् । ततस्तस्यां गुणश्रेणितः प्रतिपतितो मिथ्यात्वं गत्वा द्वीन्द्रियमध्ये समुत्पन्नः तत्र च द्वीन्द्रियप्रायोग्यां स्थितिं मुक्त्वा शेषं सर्वमप्यपवर्त्तयति । ततोऽपि मृत्वा एकेन्द्रियो जातः । तत्र एकेन्द्रियसमां स्थितिं करोति शीघ्रमेव च शरीरपर्याप्तस्तस्य तद्वेदिन आतपवेदिनः खरबादरपृथिवीकायिकस्य शरीरपर्याप्त्यनन्तरप्रथमसमये आतपनाम्न उत्कृष्टप्रदेशोदयः एकेन्द्रियो द्वीन्द्रियस्थितिं झटित्येव स्वयोग्यां करोति न त्रीन्द्रियादिस्थितिमिति द्वीन्द्रियग्रहणम् तदेवमुक्त उत्कृष्टप्रदेशोदयस्वामी ।

संप्रति जघन्यप्रदेशोदयस्वाम्यत्वमभिधीयते ।

पयगं तु खवियकम्मे, जहन्नदेवट्ठिइंभिन्नमुहूत्ते ॥
सेसे मिच्छत्तगतो, अतिकिलिट्ठो कालयं तु खविगए ॥ ४०६ ॥
एगेंदियगो पढमे, समये वमइंसु पावरणे ॥
केवलदुगमणपज्जव—चक्खुअचक्खूण आवरणा ॥ ४०७ ॥

जघन्यस्वामीति भावप्रधानोऽयं निर्देशः प्राकृतत्वाच्च ततः परस्याः सप्तम्या लुक् ततोऽयमर्थः । जघन्यप्रदेशोदयस्वामित्वे प्रकृतमधिकारः क्षपितकर्मांशेन सूत्रे चात्र सप्तमी तृतीयार्थे वेदितव्या । तत्र कश्चित्क्षपितकर्मांशो देवो जघन्यस्थितिर्दशवर्षसहस्रायुरुत्पत्त्यनन्तरं मुहूर्ते गते सति सम्यक्त्वं प्रतिपद्यते तच्च सम्यक्त्वं दशवर्षसहस्राणि देशोनानि यावत्परिपाल्य अन्तर्मुहूर्त्तावशेषे जीविते मिथ्यात्वं गतः स चातिसंक्लिष्टपरिणामो वक्ष्यमाणकर्मणामुत्कृष्टस्थितिबन्धमारभते प्रभूतं दलिकं तदानीमुद्वर्तयति तावद्यावदन्तर्मुहूर्तम् । ततः संक्लिष्टपरिणाम एव कालं कृत्वा एकेन्द्रियो जातस्तस्य प्रथमसमये मतिज्ञानावरणकेवलदर्शनावरणमनःपर्यवज्ञानावरणचक्षुर्ज्ञानावरणाचक्षुर्दर्शनावरणानां जघन्या प्रदेशोदीरणा स्तोका भवति यतस्तस्यानुभागोदीरणा बह्वी प्रवर्तते । यत्र चानुभागोदीरणा बह्वी तत्र स्तोका प्रदेशोदीरणा ततो "मिच्छत्तगतो अतिकिलिट्ठो" इत्याद्युक्तम् ॥

ओहीए संजमाउ, देवत्तगए यस्स मिच्छत्तं ॥
उक्कोसं बंधठिइं बधे, विकट्टणा आलिगं गतु ॥ ४०८ ॥

क्षपितकर्मांशः संयमं प्रतिपन्नः समुत्पन्नावधिज्ञानदर्शनोऽप्रति—

पतिनावधिज्ञानदर्शन एव देवो जातस्तत्रचान्तर्मुहूर्त्ते गते मिथ्यात्व प्रतिपन्नस्ततो मिथ्यात्वप्रत्ययेनोत्कृष्टां स्थितिं बद्धमारजते प्रचूत दलिक विकर्षयति उद्वर्त्तयति इत्यर्थ । तत आवलिकां गत्वा अतिक्रम्य बन्धावलिकायामतीतायामित्यर्थ अवध्योरवधिज्ञानावरणावधिदर्शनावरणावधिर्जघन्य प्रदेशोदय ॥

वेयणिएयंतरसोगा, चउहिव्व निद्दपलायस्स ॥

उक्कस्स ठिई बंधो, पमिन्नागा पवेइया नवरं ॥ ४०७ ॥

द्वयोर्वेदनीययो सातासातयोः पञ्चानामन्तरायाणां शोकारत्युच्चैर्गोत्राणां च जघन्य प्रदेशोदयोऽवधिज्ञानावरणस्येव वेदितव्यो निद्राप्रचलयोरपि तथैव केवलमुत्कृष्टस्थितिं बन्धात् प्रतिभग्नस्य प्रतिपतितस्य निद्राप्रचलयोरनुभवितु लग्नस्य चेति द्रष्टव्यम्। उत्कृष्टस्थितिं बन्धो हि अतिशयेन संक्लिष्टस्य भवति नचातिसंक्लेशे वर्तमानस्य निद्रोदयसंभवस्तत उक्तमुत्कृष्टस्थितिबन्धात्प्रतिभग्नस्येति द्रष्टव्यम् ॥

वरिसवरतिरियथावर, नीयंपि मइसमं नवरं ।

तिन्नि निद्दानिद्दा, इंदिय पज्जत्तिपढमसमयम्मि ॥४१०॥

वर्षवरो नपुंसकवेदस्ततो नपुंसकवेद तिर्यग्गतिस्थावरनीचैर्गोत्राणां जघन्य प्रदेशोदयो मतिज्ञानावरणस्येवास्य निद्रानिद्रादयोऽपि तिस्र प्रकृतयो जघन्यप्रदेशोदयविषये मतिज्ञानावरणवत् भावनीया । नवरमिन्द्रियपर्याप्त्यापर्याप्त्यप्रदेशप्रथमसमये इति द्रष्टव्यम्। ततोऽनन्तरसमये उदीरणाया सभवने जघन्यप्रदेशोदयासंभवात् ॥

दंसणमोहे तिविहे, उदीरणुदए य आलिगं गंतुं ॥

सत्तरह एवमेवं, उवसमित्ताणए देवे ॥ ४११ ॥

क्षपितकर्मांशे तस्य औपशमिकस्य सम्यक्त्वस्यौपशमिकसम्यक्त्वात्प्रच्यवमानस्य अन्तरकरणेन स्थितेन द्वितीयस्थितेन सकाशात्सम्यक्त्वादीनां दलिकानि समाकृष्याप्यन्तराणि चरमसमये आवलिकामात्रभागे गोपुच्छाकारसंस्थाने रचितानि । तद्यथा-प्रथमसमये प्रभूत दलिक द्वितीयसमये विशेषहीन तेषामुदयोदीरणोदय उच्यते तस्मिन् उदीरणोदये आवलिकामात्र गत्वा आवलिका यावच्चरमसमये विशेषहीन तेषामुदयोदीरणा उदय उच्यते तस्मिन् उदीरणोदये आवलिकामात्र गत्वा आवलिकामात्र यावच्चरमसमये विशेषहीनं समये सम्यक्त्वमिश्रमिथ्यात्वानां स्वस्वोदययुक्तस्य जघन्यप्रदेशोदय । तथानन्तानुबन्धिवर्जद्वादशकषायवेदपुरुषवेदहास्यरतिभयजुगुप्सारूपा सप्तदश प्रकृतीरुपशमय्य देवलोक गत्वा एवमेवेति उदीरणोदयचरमसमये तासा सप्तदशप्रकृतीनां जघन्य प्रदेशोदय । आसा हि सप्तदशोपशमय्य देवलोक गतस्य एवमेवेति उदीरणानामपि प्रकृतीनामन्तरकरण कृत्वा देवलोक गत सन् प्रथमसमये एव द्वितीयस्थिते सकाशात् दलिकमाकृष्योदयसमयादारभ्य गोपुच्छाकार विरचयति । तद्यथा उदयसमये प्रभूत, द्वितीयसमये विशेषहीन तृतीयसमये जघन्यप्रदेशोदयो लभ्यते ॥

चउरुवसमित्तपच्छा, संजोइय दीहकालसम्मत्ता ॥

मिच्छत्तगए आवलि-गाए संयोजयणाणं तु ॥ ४१२ ॥

चतुरो वारान् मोहनीयमुपशमय्य पश्चादन्तर्मुहूर्ते गते सति मिथ्यात्व गत ततोऽपि मिथ्यात्वप्रत्ययेनासंयोजनात् अनन्तानुबन्धिनो बध्नाति तत सम्यक्त्व गतस्तच्च दीर्घकाल द्वात्रिंशत्सागरोपमाणां शतं यावदनुपालयन् समयसम्यक्त्वप्रभावत प्रभूतान् पुद्गलान् अनन्तानुबन्धिनां सबन्धिन प्रदेशसंक्रमत परिसादयति । तत्र पुनरपि मिथ्यात्व गत मिथ्यात्वप्रत्ययेन च भूयोऽप्यनन्तानुबन्धिनो बध्नाति तस्या आवलिकाया बन्धावलिकायाश्चरमसमये पूर्वबद्धानामनन्तानुबन्धिन्य जघन्य प्रदेशोदय आवलिकायाश्चरमसमये इत्युक्त संसारे चैकजीवस्य चतुष्कृत्व एव मोहनीयस्योपशमनो भवति न पञ्चकृत्वा इति चतु कृत्वो ग्रहणम्। मोहोपशमनेन किं प्रयोजनमितिचेदुच्यते । इह मोहोपशम कुर्वन् अप्रत्याख्यानादिकषायेण दलिकमन्यत्र गुणसंक्रमेण प्रभूत संक्रमयति तत क्षीणमोहे शेषाणां तेषामनन्तानुबन्धिषु बन्धकाले स्तोकमेव संक्रमयति ततो मोहोपशमग्रहणम् ।

इत्थीए संजमभवे, सव्वनिरुद्धम्मिगंतु मिच्छत्तं ।

देवीए लहुमिच्छी, जेट्ठठिई आलिगं गंतु ॥ ४१३ ॥

संयमेनोपलक्षितो भवः संयमभवस्तस्मिन् सर्वनिरुद्धे अन्तर्मुहूर्त्तावशेषे स्त्रिया मिथ्यात्व गतायास्ततोऽनन्तरभवे देवीभूताया शीघ्रमेव पर्याप्ताया उत्कृष्टस्थितिबन्धानन्तरमावलिकां गत्वा आवलिकायाश्चरमसमये स्त्रीवेदस्य जघन्य प्रदेशोदय । इयमत्र भावना । क्षपितकर्मांशा काचित् स्त्री देशोनां पूर्वकोटिं यावत्संयममनुपाल्य अन्तर्मुहूर्ते आयुषोऽवशेषे मिथ्यात्वं गत्वा अन्तरभवे देवी समुत्पन्ना शीघ्रमेव पर्याप्ता ततः उत्कृष्टे संक्लेशे वर्तमाना स्त्रीवेदस्योत्कृष्टां स्थितिं बध्नाति। पूर्वबद्धां च उद्वर्त्तयति तत उत्कृष्टबन्धारम्भे परत आवलिकायाश्चरमसमये तस्याः स्त्रीवेदस्य जघन्य प्रदेशोदयो भवति ।

अप्पद्धा जोगचियाणं, चउणुक्कस्सगठिईणं ते ।

उवरित्थोवनिसेगे, चिरंति वासाइ वेईणं ॥ ४१४ ॥

अल्पया बन्धाद्धया अल्पेन च योगेन चितानां बद्धानां चतुर्णामप्यायुषां ज्येष्ठस्थितीनामुत्कृष्टस्थितीनामन्ते वासी अन्तिमे उपरि सर्वोपरितने समये सर्वस्तोकदलिकनिक्षेपे चिरकाल तीव्रासातवेदनया ह्यभिभूतानां क्षपितकर्मांशानां तत्तदायुर्वेदनां जघन्यप्रदेशोदय तीव्रासातवेदनया ह्यभिभूतानां बहव पुद्गला परिसटन्तीति कृत्वा तीव्रसातवेदग्रहणम् ।

संजोयणा वियोजिय, देवभवे जहन्नगे अइनिरुद्धे ।

बंधियउक्कस्स ठिई, गंतूणे गेंदिया सन्नी ॥ ४१५ ॥

सव्वलहुनरयगए, निरयगई तम्मि सव्वपज्जत्ते ।

पुण तेत्रणु पुव्वि य गई, तुल्ला नेया भवाइम्मि ॥ ४१६ ॥

संयोजनात् अनन्तानुबन्धिनो विसयोगत विसयोजने हि शेषाणामपि कर्मणां भूयांसो पुद्गलाः परिसटन्ति इति तदुपादान ततो जघन्यदेवत्व प्राप्त । तत्र चाभिनिरुद्धे पश्चिमे अन्तर्मुहूर्त्ते प्रतिपन्नमिथ्यात्व एकेन्द्रियप्रायोग्यां प्रकृतीनामुत्कृष्टां स्थितिं बध्वा सर्वसंक्लिष्ट एकेन्द्रियेषु उत्पन्नस्तत्र चान्तर्मुहूर्त स्थित्वा असंज्ञिषु मध्ये समायात । देवो हि मृत्वा नाऽसंज्ञिषु मध्ये समायात गच्छतीति कृत्वा एकेन्द्रियग्रहणम् । ततो संज्ञिभवात् लघु शीघ्र मृत्वा नारको जात सर्वपर्याप्तिभिश्च शीघ्रं पर्याप्तस्तस्मिन् सर्वपर्याप्ति पर्याप्ते नारके नरकगतेर्जघन्य प्रदेशोदय । पर्याप्तस्य हि प्रभूता प्रकृतयो विपाकोदयमायान्ति उदयमागताश्च स्तिबुकसंक्रमेण न संक्रामन्ति तेन प्रकृत्यन्तरदलिकसंक्रमाभावाज्जघन्यप्रदेशोदय प्राप्यते इति "सव्वपज्जत्त" इत्युक्तम् । आनुपूर्व्यश्चतस्रोऽपि गतितुल्या भवन्ति स्वस्वगतितुल्या ज्ञेया ज्ञातव्या केवल भवादौ भवप्रथमसमये वेदितव्या । तृतीयसमये अन्या अपि बन्धावलिकातीता कर्मलता उदयमागच्छन्ति ततो भवप्रथमसमयग्रहणम् ।

देवगई ओहि समा, उवरिं उज्जो य वेयगो नाहे।

आहारजाइअचिर, संजममणुपालिऊणं ते ॥४१७॥

देवगतौ अवधिसमा ज्ञानावरणसमा अवधिज्ञानावरणस्येति च देवगतेरपि जघन्यप्रदेशोदयो द्रष्टव्यः । किं कारणमिति चेदुच्यते यावदुद्योतस्योदयो न भवति तावद्देवगतौ स्तिवुकसङ्क्रमो न भवति तत उद्योतवेदकग्रहणम् । उद्योतवेदकत्वञ्च पर्याप्तस्य भवति नापर्याप्तावस्थायां देवगतिर्जघन्यप्रदेशोदय । तथा यश्चिर कालं देशोनपूर्वकोटिरूपं यावत्संयममनुपाल्य अन्तिमे काले आहारकशरीरी जात उद्योत च वेदयते तस्याहारकसप्तकस्याजघन्यप्रदेशोदय. चिरकालसंयमपरिपालने हि भूयांस. कर्मपुद्गला. परिसाटिता भवन्तीति कृत्वा चिरकालं संयमग्रहणम् । उद्योतकरणग्रहण प्रागुक्तमेवानुसर्तव्यम् ॥ ४१७ ॥

सेसाणं चक्खुसमं, तमिव अन्नम्मि वा भवे अचिरा ।

तज्जोगा बहुगीउ, पढेयं तस्स ता ताओ ॥ ४१८ ॥

उक्तशेषाणां प्रकृतीनां चक्षुसमं चक्षुर्दर्शनावरणसम वक्तव्यं तावत् यावदेकेन्द्रियो जातस्ततो येषां कर्मणां तस्मिन्नेवैकेन्द्रियभवे उदयो विद्येत तेषां तत्रैव जघन्यप्रदेशोदयो वाच्यः । येषां तु कर्मणामनुजगतिद्वीन्द्रियादिजातिचतुष्टयाद्यसंस्थानपञ्चकौदारिकाङ्गोपाङ्गसंहननषट्कविहायोगतिद्विकत्रससुभगसुस्वरदुःस्वरादिरूपाणां न तत्रोदयसंभवस्तमेकेन्द्रियभवादुद्धृत्य तत्तदुदयायोग्येषु भवेषु उत्पन्नस्य तास्तास्तद्भवयोग्या वह्वी. प्रकृतीर्वेदनीयमानस्य तद्भवयोग्यबहुप्रकृतिर्वेदनं च पर्याप्तस्योपपद्यते तत सर्वाभि. पर्याप्तिभिः पर्याप्तस्य जघन्यप्रदेशोदय पर्याप्तस्याप्रभृता बह्वा प्रकृतय. उदयमागच्छन्ति उदयप्राप्तानां च प्रकृतीनां स्तिवुकसङ्क्रमो न भवति तथा च सति विवक्षितप्रकृतीनां जघन्यप्रदेशोदयो ज्ञेय. परतो गुणश्रेणीदलिकं प्रभूतमवाप्यते इति स न भवति । क० प्र० । प० स० ॥

( ५ ) साम्प्रतमुदयस्य प्रायस्तत्समानत्वादुदीरणायाश्च लक्षणकथनपूर्वकं कस्मिन् गुणस्थाने कियन्त्य प्रकृतयस्तस्य भगवत क्षीणा इत्येतन्निर्दिदिक्षुराह ॥

उदओ विवागवेयण-मुदीरणा अपत्ति इह दुवीससयं ।

सत्तरससयमिच्छे, मीससम्मआहारजिणणुदया ॥ १३ ॥

इह कर्मपुद्गलानां यथा स्वस्थितिबद्धानामुदयसमयप्राप्तानां यद्विपाकेनानुभवनेन वेदन स उदय उच्यते ( उदीरणाअपत्तित्ति ) कर्मपुद्गलानां यथा स्वस्थितिबद्धाना यदप्राप्तकाले वेदनमुदीरणा भण्यते ( इहत्ति ) इहोदये उदीरणायां च (दुवीससयंति) द्विविंशत्युत्तरं शतमधिकविंश शत द्विविंशशत मयूरव्यंसकादित्वात्समासस्तत्सामान्यतोऽधिक्रियते इति शेष । सप्तदशशतमिच्छन्ति मिथ्यादृष्टिगुणस्थाने उदये भवति । कथमित्याह । ( मीससम्मआहारजिणणुदयत्ति ) मिश्र च ( सम्मित्ति ) सम्यक्त्व च ( आहारत्ति ) इहाहारकशब्देन सर्वत्राहारकशरीर आहारकाङ्गोपाङ्गलक्षणमाहारकद्विक गृह्यते तत आहारक च ( जिणत्ति ) जिननाम च मिश्रसम्यक्त्वाहारजिनास्तेषामनुदयात् । इदमत्र हृदय मिश्रोदयस्तावत्सम्यग्मिथ्यादृष्टिगुणस्थान एव भवति सम्यक्त्वोदयस्त्वविरतसम्यग्दृष्ट्यादौ आहारकद्विकोदय प्रमत्तादौ, जिननामोदय सयोगिकेवल्यादौ, भवति । नत इद प्रकृतिपञ्चक द्वाविंशतिशतादपनीयते तता मिथ्यादृष्टिगुणस्थान सप्तदशशत भवतीति ॥ १३ ॥

सुहुमतिगायवमिच्छं, मिच्छंतमासणेइगारसयं ॥

निरयाणुपुव्विणुदया, अण थावरइगविगलअंतो ॥ १४ ॥

सूक्ष्मत्रिक सूक्ष्मापर्याप्तसाधारणरूपम् आतप च मिथ्यात्व च सूक्ष्मत्रिकातपमिथ्यात्व मिथ्यात्वे मिथ्यादृष्टावन्तो यस्य तन्मिथ्यात्वान्त एतत्प्रकृतिपञ्चकस्य मिथ्यात्वेऽन्तो भवतीत्यर्थ. । अयमत्राशय । सूक्ष्मनाम्न. उदयसूक्ष्मैकेन्द्रियेषु, अपर्याप्तनाम्न सर्वेष्वपि अपर्याप्तकेषु, साधारणनाम्नोऽनन्तवनस्पतिषु, आतपनामोदयेषु, बादरपृथिवीकायिकेषु एव नचैतेषु स्थितो जीव. सास्वादनादित्व लभते नापि पूर्वप्रतिपन्नस्तेषूत्पद्यते सास्वादनस्तु यद्यपि बादरपर्याप्तैकेन्द्रियेषूत्पद्यते तथापि न तस्यातपनामोदयस्तत्रोत्पन्नमात्रस्यासमाप्तशरीरस्यैव सासादनत्वगमनात् समाप्ते च शरीरे तत्रातपनामोदयो भवति मिथ्यात्वोदय. पुनर्मिथ्यादृष्टावेव तेनैतासां पञ्चप्रकृतीनां मिथ्यादृष्टावुदयस्यान्तस्तदिद प्रकृतिपञ्चक पूर्वोक्त सप्तदशशतादपनीयते शेष द्वादशशत सास्वादने उदय प्रतीत्य भवति । नरकानुपूर्व्यपनयने च एकादशशत भवतीत्येतदेवाह । " सामणे इगारसय नरयाणुपुव्विणुदयत्ति " सास्वादनेति एकादशशतमुदये भवति नरकानुपूर्व्यनुदयात् नरकानुपूर्व्या उदयो हि नरके वक्रेण गच्छतो जीवस्य भवति । न च सास्वादनो नरकं गच्छति यदुक्तं बृहत्कर्मस्तवभाष्ये " नरयाणुपुव्वियाए, सासण सम्मम्मि होइ नहु उदओ । नरयम्मि जं न गच्छइ, अवच्छिज्जइ तेण सा तस्स ॥ " ततो नरकानुपूर्वी मिथ्यादृष्टिव्यवच्छिन्नसूक्ष्मत्रिकातपमिथ्यात्वलक्षणं प्रकृतिपञ्चक च सप्तदशशतादपनीयते शेष सास्वादने एकादशशत भवतीति [ २ ] ( अणथावरइगविगलअंतुत्ति) ( अणत्ति ) अनन्तानुबन्धिनश्चत्वार क्रोधमानमायालोभा । स्थावरनामा (इगत्ति ) एकेन्द्रियजातिर्विकला' पञ्चेन्द्रियजात्यपेक्षया असंपूर्णद्वीन्द्रियजातित्रीन्द्रियजातिचतुरिन्द्रियजातय इत्यर्थः । इत्येतासां नवानां प्रकृतीनां सास्वादनेऽन्त उदयमाश्रित्य भवति । इयमत्र भावना । अनन्ताऽनुबन्धिनामुदये हि सम्यक्त्वलाभ एव न भवति । यदाहु श्रीभद्रबाहुस्वामिपादाः " पढमिल्लुयाण उदये, नियमा संजोयणा कसायाण । सम्मद्दंसणलभ, भवसिद्धीया वि न लहंति " नापि सम्यग्मिथ्यात्वं कोऽप्यनन्तानुबन्ध्युदये गच्छति योऽपि पूर्वप्रतिपन्नसम्यक्त्वोऽनन्तानुबन्धिनामुदय करोति सोऽपि सास्वादन एव भवतीत्युत्तरेष्वासामुदयाभाव. । स्थावर एकेन्द्रियजातिविकलेन्द्रियजातयस्तु यथास्वमेकेन्द्रियविकलेन्द्रियवेद्या एव उत्तरगुणस्थानानि तु सञ्ज्ञिपञ्चेन्द्रिय एव प्रतिपद्यन्ते पूर्वप्रतिपन्नोऽपि पञ्चेन्द्रियेष्वेव गच्छतीत्युत्तरेष्वासामुदयाभाव इति ॥

मीसे सयमणुपुव्वी-णुदयामीसोदएण मीसंतो ।

चउसयमजए सम्मा-णु पुव्विखेवावि अकसाया ॥ १५ ॥

मिश्रे सम्यग्मिथ्यादृष्टौ शतमुदये भवति—कथमित्याह । ( अणुपुव्वीणुदयत्ति ) इहानुपूर्वीशब्देन नरानुपूर्वीतिर्यगानुपूर्वीदेवानुपूर्वीलक्षणा आनुपूर्वीत्रयी गृह्यते तस्या अनुदयान्मिश्रोदयेन च । अयमत्र भाव. । नरकानुपूर्वी तावदुदयमाश्रित्य सास्वादने व्यवच्छिन्ना । इह सा न गृह्यते शेषमानुपूर्वीत्रिक मिश्रदृष्टेर्नोदेति तस्य मरणाभावात् । " न सम्ममीसो कुणइ कालमिति " वचनात् मिश्रप्रकृति. पुनरत्रोदये प्राप्यते । तत सास्वादनव्यवच्छिन्न प्रकृतिनवकमानुपूर्वीत्रिक च पूर्वोक्तैकादशशतादपनीयते शेषा तिष्ठति प्रकृतीना नवनवति । तत्र मिश्रप्रकृतिप्रक्षेपे जात शतमिति ( मीसतुत्ति ) मिश्रगुणस्थाने मिश्रप्रकृतेरन्तो भवति । एतदुदये हि मिश्रदृष्टिरेव भवति नान्य इति [ ३ ] ( चउसयमजए सम्माणुपुव्विखेवात्ति ) चतुर्भिरधिक शत चतु शतमुदये भवति केत्याह । अयते अविरतसम्यग्दृष्टौ कथमित्याह । ( सम्मत्ति ) सम्यक्त्वम् (अणुपुव्वित्ति ) आनुपूर्व्यश्चतस्र तासां क्षेपात्प्रक्षेपात् । इदमुक्त भवति पूर्वोक्तशतान्मिश्रगुणस्थान-

व्यवच्छिन्नैका मिश्रप्रकृतिरपनीयते शेषा नवनवतिस्तत्र सम्यक्त्वानुपूर्वीचतुष्कलक्षण प्रकृतिपञ्चकं क्षिप्यते जात चतु शतं यत. सम्यक्त्वमत्र गुण उदयत एव तथा विरतसम्यग्दृशां यथास्वं चतस्रोऽप्यानुपूर्व्य इति ( वितियकसायत्ति ) द्वितीयकषाया अप्रत्याख्यानावरणाश्चत्वार. क्रोधमानमायालोभा. ।

मणुतिरिणुपुव्विविउव्वट्ठ, दुहगअणाइज्जदुगसत्तरस छेओ
सत्तासीइदेसितिरिगइ, आउनिउज्जोय तिकसाया ।१६।

( मणुतिरिणुपुव्विवित्ति ) आनुपूर्वीशब्दस्य प्रत्येकं योजनान्मनुजानुपूर्वी तिर्यगानुपूर्वी ( विउव्वट्ठत्ति ) वैक्रियाष्टकं वैक्रियशरीरवैक्रियाङ्गोपाङ्गदेवानुपूर्वीदेवायुर्नरकगतिर्नरकानुपूर्वीनरकायुर्लक्षण दुर्भगमनादेयद्विकम् । अनादेयायशोकीर्तिरूपमित्येतासां सप्तदशप्रकृतीनामविरतसम्यग्दृष्ट्यावुदयं प्रतीत्य छेदो भवति तत. इमाः सप्तदश प्रकृतय. पूर्वोक्तचतुःशतादपनीयन्ते शेषाः ( सगसीइदेसित्ति ) (५) सप्ताशीतिर्देशविरते उदये भवति । इदमत्र तात्पर्यम्। द्वितीयकषायोदये हि देशविरतेर्लोभ आगमे निषिद्धः। यदागम."बीयकसाया णुदये, अप्पच्चक्खाणावरण । नामधिज्जाणं। सम्मइंसणलभ, विरयाविरय न उ लहति" नापि पूर्वप्रपन्नदेशविरत्यादेर्जीवस्य तदुदयसभवस्तेनोत्तरेषु तदुदयाभाव. मनुजानुपूर्व्यातिर्यगानुपूर्व्योस्तु परभवादिसमयेषु त्रिष्वपान्तरालगतावुदयसभवः।स च यथायोग मनुजतिरश्चां वर्षाष्टकादुपरिष्टात्संभवितु देशविरत्यादिषु गुणस्थानेषु न सभवति। देवत्रिक नारकत्रिक च देवनारकवेद्यमेव । न च तेषु देशविरत्यादे. सभवः वैक्रियशरीरवैक्रियाङ्गोपाङ्गनाम्नोस्तु देवनारकेषूदय. । तिर्यग्मनुष्येषु तु प्राचुर्येणाविरतसम्यग्दृष्ट्यन्तेषु। यस्तूत्तरगुणस्थानेष्वपि केषांचिदागमे विष्णुकुमारस्थूलभद्रादीनां वैक्रियद्विकस्योदयः श्रूयते स प्रविरलतरत्वादिना केनापि कारणेन पूर्वाचार्यैर्न विवक्षित इत्यस्माभिरपि नेह विवक्षित इति दुर्भगमनादेयद्विकमित्येतास्तु तिस्रः प्रकृतयो देशविरत्यादिषु गुणप्रत्ययात्रोदयन्त इत्येता अविरतिव्यवच्छिन्ना इति ( तिरिगइआउत्ति ) तिर्यक्शब्दस्य प्रत्येकं योगात् तिर्यग्गतितिर्यगायुः ( निउज्जोयत्ति ) नीचैर्गोत्रमुद्योत वा ( तिकसायत्ति ) तृतीय कषाय. त्रिकषाय. मयूरव्यसकादित्वात्पूरणप्रत्ययलोपी समासः । प्रत्याख्यानावरणाश्चत्वारः क्रोधमानमायालोभा. ( ६ )

अट्ठच्छेओ इगसी, पमत्तिआहारजुगलपक्खेवा ।
थीणतिगहारदुग. छेओछसयरिअपमत्ते ॥१७॥

पूर्वोक्ताष्टप्रकृतीनां देशविरते' उदयमाश्रित्य छेदो भवति ततः प्रमत्त एकाशीतिर्भवति आहारकयुगलप्रक्षेपात्। इदमत्र हृदयम्। तिर्यग्गतितिर्यगायुषी तिर्यग्वेद्ये एव तेषु च देशविरतान्तान्येव गुणस्थानानि घटन्ते नोत्तराणीत्युत्तरेषु तदुदयाभाव. । नीचैर्गोत्रं तु तिर्यग्गतिस्वाभाव्यात् ध्रुवोदयिक न परावर्त्तते ततश्च देशविरतस्यापि तिरश्चो नीचैर्गोत्रोदयोऽस्त्येव मनुजेषु पुन. सर्वस्य देशविरतादेर्गुणिनो गुणप्रत्ययादुच्चैर्गोत्र' मेवोदेतीत्युत्तरत्र नीचैर्गोत्रोदयाभाव' । उद्योतनामस्वभावतस्तिर्यग्वेद्य तेषु च देशविरतान्तान्येव गुणस्थानानि नोत्तराणीत्यु.रेषु तदुदयाभाव. । यद्यपि यतिवैक्रियेप्युद्योतनामोदेति "उत्तरदेहि च देवजई इति वचनात्" तथापि स्वल्पत्वादिना केनापि कारणेन पूर्वाचार्यैर्न विवक्षित तृतीयकषायोदये हि चारित्रजात एव न भवति । उक्त च पूज्यै. " तइयकसायाणुदए, पच्चक्खाणावरणनामधिज्जाण । देसिक्कदेसविरइ चरित्तलंभं न उ लहेति " न च पूर्वप्रतिपन्नचारित्रस्य तदुदयसंभव इत्युत्तरेषु तदुदयाभावः । इत्येता अष्टौ प्रकृतय. पूर्वोक्तसप्ताशीतेरपनीयन्ते शेषा एकोनाशीतिः । तत आहारकयुगल क्षिप्यते यत. प्रमत्तयतिराहारकयुगलस्योदयो भव तीत्येकाशीतिः । ( थीणतिगत्ति ) स्त्यानर्द्धित्रिकं निद्रा २ प्रचला २ स्त्यानर्द्धिरूपमाहारकद्विकमाहारकशरीराहारकाङ्गोपाङ्गलक्षणमिति (७) प्रकृतिपञ्चकस्य प्रमत्ते छेदो भवति। ततः पूर्वोक्तैकाशीतेरिद प्रकृतिपञ्चकमपनीयते। शेषा षट्सप्ततिरप्रमत्ते उदये भवति । अत्रायमाशयः । स्त्यानर्द्धित्रिकोदय. प्रमादरूपत्वादप्रमत्ते न संभवति आहारकद्विकं च विकुर्वाणो यतिरौत्सुक्यादवश्यं प्रमादवशगो भवत्यत इदमप्यप्रमत्ते उदयमाश्रित्य न जाघटीति । यत्पुनरिदमन्यत्र श्रूयते प्रमत्तयतिराहारक विकृत्य पश्चाद्विशुद्धिवशात्तत्रस्थ एवाप्रमत्ततां यातीति तत्केनापि स्वल्पत्वादिना कारणेन पूर्वाचार्यैर्न विवक्षितमित्यस्माभिरपि न विवक्षितमिति ॥ १७ ॥

समत्तंतिमसंघयण–तियगच्छेओविसत्तरि अपुव्वे ।
हासाइछक्कअंतो, छसट्ठि अनियट्टि वेयतिगं ॥१८॥

सम्यक्त्वमन्तिमसहननत्रिकमर्द्धनाराचसंहननकीलिकासंहननसेवार्त्तसहननरूपमित्येतत्प्रकृतिचतुष्टयस्याप्रमत्ते छेदो भवति। तत इद प्रकृतिचतुष्कं पूर्वोक्तषट्सप्ततेरपनीयते शेषा द्वासप्तति. ( अपुव्वित्ति ) अपूर्वकरणे उदये भवतीति। अयमत्राशय. सम्यक्त्वे क्षपिते उपशमिते वा श्रेणिद्वयमारुह्यते इत्यपूर्वकरणादौ तदुदयाभावः । अन्तिमसहननत्रयोदयेतु श्रेणिरारोढुमेव न शक्यते तथाविधशुद्धेरभावादित्युत्तरेषु तदुदयाभाव. (९) ( हासाइछक्कअतुत्ति ) हास्यमादौ यस्य षट्कस्य तत् हास्यादिषट्कं हास्यरत्यरतिशोकभयजुगुप्साख्य तस्यान्तोऽपूर्वकरणे भवति सक्लिष्टतरपरिणामत्वात्तस्य उत्तरेषां च विशुद्धतरपरिणामत्त्वात्तेषां तदुदयाभाव इति उत्तरेष्वप्ययमुदयव्यवच्छेदहेतुरनुसरणीयः । तत इद प्रकृतिषट्कं पूर्वोक्तद्विसप्ततेरपनीयते शेषा. । ( १० ) (छसट्ठिअनियट्टित्ति) षट्षष्टिरनिवृत्तिबादरे भवति । उदयमाश्रित्येति शेष. । ( वेयतिग ) वेदत्रिकं स्त्रीवेदपुवेदनपुसकवेदाख्यम्।

संजलणतिगं छ छेओ, सट्ठिसुहमम्मि तुरियलोभंतो ।
उवसंतगुणे गुणसट्ठि, रिसहनारायदुगअंतो ॥१९ ॥

संज्वलनत्रिकं सज्वलनक्रोधमानमायारूपमित्येतासां षण्णां प्रकृतीनामनिवृत्तिबादरे छेदो भवति तत्र स्त्रिया. श्रेणिमारोहन्त्या. स्त्रीवेदस्य प्रथममुदयच्छेद. तत. क्रमेण पुवेदस्य नपुसकवेदस्य सज्वलनत्रयस्य च पुसस्तु श्रेणिमारोहतः प्रथम पुवेदस्योदयच्छेदस्तत. क्रमेण स्त्रीवेदस्य पण्ढवेदस्य संज्वलनत्रयस्य । पण्ढस्य तु श्रेणिमारोहत. प्रथमं पण्ढवेदस्योदयच्छेदः ततः स्त्रीवेदस्य पुंवेदस्य सज्वलनत्रयस्य चैतत्प्रकृतिषट्क पूर्वोक्तषट्षष्टेरपनीयते शेषा. ( सट्ठिसुहमम्मित्ति ) षष्टि' सूक्ष्मा संपराये उदये भवति ( ११ ) अत्र च तुर्यलोभान्तश्चतुर्थोलोभान्त सज्वलनलोभव्यवच्छेद इत्यर्थ. । तत इयमेका प्रकृतिः षष्टिरपनीयते शेषा उपशान्तगुणे उपशान्तमोहगुणस्थाने एकोनषष्टिरुदये भवति । ( रिसहनारायदुग अंतुत्ति ) ऋषभनाराचद्विक ऋषभनाराचसंहनननाराचसंहननाख्य तस्यामुपशान्तगुणे भवति प्रथमसहननेनैव क्षपकश्रेण्यारोहणात् इति क्षीणमोहादौ तदुदयाभाव' । उपशमश्रेणिस्तु प्रथमसहननत्रयेणारुह्यते तत इदं प्रकृतिद्वय पूर्वोक्तैकोनषष्टेरपनीयते शेषा. ( १२ )

सत्तावन्नखीणदुचरिमि, निदृदुगंतो अचरमिपणपन्ना ।
नाणंतरायदंसण, चउछेओ सजोगिबायाला ॥ २० ॥

सप्तपञ्चाशत ( खीणत्ति ) क्षीणमोहस्य ( दुचरिमिति ) द्विचरमसमये चरमसमयादर्वाक् द्वितीये समये निद्राद्विकस्य निद्राप्रचलाख्यस्य क्षीणद्विचरमसमयेऽन्त इत्येतत्प्रकृतिद्वयं पूर्वोक्तसप्तपञ्चाशतोऽपनीयते तत (चरमित्ति) चरमसमये क्षीणमोहस्येति शेष. ( पणपन्नत्ति ) पञ्चपञ्चाशदुदयं भवति । इदमुक्तं भवति । निद्राप्रचलयो. क्षीणमोहस्य द्विचरमसमये उदयच्छेदः अपरे पुनराहु उपशान्तमोहे निद्राप्रचलयोरुदयच्छेदः । पञ्चानामपि निद्राणां घोलनापरिणामे भवत्युदय. । क्षपकाणां त्वतिविशुद्धत्वान्न निद्रोदयसंभव. । उपशमकानां पुनरनतिविशुद्धत्वात्स्यादपीति ( नाणंतरायदंसणचउत्ति ) ज्ञानावरणपञ्चक मतिश्रुतावधिमन.पर्यायकेवलज्ञानावरणरूपमन्तरायपञ्चक दानलाभभोगोपभोगवीर्यान्तरायाख्यं दर्शनचतुष्कं चक्षुरचक्षुरवधिकेवलदर्शनावरणलक्षणमित्येतासां क्षीणमोहचरमसमये छेदो भवति । ( १३ ) तदनन्तरं क्षीणमोहत्वादित्येतत्प्रकृतिचतुर्दशक पूर्वोक्तपञ्चपञ्चाशतोऽपनीयते शेषैकचत्वारिंशत्तीर्थकरनामोदयाच्च तत्प्रक्षेपे द्वाचत्वारिंशत्सयोगिकेवलिनि भवतीत्येतदेवाह । ( सजोगिबायालत्ति ) स्पष्टम् ॥

तित्थुदया उरला थिर-खगइदुगपरित्ततिगछसंठाणा ॥
अगुरुलहुवन्नचउनिमिण-तेअ कम्माइसंघयणं ॥ २१ ॥

ननु पञ्चपञ्चाशतो ज्ञानावरणपञ्चकमन्तरायपञ्चकं दर्शनचतुष्कलक्षणप्रकृतिचतुर्दशकापनयत एकचत्वारिंशदेव भवति तत. कथमुक्तं सयोगिनि द्विचत्वारिंशदित्याशङ्क्याह ( तित्थुदयत्ति ) तीर्थोदयात्तीर्थकरनामोदयादित्यर्थ । यत. सयोग्यादौ तीर्थकरनामोदयो भवति यदुक्तम " उदए जस्स सुरासुर-नरवइनिवहेहिं पूइओ होइ । तं तित्थयरं नामं, तस्सुविवागो उ केवलिणो " ॥ तत. पूर्वोक्तैकचत्वारिंशति तीर्थकरनाम क्षिप्यते । जाता द्विचत्वारिंशत्सा च सयोगिनि भवतीति । (उरला थिरखगइदुगत्ति) द्विकशब्दस्य प्रत्येकं योगात् औदारिकद्विकमौदारिकशरीर औदारिकाङ्गोपाङ्गलक्षणम् । अस्थिरद्विकमस्थिराशुभाख्यम् । खगतिद्विक शुभविहायोगत्यशुभविहायोगतिरूप ( परित्तितिगत्ति ) प्रत्येकत्रिकं प्रत्येकस्थिरशुभाख्यम् । ( छसंठाणत्ति ) षट्संस्थानानि समचतुरस्रन्यग्रोधपरिमण्डलसादिवामनकुब्जहुण्डस्वरूपाणि संस्थानशब्दस्य च पुंस्त्वं प्राकृतलक्षणत्वात् यदाह । पाणिनि स्वप्राकृतलक्षणे लिङ्ग व्यभिचार्यपि ( अगुरुलहुवन्नचउत्ति ) चतु शब्दस्य प्रत्येक सम्बन्धात् अगुरुलघुचतुष्कमगुरुलघूपघातपराघातोच्छ्वासाख्य वर्णचतुष्क वर्णगन्धरसस्पर्शरूपं ( निमिणत्ति ) निर्माणम् । (तेयत्ति) तैजसशरीरम् । (कम्मत्ति) कार्मणशरीरम् । ( आइमसंघयणं ति ) प्रथमसंहनन वज्रऋषभनाराचसंहननमित्यर्थ ॥

दूसरसूसरसाया, साएगयरं च तीसवुच्छेओ ।
बारस अजोगिसुभगा-इज्ज जसन्नयरवेयणियं ॥२१॥

दु स्वरं सुस्वरं सातं च सुखमसात च दुःखं सातासाते तयोरेकतरमन्यतरत्सातं वा असातं चेत्यर्थः । ततः एतासां त्रिंशतः प्रकृतीनां सयोगिकेवलिन्युदयव्यवच्छेदः । तत्रैकतरवेदनीयं यदयोगिकेवलिनि वेदयितव्यं तत्सयोगिकेवलिचरमसमये व्युच्छिन्नोदयं भवति (१४) पुनस्तत्रोदयाभावात् दुःस्वरसुस्वरनाम्नोस्तु भाषापुद्गलविपाकित्वाद्वाग्योगिनामेवोदयः शेषाणां पुन शरीरपुद्गलविपाकित्वात् काययोगिनामेव तेन हि योगेन पुद्गलग्रहणपरिणामालम्बनानि ततस्तेषु गृहीतेष्वेतेषां कर्मणां स्वस्वविपाकेनोदयो भवति । तेनायोगिकेवलिनि तद्योगाभावात्तदुदयाभावः इत्यतस्त्रिंशत्प्रकृतय. पूर्वोक्तद्विचत्वारिंशतोऽपनीयन्ते ततः शेषा द्वादश प्रकृतयोऽयोगिकेवलिन्युदयमाश्रित्य भवन्तीत्येतदेवाह ( बारस अजोगीत्यादि ) द्वादश प्रकृतयो ऽयोगिकेवलिनि चरमसमयान्ताश्चरमसमये योगिकेवलिगुणस्थानस्यान्तो व्यवच्छेदो यासां ताश्चरमसमयान्तास्ता एवाह सुभगमादेयम् ( जसत्ति ) यशःकीर्तिनाम अन्यतरवेदनीयं सयोगिकेवलिचरमसमयव्यवच्छिन्नोद्धरितं वेदनीयमित्यर्थ ।

तसतिगपणिंदिमणुया-उगइजिणुच्चंति चरमसमयंता ॥

( तसतिगंति ) त्रसत्रिकं त्रसबादरपर्याप्ताख्य ( पणिंदित्ति ) पञ्चेन्द्रियजाति. (मणुआउगइत्ति) मनुजशब्दस्य प्रत्येकं योगान्मनुजायु. मनुजगति. ( जिणत्ति ) जिननाम ( उच्चति ) उच्चैर्गोत्रमिति शब्दो द्वादशप्रकृतिपरिसमाप्तिद्योतक इति । कर्म० २ क०। पं० सं०। एकस्मिन् गुणस्थानेषु, (उदयसत्तास्थानयोजना गुणट्ठाणशब्दे । बन्धोदयसत्तास्थानचिन्ता तत्संवेधश्च कम्मशब्दे । ये परिषहा यत्कर्मोदयनिमित्ता. इत्यादि परिसह शब्दे । मारणान्तिक उदयसोढव्य इति वेयणा शब्दे )

( ६ ) उदयहेतुं प्रदर्शयति

दव्वं खेत्तं कालो, भवो य भावो य हेयवो पंच ।
हेउसमासेणुदओ, जायइ सव्वाण पगईणं ॥

इहकु सर्वासां प्रकृतीनां सामान्यत. पञ्च उदयहेतवस्तद्यथा द्रव्यं क्षेत्रं कालो भवो भावश्च । तत्र द्रव्य कर्मपुद्गलरूपं यद्वि वावाह्यं किमपि तथाविधमुदयप्रादुर्भावनिमित्त यथा श्रूयमाणं दुर्भाषितभावापुद्गलद्रव्यक्रोधोदयस्य क्षेत्रमाकाश काल. समयादिरूपो भवो मनुष्यादिभव. । भावो जीवस्य परिणामविशेष । एते च नैकैकश उदयहेतवः किन्तु समुदितास्तया वा हेतुसमासेन उक्तस्वरूपाणां द्रव्यादीना हेतुना समासेन समुदायेन जायते सर्वासा प्रकृतीनामुदय. केवलं क्वापि इत्यादि सामग्री कस्याश्चित्प्रकृतेरुदयहेतुरितिनहेतुत्वव्यभिचार । उक्ता उदयहेतव । पं०सं०।

उदयगामिणी- उदयगामिनी- स्त्री० उदय सूर्योदयं गच्छति मुहूर्तादिना व्याप्नोति गम्-णिनि-ङीप्-सूर्योदयावधिमुहूर्तादिकालव्यापिन्यां तिथौ,कर्माऽनुष्ठाने उदयकाले, कियन्मानस्य ग्राह्यता । तन्निर्णयो वैष्णवानां कालमाधवे ग्रन्थे । वाच० ।

उदयजिण-उदयजिन-पुं० भविष्यति सप्तमे तीर्थकरे, स च पूर्वभवे शङ्खनामा श्रावक. । सप्तममुदयजिन वन्दे जीवं च शङ्खनाम्न. श्रावकस्य । प्रव० ४६ द्वा० ।

उदयट्ठाण-उदयस्थान-न० उदयप्रकारे, । पं०स० । (बन्धोदयसत्ता आश्रित्य उदयस्थानेषु भङ्गा. कम्मशब्दे )

उदयट्ठि ( ण् ) उदयार्थिन्-त्रि० लाभार्थिनि, ' एवं जहा वणिए उदयट्ठी आयस्स हेउं पगरेंति सगं "सूत्र०२श्रु०६अ० ।

उदयण-उदयन-न० उद्-इ-भावे-ल्युट्-उदये,समाप्तौ च । अगस्त्यमुनौ, कुसुमाञ्जलिप्रभृतिग्रन्थकारके स्वनामख्याते आचार्ये च । वाच० उदनोऽप्याह । नापि प्रतिपक्षसाधनमनिवर्त्य प्रथमस्य साधनत्वावस्थितिरग्रहितप्रतिपक्षत्वादिति । र० । मुमुक्षुकर्मव्यापारतन्त्रे तत्वज्ञानवृत्ति नवेति विप्रतिपत्तिविधिकोटिरुदयनाचार्याणाम् । न० । वीणावत्सराजे, उत्त० ३ अ० ।

( तत्कथा चैवम् । )

जइ णं भंते! पंचमस्स अज्झयणस्स उक्खेवओ एवं खलु

जंबू० तेणं कालेणं तेणं समएणं कोसंबीणामं णयरीहोत्था । रिद्ध ३ बाहिं चंदोत्तरणे उज्जाणे सेयजद्दे जक्खे तत्थ णं कोसंबी य णयरीए सयाणिए णामं राया होत्था महया हिमवंत तस्स णं सयाणीयस्स रणो मियावतीए देवीए अत्तए उदयणे णामं कुमारे होत्था । अहीणजुवराया तस्स ण उदयणस्स कुमारस्स पउमावई णामं देवी होत्था विपा० ५ अ० ।

( उदयनस्य सोमदत्तपुरोहितसुतबृहस्पतिदत्तं पद्मावत्यां स्वभार्यायामासक्तं दृष्ट्वा तद्विघातनं तच्च वहप्फइदत्त शब्दे ) गन्धर्वविद्याप्रगुणे चण्डप्रद्योतभूभूज· पुत्र्या वासवदत्तायाः शिक्षके, आ०क० । आव० । आ०चू० (सिणियशब्दे तत्कथानकम् । यौगन्धरायणसेणियशब्दे तद्विवृतिः ) सिन्धुसौवीराधिपतौ च । तद्वृत्तलेशोऽयम् । सिन्धुसौवीरदेशाधिपतिर्दशमुकुटबद्धभूपसेव्यउदयनराजो विद्युन्मालिसमर्पितश्रीवीरप्रतिमार्चनागतनीरोगीभूतगन्धारश्राद्धार्पितगुटिकाभक्षणतो जाताद्भुतरूपायाः सुवर्णगुलिकाया देवाधिदेवप्रतिमायुताया अपहर्तार मालवदेशभूपसेव्यं चण्डप्रद्योतराजं देवाधिदेवप्रतिमाप्रत्यानयनोत्पन्नसंग्रामे बद्ध्वा पश्चादागच्छन् दशपुरे वर्षासु तस्थौ । वार्षिकपर्वणि च स्वयमुपवासं चक्रे । भूपादिष्टसूपकारेण भोजनार्थं पृष्टेन चण्डप्रद्योतेन विषमिया श्राद्धस्य ममाप्यद्योपवास इति प्रोक्ते धूर्त्तसाधर्मिकेऽप्यस्मिन्नक्षमिते मम प्रतिक्रमणं न शुध्यतीति तत्सर्वस्वप्रदानतस्तत्काले ममदासीपतिरित्यक्षराच्छादनाय स्वमुकुटपट्टदानतश्च श्रीउदयनराजेन श्रीचण्डप्रद्योत· क्षमितोऽत्र श्रीउदयनराजस्यैवाराधकत्वम् । कल्प० । उदयगामिनि, त्रि० । स्था० ४ ठा० ।

उदयणसत्त-उदयनसत्व- पुं० उदयनमुदयगामि प्रवर्त्तमान सत्वं यस्य स तथा । तथाविधे पुरुषजातभेदे, स्था०४ठा० ।

उदयत्थमण-उदयास्तमन-न० उदयवेलायामस्तवेलायां च।"उदयत्थमणे सुमुहुत्तसुहदंसण " कल्प० ।

उदयधम्म-उदयधर्मन्- पुं०धर्मकल्पद्रुमकारके आगमगच्छीये आचार्ये, जै० इ० ।

उदयपत्त-उदयप्राप्त-त्रि० उदिते,-प्रश्न० सं०५ द्वा० ।

उदयप्पहसूरि-उदयप्रभसूरि-पुं० नागेन्द्रगच्छीये स्वनामख्याते सूरिभेदे, " प्रमाणसिद्धान्तविरुद्धमत्र, यत्किञ्चिदुक्तं मतिमान्द्यदोषात् । मात्सर्यमुत्सार्य तदार्यचित्ता', प्रसादमाधाय विशोधयन्तु । ४ । उर्व्यामिव सुधाभुजां गुरुरिति त्रैलोक्यविस्तारणो, यत्रेय प्रतिभासरादनुमितिर्निर्दम्भमुज्जृम्भते । किंचामी विबुधाः सुधेति वचनोद्गारं यदीय मुदा, शंसन्ति-प्रथयन्ति तामतितमां सवादमेदस्विनीम् । ५ । नागेन्द्रगच्छगोविन्द-वक्षोऽलङ्कारकौस्तुभाः । ते विश्ववन्द्यानद्यास्तुरुदयप्रभसूरय· ॥ अयमाचार्यैः विक्रमसवत् १२२० वर्षात् १२७७ पर्यन्त विद्यमान आसीत् । विजयसेनसूरेरयं शिष्य वीरधवलमहाराजाऽमात्यवस्तुपालस्य मान्य आसीत् आरम्भासिद्धिधर्म्माभ्युदयग्रन्थौ व्यरीरचत् । द्वितीयोऽप्येतन्नामा रविप्रभसूरेः शिष्य· । नेमिचन्द्रसूरिकृतप्रवचनोद्धारस्योपरि-विषमपदव्याख्यानाम्नीं टीकां कृतवानिति । जै० इ० ।

उदयबंधुक्किट्ठा-उदयबन्धोत्कृष्टा- स्त्री० कर्मप्रकृतिभेदे, यासां प्रकृतिविपाकोदये सति बन्धादुत्कृष्ट स्थितिकर्मावाप्यते ता उदयबन्धोत्कृष्टसंज्ञा· । प० स० । " उदउक्कोसापपणाउ" अनायुष आयुश्चतुष्टयरहिताः पञ्चेन्द्रियजातिवैक्रियद्विकहुण्डसंस्थानपराघातोच्छ्वासोद्योतविहायोगतयो गुरुलघुतैजसकार्मणनिर्माणोपघातवर्णादिचतुष्कानि स्थिरादिषट्क त्रसादिचतुष्कमसातवेदनीय नीचैर्गोत्र षोडशकषायमिथ्यात्व ज्ञानावरणपञ्चकमन्तरायपञ्चक दर्शनावरणचतुष्टयमित्येता· षष्टि प्रकृतय· उदयबन्धोत्कृष्टा· । एतासामुदयप्राप्तानां स्वबन्धनत उत्कृष्टा स्थितिरवाप्यते तत एता उदयबन्धोत्कृष्टाभिधेया । प० सं० ॥

उदयवई-उदयावती- स्त्री० कर्मप्रकृतिभेदे, तत्स्वरूप च " चरमसमयम्मि दलिय, जासिं अन्नत्थसकमे ताउ । अनुदयवइ इयरीओ, उदयवई होंति पगईओ " इति अनुदयवतिकृप्रतिन्यः इतराः प्रकृतय उदयवत्यो भवन्ति । प० स ॥

यासा दलिक चरमसमये स्वविपाकेन वेदयते सप्रति ता एवोदयवती प्रकृतीरभिधातुकाम आह ।

णाणंतरायआउग-दंसणचउवेयणीयमपुमिच्छा ।
चरिमुदयउच्चवेयग-उदेयवई चरिमलोभो य ॥

ज्ञानावरणपञ्चकमन्तरायपञ्चकमायुश्चतुष्टय दर्शनचतुष्टयं सातासातवेदनीये स्त्रीनपुंसकवेदौ चरमोदयान्यमनुजरूपास्ताश्चेमाः । मनुष्यगति· पञ्चेन्द्रियजातित्रसनामबादरनाम पर्याप्तकनाम शुभनामसुस्वरनामादेयनाम तीर्थंकरनाम तथा उच्चैर्गोत्र वेदक सम्यक्त्व चरमलोभ· सज्वलनलोभः इत्येताश्चतुस्त्रिंशत्प्रकृतय उदयवत्यस्तथाहि-ज्ञानावरणपञ्चकान्तरायपञ्चकदर्शनावरणचतुष्टयरूपाणां चतुर्दशप्रकृतीना क्षीणकषायान्त्यसमये चरमोदयाना च नाम वेदकलक्षणानां सातासातवेदनीययोरुच्चैर्गोत्रस्य च सर्वसख्यया द्वादशप्रकृतीनामयोगिकेवलिचरमसमये सज्वलनलोभस्य सूक्ष्मसपरायान्त्यसमये वेदकसम्यक्त्वस्य स्वक्षपणपर्यवसानसमये स्त्रीनपुंसकवेदयो क्षपकश्रेण्यामनिवृत्तिबादरसपरायद्वयो सख्येयेषु भागेष्वतिक्रान्तेषु तदुदयान्तसमये आयुषां च स्वस्वभवचरमसमये स्ववेदनमस्ति । तत एता उदयवत्योऽभिधीयन्ते । यद्यपि सातासातवेदनीययो· स्त्रीनपुंसकवेदयोश्चानुदयवतीत्वमपि सम्भवति तथापि प्रधानमेव गुणमवलम्ब्य सत्पुरुषा व्यपदेश प्रयच्छन्तीति उदयवत्य· पूर्वपुरुषैरुपदिष्टा· । प० स० ३ द्वा० ।

उदयवल्लह-उदयवल्लभ-- पुं० विक्रमराज्यात् अष्टाविंशत्यधिकचतुर्दशशते ( १४२८ ) वर्षे जाते श्रीपालकथानामग्रन्थकृतो लब्धिसागरस्य गुरौ । जै०इ० ।

उदयरयणगणि-उदयरत्नगणिन्-पुं० 'स्वनामके मुनिसिंहसूरेः शिष्ये, अनेन विक्रमराज्यात् अष्टाविंशत्यधिकचतुर्दशशते ( १४२८ ) वर्षे रत्नशेखरसूरिकृतश्रीपालचरित्रस्य प्रथमादर्शो लिखित· । जै० इ० ।

उदयवीरगणि-उदयवीरगणिन्-पुं०तपागच्छीये सध्रवीरगणिनोऽन्तेवासिनि, । जै० इ० ।

उदयसंकमुक्किट्ठा-उदयसंक्रमोत्कृष्टा-स्त्री० कर्मप्रकृतिभेदे, यासा विपाकोदये प्रवर्तमाने सति सक्रमत उत्कृष्टस्थितिसत्कर्म लभ्यते न बन्धनस्ता उदयसक्रमोत्कृष्टा· । पं० स०३ द्वा० ।

उदयसंठिइ-उदयसंस्थिति-पुं० सूर्यादेरुदयविधौ, चं० प्र० ८ पाहु० । सू० प्र० । ( सूर्यस्य उदयविधौ विप्रतिपत्तिप्रदर्शनपूर्वकसिद्धान्तो यथा-

ता कधं ते उदयसंठिती आहितेति वदेज्जा तत्थ खलु इमाओ तिण्णि पडिवत्तिओ पणत्ताओ तत्थेगे एवमाहंसु ता जदा णं जंबूदीवे २ दाहिणद्धे अट्ठारसमुहुत्ते दिवसे भवति तता

णं उत्तरड्ढे वि अट्ठारसमुहुत्ते दिवसे भवति । जता णं उ तरड्ढे अट्ठारसमुहुत्ते दिवसे भवति तता णं दाहिणड्ढे वि अ- ट्ठारसमुहुत्ते दिवसे भवति । जदा णं जंबुद्दीवे २ दाहिणड्ढे सत्तरसमुहुत्ते दिवसे भवति तया णं उत्तरड्ढे वि सत्तरस मुहुत्ते दिवसे भवति । जया णं उत्तरड्ढे सत्तरस मुहुत्ते दिवसे भवति तदा णं दाहिणड्ढे वि सत्तरस मुहुत्ते दिवसे भवति । एवं परिहावेतव्वं सोलसमुहुत्ते दिवसे पण्णरसमुहुत्ते दिवसे चोद्दस मुहुत्ते दिवसे भवति तेरसमुहुत्ते दिवसे जाव ता जता णं जंबूदीवे २ दाहिणड्ढे बारसमुहुत्ते दिवसे तया णं उत्तरड्ढे वि बारसमुहुत्ते दिवसे भवति । जता णं उत्तरड्ढे बारसमुहुत्ते दिवसे भवति तताणं दाहिणड्ढे वि बारसमुहुत्ते दिवसे भवति । तता णं जंबुद्दीवे २ मंदरस्स पव्वयस्स पुरत्थिमं पचच्छिमेणं सत्तपण्णरसमुहुत्ते दिवसे भवति सदा पण्णरस मुहुत्ता राई भवति अवट्ठिताणं तत्थ राइंदिया पण्णत्ता समणाउसो एगे ए- वमाहंसु । एगे पुण एवमाहंसु जता णं जंबूदीवे २ दाहिणड्ढे अट्ठारस मुहुत्ताणंतरे दिवसे भवति तया णं उत्तरड्ढे वि अट्ठारसमुहुत्ताणंतरे दिवसे भवइ । जया णं उत्तरड्ढे अट्ठा- रसमुहुत्ताणंतरे दिवसे भवति तता णं दाहिणड्ढे वि अट्ठारसमु हुत्ताणंतरे दिवसे भवति । जया णं उत्तरड्ढे अट्ठारसमु- हुत्ताणंतरे दिवसे भवति तता णं दाहिणड्ढे वि अट्ठारसमुहु- त्ताणंतरे दिवसे भवति । एवं परिहावतव्वं सत्तरस मुहुत्ताणंतरे दिवसे भवति सोलसमुहुत्ताणंतरे पण्णरसमुहुत्ताणंतरे दिवसे भवति एवं परिहावेतव्वं चोद्दसमुहुत्ताणंतरे जाव ॥

( ता कधत इत्यादि ) ता इति पूर्ववत् कथं केन प्रकारेण सूर्य- स्य उदयसंस्थितिस्त्वया भगवन्नाख्याता इति वदेत् एवमुक्ते सति भगवानेतद्विषया यावत्यः प्रतिपत्तयः तावतीरुपदर्शयति। ( तत्थेत्यादि ) तत्र तस्यामुदयसंस्थितौ विषये तिस्रः प्रतिपत्तयः परतीर्थिकाभ्युपगमरूपा प्रज्ञप्तास्तद्यथा तत्र तेषां त्रयाणां परती- र्थिकानां मध्ये एके प्रथमाः परतीर्थिका एवमाहुः ( ता जयाण- मित्यादि ) तत्र यदा णमिति वाक्यालङ्कारे अस्मिन् जम्बूद्वीपे द्वीपे दक्षिणार्द्धे अष्टादशमुहूर्त्तो दिवसो भवति तदा उत्तरार्द्धेऽपि अष्टादशमुहूर्त्तो दिवसः । तदेव दक्षिणार्द्धनियमेनोत्तरार्द्धनियम उक्तः । सम्प्रति उत्तरार्द्धनियमेन दक्षिणार्द्धनियमनमाह ( ताज- याणमिति ) तत्र यदा उत्तरार्द्धे अष्टादशमुहूर्त्तो दिवसो भवति तदा दक्षिणार्द्धेऽपि अष्टादशमुहूर्त्तो दिवसः ( ताजयाणमित्यादि ) यदा जम्बूद्वीपे द्वीपे दक्षिणार्द्धे सप्तदशमुहूर्त्तो दिवसो भवति तदा उत्तरार्द्धेऽपि सप्तदशमुहूर्त्तो दिवसो भवति यदा चोत्तरा- र्द्धे सप्तदशमुहूर्त्तो दिवसो भवति तदा दक्षिणार्द्धेऽपि सप्तदश मुहूर्त्तो दिवसः ( एवं इत्यादि ) एवमुक्तेन प्रकारेण एकैकमुहूर्त- हान्या परिहातव्यम् परिहानिमेव क्रमेण दर्शयति । प्रथमत उक्त प्रकारेण षोडशमुहूर्त्तो दिवसो वक्तव्यः तदनन्तरं पञ्चदशमुहूर्त- स्ततश्चतुर्दशमुहूर्त्तस्ततस्त्रयोदशमुहूर्त्तः सूत्रपाठेऽपि प्रागुक्तसूत्रा- नुसारेण स्वयं परिभावनीयः । सचैव " जया ण जंबुद्दीवे दीवे दाहिणड्ढे सोलसमुहुत्ते दिवसे भवइ तया ण उत्तरड्ढे सोलसमु- हुत्ते दिवसे भवइ जयाण उत्तरड्ढे वि सोलसमुहुत्ते दिवसे भवइ तया णं दाहिणड्ढे वि सोलसमुहुत्ते दिवसे भवइ" इत्यादि द्वादशमुहूर्त्तदिवसप्रतिपादकसूत्रं साक्षादाह ( ता जयाणमि- त्यादि ) ता इति तत्र यदा जम्बूद्वीपे दक्षिणार्द्धे द्वादशमुहूर्त्तो दिवसो भवति तदा उत्तरार्द्धेऽपि द्वादशमुहूर्त्तो दिवसः यदा उत्तरार्द्धे द्वादशमुहूर्त्तो दिवसस्तदा दक्षिणार्द्धेऽपि द्वादशमुहू- र्त्तप्रमाणो दिवसः । तदा अष्टादशमुहूर्त्तादिदिवसकाले जम्बू- द्वीपे २ मन्दरस्य पर्वतस्य पूर्वस्यामपरस्यां च दिशि सदा सर्व- काल पञ्चदशमुहूर्त्तो दिवसो भवति सदैव पञ्चदशमुहूर्त्ता रात्रिः । कुत इत्याह । अवस्थितानि सकलकालमेकप्रमाणानि णमिति वाक्यालंकारे तत्र मन्दरस्य पर्वतस्य पूर्वस्यामपरस्यां दिशि रात्रिं दिवानि प्रज्ञप्तानि हे श्रमण ! हे आयुष्मन् ! एतच्च प्रथ- मानां परतीर्थिकानां मूलभूत स्वशिष्यं प्रत्यामन्त्रण वाक्यम् । अत्रैवोपसहारमाह । ( एगे एवमाहंसु ) एके पुनरेवमाहुः यदा जम्बूद्वीपे दक्षिणस्मिन्नर्द्धे अष्टादशमुहूर्त्तानन्तरोऽष्टादशभ्यो मुहूर्त्तेभ्योऽनन्तरो मनाक् हीनो हीनतरो वा यावत्सप्तदशभ्यो मुहूर्तेभ्यः किंचित्समधिक एव प्रमाणो दिवसो भवति तदा उत्त- रार्द्धेऽप्यष्टादशमुहूर्त्तानन्तरो दिवसो भवति यदा चोत्तरार्द्धे अष्टादशमुहूर्त्तानन्तरो दिवसो भवति तदा दक्षिणार्द्धेऽपि अष्टा- दशमुहूर्त्तानन्तरो दिवसः । यदा जम्बूद्वीपे दक्षिणार्द्धे सप्तदशमु- हूर्तानन्तरो दिवसो भवति तदा उत्तरार्द्धेऽपि सप्तदशमुहूर्तानन्तरो दिवसः यदा उत्तरार्द्धे सप्तदशानन्तरो दिवसस्तदा दक्षिणार्द्धेऽपि सप्तदशमुहूर्त्तानन्तरो दिवसः ( एवमित्यादि ) एवमुक्तेन प्र- कारेण एकैकमुहूर्त्तहान्या परिहातव्यं परिहानिप्रकारमेवाह ( सोलसेत्यादि ) प्रथमतः षोडशमुहूर्त्तानन्तरो दिवसो वक्तव्यः । ततः पञ्चदशमुहूर्त्तानन्तरस्तदनन्तरं चतुर्दशमुहूर्त्तानन्तरस्ततस्त्र- योदशमुहूर्तानन्तरं एतेषां हि मतेन न कदाचनापि परिपूर्णमु- हूर्तप्रमाणो दिवसो भवति ततः सर्वत्रानन्तरशब्दप्रयोगः । द्वाद- शमुहूर्त्तानन्तरं सूत्रं तु साक्षाद्दर्शयति ॥

ता जयाणं जंबुद्दीवे २ दाहिणड्ढे बारसमुहुत्ताणंतरे दिवसे भव- ति तदा णं उत्तरड्ढे वि बारसमुहुत्ताणंतरे दिवसे भवति जता णं उत्तरड्ढे बारसमुहुत्ताणंतरे दिवसे भवति तया णं दाहिण- ड्ढेवि बारसमुहुत्ताणंतरे दिवसे भवति तदा णं जंबुद्दीवे २ मंदरस्स पव्वतस्स पुरत्थिमपचच्छिमेणं णो सदा पण्णरसमुहुत्ते दिवसे भवति णो सदा पण्णरसमुहुत्ता राई भवति अणव- ट्ठिताणं तत्थ राइंदिया पण्णत्ता समणाउसो एगे एवमाहंसु एगे पुण एवमाहंसु २ ता जदा णं जंबुद्दीवे २ दाहिणड्ढे अट्ठा- रसमुहुत्ते दिवसे भवत्ति तदा णं उत्तरड्ढे दुवालसमुहुत्ता राई भवति । जया णं उत्तरड्ढे अट्ठारसमुहुत्ते दिवसे भवति तदा णं दाहिणड्ढे बारसमुहुत्ता राई भवति ता जया णं जंबुद्दीवे २ दाहिणड्ढे अट्ठारसमुहुत्ताणंतरे दिवसे भवति तदा णं उत्तरड्ढे बारसमुहुत्ता राई भवइ । जता णं उत्तरड्ढे अट्ठा- रसमुहुत्ताणंतरे दिवसे भवति तदा णं दाहिणड्ढे बारसमु- हुत्ता राई भवति । एवं णेतव्वं सगलेहि य अणंतरेहि य एक्के दो दो आलावका सव्वेहिं दुवालसमुहुत्ता राई भवति जाव ता जता ण जंबुद्दीवे २ दाहिणड्ढे बारसमुहु- त्ताणंतरे दिवसे भवति उत्तरड्ढे दुवालसमुहुत्ताराई भवति जया णं उत्तरड्ढे दुवालसमुहुत्ताणंतरे दिवसे भवति तदा णं दाहिणड्ढे दुवालसमुहुत्ता राई भवति । तता णं

जंबुद्दीवे दीवे मंदरस्स पव्वयस्स पुरच्छिमपच्चच्छिमेणं णेवत्थि पण्णरसमुहुत्ते दिवसे भवति । णेवत्थिपण्णरसमुहुत्ता राई भवति वोच्छिण्णाणं तत्थ राइंदिया पण्णत्ता समणाउसो एगे एवमाहंसु ३ वयं पुण एवं वदामो ता जंबुद्दीवे २ सूरियाउ दीणपाईणमुवगच्छंति पाईणदाहिणमागच्छंति पाईणदाहिणमुपगच्छंति दाहिणपडिणमागच्छंति दाहीणपडीणमुग्गच्छंति पडीणमुदीणमागच्छंति पडीणउदीणमुपगच्छंति उदीणपाईणमागच्छंति । ता जता णं जंबुद्दीवे २ दाहिणड्ढे दिवसे भवति ता तदा णं उत्तरड्ढे दिवसे भवति । तदाणं जंबुद्दीवे २ मंदरस्स पव्वयस्स पुरच्छिमपच्चच्छिमेणं राई भवति ता जदा णं जंबुद्दीवे २ मंदरस्स पव्वयस्स पुरच्छिमेणं दिवसे भवति तदा णं जंबुद्दीवे २ मंदरस्स पव्वयस्स उत्तरदाहिणेणं राई भवति । ता जदा णं जंबुद्दीवे २ दाहिणड्ढे उक्कोसए अट्ठारसमुहुत्ते दिवसे भवति तदा णं उत्तरड्ढेवि उक्कोसए अट्ठारसमुहुत्ते दिवसे भवति जता णं उत्तरड्ढे उक्कोसए अट्ठारसमुहुत्ते दिवसे भवति तदा णं जंबुद्दीवे २ मंदरस्स पव्वयस्स पुरच्छिमेणं जहण्णिया दुवालसमुहुत्ता राई भवति । ता जता णं जंबुद्दीवे २ मंदरस्स पव्वतस्स पुरच्छिमेणं उक्कोसए अट्ठारसमुहुत्ते दिवसे भवति जता णं पच्चच्छिमेण उक्कोसए अट्ठारसमुहुत्ते दिवसे भवति तता णं जंबुद्दीवे २ मंदरस्स पव्वयस्स उत्तरदाहिणेणं जहण्णिया दुवालसमुहुत्ता राई भवति । एवं एएणं गमेणं णेतव्वं । अट्ठारसमुहुत्ताणंतरे दिवसे सातिरेगदुवालसमुहुत्ता राई भवति सत्तरसमुहुत्ते दिवसे तेरसमुहुत्ता राई सत्तरसमुहुत्ताणंतरे दिवसे भवति सातिरेगतेरसमुहुत्ता राई भवति सोलसमुहुत्ते दिवसे भवति चोद्दसमुहुत्ता राई भवति । सोलसमुहुत्ताणंतरे दिवसे भवति सातिरेगचोद्दसमुहुत्ता राई भवति । पण्णरसमुहुत्ते दिवसे पण्णरसमुहुत्ता राई पण्णरसमुहुत्ताणंतरे दिवसे सातिरेगपण्णरसमुहुत्ता राई भवति । चोद्दसमुहुत्ते दिवसे सोलसमुहुत्ता राई चोद्दसमुहुत्ताणंतरे दिवसे सातिरेगसोलसमुहुत्ता राई तेरसमुहुत्ते दिवसे सत्तरसमुहुत्ता राई तेरसमुहुत्ताणंतरे दिवसे सातिरेगसत्तरसमुहुत्ता राई । जहण्णए दुवालसमुहुत्ते दिवसे भवति उक्कोसिया अट्ठारसमुहुत्ता राई भवइ एवं भाणितव्वं । ता जदा णं जंबुद्दीवे २ दाहिणड्ढे वासाणं पढमे समए पडिवज्जति तता णं उत्तरड्ढेवि वासाणं पढमे समए पडिवज्जति । जता णं उत्तरड्ढे वासाणं पढमे समए पडिवज्जति तता णं जंबुद्दीवे २ मंदरस्स पव्वयस्स पुरच्छिमपच्चच्छिमेणंतरपुरक्खडे कालसमयंसि वासाणं पढमे समए पडिवज्जइ ता जया णं जंबुद्दीवे २ मंदरस्स पव्वयस्स पुरच्छिमेणं वासाणं पढमे समए पडिवज्जइ तता णं पच्चच्छिमेणं वि वासाणं पढमे समए पडिवज्जइ । जया णं पच्चच्छिमे णं वासाणं पढमे समए पडिवज्जइ तता णं जंबुद्दीवे २ मंदरस्स पव्वयस्स उत्तरदाहिणेणं अणंतरपच्छाकयकालसमयंसि वासाणं पढमे समये पडिवण्णे भवति ॥ जहा समओ एवं आवलियाए आणापाणू थोवे लवे मुहुत्ते अहोरत्ते पक्खे मासे उऊ एवं दस आलावका जधा वासाणं एव हेमंताणं गिम्हाणं च भाणियव्वा ॥

( ता जया णमित्यादि ) तत्र यदा जम्बूद्वीपे दक्षिणार्द्धे द्वादशमुहूर्त्तानन्तरो दिवसस्तदा उत्तरार्द्धेऽपि द्वादशमुहूर्त्तानन्तरो दिवस । यदा चोत्तरार्द्धे द्वादशमुहूर्त्तानन्तरो दिवसस्तदा दक्षिणार्द्धेऽपि द्वादशमुहूर्त्तानन्तरो दिवसस्तदा चाष्टादशमुहूर्त्तानन्तरादिदिवसकाले जम्बूद्वीपे मन्दरस्य पर्वतस्य पूर्वस्यामपरस्यां च दिशि नो नैव सदा सर्वकाल पञ्चदशमुहूर्तो दिवसो भवति नापि सदा पञ्चदशमुहूर्ता रात्रिः कुत इत्याह ( अणवट्ठियाणमित्यादि ) अनवस्थितानि अनियतप्रमाणानि णमिति खलु तत्र मन्दरस्य पर्वतस्य पूर्वस्यामपरस्यां च दिशि रात्रिन्दिवानि प्रज्ञप्तानि हेश्रमण ! हेआयुष्मन् ! अत्रोपसंहारमाह । ( एगे एवमाहंसु २ ) एके पुनरेवमाहुः । ता इति पूर्ववत् जम्बूद्वीपे यदा दक्षिणार्द्धे अष्टादशमुहूर्त्तो दिवसो भवति तदा उत्तरार्द्धे द्वादशमुहूर्ता रात्रिः। यदोत्तरार्द्धे अष्टादशमुहूर्त्तो दिवसो भवति तदा दक्षिणार्द्धे द्वादशमुहूर्त्ता रात्रि तया यदा दक्षिणार्द्धे ( अट्ठारसमुहुत्ताणंतरत्ति ) अष्टादशभ्यो मुहूर्तेभ्योऽनन्तरो मनाक् हीनो हीनतरो यावत्सप्तदशभ्यो मुहूर्तेभ्यः किञ्चिदधिक एव प्रमाणो दिवसो भवति तदा उत्तरार्द्धे द्वादशमुहूर्ता रात्रिः । तथा यदा चोत्तरार्द्धे अष्टादशमुहूर्त्तानन्तरो दिवसस्तदा दक्षिणार्द्धे द्वादशमुहूर्ता रात्रिः ( एवमित्यादि ) एवमुक्तेन प्रकारेण तावद्वक्तव्यं यावत्त्रयोदशमुहूर्त्तानन्तरदिवसवक्तव्यता एकैकस्मिंश्च सप्तदशादिके सङ्ख्याविशेषे सकलैर्मुहूर्तैरनन्तरैश्च किञ्चिदूनैर्द्वौ द्वावालापकौ वक्तव्यौ सर्वत्र च द्वादशमुहूर्ता रात्रिः तद्यथा । " जयाण जंबुद्दीवे दीवे दाहिणड्ढे सत्तरसमुहुत्ते दिवसे भवइ तयाण उत्तरड्ढे दुवालसमुहुत्ता राई भवति जयाण उत्तरड्ढे सत्तरसमुहुत्ते दिवसे भवइ तया ण दाहिणड्ढे दुवालसमुहुत्ता राई भवइ जया ण जंबुद्दीवे दीवे दाहिणड्ढे सत्तरसमुहुत्ताणतरे दिवसे हवइ तया ण उत्तरड्ढे दुवालसमुहुत्ता राई भवइ जयाण उत्तरड्ढे सत्तरसमुहुत्ताणंतरे दिवसे भवइ तया ण दाहिणड्ढे दुवालसमुहुत्ता राई भवइ " एवं पोडशमुहूर्त्ते । षोडशमुहूर्तानन्तर पञ्चदशमुहूर्ते पञ्चदशमुहूर्तानन्तर चतुर्दशमुहूर्ते चतुर्दशमुहूर्तानन्तर त्रयोदशमुहूर्ते त्रयोदशमुहूर्तानन्तर द्वादशमुहूर्तगता अपि नव आलापका वक्तव्या द्वादशमुहूर्तानन्तरगतमालापक साक्षादाह ( जयाणमित्यादि ) यदा जम्बूद्वीपे द्वीपे दक्षिणार्द्धे द्वादशमुहूर्तानन्तरो दिवसो भवति तदा उत्तरार्द्धे द्वादशमुहूर्ता रात्रिर्भवति यदा चोत्तरार्द्धे द्वादशमुहूर्त्तानन्तरो दिवसो भवति तदा दक्षिणार्द्धे द्वादशमुहूर्ता रात्रिः तदा चाष्टादशमुहूर्तानन्तरादिदिवसकाले जम्बूद्वीपे द्वीपे मन्दरस्य पर्वतस्य ( पुरच्छिमपच्चच्छिमेणंति ) पूर्वस्यां पश्चिमायां च दिशि नैवास्त्येतत् यदुत पञ्चदशमुहूर्तो दिवसो भवति नाप्यस्त्येतत् यथा पञ्चदशमुहूर्ता रात्रिर्भवतीति कुत इत्याह ( वोच्छिण्णाणमित्यादि ) व्यवच्छिन्नानि णमिति खलु तत्र मन्दरस्य पर्वतस्य पूर्वस्यां पश्चिमायां च दिशि रात्रिंदिवानि प्रज्ञप्तानि हेश्रमण ! हेआयुष्मन्! अत्रैवोपसंहारमाह ( एगे एवमाहंसु ३ ) एताश्च तिस्रोऽपि प्रतिपत्तयो मिथ्यारूपा जगत्स्वभावानुपपत्तेरनुमतत्वाद् । अपिच ये तृतीयावादिन सदैव रात्रि द्वादशमुहूर्तप्रमाणामिच्छन्ति तेषां प्रत्यक्षविरोधः । प्रत्यक्षतोऽत्र हीनाधिकरूपा रात्रेरुपलभ्यमानत्वात् ॥

सम्प्रति स्वमतं भगवानुपदर्शयति । ( वयपुण इत्यादि ) वयं पुनरेवं वक्ष्यमाणेन प्रकारेण वदामस्तमेव प्रकारमाह ( ता जंबुद्दीवे दीवे इत्यादि ) ता इति पूर्ववत् जम्बूद्वीपे द्वीपे सूर्यौ यथायोगमण्डलपरिभ्रम्या भ्रमन्तौ मेरोरुदक्प्राच्यामुत्तरपूर्वस्यां दिशि उद्गच्छतः तत्र चोद्गत्य प्राग् दक्षिणपूर्वस्यामागच्छतः ततो भरतादिक्षेत्रापेक्षया प्राग् दक्षिणपूर्वस्यामुद्गत्य दक्षिणापरस्यामागच्छतस्तत्रापि च दक्षिणापरस्यामपरविदेहक्षेत्रापेक्षया उद्गत्यापाच्युदीच्यामपरोत्तरस्यामागच्छतस्तत्रापि चापरोत्तरस्यामैरावतादिक्षेत्रापेक्षया उद्गत्य उदक्प्राच्यामुत्तरपूर्वस्यामागच्छतः एवं तावत्सामान्यतो द्वयोरपि सूर्ययोरुदयविधिरुपदर्शितो विशेषतः पुनरयं यदैकः सूर्यः पूर्वदक्षिणस्यामुद्गच्छति तदा अपरः उत्तरस्यां दिशि समुद्गच्छति दक्षिणपूर्वोद्गतश्च सूर्यो भरतादीनि क्षेत्राणि मेरुदक्षिणदिग्वर्तीनि मण्डलपरिभ्रम्या परिभ्रमन् प्रकाशयति अपरोत्तरस्यामुद्गतः सन् ततः ऊर्ध्वं मण्डलपरिभ्रम्या परिभ्रमन् ऐरावतादीनि क्षेत्राणि मेरोरुत्तरदिग्भावीनि प्रकाशयति भारतश्च सूर्यो दक्षिणापरस्यामागतः सन्नपरविदेहक्षेत्रापेक्षया उदयमासादयति ऐरावतः सूर्यः पुनरुत्तरपूर्वस्यामागतः पूर्वविदेहापेक्षया समुद्गच्छति ततो दक्षिणापरस्यामुद्गतः सन् तत ऊर्ध्वं मण्डलभ्रम्या परिभ्रमन् अपरविदेहान् प्रकाशयति । उत्तरपूर्वस्यामुद्गतः सन् तत ऊर्ध्वं मण्डलगत्या चरन् पूर्वविदेहानवभासयति । तत एव पूर्वविदेहप्रकाशकः सूर्यो दक्षिणपूर्वस्यां भरतादिक्षेत्रापेक्षयोदयमासादयति अपरविदेहप्रकाशकस्त्वपरोत्तरस्यामिति । तदेवं जम्बूद्वीपे सूर्ययोरुदयविधिरुक्तः सम्प्रति क्षेत्रविभागेन दिवसरात्रिविभागमाह ( ता जयाणमित्यादि ) तत्र यदाणमिति वाक्यालङ्कारे जम्बूद्वीपे २ दक्षिणार्द्धे दिवसो भवति तदा उत्तरार्द्धेऽपि दिवसो भवति एकस्य सूर्यस्य दक्षिणदिशि परिभ्रमणसम्भवे अपरस्य सूर्यस्यावश्यमुत्तरदिशि भ्रमणसम्भवात् यदा चोत्तरार्द्धे दिवसस्तदा जम्बूद्वीपे द्वीपे मन्दरस्य पर्वतस्य ( पुरच्छिमपच्चच्छिमेणति ) पूर्वस्यामपरस्यां च दिशि रात्रिर्भवति तदानीमेकस्यापि सूर्यस्य तत्राभावात् । ( ता जया णमित्यादि ) तत्र यदा जम्बूद्वीपे मन्दरस्य पर्वतस्य पूर्वस्यां दिशि दिवसो भवति एकस्य सूर्यस्य पूर्वदिग्भागसम्भवे अपरस्य सूर्यस्यावश्यमपरस्यां दिशि भावात् । एतच्च प्रागेव भावितम् । यदा च पश्चिमायामपि दिशि दिवसो भवति तदा जम्बूद्वीपे मन्दरस्य पर्वतस्य ( उत्तरदाहिणणति ) उत्तरतो दक्षिणतश्च रात्रिर्भवति ( ता जया णमित्यादि ) तत्र यदा णमिति प्राग्वत् जम्बूद्वीपे दक्षिणार्द्धे उत्कर्षत उत्कृष्टोऽष्टादशमुहूर्त्तप्रमाणो दिवसो भवति तदा उत्तरार्द्धेऽपि उत्कृष्टोऽष्टादशमुहूर्त्तोऽष्टादशमुहूर्त्तप्रमाणो दिवसः उत्कृष्टो ह्यष्टादशमुहूर्त्तप्रमाणो दिवसः सर्वाभ्यन्तरमण्डलचारित्वे तत्र च यदैकः सूर्यः सर्वाभ्यन्तरमण्डलचारी भवति तदा अपरोऽप्यवश्यं तत्समायामश्रेण्या सर्वाभ्यन्तरमण्डलचारी भवतीति दक्षिणार्द्धे उत्कृष्टदिवससम्भवे उत्तरार्द्धेऽप्युत्कृष्टदिवससम्भवः । यदा उत्तरार्द्धे उत्कृष्टोऽष्टादशमुहूर्त्तप्रमाणो दिवसो भवति तदा जम्बूद्वीपे २ मन्दरस्य पर्वतस्य ( पुरच्छिमपच्चच्छिमेणति ) पूर्वस्यामपरस्यां च दिशि जघन्या द्वादशमुहूर्त्ता रात्रिर्भवति सर्वाभ्यन्तरे मण्डले चारं चरतो सूर्ययो सर्वत्रापि रात्रेर्द्वादशमुहूर्त्तप्रमाणाया एव भावात् तथा ( ताजयाणमित्यादि ) तत्र यदा जम्बूद्वीपे द्वीपे मन्दरस्य पर्वतस्य पूर्वस्यां दिशि उत्कर्षत उत्कृष्टोऽष्टादशमुहूर्त्तो दिवसो भवति तदा मन्दरस्य पर्वतस्य पश्चिमायामपि दिशि उत्कृष्टोऽष्टादशमुहूर्त्तो दिवस कारण दक्षिणोत्तरार्द्धगतं प्रागुक्तमनुसरणीयम् । यदा च मन्दरपर्वतस्य पश्चिमायामपि दिशि उत्कृष्टोऽष्टादशमुहूर्त्तो दिवसो भवति तदा जम्बूद्वीपे द्वीपे मन्दरस्य पर्वतस्य ( उत्तरदाहिणेणति ) उत्तरतो दक्षिणतश्च जघन्या द्वादशमुहूर्त्ता रात्रि । अत्रापि कारणं पूर्वपश्चिमार्द्धे रात्रिगतं प्रागुक्तमनुसरणीयम् । ( एवमित्यादि ) एवमुक्तेन प्रकारेण एतेनानन्तरोदितेन गमेनालापकगमेन वक्ष्यमाणमपि नेतव्यम् । किं तद्वक्ष्यमाणमित्याह । ( अट्ठारसमुहुत्ताणन्तरइत्यादि ) यदा मन्दरस्य पर्वतस्य दक्षिणोत्तरार्द्धयोः पूर्वपश्चिमयोर्वा अष्टादशमुहूर्त्तानन्तरः सप्तदशभ्यो मुहूर्त्तेभ्य ऊर्द्धं किञ्चिन्न्यूनाष्टादशमुहूर्त्तप्रमाणो दिवसस्तदा पूर्वपश्चिमयोर्दक्षिणोत्तरार्द्धयोर्वा सातिरेका द्वादशमुहूर्त्ता रात्रिर्भवतीति एवं शेषाण्यपि पदानि भावनीयानि सूत्रपाठोऽपि प्रागुक्तालापकगमानुसारेण स्वयं परिभावनीयः । स चैवं " ता जयाणं जंबुद्दीवे दीवे दाहिणड्ढे अट्ठारसमुहुत्ताणंतरे दिवसे हवइ तया णं उत्तरड्ढेवि अट्ठारसमुहुत्ताणंतरे दिवसे भवइ जया णं उत्तरड्ढे अट्ठारसमुहुत्ताणंतरे दिवसे हवइ तया णं जंबुद्दीवे दीवे मंदरस्स पव्वयस्स पुरच्छिमपच्चच्छिमेणं सातिरेगदुवालसमुहुत्ता राई भवइ ता जया णं जंबुद्दीवे दीवे मंदरस्स पव्वयस्स पुरच्छिमेणं अट्ठारसमुहुत्ताणंतरे दिवसे हवइ तया णं पच्चच्छिमेण वि अट्ठारसमुहुत्ताणंतरे दिवसे हवइ । जया णं पच्चच्छिमेणं वि अट्ठारसमुहुत्ताणंतरे दिवसे भवइ तया णं जंबुद्दीवे दीवे मंदरस्स पव्वयस्स उत्तरदाहिणेणं साइरेगदुवालसमुहुत्ता राई भवइ" एवं सप्तदशमुहूर्त्तदिवसादिप्रतिपादका अपि सूत्रालापका भावनीया ( ता जयाणमित्यादि ) तत्र यदा जम्बूद्वीपे दक्षिणार्द्धे वर्षाणां वर्षाकालस्य प्रथमः समयः प्रतिपद्यते भवति तदा उत्तरार्द्धेऽपि वर्षाणां प्रथमसमयो भवति समकालं नैयत्येन दक्षिणार्द्धे उत्तरार्द्धे च सूर्ययोश्चारभावात् यदा चोत्तरार्द्धे वर्षाकालस्य प्रथमः समयो भवति तदा जम्बूद्वीपे द्वीपे मन्दरस्य पर्वतस्य ( पुरच्छिमपच्चच्छिमेणति ) पूर्वस्यामपरस्यां च दिशि ( अणन्तरपुरक्खडेत्ति ) अनन्तरमव्यवधानेन पुरस्कृतोऽग्रे कृतो यः सः अनन्तरपुरस्कृतोऽनन्तरद्वितीय इत्यर्थः । तस्मिन् काले ( समयंसित्ति ) समयः सङ्केतादिरपि भवति ततस्तद्व्यवच्छेदार्थं कालग्रहणं कालश्चासौ समयश्च कालसमयस्तत्र वर्षाकालप्रथमसमयः प्रतिपद्यते भवति किमुक्तं भवति यस्मिन् समये दक्षिणोत्तरार्द्धयोर्वर्षाकालस्य प्रथमः समयो भवति तस्मादूर्ध्वमनन्तरे द्वितीये समये पूर्वपश्चिमयोर्वर्षाकालस्य प्रथमसमयो भवति ( ताजयाणमित्यादि ) तत्र यदा णमिति प्राग्वत् । जम्बूद्वीपे २ मन्दरस्य पर्वतस्य पूर्वस्यां दिशि वर्षाकालस्य प्रथमः समयो भवति तदा मन्दरस्य पर्वतस्य पश्चिमायामपि दिशि वर्षाकालप्रथमसमयो भवति समकालं नैयत्येन पूर्वपश्चिमयोरपि सूर्ययोश्चारचरणात् । यदा च पश्चिमायामपि दिशि वर्षाकालस्य प्रथमः समयः भवति तदा जम्बूद्वीपे द्वीपे मन्दरस्य पर्वतस्य ( उत्तरदाहिणणति ) उत्तरतो दक्षिणतश्च अनन्तरमव्यवधानेन पश्चात्कृतोऽनन्तरपश्चात्कृतस्तस्मिन् कालसमये वर्षाकालस्य प्रथमः समयः प्रतिपन्नो भवति भूत इत्यर्थः । इह यस्मिन् समये दक्षिणार्द्धे उत्तरार्द्धे च वर्षाकालस्य प्रथमः समयो भवति तदनन्तरेऽग्रेतने द्वितीये समये पूर्वपश्चिमयोर्वर्षाणां प्रथमसमयो भवतीति । एतावन्मात्रोक्तावपि यस्मिन् समये पूर्वपश्चिमयोर्वर्षाकालस्य प्रथमः समयो भवति ततोऽनन्तरे पश्चाद्भाविनि समये दक्षिणोत्तरार्द्धयोर्वर्षाकालस्य प्रथमः समयो भवतीति गम्यते तत्किमर्थमस्योपादानम् उच्यते इह अत्रान्याभिहितोऽर्थः प्रपञ्चितज्ञानां शिष्याणामतिसुनिश्चितो भवति ततस्तेषामनुग्रहाय

तदुक्तमित्यदोषः॥ ( जहासमयइत्यादि ) यथा समय उक्तस्तथा आवलिकाद्याणापाणौ स्तोकको लवो मुहूर्त्तोऽहोरात्र पक्षो मास ऋतुश्च प्रावृडादिरूपो वक्तव्य एवं च समयागतमालापकमादिं कृत्वा दश आलापका एते भवन्ति ते च समयगतालापकरीत्या स्वयं परिभावनीयास्तद्यथा" जयाण जंबूदीवे दीवे वासाण पढमा आवलिया पडिवज्जइ तया ण उत्तरड्ढे वि वासाण पढमा आवलिया पडिवज्जइ जयाण उत्तरड्ढे वासाण पढमा आवलिया पडिवज्जइ तया ण जंबुद्दीवे दीवे मंदरस्स पव्वयस्स पुरच्छिमपच्चच्छिमेण अणतरपुरक्खडे कालसमयंसि वासाण पढमा आवलिया पडिवज्जइ ता जयाण जंबूदीवे दीवे मंदरस्स पव्वयस्स पुरच्छिमेण वासाण पढमा आवलिया पडिवज्जइ तया ण पच्चच्छिमेण वि पढमा आवलिया पडिवज्जइ जया ण पच्चच्छिमेण वासाण पढमा आवलिया पडिवज्जइ तया ण जंबूदीवे दीवे मंदरस्स पव्वयस्स उत्तरदाहिणेण अणतरपच्छाकडकालसमयंसि वासाणं पढमा आवलिया पडिवन्ना भवइ" इद च प्रागुक्तव्याख्यानुसारेण व्याख्येय नवरम् ( आवलिया पडिवज्जत्ति) आवलिका परिपूर्णा भवति शेष तथैव एव प्राणापानादिका अप्यालापका भणनीया ( एएइत्यादि) यथा वर्षाणां वर्षाकालस्य एते अनन्तरोदिता समयादिगता अत्र आलापका भणिता एव ( हेमंताणंति ) शीतकालस्य ( गिम्हाणंति ) ग्रीष्मकालस्योष्णकालस्येत्यर्थः। प्रत्येक समयादिगता दश आलापका भणितव्याः। अयनगत त्वालापक साक्षात्पठति॥

ता जता णं जंबुद्दीवे २ दाहिणड्ढे पढमे अयणे पडिवज्जति तदा णं उत्तरड्ढे वि पढमे अयणे पडिवज्जइ जता ण उत्तरड्ढे पढमे अयणे पडिवज्जति तता णं जंबुद्दीवे २ मंदरस्स पव्वयस्स पुरच्छिमपच्चच्छिमेणं अणंतरपुरक्खडकालसमयंसि पढमे अयणे पडिवज्जति ता जता णं जंबुद्दीवे २ मंदरस्स पव्वयस्स पुरच्छिमेणं पढमे अयणे पडिवज्जति जया णं पच्चच्छिमेणं पढमे अयणे पडिवज्जति तता णं जंबुद्दीवे मंदरस्स पव्वयस्स उत्तरदाहिणेणं अणंतरपच्छाकडकालसमयंसि पढमे अयणे पडिवन्ने भवति जहा अयणे तहा संवच्छरे जुगे वाससते एवं वाससहस्से वाससयसहस्से पुव्वंगे पुव्वे एवं जाव सीसपहेलिया पलितोवमे सागरोवमे ता जदा णं जंबुद्दीवे २ दाहिणड्ढे उस्सप्पिणी पडिवज्जति तता णं उत्तरड्ढे वि उस्सप्पिणी पडिवज्जति जता णं उत्तरड्ढे उस्सप्पिणी पडिवज्जति तताणं जंबुद्दीवे २ मंदरस्स पव्वयस्स पुरच्छिमपच्चच्छिमेणं णेवत्थि ओसप्पिणी णेव अत्थि उस्सप्पिणी अवट्ठितेणं तत्थ काले पण्णत्ते समणाउसो एवं उस्सप्पिणी वि ता लवणे समुद्दे दाहिणड्ढे दिवसे भवति तता णं उत्तरड्ढे दिवसे भवति जता णं उत्तरड्ढे दिवसे भवति तता णं लवणसमुद्दे पुरच्छिमपच्चच्छिमेणं राई भवति जहा जंबुद्दीवे २ तहेव जाव उस्सप्पिणी तहा धायइसंडेणं दीवे सूरिया उदीणं तधेव ता जता णं धायइसंडे दीवे दाहिणड्ढे दिवसे भवति तता णं उत्तरड्ढे वि दिवसे भवति जता णं उत्तरड्ढे दिवसे भवति तता णं धायइसंडे दीवे मंदराणं पव्वताणं पुरच्छिमपच्चच्छिमेणं राई भवति एवं जंबुद्दीवे २ तहा तधेव जाव उस्सप्पिणी कालो

एवं जहा लवणे समुद्दे तधेव कालोदे भअभिंतरं पुक्खरद्धेणं सूरिया उदीणपाईणमुग्गच्छं तधेव ता जता णं अब्भिंतरपुक्खरद्धेणं दाहिणड्ढे दिवसे भवति तदा णं उत्तरद्धे वि दिवसे भवति जता णं उत्तरद्धे वि दिवसे भवति तता णं अब्भिंतरपुक्खरद्धे मंदराणं पव्वताणं पुरच्छिमे पच्चच्छिमेणं राई भवति सेसं जहा णं जंबुद्दीवे तधेव जाव उस्सप्पिणीओ सप्पिणी।

ता जताणमित्यादि सुगमम्। (जहाअयणेइत्यादि) यथा अयने आलापको भणितस्तथा संवत्सरे युगे वक्ष्यमाणस्वरूपे चन्द्रादिसंवत्सरपञ्चकात्मके वर्षसहस्रे वर्षशतसहस्रे पूर्वाङ्गे पूर्वे एवं ( जाव सीसपहेलियत्ति ) अत्र एव यावत्करणादमून्यपान्तराले पदानि द्रष्टव्यानि " तुडियंगे तुडिए अडडंगे अडडे अववगे अववे हूहूयंगे हूहुये उप्पलंगे उप्पले पउमंगे पउमे नलिणंगे नलिणे अत्थनिउरंगे अत्थनिउरे अउयंगे अउए नउयंगे नउए चूलियंगे चूलिए सीसपहेलियंगे सीसपहेलिए इति" अत्र चतुरशीतिवर्षलक्षाण्येकं पूर्वाङ्ग चतुरशीतिपूर्वाङ्गलक्षाणि एक पूर्वमेव पूर्वः पूर्वो राशिश्चतुरशीतिलक्षैर्गुणित उत्तरो राशिर्भवति यावच्चतुरशीतिशीर्षप्रहेलिकाङ्गलक्षाणि एका शीर्षप्रहेलिका एतावान् राशिर्गणितविषयोऽत ऊर्ध्वं गणनातीतः स च पल्योपमादि " पलिउवमे सागरोवमे " अनयोः स्वरूपं सग्रहणीटीकायामुक्तम्। आलापकास्तु स्वयं वक्तव्याः। अवसर्पिण्युत्सर्पिणीविषयमालापकं साक्षादाह ( ताजयाणमित्यादि ) तत्र यदा जम्बूद्वीपे द्वीपे मन्दरस्य पर्वतस्य दक्षिणार्द्धे अवसर्पिणी प्रतिपद्यते परिपूर्णा भवति तदा उत्तरार्द्धेऽपि अवसर्पिणी प्रतिपद्यते यदा उत्तरार्द्धे अवसर्पिणी प्रतिपद्यते तदा जम्बूद्वीपे २ मन्दरस्य पर्वतस्य पूर्वस्यामपरस्यां च दिशि नैवास्त्यवसर्पिणी नाप्यस्त्युत्सर्पिणी कुत इत्याह अवस्थितो णमिति खलु तत्र पूर्वस्यामपरस्यां च दिशि काल प्रज्ञप्तो मया शेषैश्च तीर्थकरैः हेश्रमणायुष्मन्! ततस्तत्रावसर्पिण्युत्सर्पिण्यभाव ( एवमुस्सप्पिणीवित्ति ) एवमनुकेन प्रकारेणोत्सर्पिण्यपि उत्सर्पिण्यालापकोऽपि वक्तव्यः। स चैवं "ताजयाणं जंबुद्दीवे दीवे दाहिणड्ढे पढमा उस्सप्पिणी पडिवज्जइ तया णं उत्तरड्ढे वि पढमा उस्सप्पिणी पडिवज्जइ जयाण उत्तरड्ढे वि पढमा उस्सप्पिणी पडिवज्जइ तया ण जंबुद्दीवे २ मंदरस्स पव्वयस्स पुरच्छिमपच्चच्छिमेणं नेव अत्थि उस्सप्पिणी अवसप्पिणी अवट्ठिएणं तत्थ काले पन्नत्ते समणाउसो " नदेवं जम्बूद्वीपवक्तव्यतोक्ता संप्रति लवणसमुद्रवक्तव्यतामाह। ( लवणेणं समुद्दे इत्यादि ) ( तहेवत्ति ) यथा जम्बूद्वीपे उद्गमविषये आलापक उक्तस्तथा लवणसमुद्रेऽपि वक्तव्य। सचैवं "लवणेण सूरिया उईणपाईणमुग्गच्छ पाईणदाहिणमागच्छति पाईणदाहिणमुग्गच्छदाहिणदाईणमागच्छंति दाहिणपाईणमुग्गच्छ पाईणउईणमागच्छति पाईणउईणमुग्गच्छ उईणपाईणमागच्छति " इद च सूत्रं जम्बूद्वीपगतेद्गमसूत्रवत्स्वयं परिभावनीयं नवरमत्र सूर्याश्चत्वारो वेदितव्या " चत्तारि य सागरे लवणे इति वचनात् " ते च जम्बूद्वीपगतसूर्याभ्यां सह समश्रेण्या प्रतिबद्धास्तद्यथा द्वौ सूर्यावेकस्य जम्बूद्वीपगतस्य सूर्यस्य श्रेण्या प्रतिबद्धौ द्वितीयस्य जम्बूद्वीपगतस्य सूर्यस्य श्रेण्या अपरो तत्र यदैक सूर्यो जम्बूद्वीपे दक्षिणपूर्वस्यामुद्गच्छति तदा

तत्समश्रेण्या प्रतिवद्धौ सूर्यौ लवणसमुद्रे तस्यामेव दक्षिणपूर्वस्यामुदयमागच्छतस्तदेव जम्बूद्वीपगतेन सूर्येण सह तत्समश्रेण्या प्रतिवद्धौ द्वावपरौ लवणसमुद्रे अपरोत्तरस्यां दिशि उदयमासादयतः। तत उदयविधिरपि द्वयोर्द्वयोर्जम्बूद्वीपसूर्ययोरिव भावनीय । तेन दिवसरात्रिविभागोऽपि क्षेत्रविभागेन तथैव द्रष्टव्यः। तथा चाह। ताजयाणमित्यादि सुगमं नवरं ( जहाजंबुद्दीवेइत्यादि ) यथा जंबुद्दीवे पुरच्छिमपञ्चच्छिमेणं राई भवइ इत्यादिकं सूत्रमुक्तं यावदुत्सर्पिण्यवसर्पिण्यालापकस्तथा लवणसमुद्रेऽप्यन्यूनातिरिक्तं समस्तं भणितव्यं नवरं जम्बूद्वीपे द्वीप इत्यस्य स्थाने लवणसमुद्रे इति वक्तव्यमिति शेषं तदेव लवणसमुद्रगतापि वक्तव्यतोक्ता । सम्प्रति धातकीखण्डविषयां तामाह "धायइसंडेणं सूरियाइ इत्यादि" अत्राप्युक्रमविधिः प्राग्वद्भावनीया नवरमत्र सूर्या द्वादश " धायइसंडे दीवे वारस्चंदा य सूरा य " इतिवचनात् । ततः षट् सूर्या दक्षिणदिक्चारिभिर्जम्बूद्वीपगतलवणसमुद्रगतैः सूर्यैः सह समश्रेण्या प्रतिवद्धाः षट् उत्तरदिक्चारिभिः । सम्प्रत्यत्रापि क्षेत्रविभागेन दिवसरात्रिविभागमाह ( ताजयाणमित्यादि) यदा धातकीखण्डे द्वीपे दक्षिणार्द्धे दिवसो भवति तदा उत्तरार्द्धेऽपि दिवसो भवति यदा उत्तरार्द्धेऽपि दिवसस्तदा धातकीखण्डे मन्दरयोः पर्वतयोः पूर्वार्द्धपश्चिमार्द्धगतयोः प्रत्येकं पूर्वस्यामपरस्यां च दिशि रात्रिर्भवति [ एवमित्यादि ] एवमुक्तेन प्रकारेण यथा जम्बूद्वीपे उक्तं तथैवात्रापि वक्तव्यं तत्र तावद्यावदुत्सर्पिण्यालापकः । [ कालोएइत्यादि ] कालोदे समुद्रे यथा लवणेऽभिहितं तथैवाभिधातव्यं नवरं कालोदे सूर्या द्विचत्वारिंशत् तत्रैकविंशतिर्दक्षिणदिक्चारिभिर्जम्बूद्वीपलवणसमुद्रधातकीखण्डगतैः सह समश्रेण्या संवद्धा एकविंशतिरुत्तरदिक्चारिभिः तत उदयविधिर्दिवसरात्रिविभागश्च क्षेत्रविभागेन तथैव वेदितव्य ॥ सांप्रतमभ्यन्तरपुष्करवरार्द्धवक्तव्यतामाह [ ता अभिंतरपुक्खरद्धे इत्यादि ] इदमपि सूत्रं सुगमं [ तहेवत्ति ] तथैव जम्बूद्वीप इव वक्तव्य नवरमत्र सूर्या द्वासप्ततिः तत्र षट्त्रिंशद्दक्षिणदिक्चारिभिर्जम्बूद्वीपादिगतैः सह समश्रेण्या प्रतिवद्धा षट्त्रिंशदुत्तरदिक्चारिभिस्तत उदयविधिर्दिवसरात्रिविभागश्च क्षेत्रविभागेन प्राग्वदवसेयस्तथाचाह [ ताजयाणमित्यादि ] सुगमम्। सू० प्र० ८ पाहु० ।

उदयसाय( ग ) र–उदयसागर–पुं० अञ्चलगच्छीये विद्यासागरसूरिशिष्ये, येन विक्रम सं० ( १८०४ ) वर्षे पालिताणय नगरे स्नात्रपञ्चाशिका नाम ग्रन्थो व्यरचि । जै० इ० ।

उदयमिहमुणि–उदयधर्ममुनि–पुं० तपागच्छीये उदयवीरगणि शिष्ये, अनेन– वि० सं० ( १६४६ ) वर्षे रत्नशेखरसूरिकृतश्राद्धप्रतिक्रमणवृत्ति प्रथमादर्शो लिखिता । जै० इ० ।

उदयसेण–उदयसेन– पुं० वीरसेनसूरसेनयोरनयो पितरि, आचा० १ श्रु० ४ अ० १ उ० । ( सम्मशब्दे कथा– )

उदयावलिया–उदयावलिका–स्त्री० षष्ठीतत्पु० उदयवतीनामनुदयवतीनां च प्रकृतीनामुदयसमयादारभ्यावलिकामात्राया स्थितौ,।" आवलियनिग पमोत्तूण " इह उदयवतीनामनुदयवतीनां च प्रकृतीनामुदयसमयादारभ्यावलिकामात्रास्थितिरुदयावलिका वेदितव्या तथैव चिरन्तनग्रन्थेषु व्यवहारात । पं० सं० ।

उद ( य ) र–उदर– न० उद्–ॠ–अच्० जठरे । प्रश्न० ३ द्वा० । अङ्गान्युपाङ्गानि चेति द्विधा शरीरावयवास्तत्रेदमङ्गम् स्था० ८ ठा० । प्रज्ञा० । उत्त० । आ० चू० । तात्स्थ्यात्–तद्व्यपदेशः उदररोगे, । वाच०। उदरामयगौ।। "पृथक् समस्तैरपि चानिलाद्यैः (४) स्त्रीहोदर (५) बध्दगुद तथैव (६) आगुन्तुक (७) सप्तममष्टम च जलोदर चेति वदन्ति तानि" । प्रश्न० सं० ५ द्वा० । विपा० । तं० । उपा० ।

उदरंजरि–उदरम्भरि–त्रि० उदरं बिभर्ति–भृ–खि–मुम् च । पञ्चयज्ञाद्यकरणेनात्मोदरमात्रपोषके, । वाच० ।

उद (य) रगंठि–उदरग्रन्थि–पुं० उदरे ग्रन्थिरिव गुल्मरोगे हेम०।

उद ( य ) रत्ताण–उदरत्राण–न० उदरं त्रायतेऽनेन त्रै०ल्युट् ( कमरबन्ध ) उदरबन्धवस्त्रे । हेम० ।

उदराणुगिद्ध–उदरानुगृद्ध–त्रि० उदरेऽनुगृद्ध उदरानुगृद्ध । उदरभरणव्यग्रे तुन्दपरिमृजे, "कुलाइं जे धावति सा उगाइ, आघातिधम्म उदराणुगिद्धे" । सूत्र० १ श्रु० ८ अ० ।

उदरिय–उदरिक–न० जलोदरिके, विपा० १ श्रु० ७ अ० । नि० चू० ।

उदवाह–उदवाह–पुं० उदकं वहति । वह अण् उप० स० जलवाहके मेघे, उदकवाहकमात्रे, त्रि० । वाच०। अपकृष्टेऽल्पे उदकवाहने, "उदवाहाइ वा पवाहाइ वा " अपकृष्टानि अल्पान्युदकवाहनानि तान्येव प्रकर्षवन्ति प्रवाहाः । जं० २ व० ६उ० ।

उदहि–उदधि–पुं० उदकानि धीयन्तेऽत्र धा–आधारे कि–उदादेशः समुद्रे, । "जहा से सयभुरमणे उदहीणसेट्ठे णागेसु धरणिंदमाहुसेट्ठे" । सूत्र० १ श्रु० ७ अ०।"जहा से सयभुरमणे, उदही अक्खओदए"–उत्त० १ अ० । ( उदधीनां सर्वा वक्तव्यता दीव सागरशब्दे )। ( "चत्तारि उदही पण्णत्ता तजहा उत्ताण णाममेगे" इत्यादि पुरुषजातशब्दे उदधि सूत्रे वक्ष्यते ) (उदधयोऽस्का समयेन स्पृष्टा नवेति फरिसणा शब्दे ) घनोदधौ, स्था० ३ ठा०२उ० " पुढवीइ वा उदहीइ वा " पृथिवी रत्नप्रभादिका उदधिस्तदधोघनोदधिः। स्था०,२ ठा०४ उ० । "वायुपइट्ठिया उदही, उदहिपइट्ठिया पुढवी" । स्था० ४ ठा० २ उ० । आर्यसमुद्रनामके आचार्ये, । आचा०१ श्रु०६ अ०१ उ०। नामैकदेशे नामग्रहणात् । उदधिकुमारे सप्तमभवनवासिनि, । भ० १ श० १ उ० । " दीवदिसा उदहीण जुवलपाणं बावत्तरिमो य सयसहस्सा" स० । प्रश्न० । जलचये, स्था० ३ ठा० ४ उ० ।

उदहिकुमार–उदधिकुमार–पुं० सप्तमे भवनवासिनि, प्रज्ञा० १ पद । स्था० । " उदहिकुमारा ण सव्वे समाहारा सेव भंते भ तेत्ति।" भ० १६ श० १३ उ०।(उदधिकुमारोद्देशवक्तव्यता वर्णादिव्यवस्था भवणवासिशब्दे । (अन्तक्रियादिदण्डकास्तु अंतकिरियादिशब्देषु )

उदहिकुमारावास–उदधिकुमारावास–पुं०उदधिकुमाराणां भवनावासे," बावत्तरि उदहिकुमारा वाससयसहस्सा पण्णत्ता" स०।

उदहिपइट्ठिय–उदधिप्रतिष्ठित–त्रि०घनोदध्याश्रिते, "उदहिपइट्ठिया पुढवी" भ० १ श० ७ उ० ।

उदहिपुहत्त–उदधिपृथक्त्व– न० उदधिपृथक्त्वप्रमाणे प्रभूतसागरोपमशतप्रमाणे, "उदहिपुहत्तुक्कस्स च्यर पत्तस्स सम्मनमभागो" । क० प्र० ।

उदहिमंगल–उदधिमङ्गल–न०समुद्रप्रज्ज्वलनमङ्गले, पञ्चा०८विव०।

उदहिमेहला–उदधिमेखला–स्त्री०उदधिर्मेखला इव यस्या । मध्यस्थाने, समुद्रवेष्टितायां पृथिव्याम, वाच० ॥

उदाइ-उदायिन्- पु० स्वनामख्याते कूणिकराजसत्कहस्तिनि, उदायिहस्तिनः पूर्वापरजन्मौ यथा ।

रायगिहे जाव एवं वयासी उदाईणं भंते ! हत्थिराया कओहिंतो अणंतरं उवट्टित्ता उदाई हत्थिरायत्ताए उववन्ने । गोयमा ! असुरकुमारेहिंतो अणंतरं उवट्टित्ता उदाई हत्थिरायत्ताए उववन्ने । उदाईणं भंते ! हत्थिराया कालमासे कालं किच्चा कहिं गच्छिहिति कहिं उववज्जिहिति? गोयमा ! इमीसे रयणप्पभाए पुढवीए उक्कोसं सागरोवमट्ठितीयंसि णिरयावासंसि णेरइयत्ताए उववज्जिहिति से णं भंते ! तओहिंतो अणंतरं उवट्टित्ता कहिं गच्छिहिति गोयमा ! महाविदेहे वासे सिज्झिहि जाव अंतं काहिति । भ० १६ श० १ उ० ।

(टीका सुगमत्वान्न गृहीता) कोण्डिकायनीये गोशालेन पष्ठप्रवृत्तसहारे गृहीतकलेवरविशिष्टजीवे, "अहण्णं उदाई णाम कुण्डियायणिए अज्जुणस्स गोयमपुत्तस्स सरीरगं विप्पजहामि" इति वीरं प्रति मङ्खलिपुत्रो गोशालः । भ० १५ श० १ उ० । कूणिकपुत्रे, तद्वक्तव्यता चैवम् उदायि कोणिकपुत्रो यः कोणिके अपक्रान्ते पाटलिपुत्रं नगरं न्यवीविशत् । यश्च स्वभवनस्य विविक्ते देशे पर्वदिनेष्वाहूय संविग्नगीतार्थसद्गुरुं तत्पर्युपासनापरायणः परमसंवेगरसप्रकर्षमनुस्मरन् सामायिकपौषधादिकं सुश्रमणोपासकप्रायोग्यमनुष्ठानमन्वतिष्ठत् । एकदा च निशि देशनिर्धाटितरिपुराजपुत्रेण द्वादशवार्षिकद्रव्यसाधुना कृतपौषधोपवासः सुखप्रसुप्तः कङ्कायःकर्तिकाकण्ठकर्तनेन विनाशित इति ॥ स्था० ६ ठा० । आ० क० (विस्तरतोऽयमेवार्थः सेणियशब्दे) अयं च निर्वर्तिततीर्थकृन्नामकर्मा उत्सर्पिण्या तृतीयः सुपार्श्वनामा तीर्थकरो भविष्यति । "तइओ उदायिजीवो सुपासो" ती० । आ० चू० ।

उदाइंत-उदयमान-त्रि० शोभमाने, । ज्ञा० १ अ० ॥

उदाण-उदान-पु० अन्-घञ् । ऊर्ध्वं मानोऽस्य कृकाटिकादेशादाशिरोवृत्तौ वायौ, । द्वा० २६ द्वा० । वाच० ।

उदायण-उदायन-पु० सिन्धुसौवीरेषु वीतिभयनगराधिपतौ स्वनामख्याते राजभेदे, । तद्वक्तव्यता चैवम् ।

तेणं कालेणं तेणं समएणं सिंधुसोवीरेसु जणवएसु वीतिभयणामं णयरे होत्था । वण्णओ तस्स णं वीतिभयस्स णयरस्स बहिया उत्तरपुरच्छिमे दिसि भाए एत्थ णं मियवणे णामं उज्जाणे होत्था । सव्वोउयवण्णओ । एत्थ णं वीतिभए णयरे उदायणे णामं राया होत्था । महया वण्णओ, तस्स णं उदायणस्स रण्णो पउमावई णामं देवी होत्था । सुकुमालवण्णओ तस्स णं उदायणस्स रण्णो पभावती णामं देवी होत्था । वण्णओ जाव विहरति । तस्स णं उदायणस्स रण्णो पुत्ते पभावतीए देवीए अत्तए अभीइणामं कुमारे होत्था । सुकुमाल जहा सिवभद्दे जाव पच्चुवेक्खमाणे विहरइ । तस्स णं उदायणस्स रण्णो णियए भायणिज्जे केसी णामं कुमारो होत्था सुकुमाल जाव सुरूवे से णं उदायणे राया सिंधुसोवीरप्पमोक्खाणं सोलसण्हं जणवयाणं वीइभयप्पमोक्खाणं तिण्हं तेसट्ठीणं णगरागरसयाणं महसेणप्पमोक्खाणं दसण्हं राईणं बद्धमउडाणं विदिण्णछत्तचामरवालवियणाणं अण्णेसिं च बहूणं राईसरतल जाव सत्थवाहप्पभिईणं आहेवच्चं पोरेवच्चं जाव कारेमाणे पालेमाणे समणोवासए अभिगयजीवाजीवे जाव विहरइ । तए णं से उदायणे राया अण्णया कयाइं जेणेव पोसहसाला तेणेव उवागच्छइ उवागच्छइत्ता जहा संखे जाव विहरइ तए णं तस्स उदायणस्स रण्णो पुव्वरत्तावरत्तकालसमयंसि धम्मं जागरियं जागरमाणस्स अयमेयारूवे अज्झत्थिए जाव समुप्पज्जित्था धण्णाणं ते गामागरनगरखेडकव्वडमडंबदोणमुहपट्टणासमसंवाहसन्निवेसा जत्थ णं समणे भगवं महावीरे विहरइ धण्णाणं ते राईसरतलवर जाव सत्थवाहप्पभिईओ जेणं समणं भगवं महावीरं वंदंति णमंसंति जाव पज्जुवासंति । जइणं समणे भगवं महावीरे पुव्वाणुपुव्विं चरमाणे गामाणु जाव विहरमाणे इहमागच्छेज्जा । इह समोसरेज्जा इहेव वीतीभयस्स णयरस्स बहिया मियवणे उज्जाणे अहापडिरूवं उग्गहं उगिण्हित्ता संजमेणं जाव विहरेज्जा तओ णं अहं समणं भगवं महावीरं वंदेज्जा णमंसेज्जा जाव पज्जुवासेज्जा । तए णं समणे भगवं महावीरे उदायणस्स रण्णो अयमेयारूवं अज्झत्थियं जाव समुप्पन्नं विजाणित्ता । चंपाओ णयरीओ पुण्णभद्दाओ चेइयाओ पडिणिक्खमइ पडिणिक्खमइत्ता पुव्वाणुपुव्विं चरमाणे गामाणुगामं जाव विहरमाणे जेणेव सिंधुसोवीरे जणवए जेणेव वीईभये णयरे जेणेव मियवणे उज्जाणे तेणेव उवागच्छइ उवागच्छइत्ता जाव विहरइ । तए णं वीइभए णयरे सिंघाडग जाव परिसा पज्जुवासइ । तए णं से उदायणे राया इमीसे कहाए लद्धट्ठे समाणे हट्ठतुट्ठकोडुंबियपुरिसे सद्दावेइ सद्दावेइत्ता एवं वयासी । खिप्पामेव भो देवाणुप्पिया ! वीतिभयं णयरं सब्भिंतरबाहिरियं जहा कूणिओ उववातिए जाव पज्जुवासइ पउमावइपामोक्खाओ देवीओ तहेव पज्जुवासंति धम्मकहा तए णं से उदायणे राया समणस्स भगवओ महावीरस्स अंतियं धम्मं सोच्चा णिसम्म हट्ठतुट्ठउट्ठाए उट्ठेइ उट्ठेइत्ता समणं भगवं महावीरं तिक्खुत्तो जाव णमंसित्ता एवं वयासी एवमेयं भंते ! तहमेयं भंते ! जाव से जहेयं तुब्भे वदह त्तिकट्टु जं णवरं देवाणुप्पिया ! अभिइकुमारं रज्जे ठावेमि तए णं अहं देवाणुप्पिया णं अंतिए मुंडे भवित्ता जाव पव्वयामि अहासुहं देवाणुप्पिया मा पडिबंधं । तए णं से उदायणे राया समणेणं भगवया महावीरेणं एवं वुत्ते समाणे हट्ठतुट्ठे समणं भगवं महावीरं वंदइ णमंसइ वंदित्ता णमंसित्ता तमेव अभिसेकहत्थिं दुरुहइ दुरुहइत्ता समणस्स भगवओ महावीरस्स अंतियाओ मियवणाओ उज्जाणाओ पडिणिक्खमइ पडिणिक्खमइत्ता जेणेव वीइभए णयरे तेणेव पहारेत्थ गमणाए तए णं

तस्स उदायणस्स रण्णो अयमेयारूवे अज्झत्थिए जाव समुप्पज्जित्था । एवं खलु अभीइकुमारे मम एगे पुत्ते इट्ठे कंते जाव किमंग पुण पासणया एवं जइ णं अहं अभीइकुमारं रज्जे ठवेत्ता समणस्स भगवओ महावीरस्स अंतिअं मुंडे भवित्ता जाव पव्वयामि तओ णं अभिइकुमारे रज्जे य रट्ठे य जाव जणवए य माणुस्सएसु य कामभोगेसु मुच्छिए गिद्धे गढिए अज्झोववण्णे अणादीयं अणवदग्गं दीहमद्धं चाउरंतसंसारकंतारं अणुपरियट्टिस्सत्ति तं णो खलु मे सेयं अभीइकुमारं रज्जे ठावेत्ता समणस्स भगवओ महावीरस्स जाव पव्वइत्तए सेयं खलु मेणियगं भाइणिज्जकेसीकुमारं रज्जे ठावेत्ता समणस्स भगवओ महावीरस्स जाव पव्वइत्तए एवं संपेहेइ संपेहेइत्ता जेणेव वीइभए णयरे तेणेव उवागच्छइ उवागच्छइत्ता वीइभयं णयरं मज्झं मज्झेणं जेणेव सए गेहे जेणेव बाहिरिया उवट्ठाणसाला तेणेव उवागच्छइ उवागच्छइत्ता अभिसेक्कं हत्थिं ठवेइ अभिसेकाओ हत्थीओ पच्चोरुहइ पच्चोरुहइत्ता जेणेव सिंहासणे तेणेव उवागच्छइ उवागच्छइत्ता सिंहासणवरंमि पुरच्छाभिमुहे णिसीयइ णिसीयइत्ता कोडुंबियपुरिसे सद्दावेइ सद्दावेइत्ता एवं वयासी खिप्पामेव भो देवाणुप्पिया ! वीइभयं णयरं सब्भिंतरबाहिरियं जाव पच्चप्पिणंति तएणं से उदायणे राया दोच्चंपि कोडुंबियपुरिसे सद्दावेइ सद्दावेइत्ता एवं वयासी खिप्पामेव भो देवाणुप्पिया ! केसिस्स कुमारस्स महत्थं एवं रायाभिसेओ जहा सिवभद्दस्स तहेव भाणियव्वो जाव परमाउं पालयाहिं इट्ठजणसंपरिवुडे सिंधुसोवीरप्पामोक्खाणं सोलसण्हं जणवयाणं वीइभयप्पामोक्खाणं तिण्हि तेसट्ठीणं णगरागरसयाणं महसेणप्पामोक्खाणं दसण्हं राईणं अण्णेसिं च बहूणं राईसर जाव कारेमाणे पालेमाणे विहराहित्तिकट्टु जयजयसद्दं पउजंति तएणं केसीकुमारे राया जाए महया जाव विहरइ तए णं से उदायणे राया केसिं रायाणं आपुच्छइ तए णं ते केसीराया कोडुंबियपुरिसे सद्दावेइ एवं जहा जमालिस्स तहेव सब्भिंतरबाहिरियं तहेव जाव णिक्खमणाभिसेयं उवट्ठावेत्ति तएणं से केसीराया अणेगगणनायग जाव संपरिवुडे उदायणराय सीहासणवरंसि पुरच्छाभिमुहे निसियावेइ निसियावेइत्ता अट्ठसएणं सोवण्णियाणं एवं जहा जमालिस्स एवं वयासी भण सामि किं देमो किं पयच्छामो किणाणावाते अट्ठे तएणं से उदायणे राया केसिं रायं एवं वयासी इच्छामि णं देवाणुप्पिया कुत्तियावणाओ एवं जहा जमालिस्स णवरं पउमावई अग्गकेसे पडिच्छइ पियविप्पओगओ दूसहा तए णं से केसीराया दोच्चंपि उत्तरवक्कमणं सीहासणं रयावेइ रयावेइत्ता उदायणं रायं सीयापीतएहिं कलसेहिं सेसं जहा जमालिस्स जाव सण्णिसण्णे तहेव अम्मधाई णवरं पउमावई हंसलक्खणं पडसाडगं गहाय सेसं तं चेव जाव सिविआओ पच्चोरुहइ पच्चो रुहइत्ता जेणेव समणे भगवं महावीरे तेणेव उवागच्छइ उवागच्छइत्ता समणं भगवं महवीरं तिक्खुत्तो आयाहिणं पयाहिणं जाव वंदइ णमंसइ वंदित्ता णमंसित्ता उत्तरपुरच्छिमं दिसीभागं अवक्कमइ अवक्कमइत्ता सयमेव आभरणमल्लालंकारं तं चेव जाव पउमावई पडिच्छइ जाव घटियव्वं सामी जाव णो पमादीयव्वं तिकट्टु केसीराया पउमावई य समणं भगवं महावीरं वंदंति णमंसंति वंदित्ता णमंसित्ता जाव पडिगया तएणं से उदायणे राया सयमेव पंचमुट्ठियं लोयं सेसं जहा उसभदत्तस्स जाव सव्वदुक्खप्पहीणे । भ० ३ श० ६ उ० ।

इयमेव वक्तव्यता कथान्तरसंवलिता इत्थम् । भरतक्षेत्रे सौवीरदेशे वीतभयनामनगरे उदायनो नाम राजा तस्य प्रभावती राज्ञी तयोर्ज्येष्ठपुत्रोऽभीचिनामाऽभवत् तस्य भागिनेयः केसीनामाऽभूत्। सउदायनराजा सिन्धुसौवीरप्रमुखषोडशजनपदानां वीतभयप्रमुखत्रिशतत्रिषष्टिनगराणां महासेनप्रमुखाणां दशराजानां बहुमुकुटानां छत्राणां चामराणां च ऐश्वर्यं पालयन्नस्ति । इतश्चम्पाया नगर्यां कुमारनन्दी नाम सुवर्णकारोऽस्ति । स च स्त्रीलम्पटो यत्र २ स्वरूपां दारिकां पश्यति जानाति वा तत्र तत्र पञ्चशतं सुवर्णानि दत्वा तां परिणयति । एवञ्च तेन पञ्चशतकन्याः परिणीताः । एकस्तम्भं प्रासादं कारयित्वा ताभिस्सम क्रीडति । तस्य च मित्रं नागिलो नाम श्रावकोऽस्ति । अन्यदा पञ्चशैलद्वीपवास्तव्यहासाप्रहासाभ्यन्तर्यौ स्तः । तयोर्भर्ता विद्युन्माली नाम देवोऽस्ति सोऽन्यदा च्युतः ताभिश्चिन्तितं कमपि व्युद्ग्राहयावः सोऽस्माक भर्ता भवति स्वयोग्यपुरुषगवेषणाय इतस्ततो व्रजन्तीभ्यां ताभ्यां चम्पानगर्यां कुमारनन्दी सुवर्णकार पञ्चशतस्त्रीपरिवृतो दृष्टः । ताभ्यां चिन्तितम् । एष स्त्रीलम्पटः सुखेन व्युद्ग्राहयिष्यते । कुमारनन्दी भणति । के भवन्त्यौ । कुतः समायाते ते आहतुः । आवां हासाप्रहासादेव्यौ तद्रूपमोहितः कुमारसुवर्णकारस्ते देव्यौ भोगार्थं प्रार्थितवान् । ताभ्यां भणित यद्यस्मद्भोगकार्यः तदा पञ्चशैलद्वीपं समागच्छेः । एव भणिते देव्यौ उत्पतिते गते स्वस्थानम् । राज्ञः सुवर्णं दत्वा पटहं वादयति स्म । कुमारनन्दीसुवर्णकारं यः पञ्चशैलद्वीपं नयति तस्य स धनकोटिं ददाति । एकेन स्थविरेण तत्पटहः स्पृष्टः कुमारनन्दिना तस्य कोटिं धनं दत्तं स्थविरोऽपि तद्धनं पुत्राणां दत्वा कुमारनन्दिना सह यानपात्रमारूढः समुद्रमध्ये प्रविष्टः । यावद्दूरं गतस्तावदेकं वटं दृष्टवान् । स्थविर उवाच । तस्य वटस्याधः इदं वाहनं निर्गमिष्यति तत्र जलावर्तोऽस्तीति वाहनं भङ्क्ष्यति । त्वं तु एतद्वटशाखामाश्रयेः । वटेऽत्र पञ्चशैलद्वीपात् भारण्डपक्षिणस्समायास्यन्ति सन्ध्यायां तच्चरणेषु स्वंवपुः स्ववस्त्रेण दृढं बध्नीयाः । ते च प्रभाते इत उड्डीनाः पञ्चशैलं यास्यन्ति । त्वमपि तैः सम पञ्चशैलं गच्छेः । स्थविरेण एवमुच्यमाने तद्वाहनं वटाधो गतं कुमारनन्दिना वटशाखावलम्बनं कृतं भग्नञ्च तद्वाहनम् । कुमारनन्दी तु भारण्डपक्षिचरणावलम्बेन पञ्चशैले गतः । हासाप्रहासाभ्यां दृष्टः उक्तश्च । तव एतेन शरीरेण नावाभ्यां भोगो विधीयते । स्वनगरे गत्वाऽनुष्ठत आरभ्य मस्तकं यावज्ज्वलनेन स्वशरीरं दह यथा पञ्चशैलाधीशो भूत्वाऽस्मद्भोगेहां पूर्णीकुरु ।

तेमोक्त तत्राहं कथ यामि । ताभ्यां करतले समुत्पाट्य स नगरोद्याने मुक्तः। ततो लोकस्तं पृच्छति। किं त्वया तत्राश्चर्यं दृष्टम्। स भणति। दृष्टं श्रुतमनुभूतं पञ्चशैलद्वीप मया यत्र प्रशस्ते हासाप्रहासाभिधे देव्यौ स्तः। अत्र कुमारनन्दिना तत्र स्वाङ्गुष्ठेऽग्निमारचयित्वा मस्तकं यावत्स्वशरीरं ज्वालयितुमारब्धः। तदा मित्रेणाऽयं वारितः भो मित्र ! तवेदं कापुरुषजनोचितं चेष्टितं न युक्तम्। महानुभाव ! दुर्लभं मनुष्यजन्म मा हारय तुच्छमिदं भोगसुखमस्ति। किं च यद्यपि त्वं भोगार्थी तथापि स्वधर्म्मानुष्ठानमेव कुरु यत उक्तं। "धणओ धणच्छियाणं, कामत्थीणं च सत्थकामकरो। सग्गापवग्गसगम-हेऊ जिणदेसिओ धम्मो"।१। इत्यादि शिक्षावादैर्मित्रेण स वार्यमाणोऽपि इङ्गिनीमरणेन स मृतः। पञ्चशैलाधिपतिर्जात. तन्मित्रस्य श्रावकस्य महान् खेदो जातः। अहो ! भोगकामार्थे जना इत्थं क्लिश्यन्ति जानन्तोऽपि वयं किमत्र गार्हस्थ्ये स्थिता. स इति स श्रावक. प्रव्रजितः। क्रमेण कालं कृत्वा अच्युतदेवलोके समुत्पन्न। अवधिना स स्ववृत्तान्तं जानाति स्म। अन्यदा नन्दीश्वरयात्रार्थं सर्वदेवेन्द्राश्चलिता. स श्रावकदेवोऽपि अच्युतेन्द्रेण सम चलितः। तदा पञ्चशैलाधिपतेस्तस्य विद्युन्मालिनाम्नो देवस्य गले पटहो लग्न. उत्तारितो नोत्तरति। हासाप्रहासाभ्यां उक्तम्। इयं पञ्चशैलद्वीपवासिनो स्थितिः यन्नन्दीश्वरद्वीपयात्रार्थं चलितानां देवेन्द्राणां पुर पटहं वादयन् विद्युन्मालिदेवस्तत्र याति ततस्त्व खेदं मा कुरु गललग्नमिम पटहं वादयन् गीतानि गायन्तीभ्यां आवाभ्यां सह नन्दीश्वरद्वीपे याहि। तत. स तथा कुर्वन् नन्दीश्वरद्वीपोद्देशेन चलितः। श्रावकदेवस्तं सखेद पटहं वादयन्त दृष्ट्वा उपयोगेनोपलक्षितवान्। भणति च भो. त्व मां जानासि। स भणति। क. शक्रादिदेवान् न जानाति। ततस्तं श्रावकदेवः तस्य स्वप्राग्भवस्वरूपं दर्शयति स्म। सर्वं पूर्ववृत्तान्तमाख्याति। ततः संवेगमापन्न. स देवो भणति। तदिदानीमहं किं करोमि। श्रावकदेवो भणति श्रीवर्द्धमानस्वामिन. प्रतिमां कुरु यथा तव सम्यक्त्वं सुस्थिरं भवति। यत उक्तम्।
"जो कुव्वइ जिणपडिमं, जिणाण जियरागदोसमोहाणं। सो पावइ अन्नभवे, सुहजणणं धम्मवररयणं" ॥१॥ अन्यच्च॥
"दारिद्दं दोहग्गं, कुजाइकुसरीरकुगइकुमईओ। अवमाणरोयसोआ, न हुंति जिणबिंबकारीण ॥२॥" तत स विद्युन्माली महाहिमवच्छिखरात्गोशीर्षचन्दनदारु छेदयित्वा श्रीवर्द्धमानस्वामिप्रतिमां निर्वर्तितवान्। तां च मञ्जूषायां क्षिप्तवान्। तस्मिन्नवसरे षण्मासान् यावदितस्ततो भ्रमन् वाहन वायुभिरास्फाल्यमानं विलोकितवान्। तत्र गत्वा चासौ तमुत्पातमुपशामितवान्। सांयात्रिकाणां च तां मञ्जूषां दत्तवान्, भणितवांश्च। देवाधिदेवप्रतिमा चात्रास्ति यत्र चेयं विशेषपूजामाप्नोति तत्रेयं देया देवाधिदेवनाम्नैवेयमुद्घाटयिष्यते भवद्वाहनेऽस्यां स्थितायां न कोऽप्युपद्रवो भविष्यति। ततस्तां लात्वा सांयात्रिका वीतभयपत्तन प्राप्ता। तत्रोदायनराजा तापसभक्तस्तस्य सा मञ्जूषा दत्ता। कथितश्च सुरवचनं मिलितश्च तत्र ब्राह्मणादिको भूरिलोक भणति च गोविन्दाय नम इत्युक्ते मञ्जूषा नोद्घाटिता। तत्र केचित् भणन्ति। अत्र देवाधिदेवश्चतुर्मुखो ब्रह्मास्ति अन्ये केचिद्वदन्ति अत्र चतुर्भुजो विष्णुरेवास्ति। केचिद्भणन्ति अत्र महेश्वरो देवाधिदेवोऽस्ति। अस्मिन्नवसरे तत्रोदायनराजपट्टराज्ञी चेटकराजपुत्री प्रभावती नाम्नी श्रमणोपासिका तत्रायाता। तया तस्या मञ्जूषायाः पूजां कृत्वा एव भणित "गयरागदोसमोहो, सव्वन्नू अट्ठपाडिहेरसंजुत्तो। देवाहिदेवगुरुओ, अइरामे दसणं देउ ॥१॥" एवमुक्त्वा तया मञ्जूषायां हस्तेन परशुप्रहारो दत्तः उद्घाटिता सा मञ्जूषा तस्यां दृष्टाऽतीव सुन्दराम्लानपुष्पमालालङ्कृता श्रीवर्द्धमानस्वामिप्रतिमा जातजिनशासनोन्नतिः अतीवानन्दिता प्रभावती एवं बभाण। "सव्वन्नु सव्वदंसण, अपुणब्भवभवियजिनमणाणंद। जय चिंतामणि जय गुरु, जय जय जिणवीर अकलंको ॥१॥" तत्र प्रभावत्या अन्तःपुरमध्ये चैत्यगृहं कारित तत्रैव प्रतिमा स्थापिता। तां च त्रिकालं सा पवित्रा पूजयति। अन्यदा प्रभावती राज्ञी तत्प्रतिमाया पुरो नृत्यति राजा च वीणा वादयति तदानीं स राजा तस्यां मस्तकं न पश्यति। राज्ञोऽधृतिर्जाता हस्ताद्वीणा पतिता राज्ञ्या पृष्टं किं मया दुष्ट नर्तितं राजा मौनमालम्ब्य स्थितः। राजा अतिनिर्बन्धे उक्तवान् यस्तव मस्तकमपश्यन्नहं व्याकुलीभूतो हस्ताद्वीणां पतितवान् सा भणति मया सुचिरं श्रावकधर्म न काचिन्ममरणाद्भीतिरस्ति। अन्यदा तत्प्रतिमापूजनार्थं स्नाता सा राज्ञी स्वचेटीं प्रति वस्त्राण्यानयेत्युवाच। तया च रक्तानि वस्त्राण्यानीतानि राज्ञी क्रुद्धा प्राह। जिनगृहे प्रविशन्त्या मम रक्तानि वस्त्राणि ददासीत्युक्त्वा चेटीमादर्शेन हतवती मर्मणि प्रत्याहारलग्नात्सा मृता। प्रभावत्या चिन्तितं हा ! मया निरपराधत्रसजीववधकरणाद्व्रत भग्नमत. पर किं मे जीवितव्येन ततस्तया राज्ञ्या राज्ञे उक्तम्। अहं भक्त प्रत्याख्यामि राज्ञा नेति प्रतिपादित तया पुनस्तथैवोच्यते। तदा राज्ञा उक्त च यदि त्व देवी भूत्वा मां प्रतिबोधयसि तदा त्व भक्त प्रत्याख्याहि। राज्ञ्या तदङ्गीकृतं भक्तं प्रत्याख्याय समाधिना मृता देवलोक गता देवोऽभूत्। तां च प्रतिमा कुब्जा देवदत्ता दासी त्रिकाल पूजयति। प्रभावती देवस्तु उदायन राजानं प्रतिबोधयति। न च स तं बुध्यते राजा तु तापसभक्तोऽतः स देवस्तापसस्वरूप कृत्वाऽमृतफलानि गृहीत्वा गतो राज्ञे दत्तवान्। राज्ञा तानि आस्वादितानि पृष्टश्च तापसः क एतानि फलानि तापसो भणति। एतन्नगराऽनतिदूरेऽस्मदाश्रमोऽस्ति तत्रैतानि फलानि सन्ति। राजा तेन सममेकाक्येव तत्र गत.। तापसैस्समाचारैः स हन्तुमारब्धः राजा ततो नष्ट। तस्मिन्नेव वने जैनसाधून् ददर्श तेषामसौ शरणमाश्रित। भयं मा कुर्विति राजाऽऽश्वासितः तापसा निवृत्ता. साधुभिश्च तस्यैवं धर्म्म उक्तः। "धम्मो चेवेत्थसत्ताण, सरणं भव सायरे। देवं धम्म गुरु चेव, धम्मइत्थी परिक्खए ॥ १ ॥ दस अट्ठदोसरहिओ, देवो धम्मो वि निउणदयसहिओ। सुगुरु य बंभयारी, आरंभपरिग्गहा विरओ ॥ २ ॥" इत्यादिकोपदेशेन स राजा प्रतिबोधित। प्रतिपन्नो जिनधर्मं प्रभावती देव आत्मानं दर्शयित्वा राजानं च स्थिरीकृत्वा स्वस्थाने गत। एवमुदायनराजा श्रावको जात। इतश्च गन्धारदेशवास्तव्य. सत्यनामा श्रावक सर्वत्र जिनजन्मभूम्यादिनीर्थानि वन्दमानो वैताढ्य यावद्गत तत्र शाश्वतप्रतिमावन्दनार्थमुपवासत्रयं कृतवान् तपस्तुष्ट्या तदधिष्ठातृदेव्यास्तस्य शाश्वतजिनप्रतिमा दर्शिता तेन च वन्दिता। अथ तया देव्या तस्मै श्रावकाय कामितगुटिका दत्ता। तत स निवृत्तो वीतभयपत्तने जीवितस्वामिप्रतिमां वन्दितुमायात. गोशीर्षचन्दनमयीं तां ववन्दे। दैवात्तस्याऽतिसारो रोग उत्पन्न कुब्जया दास्या प्रतिचरित स नीरुग् जात तुष्टेन तेन तस्यै कामाङ्कुशिका गुटिका दत्ता कथितश्च तासां चिन्तितार्थसाधकत्व-

त्र। अन्यदा सा दासी अहं सुवर्णवर्णा सुरूपा नवामीति चिन्तयित्वा एकां गुटिकां नक्षितवती सुवर्णवर्णा सुरूपा जाता। ततस्तस्या सुवर्णगुटिकेति नाम जातम्। अन्यदा सा चिन्तयति भोगसुखमनुभवामि एष उदायनराजा मम पिता अपरे मत्तुल्याः केऽपि राजानो न सन्तीति चण्डप्रद्योतमेव मनसि कृत्वा द्वितीयां गुटिकां नक्षितवती तदानीं तस्य चण्डप्रद्योतस्य स्वप्ने देवतया कथितं - वीतनयपत्तने उदायनराज्ञो दासी सुवर्णगुटिकानाम्नी सुवर्णवर्णाऽतीव रूपवती त्वद्योग्याऽस्ति। चण्डप्रद्योतेन सुवर्णगुटिकायाः समीपे दूतः प्रेषितः। दूतेन एकान्ते तस्या एव कथितं चण्डप्रद्योतस्त्वामीहते। तया नणितमत्र चण्डप्रद्योतः प्रथममायातु तं पश्यामि पश्चात्तच्चरुच्या तेन सह यास्यामि दूतेन गत्वा तस्या वचनं चण्डप्रद्योतस्योक्तं सोऽपि अनिलगिरिहस्तिनमधिरुह्य रात्रौ तत्रायातः। पृष्टस्तया रुचितश्च। सा भणति यदीमां प्रतिमां सार्द्धं नयसि तदाहं नायामि नान्यथेति। ततस्तेन तत्स्थानस्थापनयोग्यान्या प्रतिमा तदानीं नास्तीति तस्यां रात्रौ तत्र उषित्वा स्वनगरे पश्चाद्गतः। तत्र तादृशीं जिनप्रतिमां कारयित्वा पुनरत्रायातस्तां प्रतिमां तत्र स्थापयित्वा मूलप्रतिमां दासीं च गृहीत्वा उज्जयिनीं गतः। तत्रानलगिरिणा मूत्रपुरीषे कृते तद्गन्धेन वीतनयपत्तनस्था हस्तिनो निर्मदा जाताः। उदायनराजेन तत्कारणं [illegible]तम्। अनलगिरिहस्तिनः पदं दृष्टम्। उदायनेन चिन्तितं स किमयमत्रायातः? गृहमानुषैरुक्तं सुवर्णगुटिका न दृश्यते राज्ञा उक्तं चेटी चण्डप्रद्योतेन गृहीता प्रतिमां विलोकयन्तु तैरुक्तं प्रतिमा दृश्यते परं पुष्पाणि म्लानानि दृश्यन्ते राज्ञा गत्वा स्वयं प्रतिमा विलोकिता पुष्पम्लानदर्शनेन राज्ञा ज्ञातं नेयं सा प्रतिमा किं त्वन्येति विपक्षेन राज्ञा दूतश्चण्डप्रद्योतान्तिके प्रेषितः। मम दास्या नास्ति कार्यं प्रतिमां त्वरितं प्रेषयेति दूतेन चण्डप्रद्योतस्योक्तं चण्डप्रद्योतः प्रतिमां नार्पयति तदा सैन्येन सम ज्येष्ठमासे एवोदायनश्चलितः। यावन्मरुदेशे तत्सैन्यमायातं तावज्जलाप्राप्त्या तत्सैन्यं तृषाक्रान्तं व्याकुलीबभूव। तदानीं राज्ञा प्रभावतीदेवश्चिन्तितः तेन समागत्य त्रीणि पुष्कराणि कृतानि तेषु जललाभात्सर्वं सैन्यं सुस्थं जातं क्रमेण उदायनराजा उज्जयिनीं गतः। कथितवांश्च नो चण्डप्रद्योत तव मम च साक्षाद्युद्धं भवतु लोकेन मारितेन अश्वस्थेन रथस्थेन वा त्वया मया च युद्धमङ्गीकुरु चण्डप्रद्योतेनोक्तं रथस्थेनैव त्वया मया च योद्धव्यम्। प्रभाते चण्डप्रद्योतः कपटं कृतवान् स्वयं अनलगिरिहस्तिनमारुह्य सङ्ग्रामाङ्गणे समायातः उदायनस्तु स्वप्रतिज्ञानिर्वाही रथारूढः सङ्ग्रामाङ्गणे समायातः। तदानीमुदायनेन चण्डप्रद्योतस्य उक्तं त्वमसत्यप्रतिज्ञो जातः कपटं च कृतवानसि तथापि नय मत्तो मोक्षो नास्तीति भणता उदायनेन रथो मण्डल्यां क्षिप्तः। चण्डप्रद्योतेन तत्पृष्ठेऽनलगिरिहस्ती वेगेन क्षिप्तः। स च हस्ती यं यं पादमुत्क्षिपति तं तमुदायनः शरैर्विध्यते यावत् हस्ती भूमौ निपतति। तत्स्कन्धादुत्तरन् प्रद्योतो बद्धः तस्य ललाटे मम दासीपतिरित्यक्षराणि लिखितानि। ततः उदायनराजेन चण्डप्रद्योतदेशे स्वाधिकारिणः स्थापिताः स्वयं तु चण्डप्रद्योतं काष्ठपञ्जरे क्षिप्त्वा सार्द्धं च नीत्वा स्वदेशं प्रति चलितः। सा प्रतिमा तु ततो न चलिष्यतीति तत्रैव सा मुक्ता। अव्यवच्छिन्नप्रयाणैश्चलितस्य अन्तरा वर्षाकालः समायातस्तेन दशपुरे दशनीराजनिर्धूलीप्राकारं कृत्वा मध्ये स्थितः। सुखेन तत्र तिष्ठति यत्स्वयं भुङ्क्ते तच्चण्डप्रद्योतस्यापि भोजयति। एकदा पर्युषणादिनमायातं तदा उदायनेन उपवासः कृतः सूपकारैश्चण्डप्रद्योतः पृष्टः भोजनार्थं पृच्छ्यते तैरुक्तमद्य पर्युषणादिने उदायनराजा उपोषितोऽस्तीति यद्भवतो रोचते तत्पच्यते। चण्डप्रद्योतेनोक्तं ममाप्यद्योपवासोऽस्ति न ज्ञातं मयाद्य पर्युषणादिनं सूपकारैः चण्डप्रद्योतस्य उक्तमुदायनराजाय तेनापि चिन्तितं जानाम्यहं यथायं धूर्तसाधर्मिकोऽस्ति तथाप्यस्मिन् बद्धे मम पर्युषणा न शुध्यति चण्डप्रद्योतो मुक्तः क्षामितश्च तदक्षराच्छादननिमित्तं रत्नपट्टस्तस्य मूर्ध्नि बद्धः। स्वविषयश्च तस्य दत्तः। ततः प्रभृति पट्टबद्धा राजानो जाताः। मुकुटबद्धाश्च पूर्वमप्यासन्। वर्षारात्रे व्यतिक्रान्ते उदायनराजस्ततः प्रस्थितः व्यापारार्थं ये वणिग्वर्गास्तत्रायाताः स तत्रैव स्थितः दशनीराजभिर्वासितत्वाद्दशपुरं नाम नगरं प्रसिद्धं जातम्। अन्यदा स उदायनराजः पौषधशालायां पौषधिकः पौषधं प्रतिपालयन् विहरति। पूर्वरात्रिसमये च तस्यैतादृशोऽभिप्रायः समुत्पन्नः धन्यानि तानि ग्रामाकरनगराणि यत्र श्रमणो भगवान् श्रीमहावीरो विहरति। धन्यास्ते राजेश्वरप्रभृतयो ये श्रमणभगवतः श्रीमहावीरस्यान्तिके केवलिप्रज्ञप्तं धर्मं शृण्वन्ति। पञ्चाणुव्रतिकं सप्तशिक्षाव्रतिकं द्वादशविधं श्रावकधर्मं च प्रतिपद्यन्ते। तथा मुण्डीभूत्वा आगारादनगारितां व्रजन्ति। ततो यदि श्रमणभगवान् श्रीमहावीरः पूर्वानुपूर्व्या चरन् यदीहागच्छेत्ततोऽहमपि भगवतोऽन्तिके प्रव्रजामि। उदायनस्यायमध्यवसायो भगवता ज्ञातः प्रातश्चम्पातः प्रतिनिष्क्रम्य वीतभयपत्तनस्य मृगवनोद्याने भगवान् समवसृतः। तत्र पर्षन्मिलिता उदायनोऽपि तत्रायातो भगवदन्तिके अहं प्रव्रजिष्यामि परं राज्यं कस्मैचिद्ददामीत्युक्त्वा भगवन्तं वन्दित्वा स्वगृहाभिमुखं चलितः। भगवतापि प्रतिबन्धं मा कार्षीरित्युक्तम्। ततो हस्तिरत्नमारुह्य उदायनराजः स्वगृहे समायातः। ततः उदायनस्यैतादृशोऽध्यवसायः समुत्पन्नः यद्यहं स्वपुत्रमभीचिकुमारं राज्ये स्थापयित्वा प्रव्रजामि तदायं राज्ये जनपदे मानुष्यकेषु कामभोगेषु मूर्च्छितोऽनाद्यनन्तं संसारकान्तारं भ्रमिष्यति ततः श्रेयः खलु मम निजकं केशिकुमारं राज्ये स्थापयितुम्। एवं संप्रेक्ष्य शोभने तिथिकरणमुहूर्ते कौटुम्बिकपुरुषानाकार्य एवमवादीत्। क्षिप्रमेव केशिकुमारस्य राज्याभिषेकसामग्रीमुपस्थापयत तैः कृतायां सर्वसामग्र्यां केशिकुमारो राज्येऽभिषिक्तः। ततस्तत्र केशिकुमारो राजा जातः। उदायनराजश्च केशिकुमारं राजानं पृष्ट्वा तत्कृतनिष्क्रमणाभिषेकः श्रीमहावीरान्तिके प्रव्रजितः बहूनि षष्ठाष्टमदशमद्वादशमासार्द्धमासक्षपणादीनि तपःकर्माणि कुर्वाणो विहरति। अन्यदा तस्य उदायनराजर्षेरन्तप्रान्ताहारकरणेन महान् व्याधिरुत्पन्नः वैद्यैरुक्तं दध्यौषधं कुरु। स च उदायनराजर्षिर्भगवदाज्ञया एकाक्येव विहरति। अन्यदा विहरन् वीतभयगतः। तत्र तस्य भागिनेयः केशिकुमारराजोऽमात्यैर्भणितः स्वामिन्नेष उदायनराजर्षिः परीषहादिपराभूतः प्रव्रज्यां मोक्तुकामः एकाक्येव इहायातः। तव राज्यं मार्गयिष्यति। स प्राह दास्यामि तैरुक्तं नैष राजधर्मः। पुनः स प्राह तर्हि किं करिष्यति। ते प्राहुर्विषमिश्रमस्य दीयते राज्ञोक्तं ततस्तैरेकस्याः पशुपाल्या गृहे विषमिश्रितं दधि कारितं तेषां शिक्षया तया तस्य तद्दत्तमुदायनस्तं यावद्देवतयाऽपहृतम्। उक्तं च तस्य देवतया महर्षे! तव विषं दत्तं दध्यन्तस्तेन दध्यौषधं परिहर। तद्वाक्याद्धि परिहृते रोगो वर्द्धितुमारब्धः। पुनस्तेन दध्यौषधं कर्तुमारब्धं पुनरपि तदन्तर्विषं देवतयाऽपहृतम्। एवं वारत्रयं जातम्। अन्यदा देवता प्रमत्ता जाता तैश्च विषं दत्तम्। ततः उदायनराजर्षिर्बहूनि वर्षाणि श्रामण्यपर्यायं पालयित्वा मासिक्या संलेखनया केवलज्ञानमुत्पाद्य सिद्धस्तस्य शय्यातरः कुम्भकारस्तदानीं क्वचिद्ग्रामान्तरे कार्यार्थं गतोऽभूत् कुपितया च देवतया वीतभयस्योपरि पांशुवृष्टिर्मुक्ता सकलमपि पुरमाच्छादितम्। अद्यापि तथैवास्ति शय्यातरः कुम्भकारस्तु शनिपल्ल्या मुक्तः। उत्त० १८ अ०।

१७ अ० । आ० क० । आ० म० ॥ ( अभीचिकुमारस्य वक्तव्यता स्वावसरे प्रोक्ता अस्या एव महत्या उदायनवक्तव्यतायाः केचिदंशा अज्जरक्खियानिण्वाकिरियासिक्खादिशब्देषु । उदायनस्य पितृष्वसुर्जयन्त्याः श्रमणोपासिकायाः कथा जयतीशब्दे )

उदार ( राल )-उदार-त्रि० उद्-आ-रा-क-दातरि, महति, सरले, दक्षिणे, गम्भीरे, असाधारणे, वाच० । निस्पृहत्वातिरेकादौदार्यवति, । प्र० २ श० १ उ० ।

उदात्त-उदारत्व-न० । अभिधेयार्थस्यातुच्छरूपे, स० । अतिशिष्टगुम्फगुणयुक्तास्वरूपे अन्यस्वार्थप्रतिपादकतालक्षणे वा द्वाविंशतितमे सत्यवचनातिशये, स० ।

उदासीण-उदासीन-त्रि० उद्-आस-शानच् । रागद्वेषरहिते मध्यस्थे,"उदासीणे फरुस वयति" उदासीना रागद्वेषरहिता मध्यस्था बहुश्रुतत्वे सत्युपशान्तास्तान् स्खलितांश्चोदनोद्यताम् कुर्वन्ति । आचा० १ श्रु० ६ अ० ४ उ० ॥ "समणपि दट्ठुदासीण, तत्य वि ताव एगे कुप्पंति" सूत्र० १ श्रु० ४ अ० २ उ० । विवदमानयोरेकतरपक्षानालम्बके जिगीषोर्नृपतेः शत्रुमित्रभूमितो व्यवहिते परतरे मण्डलाद्बहिरेतस्मादुदासीनो बलाधिकः इत्युक्तलक्षणे राजभेदे, वाच० । उपेक्षमाणे च । स्या० ६ गा०

उदाहड-उदाहृत- त्रि० उद्--आ-हृ-क्त दृष्टान्ततयोपन्यस्ते कथिते,। वाच० । उपन्यस्ते, उदाहृत तु "सम मईए अहाउ सो विप्परिया समेव" सूत्र० १ श्रु० ६ अ० ।

उदाहरंत-उदाहरत्-त्रि०प्रतिपादयति,'सव्व असच्चं इति' चिंतयता, "असाहु साहुत्ति उदाहरता" । सूत्र०१श्रु० १३ अ० ।

उदाहरण-उदाहरण-न० उदाह्रियते प्राबल्येन गृह्यतेऽनेन दार्ष्टान्तिकोऽर्थ इत्युदाहरणम् । दश० १ अ० । उत्पत्तिधर्मकत्वात्साध्यसाधर्म्यात्तद्धर्मभावे दृष्टान्ते, यथा घट इति वैधर्म्योदाहरण यदनित्यं न भवति तदुत्पत्तिमदपि न भवति यथाकाशमिति । सूत्र० १ श्रु० १२ अ० । विशे० ।

मूलभेदतो द्वैविध्य निदर्शन्नाह ।

तत्थोदाहरणं दुविहं, चउव्विहं होइ एक्कमेक्कं तु ।
इक्क चउव्विहो खलु, तेण उ साहिज्जए अत्थ ॥

तत्र शब्दो वाक्योपन्यासार्थो निर्धारणार्थो वा । उदाहरणं पूर्ववत्तच्च मूलभेदतो द्विविध द्विप्रकारं चरितकल्पितभेदाद्युत्तरभेदतस्तु चतुर्विध भवति । तयोर्द्वयोरेकैकमुदाहरणमाहारणतद्देशतद्दोषोपन्यासभेदात्तच्च वक्ष्याम ।

नायं आहरणं ति, दिट्ठंतोवमनिदरिसणं चेव ।
एगट्ठं तं दुविहं, चउव्विहं चेव नायव्वं ॥ ५२ ॥

ज्ञायतेऽस्मिन्सति दार्ष्टान्तिकोऽर्थ इति ज्ञातम । अधिकरणे निष्ठाप्रत्ययः । तत्रोदाह्रियते प्राबल्येन गृह्यतेऽनेन दार्ष्टान्तिकोऽर्थ इत्युदाहरणमिति दृष्टमर्थमन्त नयतीति दृष्टान्तः । अतीन्द्रियप्रमाणदृष्ट सवेदननिष्ठां नयतीत्यर्थ । उपनीयतेऽनेन दार्ष्टान्तिकोऽर्थ इत्युपमानम । तथा च निदर्शन निश्चयेन दर्श्यते अनेन दार्ष्टान्तिक एवार्थ इति निदर्शनम ( एगट्ठति ) इदमेकार्थमेकार्थिकजातम् इह च तत्प्रागुपन्यस्त द्विविधमुदाहरण चतुर्विध चैवाङ्गीकृत्य ज्ञातव्यं प्रत्येकमपि सामान्यविशेषयो कथंचिदेकत्वादत एव सामान्यस्यापि प्राधान्यख्यापनार्थमेकवचनाभिधानमेकार्थमित्यत्र बहु वक्तव्य तत्तु नोच्यते ग्रन्थविस्तरभयाद्गमनिकामात्रमेतदिति गाथार्थ ।

साम्प्रतं यदुक्तं तत्रोदाहरण द्विविधमित्यादि तद्द्वैविध्यादिप्रदर्शनायाह ।

चरियं च कप्पियं वा, दुविहं तत्तो चउव्विहेक्केक्कं ।
आहरणे तद्देसे, तद्दोसे चेवुपन्नासे ॥ ५३ ॥

चरितं कल्पित चेति द्विविधमुदाहरणम् । तत्र चरितमभिधीयते यद्वृत्तान्तेन कस्यचिद्दार्ष्टान्तिकार्थप्रतिपत्तिर्जन्यते । तद्यथा दु खाय निदान यथा ब्रह्मदत्तस्य । तथा कल्पित स्वबुद्धिकल्पनाशिल्पनिर्मितमुच्यते तेन कस्यचिद्दार्ष्टान्तिकार्थप्रतिपत्तिर्जन्यते । यथा पिप्पलपत्रैरानित्यतायामित्युक्त च "जह तुम्भे तह अम्हे, तुम्हे विय होहिय जहा अम्हे। अप्पाहेइ पडत, पडुयपत्त किसलयाण॥ नवि अत्थि नवि य होही, उल्लावो किसलपंडुपत्ताण। उवमा खलु एस कता भवियजणविबोहणट्ठाए" इत्यादिआहेदमुदाहरणं दृष्टान्त उच्यते तस्य च साध्यानुगमादिलक्षणमित्युक्त च "साध्येनानुगमो हेतोः साध्याभावे च नास्तिता। स्थाप्यते यत्र दृष्टान्ते, स साधर्म्येतरो द्विधा" अस्य पुनस्तल्लक्षणाभावात्कथमुदाहरणत्वमित्यत्रोच्यते नदपि कश्चित्साध्यानुगमादिना दार्ष्टान्तिकार्थे प्रतिपत्तिजनकत्वात्फलत उदाहरण इहापि च सोऽस्त्येवेति कृत्वा किं नोदाहरणतेति साध्यानुगमादिलक्षणमपि सामान्यविशेषोभयरूपानन्तधर्मात्मके वस्तुनि सति कथंचिद्भेदवादिन एव युज्यते नान्यस्यैकान्तभेदाभेदयोस्तदभावादिति । तथाहि सर्वथा प्रतिज्ञा दृष्टान्तार्थभेदवादिनोऽनुगमतः खलु घटादौ कृतकत्वादेरनित्यत्वादिप्रतिबन्धदर्शनमपि कृतानुपयोग्येव भिन्नवस्तुधर्मत्वात्सामान्यस्य च परिकल्पितत्वादसत्वादित्यमपि च तद्बलेन साध्यार्थप्रतिबन्धकल्पनायामतिप्रसङ्गादित्यत्र बहुवक्तव्यं तत्तु नोच्यते ग्रन्थविस्तरभयादिति । एव सर्वथा अभेदवादिनोऽप्येकत्वादेव तदभावो भावनीय इति। अनेकान्तवादिनस्त्वनन्तधर्मात्मके वस्तुनि तद्धर्मसामर्थ्यात्तत्तद्वस्तुनः प्रतिबन्धबलेनैव तस्य तस्य वस्तुनो गमक भवत्यन्यथा तस्मिन् तत्प्रतिपत्त्यसंभव इति कृत प्रसङ्गेन । प्रकृतं प्रस्तुमः । चरित च कल्पित चेत्यनेन विधिना द्विविधम । पुनश्चतुर्विध चतु प्रकारमेकैक कथमत आह । उदाहरण तद्देशस्तद्दोषश्चैवमुपन्यास इति । तत्रोदाहरणशब्दार्थो उक्त एव । तस्य देशस्तद्देशः । एव तद्दोष । उपन्यासनमुपन्यासः स च तद्वस्त्वादिलक्षणो वक्ष्यमाण इति गाथार्थः ।

साम्प्रतमुदाहरणमभिधातुकाम आह ।

चउहा खलु आहरणं, होइ अवाओ उवायठवणा य ।
तह य पडुप्पन्नविणा-समेव पढमं चउविगप्पं ॥ ५४ ॥

चतुर्धा खलूदाहरण भवति । अथ चतुर्धा खलूदाहरणे विचार्यमाणे भेदा भवन्ति । तद्यथा-अपायः उपाय स्थापना च । तथा च प्रत्युत्पन्नविनाशमेवेति । स्वरूपमेषां प्रपञ्चेन भेदतो निर्युक्तिकार एव वक्ष्यति । दश० नि०१ अ०। आव० । ( अपायादिशब्देषु अपायाद्युदाहरणादि) एकदेशप्रसिद्ध्या सकलसिद्ध्यर्थकथने, कर्म्मणि-ल्युट्-इष्ट-सिद्ध्यर्थमुच्यमाने दृष्टान्ते,।प्रकृतासिद्ध्यर्थनिदर्शनरूपे उपोद्धृते च। करणे-ल्युट्-न्यायमते प्रतिवादिना प्रयुक्तप्रतिज्ञादिपञ्चकान्तर्गतं व्याप्तिपक्षधर्म्मताप्रदर्शके,घाख्यभेदे कथनमात्रे, लक्षणसम्बद्धतया प्रामाणिकवाक्योपन्यासे, कथा प्रसङ्गे च । भावे-ल्युट् वाच० । काल्पनिकमप्युदाहरण भवति। नचैतदनुपपन्नमार्षेपि काल्पनिकदृष्टान्तस्याप्यनुज्ञानाद्यदाह भगवान् भद्रबाहुस्वामी ' चरियं च कप्पियं वा, आहरण दुविहमेव पण्णत्त । अट्ठस्स साहणट्ठाई धणमिव तु पणट्ठा ॥ " न०

उदाहिय-उदाहृत-त्रि० व्याख्याते, " जा मा तिष्ठि उदाहिया " आचा० १ श्रु० ७ अ० १ उ० ।

उदाहु-उताहो-अव्य० विकल्पे; " किं नवं मुणी मुणीए उदाहो जुया संज्ञायए" उताहो इति विकल्पार्थो निपात.। भ० १५ श० १ उ० । "किं जाणया दिस उदाहु अजाणया" आचा० २ श्रु० । कदाचिच्चार्थे, आचा० १ श्रु० ५ अ० २ उ० ॥

उदाहृतवत्-त्रि० व्याहृतवति, "उयाहु ते आयं काफुसन्ति इति उदाहु धीरे" । आचा० १ श्रु० ७ अ० २ उ० । कथितवति, "एओ वमं तत्य उदाहु धीरे । सूत्र० १ श्रु० १५ अ० । " एवं से उदाहु अणुत्तरणाणी अणुत्तरदसी " । उत्त० ६ अ० ।

उदि-उदि-पु० उत्-उत्कृष्ट इः कामो यस्य उदिः ॥ उत्कृष्टकामयुक्ते 'भर्गो देवस्य धीमहि' गा० ।

उदुक्नेय-उदकोद्भव-पु० गिरितटादिभ्यो जलोद्भवे, । भ० ३ श० ६ उ० ॥

उद्दूढ-उद्दूढ-त्रि० उद्० —वह-क्त । जढे, स्थूले, घृते, च । विवाहितस्त्रियाम् , स्त्री० । वाच० ।

उद्दूढ-देशीवचनम्-मुपिते च "उद्दूढ सेसवाहिं अतोवि पंचगि एहनउदुम्" वृ० १ उ० ॥ नि० चू० ।

उद्दूहल-उद्दूखल-न० ऊर्ध्वं खं लाति ला० क० पृषो० नि० । तण्डुलादिखण्डनार्थं काष्ठादिरचिते द्रव्ये, गुग्गुलौ च । वाच० । " पीढं वा फलगं वा णिस्सेणिं वा उद्दूहलं वा अवहट्टुउस्स वि य दुद्दहेज्जा " आचा० २ श्रु० ।

उद्द-उद्द-पुं० उनत्ति क्लिद्यति उन्द्-रक् । जलविडाले, वाच० । सिन्धुविषये मत्स्ये, तत्सूक्ष्मचर्मनिष्पन्ने वस्त्रे च। आचा० २श्रु०।

उद्दंडग-उद्दंडक-पु० वानप्रस्थतापसभेदे, ऊर्ध्वकृतदण्डका ये सञ्चरन्ति, नि० चू० १ उ० । औप० । भ० ।

उद्दंडविहार-उद्दण्डविहार-पुं० महानगर्यामादिनाथालये. महानगर्यामुद्दण्डविहारे श्री आदिनाथ. ॥ ती० ।

उद्दंस-उद्दंश-पुं०उद्दशति-उद्-दश-अच्-मस्तकदंशके, वाच० । मधुमक्षिकायाम्, क० ।

उद्दंसंग-उद्दंशाण्ड-न० षष्ठीतत्पु० मधुमक्षिकाणामण्डरूपे अ-गारूसूक्ष्मभेदे, क० ।

उद्दंसग-उद्दंशक-पुं० त्रीन्द्रियजीवभेदे,-प्रज्ञा०१पद । जी० ।

उद्दड्ढ-उद्दग्ध-पु० रत्नप्रभाया. पृथिव्या पूर्वावलिकां सीमन्तकप्रभावरकाष्ठिंशतितमेऽपक्रान्तमहानिरये, स्था० ६ ठा० ।

उद्दड्ढमज्झिम-उद्दग्धमध्यम-पुं० रत्नप्रभाया. पृथिव्या. उत्तरावलिकासु सीमन्तकमध्यमान्तरकाष्ठिंशतितमेऽपक्रान्तमहानिरये, स्था० ६ ठा० ।

उद्दड्ढावत्त-उद्दग्धावर्त-पु० रत्नप्रभायाः पृथिव्या पश्चिमायां नरकावल्यां सीमन्तकावर्तस्यापरेण विंशतितमेऽपक्रान्तमहानरके,-स्था० ६ ठा० ।

उद्दड्ढावसिट्ठ-उद्दग्धावशिष्ट-पुं० रत्नप्रभाया पृथिव्या पश्चिमायां नरकावल्यां सीमन्तकावर्तस्यापरेण विंशतितमेऽपक्रान्तमहानरके, स्था० ६ ठा० ।

उद्दर-ऊर्ध्वदर-न० ऊर्ध्वं दर पूर्यते यत्र काले तदूर्ध्वदरम्। प्राकृतशैल्या " उद्दर"। ते च दरा द्विविधा धान्यदरा उदरदराश्च । धान्यानामाधारभूता दरा धान्यदरा कटपल्यादय । उदराण्येव दरा उदरदराणि उभयेऽपि यत्र पूर्यन्ते, वृ० १ उ० । सुभिक्षे, । नि०चू०१०उ०। दुविहाओ होंति उदरा, पेट्टे तह धन्नमाणियां" ते उदरा द्विविधास्तद्यथा पोट्टदरा धान्यभाजनदराश्च । पोट्टमुदर तद्धयाहरा पोट्टदरा. । धान्यभाजनानि कटपल्यादयस्तान्येव दरा धान्यभाजनदरा । ऊर्ध्वं यत्र पूर्यन्ते तदूर्ध्वमुदरमुच्यते । वृ० १ उ० । नि० चू० ।

उद्दरिय-उद्दप्त-त्रि० उद्-दृप-क्त-उद्धते, गर्वान्विते, वाच० । प्राबल्येन कर्मशत्रुजय प्रति दर्पिते, । नं० ।

उद्दवइत्ता-अपद्रावयितृ-त्रि० प्राणव्यपरोपणात् जीवितविनाशके, "उद्दवइत्ता आहारं आहारेइ इति से महया पावेहिं कम्मेहिं अत्ताण उवक्खाइत्ता भवइ" । सूत्र०२ श्रु०२ अ० ।

उद्दवण-अपद्रावण-न० जीविताद् व्यपरोपणे, । आचा०२श्रु०। अतिपातनविवर्जितपीडायाम्, । " उद्दवणं पुण जाणासु, अइवायविवज्जियं पीडं " पिं० । सर्वथा जीवविनाशने च । तत्र पृथिव्यम्बोरन्यन्तरसंमर्दनाद्यैः अप्कायस्य तु वह्नितापनदण्डाद्यभिघातनपानपादादिक्षालनैः वनस्पतेः पत्रपुष्पाङ्कुरादित्रोटनादिभिः । अत्र प्रायश्चित्तमाम्ल इति । जीत० । "उद्दवणं मारणं" तत्र प्रायश्चित्तं पाराञ्चितम् । नि० चू० १ उ० ।

उद्दवण -अपद्रवण-गौणहिंसायाम्, प्रश्न०-अध० १ द्वा० । विषयाऽन्यत्र नयने, वृ० १ उ० ।

उद्दवणकर-अपद्रावणकर-पुं० मारणान्तिकभेदकारिणि, ग० १ अधि० ।

उपद्रवणकर-पुं०धनहरणाद्युपद्रवकारिणि,एषोऽप्रशस्तमनोविनयभेदः, ग० १ अधि० । औप० ।

उद्दवणकरी-अपद्रावणकरी-स्त्री० जीवानामपद्रावणकारिण्याम्, "परितावणकरिं उद्दवणकरिं भूतोवघाइयं अभिकंखणो भासेज्जा " आचा० २ श्रु० ।

उद्दविज्जमाण-अपद्राव्यमाण-त्रि० मार्यमाणे, "किलाविज्जमाणस्स वा उद्दविज्जमाणस्स वा जाव लोमुक्खणण मायमविहिं सासारगं दुक्खं भय पडिसवेदेति । सूत्र०२श्रु०१ अ० ।

उद्दविय-अपद्रावित-त्रि० उत्त्रासिते, "परिताविया किलामिया उद्दविया ठाणाओ ठाण संकामिया" । ध०२ अधि० । मारिते, भ० ३ श० १ उ० ।

उद्दवेयव्व-अपद्रावयितव्य-त्रि० जीविताद्व्यपरोपयितव्ये "अहं ण उद्दवेयव्वा अन्ने उद्दवेयव्वा एवमेव ते इत्थिकामेहिं मुच्छिया " । सूत्र० २ श्रु०३ अ० ।

उद्दवेहिंत-उपद्राविष्यत्-त्रि० उपद्रवान् करिष्यति,-भ० १५ श० १ उ० ॥

उद्दह-उद्रथ-पुं० उद्गतो रथो यस्मात् १ रथकीले, उद्धतरथतुल्यः पक्षो यस्य । ताम्रचूडविहगे, । मेदिनी०

उद्दाइत्ता-अपद्रूय-अव्य० मृत्वेत्यर्थे, " जस्स जीवा उद्दाइत्ता इत्थेव भुज्जो २ पच्चायति" स्था० १० ठा० ।

उद्दाणभत्तारा-उद्दानभर्तृका-स्त्री० भर्त्रा परिष्ठापितायां स्त्रियाम्, "उद्दाणभत्तारा भत्तारेण परिट्ठाविता " नि०चू०१उ०

उद्दाम-उद्दाम-त्रि० उद्गत दाम्न अच्-समा० । बन्धनरहिते, "ताहे उद्दामं गच्छंतस्स कोंडिगे ठेसि पाणिण तलाए पक्खा भग्गा"। आ०म०द्वि० । अप्रतिनियमे, स्वतन्त्रे, अत्युग्रे च । वाच०। "एव च कुसलजोगे उद्दामे निव्वकम्मपरिणामा ' प० चू० । उत्-उत्कृ-

ष्टं श्रेष्ठ दाम पाशाख्यमस्त्रं यस्य । वरुणे, पु०। गम्भीरे,। त्रि०। वाच०
उद्दाल--आ-छिद्-धा० हस्तादाकर्षणे, "आछा ओ अन्दोद्दालौ-" ८। ४। १२५। उद्दालइ-आच्छिन्दइ आच्छिन्दति, प्रा०। अवदाल--पु० अवदलने, पादादिन्यासेऽधोगमने, "गंगापुलिणवालुयउद्दालसालिसए। ज्ञा० १ अ०। चं०। क०। भ०। रा०। उद्दालयति भूमिमुद्भिनत्ति उद्-दल्-णिच्-एवुल्-बहुवारकवृक्षे, वनकोद्रवे, । वाच०। अवसर्पिण्याः प्रथमारके, भरतक्षेत्रे स्वनामख्याते द्रुमभेदे,। जं० २ वक्ष०। भूकेदारभेदे च। वाच०।
उद्दालित्ता-उद्दालयितुम्--अव्य०। चर्माणि लुम्पयितुमित्यर्थे, दशा० १ अ०। जोत्तेण वा वेतेण वा णेतेण वा तयाइ वा कसेण वा छियाए वा लयाए वा पासाइ उद्दालित्ता भवइ" ॥ सूत्र० २ श्रु० २ अ०।
उद्दाव-उद्द्राव-पु० उद्-द्रु-घञ्-पलायने, । अमर०। वाच०।
उद्दावणया-अपद्रावणता-स्त्री० उत्त्रासने, भ० ३ श० ६ उ०।
उद्दाह--उद्दाह-पु० प्रकृष्टे दाहे, । स्था० १० ठा०।
उद्दिट्ठ--उद्दिष्ट-त्रि० उद्--दिश्-क्त० सामान्यतोऽभिहिते, स्था० ५ ठा०। प्रति०। प्रतिपादिते, । सूत्र० १ श्रु० ए अ०। तद्वि-वक्षितार्थप्रणीते, सूत्र० २ श्रु० ९ अ०। वृ०। निर्दिष्टे, । दश० नि० चू०। दानाय परिकल्पिते भक्तपानादिके, । "तस्स अकसिणो इसिणो णायपुत्ता उद्दिट्ठभत्तं परिवज्जयन्ति" सूत्र० २ श्रु० ६ अभिलषिते च। वाच०।
उद्दिट्ठकड-उद्दिष्टकृत-त्रि० उद्दिष्टमुद्देशस्तेन कृतं विहित तद-(साधु)र्थं संस्कृते, "उद्दिट्ठकडं भत्त विवज्जंती किमुपसेसमारंभे"। पञ्चा० १० विव०। साध्वपेक्षया कृते आधाकर्मादौ, । पञ्चा० १४ विव०। औद्देशिके, "उद्दिट्ठकडं भुंजइ, छक्कायपमद्दणो घण कुणइ। पच्चक्खं च जलगए, जो पियइ कम्म सो भिक्खू"। दश० १० अ०। उद्दिष्टं च कृतं च उद्दिष्टकृतम् आधाकर्मणि, । दर्श०।
उद्दिट्ठपडिमा-उद्दिष्टप्रतिमा-स्त्री० दशमासानात्मार्थनिष्पन्नमाहारं न भुङ्क्ते इत्येवरूपायां दशम्यामुपासकप्रतिमायाम्, ध० २ अधि०।
उद्दिट्ठभत्तपरिण्णाय-उद्दिष्टभक्तपरिज्ञात-पु० उद्दिष्टं तदेव श्रावकमुद्दिश्य कृतं भक्तमोदनादि उद्दिष्टभक्तं तत्परिज्ञातं येनासावुद्दिष्टभक्तपरिज्ञातः । दशमीमुपासकप्रतिमां प्रतिपन्ने श्रावके, स०।
उद्दिट्ठभत्तवज्जणपडिमा-उद्दिष्टभक्तवर्जनप्रतिमा-स्त्री० दशम्यां श्रावकप्रतिमायाम्, तत्स्वरूपं चैवम्। उद्दिष्टभक्तवर्जनप्रतिमां सा चैवं "उद्दिट्ठकडं भत्तं, पि वज्जए किमुय सेसमारंभं। सो होई खुरमुंडो, सिहलिं व धारते कोवि। तिव्व तुट्ठो जाणे, जाणइ वयइ नो वेति। पुव्वोदियगुणजुत्तो, दसमासा कालमाणेणं'। उपा० १ अ०। तथा श्रमणेति निर्ग्रन्थसद्धर्मस्तदनुष्ठानकरणात्स श्रमणभूतः साधुकल्प इत्यर्थः। चकारः समुच्चये अपि' संभावने भवति। श्रावक इति प्रकृतं हे श्रमण! हे आयुष्मन्! इति सुधर्मस्वामिना जम्बूस्वामिनमामन्त्रयतोक्तमित्येकादशीति। इह चेयं भावना। पूर्वोक्तसमग्रगुणोपेतस्य क्षुरमुण्डस्य कृतलोचस्य वा गृहीतसाधुनेपथ्यस्य ईर्यासमित्यादिकं साधुधर्ममनुपालयतो भिक्षार्थं गृहिकुलप्रवेशे सति श्रमणोपासकाय प्रतिमाप्रतिपन्नाय भिक्षां देयेति भाषमाणस्य कस्त्वमिति कस्मिंश्चित्पृच्छति प्रतिपन्नश्रमणोपासकोऽहमिति ब्रुवाणस्यास्यैकादश मासान् यावदेकादशी प्रतिमा भवतीति। पुस्तकान्तरे त्वेवं "वाचनादंसणसावए प्रथमा कयव्वयक द्वितीया। कयसामाइए तृतीया। पोसहोववासनिरए चतुर्थी। राइभत्तपरिण्णाए पञ्चमी। सचित्तपरिण्णाए षष्ठी। दिया बम्भयारी राओ परिमाणकडे सप्तमी। दिआ वि राओ वि बम्भयारी असिणाणए यावि भवति वोसट्ठकेसरोमनहे अष्टमी। आरम्भपरिणाए नवमी। उद्दिट्ठभत्तवज्जए दशमी। समणभूए या वि भवइ त्ति समणाउसो एकादशीति। कचित्तु आरम्भपरिज्ञात इति नवमी। प्रेष्यारम्भपरिज्ञात इति दशमी। उद्दिष्टभक्तवर्जकः श्रमणभूतश्चैकादशीति ॥ स० ॥ प्रश्न० ॥
उद्दित्त-उद्दीप्त-त्रि० प्रकाशान्विते, वाच०। "उद्दयिते कुड्डाकलिपणट्ठा। पुढवी दगवारगो य उद्दित्तो (उद्दित्तत्ति) अग्निकाय शीतकाले उद्दावितो भवति। वृ० १ उ०।
उद्रिक्त-त्रि० उद् रिच्-क्त-अतिशयिते, अधिके, स्फुटे,। वाच०।
उद्दिसावित्तए-उद्देशयितुम्-अव्य० आत्मनो गुरुतया व्यवस्थापयितुमित्यर्थे, । वृ० १ उ०।
उद्दिसिऊण-उद्दिश्य-अव्य० अनुज्ञाप्येत्यर्थे,। व्य० ७ उ०।
उद्दिसिज्जंता-उद्दिश्यमान-त्रि० वाच्यमाने, । आ० म० द्वि०।
उद्दिसित्तए-उपदेष्टुम्--अव्य० स्वयं धारयितुमित्यर्थे, "दिसं वा अणुदिसं वा उद्दिसित्तए जहा तस्स गणस्स अप्पत्तियं सिया"। व्य० दि० २ उ०। योगविधिक्रमेण सम्यग्योगेनाधीष्वेदमित्येवमुद्देष्टुमित्यर्थे, "स ज काय उद्दिसित्तए" स्था० २ ठा०।
उद्दिसिय-उद्दिश्य-अव्य० उद्-दिश्-ल्यप्-प्रेक्ष्येत्यर्थे, "से भिक्खू वा २ उद्दिसिय उद्दिसिय संथारगं जाएज्ज अंगुलियाए उद्दिसिय उद्दिसिय" उद्दिश्य अङ्गुलीं प्रसार्य। आचा० २ श्रु० १ अ०।
उद्दिट्ठ-त्रि० प्राक् संकल्पिते, "उद्दिसियवत्थं सयं वा ण जाएज्जा आचा० २ श्रु० ॥
उद्दिस्स-उद्दिश्य-अव्य० उद्--दिश्-ल्यप्-आश्रित्येत्यर्थे, "जता महूसवो खलु उद्दिस्स जिणेस कीरई जो उ" पंचा० ए विव० ॥ अङ्गीकृत्येत्यर्थे च। "तत्थ भवे आसका उद्दिस्स जई वि कीरए योगो। दश० १ अ०।
उद्दीविय-उद्दीपित-त्रि० उज्ज्वालिते, "संधुक्किय मुद्दीविय मुज्जालियय पदीविय जाण"। को०।
उद्देस-उद्देश-पु० उद्दिश्यते नारकादिव्यपदेशेनेति उद्देश । लोके, । आचा० १ श्रु० १ अ०। उद्दिश्यते इत्युद्देश । उपदेशे, सदसत्कर्तव्यतादेशे, नारकादिव्यपदेशे, "उद्देसो पासगस्स णत्थि" उद्दिश्यते इत्युद्देश उपदेश सदसत्कर्तव्यादेश स पश्यति इति पश्य स एव पश्यकस्तस्य स विद्यते स्वत एव विदितवेद्यत्वात्तस्य अथवा पश्यतीति पश्यकः सर्वज्ञस्तदुपदेशवर्ती वा तस्य उद्दिश्यत इत्युद्देशो नारकादिव्यपदेश उच्चावचगोत्रादिव्यपदेशो वा स तस्य न विद्यते तस्य प्रागेव मोक्षगमनादिति भाव०। आचा० १ श्रु० २ अ० ३ उ०। गुरुवचने, उत्त० १ अ०। अध्ययने, तदन्तर्गताधिकारे च। "भणिओ वि य उच्छोव्विय छद्दुहेसे विसेसण" न०। समस्तार्थिनां कृते कल्पिते, ध० ३ अधि०॥ अस्य निक्षेप । तत्रोद्देश षोढा नामोद्देश स्थापनोद्देशो द्रव्योद्देश क्षेत्रोद्देशः कालोद्देशो भावोद्देशश्चेति। नामोद्देशो यस्योद्देश इति नाम क्रियते। स्थापनोद्देश उद्देशवत पुस्पादे। स्थापना। द्रव्योद्देश ज्ञभव्यशरीरव्यतिरिक्त स्वयमेव भाष्यकृदाह ॥

दव्वेणं उद्देसा, उद्दिसति जाव जेण दव्वेणं ।
दव्वं वा उद्दिसते, दव्वभूओ भद्दव्वो ॥

द्रव्येण रजोहरणादिना यदुद्देश यो वा येन सचित्तादिना द्रव्येणोद्दिश्यते तत्र सचित्तेन यथा गोभिर्गोमान् तुरगैस्तुरगपति गजैर्गजपतिरिति। अचित्तेन यथा दण्डेन च दण्डी छत्रेण

तत्री कपालेन कपालीत्यादि । मिश्रेण यथा शकटेन शाकटिको रथेन रथिक इत्यादि । द्रव्यं वा व्याधिप्रशमनं यदुद्दिशति । अनुकमौषधं द्रव्यं भवता गृहीतव्यमिति । द्रव्यभूतो वा ज्ञानाद्युपयुक्तः पठ । न श्रुतस्कन्धादिकमुद्दिशति द्रव्यार्थी वा द्रव्यनिमित्तं धनुर्वेदादिकं यदुद्दिसति एष सर्वोऽपि द्रव्योद्देशः ॥

खित्तम्मि जम्मि खित्ते, उद्दिसती जाव जेण खेत्तेण ।

एवमेव य कालस्स वि, भावे उ पसत्थअपसत्थो ॥

क्षेत्रोद्देशे चिन्त्यमाने यस्मिन् क्षेत्रे अङ्गश्रुतस्कन्धादेरुद्देशः क्रियते व्यावर्ण्यते वा यो वा येन क्षेत्रेणोद्दिश्यते यथा भरते भवो भारतः । सुराष्ट्रायां भवः सौराष्ट्रो मगधेषु भवो मागध इत्यादि । एवमेव च यस्मिन् काले अङ्गादिकमुद्दिश्यते येन वा कालेनाद्दिश्यते यथा सुषमायां भव सौषम शरदि जातः शारद इत्यादि एष कालोद्देशः । भावोद्देशो द्विधा । प्रशस्तोऽप्रशस्तश्च । उभयमपि दर्शयति ॥

कोहाइ अपसत्थो, णाणमादीय होइ उ पसत्था ।

उदओ वि खलु पसत्थो, तित्थकराहार उदयादी ॥

क्रोधमानादिरौदयिको भावोद्देशः । ज्ञानदर्शनादिक्षयोपशमिक औपशमिक क्षायिकोपशमिको वा भावः प्रशस्तो भावोद्देशो भवति उदयोऽप्यौदयिको भावोऽपि तीर्थकराहारयश कीर्त्यादिसत्कर्मोदयरूपप्रशस्तो भवति । आदिशब्दस्य गाथायां व्यत्ययेन निर्देशो बन्धानुलोम्यात् । बृ० ३ उ० । उद्देशनमुद्देशः । सामान्याभिधाने, यथाऽध्ययनमिति । आ० म० प्र० । विशे० । अनु०॥

उद्देशनिर्देशयोः स्वरूपं भाष्यकृदाह ॥

अज्झयणं उद्देसो, अभिहियं सामाइयंति निद्देसो ।

सामण्णविसिट्ठाणं, अभिहाणं सत्थनामाणं ॥

शास्त्रं च नाम च शास्त्रनामनी तयोः सामान्यविशिष्टयोः सामान्यविशेषभूतयोरोघनिष्पन्ने नामनिष्पन्ने च निक्षेपे यदभिधानमभिहितं तावुद्देशनिर्देशो यथा सङ्ख्येन चेह योजना । तद्यथा-सामान्यस्य शास्त्रस्यौघनिष्पन्ननिक्षेपे यदध्ययनमित्यभिधानमभिहितं त उद्देश इत्युच्यते । नामनिष्पन्ने च निक्षेपे विशिष्टस्य नाम्नो यत्सामायिकमित्यभिधानमभिहितं स निर्देश इत्यभिधीयत इति॥

अस्य निक्षेपो यथा ॥

नामं ठवणा दविए, खित्ते काले समासउद्देसे ।

उद्देसम्मि य भावे, एमाई होइ अट्ठमओ ॥

नामादिभेदादुद्देशोऽष्टविधस्तद्यथा नामोद्देशः स्थापनोद्देशो द्रव्योद्देशः क्षेत्रोद्देशः कालोद्देश उद्देशोद्देशः समासोद्देशो भावोद्देशो भवत्यष्टमक इति निर्युक्तिगाथासंक्षेपार्थः ॥

तत्र नामोद्देशं व्याख्यातुमाह भाष्यकारः ॥

नामं जस्सुद्देसो, नामेणुद्देसए व जो जेण ।

उद्देसो नामस्स व, नामुद्देसोऽभिहाणंति ॥

यस्य जीवादेर्वस्तुन उद्देश इति नाम क्रियते स नामोद्देशः । नामरूप उद्देशो नामोद्देशः यथा गोपालदारकादिरुद्देश इति नाम ( नामेणुद्देसत्ति ) यो वा घटपटस्तम्भादिपदार्थो येन घटपटस्तम्भादिनाम्ना उद्दिश्यते प्रतिपाद्यते सोऽपि घटपटादिपदार्थो नामोद्देश उच्यते । उद्दिश्यतेऽभिधीयते प्रतिपाद्यते निजेन नाम्ना इति कृत्वा उद्देशः ( नामस्सवत्ति ) नाम्नो वा वस्तु सामान्याभिधानस्योद्देशः समुच्चारणं नामोद्देशः । किमुक्तं भवतीत्याह (अभिहाणंति) वस्तुनः सामान्यं यदभिधानं तन्नामोद्देश इत्यर्थः यथा आम्रादेः वृक्ष इति नाम । वा शब्दः सर्वत्र प्रकारान्तरसूचकः

अत्र परोऽतिप्रसङ्गमुद्भावयन्नाह ।

एवं णणु सव्वो चिय, नामोद्देसो जओ भिहाणंति ।

दव्वाईणं तेहि व, तेसु व विकीरणगस्स ॥

ननु यदि वस्तुनः सामान्याभिधानमात्रमुद्देशोऽभिधीयते एवं तर्हि सर्व एवायं स्थापनाद्रव्यक्षेत्रकालाद्युद्देशो नामोद्देश एव प्राप्नोति । यतो द्रव्यादीनामपि हेमरजतादीनां हेमादिक सामान्याभिधानमिति तैर्वा कुसुम्भहरिद्रादिद्रव्यैर्हेतुभूतैर्वस्त्रादीनां रक्तपीतमित्यादिसामान्याभिधानं प्रवर्तते । तेषु वा दण्डकुण्डलकिरीटादिद्रव्येषु सत्सु दण्डी कुण्डली किरीटीत्यादिक सामान्याभिधानं प्रवर्तमानं दृश्यते । एवं स्थापनाक्षेत्रादिष्वपि वाच्यम् । ततो य एव द्रव्याद्युद्देशोऽभिमतः स एव सर्वोऽपि नामोद्देशः प्राप्नोतीति उद्देशस्यैकविधत्वादष्टविधत्वं विशीर्यत इति ।

अत्र पराभिहितमभ्युपगम्य परिहारमाह ।

सव्वं सव्वाणुगओ, नामुद्देसोऽभिहाणमित्तं जं ।

नाणत्तं तह वि मयं, मइकिरियावत्थुभेएहिं ॥

सत्यमुक्तं भवता यतो यत्सामान्याभिधानमात्रं नामोद्देशः स खलु सर्वानुगत एव तथापि नामस्थापनाद्रव्याद्युद्देशानां नानात्वं भेदरूपं मतं सम्मतमेव परमार्थवेदिनां कैरित्याह । मतिक्रियावस्तुभेदैस्तथाहि-यादृशी नामेन्द्रे मतिस्तादृश्येव न स्थापनेन्द्रादिषूत्पद्यते किंतु विलक्षणैव । न च यां क्रियां नामेन्द्रः करोति तामेव स्थापनाद्रव्येन्द्रादयः किंचित्सदृशीमेव अत एव नामेन्द्रादिवस्तूनां परस्परं भेदो विज्ञेयो भिन्नमित्यादिहेतुत्वात् घटपटादिवस्तुवदिति ॥ करोति तामेव स्थापनां द्रव्येन्द्रादिवस्तुवदिति । एवं प्रस्तुतनामस्थापनाद्रव्याद्युद्देशानामपि मत्यादिभेदाद्भेदो योजनीय इति ॥

अथ स्थापनाद्युद्देशानाह ।

ठवणाए उद्देसो, ठवणुद्देसोत्ति तस्स वा ठवणा ।

तं तेण तओ तम्मिव, दव्वाइयाणमुद्देसो ।

दव्वुद्देसो दव्वं, दव्वपई दव्ववंसदव्वो त्ति ।

एवं खेत्तं खेत्ती, खेत्तपई खेत्तजायत्ति ॥

स्थापनाया उद्देशनमुच्चारणं सामान्येनाभिधानं स्थापनोद्देशः तस्य वा उद्देशस्य अक्षरादिषु स्थापना स्थापनोद्देशः । अथ द्रव्योद्देशमाह-द्रव्यादीनामुद्देशो द्रव्योद्देशः । आदिशब्दात् द्रव्यवदादिपरिग्रहः कया पुनर्व्युत्पत्त्या द्रव्यादयो वाच्या भवन्तीत्याह ( तम्मित्यादि ) तदेव द्रव्यमुद्दिश्यते उच्चार्यते द्रव्यमित्येवं सामान्येनाभिधीयते द्रव्योद्देशः । द्रव्यं च तदुद्देशश्चेति कर्मधारयसमासः । अत्र च पक्षे द्रव्यमेवोद्देशशब्दवाच्यम् । अत एव द्वितीयगाथायामाह ( दव्वमिति ) अथवा तेन द्रव्येण हेतुभूतेन य उद्दिश्यते अभिधीयते स द्रव्योद्देशो यथा द्रव्यपतिरित्यादि । यदि वा ततस्तस्माद्द्रव्यादुद्देशोऽभिधानप्रवृत्तिर्द्रव्योद्देशो यथा द्रव्यवानित्यादि । अथवा तस्मिन् द्रव्ये सत्युद्देशोऽभिधानप्रवृत्तिर्द्रव्योद्देशो यथा स द्रव्य इत्यादि सिंहासने राजा चूते कोकिलः, वने मयूर, इत्यादि वा । एवमुद्दिश्यते तेन वा, इत्यादिव्युत्पत्त्या क्षेत्र क्षेत्री क्षेत्रपतिः क्षेत्रे जातं क्षेत्रमित्यादिकः सर्वोऽपि क्षेत्रोद्देश इति ।

कालो कालाईयं, कालो वेयंति कालजायंति ।

संखेवो त्ति समासो, अंगाईणं तओ तिएहं ॥

अंगसुयखंधज्झयणाए, नियनियपज्जेयसंगहओ ।

होइ समासुद्देसो, जहंगमंगी तदज्झेज्जा॥
एमेव सुयक्खंधो, जह तस्स तयट्ठविन्नाया ।
अज्झयणं अज्झयणी, तस्स नेया तयत्थन्नो ॥

काल एवोद्दिश्यमानत्वादुद्देशकालः कालोद्देशः । तेन वा कालेनोद्देशः कालोद्देशो यथा कालातीतं कालातिक्रान्तमिदं वस्त्विति । ततो वा कालादुद्देशः कालोद्देशो यथा कालोपेतं कालप्राप्तमिति । तस्मिन्वा काले जातं कालजातमित्यादिकः कालोद्देश. । अथ समासोद्देसं विवक्षुराह ( सखेवेत्यादि ) सङ्क्षेपेणाविस्तरेण संकोचनं समास उच्यते तत्कोऽयं चेह अङ्गादीनां त्रयाणां विवक्षितः एतदेव दर्शयति ( अंगेत्यादि ) अङ्गश्रुतस्कन्धोऽध्ययनमित्येष समासो भवति ॥ कुत इत्याह । निजनिजप्रभेदसंग्रहादिति । अस्याङ्गादिसमासस्योद्देशनमभिधान समासोद्देशक इति दर्शयति । यथा अङ्गमिति तदेवोद्दिश्यमानत्वादुद्देश इत्यर्थः । तेन वाङ्गरूपसमासेनोद्देशो यथाङ्गीति ( तस्सतयट्ठेत्ति ) अङ्गात्मकसमानोद्देशो यथा तदध्येता अङ्गाध्येता इत्यादि । एवं श्रुतस्कन्धात्मकसमास एवोद्दिश्यमानत्वादुद्देशो यथा तदर्थविज्ञाना श्रुतस्कन्धार्थज्ञ इत्यादि । एवमध्ययनात्मकसमास एवोद्दिश्यते इत्युद्देशो यथाऽध्ययनमिति तेन वा उद्देशो यथाऽध्ययनीति । तस्माद्वा उद्देशो यथा तस्याध्ययनयस्याध्येता । तस्मिन्वा अध्ययने सति उद्देशो यथा तदर्थज्ञोऽध्ययनार्थविदित्यादि विवक्षया सर्व भावनीयमिति ॥

अथोद्देशोद्देश भावोद्देशं चाह ।

उद्देसो उमिउद्दे–सणो तयत्थवेत्ता वा ।
उद्देसुद्देसो यं, भावो भाविति भावम्मि ॥

उद्देश. पुलाकोद्देशकादि. स एवोद्दिश्यमानत्वादुद्देशोद्देश. । स चायं विशेष क इत्याह । पुलाकोद्देशकादिक उद्देशोऽप्युद्दिश्यमानत्वेनोद्देशोद्देश उच्यते । तेन वा उद्देशोऽभिधानं यथा उद्देशीति । तस्माद्वा उद्देशो यथा उद्देशज्ञः । तस्मिन्वा उद्देशो यथा तस्योद्देशकस्यार्थवेत्ता इत्यादि ( भावम्मित्ति ) भावविषय उद्देशो भावोद्देश. । क इत्याह ( भावोत्ति ) औदयिको भाव उद्दिश्यतेऽभिधीयते इत्युद्देशो भावश्चासावुद्देशश्च भावोद्देश इत्यर्थ । तेन वा भावेनोद्देशो भावोद्देशो यथा भावीत्यादि पूर्वोक्तानुसारेण वाच्यमिति गाथानवकार्थ. ॥ अथोद्देशव्याख्यानेन निर्देशमप्यतिदिशन्नाह ।

एवमेव स णिद्देसो, अट्ठविहो सो वि होइ नायव्वो ।
अविसेसियमुद्देसो, विसेसिओ होइ णिद्देसो ॥

एवमेव यथा उद्देश उक्तस्तथा निर्देशोऽप्यष्टविध एव भवति ज्ञातव्य. । सर्वथा साम्यप्रतिषेधार्थमाह । किंत्वविशेषितसामान्यनामस्थापनादिरूप उद्देशो विशेषितनामादिरूपस्तु स एव निर्देशो भवतीति विशेष इति निर्युक्तिगाथार्थः ॥४१॥

भावार्थं तु भाष्यकार आह ॥

नामं जिणदव्वाई, ठवणाविसिट्ठवत्थुनिक्खेवो ।
दव्वो गोमं दंडी, रहीति तिविहो सचित्ताइ ॥

वस्तुनः पुरुषादेर्यत्पुरुषादिकं सामान्य नाम स नामोद्देश उक्तो यत्तु तस्यैव विशेषनामसग्रह नाम निर्देश उच्यते यथा जिनदत्तादिसामान्यस्य चेन्द्रादेर्वस्तुन' । स्थापना स्थापनोद्देश उक्त' इह तु विशिष्टस्य सौधर्म्मादिपत्यादिवस्तुनो य' स्थापनारूपो निक्षेप. स स्थापनानिर्देश. । द्रव्यस्यापि त्रिविधस्य सचित्तादेर्विशिष्टस्य यो विशिष्टाभिधानरूपो निर्देशः तत्र सचित्तद्रव्यविशेषस्य निर्देशो यथा गौरित्यादि अचित्तस्य तु दण्ड इत्यादि मिश्रस्य तु रथ इत्यादि रथस्य चाश्वादियुक्तस्येह मिश्रता भावनीयेति । तेन वा सचित्तादिद्रव्यविशेषणनिर्देशो यथा गोमानित्यादि दण्डी रथीत्यादि ॥

अथ क्षेत्रकालनिर्देशावाह ॥

खेत्ते भरहं तत्थ व, जत्तोत्ति मगहत्ति मागहीवत्ति ।
सरउत्ति सारउत्ति य, संवच्छरिउत्ति कालम्मि ॥

क्षेत्रं क्षेत्रीत्यादिकः क्षेत्रोद्देश उक्तः । इह तु तदेव विशिष्टं क्षेत्रं क्षेत्रनिर्देशो यथा भरतमित्यादि । अथवा ( मगहत्ति ) मगधजनपद इत्यादि तस्मिन्वा क्षेत्रविशेषे भवः क्षेत्रमित्युच्यते यथा भारत इत्यादि एतच्च स्वयमेव द्रष्टव्यम् । मगधेषु भवो मागध इत्यादि एतत्तु गाथायामप्यस्तीति काली कालोऽयमित्यादिकः कालोद्देश उक्तः । इह तु तस्यैव कालस्य विशिष्टस्य यो निर्देशो विशिष्टमभिधानं स कालनिर्देशो यथा शरत् इत्यादि । तत्र वा कालविशेषे भवः कालनिर्देशोऽभिधीयते यथा शरदि भवः शारदः । संवत्सरे भवः सांवत्सरिक इत्यादि ॥

अथ समासनिर्देशमुद्देशं निर्देशं चाह ॥

आयारो आयारव, आयारधरे त्ति वा समासम्मि ।
आवस्सय मावासयि, तु तत्थ धरोह वायत्ति ॥
सत्थए परिण्णा यत्र, अज्झेया यं समासनिद्देसा ।
उद्देसयनिद्देसो, स पएसो पोग्गलुद्देसो ॥

विस्तरवतो वस्तुन सङ्क्षेप समासस्तस्य सामान्याभिधानं समासोद्देश उक्त । इह तु तस्यैव समासस्य विशेषाभिधान. समासनिर्देशस्तत्र चाङ्गश्रुतस्कन्धाध्ययनभेदात्त्रिविध समासोद्देश पूर्वमुक्त इह तु तेषामेव त्रयाणामङ्गादीनां विशेषाभिधानरूपस्त्रिविध एव समासनिर्देशस्तया चाह (आयारेत्यादि) आचाररूपप्ररूपणाङ्गविशेषाभिधाननिर्देश्यमानत्वादाचार इति समासनिर्देशस्तेन वा आचारसमासेन निर्देशो यथा आचारवानित्यादि । तस्माद्वा आचारसमासान्निर्देशो यथा आचारधर इत्यादि । श्रुतस्कन्धसमासनिर्देशो यथा आवश्यकमिति । तेन वा आवश्यकसमासेन निर्देशो यथा आवश्यकीति । अथवा तस्मादावश्यकसमासान्निर्देशो यथा आवश्यकसूत्रार्थधरोऽयमिति । अध्ययनमाश्रित्य समासनिर्देश. क इत्याह ॥ आचाराङ्गे प्रथममध्ययन शस्त्रपरिज्ञा इत्यादि तेन वा शस्त्रपरिज्ञासमासविशेषणनिर्देशो यथा ( अज्झेयायति ) शस्त्रपरिज्ञाध्येता अयमित्यर्थ इत्यादि समासनिर्देश । उद्देशनिर्देशस्तूच्यते क इत्याह । ( पएसो त्ति ) अध्ययनस्य प्रदेशोऽश इत्यर्थ' । यथा भगवन्यां पुद्गलोद्देशकस्तस्य निर्देशोऽभिधानमुद्देशनिर्देश इत्यादीनि । विशे० ॥ आ० म० प्र० । आ० चू० । वाचयामीति गुरुप्रतिज्ञारूपे, विशे० ॥ इदमध्ययनादि त्वया पठितव्यमिति गुरुवचनविशेषे, ॥

तद्विधिश्चैवम् ॥

तत्राचाराद्यङ्गस्य उत्तराध्ययनादिकालिकश्रुतस्कन्धस्य औपपातिकाद्युत्कालिकोपाङ्गाध्ययनस्य चायमुद्देशविधिः । इहाचाराङ्गाद्यन्तरश्रुतमध्येतुमिच्छति यो विनेय स स्वाध्यायं प्रस्थाप्य गुरुं विज्ञपयति भगवन्नमुक मम श्रुतमुद्दिशत । गुरुरपि भणतीच्छाम इति । ततो विनेयो वन्दनकं ददाति १ ततो गुरुरुत्थाय चैत्यवन्दन करोति तत ऊर्ध्वस्थितो वामपार्श्वीकृतशिष्यो योगोत्क्षेपनिमित्त पञ्चविंशत्युच्छ्वासमान कायोत्सर्ग करोति "चंदेसु निम्मलयरेत्ति"यावच्चतुर्विंशतिस्तव चिन्तयतीत्यर्थ । ननु पारित-

कायोत्सर्गः संपूर्णचतुर्विंशतिस्तवं भणित्वा तथास्थित एव पञ्चपरमेष्ठिनमस्कारवारत्रयमुच्चार्य "नाणं पंचविहं पण्णत्तमित्यादि" उद्देशनंदीं भणति । तदन्ते चैव पुनः प्रस्थापनं प्रतीत्य साधोरिदमङ्गमसुं श्रुतस्कन्धं इदमध्ययनं वा उद्दिसामि क्षमाश्रमणानां हस्तेन सूत्रमर्थं तदुभयं च उद्दिष्टमित्येव वदति । क्षमाश्रमणानामित्यादि त्वात्मनोऽहंकारवर्जनार्थमभिधत्ते ततो विनेय इच्छामीति भणित्वा वन्दनकं ददाति २ ततः उत्थितो ब्रवीति संदिशत किं भणामीति । ततो गुरुर्वदति वन्दित्वा प्रवेदयत ततो विनेय इच्छामीति भणित्वा वन्दनकं ददाति ३ ततः पुनरुत्थितः प्रतिपादयति भवद्भिर्ममामुकं श्रुतमुद्दिष्टमिच्छाम्यनुशास्तिम् । ततो गुरुः प्रत्युत्तरयति योगं कुर्विति एवं संदिष्टो विनेय इच्छामीति भणित्वा वन्दनकं ददाति ४ ततोऽत्रान्तरे नमस्कारमुच्चारयन्नसौ गुरुं प्रदक्षिणयति तदन्ते च गुरोः पुरतः स्थित्वा पुनर्वदति भवद्भिर्ममामुकं श्रुतमुद्दिष्टमिच्छाम्यनुशास्तिं ततो गुरुराह योगं कुर्विति । एवं संदिष्ट इच्छामीति भणित्वा वन्दित्वा च पुनस्तथैव गुरुं प्रदक्षिणयति । तदन्ते च पुनस्तथैव गुरुशिष्ययोर्वचनप्रतिवचने तथैव च तृतीयप्रदक्षिणां विदधाति विनेयः । एतानि च चतुर्थवन्दनकादीनि त्रीण्यपि वन्दनकान्येकमेव चतुर्थं गण्यते एकार्थप्रतिबद्धत्वादिति ४ ततस्तृतीयप्रदक्षिणान्ते गुरुर्निषीदति निषण्णस्य च गुरोः पुरतोऽर्द्धावनतगात्रो विनेयो वक्ति युष्माकं प्रवेदितं संदिशत साधूनां प्रवेदयामि । ततो गुरुराह प्रवेदयेति । ततः इच्छामीति भणित्वा विनेयो वन्दनकं ददाति । ५ । प्रत्युत्थितश्चोच्चारितपञ्चपरमेष्ठिनमस्कारः पुनर्वन्दनं ददाति । ६ । पुनरुत्थितो वदति युष्माकं प्रवेदितं साधूनां च तं प्रवेदितं संदिशत करोमि कायोत्सर्गम् । ततो गुरुरनुजानीते । कुर्विति ततः पुनरपि वन्दनकं ददाति ।७। एतानि सप्तक्षोभवन्दनकानि श्रुतप्रत्ययानि भवन्ति ततः प्रत्युत्थितोऽभिधत्ते अमुकस्योद्देशनिमित्तं करोमि कायोत्सर्गमन्यत्रोच्छ्वसितादित्यादि यावद्व्युत्सृजामीति ततः कायोत्सर्गे स्थितः सप्तविंशतिमुच्छ्वासांश्चिन्तयति " सागरवरगम्भीरेत्ति " यावच्चतुर्विंशतिस्तवं चिन्तयति इत्यर्थः । "उद्देससमुद्देसे, सत्तावीसं अणुण्णवणियाए " इति वचनात् ततः पारितकायोत्सर्गः संपूर्णं चतुर्विंशतिस्तवं भणित्वा परिसमाप्तोद्देशक्रियत्वाद्गुरोः शोभवन्दनकं ददाति तच्च न श्रुतप्रत्ययं किं तर्हि श्रुतदातृत्वादिना गुरुः परमोपकारी तद्विनयप्रतिनिमित्तमिति ॥ अनु० । आ० म० द्वि० । (श्रुतस्कन्धस्यैवोद्देश इति अणुओगशब्देऽनुक्तम्) वाचनायां सूत्रप्रदाने, व्य० प्र० १ उ० । श्रुतस्कन्धाङ्गपरावर्तनोत्तरकाले च सप्तविंशत्युच्छ्वासकालः कायोत्सर्गः । " उद्देस समुद्देसे सत्तावीसं " ॥ जी० १ प्रति० । उद्देशे मुहूर्तम् "पुस्सो हत्थो अभिई, अस्सिणी य तहेव य । चत्तारि खिप्पकारीणि, विज्जारंभे सुसोहणा ॥२७॥ विज्ञाण धीरण कुज्जा" इति ।

कियत्पर्यायस्य किं श्रुतं दातव्यमित्याह ।

णो कप्पति णिग्गंथाण वा णिग्गंथीण वा खुड्डागं वा खुड्डियाए वा अवंजणजायस्स आयारकप्पे णामज्झयणे उद्दिसित्तए वा कप्पति निग्गंथाण वा निग्गंथीण वा खुड्डागस्स वा खुड्डियाए वा वंजणजायस्स आयारकप्पणामं अज्झयणे उद्दिसित्तए वि ७ । व्य० सू० १० उ० ।

न कल्पते निर्ग्रन्थानां वा क्षुल्लकस्य वा क्षुल्लिकाया वा अव्यञ्जनजातस्य व्यञ्जनान्युपस्थरोमाणि जातानि यस्य स तथा तस्य आचारप्रकल्पो नामाध्ययनं निशीथापरपर्यायमुद्देष्टुम् । अत्र कारणं भाष्यकृदाह ।

अहिअट्ठस्स आयारे, अपढिते न उ कप्पति ।
अव्वंजणजातस्स, वंजणाण परूवणा ॥
जहा चरित्तं धारेउ, ऊणट्ठो उ अपच्चलो ।
तहा वि वत्तं वुड्ढाउ, अववायस्स नो सहू ॥

अधिकाष्टवर्षस्याप्यपठितेऽप्याचारे अव्यञ्जनजातस्य । अत्र व्यञ्जनानां प्ररूपणा कर्तव्या सा च सूत्रव्याख्यायां कृता न तु नैव सूरयः प्रकल्पमाचारप्रकल्पनामाध्ययनं ददति कुत इत्याह । ( जहेत्यादि ) यथा ऊनाष्ट-ऊनाष्टवर्षश्चारित्रं धारयितुमप्रत्यलोऽसमर्थः तथा अजातव्यञ्जनतया अपक्वबुद्धिरपवादमाधारणेन वदति तथा कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा क्षुल्लकस्य वा क्षुल्लिकाया वा व्यञ्जनजातस्य आचारप्रकल्पो नामाध्ययनमुद्देष्टुम् । अथ स्तोककालदीक्षितस्यापि ज्ञातव्यञ्जनस्य दीयते किंवा नेत्यत आह । ( अतिवासपरियागस्सेत्यादि )ज्ञातव्यञ्जनस्यापि त्रिवर्षपर्यायस्य श्रमणस्य निर्ग्रन्थस्य कल्पते आचारप्रकल्पो नामाध्यनमुद्देष्टुम् । यदि पुनस्त्रयाणां वर्षाणां अभ्यन्तरत उद्दिशति ततस्तस्य प्रायश्चित्तं चत्वारो गुरुकाः त्रिवर्षपर्यायस्याप्यपरिणामकस्यातिपरिणामकस्य चोदितस्य चतुर्गुरुकम् ॥

( सूत्रम् ) चउवासपरियागस्स समणस्स निग्गंथस्स कप्पइ सूयगडे नामं अंगे उद्दिसित्तए पंचवासपरियागस्स समणस्स निग्गंथस्स कप्पति दसा कप्पववहारा उद्दिसित्तए वि अट्ठवास परियागस्स निग्गंथस्स कप्पति ठाणसमवाए उद्दिसित्तए दसवासपरियागस्स समणस्स निग्गंथस्स कप्पति विवाहे-नामं अंगे उद्दिसित्तए ॥

चतुर्वर्षपर्यायस्य श्रमणनिर्ग्रन्थस्य कल्पते सूत्रकृतं नामाङ्गमुद्देष्टुम् । पञ्चवर्षपर्यायस्य दशकल्पव्यवहाराविकृष्टो नाम एकस्य आरभ्य नव वर्षाणि यावत् तत्पर्यायस्य स्थानं समवायस्य दशवर्षपर्यायस्य व्याख्या प्रज्ञप्तिः पञ्चममङ्गमेतदेव सहेतुकं वक्तुकामो भाष्यकृदाह ।

चउवासे सूयगडं, कप्पवहारस्स पंचवासस्स ।
विगट्ठट्ठाणस्स, समवरिसविवाहपण्णत्ती ॥

चतुर्वर्षी पर्यायस्य सूत्रकृतः पञ्चवर्षस्य कल्पव्यवहारावुपलक्षणमेतत् दशाश्रुतस्कन्धश्चाविकृष्टपर्यायस्य स्थानं समवायश्च दशवर्षपर्यायस्य व्याख्या प्रज्ञप्तिरुद्दिश्यते किंकारणमेतावत्कालातिक्रमेण तत आह ॥

चउवासो गाढमती, न कुसमएहिं तु हीनपज्जाओ ।
पंचवरिसओ जोग्गो, अववायस्सत्ति तो दिंति ॥
पंचएहुवरिविगिट्ठो, सुयथेरा जेण तेण उवगिट्ठो ।
ठाणे महिड्डियंति य, तेण दसवरिसपरियाए ॥

सूत्रकृताङ्गे त्रयाणां त्रिषष्ट्यधिकानां पाषण्डिकशतानां दृष्टयः प्ररूप्यन्ते । ततो हीनपर्यायो मतिभेदेन मिथ्यात्वं यायात् । चतुर्वर्षपर्यायस्तु धर्मे अवगाढमतिर्भवति ततः कुसमयैर्नोपह्रियते । न चतुर्वर्षपर्यायस्य तदुद्देष्टुमनुज्ञातम् । तथा पञ्चमोवर्षोऽपवादस्य योग्य इति कृत्वा पञ्चवर्षस्य दशकल्पव्यवहारान् ददति । तथा पञ्चानां वर्षाणामुपरि पर्यायो विकृष्ट उच्यते । येन कारणेन स्थाने समवाये न चाधीतेन श्रुतस्थविरा भवन्ति तेन कारणेन तदुद्देशनं प्रति विकृष्टपर्यायो गृहीतस्तथा स्थानं समवायश्च महर्द्धिकं प्रायेण द्वादशाना-

मध्यङ्गानां तेन सूचनादिति ॥ तेन तत्परिकर्म्मितमतौ दशवर्ष-पर्याये व्याख्या प्रज्ञप्तिरुद्दिश्यते ॥

( सूत्रम् ) एक्कारसवासपरियागस्स समणस्स निग्गंथस्स कप्पइ खुड्डियाविमाणविभत्ती । महल्लियाविमाणविभत्ती महल्लिया विमाणे पविभत्ती अंगचूलिया विवाहचूलिया नामं अज्झयणमुद्दिसित्तए ॥

अस्य व्याख्या ॥

एक्कारसवासस्सा, खुड्डिमहल्ली विमाणपविभत्ती ।
कप्पइ य अंगवंगे, विवाह चेव चूलीयओ ॥
अंगाणमंगचूली, महकप्पसुयस्स वग्गचूली उ ।
विवाहचूलिया पुण, पण्णत्तीए मुणेयव्वा ॥

एकादशवर्षस्य क्षुल्लिकाविमानप्रविभक्तिर्यत्र कल्पेषु विमानानि वर्ण्यन्ते महती विमानप्रविभक्तिर्यत्र विमानान्येव विमानविस्तरेणाभिधीयन्ते । अङ्गानामुपासकदशाप्रभृतीनां पञ्चानां चूलिका निरावलिका अङ्गचूलिका महाकल्पश्रुतस्य चूलिका-वर्गचूलिका व्याख्याचूलिका पुनः प्रज्ञप्तेर्व्याख्या प्रज्ञप्तचूलिका मन्तव्या ॥

( सूत्रम् ) बारसवासपरियागस्स समणस्स कप्पइ अरुणोववाए गरुलोववाए वरुणोववाए वेसमणोववाए वेलंधरोववाए । वेलंधरोववाए नामं अज्झयणे उद्दिसित्तए ॥

अत्र भाष्यव्याख्या ॥

बारसवासे अरुणो-ववायवरुणो य गरुलवेलंधरो ।
वेसमणुववाय तहा य, ते कप्पंति उद्दिसिउं ॥

द्वादशपर्यायस्य ।

अरुणोपया लुपरिय-ट्टंतिए तिदेवाउ ।
अंजलिमउलियहत्था, उज्जोवेत्ता दसदिसो उ ॥
नागावरुणोवासं, अरुणा गरुला य वीयगं देंति ।
आगंतूण पवती, संदि महा किं करेमित्ति ॥

तेषामरुणोपपातादीनामध्ययनानां ये दशनामानः खल्वरुणादयो देवास्ते यदि तान् प्रणिधायाध्ययनानि परावर्तन्ते तदा ते अञ्जलिमुकुलितहस्ता दशापि दिश उद्योतयन्ति । समागच्छन्ति समागत्य च किंकरभूता पर्युपासते तथा नागा धरणनामानो वरुणाश्च गन्धोदकादि वर्षन्ति । अरुणा गरुडाश्च बीजक सुवर्ण ददत प्रत्यासन्नमागत्य ब्रुवते सन्दिशत किं कुर्मो वयमिति ।

( सूत्रम् ) तेरसवासपरियागस्स समणस्स निग्गंथस्स कप्पइ उट्ठाणसुयसमुट्ठाणसुयदेविंदो देववाए नागए परियावणियाए ।

अस्य व्याख्या ।

तेरसवासे कप्पइ, उट्ठाणसुए तहा समुट्ठाणे ।
देविंदपरियावणिया, नागाण तहेव परिसाणी ॥

त्रयोदशवर्षस्य कल्पते उत्थानश्रुत तथा समुत्थान समुत्थानश्रुत देवेन्द्रपरियापनिका नागानां तथैव परियापनिका नागपरियापनिका इत्यर्थः ।

( सूत्रम् ) चउद्दसपरियागस्स समणस्स निग्गंथस्स कप्पति सुमिणभावणानामं अज्झयणमुद्दिसित्तए ॥

चतुर्दशवर्षपर्यायस्य श्रमणस्य निर्ग्रन्थस्य कल्पते महास्वप्नभावना नामाध्ययनमुद्देष्टुम् " चोद्दसवासुद्दिसए ' इत्यादि भाष्यगाथोत्तरार्द्ध सुगमं तमधुनार्थमाह ।

इत्थं तीसं सुमिणा, बायाला चेव हुंति महसुमिणो ।
बावत्तरि सव्वसुमिणा, वन्निज्जंते फलं तेसिं ॥

अत्र महास्वप्नभावनाध्ययने त्रिंशत् सामान्यस्वप्नाः द्वाचत्वारिंशन्महास्वप्ना वर्ण्यन्ते फल चैषां स्वप्नानां वर्ण्यते ॥

( सूत्रम् ) पण्णरसवासपरियागस्स समणस्स निग्गंथस्स कप्पइ । चारणभावणानाममज्झयणमुद्दिसित्तए ॥

अत्र भाष्यम् ॥

पन्नरसे चारणभा-वणं ति उद्दिसिए उ अज्झयणं ।
चारणलद्धी तहियं, उप्पज्जंते उ अहियम्मि ॥

पञ्चदशे पञ्चदशवर्षपर्यायस्य चारणभावनेत्यध्ययनमुद्दिश्यते तस्य कोऽतिशय इत्याह चारणलब्धिस्तस्मिन्नधीते उत्पद्यते येन वा तपसा कृता चारणलब्धिरुपजायते तदुपवर्ण्यते ॥

(सूत्रम्) सोलसवासपरियागस्स समणस्स निग्गंथस्स कप्पइ तेअनिसग्गनामंअज्झयणे उद्दिसित्तए सत्तरसवासपरियागस्स समणस्स णिग्गंथस्स कप्पति आसीविसभावणा नामं अज्झयणमुद्दिसित्तए । अट्ठारस वासपरियागस्स समणस्स निग्गंथस्स कप्पति दिट्ठीविसभावणानामज्झयणमुद्दिसित्तए । एगूणवीसवासपरियागस्स समणस्स निग्गंथस्स कप्पइ दिट्ठिवायनामंगे उद्दिसित्तए वीसतिवासपरियाए समणे निग्गंथे सव्वसुधाणवाती भवति ॥

अस्य व्याख्या

तेअनिसग्गा सोलस, आसीविसभावणं च सत्तरसे ।
दिट्ठिविसमट्ठारस, एगुणवीसइदिट्ठिवाओ उ ॥

षोडशवर्षे तेजोनिसर्गो नामाध्ययनमुद्दिश्यते । सप्तदशे वर्षे आशीविषभावनानामोद्दिश्यते दृष्टिविषभावनानामाष्टादशे वर्षे एकोनविंशतितमे वर्षे दृष्टिवादो नाम द्वादशमङ्गमुद्दिश्यते । सांप्रतमेतेषामध्ययनानामतिशयानाह ।

तेयस्स निसरणं खलु, आसीविसतं तहेव दिट्ठिविसं ।
लद्धीतो समुपज्जे, समहीएसु तु एएसु ॥

एतेषु तेजोनिसर्गप्रभृतिष्वध्ययनेषु यथाक्रम तेजसो निस्सरणमाशीविषत्वं दृष्टिविषमित्येव लब्धय समुत्पद्यन्ते । इयमत्र भावना । तेजोनिसर्गेऽध्ययनेऽधीते तेजोनिस्सरणलब्धिरुत्पद्यते येन वा तपसा कृत्वा तेजोलब्धिर्भवति तत एवमुपवर्ण्यते आशीविषभावनायां पठितायामाशीविषत्वलब्धिर्यैर्वा समाचरणैराशीविषतया कर्म बध्यते तान्युपवर्ण्यन्ते । एवं दृष्टिविषभावनायामपि भावनीयम् ॥

दिट्ठिवाए पुण होइ, सव्वभावाण रूवणं नियमा ।
सव्वसुयाणवाइ-वीसइवासे उ बोधव्वो ॥

दृष्टिवादे पुनर्भवति सर्वभावानां रूपण प्ररूपण नियमात् विंशतिवर्ष पुन सर्वश्रुतानुपाती भवति सर्वमपि श्रुत यथा भणितेन योगेन तस्य पठनीय भवति । अथ कस्य तीर्थकरस्य कति कियन्ति प्रकीर्णकान्यभवन्नित्यत आह

चउद्दसयसहस्साइं, पइण्णगाणं तु वद्धमाणस्स ।
सेसाण जत्तया खलु, सीसा पत्तेयबुद्धा उ ॥

भगवतो वर्द्धमानस्वामिन तीर्थे चतुर्दश प्रकीर्णकसहस्राण्यभवन् शेषाणां च तीर्थकृता यस्य यावन्त शिष्यास्तस्य तावन्ति प्रकीर्णकानि प्रत्येकबुद्धा अपि तस्य तावन्त ।

पत्तस्स पत्तकालेय, वयाणि जो उ उद्दिसे तस्स ।
निज्जरलाभो विपुलो, किहमाणं पुण तं निसामेह ॥

पात्रस्य योग्यस्य परिणामकस्येत्यर्थः । एतेनापात्रेऽपरिणामके विपरिणामके वा ददानो महतीं श्रुतासातनामेतीति प्रतिपादितम्। प्राप्ते काले यथोदितं एतानि प्रकीर्णकानि च उद्दिशति तस्य सुविपुलो निर्जरालाभः । कथं पुनः स विपुलो निर्जरालाभः । सूरिराह- तं विपुलनिर्जरालाभं कथ्यमानं निशमयतो मते कथयति।

कम्ममसंखेज्जभवं, खवेइ अणुसमयमेव आउत्तो ।
अन्नयरगम्मि जोगे, सज्झायम्मी विसेसेण ॥

कर्मज्ञानावरणीयादिकमसंख्येयभवोपार्जितमन्यतरकेऽपि योगप्रतिलेखनादावुक्तोऽनुसमयमेव क्षपयति विशेषतः स्वाध्याये आयुक्तः ।

आयारंगादियाणं, अंगाणं जाव दिट्ठिवातो उ ।
एस विही विण्णेओ, सव्वेसिं आणुपुव्वीए ।

आचारादिकानामङ्गानां यावत् दृष्टिवादो दृष्टिवादपर्यन्तानां सर्वेषामानुपूर्व्या एषोऽनन्तरोदितो विधिर्विज्ञेयः । पात्रस्योचिते काले यदुचितमङ्गं तद्दातव्यं न शेषमित्यर्थः ॥ व्य० १० उ०।

त्रिवर्षपर्यायो निर्ग्रन्थ आचारादिकुशल आचार्यादितया कल्पते उद्देशयितुम् ॥

तिवासपरियाए समणे निग्गंथे आयारकुसले संजमकुसले पवयणकुसले पण्णत्तिकुसले संगहकुसले उवग्गहकुसले अक्खयायारे असबलायारे अभिण्णायारे असंकिलिट्ठायारचरित्ते बहुस्सुए बज्झागमे जहण्णेणं आयारकप्पधरे कप्पइ उवज्झायत्ताए उद्दिसित्तए ३ सच्चेव णं से तिवासपरियाए समणे निग्गंथे नो आयारकुसले जाव संकिलिट्ठायारचरित्ते अप्पस्सुए अप्पागमे नो कप्पइ उवज्झायत्ताए उद्दिसित्तए ४ एवं पंचवासपरियाए समणे निग्गंथे आयारकुसले जाव असंकिलिट्ठायारचरित्ते बहुस्सुए बज्झागमे जहण्णेणं दसाकप्पववहारधारे कप्पइ आयरियउवज्झायत्ताए उद्देसित्तए ५ सच्चेव णं से पंचवासपरियाए निग्गंथे जाव अप्पसुए अप्पागमे नो कप्पइ आयरियउवज्झायत्ताए उद्दिसित्तए ६ अट्ठवासपरियाए समणे निग्गंथे आयारकुसले जाव असंकिलिट्ठायारचरित्ते बहुस्सुए बज्झागमे जहण्णेणं ठाणसमवायधरे कप्पइ से आने आयरियत्ताए पवित्तित्ताए थेरत्ताए गणित्ताए गणावच्छेइयत्ताए उद्देसित्तए ७ सच्चेव णं अट्ठवासपरियाए समणे निग्गंथे णो आयारकुसले जाव संकिलिट्ठाणायारचरित्ते अप्पसुए अप्पागमे णो कप्पइ आयरियत्ताए जाव गणावच्छेइयत्ताए उद्दिसित्तए ८ । व्य० सू० ॥

सूत्रपदकम्। अथास्य पूर्वसूत्रेण सह कः सम्बन्धस्तत आह।

जावपलिच्छिन्नेयस्स उवरिं, एसमट्ठाए हो इयं सुत्तं ।
सुयवरणो उवमाणं, सेसा उ हवंति जा सब्भी ॥

द्रव्यभावपरिच्छेदोपेतः स्थविरैस्तुल्यानो यरा धारयति । तदपरिगतो न धारयतीति उक्तम्। तदेतत् सूत्रपदकं भावपरिच्छेदस्य परिणामार्थं परिणामप्रतिपादनार्थं भवति वर्त्तते। यथा चानेन सूत्रपदकेन श्रुतेन चरणे च प्रमाणमभिधीयते शेषाश्च या लब्धयः आचार्याणामुपाध्यायादीनां योग्या याभिः समन्विता आचार्यतया उपाध्यायादितया वा उद्दिश्यन्ते। ता अपि प्रतिपाद्यन्ते तत्र श्रुतपरिमाणं "जहन्नेणं आयारप्पकप्पधरे" इत्यादिनाचारित्रपरिमाणं ' तिवासपरियाए" इत्यादिना शेषपदैर्यथायोगं लब्धयः । अनेन सम्बन्धेनायातस्यास्य व्याख्या । त्रीणि वर्षाणि पर्यायः प्रव्रज्यापर्यायो यस्य स त्रिवर्षपर्यायः । श्राम्यति तपस्यतीति श्रमणः । स च शाक्यादिरपि भवति । ततस्तद्व्यवच्छेदार्थमाह । निर्ग्रन्थः निर्गतो ग्रन्थात् द्रव्यतः सुवर्णादिरूपाद् भावतो मिथ्यात्वादिलक्षणादिति निर्ग्रन्थः । आचारकुशलः ज्ञानादिपञ्चविधाचारकुशलः। तत्र कुशल इति द्विधा द्रव्यतो भावतश्च। तत्र यः कुशं दर्भं दात्रेण तथा लुनाति न क्वचिदपि दात्रेण छिद्यते स द्रव्यकुशलः । यः पुनः पञ्चविधेनाचारेण दात्रकल्पेन कर्म कुशं लुनाति स भावकुशलः तत्रैवं समासः आचारेण ज्ञानाद्याचारेण कर्मकुशलः कर्मच्छेदकः आचारकुशलः आचारविषये सम्यक् परिज्ञानवान् इति तात्पर्यार्थः । अन्यथा तेन कर्मकुशच्छेदकत्वानुपपत्तेः । एवं सर्वत्र भावनीयम् । संयमं सप्तदशविधं यो जानात्येव स संयमकुशलः समासभावना सर्वत्र तथैव । अथवा यः कुशं लुनन्न क्वचिद्दात्रेणाच्छिद्यते स लोके तत्त्वतः कुशलो नास्तीति न कुशलशब्दस्य प्रवृत्तिनिमित्तं दक्षत्वं तच्च यत्रास्ति तत्र कुशलशब्दोऽपि प्रवर्तते इति दक्षवाची कुशलशब्दस्ततः एवं समासः। आचारे ज्ञातव्ये प्रयोक्तव्ये वा कुशलो दक्ष आचारकुशलः ॥ एवं संयमकुशलः प्रवचने ज्ञातव्ये कुशलः प्रवचनकुशलः। प्रज्ञप्तिर्नाम स्वसमयपरसमयप्ररूपणा तत्र कुशलः । संग्रहणं संग्रहः । स द्विधा द्रव्यतो भावतश्च । तत्र द्रव्यत आहारोपध्यादीनाम् । भावतः सूत्रार्थौ तयोर्द्विविधेऽपि संग्रहे कुशलः । उप सामीप्येन ग्रहः सोऽपि द्विधा द्रव्यतो भावतश्च। तत्र येषामाचार्य उपाध्यायो वा न विद्यते तान् आत्मसमीपे समानीय तेषामित्वरां दिशं बुद्ध्वा तावद्धारयति यावन्निष्पाद्यन्ते एष द्रव्यतः उपसंग्रहः ग्रह उपादाने इति वचनात् यः पुनरविशेषेण सर्वेषामुपकारे वर्तते स भावतः उपग्रहः । अक्षताचारता परिपूर्णाचारता च चारित्रे सति भवति । चारित्रवता नियमतः शेषाश्चत्वारोऽप्याचाराः सेव्याः चारित्रवतः चारित्रस्यादानतेति वचनात्। ततश्चारित्रवानित्युक्तं द्रष्टव्यम्।नन्वेषोऽप्यर्थः आचारकुशलःइत्यनेनोपात्त इति किमर्थमस्योपादानमुच्यते चारित्रं खलु प्रधानं मोक्षाङ्गं तदपि कण्ठतो नोक्तमिति तदाशङ्काव्युदासार्थमित्यदोषः । तथा अशबलो यस्य सितासितवर्णोपेतबलीवर्द इव न कर्बुर आचारो विनेयशिष्यभाषागोचरादिको यस्यासावशबलाचारः । तथा अभिन्नेन केनचिदप्यतीचारविशेषेण खण्डितः आचारो ज्ञानाचारादिको यस्यासावभिन्नाचारः । तथा असंक्लिष्टः इह परलोकाशंसारूपसंक्लेशविप्रमुक्तः आचारो यस्य सोऽसंक्लिष्टाचारः । तथा बहु श्रुतं सूत्रं यस्यासौ बहुश्रुतः । तथा बहुरागमोऽर्थरूपो यस्य स बह्वागमः । जघन्येनाचारप्रकल्पधरो निशीथाध्ययनसूत्रार्थधर इत्यर्थः जघन्यत आचारप्रकल्पग्रहणादुत्कर्षतो द्वादशाङ्गविदिति द्रष्टव्यम्। स कल्पते यो भवत्युपाध्यायतयोद्देष्टुमिति प्रथमसूत्रार्थः । ( सच्चेव णं से तिवासेत्यादि)। सेशब्दोऽथशब्दार्थः । अथ स एव त्रिवर्षपर्यायः श्रमणो निर्ग्रन्थो नो आचारकुशल इत्यादि पूर्वव्याख्यानानुसुप्रतीतम्। एवं द्वे सूत्रे पञ्चवर्षपर्यायस्याचार्योपाध्यायत्वोद्देशविषये भावनीये नवरं तत्र जघन्येन दशाकल्पव्यवहारधर इति वक्तव्यम्।४। एवमेवाष्टवर्षपर्यायस्याप्याचार्योपाध्याय-

गणावच्छेदित्वोद्देशविषये द्वे सूत्रे व्याख्येये केवलं तत्र जघन्येन स्थानसामाचार्या गण इति वाच्यं शेषं तथैव । एष सूत्रषट्कस्य सङ्क्षेपार्थः । अधुना निर्युक्तिविस्तरः । तत्र तावत्सर्वेषामेव सूत्रपदानां सामान्येन व्याख्यां चिकीर्षुरिदमाह । भाष्यकृत् ॥

एक्कारसंगसुत्तत्थ-धारया नवमपुव्वकयजोगी ।
बहुसुय बहुआगमिया, सुत्तत्थविसारया धीरा ॥
एयगुणोववेया, सुयनिघसा णायगामहाणस्स ।
आयरियउवज्झाय-पवत्तिथेरा अणुन्नाया ॥

एकादशानामङ्गानां सूत्रार्थमवधारयन्तीत्येकादशाङ्गसूत्रधारकाः ( नवमपुव्वत्ति ) अत्रापि सूत्रधारका इति सबध्यते नवमपूर्वग्रहणं च शेषपूर्वाणामुपलक्षणं ततोऽयमर्थः समस्तपूर्वसूत्रधारकाः तथा सूत्रोपदेशेन मोक्षाविरोधीकृतो न्यस्तो योगो मनोवाक्कायव्यापारात्मकः सकृतयोगः स येषामस्ति ते कृतयोगिनः । बहुश्रुताः प्रकीर्णकानामपि सूत्रार्थधारणात् इह पूर्वधरा अपि तुल्येऽपि च सूत्रे मतिवैचित्र्यतोऽर्थागममपेक्ष्य षट्स्थानपतितास्ततः प्रभूतावगमप्रतिपादनार्थमाह । बह्वागमाः बहुः प्रभूतः आगमो येषां ते तथा एतदेवाह । सूत्रार्थविशारदाः तत्कालापेक्षया सूत्रेऽर्थे च विशारदाः तथा धिया औत्पत्तिक्यादिरूपया बुद्ध्या राजन्ते इति धीरा " एतद्गुणोपपेता इत्यादि " येऽनन्तरगाथायामुक्ता गुणा एतैर्गुणैरुपेता एतद्गुणोपेताः । श्रुतं निघर्षयन्तीति श्रुतनिघर्षाः । किमुक्तं भवति यथा सुवर्णकारस्तापनिकषच्छेदैः । सुवर्णं परीक्षते किं सुन्दरमथवाऽसुन्दरमिति । एवं स्वसमयपरसमयान्परीक्षन्ते ते श्रुतनिघर्षा इति यथा नायकाः स्वामिनो महाजनस्य स्वगच्छवर्त्तिनां साधूनामिति भावः । अथवा नायका ज्ञानादीनां प्रापकास्तदुपदेशलाभात् महाजनस्य समस्तस्य संघस्य इत्थंभूता आचार्या उपाध्यायाः प्रवर्तिनस्थविरा उपलक्षणमेतद्गणावच्छेदिनश्चानुज्ञाताः तदेव सामान्यतः सर्वसूत्रपदानामर्थो व्याख्यातः । संप्रत्येकैकस्य सूत्रपदस्यार्थो वक्तव्यस्तत्र येषां पदानां वक्तव्यः तान्युपदिदर्शयिषुराह ॥

आयारकुसलसंजम-पवयणपण्णत्ति संगहोवग्गहे ।
अक्खुय असबलभिन्न-संकिलिट्ठायारसंकिले ॥

अत्र कुशलशब्दः पूर्वार्द्धे प्रत्येकं सम्बध्यते ततोऽयमर्थः आचारकुशलशब्दस्य प्रवचनकुशलशब्दस्य प्रज्ञप्तिकुशलशब्दस्य सग्रहकुशलशब्दस्य उपग्रहशब्दकुशलस्य च ( अक्खुयेत्यादि ) अत्राचारशब्दसपन्नः प्रत्येकमभिसम्बन्धनीयः । अक्षताचारसपन्नस्य अक्षताचारशब्दसपन्नस्य अक्षताचारस्येत्यर्थः । एवमशबलाचारसपन्नस्य अभिन्नाचारसपन्नस्य सक्लिष्टाचारसपन्नस्य च व्याख्या कर्त्तव्या ॥ व्य० ॥ ( कुशलशब्दव्याख्या स्वस्थाने )

सांप्रतमक्षताचारादिपदानां सामान्येन व्याख्यानमाह ।

आहाकम्मुद्देसिय, ठविय रइय कीय कारियं छेज्जं ।
उब्भिण्ण हडमाले, वणीमगाजीवण निकाए ।
परिहरति असणं पाणं, सेज्जोवहिं पूति संकियं मीसं ।
अक्खुयमभिन्नमसं-किलिट्ठ वासए जुत्तो ।

आधाकर्म्मिकं यन्मूलत एव साधूनां कृते कृतम् औद्देसिकमुद्दिष्टादिभेदभिन्नं, स्थापितं यत्संयतार्थं स्वस्थाने परस्थाने वा स्थापितं, रचितं नाम संयतनिमित्तं कांस्यपात्र्यादौ मध्ये भक्तं निवेश्य पार्श्वेषु व्यञ्जनानि बहुविधानि स्थाप्यन्ते । तथा क्रीतेन कारितमुत्पादितं क्रीतकारितम् आच्छेद्य यत् भृतकादिभ्योऽन्यमाच्छिद्य दीयते । उद्भिन्नं यत्कुतपादिमुखं स्थगितमप्युद्भिद्य ददाति । आहृतं स्वग्रामाद्याहृतादि ( मालत्ति ) मालापहृतं वनीपकीभूय पिण्डं उत्पाद्यते स पिण्डोऽपि वनीपकः । आजीवनं यदाहारशय्यादिकं जात्याद्याजीवनेनोत्पादितं ( निकाएत्ति ) मम एतावद्दातव्यमिति निकाचितम् एतानि योऽशनपानादिशय्योपधीश्च परिहरति तथा पूतिकं शङ्कितं मिश्रमुपलक्षणमेतदध्यवपूरकादिकं च यश्चावश्यके युक्तः सोऽक्षताचारः अभिन्नाचारः सक्लिष्टाचारः । तत्र स्थापितादिपरिहारी अक्षताचारः । अन्याहृतादिपरिहारी अशबलाचारः जात्योपजीवनादि परिहरन् अभिन्नाचारः । सकलदोषपरिहारी असक्लिष्टः । सप्रति लाघवाय द्वितीयसूत्रगतानि अक्षताचारादीनि पदानि व्याख्यानयति ॥

ओसन्नखुयायारो, सवलायारो य होइ पासत्थो ।
भिन्नायारकुसीलो, संसत्तो संकिलिट्ठो उ ।

अवसन्न आवश्यकादिष्वनुद्यमः क्षताचारः । तथा पार्श्वस्थोऽन्योऽभ्याहृतभोजी शबलाचारः । कुशीलो जात्याजीवनादिपरो भिन्नाचारः ससक्तः ससर्गवशात्स्थापितादिभोजी । सक्लिष्टः सक्लिष्टाचारः । सप्रत्याचारप्रकल्पधर इति पदं व्याख्यानयति ।

तिविहो य पकप्पधरो, सुत्ते अत्थेय तदुभये चेव ।
सुत्तधरवज्जियाणं, तिगदुगपरिवड्ढणा गच्छे ॥

त्रिविधः खलु प्रकल्पधरस्तथा सूत्रे सूत्रतः अर्थतः तदुभयतश्च । इयमत्र भावना । आचारप्रकल्पधारिणो चत्वारो भङ्गास्तद्यथा सूत्रधरोऽर्थधरः अर्थधरो न सूत्रधरः सूत्रधरो नार्थधरः सूत्रधरो नाप्यर्थधरः ४ अत्र चतुर्थो भङ्गः शून्यः । उभयविकलतया आचारप्रकल्पधारित्वविशेषणासभवात् । आद्यानां त्रयाणां भङ्गानां मध्ये तृतीय भङ्गवर्त्ती स गणे उद्दिश्यते । यतः स सूत्रधारितया गच्छे गच्छस्य परिवर्द्धको भवति तदभावे द्वितीयभङ्गवर्त्यपि तस्याप्यर्थधारितया सम्यक्परिवर्द्धकत्वात्तदभावे चाद्यभङ्गवर्त्ती तथा चाह । सूत्रधरवर्जितानामाचारप्रकल्पितानां गच्छे सम्यक्परिवर्द्धना त्रिकं तृतीयभङ्गं च ततस्त एवोपाध्यायाः स्थाप्या न प्रथमभङ्गवर्तिन । एवं दशाकल्पव्यवहारधरादिपदानामपि व्याख्या कर्तव्या ॥

अत्र पर आह ॥

पुव्वं वासे ऊणं, दीहं परियायसंघयणसद्धे ।
दसपुव्विए य धीरे, मज्जार पभियपरूवणया ॥

ननु पूर्वमाचार्यपदयोग्यस्य दीर्घः पर्यायो वर्णितः सहननं चातिविशिष्टं श्रद्धा च प्रवचनविषयाऽत्युत्तमा आगमतश्चाचार्यपदयोग्यो जघन्यतोऽपि दशपूर्विकास्तथा धरा बुद्धिचतुष्टयेन विराजमाना ततः एवं पूर्वं वर्णयित्वा यदेवमिदानीं प्ररूप्यते यथा त्रिवर्षपर्याय आचारप्रकल्पधर उपाध्याय स्थाप्यते, पञ्चवर्षपर्यायदशाकल्पव्यवहारधर इत्यादि । सैषा प्ररूपणा मार्जारादि न कल्पा । यथाहि मार्जारः पूर्वं महता शब्देनारटति पश्चादेव शनैः शनैरारटति । यथा स्वयमपि श्रोतु न शक्नोत्येव त्वमपि पूर्वमुच्चैः शब्दितवान् । पश्चाच्छनैरिति सूरिराह । सत्यमेतत् केवलं यत्पूर्वमुक्तं तद्यथोक्तन्यायमङ्गीकृत्य सप्रति पुनः कालानुरूपं प्रज्ञाप्यते इत्यदोषस्तथाचात्र पुष्करिण्यादौ यौ दृष्टान्तौ तावेवाह ॥

पुक्खरिणी आयारे, आणयणा तेणगा य गीयत्थे ।
आयारम्मि उ एए, आहरणा होंति नायव्वा ॥

पुष्करिणी वापी आचार आचारप्रकल्पस्य आनयनं स्तेनकाश्चौ-

रा गीतार्था एतानि चत्वार्याहरणानि दृष्टान्याचार्येण ज्ञातव्यानि इमानि च ॥

सत्थपरिण्णाछक्काय-अहिगमपिंमउत्तरज्झयणं ।
रुक्खेवसभगावो, जोहा सोही य पुक्खरिणी ॥

शस्त्रपरिज्ञा षट्कायाधिगमः षट्जीवनिका इत्येकमुदाहरणं· पिण्ड· उत्तराध्ययनं उत्तराध्ययनानि वृक्षाः कल्पद्रुमादयः वृषभा बलीवर्दाः गावः गोधाः शोधि· अत्र दृष्टान्त· पुष्करिणी च सर्वसंख्यया त्रयोदश आहरणानि ॥

एतानि व्याचिख्यासुः प्रथमतः पुष्करिण्याहरण भावयति ॥

पुक्खरिणीतो पुव्वं, जारिसया उएह तारिसा एहिं ।
तहवि य ता पुक्खरिणी, ता हवंति कज्जइ कीरंति ॥

पूर्वं सुषमसुषमाकाले यादृश· पुष्करिण्यो जम्बूद्वीपप्रज्ञप्तौ वर्ण्यन्ते इदानीं न तादृश्यस्तथापि च न ता अपि पुष्करिण्यो भवन्ति कार्याणि च तानि क्रियन्ते। आचारप्रकल्पानयनाहरणमाह।

आयारपकप्पो उ, नवमे पुव्वम्मि आसि सोधी य।
तत्तो च्चिय निज्जूढो, इदाणि य तो किं न सुद्धि भवे ॥

आचारप्रकल्प पूर्वे नवमे पूर्वे आसीत्। शोधिश्च ततोऽभवत्। इदानीं पुनरिहाचाराङ्गे तत एव नवमात्रिर्यूढानीतः ततः किमेष आचारप्रकल्पो न भवति किं वा तत शोधिर्नोपजायते। एषोऽप्याचारप्रकल्प· । शोधिश्चास्मादवशिष्टा भवतीति भावः। अधुनास्तेनकदृष्टान्तभावनार्थमाह ॥

तालुग्घाडिणिं ओमो-वणादिविज्जाहिं तेणगा आसि ।
इण्हिं ते उ न संती, तहा वि किं तेणगा न खलु ॥

पूर्वं स्तेनकाश्चौरा विजयप्रभवादयस्तालोद्घाटिन्यवस्वापिन्यादिभिरुपेता आसीरन् ताश्च विद्या इदानीं न सन्ति । तथापि किं खलु ते न भवन्ति भवन्त्येव तैरपि परद्रव्यापहरणादिति भाव· । अधुना गीतार्थदृष्टान्त भावयति ।

पुव्वं चउदसपुव्वी, इण्हिं जहन्नो पकप्पधारीओ ।
मज्झिमगपकप्पधारी, जह सो उ न होइ गीयत्थो ॥

पूर्वं गीतार्थश्चतुर्दशपूर्वी अभवत्। इदानीं स किं गीतार्थो जघन्य· प्रकल्पधारी न भवति भवत्येवेति भाव । शस्त्रपरिज्ञादृष्टान्तमाह

पुव्वं सत्थपरिण्णा, अधीयपढिया य होउ उट्ठवणा ।
इण्हिं छज्जीवणिया, किं सा उ न होउ उट्ठवणा ॥

पूर्वं शस्त्रपरिज्ञायामाचाराङ्गान्तर्गतायामधीतायामर्थतो ज्ञातायां पठितायां सूत्रत उपस्थापना अभूदिदानीं पुन· सा उपस्थापना षड्जीवनिकायां दशवैकालिकान्तर्गतायामधीतायां पठितायां च न भवति । भवत्येवेत्यर्थ· । पिण्डदृष्टान्तभावनामाह।

बितितम्मि बंभचेरे, पंचम उद्देस आमगंधम्मि ।
सुत्तम्मि पिंमकप्पि, इह पुण पिंमसणाएओ ॥

पूर्वमाचाराङ्गान्तर्गते लोकविजयनाम्नि द्वितीयेऽध्ययने यो ब्रह्मचर्याख्य पञ्चम उद्देशकस्तस्मिन् यदामगन्धिसूत्रम् । "सव्वामगंधं परिन्नाय निरामगंधं परिव्वयए इति " तस्मिन् सूत्रतोऽर्थतश्चाधीते पिण्डकल्पी आसीत् । इह इदानीं पुनर्दशवैकालिकान्तर्गतायां पिण्डैषणायामपि सूत्रोऽर्थतश्चाधीतायां पिण्डकल्पिक· क्रियते सोऽपि च भवति तादृश इति उत्तराध्ययने दृष्टान्तं भावयति।

आयारस्स उ उवरिं, उत्तरज्झयणा उ आसि पुव्वं तु।
दसवेयालियउवरिं, इयाणिं किं ते न होंती उ ॥

पूर्वमुत्तराध्ययनानि आचारस्याचाराङ्गस्योपर्यासीरन् । इदानीं दशवैकालिकस्योपरि पठितव्यानि किं तानि तथा रूपाणि न भवन्ति भवन्त्येवेति भाव· । वृक्षदृष्टान्तभावनामाह ।

मत्तंगादी तरुवर, न संति इण्हिं न होंति किं रुक्खा ।
महजूहाहिव दप्पिय, पुव्विं वसभाण पुण इण्हिं ॥

पूर्वं सुषमसुषमादिकाले मत्ताङ्गादयो दशविधास्तरुवराः कल्पद्रुमा आसीरन् इदानीं ते न सन्ति किं त्वन्ये चूतादयस्ततः किं ते वृक्षा न भवन्ति तेऽपि वृक्षा भवन्तीति भावः। वृषभदृष्टान्तमाह। ( महजूहाहिवेत्यादि ) पूर्वं वृषभा महायूथाधिपा दर्पिकाः श्वेताः सुजाताः सुविभक्तशृङ्गा आसीरन् इदानीं ते तथाभूता न सन्ति किंतु पञ्चदशादि गोसंख्यातास्तत· किं ते यूथा न भवन्ति भवन्त्येवेति भाव· । अधुना गोदृष्टान्तभावनार्थमाह ॥

पुव्वं कोमीवग्धा, जूहाओ नंदगोवमाईणं ।
इण्हिं न संति ताइं, किं जूहाइं न हुंती उ ॥

पूर्वं नन्दगोपादीनां गवां यूथा· कोटीवद्धाः कोटीसंख्याका आसीरन् इदानीं ते तथाभूता न सन्ति किं तु पञ्चदशादि गोसंख्याकास्तत्किं ते यूथा न भवन्ति किंतु भवन्त्येवेति । अधुना योधदृष्टान्तभावनामाह ॥

साहस्सी मल्ला खलु, महपाणा पुव्वं आसि जोहा उ ।
ते तुल्ल नत्थि एण्हिं, किं ते जोहा न होंती तो ॥

पूर्वं योधा महाप्राणाः सहस्रमल्ला आसीरन् इदानीं तेषां तुल्या न सन्ति किंत्वमी ततो हीनास्तत· किं ते योधा न भवन्ति भवन्त्येव कालौचित्येन तेषामपि योधकार्यकरणादिति भावः । शोधिदृष्टान्तमाह ॥

पुव्विं छम्मासेहिं, स होउ परिहारेण सोही उ ।
इण्हिं निव्विडियाहिं, पंचकल्लाणगाईहिं ॥

पूर्वं षड्भिर्मासै· परिहारेण वा परिहारतपसा वा शोधिरासीत् इदानीं निर्विकृतिकादिभिरपि च शोधि· पञ्चकल्याणकदशकल्याणकादिमात्रप्रायश्चित्तदानव्यवहारात् शोधिविषय एव । पुष्करिणीदृष्टान्तमाह ॥

किंव पुण एव सोही, जह पुव्विल्ला सुपच्छिमा सुं च ।
पुक्खरिणीसुं वत्था, इयाणि सुज्झंति तह सोही ॥

किं केन प्रकारेण पुनरत्राधुना एवं निर्विकृतिकादिमात्रेण शोधिर्भवति । सूरिराह । यथा पूर्वासु च पूर्वकालभाविनीषु (पुष्करिणीषु) प्रभूतजलपरिपूर्णासु वस्त्राणि शुध्यन्तिस्म एवं पश्चिमास्वप्यधुनातनकालभाविनीषु शुध्यन्ति तथा शोधिरपि पूर्वमिवेदानीमपि भवतीति एवं दृष्टान्तानभिधाय दार्ष्टान्तिकयोजनामाह ॥

आयरियादिचोदस, पुव्वादि आसि पुव्विं तु ।
एवं जुगाणरूवा, आयरिया हुंति नायव्वा ॥

एवमन्तरोदितदृष्टान्तकदम्बकप्रकारेण यद्यपि पूर्वमाचार्यादयश्चतुर्दश पूर्वादयश्चतुर्दशपूर्वधरादय आसीरन् तथापीदानीमाचार्या उपलक्षणमेतत् उपाध्यायाश्च युगानुरूपा दशाकल्पव्यवहारधरादयस्तपोनियमस्वाध्यायादिप्रयुक्ता द्रव्यक्षेत्रकालभावोचितयतनापरायणा भवन्ति ज्ञातव्याः। सम्प्रति यावत्पर्यायस्य यावन्ति स्थानानि सूत्रेणानुज्ञातानि तस्य तावन्त्यसंमोहार्थमुपदर्शयितुमाह ॥

तिवरिसपरगढाणं, ठोनियट्ठाणा उ पंचवरिसस्स ।
सव्वाणि विकिव्वो पुण, वोढुं वा एति ठाणाइं।

त्रिवर्षे त्रिवर्षपर्यायस्य एकमेवोपाध्यायलक्षणं स्थानमनुज्ञातं न द्वितीयमाचार्यत्वलक्षणमपि तस्याल्पपर्यायतया प्रभूतखेद सहिष्णुत्वाभावेनाचार्यपदयोग्यतया अभावात् । पञ्चवर्षे- स्य पञ्चवर्षपर्यायस्य द्वे स्थाने अनुज्ञाते तद्यथा उपाध्याय- त्वमाचार्यत्वबहुवर्षवर्षपर्यायतया खेदसहतरत्वाविकृष्टोष्टवर्ष पर्याय. पुन. सर्वाण्यपि स्थानानि वोढु सक्नोति बहुतम- वर्षपर्यायत्वात् ततस्तस्य सूत्रेणोपाध्यायत्वमाचार्यत्वं गणित्वं प्रवर्तित्वं स्थविरत्व गणावच्छेदित्वं वाऽनुज्ञातम् । अथ कथं सर्वाणि यथोक्तानि स्थानानि वोढुं शक्नोति तत आह ।

नो इंदियाण य कालेण, जायाणि तस्स दीहेण ।
कायव्वेसु बहूसु य, अप्पा खलु जावितो तेण ॥

तस्य अष्टवर्षपर्यायस्य दीर्घेणाष्टवर्षप्रमाणेन इन्द्रियनोइन्द्रि याणि जातानि भवन्ति कर्त्तव्येषु च बहुष्वात्मा खलु तेन भावि- तो भवति ततो योग्यत्वात्सर्वाण्यपि स्थानानि तस्यानुज्ञातानि।

निरुद्धपर्य्यायस्तद्दिवसमुद्देष्टुं कल्पते ॥

( सूत्रम् ) निरुद्धपरियाए समणे निग्गंथे कप्पइ तद्दिवसस्स आयरियत्ताए उद्दिसित्तए से किमाहु भंते ? अत्थि णं थेराणं तहारूवाइं कुलाइं कडाइं पत्तियाइं थिज्जाइं वेसासियाइं सम्मयाइं समुइकराइं अणुमयाइं बहुमयाइं भवति । तेहिं कडेहिं तेहिं पत्तिएहिं थिज्जेहिं तेहिं विसासीएहिं समुइकरे- हिं जेसे निरुद्धपरियाए समणे निग्गंथे कप्पइ आयरिय उवज्झायत्ताए उद्दिसित्तए तद्दिवसं ॥ व्य० ३ उ०

अथास्य सूत्रस्य कः सम्बन्ध उच्यते ।

उस्सग्गस्स ववादो, होति विवक्खो उ तेणिमं सुत्तं ।
नियमेण विगिट्ठो पुण, तस्सासी पुव्वपरियातो ॥

इहोत्सर्गस्य विपक्षप्रतिपक्षो भवत्यपवादस्तेन कारणेन " तिवरिसपरियाए समणे निग्गंथे इत्यादि " रूपस्योत्सर्ग- स्येदमपवादभूत सूत्रमुच्यते । अनेन सम्बन्धेनायातस्यास्य व्याख्या । निरुद्धो विनाशितः पर्यायोऽस्य स निरुद्धपर्यायः । श्रमणो निर्ग्रन्थः कल्पते युज्यते तद्दिवस यस्मिन् दिवसे प्रव्र- ज्यार्थं प्रतिपन्नवान् तस्मिन्नेव दिवसे पूर्वपर्याय. पुनस्तस्य प्रभूततर आसीत् । तथाचाह । ( नियमेणेत्यादि ) नियमेन तस्य पूर्वपर्यायो विकृष्टो विंशति वर्षाण्यासीत् ततस्तद्दिवस कल्पते । आचार्योपाध्यायतया उद्देष्टुम् । अत्र शिष्य. प्राह । ( से किमाहु ? भंते ! ) स शब्दोऽथ शब्दार्थः । अथ किं कस्मात् कारणात् भदन्त ! परमकल्याणयोगिन् ! भगवन्त एवमाहु- र्यथा तद्दिवसमेव कल्पते आचार्योपाध्याययोरुद्देष्टुं न खलु प्र- व्रजितमात्रस्याचार्यत्वादीन्यारोप्यमाणानियुक्तान्यगीतार्थत्वा- त् अत्र सूरिराह । ( अत्थि णमित्यादि ) अस्तीति निपातो निपातत्वाच्च बहुवचनेऽप्यविरुद्धस्ततोऽयमर्थः सन्ति विद्यन्ते णमिति वाक्यालकारे स्थविराणामाचार्याणां तथा रूपाणि आचार्यादिप्रायोग्यानि कुलानि तेन कृतानि गच्छप्रायोग्यत- या निर्वर्त्तितानीत्यर्थ. । येन यथा काल तेभ्य आचार्यादिप्रा- योग्य भक्तमुपधिश्चोपजायते । उपलक्षणमेतत् तेन केवलं तथा रूपाणि कुलानि कृतानि किंत्वाचार्यबालवृद्धग्लानादयोऽपि अनेकधा सग्रहोपग्रहविषयी कृता इति द्रष्टव्य न केवलं कुला- नि तथारूपमात्राणि कृतानि किं तु ( पत्तियाणित्ति ) प्रीति- कराणि वैनयिकानि कृतानि ( थेज्जाणित्ति ) स्थेयानि प्री- तिकरतया गच्छचिन्तायां प्रमाणभूतानि । अथवा स्थिया- नीति किमुक्तं भवति । नैक द्वौ वा वारौ प्रीतिकरणानि कृतानि किंत्वनेकश इति ( वेसासियाणित्ति ) आत्मनाम- न्येषां गच्छवासिनां मायारहितीकृततया विश्वासस्थानानि कृतानि विश्वासे भवानि योग्यानि वैश्वासिकानीति व्यु- त्पत्तेः अत एव सम्मतानि तेषु तेषु प्रयोजनेष्विष्टानि समुदि- कराणि अविषमत्वेन प्रयोजनकारीणि ।सोपि च बहुशो विग्रहे- षु समुत्पन्नेषु गणस्य समुदितमकार्षीत् । समुदिकृततया इष्टेषु- च प्रयोजनेष्वनुकल्पेन मतान्यनुमतानि । तथा बहूनां बिखर्व- जरूवर्जानां सर्वेषामित्यर्थ. । मतानि बहुमतानि भवन्ति तिष्ठन्ति सूत्रे तस्य स्यादिद रूपं ततो यद्यस्मात्तेषु कुलेषु तथारूपेषु कृतेषु प्रीतिकरेषु एवं तेषु स्थेयेषु तेषु वैश्वासिकेषु तेषु समुदिकरेष्वि- त्यपि भावनीयम् स श्रमणो निर्ग्रन्थो निरुद्धपर्यायोऽभवत् तेन कारणे न सकल्पते आचार्यतया उपाध्यायतया वा उद्देष्टु त- द्दिवसमिति । एष सूत्रसंक्षेपार्थ. । व्यासार्थं तु भाष्यकृद्विवकु. प्रथमत ( सेकिमाहुभंतेइत्यादि ) एतस्येदं व्याख्यानयति ।

चोरएयतिवासादी, पुव्वं वन्नेउं दीहपरियागं ।
ताद्दिवसमेव इण्हिं, आयरियादीणि किं देह ॥

चोदयति प्रश्नयति परो यथापूर्वं त्रिवर्षादिकं दीर्घं पर्याय व- र्णयित्वा किमिदानीं तद्दिवसमेव । आचार्यादीनि भावप्रधानोऽयं निर्देश. आचार्यत्वादीनि दत्थ । अत्र सूरिराह ।

भणणति तेहिं कायाइ, वेहियाणं तु उवहि भत्ताई ।
गुरुबालासहुमादी, अणेगकारेहु वज्जिया ॥

भण्यते अत्रोत्तर दीयते तैराचार्यादिपदयोग्यैर्वैनयिकानां वि- नयमर्हन्तीति वैनयिका आचार्यादय. तेषां कृतान्युत्पादितानि । उपधिभक्तानि । किमुक्तं भवति । तथारूपाणि स्थविराणां तै- र्वैनयिकानि कुलानि कृतानि येन तेभ्यो यथाकालमुपधिर्भक्तं चोपजायते इति।एतेन "अत्थिण थेराण तयारूपाणि कडाणीति" व्याख्यातम् । न केवलं तैस्तथारूपाणि कुलानि कृतानि किं तु गुरुबालसहोदरादय आदिशब्दात् वृद्धग्लानादिपरिग्रह. ।अनेक - प्रकारैरुपगृहीता. सग्रहोपग्रहाभ्यामुपष्टम्भे नीता."पत्तियाणी- त्ति" सुप्रतीतत्वान्न व्याख्यातम् तथेत्यत्र द्वितीय व्याख्यानमाह

ताइं पीतिकराइं, असइं दुव्वरि होसि थेज्जानि ।
संकिमअणवेक्खाए, जिम्हजढा ईति विस्संभो ॥

अथ वेति प्रतीत प्रथमव्याख्यानापेक्षया व्याख्यानान्तरोपदर्शने स्थेयानीति किंत्वसकृदिति । तथा वैश्वासिकानीति कोऽर्थ अन- पेक्षया स्वपरविशेषाकरणेन प्रभूततराणां सचिताङ्गेनेत्यर्थ । वेष्याणि विशेषत एषणीयान्यभिलषणीयानि कृतानि यतस्तानि जिह्मजढानि जिह्मं मायया रहितानि कृतानीति तेषु विश्रम्भो विश्रभ- स्थानत्वात्स्वाद्यऽपेक्ष्याणीति समुइकराणीति व्याख्यानार्थमाह ।

सव्वत्थ अविसमत्ते, ण कारगो होइ संमुदी नियमा ।
बहुसो य विग्गहेसुं, अकासि गणसम्मुदिं सो उ ॥

सर्वत्र सर्वेषु प्रयोजनेषु यो नियमादविषमत्वेनाकुटिलतया का- रको भवति ( सम्मुदित्ति ) पदैकदेशे पदसमुदायोपचारात् समुदिकरः तान्यपि कुलानि तेन तथारूपाणि कृतानि न केवल तेन कुलानि समुदिकराणि कृतानि । किंतु सोऽपि तु शब्दोऽपि- शब्दार्थ. । बहुशो बहुभिः प्रकारैर्विग्रहेषु समुत्पन्नेषु बहुपराक्र- मतो गणस्य गच्छस्य सम्मुदिमकार्षीत् शेषाणि तु पदानि सुप्रतीतत्वान्न व्याख्यातानि ॥

थिरपरिचियपुव्वसुतो, सरीरयामावहारविजढो उ ।

पुव्विं विणीयकरणो, करेइ सुत्तं सफलमेयं ॥

स्थिरो नाम अचपल । परिचित पूर्वस्मिन्पूर्वपर्याये श्रुत यस्य स परिचितपूर्वश्रुत । यदि वा प्रत्यागतस्यापि स्वाभिधानमिव परिचित पूर्वपठित यस्य स तथा । तत पूर्वपदेन विशेषणसमास । तथा शरीरस्य स्थानप्राणस्तस्यापहारोऽपहरण तेन विजढो रहित शरीरस्थानपहाररहित । किमुक्त भवति । पूर्वेन सार वत्रं वैयावृत्य वाचनादिषु परिहारयितमिति तथा पूर्व पूर्वपर्याये विनीतानि विशेषत सयमयोगेषु नीतानि करणानि मनोवाक्कायलक्षणानि येन स विनीतकरण सयमयोगादिक सर्व तेन पूर्वम परिहीनं कृतमिति भाव । य ईदृश पूर्वमासीद् । स एतत्सूत्र सफल करोति । ईदृशस्य तद्दिवसमाचार्यत्वमुपाध्यायत्व वा उद्दिश्यते न शेषस्य ततो न कश्चित्पूर्वापरविरोध इति भाव ।

कह पुण तस्स निरुद्धो, परियातो होज्ज तद्दिवसनो उ ।
पुव्वा करुमावक्खो, सणाईहिं वच्चान्तीतो ॥

कथ केन प्रकारेण तस्य पूर्व पर्यायो निरुद्ध कथ तावदैवासिकस्तद्दिवसभावी पर्यायोऽभवत् । अत्रोत्तरमाह ( पुव्वकरेत्यादि) स्वज्ञातिभि स्वकीयै स्वजनै सापेक्षो गच्छसापेक्ष सन् वच्चान्नीत सोऽत्रदत सर्व सपृष्टनमत्रत् एतदेव प्रपञ्चयन्नाह ।

पव्वज्जअप्पपंचम, कुमारगुरुमादिउवहिते णयणं ।
निज्जं तस्स निकायण, पव्वतिते तद्दिवसपुच्छा ॥

राजा कोऽप्यमात्यपुरोहितसेनापतिश्रेष्ठिसहितो राज्यमनुशास्ति तयामेकैकः पुत्रस्तत्र राजपुत्रो राज्ञा राजा भाविष्यतीति सभावित. अमात्यपुत्रो अमात्येनामात्यत्वपुरोहितपुत्र पुरोहितेन पुरोहितत्वे सेनापतिपुत्र सेनापतिना सेनापतित्वे श्रेष्ठिना श्रेष्ठित्वे तेऽपि पञ्चापि सह क्रीडन्ति । अन्यदा कुमारो राजपुत्र आत्मपञ्चमोऽमात्यपुरोहितसेनापतिश्रेष्ठिपुत्रै सहेत्यर्थ प्रव्रज्यामगृहीत् । सर्वे च तेऽतीव बहुश्रुता जाता ग्रहणशिक्षामासेवनाशिक्षां चातिशिक्षितव न्त कुलानि च प्रीतिकरादिरूपाणि कृतानि । आचार्येण च ते गुर्वादय सभाविता । तद्यथा राजपुत्र आचार्यपदे अमात्यपुत्र उपाध्यायत्वे पुरोहितपुत्र स्थविरत्वे सेनापतिपुत्रो गणित्वे श्रेष्ठिपुत्रो गणावच्छेदित्वे सभावितः राजादीनां चान्ये पुत्रा न विद्यन्ते ततस्ते सूरिसमीपमागत्य विज्ञापयन्ति यथा नयाम एतान् स्वस्थान पश्चादेतैरेव सह समागत्य वय प्रव्रजिष्याम एवमुपधिना मातृस्थानेन विज्ञाप्य तेषां ते नयनमुपकरण कुर्वन्ति । तस्य च राजकुमारस्यात्मपञ्चमस्य नीयमानस्याचार्यो निकाचनं करोति यथा सम्यक्त्वे नियमतोऽप्रमत्तेन भाव्यं अत्र शिष्यस्य पृच्छा भूय । प्रव्रजिते सति राजकुमारादौ किमिति तद्दिवस यस्मिन् दिवसे प्रव्रज्या प्रतिपन्ना तस्मिन्नेव दिनं आचार्यादिपदस्थापनाम तोत्तर वक्तव्यमिति भावार्थ । इति उपधिना तेषां नयनमुक्त सम्प्रति प्रकारान्तरेणापहरणमाह ।

पियरो व तावसादी, पव्वज्जिउमणा उ ते कुलाविति ।
ठविया पयाईसुं, गणेसुं ते जहा कमसो ॥

पितरो वा तेषा । तापसादय तापसादिरूपतया प्रव्रजितुम नस । तान् राजपुत्रादीन् ( फुलाविति त्ति ) देसीपदमेतत् अपहारयन्ति। इय च नीता सन्तस्ते स्वपितृभिर्यथाक्रमं राजादिपु स्थानेषु स्थापिता ।

निया वि फासुभोजी, पोसहसालायबंभिसीकरणं ।
पुत्तजोयं च केसिं, लक्खणपाढय पुच्छनी ॥

जो तत्थ अमूढ लक्खा, रिउकाले तीए एक्कमेक्कं तु ।
उप्पाएऊणए सुयं, ठाविय ताहे पुणो होंति ॥

नीता अपि ते राजकुमारादयः प्रासुकभोजिन. पौषधशालायां प्रतिदिवस सूत्रपौरुष्या अर्थपौरुष्याश्च करण ध्रुवमवश्य कुर्वन्ति । ब्रह्मचर्य च परिपालयन्ति । नवरं लक्षणपाठकान् दिने पृच्छन्ति । कस्या महिलाया ऋतुकाले गर्भो लगतीति एव दृष्ट्वा यासां महिलानां लक्षणपाठका भवन्ति तयैतासामृतुकाले नियमनात् गर्भो लगिष्यतीति ततो या ऋतुकाले अमूढलक्षा ऋतुकालस्य स्वस्य ज्ञात्री तस्यामात्मीयायामेकैकं वारं गत्वा बीज निक्षिपन्ति । एव चात्मीयमात्मीयं पुत्रमुत्पाद्य यदा यदायो यो स समर्थो जायते । तदा तदा त तं स्वस्वस्थाने स्थापयीत्वा पुनरागच्छन्तीति ।

अब्भुज्जयमेगपरं, पडिवज्जिउकामथेरअसति अन्ने ।
तद्दिवसमागतेसुं, ठाणेसु ठवेंति तस्सेव ॥

यस्मिन् दिवसे ते प्रत्यागतास्तस्मिन्नेव दिवसे स्थविरा आचार्या अभ्युद्यतमेकतर विहार जिनकल्पिक यथालन्दकल्पविहार वा प्रतिपत्तुकामा. स्थविरत्वात् । अन्यगणधारणेऽसमर्थो स्तादृशो न विद्यन्ते ततस्तद्दिवसमागतान् राजकुमारादीन् तेष्वाचार्यत्वादिषु स्थानेषु स्थापयन्ति " पुव्वयते दिवसपुव्वे " यदुक्त तत्र तामेव पृच्छां भावयति ।

कह दिज्जइ तस्स गणो, तद्दिवसं चेव पव्वइगस्स ।
भण्णइ तम्मि ठविए, होंति सुवहुगुणाउ इमे ॥

कथं तस्य राजकुमारस्य प्रव्रजितस्य तद्दिवसमेव यस्मिन् दिने प्रव्रज्या प्रतिपन्ना तस्मिन्नेव दिने गणो दीयते । अत्र सूरिराह भण्यते तस्मिन् स्थापने सुष्ठु अतिशयने बहवो गुणा इमे वक्ष्यमाणा भवन्ति तानेवाह ।

साहु विसीयमाणो, अप्पागेलण्णभिक्खउवगरणा ।
ववहारइत्थियाए, वाएय आकिंचणकरे य ॥
एते गुणा हवंती, तज्जायाणं कुटुंबपरिवड्ढी ।
ओहाणं पि य तेसिं, अणुलोमुवसग्गतुल्लं तू ॥

साधुर्विषीदन् तान् तथाभूतान् दृष्ट्वा स्थिरो भवति । आर्यिका अपि तेषु स्वचेतासि स्थिरा उपजायन्ते ( गेलण्णत्ति ) ग्लानत्वे साधूनामौषध सुलभ भवति । वैद्योऽपि तेषां प्रभावतोऽनुकूलां क्रियां करोति । यथा एते राजादिपुत्रा. तेषां चामी शिष्या इति । तथा भिक्षा उपगरणमपि साधूनामतिसुलभम् ( ववहारो इत्थिया ) एते स्त्रिया अपहृतायास्तेषां भयतो व्यवहारो लभते इयमत्र भावना । काचित् रूपवती कुमारश्रमणा केनापि राज्ञा गृहीता स्यात् ततस्तेषां गतानां भयेन सा मुच्यते इति वादे च तद्गौरवात्साधवोऽपरिभूता भवन्ति ( अकिंचणकारयत्ति ) योऽपि कश्चित्साधूनां प्रत्यनीक सोऽपि तेषां राजादिकुमारप्रव्रजिताना भयतो न किञ्चित्करोति अथवा किंचनानां साधूनां यदि कथमपि केनाऽप्यर्थजाते प्रयोजनमुपजायते तर्हि तत्सर्वं लोक. प्रायोऽप्रार्थित एव करोति । तदेवमेते अनन्तरोदिता गुणास्तज्जातानां राजादिजातीयानां यतोऽतस्ते निरुद्धपर्यायाः प्रत्यागता. प्रव्राजितास्तद्दिवस एवाचार्यादिपदेषु स्थाप्यन्ते । अयं च गुणः कुटुम्बपरिवृद्धिस्तथाहि यदि नामैते तथाभूत राज्यादिकमपहाय धर्म समाचरन्ति तत किं तेषु तुच्छेषु भोगोपभोगेषु एवमन्येपि सयमे निष्क्रमन्ति ततो भवति गच्छस्य महती वृद्धिः।

एतेषामप्रधानमुत्प्रव्राजनं तदप्यनुलोमोपसर्गतुल्यम्। किमुक्तं भवति। यथा कस्याऽपि साधोः कश्चिदनुलोमान् उपसर्गान् प्रकृतवान् सचैव चिन्तयति। यदि परमनेनोपायेनाहं मुच्ये नान्यथा ततः एव विचिन्त्याशठभावः सपरिसेवते स च तथाकृतपरिसेवनोऽप्यशठभाव इत्यखण्डचारित्र इति व्यवह्रियते॥ एवमेतेऽप्यखण्डचारित्रा एव तत्वतो मन्तव्याः एतदेव लेशतो व्याख्यानयन्नाह।

साहूणं अज्जाण य, विसीयमाणा ण होंति थिरकरणं।
जइ एरिसा वि धम्मं, करोति अम्हं किमंग पुण॥

साधूनामार्यिकाणां च विषीदतां स्थिरकरणं भवति। तथा हि केचित्साधवो भोगेषु विषीदन्तस्तान् दृष्ट्वा एव चिन्तयन्ति। यदि तावदीदृशा अपि विपुलराज्यादिका अमी देवकुमारिकाः प्रव्याभिरपि निजमहिलाभिरुपसर्ग्यमाणा धर्म्मं कुर्वन्ते न पुनर्निज ब्रह्मचर्यं भ्रंशितवन्तोऽत एव ते तद्दिवस एवाचार्यादिपदेषु स्थापिताः किमङ्ग पुनरस्माभिः सुतरां धर्म्मं समाचरणीयम्। विभवादिपरिग्रहत्वादिति। आर्यिका अपि चिन्तयति। यदि तावदीदृशाः खल्वस्माकं बान्धवाः संपन्नाः कथममन्दपुण्या एतेषां सुखमपि निरीक्ष्यन्ते न सीदन्ति खल्वेतादृशधीरपुरुषपरिगृहीता आर्यिका केवलमपरिभूताः सदा वर्त्तन्ते॥

किंच तत्थ ठविएसु, लोगो भयं गौरवं करेति।
गेलण्णोसहिमाई,सुलभं उवकरण भत्तादी॥

किं च तत्र तेषु राजकुमारादिष्वाचार्यादिपदेषु स्थापितेषु लोको भयं गौरवं बहुमानं च कुर्वते। ग्लानत्वे भवत्यौषधादिकं सुलभमुपकरणभक्तादि च।

संजतिमादीगहणे, ववहारे होइ दुप्पधंसो उ।
तग्गारवा उ वादे, हवंति अपराजिया चेव॥

संजत्यादीनामादिशब्दात् तथाविधक्षुल्लकादिपरिग्रहः। ग्रहणे अपहारे भवत्यसौ राजकुमारादिदुष्प्रधृष्यः। तथा तद्गौरवात् वादे भवन्ति साधवोऽपराजिता एव।

पडिणीयाअकिंचिकरा, होंति अवत्तव्वो अट्ठजाए य।
तज्जायदिक्खिएणं, होइ विवड्ढी वि य गणस्स॥

प्रत्यनीकाः अकिञ्चित्करा भवन्ति अर्थजाते च समुत्पन्ने कश्चिदपि वक्तव्यो न भवति। किंतु सर्वोऽप्यप्रार्थित एव यथौचित्यं करोति। तथा तेन तज्जातेन राजादिजातेन तद्दिवस एवाचार्यादिपदस्थापितेन गणस्य गच्छस्य वृद्धिर्भवति। शेष सुगमत्वान्न व्याख्यातम्।

( सूत्रम् ) निरुद्धवासपरियाए समणे निग्गंथे आयरियउवज्झायत्ताए उद्दिसित्तए समुत्थे य कप्पति, तस्स णं कप्पस्स देसे अभिज्जेए भवति से आहिज्जि सामिति अहिजिज्जा एवं से कप्पइ आयरियउवज्झायत्ताए उद्दिसित्तए से य आहिज्जे सामित्ति णो अहिज्जा आ एवं से नो कप्पइ आयरियउवज्झायत्ताए उद्दिसित्तए १०।

निरुद्धवासपरियाए समणे निग्गंथे इत्यादि अस्य सम्बन्धमाह

अपवदिं तु निरुद्धं, आयरियत्तं तु पुव्वपरियाए।
इमतो पुण अववातो, असमत्तसुयस्स तरुणस्स॥

निरुद्धे। विनाशिते पूर्वपर्याये सत्याचार्यत्वमपवदितु प्रव्रज्यादिवस एवाचार्यत्वमनुज्ञातुमनन्तरसूत्रेऽयमनेन सूत्रेणाभिधास्यमानः पुनरपवादोऽसमाप्तश्रुतस्य तरुणस्य। किमुक्तं भवत्यल्पविषयपर्यायस्यासमासश्रुतस्यापि चापवादतो गणधरत्वमनुज्ञायते ततोऽनेनाप्यपवादोऽभिधानतो भवति पूर्वसूत्रेणास्य सम्बन्धः। अनेन सम्बन्धेनायातस्यास्य व्याख्या निरुद्धो विनाशितो वर्षपर्यायो यस्य स निरुद्धवर्षपर्याय। एतदुक्तं भवति। त्रिषु वर्षेषु परिपूर्णेषु यस्य निरुद्धः पर्वपर्यायो यदि वा पूर्णे त्रिवर्षे समाप्तश्रुतस्य निरुद्धवर्षपर्याय इति। श्रमणो निर्ग्रन्थः कल्पते आचार्योपाध्यायतया। आचार्यतया उपाध्यायतया वा उद्देष्टुं किल्याह समुच्छेदकल्पे आचार्ये कालगते अन्यस्मिंश्च बहुश्रुते लक्षणसंपूर्णेऽसति तस्य च आचार्यतया उपाध्यायतया उद्देष्टुमपि तस्य आचारप्रकल्पस्य निशीथाध्ययनस्य देशोऽधीतो भवति सूत्रमधीतमर्थोऽद्यापि नाधीयते यदि वार्थो न परिपूर्णोद्याप्यधीत इत्यर्थः। ( सेयइत्यादि ) स चेदमधीतवान् पाश्चात्य स्थित देशमध्येऽधीयते तत एव सति कल्पते आचार्योपाध्यायतया उद्देष्टुम् यदि पुनः सोऽध्येष्ये इति चिन्तयन्नपि नाधीयते इति सम्भाव्यते। तत एव सति न कल्पते। आचार्योपाध्यायतया उद्देष्टुम् एव सूत्रसंक्षेपार्थः। तत्राल्पवर्षपर्यायस्यासमाप्तश्रुतस्यापवादतो गणधरपदानुज्ञानार्थमिदं सूत्रमित्युक्तमतोऽल्पवर्षपर्यायत्व समाप्तश्रुतत्व च भाष्यकृद्भावयति।

तिण्णी जस्स अ पुण्णा,वासापुण्णेहि वा तिहि उत्तं तु।
वासेहिं निरुद्धेहिं, लक्खणजुत्तं पसंसंति॥

यस्य त्रीणि वर्षाणि व्रतपर्यायतयाऽद्याप्यपरिपूर्णानि एतस्यामवस्थाया यदि वा त्रिषु परिपूर्णेषु तस्य तन्निरुद्धवर्षपर्यायत्वमभवत्। स त्रिषु पूर्णेषु अपूर्णेषु वा वर्षेषु निरुद्धेषु आचार्ये कालगते अन्यो बहुश्रुतोऽपि लक्षणसंपूर्णो न विद्यते सचासमाप्तश्रुतोऽपि लक्षणयुक्तो ग्रहणधारणासमर्थश्चेति स्थाप्यते। बहुश्रुतोप्यन्यो न स्थाप्यते किं तु सोऽसमाप्तश्रुतोऽपि लक्षणयुक्तः। किं कारणमत आह। लक्षणेत्यादि। लोके वेदे समये च विशारदा नायकत्वपदाध्यारोपे प्रशसन्ति। लक्षणयुक्त नेतर बहुश्रुतमपि तत स एव स्थाप्यते। अत्र पर आह।

किं अम्ह लक्खणेहिं, तवसंजमसुट्ठियाणसमणाणं।
गच्छविवड्ढिनिमित्तं, इच्छिज्जइ सो जह कुमारो॥

किमस्माकं श्रमणानां तपसंयमसुस्थितानां लक्षणैः केवल लक्षणविहीनोऽपि बहुश्रुत स्थाप्यतां येनाऽस्माक स्वाध्यायवृद्धिर्भवति। आचार्य आह। सोऽल्पश्रुतोऽपि लक्षणयुक्ततया गणधरपदस्थापनायामिष्यते गच्छविवृद्धिनिमित्त यथा राज्यवृद्धिनिमित्तं राज्ये कुमार। एतदेव भावयति॥

बहुपुत्तो नरवई, सामुद्दं भणति कं ठवेमि निवं।
दोसगुणएगणेगे, सो वि य तेसिं परिकहेइ॥

कोऽपि बहुपुत्रको नरपति सामुद्रिक सामुद्रलक्षणवेत्तारं भणति। तथा कमहं कुमारं नृप स्थापयामि एवमुक्तः सोऽपि तेषां कुमाराणां यस्य दोषा गुणा वा एकोऽनेके च विद्यन्ते तत्सर्वं परिकथयति तत्र दोषा इमे॥

निद्धूमगं च डमरं, मारीदुब्भिक्खचोरपउराइं।
धणधन्नकोसहाणी, बलवति पच्चंतरायाणो॥

निर्धूमक नाम अपलक्षण यत्प्रभावतो राज्यमनुशासति रन्धनीयमेव न भवति डमर यद्वशाद्राज्य डमरबहुल भवति। प्रभूतस्वदेशोत्थोपप्लवा एवोपजायन्त इत्यर्थः। मारिर्यद्वशान्मारिदोषोपहत प्रचुर दुर्भिक्षमुपयाति। चोरप्रचुर यद्वशश्चौरा उच्छलन्ति। धनहानिर्यतः सर्वत्र धनक्षयः सम्भवति। धान्यहानिर्य-

त्रसावावृष्टेऽपि मेघे सस्यनिष्पत्तिस्तादृशी नोपजायते । कोश-वृद्धिर्येन कोशक्षयः वत्त्वबलप्रत्यन्तराजक यतो वत्त्ववन्तः प्रत्यन्त-राजा सर्वे भवन्ति एते कस्याप्येकः कस्याप्यनेके दोषाः अधुना गुणमाह ॥

खेमं सिवं सुभिक्खं, निरुवसग्गं गुणेहिं उववेयं ।
अभिसिंचंति कुमारं, गच्छे वि तयाणुरूवं तु ॥

क्षेमं नाम सुखकारणं यद्योगात्सर्वत्र राज्ये नीरोगता शिवं यतः सर्वत्र कल्याण सुभिक्षसम्भवः । निरुपसर्गा यतः सकलेऽपि देशे मारिडमरायुपसर्गासंभवः । एतेऽपि गुणाः कस्याप्येकः कस्याप्यनेके कस्याऽपि सर्वे तत्र यथा सर्वथा दोषोपेतमधिकृतैश्च गुणैः सर्वैरभ्युपेतं कुमारं राजामात्यादयो राज्येऽभिषिञ्चन्ति तथा गच्छेऽपि तदनुरूप राजकुमारानुरूप सर्वथा दोषविनिर्मुक्तमेकान्ततो गुणैरुपेतमाचार्यादिपदे । सिञ्चन्ति एतदेव स्पष्टयति ॥

जह ते रायकुमारा, सुलक्खणा जे सुहा जणवयाणं ।
सतमविसुयसमिद्धं, नच वेंति गुणे गुणविहूणं ॥

यथा ते राजकुमाराः सलक्षणा ये स्थापिताः सन्तो जनपदानां शुभाः । कल्याणकारिण त एव स्थाप्यन्ते न शेषास्तथा सूरयोऽपि गच्छवृद्धिमपेक्षमाणाः सन्तमपि श्रुतसमृद्धं गुणविहीनं न गणे स्थापयन्ति ॥

लक्खणजुत्तो जइ वि हु, न समिद्धसुतेण तह वि तं ववए ।
तस्स पुण होति देसो, असमत्तो पकप्पनामस्स ॥

तल्लक्षणयुक्तो यद्यपि हु निश्चितं स्थापयेत् । तस्य पुनर्देशो भवत्यसमाप्तः ॥ प्रकल्पनाम्नो निशीथाध्ययनस्य कथं पुनर्देशोऽसमाप्त इत्याह ॥

देसो सुत्तमधीतं, न तु अत्था अत्थतो व असमत्ती ।
सगणे असतिऽगीता, सतीपागिएदेज्जमेहिंतो ॥

प्रकल्पं द्विधा शरीरं सूत्रमर्थश्च । तत्र देशः सूत्रमधीतं नत्वर्थः । अथवा अर्थोऽपि कियानधिगत केवलमर्थतः समाप्तिर्नाभूत । ततो ये स्वगणे आचार्यलक्षणविहीनतया गीतार्था अपि सन्तोऽनर्हा आचार्यपदायोग्यास्तेभ्यः आचार्यपदोपविष्टः सत्यर्थं गृह्णीयात् । अथ स्वगणे गीतार्था न विद्यन्ते । तर्हि तेषामसत्यभावे एभ्यो वक्ष्यमाणेभ्यो गृह्णीयात्तानेवाह ।

संविग्गमसंविग्गे, सारूवियसिद्धपुत्तपच्छिक्कन्ने ।
पडिकंत अब्भुट्ठिए, संती असत्थ तत्थेव ॥

स्वगणे गीतार्थानामभावे अन्येषां सांभोगिकानां समसुखदुःखानां गीतार्थानामन्तिके गत्वाऽधीते तेषामप्यभावेऽन्यसांभोगिकानां गच्छे प्रविश्य पठति । तेषामप्यभावे पार्श्वस्थादीनां संविग्नपाक्षिकाणामन्तिके केवलं तत्संयमयोगेष्वभ्युत्थाप्य एतावता सविग्नेति व्याख्यानम् । अधुना असंविग्नेत्यादि व्याख्यायते । असंविग्नान् साम्प्रतिकान् संयतरूपधारिणः सिद्धपुत्रप्रच्छन्नान् सिद्धपुत्रान् पश्चात्कृतांश्चाश्रयेत् । कथंभूतानित्याह प्रतिक्रान्ताभ्युत्थितान् असंयमव्यापारान् प्रतिक्रान्तान् संयम प्रत्यभ्युत्थितान् तेषामप्यसति अभावे अन्यत्र यत्र ते न ज्ञायन्ते तत्र गत्वा तेषामन्तिके अधीते नान्यत्र तेषामगमने तत्रैव पठेत् यत्र ते स्वव्यापारेण स्थिता वर्त्तन्ते । इयमत्र भावना पार्श्वस्थादीनां संविग्नपाक्षिकाणामभावे ये पूर्वं संविग्ना गीतार्था आसीरन् तेषां पश्चात्कृतानां पुनः प्रतिक्रान्ताभ्युत्थितानामन्तिके गृह्णीयात्तेषामप्यभावे संयमयोगे प्रत्यभ्युत्थितानां सिद्धपुत्राणामन्तिके तेषामप्यभावे अन्यत्र तान् संयतरूपकान् कृत्वा तेषामन्तिके अन्यत्रागमने तत्रैव तान् तथारूपान् कृत्वा सागारिकाणामभावे तेषामन्तिके ऽधीते एतदेवाह ।

सगणे परगणे वा, मणुण्णअण्णोसिं वा वि असतीए ।
संविग्गपक्खिएसुं, सरूवि सिद्धे सु पढमं तु ॥

स्वगणे गणधरपदानर्हगीतार्थानामन्तिके परगणे वा मनोज्ञे वा साम्भोगिके तदभावे अन्येषां वा असाम्भोगिकानामन्तिके तेषामप्यसत्यभावे सविग्नपाक्षिकेषु पार्श्वस्थादिषु प्रथममेव प्रतिक्रान्ताभ्युत्थितेषु तेषामप्यभावे सरूपिषु सयतरूपिषु प्रतिक्रान्ताभ्युत्थितेषु पश्चात्कृतेषु तेषामप्यभावे प्रथममेव स्वरूपिषु सिद्धपु सिद्धपुत्रेषु एतत्प्रतिक्रान्ताभ्युत्थिताधिकृत्योक्त तदभावे अन्यत्र विधिमाह ।

मुंडं च धरेमाणे, सिहं च फेडं च अणिच्छससिहे वि ।
लिंगेण मसागारिए, वंदणगादीण हावेंति ॥

ते पश्चात्कृतादयो यदि न प्रतिक्रान्ता अभ्युत्थिताः किं तु लिङ्गतो गृहिस्था वर्तन्ते । अन्यत्र गत्वा तान् मुण्डं च धरमाणान् धारयत कारयति । यदि पुनः सशिखाका सन्ति ततः शिखां स्फेटयति । अथ शिखास्फेटनं ते नेच्छन्ति ततः सशिखानपि स्थापयित्वा इत्वर श्रमणलिङ्गं तेषां समर्पयन्ति । व्याख्यानवेलायां च चोलपट्टकं मुखपोतिकां च ग्राहयन्ति तेषामपि तथा जूतानां पार्श्वे पठता यथा प्रतिरूपश्रुतविनयः प्रयोक्तव्य । तेषु न वारणीयः । अथ ते अन्यत्र गमनं नेच्छन्ति तर्हि तत्रैवासागारिके सागारिकसंपातरहिते प्रदेशविशेषे लिङ्गेन रजोहरणमुखपोत्तिकादिना श्रमणरूपधारिणः कारयित्वा पठनीयम् । ते च तत्रापि तथा पठन्तो न वन्दनादीनि हापयन्ति ॥

आहारउवहिसेज्जाए, समणमादीसु होइ जइयव्वं ।
अणुमोयणकारावण-सिक्खत्तिपदम्मि तो सुद्धो ॥

तेन तेषां समीपे पठनाहारोपधिशय्यानामेषणादिषु भवति यतितव्यम् । तदाऽनुमोदनं कारापणे च न च कारणकारापणानुमोदनदोषैः स परिगृह्यते । यतः शिक्षा मयाऽस्य समीपे गृह्यते इति द्वितीये पदे वर्तते । ततः स शुद्ध इति । इयमत्र भावना । यदि स पार्श्वस्थः पश्चात्कृतादिः पाठयन्नात्मनः आहारोपध्यादिकमात्मनैवोत्पादयति । ततः सुन्दरम् । आत्मना नोत्पादयति । तत आह ।

चोयइ से परिवारं, अकारमाणं जणति वा सड्ढे ।
सव्वोच्छित्तिकरस्स हु, सुयभत्तीए कुणह पूयं ॥

से तस्य परिवारं विनयमकुर्वन्तं चोदयति प्रज्ञापयति । यथा महद्धिद ज्ञानपात्रमत क्रियतामस्योत्कृष्टाहारसंपादनेन विनय इति परिवारस्याभावे श्राद्धाश्राद्धान्सिद्धपुत्रपुराणतररूपान् जणति यदा अव्यवच्छित्तिकरस्यास्य श्रुतभक्त्या कुरुत पूजामिति । एतनानुमोदनकारापणे व्याख्याते । सम्प्रति स्वयमुत्पादनमाहारादीनां भावयति ॥

दुविहा सती एसिं, आहारादी करेति ते सव्वं ।
पणहाणीए जयतो, अट्ठताए वि एमेव ॥

द्विविधस्य प्रतिपरिचारकस्य सिद्धपुत्रादेश्चैत्यर्थं । असत्यभावे तेषां पार्श्वस्थपश्चात्कृतादीनामाहारादिकं स सर्वमात्मना करोति । तत्रापि स प्रथमतः शुद्धमुत्पादलाभे पञ्चकपरिहान्या यतमानोऽशुद्धमपि पञ्चकपरिहानियतनानामशुद्धालाभे पञ्चकप्रायश्चित्तस्थानप्रतिसेवनात् उत्पादयति तदसम्भवे दशकप्रायश्चित्त

स्थानप्रतिसेवनात् एव तावत् यावच्चतुर्गुरुकमसम्प्राप्त । तथापि स तस्योत्पादयति । एवमेवात्मार्थं पञ्चकपरिहान्या यतते । किमुक्तं भवति । उद्गमादिदोषत्रयशुद्धमलभमानः पञ्चकादियतनया त्रिभिरपि दोषैरशुद्धं गृह्णाति स तथा कुर्वन्नपि ज्ञाननिमित्तं प्रवृत्तत्वात् कृतयतनाविषयपुरुषकारत्वात् रागद्वेषविरहितत्वाच्च शुद्ध इति ( आचार्योपाध्यायादिषु मृतेषु नवडहरस्य तत्पदे स्थापना)

( सूत्रम् ) निग्गंथस्स णं णवडहरतरुणगस्स आयरियउवज्झाए विसंभेज्जा णो से कप्पइ अणायरियउवज्झायस्स होत्तए कप्पइ से पुव्वआयरियं उद्दिसावित्ता ततो पच्छा उवज्झायं से किमाहु भंते दुसंगहिए समणे निग्गंथे तंजहा आयरिएणं उवज्झाएण य ॥

निर्ग्रन्थस्येत्यादि अथास्य सूत्रस्य कः सम्बन्ध इत्याह ॥

आयरियाणं सीसो , परियातो वावि अह कितो एस ।
सीसाणकेरिसाण व, ठाविज्जइ सो उ आयरिओ ॥

पूर्वसूत्रे आचार्यस्थापनीय उक्तः । आचार्याणां च शिष्या भवन्तीति तद्वक्तव्यतार्थमिदं सूत्रम् अथवा पूर्वसूत्रेषु पर्यायोऽधिकृतोऽस्मिन्नपि च सूत्रे एव पर्यायस्तथा च "नवडहरतरुणग्रहण" यदि वाऽनन्तरसूत्रे य आचार्यः स्थापनीयः उक्तः स कीदृशानां शिष्याणां स्थाप्यते । इतीदमनेन सूत्रेणोच्यते । अनेन सम्बन्धेनायातस्यास्य व्याख्या । निर्ग्रन्थस्य णमिति वाक्यालङ्कारे नवडहरतरुणस्य नवस्य डहरस्य तरुणस्य वा आचार्यसहित उपाध्याय आचार्योपाध्याय । आचार्य उपाध्यायश्चेत्यर्थः । विष्कम्भो यावन्म्रियते ततः से तस्य नवडहरतरुणस्यानाचार्योपाध्यायस्य सतो भवितुं वर्तितुं न कल्पते किं तु पूर्वमाचार्यमुद्देशा स्थापयित्वा ततः पश्चादुपाध्यायमुद्देशा अप्येवमाचार्योपाध्यायस्य सतो भवितुं कल्पते । से किमाहु । सेशब्दोऽथशब्दार्थः । अथ भदन्त ! किं कस्मात् कारणात् भगवन्त एवमाहु सूरिराह । द्वाभ्यामाचार्योपाध्यायाभ्यां संगृहीतो द्विसंगृहीतः श्रमणो निर्ग्रन्थः सदा भवति । तद्यथा आचार्येणोपाध्यायेन च एष सूत्रसंक्षेपार्थः व्यासार्थं तु भाष्यकृद्विवक्षुर्नवादिशब्दार्थानामर्थमाह

तिवरिसो होइ नवो, आसोलसगं तु डहरगं बेंति ।
तरुणो चत्तासत्तरुण, मज्झिमो थेरतो सीसो ॥

प्रव्रज्यापर्यायेण यस्य त्रीणि वर्षाणि नाधिकमित्येष त्रिवर्षो भवति नवः तत्र पर्यायेण चत्वारि वर्षाण्यारभ्य यावदापोडशकं वर्षम् अत्राङ्मर्यादाया यथा आपाटलिपुत्राद् वृष्टो देव । किमुक्तं भवति । पाटलिपुत्रं मर्यादीकृत्यारतो वृष्टो देव । इत्यत्र ततोऽग्रमर्थं । यावत्परिपूर्णानि पञ्चदशवर्षाणि षोडशाद्वर्षादर्वाक् तड्डहरकं ब्रुवन्त समयविदः । तता जन्मपर्यायेण षोडशवर्षाण्यारभ्य यावच्चत्वारिंशद्वर्षाणि तावत्तरुणः । ततः परं यावत्सप्ततिरेकेन वर्षेणोना तावन्मध्यम । तत परं सप्ततेरारभ्य स्थविरः शिष्य ॥

अणवकस्स वि डहरग-तरुणगस्स नियमेण संगहं विति ।
एमेव तरुणमज्झे, थेरम्मि य संगहो नियमे ॥

य प्रव्रज्यापर्यायेण त्रिवर्षोत्तीर्णः सोऽनवक उच्यते । तस्यापि आस्तां नवकस्येत्यपि शब्दार्थः । डहरक सन् तरुणकस्तस्य द्वादशवर्षाण्यारतो यावत्पञ्चदशवर्षाणि तावदित्यर्थः नियमेन संग्रहमभिस्थापिता आचार्योपाध्यायानां संग्रहणं ब्रुवते अभिनवस्थापिताचार्योपाध्याया संग्रहीतेन तेनावश्यं वर्तितव्यमिति भावः ।

तथा य प्रव्रज्यापर्यायेण त्रीणि वर्षाणि नाद्याप्युत्तीर्णः स नवकस्तस्मिन्नवके तरुणे मध्यमे स्थविरे च शब्दाड्डहरे च । एवं पूर्वोक्तेनैव प्रकारेण संग्रहं ब्रुवते । किमुक्तं भवति । नवकस्य डहरस्य वा तरुणस्य वा मध्यमस्य वा स्थविरस्य वा नवकत्वादेव नियमाचार्योपाध्यायसंग्रहो वेदितव्य इति ॥

वा खलु मज्झिमथेर-गीयमगीए य होइ नायव्वं ।
उद्दिसिणा उ गीए, पुव्वायरिए उ गीयत्थे ॥

वा शब्दो विभाषायां खलु निश्चितं त्रिवर्षपर्यायोत्तीर्णत्वेनानवके मध्यमे स्थविरे च प्रत्येकं गीते अगीते वर्षाणां नानात्वं ज्ञातव्यम् । तदेवाह ॥ ( उद्दिसणाउ अगीते ) अगीतार्थे उद्देशना इयमत्र भावना । ये मध्यमाः स्थविरा वा त्रिवर्षपर्यायोत्तीर्णा अप्यगीतार्थास्ते नियमात् य स्थापितो गणधरः तस्य शिष्या वयद्व्यन्ते । इति गीतार्थेषु न स्थविरे मध्यमे च पूर्वाचार्यः पूर्वाचार्यसंग्रहः । ये मध्यमा स्थविराः गीतार्थाः पूर्वाचार्यदिशं धारयन्तीति ।

नवडहरतरुणगस्सा, विहीए विसुंभियम्मि आयरिए ।
पच्छन्ने अभिसे तो, नियमा पुण संगहे ठाइ ॥

नवश्च डहरकश्च तरुणश्च समाहारो द्वन्द्व । तस्य पुनः संग्रहार्थमाचार्ये विष्कम्भिते विधिना नियमेनान्यस्य गणधरस्याभिषेकः कर्त्तव्यः । अविधिना अभिषेककरणे प्रायश्चित्तं चत्वारो गुरुका मासाः । कोत्र विधिरिति चेदुच्यते । आचार्ये कालगतो न प्रकाश्यते यावदन्यो गणधरो न स्थापितः तथाचाह ( पच्छन्नेत्ति ) आचार्ये कालगते प्रच्छन्ने देशे अभिषेकः करणीयः । एतदेवाह ।

आयरिए कालगए, न पगासेज्ज अट्ठविहे गणहरम्मि ।
राएव अणभिसित्ते, रज्जक्खोभो तहा गच्छे ।

अस्थापिते अन्यस्मिन् गणधरे आचार्ये कालगतो न प्रकाश्यते । अत्र दृष्टान्तो राजा कालं गतस्तावन्न प्रकाश्यते यावदन्यो नाभिषिच्यते । अन्यथा अनभिषिक्ते राज्ञि यथा राज्यक्षोभो भवति । दायादैः परस्परविरोधितः सर्वं राज्यं विलुप्यते इत्यर्थः तथा गच्छेऽप्यन्यस्मिन्नस्थापिते गणधरे यद्याचार्यः कालगतः प्रकाश्यते तदा गच्छक्षोभो भवति तमेवाह ॥

अणाहोवहाणसच्छंद, खित्तेणा सपक्खपरपक्खे ।
लयकपणा य तरुणे-सारणमाणोवमाणे य ॥

केषांचिदनाथा वयं जाता इत्यवधानं भवेत् केषांचित् ( सच्छन्दत्ति ) स्वच्छन्दचरिता अपरे केचित् क्षिप्ता क्षिप्तचित्ता भवेयु । तथा स्तेनाः स्वपक्षे परपक्षे चोत्तिष्ठन्ति लताया इव साधूनां कम्पनं तथा तरुणानामाचार्यपिपासयाऽन्यत्र गमनम् । तथाऽसारणा संयमयोगेषु सीदतां पुनः संयमाध्वन्यप्रवर्त्तना । तथा मानापमानं च सांप्रतमेतानेव दोषान् व्याचिख्यासु प्रथमतोऽनाथावधानस्वच्छन्दचारित क्षिप्तचित्तत्वानि व्याख्यानयति ।

जायामो अणाहो त्ति, अण्णहि गच्छंति केइ ओहावो ।
सच्छंदा व भमंति, केइ खित्ताउ होज्जाहि ।

बाला वृद्धास्तरुणा वा केचिदगीतार्था आचार्याणां विप्रयोगे जातावयमनाथा इति विचिन्त्य कचिदन्यत्र गच्छन्ति । केचिद्वधावेयु तथा केचिन्मन्दधर्मश्रद्धाका गणादपक्रम्य स्वच्छन्दा भ्रमन्ति । अपरे केचिदाचार्यविप्रयोगतः क्षिप्ता क्षिप्तचित्ता अपगतचित्ता भवेयु । स्वपक्षपरपक्षस्तेनानुलताकम्पनं चाह ।

पासत्थगिहत्थादी, उन्निक्खावेज्ज खुड्डगादीओ ।
लया वा कपमाणा उ, केइ तरुणा उ अच्छंति ॥

स्वपक्षपार्श्वस्थादयः परपक्षे गृहस्थादयः । अत्रापि शब्दात्परतीर्

र्यिकग्रहण क्षुल्लकादीन् चनिष्क्रामयेयुः । किमुक्त भवति पार्श्व-स्थादय· क्षुल्लकादीन् विपरिणमय्य पार्श्वस्थादीन् कुर्यु । अन्य-र्तार्थिका· स्वज्ञातया गृहस्थानिति । इतेव वातेनेव कम्पमाना सयमे परीपहे· केचित्तरुणास्तिष्ठन्ति । इयमत्रभावना । यथा पद्मलताऽन्यस्मिन्नवष्टम्भासतो वातेन कम्पमाना तिष्ठति । एव केचित्तरुणा गच्छेऽपि वर्तमाना· सयमाना· सयमे परापहे ॥ कम्पमानास्तिष्ठन्तीति । तरुणदोषमस्मारणादोषं चाह ॥

आयरियपिवासाए, कालगयं तु सोउ ते वि गच्छेज्जा ।
गच्छेज्ज धम्मसङ्गा, वि सारयितगच्छस्स असती ॥

केचित्तरुणा आचार्यपिपासयाऽनाचार्यमन्तरेण ज्ञानदर्शनचारित्रलाभोऽनुत्तरो भवति तस्मादवश्यमाचार्यसमीपे वर्तितव्य-मित्याचार्यवाञ्छया कालगत श्रुत्वा तेऽप्यन्यत्र गच्छेयु । तथा धर्मश्रद्धा अपि केचित् सारयितुरभावे गच्छान्तर गच्छेयु । माना पमानदोपमाह ।

माणिया वा गुरुणं तु· थेरादीत्थकेचिओ नत्थि ।
माणं तु तओ अन्नो, अवमाणभयाउवगच्छेज्जा ॥

तत्र केचित्स्थविरादय एव चिन्तयेयु· यथा सर्वकालं मानिना वय गुरुभि । अत्र गाथायाम् ।

पगामिज्जा कालगयं, एएयदोसरक्खट्ठा ।
आयम्मि ववत्थविए, ताहे पगासेज्ज कालगयं ॥

यस्मादेते दोपास्तस्मादेतद्दोषरक्षार्थमाचार्यं कालगत न प्रकाशयेत् यदा पुनरन्यो गणधरो व्यवस्थापितो भवति तदाऽन्यस्मिन् व्यवस्थापिते कालगत प्रकाशयेत् आचार्योपाध्यायादिषु मृतेषु निर्ग्रन्थ्या आचार्यादिपदोद्देश ।

(सूत्रम्) निग्गंथीएणं णवमहरतरुणियाए आयरियउवज्झाए पवित्तिणियं विमज्जेज्जा णो से कप्पइ अणायरिय आणुवज्झाइयत्ताए अपवत्तिणिए य होत्तए कप्पइ से पुव्वं आयरियं उद्दिसावित्ता तओ पच्छा उवज्झायं ततो पच्छा पवित्तिणियं से किमाहु भंतेति संगहिया समणी निग्गंथी तं तह आयरियाणं उवज्झाएणं पवित्तिणिएय ॥ १२ ॥

निर्ग्रन्थ्या णमिति पूर्ववत् । नवमहरतरुणाया नवाया महराया-स्तरुणया वा इत्यर्थ । आचार्योपाध्याय समासोऽत्र पूर्ववत् आचार्योपाध्यायमेतत् । प्रवर्तिनी च विष्कम्भुयात् म्रियेत तत (से) तस्या अनाचार्योपाध्यायाया उपलक्षणमेतत् प्रवर्तिनीर-हिताया ना कल्पते भवितु किन्तु पूर्वमाचार्यमुद्दिश्यापि तत पश्चादुपाध्याय तत पश्चात्प्रवर्तिनीकया भवितु कल्पते से कि-माहुरित्यादि । अथ भदन्त ! किं कस्मात्कारणाद् भगवन एव-माहु । सूरिराह त्रिभि सगृहीना· श्रमणी निर्ग्रन्थी सदा भवति । तद्यथा आचार्येणोपाध्यायेन प्रवर्तिन्या च एप सूत्रसक्षेपार्थ । अत्रायमाक्षेप· । किं कारण ननु यस्त्रिभि सगृहीता निर्ग्रन्थी भवति । तत्राचार्योपाध्यायसग्रहे गुणानुपदर्शयति ।

दूरत्थम्मि वि कीरइ, पुरिसे गारवभय सवहुमाणं ।
छंदेय अवहंती, चोएउं जे सुह होइ ॥

दूरस्थेऽपि पुरुषे स्वपरपक्षेण च क्रियते गौरव भय सबहुमानं चेत्यर्थ । इयमत्र भावना यद्यपि नाम आचार्य उपाध्यायो वा सयतीनां दूरे वर्तते तथापि दूरस्थस्यापि पौरुषस्य गौरवेण भयेन वा कोऽपि सयतीनामपन्याय न करोति । किं तु स्वपक्षे परपक्षे च सुबहुमानो जायते । तथा सयती प्रवर्तिन्याच्छन्दे अवर्तमाना चोदयितु जे इति पादपूरणे इति वचनात्सुख भवति । किमुक्त भवति आचार्योपाध्यायभयतो न काचिदपि सयती आचाररक्षितिमाचरति । याऽपि काचिदाचरति । सापि प्रवर्तिन्या सावष्टम्भ शिष्यते । अथ शिष्यमाणापि न प्रतिपद्येत तत· प्रवर्तिनी ब्रूते । आचार्यस्योपाध्यायस्य चाह कथयिष्यामि । तत सा भीता प्रवर्तिन्या उपपाते तिष्ठति । एते आचार्योपाध्यायसग्रहे गुणा· ॥ सप्रति प्रवर्तिनीसग्रहे गुणानाह ।

मिहो कहाभट्ठरविट्टराहिं, कंदप्पकिड्डावउसत्तणेहिं ।
पुव्वावरे ते सुयनिद्दकालं, गिएहाइ तिणं गणिणी सहीणा ।

मिथ· कथापरस्पर भक्तादिविकथाकरणं भट्टरविट्टर नाम तेषु गृहस्थप्रयोजनेषु कुरुकलविण्टलादिषु वा प्रवर्त्तनम् । एताभ्यां कन्दर्पक्रीडा कन्दर्पोद्रेकजननीकायवाक्चेष्टावत्कुसत्व शरीरोपकरणविभूषाकरणम् । एताभ्यां च तथा पूर्वरात्रे अपररात्रे च गणिन्या प्रवर्तिन्यास्वधीना सती सगृह्यते । तथा तत्प्रवर्तिनीसग्रहोऽपि साध्व्या· श्रेयान् । एतदेवविभावयिषुर्लोकेऽपि स्त्रियास्त्रिविध सग्रहमाह ।

जायं पित्तिवसा नारी, दत्ता नारी पतिव्वसा ।
विहवा पुत्तवसा नारी, नत्थि नारी सयंवसा ॥

जाता सती नारी पितृवशा पितुरायत्ता भवति । दत्ता परिणीता सती नारी पतिवशा भर्तृरायत्ता विधवा मृतपतिका नारी पुत्रवशा । नास्ति एव च सति नारी कदाचनापि स्वयवशा । अमुमेवार्थं प्रकारान्तरेणाह ।

जायंपि य रक्खंती, मातापित्तिसासुदेवरादिव्वं ।
पतिनायपुत्तविहवं, गुरुगणिगणिणी य अज्जंपि ॥

जातामपि नारी रक्षतौ मातापितरौ । दत्तां परिणीतां रक्षन्ति श्वश्रूदेवरभर्त्रादय । देवरग्रहण स्वसुरभर्त्रादेरुपलक्षणम् । विधवां पुन पिता भ्राता पुत्रो वा यदि जीवन्ति पित्रादयस्तर्हि सर्वेऽपि रक्षन्ति । एवमार्यिकामपि गुरुराचार्यो गणी उपाध्याय· गणिनी प्रवर्तिनी रक्षति ॥

एगागिणि अपुरिसा, सकवाडघरपरं तु नोपविसे ।
सगणे व परगणे वा, पव्वतिया पीयसंगहिया ॥

यथा भर्त्राद्यधीना नारी एकाकिनी अपुरुषा भर्त्रादिपुरुषरहिता सकपाट परगृह न प्रविशति एव प्रव्रजिता त्रिभिसगृहीता आचार्योपाध्यायप्रवर्तिनीसगृहीता स्वगणे परगणे वा एकाकिनी न गच्छति ।

आयरियउवज्झाया, सययं साहुस्स संगहो दुविहो ।
आयरियउवज्झाया, अज्जाएपवत्तिणी तइयो ॥

सगृह्णातीति सग्रह· । सग्राहक इत्यर्थ साधो सतत सर्वकालं सग्रह सग्राहको द्विविध आचार्योपाध्यायौ । आर्यिकाणां त्रिविधस्तद्यथा ह्याचार्योपाध्यायौ तृतीय प्रवर्त्तिनी । अत्रैवापवादपदमाह

वितियपदे सा थेरी, जुण्णा गीया य जइ खलु भवेज्जा ।
आयरियादी तिण्हवि, असतीए न उ दिसा विज्जति ॥

द्वितीयपदे अपवादपदे सा प्रव्रजिता स्थविरा वयसा वृद्धा जीर्णा चिरकालप्रव्रजिता गीता उत्सर्गापवादसामाचारीकुशला तथा गीतार्था यदि खलु भवेत् तत आचार्यादीनामाचार्योपाध्यायप्र-

वर्तिनीनां तिसृणामप्यभावे न संग्राहकमाचार्यमुपाध्याय प्रवर्तिनीं च उद्देशापयेत् दोषासंभवात् आचार्यादिष्ववधावितेषूद्देशः

(सूत्रम्) भिक्खू गणाओ अवक्कम्म मेहुणधम्मं पडिसेविज्जा तिण्णि संवच्छराणं तस्स तप्पत्तियं णो कप्पइ आयरियत्तं वा उवज्झायं जाव गणावच्छेयत्तं वा उद्दिसित्तए वा धारित्तए वा तिहिं संवच्छरेहिं वीतिकंतेहिं चउत्थगंसि संवच्छरंसि पट्ठियंसि उट्ठियंसि ठियंसि उवसंतस्स पडिविरयस्स निव्विगारस्स एवं से कप्पइ आयरियत्तं वा गणावच्छेयत्तं उद्दिसित्तए वा धारित्तए वा १३ गणावच्छेइयत्तं वा अणिक्खिवित्ता मेहुणधम्मं पडिसेवेज्जा जाव तस्स तप्पत्तियं नो से कप्पइ आयरियत्तं वा जाव गणावच्छेइयत्तं वा उद्दिसित्तए वा धारित्तए वा ।१४। गणावच्छेयए गणावच्छेइयत्तं णिक्खिवित्ता मेहुणधम्मं पडिसेविज्जा तिण्णि संवच्छराणं तस्स तप्पत्तियं णो कप्पइ आयरियत्तं वा जाव उद्दिसित्तए वा धारित्तए वा तिहिं संवच्छरेहिं वितिकंतेहिं चउत्थयंसि संवच्छरंसि पविट्ठंसि पट्ठियंसि उवट्ठियंसि ठियस्स उवसंतस्स उवरयस्स पडिविरयस्स निव्विगारस्स एवं से कप्पइ आयारियत्तं वा गणावच्छेइयत्तं वा उद्दिसित्तए वा धारित्तए वा ।१५। एवं आयरियउवज्झायगावि दो आलावगा । १६ । १७ ।

अथास्य सूत्रस्य कः सम्बन्धस्तत आह ।

नवतरुणे मेहुण्णहं, कोई सेवेज्ज एस संबंधो ।
अच्चंतभक्खणादि–व्वसंगहो एत्थ विसए वा ॥
अप्परियाए वि गणो, दिज्जइ वुत्तंति मा अतिपसंगा ।
सेवियमपुण्णपज्जय, दाहिंति गणं अतो सुत्तं ।

पूर्वसूत्रे नवतरुणादिक साधुरुक्तस्तत्र कोऽपि नवतरुणो मोहोदयवशात् मैथुनं सेवते कृतमैथुनसेवाकस्य च यथाऽऽचार्यत्वादिकमुद्देष्टव्यं तथाऽनेन सूत्रेण प्रतिपाद्यते इत्येष सूत्रसम्बन्धः । अब्रह्मणादेर्हेतोरब्रह्मरक्षणादिनिमित्त संग्रहः । आचार्यादिकोऽनन्तरसूत्रेऽभिहितः अत्रापि स एव संग्रहोऽभिधीयते इति । अथवा पूर्वतरेषु सूत्रेषु अपर्यायेऽपि गणो दीयते इत्युक्त तद्दिवसाचार्यादिपदानुज्ञानात् त एतत् श्रुत्वा मा अतिप्रसङ्गान्मैथुन सेवित्वा अपूर्णे पर्याय गण दास्यन्ति तत एतन्निवारणार्थमिदं सूत्रम् । अनेन सम्बन्धेनायातस्यास्य व्याख्या । भिक्षुर्गणादपक्रम्य मैथुन प्रतिसेवते तस्य त्रीणि सवत्सराणि यावत्तत्प्रत्ययं मैथुनसेवाप्रत्यय न कल्पते आचार्यत्वमुपाध्यायत्व यावत्करणात्प्रवर्तित्वं स्थविरत्वमिति परिग्रहः । गणावच्छेदित्व वा उद्देष्टुमनुज्ञातुमतोऽपि तस्य कल्पते स्वय धारयितु किन्तु त्रिषु सवत्सरेषु व्यतिक्रान्तेषु चतुर्थे सवत्सरे प्रस्थिते प्रवर्तितुमारब्धवति तत्र प्रस्थितत्वमभिमुखीभवनमात्रेऽपि भवति तत आह । अस्थिते अवसमाने स्थितस्य वर्तमानस्य किं विशिष्टस्य सत इत्याह । उपशान्तस्य उपशान्तवेदोदयस्य तत्रोपशान्तत्व प्रवृत्तिनिषेधादवसीयते तत आह उपरतस्य मैथुनप्रवृत्तेः प्रतिनिवृत्तत्व दाक्षिण्यवशादिमात्रतोऽपि भवति । तत आह मैथुनेच्छाप्रातिकूल्येन विरतः तस्य तदापि च प्रतिविरतत्व विकारादर्शनतोऽपि मैथुनाभिलाषहेतुकविकाररहितस्तस्य कल्पते आचार्यत्वं यावत् गणावच्छेदित्वं वा उद्देष्टुं वा धारयितु वा एष सूत्रसंक्षेपार्थः ।

व्यासार्थं तु भाषतो भाष्यकृदाह ।

दुविहो साविक्खियरो, निरवेक्खो उदिण्ण जाऽजयणाए ।
जोगं च अकाऊणं, जाव स वेस्सादि सेवेज्जा ॥

द्विविधो द्विप्रकारः खलु मैथुनप्रतिसेवकस्तद्यथा सापेक्ष इतरश्च इतरो निरपेक्षः तत्र निरपेक्षो य उदीर्णे वेदोदये यो वा याति योग यतनया योगमकृत्वा यदि वा स वेश्यादिकां सेवेत । एष त्रिविधोऽपि निरपेक्षः गुरुतीर्थकरापेक्षारहितत्वात् ॥

सावेक्खो उ उदिण्णे, आपुच्छे गुरुं तु सो जति उवेक्खे ।
ता चउगुरुगा भवति, सीसो व अणापुच्छए गच्छे ॥

यदि पुनरुदीर्णे उदयप्राप्ते मोहे उदिते वेदे इत्यर्थः । गुरुमापृच्छति समापेक्षः सह अपेक्षा यस्यास्ति स समापेक्ष इति व्युत्पत्तेः । तत्रापृच्छायां यदि स गुरुरुपेक्षां कुरुते ततस्तस्य प्रायश्चित्त चतुर्गुरुका भवन्ति । स च साधुरनापृच्छ्य गुरु याति तर्हि तस्यापि प्रायश्चित्तं चतुर्गुरुकाः । सा च पृच्छा त्रीन्वारान्कर्तव्या । तथा चाह ।

अहवा सइ दो वारी, आयरिए पुच्छ अकडजोगी वा ।
गुरुगा तिण्णि उ वारे, तम्हा पुच्छेज्ज आयरिए ॥

अथवा । सकृदेकं वार यद्याचार्यान् पृच्छति तथापि प्रायश्चित्त चतुर्गुरुका अथ द्वौ वारौ पृच्छति न तृतीयमपि वार तदापि चतुर्गुरुका । अथवा वारत्रयपृच्छायामपि कृतायां यदि अकृतयोगी यतनायोगमकृत्वा गच्छति तदानीमपि चतुर्गुरुका । यत एवमेक द्वौ वा वारौ पृच्छायां प्रायश्चित्त तस्मात्त्रीन् वारान् आचार्यान् पृच्छेत् लोकेऽपि तथा दर्शनात्तथा चाह ।

वंधे य घाते य पमारणे य, दंडेसु अन्नेसु य दारुणेसु ।
पमत्तमत्ते पुण चित्तहेउं, लोए वि पुच्छंति उ तिण्णि वारे ॥

राज्ञा वधे आदिष्टे यदि वा घाते प्रहारे अथवा प्रमारे कुमरणमारणे अन्येषु च दण्डेषु हस्तपादच्छेदादिषु दारुणेष्वादिष्टेषु लोके त्रीन् वारान् राजा पृच्छ्यते । किमर्थमित्यत आह प्रमत्तेन व्याक्षिप्तेन यदि वा मद्यपानेन मत्तेनादिष्टं भवेत् प्रशान्तस्य पुनश्चित्तमुपजायते । यथा मा मार्यतामिति वारत्रयमनापृच्छायां स रुष्यते किमिति स मारित इति । एव यथा राजा केनापि त्रीन् वारान् पृच्छ्यते तथाऽऽचार्योऽपि ॥

आलोइयम्मि गुरुणा, तस्स चिकिच्छा विहीए कायव्वा ।
निव्विगितिगयादीया, नायव्वा कमेणिमेणं तु ॥

आलोचिते वारत्रयमापृच्छायां कृतायां गुरुणा आचार्येण तस्योदितवेदस्य साधोर्विधिना चिकित्सा कर्तव्या सा चिकित्सा निर्विकृतिकादिका क्रमेणानेन वक्ष्यमाणेन ज्ञातव्या तमेव क्रममाह ।

निव्वायडिय अवमोदरिय, वेयावच्चे तहेव ठाणे य ।
वाहिंडणे य मंडलि–चोयगवयणं व कप्पट्ठी ॥

प्रथमतो निर्विकृतिक कारयितव्यः तत्र यदि निर्विकृतिक तपः कुर्वतो नोपशाम्यति वेदस्तर्हि निर्विकृतिकेनावमौदर्यं कारयितव्य तथाप्यनुपशाम्यति ततश्चतुर्थादिक कार्यन्ते तथाप्यतिष्ठति वैयावृत्त्य कारणीय वैयावृत्त्येनाप्यतिष्ठति स्थानेन ऊर्ध्वस्थानेन तिष्ठति तथाप्यनुपशाम्यति आहिण्डनं कार्यते । देशकाहिण्डकानां सहायो दीयते इत्यर्थः । तत्र यदि एष परिश्रमेणोपशान्तो भवति वेदस्ततः सुन्दरमथ नोपशाम्यति ततो यदि स बहुश्रुतस्तर्हि स सूत्रमण्डली च दाप्यते । अत्रार्थे चोदकवचन यथा किमर्थं स मण्डलीं दाप्यते । सूरिराह । दृष्टान्तोऽत्र कप्पट्ठीति

कुलवधू । "एगो सेट्ठी तस्स पुत्तो धणोवज्जणनिमित्त देसतरं गतो । भारिया सेट्ठिसमीवे मुक्का । सा य सुहभोयणतंबोलवि-लेवणमंडणपसाहणरया घरवावारमकुणंती अन्नया उम्मत्तिया जाया । दासचेडीए भणइ । पुरिस मग्गेह तीए सेट्ठिणो कहियं तेण चिंतिय । जावज्ज वि न विणस्सति ताव चिंतेमि उवाय सेट्ठिणी भणिया कलहं काऊण तुम गच्छ जेण सा घरवावारे वु-ज्झुत्ति अण्णहा विणिस्सिहिति । एव सामत्थेऊण अन्नया सेट्ठी घरमागओ आमोक्ख मग्गइ सा न देइ तो सेट्ठिणा महतो कल-हो कतो सा पेट्टिऊण निस्सारिया । सा य वहू य कलहसद्दं सोऊण तत्थागया सेट्ठिणा भणिया । भत्ति वहूए तुमे अज्जप्प-भिति सव्वो वावारो कायव्वो सा तहेव करितुमारूढा । तओ तीए वावारवाउलाए भोयणमवि वियालवेलाए कुतो मंडणप-साहणं । दासचेडीए भणिय मग्गितो चिट्ठति पुरिसो कया मेलि-जइ तीए भणियं मरणस्स वि मे अवसरो नत्थि कतो पुरिसस्स" एव । यथा तस्या गृहव्यापारव्यापृततया वेदोपशान्तिरभूत्तथा ऽस्यापि सूत्रमण्डल्यापि व्यापारव्यापृततया कदाचिद्वेदोपशा-न्ति सम्भाव्यते। तत सूत्रमण्डलीमर्थमण्डलीं च दाप्यत इति व्य०।

( अत्राचार्यसाधूनामवधावनविषये वहुवक्तव्य तच्च व्यवहार-भाष्यतोऽवसेय लगन एव किञ्चिदत्रोक्तम ) बहुश्रुतोऽपि पापो न कल्पते आचार्यादितया उद्देष्टुम ।

( सूत्रम् ) वहवे भिक्खुणो बहुस्सुया बब्भागमा बहुसो बहुसु आगाढगाढेसु कारणेसु माइमुसावाइअसुइपापजीवी जाव जीवाए तेसिं तप्पतियं नो कप्पइ जाव उद्दिसित्तए वा धारि-त्तए वा एवं गणावच्छेइएया वि एवं आयरियउवज्झाएया-वि वहवे भिक्खुणो वहवे गणावच्छेइया वहवे आयरियउव-ज्झाया बहुसुआ बब्भागमबहुसो बहुसु आगाढागाढेसु माइ-मुसावाइअसुइपावजीवी जाव जीवाए तेसिं तप्पति णो कप्पइ आयरियत्तं वा उवज्झायत्तं वा पवत्तिं वा थेरत्तं वा गणधरत्तं वा गणावच्छेइयत्तं वा उद्दिसित्तए वा धारि-त्तए वा । इति ववहारस्स तइओ उद्देशो ॥ ३ ॥

सूत्रसप्तकम् अथास्य पूर्वसूत्रै. सह सम्बन्धमाह ॥

वयअतियारे पगते, अयमवि अन्नोऽस्स अइयारो ।
इत्तिरियपमत्तं वा, वुत्तं इदमावकहियं तु ॥

पूर्वसूत्रेषु व्रतस्य मैथुनविरत्यादेरतीचार प्रकृतोऽधिकृतोऽयमपि चान्यस्तस्य व्रतस्यातिचार इति तत्प्रतिपादनार्थमिदं सूत्रसप्तक-म । अथवा पूर्वसूत्रेषु त्रीणि सवत्सराणि यावदाचार्यत्वादीनि न कल्पते इति वचनादित्वरमपात्रमुक्तमिद पुन सूत्रसप्तकेनाभिधी-यमानमपात्र यावत्कथिकं बहुशो यावज्जीवमाचार्यत्वादीनि क-ल्पन्त इति वक्ष्यमाणात ॥

अहवा एगग्गिगारे, उद्देसो तइयओ उ ववहारे ।
केरिसिनो आयरिओ, ठविज्जइ केरिसो नेत्ति ॥

अथवेति मयकस्य प्रकारान्तरोपदर्शने व्यवहारे तृतीयोद्देश-काधिकारे यथा कीदृश आचार्य स्थाप्यते कीदृशो न । तत्र यादृश स्थाप्यो यादृशश्च न स्थाप्यस्तादृश उक्तोऽयमन्यो न स्थाप्य-त इति प्रतिपादनार्थमेव सूत्रसप्तकारम्भ ॥

अहवा दीवगमेयं, जह पभिसिघो अभिक्खमाइणो ।
सागारियसेवि एवं, अभिक्खओहावणकरी य ॥

अथवेति पूर्ववत् । दीपकमेतत्सप्तसूत्रक पूर्वसूत्रेष्वधिकारार्थोद्दी-पनार्थमिद सूत्रसप्तकमधिकमेवार्थमुपदर्शयति । यथानेन सूत्रसप्तके न अभीक्ष्ण मायी बहुशो मायावी यावज्जीवमाचार्यत्वादिषु पदेषु प्रतिषिद्धस्तथा मैथुनसूत्रपञ्चकमध्ये यो भिक्षुसूत्रे निक्षेपणसूत्र-द्वये च सागारिकसेवी मैथुनप्रतिसेवी संवत्सरत्रयातिक्रमे योग्य उक्त. सोऽप्येवमभीक्ष्णं सागारिकसेवी सन् यावज्जीव प्रतिषि-द्धो द्रष्टव्य. । तस्यापि यावज्जीवमाचार्यत्वादीनि न कल्पन्ते इति भावस्तथा अवधावनसूत्रकेऽपि यो भिक्षुसूत्रे निक्षेपणसूत्रद्वये वर्षत्रयातिक्रमेण योग्य उक्तः सोऽपि यदि अभीक्ष्णमवधावन-कारी भवति ततस्तस्यापि यावज्जीवमाचार्यत्वादिपदप्रतिषेधः । अनेन संवन्धेनायातस्यास्य व्याख्या । भिक्षुर्वहु श्रुतं सूत्रं यस्या-सौ वहुश्रुत' । बहुरागमोऽर्थपरिज्ञान यस्य स बह्वागमः । तथा कुलप्रात गणप्रातं यत्सचित्तादिकं व्यवहारेण छेत्तव्य कार्यं वा आगाढगाढ कारण तेषु आगाढागाढेषु बहुप्रभूतेषु बहुशोऽनेक-प्रकारं मायी मायावान् मृषावादी अशुचिराहाद्यर्थमन्यवहारी पापजीवी कोटल्याद्याजीवी तस्य यावज्जीवं तत्प्रत्यय मायित्व-मृषावादित्वादिप्रत्ययं न कल्पते आचार्यत्वं वा यावत् गणावच्छे-दित्व वा उद्देष्टुं वाऽनुज्ञातुं स्वय वा धारयितुम् । एष प्रथमसूत्र-सक्षेपार्थ । एवं गणावच्छकसूत्रमाचार्योपाध्यायसूत्रं च भावनी-यं पाठोऽपि सुप्रतीत. । यथा च त्रीणि सूत्राण्येकत्वेनोक्तानि एवमेव त्रीणि सूत्राणि वहुत्वे वक्तव्यानि । सप्तम वहुभिक्षुवहुग-णावच्छेदिवह्वाचार्यविषय तदपि तथैव । अत्रभाष्यकृदाह ॥

एगत्तवहुत्ताणं, सव्वेसिं तेसिमेगजातीणं ।
सुत्ताणं पिंडेणं, वोच्छं अत्थं समासेणं ॥

एकत्ववहुत्वाभिसंवन्धिनां सर्वेषामेतेषां सूत्राणामेकजातीयाना-मेकप्रकाराणां पिण्डेनाप्युक्तो वैविक्त्येन प्रतीत. । तत्र प्रथम-मेकत्ववहुत्वविषयावाक्षेपपरिहारावाह॥

एगत्तियसुत्तेसुं, भणिएसुं किं वहु पुणोग्गहणं ।
चोयगसुणसू इणमो, जं कारणं मो बहुग्गहणं ॥

एकत्वेनैकवचनेन निर्वृत्तान्यैकत्विकानि तेष्वैकत्विकेषु किं पुन-र्वहुग्रहण बहुत्वविशिष्टसूत्रचतुष्टयोपादान सूरिराह । यत्कारण येन कारणेन मो इति पादपूरणे वहुग्रहणं बहुत्वविशिष्टसूत्रो-पादान तत्कारणमिदं हे चोदक ! शृणु तदेवाह ।

लोगम्मि सयमवज्झ, होइ अदंड सहस्स मा एवं ।
होहिति उत्तरियम्मि वि, उत्ता उ कया बहुकए वि ॥

लोके वहुभिरकृत्ये सेवितेऽप्याय. शतमवध्य सहस्रमदण्ड्यं तत एवमौत्तरिकेऽपि लौकोत्तरिकेऽपि व्यवहारे प्रसङ्गो मा भू-दिति तत्प्रतिषेधार्थं चत्वारि सूत्राणि वहुकेऽपि बहुवचने कृतानि । साम्प्रतमागाढागाढकारणादीनि पदानि व्याचिख्यासुराह ॥

कुलगणसंघप्पत्तं, सचित्तादी उ कारणागाढं ।
छिद्दाणि निरीहित्ता, मायी तेणेव असुतीउ ॥

सचित्तनिमित्तोऽचित्तनिमित्तो वा यो व्यवहार कुलेक्तिसो यथेदं सचित्तादिक विवादास्पदीभूत कुलेन छेत्तव्यमिति तत्कुलप्राप्त-मेव गणप्राप्त सङ्घप्राप्त भावनीयम् । यत्र यत्सचित्तादिक विवा-दास्पदीभूतं व्यवहारेण छेत्तव्यतया कुलप्राप्त वा तत्कारणागाढं कारणम् । तथा कथमहमेन व्यवहारमाहारादुपग्रहे वर्तमान नो-ज्झितं छिद्यामिति बुद्ध्या परेषां छिद्राणि निरीक्ष्यमाणो मायी तेनैव मायित्वेनैव सोऽशुचि. तमेवाशुचिं द्रव्यभावभेदत.प्ररूपयति

दव्वे भावे असुती, भावे आहारवंदणादीहिं ।

कप्पं कुणइ अकप्पं, विविहेहिं य रागदोसेहिं ॥

अशुचिर्द्विधा द्रव्यतो भावतश्च । तत्र योऽशुचिना लिप्तगात्रो यो वा पुरीषमुत्सृज्य पुनौ न निर्लेपयति स द्रव्यतोऽशुचि । भावे भावत पुनरशुचिराहारवस्त्रादिभिर्विविधैर्वा रागद्वेषै कल्प्यमप्यकल्प्य करोति । किमुक्तं भवति । आहारोपधिशय्यादिनिमित्त वन्दनवैयावृत्त्यादिना वा तोषितो यदि वा एष मम स्वगच्छसम्बन्धी स्वकुलसम्बन्धीति रागतोऽथवा न मामेष वन्दते विरूप वा भाषितवानित्यादिद्वेषतोऽस्य श्रुतोऽस्य श्रुतोपदेशेनाभाव्यमनाभाव्यं करोति । अनाभाव्यमप्याभाव्य सोऽव्यवहारी भावतोऽशुचि । एतदेव सुव्यक्तमाह ।

दव्वे भावे असुती, दिव्वम्मी चिट्ठमादिलित्तो उ ।
पाणतिवायादीहि उ, भावम्मि उ होइ असुईओ ॥

अशुचिर्द्विधा द्रव्ये भावे च तत्र द्रव्ये विष्ठादिना लिप्त आदिशब्दान्मूत्रश्लेष्मादिपरिग्रह । भावे प्राणातिपातादिभिर्भवत्यशुचि ॥

तप्पत्तियमेतेसिं, आयरियादी न देंति जा जीवं ।
के पुण भिक्खुइमे य, बहुस्सुयमादिणो हुंति ॥

तत्प्रत्यय मायावित्वादिप्रत्ययं येषां भिक्षुप्रभृतीनां यावज्जीवमाचार्यादीनि भावप्रधानोऽस्य निर्देश । आचार्यत्वादीनि न ददाति । के पुनस्ते आह । भिक्षुक उपलक्षणमेतत् गणावच्छेदकाचार्योपाध्यायाश्च सूत्रोक्ता न केवलमेते किंत्विमे च बहुश्रुतादयो भवन्त्याचार्यादिपदानामनर्हास्तानेव निर्युक्तिकृदाह ॥

अबहुस्सुते य ओमे, पडिसेवओ यतो अप्पचिंते य ।
निरवेक्खपमत्तमाइ–अणरिहे जुंगिए चेव ॥

अबहुश्रुतोऽवम· प्रतिसेवको यत आत्मचिन्तक· निरपेक्ष प्रमत्तो मायी अनर्हो जुङ्गिकश्च । एते सूरित्वादिपदानामनर्हा । सांप्रतमेतानेव व्याचिख्यासुराह ।

अबहुस्सुतो पकप्पो, अणहीओमा तिवरिसरओ ।
निक्कारणे वि भिक्खू, कारणपडिसेवते जो उ ।
अब्भुज्जयअप्पचिंतो, निरवेक्खो बालमादीसु ।
अन्नयरपमायजुत्तो, अमव्वरुची होइ माईओ ।
अवलक्खणा अणरिहा, उज्जावाहादि अ जे जुवत्ता॥
चउरो य जुंगिया खलु, अचंति य भिक्खुणा एते ॥

अबहुश्रुतो नाम येनाचारप्रकल्पो निशीथाध्ययननामक· सूत्रतोऽर्थतश्च नाधीत· अवमो नाम त्रिवर्षपरतो यस्य प्रव्रज्यापर्यायेण त्रीणि वर्षाणि नाद्यापि परिपूर्णानीत्यर्थ· । प्रतिसेवको नाम यो भिक्षु निष्कारणेऽपि कारणाभावेऽपि पञ्चकादीनि प्रायश्चित्तस्थानानि प्रतिसेवते । आत्मचिन्तको योऽभ्युद्यतमरणं वा प्रतिपत्तुं निश्चितो निश्चितवान् निरपेक्षो बालादिषु चिन्तारहित प्रमत्त पञ्चाना प्रमादानामन्यतरेण प्रमादेन युक्त असत्ये मृषाभाषणे असंयमे वा रुचिर्यस्यासावसत्यरुचिर्भवति । मायी किमुक्त भवत्यनीदृश मायाप्रतिसेवनशीलो मायीति अपलक्षण येषामाचार्यलक्षणानि न विद्यन्ते ये च एवमुक्ता अत्यथधावनादय एते सर्वेऽनर्हा· । जुङ्गिका जातिकर्मशरीरभेदतश्चतुर्धा । एतेऽपि प्रागुक्ता एते सर्वेऽपि भिक्षवोऽत्यन्तमाचार्यत्वादिपदानामनर्हा । यदि पुनर्बहुश्रुतो भवेत् अवमोऽपि त्रिवर्षपर्यायोत्तीर्ण प्रतिसेवकोऽप्यप्रतिसेवकोऽग्रतोऽन्ययतनात· प्रतिविरतो निरपेक्ष सोपेक्षाभूतः प्रमत्तोऽप्यप्रमत्ततामुपगतस्तदा भवन्त्येतेऽप्याचार्यत्वादिपदाना योग्या ।

सम्प्रति सतानामपि सूत्राणां सम्भवविषयमाह ।

अहवा जो आगाढं, वंदणआहारमादि संगहितो ।
कप्पं कुणइ अकप्पं, विविहेहिं य रागदोसेहिं ॥
माई कुणइ अकज्जं, को माई जो भवे मुसावाई ।
को पुण मोसावाई, असुई पावसुयजीवी ॥

अथवेति सूत्रव्याख्या प्रकारान्तरोपदर्शने यो वन्दनादिभिः वन्दनवैयावृत्त्यादिना आहारादिभिराहारोपधिशय्यादिभिरागाढमत्यर्थं सगृहीत· सन् विविधैश्च रागद्वेषै प्रागुक्तस्वरूपैः कल्प्यमप्याभाव्यमप्यकल्प्यमनाभाव्यं करोति । सतानामपि सूत्राणां विषय· ( माई कुणइ इत्यादि ) क पुनरेवमकार्यं कल्प्यमप्यनाभाव्यमकल्प्यमप्याभाव्यमित्यर्थ· करोति एव शिष्यस्य प्रश्नमाशङ्क्य सूत्रकृदाह । मायी मायावान् को मायी तत आह यो भवेत् मृषावादी क पुन· मृषावादी तत आह अशुचि· कोऽशुचि· सूत्रकृदाह पापजीवी एतस्य व्याख्यान पापश्रुतोपजीवी कोट्टादिशास्त्रोपजीवीत्यर्थ· ।

किह पुण कज्जमकज्जं, करेज्ज आहारमादिसंगहितो ।
जह कम्मिवि नगरम्मा उप्पण्णं संघकज्जं तु ।

कथ पुनराहारादिसगृहीत सन् कार्यमुपलक्षणमेतत् आचार्यमपि कार्यं करोति । अत्र सूरिर्निदर्शनमाह । यथा कस्मिंश्चिन्नगरे किमपि सङ्घकार्यमुत्पन्न सचित्तादिनिमित्त वास्तव्यसङ्घस्य व्यवहारो जात इत्यर्थः ॥ स च वास्तव्यसङ्घेन छेत्तु न शक्यते ॥ ( अन्यदत्रत्य ववहारशब्दे ) एतद्गुणविप्रमुक्ते पुनर्व्यवहरति सुमहती आशातना अतस्तोपश्च तथा चाह–

आगाढमुसावादी,वितियतइए उ लोवतिवएउ ।
माई य पावजीवी, असुइकिन्ने कणगदंडे ॥

आगाढे कुलकार्ये सघकार्ये वा आभाव्यस्य वाऽनाभाव्यस्य वा ज्ञानतया रागद्वेषाभ्या वा भणनात् । मृषा वदतीत्येव शील· आगाढे मृषावादी द्वितीयतृतीये मृषावादादत्तादानविरतिरूपे व्रते लोपयति । तत्र द्वितीयव्रतलोपो मृषावादभणनात् तृतीयव्रतलोपा ऽनाभाव्य ग्राहयतोऽनुमतिदोषभावात । तुशब्दात् शेषाण्यपि व्रतानि लोपयति । एकव्रतलोपे सर्वव्रतलोप इति वचनात् । मायी सूत्रमुल्लङ्घ्य रागेोत्तैर्व्यवहारकरणात् । पापजीवी दुर्व्यवहारादिकरणात् । परदत्तापहाराण्युपजीवनात् । अत एवाशुचिर्मृषावादित्वादिदोषदुष्टत्वात् । अशुचित्वादेव यथा कनकदण्ड सङ्कलित· स्प्रष्टुं न कल्पते एवमेषोऽपि न कल्पते यावज्जीवमाचार्यत्वादिषु पदेषु स्थापयितुमिति ॥ व्य०३ उ० ।

( गणान्तरे उद्देशना उद्देसणा शब्दे )

न व्यतिकृष्टदिशमुद्दिशेत् ॥

( सूत्रम् ) णो कप्पति णिग्गंथीणं वितिकिट्ठं दिसं वा उद्दिसित्तए वा धारित्तए वा ए कप्पति णिग्गंथाणं वितिगिट्ठियं दिसं वा अदिसं वा उद्दिसित्तए वा धारित्तए वा । ए ।

न कल्पते निर्ग्रन्थीनां व्यतिकृष्टामतिशयेन क्षेत्रतो भावतश्च विकृतां दिशामनुदिशं वा उद्देष्टुमनुज्ञातु नापि स्वय धारयितु वा इत्येष सूत्रद्वयाक्षरार्थ ।

सम्प्रति भाष्यम् ।

दुविहं पि य वितिगिट्ठं, णिग्गंथीणुद्दिसंति चउगुरुगा।
आणाइणो य दोसा, दिट्ठंतो होइ कोसलए ॥

द्विविधामपि विकृष्टां क्षेत्रविकृष्टां भावविकृष्टां चेत्यर्थ· । निर्ग्र-

र्यीनां दिशमुद्दिशति । अस्मिन्प्रायश्चित्त चत्वारो गुरुकाः आज्ञा दयश्च दोषास्तत्र विकृष्टां दिशमुद्दिशतो ये दोषास्तत्र को भवति दृष्टान्तस्तमेव ज्ञापयति ।

उवसामिया जघन्नेण, कोसलेणं गते य मातम्मि ।
तं चेव दिसंती य, निक्खंता अन्नगच्छम्मि ॥
वारिज्जंती वि गया, पडिवन्ना सा य तेण पावेणं ।
जिणवयणबाहिरेणं, कोसलएणं अकुलएणं ॥

एक कोशलकः कोशलदेशोत्पन्न इत्यर्थः । तेनान्यदेशं गतेन वर्तमानेन सदनुष्ठानपरायणेन कापि श्राविका उपशामिता स च कोशलकस्तं देशं गतः तस्मिंश्च गते सा श्राविका अन्यस्मिन् गच्छे तत्रागते तस्य समीपे निष्क्रमितुमुपस्थिता यथा मां निष्कामयत परं मम स एव कोशलकः आचार्यः एवं सा तमेव व्यपदिशन्ती तैर्दीक्षिता । सा च दीक्षाप्रतिपत्त्यनन्तरं वार्यमाणाऽपि कोशलकसमीपे गता । सा च पापेन जिनवचनबाह्येनाकुलजेन कोशलेन प्रतिपन्ना । एष दोषः क्षेत्रविकृष्टां दिशमुद्दिशतः।

अत्र पर आह ॥

कोसलएहि कारण, गहणं बहुदोसलाउ कोसलगो ।
तम्हा दोसुक्करया, गहणं इह कोसले कारणमओ ॥

कोशलकस्य ग्रहणं कृतम् । सूरिराह यस्मात्कोशलको देशः स्वभावात् बहून् दोषान् लाति आदत्ते अतिबहुदोषलो बहुदोषवान् तस्मात् दोषोत्कटतयाऽत्र कोशलस्य ग्रहणम् अपि च ।

अंधं अकूरमययं, अवियमरहट्ठयं अवोगिल्लं ।
कोसलयं च अपावं, सएसु एक्कं न पेच्छामो ॥

अन्ध्रमन्ध्रदेशोत्पन्नमकूरमतकमकूराभिप्रायमपि च महाराष्ट्रकमवोगिल्लमवाचालं कोशलकं चापापं शतेषु मध्ये एकं न प्रेक्षामहे इति प्रसिद्धिरत कोशलग्रहणम् । पुनरपि प्राह

कोसलए जे दोसा, उद्दिसंतुम्मि किन्न सेमाणं ।
ते तेसि होज्ज व न वा, इमेहि पुण नोद्दिसे तेवि ॥

ये दोषा कोशलके दिशमुद्दिशन्ति ते किं न शेषाणां दिशमुद्दिशन्ति किं न भवन्ति भवन्त्येवेति भावः ।सूरिराह । ते दोषास्तेषां भवेयुर्वा न वा कोशलके पुनर्नियमाद्भवन्ति देशविशेषजन्मनोऽपि गुणदोषहेतुत्वात्तत कोशलेपादानम् । एते पुनर्वक्ष्यमाणास्तानपि शेषदेशोत्पन्नान् क्षेत्रविकृष्टान्नोद्दिशेत् । अन्यच्च ।

अन्नं उद्दिसिऊणं, निक्खंता वा सरागधम्मम्मि ।
अण्णोन्नम्मि मतं न तु, अगाणं पि संभवति ॥

वा शब्दो दूषणान्तरसमुच्चये अथवाऽभावविनि सरागधर्मे अन्यमाचार्यमुद्दिश्य निष्क्रान्ता परमन्योन्यस्मिन् परस्परस्मिन् यन्ममत्वं तत् व्यग्राणामपि व्यग्रचित्तानामपि न तु नैव भवति किंत्वेकचित्तानामुपजायते सा चैकचित्तता अत्र नास्ति तथा चाह ।

सुचिरं पि सारिया ग-च्छइत्ति ममयाउ गच्छस्स ।
सोयंतचोयणासु य, परिजूयामित्ति मन्नेज्जा ॥

सुचिरमपि कालं सारिता दीक्षिता सती गमिष्यतीति मन्यमानस्य गच्छस्य न तस्या विषये ममता ममत्वं मायातिसीदन्त्या संयमयोगेषु शिथिलीभवन्त्या याश्चोदना शिक्षास्तासु दीयमानासु साऽन्यत्र गन्तुमना परिभूताऽस्मीति मन्यते ततस्तस्या अपि न गच्छस्योपरि ममता । किं च

गमणुस्सुएण चित्तेण, सिक्खातोवि न गेएहइ ।
वारिज्जंती वि गच्छिज्जा, पंथदोसे इमे लभे ॥

गमनोत्सुकेन चित्ते शिक्षा अपि नानाप्रकारा ग्रहणशिक्षा आसेवनाशिक्षाश्च न गृह्णाति । तथा वार्यमाणाऽपि तस्य क्षेत्रविकृष्टस्याम्यस्याचार्यस्य समीपं गच्छेत् तत्र च पथि दोषानिमान् वक्ष्यमाणान् लभते । अत्र यदुक्तं प्राक् एतैर्वक्ष्यमाणैर्दोषैस्तानपि नोद्दिशेदिति तद्व्याख्यानावसरस्तानेव दोषानाह ॥

मिच्छत्तसोहिसागा-रियादिपासंडतेणसच्छंदा ।
खेत्तविगिट्ठे दोसा, अमंगलं भावविगिट्ठम्मि ॥

मिथ्यात्वं मिथ्यात्वगमनं शोधेरभावस्तथा सागारके अगारसहिते आदिशब्दादनागारे एकाकिन्या उपाश्रये दोषाः । तथा पाषण्डैर्विपरिणामनं स्तेनैरपहारस्तथा स्वच्छन्दा स्यात् न गच्छाधीना तथा च सति भूयांसो दोषाः । एते क्षेत्रविकृष्टे उद्दिश्यमाने दोषा । भावविकृष्टे उद्दिश्यमाने अमङ्गलं तेन संयमजीविताद्भवजीविताद्वा भ्रश्येत्तस्माद्भावविकृष्टोऽपि नोद्देष्टव्यः । एष द्वारगाथासंक्षेपार्थः । सांप्रतमेनामेव विवरीषुः प्रथमतो मिथ्यात्वद्वारं शोधिद्वारं चाह ॥

उवदेसो तासिं अत्थि, जेणेगागी उ हिंडए ।
इति मिच्छं जणो गच्छे, कत्थमाहिं च कुव्वउ ॥

उपदेशः तासामेकाकिनीनां नास्ति येन स तादृशः स्त्रीजन एकाकी हिंडते । तत इति अस्मात्कारणादुपदेशाभावलक्षणाज्जनः स्त्रीजनो मिथ्यात्वं गच्छेत् । गतं मिथ्यात्वद्वारम् ॥ शोधिद्वारमाह । क्षेत्रप्रायश्चित्तमापन्ना सती कुत्र शोधिं कुर्यात् । नैव कुत्रापीति भावः एकाकिनीत्वान्न च प्रायश्चित्तस्थानमप्रायश्चित्तस्थानं वा सा जानाति तत इतोऽपि शोध्यभावः । सागारिकादिद्वारं पाषण्डद्वारमाह ।

सागारमसागारे, एकाए वसुए भवे दोसा ।
चरिगादि विपरिणामण-सपक्खपरपक्खनिएहादी ॥

सागारे आगारसहिते असागारे आगाररहिते उपाश्रये एकस्या एकाकिन्या दोषा भवन्ति । तत्र सागारे दीपस्पर्शनादयो दोषाः । अनागारे कुलटाजारादिप्रवेशनम् । गतं सागारिकादिद्वारम् । पाषण्डद्वारमाह ( चरगादित्यादि ) स्वपक्षे परपक्षे च विपरिणमनं तत्र स्वपक्षे निह्नवादिभिरादिशब्दात्पार्श्वस्थादिपरिग्रहः । परपक्षे चरकादिभिः । स्तेनद्वारं स्वच्छन्दद्वारं चाह ।

तेणेहि वा विहिज्जइ, सच्छंदुट्ठाणगमणमादीया ।
दोसा भवंति एए, किंच न पाविज्ज सच्छंदा ॥

स्तेनैर्वा द्रव्यापहारिभिर्वा सार्धं गच्छन्ती ह्रियते तथा स्वच्छन्दमुत्थानं स्वच्छन्दगमनमित्यादयश्चैते दोषा एकाकिन्या भवन्ति । किं वा स्वच्छन्दा सती सा किं न प्राप्नुयात्सर्वदुःखस्थानमाप्नुयादित्यर्थः ।संप्रति भावविकृष्टे दोषानाह ।

गोरवभयसमीकरा, अविदूरत्थे वि होइ जीवंते ।
को दाणिसमुग्घातस्स, कुणइ न य तेण जं किंचं ॥

अपि दूरस्थेऽपि जीवति सति तद्विषया गौरवभयसमीकरा भवन्ति भूयस्तन्मिलनादिप्रत्याशासंभवात् । इदानीं पुनस्तस्य समुद्घातस्य को गौरवं भयं समीकारं वा करोति नैव कश्चित् यत् यस्मात् न च नैव तेन सर्वप्रयोजनातीतत्वात् ॥

कोसलवज्जा नत्थि य, दोसा सविसेसभवविगिट्ठम्मि ।
दुविहं पी विनिगिट्ठं, तम्हा उ न उद्दिसेज्जाहि ॥

एवं दोषा ये मिथ्यात्वगमनादयः क्षेत्रविकृष्टेऽभिहितास्त एव

सविशेषा भावविकृष्टेऽपि ज्ञातव्या' केवलं कोशलवर्जाः कोशलदोषा हि भावविकृष्टे न भवन्ति मृतत्वेनासंभवात्तस्मात् द्विविधमपि व्यतिकृष्टं क्षेत्रविकृष्टं भावविकृष्टं च नोद्दिशेत् ।

अत्रैवापवादपदमाह ॥

वितियं तिव्वणुरागा, संबंधी वा न ते य सीयंति ।

इत्तरदिसाउ नयणं, अव्वाहाए य दूरम्मि ॥

द्वितीयपदमपवादमधिकृत्य क्षेत्रविकृष्टमपि उद्दिशेत् । यदि सा धर्मग्राहिएयाचार्ये तीव्रानुरागा भवेत् स चाचार्यस्तस्याः सबन्धिस्वजनो न च ते आचार्याः संयमयोगेषु सीदन्ति उद्यतविहारिण इत्यर्थः केवल तस्या इत्वरा दिशोऽनुबन्धनीयाः यावत्स्व स्वक आचार्यो न मिलति तावदयमाचार्या एते उपाध्याया इयं प्रवर्तिनीति ततः स्वाचार्यसमीपे विधिना नयनमव्याघातं च दूरं ते आचार्यास्ततः संदेशं कथयन्ति यथा युष्मदीयधर्मशिष्याऽस्माकं पार्श्वे प्रतिपन्नदीक्षिका वर्तते सा प्रतिग्राह्या ।

भावविगिट्ठे वि एमेव, समुज्जातोत्ति वा न वा ।

तत्थ आसंकिए बंधो, निस्संके उ न वज्झति ॥

भावविकृष्टेऽप्येवमेव द्वितीयपदमवगन्तव्यमिति भावः कथमित्याह । किं समुद्घातकालागतः किं वा नेत्येवं तस्मिन् भावविकृष्टे तस्या बन्धः क्रियते निःशङ्किते तु भावविकृष्टे सा न बध्यते ।

अत्रैव प्रकारान्तरमाह ।

अहवा तस्स सीसं तु, जति सा उ समुद्दिसे ।

विकप्पट्ठे तहिं खेत्ते, जयणा जा उ सा भवे ॥

अथवा यदि सा तस्य शिष्य समुद्दिशति कथयति मम ते एवाचार्या अहं तु तच्छिष्यसमीपे स्थास्यामीति तदा भावविकृष्टेऽपि तस्या बन्धः क्रियते तत्र या विकृष्टे क्षेत्रे यतनोक्ता सात्रापि भवति ज्ञातव्या तदेव निर्ग्रन्थीसूत्रं व्याख्यातमधुना कप्पइत्ति द्वारम्

निग्गंथाण वि विगिट्ठो, दोसा ते चेव मोत्तुकोसलयं ।

सुत्तनिवातो निगए, संविग्गे य सेसइत्तरिए ॥

निर्ग्रन्थानामपि विकृष्टे उद्दिश्यमाने य एव निर्ग्रन्थीनां दोषा मिथ्यात्वादय उक्तास्त एव कोशलकमेकं दोषं मुक्त्वा शेषाः सर्वे निरवशेषा द्रष्टव्याः । यद्येव तर्हि सूत्रमनर्थकमविषयत्वादत आह "सूत्रनिपातोऽभिगते संविग्ने च शेष इत्वरिकः" इयमत्र भावना । अभिगतो ज्ञाततत्वः श्राद्धः पुराणो वा संविग्नः स्वयं योऽपि तस्य धर्मदेशक आचार्यः सोऽपि संविग्नस्तस्मिन् सूत्रनिपातो यस्तु शेषः स्वयं न सम्यक् ज्ञाततत्वस्तस्य पथि व्रजतो मिथ्यात्वादयो दोषास्तस्य दीक्षामाधाय इत्वरिको दिग्बन्धः क्रियते पुनः प्रेष्यते एतदेव व्याचिख्यासुराह ।

सड्ढो पुराणो वा जइ, लिंगं घेत्तूण वयति अन्नत्थ ।

तस्स वि विगिट्ठबंधो, जा इच्छइ ताव इत्तरिको ॥

श्राद्धः श्रावकः पुराणः पश्चात्कृतो वाशब्दो विकल्पने अधिगततत्व स्वयं संविग्नो योऽपि तस्य धर्मग्राहक आचार्यः सोऽपि संविग्नः स इत्थंभूतो यदि लिङ्गं गृहीत्वाऽन्यत्र क्षेत्रविकृष्टमूलाचार्यसमीपे व्रजति तस्य विकृष्टो दिग्बन्धः कर्तव्यो यावत्स तत्र तिष्ठति तावत्तस्यात्मीय इत्वरिको दिग्बन्धः ॥

मिच्छत्तादी दोसा, जे वुत्ता ते उ गच्छतो तस्स ।

एगागिस्स वि न भवे, इति दूरगते वि उद्दिसणा ॥

य एव पूर्वं मिथ्यात्वादयो दोषा उक्तास्तेऽपि तस्यैकाकिनोऽपि गच्छतो न भवन्ति ज्ञाततत्वत्वात्संविग्नत्वाच्च इति हेतोस्तस्य दूरगतेऽपि क्षेत्रविकृष्टेऽपि गुरावुद्देशनं भवति ।

गीयपुराणोवट्ठं, धारंतो सततमुद्दिसंतं तु ।

ओसन्नं उद्दिसइ, पुव्वदिसं वा सयं धरए ।

चोइज्जंतो जो पुण, उज्जमिहिति तं पि नाम बंधंति ।

सो सततं उद्दिसणा, इति जयणा खेत्तविगिट्ठो ॥

गीतो नाम सूत्रार्थनिष्पन्नः । पुराणः पश्चात्कृतश्रमणभावः स निष्क्रमितुकामोऽन्येषामाचार्याणामुपस्थितस्तस्य च पूर्वाचार्योऽवसन्नो विदेशस्थश्च स तं सततमेवाभिधारयति येषां च समीपे निष्क्रामितुमुपस्थितस्तान्प्रति उद्दिशति भणतीत्यर्थः । मम स एवाचार्य इति तं गीतं पुराणमुपस्थितपूर्वमाचार्यमवसन्नमभिधारयन्तं वचसा तमेवोद्दिशन्तं च प्रति यस्य समीपे निष्क्रमितुमुपस्थितः स पूर्वाचार्यो विदेशस्थः योऽन्यस्तस्य संबन्धी संविग्नस्तमुद्दिशति यथा स तवाचार्य इति अथवा स्वयं तेनात्मीयावसन्ना दिक् धारयितव्या न पुनः स तेन तत्रोद्देशयितव्यः तस्यावसन्नत्वाद्यदि वा तमप्यवसन्नमुद्दिशति । केवलमनेन प्रकारेण । केनेत्यत आह ( चोइज्जंतो इत्यादि ) यः पुनर्ज्ञायते चोद्यमानः शिष्यमाण उद्यंस्यति संविग्नो भविष्यति तमपि नाम ते आचार्यो बध्नन्ति यथा ते नवाचार्य इति ॥ ये पुनर्ज्ञायन्ते न चोद्यमानाः संविग्ना भविष्यन्ति तेषु शेषेषु नोद्देशनमिति भजना । गतं क्षेत्रविकृष्टम् ॥

सम्प्रति भावविकृष्टमाह ।

एमेव य कालगते, आसन्ने तं च उद्दिसइ गीयत्थो ।

पुव्वदिसधारणं वा, अगीयमुत्तूण कालगयं ॥

एवमेव अनेनैव प्रकारेण कालगते तस्य मूलाचार्यो यदि स्वयं गीतार्थो भवति तदा तस्य येऽन्ये आसन्ने आचार्यास्ते वा उद्दिशन्ति पूर्वदिशं वा धावति । अथ स स्वयमगीतार्थस्तदा तस्य कालगतं मुक्त्वा शेषोऽन्य उद्दिश्यते इति । व्य० द्वि ७ उ० ।( व्यतिकृष्टकाले स्वाध्यायो नोद्देष्टव्य इति सज्झाय-शब्दे ) उद्देशफलमाह परः किमत्र पुनः कारणं यदुद्देशः क्रियते । अनुद्दिष्टं कस्मान्न पठ्यते तत्राह ।

बहुमाणविणयआउ-त्तताय उद्देसतो गुणा हुंति ।

पढमाए सो उ सव्वो, एत्तो वुच्छं करणकालं ॥

उद्देशे हि क्रियमाणे श्रुतस्य श्रुताधारस्य वाऽध्यापकस्योपरि बहुमानमान्तरः प्रीतिविशेषो भवति विनयश्च प्रयुक्तः स्यादायुक्तता च महती भवति एते उद्देशतो गुणा भवन्ति एष सर्वोऽप्यज्ञाविविषय उद्देशः प्रथमोद्देशः ॥ व्य०७ उ० ॥

( आचार्येऽवसन्ने उद्देशविधिरवधावनं च ओहावण शब्दे वक्ष्यते ) उद्---दिश्---घञ्- अनुसंधाने , अन्वेषणे , अभिलापे, उपदेशे च । आधारे घञ् । उपदेशे, यथोद्देशं संज्ञापरिभाषम् । वाच० ।

उद्देसण-उद्देशन- न० अङ्गादौ पठने ऽधिकारित्वे, स्था० ४ ठा० ३ उ० ।

उद्देसणकप्प-उद्देशनकल्प-पुं० वाचनासामाचार्याम्, ।

एसुवसंपदकप्पो, वोच्छं उद्देसकप्प महुणाओ ।

उद्दिसणवायणाणि य, पाढणता चेव एगट्ठा ॥

सुत्तत्थ तदुभयाइं, पव्वायेत ताव जाव संधाणं ।

बहुपच्चवायपाए, विजढे भजियं तु संधाणं ॥

संधाणमंतगमणं, असिवादी पच्चवादणेगविहा ।

त्रिजढे तो णिक्खित्ते, जोगे रुड्ओ पुणक्खेवा ॥
जदि कारणेण केण वि, णिक्खित्तो तो सउक्खिव पुणो वि।
अहदप्पाणिक्खित्तो, तो णं उक्खिप्पती जुज्जो ॥
उद्दिट्ठम्मि य अंगे, सुयखंधम्मि य तहेव अज्झयणे।
आसन्नपुरिसकरणं, तिट्ठाणे होंति पडिसेहा ॥
अंगादि उ दिट्ठो पुरि-सं दट्टूण अपरिणामादी ।
अत्थति वसट्टरादिहि, अवणीया दीवणाउणं ॥
ताहे णिक्खिप्पत्तीसु, तिट्ठाणे जं तु भणितपडिसेहो ।
तं सुत्तमत्थतदुभए, एतेसिं तिण्ह पडिसेहो ॥ पं० भा० ।

इयाणिं वाइणाकप्पो गाहा ।

सुत्तमत्थतदुभयं, पुण सुत्तत्थ तदुभयं वा ।
ताव वाएइ जाव, संधाणं नाम जणइअट्ठं ॥

किं निमित्त न समाणेइ जण अट्ठ होज्जा । उच्यते वहुपच्चवायताए विजढे जोगे निक्खित्ते भणियं होइ अन्न्या य सवणा य सवणा नाम पुरवि जो न उक्खेवो समाणणंति वुत्त होइ जइ असिवाइ कारणेहिं निक्खित्तो जोगो तो से पुणो वि सारिज्जइ। अह दप्पेण सट्ठयाए वा निक्खवइ ताहे न उक्खिप्पइ पुणो जोगो अहाचार्यो किमर्थं भैक्ष्यं न पर्यटति वैयावृत्त्यं वा न करोति उच्यते वाएपि ते आयरिओ जो हिंडइ उण्हकालं सीयकालंवासासु हिंडंतो वाएण घेप्पइ सो वाएसु चडंतो कवाडाइ उग्घाडेंतो सुत्तत्थतदुभयाण परिहाणी गच्छस्स सीसपडिच्छगाणं गिलाणा रोवणा य उण्हकाले वा पित्ताइरोगो अब्भहुयं वा पाणय पीउ उच्चाइ उ न तरइ समुद्दिसिओ उवगरणं च पडिलेहतो वाएण घेप्पेज्जा तत्थ वि सुत्तत्थाइपरिहाणी गणाओए जहा गोवालो गावीओ तिण्हि वेलाओ पलोएइ पुव्वण्हगब्भण्हावरण्हेसु तहा आयरिओ वि पुव्वण्हे ताव आवासयसुत्तत्थमइलीए गणाझोय करेइ। मज्झण्हे समुद्देसवेलाए अवरण्हे वि पुणो सज्झायवेलाए आवासए वा को आगओ अणागओ वा परीसहपराइओ वा पिव मुच्छाए वा पडिओ तत्थ नाहिंडइ अत्थतो सव्वाणि जाइकायकिलेसो य हिंडतस्स पच्छा किलेसाभिभूओ सुत्तत्थाणि चिंतिऊण देइ न य नासेइ मेढीपमाणं आधार इत्यर्थः। दव्वंमेढीए वच्छा परिग्गहिया सुहं भमति भावमेढीए आयरिया मेढीभूया तम्मि य सव्वे सनियट्टंति जाणंति य अत्थता कास्य हिंडइ गिहिनिसेज्ज वा जो वाहेइ तं जाणति- अयंता अकारए आयरिआणं हिंडताण ज सरीरस्स अकारय अवक्खमाइनीणिय जइ गेण्हइ समुद्दिसइ य सरीरा- पच्छ गिलाणाइ दोसा अपडिसेहेइ अकारिकमिति ताहे लोओ उड्डइ। आयरिओ चेव अजिण्हिओ जपिति निच्छइ किं पव्वइयस्स वालेण सुएण वा खज्जेज्जा गिलाणारोवणासुत्ताइपरिहाणी गच्छविणासो य मरणचिंता गणं न चिंतेइ हिंडंता वाल- वुड्ढे गिलाणसेहपाहुणयाइवालवुड्ढा य न तरति दीहभिक्खायरिय हिंडिओ गिलाणस्स न कोइ वावारिं तओ गेण्हंतओ वा अहवा वारेंति गिलाणस्स गेण्हह पाउग्गं ते य न गेण्हंति अहवा जं वा त वा आणेंति ताहे जइ भणंति किं एरिसं गिलाणस्स नाणीयं ताहे तेहिं भण्णइ केरिसाएहिं तुब्भे सयमेव हिंडता किं लभह दीसता तुब्भे पडिरूवा लाभीए एवं सेहपाहुणागं पि न कोइ गेण्हंतओ संदिसतो वा जइ पुण अच्छतो वालवुड्ढादयो सव्वे चिंतंते गिलाणस्स पाहुणयाणं वा पाउग्ग गेण्हावेंतो इड्ढित्ति इड्ढिए य रायमत्तं दंडभडभोइया वा आगया धम्मं सुणेमो त्ति जाव आयरियं भिक्खं गया ते खिंसिऊण पडिगया एरिसा आयरिया भिक्ख पि से न कोइ आणेइ। अह अत्थंतो तेसिं धम्मं कहंतो ते पव्वयंता वा सावगा वा हुंता अहा भद्दया वा दाणसड्ढा वा हुंता पवयणउवग्गहकरा वा हुंता तेसिं चंदगवेज्झसरिसो आगमो " जहा परेण रन्ना अमच्चेण य धम्मो सुओ ते य अक्खित्ता तेहिं गंतूण अंतेउरं कहियं जहा एरिसा तारिसा य आयरिया पच्छा वियदिवसे महादेवी अमच्चा य समागया धम्मं निसामेमि ति जाव भिक्खं गया पच्छा खिंसिउं पडिगया ताओ वि य पव्वयंताओ वि सावियाओ वा हुंताओ एए दोसा। वाई वा आगओ पुच्छइ किं आयरिया केणइ सिट्ठं भिक्खाए गया पच्छा वाई भणइ किह सो अत्था ण जाणिहिइ जो दिवसं भिक्खं हिंडंतो अत्थइ अहवा परिस्संतो त्ति काऊण नीसडावेइ सो वि उव्वाओ न तरइ उत्तरं दाउं पच्छा पवयणोब्भावणया अह अच्छंदो पच्छा सत्थाणि चिंततो न परवाइहेउणा वा निमित्तेण वा पराइणं तो पच्छा पवयणउब्भावणया कया हुंता गाहा "गणहारिस्सा हारो" गाहा "सिद्धं उद्दिट्ठम्मि " उयंगसुयगअज्झयेण उद्दिट्ठे आसन्नणाम प्राप्य पुरिसं उद्दिसावेउं ताहे अत्थइ अदूरवदूरेहिं अहवा अविणीओ वि गइपडिवद्धो वा अविओ स वि य पाहुडोत्ति एवमादि दोसा पच्छा नाया ताहे निक्खिप्पइ जोगो तिट्ठाणं णागसुत्तत्थतदुभएसु पडिसेहो कारणे वा असिवाइमतिवाएज्जा एस वायणाकप्पो। पं० चू० ॥

उद्देसणकाल–उद्देशनकाल–पुं० उद्देशसमुद्देशानुज्ञानार्थं षड्– वन्दनकदानकायोत्सर्गत्रयसमयप्रसिद्धे क्रियाविशेषे, ध० ३ अधि० ॥ उद्देशनकाला यत्र श्रुतस्कन्धेऽध्ययने च यावन्त्य- ध्ययनानि उद्देशका वा तत्र तावन्त एव उद्देशनकाला उद्देशावसराः श्रुतोपचाररूपा इति। "छव्वीसं दसाकप्पववहाराणं उद्देसणकाला पन्नत्ता "। सम०। ते चैव दशाश्रुतस्कन्धस्य दशस्वध्ययनेषु दशसु च कल्पस्य षट्सु च व्यवहारस्योद्देशकेष्विति तैरविधिना गृहीतैः ध० ३ अधि० । षड्विंशति- रुद्देशनकाला दशाकल्पव्यवहाराणं तत्र गाथा " दस उद्देसणकाला, दसाण छच्चेव हुंति कप्पस्स। दस चेव ववहारस्स, दसाकप्पस्स हुंति छव्वीसं "॥ प्रश्न० सं० ५ द्वा।

खुड्डियाएणं विमाणपविभत्तीए तइए वग्गे चत्तालीसं उद्देसणकाला पन्नत्ता महालियाएणं विमाणपविभत्तीए तइए वग्गे तेयालीसं उद्देसणकाला पन्नत्ता महालियाएणं विमाणपविभत्तीए चउत्थे वग्गे चोयालीसं उद्देसणकाला पन्नत्ता महालियाएणं विमाणपविभत्तीए पंचमे वग्गे पणयालीसं उद्देसणकाला पन्नत्ता नवण्हं बंभचेराणं एकावन्नं उद्देसणकाला पन्नत्ता ॥

( बंभचेराणंति ) आचाराः प्रथमश्रुतस्कन्धाध्ययनानां शस्त्रपरिज्ञादीनाम्। तत्र प्रथमे सप्तोद्देशका इति सप्तैवोद्देशनकाला एवं द्वितीयादिषु क्रमेण षट् चत्वारः षट्सप्तैवमेकपञ्चाशदिति।

अयारस्स णं सचूलियागस्स पंचासीइ उद्देसणकाला पन्नत्ता।

तत्राचारस्य प्रथमाङ्गस्य नवाध्ययनात्मकप्रथमश्रुतस्कन्धरूपस्य ( सचूलियागस्स इति ) द्वितीये हि तस्य श्रुतस्कन्धे पञ्च चूलिकास्तासु च पञ्चमी निशीथाख्येह न गृह्यते भिन्नप्रस्थानरूपत्वात्तस्यास्तदन्याश्चतस्रस्तासु च प्रथमद्वितीये सप्तसप्त्यध्ययनात्मिके तृतीयचतुर्थ्यौ चैकैकाध्ययनात्मिके तदेष

सह चूलिकाभिर्वर्त्तत इति सचूलिकाकस्तस्य पञ्चाशीतिरुद्देशनकाला भवन्तीति प्रत्यध्ययनमुद्देशनकालानामेतावत्संख्यत्वात्तथाहि प्रथमश्रुतस्कन्धे नवस्वध्ययनेषु क्रमेण सप्त षट् चत्वारश्चत्वारः षट् पञ्च अष्ट चत्वारः सप्त चेति द्वितीयश्रुतस्कन्धे तु प्रथमचूलिकायां सप्तस्वध्ययनेषु क्रमेण एकादश त्रयस्त्रयः चतुर्षु द्वौ द्वौ द्वितीयायां सप्तैकसराणि अध्ययनान्येव तृतीयैकाध्ययनात्मिका एव चतुर्थ्यपीति सर्वमीलने पञ्चाशीतिरिति । सम० ॥

उद्देसणा–उद्देसना–स्त्री० वाचनायाम्, पाठने, पं० भा० । अन्याचार्य्योपाध्यायोद्देशना ॥

( सूत्रम् ) भिक्खू य इच्छिज्जा अन्नं आयरियउवज्झायं विहरित्तए नो से कप्पइ अणापुच्छित्ता आयरियं वा जाव गणावच्छेइयं वा आयरियउवज्झायं उद्दिसावित्तए कप्पइ से आपुच्छित्ता आयरिया जाव गणावच्छेइयं वा अन्नं आयरियउवज्झायं उद्दिसावित्तए ते से वियरिज्जा एवं मे कप्पइ अन्नं आयरियउवज्झायं उद्दिसावित्तए नो मे कप्पइ तेसिं कारणं अदावित्ता अन्नं आयरियउवज्झायं उद्दिसावित्तए कप्पइ से तेसिं कारणं दीवित्तं अन्नं आयरियउवज्झायं उद्दिसावित्तए ॥

अस्य व्याख्या प्राग्वत् । नवरमन्यदाचार्योपाध्यायमुद्देशयितुमाचार्यश्चोपाध्यायश्चाचार्योपाध्याय समाहारद्वन्द्व । यद्वा आचार्ययुक्त उपाध्याय आचार्योपाध्याय शाकपार्थिवत्वान्मध्यमपदलोपी समास आचार्योपाध्यायावित्यर्थ तावन्यानुद्देशयितुमात्मन इच्छेत् ततो नो कल्पते अनापृच्छ्याचार्य वा यावद्गणावच्छेदकं वा इत्यादि प्राग्वत् द्रष्टव्यम् तथात्वकल्पने तेषामाचार्यादीना कारणमदापयित्वा अनिवेश्य अन्यमाचार्योपाध्यायमुद्देशयितुमात्मनो गुरुतया व्यवस्थापयितुमेष सूत्रार्थ ।

अथ भाष्यम् ।

सुत्तम्मि कड्डियम्मि, आयरिउवज्झाय उद्दिसा विंति
तिण्हट्ठ उद्दिसिज्जा, णाणे खलु दंसणचरित्ते ।

सूत्रे सूत्रार्थे आकृष्टे उक्तम् । निर्युक्तिविस्तर उच्यते । आचार्योपाध्यायमभिनवमुद्देशयन् त्रयाणामर्थायोद्दिशेत् । ज्ञानार्थं दर्शनार्थं चारित्रार्थं चेति ॥

नाणे महकप्पसुतं, सिरिसत्ते को पि उवगए ।
तस्सट्ठ उद्दिसिज्जा, सा खलु सेच्छा ण जिणआणा ॥

ज्ञाने तावदभिधीयते । केषांचिदाचार्याणा कुले गणे वा महाकल्पश्रुतमस्ति तैश्च गणस्थितिः कृता योऽस्माक शिष्यतया गच्छति तस्यैव महाकल्पश्रुत देय नान्यस्य तत्रोत्सर्गतो नो गन्तव्यम् यद्यन्यत्र नास्ति तदा तस्य महाकल्पश्रुतस्यार्थाय तमप्याचार्यमुद्दिशेत् । उद्दिश्य वाऽधीते तस्मिन् पूर्वाचार्याणामेवान्तिके गच्छेन्न तत्र तिष्ठेत् । कुत इत्याह । सा खलु तेषामाचार्याणां स्वेच्छा न जिनाज्ञा नहि जिनैरिद प्रणित शिष्यतयोपगतस्य श्रुत दातव्यमिति ॥

अथ दर्शनार्थमाह

विज्जामंतनिमित्ते, हेऊ सत्तट्ठदंसणट्ठाए ।
चरित्तट्ठ पुव्वगमो, अहव इमे हुंति आएसा ॥

विद्यामन्त्रनिमित्तार्थं हेतुशास्त्राणां च गोविन्दनिर्युक्तिप्रभृतीनामर्थाय यद्यन्य आचार्य उद्दिश्यते तद्दर्शनार्थं गन्तव्य चारित्रार्थं पुनरुद्देशेन पूर्वं प्रागुक्त एव गमो भवति । अथवा तत्रैते आदेशा प्रकारा भवन्ति ।

आयरिओवज्झाए, ओसण्णोहाविते विकारगते ।
ओसण्णे छब्भिहे खलु, वत्तमवत्तस्स मग्गणया ॥

आचार्य उपाध्यायो वा अवसन्नः सजातः अवधावितो वा गृहस्थीभूतः कालं गतो वा यद्यवसन्नस्तत षड्विधो भवेत् पार्श्वस्थोऽवमग्न कुशीलः ससक्तो नित्यवासी यथाच्छन्दश्चेति । यश्च तस्य शिष्य आचार्यपदयोग्य स व्यक्तोऽव्यक्तो वा भवेत् तत्रेय मार्गणा ।

वत्ते खलु गीयत्थे, अव्वत्ते वयए अहव अगीयत्थे ।
वत्तिच्छसारपेच्छण, अहवा सण्णे सयं गमणं ॥

अत्र चत्वारो भङ्गा । तत्र वयसा व्यक्त षोडशवार्षिक श्रुतेन च व्यक्तो गीतार्थ । एष प्रथमो भङ्गः । वयसा व्यक्त श्रुतेनाव्यक्त एषोऽर्थतो द्वितीयः । श्रुतेन व्यक्त वयसा अव्यक्त । अयमर्थतस्तृतीयः अव्वत्ते वयण अहव अगीयत्थत्ति चतुर्थो भङ्गो गृहीत स चार्य वयसाऽप्यव्यक्तः श्रुतेन चाव्यक्त इति ४ तत्र प्रथमभङ्गे द्विधाऽपि व्यक्तस्य इच्छा अन्यमाचार्यमुद्दिशति तावत् तमासन्नीभूतमाचार्य सारयितु साधुसघाटक प्रेषयति । अथासन्न स आचार्यस्ततः स्वयमेव गत्वा नोदयति नोदनायां चैव कालपरिमाणम् ॥

एगाहपणगपक्खे, चाउम्मासोवरिस जत्थ वा मिलइ ।
चोयइ चोयवेइ वा, णेच्छंते सयं तु वच्चाओ ॥

एकाह नाम दिने गच्छो नोदयति एकान्तरित वा तथा पञ्चाहं पञ्चानां दिवसानामन्ते एवं पक्षे चातुर्मासे वर्षान्ते वा यत्र वा समवसरणादौ मिलति तत्र स्वयमेव नोदयति अपरैर्वा स्वगच्छीयैर्नोदनं कारयति यदि सर्वथापि नेच्छति ततः स्वयमेव तं गणं वर्त्तापयति ।

उद्दिसइ व अन्नदिसं, पयावणट्ठा न संगहट्ठाए ।
जइ णाम गारवेण वि, सुपज्जाणेच्छे सयं वाइ ॥

अथवा स उभयव्यक्तोऽन्यां दिशमपरमाचार्यमुद्दिशति । तच्च तस्यावसन्नाचार्यस्य प्रतापनार्थं न पुनर्गणस्य सग्रहोपग्रहनिमित्त स च तत्र गत्वा भणति । अहमन्यमाचार्यमुद्दिशामि यदि यूयमितस्थानान्नोपरमध्वे तत स चिन्तयेत् अहो अमी मयि जीवत्यप्यपरमाचार्यं प्रतिपद्यन्ते मुञ्चामि पार्श्वस्थतां यदि नामैवं गौरवेणापि पार्श्वस्थत्व मुञ्चे तत सुन्दरं अथ सर्वथा नेच्छत्युपरन्तुं तत स्वयमेव गच्छाधिपत्ये तिष्ठति गत प्रथमो भङ्ग । अथ द्वितीयपदमाह ॥

सुअवत्तो वयावत्तो, जणइ गणं तेन सारितुं सत्ता ।
सारेहिं सगणमेवं, अण्णं च वयाम आयरिअं ॥

य श्रुतेन व्यक्तो वयसा पुनरव्यक्त स स्वयं गच्छं वर्त्तापयितुमसमर्थ ॥ तत आचार्य भणति । अहमप्राप्तवयास्तेन त्वदीय गणं सारयितु न शक्तः । अत सारय स्वगणमेवं अहं पुनरन्यस्य शिष्यो भविष्यामि अथवा अहमेते चान्यमाचार्य व्रजाम उद्दिशामीत्यर्थ ॥

आयरियउवज्झायं, निच्छंते अप्पणा य असमत्थे ।
तिगसंवच्छरपक्खं, कुलगणसंघे दिसाबंधो ॥

एवं भणित आचार्य उपाध्यायो वा यदि नेच्छति संयमे स्थातु सचात्मना गणं वर्त्तापयितुमसमर्थ । तत कुले सत्कमाचार्यमुपाध्यायं वा उद्दिशति । तत्र त्रीणि वर्षाणि तिष्ठति नमाचार्यं सारयति तत त्रयाणां परम स चिन्तादिक कुलाचार्यो

हरतीति कृत्वा गणाचार्यमुद्दिशति तत्र संवत्सरं स्थित्वा संघाचार्यस्य दिग्बन्धं प्रतिपद्य वर्षार्द्धे षण्मासान् तत्र तिष्ठति । कुलगणाभ्यां संघं सं क्रामन्नाचार्यमिदं भणति ।

सच्चित्तादिहरंता, कुलंपि णेच्छाम जं कुलं तुज्झ ।

वच्चामो अन्नगणं, संघं च तुमं जइ न वयासि ॥

यत् त्वदीयं कुलं त्वदीया आचार्या अस्माकं वर्षत्रयादूर्ध्वं सचित्तादिकं हरन्ति अत कुलमपि नेच्छामो यदि त्विदानीमपि न तिष्ठति ततो वयमन्यगणं संघं वा व्रजामः ॥

एवं पि अच्छीयंते, नाहेत्तअद्धपंचमे वरिसे ।

संजमे व धारइगणं, अनुलोमेणं च सारेइ ॥

एवमर्द्धपञ्चमे वर्षे पूर्वाचार्यो नोदनाभिः प्रतापितोऽपि यदि न तिष्ठति तत एतावता कालेन स श्रुतव्यक्तो वयमपि व्यक्ता जाता इति कृत्वा स्वयमेव गणं धारयति । यत्र च पूर्वाचार्यं पश्यति तत्रानुलोमवचनैस्तथैव सारयति ।

अहव जइ अत्थि थेरा, सत्तापरिकट्टिउण तं गच्छं ।

दुहा वत्तसरिसस्स, तस्स उ गमो मुणेयव्वो ॥

अथवा यदि तस्य श्रुतव्यक्तस्य स्थविरस्तं गच्छं परिवर्तयितुं शक्तस्तत कुलगणसंघेषु नोपतिष्ठेत किन्तु स स्वयं सूत्रार्थौ शिष्याणां ददाति । स्थविरास्तु गच्छं परिवर्त्तयन्ति एवं च द्विधा व्यक्तसादृश्यस्यास्य गमो ज्ञातव्यो भवति गतो द्वितीयभङ्गः ।

अथ तृतीयं भङ्गमाह ।

वत्तवओ उ अगीओ, जइ थेरा तत्थ केइ गीयत्था ।

ते मंतिए पढंतो, चोएइ असइ अन्नत्थ ॥

यो वयसा व्यक्तः परमगीतार्थस्तस्य गच्छे च यदि केऽपि स्थविरा गीतार्थाः सन्ति ततस्तेषां स्थविराणामन्तिके पठन् गच्छमपि परिवर्तयति अवसन्नाचार्यं चान्तरतो नोदयति तेषां गीतार्थस्थविराणामभावे गणं गृहीत्वा अन्यत्रोपसम्पद्यते गतस्तृतीयो भङ्गः । अथ चतुर्थभङ्गमाह ।

जो पुण उभय अवत्ता, वट्टावग असइ सो उद्दिसई ।

सव्वे वि उद्दिसंता, मोत्तूणं उद्दिसंति इमे ॥

य पुनरुभयथा श्रुतेन वयसा वा व्यक्तस्तस्य यदि स्थविराः पाठयितारो विद्यन्ते । अपरे च गच्छवर्त्तापकास्ततोऽसावपि नान्यमुद्दिशति । स्थविराणामभावे स नियमादन्यमुद्दिशति सर्वेऽपि भङ्गचतुष्टयवर्तिनोऽन्यमाचार्यमुद्दिशन्तोऽमून् मुक्त्वा उद्दिशन्ति तद्यथा ।

संविग्गमगीयत्थं, असंविग्गं खलु तहेव गीयत्थं ।

असंविग्गमगीयत्थं, उद्दिसमाणस्स चउगुरुगा ॥

संविग्नमगीतार्थमसंविग्नं गीतार्थमसंविग्नमगीतार्थं चेति त्रीनप्याचार्यत्वेनोद्दिशतश्चतुर्गुरुकाः एतेन यथाक्रमं कालेन तपसा तदुभयेन चतुर्गुरुका कर्तव्या । अथैवं प्रायश्चित्तवृद्धिमाह ॥

सत्तरत्तं तवो होइ, तओ छेओ य हावई ।

छेणच्छिन्नपरीआए, तओ मूलं तओ दुगं ॥

एतानयोग्यानुद्दिशतो वर्तमानस्य प्रथम सप्तरात्रं चतुर्गुरु, द्वितीय सप्तरात्र षड्लघु तृतीय षड्गुरु, चतुर्थे चतुर्गुरुकच्छेदः । पञ्चमं षड्लघुकः षष्ठ षड्गुरुकस्ततः एकदिवसे मूलं द्वितीये अनवस्थाप्यं तृतीये पाराञ्चिकम् । अथवा षड्गुरुकतपोऽनन्तरं प्रथमत एव सप्तरात्र षड्गुरुकच्छेदस्ततो मूलानवस्थाप्यपाराञ्चिकानि भवन्ति । यद्वा तपोऽनन्तरं पञ्चकादिच्छेदः सप्तसप्तदिनानि भवन्ति तेषां प्रायश्चित्तं विज्ञाय संविग्नो गीतार्थः उद्देष्टव्यः । तत्रापि विशेषमाह ।

छट्ठाणविरहियं वा, संविग्गं वा वि वयइ गीयत्थं ।

चउरो य अणुग्घाया, तत्थ वि आणाइणो दोसा ॥

षड्भिः स्थानैर्वक्ष्यमाणैर्विरहितमपि संविग्नं गीतार्थं यदि स दोषकायिकादिसहित न वदति आचार्यत्वेन उद्दिशति तदा चत्वारोऽनुद्घातास्तत्राप्याज्ञादयो दोषाः । इदमेव व्याचष्टे ॥

छट्ठाणाजोणियगो, तत्थ रहियकाइयाइ ता चउरो ।

तं चिय उद्दिसमाणस्स, छट्ठाणगयाण जे दोसा ॥

षट्स्थानानि नाम पार्श्वस्थः अवसन्न कुशीलः संसक्तो यथाच्छन्दो नियतवासी चेति एतै षड्भिर्विरहितो ये कायिकादयः कथिकप्राश्निकनामाकसप्रसारकाख्याश्चत्वारस्तानप्युद्दिशतस्त एव दोषा ये षट्स्थानेषु पार्श्वस्थादिषु गतानां प्रविष्टानां भवन्ति । एष सर्वोऽप्यवसन्ने आचार्ये विधिरुक्तः । अथावधावितकालगतयोर्विधिमाह ॥

ओहावियकालगते, जो अव्वत्तो स उद्दिसावेत्ति ।

अव्वत्ते तिविहे वा, णियमा पुण संगहट्ठाए ॥

अवधाविते कालगते वा गुरौ त्रिविधेऽपि प्रथमभङ्गवर्जे भङ्गत्रयेऽपि योऽव्यक्तः स यदा स्वस्थ भवति तदा अन्यमाचार्यमुद्देशयति अथवा त्रिविधेऽपि कुलसत्के गणसत्के संघसत्के वा चार्योपाध्याये आत्मना उद्देशं कारयति स चाव्यक्तत्वान्नियमात् संग्रहोपग्रहार्थमेवोद्दिशति आचार्यं गृहीभूतमवसन्नं वा यदा पश्यत्तदेत्थं भणति ।

ओहाविय ओसन्ने, भणइ अणाहो वयं विणा तुज्झे ।

कमसासममागारिए, दुप्पडिएगंततो तिण्हं ॥

अवधावितस्यावसन्नस्य वा गुरोः क्रमयोः शीर्षं सागारिके प्रदेशे कृत्वा भणति भगवन् अनाथा वयं युष्मान् विना अत प्रसीद भूय संयमे स्थित्वा समाश्रीकुरु किम्भकल्पानस्मान् । शिष्यः पृच्छति तस्य गृहीभूतस्याचारित्रस्य वा चरणयोः कथं शिरो विधीयते गुरुराह–दुष्प्रतिकर दुःखेन प्रतिकर्तुं शक्यं यतस्त्रयाणां तद्यथा मातापित्रोः स्वामिनो धर्माचार्यस्य च यदुक्तं "तिण्ह दुप्पडिआर सम णाउसो अम्मापिउस्स भट्टिस्स धम्मायरियस्स य इत्यादि" । तत एवमवसन्नेऽवधाविते वा गुरौ विनयो विधीयते । किञ्च ।

जो जेण जम्मि ठाणम्मि, ठाविओ दंसणे व चरणे वा ।

सो तं तओ चुत्तं–म्मिवि, काउं भवे निरणो ॥

यो येनाचार्यादिना यस्मिन् स्थापितस्तद्यथा । दर्शने वा चरणे वा स शिष्यस्तं गुरुं ततो दर्शनाद्वाच्यते तत्रैव दर्शने चरणे वा स शिष्यस्तं गुरुं कृत्वा स्थापयित्वा अनृण ऋणमुक्तो भवति । कृतप्रत्युपकार इत्यर्थः । अथ 'कप्पइ तेसिं कारणं दीविता इत्यादि" सूत्रावयवं व्याचष्टे ।

तिसु वि दीवियकज्जा, विसज्जिता जइ अ तत्थ तं णत्थि ।

णिक्खिवइ वयति दुवे, भिक्खुकिंदाणि निक्खिवत ॥

त्रिष्वपि ज्ञानदर्शनचारित्रेषु व्रजन्तो भिक्षुप्रभृतयो दीपितकार्याः पूर्वोक्तविधिना निवेदितवन्त स्वप्रयोजनेन गुरुणा विसर्जिता गच्छन्ति । यदि च तत्र गच्छे तदवसन्नादिक कारण नास्ति तत उपसम्पद्यते नान्यत्रेति ।

(सूत्रम्) गणावच्छेदइए य इच्छिज्जा अन्नं आयरियउवज्झायं

उद्दिसावित्तए नो से कप्पइ गणावच्छेइयत्तं अनिक्खिवित्ता अन्नं आयरियउवज्झायं उद्दिसावित्तए कप्पइ से गणावच्छेइयत्तं णिक्खिवित्ता अण्णं आयरियउवज्झायं उद्दिसावित्तए नो से कप्पइ अणापुच्छित्ता आयरियं वा जाव गणावच्छेइयं वा ३ अन्नं उद्दिसावित्तए कप्पइ से आपुच्छित्ता जाव उद्दिसावित्तए नो से कप्पति तेसिं कारणं अदीवित्ता अन्नं आयरिओज्झायं उद्दिसावित्तए कप्पइ से तेसिं कारणं दीवित्ता अन्नं जाव उद्दिसावित्तए कप्पइ आयरियउवज्झाए य इच्छेज्जा । अण्णं आयरिओवज्झायं उद्दिसावेत्तए । नो से कप्पइ आयरियउवज्झाए तं अनिक्खिवित्ता अन्नं आयरियउवज्झायं उद्दिसावित्तए कप्पइ आयरियउवज्झाइत्तं निक्खिवित्ता अन्नं आयरियउवज्झायं उद्दिसावित्तए णो से कप्पति अणापुच्छित्ता । आयरियं वा जाव गणावच्छेइयं वा ॥ अण्णं आयरियउवज्झायं उद्दिसावेत्तए कप्पति से आपुच्छित्ता आयरियं वा जाव गणावच्छेइयं वा अण्णं आयरियउवज्झायं उद्दिसावेत्तए य तं से वितरंति एवं से कप्पति एवं नो से कप्पइ जाव विहरित्तए तेसिं कारणं अदीवित्ता अण्णं आयरियउवज्झायं उद्दिसावित्तए कप्पइ तेसिं कारणं दीवित्ता जाव उद्दिसावित्तए ॥

सूत्रद्वयव्याख्या प्राग्वत् अथ भाष्यम् "निक्खिवयवयाति दुवे इत्यादि" पश्चार्द्धं द्वौ गणावच्छेदकौ आचार्य उपाध्यायश्च यथाक्रमं गणावच्छेदित्वमाचार्यत्वमुपाध्यायत्वं निक्षिप्य व्रजन्तु यस्तु भिक्षुः स किमिदानीं निक्षिपतु गणाभावात्र किमपि तस्य निक्षेपणीयमस्ति तस्य निक्षेपणं नोक्तमिति भावः । अथ गणावच्छेदकाचार्ययोर्गणनिक्षेपणविधिमाह ॥

दुण्हट्ठाए दुण्हवि, णिक्खिवणं होइ उज्जमंतेसु ।
सीयंतेसु य सगणं, वच्चइ मा ते विणासिज्जा ॥

द्वयोर्ज्ञानदर्शनयोरर्थाय गतयोर्द्वयोरपि गणावच्छेदकाचार्ययोः स्वगणस्य निक्षेपणं ये उद्यच्छन्तः सविग्ना आचार्यास्तेषु भवति अथ सीदन्तस्ते ततस्तं स्वगणं गृहीत्वा व्रजन्ति न पुनस्तेषामन्तिके निक्षिपन्ति । कुत इत्याह मा ते शिष्यास्तत्र मुक्ताः सन्तो विनश्येयुः । इदमेव भावयति ॥

वत्तम्मि जो गमो खलु, गणवच्छे सो गमो उ आयरिया ।
निक्खिवणे तम्मि चत्ता, जमुद्दिसे तम्मि ते पच्छा ॥

यो गमः उभयव्यक्ते भिक्षावुक्तः स एव गणावच्छेदके आचार्ये च मन्तव्यः । नवरं गणनिक्षेपं कृत्वा तावात्मद्वितीयावात्मतृतीयौ वा वर्तेते ततः स्वगच्छे एव यः सविग्नो गीतार्थः आचार्यादिस्तत्रात्मीयसाधून्निक्षिपति अथासविग्नस्य पार्श्वे निक्षिपति ततस्ते साधवः परित्यक्ता मन्तव्याः तस्मान्न निक्षेपणीयाः किन्तु येन केन प्रकारेणात्मना सह नेतव्यास्ततोऽयमाचार्यः सगणावच्छेदक आचार्यो यमुद्दिशति तस्मिन् तान् आत्मीयसाधून् पश्चान्निक्षिपति । यथाह युष्माकं शिष्यस्तथा इमेऽपि युष्मदीयाः शिष्या इति भावः । इदमेवाह ।

जह अप्पगं तहा ते, ते ण य हप्पंत तेण घेत्तव्वा ।
अपहुप्पंते गिण्हइ, संघाडं मुत्तु सव्वे वा ॥

यथा आत्मानं तथा तानपि साधून्निवेदयति तेनाप्याचार्येण प्रमाणेषु साधुषु ते प्रतीच्छकाचार्यसाधवो न ग्रहीतव्याः तस्यैव तान् प्रत्यर्पयति । अथ वास्तव्याचार्यस्य साधवो न पूर्यन्ते ततः एकसंघाटकं तस्य प्रयच्छति तं मुक्त्वा शेषानात्मना गृह्णाति । अथ वास्तव्याचार्यः सर्वथैवासहायस्ततः सर्वानपि गृह्णाति ॥

सुह असुहस्स वि तेण वि, वेयावच्चाइसव्वकायव्वं ।
तेतेसि अणाए सा, वावारेउं न कप्पंति ॥

तेनापि प्रतीच्छकाचार्यादिना तस्याचार्यस्य सहिष्णोरसहिष्णोर्वा वैयावृत्त्यादिकं सर्वमपि कर्त्तव्यं तेऽपि साधवस्तेषामाचार्याणामादेशानन्तरेण व्यापारयितुं न कल्पन्ते । व्०४ उ ॥

**उद्देसिय ( उ )** –औद्देशिक– न० उद्देशनमुद्देशः यावदर्थिकादिप्रणिधानमित्युद्गमदोषस्तेनोद्गमेन निर्वृत्तं तत्प्रयोजनं चौद्देशिकम् । द्वितीयोद्गमदोषदुष्टे भक्तादौ, तदभेदोपचारात् द्वितीयोद्गमदोषे च । पञ्चा० १३ विव० । पिं० । प्रव० । द० । स्था० ।

अस्य निर्युक्तिर्यथा—

उद्देसिअसाहुमाई, ओमच्चए तिक्खुविअरणं जं च ।
उच्चरियं मीसेउं, तविउं उद्देसिअं तं तु ॥ ४४ ॥

उद्दिश्य वाचा साध्वादीन्निर्ग्रन्थशाक्यादीनवमात्यये दुर्भिक्षापगमे भिक्षावितरणं प्राभृतकादीनां यत उद्दिष्टौद्देशिकम् यच्चोद्धरितमोदनादि मिश्रयित्वा व्यञ्जनादिना वितरणं तत्कृतौद्देशिकं यच्च तप्त्वा गुडादिना मोदकचूरीबन्धवितरणं तत्कर्मौद्देशिकमित्येव चेतसि निधाय सामान्येनोपसंहरत्यौद्देशिकं तदेतत् तुशब्दः स्वगतभेदविशेषणार्थ इति गाथार्थः । पं० व० । साधुयोगे सति यदुद्दिश्य कृत्वा दीयते तदौद्देशिकम् । उत्त० २४ अ० । आधाकर्मिके, कल्प० । यत्पूर्वमेव सरकूचूर्णकादि साधूनुद्दिश्य पुनरपि संततगुडादिना संस्क्रियते तदुद्देशिकम् । आचा० २ श्रु० २ अ० । "उद्देसियं तु कम्मं एत्थ उद्दिस्स कीरए जति" पञ्चा० १७ विव० । अर्थिनः पाखण्डिनः श्रमणान्वोद्दिश्य दुर्भिक्षात्ययादौ यद्भक्तं वितीर्यते तदौद्देशिकमिति स्था०ठा०

तद्भेदा यथा तच्च समासतो द्विधा भवति । द्वैविध्यमाह ॥

ओहेण विभागेण, उहवप्पं तु वासयविभागे ।
उद्दिट्ठकडेकम्मे, एक्केक्के चउक्कओ भेओ ॥

द्विविधमौद्देशिकं तद्यथा ओघेन विभागेन च । तत्र ओघः सामान्यं विभागः पृथक्करणम् । इयं चात्र भावना नादत्तमिह किमपि लभ्यते ततः कतिपयां भिक्षां दद्म इति बुद्ध्या कतिपयाधिकतन्दुलादिप्रक्षेपेण यन्निर्वर्तमशनादि तदोघौद्देशिकम् ओघेन सामान्येन स्वपरपृथग्विभागकरणाभावरूपेणौद्देशिकमोघौद्देशिकमिति व्युत्पत्तेस्तथा विवाहप्रकरणादिषु यदुद्धरितं तत् पृथक् कृत्वा दानाय कल्पितं तद्विभागौद्देशिकं विभागेन स्वसत्ताया उत्तीर्य पृथक्करणेनौद्देशिकं विभागौद्देशिकमिति व्युत्पत्तेः तत्र ओघेनोघविषयमौद्देशिकं तत्स्याप्यनात्र व्याख्येयं किं त्वग्रे व्याख्यास्यम् इति भावः । यत्तु विभागविषयं तद् ( वासत्ति ) सूचनात्सूत्रमिति न्यायाद् द्वादशप्रकारम् । द्वादशप्रकारतामेव सामान्यतः कथयति ( उद्दिट्ठेत्यादि ) प्रथमतस्त्रिधा विभागौद्देशिकम् । तद्यथा उद्दिष्टं कृतं कर्म्म चात्र स्वार्थमेव निष्पन्नमशनादिकं भिक्षाचराणामादानाय पृथक् कल्पितं तदुद्दिष्टम् । यत् पुनरुद्धरितं सत्स्थाल्योदनादिक भिक्षादानाय करम्बादिरूपतया जातं तत्कृतमित्युच्यते । यत्पुनर्विवाहप्रकरणादावुद्धरितं मोदकचूर्णादि तद् भूयोऽपि भिक्षाचराणां दानाय गुरुघृतादिदानादिना मोदकादि कृतं तत्कर्मेत्याभिधीय

ते। एकैकस्मिंश्च उद्दिष्टादिकभेदे चतुष्कको वक्ष्यमाणश्चतु सख्या भेदो भवति। त्रयश्चतुर्भिर्गुणिता द्वादश ततो विभागोद्देशिक द्वादशधा। संप्रत्योघोद्देशिकस्य पूर्वस्थापिततया मुक्तस्य प्रथमतः संभवमाह ॥

जीवामु कहंवि इमे, निययं भिक्खाविना कइदमोहे ।
दिट्ठु नत्थि अदिन्नं सु-ज्जइ अकयं न य फलेइ ॥

इह भिक्षान्तरं केचिद् गृहस्था एवं चिन्तयन्ति । कथमपि महता कष्टेन जीविता स्वयमदुर्भिक्षे ततो नियतं प्रतिदिवसं भिक्षां दद्मो यतो ह निश्चित हन्दीति स्वसंवेधने नास्त्येतत् यदुत भवान्तरे अदत्तमिह जन्मनि भुज्यते नापीह भवे अकृत शुभं कर्म्म परलोके फलति। तस्मात्परलोकाय कतिपयभिक्षाप्रदानेन शुभ कर्मोपार्जनीयमित्यर्थौद्देशिकसंभवः ।

संप्रत्योघौद्देशिकस्वरूप कथयति ॥

मा उ अविसेसियम्मेव, भत्तम्मि तंदुले छुहइ ।
पासंडीए गिहीए व, जो एहि इयस्स भिक्खट्ठा ॥

सा तु गृहनायिका योषित्प्रतिदिवसं यावत्प्रमाणं भक्तं पच्यते तावत्प्रमाण एव भक्ते पक्तुमारभ्यमाणे पाखण्डिनां गृहिणां वा मध्ये यः कोऽपि समागमिष्यति तस्य भिक्षार्थं भिक्षादानार्यमविशेषितमेव । स्वार्थमेतावदेतावच्च भिक्षादानार्थमित्येवं विभागरहितमेव तन्दुलानधिकतरान् प्रक्षिपति एतदप्यौद्देशिकम्। अत्र परस्य पूर्वपक्षमाशङ्क्योत्तरमाह ।

छउमत्थो उद्देसं, कहं वियाणाइ चोइए य भणइ ।
उवउत्तो गुरु एवं, गिहत्थसद्दाइ चेट्ठाए ॥

छद्मस्थः केवली कथमोघौद्देशिकं पूर्वोक्तस्वरूप विजानाति न ह्येव छद्मस्थेन ज्ञातुं शक्यते यथा स्वार्थमारभ्यमाणे पाके भिक्षादानाय कतिपयतन्दुलप्रक्षेप आसीदिति । एवं नोदिते प्रेरणे कृते गुरुर्भणति । एवं वक्ष्यमाणप्रकारेण गृहस्थशब्दादिचेष्टयाउपयुक्तो दत्तावधानो जानातीति । एतदेव भावयति ।

देसा उ ताउ पंच वि, रेहा उ करेइ देव गणंती ।
देहइ उ मा य इत्रो, अवणेहय एत्तिया भिक्खा ॥

यदि नाम भिक्षादानमकल्पत प्रथमत एवाधिकतन्दुलप्रक्षेपः कृतो भवेत्तर्हि प्राय एव गृहस्थानां चेष्टाविशेषा भवेयु यथा दत्तास्ता पञ्चापि भिक्षाः । इयमत्र भावना । कोऽपि गृहे भिक्षार्थं प्रविष्टाय साधवे तत्स्वामी निजभार्यया भिक्षां दापयति सा च साध्वी गृणयति एवेन्य प्रत्युत्तरं ददाति । यथा ता प्रतिदिवसं सङ्कल्पिता पञ्चापि भिक्षा अन्यभिक्षाचरेभ्यो दत्ता इति । यद्वा भिक्षां ददती दत्तभिक्षापरिगणनाय भित्त्यादिषु रेखां करोति । अथवा प्रथमेयं भिक्षा द्वितीयेयं भिक्षेत्येवं गणनाय ददाति यदि वा काचित् कस्या अपि सम्मुखमेव भणति यथा अस्माद्दिष्टभक्तसङ्कल्पितादेर्भक्ष्यादेहि मा इत इति । अथवा प्रथमत साधोविवक्षितगृहे भिक्षार्थं प्रविष्टे काचित् कस्याः समुखमेवमाह अपनय पृथक् कुरु विवक्षितास्थानादेतावतीं भिक्षां भिक्षाचरेभ्यो दानायेति । तत एवमुल्लापश्रवणरेखाकर्षणादिदर्शनेनैव छद्मस्थेनाप्यौद्देशिक ज्ञातु शक्यते ज्ञात्वा च परिह्रियते । ततो न कश्चिद्दोषः अत्र चाय वृद्धसम्प्रदाय । सङ्कल्पितासु दत्तासु पृथगुरूनासु वा शेषमशनादिकं कल्प्यमवसेयमिति इह उपयुक्त सन् सूक्ष्ममपि वा आदार ज्ञातु शक्नोति। नानुपयुक्तस्ततो गोचर्गवषया समान्यत उपयुक्तता प्रतिपादयति ॥

सद्दाइएसु साहू मुच्छं न करेज्ज गोयरगओ य ।
एसणजुत्तो होज्जा, गोणीवच्छो गवत्तव्व ॥

इह साधुर्गोचरीं गतो भिक्षार्थं प्रविष्ट सन् शब्दादिषु शब्दरूपरसादिषु मूर्च्छां न कुर्यात् किंत्वेषणायुक्त उद्गमादिदोषगवेषणाभियुक्तो भवेत् यथा गोवत्सो ( गव्वत्ति ) गोभक्त इव । गोवत्सदृष्टान्तमेव गाथाद्वयेन भावयति ।

ऊसवमंडणवग्गा, न पाणियं वच्छए न वा वारो ।
वणियागमअवरहे, वच्छगरुणं खरंटणया ॥
पंचविह विसयसोक्खे, खणी वहू समहियं गिहं तं तु ।
न गणेइ गोणिवच्छा, मुच्छियगढिओगवत्तम्मि ॥

गुणालयं नाम नगरं तत्र सागरदत्तो नाम श्रेष्ठी तस्य भार्या श्रीमती नाम श्रेष्ठिना च पूर्वतर जीर्णमन्दिरं भङ्क्त्वा प्रधानतरं मन्दिर कारयामासे । तस्य चत्वारस्तनयास्तद्यथा गुणचन्द्रो गुणसेनो गुणधूरो गुणशेखरश्च । एतेषां च तनयानां क्रमेण चतस्र इमा वध्वस्तद्यथा प्रियंङ्गुलतिका प्रियंगुरुचिका प्रियंगुसुन्दरी प्रियंगुसारिका च। कालेन च गच्छता श्रेष्ठिनो भार्या मरणमुपजगाम। तत श्रेष्ठिना प्रियंगुलतिकैव सर्वगृहसंभारे समारोपिता गृहे च सवत्सा गौर्विद्यते तत्र गौर्दिवसे बहिर्गत्वा चरति वत्सस्तु गृह एव बद्धोऽवतिष्ठते । तस्मै चारिं पानीयं च चतस्रोऽपि वध्वो यथायोगं प्रयच्छन्ति । अन्यदा च गुणचन्द्रप्रियंगुलतिकापुत्रस्य गुणसागरस्य विवाहदिवस उपनस्थे । ततस्ताः सर्वा अपि वध्वस्तस्मिन् दिने सविशेषमाभरणविभूषिता स्वपरमण्डनादिकरणव्यापृता अभवन्। ततो वत्सस्तासां विस्मृतिं गतो न काचिदपि तस्मै पानीयादि ढौकितवती । ततो मध्याह्ने श्रेष्ठी यत्र प्रदेशे वत्सो वर्तते तत्र कथमपि समायात वत्सोऽपि च श्रेष्ठिनमायान्तं पश्यन्नारटितुमारब्धवान् ततो ज्ञातं श्रेष्ठिना यथाद्यापि वत्सो बुभुक्षितास्तिष्ठतीति । तत कुपितेन तेन ता सर्वा अपि पुत्रवध्वो निर्भर्त्सयामासिरे ततस्त्वरित प्रियगुलतिका अन्या च यथायोगं चारिं पानीयं च गृहीत्वा वत्साभिमुखं चचाल वत्सश्च नाभि सुरसुन्दरीभिरिव समलंकृतमपि तादृशं गृहं नावलोकते नापि ताः सरागदृष्ट्या परिभावयति। किं तु तामेव चारिं पानीयं वा समानीयमानं सम्यक्परिभावयति । सूत्रं सुगमं नवरं ( पच विहेत्यादि ) पञ्चविधविषयसौख्यस्य खनय इव खनयो या वध्वस्ताभि समधिकमतिशयेन रमणीयतया अधिकतरं तद्गृह न गणयति न दृष्ट्वा परिभावयति नापि ता वधूरेव साधुरपि भिक्षार्थंमटन् रमणीं नावलोकयेत् नापि गीतादिषु चित्तं बध्नीयात्किंतु भिक्षामात्रानयनादानाद्युपयुक्तो भवेत् । तथा च सति जानाति शुद्धमशुद्धं वा भक्तादिकम् तथाचाह ।

गमणागमणुक्खेवे, भासियसोयाइइंदियाउत्तो ।
एसणमणेसणे वा, तह जाणइ तम्मणो समणो ॥

गमनं साधोर्भिक्षादानार्थं भिक्षानयनाय दात्र्या व्रजनम् आगमनं भिक्षां गृहीत्वा साधोरभिमुखं चलनम् । उत्क्षेपो भाजनादीनामूर्द्ध्वमुत्पाटनमुपलक्षणमेतत्तेन निक्षेपपरिग्रहस्ततो गमनादिपदानां समाहारो द्वन्द्वस्तस्मिन् । तथा भाषितेषु जल्पितेषु देहि भिक्षामस्मै साधवे इत्यादिकेषु श्रोत्रादिभिरिन्द्रियैरुपयुक्तस्तथा वत्स इव तन्मनाःस्वयोग्यभक्तपानाय परिभावनमना सन् श्रमण एषणामनेषणां वा सम्यग्जानाति ततो न कश्चिद्दोष । उक्तमोघौद्देशिकम् । सम्प्रति विभागौद्देशिकं विभाणिषु प्रथमतस्तावत्तस्य संभवमाह ॥

महइए संखडीए, उव्वरियं कूरवंजणाईयं ।
पउरं दट्ठूण गिही, भणइ इमं देहपुन्नट्ठा ॥

इह संखडि नाम विवाहादिकप्रकरणं संखण्ड्यन्ते व्यापा-

घन्ते प्राणिनोऽस्यामिति संखडिरिति व्युत्पत्तेस्तस्यां संखड्यां यदुद्धरित कूरव्यञ्जनादिकं शाल्योदनदध्यादिकं प्रचुरं तद्दृष्ट्वा गृही भणति स्वकुटुम्बतृप्तिकारकमेतत् यथा इद देहि पुण्यार्थं भिक्षाचरेभ्यः । तत्र यदा तथैव ददाति तदा तदुद्दिष्टं यदा तु तद्देयं करम्बादिकं करोति तदा तत्कृतं यदा तु मोदकादिचूर्णिप्रायोऽपि गुडपाकदानादिना मोदकादि करोति तदा तत्कर्म । एवं विभागौद्देशिकस्य संभवस्तथा चाह । भाष्यकृत् "तसियम्मेवं संभवइ पुव्वमुद्दिट्ठं समवति" । सम्प्रति तदेव विभागौद्देशिक विना तत्रोद्धरिते प्रचुरे करम्बदावेवं पूर्वोक्तेन प्रकारेण विभागौद्देशिकं पूर्वमुद्दिष्टं संभवति । संप्रति तदेव विभागौद्देशिक विभागतो भेदेन शिष्यगणहितार्थं ग्रन्थकारो भणाति ।

उद्देसियं समुद्दे-सियं च आएसियं समाएसं ।
एवं कडे य कम्मे, एक्केक्के चउव्विहो भेओ ॥

विभागौद्देशिक चतुर्धा । तद्यथा औद्देशिक समुद्देशिकमादेश समादेश च । एव कृते च कर्म्मणि एकैकस्मिन् चतुष्कश्चतु' सख्यो भेदो दृष्ट' सर्वसख्यया द्वादशधा विभागौद्देशिकम् । संप्रत्यौद्देशिकादिक व्याचिख्यासुराह

जावंति य मुद्देसं, पासंडीणं भवे समुद्देसं ।
समणाणं आएसं, निग्गंथाणं समाएसं ॥ २५० ॥

इह यदुद्दिष्ट कृत कर्म वा यावन्त केऽपि भिक्षाचरा समागमिष्यन्ति पाषण्डिनो गृहस्था वा तेभ्य· सर्वेभ्योऽपि दातव्यमिति सङ्कल्पित भवति तदा तदौद्देशिकमुच्यते ॥ पाषण्डिनां देयत्वेन कल्पित समुद्देश श्रमणानामादशर्ननिर्ग्रन्थानां समादेशम् । सम्प्रत्यमीषामेव द्वादशानां भेदानामवान्तरभेदानाह ।

छिन्नमछिन्नं दुविहं, दव्वे खेत्ते य कालभावे य ॥
निप्फाइयानिप्फन्नं, नायव्वं जं जहिं कमइ ॥

उद्दिष्टमौद्देशादिक प्रत्येक द्विधा तद्यथा छिन्नमच्छिन्नं च । छिन्न नियमितमच्छिन्नमनियामितम् पुनरपि छिन्नमच्छिन्न च चतुर्धा तद्यथा द्रव्ये क्षेत्रे काले भावे च । एव यथा उद्दिष्टमौद्देशिक प्रत्येकमष्टधा तथा निष्पादित निष्पन्नमिति निष्पादितेन गृहिणा स्वार्थं कृतेन निष्पन्न यत्करम्बादि मोदकादि वा तन्निष्पादित निष्पन्नमित्युच्यते । ततो यन्निष्पादितं निष्पन्न यत्र कृते कर्म्मणि वा क्रामति घटते यथा यदि करम्बादि तर्हि कृते, अथ मोदकादि तर्हि कर्मणि । तत्प्रत्येकमौद्देशिकादिभेदाभिन्न छिन्नमच्छिन्न चेत्यादिना प्रकारेणाष्टधा ज्ञातव्यम् । सम्प्रत्यमुमेव गाथार्थं व्याचिख्यासु· प्रथमतो द्रव्याद्यच्छिन्न व्याख्याति ॥

भत्तुव्वरितं खलु संखडिए, तद्दिवसमन्नदिवसे वा ।
अंतो वहिं च सव्व, सव्वादिणं देइ अच्छिन्नं ॥

यत्सखड्या भक्तमुद्धरित तदिह प्राय· सखड्या भक्तमुद्धरित प्राप्यते इति सखडिग्रहणमन्यथा त्वन्यत्रापि यथासभव द्रष्टव्यम् । ( तद्दिवसमिति ) व्यत्ययोऽप्यासामिति प्राकृतलक्षणवशात्सप्तम्यर्थे प्रथमा ततोऽयमर्थ· यस्मिन् दिवसे सखडिस्तस्मिन्नेव दिवसे यद्वाऽन्यस्मिन् दिवसे गृहनायको भार्यया दापयाति यथा यदन्तर्गृहस्य यच्च बहिरनेन क्षेत्राच्छिन्नमुक्त तत्सर्वं समस्तमनेन द्रव्याच्छिन्नमुक्त सर्वदिन सकलमपि दिनं यावदुपलक्षणमेतत्तेन कर्मरूप मोदकादि प्रभूतान्यपि दिनानि यावदिति द्रष्टव्यम् । अनेन कालाच्छिन्नमुक्त अच्छिन्नमनवरत तद्देहि । भावाच्छिन्न तु स्वयमभ्यूह्य तथैव यदि तव रोचते यदि वा न रोचते तथाऽप्यवश्य दातव्यमिति ॥ सम्प्रति द्रव्यादिच्छिन्नमाह ।

देह इमं मा सेसं, अंतो वाहिं गयं व एगयरं ।
जाव अमुगत्ति वेला, अमुगं वेलं व आरब्भ ॥

इदं शाल्योदनादिकमुद्धरित देहि मा शेषं कोद्रवकूरादि अनेन द्रव्यच्छिन्नमुक्त तदपि च शाल्योदनादिकमन्तर्व्यवस्थित वा एकतर न शेषम् । अनेन क्षेत्रच्छिन्नमुक्तम् । तथा अमुकस्या वेलाया आरभ्य यावदमुका वेला यथा प्रहारादारभ्य यावत्प्रहरद्वयं तावद्देहि । अनेन कालच्छिन्नमुक्तम् । भावच्छिन्नं तु स्वयमभ्यूह्यम् । तथैव यावत्ते रोचते तावद्देहि मा स्वरुचिमतिक्रम्यापि । संप्रत्युद्दिष्टमधिकृत्य कल्प्याकल्प्यविधिमाह ॥

दव्वाइच्छिन्नं पि हु, जइ भणइ कोवि मा देह ।
नो कप्पइ छिन्नं पि हु, अच्छिन्नकडं परिहरंति ॥

इह यद्द्रव्यक्षेत्रादिभि पृथन्निर्धारित तदतिरिच्य शेषं समस्तमपि कल्पते । तस्य दानार्थं सङ्कल्प्य स्थापितत्वाभावात् । केवल द्रव्यादिच्छिन्नमपि दृष्ट्वा द्रव्यक्षेत्रादिभि पृथग्निर्धारितमपि हु निश्चित यदि गृहस्वामी आरत एव देयस्य वस्तुनो नियतादवधेरर्वागपि भणति । यथा मा इत ऊर्ध्वं कस्मायपि देहीति । यथा प्रहरद्वय यावत् पूर्वं किञ्चिद्दातुं निरोपित ततो दानपरिणामाभावादर्वागेव निषेधति । मा इत ऊर्ध्वं दद्यादिति तच्छिन्नमपि कल्पते । तस्य सम्प्रत्यात्मसत्तापि कृतत्वाद्यत्पुनरच्छिन्नकृतमच्छिन्नमनिर्धारित कृत वर्तते तत्परिहरन्ति अकल्प्यत्वादित्यमेव भगवदाज्ञाविजृम्भणात् । यदा त्वच्छिन्नमपि पश्चाद्दानपरिणामाभावादर्वागेव आत्मार्थीकृत भवति तदा तत्कल्पते ॥

सम्प्रति सम्प्रदानविभागमधिकृत्य कल्पविधिमाह ॥

अमुगाणं ति व्वि दिज्जउ, अमुकाणं न एत्थ उ विभासा ।
जत्थ नईणाविसिट्ठो, निद्देसो तं परिहरंति ॥

अमुकेभ्यो दद्यान्मा अमुकेभ्य इत्येव सम्प्रदानविषये सङ्कल्पे कृते विभाषा द्रष्टव्या कदाचित् कल्पते कदाचिन्न । तत्र यदा कल्पते तदादेय तदाह ( जत्येत्यादि ) यत्र देयवस्तुनि यतीनामप्यविशेषेण निर्देशो भवति यथा ये केचन गृहस्था अगृहस्था वा भिक्षाचरा यदि वा ये केचित्पाषण्डिनो यद्वा ये केचन,श्रमणास्तेभ्यो दातव्यमिति तत्परिहरन्ति । यत्र तु यतीनामेव विशेषेण निर्देशो यथा यतिभ्यो दातव्यमिति तत्परिहरन्त्येव नात्र कश्चित्सदेह इति तत्र पृथग्विशेषेण नोक्तम् । यदि पुनर्गृहस्थेभ्य एव दीयतां यदि वा चरकादिभ्य एव पाषण्डिभ्यो न शेषेभ्यस्तदा कल्पते । अपिच ॥

संदिस्संते जो सुणइ, कप्पए तस्स सेसए ठवणा ।
संकालियसाहणं वा, करेति असुए इ मा थेरा ॥

यत्राद्याप्यौद्देशिक जात वर्तते केवलं तदानीमेवोद्दिश्यमानं वर्तते यथा इद देहि मा शेषमित्यादिश्यमानमर्थिभ्यो दानाय वचनेन सङ्कल्प्यमान य साधु शृणोति तस्य तत्कल्पते तदैव दोषाभावात्तदपि च उद्दिष्टौद्देशिकादि द्रष्टव्य न कृत कर्म च । यत उक्त मूलटीकायाम् अत्र चायं विधि "सदिस्सत जो सुणइ, साहुद्देसुद्देसय । पकुव्व न य कड, कम्माइ त कप्पए" तदैव दोषाभावादिति यस्तु सदिश्यमानं न शृणोति तस्य न कल्पते कुत इत्याह ( ठवणत्ति ) स्थापनादोषात् । स च निर्गत सन्नन्येभ्यः साधुभ्यो निवेदयति । तथा चाह ( सकालितयेत्यादि ) अश्रुते शेषसाधुभिरनाकर्णिते भ्य पूर्वपुरुषाचीर्णा मर्यादा यदुत सकलिया एकसघाटकोऽन्यस्मै कथयति सोऽप्यन्यस्मै इत्येवंरूपया

( साहणति ) कथनं करोति यागाद्यो यदि साधवो बहुप्रमाणा-न्नत एकस्यावस्थानमिति सूचनार्थं स सर्वेभ्यो निवेदयति य-थात्रास्मिन् गृहेऽव्राजिपुरनेषणा वर्तत इति । एवमपि यै. सघा-टकै. कथमपि न ज्ञातं भवति तेषां परिज्ञानायायमाह ।

मा एयं देह इम. पुट्ठे मिट्ठम्मि तं परिहरंति ।
जं दिन्नं तं दिन्नं, संपइ देहि गिएहंति ॥

साधुनिमित्त कुतोऽपि स्थानात् भिक्षामाददती कयाचिन्निषि-ध्यते मा एतद्देहि किंचिद्विविक्षितभाजनस्थ देहि तत एव कृते निषेधिते साधु पृच्छति किमेतन्निषिध्यते किं वा इद दाप्यते इति तत. सा प्राह । इदमेव दानाय कल्पितम् नेदमिति तत एव शिष्टे कथिते साधवस्तत्परिहरन्ति । यदि पुनर्यद्दत्तं तद्दत्तं मा शेषं सम्प्रति दद्यादिति निषिध्यात्मार्थीकृतमौद्देशिकं भवति तदा तत्कल्पते इति कृत्वा गृह्णन्ति तदेवमुक्तमुद्दिष्टौद्देशिकम् । सम्प्रति कृतौद्देशिकस्य सम्भवहेतून् स्वरूपं च प्रतिपादयति ।

रसजायणहेउं वा, मा कुच्छीहिं इमा सुहं च दाहोमि ।
दहिमाई आयत्तं, करेइ कूरं करं एयं ॥
मा कोहिंति अवन्नं, परिकिट्ठम्मि य व दिज्जइ सुहं तु ।
वियरेण फालिएण व, मिट्ठेण समं तु वट्टेति ॥

रसेन दध्यादिना रूक्षमिदं भाजनं तस्मादेतेन दध्यादिना यदु-द्धरित शाल्योदनादि तत् करम्बीकृत्य इदं भाजनं करोमि येना-न्यप्रयोजनमनेन क्रियत इति । रसभाजनहेतोर्यद्वा इदं दध्या-दिना भमिश्रितं कथयिष्यते । न च कथितं पाषण्ड्यादिभ्यो दातु शक्यते । यद्वा दध्यादि सम्मिश्रणेनैव प्रयासेन सुखं दीयत इत्या-दिना कारणजातेन दध्याद्यायत्त दध्यादिसम्मिश्र करोति कर-म्बोदनम् । एतत् कृत ज्ञातव्यम् । तया यदि भिन्न भिन्न मोदका-शोकवर्त्यादिचूर्ण दास्यामि ततो मे पाषण्ड्यादयोऽवर्णश्लाघां करिष्यन्ति यद्वा परिकट्ठितमेकत्र पिण्डीकृत सुखेन दीयते । अन्यथा क्रमेण मोदकाशोकवर्त्यादिचूर्णं स्वस्वस्थानादानीया-नीय दाने भूयान् गमनागमनप्रयासो भवति । अपान्तराले सा चूर्णादिहस्तात् क्रान्त्वा पतति ततो विकटेन मद्येन देशविशेषापे-क्षमेतयद्वा फाणितेन कक्कवादिना यद्वा स्निग्धेन घृतादिना मोदकचूर्णादिसमं वर्तयति पिण्डरूपतया बध्नन्ति । अत्र द्वयोर्गा-थयो पूर्वार्द्धाभ्यां सम्भवहेतव उक्ता उत्तरार्द्धाभ्यां तु स्वरूपम् । सम्प्रति कर्मौद्देशिकस्य सम्भवहेतून् स्वरूप चातिदेशेनाह ।

एमेव य कम्मम्मि वि, उएहवणे तत्थ नवरि नाणत्तं ।
ताविपविलीणएणं. मोयगचुन्नी पुणक्करणं ॥

यथा कृतस्य संभवस्वरूप चोक्तमेव कर्मण्यपि द्रष्टव्य नवरं तत्र कर्मणि उष्णापने उष्णीकरणे नानात्वं विशेषस्तथा हि तापितविलीनेन तापितेन विलीनेन च गुडादिना मोदक-चूर्णानां पुनर्मोदकत्वेन करणं नान्यथा तथा तु वर्यादि भक्तमपि गत्युषित द्वितीयदिने भूय संस्कारापादनेन कर्मतया निष्पा-द्यमानं नाग्निमन्तरेण निष्पाद्यते ततोऽवश्यं कर्मण्युष्णापने नानात्वम् । सम्प्रत्यत्रैव कल्प्याकल्प्यविधिमाह ॥

अमुगंमि पुणो गेहे. दाहमकप्पं तमारओ कप्पं ।
खेत्ते अंतो बाहिं, कालेसु इत्थं परेत्ते वा ॥

भिक्षार्थं प्रविष्ट साधु प्रति यदि गृहस्थो भणति यथान्य-स्मिन गृहे विहृत्य व्यावर्तमानेन त्वया भूयोऽपि मद्गृहे स-मागन्तव्य यतोऽहममुकं मोदकचूर्णादि भूयोऽपि खाद्यगुड-पाकादिदानेन मोदकादि कृत्वा दास्यामि एवमुक्ते तथा कृत्वा चेद्ददाति तर्हि तन्न कल्पते कर्मौद्देशिकत्वात् । आरात् भूयः पाकारम्भादर्वाक् पुन. कल्प्यं दोषाभावात् । तथा क्षेत्रेऽन्तर्व-हिर्वा काले स्वस्तनं परतरदिनभवं वा अकल्प्यमारत. कल्प्यम् । इयमत्र भावना । यदृ गृहस्यान्तर्वहिर्वा मोदकचूर्णादिकं मोद-कादितया उपस्करिष्यामि कालविवक्षायां यदद्य स्व. परतरे वा दिने भूयोऽपि पक्ष्यामि तत्तुभ्य दास्यामीत्युक्ते तथैव चेत् कृत्वा ददाति ततो न कल्पते भूयोऽपि पाकादारतस्त्वसंसक्तं कल्पते ॥ तथा चाह ॥

जं जह व कयं दाहं, तं कप्पइ आरओ तहा अकयं ।
कय पाकमणिट्ठत्त-ट्ठियं पि जावत्ति यं मोत्तुं ॥

यत्सामान्यतो द्रव्यं यद्वा यथा क्षेत्रनिर्धारणेन वा भूयोऽपि कृतं दास्यामीत्युक्ते तथैव कृतं चेद्ददाति तदा न कल्पते तथा अकृतं तु भूयोऽपि पाकादारतः कल्पते । यत्तु निर्द्धारितक्षेत्र-कालव्यतिकरेण पच्यते तन्न दातुं संकल्पितमिति कल्पते यत्तु क्षेत्रे कालनिर्द्धारणमविवक्षिते च सामान्यतो भूयोऽपि प-क्त्वा दास्यामीति संकल्पितं तदन्तर्वहिर्वा स्वस्तने परतरदिने वा न कल्पते । अथ कर्मौद्देशिक कृतपाकमात्मार्थीकृतमपि यावदर्थिकं मुक्त्वा शेषमनिष्ट नानुज्ञात तीर्थकरगणधरैर्याव-दर्थिकं त्वात्मार्थीकृतं कल्पते । अथ आधाकर्मकर्मौद्देशिकयोः परस्परं प्रतिविशेष उच्यते । यत्प्रथमत एव साध्वर्थं निष्पा-दितं तदाधाकर्म यत् पुनाराद्धं सद् भूयोऽपि पाककरणेन संस्क्रियते तत् कर्मौद्देशिकमिति । उक्तमौद्देशिकद्वारम् ॥ पिं० । दर्श० । नि० चू० । प्रव० । पंचा० । ग० । ध० । जीत० । व्य० ।

असणं पाणगं वा वि, खाइमं साइमं तहा ।
जं जाणिज्ज सुणिज्जा वा, दाणट्ठा पगडं इमं ॥ ४७ ॥

अशनं पानक वापि खाद्य स्वाद्यम् अशनमोदनादि पानक आरना-लादि खाद्य लड्डुकादि स्वाद्य हरीतक्यादि यज्जानीयादामन्त्रणा-दिना शृणुयाद्वा अन्यत यथा दानार्थं प्रकृतमिदं दानार्थं प्रकृत नाम साधुवादनिमित्तं यो ददात्यव्यापारपापण्डिभ्यो देशान्त-रादेरागतो वणिक्प्रभृतिरिति सूत्रार्थः ।

तारिसं भत्तपाणं तु, संजयाणं अकप्पियं ।
दिंतियं पडिआइक्खे, न मे कप्पइ तारिसं ॥ ४८ ॥

तादृश भक्तपान दानार्थं प्रवृत्तव्यापार संयतानामकल्पिक यत-श्चैवमत ददतीं प्रत्याचक्षीत न मम कल्पते तादृशमिति सूत्रार्थः ।

असणं पाणगं वावि, खाइमं साइमं तहा ।
जं जाणिज्ज सुणिज्जा वा, पुन्नट्ठा पगडं इमं ॥ ४९ ॥
तं भवे भत्तपाणं तु, संजयाणं अकप्पियं ।
दिंतियं पडिआइक्खे, न मे कप्पइ तारिसं ॥ ५० ॥
असणं पाणगं वावि, खाइमं साइमं तहा ।
जं जाणिज्ज सुणिज्जा वा, वणिमट्ठा पगडं इमं ॥ ५१ ॥
तं भवे भत्तपाणं तु,संजयाण अकप्पियं ।
दिंतियं पडिआइक्खे , न मे कप्पइ तारिसं ॥ ५२ ॥
असणं पाणगं वावि, खाइमं साइमं तहा ।
जं जाणिज्ज सुणिज्जा वा, समणट्ठा पगडं इमं ॥ ५३ ॥
तं भवे भत्तपाणं तु, संजयाण अकप्पियं ।
दिंतियं पडिआइक्खे, न मे कप्पइ तारिसं ॥ ५४ ॥
उद्देसियं कीयगडं, पूइकम्मं च आहडं ।

अज्झोयरपामिच्चं, मीसजायं विवज्जए ॥ ५५ ॥

एवं पुण्यार्थं प्रकृतं नाम साधुवादानङ्गीकरणेन यत्पुण्यार्थं कृतमिति एव वनीपकार्थं वनीपकाः कृपणाः एव श्रमणार्थमिति श्रमणा निर्ग्रन्थाः शाक्यादयः अस्य प्रतिषेधः पूर्ववत् । अत्राह पुण्यार्थप्रकृतपरित्यागे शिष्टकुलेषु वस्तुतो भिक्षाया अग्रहणमेव शिष्टानां पुण्यार्थमेव पाकप्रवृत्तेः। तथाहि न पितृकर्मादिव्यपोहेनात्मार्थमेव क्षुद्रसत्त्ववत्प्रवर्तन्ते शिष्टा इति नैतदेवमभिप्रायापरिज्ञानात् स्वभोग्यातिरिक्तस्य देयस्यैव पुण्यार्थकृतस्य निषेधात् । स्वभृत्यभोग्यस्य पुनरुचितप्रमाणस्येत्वरयदृच्छादेयस्य कुशलप्रणिधानकृतस्याप्यनिषेधादिति एतेनादेयदानाभावः इत्युक्तं देयस्यैव यदृच्छादानोपपत्तेः कदाचिदपि वादेन यदृच्छादनोपपत्तेः तथा व्यवहारदर्शनात् अनीदृशस्यैव प्रतिषेधात् । तदारम्भदोषेण योगात् यदृच्छादाने तु तदभावेऽप्यारम्भप्रवृत्तेर्नासौ तदर्थं इत्यारम्भदोषायोगात् । दृश्यते च कदाचित्सूतकादाविव सर्वेऽन्य एव प्रदानविकला शिष्टाभिमतानामपि पाकप्रवृत्तिरिति विहितानुष्ठानत्वाच्च तथाविधग्रहणान्न दोष इत्यत्र प्रसङ्गेनाकरगमनिकामात्रफलत्वात्प्रयासस्य ॥ दश० ५ अ० । " आहट्ट देसिय तं चेतिय सियातणो सय हुजइ " सूत्र० २ श्रु० १ अ० ।

अत्र प्रायश्चित्तम् ।

"उद्देसिय जावति य उद्देसिए मासलहु दोहिं वि लहु पासरू समुद्देसिए मासलहु कालगुरु समणाए सए मासलहुय तवगुरु निग्गयसमाएसिए मासलहुं दोहिम्मि गुरू जावन्ति कम्मे मासलहुं दोहिं वि लहु पासरूकम्मे मासगुरुं कालगुरु समणकम्मे मासगुरु तवगुरु निग्गथसमादेसकम्मे मासगुरु दोहिं वि गुरु जावति कम्मे चउलहु दोहिं लहु पासरूसमुद्देसकम्मे चउगुरु समणादेसकम्मे चउगुरु तवगुरु निग्गथसमाएसकम्मे चउगुरू दोहिं गुरू " पं० चू० । उद्देशिके चरमत्रिके कर्मोद्देशकर्मसमादेशलक्षणे कर्मणि क्षपण प्रायश्चित्तम् । जीत० । कर्मौद्देशिके विभागौद्देशिके आचामाम्लम् । उद्देशिकमाधाकर्मिकमित्यर्थः । साधुनिमित्त कृतमशनपानखादिमवस्त्रपात्रवसतिप्रमुखम् । तत्र प्रथमचरमजिनतीर्थे एकं साधुमेकं साधुसमुदायमेकमुपाश्रयं वा आश्रित्य कृतं तत्सर्वेषां साध्वादीनां न कल्पते द्वाविंशतिजिनतीर्थे तु य साध्वादिकमाश्रित्य कृत तत्तस्यैव अकल्प्यमन्येषां तु कल्पते इति द्वितीयः । कल्प० ॥

आहा आधयकम्मे, आयाहम्मे य अत्तकम्मे य ।
तं पुण आहाकम्मं, कप्प त्ति ण व कप्पती तस्स ॥

आधाकर्म अध कर्म आत्मनमात्मकर्म्म चैत्योद्देशिकस्य साधूनुद्दिश्य कृतस्य प्रकादेश्चत्वारि नामानि। यत्पुनराधाकर्म तत्कस्य कल्पते कस्य वा न कल्पते एवं शिष्येण पृष्टे सूरिराह ॥

संघस्सोहविभाए, समणासमणीए कुलगणे संघे ।
कम्मिहट्टिय ण कप्पति, अट्ठिअकप्पे जमुद्दिस्स ॥

अस्य व्याख्या सविस्तर तृतीयोद्देशके कृता। (सा अकप्पट्ठियशब्दे उक्ता अतोऽत्राक्षरार्थमात्रमुच्यते ) ओघतो वा विभागतो वा सङ्घस्य श्रमणानां श्रमणीनां कुलस्य गणस्य वा सघस्य वासकल्पेन यत् भक्तपानादिकं कृतं तत्स्थितकल्पितानां प्रथमपश्चिमसाधूनां न कल्पते ये पुनरस्थितकल्पे स्थितास्तेषां यदुद्दिश्य कृतं तस्यैवैकस्य न कल्पते अन्येषां तु कल्पते द्वितीयपदे तु स्थितकल्पिकानामपि कल्पते यत आह ॥

आयरियं अभिसेए, भिक्खुम्मि गिलाणगम्मि जयणा उ ।
तिक्खुत्तमविपवेसे, चउपरियट्टे ततो गहणं ॥

आचार्ये अभिषेके भिक्षौ वा ग्लाने सजाते सति आधाकर्मणो भजना सेवनाऽपि क्रियते । तथा अटवीविप्रकृष्टेऽध्वा तस्यां प्रवेशे कृते यदि शुद्धं न लभ्यते ततस्त्रिः कृत्वा शुद्धमन्वेषितमपि यदि न लब्धं ततश्चतुर्थे परिवर्ते आधाकर्मणो ग्रहण कार्यं गतमौद्देशिकद्वारम् । बृ० ६ उ० ॥

सालीघतगुलगोरसए-वेसु वल्लीफलेसु जातेसु ।
दाणट्ठकरणसड्ढा, आहाकम्मेण मंतणता ॥
आहाआहेयकम्मे, आयाहम्मेय अत्तकम्मे य ।
तं पुण आहाकम्मे, णायव्वं कप्पती कस्स ॥
संघस्स पुरिमपच्छिम-समणाणं तह य चेव समणीणं ।
चउरो उवगमगाणं, पच्छा सएहायगा समणं ॥
संघस्स मज्झिमे प-च्छिमे य समणाण तह य समणीणं ।
चतुरो परिसम ताणं, पुच्छा सएहायगा गमणं ॥
उज्ज य जड्डा सव्वे, पुरिमा चरिमा य वक्कजड्डा तु ।
तम्हा तेसिं संर-क्खणट्ठ सव्वं परिकुट्ठं।
अवगतजड्डा मज्झिम-साहु तह चेव ते परिणमंति ॥
कप्पाकप्पं देसिय, तेसिं वज्जं परिकुट्टं ।
परिसाए दुव्विसोज्झो, चरिमो पुण दुरणुपालओ कप्पो ।
मज्झो विसुद्धचरणो, एवं कप्पो मुणेतव्वो ॥
आयरिए अभिसेगे, भिक्खम्मि गिलाणगम्मि जयणा तु ।
तिक्खुत्तो अरुविपवे-सणम्मि चउपरि यदतओ गहणं ॥
असिवे ओमोदरिए, रायदुट्ठे विवाददुट्ठे वा ।
अद्धाणे गेलाहे, आहाकम्मं तु जयणा य ।
जदि सव्वे गीतत्था, ताहे आलोयणा गहे भणिता ॥
अह होति मीसगजणो, पायच्छित्तं तवोकम्मं ।
चउरो चउत्थभत्ते, आयामेगासणे य पुरिमड्ढे ॥
णिव्वितितं दातव्वं, सतं व पुव्वोगहं कुज्जा ।
संघसेहा विभागे, समणा समणी य कुलगणस्सेव ॥
कम्मिह ठितेण कप्पति, अट्ठितकप्पे जमुद्दिस्स ।
आयरिए अभिसेगो,भिक्खुम्मि गिलाणगम्मि भयणा तु ॥
अरुविपवेसे असीते, तिय परियट्टे तवोगहणं । पं० भा० ।

इयाणि उद्देसिय अहाअहे य कम्मो तं पुण उद्देसिय पुरिमपच्छियाणसंघस्स ओघेण य समणाण वा समणीण वा कुलगणस्स वा जइ ओहेणे व करेंति ठियकप्पे वि अट्ठियकप्पे वि न कप्पइ। जया पुण रिसभसामिसतयाण अज्जाण अज्जियाणं वा उद्दिस्स करेइ तं रिसभसामिसतयाणं दोण्हवि न कप्पइ अजियसामिसंतणया गेण्हंति अजियसामिसतयाणं अज्जयाण कयं अज्जियाणं कप्पइ अज्जियाण वा कय अज्जयाणं कप्पइ पडिस्सए वि जइ एकम्मि गामे गणे तु करेइ एग दो वा ज तत्थ ण गणेइ पडिस्सय नेसिं कप्पइ गणिएसु विपडिस्सएसु जे पाहुणया पच्छासस्थानके जहा कप्पेसु । पं० चू० ।

उद्देसियचरिमतिग-औद्देशिकचरमत्रिक-न० कर्मौद्देशिकस्य

पापण्डश्रमणनिर्ग्रन्थविषये भेदत्रये, "कम्मुद्देसियचरमतिगं पूयं मीसचरिमपाहुडिया" दश० ५ अ०।

उद्देहगण-उद्देहगण-पुं० वीरस्य गणानां तृतीयगणे स्था० ९ ठा०। "थेरेहिंतो णं अज्जरोहणेहिंतो कासवगुत्तेहिंतो तत्थ णं उद्देहगणे नामं गणे निग्गए तस्सिमाओ चत्तारि साहाओ निग्गयाओ छच्च कुला एवमाहिज्जंति। तंजहा से किं तं साहाओ एवमाहिज्जंति तं जहा। उदुंबरिज्जिया १ मासपूरिया २ मइपत्तिया ३ पन्नपत्तिया ४ सेत्तं साहाओ से किं तं कुलाई २ एवमाहिज्जंति तं जहा "पढमं च नागभूयं १ बीअं पुण सोमभूइअं होइ। २। अहउल्लं गच्छतइयं, चतुत्थयं हत्थलिज्जं तु॥ पंचमगं नंदिज्जं, छट्ठं पुण पारिहासयं होइ उद्देहगणस्सेए, छच्च कुला हुंति नायव्वा"॥ कल्प०।

उद्देहलिया-उद्देहलिका-स्त्री० कुहणभेदे आचा० १ श्र०५उ०

उद्देहिगा-उद्देहिका-स्त्री० उद्गतो दोहोऽस्य क० ५ अत इत्वम् त्रीन्द्रियजीवभेदे, प्रज्ञा० १ पद। जी०। "काष्ठनिश्रिता घुणोद्देहिका" आचा० १ अ० ४ उ०। तेइंदियाण उद्देहिकाइ जं वा वए वेओ उद्देहिकया सहया मृत्तिकया,। ओ०। "तओउद्देहिग त्थो वि वएणफइ" महा०॥

उद्देही-देशी-उपदेहिकायाम्। दे० ना०।

उद्धंसण-उद्धर्षण-न० उद्-धृष् ल्युट् वधे, ओ०। दुष्कुलीनेत्यादिभिः कुलाद्यभिमानपातनार्थे वचने, स्त्री०। ज्ञा० १६ अ०। "उच्चावयाहिं उद्धंसणाहिं उद्धंसेइ"॥ भ० १५ श० १ उ०। उन्मूलनायामाक्रोशे, ओ०॥

उद्धंसिय-उद्धर्षित-त्रि० खरण्टिते, "उद्धंसिया य तेणं सुट्ठु वि आणाविया य अप्पाणं। सू० ३ उ०। आ० म०। अवभाषिते, उद्धंसियओ लोगंसि भागहारी व होहितिमोण, नि० चू० ४ उ०।

उद्धयणभवण-ऊर्ध्वयनभवन-न० उच्चाविरलगेहेषु॥भ०॥ ९ श० ३३ उ०।

उद्धचलणबंधण-ऊर्ध्वचरणबन्धन-न० ऊर्ध्वचरणस्य बन्धनरूपे शरीरदण्डे, प्रश्न० अध० ३ द्वा०।

उद्धच्छरिअ-देशी-निषिद्धे दे० ना०।

उद्धठाण-ऊर्ध्वस्थान-न० कायोत्सर्गेऽवस्थाने, ध० ४ अधि०।

उद्धट्टु-उद्धृत्य-अव्य० ऊर्ध्वीकृत्येत्यर्थे, "पलिभिंदियाणं तो पच्छा पादुद्धट्टुमुद्धिपहारांति" निजं वामचरणमुरुत्क्षिप्य मूर्ध्नि शिरसि प्रघ्नन्ति "बाहू उद्धट्टु कक्खमणुव्वजे" बाहुमुद्धृत्य कक्षामादर्श्यानुकूलं साध्वभिमुखं व्रजन्ति। सूत्र० १ श्रु० ४ अ०। "उद्धट्टुपादं रीएज्जा" पादं संहत्याग्रेतलेन पादं पातप्रदेशं वा त्वानिक्रम्य गच्छेत्॥ आचा० २ श्रु०। अवकृष्येत्यर्थे च। व्य० प्र० २ उ०।

उद्धडा-उद्धृता-स्त्री० तृतीयापिण्डैषणायाम्, सा च स्वव्यापारेण मूलभाजनाद् भाजनान्तरे भक्तमुद्धृतं स्थाल्यादौ स्वयोगेन भोजनजातमुद्धृतं तच्च साधोर्गृह्णतः उद्धृता भिक्षा भवति। धर्म० ३ अधि०। स्था०। नि० चू०। ( तां च सूत्र-न पिंडेसणा शब्दे वक्ष्यामि )

उद्धत-( य ) उद्धत-त्रि उद् हन्-क्त.। वात्यादिचञ्चले. अविनीते प्रगल्भे उद्गते वाच०॥ उत्पाटिते च। श० १ अ०।

उद्धतमउदार-उद्धततमोऽन्धकार-पुं० न० अनिरायप्रबले न-निधे, प्रश्न० अध० ३ द्वा०।

उद्धत्थ-देशी-विप्रलब्धे, दे० ना०।

उद्धपूरिय-ऊर्ध्वपूरित-त्रि० श्वासपूरितोर्ध्वकाये, ऊर्ध्वस्थिते-धूल्या पूरिते, शरीरदण्डदण्डिते,॥ प्रश्न० ३ द्वा०।

उद्धमंत-उद्ध्मायमान-त्रि० कृतोध्मानेषु शंखादिषु, "उद्धमंताणं संखाणं सिंगाणं संखियाणं खरमुहीणं पिरिपिरियाणं" रा०।

उद्धमाण-उद्ध्मान-न० शङ्खशृङ्गशङ्खिकाखरमुखीपेयापिरिपिरिकाणां वादने, रा०।

उद्धय-उद्धत-त्रि० उद्धृत्य पानकर्त्तरि,। वाच० उद्धूते. ज्ञा० १ अ०

उद्धया-उद्धता-स्त्री० दर्पातिशयेन गतौ, "तुरियाए चवलाए चंडाए सीहाए उद्धयाए जेयाए दिव्वाए गईए" भ० ११ श० १० उ०। सद्गर्यायां देवगतौ च। भ० ५ श० ४ उ०।

उद्धरण-उद्धरण-न० उद्-हृ भावे ल्युट् मुक्तौ, वमने, ऋणशुद्धौ, उन्मूलने,। उत्तारणे, उत्थापने, उद्धृत्य हरणे परिक्षेपणे, बहिर्निष्काशने उत्पाटने. वाच०। विकर्त्तने, सूत्र० १ श्रु० ४ अ० अपनयने च,। सूत्र० १ श्रु० ९ अ०। उच्छिष्टे, दे० ना०।

उद्धरिउ-उद्धृत्य-अव्य० आकृष्येत्यर्थे, "उद्धरिउ अवउज्झइ सहेण मज्जिज्जइ णेउ" पञ्चा० १६ विव०।

उद्धरित्ता-उद्धृत्य-अव्य० उत्पाट्येत्यर्थे "तं लयं सव्वसो छित्ता उद्धरित्ता समूला य" उत्त० २३ अ०।

उद्धरित्तु-उद्धृत्य-अव्य० निष्कृष्येत्यर्थे, "अणाउत्तो उद्धरित्तु गाढिति सोणियचउत्थे" पञ्चा० १६ विव०।

उद्धरिय-उद्धृत-त्रि-उद्-धृ-क्त। उत्पाटिते, "फलेइ विसभक्खीणं साओ उद्धरिया कह"। उत्त० २३ अ०। पृथगवस्थापिते "उद्धरियं सुदसुयसमुद्दाउ" पं० व०। "जेणुद्धरिया विज्जा, आगासगमा महापरिण्णाउ" आ० म० द्वि०।

उद्धरियसव्वसल्ल-उद्धृतसर्वशल्य-त्रि० कृतालोचने. पञ्चा० १६ विव०।

उद्धविय-देशी-आर्चिते, दे० ना०।

उद्धाउ-देशी० विषमोन्नतप्रदेशश्रान्ते, संघाते च। दे० ना०।

उद्धायमाणग-उद्धावत्-त्रि० उच्छ्रिते, "बहुचडुडुट्टसावयसमाइयउद्धायमाणगारपुरओरविरुसणत्थबहुल" प्रश्न० अध० २ द्वा०।

उद्धार-उद्धार-पुं० उद्धियते उद्-हृ-भावे-घञ् मुक्तौ, ऋणशुद्धौ, उद्धारणे, वाच०। अयोद्धरणे, अपहरणे, अनु०। अपवादे,। व्य० ८ उ०। कर्मणि-घञ्। सर्वधनादुद्धृत्य ज्येष्ठादिभ्यो देये अंशभेदे वाच०।

उद्धारणा-उद्धारणा-स्त्री० "पावल्लेण उवेच्च व उद्धयपयधारणाउ उद्धारो" उत्प्राबल्येन उपेत्य वा उद्धृतानामर्थपदानां धारणा उद्धारणा। धारणाख्यव्यवहारे, व्य० १० उ०।

उद्धारपलिओवम-उद्धारपल्योपम-न वक्ष्यमाणस्वरूपवालाग्राणां तत्खण्डानां वा तदुद्धारेण द्वीपसमुद्राणां वा प्रतिसमयमुद्धारणमपोद्धरणमपहरणमुद्धारस्तद्विषयं तत्प्रधानं वा पल्योपममुद्धारपल्योपमम्। पल्योपमभेदे,॥

तत्स्वरूपं यथा—

से किं तं उद्धारपलिओवमे २ दुविहे पण्णत्ते तंजहा सु—

हुमे अ ववहारिए अ । तत्थ णं जे से सुहुमे से ठप्पे तत्थ णं जे से ववहारिए से जहानामए पल्लेसिआ जोयणं आयामविक्खंभेणं जोअणं उड्ढं उच्चत्तेणं तं तिगुणं सविसेसं परिक्खेवेणं सेणं पल्ले एगाहिअ बेआहिअ तेआहिअ उक्कोसेणं सत्तरत्तपरूढाणं संसट्ठे संनिचिते भरिते वालग्गकोडीणं तेणं वालग्गा नो अग्गी डहेज्जा नो वाऊ हरेज्जा नो कुहेज्जा नो विद्धंसिज्जा णो इ पुत्ताए हव्वमागच्छेज्जा तओ णं समए २ एगमेगं वालग्गं अवहाय जावइएणं कालेणं से पल्ले खीणे नीरए निल्लेवे णिट्ठिए भवइ सेत्तं ववहारिए । उद्धारपलिओवमे एएसिं पल्लवाणं कोडाकोडी हवेज्ज दसगुणिया तं ववहारिअस्स उद्धारसागरोवमस्स एगस्स भवे परिमाणं २ एएहिं ववहारिअ उद्धारपलिओवमसागरोवमेहिं किं पओअणं एएहिं ववहारिअपलिओवमसागरोवमेहिं णत्थि किंचिप्पओअणं केवलं पण्णवणा पण्णविज्जइ सेत्तं ववहारिए उद्धारपलिओवमे । से किं तं सुहुमे उद्धारपलिओवमे २ से जहाणामए पल्ले सिआ जोअणं आयामविक्खंभेणं जोअणं उच्चेहेणं तं तिगुणं सविसेसं परिक्खेवेणं से णं पल्ले एगाहिअ बेआहिअ तेआहिअ उक्कोसेणं सत्तरत्तपरूढाणं संसट्ठे संनिचिते भरिते वालग्गकोडीणं तत्थ णं एगमेगे वालग्गे असंखिज्जाइं खंडाइं कज्जइ ते वालग्गदिट्ठीओ ओगाहणाउ असंखेज्जइ भागमेत्ता सुहुमस्स पणगजीवस्स सरीरोगाहणाउ असंखेज्जगुणा तेणं वालग्गा णो अग्गी डहेज्जा नो वाऊ हरेज्जा णो कुहेज्जा णो विद्धंसिज्जा नो पुइत्ताए हव्वमागच्छेज्जा तओ णं समए २ एगमेगं वालग्गं अवहाय जावइएणं कालेणं से पल्ले खीणे नीरए निल्लेवे णिट्ठिए भवइ से त्तं सुहुमे उद्धारपलिओवमे एएसिं पल्लवाणं कोडाकोडी हवेज्ज दसगुणिआ तं सुहुमस्स उद्धारसागरोवमस्स एगस्स भवे परिमाणं एएहिं सुहुमउद्धारसागरोवमेहिं किं पओअणं एएहिं सुहुमउद्धारपलिओपमसागरोवमेहिं दीवसमुद्दाणं उद्धाराणंघेप्पइ केवइआणं भंते दीवसमुद्दा उद्धारेणं पण्णत्ता गोयमा ! जावइआणं अड्ढाइज्जाणं उद्धारसा० उद्धारसमयाए वइआणं दीवसमुद्दा उद्धारेणं पण्णत्ता सेत्तं सुहुमे उद्धारपलिओवमे सेत्तं उद्धारपलिओवमे ॥

( सेकिंत उद्धारपलिओवमे इत्यादि ) उद्धारपल्योपमं द्विविधं प्रज्ञप्तं तद्यथा वालाग्राणां सूक्ष्मखण्डकरणात् सूक्ष्मं च तेषामेव सान्यवहारिकप्रत्यक्षव्यवहारिभिर्गृह्यमाणानामखण्डानां यथावस्थितानां ग्रहणात्प्ररूपणामात्रव्यवहारोपयोगित्वाच्चावहारिकं चेति । तत्र यत्सूक्ष्मं तत्स्थाप्यम् । तिष्ठतु । तावद्व्यावहारिकप्ररूपणापूर्वकत्वादेतत्प्ररूपणा पश्चात्प्ररूपयिष्यते इति भावस्तत्र यत्तद्व्यावहारिकमुद्धारपल्योपमं तदिदमिति शेषस्तदेव विवक्षुराह ( से जहानामए इत्यादि ) तद्यथा नाम धान्यपल्य इव पल्यः स्यात्स च वृत्तत्वादायामविष्कम्भाभ्यां दैर्घ्यविस्ताराभ्यां प्रत्येकमुत्से धाङ्गुलकमनिष्पन्नं योजनमूर्ध्वमुच्चत्वेनापि तद्योजनं त्रिगुणं सविशेषं परिक्षेपेण भ्रमितिमङ्गीकृत्येति सर्वस्यापि वृत्तपरिधेः किंचिन्न्यूनषड्भागाधिकत्रिगुणत्वादस्यापि पल्यस्य किञ्चिन्न्यूनषड्भागाधिकानि त्रीणि योजनानि परिधिर्भवतीत्यर्थः । स पल्य ( एगाहिय वेयाहियत्ते आहियत्ति ) षष्ठीवचनलोपादेकाहिकद्व्याहिकत्र्याहिकमुत्कर्षत सप्तरात्रप्ररूढानां भृतो वालाग्रकोटीनामिति सवन्धः । तत्र मुण्डिते शिरस्येकेनाह्ना यावत्प्रमाणा वालाग्रकोट्य उत्तिष्ठन्ति ता एकाहिक्य द्वाभ्यां तु या उत्तिष्ठन्ति ता द्व्याहिक्य । कथमत इत्याह ससृष्टम् आकर्णपूरित सनिचित प्रचयविशेषान्निबिडीकृत किं बहुना एवंभूतोऽसौ भृतो येन तानि वालाग्राणि नाग्निर्दहेन्न वायुरपहरेदतीव निचितत्वादग्निपवनावपि न तत्र क्रामत इत्यर्थः ( णो कुच्छेज्जत्ति ) नो कुथ्युः प्रचयविशेषादेव सुषिराभावात् वायोरसंभवाच्च नासारतां गच्छेयु अत एव च ( नो पविद्धंसेज्जत्ति ) कतिपयपरिसाटनमप्यङ्गीकृत्य न परिविध्वंसेयरित्यर्थः अत एव च ( नो पूइत्ताए हव्वमागच्छेज्जत्ति ) न पूतित्वेन कदाचिदप्यागच्छेयुर्न कदाचिद्दुर्गन्धितां प्राप्नुयुरित्यर्थः ( तओणंति ) तेभ्यो वालाग्रेभ्य समये समये एकैकं वालाग्रमपहृत्य कालो मीयते इति विशेषः । ततश्च ( जावइएणमित्यादि ) यावता कालेन स पल्यः क्षीणो वालाग्रकर्षणात् क्षयमुपागत अपकृष्टधान्यकोष्ठागारवत्तया ( नीरयेत्ति ) निर्गतो रज सूक्ष्मवालाग्रोऽपकृष्टधान्यरज कोष्ठागारवत्तया ( निल्लेवित्ति ) अत्यन्तसंश्लेषात्तन्मयतां गतवालाग्रलेपापहारान्निर्लेप अपनीतमित्यादि गतधान्यलेपकोष्ठागारवदेभिस्त्रिभिः प्रकारैर्निष्ठितो विशुद्ध इत्यर्थः । एकार्थिका वा एते शब्दाः अत्यन्तविशुद्धिप्रतिपादनपरा । वाचनान्तरदृश्यमानम् अन्यदपि पदमुक्तानुसारेण व्याख्येयम् एतावत्कालस्वरूपं बादरमुद्धारपल्योपमं भवति एतच्च पल्यान्तर्गतवालाग्राणां सख्येयत्वात्संख्येयैः समयैस्तदपहारसंभवात्संख्येयसमयमानं द्रष्टव्यम् । सेत्तमित्यादि निगमनं व्यावहारिकं पल्योपमं निरूप्याथ सागरोपममाह । ( एएसिं पल्लाणगाहा ) एतेषामनन्तरोक्तपल्योपमानां दशभिः कोटाकोटिभिरेकं सागरोपमं भवतीति तात्पर्यम् । शिष्यः पृच्छति एतैर्व्यावहारिकपल्योपमसागरोपमैः किं प्रयोजनं कोऽर्थ साध्यते तत्रोत्तरं नास्ति किंचित्प्रयोजनं निरर्थकस्तर्हि तदुपन्यास इत्याशङ्क्याह केवलं प्रज्ञापना प्रज्ञाप्यते प्ररूपणामात्रं क्रियत इत्यर्थः । ननु निरर्थकस्य प्ररूपणयाऽपि किं कर्त्तव्यमतो यत्किंचिदुन्मत्तवाक्यवदेवमभिप्रायापरिज्ञानादेवं हि मन्यते बादरे प्ररूपिते सूक्ष्मं सुखावसेयं स्यादतो बादरप्ररूपणा सूक्ष्मोपयोगित्वान्नैकान्ततो नैरर्थक्यमनुभवति । तर्हि नास्ति किंचित्प्रयोजनमित्युक्तमसत्यं प्राप्नोतीति चेन्नैवमेतावत्प्रयोजनस्यालपत्वेनाविवक्षितत्वादेव बादराद्धापल्योपमा द्वावपि वाच्यम् । ( सेकिंत सुहुमे इत्यादि ) गतार्थमेव "जाव तत्थ णं एगमेगे वालग्गे असंखेज्जाइमित्यादि" पूर्वं वालाग्राणि सह जात्यैव गृहीतान्यत्रत्वेकैकमसंख्येयखण्डीकृतं गृह्यत इति भावः । एवं सत्येकैकखण्डस्य यन्मानं भवति तन्निरूपयितुमाह ( तेणं वालग्गदिट्ठीओग्गहणाओ इत्यादि ) तानि खण्डीकृतवालाग्राणि प्रत्येकं दृष्ट्यवगाहनात् किमसंख्येयभागमात्राणि दृष्टिश्चक्षुर्द्वारेणेतपदार्थदर्शनरूपा सावगाहते परिच्छेदद्वारेण प्रवर्तते तत्र वस्तुनि तदेव वस्तु दृष्ट्यवगाहना प्रोच्यते ततोऽसंख्येयभागवर्तीनि प्रत्येकं वालाग्रखण्डानि मन्तव्यानीदमुक्तं भवति यत् पुद्गलद्रव्यं विशुद्धचक्षुर्दर्शनं छद्मस्थः पश्यति तदसंख्येयभागमात्राण्येकैकशस्तान्येव भवतो द्रव्यतो निरूप्याथ क्षेत्रतस्तन्मानमाह ( सुहुमस्सेत्यादि ) अयमत्र भावार्थः सूक्ष्मपनकजीवशरीरं यावत्क्षेत्र

मवगाहते ततोऽसंख्येयगुणानि प्रत्येकं तानि भवन्ति बादरपृथिवीकायिकपर्याप्तशरीरतुल्यानीति वृद्धवादः । एषां च वालाग्रखण्डानामसंख्येयत्वात् प्रतिसमयमुद्धारे किल संख्येया वर्षकोट्योऽतिक्रामन्त्यतः संख्येयवर्षकोटिमानमिदमवसेयं शेषं तृक्कार्यप्रायं यावत् आवइया अड्ढाइज्जाणमित्यादि । यावन्तोऽर्द्धतृतीयसागरोपमेषूद्धारसमया वालाग्रेद्धारोपलक्षिताः समया उद्धारसमयाः एतावन्तो द्विगुण २ विष्कम्भाद्द्वीपसमुद्रयोक्तेनोद्धारेण प्रज्ञप्ताः असंख्येया इत्यर्थः । उक्तमुद्धारपल्योपमम् । अनु० । कर्म० ।

उद्धारसमय-उद्धारसमय-पुं० वालाग्रोद्धारोपलक्षितेषु समयेषु, अनु० ॥

उद्धारसागरोवम-उद्धारसागरोपम-न०उद्धारविषयं तत्प्रधानं वा सागरोपममुद्धारसागरोपमम्।दशभिःकोटाकोटीभिर्गुणिते सागरोपमभेदे, स्था० १ ठा० । ( तच्च सूक्ष्मव्यवहारिकभेदेन द्विधा उद्धारपल्योपमभेदे दर्शितम् )

उद्धावणा-उद्धावना-स्त्री० शीघ्रं तस्य कार्यस्य निष्पादने, व्य० १ उ० । उत्प्राबल्येन धावना । गच्छोपग्रहार्थं दूरक्षेत्रादौ गमने, ध० ३ अधि० ।

उद्धिय-उद्धृत-त्रि० उद्वृढे कृतनिर्वाहे, "नामनिमित्त तत्वं यथा तथा चोद्धृत पुरा यदिह" ॥ षो० ॥

उद्धियकंटक-उद्धृतकण्टक-त्रि० उद्धृता स्वदेशत्याजनेन जीवितत्याजनेन वा कण्टका यत्र तदुद्धृतकण्टकम्।प्रतिस्पर्द्धिगोत्रजरहिते, ग० । औ० ॥

उद्धियदंड-उद्धृतदण्ड-पुं० उद्धृत उत्पाटितो गृहीतो दण्डो येन स उद्धृतदण्डःगृहीतप्रायश्चित्ते, ।व्य० १ उ० ( उद्धियदंडो गिहत्थो दण्डशब्दे वक्ष्यते )

उद्धियसत्तु-उद्धृतशत्रु-त्रि. उद्धृताः शत्रवो यत्र तदुद्धृतशत्रु देशनिर्वासितागोत्रजवैरिणि, औ० । रा ।

उद्धीमुह-ऊर्ध्वमुख-त्रि० ऊर्ध्वीकृतमुखे, "उद्धीमुहकलबुत्ताणुप्फग संठाणसंठिया आहिहि त्ति वदेज्जा" ॥ चं० ४पाहु० ।

उद्धुमय-ऊर्ध्वमान-त्रि. आपूर्णे, उद्धुमायशब्द आपूर्णपर्याय. यतउक्तम् "अभिमानचिन्हेन परिहृत्यमुद्धुमाय आहिरेच्य च आणन्नातडेये" ॥ न० ।

उद्धुम्माण-उद्धूममान-त्रि० उत्पाद्यमाने, "उद्धुम्ममाण दगर यरयंधयारचरकेण" ॥ औ० । प्रश्न० ॥

उद्धुय-उद्धूत-त्रि. उद. धू क्त उद्भूते उत्क्षिप्ते कम्पिते, ज्ञा० १- श्रु० । इतस्ततो विप्रसृते, ' कालागरुपवरकुंदुरुक्कतुरुक्कधूवमघमघन्तगंधुद्धुयाभिरामे" च० ७पाहु० । सूर्य० । स । औ० । रा० प्रकटीकृते, क० । उत्कम्पिते, " वाउद्धुयविजयवेजयन्ती ' औ० । " वाउद्धुयविजयवेजयंती पडागाछत्ताइछत्तकलिया " जी० ३ प्रति० स० । उत्कटे च । म० ।

उद्धुया-उद्धूता-स्त्री० धानोद्धृतस्य दिगन्तव्यापिनो रजस उद्गर्णा, रा० । जीवा० ।

उद्धुर-उद्धुर-त्रि० उद्गताधूरस्मात् प्रा. व. अच् म. । निरङ्के, भारशून्ये, दृढे, उच्चे, वाच० । उद्धते,आ. म प्र० ।

उद्धुम्मिय-ऊर्ध्वोच्छित-त्रि. ऊर्ध्वमुच्छ्रिते, "से जोयणे णवणव ति सहस्से उद्धुम्मितो हट्टसहस्समेग " सूत्र० १ श्रु० ७ अ० ।

उन्नावेंत-उन्नमयत्-त्रि ऊर्द्धं नमयति, प्रा० ।

उप्पइय-उत्पतित-न० उद् पत् क्त उत्पतने, " चवलचलणउप्पइयतुरियचवलजइणसिग्घवेगाहिं." औ० । "अट्टहासं काऊण उप्पइय" आ० म० प्र० । उद्भूते, " एग्गा उप्पइयं दुक्ख वेयणाए दुहट्टिए" उत्त० २ अ० । "उप्पइय पडिवयमाणे वसह " आचा० । १ श्रु० ६ अ० ४ उ० । ऊर्ध्वगते च । त्रि० वाच० ।

उप्पइयपडिवयमाण -उत्पतितप्रतिपतत्-त्रि पूर्वं संयमारोहणादुत्पतिते पश्चात्पाकोदयात्प्रतिपतति, आचा० १ श्रु. ६अ० । ४ उ० ।

उप्पंक-देशी० उच्छ्रये, समूहे, पङ्के, बले च । दे०ना० ।

उप्पड-उत्पट-पु० उत्पटति, उद् पट् गतौ-अच् । वृक्षादीनां त्वचमुद्भिद्य उद्गते निर्यासे,वाच० । त्रीन्द्रियजीवविशेषे, प्रज्ञा० १ पद ।

उप्पण्ण-उत्पन्न-त्रि० उद्. पत्. क्त । प्रादुर्भूते, ग० । प्रश्न० । संजाते, दर्श० । "उप्पण्णम्मि अणंतेण, णट्टम्मिछाउमत्थिए णाणे । उत्पतितस्वभावे च । " उप्पण्णेइ वा विगमेइ वा धुवेइ वा " सत्तालक्षणम् आ०म० द्वि० । विशे० ।

उप्पण्णकोउहल्ल-उत्पन्नकुतूहल-त्रि० उत्पन्नं प्रागभूत कुतूहलं यस्य उत्पन्नौत्सुक्ये, सू० प्र १ पाहु० ।

उप्पण्णगारव-उत्पन्नगौरव-त्रि० उत्पन्नमभिलषणीयतया जात गौरवं यस्य स तथा । कमनीयतया जातगौरवे, "उप्पण्णगारवे एवं गणिंत्ति परिकिखिंसु । व्य० ४ उ० ॥

उप्पण्णणाणदंसणधर-उत्पन्नज्ञानदर्शनधर- पुं० सादिकेवलज्ञानदर्शनोपयुक्ते, " समणे भगवं महावीरे उप्पण्णणाणदंसणधरे अरहा जिणे केवली " उत्पन्नज्ञानदर्शनधरो न तु सदा संसिद्धः भ० १ श० ७ उ० ।

उप्पण्णदुक्ख-उत्पन्नदुःख-त्रि० संजातदुःखे, "इह खलु भोगपव्वइएणं उप्पण्णदुक्खेण संजमे अरइसमावण्ण चित्तेण" दश० १चूलि० ।

उप्पण्णसंसय-उत्पन्नसंशय- त्रि० उत्पन्नानवधारितार्थज्ञाने, रा० । सू० प्र० ।

उप्पण्णसड्ढ-उत्पन्नश्रद्ध- त्रि० उत्पन्ना प्रागभूता सती भूता श्रद्धा यस्यासौ उत्पन्नश्रद्धः । जातश्रद्धे, "उप्पण्णसड्ढे संजायसड्ढे समुप्पण्णसड्ढे उट्ठाए उट्ठेइ" जं० १वक्ष० । रा० । सू० प्र० । ज्ञा० ।

उप्पण्णाणुप्पण्ण-उत्पन्नानुत्पन्न-त्रि० उत्पन्नश्चानुत्पन्नश्च उत्पन्नानुत्पन्नः । मयूरव्यंसकादय इति समासः । यथा कृताकृत ग्रुकाधुकमित्यादि । एव प्रकारश्च समास स्याद्वादिन एव युक्तिमियर्ति न शेषस्य एकान्तवादिन एकत्रैकदा परस्परविरुद्धधर्मानभ्युपगमात् । कस्यचिन्नयस्य मतेनोत्पन्ने कस्यचिदनुत्पन्ने, " उप्पण्णाणुप्पण्णो, एत्थ णया णेगमस्सणुप्पण्णो । सेसाण उप्पण्णो, जइ कत्तो तिविहसामित्ता " आ० म० द्वि० । ( नमुक्कारशब्दे उत्पत्तिद्वारे स्पष्टीभविष्यति )

उप्पत्ति-उत्पत्ति- स्त्री० उत्पादनमुत्पत्तिः । प्रसूतौ, विशे० उत्पादने, उद्भूतौ, आ० चू० । ( उत्पत्तौ नयानां मतानि नमुक्कारशब्दे उत्पत्तिद्वारे स्पष्टी भविष्यन्ति) सा च चतुर्धा । उत्पत्तिश्चतुर्धा जीवाज्जीवस्योत्पत्तिर्यथा मातापितृभ्यां पुत्रस्य१जीवादजीवस्योत्पत्तिर्यथा सजीवदेहान्नखकेशादे । अजीवाज्जीवस्योत्पत्तिर्यथा काष्ठाद्घुणकस्य । अजीवादजीवस्य दुग्धाद्दध्न । ग० । निदानकारणे, " उप्पत्ती रोगाण तस्स मणओसहयविभंगी " नि० चू० २० उ० । उपमाने, प्रव० । ऊर्ध्वं पतने, ऊर्ध्वगतौ च । उत्पद्यते प्रथमतो ज्ञायतेऽनेन उद् पद् करणे क्तिन् । प्राथमिकप्रर्न।तिविषयप्रवृत्तिमाधनेष्टसाधनतायोधके कर्मस्वरूपज्ञापके विधिवाक्ये, वाच० ॥

**उप्पत्तिया-औत्पत्तिकी**-स्त्री० उत्पत्तिरेव न शास्त्राभ्यासकर्मपरिशीलनादिकं प्रयोजनं यस्याः सा औत्पत्तिकी तदस्य प्रयोजनमिति इकण्॥ न॥ अदृष्टाश्रुताननुभूतविषयादकस्माद् भवनशीलायां बुद्धौ, रा०। ननु सर्वस्याः बुद्धेः कारणं क्षयोपशमः तत्कथमुच्यते उत्पत्तिरेव प्रयोजनमस्या इति उच्यते क्षायोपशमः सर्व्वबुद्धिसाधारणः ततो नासौ भेदेन प्रतिपत्तिनिबन्धनं भवति । अथ च बुद्ध्यन्तरभेदेन प्रतिपत्त्यर्थं व्यपदेशान्तरं कर्तुमारब्धं तत्र व्यपदेशान्तरनिमित्तमत्र न किमपि विनयादिकं विद्यते केवलमेवमेव तथोत्पत्तिरिति सैव साक्षान्निर्दिष्टा । नं० ॥

औत्पत्तिक्या लक्षणम् ।

पुव्वमदिट्ठमसुयम-वेइयतक्खणविसुद्धगहिअत्या ।
अव्वाहयफलजोगा, बुद्धी ओप्पत्तिया नाम ॥२॥

पूर्वं बुद्ध्युत्पादात्प्राक् स्वयं चक्षुषा न दृष्टो नाप्यन्यतः श्रुतो मनसाऽप्यविदितोऽपर्यालोचितस्तस्मिन् क्षणेषु बुद्ध्युत्पादकाले विशुद्धो यथावस्थितो गृहीतोऽवधारितोऽर्थो यस्याः सा तथा। पुव्वमदिट्ठेत्यादौ मकारोऽलाक्षणिकः। तथा अव्याहतेन अबाधितेन फलेन परिच्छेद्येनार्थेन योगो यस्याः सा अव्याहतफलयोगा बुद्धिरौत्पत्तिकी नाम । सम्प्रति विनेयजनानुग्रहायास्याः स्वरूपप्रतिपादनार्थमुदाहरणान्याह ।

भरहसिलपणियरुक्खे, खुड्डगपडसरडकायउच्चारे ।
गयघायणगोलखंभे, खुड्डगमग्गित्थिपइ पुत्ते ॥ ३ ॥
भरहसिलं मिंढ कुक्कुड, तिलवालुयहत्थिअगडवणसंडे ।
पायसअइया पत्ते, खाडहिलापंचपियरो य ॥ ४ ॥
महुसित्थमुद्दिअंकेइ, नाणए भिक्खचेडगनिहाणे ।
सिक्खा य अत्थसत्थे, इच्छायमह सयसहस्से ॥ ५ ॥

आसामर्थः कथानकेभ्योऽवसेयः । तानि च कथानकानि विस्तरतोऽभिधीयमानानि ग्रन्थगौरवमापादयन्ति ततः सङ्क्षेपेणोच्यन्ते । उज्जयिनी नाम पुरी तस्याः समीपवर्ती कश्चिन्नटानामेको ग्रामः तत्र च भरतो नाम नटः तस्य भार्या परासुरभूत् तनयश्चास्य रोहकाभिधोऽद्याप्यल्पवयास्ततस्तेन स्वस्य तनयस्य च शुश्रूषाकरणायान्या समानिन्ये वधूः । सा च रोहकस्य सम्यग्न वर्तते ततो रोहकेण सा प्रत्यापादि मातर्न मे त्वं सम्यक् वर्तसे ततो ज्ञास्यसीति ततः सा सेर्ष्यमाह रे रोहक ! किं करिष्यसि ? रोहकोऽप्याह । तत्करिष्यामि येन त्वं मम पादयोरागत्य लगिष्यसीति ततः सा तमवज्ञाय तूष्णीमतिष्ठत् रोहकोऽपि तत्काआदारभ्य गाढसजाताभिनिवेशोऽन्यदा निशि सहसा पितरमेवमभाणीत् भो भो पितरेष पलायमानो गोहो याति तत एव बालकवचः श्रुत्वा पितुराशङ्का समुदपादि नूनं विनष्टा मे महेलेति ततः एवमाशङ्कावशात्तस्यामनुरागः शिथिली बभूव । ततो न तां सम्यक् समाभते नापि विशेषतस्तस्यै पुष्पताम्बूलादिकं प्रयच्छति दूरतः पुनरपास्त शयनादि ततः सा चिन्तयामास नूनमिदं बालकविचेष्टितम् अन्यथा कथमकाण्ड एवैष दोषाभावे पराङ्मुखो जातः ततो बालकमेवमवादीत् वत्स रोहक ! किमिदं त्वया चेष्टितं तव पिता मे सम्प्रति दूरं पराङ्मुखीभूत रोहक आह किमिति तर्हि त्वं सम्यग्न वर्तसे तयोक्तमितः ऊर्ध्वं सम्यग् वर्तिष्ये । ततो बालक आह भव्यं तर्हि मा खेदमाकार्षीस्तथा करिष्ये यथा मे पिता तथैव त्वयि वर्तते इति ततः सा तत्काआदारभ्य सम्यग् वर्तितुं प्रवृत्ता । रोहकोऽप्यन्यदा निशि निशाकरप्रकाशितायां प्राक्तनकदाशङ्कापनोदाय बालभाव प्रगटयन् निजच्छायामङ्गुल्यग्रेण दर्शयन् पितरमेवमाह भो पितरेष गोहो याति गोहो यातीति । तत एवमुक्त स पिता परपुरुषप्रवेशाभिमानतो निष्प्रत्याकारं कृपाणमुद्गीर्य प्राधावत रे कथय कुत्र यातीति ततः स बालको बालक्रीडां प्रकटयन्नङ्गुल्यग्रेण निजच्छायां दर्शयति पितरेष गोहो यातीति ततः स व्रीडित्वा प्रत्यावृत्तश्चिन्तयति स्म च स्वचेतसि प्राक्तनोऽपि पुरुषा नूनमेवंविध एवासीदिति धिग्मया बालकवचनादलीक सम्भाव्य विप्रियमेतावन्त कालं कृतमस्यां भार्यायामिति पश्चात्तापाद्गाढतरमस्यामनुरक्तो बभूव । सोऽपि रोहको मया विप्रियं कृतमास्तेऽस्या इति कदाचिदेषा मां विषादिना मारयिष्यतीति विचिन्त्य सदैव पित्रा सह भुङ्क्ते न कदाचिदपि केवलः । अन्यदा च पित्रा सहोज्जयिनीं पुरीमगमत् दृष्टा च तेन त्रिदशपुरीवोज्जयिनी सविस्मयचेतसा च सकलाऽपि यथावत्परिभाविता । ततः पित्रैव सह नगर्या निर्यातुमारेभे पिता च तत्र किमपि विस्मृतमिति रोहकं सिप्रातटेऽवस्थाप्य तदानयनाय भूयोऽपि नगरीं प्राविक्षत् । रोहकोऽपि च तत्र सिप्राभिधसिन्धुसैकते बालचापलवशात् सप्राकारां परिपूर्णामपि पुरं सिकताभिरालिखत् । इतश्च राजा अश्ववाहनिकायामश्वं वाहयन् कथंचिदेकाकीभूतस्तेन पथा समागन्तुं प्रावर्तत तं च स्वलिखितनगरीमध्येन समागच्छन्तं रोहकः अवादीत् भो राजपुत्र माऽनेन पथा समागमः । तेनोक्तं किमिति। रोहक आह । किं त्वं राजकुलमिदं न पश्यसि। ततः स राजा कौतुकवशात्सकलामपि नगरीं तदालिखितामवैक्षत पप्रच्छ च तं बालकं रे अन्यदाऽपि त्वया नगरी दृष्टाऽऽसीत् न वा । रोहकः प्राह नैव कदाचित्केवलमहमद्यैव ग्रामादिहागतः। ततश्चिन्तयामास राजा अहो बालकस्य प्रज्ञातिशयः । ततः पृष्टो रोहकः वत्स किं ते नाम क्व वा ग्राम इति। तेनोक्तं रोहक इति मन्नाम प्रत्यासन्ने च पुरोग्रामे वसामीति । अत्रान्तरं समागतो रोहकस्य पिता चलितौ च स्वग्रामं प्रति द्वावपि राजा च स्वस्थानमगमत् चिन्तयति स च ममैकोनानि मन्त्रिणां पञ्चशतानि विद्यन्ते तद्यदि सकलमन्त्रिमण्डलमूर्द्धाभिषिक्तो महाप्रज्ञातिशायी परमो मन्त्री सम्पद्यते ततो मे राज्यं सुखेनैवैधते बुद्धिबलोपेतो हि राजा प्रायः शेषबलैरल्पबलोऽपि न पराजयस्थानं भवति परांश्च राज्ञो लीलया विजयते। एवं चिन्तयित्वा कतिपयदिनानन्तरं रोहकबुद्धिपरीक्षानिमित्तं सामान्यतो ग्रामप्रधानपुरुषानुद्दिश्यैवमादिष्टवान् यथा युष्मद्ग्रामस्य बहिरतीव महती शिला वर्तते तामनुत्पाट्य राजयोग्यमण्डपाच्छादनं कुरुत। तत एवमादिष्टे सकलोऽपि ग्रामलोको राजादेशं कर्तुमशक्यं परिभावयन्नाकुलीभूतमानसो बहिः सभायामेकत्र मिलितवान् पृच्छति स्म परस्परं किमिदानीं कर्त्तव्यं दुष्टो राजादेशोऽस्माकमापतितो राजादेशाकरणे च महाननर्थापनिपातः । एवं च चिन्तया व्याकुलीभूतानां तेषां मध्यदिनमागतं रोहकश्च पितरमन्तरेण न भुङ्क्ते पिता च ग्राममेलापके मिलितो वर्तते। ततः स क्षुधापीडितः पितुः समीपे समागत्य रोदितुं प्रावर्तत पीडितोऽहमतीव क्षुधया ततः समागच्छ गृहे भोजनायेति । भरतः प्राह वत्स ! सुखितोऽसि त्वं न किमपि ग्रामकष्टं जानासि । स प्राह पितः किं तदिति । ततो भरतो राजादेशं सविस्तरमचकथत्। ततो निजबुद्धिप्रागल्भ्यवशात् झटिति कार्यस्य साध्यतां परिभाव्य तेनोक्तं मा आकुलीभवत यूयं खनत शिलाया राजोचितमण्डपनिष्पादनायाधस्तात् स्तम्भाश्च यथास्थानं निवेशयत भित्तीश्चोपलेपादिना प्रकारेणातीव रमणीयाः प्रगुणीकुरुत। तत एवमुक्ते सर्वैरपि ग्रामप्रधानपुरुषैर्भव्यमिति प्रतिपन्नम् । गतः सर्वोऽपि

ग्रामलोकः । स्वगृहे भोजनाय भुक्त्वा च समागतः शिलाप्रदेशे प्रारब्धं तत्र कर्म कतिपयदिनैश्च निष्पादितः परिपूर्णो मण्डपः । कृता च शिला तस्य आच्छादनं निवेदितं राज्ञे राजनियुक्तैः पुरुषैर्देवनिष्पादितो ग्रामेण देवादेशः । राजा प्राह कथमिति ततस्ते सर्वमपि मण्डपनिष्पादनप्रकारं कथयामासुः । राजा पप्रच्छ कस्येयं बुद्धिस्ते ऊचुर्देव ! भरतपुत्रस्य एषा रोहकस्य औत्पत्तिकी बुद्धिः । एवं सर्वेष्वपि संविधानकेषु योजनीय ततो भूयोऽपि राजा रोहकबुद्धिपरीक्षार्थं मेढकमेकं प्रेषितवान् । एष यावत्पलप्रमाणः संप्रति वर्त्तते पक्षातिक्रमेऽपि तावत्पलप्रमाण एव समर्पणीयो न न्यूनो नाप्यधिक इति तत एव राजादेशे समागते सति सर्वोऽपि ग्रामो व्याकुलीभूतचेता बहिःसभायामेकत्र मिलितवान् सगौरवमाकारितो रोहकः आज्ञापितश्च ग्रामप्रधानैः पुरुषैः वत्स ! प्राचीनमपि दुष्टराजादेशसिन्धुं त्वयैव निजबुद्धिसेतुबन्धेन समुत्तारितः सर्वोऽपि ग्रामः । ततः सम्प्रत्यपि प्रगुणीकुरु निजबुद्धिसेतुबन्धेनास्यापि दुष्टराजादेशसिन्धोः पारमधिगच्छाम इति । तत उवाच रोहको वृकं प्रत्यासन्नं धृत्वा मेढकमेनं यवसदानेन पुष्टीकुरुत यवसं हि भक्षयन्नेष न दुर्बलो भविष्यति वृकं च दृष्ट्वा न वृद्धिमाप्स्यते ततस्ते तथैव कृतवन्तः पक्षातिक्रमे च तं राज्ञः समर्पयामासुः तोलने च तावत्पलप्रमाण एव जातः । ततो भूयोऽपि कतिपयदिनानन्तरं राज्ञा कुर्कुटः प्रेषितः एष द्वितीयं कुर्कुटं विना योधयितव्य इति एवं संप्राप्ते राजादेशे मिलितः सर्वोऽपि ग्रामो बहिः सभायामाकारितो रोहकः कथितश्च राजादेशः । ततो रोहकेणादर्शको महाप्रमाणः आनायितो निर्मृष्टश्च भूत्वा सम्यक् ततो धृतः पुरो राजकुर्कुटस्तस्य ततः स राजकुर्कुटः प्रतिबिम्बमात्मीयमादर्शे दृष्ट्वा मन्ये निपक्षोऽयमपर कुर्कुट इति मत्वा साहंकारं योद्धुं प्रवृत्तो जरूचेतसो हि प्रायस्तिर्यञ्चो भवन्ति । एवं च परकुर्कुटमन्तरेण योधिते राजकुर्कुटे विस्मितः सर्वोऽपि ग्रामलोकः सपादितो राजादेशः निवेदितं च राज्ञो निजपुरुषैः । ततो भूयोऽपि कतिपयदिवसातिक्रमे राजा निजादेशं प्रेषितवान् युष्मद्ग्रामस्य सर्वतः समीपे रमणीया वालुका विद्यते ततः स्वया वालुकामया कतिपया दवरकाः कृत्वा शीघ्रं प्रेषणीया इति एवं राजादेशे समागते मिलितः सर्वोऽपि बहिः सभाया ग्राम पृष्टश्च रोहकस्ततो रोहकेण प्रत्युत्तरमदायि नटा वयं ततो नृत्यमेव वयं कर्त्तुं जानीमो न दवरकादि । ततो राजादेशश्चावश्यं कर्त्तव्यः ततो बृहद्राजकुलमिति चिरन्तना अपि कतिचिद्वालुकामया दवरका भविष्यन्तीति तन्मध्यादेकः कश्चित्प्रच्छन्दभृतः प्रेषणीयो येन तदनुसारेण वयमपि वालुकामयान् दवरकान् कुर्म इति । ततो निवेदितमेवं राज्ञो नियुक्तपुरुषैः । राजा च निरुत्तरीकृतः तूष्णीमास्त । ततः पुनरपि कतिचिद्दिनानन्तरं जीर्णहस्ती रोगग्रस्तो मुमूर्षुर्ग्रामे राज्ञा प्रेषितः यथाऽयं हस्ती मृत इति न निवेदनीयोऽथ च प्रतिदिवसमस्य वार्त्ता कथनीया अकथने ग्रामस्य महान् दण्डः । एवं च राजादेशे समागते तथैव मिलितः सर्वोऽपि ग्रामो बहिः सभायाम् । पृष्टश्च रोहकस्ततो रोहकेणाभ्यधायि दीयतामस्मै यवसं पश्चाद्यद्भविष्यति तत्करिष्याम । ततो रोहकादेशानं दत्तो यवसस्तस्मै रात्रौ च स हस्ती पञ्चत्वमुपगतः । ततो रोहकवचनतो ग्रामेण गत्वा राज्ञे निवेदितम् । देवाऽद्य हस्ती न निषीदति नोत्तिष्ठति न कवलं गृह्णाति न नीहारं करोति नाप्युच्छ्वसिति निःश्वसिति किं बहुना देव ! कामपि सचेतनचेष्टां न करोति ।

ततो राज्ञा भणितं किं रे मृतो हस्ती ततो ग्रामलोक आह देव ! देवपादा एव ब्रुवते न वयमिति । तत एवमुक्ते राजा मौनमाधाय स्थितः । आगतो ग्रामलोकः स्वग्रामे । ततो भूयोऽपि कतिपयदिनातिक्रमे राजा समादिष्टवानस्ति यौष्माकीणे ग्रामे सुस्वादुजलसंपूर्णः कूपः स इह सत्वरं प्रेषणीयः । तत एवमादिष्टो ग्रामो रोहकं पृष्टवान् । रोहक प्राह । एष ग्रामेयकः कूपो ग्रामेयकश्च स्वभावाद्भीरुर्भवति न च सजातीयमन्तरेण विश्वासमुपगच्छति ततो नागरिकः कश्चिदेकः कूपः प्रेष्यतां येन तत्रैव विश्वस्य तेन सह समागमिष्यति इत्येवं निरुत्तरीकृत्य मुत्कलिताः राजनियुक्ताः पुरुषाः तैश्च राज्ञो निवेदितं राजा च स्वचेतसि रोहकस्य बुद्ध्यतिशयं परिभाव्य मौनमवलम्ब्य स्थितस्ततो भूयोऽपि कतिपयदिवसातिक्रमेऽभिहितवान् । वनखण्डो ग्रामस्य पूर्वस्यां दिशि वर्तमानः पश्चिमायां दिशि कर्त्तव्य इति अस्मिन्नपि राजादेशे समागते ग्रामो रोहकबुद्धिमुपजीव्य वनखण्डस्य पूर्वस्यां दिशि व्यवस्थितो ततो जातो ग्रामस्य पश्चिमायां दिशि वनखण्डः निवेदितं च राज्ञो राजनियुक्तैः पुरुषैः । ततः पुनरपि कालान्तरे राजा समादिष्टवान् वह्निसंपर्कमन्तरेण पायसः पक्तव्यमिति तत्रापि सर्वो ग्राम एकत्र मिलितो रोहकमपृच्छत् रोहकश्चोक्तवान् तन्दुलानतीव जलेन भिन्नान् कृत्वा दिनकरकरनिकरसन्तप्तकरीषपलालादीनामुष्माणि तन्दुलपयोभृता स्थाली निवेश्यतां येन परमान्नं संपद्यते तथैव कृतः परमान्नं निवेदितं राज्ञो विस्मितं तस्य चेतः । ततो राज्ञा रोहकस्य बुद्ध्यतिशयमवगम्य तदाकारणाय समादिष्टं येन बालकेन मदादेशाः सर्वेऽपि प्रायः स्वबुद्धिवशात्संपादितास्तेन चावश्यमागन्तव्यम् परं न शुक्लपक्षे न कृष्णपक्षे न रात्रौ न दिवा न च्छायया नाप्यातपेन नाकाशेन नापि पादाभ्यां न पथा नाप्युत्पथेन न स्नातेन नास्नातेन तत एवमादिष्टे स रोहकः कण्ठस्नानं कृत्वा गन्त्रीचक्रस्य मध्यभूमिभागेन करणमारूढो धृतचालनीरूपातपत्रः सन्ध्यासमयेऽमावस्याप्रतिपत्सङ्गमे नरेन्द्रपार्श्वमगमत् । स च रिक्तहस्तो न पश्येच्च राजानं देवतां गुरुमिति लोकश्रुतिं परिज्ञाय पृथिवीपिण्डमेकमादाय गतः प्रणतो राजा मुक्तश्च तत्पुरतः पृथिवीपिण्डस्ततः पृष्टो राज्ञा रोहकः । रे रोहक ! किमेतत् ? रोहक प्राह देव ! देवपादाः पृथिवीपतयः ततो मया पृथिवी समानीता । श्रुत्वा चेदं प्रथमदर्शने मङ्गलवचः तुतोष राजा मुत्कलितः शेषग्रामलोकः रोहकः पुनरात्मपार्श्वे शायितः गते च यामिन्याः प्रथमे यामे रोहकः शब्दितो राज्ञा, रे रोहक ! जागर्षि किं वा स्वपिषि । देव ! जागर्मि रे तर्हि किं चिन्तयसि स प्राह देव अश्वत्थपत्राणां किं दण्डो महान् उत शिखेति तत एवमुक्ते राजा संशयमापन्नो वदति साधु चिन्तितं कोऽत्र निर्णयः । ततो राजा तमेव पृष्टवान् रे कथय कोऽत्र निर्णय इति तेनोक्तं यावदद्यापि शिखाग्रभागो न शोषमुपयाति तावद्द्वे अपि समे ततो राज्ञा पार्श्ववर्ती लोकः पृष्टः तेन च सर्वेणाप्यविज्ञानतः प्रतिपन्नं ततो भूयोऽपि रोहकः सुप्तवान् पुनरपि च द्वितीययामेऽपगते राज्ञा शब्दितः पृष्टश्च रे किं जागर्षि किं वा स्वपिषि स प्राह देव ! जागर्मि किं रे चिन्तयसि देव ! छगिकोदरे कथं भ्रम्युत्तीर्णा इव वर्तुलगुलिका जायन्ते तत एवमुक्ते राजा संशयापन्नस्तमेव पृष्टवान् कथय रे रोहक ! कथमिति स प्राह देव संवर्तकाभिधानवातविशेषात् । ततः पुनरपि रोहकः सुष्वाप तृतीये यामेऽपगते भूयोऽपि राज्ञा शब्दितः रे किं जागर्षि किं वा स्वपिषि सोऽवादीत् देव ! जागर्मि किं रे चिन्तयन्वर्तसे देव खाडहिलाजीवस्य यावन्मात्रं शरीरं तावन्मात्रं पुच्छमुत हीनाधिकमिति तत एवमुक्ते राजा निर्णयं कर्त्तुमशक्तः तमेवापृच्छत् रेकोऽत्र

निर्णय' देव सममिति ततो रोहकः सुप्त' प्राभातिके च मङ्गलप-टहनिस्वने सर्वत्र प्रसरमधिरोहति राजा प्रबोधमुपजगाम श-ब्दितवांश्च रोहक स च निद्राभरमुपारूढो न प्रतिवाच दत्त-वान् । ततो राजा लीलाकङ्कतिकया मनाक् त स्पृष्टवान् ततः सोऽप-गतनिद्रो जात. स्पृष्टश्च रे किं स्वपिषि स प्राह देव जागर्मि किं रे तर्हि कुर्वस्तिष्ठसि देव ! चिन्तयन् । किं चिन्त-यसि देव एतच्चिन्तयामि कतिभिर्जातो देव इति । तत एवमुक्ते राजा सव्रीड मनाक् तूष्णीमतिष्ठत् तत्क्षणानन्तर पृष्टवान् क-थय रे कतिभिरह जात इति । स प्राह देव पञ्चभि राजा भूयो-ऽपि पृष्टवान् केन केनेति रोहक आह एकेन तावद्वैश्रमणेन वैश्र-मणस्येव भवतो दानशक्तेर्दर्शनात् । द्वितीयेन चाण्डालेन वैरिस-मूह प्रति चाण्डालस्येव कोपदर्शनात् । तृतीयेन रजकेन यतो रजक इव वस्त्र परिनिपील्य तस्य सर्वस्वमपहरन् दृश्यते । चतु-र्थेन वृश्चिकेन यन्मामपि बालक निद्राभरसुप्त लीलाकङ्कतिकाग्रेण वृश्चिक इव निर्दय तुदसि । पञ्चमेन निजपित्रा येन यथावस्थित न्याय सम्यक्परिपालयसि । एवमुक्ते राजा तूष्णीमास्थाय प्रा-भातिककृत्यमकार्षीत् जननीं च नमस्कृत्यैकान्ते पृष्टवान् । कथ-य मात ! कतिभिरह जात इति सा प्राह वत्स ! किमेतत् प्रष्टव्य निजपित्रा त्व जात. । ततो रोहकोक्त राजा कथितवान् वदति च मात. स रोहक. प्रायोऽलीकबुद्धिर्न भवतीति । तत. कथय सम्यक् तत्त्वमिति तत एवमतिनिर्बन्धीकृते सति सा कथया-मास । यदा त्वद्गर्भाधानमासीत् तदाऽह बहिरुद्याने वैश्रवणपू-जनाय गतवती वैश्रवण च यक्षमतिशयरूप दृष्ट्वा हस्तसस्पर्शेन च सजातमन्मदोन्मादा भोगाय त स्पृहितवती । अपान्तराले च समागच्छन्ती चाण्डालयुवानमेकमतिरूपमपश्य ततस्तमपि भो-गाय स्पृहयामि स्म । ततोऽर्वाक्तने भाग समागच्छन्ती तथैव रज-क दृष्ट्वाऽभिलषितवती । ततो गृहमागता सती तयाविधोत्सव-वशात् वृश्चिक कणिक्कामय भक्षणाय हस्ते न्यस्तवती । ततस्त-त्सस्पर्शतो जातकामोद्रेका तमपि भोगायाशसितवती तत एव यदि स्पृहामात्रेणापि पितर सभवन्ति तर्हि सन्तु परमार्थत. पुनरेक एव ते पिता सकलजगत्प्रसिद्ध इति । तत एवमुक्ते राजा जननीं प्रणम्य रोहकबुद्धिविस्मितचेताः स्वावास-प्रासादमगमत् । रोहक च सर्वेषां मन्त्रिणां मूर्द्धाभिषिक्त मन्त्रिणमकार्षीत् तदेव भरहसिलेति व्याख्यातम् ॥ १ ॥

सप्रति पणयति व्याख्यायते । द्वौ पुरुषौ एको ग्रामेयक' अप-रो नागरिक' । ततो ग्रामेयकः स्वग्रामाच्चिर्भिटिका आनयन् प्रतोलीद्वारे वर्तने त प्रति नागरिका. प्राह यद्येता सर्वा अपि तव चिर्भिटिका भक्षयामि तत. किं मे प्रयच्छसीति ग्रामेयक. आह योऽनेन प्रतोलीद्वारेण मोदको न याति तं प्रयच्छामि ततो द्वाभ्यामपि बद्ध पणित कृता साक्षिणो जना' ततो नागरिकेण ता सर्वा अपि चिर्भिटिका मनाक् २ भक्षित्वा मुक्ताः उक्तं च ग्रामेयक प्रति भक्षिता. सर्वा अपि त्वदीया. चिर्भिटिकास्ततो मे प्रयच्छ यथा प्रतिज्ञात मोदकमिति । ग्रामयक प्राह न मे चि-र्भिटिका भक्षिता. तत कथ ते प्रयच्छामि मोदकमिति नागरिक. प्राह । भक्षिता मया सर्वा अपि चिर्भिटिका यदि न प्रत्येषि तर्हि प्रत्ययमुत्पादयामीति । तेनोक्तमुत्पादय प्रत्ययम् ततो द्वाभ्यामपि विपणिवीथ्यां विस्तारिता विक्रयाय चिर्भिटिका' समागतो जन क्रयाय ताश्च चिर्भिटिका निरीक्ष्य लोको वक्ति ननु भक्षिताः सर्वा अपि त्वदीया चिर्भिटिका. तत्कथ वय गृह्णीम एव लोकेनोक्ते साक्षिणा ग्रामेयकस्य च प्रतीतिरुदपादि क्षुभितो ग्रामेयक हा कथ नु नाम मया तावत्प्रमाणो मोदको दातव्य । तत स भयेन कम्पमानो विनयनम्रो रूपकमेक प्रयच्छति नागरिको नेच्छति ततो द्वे रूपके दातु प्रवृत्त तथापि नेच्छति । एव यावच्छतमपि रूपकाणां नेच्छति ततस्तेन ग्रामेयकेण चिन्तित हस्ती हस्तिना प्रेर्यते ततो धूर्त एष नागरिको वचनेन मां वञ्चितवान् नापरनाग-रिकमन्तरेण पश्चात्कर्तुं शक्यते ऽत्यनेन सह कतिपयदिनानि व्यवस्थां कृत्वा नागरिकधूर्तान्वेषणगामि तथैव कृत दत्ता चैकेन नागरिकधूर्तेन तस्मै बुद्धिस्तत. तद्बुद्धिवशेन पूपिकापणे मोदक-मेकमादाय प्रतिद्वन्द्विन धूर्तमाकारितवान् साक्षिणश्च सर्वेऽप्या-कारिताः ततस्तेन सर्वसाक्षिसमक्षमिन्द्रकीलके मोदकोऽस्था-प्यते भणितश्च मोदक. याहि रे याहि मोदक ! स न याति तत-स्तेन साक्षिणोऽधिकृत्योक्तं मयैवं युष्मत्समक्ष प्रतिज्ञात यद्यहं जितो भविष्यामि तर्हि स मया मोदको यः प्रतोलीद्वारेण न निर्गच्छति एषोऽपि न याति तस्मादह मुक्तश्च इति एतच्च साक्षि-भिरन्यैश्च पार्श्ववर्तिभिर्नागरिकै. प्रतिपन्नमिति प्रतिजितः प्रति-द्वन्द्वी धूर्त. । भृतकारनागरिकधूर्तस्यौत्पत्तिकी बुद्धि ॥ २ ॥

( रुक्खेत्ति ) वृक्षोदाहरण तद्भावना क्वचित्पथि पथिकानां सह-कारफलान्यादातुं प्रवृत्तानामन्तराय मर्कटका विदधते तत. पथि-का' स्वबुद्धिवशाद्वस्तुतत्व पर्यालोच्य मर्कटानां समुख लोष्टकान् प्रेषयामासु ततो रोषावरूद्धचेतसो मर्कटाः पथिकानां समुख सह-कारफलानि प्रचिक्षेपुः पथिकानामौत्पत्तिकी बुद्धि' ३ तथा (खुड्डक-त्ति ) अङ्गुलीयकाभरण तदुदाहरणभावना राजगृह नगर तत्र प्रसेनजित प्रसेनरिपुसमूहविजेता राजा भूयांसस्तस्य तनया. तेषां च सर्वेषामपि मध्ये श्रेणिको राजा नृपलक्षणसपन्न. स्वचेत-सि परिभावितोऽत एव च तस्मै न किञ्चिदपि ददाति नापि वचसापि सस्पृशति मा शेषैरेष परासुर्विधीयेतेति बुद्ध्या स च किञ्चिदप्यलभमानो मन्युभरवशात्प्रस्थितो देशान्तर जगाम । क्रमेण वेन्नातट नगरम् तत्र च क्षीणविभवस्य श्रेष्ठिनो विपणौ-समुपविष्ट तेन च श्रेष्ठिना तस्यामेव रात्रौ स्वप्ने रत्नाकरो निज-दुहितर परिणयन् दृष्ट आसीत् तस्य च श्रेणिकपुण्यप्रभावत. तस्मिन् दिने चिरसंचितप्रभूतक्रयाणकविक्रयेण महान् लाभः समुत्पादि म्लेच्छहस्ताच्चाऽनर्घ्याणि महारत्नानि स्वल्पमौल्येन समपद्यन्त तत सोऽचिन्तयत् अस्य महात्मनो मम समीपमुपविष्ट-स्य पुण्यप्रभाव एष. यन्मया महती भूति एतावती समासादि-ता आकृतिं च तस्यातिमनोहरामवलोक्य स्वचेतसि कल्पयामा-स स एष रत्नाकरो य स्वप्ने मया रात्रौ दृष्ट ततस्तेन कृतकरा-ञ्जलिसपुटेन विनयपुर सरमाभाषित श्रेणिक । कस्य यूय प्राघू-र्णिका. । श्रेणिक भवात्र भवतामिति । तत स एवभूतवचनश्र-वणतो धाराहतकदम्बपुष्पमिव पुलकितसमस्ततनुयष्टि सबहु-मान स्वगृह नीतवान् श्रेणिक भोजनादिक च सकलमप्यात्मना-ऽधिकतर सपादयामास पुण्यप्रभाव च तस्य प्रतिदिवसमात्मनो धनलाभवृद्धिसभवेनासाधारणमभिसमीक्ष्यमाण' कतिपयदिना-तिक्रमे तस्मै स्वदुहितर नन्दानामान दत्तवान् श्रेणिकोऽपि तया सह पुरदर इव पौलोम्या मन्मथमनोरथनापूर्यत्पञ्चविधभोग-लालसो बभूव । कतिपयवासरातिक्रमे च नन्दाया गर्भाधानम-भूत् इतश्च प्रसेनजित्स्वान्तसमय विभाव्य श्रेणिकस्य परपरया वार्तामधिगम्य तदाकारणाय सत्वरमुष्ट्रवाहनान् पुरुषान् प्रेषया-मास ते च समागत्य श्रेणिक विज्ञप्तवन्तो देव ! शीघ्रमागम्यतां देव सत्वरमाकारयति ततो नन्दा समापन्नसत्वामापृच्छ्य "अम्ह रायगिहे पण्डुरकुड्ड गोपाला । जइ अम्हेहिं कज्ज तो एज्जहत्ति" एतद्वाक्य क्वचित् लिखित्वा श्रेणिको राजगृह प्रति चलितवान् नन्दायाश्च देवलोकच्युतमहानुभावगर्भसत्वप्रभावत एव दोह-दमुदपादि यदहं यदि प्रवरकुञ्जरमधिरूढा निखिलजनेभ्यो धन-दानपुरस्सरमभयप्रदान करोमीति पिता च तदित्थभूतदौहृद-मुत्पन्न ज्ञात्वा राजान विज्ञप्य पूरितवान् कालक्रमेण च प्रवृत्ते

प्रसवसमये प्रातरादित्यबिम्बमिव दश दिशः प्रकाशय- न्नजायत पुत्रस्तस्य च दौहृदानुसारेण अभय इति नाम चक्रे सोऽपि चाभयकुमारो नन्दनवनान्तर्गतकल्पपादप इव तत्र सुखेन परिवर्द्धते शास्त्रग्रहणादिकमपि यथाकालं कृत- वान् । अन्यदा च स्वमातरं पप्रच्छ मातः ! कथं मे पिता- ऽभूदिति तत सा कथयामास मूलत आरभ्य सर्वं यथावस्थितं वृत्तान्तं दर्शयामास च शिक्षितान्यक्षराणि । ततो मातृवचनता- त्पर्यावगमतो शिक्षिताक्षरार्थावगमतश्च ज्ञातमभयकुमारेण यथा मे पिता राजगृहे राजा वर्तते इति एवं च ज्ञात्वा मातरमभाणीत् व्रजामो राजगृहे सार्थेन सह वयमिति । सा प्रत्यवादीत् वत्स ! यद्भणसि तत्करोमीति ततोऽभयकुमारः स्वमात्रा सह सार्थेन समं चलित प्राप्तो राजगृहस्य बहिः प्रदेशे ततोऽभयकुमारस्तत्र मातरं विमुच्य किं प्रवर्तनं संप्रति पुरे कथं वा राजा दर्शनीय इति विचिन्त्य राजगृहं प्रविष्टः । तत्र पुरप्रवेशे एव निर्जलकूप- तटे समन्ततो लोकसमुदायेनावतिष्ठते पृष्टं चाभयकुमारेण कि- मित्येष लोकमेलापक ततो लोकेनोक्तम् । अस्य मध्ये राज्ञो- ऽङ्गुल्याभरणमास्ते ततः यो नाम तटे स्थित स्वहस्तेन गृह्णाति तस्मै राजा महतीं वृत्तिं प्रयच्छतीति तत एव श्रुत्वे पृष्टाः प्रत्यास- न्नवर्तिनो राजनियुक्ताः पुरुषाः तैरप्येवमेव कथितं ततोऽभयकु- मारेणोक्तमहं तटे स्थितो गृहीष्यामि राजनियुक्तैः पुरुषैरुक्तं गृ- हाण त्वं यत्प्रतिज्ञातं राज्ञा तदवश्यं करिष्यते ततोऽभयकुमा- रेण परिभाविनमङ्गुल्याभरणं दृष्ट्वा सम्यक् तत आर्द्रगोमयेनाहतं- स्तन्न तत्र ततस्तस्मिन् शुष्के मुक्तं कूपान्तरगतपानीयं भृतो जलेन परिपूर्णः स कूपः तरति चोपरि सोऽङ्गुल्याभरणं शुष्कगो- मयस्ततस्तटस्थेन सता गृहीतमङ्गुल्याभरणमभयकुमारेण कृत- श्चानन्दकोलाहलो लोकेन, निवेदितं राज्ञो राजनियुक्तैः पुरुषै- राकारितोऽभयकुमारो राज्ञा, गतो राज्ञः समीपं मुमोच पुरतोऽङ्गु- ल्याभरणं पृष्टश्च राज्ञा वत्स ! कोऽसि त्वम् । अभयकुमारेणोक्तम् । हे देव ! युष्मत्पुत्र राजा प्राह कथम् । तत प्राक्तनवृत्तान्तं कथि- तवान् ततो जगाम महाप्रमोदं राजा चकारोत्सङ्गे अभयकुमारं चुम्बितवांस्तेनेह शिरसि पृष्टश्च श्रेणिकेनाभयकुमारो वत्स ! क्व ते माता वर्तते देव ! बहिः प्रदेशे ततो राजा सपरिच्छदः तस्याः सम्मुखमुपागमत् । अभयकुमारश्चाग्रे समागत्य कथयामास स- र्वं तन्मात्रा तत सा मातरं मण्डयितुं प्रवृत्ता निषिद्धा च अभ- यकुमारेण मातर्न कल्पते कुलस्त्रीणां निजपतिविरहितानां निज- पतिदर्शनमन्तरेण भूषणं कर्तुमिति समागतो राजा पपात राज्ञः पादयोर्नन्दा सम्मानिता च भूषणादिप्रदानेनातीव राज्ञा सस्नेह- प्रवेशिता महाविभूत्या नगरं तत्पुत्रः स्थापितश्चाभयकुमारोऽमा- त्यपदे इति अभयकुमारस्यौत्पत्तिकी बुद्धिः ॥ ४ ॥

तथा ( पडत्ति ) पटोदाहरणं तद्भावना द्वौ पुरुषौ एकस्य आच्छादनपटः सौत्रिकोऽपरस्योर्णामय तौ च सह गत्वा युगपत्स्नातुं प्रवृत्तौ तत्रोर्णामयपटस्वामी स्वपटं विमुच्य द्वि- तीयस्य सौत्रिकं पटं गृहीत्वा गन्तुं प्रस्थितो द्वितीयो याचते स्वपटं स न प्रयच्छति ततो राजकुले च व्यवहारो जातः तत कारणिकैर्द्वयोरपि शिरसी कङ्कतिकयाऽवलेखिते ततोऽ- वयवस्तने हते सति ऊर्णामयपटस्वामिन शिरस ऊर्णावयवा विनिर्गतास्तु ततो ज्ञात नूनमेष न सौत्रिकपटस्य स्वामीति निगृहीतोऽयमस्य समर्पित सौत्रिकपट कारणिकानामौत्प- त्तिकी बुद्धिः ॥ ५ ॥ ( सरडत्ति ) सरटोदाहरणं तद्भावना कस्य चि- त्पुरुषस्य पुरीषमुत्सृजत सरटो गुदस्याधस्तादविल प्रविशन् पुच्छेन गुदं स्पृष्टवान् तत्सस्तेनैवमज्ञापत शङ्का नूनमुदरे मे सरटः प्रविष्टः ततो गृहं गतो महतीमधृतिं कुर्वन्नतीव दुर्बलो बभूव वैद्यं च पप्रच्छ वैद्यश्च ज्ञातवानसंभवमेतत् केवलमस्य कथंचिदाशङ्का समुदपादि ततः सोऽवादीत् यदि मे शतं रूपकाणां प्रयच्छसि ततोऽहं त्वां निराकुलीकरोमि तेन प्रतिपन्नं ततो वैद्यो विरेचकौषधं प्रदाय तस्य लाक्षारस- खरण्टितं कृत्वा सरटं घटे प्रक्षिप्य तस्मिन् घटे पुरीषोत्सर्गं कारितवान् ततो वैद्येन दर्शित तस्य पुरीषखरण्टितो घटे सरटो व्यपगता तस्य सर्वा शङ्का जातो बलिष्ठशरीरो वैद्यस्यौ- त्पत्तिकी बुद्धिः ॥ ६ ॥

( कायत्ति ) काकोदाहरणं तद्भावना वेन्नातटे नगरे केनापि सौगतेन कोऽपि श्वेतपटक्षुल्लकः पृष्टः भो क्षुल्लक ! सर्वज्ञाः किल तवार्हन्तस्तत्पुत्रकाश्च यूयं तत्कथय कियन्तो अत्र पुरे वसन्ति वायसाः तत क्षुल्लकश्चिन्तयामास शठोऽयं प्रतिश- ठाचरणेन निर्लोठनीयः तत स्वबुद्धिवशात् इदं पठितवान्– “ सट्ठिं कागसहस्सा, इह यं छिन्नायडे परिवसंति । जइ ऊण- गा वसिया, अब्भहिया पाहुणा आया ” तत स भिक्षु प्रत्युत्तरं दातुमशक्नुवन् लकुडाहतशिरस्क इव शिरःकण्डू- यमानो मौनमाधाय गत इति क्षुल्लकस्यौत्पत्तिकी बुद्धिः ॥ अथवा अपरो वायसदृष्टान्त कोऽपि क्षुल्लकः केनापि भागव- तेन दुष्टबुद्ध्या पृष्टो भो क्षुल्लक ! किमेष काको विष्ठामितस्ततो विक्षिपति क्षुल्लकोऽपि तस्य दुष्टबुद्धितामवगम्य तन्मर्मवित् प्रत्युत्तरं दत्तवान् युष्मत्सिद्धान्ते च जले स्थले च सर्वत्र व्यापी विष्णुरभ्युपगम्यते ततो यौष्माकीणं सिद्धान्तमुपश्रुत्य एषोऽपि वायसोऽचिन्तयत् किमस्मिन् पुरीषे समस्ति विष्णु किं वा नेति तत स एवमुक्तो बाणाहतमर्मप्रदेश इव घूर्णितचे- ततो मौनमवलम्ब्य रुषा धूमायमानो गत इति क्षुल्लकस्यौ- त्पत्तिकी बुद्धिः ॥ ७—८ ॥

( उच्चारेति ) उच्चारोदाहरणं तद्भावना क्वचित्पुरे कोऽपि धिग्जा- तीयः तस्य भार्या अभिनवयौवनोद्भेदरमणीया लोचनयुगलव- क्रिमावलोकनमहाभल्लीनिपातनताडितसकलकामिकुरङ्गहृद- या प्रबलकामोन्मत्तमना आसीत् सोऽन्यदा धिग्जातीय– तया भार्यया सह देशान्तरे गन्तुं प्रवृत्तोऽपान्तराले च धूर्तः कोऽपि पथिको मिलितः । सा च धिग्जातीया भार्या तस्मिन् रतिं बध्नती ततो धूर्त प्राह मदीया एषा भार्या धिग्जातीयः प्राह मदीयेति ततो राजकुले व्यवहारो जात । तत कारणिकैर्द्वयोरपि पृथक् कृत्य ह्यस्तनदिनभुक्त आ- हारः पृष्टो धिग्जातीयेनोक्त मया ह्यस्तनदिने तिला भक्षितास्त- द्भार्यया च । धूर्तेनान्यत्किमपि उक्तं ततो दत्त तस्या कारणि- कैर्विरेकौषधं जातो विरेको दृष्टा पुरीषान्तर्गतास्तिला दत्ता सा धिग्जातीयस्य निर्धाटितो धूर्तश्च । कारणिकानामौत्पत्तिकी बुद्धिः ९

( गयत्ति ) गजोदाहरणं तद्भावना वसन्तपुरे नगरे कोऽपि राजा बुद्ध्यतिशयसंपन्न मन्त्रिणमन्वेषमाण चतुष्पथे हस्तिनमा- लानस्तम्भे बन्धयित्वा घोषणामचीकरत् योऽमुं हस्तिनं तोलय- ति तस्मै राजा महतीं वृत्तिं प्रयच्छतीति इमां घोषणां श्रुत्वा क- श्चिदेक पुमान् तं हस्तिनं महासरसि नावमारोपयामास तस्मि- न्नारूढे यावत्प्रमाणा नौर्जले निमग्ना तावति प्रमाणे रेखामदात् तत समुत्तारितो हस्ती तटे प्रक्षिप्ता गण्डशैलकल्पा नावि ग्रावा- णस्ते च तावत्प्रक्षिप्ता यावत् रेखां मर्यादीकृत्य जले निमग्ना नौस्ततस्तोलिताः सर्वे ते पाषाणा कृतमेकत्र पलपरिमाणं निवे- दितं राज्ञे देव एतावत्पलपरिमाणो हस्ती वर्तते ततस्तुतोष राजा कृतो मन्त्री सामन्तमूर्धाभिषिक्त परमो मन्त्री तस्यौत्पत्तिकी बुद्धिः १० ( पायणेत्ति ) भाण्डस्लहृदाहरणं विदो नाम कोऽपि पुरुषो राज्ञ

प्रत्यासन्नवर्ती तं प्रति राजा निजदेवीं प्रशसति अहो निरामया मे देवी या न कदाचिदपि वातनिसर्गं विदधाति । विट प्राह देव ! न भवतीदं जातुचित् । राजा अवादीत् कथं विट आह देव धूर्ता देवी ततो यदा सुगन्धिपुष्पाणि चूर्णवासा त्वां समर्प्पयति नासिकाग्रे तदा ज्ञातव्य वातमुञ्चतीति ततोऽन्यदा राज्ञा तथैव परिभावितं सम्यगवगते च हसित ततो देवी हसननिमित्तकथनाय निर्बन्ध कृतवती ततो राजाऽतिनिर्बन्धे कृते पूर्ववृत्तान्तमचकथत् । ततश्चुकोप तस्मै विटाय देवी आज्ञप्तो देशत्यागेन । तेनापि जज्ञे नूनमकथयत् पूर्ववृत्तान्तं देवो देव्यास्तेन मे चुकोप देवी । ततो महान्तमुपानहां भरमादाय गतो देवीसकाश विज्ञापयामास देवीम् । देवि ! यामो देशान्तराणि देवी उपानहां भरं पार्श्वे स्थितं दृष्ट्वा पृष्टवती रे किमेष उपानहांभरः । सोऽवादीत् देवि यावन्ति देशान्तराण्येतावनीभि रुपानद्भिर्गन्तुं शक्यामि तावत्सु देव्याः कीर्तिर्विस्तारणीया तत एवमुक्ते मा मे सर्वत्राप्यपकीर्तिर्जायेतेति परिभाव्य देवी बलात् तं धारयामास । विटस्यौत्पत्तिकी बुद्धिः ॥ ११ ॥

( गोलोत्ति ) गोलकोदाहरणं तद्भावना लाक्षागोलकः कस्यापि बालकस्य कथमपि नासिकामध्ये प्रविष्ट तन्मातापितरावतीव आर्तौ बभूवतुः दर्शितो बालक सुवर्णकारस्य तेन च सुवर्णकारेण प्रतप्ताग्रभागया लोहशलाकया शनैः २ यत्नतो लाक्षागोलको मनाक् प्रताप्य सर्व्वोपि समाकृष्टः सुवर्णकारस्यौत्पत्तिकी बुद्धिः । १२ । (खंभत्ति) स्तम्भोदाहरण तद्भावना । राजा मन्त्रिणमेकं गवेषयन् महाविस्तीर्णतटाकमध्ये स्तम्भमेकं निक्षेपयामास तत एव घोषणां कारितवान् यो नाम तटस्थितोऽमु स्तम्भं दवरकेण बध्नाति तस्मै राजा शतसहस्रं प्रयच्छति तत एव घोषणां श्रुत्वा कोऽपि पुमान् एकस्मिन् तटप्रदेशे कीलके भूमौ प्रक्षिप्य दवरकेण बध्वा तेन दवरकेण सह सर्वतस्तटे परिभ्राम्यन् मध्यस्थित त स्तम्भं बद्धवान् लोकेन च बुद्ध्यतिशयसपन्नतया प्रशसितो निवेदितश्च राज्ञो राजनियुक्तैः पुरुषैः तुतोष राजा ततस्त राजा मन्त्रिणमकार्षीत् तस्य पुरुषस्यौत्पत्तिकी बुद्धिः १३ (खुल्लत्ति) क्षुल्लकोदाहरणं तद्भावना कस्मिंश्चित्पुरे काचित्परिव्राजिका सा यो यत्करोति तदह कुशलकर्मा सर्वं करोमीति राज्ञ समक्ष प्रतिज्ञां कृतवती राजा च तत्प्रतिज्ञासूचकं पटहमुद्घोषयामास । तत्र च कोपि क्षुल्लको भिक्षार्थमटन् पटहशब्दं श्रुतवान् श्रुतश्च प्रतिज्ञार्थः ततो धृतवान् पटहं प्रतिपन्नो राजसमक्ष व्यवहारो गतो राजकुले क्षुल्लकस्ततस्तं लघुं दृष्ट्वा सा परिव्राजिकात्मीयं मुख विकृत्यावज्ञयाभिधत्ते कथय कुतो गिलामि तत एवमुक्ते क्षुल्लक स्वं मेढ्रं दर्शितवान् ततो हसित सर्वैरपि जनैरुद्घुष्टं च जिता परिव्राजिका तस्या एवं कर्तुमशक्यत्वात् ततः क्षुल्लकः कायिक्या पद्ममालिखितवान् सा कर्तुं न शक्नोति ततो जिता परिव्राजिका । क्षुल्लकस्यौत्पत्तिकी बुद्धिः । १४ ।

( मग्गति ) मार्गोदाहरण तद्भावना कोऽपि पुरुषो निजभार्यां गृहीत्वा वाहनेन ग्रामान्तर गच्छति अपान्तराले च क्वचित्प्रदेशे शरीरचिन्तानिमित्त तद्भार्या वाहनादुत्तीर्णवती तस्यां च शरीरचिन्तानिमित्त कियद्भूभाग गतायां तत्प्रदेशवर्तिनी काचित् व्यन्तरी पुरुषस्य रूपसौभाग्यादिकमवलोक्य कामातुरा तद्रूपेणागत्य वाहन विलग्ना सा च तद्भार्या शरीरचिन्तां विधाय यावद्वाहनसमीपमागच्छति तावदन्यां स्त्रियमात्मसमानरूपां वाहनरूढां पश्यति सा च व्यन्तरी पुरुष प्रत्याह एषा काचित् व्यन्तरी मदीय रूपमाधाय तव सकाशमागच्छति तत खेटय सत्वर ततः स पुरुषः तथैव कृतवान् । सा चारटन्ती पश्चाल्लग्ना समागच्छति पुरुषोऽपि तामारटन्तीं दृष्ट्वा मूढचेता मन्द २ खेटयामास ततःप्रावर्तत तयो स्तद्भार्याव्यन्तर्योर्निष्ठुरभाषणादिकः परस्पर कलहः ग्रामे च प्राप्ते जातः तयो राजकुले व्यवहार पुरुषश्च निर्णयमकुर्वन्नुदासीनो वर्तते । ततः कारणिकैः पुरुषो दूरे व्यवस्थापितो भणिते च द्वे अपि स्त्रियौ युवयोर्मध्ये या काचिदमु प्रथमं हस्तेन संस्पृक्ष्यति तस्याः पतिरेष न शेषायाः । ततो व्यन्तरी दूरत हस्त प्रसार्य प्रथम स्पृष्टवती ततो ज्ञातं कारणिकैरेषा व्यन्तरीति । ततो निर्धाटिता द्वितीया च समर्पिता स्वपते । कारणिकानामौत्पत्तिकी बुद्धिः १५ (इत्थित्ति) स्त्र्युदाहरण तद्भावना मूलदेवकण्डरीकौ सह पन्थानं गच्छतः इतश्च कोऽपि सभार्याक पुरुष तेनैव पथा गन्तु प्रावर्तत कण्डरीकश्च दूरस्थितः तद्भार्यागतमतिशायि रूप दृष्ट्वा साभिलाषो जात कथितं च तेन मूलदेवस्य यदीमां मे सपादयसि तदाह जीवामि नान्यथेति ततो मूलदेवोऽवादीत् मात्वरीभूरह ते नियमतः सपादयिष्यामि । ततस्तौ द्वावप्यलक्षितौ सत्वरं दूरतो गतौ ततो मूलदेवः कण्डरीकमेकस्मिन्वननिकुञ्जे संस्थाप्य पथि कूर्चस्थितो वर्तते ततः पश्चादायातः सभार्याक स पुरुषो भणितो मूलदेवेन । भो महापुरुष ! महिलाया मेऽस्मिन्वननिकुञ्जे प्रसवो वर्तते तत क्षणमात्रं निजमहिलां विसर्जय, विसर्जिता तेन आगता कण्डरीकपार्श्वे ततः क्षणमात्र स्थित्वा समागता । "आगंतूण य तत्तो, पडय घेत्तूण मूलदेवस्स । धुत्ती भणइ हसती, पिय खुणे दारओ जाओ" द्वयोरपि तयोरौत्पत्तिकी बुद्धिः ॥ १६ ॥

( पइत्ति ) पतिदृष्टान्त तद्भावना द्वयोर्भ्रात्रोरेका भार्या लोके च महाकौतुकमहो द्वयोरप्येषा समानुरागेति एतच्च श्रुतिपरंपरया राज्ञाऽपि श्रुत पर विस्मयमुपागतो राजा । मन्त्री ब्रूते देव ! न भवति कदाचिदप्येतदवश्यं विशेषः कोऽपि भविष्यति राज्ञोक्त कथमेतदवसेयम । मन्त्रीब्रूते देवाचिरादेव यथा ज्ञास्यते तथा यतिष्यते । ततो मन्त्रिणा तस्याः स्त्रिया लेखः प्रेषितो यथा द्वावपि निजपती ग्रामद्वये प्रेषणीयावेक पूर्वस्यां दिशि विवक्षिते ग्रामेऽपरोऽपरस्यां दिशि । तस्मिन्नेव च दिने द्वाभ्यामपि गृहे समागन्तव्यम । ततस्तया यो मन्दवल्लभ स पूर्वस्यां दिशि प्रेषितोऽपरोऽपरस्यां दिशि । पूर्वस्यां दिशि यो गतः तस्य गच्छतः आगच्छतश्च सम्मुख सूर्य । य पुनरपरस्यां दिशि गतः तस्य गच्छत आगच्छतश्च पृष्ठत । एव च कृते मन्त्रिणा ज्ञातमयं मन्दवल्लभोऽपरोऽत्यन्तवल्लभ । ततो निवेदित राज्ञो राज्ञा च न प्रतिपन्न यतोऽवश्यमेक पूर्वस्यां दिशि प्रेषणीयोऽपरोऽपरस्यां दिशि । ततः कथमेष विशेषोऽवगम्यते तत पुनरपि मन्त्रिणा लेखप्रदानेन सा महेलोक्ता द्वावपि निजपती तयोरेव ग्रामयोः समक प्रेषणीयौ तया च तौ तथैव प्रेषितौ मन्त्रिणा च द्वौ पुरुषौ तस्याः समीपे समकं तयो शरीरापाटवनिवेदकौ प्रेषितौ द्वाभ्यामपि च सा समकमाकारिता ततो यो मन्दवल्लभशरीरपाटवनिवेदक एषपस्त प्रत्याह स देवो मन्दशरीरी द्वितीयोऽत्यातुरश्च वर्तते ततस्त प्रत्यह गमिष्यामि । तथैव कृत ततो निवेदित राज्ञो मन्त्रिणा प्रतिपन्न राज्ञा तथेति । मन्त्रिण औत्पत्तिकी बुद्धि ॥ १७ ॥

(पुत्तत्ति) पुत्रदृष्टान्त तद्भावना कोऽपि वणिक् तस्य द्वे पत्न्यौ एकस्य पुत्रोऽपरा वन्ध्या परं सा पि तं पुत्र सम्यक्पालयति ततः स पुत्रो विशेष न जानीते यथेय मे जननी इय नेति सोऽपि वणिक् सभार्यापुत्रो देशान्तर गतो गतमात्र एव परासुरभूत् ततो द्वयोरपि तयोः कलहोऽजायत । एका भणति ममैष पुत्रस्ततोऽहं

गृहस्वामिनी द्वितीया तु वक्ति का त्वं ममैष पुत्र ततोऽहमेव गृहस्वामिनीति । एवं तयोः परस्पर कलहे जाते राजकुले व्यवहारो जात । ततोऽमात्य प्रतिपादयामास निजपुरुषान् भो पूर्वद्रव्य समस्तं विभज्य ततो दारक द्वौ भागौ करपत्रेण कुरुत कृत्वा चैकं खण्डमेकस्यै समर्पयत द्वितीय द्वितीयस्यै । तत एतदमात्यवचस्य शिरसि महाज्वालासहस्रावलीढवज्रोपनिपातकल्प पुत्रमाता श्रुत्वा सोत्कम्पहृदयान्त प्रविष्टतिर्यक्शल्येव दुःखवक्तु प्रवृत्ता हे स्वामिन्! महामात्य न ममैष पुत्रो न मे किञ्चिदर्थेन प्रयोजनमेतस्या एव पुत्रो भवत्विय गृहस्वामिनी च अह पुनरमु पुत्र दूरस्थितापि परगृहेषु दारिद्र्यमपि कुर्वती जीवन्त द्रक्ष्यामि तावता च कृतकृत्यमात्मानं प्रपत्स्ये। पुत्रेण विना पुनरधुनापि समस्तोऽपि मे जीवलोकोऽस्तमुपयाति इतरा च न किमपि वक्ति ततोऽमात्येन तां दुःखार्तां परिभाव्य उक्तमेतस्या पुत्रो नास्याइति । सैव च सर्वस्य स्वामिनी कृता द्वितीया तु निर्धाटिता अमात्यस्यौत्पत्तिकी बुद्धि १७ शरडसिरमेढेत्यादिका च गाथा रोहक सविधानसूचिका सा च प्रागुक्तकथानकानुसारेण स्वयमेव व्याख्येया । (मधुसिक्थेत्यादि) मधुयुक्त सिक्थ तद्दृष्टान्तभावना कश्चित्कौलिक. तस्य भार्या स्वैरिणी सा चान्यदा केनापि पुरुषेण सह क्वचित्प्रदेशे जालिकामध्ये मैथुन सेवितवती मैथुनस्थितया च तया उपरि भ्रामरमुत्पन्नं दृष्ट क्षणमात्रानन्तरं च गृहे समागता । द्वितीये च दिवसे स्वभर्ता मदन क्रीणन्तया निवारितो मा क्रीणीहि मदन महत् भ्रामरमुत्पन्नं दर्शयामि । तत स क्रयणाद्विनिवृत्तो गतौ च तौ द्वावपि तां जालि न पश्यति सा कथमपि कौलिकी भ्रामरन दृष्टवती ततो येन संस्थानेन मैथुन सेवितवती तेन संस्थानेन स्थिता ततो भ्रामरं दृष्टवती दर्शयामास च कौलिकाय कौलिकोऽपि च तथारूप संस्थानमवलोक्य ज्ञातवान्नूनमेषा दुराचारिणीति । कौलिकस्यौत्पत्तिकी बुद्धि. ॥ १९ ॥

(मुद्दियत्ति) मुद्रिकोदाहरणं तद्भावना क्वचित्पुरे कोऽपि पुरोधा सर्वत्र ख्यातसत्यवृत्तिर्यथा परकीयान्निक्षेपानादाय प्रभूतकालातिक्रमेऽपि तथास्थितानेव समर्पयतीति एतच्च श्रुत्वा कोऽपि द्रमक तस्मै स्वनिक्षेप समर्प्य देशान्तरं प्रभूततरमगमत् प्रभूतकालातिक्रमे च भूयोऽपि तत्रागतो याचते स्व निक्षेप पुरोधाश्च मूलत एवापलपति कस्त्व कीदृशो वा तव निक्षेप इति । तत. स रङ्को वराकः स्वनिक्षेपमलभमान शून्यचित्तो बभूव । अन्यदा च तेनामात्यो गच्छन् दृष्टो याचितश्च देहि मे पुरोहित ! सुवर्णसहस्रप्रमाण निक्षेपमिति । तत एतदाकर्ण्य अमात्य तद्विषयकृपापरीतचेता बभूव । ततो गत्वा निवेदितं राज्ञ. कारितश्च दर्शन द्रमकोऽपि राज्ञा भणितः पुरोधा देहि तस्मै द्रमकाय स्व निक्षेपमिति । पुरोहितोऽवादीत् देव ! नस्याह न किमपि गृह्णामि । ततो राजा मौनमभजत् । पुरोधसि च स्वगृह गते राजा विजने तं द्रमक पृष्टवान् रे कथय ! सत्यमिति ततस्तेन दिवसमुहूर्तस्थानपार्श्ववर्तिमानुषादिक कथितम् ततोऽन्यदा राजा पुरोधसा सम द्यूतं प्रावर्तत परस्परं नाममुद्रा सञ्चारिता ततो राजा यथा पुरोधा न वेत्ति तथा कस्यापि मानुषहस्ते नाममुद्रां समर्प्य न प्रति वभाण रे पुरोधसो गृहे गत्वा तद्भार्यामेवं ब्रूहि यथाऽहं पुरोधसा प्रेषित इय च नाममुद्राभिज्ञानं तस्मिन् दिने तस्यां वेलायां य. सुवर्णसहस्रं नवलको द्रमकसत्क. त्वत्समक्षममुकप्रदेशे मुक्तोऽस्ति तं झटिति समर्पय तेन पुरुषेण तथैव कृतं सापि च पुरोधसो भार्या नाममुद्रां दृष्ट्वाऽभिज्ञान मिलनतश्च सत्यमेष पुरोधसा प्रेषित इति प्रतिपन्नवती । तत. समर्पयामास तं द्रमकनिक्षेप तेन पुरुषेणानीय राज्ञ स मर्पितो राज्ञा चान्येषां बहूनां नवलकानां मध्ये स द्रमकनवलकः प्रक्षिप्त । आकारितो द्रमकः पार्श्वे चोपवेशितः पुरोधा द्रमकोऽपि तथात्मीयं नवलकं दृष्ट्वा प्रमुदितहृदयो विकसितलोचनोऽपगतचित्तशून्यताभावः सहर्षं राजानं विज्ञापयितु प्रवृत्तो देव ! देवपदानां पुरत एवमाकारो मदीयो नवलकस्ततो राजा तस्मै समर्पयामास । पुरोधसो जिह्वाच्छेदमचीकरत् । राज्ञ. औत्पत्तिकी बुद्धिः ॥ २० ॥

(अकत्ति) अङ्कदृष्टान्तभावना कोऽपि पार्श्वे रूपकसहस्रनवलकं निक्षिप्तवान् तेन च निक्षेपग्राहिणा तं नवलकमध. प्रदेशे छित्वा कूटरूपकाणां सम्भृत. तथैव च सीवित. । ततः कालान्तरे तस्य पार्श्वान्निक्षेपस्वामिना स्वनिक्षेपो गृहीत. परिभावितः सर्वत. तथैव दृश्यते मुद्रादिक तत उद्घाटिता मुद्रा यावत् रूपकान् परिभावयति तावत्सर्वानपि कूटान्पश्यति ततो जातो राजकुलेन तयोर्व्यवहार. । पृष्ट. कारणिकैर्निक्षेपस्वामी भोः कतिसङ्ख्यास्तव नवलके रूपका आसीरन् स प्राह सहस्र ततो गणयित्वा रूपकाणां सहस्र तेन भृतः स नवलकः स च परिपूर्ण भृत केवलं यावन्मात्रमधस्ताच्छिन्नस्तावन्न्यून इति उपरि सीवितुं न शक्यन्ते ततो ज्ञात कारणिकै. नूनमस्याऽपहृता रूपका. ततो दापितो रूपकसहस्रमितरो नवलकस्वामिन. । कारणिकानामौत्पत्तिकी बुद्धि. ॥ २१ ॥

(णाणत्ति) कोऽपि कस्यापि पार्श्वे सुवर्णपणभृतं नवलक क्षिप्तवान् ततो गतो देशान्तर प्रभूते च कालातिक्रान्ते निक्षेपग्राही तस्मान्नवलकाज्जात्यसुवर्णमयान् पणान् गृहीत्वा हीनवर्णकसुवर्णपणान् तावत्संख्याकान् तत्र प्रक्षिप्तवान् तथैव च स नवलकः तेन सीवित. तत. कतिपयदिनानन्तर स नवलकस्वामी देशान्तरादागत स्व च नवलक तस्य पार्श्वे याचितवान् सोऽपि समर्पयामास परिभावित तेन मुद्रादिक तथैव दृष्टम् । ततो मुद्रां स्फोटयित्वा यावत्पणान्परिभावयति तावद्धीनवर्णसुवर्णकमयान् पश्यति ततो बभूव राजकुले व्यवहार पृष्ट च कारणिकैः क. काल आसीत् यत्र त्वया नवलको मुक्त इति । नवलकस्वामी प्राह । अमुक इति तत कारणिकैरुक्त स चिरन्तनकालोऽधुना तनकाश्च कृताश्च दृश्यन्तेऽमी पणास्ततो मिथ्याभाषी नूनमेष निक्षेपग्राहीति दण्डितो दापितश्च तस्य तावत्पणास्तमिति । कारणिकानामौत्पत्तिकीबुद्धि. ॥ २२ ॥

(भिक्खुत्ति) भिक्षूदाहरणं तद्भावना कोपि कस्यापि भिक्षोः पार्श्वे सुवर्णसहस्र निक्षिप्तवान् कालान्तरे याचते स च भिक्षुर्न प्रयच्छति केवलमद्यकल्ये वा ददामीति विप्रतारयति ततस्तेन द्यूतकारा अवलगितास्ततस्तै प्रतिपन्न निश्चित दापयिष्याम । ततो द्यूतकारा रक्तपटवेषेण सुवर्णखोटिकां गृहीत्वा समागता वदन्ति च वय चैत्यवन्दनाय देशान्तर यियासवो यूय परमसत्यतापात्रमत एता सुवर्णखोटिका युष्मत्पार्श्वे स्थास्यन्ति एतावति चावसरे पूर्वं संकेतित स पुरुष. आगत्य याचते स्म भिक्षो ! समर्पय स्थापनिकामिति ततो भिक्षुणाभिनवमुच्यमानसुवर्णखोटिका लम्पटतया समर्पिता तस्य स्थापनिका तस्मै । मा एतासामहमाभागी,जायेयेति बुद्ध्या तेऽपि च द्यूतकारा किमपि मिषान्तर कृत्वा स्वसुवर्णखोटिकां गृहीत्वा गता । द्यूतकाराणामौत्पत्तिकी बुद्धि २३

(चेडगनिहाणत्ति) चेटका बालका निधान प्रतीतं दृष्टान्तभावना द्वौ पुरुषौ परस्पर प्रतिपन्नसखिभावावन्यदा क्वचित्प्रदेशे ताभ्यां निधानमुपलब्धे तत एको मायावी ब्रूते स्वस्तनदिने शुभे न क्षत्रे ग्रहीष्यामो द्वितीयेन च सरलमनस्कतया तथैव प्रतिपन्नम् । ततस्तेन मायाविना तस्मिन् प्रदेशे रात्रावागत्य निधान गृहीत्वा तत्राङ्गारका प्रक्षिप्ता ततो द्वितीयदिने तौ द्वावपि भूत्वा गतौ दृष्टवन्तौ तत्राङ्गारकान् । ततो मायावी मायया स्वोरस्ताडमाक्र-

न्दितु प्रावर्तत वदति च हा हीनपुण्यया वय दैवेन वञ्चुदंत्वा ऽस्माक समुत्पादिते यविधानमुपदिश्याङ्गारका दर्शिताः पुन: एनश्च द्वितीयमुखमवलोकते ततो द्वितीयेन जज्ञे नूनमनेन हृत धनमिति ततस्तेनाप्याकारसवरण कृत्वा तस्यानुशासनार्थमूचे मा वयस्य खेद कार्षी· न खलु खेद पुनर्विधानप्रत्यागमनहेतु· । ततो गतौ द्वावपि स्व गृह ततो द्वितीयेन तस्य मायाविनो लेप्यमयी सजीवेव प्रतिमा कारिता द्वौ च गृहीतौ मर्कटौ प्रतिमायाश्चोत्सङ्गे हस्ते शिरसि स्कन्धे वान्यत्र च यथायोग्य तयोर्मर्कटयोर्भक्ष्य मुक्तवान् तौ च मर्कटौ क्षुधापीडितौ तत्रागत्य प्रतिमाया उत्सङ्गादौ भक्ष्य भक्षितवन्तौ एव च प्रतिदिन करणे तयोस्तादृश्येव शैली समजनि । ततोऽन्यदा किमपि पर्वाधिकृत्य मायाविनो द्वावपि पुत्रौ भोजनाय निमन्त्रितौ समागतौ च भोजनवेलायां तद्गृहे भोजितौ च तेन महागौरवेण भोजनानन्तर च तौ महता सुखेनान्यत्र सगोपितौ । ततस्तोकदिनावसाने मायावी स्वपुत्रशोधिकरणाय तद्गृहमागत· ततो द्वितीयस्त प्रति ब्रूते मित्र! तौ तव पुत्रौ मर्कटावभूतां तत· सखेद विस्मृतचेता गृहमध्य प्राविशत् ततो लेप्यमयीं प्रतिमामुत्सार्य तत्स्थाने समुपवेशितो मुक्तौ स्वस्थानात् मर्कटौ च किलकिलायमानौ तस्योत्सङ्गे शिरसि स्कन्धे वागत्य विलग्नौ । ततो मित्रमवादीत् भो वयस्य! तावेतौ तव पुत्रौ तथाच पश्य तव स्नेहमात्मीय दर्शयत· । तत स मायावी प्राह वयस्य ! किं मानुषावकस्मान्मर्कटकौ जातौ वयस्य आह भवतः कर्मप्रातिकूल्यवशात् तथाहि किं सुवर्णमङ्गारी भवति परमावयो· कर्मप्रातिकूल्यादेतदपि जात तथा तव पुत्रावपि मर्कटावभूतामिति । ततो मायावी चिन्तयामास नूनमह ज्ञातोऽनेन ततो यद्युच्चै· शब्द करिष्ये ततोऽह राजग्राह्यो भविष्यामि पुत्रौ चान्यथा मे न भवत· ततस्तेन सर्व यथावस्थित निवेदित दत्तश्च भाग इतरेण च समर्पितौ पुत्रौ तस्यौत्पत्तिकी बुद्धि· ॥ २४ ॥

( सिक्खत्ति ) शिक्षा धनुर्वेदे तदुदाहरणभावना कोऽपि पुमानतीव धनुर्वेदकुशलः स परिभ्रमन्नैकत्रेश्वरपुत्रान् शिक्षयितुं प्रावर्तत तेभ्यश्चेश्वरपुत्रेभ्यः प्रभूतं द्रव्य प्रापितवान् ततः पित्रादयस्तेषां चिन्तयामासु· प्रभूतमेतस्मै दत्तवन्तः। ततो यदासौ यास्यति तदैन मारयित्वा सर्व ग्रहीष्याम· एतच्च कथमपि तेन ज्ञातं ततः स्वबन्धूनां ग्रामान्तरवासिनां कथमपि ज्ञापित यथाहममुकस्यां रात्रौ नद्यां गोमयपिण्डान् प्रक्षेप्स्यामि भवद्भिस्ते ग्राह्या इति । ततस्तैस्तथैव प्रतिपन्न ततो द्रव्येन सवलिता गोमयपिण्डास्तेन कृताः आतपेन शोषितास्तत ईश्वरपुत्रान् प्रत्युवाच यथैषोऽस्माक विधिर्विवक्षितपर्वणि स्नानमन्त्रपुरस्सर ते सर्वेऽपि गोमयपिण्डा नद्या प्रक्षिप्यास्तत· समागतो गृह तेऽपि गोमयपिण्डा नीता बन्धुभिः स्वग्रामे । तत· कतिपयदिनातिक्रमे तानीश्वरपुत्रान् तेषा च पित्रादीन् प्रत्येक मुत्कलयाप्यात्मानं च वसुमात्रपरिग्रहोपेत दर्शयन् सर्वजनसमक्ष स्वग्रामं जगाम पित्रादिभिश्च परिभावितो नास्य पार्श्वे किमप्यस्तीति न मारितः।तस्यौत्पत्तिकी बुद्धि· २५ (अत्थसत्थेति) अर्थशास्त्रमर्थविषय नीतिशास्त्रं तद्दृष्टान्तभावना। कोऽपि वणिक् तस्य द्वे पत्न्यौ एकस्या· पुत्रोऽपरा वन्ध्या पर साऽपि पुत्र सम्यक् परिपालयति तत पुत्रो विशेषं न बुध्यते यथेय मे जननी नेयमिति सोऽपि वणिक् सभार्यापुत्रो देशान्तरमगमत् । यत्र सुमतिस्वामिनस्तीर्थकृतो जन्मभूमि तत्र गतमात्र एव च दिव गत सपत्न्योश्च परस्पर कलहोऽभूत् एका ब्रूते ममैष पुत्र ततोऽह गृहस्वामिनी द्वितीया ब्रूतेऽहमिति ततो राजकुले व्यवहारो जात तथापि न निर्वलति एतच्च भगवति सुमतिस्वामिनि तीर्थकरे गर्भस्थिते जनन्या मङ्गलादेव्या जज्ञे तत आकारिते द्वे अपि ते सपत्न्यौ ततो देव्या प्रत्यपादि कतिपयदिनानन्तरं मे पुत्रो भविष्यति स च वृद्धिमधिरूढोऽस्याशोकपादपस्याधस्तादुपविष्टो युष्माकं व्यवहार छेत्स्यति । तत एतावन्तं कालं यावदविशेषेण खादतां पिबतामिति ततो न यस्या· पुत्र· साऽचिन्तयत् लब्धस्तावदेतावान् काल· पश्चाद्यद्भविष्यति तन्न जानीम· । ततो हृष्टवदनयाऽनया प्रतिपन्नं ततो देव्या जज्ञे नैषा पुत्रस्य मातेति निर्भर्त्सिता द्वितीया च गृहस्वामिनी कृता । देव्या औत्पत्तिकी बुद्धिः ॥ २६ ॥

( इच्छीसमहेत्ति ) कापि स्त्री तस्या भर्ता पञ्चत्वमुपागतः सा च वृद्धिप्रयुक्त लोकेभ्यो न लभते तत· पतिमित्र भणितवन्ती मम दापय लोकेभ्यो धनमिति । ततस्तेनोक्त यदि मम भाग प्रयच्छसि । तयोक्त यदिच्छसि तन्मह्य दद्या इति ततस्तेन लोकेभ्य· सर्व द्रव्यमुद्ग्राहित तस्यै स्तोक प्रयच्छति सा नेच्छति ततो जातो राजकुले व्यवहार· ततः कारणिकैर्यद्द्रुद्ग्राहित द्रव्यं तत्सर्वमानायित कृतौ द्वौ भागौ एको महान् द्वितीयोऽल्प इति ततः पृष्ट· कारणिकै· पुरुष· क भागं त्वमिच्छसि स प्राह महान्तमिति । तत· कारणिकैरक्षरार्थो विचारितो यदिच्छसि तन्मह्यं दद्या इति त्व चेच्छसि महान्त भाग ततो महान् भाग एतस्या द्वितीयस्तु तवेति । कारणिकानामौत्पत्तिकी बुद्धि· ।२७

( सयसहस्सत्ति ) कोऽपि परिव्राजकः तस्य रौप्यमयं महाप्रमाण भाजन खोरयसङ्क स च यदेकवार शृणोति तत्सर्व्व तथैवाऽवधारयति तत· स निजप्रज्ञागर्वमुद्वहन् सर्वत्र प्रतिज्ञां कृतवान् यो नाम ममापूर्व श्रावयति तस्मै ददामीदं निजभाजनमिति । न च कोऽप्यपूर्व श्रावयितु शक्नोति स हि यत्किमपि शृणोति तत्सर्वमस्खलितं तथैवानुवदति । वदति चाग्रेऽपीद मया श्रुत कथमन्यथाहमस्खलित भणामीति एतत्सर्व्वं ख्यातिमगमत् तत· केनापि सिद्धपुत्रकेण ज्ञातप्रतिज्ञेन त प्रत्युक्तमपूर्व्वं श्रावयिष्यामि । ततो मिलितो भूयान् लोको राजसमक्ष व्यवहारो बभूव । तत सिद्धपुत्रोऽपाठीत् ।"तुज्झ पिया मह पिउणो, धारेइ अणूणग सयसहस्स । जइ सुयपुव्व दिज्जउ, अह न सुय खोरयं देसु" जित परिव्राजक सिद्धपुत्रेण । सिद्धपुत्रस्यौत्पत्तिकीबुद्धि ॥ २८ ॥ न० ॥ आ० म० द्वि० । आ० चू० । आ० क० ।

उप्पयंत–उत्पतत्–त्रि० ऊर्द्ध पतति, "उप्पयताणि पतता भमता पुव्वकम्मोदयोपगया" प्रश्न० १ द्वा० ।

उप्पयण–उत्पतन–न० उत्-पत ल्युट् ऊर्ध्वगमने, स्था०१० ठा०।

उप्पयणिवय–उत्पातनिपात–पुं० उत्पात आकाशे उल्लङ्घन निपातस्तस्मादवपतनम् ( जं०४वक्ष० ) उत्पातपूर्वो निपातो यस्मिन् स उत्पातनिपात । नाट्यविधिभेदे, "उप्पयणिवयपसत्तं सकुचियं पसारियरयारइय भत सभं णामं दिव्वं णट्टविहिं उवदसेत्ति " रा० । जी० ।

उप्पयणी–उत्पतनी–स्त्री० विद्याभेदे, यां जपन् स्वत एव पतत्यन्यं चोत्पातयति ॥ सूत्र० २ श्रु० २ अ० ।

उप्पयमाण–उत्पतत्– त्रि० ऊर्द्ध पतति, स्त्रियाम् । " उप्पयमाणी विव धरणितलाउ"उत्पतन्ती ऊर्द्ध यान्ती। ज्ञा०६अ०॥

उप्परिवाडी–उत्परिपाटी– स्त्री० विपर्यासे, " उप्परिवाडी गहणे, चाउम्मासा भवे लहुगा " ग० १ अधि० ॥

उप्परिवाडीकरण–उत्परिपाटीकरण–न० विपर्ययकरणे, " उप्परिवाडी करणे, दोसा सम्म तहा करणे " प० व० ।

उप्पल-उत्पल-न० उद्-पल्-अच् प्राकृते " कगटडतदपशषस ×क ×पा मूर्ध्वं लुक्" ८।२।७७ इति संयोगादेर्लुक्। प्रा०। पद्मविशे०। " फुल्लुप्पलकमलकोमलुम्मिलियं " ज्ञा० १ अ०। वि०। कल्प०। औ०। गर्दभके, श्वेतकुमुदे, आ० म० प्र०। ' पक्खंतरेसु बहूइं पउमाइं जाव सयसहस्सावत्ताइं" जी०३प्रति०।रा०। इन्दीवरे जलरुहे, जं० १ वक्ष०। नीलोत्पले, जी० ३ प्रति। ज्ञ०। तं०। स०। आचा०। रक्तकमले, कल्प०। उत्पलं त्रिविधं नीलं रक्तं श्वेतञ्च। वाच०। अत एव उत्पलशब्दस्य, नीलोत्पलं रक्तकमलं गर्दभकनीलोत्पलादीत्येवं विभिन्ना अर्था उपलभ्यन्ते ( उत्पलस्य उपपात परिमाणमवहार उच्चत्व यावत्समुद्घात उद्वर्तनाः द्वात्रिंशता द्वारैर्वणप्फइ शब्दे वक्ष्यते ) कुष्ठे गन्धद्रव्यविशेषे,। "पउमुप्पलगंधिए" स०। तच्च उत्पलं कुष्ठमिति प्रसिद्धम् ॥ जं० २ वक्ष०। जी०। तं०। चतुरशीतावुत्पलाङ्गशतसहस्रेषु, जी० ३ प्रति०। अनु०। स्था०। दशमे कल्पे चतुर्थविमाने च। स०। स्वनामख्याते पार्श्वापत्यीये परिव्राजके, पुं०। अस्थिकग्रामे वीरभगवति शूलपाणियक्षेणोपसृष्टे. " तत्थ उप्पलो नाम पुराणो पासावच्चिज्जतो परिव्वायगो अट्ठंगमहाणिमित्तजाणगो जणपासाते सोऊण मा तित्थगरो होज्जा अद्दिइं पकरेइ। आ०म०द्वि०। आ० क०। " तत्थ उप्पलो नाम पच्छाकडो परिव्वाओ पासावच्चिज्जो णेमित्तिओ भोमउप्पातसुमिणअंतलिक्खअंगसरलक्खणवंजणअट्ठंगमहाणिमित्तजाणओ। आ० चू०१अ०। उत्क्रान्तं पलं मांसम्। अन्या० स०। मांसशून्ये, त्रि०। वाच० स्वनामख्याते द्वीपसमुद्रे च। प्रज्ञा० १५ पद०।

उप्पलंग-उत्पलाङ्ग-न० चतुरशीतौ हुहुकशतसहस्रेषु, जी० ३ प्रति०। जं०। स्था०।

उप्पलकंद-उत्पलकन्द-पुं० मूलबीजे कन्दभेदे, स्था० ५ ठा०।

उप्पलगुम्मा-उत्पलगुल्मा-स्त्री० जम्बूसुदर्शनाया दक्षिणपूर्वस्यां पूर्वदिशि नन्दापुष्करिण्याम्, जी० ३ प्रति०।

उप्पलणाल-उत्पलनाल-न नीलोत्पलादेराधारे,आचा०२श्रु०१अ०

उप्पलवेंटग-उत्पलवृन्तक-पुं० उत्पलवृन्तानि नियमविशेषाद् गृहीतया नैकन्येन येषां सन्ति ते उत्पलवृन्तिका। आजीविकश्रमणभेदेषु, औ० ॥

उप्पलहत्थग-उत्पलहस्तक-पुं० उत्पलाख्यजलजकुसुमविशेषे,। आ० म० द्वि०। जीवा०। रा०।

उप्पला-उत्पला-स्त्री० शङ्खभार्यायाम्, स्था० ९ ठा०। "तस्स णं संखस्स समणोवासगस्स उप्पला णाम भारिया होत्था सुकुमाल जाव सुरूवा समणोवासिया अभिगयजीवाजीवा जाव विहरइ' भ० १२ श० १ उ०। ( संखशब्देऽन्यत् ) कालस्य पिशाचेन्द्रस्य तृतीयाग्रमहिष्याम्, भ० १० श० ५ उ०। (तस्या भवत्रयवक्तव्यता अग्गमहिसी शब्दे उक्ता ) भीमाभिधानकूटग्राहिणो भार्यायाम्. यस्याः पुत्रः गोत्रासो मृत्वा नरकं गत्वा ततो विजयमार्थवाहस्य भद्रायामुज्झितको नाम दारकोऽभवत्। विपा० २अ०। (वक्तव्यता उज्झियशब्दे उक्ता)जम्बवा सुदर्शनाया दक्षिणपूर्वस्यां पश्चिमायां दिशि नन्दापुष्करिण्याम्,।जी० ३ प्रति०।

उप्पलिणीकंद-उत्पलिनीकन्द-पुं० जलजवनस्पतिविशेषे, "पउमुप्पलिणीकंदे, अन्तरकंदे तहेव झिल्ली य। एते अणन्तजीवा एगो जीवो भिसमुणाले "। प्रज्ञा० १ पद०।

उप्पलुज्जला-उत्पलोज्ज्वला-स्त्री० जम्ब्वाः सुदर्शनाया दक्षिणपूर्वस्यामुत्तरस्यां नन्दापुष्करिण्याम, जी० ३ प्रति०। जं०।

उप्पव्वइय-उत्प्रव्रजित-त्रि० उत्प्रव्रज्य निर्गते, उत्प्रव्रजितस्तु द्विधा सारूपी गृहस्थश्च। ध० २ अधि०।

उप्पह-उत्पथ-पुं० उन्मार्गे, " आवज्जे उप्पहं ज तु " सूत्र० १ श्रु० १ अ०। ओ०। " पंथा उ उप्पह नेति " नि० चू० ३ उ०। कदर्थे पथि, वाच०।

उप्पहजाइ-उत्पथयायिन्-पुं० न० उन्मार्गगामिनि युग्ये, तत्तुल्ये शिष्यविशेषे, परसमयगते वा पुरुषे च। स्था० ३ ठा०।

उप्पहेरु-देशी०। महाराष्ट्रादि देशविशेषप्रसिद्धेऽर्थे, प्रा०।

उप्पा-उत्पाद-पुं० प्राकृते स्त्रीत्वं तथारूपत्वं च " एगा उप्पा " प्राकृतत्वादुत्पादः स चैकसमये एकपर्यायापेक्षया नहि तस्य युगपदुत्पादद्वयादिरस्ति अनपेक्षिततद्विशेषकपदार्थतया चैकोऽसाविति। स्था० १ ठा०।

उप्पाइत्ता-उत्पादयितृ-त्रि० उत्पादनशीले, स्था० ७ ठा०। उत्पादके, स्था० ४ ठा०।

उत्पादयितुम्-अव्य० संपादयितुमित्यर्थे, "उप्पाइत्ता एगे य सप्पए पच्चुप्पन्नाणं " स्था० ४ ठा०।

उप्पाइय-औत्पातिक-त्रि० उत्पादने निर्वृत्तमौत्पातिकम्। पांशुपातादौ, तन्निमित्तके अस्वाध्याये च। आव० ४ अ०। रुधिरवृष्ट्यादीनामनिष्टसूचकानां हेतुष्वनर्थेषु, "उप्पाइयावाही" उत्पातोऽनिष्टसूचकरुधिरवृष्ट्यादयस्तद्धेतुका येऽनर्थास्ते औत्पातिका.स०।

उप्पाइयपवण-औत्पातिकपवन-पुं०उत्पातजनितवायौ,प्रश्न०३द्वा।

उप्पाइयपव्वय-औत्पातिकपर्वत-पु० अस्वाभाविके, " उप्पाइयपव्वयं व चकमंत सक्ख मत्तं गुलुगुलुंत " स्वाभाविकपर्वतो हि न चङ्क्रमते अत उच्यते औत्पातिकपर्वतमिव चङ्क्रम्यमाणम् पाठान्तरेण तु औत्पातिकपर्वतमिव। औ०। ज्ञा० ॥

उप्पाइयाविच्छिन्नकोउहल्लत्त-उत्पादिताविच्छिन्नकौतूहलत्व-न० श्रोतॄणां स्वविषये उत्पादितं जनितमविच्छिन्नं कौतूहलं कौतुकं येन तत्तथा। तद्भावस्तत्त्वम्। श्रोतृषु स्वविषयाद्भुतविस्मयकारितारूपे पञ्चविंशे सत्यवचनातिशये, रा० ॥

उप्पाडण-उत्पाटन-न० उद्-पट्-णिच्-ल्युट्-भूमेरुत्क्षेपे, प्रश्न० १ द्वा०। उत्खनने, " सकृदुत्पाटनत, शालिरपि फलावहः एस " षो० १४ विव०। नि० चू० ॥

उप्पाडिय-उत्पाटित-त्रि० उन्मूलिते, "उप्पाडियनयणदसणवसणासणस्स " आ० क० ॥

उप्पाय-उत्पात-पु० न० उत्पतनमुत्पातः। उद्-पत्-घञ्-ऊर्ध्वगमने, स्था० १ ठा०। प्रकृतिविकारे, तद्रूपे सहजरुधिरवृष्ट्यादौ, तत्प्रतिपादनपरे शास्त्रे च। यथा राष्ट्रोत्पातादि स्था० ९ ठा०। प्रश्न०। स०। अनु०। सूत्र०। आव०। " साहिए वरिसाइ जम्मि जायइ भन्नइ तमुप्पायं " सहजरुधिरवृष्ट्यादि यस्मिन् जायते तदुत्पाताभिधं निमित्तम्। आदिशब्दादस्थिवृष्ट्यादिपरिग्रह। यथा " मज्जानि रुधिरास्थीनि, धान्यागारान् वशास्तथा मववा वर्षते यत्र, भय विद्याच्चतुर्विधमित्यादि। प्रव०। अभ्रादिविकारवत् विस्तरन परिणामत उत्पातः " पंसुयमंसरुहिरे, केससिलावुट्ठिनहरउग्घाए। मंससिलारुहिरे, अहोरत्त अवसेसे जाव सुत्त " इत्येवं रूपे उत्पाते ऽस्वाध्यायिकं क्रियत इति आ०चू०। आव०॥ (विस्तरतोवर्णनमसज्झाइय शब्दे )उत्पातविचारोऽङ्गविद्यासु दर्शितोबृहत्संहितासु च। शुभाशुभसूचकोत्पातश्च दिव्यान्तरीक्षभौमभेदात् त्रिविधः। स च बृहत्संहितायां यथा-

यानन्येस्तूत्पातान्, गर्गः प्रोवाच तानहं वक्ष्ये । तेषां सङ्क्षेपोऽयं, प्रकृतेरन्यत्वमुत्पातः ॥ अपचारेण नराणा-मुपसर्गः पापसञ्चयाद्भवति । संसूचयन्ति दिव्या-न्तरिक्षभौमास्तदुत्पाताः ॥ मनुजानामपचारा-दपरक्ता देवता सृजन्त्येतान् । तत्प्रतिघाताय नृपः, शान्तिं राष्ट्रे प्रयुञ्जीत। दिव्यं ग्रहर्क्षवैकृत-मुल्कानिर्घातपवनपरिवेषाः । गन्धर्वपुरपुरन्दर-चापादि यदान्तरिक्षं तत् ॥ भौमं चरस्थिरभवं, तच्छान्तिभिराहतं शममुपैति । आत्मसुतकोशवाहन-पुरदारपुरोहितेषु लोकेषु ॥ पाकमुपयाति दैवं परिकल्पितमष्टधा नृपतेः । दैवतयात्राशकटा-क्षचक्रयुगकेतुभङ्गपतनानि ॥ संपर्यासनसादन-सङ्गाश्च नृदेशपशुभेदाः । ऋषिधर्म्मपितृब्रह्म-प्रोद्भूतं तद् द्विजातीनाम् ॥ यद्रुद्रलोकपालोद्भवं पशूनामनिष्टं तत् । गुरुसितशनैश्चरोत्थं पुरोधसां विष्णुजं च लोकानाम् ॥ स्कन्दविशाखसमुत्थं माण्डलिकानां नरेन्द्राणाम् । वेदव्यासे मन्त्रिणि विनायके वैकृते चमूनाथे ॥ धातरि सविश्वकर्म्मणि लोकाभावाय निर्दिष्टम् । देवकुमारकुमारीवनितात्रैष्येषु वैकृतं यत्स्यात् ॥ तन्नरपतेः कुमारककुमारिकास्त्रीपरिजनानाम् । रक्षःपिशाचगुह्यकनागानामेतदेव निर्देश्यम् ॥ मासैश्चाप्यष्टाभिः सर्वेषामेव फलपाकः ॥ राष्ट्रे यस्यानग्निः प्रदीप्यते दीयते च नेन्धनवान् । मनुजेश्वरस्य पीडा तस्य सराष्ट्रस्य विज्ञेया ॥ जलमांसार्द्रज्वलने नृपतिवधः प्रहरणे रणो रौद्रः । सैन्यग्रामपुरेषु च नाशो वह्नेर्भयं कुरुते ॥ प्रासादभवनतोरण-केत्वादिष्वनलदग्धेषु । तडिता वा षण्मासात् परचक्रस्यागमो नियमात् ॥ धूमोऽनग्निसमुत्थो रजस्तमश्चाह्निज महाभयदम् । व्यभ्रे निशयुडुनाशो दर्शनमपि चाह्नि दोषकरम् ॥ नगरचतुष्पादाण्डजमनुजानां भयकरं ज्वलनमाहुः । धूमाग्निविस्फुलिङ्गैः शय्याम्बरकेशगैर्मृत्युः ॥ आयुधज्वलनसर्पणस्वनाः कोशनिर्गमनवेपनानि वा । वैकृतानि यदि वायुधेऽपराण्याशु रौद्ररणसकुलं वदेत् । इत्यग्निवैकृतम् ।

शाखाभङ्गेऽकस्माद् वृक्षाणां निर्दिशेद्रणोद्योगम्। हसने देशभ्रंशं रुदिते च व्याधिबाहुल्यम् ॥ राष्ट्रविभेदस्त्वनृतौ बालवधोऽतीव कुसुमिते वाले । वृक्षात् क्षीरस्रावे सर्वद्रव्यक्षयो भवति ॥ मद्ये वाहननाशः सत्रासः शोणिते मधुनि रोगः । स्नेहे दुर्भिक्षभयं महद्भयं निःसृते सलिले ॥ शुष्कविरोहे वीर्यान्नसङ्क्षयः शोषणे च विरूढानाम् । पतितानामुत्थाने स्वयं भयं दैवजनितं च ॥ पूजितवृक्षे ह्यनृतौ कुसुमफलं नृपवधाय निर्दिष्टम् । धूमस्तस्मिन् ज्वाला-यदा भवेन्नृपवधायैव ॥ सर्पेत्सु तरुषु वापि-जनसङ्क्षयो विनिर्दिष्टः ।वृक्षाणां वैकृत्ये दशभिर्मासैः फलविपाकः ॥ इति वृक्षवैकृतम्

नालेऽब्जयवादीनामेकस्मिन् द्वित्रिसम्भवो मरणम् । कथयति तदधिपतीनां यमलं जातं च कुसुमफलम् ॥ अतिवृद्धिः शस्यानां नानाफलकुसुमभवो वृक्षे । भवति हि यद्येकस्मिन् परचक्रस्यागमो नियमात् ॥ अर्द्धेन यदा तैलं भवति तिलानामतैलता वा स्यात् अन्नस्य च वैरस्यं तदा च विन्द्याद्भयं सुमहत् ॥ विकृतं कुसुमफलं वा ग्रामादथवा पुराद्बहिः कार्य्याम् । इति शस्यवैकृतम् ।

दुर्भिक्षमनावृष्ट्यामतिवृष्ट्यां क्षुद्भयं सपरचक्रम् । रोगो ह्यनृतुभवायां नृपवधोऽनभ्रजातायाम् ॥ शीतोष्णविपर्य्यासे नो सम्यगृतुषु च सम्प्रवृत्तेषु । षण्मासाद्राष्ट्रभयं रोगभयं दैवजनितं च ॥ अन्यर्त्तौ सप्ताहं प्रबन्धवर्षे प्रधाननृपमरणम् । रक्ते शस्त्रोद्योगो मांसास्थिवसादिभिर्मरकः ॥ धान्यहिरण्यत्वक्फलकुसुमाद्यैर्वर्षितैर्भयं विद्यात् । अङ्गारपांशुवर्षे विनाशमायाति तन्नगरम् ॥ उपला विना जलधरैर्वैकृता वा प्राणिनो यदा वृष्टाः । छिद्रं वाप्यतिवृष्टौ शस्यानामीति सञ्जननम् ॥ क्षीरघृतक्षौद्राणां दध्नो रुधिरोष्णवारिणां वर्षे । देशविनाशो ज्ञेयोऽसृग्वर्षे चापि नृपयुद्धम् ॥ यद्यमलेऽर्के छाया न दृश्यते दृश्यते प्रतीपा वा। देशस्य तदा सुमहद्भयमायातं विनिर्देश्यम्॥ व्यभ्रे नभसीन्द्रधनुर्दिवा यदा दृश्यते ऽथवा रात्रौ। प्राच्यामपरस्यां वा तदा भवेत् क्षुद्भयं सुमहत्॥ सूर्य्येन्दुपर्जन्यसमीरणानां योगः स्मृतो वृष्टिविकारकाले ॥ इति वृष्टिवैकृतम्। अपसर्पणं नदीनां नगरादचिरेण शून्यतां कुरुते । शोषश्चाशोष्याणामन्येषां वा ह्रदादीनाम्॥ स्नेहासृङ्मांसवहाः सङ्कुलकलुषाः प्रतीपगाश्चापि । परचक्रस्यागमनं नद्यः कथयन्ति षण्मासात् ॥ ज्वालाधूमक्वाथरुदितोत्क्रुष्टानि चैव कूपानाम् । गीतप्रजल्पितानि च जनमरकाय प्रदिष्टानि ॥ तोयोत्पत्तिरखाते गन्धरसविपर्य्यये च तोयानाम् । सलिलाशयविकृतौ वा महद्भयं तत्र शुभकृत्यम् ॥ इति जलवैकृतम् ॥ प्रसवविकारे स्त्रीणां द्वित्रिचतुःप्रभृतिसम्प्रसूतौ वा । हीनातिरिक्तकाले च देशकुलसङ्क्षयो भवति ॥ वडवोष्ट्रमहिषगोहस्तिनीषु यमलोद्भवे मरणमेषाम् ॥ इति प्रसववैकृतम् ॥ परयोनावभिगमनं भवति तिरश्चामसाधु धेनूनाम् । उक्ष्णां वान्योऽन्यं पिबति श्वा वा सुरभिपुत्रम् ॥ मासत्रयेण विद्यात् तस्मिन्निःसंशयं परागमनम् ॥ इति चतुष्पादवैकृतम् ॥ यानं वाहवियुक्तं यदि गच्छेन्न व्रजेच्च न वाह्युतम् । राष्ट्रभयं भवति तदा चक्राणां सादभङ्गे च ॥ अनभिहिततूर्य्यनादः शब्दो वा ताडितेषु यदि नायात् । व्युत्पत्तौ वा तेषां परागमो नृपतिमरणं वा ॥ गीतरवतूर्य्यनादा नभसि यदा वा चरस्थिरान्यत्वम् ॥ मृत्युस्तदागदा वा विस्वरतूर्य्ये पराभिभवः । गोलाङ्गलयोर्भङ्गे दर्वीशूर्पाद्युपस्करविकारे ॥ क्रोष्टुकनादे च तथा शस्त्रभयं मुनिवचश्चेदम् । इति वायव्यवैकृतम् ॥ पुरपक्षिणो वनचरा वन्या वा निर्भया विशन्ति । पुरं नक्तं वा दिवसचरा क्षपाचरा वा चरन्त्यहनि । सन्ध्याद्वयेऽपि मण्डल-मावध्नन्तो मृगा विहङ्गा वा। दीप्तायां दिश्यथवा क्रोशन्तः संहता भयदाः ॥ श्वानः प्ररुदन्त इव द्वारे वा सन्ति जम्बुका दीप्ताः ।प्रविशेन्नरेन्द्रभवने कपोतकः कौशिको यदि वा॥ कुक्कुटरुतं प्रदोषे हेमन्तादौ च कोकिलालापः । प्रतिलोममण्डलचरा श्येनाद्याश्चाम्बरे भयदाः॥ गृहचैत्यतोरणेषु द्वारेषु च पक्षिसङ्घसंपाताः । मधुवल्मीकाम्भोरुहसमुद्भवाश्चापि नाशाय॥ श्वभिरस्थिशवावयव-प्रवेशनं मन्दिरेषु मरकाय । पशुशस्त्रव्याहारे नृपमृत्युर्मुनिवचश्चेदम्॥ इति मृगपक्ष्यादिवैकृतम्॥ शक्रध्वजेन्द्रकीलस्तम्भद्वारप्रपातभङ्गेषु । तद्वत्कपाटतोरणकेतूनां नरपतेर्मरणम् ॥ सन्ध्याद्वयस्य दीप्तिर्धूमोत्पत्तिश्च काननेऽनग्नौ। छिद्राभावे भूमेर्दरणं कम्पश्च भयकारी ॥ पाषण्डानां नास्तिकानां च भक्तः साध्वाचारप्रोज्झितः क्रोधशीलः । ईर्ष्युः क्रूरो विग्रहासक्तचेता यस्मिन् राजा तस्य देशस्य नाशः॥ प्रहर दर छिन्धि भिन्धीत्यायुधकाष्ठाश्मपाणयो बालाः । निष्क्रान्ताः प्रहरन्ते तत्रापि भयं भवत्याशु ॥ अङ्गारगैरिकाद्यैर्विकृतप्रेताभिलेखनं यस्मिन् । नायकचित्रितमथवा क्षयं क्षयं याति न चिरेण ॥ लूतापटाङ्गशवलं न सन्ध्ययोः पूजितं कलहयुक्तम् । नित्योच्छिष्टस्त्रीकं च यद्गृहं तत्क्षयं याति॥ दृष्टेषु यातुधानेषु निर्दिशेन्मरकमाशु सम्प्राप्तम्॥ इति शक्रध्वजेन्द्रकील्यादि वैकृतम् ॥

नरपतिदेशविनाशे केतोरुदयेऽथवा गृहेऽर्केन्दोः । उत्पातानां प्रभवः स्वर्तुभवश्चाप्यदोषाय ॥ ये च न दोषान् जनयन्त्युत्पाताः स्तानृतुस्वभावकृतान् । ऋषिपुत्रकृतैः श्लोकैर्विद्यादेतैः समासोक्तैः ॥ वज्राशनिमहीकम्पसन्ध्यानिर्घातनिस्वनाः । परिवेषरजोधूम-रक्तार्कास्तमनोदयाः ॥ द्रुमेभ्योऽन्नरसस्नेहबहुपुष्पफलोद्गमाः । गोपक्षिमदवृद्धिश्च शिवाय मधुमाधवे ॥ तारोल्कापातकलुषं कपिलार्केन्दुमण्डलम् । अनग्निज्वलनस्फोटधूमरेण्वनिलाहतम् ॥

रक्तपद्मारुणं सान्ध्यं नभः क्षुब्धार्णवोपमम् । सरितां चाम्बुसंशोषं दृष्ट्वा ग्रीष्मे शुभं वदेत् ॥ शक्रायुधपरीवेषविद्युच्छुष्कविरोहणम् । कम्पोद्वर्तनवैकृत्यं रसनं दारणं क्षितेः ॥ सरोनद्युदपानानां वृद्ध्यूर्ध्वतरणप्लवाः । सरणं चाद्रिगेहानां वर्षासु न भयावहम् ॥ दिव्यस्त्रीभूतगन्धर्वविमानाद्भुतदर्शनम् । नक्षत्राणां ग्रहाणां च दर्शनं च दिवाम्बरे ॥ गीतवादित्रनिर्घोषा वनपर्वतसानुषु । सस्यवृद्धिरपां हानिरपापा शरदि स्मृताः ॥ शीतानिलतुषारत्वं नर्दनं मृगपक्षिणाम् । रक्षोयक्षादिसत्त्वानां दर्शनं वागमानुषी ॥ दिशो धूमान्धकाराश्च सनभोवनपर्वताः । उच्चैः सूर्योदयास्तौ च हेमन्ते शोभनाः स्मृताः ॥ हिमपातानिलोत्पाता विरूपाद्भुतदर्शनम् । कृष्णाञ्जनाभमाकाशं तारोल्कापातपिञ्जरम् ॥ चित्रगर्भोद्भवाः स्त्रीषु गोऽजाश्वमृगपक्षिषु । पत्राङ्कुरलतानां च विकाराः शिशिरे शुभाः ॥ ऋतुस्वभावजा ह्येते दृष्टाः स्वर्तौ शुभप्रदाः । ऋतोरन्यत्र चोत्पाता दृष्टास्ते भृशदारुणाः ॥ उन्मत्तानां च या गाथाः शिशूनां भाषितं च यत् । स्त्रियो यच्च प्रभाषन्ते तस्य नास्ति व्यतिक्रमः ॥ पूर्वं चरति देवेषु पश्चाद्गच्छति मानुषान् । नाचोदिता वाग्वदति सत्या ह्येषा सरस्वती ॥ उत्पातान् गणितविवर्जितोऽपि बुद्ध्वा विख्यातो भवति नरेन्द्रवल्लभश्च । एतन्मुनिवचनं रहस्यमुक्तं यज्ज्ञात्वा भवति नरस्त्रिकालदर्शी ( ४६ अ० ) दिव्यान्तरिक्षाश्रयमुक्तमादौ मया फलं शस्तमशोभनं च । प्रायेण चारेषु समागमेषु युद्धेषु मार्गादिषु विस्तरेण ॥ भूयो वराहमिहिरस्य न युक्तमेतत् कर्तुं समासकृदसाविति तस्य दोषः । तज्ज्ञैर्न वाच्यमिदमेव फलानुगीतिर्यद्बर्हिचित्रकमिति प्रथितं वराङ्गम् ॥ स्वरूपमेव तस्य तत्प्रकीर्तितानुकीर्तनम् । ब्रवीम्यहं नचेदिदं तथापि मेऽत्र वाच्यता । उत्तरवीथिगता द्युतिमन्तः, क्षेमसुभिक्षशिवाय समस्ताः । दक्षिणमार्गगता द्युतिहीनाः, क्षुद्भयतस्करमृत्युकरास्ते ॥ कोष्ठागारगते भृगुपुत्रे पुष्यस्थे च गिरांप्रभविष्णौ । निर्वैराः क्षितिपाः सुखभाजः सहृष्टाश्च जना गतरोगाः ॥ पीडयन्ति यदि कृत्तिकां मघां रोहिणीं श्रवणमैन्द्रमेव वा । प्रोज्झ्य सूर्यमपरे ग्रहास्तदा, पश्चिमादिगयनेन पीड्यते ॥ प्राच्यां चेदुच्चवदवस्थिता दिनान्ते, प्राच्यानां भवति हि विग्रहो नृपाणाम् । मध्ये चेद्भवति हि मध्यदेशपीडा, नैःस्वैर्न्यं तु रुचिरैर्मयूखवद्भिः ॥ दक्षिणां ककुभमाश्रितैस्तु तैर्दक्षिणापथपयोमुचां क्षयः । हीनरूक्षतनुभिश्च विग्रहं स्थूलदेवकिरणान्वितं शुभम् ॥ उत्तरमार्गस्पष्टमयूखाः शान्तिकरास्ते तन्नृपतीनाम् । ह्रस्वशरीरा भस्मसवर्णा, दोषकराः स्युर्देशनृपाणाम् ॥ नक्षत्राणां तारकाः सग्रहाणां, धूमज्वालाविस्फुलिङ्गान्विताश्चेत् । आलोकं वा निर्निमित्तं न यान्ति, याति ध्वंसं सर्वलोकः स भूयः ॥ दिवि भाति यदा तुहिनांशुयुगं, द्विजवृद्धिरतीव तदाशु शुभा । तदनन्तरवर्णरणोऽर्कयुगे जगतः प्रलयस्त्रिचतुःप्रभृतिः ॥ मुनीनभिजितं ध्रुवं मघवतश्च भं स्पृशन् । शिखी धनविनाशकृत् कुशलकर्मणां शोकदः । भुजङ्गभमथ स्पृशेद्भवति वृष्टिनाशो ध्रुवं क्षयं व्रजति विद्रुता जनपदाश्च वाताकुलाः ॥ प्रागद्वारेषु चरन् रविपुत्रो, नक्षत्रेषु करोति च वक्रम् । दुर्भिक्षं कुरुते भयमुग्रं मित्राणां च विरोधमवृष्टिम् ॥ रोहिणीशकटमर्कनन्दनो, यदि भिनत्ति रुधिरोऽथवा शिखी । किं वदामि यदनिष्टसागरे, जगदशेषमुपयाति सङ्क्षयम् ॥ उदयति सततं यदा शिखी, चरति भचक्रमशेषमेव वा । अनुभवति पुराकृतं तदा, फलमशुभं सचराचरं जगत् ॥ धनुःस्थायी रूक्षो रुधिरसदृशः क्षुद्भयकरो, बलोद्योगं चेन्दुः कथयति जयं ह्यास्य च यतः ॥ अवाक्शृङ्गो गोघ्नो, निधनमपि सस्यस्य कुरुते ज्वलन्धूमायन्वा नृपतिमरणायैव भवति ॥ स्निग्धः स्थूलः समशृङ्गो विशालस्तुङ्गश्चोदग्विचरन्नाग-वीथ्याम् । दृष्टः सौम्यैरद्भुतैर्विप्रयुक्तो लोकानन्दं कुरुतेऽतीव चन्द्रः ॥ पित्र्यमैत्रपुरुहूतविशाखात्वाष्ट्रमेत्य च युनक्ति शशाङ्कः । दक्षिणेन न शुभोऽहितकृत्स्यात्, यद्युदक् चरति मध्यगतो वा ॥ परिघ इति मेघरेखा या तिर्यग्भास्करोदयेऽस्ते वा । परिधिस्तु प्रतिसूर्यो दण्डस्त्वृजुरिन्द्रचापनिभः ॥ उदयेऽस्ते वा भानोर्ये दीर्घा रश्मयस्तमोघास्ते । सुरचापखण्डमृजुयद्, रोहितमैरावतं दीर्घम् ॥ अर्धास्तमयात्सन्ध्या व्यक्तीभूता न तारका यावत् । तेजःपरिहानिमुखाद्भानोरर्धोदयं यावत् । तस्मिन् सन्ध्याकाले चिह्नैरेतैः शुभाशुभं वाच्यम् । सर्वैरेतैः स्निग्धैः सद्यो वर्षं भयं रूक्षैः ॥ अच्छिन्नः परिघो वियच्च विमलं श्यामा मयूखा रवेः, स्निग्धा दीधितयः सितं सुरधनुर्विद्युच्च पूर्वोत्तरा । स्निग्धो मेघतरुर्दिवाकरकरैराश्लिष्टो वा यदा, वृष्टिः स्याद्यदि वार्कमस्तसमये मेघो महांश्छादयेत् ॥ खण्डो वक्रः कृत्स्नो ह्रस्वः काकाद्यैर्वा चिह्नैर्विद्धः । यस्मिन् देशे रूक्षश्चार्कस्तत्र ह्यजावः प्रायो राज्ञः ॥ वाहिनी समुपयाति पृष्ठतो मांसभुक् खगगणो युयुत्सुतः । यस्य तस्य बलविद्रवो महान्, अग्रगैस्तु विजयो विहङ्गमैः ॥ भानोरुदये यदि वास्तमये, गन्धर्वपुरप्रतिमाध्वजिनी । विम्ब निरुणद्धि तदा नृपते, प्राप्तं समरं सभयं प्रवदेत् ॥ शस्ताशान्तद्विजमृगघुष्टा, सन्ध्या स्निग्धा मृदुपवना च । पांशुध्वस्ता जनपदनाशं धत्ते रूक्षा रुधिरनिभा वा ॥ यद्विस्तरेण कथितं मुनिभिस्तदस्मिन् सर्वं मया निगदितं पुनरुक्तवर्जम् । श्रुत्वापि कोकिलरुतं बलिभुग्विरौति यत्तत्स्वभावकृतमस्य पिके न जेतुम् । ४७ अ० । एवमन्येऽप्युत्पाताः सन्ति विस्तरभयान्नोक्ता उत्पातविशेषे मङ्गलकर्मवर्जनव्यवस्थादेशभेदेनाचारभेदेन चावगन्तव्या पीयूषधारायाम् अत्यावश्यककार्ये परिहारस्तत्रोक्तः ज्योतिर्निबन्धे । दिनानि पञ्चवसिष्ठस्त्रिदिनं गर्गस्तु कौशिकस्त्वेकम् । यवनाचार्यस्य मते पञ्चमुहूर्तांश्च दूषयति ॥ उत्पातेन ज्ञापिते च । ज्यो० । वाच० ।

उत्पाद–पुं०–उत् पद्–घञ्–उत्पादनमुत्पादः । कार्यस्योत्पत्तिहेतुभूते कार्यविशेषे, विशे० । प्रादुर्भावे, सूत्र० १ श्रु० १ अ० ।

अथोत्पादस्य भेदान्कथयन्नाह ।

**प्रयोगविश्रसाभ्यां स्या–दुत्पादो द्विविधस्तयोः ।**

**आद्योऽविशुद्धो नियमात्समुदायविवादजः ॥ १९ ॥**

उत्पादो द्विविधो द्विप्रकारोऽस्ति । काभ्यां द्विविधः प्रयोगविश्रसाभ्याम् । एकः प्रयोगजनित उत्पादः । १ । अपरो विश्रसा जनित उत्पादः । २ । पुनस्तयोर्द्वयोर्मध्ये आद्योऽविशुद्धो व्यवहारोत्पन्नत्वात् । स च निर्धारणनियमात्समुदायवादजनितो यत्नेन कृत्वा अवयवसंयोगेन सिद्धः कथितः । तथा च सम्मतितर्के ।

**उप्पाओ दुवियप्पो, पओगजणिओ य विस्ससा चेव ।**

**तत्थ उ पओगजणिओ, समुदयवाओ अपरिसुद्धो ॥ १९ ॥**

भेद उत्पाद पुरुषेतरकारकव्यापारजन्यतया अध्यक्षानुमानाभ्यां तया तस्य प्रतीतेः पुरुषव्यापारोऽन्वयव्यतिरेकानुव्यवधायित्वेऽपि शब्दविशेषस्य तदस्य तदजन्यत्वे घटादेरपि तदजन्यताप्रसक्तेर्विशेषाभावात् । प्रत्यभिज्ञानादेश्च विशेषस्य प्रागेव निरस्तत्वात् । तत्र प्रयोगेण यो जनितः उत्पादो मूर्तिमद्द्रव्यारब्धावयवकृतत्वात्स समुदयवादः । तथा भूतारब्धस्य समुदायात्मकत्वात्तत् एवासावपरिशुद्धः सावयवात्मकस्य तत्स्थस्य वाच्यत्वेनाभिप्रेतत्वात् ।

विश्रसा जनितोऽप्युत्पादो द्विविध इत्याह ।

**साभाविओ वि समुदय–कओव्वएगंति उव्वहोज्जाहि ।**

**आगासाईयाणं तिण्हं परपच्चओ णियमा ॥ ३० ॥**

स्वाभाविकश्च द्विविध उत्पादः । एकः समुदयकृतः प्राक्प्रतिपादितावयवारब्धो घटादिवत् । अपरश्चैकत्विकोऽनुत्पादितामूर्तिमद्द्रव्यावयवारब्ध आकाशादिवत् । आकाशादीनां च त्रयाणामवगाहो घटादिद्रव्यनिमित्तोऽवगाहनादिक्रियोत्पादो नियमादनेकान्ततो भवेत् । अवगाहकगन्तृस्थातृद्रव्यसन्निधानतोऽस्थिरधर्माधर्माद्यवगाहनगतिस्थितिक्रियोत्पत्तिनिमित्तभावोत्पत्तिरित्यभिप्रायः ॥ सम्म० ॥ ( आगासशब्दे तत्प्रादेशिकिता दर्शिता )

अथोत्पादस्य द्वितीयभेदं कथयन्नाह ॥

विश्रसा हि विना यत्नं, जायते द्विविधः स च ।
तत्राद्यचेतनस्कन्ध-जन्यः समुदयोऽग्रिमः ॥ २० ॥
सचित्तमिश्रजश्चान्यः, स्यादेकत्वप्रकारकः ।
शरीराणां च वर्णादि, सुनिर्धारो भवत्यतः ॥ २१ ॥

विश्रसाख्यो द्वितीय उत्पादः । विश्रसाशब्दस्य कोऽर्थः सहज विना यत्नमुत्पद्यते य स विश्रसोत्पादः । सोऽपि पुनर्द्विविधो द्विप्रकारः । एकस्तत्र समुदयजनितः द्वितीय एकत्विकः । उक्तं च " साहाविओ वि समुदय कओव्व एगत्तिओव्व होज्जाहि " तत्रापि तयोर्द्वयोर्मध्ये आद्यः समुदयजनितो विश्रसोत्पादः अचेतनस्कन्धजन्यः समुदयः कथितः । अभ्रादीनां समुदयपुद्गलानां यथोत्पादः ॥ २० ॥ तथा पुनर्द्वितीय सचित्तमिश्रज शरीरवर्णादिकानां निर्धारो ज्ञेयः । सचित्ताः पुद्गला वर्णादीनां तथा तथाकारवर्णादिपुद्गलानां परिणत्या परिणतानामेकत्वप्रकारक एकतारूपेण परिगतः । अनेकेषां वर्णादीनां सगतानां परस्परमुत्पादधारया पिण्डीभूतानामवयवानामवयविधर्मत्वेन देहदृश्याकारभूतानामणूनां शरीरादि सुनिर्धारो भवति । देहादिपिण्डानां ( सु ) अतिशयेन निर्धारो वपुरूपावस्थत्वं सम्पद्यते । तथाच प्रज्ञापनायां स्थानाङ्गे च " तिविहा पुग्गला पन्नत्ता तंजहा पओगपरिणता १, मीससा परिणता २, वीससा परिणता ३," तत्र च प्रथम प्रयोगपरिणताः पुद्गला ये भवन्ति ते जीवप्रयोगेण संयुक्ताः शरीरादयः सचित्ताः १ तथा मिश्रपरिणताश्च ते ये जीवेन पुद्गला मुक्ताः कलेवरादयः २ पुनश्च विश्रसा परिणताः स्वभावेन परिणताः यथाभ्रेन्द्रधनुरादयः ३ एवं च सत्यत्र विश्रसाख्यस्य भेदस्य स्वभावजनितस्य द्वैविध्यं प्रदर्शितम् । अचेतनस्कन्धजन्यसमुदायाख्यः प्रथमस्तत्र सचित्तमिश्रजन्यैकत्वप्रकारकशरीरादिवर्णादिसुनिर्धारसंज्ञो द्वितीयः । अत्राय विशेषः स्वाभाविके परिणमनेऽचित्तपुद्गलैरेवायत्नसाध्यव्यवहार उपदिष्टः । इह तु द्वयमपि ।२१।

पुनर्भेदं दर्शयन्नाह ॥

यत्संयोगं विनैकत्वं, तद्द्रव्यांशेन सिद्धता ॥
यथास्कन्धविभागाणोः, सिद्धस्यावरणक्षये ॥ २२ ॥
स्कन्धहेतुं विना योगः, परयोगेण चोद्भवः ॥
क्षणे क्षणे च पर्याया-द्यस्तदेकत्वमुच्यते ॥ २३ ॥
उत्पादो ननु धर्मादेः, परप्रत्ययतो भवेत् ॥
निजप्रत्ययतो वापि, ज्ञात्वान्तर्नय योजनाम् ॥ २४ ॥
नाशोऽपि द्विविधो ज्ञेयो रूपान्तरनिगोचरः ॥

संयोगं विना विश्रसोत्पादो यद्भवेत्तदेकत्वं ज्ञेयम् । तदेवैकत्वं द्रव्यांशेन द्रव्यविभागेन सिद्धता नाम उत्पन्नत्वं ज्ञेयम् । यथा द्विप्रदेशादिस्कन्धविभागेनाणो परमाणोर्द्रव्यस्योत्पादः । तथा आवरणक्षये कर्मविभागे जाते सति सिद्धस्य सिद्धपर्यायस्योत्पाद इति । अवयवसंयोगेनैव द्रव्यस्योत्पत्तिर्भवति परन्तु विभागेन द्रव्यस्योत्पत्तिर्न भवति इत्यमेके नैयायिकादयः कथयन्ति । तेषां मत एकतन्त्वादिविभागेन खण्डपटोत्पत्तिः कथं जायतेति प्रतिबन्धककालभावस्यावस्थितावयवसंयोगस्य हेतुताकल्पने महागौरवात् । तस्मात् कुत्रचित्संयोगात् कुत्रचिद्विभागाद्द्रव्योत्पादकता मन्तव्या । तदा विभागजपरमाण्वुत्पादोऽप्यर्थत सिद्धः स्यात् सम्मतिशास्त्रे इत्थं सूचितमस्ति । तदुक्तम् । " दव्वतरसंजोगाहि, केवि दविअस्स विंति उप्पाय । उप्पाय वा कुसला, विभागजाइं न इच्छति ॥ १ ॥ अणुअत्तएहिं आरद्धदव्वे तिअणुअति निद्देसो । ततो अ पुण विभत्ते, अणुत्ति जाउ आओ अणू होइ ॥ २ ॥ आभ्यां गाथाभ्यां भावार्थोऽवधार्यः । यथा परमाणोरुत्पादः एकत्वजन्यस्तथा येन संयोगेन स्कन्धो न निष्पद्यते एतादृशो धर्मास्तिकायादीनां जीवपुद्गलयोस्संयोगस्तद्द्वारा यश्च संयुक्तद्रव्योत्पादेऽसंयुक्तावस्थाविनाशपूर्वकः तथा ऋजुसूत्रनयाभिमतो यश्च क्षणिकपर्यायः प्रथमद्वितीयसमयादिव्यवहारहेतुस्तद्द्वारा यश्चोत्पादश्च तत्सर्वमेकत्वं ज्ञेयम् ॥ २२ ॥ अत्र न किंचिद्विवादस्तत्र श्लोकमाह । स्कन्धहेतुं विना यः संयोगपरयोगेन धर्मास्तिकायादीनां यश्चोत्पादः तथाच क्षणिकपर्याये प्रथमद्वितीयादिद्रव्यव्यवहारहेतवस्तद्द्वारा य उत्पादः तत्सर्वमेकत्वं कथ्यते तत्र न कोऽपि विसंवाद इति ॥२३॥ पुनर्भेदं कथयन्नाह ( उत्पादेति ) ननु धर्मादेरुत्पादः परप्रत्ययो भवेत् अपि पुनर्निजप्रत्ययाद्भवेदन्तर्नययोजनां ज्ञात्वा इति । भावार्थस्त्वयम् धर्मास्तिकायादीनामुत्पादो नियमेन परप्रत्यय स्वोपज्ञभ्य गत्यादिपरिणतजीवपुद्गलादिनिमित्त उक्तः । य उभयजनितस्स चैकजनितोऽपि भवेत् । ततस्तस्य निजप्रत्ययतापि कथयितुं युक्ता निश्चयव्यवहारावधारणात् । अयमर्थः । " आगासाईयाण, तिण्ह परपच्चओ नियमा " इति सम्मतिगाथायामकारप्रश्लेषतया वचनान्तरेण कृतोऽस्ति वृत्तिकारेण तमर्थमनुसृत्येहापि लिखितोऽस्ति तस्माद्धर्मास्तिकायादीनामुत्पादो नियमात्परप्रत्यय एव । सोऽपि स्वोपज्ञभ्य गत्यादिपरिणतजीवपुद्गलादिनिमित्तः उभयजनितोऽप्येकजनितोऽपि स्यात् । तस्य च निजप्रत्ययताप्यन्तर्नयवादेनोक्तास्ति भावना चेत्थ ज्ञेया ॥ द्र० ए अध्या० ॥ "उप्पादलक्खणं अप्पि तववबहारित अणप्पियववहारियंति वा विसिसा दिट्ठति वा एगट्ठा तव्विवरीतमितर । तत्थ अप्पि नजहा पढमसमयसिद्धो सिद्धत्तणेण उप्पन्नो अणप्पितो जोजणभोवणउप्पत्ता आ० चू०१ अ०। विशे० । त्रीन्द्रियजीवभेदे च । प्रज्ञा०१ प० ।

औत्पात—न० उत्पाते भवमौत्पातम्। पांशुवृष्ट्यादौ, आ०क० । कपिहसितादौ, सूत्र० २ श्रु० २ अ० ।

उप्पायग—उत्पातक—त्रि० उत्पातयति उत्पात जनयति—उद्-पत-णिच्-ण्वुल् उत्पातजनके, ऊर्ध्वपतनशीले च । वाच० ।

उत्पादक—त्रि० उद्-पत-ण्वुल् उत्पादनकर्त्तरि, स्त्रियां टापि अत इत्वम् । उत्पादिका उत्पादकस्त्रियाम् हिलमोचिकायां शब्दा त्रि० पुत्तिकायाम्, देहिकानामकीटे च स्त्री० । पितरि, पु० ऊर्ध्वं स्थिता पादा अस्य कप् । अष्टापदे शरभाख्ये गजागनौ पशुभेदे, तस्य पृष्ठस्थचतुश्चरणत्वादूर्ध्वपादत्वम् । वाच० । त्रीन्द्रियजीवभेदे च । ये द्रूर्मिं जित्वा समुत्तिष्ठन्ति दीर्घा "पाणसीयह्कुथूउप्पायगदीहगोम्भि सिसुणागो" व्य० प्र० ८ उ० । नि० चू० । प्रज्ञा० ।

उप्पायच्छेयण—उत्पादच्छेदन—न० उत्पादो देवत्वादिपर्यायान्तरस्य तेन छेदो जीवादिद्रव्यविभागः उत्पादच्छेदनम् । छेदनभेदे, स्था०४ ठा० ।

**उप्पायण**-उत्पादन-न० उद्-पद्-णिच्-ल्युट्-जनने उत्पत्तिकरणे-वाच०। "भवाणुवायए परिग्गहेण, उप्पायणे रक्खणसन्निओगे" उत्पादने एते विषयादिपदार्थाः कथं मिलिष्यन्तीति चिन्तने, उत्त० ३४ अ०।

**उप्पायणंतिरिय**-उत्पादनान्तर्य्य-न० उत्पादनस्याविरहे, यथा तिर्यग्गतौ जीवानामुत्कर्षतोऽसंख्येयाः समयाः स्था० ५ ठा०।

**उप्पायणा**-उत्पादना-स्त्री० उत्पादनमुत्पादना। मूलतः शुद्धस्य पिण्डस्य धात्रीत्वादिभिः प्रकारैरुपार्जने, प्रव० ६७ द्वा०। पिं०। आव०। तस्या निक्षेपो यथा-

नामं ठवणा दविए, भावे उप्पायणा मुणेयव्वा।
दव्वम्मि होइ तिविहा, भावम्मि उ सोलसपया॥

उत्पादना चतुर्धा तद्यथा (नामंति) नामोत्पादना स्थापनोत्पादना द्रव्ये द्रव्यस्योत्पादना भावे भावस्योत्पादना च। तत्र नामस्थापने क्षुण्णे द्रव्योत्पादना च यावन्नो आगमतो भव्यशरीरद्रव्योत्पादना प्रागुक्तगवेषणादिरिव भावनीया। ज्ञशरीरभव्यशरीरव्यतिरिक्ता तु द्रव्योत्पादना त्रिधा सचित्तद्रव्योत्पादना अचित्तद्रव्योत्पादना मिश्रद्रव्योत्पादना च। भावोत्पादना द्विधा तद्यथा आगमतो नोआगमतश्च। तत्र आगमत उत्पादना शब्दार्थतस्तत्रोपयुक्त नोआगमतो भावोत्पादना तु द्विधा तद्यथा प्रशस्ता अप्रशस्ता च। तत्र प्रशस्ता ज्ञानाद्युत्पादना अप्रशस्ता षोडशपदा वक्ष्यमाणधात्रीदूत्यादिषोडशभेदा।

तत्र प्रथमतः सचित्तद्रव्योत्पादनां विभावयिषुराह॥

आसूयमाइएहिं वालवयितुरंगवीयमाईहिं।
सुयअस्साइमाईणं, उप्पायणया उ सच्चित्ता॥

सुताश्वद्रुमादीनां द्विपदचतुष्पदापदरूपाणामत्रादिशब्दः प्रत्येकमभिसंबध्यते सुतादीनामश्वादीनां द्रुमादीनां च यथासङ्ख्यमासूत्यादिभिरासूयमुपायादिविकमादिशब्दाच्छादकजलादि परिग्रहः। तथा वालचित्ततुरङ्गबीजादिभिश्च तत्र वालैः केशरोमादिभेदभिन्नैश्चितो व्याप्तो वालचितपुरुषो लोमशः पुरुष इति वचनात्। तुरङ्गबीजे च सुप्रसिद्धे। आदिशब्दात्तदन्यहेतुपरिग्रहः। या उत्पादना तथाहि केनचिन्निजभार्यायाः कथमपि पुत्राभावे देवताया उपयाचिति केनाप्यृतुकालोकेन स्वसंप्रयोगेण च सुत पुत्रिका वा उत्पाद्यते। तथा निजघोटिकाया परस्य भाटकप्रदानेन परघोटकमारोप्य तुरङ्ग उत्पाद्यते। एवं यथायोगं बलीवर्दादिरपि तथा जलसेकेन बीजारोपणेन च द्रुमवल्ल्यादि। तत इत्थं या द्रुमादीनामुत्पादना सा सचित्तद्रव्योत्पादना। संप्रत्यचित्तद्रव्योत्पादनां मिश्रद्रव्योत्पादनां च प्रतिपादयति।

कणगरययाइयाणं, जहिट्ठधाउविहिया उ।
सचित्तमीसाइभंडाणं, उपयाइकया उ उप्पत्ती॥

कनकरजतादीनां सुवर्णरूप्यताम्रादीनां यथेष्टधातुविहिता यथेष्टो यो यस्येष्टोऽनुक्तोऽपि लोहादिधातुस्तस्मात् विहिता कृता या उत्पत्तिः सा अचित्ता अचित्तद्रव्योत्पादना। तथा च द्विपदादीनां दासादीनां सभाण्डानां सालंकारादीनां चेतनप्रदानेन या कृता आत्मीयत्वेनोत्पत्तिः सा मिश्रा मिश्रद्रव्योत्पादना। सैवमुक्ता द्रव्योत्पादना। संप्रति भावोत्पादनामाह

भावे पसत्थ इयरा, कोहाई उप्पायणा उ अपसत्था।
कोहाई जहा नायव्वं-णं च नाणाइ उ पसत्था॥

भाव भावविषया उत्पादना द्विधा तद्यथा प्रशस्ता इतरा अप्रशस्ता। तत्र या क्रोधादीनां क्रोधादियतधात्रीत्वादीनां च उत्पादना साऽप्रशस्ता या तु ज्ञानादेर्ज्ञानदर्शनचारित्राणामुत्पादना सा प्रशस्ता। इह वा प्रशस्तया भावोत्पादनयाधिकारः पिण्डदोषाणां वक्तुमुपक्रान्तत्वात्। सा च षोडशभेदा॥ पिं०॥

उप्पायण संपायण-णिव्वत्तण मो य होंति एगट्ठा।
आहारस्सिहपगया, तीए दोसा इमे होंति॥१०॥

उत्पादनमुत्पादना एवं संपादना निर्वर्तना च। इह च पदत्रयेऽपि ह्रस्वतामोकारश्च निपात प्राकृतत्वाच्च शब्दः समुच्चये भवति स्युरेकार्था अनन्याभिधेयाः सर्वेषामेव एषामुत्पादनाबोधकत्वादेते शब्दा इति गम्यम्। सा च सचेतना चेतनाचेतनद्रव्यादिविषयत्वेनानेकविधेत्यत उच्यते आहारस्याशनादिरूपस्योपलक्षणत्वादस्य वस्त्रपात्रादिपरिग्रहः। इह पिण्डाधिकारे प्रकृता प्रस्तुता तद्दोषाधिकारात् (ताए त्ति) एतस्याः पुनरुत्पादनाया गृहस्थात्सकाशात्साधुना स्वार्थं भक्ताद्युपार्जनरूपा वे दोषा दूषणानि इमे इति वक्ष्यमाणतया प्रत्यक्षीभूता भवन्ति स्युरिति गाथार्थः। तानेव नामतो दर्शयन्नाह "धातीदूतिणिमित्ते, आजीववणीमगे तिगिच्छा य। कोहे माणे माया, लोभे हवंति दस एते॥ पुव्विंपच्छासंथव-विज्जामंते य चुन्नजोगे य। उप्पायणाय दोसा, सोलसमे-मूलकम्मे य"। पंचा० १३ विव०। धात्र्यादिव्याख्यान्यत्र। एतेऽनन्तरोक्ता उत्पादनाया दोषाः षोडश। मूलकर्म वशीकरणम्। इह धात्र्या पिण्डो धात्रीपिण्डः किमुक्तं भवति धात्रीत्वस्य करणेन कारणेन च य उत्पाद्यते पिण्डः। यस्तु दूतीत्वस्य करणेनोत्पाद्यते स दूतीपिण्डः। एवं निमित्तादिष्वपि भावनीयम्। पिं०। ध०। उत्त०। स्था०। ग०। आचा०। जीत०।

उत्पादनादोषेषु प्रायश्चित्तमभिधित्सुराह

दुविहनिमित्ते लोभे, गुरुगा माया य मासियं गुरुयं।
सुहुमे वयणे लहुओ, सेसे लहुगा य मूलं च॥

निमित्तं त्रिविधमतीतविषयं प्रत्युत्पन्नविषयमनागतविषयं च। तत्र द्विविधे निमित्ते प्रत्युत्पन्नविषये च तथा लोभे च प्रत्येकं चत्वारो गुरुकाः। मायायां मासगुरु। सूक्ष्मे चैकित्स्ये वचनसंस्तवे च प्रत्येकं लघुको मासः शेषेषु तु समस्तेषूत्पादनादोषेषु प्रत्येकं चत्वारो लघवो नवरं मूलकर्मणि मूलम्। बृ० १ उ०। उप्पायणाए अइए निमित्ते चउलहु। पडुप्पन्ने अणागए लोभए चउगुरु। कोहे माणे चउलहु। मायाए मासगुरु। सुहुमतेइच्छियं पंतराइदिया। बादरतेइच्छे चउलहुं। सयवे मासलहु। धाईहिं चउलहु। जोग्गमेहुणिय संथवे चउगुरु मूलं वा। वयणसंथवे मासलहु। मूलकम्मे मूलं। सेसेसु चउलहु उप्पाइणा पं० चू०। (जीतकल्पानुसारेणाचामाम्ल आयंबिलशब्दे चैतत्स्पष्टीकृतम्)

**उप्पायणाविसोहि**-उत्पादनाविशुद्धि-स्त्री० उत्पादनादोषे पिण्डचरणादीनां निर्दोषतारूपे उत्पादनाया वा निर्दोषतालक्षणे विशुद्धिभेदे, स्था० ३ ठा०।

**उप्पायणोवघाय**-उत्पादनोपघात-पुं० उत्पादनयोपघातः पिण्डादेरकल्पनीयताकरणं चरणस्य वा शबलीकरणमुत्पादनोपघातः। उद्गमस्य वा पिण्डादिप्रसूतेरुपघातो धात्र्यादिभिर्दोषैरुत्पादनोपघातः। धात्र्यादिदोषलक्षणया उत्पादनया चारित्रस्य विराधनरूपे धात्र्यादिभिः षोडशभिरुत्पादनादोषैर्भक्तपानोपकरणलेपानामशुद्धतालक्षणे वा उपघातभेदे, स्था० १० ठा०।

**उप्पायपडिवाय**-उत्पादप्रतिपात-पुं० विभागतो देशतो वा कस्यचिद्वस्तुनो वृद्धिहान्युभये, विपा० ६ अ०। यथा अवधिज्ञानस्य। "बाहिरलंभो भज्जो," दव्वे खेत्ते य कालभावे य। उ-

प्पायपभिवाओ विय, तदुजय चेगसमएणं" अप्पायपभिवादो णाम जोंसि दव्वखेत्तकालजावाण काणि वि एगसमएण चेव पुव्वुद्दिट्ठाणि तं पासति काणि पुण अदिट्ठपुव्वाणि पासति एस उप्पायपभिवातो भमति । आ० चू० १ अ० । ( एतद्विषयावधिवक्तव्यता ओहि शब्दे स्पष्टी नविष्यति )

उप्पायपव्वय–उत्पातपर्वत–पुं० उत्पतनमूर्ध्वगमनमुत्पातस्तेनोपलक्षित· पर्वत उत्पातपर्वतः । स्था० १० ठा० । स्वनामख्यातेषु पर्वतेषु, तिर्यग्लोकगमनाय यत्रागत्योत्पतति स उत्पातपर्वत इति ति । भ० १ श० ८ उ० । उत्पातपर्वता यत्रागत्य बहवो व्यन्तरदेवा देव्यश्च विचित्रक्रीमानिमित्त वैक्रियशरीरमारचयन्ति । जी० ३ प्रति० ॥

सर्वेषां लोकपालानामुत्पातपर्वतमानादि यथा ॥

चमरस्स णं असुरिंदस्स असुरकुमाररन्नो तिगिच्छिकूमे उप्पायपव्वए मूले दसबावीसे जोयणसए विक्खंजेणं पन्नत्ता । चमरस्स णं असुरिंदस्स असुरकुमाररन्नो सोमस्स महारन्नो सोमप्पन्ने उप्पायपव्वए दसजोयणसयाइं उड्ढं उच्चत्तेणं दसगाउयसयाइं उव्वेहेणं मूले दसजोयणसयाइं विक्खंजेणं पन्नत्ता । चमरस्स णं असुरिंदस्स जमस्स महारन्नो जमप्पन्ने उप्पायपव्वए एवं चेव । एवं वरुणस्स वि । एवं वेसमणस्स वि । वलिस्स णं वइरोयणिंदस्स वइरोयणरन्नो रुयगिंदे उप्पायपव्वए मूले दसबावीसे जोयणसए विक्खंजेणं पन्नत्ते । वलिस्स णं वइरोयणरन्नो सोमस्स एवं चेव जहा चमरस्स लोगपालाणं तं चेव वलिस्स वि । धरणस्स णं नागकुमारिंदस्स नागकुमाररन्नो धरणप्पन्ने उप्पायपव्वए दसजोयणसयाइं उड्ढं उच्चत्तेणं दसगाउयसयाइं उव्वेहेणं मूले दसजोयणसयाइं विक्खंजेणं । धरणस्स णं जाव नागकुमाररन्नो कालवालस्स महारन्नो कालप्पन्ने उप्पायपव्वए दसजोयणसयाइं उड्ढं उच्चत्तेणं एवं चेव एवं जाव संखवालस्स एवं नूयाणंदस्स वि एवं लोगपालाणं पि । से जहा धरणस्स एवं जाव थणियकुमाराणं सलोगपालाणं नाणियव्वं । सव्वेसिं उप्पायपव्वया नाणियव्वा सरिसनामगा । सक्कस्स णं देविंदस्स देवरन्नो सक्कप्पन्ने उप्पायपव्वए दसजोयणसहस्साइं उड्ढं उच्चत्तेणं दसगाउयसहस्साइं उव्वेहेणं मूले दसजोयणसहस्साइं विक्खंजेणं पन्नत्ते । सक्कस्स णं देविंदस्स देवरन्नो जहा सक्कस्स तहा सव्वेसिं लोगपालाणं सव्वेसिं च इंदाणं जाव अच्चुयत्ति ।

चमरस्सेत्यादि सुगम नवरं ( तिगिच्छिकूमेत्ति ) तिगिच्छि, किञ्जल्कस्तत्प्रधानकूटत्वात्तिगिच्छिकूटस्तत्प्रधानत्वं च कमलबहुलत्वात् सञ्ज्ञा चेयम् ॥ ( उप्पायपव्वपत्ति ) उत्पतनमूर्ध्वगमनमुत्पातस्तेनोपलक्षित पर्वत उत्पातपर्वत स च रुचकवराभिधानात् त्रयोदशात्समुद्रात् दक्षिणतोऽसख्येयान् द्वीपसमुद्रानतिलङ्घ्य यावदरुणवरद्वीपारुणवरसमुद्रौ तयोररुणवर समुद्र दक्षिणतो द्विचत्वारिंशत योजनसहस्राण्यवगाह्य नवति तत्प्रमाण च "सत्तरसएक्कवीसाइ, जोयणसयाइं सो समुव्विद्धो । दस चेव जोयणसए, बावीसे वित्थरो हेट्ठा ॥ १ ॥ चत्तारिजोयणसए, चउवीसे वित्थडो उ मज्झम्मि । सत्तेव य तेवीसे, सिहरतले वित्थडो होइत्ति" ॥ २ ॥ स च रत्नमय· पद्मवरवेदिकया वनखण्डेन च परिक्षिप्तस्तस्य च मध्येऽशोकावतंसको देवप्रासाद इति ॥ ( चमरस्सेत्यादि महारन्नोत्ति ) लोकपालस्य सोमप्रभ उत्पातपर्वतोऽरुणोदसमुद्र एव नवति । एवं यमवरुणवैश्रमणसूत्राणि नेयानीति ( वलिस्सेत्यादि ) रुचकेन्द्र उत्पातपर्वतोऽरुणोदसमुद्र एव यथोक्त भवति " अरुणस्स उत्तरेणं, बायालीस नवे सहस्साइं । ओगाहिऊण उदहिं, मिउणिचयो रायहाणिओत्ति" ॥ १ ॥ ( वलिस्सेत्यादि ) । सूत्रसूची एवं च द्रष्टव्यम् ॥ वइरोयणिंदस्स वइरोयणरन्नो सोमस्स महारन्नो एवं चेवत्ति ॥ अतिदेश एतद्भावना । ( जहेत्यादि ) यथा यत्प्रकार चमरस्य लोकपालानामुत्पातपर्वतप्रमाणं प्रत्येकं चतुर्भि सूत्रैरुक्तं ( तं चेवत्ति ) तत्प्रकारमेव चतुर्भि· सूत्रैर्वलिनोऽपि वैरोचनेन्द्रस्यापि वक्तव्यं समानत्वादिति ( वरुणस्सेत्यादि )वरुणस्योत्पातपर्वतोऽरुणोद एव समुद्र भवति ( वरुणस्सेत्यादि ) प्रथमं लोकपालसूत्रे । "एव चेवत्ति"करणात् "उच्चत्तेणं दसगाउयसयाइ उव्वेहेणमित्यादि " सूत्रमतिदिष्ट एव जाव "संखवालस्सत्ति" । करणाच्छेषाणां त्रयाणां लोकपालानां कोलवालसेलवालसंखवालाभिधानानामुत्पातपर्वताभिधायीनि त्रीण्यन्यानि सूत्राणि दर्शयति । ( एव भूयाणंदस्सवित्ति ) भूतानन्दस्यापि औदीच्यनागराजस्यापि उत्पातपर्वतस्तस्य नाम प्रमाण च वाच्य यथा धरणस्येत्यर्थ भूतानन्दप्रभश्चोत्पातपर्वतोरुणोद एव नवति केवलमुत्तरत· एवं ( लोगपालाण वि से त्ति ) ( से ) तस्य भूतानन्दस्य लोकपालानामपि एवमुत्पातपर्वतप्रमाणं यथा धरणलोकपालानामिति नावः । नवर तत्रमानि चतु स्थानकानुसारेण ज्ञातव्यानीति । ( जहा धरणस्सत्ति ) यथा धरणस्य एवमिति तथा सुपर्णविद्युत्कुमारादीनां ये इन्द्रास्तेषामुत्पातपर्वतप्रमाण नणितव्य कियत्पर्यन्तानां तेषामित्यत आह ( जाव थणियकुमाराणं ति ) प्रकर्ष किमिन्द्राणामेव नेत्याह ( सलोगपालाणति ) तल्लोकपालानपीत्यर्थ· । ( सव्वेसिमित्यादि ) सर्वेषामिन्द्राणां तल्लोकपालानां चोत्पातपर्वताः सदृग्नामानो नणितव्या यथा धरणस्य धरणप्रन· प्रथमतल्लोकपालस्य कालवालस्य कालवालप्रभ इत्येवं सर्वत्र ते च पर्वता· स्थानमङ्गीकृत्यैवम्भवन्ति "असुराण नागाण, उदहिकुमाराण होंति आवासा । अरुणोदए समुद्दे, तत्थेव य तेसि उप्पाया ॥ १ ॥ दीवदिसा अग्गीणं थणियकुमाराण होंति आवासा । अरुणवरे दीवम्मि उ, तत्थेव य तेसि उप्पायत्ति" ॥ २ ॥ सक्कस्सेत्याहि ॥ कुरुमलवरे द्वीपे कुरुमलपर्वतस्याभ्यन्तरे दक्षिणत· षोमश राजधान्य· सन्ति तासां चतसृणां मध्ये सोमप्रभयमप्रभवरुणप्रभवैश्रमणप्रभाख्या उत्पातपर्वता· सोमादीनां शक्रलोकपालानां सन्ति उत्तरपार्श्वे तु एवमेवेशानलोकपालानामिति यथा शक्रस्य तथाच्युतान्तानामिन्द्राणां लोकपालानां चोत्पातपर्वता वाच्या यत· सर्वेषामेक प्रमाणं नवरं स्थानविशेषो विशेषसूत्रादवगन्तव्य ॥ स्था० १० ठा० ।

उप्पायपुव्व–उत्पात ( द ) पूर्व–न० उत्पादप्रतिपादकं पूर्वमुत्पादपूर्वम् । प्रथमपूर्वे, तत्र सर्वद्रव्याणां सर्वपर्यायाणां चोत्पादमधिकृत्य प्ररूपणा क्रियते आह च चूर्णिकृत् "पढम उप्पायपुव्वं, तत्थ सव्वदव्वाणं पज्जवाण य उप्पाय मगीकाउ पन्नवणा कप्पाइति" ॥ न० ॥ तस्य पदपरिमाणमेका कोटी । स० । नन्दीसमवायाङ्गवृत्त्योरेका पदकोटीत्युपवर्ण्यतेऽन्यैस्त्वेकादश । यत्रोत्पादमङ्गीकृत्य सर्वद्रव्यपर्यायाणां प्ररूपणा कृता तदुत्पादपूर्वं प्रथमं तत्र

पदप्रमाणेन पदसंख्यामाश्रित्य एकाढशकोटीप्रमाणम् । प्रथमपूर्वे एकादशपदानां कोट्य इत्यर्थः इह यत्रार्थोपलब्धिस्ततपदमित्यादि पदलक्षणसद्भावेऽपि तथाविधसंप्रदायाभावात्तस्य प्रामाण्यं न सम्यगवगम्यत इति । प्रव० ६१ द्वा० 'उप्पायपुव्वस्सणं चत्तारि चूलियावत्थू पण्णत्ता" उत्पादपूर्वं पूर्वाणां तस्य चूला आचारस्याग्रामीव तद्रूपाणि वस्तूनि परिच्छेदविशेषा अध्ययनवत् चूलावस्तूनि । स्था० ४ ठा० । "उप्पायपुव्वस्स णं दसवत्थू पण्णत्ता" उत्पादपूर्वं प्रथमं तस्य दश वस्तून्यध्यायविशेषाः । स्था० १० ठा० ।

उप्पायविगमलक्खण–उत्पादविगमलक्षण–न० उत्पादविगमयोः स्वरूपपरिचायके, विशे० ( लक्खण शब्दे इद वक्ष्यामि )

उप्पावेंत–उत्प्लावयत्–त्रि० उत्-प्लुव-णिच्-शतृ । उत्प्लुतिप्रयोजके, प्रा० ॥

उप्पिं–उपरि–अ० ऊर्ध्वे-रिल्-उपादेशश्च । प्रथमापञ्चमीसप्तम्यन्तार्थवृत्तेरूर्ध्वशब्दस्यार्थे, वाच० " तेसिं भोमाणं उप्पिं उल्लोया " जी० ३ प्रति० । स्था० । " उप्पिं पणवीसं जोयणाइं विक्खंभेणं " ( उपरि ) मस्तके, रा० ॥

उप्पिंजल–उत्पिञ्जल–त्रि० उद्-पि-जि-कलन्-वा लस्य रः । अत्यर्थाकुले, वाच० । "उप्पिंजलभूए कहकहभूए दिव्वे देवरमणे पव्वत्ते आवि होत्था" उत्पिञ्जलभूते आकुलके भूते किमुक्तं भवति महर्द्धिकदेवानामप्यतिशायितया परक्षोभोत्पादकत्वेन सकलदेवासुरमनुजसमूहचित्ताक्षेपकारी । रा० ।

उप्पित्थ-उ ( त्पित्त ) प्पित्थ-न० आकुले, रोषभृते आकुलता च श्वासेन लक्ष्यते । तथा पूर्वसूरिभिर्व्याख्यानात् उक्तंच 'उप्पित्थं' श्वाससंयुक्तमिति । जी० ३ प्रति० । तृतीय एष गेयदोषः । जं० १ वक्ष० । स्था० । रा० । अनु० ।

उप्पियंत–उत्पिबत्–त्रि० आस्वादयति, प्रश्न० ३ द्वा० । मुहुर्मुहु श्वसति, " उप्पियंतं गणिडिस्सा अगीतो भासेइ इमं" व्य० द्वि० ४ उ० ।

उप्पियण–उत्पातन–न० मुहुर्मुहु श्वसने, व्य० द्वि० ४ उ० ।

उप्पियमाण–उत्प्लाव्यमान–त्रि० जलोपरि प्लाव्यमाने, "वुड्डमाणे णिवुड्डमाणे उप्पियमाणे, उपा० ७ अ० ।

उप्पिलावेंत–उत्प्लावयत्–त्रि० ऊर्ध्वं प्लावयति, " जे भिक्खू सणं णावं उप्पिलावेइ उप्पिलावेंतं वा साइज्जइ " नि० चू० १८ उ० । आचा० ॥

उप्पीलिय–उत्पीडित–त्रि० गाढीकृते, " उप्पीलियवच्छकच्छगेवेज्जबद्धगलगवरभूसणविराइय ' उत्पीडिता बद्धासिकृता हृदयरज्जुर्यस्य स तथा, भ० ७ श० ६ उ० । ज्ञा० । औ० । वि० । " उप्पीलियचिंधपट्टगहिया उहपहरणा " उत्पीडितो गाढबन्धिपट्टो नेत्रादिर्निवगात्मको यस्ते तथा । प्रश्न० ३ द्वा० । ' उप्पीलियचित्तपट्टपरिपत्थफेणगावनरइयसंगयपलवव्वत्थंतचित्तचिल्लगं " उत्पीडितोऽत्यन्तबद्धश्चित्रपट्टो विचित्रवर्णपट्टरूपः परिकरो यस्ते तथा । ग० " उप्पीलियसरासणपट्टिए " उत्पीडिता गुणसारणेन कृतावपीडा शरासनपट्टिका धनुर्दण्डो येन स तथा । उत्पीडिता वा बाहौ बद्धा शरासनपट्टिका बाहुपट्टिका येन स तथा । भ० ७ श० ९ उ० । उत्पीडिता प्रत्यञ्चारोपणेन शरासनपट्टिका धनुर्यष्टिर्यैस्ते तथा । अथवा उत्पीडिता बाहौ बद्धा शरासनपट्टिका धनुर्वेदप्रतीता यैस्ते तथा । भ० ३ श० ७ उ० । ग० । वि० ।

उप्पुय–उत्पुत–त्रि० उद्-पु-क्त । पवित्रादिना उत्तोत्पवनसंस्कारे पात्रादौ, इद् घृते उत्पवितोऽप्यत्र । वाच० ॥

उप्पुप–न० गेयदोषभेदे, भा० १६ अ० ॥

उप्पूर–उत्पूर–पुं० प्रकृष्टे प्रवाहे, "पवणाहयचवललियतरंगहत्थनच्चंतवीइपसरियखीरोदकपवरसागरुप्पूरचंचलाहिं " औ० । प्राचुर्ये, " उप्पूरसमरसंगामडमरकलिकलहवेहकरणं " उत्पूरेण प्राचुर्येण समरो जनमरकयुक्तो यः संग्रामो रणः स उत्पूरसमरसंग्रामः । प्रश्न० ३ द्वा० ।

उप्पेय–देशी–अभ्यङ्गे, । " पुव्वं च मंगलट्ठा, उप्पेयं जइ करेइ गिहियाणं" पूर्वं च यदि मङ्गलार्थं साधु उप्पेयं देशीपदमेतत् अभ्यङ्गं पश्चाद् गृहिकाणां गृहस्थानां करोति । व्य० ६ उ० ।

उप्पेल्ल–उन्नमि–धा० उद् नम्-णिच्-ऊर्द्धनमनकारणे, उन्नमेरुच्छड्डोल्लालगुलुगुञ्छोप्पेला ८ । ४ । ३६ । इति उन्नमेरुप्पेलादेशः । उप्पेलइ उन्नमयति । प्रा० ॥

उप्पेहड–देशी–उद्भटार्थे, दे० ना० ।

उप्फुण्ण–देशी–आपूर्णे, दे० ना० ।

उप्फुण–उत्फण–पुं० स्त्री० उच्छ्लत्फणे, उत्फणत्वे, कुण्डलिकादिपर्य्यायसमन्वितसर्पद्रव्यवत् आ० म० द्वि० ।

उप्फाल–देशी–दुर्जने, दे० ना० ।

उप्फालंत–उत्फालयत्–त्रि० प्रोल्लङ्घयति, प्रा० ।

उप्फुल्ल–उत्फुल्ल–त्रि० उद्-फुल्-नि विकसिते, द० ५ अ० । दलानामन्योन्यविश्लेषेण प्रकाशिते, उत्फुल्लनीलनलिनोदरतुल्यभासः माघ. । उत्ताने, त्रि० स्त्रीणां गुह्येन्द्रिये, न० । वाच० ॥

उप्फुसिऊण–उत्स्पृश्य–अ० उदकेन अभ्युक्षणं दत्वेत्यर्थे "उप्फुसिऊणं देते अत्तट्ठियसेविए गहणं" बृ० १ उ० ।

उप्फेणउप्फेणिय–उत्फेनोत्फेनित–न० फेनोद्गमनकृते, "उप्फेणउप्फेणियसीहसेण रायं एवं वयासी उप्फेण उप्फेणियंति" सकोपोष्मवचनं यथा भवतीत्यर्थः । विपा० ६ अ० ।

उप्फेस–देशी–न० पु० मुकुटे, औ० । प्रज्ञा० । शिरोवेष्टने, शेखरके, "पचरायककुहा पण्णत्ता तंजहा खग्गं छत्तं उप्फेसं वाहणा उवालवियाणी" स्था० ५ ठा० । "उप्फेसं वा कुज्जा" शिरोवेष्टनं वा कुर्यात्, आचा० २ श्रु० । त्रासे, अपवादार्थे, दे० ना० ।

उप्फोअ–देशी–उद्गमे, दे० ना० ।

उप्फोस–उत्स्पृश–पुं० उत्स्पर्शने, उन्दने, बृ० १ उ० ।

उब्बंधण–उद्बन्धन–न० उद्–बन्ध्–ल्युट्–उल्लम्बने, । प्रश्न० ५ द्वा० ऊर्ध्वं वृक्षशाखादौ बन्धने, तेन मरणे च । "उब्बंधणाइ वेहासमित्यादि" प्रव० १५ द्वा० ।

उव्वहय–उद्वहक–पुं० विद्यादायकादिप्रतिजागरके, स्था० ३ ठा० । स च प्रव्राजयितुं न कल्पते । इति तत्प्ररूपणमित्यम् " अच्चाणि उव्वहो " ।

कम्मे सिप्पे विज्जा, मंते जोगेय होंति उव्वरआ ।
उव्वहउजओ एसो, न कप्पए तारिसे दिक्खा ॥४२०॥

एस पञ्चविहो उपचरणगत्रावेण बद्धो उपचारकः प्रतिजागरक इत्यर्थः ।

कम्मे सिप्पे विज्जा, मंतेय परूवणा व उण्हं पि ।
गोवालउकुमादी, कमउं होंति उव्वहउ ॥४२१ ॥

कम्मसिप्पाणं दोण्ह अयं परूवणा कज्जति तेण चउगहणं अणुवएसपुव्वगं गोपालादीकम्म आयरितोवएसपुव्वग रहगादी सिप्प वेहादिया सउणरुयपज्जवसाणा बावत्तरिकलातो

विज्जादेवयसमयनिवद्धो मंतो अहवा इत्थिपुरिसाभिहाणविज्जामता अहवा स साहणा विज्जा पढणसिद्धो मंतो दुगमादि दव्वनियरा विद्देसणवसीकरणउच्चाडणारोगावणायकरावजोगा त्थय गोपालादीकम्मे भिक्खगा कालतो मुल्ले गहिते अगहिते वा काले असपुन्ने ण कप्पति दिक्खिउ पुन्ने कप्पति । अब्भिन्नकालतो कप कम्मे गिहिते वा अगहिते वा मुल्ले कप्पति ।

सिप्पाई सिक्खंतो, सिक्खावेंतस्स दत्त जा सिक्खा ।
गहियम्मि वि सिक्खम्मि,जं चिरकालं तु उव्वण्हो॥४४२॥
एमेव य विज्जाए, मंते जोगे य जाव उव्वण्हो ।
तावति काले ण कप्पति, सेस काले अणुण्णत्तो ॥४४३॥

अतिगाहणातो विज्जा मते जोगा सिक्खतो सिक्खावेंतस्स कवलादिदव्वं देति सो य जति तेण एव उव्वण्हो जाव सिक्खसि ताव तुम ममायतो तमि असिविखत्ते न कप्पति सिक्खिए कप्पति। अध एवं उव्वण्हो सिक्खिए वि उवरिए तिय काल ममायतणे भवियव्व तम्मि काले अपुन्ने ण कप्पति अतरा पव्वावेंतस्स इमे दोसा ॥

बधवहा रोहा वा, हवेज्ज परितावसंकिलेसो वा ।
उव्वण्हगम्मि दोसो, उव्वण्णासु ते य परिहाणा ॥४४४॥
उवउण्हगजवगाणं, एस विसेसो मुणेयव्वो ।

कग्ग वितियपदं सुक्कोवगाहा । कग्गगतो उव्वरूगो उव्वरूभयगाए इमो वि से सोऊण उवसपद उव्वण्हे भयउ पुण प्रत्तीए घेप्पति । नि० चू० ११ उ० ।

उव्वलण-उद्वलन-न० अभ्यङ्गने, विइयपयकारणम्मि चम्मुव्वलण तु होति पगट्ठा" वृ० ३ उ० । (अणायारशब्दे तन्निषेध उक्तः ) प्रोद्वलने च । क०प्र० । करणे, ल्युट् । देहोपलेपनविशेषेषु, यानि देहाद्धस्तामर्शनेनापनीयमानानि मालादिकमादाय उद्वलन्तीति । ज्ञा० १३ अ० ॥

उव्वलणसंकम-उद्वलनासंक्रम-पुं० प्रदेशे, सङ्क्रमभेदे, पं० स० ( तल्लत्तणादिसकमशब्दे प्रदेशसक्रमप्रस्तावे दर्शयिष्यते )

उव्विद्ध-उद्विद्ध-त्रि० ऊर्द्ध गते, औ० । "सुगंधवरकुसुमचुम्म वासरेणुमइल" भ०६श०३३ उ० । रा० । उच्छ्रिते, । "तालद्ध-उव्विद्धगहलकेउ " स० । प्रश्न० । रा० ।

उपविद्ध-त्रि० उण्डे, "उव्विद्धविपुलगभीरखायफलिहा " ज्ञा० १ अ० । रा० ।

उव्वेह-उद्वेध-पुं०उण्डत्वे, जी०३प्रति० ।"उव्वेध ऑडत्तणाति भणिय होइ" स्था०१०ठा० । भूमिप्रविष्टत्वे, ज०७ वक्ष० । भुवि प्रवेशे, स्था० २ ठा० । भूमावगाहे, मध्यविष्कम्भे च । स्था० १० ठा० ।

उव्वोलित्ता-अववोलयितृ-त्रि० अधोवोलयितरि, "सीओदगवियडंसि वा काय उव्वोलित्ता भवति "सूत्र० २ श्रु०२ अ०

उव्भ-ऊर्ध्व-त्रि०उद्-हाड्-रु-पृषो० ऊरादेश. । "वोर्ध्वे" ८।२ ५८। इति सयुक्तस्य वा भः । उव्भं उद्ध। प्रा०। उच्चे, उपरितिपरितने च । वाच० ।

उब्भजि-देशी-कोद्रवजालके, वृ० १ उ० ।

उब्भट्ठ-अवभाषित-त्रि० याचिते, " उब्भट्ठं अणोभट्ठं वा गेण्हतस्स दव्वुञ्भियं भवति । नि० चू० १५ उ० ।

उब्भड-उद्भट-त्रि० उद् भट् करणे-अप् । तण्डुलादे. प्रस्फोटनहेतौ शूर्पे, तदाकारत्वात्कच्छपे, श्रेष्ठाशये, महाशये, प्रवरे, अन्यवहिर्भूतैर्लोकप्रसिद्धेऽज्ञातवक्तृके श्लोके, वाच० । असंवृतपरिधानादौ " छिक्कावणा उब्भेडो णीया सा दारुणसभावा" वृ० ६ उ० । विकराले, " उब्भडघडमुहा कच्छुकसराभिभूया " उद्भटं विकरालं घटकमुखमिव मुख तुच्छदशनच्छदत्वाद्येषां ते तथा । स्पष्टे च । "उब्भडघाडामुहा कच्छुकसराभिभूया " उद्भटे स्पष्टे घाटामुखे शिरोदेशविशेषौ येषां ते तथा । भ० ७ श० ६ उ० ।जं० । ज्ञा० । तं० ।

उब्भडवेस-उद्भटवेष-पुं० निषिद्धजनोचितनेपथ्ये, ध० र० । दर्श० । ( तदकरणीयता अणुब्भड शब्दे उक्ता )

उब्भव-उद्भव-पुं० उद्-भू-अच् । उत्पत्तौ, विशे० । सम्भवे, ज्ञा० २ अ० । कर्तरि-अच्- । उत्पत्तिमति, उद्भूतत्वे, विशेषगुणगते जातिभेदे, वाच० ॥

उब्भाम-उद्भ्राम- पुं० उद्- भ्रम- घञ्-भिक्षाभ्रमणे, स्था० ४ ठा० ॥ उत्प्राबल्येन भ्रमत्युद्भ्रामाः ।भिक्षाचरेषु, "तीरिय उब्भामणितो य दरिसिए " व्य० १ उ०। नि० चू० ।

उब्भामइल्ला-उद्भ्रामिल्ला-स्त्री० स्वैरिण्याम्, "जस्स महिलायति उब्भामइल्ला य तस्स" व्य०४उ०दु.शीलायां च ।वृ०६उ ।

उब्भामग-उद्भ्रामक-पुं०उद्-भ्रम्-एवुल् । पारदारिके, वाह्यग्रामे भिक्षाटन विधायापर्य्याप्ते तत्रैव भिक्षामटति, "अद्धाणणिग्गयाई उब्भामगखमग अक्खरे रिक्खा " वृ० १ उ० ॥ वायुभेदे च । प्रज्ञा० ।

उब्भामगणितो(यो)य-उद्भ्रामकनियोग-पुं० उद्भ्रामका भिक्षाचरास्तेषां नियोगो व्यापारो यत्र स उद्भ्रामकनियोग । भिक्षाचरव्यापारवति ग्रामे, "तीरिय उब्भामणितोयदरिसिए सा दुसरिणिवप्पाहे । " व्य० १ उ० ।

उब्भामिगा-उद्भ्रामिका-स्त्री० कुलटायाम्, व्य० ६ उ० । " उब्भामिगावलिया वलिया वलवलिया " महा० ३ अ० ।

उब्भालण-देशी-शूर्पादिनोत्पवने, अपूर्वे च । दे० ना० ।

उब्भाव-रम्-धा० क्रीडायाम्, रमे संखुड्डखेड्डोब्भावकिलिंकिचकोट्टुममोट्टायणीसरवेल्ला ८ । ४ । ६७ । इति रमेरुब्भावादेश । उब्भावइ । रमते । प्रा० ।

उब्भावणा-उद्भावना-स्त्री० उत्प्रेक्षणे, "अमब्भावुब्भावणाहिं" ज्ञा० १३ अ० । औ० । प्रकाशने, नं० । प्रभावनायाम्, " पवयण उब्भावणया " स्था० १० ठा० । वृ० ।

उब्भाविअ-देशी-सुरते, दे० ना० ।

उब्भिंदमाण-उद्भिंदत्-त्रि०उद्भेदं कुर्वति, "मट्टिउवलित्तं असण४ वा उब्भिंदमाणे पुढवीकायं समारभेज्जा" आचा०२श्रु ७अ

उब्भिंदिउं ( य ) उब्भिद्य-अव्य० उद्घाट्येत्यर्थे " छगणाइणोवलित्तं उब्भिंदिय ज तमुब्भिन्नं " पञ्चा० १ ३ विव० ।द० ॥

उब्भिज्जमाण-उद्भिद्यमान-त्रि० उद्घाट्यमाने, ज० १ वक्ष०। रा० । जीवा० । प्राबल्येनोर्द्ध वा दार्य्यमाणे, केनइयुडाण वा अणुवायसि उब्भिज्जमाणाण वा " भ० १६ श० ६ उ० ॥

उब्भिन्न-उद्भिन्न-न० उद्भेदनमुद्भिन्नम् । साधुभ्यो घृतादिदाननिमित्त कुतुपादेर्मुखस्य गोमयादिस्थगितोद्घाटने द्वादशे उद्गमदोषे, तद्योगाद्देये घृतादौ च । पिं० । " छगणाइणोवउत्तं उब्भिदिय ज तमुब्भिण्णं " । उद्भिद्य उद्घाट्य यद् भक्तादि ददातीति वर्तते तद्भक्तायुद्भिन्नमित्युच्यते । कोष्ठकाद्युद्भिन्न भाजनसम्बन्धादिति । पञ्चा० १३ विव० ।

तद्भेदा यथा—

पिहिउब्भिन्नकवाडे, फासुयअफासुए य बोधव्वे ॥
अफासु य पुढविमाई, फासुय छगणाइ दद्दरए ॥

उद्भिन्नं द्विधा तथा पिहितोद्भिन्नं कपाटोद्भिन्नं च । तत्र यत् कुतुपादेः स्थगितं मुखं साधूनां तैलघृतादि दीयते तद्दीयमानं तैलादि पिहितोद्भिन्नं पिहितमुद्भिन्नं यत्र तत् पिहितोद्भिन्नमिति व्युत्पत्तेः । तथा यत् पिहितं कपाटमुद्भिद्य उद्घाट्य साधुभ्यो दीयते तत् कपाटोद्भिन्नम् । व्युत्पत्तिः प्रागिव । तत्र पिहितोद्भिन्नं द्विधा तद्यथा प्रासुकमप्रासुकं च सचेतनमचेतनं चेत्यर्थः । तत्राप्रासुकं सचित्तपृथिव्यादिमयं प्रासुकं छगणादिदर्दरके तत्र छगणा गोमया आदिशब्दाद्भस्मादिपरिग्रहः दर्दरको मुखबन्धनवस्त्रखण्डम् ॥

अत्र पिहितोद्भिन्ने दोषानभिधित्सुराह ॥

उब्भिन्ने छकाया, दाणे कयविक्कए य अहिगरणे ।
ते चेव कवाडम्मि वि, सविसेसा जंतमाईसु ॥

उद्भिन्ने पिहितोद्भिन्ने च दोषास्तद्भेदकाले षट्पृथिवीकायादयो विराध्यन्ते तथा प्रथमतः साधुनिमित्तं कुतुपादिमुखे उद्भिन्ने सति पुत्रादिभ्यस्तैलादिप्रदाने तथा क्रये विक्रये चाधिकरणप्रवृत्तिरुपजायते । तथा त एव षट्कायविराधनादयो दोषा कपाटेऽपि कपाटोद्भिन्नेऽपि सविशेषास्तु यन्त्ररूपकपाटादिषु द्रष्टव्या । तत्र यान्यतीव सपुटमागतानि कुञ्चिकाया रोधायान्ति यानि च दर्दरिकोपरि पिट्टणिकाया एकदेशवर्त्तीनि मालप्रवेशरूपद्वारे तानि यन्त्ररूपकपाटानि । आदिशब्दात्परिग्रहादिग्रहः । संप्रत्येनामेव गाथां व्याचिख्यासु प्रथमतः " उब्भिन्ने छकाया " इत्यवयवं व्याख्यानयन् गाथाद्वयमाह ।

सचित्तपुढविलित्तं, लेलुसिलं वा वि दाउमोलित्तं ।
सचित्तपुढविलेवो, चिरम्मि उदगं अचिरलित्ते ॥
एवं तु पुव्वलित्ते, जे उब्भिण्णे य ते चेव ।
ते मेउं उवलिंपए, जउमुद्दं वा वि तावेउं ॥

इह कुतुपादिमुखदर्दरकोपरि कदाचित् लेलुं लोष्टम् । शिलां पाषाणमथ प्रक्षिप्य जलार्द्रीकृतसचित्तकायलिप्त भवति । तत्र सचित्तः पृथिवीलेप सचित्त सन् चिरकालमप्यवतिष्ठते । उदकं त्वचिरलिप्ते अचिरकाललिप्ते सम्भवति किमुक्तं भवति यदि चिरकालसचित्तपृथिवीकायलिप्तमुद्भिद्यते तर्हि सचित्तपृथिवीकायविनाशोऽचिरलिप्ते तद्भिद्यमाने अप्कायस्यापि विनाशः । अचिरलिप्तमप्यत्रान्तर्मुहूर्तकालमभ्यवर्ति द्रष्टव्यमन्तर्मुहूर्तानन्तरं तु पृथिवीकायशस्त्रमपर्कन उदकमचित्तीभवति । ततो न तद्विराधनादोषः । उपलक्षणमेतत् तेन त्रसादेरपि तदाश्रितस्य विनाशम्भवो द्रष्टव्यः एवमनेन प्रकारेण पूर्वलिप्ते साध्वर्थमुद्भिद्यमाने दोषा उक्ता । एते एव पृथिवीकायादिविराधना दोषा उपलिप्यमानेऽपि कुतुपादिमुखात्तैलघृतादिकं साधवे दत्वा शेषस्य रक्षणार्थं भूयोऽपि कुतुपादिमुखे स्थग्यमाने द्रष्टव्याः । तथाहि भूयोऽपि कुतुपादिमुखे सचित्तपृथिवीकायेन जलार्द्रीकृतेनोपलिप्यते तत्र पृथिवीकायविराधना । अप्कायविराधना च पृथिवीकायमध्ये च मुद्गादयः कीटिकादयश्च संभवन्ति । ततस्तेषामपि विराधना । तथा कोऽप्यभिज्ञानार्थं कुतुपादिमुखस्योपरि जतुमुद्रां ददाति । तदा तेजस्कायविराधनापि । यत्राग्निस्तत्र वायुरिति वायुकायविराधना च । तत पिहितोद्भिन्ने षट्कायविराधना ।

अमुमेवार्थं स्पष्टं भावयति ।

जह चेव पुव्वलित्ते, कायाओ पुणो वि तह चेव ।
उवलिंपंते काया, मुइंगाई नवरि छट्ठे ॥

यथा चैव पूर्वलिप्ते कायाः पृथिवीकायादयो विराध्यन्ते तथा साधुभ्यस्तैलादिकं दत्वा भूयोऽपि कुतुपादेर्मुखे उपलिप्यमाने काया विराध्यन्ते । नवरं षष्ठे काये त्रसकायरूपे विराध्यमाना जन्तव पृथिव्याश्रिता मुइंगादयः पिपीलिका कुन्थ्वादयो द्रष्टव्याः संप्रति " दाणे कयविक्कय " इत्यवयवं व्याचिख्यासुराह ॥

परस्स तं देइ स एव गेहे, तेल्लं व लोणं व घयं गुलं वा ।
उग्घाडियं तम्मि करे अवस्सं, सविक्कयं तेण किणाइ अन्नं ॥

तस्मिन् कुतुपादिमुखे साध्वर्थमुद्घाटिते सति प्रवर्तते इति साधोः प्रवृत्तिदोषः । तथा च ' एते एव अहिगरण ' मित्यवयवं व्याचिख्यासुराह ॥

दाणकयविक्कए चेव, होइ अहिगरणमजयभावस्स ।
निवयंति जेय तहिं ये, जीवा मुइंगमूसाई ॥

दानक्रये विक्रये चानन्तरोक्तस्वरूपं वर्तमाने साधोरयतभावस्य अयतोऽशुद्धाहारापरिहारकत्वेन जीवरक्षणरहितो भावोऽध्यवसायो यस्य स तथा तस्याधिकरण पापप्रवृत्तिरुपजायते । तथा तस्मिन् कुतुपादिमुखे उद्घाटिते ये जीवा मुइंगमूषकादयो निपतन्ति निपत्य च विनाशमाविशन्ति तदप्यधिकरण साधोरेव सप्रति ' ते चेव कवाडम्मी ' त्यवयवं व्याचिख्यासुराह ॥

जहेव कुंभाइसु पुव्वलित्ते, उब्भिज्जमाणे य भवंति काया ।
उवलिप्पमाणे वि तहा तहेव, काया कवाडम्मि वि जाणियव्वा ॥

तथैव कुम्भादौ घटादौ आदिशब्दात् कुतुपादिपरिग्रहः । पूर्वलिप्ते उद्भिद्यमाने तथा उपलिप्यमाने कपाटे तद्विराधना भवति । जलभृते करकादौ लुप्यमाने भिद्यमाने वा पानीये प्रसर्पतः प्रत्यासन्नचुल्लादावपि प्रविशेत् । तथा च सत्यग्निविराधना यत्र चाग्निस्तत्र वायुरिति वायुविराधना च । मुइंकादिविवरप्रविष्टकीटिकागृहगोधिकादिसर्वविनाशे त्रसकायविराधना चेति । दान क्रयविक्रयाधिकरणप्रवृत्तिभावना च पूर्ववत्कर्तव्या । संप्रति "सविसेसण" इत्यवयवं व्याचिख्यासुराह ॥

घरकोइलसंचारा, आवत्तणपडगाइहेट्ठुवरिं ।
निंतिट्ठिए य अंतो, डिंभाई पेल्लणे दोसा ॥

कपाटस्य सञ्चारात् संचलनात् गृहगोधिका उपलक्षणमेतत्कीटिकादुरादयश्च विराध्यन्ते । तथा प्रासादस्याधोभूमिरूपा पीठिकेव पीठिका भूमिका तत्र अध उपरितले च कपाटैकदेशस्याधो वर्तते तदाश्रिता कुन्थुपिपीलिकादयो विनाशमश्नुवते । तथा उद्घाटिते कपाटे पश्चान्मुखं नीयमाने अन्तःस्थितस्य डिम्भादेः प्रेरणदोषाः शिरःस्फोटनादयो भवन्ति ॥

सम्प्रत्यपवादमाह ॥

घेप्पइ अकिंचियागम्मि, कवाडे पइदिणं परिवहंति ।
अज्जउमुद्दिय गंठी, परिभुंजइ दद्दरो जाव ॥

अकुञ्चिकारहिते कुञ्चिकादिविरहिते इत्यर्थः । तत्र हि किल पृष्ठभागे उल्लालको न भवति । तेन न घर्षण द्वारेण सत्त्वविराधना । यद्वा "अकुञ्चयागम्मि" पाठ । तत्र अकुञ्जिकाके कुञ्जिकारहिते अक्रेकारवे किमुक्तं भवति । यत् उद्घाट्यमानं कपाटं केकाररावं करोति तद्धि क्रियमाणमूर्ध्वमधस्तिर्यक् च घर्षन् प्रभूतसत्त्वव्यापादनं करोति । तेन तद्वर्जनम् । तस्मिन्नपि किं विशिष्टे इत्याह । प्रतिदिनं प्रतिदिवस निरन्तरं प्रतिवहति । उद्घाट्यमाने दीयमाने चेत्यर्थः तस्मिन् प्रायो न गृहगोधिकादिसत्वाश्रयसंभवश्चिरकालमवस्थानाभावात् । इत्थ भूते कपाटे साध्वर्थमप्यु-

घृघादिने यत् ददाति गृहस्थः तत् गृह्यते स्थविरकल्पानामाचीर्णमेतत् । तथा यश्च दर्दरकः कुतुपादीनां मुखबन्धरूप प्रतिदिवसं परिभुज्यते बध्यते ग्राथ्यते च इत्यर्थः तत्र यदि जतुमुद्राव्यतिरेकेण केवलं वस्त्रमात्रग्रन्थिर्दीयते । नापि च सचित्तपृथिवीकायादिलेपस्तर्हि तस्मिन् साध्वर्यमुद्भिन्नेऽपि यद्दीयते तत्साधुभिर्गृह्यते इति । उक्तमुद्भिन्नद्वारम् । पिं० । प्रव० । ध० । पंचा० । व्य० । उत्त० । दर्श० । ग० । स्था० । ( तद्ग्रहणनिषेध आचाराङ्गे प्रतिपादित. स च मालोहड शब्दे व्याख्यास्यते )वृ० । ( जीतकल्पानुसारेण पिहितोद्भिन्नकपाटोद्भिन्ने आचामाम्लम ) जीत० । उत्पन्ने, कर्मणि-क्त द्विधाकृते, दलिते च। वाच० ॥

उब्भुअंत-उद्भवत्-त्रि० उद्-भू-शतृ-भुवेर्होहुवहवाः ८।४।६०। इत्यत्र क्वचिदन्यदपीत्युक्तेरुब्भुअ आदेशः । उत्पद्यमाने, प्रा० ॥

उब्भुइया-औद्भूतिकी-स्त्री० उद्भूते, आगन्तुके, कस्मिंश्चित्प्रयोजने सामन्तामात्यादिलोकस्य ज्ञापनार्थं वाद्यमानायामाशीर्षचन्दनमय्यां देवतापरिगृहीतायां कृष्णवासुदेवभेर्याम्, विशे० ॥

उब्भुत्त-उत्क्षिप्-धा-ऊर्ध्वक्षेपे, उत्क्षिपेर्गुलगुञ्छोत्थघालत्थोब्भुत्तोस्सिक्कहक्खुप्पा. ८।४।४३ । इत्युत्क्षिपे उब्भुत्तादेशः । उब्भुत्तइ । उक्खिवइ । प्रा० ॥

उब्भेइम-उद्भेदिम-न० उद्भेद्ये सामुद्रादौ, अप्रासुके वा लवणे, द० ६ अ० । "बिड वा लोण उब्भेइमं वा लोण आहारेइ आहारत वा साइज्जइ उब्भेतिम पुण सय रुहं जहा सामुद्द" नि० चू० ११ उ० ॥

उभओ-उभयतस्- अव्य० उभाभ्यां प्रकाराभ्यामित्यर्थे,"उभओ जोगविशुद्धा आयावणट्ठाणमाईया" उभाभ्या प्रकाराभ्यां क्रियया भावतश्चेत्यर्थ. । ( जोगविसुद्धत्ति ) विशुद्धयोगा निरवद्यव्यापारा । पञ्चा० १८ विव० । "उभओ विब्बोयणे दुहओ उवए" उभयतः शिरोन्तपादान्तावाश्रित्य ( विब्बोयणेत्ति ) उपधानके यत्र तत्तथा । भ० ११ श० ११ उ० ॥

उभय-उभय-त्रि० उभ्-अयच्-अवयवे द्वित्वविशिष्टे, अस्य द्वित्वे बोधकत्वेऽपि एकवचनबहुवचनान्ततयैव प्रयोग न द्विवचनप्रयोग.। "सिज्जादिएसु उभय करेज्जसे धोवर्धिं व ममत्तं। उभय णाम एगदोसा" नि० चू० १ उ० ।

उभयभाग-उभयभाग-न० चन्द्रस्य उभयत उभयभागाभ्यां पूर्वतः पश्चाच्चेत्यर्थो भज्यन्ते भुज्यन्ते यानि तानि उभयभागानि चन्द्रस्य पूर्वत. पृष्ठतश्च भोगमुपगच्छति नक्षत्रे, । "चदस्स जोइसिंदस्स जोइसरन्नो छ णक्खत्ता उभयभागा उत्तरा तिण्णि विसाहा पुणव्वसू रोहिणी उभयजोगत्ति" । स्था० ६ ठा० ।

उभयकाल-उभयकाल-पु० उभयसन्ध्ये, ग०२ अधि० ।

उभयगणि-उभयगणिन्-पु० उभय. साधुसाध्वीद्वयरूपो गणोऽस्यास्तीति उभयगणी । साधुसाध्वीगणयुक्ताऽऽचार्ये, बृ०१ उ०।

उभयजणणसभाव-उभयजननस्वभाव-त्रि० इष्टानिष्टार्थोत्पादनबीजकल्पे, "जमुभयजणणसभावा एसा विहिणेयरेहिं उप्पण्णा" पंचा० ३ विव० ।

उभयणिसिरण-उभयनिसर्जन-न० कायिकसंज्ञोभयव्युत्सर्जने, "उभय णाम काइयसण्णाणिसिरण धोसिरण" नि० चू० १ उ०।

उभयदढ-उभयदृढ-त्रि० धृत्या सहननेन च बलवति, बृ० १ उ०-

उभयाप्पियसंबंधणसंजोग-उभयार्पितसम्बन्धनसंयोग-पु० मिश्रार्पितसम्बन्धनसंयोगरूपे संयोगभेदे, उत्त० १ अ० । ( आत्मकर्मणोरर्पितौदयिकादिभावविषयकसंयोगलक्षणस्योभयार्पितसम्बन्धनसंयोगस्य व्याख्या संजोग शब्दे वक्ष्यते )

उभयमंडली-उभयमण्डली-स्त्री० समुद्देशनमण्डल्याम्, स्वाध्यायमण्डल्यां च । बृ० १ उ० ।

उभयलोगहिय-उभयलोकहित-त्रि० लोकद्वयेऽप्युपकारके, "क ल्लाण आयणत्तेण उभयलोगहियं" पंचा० ११ विव० ।

उभयसंबंधणसंजोग-उभयसम्बन्धनसंयोग-पु० उभयेनात्मबाह्यलक्षणेन तदुभयास्मिन्वा संयोग, यथा क्रोधी देवदत्त क्रोधी कौन्तिको मानी सौराष्ट्रः क्रोधी वा सन्ति । अत्र क्रोधादिभिरौदयिकादिभावान्तर्गतत्वेनात्मरूपैर्नामादिभिस्त्वात्मनोऽन्यत्वेन बाह्यरूपै. संयोग इत्युभयसम्बन्धनसंयोग उच्यते । उत्त० १ अ० । ( एतद्व्याख्या संजोग शब्दे )

उभयसमय-उभयसमय-पु० उभय ( स्वपर ) मतानुगतशास्त्रस्वभावे, उत्त० १ अ०।

उभयारिह-उभयार्ह-न० मिश्रापरपर्याये, दशविधप्रायश्चित्तमध्ये तृतीये, यस्मिन्प्रतिसेविते प्रायश्चित्ते यदि गुरुसमक्षमालोचयति आलोच्य च गुरुसन्दिष्टः प्रतिक्रामति पश्चाच्च मिथ्यादुष्कृतमिति ब्रूते तदा शुध्यति तत आलोचनाप्रतिक्रमणलक्षणोभयार्हत्वान्मिश्रम । व्य० प्र० १ उ० । यच्च प्रतिसेव्य गुरोरालोचयति गुरूपदेशेन च विशुद्ध्यर्थं मिथ्यादुष्कृत क्रियते तदुभयार्हम् ।जी० येषु प्रतिसेवितेषु उभयार्हप्रायश्चित्त तान्याह ॥

संभमभयाउरावइ, सहसाणाभोगणप्पवसओ वा ।
सव्ववयाईयारे, तदुभयमासंकिए चेव ॥

सभ्रम सक्षोभ. करिसरित्पूरसार्दूलदावानलादेः भय' चौरवन्दिकम्लेच्छादेः ( आउरत्ति ) भावप्रधानत्वान्निर्देशस्य आतुरत्व पीडितत्व क्षुत्पिपासादिभिः । आपच्चतुर्धा द्रव्यक्षेत्रकालभावैः । तत्र द्रव्यापत्कल्पनीयासनादिद्रव्यदुर्लभता १ क्षेत्रापत्प्रत्यासन्नग्रामनगरादिरहितमल्प च क्षेत्रम् २ कालापद्दुष्कालादि ३ भावापद्ग्लानत्वादि ४ तत. सम्भ्रमभयातुरापद्भि' कारणैः सहसाकारानाभोगौ प्राग् व्याख्यातौ ताभ्यां चानात्मवशक परवश. वा शब्दाद् मृताद्याविष्टश्च तस्य सर्वव्रतातिचारे सति । नन्वेवमतीचाराः हस्तिसम्भ्रमाद्यै' पलायमान' पृथिवीजलानलरहितद्वित्रिचतुःपञ्चेन्द्रियांश्चरणकरणघातादिना तापयन् पादपाद्यारोहणेन प्राणातिपातविरतिं विराधयेत् । मृषाविरतिं कूटसाक्ष्यादिना अदत्तविरतिं प्रभोः स्तैन्येनासनादिददतो ग्रहणेन मैथुनविरतिं स्त्र्यादिना परिग्रहविरतिं मध्यममूर्च्छादिना रात्रिभोजनविरतिं दिवागृहीतानि भङ्क्ते. अध्वकल्पो दूरतममार्गे व्रजतां घृतमिश्रकणिकाद्यादानरूप त विदध्यात् । लेपकृतं क्षीरान्नादि तदुत्सर्गतो न आह्लेत्कचिदुद्भुञ्जीतेत्यादि सूत्रविषया एवमुत्तरेऽगुणेष्वपि ज्ञेया. । इत्थमतीचारजाते सति तया आशङ्किते चैव यदतिचारस्थान कृतमकृतं चेति निश्चेतुं न शक्नोति तस्मिंश्च दर्शनज्ञानचारित्रतपःप्रभृतिसर्वपदविषये तदुभयार्हं प्रायश्चित्तम् ।एकं गुरोरालोचना द्वितीय गुरुसंदिष्टेन मिथ्यादुष्कृतदान प्रतिक्रमणार्हाख्यमित्येतदुभय शुद्धिकरम् । किञ्च ।

दुच्चिंतिय दुब्भासिय, दुच्चिट्ठिय एवमाइयं बहुसो ।
उवउत्तो वि न याणइ, जं देवसियाइ अइयारा ॥

दुश्चिन्तित कोङ्कणार्यकशब्दवदार्तचिन्तनात् । दुर्भाषित त्वसद्भृतोद्भावन दुश्चेष्टित च धावनादि । दुश्चिन्तित दुर्भाषित दुश्चेष्टितम् । एवमादिकमन्यदप्येव प्रकारं दुष्प्रणिधानेन दुष्प्र-

मार्जिता यद्बहुशोऽनेकशो उपयुक्तोऽपि उपयोगवानपि यद्दैवसिका-द्यतिचारादित्यादिशब्दाद्वा त्रिकपाक्षिकचातुर्मासिकसांवत्सरि-कादि च पूर्वकालकृतमालोचनाकाले न स्मरति तस्याप्यति-चार जातस्याशोधक' । अस्यां गाथायामनुक्तमपि प्रस्तावात्तदु-भयार्हमेव ज्ञेयम् ।

मन्वेसु वि वीइयपए, दंसणणाणचरणावरोहेसु ।
आउत्तस्स तदुभयं, महसाकाराइणा चेव ॥

प्रथमपदमुत्सर्गस्तदपेक्षया द्वितीयपदमपवादस्तस्मिन्नुपस्थि-ते सत्ययुक्तस्य कारणेन यतनया गीतार्थस्यापराधपदान्यासेव-मानस्य सहसाकारादिना चैवमादिग्रहणादनाभोगानाभोगाभ्यां च सर्वेष्वपि दर्शनज्ञानचरणापराधेषु तदुभयं प्रायश्चित्तम् । अत्राह शिष्य' । 'खलियस्स य सव्वत्थ वी' त्यत्र दर्शनज्ञानचरणादिपदेषु सर्वेषु सम्स्खलितस्य प्रतिक्रमणार्हमभिधाय तेष्वेवेह कथं तदुभ-यार्हमभिधीयते ॥ तत्र हि सममापद्यमानस्येत्युक्तम् । इह तु हिंसाद्यापन्नसाम्ययुक्तस्य तदुभयार्हेण शुद्धिरिति न विरोधः।

इदानीं तदुभयार्हमभिधातुकाम आह ॥

संकिए सहसागारे, भयाउरे आवतीसु य ॥
महव्वयातियारे य, उण्हं गाणाए वज्जतो ॥

शङ्कितः प्राणातिपातादौ यथा मया प्राणातिपातः कृतः किं वा न कृतः । तथा मृषा भणितं न वा अवग्रहोनुज्ञापितो न वा, स्नानादिदर्शननिमित्त जिनभवनादिगतस्य स्त्रीस्पर्शे रा-गगमनमभूत्र वा इष्टानिष्टेषु रागद्वेषौ गतौ न वा, तक्रादिले-पकृदवयवाः कथमपि पात्रगताः पर्युषिताःभिक्षार्थमटितुका-मेन धौता. किं वा न धौता इत्यादि । तत्र षण्णां वाह्यं तदुभय-लक्षणं प्रायश्चित्तमिति योग' । तथा उपयोगवतोऽपि सहसा कारे सहसा प्राणातिपातादिकरणे । तथा भये दुष्टम्लेच्छा-दिसमुत्थे यदि वा हस्त्यागमने मेघोदकनिपातस्पर्शने दीपा-दिस्पर्शने वा आकुलतया प्राणातिपातादिकरणे तथा आतु-र क्षुधा पिपासया वा पीडित' । भावप्रधानश्चायं निर्देशस्त-तोऽयमर्थ आतुरतायाम् । तथा आपत्सु चतुर्द्धा तद्यथा । द्र-व्यापत् क्षेत्रापत् कालापत् भावापत् । तत्र द्रव्यापत् दुर्लभं प्रायोग्यं द्रव्यम् । क्षेत्रापत् छिन्नमडण्डपादि । कालापत् दुर्भि-क्षादि । भावापत् गाढग्लानत्वादि । एतासु स हिंसादि-दोषमापद्यमानस्यापि अनात्मवशगस्य तथाहि ईर्यासमिता-बुपयुक्तोऽप्युत्क्षालिते पादे सहसा समापतितं कुलिङ्गिनमपि व्यापादयेत् मृषापि कदाचित्सहसा भाषते । अवग्रहमपि कदाचिदाभासिकतया अननुज्ञातमपि परिभोगयति । अत्यु-त्कणमबलारूपमवलोक्य कदाचनापि सहसा रागमुपैति इ-त्यादि । तथा भयात्प्रपलायमानोभूदकज्वलनवनस्पतिछित्रि-चतु पञ्चेन्द्रियानपि व्यापादयेत् । मृषापि भयात् भाषते परि ग्रहमपि धर्म्मोपकरणग्राहस्य करोति । आतुरतायामपि स-म्यगीर्यापथाशोधने संभवति प्राणातिपात. । अन्यातुरतायां कदाचिन्मृषा भाषणमपि अदत्तादानमपि च एवमापत्स्वपि भावनीयम् तथा महाव्रतानां प्राणातिपातनिवृत्त्यादीनां सह-साकारत. स्फुरत्पुरुष्या कारणतो वा अनाचारे च शब्दादति क्रमव्यतिक्रमयोश्च । तथातिक्रमादीनां महाव्रतविषयाणामन्य-तमस्यासेवायां वा किमित्याह ( दुण्हं वागाणवज्झतो इति ) पर्यालोचनप्रतिक्रमणरूपाभ्यां द्वे प्रायश्चित्ते द्वे अपि एकं प्राय-श्चित्तमिति प्रतिपत्ति ॥ ननु दशधा प्रायश्चित्तं तत्र चाद्ये द्वे प्रायश्चित्ते मुक्त्वा शेषाणि सप्त प्रायश्चित्तानि तेषां च स-प्तानां मध्ये कस्मात् प्रायश्चित्त तदुपरितनानां षण्णां वा-

ह्यं नाभ्यन्तरमिति षण्णां स्थानानां वाह्यत इति वचनादेव प्र-तिपत्तव्यम् । तच्च तदुभयं तच्चैवं भावनीयम् । शङ्कितादि-षु यथोक्तस्वरूपेषु सत्सु प्रथमं गुरूणां पुरत आलोचनं तद-नन्तरं गुरुसमादेशेन मिथ्यादुष्कृतदानमिति । शंकिए इत्येत-द्विवृण्वन्नाह ॥

हित्थो व णहित्थो मे, सत्तो ज्ञणियं च न ज्ञणियं मिसा।
उग्गहणुण्णमणुन्ना, तइए फासे चउत्थम्मि ॥
इंदियरागदोसाउ, पंचमे किं गतोमि न गतोत्ति ।
छट्ठे लेवाडादी, धोयमधोयं न वावेत्ति ॥

सत्व' प्राणी ( हित्थोत्ति ) देशीपदमेतत् । हिंशितो मे मया न वा हिंसित इति । तथा मृषा भणितं न वा । तथा तृतीये अदत्ता-दानविरतिलक्षणे अवग्रहोऽनुज्ञा मया कारिता यदि वा अनुज्ञा न कारिता । तथा चतुर्थे मैथुनविरतिलक्षणे जिनभवनादिषु स्नानादिदर्शनप्रयोजनतो गत. सन् ( फासेइत्ति ) स्त्रीस्पर्शे रागं गतो न वा । तथा पञ्चमे परिग्रहविरमणलक्षणे इन्द्रियेषु विषयिणा विषयोपयोगलक्षणादिन्द्रियेषु इष्टानिष्टेषु रागद्वेषौ गतोऽस्मि किं वा न गत इति । तथा षष्ठे रात्रिभोजनविरमणे लेपकृदादि तक्राद्यवयवरूपं कथमपि पात्रादिगतं पर्युषितं भि-क्षाटनार्थमुत्पद्यते तद्धौतमथवा न धौतं मयेति । यद्येवं ततः किमित्याह ॥

इंदियअव्वागरिया जे, अत्था आणवधारिया ।
तदुज्ञयपायच्छित्तं, पमिवज्जइ ज्ञावतो ॥

उक्तेन प्रकारेण येऽर्था. प्राणातिपातादय इन्द्रियैश्चक्षुरादिभिरव्या-कृता. प्रकटीकृता अपि येऽनुपधारिता न सम्यग्धारणाविषयीकृता-स्तेषु प्रायश्चित्त प्रतिपद्यते । भावत सम्यगपुनरापतनेन तदुभय-मिति । तच्च तदुभयं च पूर्वं गुरूणां पुरत आलोचना । तदन-न्तरं तदादेशतो मिथ्यादुष्कृतदानमित्येवरूप तदुभयम् ।

एतदेव सविस्तरमाभिधित्सुराह ।

सद्दा सुया वहुविहा, तत्थ य केसु वि गतोमि रागंति ।
अमुगत्थ मे वितक्का, पमिवज्जइ तदुज्ञयं तत्थ ॥

शब्दा मया बहुविधा बहुप्रकारा. श्रवणविषयीकृतास्तत्र तेषु बहुविधेषु शब्देषु श्रुतेषु मध्ये (वितक्कत्ति) एव मे वितर्कः संदेहो यथा केषुचिदपि ( अमुगत्थत्ति ) अमुकेषु रागमुपलक्षणमेतत् द्वेष वा गतोऽस्मि । तत्र तस्मिन् शङ्काविषये तदुभयमुक्तलक्षणं प्रायश्चित्तं भावत. प्रतिपद्यते । यदिहि निश्चित भवति यथा अमुकेषु शब्देषु रागं द्वेषं वा गत. इति तत्र तपोऽर्हं प्रायश्चि-त्तम् । तथैव निश्चयो न गतो रागं द्वेषं वा तत्र स शुद्ध एव न प्रायश्चित्तविषयः । ततो वितर्के यथोक्तलक्षणे तदुभयमेव प्राय-श्चित्तमिति ।

एमेव सेसए वि, विसए आसेविऊण जे पच्छा ।
काऊण एगपक्खे, न तरइ ताहि यं तदुज्ञयं तु ॥

एवमेव उक्तेनैव प्रकारेण यान् रूपादीन्विषयान् आसेव्योपभुज्य उपलक्षणमेतत् प्राणातिपातादीनप्यासेव्य पश्चात् एकतरस्मिन्प-क्षे अपराधलक्षणे निर्दोषतालक्षणे वा न कर्त्तुं शक्नोति यथा रूपा-दिषु विषयेषु राग द्वेषं वा गत. । प्राणातिपातादयो वा कृता इति । यदि वा न गतो रागद्वेषौ नापि कृता. प्राणातिपातादय इति तत्र तदुभयं तु तदुभयमेव तु शब्दस्यैवकारार्थत्वात् यथोक्तलक्षण प्रायश्चित्त शङ्कास्पदत्वात् तदेव शङ्किते इति व्याख्यातम् ।

सम्प्रति सहसाकारेत्यादिव्याचिख्यासुराह

उवओगवतो सहसा, जयेण वा पेल्लिए कुलिंगादी ।
अचाउरावती सु य, अणेसिया दीहगणजोगा ॥

उपयोगवतो पि ईर्यासमितौ सम्यगुपयुक्तस्यापि उत्क्षिप्ते पादे कथमपि सहसा योगत. समापतितः सन् कुलिङ्गी व्यापाद्यते भये न वा चौरसिंहादीनां भृश पलायमाने नयग्रहणमुपलक्षणं तेन पत दपि द्रष्टव्यं परेण वा (पेल्लिए इति) परेण प्रेरिते वा तद्व्यापारमासाद्य कुलिङ्गी उपलक्षणमेतत् । पृथिव्यादिजीवनिकायो वा व्यापत्तिमाप्नुयात् । तथा अत्यातुरे क्षुधा पिपासया वा अत्यन्तं पीडिते तथा आपत्सु द्रव्यापदादिषु यदि अनेषितादिग्रहणभोगौ भवतः अनेषितमनेषणीयमादिशब्दादकल्पनीयस्य परिग्रहः न केवलमनेषितादिग्रहणभोगौ किंतु गमनागमनादौ पृथिव्यादिजन्तुविराधनापि भवति । तथापि तत्र प्रायश्चित्त यथोक्तलक्षणं तदुभयमिति वर्त्तते सहसाकाराविविषयत्वात् ।

सम्प्रति महव्वयाइयारे अ इत्येतद्व्याख्यानयन्नाह ॥

सहसाकारे अइक्कम-वइक्कमे चेव तह य अइयारे ।
होइ व सदृगहणा, पच्छित्तं तदुभयं तिसु वि ॥
इतिमाउवयोगे वा, एगयरे तत्थ होइ आसंका ।
नवहा जस्स विसोहि, तस्सुवरिं छएह वज्झतु ॥

सहसाकारतोऽतिक्रमे व्यतिक्रमे अतीचारे प्राग्व्यावर्णितस्वरूपे महाव्रतविषये इति सामर्थ्याद्गम्यते महव्वयाइयारे य इति पदस्य व्याख्यायमानत्वात् एतेषु त्रिष्वपि दोषेषु तदुभयमुक्तस्वरूप प्रायश्चित्तम् । अथ मूलगाथायां महाव्रतातीचारे चेत्येवोक्तं तत. कथमत्र विधृतम् अतिक्रमे चेति अत आह । चशब्दग्रहणात्किमुक्त भवति चशब्दग्रहणात् मूलगाथायामतिक्रमव्यतिक्रमयोरपि समुच्चय. कृत इत्यदोष. । अथवा अतीचारस्य पर्यन्तग्रहणादतिक्रमव्यतिक्रमयोरपि उपयोगे स्फुटबुद्ध्या करणे तदुभयप्रायश्चित्तमिति योग । वा शब्दो भिन्नक्रमत्वाद् एगयरे इत्यत्र योजनीय । ततोऽयमर्थ । एकतरस्मिन्वा तत्र अतिक्रमे अतीचारे वा यदि भवत्याशङ्का यथा मयातिक्रम. कृतो न वा व्यतिक्रम. कृतो न वा अतीचार कृतो नवेति । तत्रापि तदुभय प्रायश्चित्तम् । "इह सहसाकारासंके सकिय सहसाकारे" पदद्वयेनापि गते केवल महाव्रतानामतिक्रमादिष्वप्याशङ्कायां सहसाकारे चैतदेव प्रायश्चित्त नान्यत्परिकल्पनीयमिति । भाष्यकृता सहसाकारासंके अपि योजिते । छएह गणाण वज्झतो इति व्याख्यानयन्नाह ( नवहेत्यादि ) यस्याचार्यस्य मतेन अनवस्थितपाराञ्चितयोरैक्यविवक्षणान्नवधा नवप्रकारा विशोधि' प्रायश्चित्त तस्य आद्यप्रायश्चित्तद्वयस्योपरि यद्वर्तते प्रायश्चित्त तत्षण्णामुपरितनानांवाह्य मेव तुशब्दस्यैवकारार्थत्वात् । तत छएह गणाणवज्झत्तो इति तदुभय प्रायश्चित्त प्रतिपत्तव्यमिति । उक्त तदुभयार्हं प्रायश्चित्तम्

उमच्छ–वञ्च–धा० उपालम्भे, वञ्चेर्वेहववेलवजूरवोमच्छा ८ । ४ । ९३ । इति वञ्चेरुमच्छादेशः । उमच्छइ वञ्चइ वञ्चति । प्रा० ।

उमा–उमा–स्त्री० शिवपत्न्याम्, को० । अवसर्पिण्यां द्वितीयवलदेववासुदेवमातरि, स० । आव० । उज्जयिन्यां प्रद्योतस्य राज्ञोऽन्त पुरे गणिकायाम्, आव० ४ अ० । आ० चू० । ( तया महेश्वरनामा खेचरो वृत इति सिक्खा शब्दे विकाशमेष्यति )

उमाल्ल-( लय ) निर्माल्य–न० निर-मल्ल-ण्यत् । निष्पती उत्परी मल्यस्थोर्वा ८ । १ । ३८ । इति निर इत्येष शब्दो माल्यशब्दे परे वा उदुरूपमापद्यते । देवादिदत्ते तद्विसर्जनोत्तरमुच्छिष्टे द्रव्ये, 'उमाल्ल निम्माल्ल उमालय धइ' प्रा० ।

उमासाइ–उमास्वाति–पु० तत्वार्थसूत्राकारके स्वनामख्याते वाचकप्रवरे, अस्य च माता उमा नाम्नी पिता च स्वातिनामेति तयोर्जातत्वादयमुमास्वातिनामा प्रसिद्धिमगमत् । कौपीतकिगोत्रोऽय वाह्मण आसीत् प्रवाचकान्वयानुसारेणाऽय घोषनन्दिक्षमाश्रमणशिष्यशिवश्रीनाम्न आचार्यस्य शिष्य आसीत् । वाचनाचार्यान्वयानुसृत्या मुन्दपादशिष्यमूलवाचकस्य शिष्य आसीत् । अयमाचार्योऽस्मदीय इति श्वेताम्बरा दिगम्बराश्च विवदन्ते । तत्र दिगम्बरमतेन वीरमोक्षात् (१०१) वर्षेऽय विद्यमान आसीत् न्यग्रोधिकानाम्नि ग्रामेऽय जन्म लेभे सरस्वतीगच्छेऽयं पट्टः कुन्दकुन्दाचार्यलोहाचार्ययोर्मध्यगो जातः अनेन तत्वार्थसूत्रं पाटलिपुत्रनगरे विरचितम् । तदुपरि टीकाभाष्ये च स्वेनैव कृते अन्याप्येका टीका विक्रमसमकालिकेन सिद्धसेनार्केण तत्र कृता जै० इ० । तथाचाह भगवानुमास्वातिवाचकः सम्यग्दर्शनचारित्राणि मोक्षमार्ग इति । न० । पञ्चस्थानयुक्तश्च श्रावको भवतीत्युमास्वातिवाचकवचनात् । ज्ञा० १६ अ० । उक्त चोमास्वातिवाचकेन " हिंसानृतस्तेयविषयसरक्षणेभ्यो रौद्रमिति " आव० ४ अ० । वाचक. पूर्वधरोऽभिधीयते स च श्रीमानुमास्वातिनामा महातार्किक. प्रकरणपञ्चशतीकर्ताचार्य. सुप्रसिद्धोऽभवत् पञ्चा० ६ विव० ।

उम्मग्ग–उन्मग्न–त्रि० उद्-मस्ज्-क्त । ऊर्ध्वं जलगमन कुर्वाणे, प्रश्न० ३ द्वा० ।

उन्मज्जन–न० उन्मज्यते ऽनेनेति उन्मज्जनम् । रन्ध्रे,"उम्मग्ग सि णो लभति" । आचा० १ श्रु०३अ० । जलादूर्ध्वगमने, "उम्मग्गलद्धुं इह माणुसेहिं, णो पाणिण पाणिसमारभेज्जा" इह मिथ्यात्वादिशैवालाच्छादितसंसारह्रदे जीवकच्छप. श्रुतिश्रद्धासयमवीर्यरूपमुन्मज्जनमासाद्य लब्ध्वाऽन्यत्र सपूर्णमोक्षमार्गसम्भवान्मानुषेष्वित्युक्तम् । आचा० । १ श्रु० ३ अ० ३ उ० ।

उन्मार्ग–पु० मार्ग. क्षायोपशमिको भावस्तमतिक्रान्त उन्मार्ग । क्षायोपशमिकभावत्यागेनौदयिकभावसक्रमे, " जो मे देवसिओ अइयारो कओ काइओ वाइओ माणसिओ उस्सुत्तो उम्मग्गो अकप्पो अकरणिज्जो " ध० २ अधि० । आव० । आ० चू० । निर्वृतिपुरीं प्रति अपथि वस्तुतत्वापेक्षया विपरीतश्रद्धानज्ञानानुष्ठाने, "मग्गे उम्मग्गसण्णा" स्था० १० ठा० । असन्मार्गे, ग० १ अधि० । परसमए अणट्ठे अहेऊ असब्भावे अकिरिए उम्मग्गे " उन्मार्गत्वं परस्परविरोधानवस्थासद्याकुलत्वात्तथाहि- "न हिंस्यात् सर्वभूतानि, स्थावराणि चराणि च । आत्मवत्सर्वभूतानि, यः पश्यति स धार्मिक. " इत्याद्यभिधाय पुनरपि-"षट् सहस्राणि युज्यन्ते, पशूनां मध्यमेऽहनि । अश्वमेधस्य वचनान्न्यूनानि पशुभिस्त्रिभि " रित्यादि प्रतिपादयन्तीति । अनु० । ससारावतरणे, सूत्र० १ श्रु० १२ अ० । आचा० । ऊर्ध्वं मार्ग उन्मार्ग. । रन्ध्रे,"उम्मग्गंसि णो लभति" आचा०१ श्रु०६ अ०१ उ० उद्गतो मार्गोदुन्मार्ग. । अकार्यकरणे, आचा०१ श्रु०४ अ०१ उ० ।

उम्मग्गगय–उन्मार्गगत–त्रि० उन्मार्गेण संसारावतरणरूपेण गत. प्रवृत्त उन्मार्गगतः । संसारे एव प्रवृत्ते मोक्षमार्गे उद्स्ते, "सुद्ध मग्ग विराहित्ता, इहमेगे उ दुम्मती । उम्मग्गगता दुक्ख, घायमे सति तं तहा " सूत्र० १ श्रु० ११ अ० ।

उमग्गजला– उन्मग्नजला–स्त्री० उन्मज्जति शिलादिकमस्मादिति उन्मग्नं कुद्दहुलमिति वचनात् अपादाने क्तप्रत्यय । उन्मग्न जल यस्यां सा तथा । तमिस्रगुहायां बहुमध्यदेशभागे वहन्त्यां स्वनामख्यातायां नद्याम् ॥

तत्स्वरूपं यथा ॥

तीसे णं तिमिसगुहाए बहुमज्झदेसभाए एत्थणं उम्मग्ग-णिमग्गजलाउ णामं दुवे महाणईओ पण्णत्ताओ जाउ णं तिमिसगुहाए पुरच्छिमिल्लाओ कडगाउ पवूढाओ समाणी पच्चच्छिमेणं सिंधु महाणदीं समप्पेंति॥

तस्यास्तमिस्रागुहायाः बहुमध्यदेशभागे दक्षिणद्वारतस्तो द्वकूलमेतैकविंशति योजनेभ्यः परतः उत्तरद्वारतस्तोद्वकस-मेतैकविंशतियोजनेभ्योऽर्वाक् च उन्मग्नजलानिमग्नजला-नाम्न्यौ नद्यौ प्रज्ञप्ते । ये तमिस्रागुहायाः पौरस्त्यकटकाद्भि-त्तिप्रदेशात् प्रव्यूढे निर्गते सत्यौ पाश्चात्येन कटकेन विनिर्गते सिन्धुमहानदीं समाप्नुतः प्रविशत इत्यर्थः । नित्यप्रवृत्तत्वा-द्वर्तमाननिर्देशः ।

अथानयोरन्वर्थं पृच्छन्नाह ॥

से केणट्ठे णं भंते ! एवं वुच्चइ उम्मग्गणिमग्गजलाओ महाणईओ ? गोअमा ! जसं उमग्गजलाए महाणईए तणं वा पत्तं वा कट्ठं वा सक्करं वा आसे वा हत्थी वा रहे वा जोहे वा मणुस्से वा पक्खिपइ ताओ णं उम्मग्गजला महा-णई तिक्खुत्तो आहुणिअ २ एगंते थले पक्खिवइ जसं णिमग्गजलाए महाणईए तणं वा जाव मणुस्से वा पक्खिवइ तसं णिम्मग्गजला महाणई तिक्खुत्तो आहुणिय २ अंतो जलंसि णिमज्जावेइ । से तेणट्ठेणं गोयमा ! एवं वुच्चइ उम्मग्गणिम्मग्गजलाओ । महाणईओ ॥

अथ केनार्थेन भदन्त ! एवमुच्यते उन्मग्ननिमग्नजले महानद्यौ गोतम ! यत् णमिति प्राग्वत् उन्मग्नजलायां महानद्यां तृणं वा पत्रं वा काष्ठं वा शर्करा वा इपलखण्डः अत्र प्राकृतत्वाल्लिङ्ग-व्यत्ययः । अश्वो वा हस्ती वा रथो वा योधो वा सुभटः सेनायाः प्रकरणाच्चतुर्णां सेनाङ्गानां कथन मनुष्यो वा प्रक्षिप्यते तत्तृणा-दिकं उन्मग्नजलामहानदीस्त्रींस्त्रीन् वारान् आधूय २ भ्रमयि-त्वा २ जलेन सहास्फाल्येत्यर्थः एकान्ते जलप्रदेशाद्दवीयसि स्थाने निर्जलप्रदेशे ( पक्खिवइत्ति ) ग्ददेयति तीरे प्रक्षिपतीत्य-र्थः । तुम्बीफलमिव शिला उन्मग्नजले उन्मज्जति अत एवोन्मज्ज-ति शिलादिकमस्मादिति उन्मग्न रुद्रदुमिति वचनात् अपादाने-क्तप्रत्ययः । उन्मग्नं जलं यस्यां सा तथा । अथ द्वितीयानामार्थः । तत्पूर्वोक्तं वस्तुजातं निम्मग्नजला महानदी त्रिःकृत्व आधूयाधूय अन्तर्जले निमज्जयति शिलेव तुम्बीफलं निमग्नजले निमज्जती-त्यर्थः । अत एव निमज्जयत्यस्मिन् तृणादिकमखिलम् वस्तुजात-मिति निमग्न बहुलवचनादधिकरणे क्तप्रत्ययः । निमग्नं जलं यस्यां सा तथा । अर्थनिगमयति सेतेणट्ठेणमित्यादि सुगमम् । अनयो-श्च यथाक्रममुन्मज्जननिमज्जनकृत्ये वस्तुस्वभाव एव शरणं तस्य चानर्कणीयत्वात् । इमे च द्वे अपि त्रियोजनविस्तारगुहाविस्ता-रायामे अन्योन्य द्वियोजनान्तरे योध्ये अनयोर्यथा गुहामध्यदेश-वर्तित्व तथा सुमायोध्या स्थापना देश्यते । जं० ३ वक्ष० ।

उम्मगट्ठिय–उन्मार्गस्थित–त्रि० उत्सूत्रादिप्ररूपणापरे, "भट्टायारो सूरी, भट्टायाराणुविक्खओ सूरी । उम्मग्गट्ठिओ सूरी, तिन्नि वि मग्गं पणासंति" ग० १ अधि० । ( आयरियशब्दे विवृतिरस्य )

उम्मग्गणयण–उन्मार्गनयन–न० उन्मार्गप्रापणे, "वच्चादिनं मुनी ...०, पाप मग्गु देसणापरस्थाने । उन्मार्गनयनमेतत्" पो० १ विव०

उम्मगदेसणा–उन्मार्गदेशना–स्त्री० उन्मार्गस्य भवहेतोर्मोक्ष-हेतुत्वेन देशना कथनमुन्मार्गदेशना ॥ कर्म० ॥ सम्यग्दर्शनादि-रूपभावमार्गातिक्रान्तधर्मकथने, एष दर्शनमोहनीयकर्मणो हेतुः । स्था० ४ ठा० । ध० ॥

नाणाइ अदूसिंतो, तव्विवरीयं तु उवदिसइ मग्गं ।
उम्मग्गदेसओ एस, आय अहितो परेसिं च ॥

ज्ञानादीनि पारमार्थिकमार्गरूपाणि प्ररूपयन् तद्विपरीत ज्ञाना-दिविपरीतमेवोपदिशतीति मार्गं धूमसंबन्धिनमेष उन्मार्गदेशकः अयं चात्मनः परेषां च बोधिबीजोपघातादिना अहितः प्रतिकूल इत्येषा उन्मार्गदेशना । बृ० १ उ० ।

पुच्छंताणं धम्मं, तं पिउ न परिक्खिउ समत्थाण ।
आहारमेतलुद्धा, जे उम्मग्गं वइस्संति ॥
सुगई हणंति तेसिं, धम्मियजणणिंदणं करेमाणा ।
आहारपसंसया निंति, जिणिदोगईबहुयं ॥

गुरुभिस्तावत्स्वत एव धर्मतत्वप्रकाशनशीलैर्भाव्यं यत्पृच्छता-मित्यत्रापि शब्दस्य लुप्तनिर्दिष्टत्वात्ततः पृच्छतामपि प्रच्छनशीला-नामपि को धर्म्मः स्वर्गापवर्गसाधनमपि परीक्षितुमसमर्थानां मुग्ध-बुद्धीनामित्यर्थः । ये हि किल विशिष्टा भवन्ति ते विशेषतो मुग्ध-श्रीबन्धनं कुर्वन्ति अतोऽतिक्लिष्टताख्यापनार्थं परीक्षमाणमित्युक्त-म । ये कथं भूता आहारमात्रलुब्धा शिवसुखाभिलाषपराङ्मुखाः । इह-लोकसुखमात्रप्रतिबद्धत्वेन महामेते विवेकिन सन्तः आधाकर्म्मा-दिदोषदूषितमाहारवस्त्रपात्रवसत्यादि न दास्यन्त्यत उन्मार्गमुप-दिशन्ति शास्त्रोक्तसन्मार्गादुत्तार्य तथा विप्रतारयन्ति यथा जन्मा-न्तरमपि दासादिवद्यत्किंचित्कारिणो भवन्ति । ते किं तेषामुप-कारिणो भवन्ति नेत्याह । घ्नन्ति नाशयन्ति कां सुगतिं स्वर्गापव-र्गादिकां केषां सम्यगजानानानां परमगुरुरिव धर्म्मबुद्ध्याराधयतां तेषामपि सुगतिनाशो भवति । तथाहि यथा कश्चित्केषाचिदिहलो-कपरलोकविरुद्धकारिणां मन्त्रयोगचूर्णादिना वशीकृतः स तस्य परमबन्धुरबुद्ध्यापि सर्वस्वं समापयन् प्राग्भवति एवमत्रापीति भा-वार्थः । पुनरपि कथंभूता गुरुकर्म्मतया धार्म्मिकजनं सविग्नं गीतार्थं यथाशक्त्यानुष्ठानपरायणमपि निन्दयन्तो हीलयन्त न केवलं तेषां स्वरुचिविरचिताचारान् विधाय देशनावशीकृतानां सुगतिं घ्नन्ति । अपिच दुर्गतिं नयन्ति प्रापयन्ति 'आहारपससा-सुत्ति' तृतीयार्थे सप्तमी तत आहारप्रशंसादिभिराहारादिदानप्र-शंसैः यदुत यदि भवदीयेष्वपि गृहेषु सकलसत्त्वाधारभूतेषु समस्तसपडुपेतेषु कलिकालकवलितशक्तियतयो न प्राप्स्यन्ति आहारादि तर्हि क यास्यन्ति अन्वेषणीयविभागान्वेषण कार्य-लक्षम् । ये तुच्छका वराका अल्पशक्तयो भवन्ति तेऽल्पेन व्या-जेनात्मानं मुनयो मोचयन्ति इत्येवमादिवचोभिरुत्प्रास्योत्प्रास्य-मुखमाङ्गलिका इव सकलशास्त्रविरुद्धे आधाकर्म्मादिदोषदूषिता द्याहारादिदाने प्रवर्तयन्ते बहुकं जन लोकं श्रावक यथा भद्रक च । इयमत्र भावना । ते हि दुर्गतिगर्तप्रपतनाभिमुखीभूताः सन्ता यथा कथंचिदेवाहारार्थपरान् विप्रतार्य दुर्गतौ पातयन्तीति गाथा-द्वयार्थः । ये तावदिहलोकस्यैवैककस्य वाञ्छवन्त परप्रतारणप्र-वणास्तेषामियं गतिः । ये तु सर्वशक्तिविकलतया सम्यगनुष्ठान कर्तुमशक्तास्तथापि मनाक् शुद्धचित्ततया परलोकमपि वाञ्छन्ति ते किं कर्तव्यमित्याह ॥

होज्जऊ वसमाणपत्तो, सरीरदेबल्लया य असमत्था ।
चरणकरणे असुद्धे, सुद्धं मग्गं परूवेज्जा ॥

व्यसनप्राप्तः इन्द्रियपरायत्ततास्वीकृतत्वेनोन्मादवान् तत्प्राप्तो व्यसनप्राप्तः । शरीरं वपुस्तस्य दौर्बल्यं दुर्बलता शारीरदौर्बल्यं तयाऽसमर्थोऽशक्तः यथावस्थितचरणकरणं कर्तुमित्यध्याहारः । अतोऽशुद्धेऽपि चरणकरणे परलोकार्थी शुद्धं एव मार्गं प्ररूपयेदिति । स हि सन्मार्गप्रकाशनात् पुनर्मार्गं प्राप्नोतीति गाथार्थः । यस्तु मनाक् संविग्नः सोऽपि नीत्या परान्वादिनो यथावस्थितं न कथयति तस्य दोषं दर्शयन्नाह ।

परिवारपूयहेऊ-पासत्थाण च णाणुवत्तीए ।
जो न कहेइ विसुद्धं, तं दुल्लहबोहियं जाण ॥

परिवारः आत्मव्यतिरिक्तस्ततः परिवारेण पूजा परिवारपूजा अथवा परिवारस्य पूजा परिवारपूजा ह्रस्वत्वं प्राकृतप्रभवं तस्या हेतुर्निमित्तमिति पार्श्वे सम्यक्त्वं तस्मिन् ज्ञानादिपार्श्वे तिष्ठन्तीति पार्श्वस्थास्तेषामनुवृत्तिरनुवर्तनं तया यो न कथयति न प्रकाशयति विशुद्धं सर्वविशुद्धं सर्वविशुद्धं दिष्टं यथावस्थितं मुक्तिमार्गमाचार्यं साधुं वा दुर्लभबोधिकं जानीहि । अयमत्र भावार्थः । यो हि मनागसंविग्नोऽपि परिवारापेक्षया सम्यक् साध्वाचारं न कथयति नायमन्यथा प्रवृत्तः सम्यक्त्वकथनेन प्रकटो भविष्यति ततोऽसमञ्जसरोषो भविष्यति ततः शरीरादिस्थितिं न करिष्यति पूजां वा न प्रविष्यतीति हेतोः पार्श्वस्थानुवृत्त्या वा यद्युत नामैते सम्यक् कथयतः प्रकोपं यास्यन्त्यतः वरमात्मसाक्षिकं कृतं कृतमिति । एते चानवर्तिता भवन्त्विति स्वबुद्ध्या सुन्दरमपि विदधाना संसारसागरे एव भ्रमन्ति यत उक्तम् " जिणाणाए कुणताण, नूण निव्वाणकारण । सुंदर पि य बुद्धीए, सव्व भवनिबंधन ॥ जे मयअारम्भया, ते जीवा हौंति अप्पदोसयरा । ते उ महापावयरा, जे आरम्भं पसंसति " य एवमधः परमाराध्य कालिकसूरिरिविव प्राणप्रहाणेऽपि परानुवृत्त्या नैवानुवृत्त्यापि नैवान्यथा भाषणीयमिति गाथार्थः । भगवत्कालिकसूरिकथानकं चैवम् । " अत्थि इहेव खेत्ते तुरिमिणीए नयरीए जियसत्तू नाम राया तीए वि नयरीए अत्थो रुद्दाइमाहणीए सुअो दत्तो माहणेसु उपरि वसइ सो य न याइ एसु सत्तसु महावसणेसु पसुत्तो । किं बहुणा सव्वहा विरुद्धायारम्मायरणसीलो अहतया भवियव्वयावसेण जाअो रायाणो सजाओ सव्वहा पच्चासन्नत्तणेण जाअो अन्नेसिं पि सामनमडडीयए सुहवहुमअो ततो दाणसमाणाइणा उववंगेऊण कअो सव्वो वि राइणो परियणो वासे । ततो गहिऊण जियसत्तूमूलरायाणं बंधित्ता कट्टछियचारगागिहे जाअो सय चेव सयं पहोराया एव रज्जधरारुढस्स भवियव्वयावसेण तत्थ समागयकमेण विहरमाणा साहसया बहुसोससमन्निया जुगप्पहाणो अज्जकालगनामए सूरिणो नाया य दत्तमायाए भहाए । जहा वच्छ सपए एत्थ मे भाया तुज्झ विय माउलअो अज्जवि कालगसूरी समागअो ता त वदाहि तेण वि तह त्ति पमिसुय गतो बहुपरिवारो सूरिसयासे दिट्ठा य सूरिणो काऊण उचिअोवयारउवविट्ठो जहारिहासणे भयवया नाऊण वग्घायरं सायरो सूरीहिं सामनेण परूविणो उ सिट्ठजणसमायारो । जहा होयव्व करुणापहाणमणसा सव्वेण धम्मत्थिणा भासेयव्व- मणिंदियं हियकरं सव्वं वत्ताय सया काय सव्वजियाण सोक्ख- जणगट्ठाणेसु दायव्वय सव्वेणावि जिएण रायसयं वेय हि पच्चप्पणीणाइएमणिंदियं पइदिण गेहाणुसारेण उदेय दाणतहेह वेयमणह जीवाण सव्वेसिण अयत हियमेव सव्वयण भासनि जं जतुणो न जाणाहि नरीससव्वमणह धम्मस्स स्साहण एमाइसव्वसाहारणदेसणासवणपज्जते भवियव्वया वसवत्तिणा दत्तेण पुच्छिय कहेहि किंजन्नाण फलं । तअो भगवया अज्जकालगसूरिणो विचिंतिय नूणं एस पउट्ठो बहुबुडी ज मे सुत्ताण कमेपएण विरोहिएण विग्गप्पिऊण भणियं तुमं महाराय ! धम्ममूलाइं पुच्छसि " करुणा सव्वजीवेसु, सव्वं वायाए भासणं । परस्स दारगं चाउ, परिग्गहविवज्जणा ॥ एमाइधम्ममूलाइं, कोहाईण य वज्जण । सव्वपासंडियाण पि, एय सम्मं पयसया" ततो पुणो वि पुच्छियं वेयविहियविहाणेण विहियजन्नाण किं फल ? सूरीहिं भणियं किं महाराय ! विहिविहिसुहाणुबंधि पुन्नफलं साहेमि जहा- "विहिजीवदयाइजुया, जीवा स सुवज्जिऊण सुहयम्मि । पुन्नपावचयरा, नरसुरविसोक्खविउलाइ " पुणो वि पुच्छिय जन्नाण किं फलं सूरिणा भणिय पावविवाय पुच्छसि नरयपहो पावविवागो " णरवई देइ दुहं, नरयतिरियजोणीसु हीणासु । हीणसुरनरगईसु वि ता तहेव इह दुहाण ॥ नरयाण पुणो मग्गो, सहरम्भपरिग्गहो य जियघाअो । कुणिमाहारो अविरइ, तिव्वकसाया पमाअो य " ततो दत्तेण कुद्धेण भणिय । भो भो समणा किं तुम सम्म न सुणसि कन्नेसु । किं वा अकन्न सुयं करोसि किं वा न याणसि जन्नाण फल । जं फुड न साहेसि ततो सूरीहिं भणिय जइ फुडं ता नरयगमणमेव फलं तअो रोसारुणलोयणेण पच्चयं किमह नरग गमिस्सामि अणेगजन्नकरणा वि भयवया भणिय कया इअो य सत्तमे दिणे कुम्भियाए पइज्जंतो सुणएहिं खज्जतो मरिहिसि । पुणो वि पुच्छियं एत्थ वि को पच्चअो भयवया परपियतो तम्मि दिणे विट्ठा मुह पविसिहि पुणो वि दत्तेण भणियं तुमं के चिर अइअो दिणाअो जीविहिसि ? सूरीहिं साहिय अणेगाइ वरिसाइं दिव च गमिस्सामि । ततो दत्तेण चिंतियं अइकोहमुवागराण किं पट्ठवेमि सपयं चेव जम्ममन्दिर ठेसेमि दुव्वयणस्स फल पदविछामि ताव कालावहि जाव पच्चाअलियचाइण भणिऊण विहिहजाइणा पुव्व विणिवाइस्सं ततो मा एस समणगो कहिं पि गच्छहि ति ततो मोत्तूण नियपुरिसे रक्खा । अप्पणा समागअो सए गिहे तअो चिंतिय चेट्ठामि ताव अंतेउरे सत्तदिणाणि तअो कहं मे विट्ठा मुहं पविसइ तअो पविट्ठो अंतेउरे सोयाविया सव्वेवि रायमग्गा तअो सत्तमे दिणे भवियव्वया वसेण रायपह पवन्नस्स जाअो वेगो न सक्केइ अ तअो गतु ततो तत्थ काऊण वेगभग ढक्किउ पुप्फहिं अप्पणावि भयदुअो लहुं लहु विणिहरिअो रायपहाअो । इअो य सो दत्तो दुम्मई विमूढमणो गया सत्तदिवसत्ति कलिऊण तम्मि चेव सो नीहारिअो महया तुरयचडयरेण जाव रायपहमागअो ताव सो चेव विठा तुरयखुराहया पविठा मुहे तअो नायं जहा निच्छएण मरिज्ज इतो निगिम्हामि त चेव पडिसत्तू जियसत्तू अउनिकट्टं मे रज्जं होहि एय चिंतिऊण जाव नियतो तो ततो गहिअो सेससामंतेहिं मा भिन्नरहसत्ति काऊण रायाण विणिवाइऊण अम्हे वि विणिवाइस्सइ ततो नीहारिऊण मूलरायाण कट्ठगिहाअो अह सिंचिऊण रायपए समप्पिअो दत्तो वधिऊण तेण वि खिवाविऊण सहसुणएहिं कुम्भियाए पज्जालिअो भीसणो जलणो खज्जतो य सुणएहिं महावेयणाभिभूअो रुद्दज्झवसायपरिगअो मरिऊण जाअो नारअो । सूरी वि सायसउत्ति काऊण पुट्ठअो नरवइणा जहा एएण भयवया पाणपरिव्वायसभवे वि न अन्नहा भासिय एव अन्नेणावि सिवसुहत्थिणा जहट्ठिय जिणवयणं भणियव्व कालगायरियं कहाणयं सम्मत्त" । ननु यद्येवमन्यथा कथने दण्डो भवति तर्हि किमित्यन्यथा कथ्यते इत्याह ।

मुहमहुरं परिणइमं-गुरुं च गिण्हंति दिंति उवएसं ।

महुकडुयं परिणइ सुं-दरं च विरलच्चिय भणंति ॥२९॥

मुखे मधुरं मुखमधुरं यथा धार्म्मिकस्त्वमसि सत्पुरुष इति वा एवंविधं वचनं न हि तद्गुणविकलस्यापि मनः प्रह्लादयति परिणतौ मङ्कुसमसुन्दरं परिणतिमङ्कुलं चशब्दस्यापि शब्दार्थत्वात्ततोऽसुन्दरमपि भवान्तरे कर्म्मासुखदत्वात् गृह्णन्ति कुर्वन्तीत्यर्थः। ददति च परेभ्यस्तथावृत्तिरञ्जनप्रवणपुरुषाणां प्राय प्रचुरत्वात् मुखकटुकं परिणतिसुन्दरम् । चशब्दस्य पुनः शब्दार्थत्वात्ततो विरला एव पुनर्भणन्ति प्रतिपादयन्ति । अयमत्र भावार्थः । को हि नामात्मनः कटुकभाषित्वमभ्युपगम्य यथावस्थितोऽजय लोकहितोपदेशदाने प्रवर्तते । प्रायेण हि प्रभूततराः स्वार्थाभिमता एव दृश्यन्त एवेति गाथार्थः ।

यद्येवं कर्म्मकटुकमुभयलोकहितमपि विरला एव गृह्णन्ति ततः किं तदुपदेशेनेत्याह-

भवगिहमज्झम्मि पमाय-जलणजलियम्मि मोहनिद्दाए।

उट्ठवइ जो सुयंतं, सो तस्स जणो परमबंधू ॥ ३० ॥

भवः संसारः स एव गृहं भवगृहं तस्य मध्यं भवगृहमध्यं तस्मिन् प्रमादो मद्यादिरनेकधा स एव ज्वलनो वैश्वानरः तेन ज्वलितो दीप्तस्स प्रमादज्वलनज्वलितस्तस्मिन् । मोहनीयमेव निद्रा हिताहितविवेकवैकल्यकारकत्वात् तया स्वपन्तं स्वापं कुर्वन्तं य कश्चिदनुपकृतः परहितरतः उत्थापयति सदुपदेशदानेन प्रमादव्यवहितानुष्ठाने च प्रवर्तयति स तस्य प्रमादस्यापवर्ती जनो लोकः परमबन्धुरात्यन्तिकैकान्तिकबन्धुरिति गाथार्थः ॥

यत एव सदुपदेशदानेन परमबान्धवा भवन्ति अत एव भावतस्ते पूजनीया इत्याह-

जइ वि हु सकम्मदोसा, मणयं सीयंति चरणकरणेसु ।

सुद्धपरूवगा तेण, भावओ पूयणिज्जति ॥ ३१ ॥

यद्यपि स्वकर्म्मदोषाच्चारित्रावरणोदयान्मनाक् सीदन्ति मनागशुद्धानुष्ठाना भवन्ति चरणकरणयोर्वक्ष्यमाणस्वभावयो शुद्धप्ररूपकाः सम्यग्मार्गावभासकास्तेन ते भावतोऽपि मोक्षनिमित्तमपि पूजनीया इति । अयमत्र भावार्थ । ये मिथ्यात्वावष्टब्धचेतसो मुग्धलोकरञ्जनपरायणा लोकरूढ्या बहुश्रुता अपि सम्यक् क्रियावादिनोऽपि परशास्त्राभिप्रायपराङ्मुखास्ते विपाक्षाहिसिंहादिवत्परित्याज्या मार्गोच्छेदकत्वेन संसारकारणत्वात् । ये तु स्वयं कर्म्मपरतन्त्रतयापि मोक्षसुखाभिलाषितया मनाक् सीदन्तोऽपि चरणकरणयोर्भवभ्रमणभीरुतया यथावस्थितशिवमार्गप्रकाशकाः स्वानुष्ठानापक्षपातिनस्ते तृतीयमार्गानुयायित्वाद्भावतः परमार्थतः पूज्या इति गाथार्थ । यत एव क्रियाविकलोऽपि श्रमणमार्गप्ररूपको भावतोऽपि पूज्यते कुग्राहग्रस्ततयोन्मार्गप्ररूपकः क्रियावानपि सर्पादिवत्परित्यज्यते ततो विवेकवता किमुचितमित्याह ।

एवं जिया आगमदि-ट्ठिदिट्ठ-सुनायमग्गा सुहमग्गलग्गा ।

गयाणुगामीण जणाण मग्गं लग्गंति नो गड्डरिकापवाहे ॥

एवमिति पूर्वकथितप्रकारेण अत एव शुभमार्गलग्ना जीवाः प्राणिनः सदा सदागमाद्यवदातबुद्ध्य किं न भवन्ति न सीयन्ते स गड्डरिकाप्रवाहे प्रवृत्ता आगमः आप्तवचनं स एव दृष्टिर्हिताहितपदार्थप्रकाशकत्वादागमदृष्टि । तया दृष्टमवलोकितमागमदृष्टिदृष्टं तेन शोभनप्रकारेण ज्ञातो मार्गो ज्ञानादिको यैस्ते आगमदृष्टिदृष्टसुज्ञातमार्गा । स मार्गे येषां जनानां कथम्भूतानां गतानुगामिनाम् । गतं गच्छन्तीत्येवं शीला गतानुगामिनस्तेषाम् । अयमभिप्रायः । ये हि सुविहितसंपर्कोत्सम्यगाप्तमोक्षमार्गा भवन्ति तान् मुक्त्वा मिथ्यात्वमोहमोहितमतिगतानुगतप्रवर्तितमार्गे गड्डरिकाप्रवाहकृत्य नाङ्गीकुर्वन्त्यपि तु सन्मार्ग एव व्रजन्तीति वृत्तार्थः ॥ नन्वित्थं सूताः केचन एवावदातबुद्धयः स्वल्पा दृश्यन्ते प्रभूततराः पुनः प्रवाहानुयायिन इति किमत्र तत्त्वमित्याह "नेगतेण चिय" अथवा बहुतरतमाः शास्त्रगर्भार्थवेदिनोऽप्येवंविधप्रवृत्तिमन्त एव दृश्यन्ते लोकेऽप्येवंविधमेव श्रूयते यथा "महाजनो येन गतः स पन्थाः" इत्याशयवत शिष्यस्य शिक्षार्थमाह-

नेगंतेणं चिय लो-गनायमारेण एत्थ होयव्वं ।

बहुमुंडाइवयणाउ, आणाइत्तो इह पमाणं ॥ ३३ ॥

नैकान्तेनैव लोकज्ञातसारेण भाव्यम् । अत्र धर्म्मविचारे तस्य हि विचित्राश्रयेणानेकरूपत्वात् तदप्रवृत्तौ हेतुमाह बहुमुण्डादिवचनात् यदिह बहुवचनप्रवृत्तिरेव गरीयसी तदा नेदमागमवचनमभविष्यत्तद्यथा "कलहकरा डमरकरा, असमाहिकरा अनिव्वुइकरा य। होहिंति भरहवासे, बहुमुंडे अप्पसमणा य" इत एतस्माद्धेतोराज्ञैवेह प्रमाणं शास्त्रमेव प्रमाणमिति गाथार्थः। यदि पुनः प्रमाणं इत्यपूजया मिथ्याभिमाना ज्ञानितया वा लोकप्रवृत्तिरेवाङ्गीक्रियते ततोऽन्यदर्थान्तरमापद्यत इत्याह-

बहुजणपवित्तिसित्तं, इत्थं तेहिं इह लोइओ चेव ।

धम्मो न उज्झियव्वो, जेण तहिं बहुजणपवित्ती ॥३४॥

बहवश्च बहुजनास्तेषां प्रवृत्तिरेकान्तेनागमनिरपेक्षितया स्वरुचिविरचितानुष्ठानस्यैव बहुजनप्रवृत्तिमात्रं तदिच्छद्भिरिह धर्म्मविचारे लौकिक एव धर्म्मो नैव परित्याज्यः स्यात् येन कारणेन तत्र तस्मिन् लौकिके धर्मे बहुजनप्रवृत्तिप्रभृतीनां प्रवृत्तिदर्शनादिति गाथार्थः। यत एवाज्ञाप्रमाणमत एवाह ॥

ता आणाणुगया जं, तं चेव बुहेण सेवियव्वं तु ।

किमिह बहुणा जणेणं, हंदिणेस अत्थि णो बहुया ।३५।

यस्मात्कारणात् बहुजनप्रवर्त्तमानं सेवनीयं ता तस्मात्कारणादाज्ञानुगतं यत्तदेव बुधेन जिनाज्ञापरिपालनफलवेदिना सेवनीयमासेव्यमित्यर्थः। तुशब्दश्चैवकारार्थो योजित एव किमिति न किञ्चिदित्यर्थ । इहैव धर्म्मविचारे परलोकचिन्तायां वा बहुना जनेन बहुजनोन्मार्गप्रवर्तकेनेत्यर्थ । हन्दीत्युपदर्शने तत्तः प्रासिद्धमेतत्तेनैव बहवः श्रेयोर्थिनो मोक्षार्थिनः । सम्प्रति काले बहवो मुण्डाः अल्पाश्च श्रमणा इति वचनादिति गाथार्थः । इत्यनेकधा विधिमार्गसमर्थनमाकर्ण्य मिथ्यात्वाहतसहसोद्धोधलोचना यन्मन्यन्ते तदाह । अथवा स्वयं ये सन्मार्गगमनाप्रवणा इत्थं च सन्मार्गप्ररूपणामाकर्ण्य मुग्धबुद्धिबन्धनार्थं यद्वदन्ति तदाह-

दूसमकाले दुलहो, विहिमग्गो धम्मि चेव कीरंते ।

ता जायइ तित्थच्छेओ, केसिं चिय कुग्गहो एसो ॥ ३६॥

दुःषमारूपः कालो दुःषमाकालस्तस्मिन् तत्काले दुरापः स्वकर्म्मपरिणतेरुन्मार्गप्रवृत्तलोकाद्वा विधिमार्गे शास्त्रोक्तानुष्ठानप्रवृत्तिरूपः तस्मिंश्च क्रियमाणे विधीयमाने जायते सपद्यते तीर्थोच्छेदः शास्त्रोक्तानुष्ठानवतामत्यल्पत्वादितरेषां चातिबहुत्वादित्यर्थ । तादृग्विधानं च क्वापि कथंचिदेव सद्भावादिति केषांचित्कुग्रह एष इति कुग्रहता चैवैषामतोऽवसीयते यतः सदनुष्ठानसाध्यमपि मोक्षमसदनुष्ठानेन प्रकल्पयन्ति । नहि नाम सुवर्णरत्नसाध्यमलङ्कारादिकं मृत्तिकया सिध्यतीति गाथार्थः । एतदपि कुतोऽवसीयत इत्याह ॥

जम्हा न मोक्खमग्गं, मोत्तूणं आगमं इह पमाणं ।

विज्जइ छउमत्थाणं, तम्हा तत्थेव जइयव्वं ॥ ३७ ॥

यस्मान्न नैव मोक्षमार्गो मोक्षे साध्ये मोक्षागम शास्त्र परित्यज्येत्यर्थः । इहेति धर्म्मविचारे प्रमाणमालम्बनमित्यर्थ । विघ्ने जन्मस्थानामतिशयवतां हि यथा कथञ्चित्सेवातिशयवशात्प्रवर्त्तमानानामपि निर्जराह्राभ एवावसीयते तत्र इहैतै पुन: सर्वथा शास्त्रमेव प्रमाणीकर्त्तव्यम् । तस्मात्तत्रैव यतितव्यमुद्यम कार्य इति गाथार्थः । शास्त्राभिप्रायेणैव ससारमोक्षमार्गप्ररूपणायाह ॥

गिहिलिंगि कुलिंगिय दव्व-लिंगिणो तिन्नि हुंति जवमग्गा ।
सुजइसुसावगसंविग्ग-पक्खिणो तिन्नि मोक्खपहा ।३८।

तत्र गृहमेव लिङ्गं येषां ते गृहलिङ्गिन राजामात्यप्रकृतिप्रभृतयः कुत्सित लिङ्गं कुलिङ्गं शिवसुखासाधक तद्विद्यते येषां ते कुलिङ्गिनः स्वरुचिविरचिताकाराचारा त्रिदण्डिबौद्धतापसादय: द्रव्यप्रधान लिङ्गं तद्विद्यते येषां ते द्रव्यलिङ्गिनः गृहलिङ्गिनश्चेत्यादि द्वन्द्वो गृहिलिङ्गिकुलिङ्गिद्रव्यलिङ्गिन । एते त्रयोऽपि भवन्ति भवमार्गा ससारपथा: सुयतय: साधुसमाचारचरणप्रवणा: सुश्रावका: सम्यक्त्वाणुव्रतादिसकलश्रावकगुणोपेता: संविग्ना: सुसाधवस्तेषां पक्षेण चरन्ति ये ते संविग्नपाक्षिका: सम्यक् सयमपरिपालनासमर्था अपि सुयतिपक्षपातेनात्मनिस्तारका इत्यर्थः । पूर्वपदे ते त्रयोऽपि मोक्षमार्गा इति गाथार्थ: । कथमेते त्रय एव मोक्षमार्गा नान्ये शेषा किमन्यैर्ममापराद्धमित्याह ॥

सम्मत्तनाणचरणा-मग्गो मोक्खस्स जिणवरुद्दिट्ठो ।
विवरीओ उम्मग्गो, णायव्वो बुद्धिमंतेहिं ॥ ३९ ॥

सम्यक्त्वज्ञानाचरणानि मोक्षमार्गो मोक्षश्च जिनवरोद्दिष्टस्तीर्थकृदुपदिष्ट इत्यर्थ । स च सर्वथा सम्यक्त्वादित्रिक एव यतोऽत शेष: सर्वोऽपि तद्व्यतिरिक्त उन्मार्ग: शिवसुखासाधन इति ज्ञातव्योऽवबोद्धव्य: बुद्धिमद्भिर्विवेकविद्भिरिति गाथार्थः। दर्श० ॥

उम्मग्गदेसय-उन्मार्गदेशक- पु० ज्ञानादीनि पारमार्थिकमार्गरूपाण्यप्ररूपयति । असन्मार्गप्ररूपके, बृ० १ उ० । "उम्मग्गदेसओ मग्ग, नासओ मग्गविप्पडिवत्ती । मोहेण य मोहित्ता, समोहिं भावण कुणइ" । ग० २ अधि० ॥

उम्मग्गपइट्ठिय-उन्मार्गप्रतिष्ठित- त्रि० असन्मार्गस्थिते, "भयव कहिं लिंगेहिं उम्मग्गपइट्ठिय वियाणिज्जा ग० १ अधि० । (आयरियशब्दे उक्तम्) उन्मार्गगामिनि, " अत्थेगे गोयमा पाणी, जे उम्मग्गपइट्ठिए। गच्छम्मि सवसित्ताण, भमइ भवपरपर" ग० १ अधि० ।

उम्मग्गपडिवन्न-उन्मार्गप्रतिपन्न त्रि० आश्रितकुदृष्टिशासने, "उम्मग्गपडिवन्नेसप्पइहनिणट्ठे मिच्छत्तवलाभिभूए"उपा० ७ अ० ।

उम्मज्जग-उन्मार्जक- पु० वानप्रस्थतापसभेदे, उन्मार्जनमात्रेण ये स्नान्ति । भ० ११ श० ९ उ० । नि० । औ० । कण्ठदघ्ने जले स्थित्वा तप: कुर्वन् प्रवर्तते । उन्मज्जक: स विज्ञेयस्तापसो लोकपूजित " इत्युक्तलक्षणे तापसभेदे, जलादेरुपर्युपर्युत्प्लावके, त्रि० वाच० ।

उम्मज्जणिमज्जिया-उन्मग्ननिमग्निका-स्त्री० उत्पतननिपतनायाम्, उत्पतननिपतनकरणे, " अहे उम्मज्जणिमज्जियं करेमाणे दंस पुढवीए चएज्जा" स्था० ३ ठा० ॥

उम्मत्त-उन्मत्त- त्रि० उद्-मद्-करणे-क्त । धुस्तूरे, मुचुकुन्दवृक्षे च, कर्त्तरि-क्त वाच० ॥ धूर्मिले, अनु० । मन्मथोन्मादयुक्ते, विटे,वृ० १ उ० । यक्षादिभि प्रवलमोहोदयेन वा परवशे, ध० ३ अधि० । हते, ग्रहगृहीते, पिं० । अस्य दीक्षाया अयोग्यत्वमुच्यते ॥

उम्माहो खलु दुविहो, जक्खावेसो य मोहणिज्जो य ।
अगणीआजीवणता, आतवयविराहणुड्डाहो । ३७ ॥

जक्खेण आविट्ठो मोहणिज्जकम्मोदएण वा से उड्डाहो जातो एते दोवि ण पव्वावेयव्वा । इमे दोसा अगणीए पयावणादिकरेज्ज पजावण करेज्ज अप्पाण वयाणि वा विराहेज्ज । खरियादिमाहणेण वा उड्डाह करेज्जा ॥

छक्काए ण सद्दहति, सज्झायज्झाणजोगकरणं वा ।
उवदिट्ठं पि ण गेण्हइ, उम्मत्ते ण कप्पती दिक्खा । ३८ ।

षट्काये ण सद्दहति सज्झायज्झाणं नकरेति अप्पसत्थे मणादिजोगे करेति पडिलेहणसंजमादिकारणजोगे ण करेति । अन्नं पि विविध चक्कवालसामायारीए उवदिट्ठं ण करेति । एवमादिएहिं दोसेहिं उम्मत्ते न कप्पति दिक्खा ॥ नि० चू० ११ उ० । प० भा० । उत्प्रावल्येन मत्त उन्मत्तो दरमत्तो वा उन्मत्तः । प्रवलमत्ते, ईषन्मत्ते च । नि० चू० १० उ० । उरूते, वाच० । भरतक्षेत्रे वैताढ्यगिरिदक्षिणश्रेणिमण्डने शिवमन्दिरे नगरे ज्वलनशिखस्य राज्ञोऽङ्गजे, उत्त० १३ अ० ।

उम्मत्तगजूय-उन्मत्तकभूत-पुं० उन्मत्तको मदिरादिना विप्लुतचित्त स इव उन्मत्तकभूतो भूतशब्दस्योपमानार्थत्वात् । उन्मत्तककल्पे उन्मत्तक एव वा उन्मत्तकभूतो भूतशब्दस्य प्रकृत्यर्थत्वात् । उन्मत्तके, स्था० ४ ठा० ॥

उम्मत्तजला-उन्मत्तजला-स्त्री० जम्बूद्वीपे मन्दरस्य पूर्वेण शीतोदाया महानद्या दक्षिणे वहन्त्यामन्तर्नद्याम्, स्था० ३ ठा० । " रम्मए विजए उम्मत्तजला महाणई " रम्यो विजय: पद्मावती राजपू: उन्मत्तजला महानदी । जं० ४ वक्ष० । " दो उम्मत्तजलाओ " स्था० २ ठा० ।

उम्मत्थ-आभि-आ-गम्-धा० । अभिमुखगमने, अभ्याङोम्मत्थ" ८ । ४ । ६४ । अभ्याङ्भ्यां युक्तस्य गमेरुम्मत्थ इत्यादेशो वा भवति । उम्मत्थइ अब्भागच्छइ । अभ्यागच्छति । अभिमुखमागच्छतीत्यर्थ । प्रा० ।

उम्माण-उन्मान-न० उन्मीयते तदित्युन्मानम् । कर्षादिके तुलामाने, आ० १ अ० । स्था० । कल्प० । भ० । तद्विषयं यत्तदपि उन्मानम् । खण्डगुडादिधरिमे, स्था० १० ठा० ।

अथोन्मानमभिधित्सुराह ।

से किं तं उम्माणे ? जण्णं उम्मिणिज्जइ तंजहा अद्धकरिसो करिसो पलं अद्धपलं अद्धतुला तुला अद्धभारो भारो । दो अद्धकरिसो करिसो दोकरिसो अद्धपलं दो अद्धपलाइ पलं पंचपलसइआ तुला दसतुलाओ अद्धभारो वीसं तुलाओ भारो । एएणं उम्माणपमाणेणं किं पओयणं एएणं उम्माणपमाणेणं पत्ता अगरतगरचोआकुंकुमखंडगुलमच्छंडिआईणं दव्वाणं उम्माणपमाणनिव्वित्तिलक्खणं भवइ सेत्तं उम्माणपमाणेणं ॥

यदुन्मीयते प्रतिनियतस्वरूपतया व्यवस्थाप्यते तदुन्मानं तद्यथा । अर्द्धकर्ष इत्यादि । पलस्याष्टमांशोऽर्द्धकर्ष तस्यैव चतुर्भाग कर्ष: । पलस्यार्द्धमर्द्धपलमित्यादि सर्व मागधदेशप्रसिद्धं सूत्रमेव नवरं पलाशपत्रकर्मारीपात्रादिकं पत्र चोय उपलविशेष मच्छण्डिका शर्कराविशेष: । अनु० । नाराचादौ, अश्वादीनां वेगादिपरीक्षायाम्, आचा० २ श्रु० । उन्मीयत अनेनेत्युन्मानम् । अर्द्धभारपरिमाणनायाम्, " जलदोणमद्ध-

भारं समुहाइं समूसिओ उ जो नवओ । माणुम्माणपमाणं, तिविहं खलु लक्खणं नेयं ' उन्मानं तुलारोपितस्यार्द्धभारप्रमाणता । सा च सारपुद्गलोपचितत्वात् तुलायामारोपित' सन्नर्द्धभारं य पुरुषस्तुलयति स उन्मानयुक्तो भवति । प्र० व० २५६ द्वा० । स्था० । नि० चू० । कल्प० ।

उम्माथिय-उन्माथित-त्रि० संजातोन्माथे, सुतरामुन्माथितो बभूव नमुन्माथितं विधाय । आ० म० प्र० ।

उम्माद ( य ) उन्माद-पुं० उद्-मद्-घञ्-उन्मत्ततायाम्, विविक्तचेतनानाशके ग्रहे बुद्धिविप्लवे, भ० १४ श० २ उ० । चित्तविभ्रमे, स्था० ३ ठा० । ग्रहिलादिके, आव० ४ अ० । आ०चू० । नष्टचित्ततायाम्, आलजालजल्पने, प्रव० १६९ द्वा० । कामेन पारवश्ये, उत्त० १६ अ० । अत्यन्तकामोद्रेकादालिङ्गने च । विशे० ॥ तस्य भेदा यथा—

कइविहे णं भंते उम्मादे पण्णत्ते ? गोयमा ! दुविहे उम्मादे पण्णत्ते, तंजहा—जक्खावेसे य मोहणिज्जस्स कम्मस्स उदए णं तत्थ णं जे से जक्खाएसे से णं सुहवेदणतराए चेव, सुहविमोयणतराए चेव । तत्थ णं जे से मोहणिज्जस्स कम्मस्स उदएणं सेणं दुहवेदणतराए चेव दुहविमोयणतराए चेव ।

उन्मादः उन्मत्तता विविक्तचेतनानाशं इत्यर्थः । " तथा उन्मादो ग्रहो बुद्धिविप्लव इत्यर्थः ' ( जक्खाएसेयत्ति ) यक्षो देवस्तेनावेशः प्राणिनोऽधिष्ठानं यक्षावेशः इत्येकः ( मोहणिज्जस्सेत्यादि ) मोहनीयस्य दर्शनमोहनीयादेः कर्मण उदयेनान्य सोऽन्य इति । तत्र मोहनीयं मिथ्यात्वमोहनीयं तस्योदयादुन्मादो भवति यतस्तदुदयवर्ती जन्तुरतत्त्वं तत्त्वं मन्यते तत्त्वमपि चातत्त्वं चारित्रमोहनीयं वा, यतस्तदुदये जानन्नपि विषयादीनां स्वरूपमजानन्निव वर्त्तते । अथवा चारित्रमोहनीयस्यैव विशेषो वेदाख्यो मोहनीयं यतस्तदुदयविशेष अत्युन्मत्त एव भवति यदाह " चिंतेइ १ दट्ठु मिच्छइ, २ दीहं नीससइ ३ तह जरे ४ दाहे ५ । भत्तअरोयग ६ मुच्छा ७ उम्माए ८ न याणई ९ मरणंति " १० ॥ १ ॥ अनयोश्चोन्मादत्वे समानेऽपि विशेषं दर्शयन्नाह ( तत्थणमित्यादि ) तत्र तयोर्मध्ये " योऽसौ यक्षाविष्टो भवति " ( सुहवेयणतराए चेवत्ति ) अतिशयत सुखेन मोहजन्योन्मादापेक्षया क्लेशेन वेदनमनुभवन यस्यासौ सुखवेदनतरः स एव सुखवेदनतरकः मोहजनितग्रहापेक्षया अद्दृश्यानुभवनीयतर एव नेकान्निदान न्यतिरिक्तानुपचादस्येति । चैव शब्दः स्वरूपावधारणे ( सुहविमोयणतराए चेवत्ति ) अतिशयेन सुखेन विमोचनं वियोजनं यस्मादसौ सुखविमोचनतरः । कप्रत्ययस्तथैव । अथवा अत्यन्तं सुखयिता सुखयितर तया अत्यन्तं सुखेनैव विमुच्यते यो देहिनः स सुखविमोचनतरक इति मोहस्तु तद्विपरीत एकान्तिकस्य निद्रमत्यन्तमायतयात्यन्तानुचितप्रवृत्तिहेतुत्वेनानन्तभावकारणत्वात् तथानन्तकारणजनितत्वेन मन्त्राद्यसाध्यत्वात् कर्मक्षयोपशमादिनैव साध्यत्वादित्यत एवोक्तम् ( दुहवेयणतराए चेव दुहविमोयणतराए चेवत्ति ) अतिशयेन दुःखेन वेद्य एव दुःखविमोच्य एव चासाविति ॥ ( तत्थणं इत्यादि ) मोहजन्यान्मादः तदपेक्षया दुःखवेदनतरः अनन्तसंसारकारणत्वात् । संसारस्य च दुःखवेदनस्वभावत्वादितरस्तु सुखवेदनतर एव एकभविकत्वादिति ' तथा मोहजोन्मादः तदपेक्षया दुःखविमोचनतरो भवति विद्यामन्त्रदेवतानुग्रहेणापि यावितरो यक्षावेशजस्तु सुखविमोचनतर एव भवति । मन्त्रमात्रेणापि तस्य निग्रहीतुं शक्यत्वादिति । आह च " सर्वज्ञमन्त्रवाद्यपि, यस्य न सर्वस्य निग्रहे शक्तः । मिथ्यामोहोन्माद , स केन किल कथ्यतां तुल्यः " इदञ्च द्वयमपि चतुर्विंशतिदण्डके योजयन्नाह ॥

नेरइया णं भंते ! कइविहे उम्मादे पण्णत्ते ? गोयमा ! दुविहे उम्मादे पण्णत्ते तंजहा जक्खावेसे य मोहणिज्जस्स कम्मस्स उदएणं । से केणट्ठेणं भंते ! एवं वुच्चइ णेरइयाणं दुविहे उम्मादे पण्णत्ते ? जक्खावेसे य मोहणिज्जस्स कम्मस्स उदएणं गोयमा ! देवे वासे असुभे पोग्गले पक्खिवेज्जा । सेणं तेसिं असुभाणं पोग्गलाणं पक्खिवणयाए जक्खावेसे णं उम्मादे पाउणेज्जा मोहणिज्जस्स वा कम्मस्स उदएणं मोहणिज्जं उम्मायं पाउणेज्जा से तेणट्ठेणं जाव उदएणं । असुरकुमाराणं भंते ! कइविहे उम्मादे पण्णत्ते ? एवं जहेव णेरइयाणं णवरं देवे वासे महिड्डियतराए चेव असुभे पोग्गले पक्खिवेज्जा सेणं तेसिं असुभाणं पोग्गलाणं पक्खिवणयाए जक्खाएसं उम्मादं पाउणेज्जा । मोहणिज्जस्स वा सेसं तं चेव से तेणट्ठेणं जाव उदएणं एवं जाव थणियकुमाराणं पुढविकाइयाणं जाव मणुस्साणं एएसिं जहा णेरइयाणं वाणमंतरजोइसियवेमाणियाणं जहा असुरकुमाराणं ।

( णेरइयाणमित्यादि ) पुढविकाइयाणमित्यादौ यदुक्तं जहा नेरइयाणंति तेन देवे वासे असुभे पोग्गले पक्खिवेज्जा इत्येतद्यक्षावेशे पृथिव्यादिसूत्रेष्वध्यापितं वाणमन्तरेत्यादौ तु यदुक्तं "जहा असुराणंति" तेन यक्षावेश एव व्यन्तरादिसूत्रेषु देवे वासे महिड्डियतराए इत्येतदध्यापितं मोहोन्मादाऽऽलापकस्तु सर्वसूत्रेषु समान इति ॥ भ० १४ श० २ उ० । पञ्चभिः प्रकारैरात्मन उन्मादस्तद्यथा ॥

छहिं ठाणेहिं आया उम्मायं पाउणेज्जा तंजहा अरहंताणमवण्णं वदमाणे अरहंतपण्णत्तस्स धम्मस्स अवण्णं वदमाणे आयरियउवज्झायाणमवण्णं वदमाणे चाउवण्णस्स संघस्स य अवण्णं वदमाणे जक्खावेसेण चेव मोहणिज्जस्स कम्मस्स उदएणं ।

अनन्तरं श्रमणस्याहारग्रहणकारणान्यभिहितानीति श्रमणादेर्जीवस्यानुचितकारिण उन्मादस्थानान्याह ( छहीत्यादि ) इद च सूत्रं पञ्चस्थानक एव व्याख्यानप्रायं नवरं षड्भिः स्थानैरात्मा जीव उन्मादमुन्मत्ततां प्राप्नुयादुन्मादश्च महामिथ्यात्वलक्षणस्तीर्थकरादीनामवर्णवादतो भवत्येव तीर्थकराद्यवर्णवदनकुपितप्रवचनदेवतातो वाऽस्मा ग्रहणरूपो भवेदिति पाठान्तरेण । ( उम्मायपमायंति ) उन्मादः सह इत्व स एव प्रमाद प्रमत्तत्वं नानागशून्यतोन्मादप्रमादः । अथवोन्मादश्च प्रमादश्चाहितप्रवृत्तिहिताप्रवृत्ती उन्मादप्रमादं प्राप्नुयादिति । ( अवण्णंति ) अवर्णमश्लाघामवज्ञां वा वदन् भजन् वा कुर्वन्नित्यर्थः ( धम्मस्सत्ति ) श्रुतस्य चारित्रस्य वा आचार्योपाध्यायानाञ्च चतुर्वर्णस्य श्रमणादिभेदेन चतुःप्रकारस्य यक्षावेशेन चैवं निमित्तान्तरकुपितदेवाधिष्ठितत्वे मोहनीयस्य मिथ्यात्ववेदशोकोदयेनेति । स्था० ६ ठा० ॥

उम्माद ( य ) पत्त-उन्मादप्राप्त-त्रि० उन्मादमुन्मत्ततां प्राप्त । उन्मादप्राप्त । स्था० ५ ठा० । मोहनीयकर्मोदयेन चित्तशून्यता-

मुपागते, वृ० ३ उ० । वातादिदोषादुन्मत्ततामुपागते, स्था० ५ ठा० । उन्मादप्राप्ताया निर्ग्रन्थ्याः प्रतिचर्य्या यथा—

(सूत्रम्) उम्मायपत्तिं निग्गंथिं निग्गंथे गिण्हमाणे २ नातिक्कमइ

अस्य व्याख्या प्राग्वत् अथोन्मादप्ररूपणार्थं भाष्यकारः प्राह ॥

उम्मत्तो खलु दुविधो, जक्खावेसो य मोहणिज्जो य ।
जक्खाएसो वुत्तो, मोहेण इमं तु वोच्छामि ॥

उन्मादः खलु निश्चितं द्विविधो द्विप्रकारस्तद्यथा यक्षावेशहेतुको यक्षावेशः कार्ये कारणोपचारात् । एवं मोहनीयकर्मोदयहेतुको मोहनीयवशात् द्वौ चकारौ परस्परसमुच्चयार्थौ स्वगतानेकभेदसूचकौ वा । तत्र यो यक्षावेशो यक्षावेशहेतुकः सोऽनन्तरसूत्रोक्तो यस्तु मोहेन मोहनीयोदयेन मोहनीयं नाम येनात्मा मुह्यति तच्च ज्ञानावरणीयं मोहनीयं वा द्रष्टव्यं ताभ्यामात्मनो विपर्यासापादनात् । तेनोत्तरत्र अहमपि तमुत्थाय ईर्यामुच्यमानं न विरुध्यते ( इमतुत्ति ) अयमन्तरमेव वक्ष्यमाणतया प्रत्यक्षीभूत इव तमेवेदानीं वक्ष्यामि । प्रतिज्ञातं निर्वाहयति ॥

रूवंगं दट्ठूणं, उम्मातो अहव पित्तमुच्छाए ।
नट्ठायणाणि वा ते, पित्तम्मि य सक्करादीणि ॥

रूपं विटादेराकृतिरङ्गं च गुह्याङ्गं रूपाङ्गं तद् दृष्ट्वा कस्या अप्युन्मादो भवेत् । अथवा पित्तमूर्छया पित्तोद्रेकेणोपलक्षत्वाद्वातोद्रेकवशतो वा स्यादुन्मादः । तत्र रूपाङ्गं दृष्ट्वा यस्या उन्मादः । सजातस्तस्यास्तस्य रूपाङ्गस्य विरूपावस्थां प्राप्तस्य दर्शना कर्त्तव्या । या तु वातेनोन्मादं प्राप्ता सा निवाते स्थापनीया उपलक्षणमिदं तेन तैलादिना शरीरस्याभ्यङ्गो घृतपायनं च तस्याः क्रियते । पित्तवशान्मत्तीभूतायाः शर्कराक्षीरादीनि दातव्यानि कथं पुनरसौ रूपाङ्गदर्शनेनोन्मादं गच्छेदित्याह ॥

दट्ठूण नरं काई, उत्तरविउव्वितं मयणखित्ता ।
तेण वि य रूवेण उ—द्धम्मिकायम्मि निव्विण्णा ॥

काचिदल्पसत्वा नटं दृष्ट्वा किंविशिष्टमित्याह । उत्तरवैकुर्विकमुत्तरकालभाविवस्त्राभरणादिविचित्रकृत्रिमविभूषाशोभितं ततः काचिन्मदनक्षिप्ता उन्मादप्राप्ता भवेत् तत्रेयं यतना । उत्तरवैकुर्विकाप्रसारणेन तेनैव स्वाभाविकेन रूपेण तस्मिन्नूर्द्धकृते सति काचिदल्पकर्मा निर्विण्णा भवति तद्विषयं विरागं गच्छतीत्यर्थः ॥

पण्णवितो उ दुरूवो, उम्मं दिज्जति अ तीए पुरतो उ ।
रूववतो पुण भत्तं, तं दिज्जति जेण छड्डेति ॥

अन्यच्च यदि नटः स्वरूपो दुरूपतो भवति । ततः स पूर्वं प्रज्ञाप्यते प्रज्ञापितश्च सन् तस्या उन्मादप्राप्तायाः पुरतः उन्मण्ड्य यत्तस्य मण्डनं तत्सर्वमपनीयते । ततो विरूपरूपदर्शनतो विरागो भवति । अथासौ नटः स्वभावत एव रूपवान् अतिशायिनोद्भटरूपेण युक्तः ततस्तस्य भक्तं मदनफलमिश्रादिकं तद्दीयते येन भुक्तेन तस्या पुरतः छर्दयति उद्वमति उद्वमनं च कुर्वन् किलासौ जुगुप्सनीयो भवति ततः सा तं दृष्ट्वा विरज्यते इति ।

गुज्झंगम्मि उ वियडं, पज्जावेऊण खरगमादीणं ।
तद्दरिसणे विरागो, तीसे तु हवेज्ज दट्ठूणं ॥

यदि पुनः कस्या अपि गुह्याङ्गे उन्मादो भवति रूपलावण्याद्यपेक्षस्ततः खरकादीनां घृतरकप्रभृतीनां विकटं मद्यं पाययित्वा प्रसुप्तीकृतानां पथि मद्योद्गालखरण्टितसर्वशरीराणामत एव मक्षिकाभिर्भिणभिणायमानानां ( तद्दायणेत्ति ) तस्य गुह्याङ्गस्य मद्योद्गालनादिना बीभत्सीभूतस्य दर्शना क्रियते । तच्च दृष्ट्वा तस्या आर्यिकाया विरागो भवेत् । ततः प्रगुणी भवति । वृ० ६ उ० ।

उन्मादप्राप्तस्य भिक्षोः प्रतिचर्य्या यथा ॥

उम्मायपत्तं भिक्खुं गिलायमाणं नो कप्पए तस्स गणावच्छेयस्स निज्जूहित्तए गिलाए करणिज्जं वेयावडियं जाव ततो रोगातंकातो विप्पमुक्को ततो पच्छा लहुस्सगे नामं ववहारे पट्ठवियव्वे सिया इति ।

अस्य व्याख्या पूर्ववत् । उन्मादप्ररूपणा तु निर्ग्रन्थ्या इव नवरं पुरुषाभिलापः कार्यः ॥ क्षुल्लकस्य वातेन पित्तेन चोन्मादयतनामाह ।

वाते अब्भंगसिणेह, पज्जणादी तहा निवाए य ।
सक्करखीरादीहि य, पित्तचिगिच्छा उ कायव्वा ॥

वाते वातनिमित्ते उन्मादे तैलादिना शरीरस्याभ्यङ्गः क्रियते स्नेहपायनं घृतपायनमादिशब्दात्तथाविधान्यचिकित्सापरिग्रहः तत्कार्यते तथा निवाते स्थाप्यते । पित्तवशादुन्मत्तीभूतस्य शर्कराक्षीरादिभिस्तस्य चिकित्सा कर्त्तव्या ॥ व्य० २ उ० ।

उम्माद ( य ) पमाय—उन्मादप्रमाद—पुं० कर्म० स० । उन्मादः सग्रहत्वं स एव प्रमादः प्रमत्तत्वमाभोगशून्यतोन्मादप्रमादः । ग्रहावेशादुपयोगशून्यतायाम्, उन्मादश्च प्रमादश्च समाहारद्वन्द्वः । अहितप्रवृत्तिहिताप्रवृत्त्योः, न० । स्था० ६ ठा० ।

उम्मि—ऊर्मि—पुं० स्त्री० ऋ—मि—अर्त्तेरुच्च । महाकल्लोले, ज्ञा० १ अ० । भ० । स्था० । सम्बाधे, कल्लोलाकारे जनसमुदाये, भ० २ श० १ उ० । ज्ञा० । प्रकाशे, वेगे, वस्त्रसंकोचरेखायाम्, पीडायाम्, उत्कण्ठायाम्, बुभुक्षादिषु षट्सु देहमनः प्राणानां यथायथं धर्मेषु अश्वगतौ, स्त्री० । वाच० ॥

उम्मिमालिणी—ऊर्मिमालिनी—स्त्री० जम्बूद्वीपे मन्दरस्य पर्वतस्य पश्चिमतः शीतोदाया महानद्या उत्तरेण वहन्त्यामन्तर्नद्याम्, स्था० ३ ठा० । " सुवप्पे विजए जयंती रायहाणी उम्मिमालिणी णई " " सुवप्रो विजयो वैजयन्ती राजधानी ऊर्मिमालिनी नदी " जं० ४ वक्ष० । प्रश्न० । " दो उम्मिमालिणीओ " स्था० २ ।

उम्मिल्लण—उन्मीलन—न० प्रादेर्मीलेः ८ । ४ । ३१ । इति उदः परस्य मीलेरन्त्यस्य द्वित्वम् वा । प्रा० । विकाशे, चक्षुरादेः पुटविभेदे, भावे ल्युट् । उन्मीलोऽप्यत्र । वाच० ॥

उम्मिल्लिय—उन्मीलित—न० उद्—मील—भावे—क्त । उन्मीलने, अनु० विकसिते, अमुद्रिते च । णिच्—कर्मणि क्त । प्रकाशिते, भेदितमुद्रणे नेत्रादौ " ततो उम्मिल्लियाणि तस्स नयणाणि " आ० म० द्वि० । " पजरुम्मिलियमणिकणगथूभियागे " पञ्जराद् उन्मीलितमिव बहिष्कृतमिव पञ्जरोन्मीलितमिव । यथाहि किल किमपि वस्तु पञ्जरात् वंशादिमयप्रच्छादनविशेषात् बहिष्कृतमत्यन्तमविनष्टच्छायत्वात् शोभते । तथा तदपि विमानमिति भावः । जी० ४ प्रति० । स० ॥

उम्मि ( म्मी ) वीइ—ऊर्मिवीचि—स्त्री० ऊर्मयश्च वीचयश्च महाकल्लोलेषु, ह्रस्वकल्लोलेषु च ६ त० । ऊर्मीणां विविक्तत्वे, भ० १६ श० ६ उ० । स्था० । " उम्मीवीई सहस्सकलियं ति " ॥ ऊर्मयः कल्लोलास्तल्लक्षणा या वीचयस्ता ऊर्मिवीचयो वीचिशब्दो हि लोकेऽन्तरार्थोऽपि रूढोऽथवोर्मिवीच्योर्विशेषो गुरुत्वलघुत्वलक्षणः कश्चिद्वीचिशब्दो न पठ्यते एवंति ऊर्मिवीचीनां सहस्रैः कलितो युक्तो यः स तथा । स्था० १० ठा० ।

उम्मिसिय—उन्मिषित—त्रि० उद्—मिष—क्त—प्रफुल्ले, किञ्चित्प्रका-

शिते, वाच० । उन्मीलिते, भ० १४ श० १ उ० । भावे क्तः । उन्मेषे, " उम्मिसियणिमिसियतरेण " उन्मिषितनिमिषितान्तरेण यावता अन्तरेण व्यवधानेन उन्मेषनिमेषौ क्रियेते तावदन्तरप्रमाणेन । जी० ३ प्रति० ।

उम्मिस्स–उन्मिश्र–न० सचित्तसम्मिश्रे, तद्भेदोपचारात्सप्तमे एषणादोषे, प्रव० ६७ द्वा० । " बीयादि उम्मीस " बीजादिमिश्र बीजकहरितादिभिर्यदुन्मिश्रमुच्यते । पञ्चा० १३ विव० । यदा अनाभोगेन अविचार्य्यैव शुद्धाशुद्धाहार सम्मील्याददाति तदा सप्तम उन्मिश्रितदोषः । उत्त० २४ अ० । देयद्रव्यं खण्डादि सचित्तेन धान्यकणादिना मिश्रं ददत उन्मिश्रम् । ध० ३ अधि० ।

असण पाणगं वावि, खाइमं साइमं तहा ।
पुप्फेसु होज्ज सम्मीसं, बीएसु हरीएसु वा ॥ ५७ ॥
तं भवे भत्तपाणं तु, संजयाण अकप्पियं ।
दिंतियं पडिआइक्खे, न मे कप्पइ तारिसं ॥ ५८ ॥

पानक वापि खाद्य स्वाद्यं तथा पुष्पैर्जातिपाटलादिभिर्भवेदुन्मिश्रं बीजैर्हरितैर्वेति तादृशं भक्तपानं तु संयतानामकल्पिकं यतश्चैवमतो ददतीं प्रत्याचक्षीत न मम कल्पते तादृशमिति ॥ दश० ५ अ० । (अस्य भेदादि–उन्मिश्रग्रहणनिषेधश्च एषणा शब्दे वक्ष्यते) अत्र प्रायश्चित्तम् "उम्मीसे अणंते चउगुरपच्छित्ते चउलहु मीसुम्मीसे अणते मासगुरु परित्ते मासलहु लित्ते चउलु गणेसु जे निक्खि तेसु सट्ठाणपच्छित्तं " पं० चू० । "प्राबल्येन मिश्रे वस्तुमात्रे, त्रि० । आव० । "कम्मुम्मीसगा सरीरा ,, कार्मणेन शरीरेणोन्मिश्राणि । स्था० ४ ठा० ।

उम्मीलणा–उन्मीलना–स्त्री० प्रभवे, विशे० ।

उम्मीलिय–उन्मीलित–त्रि० उद्-मील-क्त-प्रादेर्मीलेः ८ । ४ । २३ । इति उदः परस्य मीलेरन्त्यस्य द्वित्वाभावे रूपम् । प्रा० । उन्मेषे, विपा० १ श्रु० ७ अ० । "पजरुम्मिलियव्वमणिकणगथूभियागा" पञ्जरादुन्मीलित इव बहिष्कृता इव पञ्जरोन्मीलिता । रा० । उन्मीलितमुन्मिषित स्मितमुल्लिङ्गमित्यादिपर्य्याया । विशे० ।

उम्मुक्क–उन्मुक्त–त्रि-उद्-मुच्-क्त-ऊर्द्ध्वक्षिप्ते, औ० । परित्यक्ते, विशे० ॥ "उमुक्कमणुम्मुक्के, उम्मुच्चने य केसलकारे" आ० म० द्वि० । प्राबल्येन मुक्ते, "ते वीरा बन्धणुम्मुक्का नावकंखति जीवियं ' सूत्र० १ श्रु० ९ अ० ।

उम्मुक्ककम्मकवय–उन्मुक्तकर्मकवच–पुं० सकलकर्मवियुक्तत्वात्सिद्धे, औ० ।

उम्मुक्कबालभाव–उन्मुक्तबालभाव-पु-स्त्री-त्यक्तबाल्ये जातप्रौढत्वे, "सेवियणं दारए उम्मुक्कबालभावे विण्णयपरिणायमेत्ते" कर्म० ।

उम्मुयणा–उन्मोचना–स्त्री० परिशातनायाम, आव० ५ अ० ।

उम्मूलणा–उन्मूलना–स्त्री० उत्पाटने, "उम्मूलणा सरीराओ" वृक्षस्येवोन्मूलनेवोन्मूलना निष्काशनं जीवस्य शरीराद्देहादिति" द्वितिया गौणी हिंसा । प्रश्न० १ द्वा० ।

उम्मेस–उन्मेष–पुं० उद्-मिष-घञ-अक्षिव्यापारविशेषे, "आगमणगमणभामुम्मेसमणजोगकायजोगा जेयावणे तहप्पगारा चलमनावा भावे ते" भ० १३ श० ४ उ० ।

उम्ह(म्ह)–उ(ऊ)ष्मन्–त्रि० उष-आधारे-मनिन्-वाऽन्हस्व । पक्ष्मश्मष्मस्महाम्ह ८ । २ । ७४ । इति ष्मभागस्य मकाराक्रान्तो हः । प्रा० । ग्रीष्मर्तौ, कर्त्तरि-मनिन् । आतपे, शष्सहवर्णेषु, वाच० ॥ ' भो सोढणउम्हमादिणे दोसा ' उष्मा नाम तेनाऽन्येन द्रव्येण तस्य रागिणो हस्तादौ परिताप आदिशब्दाद्यदि द्रव्यमसौ तत्र प्रक्षिपति । वृ० २ उ० ।

उम्हातिस–युष्मादृश–त्रि० युष्मद्-दृश्-कञ्–आत्वं पैशाच्याम । यादृशोदेर्दुस्तिः ८ । ४ । ३१६ । इति ( ह ) इति दृश इत्यस्य स्थाने तिरादेशः । भवादृशे, प्रा० ॥

उम्हासेस–ऊष्मावशेष–पुं० मनागपि ऊष्मे, "उम्हासेसो विसिही होउं हर्डि" आव० ५ अ० ।

उय–उत–अव्य० अपि शब्दार्थे, विशे० "उतामृतस्येशानो यदन्नेनातिरोहति' आ० म० द्वि० सुतरामिति शब्दस्यार्थे, "किमुयकुरुवाकिस्स" आव० ५ अ० । विकल्पे, समुच्चये, वितर्के, प्रश्ने, अत्यर्थे च । वाच० ॥

उयत्तेमाण–प्रवर्त्तयत्–त्रि० तिरश्चीनं कुर्वति, "उव्वारेमाणे वा उयत्तेमाणे वा जीवेहिं " आचा० २ श्रु० ॥

उयत्तिय–अपवृत्य– अव्य० अपवर्त्तन कृत्वेत्यर्थे, " उयत्तियाण णिएहाहि, तहप्पगारं पाणगजातं " आचा० २ श्रु० ॥

उयाय–उपयात– त्रि० उपगते, "महासिलाकंटगं संगाम उयाए पुरओ य से सक्के" भ० ७ श० ९ उ० ॥

उय्हे–यूयम्– युष्मद्– जस्– यूयवयौ–जसि । इति यूयादेश । डे प्रथमयोरम इति जसोऽमादेशः । पा० व्या० । भे तुब्भे उज्झे तुम्हे तुय्हे उय्हे जसा । ८ । ३ । ९१ । इति जसा सहितस्य युष्मच्छब्दस्य उय्हे आदेशः । प्रा० । "उय्हेचिट्ठह" प्रश्न० युष्मान्–युष्मद् शस् । वो तुब्भे उज्झे तुय्हे उय्हे भे शसा " ८ ३ । ९३ । इति शसा सहितस्य युष्मच्छब्दस्य उय्हे आदेश 'उय्हे पेच्छामि' प्रा० ॥

उर–पुं० उरस–न० ऋ-असुन् धातोरन्त्य–रपरः । स्तनमदामशिरोनभ ८ । १ । ३२ । इति उरः पुंल्लिङ्गत्वम । प्रा० । वक्षसि,, स्था० १० ठा० । हृदये, प्रश्न० २ द्वा० । अष्टानामङ्गानां द्वितीयेऽङ्गे, । "सीससुरोयरपिट्ठि " आ० चू० २ अ० । उत्त० । नि० चू० । प्रज्ञा० । " उरे वित्थडाए " अर्द्धमागध्या भाषया उरसि, विस्तृततया उरसो विस्तीर्णत्वात् । औ० । "उरासि दलावेइ" उरसि दापयति । विपा० । "उरेणरिसभ सरं" । स्था० ७ ठा० । शोभने स्था ४ ठा०

उरंउर–उरउरस्–न० साक्षाच्छब्दार्थे" चाउरगिणं पि उरउरे गिण्हित्तए " वि० ३ अ० ।

उरकडग–उरःकटक–न० उरो हृदय तदेव कटकमुर कटकम । उरोरूपे कटके, अनु० ॥

उरग-उरग–पुं० स्त्री० उरसा गच्छति उरस्-गम-ड । सलोपश्च । सर्पे, अष्ट० । "उरगगिरिजलणसागर-नहतलतरुगणसमो अ जो होइ । भमरामियधरणिजलरुह-रविपवणसमो अ सो समणो' अनु०

उरगवर–उरगवर–पुं० नागवरे, ज्ञा० १६ अ० ।

उरगवीहि–उरगवीथी–स्त्री० उरगसञ्ज्ञका वीथी उरगवीथी । शुक्रादेरुरगसञ्ज्ञेऽक्षभागे, स्था० १० ठा० ( वीहीशब्दे स्पष्टम )

उरच्छद–उरश्छन्द–पु० कवचे, हैम० ।

उरत्थ–उरःस्थ–त्रि० । हृदयस्थिते, " उरत्थदोणाग्माणवीरूप ण" कल्प० ॥

उरतव–उरस्तपस्–न० क० स० इह लोकाद्याशंसारहितत्वेन सो भने आजीवकतपोभेदे, स्था० ४ ठा० ।

उरपरिसप्पथलयरपंचिंदियतिरिक्खजोणिय उरःपरिसर्पस्थल-

चरपञ्चेन्द्रियतिर्यग्योनिक-पुं० उरसा वक्षसा परिसर्पन्ति संचरन्तीति उरःपरिसर्पास्ते च ते स्थलचरपञ्चेन्द्रियतिर्यग्योनिकाश्च उर परिसर्पस्थलचरपञ्चेन्द्रियतिर्यग्योनिकाः । उर.परिसर्पस्य स्थलचरपञ्चेन्द्रियतिर्यग्योनिकभेदे, तद्भेदा यथा ।

से किं तं उरपरिसप्पथलयरपंचिंदियतिरिक्खजोणियाउ चउव्विहा पएणत्ता तंजहा अही अयगरा आसालिया महोरगा ।

अथ के ते उर.परिसर्पस्थलचरपञ्चेन्द्रियतिर्यग्योनिकाः । सूरिराह उर.परिसर्पस्थलचरपञ्चेन्द्रियतिर्यग्योनिकाश्चतुर्विधा. प्रज्ञप्तास्तद्यथा । अहयोऽजगरा आसालिगा महोरगा. । प्रज्ञा० १पद । अनु० । स्था० । जी० । एतेषामेव भेदानामवगमाय प्रश्ननिर्वचनसूत्राणि तानि च अह्यादिशब्देषु द्रष्टव्यानि"तिविहा उरपरिसप्पा पएणत्ता तंजहा इत्थी पुरिसा णपुंसगा " उर.परिसर्पमात्रेणापि बोधः । सं० ।

उरपरिसप्पिणी—उरःपरिसर्पिणी—स्त्री० उर. परिसर्पस्त्रियाम्, तद्भेदा यथा " से किं तं उरगपरिसप्पिणी ओ २ तिविधाओ तंजहा अहीओ अयगरीओ महोरगीओ सेत्त उरपरिसप्पिणी " जी० २ प्रति० ।

उरब्भ—उरभ्र—पुं० स्त्री० । उरु उत्कटं भ्रमति भ्रम्० ड० पृषो० रुलोपः । मेषे, प्रश्न० १ द्वा० । सूत्र० । करणे, रा० । उपा० ।

अस्य निक्षेप. ।

णिक्खेवे उ उरब्भे, चउव्विहो दुविहहोइ दव्वम्मि ।
आगमणोआगमतो, णो आगमतो य सो तिविहो ॥

निक्षेपो न्यासस्तु. पूरणे उरभ्रे उरभ्रविषये चतुर्विधश्चतु प्रकारो नामस्थापनाद्रव्यभावभेदात् । तत्र नामस्थापने क्षुण्णे एवेति । द्रव्योरभ्रमाह—द्विविधो भवति द्रव्य इति द्रव्यविषय आगमतो नो आगमतश्च तत्रागमत उरभ्रशब्दार्थज्ञस्तत्र चानुपयुक्तो ना आगमत. पुनश्चास्य पुनरर्थत्वात् स इति द्रव्योरभ्रस्त्रिविधस्त्रिभेद ।

तत्त्रैविध्यमाह—

जाणगसरीरभविए, तव्वइरित्ते य सो पुणो तिविहो ।
एगभवियबद्धाउ य, अभिमुहतो णामगोत्ते य ॥

शरीरमुरभ्रशब्दार्थज्ञस्य सिद्धशिलातलगत शरीरमुच्यते भव्यशरीरोरभ्रस्तु यस्तावदुरभ्रशब्दार्थं न जानाति कालान्तरे च ज्ञास्यति तस्य यच्छरीरं तद्व्यतिरिक्तश्च ताभ्यां ज्ञशरीरभव्यशरीरोरभ्राभ्यां व्यतिरिक्तो भिन्नस्तद्व्यतिरिक्तः । चः समुच्चये स तद्व्यतिरिक्त' पुनस्त्रिविधस्त्रिभेदस्त्रैविध्यमेवाह । एकस्मिन् भवे तस्मिन्नेवातिक्रान्ते भावी एकभविको योऽनन्तर एव भवे उरभ्रतयोत्पत्स्यते तथा स एवोरभ्रायुर्बन्धानन्तरं बद्धमायुरनेनेति बद्धायुष्क उच्यते । तृतीयमाह— (अभिमुहओ नामगोत्तेयत्ति) आर्षत्वादभिमुखनामगोत्रश्च तत्राभिमुखे समुखेऽन्तर्मुहूर्तानन्तरभावितया नामगोत्रे उरभ्रसम्बन्धिनी यस्य स तथोक्तान्तरमुहूर्तानन्तर मेवोरभ्रभवभावीति गाथार्थ. । भावोरभ्रमध्ययननामनिबन्ध.

उरब्भाउण मेगोयं, वेदेतो भावतो उरब्भो उ ।
तत्तो समुट्ठियमेणं, उरब्भिज्जंति अज्झयणं ॥
उरब्भे य कागणीअं, पएयववहारसागरे चेव ।
पंचेते दिट्ठं–ता उरब्भिज्जम्मि अज्झयणे ॥

उरभ्र. ऊरणकस्तस्यायुश्च नाम च गोत्रं च उरभ्रायुर्नामगोत्रं यदुदयादुरभ्रो भवति वेदयन्ननुभवन् भावतो भावमाश्रित्योरभ्रस्तुशब्द पर्यायास्तिकमतमेतदिति विशेषणार्थस्ततो भावोरभ्रदृष्टान्ततयेहाभिधेयात्समुत्थितमुत्पन्नमिदमिति प्रस्तुतं यस्मादिति गम्यते ( उरभिज्जंति ) उरभ्रीयं गहादित्वाच्छैषिकछप्रत्यये इति तस्मादध्ययनं प्रागुक्तमुच्यते इति शेष इति गाथार्थः ॥ उरभ्रस्यैव चेह प्रथममुच्यमानत्वात् बहुवक्तव्यत्वाच्चेत्थमुक्तमन्यथा हि काकण्यादयोऽपि दृष्टान्ता इहाऽभिधीयन्त एव तथा चाह निर्युक्तिकृत् ( उरब्भे गाहा ) उरभ्र उक्तरूपः काकणिर्विंशतिः कपर्दिका (उरब्भेयत्ति) चशब्दस्य भिन्नक्रमत्वात्काकणिश्च ( अवएयत्ति ) आम्रकमाम्रफलं व्यवहारश्च क्रयविक्रयरूपो वणिग्धर्मश्चस्य गम्यमानत्वात् सागरश्च समुद्रः । चः सर्वत्र समुच्चये एवावधारणे भिन्नक्रमश्चैवं योज्यते पञ्चैवैते न तु न्यूनाधिका दृष्टान्ता उदाहरणानि उरभ्रीये उरभ्रनाम्न्यध्ययने इति गाथार्थ' ॥

संप्रति यदर्थसाधर्म्याद्धुरभ्रस्य दृष्टान्तता तदुपदर्शनायाह ॥

आरंभो रसगेही, दुग्गमरणं च पच्चवातो य ।
उवमा कया उरब्भे, उरभिज्जस्स णिज्जुत्ती ॥
आउरविणाई एयाई, जाई वरइणंदिवो ।
सुज्जताणेहिं छाढाऽ, एयदीहाउ लक्खणं ॥

आरम्भणमारम्भः पृथिव्याद्युपमर्दो रसेषु मधुरादिषु गृद्धिरभिकाङ्क्षा रसगृद्धिर्दुर्गतिगमन च नरकतिर्यगादिषु पर्यटनं प्रत्यपायश्चेहैव शिरश्छेदादि वक्ष्यति हि ' शिरच्छेत्तूणभुञ्जत ' इति शिरश्छेदार्थार्तरौद्रोपगतस्य दुर्गतिपाते दु खानुभवनादिरुपमा सा दृश्यते। दर्शनरूपा प्रक्रमादेभिरेवारम्भादिभिरर्थैः कृता विहिता उरभ्रे उरभ्रविषया। इदमुक्तं भवति। सांप्रतेक्षिणो हि विषयामिषगृध्नवः तांस्तानारम्भानारम्भन्ते आरभ्य चोपचितकर्मभिः कालसौकरिकादिवदिहैव दु.खमुपलभ्य नरकादिकां कुगतिमाप्नुवन्तीत्युरभ्रोदाहरणत इहोपदर्श्यते। काकण्यादि साधर्म्यदृष्टान्तोपलक्षण चैतदुरभ्रीयस्य निर्युक्तिरिति निगमनमेतदिति गाथार्थ. ॥ २० ॥ उरभ्रदृष्टान्तश्चैवम् ॥ इत्यवसितो नामनिष्पन्ननिक्षेप' ।

सम्प्रति सूत्रालापकनिक्षेपस्यावसरः स च सूत्रे सति भवतीत्यत. सूत्रानुगमे सूत्रमुच्चारणीयम् ॥

जहा एसं समुद्दिस्सं, कोइ पोसेज्ज एलयं ।
ओयणं जवसंदिज्जा, पोसेज्जावि सयं गणे ॥

यथेत्युदाहरणोपन्यासे आदिश्यते आज्ञाप्यते विविधव्यापारेषु परिजनोऽस्मिन्नायात इत्यादेशोऽभ्यर्हित. प्राहुणकस्त समुद्दिश्याश्रित्य यथासौ समेष्यति समागतश्चैनं भोक्ष्यत इति कश्चित्परलोकापायनिरपेक्ष. पोषयेत्पुष्टं कुर्यादेलकमूरणकं कथमित्याह ओदनं भक्तं तज्जोग्यशेषान्नोपलक्षणमेतत् यवसमुद्गमाषादि दद्यात्तदग्रतो ढौकयेत्तत एव पोषयेत् पुनर्वचनमादरख्यापनाय अपि' संभावने संभाव्यत एव एवं विध. कोऽपि गुरुकर्मेति स्वकाङ्गणे स्वकीयगृहप्राङ्गणे अन्यत्र नियुक्तिक कदाचिन्नौदनादि दास्यतीति स्वकाङ्गण इत्युक्त । यदि वा ( पोसिज्जाविसयगणेत्ति ) विशन्त्यस्मिन्निति विषयो गृह तस्याङ्गणं विषयाङ्गणं तस्मिन्नथवा विषय रसलक्षणं वचनव्यत्ययाद्विविषयान्वा गणयन् संप्रधारयन् धर्मनिरपेक्ष इति भाव । इहोदाहरणं सम्प्रदायादवसेयम् " जहेगो ऊरणगो पाहुणयनिमित्त पोसिज्जति सो पीणियसरीरो सुएहातो हालिद्दादिकयंगरागो कयकण्णचूलओ कुमारगायएणाणाविहेहिं कीडाविसेसेहिं कीडावेंति त च वच्छगो एव लालिज्जमाणं दट्ठूण माऊए णेहेण गोच्चिय दोहएण य तयणुकंपाए मुक्कमवि खीरं न पिबति । रोसेण ताए पुच्छिओ भणइ

अम्मो एस णं दियगो सव्वेहिं एएहिं अम्ह सामिसालोहिं इट्ठेहिं जवजोगासणेहिं तदुवभोगेहिं अलंकारविसेसेहिं अलंकारितो पुत्त इव परिपालिज्जइ अह तु मदभग्गो सुकाणि तणाणि कोहे वि लभामि ताणि वि न पज्जत्तिगाणि एवं पाणियं पि ण य मे को वि भालेति । ताए भणत्ति पुत्त आतुरचिण्णाई " गाहा । जहा आतुरो मरिउं कामो जमगातिपच्छं वा अपच्छं वा तं दिज्जतिति स एवं नदिओ मारिज्जिहित्ति ज हा तदा पेच्छेहिसि इति सूत्रार्थ ॥ २९ ॥

तत. कीदृशो जात. किञ्च कुरुते इत्याह ॥

तओ स पुट्ठ परिवूढे, जायमेए महोदरे ।

पीणिए विउले देहे, आएसं परिकंखए ॥

तत इत्योदनादिदानाद्धेतौ पञ्चमी स इत्युरभ्र पुष्ट उपचितमांसतया पुष्टिभाक् परिवृढ प्रभू. समर्थ इति यावत् । जातमेद उपचितचतुर्थधातुरत एव महोदरो बृहज्जठर प्राणितस्तर्पितो यथासमयमुपढौकिताहारत्वादेभिरेव हेतुभिर्विपुले विशाले देहे शरीरे सति यस्य च भावेन भावलक्षणमिति सप्तमी किमित्याह । आदेश प्रतिकाङ्क्षेति पाठान्तरत. परिकाङ्क्षति वेच्छति नचास्य तत्वत. प्रतिपालनमिच्छा च संभवत्यत प्रतिकाङ्क्षतीव प्रतिकाङ्क्षतीत्युपमार्थोऽवगन्तव्यः एव परिकाङ्क्षतीत्यत्रापीति सूत्रार्थ ॥ ३२ ॥ स किमेव चिरस्थायी स्यादित्याह ॥

जाव न एइ आएसे, ताव जीवइ से दुही ।

अह पत्तम्मि आएसे, सीसं छित्तूण भुंजइ ॥

यावदिति कालावधारण नैति नायाति कोऽसावादेशस्तावन्नोत्तरकाल जीवति प्राणान् धारयति ( सेदुहित्ति ) आकारप्रश्लेषात्स इत्युरभ्रो दुःखी सन्नथवा वध्यमण्डनमिवास्यौदनदानानीति तत्वतो दुःखितैवास्यति दुःखी ( अहपत्तम्मि आएसे ) अथानन्तर प्राप्ते आगते आदेशे श्रिता अस्मिन् प्राणा इति शिरस्तच्छित्वा छिद्या विधाय भुज्यते तेनैव स्वामिना पाहुणकसहितेनेति शेष । सम्प्रति सम्प्रदायशेषमनुश्रियते ततोऽसौ "वच्छगो तनो नादियग पाहुणगेसु आगएसु च हिज्जमाणं ददट्टु तिसितो वि भएण माऊए थण णाभिलसति । ताए जणति किं पुत्त भयन्नीतोसि णेहण पएहुय पि मे ण पिवसि तेण भणति अम्म कओ मे थणाभिलासो णणु सोवराओ णदिओ अज्ज केहिं वि पाहुणएहिं आगएहिं मम अग्गतो वि गयजीदो वि लोलनयणो विस्सर रमतो अत्तणो असरणो मारिओ तब्भयाओ मे कओ पाहणच्छा तओ ताए भणति पुत्त ! णणु तदा चेव कहियं जहा आउरचिण्णाइं एयाइं एस सवित्रागो अणुपत्तो एस दिहणो " इति सूत्रार्थ । इत्थ दृष्टान्तमभिधाय तमेवानुवदन् दार्ष्टान्तिकमाह ।

जहा खलु से उरब्भे, आएसाए समीहिए ।

एवं बाले अहम्मिट्ठे, ईहई नरयाउयं ॥

यथा येन प्रकारेण खलु निश्चये स इति प्रागुक्तरूप उरभ्र आदेशाय आदेशार्थ समीहित कल्पित सन् यथा यस्मै भविष्यत्यादेशं परिपालनीत्यनुवर्तते एवमनुनेय न्यायेन बालोऽज्ञोऽधर्मो धर्मविपक्ष पापमिति यावत् इष्टोऽभिलषितोऽस्येत्यधर्मिष्ठ आदिनादेराकृतिगणत्वादिष्टशब्दस्य परनिपात । यद्वाऽधर्म्मगुणयोगादधर्म्मोतिशयेनाधर्म्माधर्म्मिष्ठ इह ईहते वाञ्छतीव नदनुष्ठानादरतया किं नरयायुष्क नरकजीवितमिति सूत्रार्थ ।

उक्तमेवार्थ प्रपञ्चयितुमाह ।

हिंसे बाले मुसावाई, अद्धाणम्मि विलोवए ।

अन्नादत्तहरे तेणे, माई कन्नु हरे सढे ॥

इत्थीविसयगिद्धे य, महारंभपरिग्गहे ।

भुंजमाणे सुरं मंसं, परिवूढे परंदमे ॥

अयकक्करभोई य, तुंदिल्ले चिय लोहिए ।

आउयं नरए कंखे, जहाएसं च एलए ॥

हिनस्तीत्येव शीलो हिंस्र स्वभावतः प्राणव्यपरोपणकृद्बालोऽज्ञः पागान्तरतश्च कुप्यति हेतुमन्तरेणापि कुप्यतीत्येवं धर्म्मो क्रोधी मृषाऽलीक वदति प्रतिपादयतीत्येवं शीलो मृषावादी अध्वनि मार्गे विलुम्पति मुष्णातीति विलोपकः । य. पथि गच्छतो जनान् सर्वस्वहरणतो लुण्टति ( अन्नदत्तहरेति ) अन्येऽन्यो दत्त राजादीनां विस्तीर्णे हरत्यापान्तराल एवाच्छिन्नत्यन्यदत्तहर. । अन्यैर्वा अदत्तमनिसृष्ट हरत्यादत्ते अन्यादत्तहरो ग्रामनगरादिषु चौर्यवृत्त अत एव वालोऽज्ञो विस्मरणशीलः स्मारणार्थमेतदिति न पौनरुक्त्यं सर्वावस्थासु वा बालत्वख्यापनार्थं पागान्तरतश्च स्तैन्येनैवोपकल्पितात्मवृत्ति. । यद्वा अन्य दत्तहरोऽन्यादत्त ग्रन्थिच्छेदादिनोपायेन अपहरति स्तेन. क्षेत्रादि खननेनेति विशेषो मायी वञ्चनैकचित्त । कन्नुहर. कण्हुकस्यार्थे हरिष्यामीत्येवमध्यवसायी शठो वक्राचार. तथा स्त्रियश्च विषयाश्च स्त्रीविषयास्तेषु गृद्धोऽभिकाङ्क्षावान् स्त्रीविषयगृद्धश्च प्रागवन्महानपरिमितः आरम्भोऽनेकजन्तूपघातकृद्व्यापार परिग्रहश्च धान्यादिसञ्चयो यस्य स तथोक्तो भुञ्जानोऽभ्यवहरन् सुरां मांस पिशितं ( परिवूढोत्ति ) परिवृढ प्रभुरुपचितमांसशोणिततया तत्तत्क्रियासमर्थ इति यावत् । अत एव परानन्यान् दमयति न्यक्कृत्यानिमतकृत्येषु प्रवर्तयतीति परदम. । किञ्च अजश्छागस्तस्य कर्कर यच्चणकवद्भक्ष्यमाण कर्करायते तच्चेह प्रस्तावान्मेदो दन्तुरमतिपक्क वा मास तद्भोजी वाऽत एव तुन्दिलो जातवृहज्जठरश्चितमुपचयप्राप्त लोहितं शोणितमस्येति चितलोहित. । शेषधातूपलक्षणमेतत् आयुर्जीवित नरके सीमन्तकादौ काङ्क्षतीव काङ्क्षति तद्योगकर्म्मारम्भितया कमिव क इवेत्याह ( जहाएसं च एलएत्ति ) आदेशमिव यथैलक उक्तरूप इह च हिंसे इत्यादिना सार्द्धश्लोकेनारम्भ उक्तो भुंजमाणे सुरमित्यादिना चार्द्धद्वयेन रसगृद्धिः आयुएमित्यादिनाचार्द्धेन दुर्गतिगमन तत्प्रतिपादनाच्चार्थत. प्रत्युपायाभिधानमिति सूत्रार्थ. ॥ इदानीं यदुक्तमायुर्नरके काङ्क्षतीति तदनन्तरमसौ किं कुरुते इत्याह । यद्वा साक्षादैहिकापाय दर्शनायाह ॥

आसणं सयणं जाणं, वित्तं कामे य भुंजिया ।

दुस्साहडं धणं हिच्चा, बहु संचिणिया रयं ॥

तओ कम्मगुरुजंतू, पच्चुप्पन्नपरायणे ।

अयव्व आगयाएसे, मरणं तम्मि सोयए ॥

आसन शयन यानमिति प्राग्वन्नवरं भुक्त्वेति सवन्धनीयं वित्तं द्रव्य कामान्मनोज्ञशब्दादीन् भुक्त्वोपभुज्य ( दुस्साहडंति ) दुःखेनात्मन. परेषां च दुःखकरणेन सुष्ठ्वादरातिशयेनाहृतमुपार्जित दुःस्वाहृतम् । यदि वा प्राकृतत्वान् दुःखेन संह्रियते मील्यतेऽस्मेति दुस्संहृत धनं द्रव्य हित्वा आसनाद्युपभोगेन दृताद्यसद्व्ययेन च त्यक्त्वा तथा च मिथ्यात्वाविकर्म्मबन्धहेतुसंभवाद्बहु प्रभूत सचित्योपार्ज्य रजोऽष्टप्रकार कर्म्म । तत किमित्याह । ( ततोत्ति ) ततो रज सञ्चयात् को वा सञ्चिनुयात् कर्म्मणा गुरुरिव गुरुरधो नरकगामितया कर्म्मगुरुर्जन्तु प्राणी प्रत्युत्पन्न वर्त्तमान तस्मिन्परायणस्तन्निष्ठः ' एतावानेव लोकोऽय, यावानिन्द्रियगोचर " इति नास्तिकमतानुसारितया परलोकनिरपेक्ष इति यावत् । ( आएवत्ति )

अजः पशुः स चेह प्रक्रमादुरभ्रस्तद्वत् ( आगयाएसत्ति ) प्राकृतत्वादागते प्राप्ते आदेशे प्राघुणके एतेन प्रपञ्चितशविनेयानुग्रहायोक्तमेवोरभ्रदृष्टान्तं स्मारयति । किमित्याह । मरणान्ते प्राणपरित्यागात्मन्यवसाने शोचति । किमुक्तं भवति यथादेश आगत उरभ्र उक्तनीत्या शोचति तथाऽयमपि भिग्मां विषयव्यामोहत उपार्जितगुरुकर्म्मोणं हा केदानीं मया गन्तव्यमित्यादिप्रलापतः खिद्यतेऽत्यन्तनास्तिकस्यापि प्रायस्तदा शोकसंभवादिति सूत्रद्वयार्थः । अनेनैहिकोपाय उक्तः ।

संप्रतिपारभविकमाह ॥

तओ आउपरिक्खीणे, चुया देहविहिंसगा ।

आसुरीयं दिसं बाला, गच्छंति अवसा तमं ॥

ततः शोचनानन्तरं को वा उपार्जितगुरुकर्मा आयुषि तद्भवसंभविनि जीविते परिक्षीणे सर्वथा क्षयं गते कथञ्चिदायुःक्षयस्यावीचीमरणेन प्रागपि संभवादेवमुच्यते । च्युतो भ्रष्टो देहाच्छरीरात्पाठान्तरस्तु च्युतदेहोपगते हन्त्यशरीरो विहिंसको विविधप्रकारैः प्राणिघातकः ( आसुरीयति ) अविद्यमानसूर्यामुपलक्षणत्वात् ग्रहनक्षत्रादिविरहितां च दिश्यते नारकादित्वेनास्यां संसारीति दिक्तामर्थाद्भावदिवामथवा रौद्रकर्मकारी सर्वोऽप्यसुर उच्यते । ततश्चासुराणामियमासुरीया तामासुरीयां दिशं नरकगतिमित्यर्थो बालोऽज्ञो गच्छति यात्यवशः कर्मपरवशो वचनव्यत्ययाच्च सर्वत्र बहुवचननिर्देशो व्याप्तिख्यापनार्थो वा यथा नैक एवैवंविधः किंतु बहव इति ( तमति ) तमोयुक्तत्वात्तमो देवगतेरप्यसूर्यत्वसंभवात्तद्व्यवच्छेदाय दिशो विशेषणम् । ततोऽर्थान्नरकगतिम् । उक्तंहि " निच्चंधयारतमसा, ववगयगहचंदसूरनक्खत्ता " इत्यादिस्वरूपख्यापकं वा द्वितीयं व्याख्यानमिति सूत्रार्थः ।

सम्प्रति काकण्याम्रदृष्टान्तद्वयमाह

जहा कागणीए हेउं, सहस्सं हारए नरो ।

अपच्छं अंबगं भुच्चा, राया रज्जं तु हारए ॥ ११ ॥

एवं माणुस्सगा कामा, देवकामा य अंतिए ।

सहस्सगुणिया भुज्जो, आउं कामाय दिव्विया ॥१२॥

अणेगवासाणउया, जा सा पण्णवउट्ठई ॥

जाणि जीयंति दुम्मेहा, ऊणे वाससयाउए ॥१३ ॥

( जहासूत्रम् ) यथेत्युदाहरणोपन्यासार्थः । काकन्या उक्तरूपायाः (हेउत्ति) हेतोः कारणात्सहस्रं दशशतात्मकं कार्षापणानामिति गम्यते हारयेन्नाशयेन्नरः पुरुषोऽत्रोदाहरणं सम्प्रदायादवसेयं " एगो दमगो तेण वित्तिं करितेण सहस्सं काहावणाण अज्जियं सो तं गहाय सत्थेण समं सगिहिं पत्थितो । तेण भत्तनिमित्तं रूवगो कागिणीहिं भिन्नं ततो दिणे दिणे कागणिए भुजति तस्स य अवसेसा एका कागिणी सा विस्सारिया सत्थे पहाविए सो चिंतेइ मा मे रूवगो भिंदिजव्वो होहेतित्ति नउलगं अन्नत्थ गोवेउं कागिणीनिमित्तं नियत्तो सावि कागिणी अन्नेण हया सो वि नउलओ अन्नेण दिट्ठो गविज्जतो सो तं घेत्तूण नट्ठो पच्छा सो दारं गतो सोयइ एस दिट्ठंतो" तथाऽपथ्यमहितमाम्रकमाम्रफलं भुक्त्वाबहुत्य राजेति नृपती राज्यं पृथिवीपतित्वं तुरवधारणे भिन्नक्रमश्च तेन हारयेदेव समवत्येव । अस्याःपथ्यभोजिनो हारणमित्यक्षरार्थः । भावार्थस्तु वृद्धसम्प्रदायादवसेयः । स चायम् । " जहा कस्सइ रण्णो अवाजिण्णेण विसूइगा जाया सा तस्स वेज्जेहिं महाजत्तेण चिगिच्छिया भणितो जदि पुणो अवाणि खाइसि तो विणस्ससि । तस्स य अतीव पियाणि अंबाणि तेण सदेसे सव्वे अवाउ उत्थाविया । अण्णया अस्स वाहणिए निग्गतो सह अमच्चेण अस्सेण अवहरिओ अस्सो दूरं गतूण परिस्सतो ठितो एगम्मि वणसंडे चूयच्छायाए अमच्चेण वारिज्जमाणो वि णिविट्ठो । तस्स य हेट्ठे अवाणि पडियाणि सो ताणि परामस्सति । पच्छा अग्घाति पच्छा चक्खिउ निट्ठुभति । अमच्चो वारेति पच्छा भक्खेउ मतो " इति सूत्रार्थः । इत्थ दृष्टान्तमभिधाय दार्ष्टान्तिकयोजनामाह । ( एव गाहा ) एवमिति काकिन्याम्रकसदृशानां मनुष्याणाममी मानुष्यका गोत्रप्रत्ययान्तत्वात् । गोत्रचरणाविति वुञ् कामा विषया देवकामाना देवसम्बन्धिनां विषयाणामन्तिके समीपे अन्तिकोपादानं च दूरे अनवधारणमपि स्यादिति । किमित्येवमत आह । सहस्रगुणिताः सहस्त्रैस्ताडिताः भूयोऽतिशयेन बहु बहून्वारानित्यर्थे मनुष्यायुःकामापेक्षयेति प्रक्रमोऽनेनैषामभिभूयस्त्वं सूचयन्कार्षापणसहस्रराज्यतुल्यतामाह । आयुर्जीवितं कामाश्च शब्दादयो (दिव्वियत्ति ) दिवि भवा दिव्या शुभाशुभदक्षप्रतीचो यदिति यत्त एव दिव्यकाः इहचाद्यौ [ देवकामाणअतिएत्ति ] काममात्रोपादानेऽपि अयुष्कामाय [ दिव्वियत्ति ] आयुषोऽप्युपादानम् । तत्र प्रभावयितुमाह ( अणेगसूत्रं ) अनेकानि बहूनि तानि चेहासख्येयानि वर्षाणि वत्सराणि तेषां न युतानि सख्याविशेषा वर्षनयुतान्यनेकानि च तानि वर्षनयुतानि स्वरोऽन्योन्यस्येति प्राकृतलक्षणात् सकाराकारदीर्घत्वमेवमन्यत्रापि स्वरान्यत्वं भावनीयम् । यदिवा अनेकानि वर्षनयुतानि येषु तान्यनेकवर्षनयुतान्युन्नयत्रार्थात्पल्योपमसागराणीति यावत् । नयुतानयनोपायस्त्वयं चतुरशीतिवर्षलक्षाः पूर्वाङ्गं तच्च पूर्वाङ्गेन गुणितं पूर्वं चतुरशीतिलक्षाहतं नयुताङ्गं नयुताङ्गमपि चतुरशीतिलक्षाभिताडितं नयुताङ्कंवमुच्यत इत्याह । या सेति प्रज्ञापकः शिष्यान् प्रत्येवमाह । या सा भवतामस्माकं च प्रतीता । प्रकर्षेण ज्ञायते वस्तुतत्वमनयेति प्रज्ञा हेयोपादेयविवेचिका बुद्धिः सा विद्यते यस्यासौ प्रज्ञावानतिशायने मतुप् । अतिशयश्चास्या हेयोपादेययोर्हानोपादाननिबन्धनत्वमिहाभिमतं ततश्च क्रियाया अप्याक्षिप्तत्वात् । यदि वा निश्चयनयमतेन क्रियारहिता प्रज्ञाप्यप्रज्ञैवेति प्रत्ययेनैव क्रिया क्षिप्यते तत प्रज्ञावान् ज्ञानक्रियावानित्युक्तं भवति तस्य प्रज्ञावतः । स्थीयते अनया अर्थाद्देवभवे इति स्थितिर्देवायुरधिकृतत्वात् । दिव्यकामाश्च । तानि च कीदृशानीत्याह । यान्यनेकवर्षनयुतानि दिव्यस्थितेर्दिव्यकामानां च विषयभूतानि जीयन्ते हार्यन्ते तद्धेतुभूतानुष्ठानानासेवनेनेति भावः । पाठान्तरतो हारयन्ति वा के ते दुष्टा विषयादिदोषदुष्टत्वेन मेधा वस्तुरूपावधारणशक्तिर्येषां ते दुर्मेधसो विपर्यैर्जिता जन्तव इति गम्यते । कदा—पुनस्तानि दुर्मेधसो विषयैर्जीयन्त इत्याह ऊने वर्षशतायुष्यनेनायुषोऽल्पत्वान्मनुष्यकामानामप्यल्पतामाह । यदि वा प्रभूते ह्यायुषि प्रमादेनैकदा हारितान्यपि पुनर्जीयेरन्नस्मिंस्तु सङ्क्षिप्तायुष्येकदा हारितानि हारितान्येव भगवतश्च वीरस्य तीर्थे प्रायोऽन्यूनवर्षशतायुष एव जन्तव इत्ययमुपन्यासः । अयं चात्र भावार्थो ऽल्पं मनुष्याणामायुर्विषयाश्चेति काकण्याम्रफलोपमा देवायुर्देवकामाश्चातिप्रभूततया कार्षापणसहस्रराज्यतुल्याः । ततो यथा द्रमको राजा च काकण्याम्रफलकृते कार्षापणसहस्रराज्यं च हारितवानेवमेतेऽपि दुर्मेधसोऽल्पतरमनुष्यायुःकर्मार्थे प्रभूतान्देवायुःकामान् हारयन्तीति सूत्रार्थः ॥

सम्प्रति व्यवहारोदाहरणमाह ॥

जहा य तिण्णि वणिया, मूलं घित्तूण निग्गया ॥

एगो तत्थ लहइ लाभं, एगो मूलेण आगओ ॥ १४ ॥

एगो मूलं पि हारित्ता, आगओ तत्थ वाणिओ ॥
ववहारे उवमा एसा, एवं धम्मे वियाणह ॥ १५ ॥
माणुसत्तं भवे मूलं, लाभो देवगई भवे ॥
मूलच्छेएण जीवाणं, नरगतिरिक्खत्तणं धुवं ॥ १६ ॥

यथेति प्राग्वत्। च प्रतिपादितदृष्टान्तापेक्षया समुच्चये । त्रयो वणिजः प्रतीता मूलराशिं नीविमिति यावत् गृहीत्वा निर्गताः स्वस्थानात् स्थानान्तरं प्रति प्रस्थिताः प्राप्ताश्च समीहितस्थानम् । तत्र च गतानामेको वणिक्कलाकुशलोऽत्रैतेषु मध्ये लभते प्राप्नोति लाभं विशिष्टद्रव्योपचयलक्षणम् । एकस्तेष्वेवान्यतरो यस्तथा नातिनिपुणो नाप्यत्यन्तानिपुणः स ( मूलेणत्ति ) मूलधनेन यावद्गृहान्नीतं तावतैवोपलक्षित आगतः स्वस्थानं प्राप्त इति सूत्रार्थः । तथा ( एगो सूत्रम् ) एकोऽन्यतरः प्रमादपरो द्यूतमद्यादिष्वत्यन्तमासक्तचेता मूलमप्युक्तरूपं हारयित्वा नाशयित्वा गतः प्राप्तः स्वस्थानमित्युपस्कारः । एवं सर्वत्रोदाहरणसूत्रायां सोपस्कारता द्रष्टव्या । तत्र तेषु मध्ये वणिगेव वाणिजः अत्र च संप्रदायः " जहा एगस्स वाणियगस्स तिण्णि पुत्ता तेण तेसिं सहस्सं दिण्णं काहावणाणं भणिया य । एएण ववहरिऊण एत्तिएण कालेण एज्जह ते त मूलं घेत्तूण निग्गया सनयराउ विविधविधेसु पट्टणेसु ठिया तत्थेगो भोयणच्छायणवज्जं जूयमज्जमंसवेसावसणविरहितो विहीए ववहरमाणो विपुललाभसंपुण्णो जातो । विनितो पुण मूलमवि वितो लाभगं भोयणच्छायणमल्लालंकारादिसु उवभुंजति णय अच्चादरेण ववहरति । तइओ न किंचि ववहरइ केवलं जूयमसवेसगंधमल्लतंबोलसरीरकिरियासु अप्पेणेव कालेण तं दव्वं निट्ठवियं ते य जहावहिकालस्स सपुरमागया तत्थ जो छिण्णमूलो सो सव्वस्स असामी जातो पेसए य उवचरिज्जति । वितिओ घरवावारे निउत्तो भत्तपत्तिसंतुट्ठो ण दाणव्वभोत्तव्वे सु च सायति । ततिओ घरवित्थरस्स सामी जातो के वि पुण कहिंति तिण्णि वि वाणियगा पत्तेय २ ववहरंति । तत्थेगो छिण्णमूलो पसत्तणमुवगतो केण वा सववहारं करेउ अच्छिण्णमूलो पुणरवि वाणिज्जाए भवति । इयरो बंधुसहितो मोदते एस दिट्ठंतो " सम्प्रति सूत्रमनुश्रियते व्यवहारे व्यवहारविषया उपमा दृष्टान्त । एषाऽनन्तरोक्ता वक्ष्यमाणन्यायेन धर्म्मे धर्मविषयामेनामेवोपमा विजानीत अवबुध्यत यूयमिति सूत्रार्थः । कथमित्याह ॥ ( माणुसत्त सूत्रम् ) मानुषत्वं मनुजत्वं भवेत्स्यात् मूलमिव मूलं स्वर्गापवर्गात्मकतदुत्तरोत्तरलाभहेतुतया तल्लाभ इव लाभो मनुजगत्यपेक्षया विषयसुखादिभिर्विशिष्टत्वाद्देवगतिर्देवत्वावाप्तिर्भवेत् एवं च स्थिते किमित्याह । मूलच्छेदेन मानुषत्वगतिहान्यात्मकेन जीवानां प्राणिनां नरकतिर्यक्त्वं नरकत्वं तिर्यक्त्वं च तद्द्वयात्मकं ध्रुवं निश्चितम् इहापि संप्रदायः । " तिण्णि संसारिणो सत्तमाणुसे आयाता तत्थेगो मद्दवज्जवादिगुणसंपण्णो मज्झिमारम्भपरिग्गहजुत्तो कालं काऊण तस्सायपरस्स मूलत्थाणीय तमेव माणुसत्तं पडिलभति । वितिओ पुण सम्मदंसणचरित्तगुणेसु ठितो सरागसंजमेण गरलाभत्थाणीय इव देवेसु उववण्णो । ततिओ पुण हिंसे वाले मुसावाती इच्चेवमादि पुव्वभणियाणि सावज्जजोगेहिं वट्टिओ छिण्णमूलत्थाणीय इव नरगेसु तिरिएसु वा उववज्जति इति सूत्रार्थः ॥

यथा मूलच्छेदेन नारकतिर्यक्त्वमाप्तिस्तथा स्वयं सूत्रकृदाह ।
दुहओ गई बालस्स, आवई वहमूलिया ।
देवत्तं माणुसत्तं च, जं जिए लोलया सढे ॥१७॥
तओ जिए सइं होइ, दुविहं दुग्गइं गए ।
दुल्लहा तस्स उम्मग्गा, अद्धाएसु चिरादवि ॥१८॥
एवं जीयं स पेहाए, तुलिया बालं च पंडियं ।
मूलियं ते पवेसंति, माणुस्सं जोणिमंति जे ॥१९॥

द्विधा द्विप्रकारा गम्यत इति गतिः सा चेह प्रक्रमान्नरकगतिस्तिर्यग्गतिश्च । कस्येत्याह बालस्य द्वाभ्यां रागद्वेषाभ्यामाकलितस्य (आगइत्ति) आगच्छत्यापतति । वधः उपलक्षणत्वान्महारम्भमहापरिग्रहानृतभाषणमायादयश्च मूलं कारणं यस्याः सा वधमूलिका । यदि वा द्विधा गतिर्बालस्य भवतीति गम्यते । तत्र च तस्य ( आवइत्ति ) आपत्सा च कीदृगीत्याह । वधो विनाशस्ताडनं वा मूलमादिर्यस्याः सा वधमूलिका । मूलग्रहणाच्छेदभेदातिभारारोपणादिपरिग्रहः । लभन्ते हि प्राणिनो नरकतिर्यक्षु विविधा वधाद्यापदः । किमित्येवमत आह देवत्वं देवभवं मानुषत्वं च मनुजभवं यद्यस्माज्जितो हारितो ( लोलयासढेत्ति ) लोलता पिशितादिलाम्पट्यं तद्योगाज्जन्तुरपि तन्मयत्वख्यापनार्थं लोलतेत्युक्तः । शाठ्ययोगाच्छठः विश्वस्तानां वञ्चकस्ततो लोलता चासौ शठश्च लोलताशठः । पञ्चेन्द्रियवधाद्युपलक्षणतया च नरकहेत्वभिधानमेतत् यदुक्तं " महारम्भयाए परिग्गहयाए कुणिमाहारेणं पंचिंदियवहेणं जीवा निरयाउयं नियच्छंति " शठ इत्यनेन तु शाठ्यमुक्तं तच्च तिर्यग्गतिहेतुरुक्तं च "माया तैर्यग्योनस्येति" अतश्चायमाशयो यतोऽयं बालो लोलताशठस्ततो नरकतिर्यग्गतिनिबन्धनाभ्यां लोलताशठाभ्यां देवत्वमनुजत्वे हारितस्यास्योक्तरूपाद्विधैव गतिः सम्भवत्येवं मूलच्छेदेन जीवानां नरकतिर्यक्त्वमुच्यते । मूलं हि मनुष्यत्वं लाभश्च देवत्वमुभयोरपि तयोर्हारणादिति सूत्रार्थः । पुनर्मूलच्छेदमेव समर्थयितुमाह । ( ततोजिएत्ति) ततो देवत्वमानुषत्वजयात् को वा बालः ( जिएत्ति ) व्यवच्छेदफलत्वाद्वाक्यस्य जित एव सततं सदा भवति द्विविधा नरकतिर्यग्भेदात्तां द्विभेदां दुर्गतिं दुष्टा निन्दिता गतिर्दुर्गतिस्तां गतः प्राप्तः सदा जितत्वमेवाभिव्यनक्ति दुर्लभा दुष्प्रापा तस्येति देवमनुजत्वे हारितवतो बालस्य ( उम्मग्गत्ति ) सूत्रत्वात् उन्मज्जनमुन्मज्जा नरकगतितिर्यग्गतिनिर्गमनात्मिका स्यादेतच्चिरनरकाद्भवेनोन्मज्जास्य भविष्यत्यतआह अद्धायां काले अर्थादागामिन्यां किंस्वल्पायामेवेत्याह । सुचिरादपीत्यत्र शब्देनैव कालाभिधानात् सुचिराच्छब्दः प्रभूतत्वमाह । ततोऽयमर्थोऽनागताद्धायां प्रभूतायामपि बाहुल्याच्चेत्थमुक्तमन्यथा हि केचिदेकभवेनैव तत उद्धृत्य मुक्तिमप्याप्नुवन्त्येवेति सूत्रार्थः ॥ इत्थं पश्चानुपूर्व्यापि व्याख्याङ्गमिति पश्चादुक्तेऽपि मूलहारिण्युपनयमुपदर्श्य मूलप्रवेशिन्यभिधातुमाह । यद्वा विपक्षापायात्तज्ज्ञानत एवोपादेयप्रवृत्तिरिति पश्चादुक्तमपि मूलहारिणमादावुपदर्श्येदमाह ( एवसूत्रम् ) एवमुक्तनीत्या ( जियेत्ति ) युज्यत्ययाज्जितं लोलतया शाठ्येन च देवमनुजत्वे हारितवालमिति प्रथमत ( संपेहाएत्ति ) संप्रेक्ष्य सम्यगालोच्य तथा तोलयित्वा गुणदोषवत्तया परिभाव्य यदि चैव जितं सम्यगविरीता प्रेक्षा बुद्धिः सप्रेक्ष्यतया तोलयित्वा कं बालं चस्य भिन्नक्रमत्वात्पण्डितं तद्विपरीतमर्थान्मनुष्यदेवगतिगामिनमिह च द्वितीयायां व्याख्यायामेवं जितमिति बालस्य विशेषणम् ननु पण्डितस्यासंभवात् । तथा च सति मूलं भवं मौलिकं मूलधनं ते प्रवेशयन्ति मूलप्रवेशकवणिक्सदृशास्त इत्यभिप्रायो ये किमि-

त्याह (माणुस्सत्ति) मनुष्याणामियं मानुषी तां योनिमुत्पत्तिस्थानमायान्त्यागच्छन्ति बालत्वपरिहारेण पण्डितत्वमासेवमाना ये ते इति सूत्रार्थः ॥

यथा च मानुषीं योनिमायान्ति तथाह ॥

वेमायाहिँ सिक्खाहिँ, जे नरा गिहिसुव्वया ॥
उवेंति माणुसं जोणिं, कम्मसच्चा हु पाणिणो ॥ २० ॥
जेसिं तु विउला सिक्खा, मूलियं ते अइत्थिया ॥
सीलवंता स विसेसा, अदीणा जंति देवयं ॥ २१ ॥
एवं अदीणयं भिक्खुं, अगारिं च वियाणिया ॥
कहएण जिच्च मेलिक्खं, जिच्चमाणा न संविदे ॥ २२ ॥

विविधा मात्रा परिमाणमासां विमात्रा विचित्रपरिमाणास्ताभिः परिमाणविशेषमाश्रित्य विसदृशीभिः शिक्षाभिः प्रकृतिभद्रकत्वाद्यन्यासरूपाभिरुक्तहि "चउहिं ठाणेहिं जीवा मणुयाउयं पगरेंति तंजहा पगतिभद्दयाए पगतिविणियथाए साणुक्कोसयाए अमच्छरियाएत्ति" ये इत्यविवक्षितविशेषा नराः पुरुषा गृहिणश्च गृहस्था सुव्रताश्च धृतसत्पुरुषव्रतास्ते हि प्रकृतिभद्रकत्वाद्यन्यासानुभावत एव न विपद्यपि विपीदन्ति सदाचारं वा अवधीरयन्तीत्यादिगुणान्विता इदमेव च सतां व्रतं लौकिका अप्याहुः । विपद्युच्चैः स्थेयं पदमनुविधेयं हि महतां,प्रिया न्याय्या वृत्तिर्मलिनमसुभङ्गेऽप्यसुकरम् । असन्तो नाभ्यर्थ्याः सुहृदपि न वाच्यस्तनुधनः, सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् ॥ इति आगमविहितव्रतधारणं त्वमीषामसंभविदेवगतिहेतुतयैव तदभिधानात्त्वीदृशाः किमित्याह ( उविंतित्ति ) उपयन्ति ( माणुसति ) मानुषीं मानुषसम्बन्धिनीं योनिमुक्तरूपां कर्म्मणा मनोवाक्कायक्रियालक्षणेन सत्या अविसंवादिनः कर्म्मसत्याः । हुरवधारणे तत कर्म्मसत्या एव सन्तस्तदसत्यतया तिर्य्यग्योनिहेतुत्वेनोक्तत्वात् । तथा च वाचकः "धूर्त्ता नैकृतिकाः स्तब्धा, लुब्धाः कार्पटिकाः शठाः । विविधां ते प्रपद्यन्ते, तिर्य्यग्योनिं दुरुत्तरा" मित्यादि पाठान्तरतश्च कर्म्मस्वर्थान्मनुष्यगतियोग्यक्रियारूपेषु शक्ता अभिष्वङ्गवन्तः कर्म्मशक्ताः प्राणिनो जीवा इह च नरग्रहणे सति प्राणिग्रहणं देवादिपरिग्रहार्थमिति न पुनरुक्तम् यदि वा विमात्राभिः शिक्षाभिर्ये नरा गृहिणः सुव्रता यत्तदोर्नित्याभिसम्बन्धात्ते मानुषीं योनिमुपयान्ति किमित्येवमत आह ( कम्मसच्चाहुपाणिणोत्ति ) हु शब्दो यस्मादर्थे यस्मात्सत्यान्यवन्ध्यफलानि कर्म्माणि ज्ञानावरणादीनि येषां ते सत्यकर्म्माणः प्राणिनो निरुपक्रमकर्मापेक्षं चैतदिति सूत्रार्थः । सम्प्रति लब्धाबालोपनयमाह ( जेसिंसूत्रं ) येषां तु पुनर्विपुलानि शङ्कितत्वादिसम्यक्त्वाचाराणुव्रतमहाव्रतादिविषयत्वेन विस्तीर्णा शिक्षा ग्रहणासेवनात्मिकास्तीति गम्यते । मूले भव मौलिकं मूलधनमिव मानुषत्वं ते य एवंविधाः (तिउट्टियात्ति अतिट्टियात्ति-अतिच्छियात्ति)पाठत्रयेऽपि अतिक्रान्ता उल्लङ्घितवन्त इत्यर्थः । यद्वा अतिक्रम्योद्गच्छ कीदृशाः सन्तः शील सदाचाराऽविरतसम्यग्दृशां विरतिमतां तु देशसर्वविरमणात्मकं चारित्रं तद्विद्यते येषां ते शीलवन्तः । तया सह विशेषेण उत्तरोत्तरगुणप्रतिपत्तिलक्षणेन वर्त्तन्त इति सविशेषाः अत एवादीना कथं वयममुत्र भविष्याम इति वैक्लव्यरहिताः परीषहोपसर्गादिसम्भवे वा न दैन्यभाज इति अदीनाः यान्ति प्राप्नुवन्ति ते । देवभावो देवता सैव दैवतं न तु भवतो मुक्तिगतिरेव लाभस्तत्किमिह तत्परिहारतो देवगतिरुक्तेत्युच्यते । सूत्रस्य त्रिकालविषयत्वान्मुक्तेश्चेदानीं विशिष्टसंहननाभावतोऽभावाद्देवगतेश्च "छेवट्ठेण उ गम्मन्ति चत्तारि उ जाव आदिमा कप्पा" इति वचनाच्छेदपरिवर्त्तिसंहननिनामिदानींतनानामपि सम्भवादेव मुक्तमिति सूत्रार्थः ॥ प्रस्तुतमेवार्थं निगमयन्नुपदेशमाह । ( एवसूत्रम् ) एवममुना न्यायेन लाभान्वितम् ( अदीणवंति ) दीनकवतौ दीनवन्त न तथा दीनवन्तमदीनं दैन्यरहितमित्यर्थो भिक्षुं यतिमगारिणं च गृहस्थं विज्ञाय विशेषेण तथाविधशिक्षावशाद्देवमनुजगतिगामित्वलक्षणेन ज्ञात्वाऽवगम्य यतमान इति शेषः । कथं केन प्रकारेण न कथंचिदित्यर्थो नु वितर्के ( जिच्चति ) सूत्रत्वाज्जीयेत हार्येत विवेकी तत्प्रतिकूलैः कषायोदयादिभिरिति गम्यते । ईदृक्षमनन्तरोक्तं देवगत्यात्मकं लाभं (जिच्चमाणोत्ति) वा शब्दस्य गम्यमानत्वाज्जीयमानो वा हार्यमाणस्तैरेव कषायादिभिर्न संवित्ते सूत्रत्वान्न संवेत्ति न जानीते यथाहमेभिर्जीय इति । कथं न्वितीहापि योज्यते ततोऽयमर्थः कथं नु संवित्ते एव जानीते एव ज्ञपरिज्ञया प्रत्याख्यानपरिज्ञया च तन्निरोधं प्रति प्रवर्त्तते एवेत्येवं च वदन् काक्वोपदिशति यत एव ततो यूयमप्येवं जानाना यथा न देवगतिलक्षणं लाभं जीयध्वं कापायादिभिस्तथा यतध्वं कथंचिज्जीयमानाश्च सम्यग्विज्ञाय तत्प्रतीकारायैव प्रवर्तध्वमिति । यद्वा एवमदीनवन्तं भिक्षुमगारिणं च लब्धलाभं विज्ञाय यतमानो कथं नु जीयन्ति आर्षत्वात् जीयते हार्येते अतिरौद्रैरिन्द्रियादिभिरात्मा तदिति ज्ञेयं तच्चेह प्रक्रमान्मानुष्यदेवगतिलक्षणं ( पडिक्खति ) सुव्व्यत्ययादीदृक्षोऽभिहितार्थाभिज्ञः कथं नु जीयमानो न संवित्तेऽपि तु संवित्त एव संविदानश्च यथा न जीयते तथा यतेतेत्यभिप्रायोऽथ चैवमदीनवन्तं भिक्षुमगारिणं च लब्धलाभं विज्ञाय यतमानः कथं नु ( जिच्चति ) आर्षत्वाज्जीयते हार्यते विषयादिभिरिति गम्यते । ईदृक् देवगतिलक्षणं लाभमिति शेषः । अयमाशयो यदि लभमाना न विज्ञाताः स्युर्लाभो वा न तथाविधस्तदा जयनमपि स्याद्यदा तु लभमानौ भिक्ष्वगारिणौ दृश्येते लाभश्च देवत्वलक्षणस्तदा कथमयं जानानोऽपि जन्तुर्जीयते यत आह जीयमानो न संवित्ते । किमुक्तं भवति । यदासौ जीयमानो जानीयात्तदा तदुपायपरतया न जीयेत यदा त्वसौ विपर्य्यासमोहितो न जानीते तदा जीयत एवेति किमत्र चित्रमिति सूत्रार्थः ।

समुद्रदृष्टान्तमाह ।

जहा कुसग्गे उदयं, समुद्देण समं मिणे ।
एवं मणुस्सया कामा, देवकामाण अंतिए ॥ २३ ॥
कुसग्गमत्ता इमे कामा, संनिरुद्धम्मि आउए ।
कस्स हेउं पुरा काउं, जोगक्खेमं न संविदे ॥ २४
इह कामा नियट्टस्स, अत्तट्ठे अवरज्झइ ।
सोचा नेयाउयं मग्गं, जं भुज्जो परिभस्सई ॥ २६ ॥

यथेति दृष्टान्तोपन्यासे कुशो दर्भविशेषस्तस्याग्रं कोटिः । कुशाग्रं तस्मिन्नुदकं जलं तत् किमित्याह समुद्देणेति तात्स्थ्यात्तद्व्यपदेश इति न्यायात्समुद्रजलेन समं तुल्यं मिनुयात्परिच्छिन्द्यात् । तथा किमित्याह-एवमुक्तनीत्या मानुष्यका मनुष्यसम्बन्धिनः कामा विषया मनुष्यविशेषणं तु तेषामेवोपदेशार्हत्वाद्बाहुल्येन सम्भवाच्च । देवकामानां दिव्यभोगानामन्तिके समीपे कृता इति शेषः । दूरस्थितानां हितं सम्यगवधारणमित्येवमाह । किमुक्तं भवति । यथाऽज्ञः कश्चित्कुशाग्रस्थितं जलबिन्दुमालोक्य समुद्रवन्मन्यते एवं मूढाश्चक्रवर्त्यादिमनुष्यकामान् दिव्यभोगोपमानध्यवस्यन्ति तत्वतस्तु कुशाग्रजलबिन्दोरिव समुद्रान्मनुष्यकामानां दिव्यभोगेभ्यो महदेवान्तरमिति सूत्रार्थः । उक्तमेवार्थं निगमयन्नुपदेशमाह । (कुसमेत्तत्ति) कुशाग्रशब्देन कुशाग्रस्थितो जलबिन्दुरुपलक्ष्यते तन्मात्रस्तत्परिमाण इमे इति प्रत्यक्षाः कामा प्रक्रान्तत्वात् मनुष्यविषयाः कदा ये इत्याह । सन्निरुद्धेऽत्यन्तसङ्क्षिप्ते यद्वा समस्तैकीभा-

वेन निरुद्धेऽध्यवसानादिभिरुपक्रमणकारणैरवरुद्धे आयुषि जीवितेन मनुष्यायुषोऽल्पतया सोपक्रमतया वा कामानामप्यल्पत्वमुक्तं तस्माद्यल्पतोपलक्षणं चैतदस्मिंस्त्वर्थे उक्ते दिव्यकामास्तु जलबिन्दुतुल्या इत्यर्थादृगम्यते ( कस्सहेउंति ) सूत्रत्वात् कं हेतुं कारणं ( पुराकाउ ति ) तत एव पुरस्कृत्याश्रित्य अलब्धस्य लाभो योगो लब्धस्य च परिपालनं क्षेमोऽनयोः समाहारे योगक्षेमं । कोऽर्थोऽप्राप्तविशिष्टधर्म्मप्राप्तिः प्राप्तस्य च परिपालने न सविशेषं न जानीते जन इति शेषस्तद्रसविचौ हि मनुष्यविषयाभिष्वङ्ग एव हेतुस्ते च धर्म्मं प्राप्य दिव्यभोगापेक्षयैवप्रायास्तत एव तत्त्यागतो विषयाभिलाषिणोऽपि धर्म्मे एव यतितव्यमित्यभिप्रायः । यद्वा यत कुशाग्रमात्रा दर्भप्रान्तवदत्यल्पा इमे कामास्तेऽपि न पल्योपमादिपरिमितौ आयाऽयस्यायुषि किंतु सन्निरुद्धे सांक्षिप्ते आयुषि तत ( कस्सहेउंति ) कस्माद्धेतोः पुरस्कृत्यैव पुरस्कृत्य मुख्यतयाङ्गीकृत्य असयममिति शेषो योगक्षेममुक्तरूपं न संविते । भावार्थस्त्वभिहित एवेति सूत्रार्थः । इत्थं दृष्टान्तपञ्चकमुक्तम् तत्र प्रथमसुरभ्रदृष्टान्तेन भोगानामायतावपायबहुलत्वमभिहितमायतौ चापायबहुलमपि यत्न तुच्छं न तत्परिहर्तुं शक्यत इति । काकण्याम्रफलदृष्टान्ततस्तुच्छत्वं तुच्छमपि च लाभच्छेदात्मकव्यवहारविज्ञतयाऽऽयव्ययतोलनाकुशल एव हातुं शक्त इति । वणिग्व्यवहारोदाहरणमायव्ययतोलनापि च कथं कर्त्तव्येति समुद्रदृष्टान्ततस्तत्र हि दिव्यकामानां समुद्रजलोपमत्वमुक्तं तथा च तदुपार्जनं महानायोऽस्नुपार्जनं तु महान्व्यय इति तत्वतो दर्शितमेव भवति । इह च योगक्षेमासंवेदने कामो निवृत्त एव भवतीति तस्य दोषमाह ( इहेति सूत्रम् । ) इहेति मनुष्यत्वे जिनशासने वा प्राप्ते इति शेषः । कामेभ्योऽनिवृत्तोऽनुपरतः कामानिवृत्तः तस्य आत्मनोऽर्थः आत्मार्थोऽर्थ्यमानतया स्वर्गादिः अपराध्यत्यनेकार्थत्वाद्धातूनां नश्यति । यद्वा आत्मैवार्थ आत्मार्थः स एवापराध्यति नान्यः कश्चिदात्मव्यतिरिक्तोऽर्थः सापराधो भवति तत्त्वयः दुर्गतिगमनेनेति भावः । आह विषयत्यागाविरोधिनि जिनागमे सति कथं कामानिवृत्तिसंभव उच्यते श्रुत्वाऽऽकर्ण्य नैयायिकं न्यायोपपन्नं मार्गं सम्यग्दर्शनादिकं मुक्तिपथं यद्यस्माद् भूयः पुनः परिभ्रस्यति कामाभिर्वर्तित इति शेषः । कोऽभिप्रायो जिनागमश्रवणात् कामनिवृत्तिप्रतिपन्नोऽपि गुरुकर्म्मत्वात् प्रतिपतति ये तु श्रुत्वाऽपि न प्रतिपन्नाः श्रवणं येषां नास्ति ते कामनिवृत्ता एवेति भावः । यद्वा यदसौ कामानिवृत्तः सन् श्रुत्वा नैयायिकं मार्गं भूयः परिभ्रस्यति मिथ्यात्वं गच्छति तदस्यात्मार्थ एव गुरुकर्माऽपराध्यति अनेन मा भूत्कचित् मूढस्य सिद्धान्तमश्रोत्याऽस्युपपन्नप्रियतान् विशेषेन सिद्धान्त एव इष्ट इति तदनपराधित्वमुक्तं पठ्यते च " पत्तो नेयाउयंति " स्पष्टमिति सूत्रार्थः ॥

यस्तु कामेभ्यो निवृत्तस्तस्य गुणमाह ॥

इह कामनियत्तस्स, अत्तट्ठे नावरज्झइ ॥
पूइदेहनिरोहेणं, भवे देव त्ति मे सुयं ॥ १६ ॥

इह कामेभ्योऽपि निवृत्तस्यात्मार्थः स्वर्गादिनापराध्यति न भ्रश्यति प्रामलक्षणो यतो न सापराधो भवति किं पुनरेवं यत इति कुथितो देहोऽर्थोदौदारिकशरीरं तस्य निरोधोऽभाव इति देहनिरोधस्तेन भवेत् स्यात् प्रक्रान्तत्वात् कामनिवृत्तो देव सौधर्मादिनिवासी सुर उपलक्षणत्वात्सिद्धो वा इतीत्येवंतया धर्म्मार्चिन परमगुरुतः इति गम्यते । अनेन स्वर्गाद्यवाभिरामार्थानपराधं निमित्तमुक्तमिति सूत्रार्थः ॥

ततश्च यदसावाप्नोति तदाह ॥

इड्ढी जुई जसो वस्मो, आउं सुहमणुत्तरं ॥
भुज्जो जत्थ मणुस्सेसु, तत्थ से उववज्जइ ॥ २७ ॥

ऋद्धिः कनकादिसमुदयो, द्युतिः शरीरकान्तिः, यशः पराक्रमकृता प्रसिद्धिर्वर्णो गाम्भीर्यादिगुणैः श्लाघा गौरादिर्वा । आयुर्जीवितम्, सुखं यथेप्सितविषयावाप्तावाह्लादो, न विद्यते उत्तरं प्रधानमस्मादित्यनुत्तरमिदं च सर्व्वत्र योज्यते । भूयः पुनर्देवभवापेक्षमेतत्तत्राप्यनुत्तराण्येव तान्यस्य संभवति । यत्र येषु मनुष्येषु मनुजेषु तत्र तेषु ( सेत्ति ) स अथशब्दार्थो वा ततोऽनन्तरमुत्पद्यते जायत इति गाथार्थः । एवं कामानिवृत्त्या यस्यात्मार्थोऽपराध्यति स बाल इतरस्तु पण्डित इत्यर्थादुक्तम् । संप्रति पुनरनयोरेव साक्षात् स्वरूपं फलं चोपदर्श्योपदेशमाह ॥

बालस्स पस्स बालत्तं, अहम्मं पडिवज्जिया ॥
चेच्चा धम्मं अहम्मिट्ठे, नरएसु उववज्जइ ॥ २८ ॥
धीरस्स पस्स धीरत्तं, सव्वधम्माणुवत्तिणो ॥
चेच्चा अहम्मं धम्मिट्ठे, देवेसु उववज्जइ ॥ २९ ॥
तुलियाणबालभावं, अबालं चेव पंडिए ॥
चइऊण बालभावं, अबालं सेवए मुणी ॥ ३० ॥

बालस्याज्ञस्य पश्यावधारय बालत्वमज्ञत्वं किं तदित्याह अधर्म्मं धर्म्मविपक्षं विषयासक्तिरूपं प्रतिपद्याभ्युपगम्य पश्यते च ( पडिवज्जियत्ति ) प्रतिपादितोऽवश्यं प्रतिपद्यमानस्य त्यक्त्वाऽपहाय धर्म्मं विषयनिवृत्तिरूपं सदाचारम् । ( अहम्मिट्ठत्ति ) प्राग्वन्नरके सीमन्तकादावुपलक्षणत्वादन्यत्र वा दुर्गतावुत्पद्यते । तथा धीर्बुद्धिस्तया राजत इति धीरो बुद्धिमान् परीषहाद्यक्षोभ्यो वा धीरस्तस्य पश्य प्रेक्षस्व धीरत्वं धीरभावं सर्व्वे धर्म्मे क्षान्त्यादिरूपमनुवर्त्तते तदनुकूलाचारतया स्वीकुरुत इत्येवं शीलो यस्तस्य सर्व्वधर्म्मानुवर्त्तिनो धीरत्वमेवाह त्यक्त्वा हित्वा अधर्म्मं विषयाभिरतिरूपमसदाचारं ( धम्मिट्ठित्ति ) इष्टधर्म्मा यदि वाऽतिशयेन धर्म्मवानिति इष्ठनि विन्मतोर्लुगिति मतुब्लोपे धर्म्मिष्ठ इति देवेषूत्पद्यते । यतश्चैवमतो यद्विधेयं तदाह तोलयित्वेति प्राग्वत् । बालभावं बालत्वम् । ( अबालन्ति ) भावप्रधानत्वान्निर्देशस्यबालत्वं धीरत्वं चः समुच्चये ( एवेति ) प्राकृतत्वादनुस्वारलोप एवमनन्तरोक्तप्रकारेण पण्डितो बुद्धिमान् त्यक्त्वा बालभावं बालत्वम् ( अबालति ) अबालत्वं सेवते अनुतिष्ठति मुनिर्यतिरिति सूत्रत्रयार्थः । उत्त० ७ अ० । ( थूलं उरब्भं इह मारियाणं, उद्दिट्ठभत्तं च पगप्पएत्ता । तं लोण तेल्लेण उवक्खडेत्ता सपिप्पलीयं पगरंति मंसं " इति शाक्यमतम् । अद्दगकुमार शब्दे व्याख्यास्याम् ) उरभ्याम्, आ० म० द्वि० ।

**उरब्भपुडसण्णिभा**—उरभ्रपुटसन्निभा—स्त्री० उरभ्रऊरणस्तस्य पुटं नासापुटं तत्सन्निभा तत्सदृशी ( मेषस्येव नासायां ) " उरब्भपुडसंणिभा से नासा " । उपा० १ अ० ॥

**उरब्भरुहिर**—उरभ्ररुधिर—न० उरभ्रः ऊरणस्तस्य रुधिरम् । मेषरक्ते, तद्धि अतिशोणितं भवतीति रोहितवस्तु तेनोपमीयते । जी० ३ प्रति० ॥

**उरब्भिय**—उरभ्रिय—न० उरभ्रादिपञ्चदृष्टान्तमये सप्तमे उत्तराध्ययने, । उत्त० । ( उरब्भ शब्दे व्याख्यातम् ) ।

**औरभ्रिक**—पुं० उरभ्रा ऊरणकास्तैश्चरति यः स औरभ्रिक उरभ्रस्य ऊर्णया तन्मांसादिना वात्मानं वर्त्तयति, "उरब्भ वा अशतरं तसं पाणं हंता जाव' । सूत्र० २ श्रु० २ अ० ।

**उरय**—उरज—पुं० गुच्छभेदे । प्रज्ञा० २ पद ।

**उररी**—देशी—पशौ, दे० ना० ।

उरलदुग–औदारिकद्विक–न० औदारिकशरीरौदारिकाङ्गो-पाङ्गनाम्नो· द्विकम । औदारिकौदारिकमिश्रकाययोगयुगले, "उरलदुगकमपढमति मम णवइ केवलदुगम्मि" कर्म० ॥

उरलविणु–औदारिकविना–अव्य० (प्राकृते समास इति प्रतीयते ) औदारिकशरीरमौदारिकाङ्गोपाङ्गं च विनेत्यर्थे, " सुरदुगपणिंदिसु खगइतसनवउरलविणुनणुवंगा " कर्म० ॥

उरसिरमुहवद्धकंठतोण–उरःशिरोमुखबद्धकण्ठतोण– त्रि० उरसा वक्षसा सह शिरोमुखा ऊर्द्धमुखा यद्वा यन्त्रिता कण्ठे गले तोणास्तोणीरा· शरधयो यैस्ते उर शिरोमुखवद्धतोणा· । बद्धतुणीरे, प्रश्न० अ० ३ द्वा० ॥

उरसी–उरसी–स्त्री० गुच्छभेदे, । प्रज्ञा० १ पद ॥

उरसुत्तिया–उरःसूत्रिका–स्त्री०७ त० । मुक्ताहारे, अमरः । जं० ।

उरस्स–उरस्य–पुं० उरसैकादि० क्रू यत् । वक्षसैकदेशगते, पुत्रे च । उरसि भवम् । आन्तरे, रा० ।

उरस्सवल–उरस्यवल–न०उरसि भवमुरस्यं तच्च तद्वलं च उरस्य वलम् । आन्तरोत्साहे, । अनु० । शारीरवले च । सूत्र०१ श्रु०८अ.

उरस्सबलसमण्णागय–उरस्यवलसमन्वागत–त्रि०उरस्यवलं समन्वागत· समनुप्राप्तः । आन्तरोत्साहवीर्य्ययुक्ते, । रा० । अनु० । आ०म०प्र० ॥

उ (ओ) राल–उदार–त्रि०उत् प्रावल्येन आरो येषां ते उदाराः ऊर्द्धं गमनस्वभावेषु, प्रवलशक्तिषु च । जी०५प्रति० । रा० । ज० । आ० म० प्र० । दशा० । प्रधाने, भ० २ श० १ उ० । ज्ञा० । नि० । शोभने, सूत्र० १ श्रु० ६ अ० । अत्यद्भुते, चं० २० पाहु० " तेण उरालेण विउलेण पयत्तेण " उरालेन आशसारहिततया प्रधानेन प्रधान चाल्पमपि स्यादित्याह विपुलेन " भ० २ श० १ उ० ॥ " उग्गतवे दित्ततवे महातवे उराले घोरे घोरगुणे तवस्सी घोरवमचेरवासी" उदारः प्रधानोऽथवा उरालो भीष्मः उग्रादिविशेषणविशिष्टतप·करणत· पार्श्वस्थानामल्पसत्वानां भयानक इत्यर्थ· । सू०प्र०१ पाहु० । ज० । औ० । चं० । रा० । वि० । "उरलाहि वग्गुहि" उदाराभि· शब्दतोऽर्थतश्च । भ० २ श०१ उ० । उदाराभि सुन्दरध्वनिवर्णसयुताभि· । कल्प० । उदाराभिरुदारनादवर्णोच्चारादिमुक्ताभिः । ज्ञा० १ अ० । जं० । विस्तराले विशाले, च । स्था० ५ ठा० । शरीरभेदे, । न० । उदार प्रधान प्राधान्यं च तीर्थकरगणधरशरीरापेक्षया ततोऽन्यस्यानुत्तरसुरशरीरस्यापि अनन्तगुणहीनत्वात् । यद्वा उदारं सातिरेकयोजनसहस्रमानत्वात्तेषां शरीरापेक्षया बृहत्प्रमाण बृहता चास्य वैक्रियं प्रतिभवधारणीयसहजशरीरापेक्षया द्रष्टव्या इति व्युत्पत्ते· । कर्म० । अनु० ।

उरालचरिय–उदारचरित–त्रि० सकलप्राणिषु समभावतया उदाराशये, "उदारचरितानां तु वसुधैव कुटुम्बकम्" । पो०१४ विव ।

उरु–उरु–त्रि० उर्णु–नुलोपो ऱ्हस्वश्च । विशाले, बृहति, वाच० विस्तीर्णे, "भमरोए" भ्रमरोमावर्ता उरवो विस्तीर्णा यत्र स तथा ज्ञा० १ अ० । बहुले, निरु० । उरोर्भाव पृथ्व्या० इमनिच् उरिमन् तदभाव पक्ष त्व उरुत्व न० तल् उरुता, स्त्री० । अण् औरवम० न० तद्भावे, वाच० ।

उरुपुल्ल–देशी–अपूपे, धान्यमिश्रे च । दे० ना० ।

उरुमिल्ल–देशी–प्रेरितार्थे, दे० ना० ।

उरुसोल्ल–देशी–प्रेरितार्थे, दे० ना० ।

उरोवित्थडा–उरोविस्तृता–स्त्री० वक्षप्रदेश, " उरोवित्थडाए सिरेकणाए" गलविवरस्य वर्तुलत्वात् । उपा० २ अ० ।

उरोविसुद्ध–उरोविशुद्ध–न० गेयशुद्धिभेदे, यदि उरसि स्वरः स्वभूमिकानुसारेण विशुद्धं भवति तत् उरोविशुद्धम्, रा० ।

उल्लिअ–देशी–निकूणिताक्षे, दे० ना० ।

उलित्त–देशी–उच्चस्थिते कूपे, दे० ना० ।

उलुउंडिअ–देशी–प्रलुगिते, दे० ना० ।

उलुकसिअ–देशी–पुलकितार्थे, दे० ना० ।

उलुखंड–देशी–उल्मुके, दे० ना० ।

उलु– ( लू ) ग–उलूक–पुं० वलसमवाये उक् संप्रसारणम् ऊर्द्धकर्णः उलूकः । अनु० । सूत्र० । कौशिके, आ०म० । जातित्वात् स्त्रियां ङीप् वाच० । वैशेषिकशास्त्रप्रणेतरि कणादमुनौ च ।

दोहिं विणएहिं पिणीयं, सत्थमुलूएण वहविमिच्छत्तं ।
जं सव्वभिअप्पहाण–त्तणेण अणोरयणिक्खेक्खा ॥

द्वाभ्यामपि द्रव्यार्थिकपर्यायार्थिकनयाभ्यां प्रणीतं शास्त्रमुलूकेन वैशेषिकशास्त्रप्रमाणेत्रा द्रव्यगुणादे· पदार्थषट्कस्य नित्यैकान्तरूपस्य तत्र प्रतिपादनात् । तदेवोक्तं भगवता परमर्षिणोलूक्येन गुणो भावाद्गुणत्वमुक्तम् । सम्म० । आ० म० । विशे० । आचा० ॥ ( विसेसियशब्दे समग्रं मतम् )

उलु ( लु ) गच्छि–उलुकाक्ष–पुं० उलूको घूकस्तस्येवाक्षिणी यस्य स उलुकाक्ष । कौशिकसदृशलोचने, वृ०४ उ० । नि० चू० ( उलूकाक्षदृष्टान्तो दुट्ठशब्दे )

उलु ( लू ) गपत्तलहुय–उलूकपत्रलघुक–त्रि० उलूकपत्रवल्लघ व कौशिकपिच्छवल्लघीयसि । "उलुगपत्तलहुया पवयगुरुया ते आयरिया " । सूत्र० २ श्रु० १ अ० ॥

उलु ( लू ) गी–उलूकी– स्त्री० पोताकी प्रतिपक्षभूतायामुलूकाप्रधानायाम् परिव्राजकमथिन्यां विद्यायाम्, विशे० । आ० म०

उलुफुटीअ–देशी०विनिपाते, प्रशान्ते, दे० ना० ॥

उलुहंत–देशी०काके, दे० ना० ॥

उलुहलिय–देशी–तृप्तिरहिते, दे० ना० ।

उल्मुक–देशी०निकरे, वस्त्रे, दे० ना० ॥

उल्ल–आर्द्र–त्रि० अर्द–रक्–दीर्घश्च प्राकृते 'उदोद्वाऽऽर्द्रे' आर्द्रशब्दे आदेरात् उदोच्च वा भवत· । उल्लं । ओल्लं । पक्षे अल्लं अद्दं । प्रा० जलमिश्रिते, पिं० । अशुष्के, द० ५ अ० १ उ० । वाहुलकादीसपदेवेण उल्लेइ । ८ । २ । ८ प्रा० । प्रचुरव्यञ्जने, । "उल्लं वा जइ वा सुक्कं" । द० ५ अ० २ उ० । वर्पणे, जीत० । नि० चू० । उत्त० ।

उल्लंक–उल्लङ्क–पुं० काष्ठमये "वारके, उल्लंकओकट्ठमओ वारओ" नि० चू० १२ उ० ।

उल्लंगच्छ–आर्द्रगच्छ–पुं०स्थविरादार्य्यरोहणात्कश्यपगोत्रान्निर्गतस्य उद्देहगणस्य तृतीये गणे, । कल्प० ।

उल्लंघण–उल्लङ्घन–न० सकृल्लङ्घने, भ०१२ श०४उ० । सहजान्यातिविक्षेपान्मनागधिकतरे, पादविक्षेपे, प्रज्ञा० ३६ पद । द्वारागेहायरमकादेरूर्द्धं लङ्घने, भ० २५ श० ७ उ० । देहल्यादेरुल्लङ्घने, स्था० १० ठा० । कर्दमादीनामतिक्रमणे, उल्लङ्घयति अज्ञानिनामय वा बालाना हास्याद्यावनयकर्तृणां भावयन्स्वकीयमाचारमतिक्रामयतीति उल्लङ्घन उत्त० १७ अ० । ग० । कर्त्तरि ल्युट् बालादीनामुचितप्रतिपत्त्यर्थं करणतोऽथ कर्त्तरि, वत्समिम्भकादीनामुल्लङ्घनकर्त्तरि, " उल्लङ्घणे य चमेय, पावसमणेत्ति वुच्चइ " उत्त० १७ अ० ।

उल्लंघित्तए-उल्लङ्घयितुम्- अव्य० बाहुजङ्घादिना सकृदुल्लङ्घनेन वा पारं गन्तुमित्यर्थे, प्रनि० । भ० ८ श० ३३ उ० ( वीइव-यणशब्दे देवस्य तिर्यगुल्लङ्घनम् )

उल्लंघ-विरिचि-धा० चुरा० विरेचेरोलुण्डोल्लण्डपल्हत्था ।८।४।२६ इति विरेचेरुल्लण्डादेशः । उल्लण्डइ-विरेइ विरेचयति । प्रा० ।

उल्लंडग-उल्लण्डक- पुं० मृद्गडिकायाम्, उल्लण्डका मुद्गोलका । बृ० ४ उ० ।

उल्लंघिन-उल्लङ्घयत्- त्रि० सकृदुल्लङ्घनं कुर्वति, ज्ञा० ३ अ० ॥

उल्लंबण-उल्लम्बन-न० वृक्षशाखादावुद्बन्धने, तद्रूपे शारीरदण्डे, स० ।

उल्लगण-आर्द्रच्छगण- पुं० अशुष्कगोमये, बृ० ( आर्द्रच्छगण-दृष्टान्तो जिणकप्पियशब्दे निष्पत्तिद्वारे, स्पष्टीभविष्यति )

उल्लण-उल्वण- त्रि० उत् वणति-अच्- उत्कटे, प्रकाशान्विते, नतोन्नते, व्यक्ते, स्पष्टे, । वाच० । तीक्ष्णे, । अष्ट० । अवेद्यसंवेद्यपदं यस्मादानु तयोल्वणम् । पाक्षिच्छाया जलचर-प्रवृत्ताभ्रमतः परम् । द्वा० । आव० ।

उल्लणग-उल्वणक-न० स्नानजलार्द्रशरीरस्य रूक्षणवस्त्रे, उपा० ।

उल्लणजोग-उल्वणजोग- पुं० क० स० । खिन्नजनाचरिते वस्त्र पुष्पादिनिर्दिष्टसत्कारे, पंचा० २ विव० ॥

उल्लणियाविहि-आर्द्रनयनिकाविधि- पुं० जलार्द्रशरीरस्य जलरूक्षणविधौ, "तयाणंतरं च णं माणे उल्लणियाविहिपरिमाणं करेइ णणत्थ एगेणं गन्धकासाईए अवसेसं सव्वं उल्लणियाविहिं पच्चक्खामि "। उपा० १ अ० ( आणंदशब्दे सूत्रम् )

उल्लपडसाडिया-आर्द्रपटशाटिका-स्त्री० आर्द्रप्रावरणनिवसनयोः "उल्लपडसाडिया पुक्खरिणी पच्चुत्तरइ" उपा० २ अ० ।

उल्लभूमि-आर्द्रभूमि- स्त्री० अशुष्यन्त्यां भूमौ, "उल्लभूमीए असुक्खमाणीए" नि० चू० १ उ० ।

उल्लयट्ठीमहुय-आर्द्रयष्टिमधुक-न० आर्द्रे मधुररसवनस्पति-विशेषे. ॥ उपा० १ अ० ।

उल्लरय-देशी-रूपदांभरणे, दे० ना० ।

उल्ललिय-उल्ललित-त्रि० " नाविसएणिज्जिहिति उल्ललियं गवाए" नि० चू० १ उ० ॥

उल्लविय-उल्लपित-न० मन्मथादिजल्पने, "अंगपच्चंगसंठाणं, चारु ल्लवियपेहियं । बंभचेररओ थीणं, चक्खुगिज्झं विवज्जए" उत्त० ।

उल्लस-उल्लस्- धा० उल्लासे, हर्षजनकव्यापारे " उल्लसेरूसलोसुम्भणिल्लस पुलआअगुञ्जोल्लारोआ । ८ । ४ । २ । उल्लसेरेते षडादेशा वा भवन्ति । ऊसलइ-ऊसुम्भइ णिल्लसइ पुलआअइ गुञ्जोल्लइ । ह्रस्वत्वे तु गुञ्जुल्लइ उल्लसति, प्रा० ।

उल्लसिय-उल्लसित-त्रि० उद्-लस्-क्त- स्फुरिते, उद्गते, हृष्टे च । वाच० । मुहुमुल्लसिते भीते पच्चक्खाणे पडिक्कमामि य-गंपिद उल्लसिणेण वि ताव मिसेस इत्थि पावामो हरिसितो नि० चू० १ उ० । पुलकिनार्थे, दे० ना० ॥

उल्लार-उल्लान-पुं० प्रयत्नपादप्रहारे. ॥ न० ॥

उल्लालिय-उल्लालित-त्रि० ताडिते, आ० म० प्र० । रा० ।

उल्लालेमाण-उल्लालयत्-त्रि० ताडयति, "निस्सुत्तो उल्लाले माणे" । रा० ।

उल्लाव-उल्लाप-पुं० उद्-लप्-घञ् । काकुवर्णने यदाह । अनुमानो मुहुर्भाषः, प्रलापोऽनर्थकं वचः । काकावर्णनमुल्लापः, सलापो भाषणं मिथः । भ० ६ श० ३३ उ० । औ० । ज्ञा० स्था० । " कंदप्पो आरोहिया य उल्ला वा पयासा । सूत्र० १ श्रु० १ अ० शोकरोगादिना विकृतस्वरयुक्तवाक्ये, दुष्टवाक्ये, सूचने च, ततोऽस्त्यर्थे ठन् सूचके, त्रि० वाच० ॥

उल्लि-उल्लि-पुं० पनके, आव० ४ अ० । स्था० । आचा० ।

उल्लिहिय-उल्लिखित- उद् लिख्- क्त । घृष्टे, 'कुंभ ल्लिहियगण्डलेहा' ज्ञा० १ अ० । औ० । रा० । नि० ।

उल्ली-देशी०-तथेत्यर्थे, दे० ना० ॥

उल्लुंटिअ-देशी० संचूर्णिते, दे० ना० ॥

उल्लुक-तुड-धा. तोडने, तुडेस्तोड तुट्ट खुट्ट खुडो क्खुडो क्खलो ल्लुक्क णिलुक्क लुक्को ल्लूराः ८।४।११६। इति तुडेरुल्लुकादेशः । उल्लुकइ तुडइ तुडति । प्रा० ॥ त्रुटिते, दे० ना० ॥

उल्लुगा-उल्लुका- स्त्री० स्वनामख्यातायां नद्याम्, तदुपलक्षिते जनपदे च । उल्लुका नाम नदी तदुपलक्षितो जनपदो प्युल्लुकः । विशे० । आ० म० द्वि० । आ० क० । आ० चू० । स्था० ।

उल्लुयातीर-उल्लुकातीर- न० उल्लुकानदीतीर वर्तिनि नगरे, यतः प्रस्थितस्योल्लुकानदीमुत्तरतो गङ्गाचार्यस्य युगपच्छीतोष्णावेदनाद्वयमनुभवतो द्वैक्रियबुद्धिर्जाता ततो द्वैक्रियनिह्नवा उत्पन्नाः । उत्त० ३ अ० । स्था० । आ० म० द्वि० । विशे० ।

तएणं समणे भगवं महावीरे अण्णया कयावि रायगिहाओ णयराओ गुणसिलाओ चेइयाओ पडिणिक्खमइ पडिणिक्खमइत्ता बहिया जणवयविहारं विहरइ तेणं कालेणं तेणं समएणं उल्लुयातीरे णामं णयरे होत्था । वण्णओ तस्स णं उल्लुयातीरस्स णयरस्स बहिया उत्तरपुरच्छिमे दिसीभाए एत्थणं एगजंबुए णामं चेइए होत्था । वण्णओ तस्स णं तएणं समणे भगवं महावीरे अण्णया कयावि पुव्वाणुपुव्विं चरमाणे जाव एगजंबुए समोसढे जाव परिसा पडिगया भंतेत्ति । भ० १६ श० ३ उ० ।

उल्लुरुह-देशी० लघुशङ्खे, दे० ना० ।

उल्लुह-निर्-सृ धा. बहिर्गमने, धातवोऽर्थान्तरेऽपि ८।४।२५८। इति नि सरतेरुल्लुहादेशः । उल्लुहइ, निःसरति । प्रा० ।

उल्लूढो-देशी० अङ्कुरिते, दे० ना० ॥

उल्लेव-देशी० हासे, दे० ना० ॥

उल्लेवण-देशी० घृते, दे० ना० ॥

उल्लोढ़रू-देशी० लम्पटे, दे० ना० ॥

उल्लोइय-उल्लोचित-न० कुड्यानामालस्य च सेटिकादिभिः समृष्टीकरणे, यथाऽत्र 'लाइ उल्लोइय महियं' ज्ञा० १ अ० । औ० जं० । स० । नि० । जी० । क० । प्रज्ञा० ॥

उल्लोय-उल्लोक-पुं० उपरितनभागे, जी० ३ प्रति० । रा० । जं० । कल्प० । चं० । मनागालोके च । ज० १ वक्ष० ।

उल्लोच- पुं० ऊर्ध्वं लोच्यते उद् लोच कर्मणि घञ् । निश्राया से दरकत्वात न कुल्वम् । उपरितले च । भ० १४ श० ६ उ० । कल्प० । विताने, दे० ना० ॥

उल्लोयतल-उल्लोकतल-न० उपरितनभागे, । ज्ञा० १ अ० ।

उल्लोयमेताग-उल्लोकमात्र-न० यावता भवतो मनाक् कालविभागरूप आलोको भवति तावन्मात्रके, । जो० १ पाहु० ॥

उल्लोयवएणग-उल्लोकवर्णक-पुं० प्रासादस्योपरिभागवर्णके,॥ स चैवम् "तस्स णं पासायवर्डिसगस्स इमेयारूवे उल्लोए पण्णत्ते पउमलयभित्तिचित्ते जाव सव्वतवणिज्जमए अच्छे जाव पडिरूवे" ॥ जं० २ श० ८ उ० ॥

उल्लोल-देशी-शत्रौ, दे० ना० ।

उल्लोलंत-उल्लोलयत्-त्रि० शरीरापवर्त्तनं कुर्वाणे, "उल्लोलतं वा साइज्जइ" । नि० चू० १७ उ० । आचा० ।

उव-उप-अव्य० वप् क० सामीप्ये, "उवदंसिया भगवया पण्णवणा सव्वभावाण" उपसामीप्येन यया श्रोतृणां झटिति यथा वस्थितवस्तुतत्त्वावबोधो भवति तथा स्फुटवचनैरित्यर्थः — दर्शिता श्रवणगोचरं नीता उपदिष्टा इत्यर्थः । प्रज्ञा० १ पद व्यत्त० । आचा० । प्रव० । सूत्र । आ० म० प्र० । जं० । सामस्त्ये,॥ रा०। सादृश्ये, उपशब्द उपमेति यत् सादृश्येऽपि दृश्यते, उत्त०३ अ०। सकृदर्थे, अन्तरर्थे, आव०४ अ०। अधिकार्थहीने, आसन्ने, प्रतिपन्ने, सतो गुणान्तराधाने, व्याप्तौ, पूजायाम्, शक्तौ, आरम्भे, दाने, दोषाख्याने, आचार्यकरणे, अत्यये निदर्शने, वाच० ॥

उवइय-उपचित-त्रि० उप० चि क्त० । उन्नते, औ०॥ लेपनादिना वर्द्धिष्णौ, निदिग्धे, अमर० । समाहिते, हेम० । सञ्चिते, च । वाच० ॥

उवइया-उपचिता-स्त्री० कुड्यादौ सञ्चरणशीले त्रीन्द्रियजीवभेदे । बृ० ७ उ० । जी० ॥

उवउज्ज-उपयुज्य-अव्य० उपयोगं कृत्वेत्यर्थे, दीहादिदारा उवउज्ज ज जुज्जति जोएयव्वं । नि० चू० १ उ० ॥

उवउत्त-उपयुक्त-त्रि० उप-युज-क्त । दत्तावधाने, जीत० । पंचा० । सावधाने, पंचा०५ विव० उद्यते, आतु०। अप्रमत्ते, नि०चू०१ उ०। उपयोगवति, विपा०२अ०। "दंसणनाणोवउत्ता" औ० । ज्ञेयप्रत्याख्येयविषयज्ञानप्रत्याख्यानपरिणामे, आ० म० द्वि० । विशे० । न्याय्ये, रचिते, भुक्ते च । वाच० ॥

उवएस-उपदेस-पु० उप-दिश्-घञ् । उपदेशनमुपदेश कथने, । न० । भणने, प्ररूपणे, । विशे० । आ० म० प्र० । प्रज्ञापनायाम्, । बृ०१ उ०। सूत्रानु सारेण कथने, । आव०४ अ०। हेयोपादेयोपेक्षणीयार्थेषु हानोपादानोपेक्षणीयभणने, । दर्श० । वर्तने, पचा०२ विव०। अन्यतरक्रियायां प्रवर्तनेच्छाकरणे, । अनु० ॥ न च हितोपदेशादपरः पारमार्थिकः परार्थ तथा चार्यम् । रूसओ वा परो मा वा, विस वा परियत्तओ । भासियव्वाहिया भासा, सपक्खगुणकारिया ॥१॥ स्या० । उवाच वाचकमुख्य । न भवति धर्मः श्रोतुः सर्वस्यैकान्ततो हितश्रवणात् । ब्रुवतोऽनुग्रहबुद्ध्या वक्तुस्त्वेकान्ततो भवति ॥ उपदेशो हि मूर्खाणां, प्रकोपाय न शान्तये । पय:पानं भुजङ्गानां, केवलं विषवर्द्धनमिति । पचा०१२ विव०।(धम्मकहा शब्दे विस्तरत उपदेशप्रकारो वक्ष्यते उचिय पवित्ति शब्दे वर्जयदेनेकोपघातकारकम् इत्याद्युक्तम् ) श्राद्धकादिकुलाख्याने, आव ४ अ० । उपदिश्यत इत्युपदेश: उपदेष्टुमिष्ट वस्तुविशेषे, ॥ भूयो भूय उपदेश इति भूयो भूय पुन: पुनरुपदिश्यत इत्युपदेश उपदेष्टुमिष्टवस्तुविषय: कथंचिदनवगमे सति कार्ये किं न क्रियते दृढसन्निपातरोगिणां पुन: पुन: क्रियातिकादिक्वाथपानोपचार इति । ध० १ अधि० । गुरूणांशिक्षावाक्ये, "तहियाणंतु भासणं सब्भावे उवएसणं" उत्त० २८ अ० । प्रत्युपेक्षणाप्रस्फोटनाक्रियायाम्, नि० चू० १ उ० । दर्शने, शास्त्रे, आचा० १ श्रु० ३ अ० ४ उ० ॥

उवएसग-उपदेशक-त्रि० उप-दिश्-एवुल्-उपदेशकर्तारि, "हिआणं पुव्वसंजोगं सिया किच्चोवएसगा" सूत्र० १श्रु० १अ०॥

उवए(दे)सण-उपदेशन-न० उपदिश्यत इत्युपदेशनम् । उपदेशनक्रियाया व्याप्ये, उपलक्षणत्वादस्या: क्रियाया: व्याप्ये कर्मणि, "विइया उवएसणे" उपदेशने कर्मणि द्वितीया यथा भण इमं श्लोकं कुरु वा तं ददाति तं य ति ग्रामम् । स्था०७ठा०॥

उवए(दे)सणा-उपदेशना-स्त्री० कथनायाम्, "पंचविधपयत्थोवदेसणया" । विशे० ॥

उवएसमाला-उपदेशमाला-स्त्री० स्वनामख्याते ग्रन्थभेदे, ग० १ अधि० । तथा कश्चित्परपक्षी प्रार्थनां करोति तदर्थमुपदेशमालागाथावलोकने दूषणं लगति नवेति प्रश्नः यदि स निष्कपटतया प्रार्थनां करोति तदर्थमुपदेशमालागाथावलोकने सर्वथा दूषण ज्ञातं नास्ति इति । सेन० ४ उल्ला० १३५ प्र० ॥

उवएसरयणकोस-उपदेशरत्नकोश-पु० उपदेशा हेयोपादेयोपेक्षणीयार्थेषु हानोपादानोपेक्षणीयभणनानि त एव रत्नानि तेषां कोश एव भण्डारवदुपदेशरत्नकोशः । दर्शनशुद्धिनामके ग्रन्थे, दर्श० ॥

उवएसरयणागर-उपदेशरत्नाकर-पुं० स्वनामख्याते ग्रन्थभेदे, यत उपदेशरत्नाकरे सम्यक्त्वाणुव्रतादि श्राद्धधर्मरहिता नमस्कारगुणा जिनार्चनचन्दनाभिग्रहमृते । ध० २ अधि०॥

उवएसरुइ-उपदेशरुचि-पु० क० स० साधूपदेशात्तत्त्वश्रद्धाने, ग०१अधि०। परोपदेशप्रयुक्ते जीवाजीवादिपदार्थविषयिकश्रद्धाने, सम्यक्त्वभेदे च । ध०२ अधि । उपदेशो गुर्वादिना वस्तुतत्त्वकथनं तेन रुचिर्जिनप्रणीततत्त्वाभिलाषरूपा यस्य स उपदेशरुचि । स्था २ ठा०। यो हि जिनोक्तानेव जीवादीनर्थान् तीर्थकरतच्छिष्यादिनोपदिष्टान् श्रद्धत्ते तस्मिन् । दर्शनार्य्यभेदे, स्था० १० ठा० । उत्त० ।

तस्य स्वरूपं यथा ।

एए चेव उ भावे, उवइट्ठे जो परेण न सद्दहइ ।
छउमत्थेण जिणेण व, उवएसरुइत्ति नायव्वा ॥ ६७॥

एतांश्चैवानन्तरोक्तांस्तु पूरणे भावान् जीवादीनुपदिष्टान् कथितान् परेणान्येन न श्रद्दधाति न तथेति प्रतिपद्यते । कीदृशा परेण छादयतीति छद्म घातिकर्मचतुष्टयं तत्र तिष्ठति छद्मस्थोऽनुत्पन्नकेवलस्तेन जयति रागादीनि जिनस्तेन चोत्पन्नकेवलज्ञानेन तीर्थकृदादिना छद्मस्थस्य प्रागुपन्यासस्तत्पूर्वकत्वाज्जिनस्य प्राचुर्येण वा तथाविधोपदेष्टॄणां स ईदृक्किमित्याह उपदेशरुचिरिति ज्ञातव्य: । प्रव० १७० द्वा० ॥

उवएसलद्ध-उपदेशलब्ध-त्रि०लब्धोपदेशे, "इय उवएसं लद्धा इयविधाण पत्ता" उपा० ३ अ० ।

उवएसिय-उपदेशित-त्रि-उपदिष्टे 'सामाइयणिज्जुत्त,वोच्छं उवएसियं गुरुजणेण । आयरियपरंपरएण आगय आणुपुव्वीए' विशे०

उवओग-उपयोग-पु० उपयोजनमुपयोग भावे घञ् । उपयुज्यते वस्तुपरिच्छेदं प्रति व्यापार्यते जीवोऽनेनेत्युपयोग । पुंनाम्नि करणे घञ् प्रत्यय । उपयुज्यते वस्तु परिच्छेदं प्रति व्यापार्यत इत्युपयोगः कर्मणि घञ् । बोधरूपे जीवस्य तत्त्वभूते व्यापारे, प्रज्ञा० ७७ पद । कल्प० । प्रव० । आव० । दर्श० । स्था० । उपयोगो ज्ञानं संवेदन प्रत्यय इति पर्यायाः । विशे० । अनु० ।

उपयोगभेदाः ।

कतिविहेणं भंते उवओगे पण्णत्ते ? गोयमा ! दुविहे उवओ-

गे पण्णत्ते तंजहा सागारोवओगे य अणागारोवओगे य ॥

कतिविधः कतिप्रकारः सूत्रे एकारो मागधभाषालक्षणवशात् एमिति वाक्यालङ्कृतौ भदन्त परमकल्याणयोगिन् उपयोग उपयोजनमुपयोगो भावे घञ् यद्वा उपयुज्यते वस्तुपरिच्छेदं प्रति व्यापार्यते जीवोऽनेनेत्युपयोगः पुन्नाम्नि करणे घञ् प्रत्ययो बोधरूपो जीवस्य तत्त्वभूतो व्यापारः प्रज्ञप्तः प्रतिपादितः भगवानाह गोयमेत्यादि ॥ आकारप्रतिनियतो ग्रहणपरिणामः "आगारोऽविसेसो" इति वचनात् सह आकारेण वर्तत इति साकारः स चासावुपयोगश्च साकारोपयोगः। किमुक्तं भवति। सचेतने अचेतने वा वस्तुनि उपयुञ्जान आत्मा यदा सपर्यायमेव वस्तु परिच्छिनत्ति तदा स उपयोगः साकार उच्यते इति। स च कालतः छद्मस्थानामन्तर्मुहूर्तं कालं केवलिनामेकसामायिकः। तथा न विद्यते यथोक्तरूप आकारो यत्र सोऽनाकारः स चासावुपयोगश्चानाकारोपयोगः। यत्तु वस्तुनः सामान्यरूपतया परिच्छेदः सोऽनाकारोपयोगः स्कन्धावारोपयोगवदित्यर्थः। असावपि छद्मस्थानामान्तर्मौहूर्त्तिकः परमनाकारोपयोगकालात्साकारोपयोगकालः संख्येयगुणः प्रतिपत्तव्यः पर्यायपरिच्छेदकतया चिरकाललगनात् छद्मस्थानां तथास्वाभाव्यात्। केवलिनां त्वनाकारोपयोग एकसामायिकः चशब्दौ स्वगतानेकभेदसूचकौ।

तत्र साकारोपयोगभेदानभिधित्सुरिदमाह ॥

सागारोवओगेणं भंते ! कतिविहे पण्णत्ते ? गोयमा ! अट्ठविहे पण्णत्ते, तंजहा आभिणिबोहियनाणसागारोवओगे सुयनाणसागारोवओगे, ओहिनाणमणपज्जवसागारोवओगे केवलनाणसागारोवओगे य। मतिअन्नाणसागारोवओगे सुयअन्नाणसागारोवओगे विभंगनाणसागारोवओगे य ॥

अर्थाभिमुखो नियतः प्रतिस्वरूपको बोधो बोधविशेषोऽभिनिबोधः। अभिनिबोध एव आभिनिबोधिकम्। अभिनिबोधशब्दस्य विनयादिपाठाभ्युपगमात् विनयादिभ्य इत्यनेन स्वार्थे इकण् प्रत्ययः। अनिवर्त्तन्ते स्वार्थे प्रत्ययकाः प्रकृतिलिङ्गवचनानीति वचनात्तत्र नपुंसकता यथा विनय एव वैनयिकमित्यत्र। अथवा अभिनिबुध्यते असादस्मिन् वेति अभिनिबोधस्तदावरणकर्मक्षयोपशमस्तेन निर्वृत्तमाभिनिबोधिकं तच्च तज्ज्ञानं चाभिनिबोधिकज्ञानम्। इन्द्रियमनोनिमित्तो योग्यप्रदेशावस्थित वस्तुविषयः स्फुटप्रतिभासो बोधविशेष इत्यर्थः। सचासौ साकारोपयोगश्च आभिनिबोधिकज्ञानसाकारोपयोगः। एवं सर्वत्रापि समासः कर्त्तव्यः। तथा श्रवणं श्रुतं वाच्यवाचकभावपुरस्सरीकारेण शब्दसंसृष्टार्थग्रहणहेतुरुपलब्धिविशेषः एवमाकारं वस्तु घटशब्दवाच्यं जलधारणाद्यर्थक्रियासमर्थमित्यादिरूपतया प्रधानीकृतः समानपरिणामः शब्दार्थपर्यालोचनानुसारी इन्द्रियमनोनिमित्तोऽवगमविशेष इत्यर्थः। श्रुतं च तज्ज्ञानं च श्रुतज्ञानं ततो भूयः साकारोपयोगशब्देन विशेषणसमासः तथाऽवधिशब्दोऽत्र मर्यादार्थः। अव अधो विस्तृतं वस्तु धीयते परिच्छिद्यतेऽनेनेत्यवधिः। यद्वा अवधिः मर्यादा रूपिष्वेव द्रव्येषु परिच्छेदकतया प्रवृत्तिरूपा तदुपलक्षितं ज्ञानमप्यवधिः। अवधिश्चासौ ज्ञानं चावधिज्ञानम्। तथा परि सर्वतो भावे अयनं अयः तुदादिभ्योऽन् इति [illegible] गमनमिति पर्यायः। परि अय पर्ययः मनसि मनसो वा पर्ययो मनःपर्ययः सर्वतस्तत्परिच्छेद इत्यर्थः। पाठान्तरं पर्यय इति तत्र पर्ययणं पर्यवः मनसि मनसो वा पर्यवः मनःपर्यवः। सर्वतस्तत्परिच्छेद इत्यर्थः। स चासौ ज्ञानं मनःपर्ययज्ञानं मनःपर्यवज्ञानं वा। अथवा मनःपर्यायेति पाठान्तरं तत्र मनांसि पर्येति सर्वात्मना परिच्छिनत्ति मनःपर्यायं कर्मण्यण्। मनःपर्यायं च तत् ज्ञानं मनःपर्यायज्ञानं यदि वा मनसः पर्याया मनःपर्यायाः। पर्याया धर्मा बाह्यवस्त्वालोचनप्रकारा इत्यनर्थान्तरं तेषु तेषां वा संबन्धिज्ञानं मनःपर्यायज्ञानमिदं चार्द्धतृतीयद्वीपसमुद्रान्तवर्त्तिसंज्ञिमनोगतद्रव्यालम्बनम्। तथा केवलमेकं मत्यादिज्ञाननिरपेक्षत्वात् "नट्ठम्मि उ छाउमत्थिए नाणे" इति वचनात् शुद्धं वा केवलं तदावरणमलकलङ्कविगमात्। सकलं वा केवलं प्रथमत एवाशेषतदावरणविगमतः संपूर्णोत्पत्तेः। असाधारणं वा केवलमनन्यसदृशत्वात्। अनन्तं वा केवलं ज्ञेयानन्तत्वात्। केवलं च तत् ज्ञानं तथा मतिश्रुतावधय एव यदा मिथ्यात्वकलुषिता भवन्ति तदा यथाक्रमं मत्यज्ञानश्रुताज्ञानविभङ्गज्ञानव्यपदेशांल्लभन्ते। उक्तं च 'आद्यत्रयमज्ञानमपि भवति मिथ्यात्वसंयुक्तमिति। विभङ्ग इति विपरीतो भङ्गः परिच्छित्तिप्रकारो यस्य तद्विभङ्गं तच्च तत् ज्ञानं च विभङ्गज्ञानं सर्वत्रापि च साकारोपयोगशब्देन विशेषणसमासः ॥

॥ अनाकारोपयोगभेदानभिधित्सुराह ॥

अणागारोवओगेणं भंते ! कइविहे पण्णत्ते ? गोयमा ! चउव्विहे पण्णत्ते, तंजहा चक्खुदंसणअणागारोवओगे, अचक्खुदंसणअणागारोवओगे, ओहिदंसणअणागारोवओगे केवलदंसणअणागारोवओगे ।

तत्र चक्षुषा चक्षुरिन्द्रियेण दर्शनं रूपसामान्यग्रहणं च चक्षुर्दर्शनं तच्च तत् अनाकारोपयोगः। अचक्षुषा चक्षुर्वर्जशेषेन्द्रियमनोभिर्दर्शनं स्वस्वविषये सामान्यग्रहणमचक्षुर्दर्शनम्। ततोऽनाकारोपयोगशब्देन विशेषणसमासः। एवमुत्तरत्रापि अवधिरेव रूपिदर्शनं सामान्यग्रहणमवधिदर्शनं केवलमिव सकलजगद्भाविसमस्तवस्तुसामान्यपरिच्छेदरूपं दर्शनं केवलदर्शनम्। अथ मनःपर्यायदर्शनमपि कस्मान्न भवति येन पञ्चमोऽनाकारोपयोगो न भवतीति चेदुच्यते मनःपर्यायविषयं हि ज्ञानं मनसा पर्यायानेव विविक्तान् गृह्णत् कचिदुपजायते पर्यायाश्च विशेषा विशेषालम्बनं च ज्ञानं ज्ञानमेव न दर्शनमिति मनःपर्यायदर्शनाभावस्तदभावाच्च पञ्चमानाकारोपयोगासम्भव इति ( एवं जीवाणमित्यादि ) एवं निर्विशेषेणोपयोगवत् जीवानामनुपयोगो द्विविधः प्रज्ञप्तो भणितव्यस्तत्रापि साकारोपयोगोऽष्टविधोऽनाकारोपयोगश्चतुर्विधः। एतदुक्तं भवति। यथा प्राक् जीवपदरहितमुपयोगसूत्रं सामान्यत उक्तं तथा जीवपदसहितमपि भणितव्यं तद्यथा "जीवाणं भंते ! कतिविहे उवओगे पण्णत्ते ? गोयमा ! दुविहे उवओगे पण्णत्ते तंजहा सागारोवओगे य अणागारोवओगे य जीवाणं भंते ! कतिविहे उवओगे पण्णत्ते? गोयमा! दुविहे उवओगे अट्ठविहे पण्णत्ते तंजहा इत्यादि" तदेव सामान्यतो जीवानामुपयोगश्चिन्तितः। प्रज्ञा० २८ पद। भ०। प्रव० ॥

उपयोगः साकारानाकारद्वयात्मकः प्रमाणमितरथाऽप्रमाणम् ॥ उपयोगः परस्परसव्यपेक्षसामान्यविशेषग्रहणप्रवृत्तदर्शनज्ञानस्वरूपद्वयात्मकः प्रमाणं दर्शनाज्ञानैकान्तरूपस्त्वप्रमाणमिति दर्शयितुं प्रकरणमारभमाणो द्रव्यार्थिकपर्यायार्थिकाभिमतप्रत्येकदर्शनज्ञानस्वरूपप्रतिपादकगाथामाहाचार्यः।

जं सामण्णग्गहणं, दंसणमेयं विसेसियं णाणं ।
दोण्ह वि णयाण एसो, पाडेक्कं अत्थपज्जाओ ॥

द्रव्यास्तिकस्य सामान्यमेव वस्तु तदेव गृह्यते अनेनेति ग्रहणं

दर्शनमेतदुच्यते पर्यायास्तिकस्य तु विशेष एव वस्तु स एव गृह्यते येन तज्ज्ञानमभीयते ग्रहण विशेषितमिति विशेषग्रहण-मित्यभिप्राययोरप्यनयोर्नययोरेक प्रत्येकमर्थपर्यायोऽर्थविषयं पर्येत्यवगच्छति य सोऽर्थपर्याय ईदृग्भूतार्थग्राहकत्वमित्यर्थः । उपयोगस्य चानाकारसाकारस्ते सामान्यविशेषग्राहके एते चत्वा रस्तत्राभिधीयते नविद्यमान आकारो भेदो ग्राह्यस्यास्येत्यनाकारो-दर्शनमुच्यते सहाकारैर्ग्राह्यभेदैर्वर्त्तते यद्ग्राहक तत्साकार ज्ञान-मित्युच्यते । अनाकारसाकारोपयोगौ तूपसर्जनीकृततदितरा-कारौ स्वविभासकत्वेन प्रवर्त्तमानौ प्रमाण नतु निरस्तेतराकारौ तयाभूतवस्तुविषयाभावेन निर्विषयतया प्रमाणत्वानुपपत्तेरित-रांशविकलैकांशरूपोपयोगसत्तानुपपत्तेश्च तेनैकान्तवाद्यभ्युपग-मो बोधमात्र प्रमाण साकारो बोधोऽनधिगतार्थाधिगन्तृत्वविशि-ष्ट स एव ज्ञातृव्यापारोऽर्थदृष्टताख्यफलानुमेयोऽसवेदनाख्यफ-लानुमेयो वाऽनधिगतार्थो विगत इन्द्रियादि सपाद्यो व्यभिचारा दिविशेषणविशिष्टार्थोपलब्धिजनिका सामग्री तदेकदेशो वा बोधरूपो वा साधकत्वात्प्रमाणमित्यादिरूपोऽयुक्त । निराकारस्य केवलबोधरूपस्य ज्ञानस्यैव प्रामाण्यमिति विज्ञानवादिनोऽन्ये च स्वस्वस्थाने स्वस्वमतमुद्भाव्य परास्ता भविष्यन्ति । सम्म० । ( तदेतत्समतितर्कत एव विज्ञेयमिहापि यथावसरं किञ्चिद्वक्ष्ये ) सामान्यविशेषात्मके च प्रमाणप्रमेयरूपे वस्तुतत्व व्यव-स्थिते द्रव्यास्तिकस्यालोचनमात्रं विशेषाकारत्यागिदर्शनं य-त्तत्सत्यमितरस्य तु विशेषाकारसामान्याकाररहित यज्ज्ञान तदिव पारमार्थिकमभिप्रेत प्रत्येकमेषोऽर्थपर्याय इति वचनात् प्रमाण तु द्रव्यपर्यायौ दर्शनज्ञानस्वरूपावन्योऽन्यावनिर्भागव-र्तिनाविति दर्शयन्नाह ।

दव्वट्ठिओ वि होऊण, दंसणे पज्जवट्ठिओ होइ ।
उवसमिआई भावं, पडुच्च णाणे उ विवरीयं ॥

अस्यास्तात्पर्यार्थः दर्शनेऽपि विशेषांशो न निवृत्तो नापि ज्ञाने सामान्यांश इति द्रव्यास्तिकोऽपीति आत्मा द्रव्यार्थरूपः स भूत्वा दर्शने सामान्यात्मके स ह्यात्मा चेतनालोकमात्रस्व-भावो भूत्वा तदैव पर्यायास्तिको विशेषकरोऽपि भवति यदा हि विशेषरूपतयाऽऽत्मा सपद्यते तदा सामान्यस्वभाव परित्यजन्नेव विशेषाकारश्च विशेषावगमस्वभाव ज्ञान दर्शने सामान्यपर्यालोचने प्रवृत्तोऽप्युपात्तज्ञानाकारो न हि विशि-ष्टेन रूपेण विना सामान्य संभवति एतदेवाह औपशमि-कादिभाव प्रतीत्येति औपशमिकक्षायिकक्षायोपशमिकादीन् भा-वान् अपेक्ष्य विशेषरूपत्वेन ज्ञानस्वभावात् वैपरीत्य सा-मान्यरूपतां प्रतिपद्यते विशेषरूप सन् स एव सामान्यरू-पोऽपि भवति न ह्यस्ति सामान्य विशेषविकलं वस्तुत्वात् शिवकादिविकलमृत्स्ववत् विशेषा वा सामान्यविकला न सन्ति असामान्यत्वात् मृत्सरहितशिवकादिवदत्र च सामान्यविशेषा-त्मके प्रमेयवस्तुनि तद्ग्राहि प्रमाणमपि दर्शनज्ञानरूप तथाऽपि छद्मस्थोपयोगस्वाभाव्यात् कदाचिज्ज्ञानोपसर्जनो दर्शनोप-योग कदाचित्तु दर्शनोपसर्जनो ज्ञानोपयोग इति क्रमेण द-र्शनज्ञानोपयोगौ । क्षायिके तु ज्ञानदर्शने युगपद्वर्तिदीपमिति द-र्शयन्नाह सूरिः ।

मणपज्जवणाणस्स य, दरिसणस्स य विसेसो य ।
केवलणाणं पुण दं-सणंति नाणंति य समाणं ॥

मन पर्यायज्ञान मन पर्यवसान यस्याविश्लेषस्य स त-थोक्त ज्ञानस्य च दर्शनस्य च विश्लेषः पृथग्भाव मत्यादिषु चतुर्षु ज्ञानदर्शनोपयोगौ क्रमेण भवत इति यावत् । तथा हि चक्षुरचक्षुरवधिज्ञानानि चक्षुरचक्षुरवधिदर्शनेभ्य पृथक्कालानि छद्मस्थोपयोगात्मकज्ञानत्वात् श्रुतमन पर्यायज्ञानवत वाक्यार्थविशेषविषय श्रुतज्ञान मनोद्रव्यविशेषालम्बनं च मन पर्यायज्ञानमेतद्द्वयमप्यदर्शनस्वभाव मत्यवधिज्ञानदर्शनोप-योगात् भिन्नकाल सिद्ध केवलज्ञान पुन केवलाख्यो बोधो दर्शनमिति चाज्ञानमिति वाऽन्यत्केवल तत्समानकालं द्व-यमपि युगपदेवेति भाव' ॥ सम्म० । ( अत्र बहु वक्तव्य तच्च ग्रन्थविस्तरभयान्नोच्यते किंतु विशेषजिज्ञासुना सम्मतितर्कत एव समवलोकनीयम ) सिद्धः साकारोपयोग एव सिध्य-तीति केवलस्य साकारत्वात् यौगपद्यम । कथ पुनरसौ सा-कारोपयोग एव सिध्यतीत्याह ।

सव्वाओ लद्धीओ, जं सागारोवओगलाभाओ ।
तेणेह सिद्धलद्धी, उप्पज्जइ तदुवउत्तस्स ॥

प्रतीतार्थैव । एतच्च साकारोपयोगवर्तमान सिध्यतीति विशे-षेण प्रज्ञापनायां विहितम् । अनेन चात्र केवलसाकारोपयोगे ये विप्रतिपद्यन्ते साकारानाकारोपयोगयोः सिद्धस्य युगपदभ्युप-गमात्ते निरस्ताः अत एवाह ।

एवं च गम्मइ धुवं, तरतमजोगोवओगया तस्स ।
जुगवोवओगभावे, साकारविसेसणमजुत्तं ॥

एवं च साकारोपयोगविशेषणाद्गम्यते किमत आह । ध्रुव नि-श्चित तरतमयोगोपयोगता सिद्धस्य अन्यस्मिन्काले तस्य सा-कारोपयोगोऽन्यत्र चानाकारोपयोग इति । अन्यथा बाधामाह । युगपदुपयोगभावे साकारविशेषण प्रज्ञापनोक्तमयुक्तमेव स्या-दिति । अत्र परमतमाशङ्क्यपरिहरन्नाह ।

अहव मई सव्वं चि य, सागारं मे तओ अदोसो त्ति ।
नाणंति दंसणंति य, न विसेसो तं च नो जम्हा ॥
सागारमणागारं, लक्खणमेयंति भणियमिह चेव ।
तह नाणदंसणाइं, समए वीसुं पसिद्धाइं ॥

अथ मति परस्य सर्वमेव (से) तस्य सिद्धस्य ज्ञान दर्शन वा साकार तत साकारोपयोगविशेषणे अदोष एव स्वरूपविशे-षणत्वात्तस्य । यदपि केवलज्ञान केवलदर्शन च तस्योच्यते त-स्यापि तयोर्निर्विशेष इत्यभिप्रायवता प्रोक्त स्तुतिकारेण एव कल्पितभेदमप्रतिहत सर्वज्ञतालाञ्छन सर्वेषां तमसा निहन्तृ-जगतामालोकन शाश्वत नित्य पश्यति बुध्यते च युगपन्नानावि-धानि प्रभास्थित्युत्पत्तिविनाशवन्ति विमलद्रव्याणि तत्केवल तच्च न युक्त यस्मात्साकारमनाकार च लक्षण सिद्धानामितोहै-व पुरतो भणित वर्तते यद्वक्ष्यति "असरीरा जीवघणा, उवउत्ता दसणेय नाणे य । सागारमणागार, लक्खणमेयं तु सिद्धाण " इति । तदनयो साकारनाकारलक्षणयोर्भेदनोक्तत्वान्कयमुच्यते स-र्वमेव तस्य साकारमिति भाव' । तथा समये सिद्धान्ते विष्वक्पृथ-क्त्वेन ज्ञानदर्शने सिद्धाना तेषु तेषु स्थानेषु प्रसिद्धे अत कथं तयोरविशेष उच्यत इति हृदयम् ।

तदविशेषे हि बहवो दोषा के इत्याह ।

पत्तेयावरणत्तं, इहरा बारसविहोवओगो य ।
नाणं पंचवियप्पं, चउव्विहं दंसणं कत्तो ॥

इतरथा केवलज्ञानदर्शनयोरैक्ये प्रत्येकावरणत्व केवलज्ञाना-वरणकेवलदर्शनावरण चेति प्रत्येकमावरण तयो कुतो घटते नह्येकस्य द्वे आवरणे युज्येते तत प्रत्येकावरणनिर्देशात्केवलज्ञान-दर्शनयोर्भेद एवेति भाव । तथा साकाराऽष्टधा अनाकारस्तु च-

तुर्भेदैर्वं यो द्वादशविधोपयोग अनेऽभिहितो यच्च ज्ञानं पञ्चविधं दर्शनं चतुर्विधं प्रोक्तं तदेतत्सर्वमपि केवलज्ञानदर्शनयोरेकत्वे कुत उपपद्यते न कुतश्चिदिति । अपिच-

जणियमिहेव य केवल-नाणुवउत्ता मुणंति सव्वंति ।

पासंति सव्वओत्ति य, केवल दिट्ठीहिणंताहिं ॥

इहैव पुरतो भणितं केवलज्ञानोपयुक्ता सिद्धा सर्वे ( मुणंति ) जानन्ति तथा पश्यन्ति च सर्वतः केवलदर्शनदृष्टिभिरनन्ताभिर्यद्वच्यति " केवलनाणुवउत्ता, जाणंती सव्वभावगुणभावे । पासंति सव्वओ खलु, केवलदिट्ठीहिणंताहिमिति " तस्मान्नैनयोरेकत्वमितिभाव ।

पुनरपि पर. प्राह ।

आह परोत्तावम्मि, उवउत्ता दंसणे य नाणे य ।

जणियंतो जुगवंतो, णणु चणियमिणं पि तं सुणसु ॥

आह परो नन्वपृथग्भावेऽपि केवलज्ञानदर्शनयोर्न दोषो यत. "असरीरा जीवघणा उवउत्ता दंसणे य नाणे य" इत्यत्र दर्शने च ज्ञाने च युगपदुपयुक्ता इति भणितं ततो युगपदेव केवलज्ञानदर्शनोपयोग. सिद्ध. । सूरिराह । ननु यदि भणितेनार्थसिद्धिस्तव तर्हीदमपि भणितं वर्तते तच्छृणु किंपुनस्तदित्याह ॥

नाणम्मि दंसणम्मि य, वत्तेगयरम्मि उवउत्ता ।

सव्वस्स केवलिस्स, जुगवदो नत्थि उवओगा ॥

एतदिहैव व्यक्तं पुरस्ताद्वच्यति ततोऽस्यां गाथायां भद्रबाहुस्वामिभिर्व्यक्तेऽपि युगपदुपयोगे निषिद्धे किमिति तद्यौगपद्याभिमानोऽद्यापि न त्यज्यत इति भावः। अत्र परस्य व्याख्यान्तरकल्पनामाशङ्क्य परिहरन्नाह ॥

अह सव्वस्सेव न के-वलिस्स दो किं तु कस्सइ हवेज्ज ।

सो य जिणो सिद्धो वा, तं च न सिद्धाहिगाराउ ॥

अथैवं व्याख्यायते परेण सर्वस्यैव केवलिनो न युगपद्द्वावुपयोगौ किंतु कस्यापि द्वौ भवेतां कस्यचिदेक स च केवलिजिनसिद्धो वा भवेद्भवस्थकेवली वा भवेदित्यर्थ । ततश्च भवस्थकेवलिनोऽद्यापि सकर्मकत्वादेकदा एक एवोपयोग. । सिद्धकेवलिनस्तु सर्वथा कर्ममलकलङ्कविप्रमुक्तत्वात युगपद् द्वावुपयोगौ भवत इति परस्याकूतं तच्च न युक्तमिह सिद्धाधिकारादिदमुक्त भवति "सव्वस्स केवलिस्स" इत्यादिना सिद्धाधिकारे सिद्धस्यैव भद्रबाहुस्वामिभिर्युगपद्द्वावुपयोगौ निषिद्धावतो न किंचित्त्वत्कृता व्याख्यान्तरकल्पनेह भवतीति भाव. । सूरिः समाधानान्तरमाह-

अह पुव्वद्धेणव. सिद्धमेक्कोत्ति किं च विइएणं ।

एत्तो वि य पच्छद्धं, नियमइ सव्वपडिसेहो ॥

अथवा " नाणम्मि दंसणम्मि य वत्तेगयरम्मि उवउत्ता " इत्यनेन पूर्वार्द्धेनैकदा एक उपयोग सिद्धस्तत किं द्वितीयेन पश्चार्द्धेनानेन उक्त भवत ( एत्तोवियत्ति ) इत एव " सव्वस्स केवलिस्स " इत्यादि पश्चार्द्धोपन्यासात्सर्वप्रतिषेधो गम्यते । यथा सर्वस्य केवलिनोऽपि युगपद् द्वावुपयोगौ न स्त [illegible] केवलिन इति॥ पुन परवचनमाशङ्क्य परिहारमाह-

तो [illegible] भणियं. उवउत्ता दंसणे य नाणे य ।

समुदायविसयमेयं. उभयनिसिद्धो यपत्तेयं ॥

यदि न युगपदुपयोग इष्यते तत आचार्यं कथमिदं भणितं [illegible] भणिष्यतीत्यर्थं । किं तदित्याह ( उवउत्ता दंसणे यत्ति ) दर्शने ज्ञाने च युगपदुपयुक्ता इह किल भणिता इति परस्याभिप्रायः । अयं च मिथ्याभिमानोपहतसद्बोधत्वात्कदभिप्राय एवेति दर्शयति ( समुदायवयणमेयत्ति ) समुदायविषयमेवेदं नतु युगपदुपयोगप्रतिपादनपरमित्यर्थः। अनन्तास्तर्हि सिद्धास्तत्समुदायेऽत्र केऽपि ज्ञाने उपयुक्ताः केचिद्दर्शने इत्ययमर्थ।प्रत्येकविवक्षायां पुनः "पत्तेअावरणत्ता" मित्याद्यभिहितयुक्तेर्युगपदुभयोपयोगनिषेध एव मन्तव्य इति पुनरपि प्रेर्यपरिहारौ प्राह-

जम्हाअपज्जत्ताइं, केवल तेणोभओवओगो त्ति ।

नणइ नायं नियमो, संतं तेणोवओगोत्ति ॥

साद्यपर्यवसितत्वाद्यस्माद्पर्यन्ते अविनाशिनी सदावस्थितकेवलदर्शने तेन तस्माद्युगपदुपयोग इष्यते अस्माभि. । इदं हि यद्बोधस्वभावसदावस्थितं च तस्योपयोगेनापि सदा भवितव्यमेव अन्यथोपलशकलकल्पत्वेन बोधस्वभावत्वानुपपत्ते. । सदोपयोगे च द्वयोर्युगपदुपयोगः सिद्ध एवेति परस्याभिप्राय. । आचार्य आह । भण्यते अत्रोत्तरम् । नायं नियमः सर्वदा यल्लब्धिमाश्रित्य स विद्यमानकेवलज्ञानं केवलदर्शनं च तेन तयोरुपयोगेनापि सर्वदा भवितव्यमिति कुतः पुनर्नायं नियम इत्याह-

ठिइकालं जह से दं-सणनाणाणमणुवओगे वि ।

दिट्ठमवत्थाणं तह, न होइ किं केवलाणं पि ॥

यथा केवलज्ञानदर्शनाभ्यां शेषाणि यानि दर्शनज्ञानानि तेषां निज २ स्थितिकालं यावदनुपयोगाभावेऽपि सत्वस्यावस्थान दृष्टं तथा केवलज्ञानदर्शनयोरपि निजस्थितिकालं यावदनुपयोगेपि सर्वस्यावस्थान किमिति न भवति भवति चेत्तर्हि सतो ज्ञानस्य दर्शनस्योपयोगेन भवितव्यमिति अनेकान्तिकमेव । इयमत्र भावना । शेषज्ञानदर्शनानां प्रज्ञापनायां कायस्थितौ दीर्घस्थितिकाल उक्तस्तद्यथा । " मइनाणीण भंते ! मइनाणित्ति कालओ केवच्चिरं होइ ? गोयमा ! जहन्नेणं अंतोमुहुत्तं उक्कोसेणं छावट्ठिसागरोवमाइं साइरेगाइं एवं सुयनाणीवि ओहिनाणीवि एवं चेव नवरं जहन्नेण एक्कं समयं मणपज्जवणाणी जहन्नेणं एक्कं समय । उक्कोसेण देसूण पुव्वकोडिं " यदा विभङ्गज्ञानसम्यक्त्वलाभे समयमेकमवधिज्ञानं भूत्वा प्रतिपतति तदा अवधिज्ञानस्य जघन्यत. समयस्थितिकालो मन्तव्य. । मन.पर्यायज्ञानस्य तूत्पत्त्यनन्तरं तद्वतो मरणादिति " चक्खुदंसणी जहन्नेणं अंतोमुहुत्तं उक्कोसेण सागरोवमसहस्सं साइरेगं अचक्खुदंसणी अणाइए वा अपज्जवसिए अणाइए वा पज्जवसिए ओहिदंसणी जहा ओहिनाणि त्ति " तदत्रमेतेषां निजनिजस्थितिकालं यावत्सत्वमुक्तम् । उपयोगस्त्वान्तर्मौहूर्तिकत्वान्नैतावन्तं कालं भवत्यत. सतोऽवश्यमुपयोगेन भवितव्यमिति कथ नानैकान्तिकम् । अथ लब्धित एवैतान्येतावन्त कालं भवन्ति नतु बोधात्मनेति चेत्तदिद हन्त केवलज्ञानदर्शनयोरपि समान तयोरपि लब्धित एवापर्यन्तत्वादुपयोगतस्तु सामानिकत्वादिति पुनरप्यनिस्वाग्रहग्रस्तत्वात्पर प्राह-

णणु सनिधणता समयं. मिच्छावरणक्खउत्ति व जिणस्स ।

इयरेयरावरणया, अहवा निक्कारणावरणं ॥

एगयरगाणुवउत्ते, तहसव्वायुइरिसत्तणमेव ।

जाइ उभयस्स वि, समाणमेगंतरे सव्वं ॥

ननु यदि एकस्मिन्समये केवलज्ञानोपयोगोऽन्यस्मिंस्तु समये केवलदर्शनोपयोग इष्यते तर्हि अत्रोपयोगित्वे केवलोपयोगित्वे केवलज्ञानदर्शनयोः सनिधनत्व प्रतिसमय सान्तत्वं प्राप्नोति।

तथाच सति तयोः समयोक्तमपर्यवसितत्वं हीयते । अथवा यः कण्ठशतानि कृत्वा ज्ञानावरणादिक्षयो विहितः स मिथ्या निरर्थको जिनस्य भगवतः प्राप्नोति समयात्समयादूर्ध्वं केवलज्ञानदर्शनोपयोगयोः पुनरप्यनावाभ्यामपनीतावरणौ द्वौ प्रदीपौ क्रमेण प्रकाश्यं प्रकाशयतः । अथवा केवलज्ञानदर्शनयोरितरेतरावरणता नेष्यते तर्ह्यन्यतरोपयोगकाले अन्यतरस्य निष्कारणमेवावरणं स्यात्तथा च सति सत्वमसत्वं चेत्यादि प्रसज्यत इति । तथा एकतरस्मिन् ज्ञाने दर्शने वाऽनुपयुक्तस्तस्मिन्नेकतरानुपयुक्ते केवलिनीष्यमाणे ज्ञानानुपयोगकाले तस्य केवलिनोऽसर्वज्ञत्वं प्राप्नोति दर्शनानुपयोगकाले त्वसर्वदर्शित्वं प्रसजति अनुस्वारश्चेह लुप्तो द्रष्टव्यः । तथा सर्वज्ञत्वमसर्वदर्शित्वं च नेष्टं जैनानां सर्वदैव केवलिनि सर्वज्ञत्वसर्वदर्शित्वाभ्युपगमादिति । सूरिराह । भण्यते अत्रोत्तरम् । ननु छद्मस्थस्यापि दर्शनज्ञानयोरेकतरे उपयोगे सर्वमिदं दोषजालं समानमेव अत्रापि हि शक्यते एवं वक्तुं ज्ञानानुपयोगे तस्याज्ञानित्वं दर्शनानुपयोगे पुनरदर्शनत्वम् तथा मिथ्यावरणक्षयः इतरेतरावरणता वा निष्कारणावरणत्वं चेत्यादि पुनरप्यनिर्विण्णस्य परस्याशङ्कामाह—

सव्वक्खीणावरणो, अह मन्नसि केवली न छउमत्थो ।

उभओवओगविग्ध—छउमत्थस्स व जिणस्स ॥

अथैवं मन्यसे सर्वक्षीणावरणः क्षपितनिःशेषावरणः केवली न तु छद्मस्थस्ततो युगपज्ज्ञानदर्शनोभयोपयोगविघ्नं छद्मस्थस्यैव भवति सावरणत्वान्न तु जिनस्य केवलिनः सर्वथा निरावरणत्वादिति ।

देसक्खए अजुत्तं, जुगवं कसिणोभओवओगित्तं ।

एतावंतं मण्णे, पुण पडिसिज्झए किं से ॥

इह यद्यपि छद्मस्थः क्षीणनिःशेषावरणो न भवति तथापि देशतस्तस्याप्यावरणक्षयो लभ्यते ततस्तस्यावरणक्षये सति युगपत्कृत्स्नोभयोपयोगित्वं युगपत्सर्ववस्तुविषयज्ञानदर्शनोभयोपयोगभवनमयुक्तमित्येतावन्मात्रं मन्यामहे वयं वस्तुदेशतो सर्ववस्तुविषयज्ञानदर्शनोभयोपयोगः स इन्त (से) तस्य छद्मस्थस्य किं प्रतिषिध्यते ननु युक्तस्तत्प्रतिषेध इत्यर्थः । नचास्य युगपदुभयोपयोगो भवति ततोऽसौ केवलिनोऽपि न युक्तः इतीह भावार्थः ॥ पुनरपि पराशङ्कां परिहारं चाह—

अह जम्मि नोवउत्तो, तं नत्थि तओ न दंसणाइ तिगे ।

अत्थि कुणओवओगो—त्तिहोइ साहू कहं विगलो ॥

अथैवं मन्यसे क्रमोपयोगित्वमभ्युपगम्यमाने केवली यस्मिन् ज्ञाने दर्शने वानुपयुक्तस्तदस्ति यस्मिंस्तु नोपयुक्तस्तत्तदा नास्त्येवानुपलभ्यमानत्वात्खरविषाणवत्तनस्तर्हि दर्शनादेशिकदर्शनज्ञानचारित्रत्रये छद्मस्थस्य साध्वोर्युगपदुपयोगो नास्ति छद्मस्थस्य युगपदुपयोगाभावस्य त्वयाप्युपगतत्वात्ततो दर्शनादित्रिकेष्वत्राप्यनुपयुक्तस्तदपि त्वदभिप्रायेण नास्त्यतस्ताद्विकल एकेनापि दर्शनादिना रहितः कथं साधुर्भवतु न प्राप्नोत्येव साधुत्वं तस्य त्वदभिप्रायेणेति भावः । भण्यते चासौ समये लोके सर्वदैव साधुस्ततो नेदमपि क्रमोपयोगे दूषणमिति यत्रानुपयुक्तस्तदसदित्यत्र दूषणान्तराण्यप्याह—

भिइकालविसंवाओ, नाणाणं न वि य ते चउन्नाणी ।

एवं सइ छउमत्थो, अत्थि न तिदंसणी समए ॥

इह ज्ञानानां दर्शनानां चोपयोग आन्तर्मौहूर्तिक एव समये प्रोक्तस्तस्माच्च परतस्तदभिप्रायेण किल ज्ञानं दर्शनं वा नास्ति । एवं च सति ज्ञानानामुपलक्षणत्वाद्दर्शनानां च यः सातिरेकषट्षष्टिसागरोपमादिको दीर्घस्थितिकालः समये प्रोक्तस्तस्य विसंवादो विघटनं प्राप्नोति यश्च चतुर्ज्ञानी केवलदर्शनवर्जदर्शनत्रययुक्तत्वात्त्रिदर्शनी च छद्मस्थो गौतमादिः प्रसिद्धः सोऽपि त्वदभिप्रायेणैतद्रूपः सर्वदा न भवति एकदा एकोपयोगस्यैव संभवादनुपयोगवतश्चासत्वादिति । अथ सिद्धान्तावष्टम्भेन पुनरपि परं प्राह

आह भणियं नणु सुए, केवलिणो केवलोवओगेणं ।

पढमत्ति तेण गम्मत्ति, सओवओगोभयं तेसिं ॥

आह ननु भणितं भगवत्यामष्टादशशतप्रथमोद्देशकलक्षणे श्रुते "केवलीणं भंते केवलोपओगेणं किं पढमा अपढमा ? गोयमा ! पढमा नोअपढमत्ति" इह च यो येन भावेन पूर्वं नासीदिदानीं च जातः स तेन भावेन प्रथम उच्यते ततश्च केवलिनः केवलोपयोगेन प्रथमः अयमर्थः केवलयोः केवलज्ञानकेवलदर्शनयोरुपयोगः केवलोपयोगस्तेन केवलिनः प्रथमा नत्वप्रथमास्तस्याप्राप्तपूर्वत्वात्प्राप्तस्य च पुनर्ध्वंसाभावात्तेन तस्माद्गम्यते ज्ञायते सदैवोपयोगोभयं तेषां प्रवर्तते । यदि पुनः क्रमेणोपयोगः स्यात्तदा भूत्वा २ विनाशात्पुनः पुनरपि चोत्पादात्केवलोपयोगेनाप्रथमत्वमपि तेषां भवेदिति । सूरिराह—

उवओगगहणाउ, इह केवलनाणदंसणं ।

जइ तदणत्थंतरया, हवेज्ज सुत्तम्मि को दोसो ॥

यदि केवलोवओगेणंतीत्यत्रोपयोगग्रहणात्केवलयोरुपयोगः केवलोपयोग इति समासाश्रितयोः केवलज्ञानकेवलदर्शनयोर्ग्रहणमिष्यते तर्हि तदनर्थान्तरता तयोः केवलज्ञानकेवलदर्शनयोरेकस्मादुपयोगादव्यतिरिक्तत्वात्परस्परमनर्थान्तरता ज्ञानं च दर्शनं चैकमेव वस्त्वेवंरूपं भवेदिति परः प्राह ( सुत्तम्मि को दोसोत्ति ) भवतु तयोरनर्थान्तरता को ह्येवं सति केवलोवओगेणं सूत्रे दोषः स्यान्न कश्चिदस्माकं सिद्धिसाधनादिति । आचार्य प्राह । यदि दोषपरिज्ञाने तव कुतूहलं तर्हि शृणु किमित्याह—

तग्गहणे किमिह फलं, नणु तदणत्थंतरोवएसत्थं ।

तह वत्थुविसेसणत्थं, एयमयसमयम्मि सुत्ताणि ॥

तद्ग्रहणे सति किं फलं सिध्यति अनर्थान्तरत्वे सति किमर्थमुभयग्रहणं पुनरुक्तदोषप्रसङ्गादितिभावः । परं आह ननु तयोः केवलज्ञानदर्शनयोः परस्परमनर्थान्तरतोपदेशार्थमेवेदं तथा वस्तुनः केवलज्ञानकेवलदर्शनपर्यायध्वनिभ्यां विशेषणार्थमेवेदम् एकमेव हि केवलं वस्तु केवलज्ञानकेवलदर्शनपर्यायध्वनिभ्यां विशेषणार्थं चेदम् । एवमेवहि केवलवस्तुनोऽनेकपर्यायध्वनिभिर्विशेषणार्थं समये सिद्धान्ते सूत्राणि शतशोऽनेकशः सन्तीति । एतदेव परं उपदर्शयति ॥

मिष्का काइ य नो सं—जयाइपज्जाय उसएवेगो ।

सुत्तेसु विसेसिज्जइ, जहेह तह भव्ववत्थूणि ॥

( विसेसिज्जइजहत्ति ) यथा तेषु २ सिद्धान्तसूत्रेषु स एवैको मुक्तात्मा सिद्धः कायिकानां संयतादिपर्यायैर्विशेष्यते प्रतिपाद्यते आदिशब्दान्नोभव्यनोभव्यनोपर्याप्तनोपरित्तानां संज्ञिमपरिनिवृत्तादिपर्यायैरपि विशेष्य कश्चित्प्रतिपाद्यते(इहतहत्ति) तथेहापि क्षायिकाज्ञानवस्त्वेकमेव केवलज्ञानकेवलदर्शनपर्यायध्वनिभ्यां विशेष्यते एवमन्यान्यपि सर्वाणि पुरन्दरघटवृक्षादिवस्तूनि निजनिजपर्यायशब्दैः समये लोके च विशेष्यन्त एवेति क इह प्रद्वेष इति । अथैवं सूरिः परं दुरभिनिवेशममुञ्चन्तमवलोक्य युगपदुपयोगद्वयपक्षं मूलत एवोन्मूलयितुं क्रमोपयोगकं व्यक्तमेव सिद्धान्तोक्तमादर्शयन्नाह—

भणिओ वियमत्थो वि य, छट्ठुद्देसे विसेसे उ ॥
एवं फुमवियमम्मि वि, सुत्ते सव्वन्नुभासिए सिद्धे ।
कह तीरइ परतित्थिय-वत्तव्वमिणंति वोत्तुं ते ॥

एवमुक्तप्रकारेण विशेषितेऽपि व्यक्तेऽपि क्रमोपयोगसाधके सिद्धान्ते सूत्रे सति योऽयमेकान्तरोपयोग स परमतं युगपदुभयोपयोगसूत्रं तु यदसदपि भवता किमपि कल्पते तत्र परतीर्थिकवक्तव्यतेति स्ववचसि पक्षपातं परित्यज्य चिन्त्यतां केय विपर्यासबुद्धिरिति । किंच भगवत्यां पञ्चविंशतितमे शते षष्ठोद्देशके " सिणाएणं भंते ! किं सागारोवउत्ते होज्जा अणगारोवउत्ते होज्जा ? गोयमा ! सागारोवउत्तेवि होज्जा अणगारोवउत्तेवि होज्जा " ॥ इत्यनेन सूत्रेण विशेष्य नामग्राह स्नातकस्य केवलिनो विकटार्थः प्रकटार्थ एव भणितः प्रतिपादितः । एकस्मिन्समये एकतरः साकारो नाकारो वा उपयोग इति ॥ एव स्फुटे सूत्रतो विकटे प्रकटे वाऽर्थतः सर्वज्ञभाषिते सूत्रे सिद्धे कथ सकर्णविज्ञानैः परतीर्थिकवक्तव्यतेयमिति तीर्यते शक्यते वक्तुम् । ( जे ) इति वाक्यालकारार्थ इति ॥ अपिच-

सव्वत्थसुत्तमत्थि य-फुमएगपरोवओगजुत्ताणं ।
उभओवउत्तसत्ता, सुतिवुत्ता न कत्थइ वि ॥
कस्सइ वि नाम कत्थइ, काले जइ होज्ज दोवि उवओगा ।
उभओवउत्तसत्ता, ण सुत्तमेगं पि तो होज्जा ॥

एकतरोपयोगोपयुक्तानां सत्वानां प्रतिपादक सूत्रं सर्वत्र सिद्धान्ते स्फुटमस्ति । तच्च किञ्चिद्दर्शित दर्शयिष्यते च युगपदुभयोपयोगो युक्तसत्वास्तु सूत्रे क्वचिदप्युक्ताः प्रतिपादिता दृश्यन्त इति । यदि नाम कस्यापि भवस्थकेवलिनः सिद्धकेवलिनो वा क्वचिदपि काल युगपद् द्वावुपयोगौ भवेतां ततस्तर्हि युगपदुभयोपयोगोपयुक्तसत्वानां प्रतिपादकमेकमपि सूत्र क्वचिदपि भवेन्नतु क्वापि तत्पश्याम इत्यतो निरालम्बनाग्रहमात्रभ्रमित एव भ्राम्यति भवानिति ॥ अपिच-

दुविहाणं पि य जीवा-ण भणियमप्पावहुं च समयम्मि ।
सागारणगाराण य, न भणियमुभओवउत्ताणं ॥
जइ केवलीण जुगवं, उवओगो होज्ज तो एवं ।
सागारणगाराण य, मीसाण य तिण्हमप्पवहुं ॥

साकारोपयोगवतामनाकारोपयोगवतां च द्विविधानामेव जीवानामल्पबहुत्व समये सिद्धान्ते प्रज्ञापनाल्पबहुत्वपदे भणितम् । तद्यथा " एएसि णं भंते ! जीवाणं सागारोवउत्ताण अणगारोवउत्ताण य कयरे कयरेहिंतो अप्पा वा बहुया वा तुल्ला विसेसाहिया वा ॥ गोयमा सव्वत्थो वा जीवा अणगारोवउत्ता सागारोवउत्ता सखेज्जगुणा " युगपदुभयोपयोगोपयुक्तानां तु मिश्राणां तृतीयानामिहाल्पबहुत्व न भणित यदि पुन केवलिनां युगपदुपयोगद्वय भवेत्तदैव सति साकारानाकारमिश्रोपयोगवतां त्रयाणामेव पदानामल्पबहुत्व भवेन्न द्वयोरिति । अत्र परशङ्कां परिहार चाह-

अह व मई छउमत्थे, पडुच्च सुत्तमिणमो न केवलिणो ।
तं पि न जुज्जइ जं स-व्व सत्तसखाहिगारो यं ॥

सुगमा नवर व्याप्त्या सर्वजीवसंख्याधिकारे निर्दिष्टत्वान्नेद सूत्र छद्मस्थविषय प्रवक्तु युज्यत इति ॥ अथ सर्वजीवाधिकारोऽय न भवतीत्यत्राह-

काउं सिद्धग्गहणं, बहुवत्तव्वयपदेसु सव्वेसु ।
इह केवलमग्गहणं, जइ तो तं कारणं वच्चं ॥

यदि सर्वजीवाधिकारोऽय न भवति तर्हि "गइ इंदियवेए काए जोए कसायलेसास्वित्यादिष्वन्येषु अल्पबहुत्ववक्तव्यताविचारविषयभूतेषु पदेषु सिद्धिगतिकानीन्द्रियकाययोग्यकषायलेश्या नोसयतनोपरीत्तादिपदैः पृथक् सिद्धग्रहण कृत्वा केवलमिहैवोपयोगपदे पृथक्त्वग्रहणं करोति । ततस्तत्र कारण वाच्य यदि हि छद्मस्थाधिकारत्वादिह तदग्रहणमित्युच्यते तर्हि शेषपदेषु सिद्धकेवलिग्रहणमयुक्त स्यात्तस्मात्सर्वजीवाधिकार एवाय केवलमाहारकानाहारकभाषकादिपदद्वयेनैवानेन साकारानाकारोपयोगपदद्वयेन सिद्धकेवलिना गृहीतत्वादिह पृथक्त्वादग्रहणमिति । आगमान्तरतोऽप्यत्र छद्मस्थाधिकारशङ्का निवर्तयन्नाह ॥

अहवा विसेसियं चिय, जीवाभिगमम्मि एयमप्पवहुं ।
दुविहत्ति सव्वजीवा, सिद्धासिद्धाइया जत्थ ॥

अथवा छद्मस्थाधिकारशङ्कानिवर्त्तकत्वाद्विशेषितमेवैतत्साकारानाकारोपयोगयोः पदद्वयस्याल्पबहुत्व जीवाभिगमे प्रोक्तमिति शेषः ॥ क्व सूत्रे इत्याह । सिद्धासिद्धादिभेदेन द्विविधा एव सर्वे जीवा यत्र सूत्रे प्रतिपाद्यन्त इति तदेव सूत्र गाथयोपनिबध्य दर्शयन्नाह ॥

सिद्धसइंदियकाए, जोए वेए कसायलेसा य ।
नाणुवओगाहारय, भासयसरीरचरमे य ॥

सिद्धा असिद्धाश्च सेन्द्रिया अनिन्द्रियाश्च सकाया अकायाश्चेत्यादि भेदेन सर्वे जीवाः संगृह्यात्रसूत्रे जीवाभिगमे प्रतिपाद्यन्ते तत्र सूत्रविशेषितमेवेदमल्पबहुत्वप्रतिपादितमिति युगपदुपयोगद्वयपक्ष निराचिकीर्षुराह ॥

अंतोमुहुत्तमेवे य, कालो भणिओ न होवओगस्स ।
साइअपज्जवसिओत्ति, नत्थि कत्थइ वि निद्दिट्ठो ॥

तथा ज्ञानाज्ञानदर्शनानामुपयोगस्यागमे सर्वत्र अन्तर्मुहूर्त्तमेव कालो भणित साद्यपर्यवसितस्तु उपयोगकाल क्वापि नास्ति विनिर्दिष्ट । यदिह साकारानाकारोपयोगरूपो मिश्र सिद्धानामुपयोग स्यात्तदा तेषामिव तस्यापि साद्यपर्यवसितत्वं स्यान्नचैतत्सिद्धान्ते क्वापि भणित दृश्यते तस्मान्नास्ति युगपदुपयोगद्वयमिति ॥ एतदेवाह—

जह सिद्धाईयाणं, भणियं साईअपज्जवसियत्तं ।
तह जइ उवओगाणं, भणियं हवेज्ज तो जुगवं ॥

यथा सिद्धादीनामादिशब्दादनिन्द्रियकादीनां साद्यपर्यवसितत्वं भणित तथा यद्युपयोगानामपि तद्भणितं भवेत्ततस्तौ साकारानाकारोपयोगौ युगपद्भवेतां नचैव तस्मान्न युगपदुपयोगद्वयमिति तदेव सूरिः परस्याभिनिवेश निराकृत्यात्मनि तदाशङ्का निराकर्तुमाह—

कस्स व नाणुमयमिणं, जिणस्स जइ होज्ज दोवि उवओगा ।
नूणं न होंत्ति जुगवं, जओ निसिद्धा सुए बहुसो ॥
नवि अभिनिवेसबुद्धी, अम्हं एगंतरोवओगम्मि ।
तदवि भणिमो न तरड, जं जिणमयमन्नहा काउं ॥

पातसिद्ध एव । अथ परपृच्छामुत्तरं चाह ॥ "जइ तओभावणत्तमेवमित्यादि गाथायां यन्मया " इयरयरावरणया अहवा निक्कारणावरणमित्यादि " दूषणमुक्तं तद्यदि प्रागुक्तेनैव प्रकारेण त्वया नेष्यते तर्हि कथ जिनस्य केवलिन एकान्तरोपयोगोऽभ्युपग-

न्यमाने तस्य युगपदुपयोगवृत्तेरावरणं तदावरणमिति कथ्यतां सूरिराह। नणयतेऽत्रोत्तरम्। "तंनि तदावरण" मिह स्वभावो ह्यस्य ईदृश एव जीवस्वभावो येन क्रमेणैवोपयोगः प्रवर्त्तते न युगपत् न च स्वभावः पर्यनुपयोगमर्हति। अग्निर्दहति नाकाशमित्यादिष्वपि तत्प्रसङ्गादिति। एतदेव समर्थयति—

परिणामिय भावाओ, जीवत्तं पि य सनावए वायं।
एगंतरोवओगो, जीवाणमणन्नहेउत्ति ॥

यथा जीवस्य जीवत्वमनन्यहेतुकं पारिणामिकभावत्वादेवमेकान्तरोपयोगोऽपि परिणामिकत्वात्तस्य स्वभाव एव ततो नास्यान्यो हेतुरन्वेषणीय इति॥ विशे०। स्या०। नं०।

संप्रति चतुर्विंशतिदण्डकक्रमेण नैरयिकादीन् चिन्तयन्नाह—

णेरइयाणं भंते! कइविहे उवओगे पण्णत्ते? गोयमा! दुविहे उवओगे पण्णत्ते। तंजहा सागारोवओगे य अणागारोवओगे य। णेरइयाणं भंते! सागारोवओगे कइविहे पण्णत्ते गोयमा! छव्विहे पण्णत्ते तंजहा–मतिनाण० सुयनाण० ओहिनाण० मतिअन्नाण० सुयअन्नाण० विभंगनाणसागारोवओगे। णेरइयाणं भंते! अणागारोवओगे कइविहे पण्णत्ते? गोयमा! तिविहे पण्णत्ते तंजहा चक्खुदंसण० अचक्खुदंसण० ओहिदंसणअणागारोवओगे। एवं जाव थणियकुमाराणं॥

नैरयिका हि द्विविधा भवन्ति सम्यग् दृष्टयो मिथ्यादृष्टयश्च। अवधिरपि तेषां भवप्रत्ययोऽवश्यमुपजायते भवप्रत्ययो नारकदेवानामिति वचनात्। तत्र सम्यग्दृष्टीनां मतिज्ञानश्रुतज्ञानावधिज्ञानानि मिथ्यादृष्टीनां मत्यज्ञानश्रुताज्ञानविभङ्गज्ञानानीति सामान्यतो नैरयिकाणां षड्विधः साकारोपयोगः। अनाकारोपयोगस्त्रिविधस्तद्यथा चक्षुर्दर्शनाचक्षुर्दर्शनमवधिदर्शनं च। एष त्रिविधोऽप्यनाकारोपयोगः सम्यग्दृशां मिथ्यादृशां वा विशेषेण प्रतिपत्तव्यः। उभयेषामप्यवधिदर्शनस्य सूत्रे प्रतिपादितत्वात्। एवमसुरकुमारादीनां स्तनितकुमारपर्यवसानानां भवनपतीनामप्यवसेयम्।

पुढविकाइयाणं पुच्छा गोयमा! दुविहे उवओगे पण्णत्ते, तंजहा सागारोवओगे य अणागारोवओगे य। पुढविकाइयाणं भंते! अणागारोवओगे कतिविहे पण्णत्ते? गोयमा! दुविहे पण्णत्ते, तंजहा मतिअन्नाणसुयअन्नाण। पुढविकाइयाणं भंते! अणागारोवओगे कइविहे पण्णत्ते? गोयमा! एगे अचक्खुदंसण अणागारोवओगे पण्णत्ते एवं जाव वणस्सइकाइयाणं। बेइंदियाणं पुच्छा, गोयमा! दुविहे पण्णत्ते तंजहा सागारे अणागारे। बेइंदियाणं सागारोवओगे कइविहे पण्णत्ते? गोयमा! चउव्विहे पण्णत्ते तंजहा आभिनिबोहियनाण० सुयनाण० मतिअन्नाण० सुयअन्नाण०। बेइंदियाणं भंते! अणागारोवओगे कइविहे पण्णत्ते? गोयमा! एगे अचक्खुदंसणअणागारोवओगे एवं तेइंदियाणं चउरिंदियाण वि एवं चेव नवरं अणागारोवओगे दुविहे पण्णत्ते चक्खुदंसण० अचक्खुदंसणअणागारोवओगे य। पंचिंदियतिरिक्खजोणियाणं जहा णेरइयाणं मणुस्साणं जहा ओहिए उवओगे भणियं तहेव भाणियव्वं। वाणमंतरजोइसियवेमाणियाणं जहा णेरइयाणं।

पृथिवीकायिकानां साकारोपयोगो द्विविधस्तद्यथा मत्यज्ञानं श्रुताज्ञानं चानाकारोपयोग एकोऽचक्षुर्दर्शनरूपः शेषोपयोगानां तेषामसंभवात् सम्यग्दर्शनादिलब्धिविकलत्वात्। एवमप्तेजोवायुवनस्पतीनामपि वेदितव्यम्। द्वीन्द्रियाणां साकारोपयोगश्चतुर्विधस्तद्यथा मतिज्ञानं श्रुतज्ञानं मत्यज्ञानं श्रुताज्ञानम्। तत्रापर्याप्तावस्थायां केषांचित्सास्वादनभावमासादयितां मतिज्ञानश्रुतज्ञाने शेषाणां तु मत्यज्ञानश्रुताज्ञाने। अनाकारोपयोगस्त्वेकोऽचक्षुर्दर्शनरूपः शेषोपयोगानाम्। एवं त्रीन्द्रियाणामपि चतुरिन्द्रियाणामप्येवम्। नवरमनाकारोपयोगो द्विविधः चक्षुर्दर्शनमचक्षुर्दर्शनं च। पञ्चेन्द्रियतिरिश्चां साकारोपयोगः षड्विधस्तद्यथा मतिज्ञानं श्रुतज्ञानमवधिज्ञानं मत्यज्ञानं श्रुताज्ञानं विभङ्गज्ञानम्। अनाकारोपयोगस्त्रिविधस्तद्यथा चक्षुर्दर्शनमचक्षुर्दर्शनमवधिद्विकस्यापि केषुचित्तेषु सम्भवात्। मनुष्याणां यथासम्भवमष्टावपि साकारोपयोगाश्चत्वारोऽप्यनाकारोपयोगा मनुष्येषु सर्वज्ञानदर्शनलब्धिसम्भवात् व्यन्तरज्योतिष्कवैमानिका यथा नैरयिकास्तदेवं सामान्यतश्चतुर्विंशतिदण्डकक्रमेण जीवानामुपयोगश्चिन्तित॥

संप्रति मन्दमतिस्पष्टाववोधाय जीवा एव तत्तदुपयोगोपयुक्ताः सामान्यतश्चतुर्विंशतिदण्डकक्रमेण चिन्त्यन्ते—

जीवा णं भंते! किं सागारोवउत्ता अणागारोवउत्ता? गोयमा! सागारोवउत्ता वि अणागारोवउत्ता वि। सेकेणट्ठेणं भंते! एवं वुच्चइ जीवा सागारोवउत्ता वि अणागारोवउत्तावि? गोयमा! जेणं जीवो आभिनिबोहियनाणसुयनाणओहिनाणमणपज्जवकेवलनाण, मतिअन्नाणसुयअन्नाणविभंगनाणोवउत्ता तेणं जीवा सागारोवउत्ता जेणं जीवा चक्खुदंसणअचक्खुदंसणओहिदंसणकेवलदंसणोवउत्ता तेणं जीवा अणागारोवउत्ता से तेणट्ठेणं गोयमा! एवं वुच्चइ जीवा सागारोवउत्ता वि अणागारोवउत्ता वि। नेरइया णं भंते! किं सागारोवउत्ता अणागारोवउत्ता? गोयमा! नेरइया सागारोवउत्तावि अणागारोवउत्तावि। से केणट्ठेणं भंते! एवं वुच्चइ? गोयमा! जेणं नेरइयाणं आभिनिबोहियनाण सुयनाण ओहिनाण मइअन्नाण सुयअन्नाण विभंगनाणोवउत्ता तेणं नेरइया सागारोवउत्ता जेणं नेरइया चक्खुदंसण अचक्खुदंसण ओहिदंसणोवउत्ता तेणं नेरइया अणागारोवउत्ता। से तेणट्ठेणं गोयमा! एवं वुच्चइ जाव अणागारोवउत्ता एवं जाव थणियकुमारा। पुढविकाइयाणं पुच्छा गोयमा! तहेव जाव जेणं पुढविकाइया मतिअन्नाण सुयअन्नाणोवउत्ता तेणं पुढविकाइयाणं सागारोवउत्ता जेणं पुढवि० अचक्खुदंसणोवउत्ता तेणं पुढवि० अणागारोवउत्ता। से तेणट्ठेणं गोयमा! एवं वुच्चइ जाव वणस्सइकाइया बेइंदियाणं अट्ठसहिया तहेव पुच्छा जाव जेणं बेइंदिया आभिनिबोहियनाण सुयनाण मतिअन्नाण सुयअन्नाणोवउत्ता तेणं

वेइंदिया सागारोवउत्ता जेणं वेइंदिया अचक्खुदंसणोवउत्ता तेणं वेइंदिया अणागारोवउत्ता से तेणट्ठेणं गोयमा! एवं वुच्चइ? एवं जाव चउरिंदिया णवरं चक्खुदंसणं अब्भहियं चउरिंदियाणंति पंचेंदियतिरिक्खजोणिया जहा णेरइया मणूसा जहा जीवा वाणमंतरजोइसियवेमाणिया जहा णेरइया इति ॥

जीवाणभन्ते इत्यादि सुगमम् । प्रज्ञा० २९ पद० । भ० । जी० ( जीवेषूपयोगाः जीवट्ठाणशब्दे )

गतीन्द्रियादिषु मार्गणास्थानेषु उपयोगाः

मणुयगईए वारस, मणकेवलवज्जियाउ नव मीसे ।
इगिथावरेसुतिविओ, चउविगले वारसे सगले ॥

मनुजगतौ द्वादशाप्युपयोगाः अन्यासु च नारकामरतिर्यग्गतिषु प्रत्येक मनःपर्यायकेवलद्विकवर्ज्यचक्षुरचक्षुरवधिदर्शनाख्यास्त्रय उपयोगाः भवन्ति । तुशब्दस्याधिकार्थससूचनान्मतिश्रुतावधिज्ञानचक्षुरचक्षुरवधिदर्शनरूपाः षट् उपयोगा दृश्यन्ते अज्ञानत्रिकदर्शनत्रिकरूपा. षट् । मिश्रे आद्यज्ञानत्रिकाज्ञानत्रिकदर्शनत्रिकरूपा नव प्ररूप्यन्ते । तथा चत्वारो विकलेष्वन्येषामसभवाच्चतुरिन्द्रियेषूपयोगास्तत्र त्रय. पूर्वोक्ता एव । चतुर्थस्तु चक्षुर्दर्शनम् । उपलक्षण चैतत्तेनैत एव चत्वारोऽसज्ञिनि वेदितव्या. । तथा त्रसेषु ( सगलित्ति ) पञ्चेन्द्रियेषु द्वादश ॥

जोए वेए सन्नी, आहारगभव्वसुक्कलेसासु ।
वारस संजमसम्मे, नव दस लेसा कसाएसु ॥

योगे मनोवाक्कायरूपे वेदे स्त्रीपुनपुंसकलक्षणे, संज्ञिनि आहारकभव्येषु शुक्ललेश्यायां च द्वादशाप्युपयोगा. । वेदश्चेह द्रव्यरूप. आकारभावो गृह्यते तेन तत्र केवलज्ञानाद्यविरोधः । तथा सयमे यथाख्यातरूपे सम्यक्त्वे । १ क्षायिकलक्षणे नवोपयोगास्तत्राज्ञानत्रिकाभावात् । तथा लेश्यासु कृष्णनीलकापोततेज पद्माख्यासु कषायेषु च चतुर्षु केवलज्ञानकेवलदर्शनहीनाः शेषा दशोपयोगा कृष्णादिलेश्याभावे केवलद्विकानुत्पादात् । इह ये उपयोगा यैरुपयोगै सह न भवन्ति यैश्च सह भवन्ति तान् तथोपदर्शयन्नाह ।

सम्मत्तकारणेहिं, मिच्छत्तनिमित्ता न होंति उवओगा ।
केवलदुगेण सेसा, संतेव अचक्खुचक्खुसु ॥

सम्यक्त्व कारण येषान्ते सम्यक्त्वकारणास्तैर्मतिज्ञानादिभिरुपयोगैः सह मिथ्यात्वनिमित्ता मिथ्यात्वनिबन्धना मत्यज्ञानादय. उपयोगा न भवन्ति । तथा केवलद्विकेन केवलज्ञानकेवलदर्शनरूपेण सह शेषाश्छाद्मस्थिका मतिज्ञानादय उपयोगा न भवन्ति देशज्ञानदर्शनव्यवच्छेदेनैव केवलज्ञानदर्शनप्रादुर्भावात् । "उप्पन्नंसि अणंते नट्ठमियछाउमत्थिए नाणे" इति वचनप्रामाण्यात् । आह ननु यदि मतिज्ञानादीनि स्वस्वावरणक्षयोपशमेऽपि प्रादुष्यन्ति तर्हि सकलस्वस्वावरणक्षये सुतरां भवेयुश्चारित्रपरिणामवत् तत्कथं केवलज्ञानदर्शनभावे मतिज्ञानाद्यभाव आदर. " आवरणदेसविगमे, जाईविज्जति मई सुयाईणि । आवरणसव्वविगमे, कह ताइ न होंति जीवस्स " उच्यते इह यथा सहस्रभानोरुपचितघनपटलान्तरितस्यापान्तरालावस्थितकटकुड्याद्यावरणविवरप्रविष्ट प्रकाशो ऽस्पष्टरूपो घटपटादीन् प्रकाशयति तथा केवलज्ञानावरणावृतस्य केवलज्ञानस्यापान्तरालमतिज्ञानाद्यावरणक्षयोपशमरूपविवरविनिर्गत' प्रकाशो जीवादीन् पदार्थान् प्रकाशयति । स च तथा प्रकाशयंस्तत्तत्क्षयोपशमानुरूप मतिज्ञानं श्रुतज्ञानमित्यादिरूपमभिधानमुद्वहति । ततो यथा सकलघनपटलकटकुड्याद्यावरणापगमे स तथाविधप्रकाशसहस्रभाकारास्पष्टरूपो न भवति किं तु सर्वात्मना स्फुटरूपोऽन्य एव तथेहापि सकलकेवलज्ञानावरणमतिज्ञानाद्यावरणविलयेन तथाविधोऽस्पष्टरूपो मतिज्ञानादिसंज्ञिन' केवलज्ञानस्य प्रकाशो भवति सर्वात्मना यथावस्थितं वस्तु परिच्छिन्दन् परिस्फुटरूपोऽन्य एवेत्यदोष. । उक्त च । कडविवरागव्वकिरणा, मेहतरियस्स जह दिणेसस्स । उक्कडमेहावरणे, न होति जह तह इमाइपि " । अन्ये पुनराहु. । सत्येव सयोगिकेवल्यादावपि मतिज्ञानादीनि केवलमफलत्वात्सन्त्यपि तदानींतनानि न विकसन्ति सूर्योदये नक्षत्राणीनि । उक्तं च । " अन्ने आभिणिवोहिय-नाणाईणि वि जिणस्स विज्जंति । अफलाणि य सूरुदए, जहेव नक्खत्तमाईणि " तथा ( संतेवअचक्खुचक्खुसुत्ति ) सन्त्येव भवन्त्येव अचक्षुर्दर्शनचक्षुर्दर्शनाभ्या बहुवचनात् अवधिदर्शनेन च सह सम्यक्त्वनिमित्ता मिथ्यात्वनिमित्ताश्चोपयोगास्तेन मतिश्रुतावधिज्ञानमन' पर्यायज्ञानसामायिकच्छेदोपस्थापनपरिहारविशुद्धिकसूक्ष्मसंपरायक्षायोपशमिकौपशमिकसम्यक्त्वेषु केवलद्विकाज्ञानत्रिकहीना. शेषाः सप्तोपयोगाः । अज्ञानत्रिकावरणसास्वादनमिथ्यात्वेषु केवलद्विकमतिज्ञानादिचतुष्टयरहिता. शेषा. षट् केवलद्विके केवलज्ञानकेवलदर्शने चक्षुरचक्षुरवधिदर्शनेषु केवलद्विकहीनाः शेषा दश । मनःपर्यायज्ञानचक्षुर्दर्शनरहिताश्च शेषा दशानाहारके सूत्रे च ।( अचक्खुचखुसुत्ति ) सप्तमी तृतीयार्थे वेदितव्या भवति ॥ यदाह पाणिनि. प्राकृतलक्षणे तृतीयार्थे सप्तमी यथा तिसु तेसु अलंकियापुहई इति" तदेव कृता मार्गणास्थानेषु योगोपयोगमार्गणा ॥ प० सं० १ द्वा० ।

गुणस्थानेषूपयोगा. ।

अधुनैतेष्वेवोपयोगानभिधातुकाम आह ॥

तिअनाणदुदंसाइम–दुगे अतियदसिनाणदंसतिगं ।
ते मीसे मीससमणा, जयाइकेवलिदुयंतदुगे ॥ ४८ ॥

आदिमद्विके मिथ्यादृष्टिसास्वादनलक्षणे प्रथमद्वितीयगुणस्थानकद्वये इत्यर्थ. ( तियनाणदुदंसत्ति ) त्रयाणामज्ञानानां समाहाररूपज्ञान मत्यज्ञानश्रुताज्ञानविभङ्गज्ञानरूपं दर्शन दर्श । द्वयोर्दर्शयोः समाहारो द्विदर्शम् । चक्षुर्दर्शनाचक्षुर्दर्शनरूपमित्येते पञ्चोपयोगा मिथ्यादृष्टिसास्वादनयोर्भवन्ति न शेषा. सम्यक्त्वविरत्यभावात् । तथा अयतेऽविरतसम्यग् दृष्टौ देशे देशविरते षडुपयोगा भवन्ति तथा हि ( नाणदसतिगंति ) त्रिकशब्दस्य प्रत्येक. मभिसंबन्धात् ज्ञानत्रिक मतिज्ञानश्रुतज्ञानावधिज्ञानरूप दर्शत्रिक चक्षुरचक्षुर्दर्शनावधिदर्शनलक्षणमिति न शेषा. सर्वविरत्यभावात् । ते पूर्वोक्ता ज्ञानत्रिकदर्शनत्रिकरूपा षडुपयोगा मिश्रे सम्यग्मिथ्यादृष्टि गुणस्थानके मिश्रा अज्ञानसहिता द्रष्टव्या तस्योभयदृष्टिपातित्वात् केवल कदाचित्सम्यक्त्वबाहुल्य कदाचिच्च मिथ्यात्वबाहुल्यम् । ततोऽज्ञानबाहुल्यसमकक्षतायां तृतीयांशमम तेति । अस्मिंश्च गुणस्थानके यदवधिदर्शनमुक्त तत्सैद्धान्तिकमतापेक्षया द्रष्टव्यमित्युक्त प्राक् । ( समणाजयाइत्ति ) यमस्तूपरमे यमनं यतम् । यत विद्यते यस्य स यत. अभ्रादिभ्य इत्यप्रत्यय प्रमत्तगुणस्थानकवर्त्ती साधुर्यत आदिर्येषां गुणस्थानकानां तानि यतादीनि प्रमत्ताप्रमत्तापूर्वकरणानिवृत्तिबादरसूक्ष्मसंपरायोपशान्तमोहक्षीणमोहलक्षणानि सप्तगुणस्थानकानि तेषु पूर्वोक्तज्ञानत्रिकदर्शनत्रिकाख्या षडुपयोगा ( समणत्ति ) मनः

पर्यायज्ञानसहिताः सप्त भवन्तीति न शेषा मिथ्यात्वघातिकर्मक्षयाभावात्। केवलद्विकं केवलज्ञानकेवलदर्शनलक्षणोपयोगद्वयरूपम्। अतएव द्विके सयोगिकेवलिलक्षणचरमगुणस्थानकद्वये भवति न शेषा ज्ञानदर्शनलक्षणास्तदुच्छेदेनैव केवलज्ञानकेवलदर्शनोत्पत्तेः "नट्ठम्मिय छाउमत्थिए नाणे" इति वचनात् तदेवमभिहिता गुणस्थानकेषूपयोगाः ॥ कर्म०

अचक्खुचक्खुदंसण-मन्नाणतिगं च मिच्छसासाणे।
विरयाविरएसम्मे, नाणतिगं दंसणतिगं च ।

अचक्षुर्दर्शनचक्षुर्दर्शनम् अज्ञानत्रिकं च मत्यज्ञानश्रुताज्ञानविभङ्गलक्षणम्। च. समुच्चये मिथ्यादृष्टौ सास्वादने चोपयोगा भवन्ति। यत्तु अवधिदर्शनं तत्कुतश्चिदभिप्रायाद्विशिष्टा श्रुतविदो नेच्छन्ति तन्न सम्यगवगच्छाम'। अथ च सूत्रे मिथ्यादृष्ट्यादीनामवधिदर्शनं प्रतिपाद्यते यतउक्तं प्रज्ञप्तौ "ओहिदंसणअणगारोवउत्ताणं भवे ते किं नाणी अन्नाणी गोयमा नाणी वि अन्नाणी वि। जइ नाणत्तो अत्थेगइया तिनाणी अत्थेगइया चउनाणी जे तिनाणी ते आभिणिबोहियनाणीसुयनाणी ओहिनाणी जे चउनाणी ते अभिनिबोहियनाणी सुयनाणी ओहिनाणी मणपज्जवनाणी। जे अन्नाणी ते नियमा मइअन्नाणी सुयअन्नाणी विभंगनाणी इति"॥ अत्र हि ये अज्ञानिनस्ते मिथ्यादृष्टीनामप्यवधिदर्शनं साक्षादत्र सूत्रे प्रतिपादितम् यदा त्ववधिज्ञानी सास्वादनभावं मिश्रभावं वा गच्छति तदा तत्राप्यवधिदर्शनं प्राप्यते इति। तथा विरताविरते देशविरते ( सम्मेति ) अविरतसम्यग्दृष्टौ मतिश्रुतावधिलक्षणज्ञानत्रिकं चक्षुरचक्षुरवधिदर्शनत्रिकमिति षट् उपयोगा भवन्ति।

मिस्सम्मि य वामिस्सं, मणनाणजयं पमत्तपुव्वाणं ।
केवलियनाणदंसण, उवओगअजोगिजोगासु ॥

मिश्रे सम्यग्मिथ्यादृष्टौ तदेव ज्ञानत्रिकं दर्शनत्रिकं चानन्तरोक्तमज्ञानव्यामिश्रं द्रष्टव्यम्। मतिज्ञानं मत्यज्ञानमिश्रमित्यादि केवलं कदाचित्सम्यक्त्वबाहुल्यतो ज्ञानबाहुल्यं कदाचिच्च मिथ्यात्वबाहुल्यतोऽज्ञानबाहुल्यं समतायां तु सम्यक्त्वमिथ्यात्वयोरुभयोरपि समतेति तथा तदेव पूर्वोक्तमुपयोगषट्कं मनःपर्यायज्ञानयुतम्। प्रमत्त पूर्वो येषां ते प्रमत्तपूर्वास्तेषां प्रमत्तपूर्वकरणानिवृत्तिबादरसूक्ष्मसंपरायोपशान्तमोहक्षीणमोहानामवसेयम्। तथा केवलज्ञानकेवलदर्शनलक्षणौ द्वावुपयोगौ सयोग्ययोगिकेवलिषु द्रष्टव्यौ न शेषा "केवलदुगे न सेसा" इति वचनात्॥ पं०सं०१। द्वा०।

( अयशिष्टव्यक्तव्यतोपयोगस्य मार्गणास्थानाल्पबहुत्वं संजतनिग्गथादि शब्देषु। ) अवधाने, आव० ६ अ०। यत्सन्निधानादात्मा द्रव्येन्द्रियनिर्वृतिं प्रति व्याप्रियते तन्निमित्तमात्मनो मनःसाचिव्यादर्थग्रहणं प्रति व्यापाररूपे, आचा० १ श्रु० २ अ० १ उ०। स्वस्वविषये लब्ध्यनुसारेणात्मनः परिच्छेदव्यापारस्वरूपे वा भावेन्द्रियभेदे, । जी० १ प्रति०। आ० म० द्वि०। "जो सविसयवावारो उवओगो"। य श्रोत्रादीन्द्रियस्य स्वविषये शब्दादौ परिच्छेद्य व्यापारः स उपयोगः उपयोजनमुपयोग। विवक्षितकर्मणि मनसोऽभिनिवेशे, विशे०। "उवओगदिट्ठसारा कम्मपसंगपरिघोलणविसाला" न०। आ० चू०। आ० म० द्वि०। कायोत्सर्गे, महा०७ अ०। उपयोगाकरणे प्रायश्चित्तम्। "चउहिं अराइणिए उवओगं करेज्जा पुरिवट्ट गुरुणो अंतिए णोवओगं करेज्जा। चउत्थं अकरेण उवओगेणं जं किंचि परिगाहेज्जा चउत्थं अविहीए उवओगं करेज्जा। व्याप्रियमाणतायाम्, आ० म० प्र०॥ भिन्ने, चिदि, विशे०॥ आचरणे, भोजने, धनसिद्धिसाधने, व्यापारे, आनुकूल्ये च। वाच०॥

उवओगकरावणिया-उपयोगकारणिका- स्त्री० उपयोगकरणविधौ, सा चैवम् ॥

पडिलेहिअ सुपमज्जिअ, तत्तो पत्ताणि पडलजुत्ताणि ।
उग्गाहियगुरुपुरओ, उवओगं कुणइ उवउत्तो ॥ १ ॥
संपइ सामायारी, दीसइ एसा य भागसमयम्मि ।
जं किज्जइ उवओगो, बालाइअणुग्गहट्ठाए ३ ॥

पञ्चवस्तुकेऽपि " काउमाइअजोगं, काउ घेत्तूण पत्तए ताहे। दरू च संजयतो गुरुपुरओ भवित्तु उवउत्तो ॥१॥ उपयोगकरणविधिस्त्वेवं तत्रैवम्।

संदिसह भणंति गुरुं, उवओगं करेसु ते मणुण्णाया ।
उवओगकरावणियं, करेसु उस्सग्गमिच्छाइ ॥ १ ॥

संदिशतेति गुरुं भणंति किमित्याह ( उवओगं करेमित्ति ) इच्छाकारेण संदिसह भगवन् ! उपयोगकरूँ"इति भणतीत्यर्थः । तत उपयोगकारावणियं करेमि काउस्सग्गं अन्नत्थ इत्यादि भणति।

अह कड्ढिऊण सुत्तं, अक्खलिआइगुणसंजुअं गच्छा ।
चिट्ठिंति काउसग्गे, चिंतिंति अत्थमंगलयं ॥ २ ॥

सुगमा। पदं ( मगलति ) पञ्चमङ्गलनमस्कारं कायोत्सर्गे चिन्तयन्ति अत्र पक्षद्वयमाह।

तप्पुव्वयं जयत्थं, अन्नेउ भणंति धम्मजोगमिणं ।
गुरुबालवुड्ढसिक्खग, रेसिम्मिणं अप्पणो चेव ॥ ३ ॥

तत्पूर्वकं नमस्कारपूर्वकं पदार्थं तच्च चिन्तयन्ति सम्यगनालोचितस्य ग्रहणप्रतिषेधात् तस्मादायवन्नालोचितं हृदि तावन्न किंचिद्ग्राह्यम्। अन्ये आचार्या इत्थं भणन्ति धर्मयोगमेनं चिन्तयन्तीति। किंविशिष्टं गुरुबालवृद्धशैक्षैरेष एतदर्थं नात्मार्थम्। ३। ततः किमित्याह-

चिंतेतु तओ पच्छा, मंगलपुव्वं भणंति विणयणया ।
संदिसहत्ति गुरू वि अ, लाभोत्ति भणेति उवउत्तो ॥

चिन्तयित्वा पश्चात् ( मंगलपुव्विंति ) " नमो अरिहंताणं ति " भणनपूर्वं विनयनता भणन्ति किमित्याह ( संदिसहेत्ति ) सूरिरनुजानातीत्यर्थः। गुरुरपि भणति ( लाभोत्ति ) कालोचितानुकूलानपायित्वात् उपयुक्तो निमित्ते ऽप्यसम्भ्रान्तः ॥ ४ ॥ ततः किमित्याह-

कहपेच्छमोत्ति पच्छा, सविसेसणया भणंति ते सम्मं ।
आह गुरूवि तहत्ति, जह गहिहं पुव्वसाहूहिं ॥ ५ ॥

ततः कथं गृहीष्याम एवं पश्चात् सविशेषनतास्ते साधवः सम्यग् भणन्ति ततो गुरुरप्याह यथा गृहीतं पूर्वसाधुभिरित्यनेन गुरोरसाधुप्रायोग्येन भणनप्रतिषेधमाह-

आवस्सियाए जस्स य, जोगुत्ति भणितु ते उ णिंगंति।
णिक्कारणेण कप्पइ, साहूणं वसहिणिग्गमणं ॥

आवश्यिक्या साधुक्रियाभिधायिन्या हेतुभूतया ( जस्सयजोगुत्ति ) भणित्वा निर्गच्छन्ति वसतेः तस्यार्थस्त्वेवं यस्य वस्तुनो वस्त्रपात्रशैक्षादेर्योगः संयमोपकारकः संबन्धो भविष्यति तं ग्रहीष्यामीत्यर्थः किमेतदित्याह निष्कारणे न कल्पते साधूनां वसतिनिर्गमनं तत्र दोषसंभवादिति। यस्य योग इत्यस्याऽकरणे च दोषो यदुक्तमोघनिर्युक्तौ ॥

जस्स य जोगमकाऊण, निग्गओ न लभेज्ज सच्चित्तं ।
नयवत्थपायमाई, तेणं गहणे कुणसु तम्हा ॥

यस्य योगमित्येवमकृत्वाऽभणित्वा निर्गते सन्न लभते नाभाव्यतया प्राप्नोति सचित्तं प्रव्रज्यार्थमुपस्थितं गृहस्थं नाप्यचित्तं वस्त्रपात्रादि । अथ यदि गृह्णाति ततः स्तैन्यं भवति । तस्मात्कुरु अस्य योगमिति । एवं चोपयोगकरणे चत्वारि स्थानानि तदुक्तम् " आपुच्छणा चि पढमा, विइया पडिपुच्छणा य कायव्वा । आवास्सिआ य तइआ, जस्स य जोगो चउत्थो उ " ध० ३ अधि० ।

उवओगगुण-उपयोगगुण-पुं० उपयोग साकारानाकारभेदं चैतन्यं गुणो धर्मो यस्य स तथा । चैतन्यधर्मके जीवे, " जीवे सासए गुणओ उवओगगुणे " स्था० ५ ठा० । भ० ।

उवओगजुय-उपयोगयुत-त्रि० अवहितमनसि, " तं पुण सविसेणं उवओगजुएण तिव्वसद्धाए " पंचा० ४ विव० ।

उवओगट्ठया-उपयोगार्थता-स्त्री० विविधविषयानुपयोगाश्रयणे, " उवओगट्ठयाए अणेगभूयभावभविए विअह " विविधविषयानुपयोगानाश्रित्यानेकभूतभावभविकोऽप्यहमप्यतीतानागतयोर्हि कालयोरनेकविषयबोधनात्मनः कथञ्चिदभिन्नानां भूतत्वाच्चेत्यनित्यपक्षोऽपि न दोषायेति । भ० १८ श० १० उ० ।

उवओगदिट्ठसारा-उपयोगदृष्टसारा-स्त्री० उपयोजनमुपयोगो विवक्षितकर्मणि मनसोऽभिनिवेशः सारस्तस्यैव विवक्षितकर्मणः परमार्थं उपयोगेन दृष्टः सारो यया सा उपयोगदृष्टसारा । अभिनिवेशोपलब्धकर्मपरमार्थायां बुद्धौ, " उवओगदिट्ठसारा, कम्मपसगपरिघोलणविसाला " न० ॥

उवओगपरिणाम-उपयोगपरिणाम-पुं० उपयोग एव परिणाम उपयोगपरिणाम जीवपरिणामभेदे, प्रज्ञा० १३ पद । स च साकारानाकारभेदाद् द्विधा, स्था० १० ठा० ।

उवओगवक्क-उपयोगवाक्य-न० आनन्दस्य भगवन्तं प्रति वाक्यभेदे, । दर्श० ।

उवओगवीरिय-उपयोगवीर्य-आध्यात्मिकवीर्यभेदे, उपयोगवीर्यं साकारानाकारभेदात् द्विविधम् । तत्र साकारोपयोगोऽष्टधा अनाकारश्चतुर्धा तेन चोपयुक्तः स्वविषयस्य द्रव्यक्षेत्रकालभावरूपस्य परिच्छेदं विधत्ते इति । सूत्र० १ श्रु० ८ अ० ।

उवओगाता-स्त्री० उपयोगात्मन्-पुं० उपयोग साकारानाकारभेदस्तत्प्रधान आत्मा उपयोगात्मा । सर्वजीवाना सिद्धसंसारिस्वरूपे विवक्षितवस्तूपयोगविशिष्टे वा आत्मभेदे, न० ॥ १२ श० १० उ० ॥

उवंग-उपाङ्ग-न० उपमितमङ्गेन । अङ्गावयवभूतेऽङ्गुल्यादौ, प्रज्ञा० २३ पद ॥ कर्म० । आ० म० द्वि० । विशे० । कर्णादिषु, च । उपाङ्गानि कर्णौ नासे अक्षिणी जङ्घे हस्तौ पादौ च । उत्त० ३ अ० । आचा० ॥ " होंति उवंगा कण्णा-णासच्छी जंघ हत्था पाया य कण्णा णासिगा अच्छि जंघ पादा य एवमादी सव्वे उवंगा भवंति ॥ नि० चू० १ उ० ॥ कर्म० । अङ्गार्थविस्ताररूपे, ॥ कल्प० ॥ शिक्षाद्यङ्गोक्तप्रपञ्चनपरे प्रबन्धे, ज्ञा० ५ अ० । नि० । संगोवंगाण सरहस्साण चउण्हं वेयाणं " औ० ॥ लोकोत्तरिकाचाराङ्गैकदेशप्रपञ्चरूपे श्रुते, तानि च द्वादश तथाहि तत्राङ्गानि द्वादश उपाङ्गान्यपि अङ्गैकदेशरूपाणि प्राय प्रत्यङ्गमेकैकभावात्प्रभवन्त्येव । तत्राङ्गानि आचाराङ्गादीनि प्रतीतानि । तेषामुपाङ्गानि क्रमेणामूनि आचाराङ्गस्यौपपातिकम् ॥ १ ॥ सूत्र तदङ्गस्य राजप्रश्नीयम् ॥ २ ॥ स्थानाङ्गस्य जीवाभिगम ॥ ३ ॥ समवायाङ्गस्य प्रज्ञापना ॥ ४ ॥ भगवत्याः सूर्यप्रज्ञप्ति. ॥ ५ ॥ ज्ञाताधर्मकथाङ्गस्य जम्बूद्वीपप्रज्ञप्ति ॥ ६ ॥ उपासकदशाङ्गस्य चन्द्रप्रज्ञप्ति ॥ ७ ॥ अन्तकृद्दशाङ्गादीनां दृष्टिवादपर्यन्तानां पञ्चानामप्यङ्गानां निरयावलिका । श्रुतस्कन्धगतकल्पिकादि पञ्चवर्गा, पञ्चोपाङ्गानि तथाहि अन्तकृद्दशाङ्गस्य कल्पिका ॥ ८ ॥ अनुत्तरोपपातिकदशाङ्गस्य कल्पावतंसिका ६ प्रश्नव्याकरणस्य पुष्पिता ॥ १० ॥ विपाकश्रुतस्य पुष्पचूलिका ॥ ११ ॥ दृष्टिवादस्य वृष्णिदशा ॥१२॥ इति । जं० १ वक्ष० ॥ उपाङ्गानि केन कृतानीत्यत्र प्रश्नोत्तरे तत्रोपाङ्गानि किं गणधररचितानि अन्यथा वा तथाङ्गप्रणयनकालेऽन्यदा वा तन्निर्माणमिति । सूत्रोपाङ्गानि स्थविरा. कुर्वन्ति तीर्थकरे विद्यमानेऽविद्यमाने वान्यङ्गप्रणयनकाले एव तेषां निर्माणमिति नैकान्त इति नन्दीसूत्रवृत्तौ व्यक्तोक्तमस्ति तेन विशेषतस्तत्तोऽवसेयमिति ही० । ( अङ्गपविट्ठशब्दे तथा दर्शितम् ) उपाङ्गेषु केन किं विवृतम् उपाङ्गानां च मध्ये प्रथममुपाङ्गं श्रीअभयदेवसूरिभिर्विवृतम् । राजप्रश्नीयादीनि षट् श्रीमलयगिरि पादैर्विवृतानि पञ्चोपाङ्गमयी निर्यावलिका च श्रीचन्द्रसूरिभिर्विवृता तत्र प्रस्तुतोपाङ्गस्य वृत्ति. श्रीमलयगिरिकृताऽपि सम्प्रति कालदोषेण व्यवच्छिन्ना इदं च गम्भीरार्थतया अतिगहनं तेनानुयोगरहितं मुद्रितराजकीयकमनीयकोशगृहमिव न तदर्थार्थिनां हस्तानुयोगार्पितसिद्धिक सजायत इति कल्पितार्थकल्पनकल्पद्रुमाणां युगप्रधानसमानम् । संप्रति विजयमानगच्छनायकपरमगुरुश्रीहीरविजयसूरीश्वरनिदेशेन कोशाध्यक्षाद्धा प्रत्येणेवान्मुद्धामिव मया तदनुयोग प्रारभ्यते ॥ जं० १ वक्ष० । रा० । तिलके, पुं० वाच० ।

उवंगतिग-उपाङ्गत्रिक-न० औदारिकवैक्रियाहारकाङ्गोपाङ्गरूपे त्रये, कर्म० ॥

उवंजण-उपाञ्जन-न० उप अञ्ज ल्युट्, लेपने, गोमयादिनानुलेपने, संमार्जनोपार्जनेन सेकेनोल्लेखने, च । वाच० ॥ अभ्यङ्ग, " अक्खोवंजण वणाणुलेवणभूयं " सूत्र० २ श्रु० २ अ० । आधारे ल्युट् । अञ्जनाधारे, हस्त्यादौ च । वाच० ॥

उवंसुजव-उपांशुजप-पुं० परैरश्रूयमाणेऽन्त.संजल्पनरूपे जपभेदे, ध० ४ अधि० ॥

उवकप्प-उपकल्प-पुं० उपगतः कल्पम् । अत्या० स० कल्पोपगते, भक्ते पाने, न० । उप सामीप्ये उपेत्य कल्पते इति उपकल्प । आहारादिषु उपेत्योपकारे वर्तते इत्युपकल्प' । आहारादिना साधोरुपग्रहकरणे, । पं० चू० ॥

एत्तो पुच्छा महंतु, उवकप्पं उवग्गहे । उवकप्पती करेति, उवणाइव होति एकट्ठा ॥ भत्तेण व पाणेण व, उवग्गहं तओ कुणति । उवकप्पति गुणधारी, उवकंपंतं वियाणाहि ॥ खुहिओ पिवासिओ वा, सीतभिभूतो व ण तरति । पाडितं तस्स करेति, उवग्गहपरंतं कुसुमं वा प्पणे ॥ जो उप्पाए समाहिं, चउव्विहं णाणदंसणचरित्ते । तत्तो य तवसमाहिं, तस्स खमाणिज्जए होइ ॥ भत्तेण व पाणेण व, उवगरणेण व उवग्गहितदेहो । जं कुणति सो समाहिं, तस्सावरणं हवति दाता ॥ भत्तस्स व पाणस्स व, उवकरणस्स व उवग्गहकरस्स । जो कुणति अंतरायं, तस्सावरणं पवट्टो त्ति ॥ एसकप्पो भणिता ॥ पं० भा० ॥

ड्याणिं उवकप्पो तत्थ गाहा “भत्तेण व पाणेण व” उव सामीप्ये उपेत्य कल्पते इत्युपकल्पः आहारादिसु उपेत्योपकारे वर्तते इत्युपकल्पः । साहुस्स उवग्गह करेइ आहाराइणा पढनस्स उदस्सव मूला मूलगुण उत्तरगुणधारी उवकप्पतं वियाणाहि गाहा “भत्तेण य सो पुण भत्ताग्गहिं साहुस्स उवग्गहं कुणमाणो समाहिं समुप्पायइ चउव्विहं पि नाणदरिसणतवचरित्तमसमाहिं सो पुण समाहिमुप्पायतो तासिं चेव नाणदरिसणचरित्ततवसमाहीए आवरणं हणइ कम्मं गाहा “भत्तस्स य पाणस्स य” जो पुण अतरायं करेइ आहाराइणं साहुस्स दिज्जंताए मे तासिं चेव णाणदरिसणतवसमाहीण अतराए पवट्टइ सो णाणाइअतरायं बधइ उवकप्पो ॥ पं० चू० ॥

उवकप्पंत–उपकल्पयत्– त्रि० निष्पादयति, “जेसिं तेहिं उवकप्पति अन्न पाण तह वि” उपकल्पयन्ति निष्पादयन्ति सूत्र० १ श्रु० १९ अ० ॥

उवकय–उपकृत– त्रि० उप-कृ-क्त० । कृतोपकारे, यस्योपकारः कृतस्तस्मिन् वाच० । परैर्वर्तिते, “अणुवकयपरग्गहपरायणा” आव० ४ अ० ॥

उवकसंत–उपकषत्– त्रि० व्रजति, “पव्वासमच्छितावेगे । नारीणं वसमुवकसति” सूत्र० १ अ० ४ अ० ॥

उवकुल–उपकुल– न० कुलाना समीपमुपकुलम् । तत्र वर्त्तन्ते यानि नक्षत्राणि तान्युपचारादुपकुलानीति व्युत्पत्तेः कुलसंज्ञकाना नक्षत्राणामधस्तनेषु नक्षत्रेषु, तानि द्वादश । श्रवण पूर्वभाद्रपदा रेवती भरणी रोहिणी पुनर्वसु अश्लेषा पूर्वफाल्गुनी हस्त स्वाती ज्येष्ठापूर्वाषाढाश्चेति । जं० ७ वक्ष० । चं० ॥ सू० प्र० ( णक्खत्त शब्दे सूत्रम् स्पष्टीभविष्यति )

उवकेसपुर–उपकेशपुर– न० स्वनामख्याते तीर्थभेदे, यत्र वीरभगवत्प्रतिमा ॥ ती० ॥

उवकोसा–उपकोशा– स्त्री० पाटलिपुत्रवासिन्या कोशागणिकायाः कनिष्ठभगिन्याम्, “पाडलिपुत्ते नयरे दो गणियातो कोसा उवकोसातो । आ० म० द्वि० । कोसाए रहरिकामगिणी उवकोसातीए सम वररुची वसति । आ० चू० ४ अ० । ( थूलभद्दशब्दे कथानकम् )

उवक्कम–उपक्रम–पुं० उपक्रमणमुपक्रमः उप-क्रम् घञ् वृद्ध्यभावः । उपाये, आचा० १श्रु० ७ अ० ८ उ० । “सोच्चा भगवाणुसासणं सच्चे तत्थ करेज्जुवक्कमं” तदुपक्रमं तत्प्राप्त्युपाय कुर्यात् सूत्र० १ श्रु० ३ अ० । उपायपूर्वके आरम्भे, तद्भेदाश्च यथा—

तिविहे उवक्कमे पण्णत्ते तं जहा धम्मिए उवक्कमे अहम्मिए उवक्कमे धम्मियाधम्मिए उवक्कमे ॥

उपक्रमणमुपक्रम उपायपूर्वक आरम्भो धर्म्मश्रुतचारित्रात्मके भव स वा प्रयोजनमस्येति धार्मिकश्रुतचारित्रार्थ आरम्भ इत्यर्थस्तथा न धार्म्मिकोऽधार्मिकः सयमार्थस्तथा धार्मिकश्चासौ देशत संयमरूपत्वादधार्म्मिकश्च तथैवासयमरूपत्वाद्धा धार्मिकाधार्मिकः देशविरत्यारम्भ इत्यर्थः । अथवा नामस्थापनाद्रव्यक्षेत्रकालभावभेदात् षड्विध उपक्रमस्तत्र नामस्थापने सुज्ञाने द्रव्योपक्रमस्तु ज्ञशरीरभव्यशरीरव्यतिरिक्तस्त्रिधा सचित्ताचित्तमिश्रद्रव्यभेदात् । तत्र सचित्तद्रव्योपक्रमो द्विपदचतुष्पदापदभेदभिन्नः पुनरेकैको द्विविधः परिकर्म्मणि वस्तुविनाशे च । तत्र परिकर्म्मद्रव्यस्य गुणविशेषकरण तस्मिन्सति तद्यथा घृताद्युपयोगेन पुरुषस्य वर्णादिकरण एव शुकसारिकादीनां शिक्षागुणविशेषकरणम् । तथा चतुष्पदानां हस्त्यादीनाम् अपदानां च वृक्षादीनां वृक्षायुर्वेदोपदेशात् वार्द्धक्यादिगुणापादनमिति । तथा वस्तुविनाशे च पुरुषादीनां खड्गादिभिर्विनाश एवोपक्रम इति । एवमचित्तद्रव्योपक्रम पद्मरागादिमणेः क्षारमृत्पुटपाकादिना वैमल्यापादनं विनाशश्चेति । मिश्रद्रव्योपक्रमस्तु कटकादिविभूषितपुरुषादिद्रव्यस्यैवेति । तथा क्षेत्रस्य शालिक्षेत्रादेः परिकर्म्मविनाशो वा क्षेत्रोपक्रमस्तथा कालस्य चन्द्रोपरागादिलक्षणस्योपक्रम उपायेन परिज्ञानं कालोपक्रमः । तथा भावस्य प्रशस्ताऽप्रशस्तरूपस्योपायतः परिज्ञानमेव भावोपक्रमः । स चाप्रशस्तो डोम्बिनीगणिकामात्यदृष्टान्तादवसेयः । प्रशस्तस्तु श्रुतादिनिमित्तमाचार्यादिभावोपक्रम एव धार्म्मिकस्य सयतस्य यश्चारित्रार्थं द्रव्यक्षेत्रकालभावानामुपक्रम उक्तस्वरूप स धार्म्मिक एवोपक्रम । तथा अधार्मिकस्याऽसयतस्यासंयमार्थं य सोऽधार्म्मिक एव । तथा धार्म्मिकाधार्म्मिकस्य देशविरतस्य य. स धार्म्मिकाधार्म्मिक इति ॥ अथ स्वाम्यन्तरभेदेनोपक्रममेव त्रिधाह–

अहवा तिविहे उवक्कमे पण्णत्ते तं जहा आयोवक्कमे परोवक्कमे तदुभयोवक्कमे एवं वेयावच्चे अणुग्गहे अणुसिट्ठी उवालंभे एवमिक्किक्के तिन्नि २ आलावगा जहेव उवक्कमे ॥

तत्रात्मनोऽनुकूलोपसर्गादौ शीलरक्षणनिमित्तमुपक्रमो वैहानसादिना विनाशः परिकर्म वा आत्मार्थं वा उपक्रमोऽन्यस्य वस्तुन आत्मोपक्रम इति । तथा परस्य परार्थे चोपक्रम परोपक्रम इति तदुभयस्य आत्मपरलक्षणस्य तदुभयार्थे चोपक्रमस्तदुभयोपक्रम इति । एवमिति । उपक्रमसूत्रवत् आत्मपरोभयभेदेन वैयावृत्त्याद्यो वाच्याः । स्था० ३ ठा० । प्रथमत सर्वकृत्यविधौ, आतु० । उपक्रम्यतेऽनेनेत्युपक्रम । कर्म्मवेदनोपाये, भ० १ श० ४ उ० । उपक्रमणमुपक्रम । कर्मणामनुदयप्राप्तानामुदयप्रापणे, सूत्र० १ श्रु० २ अ० । उपक्रम्यते क्रियतेऽनेनेति उपक्रम । कर्मणो बद्धत्वोदीरितत्वादिना परिणमनहेतौ जीवस्य शक्तिविशेषे, योऽन्यत्र करणमिति रूढ । तद्भेदा यथा–

चउव्विहे उवक्कमे पण्णत्ते तंजहा बंधणोवक्कमे उदीरणोवक्कमे उवसामणोवक्कमे विप्परिणामणोवक्कमे ॥

उपक्रमणं चोपक्रमो बन्धनादीनामारम्भः स्यादारम्भः उपक्रम इति वचनादिति तत्र बन्धनं कर्मपुद्गलानां जीवप्रदेशानाञ्च परस्पर सबन्धनमिदञ्च सूत्रमात्रबद्धलोहशलाकासंबन्धोपममवगन्तव्य तस्योपक्रम उक्तार्थो बन्धनोपक्रमः । असंकलितावस्थस्य वा कर्मणो बद्धावस्थीकरणं सबन्धनं तदेवोपक्रमो वस्तुपरिकर्मरूपो बन्धनोपक्रमो वस्तुपरिकर्मवस्तुविनाशरूपस्याप्युपक्रमस्याभिहितत्वादिति । एवमन्यत्रापि । स्था० ४ ठा० २ उ० । (बन्धनोपक्रमादीनां व्याख्या स्वस्वस्थाने ) मरणे, सू० ४ उ० । व्यापादे, दूरस्थस्य स तैः वस्तुनस्तैस्तैः प्रकारैः समीपानयने, “उपक्रमणमुपक्रान्तिर्दूरस्थस्यनिकटक्रिया” उत्त० १ अ० । व्याचिख्यासितशास्त्रस्य समीपानयनलक्षणे चतुर्णामनुयोगद्वाराणां प्रथमे द्वारे, आचा० १ श्रु० १ अ० ।

अथोपक्रमस्य निरुक्तिमाह–

सत्थस्सोवक्कमणं, उवक्कमो तेण तम्मि य तओ वा ।
सत्थसमीवीकरणं, आणयणं नासदेसम्मि ॥

उप सामीप्ये क्रमु पादविक्षेपे उपक्रमणं दूरस्थस्य शास्त्रादिवस्तुनस्तैः प्रतिपादनप्रकारैः समीपीकरणं न्यासदेशानयन निक्षेपयोग्यताकरणमित्युपक्रम । उपक्रान्तं ह्युपक्रमान्तर्गतभेदैर्विचारितं निक्षिप्यते नान्यथेति भाव । उपक्रम्यते वा निक्षेपयोग्य क्रियतेऽनेन गुरुवाग्योगेनेत्युपक्रमः । अथवा उपक्रम्यतेऽस्मिन् शिष्यश्रम-

णभावे सतीति अथवा उपक्रम्यतेऽस्माद्विनीतविनेयविनयादित्युपक्रम विनेयेनाराधितो हि गुरुरुपक्रम्य निक्षेपयोग्य शास्त्र करोतीत्यभिप्राय । तदेव करणाधिकरणापादानकारकैर्गुरुवाग्योगाद्योऽर्थो विवक्षाभेदतो भेदेनोक्ता । यदि तु विवक्षया सर्वेऽप्येकैककरणादिकारणवाच्यत्वेनोच्यन्ते । तथापि न दोष. । ( सत्थसमीवीकरणमिति ) शास्त्रस्य समीपीकरण शास्त्रस्य न्यासदेशानयन निक्षेपयोग्यताकरणमुपक्रम इति सर्वत्र संबध्यत इति ॥ विशे० ६ द्वा० । अनु० । उपक्रमणमुपक्रम इति भावसाधन. । शास्त्रस्य न्यासदेशसमीपीकरणलक्षण उपक्रम्यते वाग्योगेनेत्युपक्रम इति करणसाधन' । उपक्रम्यतेऽस्मिन्निति वा शिष्यश्रवणभावे सतीत्युपक्रम इत्यधिकरणसाधन । उपक्रम्यते अस्मादिति वा विनेयविनयादित्युपक्रम इत्यपादानसाधन इति । स्था० १ ठा० । व्य० । आ० म० प्र० । सूत्र० । ज० । उपक्रमो द्विधा । शास्त्रीय इतरश्च । शास्त्रानुगत. शास्त्रीय. ( आचा० ) इतरश्च लोकप्रसिद्ध । तत्रेतरजिज्ञासयाह—

से किं तं उवक्कमेइछव्विहे पण्णत्ते तं जहा णामोवक्कमे ठवणोवक्कमे दव्वोवक्कमे खेत्तोवक्कमे कालोवक्कमे भावोवक्कमे नामठवणाओ गयाओ ॥

अत्र कचिदेव दृश्यते उवक्कमे दुविहे पण्णत्ते इत्यादि" अय च पाठ. आधुनिको युक्तश्च आह वा उवक्कमे छव्विहे पण्णत्ते इत्यादि वक्ष्यमाणग्रन्थोपन्यासस्याघटमानताप्रसङ्गात् । यदि शास्त्रीयोपक्रमोऽत्र प्रतिज्ञातः स्यात्तत वक्ष्यमाणसूत्रमेवं स्यात् "से किं त सत्थोवक्कमे २ छव्विहे पण्णत्ते इत्यादि " नचैव तस्मान्नेह सूत्रद्वैविध्यप्रतिज्ञा किन्त्वितरोपक्रमभणनं चेतसि विकल्प्य यथा निर्दिष्टमेव सूत्रमित्यत्र विस्तारेण । प्रकृत प्रस्तुत सूत्रम् । नामस्थापनोपक्रमव्याख्या नामस्थापनावश्यक व्याख्यानुसारेण कर्त्तव्या । अनु० । विशे० ॥

द्रव्योपक्रम. ।

से किं तं दव्वोवक्कमे २ दुविहे पण्णत्ते तं जहा आगमतो अ नोआगमतो अ । जाणयसरीरभवियसरीरवइरित्ते दव्वोवक्कमे २ तिविहे पण्णत्ते तं जहा सचित्ते अचित्ते मीसए । से किं तं सचित्ते दव्वोवक्कमे २ तिविहे पण्णत्ते तं जहा दुपए चउप्पए अपए एक्किक्के पुण दुविहे पण्णत्ते तं जहा परिकम्मे अ वत्थुविणासे अ ॥

द्रव्योपक्रमव्याख्यापि द्रव्यावश्यकवदेव यावत् दव्वोपक्कमे इत्यादि । तत्र द्रव्यस्य नटादेरुपक्रमण कालान्तरभविनाऽपि पर्यायेण सहेदानीमेवोपायविशेषत सयोजन द्रव्योपक्रम । अथवा द्रव्येण घृतादिना भूमादौ द्रव्यत घृतादेरेवोपक्रमो द्रव्योपक्रम इत्यादि । कारकयोजना विवक्षया कर्त्तव्येति । स च त्रिविध प्रज्ञप्तस्तथा सचित्तद्रव्यविषय. सचित्त' । अचित्तद्रव्यविषयोऽचित्त । मिश्रद्रव्यविषयस्तु मिश्र । द्रव्योपक्रमस्त्रिविध. प्रज्ञप्तस्तद्यथा द्विपदानां नटनर्त्तकादीनां चतुष्पदानामश्वहस्त्यादीनामपदानामाम्रादीनाम् । तत्रैकक. पुनरपि द्विधा परिकर्मणि वस्तुनाशे च । तत्रावस्थितस्यैव वस्तुनो गुणविशेषाधान परिकर्म्म । तत्र परिकर्म्मणि परिकर्मविषयो द्रव्योपक्रम । यदा तु वस्तुना विनाश एवोपायविशेषैरुपक्रम्यते तदा वस्तुनाशविषयो द्रव्योपक्रम । सूत्र द्विपदाना नटनर्तकादीना घृताद्युपयोगेन बलवर्णादिकरण वर्णस्कन्धवर्द्धनादिक्रिया वा परिकर्म्मणि सचित्तद्रव्योपक्रम ॥

द्विविधमप्येतदुपक्रम विभणिषुराह–

से किं तं दुपए उवक्कमे नराणं नट्टाणं जल्लाणं मल्लाणं मुट्ठियाणं वेलंवगाणं कहगाणं पवगाणं लासगाणं आइक्खगाणं लंखाणं मंखाण तूणइल्लाणं तुंबवीणियाणं कायाणं मागहाणं सेत्तं दुपए उवक्कमे ॥

अत्र निर्वचन ( दुपयाण नडाणमित्यादि ) तत्र नाटकानां नाटयितारो नटास्तेषां ( नट्टाणति ) नृत्यविधायिनो नर्तकास्तेषां ( जल्लाणति ) जल्ला वरत्रा खेलकास्तेषां राजस्तोत्रपाठकानामित्यन्ये ( मल्लाणति ) मल्लाः प्रतीतास्तेषां (मुट्ठियाणति) मौष्टिका ये मुष्टिभि. प्रहरन्ति मल्लविशेषा एव तेषां ( वेडंवगाणति ) विडम्बका विदूषका नानावेषादिकारिण इत्यर्थः । तेषां ( कहगाणंति ) कथकानां प्रतीतानाम् ( पवगाणति ) प्लवका ये उत्प्लवन्ति गर्तादिक कूपाभिर्लङ्घयन्ति नद्यादिकं वा तरन्ति तेषां ( लासगाणति ) लासका ये रासकान् गायन्ति तेषां जय शब्दप्रयोक्तॄणां वा भण्डानामित्यर्थः । (आयक्खगाणति ) ये शुभाशुभमाख्यायन्ति ते आख्यायकास्तेषां ( लंखाणति ) ये महावशाग्रमारोहन्ति ते लखास्तेषाम् ( मंखाणंति ) ये चित्रपटादिहस्ता भिक्षां चरन्ति ते मखास्तेषाम् ( तूणइल्लाणति ) तूणाभिधानवाद्यविशेषवतनाम् ( तुंबवीणियाणति ) वीणावादकाना ( कायाणति ) कावडिवाहकानाम् ( मागहाणंति ) मङ्गलपाठकानामेषां सर्वेषामपि यद् घृताद्युपयोगेन बलवर्णादिकरण वर्णस्कन्धवर्द्धनादिक्रिया वा स परिकर्म्मणि सचित्तद्रव्योपक्रम. । यस्तु खड्गादिभिरेषां नाश एवोपक्रम्यते सम्पाद्यते स वस्तुनाशे सचित्तद्रव्योपक्रम इति वाक्यशेष । अन्ये तु शास्त्र गन्धर्वनृत्यादिकलासम्पादनमपि परिकर्म्मणि द्रव्योपक्रम इति व्याचक्षते एतच्चायुक्त विज्ञानविशेषात्मकत्वाच्छास्त्रादिपरिज्ञानस्य च भावत्वादिति । अथवा यद्यात्मकद्रव्यसंस्कारमात्रापेक्षया शरीरवर्णादिकरणवदित्थमुच्यते तर्ह्येतदप्यदुष्टमेवेति । सेत्तमित्यादिनिगमनम् ।

अथ चतुष्पादानां द्विविधमप्युपक्रम विभणिषुराह–

से किं तं चउप्पए उवक्कमे, चउप्पयाणं आसाणं हत्थीणं । इच्चादि सेत्तं चउप्पयउवक्कमे, से किं तं अपए उवक्कमे ॥

अप्पयाण अंबाणं अंबाडगाणं इच्चाइ सेत्त अप्पयउवक्कमे । सेत्तं सचित्ते दव्वोवक्कमे ॥

से किं तमित्यादि । अत्र निर्वचन "चउप्पयाणं आसाण हत्थीणमित्यादि अश्वादय प्रतीता एव एतेषां शिक्षा गुणविशेषकरण परिकर्म्मणि खड्गादिस्त्वेषां नाशोपक्रमण वस्तुनाशे सचित्तद्रव्योपक्रम इतीहापि वाक्यशेष. सेत्तमित्यादिनिगमनम् । अथापदानां द्विविधमप्युपक्रम विभणिषुराह । अत्र निर्वचनम् । "अपयाण अबाणं चारगाणमित्यादि ' इहाम्रादयो देशप्रतीता एव नवर (चाराणंति) येषु चारकुलिका उत्पद्यन्ते ते चारवृक्षा. आम्रादिशब्दाच्च वृक्षास्तत्फलानि वा गृह्यन्ते तत्र वृक्षाणा वृक्षायुर्वेदोपदेशाद्वार्द्धक्यादिगुणानन्तनां तु गर्तप्रक्षेपकोद्रवपलालस्थगनादिनाऽऽश्वेव पाकादिकरण परिकर्म्मणि शस्त्रादिभिस्तु मूलत एव विनाशन वस्तुनाशे सचित्तद्रव्योपक्रम इत्यत्रापि वाक्यशेष' सेत्तमित्यादि निगमनद्वयम् ॥

अथाचित्तद्रव्योपक्रम विवक्षुराह–

से किं तं अचित्ते दव्वोवक्कमे खंडाईणं गुडाईणं मच्छंडीणं सेत्तं अचित्ते दव्वोवक्कमे ॥

स्थासकादयः प्रतीता एव नवरं मत्स्यण्डी खण्डशर्करा एतेषां खण्डाद्यचित्तद्रव्याणामुपायविशेषतो माधुर्यादिगुणविशेषकरणं परिकर्म्मणि सर्वथाविनाशकरणं वस्तुनाशे अचित्तद्रव्योपक्रम इत्यत्रापि वाक्यशेषः । सेत्तमित्यादिनिगमनम् ॥

अथ मिश्रद्रव्योपक्रममाह-

से किं तं मीसए दव्वोवक्कमे, सो चेव थासगमंडिए आसाइ सेत्तं मीसए दव्वोवक्कमे सेत्तं जाणयसरीरभवियसरीर तव्वतिरित्ते दव्वोवक्कमे सेत्तं नो आगमतो दव्वोवक्कमे । सेत्तं दव्वोवक्कमे ॥

( सेकिंतमित्यादि ) स्थासको ऽश्वाभरणविशेषः आदर्शस्तु वृषभादिग्रीवाभरणम् आदिशब्दात् कुङ्कुमादिपरिग्रहः ततश्च तेषा मश्वादीनां कुङ्कुमादिनिर्म्मण्डितानां स्थासकादिभिस्तु विभूषितानां यच्छिक्ष्यादिगुणविशेषकरणं खड्गादिभिर्विनाशो वा स मिश्रद्रव्योपक्रम इति शेषः । अश्वादीनां सचेतनत्वात् ह्रीमस्थादीनामचेतनत्वात् मिश्रद्रव्यत्वमिह भावनीयम् । अत्र च संक्षिप्तत्वा अपि वाचनाविशेषा दृश्यन्ते तेऽप्युक्तानुसारेण भावनीयाः । सेत्तमित्यादिनिगमनचतुष्टयम् । उक्तो द्रव्योपक्रमः ।

क्षेत्रोपक्रममभिधित्सुराह-

से किं तं खेत्तोवक्कमे जसं हलकुलिआइहिं । खेत्ताइं उवक्कमिज्जंति सेत्तं खेत्तोवक्कमे ॥

क्षेत्रस्योपक्रमः परिकर्म विनाशकरणं क्षेत्रोपक्रमः स क इत्याह ( खेत्तोवक्कमेत्ति ) तत्र हलं प्रतीतम् अधोनिवद्धनिर्यक्तीक्ष्णलोहपट्टिकं कुलिकं लघुतरं काष्ठं तृणादिच्छेदार्थं यत् क्षेत्रावस्थितं तन्मरुमण्डलादि प्रसिद्धं कुलिकमुच्यते ततश्च यदत्र हलकुलिकादिभिः क्षेत्राण्युपक्रम्यन्ते बीजवपनादियोग्यतामानीयन्ते स परिकर्मणि क्षेत्रोपक्रमः । आदिशब्दाद्गजेन्द्रबन्धनादिभिः क्षेत्राण्युपक्रम्यन्ते विनाश्यन्ते स वस्तुनाशे क्षेत्रोपक्रमः । गजेन्द्रमूत्रपुरीषादिदिग्धेषु क्षेत्रेषु बीजानामप्ररोहणादिनष्टानि क्षेत्राणि इति व्यपदिश्यन्ते । आह । यद्येवं क्षेत्रगतपृथिव्यादिद्रव्याणामेतौ परिकर्मविनाशौ इत्थं च द्रव्योपक्रम एवायं कथं क्षेत्रोपक्रम इति सत्यं किं तु क्षेत्रमाकाशं तस्य चामूर्त्तत्वात् मुख्यतयाऽनुपक्रमः संभवति किं तु तदाधेयद्रव्याणां पृथिव्यादीनां यः उपक्रमः स क्षेत्रेऽपि उपचर्यते । दृश्यते च आधेयधर्मोपचारात् आधारे । उक्तं च । " खेत्तमरूवं निच्चं, तस्स परिकम्मणं नव विणासो । आहेयगयवसेणउ, करणविणासो वयारोत्थ " इत्यादि सेत्तमित्यादिनिगमनम् ॥

सम्प्रति क्षेत्रोपक्रममाह-

नोवाए वक्कमणं, हलकुलियाईहिं वा वि खित्तस्स । सम्मज्जणभूमिकम्मं, पउजवतआगाइसुं तु परिकम्मं ॥

यन्नावा आदिशब्दाद्डुपादिभिश्च नद्यौ तरन्ति । अथवा हलकुलिकादिभिर्यत्क्षेत्रस्येक्षुक्षेत्रादेरुपक्रमणम् यदि वा यत् क्रियते गृहादीनां सम्मार्जनं भूमिकर्म वा देवकुलादीनां यच्च वा यथोन्मार्गशोधनं तडाग व्याख्यात इत आदिग्रहणं वा तदादिषु यत्परिकर्म खननादिलक्षणमेव समस्तोऽपि क्षेत्रोपक्रमः ॥

कालोपक्रमसूत्रम्-

से किं तं कालोवक्कमे ? जसं नालिआईहिं कालस्सोवक्कमणं कीरइ सेत्तं कालोवक्कमे ॥

कालो द्रव्यपर्याय स एव द्रव्यपर्याय इति प्रकर्माणयत्मलालितत्वादित इति द्रव्योपक्रमाभिधाने कालोपक्रम उक्त एव भवति । अथवा समयावलियमुहुत्तेत्यादि रूपस्य कालस्य स्वतन्त्रमेवोपक्रममभिधित्सुराह ॥ सूत्रकार ( सेकिंतमित्यादि ) कालस्योपक्रमः कालोपक्रमः स क इत्याह ( जण्णं नालिआईहिं ) इत्यादि णमिति वाक्यालंकारे यदिह नाडिकादिभिराद्दिशब्दात् तृणच्छायानक्षत्रचारादिपरिग्रहस्तैः काल उपक्रमः इति शेषः । तत्र नाडिका ताम्रादिमयघटिका । तृणशङ्कुच्छायादिना वा एतावत्यो-ऽस्यादिकालोऽतिक्रान्त इति यत्परिज्ञानं भवति परिकर्म्मणि कालोपक्रमः यथा तत्परिज्ञानमेव हि तस्येह परिकर्म्म यत्तु नक्षत्रादिचारैः कालस्य विनाशनं स वस्तुनाशे कालोपक्रमस्तथा ह्यनेन ग्रहनक्षत्रादिचारेण विनाशित कालो न भविष्यत्यधुना धान्यादिसम्पत्तय इति वक्तारो भवन्ति । अनु० ॥ किञ्च-

छायाए नालियाए व, परिकम्मं से जहत्थविन्नाणं । रिक्खाइ य चारेहि य, तस्स विणासो विवज्जासो ॥

( से )तस्य समयावलिका घटिका मुहूर्त्तादिलक्षणस्य कालस्येदमेव परिकर्म्म यत्किमित्याह यथार्थविज्ञानं यथावत्परिज्ञानं कयेत्याह शङ्क्वादिप्रतिच्छाया रूपच्छाया या घटिकारूपया च नालिकया विनाशस्तर्हि तस्य क इत्याह विपर्यासो वैपरीत्यभवनमनिष्टफलदायिकतया परिणमनमित्यर्थः । कैरित्याह ऋक्षगृहादिचारैस्तथा च वक्तारो भवन्त्यमुकेन नक्षत्रेण ग्रहेण वा इत्थमित्थं गच्छता विनाशित काल इति । उक्तः कालोपक्रमः । विशे० । यद्वा " सावविवोहेसु यदुमाण " द्रुमाणां शमीचिञ्चिनिकाप्रभृतीनां स्वापे विबोधे च ज्ञायते यथागतोऽस्तमादित्य उदितो वेति । एष कालोपक्रमः । वृ० १ उ० ॥

अथ भावोपक्रममाह-

से किं तं भावोवक्कमे ? दुविहे पण्णत्ते तं जहा आगमतो अ नोआगमतो अ । जाणए उवउत्ते नो आगमतो दुविहे पण्णत्ते तं जहा पसत्थे अपसत्थे अ ॥

भावोपक्रमो द्विविधः प्रज्ञप्तस्तथा आगमतो नो आगमतश्च । तत्रोपक्रमशब्दार्थज्ञस्तत्रोपयुक्तश्चागमतो भावोपक्रमः ( से किं तं नो आगमओ इत्यादि ) अत्रोत्तरम् ( नो आगमओभावोवक्कमे दुविहेत्यादि ) इहाभिप्रायाख्यो जीवद्रव्यपर्यायो भावशब्देनाभिप्रेतः । उक्तं च " भावाभिलाषा पञ्चस्वभावसत्तात्मयोन्यभिप्रायस्ततश्च भावस्य परकीयाभिप्रायस्योपक्रमणं यथा तत्परिज्ञानं भावोपक्रमः । स च द्विविधः प्रशस्तोऽप्रशस्तश्चेति । तत्राप्रशस्ताभिधित्सया आह—

तत्थ अपसत्थे मोरिणी गणिआ अमच्चाईणं ।

( तत्थअप्पसत्थेत्ति ) इह तात्पर्यं ब्राह्मण्या वेश्यया अमात्येन च यत्परकीयभावस्य यथा तत्परिज्ञानलक्षणमुपक्रमणं कृतं सोऽप्रशस्तभावोपक्रमः संसारफलत्वात् । अनु० । अशुभस्य तस्य भावोपक्रमस्य ब्राह्मणीवेश्याऽमात्याद्या दृष्टान्ताः प्रतिपादितास्तद्यथा—

एकस्या ब्राह्मण्यास्तिस्रः पुत्रिकाः तासां च परिणयनानन्तरं तथा करोमि यथैता सुखिना भवन्त्विति विचिन्त्य माता ज्येष्ठदुहितरं प्रत्यवोचद्वत्से त्वया वासभवनसमागमे स्वभर्त्ता किंचिदपराधमुद्भाव्य मूर्ध्नि पादप्रहारेण हन्तव्यो हतश्च यदनुतिष्ठति तन्ममाख्येयं इत च तया तथैव सोऽप्यतिस्नेहतरलितमना अपि प्रियतमे पीडितस्ते सुकुमारश्चरणो भविष्यतीत्यभिधानपूर्वकं तस्याश्चरणोपमर्दनं चकार । अमु च व्यतिकरं सा मात्रे निवेदितवती साप्युपक्रान्तजामातृकभावा दृष्ट्वा दुहितरं प्रत्यवादीत् । पुत्रिके यद्रोचते

तत्तदीयगृहे कुरु त्वं न तवावचनकरो भर्ता भविष्यतीति । द्वितीयापि तथैव शिक्षिता । तयापि च तथैव स्वभर्ता शिरसि प्रहतः केवलमसौ नैतत्कुलप्रसूतानां युज्यत इत्यादि किंचित्क्षणमेकं जल्पित्वा व्युपरतस्तस्मिंश्च व्यतिकरे तया मातुर्निवेदिते प्रोक्तं मात्रा वत्से! त्वमपि यथेष्टं तद्गृहे विजृम्भस्व केवलं त्वद्भर्ता जल्पित्वा स्थास्यति । एवं तृतीययाऽपि मातृशिक्षितया दुहित्रा तथैव प्रहतः स्वभर्ता केवलमेतेनोच्छलदतुच्छकोपेन नूनमकुलीना त्वं येनैव शिष्टजनानुचितं विचेष्टसे इत्याद्यभिधाय गाढं कुट्टयित्वा निष्काशिता गृहात् । तया च गत्वा सर्वं मात्रे निवेदितम् । ततस्तया विज्ञातजामातृभावतया तत्समीपं गत्वा वत्स ! स्वकुलस्थितिरियमस्माकं यदुत प्रथमसमागमे वध्वा वरस्येत्थं विधातव्यमित्यादि किंचिदभिधाय कथमप्यऽनुनीतोऽसौ दुहिता च प्रोक्ता वत्से ! दुराराधस्ते भर्ता भविष्यति परमदेवतावदप्रमत्ततया समाराधनीय इति ब्राह्मणीदृष्टान्तः ।

अथ गणिकादृष्टान्त उच्यते ॥ एकस्मिन्नगरे चतुःषष्टिविज्ञानसहिता देवदत्ताऽभिधाना रूपादिगुणवती वेश्या परिवसति तया च भुजङ्गजनाभिप्रायपरिज्ञानार्थं स्वव्यापारं कुर्वत्या सर्वा अपि राजपुत्रादिजातयो रतिभवनभित्तिषु चित्रकर्म्मणि लेखितास्तत्र च यः कश्चिद्राजपुत्रादिरागच्छति स यत्र २ कृताभ्यासस्तत्तदेव चित्रलिखितं दृष्ट्वा अत्यर्थं प्रशंसति । ततोऽसौ विलासिनी राजपुत्रादीनामन्यतरत्वेन निश्चित्य यथौचित्येनोपचरति । आनुकूल्येनोपचरिताश्च राजपुत्रादयस्तस्यै प्रचुरमर्थजातं प्रयच्छन्तीति गणिकादृष्टान्तः ।

अथाऽमात्यदृष्टान्तोऽभिधीयते ॥ एकस्मिन्नगरे कश्चिद्राजा अमात्येन सहाश्ववाहनिकायां निर्गतस्तत्र च पथि गच्छता राजतुरङ्गमेण क्वचिद्विविक्तस्थलप्रदेशे प्रस्रवणमकारि तच्च तत्प्रदेशपृथिव्याः स्थिरत्वेन बहुस्थिरत्वं चिरेणाप्यशुष्कं व्यावर्तमानो राजा तथैव व्यवस्थितमद्राक्षीच्चिरावस्थायिजलः शोभनोऽत्र प्रदेशे तडागो भविष्यतीति चिन्तितं चिरमवलोकितवांस्तदिति । ततश्चेङ्गिताकारकुशलतया विहितं तदभिप्रायेणामात्येन राजादेशमन्तरेणापि खानितं तत्प्रदेशे महासरः नत्पाल्यां च रोपिताः सर्वर्तुकपुष्पफलसमृद्ध्यो नानाजातीयतरुनिवहाः । अन्यदा च तेनैव प्रदेशेन गच्छता भूपालेन दृष्टं पृष्टं चाहो मानससरोवरवद्रमणीयं केनेदं खानितं सरः । अमात्यो जगाद देव ! भवद्भिरेव । राजा सविस्मयं प्राह कथं कस्य कदा मयैतत्कारणाय निरूपितं इत्यत सचिवो यथावृत्तं सर्वमपि कथितवानहो परचित्तोपलक्षकत्वमस्येति विचिन्त्य परितुष्टो राजा तस्य वृत्तिवर्द्धनादिना प्रसादं चकार तदेवमादिकः संसारफलोऽपरोऽप्यप्रशस्तभावोपक्रमः स्वयमभ्युह्य इति ॥ विशे० ॥ अथ प्रशस्तभावोपक्रममाह । " पसत्थे गुरुमाईण " तत्र श्रुतादिनिमित्तं गुर्वादीनां यदू भावोपक्रमणं स प्रशस्तभावोपक्रमः ॥ अनु० ॥

सीसो गुरुणो भावं, जमुवक्कमइ सुहं पसत्थमणो ।
सहियत्थं सपसत्थो, इह भावोवक्कमो हि गओ ॥

इह यच्छिष्य स्वहितार्थं श्रुतार्थं श्रुताध्ययनादिहेतो प्रशस्तमनाः शुभहेतुत्वाच्छुभं गुरुभावमुपक्राम्यतीङ्गिताकारादिना जानाति स मोक्षफलत्वात्प्रशस्तभावोपक्रमस्तेनैव चेहाऽधिकारो मोक्षार्थत्वादेव सर्वस्यास्य प्रारम्भस्येति । विशे० । वृ० ( गुरुचित्तोपक्रमो गुरु शब्दे ) साम्प्रतं तमेव शास्त्रीयोपक्रमलक्षणेन प्रकारान्तरेणाभिधित्सुराह—

अहवा उवक्कमे छव्विहे पण्णत्ते तंजहा अणुपुव्वी १ नाम २ पमाण ३ वत्तव्वया ४ अत्थाहिगारे ५ समोआरे ६ ॥

अथवा अनन्तरं यः प्रशस्तभावोपक्रमः उक्तः लोके पूर्वादिविभागः स हि द्विविधो द्रष्टव्यो गुरुभावोपक्रमः शास्त्रभावोपक्रमश्च । शास्त्रलक्षणो भावस्तस्योपक्रमः शास्त्रभावोपक्रमस्तत्रैकेन गुरुभावोपक्रमलक्षणेन प्रकारेणोक्तोऽथ द्वितीयेन शास्त्रभावोपक्रमलक्षणेन प्रकारान्तरेण तमभिधित्सुराह ( अहवा उवक्कमे इत्यादि ) अथवेति पक्षान्तरसूचकः उपक्रमः प्रथमपातनापक्षे शास्त्रीयोपक्रमो द्वितीयपातनापक्षे तु शास्त्रभावोपक्रमः षड्विधः षट्प्रकारः प्रज्ञप्तस्तद्यथा आनुपूर्वी १ नाम २ प्रमाण ३ वक्तव्यता ४ अर्थाधिकारः ५ समवतारः ६ अनु० ( एतेषाञ्च शब्दव्युत्पत्त्यादिस्वरूपं यथावसरं स्वस्वस्थाने ) ( उपोद्घातादस्य भेदः स्वस्थाने ) उपक्रम्यतेऽनेनेत्युपक्रमः । ज्वरातिसारादौ, स्था० ४ ठा० । शास्त्रे, " शुभमाहारच्छेए उवकमणं च परिणाए " तच्च त्रिधा स्वकायपरकायतदुभयरूपम् । तत्र स्वकायशस्त्रं यथा लवणोदकं मधुरोदकस्य कृष्णभूमं वा पाण्डुभूमस्य । परकायशस्त्रं यथाऽग्निरुदकस्य उदकं चाग्नेरिति तदुभयशस्त्रं यथा उदकाः शुद्धोदकस्येत्यादि । ध० २ अधि० । उपक्रमोपसंहारौ हेतुतात्पर्य्यनिर्णये, वेदान्तिमते तात्पर्य्यनिर्णायके हेतुभेदे, तत्रोपक्रमोपसंहाराभ्यां द्वाभ्यामेव तात्पर्यं निश्चीयते नत्वेकैकेनेति बोध्यम् । करणे घञ् । सामाद्युपाये, कर्मणि घञ् आरभ्यमाणे, पुं० वाच० ।

उवक्कमकाल–उपक्रमकाल–पुं० क० स० । अभिप्रेतार्थसामीप्यानयनलक्षणे सामाचारीयथायुष्कभेदभिन्ने वा कालभेदे, आ० म० द्वि० ॥

अथोपक्रमकालं विभणिषुर्भाष्यकारस्तत्स्वरूपमाह–

जेणोवक्कामिज्जइ, समीवमाणिज्जए जओ जंतु ।
स किलोवक्कमकालो, किरियापरिणामभूइट्ठो ॥

क्रमु पादविक्षेपे विवक्षितस्य दूरस्थितस्य वस्तुनस्तैस्तैरुपायभूतैः क्रियाविशेषैरुपक्रमणं सामीप्यानयनमुपक्रमः । अथ येन क्रियाविशेषेणोपक्रम्यते दूरस्थं समीपमानीयते स उपक्रम । यतो वा क्रियाविशेषादुपक्रम्यते । यद्वा सामाचारीप्रभृत वस्तु उपक्रम्यते स उपक्रमस्तस्य कालोऽप्युपचारादुपक्रम एव कालः उपक्रमकालः । किलशब्द आप्तवचनोपदर्शनार्थः । अयं च बहुभि क्रियापरिणामैर्भूयिष्ठ प्रचुरो भवति प्रभूताः क्रियापरिणामा इह भवन्ति । यद्वाऽऽयुष्काद्युपक्रमहेतुभूता क्रिया भवन्तीति यावत् । तथाच वक्ष्यति "अज्झवसाणनिमित्ते, आहारे वेयणापराघाए । फासे आणापाणू, सत्तविह भिज्जए आऊ" इत्यादीति गाथार्थ । २३ ॥

अयं च द्विविधो भवति कथमित्याह निर्युक्तिकारः–

दुविहोवक्कमकालो, सामायारी अहाउयं चेव ।
सामायारी तिविहा, ओहे दसहा य पयविभागे ॥

यथोक्त उपक्रमकालो द्विविधस्तदेव द्वैविध्यं दर्शयति सामाचार्युपक्रमकालो यथायुष्कोपक्रमकालश्च । अथ सामाचार्या उपक्रमकालत्वं समर्थयन्नाह भाष्यकारः ॥

जेणोवरियसुयाउ, सामायारिसुयमाणियं हेट्ठा ।
ओहाऽतिविह एसो, उवक्कमो समयभासाए ॥

पूर्वनिर्दिष्टान्नवमपूर्वादेरुपरिस्थमश्रुतादुद्धृत्य येन साधुसामाचारीप्रतिपादकं श्रुतमधस्तादिदानींतनकालेऽपि समा-

नीतमस्मदादीनां समीपीकृतं स एष समस्तसाधुवर्गः प्रत्यक्षः (ओहात्ति) ओघनिर्युक्तिस्तथा "इच्छामिच्छातहक्कारो इत्यादि" दशधा सामाचारीप्रतिपादको ग्रन्थश्छेदसूत्राणि चेति त्रिविधः समयचर्यया समयपरिभाषया उपक्रमः सामाचार्युपक्रमकालो भण्यत इत्यर्थः । इदमुक्तं भवति लोके न समाचार्युपक्रमकालतया कश्चित्कालो रूढः समस्ति । आगमे पुनरसौ भण्यते कथमिति चेदुच्यते येन प्रभूतेन कालेन नवमपूर्वादिगतं सामाचारीश्रुतं शिष्योऽध्येतुमलप्स्यत स कालः सामाचारीश्रुतोपक्रमणद्वारेण स्थविरैरुपक्रम्य किलार्वागण्यानीतस्तत्काललभ्यस्य सामाचारीश्रुतस्य स्थविरैरिदानीमपि विनेयेभ्यः प्रदानात्ततश्च सामाचार्युपक्रमद्वारेणोपचारतः कालस्यापि तस्योपक्रमान्तत्वात्सामाचार्युपक्रमकालोऽसौ भण्यत इति । आयुष्कोपक्रमस्यापि यथायुष्कोपक्रमकालतां दर्शयन्नाह–

जं जीवियसंवट्टण–मज्झवसाणाइ हेउमंजणियं ।
सोवक्कमाउयाणं, स जीवओवक्कमणकालो ॥

स जीवितोपक्रमणकालः यथाऽऽयुष्कोपक्रमकालोऽभिधीयत इत्यर्थः । तत्किमित्याह यज्जीवितस्य यद्वा वद्धस्य दीर्घकालवेद्यस्यायुष्कस्य संवर्त्तनं स्वल्पस्थितिकत्वापादनम् । केषां सोपक्रमायुषां जीवानां निरुपक्रमायुषां निकाचितावस्थस्यैकत्वादपवर्तनायोगात् किं निर्हेतुकमेव जीवितसंवर्त्तनं नेत्याह अध्यवसाननिमित्तादिहेतुसंजनितम् । अत्रायमभिप्रायो यश्चिरेण मरणकालोऽभविष्यदसौ आयुष्कर्मस्थित्यपवर्त्तनद्वारेणोपचारतः क्षिप्रोपक्रम्यार्वागानीत इत्यसौ यथायुष्कोपक्रमकाल उच्यत इति । नन्वेवमुपक्रमः किमायुष एव भवत्याहोश्विदन्यासामपि ज्ञानावरणादिप्रकृतीनामिति विनेयप्रश्नमाशङ्क्याह ॥

सव्वपगईणमेवं, परिणामवसादुवक्कमो होज्जा ।
पायमनिकाइयाणं, तवसा उ निकाइयाण पि ॥

न केवलमायुषः किं तु सर्वासामपि ज्ञानावरणादिप्रकृतीनां शुभाशुभपरिणामवशादपवर्त्तनाकरणेन यथायोगं स्थित्यादिखण्डनद्वारेणापवर्त्यमानानामुपक्रमो भवति स च प्रायो निकाचनाकरणेनानिकाचितानां स्पृष्टवद्धावस्थानामेव भवति प्रायो ग्रहणस्य फलमाह । तीव्रेण तपसा पुनर्निकाचितान्यपि कर्माण्युपक्रम्यन्त एव यदि पुनर्यथा बद्धं तथैवानुपक्रान्तं सर्वमपि कर्म वेद्येत तदा मुक्तिगमनं कस्यापि न स्यात्पद्भवसिद्धिकानामपि नियमेन सत्तायामन्तः सागरोपमकोटीकोटीस्थितिकस्य कर्मणः सद्भावादेतच्च स्वत एव वक्ष्यति ततोऽायुषि एव किमित्युपक्रमकाल उक्तो न शेषकर्मणामिति चेदुच्यते लोके आयुष्कोपक्रमस्यैव प्रसिद्धत्वात्तदुपक्रमवाद एवेह प्रोक्तः उपलक्षणव्याख्यानाच्छेषकर्मोपक्रमकालोऽपि द्रष्टव्य इति ॥ अथ प्रेरकः प्राह—

कम्मोवक्कामिज्जइ, अपत्तकालं पि जइ तओ पत्ता ।
अकयागमकयनासा, मोक्खाणासासया दोसा ॥

ननु यद्यप्राप्तकालमपि बहुकालवेद्यं कर्मेत्युपक्रम्यते इदानीमपि क्षिप्रमेव वेद्यते ततस्तर्ह्यकृतागमकृतनाशौ मोक्षानाश्वासादयश्चैते दोषाः प्राप्ताः । तथाहि यदीदानीमेवोपक्रमाकृतात्यल्पस्थित्यादिरूपं कर्म वेद्यते तत्पूर्वमकृतमेवोपगतमिति कृताकृतागमः । यत्तु पूर्वं दीर्घस्थित्यादिरूपतया कृतं बद्धं तस्यापवर्त्तनाकरणोपक्रमेण नाशितत्वात्कृतनाशः ततो मोक्षोऽप्येवमनाश्वासः सिद्धानामप्येवं कृतकर्मान्यागमेन प्रतिपातप्रसङ्गादिति । अत्रोत्तरमाह—

नहि दीहकालियस्स वि, नासो तस्साणुभूइओ खिप्पं ।
बहुकालाहारस्स व, दुयमग्गिय रोगिणो भोगे ॥

न कृतनाशादयो दोषा इति प्रकरणाद्गम्यते कुत इत्याह न यस्मात्तस्यायुष्कादेः कर्मणो दीर्घकालिकस्यापि दीर्घस्थित्यादिरूपतया बद्धस्याप्युपक्रमेण नाशः क्रियते । कुत इत्याह क्षिप्रं शीघ्रमेव सर्वस्यापि तस्याध्यवसायवशादनुभूतेर्वेदनाद् यदि हि तद्बहुकाले वेद्यं कर्म अवेदितमेव नश्येद्यच्चाल्पस्थित्यादिविशिष्टं वेद्यते तत्ततोऽन्यदेव भवेत्तदा कृतनाशाकृताभ्यागमौ भवेताम् यदा तु तदेव दीर्घकालवेद्यमध्यवसायविशेषादुपक्रम्य स्वल्पेनैव कालेन वेद्यते तदा कथं कृतनाशादिदोषः यथाहि बहुकालभोगयोग्यस्याऽऽहारस्य धान्यमूषकदस्युकादेरग्निरोगिणो भस्मकवातव्याधिमतो द्रुतं स्वल्पकालेनैव भोगो भवति न च तत्र कृतनाशो नाप्यकृताभ्यागम इत्येवमिहापि भावनीयमिति । अत्राह ननु यद्बद्धं तद्यदि स्वल्पकालेन सर्वमपि वेद्यते तर्हि प्रसन्नचन्द्रादिभिः सप्तमनरकपृथिवीयोग्यमसातवेदनीयादि किं कर्मबद्धं श्रूयते तद्यदि सर्वमपि तैर्वेदितं तर्हि सप्तमनरकपृथ्वीसंभविदुःखोदयप्रसङ्गः । अथ न सर्वमपि वेदितं तर्हि कथं न कृतनाशादिदोषः । सत्यमुक्तं किंतु प्रदेशापेक्षयैव तस्य सर्वस्यापि शीघ्रमनुभवनमुच्यते अनुभागवेदनं तु न भवत्यपीत्येतदेवाह–

सव्वं च पएसतया, भुज्जइ कम्ममणुभागओ भइयं ।
तेणावस्साणुभवे, के कयनासादओ तस्स ॥

सर्वमष्टप्रकारमपि कर्म सोत्तरभेदं प्रदेशतया प्रदेशानुभवद्वारेण भुज्यते वेद्यत एवेत्येष तावन्नियमोऽनुभागस्तु सानुभवमाश्रित्येत्यर्थः । भजनीयं विकल्पनीयम् अनुभागः कोऽपि वेद्यते कोऽपि पुनरध्यवसायविशेषेण हेतुत्वान्न वेद्यत इत्यर्थः । तदुक्तमागमे "तत्थ णं जं तं अणुभागकम्मं तं अत्थेगइए यं वेयइ अत्थेगइयं नो वेयइ तत्थ णं जं तं पएसकम्मं तं नियम विएइत्ति" अत प्रसन्नचन्द्रादिभिस्तस्य नरकयोग्यकर्मणः प्रदेशा एव नीरसा इह वेदिता नत्वनुभागस्य शुभाध्यवसायेन हतत्वादत एव न तेषां नरकसंभविदुःखोदयः कर्मणां विपाकानुभव एव सुखदुःखयोर्वेदनाद्येनैव तेन बद्धस्य कर्मणः सर्वेषामपि प्रदेशानामवश्यं वेदनात् के किल तस्य कर्मोपक्रमं कर्त्तुः कृतनाशादयो दोषा न केचिदित्यर्थः । आह नन्वेवमप्यनुभागो यथा बद्धस्तथैव प्रसन्नचन्द्रादिभिर्न वेदित इति कथं न कृतनाशः अस्त्वेव कृतनाशः । ननु काचिद्विधा यदि ह्यध्यवसायविशेषेणोपहतत्वान्नश्यति रसस्तदा किमनिष्टं सर्वस्यापि ह्यष्टप्रकारकर्मणो मूलोच्छेदाय यतन्त एव साधव इत्यभीष्ट एवेत्थं तेषां कृतनाशः । यदा बहुरसं बहुस्थितिकं च सत्कर्म अल्परसमल्पस्थितिकं च कृत्वा वेदयति तदा तस्याल्पस्थितिकस्य च कर्मणः पूर्वमकृतस्यागमतस्ततश्च मोक्षेऽप्यनाश्वासः सिद्धानामप्यकृतकर्मानुगमेन पुनरावृत्तिप्रसङ्गादिति चेत्तदयुक्तं यदि ह्यल्परसत्वमल्पस्थितिकत्वं च कर्मणोऽत्र निर्हेतुकं स्यात् एवं च नास्ति अल्परसत्वम् अध्यवसायविशेषकृतत्वेनाभ्यागमत्वायोगादल्पस्थितिकत्वमप्यायुष्कादीनां निर्हेतुकमेव जायते अध्यवसाननिमित्तादिहेतूनां दर्शितत्वादतस्तत्रापि कथमकृतागमत्वम् । अत एव न सिद्धानां कर्मसमागमस्तदागमहेतूनां तेष्वभावादित्यलं प्रसङ्गेन । भाष्यकारेणाप्यस्यार्थस्य प्रपञ्चयिष्यमाणत्वादिति युक्तियुक्तश्चोपक्रमः कर्मणां कुत इत्याह–

उदयक्खयखओवसमो-वसमा जं च कम्मणो भणियं ।
दव्वाइपंचयं पइ-जुत्तमवक्कामणमओ वि ॥

यच्च यस्मादुदयश्च क्षयश्च क्षयोपशमश्च उपशमश्च उदयक्षयक्षयोपशमोपशमास्ते कर्म्मणो द्रव्यक्षेत्रकालभवभावपञ्चक प्रति भणिता द्रव्यादीनाश्रित्योक्ता अतोऽपि कारणाच्छत्रादिद्रव्याणि प्राप्यायुष्कादीनां युक्तमुपक्रमण क्षय इति । तथाह्यसातवेदनीयस्य कर्म्मणो द्रव्यमहिविषकण्टकादिप्राप्योदयो भवति क्षेत्र तु नरकवासादिक काल तीव्रनिदाघसमयादिकं भव नारकभवादिकं भाव तु वृद्धभावादिकम् क्षयोऽप्यस्य द्रव्य सद्गुरुचरणारविन्दादिकं प्राप्य भवति क्षेत्रं तु पुण्यतीर्थादिकं कालं सुषमदुःषमादिकं भवं सुमनुजकुलजन्मलक्षण भाव तु सम्यग्ज्ञानावरणादिकम् क्षयोपशमोपशमौ तु वेदनीयस्य न भवतः। एवं मोहनीयेऽपि । मिथ्यात्वमोहनीयस्य द्रव्य कुतीर्थादिक प्राप्योदयो भवति क्षेत्रं तु कुरुक्षेत्रादिकं साध्वादिरहितदेशाधिक वा कालं दुःषमादिकं भवं तेजोवाय्वेकेन्द्रियादिकम अनार्यमनुजकुलजन्मरूपं वा भावं कुसमदेशनादिकमिति । क्षयक्षयोपशमास्त्वस्य द्रव्यं तीर्थकरादिकं प्राप्य भवति । क्षेत्रं तु महाविदेहादिकं, कालं सुषमदुःषमादिक भवं सुमनुजकुलजन्म भावं तु सम्यग्ज्ञानावरणादिकमिति एव शेषेऽपि ज्ञानदर्शनावरणादिके कर्म्मणि निद्रावेदनीयकर्म्मणो माहिषदधिघृतादिकं द्रव्यमासाद्योदयो भवति क्षेत्र तु अनूपादिकं काल ग्रीष्मादिक भवमेकेन्द्रियादिक भाव तु वृद्धत्वादिकमिति । क्षयोप्यस्योक्तानुसारेण वाच्य । क्षयोपशमोपशमौ त्वस्यापि न भवत । एवमन्येषामपि कर्म्मणामुदयादयो यथायोग द्रव्यादीन् प्राप्य स्वधिया भावनीया इति । अथ दृष्टान्तद्वारेण कर्म्मणा द्रव्यक्षेत्रादि सहकारिकारणापेक्षा साधयन्नाह-

पुण्णापुण्ण कयं पि हु, सायमसायं जहोदयाई ए ।
वज्झखलाहाणा उ, देइ तह पुण्णपावं पि ॥

यथा सातं सुखमसात तु दुःखं पुण्यापुण्यस्वरूपकर्म्मजनितमपि स्रक्चन्दनाङ्गनादिविषकण्टकादिना बाह्येन सहकारिणा यद्बलस्य सामर्थ्यस्याधान विधान तस्माद्वेवोदयादीन् ददाति नत्वेवमेव पुण्यपापोदयमात्रात् ततश्च यथैतत्सकललोकस्यानुभवसिद्ध सुखदुःखाख्य कार्य बाह्यान् द्रव्यक्षेत्रादीनपेक्ष्यैवोदेति क्षीयते वा न पुनरेवमेव तथा तत्कारण पुण्यपापात्मक कर्मापि द्रव्यक्षेत्रादीनपेक्ष्यैवोदेति क्षीयते वेति सिद्धमेव नहि कार्यं द्रव्यादीनपेक्षते तत्कारण तु तन्निरपेक्षमिति शक्यते वक्तुम् । न खलु कार्यभूतो घटश्चक्रचीवरादीनपेक्ष्यैव जायते तत्कारणभूतस्तु कुलालश्चक्राद्यनपेक्ष एव घट जनयतीत्युच्यमानं शोभां बिभर्ति तस्मादुदयादीन् प्रति द्रव्यादिष्वप्यपेक्षाणां कर्मणा युक्तस्तन्निधानादुपक्रम इति । यदि पुनर्यथा बद्ध तथैव वेद्यते सर्व कर्म्म न पुनरुपक्रम्यते तदा किं दूषणमित्याह-

जइ ताणुभूओच्चिय, खविज्जए कम्म मन्नहा न मय ।
तेणासंखभवज्जिय, नाणागइकारणत्तणउ ॥
नाणाभवाणुभवणा, भावादेकम्मि पज्जएणं वा ।
अणुभवओ बंधा उ, मोक्खा भावो सचाणिट्ठो ।

यदि तावद्यथाबद्ध तथैव प्रतिसमयानुभूतितः प्रतिसमय विपाकानुभवेनैव कर्म्म क्षप्यत इति तवानुमत नान्यथा नोपक्रमद्वारेण तदेतत्क्षपणमभिप्रेत हन्त तेन तर्हि सर्वस्यापि जन्तोर्मोक्षाभावस्त्वदभिप्रायेण प्राप्नोति स चानिष्ट एव कस्मात्पुनर्मोक्षाभावप्राप्तिरित्याह । तद्भवसिद्धिकस्यापि सत्तायामसंख्येयभवार्जितकर्म्मणः सद्भावास्तस्य च नानाध्यवसायबद्धत्वेन नरकादिनानागतिकारणत्वात्ततस्तस्य विपाकत एवानुभवने एकस्मिन्नपि तत्र चरमभवे नानाभावानामनुभवनं प्राप्नोति तच्चायुक्तं कुत इत्याह । ( नाणाभवाणुत्ति ) तत्र चैकस्मिन्मनुष्यगतिवर्तिनि चरमभवे नारकतिर्यगादिनाना भवानां परस्परविरुद्धत्वेनानुभवनाभावात्तर्हि तन्नानागतिकारणं कर्म्म पर्य्यायेणापि क्रमेण नानाभवेष्वनुभूय सिध्यतु किमेतावता विनश्यति तदयुक्त कुत इत्याह । ( पज्जएणवा इति ) इदमुक्तं भवति पर्यायेण वा क्रमेण तान्नानाभवान्विपाकतोऽनुभवत पुनरपि नानागतिकारणस्य कर्म्मणो बन्धः पुनरपि च क्रमेण नानाभवभ्रमण पुनर्नानागतिकारणं कर्म्म बन्ध इत्येवं मोक्षाभाव । एतच्चानिष्टं तस्माद्दिष्टव्यः कर्म्मणा मुपक्रम इति । अथ प्रकारान्तरेणोत्तरदित्सया पूर्वविहितमेव प्रेर्य पुन कारयन्नाह ।

नणु तन्न जहोवचियं, तदाणुभवओ कया गमाईय ।
तप्पाओग्गत्तं चिय, तेण वि य सज्झरोगोव्व ॥

ननु यदुपक्रमाल्लघुस्थितिक कृत्वा जीवो वेदयति तदायुष्कर्म न भवति । कथभूतमित्याह येन प्रकारेण वर्षशतभोग्यत्वलक्षणेन पूर्वमुपचित तेन जीवेन बद्ध यथोपचितमिति । यादृश पूर्वजन्मनि बद्धम् तादृशमेव तन्न भवतीत्यर्थः । वर्षशतभोग्यत्व हि दीर्घकालस्थितिक पूर्वभवे बद्धं उपक्रमानन्तरं तु यदन्तर्मुहूर्तादिलघुस्थितिकमनुभवत्यायुस्तदन्यदेव अन्यथा अनुभवादिति भाव । तत को दोष इत्याह ( तहाणुभवओ इत्यादि) यथा तेन प्रकारेण पूर्वबद्धविलक्षणमायुरनुभवतो जीवस्य पूर्वोक्ता अकृतागमादयो दोषा प्रसज्जन्ति । अत्रोत्तरमाह । ( तप्पाओग्गमित्यादि ) तस्योपक्रमस्य प्रायोग्यं उपक्रमार्हमेव तदायुष्कर्म तेन सोपक्रमायुषा जीवेन चित्त पूर्वजन्मनि बद्ध साध्यरोगवदिति । ततश्च यथोपक्रमसाध्ये रोगो व्याधिः केनापि प्रागुपार्जित इत्युपक्रम्य त स्फोटयति न च तस्य तथा कुर्वतोऽकृतागमादय एवमायुरप्युपक्रमसाध्यतया बद्धत्वात् । यद्युपक्रमस्यैव वेदयति तदा केन स्यात्कृतागम इति ।

ननु साध्योऽसाध्यो वा रोग इति कथ ज्ञायत इत्याह ।
अणुवक्कमओ नासइ, कालेणोवक्कमेण खिप्पंति ।
कालेण चेव मज्झा-सज्झा रुज्झं तहा कम्मं ॥

साध्यो रोग इति स चानुपक्रमत उपक्रमाभावात्कालेन निजभुक्तिच्छेदेन नश्यति । उपक्रमेण तु विहितेन क्षिप्रमर्वागपि शीघ्र नश्यति साध्यत्वादेव । यस्त्वसाध्यो रोग स कालो मरणं तेनैव नश्यति नतूपक्रमशतैरपि । तथा कर्म्मापि यत्साध्य बन्धकालेऽप्युपक्रमसव्यपेक्षमेव बद्धं तदुपक्रमसामग्र्यभावे कालेन सपूर्णवर्षशतादिलक्षणेन निजभुक्तिच्छेदेन नश्यति उपक्रमसामग्रीसन्निधाने तु शीघ्रमन्तर्मुहूर्तादिनैव कालेन नश्यति साध्यत्वादेव यत्पुनरसाध्य बन्धकाले निकाचितावस्थमनुपक्रमे च बद्ध तदनेकोपक्रमसद्भावेऽपि निजपरिपूर्तिकालमन्तरेण न नश्यति ।

अस्यैवार्थस्य साधनार्थमाह ।

सज्झासज्झं कम्मं, किरियाए दोसओ जहा रोगो ।
सज्झमुवक्कामिज्जइ, एत्तो चिय सज्झरोगो व्व ॥

( किरियाए त्ति ) क्रियाया उपक्रमलक्षणाया साध्यमसाध्यं च कर्म्म भवतीति प्रतिज्ञा ( दोसओत्ति ) दोषत्वादिति हेतुर्यो दोष स स उपक्रमक्रियाया साध्योऽसाध्यश्च भवति

यथा ज्वरादिरोगः यश्च साध्यं तदुपक्रम्यते ( पत्तोच्चियत्ति ) साध्यत्वादेव साध्यरोगवदिति । अथवा प्रकारान्तरेण प्रमाणयन्नाह ॥

सज्झामयहेउओ, मज्झनियाणासओहवा सज्झं ।
सोवक्कमणमयं पि व, देहो देहाइजावाउ ॥

अथवा सह उपक्रमेण वर्त्तते सोपक्रमणं वेदनीयादिकम् । साध्यमुपक्रमक्रियाविषयभूतं कर्मेति प्रतिज्ञा । उपक्रमश्च साध्यश्चासौ आमयश्च साध्यामयस्तद्धेतुत्वादिति हेतुः । यथा अयमेव प्रत्यक्षो देहः मण्डच्छेदादिद्वारेण देहोऽपि साध्यः उपक्रमक्रियाविषयः सोपक्रमश्चेति साध्यविकलत्वाभावो दृष्टान्तस्तस्य साध्यामयस्य च गण्डादिकारणत्वाद्देहस्य साधनविकलत्वस्याप्यभावः । अथवा हेत्वन्तरभावादन्यथा प्रमाणं सोपक्रमणं साध्यं कर्म्मेति सैव प्रतिज्ञा साध्यनिदानाश्रयत्वादिति । अत्र निदान कारणं साध्यकर्म्मजनकं च निदानमपि साध्यमुच्यते साध्यं च तन्निदानं च साध्यनिदानं तस्याश्रयः साध्यनिदानाश्रयस्तद्भावः साध्यनिदानाश्रयत्वं तस्मात्साध्यनिदानाश्रयत्वात्साध्यनिदानजन्यत्वादिति भावः । निदानस्य साध्यत्वं कथं ज्ञायत इति चेदुच्यते साध्यकर्म्मजनकत्वात्कर्म्मणोऽपि साध्यत्वं कथमवसीयत इति ॥ चेदुच्यते उपक्रमान्यथानुपपत्तेरिति । आह ननूपक्रम एव ह्यत्र साध्यस्ततस्तदसिद्धौ कर्म्मणः साध्यत्वं न सिध्यति तदसिद्धौ तु कर्मजनकस्यापि साध्यत्वासिद्धिरिति साध्यनिदानजन्यत्वादिति साध्यत्वविशेषणासिद्ध्याऽसिद्धो हेतुरिति । सत्य किन्त्वेवं मन्यते "जंनाणुज्जुडचियखविज्जयकम्मेत्यादि" ग्रन्थोक्तयुक्तिभ्यः सिद्धमेव कर्म्मण सोपक्रमत्वं ततस्तत्सिद्धौ कर्म्मणः साध्यत्वं सिध्यति तत्सिद्धौ च साध्यकर्म्मजनकतया तज्जनकनिदानस्यापि साध्यसिद्धिरिति । यद्येवं पूर्वोक्तयुक्तिभ्य एव सिद्धः कर्म्मणः सोपक्रमत्वमिह पुनरपि तत्साधनमपार्थकमिति चेत्सत्य किंतु प्रपञ्चप्रियविनेयानुग्रहार्थत्वाददोषः । यदि वा कर्म्मणो निदानमध्यवसायस्थानान्येव तानि च विचित्रत्वेनासंख्येयलोकाकाशप्रदेशराशिप्रमाणान्यतस्तेषु मध्ये यथा निरुपक्रमजनकानि तथास्योपकर्म्मजनकान्यध्यवसायस्थानानि विद्यन्ते एवेति तद्वैचित्र्यान्यथानुपपत्तेरित्यादि युक्तितः साध्यकर्म्म जनकनिदानस्य साध्यत्वं साधनीय तत्सिद्धौ च तत्कार्यस्य कर्म्मणोऽपि साध्यत्वं सोपक्रमणत्वं सिध्यतीत्यलं प्रपञ्चेन । यथा अय देह इति स एव दृष्टान्तः अस्य च गण्डच्छेदादिद्वारेण क्रियमानत्वात्सोपक्रमत्वमत एव साध्यनिदानजन्यता अत साध्यसाधनधर्मान्यासस्याविकलतेति । अथवा हेत्वन्यथात्वेनान्ययाप्रमाण ( देहाइजावाउत्ति ) सोपक्रमणं साध्यमुपक्रमक्रियाविषयभूतं कर्म्मेति प्रतिज्ञा सैव देहादौ भावादिति दाष्टार्ज्जावे च भावादिति हेतुः देहे जीवे च किल वर्त्तते कर्म्म केवलं जीवे वहयय पिण्डन्यायेन तस्य वृत्तिः देहे त्वाधाराधेयभावेन जीवो वर्त्तते तद्वारेण च कर्म्मापीति यथायमेव प्रत्यक्षो देह इति स एव दृष्टान्त । नन्वाधाराधेयभावेन देहस्यापि जीवे वृत्तिर्युक्ता देहस्य च देहे वृत्तिरिति एतत्कथम् । सत्य सर्वे भावा स्वात्मनि वर्त्तन्ते वस्त्वन्तरे चाधारे इति न्यायाद्देहस्यापि देहे वृत्तिर्युज्यत एव । अथवास्यौदारिकादिदेहस्य जीववत्कार्म्मणलक्षणेऽपि देहे वृत्तिः प्रतीतैवेति न देहादौ भावादिति साधनधर्माधिकप्रताद्दृष्टान्तस्येति । अथ कर्म्मणः सोपक्रमत्वमिद्धावुपपत्त्यन्तराण्यप्याह ।

किंचिदकाले वि फलं, पाइज्जइ पच्चए य कालेण ।
तह कम्मं पाइज्जइ, पाएण वि पच्चए वासं ॥

भिन्नो जहेह कालो, तुल्ले वि पहम्मि गइविसेसा उ ।
सत्येव गहणकालो, गइमेहो भेयओ भिन्नो ॥
तह तुल्लम्मि वि कम्मे य, परिणामाइकिरिया विसेसा उ ।
भिन्नोणुभवणकालो, जेट्ठो मज्झो जहन्नो य ।
जह वा दीहा रज्जू, डज्झइ कालेण पुंजिए खिप्पं ।
वियओ पडो व्व सुस्सइ, पिंडीभूओ य कालेण ।
भागा य निरोवट्टो, हीरइ कमसो जहा णदी खिप्पं ।
किरिया विसेसओ वा, समे वि रोगे चिगिच्छाए ॥

यथा किंचिदाम्रराजादनादिफलं यावता कालेन वृक्षस्थं क्रमेण पच्यते तदपेक्षया अर्वाक्कालेऽपि गर्तप्रक्षेपपलालस्थगनाद्युपायेन पाच्यते अन्यत्र वृक्षस्यमेवोपायाभावतः क्रमशः स्वपाककालेन पच्यते तथा कर्म्माप्यायुष्कादिकं किमप्यध्यवसानादिहेतुनिर्बन्धकालनिर्वर्तितवर्षशतादिरूपस्थितिकालापेक्षया कालेनाप्यन्तर्मुहूर्त्तादिना पाच्यते वेद्यतेऽनुभूय पर्यन्त नीयत इति तात्पर्यम् अन्यानुबन्धकालनिर्वर्तितवर्षशतादिलक्षणस्थितिकालेनैव संपूर्णेन विपाच्यते अनुभूयत इति । अथवा यथेह तुल्येऽपि त्रियोजनादिके पथि त्रयाणां पुरुषाणां गच्छतां प्रहरो द्व्यादिलक्षणो गतिविशेषाद्भिन्नो गतिकालो विशिष्यते दृश्यते एव कर्म्मणः तुल्यस्थितिकस्यापि तीव्रमन्दमध्यमाध्यवसायविशेषाज्जघन्यमध्यमोत्कृष्टलक्षणस्त्रिविधोऽनुभवनकालो भवति । यदिवा यथा तुल्येऽपि शास्त्रेऽस्येतॄणां मतिर्ग्रहणबुद्धिर्मेधा पुनरिहावधारणस्वरूपा गृह्यते तद्भेदात्त्रिविधो ग्रहणस्य पठनस्य कालो भिन्नो ऽनेकरूपो विलोक्यते एवमायुषोऽपि परिणामविशेषात्तुल्यस्थितिकस्याप्यनेकरूपोऽनुभवनकाल इति । पथि शास्त्रदृष्टान्तयोः प्रकृतयोजनामाह । ( तहतुल्लम्मिवीत्यादि ) गतार्थैव नवरं ( परिणामाइ किरियाविसेसाओत्ति ) परिणामोऽध्यवसानमादिशब्दाद्वाह्यदण्डकशस्त्रादयो गृह्यन्ते क्रिया च परिणामादिलक्षणा परिणामादयश्च क्रिया च परिणामादिक्रियास्ताद्विशेषास्तद्भेदा बहुभिस्तुल्यस्थितिके बद्धेऽपि कर्म्मणि भिन्न एवानुभवनकाल इति यथा दीर्घा प्रसारिता रज्जुरेकस्मात्पक्षात्क्रमेण ज्वलन्ती प्रभूतेनैव कालेन दह्यते पुञ्जीकृता तु पिण्डिता तु ज्वलन्ती क्षिप्रं शीघ्रमेव भस्मीभवति । एव कर्म्माप्यायुष्कादिक दीर्घकालस्थितिक प्रतिसमयं क्रमेण वेद्यमान चिरकालेन वेद्यते अपवर्त्य पुनर्वेद्यमानमल्पेनैव कालेन वेद्यत इति । यथा वा जलार्द्रः पिण्डीभूतः । पटश्चिरकालेन शुष्यति विततः प्रसारितः पुनरल्पेनैव कालेन शुष्यत्येव कर्म्मापीत्युपनयस्त्व ( यथैवेति ) यथा वा लक्षादिकस्य महतो राशेर्निरपवर्तनोऽपवर्तनोपवर्त्तनारहितो भाग क्रमशश्चिरेण ह्रियते अन्यथा पुनरपवर्तनायां विहितायां क्षिप्र शीघ्रमेवापह्रियते । तथाहि किल लक्षप्रमाणस्य राशेर्दशभिर्भागो हरणीय स च यद्यपवर्तनामन्तरेण ह्रियते तदा महती वेला लगति यदि तु गुणस्य लक्षस्य गुणकारकस्य च दशलक्षस्य पञ्चभिरपवर्त्तना विधीयते पञ्चभिर्भागो ह्रियत इत्यर्थ तदा शीघ्रमेव ह्रियते भागो लक्षस्य हि पञ्चभिर्भागे हृते लब्धानि विंशति सहस्राणि दशानां तु पञ्चभिर्भागे हृते लब्धौ द्वौ एताभ्यां विंशतिसाहस्रिकस्य लघुराशेर्भागे हृते झटित्येव दशसहस्राण्यागच्छन्ति अनपवर्तितैस्तु दशभिरनपवर्तितस्यैव लक्षस्यैव दीर्घो भागापहारकालो भवति एवमायुषोऽप्यनपवर्तितस्य तु लघुत्साविति यथा वा समेऽपि कुष्ठादिके रोगे क्रियाविशेषाच्चिकित्साया रोगनिग्रहलक्षणाया कालभेदो भवत्येवमायुषोऽपीति । तदेवं सप्रसङ्गो द्विविधोऽप्युक्त उपक्रमकाल ॥ विशे० ॥

उवक्कमण–उपक्रमण– न० उप-क्रम-ल्युट् । विक्षेपणे, विशे० ७ द्वा० । आरम्भे, करणे ल्युट् तत्साधने, सुश्रुतोक्ते दीर्घायुष्यादिज्ञानपूर्वकचिकित्सायाम्, भूमिकायाम्, स्त्री० । वाच० ॥

उवक्कमिया–औपक्रमिकी– स्त्री० उपक्रम्यतेऽनेनेत्युपक्रमो ज्वरातिसारादिस्तत्र भवा या सा औपक्रमिकी । स्था० । उपक्रम्यतेऽनेनेत्युपक्रम कर्मवेदनोपायस्तत्र भवा औपक्रमिकी (भ० १ श०४ उ० ) कर्मोदीरणकारणेन निर्वृत्ताया तत्र भवायां ज्वरातिसारादिजन्याया वा वेदनायाम्, स्था० २ ठा० । " अहं उवक्कमियं वेयणं णो सम्मं सहामि " ॥ स्था० ४ ठा० ॥

उवक्कमियुवसग्ग–औपक्रमिकोपसर्ग– पु० दण्डकशाऽऽदिनाऽसातवेदनीयोदयापादके, सूत्र० १ श्रु० ३ अ० । ( उवसग्गशब्दे विवृतिः ) ।

उवक्केस–उपक्लेश-पुं० उपक्लिश्नाति अनेन उप क्लिश् करणे घञ् मदादिषु, वाच० । भावे घञ् । शोकादिबाधायाम्,, स्था०७ ठा०

उवक्ख (क्खा) इत्ता-उपख्यापयितृ-त्रि०लोके ख्यापयति, "पावेहिं कम्मेहिं अत्ताणं उवक्खाइत्ता भवइ्त्ति" । पापैः कर्मभिरात्मानमुपख्यापयिता भवति । अयं महापापकारीत्येवं लोके ख्यापयतीति । सूत्र० २ श्रु० २ अ० ॥

उवक्खड–उपस्कृत–त्रि० उप-कृ-क्त-भूषणादौ सुट् । भूषिते, संहृते, विकृते, अध्याहृते, वाच० । घृतहिङ्गुधान्यकमिरचलवणजीरकादिभिः कृतोपस्कारे शाकादिके, । "उवक्खडं भोयणमाहणाणं अत्तट्ठियं सिद्धमिहेगपक्खं" उपा० । "उवक्खडाखीरदहिमादी" नि० चू० ८ उ । उपस्करणमुपस्कृतम् । पाके, । स्था० ४ ठा० ।

उवक्खडसंपन्न–उपस्कृतसंपन्न–पु०उपस्कृतेन पाकेन सपन्न ।ओदनमण्डकादौ आहारभेदे, । स्था०४ठा० ।

उवक्खडणाम–उपस्कृतनाम–न० कक्कडुगादिउवक्खडं इत्युक्तेरामभेदे, "उवक्खडणाम णाम जहा वणयादीणं उवक्खडियाण जेण सिज्झति ते कक्कडुयाम उवक्खडियाम भण्णति' नि०चू०१५उ० ।

उवक्खडिज्जमाण–उपस्क्रियमाण–त्रि०उपसंस्क्रियमाणे, "उवक्खडिज्जमाणे पेहाए पुरा अप्पजूहिए" आचा० २श्रु०२अ० ।नि०चू०

उवक्खडिय–उपस्कृत–त्रि०संस्कृते, "विरूवरूवे भोयणजाए उवक्खडिए सिया" "उवक्खडियपेहाए" उवक्खडियं पेहाए तहा वि तं णो एव वदेज्जा" आचा०२ श्रु०४अ० । " सवत्थपरमण्णं उवक्खडियं । आ०म०द्वि० ॥

उवक्खडेत्ता–उपस्कृत्य–अव्य०संस्कृत्येत्यर्थे, "असणं वा ४ उवकरेत्ता उवक्खडेत्ता । आचा० १ श्रु० ३ अ० २ उ० ।

उवक्खर–उपस्कर– पु० उप-कृ-भावे अप् । हिंसने सुट् । हिंसने, उपस्करोति उप-कृ-अच् । भूषणे, समवाये, प्रतियत्ने, विकारे, सूपके, कटकमण्डलादौ, समुदिते, संहृते, व्यञ्जनसंस्कारकपिष्टधान्यकादिद्रव्ये, गृहसंस्कारके समार्जन्यादौ, वाच० । सूर्यादिके, नि० चू० १० उ० ॥ उपस्क्रियतेऽनेनेत्युपस्कर । हिङ्ग्वादौ । स्था० ४ ठा० ॥

उवक्खरणसाला–उपस्करणशाला–स्त्री० महानसे, नि०चू०८उ० ।

उवक्खरसंपण्ण–उपस्करसंपन्न– पु० उपस्क्रियतेऽनेनेत्युपस्करो हिंग्वादिस्तेन सपन्न । हिंग्वादिभिः संस्कृते ओदनमण्डकादौ, आहारभेदे, स्था० ४ ठा० ।

उवक्खाइया–उपाख्यायिका–स्त्री० कथाभेदे, ज्ञाताधर्मकथासु पञ्चपञ्चाख्यायिकोपाख्यायिकाशतानि । न० ॥

उवग–उपग– त्रि० उप-गम-ड–उपगन्तरि, वाच० ॥

उवक्क–पुं०तिरश्चि, "तदणुचए वावि उवगो" उपको नाम अन्यः कोऽपि तिर्यगापतितो मिलितः । वृ०६उ० ।गतार्यां च । नि०चू०३उ०

उवगंतुकाम–उपगन्तुकाम– त्रि० अभ्युत्थातुकामे, " जो सविग्गविहारं उवगंतुकामो अब्भुट्ठिउकाम इत्यर्थ " । नि० चू०१८उ० ।

उवगय–उपगत– त्रि० उप-गम्-क्त स्वीकृते, उपस्थिते, ज्ञाते, वाच० । ढौकिते, सूत्र० १ श्रु० ३ अ० । अधिगते, " णिउणसिप्पोवगएहिं " औ० । प्रश्न० । युक्ते, " सिरिए हिरिए उवगए उत्तप्पसरीरे " रा० । ' सण्णाणणाणोवगए महेसी " उत्त० १२ अ० । औ० । उप सामीप्येन गत । प्राप्ते, सूत्र० २ श्रु० १ अ० । द० । पंचा० । अनु० । रा० । " णिहवहयसग्गसोव्वणकक्कसतरुणवयभावमुवगयाओ " औ० । उत्त० । " झाणकोट्ठोवगए संजमेण तवसा अप्पाणं भावेमाणे विहरइ " ध्यानं धर्म्यं शुक्लं वा तदेव कोष्ठ कुसूलो ध्यानकोष्टस्तमुपगतस्तत्र प्रविष्टो ध्यानकोष्ठोपगत भ० १ श० १ उ० । "लोयग्गमुवगयाण" लोकाग्रमुपगतेभ्यः लोकाग्रमीषत्प्राग्भाराख्य तदुप सामीप्येन निरविशेषकर्मविच्युत्पातपराभिन्नप्रदेशतया गता उपगता । ल० । उपेति कात्स्नसामीप्येन गतानां प्राप्तानाम् । यद्वा उपेत्युपसर्गः प्रकर्षेऽप्युपलभ्यते यथा पोढारागेण तेन स्थानमतुपमसुखं प्रकर्षेण गतानामिति सम्म० ॥

उवगयसलाहत्त–उपगतश्लाघत्व– न० उक्तगुणयोगात् प्राप्तश्लाघतारूपे चतुर्विंशे सत्यवचनातिशये, स० । रा० ॥

उवगरण–उपकरण– न० उपक्रियतेऽनेन उप-कृ-ल्युट्-प्रधानसाधके अङ्गे, हस्त्यश्वरथासनमञ्चकादौ, आचा० १ श्रु०२ अ० । अङ्गे, "केवलिस्सणं वीरियस्स सयोगसद्दव्वयाए चत्तारि उवगरणाइ भवंति । भ० ५ श० ४ उ० । कामभोगाङ्गे, धनधान्यहिरण्यादिके, सूत्र०२ श्रु० १ अ० । उपक्रियतेऽनेनेत्युपकरणम् । चुल्ल्यादिके दर्व्यादिके च । तन्निरुक्तिश्चैवम् ।

उपकरणशब्दं व्याख्यानयति ॥

सिज्झन्तस्सुवयारं, दिज्जंतस्स व कारउ य जं दव्वं ।
तं उवकरणचुल्ली, उवकादव्वीए डोयाइ ॥

यत् चुल्ल्यादिकं सिद्ध्यतेऽन्नस्य यद्वा यद्दर्व्यादिकं दीयमानस्य भक्तस्योपकारं करोति तच्चुल्ल्यादिकं दर्व्यादिकं च उपकरणमित्युच्यते । उपक्रियते अनेनेत्युपकरणमिति व्युत्पत्तेः ॥ पि० ॥ आचा० । स्था० । उपकरणं त्वनेकविधम् कटपिटकशूर्पादिके, अनु० । भ० । " लोहीकडाहकडुच्छुकादौ, भ० ५ श० ७ उ० । उपक्रियते व्रती अनेनेत्युपकरणम् धर्मशरीरोपष्टम्भहेतौ वस्त्रौ, उत्त० १२ अ० । दण्डकरजोहरणवस्त्रपात्रादौ, प्रश्न० १ द्वा० । प्रव० । स्था० । यज्ज्ञानादीनामुपकारकं तदुपकरणमुच्यते । तथा चाह । "जं जुज्जइ उवयारे उवगरणं तम्मि होइ उवगरणं । अहिगरणं अजओ अ, जयं परिहरंतो परिहरंतो" ध० ३ अधि० । यत्किंच साधूनामुपकारे न व्याप्रियते नञोपकरणं किन्तु अधिकरणम् । वृ० १ उ० । उपकारियस्तुनि, प्रश्न०१ द्वा० । खड्गस्थानीयाया बाह्यनिर्वृत्तेर्या खड्गधारास्थानीया स्वच्छतरपुद्गलसमूहात्मिका अभ्यन्तरा निर्वृत्तिः सा । शक्तिविशेषे, जी० १ प्रति० । आचा० ।

उवगरणउप्पादणया–उपकरणोत्पादनता–स्त्री० उपकुर्वन्तीति शीतातपादिषु सीदन्तं स्थिरीकुर्वन्तीति उपकरणानि तेषामुत्पादनता उपकरणोत्पादनता वक्ष्यमाणप्रकारेण उत्पादनरूपे विनयभेदे, अथोपकरणोत्पादनता एन्उनि ।

से किं तं उवगरणउप्पायणया २ चउव्विहा पएणत्ता तं जहा अणुप्पण्णाइं उवगरणाइं उप्पाइत्ता भवति पोराणाइं उवगरणाइं संरक्खिता भवति। संगोवित्ता भवति परित्तं जाणित्ता पच्चुद्धरित्ता भवति जधाविधि सविभइत्ता भवति सेत्तं उवगरणउप्पायणया ।

प्रश्नसूत्रं कण्ठ्यम्। गुरुराह। चतुर्विधा- प्रज्ञप्तास्तद्यथा (अणुप्पन्नाणंति) अनुत्पन्नानि पूर्वमप्राप्तानि अपेक्षमाणानि उपकरणानि सम्येगपणाविशुद्ध्या उत्पादयिता संपादनशीलो भवति यत स्वयमाचार्यस्योपकरणोत्पादने वाचनाधर्मकथाद्यन्तरायो भवति अत शिष्येणैवोपकरणाद्युत्पादनीयम्। (पोराणाइंति) पुरातनान्युपकरणानि संरक्षयिता उपायेन चौरादिभ्य अथवा जीर्णानि स्तीव्यति काले प्रावृणोति व्याख्यानकाले चोलपट्टादिकम्। संगोपयिता च अल्पसागारिककरणेन मलिनतारक्षणेन वेति ३ "परित्त" नाम अल्पोपधिकं देशान्तरादागत साधर्मिकं समीपस्थं वा अन्यगणसत्कं वा सीदन्त दृष्ट्वा उपकरणैरुद्धर्ता भवति ३ यथाविधिसविभक्ता भवति यथाविधि नाम ययागाम्किकतया दाता भवति ग्लानादिकारणे वा तथाविधवस्त्रसग्राहको भवति४ सेत्तमित्यादिनिगमनवचनं व्यक्तम्। दशा० ४ अ० ॥

उवगरणदाण-उपकरणदान-न० उपकरणं दण्डकादि तस्य दानम् वितरणम्। ममैकान्तनिर्जरा भवत्विति बुद्ध्या दण्डकादिवितरणे, "बहुमाणो वंदणयनिवेयणा पालणा य जानणउवगरणमेव " दर्श० ॥

उवगरणपूतिन-उपकरणपूतिक-न० राध्यमानस्य दीयमानस्य वा उपकारकारके पूतिभेदे, "जंत रज्झंतस्स वा दिज्जंतस्स वा उवकारं करेति तं उवकरणपूतिन तं च इमं चुल्लुक्खलियं डोएदव्वीऊडे य मासय पूर्ति डोएलोणेहिं गूसंकामणफोडसंधूमे ' नि०चू० १ उ० ।

उवगरणलाघव-उपकरणलाघव-न० अल्पोपधित्वरूपे द्रव्यतो लाघवे, आचा० १ श्रु०६ अ० ३ उ० ।

उवगरणवडिया-उपकरणप्रतिज्ञा-स्त्री० उपकरणलाभप्रतिज्ञायाम्, "आमोसगा उवगरणवडियाए संपिडिया गच्छेज्जा' आमोपकाश्चौरा उपकरणप्रतिज्ञया उपकरणार्थिन- समागच्छेयु । आचा० २ श्रु० ।

उवगरणसंजम-उपकरणसयम-पुं० महामूल्यवस्त्रादिपरिहाररूपे पुस्तकवस्त्रतृणचर्मपञ्चकपरिहारलक्षणे वा संयमभेदे, स्था० ८ ठा० ।

उवगरणसंजोयणा-उपकरणसंयोजना-स्त्री० उपकरणविषये संयोजनादोषे, सा च बाह्याऽभ्यन्तरा च । तत्र बहिरुपकरणसंयोजना उपकरण गवेषयत एव साधोश्चोलपट्टकप्राप्तौ विभूषाप्रत्ययमन्तरा कल्प्यं याचयित्वा परिभुञ्जानस्य भवति । अन्तरुपकरणसंयोजना वसतावागत्य तथैव परिभुञ्जानस्य। पञ्चा० १३ विव० । पं० व० ॥

उवगरणसंवर-उपकरणसंवर-पुं० अप्रतिनियताकल्पनीयवस्त्राद्यग्रहणरूपे विप्रकीर्णस्य वस्त्राद्युपकरणस्य संवरणलक्षणे वा संवरभेदे, स्था० १० ठा० ।

उवगसित्ता-उपसंश्लिष्य-अव्य०समीपमानीयेत्यर्थे "मणबंध मार्गेहि गेरोहि कलुणविर्णीयमुवगसित्ताण सूत्र०१श्रु०४अ०।

उवगाइज्जमाण-उपगीयमान-त्रि० क्रियमाणोपगाने, " गन्धव्वेहि गाइएहि उवनिविज्झमाणे उवगाइज्जमाणे उवलालिज्जमाणे ' ग० ।

उवगार-उपकार-पुं० उप-कृ-भावे-घञ् । प्रधानस्यानुगुण्यसम्पादने, उपकृतौ, वाच० ॥ उपकारवक्तव्यताभेदाश्च । चैत्यमुनिवन्दनप्रभृति-भाष्यविवृतेर्यथाश्रुतं किंचित्। संघस्याचारविधिं, वक्ष्ये स्वपरोपकाराय ।२। इहहि दुरन्तानन्तचतुरन्तासारविसारिसंसारापारावारे निमज्जता भव्यजन्तुना जिनप्रवचनप्रतीतचोल्लकादिदशनिदर्शनदुष्प्राप्यं कथमपि प्रशस्तमनुजजन्मादिसामग्रीमवाप्य भवजलधिसमुत्तरणप्रवहणस धर्मसद्धर्म्मविधाने प्रयत्नो विधेयः । यदवादि "भवकोटी दुष्प्रापामवाप्य नृभवादिसकलसामग्रीम्। भवजलधियानपात्रे, धर्मे यत्न सदा कार्यः । १ । तत्रापि विशेषतः परोपकारकरणे प्रवर्तितव्यम् । तस्यैवान्वयव्यतिरेकाभ्यामपि पुण्यबन्धनिबन्धनत्वात् उक्तं च ' संक्षेपात्कथ्यते धर्मो, जना किं विस्तरेण व. । परोपकार. पुण्याय, पापाय परपीडनम् । १ । स चोपकारो द्वेधा । द्रव्यतो भावतश्च । तत्र द्रव्योपकारो भोजनशयनाच्छादनप्रदानादिलक्षणः स चाल्पीयाननात्यन्तिकश्चैहिकार्थस्यापि साधनेनैकान्तेन साधीयानिति । भावोपकारस्त्वध्यापनश्रावणादिस्वरूपो गरीयानित्यात्यन्तिक उभयलोकसुखावहश्चेत्यतो भावोपकार एव यतितव्यम् । स च परमार्थत- पारमेश्वरप्रवचनोपदेश एव । तस्यैव भवशतोपचितदु खलक्षयक्षमत्वात् ॥ आह च ॥ नोपकारो जगत्यस्मिस्तादृशो विद्यते क्वचित् । यादृशी दु-खविच्छेदाद्देहिनां धर्मदेशना ॥ २ ॥ संघा० । नं० । सुखानुभवे, षो० ए विव० ।

उवगा ( या ) रण-उपकारण-न० आत्मनोऽन्यस्य वा ग्लानाद्यवस्थायामन्येनोपकारकरणे, "उवयारणपारणासु विणओ पउंजियव्वो " प्रश्न० ३ द्वा० ।

उवगाराभाव-उपकाराभाव-पुं० कृतकृत्यत्वेनानन्दाद्युपकारस्यासंभवे, " उवगाराभावम्मि वि, पूआणं पूजगस्स उवगारो " पंचा० ४ विव० ।

उवगारि ( ण् )-उपकारिन्-त्रि० उपकारके, आ० म० प्र० । विशे० । उपकारवति. षो० १० विव० ।

उवगारिया-उपकारिका-स्त्री० विमानाधिपतिसत्कप्रासादावतंसकादीन् उपकरोत्युपष्टभ्नातीत्युपकारिका विमानाधिपतिसत्कप्रासादावतंसकादीनां पीठिकायाम्, अन्यत्र त्वियमुपकार्योपकारिकेति प्रसिद्धा । उक्तं च " गृहस्थानां स्मृतं राज्ञामुपकार्य्योपकारिका " इति । रा० ।

उवगारि (य) यालयण-उपकारिकालयन-न० उपकारिका लयनमिव उपकारिकालयनम् । उपकार्योपकारिकारूपे लयने, "एत्थणं महेगे उवयारियलयणे पण्णत्ते एग जोयणसयसहस्सं आयामविक्खम्भेणं ' रा० । जी० ॥

उवगिज्जमाण-उपगीयमान-त्रि० "तद्गुणगानात् क्रियमाणोपगाने, तुडगमत्थएहिं । बत्तीसइबद्धेहिं उवनच्चिज्जमाणे उवगिज्जमाणे " भ० ६ श० ३३ उ० । तथाविधबालोचितगीत विशेषैर्गीयमाने गाप्यमाने च । औ० ॥

उवगीइ-उपगीति-स्त्री० आर्य्या द्वितीयकार्द्धे यदु गदितं लक्षण " तत् स्यात् यत्रुभयोरपि दलयोरुपगीतिं तामुनिर्ब्रूते " वृ० र० । उक्ते मात्रावृत्तभेदे, ग० ।

उवगूढ-उपगूढ-न० उप-गुह- भावे- क्त । आलिङ्गने, कर्मणि क्त-आलिङ्गिते, त्रि०।सूत्र० १ श्रु०४ अ०।वेष्टिते, ज्ञा०१ अ०। युक्ते, "गुञ्जावककुहरोवगूढं' "गुंजंत वंसकुहरोवगूढ" ग०।

उवगूहण-उपगूहन-न० उप-गुह-ल्युट्-ओरुत् । आलिङ्गने,

वाच० । प्रच्छन्नरक्षणे, रचनायां च । " आरुहणणट्टणेहिं वालयउवगूहणेहिं च " तं० ॥

**उवगूहिज्जमाण**–उपगूह्यमान–त्रि० आलिङ्ग्यमाने, " उवनच्चिज्जमाणे उवगाइज्जमाणे उवलालिज्जमाणे उवगूहिज्जमाणे " ज्ञा० १ अ० ॥

**उवगूहिय**–उपगूहित ( उपगूढ ) न० गाढतरपरिष्वङ्गरूपे सम्प्राप्तकामभेदे, प्रव०१७० द्वा० । द० । आलिङ्गिते, त्रि० "एस सो वइरो तुट्ठेहिं उवगूहिओ " आ०म०द्वि० ।

**उवग्ग**–उपाग्र–न० अग्रस्य मुखस्य वर्षाकालसम्बन्धिनः समीपमुपाग्रम् ॥ आषाढमासे, " एसो चियकालो पुणरेव गयं उवग्गम्मि " व्य० १ उ० ।

**उवग्गह**–उपग्रह–पु० उपगृह्णातीत्युपग्रहः । उपाधौ, ओ० । नि० चू० । उपग्रहणमुपग्रहः शिष्याणां भक्तश्रुतादिदानेनोपष्टम्भने, ग०१ अधि० वि० । ओ० । पं०चू० । पं०भा० । (तद्भेदाः परिहारशब्दे वक्ष्यन्ते) आत्मनः समीपे संयमोपष्टम्भार्थवस्तुनो ग्रहणे, प्रव०६० द्वा० । उपकारे, विशे० । कारावन्धने वन्दीकरणे, उपयोगे, आनुकूल्ये, वाच० । परस्मैपदात्मने पदयोर्व्यत्यये, यथा तिष्ठति प्रतिष्ठते रमते उपरमतीत्यादि । सूत्र० २ श्रु० ७ अ० । कर्मणि घञ् । कारारुद्धे, वन्द्याम्, वाच० ।

**उवग्गहकर**–उपग्रहकर–त्रि० उपकारके, "जोगंपि वत्थमाइ उवगहं करेति गच्छस्स " पं० व० २ द्वा० ॥

**उवग्गहकुसल**–उपग्रहकुशल– पु० उपग्रहविषयके कुशले, उप सामीप्येन ग्रहः सोऽपि द्विधा द्रव्यतो भावतश्च । तत्र येषामाचार्य उपाध्यायो वा न विद्यते तान् । आत्मसमीपे समानीय तेषामित्वरां दिशं बध्वा तावद्धारयति यावन्निष्पाद्यन्ते एष द्रव्यत उपग्रहः । ग्रह उपादाने इति वचनात् । यः पुनरविशेषेण सर्वेषामुपकारे वर्त्तते स भावतः उपग्रहः ॥

उपग्रहकुशलमाह ॥

बाला सहवुड्ढेसुं, संततवकिलंतवेयणातंके ।
सेज्जनिसेज्जोवहियाए, समणभेसज्जवग्गहिए ॥
दाणदवावणकारा–वणे य तहाकयमणुण्णाए ।
उवहितमणुवहितविही, जाणाति उवग्गहं एयं ॥

बालाः सहवृद्धेषु तथाप्रभृतिमार्गगमनतः । पवनो वा श्रान्तेषु तपः क्लान्तेषु तथा वेदनायां सामान्यतः शरीरपीडायां जातायामातङ्के च सद्यो जाते सति रोगे समुत्पन्ने शय्या वसतिर्निषद्या पीठफलकादिरूपा उपधिः कल्पादि पानं द्रव्यम् अशनमोदनादि भेषजमौषधमौपग्रहिकं दण्ड प्रोञ्छनाद्युपकरणम् । एतेषां समाहारो द्वन्द्वस्तस्मिन् सप्तमी षष्ठ्यर्थे ततोऽयमर्थः । एतेषां स्वयं दानेऽन्यैर्दापने तथा वैयावृत्यादेः कारापणे च तथा "कयमणुण्णाए" इति पदे कृतस्यानुज्ञायां यत्प्रवर्त्तनं तथा य उपहितविधिर्यश्चानुपहितविधिर्नाम यत् आचार्यैर्वितीर्णं तदाचार्यमनुज्ञाप्यान्येषां साधूनां तदन्तरेण विस्तरयतां ददाति अनुपहितविधिर्यदनुत्पन्नमुत्पाद्य ददाति । अन्येतु व्याचक्षते यद्यस्य गुरुभिर्दत्तं तत्तस्योपनयतीत्येव उपहितविधिः । यत्पुनस्तस्य गुरुभिर्दत्तं तत्सोऽन्यस्य गुरून् अनुज्ञाप्य ददाति एषोऽनुपहितविधिः । एवं सर्वमुपग्रहं जानाति । एतदेव लेशतो व्याख्यानयति ॥

बालादीणं तेसिं, सेज्जनिसेज्जोवहिप्पयाणेहिं ।
भत्तन्नपाणभेसज्ज–मादीहिं उवग्गहिं कुणइ ॥
देइ सयं दावेइ य, करेय कारावए य अणुजाणे ।
उवहिय जं जस्स गुरूहिं, दिण्णंतं तस्स उवणेति ॥

अणुवहियं जं तस्स उ, दिन्नंतं देइ सो उ अन्नस्स ।
खमासमणेहिं दिन्नं, तुज्झं ति उवग्गहो एसो ॥

एतेषामनन्तरगाथाभिहितानां बालादीनां बालासमर्थवृद्धमार्गगमनादिश्रान्ततपः क्लान्तवेदनार्त्तजातातङ्कानां शय्यानिषद्योपधिप्रदानैस्तथा भक्त मोदकाशोकवर्त्यादि अन्नमोदनादि पानभैषज्ये प्रागुक्तस्वरूपे आदिशब्दादौपग्रहिकोपकरणादिपरिग्रहः । एतैरुपग्रहमुपष्टम्भं करोति कथमित्याह । स्वयं शय्यादिकं ददाति । अन्यैर्वा दापयति तथा स्वयं वैयावृत्यादि करोति । अन्यैः कारयति । कुर्वन्त वा अन्यमनुजानीते । (उवहियत्ति) पदैकदेशे पदसमुदायोपचारादुपहितविधिरिति द्रष्टव्यम् । यद्यस्य गुरुभिर्दत्तं तत्तस्योपनयतीत्येष उपहितविधिर्यत्पुनस्तस्य दत्तं सोऽन्यस्मै गुरून् अनुज्ञाप्य ददाति । क्षमाश्रमणैस्तुभ्यमिदं दत्तमित्येषोऽनुपहितविधिः । एष सर्वोऽप्युग्रहः । उक्त उपग्रहकुशलः ॥ व्य० ३ उ० ॥

**उवग्गहट्ठया**–उपग्रहार्थता–स्त्री० भक्तपानवस्त्राद्युत्पादनसमर्थतयोपष्टम्भयिता भवत्विति प्रयोजने, स्था० ५ ठा० ३ उ० ॥

**उवग्गहिय**–उपग्रहीत–न० भावे-क्त० । पुरुषस्यालिङ्गनैकान्तनयनलिङ्गग्रहणकरग्रहणादौ, " उवहसिएहिं उवग्गहिएहिं उवसद्देहिं " त० । कर्मणि क्त- । ज्ञानादिभिर्वस्त्रादिभिश्चोपष्टम्भिते, ॥ पा० ॥

**उवग्घाय**–उपोद्घात–पु० समीपवर्तिनः प्रकृतस्य उद्घात उद्धननम् ज्ञानं चिन्तनं यत्र । उप– हन्– गतौ– गत्यर्थत्वात् ज्ञानार्थता आधारे घञ् । प्रकृतसिद्ध्यर्थमालोचनात्मके सङ्गतिप्रभेदे "चिन्तां प्रकृतसिद्ध्यर्थ–मुपोद्घातं विदुर्बुधाः" तदर्थवर्णने आरम्भो शास्त्रोत्पत्तौ, विशे० ॥ उपक्रमादस्य भेदः । अपरस्त्वाह । ननूपक्रमः प्रायः शास्त्रसमुत्थापनार्थं उक्तः उपोद्घातोऽप्येष शास्त्रसमुद्धातप्रयोजन एवेति कोऽनयोर्भेदः । उच्यते उपक्रमो ह्युद्देशमात्रनियतव्यापारः उपोद्घातस्तु प्रायेण तदुद्दिष्टवस्तुप्रबोधनफलोऽर्थानुगमत्वादित्यलं विस्तरेण आ०म० प्र० ॥ उपोद्धननमुपोद्घातः । व्याख्येयस्य सूत्रस्य व्याख्यानविधिसमीपीकरणे ॥ विशे० ॥ उपोद्घातफलम् ॥ अनेन चापोद्घातेनाभिहितेन सूत्रादयोऽर्था व्यक्ता भवन्ति यथा दीपेनापवरके न मसि उक्तं च "वत्ती भवन्ति अत्था, दीवेण अप्पगास उववरए । वत्ती भवति अत्था, उवघाएण तहा सत्थे" उपोद्घाताभिधानमन्तरेण पुनः शास्त्रं स्वतोऽतिविशिष्टमपि न तथाविधमुपादेयतया विराजते यथा नभसि मेघच्छन्नश्चन्द्रमाः । उक्तं च " मेघच्छन्नो यथा चन्द्रो, न राजति नभस्तले । उपोद्घातं विना शास्त्रं न राजति तथा विधं " तत्र सूत्रभणितं " नो कप्पति निग्गंथाण वा निग्गंथीण वा आमेनालपलवे इत्यादि " सूत्रस्पर्शिकनिर्युक्तिभणितमिदम् । वृ० १ उ० ॥

**उवग्घायणिज्जुत्ति**–उपोद्घातनिर्युक्ति–स्त्री० उपोद्घातेन व्याख्येयस्य सूत्रस्य व्याख्या विधिसमीपीकरणमुपोद्घातनिर्युक्तिस्तद्रूपस्तस्या वा अनुगमः उपोद्घातनिर्युक्त्यनुगमः । निर्युक्त्यनुगमभेदे, " से किं तं उवग्घायनिज्जुत्तिअणुगमे २ इमाहिं दोहिं मूलगाहाहिं अणुगतव्वे तंजहा "उद्देसे १ निद्देसे अ २ निग्गमे ३ खित्ते ४ काले ५ पुरिसे य ६ । कारण ७ पच्चय ८ लक्खण, ९ णए १० समोआरणाणुमए ११ ॥ किं १२ कइविहं १३ कस्स, १४ कहिं १५ केसु १६ कहं १७ किच्चिरं हवइ काल १८ । कइ १९ संतर २० मविरहियं, २१ भवा २२ गरिस २३ फा-

सण २४ निरुत्ता २५ ॥ सेत्तं उवग्घायनिज्जुत्ति अणुगमो" । अनु० । आ० म० प्र० । विशे० । आ० म० द्वि० ( समाइय शब्दे स्पष्टी भविष्यति )

उवघाय-उपघात-पुं० उपहननमुपघातः । पिण्डशय्यादेरकल्पनायाम् । स्था० ३ ठा० । अशवलीकरणे, ओ० । परम्पराघाते, प्रश्न० ९ द्वा० । उपघातभेदः "उवघाओ" उपेत्य घातो उपघातः स च द्विविधः द्रव्योपघातो भावोपघातश्च तत्र द्रव्योपघातो विशुद्धद्रव्येणोपहन्यते । भावोपघातो द्विविधः प्रशस्तोऽप्रशस्तश्च । तत्र प्रशस्तोपघातः मिथ्यादर्शनाविरतिप्रमादकषायोपघातः सम्यग्दर्शनादिषु प्रशस्तः । अप्रशस्तोपघातस्तु सम्यग्दर्शनाद्युपघातः मिथ्यात्वादिषु प्रशस्तः विशोधी नानार्थातिशयेषु सुप्रशसास्तिभावयोः शोधनं शुद्धिः विविधमनेकप्रकारा वा शुद्धिर्विशुद्धिरिय द्विविधा द्रव्यविशुद्धिर्वस्त्रादि भावविशुद्धिः सम्यग्दर्शनज्ञानचारित्रविशुद्धिः । स च विशुद्ध्युपघातो वा अजीवद्रव्याणां न भवतीत्येष सिद्धान्तः कस्माद्यस्मादजीवद्रव्याणां क्रोधादयः परिणामविशेषा न भवन्ति तेनोपघातो विशुद्धता वा अजीवा नो न भवन्तीत्येष भावनानिश्चय इत्यर्थः । आह कस्योपघात इति सञ्ज्ञा । यद्यजीवानां न भवति शुद्धिरुपघातो वा उच्यते उपघातो विशुद्धिर्वा परिणामप्रत्यया जीवानां भवति न त्वजीवानामिति सिद्धान्तः । परिणतिः परिणामः अध्यवसायो भाव इत्येकार्थाः । प० चू० ॥

त्रिविध उपघातः

तिविहे उवघाए पण्णत्ते तंजहा उग्गमोवघाए उप्पायणोवघाए एसणोवघाए । एवं विसोही ॥

उपहननमुपघातः पिण्डशय्यादेरकल्पतेत्यर्थः । तत्र उद्गमनमुद्गमः पिण्डादेः प्रभव इत्यर्थः तस्य चाधाकर्मादयः षोडश दोषाः । उक्तञ्च " तत्थुग्गमोपसूई-पभवो एमादि होंति एगठा । सो पिण्डस्सिह पगओ, तस्स य दोसा इमे होंति " ।१। आहाकम्मुद्देसिय २ पूईकम्मे य ३ मीसजाए य ।४। ठवणा ५ पाहुडियाए, ६ पाओयर ७ कीअ ८ पामिच्चे ९ ॥२॥ परियट्टए १० अभिहडे, ११ उब्भिन्ने १२ मालोहडेई य १३ अच्छिज्जे १४ अणिसिट्ठे, १५ अज्झोयरए य १६ सोलसमेत्ति ॥३॥ " इह चाभेदविवक्षया उद्गमदोष एवोद्गमोऽतस्तेनोद्गमेनोपघातः पिण्डादेरकल्पनीयता करणं चरणस्य वा शवलीकरणमुद्गमोपघातः उद्गमस्य वा पिण्डादिप्रसूतेरुपघात आधाकर्मत्वादिभिर्दुष्टतोद्गमोपघातः ।

पञ्चविध उपघातो यथा—

पंचविहे उवघाए पण्णत्ते तंजहा उग्गमोवघाए उप्पायणोवघाए एसणोवघाए परिकम्मोवघाए परिहरणोवघाए ॥

उपघातोऽशुद्धता उद्गमोपघात उद्गमदोषैराधाकर्मादिभिः षोडशप्रकारैर्भक्तपानोपकरणलेपानामशुद्धता एवं सर्वत्र नवरम् उत्पादनया उत्पादनादोषैः षोडशभिर्धात्र्यादिभिरेषणया तद्दोषैर्दशभिः शङ्कितादिभिरिति परिकर्मवस्त्रपात्रादेश्छेदनसीवनादि तेन तस्योपघातोऽकल्पता तत्र वस्त्रस्य परिकर्मोपघातो यथा "तिण्हपरिफालियाण, वत्थं जो फालियं तु ससीवे । पंचण्ह एगतरं, सो पावइ आणमाईणि" ॥ १ ॥ तथा पात्रस्य " अवलफलगेगबंधं, दुग्गतिगअइरेगबंधण वावि । जो पाय परियट्टइ ( परिभुङ्क्ते ) पर दिवड्ढा उ मासा उ " ॥ २ ॥ ( स आज्ञादीनाप्नोतीति गम्यते ) " दूमिय धूमिय वासिय, उज्जोइय बलिकडा अवत्ता य । सित्ता संमट्ठा वि य, विसोहि कोर्डि गया वसहित्ति " ॥ ३ ॥ दूमिता धवलिता " वलिकृता कूरादिना अव्यक्ता । छगणादिना लिप्ता संमृष्टा समार्जितेत्यर्थः तथा परिहरणा आसेवा तयोपध्यादेरकल्पता तत्रोपधेर्यथा एकाकिना हिण्डकसाधुना यदासेवितमुपकरणं तदुपहतं भवतीति समयव्यवस्था " जग्गहणअप्पडिवज्झण, जइ वि चिरेण न उवहम्मेति " वचनात् । अस्य चायमर्थ एकाकी गच्छभ्रष्टो यदि जागर्ति दुग्धादिषु च न प्रतिबध्यते तदा यद्यप्यसौ गच्छे चिरेणागच्छति तथाऽप्युपधिर्नोपहन्यते अन्यथा तूपहन्यत इति । वसतेरपि मासचतुर्मासयोरुपरि कालातिक्रान्तेनेति । तथा मासद्वयं चतुर्मासद्वयं वा वर्जयित्वा पुनस्तत्रैव वसतामुपस्थानेऽपि च तद्दोषाभिधानात् । उक्तञ्च " उउ वासा समतीता, कालातीता उ सा भवे सेज्जा । से चेव उवट्ठाण-दुगुणादुगणं च वज्जित्ता " ॥ १ ॥ तथा भक्तस्यापरिष्ठापनिकाकारं प्रत्यकल्पता तदुक्तं " विहिगहिय विहिभुत्तं, अइरेग भत्तपाण भोत्तव्व । विहिगहिए विहिभुत्ते, इत्थ य चउरो भवे भंगा ॥ १ ॥ अहवा वि अ विहिगहियं, विहिभुत्तं त गुरुहि णुण्णाय । सेसाणाणुण्णाया, गहणे दिन्ने वनिज्जुहणंति । स्था० ३ ठा० । (व्याख्या एसणाशब्दे)

दशविध उपघातः ॥

दशविहे उवघाए पण्णत्ते तंजहा उग्गमोवघाए उप्पायणोवघाए जहा पंचट्ठाणे जाव परिहरणोवघाए णाणोवघाए दंसणोवघाए चरित्तोवघाए अवियत्तोवघाए सारक्खणोवघाए

यदुद्गमेनाधाकर्मादिना षोडशविधेनोपहननं विराधनं चारित्रस्याकल्प्यता वा भक्तादेः स उद्गमोपघातः एवमुत्पादनया धात्र्यादिदोषलक्षणया य स उत्पादनोपघातः । " जहा पचट्ठाणेति " भणनात्तत्सूत्रमिह दृश्य कियदत आह जाव परीत्यादि तच्चेदं (एसणोवघाए ) एषणया शङ्कितादिभेदया य स एषणोपघातः (परिकम्मोवघाए ) परिकर्म वस्त्रपात्रादिसमारचनं तेनोपघातः स्वाध्यायस्य श्रमादिना शरीरस्य संयमस्य वोपघातः परिकर्मोपघातः । ( परिहरणोवघाए ) परिहरणा अलाक्षणिकस्याकल्प्यस्य वोपकरणस्य सेवा तया य स परिहरणोपघातस्तथा ज्ञानोपघातः श्रुतज्ञानापेक्षया प्रमादतो दर्शनोपघातः शङ्कादिभिश्चारित्रोपघातः समितिभङ्गादिभिः ( अवियत्तोवघाएत्ति ) अवियत्तमप्रीतिकं तेनोपघाते विनयादेः ( सारक्खणोवघाएत्ति ) संरक्षणेन शरीरादिविषये मूर्च्छयोपघातः परिग्रहविरतेरिति संरक्षणोपघात इति । स्था० १० ठा० । " उवघाय च दसविहं, असंवर तह य संकिलेसं च । परिवज्जतो गुत्तो, रक्खामि महव्वए पंच " पा० । ध० । मूलतो विनाशे, कर्म० । नि० चू० । उपद्रवे, तं० । कर्मायोग्यतासम्पादने, उपकारे, वाच० ॥

उवघायकम्म-उपघातकर्मन्-न० परोपघातक्रियायाम्, " आसूणिमक्खिरागं च, गिद्धुवघाय कम्मगं । उच्छोलण च कक्कं च, तं विज्ज परिजाणिया " सूत्र० १ श्रु० ८ अ० ।

उवघायजणय-उपघातजनक-न० उपघातः सत्वघातादिस्तज्जनकम्. अनु० ॥ सत्वोपघातादिप्रवर्तके सूत्रदोषे, यथा वेदविहिता हिंसा धर्म्मायेत्यादि ॥ विशे० ॥ यथा वा " न मांसभक्षणे दोष इत्यादि " बृ० १ उ० ।

उवघायण-उपहनन-न० हन्यतेऽनेनेति हननम् उप सामीप्येन हननमुपहननम् । करे, " भूओवघायणमणज्ज " आव० ४ अ० ।

उवघायणाम-उपघातनामन्-न० उपघातनिबन्धनं नाम । नामकर्मभेदे, यदुदयवशात्स्वशरीरावयवैः स्वशरीरान्तः परिवर्द्धमानैः प्रतिजिह्वगलवृन्दलम्बकचोरदन्तादिभिरुपहन्यते । यद्वा

स्वयं कृतोद्बन्धनभैरवप्रपातादिभिस्तदुपघातनाम । प० स० । कर्म० । स० । आ० । प्रव० ॥

उवघायणिस्सिय-उपघातनिश्रित-न० उपघाते प्राणि वधे निश्रितमाश्रितम् । दशमे मृषाभेदे, स्था० १० ठा० ।

उवघायपरकम-उपघातपराक्रम-पुं० उपहतभेदोपकरणे पराक्रमभेदे, नि० चू० ए उ० । अथोपघातपराक्रमाह—

पुव्विपाणं कम्मा-णं असुभफलविभागेण ।
नो उवहम्मइ वेओ, जीवाणं पावकम्माणं ॥

पूर्वं दुश्चीर्णानां दुराचारसमाचरणेनार्जितानां कर्मणामशुभफलो विपाक उदयो यद्भवति ततो जीवानां पापकर्मणां वेद उपहन्यते । तत्र चायं दृष्टान्तः—

जह हेमो उ कुमारो, इंदमहे तुष्टियानिमित्ताणं ।
मुच्छिय गिद्धो य मओ, वेओ वि य उवहओ तस्स ॥

यथा हेमो नाम कुमार इन्द्रमहे समागता यास्तुषिका बालिकास्तासां निमित्तेन मूर्च्छितो गृद्धोऽत्यन्तमासक्तः सन् मृतः पञ्चत्वमुपगतो वेदेऽपि च तस्योपहतः सजात इत्यक्षरार्थः । भावार्थः कथानकादवसेयः । तच्चैव हेमपुरे नगरे हेमकूडो राया हेमसंभावा भारिया तस्स पुत्तो वरतवियहेमसंनिभो हेमा नाम कुमारो सो य पत्तजोव्वणो अन्नया इंदमहे इन्दट्ठाणगओ पेच्छइ य । तत्थ नगरकुलवालियाण रूववईण पंचसए बलिपुप्फधूवं कडुच्छुयहत्थो ताओ दट्ठु सेवगपुरिसे भणइ किमेयाओ आरायाओ किं वा अभिलसंति । नेहिलहिंदियं इद मग्गति वरसोहग्ग अभिलसति भणिया य तेण सेवगपुरिसा अहमेयासि इंदेण वरो दत्तो नेहपयाउ अतेउरम्मि । तेहिं ताओ घेत्तु सव्वाओ अतेउरे स्यूढाओ ताहे नागरजणे रायाण उवट्ठिओ मोपहवेत्ति तओ रन्ना भणिय किं मज्झ पुत्तो न रोयति तुह जामाओ ज तओ नागरा तुट्ठिहकाढिया एय रन्नो सम्मतति अविमप्पगया नागरा कुमारेण नायव्वा परिणीया सो एसु अतीव पसत्तो पसत्तस्स य तस्स सव्वत्तीणनीगाढो जाओ तओ तस्स वेओ चया व जाओ य अन्ने भणति ताहि चेव अप्पफिसे रोगोत्ति रूवियाहिं अहापिहं मारिओ पयावहोपघातपमक उच्यते । वृ० ४ उ०

उवचय-उपचय-पुं० उपचीयते उपचयं नीयते इन्द्रियमनेनेति उपचयः । प्रायोग्यपुद्गलसग्रहणसम्पतिरिन्द्रियपर्याप्तौ प्रज्ञा० १५ पद । इन्द्रियशब्दे तदुपचय उक्त ॥ शरीरे, आव० ५ अ० । विपर्के, निकाये, समूहे, पिं० । ओ० । वृ० । भ० । अत्र दण्डकः—

जीवाणं भंते ! किं सोवचया सावचया सोवचयसावचया निरुवचया निरवचया गोयमा ! जीवा नो सोवचया नो सावचया नो सोवचयसावचया निरुवचया निरवचया । एगिंदिया तइयपदे सेसा जीवा चउहिं पएहिं भाणियव्वा । सिद्धाणं भंते पुच्छा गोयमा ! सिद्धा सोवचया नो सावचया नो सोवचयसावचया निरुवचय निरवचया । जीवाणं भंते ! केवइयं कालं निरुवचयनिरवचया ? गोयमा ! सव्वद्धं । नेरइयाणं भंते ! केवइयं कालं सोवचया ? गोयमा ! जहन्नं एक्कं समयं उक्कोसेणं आवलियाए असंखेज्जइभागं केवइयं कालं सावचया एवं चेव केवइयं कालं सोवचयसावचया एवं चेव केवइयं कालं निरुवचयनिरवचया ? गोयमा ! जहन्नं एक्कं समयं उक्कोसं बारसमुहुत्ता एगिंदिया सव्वे सोवचया सावचया सव्वद्धं । सेसा सव्वे सोवचया वि सोवचयसावचया वि । जहण्णं एक्कं समयं उक्कोसं आवलियाए असंखेज्जइ भागं अवट्ठिएहिं वक्कंति य कालो भाणियव्वो । सिद्धाणं भंते ! केवइयं कालं सोवचया गोयमा ! जहण्णं एक्कं समयं उक्कोसं अट्ठ समया केवइयं निरुवचयनिरवचया जहन्नं एक्कं उक्कोसं छम्मासा सेवं भंते भंतेत्ति ।

सोपचयाः सवृद्धयः प्राक्तनेष्वन्येषामुत्पादात् । सापचयाः प्राक्तनेभ्यः केषाञ्चिदुद्वर्त्तनात्सहानयः सोपचयसापचयाः उत्पादोद्वर्त्तनाभ्यां वृद्धिहान्योर्युगपद्भावात् निरुपचयनिरपचया उत्पादोद्वर्त्तनयोरभावेन वृद्धिहान्योरभावत् । ननूपचयो वृद्धिरपचयस्तु हानिर्युगपद्वयमद्वयं चावस्थिततत्वमेव च शब्दभेदव्यतिरेकेण कोऽनयो सूत्रयोर्भेदः ? उच्यते पूर्वत्र परिमाणमभिप्रेतमिह तु तदनपेक्षमुत्पादोद्वर्तनामात्र ततश्चेह तृतीयभङ्गके पूर्वोक्तवृद्ध्यादिविकल्पानां त्रयमपि स्यात्तथाहि बहुतरोत्पादे वृद्धिर्बहुतरोद्वर्तने च हानिः । समोत्पादोद्वर्तनयोश्चावस्थिततत्वमित्येवं भेद इति । ( एगिंदिया तइयपयंमि ) सोपचयसापचया इत्यर्थः युगपदुत्पादोद्वर्तनाभ्यां वृद्धिहानिभावात् शेषभङ्गकेषु ते न सम्भवन्ति प्रत्येकमुत्पादोद्वर्तनयोस्तद्विरहस्य चाभावादिति । ( अवट्ठिएहिंति ) निरुपचयनिरपचयेषु । ( वक्कति कालो भाणियव्वोति ) विरहकालो वाच्य ॥

वस्त्रस्य पुद्गलोपचयो जीवानां कर्मोपचय ।

वत्थस्सणं भंते ! पोग्गलोवचये किं पयोगसा वीससा ? गोयमा ! पयोगसा वि वीससा वि । जहा णं भंते ! वत्थस्स णं पोग्गलोवचये पयोगसा वि वीससा वि तहाणं जीवाणं कम्मोवचए किं पयोगसा वीससा ? गोयमा ! पयोगसा नो वीससा । सेकेणट्ठेणं ? गोयमा ! जीवाणं तिविहे पओगे पण्णत्ते तं जहा-मणप्पओगे वइप्पओगे कायप्पओगे इच्चेतेणं तिविहेणं पयोगेणं । जीवाणं कम्मोवचये पयोगसा नो वीससा एवं सव्वेसिं पंचिंदियाणं तिविहे पयोगे भाणियव्वे । पुढविकाइयाणं एगविहपओगेणं एवं जाव वणस्सइकाइया । विगलिंदियाणं दुविहे पओगे पण्णत्ते तं जहा- वइप्पयोगे य कायप्पओगे य । इच्चेतेणं दुविहेणं पयोगेणं कम्मोवचये पयोगसा नो वीससा से एणं अट्ठेणं जाव नो वीससा एवं जस्स जो पओगो जाव वेमाणिया णं । वत्थस्सणं भंते ! पोग्गलोवचए किं सादीए सपज्जवसिए सादीए अपज्जवसिए अणादीए सपज्जवसिए अणादीए अपज्जवसिए ? गोयमा ! वत्थस्स णं पोग्गलोवचए सादीए सपज्जवसिए नो सादीए अपज्जवसिए नो अणादीए सपज्जवसिए नो अणादीए अपज्जवसिए । जहा णं भंते ! वत्थस्स पोग्गलोवचए सादीए सपज्जवसिए नो सादीए अपज्जवसिए नो अणादीए सपज्जवसिए नो अणादीए अपज्जवसिए तहाणं जीवाण कम्मोवचए पुच्छा गोयमा ! अत्थेगइयाणं जीवाणं कम्मोवचए सादीए सपज्जवसिए अत्थेगइए अणादीए

सपज्जवसिए अत्येगइए अणादीए अपज्जवसिए नो चेव णं जीवाणं कम्मोवचए सादीए अपज्जवसिए । से केणट्ठेणं ? गोयमा ! इरियावहिया बंधयस्स कम्मोवचए सादीए सपज्जवसिए भवसिद्धियस्स कम्मोवचए अणादीए सपज्जवसिए अभवसिद्धियस्स कम्मोवचए अणादीए अपज्जवसिए से तेणट्ठेणं ॥

वस्त्रेत्यादिद्वारे ॥ ( पयोगसावीससायत्ति ) छान्दसत्वात् प्रयोगेण पुरुषव्यापारेण विस्रसया स्वभावेनेति । ( जीवाण कम्मोवचए पओगसा णो वीससत्ति) प्रयोगेणैव अन्यथा योगस्यापि बन्धप्रसङ्ग । सादिद्वारे । ( इरियावहियबंधस्सेत्यादि ) ईर्या पथो गमनमार्गस्तत्र भवमैर्यापथिक केवलयोगप्रत्यय कर्मेत्यर्थ । तद्बन्धकस्योपशान्तमोहस्य क्षीणमोहस्य सयोगिके वलिनश्चेत्यर्थः । ऐर्यापथिककर्म्मणो हि अबन्धपूर्वस्य बन्धनात्सादित्वमयोग्यवस्थायां श्रेणिप्रतिपाते वा अबन्धनात्सपर्यवसितत्वम् ( गइए गइ पडुच्चत्ति ) नरकादिगतौ गमनमाश्रित्य सादय आगमनमाश्रित्य च सपर्यवसिता इत्यर्थः । ( सिद्धगइ पडुच्च साइया अपज्जवसियत्ति ) इहाक्षेपपरिहारावेव " साइ अपज्जवसिया, सिद्धानयनामदय कालम्मि । आसिकयाणविमुत्ता, सिद्धा सिद्धे वहि सिद्धते ॥ सव्वं साइसरीरं, नयनामादिमयदेहसब्भावो । कालाणाइत्तणओ,जहा वए इदियाईण ॥ सव्वो साई सिद्धो, नयादिमो विज्जई तहा ते च । सिद्धो सिद्धा य सया, निद्दिट्ठा रोहपुच्छा एत्ति । ( त चाति ) तच्च सिद्धानादित्वमिष्यते यत सिद्धा सिद्धायेत्यादि [ भवसिद्धियाअद्धिमित्यादि ] भवसिद्धिकानां भव्यत्वस्याधि सिद्धत्वेऽपैतीति कृत्वाऽनादिसपर्यवसिता चेति । भ० ६ श० ३ उ० । उन्नतौ, पष्ठत्रिदशलाभाच्च,लग्नादुपचया स्मृता । इति ज्योतिपोक्ते लग्नात्पष्ठादिस्थानेषु च । वाच० ।

उवचयण—उपचयन—न०बन्धस्याबाधाकालं मुक्त्वा ज्ञानावरणीयादितया निषेके, स चैवं प्रथमस्थितौ बहुतरकर्मदलिक निषिञ्चति ततो द्वितीयायां विशेषहीनमेव यावदुत्कृष्टायां विशेषहीन निषिञ्चति । उक्त च " मोत्तूण सगमबाह, पढमाए ठिइए बहुतर दव्वं । सेसं विसेसहीण, जावुक्कोसंति सव्वेसिंति" " चउहिं ठाणेहिं अट्ठ कम्मपगडीओ उवचिणिसु उवचिण"ति उवचिणिस्सति " स्था० ४ ठा० । परिपोषणे च । स्था० ८ ठा० ।

उवचर—उपचर—उप-चर-धा- भ्वा० पर० । सामीप्ये, नाशने, उपसर्गणे, " अदुवा पक्खिणो उवचरंति " अदुवा कुचरा उवचरंति " । उपचरन्ति उप सामीप्येन मांसादिकमश्नन्ति । अथवा श्मशानादौ पक्षिणो गृध्राद्य उपचरन्ति । अथवा कुत्सित चरन्तीति कुचराश्चोरपारदारिकादयस्ते च कश्चिच्छून्यगृहादावुपचरन्ति उपसर्गयन्ति । आचा० १ श्रु० ८ अ० २ उ० ॥

उवचरय—उपचरक—पुं० स्तेनभेदे, "अयतेणे अय उवचरते अयतंसो आगओ एतिकट्टु" आचा० २ श्रु० । सूत्र० ॥

उवचरिय—उपचरित—त्रि० उप-चर-क्त- । उपासिते, योषिते, च । वाच० । उप-चर-भावे-उपचारे, पंचा० ६ विव० ।

उवचिण—उपचयन—न०गृहीतानां कर्मपुद्गलानां ज्ञानावरणादिभावेन निषेचने, स्था० १० ठा० । ( व्याख्या पावकम्मशब्दे )

उवचित ( य )—उपचित—त्रि० पुष्टे, कल्प० । समृद्धे, ज्ञा०४अ० । मांसले, " कणयसिलायलुज्जलपसत्थसमतलोवचियविच्छिन्नपिहुलवच्छा" । जी० ३ प्रति० । निवेशिते, प्रज्ञा०२ पद । उपनिहिते, ' उवचियचंदणकलस " उपचिता उपनिहिता चन्दनकलशामाङ्गल्यघटा गृहान्तश्चतुष्केषु यत्र तत्तथा । कल्प० । औ० । रा० । वृते, "बहुउप्पलकुमुयफुल्लकेसरोवचिया" । ज० १ वक्ख० । उन्नते औ० ॥ ज्ञा० ॥ बहुश. प्रदेशसामीप्येन शरीरे चिते, ॥ भ० १ श० १ उ० । जीवप्रदेशैर्व्याप्ते, अनु० ॥ प्रारब्धे वा कर्मणि, उत्त० १ अ० । दिग्धे,मेदि० । लेपनादना वर्द्धिष्णौ, । निदिग्धे, अमर वाच० ॥ "उवचियखोमियदुगुल्लपट्टपरिच्छन्ने" परिकर्मितं ( खोमित्ति) क्षौम यद्दुकूल वस्त्र तस्य य. पट्टो युगलापेक्षया एकपट्ट तेन आच्छादिते, ॥ स० ॥ परिकर्मिते, औ० । कल्प० । समाहिते, हेम० । सुसञ्चिते च । वाच० ।

उवचितकाय—उपचितकाय—त्रि० मांसलशरीरे, " परिवूढकायं पेहाए एव वदेज्जा परिवूढकाएत्ति वा उवचितकाएत्ति वा" ॥ आचा० २ श्रु० ॥

उवचियमंससोणिय—उपचितमांसशोणित—पुं० परिवृद्धमांसशोणिते, । आचा० २ श्रु० ॥

उवजोइ—उपज्योति—पु० अव्य० सामीप्ये अव्ययी०स० अग्ने. समीपे, सूत्र० १ श्रु० ५ अ० २ उ० । उपज्योतेरग्ने समीपे व्यवस्थित उपज्योति । वर्त्तिनि, "जतुकुम्भे जहा उवज्जोई सवासे विदुविसीएज्जा " सूत्र० १ श्रु० ४० ।

उवजोइय—उपज्योतिष्क—पु० ज्योतिपसमीपे, उपज्योतिषस्त एवोपज्योतिष्काः अग्निसमीपवर्तिषु माहानसिकेषु, ऋत्विक्षु, च । उत्त० ॥ केइत्थगता उवजोइया वा अज्झावया वा सहखण्डिएहिं" उत्त० १२ अ० ॥

उवज्झाय—उपाध्याय—पु० उप समीपमागत्य अधीयते इङ् अध्ययने इतिवचनात् पठ्यते, इण् गताविति वचनाद् वा अधि आधिक्येन गम्यते, इक् स्मरणे इतिवचनाद्वा स्मर्य्यते सूत्रतो जिनप्रवचनं येभ्यस्त उपाध्याया. । यदाह " वारसंगो जिणक्खाओ, सिज्झाओ कहिओ बुहे । त उवइसंति जम्हा, उवज्झाया तेण वुच्चति " अथवा उपाध्यानमुपाधि. सन्निधिस्तेनोपाधिना उपाधौ वा आयो लाभ श्रुतस्य येषामुपाधीनां वा विशेषणानां प्रक्रमाच्छोभमानानामायो लाभो येभ्योऽथवा उपाधिरेव सन्निधिरेव आय इष्टफलदैवजनितत्वेन आयानामिष्टफलानां समूहस्तदेको हेतुत्वाद्येषामथवा आधीनां मन पीडानामायो लाभ. आध्याय अधिया वा नय कुत्सार्थत्वात् कुबुद्धीनामायो ध्याय ध्यैचिन्तायामित्यस्य धातो प्रयोगान्नञ. कुत्सार्थत्वादेव दुर्ध्यान वा अध्याय उपहतोऽध्याय. आध्यायो वा यैस्ते उपाध्याया. ॥ भ० १ श० १ उ० । दशा० । ध० । आ० म० द्वि० । आ० चू० । प्रव० । साध्वस्यध्यायां क । ८ । २ । २६ । इति ध्येति सयुक्तस्य झ. । प्रा० । ययाऽकिद्वादशाङ्गस्वयमध्ययनपराध्यापननिपुणमानसेषु, । अ० १ पाहु० । सूत्राध्यापकेषु, कल्प० । आचा० । स्था० । आव० । स्वाध्यायपाठकेषु, द्वा० । विशे० । वृ० ।

अस्य निक्षेपो यथा ।

नामं ठवणा दविए, भावे चउव्विहो उवज्झाओ ।
दव्वलोइयसिप्पा, धम्मा तह अन्नतित्थीया ॥

नामस्थापनोपाध्यायौ सुबोधौ द्रव्योपाध्यायस्तु ज्ञभव्यशरीरव्यतिरिक्तानाह ( दव्वेत्यादि ) द्रव्ये विचार्ये तद्व्यतिरिक्त उपाध्याय शिल्पाद्युपदेष्टा । तथा ( धम्मेत्ति ) निज २ धर्मोपदेष्टारोऽन्यतीर्थिकाश्च ससारनिबन्धनत्वेनाप्रधानभूततयात्तद्व्यतिरिक्ता द्रव्योपाध्याया मन्तव्या इति । भावोपाध्यायानाह—

वारसंगो जिणक्खाओ, सज्झाओ कहिउ बुहे ।
तं उवइसंति जम्हाओ—वज्झाया तेण वुच्चति ॥

यो द्वादशाङ्गः स्वाध्यायः प्रथमतो जिनैरारतस्ततो ( बुहेत्ति ) प्राकृतत्वादुबुधैर्गणधरादिभिः कथित पारपर्येणोपदिष्टः तं स्वाध्याय सूत्रतः शिष्याणामुपदिशन्ति यस्मात्तेनोपाध्याया उच्यन्ते अत एव इह अध्ययने उपेत्य सूत्रमधीयते येभ्य शिष्यास्ते उपाध्याया भणन्ते इति ॥

सांप्रतमागमशैल्या अक्षरार्थमधिकृत्योपाध्यायशब्दार्थमाह।

उत्ति उवकरणवेंति, वेयज्झाणस्स होइ निद्देसे ।

एएण होइ उज्झा, एसो अण्णो विपज्जाओ ॥

(उ) इत्येनदक्षरमुपयोगकरणे वर्त्तते(च)इति वेदध्यानस्य निर्देशे ततश्च प्राकृतशैल्या एतेन कारणेन भवन्ति उज्झा उपयोगपुरःसरं ध्यानकर्तार इत्यर्थः । एसोऽन्नतरोक्त उपाध्यायशब्दापेक्षयान्योऽपि पर्याय इति । अथोपाध्यायशब्दार्थं भाष्यकारः प्राह ।

उवगम्म जओ हीयइ, जं चोवगयमगया वेंति ।

जं वो वायज्झाया, हियस्स तो ते उवज्झाया ॥

उवगम्योपेत्य यतो येभ्योऽधीयते पठन्ति शिष्यास्ते उपाध्यायाः यद्वा यस्मादुप समीपे गतं प्राप्त शिष्यमध्यापयन्ति तत उपाध्यायाः । यस्माच्च स्वपरहितस्योपाध्यायका उपायका उपायचिन्तकास्ततस्ते उपाध्याया इति । विशे० । आ० चू० । आ० म० द्वि० ।

इदानीमुपाध्यायस्वरूपमाह ।

सुत्तत्थतदुभयवि-ज्जुत्तो नाणदंसणचरित्ते ।

निप्पायगसेसाणं, एरिसया होंति उवज्झाया ॥

ये सूत्रार्थतदुभयविदो ज्ञानदर्शनचारित्रेपूद्युक्ता उपयुक्तास्तथा शिष्याणां सूत्रवाचनानिष्पादका एतादृशा भवन्त्युपाध्यायाः । उक्तं च । " सम्मत्तनाणदसण, जुत्तो सुत्तत्थतदुभयविधिणा । आयरियप्पाजुग्गो, सुत्त वाएइ उवज्झातो " अथ कस्मात्सूत्रमुपाध्यायो वाचयति । उच्यते अनेकगुणसंभवानेवाह ।

सुत्तत्थेसु थिरत्त, रिणमुक्खो आयती अपभिबंधो ।

पाडिच्छे मोहजयो, तम्हा वाए उवज्झातो ॥

उपाध्यायः शिष्येभ्यः सूत्रवाचनां प्रयच्छन् स्वयमर्थमपि परिज्ञापयति । सूत्रेऽर्थे च तस्य स्थिरत्वमुपजायते । तथाऽन्यस्य सूत्रवाचनाप्रदानेन सूत्रलक्षणस्य ऋणस्य मोक्ष कृतो भवति । तथा आयत्यामागामिनि काले आचार्यपदाध्यासेऽप्रतिबन्धोऽत्यन्ताभ्यस्ततया यथावस्थतया स्वरूपस्य सूत्रस्यानुवर्तन भवति । तथा ( पाडिच्छेत्ति ) येऽन्यतो गच्छान्तरादागत्य साधवस्सूत्रोपसंपदं गृह्णते ते प्रतीच्छका उच्यन्ते ते च सूत्रवाचनाप्रदानेनागृहीता भवन्तीति वाक्यशेष । तथा मोहजय कृतो भवति । सूत्रवाचनादानव्यग्रस्य सत प्रायश्चित्तविश्रोतसिकाया अभावात् अत एव गुणस्तस्मादुपाध्याय सूत्रं वाचयेत् । पाठान्तरं ( तहा अ उण वाएन्ति ) अत्रापि स एवार्थो नवर गणी उपाध्याय उक्तमुपाध्यायस्वरूपम् । व्य० १ उ० । प्रव० । स्था० " एवमेते णामठवणादिएहिं अणेगहा पन्नविज्जंति तहा सुसवुडासवदारे मणोवइकायजोगुत्तउवउत्ते विहिणा सरविंजणमैत्ता विंदुपयक्खरविसुद्धदुवालसगे सुयनाणसुयणज्झावणेण परमप्पणोयमोक्खोवाय झायतित्ति उवज्झाए थिरपरिचियमणतगमपज्जवच्चेहिं दुवालसग सुयनाणं चिंतति अणुसरंति एगग्गमणसा झायतित्ति वा उवज्झाए" महा० । ( उपाध्यायस्य अतिशयादयः स्वस्थाने ( नमस्कारार्हत्व नमो उवज्झायाणंती सूत्रार्थो 'नमुक्कार' शब्दे ) ( उपाध्यायोद्देश 'उद्देस' शब्दे उक्तः ) ( उपाध्यायस्थापना 'दिसा' शब्दे )

उवज्झिय-उपाहूत-त्रि० आकारिते, व्य० १ उ० ।

उव ( व्व ) ट्टण-उद्वर्तन-न० उद्धर्त्यतेऽनेन उद्-वृत्-णिच्-करणे ल्युट् । शरीरनिर्मलीकरणद्रव्यादौ, भावे-ल्युट् । द्रव्यभेदः स्नेहाद्यपहारार्थे व्यापारे, विलेपने, घर्षणे च । वाच० । पङ्कापनयने, " गायस्सुवट्टणाणि य " दश० ३ अ० । सकृद्वर्त्तने, नि० चू० ३ उ० । प० ।

उव ( व्व ) ट्टणविहि-उद्वर्तनविधि-पुं० उद्वर्त्तनप्रकारे, " तयाणंतरं च ण उवट्टणविहिपरिमाण करेइ णण्णत्थ एगेण सुरभिणा गंधकूएण । अवसेसं उवट्टणविहिं पञ्चक्खामि" उपा० १ अ० । त्रि० समीपस्थिते, वाच० ।

उवट्ठ-उपस्थ-एकस्यां वसतौ सततमवस्थिते, व्य० ४ उ० ।

उवट्ठंभ-उपष्ट(स्त)म्भ-पुं० उप-स्तम्भ-घञ्-पतनप्रतिरोधने, अवलम्बने, आलम्बने, स्थितौ, सहकारे, वाच० । अनुकम्पायाम्, स्था० ९ ठा० । मोहनीयेन कर्मणाऽवस्थाने, भ० १ श० ४ उ० ।

उवट्ठकाल-उपस्थकाल-पुं० अभ्यागमवेलायाम्, व्य० ४ उ० ।

उवट्ठ (ट्ठा) वणा-उपस्थापना-स्त्री० उपस्थापनमुपस्थापना । अनुकूलशक्त्यभावे, प्रति० । उपस्थाप्यन्ते व्रतान्यारोप्यन्ते यस्यां सा उपस्थापना । चारित्रविशेषे, ध० २ अधि० । व्रतेषु स्थापनायाम्, प० चू० । 'वयट्ठवणमुवट्ठवणा' प० भा० । पंचा० । नवीनदीक्षितस्य साधोः श्रीतातपाददीक्षाभवनानन्तर 'सचित्तरजओहडावणिअ' कायोत्सर्गे विस्मृते पुनर्दीक्षां दत्वाऽऽवश्यकादियोगानुष्ठानमुपस्थापना च शुद्ध्यति नवेति ७४ प्रश्नः गच्छनायकदीक्षाभवनानन्तर 'सचित्तरजओहडावणिअ' कायोत्सर्गे विस्मृते पुनर्गच्छनायकदीक्षामन्तरेणावश्यकादियोगानुष्ठानमुपस्थापना च न शुद्ध्यतीति ॥ सेन० २ उल्ला० ॥

उपस्थापनाविधिश्चैवम् ॥ "पढिअ१ कहिअ२ परिच्छिअ३ वयति, अतिअवेला४ खम। समणरासत्त५। दिसि बंधो६ दुविह तिहा८ तव७ देसण९ मंडली सत्त६ ॥ पढिए अकहिअअहिगहिअ" इत्यादि गाथाद्वयं एव "सुपरिक्खियगुणसीसो तिहिनक्खत्तमुहुत्तरतिजोगाइपसत्थदिवसे चिपासवणाइपहाणखित्ते गुरु वंदित्ता भणइ, इच्छकारि भगवन् ! तुह्ने अह्म पञ्चमहाव्रतरात्रिभोजनविरमण षष्ठ आरोपावणिअ नंदिकरावणिअ वासनिक्खेव करेहत्ति । ताओ अ देवे वंदियवंदण दाउ महव्वयाइ आरोवणत्थ सत्तावीसुस्सास काउस्सग्ग दोवि करेंति । तओ सूरिओ वदंति तुअपहिं पिट्ठोवरिकुप्परसठिएहिं करेहिं रयहरण ठावित्ता मकरानामिआए मुहपुत्ति लंबति धरिचुसम्मं उवओगपरो सीस अद्धावणयकाय इक्किक्कवयं नमुक्कारपुव्व तिन्नि वारे उच्चरावेइ । तत्थ पढमे भंते महव्वए पाणाइवायाओ वेरमण सव्वं भंते पाणाइवायं पच्चक्खामि से सुहुम वा वायर वा तसं वा थावर वा नेव सय पाणे अइवाइज्जा नेवन्नेहिं पाणे अइवायाविज्जा पाणे अइवायते वि अन्न न समणुजाणामि जावज्जीवाए तिविहं तिविहेण मणेणं वायाए काएणं न करेमि न कारवेमि करत पि अन्न न समणुजाणामि तस्स भंते पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि । पढमे भंते महव्वए उवट्ठिओमि सव्वाओ पाणाइवायाओ विरमण । अहावरे दुच्चे भंते महव्वए मुसावायाओ वेरमण इत्याद्यालापकपदक वाच्यम् । नन्नोपन्नाए लग्गवेलाए "इच्चेइयाइं पंचमहव्वयाइं राईभोअणवेरमणछट्ठाइं अत्तहियट्ट

याए उवसंपज्जित्ताणं विहरामि' एवं तिन्नि वारे भणावेइ तओ वंदित्ता सीसो भणइ इच्छकारि भगवन् ! तुम्हे अम्हं पंचमहाव्रतरात्रिभोजनविरमणषष्ठआरोवश्रो इत्यादिक्षमाश्रमणानि प्रदक्षिणाश्च प्राग्वत् । तओ सीसस्स आयरियउवज्झायरूवो दुविहो दिसाबंधो कीरइ । यथा कोटिको गण' वइरी शाखा चान्द्र कुलम् । असुका गुरव· उपाध्यायाश्च साध्वी असुकी प्रवर्त्तिनी चेति तृतीय आचाम्लनिर्विकृतिकादितपः कार्यते । देशनायां च वधूचतुष्ककथावाच्या ॥

उट्ठविओ चेव सीसो, मंडलीपवेसत्थं ।
भत्तआयंबिलाणि–क्कारे अचोतं जहा ॥
सुत्ते[1] अत्थे[2] भोअण,[3] काले[4] आवस्सए[5] अ[6] सज्झाए[6]।
संथारपविट्ठेअ तहा, सत्त आ मंडली हुंति ॥

सूत्रे सूत्रविषये [1]एवम् अर्थे [2]भोजने [3]कालग्रहे [4]आवश्यके प्रतिक्रमणे [5]स्वाध्याये तत्र च प्रस्थापने [6]संस्तारके चैव ७ सप्तैता मण्डल्यो भवन्ति । एतासु चैकैकेनाचाम्लेन प्रवेष्टुं कल्पते नान्यथेति । तत्र च "मुहपोत्ति पेहिअ वंदणदुगं दाउं सुत्तमंडलीं संदिसावउं खमाए सुत्तमंडलीवासिओ खमा० इत्थ तस्स मिच्छामि दुक्कडं तिविहेणं सेसासुत्ति" इति प्रतिपादित सप्रपञ्चमुपस्थापनाविधि· । ध०३अधि० ।

अप्पत्ते अकहित्ता, अणहिगयपरिच्छणये चउगुरुगा ।
दोहिं गुरु तव गुरुगा, कालगुरुं दोहि वि लहुगा ॥

सूत्रेऽप्राप्ते उपस्थाप्यमाने उपस्थापयितु' प्रायश्चित्तं चत्वारो गुरुका' । कथम्भूता इत्याह । द्वाभ्यां गुरवस्तद्यथा तपसापि-गुरुका कालेनापि गुरुका । अथ सूत्रप्राप्तस्तथापि तस्यार्थमकथयित्वा यदि तमुपस्थापयति तदा तस्य चत्वारो लघुका । नवरं कालेनैकेन लघव । अथ कथितोऽर्थ' परं नाद्याप्यधिगतः अथवा अधिगत· परमद्यापि न सम्यक् तं श्रद्दधाति तमनधिगतार्थमश्रद्दधानं वा उपस्थापयतश्चत्वारो लघुका· । नवरमेकेन तपसा लघव । अथाधिगतार्थमप्यपरीक्ष्योपस्थापयति तदा चत्वारो लघुकास्तपसापि कालेनापि च लघवः न केवलं तत्प्रायश्चित्तं किं त्वाज्ञादयश्च दोषा तथा सर्वत्र षण्णां जीवनिकायानां यद्विराधयिष्यति तत्सर्वमुपस्थापयन् प्राप्नोति तस्मात् यत एवं प्रायश्चित्तमाज्ञादयश्च दोषास्तस्मान्नापठिते षड्जीवनिकायसूत्रे नाप्यनधिगतेऽर्थे नापि तस्मिन्नपरीक्षिते उपस्थापना कर्त्तव्या ।

अथ कियन्त· षड्जीवनिकायामर्थाधिकारास्तत आह ।

जीवाजीवाभिगमो, चरित्तधम्मो तहेव जयणा य ।
उवएसो धम्मफलं, छज्जीवणियाए अहिगारा ॥

षड्जीवनिकायामिमे पञ्चाधिकारास्तद्यथा प्रथमो जीवाजीवाभिगमो द्वितीयो महाव्रतसूत्रादारभ्य चारित्रधर्मस्तृतीयो 'जयं चरे जयं चिट्ठे' इत्यादिना यत्नाद्वनन्तरमुपदेशस्ततो धर्मफलमेते च विस्तरतो दशवैकालिकटीकात परिभावनीया । तत्रास्तामुपस्थापना कथं स प्रव्राजयितव्य इति तदेवोच्यते । तत्र षड्विधो द्रव्यरूपो चक्तव्य इति तमाभिधित्सुराह ॥

पव्वावण मुंडावण, सिक्खावणउवट्ठसंभुंजणा य संवसणा ।
एसो उ दविकप्पो, अन्विहतो होति नायव्वो ॥

प्रव्राजना नाम यो धर्मं कथितेऽकथिते वा प्रव्रजामीत्यभ्युपेत प्रथमत पृच्छ्यते कस्त्वं कुतो वा समागत किं निमित्तं वा प्रव्रजिष्यसि । तत्र यदा पृच्छा परिशुद्धो भवति तदा प्रव्राजयितुमभ्युपगम्यते अभ्युपगम्य च प्रशस्तेषु द्रव्यादिष्वाचार्यः स्वयमेवाद्य ( स्तोककेश ) ग्रहणं करोति एतावता प्रव्राजना—धारम् । तदनन्तरं स्थिरहस्तेन लोचे कृते रजोहरणमर्पयित्वा तस्य सामायिकसूत्रं दीयते । तत' सामायिकं मे दत्तमिच्छामो गुशिष्टिमिति । सूरयो ब्रुवते निस्तारपारगो भव क्षमाश्रमणगुणैर्वर्द्धस्व एषा मुण्डापना ( सिक्खावणत्ति ) तदनन्तरं द्विविधामपि शिक्षां ग्राह्यते तद्यथा ग्रहणशिक्षामासेवनशिक्षां च । ग्रहणशिक्षा नाम पाठ· । आसेवनशिक्षा सामाचारीशिक्षणम् । यदा द्विविधामपि शिक्षां ग्राहितो भवति तदा स उपस्थाप्यते प्रशस्तेषु द्रव्यक्षेत्रादिषु । द्रव्यतः शालिक्षेत्रे इक्षुक्षेत्रे चैत्यवृक्षे वा । क्षेत्रतः पद्मसरसि सानुनादे चैत्यगृहे वा कालतश्चतुर्थ्यष्टम्यादिवर्जितासु तिथिषु भावतोऽनुकूले नक्षत्रे यदि तस्य जन्मनक्षत्रं जायते तदा आचार्यस्यानुकूलनक्षत्रे सुन्दरे मुहूर्त्ते यथाजातेन लिङ्गेन । तद्यथा रजोहरणेन निषिद्याद्वयोपेतमुखपोत्तिकया चोलपट्टेन च वामपार्श्वे स्थापयित्वा एकैकं महाव्रतं त्रीन् वारान् उच्चार्यते यावत् रात्रिभोजनम् । अथ ते द्वौ त्रयो बहवो वा भवेयुस्ततो यथावयोवृद्धम् अथ ते क्षत्रिया राजपुत्रास्तत्र य· स्वत एवासन्नतर आचार्यस्य स रत्नाधिक· क्रियते इतरो वामे अथ द्वावप्युभयत· पार्श्वयो· समौ व्यवस्थितौ तदा तौ द्वावपि समरत्नाधिकौ व्रतेषूच्चारितेषु प्रदक्षिणा कारयित्वा पादयोः पात्येते भण्यते च महाव्रतानि ममारोपितानि इच्छामोऽनुशिष्टिं शेषाणामपि साधूनां निवेदयामि । गुरुर्भणति । निवेदय इदं च भणति निस्तारगपारगो भव क्षमाश्रमणानां च गुणैर्वर्द्धस्व एवमुपस्थापिते द्विविधसंग्रहः साधोर्यथा अहं तव आचार्योऽमुकस्ते उपाध्याय । साध्व्यास्त्रिविधसंग्रहस्तत्र तृतीया अमुका ते प्रवर्त्तिनी एवमुपस्थाप्य केषांचित्पञ्चकल्याणकं केषांचिदभक्तार्थं केषांचिदाचाम्लं केषांचिन्निर्विकृतिकमपरेषा न किंचित् । किं बहुना यत् यस्य तप· कर्म आवलिकागतं तस्य तद्दत्वा तेन सहैकत्र मण्डल्यां संभुङ्क्ते संवसन च करोति । शैक्षकमध्ये परिपालना चेयं यथा यावन्नोपस्थाप्यते तावन्न भिक्षां हिण्डापयितव्य· । कथं पुनरुपस्थापनीय इत्यत आह ॥

पढिए्य कहिय अहिगय, परिहर उट्ठावणा य सो कप्पो ।
छक्कं तीहिं विसुद्धं, परिहरनवगेण भेएण ॥

सूत्रं प्रथमत' पाठयित्वा तदनन्तरमर्थं कथयित्वा ततोऽधिगतोऽनेनार्थ सम्यक् श्रद्धानविषयीकृतश्चेति परीक्ष्य यदा षट्कं षड्जीवनिकायान् त्रिभिर्मनोवाक्कायैर्विशुद्धं भावतो न पराङ्मुखत्या परिहरतीत्यत आह नवकभेदेन न षट्कं मनसा स्वयं परिहरति अन्यै परिहारयति परिहरन्तमन्यं समनुजानाति । एवं वाचा कायेन प्रत्येकं त्रयस्त्रयो भेदा द्रष्टव्या । एष उपस्थापनायाः कल्प' वृ० १ उ० ॥ नि० चू० ॥

उपस्थापनाविधि· ।

( सूत्रम् )आयरिय उवज्झाय सभिरमाणे परं चउराओ पंचराओ कप्पागं भिक्खूणो उवट्ठावइ कप्पाइं अत्थियाइं से केइ माणाणिज्जे कप्पागे णत्थि याइं से केइ छेए वा परिहारे वा नत्थि याइं से केइमाणणिज्जे कप्पइ सेसंतरा छेए वा परिहारे वा ॥

आचार्य उपाध्यायो वा स्मरन् अयमुपस्थापनार्ह इति जानाना परं चतूरात्रात् पञ्चरात्राद्वा कल्पाक सूत्रतोऽर्थतश्च प्राप्तं भिक्षुर्नोपस्थापयति । तत्र यदि तस्मिन्कल्पके सन्त्यस्ति

( से ) तस्य कल्पाकस्य कश्चित् माननीयः पिता माता भ्राता वा ज्येष्ठ स्वामी वा कल्पाको भावी पञ्चरात्रेण दशरात्रेण पञ्चदशरात्रेण वा ततो नास्ति ( से ) तस्य कश्चिच्छेदः परिहारो वा अत्रादेशद्वयमेके प्राहुश्चतूरात्रात् परं यद्यन्यानि चत्वारि दिनानि नोपस्थापयति तत आचार्यस्योपाध्यायस्य च प्रत्येक प्रत्येकं प्रायश्चित्त चतुर्गुरुकम् । अथ ततोऽप्यन्यानि चत्वारि दिनानि लङ्घयति ततः षड्लघुकम् । ततोऽप्यन्यानि चत्वारि दिनानि तत षड्गुरुकम् । ततोऽप्यन्यानि यदि चत्वारि दिनानि ततश्चतुर्गुरुकश्छेदः । ततः परमन्यानि चत्वारि दिनानि यदि तर्हि षड्लघुकः षड्लघुकश्छेदः । ततोऽपि चेदन्यादि चत्वारि ततः षड्गुरुकः षड्गुरुकश्छेदः । ततः परमेकैकदिवसातिक्रमे मूलानवस्थाप्यपाराञ्चितानि । द्वितीयादेशवादिनः प्राहुः । पञ्चरात्रात्परं यदि नोपस्थापयति ततश्चतुर्गुरुकं प्रायश्चित्तं ततोऽपि परं यदि पञ्च दिनानि लङ्घयति तत षड्लघुक षड्लघुकम् । तत परमपि पञ्चरात्रातिक्रमे षड्गुरुकं षड्गुरुकम् । ततोऽपि परं यदि पञ्च दिनानि वाहयति ततश्चतुर्गुरुकश्चतुर्गुरुकश्छेदः । ततः परमन्यानि चेद्दिनानि पञ्च तत षड्लघुकः षड्लघुकश्छेदः । ततोऽपि पञ्चरात्रातिवाहने षड्गुरुक षड्गुरुकश्छेदस्ततः परमेकैकदिवसातिवाहने मूलानवस्थाप्यपाराञ्चितानि ॥ एष सूत्रसङ्क्षेपार्थः ।

अधुना भाष्यनिर्युक्तिविस्तरः ।

संमुमरणउवट्ठवण, तिन्नि उवणगा हवंति उक्कोसा ।
माणणिज्जे पिताढी तु, ते समतीछेदपरिहारो ॥

ससमरणमुपस्थापनाविषये यथा एष उपस्थापयितव्यो वर्त्तत इति तत्र माननीये पित्रादौ सति कल्पाकस्यातिवाहने त्रय पञ्च वा भवन्त्युत्कर्षतः । किमुक्तं भवति । विवक्षिते भिक्षौ कल्पाके जाते सति यदि तस्य माननीयपित्रादिरुपस्थाप्योऽस्ति परमद्यापि कल्पाको नोपजायते तर्हि स जघन्यत पञ्चरात्र प्रतीक्षाप्यते मध्यमतो दशरात्रमुत्कर्षत पञ्चदशरात्र तथापि चेन्माननीयः कल्पाको नोपजायते तर्हि सचाकल्पाको भिक्षुरुपस्थापनीयो नोचदुपस्थापयति तर्हि छेदः परिहारो वा प्रायश्चित्तम् । अथ तस्य माननीयाः पित्रादयो न सन्ति ततस्तेषामसत्वभावे यदि त चतूरात्रमध्ये वा नोपस्थापयति तथापि तस्य प्रायश्चित्त छेद परिहारो वा छेदपरिहारग्रहण सूचामात्र तेनोद्देशद्वयेन प्रागुक्त प्रायश्चित्तविधिर्द्रष्टव्यः ।

चिट्ठउ ता उट्ठवणा, पुव्वं पव्वावणादि वत्तव्वा ।
अडयालपुच्छसुद्धे, जनति दुक्ख खु सामन्नं ॥

तिष्ठतु तावदुपस्थापना पूर्वं प्रव्राजनादिर्वक्तव्या । तत्र यथा पञ्चकल्पे निशीथे वाष्टचत्वारिंशत्पृच्छाशुद्धोऽभिहितस्तथा अष्टचत्वारिंशत्पृच्छाशुद्धे कृते तत्समुखमिद भण्यते । " दुक्ख खु श्रामण्य परिपालयितु " तथाहि

गोयर अचित्त—भोयण सज्झायमण्हाणभूमिसेज्जाती ।
अब्भुवगयम्मि दिक्खा, दव्वादीसुं पसत्थेसु ॥

यावज्जीव गोचरचर्यया भिक्षामटित्वा अचित्तस्यैषणादिशुद्धस्य भोजन कर्त्तव्य तदपि बालवृद्धशैक्षकादिसविभागेन तथा चतुष्काल स्वाध्यायो विधातव्यः । यावज्जीवं देशतः सर्वतश्चास्नान ऋतुबद्धे काले भूमौ शय्या आदिशब्दाद्वर्षारात्रे फलकादिषु शयन दिवसे न स्वप्तव्य रात्रौ तृतीये यामे निद्रामोक्ष एवमुक्ते यद्यभ्युपगच्छति तत एतस्मिन्नभ्युपगते तस्य दीक्षा प्रशस्तेषु द्रव्येषु शाल्यादिसच्चयादौ प्रशस्तक्षेत्रे गम्भीरस्वानुनादादौ प्रशस्ते भावे प्रवर्द्धमानपरिणामादौ दातव्या ।

लग्गादिं च तुरंतं, अनुकूले दिक्खिए उ अह जायं ।
सयमेव तु थिरहत्थो, गुरू जहण्णेण तिण्णट्ठा ॥

इहोत्सर्गतो लोचे कृते यथा जाते च रजोहरणादिके समर्पिते पश्चात्रि कृत्वः सामायिकमुच्चार्यते इत्येष विधिः । यदि पुनर्लग्नादिकं त्वरमाणं स्यात्ततोऽनुकूले लग्नादावादिशब्दान्मुहूर्त्तादिपरिग्रहस्त्वरमाणः शीघ्रं समापतति यथा ज्ञानं सनिषद्यं रजोहरणमुखवस्त्रिकाप्रपूररूपं दीयते । उक्तं च । " अह जाय नाम सनिसेज्जं रयहरणमुहपोत्तिया वालपट्टे य इति " ततो यदि गुरुः स्थिरहस्तो न कम्पते अष्टं गृह्णानस्य हस्तः तर्हि स्वयमेव जघन्येन तिस्रोऽष्ट अव्यवच्छित्वा गृह्णाति । समर्थः सर्वं चालोचं करोति ॥

असणे वा थिरहत्थो, सामाइयतिगुणमट्ठगहणं च ।
तिगुणं पादक्खिणं, नित्थारगगुरुगणविवड्ढी ॥

आचार्यस्य स्थिरहस्तत्वाभावे अन्यो वा स्थिरहस्तः प्रव्राजयति समस्तं लोच करोतीति भावः । तदनन्तरं गुरुः शोभने लग्नादौ प्राप्ते त्रिगुण त्रीन्वारान् सामायिकमुच्चारयति ॥ इयमत्र भावना । प्रथमतः । प्रव्राजनीयमात्मनो वामपार्श्वे स्थापयित्वा चैत्यानि तेन सह वन्दते ततः परिहितचोलपट्टस्य रजोहरणं मुखवस्त्रिकां च ददाति । तदनन्तरमर्थग्रहण लोचं वा कृत्वा सामायिकारोपणनिमित्त कायोत्सर्गं करोति । तत्र चतुर्विंशतिस्तव चिन्तयित्वा नमस्कारेण पारयित्वा चतुर्विंशतिस्तवमाकृष्य त्रिःकृत्वः सामायिकमुच्चारयति । तदनन्तरमर्थग्रहण स कारयितव्यः । सामायिकार्थस्तस्य व्याख्यायते इति भाव । ततः सूत्रतोऽर्थतश्च गृहीत सामायिकमिति तदनुज्ञानिमित्त विधिना त्रिगुणं प्रादक्षिण्यं कार्यते तत्र तृतीयस्यां प्रदक्षिणायामनुज्ञा क्रियते यथा निस्तारको भव गुरुगुणैर्विवृद्धिर्भवतु वर्द्धस्वेत्यर्थ । एवं प्रव्राजनायां कृतायां यत्कर्तव्य तदाह ॥

फासुय आहारो से, अणहिंमंतो य गाहए सिक्खं ।
ताहे उ उवट्ठावणा, छज्जीवणियं तु पत्तस्स ॥

प्रव्रज्याप्रदानानन्तर ( से ) तस्य प्रासुक आहारो दीयते स च भिक्षां न हिण्डाप्यते किं त्वहिण्डमान एव भिक्षां ग्रहणभिक्षामासेवनाशिक्षां च ग्राह्यते ततः षड्जीवनिकां प्राप्तस्याधिगृह्यते षड्जीवनिकाध्ययनस्य उपस्थापना क्रियते ॥

विक्षेपप्रायश्चित्तविधिमाह ॥

अप्पत्ते अकहेत्ता,अणहिगए(अ)परिच्छिए(अ)निकम्मे से ।
एक्केक्के चउगुरुगा, चोयगमुत्तं तु कारणियं ॥

अप्राप्ते षड्जीवनिकां पर्याय वा जघन्यतः षण्मासानुत्कर्षतो द्वादश संवत्सरान् तथा अकथयित्वा जीवादीन् तथा अनधिगते जीवाजीवादौ तथा अपरीक्षाया परीक्षाया अभावे तथा ( से ) तस्य उपस्थापयितोऽतिक्रमे एकैकस्य व्रतस्य वारत्रयमनुच्चारणे एतेषु सर्वेषु प्रत्येकमेकैकस्मिन्प्रायश्चित्त चत्वारो गुरुकाः । अथ सूत्रे पर्यायादिक नोपात्तमिति तत्कथमेतत् कथ न सूत्रविरोधस्तत्राह हेचोदक ! सूत्रमिद कारणिक पुरुषविशेषपात्रापेक्षमत पर्यायाद्यनभिधानेऽपि न दोष । एनामेव गाथां भाष्यकृद्विवृणोति ।

अप्पत्ते सुयएणं परि—यागमुवट्ठावणे य चउगुरुगा ।
आणादिणो य दोसा, विराहणा छण्हकायाणं ॥

श्रुतेन षड्जीवनिकापर्यन्तेनाप्राप्ते पर्याय वा जघन्यादिभेदभिन्नमप्राप्ते उपस्थाप्यमाने उपस्थापयितु प्रायश्चित्त चत्वारो

गुरुकास्तपसा कालेन च गुरवः । न केवलमेतत् किं त्वाज्ञादयो ऽनवस्थामिथ्यात्वविराधनादोषास्तथा स उपस्थापितो भिक्षादौ किल कल्पिको भवति । ततस्तस्य भिक्षादिप्रेषणे षण्णां कायानां विराधना अपरिज्ञानात् । तथा ।

सुत्तत्थमकहइत्ता, जीवाजीवे य बंधमुक्खं च ।
उवट्ठावेए चउगुरुगा, विराहणा जा भणियपुव्वं ॥

सूत्रार्थं षड्जीवनिकापर्यन्तमकथयित्वा तथा जीवाजीवान् बन्धमोक्षं चाकथयित्वा एवमेवोपस्थापने क्रियमाणे उपस्थापयितुश्चत्वारो गुरुकास्तपोगुरुकं प्रायश्चित्तम् । तथा या विराधना पूर्वमप्रासद्वारे षष्ठ्या जीवनिकायानामुक्ता साऽत्रापि द्रष्टव्या । ततस्तस्मिन्निषये समितस्य प्रायश्चित्तमुपढौकते ।

अणहिगयपुण्णपावं, उवट्ठवंतस्स चउगुरू होंति ।
आणादिणो य दोसा, मालाए होइ दिट्ठंतो ॥

अनधिगतपुण्यपापं सूत्रार्थकथनेऽप्यविज्ञातपुण्यपापमुपस्थापयतः प्रायश्चित्तं चत्वारो गुरवः । कालगुरुका मासा भवन्ति । आज्ञादयश्चानन्तरमभिहिता दोषाः । अत्र मालया दृष्टान्तो यथा स्थाणौ मूलापेक्षे पञ्चवर्णसुगन्धपुष्पमालामारोपयतो वदनीयतादयो दोषा एवमत्राप्यनधिगतपुण्यपापे व्रतान्यारोपयत आज्ञादय इति ।

उदउल्लादिपरिच्छा, अहिगयनाऊण तो व वंदेंतो ।
एक्केक्कं तिक्खुत्तो, जो न कुणइ तस्स चउगुरुगा ॥

गोचरादिगते न उदकार्द्रादिना परीक्षा कर्त्तव्या वृषभेण तत्परीक्षानिमित्तं तेन स गोचरगतेन उदकार्द्रेण हस्तेन मात्रकेण वा भिक्षा ग्राह्या तत्र यदि स वारयति निषिद्धमेतत्कथं यूयमेवं भिक्षामभिगृह्णीथ ततो ज्ञायते एष परिणतसूत्रार्थोऽधिगतपुण्यपाप । एवं शेषपरीक्षास्वपि भावनीयम् । ततः उदकार्द्रादिपरीक्षाभिरधिगतपुण्यपापं ज्ञात्वा ततोऽनन्तरं व्रतानि गुरवो ददति । कथमित्याह । एकैकं व्रतं त्रि कृत्वस्त्रीन् वारान् एव यो न करोति तस्य चत्वारो गुरुका द्वाभ्यां लघवस्तपसा कालेन च प्रायश्चित्तम् ।

अथ परीक्षामेव वैतत्येनाह–

उच्चारादि अथंडिले, वोसिरठाणाइ वावि पुढवीए ।
नदिमादिदगसमीवे, सागणिनिक्खित्ततेउम्मि ॥
वियणजिधारणवाए, हरिए जह पुढविए तसेसुं च ।
एमेव गोयरगए, होइ परिच्छा उ काएहिं ॥

उच्चारादिरादिशब्दात्प्रश्रवणादिपरिग्रहः । अस्थण्डिले सचित्तपृथिवीकायात्मके व्युत्सर्जनम् । यदि वा स्थानादिस्थानमूर्द्धस्थानमादिशब्दादाक्षिपदनादिपरिग्रहस्तत्पृथिव्यां पृथिवीकायस्योपरि कुरुते । तथा कायविषये नद्यादुदकसमीपेऽआदिशब्दात्तडागादिपरिग्रहः । तथा तेजसि तेजस्कायविषये स निक्षिप्ताग्नौ प्रदेशे गाथायां तु निक्षिप्तशब्दस्यान्यथापाठः प्राकृतत्वात् उच्चारादेर्व्युत्सर्जनमिति सर्वत्र संबध्यते । तथा वाते वातविषये व्यजनस्य तालवृन्तस्याभिधारण वातोदीरणायाभिमुख्येन धारणं करोति । हरिते यथा पृथिव्यां तथा वक्तव्यम् । हरितकायस्योपरि स्थानादि करोति । यदि वोच्चारादिव्युत्सर्जनमिति । त्रसेष्वपि च पृथिव्यामिव वक्तव्यं कीटिकानगरादतिप्रत्यासन्नमुच्चारादिस्थानादि वा करोतीति भावः । तत्र यदि वारयति तदा ज्ञायते सम्यक् परिणतोऽस्य धर्म्म इति योग्य उपस्थापनायाः । एवमेव गोचरगतेऽपि तत्सिद्धार्थं पृथिव्यादिभिर्भवति परीक्षा कर्त्तव्या । तद्यथा सरजस्केनोदकार्द्रेण वा हस्तेन मात्रकेण वा भिक्षा ग्राह्या इत्यादिपरीक्षितस्य व्रतारोपणं कर्त्तव्यम् । तथा चाह–

दव्वादिपसत्थवया, एक्केक्कतिगंति उवरिमं हेट्ठा ।
दुविहा तिविहा यदि सा, आयंबिलनिव्विगइगावो ॥

द्रव्यादौ प्रशस्ते व्रतान्यारोपणीयानि एकैकं व्रतं त्रिकं त्रि कृत्वा उच्चारयेत् कथमित्याह "उवरिम हेट्ठा" अधस्तान्मूलादारभ्य यावदुपरितनं पर्यन्तवर्तिसूत्रम् इदमेकमुच्चारणमेव त्रीन्वारान् दिक् निबध्यते । द्विविधां वा त्रिविधां वा तत्र साधोर्द्विविधा स्त यथा । आचार्यस्योपाध्यायस्य च प्रवर्तिन्याश्च । तथा उत्थापनानन्तरं तपः कार्यते । अनक्तार्थमाचाम्लं निर्विकृतिकमित्यादि । उक्तं च । "जद्दिवसं उवठावितो तद्दिवसं किंचि अभितुट्ठो भवइ । केसिं वि आयंबिलं केसिं वि निव्विगइयमित्यादि" ॥

संप्रति माननीयपित्रादिविषये विधिविशेषमाह–

पियपुत्तखुड्डथेरे, खुड्डगथेरेअ पावमाणम्मि ।
सिक्खावणपन्नवणा, दिट्ठंतो दंडिमाईहिं ॥

द्वौ पितापुत्रौ प्रव्रजितौ ( द्विष्ठावपि ) युगपत्प्राप्तौ तर्हि युगपदुपस्थाप्येते अथ ( खुड्डत्ति ) क्षुल्लकः पुत्रः सूत्रादिभिरप्राप्तः ( थेरत्ति ) स्थविरः सूत्रादिभिः प्राप्तस्तर्हि स्थविरस्योपस्थापना विधेया ( खुड्डत्ति ) यदि पुनः क्षुल्लकः सूत्रादिभिः प्राप्तः स्थविरो नाद्यापि प्राप्तो भवति तर्हि तस्मिन् स्थविरे सूत्रादिकमप्राप्नुवति यावदुपस्थानादिवसः क्षुल्लकः समागच्छति तावत्स्थविरस्य प्रयत्नेन शिक्षापना क्रियते । आदरेण शिक्ष्यत इत्यर्थः । तत्र यदि उपस्थापनादिवससमय एव प्राप्तो भवति ततो द्वावपि युगपदुपस्थाप्येते । अथादरेण शिक्ष्यमाणोऽपि न प्राप्तस्तदा स्थविरेणानुज्ञाते क्षुल्लक उपस्थाप्यते । अथ स्थविरो न मन्यते तदा प्रज्ञापना कर्त्तव्या तस्यां च प्रज्ञापनायां क्रियमाणायां दृष्टान्तो दण्डिकादयभिधातव्यः । दण्डिको राजा आदिशब्दादमात्यादिपरिग्रहः स चैवम् " एगो एया रज्जपरिट्ठो स पुत्तो अमरायाणमो लग्गउमाढत्तो । सो राया पुत्तस्स तुट्ठो तं से पुत्तं रज्जे ठावउमिच्छइ । किं सो पिया नाणुजाणइ एवं तव जइ पुत्तो महव्वयरज्ज पावित्ति किं न मन्नसि ।

एतदेवसविशेषमाह–

थेरेण अणुन्नाए, उवट्ठनिच्छे व ठंति पंचाहं ।
ति पण मणिच्छे उवरिं, वत्थुसहावेण जाहीयं ॥

स्थविरेणानुज्ञाते उपस्थापना क्षुल्लकस्य कर्त्तव्या । अथ स दण्डिकादिभिर्दृष्टान्तैः प्रज्ञाप्यमानो नेच्छति तदा पञ्चाहं पञ्चदिवसान् यावत्तिष्ठति ततः पुनरपि प्रज्ञाप्यते तथाप्यनिच्छायां पुनरपि पञ्चाहं तिष्ठति पुनः प्रज्ञाप्यते तथाप्यनिच्छे भूयः पञ्चाहमवतिष्ठते । एव यदि त्रिपञ्चाहकालेन स्थविरः प्राप्तो भवति तदा युगपदुपस्थापनाऽन्यः परं स्थविरेऽनिच्छत्यपि क्षुल्लक उपस्थाप्यते ( वत्थुसहावेण जा हीयमिति ) वस्तुनः स्वभावो वस्तुस्वभावः । अहंकारी सन् । अहं पुत्रस्यावमतरः करिष्येऽहमिति विचिन्त्य कदाचिन्निष्क्रामेत गुरोः क्षुल्लकस्य चोपरि प्रद्वेषं गच्छेत् । एवं स्वरूपे वस्तुस्वभावे ज्ञाते त्रयाणां पञ्चाहानामुपर्यपि स क्षुल्लकः प्रतीक्षाप्यते यावत्तेनाधीतमिति ॥

अथ द्वे पितापुत्रयुगले तत्राऽयं विधिः–

दो थेर खुड्डथेरे, खुड्डगवच्चत्थमग्गणा होइ ।
रण्णो अमच्चमाई, मंजइमज्झे महादेवी ॥

द्वौ स्थविरौ सपुत्रौ समकं प्रव्रजितौ तत्र यदि द्वौ स्थविरौ प्राप्तौ न क्षुल्लकौ ततः स्थविरावुपस्थाप्येते ( खुड्डत्ति ) अथ द्वावपि क्षुल्लकौ प्राप्तौ न स्थविरौ तदा पूर्ववत् प्रज्ञापनोत्कर्षेण पञ्चदशदिवसान्यावत्कर्त्तव्या तथाप्यनिच्छायामुपेक्षा वस्तु-

स्वभाव ज्ञात्वा प्रतीक्षापणम् । ( थेरे खुड्डत्ति ) द्वौ स्थविरावेकश्च क्षुल्लकः सूत्रादिभिः प्राप्तोऽत्रोपस्थापना ( वोच्चत्थे इत्यादि ) स्थविरस्यक्षुल्लकस्य च विपर्ययस्ततो प्रवनि मार्गणा कर्तव्या सा चैव द्वौ क्षुल्लकौ प्राप्तावेकश्च स्थविर. प्राप्त एको न प्राप्तस्तत्र यो न प्राप्त. स आचार्येण वृषभैर्वा प्रज्ञाप्यते प्रज्ञापित. सन् यद्यनुजानाति तदा तत् क्षुल्लक उपस्थाप्यते । तथाप्यनिच्छायां राजदृष्टान्तेन तथैव प्रज्ञापना । अयं चात्र विशेष. । सोऽप्राप्तस्थविरो भण्यते । एष तव पुत्र. परममेधावी सूत्रादिभि. प्राप्त इत्युपस्थाप्यताम् । यदि पुनस्त्व न मुत्कलयसि तदेतौ द्वावपि पितापुत्रौ रत्नाऽधिकौ न भविष्यतस्तस्माद्विसर्जय एनमात्मीयं पुत्रमेषोऽपि तावद्भवतु रत्नाधिक इति अतोऽपि परमनिच्छायामुपेक्षा वस्तुस्वभाव वा ज्ञात्वा तत्क्षुल्लकस्य प्रतीक्षापणमिति । ( रन्नो य अमच्चाईत्यादि ) पश्चार्द्धे राजा अमात्यश्च समकं प्रव्रजितौ समकमेव सूत्रादिभिः प्राप्तौ ततो युगपत्तौ द्वावप्युपस्थाप्येते । अथ राजा सूत्रादिभि' प्राप्तो नामात्यस्ततो राज्ञ उपस्थापना । अथामात्य. सूत्रादिभि प्राप्तो न राजा ततो यावदुपस्थापनादिनमागच्छति तावदादरेण राजा शिक्ष्यते ततो यदि प्राप्तो भवति ततो युगपदुपस्थापना । अथ तत्रापि राजा न प्राप्तस्तदा तेनानुज्ञाते अमात्य उपस्थाप्यते । अथ नेच्छति तदा पूर्ववद्दण्डिकदृष्टान्तेन राज्ञ. प्रज्ञापना । तथापि चेन्नेच्छति तत' पञ्चदिवसान्यावदमात्यस्य प्रतीक्षापणं तथापि चेन्न प्राप्तो भूय. प्रज्ञापना तत्राप्यनिच्छायां पुन' पञ्चदशाहमपि । तथाप्यनिच्छायामुपेक्षा वस्तुभाव वा ज्ञात्वामात्यस्य प्रतीक्षापणम् । यदि वा वक्ष्यमाणोऽत्र विशेषो यथा चामात्यस्य राज्ञा सहोक्तमेवमादिग्रहणसूचितयो. श्रेष्ठिसार्थवाहयोरपि वक्तव्यमिति । ( सजइमज्झे महादेवीत्ति ) द्वयोर्मातादुहित्रोर्द्वयोर्माताऽदुहितृयुगलयोर्महादेव्यमात्योश्च सर्वमेव निरवशेष वक्तव्यम् ।

सम्प्रति यदुक्त वोच्चत्यमग्गणा होगत्ति तद्व्याख्यानार्थमाह ।

दो पत्तापियपुत्ता, एगस्स पुत्तं न उ थेरा ।

गहितोवसयं वियरइ, राइणितो होउ एस वि य ॥

द्वौ पितापुत्रौ प्राप्तावेकस्य तु पिता प्राप्तो न पुत्रः युगलस्य पुत्र' प्राप्ता न स्थविर स आचार्येण वृषभेण वा प्रज्ञापनां ग्राहित' स्वय वितरत्यनुजानाति तदा स क्षुल्लक उपस्थाप्यते । अथ नेच्छति तदा पूर्ववद्राजदृष्टान्तेन प्रज्ञापना अन्यच्च तौ पितापुत्रौ रत्नाधिकौ भविष्यत एषोऽपि च तव पुत्रो यदि रात्निको रत्नाधिको भवति । भवतु नाम तव लाभ इति तथाप्यनिच्छायां पूर्ववदुपेक्षादि ।

राया रायाणो वा. दोण्णि वि समपत्त दोसु पासेसु ।

ईसरसेट्ठिअमच्चे. नियमघमाकुलदुए खुड्डे ॥

एको राजा द्वितीयराजस्तौ समक प्रव्रजितौ अत्रापि यथा पितापुत्रयो राजामात्ययोर्वा प्रागुक्त तथा निरवशेष वक्तव्य केवलममात्यादिके सूत्रादिभि. प्राप्ते उपस्थाप्यमाने यदि राजादिरप्रीतिं करोति दारुणस्वभावतया म्रते वा किमपि पुरुष तदा सोऽप्राप्तोऽपीतरैरमात्यादिभि. सममुपस्थाप्यते । अथवा ( रायात्ति ) यत्र एको राजा तत्र सोऽमात्यादीनां सर्वेषां रत्नाधिक कर्त्तव्य ( रायाणोत्ति ) यत्र पुनर्द्विप्रभृतयो राजान समक प्रव्रजिता समक च सूत्रादिभि' प्राप्तास्ते समरत्नाधिका कर्त्तव्या इत्युपस्थाप्यमाना द्वयो. पार्श्वयो स्थाप्यन्ते अत्रैवार्थे विशेषमाह ।

समगं तु अणेगेसुं, पत्तेसुं अणभिओगमावलिया ।

एगतो दुहतो ठविया, समएयणिया जहामन्नं ॥

पूर्व पितापुत्रादिसवन्धेनासवन्धेष्वनेकेषु राजसु समकं सूत्रादिभिः प्राप्तेष्वत एवैककालमुपस्थाप्यमानेषु ( अणभिजोगत्ति ) गुरुणा अन्येन वाभियोगो न कर्त्तव्यो यथा इतस्तिष्ठथ इतस्तिष्ठथेति किंत्वेकत. पार्श्वे द्विधा वा द्वयो. पार्श्वयोर्यथैव स्थिताः स्वस्वभावेन तेषामावलिका तथैव तिष्ठति तत्र यो यथा गुरो' प्रत्यासन्नः स तथा ज्येष्ठो ये तूभयोः समश्रेण्या स्थितास्ते समरत्नाधिकाः । इदानीं पूर्वगाथापश्चार्द्धव्याख्या ( ईसरेत्यादि ) यथा द्विप्रभृतयो राजान उक्ता एव द्विप्रभृतय. श्रेष्ठिनो द्विप्रभृतयोऽमात्या द्विप्रभृतयो निगमावणिज' ( घडार्त्त ) गोष्ठी द्विप्रभृतयो गोष्ठ्यो यदि वा द्विप्रभृतयो गोष्ठिका यदि वा द्विप्रभृतयो महाकुला द्विकग्रहणमुपलक्षण तेन द्विप्रभृतय इति द्रष्टव्यम् । तथैव च व्याख्यातं च ( खुड्डत्ति ) क्षुल्लकाः समक प्रव्रजिता इत्यर्थ. । सूत्रादिभि. प्राप्ता. समकं रत्नाधिकाः कर्त्तव्याः । एतेषामेव मध्ये यः पूर्वं प्राप्त' सपूर्वमुपस्थाप्यते इति वृद्धसंप्रदायः ।

ईसिं अण्णो पत्ता, वामपासम्मि होइ आवलिया ।

अभिसरणम्मि य वड्डी, ओसरणे सो व अण्णो वा ॥

तेषामुपस्थाप्यमानानामावलिका गुरुर्वामपार्श्वे जगदन्तवत् ईषदवनतस्य अवनतीभूय स्थिता तव यदि ते गुरुसमीपमपतोऽभिसरन्ति तदा गच्छस्य वृद्धिर्ज्ञातव्या यथाऽन्येऽपि वहवः प्रव्राजिष्यन्तीति अथ पश्चाद्बहिरपसरन्ति तदा स उपस्थाप्यमानोऽन्यो वा उन्निष्क्रामिष्यति अपद्रविष्यति वेति ज्ञातव्यमेव निमित्तकथनम् । व्य० द्वि० ४ उ० ॥

(सूत्रम्) जे भिक्खू णागयं वा, अणागयं वा सगं वा जे ।

अप्पालं उड्डावेइ, उड्डावंतं वा साइज्जइ ॥ ३०२ ॥

सूत्रार्थ पूर्ववत् अप्पालं उवट्ठावेंतस्स आणादी दोसा चउगुरुग च चिट्ठउ ताव उवट्ठावणाविहिं पव्वावणाविहिं तावणातुमिच्छामि ॥

नायगमनायगं वा, मावगमस्सावगं तु जे भिक्खू ।

अणलमुवट्ठावेई, सो पावति अप्पमादीणि ॥४५४॥

पच्छा सुद्धे अट्ठा, वामेसाइयं च तिक्खुत्तो ।

सयमेन उ कायव्व, सिक्खा य तहिं पयातेणं ॥४५५॥

जो च उवट्ठाति पव्वजा एसो पुच्छिज्जति कोसि तुम किं पव्वयसि किं च ते वेरग्गं एव पुच्छितो जति अणलो ण भवति ता सुद्धो पव्वज्जाए कप्पणिज्जो ताहे से इमा साहु चरिया कहिज्जति ॥

गोयरमचित्तभोयण, सज्झायमण्हाणभूमिसेज्जादी ।

अब्भुवगयपरिहोतया, गुरुजहण्णेण तिण्णट्ठा ॥४५६॥

गोयरेत्ति दिणे देणे भिक्ख हिंडियव्व जत्थ ज लब्भइ त अचित्तं घेत्तव्वं ज पि एसणादि सुद्ध आणियपि ताव वुड्डसेहादिएहिं सह सविभागेण भोत्तव्वं निच्च सज्झायज्झाणजुत्तेण होयव्व सदा अण्हाणग तु उडुवद्धे सया भूमिसयण वासासु फलगादिएसु सोतव्वं अट्ठारससीलगसहस्सा धारेयव्वा लोयादिया य किलेसा अणेगे कायव्वा एयं सव्व जति अब्भुवगच्छति तो पव्वावेयव्वा एसा पव्वावणिज्जपरिक्खा पव्वावणा भवति ॥ नि०चू० ११ उ० ॥

( सूत्रम् ) आयरियउवज्झाय-अगमरमाणे परं चउरायातो

पंचरातातो कप्पागं भिक्खुं णो उवट्ठावेति कप्पाए अत्थि-याइं से केइ माणणिज्जे कप्पागे नत्थि याइं से केइ छेदे वा परिहारे वा नत्थि याइ से के माणणिज्जे कप्पइ से संतराछेदे वा परिहारे वा ॥

अस्य व्याख्या प्राग्वत् नवरं तं चेव भाणियव्व मिति वचनादेवं परिपूर्णं पाठो द्रष्टव्यः । "कप्पाए अत्थि याइं से केइ माणणिज्जे कप्पागे नत्थि याइं से केइ छेदेवा परिहारे वा नत्थि याइ से केइ माणणिज्जे कप्पागे से संतरा छेदे वा परिहारे वा" अस्यापि व्याख्या प्राग्वत् तत्र यैः कारणैर्न स्मरति तान्युपदर्शयन्नाह-

दप्पेण पमाएण व, वक्खेवणगिलाणतो वावि ।
एएहिं असमरमाणे, चउव्विहं होइ पच्छित्तं ॥

दर्पो निष्कारणोऽनादरस्तेन प्रथममादौ विकथादीनां पञ्चानां प्रमादानामन्यस्तेन व्याक्षेपणसीवनादिना ग्लायते एतैः कारणैरस्मरति प्रायश्चित्तमस्मरणनिमित्तं चतुर्विधमस्मरणकारणस्य दर्पादेश्चतुष्प्रकारत्वात् । तदेवाभिधित्सुःप्रथमतो दर्पतः प्रमादेन चाह ॥

वायामगिलाणादिसु, दप्पेण अणुट्ठवेंति चउगुरुगा ।
विकहादिपमाएण व, चउलहुगा होंति बोधव्वा ॥

व्यायामग्लानादिषु व्यापृततया निष्कारणोऽनादर उपस्थापनाया स दर्प्प उच्यते तेन दर्प्पेणानुस्थापयति प्रायश्चित्तं चत्वारो गुरुका विकथादिना अन्यतमेन प्रमादेनानुपस्थापयन्ति चत्वारो लघुका भवन्ति बोद्धव्याः ॥

सिव्वणतुण्णणसज्झाय, झाणलेवादिदाणकज्जेसु ।
विक्खेवे होइ गुरुगो, गेलण्णेणं तु मासलहू ॥

सीवनतूर्णनास्वाध्यायध्यानपात्रलेपादिदानकार्येगाथायां सप्तमी तृतीयार्थे । यो व्याक्षेपेणाऽनुपस्थापयति प्रायश्चित्तं भवति गुरुको मासो ग्लान्येन त्वनुपस्थापयति मासलघु । सम्प्रति यैः कारणैः स्मरतोऽस्मरतश्चानुपस्थापयतः प्रायश्चित्त न भवति । तान्यभिधित्सुराह-

धम्मकहाऽऽकुमत्तो, वादो अच्चुक्कमे व गेलण्णे ।
बिइयं चरमपएसुं, दोसु पुरिमेसु तं नत्थि ।

ऋद्धिमतो राज्ञो युवराजस्यामात्यादेर्वा प्रतिदिवसमागच्छतो धर्म्मकथा कथ्यते परप्रवादी वा कश्चनाप्युपस्थितः स वादेन गृहीतव्य । इति तन्निग्रहणाय विशेषत शास्त्राभ्यासे तेन सह वादे वा दीयमाने यदि वा आचार्यस्यान्यस्य वा साधोर्वा उपस्थाप्यस्तस्य वा अत्युत्कटे ग्लानत्वे जाते व्याकुलीभवनत स्मरन्नस्मरन्वा यद्यपि नोपस्थापयति तथापि न तस्य प्रायश्चित्त कारणतो व्याकुलीभवनात् । एतच्च प्रायश्चित्ताभावलक्षणं द्वितीयपदमपवादपद चरमपदयोर्व्याक्षेपग्लान लक्षणयोरवगन्तव्यम् । तथा हि धर्म्मकथावादाभ्यां व्याक्षेप उक्तो ग्लानत्वपदेन च ग्लानत्वमिति पूर्वयोस्तु द्वयो पदयोस्तत् अपवादपद नास्ति । एतच्च चतुर्विध प्रायश्चित्तमस्मरणनिमित्तमुक्तं स्मरणतस्तु चतूरात्रपञ्चरात्राद्यतिक्रमे यत्प्रायश्चित्त तत्पूर्वसूत्रे इवापि निरवशेष द्रष्टव्यम् ।

आयरियउवज्झाओ य समरमाणे वा असमरमाणे वा परं दसरायकप्पातो कप्पागंभिक्खू णो उवट्ठावेति कप्पाए अत्थि आइं से केइ माणणिज्जे कप्पागे नत्थि याइं से केइ छेदे वा परिहारे वा जाव कप्पाए संवच्छतरं तस्स तप्पतियं णो कप्पइ आयरियत्तं वा जाव गणावच्छेइयं वा उद्दिसित्तए वा

आचार्य उपाध्यायो वा स्मरन् अस्मरन्वा यदा स्मरति तदा न साधकं नक्षत्रादिकं यदा तु साधकं नक्षत्रादिकं तदा बहुव्याक्षेपतो न स्मरन्वापरं दशरात्रकल्पात् दशरात्रकल्पाक भिक्षुं नोपस्थापयति तत्र यदि तस्मिन्कल्पाके अस्ति ( से ) तस्य कल्पाकस्य कश्चिन्माननीयः पित्रादिर्जीवी कल्पाकस्ततो नो पस्थापयति । तर्हि नास्ति ( से ) तस्यानुपस्थापयति कश्चिच्छेदः परिहारो वा । अथ नास्ति (से) तस्य कल्पाकस्य कश्चिन्माननीयः पित्रादिर्जीवी कल्पाकस्तर्हि तस्यानुपस्थापयतश्छेदः परिहारो वा प्रथमादेश इति वाक्यशेषो द्वितीयादेशेन पुनश्छेदेन परिहारतपसा वा दम्यमानस्य तत्प्रथममनुपस्थापनाप्रयतस्य संवत्सरं यावन्न कल्पत आचार्यत्वमुपदेष्टुमनुज्ञातुं संवत्सरं यावन्नणोऽभ्रियते इति भावः । एष सूत्रसंक्षेपार्थः । व्यासार्थन्तु भाष्यकृदभिधित्सु प्रथमतो दशरात्रनिबन्धनमाह-

समरमाणेवि पंचदिय, समरमाणे वि तेत्तिया चेव ।
कालोत्ति व समओत्ति व, अद्धाकप्पओत्ति व एगट्ठं ॥

स्मरत्यपि चउरायपंचरायातो इत्यनेन पञ्चदिनान्युक्तानि अस्मरत्यपि तावन्ति चैव पञ्च दिनानि चैवोक्तानि इद च स्मरणास्मरणमिश्रकसूत्रतो दशरात्रात्कल्पादित्युक्तमत्रैव कल्पशब्दस्तद्व्याख्यानमाह । "काल इति वा समय इति वा अद्धा इति वा कल्प इति" एकार्थं ततो दशरात्रकल्पादिति दशरात्रकालादिति द्रष्टव्यम् ।

सम्प्रति स्मरणास्मरण भावयति ॥

जाहे सुमरइ ताहे, असाहगं रिक्खलग्गादिणमादी ।
वहुविक्खेवम्मि य गणे, सरियं पि पुणो वि विस्सरति ॥

यदा स्मरति तदा असाधकमप्रयोजकमृक्षलग्नादि आदिशब्दात् मुहूर्त्तादिपरिग्रहः । बहुव्याक्षेपे च गणे गच्छे स्मृतमपि पुनरपि विस्मरति तत एवं स्मरणास्मरणसम्भवः । अत्रैव प्रायश्चित्तविधिं सविशेषमाह ।

दसदिवसे चउगुरुगा, दसेव छल्लहुग छग्गुरू चेव ।
तत्तो छेदो मूलं, णणवट्टप्पो य पारंची ॥

तस्मिन्नधिकृते कल्पाके जाते सति यदि स्मरणास्मरणतो दसदिवसानतिक्रमति ततस्तस्यानुपस्थापयत प्रायश्चित्त चत्वारो गुरुकाः तत परमप्यन्यानि दशैव चेत् दिनान्यतिवाहयति ततः षड्लघुकम् । ततः परतोऽपि दिनदशकातिक्रमे षड्गुरुक ( ततोछेदोत्ति ) ततः परमेवं छेदस्त्रिधा वक्तव्यः । सत्यैव ततोऽपि परतो यद्यन्यानि दशदिनानि लङ्घयति तर्हि चतुर्गुरुकश्छेदस्ततोऽपि परतो दिनदशकातिक्रमे षड्लघुकश्छेद ततोऽन्यदशदिवसस्यातिवाहने पाराञ्चिको जायते ॥

एसो ठमो पढमो, वितिए तवसा अदम्ममाणम्मि ।
उभयवलदुव्वले वा, संवच्छरमोदिसाहरणं ॥

एषोऽनन्तरोदित आदेशः प्रथमो द्वितीये आदेशे पुनस्तपसा उपलक्षणमेतच्छेदेन वा अदम्यमाने यदिवा उभयबलेन कायबलेन च उपलक्षणमेतदन्यतरैकबलेन वा तपसश्छेदस्य वा दातुमशक्यतया संवत्सरं यावत् दिश आचार्यत्वस्य हरणम् ॥

एते दो आदेसा, मीसगसुत्ते हवंति नायव्वा ।
पढमबिइएसुं पुण, सुत्तेसु इमं तु नाणत्तं ॥

एतावनन्तरोदितौ द्वावप्यादेशौ मिश्रकसूत्रे भवतो ज्ञातव्यौ

प्रथमद्वितीययोः पुनः सूत्रयोरिदमादेशविषयं प्रत्येकं नानात्वं तदेवाह ॥

चउरो य पंचदिवसा, चउगुरू एव होंति छेदो वि ।
तत्तो मूलं नवमं, चरमं पि य एगसरगं तु ॥

प्रथमे द्वितीये च सूत्रे प्रत्येकमिमावादेशौ प्रथम आदेशस्तस्मिन् विवक्षिते कल्पाके जाते सति यदि चतुरो दिवसानतिवाहयति तदा चतुर्गुरु एव पञ्चपञ्चातिक्रमे पञ्चलघु पञ्चगुरुके । एवं छेदो ऽपि त्रिधा वक्तव्यः तदनन्तरं मूलं नवममनवस्थाप्यं चरमं पाराञ्चितमेकसरकमेकैकदिनातिक्रमे वक्तव्यम् । द्वितीय आदेशः पञ्चदिवसातिक्रमे चतुर्गुरु एव पञ्चपञ्चातिक्रमे पञ्चलघुपञ्चगुरुके एवं छेदोऽपि पञ्चपञ्चदिनातिक्रमेण त्रिधा वक्तव्यस्ततो मूलं नवमं चरमं च एकसरकमेकैकदिनातिक्रमेणेति भावार्थः । व्य० ४ उ० । दशा० ॥

फासुय आहारो से, अणहिंडणं च गाहए सिक्खं ।
ताहे उ उवट्ठवणं, छज्जीवणिय तु पत्तस्स ॥
अप्पत्ते अकहित्ता, अणभिगतपरिच्छअतिक्कमे पासे ।
एक्केक्के चउगुरुगा, विसेसिया आदिमा चतुरो ॥
अप्पत्तं सुत्तेणं, परियाग उवट्ठवेंत चउगुरुगा ।
आणादिया य दोसा, विराहणा छण्ह कायाणं ॥
सुत्तत्थ कहइत्ता, जीवाजीवे य बंधमोक्खं च ।
उवट्ठवण चउगुरुगा, विराहणा जा भणियपुव्विं ॥
अणभिगतपुन्नपावं, उवट्ठवेंतस्स चउगुरू होंति ।
आणादिणो य दोसा, मालाए होंति दिट्ठंते ॥
समरक्खदउल्लगणी, पतिट्ठिते हरितबीजमादीसु ।
होंति परिक्खागोयरे, किं परिहरतीए वा वि त्ति ॥
उच्चारादि अथंडिल्ले, वोसिरठाणादि वावि पुढवीए ।
णदि मादिदगसमीवे, खारादिदाह अगणिम्मि वि ॥
जए अहिधारए वांत, हरिए अहव पुढवि ते तसेसुं च ।
एमादि परिक्खित्ता, वनदाणमिमेण विहिणा सो ॥
दव्वादिपसत्थे वा, एक्केक्कं तिगुणणोवरिं हेट्ठा ।
दुविहा तिविहा य दिसा, अंबिलनिव्विगतिओ वा ।
पियपुत्ताणं जुयला, दोण्हं तु निक्खंत तत्थ एगस्स ।
पत्तो यदि ताए पुत्तो, एगस्स पुत्तो ण तु थेरो ॥
ताहे तु पन्नविज्जति, दंडियणायं तु का तु जन्नइ तु मा ।
गेण्हं अस्सगहीए, तिण्णि उ होंति एमवित्ता ॥
एवं सो पण्हवितो, जदि इच्छे तो उ उट्ठवेंति तु ॥
नेच्छते यं चाह–वेति दो तिण्हि वायणगा ।
वच्छसन्नावासज्ज व, जा धीतं ताव त परिच्छति ।
एवं रायअणव्वेसु–जति मज्झे महादेवी ॥
राया रायाणो वा, दोण्हि वि समपत्तदोसु पासेसु ।
ईसरसेट्ठिअमचे, णियमघमाकुलदुव खुड्डे ॥
समपत्तअणेगेसुं, पत्तेसुं अणभिओगमावलिया ।
एगतो हुहतो ठविता, समराइणिया जहा सन्न ॥
ईसि अन्नो पत्ता. नामे पासम्मि होंति आवलिया ।

आसरणम्मि य वड्ढी, सरणे सो व अणो वा ॥
उवट्ठवियस्स एवं, संभुंजणता तहेव संवासो ।
बितियपदे संबंधी, ओमादीसु माहु पडिन्नावं ॥
भुंजीसु मए सद्धिं, इयाणिं णेच्छति भोत्तु पडिन्नावं ।
अहिखायंति व उन्ने, पच्छन्ने जे ए भुंजंति ।
एमादिणा तु भावं, तादे अप्पत्तअहवपत्तं वा ॥
उवट्ठवेंति भुंजंति, अपरिणते चित्तरक्खट्ठा ॥ पं०भा० ॥

उवट्ठावणा कप्पो अप्पते अंकवेत्ता । गाहा जइ आवासगमाइ जाव छज्जीवणियातो सुत्ते अपढिए उवट्ठावेइ चउगुरू दोहिं वि गुरू तवेण कालेण तवगुरू अनो अट्ठमदसमदुवालसमकालगुरू गिण्हकाले अहासुत्ते पढिए अत्थे अकहिए उवट्ठावेइ चउगुरू तवगुरू काललहु कालवड्ढ सीतकाले वासासु वा अह पढिए सुत्ते य अपरिच्छिओ ता मनसहहइ पुढविमार्दीणि चउगुरू तवलहू तवचउगुरू तवचउलहुग च जन्नइ अणुग्घाय्य परुच्च गुरुय अणुग्घाय्य नाम छट्ठे चउत्थे आयंबिले व कए पारणए पुरिमड्ढनिव्वीइएगासणाइ करेइ तेण गुरुय भवइ अह पढियसुयअभिगय अपरिच्छिऊण उवट्ठावेइ किं परिहरइ न उदओल्लादि चउगुरु दोहिं वि लहु तवसा कालेण अणुग्घाइय पुण एव वारसविह वि कप्पिए। प०चू० । "उवगस्स वा उवट्ठावेज्ज वा सुत्तं वा अत्थं वा उभयं वा परूवेज्जा एतेसु कुलगणसंघवज्झो" महा० ७ अ० । एतदेव सावयन्नाह–

णो उट्ठावणए च्चिअ, निअमा चरणंति दव्वओ जेण ।
सा भव्वाण वि भणिआ, उउमत्थगुरूण सफला य ॥

नोपस्थापनायामेव कृतायां सत्यां नियमाच्चरणमिति कुत इत्याह । द्रव्यतो येन प्रकारेण सा अभव्यानामपि भणितोपस्थापना अङ्गारमर्दकादीनां छद्मस्थगुरूणांविधिकारकाणां सफला चाज्ञाराधनादिति गाथार्थः । उपस्थापना विधिफलवत्तामाह ।

पायं च तेण विहिणा, होइ इमंति निअमो कओ सुत्तो ।
इयरा सामाइअम्मि–त्तओ वि सिद्धिं गयाणं ता ॥१०॥

प्रायश्चित्तेन विधिना उपस्थापनागतेन भवत्येतच्छेदोपस्थाप्य चारित्रमिति नियमः कृतः सूत्रदशवैकालिकादिपाठादनन्तरमुपस्थापनायाः इतरथान्यथा सामायिकमात्रतोऽप्यवहिः प्राप्त्या सिद्धिं गताः अनन्ता प्राणिन इति गाथार्थः ।

अनियममेव दर्शयति ॥

पुव्विं असंगतं पि अ, विहिणा गुरुगच्छसेवाए ।
जायमणेगेसि इमं, पच्छा गोविंदमाईणं ॥ ११ ॥

पूर्वमुपस्थापना काले असदपि चैतच्चरणं विधिना गुरुगच्छासेवया हेतुभूतया जातमभिव्यक्तमनेकेषामिदं पश्चात्पोपेन्द्रादीनां गोपेन्द्रवाचकाकरोटकगणिप्रभृतीनामिति गाथार्थः ॥

प्रक्रान्तसमर्थनायैवाह ॥

एअं च उत्तमं खलु, निव्वाणपसाहणं जिणा विंति ।
जं नाणदंसणाण वि, फलमेअं चेव निद्दिट्ठं ॥१२॥

एतच्चारित्रं उत्तमं प्रवृत्तमेव निर्वाणप्रसाधनं मोक्षसाधनं जिना ब्रुवते । अत एतदुपाये यत्नः कार्य इत्येतद् पर्यसुक्तमत्ते युक्तिमाह । यद्यस्माज्ज्ञानदर्शनयोरपि तत्त्वदृष्ट्या फलमेतदेव चारित्रं निर्दिष्टं तत्साधकत्वादिति गाथार्थः । प०व० । रात्र्योपस्थापना न कल्पते ॥

( सूत्रम् ) णो कप्पत्ति णिग्गंथाए वा णिग्गंथीण वा खुड्डयं वा खुड्डियं वा ऊणट्ठवासजायं उवट्ठावित्तए संभुंजित्तए वा कप्पति णिग्गंथाए वा णिग्गंथीण वा खुड्डयं वा ऽमातिरेगट्ठवासजायाड उवट्ठावित्तए वा संभुंजित्तए वा ।

सूत्रस्याक्षरगमनिका न कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा क्षुल्लक वा क्षुल्लिकां वा ऊनाष्टवर्षजातानामुपस्थापयितु वा सम्भोक्तुं वा मण्डल्यां तथा कल्पते निर्ग्रन्थानां निर्ग्रन्थीनां वा क्षुल्लक वा सातिरेकाष्टवर्षजातानामुपस्थापयितु वा उपस्थाप्य मण्डल्यां सभोक्तुं वा । अथ कस्मादूनाष्टवर्षजातस्योपस्थापनादि न कल्पते तत आह ॥

ऊणट्ठए चरित्तं, न चिट्ठए चालणी य उदगं वा ।
बालस्स य जे दोसा, भणिया आरोवणा दोसा ॥

ऊनाष्टके ऊनाष्टवर्षजाते बाले चालिन्यामुदकमिव चारित्रं न तिष्ठति । तथा ये बालस्य दोषा भणिता स्ते च बालस्योपस्थापने आरोपणायामाप्रसजति । बालस्य दोषानाह ॥

कायवयमणोजोगा, हवंति तम्हा णवट्ठिया जम्हा ।
संबंधिमणाभोगे, ओमे सहसाववादे य ॥

तस्य बालस्य कायवाङ्मनोयोगा यस्मादनवस्थिता भवन्ति । तस्मान्नोपस्थापयेत । तत्रैवापवादमाह । संबन्धिनमनाभोगे अवमे दुर्भिक्षे सहसाकारेण वा संभोजने अपवादे नोपस्थापयेदूनाष्टवर्षजातमपि । तत्र संबन्धिव्याख्यानार्थमाह ॥

भुंजिस्से स मए चेवं, वितिया निच्छइ संपइ ।
सो आनाहणसंबंधो, कह चिट्ठिज्ज तं विणा ॥

एप बालको मया सह भोक्ष्यते इत्येवं भणित्वा नातो मण्डल्यां भोक्ष्ये स च संप्रति तमाचार्य विना भोक्तु नेच्छति स चाचार्यस्य स्नेहेन सबन्धस्तत कथ प्रव्रज्यायां गृहीताया सह भोजन विना तिष्ठेत् । नैव तिष्ठेदिति भाव ॥

अणुवट्ठविओ एसो, जइया देवेज्ज अपरिणया ।
तो होउ व वारिज्जइ, तो णं सम्भुज्जए ताहो ॥

नव ह निश्चितमपरिणता आवश्यकं च यद्ययोऽनुपस्थापितो मण्डल्यां समुङ्क्ते नन स तदा उपस्थाप्यते तदनन्तरं समोजन मण्डल्यामिति ॥

अहव अणाभोगेणं, सहसाकारेण वा वि होज संजुत्तो ।
ओमम्मि विसहु तत्तो, विप्परिणामं तु गच्छेज्जा ॥

अथवा अनाभोगेण सहसाकारेण वा मण्डल्या सयुक्तो भूयात । ततो मा वृद्धावस्थाप्रसङ्ग इति तमूनवर्षजातमप्युपस्थाप्य मण्डल्या सभोजयेत् । अवमे दुर्भिक्षे जाते मा विपरिणामं गच्छेदित उपस्थाप्य मण्डल्यां संभोज्यते । एतदेव भावयति ॥

अदिक्खियंति एव मां, इमे पच्छन्नभोजिणो ।
परोद्दमिति भावेज्जा, तेणावि सह भुञ्जते ॥

इमे प्रच्छन्नभोजिनो मामेवमेव दुर्भिक्षे दीक्षयन्ति । अदीक्षां कर्त्तुमिच्छन्ति । तेन कारणेनाह पर कृत इति स भावयेत ततस्तेनापि सह समभुङ्क्ते । व्य० १० उ० ("तओ नो कप्पइ उवट्ठावित्तए तंजहा पंडए वाहए कीवे व्याख्या पव्वायणा शब्दे ) " दोसा उवट्ठावेइ सियनी सेसदुगस्स । अणायरणजोगा अन्ना समायारे न पुणिनयट नियत्तिया दोसा वृ० ४ उ० ॥

( सूत्रम् ) जे भिक्खू णायग वा अणायगं वा वासगं वा जे अणलं उट्ठावेइ उट्ठावेंतं वा साइज्जइ ॥ २८ ॥

सूत्रार्थ पूर्ववत् । अणल उवट्ठावेंतस्स आणादी दोसा चउगुरुगं च । नि० चू० ११ उ० ।

अनवस्थाप्यभिक्षादेः पुनरुपस्थापना—

अणवट्ठप्पं भिक्खुं अगिहिभूयं नो कप्पइ तस्स गणावच्छेयस्स उवट्ठवित्तए अणवट्ठप्पं भिक्खुं गिहिभूयं कप्पइ तस्स गणावच्छेदियस्स उवट्ठावित्तए इति ॥

यथास्य सूत्रस्य क संबन्ध उच्यते ।

अट्ठस्स कारणेणं, साहम्मि य तेणमादि जइ कुज्जा ।
इह अणवट्ठे जोगो, नियमातो यावि दसमस्स ॥

साधर्म्मिकैः कारणेन प्रागुक्तेनोत्पादितो योऽर्थस्तस्य स्तैन्यमादिशब्दादन्यपरिग्रह । यदि कुर्यात्तत सोऽनवस्थाप्यो भवति एतदर्थख्यापनार्थमर्थजातसूत्रानन्तरमनवस्थाप्यसूत्रम् इत्येषोऽनवस्थाप्यसूत्रस्य योग संबन्ध । पाराञ्चितसूत्रस्यापि संबन्धमाह । नवमात्प्रायश्चित्तादनवस्थाप्यादनन्तर किल दशमं पराञ्चितनामकं प्रायश्चित्त भवति ततो नवमानवमप्रायश्चित्तसूत्रस्यारम्भमाह । अनेन संबन्धेनायातस्यास्य व्याख्या । अनवस्थाप्य भिक्षुमगृहीभूतमगृहस्थीकृतं नो कल्पते यस्य समीपेऽवतिष्ठते तस्य गणावच्छेदिनो गणस्वामिन उपस्थापयितुम् । संप्रति पाराञ्चितसूत्रमाह ।

( सूत्रम् ) पारंचियं पि भिक्खुं अगिहिभूतं नो कप्पते तस्स गणावच्छेदियस्स उवट्ठावेत्तए पारंचियं भिक्खुं गिहिभूयं नो कप्पइ तस्स गणावच्छेदियस्स उवट्ठावित्तए पारंचियं भिक्खुं गिहिभूयं कप्पइ तस्स गणावच्छेदियस्स उवट्ठावित्तए ॥

अत्र सूत्रद्वयस्याक्षरगमनिका प्राग्वत्संप्रति भाष्यविस्तर ।

अणवट्ठो पारंचिय, पुव्वं भणिया इमं तु नाणत्तं ।
गिहिभूयस्स य करणे, अकरणे गुरुगा य आणादी ॥

अनवस्थाप्यपाराञ्चितौ एतौ द्वावपि पूर्व भणितौ इह चात्र नानात्व गृहीभूतस्य गृहस्थरूपसदृशस्य करणे यदि पुनर्गृहीभूतमकृत्वा तमुपस्थापयतितदा गृहीभूतस्याकारणे प्रायश्चित्त गुरुकाश्चत्वारो गुरुमासा । तथा आज्ञादय आज्ञानवस्थामिथ्यात्वविराधना दोषा । अन्यच्च प्रमत्त सन्तं देवता छलयेत । गृहीभूतस्य तु छलना न भवति । तस्माद् गृहीभूत कृत्वा तमुपस्थापयेत् । गृहस्थरूपताकरणमेव भावयति ।

वग्गेवच्छं एगे, एहाणादिविवज्जमवग्गिजुगलमित्तं ।
परिसामज्झे धम्मं, सुणेज्ज तो कहण दिक्खा ॥

एके आचार्या एव ब्रुवते स्नानविवर्ज वरं नेपथ्य तस्य क्रियते । अपरे दाक्षिणात्या पुनरेवमाहुर्वस्त्रयुगलमात्रं परिधाप्यते तद्रूपमस्य आचार्यसमीपमुपगम्य ब्रुवते भगवन् ! धर्म्मं श्रोतुमिच्छामि । तत ( कहणत्ति ) आचार्य धर्म्मं कथयति । कथिते च सति सकलजनसमक्ष ब्रुवते श्रद्दधामि सम्यग्धर्म्ममेनमिति मा प्रव्राजयत एवमुक्ते तस्य दीक्षा लिङ्गसमर्प्पणानन्तर च तत्क्षणमेवोपस्थाप्यते तत्र शिष्य प्राह । कस्मादेष गृहस्थावस्था प्राप्यते । सूरिराह ।

ओहावितो न कुव्वइ, पुणो वि सो तारिसं अतीयारं ।
होइ भयं सेसाणं, गिहिभूते धम्मिया चेव ।

किं वा तस्स न दिज्जइ, गिहिलिंगं तेण भावतो लिंग ।
अजढे वि दव्वलिंगे, मलिंगपडिसेवणावि जढं ॥

अपराजितो ग्लानिमापादित सन् पुनरपि स तादृशमतीचार न करोति । शेषाणामपि च साधूनां भयमुत्पादित भवति। येन तेऽप्येव न कुर्वते । तस्माद्गृहिरूपे गृहस्थता रूपस्य धर्मता धर्म्मादनपेतात्याच्येत नस्यापि याच्यमानागृहस्थरूपतेति भाव (किंवेत्यादि) किं वा केन वा कारणेन तस्य न दीयते गृहिलिङ्ग दातव्यमेव तस्य गृहिलिङ्गमित्यर्थ । येन कारणेनापरित्यक्तोऽपि द्रव्यलिङ्गे स्वलिङ्गे प्रतिसेवनात् भावतो लिङ्ग विजढ परित्यक्तमिति ।

सप्रति सूत्रक्रेदेवापवादमाह ।

(सूत्रम्) अणवट्ठप्पं भिक्खु पारंचिय भिक्खुं गिहिभूयं वा अगिहिभूतं वा कप्पइ, तस्स गणावच्छेदितस्स उवट्ठावेत्तए जहा तस्स गणस्स पतियं सिया इति ॥

अनवस्थाप्य भिक्षु पाराञ्चितं वा भूत भिक्षु गृहीभूतमगृहीभूतं वा कल्पते । तस्य गणावच्छेदिन उपस्थापयितु कथमित्याह यथा तस्य प्रतीक प्रतिकारमुपस्थापन स्यात्तथा कल्पते नान्यथा इह यो गृहस्थीभूत स तावदुपस्थाप्यते एवमस्यापवादविषय वा यस्त्वगृहीभूत· सोऽपवादविषयस्तस्योत्सर्गत प्रतिषिद्धत्वात् । तत्र यै कारणैरगृहीभूतोऽप्युपस्थाप्यते तत्र यथा तुवृत्त्यास्योऽगृहस्थीभूतोऽप्युपस्थाप्यो भवति । तथा भाव्यते इहानवस्थाप्य पराञ्चित वा कोऽपि प्रतिपन्नस्तस्य चाय कल्पो यावदनवस्थाप्य पाराञ्चित वा वहति तावद्बहि क्षेत्राद्वतिष्ठते । स च बहिर्यावत्तिष्ठति तावन्न गृहस्थ क्रियते किन्त्वागत करिष्यते । बहिश्चावतिष्ठमान स जिनकल्पिक इव भिक्षाचर्यामत्रेपकृद्धक्तादिग्रहणात्मिकां करोति तस्य च तथा बहिस्तिष्ठते । यथाचार्य करोति तथा प्रतिपादयति ।

आलोयणं गवेसण, आयरिओ कुणइ सव्वकालं पि ।
उप्पण्णे कारणम्मि, सव्वपयत्तेण कायव्व ॥

यस्याचार्यस्य समीपेऽनवस्थाप्य पाराञ्चित वा प्रतिपन्न· स आचार्य· सर्वकालमपि यावन्त काल तत्प्रायश्चित्त वहति तावन्त सकलमपि काल यावत्प्रतिदिवसमवलोकन करोति तत्समीप गत्वा तद्दर्शन करोतीत्यर्थ । तदनन्तर गवेषण गतोऽल्पक्लामतया तत्र दिवसे रात्रौ वेति पृच्छां करोति । उत्पन्ने पुन· कारणे ग्लानत्वलक्षणे सर्वप्रयत्नेन स्वयमाचार्येण कर्तव्यं भक्तपानहरणादि ॥

जो उ उवेहं कुज्जा, आयरिओ केणइ प्पमाएण ।
आरोवणा उ तस्स, कायव्वा पुव्वनिद्दिट्ठा ॥

य पुनराचार्य केनापि प्रमादेन जनव्याक्षेपादिना उपेक्षां कुरुते न तत्समीप गत्वा तत्सरीरस्योदन्त वहति तस्य आरोपणा प्रायश्चित्तप्रदान पूर्वनिर्दिष्टा कर्त्तव्या । चत्वारो गुरुकास्तस्य प्रायश्चित्तमारोपयितव्यामिति भाव· । यदुक्तमुत्पन्ने कारणे सर्वप्रयत्नेन कर्तव्य तद्भावयति ॥

आहरति भत्तपाण, उव्वत्तमादियंति सो कुणति ।
सयमेव गणाहिवती, अहं गिलाणो सयं कुणइ ॥

अथ सोऽनवस्थाप्य·पाराञ्चितो वा ग्लानोऽभवत् । ततस्तस्य गणाधिपतिराचार्य स्वयमेव भक्त पान वा हरति आनयति उद्वर्तनादिकमप्यादिशब्दात्पगवर्तनोद्धरणोपदेशनादिपरिग्रह· स तस्य स्वय करोति । अथ जातो ग्लानो निरोगस्तत स आचार्य न किमपि कारयति किं तु सर्वं स्वयमेव कुरुते । अधुना यदुक्तमालोयणं गवेसणंति तद्व्याख्यानार्थमाह–

उभयं पि दाऊण सपडिपुच्छं, वोढु सरीरस्स पवट्टमाणिं।
आसासइत्ताण तवो किलंत, तमेव खेत्तं समुवेंति थेरा॥

स्थविरा· आचार्याः शिष्याणां प्रतीच्छकानां च उभयमपि सूत्रमर्थं चेत्यर्थ·। किं विशिष्टमित्याह । स प्रतिपृच्छं पृच्छा प्रश्न· तस्याः प्रतिवचन प्रतिपृच्छा प्रत्युक्तौ प्रतिशब्द सह प्रतिपृच्छा यस्य तत् सप्रतिपृच्छं सूत्रविषये च यद्येन पृष्ट तत्र प्रतिवचनं चेत्यर्थ· दत्त्वा तत्सकाशमुपगम्य तस्य शरीरस्य वर्तमानमुदन्तं वहति अल्पक्लामता पृच्छतीति भाव । सोऽपि चाचार्यं समागतं मस्तकेन वन्दे इति फेटावन्दनकेन वन्दते शरीरस्य चोदन्तं मूर्च्छा यदि तपसा क्लाम्यति तत आश्वासयति आश्वास्य च तदेव क्षेत्रं यत्र गच्छोऽवतिष्ठते तत्समुपगच्छन्ति। कदाचिन्न गच्छेयुरपि तत्रेमानि कारणानि॥

गेलण्णेण वि पुट्ठो, अभिणवमुक्को ततो व रोगत्तो ।
कालम्मि दुब्बले वा, कज्जे अण्णेव वाघातो ॥

इहैकस्यापि कदाचिदेकवचन सर्वस्यापि वस्तुन एकानेकरूपताख्यापनार्थमित्यदुष्टम्। अथवा काले दुर्बले न विद्यते बलं गमने यस्मिन् गाढतपः सभवादिना दुर्बलो ज्येष्ठाषाढादिको दु शब्दो भाववाची तस्मिन्न गच्छेत् शरीरक्लेशसंभवात् "कज्जे अणेव वा घातो इति" अत्र सप्तमी तृतीयार्थे प्राकृतत्वात्ततोऽयमर्थ· । अन्येन वा कार्येण राज्ञा प्रद्वेषतो निर्विषयत्वाज्ञापनादिना व्याघातो भवेत्ततो न गच्छेदिति। आगमने चोपाध्यायः प्रेषणीयो योऽन्यो वा तथा चाह ॥

पेसेइ उवज्झायं, अंगं नीयं च जो तहिं जोग्गो ।
पुट्ठो व अपुट्ठो वा, तहा वि दीवेति त कज्जं ॥

पूर्वोक्तकारणवशात स्वयमाचार्यस्य गमनाभावे उपाध्याये तदभावे ऽन्यो वा गीतार्थस्तत्र योग्यस्त प्रेषयति । स च तत्र गत सन् तेन पाराञ्चितेन किमित्यद्य क्षमाश्रमणा नायाता इति पृष्टे वा अथवा न पृष्टस्तथाऽपि तत्कारण कार्यकारण दीपयेत । तथा असुकेन कारणेन क्षमाश्रमणानामनागमन पृष्टेनापृष्टेन वा दीपित तदा न किमप्यन्यत्तेन वा पाराञ्चितादि तावक्तव्यं किं गुर्वादेश एवोभाभ्यां यथोदित मपादनीय । अथ राज्ञा प्रद्वेषतो निर्विषयत्वाज्ञापनादिना व्याघातो दीपितस्तत्र यदि ते उपाध्याया अन्ये वा गीतार्थास्तस्य शक्तिं स्वयमवबुध्यन्ते ततो जानन्तः स्वयमेव तस्य महत्त्व ब्रुवते । यथा अस्मिन्प्रयोजने त्व योग्य इति क्रियतामुद्यम· । अथ न जानते तस्य शक्तिं तत स एव तान् अजानानान् ब्रूते । यथा अस्ति ममात्र विषय इति । एतच्च स्वयमुपाध्यायादिभिर्वा भणितो वक्ति ।

अत्थ उ महाणुभागो, जहासुहं गुणसयागरो संघो ।
गुरुगं पि इमं कज्जं, मं पप्प भविस्सए लहुय ॥

तिष्ठत यथासुख महान् अनुभागोऽचि न्त्यप्रयोजनानुकूला अचिन्त्या शक्तिर्यस्य स तथा गुणशतानामनेकेषां गुणानामाकरो निधान गुणशताकर·सङ्घ· यत इद गुरुकमपि कार्यं मां प्राप्य लघुकं भविष्यति । समर्थोऽहमस्य प्रयोजनस्य लीलयाऽपि साधने इति भाव· । एवमुक्ते सोऽनुज्ञात सन यत्करोति तदाह ॥

अभिहाणहेउकुसलो, बहूसु नीरजिनो वि उवज्झायु ।
गंतूण रायभवणा, भणाति तं रायदारिहि ॥

अभिधानहेतुकुशल इति अभिधानेषु शब्देषु हेतुसाध्यगमकेषु कुशलो दक्षोऽभिधानहेतुकुशल शब्दमार्गे चातीव कुशल इत्यर्थः । अत एव बहुषु विद्वत्सभासु नीराजितो निर्वर्तित इत्थभूत सन् राजभवन गत्वा तं राजद्वारस्थं प्रतीहारं भणति किं भणतीत्यत आह ॥

पडिहाररूवी भण रायरूविं, तहट्ठुए संजयरूवि दट्ठुं ।
निवेदइत्ता य स पत्थिवस्स, ओविट्ठए जत्थ तयं पवेसे ॥

हे प्रतीहाररूपिन् मध्ये गत्वा राजरूपिणं राजानुकारिणं भण ब्रूहि यथा त्वां संयतरूपी द्रष्टुमिच्छति । एवमुक्तः सन् प्रतीहारस्तथैवास्य निवेदयति । निवेद्य च राजानुमत्या यत्र नृपोऽवतिष्ठते तत्र तक साधु प्रवेशयति ॥

तं पूयइत्ताण सुहासणत्थं, पुच्छिंसु एगागय कोउ हल्लो ।
पएहे उराले असुए कयाइ, सत्ता विआरुक्खइ पत्थिवस्स ॥

तं साधु प्रतिष्ठमान राजा पूजयित्वा शुभासनस्थ शुभे आसने निषण्णमागतकुतूहल समुत्पन्नकुतूहलोऽप्राक्षीत् कानित्याह । प्रश्नान् उदारान् गम्भीरार्थान् कदाचिदप्यश्रुतान् । प्रतीहाररूपिन् तथा त्वमपि यादृशश्चक्री चक्रवर्त्ती तादृशो न भवसि रत्नाद्यभावाद् ( अत्रान्तरं चक्रवर्तिसमृद्धिराख्यातव्या ) किं तु प्रतापशौर्यन्यायानुपालनादिना तत्प्रतिरूपोऽस्ति तत उक्तं राजरूपिणं ब्रूहि चक्रवर्तिप्रतिरूपमित्यर्थः । एवमुक्ते राजा प्राह त्व कथ श्रमणानां प्रतिरूपी तत आह ॥

समणाणं पडिरूवी, जं पुच्छसि वा य तं कहमहंति ।
निरईयाए समणा, न तहा ह तेण पडिरूवं ॥

यत्त्व राजन्पृच्छसि । अथ कथं त्व श्रमणानां प्रतीरूपी तदहं कथयामि यथा श्रमणा भगवन्तो निरतिचारा न तथाहं तत श्रमणानां प्रतिरूपी नतु साक्षाच्छ्रमण इति । प्रतिरूपत्वमेव भावयति ।

निज्जूढोमि नरेसर, खेत्ते वि जईण अत्थिओ न लभे ।
अतियारस्स विसोही, पकरेमि पमायमूलस्स ॥

हेनरेश्वर! पृथिवीपते! प्रमादमूलस्यातिचारस्य सप्रति विशोधिं करोमि । तां च कुर्वन् निर्यूढोस्मि निष्काशितोऽस्मि तत आस्तामन्यत्रेत्रेऽपि यतीनामह स्थातु न लभे तत श्रमणप्रतिरूप्यहमिति । राजा प्राह । कस्त्वया कृतोऽतीचार । का च तस्य विशोधिरेवं पृष्टे यत्कर्त्तव्य तदाह ।

कहणाउट्टण आगमण-पुच्छणं दीवणा य कज्जस्स ।
वीसज्जियति य मया, हासुस्सितो भणइ राया ॥

कथन राजा पृष्टस्य सर्वस्याप्यर्थस्य प्रवचनप्रभावना भवति । तत आवर्त्तनमाकम्पनं राज्ञो भक्तीभवनमिति भाव । तदनन्तरमागमनप्रच्छनमागमनकारणस्य प्रश्न केन प्रयोजनेन यूयमत्रागताः स्थ । अत्रान्तरे येन कार्येण समागतस्तस्य दीपना प्रकाशना ततो राजा हासोत्कलितोऽतिहासेन उत्छुतो हृष्टोद्धान्त स्मितो हसितवक्त्र प्रहृष्ट सन्नित्यर्थः । भणति यथा मया विसर्जितं मुत्कलितमिति । अथ किं तत्कार्यं यस्य राज्ञा मुत्कलनं कृतमित्यत आह ।

वायपराजयकुविनो, चेइयतद्दव्वसंजतीगहणे ।
पुव्वत्तावणचउण्ह वि, कज्जाण हवेज्ज अन्नयरं ॥

यदि परजयेन कुपित स्यात् । अथवा चैत्यं जिनायतन तस्यापि तेनापराद्धं स्यात् । ततस्तस्मान्मोचनात्मुक्तो भवति । यदि वा तद्द्रव्यस्य चैत्यद्रव्यस्य ग्रहणेऽथवा संयत्या ग्रहणे ततः पूर्वोक्तानां कल्पाध्ययनोक्तानां चतुर्णां निर्विषयत्वाज्ञापनादीनामकार्याणामन्यतरत्कार्यं भवेत् ॥

संघो न लहति कज्जं, लद्धं कज्जं महाणुभागेण ।
तुज्झं तु विसज्जेमि, सो वि य संघोत्ति पूएइ ॥

निर्विषयत्वाज्ञापनमुत्कलनादिलक्षणं कार्यं संघो न लभते किं तेनावस्थाप्येन पाराञ्चितेन वा महानुभागेन लब्धं न च स एवं कार्यलाभेऽपि गर्वमुद्वहति यत आह तुज्झ तु इत्यादि । राजा प्राह । युष्माकं तु निश्चित प्रभावेनाहं पूर्वग्राहं विसृजामि नान्यथा । सोऽपि च ब्रूते । राजन् कोऽहं कियन्मात्रो वा गरीयान् संघो भट्टारकस्तत्प्रभावादहं किंचिद्यस्मात्संघमाहूय क्षमयित्वा च यूयमेवं ब्रूथ मुत्कलित मया युष्माकमिति संघं पूजयति । तत किमित्याह ॥

अब्भत्थितो व रएणा, सयं च संघो विसज्जयति ।
आदी मज्झवसाणे, स वा त्रिदेसो धुओ होइ ॥

अभ्यर्थितो वा राज्ञा संघो यदि वा सतुष्टः संघो विसर्जयति । किमुक्तं भवति । यद्वगूढं शेषं सर्व प्रसादेन मुक्त सोऽग्रहस्थीभूत एवोपस्थाप्यते इति । एतदेवाह सचापि दोषो धुतः प्रकम्पितः प्रसादेन स्फेटित इत्यर्थः । आदौ मध्ये अवसाने वा भवति । राजानुवृत्तिद्वारं गतम् ।

इदानीं प्रद्विष्टस्वगणद्वारमाह ॥

सगणो य पदुट्ठो से, आवण्णो तं च कारणं नत्थि ।
एएहिं कारणेहि य, गिहिभूते उवट्ठवणा ॥

( से ) तस्याचार्यस्य स्वगणप्रसिद्ध सन् ब्रूते । यथाऽमुकेन कारणेनैष पाराञ्चितप्रतिपत्त्या गृहीभूतत्वमापन्न इति तच्च कारणं तस्याचार्यस्य नास्ति । एताभ्यां स्वगणप्रद्वेषकारणाभावलक्षणाभ्यामगृहीभूते अगृहस्थीभूतस्य उपस्थापना क्रियते एष गाथाक्षरार्थः ॥ भावार्थस्त्वयम् । ' एगा तरुणी बहुसुयण येत्तु पव्वइया । अन्नया ताए संजतीए आयरितो उ भासिओ । आयरिएणं नेच्छिया । ताहे सा पदोसमागन्ना आयरियस्स तेसिं सजए पव्वयाणं कहे इमं एस आयरिओ उवसग्गेइ । ताहे ते संजतीए नियल्लगा पव्वइया आयरियस्स पउट्ठा भणति । एस आयरिओ पारंचिए गिहिभूतो आभवइ । ततो आयरिओ अन्नं गणं गंतु सव्वं जहट्ठियं परिकहेइ तं वावन्न अगारत्थ कुणह गिहियति तवेंति । ते नाऊण पउट्ठे माहोहिति । ते मिगस्स तरउत्ति मिच्छिच्छा मा सफला होहिति तोसितो अगिहिभूतो " काचित् व्रतिनी बहुस्वजना न् भासते या वा न प्रतिसिद्धा सती ( क्षोभगमिति ) अभ्याख्यान दद्यात्कालत्रयेऽपि सप्तमीति दत्तवती तथाभ्याख्यानसंपादितं प्रायश्चित्तमन्यत्र गणे स आचार्यो वहति चेत् संयतीस्वजना प्रद्विष्टा ब्रुवते । कुरुतैनमाचार्य गृहिक गृहस्थीभूतमिति । ते वरणान्तरस्थविरास्तान्प्रद्विष्टान् ज्ञात्वा मा तेषां गम्यतर पश्चाद्भवदिति तेऽपि कैतवेन वेत्राद्बहिस्तत्समीपे स्थिता तथा मा तेषां मिथ्यारूपा इच्छा सफला भवेदिति सोऽगृहीभूत एवोपस्थाप्यते । गतं स्वगणप्रद्विष्टद्वारम् ।

अधुना परमोचापनद्वारमाह ॥

संजाण लिंगकरणं, अणुगमेणं भणंति अगियत्थो ।
मा गीयं कुणह गुरुं, अह कुणह इमं निसामेह ॥
विरुद्धसामो अम्हे, एव ओहावणे जइ गुरुणं ।
एएहिं कारणेहिं, अगिहिभूते उवट्ठवणा ॥

"एगो बहुसिस्सो आयरिओ परिसेवणाए गिहिभूतत्तमावणो सो अन्न गणं गतु आलोएइ। तेहिं गिहिभूतो कज्जिउमाढत्तो। ततो तस्स सीसा भणति मा अम्ह गुरुं गिहिभूयं कुणह । जइ पुण अम्ह गुरूणमेवं उहावणा कीरइ ततो अम्हे भन्ने निक्खमिस्सामो। ततो तेसिं अप्पत्तियं माहोतीति। अगिहिभूतो चेव सो उवट्ठाविज्जइ" अक्षरगमनिका आचार्यस्य गृहिलिङ्गकरणं श्रुत्वा तस्य शिष्या अगीतार्था अनुरागेण भणन्ति। मागृहिकममस्मदीयं गुरुं कुरुत। अथ करिष्यथ तत इदं निशामयत आकर्णयत एवमपभ्राजना यदि गुरूणां ततो वयं ( विरूसामोत्ति ) उन्निष्क्रमिष्यामः एतेन खल्वनन्तराद्दिनन कारणन अगृहीभूतस्य तस्योपस्थापना। गत परमोचापनद्वारम्—

इदानीं मिथ्या गणद्वयविवादे इति द्वारमाह ॥

अप्पोमेसु गणेसुं, वहंति तेसिं गुरू अगीयाणं ।
ते विंति अप्पमप्पं, किह काहिह अम्ह थेरत्ति ॥

द्वौ गणौ तयोश्च द्वयोरपि गणयोः साधवो गीतार्थास्तेषां च गुरू स्थापनार्हं प्रायश्चित्तस्थानमापन्नौ। नवरमेकोऽगृहीभूतोपस्थापनार्हस्तो च परस्परं गणयो प्रतिपद्येते। तद्यथा एकोऽपरस्मिन् एवमन्योऽन्यस्य गणयोस्तेषामगीतार्थानां गुरूप्रायश्चित्तं वहतस्ते गणाः परस्परं ब्रुवते कथमस्माकं स्थविरान् करिष्यथ किंगृहीभूतानगृहीभूतान्वा तत्र यो गृहीभूतोपस्थापनार्हप्राप्तस्तद्गणान् प्रतीते ब्रुवते। गृहीभूतं करिष्यामः ॥

गिहिभूतोत्ति य वित्ते, अम्हेवि करोत तुब्भ गिहिभूतं।
अगिहिद्दोन्निवि मए, भणति थेरा इमं दो वि ॥
नवि तुब्भेगो अम्हे, अगिहितया महविणिच्छेसु ।
इच्छा संपूरिज्जइ, गणपत्तियकारगेहिं तु ॥

गृहीभूतान् करिष्याम इत्युक्ते इतरे वदन्ति वयमपि नवाचार्यं गृहीभूतं करिष्यामः तत्रैव परस्परं विवादे तान् द्वयानपि स्थविरान् अगीतार्थान् भणन्ति। द्वावप्यगृहीभूतौ वयमुपस्थापयिष्यामः। इतरौ च द्वावप्याचार्याविदं भूतः न वयमगृहीभूता शुद्ध्याम तस्माद्गृहीभूताः क्रियामहे इति एव यद्यप्यगृहीभूतोपस्थापनां ते नेच्छन्ति तथापि तेषु तथा अनिच्छत्स्वपि गणप्रीतिकारकैर्महद्भिः स्थविरैः सद्भिस्तेषां द्वयानामपि गणसाधूनामिच्छा पूर्यते द्वावप्यप्रीतिपरिहारार्थं गृहस्थीभूतानुपस्थाप्येतेऽर्थः। व्य० प्र० २ उ०। येषु स्थानेष्वपराधपदेषु पूर्वचरमाणां साधूनामुपस्थापना भवति तानि निरूपयितुमाह ॥

सा जेसि उवट्ठवणा, जेहिट्ठाणेहिं पुरिमचरिमाणं ।
पंचायामे धम्मे, आदेसतिगं च मे सुणसु ॥

सा उपस्थापना येषां भवति ते वक्तव्या येषु वा स्थानेष्वपराधपदेषु पूर्वचरमाणां साधूनां पञ्चयामे धर्मे स्थितानामुपस्थापना भवति तान्यपि वक्तव्यानि तत्र येषामुपस्थापना ते तावदभिधीयन्ते तत्रादेशत्रयं दश वा षट् वा चत्वारो वा उपस्थापनायामर्हा भवन्ति। तया आदेशत्रिकं मे इति मया यथाक्रमं वक्ष्यमाणं शृणु।

तओ पारंचिया वुत्ता, अणवट्ठा य तिण्णि उ ।
दंसणम्मि य वंतम्मि, चरित्तम्मि य केवले ॥ १ ॥
अदुवा वि य चत्तकिच्चे, जीवकाए समारभे ।
सेहे दसमे वुत्ते, जस्स उवट्ठावणा भणिया ॥ २ ॥

ये चतुर्थोद्देशके त्रयो दुष्टप्रमत्तान्योऽन्यकुर्वाणाख्याः पाराञ्चिकाः उक्ताः ३ ये च त्रय साधर्मिकान्यधार्मिकान्यकारिहस्तताल- रूपा अनवस्थाप्याः ६ येन च दर्शनं सम्यक्त्वं केवलं संपूर्णमपि वान्तं ७ येन चारित्रं केवलं संपूर्णं मूलगुणविराधनया वान्तं ८ अथवा यस्त्यक्तकृत्यः परित्यक्तसकलसंयमव्यापार आकुट्टिकया कर्षेण वाजीविकावान् पृथिवीकायादीन् समारभेत ९. यश्च शैक्षोऽजिनवदीक्षितः स दशमः १० उक्तः। एतद्दशकं मन्तव्यं यस्य उपस्थापना प्रथमचरमतीर्थकरैः भणिता। द्वितीयादेशमाह ॥

जे य पारंचिया वुत्ता, अणवट्ठप्पा य जे विऊ ।
दंसणम्मि य वंतम्मि, चरित्तम्मि य केवले ॥ १ ॥
अदुवा वि य चत्तकिच्चे, जीवकाए समारभे ।
सेहे छट्ठे मे वुत्ते, जस्स उवट्ठावणा भणिया ॥ २ ॥

ये च दर्शनं पाराञ्चिकाः सामान्यत उक्ताः ३ ये च विद्वांसोऽनवस्थाप्याः ४ येन च दर्शनं केवलं वान्तं ५ येन चारित्रं केवलं वान्तम् अथवा यस्त्यक्तकृत्यो जीवकायान् समारभते यश्च शैक्षः षष्ठः ६ एते षट्कं प्रतिपत्तव्यम्। यस्य उपस्थापना द्वितीयादेशे भणिता। तृतीयादेशमाह ॥

दंसणम्मि य वंतम्मि, चरित्तम्मि य केवले ।
वियत्तकिच्चे सेहे य, उवट्ठप्पा य आहिया ॥

दर्शने केवले शेषे वान्ते यो वर्तते। यो वा चारित्रे केवले वान्ते पाराञ्चिकानवस्थाप्ययोरत्रैवान्तर्भावो विवक्षितो यश्च त्यक्तकृत्यः षट्कायविराधकः यश्च शैक्ष एते चत्वार उपस्थाप्या उपस्थापनायोग्या आख्याताः। अथ तेषां मध्ये उपस्थापनीयो भवतीति चिन्तायामिदमाह ॥

केवलगहणकसिणं, जति वसती दंसणं चरित्तं वा ।
तो तस्स उवट्ठवणा, देसे वंतम्मि भयणा तु ॥

दर्शनचारित्रपदयोर्यत्केवलग्रहणं कृतं ततः इदं ज्ञाप्यते यदि कृत्स्नं निःशेषमपि दर्शनं चारित्रं वा वमति ततस्तस्योपस्थापना भवति देशे देशतः पुनर्दर्शनचारित्रे वा वान्ते भजना उपस्थापना भवेद्वा न वा। भजनामेव भावयति ॥

एमेव य किंचि पदं, सुयं व असुयं व अप्पदोसेणं ।
अविकोवितो कहिंतो, चोदिय आउट्टसुद्धे तु ॥

एवमेवाविमृश्य किञ्चिज्जीवादिकं सूत्रार्थविषयं वा पदं श्रुतं वा अश्रुतं वा अल्पदोषेण कदाग्रहाभिनिवेशादिदोषाभावे अकोविदोऽगीतार्थः कस्यापि पुरतो अन्यथा कथयन् आचार्यादिनामैव वितथप्ररूपणां कार्षीरिति चोदितः सन् यदि सम्यगावर्तते तदा स मिथ्यादुष्कृतप्रदानमात्रेणैव शुद्ध इति। तच्च दर्शनमनाभोगेनाभोगेन वा वान्तं स्यात् ॥

तत्रानाभोगेन वान्ते विधिमाह—

अणाभोएण मिच्छत्तं, सम्मत्तं पुणरागते ।
तमेव तस्स पच्छित्तं, जं सम्मं पडिवज्जई ॥

एकः श्राद्धो निह्नवान् साधुवेषधारिणो दृष्ट्वा यथोक्तकारिणः साधव एते इति बुद्ध्या तेषां सकाशे प्रव्रजितः स चापरैः साधुभिर्भणितः किमेवं निह्नवानां सकाशे प्रव्रजितः स प्राह नाहमागमविशेषज्ञानवान् तत स मिथ्यादुष्कृतं कृत्वा शुद्धदर्शनिना समीपे उपसंपन्न एवमनाभोगेन दर्शनं वमित्वा मिथ्यात्वं गत्वा सम्यक्त्वं पुनरागतस्य तदेव प्रायश्चित्तं यदसौ सम्यक् मार्गं प्रतिपद्यते स एव च तस्य व्रतपर्यायो न भूय उपस्थापना कर्तव्या ॥

आभोगेन वान्ते पुनरयं विधिः—

आभोगेण य मिच्छत्तं, सम्मत्त पुणरागते ।

जिणथेराण आणाए, मूलच्छेज्जं तु कारए ॥

य पुनराभोगेन निह्नवा एते इति जानन्नपि मिथ्यात्वं सङ्क्रान्त इति शेषः निह्नवानामन्तिके प्रव्रजित इत्यर्थः स च सम्यक् अन्येन प्रज्ञापितः सन् पुनर्भूयोऽपि यद्यागतस्तं तं जिनस्थविराणां तीर्थकरगणभृतामाज्ञया मूलच्छेद्यं प्रायश्चित्तं कारयेत् । मूलत एवोपस्थापनां तपः कुर्यादिति । एवं दर्शने देशतो वान्ते उपस्थापना भजना भाजिता । संप्रति चारित्रे देशतो वान्ते तामेव भावयति ॥

छण्हं जीवणिकायाणं, अणप्पज्झो विराहओ ।

आलोइय पडिक्कंते, सुद्धो हवति संजओ ॥

षण्णां जीवनिकायानां ( अणप्पज्झोत्ति ) अनात्मवशः क्षिप्तचित्तादिर्यदि विराधको भवति ततः आलोचितप्रतिक्रान्तो गुरूणामालोच्य प्रदत्तमिथ्यादुष्कृतः स यतः शुद्धो भवति ॥

छण्हं जीवनिकायाणं, अप्पज्झो अविराहतो ।

आलोइय पडिक्कंतो, मूलच्छेज्जं तु कारए ॥

षण्णां जीवनिकायानां (अप्पज्झोत्ति) स्ववशो यदि दर्पेणाकुट्टिकया वा विराधको भवति ततः आलोचितप्रतिक्रान्त तं मूलच्छेद्यं प्रायश्चित्तं कारयेत् वा शब्दोपादानाद्यदि तपोऽर्हप्रायश्चित्तमापन्नस्ततस्तपोऽर्हमेव दद्यात् तत्रापि यन्मासलघुकादिमापन्नस्तदेव दद्यात् । अथ हीनादिकं ददाति ततो दोषा भवन्तीति दर्शयति ॥

जं जोउ समावन्नो, जं पाउग्गं व जस्स वत्थुस्स ।

तं तस्स उ दायव्वं, असरिसदाणे इमे दोसा ॥

यत्तपोऽर्हं छेदार्हं वा प्रायश्चित्तं य समापन्नो यस्य वा वस्तुन आचार्यादेरसहिष्णुप्रभृतेर्वा यत्प्रायश्चित्तं प्रायोग्यमुचितं तत्तस्य दातव्यं यद्यसदृशमनुचितं ददाति ततः इमे दोषाः ॥

अप्पच्छित्ते पच्छित्तं, पच्छित्ते अतिमत्तया ।

धम्मस्साऽऽसायणा तिव्वा, मग्गस्स य विराहणा ॥

अप्रायश्चित्ते अनापद्यमानेऽपि प्रायश्चित्ते य प्रायश्चित्तं ददाति प्राप्ते च प्रायश्चित्ते योऽतिमात्रमतिरिक्तप्रमाणं प्रायश्चित्तं ददाति स धर्मस्य तीव्रामाशातनां करोति मार्गस्य मुक्तिपथस्य सम्यग्दर्शनादेर्विराधनां करोति । किंच ॥

उस्सुत्तं ववहरंतो, कम्मं बंधति चिक्कणं ।

संसारं च पवड्ढेति, मोहणिज्जं च कुव्वती ॥

उत्सूत्रं सूत्रोत्तीर्णं रागद्वेषादिना व्यवहरन् प्रायश्चित्तं प्रयच्छन् चिक्कणं गाढतरं कर्म बध्नाति । संसारं च प्रवर्द्धयति । प्रकर्षेण वृद्धिमन्तं करोति । मोहनीयं च मिथ्यात्वमोहादिरूपं करोति इदमेव सविशेषमाह ॥

उम्मग्गदेसणाए, मग्गं विप्पडिवातए ।

परं मोहेण रंजंतो, महामोहं पकुव्वइ ॥

उन्मार्गदेशनया च सूत्रोत्तीर्णप्रायश्चित्तादिमार्गप्ररूपणया मार्गं सम्यग्दर्शनादिरूपं विविधैः प्रकारैः प्रतिपातयति व्यवच्छेदं प्रापयति तत एव परमपि मोहेन रञ्जयन्महामोहं प्रकरोति तथा च त्रिंशन्महामोहस्थानेषु पठ्यते " नेया उयस्स अवगारी, अणुगामिस वट्टइ " यत एवमतो न हीनाधिकप्रायश्चित्तं दातव्यमिति ॥ वृ० १ उ० ॥

उवट्ठ ( ट्ठा ) वणाकप्पिय-उपस्थापनाकल्पिक-पुं० उपस्थापनाकल्पिके कल्पिके वृ० १ उ० ( यथा स तथा दीक्षितमनन्तर मेव अणुट्ठवणा शब्दे )

उवट्ठ ( ट्ठा ) वणागहण-उपस्थापनाग्रहण-न० उपस्थापनायां, हस्तिदन्तोन्नताकारहस्तादिभिः रजोहरणादिग्रहणे, वृ० ३ उ० ।

उवट्ठ ( ट्ठा ) वणायरिय-उपस्थापनाचार्य-पुं० उपस्थापनया आचार्यः । आचार्यभेदे, स्था० ४ ठा० ३ उ० ॥

उवट्ठ ( ट्ठा ) वणारिहं-उपस्थापनार्ह-पुं० श्रुतार्थपरिज्ञानादिगुणयुक्ते व्रतारोपणयोग्ये, । ' पढिए य कहिय अहिगय परिहरउवट्ठावणाइ जोगोत्ति । छक्कंतीहिं विसुद्धं, परिहरणवएण भेदेण ॥ पुप्पासावरमादी, दिट्ठंता होंति वयसामा । रुइणे जह मलिणाइसु, दोला सुद्धाइ सुणेव मिहइ पीत्यादि, एतासिं छेसुद्देसेण सीसाहियट्ठयाए अत्थो ज्झइ पढियाए सत्थपरिण्णाए दस कालिए छज्जीवणिकाए या कहियाए अत्थओ अभिगयाए सम्म परिक्खिऊण परिहरइ छज्जीवनियाए मणवयणकाएहिं कयकाएवियाणुमतिभेदेण तओ ट्ठाविज्जइ ण अन्नहा इमे य इत्यपरादौ दिट्ठंता मइलो पओ ण रागेज्जइ सोहि उ रंगिज्जइ असोहिए मूलपासाओ ण किज्जइ सोहिए किवमणाईहिं असोहिए आउरे उसहं न दिज्जइ सोहिए दिज्जइ असंववए रयणे पडिबंधो न कज्जइ सउए किज्जति एव पढिय कहियाईहिं असोहिए सीसो ण वयारोवणं कज्जइ सोहिए कज्जइ असोहिए य करणे गुरुणो दोसो सोहिया पालणे सीसस्स दोसोत्ति " । द० ४ अ० ॥

उवट्ठ ( ट्ठा ) वणीय-उपस्थापनीय-त्रि० आरोपणीये, स्था० ३ ठा० ।

उवट्ठ ( ट्ठा ) वि ( वे ) त्तए-उपस्थापयितुम्-अव्य० महाव्रतेषु व्यवस्थापयितुमित्यर्थे, वृ० ४ उ० । स्था० ॥

उवट्ठाण-उपस्थान-न० उप-स्था-ल्युट्-उपेत्य स्थितौ, परलोकक्रियास्वभ्युपगमे, भ० १ श० ३ उ० । प्रत्यासत्तिगमने, नि० । व्रतस्थापने, " बीयाए छेय तइयाए उवट्ठाणं अविहीए चेइयाइं वंदेत्ता " महा० ७ अ० ॥

उवट्ठाणकिरिया-उपस्थानक्रिया-स्त्री० वसतिदोषभेदे, ये भगवन्तः आगन्तारादिषु च ऋतुबद्धे वर्षा वा अतिवाह्यान्यत्र मासमेकं स्थित्वा द्वित्रैर्मासैर्व्यवधानमकृत्वा पुनस्तत्रैव वसन्ति । अयमेवंभूतः प्रतिश्रय उपस्थानक्रियादोषदुष्टो भवत्यतस्तत्राऽवस्थातुं न कल्पते आचा० २ श्रु० ३ अ. (वसइ शब्दे सूत्रत चैतत्स्पष्टं भविष्यति)

उवट्ठाणगिह-उपस्थानगृह-न० पुं० आस्थानमण्डपे, स्था० ५ ठा० । भ० । आस्थानसभायाम्, कल्प० ।

उवट्ठाणदोस-उपस्थानदोष-पुं० नित्यवासदोषे, व्य० ४ उ० ।

उवट्ठाणसाला-उपस्थानशाला-स्त्री० उपवेशनमण्डपे, नि० । आस्थानमण्डपे, ज्ञा० १ अ० । उपस्थानमण्डपे, दशा० १० अ० । " बाहिरियाए उवट्ठाणसालाए पाडिएक्कपाडिएक्काइं असाभिमुहाइं उत्ताइं जाणाइं उवट्ठवेह " औ० ।

उवट्ठाणा-उपस्थाना-स्त्री० उप सामीप्येन सर्वदावस्थानलक्षणेन तिष्ठन्त्यस्यामिति उपस्थाना अजादिपाठात्प्रत्ययः । उपस्थानक्रियादोषदुष्टायां शय्यायाम्, व्य० ४ उ० । यस्यां वसतौ ऋतुबद्धे मासं वर्षाकाले चतुर्मासं च स्थिता यदि तस्यामृतुबद्धवर्षाकाले संबन्धिकालमर्यादां द्विगुणामवर्जयित्वा भूयः समागत्य तिष्ठन्ति तदा सैव वसतिरुपस्थाना । किमुक्तं भवति । ऋतुबद्धे काले द्वौ मासौ वर्षास्वष्टमासान् अपहृत्य यदि पुनरागच्छन्ति तस्यां वसतौ ततः सा उपस्थाना भवति । अन्ये पुनरिदमाचक्षते । यस्यां वसतौ वर्षारात्रं स्थिता तस्यां द्वौ वर्षारात्रौ अन्यत्र कृत्वा यदि समागच्छन्ति ततः सा उपस्थाना न भवति अर्वाक् तिष्ठतां पुनरुपस्थाना ॥ ग० १ अधि० ॥

उउमासं समईआ, कालाईआउ सा भवे सिज्जा ।
साचे व उवट्ठाणा, दुगुणदुगुणं पवज्जित्ता ॥

ऋतुबद्धे मासं समतीतानि यानि वासेन उपसकणाद्वर्षाकाले वा चतुष्कालातीतासु कालातीतैव सा भवेत्तया वसति । अन्ये तु पाठान्तरत इत्यं व्याचक्षते । ऋतुवर्षयो समतीता निजं कालं ऋतुबद्धे मासं वर्षाकाले चतुर इति शेषं मूलवत् । सैवोपस्थाना सैव मासादिकल्पोपयुक्ता उपस्थानवती भवति । कथमित्याह । तद्द्विगुणद्विगुणमित्युभयकालसपरिग्रहार्थं वीप्सा वर्ज्जयित्वा प्रहृत्य मासकल्पे मासवर्ज्जनीया वर्षात्रस्थाने चतुर्मासिकद्वयमिति । गाथार्थः । ॥१३॥ पं०व० (अधिकं वसइ शब्दे वक्ष्यते )

उवट्ठिय- उपस्थित-त्रि० उप-स्था-क्त० । उप सामीप्येन स्थितः उपस्थितः । समाश्रिते, । सूत्र० १ श्रु० २ अ० । आश्रिते, " निम्ममत्तमुवट्ठिओ " आतु० । सूत्र० । लग्ने, " उवट्ठिया मे आयरिया विज्जामंत तिगिच्छया " उत्त० २० अ० । प्राप्ते, " जण्णवादमुवट्ठिओ " उत्त० १२ अ० । "आभिओगमुवट्ठिया" द० ४ अ० । सम्यगनुष्ठान कृतवति, सूत्र० २ श्रु० १ अ० । प्रत्यासन्नीभूते, स० । सामीप्येन स्थिते, आव० १० अ० । प्रव्रज्याया प्रविविजिषौ, स० । प्रह्वीभूते, अभ्युद्यते, पा० । "अहमवि तं उवट्ठिओ त महव्वयकथारण " ध० ३ अधि० । प्रास्तकरणावसरे, पञ्चा० १२ विव० ।

उवडहित्ता-उपदाहयितृ- त्रि० उपदाहके " अगणिकायेणं कायमुवडहित्ता भवति " अग्निकायेन तप्तायसा वा कायमुपदाहयिता भवति । सूत्र० २ श्रु० २ अ० ।

उवणंद-उपनन्द-पुं० ब्राह्मणग्रामवासिनि नन्दभ्रातरि, नन्दपाटके, श्रीवीरे प्रविष्टे नन्देन प्रतिलाभिते च । उपनन्दगृहे गोशाल पर्युषितान्नदानेन रुष्टस्तद्गृहदाहाय शशाप ( वीरशब्द चैतत् ) स्थविरस्यार्यसंभूतविजयस्य द्वादश शिष्याणा द्वितीये शिष्ये । कल्प० ॥

उवणगर-उपनगर-अव्य० सामीप्ये, अव्ययी भाव समास नगरस्य समीपे, औ० ॥

उवणगरग्गाम-उपनगरग्राम-पुं० नगरस्य समीपमुपनगर तत्र ग्राम उपनगरग्राम । पुरोपकण्ठे ग्रामे, " चपाए णयरीए उवणगरग्गाम उवागए " औ० । आ०चू० ॥

उवणच्चिज्जमाण-उपनर्त्यमान-त्रि० नर्तन कार्यमाणे, औ०॥

उवणमंत-उपनमत्-त्रि० प्राप्नुवति, प्रश्न० अ० ४ द्वा० । ढौकमाने, सूत्र० १ श्रु० २ अ० ॥

उवणय-उपनत-न० नृत्यप्रकारे, तं० ॥

उपनय-पुं० गुणोक्तौ, स्तुतौ, प्रव० १४१ द्वा० । उपसंहारे दृष्टान्तदृष्टस्यार्थस्य प्रकृते योजने, ॥ प्रव० ६६ द्वा० । तथा न तथेति वा पक्षधर्मोपसंहारे, । तद्यथा अनित्य शब्द कृतकत्वात् घटवत्तथा चायम अनित्यत्वाभावे कृतकत्वमपि न भवत्याकाशवत् तथाऽयमिति । सूत्र०१श्रु०१३अ० । उपनय वर्णयन्ति हेतो साध्यधर्मिण्युपसंहरणमुपनय इति यथा धूमश्चात्र प्रदेश इति । र० । नयाना समीपे उपनया । सद्भूतव्यवहाराऽसद्भूतव्यवहारोपचरितसद्भूतव्यवहाराऽख्यनयत्रिकं ॥

तद्भेदवक्तव्यता यथा-

ये मार्गं सर्वं त्यक्त्वा-पनयान्कल्पयन्ति वै ।
तत्प्रपञ्चविबोधाय, तेषा जल्पः प्रतायते ॥ ७ ॥
नया न्यायानुसारेण, न वचोपनयास्त्रयः ।
निश्चयव्यवहारौ हि, तदध्यात्मगतानुगौ ॥ ८ ॥

ये च केचन कल्पकाः सरलं सममेतद्लक्षणं मार्गं नयनिगमपन्थान त्यक्त्वा विमुच्य उपचारादिग्रहीतुमिच्छयोपनयान् नयानां समीपे उपनयास्तान् कल्पयन्ति दिगम्बरशास्त्रे हि द्रव्यार्थिक १ पर्यायार्थिकः २ नैगम ३ संग्रह ४ व्यवहार ५ ऋजुसूत्र ६ शब्दः ७ समभिरूढः ८ एवंभूत ९ । इति नव नया स्मृताः । उपनयाश्च कथ्यन्ते नयानां समीपमुपनयाः सद्भूतव्यवहार असद्भूतव्यवहार उपचरितसद्भूतव्यवहारश्चेति उपनयास्त्रेधा इति । तत्प्रपञ्चस्तद्विस्तारः शिष्यबुद्धिरञ्जनमात्रमेवास्ति तथापि विबोधाय समानतन्त्रत्वेन परिज्ञानाय तेषां नयानां जल्प उल्लाप प्रतायते स्वक्रियया उच्यते इत्यर्थ ७ ( नयति ) न्यायानुसारेण तन्मतीयग्रन्थगताभिप्रायेण नया नव सन्ति पूर्वोक्ता । ज्ञेयास्तथा उपनयाश्च त्रय एव सन्ति तेऽप्युपनया सद्भूतव्यवहारादयस्त्रय इति । तथा चाध्यात्माख्योऽपि मतभेद कश्चिदस्ति तत्र च तदध्यात्ममतानुगौ तच्छैलीपरिशीलितौ नयौ निश्चयेन द्वावेव कथितौ तत्रैको निश्चयनय १ अपरो व्यवहारनयश्चेति २ द्वावेव नाधिकौ । अभेदोपचारतया वस्तु निश्चीयत इति निश्चय यथा " जीव शिव शिवो जीवो, नान्तरं शिवजीवयो " रिति । भेदोपचारतया वस्तु व्यवह्रियत इति व्यवहार । यथा " कर्मबन्धो भवेज्जीवः, कर्ममुक्तस्तदा शिव " इति ॥ द्र० ८ अध्या० ॥

अथोपनयानां प्रकारमाह ।

त्रयश्चोपनयास्तत्र, प्रथमो धर्मधर्मिणोः ।
भेदाच्छुद्धस्तथाऽशुद्धः, सद्भूतव्यवहारवान् ॥ १ ॥
ज्ञानं यथात्मनो विश्वं, केवलं गुण इष्यते ।
मतिज्ञानादयोऽप्येते, तथैवात्मगुणा भुवि ॥ २ ॥
गुणो गुणी च पर्यायः, पर्यायी च स्वभावकः ।
स्वभावी कारकस्तद्वा-नेकद्रव्यानुगाविधा ॥ ३ ॥

तत्रेत्यधिकारसूचकविषयसप्तमीयम् । नयाना समीपमुपनया त्रयस्त्रिसंख्याका । तेषु त्रिषु प्रथम आद्यो धर्मश्च धर्मी च नयो भेदस्तस्मात् । धर्मधर्मिणोरसाधारण कारणं धर्म स च धर्मो ऽस्यास्तीति धर्मी तयोरिति द्वन्द्वसमासेन भेदात् द्विधा द्विप्रकार । एतावता य प्रथमभेदो धर्मधर्मिभेदाज्जात सोऽपि द्विविधो ज्ञेय । एक शुद्धोऽपरो द्वितीयोऽशुद्धः । कथंभूत शुद्धस्तथाशुद्धश्च सद्भूतव्यवहारवान् सद् भूयते ऽनेनेति सद्भूत व्यवह्रियत इति व्यवहार सद्भूतश्च व्यवहारश्च सद्भूतव्यवहारौ शुद्धाशुद्धौ तौ विद्येतेऽस्येति सद्भूतव्यवहारवान् शुद्धयोर्धर्मधर्मिणोर्भेदाच्छुद्धसद्भूतव्यवहार ॥ १ ॥ अशुद्धधर्मधर्मिणोर्भेदादशुद्धसद्भूतव्यवहार ॥ २ ॥ सद्भूतस्त्वेकं द्रव्यमेवास्ति भिन्नद्रव्यसंयोगापेक्षा नास्ति । व्यवहारस्तु भेदाएक्रियेत्येव निरुक्ति ॥ १ ॥ ( ज्ञानेनि ( यथा विश्वे जगति आत्मन केवलं ज्ञान गुण इति षष्ठीप्रयोग । इत्यात्मद्रव्यस्य ज्ञानमिति तथा मतिज्ञानादयोऽपि आत्मद्रव्यस्य गुणा इति व्यवह्रियन्ते केवलज्ञान यद्यपि स एव शुद्ध आत्मास्ति । मत्यादयो ज्ञानानि केवलावरणविशेषिता व्यवहारा अशुद्धा उच्यन्ते इति ॥ २ ॥ ( गुणेति ) गुणो रूपादि गुणी घट १ पर्याय कुण्डलाकुण्डलादि पर्यायी कनकं २ स्वभावो ज्ञान स्वभावी जीव ३ कारकश्चकादयआदि कारकी कुलाल ४ अथवा

गुणगुणिनौ १ क्रियाक्रियावन्तौ २ जातिव्यक्ती ३ नित्यद्रव्यविशेषौ चेति ४ एवं एकद्रव्यानुगतभेदा उच्यन्ते ते सर्वेऽपि उपनयस्यार्था ज्ञातव्याः । अवयवावयविनौ इति अवयवादयो हि यथाक्रममवयव्याद्याश्रिता एव तिष्ठन्तेऽविनश्यन्तो विनश्यद्वस्थास्त्वनाश्रिता एव तिष्ठन्ते इत्यादि ॥

अथासद्भूतव्यवहारं निरूपयति ।

असद्भूत व्यवहारो, द्रव्यादेरुपचारतः ।
परपरिणतिश्लेष-जन्यो भेदो नवात्मकः ॥ ४ ॥

असद्भूतव्यवहारः स कथ्यते यः परद्रव्यस्य परिणत्या मिश्रितः अर्थात् द्रव्यादेर्धर्माधर्मादेरुपचारतः उपचारणात् परपरिणतिश्लेषजन्यः परस्य वस्तुनः परिणतिः परिणमनं तस्य श्लेषः संसर्गस्तेन जन्यः परपरिणतिश्लेषजन्यः । असद्भूतव्यवहारः कथ्यते । अत्र हि शुद्धस्फटिकसंकाशजीवभावस्य परशब्देन कर्म कथ्यते तस्य परिणतिः पञ्चवर्णादिरौदयिकी तस्याः श्लेषो जीवप्रदेशैः कर्मप्रदेशसंसर्गस्तेन जन्यः उत्पन्नः परपरिणतिश्लेषजन्यः असद्भूतव्यवहाराख्यो द्वितीयो भेदः कथ्यते । स नवधा नवप्रकारो भवति । तथाहि द्रव्ये द्रव्योपचारः १ गुणे गुणोपचारः २ पर्याये पर्यायोपचारः ३ द्रव्ये गुणोपचारः ४ द्रव्ये पर्यायोपचारः ५ गुणे द्रव्योपचारः ६ गुणे पर्यायोपचारः ७ पर्याये द्रव्योपचारः ८ पर्याये गुणोपचारः ९ इति । सर्वोऽपि असद्भूतव्यवहारस्यार्थो द्रष्टव्यः अत एवोपचारः पृथक् नयो न भवति मुख्याभावे सति प्रयोजने निमित्ते चोपचारः प्रवर्तते सोऽपि संबन्धाविनाभावः श्लेषः संबन्धः परिणामपरिणामिसंबन्धः श्रद्धाश्रद्धेयसंबन्धः ज्ञानज्ञेयसंबन्धश्चेति । भेदोपचारतया वस्तु व्यवह्रियते इति व्यवहारः गुणगुणिनोर्द्रव्यपर्याययोः संज्ञासंज्ञिनोः स्वभावतद्वतोः कारकतद्वतोः क्रियातद्वतोर्भेदाद्भेदकः सद्भूतव्यवहारः । शुद्धगुणगुणिनोः शुद्धद्रव्यपर्याययोर्भेदकथनं शुद्धसद्भूतव्यवहारः २ तत्र उपचरितसद्भूतव्यवहारः सोपाधिकगुणगुणिनोर्भेदविषयः । उपचरितसद्भूतव्यवहारो यथा जीवस्य मतिज्ञानादयो गुणाः । निरुपाधिकगुणगुणिनोर्भेदकोऽनुपचरितसद्भूतव्यवहारो यथा जीवस्य केवलज्ञानादयो गुणाः । ४ अशुद्धगुणगुणिनोरशुद्धद्रव्यपर्याययोर्भेदकथनमशुद्धसद्भूतव्यवहारः ५ इत्यादिप्रयोगवशाद्ज्ञेयमिति ॥

अथ नवभेदानसद्भूतव्यवहारजन्यान् विवृणोति ।

द्रव्ये द्रव्योपचारो हि, यथा पुद्गलजीवयोः ।
गुणे गुणोपचारश्च, भावद्रव्याख्ययोर्द्वयोः ॥ ५ ॥
पर्याये किञ्च पर्यायो-पचारश्च यथा भवेत् ।
स्कन्धा यथात्मद्रव्यस्य गजवाजिमुखाः समे ॥ ६ ॥

हि निश्चितं द्रव्ये गुणपर्यायवति वस्तुनि द्रव्योपचारः द्रव्यस्य प्रस्तुतस्य उपचारः उपचरणमात्रधर्मः यथेति दृष्टान्तः श्रीजिनस्यागमे पुद्गलजीवयोरैक्यं जीवः पुद्गलरूपः पुद्गलात्मकः अत्र जीवोऽपि द्रव्यं पुद्गलोऽपि द्रव्यम् उपचारेण जीवः पुद्गलमय एवासद्भूतव्यवहारेण मन्यते न तु परमार्थेन यथा च क्षीरनीरयोरन्योन्यानुगतत्वात् क्षीरं हि नीरमिश्रितं क्षीरमित्युच्यते व्यवहारात् । एवमत्र जीवे जीवद्रव्ये पुद्गलद्रव्योपचारः १ पुनर्गुणे गुणोपचारो गुणे रूपादिके गुणस्योपचारः यथा भावलेश्यायां द्रव्यलेश्याया उपचारः भावलेश्या हि आत्मनो रूपं गुणस्तस्य हि यत्कृष्णनीलादिकथनं वर्तते तद्धि कृष्णादिपुद्गलद्रव्यजगुणस्योपचारोऽस्ति अयं हि आत्मगुणस्य पुद्गलगुणस्योपचारो ज्ञातव्यः ॥ ५ ॥ पर्याये पर्यायविषये नरत्वादिके पर्यायस्य तदादिकस्यैवोपचारः यथा आत्मा द्रव्यपर्यायस्य तदादिकस्यैवोपचारः यथा गजवाजिमुखाः पर्यायस्कन्धाः उपचारादात्मद्रव्यस्य समानजातीयद्रव्यपर्यायास्तथा स्कन्धाः कथ्यन्ते तत्र आत्मपर्यायस्योपरि पुद्गलपर्यायस्य उपचरणात्स्कन्धा व्यपदिश्यन्ते व्यवहारात् ॥

अथ द्रव्ये गुणोपचारः ।

द्रव्ये गुणोपचारश्च, गौरोऽहमिति द्रव्यके ।
पर्यायस्योपचारश्च, ह्यहं देहीति निर्णयः ॥ ७ ॥

यथाहं गौर इति ब्रुवतामहमित्यात्मद्रव्यम् तत्र गौर इति पुद्गलस्योज्ज्वलताख्यो गुण उपचरितः । ४ । अथवा द्रव्ये पर्यायोपचारः । अथ वा "अहं देहीति निर्णयः" इत्यत्र अहमिति आत्मद्रव्यं तत्रात्मद्रव्यविषये देहीति देहमस्यास्तीति देही देहमिति पुद्गलद्रव्यस्य समानजातीयद्रव्यपर्याय उपचरितः ॥ ५ ॥

गुणे द्रव्योपचारश्च, पर्यायेऽपि तथैव च ।
गौर आत्मा देहमात्मा, दृष्टान्तौ हि क्रमात्तयोः ॥ ८ ॥

गुणे द्रव्योपचारश्च तथा पर्याये गुणोपचारश्च । एवं द्वौ उपनयासद्भूतव्यवहारस्य भेदौ । अथ तयोरेवानुक्रमेण दृष्टान्तौ यथा "अयं गौरो दृश्यते स चात्मा" अत्र गौरमुद्दिश्यात्मनो विधानं क्रियते यत्तद्धि गौरतारूपपुद्गलगुणोपरि आत्मद्रव्यस्योपचारपठनमिति । ६ । पर्याये द्रव्योपचारो यथा "देहमिति आत्मा" अत्र हि देहमिति देहाकारपरिणतानां पुद्गलानां पर्यायेषु विषयभूतेषु च आत्मद्रव्यस्योपचारः कृतः देहमेवात्मा देहरूपपुद्गलपर्यायविषय आत्मद्रव्यस्यापौद्गलिकस्योपचारः कृत इति सप्तमो भेदः । ७ । "अतति सातत्येन गच्छति तांस्तान्पर्यायानित्यात्मा" अत्र पर्यायाणां द्रव्यभावभेदितानां गमनप्रयोगो यद्यपीष्टस्तथापि असद्भूतव्यवहारविवक्षावशेन उपचारधर्मस्यैव प्राधान्यात् बहिः पर्यायावलम्बनेन कर्मजशुभाशुभपुद्गलपरिणतगौराख्यवर्णोपलक्षित आत्मा भासते तदा गौर आत्मेति प्रतीतिर्जायते अन्यथा आत्मनः शुद्धस्याकर्मणः कुतो गौरत्वध्वनिः । अत एव उपचारधर्मो देहमात्मेत्यत्र तु औदारिकादिपुद्गलप्रणीतं देहमौदयिकेनाश्रित आत्मा उपलक्ष्यते तदा देहमात्मेति उपचारध्वनिः ॥ ८ ॥

अथाष्टमभेदोत्कीर्तनमाह ।

गुणे पर्यायचारश्च, मतिज्ञानं यथा तनुः ।
पर्याये गुणचारोऽपि, शरीरं मतिरिष्यते ॥ ९ ॥

गुणे पर्यायोपचारः पर्यायचार इति उपचारो वाच्यो भीमो भीमसेन इति वत् । यथा मतिज्ञानम् तदेव शरीरं शरीरं शरीरजन्यं वर्तते तत् कारणात् अत्र मतिज्ञानरूपात्मकगुणविषये शरीररूपपुद्गलपर्यायस्योपचारः कृतः । ८ । अथ नवमभेदोत्कीर्तनमाह । पर्याये गुणोपचारः यथा हि पूर्वप्रयोगजमन्यथा क्रियते यतः शरीरे तदेव मतिज्ञानरूपो गुणोऽस्ति अत्र हि शरीररूपपर्यायविषये मतिज्ञानरूपाख्यस्य गुणस्योपचारः क्रियते शरीरमिति पर्याय तस्मिन् विषये मतिज्ञानाख्यो गुणस्तस्य चोपचारः कृतः अत्र च अष्टमनवमविकल्पयोः समविषमकरणेनोपचारो विहितस्तत्रापि सहभाविनो गुणाः क्रमभाविनः पर्यायाः सहभावित्वं च द्रव्येण क्रमभावित्वमपि द्रव्येणैव ज्ञेयमतो द्रव्यस्यैव गुणाः पर्याया अपि द्रव्यस्यैव गुणपर्याययोः पर्यायगुणयोश्च परस्परमुपचारोऽव्यवहारः कृतः । यत्रोपचारस्तत्र निदर्शनमात्रमेव विसदृशार्थभिन्नेन धर्मारोपवत् । किं च मतिज्ञानमात्मनः कश्चिदुद्दिष्टो गुणः । शरीरं च पुद्गलद्रव्यस्य समवायिकारणं यथा मृत्पिण्डो घटस्य समवायिकारणमितिवत् । एवं सति उपचारो ज्ञा-

यते परेण परस्योपचारात् स्वस्य स्वेनोपचारासंभव· यथा मृत्पिण्डस्य घटेन, तन्तूनां पटेनेत्येवमसद्भूतव्यवहारो नवधा उपदिष्ट । उपचारवशेन नवधोपचारा कृता । ९ ।

अथ तस्यैवासद्भूतव्यवहारस्य भेदत्रयं कथ्यते ।

असद्भूतव्यवहार, एवमेव त्रिधा भवेत् ।
तत्राद्यो निजया जात्या–ऽप्यनुभूरिप्रदेशयुक् ॥ १० ॥

असद्भूतव्यवहार एव पूर्वोक्तरीत्यैव त्रिधा त्रिप्रकारो भवेत्तत्र त्रिषु भेदेषु आद्यो भेदो यथा परमाणुर्बहुप्रदेशी कथ्यते कथमेतत् परमाणुस्तु निरवयवोऽतः निरवयवस्य प्रसदेशत्वं नास्ति तथापि बहुप्रदेशाना सासर्गिकी जाति· परमाणुरस्ति यथाहि द्व्यणुकत्र्यणुकादिस्कन्धादय ॥ अथद्वितीयो भेदश्च ।

विजात्यापि स एवान्यो, यथा मूर्तिमती मतिः ।
मूर्तिमद्भिरपि द्रव्यै–र्निष्पन्ना चोपचारतः ॥ ११ ॥

यथा स एव असद्भूत विजात्या वर्तते यथा वा मूर्तिमती मति मतिज्ञान मूर्त कथित तत्तु मूर्तविषयलोकमनस्कारादिकेभ्य उत्पन्न तस्मान्मूर्तम् । वस्तुतस्तु मतिज्ञानमात्मगुण तस्य चापौद्गलिकस्य मूर्तिपुद्गलगुणोपचार· कृत· स तु विजात्या असद्भूतव्यवहार ।

अथ तृतीयमाह ।

स्वजात्या च विजात्याऽपि, असद्भूतस्तृतीयकः ।
जीवाजीवमयं ज्ञानं, व्यवहाराद्यथोदितम् ॥ १२ ॥

स एव पुनरसद्भूतव्यवहार स्वजात्या विजात्या च सबन्धित· कथित· यथा जीवाजीवविषय मतिज्ञानम् अत्र हि जीवो मतिज्ञानस्य स्वजातिरस्त्यात्मनो ज्ञानमयत्वात् । अजीवो मतिज्ञानस्य विजातिरस्ति । यद्यपि मतिज्ञानादिविषयीभूतघटोऽयमिति ज्ञान तथापि विजातिनिजरूपचेतनसबन्धात् अनयोर्जीवाजीवयोर्विषयविषयिभावनामा उपचरितसबन्धोऽस्ति स हि स्वजातिविजात्यसद्भूतव्यवहारोऽस्ति तद्भावनमेव ज्ञेय स्वजात्यशे किं नाय सद्भूत इति चेद्विजात्यशे विषयतासंबन्धस्योपचरितस्यैवानुज्ञाद्विधि गृहाणेति व्यवहाराद्यथोदित तथा विचारयेति पद्यार्थ ॥

अथोपचरितासद्भूतस्य लक्षणमाह ।

यत्रैकेनोपचारेणो–पचारो हि विधीयते ।
स स्यादुपचरिताद्य–सद्भूतव्यवहारकः ॥ १३ ॥

यत्र पुनरेकेन उपचारेण कृत्वा द्वितीय उपचारो विधीयते स हि उपचरितोपचरितो जात उपचरितासद्भूतव्यवहार इति नाम लभत इत्यर्थ ॥

अथोदाहरणमाह ।

स्वजात्या तं विजानीत, योऽहं पुत्रादिरस्मि वै ।
पुत्रमित्रकलत्राद्या, मदीया निखिला इमे ॥ १४ ॥

तमुपचरितासद्भूत स्वजात्या निजशक्त्या उपचरितसबन्धेन असद्भूत व्यवहार जानीत सवन्धकल्पन यथा अह पुत्रादि । अहमित्यात्मपर्याय पुत्रादिरिति परपर्याय अह पुत्रादिरिति सवन्धकल्पनम् । पुन· पुत्रमित्रकलत्राद्या निखिला इमे मदीया सबन्धिन । अत्र अह मम चेत्यादिकथन पुत्रादिषु तद्धि उपचरितेन उपचरित तत्कथ पुत्रादयो हि आत्मनो भेदा स्वस्वकार्यपरिणामत्वात् अभेदसवन्ध परस्परहेतुतयोपचारित पुत्रादयस्तु शरीरात्मकपर्यायरूपेण स्वजाति पर तु कल्पनमात्र न चेदेवं तर्हि स्वगरासवन्धयोजनया सबन्ध कथित पुत्रादीना तथैव मत्कुणादीनामपि पुत्रव्यवहार कथ न कथित इति ॥

अथविजात्या असद्भूतव्यवहार· ।

विजात्या किल तं वित्त, योऽहं वस्त्रादिरस्मि भुः ।
वस्त्रादीनि ममैतानि, वप्रदेशाढ्यो द्विधा ॥

विजात्युपचरितासद्भूतव्यवहार प्रकटयति किल इति सत्ये तं असद्भूतव्यवहार विजात्या उपचरितं विजानीत यथा अह वस्त्रादि अहमिति सबन्धिवचनं वस्त्रादिरिति सबन्धवचनमह वस्त्रादिरिति उपचरित सर्वोऽपि व्यतिकर असद्भूतव्यवहार सबन्धसबन्धिकल्पनत्वात् अथ च तानि वस्त्रादीनि मम सन्ति अत्र हि वस्त्रादिकानि पुद्गलपर्यायाणि ममेति सबन्धयोजनया भोज्यभोजकभोगभोगिकोपचारकल्पनमात्रपराणि भवन्तीति निष्कर्ष· । अन्यथा वल्कलादीनां वा नेयानां पुद्गलानां शरीराच्छादनसमर्थानामपि मम वस्त्राणीति उपचारसबन्धकल्पन कथ न कथ्यते वस्त्रादीनि हि विजातिषु स्वसबन्धोपचरितानि सन्तीति भाव । पुन वप्रदेशाढ्योऽपि द्विधेति वप्रादिरह वप्रदेशाढ्यो ममेति कथयता स्वजातिविजात्युपचरितासद्भूतव्यवहारो भवेत् कथं वप्रदेशाढ्यो हि जीवाजीवात्मकोभयसमुदायरूपा· सन्ति ॥

अथ सक्षेपमाह ।

इत्थं समे चोपनयाः प्रदिष्टाः, स्याद्वादमुद्रोपनिषत्स्वरूपाः ।
विज्ञाय तान् शुद्धधियः श्रयन्ता, जिनक्रमाम्भोजयुगं महीयः॥

इत्थमनया दिशा समे नया च पुन उपनया प्रदिष्टा कथिता । कीदृशास्ते स्याद्वादस्य श्रीजिनागमस्य या मुद्रा शैली तस्या उपनिषत्स्वरूपा रहस्यरूपा· सन्ति । तान् सर्वानपि विज्ञाय ज्ञात्वा शुद्धधिय निर्मलबुद्धय· श्रयन्तामङ्गीकुर्वतां किं जिनक्रमाम्भोजयुग वीतरागचरणकमल श्रयन्तामित्यर्थ । द्र० ७ अध्या०।

उवणयण–उपनयन–न० ढौकने, सूत्र० २ श्रु० २ अ० । कलाग्राहणे, प्र ११ श० ११ उ० । उपनयार्थे समीपप्रापणे च ॥

एवम्भूतमुपनयनं कदा प्रवृत्तमित्याह ।

उवणयणं तु कलाणं, गुरुमूले साहुणो तयो कम्मं ।
घेत्तुं हवंति सड्ढा, केई दिक्खं पवज्जंति ॥

उपनयन नाम तेषामेव बालानां कलाना ग्रहणाय गुरो कलाचार्यस्य मूले समीपे नयनम् । यदि वा धर्मश्रवणनिमित्त साधो सकाशे नयनमुपनयन तस्माच्च साधोर्द्धर्म्म गृहीत्वा केचित् श्राद्धा भवन्त्यपरे लघुकर्म्माणो दीक्षा प्रपद्यन्ते एतच्चोभयमपि तदा प्रवृत्तम । आ० म० प्र० । आ० चू० । ग० ।

उवणयाभास–उपनयाभास–पु० हेतो साध्यधर्मिण्युपसंहरणमुपनयस्य लक्षणोल्लङ्घनेनोपनयवदाभासमाने, परिणामी शब्द कृतकत्वात् य कृतक स परिणामी यथा कुम्भ इत्यत्र परिणामी च शब्द इति कृतकश्च कुम्भ इति । इह साध्यधर्मे साध्यधर्मिणि साधनधर्म वा दृष्टान्तधर्मिण्युपसंहरत उपनयाभास । रत्ना० ।

उवणयावणयचउक्क–उपनयापनयचतुष्क–न० पौरुषवचनानां वचनचतुष्के, तयोपनयापनयवचन चतुर्द्धा भवति । तद्यथा उपनयापनयवचन तथा उपनयोपनयवचन तथा अपनयोपनयवचनंतथा अपनयापनयवचनमिति । तत्रोपनयो गुणोत्किरपनयो दोषभाषणम् । तत्र स्वरूपेय रामा परं तु गोत्रा इत्युपनयापनयवचनम् । तथा सुरूपेय स्त्री सुशीलेत्युपनयोपनयवचनम् । तथा कुरूपेय स्त्री पर सुशीला इत्यपनयोपनयवचनम् । तथा कुरूपेयं कुशीला चेत्यपनयापनयवचनमिति ॥ यद्वा उपनय स्तुतिरपनयो निन्दा, तयोर्वचनचतुष्कम् । यथा रूपवती स्त्रीत्युपनयवचन कुरूपा स्त्रीत्युपनयवचन रूपवती किंतु कुशीलेत्युपनयापनयवचन कुरू-

पा स्त्री किं तु सुशीलेत्यपनयोपनयवचनमिति। प्रव० १४० द्वा०।

**उवणिक्खित्त**–उपनिक्षिप्त–त्रि० व्यवस्थापिते, "अंतद्धिक्खजायम्मि उवणिक्खित्ते सिया"। आचा० २ श्रु० ॥

**उवणिक्खेव**–उपनिक्षेप–पुं० उप-नि-क्षिप्-कर्मणि घञ्। रूपमस्याप्रदर्शनेन रक्षणार्थं परस्य हस्ते निहिते द्रव्ये, स चोपनिक्षेपो द्विधा लौकिको लोकोत्तरिकश्च। पुनरेकैको द्विधा आत्मोपनिक्षेपः परोपनिक्षेपश्च। तत्र लौकिक आत्मनिक्षेपो ये प्रगल्भास्ते आत्मनैवात्मानं राज्ञ उपनिक्षिपन्ति तिष्ठन्ति च चरणापपातकारकाः प्रपन्नशरणा ये पुनरप्रगल्भास्ते ये राज्ञो वल्लभास्तैरात्मानमुपनिक्षेपयन्ति। एष परोपनिक्षेपः। लोकोत्तरिक आत्मनिक्षेपो गच्छवर्त्तिनां साधूनां तथा हि ये गच्छे एव वर्तन्ते साधवस्ते आत्मानमात्मनैवाभिनवाचार्यस्योपनिक्षिपन्ति परनिक्षेपः फड्डगनानां ते हि समागताः स्पर्द्धकपतिना निक्षिप्यन्ते यथा एते अहं च युष्माकमिति। "इह सिथियाउ अस्से कउवसपज्जणारिहे" इत्याद्युक्त तत्र यद्यपि सगीतार्थस्तरुणः समर्थश्चेन्द्रियनोइन्द्रियाणां निग्रहं कर्त्तुं तथापि तेनान्यो गणो निश्रयितव्यो निश्रयन्ते च परप्रत्ययनिमित्तं तत्रापि निक्षेपः कर्त्तव्यः। व्य० द्वि० ४ उ०।

**उवणिग्गय**–उपनिर्गत–त्रि० उप सामीप्येन निर्गतो निष्क्रान्त उपनिर्गतः। सामीप्येन निष्क्रान्ते, "उडिमयलवाहणे। नामेण मजए नाम, मिगवं उवणिग्गए"। उत्त० १८ अ०। "उवणिग्गयणवतरुणपत्तपल्लवकोमलउज्जलचलंतकिसलयसुकुमालपवालसोहियवरंकुरग्गसिहरा" उपनिर्गतैर्नवतरुणपत्रपल्लवैरत्यभिनवपत्रगुच्छैस्तथा कोमलोज्ज्वलैश्चलद्भिः किशलयैः पत्रविशेषैः तथा सुकुमारप्रवालैः शोभितानि वराङ्कुराणि अग्रशिखराणि येषान्ते तथा ( वनखण्ड ) औ०।

**उवणिमंतण**–उपनिमन्त्रण–न० भिक्षो! गृहाणेदं पिण्डद्वयमित्यभिधाने, भ० ८ श० ६ उ० ॥

**उवणिय**–उपनीत–त्रि० उप-नी-क्त। पानीयादिष्वित्। ८। १। १०१। इति ईत इत्। ढौकिते, प्रा० ॥

**उवणिविट्ठ**–उपनिविष्ट–त्रि० सामीप्येन स्थिते, "तेणं तोरणा णाणामणिमएसु खंभेसु उवणिविट्ठसण्णिविट्ठा विविहमुत्तंतरोवचिता" उपनिविष्टानि सामीप्येन स्थितानि तानि च कदाचिच्चलानि। अथवा अपद्यमानानीति शङ्क्यसम्भवत आह सम्यग् निश्चलतया अपद्यमानेऽपरिहारेण च निविष्टानि ततो विशेषणसमासः उपनिविष्टसन्निविष्टानि। रा०। जं० ॥

**उवणिसया**–उपनिषद्–स्त्री० वेदान्तदर्शनप्रवृत्तौ, तथाप्युपनिषद्दृष्टिः-सृष्ट्याद्यात्मिका परा ॥ न० ॥

**उवणिहा**–उपनिधा–स्त्री० उप निधानमुपनिधा धातूनामनेकार्थत्वात्। मार्गणायाम्। क० प्र०। प० सं०।

**उवणिहि**–उपनिधि–पुं० उपनिधीयत इत्युपनिधिः। प्रत्यासन्ने तत्राकचिद्दर्शनीते। स्था० ५ ठा०। उप सामीप्येन निधिरुपनिधिः। एकस्मिन्विवक्षितार्थे पूर्वं व्यवस्थापिते, तत्समीप एवापरापरस्य व्यानुपूर्व्याद्युक्तेः पूर्वानुपूर्व्यादिक्रमेण निक्षेपणे, निक्षेपे निरूपणे अनु० ॥

**उवणिहित्त**–उपनिहित–त्रि० यथा कथञ्चिदासन्नीकृते, सूत्र० २ श्रु० २ अ०।

**उवणिहियग**–उपनिहितक–पुं० उपनिहितं यथाकथञ्चिदासन्नीभूतं तेन चरन्ति ये त उपनिहितकाः। अभिग्रहविशेषप्रयुक्ते भिक्षाचरे, सूत्र० २ श्रु० २ अ०।

**उवणीय**–उपनीत–त्रि० उप-नी-क्त-उपढौकिते, उत्त० ४ अ० ॥ प्रश्न०। विशे०। सूत्र०। प्रापिते, स्था० १० ठा०। आचा०। "कालोवणीए कखेज्जा" कालेनोपनीत कालोपनीतो मृत्युकालेनात्मवशतां प्रापितः। आचा० १ श्रु० ६ अ० ५ उ०। उपनये प्रापिते, व्य० १ उ०। अर्पिते, गमित प्रदर्शितमुपनीतमर्पितमित्येकार्थाः। आ० चू० १ अ०। केनचित्कस्यचिदुपढौकिते प्रहेणकादौ, औ०। समीप प्रापिते, उत्त० ४ अ० निकटं समागते, उत्त० अ०। आसन्ने, सूत्र २ श्रु० १ अ०। उपसंहारोपनययुक्ते सूत्रगुणभेदे, । अनु०। विशे०। उप सामीप्येन नीत प्रापिता ज्ञानादावात्मा येन स तथा। ज्ञानादावुपढौकितात्मनि, सूत्र० १ श्रु० २ अ०।

**उवणीयअवणीयवयण**–उपनीतापनीतवचन–न० कश्चिद्गुणः प्रशस्य कश्चिन्निन्द्य यथा रूपवती स्त्री किन्त्वसद्वृत्तेति इति प्रशस्यनिन्द्यलक्षणे षोडशवचनानामन्यतमे. आचा० २ श्रु०।

**उवणीयचरय**–उपनीतचरक–पुं० केनचित्कस्यचिदुपढौकितस्य प्रहेणकादेरभिग्रहतश्चरके, औ०।

**उवणीयतर**–उपनीततर–त्रि० आसन्नतरे, "इणमेव उवणीयतराग माया मे पिया मे भाया मे" सूत्र० २ श्रु० १ अ०।

**उवणीयरागत्त**–उपनीतरागत्व–न० मालवकैशिकादिग्रामरागयुक्तत्वे सप्तमे सत्यवचनातिशये, औ०। स०। रा० ॥

**उवणीयवयण**– उपनीतवचन–न० प्रशंसावचने, यथारूपवती स्त्री इद षोडशवचनानामष्टमम्। प्रज्ञा० ११ पद०।

**उवणीयावणीयचरय**–उपनीतापनीतचरक–पुं० उपनीत ढौकितं सत्प्रहेणकाद्यपनीतं स्थानान्तरस्थापितमथवोपनीतं चापनीत च यश्चरति स तथा। अथवा उपनीतं दायकेन वर्णितगुणमपनीत निराकृतगुणमुपनीतापनीतं यदेकेन गुणेन वर्णितं गुणान्तरापेक्षया तु दूषितं यथा अहो शीतलं जलं केवलं क्षारमित्यभिग्रहविशेषयुक्ते भिक्षाचरके, औ० ॥

**उवण्णत्थ**–उपन्यस्त–त्रि० उपकल्पिते, दश० ५ अ० ॥

**उवण्णास**–उपन्यास–पुं० उप-नि-अस्-घञ्। उपादाने, "उपन्यासश्च शास्त्रेऽस्या, कृतो यत्नेन चिन्त्यताम्" हा०। उपन्यसनमुपन्यास। तद्वस्त्वादिलक्षणे ज्ञातभेदे, ॥

चत्तारि उवन्नासे, तव्वत्थुग अन्नवत्थुगे चेव।
पडिनिभए हेउम्मि, होंति इणमो उदाहरणा ॥ ८३ ॥

चत्वार उपन्यासे विचार्ये अधिकृते वा भेदा भवन्तीति शेषस्ते चामी सूचनात्सूत्रमिति कृत्वा तथाऽधिकारानुवृत्तेश्च तद्वस्तूपन्यास। तथा तदन्यवस्तूपन्यासः तथा प्रतिनिभोपन्यासस्तथा हेतूपन्यासश्च। तत्रैतेषु भवन्त्यमूनि वक्ष्यमाणलक्षणानि उदाहरणानीति गाथाक्षरार्थः। भावार्थस्तु प्रतिभेदं स्वयमेव वक्ष्यति निर्युक्तिकार। दश० १ अ०। ( एतद्भेदस्वरूपनिरूपणं तत्तच्छब्दे द्रष्टव्यम् )

**उवण्णासोवणय**-उपन्यासोपनय-पुं० वादिना अभिमतार्थसाधनाय कृते वस्तूपन्यासे तद्विघटनाय य प्रतिवादिना विरुद्धार्थोपनयः क्रियते पर्यनुयोगोपन्यासो वा य उत्तरोपनयः स उपन्यासोपनय। ज्ञातभेदे, उत्तरम्प्यनुपपत्तिमात्रमपि ज्ञातभेदो ज्ञानहेतुत्वादिति। यथा अकर्त्तात्मा अमूर्तत्वादाकाशवदित्युक्ते अन्य आह आकाशवदेवाभोक्तत्यपि प्राप्तमनिष्टं चैतदिति। यथा वा मांसं नत्त्वाश्यमङ्गुष्ठप्राप्यङ्गत्वादोदनादिवत् अत्राहान्य ओदनादिवदेव स्वपुत्रादिमांसमभक्ष्यमप्यदुष्टमिति। यथा वा त्यक्तसङ्गा

वस्त्रपात्रादिसंग्रहं न कुर्वन्ति वृषभादिवत् अत्राह कुलिरूकाद्यपि-ते न गृह्णन्ति नद्देवेति तया कस्मात्कर्म कुरुषे यस्माद्धनार्थीति इह प्रथम ज्ञातं समग्रसाधर्म्ये द्वितीयं देशसाधर्म्ये तृतीय स-दोष, चतुर्य प्रतिवाद्युत्तररूपमित्ययमेषां स्वरूपविभाग इति । इह देशत संवादगाथा "चरिय च कप्पिय वा, दुविह तत्तो चउव्विहेक्केक्क । आहरणे तद्देसे, तद्दोसे चेव उवन्नासेत्ति ॥ ५ ॥ स्था० ५ ठा० । 'उवण्णासोवणए चउव्विहे पन्नत्ते तं जहा तव्वत्थुतदन्नवत्थुए पडिणिभेदेहेउ" । स्था० ४ ठा० । ( स्वस्व-स्थाने व्याख्या )

उवणेउ–उपनम्य–अव्य० स्वगयित्वेत्यर्थे, । सूत्र० १ उ० ।

उवतल–उपतल–न० हस्ततलात्समन्तात्पार्श्वेषु, "हत्यतला उ समंता पासेसु अग्गया उवतल भणन्ति" । नि० चू० १ उ० ।

उवताव–उपताप–पु० उप आधिक्ये तप–आधारे–घञ्–स्वरार्थां, भावे–घञ् सन्तापे, एयन्ततपेरच् । रोगे, मेदि० । करणे–घञ् । अशुभे, पीडने, रत्ना० । उपसर्गे, शरीरपीडनोत्पादने, ॥ सूत्र० १ श्रु० ३ अ० ।

उवतीर–उपतीर–अव्य० सामीप्यादौ अव्ययी०। तीरसामीप्यादौ, "एसण गोयमा महातवो व तीरप्पभवे" भ० ५ श० ५ उ० ।

उवत्थय–उपस्तीर्ण–त्रि० उपशब्द सामीप्यार्थस्तृञ् च आच्छा-दनार्थ०। उप स्तृ उत्पतद्भिर्निपतद्भिश्चानवरतक्रीडाशकैरुपर्युपर्या च्छादिते,"आतिणा वितिणा उवत्थयमासयमा" भ० १ श०१उ०

उवत्थिय–उपस्थित–त्रि० उपनते, "दसविहा रुक्खा उवभोग-त्ताए उवत्थिया" ॥ स० ॥

उवदंसण–उपदर्शन–न० उपनयनिगमनाभ्यां नि शङ्क शिष्यबु-द्धौ स्थापने, सकलनयाभिप्रायावतारणत० पटुप्रज्ञशिष्यबुद्धि षु व्यवस्थापने, न० । स्था० ॥

उवदंसणकूड–उपदर्शनकूट–न० जम्बूद्वीपे मन्दरस्योत्तरेण नील-वतो वर्षधरपर्वतस्य द्वितीये कूटे, स्था० २ ठा० ।

उवदंसिज्जमाण–उपदर्श्यमान–त्रि० लोकैरन्योऽन्य दर्श्यमाने, ज्ञा० १३ अ० ।

उवदंसिय–उपदर्शित–त्रि० उप सामीप्येन यथा श्रोतॄणां झटिति यथावस्थितवस्तुतत्वाववोधो भवति तया स्फुटवचनैरित्यर्थ० द-र्शित० श्रवणगोचर नीत० । उपदिष्टे, "उवदंसिया भगवया पन्न-वणा सव्वभावाणं" । प्रज्ञा० १ पद । सकलनययुक्तिनिर्दर्शिते, । ग० २ अधि० । अनु० ॥

उपदर्श्य–अव्य० उपदर्शन कृत्वेत्यर्थे "अणुवीप उवदंसिय २ णिज्झाएज्जा" आचा० २ श्रु० ।

उवदंसेमाण–उपदर्शयमान–त्रि० उपदर्शन कारयति, "पुरिसक्का-रपरक्कम उवदंसेमाणे" स्था० ३ ठा० ॥

उवदीव–देशी–अन्यद्वीपे, दे० ना० ॥

उवद्दव–उपद्रव–पु०उप–द्रु–भावे–घञ् । उत्पाते, रोगारम्भके, धातुवैषम्यजनिते विकारभेदे, उपसर्गे, स्था०५ ठा० । अशिवे, । वृ०४ उ० । मारणे, भ० ८ श० ७ उ० । तत्र प्रायश्चित्त । "उवद्दवण समण चउत्य" महा०७ अ० ।

उवद्दवण–उपद्रावण– न० महापीडाकारणे, ध०३अधि० ।

उवद्दविय–अपद्रावित– त्रि० उत्त्रासिते, आव०४ अ० ।

उवप्पयाण–उपप्रदान–न० उप–प्र–दा–ल्युट्–अभिमतार्थदानरूपे नीतिभेदे,विपा० ३ अ० । आ० म० प्र० ॥

उवप्पव–उपप्लव–पु०उप–प्लु– अप् । अमविषये,पु० "विकल्प तल्पमारूढ०, शेप पुनरुपप्लव । द्वा० २४ द्वा० ।

उवप्पुयट्ठाणविवज्जण–उपप्लुतस्थानविवर्जन–न०उपप्लुत स्व-चक्रपरचक्रविक्षोभात् दुर्भिक्षमारीतिजनविरोधादेश्चास्वस्थी-भूत यत्स्थान ग्रामनगरादि तस्य विवर्जन परिहरणम् । सामा-न्यतो गृहिधर्मभेदे, " तत्र सामान्यतो गृहि–धर्मो न्यायार्जित धनम् । इन्द्रियाणां जय उप–प्लुतस्थानविवर्जनम्" अत्यत्यज्य-माने हि तस्मिन् धर्मार्थकामानां पूर्वार्जितानां विनाशेन नव्याना चानुपार्जनेनोभयलोकभ्रंश एव स्यात् ॥ ध० १ अधि० ।

उवभुत्त–उपभुक्त–त्रि० उप–भुज्–क्त । कृतोपभोगे वस्तुनि, । उपपादिते, आचा०१श्रु०२ अ०१ उ० । उपभुक्तभोगे, व्य०३उ० ।

उवभोग–उपभोग–पु०उप–भुज्–घञ् । उपभोजने, आचा०१श्रु० २अ०३उ० । उपेत्य अधिकं पुनरुपयुज्यमानतया भुज्यते इत्युपभोग एव पुनरुपभोग्यभवनाङ्गनादौ, "सति भुज्ज इति भोगो, सो पुण आहारपुप्फमाईतो । उवभोगो उ पुणो पुण, उवभुज्जइ भवणवत्थ-याइ" उत्त ३३ अ० । उपा० । कर्म० । धर्म० । आ०चू० । आ० ।

साम्प्रतमुपभोगादिभेदमाह–

उवभोगपरिभोगवए दुविहे पन्नत्ते तंजहा भोअणओ कम्मओ अ भोअणओ समणोवासएणं इमे पंच अइयारा जाणियव्वा न समायरियव्वा तंजहा सचित्ताहारे १ सचि-त्तपडिबद्धाहारे २ अप्पोलिओसहिभक्खणया सचित्तम-मिस्साहारे ३ ( पाठान्तरे ) दुप्पोलिओसहिभक्खणया ४ तुच्छोसहिभक्खणया ५ । आव० ६ अ० ॥

उप भुज्यत इत्युपभोग उपशब्द सकृदर्थे वर्तते सकृद्भोग उप-भोग । अशनपानादौ, अथवा अन्तर्भोग उपभोग । आहारादौ, उपशब्दोऽन्तर्वचन । ध० २ अधि० । आचा० । गन्धरूपावि-षये, त० ।(पृथ्वीकायानामप्कायानां चोपभोग पृथ्व्यादिशब्देषु)

उवभोगंतराय–उपभोगान्तराय– न० अन्तरायकर्मभेदे, यस्यो-दयात्सदपि वस्त्रालङ्कारादि नोपभुङ्क्ते । उत्त० ३३ अ० । प०स० । कर्म० । स० ॥

उवभोगपरिभोगपरिमाण–उपभोगपरिभोगपरिमाण–न० उप-भोग० सकृद्भोग स चाशनपानानुलेपनादीनां परिभोगस्तु पुन० पुनर्भोग सचासनशयनवसनवनितादीना तयो परिमाणम् देशोत्तरगुणप्रत्याख्यानभेदे, भ०७श० २ उ० । उपभुज्यते इत्यु-पभोग० । उपशब्द० सकृदर्थे वर्तते सकृद्भोग उपभोग अशनपा-नादे अथवान्तर्भोग उपभोग आहारादि उपशब्दोऽन्तर्व-चन परिभुज्यत इति परिभोग परिशब्दोऽसकृद्वृत्तौ वर्तते पुन-पुनर्भोग परिभोगो वस्त्रादे वहिर्भोगो वा परिभोगो वस्त्रनाद्यल-ङ्कारादेरत्र परिशब्दो वहिर्वाचक इति पर्तद्विपय व्रतमुपभोगपरिभोग व्रतम् । ध०२अधि० । पतावदिद भोक्तव्यमुपभोक्तव्य वाऽनाऽन्यदेव रूपे द्वितीयेऽणुव्रते, श्रा० । इदञ्चद्विविध भोजनत कर्मतश्च । उप-भोगपरिभोगयोरासेवाविषययोर्वस्तुविशेषयोस्तदुपार्जनोपायभू-तकर्मणां चोपचारादुपभोगादिशब्दवाच्याना व्रतमुपभोगपरि भोगव्रतमिति व्युत्पत्ति ( ध० ) भोगत कर्मतश्च । भोगोऽपि द्विधा उपभोगपरिभोगभेदात् तत्र उप इति सकृत् भोग आहारमा ल्याद्यन्तर्भवनमुपभोग । पुनीय सकृद्भोगो भवनाङ्गनादीनामा-सेवनं परिभोग । तत्र गाथामाह ।

मज्जम्मि य मंसम्मि य, पुप्फे य फले य गंधमल्ले य ।
उवभोगपरिभोगे, बीयम्मि गुणव्वए निंदे ॥ २० ॥

श्रावकेण तावदुत्सर्गेण प्रासुकैषणीयाहारिणा भाव्यम् । असति सचित्तपरिहारिणा तदसति बहुसावद्यमद्यादीन् वर्जयित्वा प्रत्येक मिश्रादीनां कृतप्रमाणेन भवितव्यम् । तत्र मद्यं मदिरा मांसं पिशितं च शब्दाच्छेषाभक्ष्यद्रव्याणामनन्तकायादीनां च ग्रहः । तानि च प्रागुक्तानि पञ्चोदुम्बर्यादीनि पुष्पाणि करीरमधुकादिकुसुमानि चशब्दात् त्वम्लपत्रादिपरिग्रहः । फलानि जम्बूबिल्वादीनि एषु च मद्यादिषु राजव्यापारादिषु वर्तमानेन यत्किञ्चित्कायणादि कृतं तस्मिन् एतैरन्तर्भोग सूचितः बहिरन्यच ( गंधमल्लेति ) गन्धा वासा. माल्यानि पुष्पस्रज. अत्रोपलक्षणत्वाच्छेषभोग्यवस्तुपरिग्रहः । तस्मिन्नुक्तरूपे उपभोगपरिभोगे भीमो भीमसेन इति न्यायादुपभोगपरिभोगपरिमाणाख्ये द्वितीये गुणव्रतेऽनाभोगादिना यदतिक्रान्तं तन्निन्दामि । ( ध० ) । तत्र भोजनत उत्सर्गेण निरवद्याहारभोजिना भवितव्यम् कर्मतोऽपि प्रायो निरवद्यकर्मानुष्ठानयुक्तेनेति । अत्रेयं भावना । श्रावकेण हि तावदुत्सर्गत प्रासुकैषणीयाहारभोजिना भाव्यम् तस्मिन्नसति सचित्तपरिहार. कार्यस्तस्याप्यशक्तौ बहुसावद्यान्मद्यामिषानन्तकायादीन् वर्जयता प्रत्येकमिश्रसचित्तादीना प्रमाणं कार्यं भणितं च "निरवज्जाहारेणं, १ निज्जीवेण २ परित्तमीसेणं ३ । अत्ताणुसंधणपरा, सुसावगा एरिसा हुंति १" एवमुत्सवादिविशेषं विनाऽत्यन्तचेतो गृह्युन्मादजनापवादादिजनकमत्युत्कटवेषवाहनालङ्कारादिकमपि श्रावको वर्जयेत् यत. "अइरोसो अइतोसो, अइहासो दुज्जणेहिं संवासो । अइउब्भडो य वेसो पंच वि गरुए वि लहु एइ १" अतिमलिना अतिस्थूलहस्वसच्छिद्रवस्त्रादिम्लानमान्यवेषपरिधानेऽपि कुचेलत्वकार्पण्यादिजनापवादोपहसनीयतादि स्यादतः स्ववित्तवयोऽवस्थानिवासस्थानकुलाद्यनुरूपवेषं कुर्यात् । उचितवेषादावपि प्रमाणनैयत्यं कार्यम् । एवं दन्तकाष्ठाभ्यङ्गतैलोद्वर्तनमज्जनवस्त्रविलेपनाभरणपुष्पफलधूपासनशयनभवनादिस्तथौदनसूपस्नेहशाकपेय खण्डखाद्याशनपानस्वादिमस्वादिमादेस्त्यक्तुमशक्यस्य व्यक्त्या प्रमाणं कार्यं शेषं च त्याज्यमानन्दादिसुश्रावकवत् । कर्मतोऽपि श्रावकेण मुख्यतो निरवद्यकर्मप्रवृत्तिमता भवितव्यं तदशक्तावप्यत्यन्तसावद्यविवेकिजननिन्द्यक्रयविक्रयादि कर्म वर्जनीयं शेषकर्मणामपि प्रमाण करणीयम् यत "रंधणखंडणपीसण-दलणं पयणं च एवमाईणं । निच्चपरिमाणकरणं, अविरइबंधो जओ गुरुओ । आवश्यकचूर्णावप्युक्तम् ॥ इह चेयं सामाचारी "भोअणओ सावगो उस्सग्गेण फासुगं आहारं आहारेज्जा तस्सासति अफासुगमवि सच्चित्तवज्जं तस्स असति अणंतकायबहुबीयगाणि परिहरिअव्वाणि इमं च आम भोअणओ परिहरइ असणे अणंतकायं अल्लगमूलगाइ मंसं च पाणे मंसरसमज्जाइ खाइमे उदुम्बरकाउंबरपिप्परपिप्पलमाइसाइमे महुमक्खियाइ । अचित्तं च आहारेअव्वं जइ किर ण होज्ज अचित्तो तो उस्सग्गेण सरपच्चक्खाणं ण तरइ ताहे अपवाएण सच्चित्तं अणंतकायबहुबीअवज्जं तस्सऽवि अकस्मा ण तरइ जीविउं ताहे अचितमाबज्जाणि परिहरिज्जंति त्ति " इत्थं चेह भोगोपभोगव्रते भोक्तुर्यद्यपि परिमाणकरणेन व्रतं भवति इतरेषु तु वर्जनेनेति पर्यवसितानि च श्रावकस्य वर्जनीयान्याह ॥

चतुर्विकृतयो निन्द्या, उदुम्बरकपञ्चकम् ।
हिमं विषं च करका, मृज्जाति रात्रिभोजनम् ॥ ३२ ॥
बहुबीजाज्ञानफले, सन्धानानन्तकायिके ।
घोलवडा चलितरसं, तुच्छं पुष्पफलादि च ॥ ३३ ॥
आमगोरससंपृक्तं, द्विदलं च विवर्जयेत् ।
द्वाविंशतिरभक्ष्याणि, जैनधर्माधिवासिनः ॥ ३४ ॥

त्रिभिर्विशेषकम् । जैनधर्मेणार्हतधर्मेणाधिवासितो भावितात्मा पुमान् ( द्वाविंशति ) द्वाविंशतिसंख्याकान्यभक्ष्याणि भोक्तुमनर्हाणि वर्जयेत् त्यजेदिति तृतीयश्लोकान्तेन संबन्धः । तान्येवाह । ( चतुर्विकृतय इति ) चतुरवयवा विकृतयश्चतुर्विकृतयः शाकपार्थिवादित्वात्समासः कीदृश्यस्ता निन्द्याः सकलशिष्टजननिन्दाविषया मद्यमांसमधुनवनीतलक्षणा इत्यर्थः । तद्वर्णानेकजीवसम्मूर्च्छनात् । तथा चाहुः "मज्जे महुम्मि मंसम्मि, नवणीए चउत्थए । उप्पज्जंति चयंति अ तव्वण्णा तत्थ जंतुणो" १ परेऽपि "मद्ये मांसे मधूनि च, नवनीते चतुर्थके । उत्पद्यन्ते विलीयन्ते, सुसूक्ष्मा जन्तुराशयः" इति । तत्र मद्यं मदिरा तच्च द्विधा काष्ठनिष्पन्नं पिष्टनिष्पन्नं चेति । एतच्च बहुदोषाश्रयान्महानर्थहेतुत्वाच्च त्याज्यं यदाह " गुरुमोहकलहनिद्दा, परिभवउवहासरोसमयहेऊ । मज्जं दुग्गइमूलं, हिरिसिरिमइधम्मनासकरं ॥ १ ॥ तथा "रसोद्भवाश्च भूयांसो, भवन्ति किल जन्तवः । तस्मान्मद्यं न पातव्यं, हिंसापातकभीरुणा ॥२॥ दत्तं न दत्तमात्तं च, नात्तं कृतमथाकृतम् । मृषोद्यराज्यादिवहा-त्स्वैरं वदति मद्यपः ॥ ३ ॥ गृहे बहिर्वा मार्गे वा, परद्रव्याणि मूढधीः । वधबन्धादिनिर्भीको, गृह्णात्याच्छिद्य मद्यपः ॥ ४ ॥ बालिकां युवतीं वृद्धां, ब्राह्मणीं श्वपचामपि । भुङ्क्ते परस्त्रियं सद्यो, मद्योन्मादकदर्थितः ॥ ५ ॥ विवेकः संयमो ज्ञानं, सत्यं शौचं दया क्षमा । मद्यात्प्रलीयते सर्वं, तृण्या वह्निकणादपि ॥ ६ ॥ श्रूयते किल शाम्बेन, मद्यादन्धकविष्णुना । हतं वृष्णिकुलं सर्वं प्लोषिता च पुरी पितुः ॥७॥ " मांसं च त्रेधा जलचरस्थलचरखचरजन्तूद्भवभेदाच्चर्ममेदोरुधिरमांसभेदाद्वा । तद्भक्षणमपि महापापमूलत्वाद्वर्ज्यं यदाहुः "पञ्चिन्दियवहभूयं, मंसं दुग्गंधमसुइबीभच्छं । रक्खपरितुलिअभक्खग—मामयजणयं कुगइ मलं ॥ १॥ " आमासु अ पक्कासु अ, विपच्चमाणासु मंसपेसीसु । सययं चिअ उववाओ, भणिओ अ निगोअजीवाणं " ॥ २ ॥ योगशास्त्रेऽपि । सद्यः सम्मूर्च्छितानन्त-जन्तुसंतानदूषितम् । नरकाध्वनि पाथेयं, कोऽश्नीयात्पिशितं सुधीः ॥३॥ ' सद्योहि जन्तुविशसनकाल एव सम्मूर्च्छिता उत्पन्ना अनन्ता निगोदरूपा ये जन्तवस्तेषां सन्तानः पुनः पुनर्भवनं तेन दूषितमिति तद्वृत्तिः मांसभक्षकस्य च घातकत्वमेव । यतः "हन्ता पलस्य विक्रेता, संस्कर्ता भक्षकस्तथा । क्रेतानुमन्ता दाता च, घातका एव यन्मनुः ४ तथा भक्षकस्यैवान्यपरिहारेण वधकत्वं यथा "ये भक्षयन्त्यन्यपलं, स्वकीयपलपुष्टये । त एव घातका यन्न, वधको भक्षकं विना ५" इति मधु च माक्षिकं १ कौत्तिकं २ भ्रामरं ३ चेति त्रिधा इदमपि बहुप्राणिविनाशसमुद्भवमिति हेयम् । यतः "अनेकजन्तुसंघात-निघातनसमुद्भवम् । जुगुप्सनीयं लालावत्कः स्वादयति माक्षिकमिति" नवनीतमपि गोमाहिष्यजाविसम्बन्धेन चतुर्धा तदपि सूक्ष्मजन्तुराशिस्थानित्वात्त्याज्यमेव । यतः " अन्तर्मुहूर्तात्परतः, सुसूक्ष्मा जन्तुराशयः । यत्र मूर्च्छन्ति तन्नाद्यं, नवनीतं विवेकिभिरिति । ४ । तथा उदुम्बरकेणोपलक्षितं पञ्चकं वट १ पिप्पलो २ दुम्बर ३ प्लक्ष ४ काकोदुम्बरी ५ फललक्षणं उदुम्बरकपञ्चकं मशकाकारसूक्ष्मबहुजीवाकीर्णत्वाद्वर्जनीयम् । ततो योगशास्त्रे " उदुम्बरवटप्लक्ष-काकोदुम्बरशाखिनाम् । पिप्पलस्य च नाश्नीयात्फलं कृमिकुलाकुलम् । १ लोकेऽपि "कोऽपि क्वापि कुतोऽपि कस्यचिद्दहो चेतस्यकस्मादजनः, केनापि प्रविशत्युदुम्बरफलप्रा-

णि क्रमेण क्वणात् । येनास्मिन्नपि पाटने विघटिते विस्फोटिते त्रोटिते, निष्पिष्टे परिगालिते विदलिते निर्यात्यसौ वा न वा ए तथा हिम तुहिन तदप्यसंख्येयाप्कायरूपत्वात्त्याज्यम् १०विषम-हिफेनादि मन्त्रोपहतवीर्यमप्युदरान्तर्वर्तिगण्डोलकादिजीवघात-हेतुत्वान्मरणसमये महामोहोत्पादकत्वाच्च हेयम् ११ करका द्रवीभूता आप । असंख्याप्कायित्वात्त्याज्याः ॥ नन्वेवमसंख्या-प्कायित्वेनाऽभक्ष्यत्वे जलस्याप्यभक्ष्यत्वापत्तिरिति चेत्सत्यम् । असंख्यजीवमयत्वेऽपि जलमन्तरा निर्वाहाभावान्न तस्य तथोक्तिः १२ तथा मृज्जाति सर्वा अपि मृत्तिका दर्दुरादिपञ्चेन्द्रियप्राण्यु-त्पत्तिनिमित्तत्वादिना मरणाद्यनर्थकारित्वात् त्याज्या । जातिग्र-हण खटिकादिसूचक तद्भक्षणस्यामाश्रयादिदोषजनकत्वात् । मृद्ग्रहणं चोपलक्षणं तेन सुधाद्यपि वर्जनीयं तद्भक्षकस्यान्त्रशा-टाद्यनर्थसम्भवात् मृद्भक्षणे चासंख्येयपृथिवीकायजीवानां विरा-धनाद्यपि लवणमप्यसंख्यपृथिवीकायात्मकमिति सचित्त त्याज्यं प्रासुक ग्राह्य प्रासुकत्व चाग्न्यादिप्रबलशस्त्रयोगेनैव नान्यथा तत्र पृथिवीकायजीवानामसंख्येयत्वेनात्यन्तसूक्ष्मत्वात् तथा च पञ्चमाङ्गे १९ शतकतृतीयोद्देशके निर्दिष्टोऽयमर्थः वज्रमय्यां शि-लायां स्वल्पपृथिवीकायस्य वज्रलोष्टकेनैकविंशतिवारान्पेषणे सत्येके केचन जीवा ये स्पृष्टा अपि नति १३ तथा रात्रौ नक्त भोजन भुक्तिः रात्रिभोजन तदपि हेयं बहुविधजीवसपातसम्भवेनैहिकपारलौकिकानेकदोषदुष्टत्वात् यदभिहितं "मेह पिपीलिआओ, हणंति वमणं च मच्छिआ कुणइ । जूआ जलोदरत्त, कोलिअओ कोढरोग च ॥ १ ॥ वाला सरस्स भग, कंटोलगाइगलम्मि दारु च । तालुम्मि विंधइ अली, वजणमज्झम्मि भुज्जतो ॥ २ ॥" व्यञ्जनमिह वार्त्ताकशाकरूपमभिप्रेत तद्वृन्त च वृश्चिककाकारमेव स्यादिति वृश्चिकस्यासूक्ष्मस्यापि तन्मध्यपतितस्यालक्ष्यत्वाद्भोज्यता सम्भवतीति विशेषः । निशीथचूर्णा-वपि "गिहकोइलअवयवसम्मिस्सेण भुत्तेण पोट्टे किल गिहकोइला समुच्छति" एव सर्पादिलालामलमूत्रादिपाताद्यपि" तथा "मरिहिति महित्रल जा-मिणीसु रयणी य रायमतेण । ते वि च्छलति हु फुरु, रयणीए भुजमाणं तु ॥ १ ॥ अपि च निशा-भोजने क्रियमाणे अवश्यं पाकः सम्भवी । तत्र षट् जीवनिकाय-वधोऽवश्यम्भावी भाजनधावनादौ च जलगतजन्तुनाशः जलो-ज्झनेन भूमिगतकुन्थुपिपीलिकादिजन्तुघातश्च भवति तत्प्राणिर-क्षणकाङ्क्षयाऽपि निशाभोजनं न कर्तव्यम् । यदाहुः "जीवाण कुंथुमाईण, घायणं भाणधोअणाईसुं । एमाइ रयणिभोयण-दोसे को साहिउ तरइ ॥ १ ॥" यद्यपि च सिद्धमोदकादिखर्जूर-द्राक्षादिभक्षणे नास्त्यन्नपाको नच भाजनधावनादिसम्भवस्तथापि कुन्थुपनकादिसंघातसम्भवात्तस्यापि त्याग एव युक्तो यदुक्त नि-शीथभाष्ये "जइवि हु फासुगदव्व, कुंथुपणगा तहावि दुप्पस्सा । पच्चक्खणा णो वि हु, राईभत्त परिहरंति ॥ १ ॥ जइ वि हु पि-पीलिगाई, दीसति पज्जमाईज्जोए । तह वि खलु अणाइन्न, मूलवयविराहणाजम्ह ॥ २ " एतत्फल च "उलूककाकमार्जार-गृध्रशम्बरशूकराः । अहिवृश्चिकगोधाश्च, जायन्ते रात्रिभोजनात्" परेऽपि पठन्ति "मृते स्वजनमात्रेऽपि, सूतक जायते किल । अस्त गते दिवानाथे, भोजन क्रियते कथम् ॥ १ ॥ रक्तीभवन्ति तोयानि, अन्नानि पिशितानि च । रात्रौ भोजनशक्तस्य, ग्रासे तन्मांसभक्षणम् ॥ २ ॥ स्कन्दपुराणे रुद्रप्रणीतकपालमोचनस्तोत्रे सूर्यस्तु-तिस्तोत्रेऽपि "एकभक्ताशनान्नित्य-मग्निहोत्रफल लभेत । अन-स्तभोजन नित्य, तीर्थयात्राफल भवेत ॥१॥" तथा "नैवाहुतिर्न च स्नान, न श्राद्ध देवतार्चनम् । दान वा विहित रात्रौ, भोजनन्तु विशेषत ॥२॥" आयुर्वेदेऽपि । "हृन्नाभिपद्मसङ्कोच-श्चण्ड-रोचेरपायत । अतो नक्त न भोक्तव्य, सूक्ष्मजीवादनादपि ॥ ३ ॥" तस्माद्विवेकिना रात्रौ चतुर्विधोऽप्याहार परिहार्यस्तदशक्तौ त्व-शनं खादिम च त्याज्यमेव स्वादिम पूगीफलाद्यपि दिवा सम्य-क्शोधनादियतनयैव गृह्णात्यन्यथा त्रसहिंसादयोऽपि दोषा मुख्यवृत्त्या च प्रातः सायं च रात्रिप्रत्यासन्नत्वाद् द्वे द्वे घटिके भो-जनं त्यजेद्यतो योगशास्त्रे "अह्नो मुखेऽवसाने च, यो द्वे द्वे घटिके त्यजन् । निशाभोजनदोषज्ञो-ऽश्नात्यसौ पुण्यभाजनम् ॥ १ ॥" अत एवागमे सर्वजघन्यं प्रत्याख्यान मुहूर्तप्रमाण नमस्कार-सहितमुच्यते जातु तत्तत्कार्यव्यग्रत्वादिना तथा न शक्नोति तदापि सूर्योदयास्तनिर्णयमपेक्षत एवातपदर्शनादिनाऽन्यथा रात्रिभोजनदोषः । अन्धकारभवनेऽपि भीरुया प्रदीपाकरणादि-ना त्रसादिहिंसानियमभङ्गमायामृषावादादयोऽधिकदोषा अपि यतः "न करेमित्ति भणित्ता, तं चेव निसेवए पुणो पावं । पच्च-क्खमुसावाई, मायानियडी पसगो अ ॥१॥ पाव काऊण सम, अ-प्पाण सुद्धमेव वाहरइ । दुगुण करेइ पावं, बीअं बालस्स मंदत्त २" तथा बहुवीजेति बहुवीज च अज्ञातफलं चेति द्वन्द्वस्तत्र बहू-नि वीजानि वर्तन्ते यस्मिन् तद्बहुवीज पम्पोटकादिकमन्त्यन्तर-पुटादिरहित केवल वीजमय तच्च प्रतिवीज जीवोपमर्दसम्भवाद्व-र्जनीयं यच्चाभ्यन्तरपुटादिसहितवीजमय दाडिमटिंडूरादि त-न्नामकजया व्यवहरन्ति १५ अज्ञात च तत्फलं चेति कर्मधारयः अज्ञातफलं स्वयं परेण वा यद् न ज्ञातफलमुपलक्षणत्वात्पत्रं तद-भक्ष्य निषिद्धफले विषफले वा अज्ञानात्प्रवृत्तिसम्भवात् । अज्ञान-तो हि प्रतिषिद्धे फले प्रवर्तमानस्य व्रतभङ्गः विषफले तु जी-वितविनाश १६ तथा सधान चानन्तकायिक चेति द्वन्द्वस्तत्र संधान निम्बकविल्वकादीनामनेकसंसक्तिनिमित्तत्वाद्वर्ज्य स-धानस्य च व्यवहारवृत्त्या दिनत्रयात्परतोऽभक्षत्वमाचक्षते । यो-गशास्त्रवृत्तावपि "सधानमानफलादी-नां यदि संसक्तं भवेत् । तदा जिनधर्मपरा-यण कृपालुत्वात्त्यजेदिति । १७। अनन्ता का-यिका जीवा यत्र तत् अनन्तकायिकम् । अनन्तजन्तुसन्ताननि-पातननिमित्तत्वात् वर्ज्यम् ( ध० ) ( अनन्तकायिकव्याख्या स्व-स्थाने उक्ता ) अन्यदप्यभक्ष्यं चाचित्तीभूतमपि परिहार्यं निः-शूकतालौल्यवृद्ध्यादिदोषसंभवात् परपरया सचित्तग्रहणप्र-सङ्गाच्च यथोक्तम् "इक्केण कयमकज्ज, करेइ तप्पच्चया पुणो अन्नो । सायाबहुलपरपर-वुच्छेओ संजमतवाणं । १ । " अत एवोत्का-लितसेल्लरकराद्धकसूरणवृन्ताकादि प्रासुकमपि सर्वं वर्ज्यं मू-लकस्तु पञ्चाङ्गोऽपि त्याज्यः । शुण्ठ्यादि तु नाम स्वेदभेदादि-ना कल्पते इति श्राद्धविधिवृत्तौ । १८ । तथा वृन्ताकं निद्राबाहु-ल्यमदनोद्दीपनादिदोषपोषकत्वात्त्याज्यम् । पठन्ति च परेऽपि च "यस्तु वृन्ताककालिङ्ग-मूलकानां च भक्षक । अन्तकाले स-मूढात्मा, न स्मरिष्यति मां प्रिये" इति ।१९। तथा चलितो विन-ष्टो रस स्वाद उपलक्षणत्वाद्वर्णादिर्यस्य तच्चलितरसं कुथिता-न्नपर्युषितद्विदलपूपिकादि केवलजलराद्धकूराद्यनेकजन्तुसम्भव-त्वात् पुष्पितौदनपक्वान्नादिदिनद्वयातीतदध्याद्यपि च तत्र पक्वा-न्नाद्याश्रित्य चैवमुक्तम् । "वासासु पन्नरदिवस , सीउण्हकालेसु मासदिणवीसं । उग्गाहिम जईण, कप्पइ आरब्भ पढम दिणे" केचित्त्वस्या गाथाया अलभ्यमानस्थानत्वं वदन्तो या-वद्रूपरसादिना न विनश्यति तावदुग्गाहिमं शुद्ध्यतीत्याहुः दिनद्वयातीते दध्यपि जीवसंसक्तिर्यथा "जइ मुग्ग-माससमाई, विदल कच्चम्मि गोरसे पडइ । ता तसजीवुप्पत्ती, भणति दहिपवि दुदिणुवरिं " १ हारिभद्रदशवैकालिक-वृत्तावपि रसजास्तक्रारनालदधितेमनादिषु पायुकृम्याकृत-योऽतिसूक्ष्मा भवन्तीति दध्यहर्द्वितयातीतमिति । दिममपिः२० ।

तथा तुच्छं असारं पुष्पं च फलं च ते आदौ यस्य तत् पुष्पफलादि । च समुच्चये आदिशब्दान्मूलपत्रादिपरिग्रहस्तत्र तुच्छं पुष्पमरणिकरीरशिग्रुमधूकादिसंबन्धि तुच्छं फलम् । मधूकजम्बूटीवरूपीलुपक्ककरमर्दकुष्टीफलपिचुमकुरवालप्रोलिवृहद्वदरकचर्कुट्टिमडस्वसखसादि २ प्रावृषि तन्दुलीयकादेश्च पत्रं बहुजीवसंमिश्रितत्वात् ३ त्याज्यम् । अन्यदप्येतादृशं मूलादि यद्वाऽर्द्धनिष्पन्नकोमलचवलकमुद्गसिम्बादिकम् । तद्भक्षणे हि न तथाविधतृप्तिर्विराधना च भूयसी २१ तथा आमेति आमं च तद्गोरसं च आमगोरसं तत्र संपृक्तमामगोरससंपृक्तम् । कच्चदुग्धदधितक्रसंमिलितम् । तदुद्धिदलं केवलिगम्यसूक्ष्मजीवसंसक्तिसंभवात् हेयम् । उक्तं च संसक्तनिर्युक्तादौ "सव्वेसु वि देसेसुं, सव्वेसु वि चेव तह य कालेसु । कुसिणेसु आमगोरस-जुत्तेसु निगोअपंचिंदी" द्विदललक्षणं त्वेवमाहुः "जम्मि उ पीलिज्जंते, नेहो नहु होइ विंति तं विदलं । विदले वि हु उप्पन्न, नेह जुअं होइ नो विदलं" १ इह द्वयं स्थितिः केचिद्भावा हेतुगम्या, केचित्त्वागमगम्याः । तत्र ये यथा हेतुगम्यास्ते स्तवप्रवचनधरैः प्रतिपादनीया आगमगम्येषु हेतून् हेतुगम्येषु त्वागममात्रं प्रतिपादयन्नाज्ञाविराधकः स्यात् । यतः " जे हेउवायपक्खम्मि, हेउओ आगमे अ आगमिओ । सो समयपन्नवओ, सिद्धंतविराहओ अन्नो " इति । आमगोरससंपृक्तद्विदले पुष्पितौदने अहर्द्वितयातीते दधि कुथिताने च न हेतुगम्यो जीवसद्भावः किंत्वागमगम्य एव तेन तेषु ये जन्तवस्ते केवलिभिर्दृष्टा इति द्वाविंशति अभक्ष्याणि वर्जयेदिति पूर्वं योजितमेवेति श्लोकत्रयार्थः । योगशास्त्रे तु षोडशवर्जनीयानि प्रतिपादितानि यथा " मद्यं मांसं नवनीतं, मधूदुम्बरपञ्चकम् । अनन्तकायमज्ञातफलं रात्रौ च भोजनम् । १ । आमगोरससंपृक्त-द्विदलं पुष्पितौदनम् । दध्यहर्द्वितयातीतं,कथितान्नं च वर्जयेत् ।२। अन्यसकलाभक्ष्यवर्जनं च । जन्तुमिश्रं फलं पुष्पं, पत्रं चान्यदपि त्यजेत् । संधानमपि संसक्तं,जिनधर्मपरायणः ।३। इति संग्रहश्लोकेनोक्तम् । अत्र च सप्तमव्रते सचित्ताचित्तमिश्रव्यक्तिः श्राद्धविध्युक्ता पूर्वं सम्यक् ज्ञेया युज्यते यथा चतुर्दशादिनियमाः । सुपाल्या भवन्तीति ॥ ( ध० ) ( अचित्तव्यक्तिः स्वस्थाने ) एवं सचित्ताचित्तादिव्यक्तिं ज्ञात्वा सप्तमव्रतं नामग्राहं सचित्तादिसर्वभोग्यवस्तुनैयत्यकरणादिना स्वीकार्यं यथानन्दकामदेवादिभिः स्वीकृतं तथा करणाशक्तौ तु सामान्यतोऽपि सचित्तादिनियमाः कार्यास्ते चैवम् ॥

सचित्त १ दव्व २ विगइ ३ वाणह ४ तंबोल ५ वत्थ ६ कुसुमेसु ७ । वाहण ८ सयण ९ विलेवण १० बंभ ११ दिसि १२ न्हाण १३ भत्तेसु १४ ॥

१ तत्र मुख्यवृत्त्या सुश्रावकेण सचित्तं सर्वथा त्याज्यं तदशक्तौ नामग्राह तथाऽप्यशक्तौ सामान्यत एकद्व्यादिनियम्यं यतः "निरवज्जाहारेणं " इति पूर्वश्लोकविनागाथे परं प्रतिदिनं सचित्तादिसंग्राहिणो हि पृथक् दिनेषु परावर्त्तनेन सर्वसचित्तग्रहणमपि स्यान्नथा च न विशेषविरतिः नामग्राहं सचित्तादिनिग्रहे तु तदन्यसर्वसचित्तनिरंतरपरित्यागो स्पष्टमेवाविरतिः फलम् उक्तं च " पुप्फफलाणं च रसं, सुराइमंसाणमहिलिआणं च । जाणता जे विरया, ते दुक्करकारए वंदे " सचित्तेष्वपि नागवल्लीदलानि दुस्त्यजानि शेषसचित्तानां प्रायः प्रासुकीभवनं स्यात्तदा बहुकालेऽपि दुर्वारत्वात् नु निरन्तरं जलाद्रत्वादिना सचित्तत्वामुक्तेश्च कुन्थ्वादिविराधनापि स्यात् न तत एव पापभीरुणा त्याज्यानि अन्यथाऽपि रात्रौ न व्यापार्याणि रात्रिव्यापारिणोऽपि दिवा संशोधनादियतनाया एव मुख्यता । ब्रह्मचारिणा तु कामाङ्गत्वात्त्याज्यान्येव सचित्तभक्षणे दोषस्तु अनेकजीवविराधनारूपः यतः प्रत्येकसचित्तेऽप्येकस्मिन् पत्रफलादावसंख्यजीवविराधनासंभवः यदागमः " जं भणिअं पज्जत्तग,निस्साए वुक्कमंत अपज्जत्ता । जत्थेगो पज्जत्तो, तत्थ असंखा अपज्जत्ता " बादरेष्वेकेन्द्रियेष्वेवमुक्तं सूक्ष्मेषु तु यत्रैकोऽपर्याप्तस्तत्र तन्निश्रया नियमादसंख्याः पर्याप्ताः स्युरित्याचाराङ्गवृत्त्यादौ प्रोक्तम् । एवमेकस्मिन्नपि पत्रादावसंख्यजीवविराधना तदाश्रितजलनील्यादि संभवे त्वनन्ता अपि जलवणादि वाऽसंख्यजीवात्मकमेव यदार्षम् । " एगम्मि उदगबिंदुम्मि, जे जीवा जिणवरेहिं पण्णत्ता । ते जइ सरिसवमित्ता, जंबूदीवे न मायंति ।१। अद्दामलप्पमाणे, पुढविक्काये हवंति जे जीवा । ते पारेवयमित्ता, जंबुद्दीवे न मायंति " सर्वसचित्तत्यागेऽम्बडपरिव्राजकसप्तशतशिष्यनिदर्शनम् । एवं सचित्तत्यागे यतनीयमिति प्रथमनियम ॥ सचित्तविकृतिवर्जं यन्मुखे क्षिप्यते तत्सर्वं द्रव्यं क्षिप्रचटीरोट्टिकानिर्विकृतिकमोदकलपनश्रीपर्पटिकाचूरिमकरम्बककैरेय्यादिकं बहुधान्यादिनिष्पन्नमपि परिणामान्तराद्यापत्तेरेकैकमेव द्रव्यमेकधान्यनिष्पन्नान्यपि पूविकास्थूलरोट्टकमण्डकपर्परकघृघरीटोकलघूजीवाटकणिकादीनि पृथक् २ नामास्वादवत्त्वेन पृथक् २ द्रव्याणि फलफलिकादौ तु नामैक्ये भिन्नास्वादव्यक्तेः परिणामान्तराभावाच्च । बहुद्रव्यत्वमन्यथा वा संप्रदायादिवशाद्द्रव्याणि गणनीयानि धातुमयशिलाकाकाराङ्गुल्यादिकं द्रव्यमध्ये न गणयन्ति ३ विकृतयो भक्ष्याः षट् दुग्ध १ दधि २ घृत ३ तैल ४ गुरु ५ सर्वपक्वान्न ६ भेदात् ३ ( वाणहत्ति ) उपानद्युग्मं मोचकयुग्मं वा काष्ठपादुकादि तु बहुजीवविराधनाहेतुत्वात्त्याज्यमेव श्रावकैः ४ ताम्बूलपत्रपूगखदिरवटिकाकत्थकादिस्वादिमरूपम् ।५। वस्त्रं पञ्चाङ्गादिवेषं धौतिकपोतिकरात्रिवस्त्रादि वेषे न गण्यते ।६। कुसुमानि शिरःकण्ठकेपशय्योच्छीर्षकाद्यर्हाणि तन्नियमेऽपि देवदोषाः कल्पन्ते । ७ । वाहनं रथाश्वादि ८ शयनं खट्वादि ९ विलेपनं भोगार्थं चन्दनाञ्जनादिचूर्ण कस्तूर्यादि तन्नियमे देवपूजादौ तिलकस्वहस्तकङ्कणधूपनादि कल्पते । १० । अब्रह्म दिवा रात्रौ पत्न्याद्याश्रित्य ११ दिक्परिमाणं सर्वतोऽमुकदिशि वा ब्यदवधिगमनादिनियमनम् । १२ । स्नानं तैलाभ्यङ्गादिपूर्वकं देवपूजार्थं करणेन नियमभङ्गः लौकिककारणे च यतना रक्ष्या ।१३भक्तं राद्धधान्यसुखभक्षिकादि सर्वं त्रिचतुःसेरादिमितं खरमुजादिग्रहणे बहवोऽपि सेराः स्युः ।१४। एतदुपलक्षणत्वादन्येऽपि शाकफलधान्यादिप्रमाणारम्भनैयत्यादिनियमा यथाशक्ति ग्राह्या इत्युक्तं भोगोपभोगव्रतम् ॥ ध० २ अधि० । इदमपि चातिचाररहितमनुपालनीयमित्यतोऽस्यैवातिचारानभिधित्सुराह ॥

भोअणओ समणोवासएणं इमे पंच अइआरा जाणिअव्वा न समायरिअव्वा तं जहा सचित्ताहारे १ सचित्तपडिबद्धाहारे २ अप्पोलिओसहिभक्खणया सचित्तसम्मिस्साहारे ( पाठान्तरम् )३ दुप्पोलिओसहिभक्खणया ४ तुच्छोसहिभक्खणया ॥

भोजनतो यद् व्रतमुक्तं तदाश्रित्य श्रमणोपासकेनापि पञ्चातिचारा ज्ञातव्याः न समाचरितव्यास्तद्यथा सचित्ताहारः चित्तं चेतना संज्ञानं उपयोगोऽवधानमिति पर्यायाः सचित्तश्चासावाहारश्च २ सचित्तो वाहारो यस्य सचित्तमाहारयतीति वा मूलकन्दकार्ककादिसाधारणप्रत्येकतरुशरीराणि सचित्तानि सचित्तं पृथिव्याद्याहारयतीति भावना । तथा सचित्तप्रतिबद्धाहारो यथा वृक्षप्र-

तिबद्धो गोन्दादिपक्वफलानि वा तथा अपक्वौषधिभक्षणत्वमिदं च प्रतीतं सचित्तसन्मिश्राहार इति पाठान्तरं सचित्तेन सन्मिश्र आहारः सचित्तसन्मिश्राहारः वल्ल्यादिपुष्पादिना सन्मिश्रं तथा दुष्पक्वौषधेर्भक्षणतो दुष्पक्वा अस्विन्ना इत्यर्थः तद्भक्षणता । तथा तुच्छौषधिभक्षणता तुच्छा ह्यसारा मुद्गफलीप्रभृतय अत्र महती विराधना अल्पा च तृप्तिर्यद्बालीभिरल्पैर्हि कोऽप्यपायः सम्भाव्यते । "एत्थ सगरकायगो उदाहरणम्-एगो खेत्तरक्खगो मे गाओ खाइ राया निग्गओ खायंतं पेच्छइ ततो परिपुच्छइ तो खायइ रन्नो कोलुग्गण पोट्ट फालिय केतियाओ खाइयाओ होज्जाति नवरिं फेण अन्नं न किंचि अत्थि एव्व भोजनत" इति गतम् । आव० ६ अ०॥

सचित्तस्तत्प्रतिबद्धः, संमिश्रोऽभिषवस्तथा ।

दुष्पक्वाहार इत्येते, द्वैतीयीके गुणव्रते ॥ ५० ॥

सह चित्तेन चेतनया वर्तते यः स सचित्तः । तेन सचित्तेन प्रतिबद्धः सम्बद्धस्तत्प्रतिबद्धः । सचित्तेन मिश्रः सवलः संमिश्रः । अभिषवोऽनेकद्रव्यसन्धाननिष्पन्नः दुष्पक्वो मन्दपक्वः स चासावाहारश्चेत्यतीचाराद्वैतीयीके द्वितीये स्वार्थे इकण् गुणव्रते भोगोपभोगपरिमाणाख्ये ज्ञेया इति शेषस्तत्र सचित्तः कन्दमूलफलादिः पृथिवीकायादिर्वा । इह च निवृत्तिविषयीकृतेऽपि सचित्तादौ प्रवृत्तावतिचाराभिधानं व्रतसापेक्षस्यानाभोगातिक्रमादिनिबन्धनप्रवृत्त्या द्रष्टव्यमन्यथा भङ्ग एव स्यात् । तत्रापि कृतसचित्तपरिहारस्य कृतसचित्तपरिमाणस्य वा सचित्तमधिकसचित्तं वाऽनाभोगादिना खादतः सचित्ताहाररूपः प्रथमोऽतिचारः । आहारशब्दस्तु दुष्पक्वाहार इत्यस्मादाकृष्य सम्बन्ध्यः एवमुत्तरेष्वप्याहारशब्दयोजना भाव्या १ सचित्तप्रतिबद्धः सचेतनवृक्षादिसम्बद्धो गुन्दादिः पक्वफलादिर्वा सचित्तान्तर्बीजः खर्जूराम्रादि तदाहारो हि सचित्ताहारवर्जकस्यानाभोगादिना सावद्याहारप्रवृत्तिरूपत्वादतिचारः । अथवा बीजं त्यक्ष्यामि सचेतनत्वात्तस्य कटाहं त्वचेतनत्वाद्भक्षयिष्यामीति धिया पक्वं खर्जूरादिफलं मुखे प्रक्षिपतः सचित्तवर्जकस्य सचित्तप्रतिबद्धाहारो द्वितीयः । २ । संमिश्रोऽर्द्धपरिणतजलादिरार्द्रकदाडिमबीजकपूरचिर्भटिकादिमिश्रः पूरणादिर्वा तिलमिश्रो यवधानादिर्वा एतदाहारोऽप्यनाभोगातिक्रमादिनाऽतिचारः । अथवा सम्भवत्सचित्तावयवस्याऽपक्वकणिकादेः पिष्टत्वादिनाऽचेतनमिति बुद्ध्याहारः संमिश्राहारो व्रतसापेक्षत्वादतिचारः इति तृतीयः । अभिषवः सुरासौवीरकादिर्मांसप्रकारखण्डादिर्वा सुरा मद्याद्यभिष्यन्दिवृष्यद्रव्योपयोगो वाऽयमपि सावद्याहारवर्जकस्यानाभोगादिनाऽतिचारः चतुर्थः । ४ । तथा दुष्पक्वोऽर्द्धस्विन्नपृथुकतन्दुलयवगोधूमस्थूलमण्डककणिक्कफलादिरैहिकप्रत्यवायकारी यावता चांशेन सचित्तस्तावता परलोकेऽप्युपहन्ति पृथुकादेर्दुष्पक्वतया सम्भवत्सचेतनावयवत्वात्पक्वत्वेनाऽचेतन इति भुञ्जानस्यातिचार इति पञ्चमः । ५ । केचित्त्वपक्वाहारमप्यतिचारत्वेन वर्णयन्ति । अपक्वं च यदग्निनाऽसंस्कृतं एष च सचित्ताहारे प्रथमातिचारेऽन्तर्भवति तुच्छौषधिभक्षणमपि केचिदतिचारमाहुस्तुच्छौषधयश्च मुद्गादिकोमलशिम्बीरूपास्ताश्च यदि सचित्तास्तदा सचित्तातिचार एवान्तर्भवन्ति । अथाग्निपाकादिनाऽचित्तास्तर्हि को दोष इति एवं रात्रिभोजनमद्यादिनिवृत्तिष्वपि अनाभोगातिक्रमादिभिरतिचारा भावनीयाः । इत्यमतिचारव्याख्यानं तत्त्वार्थवृत्त्याद्यनुसारेण ज्ञेयम् । आवश्यकपञ्चाशकवृत्त्यादिषु तु अपक्वदुष्पक्वतुच्छौषधिभक्षणस्य क्रमेण तृतीयाद्यतिचारत्वं दर्शितम् । तत्राक्षेपपरिहारावित्थम् । नन्वपक्वौषधयो यदि सचेतनास्तदा सचित्तमित्यादिपदेनैवोक्तार्थत्वात्पुनर्वचनमसङ्गतमथाचेतनास्तदा-

कोऽतिचारो निरवद्यत्वात्तद्भक्षणस्येति सत्यम् किं त्वाद्यावतीचारौ सचेतनकन्दफलादिविषयावितरे तु शाल्याद्यौषधिविषया इति विषयकृतो भेदोऽत एव मूलसूत्रे "अप्पउलिओसहिभक्खणये"त्याद्युक्तं ततोऽनाभोगातिक्रमादिनाऽपक्वौषधिभक्षणमतिचारोऽथवा कणिकादेरपक्वतया सम्भवत्सचित्तावयवस्य पिष्टत्वादिनाऽचेतनमिदमिति बुद्ध्या भक्षणं व्रतसापेक्षत्वादतिचारः । दुष्पक्वौषधिभक्षणभावना तु पूर्वोक्तैव तुच्छौषधिभक्षणे त्वित्थं ननु तुच्छौषधयोऽपक्वा दुष्पक्वाः सम्यक्पक्वा वा स्युर्यदाद्यौ पक्षौ तदा तृतीयचतुर्थातिचाराभ्यामेवास्योक्तत्वात्पुनरुक्तत्वदोषः । अथ सम्यक्पक्वास्तदा निरवद्यत्वादेव कातिचारता तद्भक्षणस्येति सत्यं किं तु यथाऽऽद्यद्वयस्योत्तरद्वयस्य च सचित्तत्वे समानेऽप्यनोषध्योषधिकृतो विशेष एवमस्य सचेतनौषधिताभ्यां समानत्वेऽपि अतुच्छतुच्छत्वकृतो विशेषो दृश्यस्तत्र च कोमलमुद्गादिफलीर्विशिष्टतृप्त्यकारकत्वेन तुच्छाः सचित्ता एवानाभोगादिना भुञ्जानस्य तुच्छौषधिभक्षणमतिचारः । अथवात्यन्तावद्यभीरुतयाऽचित्ताहारताभ्युपगन्ता तत्र च यत्तृप्तिकारकं तदचित्तीकृत्यापि भक्षयतु सचेतनस्यैव वर्जनीयत्वाभ्युपगमाद्यत्पुनस्तृप्तिजननाऽसमर्थाप्यौषधीर्लौल्येनाचित्तीकृत्य भुङ्क्ते तत्तुच्छौषधिभक्षणमतिचारः । तत्र भावतो विरतेर्विराधितत्वाद्द्रव्यतस्तु पालितत्वादिति पञ्चाशकवृत्तौ । अथ भोगोपभोगातिचारानुपसंहरन् भोगोपभोगव्रतस्य लक्षणान्तरं तद्गतांश्चातिचारानुपदर्शयितुमाह ॥

अमी भोजनमाश्रित्य, त्यक्तव्याः कर्मतः पुनः ।

खरकर्म त्रिघ्नपञ्च, कर्मादानानि तन्मलाः ॥ ५१ ॥

अमी उक्तस्वरूपाः पञ्चातिचारा भोजनमाश्रित्य त्यक्तव्या हेयाः । अथ कर्म्मतस्तानाह-तत्र भोगोपभोगसाधनं यद्द्रव्यं तदुपार्जनाय यत्कर्म व्यापारस्तदपि भोगोपभोगशब्देनोच्यते कारणे कार्योपचारात् इति व्याख्यानान्तरं पूर्वमुक्तमेव । ततश्च कर्मतः कर्माश्रित्य भोगोपभोगोत्पादकव्यापारमाश्रित्येत्यर्थः । पुनः खरं कठोरं यत्कर्म कोट्टपालनगुप्तिपालनादिरूपं तत्त्याज्यं तन्मलास्तस्मिन् खरकर्मत्यागलक्षणे भोगोपभोगव्रते मला अतिचारा त्रिघ्ना त्रिगुणिताः पञ्चदशेत्यर्थः । कर्मादानानि कर्मादानशब्दवाच्या भवन्ति शेषः कर्मणां पापप्रकृतीनामादानानि कारणानीति कृत्वा तेऽपि त्यक्तव्या इति पूर्वक्रियान्वयः । ध०२ अधि० । अधुना कर्मतो यद् व्रतमुक्तं तदप्यतिचाररहितमनुपालनीयमित्यतोऽस्यातिचारानभिधित्सुराह ।

कम्मओणं समणोवासएणं इमाइं पन्नरसकम्मादाणाइं जाणिअव्वाइं न समायरिअव्वाइं तंजहा इंगालकम्मे १ वणकम्मे २ साडीकम्मे ३ भाडीकम्मे ४ फोडीकम्मे ५ दंतवाणिज्जे ६ लक्खवाणिज्जे ७ रसवाणिज्जे ८ केसवाणिज्जे ९ विसवाणिज्जे १० जंतपीलणकम्मे ११ निलंछणकम्मे १२ दवग्गिदावणया १३ सरदहतलावसोसणया १४ असईपोसणया ॥ १५ ॥ आव० ६ अ०

( सूत्रव्याख्या इंगालकम्मादिषु शब्देषु )

उवभोगपरिभोगाइ(ति)रित्त-उपभोगपरिभोगातिरिक्त-न०

उपभोगविषयभूतानि यानि द्रव्याणि स्नानप्रक्रमे उष्णोदकोद्वर्तनकामलकादीनि भोजनप्रक्रमेऽशनपानादीनि तेषु यदतिरिक्तमधिकमात्मादीनामनर्थक्रियासिद्धावप्यधिरिष्यते तदुपभोगपरिभोगातिरिक्तम् । आत्मोपभोगातिरिक्ते, तद्व्यवहारात्प्रमादव्रता-

तिचारे, नेन आत्मोपभोगातिरिक्तेन परेषां स्नानभोजनादिरनर्थ-
दण्डो भवति। अयं च प्रमादव्रतस्यैवातिचार इति। उपा० १ अ०।

उवभोगपरिभोगाइरेग–उपभोगपरिभोगातिरेक–पुं० उपभो-
गपरिभोगयोरतिरेक. अधिकमुपभोगपरिभोगातिरेक· । प्रमा-
दचरितस्यातिचारे, इह किल स्वोपयोगिभ्योऽधिकानि ताम्बू-
लमोदकमण्डकादीन्युपभोगाङ्गानि तडागादिषु न नेत-
व्यानि अन्यथा हि खिड्गादयस्तानि भक्षते ततश्चात्मनो निरर्थक-
कर्मबन्धादिदोष। अयमपि विषयात्मकत्वात् प्रमादचरितस्याति-
चार.। ध० र०। आ०।

उवभोगत्त–उपभोग्यत्व–न० उपभोगयोग्यतायाम्। स०।

उवमा–उपमा–स्त्री० उपमानमुपमा–उप–मा–भावे–अ–अनेन
गवयेन सदृशो गौरिति सादृश्यप्रतिपत्तिरूपे प्रमाणभेदे, ॥उक्तं
च ॥ " गां दृष्ट्वाऽयमरण्येऽन्यं, गवय वीक्षते यदा । भूयोऽव-
यवसामान्य–भाज वर्तुलकण्ठकम ॥ १ ॥ तस्यामेव त्ववस्थाय,
यदि ज्ञानं प्रवर्तते । पशुनैतेन तुल्योऽसौ, गोपिण्ड इति सोपमेति
॥२॥ " श्रुतादिदेशवाक्यसमानार्थोपलम्भने, संज्ञासञ्ज्ञिसम्बन्ध-
ज्ञाने च। स्था० ४ ठा० ॥ उपमीयतेऽनेन दार्ष्टान्तिकोऽर्थ इ-
त्युपमा। द० १ अ०। सूत्र०। शक्रस्यदेवेन्द्रस्य देवराजस्य प्रथमा-
ग्रमहिष्याम । स्था० ८ ठा० । खाद्यविशेषे, । जी ३ प्रति० । इदा-
नीमदृश्यमाने प्रश्नव्याकरणानां प्रथमेऽध्ययने च। स्था० १० ठा० ।

उवमाण-उपमान-न० उपमीयतेऽनेन दार्ष्टान्तिकोऽर्थ इत्युपमानम,
दृष्टान्ते, । द० १ अ० । प्रसिद्धसाधर्म्यात्साध्यसाधने, यथा गौ-
र्गवयस्तथा । सूत्र० १ श्रु० १२ अ० । उपमानोपमेययोरभ्यक्तत्वे
सादृश्यावलम्बने, । सम्म० । ( औपम्यभेदा ओवम्म शब्दे
वक्ष्यन्ते ) ॥

उपमानस्य प्रमाणान्तरताविचार· ॥ उपमानमपि प्रमाणान्तरं
तस्य लक्षण यथा " दृश्यमानाद्यदन्यत्र, विज्ञानमुपजा-
यते । साध्यत्वेनोपाधितज्ज्ञैरुपमानमिति स्मृत " यथोक्तमुपमान-
मपि सादृश्यादसन्निकृष्टेऽर्थे बुद्धिमुत्पादयति यथा गवयदर्शनं
गोस्मरणस्येति अस्यायमर्थ येन प्रतिपात्रा गौरुपलब्धो न गवयो
नयातिदेशवाक्यं गौरिव गवय इति श्रुत तस्याटव्यां पर्यटत.
गवयदर्शने प्रथमे उपजायते परोक्षगवि सादृश्यज्ञानं यदुत्पद्यते
अनेन सदृशो गौरिति तदुपमानमिति । तस्य विषय सादृश्य-
विशिष्ट परोक्षो गौस्तद्विशिष्ट वा सादृश्य च वस्तुभूतमेव य-
दाह । " सादृश्यस्य च वस्तुत्व, न शक्यमवबाधितुम । भूयो-
ऽवयवसामान्य–योगो जात्यन्तरस्य तदिति" अस्य चानधिगता-
र्थाधिगन्तृतया प्रामाण्यमुपपन्न यतो गवयेन प्रत्यक्षेण गवय
एव विषयीकृतो न पुनरसन्निहितोऽपि सादृश्यविशिष्टो गौ तद्वि-
शिष्ट वा सादृश्यम् । यद्यपि तस्य पूर्वं गौरिति प्रत्यक्षमभूत्त-
स्यापि गवयोऽत्यन्तमप्रत्यक्ष एवेति कथ गवि तदपेक्ष
तत्सादृश्यज्ञानम । तदेवं गवयसदृशो गौरिति प्रागप्रतिपत्तेरन-
धिगतार्थाधिगन्तृप्रमेये गवयदर्शनात् सादृश्यज्ञानम। तदुक्त "त
स्माद्यत्स्मर्यते तत्स्यात्, सादृश्येन विशेषित । प्रमेयमनुमान-
स्य, सादृश्यं वा तदन्विते ॥ प्रत्यक्षेणावबुद्धेऽपि, सादृश्ये गवि
च स्मृतौ । विशिष्टस्यान्यतो सिद्धे–रुपमानप्रमाणता ॥ प्रत्यक्षेऽपि
यथादेशे, स्मर्यमाणे च पर्वके । विशिष्टविषयत्वेन, नानुमानाप्र-
माणतेति" न चेदं प्रत्यक्ष परोक्षविषयत्वात् सविकल्पकत्वाच्च ।
नाप्यनुमानं हेत्वभावात् । न च स एव दृश्यमानो गवयविशेष
तद्गत वा सादृश्य हेतुरत्वस्यापि धर्मिणा सह प्रतिबन्धाभा-
वात्पक्षधर्मत्वाभावात् न च गोगतस्य सादृश्य गौर्वा
हेतु प्रतिज्ञार्थैकदेशत्वात् न च सादृश्यमात्र प्राक् प्रमेयेण सम्बद्ध

प्रतिपन्न नवान्वयप्रतिपत्तिमन्तरेण हेतो· साध्यप्रतिपादकत्व-
मुपलब्धं तदेवं गवार्थदर्शने गवय पश्यत· सादृश्येन विशिष्टे
गवि पक्षधर्मत्वग्रहणं सम्बन्धानुस्मरण वान्तरेण प्रतिपत्तिरुप-
जायमाने नानुमानेऽन्तर्भवतीति प्रमाणान्तरमुपमानम। तदुक्तं "न
चैतस्यानुमानत्वं,पक्षधर्माद्यसंभवात् । प्राक् प्रमेयस्य सादृश्य,
न धर्मत्वेन गृह्यते॥ गवयं गृह्यमाणं च,न गवार्थानुमापकम्। प्रति-
ज्ञार्थैकदेशत्वा–द्गोगतस्य न लिङ्गतः॥ गवयश्चापि सम्बन्धा–न्ना-
गोलिङ्गत्वमृच्छति । सादृश्यं न च पूर्वेण,पूर्वं दृष्ट तदन्वये॥ एक-
स्मिन्नपि दृश्येऽर्थे, द्वितीया पश्यतो वने । सादृश्येन सहैकस्मि-
स्तदैवोत्पद्यतेमितिरिति" नैयायिका· श्रूयमाणलक्षणमभिदधति
प्रसिद्धसाधर्म्यात्साध्यसाधनमुपमानमिति । अत्रोपमानमिति-
लक्ष्यनिर्देशः प्रसिद्धसाधर्म्यादित्यागमपूर्विकाप्रसिद्धिः दर्शिता
आगमस्तु यथा गौस्तथा गवय इति एव प्रसिद्धेन साधर्म्यप्रसि-
द्धेः संस्कारवान् पुरुष कदाचिदरण्ये परिभ्रमन् समानमर्थं
यदा पश्यति तदा तज्ज्ञानादागमाहितसंस्कारप्रबोधसङ्गत
स्मृतिर्गोसदृशो गवय इत्येवं रूपा स्मृतिसहायेन्द्रियार्थसन्निक-
र्षेण गोसदृशोऽयमिति ज्ञानमुत्पाद्यते तच्चेन्द्रियार्थसन्निकर्षजत्वात्
तज्जनकत्वेनास्य प्रत्यक्षप्रमाणताप्रसक्तेः। न च शब्देन सार्द्धं यथो-
क्तमुत्पादयदेतच्छाब्दप्रसज्यते अव्यपदेश्यपदाध्याहारात् अव्य-
भिचार्यादिपदानां तु पूर्ववद्व्यवच्छेदो द्रष्टव्य । नन्वेवमप्यनुमाने
प्रसङ्गस्तस्य यथोक्तफलजनकत्वादविनाभावसम्बन्धस्मृतिपूर्वक-
स्य परामर्शज्ञानस्य विशिष्टफलजनकत्वेनानुमानत्वावाप्ते·प्रकृतज्ञा-
नमविनाभावसम्बन्धस्मृतिपूर्वकं गोसदृशस्य गवयशब्दवाच्यत्व-
नान्यस्याप्रसिद्धत्वात् गोसदृशगवयशब्द सञ्ज्ञेति आगमात्प्रती-
तिरिति चेत् न तस्य सन्निधीयमानगोसदृशपिण्डविषयत्वेना-
प्युपपत्तेर्निश्चितश्चान्वय साध्यप्रतिपत्ति । न च तदोपलभ्यमाना-
द्गोसादृश्यपिण्डाद्व्यतिरिक्त· गोसदृशसद्भावनिश्चायक प्रमा-
णमस्ति न चात्र व्यतिरेकी हेतु समस्ति सपक्षासत्वप्रतिपादक-
प्रमाणाभावात् अतो नाविनाभावसंबन्धानुस्मृति । व्याप्तिरहितेऽपि
चागमे गोसदृशो गवय इति सकृदुच्चारिते उत्तरकालगोसदृश-
पदार्थदर्शनात् अय स गवयशब्दवाच्य इति प्रतिपत्तिर्भवतीति
नानुमानमेतत् संज्ञासञ्ज्ञिसम्बन्धज्ञानत्वागमक न भवत्येव श-
ब्दस्य तज्जनकस्य तदाऽभावात् शब्दजनितं च शाब्द प्रमाणमि-
ति व्यवस्थित प्राक् शब्दप्रतीतत्वाच्छाब्दमिति चेन्नन्वनुमानस्या-
प्येवमसावप्रशक्तिः अग्निसाम्यस्य प्राग् प्रत्यक्षेण प्रतीतत्वात्
न ह्यप्रतीते महानसादावग्निसामान्ये अनुमानप्रवृत्तिरिति अप्र-
तीतार्थप्रतिपादकत्वादनुमान न प्रमाणं भवेत् । न च विशिष्ट-
देशाद्यवच्छेदसाधकसाधकत्वेनास्या प्रामाण्यमितरत्रापि समान-
त्वात्तथाहि सन्निधीयमानपिण्डविषयत्वेन स्वप्रतिपाद्यमिदं
प्रतिपादयति आगमस्त्वसन्निहितपिण्डविषयत्वेन न चागमात्
संज्ञासञ्ज्ञिसंबन्ध प्रतीयते तत सारूप्यमात्रप्रतीतेर्यत्र शब्दस्यैव
साधकतमत्व तदेव शाब्द फलं न च विप्रतिपत्त्यधिकारेण सञ्ज्ञास-
ञ्ज्ञिसंबन्धज्ञाने एतत्समास्ति प्रत्यक्षफल तु न भवत्येवैतत् सञ्ज्ञास-
ञ्ज्ञिसंबन्धस्येन्द्रियेणासन्निकर्षात् । नच सन्निकर्षश्चेन्द्रियाविषय-
त्वात्तस्य तदेव संज्ञासंज्ञिसंबन्धप्रतिनियतरूप फल यतः
समुपजायते तदुपमान आह च सूत्रकार साध्यसाधनमिति
साध्यं विशिष्ट फल तस्य साधनं जनक यत् तदुपमान एव सा-
रूप्यज्ञानवत्सारूप्यस्याप्यमानत्वं न पुन सञ्ज्ञासञ्ज्ञिसंबन्ध-
ज्ञानस्य फलाभावात् न च हेयादिज्ञानमस्य फल प्रत्यक्षादिफल-
त्वात्। तथा हि हेयादिज्ञान पिण्डविषय तच्चेन्द्रियार्थसन्निकर्षा-
दुपजायते यथा प्रत्यक्षफलमनुमान विशिष्टफलजनकत्वादेव

प्रमाणान्तरानिष्पाद्यविशिष्टफलजनकत्वात् प्रमाणान्तरमुपमानम् अत्र प्रतिविधानम् ॥ उपमानस्य त्वपूर्वार्थाधिगन्तृत्वाभावात् प्रामाण्यमेव न संभवति नन्वस्यापूर्वार्थविषयता प्रागुपदर्शितैव सत्यमुपदर्शिता न तु युक्ता तथा हि तस्य विषयः सादृश्यादिविशिष्टो गौस्तद्विशिष्टं वा सादृश्यमुपदर्शित तच्च भूयोऽवयवसामान्ययोगलक्षणप्रतिपादित न च सामान्यं तद्योगो वा वस्तु संभवतीति प्रतिपादित तत्सद्भावेऽपि प्रत्यक्षविषयतया परैस्तस्येष्टिः कथमुपमानगोचरत्वेनागृहीतार्थग्राहित्वं प्रामाण्यनिबन्धनं भवेत् सादृश्यज्ञानस्य चोत्पत्तावयं क्रम पूर्वं तावद् गोगवययोर्विषाणित्वादिसादृश्यं गवि प्रत्यक्षत प्रतिपद्यते पश्चात् गवयदर्शनानन्तरं यद्विषाणित्वादिसादृश्य पिण्डेऽस्मिन्नुपलभ्यते मया तत् गव्यप्युपलब्धमिति स्मरति तदनन्तर गवि विषाणित्वादिसादृश्यप्रतिसंधान जायते अनेन पिण्डेन सदृशो गौरित्येवं च स्मार्तमेतत् ज्ञान कथ प्रमाण भवेत् । यदि च गवि प्रत्यक्षेणोभयगत विषाणित्वादिसादृश्यं प्राग् न प्रतिपन्नं भवेत् प्रतिपन्नमपि यदि विस्मृत भवेत् तदा गवयदर्शने सत्यपि परोक्षे गवि नैव सादृश्यज्ञानमुपजायेत अतो विषाणित्वादिसादृश्य पूर्वमेव गवि प्रत्यक्षेणावगतमिदानीं गवयदर्शनात् तथैव स्मर्यते तन्न गृहीतग्राहणात् सादृश्यज्ञानं प्रमाणम् । अथ पूर्वप्रत्यक्षेण गोगतमेव सादृश्यमवगत गवयदर्शनेन तु तद्गतमेवोभयगतसादृश्यप्रतिपत्तिस्तु गवयदर्शनानन्तरं सादृश्यज्ञाननिबन्धनाति अगृहीतग्राहितया प्रमाणमुपमानम् । असदेतत् पूर्वमुभयगतसादृश्यप्रतिपत्तौ गवयदर्शनानन्तरमप्यप्रतिपत्तिस्तदनुसंधानप्रतिपत्तेरप्यसंभवात् । न हि गवयपिण्डदर्शनानन्तर प्रागप्रतिपन्ने तत्सादृश्येऽश्वपिण्डे अनेन सदृशोऽश्वप्रतिपत्ति कदाचिदपि भवति तस्मात् प्रागध्यक्षावगतसादृश्ये प्रतियोगिग्रहणाद्व्यवहारमात्रप्रवृत्तिरत्र तदा प्राक् तदप्रवृत्तिः प्रतियोग्यपेक्षत्वात् तस्य भ्रात्रादिव्यवहारवत् न च तत् प्रामाण्य युक्तप्रमाणानामियत्ताभावप्रसक्तेः एव धूमदर्शनात्स्मर्यमाणाग्निसंबन्धितयाऽध्यक्षानवगतप्रदेशे तदयोगव्यवच्छेदमवगमयन्ती प्रतिपत्तिरुपजायमानाऽनुमिति प्रमाणतां यथा समासादयति न तथा सादृश्यप्रतिपत्तिः गवाख्यधर्मिप्रतिपत्तिकाल एव भूयोऽवयवसामान्ययोगलक्षणस्य सादृश्यप्रतिपत्तेस्तेन प्रत्यक्षेऽपि यथादेश इत्यादिवचनमयुक्ततया व्यवस्थितम् । किं च । यदि सादृश्यज्ञानं गृहीतग्राहित्वेऽपि व्यवहारमात्रप्रवर्तनात् प्रमाण तर्हि वैसादृश्यज्ञानमपि सप्तमं प्रमाण भवेत् दृश्यपरोक्षे सादृश्यधीरप्रमाणान्तर यदि वैधर्म्यमर्हति तर्ह्येवमप्येवं प्रमाणं किं न सप्तमम् । तथा सोपानलाभात् क्रामत प्रथमाक्रान्त पश्चादाक्रान्ताद्दीर्घे महत् ह्रस्व चेत्याद्यनेकप्रमाण प्रसक्तमिति कुतः प्रमाणषट्कवाद स्वगतो भवेत् । दृश्यमानव्यापेक्ष चेद् दृष्टज्ञानं प्रमाणान्तरं तत् पूर्वमस्मादित्यादिप्रमाणान्तरमिष्यताम् । अप्रमाण्ये चास्य पक्षधर्मत्वाद्यभावप्रतिपादन सिद्धसाधनमेवाप्रमा वा प्रमाणस्यानुमानत्वानभ्युपगमाद् । यदा च प्रत्यक्षेण प्रतिपन्नेऽपि गवाश्वादौ भूयोऽवयवसामान्ययोगं तद्वियोगवाच्य मूढ सदृशासदृशव्यवहार न प्रवर्तयति तदा विषयदर्शनेन विषयिणो व्यवहारस्य साधनात् त्रैरूप्यसद्भावादनुमानप्रमाणता समस्त्येव तथा हि गवाश्वादौ विषाणाद्यवयवसामान्ययोगसिद्धियोगो वा प्रागुपलब्ध इदानीं स्मर्यमाण इति नासिद्धता हेतोः प्रवृत्तिर्व्यवहारविषयश्च एवार्थोऽत्र दृष्टान्तोऽस्तीति नान्वयव्यतिरेकयोरप्यभावस्ततो न वै तस्यानुमानत्वमित्यादिपक्षधर्मत्वाद्यसंभवप्रतिपादनमसंगतव्यवहारसाधनपक्षधर्मत्वादे प्रसाधनान्नैयायिकोपवर्णितमप्युपमानमनधिगतार्थाधिगन्तृत्वाभावात् प्रमाण न भवति तथा हि यथा गौस्तथा गवय इति वाक्याद् गोसदृशार्थसामान्यस्य गवयशब्दवाच्यताप्रतिपत्तेरन्यथा विसदृशमहिष्याद्यर्थदर्शनादप्ययं स गवय इति संज्ञासंज्ञिसंबन्धप्रतिपत्तिः किं न भवेत्तस्माद्यथा कश्चिदङ्गदी कुण्डली छत्री स राजेति कुतश्चिदुपश्रुत्याङ्गदादिमदर्थदर्शनादयं स राजेति प्रतिपद्यते न चासौ प्रतिपत्तिः प्रमाणमुपवाक्यादेवाङ्गदादिमतोऽर्थस्य राजशब्दवाच्यत्वेन प्रतिपन्नत्वात् तथेहापि यथा गौस्तथा गवय इत्यतिदेशवाक्यात्संबन्धमवगत्य गवयदर्शनात्संकेतानुस्मरणे सत्ययं स गवयशब्दवाच्योऽर्थप्रतिपत्तेरप्रमाणमुपमानम् । यदि पुनरतिदेशवाक्यात्संबन्धप्रतिपत्तिर्नाभ्युपगम्यते पश्चादप्ययं स गवयशब्दवाच्यस्तथाऽपि प्रत्ययो न स्यात्तदपरनिमित्ताभावात् दृश्यते च तस्माद्गृहीतग्रहणान्नेद प्रमाणम् । अथातिदेशवाक्यात् पूर्वाज्ज्ञात्सदृशार्थस्य गवयशब्दवाच्यता सामान्येन प्रतीता गवयदर्शनानन्तरं तु गवयविशेष तच्छब्दवाच्यत्वेन पूर्वमप्रतीत प्रतिपद्यत इति न गृहीतग्राहिता असदेतत् सन्निहितगवयविशेषविषयस्य ज्ञानस्य प्रत्यक्षतयोपमानत्वानुपपत्तेर्गवयदर्शनोत्तरकालभावि त्वय स गवयशब्दवाच्योऽर्थ इति तज्ज्ञानं तत्प्रत्यक्षबलोत्पन्नत्वात् स्मृतिरेव न प्रमाणम् । किं च गवयविशेषस्य गवयशब्दवाच्यता यद्यतिदेशवाक्यान्न प्रतिपन्ना कथ तर्हि गवयविशेषदर्शन उपजाते कस्मादस्य तच्छब्दता यस्यैवार्थस्य संबन्धग्रहणकाले येन सह संबन्धोऽनुभूतस्तस्यैवार्थस्य तेन सह संबन्धे तच्छब्दवाच्यता कालान्तरेऽपि दृश्यते ततः सामान्येन संकेतकाल एव संबन्ध प्रतीतः पश्चाद्गवयदर्शन उपजाते संकेतमनुस्मृत्यायं स गवयशब्दवाच्योऽर्थ इति प्रतिपद्यते इत्यभ्युपगन्तव्यमेतेनोपयुक्तोपमानस्तु तुल्यार्थग्रहणे सति विशिष्टविषयत्वेन संबन्धं प्रतिपद्यत इत्यपि निरस्त विशेषस्य संकेतकालानुभूतस्य व्यवहारकालानुगमादवाच्यत्वाच्च । यश्च शब्दप्रभवप्रतिपत्तावर्थः प्रतिभाति स एकशब्दवाच्यो न त्वविशेषस्तत्र प्रतिभालक्षणज्ञाने अंसतस्तत्र शब्दस्याप्रतिभासनान्न विशेषः शब्दवाच्यतायामसौ गवयशब्दवाच्य इति विशेषस्य वाच्यप्रतिपत्ति सादृश्यविकल्पयोरेकीकरणाद् भ्रान्तिरन्यापूर्वानुभूताकारपरामर्श इति दृश्येयमसौ गवयशब्दवाच्य इति प्रतिपत्तिः कथं भवेदतिदेशवाक्यश्रवणसमये विशेषे संबन्धाप्रतिपत्तेः प्रतिप्रत्यभ्युपगमे वा विशेषेऽपि सामान्यत्वस्मृतिरेवेति कुतः प्रामाण्यमुपमानस्य । यद् गौरिव गवय इति गोगवययोरतिदेशवाक्यात्सादृश्यमात्रप्रतिपत्तिः संज्ञासंज्ञिसंबन्धप्रतिपत्तिस्तूपमानात्तदप्यसमीक्षिताभिधान यतो गवयदर्शनानन्तरमय स गवयशब्दवाच्य इति प्रतिपत्तिरुपजायते इय च तावदध्यक्षप्रतिपत्तिः फलश्रुतातिदेशवाक्यस्य प्रभ्रष्टसंस्कारस्य वा तत्सद्भावेऽप्यस्यानुत्पत्तेर्विशेषश्चाध्यक्षविषयत्वानभ्युपगमाच्च अतिदेशवाक्यस्मरणसहायस्य गवयदर्शनस्य तत्प्रतिपत्तिजनकत्वे स्मर्यमाणशब्दवाच्यत्वमित्यतिदेशवाक्यमेव तज्जनकमभ्युपगतं भवेत् न दर्शन न हि यत्राध्यक्षप्रवृत्तिमत्तत्र शब्दस्मरणसहितमपि प्रवर्तते यथा चक्षुर्घ्राने गन्धस्मरण सहायं परिमलप्रतिपत्तावतिदेशवाक्याच्च संबन्धाप्रतिपत्तावपरस्य तत्प्रतिपत्तिर्निमित्तस्याभावात् अय स गवयशब्दवाच्य इति पूर्वानुभूतपरामर्शेन प्रतिपत्तिर्न स्यादपि त्वय गोसदृश इत्येव भवेत् न चतत्प्रतिपत्तिरन्यथानुपपत्त्यैव प्रमाणान्तरमुपमाख्यमेतत्प्रतिपत्तिजनक प्रकल्पनीयं य कुण्डली स राजेति श्रुतातिदेशवाक्यस्य तद्दर्शनान्तरमयं

स राजशब्द वाच्य इति प्रतिपत्तेरप्युपमानफलत्वप्रसक्तेः अथात्र नच्छब्दवाच्यता इत्यतिदेशवाक्यादेव प्रतिपन्नेति नातिप्रसक्तिस्तर्हि गौरिव गवय इत्यतिदेशवाक्याद् गोसदृशार्थस्य गवयशब्दवाच्यतापि प्रतिपन्नेति नोपमानप्रमाणफलता अयं स गवयशब्दवाच्य इति प्रतिपत्तेः । तस्मात् स्मृतिरुपत्वादस्याः प्रतिपत्तेर्नैतस्या जनकस्य प्रमाणतेति अनुमानान्तर्भावप्रतिपादनं न दोषायेत्यलमतिविस्तरेण ॥ सम्म० । सूत्र० ।

उवमादोस–उपमादोष–पुं० हीनाधिकोपमाभिधानलक्षणे सूत्रदोषे, आ०म०द्वि० । यत्र हीनोपमा क्रियते यथा मेरुः सर्षपोपमः । अधिकोपमा वा क्रियते यथा सर्षपो मेरुसन्निभः । अनुपमा वाऽभिधीयते यथा मेरुः समुद्रोपम इत्यादि । अनु० । विशे० । यथा काञ्जिकमिव ब्राह्मणस्य सुराऽपेया ॥ वृ०१उ० ।

उवमिय–उपमित–त्रि० उप–मि–क्त । सादृश्यानुयोगिनि, यथा चन्द्रवन्मुखं तस्य चन्द्रसादृश्यानुयोगित्वात् ॥ वाच० ॥ उप–मि–भावे निष्ठाप्रत्ययः । उपमाने, विशे० ॥ उपमीयतेऽनेनोपमितम् बाहुलकात्करणे निष्ठाप्रत्ययः । उपमाकरणे. क्षेत्रस्योपमित क्षेत्रोपमितम् । आ० म० प्र० ॥

उवयाइय–उपयाचित–त्रि० कर्मणि क्त । उपगम्य प्रार्थिते, भावे क्त । उपगम्य याचने. न० देवाराधने, स्था० १० ठा० । पूजाभ्युपगमपूर्वकप्रार्थने, ज्ञा० ८ अ० ।

उवयाण–उपयान–न० सामीप्येन गमने, सूत्र० १ श्रु० २ अ० ।

उवयार–उपचार–पुं० उपचरणमुपचारः । उप–चर–घञ् । ग्रहणे, अधिगमे, "उवयारसद्दसंपच्चयत्थ एगट्ठिया भणंति । उवयारोत्ति वा अहीनं ति वा आगमियंति वा गृहीतंति वा एगट्ठं" । नि० चू० १ उ० । चिकित्सायाम् । पूजायाम्, पंचा० ६ विव० कल्प० । ज्ञा० । औ० । रा० । देवतापूजायाम्. प्रश्न० सं०३ द्वा० पञ्चवण्णसरसुरभिमुक्कपुप्फपुंजोवयारकलिते " चं २० पाहु० । आराधनाप्रकारे, द० ९ अ० । सुखकारिक्रियाविशेषे, प्रव० ६ द्वा० । अन्यक्रियाक्षेपे, षो० १२ विव० । लक्षणायाम्, उ० ७ अध्या० । लक्षणया शक्यार्थत्यागेनाऽन्यार्थबोधने, असदारोपे, अनु० । उपचरणमप्रधर्मणि, उ० ७ अध्या० । यथा—

जो तेसु धम्मसद्दो, सो उवयारेण निच्छएणं इहं ।
जह सीह सद्दसीहे, पाहणुवयारओ अन्न ॥ ९५ ॥

यस्तेषु तदन्तर्गतधर्म्मेषु धर्म्मशब्दः स उपचारेणापरमार्थेन निश्चयेनात्र जिनशासने रूढं यथा सिंहशब्दः सिंहे व्यवस्थित प्राधान्येनोपचारतः उपचारेणान्यत्र माणवकादौ यथा सिंहो माणवक उपचारनिमित्तं च शौर्यक्रौर्यादय धर्मे त्वहिंसाद्यासेवनादय इति गाथार्थः ॥ दश० १ अ० । व्यवहारे, स्था० ४ ठा० । "णिउणजुत्तोवयारकुसला" विपा० २ अ० । उपचरितवस्तुव्यवहारे, षो० वि० । लोकव्यवहारे, ज्ञा० १ अ० । जं० । आदेशे, आ० म० द्वि० । कल्पनायाम, विशे० ।

उवयारओ–उपचारतस्–अव्य० कल्पनामात्रेणेत्यर्थे, । "उवयारओ मित्तस्स विणिगमणं सव्वओ नत्थि " विशे० ॥

उवयारग–उपचारक–पुं० प्रतिजागरके, नि० चू० ११ उ० ।

उवयारग्ग–उपचाराग्र–न० उपचरणमुपचारः तेनोपचारेण करणं तत्तनेदमग्रम् । आचाग्रे नि० चू० १ उ० । ( तद्व्याख्या अग्गशब्दे उक्ता )

उवयारच्छल–उपचारच्छल–न० औपचारिके प्रयोगे मुख्यप्रतिषेधेन प्रत्यवस्थानरूपे छलभेदे, यथा मञ्चाः क्रोशन्ति इत्युक्ते पर प्रत्यवतिष्ठते कथमचेतना मञ्चाः क्रोशन्ति मञ्चस्थास्तु पुरुषाः क्रोशन्ति । स्या० ।

उवयारमित्तग–उपचारमात्रक–न० लोकोपचारे एव केवले, "उवचरइ कोणतितो, अहवा उवयारमित्तगं एइ" वृ०१ उ०॥

उवयारसय–उपचारशत–न० औपचारिकवचनचेष्टादिशते, " उवयारसयसंधणपउत्ताओ " । तं० ।

उवयारोवेयत्त–उपचारोपेतत्व–न०अग्राम्यतारूपे तृतीये सत्यवचनातिशये, स० । औ० ।

उवयालि–उपजालि–पुं० द्वारवत्यां वसुदेवस्य धारण्यामुत्पन्ने जालिभ्रातरि, सच द्वारवत्यां नगर्यां वसुदेवस्य धारण्यां देव्यां जातः पञ्चाशत्कन्याभिः परिणीतोऽरिष्टनेमेरन्तिके प्रव्रजितः द्वादशाङ्गान्यधीत्य षोडशवर्षपर्यायो मृतः शत्रुञ्जये सिद्धः । शेषं यथा गौतमस्य इत्यन्तकृद्दशासु चतुर्थवर्गे द्वितीये अध्ययने प्रतिपादितम् । अन्त० ४ अ० ॥ राजगृहे नगरे श्रेणिकस्य राज्ञो धारण्यां देव्यामुत्पन्ने पुत्रे च । स च राजगृहे श्रेणिकस्य धारण्यां जातः अष्टकन्याः परिणायिनः श्रमणस्य भगवतो महावीरस्यान्तिके प्रव्राजितः एकादशाङ्गान्यधीत्य षोडशवर्षाणि श्रामण्यपरिपाकं प्राप्य कालं कृत्वा वैजयन्ते विमाने देवतयोपपन्नः द्वात्रिंशत्सागरोपमाणि स्थितिं परिपाल्य महाविदेहे सेत्स्यतीति अनुत्तरोपपातिकदशासु प्रथमे वर्गे द्वितीयेऽध्ययने सूचितम् । अनु० ॥

उवरइ–उपरति–स्त्री० उप–रम–क्तिन्–विरतौ, स्था० १ ठा० । आचा० । स० ।

उवरम–उपरम–पुं० उप–रम्–घञ्–अवृद्धिः । उपरमणमुपरमः । नियमे, । विशे० विरमे, दर्श० ।

उवरय–उपरत–त्रि० उप–रम्–क्त । निवृत्ते । कल्प० । स्था० । उत्त० । " न हणे पाणिणं पाणे, भयवेराउ उवरए " उपरतो निवर्तिनः । उत्त० ६ अ० । प्राय. सावद्ययोगेभ्यो निवृत्ते, आव० ४ अ० । " उवरया मेहुणा उ " उपरता मैथुनाद् धर्मात् अष्टादशविकल्पब्रह्मोपेताः । आचा० २ श्रु० । उप सामीप्येन रत । व्यवस्थिते, "एत्थोवरए मेहावी सव्व पावं कम्मं झोसेसि" आचा० १ श्रु० ३ अ० २ उ० । " एत्थोवरए तं झोसमाणे अय सधीति अद्दक्खु " अत्रास्मिन् सावद्यारम्भे कर्त्तव्ये उपरत. संकुचितगात्र. । अत्र चार्हते धर्मे व्यवस्थिते उपरत. पापारम्भात् । आचा० १ श्रु० ५ अ० ।

उवरयदंड–उपरतदण्ड–पुं० प्राणिन आत्मानं वा दण्डयतीति दण्ड. । स च मनोवाक्कायलक्षण उपरतो दण्डो येषान्ते तथा । निवृत्तदण्डेषु, "उवरयदंडेसु अणुवरयदंडेसु वा सोवहिएसु वा णिरुवहिएसु वा " आचा० १ श्रु० ४ अ० १ उ०

उवरयमेहुण–उपरतमैथुन–त्रि० मैथुनाडुपरते, " से हु प्परिणा समयम्मि वट्टइ णिरास से उवरयमेहुणे चरे" आचा० २ श्रु०

उवराग–उपराग–पुं० उप–रञ्ज–घञ्–उपरञ्जने, ग्रहणे, "ससिरविगहोवरागविसमेसु" प्रश्न० २ द्वा० । " चंदसुरोवरागो गहणं भण्णइ " आव० ४ अ० । स्था० । ( गहणशब्दे वक्तव्यता वक्ष्यते )

उवरि–उपरि–अव्य० अग्रे इत्यर्थे, " मंदरचूलियाणं उवरि चत्तारि जोयणाइं " स्था० ४ ठा० । उत्तरकाले, " गहणाउवरि पयत्तो " ध० २ अधि० । उपरिष्टादर्थे, "उक्किट्ठवाससोगवरिमयमरणयविक्रमस्स " पंचा० २ विव० । भ० । प्रज्ञा० ।

उवरिजासा-उपरिजाषा-स्त्री० गुरोर्भाषणानन्तरमेव विशेषभाषणरूपायां भाषायाम्, "अंतरभासाए उवरिभासाए ज किंचि" ध० २ अधि०।

उव (प) रिम-उपरितन-त्रि० ऊर्द्धभवे, स्था० १० ठा०।

उवरिमउवरिमगेविज्ज-उपरितनोपरितनग्रैवेय-पुं० नवानां ग्रैवेयकाणामन्तिमे, स्था० ९ ठा०।

उवरिमउवरिमगेवेज्जविमाणपत्थड-उपरितनोपरितनग्रैवेयविमानप्रस्तट-पुं० नवमे ग्रैवेयकविमानप्रस्तटे, स्था० ९ ठा०।

उवरिमग-उवरिमक-पुं० उपरिमा एव उपरिमका। उपर्युपरिवर्तिदेवलोकनिवासिषु देवेषु, "बहुययरं उवरिमगा-उच्चं च सकप्पथूभाइ" आ० म० प्र०। विशे०।

उवरिममज्झिमगेवेज्ज-उपरिममध्यमग्रैवेय-पुं० अष्टमे ग्रैवेयकदेवे, स्था० ६ ठा०।

उवरिममज्झिमगेवेज्जविमाणपत्थड-उपरिममध्यमग्रैवेयविमानप्रस्तट-पुं० अष्टमे ग्रैवेयविमानप्रस्तटे, स्था० ६ ठा०।

उवरिमहिट्ठिमगेविज्ज-उपरिमाधस्तनग्रैवेय-पुं० सप्तमे ग्रैवेयके, स्था० ६ ठा०।

उवरिमहिट्ठिमगेविज्जविमाणपत्थड-उपरिमाधस्तनग्रैवेयविमानप्रस्तट-पुं० सप्तमे विमानप्रस्तटे, स्था० ६ ठा०।

उवरिमहेट्ठिल्ल-उपरिमाधस्तन-त्रि० ऊर्द्धाधोवर्त्तिनोः, "उवरिमहेट्ठिल्ले खुड्डुगपयरेसु" उपरिमो यमवधीकृत्योर्द्ध प्रतरवृद्धि प्रवृत्ता अधस्तनश्च यमवधीकृत्याधः प्रतरवृद्धि प्रवृत्ता ततस्तयोरुपरितनाधस्तनयोः क्षुल्लकप्रतरयोः शेषापेक्षया लघुतरयोः रज्जुप्रमाणायामविष्कम्भयोस्तिर्य्यग्लोकमध्यभागवर्तिनोः, । भ० १३ श० ४ उ०।

उवरिमागार-उपरिमाकार-पुं० उपरितनेषु उत्तमाङ्गाकाररूपेष्वाकारेषु, "तेसि णं दाराण उवरिमागारा सोलसविहेहिं रयणेहिं उवसोभिया" रा०।

उवरियतल-उपरितल-न० गृहस्य पीठबन्धकल्पे स्थाने, "जवूदीवप्पमाणा उवरियतलेण" भ० २ श० ८ उ०।

उवरिल्ल-उपरितन-त्रि० उपरिशब्दात्। मिल्लुल्लौ भवे ८।२। ६३। भवेऽर्थे नाम्नः परौ इल्ल उल्ल इत्येतौ मितौ प्रत्ययौ भवत इति भवार्थे इल्लप्रत्ययः। ऊर्द्धभवे, प्रा०। "उवरिल्ले तारारूवे चार चरति" स्था० ९ ठा०। अनु०। "उवरिम सुय वाएइ उवरिल्ल सुयं जहा दसवेयालियस्स आवस्सग" नि० चू० १९ उ०।

उवरुज्झंत-उपरुध्यमान-त्रि० उप-रुध्-कर्मणि-यक्-शानच्। समनूपाद्रुधेः ८।४।४७। इति उपः परस्य कर्मणि ज्झो वा पक्षे उपरुधिज्जंत। निरुध्यमाने, आव्रियमाणे, प्रा०।

उवरुद्द-उपरौद्र-पुं० यस्तु नारकाणामङ्गोपाङ्गानि भनक्ति सोऽत्यन्तरौद्रत्वादुपरौद्र इति। षष्ठे परमाधार्मिके, भ० ३ श० ६ उ०। तत्स्वरूप यथा-

> भंजंति अंगमंगाणि, ऊरू बाहू सिराणि करचरणा।
> कप्पेंति कप्पणीहिं, उवरुद्दा पावकम्मरया ॥ ७५ ॥

अथोपरुद्राख्या परमाधार्मिकाणामङ्गप्रत्यङ्गानि शिरोबाहूरुकादीनि तथा करचरणांश्च भञ्जन्ति मोटयन्ति पापकर्मण कल्पनीभिः कल्पयन्ति पाटयन्ति तन्नास्त्येव दु खोत्पादनं यत्ते न कुर्वन्तीति ॥ सूत्र० १ श्रु० ५ अ०। आव०। आ० चू०। प्रश्न०।

उवरुवरि-उपर्युपरि-अव्य० निरन्तरमर्थे, "उपरुवरितरंगदरियअतिवेगचक्खुपहमोच्छरंतं" प्रश्न० ३ द्वा०।

उवरोह-उपरोध-पुं० उप० रुध्-घञ्-आवरणे, अनुरोधे, व्याघाते, बृ० १ उ०। बाधायाम्, विशे०। संघट्टनादौ, "भूओवरोहरहिए" भूतानि पृथिव्यादीनि उपरोधस्तत्संघट्टनादिलक्षण। आव० ४ अ०। परचक्रेण वेष्टने,।

ग्रामादेरुपरोधे सति भिक्षाटनादिविधिमाह।

(सूत्रम्) गामगामस्स वा जाव रायहाणी य बाहिया। सेणं संनिविट्ठं पेहायं कप्पइ निग्गंथाण वा निग्गंथीण वा तद्दिवसं भिक्खायरियाए गंतुं पडिएत्तए नो से कप्पइ तं रयणिं तत्थेव उवायणाइ वित्तपजो खलु निग्गंथो वा निग्गंथी वा तं रयणिं तत्थेव उवायणाइ उवातिणंतं वा साइज्जति से दुहतो वि अक्कममा णो आवज्जइ वा उम्मासियं परिहारट्ठाणं अणुग्घाइयं ॥

अस्य सबन्धमाह।

> उवरोहभया कीरइ, सप्पगिव पुरवरस्स पागारो।
> तेण र सुत्तेण सुत्त, अणुअत्तइ उग्गहो जं व ॥

पूर्वसूत्रे प्राकार प्राकारपरिखा चोक्ता स च प्राकार सपरिखेऽपि पुरवरस्योपरोध परचक्रेण वेष्टन तद्भयात्क्रियते तेन कारणेन र इति पादपूरणे ततः सूत्रमिदमारभ्यते। यथावग्रह पूर्वसूत्रेष्वोऽनुवर्तते अन्यवच्छिन्न एवागच्छन्नस्तीति भाव। अतो यथा रोधके राजावग्रहमनुज्ञाप्य बहिर्निर्गम्यते प्रविश्यते वा तथाभिधीयते। अनेन सबन्धेनायातस्यास्य व्याख्या। सशब्दोऽथशब्दार्थे अथ ग्रामस्य वा यावद्राजधान्या वा यावत्करणान्नगरस्य वा खेटस्य वा इत्यादिपरिग्रहः। एतेषामन्यतरस्य बहि सेना राज्ञस्कन्धावारं रोधकं त्वासन्निविष्टं प्रेक्ष्य दृष्ट्वा कल्पते निर्ग्रन्थानां निर्ग्रन्थीनां वा तद्दिवस भिक्षाचर्यायां गत्वा प्रत्यागन्तुं नो नैव (से) तस्य विवक्षितस्य भिक्षोः कल्पते तां रजनीं तत्रैवोपाददाति उपाददन वा स्वादयाति स द्विधा आद्या निष्क्रामन् जितसीमान राजसीमान च विलुम्पन् आपद्यते चातुर्मासिक परिहारस्थानमुद्धातिकमिति सूत्रार्थ। अथ भाष्यविस्तरः।

> सेणादी गम्मिहिई, खित्तुप्पायं इमं वियाणित्ता।
> असिवे ओमोयरिय-भयचक्का णिग्गमे गुरुगा ॥

क्वचित् मासकल्पक्षेत्रे स्थितैर्ज्ञात सेनापरचक्रमत्र समायास्यति आदिशब्दादशिवमवमौदर्य म्लेच्छादिभय वा भविष्यति। एवमादौ कारणे पश्चादपि गमिष्यतीति कृत्वा अनागतमेव तत क्षेत्रान्निर्गन्तव्य कथ पुनरनागतं तज्ज्ञायत इत्याह क्षेत्रस्योत्पात परचक्राद्युपद्रवसूचकानि लिङ्गानीत्यर्थ। भ्रान्तिवद्दिक्चक्रवालं धूमायते। अकाले तरुण पुष्पफलानि जायन्ते महता शब्देन भूमिः कम्पते। समंततः क्रन्दितकूजिता शब्दा श्रूयन्ते इत्यादीनि मन्तव्यानि एव क्षेत्रोत्पातममु विज्ञाय निर्गन्तव्यम्। अथ न निर्गच्छन्ति ततोऽशिवे अवमौदर्ये बोधिकभये परचक्रागमने ज्ञातेऽपि निर्गमनमकुर्वतां चतुर्गुरुका।

> आणाइणो य दोसा, विराहणा होइ संजमायाए।
> असिवाहिम्मि परुविते, अधिकारो होइ सेणाए ॥

आज्ञादयश्च दोषाः विराधना च संयमात्मविषया भवति सयमविराधना शुद्धे भक्तपाने अलभ्यमाने अनेषणीयम्। गृहीयादित्यादिका आत्मविराधना परितापमहादुःखादिका यदा यावद्-

वादिकं प्रतिपद प्रस्थापितं भवति तदा तत्र सेनया अधिकारः कर्तव्यः। अशिवादिकं च प्रथमोद्देशके अध्वसूत्रे सप्रपञ्चं प्ररूपितमिति नेह भूयः प्ररूप्यते। तच्च परचक्रागमनं यथा ज्ञायते तथा दर्शयति ॥

अतिसयदेवत्तणिमि-त्तमादि अवितहपवित्ति मोत्तूणं।
निग्गमणा होइ पुव्वं, अणागते रुद्धवोच्छिण्णे ॥

अवधिज्ञानाद्यतिशयेन स्वयमेव ज्ञातं अपरेण वा अतिशयज्ञानिना पृष्टेन कथितं देवतया वा कयाचिदाख्यातं अविसंवादिना वा निमित्तेनाऽवगतम् आदिग्रहणेन विद्यामन्त्रादिपरिग्रहः। अथवा प्रवृत्तिर्वार्त्ता तामवितथां श्रुत्वा ततः क्षेत्रात्पूर्वमेव निर्गमनं कर्तव्यं भवति। अथानागतं न ज्ञातं सहसैव तन्नगरं रुद्धं पन्थानो व्यवच्छिन्नास्ततो न निर्गच्छेयुरपि। अथवा अमीभिः कारणैर्ज्ञातेऽपि न निर्गमिता भवेयुः।

गेलन्नरोगिअसिवे, रायदुट्ठे तहेव ओमम्मि।
उवही सरीरतेणग-णाते वि ण होइ णिग्गमणं ॥

ग्लानो ज्वरादिपीडितः कश्चिदस्ति तत्प्रतिबन्धेन गन्तुं न शक्यते (रोगित्ति) दुष्टरोगेण कुष्ठादिना कश्चिदत्यन्तमभिभूतः स परित्यक्तुं न पार्यते बहिर्वा अशिवं राजद्विष्टमवमौदर्यं वा विद्यते उपधिस्तेनाः शरीरस्तेना वा बहिर्गच्छत उपद्रवन्ति एतैः कारणैर्ज्ञातेऽपि परचक्रागमने निर्गमनं न भवति।

एएहि य अन्नेहि य, ण णिग्गया कारणेहि बहुएहिं।
अच्छंति होइ जयणा, संवत्ते णगररोधे य ॥

एतैरन्यैश्च बहुभिः कारणैर्न निर्गता भवेयुः ततस्तत्रैव तिष्ठतां संवर्ते नगररोधके च यतना कर्तव्या संवर्तो नाम परचक्रागमनं श्रुत्वा स्वरक्षार्थं यत्र जलदुर्गादिषु बहूनां ग्रामाणां जनः संवर्तीभूयैकत्र तिष्ठति। नगररोधकः प्रतीतस्तत्र संवर्ते यतनामाह।

संवट्टम्मि तु जयणा, भिक्खे भत्तट्ठणा य वसहीए।
तम्मि भए संपत्ते, अवाउडे क्कण वट्टंति ॥

संवर्ते तिष्ठतां भैक्ष्ये भक्तार्थतायां वसतौ च यतना कर्तव्या। तस्मिंश्च परचक्रलक्षणे भये संप्राप्ते अपावृता एके न तिष्ठन्तीति निर्युक्तिगाथा समासार्थः।

साम्प्रतमेनामेव विवृणोति।

बइयासु व पल्लीसु व, भिक्खं काउं वसंति संवट्टे।
सव्वम्मि रज्जखोभे, तत्थ व य जाणियंडिल्ले ॥

संवर्ते अभिनवसन्निविष्टतया सचित्तः पृथिवीकायो भवतीति कृत्वा भिक्षां हिण्डन्ते। किं तु पूर्वस्थितासु व्रजिकासु वा पल्लीषु वा भिक्षां कृत्वा तत्रैव स्थण्डिले भुक्त्वा रात्रौ संवर्ते समागम्य वसन्ति। अथ सर्वस्यापि राज्यस्य क्षोभस्ततो व्रजिकादिकमपि नास्ति तदा तत्रैव संवर्ते यानि तेषु भिक्षां हिण्डन्ते। स्थण्डिलं न सन्ति स्थण्डिले स्थितानि तत इयं यतना।

पोराणियमलुअडगे, गहट्ठं परमत्तोवरि पगासमुहे।
सुरसादीण अअंजे, न य चिता वा भित्राघंति ॥

तदनन्तमनार्द्रं आर्द्रं प्रपतति पृथुकाय कायविराधना भवेदिति मत्वा याः पृपतिका ये च सक्तवो यच्च शुष्कौदनं पक्वमांसिकं पृथुकस्य पटलोपरिस्थिते प्रकाशमुखे भाजने गृह्णन्ति अथ शुष्कादीनां गमो न नयति। आदिग्रहणे स्वगतानेकभेदसूचको नच तदा मानं पातयन्ति तत ग्रामेण गृह्यमाणेन यत्र पटलकादौ भावदोषो नमन्त मनस्त अवतरन्ति। गतं भिक्षाद्वारम्।

अथ भक्तार्थताद्वारमाह।

पच्छन्ना सति वहिया, अह सभयं तेण चिलिमिली अंतो।
असतीए व सभयम्मि व, धरेंति अद्धेयरे भुंजे ॥

संवर्तस्यान्तः प्रच्छन्ने प्रदेशे भक्तार्थं न कर्त्तव्यं अथान्तः प्रच्छन्नं नास्ति ततः संवर्तस्य बहिर्गत्वा समुद्देष्टव्यम् अथ बहिः सभयं ततोऽन्तः संवर्तस्याभ्यन्तर एव चिलिमिलिकां दत्वा भोक्तव्यम्। अथ नास्ति चिलिमिलिका सभये वा सा न प्रकटीक्रियते। ततोऽर्द्धे साधवो भाजनानि धारयन्ति। इतरे द्वितीया आर्द्रकमशकेषु भुञ्जते।

काले अपहुच्चंते, भए व सत्थे व गंतु कामम्मि।
कप्पुपरि भोयणाइं, काउं इक्को उ परिवेसो ॥

अथ वारकेण भुञ्जानानां कालो न पूर्यते भये वा त्वरितं भोक्तव्यं यो वा संवर्ते सार्थः स गन्तुकामस्ततः कल्पस्योपरि भोजनानि कृत्वा स्थापयित्वा सर्वेऽपि कमठकादिषु भुञ्जते एकश्च तेषां सर्वेषामपि परिवेषयेत्।

पत्तेगं वडुगा मंति, मज्जिसगादेकओ गुरू वीसुं।
ओमोणकप्पकरणं, अन्ने गुरुणेकतो वा वि ॥

प्रत्येकं यदि सर्वेषां बटुकान् निमन्त्रितास्ततो ये मज्जिलकाः परस्परं सहोदरा भ्रातरः। आदिशब्दादन्येऽपि ये प्रीतिवशेनैकत्र मिलन्ति त एकतः समुद्दिशन्ति गुरवोऽपि विष्वग् पृथक् भुञ्जते यदा सर्वेऽपि भुक्ता यस्तत्रावमो लघुस्तेन कमठकानां कल्पकरणं विधेयम्। गुरूणां समक्षं कमठकं तौ सह न मील्येते अन्यस्तस्य कल्पं पृच्छति। अपूर्यमाणेषु साधूनां गुरोश्च कमठकान्येकतोऽपि कल्पयन्ति।

भायणस्स कप्पकरणं, हेट्ठिल्लगमुत्तकडुयरुक्खे य।
ते अ सति कमठकप्पर, काउमजीवे पदेसे य ॥

भाजनस्य कल्पकरणं दग्धभूमिकायां गोमूत्रभाविते वा भूभागे कटुकवृक्षस्याधस्ताद्वा कर्तव्यम्। तेषां दग्धादिस्थण्डिलानामभावे कमठकेषु घटादिकस्योपरि वा भाजनकल्पं कृत्वा तत्र कल्पानकमन्यत्र नीत्वा स्थण्डिले परिष्ठापयन्ति। गते वा संवर्ते पश्चात्परिमलिनजीवप्रदेशेषु परिष्ठाप्यं सभये वा त्वरमाणाः। स्थण्डिलस्य वा अभावे धर्माधर्मास्तिकायसंबन्धिषु जीवप्रदेशेषु परिष्ठापयाम इति बुद्धिं विधाय अस्थण्डिले परिष्ठापयन्ति। गतं भक्तार्थताद्वारम्। वसतिद्वारमाह।

गोणादीवाघातो, अलब्भमाणेव बाहिरसमाणे।
वातदिसिसावयभए, अ वा उभा तेण जग्गणता ॥

संवर्तस्यान्ते निराबाधे परिमिलिते प्रदेशे वसन्ति अथ तत्र गवादिभिरितस्ततस्त्वरमाणैर्व्याघातो यद्वा तत्र प्रासुकः प्रदेशो न लभ्यते ततो बहिर्वसतौ यतो घ्राणिभय तं भूभागं वर्जयित्वा वसन्ति। अथ तत्र श्वापदभयं ततो यस्यां दिशि वातस्तां वर्जयन्ति येन च परचक्रभयेन तत्र संवर्ते प्रविष्टास्तस्मिन् प्राप्ते सर्वमुपकरणं गुपिले प्रदेशे स्थापयित्वा स्वयमेकतोऽन्यत्र प्रदेशे अपावृताः कायोत्सर्गेण तिष्ठन्ति। स्तेनरक्षणार्थं च वारकेण रजनीसकलामपि जाग्रति अथ कस्मादपावृतास्तिष्ठन्तीत्याह।

जिणलिंगमप्पडिहयं, अवाउडे वा वि दिस्स वज्जंति।
थंभणिमोहणिकरणं, कडजोगे वा भवे करणं ॥

अचेलतालक्षणं जिनलिङ्गमप्रतिहतमेव स्थितानां न कोऽप्युपद्रवं करोतीति भावः। अथवा ते स्तेना अपावृतान् दृष्ट्वा स्वयमेव वर्जयन्ति स्तम्भनीमोहनीविद्याभ्यां च तेषां स्तम्भनमोहने कुर्वन्ति

यो वाकृतयोग' सहस्त्रयोधी तेन तादृशे आकम्पे गच्छसरक्षणार्थं करणं शिक्षणं तेषां विधेयम् । गतं संवरद्वारम् ।

अथ नगरारोधकद्वारमाह-

संवट्टणिग्गयाणं, णियट्टणे अट्टरोहजयणाए ।
वसही भत्तट्ठणया, थंडिल्लविगिंचणो भिक्खो ॥

ये मासकल्पप्रायोग्या क्षेत्रान्निर्गत्य सवर्त्तेस्थितास्ते सवर्त्तनिर्गता उच्यन्ते तेषां तत उत्थितानामवस्कन्दादिभयेन भूयोऽपि सवर्त्तान्नगरं प्रतिनिवर्तना भवति । यद्वा ग्लानादिभि कारणै प्रथममेव नगरान्न निर्गतास्ततो नगरवसतावष्टौमासान् रोधके यतनया वस्तव्यं । भवति सा च यतना वसतिभक्तार्थनथण्डिल्लविवेचनभैक्ष्यविषया कर्तव्या । तत्र वसतियतनां तावदाह-

हाणीजाते कट्टा, दो दारा कडगचिलिमिली वसभा ।
तं चेव एगदारे, मत्तगसुविणं व जयणाए ॥

रोधके तिष्ठद्भिरष्टौ वसतय प्रत्युपेक्षणीयास्तासु प्रत्येकमृतुबद्ध मास मासमासितव्यं अष्टानामलाभे सप्त एव चान्या तावद्वक्तव्यं यावत् सयतानां सयतीनां च ( एकट्ठति ) एकैव वसतिर्भवति । तत्रैकस्यां वसतौ स्थितानां द्वे द्वारे भवत' । अथान्तराले कटकचिलिमिलिका वा वृषभा कुर्वन्ति । अथ द्वारद्वय न भवति तत एकद्वारे तमवधिं कुर्वन्ति । कायिकभूमेरप्यभावे मात्रकेण यतन्ते यतनया च स्वप्नं कुर्वन्ति । इति निर्युक्तिगाथा समासार्थ ।

अथ भाष्यकार एनामेव विवृणोति-

रोहे उ अट्ठमासे, वासासु सुजूमितोणि वा जंति ।
परवलरुद्धेवि पुरे, हावितिणि मास कप्पंतु ॥

अष्टावृतुबद्धिकान् मासान् रोधयित्वा रोध कृत्वा ततो वर्षासुनृपा स्वभूमिमात्मीयराज्यमुव गच्छन्ति साधवश्च रोधके वसन्त परबलरुद्धेऽपि पुरे मासकल्प न हापयन्ति किंतु तत्र प्रथमत एवाष्टौ वसतयोऽष्टौ भिक्षाचर्या प्रत्युपेक्षणीया । अथाष्टौ न प्राप्यन्ते तत.

भिक्खस्स व वसहीए, असती सत्तेव चउरो जा ।
वेकालंनाइंभे, एक्केक्गस्साणगाउ संजोगा ॥

भैक्ष्यस्य वा वसतेर्वा असति सप्त प्रत्युपेक्षणीयास्तदप्राप्तौ षडादिपरिहाण्या चतस्रो यावदेका प्रत्युपेक्षणीया । किमुक्त भवति वसतयो भिक्षाचर्याश्च यद्यष्टौ न प्राप्यन्ते तत एकैकपरिहाण्या यावदेका वसतिरेकाभिक्षाचर्या । अत्र च एकैकस्यालाभे अलाभे वा अनेके सयोगा भवन्ति । तथाहि अष्टौ वसतयोऽष्टौ भिक्षाचर्या, अष्टौ वसतय सप्तभिक्षाचर्या, अष्टौ वसतय षड्भिक्षाचर्या, एव यावदष्टौ वसतय एकाभिक्षाचर्या, एवमष्टौ भङ्गा भवन्ति एते च वसतेरष्टकमभ्युवता लब्धा सप्तकादिभिरप्येकैकपर्यन्तैरेवमेवाष्टावष्टौ भङ्गा लभ्यन्ते सर्वसख्यया भङ्गकानां चतु'षष्टिरुत्तिष्ठते । चतुष्षष्टितमश्च भङ्गक एका वसति एका भिक्षाचर्येति लक्षण । साचैका वसति सयतानां सयतीनां च पृथक् भवति । अथोभयेषामपि योग्या वसति प्रत्येक नावाप्यते तत एकत्रापि वस्तव्यम् । तत्र यतनामाह-

एगत्थ वसंताणं, पिह दुवारासतीयमयकरणं ।
मज्झेण कडगचिलिमिलि, तेसु न उ थेरखुड्डीतो ॥

सयतानां सयतीनां च एकत्र वसतामिय यतना ये द्विविचतु शालादिकं पृथक्द्वारं तद्गृह तदा तत्रान्तरे कटक चिलमिलीं वा दत्वा तिष्ठन्ति । पृथक्द्वारस्याभावे ( सयकरणति ) स्वयमेव कुड्य भित्वा द्वितीय द्वारं कर्त्तव्यं गृहमध्ये च कुड्याभावे कटकचिलिमिलिका वा दातव्या तयोश्च कटकस्य चिलिमिलिकाया वा आसन्नयोरुभयो पार्श्वयोर्भागयोरेकस्मिन् स्थविरा साधवो द्वितीये च क्षुल्लिका सयत्यो भवन्ति । एतच्चाग्रे व्यक्तीकरिष्यते ॥

अथ तत्रैव 'एगदारेत्ति' पदं व्याख्याति-

दारदुयस्स तु असती, मज्झे दारस्स कडगजुत्ती वा ।
णिक्खमपवेसवेला, ससद्दपिंडेण सज्झातो ॥

यदि द्वारद्वयं न भवति स्वय च पृथक्द्वारं कर्त्तुं न शक्यते । ततस्तस्यैकद्वारस्य मध्ये कटक पोत्तिकां वा भित्तिमिर्वा दत्वा द्विधा विभजन विधेयम् । तत्रार्द्धेन साधवो निर्गच्छन्ति अर्द्धेन संयत्य इति । अथ संकीर्णे सा वसति नवा विभक्तु शक्यते तत परस्पर निर्गमप्रवेशवेलायां वर्जयन्ति यस्यां वेलायां सयता निर्गच्छन्ति तस्यां न संयत्य इति निर्गच्छन्तश्च शब्दं कुर्वन्ति पिण्डे न च स्वाध्याय कुर्वन्ति शृङ्गारकथां न कुर्वन्ति । न वा पठन्ति । अथ स्वप्न च यतनयेति पदं व्याचष्टे ॥

अंतम्मि व मज्झंम्मि व, तरुणी तरुणा य सव्वबाहिरतो ।
मज्झे मज्झिमथेरा, खुड्डीखुड्डा य थेरा य ॥

यास्तरुण्यस्ता अन्ते वा मध्ये वा भवन्ति तरुणास्तु सर्वे बाह्यत कर्त्तव्या ततो मध्ये मध्यमा स्थविरा क्षुल्लिकाश्च साध्व्यस्तत क्षुल्लका स्थविराश्चशब्दान्मध्यमास्तरुणाश्च भवन्तीत्यक्षरार्थ भावार्थस्तु वृद्धविवरणादवगन्तव्य । तच्चेदम् । "तरुणीओ अंते वा सुविज्जति मज्झे व तत्थ अंते ताव भण्णइ एगम्मि तरुणी उवविज्जति तासिं आरता मज्झिमातो तासिं आरतो थेरीउ तासिं आरतो खुड्डीतो खुड्डीण आरतो थेरा थेराण आरतो खुड्डा । तेसिम्मि आरतो मज्झिमा तेसिं आरतो तरुणा एव नवे तरुणीओ तरुणा य अंते जाया इयाणिं जइ मज्झे तरुणीओ उवविज्जति तो तासिं उभयतो मज्झिमिया उ तासिं बाहिं थेरीओ तासिं बाहिं थेरा तासिं उभयतो खुड्डीओ तासिं परिक्खोवण थेरा तेसिं उभओ खुड्डा तेसिं बाहिं मज्झिमा तेसिं परिखोवणतरुणाए सारत्ति वसंताण जयणत्ति ॥

अथ मात्रकपदं व्याख्याति-

पत्तेयसमणदिक्खिय-पुरिसा इत्थी य सव्वएगत्थ ।
पच्छण्णकडगचिलिमिलि, मज्झे वसभा य मत्तेणं ॥

यत्रोपाश्रयाणामल्पतया राजकीय आदेशो भवेत् ये केचित्पाषण्डिनस्ते सर्वेप्येकत्रैव तिष्ठतामिति तत्र यदि प्रत्येका स्त्रीवर्जिताः निर्ग्रन्था शाक्यादयो दीक्षितपुरुषा सर्वेप्येकस्यां वसतौ स्थिता याश्च पाषण्डिन्य स्त्रियस्ता अपि सर्वा एकत्र स्थितास्तत इयं यतना । य प्रच्छन्न प्रदेशस्तत्र साधुभि साध्वीभिश्च स्थातव्यं प्रच्छन्नस्याभावे मध्ये कण्टकं चिलिमिलिकां वा वृषभा कुर्वन्ति कायिकभूमेरभावे दिवा रात्रौ च मात्राकरणे वृषभा यतन्ते ।

पच्छन्नअसतिनिण्हग, बोडियभिक्खूआसोयसोया य ।
पउरदव्वकडुगादि, गरहा य मज्झंतर एको ॥

प्रच्छन्नस्य कण्टकचिलिमिलिकयोश्चाभावे निह्नवेषु तिष्ठन्ति तदभावे बोटिकेषु तदप्राप्तौ भिक्षुकेषु एतेष्वपि पूर्वमशौचवादिषु च स्थिता आत्मनाऽऽदिषु क्रियासु प्रचुरद्रव्येण कार्यं कुर्वन्ति कटुक कमठक तत्र भुञ्जते आदिशब्दात्प्रकारेणापि येन ते शौचवादिनो जुगुप्सां न कुर्वन्ति तस्य परिग्रह । एवं प्रवचनस्यागर्हा परिहृता भवति सान्तर चोरादिप्रा भुञ्जते ( एगोत्ति ) एक क्षुल्लकादि कमठकानां कल्प करोति ।

अथ पत्तेयसमणदिक्खियत्ति पदं व्याख्याति ।

पासंडी पुरिसाणं, पासंडित्थीए वा वि पत्तेगो ।
पासंडित्थियमाएव, एक्कतो होंति मा जयणा ॥

पाखण्डिस्त्रीणां पाखण्डिपुरुषाणां वा प्रत्येकं स्थितानां पाखण्डिस्त्रीपुरुषाणामेकतः स्थितानां वा इय यतना भवति ।

जे जह असोयवादी, साधम्मी वा वि जत्थ वाहिं वा ।
मा णिहुयाय हुदकालेण, वुग्गहोणावसज्झाओ ॥

ये यथा अशौचवादिनो ये च जीवादिपदार्थास्तिक्यवादित्वेनैकवाक्यत्वेन च साधूनां साधर्मिकास्तेषु तेषां मध्ये साधुभिर्वासः कर्तव्यः यदा च तत्र द्वयोरपि शैल्ययोः शुरूकालो भवति तदा निभृता निर्व्यापारा भवन्ति । इदमेव व्याचष्टे न विग्रहाः स्वपक्षेण परपक्षेण वा सह कलहो न कर्तव्यो नैव च तदानीं स्वाध्यायो विधेय । गता वसतियतना । भक्तार्थयतनापि पउरदवकुडुगाई इत्यादिना तदेवोक्ता ।

अथ स्थण्डिलयतनामाह ।

तं चेव पुव्व भणितं, पत्तेयं दिस्समाण कुरुकुयाय ।
थंडिल्लसुक्खहरिए, पवायपासे पदेसेसु ॥

स्थण्डिलं तदेव पूर्वभणितम् "अणावायमसंलोए" इत्यादिना यथा पीठिकायामुक्त तथैवात्रापि मन्तव्यम् । प्रथमस्थण्डिलालाभे शेषेषु गच्छतां प्रत्येक मात्रकग्रहण भवति सागारिकेण च दृश्यमाने कुरुकुर्या कर्तव्या एवं वहि स्थण्डिले लभ्यमाने यतना अथ वहिर्न लभ्यते निर्गन्तु ततो यन्नगराभ्यन्तरे स्थण्डिलमनुज्ञातं तत्र यानि तृणानि शुष्कानि तेषु व्युत्सृजति तेषामभावे दरमलिनेषु मिश्रेषु तदप्राप्तौ हरितेषु सचित्तेष्वपि व्युत्सृजति । अत्र च प्रत्येकानन्तस्थिरास्थिरादियतना सर्वाऽपि कर्तव्या । यथैव निर्युक्तौ भणिता । अथ प्रपाते गर्तायां नदीतटे प्राकारोपरि वा राज्ञाऽनुज्ञात तत एतेषां पार्श्वे व्युत्सृजन्ति यदि सर्वथैव स्थण्डिलं न लभ्यते अथश्च भूमिं न पश्यन्ति ततो गर्तादिप्रदेशेष्वपि व्युत्सृजन् शुरूः "अथ पत्तेयदिस्समाणो कुरुपायत्ति" पद व्याख्याति ॥

पढमा सइ असमाणुम्मे, तरणे गिहियाणवादि आभोगं ।
पत्तेयमत्तकुरुकुय, दिवं च पउरं गिहत्थेसु ॥
तेण परं पुरिसाणं, असोयवादीणवच्चआवातं ।
इत्थी नपुंसकेसु वि, परं मुहो कुरुकुया सेव ॥

गाथाद्वयमपि पीठिकायां व्याख्यातम् एपा उच्चारयतना भणिता ॥ अथ शरीरे विवेचनयतनामाह–

पच्छण्णपुव्वभणियं, विदिसायंथंडिल्लसुक्कहरिए य ।
अगडवरणदीहिय, जलाए पासे पदेसेसु ॥

यद्यसौ कालं गत साधुस्तत्र केनापि न ज्ञातस्ततोऽन्तर्मुहूर्तप्रमाणे उपयोगकाले अतीते अन्यलिङ्ग कृत्वा प्रच्छन्नमल्पसागारिक स्थण्डिले परिष्ठाप्यते अथ ज्ञातस्तदा ( पुव्वभणियत्ति ) यदि नगराद्विर्गमो न लभ्यते प्रत्यपायो वा निर्गतानां भवति ततो नगराभ्यन्तरे पूर्वमिहैव मासकल्पप्रकृते परिष्ठापनिका निर्युक्तौ वा यो भणितो विधिस्तेनोपाश्रये वाऽपरदक्षिणस्यां दिशि परिष्ठापयन्ति । अथ तस्यां न लभ्यते ततो राजविनीर्णमनुमानं यत् स्थण्डिल तत्र परिष्ठापयन्ति । अथ स्थण्डिले हरितानि भवन्ति तत शुष्कतृणेषु तदभावे मिश्रेषु तदप्राप्तौ हरितेष्वपि परिष्ठापयन्ति । अथ राज्ञामिदितं सर्वैरपि पापण्डिभिरगडे गर्तायां शवं परित्यक्तव्यं प्रकारवरण्डके वा दीर्घिकायां वा नद्यां वहन्त्यां ज्वलति प्रक्षेप्तव्यं तत एतेषां पार्श्वे परिष्ठापयन्ति । अथ न लभ्यते पार्श्वतः परित्यक्तु ततो धर्मास्तिकायादिप्रदेशेषु परिष्ठापयामीति बुद्धिं कृत्वा तत्रैव प्रक्षिपन्ति । अथ राज्ञा वितीर्णे स्थण्डिले परिष्ठापनाविधिमाह ।

अन्नाए परलिंगं, उवओगंवा तुलेतुमामेत्थं ।
णातं उड्डाहो वा, अयसो पत्थार दोसो वा ॥

यद्यसौ तत्राज्ञातस्तदा परलिङ्गं क्रियते तच्चोपयोगाद्धा सान्तर्मुहूर्तलक्षण तोलयित्वा प्रतीक्ष्य कर्तव्यं नो मिथ्यात्वं गमिष्यामीति कृत्वा यो जनज्ञातस्तत्र परलिङ्गं न करोति मा उड्डाहो भवेत् उड्डाहो नाम एते मायावन्तः पापा वा न परोपघातकारिणश्चेति इत्थं तेषामुड्डाहे जायमाने प्रवचनस्याप्ययशःप्रवादो भवति प्रस्तारदोषश्चकुलगणसंघविनाशलक्षण उपजायते । एतद्दोषपरिहरणार्थं स्वलिङ्गेनैव परिष्ठाप्यते ।

अथ भिक्षाद्वारमाह–

न वि को वि कंचि पुच्छति, णितंव हिअंव अंतो वा ।
आसंकित पडिसेहो, णिक्कारणकारणे उ जतणं य ॥

बोधके अन्तर्नगराभ्यन्तराद्वहिर्निर्गच्छन्तं वहिः कटकाद्वा नगरान्तःप्रविशन्तं न कोऽपि कंचित्पृच्छति । तत्र स्वेच्छया वहिरन्तर्वा भिक्षामटन्ति । यत्र पुनराशङ्कित क एष कुतो वा आगतो वेश वहिर्गत सन् किमपि कथयिष्यति किमर्थं वा निर्गच्छति । ईदृशे आशङ्किते निष्कारणे प्रतिषेधे न गन्तव्यं कारणे तु यतना वक्ष्यमाणा भवति । इदमेव भावयति ।

पउरन्नपाणगमणा, चउरो मासा हवंति णुग्घाया ।
मोत्त इयरे य चत्ता, कुलगणसंघाय पत्थारे ॥

प्रचुरान्नपाने लभ्यमाने यदि वहिर्गच्छति तदा चत्वारो मासा अनुद्धाता भवन्ति आज्ञादयश्च दोषास्तेन साधुना स स्वकीय आत्मा इतरे वाऽभ्यन्तरवर्तिनः साधव परित्यक्ता भवन्ति तत्र स वहि सैन्ये गत पृच्छ्यमानेऽपि यदा किमपि नाख्याति तदा चारकोऽयमिति मत्वा गृह्यते । अभ्यन्तरवर्तिनस्तु अमीषां सहायिनः प्रव्रजितोऽयं निर्गतस्तेन भेद प्रदत्त इति कृत्वा गृह्यन्ते । एवं कुलगणसंघप्रस्तारोऽपि राज्ञा क्रियते ततो निष्कारणे न गन्तव्यम् ॥

अतो अलब्भमाणे, असणमाईसु होंति जइतव्वं ।
जावंतिए विसोधी, असव्वमादी अलाभे वा ॥

अन्तर्मध्ये प्रासुकैषणीये अलभ्यमाने पञ्चकपरिहाणिक्रमेणैषणादिषु दोषेषु नगराभ्यन्तर एव यतितव्यं यावत् यावन्तिकादिरूपेषु विशोधिकोटिदोषेषु यतमानश्चतुर्गुरुप्राप्तो भवति तथाप्यलम्भे अमात्यमादिशब्दाद्वा न श्रेष्ठ्यादीन् वा प्रज्ञापयन्ति ते यद्यविशोधिकोटिदोषैर्दुष्ट प्रयच्छन्ति तदा तदपि गृह्यते न पुनर्वहिर्गन्तव्यम् । अथ तथापि न लभ्यते ततः ॥

आपुच्छित आरक्खित, सेट्ठी सेणावती रायाणं ।
णिग्गमणविट्ठरूवे, भामा य तहिं असावज्जा ॥

आरक्षिकः कोट्टपालस्तमागच्छन्ति । वयमत्र सस्तरामस्ततो वहिर्निर्गच्छता द्वारं प्रयच्छत यद्यसौ ब्रूयात् मा निर्गच्छत । अहं भवतां पर्याप्तं दास्यामि ततो गृह्यते । अथ ब्रूयात् नास्ति मे किंचिद्दक्तं दातव्य युष्मांश्च विसर्जयन् शङ्के विभेमि । ततः श्रेष्ठिनं पृच्छत तत श्रेष्ठिनमापृच्छन्ति । एव सेनापतिममात्यं राजानं वा पृच्छन्ति ततो यदि राज्ञाऽपि विसर्जितास्तदा निर्गम-

न कुर्वन्ति द्वार पालानां च साधवो दर्श्यन्ते यथा एतान् दृष्टरूपान् कुरुत भिक्षाग्रहणार्थमेते निर्गमिष्यन्ति प्रवेशयिष्यन्ति वा न किंचिद्भवद्भिर्वक्तव्यम्।तत्र च बहिर्गतैरसावद्या भाषा भाषितव्या। अमुमेवार्थं स्पष्टयति ।

मा वच्चह दाहामि, संकाए वाणविंति निग्गंतुं ।
दाणम्मि होइ गहणं, अणुसट्ठादीणि पडिसेधे ॥

आरक्षिकादयः पृष्टाः सन्तो भणन्ति मा व्रजत वयं भक्तं दास्यामहे ते च भेदशङ्कया साधूनां निर्गन्तु न ददति ततो यद्यविशुद्धमपि ते प्रयच्छन्ति तदा तस्य ग्रहणं कर्तव्यम्। अथ पडिसेहेत्ति भक्त न च निर्गन्तु ददति ततोऽनुशिष्टिधर्मकथादीनि प्रयुज्यन्ते ॥

बहिया वि गमेऊणं, आरक्खितमाहि णो तहिं णिंति ।
हितणट्ठचारिगाही, एवं दोसा जढा होंति ॥

बहिरपि गता एवमेवारक्षिकश्रेष्ठिप्रभृतीन् गमयित्वा प्रज्ञाप्य तत्र भिक्षामटन्ति एव कुर्वद्भिर्हृतनष्टचारिकादयो दोषाः परिहृता भवन्ति । ये साधवो बहिः प्रस्थाप्यन्ते ते अमीभिर्गुणैर्युक्ता भवन्ति ॥

पियधम्मे दढधम्मे, संबंधविकारिणा करणदक्खे ।
पडिवत्तीसु य कुसले, तब्भूमे पेसए बहिता ॥

प्रियधर्मणो दृढधर्मणश्च प्रतीतान् ( सवधात्ति ) येषामन्तर्बहिश्च स्वजनसबन्धो भवति । अविकारिणो नाम नोद्भटवेषा न वा कन्दर्पशीलास्तान् करणदक्षान् भिक्षाग्रहणादिक्रियासु परिच्छेदवत । प्रतिपत्ति । प्रतिवचनप्रदान तत्र कुशलान् ( तभूमित्ति ) यो बहिः स्कन्धावार आगतस्तस्य भूमौ जातवर्द्धितान् एवविधान् साधून् बहिः प्रेषयेत् । 'भासायतहिं असेवेज्जति' पद व्याचिख्यासुराह—

केवति य आसहत्थी, जोधा धण्णं वि कित्तियं णगरे ।
परितंतमपरितंती, नागासेणावणविजाणे ॥

बाह्यस्कन्धावारसत्काः पृच्छेयुः नगराभ्यन्तरे कियन्तोऽश्वा हस्तिनो योधा वा सज्जिताः सन्ति धान्य वा कियन्नगरेऽस्ति नागराः पौरा सेना वा परितान्ता रोधकेण 'ठियाउपरितातो अतुठिया ' एव पृष्टे वक्तव्य न जानेऽहम् । ब्रवीरन् तत्रैव च सन्तः कथं न जानीत । साधवो ब्रुवते ॥

सुणमाण वि मो सज्झा-यज्झाणनिरुमा उत्ता ।
सावज्जं सोऊण वि, णहु लब्भाइक्खिओ जतिणो ॥

वय स्वाध्यायध्यानयोर्नित्यमायुक्ता सन्त शृणुतोऽपि वार्त्तातर न शृणुम । अपि च सावद्य श्रुत्वाऽपि यतीनामन्यस्याख्यातु न लभ्यते। न युज्यते। अन्त प्रविष्टस्य तु यदि कोऽपि पृच्छति तदा वक्तव्यं भिक्षोपयोगेन न ज्ञातमन्तर्बहिश्च साधारणमिदमुत्तर"शृणोति बहु कर्णाभ्यामक्षिभ्यां बहु पश्यतिान च दृष्ट श्रुत सर्व भिक्षुराख्यातुमर्हति" एवं भैक्ष्यमटित्वा पर्याप्ते सजाते सति किं कर्तव्यमित्याह ॥

भत्तट्ठाणगलोए, मोत्तूणं संकिताइ ठाणाइ ।
सच्चित्ते पडिसेधो, अतिगहणं दिट्ठरूवाणं ॥

भक्तार्थं न वा जनमालोके प्रकाशे भवति । यानि शङ्कितानि-चारिकादिशङ्काविषयभूतानि यानि गुपिलानि स्थानानि तानि मुक्त्वा तेषु न विधेयमित्यर्थ । यश्च सचित्त प्रव्राजितुमुपतिष्ठते तत्र प्रतिसिद्ध स न प्रव्राजयितव्य किं तु ये पूर्व द्वारपालेन दृष्टरूपाः कृतास्तेषामेवान्तिकगमन भूय प्रवेशो भवति एषा बहुर्थसंग्राहिका निर्युक्तिगाथा । अथैनां भाष्यकृद्विवृणोति ।

सावगसण्णि ट्ठाणे, न वि ते कतरं इए य भत्तट्ठं ।
ते समतीआ लोए, बहुगकुरुयादिसिं चेव ॥

यत्र श्रावकः श्राविका वा एतद्द्वयमपि यदि त साधुसामाचारीकुशलं तत्र स्थाने भक्तार्थयन्ति तदलाभे यत्रैकतरं साधुं सामाचारिचतुर तत्र समुद्देष्टव्यमेकतरस्यापि खेदज्ञस्याभावे इतरेषु अखेदज्ञेष्वपि श्रावकेषु यथा भद्रकेषु वा भक्तार्थयितव्यम् । तेषामभावे अटव्यामालोके अशङ्कनीये सप्रकाशे प्रदेशे समुद्दिशति । बहुककुरुकुयादिकाऽनुरूपा सैव यतना कर्त्तव्या । शैक्षस्तु यदि कोऽप्युपतिष्ठेत तदा न प्रव्राजनीय । अथ कोऽपि स्वयमेव लिङ्ग कृत्वा प्रविशति ततो वक्तव्य वय गणितानामाङ्किता एव द्वारेण निर्गतास्ततस्त तत्र गत सन् गृहीत्वा विनाशयिष्यत एव मुक्तेऽपि यद्यसावागच्छति तदा द्वार प्राप्ता द्वारपाल भणन्ति न जानीमो वय कमप्येनम् । अस्मानेतान् दृष्टरूपान् कुरुत ।

ततुट्टियवाहट्ठो, पुणरवियेत्तु अधिति पज्जत्तं ॥
अणुसट्ठीदारोहे अणो वसती जयं अंतं ॥

एव भक्तपानं पर्याप्त गृहीत्वा भक्तार्थिता कृता न जना वाह्यमितास्तद्भक्तन्यूनभाजना पुनरपि नगरं अधियन्ति । प्रविशन्ति । यदि द्वारस्थो द्वारपालो मार्गयति पैद्वालिकां मे यच्छत ततोऽनुशिष्टिः कर्त्तव्या । अन्यो वा यदि कोऽप्यनुकम्पया ददाति । तदा न वारणीय तस्या सत्यभावे यदन्नं प्राप्त तद्दीयते।

रुद्धे वोच्छिन्ने वा-होरोह दो वि कारणं दीवे ।
इहरा वारियसंका, अकालउरवेदमादीसु ॥

अथ निर्गतानां द्वार रुद्ध स्थगित गमागमौ वा व्यवच्छिन्नौ ततस्ततो द्वयेऽपि आभ्यन्तरा बाह्याश्च साधवो द्वारस्थस्य मार्गकारणं दीपयन्ति । आभ्यन्तरा ब्रुवते अस्माक साधवो निर्गता बहिश्च-रुद्धा बाह्या ब्रुवते वय कारणे भिक्षायां बहिर्निर्गता परं द्वाराणि निरुद्धानि इतरथा यदि न कथयन्ति ततोऽकाले रात्रौ वा विकाले वा यद्यवस्कन्दो धाटि तदादीनि तदा चारिकशङ्का भवेत् ये साधवो निर्गतास्तेऽत्र न प्रविष्टास्ते न चारिकास्ते आगता आसीरन्निति ।

बाहिं वुचसिउकामं, अंतिणती पेह्लणा अणिच्छंते ।
गुरुगा पराजयजए, बितिय रुद्धे व वोच्छिन्ने ॥

बहिर्निर्गतानां कोऽप्येकश्चिन्तयेत् युक्तोऽस्मिन्नेववारके वासो न भूय प्रविशामि अत्र सूत्रमवतरति एव बहिर्वसन्त प्रज्ञापयन्ति आर्य ! सूत्रे प्रतिषिद्ध वर्त्तते बहिर्वस्तुं द्वयोर्जिनराजाज्ञयोरतिक्रमो भवति । एव प्रज्ञाप्य नगर प्रवेशयन्ति । अथ नेच्छन्ति प्रवेष्टु तत ( पेह्लणत्ति ) बलात्मोटिकया शेषै स प्रवेशनीय यदि न प्रवेशयन्ति ततश्चत्वारो गुरुका कदाचिदाभ्यन्तराणां पराजयो अपरेषां च जयो भवेत् तत पडिनिर्मेट प्रदत्त इति शङ्कया प्रस्तारदोषा भवेयु द्वितीयपदमत्र भवति बहिर्निर्गतस्य सर्वतोऽपि नगर निरुद्ध गमागम सर्वथैव व्यवच्छिन्न इति कृत्वा तत्रापि वसन शुद्ध । बृ० ३ उ० ॥

उवरोहि ( ण् )—उपरोधिन्—त्रि० पीडाकारिणि, आव० ४ अ०।

उवल—उपल—पुं० उप-आ-आदाने, दृढ्गुपकरणपरिकर्मणा योग्ये पाषाणे, प्रश्ना० १ पद्म । जी० । गण्डशैलपाषाणस्फटिकादिरूपे पृथ्वीकायभेदे, उत्त०३६ अ० । दृषत्पाषाणे, भ० ५ श० ७ उ० । भिन्नपाषाणे, सू० ८ उ० । सामान्यत पाषाणे, विशे० । आ० म० प्र० । कर्करे, अष्ट० ।

उवलंभ-उपलम्भ-पुं० उप-लभ-घञ्-मुम् । लाभे, विशे० । ज्ञाने च । जीवाद्युपलम्भो वाच्य । आ० म० प्र० ।

उवलद्ध-उपलब्ध-त्रि० उप-लभ-क्त । परिज्ञाते, " अह णं स होइ उवलद्धो, तो पेसति तहाभूएहिं अणाउट्टेतं पेहेहिं " सूत्र० १ श्रु० ४ अ० २ उ० । यथावस्थितस्वरूपेण विज्ञाते, दशा० १० अ० । रा० ।

उवलद्धपुण्णपाव-उपलब्धपुण्यपाप-त्रि० उपलब्धे यथावस्थितस्वरूपेण विज्ञाते पुण्यपापे येन स उपलब्धपुण्यपापः । तत्वतो विज्ञातपुण्यपापे, दशा० १० अ० । रा० ।

उवलद्धि-उपलब्धि-स्त्री० उपलम्भनमुपलब्धिः ज्ञाने, विशे० । उपलब्धिः पञ्चविधा "सारिक्खविवक्खे विवक्खोभवे ओवमा गमतो य" उपलब्धिः सादृश्यतो विपक्षत उभयधर्मदर्शनत औपम्यत आगमतश्च ॥ अधुना सादृश्यतो विपक्षतश्चोपलब्धिमाह-

सारिक्खविवक्खेहि य, लभति परोक्खेवि अक्खरं कोई ।
सवलेरबाहुलेरा, जह अहि नउला य अणुमाणे ॥

कश्चित्परोक्षेऽप्यर्थे सादृश्यादक्षरं लभते यथा शावलेयबाहुलेयाक्षराणि तथाहि कश्चित् शावलेयं दृष्ट्वा तत्सादृश्यात्परोक्षेऽपि बाहुलेये तदक्षराणि लभते । ईदृशो बाहुलेय इति तथा कश्चिद्वैपक्ष्येण परोक्षेऽर्थे तदक्षरं लभते । यथा अहिदर्शनान्नकुलानुमाने नकुलदर्शनाद्वा सर्पानुमाने । सम्प्रत्युभयधर्मदर्शनत उभयाक्षरलब्धिमाह-

एगत्थे उवलद्धे, कम्मि वि उभयत्थ पच्चओ होइ ।
अस्सतर खरसाणं, गुडदहियाणं सिहरिणीए ॥

कस्मिंश्चिदुभयधर्मा यानुमिति उभयावयवयोगिनि वा एकस्मिन्नर्थे उपलब्धे उभयत्र परोक्षे प्रत्ययस्तदक्षरलाभो भवति यथा अश्वतरे वेगसरे दृष्टे खरस्य अश्वस्य च प्रत्ययस्तदक्षरलाभो यथा वा सिखरिण्यामुपलब्धायां गुडदध्न प्रत्ययो गुडदध्यक्षरलाभः ।

औपम्यत उपलब्धिमाह-

पुव्वं पि अणुवलद्धो, घिप्पइ अत्थो उ कोइ ओवम्मा ।
जह गो एवं गवयो, किंचिविसेसेण परिहीणो ॥

पूर्वमनुपलब्धोऽपि कोऽप्यर्थ औपम्याद् गृह्यते यथा गौरेवं गवयो नवरं किंचिद्विशेषेण परिहीन कम्बलकविरहित इत्यर्थः । अत्रेयं भावना यथा गौस्तथा गवय इति श्रुत्वा कालान्तरेणाटव्यां पर्यटन् गवयं दृष्ट्वा गवयोऽयमिति यदक्षरजातं लभते एषा औपम्योपलब्धिः । इदानीमागमत उपलब्धिमाह-

अत्तागमप्पमाणेण, अक्खरं किंचि अविसयत्थेवि ।
भविया अभविया कुरवो, नारगदिवलोय मोक्खो या ॥

आप्ता सर्वज्ञास्तत्प्रणीत आगम आप्तागमः स एव प्रमाणमाप्तागमप्रमाणं तेन अविषयेऽप्यर्थे किंचिदक्षरं लभते यथा भव्योऽभव्यो देवकुरव उत्तरकुरवो नारका देवलोको मोक्षः चशब्दादन्ये च भावा । इयमत्र भावना । आप्तागमप्रामाण्यवशात्तस्मिन् तस्मिन् वस्तुनि योऽक्षरलाभो यथा भव्य इति अभव्य इति देवकुरव इत्यादि सा आगमोपलब्धिः । एषा सर्वाप्युपलब्धिः संज्ञिनां भवति असंज्ञिनां तु का वार्तेत्यताह-

तस्सन्नीण असन्नीणं, अत्थं लंभे वि अक्खरं नत्थि ।
अत्थो चिय सन्नीणं तु, अक्खरं निच्छए भयणा ॥

असंज्ञिनामर्थलाभेऽपि अर्थदर्शनेऽप्युत्सर्गेन एकान्तेन नास्त्यक्षरलाभः तथाहि शङ्खशब्दं श्रुत्वाऽपि न तेषामेषा लब्धिरुपजायते यथायं शङ्खशब्द इति एवं शेषेन्द्रियेष्वपि भावनीयम् । संज्ञिनां पुनरर्थे एवाक्षरमर्थोपलम्भकाल एवाक्षरलाभो यथा शङ्खशब्द इति निश्चये पुनर्भजना शङ्खशब्द एवायं शार्ङ्गशब्द एवायमिति वा निश्चयगमनं स्याद्वा न वा एवं शेषेन्द्रियेष्वपि भावनीयम् ॥ बृ० १ उ० ।

अथोपलब्धिं प्रकारान्तरतो दर्शयति । उपलब्धेरपि द्वैविध्यमविरुद्धोपलब्धिर्विरुद्धोपलब्धिश्चेति । न केवलमुपलब्ध्यनुपलब्धिस्त्यां विद्यमानत्वेन हेतोर्द्वैविध्यमित्यपेरर्थः । अविरुद्धोऽविरुद्धश्चात्र साध्येन सार्द्धं द्रष्टव्यस्ततस्तस्योपलब्धिरिति । आद्याया भेदानाह । तत्राविरुद्धोपलब्धिर्विधिसिद्धौ षोढेति ॥ तानेव व्याख्याति । साध्येनाविरुद्धानां व्याप्यकार्यकारणपूर्वचरोत्तरचरसहचराणामुपलब्धिरिति । ततो व्याप्याविरुद्धोपलब्धिः कार्याविरुद्धोपलब्धिः कारणाविरुद्धोपलब्धिः पूर्वचराविरुद्धोपलब्धिः उत्तरचराविरुद्धोपलब्धिः सहचराविरुद्धोपलब्धिरिति षट्प्रकारा भवति । तत्र हि साध्यं शब्दस्य परिणामित्वादि तस्याविरुद्धं व्याप्यादि प्रयत्नान्तरीयकत्वादि वक्ष्यमाणं तदुपलब्धिरिति । अथ भिक्षुर्न्नापते । विधिसिद्धौ स्वभावकार्ये एव साधने साधीयसी न कारणं तस्यावश्यतया कार्योत्पादकत्वाभावात्प्रतिबद्धावस्थस्य मुर्मुरावस्थस्य वा धूमस्यापि धूमध्वजस्य दर्शनात् । अप्रतिबद्धसामर्थ्यमुपसामग्रीकं च तद्गमकमिति चेदेवमेनाकिं तु नैतादृशमर्वाग्दृशावसातुं शक्यमिति तन्निराकर्तुं कीर्तयन्ति । तमस्विन्यामास्वाद्यमानादाम्रादिफलरसादेकसामग्र्यनुमित्या रूपाद्यनुमितिमभिमन्यमानैरभिमतमेव किमपि कारणं हेतुतया यत्र शक्तेरप्रतिस्खलनमपरकारणसाकल्यं चेति । तमस्विन्यामिति रूपाप्रत्यक्षत्वसूचनाय शक्तेरप्रतिस्खलनं सामर्थ्यस्याप्रतिबन्धः । अपरकारणसाकल्यं शेषनिःशेषसहकारिसंपर्कः रजन्यां रस्यमानात्किल रसात्तज्जनकसामग्र्यनुमानं ततोऽपि रूपानुमानं भवति । प्राक्तनो हि रूपक्षणः सजातीयरूपान्तरक्षणलक्षणं कार्यं कुर्वन्नेव विजातीयं रसलक्षणं कार्यं करोतीति प्राक्तनरूपक्षणात्सजातीयोत्पाद्यरूपक्षणान्तरानुमानं मन्यमानैः सौगतैरनुमतमेव किंचित्कारणं हेतुर्यस्मिन् सामर्थ्याप्रतिबन्धः कारणान्तरसाकल्यं च निश्चेतुं शक्यते ॥ अथ तन्नैतत्कारणात्कार्यानुमानं किं तु स्वभावानुमानमदः ईदृशरूपान्तरोत्पादसमर्थमिदं रूपमीदृशरसजनकत्वादित्येवं तत्स्वभावभूतस्यैव तज्जननसामर्थ्यस्यानुमानादिति चेन्नन्वेतदपि प्रतिबन्धाभावकारणान्तरसाकल्यनिश्चयमन्तरेण नोपपद्यत एव तन्निश्चये तु यदि कारणादेव कस्मात्कार्यमनुमास्यते तदा किं नाम दुश्चरितं चेतस्वी विचारयेत् । एवमस्यत्र छायाद्यादित्यादीन्यव्यभिचारनिश्चयादनुमानान्येवेत्युक्तं भवति । अथ पूर्वचरोत्तरचरयोः स्वभावकार्यकारणहेत्वनन्तरभावाद्भेदान्तरत्वं समर्थयन्ति । पूर्वचरोत्तरचरयोर्न स्वभावकार्यकारणभावौ तयोः कालव्यवहितानुपलम्भादिति । साध्यसाधनयोस्तादात्म्ये सति । स्वभावहेतौ तदुत्पत्तौ तु कार्ये कारणे वाऽन्तर्भावो विभाव्यते न चैतत्तादात्म्यं हेतुः समसमयस्य प्रयत्नानन्तरीयकत्वपरिणामित्वादेरेष तदुत्पत्तिश्चान्योन्यमव्यवहितस्यैव धूमधूमध्वजादेः समधिगता न तु व्यवहितकालस्यातिप्रसक्ते । ननु कालव्यवधानेऽपि कार्यकारणभावो भवत्येव । जाग्रद्दशाप्रबोधयोर्मरणारिष्टयोश्च तथा दर्शनादिति प्रतिजानानं प्रज्ञाकरं प्रतिक्षिपन्ति । नचातिक्रान्तानागतयोर्जाग्रद्दशासंवेदनमरणयोः प्रबोधोत्पत्तौ प्रति कारणत्वं व्यवहितत्वेन निर्व्यापारत्वादिति । अयमर्थः जाग्रद्दशासंवेदनमतीतं सुप्तावस्थोत्तरकालभाविज्ञानं वर्तमानं प्रतिमरणं वा

नागेन ध्रुवावीक्षणादिकमरिष्टं सांप्रतिक प्रतिव्यवहितत्वेन व्यापारपराङ्मुखमिति कथं तत्तत्र कारणत्वमवलम्बेत निर्व्यापारस्यापि तत्कल्पने सर्वं सर्वस्य कारणं स्यात् । इदमेव भावयन्ति ॥ स्वव्यापारापेक्षिणो हि कार्यं प्रति पदार्थस्य कारणत्वव्यवस्था कुलालस्येव कलश प्रतीति अन्वयव्यतिरेकावसेयो हि सर्वत्र कार्यकारणभावस्तौ च कार्यस्य कारणव्यापारसव्यपेक्षावेव युज्येते कुम्भस्यैव कुम्भकारव्यापारसव्यपेक्षाविति । ननु चातिक्रान्तानागतयोर्व्यवहितत्वेऽपि व्यापारः कथं न स्यादित्यारेकामधरयन्ति ॥ न च व्यवहितयोस्तयोर्व्यापारपरिकल्पनं न्याय्यमतिप्रसक्तेरिति । तयोरतिक्रान्तानागतयोर्जाग्रद्दशासंवेदनमरणयोः । अतिप्रसक्तिमेव भावयन्ति । परंपराव्यवहितानां परेषामपि तत्कल्पनस्य निवारयितुमशक्यत्वादिति परेषामपि रावणशंखचक्रवर्त्यादीनां तत्कल्पनस्य व्यापारकल्पनस्य । अथान्वयव्यतिरेकसमधिगम्यः कार्यकारणभावस्ततो व्यवधानाविशेषेऽपि यस्यैव कार्यमन्वयव्यतिरेकावनुकरोति तदेव तत्कारणमन्यथा व्यवधानाविशेषेऽपि किं न काष्ठकृशानुवत्तत्र स्थित एव शर्कराकणनिकरोऽपि धूमकारणं स्यात्ततो नातिप्रसङ्ग इति चेन्नन्वन्वयस्तद्भावे भाव स चात्र तावन्नास्त्येव जाग्रद्दशासंवेदनमरणयोरभाव एव संवेदन तत्कार्योत्पादात् । अथ स्वकाले सतोरेव तयोस्तत्कार्योत्पत्तेरन्वयः कथं न स्यादिति चेत्तर्हि ईदृशोऽन्वय रावणादिभिरप्यस्यास्त्येव सत्यमस्त्येव व्यतिरेकस्तु रिक्त इति चेन्ननु कोऽयं व्यतिरेको नाम तदभावेऽभाव इति चेत्तर्हि जाग्रद्दशासंवेदनादेः कथं स्यात्तदभाव एव सर्वदा प्रबोधादेर्भावात् स्वकाले त्वभावस्तस्य नास्त्येवेति कथं व्यतिरेकसिद्धिमधिवसेदिति न व्यवहितयोः कार्यकारणभावः संभवति । सहचरहेतोरपि स्वभावकार्यकारणेषु नान्तर्भाव इति दर्शयन्ति । सहचारिणोः परस्परस्वरूपपरित्यागेन तादात्म्यानुपपत्तेः सहोत्पादेन तदुत्पत्तिविपत्तेश्च सहचरहेतोरपि प्रोक्तेषु नानुप्रवेश इति । यदि हि सहसंचरणशीलयोर्वस्तुनोस्तादात्म्यं स्यात्तदा परस्परपरिहारेण स्वरूपान्तरोपलम्भो न भवेदथ तदुत्पत्तिस्तदा पौर्वापर्येणोत्पादप्रसङ्गात्सहोत्पादो न स्यात् नचैवं ततो नास्य प्रागेषु स्वभावकार्यकारणेष्वन्तर्भाव । इदानीं मन्दमतिव्युत्पत्तिनिमित्तं साधर्म्यवैधर्म्याभ्यां पञ्चावयवां व्याप्याविरुद्धोपलब्धिमुदाहरन्ति । ध्वनि परिणतिमान् प्रयत्नानन्तरीयकत्वाद्य प्रयत्नानन्तरीयक स परिणतिमान्यथा स्तम्भः यो वा न परिणतिमान् स न प्रयत्नानन्तरीयको यथा वान्ध्येय प्रयत्नानन्तरीयकश्च ध्वनिस्तस्मात्परिणतिमानिति व्याप्यस्य साध्येनाविरुद्धस्योपलब्धि साधर्म्येण वैधर्म्येण चेति । अत्र ध्वनि परिणतिमानिति साध्यधर्म्मविशिष्टधर्म्यभिधानरूपा प्रतिज्ञा प्रयत्नानन्तरीयकत्वादिति हेतु य प्रयत्नानन्तरीयक इत्यादि तु व्याप्तिप्रदर्शनपूर्वौ साधर्म्यवैधर्म्याभ्यां स्तम्भवान्ध्येयरूपौ दृष्टान्तौ । प्रयत्नानन्तरीयकश्च ध्वनिरित्युपनयस्तस्मात्परिणतिमानिति निगमनम् । यद्यपि व्याप्यत्वं कार्यादिहेतूनामप्यस्ति साध्येन व्याप्यत्वात्तथापि तन्नेह विवक्षितं किंतु साध्येन तदात्मीभूतस्यकार्यादिरूपस्य प्रयत्नानन्तरीयकत्वादेः स्वरूपमित्यदोष ॥ अथ कार्याविरुद्धोपलब्ध्यादीनुदाहरन्ति अस्त्यत्र गिरिनिकुञ्जे धनञ्जयो धूमसमुपलम्भादिति कार्यस्येति । साध्येनाविरुद्धस्योपलब्धिवरिति पूर्वसूत्रादिहोत्तरत्र चानुवर्त्तनीयम् । भविष्यति वर्षं तथाविधवारिवाहविलोकनादिति कारणस्येति तथाविधेति सातिशयोन्नतत्वादिधर्मोपेतत्वं गृह्यते । उदेष्यति मुहूर्त्तान्ते तिष्यतारका पुनर्वसूदयदर्शनादिति पूर्वचरस्येति तिष्यतारकेति पुष्यनक्षत्रम् ॥ उदगुर्मुहूर्त्तात्पूर्वं पूर्वफल्गुन्य उत्तरफाल्गुनीनामुदयोपलब्धेरित्युत्तरचरस्येति । अस्तीह सहकारफलरूपविशेषः समास्वाद्यमानरसविशेषादिति सहचरस्येति । इयं च साक्षात्षोढा विरुद्धोपलब्धिरुक्ता । परंपरया पुनः संभवन्तीयमत्रैवान्तर्भावनीया । तद्यथा कार्यकार्याविरुद्धोपलब्धिः कार्याविरुद्धोपलब्धौ अन्तर्भवतीति योग अभूदत्र कोश कलशोपलम्भादिति कोशस्य हि कार्यं कुशूलस्तस्य चाविरुद्धं कार्यं कुम्भ इति एवमन्याऽप्यत्रैवान्तर्भावनीया ॥ अधुना विरुद्धोपलब्धिभेदानाहु ॥ विरुद्धोपलब्धिस्तु प्रतिषेधप्रतिपत्तौ सप्त प्रकारेति । प्रथमप्रकारं प्राक् प्रकाशयन्ति । तत्राद्या स्वभावविरुद्धोपलब्धिरिति । प्रतिषेध्यस्यार्थस्य यः स्वभावः स्वरूपं तेन सह यत्साक्षाद्विरुद्धं तस्योपलब्धिः स्वभावविरुद्धोपलब्धिः एतामुदाहरन्ति नास्त्येव सर्वथैकान्तोऽनेकान्तस्योपलम्भादिति । स्पष्टो हि सर्वथैकान्तानेकान्तयोः साक्षाद्विरोधो भावाभावयोरिव । नन्वयमनुपलब्धिहेतुरेव युक्तो यावान् कश्चित्प्रतिषेधः स सर्वोऽनुपलब्धिरिति वचनादिति चेत्तन्मन्दीमसमुपलम्भाभावस्यात्र हेतुत्वेनानुपन्यासात् । अथ विरुद्धयोः सर्वथैकान्तानेकान्तयोर्वह्निशीतस्पर्शयोरिव प्रथमं विरोध स्वभावानुपलब्ध्या प्रतिपन्न इत्यनुपलब्धिमूलत्वात्स्वभावविरोधोपलब्धेरनुपलब्धिरूपत्वं युक्तमेवेति चेत्तर्हि साध्यधर्म्मिणि भूधरादौ साधनं च धूमादावध्यक्षीकृते सतीदमप्यनुमानं प्रवर्तत इति प्रत्यक्षमूलत्वात् इदमपि प्रत्यक्षं किं न स्यात् । विरुद्धोपलब्धेराद्यप्रकारं प्रदर्श्य शेषानाख्याति । प्रतिषेध्याविरुद्धव्याप्तादीनामुपलब्धयः षडिति प्रतिषेध्येनार्थेन सह ये साक्षाद्विरुद्धास्तेषां ये व्याप्तादयो व्याप्यकार्यकारणपूर्वचरोत्तरचरसहचरास्तेषामुपलब्धय षड् भवन्ति । विरुद्धव्याप्तोपलब्धिर्विरुद्धकार्योपलब्धिर्विरुद्धकारणोपलब्धिर्विरुद्धपूर्वचरोपलब्धिर्विरुद्धोत्तरचरोपलब्धिर्विरुद्धसहचरोपलब्धिश्चेति । क्रमेणासामुदाहरणान्याहु । विरुद्धव्याप्तोपलब्धिर्यथा नास्त्यस्य पुंसस्तत्त्वेषु निश्चयस्तत्र संदेहादिति । अत्र हि जीवादितत्त्वगोचरो निश्चय प्रतिषेध्यस्तद्विरुद्धश्चानिश्चयस्तेन व्याप्तस्य संदेहस्योपलब्धि । विरुद्धकार्योपलब्धिर्यथा न विद्यतेऽस्य क्रोधाद्युपशान्तिर्वदनविकारादेरिति वदनविकारस्ताम्रतादिरादिशब्दादधरस्फुरणादिपरिग्रहः । अत्र च प्रतिषेध्य क्रोधाद्युपशमस्तद्विरुद्धस्तदनुपशमस्तत्कार्यस्य वदनविकारादेरुपलब्धि । विरुद्धकारणोपलब्धिर्यथा नास्य महर्षेरसत्यं वचः समस्ति रागद्वेषकालुष्याकलङ्कितज्ञानसंपन्नत्वादिति प्रतिषेध्येन ह्यसत्येन सह विरुद्धं सत्यं तस्य कारणं रागद्वेषकालुष्याकलङ्कितज्ञानं तत्कुतश्चित्सूक्ताभिधानादेः सिद्ध्यत्सत्यं साधयति । तच्च सिध्यदसत्यं प्रतिषेधति ॥ विरुद्धपूर्वचरोपलब्धिर्यथा नोद्गमिष्यति मुहूर्तान्ते पुष्यतारा रोहिण्युद्गमादिति । प्रतिषेध्योऽत्र पुष्यतारोद्गमस्तद्विरुद्धो मृगशीर्षोदयस्तदनन्तरं पुनर्वसूदयस्यैव भावात् । तत्पूर्वचरो रोहिण्युदयस्तस्योपलब्धिर्विरुद्धोत्तरचरोपलब्धिर्यथा नोदगान्मुहूर्तात्पूर्वं मृगशिरः पूर्वफाल्गुन्युदयादिति । प्रतिषेध्योऽत्र मृगशीर्षोदयस्तद्विरुद्धो मघोदयोऽनन्तरमार्द्रोदयादेरेव भावात्तदुत्तरचरः पूर्वफल्गुन्युदयस्तस्योपलब्धिर्विरुद्धसहचरोपलब्धिर्यथा नास्त्यस्य मिथ्याज्ञानं सम्यग्दर्शनादिति प्रतिषेध्येन हि मिथ्याज्ञानेन सह विरुद्धं सम्यग्ज्ञानं तत्सहचरं सम्यग्दर्शनं तच्च प्राण्यनुकम्पादेः कुतश्चिल्लिङ्गात्प्रसिध्यत्सहचरं सम्यग्ज्ञानं साधयति । इयं च सप्तप्रकारापि विरुद्धोपलब्धि ॥ प्रतिषेध्येनार्थेन साक्षाद्विरोधमाश्रित्योक्ता परंपरया विरोधाश्रयणेन त्वनेकप्रकारा विरुद्धोपलब्धि संभवन्त्यत्रैवाभियुक्तैरन्तर्भावनीया । तद्यथा कार्यविरुद्धोपलब्धिर्व्यापकविरुद्धोपलब्धिः कारणविरुद्धोपलब्धिरिति त्रय स्वभावविरुद्धोपलब्धौ । तत्र कार्यवि-

ज्जा से केणट्ठेणं ? गोयमा ! सेणं सम्मी पंचिदिए सव्वाहिं पज्जत्तिएहिं पज्जत्तए वीरियलच्धीए वेउव्वियलच्धीए पराणीयं आगयं सोच्चा निसम्म पएसे निच्छुभइ, वेउव्वियसमुग्घाएणं समोहणइ समोहणइए चाउरंगिणीए सेणाए विउव्वइ विउव्वइत्ता चाउरंगिणीए सेणाए पराणीएणं सद्धिं संगामं संगामेइ सेणं जीवे अत्थकामए रज्जकामए भोगकामए कामकामए अत्थकंखिए रज्जकंखिए भोगकंखिए कामकंखिए अत्थपिवासिए रज्जपिवासिए भोगपिवासिए कामपिवासिए तच्चित्ते तम्मणे तल्लेस्से तदज्झवसिए तत्तिव्वज्झवसाणे तदट्ठोवउत्ते तदप्पियकरणे तब्भावणाभाविए एयंसि णं अंतरंसि कालं करेज्ज नेरइएसु उववज्जइ से तेणट्ठेणं गोयमा ! जाव अत्थेगइए नो उववज्जेज्जा ॥

गर्भे गतः सन् गृहीत्वेति शेषः ( पंचिदिएत्ति ) स गर्भो राजादिगर्भरूपः संज्ञितादिविशेषणानि च गर्भस्थस्यापि नरकप्रायोग्यकर्मबन्धसंभवाभिधायकतयोक्तानि वीर्यलब्ध्या वैक्रियलब्ध्या संग्रामयतीति योगः अथवा वीर्यलब्धिको वैक्रियलब्धिकश्च सन्निति परानीकं शत्रुसैन्यम् (सोच्चत्ति) आकर्ण्य निशम्य मनसाऽवधार्य (पएसे निच्छुभइत्ति) गर्भदेशाद्बहिः क्षिपति (समोहणइत्ति ) समवहन्ति समवहतो भवति तथाविधपुद्गलग्रहणार्थं संग्रामं संग्रामयति युद्धं करोति ( अत्थकामएइत्यादि ) अर्थे द्रव्ये कामो वाञ्छामात्रं यस्यासावर्थकाम एवमन्यान्यपि विशेषणानि, नवरं राज्यं नृपत्वं भोगा गन्धरसस्पर्शाः कामौ शब्दरूपे काङ्क्षा गृद्धिरासक्तिरित्यर्थः । अर्थकाङ्क्षा संजाताऽस्येति अर्थकाङ्क्षितः । पिपासेव पिपासा प्राप्तेऽप्यर्थेऽतृप्तिः ( तच्चित्तेत्ति ) तत्रार्थादौ चित्तं सामान्योपयोगरूपं यस्यासौ तच्चित्तः [ तम्मणेत्ति ] तत्रैवार्थादौ मनो विशेषोपयोगरूपं यस्य स तन्मनाः [ तल्लेसेत्ति ] लेश्याऽऽत्मपरिणामविशेषः । [ तदज्झवसिएत्ति ] इहाध्यवसायोऽध्यवसितम् तत्र तच्चित्तादिभावयुक्तस्य तस्मिन्नर्थादावेवाध्यवसितं परिभोगक्रियासंपादनविषयमस्येति तदध्यवसितः [ तत्तिव्वमज्झवसाणेत्ति ] तस्मिन्नेवार्थादौ तीव्रमारम्भकालादारभ्य प्रकर्षयायि अध्यवसानं प्रयत्नविशेषलक्षणं यस्य स तथा [तदट्ठोवउत्तेत्ति] तदर्थमर्थादिनिमित्तमुपयुक्तोऽवहितस्तदर्थोपयुक्तः [तदप्पियकरणेत्ति] तस्मिन्नेवार्थादावर्पितान्याहितानि करणानीन्द्रियाणि कृतकारितानुमतिरूपाणि वा येन स तथा [ तब्भावणाभाविएत्ति ] असकृदनादिसंसारे तद्भावनयाऽर्थादिसंस्कारेण भावितो यः स तथा [ एयंसिणं अंतरंसि त्ति ] एतस्मिन् संग्रामकरणावसरे कालं मरणमिति ॥

जीवेणं भंते ! गब्भगए समाणे देवलोगेसु उववज्जेज्जा ? गोयमा अत्थेगइए उववज्जेज्जा अत्थेगइए नो उववज्जेज्जा से केणट्ठेणं ? गोयमा ! से णं सण्णी पंचिदिए सव्वाहिं पज्जत्तीहिं पज्जत्तए तहारूवस्स समणस्स वा माहणस्स वा अंतिए एगमवि आरियं धम्मियं सुवयणं सोच्चा निसम्म तओ भवइ संवेगजायसड्ढे तिव्वधम्माणुरागरत्ते सेणं जीवे धम्मकामए पुण्णकामए सग्गकामए मोक्खकामए धम्मकंखिए पुण्णकंखिए सग्गकंखिए मोक्खकंखिये धम्मपिवासिए पुण्णपिवासिए सग्गपिवासिए मोक्खपिवासिए तच्चित्ते तम्मणे तल्लेसे तदज्झवसिए तदट्ठोवउत्ते तदप्पियकरणे तब्भावणाभाविए एयंसि णं अंतरंसि कालं करेज्जा देवलोएसु उववज्जइ से तेणट्ठेणं गोयमा ! ।

( तहारूवस्सत्ति ) तथाविधस्य उचितस्येत्यर्थः । श्रमणस्य साधोः वाशब्दो देवलोकोत्पादहेतुत्वम्प्रति श्रमणमाहनवचनयोस्तुल्यत्वप्रकाशनार्थः ( माहणस्सति ) मा हनेत्येवमादिशति स्वयं स्थूलप्राणातिपातादिनिवृत्तत्वाद्यः स माहनः । अथवा ब्राह्मणो ब्रह्मचर्यस्य देशतः सद्भावात् ब्राह्मणो देशविरतस्तस्य वा ( अंतिएत्ति ) समीपे एकमप्यास्तामनेकं आर्यमाराद्यातं पापकर्मभ्य इत्यार्यम् । अत एव धार्मिकमिति ( तओत्ति ) तदनन्तरमेव ( संवेगजायसड्ढेत्ति ) संवेगेन भवभयेन जाता श्रद्धा श्रद्धानं धर्मादिषु यस्य स तथा ( तिव्वधम्माणुरागरत्तेत्ति ) तीव्रो यो धर्मानुरागो धर्मबहुमानस्तेन रक्त इव यः स तथा ( धम्मकामएत्ति ) धर्मः श्रुतचारित्रलक्षणः पुण्यं तत्फलभूतं शुभकर्मेति ॥ भ० १ श० ७ उ० । स्था० ॥ तं० ॥

( २५ ) कुतो देवा देवलोकेषूपपद्यन्ते ॥

तएणं ते समणोवासया थेराणं भगवंताणं अंतिए धम्मं सोच्चा निसम्म हट्ठतुट्ठ जाव हियया तिक्खुत्तो आयाहीणपयाहीणं करेंति करेइत्ता एवं वयासी संजमेणं भंते ! किं फले, तवेणं भंते ! किं फले ? तएणं थेरा भगवंतो ते समणोवासया एवं वयासी संजमेणं अज्जो अणण्हयफले तएणं ते समणोवासया थेरे भगवंते एवं वयासी जइणं भंते ! संजमे अणण्ह फले तवे वोदाणफले किं पत्तियं भंते ! देवा देवलोएसु उववज्जंति ? तत्थणं कालियपुत्ते णामं अणगारे थेरे ते समणोवासए एवं वयासी पुव्वतवेणं अज्जो देवा देवलोएसु उववज्जंति तत्थ णं महिले णामं थेरे ते समणोवासए एवं वयासी पुव्वसंजमेणं अज्जो देवा देवलोएसु उववज्जंति तत्थणं आणंदरक्खिए नामं थेरे ते समणोवासए एवं वयासी कम्मियाए अज्जो देवा देवलोएसु उववज्जंति तत्थ णं कासवे नामं थेरे ते समणोवासए एवं वयासी संगियाए अज्जो देवा देवलोएसु उववज्जंति पुव्वतवेणं पुव्वसंजमेणं कम्मियाए संगियाए अज्जो देवा देवलोएसु उववज्जंति सच्चेणं एस अट्ठे नो चेवणं आयभाववत्तव्वयाए । तएणं ते समणोवासया थेरेहिं भगवंतेहिं इमाइं एयारूवाइं वागरणाइं वागरिया समाणा हट्ठतुट्ठा थेरे भगवंते वंदंति णमंसंति वंदइत्ता णमंसइत्ता पसिणाइं पुच्छंति अट्ठाइं उवादियंति उट्ठाए उट्ठेंति थेरे भगवंते तिक्खुत्तो जाव वंदंति णमंसंति वंदइत्ता णमंसित्ता थेराणं भगवंताणं अंतियाओ पुप्फवईयाओ चेइयाओ पडिनिक्खमंति पडिनिक्खमइत्ता जामेव दिसं पाउब्भूया तामेव दिसं पडिगया तएणं ते थेरा भगवंतो अण्णया कयाइं तुंगियाओ नयरीओ पुप्फवइयाओ चेइयाओ पडिनिगच्छंति पडिनि-

गच्छइत्ता बहिया जणवयविहारं विहरंति तेणं कालेणं तेणं समएणं रायगिहि नामं नयरे जाव परिसापडिगया तेणं कालेणं तेणं समएणं समणस्स भगवओ महावीरस्स जेट्ठे अंतेवासी इंदभूइणामं अणगारे जाव संखित्तविउलतेउलेस्से छट्ठं छट्ठेणं अनिक्खित्तेणं तवोकम्मेणं संजमेणं तवसा अप्पाणं भावेमाणे विहरइ तए णं से भगवं गोयमे छट्ठक्खमणपारणयंसि पढमाए पोरिसीए सज्झायं करेइ बीयाए पोरिसीए झाणं झियाएइ तइयाए पोरिसीए अतुरियमचवलमसंभंते मुहपोत्तियं पडिलेहेइ पडिलेहेइत्ता भायणाइं वत्थाइं पडिलेहेइ पडिलेहेइत्ता भायणाइं पमज्जइ पमज्जइत्ता भायणाइं उग्गाहेइ उग्गाहेइत्ता जेणेव समणे भगवं महावीरे तेणेव उवागच्छइ उवागच्छइत्ता समणं भगवं महावीरं वंदइ णमंसइ वंदइत्ता णमंसइत्ता एवं वयासी इच्छामि णं भंते ! तुज्झेहिं अब्भणुणाए समाणे छट्ठक्खमणपारणयंसि रायगिहे नयरे उच्चनीयमज्झिमाइं कुलाइं घरसमुदाणस्स भिक्खायरियाए अडित्तए अहासुहं देवाणुप्पिया मा पडिबंधं तएणं भगवं गोयमे ! समणेणं भगवया महावीरेणं अब्भणुणाए समाणे समणस्स भगवओ महावीरस्स अंतियाओ गुणसिलाओ चेइयाओ पडिनिक्खमइ पडिनिक्खमइत्ता अतुरियमचवलमसंभंते जुगमंतरपलोयणाए दिट्ठीए पुरओरियं सोहेमाणे सोहेमाणे जेणेव रायगिहे नयरे तेणेव उवागच्छइ उवागच्छइत्ता रायगिहे नयरे उच्चनीयमज्झिमाइं कुलाइं घरघरसमुदाणस्स भिक्खायरियं अडइ तएणं से भगवं गोयमे रायगिहे नयरे जाव अडमाणे बहुजणसद्दं निसामेइ एवं खलु देवाणुप्पिया तुंगियाए नयरीए बहियापुप्फवईयाए चेइयाए पासा वच्चिज्जा थेरा भगवंतो समणोवासएहिं इमाइं एयारूवाइं वागरणाइं पुच्छिया संजमेणं भंते ! किं फले, तवे किं फले ? तए णं थेरा भगवंतो समणोवासए एवं वयासी संजमेणं अज्जो अणण्हयफले तवे वोदाणफले त चेव जाव पुव्वतवेणं पुव्वसंजमेणं कम्मियाए संगियाए अज्जो देवा देवलोएसु उववज्जंति सच्चेणं एसमट्ठे णो चेव णं आयभाववत्तव्वयाए से कहमेयं मन्ने एवं ? तएणं भगवं गोयमे ! इमीसे कहाए लद्धट्ठे समाणे जायसड्ढे जाव समुप्पन्नकोउहल्ले अहा पज्जत्तं समुदाणं गिण्हइ गिण्हइत्ता रायगिहाओ नयरीओ पडिनिक्खमइ अतुरिय जाव सोहेमाणे जेणेव गुणसिलए चेइए जेणेव समणे भगवं महावीरे तेणेव उवागच्छइ उवागच्छइत्ता समणस्स भगवओ महावीरस्स अदूरसामंते गमणागमणाए पडिक्कमइ एसणमणेसणं आलोएइ भत्तपाणं पडिदंसेइ२त्ता समणं भगवं महावीरं जाव एवं वयासी एवं खलु भंते ! अहं तुब्भेहिं अब्भणुणाए समाणे रायगिहे नगरे उच्चनीयमज्झिमाणि कुलाणि घरसमुदाणस्स भिक्खायरियाए अडमाणे बहुजणसद्दं निसामेइ एवं खलु देवाणुप्पिया तुंगियाए नगरीए बहिया पुप्फवईए चेइ पासावच्चिज्जा थेरा भगवंतो समणोवासएहिं इमाइं एयारूवाइं वागरणाइं पुच्छिया संजमेणं भंते ! किं फले, तवे किं फले ? तं चेव जाव सच्चेणं एसमट्ठे णो चेव णं आयभाववत्तव्वयाए तं पभूणं भंतेत्ति थेरा भगवंता तेसिं समणोवासयाणं इमाइं एयारूवाइं वागरणाइं वागरेत्तए । उदाहु अप्पभूसमियाणं भंते ! ते थेरा भगवंतो तेसिं समणोवासयाणं इमाइं एयारूवाइं वागरणाइं वागरेत्तए । उदाहु असमिया आउज्जियाणं भंते ! ते थेरा भगवंतो तेसिं समणोवासयाणं इमाइं एयारूवाइं वागरणाइं वागरित्तए। उदाहु अणाउज्जिया पालिउज्जियाणं भंते ! ते थेरा भगवंतो तेसिं समणोवासयाणं इमाइं एयारूवाइं वागरणाइं वागरेत्तए। उदाहु अणाउज्जिया पलिउज्जियाणं भंते ! थेरा भगवंतो तेसिं समणोवासयाणं इमाइं एयारूवाइं वागरणाइं वागरेत्तए उदाहु अपलिउज्जिया पुव्वतवेणं अज्जो ! देवा देवलोएसु उववज्जंति पुव्वसंजमेणं कम्मियाए संगियाए अज्जो देवा देवलोएसु उववज्जंति, सच्चेणं एसमट्ठे णो चेव णं आयभाववत्तव्वयाए पभूणं गोयमा ! ते थेरा भगवंतो तेसिं समणोवासयाणं इमाइं एयारूवाइं वागरणाइं वागरेत्तए णो अप्पभू तह चेव नेयव्वं अवसेसियं जाव पभूसमियं आउज्जियपलिउज्जिय जाव सच्चेणं एसमट्ठे णो चेव णं आयभाववत्तव्वयाए अहं पि णं गोयमा ! एवमाइक्खामि भासेमि पन्नवेमि परूवेमि पुव्वतवेणं देवा देवलोएसु उववज्जंति पुव्वसंजमेणं देवा देवलोएसु उववज्जंति कम्मियाए देवा देवलोएसु उववज्जंति संगियाए देवा देवलोएसु उववज्जंति पुव्वतवेणं पुव्वसंजमेणं कम्मियाए संगियाए अज्जो देवा देवलोएसु उववज्जंति । सच्चेणं एसमट्ठे णो चेव णं आयभाववत्तव्वयाए ॥

तएणं समणोवासया इत्यादि [अणण्हयफलेत्ति] न आश्रवोऽनाश्रव इति पाठोऽपि दृश्यते अनाश्रवो नवकर्मानुपादान फलमस्येत्यनाश्रवफलः संयम (वोदाणफलेत्ति) दापलवने अथवा दैप्शोधने इति वचनात् व्यवदानं पूर्वकृतकर्मवनगहनस्य लवनं प्राक्कृतकर्मकचवरशोधनं वा फलं यस्य तद्व्यवदानफलं तप इति । ( किं पत्तियंति ) क प्रत्ययः कारणं यत्र तत्किम्प्रत्ययं निष्कारणमेव देवा देवलोकेषूत्पद्यन्ते तप संयमयोरुक्तरीत्या तदकारणत्वादित्यभिप्राय ( पुव्वतवेणंति ) पूर्वतप सरागावस्थाभावि तपस्या वीतरागावस्थापेक्षया सरागावस्थाया पूर्वकालभावित्वात् एव संयमोऽपि अयथाख्यातचारित्रमित्यर्थः ततश्च सरागकृतेन संयमेन तपसा च देवत्वावाप्तिः रागांशस्य कर्मबन्धहेतुत्वात् (कम्मियाएत्ति) कर्म विद्यते यस्यासौ कर्मी तद्भावस्तत्ता तया कर्म्मितया । अन्ये त्वाहुः । कर्म्मणां विकारः कार्म्मिका तया अक्षीणेन कर्म्मशेषेण देवत्वावाप्तिरित्यर्थः ( संगियाएत्ति ) सङ्गो यस्यास्ति स सङ्गी तद्भावस्तत्ता तया सङ्गितया इत्यादि-

पु सत्सङ्गी हि संयमादियुक्तोऽपि कर्म्म बध्नाति ततः सङ्गितया देवत्वावाप्तिरिति आह च "पुव्वतवसंजमो होति, रागिणो पच्छिमा अरागस्स । रागो संगो वुत्तो, संगाकम्मं भवो तेणं" ॥ १ ॥ सच्चेणमित्यादि ॥ सत्योऽयमर्थ कस्मादित्याह " नो चेवणमित्यादि " नैवात्मभावववक्तव्यतयाऽयमर्थं आत्मभाव एव स्वाभिप्राय एव न वस्तुतत्त्वं वक्तव्यो वाच्योऽभिमानाद्येषां ते आत्मभाववक्तव्यास्तेषां भाव आत्मभाववक्तव्यता अहंमानिता तया न वयमहंमानितयैवं ब्रूमोऽपि तु परमार्थ एवायमेवंविध इति भावना ( अतुरियंति ) कायिकत्वरारहितम् ( अचवलंति ) मानसचापलरहितम् ( असंभंतेत्ति ) असंभ्रान्तज्ञान ( घरसमुदाणस्स ) गृहेषु समुदानं भैक्षं गृहसमुदानं तस्मै गृहसमुदानाय ( भिक्खायरियाएत्ति ) भिक्षासमाचारेण ( जुगंतरपलोयणाएत्ति ) युगं यूपस्तत्प्रमाणमन्तरं स्वदेहदेशस्य दृष्टिपातदेशस्य च व्यवधानं प्रलोकयति या सा युगान्तरप्रलोकना तया दृष्ट्या ( रियंति ) ईर्यागमनं ( सेकहमेयं मन्ने एवंति ) अथ कथमेतत् स्थविरवचनं मन्ये इति वितर्कार्थो निपातः एवममुना प्रकारेणेति बहुजनवचनम् ( पभूणंति ) प्रभवः समर्थास्ते ( समियाणंति ) सम्यगिति प्रशंसार्थो निपातस्तेन सम्यक्ते व्यागर्तुं वर्त्तन्ते अविपर्यासास्त इत्यर्थः । समञ्चन्तीति वा सम्यञ्चः समिता वा सम्यक् प्रवृत्तयः श्रमिता वाऽभ्यासवन्त (आउज्जियत्ति) आयोगिकाः उपयोगवन्तो ज्ञानिन इत्यर्थः जानन्तीति भाव ( पलिउज्जियत्ति ) परि समन्तात् योगिकाः परिज्ञानिन इत्यर्थ परिजानन्तीति भाव । भ० २ श० ५ उ० । "पुण्णपापाभावे सव्वहा अपरिक्खीणकम्मे पुन्नाभावे देवेसु केण हेउणा उववज्जति" एवं चोदकेणोक्ते आचार्य्य आह । गाहा । "पुव्वतवसंजमा होति, रागिणो पच्छिमा अगारस्स । रागो वुत्तो संगो, संगाकम्म भवो तेण" । नि० चू० ११ उ० (जीवेणं भंते ! जे भविए नेरइएसु उववज्जित्तए से णं भंते ! किं इह गए णेरइयाउय पकरेइत्तिआउशब्दे उक्तम् ) द्वावसुरकुमारौ क्वोपपद्येते ॥

( २६ ) सहोपपन्नयोरसुरयो शोभनाशोभनत्वम् ॥

दो भंते ! असुरकुमारा एगंसि असुरकुमारा वासंसि असुरकुमारदेवत्ताए उववन्ना तत्थणं एगे असुरकुमारे देवे पासादीए दरसणिज्जे अभिरूवे पडिरूवे एगे असुरकुमारे देवे से णं णो पासादीए णो दरसणिज्जे णो अभिरूवे णो पडिरूवे से कहमेयं भंते ! एवं ? गोयमा ! असुरकुमारा देवा दुविहा पन्नत्ता तं जहा वेउव्वियसरीरा य अवेउव्वियसरीरा य तत्थ णं जे से वेउव्वियसरीरे असुरकुमारे देवे से णं पासादीए जाव पडिरूवे तत्थ णं जे से अवेउव्वियसरीरे असुरकुमारे देवे से णं णो पासादीए जाव णो पडिरूवे से केणट्ठेणं भंते ! एवं वुच्चइ तत्थ णं जे से वेउव्वियसरीरे तं चेव जाव णो पडिरूवे ? गोयमा ! से जहाणामए इह मणुस्सलोगंसि दुवे पुरिसा भवंति एगे पुरिसे अलंकियविभूसिए एगे पुरिसे अणलंकियविभूसिए एएसिणं गोयमा ! दोण्हं पुरिसाणं कयरे पुरिसे पासादीए कयरे पुरिसे णो पासादीए जाव णो पडिरूवे जे वा से पुरिसे अलंकियविभूसिए जे वा से पुरिसे अणलंकियविभूसिए ? भगवं ! तत्थ जे से पुरिसे अलंकियविभूसिए से णं पुरिसे पासादीए जाव पडिरूवे जे वा से पुरिसे अणलंकियविभूसिए से णं पुरिसे णो पासादीए जाव णो पडिरूवे से तेणट्ठेणं जाव णो पडिरूवे दो भंते ! णागकुमारा देवा एगंसि णागकुमारा वासंसि एवं चेव एवं जाव थणियकुमारा वाणमंतरजोइसियवेमाणिया एवं चेव ।

दो भंते ! इत्यादि [ वेउव्वियसरीरत्ति ] विभूषितशरीरा अनन्तरमसुरकुमारादीनां विशेष उक्तोऽथ विशेषाधिकारादिदमाह

( २७ ) नैरयिकानैरयिकेषु उपपन्नास्तेषु कश्चिदल्पतरोऽपरो महावेदनतरः ॥

दो भंते णेरइया एगंसि णेरइया वासंसि णेरइयत्ताए उववन्ना तत्थ णं एगे णेरइए महाकम्मतराए चेव जाव महावेयणतराए चेव । एगे णेरइए अप्पकम्मतराए चेव जाव अप्पवेयणतराए चेव से कहमेयं भंते ! एवं ? गोयमा ! णेरइया दुविहा पन्नत्ता तं जहा मायी मिच्छदिट्ठी उववन्नगा य अमायी सम्मदिट्ठी उववन्नगा य तत्थ णं जे से मायी मिच्छदिट्ठी उववन्नए णेरइए से णं महाकम्मतराए चेव जाव महावेयणतराए चेव तत्थ णं जे से अमायी सम्मदिट्ठी उववन्नए णेरइए से णं अप्पकम्मतराए चेव अप्पवेयणतराए चेव दो भंते ! असुरकुमारा एवं चेव । एवं एगिंदियविगलिंदियवज्जं जाव वेमाणिया ॥

दो भंते ! नेरइयेत्यादि [महाकम्मतराए चेवत्ति] इह यावत्करणात् " महाकिरियतराए चेव महासवतराए चेवत्ति " द्रश्यं व्याख्या चास्य प्राग्वत् (एगिंदियविगलिंदियवज्जति) इहैकेन्द्रियादिवर्जनमेतेषां मायिमिथ्यादृष्टित्वेनामायिसम्यग्दृष्टिविशेषणस्यायुज्यमानत्वादिति ।

( २८ ) प्राग्नारकादिवक्तव्यतोक्ता ते चायुष्कप्रतिसंवेदनाभन्त इति तेषां तां निरूपयन्नाह ॥

णेरइयाणं भंते ! अणंतरं उव्वट्टित्ता जे भविए पंचिंदियतिरिक्खजोणिएसु उववज्जित्तए से णं भंते ! कयरं आउयं पडिसंवेदेइ ? गोयमा ! णेरइयाउयं पडिसंवेदेइ पंचिंदियतिरिक्खजोणियाउए से पुरओ कडे चिट्ठइ । एवं मणुस्से वि णवरं मणुस्साउए से पुरओ कडे चिट्ठइ असुरकुमाराणं भंते ! अणंतरं उव्वट्टित्ता जे भविए पुढवीकाइएसु उववज्जित्तए पुच्छा गोयमा ! असुरकुमाराउयं पडिसंवेदेइ पुढवीकाइयाउए से पुरओ कडे चिट्ठइ एव जो जहिं भविओ उववज्जित्तए तस्स तं पुरओ कडं चिट्ठंति तत्थ ठिओ तं पडिसंवेदेइ जाव वेमाणियाणं णवरं पुढवीकाइओ पुढवीकाइएसु उववज्जति पुढवीकाइयाउयं पडिसंवेदेइ अन्ने य से पुढवीकाइयाउए पुरओ कडे चिट्ठइ एवं जाव मणुस्सो सट्ठाणे उववातेयव्वो परट्ठाणे तहेव ॥

एतच्च व्यक्तमेव ॥ भ० १८ श० ५ उ० । ( पूर्वमायु सवेदनतोक्ता अथ तद्विशेषवक्तव्यता विउव्वणा शब्दे )

( २९ ) रत्नप्रभायां सर्वे उपपन्नपूर्वाः ।

किं सव्वपाणा उववन्नपुव्वा ? हंता गोयमा ! असतिं अदुवा अणंतखुत्तो ॥

किं सव्वेपाणा इत्यादि अस्य चैवं प्रयोगः । अस्यां रत्नप्रभायां त्रिंशन्नरकलक्षेषु किं सर्वे प्राणादय उत्पन्नपूर्वा अथोत्तरम् ( असइति ) असकृदनेकशः इदं च वेलाद्वयादावपि स्यादतोऽत्यन्तबाहुल्यप्रतिपादनायाह ( अदुवात्ति ) अथवा ( अणंतखुत्तोत्ति ) अनन्तकृत्वोऽनन्तवारान् ( भ०२ श० ३ उ० ) "तए णं से महब्बले अणगारे धम्मघोसस्स अणगारस्स अंतिए सामाइयमाइयाइं चउद्दसपुव्वाइं अहिज्जइ" ( इत्यादि ब्रह्मलोके महाबलस्योपपातः महब्बल शब्दे ) इह च किल चतुर्दशपूर्वधरस्य जघन्यतोऽपि लान्तके उपपात उच्यते " जावंति लंतगाओ चोद्दसपुव्वी जहन्नउववाओत्ति " वचनादेतस्य च चतुर्दशपूर्वधरस्यापि यद् ब्रह्मलोके उपपात उक्तस्तत्केनापि मनाग्विस्मरणादिना प्रकारेण चतुर्दशपूर्वाणामुपरि पूर्णत्वादिति सम्भावयन्तीति भ० ११ श० ११ उ० । ( गुणस्थानकेषूपपातो गुणट्ठाण शब्दे मार्गणास्थानक जीवट्ठाणकादिशब्देषु )

( ३० ) अविराधितश्रामण्यो देवलोकेषूपपद्यते ॥

अह भंते ! असंजयभवियदव्वदेवाणं अविराहियसंजमाणं विराहियसंजमाणं अविराहियसंजमासंजमाणं विराहियसंजमासंजमाणं असण्णीणं तावसाणं कंदप्पियाणं चरगपरिव्वायगाणं किव्विसियाणं तिरिच्छियाणं आजीवियाणं अभिओगियाणं सलिंगाणं दंसणवावन्नगाणं एएसिणं देवलोएसु उववज्जमाणाणं कस्स कहिं उववाए पण्णत्ते गोयमा ! असंजयभवियदव्वदेवाणं जहन्नेणं भवणवासीसु उक्कोसेणं उवरिमगेवेज्जएसु अविराहियसंजमाणं जहन्नेणं सोहम्मे कप्पे उक्कोसेणं सव्वट्ठसिद्धे विमाणे विराहियसंजमाणं जहन्नेणं भवणवासीसु उक्कोसेणं सोहम्मे कप्पे अविराहियसंजमासंजमाणं सोहम्मे कप्पे उक्कोसेणं अच्चुए कप्पे विराहियसंजमासंजमाणं जहन्नेणं भवणवासीसु उक्कोसेणं जोइसियासु असण्णीणं जहन्नेणं भवनवासीसु उक्कोसेणं वाणमंतरेसु अवसेसा सव्वे जहन्नेणं भवणवासीसु उक्कोसेणं वोच्छामि तावसाणं जोइसिएसु कंदप्पियाणं सोहम्मे कप्पे चरगपरिव्वायगाणं बंभलोए कप्पे किव्विसियाणं लंतगे कप्पे तिरिच्छियाणं सहस्सारे कप्पे आजीवियाणं अच्चुए कप्पे अभिओगियाणं अच्चुए कप्पे सलिंगाणं दंसणवावन्नगाणं उवरिमगेविज्जएसु ॥

अह भंतेत्यादि व्यक्तं नवरमथेति परप्रश्नार्थः ( असंजयभवियदव्वदेवाणंति ) इह प्रज्ञापनाटीका लिख्यते असंयताश्चारित्रपरिणामशून्या भव्या देवत्वयोग्या अत एव द्रव्यदेवा । समासश्चैवम् । असंयताश्च ते भव्यद्रव्यदेवाश्चेति असंयतभव्यद्रव्यदेवास्तत्रैते असंयतसम्यग्दृष्टयः किलेत्येके यत किलोक्तम् । " अणुव्वयमहव्वएहि य, बालतवोकामनिज्जराए य । देवाउयं निबंधइ, सम्मद्दिट्ठी य जो जीवो " एतच्चायुक्तं यतोऽमीषामुत्कर्षत उपरिमग्रैवेयकेषूपपात उक्तः सम्यग्दृष्टीनां तु देशविरतानामपि न तत्रासौ विद्यते देशविरतश्रावकाणामच्युतादूर्ध्वमगमनात् । नाप्येते निह्नवास्तेषामिहैव भेदेनाभिधानात् नन्याभिमिथ्यादृष्टय एवाऽभव्या भव्या वा असंयतभव्यद्रव्यदेवाः श्रमणगुणधारिणो निखिलसामाचार्यनुष्ठानयुक्ता द्रव्यलिङ्गधारिणो गृह्यन्ते ते ह्यखिलकेवलक्रियाप्रभावत एवोपरिमग्रैवेयकेषूत्पद्यन्त इति असंयताश्च ते सत्यप्यनुष्ठाने चारित्रपरिणामशून्यत्वात् । ननु कथं तेऽभव्या भव्या वा श्रमणगुणधारिणो भवन्तीत्यत्रोच्यते तेषां हि महामिथ्यादर्शनमोहप्रादुर्भावे सत्यपि चक्रवर्तिप्रभृत्यनेकभूपतिप्रवरपूजासत्कारसन्मानदानात् साधून समवलोक्य तदर्थं प्रव्रज्याक्रियाकलापानुष्ठानं प्रति श्रद्धा जायते ततश्च यथोक्तक्रियाकारिण इति । तथा ( अविराहियसंजमाणंति ) प्रव्रज्याकालादारभ्याभग्नचारित्रपरिणामानां सञ्ज्वलनकषायसामर्थ्यात् प्रमत्तगुणस्थानकसामर्थ्याद्वा स्वल्पमायादिदोषसम्भवेऽप्यनाचरितचरणोपघातानामित्यर्थः । तथा [ विराहियसंजमाणंति ] उक्तविपरीतानाम् [ अविराहियसंजमासंजमाणंति ] प्रतिपत्तिकालादारभ्याखण्डितदेशविरतिपरिणामानां श्रावकाणाम् ( विराहियसंजमासंजमाणंति ] उक्तव्यतिरेकिणाम् [ असण्णीणंति ) मनोलब्धिरहितानामकामनिर्जरावतां तथा ( तावसाणंति ) पतितपत्राद्युपभोगवतां बालतपस्विनां तथा ( कंदप्पियाणंति ] कन्दर्पः परिहासः स येषामस्ति तेन वा ये चरन्ति ते कन्दर्पिकाः कान्दर्पिका वा व्यवहारतश्चरणवन्त एव कन्दर्पकौत्कुच्यादिकारकाः । तथा हि गाथा– " कहकहकहस्स हसणं, कंदप्पो अणिहुया य उल्लावा । कंदप्पकहाकहणं, कंदप्पुवएस संसाया ॥ १ ॥ भुमनयणवयणदसण–छेदेहिं करपायकन्नमाईहिं । तं तं करेइ जह जह, हसइ परो अत्तणा अहसं ॥ २ ॥ वाया कुक्कुइओ पुण, तं जंपइ जेण हस्सए अन्नो । नाणाविहजीवरुए, कुव्वइ मुहतूरए चेवेत्यादि ॥ ३ ॥ जो संजओ वि एया, सुअप्पसत्था सुभावणं कुणइ । सो तव्विहेसु गच्छइ, सुरेसु भइओ चरणहीणोत्ति " ॥ ४ ॥ अतस्तेषां कन्दर्पिणाम् [ चरगपरिव्वायगाणंति ] चरकपरिव्राजका धाटिभैक्ष्योपजीविनस्त्रिदण्डिनः । अथवा चरकाः कच्छोटकादयः परिव्राजकास्तु कपिलमुनिसूनवोऽन्तेषाम् [ किव्विसियाणंति ] किल्बिषं पापं तदस्ति येषां ते किल्बिषिकास्ते च व्यवहारतश्चरणवन्तोऽपि ज्ञानाद्यवर्णवादिनो यथोक्तम् " नाणस्स केवलीणं, धम्मायरियस्स सव्वसाहूणं । माई अवण्णवाई किव्विसियं भावणं कुणइत्ति " ॥ १ ॥ अतस्तेषां तथा [ तिरिच्छियाणंति ] तिरश्चां गवाश्वादीनां देशविरतिभाजाम् [ आजीवियाणंति ] पाखण्डिकविशेषाणां नाग्न्यधारिणां गोशालकशिष्याणामित्यन्ये । आजीवन्ति वा ये अविवेकिलोकतो लब्धिपूजाख्यात्यादिनिमित्तं तपश्चरणादीनि ते आजीविकास्तत्त्वेनाजीविका अतस्तेषां तथा [ आभिओगियाणंति ] अभियोजनं विद्यामन्त्रादिभिः परेषां वशीकरणादि अभियोगः स च द्विधा । यदाह– " दुविहो खलु अभिओगो, दव्वे भावे य होय नायव्वो । दव्वम्मि होइ जोगा, विज्जामन्ताय भावम्मि " त्ति ॥ १ ॥ सोऽस्ति येषां तेन वा चरन्ति ये ते ऽभियोगिका आभियोगिका वा ते च व्यवहारिणश्चरणवन्त एव मन्त्रादिप्रयोक्तारो यदाह– " कोउय भूइकम्मे, पसिणा पसिणे निमित्तमाजीवी । इड्ढिरससायगुरुओ, अहिओगं भावणं कुणइ " त्ति ॥ २ ॥ कौतुकं सौभाग्याद्यर्थं स्नपनकं भूतिकर्म ज्वरितादिभूतिदानं प्रश्नाप्रश्नं च स्वप्नविद्यादि [ सलिंगाणंति ] रजोहरणादिसाधुलिङ्गवतां किं विधानामित्याह [ दंसणवावन्नगाणंति ] दर्शनं सम्यक्त्वं व्यापन्नं भ्रष्टं येषां ते तथा तेषां निह्नवानामित्यर्थः [ एएसिणं देवलोगेसु उववज्जमाणाणंति ] एतेन देवत्वं प्राप्तानामपि [illegible]

प्रतिपादितम् " विराहियसजमाण जहमेणं भवणवईसु उ-क्कोसेण सोहम्मे कप्पे " इह कश्चिदाह-विराधितसंयमानामु-त्कर्षेण सौधर्मे कल्पे इति यदुक्तं तत्कथं घटते द्रौपद्यास्तु कुमा-लिकाभवे विराधितसंयमाया ईशानोत्पादश्रवणादित्यत्रोच्यते, तस्या संयमविराधनोत्तरगुणविषया बकुशत्वमात्रकारिणी न मू-लगुणविराधनेति, सौधर्मोत्पादश्च विशिष्टतरसंयमविराधनाया स्यात्, यदि पुनर्विराधनमात्रमपि सौधर्मोत्पत्तिकारक स्यात्त दा बकुशादीनामुत्तरगुणादिप्रतिसेवावतां कथमच्युतादिषूत्पत्तिः स्यात् कथंचिद्विराधकत्वात्तेषामिति [ असमीण जहमेण भ-वणवासीसु उक्कोसेणं वाणमंतरेसुत्ति ] इह यद्यपि चमरबलि-सारमहियमित्यादिवचनादसुराद्ययो महर्द्धिका पलिओवमम-क्कोस वनरियाणं ति " वचनाच्च व्यन्तरा अल्पर्द्धिकास्तथाप्यत एव वचनादवसीयते सन्ति व्यन्तरेभ्य सकाशादल्पर्द्धयो भवनप-तय केचनेति असज्ञी देवेषूत्पद्यत इत्युक्तम् । भ० १ श० २ उ० । उपसंपादने, " उववानो उवसंपज्जण ' नि० चू० ५ उ० ।

**उववायकप्प**-उपपातकल्प-पु० पार्श्वस्थादिभि सहासित्वा सं-विग्नविहारोपपतने, । पं० भा० ।

उववायकप्पमहुणा, वोच्छामि जहक्कमेणं तु ।
पंचहिं ठाणेहि विवक्खि-ऊण संविग्गमक्कया जुत्तो ॥
अब्भुज्जतं विहारं, उवेइ उववायकप्पो सो ।
उववयण उववाओ, पासत्थादी य पचठाणा तु ॥
तेसु विविहं तु वट्टित्तो, वियाक्खिओ होति णायव्वो ।
संवेगसमावण्णो, पच्छा उ उवेति उज्जयविहारं ॥
एस उववायकप्पो ॥ पं० भा० ।

पचहिं ठाणेहिं सो पुण पासत्थाईहिं अच्छिऊण वियक्खिऊण विविधमनेकप्रकारं वा वर्तितुमित्यर्थ । मिद्धासवेगजुत्तो सवे-गसमाप्त एव संवेगविहार उपपतति उपसंपद्यते तत उपपात-कल्पो भवति । एस उववायकप्पो । पं० चू० ॥

**उववायकारि** ( ए् ) उपपातकारिन्-पुं० आचार्यनिर्देशकारि-णि, " उववायकारी य हरीमणे य ' सूत्र० १ श्रु० १३ अ० ।

**उववायगइ**-उपपातगति-स्त्री० उपपातरूपा उपपाताय वा गतिः। उत्पादाय गमने, उपपातरूपायां गतौ च। उपपादगतिस्तु त्रिवि-धा क्षेत्रभवनोभवभेदात् तत्र नारकतिर्यङ्नरदेवसिद्धाना यत्स्व-क्षेत्रे उपपातायोत्पादाय गमन सा क्षेत्रोपपातगति-या च नारका-दीनामेव स्वभवे उपपातरूपा गति. सा भवोपपातगति- यच्च निष्पुद्गलयोर्गमनमात्र सा नोभवोपपातगति विहायोगतिस्तु स्पृशद्गत्यादिकानेकविधेति । भ० ८ श० ७ उ० ।

**उववायय**-उपपातज- पु० उपपाताज्जात उपपातज' । देवनार-केषु, आचा० १ श्रु० १ अ० ॥

उपपातक- न० पातकसदृशे ततो न्यूनफलके पापभेदे, वाच०

**उववायसन्ना**-उपपातसज्ञा- स्त्री० देवसज्ञाभेदे, यस्यां समुत्प-द्यते देवः । स्था० ५ ठा० । वर्णकोऽन्यत्र रा० । अत्र हीरवि-जयसूरिं प्रति पण्डितगुणविजयकृतप्रश्नो यथा सौधर्मादिषु देवा-नां प्रत्येकमुपपातशय्या विद्यते एकस्यामनेकेषामुपपातो वेति ? अत्र महर्धिकसुराणामुपपातशय्या भिन्ना अन्येषां तु सम्भाव्यत इति सभाव्यते तथाविधव्यक्ताक्षराणां दर्शनस्यास्मरणादिति । ही० ।

**उववास**-उपवास- पु० उप वस् घञ् । उपेति सद् उपावृत्तस्य दो-षस्य सतो गुणैराहारपरिहारादिरूपैर्वा वास उपवासः ।" उपा-वृत्तस्य दोषेभ्य , सम्यग्वासो गुणै सह । उपवासः स विज्ञेयो, न शरीरविशोषणमिति " ध० २ अधि० । आहारशरीरसत्कारा-दित्यागे, स० । औ० । अभक्तार्थकरणे, स्था० ३ ठा० ( पोस-होववासशब्दे विधिर्वक्ष्यते ) तपनोदयमारभ्य यामाष्टकमभो-जनम् । उपवासः स विज्ञेय- प्रायश्चित्तं विधीयते । १ । उपावृ-त्तस्य पापेभ्यो, यश्च वासो गुणै सह । उपवास' स विज्ञेय, सर्वभोगविवर्जित । १ । ' वाच० । तथा श्राद्धानामुपवासे तन्दु-लधावनं रक्तानीरं च कल्पते न वेति प्रश्ने तेषामुपवासे प्रासुक-मुष्णोदकं चेति पानीयद्वयं कल्पते तन्दुलधावन रक्ताजलं प्रासुक भवति परं श्राद्धानां न कल्पत इति (११६प्र०) तथैकोनत्रिंशदधिक-द्विशतपष्ठोच्चारकृतोऽस्ति परं शक्त्यभावे एकान्तरोपवासैः कर्त्तु-शुद्ध्यति न वेति प्रश्ने एकोनत्रिंशदधिकद्विशत षष्ठा उच्चारिता-स्तदा षष्ठा एव कर्त्तुं शुद्ध्यन्ति (१२८ प्र०) तथाश्विनचैत्रास्वाध्या-यमध्ये उपवासाः क्रियन्ते स विंशतिस्थानकमध्ये प्रक्षेप्तुं शुद्ध्यति न वेति प्रश्ने आश्विनचैत्रास्वाध्यायमध्ये सम्यगष्टौ दिनत्रयकृ-तोपवासो विंशतिस्थानकमध्ये प्रक्षेप्तुं न शुद्ध्यति ( १२९ प्र०) श्रीविजयसेनसूरिसत्कपं० कनकविजयगणिकृतप्रश्नास्तदुत्तरा-णि च यथा षष्ठादौ प्रत्याख्याने भक्तद्वयकथनाधिक्यस्य किं प्रयो-जनमिति प्रश्ने सामान्यत- सतां द्विवारं भोजनं लोकप्रथित-मित्युपवासद्वयेन भोजनचतुष्टयं भोजनद्वयं च पारणोत्तरपारण-योरेकाशनपूर्वकं कार्यत इति (३७७प्र०) तथा रोहिण्युपवासप-ञ्चम्याद्युपवासश्च कारणे सति मिलन्त्यां तिथौ क्रियते न वेति प्रश्ने कारणे सति मिलन्त्यां तिथौ क्रियते कार्यते चेति प्रवृत्तिर्दृश्य-ते कारण विना तूदयप्राप्तायामेवेति बोध्यम् सें०प्र०२ उल्ला०४७७ प्र०। तथा जालोरसंघकृतप्रश्नोत्तराणि यथा त्रिविधोपवासप्रत्या-ख्यानमन्यप्रत्याख्यानं च कया रीत्या पार्यते इति प्रश्ने उपवासकीधु-त्रिविहारनमुक्कारसी पोरसी पुरिमड्ढादिक कीधुँ पाणहारपच्च-क्खाण फासिउ १ पालिउ २ सोहिउ ३ तीरिउं ४ किट्टिउ ५ आरा-हिउ ६ जं च नाराहिउं तस्स मिच्छामि दुक्कड इत्युपवासप्रत्या-ख्यानपारणरीतिर्वृद्धपरपरया ज्ञातव्या । अधुना केचन श्राद्धा उप-वासकीधुत्रिविहार नमुक्कार सिपुरिमड्ढादिक कीधो चउव्विहार-पच्चक्खाणफासिउं १ पालिउं २ सोहिउ ३ तीरिउ ४ किट्टिउ ५ आराहिउं ६ जं च नाराहिउं तस्स मिच्छामि दुक्कडं इत्यमपि पार-यन्तो दृश्यन्ते तथा नमुक्कारसिपोरसि पुरमड्ढादिक कीधु चउव्वि-हार एकासणुबिआसणुकीधुत्रिविहार चउव्विहा पच्चक्खाण फा-सिउ १ पालिउ २ सोहिउ ३ तीरिउ ४ किट्टिउं ५ आराहिउं ६ ज च नाराहिउं तस्स मिच्छामि दुक्कडं इत्यन्यप्रत्याख्यानपारणरी-तिरपि परपरयैव ज्ञेयेति १ से० प्र० ४ उल्ला० १४४ प्र० ।

**उववासतव**-उपवासतपस्-न० आहारपरित्यागरूपे तपोभेदे, तथा प्रथमदिने एक उपवास- कृतो द्वितीयदिने द्वितीय इत्थं कृतं षष्ठ-तप आलोचनामध्ये समायाति नवा तथा प्रहरानन्तरं प्रत्याख्यात उपवास आलोचनामध्ये आयाति न वेति प्रश्ने यद्यपि संभ्रमतया प्रत्याख्यातं षष्ठादितपस्तथा कालवेलाप्रत्याख्यातमुपवासतपश्च बहुफलदायि भवति तथापि विशकलितत्वयोच्चारितं षष्ठादि-तप कालातिक्रमेणोच्चारितमुपवासतपश्च सर्वथा लोचनामध्ये नायातीत्येकान्तो ज्ञातो नास्तीति से० प्र० ३ उल्ला० १३८ प्र० ।

**उवविट्ठ**-उपविष्ट- त्रि० उप-विश्-क्त । सामीप्येन स्थिते, । जी० ३ प्रति० । सन्निषण्णे, ज्ञा० ३ अ० । " तेता उवविठ समाण सागरचंदो नारय पुच्छइ " आ० म० प्र० ।

उवविणिग्गय-उपविनिर्गत- त्रि० निरन्तरविनिर्गते, जी०३प्र०।

उववूह ( हा ) -उपबृं ( हा ) हण- न० दर्शनादिगुणवतां प्रशंसायाम्, उत्त० २८ अ० । समानधार्मिकाणां क्षमणा वैयावृत्यादिसद्गुणप्रशंसनेन तत्तद्गुणवृद्धिकरणे, प्रव० ६ द्वा० ॥

अत्रोदाहरणम् ॥

"उववृहणाए उदाहरणं जहा । रायगिहे णयरे सेणिओ राया इओ य सक्को देवराया समत्त पससति । इओ य एगो देवो अ-सद्दहंतो नयरबाहिं सेणियस्स निग्गयस्स चेल्लयरुवं काऊण अ-णमिसे गिण्हति । ताहे त निवारेति पुणरवि अण्णत्य सजती गु-व्विणी पुरतो ठिता ताहे अपवर गविऊण जहा ण को वि जाणइ तहा सूइगिहं कारवेति जं किंचि सूतिकामनसयमेव करेइ ततो सो देवो सजइरुव परिच्चएऊण दिव्वं देवरूवं दरिसेति भणति व सेणियसुलद्धं ते जम्मजीवियस्स फलं जेण ते पवयणतुवरिए रिसीभत्ती भवतित्ति उववूहेऊण गओ एवं उववूहेनव्वा सो-हम्मिया" द० ३ अ० । व्य० ॥ मिथ्योपवृंहणायां क्षपण प्रशस्तोपवृंहणाख्यकरणे आचामाम्लम् । जीत० ।

उववूहण-उपवृंहण-न० अजमोदने , " ठितिसाहणमुववृहणह ठिसाइपलोयण चेव " इह प्राकृतत्वेन निरनुस्वार पाठ । ततश्चोपवृंहण तस्यानुमोदनं कार्य्यं यथा धन्यस्त्व धर्माधिकारी इ त्यादि । पचा० २ विव० । प्रशंसायाम्, "उववृहणात्ति वा पस-संति वा सलाजणणत्ति वा सलाघणत्ति वा एगट्ठा " नि० चू० १ उ० ( एतद्व्याख्यानकल्पना उववूहणविणय शब्दे )

उववूहण ( णा ) विणय-उपवृंहणविनय-पुं० उपवृंहण नाम-समानसाधर्मिकाणां क्षपणवैयावृत्यादिसद्गुणप्रशंसनेन तद्वृ-द्धिकरण स एव विनय । दर्शनाचारविनये, व्य० १ उ० । इ-दाणीं उववूहणत्ति दारं उववूहणत्ति वा पससंति वा सद्धा-जणणत्ति वा सलाघणति वा एगट्ठा ॥

खमणे वेयावच्चे, विणए सज्झायमादिसंजुत्तं ।
जो तं पसंसए य, स होति उववूहणाविणओ ॥२७॥

(खवणित्ति) चउत्थ छट्ठं अट्ठम दसम दुवालसमं अद्धमासख-मण मास दुमास तिमास चउमास पंचमास छम्मासा सव्वांपि इत्तर आवकहियं वा [ वेयावच्चेत्ति ] आयरियवेयावच्चे उव-ज्झायवेयावच्चे तवस्सिवेयावच्चे गिलाणवेयावच्चे कुल-गणवेयावच्चे संघवाबाइ असुहुसेहे वेयावच्चे दसम एयासिं पुरिसाण इमेण वेयावच्च करेति । असणादिणा वत्थाइणा पी-ढफलगसेज्जा संथारगओ सह भेसज्जेण य [ विणत्ति ] नाण-विणओ दसणविणओ चरित्तविणओ मणविणओ वयणविणओ कायविणओ उवचारियविणओ य । एसाविणओ स वित्यरो भा-णियव्वो । जहा दसवेयालिए [सज्झाएत्ति] वायणा पुच्छणा प-रियट्टणा अणुपेहा धम्मकहा य पचविहो सज्झाओ । आदिस-द्दाओ जे अण्णे तवभेयाओ मोयरिया ते घिप्पति तहा खमादओ य गुणा जुत्तति एतेहिं अहाविहिएहिं गुणेहिं उववेयाजुत्तो भ-णति जो इति अणिद्दिट्ठसरूवो साहू घेप्पइ त सद्देण खमणादि गुणोववेयस्स गहणं पसंसते श्लाघयतीत्यर्थ [ पसंसत्ति ] प-ससाए णिद्देसो होइ भवति किं उववूहणाविणओ णिद्देसवयण-विहाओ कम्मावणयणकारमित्यर्थ । उववूहणत्ति दारं गय ॥ नि० चू० १ उ० ।

उववूहणिया-उपवृंहणीया- स्त्री० उपवृंहयतीति उपवृंहणीया उपवृंहणकर्य्याम्, नि० चू० ८ उ० । एतद्वक्तव्यता रायपिंड शब्दे )

उववूहणियापट्टय-उपवृंहणीयापट्टक- पुं० जमतो गऊ उपयो-ज्ये पट्टके, जमंतस्स रण्णो उववूहणियापट्टओत्ति वुत्तं भवति । नि० चू० ६ उ० ।

उववूहिय-उपवृंहित-न० समूर्च्छित्ते, अनुमते, आव० ३ अ० ।

उववेय-उपपेत-त्रि० उप-अप-इत । इत्येतस्य च स्थाने निरुक्ति-वशाद्धुपपेत भवतीति।युक्ते,भ०२श०१उ० । शकन्ध्वादिदर्शना-दकारलोप । औ० । पृषोदरादय इत्यकारलोप । रा० ।

उपेत- त्रि० उप इत प्राकृतत्वाद् वर्णागम स्था० ६ ठा०।नि० क्षु० । युक्ते, स०। "पुप्फफलोववेएण वणमडेणं" नि० चू० १ उ० 'परमहरिसोववेए' रा० । आ०म० प्र०। औ०। नि०चू०। उत्त०। "सरिसलावण्णरुवगुणोववेयाण " रा० ।

उपवेद- पुं० उपमित वेदेन, वेदसदृशे आयुर्वेदादौ, वाच० ।

उववेसण-उपवेशन- न० उप-विश् भावे ल्युट् । आसने.निवे-शने, स्थापने च । वाच० । अधिकरणे ल्युट् । चर्मभेदे, यत्रार्शो-रोगादिभि कारणैरुपविश्यते । बृ० ३ उ० ।

उवव्वय-उपव्रत-न० नियमे, हा० । नियमास्तु।अक्रोधो गुरुशु-श्रूषा,शौचमाहारलाघवम् । अप्रमादश्चेति । द्वा० ८ द्वा० ।

उवसंकमंत-उवसंक्रामत्- त्रि० सामीप्येन गच्छति, द० ५ अ० । भिक्षायै वासाय वा गच्छति, आचा० १ श्रु० ७ अ० २ उ० ।

उवसंकमित्ता-उपसंक्रम्य- अव्य० । उप सम् ल्यप् । उपगत्ये-त्यर्थे,"समण भगव महावीर उवसकमति उवसकमित्ता वदंति" स्था०३ ठा० । उवसकमित्ता चार चरति । सू० प्र० १ पाहु० ॥

उवसंकमित्तु-उपसंक्रम्य-अव्य०उप सम् क्रम ल्यप् । आसन्नीभूये-त्यर्थे, आचा० २ श्रु० । आसन्नतामेत्येत्यर्थे, " उवसंकमि-त्तुगाहावतीवृया आउसंतो समणा " आचा० १ श्रु० ७ अ० ३ उ०।

उवसंखा-उपसङ्ख्या- स्त्री० उप सामीप्येन सङ्ख्या उपसख्या सम्यग्यथावस्थितार्थपरिज्ञाने, " अणेवसंखा इति ते उदाहुअ-हे सउभासइ अम्ह एवं" । सूत्र० १ श्रु० १६ अ० ।

उवसंत-उपशान्त-पुं० उप शम् क्त० । उपशमप्रधाने , सूत्र० २ श्रु० २ अ० । क्रोधादिजयादुपशान्ते, शीनीभूते, सूत्र० १ श्रु० ६ अ० । क्रोधादिप्रमादरहिते, प्रव० २ द्वा० । क्रोधविपाका-वगमेन ( पं० व० ) मनोवाक्कायविकाररहिते, ध० ३ अधि० । औ० । कषायानुदयादिन्द्रियनोइन्द्रियोपशमाद्वा ( आचा० १ श्रु० ५ अ० ४ उ० ) उपशमयुक्ते, ज० १ श० ६ उ० । विष्क-म्भितोदयमुपनीतमिथ्यात्वभावे च । शेषमिथ्यात्वमिश्रपुञ्जावा-श्रित्य विष्कम्भितोदय शुद्धपुञ्जमाश्रित्य पुनरपनीतमिथ्यात्व-भावे, विशे० । आ० । सर्वथाऽभावमापन्ने, प्रज्ञा० १९ पद । उपशान्तमोहगुणस्थानके, पं० स० । पञ्चदशे ऐरवतजे ती-र्थंकरे, प्रव० ७ द्वा० । तिजृ० । नारकादीना विशिष्टोदयाभा-वात् क्रोधभेदे, स्था० ४ ठा० ।

उवसंतकसायवीयरागछउमत्थ-उपशान्तकषायवीतरागच्छ-द्मस्थ-पुं० छादयते केवलज्ञान केवलदर्शन चात्मानमेनेति छद्म ज्ञानावरणदर्शनावरणमोहनीयान्तरायकर्मोदय । सति तस्मिन् केवलस्यानुत्पादात् तदपगमानन्तरं चोत्पादात् छद्मनि तिष्ठती-ति छद्मस्थ स च सरागोऽपि भवतीत्यतस्तद्व्यवच्छेदार्थं वी-तरागग्रहणं वीतो विगतो रागो मायालोभकषायोदयरूपो यस्य

स चासौ वीतरागः स चासौ छद्मस्थश्च वीतरागच्छद्मस्थः स च क्षीणकषायोऽपि भवति तस्यापि यथोक्तरागापगमात् अतस्तद्व्यवच्छेदार्थमुपशान्तकषायग्रहणं कषशिषेत्यादिदण्डकधातुर्हि सार्थः कषन्ति कष्यन्ति च परस्परमस्मिन् प्राणिन इति कष संसारः कषमयन्ते गच्छन्त्येभिर्जन्तव इति कषायाः क्रोधादयः उपशान्ता उपशमिता विद्यमाना एव संक्रमणोद्वर्त्तनाऽपवर्तनादिकरणोदयायोग्यत्वेन व्यवस्थापिताः कषाया येन स उपशान्तकषायः। स चासौ वीतरागच्छद्मस्थ । प्रव० २२४ द्वा० । एकादशगुणस्थानोपगते, प० सं० १ द्वा० । दर्श० ॥

उवसंतकसायवीयरागच्छउमत्थगुणट्ठाण–उपशान्तकषायवीतरागच्छद्मस्थगुणस्थान–न० एकादशे गुणस्थाने, तत्राविरतसम्यग्दृष्टेः प्रभृत्यनन्तानुबन्धिनः कषाया उपशान्ताः संभवन्ति उपशमश्रेण्यारम्भे ह्यनन्तानुबन्धिकषाया न विरतो देशविरतः प्रमत्तोऽप्रमत्तो वा स तूपशमस्य दर्शनमोहत्रितयमुपशमयतितदुपशमानन्तरं प्रमत्ताप्रमत्तगुणस्थानपरिवृत्तिशतानि कृत्वा ततोऽपूर्वकरणगुणस्थानोत्तरकालमनिवृत्तिबादरसंपरायगुणस्थानोत्तरकालमनिवृत्तिबादरसंपरायगुणस्थाने चारित्रमोहनीयस्य प्रथमं नपुंसकवेदमुपशमयति। ततः स्त्रीवेदक्रमो हास्यरत्यरतिशोकभयजुगुप्सारूपं युगपत्पट्कं ततः पुरुषवेदं ततो युगपदप्रत्याख्यानावरणप्रत्याख्यानावरणौ क्रोधौ ततः संज्वलनक्रोधं ततो युगपद् द्वितीयतृतीयौ मानौ ततः संज्वलनमानं ततो युगपद्द्वितीयतृतीयमाये ततः संज्वलनमायां ततो युगपद् द्वितीयतृतीयौ लोभौ ततः सूक्ष्मसंपरायगुणस्थाने संज्वलनलोभमुपशमयतीत्युपशमश्रेणिः । स्थापना चेयम्। विस्तरतस्तु उपशमश्रेणिः स्वोपज्ञशतकटीकायां व्याख्याता ततः परिभावनीया। तदेवमन्येष्वपि गुणस्थानकेषु क्वापि कियतामपि कषायाणामुपशान्तत्वसंभवात् उपशान्तकषायव्यपदेशः संभवत्यतस्तद्व्यवच्छेदार्थं वीतरागग्रहणम् । उपशान्तकषायवीतराग इत्येतावतापीष्टसिद्धौ छद्मस्थग्रहणं स्वरूपकथनार्थं व्यवच्छेद्याभावात् न ह्यच्छद्मस्थ उपशान्तकषायवीतरागः संभवति यस्य छद्मस्थग्रहणेन व्यवच्छेदः स्यादिति। अस्मिंश्च गुणस्थानेऽष्टाविंशतिरपि मोहनीयप्रकृतय उपशान्ता ज्ञातव्याः उपशान्तकषायश्च जघन्येनैकं समयं भवति उत्कर्षेण त्वन्तर्मुहूर्तं कालं यावत् ततः ऊर्ध्वं नियमादसौ प्रतिपतति। प्रतिपातश्च द्वेधा भवक्षयेण अद्धाक्षयेण च। तत्र भवक्षयो म्रियमाणस्य अद्धाक्षय उपशान्ताद्धायां समाप्तायां अद्धाक्षयेण च प्रतिपतितं यथैवारूढस्तथैव प्रतिपतति यत्र यत्र बन्धोदयोदीरणा व्यवच्छिन्नास्तत्र तत्र प्रतिपतता सता ते आरभ्यन्त इति यावत् । प्रतिपतंश्च तावत्प्रतिपतति यावत्प्रमत्तगुणस्थानं कश्चित्तु ततोऽप्यधस्तनगुणस्थानकद्विकं याति कोऽपि सास्वादनभावमपि। यः पुनर्भवक्षयेण प्रतिपतति स प्रथमसमय एव सर्वाण्यपि बन्धनादीनि करणानि प्रवर्तयतीति विशेषः । कर्म० । इह यदि बद्धायुरुपशमश्रेणिं प्रतिपद्य [illegible] ल्लमप्यगतगुणस्थानवर्ती उपशान्तमोहो वा भूत्वा कालं [illegible] नीति तदा नियमेनानुत्तरसुरेषूत्पद्यते श्रेणिप्रतिपातितस्य तु [illegible] त्रेऽनियम नानामतित्वेन नानास्थानगमनात् । अथा[illegible] नां प्रत्येक[illegible] नां प्रतिपन्नः तदन्तर्मुहूर्तमुपशान्तमोहो भूत्वा नियमत [illegible] नकषायः कान्त्येन न श्रेणिप्रतिलोममावर्त्तेव । उक्तं [illegible] : पडिवन्नो, संढिगतो वा पसतमोहो वा । जइ [illegible] तो गूत्तरन्नुंम्मु ॥ अनियट्टाढ़ दोड

पसंतमोहो मुहुत्तमेत्तद्धं । उदितकसायो नियमा, नियत्तए सेढिपडिलोमं " आ० म० प्र० ॥

उवसंतकसायवीयरागदंसणारिय–उपशान्तकषायवीतरागदर्शनार्य्य–पुं० वीतरागदर्शनार्यभेदे, प्रज्ञा० १ पद ।

उवसंतखीणमोह– उपशान्तक्षीणमोह– पुं० उपशान्त सर्वथानुदयावस्थ क्षीणश्च निर्जीर्णो मोहो मोहनीयं कर्म येषां ते तथा । उपशमक्षयावस्थमोहनीयकर्मके, पंचा० १६ विव० ।

उवसंतजीवि ( ण् ) उपशान्तजीविन्–पुं० उपशान्तोऽन्तर्वृत्त्या जीवनीत्येवं शील उपशान्तजीवी । अन्तर्वृत्त्यैव जीवामीत्यभिग्रहविशेषधारके, भ० १ श० ३३ उ० ॥

उवसंतमोह–उपशान्तमोह–पुं० उपशान्तः सर्वथाऽनुदयावस्थो मोहो मोहनीयं कर्म यस्य स उपशान्तमोह । उपशमवीतरागे, अयं च एकादशगुणस्थानमारूढ उपशमश्रेणिसमाप्तावन्तर्मुहूर्तं भवति ततः प्रच्यवते स० ॥ "उवसंतो मोहो नाम जस्स अट्ठवा स तिविहंपि मोहणिज्जकम्ममुवसंतं अणुमेत्तमविण्ह वेदेति। सो य ढेसपमिवातेन वा नियमा पमिवतित्ति" ॥ आचू० ४ अ० । अनुत्कटवेदमोहनीये, "अणुत्तरोववाइया उवसंतमोहा ( उवसंतमोहत्ति) अनुत्कटवेदमोहनीयाया परिचारणाया कथञ्चिदप्यभावात् न तु सर्वथोपशान्तमोहाः उपशमश्रेणेस्तेषामभावात् ॥ भ० ५ श० ४ उ० । उपशान्त उपशमनीयो विद्यमान एव संक्रमणोद्वर्तनादिकरणायोग्यत्वेन व्यवस्थापितो मोहो मोहनीयं कर्म येन स उपशान्तमोहः। प्रव० ९३ द्वा० ॥ उपशामकनिर्ग्रन्थे, ॥ आव० ४ अ० ।

उवसंतरय–उपशान्तरजस्– न० प्रशान्तरजसि, "उवसंतरयं करेह" रा० । जी० ॥ उपशान्तमपगतं रज कालुष्यापादकं यस्य स तथा । रजोरहिते, "समंसि भोमे उवसंतरए सक्खमाणे से चिट्ठति" ॥ आचा० १ श्रु० ५ अ ५ उ० ।

उवसंताहिगरणउल्लाससंजणणी–उपशान्ताधिकरणोल्लाससञ्जननी–स्त्री० उपशान्तस्योपशमं नीतस्याधिकरणस्य कलहस्य य उल्लासः प्रवर्तनं तस्य सञ्जननी समुत्पादयित्रीत्यर्थः। पष्ठ्याम्प्रशस्तायां भाषायाम्, प्रव० २३३ द्वा० ।

उवसंति–उपशान्ति–स्त्री० उपशमे, आचा० १ अ० । निवृत्तौ, वाच० ॥

उवसंधारिय–उपसंधारित–त्रि० संकल्पिते, " पत्तवुरीए तेण भणियं जति यतव्वुरीए तओ तेण उवसंधारियं सब्भावं च से कहियं " नि० चू० १ उ० ।

उवसंपज्जंत–उपसंपद्यमान–त्रि० उपसंपदं गृह्णति, व्य० १ उ० ।

उपसंपज्जसेणियापरिकम्म( ण् )–उपसंपच्छ्रेणिकापरिकर्मन्–न० दृष्टिवादान्तर्गतपरिकर्मभेदे स० ॥

उवसंपज्जिउकाम–उवसंपत्तुकाम–त्रि० उपसंपदं जिघृक्षौ, वृ० १ उ० ॥

उवसंपज्जित्ता–उपसंपद्य–अव्य० उप-सम्-पद्-ल्यप् । सामस्त्येनाङ्गीकृत्येत्यर्थे, ध० ३ अधि० । आश्रित्येत्यर्थे, स्था० ८ ठा० सूत्र० । उपा० । पा० । " उवसंपज्जित्ताणं विहरामि " उपसपद्यो भूत्वा विहरामि वर्त्ते भ० ३ श० २ उ० ।

उवसंपण्ण–उपसंपन्न–त्रि० उप-सम्-पद्-क्त-प्राप्ते, मृते च। हेम० सामीप्येन प्रतिपन्ने, आव० ६ अ० । " उवसंपन्नो ज कारणं तु तं कारणं अपूरिंतो " ध० ३ अधि० ।

उवसंपया–उपसम्पद्–स्त्री० उप सामीप्येन सपादनं गमनमुप-

सम्पद् । इयन्तं कालं भवदन्तिके आसितव्यमित्येवंरूपे ( ग० २ अधि० ) ज्ञानाद्यर्थगुर्वन्तराश्रयणे, ध०३ अधि० । पञ्चा० । भ० आ० म० द्वि० । त्वदीयोऽहमित्येवं श्रुताद्यर्थमन्यसत्ताभ्युपगमे, अनु० । सामीप्ये, प्रशंसायाम्, अस्तित्वे, निष्पत्तौ, प्रतिपत्तौ च । पं० चू० "अत्थणे उवसंपया" अर्थेन ज्ञानाद्यर्थं परस्य आचार्यस्य पार्श्वे अवस्थाय ज्ञानादिगुणार्जनमुपसंपदुच्यते । तस्याचार्यस्य समीपे अवस्थानाय स्वामिन् इयन्तं कालं भवतां समीपे मया स्थातव्यं गच्छान्तरे आचार्यान्तरे ज्ञानाद्यर्थमिति विज्ञप्तिपूर्वकं ज्ञानाद्यभ्यसनरूपा उपसंपत्सामाचारीति भावः ॥ उत्त० २६ अ० ।

( १ ) उपसंपदो भेदास्तत्र चारित्रगृहस्थोपसंपत्प्रतिपादनं च ।
( २ ) आचार्यादौ मृते अन्यत्रोपसंपत् । तत्र हानिवृद्ध्यादिपरीक्षणेन कर्तव्याकर्तव्यनिरूपणम् ।
( ३ ) भिक्षोर्गणादपक्रम्य अन्यं गणमुपसंपद्य विहारः ।
( ४ ) शैक्षेण सपरिच्छन्नेन रत्नाधिकस्योपसंपद्दातव्या ।
( ५ ) सांभोगिकासांभोगिकयोः सहमिलितयोराचार्ययोः सामाचारी तत्रावग्रहश्च ।
( ६ ) पार्श्वस्थादिविहारप्रतिमामुपसंपद्य विहारे कर्तव्यताविधिः ।
( ७ ) भिक्षोर्गणादपक्रम्य अन्यं गणमुपसंपद्य विहरणे प्रकारान्तरप्रतिपादनम् ।
( ८ ) गणावच्छेदकस्यान्यं गणमुपसंपद्य विहारः ।
( ९ ) कुगुरौ सत्यन्यत्रोपसंपत् ।

( १ ) उपसंपद्भेदा यथा—

उपसम्पत् द्विधा साधुविषया गृहस्थविषया च ज्ञानादिहेतोर्यदपरं गणं गत्वोपसम्पद्यते सा साधुविषया । यत्पुनरवस्थाननिमित्तं गृहिणामनुज्ञापनं सा गृहस्थविषया वृ०१ उ० । तत्रास्तां गृहस्थोपसंपत् साधूपसंपत् प्रोच्यते ।

तिविहा उवसंपया पमत्ता तंजहा आयरियत्ताए उवज्झायत्ताए गणित्ताए ॥

उपसंपत् ज्ञानाद्यर्थं भवदीयोऽहमित्यभ्युपगमः । तथा हि कश्चित् स्वाचार्यादिसंदिष्टः सम्यक् श्रुतग्रन्थानां दर्शनप्रभावकशास्त्राणां वा सूत्रार्थयोर्ग्रहणं स्थिरीकरणं विस्मृतसंधानार्थं तथा चारित्रविशेषभूताय वैयावृत्त्याय क्षमणाय वा संदिष्टमाचार्यान्तरं यदुपसंपद्यते । स्था० ३ ठा० । ध० । ज्ञानाद्युपसंपत्त्रिविधा ज्ञानादिभेदात्तथा चाह ।

उवसंपया य तिविहा, नाणे तह दंसणे चरित्ते य ।
दंसणनाणे तिविहा, दुविहा य चरित्तअट्ठाए ॥

उपसंपत् त्रिविधा तद्यथा ज्ञाने ज्ञानविषया एवं दर्शनविषया चारित्रविषया च । तत्र दर्शनज्ञानयोः संबन्धिनी त्रिविधा द्विविधा च चारित्रार्थायेति । तत्र यदुक्तं दर्शनज्ञानयोस्त्रिविधेति तत्प्रतिपादनार्थमाह ।

वत्तणा संधणा चेव, गहणे सुत्तत्थ तदुभए ।
वेयावच्चे खमणे, काले आवकहाइ य ॥

वर्तना संधना चैव ग्रहणमित्येतत्त्रितयं ( सुत्तत्थतदुभयम्मि ) सूत्रार्थोभयविषयमवगन्तव्यमित्येतदर्थमुपसंपद्यते । तत्र वर्तना प्राग्गृहीतस्यैव सूत्रादेरस्थिरस्य गुणनमिति । संधना तस्यैव प्रदेशान्तरे विस्मृतस्यामीलना योजना घटनेत्येकोऽर्थः । ग्रहणं पुनस्तस्यैव तत्प्रथमतया आदानम् एतत्त्रितयं सूत्रार्थोभयविषयं द्रष्टव्यमेव ज्ञाने नव भेदाः दर्शनप्रभावनीयशास्त्रविषया एत एव भेदा द्रष्टव्याः । अत्र च संदिष्टः संदिष्टस्यैवत्रोपसंपद्यते इत्यादि चतुर्भङ्गिका । तत्र प्रथमो भङ्गः शुद्धः शेषास्त्वशुद्धाः । द्विविधा चारित्रार्थायेति यदुक्तं तदुपदर्शनायाह ( वेयावच्चे इत्यादि ) चारित्रोपसंपत् वैयावृत्त्यविषया क्षपणविषया च । इयं कालतो यावत्कथिका च भवति इत्वरादिस्वरा च । एतदुक्तं भवति चारित्रार्थमाचार्याय कश्चिद्वैयावृत्त्यकरत्वं प्रतिपद्यते स च कालत इत्वरो यावत्कथिकश्च क्षपकोऽपि उपसंपद्यते द्विविधः इत्वरो यावत्कथिकश्चेति गाथासंक्षेपार्थः । सांप्रतमयमेवार्थो विशेषतः प्रतिपाद्यते । तथापि संदिष्टेन संदिष्टस्योपसंपद्दातव्येति मार्गोऽयं गुणः । एतत्प्रभवत्वादुपसंपद इत्यतोऽमुमेवार्थमभिधित्सुराह ।

संदिट्ठो संदिट्ठस्स, चेव संपज्जए उ एमाई ।
चउभंगो एत्थं पुण, पढमो भंगो हवइ सुद्धो ॥

संदिष्टो गुरुणाऽभिहितः संदिष्टस्यैवाचार्यस्य यथा अमुकस्य सपद्यस्व उपसंपदं प्रयच्छेत्यर्थः । एवमादिश्चतुर्भङ्गी । तद्यथा संदिष्टस्य एष भङ्ग उक्तः । एवं संदिष्टोऽसंदिष्टस्यान्यस्याचार्यस्येति द्वितीयः । असंदिष्टः संदिष्टस्य न तावदिदानीं गन्तव्यं त्वयाऽमुकस्येति तृतीयः । असंदिष्टोऽसंदिष्टस्य न तावदिदानीं न वाऽमुकस्येति चतुर्थः । अत्र पुनः प्रथमो भङ्गो भवति शुद्धः पुनः शब्दस्य विशेषणार्थत्वात् । द्वितीयपदेनान्यत्रविकल्पिनति निमित्तमन्येऽपि द्रष्टव्याः ।

संप्रति वर्त्तनादिस्वरूपप्रतिपादनार्थमाह ।

अथिरस्स पुव्वगहियस्स, वत्तणा जं इहं थिरीकरणं ।
तस्सेव पएसंतरं, नट्ठस्सणुसंधणा घडणा ॥
गहणं तप्पढमतया, सुत्ते अत्थे य तदुभए चेव ।
अत्थगहणम्मि पायं, एस विही होइ नायव्वो ॥

पूर्वगृहीतस्य सूत्रादेरस्थिरस्य यदिह स्थिरीकरणं सा वर्त्तना तस्यैव सूत्रादेः प्रदेशान्तरनष्टस्य या घटना मीलनं साऽनुसंधना तत्प्रथमतया च सत्रे षष्ठीसप्तम्योरर्थं प्रत्यभेदात् । सूत्रस्य एवमर्थस्य सूत्रार्थोभयस्य यदादानमिति शेषः । तद्ग्रहणमित्यादि । अर्थग्रहणे प्रायो बाहुल्येन एष वक्ष्यमाणलक्षणो विधिर्भवति ज्ञातव्यः । प्रायोग्रहणं सूत्रग्रहणेऽपि कश्चिद्भवत्येव धर्मार्जनादिरिति ज्ञापनार्थम् । ( आ० म० ) स च योज्यते कर्त्तव्यमेव भवति कृतिकर्म वन्दनमिति एवं तावत् ज्ञानोपसंपद्विधिरुक्तो दर्शनोपसंपद्विधिरप्यनेनैवोक्तो द्रष्टव्यस्तुल्ययोगक्षेमत्वात् । तथा हि दर्शनप्रभावकशास्त्रपरिज्ञानार्थमेव दर्शनोपसंपदिति । संप्रति चारित्रोपसंपद्विधिमभिधित्सुराह ॥

दुविहा उ चरित्तम्मि, वेयावच्चे तहेव खमणे य ।
नियगच्छा अण्णम्मि उ, सीयणदोसाइणा होइ ॥

द्विविधा चारित्रविषया उपसंपत् तद्यथा वैयावृत्त्यविषया क्षपणविषया च । किमत्रोपसंपदा कार्यं स्वगच्छ एव तत् कस्मान्न क्रियते निजगच्छादन्यस्मिन् गमनं सीदनदोषादिना भवति आदिशब्दादन्यत्राचार्याद्यपरिग्रहः ।

इत्तरिया य विभासा, वेयावच्चे तहेव खमणे य ।
अविगिट्ठविगिट्ठम्मि य, गणिणा गच्छस्स पुच्छाए ॥

इह चारित्रार्थमाचार्यस्य कश्चित् वैयावृत्त्यकरत्वं प्रतिपद्यते स च कालत इत्वरो यावत्कथिकश्च भवति । आचार्यस्यापि वैयावृत्त्यकरोऽस्ति वा न वा । तत्राय विधिर्यदि नास्ति ततोऽसावित्य ।

एव । अथास्ति स द्विविध इत्वरो वा स्यात् यावत्त कथिको वा आगन्तुकोऽप्येवं द्विभेद एव । तत्र यदि द्वावपि यावत्कथिकौ ततो यो लब्धिमान् स कार्यते इतरस्तूपाध्यायादिभ्यो दीयते । अथ द्वावपि लब्धियुक्तौ ततो वास्तव्य एव कार्यते इतरस्तूपाध्याया-दिभ्यो दीयते । अथ नेच्छति ततो वास्तव्य एव प्रीतिपुरस्सर तेभ्यो दीयते आगन्तुकस्तु कार्यते इति । अथ प्राक्तनोऽप्युपाध्या-यादिभ्यो नेच्छति तत आगन्तुको विसर्ज्यते एव । अथ वास्त-व्यो यावत्कथिक इत्वरस्त्वितर इत्यत्राप्येवमेव भेदाः कर्त्तव्या यावदागन्तुको विसृज्यते ततो वास्तव्य उपाध्यायादिभ्यो ऽनिच्छ-न्नपि प्रीत्या विश्राम्यते यदि सर्वथा नेच्छति ततो विसृज्यते आगन्तुकः । अथ वास्तव्य खल्वित्वरः आगन्तुकस्तु यावत्कथि-कस्ततो वास्तव्योऽवधिकालं यावदुपाध्यायादिभ्यो दीयते शेषं पूर्ववत् । अथ द्वावपीत्वरौ तत्राप्येक उपाध्यायादिभ्यो दीयते अन्यस्तु कार्यते शेष पूर्ववत् । अन्यतमोऽवधिकालं यावद्ध्रियते इत्येव यथाविधि विज्ञापा कार्या । उपाध्यायादिभ्य इत्यत्रादि-शब्दात् स्थविरग्लानशैक्षकादिपरिग्रहः । उक्ता वैयावृत्त्योपसं-पत् । संप्रति क्षपणोपसंपत् प्रतिपाद्यते (अविगिट्ठेत्यादि) कश्चि-त् क्षपणार्थमुपसंपद्यते स च क्षपको द्विधा इत्वरो यावत्कथि-कश्च यावत्कथिक उत्तरकाले अनशनकर्ता इत्वरस्तु द्विधा वि-कृष्टक्षपक खल्वाचार्येण पृच्छ्यते हा आयुष्मन् ! पारणके त्वं कीदृशो भवसि यद्यसावाह ग्लानोपमस्ततोऽसावभिधातव्योऽल तव क्षपणेन स्वाध्यायवैयावृत्त्यकरणेन यत्नं कुरु इतरोऽपि पृष्ट सन् एवमेव प्रज्ञाप्यते । अन्ये तु व्याचक्षते विकृष्टक्षपकः पारण-ककाले ग्लानकल्पनामनुभवन्नपि इष्यते एव । यस्तु मासादि-क्षपको यावत्कथिको वा स इष्यते एव तत्राप्याचार्येण गच्छ प्रष्टव्यो यच्चायं क्षपक 'उवसपज्जत्ति' इति अनापृच्छ्य संगच्छते सामाचारीविराधनां यतस्ते सन्दिष्टा अपि उपाधिप्रत्युपेक्षणादि तस्य न कुर्वन्ति । अथ पृष्टा ब्रुवते यथाऽस्माकमेकः क्षपकोऽस्त्येव तस्य क्षपणपरिसमाप्तावस्य करिष्यामस्ततो ऽसौ ध्रियते अथ नेच्छन्ति ततस्त्यज्यते अथ गच्छस्तमप्यनुवर्त्तते ततोऽसाविष्यत एव तस्य च विधिना प्रतीच्छितस्य उद्वर्त्तनादि कार्यम् । यदा पुन प्रमादतोऽनाभोगतो वा न कुर्वन्ति शिष्या तदा आचार्येण वन्द-नीया इत्यलं प्रसङ्गेन ।

सम्प्रति चारित्रोपसंपद्विधिविशेषप्रतिपादनार्थमाह ।

उवसंपन्नो जं का-रणं तु तं कारणं अपूरंतो ।
अहवा समाणियम्मि, सारणया वा विसग्गो वा ॥

यत्कारण यन्निमित्तमुपसंपन्नस्तुशब्दादन्यत्वसामाचार्यन्तर्गत किमपि गृहीत तत्कारणं वैयावृत्त्यादि अपूरयन् अकुर्वन् यदा वर्तते इत्यस्याहारस्तदा किमित्याह ( सारणया वा विसग्गो वा इति ) तदाऽस्य सारणा चोदन क्रियते अविनीतस्य पुनर्विस-र्गो वा परित्यागः क्रियते । तथा नापूरयन्नेव यदा वर्तते तदा सारणा वा विसर्गो वा किं तु ( अहवा समाणियम्मित्ति ) अ-थवा समानीते परिसमाप्तिं नीते अभ्युपगतप्रयोजने सारणा च क्रियते यथा परिसमाप्तम् । ततो यदि ऊर्ध्वमपि इच्छति ततो भ-वति अथ नेच्छति सोऽवस्थातु ततो विसर्गो वेति उक्ता चारित्रो-पसंपत् । संप्रति गृहस्थोपसंपदुच्यते तत्रेयं साधूना सामाचारी सर्वत्रैव साध्वादिषु वृक्षाद्यधोऽप्यननुज्ञाप्य स्थातव्यं यत आह ।

इत्तरियं पि न कप्पइ, अविदिन्नं खलु परोग्गहाईसु ।
चिट्ठित्तु निसीइत्तु व, तइयव्वयरक्खणट्ठाए ॥

इत्वरमपि स्वल्पमपि कालमिति गम्यते न कल्पते अविदत्त खलु परावग्रहादिषु आदिशब्दः परावग्रहोऽनेकभेदप्रख्यापक किं न कल्पते इत्याह स्थातुं कायोत्सर्गं कर्तुं निसत्तुमुपवेष्टुं किमि-त्यत आह ( तइव्वयरक्खणट्ठाए ) अदत्तादानविरत्याख्यतृतीय-व्रतरक्षणार्थं तस्मात् भिक्षाटनादावपि व्याघातसंभवे क्वचित् स्थातुं शक्यमनुज्ञाप्य स्वामिनं विधिना स्थातव्यम् । अटव्यादिष्वपि विश्रमितुंकामेन पूर्वस्थितमनुज्ञाप्य स्थातव्यं तदभावे देवतां यस्याः सोऽवग्रह इति । आ० म० द्वि० । आ० चू० ॥ पंचा० ( अत्रालोचना आलोयणा शब्दे )

( २ ) आचार्यादौ मृते ऽन्यत्रोपसंपत् ।

गामाणुगामं दुइज्जमाणे भिक्खू जं पुरओ कट्टु विहरे-ज्जा मे आहच्च वीसंभेज्जा अत्थिया इत्थ केइ उवसंपज्जणा-रिहे कप्पइ से उवसंपज्जियवेसिया णत्थि इत्थ केइ अणे उवसंपज्जणारिहे अप्पए असमत्ते कप्पइ से एगरायाए पडिमाए जण्णं जण्णं दिसिं अण्णसाहम्मिया विहरंति तण्णं तण्णं दिसं उपलित्तए णो से कप्पइ तत्थ विहारपत्तियं वत्थए कप्पइ से कारणपत्तियं वत्थए तंसि च णं करणंसि निवि-यंसि य रोवइज्जा वसाहि अज्जो एगरायं मा दुरायं वा एवं से कप्पइ एगरायं वा दुरायं वा वत्थए णो कप्पइ एग-राओ वा दुराओ वा परवत्थए जं तत्थ एगराओ वा दुराओ वा परं वसति सेसंतरा छेए वा परिहारे वा ॥

ग्रामानुग्रामं ग्रामेण ( दुइज्जमाणे ) गच्छन् एतावता ऋतुबद्धः कालो दर्शितो यं पुरतः कृत्वा प्रभुं कृत्वा इत्यर्थः । स नियमादा-चार्य उपाध्यायो वा ऽष्टव्यो विहरति स आहच्च कदाचित् भ्रंजेज्जा शरीराद्विष्वग् भवेत् कालगतो भवेत् ( अत्थियाइ-त्थ इत्यादि ) अस्ति चाऽत्र समुदायेऽन्यः कश्चित् आचार्याद्युपा-ध्यायाद्वा व्यतिरिक्तो गणी प्रवर्त्तकस्थविरो वृषभो वा उपसंप-दनार्हस्तत उपसंपत्तव्यः । अथान्यो नास्ति कश्चिदशेषसंपदना-र्हस्तर्हि स आत्मनः कल्पनासमाप्त इति ( से ) तस्य कल्पते । एकरात्रिक्या प्रतिमया यत्र वसति तत्रैकरात्राभिग्रहेण ( जण्णं-जण्णमित्यादि ) यस्यां यस्यां दिशि अन्ये साधर्मिका विहरन्ति तां तां दिशमुपगन्तुं न पुनः ( से ) तस्य कल्पते तत्रापान्तरा-ले विहारप्रत्ययं वस्तुं कल्पते ( से ) तस्य कारणप्रत्ययं संघा-तादिकारणनिमित्तं वस्तुम् । तस्मिंश्च कारणे निष्ठिते यदि परो वदेत वस आर्य ! एकरात्रं द्विरात्रं वा एव ( से ) तस्य कल्पते एकरात्र वा द्विरात्रं वा वाशब्दात्त्रिरात्र वा वस्तु न ( से ) तस्य कल्पते एकरात्राद् द्विरात्राद्वा पर वस्तुम् यस्तत्र एकरात्रात् द्वि-रात्राद्वा पर वसति तत्र ( से ) तस्य स्वकृतादन्तराच्छेदः परिहा-रो वेति । अधुना निर्युक्तिविस्तरः । अत्रोपसंपदनार्हं इत्युक्तं सा चोपसंपद् द्विधा लौकिकी लोकोत्तरिकी च ते आह ।

लोगे य उत्तरम्मि य, उवसंपयलोगिगी उ रायाई ।
राया वि होइ दुविहो, सावेक्खो चेव निरवेक्खो ॥

उपसंपद् द्विधा लोके लोकोत्तरे च । तत्र लौकिको राजादौ आदिशब्दात् युवराजादिपरिग्रहः । तथा च यदा राजा मृतो भवति तदा युवराजमुपसंपद्यन्ते तं राजानं स्थापयन्तीत्यर्थः । युवराजोऽन्यः स्थाप्यते स च राजा भवति । द्विविधः सापेक्षो निरपेक्षश्च । सहापेक्षया सापेक्षस्तद्विपरीतो निरपेक्षः । तथा च

प्रजा राजाऽऽपेक्षः सन् जीवन्नेव युवराजं स्थापयति निरपेक्षस्तु नैव । अथ किं जीवन्नेव युवराजं स्थापयति तत आह ।

जुवराजम्मि उ ठविए, पया उ बंधंति आयतिं तत्थ ।
नेव य कालगयम्मि, खुब्भंति पडिवेसियनरिंदा ॥

युवराजे राज्ञा साक्षाद्विद्यमानेन स्थापिते प्रजास्तत्र आयतिमागामिकालविषयां महतीमास्थां बध्नन्ति नैव च सहसा कालगते राज्ञि प्रातिवेशिकनरेन्द्राः सीमातटवर्तिनः प्रत्यन्तराजानः क्षुभ्यन्ति राज्यविलोपनाय संनह्यन्ति । उक्तः सापेक्षः ।

संप्रति निरपेक्षमाह ।

पच्छन्नरायतेणे, आयपरो दुविह होइ निक्खेवो ।
लोइयलोगुत्तरितो, लोगुत्तरवप्पियर वोच्छं ॥

निरपेक्षो नाम य प्रजानां राज्यस्य चायतिं नापेक्षते तस्मिन्कालगते स राजा मृत प्रच्छन्नो म्रियते यथा अतीव राजा शरीरबाधितो वर्तते स च तावत् म्रियते यावदन्यो निवेश्यते । स च कदाचित्स्तेनोऽपि । तथा निक्षेपण निक्षेप स द्विविधो द्विप्रकारस्तद्यथा आत्मनः परतश्च । पुनरेकैको द्विधा लौकिको लोकोत्तरिकश्च । तत्र लोकोत्तरिकः स्थाप्य. पश्चाद्वक्ष्ये इत्यर्थः । इतर लौकिकं प्रथमगाथापादोपक्षिप्त वक्ष्ये । प्रतिज्ञातमेव निर्वाहयति

निरवेक्खे कालगते, भिन्नरहस्सा चिगिच्छमच्चो य ।
अहिवास आसहिंडण, वज्झो तियमूलदेवो उ ॥

एको राजा निरपेक्षस्तस्य राज्ये मूलदेवश्चोरिकां करोति । स कदाचिद्दारक्षकैः प्राप्तो राज्ञः पार्श्वे नीतो राज्ञा च स्तेन इति कृत्वा वध्य आज्ञप्तः तत राजा तत्क्षणमेव निजमावासस्थानमुपगतः । क्षणमात्रेण च सहसा कालगतः । तस्मिन्निरपेक्षे कालगते द्वौ भिन्नरहस्यौ राजा मृत इति रहस्यं यौ जानीतस्तद्यथा चिकित्सो वैद्योऽमात्यश्च राजा चानपत्यस्ततोऽश्वस्याधिवासना कृता सर्वत्र त्रिकचतुष्कचत्वरादिषु हिंडाप्यते कथ नाम राजलक्षणयुक्त पुरुष लभेमहि य राजान स्थापयाम इति मूलदेवश्च यो वध्य आज्ञापित स तेनावकाशेन नीयमानो वर्तते ।

आसस्स पट्टिदाणं, आणयणं हत्थचालणं अन्नो ।
अभिसेगभोइयपरिभव, तणजक्खनिवायणं आणा ॥

ततोऽश्वेन तस्य मूलदेवस्य वध्यतया नीयमानस्य पृष्ठ दत्त । गाथायां स्त्रीत्व प्राकृतत्वात् प्राकृते हि लिङ्ग व्यभिचारि ततो मूलदेवो यत्र राजा प्रच्छन्नो जवनिकान्तरितोऽवतिष्ठते तत्रानीतस्ततो वैद्यकुमारामात्याभ्यां जवनिकाभ्यन्तरस्थिताभ्यां राज्ञो हस्त उपरि मुखे नीत्वा चालित एतत् राज्ञो हस्तचालन ततो वैद्यकुमाराभ्यामुक्त कृता राज्ञाऽनुज्ञा यथा मूलदेव राजानमभिषिञ्चत न शक्नोति वाचा वक्तुमिति ततो अभिषिक्तो मूलदेवो राज्ये नवरमसदृश इति कृत्वा केचिद्भोजिकाः परिभवमुत्पादयन्ति । न पुनः कुर्वन्ति । राजार्ह विनयं ततश्चिन्तयति मूलदेवो ममैते मूर्खतया परिभव कुर्वन्ते पर किमिदानीमेते मूर्खतयैव कदाचित्स्वयमेवसभामण्डप जल्पिष्यन्ति तदानीं शासयिष्यामि ततो ऽन्यदिवसे आत्मन शिरसि तृणशूकजातं कृत्वा आस्थानमण्डपिकायामुपविष्ट । ते च भोजिका मूर्खतया शनैः परस्परमुल्लपन्ति अद्यापि नन्वेष चोरत्व न मुञ्चति अन्यथा कथमेतादृशस्य तृणशूकजातस्येदृशे भवने सम्भवो नून तृणगृहादिषु चौरिकानिमित्तमतिगतस्ततस्तृणशूकजात शिरसि लग्नमिति एतच्चाकर्ण्य मूलदेवो रोषमुपागमत् मृते त्र अस्ति कोऽपि नाम मद्विरानु-कारी य एतान् शास्तीति । तत एवमुक्ते तत्पुण्यप्रभावतो राज्यदेवताधिष्ठितैर्निशितासिलताकैश्चित्रकर्मप्रतीहारैः केषांचित् शिरांसि लूनानि शेषा कृतप्राञ्जलय आक्षामन्युपगतवन्तः । तथा चाह ( भोइयपरिभवेत्यादि ) भोजिका परिभव कृतवन्तोऽन्यदा मूलदेवः ( तणत्ति ) तृणानि शीर्षे कृतवान् ततस्तत्कोपावेशं दृष्ट्वा यक्षैरतिपातनं विनाशन कृतम् । शेषैराज्ञा प्रतीच्छिता । एतदेव सविशेषमाह ।

जक्खनिवातियसेसा, सरणगया जेहिं तोसितो पुव्वं ।
ते कुव्वंती रण्णो, अत्ताण परे य निक्खिवणं ॥

यक्षनिपातितशेषा शरणागता मूलदेवस्य शरण प्रतिपन्ना । यैश्च पूर्वं मूलदेवस्तोषितस्ते राज्ञ आत्मन परस्य च निक्षेपमद्य प्रभृति युष्मदीया वयमेते चेति समर्पण कुर्वन्ति । उक्तो निरपेक्षो ऽनिरपेक्षश्च लोकोत्तरिको वक्तव्यस्तत्र प्रथमं सापेक्षमाह ।

पुव्वं आयतिबंधं, करेइ सावेक्ख गणहरे ठविए ।
अट्ठविए पुव्वुत्ता, दोसा उ अणाहमादीया ॥

यो नामाचार्यः सापेक्षः स पूर्वमेव गणधरे स्थापिते साधूनामायतिबन्धं करोति यथाऽयं युष्माकमाचार्य इत्येतदाज्ञया वर्तितव्यमिति । अथ न पूर्वं गणधरं स्थापयति ततस्तस्मिन्नस्थापिते दोषा पूर्वोक्ता अनाथादयः "अणाहमादीया" इत्यादिनाभिहिनाः शिलादयो दोषा भवेयुः । उक्तो लोकोत्तरिकः सापेक्षः ।

सप्रति निरपेक्षमाह ।

आसुकारोवरए, अट्ठविते गणहरे इमा मेरे ।
चिलिमिलिहत्थाणुण्णा, परिभवसुत्तत्थहावणया ॥

आशुकारेण शूलादिनोपरत कालगत आशुकारोपरतस्तस्मिन् सत्याचार्ये अस्थापिते ऽन्यस्मिन् गणधरे इयं वक्ष्यमाणा मर्यादा तामेवाह ( चिलिमिलीत्यादि ) आशुकारोपरत आचार्यो जवनिकान्तरितः प्रच्छन्नः कार्यो वक्तव्य चाचार्याणामतीवाशुभ शरीरं वाचाऽपि वक्तुं न शक्नुवन्तीति । ततो यो गणधरपदार्हस्त जवनिकाबहिः स्थापयित्वा सूरयो भण्यन्ते को गणधर स्थाप्यतामेव चोक्ता जवनिकाभ्यन्तरस्था गीतार्था आचार्यहस्तमपर्युन्मुख कृत्वा स्थाप्यमानगणधराभिमुख दर्शयन्ति वदन्ति च गणधरत्वमेतस्यानुज्ञात पर वाचा वक्तुं न शक्नुवन्ति एवं हस्तानुज्ञा न एतस्योपरि वासा निक्षिप्यन्ते । स्थापित एष गणधर इति पश्चात्कालगता आचार्या इति प्रकाश्यते ( परिभवसुत्तत्थहावणया इति ) ततो येऽभिनवस्थापितस्याचार्यस्य परिभवोत्पादनबुद्ध्या आचार्योचितं विनय न कुर्वन्ति तेषां सूत्रमर्थं वा स हापयति न ददातीत्यर्थः । सम्प्रति " आयपरो दुविह होइ निक्खेवो लोइयलोउत्तरितो " इति व्याख्यानार्थमाह ।

दंडेण उ अणुसट्ठा, लोए लोगुत्तरे य अप्पाणं ।
उवनिक्खिवंति सो पुण, लोकिकलोगुत्तरे दुविहो ॥

लोके लोकोत्तरे च यथार्हं विनयमकुर्वन्तो दण्डेनानुशिष्टा आत्मानमुपनिक्षिपन्ति तत्र लौकिको दण्ड पूर्वमुक्तो यो मूलदेवेन भोजिकानां केषांचित्कृतो लोकोत्तरिकः सूत्रार्थापहारणम् । इह नवे राज्ञीव नवे गणधरे स्थापिते निक्षेपरसो लोकस्य जायते तत्तत्फलाद्युपवर्ण्यते निक्षेपस्य फल लोके परिपालन लोकोत्तरज्ञानादीनामभिवृद्धि स चोपनिक्षेपो द्विधा लौकिको लोकोत्तरिकश्च । पुनरेकैको द्विधा आत्मोपनिक्षेपः परोपनिक्षेपश्च । तत्र लौकिक आत्मनिक्षेपो ये प्रगल्भास्ते आत्मनैवात्मान राज्ञ

उपनिक्षिपन्ति तिष्ठन्ति च चरणोपपातकारकाः प्रपन्नशरणा ये पुनरप्रगल्भास्ते ये राज्ञो वल्लभास्तैरात्मानमुपनिक्षेपयन्ति । एष परोपनिक्षेपः । लोकोत्तरिके आत्मनिक्षेपो गच्छवर्त्तिनां साधूनां तथाहि ये गच्छे एव वर्तन्ते साधवस्ते आत्मानमात्मनैवाभिनवाचार्यस्योपनिक्षिपन्ति । परनिक्षेप. फड्डकगतानां ते हि समागना स्पर्द्धकपतिना निक्षिप्यन्ते यथा एते अहं च युष्माकमिति । "इह मिथियाइय अंग्ने कउ उवसपञ्जणारिहे" इत्याद्युक्तम् नत्र यद्यपि स गीतार्थस्तरुण समर्थश्चेन्द्रियनोइन्द्रियाणां निग्रह कर्तु तथापि तेनान्यो गणो निश्रयितव्यो निश्रयश्च परप्रत्ययनिमित्त तत्रापि निक्षेप कर्त्तव्य ।

अत्र लौकिको दृष्टान्तस्तमेवाह ।

जह कोइ वणितो उ, धूयं सेट्ठिस्स हत्थनिक्खिवओ ।
दिसि जत्ताए गत्तो, कालगतो सो य सेट्ठी उ ॥

एको वणिक् तस्य गृहे मारिरुत्थिता । सर्वे गृहमुपच्छादितमेका दुहिता तिष्ठति परः स श्रेष्ठी निर्धन इति ता दुहितरं न परिणाययितुं समर्थस्ततो दिग्यात्रां कर्तुमिच्छति जानाति वै तस्याः कन्यकाया स्वभावं यथा समर्थात्मानमेषा सरक्षितुं केवलमेका कन्यका महती गृहे तिष्ठन्ती दुष्टशीला लोकेन संभाव्येतेति मित्रश्रेष्ठिनो हस्ते ता निक्षिप्य मुक्त्वा वाणिज्येन दिग्यात्रां गत । तस्यापि च मित्रश्रेष्ठिनो गृहे मारिरभूत् । तत सोऽपि सकुटुम्बो विनाशमुपागमत् तथा चाह स च श्रेष्ठी कालगत केवलमेका कन्यका स्थिता सा च मूलश्रेष्ठिदुहितु सखी सा च सखी अप्यात्मान संरक्षितु क्षमा केवल यश प्रत्ययनिमित्त राज्ञ समीपमुपस्थिता तथा चाह ।

सेट्ठिस्स तस्स धूया, वणियसुयं वेत्तु रस्रो समुवगया ।
अह यं एस सही मे, पालेयव्वा उ तुज्झेहिं ॥

तस्य मूलभूतस्य श्रेष्ठिनो दुहिता वणिक्सुतां मृतपितृवणिग्दुहितर गृहीत्वा राज्ञ समुपगता समीपमुपगता पादेषु निपत्य विज्ञपयति यथा देव युष्माभिर्निजदुहितरो रक्ष्यन्ते तथा अहमेषे य मे सखी युष्माभि पालयितव्या आवयोरपि युष्मत्कन्यकात्वात् ।

इय होउ त्ति य भणियं, कया अंतेउरम्मि तुट्ठेण ।
रन्ना परिकत्ता उ, भणिया वाहरिउ पालाउ ॥

इति एव भवत्विति भणित्वा तुष्टेन राज्ञा ते द्वे अपि कन्यान्त पुरे प्रक्षिप्ते भणिता च व्याहृत्य आकार्य ( पालाओ ) पालिका महत्तरिका कि भणितेत्यत आह ।

जह रक्खह मज्झ सुता, तहेव एया तो दोवि पालेह ।
ते एवि तउ पालें, विसयवियं विणीतकरणाए ॥

यथा रक्षय मम सुता कन्यकास्तथैव एते अपि द्वे मत्कन्यकास्ये पालयथ एवमुक्ते तयापि महत्तरिकया विनीतकरणया विज्ञप्तं देव एवे अतिपालयामि । एवमुक्त्वा ते कन्यान्त पुरं नीते । तत्र च मूलश्रेष्ठिदुहिता महत्तरिकां विज्ञपयति ।

जह कन्ना एयातो, रक्खह एमेव रक्खह ममं पि ।
जइ चेव ममं रक्खह, तह रक्खह मम सहिं पि ॥

यथा एता कन्या यूयं रक्षथ एवमेव मामपि रक्षथ । यथा च मां रक्षथ तथेमां मम सखीमपि रक्षथ ।

इय होउ अणुरागए, अह वासिं तत्थ संवसंतीणं ।
कालगया मयहरिया, जा कुणती रक्खणं तासिं ॥

इत्येव भवत्विति अभ्युपगते तासां तत्र संवसन्तीनामथ कियत्कालातिक्रमेण या रक्षणं तासां करोति सा महत्तरिका कालगता ।

सविकारातो दट्ठुं, सेट्ठिसुया विण्णवेइ रायाणं ।
महत्तरियदाणनिग्गह, वणियागमए य विण्णवणं ॥

महत्तरिकाकालगमनानन्तर ता. कन्यका सविकारा अभूवन् ततस्ता सविकारा. दृष्ट्वा श्रेष्ठिसुता राजान विज्ञपयति अन्यमहत्तरिकां प्रयच्छत दत्ता राज्ञा । तया च महत्तरिकया [ निग्गहत्ति ] कन्या सविकारा उपलभ्य खरण्टिता. एवं तासां तिष्ठन्तीनां ( वणियागमत्ति ) स देशान्तरगतो वणिक् समागत (विण्णवणमिति) राज्ञो विज्ञपनमकार्षीत् यथा देव ! नयामि निजपुत्रिकामिति ।

पूएऊण विसज्जणा, सरिसकुलदाए दोण्ह वि भोगा ।
एमेव उत्तरम्मि वि, अवत्त राइंदिए उवमा ॥

तत. श्रेष्ठिकृतविज्ञप्तिकानन्तर ते द्वे अपि पूजयित्वा राज्ञा विसृष्टे सदृशकुले दान विवाहिते इत्यर्थ । ततस्तयोर्द्वयोरपि विपुला भोगा दत्ता. । एवमेव अनेनैव प्रकारेण उत्तरेऽपि लोकोत्तरेऽपि अव्यक्तस्य रात्रिंदिवैरुपमा । इयमत्र भावना । यदि तावल्लौकिका अपि यशः सरक्षणनिमित्तमात्मानमन्यत्रोपनिक्षिपन्ति ततः सुतरां लोकोत्तरिकै साधुभि सयमयश सरक्षणनिमित्तमात्मा ऽन्यगणे निक्षेप्तव्यः । स चाव्यक्तो वयसा ततो यावत्षोडशवर्षो वयसा व्यक्तो भवति तावन्त काल तत्रान्यगणनिश्रायां तिष्ठति कथ पुनरात्मानं गणं वोपनिक्षिपति । तत आह ।

एते अहं च तुब्भं, वत्तीभूतो सयं तु धारेइ ।
जसपच्चयाउराला, मोक्खसुहं चेव उत्तरिए ॥

एते मदीया. साधवोऽहं च युष्माकमेव चोपनिक्षिप्य तावत्तत्र तिष्ठति यावत् व्यक्तो जायते ततो व्यक्तीभूत सन् तस्मान्निर्गत्य स्वयमेव गण धारयति एवं च कुर्वतस्तस्य फलमिह लोके उदारा यश प्रत्यया अवदातं यशोऽवदाताश्च लोके प्रत्यया सयमनैर्मल्यविषया । परलोके फलं मोक्षसुखमौत्तरिके लोकोत्तरिके उपनिक्षेपे । अथवा लौकिकस्य लोकोत्तरिकस्य च सापेक्षस्य पदस्थापनायोग्यविपर्यय परीक्षा ॥

सावेक्खं पुण पुव्वं, परिक्खए जह धणो उ सुण्हा उ ।
अणिययसहावयपरिहा-विय १ मुत्ता २ तच्चि ३ वुड्ढा ४ उ ॥

सापेक्ष पुन पूर्वं परीक्षते साधून् यथा धनश्रेष्ठी स्नुषा अनियतस्वभावा परीक्षितवान् कथमिति चेदुच्यते " रायगिहे नयरे धणो नाम सेट्ठी तस्स चत्तारि सुण्हा तो अन्नया तो चिंतेइ का मम सुण्हा घर वुक्खिहिति ततो अन्नया तासि परिक्खणनिमित्त सयणवग्गो णिमंतितो भोयणोत्तर सयणसमक्ख सुण्हातो सद्दावेऊण पत्तेय पत्तेयं पच सालिकणा समप्पिया एएसु रक्खिय करेह यदा मग्गेहामि तया दायव्वा ततो पढमाए बुद्धो एस न लज्जितो सयणसमक्ख पच कणे स मप्पतो न किपि जाणइ जया मग्गिहिति तया अन्ने दायव्वा इति छड्डिया । बिइयाए बुद्धलेसाति भुक्ता तइयाए, आभरणकरंडियाए सुरक्खीकया चउत्थीए ता उ य खेत्तेसु आरोविऊण विद्धिं नीया जाया । वरिसपणगेण सयसहस्सा । पुणो वि सेट्ठिणा वरिसपणगानतरं सयणवग्गं णिमंतेऊण भुत्तुत्तरं सयणसमक्ख ततो सद्दावियातो ते मे पंच सालिकणे समप्पेहा ततो पढमाए अन्नतो आणातो आणेऊण समप्पिया सेट्ठिया सव्वदसा-

विता भणिया ते चेव इमे पंच साहिकणा किं वा अन्ने । तीए कहिय ते मए तया चेव छड्डिया पुण अन्ने आणीया एवं बिइया-ए वि नवरं तीए भुत्ता कहिया । तइयाए ते चेव आणीया भणि-य आभरणकरंडियाए मए सुरक्खीकया । चउत्थीए भणियं ताय सगराणि समप्पिज्जतु जेण ते पंच सालिकणा आणिज्ज-ते । ततो सेट्ठिणा विम्हिएण पुच्छिय तीए कहियं जहावत्त जाव जाया मूलसहस्सा तउपरि तुट्ठेण सेट्ठिणा भणियमेतीए मज्झ पंच सालिकणा अतीव वुड्ढिं नेइच्चिय्ति एसा मम घरस्स सा-मिणी । तइया भंडाररक्खिया जीए भुत्ता सा महाणसवावारे निजोइया पढमा घरवाहिकम्मे । तथा चाह । प्रथमया परिहापि-ता द्वितीयया भुक्तास्तृतीयया तावन्मात्रा धृताश्चतुर्थ्या ( बुड्ढत्ति ) वर्द्धिता । एष दृष्टान्त समाप्ति । दार्ष्टान्तिकयोजनामाह ।

ओमेसिवमतरंते य, उज्झिउं आगतो न खलु जोग्गो ।
किति कम्मभारभिक्खा, दिएसु भुत्ता य भुत्तीए ॥

एवमाचार्येणापि परीक्षानिमित्त साधून्समर्प्य देशदर्शने शिष्या नियोक्तव्यास्तत्र योऽवमे दुर्भिक्षेऽशिवे वा साधून् त्यक्त्वा अथ-वा येऽनरन्तोऽसहायास्तान्वा त्यक्त्वा समागत स खलु न योग्य येनापि कृतकर्मसुपात्रलेपनादिव्यापारेषु भारे च पथ्युपकरण-वाहनेन भिक्षादिषु चात्मतुक्त्या भुक्ता उपयोगं नीता साधवो न च सम्यकपाविता सोऽपि न योग्य ।

न य छड्डिया न भुत्ता, नेव य परिहाविया न परिवुड्ढा ।
ततिएणं ते चेव उ, समीवपच्चाणिया गुरुणो ॥

तृतीयेन ये समर्पिताः साधवो गुरुणा ते न छड्डिता न दुर्भिक्षा-शिवादिषु परित्यक्ता नापि भुक्ता केवलमात्मोपयोगं नीता । नापि पुरुषासिप्रदानादिना परिहापिता परिहानिं नीता नाप्य-न्यान्यपरिव्राजनेन परिवर्द्धिता किं तु तावन्त एव गुरुसमीप प्रत्यानीता । चतुर्थमाह ।

उवसंपाविय पव्वा-विया य अएणे य तेसि संगहिया ।
एरिसए देइ गणं, कामं तइयं पि पूएमो ॥

येन बहव उपसंपादिता उपसंपद ग्राहिता बहव परिव्राजि-ताश्च अन्येन च तेषामुपसंपादितानां परिव्राजितानां च सबन्धिन संगृहीतास्तेऽपि उपसंपदं ग्राहयिष्यन्ते परिव्राजयिष्यन्ते चे-त्यर्थ । ईदृशे चतुर्थे ददाति गणमाचार्य एकान्तयोग्यत्वात् न केवलमेतस्मिन् किंतु काममतिशयेन तृतीयमपि पूजयामश्चतुर्था-ख्ने तमपि योग्यं प्रशंसाम इत्यर्थ ।

तत्रात्मपरो निक्षेपयोजनामाह ।

तम्मि गणे अभिसित्ते, सेसगभिक्खूण अप्पनिक्खेवो ।
जे पुण फड्डुगवतिया, आयपरे तेसि निक्खेवो ॥

एवं कालगते ठविए, सेसाणं आयनिक्खेवो ।
फड्डुगवतियाणं तु, आयपरो तेसि निक्खेवो ॥

तस्मिन् चतुर्थे तदभावे तृतीये वा गणे पदे अभिषिक्ते शेषका-णां भिक्षूणां तद्गणान्तर्वर्तिनामात्मनिक्षेपो भवति । ये पुन स्पर्द्ध-कपतयस्तेषामात्मन परतश्च निक्षेप स्पर्द्धकपतीनामात्मतस्तदा-श्रितानां परत स्पर्द्धकपतिद्वारेण तेषामुपनिक्षेपभावात् । एव-मात्मपरोपनिक्षेपिकालगते दृष्टव्यस्तथा चाह ( एव ति ) एव नि-रपेक्ष्य सहसा कालगते पूर्वप्रकारेणान्यस्मिन् स्थापिते शेषाणा गणान्तर्वर्तिनामात्मनिक्षेपो भवति स्पर्द्धकपतिकानां त्वात्मनिक्षेप स्पर्द्धकपतीनामात्मतस्तदाश्रितानां परतो निक्षेप इत्यर्थ ।

उपसंपज्जणअरिहे, अविज्जमाणम्मि होइ नानत्तं ।
गमणम्मि सुद्धासुद्धे, चउभंगो होति नायव्वो ॥

उपसंपदनार्हे अविद्यमाने सत्यन्यत्र गन्तव्य तत्र च गमने शुद्धपदे सयोगतश्चतुर्भङ्गी भवतीति ज्ञातव्यम । तद्यथा निर्गम-ने शुद्धो गमने च शुद्ध इति प्रथम निर्गमने शुद्धो गमने ऽशुद्ध इति द्वितीय । निर्गमने अशुद्धो गमने शुद्ध इति तृतीय । निर्गम-ने अशुद्धो गमने चाशुद्ध इति चतुर्थ । गाथायां चउभंगो इति पुंस्त्वनिर्देशः प्राकृतत्वात् । तत्र प्रथमभङ्गव्याख्यानार्थमाह ।

असतीए वायगस्स, जं वा तत्थत्थि तम्मि गहियम्मि ।
संघाडो एगो वा, दायव्वो असति एगागी ॥

य कालिकसुत्कालिक दृष्टिवाद वा वाचयति स नास्ति तत-स्तस्य वाचकस्यासत्यभावे अथवा यत्तत्रास्ति श्रुत तत्सर्वं गृही-त ततस्तस्मिन् गृहीतेऽन्यसूत्राद्यर्थमन्यत्र व्रजति तस्य च एक सघाटो दातव्यः । असति सघाटकाभावे एकाकी व्रजेत् ।

अह सव्वेसिं तेसिं, नत्थि उ उवसंपयारिहो अन्नो ।
सव्वे घेत्तु गमणं, जत्तियमेत्ता व इच्छंति ॥

अथ तेषां गच्छवर्तिनां साधूनां सर्वेषामन्य उपसंपदर्हो नास्ति तत सर्वान् गृहीत्वा गमने कर्तव्यम् । अथ सर्वे गन्तु नेच्छन्ति तर्हि यावन्मात्रा इच्छन्ति तावन्मात्रै सह गन्तव्यमेष निर्गमशुद्ध उच्यते ।

एवं सुद्धे निग्गमे, वइयाइअपडिवज्जंतो ।
संविग्गमणुन्नेहिं, तेहिं वि य दायव्वो संघाडो ॥

एव शुद्धे निर्गमे व्रजिकादिषु गोकुलादिष्वप्रतिबन्धमकुर्वन् गच्छेत् । तत्र यद्यपान्तराले संविग्नमनोज्ञा सन्ति ततस्तै सह मिलित्वा गन्तव्य तैरपि च निर्गमनशुद्धत्वात् ज्ञानाद्युपसंपन्नि-मित्ते च चलितत्वादवश्य सघाटो दातव्य । अथ यत्र एक द्वौ वा दिवसौ सघाटो न भवति व्याकुलत्वात्तदा किं कर्त्तव्यमत आह ।

एगं च दो व दिवसे, संघाडत्थं स पडिच्छिज्जा ।
असती एगागी उ, जयणा उवही न उवहम्मे ॥

एक द्वौ वा दिवसौ स सघाटार्थं प्रतीक्षेत असत्यभावे सघाट-स्य एकाकी व्रजेत् तत्र च यतना कर्त्तव्या सा च प्राक् कल्पाध्य-यनेऽभिहिता तत उपधिनोपहन्यते यतनया प्रवृत्तत्वात् । उप-संहारमाह ।

एसो पढमो भंगो, एवं सेसा कमेण जोएज्जा ।
आसतुज्ज य गणं, गच्छे दारा य तत्थ इमे ॥

एषोऽनन्तरोदित प्रथमो भङ्ग एवमुपदर्शितेन प्रकारेण शेषा अपि भङ्गका क्रमेण योक्तव्यास्तथा निर्गमशुद्ध प्राग्वत् गम-नाशुद्धो व्रजिकादिषु प्रतिबन्धकारणात् निर्गमनाशुद्धो दोषाकी-र्णतया निर्गमनात् निर्गमनशुद्धो व्रजिकादिष्वप्रतिबन्धान्निर्गम-नाशुद्धो गमनाशुद्धश्च प्राग्वत् । अथ प्रथमभङ्गवर्त्ती प्रथम्य कारणतो द्वितीयभङ्गवर्त्त्येपि एव च गच्छता तेन ये आसन्ना उद्य-ता उद्यतविहारिणस्तेषा स्थान गच्छेत्तत्र च गतस्य परीक्षादि-निमित्तमिमानि द्वाराणि भवन्ति तान्येवाह ।

उपसंपदर्हस्य गच्छस्य हानिवृद्धिपरीक्षणं तत्र

कल्प्याकल्प्यविधि ॥

पारिक्खहाणि असती, आगमणं निग्गमो अगंभिगे ।
निन्नियणजयणनिग्गड. दीहखद्ध पडिच्छंति ॥

परीक्षा ( हाणीति ) हानिवृद्धिविषया कर्तव्या यत्र ज्ञानादीनां हानिस्तत्र न वास्तव्यमन्यत्रवास्तव्यमिति भावः ( असतित्ति ) यस्य समीपं गच्छोपसंपन्नस्तस्मिन्सापेक्षे निरपेक्षे वा कालगतत्वेनासति योऽन्य स्थापितस्तस्य सकाशे स्थातव्यं तस्मिन्नपि सीदति यावत्कुलादिस्थविराणामागमनं तावत्प्रतीक्षणीयं तैरपि प्रतिचोदने कृते सीदति निर्गमो विधेय'। गच्छता च संविग्नाभावे यदिर्वास्तव्यमसंविग्ने निवेदना कर्त्तव्या। यदिर्वसत्यन्नावे तेष्वप्यसंविग्नेषु नवरं यतना विधेया। तथा संविग्नेषु वा सवसनं निसृष्टमनुज्ञातमेकरात्रमुत्कर्षतस्त्रीणि दिनानि वर्षादिकारणतः पुनर्यतनया ( दीहखरूमपि ) प्रचुरमपि दीर्घकालं प्रतीक्षते। एप द्वारगाथासंक्षेपार्थः। सांप्रतमेनामेव विवरीषुः प्रथमत' पारिच्छिहाणित्ति द्वारमाह।

पासत्यादिविरहितो, काहियमाईहिवावि दोसेहिं।
संविग्गमपरितंतो, साहम्मि य वच्छलोज्जा उ॥

अपान्तराले पार्श्वस्थादिविरहित. पार्श्वस्थादिसंसर्गिविप्रमुक्त' काथिकादिभिर्वा भावप्रधानोऽयं निर्देश. काथिकत्वादिभिर्वा दोपैर्विमुक्तस्तथा संविग्नोऽपरिश्रान्त. सामाचार्यामिति गम्यते। तथा च साधर्म्मिकवत्सलः प्रवचनविज्ञ साधर्म्मिकवात्सल्यपरायणः स'।

अब्भुज्जएसु ठाणं, परिच्छिउं हीयमाणए मोत्तुं।
केसु पदेसु हाणी, वड्ढी वा तं निसामेहि॥

अभ्युद्यतानामुद्यतविहारिणां स्थानं परीक्ष्य गाथायां सप्तमी षष्ठ्यर्थे हीयमानकान्मुक्त्वा तिष्ठेत्। अथ केषु पदेषु हानिर्वृद्धिर्वा सूरिराह। तदेतत्कथ्यमानं निशामय। तदेवाह।

तवनियमसंजमाणं, जहियं हाणी न कप्पते तत्थ।
तिगवुड्ढी तिगसोही, पंचविसुद्धी सुसिक्खा यं॥

यत्र तपोनियमसंयमानां हानिस्तत्र न कल्पते वस्तुं यत्र पुनस्त्रिकवृद्धिर्ज्ञानदर्शनचारित्रवृद्धिर्यत्र च त्रिकस्याहारोपधिशय्यारूपस्य शोधिर्यत्र च पञ्चानां पार्श्वस्थादिस्थानानां विशुद्धिस्तेष्वप्रवर्त्तनं यत्र च सुशिक्षा ग्रहणे आसेवना च तत्र वास्तव्यम्।

सांप्रतमेनामेव गाथां विवृणोति॥

वारसविहे तवे उ, इंदिय नोइंदिए य नियमे उ।
संजमसत्तरसविहो, हाणी जहि य तहिं न वसे॥

यत्र द्वादशविधे तपसि इन्द्रियविषये च नियमे संयमे सप्तदशविधे हानिस्तत्र न वसेत्।

तवनियमसंजमाणं, एएसिं चेव तिण्ह तिगवुड्ढी।
नाणादीण व तिण्हं, तिगसुद्धी उग्गमादीणं॥

एतेपामेव त्रयाणां तपोनियमसंयमानां वृद्धिस्त्रिकवृद्धि.। अथवा ज्ञानादीनां त्रयाणां वृद्धिस्त्रिकवृद्धि'। त्रयाणामुद्गमादीनामुपलक्षणमेतदाहारादीनां वा त्रयाणां शुद्धिस्त्रिकशुद्धिः।

पासत्थे ओसन्ने, कुसीलसंसत्त तह अहाछंदे।
एएहि जो विरहितो, पंचविसुद्धो हवइ सो उ॥

पार्श्वस्थोऽवसन्न कुशील' संसक्तो यथाच्छन्द एते पञ्चापि प्राक् सप्रपञ्च प्ररूपिता एतै स्थानैर्यो विरहित स पञ्चविशुद्धो भवति। पञ्चविशुद्धावेव प्रकारान्तरमाह॥

पंच य महव्वयाइं, अहवा वि नाणदंसणचरित्तं।
तव विणओ वि य पंच उ, पंचविहुवसंपया वावि।

वाशब्दः प्रकारान्तरोपप्रदर्शने पञ्च महाव्रतानि अथवा ज्ञानं दर्शनं चारित्रं तपो विनय इति पञ्च। यदि वा पञ्चविधा ज्ञानदर्शनचारित्रतपोवैयावृत्यभेदतः पञ्चप्रकारा उपसंपत् पञ्च तैः पञ्चभिर्विशुद्धः पञ्चविशुद्धः॥ सुशिक्षामाह।

सोभणसिक्ख सुसिक्खा,सा पुण आसेवणे य गहणे य।
दुविहाए वि न हाणी, जत्थ उ कहियं निवासेउं॥

शोभना शिक्षा सुशिक्षा सा द्विविधा तद्यथा आसेवने ग्रहणे च। आसेवने प्रत्युपेक्षणादे' सामाचार्या ग्रहणमागमस्य। एतस्यां द्विविधायामपि यत्र न हानिस्तत्र वासः कल्पते कर्तुम्।

एएसुं ठाणेसुं, सीयंते चोदंति आयरिया।
हावेंति उदासीणा, न तं पसंसंति आयरिया॥

एतेषु स्थानेषु तपःप्रभृतिषु स्वयमाचार्या हीयमाना न दृश्यन्ते शिष्यास्तु केचित्सीदन्ति तान् सीदतो यत्राचार्याश्चोदयन्ति तं गच्छ निवासयोग्यतया आचार्या' प्रशंसन्ति। यत्र पुनराचार्या उदासीना मध्यस्थाः सामाचारीं हापयन्त उपेक्षन्ते न तं प्रशंसन्त्याचार्य्याः नासौ गच्छ उपसंपादनीय इत्यर्थः।

किं कारणमत आह॥

आयरियउवज्झाया, नाणुन्नाया जिणेहिं सिप्पट्ठा।
णाणे चरणे जोगा–वहा उ ते अणुन्नाया॥

आचार्या उपाध्यायाश्च जिनैस्तीर्थकृद्भिर्न शिल्पार्था' शिल्पाशिक्षणनिमित्तमनुज्ञाता.। कै. कारणैः पुनरनुज्ञातास्तत आह। ज्ञाने चरणे च ये योगास्तेषामावहाः प्रापका यतो भविष्यन्ति ततस्ते अनुज्ञाता ज्ञानचरणस्फातिनिमित्तमनुज्ञाता इत्यर्थः। अपि चेदृशा आचार्योपाध्याया अनुज्ञाताः।

नाणचरणे निउत्ता, जा पुव्वपरूविया चरणसेढी।
सुहसीलगणविजढे, निचं सिक्खावणाकुसला॥

ज्ञाने एकग्रहणात् तज्जातीयस्य ग्रहणमिति न्यायाद्दर्शने चारित्रे च नियुक्ता' सततोद्यतास्तथा सुखशीला पार्श्वस्थादयः तेषां स्थानं यत्ते सेवन्ते तद्विजढे तद्रहिते या पूर्वं कल्पाध्ययने कृतिकर्म्मसूत्रे चरणश्रेणिः प्ररूपिता तस्यां स्थितास्तथा नित्यं सदा शिक्षापनायां ग्रहणशिक्षायामासेवनाशिक्षायां च ग्राहयितव्यायां कुशलाः समर्था' ईदृशां समीपमुपगम्योपसंपत्तव्यम्। गतं परिच्छिहाणित्ति द्वारम्। इदानीमसतित्ति द्वारमाह।

जेण वि पडिच्छितो सो, कालगतो सो वि होइ आहच।
सो वि य सावेक्खो वा, निरवेक्खो वा गुरूआसि॥

येनापि स प्रतीच्छितो यस्य समीपे स शिष्यपरिवार उपसपन्न इत्यर्थ सोऽपि ( आहच्च ) कदाचित्कालगतो भवेत् सोऽपि च गुरु कालगतः सापेक्षो वा आसीन्निरपेक्षो वा। तत्र यः सापेक्षः सोऽमुं विधिं करोति।

सावेक्खो सीसगणं, संगहकारेइ आणुपुव्वीए।
पाडिच्छागयवंति, एस वियाणे अह महल्लो॥

सापेक्षः शिष्यगणं स्वदीक्षितशिष्यसमूहमभिनवस्थापितस्य संग्रहमानुपूर्व्यानुपूर्वीकथनेन कारयति। यथा पूर्वं सुधर्म्मस्वामी गणधर आसीत्। ततस्तच्छिष्यो जम्बूस्वामी तस्यापि शिष्य' प्रभव एवं तावद्यावत्संप्रति वयमहमपि च संप्रति महान् वृद्धीभूतस्ततोऽसौ योऽमुको गणधर' स्थापितो वर्त्तते तस्याज्ञां कुर्या वैनयिकादिकं च। तथा ज्ञानदर्शनादिप्रतीच्छादिनिमित्त-

मागता. प्रतीच्छागतास्तानपि ब्रूते एष मम स्थाने विज्ञायेत म-मैवैतस्य सम्प्रति वैनयिकादिकं कर्त्तव्यमित्यर्थः। अत्रैवाऽर्थे दृष्टा-न्तमाह ।

जह राया व कुमारं, रज्जे ठावेउमिच्छए जं तु ।
भडजोहे वेतितिगं, सेवह तुब्भे कुमारं ति ॥
अह यं अतीमहल्लो, तेसिं वित्ती उ तेण दावेइ ।
सो पुण परिच्छिऊणं, इमेण विहिणा उ ठावेइ ॥

यथा राजा यं कुमारं राज्ये स्थापयितुमिच्छति तं प्रति भटान् योधांश्च ब्रूते सांप्रतमयं महान् ततो यूयं सेवध्वममुकं कुमार-मिति एवं तानुक्त्वा तेषां वृत्तीस्तेन कुमारेण दापयति येन ते तदनुरक्ता जायन्ते स पुनः कुमारोऽनेन वक्ष्यमाणेन विधिना परीक्ष्य राज्ये स्थाप्यते । तमेव विधिमाह ।

परमन्न भुंजसुणगा, छड्डणदंडेण वारणं वितिए ।
भुंजइ देइ य तइओ, तस्स उ दाणं न इयरेसिं ॥

राजा बहूनां कुमाराणां मध्ये कतरं कुमारं युवराजं स्थापया-मीति विचिन्तयन् परीक्षानिमित्तं तान् सर्वान् कुमारान् शब्दाप-यित्वा तेषां पृथक् पृथक् स्थाले परमान्नं पायसं परिवेषयति परिवेष्य शृङ्खलाबद्धान् शुनकान् व्याघ्रकल्पान् कुमारान् प्रति मो-चयति ते च शुनका वेगेन कुमारसमीपमागतास्तत्रैको राजपुत्रः शुनकभयेन पायसं परित्यज्य पलायितः द्वितीयो राजपुत्रो द-ण्डेन तेषां शुनकानां वारणं करोति भुङ्क्ते च न च किमपि ते-भ्यो ददाति तृतीयः पुनः स्वयं भुङ्क्ते शुनकेभ्योऽपि च स्वस्था-लात् परस्थालाच्च ददाति तस्य तृतीयस्य राजपुत्रस्य राज्यदानं नेतरयोर्द्वयोः । किं कारणमिति चेदत आह ।

परबलपेल्लिओ नासति, वितिओ दाणं न देइ उ भडाणं ।
न वि जुज्झंते ते उ, एए दोवी अणरिहाओ ॥

प्रथमो यदा परबलमागच्छति तदा तेन परबलेन प्रेरितः सन् राज्यमपहाय नश्यति । द्वितीयो न भटानां सुभटानां किमपि ददाति न च ते भटा दानमृते परबले समागते युध्यन्ते ततः समर्थस्यापि परबलेन प्रेरणमत एतौ द्वावपि राज्यस्यानर्हौ ॥

तइओ रक्खइ कोसं, देइ य भिच्चाण ते य जुज्झंति ।
पालेयव्वे अरिहो, रज्जंतो तस्स तं दिण्णं ॥

तृतीयः पुनः कुमारः कोशं भाण्डागारं रक्षति भृत्यानां सुभटा-ना ददाति ततस्ते भृत्याः परबले समागते युध्यन्ते ततः पराजय परबलमपगच्छति तदपगतौ च स्वराज्यसौख्यमतः स पालयि-तव्ये राज्ये अर्ह इति तद्राज्यं राज्ञा तस्य दत्तं यथा भो लोका एष युवराजो युष्माभिरेव आसेवनीयः ॥

अभिसित्तो सट्ठाणं, अणुजाणे भडादिअहियदाणं च ।
वीसुम्मि य आयरिय, गच्छे वि तयाणुरूवं तु ॥

एवं तस्मिन् युवराजे स्थापिते यदा राजा कालगतो भवति तदा ते भटप्रभृतयस्तं युवराजं राजानमभिषिञ्चन्ति अभिषिक्ते सति तस्मिन्सेवका उपस्थाप्य स्वं स्वमायोगस्थानं निवेदयन्ति ततः सोऽभिषिक्तो नवको राजा यत् यस्य पूर्वमायोगस्थानं तस्त-स्मै अनुजानाति अधिकं च तेषां भटादीनां दानं द्विपदादिदानं ददाति । एष दृष्टान्तोऽयमर्थोपनयः । विष्वग्भूते शरीरे पृथग्भूते मृत इत्यर्थः । आचार्ये गच्छेऽपि तदनुरूपतृतीयराज्यार्हकुमारा-नुरूपमाचार्यं स्थापयन्ति । इयमत्र भावना । आचार्येण द्रव्या-

पदादिषु शिष्याः परीक्षणीयाः । तत्र योऽशक्तिको भीरुः स राजप्रद्वेषादिषु समुत्पन्नेषु गणमपहाय नश्यतीति प्रथमकुमार इव गुरुपदस्यानर्हः । यः पुनरदाता सोऽदायकत्वेन संग्रहोप-ग्रहौ न करिष्यतीत्ययोग्यः । यस्त्वभीरुतया शुनकस्थानीयान्व-नीपकान्वारयति दायकत्वेन च सग्रहोपग्रहौ करोति स योग्य इति गणधरपदे स्थापयितव्यः । तस्मिंश्च स्थापिते कोऽपि विष्वग्भूते आचार्ये साधवः कृतप्राञ्जलयस्तमुपतिष्ठन्ते उपस्था-प्य च यो यस्य पूर्वं नियोग आसीत् स तं तस्मै नवकाचार्याय कथयति । एतदेवाह ।

दुविहेणं संगहेणं, दव्वं संगिण्हए महाभागो ।
तो विण्णवेंति ते वि, तं चेव य ठाणय अम्हं ॥

सोऽभिनवस्थापितो महाभागो गच्छं द्विविधेन संग्रहेण द्रव्य-संग्रहेण भावसंग्रहेण च तत्र द्रव्यसंग्रहेण वस्त्रपात्रादिना भाव-संग्रहेण ज्ञानादिना संगृह्णाति एवं संगृहति तस्मिन् ततस्तेऽपि साधवः कृतप्राञ्जलयस्तं विज्ञपयन्ति यथा तदेव स्व स्व स्था-नमस्माकं प्रयच्छन्त्विति । अथ किं किं तेषां स्थानमिति तत्स्था-ननिरूपणार्थमाह ।

उवगरणबालवुड्ढा, खमगगिलाणे य धम्मकहिवादि ।
गुरुचिंतवायणा पे-सणेसु कितिकम्मकरणा य ॥

एको ब्रूते अहम् ( उपकरणत्ति ) उपकरणोत्पादक आसम् अन्योऽहं बालवृद्धानां वैयावृत्यकरोऽपरः क्षपकवैयावृत्यकरोऽ-न्यो ग्लाने इति ग्लानवैयावृत्यकरः । अपरो धर्मकथा धर्मक-थाव्यापारनियुक्तः अन्यो वादी परवादिमथने नियुक्तः ( गुरु-चिंतत्ति ) अपरो ब्रूते अहं गुरोर्यत्कर्त्तव्यं तत्र नियुक्तः ( वाय-णात्ति ) अपरोऽहं वाचनाचार्यत्वे नियुक्तः । अन्योऽहं प्रेषणे नियु-क्तः अपरो ब्रूते अहं कृतिकर्मकरणे विश्रामणे ।

एएसुं ठाणेसुं, जो आसि समुज्जओ अठविओ वि ।
ठविओ वि य न विसीयइ, स ठाविउमलं खलु परेसिं ॥

एतेषु खलु उपकरणादिषु कृतकर्मपर्यवसानेषु स्थानेषु यः पूर्व-मस्थापितोऽपि गणधरपदे समुद्यत आसीत् स गणधरपदे स्थापितोऽप्येतेषु स्थानेषु न विषीदति कृतकरणत्वात्स इत्थ-भूत एतेषु स्थानेषु परान् गाथायां षष्ठी द्वितीयार्थे प्राकृतत्वात् यथा 'मापाणमश्नीयादित्यत्र' स्थापयितुमलम् ।

एवं ठितो ठवेइ, अप्पाण परस्स गो वि सो गावो ।
अठितो न ठवेइ परं, न य तं ठवियं चिरं होइ ॥

एवं पूर्वं गणधरपदे अस्थापितः एतेषूपकरणादिस्थानेषु स्थितः सन् आत्मनः परस्य चैतेषु स्थापयति गोवृष इव गाः स्वस्थाने यः पुनः पूर्वमेतेषु स्थानेषु स्थितः स परमुपलक्षणमेतदात्मानं च न स्थापयति स्वयं तत्राव्यापृतत्वात् न च तत्स्थापितं चिरं भवति । कस्मादिति चेदुच्यते । स यदाऽन्यान् उपकरणादिष्वनुद्यच्छत शिक्षयति यथा सति बले किं यूयं स्वशक्त्या नोद्यच्छथानुद्य-च्छन्तो हि वैयावृत्यफलात् भ्रंशथ । तदा ते चिन्तयेयुः यदि वैयावृत्यफलमभविष्यत् ततस्त्वमप्येतेषु स्थानेषूदयंस्यथा इति । अथवा वैयावृत्यफलं श्रद्दधानोऽपि पङ्गूभूतत्वेनैव मन्येरन् एवं जानन्तो यूयं किं पूर्वं नावर्त्तिष्यमिति । संप्रति गोवृष इव गा इति दृष्टान्तं भावयति ।

पउरतणपाणियाइं, रहियाइं खुद्दजंतूहिं ।
नेइ वि सो गोणीउ, जाणइ य उवहकाले

वृषो बलीवर्द्दो गोधनानि प्रचुरतृणपानीयानि तथा क्षुद्रज-न्तुभिः क्षुद्रप्राणिभिर्ब्बा रहितानि नयति जानाति च । उपस्थान-कालमस्यागमवेलां ज्ञात्वा च स्वस्थानमानयति एवमभिनव-स्थापित आचार्यो गच्छं स्वस्वव्यापारे नियोजयन्परिपालयति ।

अत्रैव दृष्टान्तान्तरमाह ।

जह गयकुलसंभूतो, गिरिकंदरविसमकडयदुग्गेसु ।
परिवहति अपरितंतो, नियसरीरुग्गवेदंते ॥

यथा गजकुलसंभूतोऽनेन जात्यतामाह गिरिकन्दरेषु गिरिगु-हासु विषमकटकेषु विषमेषु गिरिपादेषु दुर्गेषु वा अपरिश्रान्तोऽश्रान्तः स्वनिजशरीरोत्पन्नान् दन्तान्परिवहति ॥

इयपवयणभत्तिगतो, साहम्मि य वच्छलो असढभावो ।
परिवहइ साहुवग्गं, खेत्तविसमकालदुग्गेसु ॥

इति अनेन गजदृष्टान्तप्रकारेण प्रवचनभक्तिगतो गच्छवाह-कश्च प्रवचनभक्तिं मन्यमानः साधर्म्मिकवत्सलो लिङ्गप्रवच-नाभ्यां ये साधर्म्मिकास्तद्वात्सल्यपरायणोऽशठभावोऽमायावी विषमेषु क्षेत्रेषु विषमेषु च कालेषु दुर्भिक्षमार्याद्युपद्रवव्रात-सकुलेषु दुर्गेषु च साधुवर्गं परिवहति तस्य समीपे स्थातव्यम् । गतमसतीति द्वारम् ।

इदानीमागमनद्वारमाह–

जत्थ पविट्ठो जइ तेसु, उज्जया होंउ पच्छहा वेंति ।
सीसा आयरितो वा, परिहाणी तत्थिमा होइ ॥

यत्र गच्छे सशिष्यपरिवारः प्रविष्टः सन् सूत्रार्थानामागमनं करोति तत्र यदि ते साधवः पूर्वं सुष्ठु उद्यता भूत्वा पश्चात्सा-माचारीं हापयन्ति आचार्यो वा पश्चात्परिहापयति । तत्र हानि रियं वक्ष्यमाणा भवति ज्ञातव्या । तामेवाह ॥

पडिलेहदियतुयट्टण–निक्खिवआयाणविनयसज्झाए ।
आलोयठवणमंगलि–भासागिहमत्तसेज्जतरे ॥

( पडिलेहत्ति ) उपकरणं न प्रत्युपेक्षन्ते । तथा अग्लाना मार्गपरिश्रमरहिताश्च दिवा त्वग्वर्त्तनं कुर्वन्ति शेरते इत्यर्थः ( निक्खिवत्ति ) दण्डादिकं निक्षिपन्तः प्रत्युपेक्षन्ते न परिमार्ज-यन्ति दोषैर्वा दुष्टं प्रत्युपेक्षणं परिमार्जनं वा कुरुते (आयाणत्ति) दण्डादिकमाददाना न प्रत्युपेक्षन्ते न प्रमार्जयन्ति दुष्प्रत्युपेक्षणं दुष्प्रमार्जनं वा कुर्वन्ति । विनयं कृतकर्म्मलक्षणं वाचनादिषु न कुर्वन्ति ( सज्झाएत्ति ) स्वाध्यायो वा न क्रियते । मण्डली सामाचारीं वा न कुर्वन्ति ( आलोयत्ति ) सखड्डीं शरीरं वा प्रलोकन्ते यदि वा आलोचना न क्रियते । अनालोचितं भुञ्जते इत्यर्थः ( ठवणत्ति ) स्थापना कुलानि विशन्ति स्थापितं वा गृह्णन्ति ( मंडलित्ति ) भोजनमण्डली सामाचारीं हापयन्ति ( भासत्ति ) भाषायामसमिता भाषन्ते एकग्रहणे तज्जातीयग्रह-णमिति न्यायात् । शेषास्वपि समितिष्वसमिता ( गिहिम-त्तत्ति ) गृहिमात्रकेषु पर्यलकादिष्वानीतं गृह्णन्ति (सेज्जयरेत्ति) शय्यातरपिण्डं भुञ्जते ॥

एमादी सीयंते, वसभा चोयंति चिट्ठति ठियम्मि ।
असती थेरा गमणं, अच्छति ताहे पडिच्छंतो ॥

एवमादिष्वादिशब्दात्क्रमादिपरिग्रहः । सीदतः साधून् गुरु वा वृषभाश्चोदयन्ति शिक्षयन्ति । तत्र यदि चोदितः साधुवर्गो गुर्वा तिष्ठति ततस्तस्मिन् स्थिते सोऽपि सशिष्यपरिवार आग-न्तुकस्तिष्ठति ( असतीत्यादि ) असति शिक्षायाः पुनः प्रत्या-वर्त्तनस्य वा अभावो यदि ततो यावत्पाक्षिके चातुर्मासिके संवत्सरे वा कुलस्थविराणां वा गमनं भवति तावत्तत्प्रतीक्षमा-ण आस्ते तेषु च कुलादिस्थविरेषु समागतेषु निवेदयति तथाप्य-तिष्ठत्सु ततो निर्गमनमेतदेव व्याचिख्यासुः प्रथमतो वृषभचोद-नं सप्रायश्चित्तमाह ।

गुरुवसभगीयगीते, अचोदेंति गुरुगमादि जा लहुओ ।
सारेइ सारवेंई, खरमउएहिं जहावत्थं ॥

वृषभः प्रतिपन्नगच्छभारः स्वयं सारयति शिक्षयति अथवा यो येनोपशाम्यति तं तेन सारापयति शिक्षापयति । कथमित्याह । आचार्योपाध्यायवृषभस्थविरभिक्षुकाणां मध्ये यथावस्तु वस्त्व-नतिक्रमेण खरमृदुभिर्वचनैः सारयति सारापयति वा । किमुक्तं भवति यः खरेण साध्यस्तं खरेण खरण्टयति मृदुसाध्यं मृदु-भिर्वचनैः सारयति अन्यथा प्रायश्चित्तं तदेव पूर्वार्द्धेन निदर्शय-ति ( गुरु इत्यादि ) वृषभो गुरुमाचार्यमुपाध्यायं वा न प्रतिचोद-यति तदा चतुर्गुरुकं वृषभो वृषभं न प्रतिचोदयति चतुर्लघु । वृषभो गीतार्थं न प्रतिचोदयति मासलघु । अक्षरयोजना त्वेव गुरुवृषभगीतागीतान् चोदयन्ति । गुर्वादिचतुर्गुरुप्रभृतियावद-न्ते लघुको मासः । अत्र पुनः सीदत्सु चत्वारो भङ्गास्तानेवाह ॥

गच्छो गणी न सीयइ, बिई न गणीउ तइए न वि गच्छो ।
जत्थ गणी अवि सीयइ, सो पावतरो न उण गच्छो ॥

गच्छः सीदति गणी चेति प्रथमः । गच्छः सीदति न गणीति द्वितीयः । न गच्छः सीदति किं तु गणीति तृतीयः । न गच्छो नापि गणीति चतुर्थः । तथा चाह द्वितीये भङ्गे गणी न सीदति तृतीये न गच्छः चतुर्थे सीदनमधिकृत्य शून्य इति नोपात्त । तत्राद्येषु त्रिषु भङ्गेषु मध्ये यत्र प्रथमे तृतीये वा गणी स पापतरो यत्र पुनर्गच्छः सीदति न गणी नासौ द्वितीयः पापतरः । किं कारणमिति चेदत आह ।

आयरिए जयमाणे, चोएउं जे सुहं हवइ गच्छो ।
तम्मि उ विसीयमाणे, चोयणमयरे कह गेण्हे ॥

आचार्ये यतमाने गच्छः सुखेन चोदयितुं शक्यमानो भवेत् आचार्यस्य प्रतिभयाभावादतः प्रथमतृतीयौ भङ्गौ एतस्मिन्ना-चार्ये पुनर्विषीदति चोदनां शिक्षामितरे साधवः कथं गृह्णीयु-र्न च गृह्णीयुरिति भावः । आचार्यप्रतिभयाभावादतः प्रथमतृती-यौ भङ्गौ पापतरौ न द्वितीय इति ।

आमण्णिएसु उज्जुएसु, जहति सहसा न तं गच्छं ।
मा दूसेज्ज अदुट्ठे, दूरतरे चापणो सेज्जा ॥

यद्यपि नाम आसन्ने प्रदेशे उद्यतविहारिणः स्थिता विद्यन्ते त-थापि तेष्वासन्नस्थितेषूद्यतेषु सहसा न तं गच्छं जहाति परि-त्यजति किं कारणमिति चेदत आह तन्मा अदुष्टान् दूषयेत ग-च्छम् । किमुक्तं भवति । ये न विषीदन्ति तेऽपि सीदत्साधुसंसर्ग-तो मा विषीदेयुरिति येऽपि सीदन्ति तेऽतिदूरतरं निर्गततरं प्रणश्येयुर्विषीदेयुः । तदेवं वृषभचोदनं भावितम् ।

इदानीं स्थविरागमनं भावयति ।

कुलथेरादी आगम–चोयणया जेसु विप्पमायंति ।
चोदयति तेसु ठाणं, अठिएसु उ निग्गमो भणितो ॥

वृषभशिक्षायाः प्रत्यावर्त्तनस्य वा अभावे पाक्षिके चातुर्मासि-के सांवत्सरिके वा यावत् कुलस्थविराणां गणस्थविराणां स-ङ्घस्थविराणां वा आगमस्तावत्प्रतीक्षते कुलस्थविरादीनां चागमे

तेषां निवेदना क्रियते ततस्ते स्थविरा येषु स्थानेषु ये विप्रमाद्यन्ति तेषु स्थानेषु वा न प्रतिचोदिता । यदि स्थितेषु सत्सु स शिष्यपरिवारस्तत्रैव स्थानं करोति स्थितेन च तेन द्विविधाऽपि शिक्षा शिक्षणीया । अथ ते चोदिता सन्तो न स्थितास्ततस्तेष्वस्थितेषु ततो गच्छति गच्छनिर्गमो भणितस्तीर्थकरगणधरैः गतमागमनद्वारम् । पतित निर्गमद्वारमतस्तदेव भावयति ।

कप्पसमत्ते विहरइ, असमत्ते जत्थ हुंति आसन्ना ।
साहम्मि तहिं गच्छे, असतीए ताहि दूरं पि ॥

यदि आचारप्रकल्पः सूत्रतोऽर्थतश्च समाप्तो भवति ततस्तस्मिन् कल्पे आचारप्रकल्पे समाप्ते स्वयं यथाविहारक्रमं विहरति । अथ नाद्यापि समाप्त आचारप्रकल्पस्तर्हि तस्मिन्नसमाप्ते यस्यां दिशि आसन्ना अनन्तरक्षेत्रवर्त्तिनः साधर्म्मिकाः सविग्नसांभोगिकास्तत्र गच्छेत् । अथासन्ना न विद्यन्ते; तत आसन्नानामसत्यभावे दूरमपि गच्छेत् । कथं गच्छेदत आह ।

वइयादीए दोसे अ-संविग्गे यावि सो परिहरंतो ।
केइ असंविग्गा खलु, नइया दीया मुणेयव्वा ॥

व्रजिकादीन् दोषान् व्रजिका गोकुलम् आदिशब्दात् स्वमातापितृपूर्वपरिचितपश्चात्परिचितकुलपरिग्रहस्तान् दोषान् इह व्रजिकादयः प्रतिबन्धदोषहेतुत्वाद्दोषा इत्युक्तास्तथा सविग्नांश्चापि स परिहरन् गच्छेत् । अथ के खल्वसंविग्नाः सूरिराह । नित्यादया नित्यवास्यादयस्ते ज्ञातव्याः । तेषामपि हरणे प्रवेशादौ प्रायश्चित्तविधिमाह ।

निइयादीए अहच्छंदं, वज्जिए पविसदाणगहणे य ।
लहुगा भुंजणगुरुगा, सघाडे मासो जम ण ॥

इह मार्गे गच्छता अपान्तराले संविग्नसुमनोज्ञानां वसतौ वस्तव्यं तदभावे नैत्यिकादीनां सविग्ने च अमनोज्ञानां निवेद्यान्यस्यां वसतौ स्थातव्यं यदि पुनर्नैत्यिको नित्यवासी आदिशब्दात्पार्श्वस्थादिपरिग्रहस्तस्मिन् नैत्यिकादिके यथाच्छन्दवर्जिते प्रविशति यदि वा तेभ्यः किमपि भक्तादिकं ददाति अथवा तेभ्यो गृह्णाति तदा प्रवेशे ग्रहणे दाने च प्रत्येकं चत्वारो लघुकाः । (भुजणगुरुका इति ) अथ तैः सह भुङ्क्ते तदा भोजने चत्वारो गुरुकाः । अथ नैत्यिकादिसंघाटं याचित्वा तेन सह हिण्डते तत संघाटेन हिण्डने लघुको मासः ( जमणमिति ) यच्च तेन संघाटकेन हिण्डमानोऽकल्पिकग्रहणतस्तदास्वादते न वाऽस्वादयत सेविष्यते तदपि च प्रायश्चित्तं प्राप्नोति । तदेव यथाच्छन्दवर्जितो नैत्यिकादौ प्रवेशादिषु प्रायश्चित्तमुक्तमधुना यथाच्छन्दे तदाह

एए चेव य गुरुगा, पच्छित्ता होंति उ अहाच्छंदे ।
अणुमणुसुं मासो. भुंजणे होति चउगुरुगा ॥

एतान्येव प्रायश्चित्तानि यथाच्छन्दे गुरुकाणि भवन्ति । तद्यथा प्रवेशे दाने ग्रहणे भोजने चत्वारो गुरुकाः । संघाटे गुरुको मासः अथामनोज्ञेषु सविग्नेषु प्रविशति तदा प्रवेशे दाने ग्रहणे भोजने चत्वारो गुरुकाः । संघाटे गुरुको मासः । अथामनोज्ञेषु सविग्नेषु प्रविशति तदा प्रवेशे दाने ग्रहणे च प्रत्येकं लघुको मासः । अथ तैः सह भुङ्क्ते तदा चत्वारो गुरुकाः संघाटे लघुको मासः । यत एवमसविग्नेषु प्रायश्चित्तानि तस्मादेतान्परिहरेत् । अथ मार्गे सविग्ना न सन्ति ततः कारणवशतोऽसविग्नेष्वपि गन्तव्यं पतितमिदानीमसविग्नद्वारं तेषु च गत्वा यत्कर्तव्यं तदाह ।

संविग्गगंतरिया. पविसंतु सपाएण अमति एगो ।
साहम्मिएसु जयणा, तिन्नि दिणाणि छसमणुणाए ॥

( सविग्गति ) संविग्नमनोज्ञेनैकेनान्तरिता व्यवहिता सविग्नेन्तरिता असंविग्नास्तेषु कारणवशतो गन्तव्यं तत्र च भिक्षां निवसनं च कुर्वतो यथा प्रथमोद्देशके पारिहारिकस्य यतनोक्ता तथात्रापि द्रष्टव्या । तत्रापि असंविग्नैर्यदि स एकाकी तत एकाकिनः सतस्तस्य संघाटको दातव्यः । अथ योऽसौ छिन्नीयको योग्यो दातव्यः सोऽन्यत्र प्रेषणेन गतो वर्त्तते ततस्ते भृगुराचार्यं एकरात्रं द्विरात्रं त्रिरात्रं वा प्रतीक्षणीयः । तत एतेन कारणेनोत्कर्षतः त्रिरात्रमपि प्रतीक्षते असति संघाटके एकः एकाकी व्रजेत् तस्य च तथा व्रजतोऽपान्तराले यदि साधर्मिका भवन्ति ततस्तन्मध्ये गत्वा वस्तव्यम् । कारणं च निवासिनम् । कारणे तैः संघाटको दातव्यस्तदभावे ततो व्रजनीयमथ प्रतिपृच्छा निमित्तमेकं द्वे त्रीणि वा दिनानि यावत्प्रतीक्षापयेत तत आह स्वाध्यायनिमित्तं प्रतिपृच्छानिमित्तमित्यर्थं उत्कर्षतस्त्रीणि दिनानि प्रतीक्षेत एषा साधर्म्मिकेषु यतना तदेवमसविग्नद्वारमुक्तम् ।

इदानीं निवेदनाद्वारमाह ।

वहिगामघरे सन्नी, सो वा सागारिओ वहिं अंतो ।
ठाणनिसिज्जतुयट्टण-गहियागहिएण जागरणा ॥

सविग्नसमनोज्ञानामभावे ग्रामस्य वहिर्नैत्यिकादीनां निवेद्य तिष्ठति ग्रामस्य वहिः प्रत्यपायसंभवे ग्रामस्यान्तः शून्यगृहे तत्रापि निवेदना कर्तव्या । शून्यगृहस्याभावे सञ्ज्ञी श्रावकस्तस्य गृहे वस्तव्यम् । स वा सञ्ज्ञी श्रावकः सागारिकोऽगारिसहितः स्यात्तर्हि तस्य गृहस्य वहिरन्तर्वा या कुटी तत्र वस्तव्यम् । तस्या अप्यभावे अमनोज्ञेषु सविग्नेषु वस्तव्यम् । तेषामप्यभावे नित्यकादिष्वसंविग्नेषु वसति । तत्रैव यतना स्थानमूर्द्धस्थानं निषद्या उपवेशनम् त्वग्वर्त्तनं दीर्घकायप्रसारणं तेषु गृहीतेनागृहीतेन उपकरणेन जागरणं कर्त्तव्यम् । एष द्वारगाथासंक्षेपार्थः व्यासार्थं त्वभिधित्सुराह । प्रथमतो वहिर्ग्राममिति व्याख्यानयति ।

वसही समणुण्णासइ, ग.मवहि ठाइ सो निवेदेइ ।
अनिवेदियम्मि लहु तु. आणाइविराहणा चेव ॥

समनोज्ञानां सविग्नाना वसतेरसत्यभावे ग्रामाद्वहिस्तिष्ठति न पुनर्नैत्यिकादिष्वसविग्नेषु प्रवेष्टव्यं प्रागुक्त प्रायश्चित्तभावात् । सच वहिस्तिष्ठति तेषां नैत्यिकादीनामसविग्नानां वा अमनोज्ञानां निवेद्य कथयित्वा यदि पुनर्न निवेदयति ततोऽनिवेदिते प्रायश्चित्तं लघुको मासः । आज्ञादिविराधना आदिग्रहणादात्मविराधना संयमविराधना च परिगृह्यते । तथाहि इयं भगवदाज्ञा तेषां निवेद्य वहिर्वस्तव्यम् । अनिवेदनायामाज्ञालोपः ।

आत्मविराधनां संयमविराधनां चाह ।

गेलण्णेन काहिंति, कोहेण ज च पाविहिति तत्थ ।
तम्हा उ निवेएज्जा, जयणा एतेसिमाएउ ॥

अनिवेदने सति कदाचित् ग्लानो जायेत ग्लान्ये सति नास्माकं किमपि तेन निवेदितमिति क्रोधेन न किमपि ग्लाने कृत्यं करिष्यन्ति । गृहस्थाश्च न तथाभूतं ग्लानं दृष्ट्वा तेषां नैत्यिकादीनां निवेदयेयुर्यथा युष्मदीयो ग्लानोऽस्मदादको वर्तते ततस्ते ब्रूमध्ये वा एषोऽस्मदीयो न भवति यदि भवेत्तदा अस्मानुपाश्रये तिष्ठन् निवेदयेत् । एवं यत्र ग्लानत्वेन वा आत्मकालादिग्रहणं तत्र यदर्थं प्राप्स्यति संयमविराधनात्मकमात्मविराधनामभा वा तन्नस्यमनिवेदनानिमित्तं तस्मात्तेषामेतस्य एतेसामाएया यतनया निवेदनेन । तामेव यतनामाह ।

तुब्भे अहेसि दारं, उस्सूरोत्ति गुताए एवं तु ।
न य नज्जइ मत्थो वि, चलिहिइ किं केत्तियं वेलं ॥

यदाऽहमागतस्तदा युष्माकमुपाश्रयद्वारं सकुचितमासीत्ततत एव मया विकल्पितमुत्सूरं वर्त्तते इति गुताायां पृथग्भूतायां वसतावुषित । अपि च न च ज्ञायते सार्थोऽपि किं कियतीं वेलां समस्यर्थं व्यातौ द्वितीया कस्या वेलायां चलिष्यति तत पृथगुपाश्रये स्थित । अथ स वेलायामागतस्तत इदं वदेत् ॥

साहुसगामे वसिउं, अतिप्पियं मज्झ किं करेमि त्ति ।
सन्यदभो हं भंते, गोसे मे वहेज्ज उदंत ॥

साधुसकाशे साधुसमीपे च वस्तु ममातिप्रियं परं भदन्त ! सार्थवशोऽहं तत किं करोमि तस्मात् ( गोसे मे वहेज्जह उदन्त ) साधो ! प्रभाते मे उदन्त वार्त्तां वहेत ।

एवं न उ लब्भसे, अह बाहिं होज्ज पच्चवायाओ ।
ताहे सुण्णहरादिसु, वसंति निवेदितु तह चेव ॥

एवमनया यतनया निवेदित नैव ग्रामाद्बहिर्दूरं वसेत् किं तु ग्रामस्य समीपे वसेदथ बहिस्तेनादिकृता प्रत्यवाया अनर्था भवेयुस्ततस्तथैव पूर्वोक्तप्रकारेणैव निवेद्य शून्यगृहादिषु वसतिमादिशब्दात् श्रावकगृहादिपरिग्रहः । एतदेव भावयति ।

अह गुव्वसिपसकवाड–निब्बिले वसति सुसे ।
तस्सासइ सुण्णघरे, इत्थीरहिते वसेज्जा वा ॥

अधुना सांप्रतमुद्वासितमधुनोद्वासित सकपाटं कपाटसहितमन्यथा स्तेनादिप्रवेशसंभवात् निर्बिलं बिलरहितमन्यथा सर्पादिसंभवात् निश्चल न जराजीर्णतया पतितुं प्रवृत्तम् अमीषां च चतुर्णां पदानां षोडश भङ्गा । तत्र प्रथमो भङ्ग शुद्ध शेषा अशुद्धास्तत आह इत्थम्भूते शून्ये गृहे वसति तस्य शून्यगृहस्यासत्यभावे संदिग्धे श्रावकगृहे । सोऽपि श्रावको द्विधा संभवति सस्त्रीक स्त्रीरहितो वा । तत्र स्त्रीरहिते वसेत् ।

महिए वा अंतोवहिं, अंतोवासु घरकुडीए वा ।
तस्सासति नइयादिसु वसेज्ज उ इमा य जयणाए ॥

स्त्रीरहितस्य श्रावकगृहस्याभावे सहिते वा स्त्रीसहिते वा श्रावकगृहे तस्य गृहस्यान्तर्बहिर्वा विविक्ते प्रदेशे वसेत् अन्यथा प्रायश्चित्त चतुर्गुरु तस्याप्यभावे तस्य श्रावकस्य बहिरन्त पृष्ठत पार्श्वतो वा यदिवाऽन्तर्गृहस्य कुटी समस्ति तस्यां वसेत् । तस्यापि कुटीरकस्यासत्यभावे नैत्यिकादिष्वपिशब्दात् पार्श्वस्थादिपरिग्रहोऽनया वक्ष्यमाणया यतनया वसेत् एतावता मूलद्वारगाथोपन्यस्त निवेदनाद्वारमगमत् ॥ यतनाद्वारमापतितमिदानीं तामेव यतनामाह ।

निइयादि उवधिभत्ते, सेज्जा सुद्धा य उत्तरे मूले ।
संजइरहिए काले, सज्झाए अभिक्खं च ॥

ये नैत्यिकादय उपधौ भक्ते शय्यायामुत्तरगुणैर्मूलगुणैर्वा शुद्धा. किमुक्तं भवति ! ये उत्तरगुणैर्मूलगुणैर्वा शुद्धां शय्यां गवेषयन्ति । शुद्ध भक्त शुद्धमुपधि तेषु वसेत् तत्रापि संयतीरहिते तदभावे संयतीसहितेऽपि । ताश्च संयत्यो द्विधा कालचारिण्योऽकालचारिण्यश्च । तत्र या । पाक्षिकादिष्वागच्छन्ति ता कालचारिण्यस्तद्व्यतिरेकेणागच्छन्त्योऽकालचारिण्य स्वाध्यायनिमित्तमभीक्ष्ण वारंवारं भक्तपान दातुं ग्रहीतु वा कन्दर्पार्थं वा । तत्राकालचारिणीषु बहवो दोषा कालचारिणीष्वल्पतरा इति संयतीरहिताभावे कालचारिणीभि. संयतीभि. सहिते वस्तव्यम् । एतदेव सप्रपञ्चमभिधातुकाम आह ।

सेज्जुवहिभत्तसुद्धे, संजइरहिए य भंगसोलसओ ।
संजइ अकालचारिणि, साहिए बहुदोसला वसही ॥

शय्याशुद्ध उपाधिशुद्धो भक्तशुद्ध. संयतीरहित इति चतुर्षु पदेषु सप्रतिपक्षे पदा षोडश । तद्यथा शय्याशुद्ध उपधिशुद्धो भक्तशुद्ध. संयतीरहित इति प्रथम । शय्याशुद्ध उपधिशुद्धो भक्तशुद्धः संयतीसहित इति द्वितीय इत्यादि प्रस्तारैश्चार्पणीया । एतेषु च षोडशसु भङ्गेषु मध्ये यत्र यत्र संयत्यस्तत्र कालचारिणीसहिते वस्तव्यं नाकालचारिणीभिर्यत आह संयतीभिरकालचारिणीभि. सहिता बहुदोषा वसतिरिति । आह पूर्वमुपधिभक्तशय्याशुद्धा इत्युक्तमिदानीं भङ्गचिन्तायां प्रथमत शय्योपात्त तत्र किं कारणमत आह ।

सागारितेणाहिमवासदोसा, दुस्सोहिया तत्थ उ होइ सेज्जा ।
वत्थन्नपाणाणि व वत्थ ठिच्चा,गेण्हंति जोग्गाणुवभुंजते वा ॥

शय्यां विना मार्गरूत्थामुपविष्टायां सागारिका. समापतन्ति उपधिग्रहणाय स्तेना वा निपतन्ति हिमप्रपाते वा संयमात्मविराधना दोषा. । तत्र तेषु शय्योपधिभक्तेषु मध्ये शय्या दु.शोधिता भवति । आहारोपधय. शुद्धा सुखेन लभ्यन्ते महता कष्टेन पुनः शुद्धा वसतिरिति भाव. । तया तत्र शय्यायां स्थित्वा योग्यानि कल्पनीयानि वस्त्रान्नपानानि गृह्णन्त्युपभुञ्जते च । एतै. कारणैर्भङ्गचिन्तायां प्रथमत शय्या कृता तथा ॥

आहारोवहिसेज्जा, उत्तरमूले असुद्धे य ।
अप्पतरदोसपुव्विं, असतीए महन्नदोसे वि ॥

आहारोपधिशय्याभिरुत्तरगुणविषये अशुद्धशुद्ध इति भङ्गैरल्पतरा दोषा इत्यत आह प्रथमचिन्तायां ये षोडश भङ्गा प्रागुक्तास्तेषु मध्ये पूर्वमल्पतरदोषे वस्तव्यं तस्यासत्यभावे महादोषेऽपि । अथ कस्मिन् भङ्गे अल्पतरदोषा इत्यत आह ।

पढमासति विइयम्मि वि, तहिय पुण ठाइ कालचारीसु ।
एमेव सेसएसु वि, उक्कमकरणं पि पूएमो ॥

सर्वेषां भङ्गानां मध्ये प्रथमभङ्गे सर्वाल्पतरदोषा इति तत्र वस्तव्यं प्रथमस्यासत्यभावे द्वितीयेऽपि तत्र पुनस्तिष्ठति कालचारिणीषु संयतीषु एवमेव शेषेष्वपि भङ्गेषु वसति । किमुक्त भवति । येष्वप्यन्येषु भङ्गेषु संयतीसहितपद तेष्वपि कालचारिणीभि सहितेषु वस्तव्य नाकालचारिणीभिरिति । तथा क्रमकरणमपि अकालचारिणीभि सहितत्वमपि पूजयामः उपादेयतया प्रशंसयाम सर्वेषां भङ्गानां मध्ये कथमिति चेदुच्यते यस्मिन् भङ्गे शय्याभक्तोपधय समुदिता भङ्गन पर्याप्तका वा शुद्धास्तत्र यदकालचारिण्यो भक्तं पानं वा दत्त्वा गृहीत्वा तत्क्षणमेव व्रजन्ति न पुनरागच्छन्ति स्वाध्याय वा कृत्वा सकाले गच्छन्ति तत्र स्थातव्य प्रायो दोषाभावादिति ।

एतदेव स्पष्टतरमाह ॥

सेज्जं सोहे उवहिं, भत्तं सोहेइ संजतीरहिता ।
पढमो बितिओ संजइ–सहिओ तओ पुण कालचारीतो ॥

शय्यां शोधयति उपधिं शोधयति भक्त शोधयति संयतीरहितश्चेति प्रथमो भङ्ग. । द्वितीय संयतीसहितस्ता पुन संयत्य कालचारिण्यो यदि स्युस्तदा वस्तव्यमेवं शेषेष्वपि संयतीसहितेषु भङ्गेषु भावनीयम् ।

अथाकालचारिण्यः कथं स्युरित्यत आह ॥

आयाणे कंदप्पे, वियाल उरालियं वसंतीणं ।
णिययादी अहसहा, संजोए मोत्तहा छंदे ॥

भक्तपानादीनामादाने उपलक्षणमेतत् दाने च तथा कन्दर्पनिमित्त कन्दर्पग्रहणमुपलक्षणं स्वाध्यायनिमित्त च विकाले औरालिकमतिशयेन स्फारे प्रभूतवेलायामिति यावत् संयतीनामकालचारिणीत्व द्रष्टव्यम् । एवं नैत्यिकादीनां य षट् दशधा षोडशप्रकार संयोगस्तत्र वस्तव्य किं सर्वत्र नेत्याह मुक्त्वा यथाच्छन्दान्किमुक्त भवति । तेषु सत्सु यथाच्छन्देषु न वस्तव्यं तदभावे तत्रापि वसेत् । सम्प्रत्येतेषु नैत्यिकादिषु सवासमधिकृत्य यतनामाह ।

गहियनिसियतुयट्टे वा, गहियागहिए य जग्गसुवणे वा ।
पासत्थादी एवं, नियए मोत्तुं अपरिभुत्ते ॥

पार्श्वस्थादीनामुपाश्रयेषु ( गहियत्ति ) गृहीतोपकरण स्थित ऊर्द्धस्थितो वसेत् । यद्येव स्थातु न शक्नोति ततो गृहीतोपकरण एव निषद्योपगतो जाग्रत्तिष्ठेत् तथाप्यशक्नुवन् गृहीतोपकरणस्त्वग्वृतो जाग्रदवतिष्ठेत् । अथ त्रिष्वप्येतेषु यदि कथमपि प्रचलाया आशङ्का तदा मा पात्रादिभङ्गः स्यादित्युपकरण पार्श्वे निक्षिप्यागृहीतोपकरणो यथासमाधिस्थितो निषण्णस्त्वग्वृतो वा जाग्रत्तिष्ठेत् अथ जागरण कर्त्तुं न शक्नोति तत आह स्वपन् वा गृहीतोपकरणोऽगृहीतोपकरणो वा यथा समाधि कुर्यात् । एव यतना पार्श्वस्थादीनामुपाश्रयेषु द्रष्टव्या । नैत्यिके नित्यवास्युपाश्रये नित्यवासिपरिभुक्तान् प्रदेशान् मुक्त्वा अपरिभुक्ते प्रदेशे उपकरण निक्षिप्य यथासमाधि जाग्रत्स्वपन्वा वसेत् ।

एमेव अहाछंदे, पडिहणणज्झाणअज्झयणकण्णा ।
ठाणठितो वि निसामे, सुण आहरणं च गहिएणं ॥

एवमेव पार्श्वस्थादिगतेनैव प्रकारेण यथाच्छन्देऽपि यतना कर्तव्या । नवरं यदि शक्तिस्तर्हि तस्य प्रतिहनन कर्तव्य यथा स स्वाग्रह मुञ्चति । अथ न विद्यते तादृशी शक्तिस्तर्हि ध्यान तथा ध्यायति यथा तद्वचो न शृणोति यदि वा [अज्झयणत्ति] यथाच्छन्दप्रज्ञापनाप्रतिश्रवणमध्ययनं परावर्तयति यथा स ब्रूते मा मा नाशयेति [ कण्णत्ति ] तस्य यथास्वच्छन्द देशनां कुर्वत कर्णौ निजौ स्थगयति येन देशनां न शृणोति दूरतर वा तिष्ठति । अथ दूरतरस्थानस्थितोऽपि तद्देशना निशमयति न च निद्रां समागच्छति तत स यथाच्छन्दो वक्तव्यो यथा शृणु किमप्याहरण ततो यत्तस्यापूर्व तदाहरण कथनीयम् [ गहिएणत्ति ] गृहीतेनात्मीयोपकरणेन । एतदेव युक्त्या द्रढयति ॥

जइ कारणे निगमणं, दिट्ठं एमेव सेसगा चउरो ।
ओमे असंथरंते, आयारे वइयमादीहिं ॥

यथा कारणे कारणवशतो निगमन निर्गत दृष्टमेवमेव तथा कारणवशत शेषाण्यपि चत्वारि द्वाराण्यसंविग्ने निवेदना यतना इत्येवमादीनि दृष्टानि यथा चाचारे आचारप्रकल्पे अवमे दुर्भिक्षे व्रजिकादिभिरपि आदिशब्दात्स्वज्ञात्यमनोज्ञासंविग्नपरिग्रहो व्रजेदित्युक्तमत सोपपत्तिकेयं यतनेति सम्यक् श्रद्धेया । गत यतनाद्वारम् ॥

अधुना निसृष्टद्वारमाह-

स मणुण्णेसु वि वासो, एगनिसिं किमुत अण्णयो मणे ।
असढो पुण जयणाए, अच्छेज्ज चिरं पि उ उमेहिं ॥

स मनोज्ञेष्वपि अपान्तराले वास उत्सर्गेत एका निशामेकां रात्रिं कल्पते किमुत किं पुनरन्येष्वसांभोगिकेष्ववसने उपलक्षणमेतत् पार्श्वस्थादिषु वा । तत्र सुतरामेकरात्र्यधिकं न कल्पते कारणवशत पुनरुत्कर्षतस्त्रीणि दिनानि वसेत् गतं निसृष्टद्वारम् । इदानीं " दीहमद्धं परिच्छतीत्ये " तद्व्याख्यानार्थमाह ( असढो इत्यादि ) असठ पुनर्न केवलमुत्कर्षतस्त्रीणि दिनानि किं तु चिरमपि प्रभूतकालमप्येभिर्वक्ष्यमाणैः कारणैर्यतनया तिष्ठेत् । तान्येव कारणान्याह

वासं खंधारनदी, तेणासावयवसेण सत्थस्स ।
एएहिं कारणेहिं, अजयणजयणा य नायव्वा ॥

वर्षं पतति स्कन्धावार कटक तदा चलति नदी गिरिनदी पूर्णा वर्तते स्तेना अपान्तराले द्विविधा शरीरापहारिण उपकरणापहारिणश्च श्वापदा सिंहादय सार्थस्य वा वशेन गच्छति सार्थश्च चिरमपि तिष्ठन् वर्तते एतैः कारणैश्चिरमप्यपान्तराले तिष्ठति तत्रायतना यतना वा ज्ञातव्या । तत्र यदि यतना कृता तदा न प्रायश्चित्तविषय । अथायतनामाचरितवान् तदा प्रायश्चित्त लगति । उक्त शुद्धस्याशुद्धगमनमिति द्वितीयो भङ्ग ।

सम्प्रति तृतीयचतुर्थभङ्गावाह ॥

दोसा उ ततियभंगे, गाणगणिया य गच्छभेदो य ।
सुयहाणी कायवहो, दोसु वि दोसा भवे चरिमे ॥

दोषौ द्वौ तृतीयभङ्गे अशुद्धस्य शुद्धगमनमित्येवलक्षणे तद्यथा गाणगणिकता गणे गणे प्रविशतीत्येवं प्रवादलक्षणा तद्यथा गच्छभेदतश्च । तथाहि तस्मिन्निर्गच्छत्यन्येऽप्येवमेव निर्गच्छन्ति ततो जायते गणविनाश । चरमेऽप्यशुद्धस्याशुद्धगमनमित्येवरूपे भङ्गे द्वौ दोषौ अपिशब्दो भिन्नक्रम स च यथास्थान योजित । श्रुतहानि कायवधश्च निष्कारणं दोषबहुलतया यातो निर्गमने ह्यत्रापि नावकाश इति श्रुतहानिर्मार्गे च गतो ग्लानत्वादिभावतो वा कायवध । तदेव भावितमृतुबद्धविषयम् ॥

संप्रति वर्षावासविषय सूत्रमाह ।

( सूत्रम् ) वासावासे पज्जोसविए भिक्खू य जं पुरओ कट्टु विहरेज्जा से य आहच्च विसं भेज्जा अत्थि या इत्थ केइ उवसंपज्जणारिहे उवसंपज्जियवेसिया णत्थि या इत्थ केइ अण्णे उवसप्पणारिहे तस्स य अप्पणो य से कप्पइ जाव उंदे वा पग्हिारे वा ॥

( वासावासेपज्जो इत्यादि ) वर्षावासे पर्युषिते भिक्षुर्यं पुरत कृत्वा विहरति आस्ते स कदाचित् विष्वग्भवेत् शरीरात्पृथग्भवेत् म्रियेत इत्यर्थ । अस्ति चान्य कश्चिदुपसम्पदनार्ह स उपसम्पत्तव्य । नास्ति वा तत्रान्य कश्चिदुपसम्पदनार्हस्तर्हि स आत्मन कल्पे मा समाप्त इति ( से )तस्य कल्पते एकरात्रिक्या प्रतिमया यत्र वसति तत्रैकरात्राभिग्रहणे ( जस्सं जस्सिमित्यादि ) यस्यां यस्यां दिशि अन्ये साधर्मिका विहरन्ति तां तां दिशमुपयातु न पुन ( से ) तस्य कल्पते । तत्रापान्तराले विहारप्रत्यय वस्तु कल्पते ( से ) तस्य । तत्र कारणप्रत्यय सप्ताहादिकारणनिमित्तं वस्तु तस्मिंश्च कारणानिष्ठिते यदि परो वदेत् वस आर्य ! एकरात्र द्विरात्रं वा वाशब्दात्त्रिरात्रं वा एवं ( से ) तस्य कल्पते एकरात्र द्विरात्रं वा वाशब्दात्त्रिरात्रं वा वस्तु ना ( से ) तस्य कल्पते एकरात्रात् द्विरात्राद्वा पर वस्तुम् । यत्तत्र एकरात्रात् द्विरात्राद्वा पर वसति तत ( से ) तस्य स्वदत्तादन-

राच्छेद परिहारो वा इति सूत्रार्थः । अत्र भाष्यप्रपञ्चः ।

एमेव य वासासु, भिक्खे वसहीए संकनाणत्तं ।
एगाहचउत्थादी, असती अरणत्थ तत्थेव ॥

एवमेव ऋतुबद्धविषयस्तत्र तेनैव प्रकारेण वर्षासु सूत्रं भावनीयं नवरं भिक्षायां वसतौ शङ्कायाञ्च नानात्वं तत्रान्यत्र गन्तव्यमेकाहेन चतुर्थेनादिशब्दात् षष्ठेनाष्टमेन वा असत्यन्यत्र गमने तत्रैव वर्षारात्रं कर्त्तव्यः । एष द्वारगाथासंक्षेपार्थः । सांप्रतमेनामेव विवरीषुः प्रथमत एव शब्दं व्याख्यानयति ।

अपरिमाणे पिहब्भावे, एगत्ते अवधारणे ।
एवं सद्दो उ एएसिं, एगत्ते उ इहं भवे ॥

एव शब्दोऽपरिमाणे पृथग्भावे एकत्वे अवधारणे । तत्रापरिमाणे यथा एवमन्येऽपीत्यादौ पृथग्भावे यथा घटात्पटः पृथक् एवमाकाशास्तिकायात् धर्म्मास्तिकायोऽपीति । एकत्वे यथाऽयमेतद्गुण एवमेषोऽपि अत्र ह्येव शब्दस्तयोरेकरूपतामभिद्योतयति । अवधारणे यथा केनापि पृष्टमिदमित्थं भवति इतर आह एवं इमित्थमेवेति भावः । एवमेवंशब्द एतेष्वर्थेषु वर्त्तते इह पुनरेकत्वे भवति वर्तते । एकत्ववृत्तिमेव भावयति ॥

एगत्तं उ उवप्पे, जहेव गमणं तु भंगचउरो य ।
तह चेव य वासासु,नवरि इमं तत्थ नाणत्तं ॥

तं यकत्वमेव शब्दप्रकाश्यमित्थमृतुबद्धेऽन्यत्र गच्छान्तरे गमनं यथा च तत्र भङ्गाश्चत्वार शुद्धस्य शुद्धगमनमित्येवमादयस्तथा चैव तेनैव प्रकारेण गमन भङ्गचतुष्टयं च ज्ञातव्यम् । नवरं केवलमिदं तत्र वर्षासु भिक्षायां वसतौ शङ्कायां च नानात्वम् । तत्र भिक्षामधिकृत्याह ।

पउरन्नपाणगमणं, इहरा परे ताव एसणा घातो ।
खेत्तस्स य संकमणे, गुरुगा लहुगा य आभवणा ॥

यो गच्छः प्रचुरान्नपाने स्थितस्तत्र गन्तव्यम् । इतरथा यदि पुनरप्रचुरान्नपाने गच्छे प्रविशन्ति ततस्ते असंस्तरन्त क्षुधा परिताप्यन्ते परितापनां चासहमानैरेषणाघात क्रियते अनेषणीयमपि गृह्णीयुरित्यर्थः । अथासंस्तरन्त क्षेत्रसंक्रमणं कुर्वन्ति तदा प्रावृषि क्षेत्रस्य संक्रमणे आरोपणाप्रायश्चित्तं चत्वारो गुरुकाः । वर्षारात्रे भाद्रपदाश्वयुग्मासद्वयलक्षणे चत्वारो लघुका । गतं भिक्षाद्वारम् । अधुना वसतिद्वारमाह ।

वारगजग्गणदोसा, सागाराई हवंति असतीसु ।
तेणादिसंकलोए, भाविएमित्थं पवासंति ॥

यस्मिन् गच्छे वसति संकटा तत्र नोपसंपत्तव्यं यदि पुनरुपसंपद्यते तत इमे दोषा । संकटायां हि वसतौ वसन्तस्ते वारकेण क्रमेण जागरण कुर्युरेके जाग्रत्यन्ये स्वपन्ति तदनन्तरं ते जाग्रत्यन्ये स्वपन्ति । एवं क्रमेण जागरणेऽजीर्णत्वादयो दोषा । अथान्यासु वसतिषु केचित्स्वपनाय व्रजन्ति तर्हि ये प्रागभिहिता शय्यायां सागारिकादयो दोषास्ते ऽपि भवन्ति गतं वसतिद्वारम् । इदानीं शङ्काद्वारमाह । भिक्षाया अभावतो वसतिसंकटत्वदोषतो वा तत्क्षेत्रसंक्रमणं कुर्वन्तश्च गच्छतो दृष्ट्वा लोकस्य स्तेनादिशङ्कोपजायते यथा न कल्पते साधूना वर्षासु गमनं तन्नूनममी देरिका स्तेना वा साधुवेषेणाहिण्डन्ते । अथवा ( भाविएमित्थं पवासंति त्ति)एतमर्थमुपादाय यदि वा न निष्पद्यत इत्यमित्थं तद्वत्तनो नागता नश्यन्ति तस्माद्वयमपि यत्नं कुर्मः । तदेवं प्रचुरान्नपाने मं कटवसतिनिश्चिते च गच्छे प्रवेशे इमे दोषा । तस्माद्ये प्रचुरान्नपानग्रामे स्थिता ये च सावकाशायां वसतौ तत्र संपत्तव्यं तत्र चानया यतनया गन्तव्यम् । तामेवाह ।

आसण्णखेत्तभाविय, खेत्तादपरोप्परं मिलंतेसु ।
जा अट्ठमं अभावे य, माणअडंतं वहू पासे ॥

ये आसन्ने अनन्तरे क्षेत्रे स्थिता गच्छास्तत्र गन्तव्यमसत्यनन्तरे क्षेत्रे ये परे क्षेत्रे स्थिता यैर्भिक्षादिनिमित्तमागच्छद्भिर्गच्छद्भिश्च परस्परं मिलद्भिर्गाथायां सप्तमी तृतीयार्थेऽपान्तराले पथि भाविता ग्रामास्तत्र गन्तव्यं तेषामप्यभावे दूरेऽपि गम्यते । तत्र पुनर्भिक्षामहिण्डमानो गच्छति । किं कारणमत आह । ( माणअडंत बहूपासे ) मा एमिति वाक्यालङ्कारे भिक्षामटन्तं बहु लोकोऽभावित पश्यन्निति कृत्वा ततोऽभक्तार्थेन यावत्प्राप्यते षष्ठेन वा अष्टमेन वा तत्र गन्तव्यम् । आह यद्यपि चतुर्थादिना गच्छति तथापि लोकः पश्यति । तत्र आह ॥

पायं न रीयइ जणो, वासे पडिवत्तिकोविदो जो य ।
असतो व बद्धदूरे य, अच्छए जाय भायंति ॥

प्राय कर्षजन क्षेत्राणां जलकर्दमाकुलतया शेषजनो मार्गस्य जलाविलत्वादिना दुर्गमतया वर्षे वर्षाकाले न रीयते न गच्छति । यश्चात्र प्रतिपत्तिकोविदः परप्रतिपादनकुशलस्तेन एवमादिषु विषयेऽनेकान्युत्तराणि जल्पितव्यानि एतावता " एगाहचउत्थादी " इत्यादिव्याख्यातमिदानीमसती अण्णत्थतत्थेवेति व्याख्यानार्थमाह । " असतोवबद्धेत्यादि " पूर्वोक्तो विधिसान्तरे वर्षेऽभिहितो यदि पुनरसकृत् अववर्द्ध वा सततं वर्षं पतति यदि वा अतिदूरं गन्तव्यं नाष्टमेन प्राप्यते ततोऽसकृत् अवबद्धे वा वर्षे पतति दूरे गन्तव्यम् । तत्रैव वर्षारात्रं कृत्वा प्रभाते मेघकृतान्धकारापगत प्रभातकल्पे संवत्सरे याति ॥

( ३ )भक्षुर्गणादपक्रम्येच्छेदन्यं गणमुपसंपद्य विहर्तुम् ॥

( सूत्रम् ) भिक्खू गणाओ अवक्कम्म अण्णगणं उवसंपजित्ताणं विहरिज्जा तं च केइ साहम्मिया पासे ता वइज्जा क अज्जो उवसंपज्जित्ताणं विहरति जे तत्थ सव्वराइणिए ता वइज्जा अहं भंते कप्पाउ जे य तत्थ बहुस्सुए तं वत्तिज्जा जहा से भगवं वक्खति तस्स आणाउववाय वयणणिद्देसे चिट्ठिस्सामि ॥

भिक्षुर्गणादपक्रम्य विशिष्टसूत्रार्थनिमित्तमन्यगणमुपसंपद्य विहरेत् । तत्रोद्भामके भिक्षाचरप्रचुरे ग्रामे भिक्षार्थमटन्तं दृष्ट्वा कश्चित्साधर्म्मिको वदेत् कमार्यमुपसपद्य त्वं विहरसि एवं पृष्टः सन् यस्तत्र सर्वरत्नाधिको गीतार्थ आचार्यस्तं वदेत् । तस्मिन्नुक्ते परिकल्पयति यमेष व्यपदिशति सोऽगीतार्थो नचायमगीतार्थनिश्रया विहरति ततो भूय पृच्छति अथ भदन्त ! कस्य कल्पेन सूत्रे स्त्रीत्वं प्राकृतत्वात्कस्य निश्रया त्वं विहरसि एवमुक्ते यस्तत्र सर्वबहुश्रुतस्तं वदेत् तथा तस्य सर्वरत्नाधिकस्याचार्यस्यागीतार्थस्य य शिष्यो गीतार्थ सूत्रार्थनिष्णात समस्तस्यापि गच्छस्य तृप्तिकारी तन्निश्रयाऽह विहरामीति वदत । यं वा स भगवानाख्याति यथैतस्याज्ञा त्वया कर्त्तव्या तस्याज्ञायामुपपाते समीपे वचननिर्देशे च आदेशप्रतीच्छायां स्थास्यामीति सूत्रसंक्षेपार्थ । अधुना भाष्यकृत्सूत्रं व्याख्यातुकामः प्रथमत सूत्रविषयमुपदर्शयति ॥

पव्वाविओ अगीतेहिं, गंतूण उभयनिम्माओ ।

आगम्मसेससाहुण-तत्तो य साहू गओऽणत्थ ॥

कश्चिद्गीतैरगीतार्थैराचार्यैः प्रव्राजित सोऽन्यत्र गणे गत्वा उन्नयत सूत्रतोऽर्थतश्च निर्मितोऽभवत् ततः स स्वगणे आगस्य शेषाणां गीतार्थानां साधूनां साधनं करोति सर्वानपि गीतार्थान् सूत्रार्थनिमित्तमितस्ततो विप्रसृतानाचार्यसमीपमानयति समानीय च तेषां सूत्रार्थान् पूरयति अन्यदा ततो गच्छात्कोऽपि साधुरन्यत्र गणान्तरे केनापि कार्येण गत ।

तत्थ वि य अणमाहु, अट्टे त्ति अहेज्ज मा ण माहूणं ।

विंती मा पढ एवं, किं ति य अत्थो महो एव ॥

तत्रापि च गणान्तरे अन्यं साधुमाचाराङ्गे "अट्टे लोए परिजिणे" इति सूत्रे अट्टे इति अधीयानं पठन्तं श्रुत्वा ब्रूते मा पठ । एवं स प्राह किमिति इतरो ब्रूते अर्थो न भवति विसंवदत्येवं यथा त्वं पठसि अस्मात् अट्टे इति छिदकारको निर्देशोऽध्येतव्य ।

अत्थो वि अत्थि एवं, आमं नमोक्कारमादिसव्वस्स ।

केरिस पुण अत्थो ति, वेर्तो सुण सुत्तमट्ट त्ति ॥

अधीयानः पृच्छति अर्थोऽपि न तु सूत्रस्यास्ति । इतरः प्राह । आममेवं न केवलमस्य सूत्रस्यार्थोऽस्ति किं तु सर्वस्यापि नमस्कारादिकस्य सूत्रस्यास्ति एवमुक्तोऽध्येता पृच्छति कीदृशः पुनरस्य सूत्रस्यार्थ इति । इतरो ब्रूते शृणु प्रथमतो यथावस्थितं सूत्रं तत पठति ( अट्टे इति ) "अट्टे लोए परिजिएणे" इति एवं पठित्वा अस्य व्याख्यानमाह ।

अट्टे चउव्विहे खलु, दव्वेन वि मादि जत्थ तणकट्ठा ।

आवत्तंते पडिया, जह व सुवण्णादि आवट्टे ॥

अट्टः आर्तः खलु चतुर्विधस्तद्यथा नामार्तः स्थापनार्तो द्रव्यार्तो भावार्तः । तत्र नामस्थापने सुप्रतीते द्रव्यार्तोऽपि नोआगमतो ज्ञशरीरभव्यशरीरव्यतिरिक्तो यत्र नद्यादेः प्रदेशे तृणकाष्ठानि पतितानि आवर्तन्ते यत्र वा सुवर्णाद्यावर्तते स द्रव्यः । आ सर्वत परिभ्रमणेन ऋतानि गतानि यत्र यो वा स आर्त इति व्युत्पत्तेः

अहवा अत्तीभूतो, सचित्तादीहिं होइ दव्वम्मि ।

भावं कोहादीहिं, अभिभूतो होति अट्टो उ ॥

अथवा सचित्तादिभिर्द्रव्यैरसंप्राप्तैः प्राप्तवियुक्तैर्वा य आर्तः स द्रव्यार्तः द्रव्यैरार्तो द्रव्यार्त इति व्युत्पत्तेः । क्रोधादिभिरभिभूतो नो आगमतो भावार्तः । तदेवमार्तशब्दार्थ उक्त ।

संप्रति परिजीर्णशब्दार्थमाह ।

परिजिणो उ दरिद्दो, दव्वे धणरयणसारपरिहीणो ।

भावे णाणादीहिं, परिजिणो सव्वलोगा उ ॥

परिजीर्णोऽपि चतुर्विधस्तद्यथा नामपरिजीर्णः स्थापनापरिजीर्णो द्रव्यपरिजीर्णो भावपरिजीर्णश्च । तत्र नामस्थापने प्रतीते । द्रव्ये द्रव्यत परिजीर्णो नो आगमतो ज्ञशरीरभव्यशरीरव्यतिरिक्तो धनरत्नसारपरिहीनो दरिद्रो भाव भावत परिजीर्णो ज्ञानादिभिः परिहीन एव समस्तोऽपि लोकः ।

एवं पढे सो वेति, कत्थ भे अहीयं ति ।

अमुगस्स त्ति सगासे, अहगं पी तत्थ वच्चामि ॥

एवमाचाराङ्गसूत्रस्यार्थे स्पष्टे कथिते स ब्रूते कुत्र भवता त्वया ऽधीतमिति । स प्राह अमुकस्य सकाशे समीपे । ततः सोऽध्येता चिन्तयति अहमपि तत्र व्रजामि एव चिन्तयित्वा ।

सो तत्थ गतो धिज्जति, मिलितो सब्भंति एति उब्भामो ।

पुट्ठो सुत्तत्थ ते, सरंति निस्साय के विहरे ॥

स तत्र गतो गत्वा चाऽध्येति एतद्द्वयमधिकृत्य सूत्रमधुना सूत्रव्याख्यामाह । सोऽधीयानोऽन्यदा उद्भ्रामे उद्भ्रामकभिक्षानिमित्तं गतस्तत्र केचित्साधर्मिकाः केचिदन्यगच्छवर्तिनः साधवः सहाध्यायिनो मिलितास्तैः ( सब्भंति एतीति ) सहाध्यायिभिः पृष्टास्ते तत्र सूत्रार्थं स्मरन्ति निर्वहन्ति तथा कं निश्राय आश्रित्य भवान् विहरति ।

अमुगं ति सो अगीतो, विहरइ कप्पेण गीयनिस्साए ।

अहमवि य तस्स कप्पा, जं वा भयव उवदिसंति ॥

एवं पृष्ट सन् यस्तत्र सर्वरत्नाधिको गीतार्थ आचार्यस्तं कथयति यथा अमुक निश्रायाहं विहरामि एतावता "जे तत्थ सव्वराइणिए य ते वएज्जा" इति व्याख्यातम् । एवमुक्ते ते चिन्तयन्ति यमेष प्राह सोऽगीतो ऽगीतार्थस्ततो भूय पृच्छन्ति कस्य कल्पेन कस्य गीतार्थस्य निश्रया भवान् विहरति एतेन " अहं भंते कस्स कप्पाए" इति व्याख्यातम् । स प्राह सूत्रबहुश्रुततया गीतार्थस्तस्य शिष्यस्तस्य कल्पेन समस्तो गणो विहरति । अहमपि च तस्य कल्पात् विहरामि यं वा भगवन्त उपदिशन्ति यथाऽस्याज्ञा कर्तव्या तस्याज्ञोपयातवचननिर्देशेषु स्थास्यामि । एतेन "जं वा से भयवं अक्खाति" इत्यादि व्याख्यातम् । इदमेव स्पष्टं भावयति ।

रायणियस्स उ गणो, गीयत्थेमस्स विहरइ निस्साए ।

जो जेण होति महितो, तस्साणादी न हावेमि ॥

रात्निकस्य रत्नाधिकस्य गणोऽयमस्य गीतार्थस्य निश्रया विहरति अहमपि तन्निश्रया विहरामि । अपि च तस्मिन् गणे यो येन गुणेन तप प्रभृतिना महितस्तस्याज्ञादि आज्ञा समीपावस्थान वचननिर्देश च न हापयामि सम्यक्करोमीति भाव । व्य० ३ उ० । ( चरित्रप्रविष्टस्योपसंपद्विधि चरित्रापविट्ठ शब्दे वक्ष्यते )

४ शैक्षेण सपरिच्छदेन रत्नाधिकस्योपसंपद्दातव्या ।

( सूत्रम् ) दो साहम्मिया एगतो विहरंति तं जहा सेहे रायणिए य तत्थ सेहतराए पलिच्छिन्ने रायणिए अपलिच्छन्ने तत्थ सेहतरएणं रातिणिए उवसंपज्जितव्वा भिक्खू ववहारवहलातिरूपप्य । २३ ।

द्वौ साधर्मिकौ समानगुरुकुलावेकत सह तो विहरतस्तद्यथा शैक्षो रात्निकश्च तत्र य शैक्षक स परिच्छन्न परिवारोपेत रात्निको रत्नाधिकोऽपरिच्छन्न परिवाररहित इत्यर्थ तत्र शैक्षतरकेण रत्नाधिक उपसंपत्तव्यस्तथा शैक्षतरको रत्नाधिकस्य भिक्षामुपपातं विनयादिकं च कल्प्य कल्पनीयं ददाति एष सूत्रसंक्षेपार्थ ।

अधुना भाष्यविस्तर ।

साहम्मि पलिच्छिन्ने, उवसंपय दो एह वो पलिच्छन्नो ।

वोच्चत्थे मासलहुओ, कारणअसई सभावो वा ॥

तौ द्वावपि जनौ सहाध्यायिनो स ब्रह्मचारिणौ तत्र य शैक्षतरक स परिछन्नो द्रव्यपरिच्छेदोपेत परिवारसहित इत्यर्थ । भावपरिच्छेदेन पुनर्द्वयोरपि परिच्छेदोऽस्ति तत्र शैक्षे द्रव्यत परिछन्ने सति तेन रत्नाधिकस्योपसंपदातव्या ततो जघन्यत सघाटो रत्नाधिकस्य देय उत्कर्षतो सर्वोऽपि दातव्य । तथा शैक्षकेण रत्नाधिकस्य पुरत आलोचनीयं रत्नाधिकेन शैक्षकस्य पुरतोऽन्यथा ( वोच्चत्थे ) विपर्यासे उभयोरपि प्रायश्चित्त मा-

मवधु । तथा कारणे ग्लानादिलक्षणे व्यापृततया द्वावेव तौ ज-
नाविति मति सहायस्याभावे न दद्यादपि सहायं सद्भावो वा त-
स्यात्मीयकरणादिलक्षणस्ततो न ददाति सहायं किन्त्वेवंचित्येन
तस्य कृत्यं कारयति । एष द्वारगाथासंक्षेपार्थः ।

साम्प्रतमेनामेव विवरीषुः प्रथमतः पूर्वार्द्धं विवृणोति ।

सज्झंति वासिणो दो वि, भावेण नियमतो भयणो ।

रायणिएउवसंपया, सेहतरगेण कायव्वा ॥

तौ द्वावपि सहाध्यायिनावेकस्य गुरोरन्तेवासिनौ द्वावपि भावे-
न ज्ञानादिना नियमतो नियमेन तयोः ज्ञानादिरूपभावपरिवारो-
पेतावित्यर्थः । द्रव्यपरिच्छेदेन पुनः शैक्षतरकः एवोपेतस्तत्र
शैक्षतरकेण रात्निको रत्नाधिकस्योपसंपत्कर्तव्या । " वोच्चत्थे
मासलहुतो " इत्यस्य व्याख्यानार्थमाह ।

आलोइयम्मि सेहेण, तस्स वियडेइ पच्छ राइणितो ।

इति अकरणम्मि लहुगो, अवरोप्परगव्वतो लहुगा ॥

प्रथमतः शैक्षतरकेण रत्नाधिकस्य पुरत आलोचनीयं तेनालो-
चिते पश्चाद्रत्नाधिकस्तस्य शैक्षकस्य पुरतो विकटयन्त्यालोचयति
एतच्चैतौ न कुरुतस्ततः इति एतस्याकरणे द्वयोरपि प्रत्येकं
लघुको मासः प्रायश्चित्तम् (अवरोप्परगव्वतो लहुगा इति) यदि
शैक्षतरको द्रव्यपरिच्छेदेनाहं परिच्छन्न इति गर्वतो रत्नाधिक-
स्य पुरतो नालोचयति तदा तस्यापि प्रायश्चित्तं चत्वारो लघुकाः ।

एतदेवोपदेशद्वारेण स्पष्टयति ।

एगस्स उ परिवारो, वीइए रायणिय त्ति वादो य ।

इइ गव्वो न कायव्वो, दायव्वो चेव संघाडो ॥

एकस्य परिवारोऽस्ति द्वितीये रात्निकत्ववादः रत्नाधिकोऽय-
मिति प्रवाद इति एवं रूपो गर्वो द्वाभ्यामपि न कर्त्तव्यः किं तु
परस्परमालोचयितव्यमन्यथा चतुर्लघुकप्रायश्चित्तापत्तेर्दातव्य-
श्च शैक्षतरकेण जघन्यतोऽपि रत्नाधिकस्य संघाटः । सम्प्रति
' भिक्खो वा पंचराइणि कप्पागम्मि" त्येतदर्थमाह ।

पेहाभिक्खकितीओ, करेंति सो आवि ते पवाएति ।

न पहुव्वंते दोण्ह वि, गिलाणमाईसु च न देज्जा ॥

शैक्षतरस्य शिष्या रत्नाधिकस्य सत्कस्योपधेर्वस्त्रादेः प्रेक्षां प्रति
लेखनां कुर्वन्ति । तथा तद्योग्यां भिक्षामानयन्ति । कृतकर्म विन-
यं विश्रामणां तत्कुर्वन्ति किमुक्तं भवति यदाज्ञापयन्ति तत्कुर्व-
न्ति वाचनादिपरिश्रान्तस्य च विश्रामणामिति स चापि रत्नाधि-
कस्तान्प्रवाचयति सूत्रं पाठयत्यर्थं च श्रावयतीत्यर्थः । कार-
णे असतो इत्यस्य व्याख्यानमाह ( न पहुव्वंते इत्यादि ) ते शै-
क्षतरशिष्या ग्लानादिषु प्रयोजनेषु व्यापृतास्ततो न प्रभवन्ति न
प्रपारयन्ति सहायं न दद्यात् । यदि वा द्वावेव तौ जनौ ततः किं
दीयतामिति न ब्रूयात् ।

अधुना "सब्भावो वा" इत्यस्य व्याख्यानमाह ।

अत्तीकरेज्जा खलु जो विदिण्णे, एसोवि मज्झंति महंतमाणी ।

न तस्स तं देइ वहिं तु नेउं, तत्थेव किच्चं पकरेंति जं से ॥

यो भिन्नोऽनात्मीयमात्मीकुर्यात् यश्चायोऽपि शिक्षाधिपतिः शैक्ष-
तरको ममेति महामानी तस्य तान्साधून् बहिस्तस्मात् स्था
नादन्यत्र विहारक्रमेण नेतुं न ददाति किं तु यत् (से) तस्य कृत्य
करणीयं तत्रैव स्थितस्य तत् कुर्वन्ति अथवा

वारगाए य से देइ, न य दावेइ वारगं ।

तहा वे भेदमिच्छंते, अविकारी उ कारए ॥

वारेण तस्य शुश्रूषकमेकैकं साधुं न युङ्क्ते न च तस्मात्साधूनां वाच
नां दापयति मा मे गणभेदं कार्षीरिति हेतोः । अथैवमपि दुःस्व-
भावतया गणभेदं करोति तत आह । तथापि क्रियमाणे गणभेदं
कर्तुमिच्छति योऽविकारी दुर्भेदः साधुस्तेन तस्य कृत्यं कारय-
ति [सूत्र दो साहम्मिया इत्यादि] द्वौ साधर्म्मिकावेकतः संहतौ
विहरतस्तद्यथा शैक्षो रत्नाधिकश्च । तत्र रात्निकः परिच्छन्नः
परिवारोपेत इत्यर्थः । शैक्षतरकोऽपरिच्छन्नः परिवाररहितस्तत्र
रात्निके रत्नाधिकस्येच्छा यदि प्रतिभासते शैक्षतरकमुपसपद्य-
ते अथ नेच्छा न प्रतिभासते तर्हि नोपसपद्यते भिक्षामुपयातं च
कल्प्यं यदीच्छा तर्हि ददाति अथादातुमिच्छा तर्हि न ददाति
एष सूत्रसंक्षेपार्थः । अधुना भाष्यविस्तरः ।

रायणिअ परिच्छन्ने, उवसंपपडिच्छओ य इच्छाए ।

सुत्तत्थकारणे पुण, परिच्छयं वेंति आयरिया ॥

रात्निके रत्नाधिके द्रव्यतः परिच्छन्ने परिवारोपेते स तेन शैक्ष-
तरकस्य उपसंपत्परिच्छेदश्च इच्छया दातव्यः । इयमत्र भावना।
स यदि शैक्षतरकोऽवमरत्नाधिकस्तुल्यश्रुतो गुरुरत्नाधिकेन सह
ततः स रत्नाधिकश्चिन्तयति मा नूनमेतस्य भिक्षाहिण्डनव्याक्षेपे-
ण च सूत्रार्था नश्येयुस्ततः संघाटं ददाति अथवा मा एष मम-
कुलवासी सहाध्यायी द्रव्यपरिच्छेदेनापरिच्छदो भूयात्सहा-
ध्यायात्तेनातिस्नेहतः संघाटं ददात्यालोचनां प्रयच्छति। अल्प-
श्रुतस्य परिच्छदमुपसंपदां वा न ददातीति । अथ स शैक्षतरको
रत्नाधिकाद्बहुश्रुतस्तदा नियमत उपसंपत्तव्यः । परिच्छदश्च तस्य
दातव्यस्तथा चाह सूत्रार्थे कारणात् सूत्रार्थं गृहीतुकामाः पुनरा-
चार्या उपसपद्यन्ते परिच्छदं च ददति । एतदेव स्पष्टयति ।

सुत्तत्थं जइ गेण्हइ, तो से देइ परिच्छदं ।

गहिएवि देइ संघाडं, मा से नस्से य तं सुयं ॥

यदि स रत्नाधिकस्ततः सूत्रार्थं गृह्णाति ततः (से) तस्य ददाति
परिच्छदं परिवारं गृहीतेऽपि सूत्रार्थे ददाति संघाटं कस्मादि-
त्याह । मा ( से ) तस्य भिक्षाटनव्याक्षेपतः प्रतिलेखनाव्याक्षे-
पतश्च तत् श्रुतं नश्येदिति हेतोः ।

अबहुश्रुतादौ तु न ददाति इत्येतत्सूचयति ।

अबहुस्सुते न देंती, निरुवहते तरुणए य संघाडं ।

घेत्तण जाव वज्जइ, तस्स य गोणी य दिट्ठंतो ॥

अबहुश्रुतो निरुपहतपञ्चेन्द्रियस्तरुणकश्च तस्मिन् सत्स्वपि
साधुषु संघाटं न ददाति सहायान्न ददातीति भावः । यो वा गी-
तार्थोऽपि सन् प्रव्राजन् सहायान्विपरिणम्य गृहीत्वा व्रजति
तस्यापि सत्स्वपि साधुषु सहायान्न ददाति तथा च तत्र दुष्ट-
शीलतया गवां दृष्टान्तस्तमेव भावयति ।

साडगवद्धा गोणी, जह तं खेत्त पलाति दुस्सीला ।

इय विप्परिणामेंते, तम्मि न देज्जा सहाए य ॥

यथा कस्यापि गौः पलायिता ततः कथमपि लब्धा सती तेन
शाटके बद्धा यथा शाटकबद्धा दुःशीला गौस्तं शाटकं गृही-
त्वा पलायते इति एवममुना प्रकारेण यो विपरिणामयति सहा-
यान् तस्मिन्विपरिणामयति सहायान्न दद्यात् ।

( ५ ) सांभोगिकासांभोगिकयोः सहमिलितयोराचार्ययो
सामाचारीमाह ॥

( सूत्रम् ) दो साहम्मिया एगतो विहरंति तं जहा से

द्दे य रायणिए य तत्थ रायणिय पलिच्छिन्ने सेहतराए अ-पलिच्छिन्ने रायणिए इच्छा सेहतरा य उवसंपज्जेज्जा । इच्छा नो उवसंपज्जेज्जा इच्छा भिक्खोवघायं दलाति कप्पाग इच्छाए णो दलाति । २४ । दो भिक्खू णो एगतो विहरंति णोएहं कप्पति अण्णमण्णस्स उवसंपज्जित्ताणं विहरित्तए कप्पति एहं आहारातिणियाए अण्णमहं उवसंपज्जित्ताणं विहरित्तए । २५ । एव दो गणावच्छेया । २६ । दो आयरियउवज्झाया । २७ । बहवे भिक्खुणो णो ततो विहरंति णोएहं कप्पइ अएणमएणस्स उवसपज्जित्ताणं विहरित्तए कप्पति एहं आहारातिणियाए अण्णमण्णं उवसंपज्जित्ताणं विहरंतिए २८ एवं बहवे गणावच्छेइया २९ बहवे आयरियउवज्झाया ३० भिक्खू णो बहवे गणावच्छेइया तहेव आयरियउवज्झाया एगतो विहरति णो एहं कप्पति अएणमण्णं उवसंपज्जित्ताणं विहरित्तए वासावासवत्थए कप्पाति पवितिणीए कप्पति पवितिणीए कप्पति एहं आहारायणिआए अन्नमन्नं उवसंपज्जित्ताणं विहरित्तए हमतगिम्हेसु ॥३॥

( अत्र चतुर्विंशतितमसूत्रस्य व्याख्या ग्रन्थकर्त्रा न व्याख्यातेत्यस्माभिरपि न व्याख्यायते ) एव दो भिक्खू णो एगतो विहरति इत्यादि सूत्रसप्तक सुगमम् ।

अस्य सवन्धमाह ।

संखहिगारा तुल्ला, धिगारियाए सलेसते जोगो ।
आयरियस्स व सिस्सा, भिक्खु अभिक्खू अहतिभिक्खू॥

अनन्तरसूत्रे 'दो साहम्मिया' इत्यादिलक्षणे द्विकलक्षणा संख्याऽधिकृता अत्रापि सैव 'दो भिक्खुणो' इत्यादिवचनात्तत सख्याधिकारात्तुल्याधिकारिता पूर्वसूत्रेण सहास्य सूत्रस्येत्येप लेशत आद्यसूत्रस्य योग सवन्ध' । अथवा पूर्वसूत्रे रत्नाधिकपदेनाचार्य उपात्त' । आचार्यस्य च शिष्यो द्विधा भिक्षुरभिक्षुश्च । तत्र भिक्षु' प्रतीतोऽभिक्षुर्गणावच्छेदक उपाध्याय आचार्यो वा । तत आचार्यसूत्रात्प्रागुक्तादयानन्तर भिक्षुसूत्रमुक्तम् ।

शेषसूत्रसंवन्धप्रतिपादनार्थमाह ।

एमेव सेसएसु वि, गुणपरिवड्ढी य ठाणसंभावे ।
दुप्पभिई खलु संखा, बहुपिंमो उ तेण पर ॥

एवमेव पूर्वोक्तप्रकारेणैव शेषयोरपि गणावच्छेदकाचार्यसूत्रयो संवन्धस्तथा ह्याचार्यस्य शिष्यो भिक्षुरभिक्षुश्च तत्र भिक्षुसूत्रमुक्त तदनन्तरमभिक्षोर्गणावच्छेदकस्याचार्यस्य च सूत्रे । अथ गुणपरिवृद्ध्या स्थानलाभो भवति तथा हि भिक्षुर्गुणाधिकत्वेन गणावच्छेदकस्थान लभते गणावच्छेदको गुणाधिकतया आचार्योपाध्यायस्थानमतो भिक्षुसूत्रानन्तरं क्रमेण गणावच्छेदकाचार्योपाध्यायसूत्रे तथा द्विप्रभृतिका खलु सख्या बहुका भवति ततो द्विसख्यसूत्रत्रयानन्तर बहुसख्यासूत्रत्रयं बहूनां च परस्परमुपसपन्नानां पिण्डो भवति तेन बहुसख्यासूत्रत्रयात्परं पिण्ड पिण्डसूत्रमुक्तमिति एवमनेन संवन्धजातेनायातस्यास्य सूत्रसप्तकस्य व्याख्या । द्वौ भिक्षू एकत्र सहतौ विहरतो णोणमिति वाक्यालङ्कारे कल्पते अन्योन्यमुपसंपद्य विहर्तुं कल्पते । एह मिति पूर्ववत् यथा रत्नाधिकतया अन्योन्यमुपसपद्य विहर्तुमेवं गणावच्छेदकसूत्रमाचार्योपाध्यायसूत्रं च भावनीयमेव बहुसख्यासूत्रत्रय पिण्डसूत्रं चेति सूत्रसप्तकसङ्क्षेपार्थ ।

संप्रत्याद्यभिक्षुसूत्रव्याख्यानार्थमाह ।

संभोइयाण दोएहं, खेत्ताई पेहकारणगयाणं ।
पंथे समागयाण, भिक्खुण इमा भवे मेरा ॥

द्वावाचार्यावन्यस्मिन्नन्यस्मिन् क्षेत्रे स्थितौ तौ च परस्पर सांभोगिकौ तयो' सांभोगिकयोर्द्वयोराचार्ययोर्भिक्षुवस्ताभ्यां प्रेषिता' क्षेत्रादिप्रेक्षाकारणगता क्षेत्रप्रत्युपेक्षणार्थमादिशब्दाद्धपधिमार्गणार्थं वा गतास्ते च तथा गच्छन्त' पथि समागता परस्परं मिलिता' । तेषां चैकेन यथा गन्तव्यमतस्तेषां क्षेत्रादिप्रेक्षाकारणगतानां पथि समागतानां भिक्षूणां या मर्यादा सामाचारी सा इय वक्ष्यमाणा भवति । तामेवाह ।

भिक्खुस्स मासियं खलु, पलिछण्णाणं च ममगाणं नु ।
चउलहुग अपलिछन्ने, तम्हा उवसंपया तेसिं ॥

यौ द्वौ भिक्षू स्पर्द्धकपती तयो' शैक्षतरकेण रत्नाधिकस्य पुरत' आलोचयितव्यम । तेनालोचिते पश्चात् रत्नाधिकेन शैक्षतरकस्य पुरत एवमकरणे भिक्षोः शैक्षरत्नाधिकस्य च प्रायश्चित्त खलु मासिक मासलघु " पलिच्छन्नाए चेत्यादि "एतद्वहुसंख्याविशिष्टस्य भिक्षुसूत्रस्य व्याख्यानम । परिच्छन्नानां जघन्यतोऽप्यात्मतृतीयाना शेषकाणां चात्मद्वितीयानां यथोक्तविध्यकरणे प्रायश्चित्त मासलघु । तत्र यद्येकोऽपरिच्छन्नस्तर्हि तेनान्य आत्मद्वितीय आत्मतृतीयो वा उपसंपत्तव्यो नो चेदुपलंपद्यते तर्हि तस्मिन्नपरिच्छन्नेऽनुपसपद्यमाने प्रायश्चित्त चत्वारो लघुकास्त चोपसपद्यमान यो नोपसपद्य प्रतीच्छति तस्य मासलघु यत एवं तस्मात्परस्परमुपसपत्तेषां भवति कर्तव्या । एनामेव निर्युक्तिगाथा भाष्यकृद् व्याचिख्यासु प्रथमतो भिक्खुस्स मासिय खलित्येतद्व्याख्यानयति ।

दो भिक्खु अगीयत्था, गीया एको व होज्ज उ अगीतो ।
राइणियपलिच्छन्ने, पुव्वं इयरेसु लहु लहुगा ॥

द्वौ भिक्षू अगीतार्थौ यदि वा द्वावपि गीतार्थौ यदि वा द्वावपि गीतागीतार्थौ तयो' परस्परस्यालोचनमन्यथा प्रायश्चित्त मासलघु । अथवा एको गीतार्थ तत्र रत्नाधिके परिच्छन्ने नापरिच्छेदोपेते गीतार्थे इत्यर्थ' पूर्वमालोचयितव्यं पश्चादितरेष्वगीतार्थेषु रत्नाधिकेन एव चेत्ते न कुर्वते तर्हि रत्नाधिक प्रायश्चित्तं मासलघु । इतरेषां चत्वारो लघुका' । एनामेव गाथां विवरीषु प्रथमतो " दो भिक्खू अगीयत्था गीया " इत्येतद्विवृणोति ।

दोसु अगीयत्थेसुं, अहवा गीतेसु सेहतरो पुव्विं ।
जइ मा लोयइ लहुओ, न वियडेइ परो वि जइ पच्छा ॥

द्वयोर्भिक्ष्वोरगीतार्थयोरथवा गीतार्थयोर्मध्ये यदि शैक्षतरः पूर्वं रत्नाधिकस्य पुरतो नालोचयति तदा तस्य प्रायश्चित्त लघुको मास । इतरोऽपि रत्नाधिकोऽपि यदि पश्चात्तस्य शैक्षतरस्य पुरतो न विकटयति तदा तस्यापि प्रायश्चित्तं मासलघु । तत्र यदि द्वावप्यगीतार्थौ तदा परस्परस्य विहारालोचनैव केवला नापराधालोचनापि । अथ द्वावपि गीतार्थौ तदा परस्परविहारालोचना अपराधालोचना च । अथैको गीतार्थोऽपरश्चागीतार्थस्तत्रालोचनाविधिमाह ।

राइणिए गीयत्थे, राइणिए चेव वियमणा पुव्वि ।
देइ विहारवियमणं, पच्छा रा णितो सेहे ॥

यदि रत्नाधिको गीतार्थ इतरो ऽगीतार्थस्तर्हि गीतार्थे रत्ना-

धिके सति रत्नाधिके एव पूर्वं शैक्षतरेण विहारविकटना अपराधविकटना च दातव्या तत्पश्चात् रत्नाधिकः शैक्षे शैक्षतरकस्य विहारविकटनां ददाति । अथ शैक्षतरको गीतार्थो रत्नाधिकस्त्वगीतार्थस्तत्राह ।

सेहतरगे वि पुव्वं, गीयत्थे दिज्जए पगासणया ।
पच्छा गीयत्थो वि हु, ददाति आलोयणमगीते ॥

यदि गीतार्थः शैक्षतरकस्तर्हि तस्मिन् गीतार्थे शैक्षतरकेऽपि पूर्वं रत्नाधिकेन प्रकाशना विहारविकटना अपराधविकटना चेत्यर्थः दीयते। पश्चात् गीतार्थोऽपि सन् स शैक्षतरको हु निश्चितमगीते रत्नाधिके आलोचनां विहारालोचनां ददाति न त्वपराधालोचनां कस्मादित्याह ।

अवराहविहारप्पगासणाउ, दोन्नि वि भवंति गीयत्थे ।
अवराहपये मुत्तुं, पगासणं होतु ऽगीयत्थे ॥

अपराधप्रकाशना विहारप्रकाशना च एते द्वे अपि प्रकाशने भवतो गीतार्थे। अगीतार्थे पुनरपराधपदं मुक्त्वा शेषस्य विहारस्य प्रकाशनं भवति विहारालोचना भवति नापराधालोचनेति भाव । अगीतार्थतया तस्यापराधालोचनानर्हत्वात् ।

संप्रत्युपसंहारमाह ।

भिक्खुस्सेगस्स गयं, पलिच्छन्नाणं इयाणि वोच्छामि।
दव्वपलिच्छन्नाणं, जहन्नेणं अप्पतइयाणं ॥

"भिक्खुस्स मासिय खल्वि"त्यनेन पदेन यदेकस्य भिक्षोर्वक्तुमुपक्रान्त तद्गत परिसमाप्तमिदानीं द्रव्यपरिच्छेदेन परिच्छन्नानां जघन्येनात्मतृतीयानां यद्वक्तव्य तद्वक्ष्यामि । तदेवाह ।

तेसिं गीयत्थाणं, अगीतमिस्साण एस चेव विही ।
एत्तो सेसाणं पि य, वोच्छामि विहिं जहाकमसो ॥

तेषां परिच्छेदेन परिच्छन्नानां जघन्यत आत्मतृतीयानां बहूनां सर्वेषां गीतार्थानामथवा अगीतार्थानां यद्वा मिश्राणां केषाचिद्गीतार्थानां केषांचिदगीतार्थानामित्यर्थः । एष एवानन्तरो दिक्षु गत आचार्याणामालोचनाविषयो विधिरवसातव्यो व्यतिरेके च प्रायश्चित्तमपि तथैव । अत ऊर्ध्वं शेषाणामपि विधिं यथाक्रमशो यथाक्रमेण वक्ष्यामि । तत्र शेषशब्दवाच्यानुपदर्शयति।

सेसा ते नायव्वा, अप्पवितिया उ जे तहिं केई ।
गीयत्थमगीमत्थं, मासे य विही उ सो चेव ॥

शेषा नाम ते भण्यन्ते यत्र तेषां बहूनां भिक्षूणां मध्ये केचिदात्मद्वितीयास्तस्मिन् शेषे गीतार्थे अगीतार्थे मिश्रे च स एव पूर्वोक्तो विधिरालोचनाविषयस्तद्व्यतिरेके प्रायश्चित्तविधिश्चावसातव्य ॥

संप्रति चशब्दव्याख्यानमाह ।

संजोगा उ चसद्देण, अहिगया जह एगो दो चेव ।
एगो जइ न वि दोण्हिं, उवगच्छे चउलहु तो से ॥

परिच्छन्नानां चेत्यत्र चशब्देन सयोगा अधिकृताः सूचिता इत्यर्थस्तानेवोपदर्शयति । तथा चेति भङ्गोपदर्शने एकत एको भिक्षुरपरतो द्वौ भिक्षू तत्रैवेनात्मद्वितीय उपसंपत्तव्यो यदि पुनरेको न द्वावुपगच्छति उपसंपद्यते तदा ( से ) तस्य प्रायश्चित्त चत्वारो लघुका ।

पच्छा इतरे एगं, जइ न उवगच्छे मासियं लहुयं ।
जत्थ वि एगो तिन्नि, न उवगय तत्थ वी लहुगा ॥

एकस्मिन्नुपसंपन्ने पश्चादितरावप्युपसंपद्येते यदि पुनरेकं तावितरौ पश्चान्नोपगच्छेतां तदा तयोर्मासिकं प्रायश्चित्तं लघुकं। यत्रापि भङ्गे एकत एको ऽपरत्र त्रयस्तत्र यदि परस्परमुक्तप्रकारेण नोपगमस्तदा प्रायश्चित्तं लघुकाः । किमुक्तं भवति । यद्येकस्त्रीनोपगच्छति तदा तस्य प्रायश्चित्तं चत्वारो लघुकास्तचेदुपगच्छन्तं पश्चादितरे त्रयो नोपगच्छन्ति तर्हि तेषां प्रायश्चित्तं लघुको मास ॥

एमेव अप्पवीतो, अप्पतइयं तु जइ न उवगच्छे ।
इयरेसि मासलहुयं, एवमगीए य गीए य ॥

एवमेव अनेनैवानन्तरोदितेन प्रकारेणात्मद्वितीय आत्मतृतीयं यदि नोपगच्छति तदा तस्य प्रायश्चित्तं चतुर्लघु । इतरश्चेत्यनुपगच्छन्तं नोपगच्छेत्तदा तस्य मासिकं लघु इतरेषामेक आत्मतृतीयोऽपर आत्मचतुर्थ इत्येवमादीनां परस्परमनुपगमे प्रायश्चित्त मासलघु। एवमुक्तप्रकारेणागीते अगीतार्थानां गीते गीतार्थानां च द्रष्टव्यम् ।

मिश्रानधिकृत्याह ।

मीसाण एगो गीतो, होंति अगीया उ दोण्हि तिन्नि वि वा ।
एवं उवसंपज्जे, ते उ अगीया इहरमासे ॥

मिश्राणां मध्ये एक एकाकी गीतो गीतार्थोऽपरे तु द्वौ त्रयो वा भवन्त्यगीता अगीतार्थाः तत्र तेऽगीता एकमुपसंपद्येरन् । इतरथा चेन्नोपसंपद्यन्ते तर्हि तेषां प्रायश्चित्तं लघुको मास ।

सो वि य जइ न वि इयरे, तस्स वि मासो उ एव सव्वत्थ ।
उवसंपया उ तेसिं, भणिया अन्नोन्ननिस्साए ॥

सोऽपि चैको यदि तान् इतरानुपसंपद्यमानान् नोपसंपद्यते तदा तस्यापि प्रायश्चित्तं मासो लघु । एवमेक आत्मद्वितीयो गीतार्थोऽपर आत्मतृतीयआत्मचतुर्थ इत्यादौ सर्वत्र भावनीयमेवमन्योन्यनिश्रयाप्राक् द्वारगाथायां तेषामुपसंपद्भणिता उपदिष्टा

अण्णोण्णनिस्सियाणं, अगीयाणं पि उग्गहो तेसिं ।
गीयपरिग्गहियाणं, इच्छाए तेसिमो होइ ॥

अन्योन्यनिश्रितानां तेषामगीतानामपि गीतपरिगृहीतानामवग्रहो भवति। अवग्रहो नाम आभवनव्यवहारः स च द्विधा इच्छया सूत्रोक्तश्च । तत्रेच्छया तेषामयं वक्ष्यमाणो भवति तमेवाह ॥

इच्छियपडिच्छियाए, ण खेत्त वसही य दोण्ह वी लाभो ।
इच्छंतो न होइ उग्गहो, निक्कारणकारणे दोण्हं ॥

इच्छाया अवग्रहो नाम इच्छितप्रतीच्छितेन इच्छा संजाताऽस्येति इच्छितं प्रतीच्छा संजाता अस्येति प्रतीच्छितम् इच्छितं च तत् प्रतीच्छितं च इच्छितप्रतीच्छितम् । वाचा आभवनव्यवहारस्थापना। यथा यत्पथि लभ्यते तदस्माक यत् ग्रामे तत् युष्माकं यदि वा यत्सचित्त तदस्माकं यदचित्तं तत् युष्माकम् । अथवा या स्त्री व्रतग्रहणार्थमुपातिष्ठति सा अस्माकं पुरुषो युष्माकम् यद्वा बालो युष्माकं वृद्धोऽस्माकम् अथवा य सार्थेन सह व्रजतां लाभ सोऽस्माकमसार्थे युष्माकम् । यदि वा यो यद्वासरे तत्तस्यैव एवं भूतेन इच्छितप्रतीच्छितेन य आभवनव्यवहार स इच्छाया अवग्रह । एष च प्राय पथि गच्छतां भवति स्थानप्राप्तानां सूत्रोक्त आभवनव्यवहारस्तमेतमुपदर्शयति । समकाल क्षेत्रे प्राप्तानामक्षेत्रे वा वसति प्राप्तानां द्वयानामपि लाभ साधारणः । अथ न क्षेत्रमक्षेत्रं वा वसति समकाल प्राप्ता किं तु विषमकालं तत आह ( इच्छतो न होति इत्यादि ) यदि निष्का-

रण स्थिता इति पश्चात्प्राप्तास्तदा नास्ति तेषामवग्रहः किं तु पूर्वप्राप्तानामेव । अथ कारणेन केनापि ग्लानप्रतिजागरणादिना स्थितास्ततः पश्चात् प्राप्तास्तर्हि भवति द्वयानामपि साधारणोऽवग्रहः । एतदेव स्पष्टतरमुपदर्शयति ।

समगं पत्ताणं सा-हारणं तु दोएहं पि होति तं खेत्तं ।
विसमं पत्ताणं पुण, इमा उ तहिं मग्गणा होइ ॥

समकमेककालं प्राप्तानां द्वयानामपि तत् क्षेत्रं भवति साधारणं विषमं विषमकालं प्राप्तानां पुनरियं तत्र क्षेत्रे मार्गणा भवति । तामेव कुर्वन्नाह ।

पडियरए व गिलाणं, सयं गिलाणो उरे व मंदगती ।
अप्पत्तस्स वि एएहिं, उग्गहो दप्पतो नत्थि ॥

प्रतिचरति वा प्रतिजागर्त्ति ग्लानं यदि वा स्वयं ग्लानं आतुरो वा यदि वा स्वभावान्मन्दगतिरेतैः कारणैरप्राप्तस्यापि समकाल पश्चात्प्राप्तस्यावग्रहो भवति दर्पतो निष्कारणं स्थितानां पुनरवग्रहो नास्ति ।

एमेव गणावच्छेए, पलिच्छएणाण च सेसगाणं तु ।
पलिच्छन्ने ववहारो, दुविहो वायंतिओ नाम ॥

यथा भिक्षोरेकस्य बहूनां परिच्छन्नानां शेषकाणां चोक्तमेवमेव अनेनैव प्रकारेण एकस्मिन् गणावच्छेदे बहूनां परिच्छन्नानां जघन्यतोऽप्यात्मतृतीयानां शेषकाणां वगत आत्मद्वितीयानां तुशब्दादेकत एकोऽपरत आत्मद्वितीय इत्यादि संयोगगतानां च निरवशेषं वक्तव्यम् । तत्र परिच्छन्ने जातावेकवचनं परिच्छन्नानामुपलक्षणमेतत् परमुपसम्पन्नानां चाभवनव्यवहारो द्विधा भवति । सूत्रोक्तो वागन्तिकश्च । वाचा अन्तः परिच्छेदो वागन्तस्तेन निर्वृत्तो वागन्तिकस्तत्र वागन्तिको नाम वक्ष्यमाणस्तमेवाह ।

पहि गामे चित्तमचित्तं, पुरिसं वा वालवुड्डसत्थादी ।
इच्छाए वा देती, जो जं लाभे भवे तितो ॥

यत् पथि मार्गे लभ्यं तदस्माकं यत् ग्रामे तत् युष्माकम् । यदि वा यत्सचित्तं तत् युष्माकमचित्तमस्माकम् । अथवा स्त्री युष्माकं पुरुषोऽस्माकम् । अथवा वृद्धो युष्माकं बालोऽस्माकम् । यदि वा ( सत्थादी इति ) सार्थे लभ्यं तत् युष्माकमसार्थेऽस्माकम् । अथवा इच्छया ददाति कथमित्याह-यो यल्लभते तत्तस्य भवति एष सूत्रोक्त आभवनव्यवहारः । द्वितीयो वागन्तिक आभवनव्यवहारः । क्षेत्रप्राप्तानामक्षेत्रे वा वसतिं प्राप्तानां यः सूत्रोक्त आभवनव्यवहारः स भिक्षूणामिव प्रतिपत्तव्यः स चाविशेषणार्थो यदि वा द्वावप्यगीतार्थपरिगृहीतौ गीतार्थनिश्रा प्रतिपन्नौ समकमेककालं प्राप्तौ ततस्तयोः साधारणं क्षेत्रमाभवति । सति विद्यमाने कार्ये ग्लाने प्रतिजागरणादिलक्षणे ये स्थिता अगीतार्था असमाप्ताश्च तत्र समाप्तानां साधारणं क्षेत्रम् । ये पुनरगीतार्था अपि च पूर्वं प्राप्ता गीतार्थाः समाप्ताश्च निष्कारणं प्राक् स्थित्वा प्राप्तास्तदा असमाप्तानामप्यगीतार्थानाम् । अपि च तत्क्षेत्रं पूर्वं प्राप्तत्वाद् गीतार्थः समाप्तावपि च तस्य क्षेत्रस्य प्रभुर्निष्कारणं स्थित्वा पश्चात्प्राप्तवान् ॥

समपत्तकारणेणं, खेत्ते वसहीए दोएह वी लाभो ।
एगणिए होति उग्गहो, गीयत्थमम्मि दोएहं पि ॥

समं समकमेककालं कारणेन पश्चाद्वा क्षेत्रे अक्षेत्रे वा वसतौ प्राप्तयोर्द्वयोरपि लाभः साधारणः । अत्र पुनर्यदि विशेषचिन्ता क्रियते तदा यो रत्नाधिकस्तस्यावग्रहो भवति । यद्यपि नाम द्वयोरपि साधारणो लाभस्तथापि यथा सङ्घाटकेन भिक्षां हिण्डमानयो रत्नाधिकस्य लाभो भण्यते एवमिहापि रत्नाधिकस्यावग्रहः । अथैको गीतार्थः परोऽगीतार्थस्तत्र यदि रत्नाधिकोऽगीतार्थोऽवमरत्नाधिको गीतार्थस्ततोऽवमरत्नाधिकस्यावग्रहः । अथ द्वावपि समानार्थौ तत आह । समे गीतार्थे परस्मिन्समकं च प्राप्ते द्वयोरपि साधारणोऽवग्रहः । तदेवं द्विसंख्याकगणावच्छेदकसूत्रमिति भावितमेव द्विसंख्याकाचार्योपाध्यायमपि भावनीयम् ॥

इदानीं बहुत्वसूत्राणि पिण्डसूत्रं चातिदेशत आह ।

एमेव बहूणं पि, पिंडे नवरोग्गहस्स उ विभागो ।
किं कतिविहो कस्स व कम्मि व, केवइयं वा भवे कालं ॥

एवमेव बहूनामपि भिक्षुप्रभृतीनां सूत्राणि भावनीयानि द्विकसूत्रापेक्षया बहुत्वसूत्राणामर्थतो नानात्वाभावात् पिण्डे पिण्डकसूत्रस्यापि स एवार्थो नवरमत्रावग्रहस्य विभागो वक्तव्यस्तमेवाह किं कतिविधः कस्य वा कस्मिन्वा कियन्तं कालं भवत्यवग्रहः । तत्र किमित्याद्यद्वारव्याख्यानार्थमाह ॥

किं उग्गहोति भणिओ, उग्गहो तिविहो उ होति चित्तादी ।
एक्केको पंचविहो, देविंदादी मुणेयव्वो ॥

किमवग्रह इति भणिते पृष्टे सूरिराह । त्रिविधो भवत्यवग्रहश्चित्तादिः सचित्तोऽचित्तो मिश्रश्च । पुनरेकैकः कतिविध इति प्रश्नमुपजीव्याह स एकैकः पञ्चविधः पञ्चप्रकारो ज्ञातव्यः । कोऽसावित्याह देवेन्द्रादिः देवेन्द्रावग्रहो राजावग्रहो माण्डलिकावग्रहः शय्यातरावग्रहः साधर्मिकावग्रहश्च । गतं कतिविधद्वारम् । इदानीं कस्य न भवतीति प्रतिपादयति ॥

कस्स पुण उग्गहोत्ति, परपासंडीए उग्गहो नत्थि ।
निएहे सत्ते संजति, अगीते गीत एक्के वा ॥

कस्य पुनरवग्रहो भवतीति शिष्यप्रश्नमाशङ्क्य प्रोच्यते परपाखण्डिनामवग्रहो नास्ति ये च निह्नवा ये च सन्ना याश्च संयत्यो गीतार्थैरपरिगृहीता ये चागीतार्था गीतार्थनिश्रामनुपपन्ना यश्च निष्कारणमेकाकी गीतार्थः एतेषां सर्वेषामप्यवग्रहो नास्ति ।

एतदेव सुव्यक्तमाह ।

असएणाण बहूणं पि, गीतमगीताण उग्गहो नत्थि ।
सच्छंदियगीयाणं, असमत्त अणीसा गीए वि ॥

अवसन्नानां बहूनामपि गीतार्थानामगीतार्थानां चावग्रहो नास्ति ( सच्छंदियगीयाणत्ति ) ये गीतार्था अपि स्वच्छन्दिकाः स्वच्छन्दतयैव एकाकिनो विहरन्ति तेषामपि नास्त्यवग्रहः । तथा ये असमाप्ता असमाप्तकल्पा यस्य च समुदायस्य न विद्यते गीतोऽगीतार्थः ईशस्तेषामपि नास्त्यवग्रहः ।

एव ता सावेक्खे, निरवेक्खाण पि उग्गहो नत्थि ।
मुत्तूण अहालंदे, तत्थ वि जे गच्छपडिबद्धा ॥

एवं तावत्सापेक्षे जातावेकवचनं सापेक्षाणामुक्तमिदानीं यथालन्दविकल्पिका निरपेक्षा जिनकल्पिकादयस्तेषामप्यवग्रहो नास्ति । किमविशेषेण सर्वेषां नेत्याह । मुक्त्वा यथालन्दान् तथापि गच्छप्रतिबद्धान् तेषामवग्रहो भवति गच्छप्रतिबद्धयथालन्दिकेषु तु सर्वेषामपि नास्ति ॥

आसन्नतरा जाणंति, मज्झया सो य जत्थ निव्वाए ।
नत्थि त्ति तेतुदेसं, आउ परं ते न इच्छंति ॥

तेषां गच्छनिर्गतानां जिनकल्पिकादीनां यो व्रतग्रहणार्थमुपतिष्ठति स तेन प्रव्राजयन्ति तथाकल्पव्यावर्त्तिकं तु ये तत्रासन्नाः संयताः स्थितास्तत्रोपदेशं ददति यथा अमुकानां समीपे गत्वा प्रव्रजेति । अथवा जानन्ति श्रुतबलतो ये दूरे स्थितास्तत्र स एव निस्तरिष्यति । तदेतत् ज्ञात्वा यत्र स निस्तरति तत्रोपदेशं प्रयच्छन्ति । परमार्थतः पुनस्ते आत्मपरमात्मगच्छपरगच्छविभागं नेच्छन्ति स्थविरकल्पादुत्तीर्णत्वात् ।

अगीयसमणसंजइ–गीयत्थपरिग्गहाए खेत्तं तु ।

अपरिग्गहाण गुरुगा, न लभति सीसं त्थ आयरिओ ॥

अगीतानामगीतार्थानां श्रमणानां संयतीनां च गीतार्थपरिग्रहाणां गीतार्थपरिगृहीतानां क्षेत्रमवग्रहो भवति । इयमत्र भावना । ये गीतार्था अपि साधवो गीतार्थपरिगृहीता विहरन्ति वा अपि संयत्यो गीतार्थपरिगृहीता वर्तन्ते तेषामवग्रहो भवति ते च यदि साधवो यदि संयत्यो गीतार्थनिश्रामनुपपन्ना अगीतार्था विहरन्ति तदा तेषामपरिग्रहाणां गीतार्थपरिग्रहरहितानां विहरतां प्रायश्चित्तं चत्वारो गुरुकाः अन्येषां च संयतीनां च गीतार्थापरिगृहीतानां यः परिव्राजक आचार्यः सोऽत्र शिष्यान् स्वीकृतान् न लभते परिगृहीततयैव तेषां वीक्षणात् ।

गीयत्थगते गुरुगा, असती एगागिए वि गीयत्थो ।

समोसरणे नत्थि उग्गहो, वसहीए उ समाए अखेत्ते ॥

ये ते स्वयं गीतार्थो गीतार्थपरिग्रहरहिता वर्तन्ते यद्यन्यस्मिन् गीतार्थे आगते तस्योपसंपदं न प्रतिपद्यन्ते तदा तेषां प्रायश्चित्तं चत्वारो गुरुकाः । अथान्यो गीतार्थ उपसंपदर्हो नायातः कारणवशतश्च कथमप्येकाकी जातस्तस्य गीतार्थस्यागतस्य परिवाररहितत्वेनैकाकिनोऽपि क्षेत्रमाभवति । गत कस्येति द्वारम् । इदानीं कस्मिन्क्षेत्रेति द्वारमधिकृत्याह । यत्र यावन्ति दिनानि संघस्य समवसरणं तत्र तावन्ति दिनान्यवग्रहो न भवति एवं जिनस्नानादिषु मिलितानां यावन्महिमा तावदवग्रहाभावः । एतन्मध्ये समवसरणे नास्त्यवग्रह इत्यनेन सूचितमेवमक्षेत्रेऽवग्रहाभाव । अक्षेत्रेऽपि वसतौ मार्गणाऽवग्रहस्य भवति सा चैवमक्षेत्रे वसतिषु समकं स्थितानां साधारणं क्षेत्रं पश्चादागतानां तु न भवति ।

सेसं सकोसजोयणं, पुव्वगहियं तु जेण तस्सेव ।

समगोग्गहसाहारं,पच्छा गतो होइ उ अखेत्ती ॥

शेषं क्षेत्रमवग्रहो भवति । तच्च प्रमाणतः सक्रोशयोजनं क्रोशसहितमन्यूनत्रिकमित्यर्थः तत्रापि येन पूर्वमवगृहीतं तस्यैव तत्क्षेत्रमाभवति न शेषस्य।अथ समकमेव तस्यावग्रहः कृतस्तेन आह साधारणं तदा तेषां क्षेत्रम् ।यस्तु पश्चादागतः सनवलब्धो न तस्याभवति क्षेत्रमिति भावः ।

अण्णो गतो कहतो, उवसंपण्णे तहिं च ते सव्वे ।

सकनो उ व कहेंते, साहारणे तस्स जो भागो ॥

अन्यः कोऽप्याचार्यः कथयन् बहुश्रुतः पश्चादागतः ते च पूर्वस्थिताः सर्वेऽपि तस्मिन्नन्यागते कथयत्युपसंपन्नास्तदा तस्मिन् कथयति सोऽवग्रहः सकान्तस्तस्याजाय्यं तत्क्षेत्रं जातमिति भावः । अथ समकप्राप्ततया साधारणे क्षेत्रे स्थितानां मध्ये एकः कश्चनापि तं पश्चादागतमन्यमाचार्यं बहुश्रुतमुपसंपन्नस्तदा यस्तस्य भागस्तं तत्र पदयति सकान्त ।

निक्खित्तगणाणं वा, सेसं वि य तेहि तं तु तेण तु ।

खेत्तभया वा कोई, माइट्ठाणेण सुण एवं ॥

यदि क्षेत्रवतां शिष्य आगन्तुकमाचार्यमुपसंपन्नो यदि वाचार्या गणं शिष्ये गीतार्थे निक्षिप्य तमुपसंपन्नास्तदा तेषामेव निक्षिप्तगणानां वाशब्दादुपसंपन्नतदेकशिष्याणां तत्क्षेत्रम् । किमुक्तं भवति यद्यत्तत्क्षेत्रात्सचित्तादिकमुत्पद्यते तत्तेषामेवाभवति यदागन्तुको न लभते कोऽपि पुनर्ममागन्तुकस्य पार्श्वे शृण्वतः क्षेत्रं यायादिति क्षेत्रभयादेवं वक्ष्यमाणप्रकारेण मातृस्थानेन शृणोति । तमेव प्रकारमाह ।

कुड्डेण चिलिमिलीए व, अंतरितो सुणइ कोइ माणेण ।

अहवा चंकमणीयं, करेंतो पुच्छागमो तत्थ ॥

कुड्येन यदि वा चिलिमिलिन्या जवनिकान्तरितः सन् कोऽपि मानेन ममेदं क्षेत्रमाभवति तस्मा इह तावदुत्तरत्विति क्षेत्रगवेषणे शृणोति । अथवा मानेनैव यथोक्तरूपेण चङ्क्रमणिकां कुर्वन् कोऽपि शृणोति तत्र यद्यपि स शृणोति तथापि तत्र पृच्छागमो भवति पृच्छा कर्त्तव्या भवति ततः पृच्छातोऽपि तस्य भवति क्षेत्रम् । अथ कतिभिः पृच्छाभिः कियन्तं कालं तस्याभवति क्षेत्रमित्याह ।

पुच्छाहि तिहिं दिवसं, सत्तहि पुच्छाहिं मासियं हरइ ।

अहवा दिवससमत्तो, इमो उ ते हिज्जं अहिज्जंत ॥

तिसृभिः पृच्छाभिरेकं दिवसं यावत्तत्क्षेत्रं हरति पृच्छादिवसे यत्तस्मिन्क्षेत्रे सचित्तादिकमुत्पद्यते तत्कथयन्सः लभते नेतर इति भावः । सप्तभिः पृच्छाभिः पुनर्मासिकं पृच्छादिवसादारभ्य मासं यावत्सचित्तादिकमपहरतः तदेवं 'खेत्तभया वा कोइ' इत्यादि गाथा पश्चार्द्धं व्याख्यातमिदानीं "निक्खित्तगणाणं चेत्यादि' पूर्वार्द्धं व्याख्यानयति । अथवा यो वक्ष्यमाणोऽन्यविशेषस्तस्मिन्नधीयानेऽध्यापयितरि । तमेवाह ।

जति निक्खिवऊण गणं, उवसंपाएह वा वि सीसं तु ।

ता तेसि चिय खेत्तं, वाएतो लाज खेत्त बहिं ॥

यदि गीतार्थे गणं निक्षिप्य तमागन्तुकमुपसंपद्यते अथवा शिष्यं प्रेषयति तदा तेषामेव पूर्वस्थितानां तत्क्षेत्रमाभवति न तु वाचयतां वाचयति लाभस्तस्मात् क्षेत्राद्बहिः ।

अह वेती वायंतो, लाभेण नत्थि हंति वच्चामो ।

इयरेहि य सो रुद्धो, मा वच्चसु अम्ह साहारं ।

अथ श्रुते वाचयतः यथा नोऽस्माकमिह नास्ति लाभ इति व्रजाम एवमुक्ते इतरैः पूर्वस्थितैः स रुद्धो यथा मा व्रजत यूयं युष्माकमस्माकं च साधारणं क्षेत्रमिति । अथ साधारणेऽपि क्षेत्रे स्थिता न संस्तरन्ति तत्र विधिमाह ।

निग्गमणे चउभंगो, निट्ठियसुहदुक्खयं जति करेंति ।

निट्ठियपट्ठावितो वा, रुद्धो पच्छा य वाघातो ॥

अथ साधारणक्षेत्रे स्थितास्ते न संस्तरन्ति तर्हि निर्गन्तव्यं तत्र निर्गमने चतुर्भङ्गी वक्तव्या। गाथायां पुंस्त्वनिर्देशः प्राकृतत्वात् तथा यस्य श्रुतस्कन्धस्य निमित्तमुपसंपन्नास्तन्निष्ठित तस्मिन्निष्ठिते समासे भूय क्षेत्रं साधारणं जातं तत्र यदि भूयः सुखदुःखनां कुर्वन्ति सुखदुःखनिमित्तमुपसंपदं प्रतिपद्यन्ते तथा निष्ठिते श्रुतस्कन्धे यः प्रस्थापितः पुनरपि प्रतीच्छकैः पश्चात् रुद्धो व्याघातो वाऽशिवादिभिः कारणैरुपजातस्तत्र यदाभाव्यं तद्वक्तव्यमिति द्वारगाथासमासार्थः । साम्प्रतमेनामेव गाथां विवरीषुः प्रथमतो निर्गमनचतुर्भङ्गीमाह ।

वत्थव्व निंति न उ जे, पाहुणा ते न इयरे वा ।
उभय व नोभयं वा, चउभयणा होति एवं तु ॥

यस्य ग्रामप्रधानस्य नगरप्रधानस्य वा नियोगेन तिष्ठन्ति साधव स चतुर्द्धा । तद्यथा आगन्तुकभद्रको नामैको न वास्तव्यभद्रक ।१। वास्तव्यभद्रको नामैको नागन्तुकभद्रक ।२। आगन्तुकभद्रको वास्तव्यभद्रकश्च ।३। नागन्तुकभद्रको नापि वास्तव्यभद्रक ।४। एतच्चतुर्भङ्गीवशादधिकृताऽपि चतुर्भङ्गी जाता तद्यथा प्रथमभङ्गवशात् वास्तव्या निर्गच्छन्ति न प्राघूर्णिका नियोक्तुरागन्तुकभद्रकत्वात् । द्वितीयभङ्गवशात् प्राघूर्णिका निर्गच्छन्ति न इतरे द्वितीये भङ्गे नियोक्तुर्वास्तव्यभद्रकत्वाच्चतुर्थभङ्गवशाद् उभय प्राघूर्णिका वास्तव्याश्च निर्गच्छन्ति उभयानपि प्रति नियोक्तुरभद्रकत्वात्तृतीयभङ्गवशान्नोभयं वास्तव्या प्राघूर्णिकाश्च निर्गच्छन्ति उभयानपि प्रति तस्य भद्रकत्वात् । एवममुना प्रकारेण चतुर्भजना चतुर्भङ्गी भवति । तत्र प्रथम भङ्गमधिकृत्य विशेषमाह ।

आगंतुयभद्दगम्मि, पुव्वट्ठिया गंतु जइ पुणो एज्जा ।
तम्मि अपुण्णे मासे, संकामति पुव्वसिं खेत्तं ॥

आगन्तुकभद्रके नियोक्तरि ये पूर्वस्थितास्ते वक्ष्यमाणचतुर्भागार्द्धभागगमनया यतनया गच्छन्ति । तथाऽप्यसंस्तरणे सर्वात्मना गच्छन्ति तेन गत्वा यद्यपूर्ण एव मासे तस्मिन् क्षेत्रे पुनरागच्छेयुस्तदानीं तेषां प्रत्यागतानां क्षेत्रं सङ्क्रामति तेषां तदाभाव्य भवतीति भाव । कारणतो गत्वा पुनरपूर्णे एव मासे प्रत्यागमनात् । अथ साधारणमुभयेषां तत्क्षेत्रमासीत् " मा वच्चसु अम्ह साहारमिति " व्यवस्थाकरणात्तदा तेषां पुन प्रत्यागताना साधारण्येन क्षेत्र सङ्क्रामति ।

द्वितीय भङ्गमधिकृत्याह ॥

वत्थव्वभद्दगम्मि, संघाडगजयण तहवि अो अलंभो ।
आगंतु वेंति तओ, अत्थितियो पवायगो नवरं ॥

वास्तव्यभद्रके नियोक्तरि तेषामागन्तुकानामसंस्तरतामियं यतना । वास्तव्या आगन्तुकैः सममेकैकेन सघाटेन भिक्षां हिण्डन्ते अथ तथाप्यलाभस्तर्हि निर्गच्छन्ति । तत्रेयं भङ्गचतुष्टयेन यतना । आगन्तुकानां चतुर्भागो निर्गच्छति न वास्तव्यानाम् ।१। वास्तव्यानां चतुर्भागो निर्गच्छति नागन्तुकानाम् ।२। वास्तव्यानामपि चतुर्भाग आगन्तुकानां च चतुर्भाग ।३। उभयेषामपि न चतुर्भागो गमने चतुर्थ ।४। स चात्र शून्यो गमनमन्तरेण संस्तरणात् । एवमप्यसंस्तरणेऽर्द्धाऽर्द्धगमने यतना प्रथमभङ्गेऽपि द्रष्टव्या । स चात्रापि पूर्वप्रकारेण शून्य । अथैवमपि न संस्तरन्ति तत आगन्तुका सर्वे निर्गच्छन्ति नवरमेक प्रवाचकस्तिष्ठति येन वास्तव्यान्प्रवाचयति । अथ सोऽप्यसंस्तरेण स्वशिष्यैः सह गतस्ते च वास्तव्यास्तमुपसंपन्ना यदि " मा वच्चह साहारमिति " व्यवस्थाकरणेन उभयेषां साधारणं तत्क्षेत्रं ततो यदि गत्वा पुनरपूर्णे एव मासे तत्र क्षेत्रे प्रत्यागच्छन्ति तदा कृतायामुपसंपदि तेषामेव प्रत्यागताना क्षेत्रमाभाव्यतया साधारणेन । साम्प्रतमनयोरेव भङ्ग्योराभवनव्यवहारशेष उच्यते । अत्र पतित " नियछिसुहदुक्खय जति करेंती ' ति द्वारस्य व्याख्यानार्थमाह ।

सुहदुक्खितो समत्तं, वाएंतो निग्गएसु सीसेसु ।
वाएंतो विहता, निग्गयसीसो समत्तम्मि ॥

उपसम्पन्नमागन्तुका सर्वेऽपि निर्गच्छन्ति केवलमेव प्रवाचकोऽवतिष्ठते तत्र यदि निर्गतेषु शिष्येषु वाचयन् प्रवाचक समाप्ते श्रुते सुखदु खित सुखदु खनिमित्तमुपसंपद ग्राहितस्तथा तस्य वाच्यस्याभवति तत् क्षेत्रम् । इदं द्वितीयभङ्गमाश्रित्योक्तम् । प्रथमभङ्गमधिकृत्याह । तथा वाच्यमानो निर्गतशिष्य समाप्ते श्रुते वक्तव्य किमुक्तं भवति यदि वाच्यमानो निर्गतेषु शिष्येषु वाचनाग्रहणाय पश्चात स्थित समाप्ते श्रुतस्कन्धे वाचयता सुखदु खनिमित्तमात्मोपसंपद ग्राहितस्तदा वाचयत आभवति क्षेत्रम् ॥

दोण्ह वि विणिग्गएसुं, वाएंतो तत्थ केवलो होइ ।
तम्मि सुए असमत्ते, समत्ते तस्सेव संकमति ॥

तद् द्वयोरपि शिष्येषु विनिर्गतेषु तावेव द्वौ केवलौ तिष्ठतस्तत्र यावदद्यापि तत् श्रुत न समाप्यते तावत्तस्मिन् श्रुते असमाप्ते तत्र तयोर्द्वयोर्मध्ये वाचयन् कोविदो भवति समाप्ते पुन श्रुतस्यैव पूर्वस्थितस्य तत्क्षेत्र संक्रामति । अथ द्वावपि परस्पर सुखदु खोपसंपद प्रतिपन्नौ तदा साधारण क्षेत्रमिति यो यल्लभते तस्य तदाभवतीति ।

संथरे दो वि नानिंति, वट्टंते उववाइया उ जइ सीसा ।
लाभो नत्थि महंत्ति य, अहव समत्ते पधाविज्जा ॥

संस्तरे संस्तरणाद्द्वयेऽपि पूर्वस्थिता आगन्तुकाश्च न निर्गच्छन्ति । तैश्च पूर्वस्थितैर्यदि बहव शिष्या उपपादिता उत्पादितास्तदा न आगन्तुको नास्ति मम लाभ इति विचिन्त्य प्रधावेत् गच्छेत् अथ ते निक्षिप्तगणास्तस्य समीपे वाचयन्ति तेषां शिष्यो वा तत आह । अथवा समाप्ते श्रुते प्रधावेत् संप्रति ' निच्छियपदाविसो वा कओ पच्छा य वाघातो" इत्येतद् व्याख्यानयति ॥

जइ वायगो समत्तो, निंति उ पडिच्छिएहि रुंभेज्जा ।
असिवादिकारणे वा, तत्तो लाभो इमो होइ ॥ -

यदि समाप्ते श्रुते तत क्षेत्रात् वाचको निर्गच्छन प्रातीच्छिकैरुच्यते यथा मा निर्गच्छत यूय वयमद्यापि वाचयिष्याम इति । यदि वा निर्गतो बहिरशिवादीनि कारणान्युपस्थितानि ततो व्याघात इति कृत्वा न निर्गच्छति तदा तस्मिन्प्रातीच्छिकैरवरोधनाद् पश्चाद् व्याघाताद्वा अनिर्गच्छति तस्यायमायो लाभो भवति । तमेवाह ।

आयसमुत्थं लाभं, सीसपडिच्छएहिं सो लहइ ।
एवं च्छिन्नसुत्तवाए, अच्छिण्णे सीमागते दोण्हं ॥

स प्रातीच्छिकैर्गच्छन्नपरुद्ध सन् यच्च तस्य शिष्या यच्च तस्य प्रातीच्छिका वा लभन्ते तत्सर्वमात्मसमुत्थ शिष्यप्रातीच्छिकैर्वा समुत्पादित लभते एवमात्मवर्णं छिन्ने समाप्ते उपपाते हेतौ श्रुतस्कन्धादौ श्रुते द्रष्टव्यम् । अच्छिन्ने असमाप्ते श्रुतस्कन्धादौ यदि तस्य पठत आचार्यस्य शिष्या ग्रामान्तरगता प्रत्यागता तस्य च शिष्यो नियमात् गीतार्थो यस्य गण आरोपितस्तदा द्वयोरपि लाभ साधारणो गीतार्थे शिष्ये निक्षिप्तगणतया पठतोऽध्याचार्यस्य पाठयिता गच्छन् तेन प्रतिरुद्ध इति पाठयितुरप्याभवनात् ॥

एव ता उउवद्धे, वासासु इमो विही हवति तत्थ ।
खेत्तपडिलेहगा उ, पगट्ठिया तेण अन्नत्थ ॥

एष तावत् ऋतुबद्धे काले आभवनव्यवहारविधिरुक्तो वर्षासु वर्षाकाले पुनरयं वक्ष्यमाणो विधिर्भवति तमेवाह । ( गाथाद्वयम् । )

द्वयोराचार्ययो ऋतुबद्धे काले साधारणक्षेत्रस्थितयोरेकोऽपरस्यैकस्य पार्श्वे उपसंपदं गृहीतवान् वर्षारात्रश्च प्रत्यासन्नीभूतोऽन्यानि च क्षेत्राणि वर्षावासयोग्यानि तादृशानि प्रत्यासन्नानि न सन्ति ततः स उपसंपन्न आचार्यस्तत्रैव तस्मिन्नेव आषाढमासिके क्षेत्रे वर्षावासं स्थितस्तेन वाचनाचार्येणाऽन्यत्र वर्षावासयोग्यस्य क्षेत्रस्य प्रतिलेखका प्रवर्तन्ते ताश्च प्रवर्तयन्निदमवादीत् ।

जा तुज्झे पेहेहा, तावेतेसिं इमं तु सारेमि ।
तं च समं तेसिं वा, वासं च पवद्धमालग्गं ॥

यावत् यूयं क्षेत्रं प्रत्युपेक्ष्य समागच्छथ तावदेतेषामाचार्याणामिदं श्रुतस्कन्धादिकं सारयामि सूत्रतोऽर्थतश्च गमयामि तच्च श्रुतस्कन्धादिकं तेषां तथा अधीयानानां समाप्तमेतद्व्यवच्छिन्नमित्युच्यते । अत्रान्तरे च वर्षं प्रबन्धेन पतितुमारब्धं तेऽपि च क्षेत्रे प्रत्युपेक्षकास्तत्रैव वर्षेण निरुद्धाः ।

निग्गंतूण न तीरइ, चउमासे तत्थ अत्तगत्ते ।
लाभे वोच्छिन्नेवं, कुव्वति गिलाणगस्स वि य ॥

यत प्रबन्धेन वर्षं पतितुमारब्धं न च क्षेत्रप्रत्युपेक्षका समागच्छन् ततः समाप्तेऽपि श्रुते स वाचनाचार्यस्ततः क्षेत्रान्निर्गन्तुं न शक्नोति । अनिर्गतश्च तस्मिन् क्षेत्रे चतुरो वर्षारात्रमासान् यावदात्मगतमात्मसमुत्थं लाभं लभेत् स्थितो योऽप्यात्मसमुत्थस्य लाभस्य स्वामी । एवं कुर्वति व्यवच्छिन्ने समाप्ते श्रुते अथवा " गिलाणगस्स वि य इति " समाप्ते श्रुते वाचनाचार्यो ग्लानोऽभवत् ततो गन्तुमशक्तस्यापि च ग्लानस्यैवाभवनव्यवहारो द्रष्टव्यः । उभयोरपि चतुरो वर्षावासानात्मसमुत्थो लाभ इत्यर्थः ।

अह पुण अत्थिमे सुए, ते आया वेंति मा य तुज्झं तु ।
अह्मो खेत्तं दोमा, साहारणम्मि एसिं तु ॥

अथ तत् श्रुतस्कन्धादिकमद्यापि न समाप्तं ते च क्षेत्रप्रत्युपेक्षका आयातास्ततो वाचनाचार्या आपृच्छन्ति वयं निर्गच्छामः । तत इमे प्रतीच्छका आचार्यं ब्रुवते मा यूयं निर्गच्छत समाप्तेऽपि श्रुते युष्माकं वयं क्षेत्रं दास्यामः । एवमुक्ते तत् क्षेत्रमेतेषां द्वयानामपि साधारणं भवति । एष संस्तरणे विधिः । असंस्तरणमधिकृत्याह ।

असंथरण निंत अनिंते, चउभंगो होइ तत्थ वि तहेव ।
एवं तो खेत्तेसुं, उणमग्गा मग्गणविहाडी ॥

असंस्तरणे साधुषु निर्गच्छत्सु अनिर्गच्छत्सु चतुर्भङ्गी भवति । सा चैव वाच्यमाना चतुर्भङ्गाऽपि न प्रकारेण साधवो निर्गच्छन्ति न वाचनाचार्याणामिति प्रथम । वाचनाचार्याणां नेतरेषामिति द्वितीय । उभयेषामिति तृतीय । नोभयेषामिति चतुर्थः । तत्रापि चतुर्भङ्गयामपि तथैवाभवेत् व्यवहारः द्वयानामप्यात्मसमुत्थो लाभ इति भावस्तृतीयभङ्गे चतेकतर एकतरस्य पार्श्वे साध्वावन उपसम्पद्यते तत उपसंपद्यमानलाभ इतरस्मिन्संक्रामति । अनुपसम्पत्तौ च द्वयोरपि साधारणं क्षेत्रम् । एवं तावत् क्षेत्रे मार्गणा कृता । अथायमन्यो मार्गणाविधिरादिशब्दात् दिग्वारणपरिग्रहः । गाथायां च स्त्रीत्वनिर्देशः प्राकृतत्वात्तमेव मार्गणाविध्यादिकमाह ।

अच्छाणादिसु नट्टा, आणुवट्ठिया तहा उवट्ठविया ।
अगविट्ठा य गविट्ठा, निप्फण्णा धारणं दिसासु ॥

नष्टा मार्गे आदिशब्दादभिग्रमादर्यादिनिमित्तनिर्गमनपरिग्रहस्तस्माध्वादिषु नष्टा साधवस्ते च द्विधा उपस्थापिता अनुपस्थापिताश्च एकैके द्विधा आचार्यस्य तेनेन गवेषिता अगवेषिता श्च तत्र ये निष्पन्ना उपस्थापितास्ते निष्पन्ना एव न तेषां दिग्वारणं कर्त्तव्यमितरेषां यथा भवन धारणं दिक्षु अध्वादिषु नष्टा इत्युक्तम् । तत्र यै कारणैस्ते नष्टा साधवस्तान्यभिधित्सुराह ।

संभम महंत सत्थे, भिक्खायरिया गया व ते नट्ठा ।
सिग्घगती परिरएण व, आउरतेणादियै मुंच ॥

संभ्रमो वनदवाग्निसंभ्रमादिकस्तद्वशात् गच्छात् स्फिटिता यदि वा महति सार्थे व्रजतां कोऽपि कुत्रापीति गच्छादपगतो यदि वा भिक्षाचर्यानिमित्तं सार्थादपसृत्य ब्रजिकापल्ल्यादिषु गतास्ततो नष्टाः अथवा सार्थः शीघ्रगतिस्ते च मन्दगतयस्तत सार्थात् गच्छात् परिभ्रष्टाः ( परिरएणवत्ति ) यदि वा नद्यादिषु तरिनव्यासु सार्थ ऋजुमार्गेणोत्तीर्ण इतरे साधवः परिरयेण गत्वा स्तोकपानीये समुत्तरन्ति चिन्तयन्ति च वयं सार्थं झटित्येव मिलिष्यामस्ते च तथा परिरयेण गच्छतः सार्थात् स्फिटिता अथवा आतुराः प्रथमद्वितीयपरीषहाभ्यां जितास्ते तथा आतुरा सन्तोऽशक्नुवन्त सार्थात्परिभ्रष्टा स्तेनाश्चौरा आदिशब्दात्परचक्रादिपरिग्रहस्तेषु स्तेनादिषु समापतत्सु भयेन पलायमाना गच्छादवस्फिटिता एवमध्वादिषु साधवो नष्टा भवन्ति ।

अत्र मार्गणाविधिं दिग्धारणविधिं चाह ।

गवेमऊ मा व कयव्वया जे, सव्वे व तेसिं तु दिसा पुरिल्ला ।
गवेममाणो लभतेऽणुवट्ठे, अणादिया संगहिया उ जेणं ।

ये कृतव्रता उपस्थापिता इत्यर्थस्तान्प्रव्राजनाचार्यो गवेषयतु वा मा वा तथापि तेषां सैव दिक् पुरातनी यां प्रव्राजनाचार्योऽशठभावेन गवेषयति न च लभते तथापि तान् सुचिरेणापि कालेन लब्धान् स एव प्रव्राजनाचार्यो लभते (अणादिया संगहिया उ जेणमिति ) ये पुनरनादृता अनादरपरेण गवेषितास्ते येन सगृहीतास्तस्यैव ते शिष्या इति स तेषामात्मीयां दिशं धारयति । अयमेव वृद्धोऽर्थोऽन्येनाचार्येण श्लोकेन बद्धस्तमेव श्लोकमाह ।

गवेसिए पुव्वदिसा, अगविट्ठए उ पच्छिमा ।
अणुवट्ठविए एवं, अभिधारंते उ इणमन्ना ॥

अनुपस्थापिते नष्टशिष्ये शिष्यवर्गे वा प्रव्राजनाचार्येण गवेषिते पूर्वदिक् प्रव्राजना दिग्भवति । अगवेषिते पश्चिमा दिक् येन संगृहीतास्तस्य दिग्भवतीत्यर्थः । एवमनुपस्थापिते मार्गणा भवति । यः पुनरन्यक्षेत्रगतानाचार्यानभिधारयन्व्रजति तत्रेयमन्या मार्गणा । तामेवाह ।

अभिधारेंतो वचति, वत्त अवत्तो व वत्त एगागी ।
जं लभति खेत्तवज्जं, अभिधारिज्जंति तं सव्वे ॥

यस्य क्षेत्रगतानाचार्यान् अभिधारयन् व्रजति व्यक्तोऽव्यक्तो वा गीतार्थोऽगीतार्थो वा इत्यर्थः । तत्र व्यक्त एकाकी व्रजन् यल्लभते तत्सर्वं क्षेत्रवर्जं क्षेत्रमेकाकिनो न भवतीति तत्प्रतिषेधः कृत । अभिधार्यमाणे यस्य समीपे गन्तव्यं तस्मिन् भवति तदभिधारणखिन्नेन तस्य लाभात् ॥

अव्वत्ते ससहाए, परखेत्त वज्जो लाभो दोण्हं पि ।
सव्वो सोमगिल्लो, जाव न निविखप्पए तत्थ ॥

अथाव्यक्त ससहायस्तमभिधारयन् व्रजति तर्हि तस्मिन् अव्यक्ते ससहाये व्रजति यः परक्षेत्रवर्जो यस्मिन् क्षेत्रे ते अभिसंधार्यमाणा आचार्या वर्त्तन्ते तत्क्षेत्रवर्जस्तत्किल क्षेत्रं तेषामभिधार्यमाणानां सामान्यमिति तत्प्रतिषेधः । यो द्वयोरपि लाभो

व्यक्तस्य सहायानां च लाभ इत्यर्थः। स सर्वः पूर्वस्याचार्यस्याभवति स च तावद्यावत्तत्र न निक्षिप्यते।

निक्खित्तनियत्ताणं, खेत्ते लाभो य होति वाएंतो।
तस्स वि य जा न नीतो, लाभो सेवी पत्ताएंतो॥

समव्यक्तं तत्र निक्षिप्तं कृत्वा ये निवृत्ताः सहायास्तेषां क्षेत्रस्य पञ्चगव्यूतप्रमाणस्यान्तर्मध्ये यो लाभो भवति स वाचयत्याभवति तत्क्षेत्रे तस्य लाभस्य भावात् तस्यापि च निक्षिप्तस्य यावन्न निर्गच्छति तावद्यः कश्चनापि लाभः सोऽपि प्रवाचयति भवति। संप्रति यस्तत्र क्षेत्रस्थित सन् गणं निक्षिप्योपसंपन्नस्तस्य यत्सर्वं न भणितं तदिदानीं सिंहावलोकन्यायेनाह।

अहवा आयरिओ वि, निक्खेत्तगणागतो उ आउत्थे।
वाएंतो देइ लाभं, जं खेत्तातो न ईसो चि॥

अथवेति प्रकारान्तरे तच्च प्रकारान्तरमिदं पूर्वं शिष्यस्य व्यक्तस्याव्यक्तस्य चोक्तमिदानीमाचार्यस्य तत्क्षेत्रगतस्योच्यते आचार्योऽपि क्वचित् गीतार्थे शिष्ये निक्षिप्तगणो भूत्वा तत्रागतस्तत्रोपसपन्न सन् यत्स्वय लभते तमात्मोत्थ लाभ वाचयति। तथा अथ तेन गण स्वशिष्ये निक्षिप्तस्तत स क्षेत्रस्याप्रभुरे वेति कुतस्तस्यात्मसमुत्थो लाभस्तत आह। यत् यस्मात्तत् क्षैत्रिकः क्षेत्रस्य प्रभुरासीत्तस्मान्न शक्यते वक्तुं तस्मिन् क्षेत्रे आत्मसमुत्थस्य लाभस्य न ईश प्रभुरिति तदेवमुक्तो विधिः संयतानाम्।

अधुना संयतीनां विधिमतिदेशत आह॥

आरब्भ सुत्ता सरमाणगन्ते, जा पिंडसुत्तं इणमंतिमन्तं।
एमेव वचो खलु संजतीणं, वोच्छिन्नमीसेसु अयं विसेसो॥

सरमाणकान् "आयरियउवज्झाए सरमाणे" इत्येव रूपान्सूत्रादारभ्य यावदिदमन्तिम पिण्डसूत्रमेतेषु सूत्रेषु यथा संयतानां विधिरुक्त एवमेव खलु संयतीनामपि गीतार्थपरिगृहीतानां वाच्यः। केवलं व्यवच्छिन्ने मिश्रे वाऽयं वक्ष्यमाणो विशेषस्तमेवाह।

वोच्छिन्ने उ उवरए, गुरुम्मि गीयाण उग्गहो तासिं।
दोण्ह बहूणं च पिंडए, कुलिच्चमन्नं जयाभिधारे॥

व्यवच्छिन्नो नाम तासां गुरुरुपरत कालं गत इत्यर्थः तस्मिन् गुरावुपरते यदि (कुलिच्चमन्नति) कुलसत्कमन्यमाचार्यमभिधारयन्ति ततस्तासां द्वयोर्बहूनां वा पिण्डकेन समुदायेन स्थितानां गीतार्थीनां संयतीनां पिण्डकेन व्यवस्थितानामपि नावग्रह।

मीसो उभयगणाव–च्छेओ तत्थ समणीण जो लाभो।
सो खलु गणिणो नियमा, पुव्वट्ठिया जाव तत्थ ऐ॥

मिश्रो नाम उभयगणावच्छेदकस्तत्र उभयगणावच्छेदके सति यः श्रमणीनां संयतीनां लाभः स खलु नियमात् ये पूर्वस्थितास्तत्र गणिनो यावदन्ये न गच्छन्ति तावत्तस्य गणिनो वेदितव्य सोऽन्येष्वाचार्येष्वागतेषु तेषामिति तदेष कस्येति द्वारम्।

सम्प्रति कियन्तं कालमवग्रह इति द्वारव्याख्यानार्थमाह।

केयति काल उग्गहो, तिविहो उउवड्ढवासवुड्ढे य॥
मासचउमासवासे, गेलणे सोलछक्कोसा॥

कियन्तं कालमवग्रह इति शिष्येण प्रश्ने कृते सूरिराह। त्रिविधो भवति अवग्रहस्तद्यथा ऋतुबद्ध वर्षाकाले वृद्धवासे च। तत्र ऋतुबद्धे काले उत्सर्गेत एकं मासमवग्रहो वर्षे वर्षाकाले चतुरो मासान् ग्लानत्वमधिकृत्योत्कर्षत षोडश मासान् अन्ये तु षोडश वर्षाणीत्याहुः। व्य० ४ उ०। (अत्र वृद्धावासमधिकृत्य यद्वक्तव्य तद् वुड्ढावासशब्दे वक्ष्यते) [पार्श्वस्थविहारप्रतिमां प्रतिपद्य पुनरुपसपद्येतेति पासत्थशब्दे वक्ष्यामि) अथाऽपि किञ्चिद् वक्ष्यामि तत्र।

(६) पार्श्वस्थादिविहारप्रतिमामुपसंपद्य विहारे विधिमाह॥

(सूत्रम्) भिक्खू अ गणाओ अवक्कम्म परपासंडपडिमं उवसंपज्जित्ताणं विहरिज्जा से य इच्छेज्जा दोच्चं पि तमेव उवसंपज्जित्ताणं विहरित्तए नत्थि णं तस्स तप्पइयं कइ छेदे वा परिहारे वा नन्नत्थ एगाए आलोयणाए। २१।

अथास्य सूत्रस्य कः संबन्ध इत्यत आह।

दोसेण अवक्कंता, सव्वेणं चेव भावलिंगाओ।
इति समुदिया उ सुत्ता, इणमन्नं देवतोवि गतो॥

द्रव्यलिङ्गमधिकृत्य देशेनोपक्रान्ता भावलिङ्गतो भावलिङ्गमधिकृत्य सर्वेण सर्वात्मनाऽपक्रान्ताः पार्श्वस्थादय इति। एवमर्थान्यन्तरसूत्राणि समुदितानि सम्यक्प्रतिपादितानि इदानीमधिकृतमन्यत्सूत्रं द्रव्यलिङ्गेन विगते वियुक्ते द्रव्यलिङ्गवियुक्तविषयमिति भाव। अनेन सबन्धेनायातस्यास्य व्याख्या। भिक्षु प्राग्वच्छब्दोऽनुक्तसमुच्चयार्थः। स चैतत् समुच्चिनोति रागद्वेषादिना कारणेन गणादपक्रम्य निर्गत्य परपाषण्डप्रतिमां परपाषण्डलिङ्गमुपसंपद्य विहरेत् विहृत्य च कारणे समाप्ते द्वितीयमपि वारं तमेव गणमुपसंपद्य विहर्तुमिच्छेत् तस्य तथोपसंपद्यमानस्य नास्ति कश्चिच्छेदो वा परिहारो वा। उपलक्षणमेतत् अन्यदपि प्रायश्चित्तं न किमप्यस्ति। कारणत परलिङ्गप्रतिपत्ते प्रतिपत्तावपि सम्यग्यतनाकरणात्किं सर्वथा न किमपि नेत्याह नान्यत्र एकाया आलोचनिकाया अन्यत्र शब्दपरिवर्जनार्थो नीमार्जनाभ्यामन्यत्र सर्वे योद्धार इत्यादिवत्ततोऽदमर्थ एकामालोचनां मुक्त्वा पुनर्भवत्येवेति भाव। एष सूत्रसंक्षेपार्थः।

अधुना निर्युक्तिभाष्यविस्तरः।

कंदप्पे परलिंगे, मूलं गुरुगा य गरुलपक्खम्मि।
सुत्त तु निच्चगादी, कालक्खेवोवगमणं वा॥

यदि कन्दर्पे कन्दर्पनिमित्त आहारगृद्ध्यादिकरणलक्षणत परलिङ्ग करोति ततस्तस्मिन्परलिङ्गे कृते तस्य प्रायश्चित्त मूलम्। अथ गरुडपाक्षिक गरुडादिरूपं परलिङ्ग करोति तदा चत्वारो गुरुकाः। इत्यादिसूत्रनार्थ। अत्र पर आह। ननु सूत्रनिर्युक्त्योरनुपपत्तिः। तथा हि सूत्रेण परलिङ्गकरणमनुज्ञात प्रायश्चित्तादानात्। निर्युक्तिकृता तु वारितं प्रायश्चित्तप्रदानात्। नैष दोषोऽभिप्रायापरिज्ञानात्। निर्युक्तिकृता हि कन्दर्पत कारणे प्रायश्चित्तमुक्त सूत्र पुन कथमपि राज्ञि प्रद्विष्टे च यावन्सार्थो न लभ्यते तावत्कालक्षेप क्रियतामिति। वा हेतौ वाशब्दो न केवल विकल्पार्थोऽनुक्तसमुच्चयार्थश्च स चैतत्समुच्चिनोति न ज्ञापयते सहसा विषयपरित्याग कर्तुमिति यावत्प्रज्ञापना क्रियेत (गमन चेति) गमन वा अशिवादिकारणतोऽनार्यदेशगमन्येन समुपस्थितं तत एतै कारणैर्यस्य राज्ञो ये पूज्या भिक्षुकादय भिक्षुकाः शौद्धोदनीया आदिशब्दात्परिव्राजकपरकराजादिपरिग्रह। तल्लिङ्ग गृहीयादित्येतद्विषयमतो न कश्चिद्दोष। एतामेव गाथां भाष्यकृद् व्याख्यानयति॥

खंधे दुवार संजए, गरुडच्छंसे य पट्टलिंगदुवे।
लहुओ अलहुसो लहुगा तिसु चउगुरुगा मूलं तु॥

इह पूर्वार्द्धोत्तरार्द्धपादानां यथासंख्येन योजना चैव यदि कन्दर्पतो वस्त्रं गृहस्थ इव स्कन्धे करोति तदा तस्य प्रायश्चित्तं लघुको मासो ( दुवारंसे ) गोपुच्छिकं करोति तदाऽपि लघुको मासः । संयतीप्रावरणकरणे चत्वारो लघुमासाः । गरुडाऽपरादिकरणे चत्वारो गुरुका (अर्द्ध से त्ति) स्कन्धे दिगम्बरवदि वस्त्रस्य करोति तदापि चत्वारो गुरुका ( पट्टत्ति ) यदि गृहस्थ इव कटिपट्टक बध्नाति तदापि चत्वारो गुरुकाः ( लिंगदुवे इति ) लिङ्गद्विक गृहिलिङ्गं परपाखण्डिलिङ्ग च तस्मिन् गृहिलिङ्गे परपाखण्डिलिङ्गे च कन्दर्पत. परिगृह्यमाणे प्रत्येक प्रायश्चित्तं मूलम् । सम्प्रति " कालक्खेवो व गमणं वा " इत्येतद्व्याख्यानार्थमाह ।

असिवादिकरणेहिं, रायदुट्ठे व होज्ज परलिंगं ।
कालक्खेवनिमित्तं, पहावणट्ठा व गमणट्ठा ॥

अशिवं देवताकृत उपद्रव आदिशब्दादवमौदर्यादिपरिग्रहः तेषु अशिवादिकारणेषु गाथायां तृतीया सप्तम्यर्थे प्राकृतत्वात्तथा द्वेषणं द्विष्टं राज्ञो द्विष्ट राजद्विष्ट राजद्वेष इत्यर्थ । तस्मिन्वाऽसति परलिङ्ग ग्राह्यं भवति । किमर्थमिति चेदत आह । कालेत्यादि । यावत्मार्गो न लभ्यते तावत्स खलु परलिङ्गग्रहणेन कालक्षेप क्रियतामित्येवं कालक्षेपनिमित्तमथवा न शक्य खलु सहसा विषय. परित्यक्तुमिति यावद्राज्ञ प्रज्ञापना क्रियते तावद् गृह्यतां परलिङ्गमिति प्रज्ञापनार्थं यदि अशिवादिकारणेषु समुपस्थितेष्वनार्यदेशमध्ये गमनमुपजातं तच्चानार्यदेशमध्ये गमनं न परलिङ्गग्रहणमृते शक्यते कर्तुमिति गमनार्थं वा परलिङ्गग्रहणम् । अथ कस्य परलिङ्ग ग्राह्यमित्याशङ्क्य भिक्खुगादि इत्येतद्व्याख्यानयति ।

जं जस्स अच्चियं तस्स, पूयणिज्जं तमस्सिया लिंगं ।
खीरादिलद्धिजुत्ता, गमति तं उवसामत्था ॥

यत् भिक्षुक दिगतं लिङ्गं यस्य राज्ञोऽर्चितं भवे कमत्ययो मान्य इत्यर्थ. । तत्रार्चितमपि नावश्य कस्याप्यनतिक्रमणीयं भवति । ततोऽनतिक्रमणीयताप्रतिपादनार्थमाह तस्य राज्ञो यत्पूजनीयमनतिक्रमणीयं तल्लिङ्गमाश्रितास्तल्लिङ्ग प्रतिपन्ना उपसामर्थ्यात् परलिङ्गग्रहणेनाच्छादितस्वस्वरूपा तं राजान गमयन्ति। कीदृशा उपशमयन्तीत्यत आह । क्षीरादिलब्धियुक्ता' क्षीराश्रवलब्धिसम्पन्ना आदिशब्दाद्विद्यामन्त्रयोगादिवशीकरणकुशलताया' परिग्रह ॥

फलासु सव्वासु सवित्थरासु, आगाढपण्हेसु य संथवेसु ।
जो जत्थ सत्तो तमणुं पविस्से, अव्वाहओ तस्स स एव पंथो ॥

फला ग्रामप्रतिसंख्या लोकप्रसिद्धास्तासु फलासु सर्वास्वपि सविस्तरासु आगाढप्रश्नेषु याऽत्यन्तदुर्भेदप्रश्नेषु परिचयेषु सत्सु यो राजा यत्र फलादिविशेषे सक्त आसक्तो भवति । किमुक्तं भवति तस्य राज्ञो यस्मिन् फलादिविशेषे अत्यन्तमभिष्वङ्गो भवति तमनुप्रवेशयेयुस्त सम्यग् ज्ञात्वा राज्ञ पुरत प्रवेदयेयु-प्रवेदयन्तश्च राजानमुपशमयन्ति । यत एव तस्य राज्ञ उपशामने अव्याहत सपरपाविरोधी पन्था मार्ग उपाय इत्यर्थ । तत्र यदीत्थमुपशान्तो भवति तत्र समीचीनमथ नोपशान्तस्तत एव कलादिविशेषं तावत्प्ररूपयन्ति यावत्सार्थो लभ्यते । सार्थे च लब्धे निर्गच्छन्ति । तथा चाह ।

अणुवसमंते निग्गमो लिंगविवेगेण होइ आगाढे ।
देसंतरसंकमणं, भिक्खुगमादी कुलिंगेण ॥

अनुपशमयति राज्ञि उपशमं कुर्वीति निवेद्य निर्गमो भवति । कथमित्याह । लिङ्गविवेकेन लिङ्गपरित्यागेन गृहस्थलिङ्गेनेत्यर्थ । अथ तथापि न मुञ्चति गाढकोपावेशात् (आगाढेत्ति) अत्यन्तप्रकोपनो गाढममोक्षणे भिक्षुकादिलिङ्गेन देशान्तरसंक्रमणं कर्त्तव्यम् । अशिवादौ वा कारणे समुपस्थिते देशान्तरगमन किन्न कर्तव्यम् ।

तत्र येन यथा गन्तव्य स कीदृश इत्याह ।

आयरिया संकमणे, परिहरंति लिंगम्मि जा य पडिवत्ती ।
असतीए पविसणं, लुभियम्मि गिहयम्मि जा जयणा ॥

आर्येण देशेन संक्रमणं तस्मिन्स्वलिङ्गेन गन्तव्यमिति वाक्यशेषः आर्यसंक्रमग्रहणतो भङ्गचतुष्टयं सूचितं तद्यथा आर्यदेशे आर्यदेशमध्येन गमनमित्येको भङ्ग । आर्यदेशे अनार्यदेशमध्येनेति द्वितीयः । अनार्यदेशे आर्यदेशमध्येनेति तृतीयः । अनार्यदेशे अनार्यदेशमध्येनेति चतुर्थ । तत्र प्रथमभङ्गे अर्द्धषड्विंशतिजनपदमध्ये,द्वितीयभङ्गे देशे मालवनामकम्लेच्छदेशमध्येन,तृतीयभङ्गे यथा कुरुक्षविषये अनार्यविषये आर्यविषयमध्येन, चतुर्थभङ्गे पारसीकदेशे अनार्यदेशमध्येन । इह प्रथमभङ्गे ऽशिवादिकारणोपस्थितौ स्वलिङ्गेन गन्तव्यम् । द्वितीयतृतीयचतुर्थभङ्गे तु परलिङ्गेन। तत्र राज्ञि प्रद्विष्टे अशिवादिकारणे वा भिक्षुकादिलिङ्गेन गच्छन् उद्गमादीन् दोषान् तेषा च लिङ्गानामाश्रयस्थानानि परिहरति । तथा गच्छन् यदि केनापि क्वापि ग्रामनगरादौ दृष्टो भवेत्तर्हि दृष्टे सति तेन या काचनाभिक्रमलिङ्गानुशासनप्रतिपत्तिसामाचारी सा कर्त्तव्या । किमुक्तं भवति । तत्सामाचार्या वर्तितव्यमिति । अथ तदाश्रयस्थानपरिहारे न समुदानं लभ्यते ततोऽसति अविद्यमाने समुदाने प्रवेशनं तदाश्रयस्थानप्रवेशन कर्त्तव्यम् । अथ यदि तेषां प्रत्ययोत्पादनार्थं बुद्धप्रतिमा स्तूपानि वा वन्दनीयानि भवन्ति तदा जिनप्रतिमां मनसि सम्प्रधार्य वन्दितव्यानि । भिक्षाया च स्वय गन्तव्यम्। अथ भिक्षा न लभ्यते ततो भिक्षुकै सह भोक्तव्यम् । तत्र यदि पुद्गलं कन्दादिक वा पतति तदा शरीरस्येदं ममानुपकारक वैद्येन निवारितमिति प्रतिषेधयेत् । अथ कथमपि अनाभोगतस्तद्दोषभयतो वा गृहीतं भवेत् तदा तस्मिन् गृहीते या यतना सा कर्तव्या । किमुक्तं भवति । अल्पसागारिकं कथमप्यपसार्य विधिना परिष्ठापयेत । एष गाथासक्षेपार्थ. ।

सांप्रतमेनामेव गाथां विवृणोति ।

आयरियदेसायरिय-लिंगसंकमे त्थ होइ चउभंगो ।
बितियचरमेसु अन्नं, असिवादिमतो करे अन्नं ॥

अशिवादिषु कारणेषु समुपस्थितेषु आर्यदेशे आर्यदेशमध्येन लिङ्गेन संक्रमो भवति । यन्मध्ये च यत्र च गन्तव्यं तयोरुभयोरपि देशयोरार्यत्वात् । अत्र च प्रागुक्तप्रकारेण चतुर्भङ्गी । गाथायां पुंस्त्वनिर्देशः प्राकृतत्वात् । तत्र द्वितीयतृतीयचरमेषु भङ्गेष्वशिवादिगत सन् अन्यत. गृहस्थलिङ्ग यदि वा यस्य देशस्य मध्येन यत्र वा देशे गन्तव्य तत्र येऽतिप्रसिद्धा भिक्षुकादयस्तल्लिङ्गं करोति ।

सम्प्रति परिहरतीति यदुक्तं तद्व्याख्यानयति ।

परिहरइ उग्गमादी-विहारठाणे य तेसि लिंगीणं ।
अपुव्वे मागमित्तो, आयरियचेतरोमं तु ॥

परिहरति उद्गमादीन् दोषान् । तथा तेषां लिङ्गानां यानि विहारस्थानानि तानि च परिहरति । तत्र अपूर्वेषु स्थानेषु गत. सन्

यदि यल्लिङ्गं गृहीत तदागमेषु कुशलो भवति तस्मा केनापि लिङ्गविकरघक इति ज्ञात्वा प्रतिपृच्छेदिति । आचार्ये वि.ध. ।

इयरेसिमागमेसुं, मा वायंतेसि लिंगीए ।

अपुव्वे सागामित्तो, आयरियत्ततरामं तु ॥

अथेतरस्तेषामागमेष्वकुशलस्तत स इदं करोति । तदेवाह ।

मोणेण जं च गहियं, तु कुक्कुमं उभयलिंगिअविरुद्धं ।

पच्चयहेउपणामे, जिणपडिमाओ मणे कुणति ॥

मौनेन वाचयमत्वलक्षणेन क्रियां करोति मौनव्रतित्वमवलम्बत इत्यर्थः । यच्च विशिष्टसंप्रदायाद् गृहीत कुक्कुटविद्यादिनाऽस्त-त्प्रयोगलक्षणम् । उभयतोऽपि उभयेषामपि साधुचर्यास्तेषां च लिङ्गिनामविरुद्धं तत्करोति । तथा समुदानासन्नवे तेषामाश्रयेषु गतस्य सतस्तेषां प्रत्ययार्थेनो. प्रत्ययोत्पादनार्थं बहुप्रतिमानां स्तूपानां वा प्रणामकरणीयतयोपस्थिते जिनप्रतिमा मनसि करोति । किमुक्त भवति । जिनप्रतिमां मनसिकृत्य तेषां प्रणाम करोति

भावे ति पिंडवावि–त्तणेण घेत्तुं च वच्चइ अपत्ते ।

कंदादिपुग्गलाए य, अकारगं एय पडिसेहो ॥

तथा आत्मानं जनेभ्य पिण्डपातित्वेन भावयति । ततो भिक्षापरिभ्रमणेन जीवति । अथावमौदर्ये दोषन परिपूर्णो न भवति तता दानशालायां भिक्षुकादिभिः सह पङ्क्त्या समुपविशति । तत. परिपाट्या परिवेषणे जाते सति ( अपत्ते इति ) अत्र प्राकृतत्वात् यकारलोप. अय पात्रे तत गृहीत्वा अन्यत्र विविक्ते प्रदेशे समुद्दिशति । अथान्यत्र गत्वा समुद्देशकरणे तेषां काचित् शङ्का संभाव्यते ततो भिक्षुकादिभिरेव स पङ्क्त्योपविष्टः सन् समुद्दिशति । तत्र यदि सचित्त कन्दादिपुद्गल वा मासापरपर्याय परिवेषक. परिवेषयति तदा ममेदमपकारक वैद्येन प्रतिपिद्धमिति वदता तेषां कन्दादीनां पुद्गलस्य च प्रतिषेध कर्तव्य ।

अत्रैव पुद्गलविषये अपवादमाह ।

वितियपयं तु गिलाणे, निक्खेवं चंकमादि कुणमाणो ।

लोयं वा कुणमाणो, किइकम्मं वा सरीरादि ॥

द्वितीयपदमपवादपद यदि ग्लानमात्रोपकरणाना निक्षेपमुपलक्षणमेतत् । आदानं प्रत्युपेक्षणादिकं च कुर्वन् तथा चङ्क्रमणादि आदिशब्दादुत्थानादिपरिग्रहः कुर्वन्यदि वा लोच कुर्वन् अथवा कृतकर्म्म शरीरादे कुर्वन्यदि ग्लानो भवति तदोपर्जाव्य पुद्गलमिति । प्रस्तुतमनुसन्धानमाह ।

अह पुण रूसेज्जाही, तां घेत्तु विगिंचए जहाविहिणा ।

एवं तु तहिं जयणं, कुज्जाही कारणागाढा ॥

अथ पुन प्रासुकप्रकारेण कन्दादिपुद्गलानां प्रतिषेधे क्रियमाणे रुष्येयुरिति सम्भाव्येत तर्हि गृह्णीयात् गृहीत्वा च यथाविधिना यथोक्तेन विधिना विगिञ्च्यात् । तेन इष्टियन्धनेनापसार्य सूत्रोक्तविधिना परिष्ठापयेत् । उपसंहारमाह ।

इति कारणेसु गहिते, परलिंगे तीरिए तहिं कज्जे ।

जयकारी सुज्झइ विगम–णाए इयरो जमावेज्जा ॥

इत्येवमुक्तेन प्रकारेण कारणेष्वशिवादिषु समुपस्थितेषु तीरितं च समाप्तिं नीते च कार्ये तत्र यो (जयकारीति) यतनाकारी यथोक्तरूपा यतनां कृतवान् स विकटनया आलोचनामात्रेण शुध्यति यतनया सर्वदोषाणामपहतत्वात् । इतरो नाम येन यतना न कृता स यत यतनया प्रायश्चित्तमापद्यते तन्तसै दीयते ॥

( सूत्रम् ) भिक्खू य गणाओ अवक्कम्म ओवहावेज्जा से इच्छेज्जा दोच्चं पि तमेव गणं उवसंपज्जित्ता णं विहरित्तए णत्थि णं तस्स तप्पइयं केइ छेदे वा परिहारे वा णन्नत्थ एगाए सेहोवठ्ठावणाए ॥

" भिक्खू य गणातो अवक्कम्म ओहावेज्जा से इच्छेज्जा" इत्यादि अस्य सूत्रस्य क संबन्ध उच्यते ॥

एगयरलिंगविजढे, इइ सुत्ताविग्गिया उ जे हेट्ठा ।

उभयजढे अयमन्नो, आरंभो होइ सुत्तस्स ॥

यान्यधस्तात्सूत्राणि पार्श्वस्थादिगतानि तानि एकतरलिङ्गविजढे एकतरलिङ्गपरित्यागे तथा हि पार्श्वस्थादिसूत्राणि भावलिङ्गपरित्यागविषयाणि परपाखण्डप्रतिमासूत्र द्रव्यलिङ्गपरित्यागविषयमितिशब्दो हेतौ यतोऽधस्तनानि सूत्राण्येकतरलिङ्गविषयाणि ततोऽयमन्य आरम्भ सूत्रस्य भवत्युभयजढे इति उभयलिङ्गपरित्यागविषय प्रस्तावायातत्वात् एवमनेन सम्बन्धेनायातस्यास्य व्याख्या । भिक्षुर्गणादपक्रम्य निर्गत्य अवधावेत ग्रतपर्यायादवाङ्मुखीभूय पराङ्मुखो भूत्वा गृहस्थपर्यायं प्रतिगच्छेत् द्वितीयमपि वारं तमेव गणमुपसम्पद्य विहर्तुं ( नत्थिणमित्यादि ) णमिति खल्वर्थे निपातानामनेकार्थत्वात् । नास्ति खलु तस्य कश्चिदपि छेद. परिहारो वा किं सर्वथा न किमपि नेत्याह । नान्यत्र एकस्या शैक्षिकोपस्थापनाया किमुक्त भवत्येका शैक्षिकोपस्थापनिका भवति मूल भवतीत्यर्थ । एप सूत्रसक्षेपार्थ । सांप्रतमेतदेव सूत्रं व्याचिख्यासुरपक्रमेदवधावेदिति भेदपर्यायैर्व्याख्यानयति ।

निग्गमनमवक्कमणं, निस्सरणपलायणं च एगट्ठा ।

लोटण भुटणपलोटण, ओधाणं चेव एगट्ठा ॥

निर्गमनमपक्रमण निस्सरण पलायनमित्येकार्था । लोटन लुट्टन प्रलोटनमवधावनमिति चैकार्था । तत्र लोटनमिति लुट विलोटने इत्यस्यैव प्रपूर्वस्य पर्यायशब्दैरप्यधिकृतशब्दार्थप्रतीतिरुपजायते तत्वभेदपर्यायैर्व्याख्या इति वचनमप्यस्ति । ततस्तदुपन्यास इति ॥

अथ के. कारणैरवधावन कुर्यादित्यवधावनकारणान्याह ।

विसओदएण अहिकरण–भावओ व दुक्खसेज्जाए ।

इइ लिंगस्स विवेगं, कोज्ज पच्चक्खपारोक्खं ॥

विषयोदयेन अत्र विषयग्रहणेन विषयविषयो मोह परिगृह्यते विषयेण विषयिणो लक्षणा ततोऽयमर्थ विषयविषयमोहोदयेन यदि वा केनापि सह अधिकरणभावत अथ वा दुःखशय्यया चतुर्विधया त्याजित इति हेतोर्लिङ्गस्य प्रव्रज्याचिह्नस्य रजोहरणस्य विवेकं परित्याग कुर्यात् । कथमित्याह साधूनां प्रत्यक्षं वा कुत्र कुर्यादित्याह ।

अंतो उवस्सए छ–डुणाउ बहिगामपासे वा ।

विइयं गिलाणझोए, किनिकम्मसरीरमादीसु ॥

उपाश्रयस्यान्तर्मध्ये लिङ्गस्य छर्दना परित्याग क्रियते । यदि वा यल्लिङ्गाश्रयात् अथवा ग्रामस्य यदि वा ग्रामस्य पार्श्वे आमन्प्रदेशे अथवा तथैवाचार्यस्य समीपे इत्यसयधायन कारे लिङ्गस्योज्झनम् । अपवादेनोऽधावनाभावेऽपि भवति तथा चाह द्वितीयपदमपवादपद लिङ्गस्योज्झने ग्लानयोगे ग्लानजने शरीरादिषु आदिशब्दादुद्घाग्पग्रिह्णपनादिपरिग्रहस्तेषु कृतकर्म्मणि व्यापारे तथाहि ग्लानस्य शरीरे विभावणादिकमुच्चारादिपरि-

स्थापनादिकं वा कुर्वन् चरणप्रत्यनादिक्रियाल्लिङ्गस्य विविक्ते प्रदेशे मोचनं भवतीति। संप्रत्यवधावनेन लिङ्गस्योज्झने विधिविशेषमाह।

उवसामिए परेण व, सयं च समुट्ठिए उवट्ठवणा ।
तक्खणचिरकालेण व, दिट्ठंतो अक्खभंगेण ॥

उपाश्रयान्त प्रभृतिषु येषु स्थानेषु रजोहरण मुक्तं तेषु स्थानेषु तस्य परस्मिन्वाऽन्यस्मिन् स्थाने उपशामिते परेणोपशमं नीते स्वयं वा तथाविधानुकूलकर्म्मोदयतः उपशमं गते तत पुनरकरणतया तत्क्षणं लिङ्गोज्झानन्तरं तत्काल चिरेण वा दीर्घकालेन गुरुसमीपे समुपस्थिते नियमादुपस्थापना कर्तव्या नान्यथा प्रवेशनीय । आह यदि तेन न किञ्चिदपि प्रतिसेवितं तत कस्मादुपस्थाप्यते । अत्र सूरिराह । दृष्टान्तोऽत्राक्षभङ्गेन यथा शकटस्याक्षे भग्ने नियमादन्योऽक्ष क्रियते एवं साधोरपि भावाक्षे भग्ने पुनरुपस्थापनारूपो भावाक्ष आधीयते । अतोऽत्रा पुनरपि पर प्राह ।

मूलगुणउत्तरगुणे, अमेवमाणस्स तस्स अतियारं ।
तक्खण उवट्ठियस्स उ, किं कारणा दिज्जए मूलं ॥

मूलगुणे मूलगुणविषये उत्तरगुणे उत्तरगुणविषये किंचिदप्यतीचारं तस्याप्रतिसेवमानस्य कथमप्रतिसेवनेत्यत आह। तत्क्षणं लिङ्गोज्झनानन्तरं तत्काले अपुनःकरणतया समुत्थितस्य न भावाक्षो भग्न इति । किं कारणं तस्मै मूलं दीयते उपस्थापना क्रियते । सूरिराह ।

सेवउ मा उ वयाणं, अतियारं तहवि देंति से मूलं ।
विगडासवा जलम्मि उ, कहन्नु नावा न बोडेज्जा ॥

व्रतानां प्राणातिपातविनिवृत्त्यादीनामतीचार सेवतां वा मा वा तथापि ( से ) तस्य प्रवचनोपनिषद्वेदिनो मूल ददाति भावतोऽसंवृताश्रवद्वारतया चारित्रभङ्गात् तथैव प्रतिवस्तूपमया भावनामाह ( वियडासवेत्यादि ) विकटानि अतिप्रकटानि स्थूराणीत्यर्थः आश्रवाणि जलप्रवेशस्थानानि यस्याः सा तथा रूपा सती नौ कथं नु जले प्रक्षिप्ता न विमज्जेदिति भावः । आश्रवद्वाराणामतिप्रकटानामभावादेवं साधुरपि भावतोऽलियारिताश्रवस्सन् शुभकर्म्मजले निमज्जतीति भवति तस्योपस्थापनार्हता । अत्रैव दृष्टान्तान्तरमाह ।

चोरिस्सामि त्ति मतिं, जो खलु संधाइ फेरुए मुद्दं ।
अ‍हियम्मि वि सो चोरा, एमेव इमं पि पासामो ॥

अहं चोरयिष्यामीति संधाय यः खलु मुद्रां स्फेटयति स यद्यपि तदानीमारक्षकैर्गृहीतत्वादिना कारणेन न किञ्चिदपहृतवान् तथापि तत्परिणामोपेतत्वादनपहृतेऽपि स चौरो भवति। एवमेव अनेनैव प्रकारेण इममपि पश्याम । अचरितपरिणामोपेतत्वेनचरितत्वादुपस्थापनायोग्यं पश्याम इत्यर्थः । व्य० प्र० १ उ० ।

( ७ ) गणादपक्रम्यैच्छेदन्यं गणमुपसंपद्य विहर्तुमिति प्रकारान्तरेण प्रतिपादयति ।

( सूत्रम् ) भिक्खू य गणाओ अवकम्म इच्छेज्जा अन्नं गणं उवसंपज्जित्ताणं विहरित्तए न से कप्पइ अ‍णापुच्छित्ता आयरियं वा उवज्झायं वा पवत्तिं वा थेरिं वा गणिं वा गणहरं वा गणावच्छेइयं वा अन्नं गणं उवसंपज्जित्ताए विहरित्तए कप्पइ से आपुच्छित्ता आयरियं वा जाव गणावच्छिइयं वा अन्नं गणं उवसंपज्जित्ताणं विहरित्तए ते य से विहरेज्जा एवं से कप्पइ अन्नं गणं उवसंपज्जित्ताणं विहरित्तए ते य से नो वितरेज्जा एवं से नो कप्पइ अन्नं गणं उवसंपज्जित्ताणं विहरित्तए ॥

एवमग्रेतनमपि सूत्राष्टकमुच्चारणीयम् । भिक्षु सामान्यसाधुश्च शब्दान्निर्ग्रन्थी च गणादवक्रम्य निर्गत्य इच्छेदभिलषेदन्यं गणमुपसंपद्य विहर्तुं नो ( से ) तस्य भिक्षो कल्पते नो आपृच्छ्याचार्यं वा उपाध्यायं वा प्रवर्तकं वा स्थविरं वा गणधरं वा गणावच्छेदकं वा अन्यं गणं वा उपसंपद्य विहर्तुं कल्पते ( से ) तस्य भिक्षोराचार्यं वा यावत्करणं दुपाध्यायं वा प्रवर्तिन वा स्थविर वा गणधरं वा गणावच्छेदकं वा आपृच्छयान्य गणमुपसंपद्य विहर्तुं ते चाचार्यादय आपृष्टा सन्तस्तस्यान्यगणगमनं वितरेयुरनुजानीयुस्तत एवं तस्य कल्पते अन्यं गणमुपसंपद्य विहर्तुं ते च तस्य न वितरेयुस्ततो नो कल्पते तस्यान्य गणमुपसंपद्य विहर्तुमिति सूत्रार्थः ।

अथ निर्युक्तिविस्तरः ।

तिट्ठाणे अवकमणं, णाणट्ठा दंसणे चरित्तट्ठा ।
आपुच्छिऊण गमणं, नीतो य नियत्तते कोवि ॥

स्थानं कारणमित्येकोऽर्थस्ततस्त्रिभिः स्थानैः करणैर्गच्छादपक्रमणं भवति ज्ञानार्थं दर्शनार्थं च। अथ निष्कारणमन्यं गणमुपसंपद्यते ततश्चतुर्गुरुकम् आज्ञादयश्च दोषा । कारणेऽपि यदि गुरुमनापृच्छ्य गच्छति ततश्चतुर्गुरुक तस्मादापृच्छ्य गन्तव्यम् । तत्र ज्ञानार्थं तावदभिधीयते यावदाचार्यसकाशे श्रुतमस्ति तावदशेषमपि केनापि शिष्येणाधीतम् अस्ति च तस्यापरस्यापि श्रुतस्य ग्रहणे शक्तिस्ततोऽधिकश्रुतग्रहणार्थमाचार्यमापृच्छति आचार्येणापि स विसर्जयितव्यः तस्यैवमापृच्छ्य गच्छत इमे अभिचारा भवन्ति न परिहर्त्तव्या । तत्र कश्चित् तेषामाचार्याणां कर्कशचर्यां श्रुत्वा भीतस्सन्निवर्त्तते यथा ॥

चिंततो, वइगादी, सरवग्गि, पिसुगादि, अप्पडिसेहे य ।
प.रिसेह्वे, सत्तमपयं, गुरुपे सविए य सुद्धो य ॥

किं व्रजामि मा वेति चिन्तयन् व्रजति व्रजिकायां वा प्रतिबन्ध करोति आदिशब्दाद्दानश्रद्धादिषु दीर्घा गोचरचर्यां करोति । अप्राप्तं चावेशकाल प्रतीक्षते ( सग्गरिणत्ति ) संखड्यां प्रतिबध्यते ( पिसुगाइति ) पिशुकं मत्कुणादितया निवर्तते । अन्यत्र वा गच्छे गच्छति ( अप्पडिसेहेत्ति ) कश्चिदाचार्यः परममेधाविनमन्यत्र गच्छन्तं श्रुत्वा परिस्फुटवचसा तं न प्रतिषेधयति किं तु शिष्यान् व्यापारयति तस्मिन्नागते व्यञ्जनघोषशुद्धं पठनीय येनात्रैव एष तिष्ठति एवं प्रतिषेधापनेऽपि अप्रतिषेधको लभ्यते । तेनैव विपरिणामितः सन् तदीये गच्छे प्रविशति (परिसिह्वेत्ति) पर्षद्वान् स उच्यते य संविग्नायाः असंविग्नायाश्च पर्षदः संग्रहं करोति तस्य पार्श्वे तिष्ठत ( सत्तमपयं गुरुपेसविए अत्ति ) तत्र समागतो ब्रवीति अहमाचार्यैः श्रुताध्ययननिमित्तं युष्मदन्तिके प्रेषित । एतेषु भीतादिष्वष्टस्वपि पदेषु वक्ष्यमाणभीत्या प्रायश्चित्तम्। यस्तु भीतादिदोषविप्रमुक्त समागतो ब्रवीति अहमाचार्यविसर्जितो युष्मदन्तिके समायात इति स शुद्धो न प्रायश्चित्तभाक् ।

भीतादिपदेषु प्रायश्चित्तमाह ।

पणगं च भिन्नमासो, मासो लहुगा य संखडी गुरुगा ।

पिट्ठुगादी मासलहू, उचरो लहुगा अपडिसेहो ॥ १ ॥
परिसेहे चउलहुगा, गुरुपेसवियम्मि मासिनं लहुगं ।
संहेण समं गुरुगा, परिसेहे पविसमाणस्स ॥ २ ॥
पडिसेहगस्स लहुगा, परिसेहे उच्च चरिमओ सुद्धो ।
तेसिं पि होंति गुरुगा, जं च जव्वं ए तं लजति ॥ ३ ॥

जीतस्य निवर्त्तमानस्य पञ्चक चिन्तयतो निष्क्रमास' व्रजिकादिषु प्रतिपद्यमानस्य मासलघु सखड्यां चतुर्गुरुका' पिशुकादिभयान्निवर्तमानस्य मासलघु अप्रतिषेधकस्य पार्श्वे तिष्ठतश्चत्वारो लघुका' पर्षद्गत आचार्यस्य सकाशे तिष्ठतश्चतुर्लघुका. । गुरुभि प्रेषितोऽहमिति भणिते लघुमासिक शैक्षेण सम पर्षद्गतो गच्छे प्रविशतश्चतुर्गुरुको गृहीतोपकरण तत्र प्रविशत उपधिनिष्पन्न प्रतिषेधकस्य प्रतिषेधकत्व कुर्वतश्चतुर्लघु पर्षद्गत' पर्षद मीलयत षट् लघुकाश्चरमो भीतादिदोषरहित स शुद्ध' । तेषामपि प्रतिषेधकादीन,माचार्याणां त स्वगच्छे प्रवेशयतां चत्वारो गुरुका' यच्च सचित्तमचित्त वा वाचनाचार्यस्तत् ज्ञाव्यं तत्ते किंचिदपि न लभन्ते य पूर्वमभिधारितस्तस्यैवाचार्यस्य तदाभाव्यमिति भाव' । अथ भीतादिपदाना क्रमेण व्याख्यानमाह ॥

संसाहगस्स सोउं, पडिपंथिगमादिगस्स वा भीओ ।
आयरणा तत्थ खरा, सय व णाओ पडिणियत्तो ॥

ससाधको नाम ढोलापक पृष्टत. कुतश्चिदागतो वा साधु तन्मुखेन श्रुत्वा प्रतिपन्थिक सन्मुखीन साध्वादिस्तदादेर्वा मुखात् श्रुत्वा स्वय वा ज्ञात्वा स्मृत्वा किमित्याह । आचरणाचार्यो तत्र स्वाचार्यस्य गच्छे खरा कर्कशा एव श्रुत्वा ज्ञात्वा वा भीतः सन् य' प्रतिनिवृत्तस्तस्य पञ्चक भवतीति शेष । अथ चिन्तयतीति पद व्याचष्टे ॥

पुव्वं चिंतेयव्वं, णिग्गतो चिंतेति किं करेमि त्ति ।
वच्चामि वियत्तामि व, तहिँ व अएतत्थ वा गच्छे ॥

पूर्वमेव यावन्न निर्गम्यते तावच्चिन्तयितव्यं यस्तु निर्गतश्चिन्तयति किं करोमि व्रजामि निवर्ते वा यद्वा तत्र वा अन्यत्र वा गच्छामीति स मासलघु प्रायश्चित्त प्राप्नोतीति प्रक्रम ।व्रजिका सखडीद्वारद्वयमाह ।

उव्वत्तणमप्पत्ते, लहुओ खद्धस्स भुंजणे लहुगा ।
णिसट्टसुवणा लहुओ, संखडिगुरुगा य जं वाएं ॥

व्रजिकां श्रुत्वा मार्गादुद्वर्त्तन करोति अप्राप्तां वा वेलां प्रतीक्षते लघुमास ।अथ खरु प्रभूतं तत्र भुङ्क्ते ततश्चतुर्लघुकं प्रचुर भुक्त्वा अजीर्णभयेन निसृष्टं प्रकाम स्वपिति लघुमास । सखड्याम्प्राप्तकालं प्रतीक्षमाणस्य प्रभूत गृह्णतो वा चतुर्गुरुका ( जं वएति ) यच्च हस्तेन हस्तसघट्टनं पादेन पादस्याक्रमण शीर्षेण शीर्षस्याकुट्टनमित्यादिकमन्यदपि सखड्यां भवति तन्निष्पन्नं प्रायश्चित्तम् । अथ प्रतिषेधकद्वारमाह ।

अमुगत्थ अमुगो वचति, मेहावी तस्स कट्टणट्ठाए ।
पंथग्गामे व पहे, वसधि अह कोइ वावारे ॥
अभिलावसुद्ध पुच्छा, रोलेणं मा हु ते वि णासिज्जा ।
इति कट्टते लहुगा, जति सेहट्ठा ततो गुरुगा ॥

कश्चिदाचार्यो विशुद्धसूत्रार्थस्फुटविकटव्यञ्जनाभिलापी तेन च श्रुतममुकाचार्यान्तिके अमुको मेधावी साधुरमुकश्रुताध्ययनार्थं व्रजति ततोऽसौ मा मामतिक्रम्यान्यत्र गच्छेदिति कृत्वा तस्याकर्षणार्थमथानन्तरं शिष्यान् प्रतीच्छकांश्च व्यापारयतीत्याह ( पंथग्गामे व पहेत्ति ) यत्र पथि ग्रामे स भिक्षां करिष्यति मध्येन वा गमिष्यति येन वा वयासमागमिष्यति यस्यां वा वसतौ स्थास्यति तेषु स्थानेषु गत्वा यूयमभिलापशुद्ध परिवर्त्तयन्त स्तिष्ठत यदा आगमन भवति तदा यद्यसौ पृच्छेत् केन कारणेन यूयमिहागतास्ततो भवद्भिर्वक्तव्यमस्माक वाचनाचार्या अभिलापशुद्ध पाठयन्ति । यच्चाभिलाप कथंचिदन्यथा क्रियते ततो महदप्रीतिक कुर्वन्ति भणन्ति च वाग्मध्ये बहूनां रोलेनाभिलाप मा विनाशयतेति ततस्तदादेशेन वयमत्र विजने परिवर्त्तयाम । एवमाकर्षणं कुर्वतश्चतुर्लघुका ।अथ तेन वा गच्छता शैक्षकोऽपि लब्धस्तदर्थमेष शैक्षो मे भूयादिति कृत्वा आकर्षतो ततश्चतुर्गुरुका ।

अक्खरवंजणसुद्धं, मम पुच्छह तम्मि आगए संते ।
घोसेहि य परिसुद्धं, पुच्छह णिउणे य सुत्तत्थे ॥

स आचार्य शिष्यान् प्रतीच्छकान् वा भणति यदा युष्माकमभिलापशुद्धगुणतया रञ्जित' स उपाश्रयमागच्छति तदा तस्मिन्नागते अक्षरव्यञ्जनशुद्ध सूत्र मा पृच्छत अक्षराणि प्रतीतानि व्यञ्जनशब्देनार्थाभिव्यञ्जकत्वादत्र पदमुच्यते । तरक्षरैर्व्यञ्जनैश्च शुद्ध तथा घोषैश्चोदात्तादिभि परिशुद्ध सूत्र पठनीयम् । निपुणांश्च सूत्रार्थान् मा तदानीं पृच्छत एवमनया भङ्ग्या तमन्यत्र गच्छे गच्छन्त प्रतिषेधयति । गत प्रतिषेधकद्वारम् ।

अथ परिसिल्लद्वारमाह ॥

पाउयमपाउयघट्ट, पट्टलो य खुरविविधवेसहरा ।
परिसिल्लस्स तु परिसा, थलिए व ण किंचि वारेति ॥

य परिसिल्ल आचार्यः स संविग्नाया असंविग्नायाश्च पर्षद. सग्रह करोति ततस्तस्य साधव केचित्प्रावृता केचिदप्रावृता केचिद्घृष्टा' फेनादिना घृष्टजघा केचित् पृष्टा तैलेन पृष्टशरीरा वा अपरे लोचलुञ्चितकेशा अन्ये क्षुरमुण्डिता' एवमादिविविधवेषधरा एतस्या पर्षद' स्थली देवद्रोणी तस्यामिवाऽसौ न किंचिदपि वारयति ॥

तस्य पवेसे लहुगा, सचित्ते चउगुरुं च आणादी ।
उवहीणिप्फण्णं पि य, अचित्तचित्ते य गिरहंते ॥

तत्र पर्षद्गतो गच्छे प्रवेश कुर्वतश्चतुर्लघु । अथ सचित्तेन शैक्षेण सार्द्धं प्रविशति ततश्चतुर्गुरुव आज्ञादयश्च दोषा' । अथाचित्तेन वस्त्रादिना सह प्रविशति तत उपधिनिष्पन्न मिश्रसयोगप्रायश्चित्तम् । तथा सचित्ताचित्त ददतो गृह्णतश्चैवमेव प्रायश्चित्तम् । अथ पिशुकादिद्वार चाह ।

ढिंकुणपिसुगादि तहिँ, सोउं णाउं व सन्निवत्तंते ।
अमुगसुतत्थनिमित्तं, तुब्भम्मि गुरूहि पेसविओ ॥

ढिङ्कुणपिशुकदशमशकादीन् शरीरोपद्रवकारिणस्तत्र श्रुत्वा ज्ञात्वा वा सन्निवर्त्तमानस्य मासलघु तथा अमुकश्रुतार्थनिमित्तं गुरुभिर्युष्मदन्तिके प्रेषितोऽहमिति भणतो मासलघु । आहैवं भणत को नाम दोष' । सूरिराह ।

आणाए जिणिंदाणं, ण हु बलियनराउ आयरियआणा ।
जिण आणाए परिभवो, एवं गव्वो अविणओ य ॥

जिनेन्द्रैरेव भगवद्भिरुक्त यथा निर्दोषेण विधिना सूत्रार्थनिमित्तं य समागतस्तस्मै सूत्रार्थौ दातव्यौ न च जिनेन्द्राणामा-

ङ्म्यः सकाशादाचार्याणामाज्ञा बलीयस्तराम् । अपि च एव-माचार्यानुवृत्त्या श्रुते दीयमाने जिनाज्ञाया परिभवो भवति । तथा प्रेषयत उपसंपद्यमानस्य प्रतीच्छतश्च त्रयाणामपि गर्वो भवति । तीर्थकृतां श्रुतस्य चाविनय कृतो भवति ततो गुरुभिः प्रेषितोऽहमिति न वक्तव्यम् । यस्तु गीतादिदोषविमुक्तोऽभिधारिताचार्यस्यान्तिके आयात स शुद्धः ।

यस्तु प्रतिषेधकादीनां पार्श्वे तिष्ठति तत्र विधिमाह ।

अन्नं अभिधारेत्तं, अप्पडिसेहपरिनिक्खमणं वा ।
पविसंत कुलादिगुरु, सचित्तादी व से होइ ॥
ते दो उवालभित्ता, अभिधारज्जंति देंतिमं थेरा ।
घट्टणविआरणा ति य, पुच्छा विप्फालणेगट्ठी ॥

य पुनरन्यमाचार्यमनभिधार्य अप्रतिषेधकं वा पर्यङ्कन्तं वा अन्यं वा प्रविशति तस्य पार्श्वे उपसंपद्यते इत्यर्थः । तं यदि कुलादिगुरव कुलस्थविरा गणस्थविरा संघस्थविरा वा जानीयुस्ततो यत्तेनाचित्त सचित्त वा तस्याचार्यस्योपनीतं तत्तस्य सकाशात् हृत्वा तौ द्वावप्याचार्यप्रतीच्छकौ स्थविरा उपालभन्ते कस्मात् त्वया अयमात्मपार्श्वे स्थापितः कस्माद्वा त्वमन्यमभिधार्य स्थित । एवमुपालभ्य तं प्रतीच्छकं घट्टयित्वा तत् सचित्तादिकं सर्वमभिधारितं तस्याचार्यस्य प्रयच्छन्ति तदन्तिके प्रेषयन्तीत्यर्थः । अथ घट्टयित्वेति कोऽर्थ इत्याह घट्टनेति वा विचारणेति वा पृच्छेति वा विस्फालनेति वा एकार्थानि पदानि ।

तं घट्टेउ सचित्तं, एसा आरोवणा उ अविहीते ।
बितियपदमसंविग्गे, जयणाए कयंति तो सुद्धो ॥

तं प्रतीच्छकं घट्टयित्वा कमभिधार्य भवान् प्रस्थित आसीदिति पृष्ट्वा सचित्तादिकं तस्य अभिधारितस्य पार्श्वे स्थविरा प्रेषयन्तीति मन्तव्ये ( एसा आरोवणा उ अविहीएत्ति ) या पूर्वं प्रतिषेधकत्वं पर्यङ्कीलनं वा कुर्वत आरोपणा भणिता सा अविधिनिष्पन्ना मन्तव्या विधिना अनुकरणं कुर्वाणस्य न प्रायश्चित्तम् । तथा चाह ( बितियपयइत्यादि ) यमसावभिधारयति स आचार्योऽसंविग्न ततो द्वितीयपदे यतनया प्रतिषेधकत्वं कुर्यात् का पुनर्यतनेति चेदुच्यते । प्रथमं साधुस्तं भाणयति मा तत्र व्रज पश्चादात्मनाऽपि भणति पूर्वोक्तेन वा शिष्यादिव्यापारेण प्रयोगेण वारयेत । एव यतनया प्रतिषेधकत्वे कृतेऽपि शुद्धो निर्दोष ।

अमुमेवार्थमाह ।

अभिधारेंत पास-त्थमादिणो तं वयंति सुत अत्थि ।
ते अपडिसेहदोसा, ते कुव्वंतो वि णिद्दोसो ॥

यानभिधारयन्नसौ व्रजति ते आचार्याः पार्श्वस्थादिदोषदुष्टा यश्च श्रुतमसावभिलषति तदपि यस्य प्रतिषेधकस्यास्ति ततो ये अप्रतिषेधकत्वं कुर्वतो दोषा शिष्यव्यापारणादयस्तान् कुर्वन्नपि निर्दोषस्तदा मन्तव्य ।

जं पुण सचित्तादी, तं तेसिं देति ण वि सयं गेण्हे ।
बितिए चिय ण पेसे, जावइयं वा असंथरणे ॥

यत्पुन सचित्तादिकं प्रतीच्छकेनागच्छता लब्धं तत्तेषामभिधारितानामाचार्याणां ददाति न पुन स्वयं गृह्णाति । द्वितीयपदे यद्यस्य शिष्यचित्त तदादित्यादिति मार्गे स्वयमसंस्तरमाणो न प्रेषयेदपि । अथवा यावदुपयुज्यते तावद् गृहीत्वा शेषं तेषां समीपे प्रेषयति । असंस्तरणे वा सर्वमपि गृह्णीयात् । सचित्तमप्यमुना कारणेन न प्रेषयेत् ।

नाऊण य वोच्छेयं, पुव्वगए कालियाणुओगे य ।
सयमेव दिसाबंधं, करेज्ज तेसिं न पेसिज्जा ॥

यस्तेन शैक्ष आनीत स परममेधावी तस्य च गच्छे नास्ति कोऽप्याचार्यपदयोग्यो यच्च तस्य पूर्वगतं कालिकश्रुतं वा समस्ति तस्यापरो गृहीता न प्राप्यते ततस्तयोर्व्यवच्छेदं ज्ञात्वा स्वयमेव तस्यात्मीयं दिग्बन्धं कुर्यात् न तेषां प्राग्निर्धारितानां पार्श्वे प्रेषयेत् ।

अथ पर्यङ्कतोऽपवादमाह ।

असहा तो परिसिल्ल-चाणं पि कुज्जा उ मंदधम्मे य ।
पप्प व कालच्छाणे, सचित्तादी तिगिण्हेज्जा ॥

असहाय एकाकी स आचार्यस्तत संविग्नमसंविग्नं वा सहायं गृह्णीयात् शिष्या वा मन्दधर्माणो गुरूणां व्यापारं न वहन्ति ततो यं वा तं वा सहायं गृह्णन् पर्यङ्कत्वमपि कुर्यात् । आर्या वा मन्दधर्माणो न वस्त्रपात्रादि प्रयच्छन्ति ततो लब्धिसंपन्नं शिष्यं यं वा तं परिगृह्णीयात् । दुर्भिक्षादिकं वा कालमध्वानं वा प्राप्य ये उपग्रहकारिणः शिष्यास्तान् संगृह्णीयात् । अथ योऽसौ प्रतीच्छको गच्छति तस्यापवादमाह ।

कालगयं सोऊणं, असिवादी तत्थ अंतरा वा वि ।
पडिसिद्धं परिसेहं, सुद्धो अण्णं व विसमाणो ॥

यमाचार्यमभिधार्य व्रजति तं कालगत श्रुत्वा यद्वा यत्र गन्तुकामस्तत्रान्तरा वा अशिवादीनि श्रुत्वा पर्यङ्कत प्रतिषेधकस्य वा अन्यस्य वा पार्श्वे प्रविशेत् शुद्ध एतदविशेषितमुक्तम् । अथात्रैव व्यक्ताव्यक्तविशेष विज्ञापयिषुराह ।

वच्चंतो वि य दुविहो, वत्तमवत्तस्स मग्गणा होति ।
वत्तम्मि खेत्तवज्जं, अव्वत्ते ण अप्पिओ जाव ॥

य प्रतीच्छको व्रजति सोऽपि च द्विविधो व्यक्तोऽव्यक्तश्च तयोः सहाय किं दातव्यो न वेति मार्गणा कर्तव्या । तत्र व्यक्तस्य यः सचित्तो विलास क्षेत्रवर्जं परक्षेत्रं मुक्त्वा भवति स सर्वोऽप्यभिधारिताचार्यस्याभवति यः पुनरव्यक्त स सहायैर्यावदद्यापि तस्याचार्यस्यार्पितो न भवति तावत्परक्षेत्रं मुक्त्वा यच्च सहाया लभन्ते तत्पूर्वाचार्यस्यैवाभवतीति संग्रहगाथासमासार्थः ।

अथैनामेव विवृणोति ।

सुतअव्वत्तो गीतो, वएण जो सोलसएह आरेणं ।
तव्विवरीओ वत्तो, वत्तमवत्ते य चउभंगो ॥

अव्यक्तो द्विधा श्रुतेन वयसा च । श्रुतेनाव्यक्तो गीतार्थो वयसा अव्यक्तस्तु षोडशानां वर्षाणामर्वाग्वर्तमानस्तद्विपरीतो व्यक्त उच्यते । अत्र च व्यक्ताव्यक्ताभ्यां चतुर्भङ्गी भवति । श्रुतेनाप्यव्यक्तो वयसाऽप्यव्यक्तः ।१। श्रुतेनाव्यक्तो वयसा व्यक्त ।२। श्रुतेन व्यक्तो वयसा अव्यक्तः ।३। श्रुतेनापि व्यक्तो वयसाऽपि व्यक्त ।४। अस्य च सहाया किं दीयन्ते उत न दीयन्ते इत्याह ।

वत्तस्स वि दायव्वा, अपुच्छमाणे सहा य किमु इयरे ।
खेत्तविवज्जं अव्वं- तिएसु जं लभति पुरिल्ले ॥

आचार्येण पृच्छमानेषु साधुषु व्यक्तस्यापि सहाया दातव्याः किं पुनरितरस्याव्यक्तस्य तस्य सुतरां दातव्या इति भाव । तत्र सहाया द्विधा आत्यन्तिका अनात्यन्तिकाश्च । आत्यन्तिका नाम ये तेन सार्द्धं तत्रैवासितुकामा ये तु तं तत्र मुक्त्वा प्रतिनिवर्त्स्यन्ते ते अनात्यन्तिका । तत्रात्यन्तिकेषु सहायेषु यद्यस्तं

क्षेत्रविवर्जे परक्षेत्रं मुक्त्वा,सचित्तादिकं लभते ( तत् पुरिल्लेत्ति ) तस्याचार्यस्याभिमुखं व्रजति स पुरोवर्ती भण्यते अभिधारित इत्यर्थस्तस्य सर्वमपि सचित्तादिकमाभवति। परक्षेत्रेषु लब्ध क्षेत्रिकस्याभाव्यम् ।

जइ णेउं पत्तुमणा, नंते मग्गिले वत्तिपुरिमस्स।
नियमव्वत्तसहाया-णं तु णियत्तत्ति जं सोयं ॥

अथ ते सहायास्तं तत्र नीत्वा आगन्तुकामा अनात्यन्तिका इत्यर्थस्ततो यत्ते सहाया लभन्ते तत्सर्वमपि ( मग्गिल्लेत्ति ) यस्य सकाशात्प्रस्थितास्तस्यात्मीयस्याचार्यस्याभवति ( वत्तिपुरिमस्सत्ति ) यत्पुन स व्यक्तः स्वयमुत्पादयति यत्पुरिमस्य अभिधारितस्याभवति यः पुनरव्यक्तस्तस्य नियमेनैव सहाया दीयन्ते ते च सहाया यद्यात्यन्तिकास्तदा यदसौ ते च लभन्ते तदाभिधारितस्याभाव्यम् । अथ त तत्र नीत्वा निवर्तते ततो यदसौ ते च परक्षेत्र मुक्त्वा लभन्ते तत्सर्वं पूर्वाचार्यस्याभवति यावदद्याप्यसौ नार्पितो भवति ।

बितियं अपुज्जयंते, न देज्ज वा तस्स सो सहाये तु ।
वइगादि अपडिवज्जं-तगस्स उवही विसुज्झो उ ॥

द्वितीयपदमत्र भवति अपूर्यमाणेषु साधुषु सहायान् साधून तस्याचार्या न दद्यात् स चात्मना श्रुतेन वयसा च व्यक्तस्तस्य व्रजिकादावप्रतिबध्यमानस्योपधिर्विशुद्धो भवति नोपहन्यते । अथ व्रजिकादिषु प्रतिबध्यते तत उपधेरुपघातो भवति ।

एगे तू वच्चंते, उग्गहवज्जं तु लभति सच्चित्त ।
वच्चति गिलाणो अ-न्तरा तु तहि मग्गणा होइ ॥

यो व्यक्त एकाकी व्रजति स यद्यन्यस्याचार्यस्य योऽवग्रहस्त द्वर्जिते अनवग्रहक्षेत्रे यत्किंचिल्लभते तत् सचित्तमभिधार्यमाणस्याभवति ( वच्चतव्वादि ) योऽसौ ज्ञानार्थं व्रजति स द्वौ त्रीन् वा आचार्यान् कदाचिदभिधारयेत् तेषां मध्ये यो मे अभिरोचिष्यते तस्यान्तिके उपसंपदं गृहीष्यामीति कृत्वाऽसावन्तरा ग्लानो जातस्तैश्चाचार्यैः श्रुतं यथाऽस्मानभिधार्य साधुरागच्छन् पथि ग्लानो जात इति तत्रेयमाभाव्यानाभाव्यमार्गणा भवति ॥

आयरिया दोण्णि गया, एक्के एक्कं च णागए गुरुगा ।
ण य लभती सच्चित्तं, कालगते विप्परिणए वा ॥

यदि तौ द्वावप्याचार्यावागतौ ततो यत्तेन लब्ध तदुभयोरपि साधारणम् । अथैकस्तयोरागत एकश्च द्वितीयो नागतस्ततोऽनागतस्य चतुर्गुरु यच्च सच्चित्तमचित्तं वा तदसौ न लभते । यस्तं गवेषयितुमागतस्तस्य सर्वमाभवति एव त्र्यादिसंख्याकेष्वाचार्येष्वभिधारितेषु भावनीयम् । अथासौ ग्लान काल गत तत्रापि यो गवेषयितुमागच्छति तस्यैवाभवति नेतरेषाम् । अथासौ विपरिणतस्ततो यस्य विपरिणत स न लभते यत्पुन सचित्तादिकमभिधार्यमाणे लब्ध पश्चाद्विपरिणतस्ततो यदविपरिणते भावे लब्धं तल्लभते विपरिणते भावे लब्ध न लभते ।

पंथसहायसमत्थो, धम्मं सोऊण पव्वयामि त्ति ।
खेत्ते य वाहि परिणए, वाताहडे मग्गणाऽऽणमो ॥

योऽसौ ज्ञानार्थं प्रस्थितस्तस्य पथि गच्छन् कश्चित् मिथ्यादृष्टिर्वाताहतः समर्थ सहायो मिलित स च तस्य पार्श्वे धर्मं श्रुत्वा प्रव्रजामीति परिणाममुपगतवान् स च परिणाममुपगतः साधुभिरपरिगृहीते क्षेत्रे जातो भवेत् क्षेत्राद्वा बहिरन्यस्यानादौ वा अपरिगृहीते वा क्षेत्रे ततस्तस्मिन् वाताहते प्रव्रजितु परिणते इयं मार्गणा भवति ॥

खेत्तम्मि खेत्तियस्स, खेत्तवहिं परिणए पुरिल्लस्स ।
अंतरपरिणयविप्परि-णएण एगा उ मग्गणना ॥

साधुपरिगृहीतक्षेत्रे प्रव्रज्यापरिणतः क्षेत्रिकस्याभवति । क्षेत्राद्बहिः परिणतस्तु ( पुरिल्लस्सत्ति ) तस्यैव साधोराभवति अपान्तराले स प्रव्रज्यायां परिणतो विपरिणतश्च भवति ततः क्षेत्रे च धर्मकथिकस्य रागद्वेषप्रतीत्याऽनेका मार्गणा । तद्यथा यदि धर्मकथी ऋजु भयात्कथयति तदा क्षेत्रे परिणत क्षेत्रिकस्याभवति अक्षेत्रे परिणतो धर्मकथिकस्य । अथ विपरिणतेन घेगेन कथयति यदा क्षेत्रान्निर्गतो भविष्यति तदा कथयिष्यामि न मे अधुना भवति एव क्षेत्रनिर्गतस्य कथिते यदि परिणतस्तदा क्षेत्रिकस्याभवतीत्येव विभाषा कर्तव्या ।

वीसज्जियम्मि एव, अविसज्जिए चउलहुं व आणादी ।
तेसिं पि हुंति लहुगा, अविधिविही सा इमा होइ ॥

एवमेव विधिर्गुरुणा विसर्जिते शिष्ये मन्तव्य । अथाविसर्जितो गच्छति तदा शिष्यस्य प्रतीच्छकस्य च चतुर्लघु । अथ विसर्जितो द्वितीय वारमनापृच्छ्य गच्छति तदा मासलघु आज्ञादयश्च दोषा । येषामपि समीपेऽसौ गच्छति तेषामप्यविधिनिर्गतं तं प्रतीच्छतां चत्वारो लघव । सचित्तादिकं वा भाव्यं न लभन्ते एषोऽविधिरुक्तः । विधि पुनरयं वक्ष्यमाणो भवति । स पुनराचार्य एभि कारणैर्न विसर्जयति ।

परिवार पूयहेतुं, अविसज्जंते ममत्तदोसा वा ।
अणुलोमेण गमेज्जा, दुक्खं खु विमुंचियं गुरुणो ॥

आत्मनः परिवारनिमित्त न विसर्जयति बहुभिर्वा परिवारित पूजनीयो भविष्यामि मम शिष्योऽन्यस्य पार्श्वे गच्छतीति ममत्वदोषाद्वा न विसर्जयति एवमविसर्जयन्तं गुरुमनुलोमा अनुकूलैर्वचोभिर्गमयेत् कुत इत्याह । ( दुक्खखुत्ति ) खलुरवधारण गुरवो विमोक्तुं परमोपकारकारित्वात् न च ते यतस्ततो विमोक्तुं शक्या इति भाव । तत प्रथमत एव विधिना गुरूनापृच्छ्य गन्तव्यम् । क पुनर्विधिरिति चेदुच्यते ।

नाणम्मि तिण्णि पक्खा, आयरिय उवज्झाय सेसगाणं वा ।
एक्केकपंचदिवसे, अहवा पक्खेण एक्केक्क ॥

ज्ञानार्थं गच्छता त्रीन् पक्षानापृच्छा कर्त्तव्या तत्र प्रथममाचार्यं पञ्चदिवसानापृच्छति यदि न विसर्जयति तत उपाध्यायं पञ्च दिवसानापृच्छेत् यदि सोऽपि न विसर्जयति तदा शेषा साधव पञ्च दिवसान् पृष्ट्या एष एक पक्षो गतस्ततो द्वितीयपक्षमेवाचार्योपाध्यायशेषसाधून् प्रत्येकमेकैकं पञ्चभिर्दिवसै पृच्छति तृतीयमपि पक्षमेवं पृच्छति एव त्रय पक्षा भवन्ति । अथवा निरन्तरमेवाचार्यं एकं पक्षमापृच्छनीयस्तत उपाध्यायोऽप्येक पक्ष गच्छसाधवोऽप्येक पक्षम् । एव च त्रय पक्षा एवमपि यदि न विसर्जयन्ति ततोऽविसर्जित एव गच्छति ।

एयविहमागतं तु, पडिच्छ अपडिच्छणे भवे लहुगा ।
अहवा इमेहिं आगम, एगादि पडिच्छनो गुरुगा ॥

एतेन विधिना आगत प्रतीच्छक प्रतीच्छेत् । अप्रतीच्छतश्चतुर्लघुका भवेयु । अथामीभिरेकादिभि कारणैरागत प्रतीच्छति ततश्चतुर्गुरुका तान्येकादीनि कारणान्याह ।

एगं अपरिणते य, अयाहारं य थेरए ।
गिलाणे बहुरोगे य, पाहुडे मंदधम्मए ॥

एकाकिनमाचार्यं मुक्त्वा स समागतः । अथवा तस्याचार्यस्य पार्श्वे ये तिष्ठन्ति ते अपरिणता आहारवस्त्रपात्रशय्यास्थण्डिलानामकल्पिकास्तैः सहितमाचार्यं मुक्त्वा आगतः । अथवा स आचार्याधारस्तमेव पृष्ट्वा सूत्रार्थवाचनां ददाति स्थविरो वा स आचार्यः । यद्वा तदीये गच्छे कोऽपि साधुः स्थविरस्तस्य स एव वैयावृत्यकर्त्ता ग्लानो वा बहुरोगी वा स आचार्यः ग्लानोऽधुनोत्पन्नरोगः। बहुरोगिणामचिरकाल बहुभिर्वा रोगैरभिभूतः। अथवा शिष्यास्तस्य मन्दधर्माणस्तस्यैव गुणेन सामाचारीमनुपालयन्ति एवंविधमाचार्यं परित्यज्यागतः ( पाहुडेत्ति ) गुरुणा समं प्राभृतं कलहं कृत्वा समागतः । अथवा प्राभृतकारिण पाखण्डिकास्तस्य शिष्यास्तस्यैव गुणेनागत ।

एयारिसं विउस्सज्ज, विप्पवासो ण कप्पती ।
सीसपडिच्छायरिए, पायच्छित्तं विहिज्जती ॥

एतादृशमाचार्यं व्युत्सृज्य विप्रवासो गमनं कर्तुं न कल्पते यदि गच्छति तत शिष्यस्य प्रतीच्छकस्याचार्यस्य च त्रयाणामपि प्रायश्चित्तं विधीयते तत्रकं ग्लान वा मुक्त्वा शिष्यस्य प्रतीच्छकस्य वा समागतस्य चतुर्गुरुका. यश्चाचार्यः प्रतीच्छति तस्यापि चतुर्गुरु। प्राभृतं शिष्यप्रतीच्छकयोश्चतुर्गुरुकमेव । आचार्यस्य पञ्च रात्रिंदिवं छेदः। शेषेषु परनादिषु पदेषु शिष्यस्य चतुर्गुरु। प्रतीच्छकस्य चतुर्लघु आचार्यस्यापि शिष्य प्रतीच्छत एतेषु चतुर्गुरु प्रतीच्छकप्रतीच्छकस्य चतुर्लघु । प्रतीच्छकं प्रतीच्छतश्चतुर्लघु । अथ ज्ञानार्थं त्रीन् पदानाप्रच्छनीयमित्यत्रापवादमाह ।

बिइयपदमसंविग्गे, संविग्गे चेव कारणागाढे ।
नाऊण तस्स भावं, कप्पति गमणं अणापुच्छा ॥

द्वितीयपद तत्र भवति। आचार्यादिष्वसंविग्नीभूतेषु न पृच्छेदपि च संविग्नेष्वपि वा किंचिदागाढं चारित्रविनाशकारणं स्त्रीप्रभृतमात्मनः समुत्पन्नं ततोऽनापृच्छ्यापि च गच्छति तेषां वा गुरूणां स्वभावं ज्ञात्वा तेनोद्गृध्याः सन्त कथमपि विसर्जयिष्यन्तीति मत्वा अनापृच्छ्यापि गमन कल्पते । अथाविसर्जितेन गन्तव्यमित्यपवदति ॥

अज्झयणं वोच्छिन्नं ति,तस्स य गहणम्मि अत्थि सामत्थं।
ण वि वियरंति चिरेण वि, एतेण विसज्जितो गच्छे ॥

किमाप्यध्ययनं व्यवच्छिद्यते तस्य च तद्ग्रहणे सामर्थ्यमस्ति न च गुरवश्चिरेणापि वितरन्ति गन्तुमनुजानन्ते एतेन कारणेनाविसर्जितोऽपि गच्छेत् । अविधिना आगत आचार्येण न प्रतीच्छनीय इत्यस्यापवादमाह ।

नाऊण य वोच्छेदं, पुव्वगते कालियाणुओगे य ।
अविहि अणापुच्छागत, सुत्तत्थविजाणओ वोए ॥

पूर्वगते कालिकश्रुते वा व्यवच्छेदं ज्ञात्वा अविधिना प्रव्रजिकादिप्रतिबन्धेनागतमनापृच्छ्यागतं वा सूत्रार्थज्ञापको वा येन कश्चिद्दोषः एतेन प्रतीच्छकेन शैक्षस्तस्याभिधारितस्यानाभाव्य आनीत सन् गृहीतव्य इत्यपवदति ।

नाऊण य वोच्छेदं, पुव्वगये कालियाणुयोगे य ।
सुत्तत्थजाणगस्सा, कारणजाते दिसाबंधो ॥

पूर्वगते कालिकश्रुते वा व्यवच्छेदं ज्ञात्वा सूत्रार्थज्ञापकेन कारणजाते अनाभाव्यस्याप्यात्मीयो दिग्बन्धः कर्त्तव्यः । आह किमर्थमनिबद्धो न दाप्यते उच्यते अनिबद्धः स्वयमेव कदाचिद्गच्छेत् पूर्वाचार्येण वा नीयेत कालदोषेण वा ममत्वाभावमालम्ब्य वाचयिष्यतीति दिग्बन्धोऽनुज्ञातः। इदमेव सविशेषमाह ॥

ससहाय अवत्तेणं, खेत्ते वि उवट्ठियं तु सच्चित्तं।
दलियं णाउं वंधंति, उभयममत्तट्ठया तं वा ॥

अव्यक्तेन ससहायेन य शैक्षो लब्धो यश्च परक्षेत्रेऽपि उपस्थितः सचित्तः स पूर्वाचार्यस्य क्षेत्रिकाणां वा यद्यप्याभाव्यस्तथापि तं दलिकं परममेधाविनमाचार्यपदयोग्यं ज्ञात्वा यद्यात्मीये गच्छे नाचार्यपदयोग्यः ततस्तस्यात्मीयां दिशं बध्नाति स्वशिष्यत्वेन स्थापयतीत्यर्थः। कुत इत्याह उभयस्य साधुसाध्वीवर्गस्य तत्र शैक्षो ममत्वमस्माकमयमित्येवं ममकारो भूयादिति कृत्वा। यद्वा स्वगच्छीयसाधूनां तस्य च शैक्षस्य परस्परं संमेलका वयमित्येवं ममत्वं भविष्यतीति बुद्ध्या तमात्मीयशिष्यत्वेन बध्नाति ( तं व त्ति ) यो वा प्रतीच्छक आयातस्तमपि ग्रहणाधारणासमर्थं च विज्ञाय स्वशिष्य स्थापयति एवं शैक्षः प्रतीच्छको वा कारणे शिष्यतया निबद्धः सन् यदा निर्मातो भवति । तदा ॥

आयरिए कालगए, परियट्टइ तं गणो उ सो चेव।
चोएति य अपढंते, इमा उ तह मग्गणा होइ ॥

आचार्ये कालगते सति गच्छस्य निबद्धाचार्यस्य च व्यवहारो भण्यते स स्वयमेव तं गणं परिवर्तयति स च गच्छो यदि श्रुतं न पठति ततस्तं अपठन्तं नोदयति यदि नोदिता अपि ते गच्छसाधवो न पठन्ति तत इयमाभवद्व्यवहारमार्गणा भवति ॥

साहारणं तु पढमे, बितिए खेत्तम्मि ततियसुहदुक्खे ।
अणिहज्जंते सीसे, सा एक्कारस विभागा ॥

कालगतस्याचार्यस्य प्रथमे वर्षे सचित्तादिकं साधारणं यदसौ प्रतीच्छकाचार्य उत्पादयति तत्तस्यैवाभवति । यदीतरे गच्छसाधव उत्पादयन्ति तत्तेषामेवाभवतीति भावः । द्वितीये वर्षे यत क्षेत्रोपसंपन्नो लभते तत्तेऽपठन्तो लभन्ते । तृतीये वर्षे यत सुखदुःखोपसंपन्नो लभते तत्ते लभन्ते। चतुर्थे वर्षे कालगताचार्यशिष्या अनधीयाना न किंचिल्लभन्ते। शेषा नाम येऽधीयते तेषामधीयानानां वक्ष्यमाणा एकादश विभागाः भवन्ति। शिष्यः पृच्छति क्षेत्रोपसंपन्नः सुखदुःखोपसंपन्नो वा किं लभते । सूरिराह ॥

खेत्तोवसंपयाए, बावीसं संथुया य मित्ता य ।
सुहदुक्खमित्तवज्जा, चउत्थए नालबद्धाई ॥

क्षेत्रोपसंपदा उपसंपन्नो द्वाविंशति अनन्तरपरम्परावल्लीबद्धान् मातापित्रादीन् जनान् लभते संस्तुतानि च पूर्वापश्चात्संस्तवसंबद्धानि प्रपौत्रश्वसुरादीनि मित्राणि च सह जातकादीनि लभते दृष्टाभाषितानि तु न लभते। सुखदुःखोपसंपन्नेषु एतान्येव मित्रवर्जानि लभते । चतुर्थस्तु एवंविधोपम प्रक्रमप्रामाण्यात् श्रुतोपसंपन्नः स केवलान्येव द्वाविंशतिनालबद्धानि लभते अयं च प्रसङ्गेनोक्तः क्षेत्रोपसंपन्नसुखदुःखोपसंपन्नयोर्यदाभाव्यमुक्तं तत्ते शिष्या अनधीयाना द्वितीये तृतीये च वर्षे यथाक्रमं लभन्ते। चतुर्थे वर्षे सर्वमप्याचार्यस्याभवति न तेषाम्। ये तु शिष्या अधीयते तेषां विधिरुच्यते तस्य कालगताचार्यस्य चतुर्विधो गणो भवेत्।

शिष्या: शिष्यिकाः प्रतीच्छका प्रतीच्छिकाश्चेति । एतेषां पूर्वोद्दिष्टपश्चादुद्दिष्टयोः संवत्सरसंख्ययैकादश गमा भवन्ति । पूर्वोद्दिष्टानां यत्तेनाचार्येण जीवता तेषां श्रुतमुद्दिष्टं यत्पुनस्तेन प्रतीच्छकाचार्येणोद्दिष्टं तत्पश्चादुद्दिष्टम् । तत्र विधिमाह ।

पुव्वुद्दिट्ठे तस्स, पच्छुद्दिट्ठे पवाययंतस्स ।
संवच्छरम्मि पढमे, पडिच्छिए जं तु सच्चित्तं ॥

यदाचार्येण जीवता प्रतीच्छकस्य पूर्वमेवोद्दिष्टं तदेव पठन् प्रथमे वर्षे यत् सचित्तमचित्तं वा स लभते तत्तस्य कालगताचार्यस्याभवति एष एको विभाग । अथ पश्चादुद्दिष्टं तत प्रथमसंवत्सरे यत् सचित्तादिकं लभते तत्सर्वं प्रवाचयतः प्रतीच्छकस्याचार्यस्याभवति एष द्वितीयो विभाग' ।

पुव्वं पच्छुद्दिट्ठे, पडिच्छए जं तु होइ सचित्ते ।
संवच्छरम्मि बितिए, तं सव्वं पवाययंतस्स ॥

प्रतीच्छक पूर्वोद्दिष्टं पश्चादुद्दिष्टं वा पठन् यत्तस्य सचित्तादिक तदा द्वितीये वर्षे सर्वमपि प्रवाचयतो भवति । एष तृतीयो विभाग' । अथ पश्चाच्छिष्यस्याभिधीयते ।

पुव्वं पच्छुद्दिट्ठे, सेसम्मि उ जं तु होइ सचित्तं ।
संवच्छरम्मि पढमे, तं सव्वं गुरुस्स आभवइ ॥

शिष्यस्य कालगताचार्येण वा उद्दिष्टं भवेत् प्रतीच्छकाचार्येण वा तदसौ पठन् यत् सचित्तादिकं लभते तत्सर्वं प्रथमे संवत्सरे गुरोः कालगताचार्यस्याभवति एष चतुर्थो विभाग ।

पुव्वुद्दिट्ठं तस्स, पच्छुद्दिट्ठं पवाययंतस्स ।
संवच्छरम्मि बितिए, सीसम्मि उ जं तु सचित्तं ॥

शिष्यस्य पूर्वोद्दिष्टमधीयानस्य द्वितीयवर्षे सचित्तादिक कालगताचार्यस्याभवतीति पञ्चमो विभाग पश्चादुद्दिष्टं पठत शिष्यस्य सचित्तादिक प्रवाचयत आभाव्य भवतीति षष्ठो विभाग ।

पुव्वं पच्छुद्दिट्ठे, सीसम्मि उ जं तु होइ सच्चित्तं ।
संवच्छरम्मि ततिए, तं सव्वं पवाययंतस्स ॥

पूर्वोद्दिष्टं पश्चादुद्दिष्टं वा पठति शिष्ये सचित्तादिक तृतीये वर्षे सर्वमपि प्रवाचयत आभवतीति सप्तमो विभाग ॥

पुव्वुद्दिट्ठे तस्स, पच्छुद्दिट्ठे पवाययतस्स ॥
संवच्छरम्मि पढमे, सिस्सिणिए जं तु सच्चित्तं ॥

शिष्यिकायां पूर्वोद्दिष्टपठन्त्यां सचित्तादिक तस्य कालगताचार्यस्य प्रथमे वर्षे आभाव्यमित्यष्टमो विभाग । पश्चादुद्दिष्टमधीयानायां प्रवाचयत आभाव्य नवमो विभाग ॥

पुव्वं पच्छुद्दिट्ठे, सिस्सिणिए जं तु होइ य सच्चित्तं ।
संवच्छरम्मि बीए, तं सव्वं पवाययंतस्स ॥

पूर्वोद्दिष्टं पश्चादुद्दिष्टं वा पठन्त्यां शिष्यिकाया सचित्तादिकाभोगो द्वितीये वर्षे प्रवाचयत आभवतीति दशमो विभाग ।

पुव्वं पच्छुद्दिट्ठे, पडिच्छिगा जं तु होति सच्चित्तं ।
संवच्छरम्मि पढमे, तं सव्वं पवाययंतस्स ॥

पूर्वोद्दिष्टं पश्चादुद्दिष्टं वा पठन्त्या प्रतीच्छिकाया प्रथम एव संवत्सरे सर्वमपि प्रवाचयत आभवति एष एकादशो विभाग । एक एव आदेश उक्त । अथ द्वितीयमाह ॥

संवच्छराइ तिन्नि उ, सीसम्मि पडिच्छए उ तद्दिवसं ।
एव कुले गणे य, संवच्छरे संघे य दसमासो ॥

प्रतीच्छकाचार्यस्तेषां कुलसत्को गणसत्क संघसत्को वा भवेत् तत्र यदि तत्सत्क तदा त्रीन् संवत्सरान् शिष्याणां वाच्यमानानां सचित्तादिक न गृह्णाति । यत्पुन प्रतीच्छकास्तेषां वाच्यमानानां यस्मिन्नेव दिने आचार्ये कालगतस्तद्दिवसमेव गृह्णाति एवमेव कुलसत्के विधिरुक्त । अथासौ गणसत्कस्तस्मिन्वर्षं शिष्याणां सचित्तादिक नापहरति यस्तु कुलसत्को गणसत्को वा न भवति स नियमात् संघसत्क स च षण्मासान् शिष्याणां सचित्तादिक न गृह्णाति । तेन च प्रतीच्छकाचार्येण तत्र गच्छे वर्षत्रयमवश्य स्थातव्यम् । परत पुनरिच्छा ।

तत्थेव य निम्माए, अणिग्गए निग्गए इमा मेरा ।
सकुले तिन्नि तियाइं, गणे दुगसंवच्छर संघे ॥

तत्रैव प्रतीच्छकाचार्यसमीपे तस्मिन्गच्छे यदि कोऽपि गच्छे निर्मातस्तदा सुन्दरम् । अथ न निर्मात स च वर्षत्रयात्परतो निर्गतस्ते वा गच्छीया एव सांप्रतमस्माकं सचित्तादिक हरतीति कृत्वा ततो निर्गतस्तदा इयं मर्यादा सामाचारी ( सकुले इत्ति ) स्वकुले स्वकीयकुलस्य समवाय कृत्वा कुलस्य कुलस्थविरस्य वा उपतिष्ठन्ते तत कुल तेषां वाचनाचार्यं ददाति वारकेण वा वाचयति । कियन्त कालमित्याह(तिन्नितियत्ति) वर्षत्रिका भवन्ति । ततो नव वर्षाणि वाचयतीत्युक्त भवति । यदा भवता निर्मातस्तदा सुन्दरम् । अथैकोऽपि न निर्मातस्तत कुल सचित्तादिक गृह्णातीति कृत्वा गणमुपतिष्ठन्ते गणोऽपि द्वे वर्षे पाठयति न सचित्तादिक हरति । यद्येवमपि निर्मातस्तत संघमुपतिष्ठन्ते संघोऽपि वाचनाचार्यं ददाति स च संवत्सरं पाठयति एवं द्वादश वर्षाणि भवन्ति यद्येवमेकोऽपि निर्मातस्तत पुनरपि कुलादिस्थविरेषु वा तेन क्रमेणोपतिष्ठन्ते तावन्तमेव कालं कुलादीनि यथाक्रमं पाठयन्ति न सचित्तादिक हरन्ति एवमन्यान्यपि द्वादश वर्षाणि भवन्ति पूर्वैर्द्वादशभिश्च मीलितानि जाता वर्षाणां चतुर्विंशति । यद्येतावता कालेन नैकोऽपि निर्मातस्तदा विहरन्तु अथ निर्मातस्ततो भूयोऽपि कुलगणसंघेऽपि तथैवोपतिष्ठन्ते तेऽपि च तथैव पाठयन्ति । एतान्यपि द्वादश वर्षाणि चतुर्विंशत्या मील्यन्ते जाता षट्त्रिंशत् यद्येव षट्त्रिंशता वर्षैरेकोऽपि निर्मातस्तता विहरन्तु । अथैकोऽपि न निर्मात । कथमिति चेदुच्यते ।

ओमादिकारणेहिं च, दुम्मेहत्तेण वा न निम्माओ ।
काऊण कुलसमायं, कुलथेरे वा उवट्ठति ॥

अवमादिकारणैरशिवादिभि कारणैरन्तरान्तरा एषु परग्रामेषु पर्यटतां दुर्मेधतया वा नैकोऽपि निर्मातस्तत कुलसमवाय कृत्वा कुलस्थविरान् वा सर्वेऽप्युपतिष्ठन्ते ततस्तैरपसंपद ग्राहयितव्या कुत्र पुनरिति चेदुच्यते ।

पव्वज्जएगपक्खिय, उवसंपदा नहा सए ठाणे ।
छत्तीसातिक्कंते, उवसंपयए जवादाए ॥

य प्रव्रज्यैकपाक्षिकस्तस्य पार्श्वे उपसंपद ते प्रव्रज्यास्थविरा ग्राहयेयु सा च उपसंपत् पञ्चधा यथासामाचार्या भवति तस्या चोपसंपदि षट्त्रिंशद्वर्षातिक्रमे प्राप्तायां ( सए ठाणेति ) विभक्तिव्यत्ययात् स्वकमात्मीयं स्थानमुपादाय गृहीत्वा नैरपसंपत्तव्यमिदमेव भावयति ।

गुरुसज्झिलओ सज्झं, निउत्त गुरु गुरुस्स वा न्नत्तु ।
अहवा कुलिच्चत्तो उ, पव्वज्जा एगपक्खीओ ॥

' गुरुसज्झिलओ " गुरुणा सहाध्यायी पितृव्यस्थानीयः सज्झन्तिक आत्मनः स ब्रह्मचारी भ्रातृस्थानीयो गुरुगुरुः पितामहस्थानीयो गुरोः सम्बन्धी तं प्रातशिष्य आत्मनो भ्रातृव्यस्थानीय एते प्रव्रज्ययैकपाक्षिका उच्यन्ते । अथवा कुल समानकुलोद्भव सोऽपि प्रव्रज्ययैक एतेषां समीपे यथाक्रममुपसंपत्तव्यम् ।

पव्वज्जाए सुएण य, चउभंगुवसंपया कमेणं तु ।
पुव्वाहि य वीसरिए, पढमासइ ततियभंगे उ ॥

एकैकपाक्षिकप्रव्रज्यया श्रुतेन च भवति । तत्र प्रव्रज्यैकपाक्षिकोऽनन्तरमुक्तः श्रुतैकपाक्षिको येन सहैकवाचनिकं सूत्रम् । अत्र चतुर्भङ्गी । प्रव्रज्ययैकपाक्षिकः श्रुतेन च १ प्रव्रज्यया न श्रुतेन २ श्रुतेन न प्रव्रज्यया ३ न प्रव्रज्यया न श्रुतेन ४ एतेषु चामुना क्रमेणोपसंपत्प्रतिपत्तव्या ( पढमासइत्यादि ) प्रथमतः प्रथमभङ्गे उपसंपत्तव्यं तदभावे तृतीये भङ्गे श्रुत इत्याह यतः पूर्वाधीतं श्रुतं स्मृतं सत्तेषु सुखेनैवाज्ञापयितुं शक्यते श्रुतैकपाक्षिकत्वात् ।

अथ पञ्चविधामुपसंपदमाह ।

सुयसुहदुक्खक्खेत्ते, मग्गे विणओवसंपयाए य ।
बावीसं संथुयं सं-दिट्ठभट्ठे य सव्वे य ॥

श्रुतोपसंपत् सुखदुःखोपसंपत् क्षेत्रोपसंपत् मार्गोपसंपत् विनयोपसंपत् एवं एषा पञ्चविधा उपसंपत् ( वृ० ४ उ० ) एतासु श्रुतग्रहणायान्यमाचार्यमुपसंपद्यमानस्य श्रुतोपसंपत् ३ मार्गे व्रजतो मम यौष्माकी निश्रेति मार्गोपसंपत् ४ विनयं कर्तुं गच्छान्तरमुपसंपद्यमानस्य विनयोपसंपत् ५ भाष्यकृताऽप्युक्तम् । "उवसंपयपञ्चविहा, सुयसुहदुक्खे य खित्तमग्गे य । विणए उवसंपया वि य, पंचविहा होइ नायव्वा " एतासामन्यतरामुपसंपदं प्रपन्नमात्रस्य विभागालोचना भवति विहारे कृते निरतिचारस्याप्यालोचना भवति । अयं भावः एकादशतपक्षाद्वर्षाद्वा यदा सांभोगिका स्पर्धकपतयो गीतार्थाचार्या मिलन्ति तदा निरतिचारोऽप्यन्योन्यस्य विहारालोचनां स्वस्वविहारक्रमानुष्ठितप्रकाशरूपां ददातीति (जीत० प० चू० प० भा०) एतासूपसंपत्सु व्यवहारमाह (बावीस इत्यादि) श्रुतोपसंपदि द्वाविंशति लाभस्थानानि लभ्यन्ते तद्यथा माता १ पिता २ भ्राता ३ भगिनी ४ पुत्रो ५ दुहिता ६ मातुर्माता ७ मातुः पिता ८ मातुर्भ्राता ९ मातुर्भगिनी १० एवं पितुर्माता ११ पितुः पिता १२ पितुर्भ्राता १३ पितुर्भगिनी १४ भ्रातृपुत्रो १५ भ्रातृदुहिता १६ भगिन्याः पुत्रः १७ भगिन्याः पुत्रिका १८ पुत्रस्य पुत्रः १९ पुत्रस्य पुत्रिका २० दुहितुः पुत्रः २१ दुहितुः पुत्रिका २२ चेति । एतानि द्वाविंशतिरपि श्रुतोपसंपत् प्रतिपन्नस्याभवन्ति । सुखदुःखोपसंपन्नस्तु एता द्वाविंशतिमन्यांश्च पूर्वसंस्तुतपश्चात्संस्तुतान् प्रणामस्वजनादीन् लभते । क्षेत्रोपसंपन्नस्तु तान् सर्वानपि वयस्यांश्च लभते । मार्गोपसंपन्न एतान् सर्वानपि लभते । अपरं च ये केचित् दृष्टा भाषितास्तानपि प्राप्नोति । विनयोपसंपदं प्रतिपन्नस्तु सर्वानपि ज्ञाताज्ञातदृष्टादृष्टान् लभते नवरं विनयार्हस्य विनयप्रयुङ्क्ते 'सण्डाणेत्ति' यदुक्तं तस्यायमर्थः । पञ्चविधाऽप्युपसंपत् तस्मिन् स्थाने प्रतिपत्तव्या । किमुक्तं भवति । श्रुतोपसंपत् प्रतिपित्सोर्यस्य पार्श्वे श्रुतमस्ति तत्तस्य स्वस्थानम् । सुखदुःखार्थिनः स्वस्थानं यत्र वैयावृत्त्यकराः सन्ति । क्षेत्रोपसंपदर्थिनो यदीये क्षेत्रे भक्तपानादिकमस्ति । मार्गोपसंपदर्थिनो यत्र मार्गज्ञः समस्ति । विनयोपसंपदर्थिनो यत्र विनयकरणं युज्यते एतानि स्वस्थानानि । अथवा स्वस्थानं नाम प्रव्रज्यया श्रुतेन च ये एकपाक्षिकास्तत्र प्रथमस्य तत उपसंपत्तव्यम् । पश्चात् कुलेन श्रुतेन चैकपाक्षिकस्य पार्श्वे । ततः श्रुतेन गणेन च एकपाक्षिकस्य समीपे ततः श्रुतेनैकपाक्षिकस्य समीपे ततः प्रव्रज्ययैकपाक्षिकस्य सकाशे ततः प्रव्रज्यया श्रुतेन वा नैकपाक्षिकस्यापि पार्श्वे उपसंपत्प्रतिपत्तव्यम् । आह । साधर्मिकवात्सल्याराधनार्थं सर्वेणाऽपि सर्वस्य श्रुताध्ययनादि कर्त्तव्यं ततः किमर्थं प्रथमं प्रव्रज्याकुलादि निरासस्ततरेषूपसंपद्यत इत्याह ।

सव्वस्स वि कायव्वं, निच्छयओ किं कुलं च अकुलं च ।
कालसभावममत्ते गारवलज्जादिकं होति ॥

निश्चयतः सर्वेण सर्वस्याप्यविशेषेण श्रुतवाचनादिकमात्मनो विपुलतरं निर्जरमभिलषता कर्त्तव्यम् । किं कुलमकुलं चेत्यादिनिवारणाया परं दुःषमालक्षणो यः कालस्तस्य यः स्वभावोऽनुभावस्तेनात्मीयोऽयमित्यादिकं यन्ममत्वं तथा गुर्वादिविषयं गौरवं बहुमानबुद्धिर्या च तदीया लज्जा एतैः प्रेरिताः सुखेनैव करिष्यन्तीति कृत्वा प्रथमं प्रव्रज्यादिनिरासस्ततरेषूपसंपद्यन्ते गतं ज्ञानार्थं गमनम् ।

अथ दर्शनार्थं गमनमाह ।

कालियपुव्वगए वा, णिम्माओ जति य अत्थि सेसात्ति ।
दंसणदीवगहेउं, गच्छइ अहवाऽऽगेहिं तु ॥

कालिकश्रुते पूर्वगते च यद्वा यस्मिन्काले श्रुतं प्रचरति तस्मिन् । अत्रार्थेन च यदा निर्मातो भवति यदि च तस्य ग्रहणधारणाशक्तिस्तथाविधा समस्ति तथाविधानि ततो दर्शनदीपकानि सम्यग्दर्शनज्ञानसहकारीणि यानि सम्मत्यादीनि शास्त्राणि तेषां हेतोरन्यं गणं गच्छति अथवा एभिः कारणैर्गच्छेत् ।

भिक्खूणा जहिं देसे, बोडिय थलिणिण्हएहि संसग्गी ।
ते सं पण्णवणाति, असहमाणो विसज्जिए गमणं ॥

यत्र देशे भिक्षुका बौद्धा बोटिका वा निह्नवा वा तेषां तत्र स्थली तत्र ते आचार्याः स्थितास्तैः सार्द्धमाचार्याणां संसर्गं प्रीतिरित्यर्थः ते च भिक्षुकादयः स्वसिद्धान्तं प्रज्ञापयन्ति स चाचार्यो दाक्षिण्येन तर्कग्रन्थाप्रवीणतया वा तूष्णीकस्तिष्ठति तां च तदीयां प्रज्ञापनामसहमानः कश्चिद् द्वितीयश्चिन्तयति अन्यं गणं गत्वा दर्शनप्रभावकानि शास्त्राणि पठामि येनामून् निरुत्तरान् करोमि एवं विचिन्त्य स तथैव गुरुनापृच्छ्य तैर्विसर्जितो गच्छति । इदमेव भावयति ।

लोए वि अपरिवाओ, भिक्खुगमादी य गाढतरं मंदिति ।
विप्परिणामंति सेहा, अ भामिज्जंति सड्ढा य ॥

भिक्षुकादीनां स्वसिद्धान्तशिरः उद्घाट्य प्ररूपयतामपि यदा सूरयो न किमपि ब्रुवते ततो लोके परिवादो जातः । एते श्वेतभिक्षवो न किमपि जानते अमी तु सौगताः सर्वमेव ब्रुवन्ते । एवं च ते भिक्षुकादयः परिवादं श्रुत्वा गाढतरं जैनशासनं च मदयन्ति शैक्षाश्च विपरिणमन्ति श्राद्धाश्च रक्तपटोपासकैरपभ्राज्यन्ते एतैश्च ते भिक्षवो बहुशिरोमणयश्चाकारिणो यद्यस्ति सामर्थ्यं ततोऽस्माकमुत्तरं प्रयच्छन्तु । अथवा तैर्भिक्षुकादिभिः स्थालिकायामाचार्यस्यापि घण्टको नियतो वर्त्तते ।

सो एसगिद्धो न थलिए, परतित्थियतज्जणं असहमाणो ।
गमणं बहुस्स जेत्तं, आगमणं वादिपरिसाओ ॥

स आचार्यो रसगृद्धः स्निग्धमधुराहारलम्पटः सामर्थ्ये सत्यपि न किञ्चिदुत्तरं प्रयच्छति एवमादिकां परतीर्थिकतर्जनामसह-

मानः शिष्यः आचार्ये विधिना पृष्ट्वा निर्गतोऽन्यगणगमनं कृतवान् । तत्र च तर्कशास्त्राणि श्रुत्वा बहुश्रुतस्तत्र तस्य सजढे । ततो भूयः स्वगच्छे आगमनम् । आगतेन च पूर्वमाचार्यः रुष्टव्यास्ततोऽन्यस्यां वसतौ स्थित्वा या तत्र वादमार्गकुशला पर्षत् तां परिचितां कृत्वा राज्ञो महाजनस्य च पुरतः परतीर्थिकान् निष्पिष्टप्रश्नव्याकरणान् करोति ।

चोयपरायणकुविया, जति पडिसेहंति साहु लट्ठं च ।
अह वि अणुगओ अम्हं, मासपवत्तं परिहवेह ॥

चोदे पराज्ञापने कुपिताः सन्तो यदि ते भिक्षुकादयः आचार्यस्य त वएटं प्रतिषेधन्ति ततः साधु सुन्दरं लष्टं वा प्रीष्टं जातमिति । अथ तत्र कोऽपि ब्रूयात् एतस्य को दोषश्चिरमनुगत एषोऽस्माकं मा पूर्वप्रवृत्तं दातव्यमस्य परिहापयत तत्र को विधिरित्याह ।

काऊण पद पणामं, छेदसुत्तस्स दलाह पडिपुच्छं ।
अणुत्थ वसहिमगणं, तेसिं च णिवेदणं काउं ॥

गुरोः पदकमलप्रणामं कृत्वा वक्तव्यं छेदे श्रुतस्य प्रतिपृच्छां मम प्रयच्छत । अत्र चागीतार्थाः शृण्वन्ति ततोऽन्यस्यां वसतौ गच्छावः एवमुक्तोऽपि यदि तस्या वसतेर्न निर्गच्छति तत्राख्यायिकादिकथापनेन चिरं रात्रौ गुरवो जागरणं कारापणीयास्तेषां चागीतार्थानां वयमाचार्यमेव नेष्यामो भवद्भिर्बोलो न कर्त्तव्य । इति निवेदनं कृत्वा गन्तव्यमिदमेव व्याचष्टे ।

सद्दं च हेउसत्थं, अहिज्जिओ छेदसुत्तणट्ठं मे ।
तत्थ य मा सुत्तत्था, सुणिज्ज तो अन्नहिं वसिमो ॥

शब्दशास्त्रमिन्द्रादिकं हेतुशास्त्रं सम्मत्यादिकं शास्त्रमध्ययनस्य च्छेदसूत्रं निशीथादिकं सूत्रतोऽर्थतस्तदुभयतो वा मम नष्टं तस्य प्रतिपृच्छां मे प्रयच्छत । अत्र च वसतावश्रुतार्थाः शैक्षा अपरिणामका वा न शृणुयुरतोऽन्यस्यां वसतौ वसाम एवमन्यव्यपदेशेन निष्काशयति । अथ तस्या वसतेः शैक्षादा निर्गन्तु नेच्छति ततोऽयं विधिः ।

खित्तारक्खिणिवेयण, इयरे पुव्वं तु गाहिया समणा ।
जग्गविओ मो अचिरं, जह णिज्जंतो ण चेतेति ॥

आरक्षिको दण्डपाशिकस्तस्य निवेदनं क्रियते ( खित्तंति ) अस्माकं क्षिप्तचित्तः साधुः समस्ति तं वयमर्द्धरात्रौ वैद्यसकाशे नेष्यामः स यदि नीयमानो म्रियेऽहं म्रियेऽहमित्यारटेत् ततो युष्माभिर्न किमपि भणनीयमितरे अगीतार्थाः श्रमणाः पूर्वमेव ग्राहिता कर्त्तव्याः वयमाचार्यमेनं नेष्यामो मा बोलं कुरुध्वम् । स चाचार्यश्चिरमाख्यायिकाः कथापयित्वा जागरितः सन् यदा निर्भरं सुप्तो भवति तदा नीयते यदा नीयमानो न किञ्चिच्चेतयति ।

णिण्हयसंसग्गीए, बहुसो भणं तु वेहसो कुणइ ।
तुह किंति वात्ति परिणम, गतागतेणी णिओ विहिणा ॥

अथ निह्नवानां संसर्ग्याचार्यो न निर्गच्छति बहुशो भण्यमानोऽप्युपेक्षां कुरुते अथवा ब्रूयात् यद्यहं निह्नवसंसर्गं करोमि ततो भवतो दुःखयति ब्रज त्वं यत्र गन्तव्यमेवं परिणामं गुरूणां ज्ञात्वा शिष्येण गतागतेनान्यं गणं गत्वा शास्त्राण्यधीत्य भूयः आगतेन निह्नवान् पराजित्याचार्यो विधिना अनन्तरोक्तेन निष्काशितः कर्त्तव्यः ।

एस विहिविसज्जिए, अविसज्जियअहुगदोसआणाई ।
तेसिं पि हुंति लहुगा, अविहिविही सो इमो होइ ॥

एष विधिर्गुरुणा विसर्जिते मन्तव्यः अविसर्जितस्य तु गच्छतः चतुर्लघु दोषा आज्ञादयः । तेषामपि प्रतीच्छतां चतुर्लघुकाः एषो विधिरुक्तोऽतोऽविधिना गन्तव्य सचाऽयं विधिर्भवति ।

दंसणमत्थे पक्खो, आयरिय उवज्झाय सेसगाणं च ।
एक्केकपंचदिवसे, अहवा पक्खेण सव्वे वि ॥

दर्शनप्रभावकाणां शास्त्राणामर्थाय निर्गच्छन् एकं पक्षमापृच्छन् कालो भवति तद्यथा । आचार्य पञ्च दिवसानापृच्छयते यदि न विसर्जयति तत उपाध्यायोऽपि पञ्च दिवसान् शेषसाधवोऽपि पञ्च दिवसान् अथवा पक्षेण सर्वेऽपि पृच्छ्यन्ते । किमुक्तं भवति दिने दिने किन्तु सर्वेऽपि पृच्छ्यन्ते यावत् पक्षः पूर्ण इति ।

एस विही आगत तु, पडिच्छअपडिच्छणा भवे लहुगा ।
अहवा इमेहिं आगम, एगादिपडिच्छए गुरुगा ॥
एगे अपरिणए य, अप्पाहारे य थेरए ।
गिलाणे बहुरोगी य, मंदधम्मे य पाहुडे ॥
एतारिसं विउस्सज्ज, विप्पवासो न कप्पई ।
सीसपडिच्छायरिए, पायच्छित्तं विहिज्जइ ॥
विइयपदमसंविग्गे, संविग्गे चेव कारणागाढे ।
नाऊण तस्स भावं, होइ उ गमणं अणापुच्छा ॥

गाथाचतुष्टयमपि गतार्थं गत दर्शनार्थं गमनम् ।

अथ चारित्रार्थमाह ।

चारित्तट्ठं देसे (दुविहा) एसणदोसा य इत्थिदोसा य ।
गच्छंति य सीयंते, आयसमुत्थेहिं दोसेहिं ॥

चारित्रार्थं गमनं द्विधा देशदोषैरात्मसमुत्थदोषैश्च देशदोषा द्विविधा एषणा दोषा स्त्रीदोषाश्च । आत्मसमुत्था अपि द्विधा गुरुदोषा गच्छदोषाश्च । तत्र गच्छो यथात्मसमुत्थैश्चक्रवालसामाचारीवितथकरणलक्षणैर्दोषैः सीदते तत्र एकमापृच्छ्यास्ते तत ऊर्द्ध्वं गच्छति । इदमेव व्याचष्टे ।

जहिं यं एसणदोसा, पुरकम्माई ण तत्थ गंतव्वं ।
उदगपउरो व दोसो, जहिं व चरिगाऽऽसंकिण्णो ॥

यत्र देशे पुरःकर्मादय एषणादोषाः भवेयुस्तत्र न गन्तव्यं यो वा उदकप्रचुरो देशः सिन्धुविषयवत् यो वा चरिकादिभिः परिव्राजिकाकापालिकी नवनिकादिभिर्बहुमोहादिभिराकीर्णो विषयस्तत्रापि न गन्तव्यम् । अथाशिवादिभिः कारणैस्तत्र गता भवेयुस्ततः

असिवाईहिं गता पुण, तक्कज्जसमप्पिया तओ णिंति ।
आयरियमणिंते पुण, आपुच्छिउं अप्पणा णिंति ॥

अशिवादिभिर्दुर्भिक्षपरचक्रादिभिः कारणैस्तत्र गता अपि ( तक्कज्जसमप्पियत्ति ) प्राकृते पूर्वपदनिपातस्याभिमतत्वात् समापिततत्कार्याः संयमक्षेत्रे यदा अशिवादीनि स्फिटितानि भवन्तीति भावः । तदैते असंयमक्षेत्रान्निर्गच्छन्ति यद्याचार्याः केनापि प्रतिबन्धेन सीदन्तो न निर्गच्छेयुस्ततो ये एको द्वौ बहवो वा असीदन्तस्ते गुरुमापृच्छ्यात्मना निर्गच्छन्ति तत्र चाऽयं विधिः ।

दो मासे एसणाए, इत्थि वज्जेज्ज अट्ठ दिवसाई ।
गच्छम्मि होइ पक्खो, आयसमुत्थेगदिवस तु ॥

एषणायामशुद्ध्यमानायां यतनया अनेषणीयमपि गृह्णन् द्वौ मासौ गुरुमापृच्छन् प्रतीक्षते । अथ स्त्री शय्याप्रभृतिका उपसर्गयति । अथात्मना शय्यातरादिः स्त्रियं सन्यस्मि कायां वा प्रतिषे-

इमिच्यामनीवाप्युपपन्न उभयं वा परस्परमभ्युपपन्न ततो यदा ऽऽचार्यसंनिहितस्तदा तमापृच्छ्य गच्छति अथासंनिहित संज्ञाभूम्यादौ गत आचार्यस्तदा एवमेवानापृच्छ्यागच्छति अपरं वा संनिहितसाधुं भणति मम वचनेन गुरूणामापृच्छनं निवेदनीयम् "एयविहिमागयंतु" गाहा 'एय अपरिणए य' गाहा "एया रिसं विउस्सज्ज" गाहा । इति गाथात्रयमपि गतार्थं भवेत्किंकारणं येन न पृच्छेत् ।

बितियपदमसंविग्गे, संविग्गे चेव कारणागाढे ।

नाऊण तस्स भावं, अप्पणा भावे अणापुच्छा ॥

द्वितीयपदमत्रोच्यते । आचार्यादिरसंविग्नो भवेत् अथवा संविग्न परमहिंदग्गाढिकमागाढकारणमवलम्ब्य न पृच्छेत् । तस्य च गुरोर्भावस्तु चिरेणापि न विसर्जयतीति लक्षणं ज्ञात्वा आत्मीयं च भावमर्दर्मिह तिष्ठतावश्यं विनश्यामीति ज्ञात्वा अनापृच्छ्यापि व्रजेत् । अथ गुरोश्चारित्रे सीदतो विधिमाह ।

सज्झायरकप्पट्ठी, चरित्तठवणा अभिगया खरिया ।

सारूविओ गिहत्थो, सो वि उवाएण हरियव्वो ॥

इंग्यानरस्य कल्पस्थिकायां आचार्येण चारित्रस्य स्थापना कृता तां प्रतिसेवन इति भावः तस्यां चारित्रस्थापनायां जातायां खक्करिका वा काचिदभिगता जीवाद्यधिगमोपेनाश्राविकेत्यर्थस्तस्यामाचार्योऽभ्युपपन्नः स च चारित्रवर्जितो वेषधारी भवेत् सारूपिको वा गृहस्थो वा उपलक्षणत्वात्सिद्धपुत्रको वा तत्र मुण्डितशिरा शुक्लवासःपरिधायी कच्छामवध्नन् अभार्यको भिक्षां हिण्डमान सारूपिक उच्यते । यस्तु मुण्डः सशिखाको वा सभार्यक ससिद्धपुत्रकः एवमेषामन्यतर उपायेन हर्त्तव्यः । कथमिति चेदुच्यते पूर्वं तावद्गुरवो भण्यन्ते वयं युष्माभिरहिता अनाथा भवत । प्रसीद गच्छामोऽपर क्षेत्रं परमुक्ते यदि नेच्छन्ति ततो यस्यां स प्रतिबद्धः सा प्रज्ञाप्यते एष बहूनां साधूनामाधारः एतेन विना गच्छस्य ज्ञानादीनां परिहाणिरतो मा नरकादिकं संसारमात्मनो वर्द्धय यदि सा इच्छति ततः सुन्दरमथ न तिष्ठति ततो विद्यामन्त्रादिभिरावर्त्त्यते । तदभावे केचयिका अपि तस्या दीयन्ते । गुरुश्च क्रमेण रात्रौ हर्त्तव्यः । एवं तावद्भिक्षुमङ्गीकृत्य विधिरुक्तः ।

( सूत्रम् ) गणावच्छेइए जे गणाओ वक्कम्म इच्छिज्जा अन्नं गणं उवसंपज्जित्ताणं विहरित्तए कप्पति णो से कप्पइ अणापुच्छित्ता आयरियं वा जाव अन्नं गणं उवसंपज्जित्ताणं विहरित्तए । कप्पइ णो आउच्छित्ता आयरियं वा जाव विहरित्तए य से वितरंति एव से कप्पइ जाव विहरित्तए ते य से णो वितरंति एव से णो कप्पइ जाव विहरित्तए २१ आयरिय उवज्झाए य गणाओ अवक्कम्म इच्छेज्जा अन्नं गणं उवसंपज्जित्ताणं विहरित्तए कप्पइ आयरिय आयरियस्स आयरियगणावच्छेइयस्स गणावच्छेइयत्तं निक्खिवित्ता अन्नं गणं उवसंपज्जित्ताणं विहरित्तए उवज्झायत्तं णिक्खिवित्ता अन्नं गणं उवसंपज्जित्ताणं विहरित्तए । णो से कप्पइ अणापुच्छित्ता आयरियं वा जाव अन्नं गणं उवसंपज्जित्ताणं विहरित्तए कप्पति से आपुच्छित्ता जाव विहरित्तए ते य से वितरंति एवं से कप्पति अन्नं गणं उवसंपज्जित्ताणं विहरित्तए ते से णो वियरंति । एवं से णो कप्पति । अन्नं गणं उवसंपज्जित्ताणं विहरित्तए । २२ ।

अस्य सूत्रद्वयस्य व्याख्या प्राग्वत् नवरं गणावच्छेदिकत्वमाचार्योपाध्यायत्व च निक्षिप्य गन्तव्यमिति विशेष । अथ भाष्यम् ।

एमेव गणावच्छे, गणिआयरिए वि होइ एमेव ।

नवरं पुण णाणत्तं, ते नियमा हुंति वत्ताओ ॥

एवमेव भिक्षुवत् गणावच्छेदकस्य ज्ञानदर्शनचारित्रार्थमन्यं गणं गच्छतो विधिर्द्रष्टव्यः । गणिन उपाध्यायस्याचार्यस्य चैवमेव विधिः नवरं पुनरिदं नानात्वं नियमात्ते गणावच्छेदिकादयो व्यक्ता भवन्ति नो अव्यक्ता ॥

एमेव गमो नियमा, निग्गंथीणं पि होइ नायव्वो ।

णाणट्ठ जो उ भेदो, सचित्तं ण अप्पिणो जाव ॥

एष एव भिक्षुसूत्रोक्तो गमो निर्ग्रन्थीनामप्यपरं गणमुपसंपद्यमानानां ज्ञातव्यः नवरं नियमेनैव ताः ससहायाः यः पुनर्ज्ञानार्थं न आचार्यिकां नयति स यावदद्यापि न वाचनाचार्यस्यार्पयति तावत्सचित्तादिकं तस्यैवाभवति अर्पितास्तु पुनर्वाचनाचार्यस्याभाव्यं कः पुनस्तां नयतीत्याह ।

पंचण्हं एगयरे, उग्गहवज्जं तु लभति सच्चित्तं ।

आपुच्छ अट्ठपक्खे, इत्थीसत्थेण संविग्गो ॥

पञ्चानामाचार्योपाध्यायप्रवर्त्तकस्थविरगणावच्छेदकानामेकतर संयतीर्नयति तत्र च सचित्तादिकं परक्षेत्रावग्रहवर्जं स एव लभते निर्ग्रन्थी च ज्ञानार्थं व्रजन्ती अष्टौ पक्षानापृच्छति । तत्राचार्यमेकं पक्षमापृच्छति यदि न विसर्जयति तत उपाध्यायं वृषभं गच्छं चैवमेव पृच्छति संयतीवर्गेऽपि प्रवर्त्तिनी गणावच्छेदिकाभिषेकाशेषसाध्वीवर्गधाक्रमेकैकं पक्षमापृच्छति । ताश्च स्त्रीसार्थेन समं संविग्नेन परिणतवयसा साधुना नेतव्याः ।

(सूत्रम्) भिक्खू गणाओ अवकम्म इच्छेज्जा अन्नं गणं संभोगपडियाए उवसंपज्जित्ताणं विहरित्तए नो से कप्पइ अणापुच्छित्ता आयरियं वा जाव अन्नं गणं संभोगपडियाए उवसंपज्जित्ताणं कप्पइ से आपुच्छित्ता आयरियं वा जाव विहरित्ता ते य से वियरंति । एवं से कप्पइ जाव विहरित्तए । ते य से न वियरिज्जा एव से नो कप्पइ जाव विहरित्तए जत्युत्तरियं धम्मविणयं लभेज्जा । एवं से कप्पइ अन्नं गणं संभोगे पडियाए उवसंपज्जित्ताणं विहरित्तए जत्युत्तरियं धम्मविणयं नो लभेज्जा एवं से नो कप्पइ अन्नं गणं जाव विहरित्तए ॥

अस्य व्याख्या प्राग्वत् नवरं सांभोगिकमेकस्यां समुद्देशिनादिरूपत्वानन्यनिमित्तं "जत्युत्तरियमित्यादि" यत्र उत्तरं प्रधानतरं धर्मविनयं स्मारणधारणादिरूपां धार्मिकीं भिक्षां लभेत एव ( से ) तस्य कल्पते अन्यं गणमुपसंपद्य विहर्तुं यत्रोत्तर धर्मविनयं नो लभेत एवं ( से ) तस्य नो कल्पते उपसंपद्य विहर्तुमिति सूत्रार्थः । अथ भाष्यम् ।

संजोगो वि हु तिहि का-रणेहिं नाणट्ठदंसणचरित्ते ।

संकमणे चउभंगो, पढमो गच्छम्मि सीयंते ॥

सम्भोगोऽपि त्रिभिः कारणैरिष्यते तद्यथा ज्ञानार्थं दर्शनार्थं चारित्रार्थं च। तत्र ज्ञानार्थं दर्शनार्थं च यस्योपसंपदं प्रतिपन्नस्त- स्मिन् सूत्रार्थदानादौ सीदति गणान्तरे सङ्क्रमणे स एव विधेयः पूर्वसूत्रे भणितश्चारित्रार्थं तु यस्योपसंपन्नस्तत्र चरणकरणक्रि- यायां सीदति चतुर्भङ्गी भवति। गच्छः सीदति नाचार्यः ।१। आचा- र्यः सीदति न गच्छः ।२। गच्छोऽप्याचार्योऽपि सीदति।३। न गच्छो- नाचार्य इति । ४ । अत्र प्रथमो भङ्गो गच्छे सीदति मन्तव्यस्त- त्र च गुरुणा स्वयं वा गच्छस्य नोदना कर्त्तव्या कथं पुनः स गच्छः सीदेदित्याह ।

पडिलेहादिपमिज्जवेक्खण,निक्खिआदाणविणयसज्झाए।
आलोगठवणभत्त-ट्ठभासपडलसेज्जातराईसु ॥

ते गच्छसाधवः प्रत्युपेक्षणां कालेन कुर्वन्ति न्यूनातिरिक्तादिदोषै- र्विपर्यासेन वा प्रत्युपेक्षन्ते गुरुग्लानादीनां वा न प्रत्युपेक्षन्ते नि- ष्कारणादिना वा वर्तयन्ति दण्डकादिकं निक्षिपन्त आददतो वा न प्रत्युपेक्षन्ते न वा प्रमार्जयन्ति दुष्प्रत्युपेक्षित दुष्प्रमार्जितं वा कु- र्वन्ति यथार्हं विनयं न प्रयुञ्जते। स्वाध्यायं सूत्रपौरुषीं वार्थपौरुषीं वा न कुर्वन्ति । अकाले अस्वाध्याये वा कुर्वन्ति पाक्षिकादिषु आलोचनां न प्रयच्छन्ति । अथवा आलोचयन्ति " ठाणे दिसि पगासेण वा" इत्यादिकं सप्तविधमालोकं न प्रयुञ्जते संखडीं वा आलोकान्त स्थापना कुलानि स्थापयन्ति भक्तार्थं मण्डल्यां समुद्देशनं न कुर्वन्ति गृहस्थभाषाभिर्भाषन्ते सावद्यं वा भाषन्ते पटलकेऽप्यानीतं भुञ्जते । शय्यातरपिण्डं भुञ्जते आदिग्रहणेनो- द्गमाद्यशुद्धं गृह्णन्ति । इतरेषु गच्छस्य सीदतो विधिमाह ।

चोयावेई गुरुणा, विसीयमाणं गणं सयं वावि ।
आयरियं सीअंतं, सयं गणेणं व चोयावे ॥

प्रथमभङ्गे सामाचार्यां विषीदन्तं गच्छं गुरुणा नोदयति । अथ वा स्वयमेव नोदयति । द्वितीयभङ्गे आचार्यं सीदन्तं स्वयं वा गणेन वा नोदयति ।

दुन्नि वि विसीयमाणे, सयं व वा जे तहिं न सीयंति ।
ठाणं ठाणासज्ज, अणुलोमाईहिं चोएंति ॥

तृतीयभङ्गे गच्छाचार्यौ द्वावपि सीदन्तौ स्वयमेव नोदयति ये वा तत्र न सीदन्ति तैर्नोदयति । किं बहुना स्थानं स्थानमा- साद्य प्राप्यानुलोमादिभिर्वचोभिर्नोदयति। किमुक्तं भवति । आ- चार्योपाध्यायादिकं भिक्षुक्षुल्लकादिकं वा पुरुषवस्तु ज्ञात्वा यस्य यादृशी नोदना योग्या यो वा खरसाध्यो मृदुसाध्यः क्रूरोऽक्रूरो वा यथा नोदनां गृह्णाति तं तथा नोदयेत् ।

जाणमाणे जणाविंते, अयाणमाणम्मि पक्खो उक्कोसो ।
लज्जए पंच तिन्नि व, तुह किंति विपरिणए विवेगो ॥

गच्छमाचार्यमुभयं वा सीदन्तं स्वयं भणेत् अन्यैश्च भाणय- त्यास्ते यत्र न जानाति एते भण्यमाना अपि नोद्यमं करिष्यन्ति तत्रोत्कर्षतः पक्षमेकं तिष्ठति गुरुः पुनः सीदन्तं लज्जया गौरवेण वा जानन्नपि पञ्च त्रीन् वा दिवसान् अभणन्नपि शुश्रूषते। अथा- भाष्यमाणो गच्छो गुरुरुभयं भणेत् । भवतः किं दुःखयति यदि वयं सीदामस्तर्हि वयमेव दुर्गतिं गमिष्यामः । एवं विधिना भावेनैव तेषां परिणतेर्विवेकस्ततः परित्यागो विधेयस्ततश्चा- न्यं गणं सङ्क्रामति तत्र चतुर्भङ्गी संविग्नः संविग्नगणं संक्रामति१ संविग्नोऽसंविग्नम् २ असंविग्नः संविग्नम् ३ असंविग्नोऽसं- विग्नम् ४ तत्र प्रथमो भङ्गस्तावदुच्यते ।

संविग्गविहाराओ, संविग्गा दुन्नि एज्ज अन्नयरो ।
आलोइयम्मि सुद्धो, तिविहो उ विहि मग्गणा नवरिं ॥

संविग्नविहारात् संविग्नौ द्वौ अन्यतरो गीतार्थोऽगीतार्थो सं- विग्ने गच्छे समागच्छेतां स च गीतार्थोऽगीतार्थो वा यावतो दि- वसान् संविग्नेभ्यः स्फिटितस्तद्दिनादारभ्य सर्वमप्यालोचयति आलोचिते च शुद्धः । नवरं त्रिविधोपधेर्यथाकृतादिरूपस्य मा- र्गणा कर्त्तव्या । इदमेव व्याचष्टे ।

गीयमगीतो गीते, अप्पडिबद्धे ण होइ उवघातो ।
अगीयत्थस्स वि एव, जेण सुता ओहनिज्जुत्ती ॥

स संविग्नो गीतार्थोऽगीतार्थो वा । यदि गीतार्थो व्रजिका- दिषु अप्रतिबद्ध आयातः ततः उपधेरुपघातो न भवति तदा प्रायश्चित्तम् । अगीतार्थस्य येन जघन्यतः ओघनिर्युक्तिः श्रुता त- स्याप्येवमेवाप्रतिबध्यमानस्य नोपधिरुपहन्यते ।

गीयाण व मिस्साण व, दुण्ह वयंताण वइयमाईसु ।
पडिवज्जंताणं पि हु, उवहि तह गेण्ह चारुवणो ॥

द्वयोर्गीतार्थयोर्गीतार्थागीतार्थयोर्मिश्रयोर्वा व्रजतोर्व्रजिकादिषु प्रतिबध्यमानयोरप्युपधिर्नोपहन्यते न वा आरोपणा प्रायश्चित्तं भवति। एवमेकोऽनेके वा विधिना समागता यत्प्रभृति गणान्निर्ग- तास्तत आरभ्यालोचना वदन्ति। अथ त्रिविधोपधिमार्गणामाह।

आगंतु जहागमयं, वत्थव्व अहाकडस्स असईए ।
मेलिंति मज्झिमेहिं, मा गारव कारणमगीए ॥

तस्य गीतार्थस्यागीतार्थस्य वा त्रिविध उपधिर्भवेत् । तद्यथा यथाकृतोऽल्पपरिकर्मा सपरिकर्मा वा वास्तव्यानामप्येवमेव त्रिविध उपधिर्भवति । तत्र यथाकृतो यथाकृतेन मील्यते अल्प- परिकर्मा अल्पपरिकर्मणा सपरिकर्मा सपरिकर्मणा। अथ वास्त- व्यानां यथाकृतो नास्ति ततः आगन्तुकस्य यथाकृतं वास्तव्य- मध्यमैरल्पपरिकर्मभिः सह मीलयन्ति किं कारणमिति चेदत आह । माऽसौ मीलितः सन् अगीतार्थस्य मदीय उपधिरुत्तम- साम्भोगिकः अतोऽहमेव सुन्दर इत्येवं गौरवकारणं भवेदिति ।

गीयत्थे ण मिलिज्जइ, जो पुण गीओ वि गारवं कुणइ ।
तस्सुवही मेलिज्जइ, अहिगरणअपच्चओ इहरा ॥

गीतार्थो यद्यगौरवी ततस्तदीयो यथाकृतः प्रतिग्रहो वास्त- व्ययथाकृताभावे ऽल्पपरिकर्मभिः सह न मीलयन्ति किं तु उ- त्तमसांभोगिकाः क्रियन्ते। यस्तु गीतार्थोऽपि गौरवं करोति तस्य कृते वास्तव्याल्पपरिकर्मभिः सह मील्यते किं कारणमिति चे- दत आह ( इहरत्ति ) यदि यथाकृतपरिभोगेन परिभुज्यते तदा केनाप्यजानता अल्पपरिकर्मणा समं मेलित इति स गीतार्थो- ऽधिकरणमसंखडं कुर्यात् किमर्थं मदीय उत्कृष्टोपधिरल्पकेन सह मीलित इति। अप्रत्ययो वा शैक्षाणां भवेत्। अयमेतेषां सकाशादु- द्युक्ततरविहारी येनोपधिमुत्कृष्टं परिभुङ्क्ते एते तु हीनतरा इति ।

एवं खलु संविग्गा-संविग्गे संकमं करेमाणे ।
संविग्गासंविग्गे, संविग्गे वा वि संविग्गे ॥ ३ ॥

एवं खलु संविग्नस्य संविग्नेषु संक्रमं कुर्वाणस्य विधिरुक्तः । अथ संविग्नस्यासंविग्नेषु संक्रामतोऽसंविग्नस्य वा संविग्नेषु संक्रामतो विधिरुच्यते । तत्र संविग्नस्यासंविग्नसंक्रमणे ताव- दिमे दोषाः ।

सीहगुहं वग्घगुहं, उदहिं व पलित्तं व जो पविसे ।

अनिवं ओमोयरियं, धुवं मे अप्पा परिच्चत्तो ॥

सिंहगुहां व्याघ्रगुहामुदधिं समुद्रं प्रदीप्तं वा नगरादिकं य प्रविशति अशिवमवमौदर्यं वा यत्र देशे तत्र य प्रविशति तेन धर्मात्मा परित्यक्तः ।

चरणकरणप्पहीणे, पासत्थे जो उ पविसए समणो ।

जतमाणे य पहिउं, सो ठाणे परिच्चयइ तिण्णि ॥

एवं सिंहगुहादिस्थानीये चरणकरणप्रहीणे पार्श्वस्थे य श्रमणो यतमानान्संविग्नान् प्रहाय परित्यज्य प्रविशति स मन्दधर्मा त्रीणि स्थानानि ज्ञानदर्शनचारित्ररूपाणि परित्यजति । अपि च सिंहगुहादिप्रवेशे एकमविकं मरणं प्राप्नोति पार्श्वस्थेषु पुनः प्रविशन्ननेकानि मरणानि प्राप्नोति ।

एमेव अहाछंदे, कुसीलओसन्ननीयसंसत्ते ।

जं निग्गए परिच्चयइ, नाणं तह दंसणचरित्तं ॥

एवमेव पार्श्वस्थवत् यथाच्छन्देषु कुशीलावसन्ननित्यवासिसंसक्तेषु च विशतो मन्तव्यम् । यच्च त्रीणि स्थानानि परित्यजतीत्युक्तं तज्ज्ञानं दर्शनञ्चारित्रं चेति द्रष्टव्यं गतो द्वितीयो भङ्गः ।

अथ तृतीयभङ्गमाह ।

पत्तेयं पत्तयाणं, संविग्गो सकम्मं करेमाणो ।

आलोइए विवेगो, दोसु असंविग्गसच्छंदो ॥

पार्श्वस्थावसन्नकुशीलसंसक्तयथाच्छन्दानामेकतरः संविग्नेषु स्वकर्म कुर्वन् प्रथममालोचनां ददाति । तत आलोचितेऽविशुद्धोपधेर्विवेकं करोति स च यदि चारित्रार्थमुपसम्पद्यति ततः प्रतीच्छनीयो यस्तु द्वयोर्ज्ञानदर्शनयोरर्थयोः संविग्नः उपसम्पद्यते तस्यास्वच्छन्दः स्वाभिप्रायो नासौ प्रतीच्छनीय इति भावः ।

पत्तेगतरे गीये, अगुरुवियवते जयंति एतम्मि ।

जं उवहिं उप्पाए, संभोइयसेसमुज्झंति ॥

तेषां पञ्चानां पार्श्वस्थादीनामेकतर आगच्छन् यदि गीतार्थः स्वतः स्वयमेव महाव्रतान्युच्चार्यारोपितव्रतो यतमानो प्रजिकादावप्रतिबध्यमानो मार्गे यमुपधिमुत्पादयति स सांभोगिक (संभमुज्झंति त्ति) य प्राक्तन पार्श्वस्थोपधिर्विशुद्धस्तं परिष्ठापयति य पुनरगीतार्थस्य उपधिस्तस्य चिरंतनोऽभिनवोत्पादितो वा सर्वोऽपि परित्यज्यते ।

तेषु चाऽयमालोचनाविधिः ।

पासत्थाई मुंडिए, आलोयणा होइ दिक्खपभिइं तु ।

संविग्गपुराणे पुण, जप्पभिइं चेव ओसण्णो ॥

यः पार्श्वस्थादिभिरेव मुण्डितः प्रव्राजितस्तस्य दीक्षादिनादारभ्यालोचना भवति यस्तु पूर्वं संविग्नः पश्चात्पार्श्वस्थो जातस्तस्य संविग्नपुराणस्य यत्प्रभृत्यवसन्नो जातस्तद्दिनादारभ्यालोचना भवति ।

( ८ ) गणावच्छेदको गणादपक्रम्यैकाकी अन्यं गणमुपसंपद्य संभोगप्रतिज्ञया विहर्तुम् ।

( सूत्रम् ) गणावच्छेइए य गणाओ अवक्कम्म इच्छेज्जा अन्नं गणं संभोगपडियाए उवसंपज्जित्ताणं विहरित्तए णो से कप्पइ गणावच्छेइयत्तं अणिक्खिवित्ता संभोगपडियाए जाव विहरित्तए कप्पति । से गणावच्छेइयत्तं णिक्खिवित्ता जाव विहरित्तए णो से कप्पइ अणापुच्छित्ता आयरियं वा जाव विहरित्तए कप्पति से आपुच्छित्ता आयरियं वा जाव विहरित्तए ते य से वितरंति एवं से कप्पइ अन्नं गणं संभोगपडियाए जाव विहरित्तए तया से नो विहरंति एवं से णो कप्पइ जाव विहरित्तए जत्थुत्तरियं धम्मविणयं लभेज्जा एवं से कप्पति अन्नं गणं स जाव विहरित्तए । जत्थुत्तरियं धम्मविणयं णो लभेज्जा एवं से णो कप्पति अन्नं गणं स जाव विहरित्तए जत्थुत्तरियं धम्मविणयं णो लभेज्ज एवं से णो कप्पति जाव विहरित्तए । आयरिय उवज्झाए य गणादवक्कम्म इच्छेज्जा अन्नं गणं संभोगपडियाए जाव विहरित्तए णो से कप्पइ आयरिय उवज्झाए य गणं लभेज्जा एवं से णो अवक्कम्म इच्छेज्जा अन्नं गणं संभोगपडियाए जाव विहरित्तए णो से कप्पइ । आयरियउवज्झायत्तं अणिक्खिवित्ता अन्नं गणं स जाव विहरित्तए कप्पति से आयरिय उवज्झायत्तं णिक्खिवित्ता जाव विहरित्ता णो से कप्पति अणापुच्छित्ता आयरियं वा जाव विहरित्तए कप्पइ से आपुच्छित्ता आयरियं वा जाव विहरित्तए । ते य से विहरंति । एवं से कप्पति जाव विहरित्तए ते य से णो विहरंति एवं से णो कप्पति जाव विहरित्तए जत्थुत्तरियं धम्मविणयं लभेज्जा एवं से कप्पइ जाव विहरित्तए जत्थुत्तरियं धम्मविणयं णो लभेज्जा एवं से नो कप्पति जाव विहरित्तए ।

अस्य सूत्रद्वयस्य व्याख्या पूर्ववत् । अथ भाष्यम् ।

एमेव गणावच्छेदिए, गणिआयरिए वि होइ एमेव ।

णवरं पुण णाणत्तं, एते नियमेण गीयाओ ॥

एवमेव गणावच्छेदिकस्य तथा गणिन उपाध्यायस्य आचार्यस्य च सूत्रं मन्तव्यं नवरं पुनरत्र नानात्वं एते नियमात् गीतार्था भवन्ति नागीतार्थाः । वृ० ४ उ० । नि० चू० ।

( सूत्रम् ) जे भिक्खू वुसियराइयाओ गणिओ अवुसाएइयं गणं संकमंतं वा साइज्जइ ॥ १५ ॥

वुसिरातिया गणातो, जे भिक्खू संकमे य अवुसिं वा ।

अवुसाराऽगणं वा, सो पावति आणमादीणि ॥ ३८५ ॥

वुसितितो वुसिरातियं चउभंगो कायव्वो चउत्थभंगो अवत्थुते तियभंगे किं पडिसेहो आचार्य आह तत्थ णो पडिसेहो कारणे पुण पढमे भंगे उवसंपदं करेति सा य उवसंपया कालं पडुच्च तिविहा इमा ।

छम्मासे उवसंपदे, जहण्ण बारससमाउ मज्झिमिया ।

आवकहा उक्कोसो, पडिच्छसीसे तु जे जीवं ॥ ३५७ ॥

उवसंपदा गाहा जहण्णा मज्झिमा उक्कोसा जहण्णा छम्मासो मज्झिमा बारसवरिसे उक्कोसो जावज्जीवं एवं पडिच्छगस्स सिस्सस्स एगविहा चेव जावज्जीवं आयरियो ण मोत्तव्वो ।

छम्मासे य अपूरेंता, गुरुगा बारससमासु चउलहुगा ।

तेण परमासियत्तं, भणितं पुण आरतो कज्जे ॥ ३६० ॥

जेणं पडिच्छगेण छम्मासिता उवसंपया कता सो जति छम्मासे अपूरेत्ता जाति तस्स चउगुरुगा । जेण बारस वरिसा

कता तं अपूरेत्ता जोइ चउलहु । जेण जावज्जीवं उवसंपदा कता तस्स मासलहुं छम्मासाण परेण णिक्कारणे गच्छंतस्स मासलहुं । जेण वारससमा उवसंपदा कता तस्स वि छम्मासे अपूरेंतस्स चउगुरुआ चेव वारससमामातो परेण मासलहु चेव जेण जावज्जीवे उवसंपदा कता तस्स छम्मासे अपूरेंतस्स चउगुरुगा चेव तस्सेव वारससमाओ अपूरेंतस्स चउलहुगा एस सोही गच्छतो णितस्स भणिता ॥ नि० चू० ७० १९ ॥

(७) कुगुरौ सत्यन्यत्रोपसम्पत्

से भयवं जया णं गणिणा गच्छे तिविहेणं वोसिरिए विज्जा तया णं ते गच्छे आदरेज्जा जइ संविग्गभवित्ताणं जहु तं पच्छित्तमणुचरित्ताणं अन्नस्स गच्छाहिवइणो उवसंपज्जित्ता णं समग्गमणुसरेज्जा तओ णं आयरिज्जा अहाणं सच्छंदत्ताए तहेव चिट्ठे तओ णं चउविहसमवि समणसंघस्स बज्झत गच्छं मो आयरेज्जा । महा० – ७ अ० ।

( सामायिकसंयतादयः सामायिकसंयतत्वादिकं जहतः किमुपसंपद्यन्त इति संजयशब्दे ) ( समायिकार्थमन्यत्रोपसंपत्सामाइयशब्दे वक्ष्यते ) ( श्रुतमार्गसुखदुःखाद्युपसंपदमधिकृत्याऽऽभवद् व्यवहारः ववहारशब्दे वक्ष्यते )

उवसंपयाकप्प – उपसंपत्कल्प पुं० उपसंपद्विधौ,

> उवसंपदा य कप्पं, एत्तो उ समासतो वोच्छं ।
> दुविहम्मि आगमम्मि उ, पन्नवणा चेव आयरणता य ॥
> पन्नवणगहणअणुपा–लणा य उवसंपदा होति ।
> आगमहेतुं उवसंपदाउ, स य आगमो भवे दुविहो ॥
> सुत्तं अत्थो य तहा, पारगते तत्थ उवसंपा ।
> दो आयरियप्पे–रग कत्थ तहिं कुज्जा ॥
> जो निउणतरं भासति, अह निउणं दो वि जासंति पं० भा०

एयाणि उवसंपया कप्पो तत्थ गाहा दुविहम्मि सा दुविहा उवसंपया आगमनिमित्तं उवसंपज्जिज्जइ सुत्तनिमित्तं अत्थनिमित्तं वा अहवा ते आयरिया परूवेंतग सुत्तपयाणि उस्सग्गाववाएसु गाढं जाणंति अहवा गाढतरं तत्थ आचरणा पडिलेहणाइसु अहवा ते पन्नवणं धम्मकहाए अक्खेवणाइसु धम्मपन्नवणं निराग जाणंति तपि किरि सिक्खियव्वं धम्मकहिस्स वा गाहणा ते आयरिया गाहणाकुसला अणुयत्तंति वा ते आयरिया गिलाणाइसु कारणेसु अणुवालेंति वा सुत्तगुणाइ एवं परूवणाइ सपन्नो उवसंपज्जियव्वो एयव्वइरित्तो न उवसंपज्जियव्वो जइ वि गीयत्थो होइ जे पुण असंविग्गादयो उवसंपज्जइ परूवणाइसंपन्नंति काऊण गाहा वत्तणा सधणा वत्तणा णाम सुत्तस्स परियट्टणा अत्थस्स गुणणा संधणा सुत्तत्थाण पच्चुच्चकारणा गहणं अभिणवाणं सुत्तत्थाण चेव गाहा ततिया जो सो उवसंपन्न तओ सो गच्छं परिच्छइ सो वा गच्छेण परिच्छिज्जइ तयाओ निक्कारणे आमुंचति वच्चाइ चउगुणाणि वा निक्कारणे भुंवति मरवेंति वा य मज्जणाइ रूवाइ गहणनिक्खेवणा भवइ सोणेत्ति निक्खमणपवेसे आवासियमिसीहियाओ नत्थि सुत्तत्थमहुणयाणि वा न करेंति मोणेण छच्छति एयाणि उवसंपज्जमाणो न कुज्जा गच्छे वा एवमाइ नत्थि पच्छा सारणया वा विसग्गो वा जइ वत्तहाइनिमित्तमुवसंपन्नो न वत्तइ न संधइ आनिणयं वा न गेण्हइ सारिउं पच्छा विसग्गो जो पुण पामत्थाइ उवसंपज्जइ तत्थ गाहा सिंह सीमुद्द चरणकरण गाहा सिद्धं एमेव अहाछंदे सिरू को पुण अरिहो कत्थ उवसंपज्जियव्व भत्तोवहि तत्थेमे चत्तारि गच्छा एगो भत्तपाण देइ गिण्हइ वि । एगो देइ न गेण्हइ । एगो गेण्हइ न देइ । एगो न देइ न गेण्हइ । तत्थ पढमे उवसंपज्जियव्व सेसा नाणुन्नाया विइए लाभ न लब्भइ गिलाणाइसु कज्जेसु तइए भंगे गिलाणस्स से न कोइ किंचि करेइ अहवसहस्स मरणदोसा चउत्थो असेज्जएव्वं पढमे गुणा भत्तोवहिसयणासणाईसु गहणदाणे य हठगिलाणाइकज्जेसु अवरो परस्स एयाणि जत्थ कीरंति तत्थ अणुन्नाय गाहा सिरू च जो पुण गुरू आयरिय दुसइ कणयपुच्छियो असुयस्स आयरियस्स पास कीस नट्ठिओ सि न पढओ वा भणइ तस्स असुओ नाम दोसो अप्पियसज्झायाइ जइ य ते तस्स दोसा नत्थि ताहे नमावज्जइ ज दोस भणइ ज च असुरूस्स मूले अयमपज्जइ त च तय आवज्जइ । एव ता उवसंपज्जइ । एयाणि उवसंपयारिहो जइ असुरू असुगो नाम एयस्स दोसो अविणियइ त जइ पडिच्छइ ताहे छट्ठाणवाइ तट्ठाणमावज्जइ ज च असुरू रागे ए पडिच्छइ जे तस्स दोसा ते आवज्जइ वोसठि तिट्ठाणो नाम नाणदंसणचरित्ताणि केरिसो आयरियो अणरिहो उवसंपदं प्रति गाहा आहारे उच्यते जो आहारोवही उ अह लभिस्सामीति सगइ करेइ पडिच्छमाण च तनो लज्जामि अणरिहे वा तितिणियादओ वा चेतियसङ्गीए वा आकम्हिसमाकड्ढी काऊण वा चयति सो वि नोवसंपज्जियव्वो । जो पुण एगतनिज्जरट्ठी पचहिं ठाणेहिं वाएहिं सगहोवग्गह अव्वोच्छित्ती नयट्ठयाए सो उवसंपज्जियव्वा । वायणारिहो वि नाणदंसण अहत्थि भावा जाणणट्ठयाए वा पढए सो वायव्वो तस्स पुण वायणस्स एयाणि चेव आहारोवहिमाईणि लब्भंति एए चेव ठाणा वायणाइ वि जनयंति रागेण आमवट्ठारविजढ़ तित्थस्स अणुवमया इति कट्टु तस्स प्रकास च भवति गणहारिस्स आहारो एस उवसंपयाकप्पो पं० चू०

> उवसंपयसंकप्पो, सुगुरुसगासे गिहि असुत्तत्थो ।
> तदहिअगहणसमत्थो, अणुन्नाउ तेण सपज्जो ॥ ८६ ॥

उपसंपदानां सकल्पो व्यवस्था स्वगुरुसकाशे यथा संजय गृहीतसूत्रार्थ सन्नतत्प्रथमतया तदधिकग्रहणसमर्थः प्राङ् सन्नतु ज्ञातस्तेन गुरुणोपसंपद्यते विवक्षितसमीप इति गाथार्थ । तत्रापि ।

> सपरिणयपरिवारं, अप्परिवारं च णाउजाणावे ।
> गुरुमेसाविं सय विअ, एतदजावे ण धारिज्जा ॥ ८७ ॥

सपरिणतपरिवारं शिक्षकप्रायपरिवारमपरिवार चैकाकिप्राय नानुज्ञापयेद् गुरु शिष्योऽनेकशोपसन्न होपोऽपि गुरु स्वयमेवैतदभावे परिणतपरिवाराद्यभावे न धारयेद्धि मर्जयेदिति गाथार्थ । तत्र

> संदिट्ठो संदिट्ठस्स, अंतिए तत्थ मिह परिच्छाओ ।
> माहुअमग्गे वाअए, तिदुवरि गुरुसम्मए चागो ॥ ८८ ॥

सदिष्ट सन् गुरुणा सदिष्टस्य गुरो समीपे उपसंपद्येतेति वाक्यशेषस्तत्र मिथः परस्पर परीक्षा भवति । तयो साधुनामसार्गे वादन करोत्यागन्तुक मिथ्यादुष्कृतादाने अयाणामुपरि गुरुकथनं तत्सम्मते शीलतया त्याग असम्मते तिरामस्नेयामपि त प्रत्ययमेव न्याय इति गाथार्थ ।

> गुरुकम्माहिगकहणे, सुजोगओ अह निवेअण विहिणा ।
> गअगंथाइ निअमो, आहव्वाणुपालणा चेव ॥ ८९ ॥

गुरोरपि तं प्रति पक्षाधिककथनं शीत यतेत सुयोगत प्रतिस्तियुक्तो सत्यासथानन्तरं निवेदन गुरवे विधिना प्रशस्तादिनोपदिदेदित्यर्थ । तत्र गुरुकरणार्थो नियम एतावन्त प्राड

यावदित्त्वेवमर्हदादिसाक्षिकी स्थापना कायोत्सर्गपूर्विकेत्यन्ये तत्रयनियमश्चाऽयमाभाव्यानुपालना शिष्येण नाडवद्धेनेव शिष्येण नाडवद्धवल्लिव्यातिरिक्तादयं गुरुणाऽपि सम्यक्पालनीय इति गाथार्थः । इह प्रयोजनमाह ।

अस्सामित्तं पूआ, इअरे वक्खाए जो असुहभावो ।
परिणमइ सुअआहव्वा-दाणगहणं अओ चेव ॥ ५० ॥

अस्वामित्वं भवति नि सङ्गतेत्यर्थः तथा पूजा गुरो कृता भवति इतरापेदतयाऽनालवद्धवल्लिनिवेदनेनेतरगुर्वपेक्षयेति भाव । तथा जीतमिति कल्पोऽयमेव एवं भगवता दृष्ट इति श्रुतभावादित्यनेन प्रकारेण शुभाशयोपपत्ते परिणमति श्रुतं यथार्हतया चारित्रशुद्धिहेतुत्वेन शिष्यस्य नान्यथेत्याभाव्यादानं शिष्येण कर्त्तव्य ग्रहणमत एव तस्य गुरुणाऽपि कर्त्तव्य तदनुग्रहधियमहोभाविति गाथार्थः । प० व० ७ द्वा० ।

उवसंहार-उपसंहार-पुं० उप-सम्-हृ-घञ्-समासौ, स च ग्रन्थतात्पर्य्यावधारकलिङ्गभेदः " उपक्रमोपसंहारौ हेतुस्तात्पर्य्यनिर्णये " इत्युक्ते तयोभयोरेव तद्धेतुत्वं न तु प्रत्येकस्य सङ्ग्रहे सम्यग् हरणे. सुत्रार्थस्यान्यत्रान्वयार्थमुपक्षेपे, यथा गुरोपसंहार । वाच० ।

उवसग्ग-उपसर्ग-पुं० उप-सृज्-घञ्-उपसृज्यन्ते धातुसमीपे युज्यन्ते इत्युपसर्गा । प्रश्न० ४ द्वा० । प्रश्नव्याकरणोक्तेषु, निपाताश्चादयो ज्ञेया प्रादयस्तूपसर्गका । " द्योतकत्वात् क्रियायोगे लोकादवगता इमे " इत्युक्तलक्षणेषु क्रियायोगे प्रादिषु, तेषां त्रिधा प्रवृत्ति " धात्वर्थं बाधते कश्चित्कश्चित्तमनुवर्तते । तमेव विशिनष्टयन्य उपसर्गगतिस्त्रिधा । क्रमेणोदाहरणानि यथा आदत्ते प्रकृते प्रणमतीति । अपि च " उपसर्गेण धात्वर्थो, बलादन्यत्र नीयते । प्रहारगाहारसंहार-विहारपरिहारवत् " प्रादयस्तूपसर्गा न सार्थका सार्थकाश्च चादयो निपाता वाचकत्वात् । " उपसर्गास्तु उभयेऽपि द्योतका इति मेनिरे " वाच० । पो व । ८ । १ । ३ । इति पस्य व । प्रा० । उपसृज्यन्ते क्षिप्यन्त च्याव्यन्ते प्राणिनो धर्म्मादेभिरिषु इत्युपसर्गा । देवादिकृतोपद्रवेषु, स्था० १० ठा० । पंचा० । आ०म० । आ०चू० ।

( १ ) उपसर्गव्याख्या ।
( २ ) उपसर्गनिक्षेप ।
( ३ ) तत्कारिभेदादुपसर्गभेदाः ।
( ४ ) उपसर्गसहनम् ।
( ५ ) संयमस्य रक्षत्वम् ।
( ६ ) अनुकूलोपसर्गसहनम् ।

( १ ) अथोपसर्गान् व्याख्यातुमाह ।

उवसज्जणमुवसग्गो, तेण तओ व सज्जए जम्हा ।

उपसर्जनमुपसर्ग । अथवा करणसाधन उपसृज्यते संबध्यते पीडादिभि सह जीवस्तेनेत्युपसर्गः । अथवा कर्म्मसाधन उपसृज्यते संबध्यते तत्कोऽसावेव तदुपसर्ग । अथवा अपादानसाधन ततस्तस्मादुपसर्गोऽसौ उपसृज्यते संबध्यते पीडादिभि सह यस्मात्तत उपसर्ग । विशे० । उत्त० ।

( २ ) उपसर्गनिक्षेपो यथा ।

उवसग्गम्मि य छक्कं, दव्वे चेयणमचेयणं दुविहं ।
आगंतुगो य पीडा-करो य जो सो उ उवसग्गो ॥ १ ॥

नामस्थापनाद्रव्यक्षेत्रकालभावभेदात् उपसर्गा षोढा । तत्र नामस्थापने क्षुण्णत्वादनादृत्य द्रव्योपसर्गं दर्शयति । द्रव्ये द्रव्यविषये उपसर्गो द्विधा यतस्तद्द्रव्यमुपसर्गकर्तृ चेतनाचेतनभेदात् द्विविधम् । तत्र तिर्यङ्मनुष्यादयः स्वावयवाभिघातेन यदुपसर्गयन्ति स सचित्तद्रव्योपसर्गः स एव काष्ठादिनेतरस्तत्वभेदपर्यायैर्व्याख्यातः । तत्रोपसर्ग उपताप. शरीरपीडोत्पादनमित्यादिपर्यायाः । भेदाश्च तिर्यङ्मनुष्योपसर्गादयः । नामादयश्च तत्र व्याख्यातु नियुक्तिकृदेव गाथापश्चार्द्धेन दर्शयति । अपरस्मादिव्यादेरागच्छतीत्यागन्तुको योऽसावुपसर्गो भवति स च देहस्य संयमस्य वा पीडाकारीति ॥ १ ॥ क्षेत्रोपसर्गानाह ।

खेत्तं बहुओघपयं, कालो एगंतदुस्समादीओ ।
भावे कम्मब्भुदओ, सो दुविहो ओघुवक्कमिओ ॥ २ ॥

यस्मिन् क्षेत्रे बहून्योघतः सामान्येन पदानि क्रूरचौराद्युपसर्गस्थानानि भवन्ति तत्क्षेत्र बह्वोघपदम् । पाठान्तर वा बह्वोघभय बहून्योघतो भयस्थानानि यत्र तत्तथा । तच्च लाभादिविषयादिकं क्षेत्रमिति । कालस्त्वेकान्तदुःषमादि आदिग्रहणात् यो यस्मिन् क्षेत्रे दुःखोत्पादको ग्रीष्मादि स गृह्यत इति । कर्मणां ज्ञानावरणादीनामभ्युदयो भावोपसर्ग इति । स च उपसर्गः सर्वोऽपि सामान्येन औघिकोपक्रमिकभेदात् द्वेधा । तत्रौघिकोऽशुभकर्मप्रकृतिजनितभावोपसर्गो भवति । औपक्रमिकस्तु दण्डकशाशस्त्रादिनाऽसातवेदनीयोदयापादक इति ॥ २ ॥

( ३ ) तत्रौघिकौपक्रमिकयोरुपसर्गयोरौपक्रमिकमधिकृत्याह ।

ओवक्कमिओ संयम-विग्घकरे तत्थुवक्कमे पगयं ।
दव्वे चउव्विहो दे, व माणुयतिरिया य संवेतो ॥ ३ ॥

उपक्रमणमुपक्रम । कर्मणामनुदयप्राप्तानामुदयप्रापणमित्यर्थः । एतच्च यद्द्रव्योपयोगात् येन वा द्रव्येणाऽसातवेदनीयाद्यशुभ कर्मोदीर्यते यदुदयाच्चाल्पसत्वस्य संयमविघातो भवति अत औपक्रमिक उपसर्ग संयमविघातकारीति । इह च यतीनां मोक्षं प्रति प्रवृत्तानां संयमो मोक्षाङ्गं वर्तते तस्य यो विघ्नहेतुः स एवाधिक्रियत इति दर्शयति । तत्रौघिकोपक्रमिकयोरौपक्रमिके प्रकृत प्रस्तावस्तेनात्राधिकार इति यावत् । स च द्रव्ये द्रव्यविषयश्चिन्त्यमानश्चतुर्विधो भवति । तद्यथा दैविको मानुषस्तैरश्च आत्मसंवेदनश्चेति । सूत्र० १ श्रु० ३ अ० ।

चउव्विहा उवसग्गा पण्णत्ता तं जहा दिव्वा माणुसा तिरिक्खजोणिया आयसंचेयणिज्जा । दिव्वा उवसग्गा चउव्विहा पण्णत्ता तं जहा हासाप्पओसा वीमंसा पुढोवेमाया । माणुस्सा उवसग्गा चउव्विहा पण्णत्ता तं जहा हासाप्पओसा वीमंसा कुसीलपडिसेवणया । तिरिक्खजोणिया उवसग्गा चउव्विहा पण्णत्ता तं जहा भया पदोसा आहारहेउं अव्वच्चलेणसारक्खणया । आयसंचेयणिज्जा उवसग्गा चउव्विहा पण्णत्ता तं जहा घट्टणया पवडणया थंभणया लेसणया ।

सूत्रपञ्चकमाह कण्ठ्यश्चेदं नवरमुपसर्जनान्युपसृज्यते धर्म्माच्च्याव्यते जन्तुरेभिरित्युपसर्गाः बाधाविशेषास्ते च कर्तृभेदाच्चतुर्विधा । आह च " उवसज्जणमुवसग्गो तेण तओ उवसयज्जए जम्हा । सो दिव्वमणुयतेरिच्छ आयसंचेयणा भेदत्ति ॥ १ ॥ आत्मना सञ्चेत्यन्ते क्रियन्त इत्यात्मसञ्चेतनीयाः तत्र दिव्या । ( हासात्ति ) हासाद्भवन्ति हाससंभूतत्वात् वा हासा उपसर्गा एवमेवमन्यत्रापि । यथा भिक्षार्थ ग्रामान्तरप्रस्थितक्षुल्लकैर्व्यन्तर्या उपयाचितं प्रतिपन्न यदीप्सित लप्स्यामहे तदा तवोन्डेरिकादि

हास्याम इति लब्धे च तत्र तथेदमिति भणित्वा नष्टुणमेरका-दि तै. स्वयमेव भक्षित देवतया च हासेन तद्रूपमावृत्य क्रीकि-तमनागच्छत्सु क्षुल्लकेषु व्याकुले गच्छे निवेदितमाचार्याणां देवतया क्षुल्लकवृत्तम्। ततो गृहभैरुण्डेरिकादि याचित्वा तस्यै दत्त तथा तु ते दर्शिता इति। प्रद्वेषाद्यथा सङ्गमको महावीरस्योपसर्गानकरो-त्। विमर्षाद्यथा क्वचिद्देवकुलिकायां वर्षासूषित्वा साधुषु तदीय एवान्यः पश्चादागतस्तत्रोषितस्तच्च देवता किं स्वरूपोऽयमिति विमर्षादुपसर्गितवतीति। पृथग् विभिन्ना विविधा मात्रा हासादि-वस्तुरूपा येषु ते पृथग्विमात्रा। अथवा पृथग् विविधा मात्रा विमा-त्रा तयेत्येतल्लुप्ततृतीयैकवचन पदं द्रष्टव्यम्। तथा हि हासेन कृत्वा प्रद्वेषेण करोतीत्येव संयोग यथा सगमक एव विम-र्षेण कृत्वा प्रद्वेषेण कृतवानिति । तथा मानुषा हास्यात्— यथा गणिकादुहिता क्षुल्लकमुपसर्गितवती सा च तेन दण्डे-न ताडिता विवादे च राज्ञ श्रीगृहदृष्टान्तो निवेदितस्तेनेति प्र-द्वेषात् यथा गजसुकुमार सोमिलब्राह्मणेन व्यपरोपितो विम-र्षात् यथा चाणक्योक्तचन्द्रगुप्तेन धर्मपरीक्षार्थ लिङ्गिनोऽन्तःपुरे धर्ममाख्यापिता क्षोभिताश्च साधवस्तु क्षोभितुं न शक्ता इति। कुशीलमब्रह्म तस्य प्रतिषेवण कुशीलप्रतिषेवण तद्भाव कुशी-लप्रतिषेवणता उपसर्गकुशीलस्य वा प्रतिषेवण येषु ते कुशी-लप्रतिषेवणका । अथवा कुशीलप्रतिषेवणयेति व्याख्येय यथा सध्यायां वसत्यर्थ प्रोषितस्येर्ष्यालोर्गृहे प्रविष्ट साधुश्चतसृभि-रीर्ष्यालुजायाभिर्दत्तावास' प्रत्येक चतुरोऽपि यामानुपसर्गितो न च क्षुभित । तथा तैरश्चो भयात् श्वादयो दशेयु प्रद्वेषाच्च-एडकौशिको भगवन्त दष्टवान् आहारहेतो सिंहादयोऽपत्यल-यनसंरक्षणाय काकयादय उपसर्गयेयुरिति। तथा आत्मसंवे-दनीया घट्टनता घट्टनया वा यथाऽक्षणि रज' पतित ततस्तद्-क्षि हस्तेन मलित दु खितुमारब्धमथवा स्वयमेव अक्षणि गले वा मांसाङ्कुरादि जात घट्टयतीति प्रपतनात् प्रपतनया वा यथा अप्रयत्नेन सचरत प्रपतनात् दु खमुत्पद्यते स्तम्भनतस्तम्भ-नया वा यथा तावदुपविष्ट. स्थितो यावत्सुप्त. पादादिस्तब्धो जात श्लेषणता श्लेषणया वा यथा पादमाकुञ्च्य स्थितो वा तेन तथैव पादौ लगितौ इति। आत्मसञ्चने उदाहरणानि उपसर्ग-सहनात्कर्मक्षयो भवतीति। स्था० ४ ठा० ४ उ०।

सो दिव्वमणुयतेरि-च्छिया य संवेयणा भेओ ।

स च देवेभ्यो भवो दिव्यो मनुष्येभ्यो भवो मानुष तिर्यग्यो-निभ्यो भवस्तैर्यग्योन आत्मना संवेद्यत इत्यात्मवेदनीय. इत्येवं चतुर्भेद इति। केन पुन कारणेन देवादिभ्य साधूनामुपसर्गा भवन्तीत्याह।

हासप्पओसवीमंसउ, विमायाए वा भवे दिव्वो ।
एवं चिय माणुस्सो, कुसीलपडिसेवणचउत्थे ॥
तिरिओभयप्पओसा, हारावचाइ रक्खणत्थं वा ।
घट्टणथंभणपवडण, लेसणओ आयसंवेओ ॥

हासात्क्रीडात अवज्ञातः पूर्वभवसंबन्धादिकृतप्रद्वेषाद्वा (वीम-सउत्ति) किमय स्वप्रतिज्ञातश्चलति न वेति मीमांसातो वि-मर्षाद्दिव्य उपसर्गो भवेत्तथा (विमयाएत्ति) विविधा मात्रा विमात्रा तस्या सकाशात्किमपि हास्यात्किमपि प्रद्वेषात्किंचि-न्मीमांसातश्चेत्यर्थ । दिव्य उपसर्गो भवेदिति । एव मानु-ष्योऽप्युपसर्गश्चतुर्विधो भवेत्केवल (कुसीलपडिसेवणचउत्थे-ति) रोपणदरलक्षणो य कुशीलस्तत्प्रतिसेवनामाश्रित्य चतु-र्थो भेदो द्रष्टव्य । विमात्रापक्षस्यात्र हास्यादिष्वेवान्तर्भाव-विवक्षणादिति तिर्यङ् भयात्प्रद्वेषादाहारार्थमपत्यनीडगृहादि-स्थानरक्षणार्थमुपसर्गं कुर्यादिति । आत्मसंवेदनीयस्तूपसर्गो नेत्रपतितकणिकादिघट्टनादङ्गाना स्तम्भनात्स्तम्भनाभावा-र्तादौ वा प्रपतनाद्विगुणितवाह्वाद्यङ्गानां वामनात्परस्पर श्ले-षणाद्भवतीति सप्तचत्वारिंशद्गाथार्थ । विशे० ॥

सांप्रतमेतेषामेव भेदमाह।

एक्केक्को य चउविहो, अट्ठविहो वा वि सोलसविहो वा ।
घट्टणजयणा य तेसिं, एत्तो वोच्छं य अहियारो ॥४॥

एकैको दिव्यादिश्चतुर्विधश्चतुर्भेद । तत्र दिव्यस्तावत् हा-स्यात् प्रद्वेषात् विमर्शात् पृथग्विमात्रातश्चेति । मानुषा अपि हास्यात् प्रद्वेषाद्विमर्शात् कुशीलप्रतिसेवनात्तश्च । तैरश्चा अपि चतुर्विधा तद्यथा भयात्प्रद्वेषादाहारादपत्यसंरक्षणाच्च। आत्म-सवेदना अपि चतुर्विधा घट्टनातो लेशनातोऽङ्गुल्याद्यवयवस-श्लेषरूपाया स्तम्भनात. प्रपाताच्चेति । यदि वा वातपित्तश्लेष्म-संनिपातजनितश्चतुर्धेति । स एव देव्यादिश्चतुर्विधोऽनुकूल-प्रतिकूलभेदात् अष्टधा भवति। स एव दिव्यादि प्रत्येक यश्च-तुर्धा प्रागुक्तस्त स चतुर्णां चतुष्काणां मेलापकात् षोडशभेदो भवति। तेषां चोपसर्गाणा यथा घटना संबन्धप्राप्ति प्राप्तानां चाधिसहन प्रतियातना भवति तथाऽत ऊर्ध्वमध्ययनेन व-क्ष्यते इत्ययमत्रार्थाधिकार इति भाव । सूत्र० १ श्रु० ३ अ०। एतेषाञ्च सहनाऽधिभूत श्रीमन्महावीरो बोद्धव्य । भावनो-त्पादनार्थं पुनरेकैकश. परमगुरुणा सम्यक्सहनाद्यामकल्याण' कथ्यन्ते। तथा चाह ॥

देवेहिं कामदेवो, गिही विनयचाउदरगुणेहिं ।
मत्तगयंदभुअगम-रक्खसघोरट्टहासेहिं ॥

देवस्यैते देवा देवकृताद्वा देवो भगवच्छ्रीमहावीरस्तत्कदशश्रा-वकान्तर्गत गृहापि गृहस्थोऽपि न च नैव व्यथितश्चलितस्तपो-गुणेभ्य कथंचूनैर्मत्तगजेन्द्रभुजङ्गमराक्षसघोराट्टहासै । तथाहि शक्रवर्णनाश्रद्धानायातदेवनिर्मितै कदर्थ्यमानेनापि न परि-त्यक्ता स्वप्रतिज्ञेति गाथार्थ । भावार्थ कथानकेभ्य स्फुटीभविष्य-ति भगवओ महावीरस्स दस सावया अहेसिंतं । 'आनन्द कामदे-वे, चुलणिपिया तह य सुरदेवे। चुल्लसए कुण्डोलिय, सयालपुत्ते य महसयए। नदिणिपियसालेयइपिय, दस सावगा उ वीरेण। भि-क्खुत्ततमविमोइय, एए दढसावए सुवए'। दर्श०। (कथानकानि तत्तच्छब्दे वक्ष्यन्ते । आत्मसंवेदनीयोपसर्गोदाहरणन्तु स्वधि-याऽप्यूह्यम्) कल्प०। औ०। आव०। नि० चू०। जीत०। स्था०।

दिव्वे य जे उवसग्गे, तहा तिरिच्छमाणुस्से ।
जे भिक्खू सहइ निच्चं, से न अच्छइ मंडले ॥ ५ ॥

यो भिक्षुर्दिव्यान् देवै कृतान् तथा तैरश्चान् तिर्यग्भि कृतान् तथा मानुष्यकान् मनुष्यै कृतान् उपसर्गान् सम्यग कायाभा-वेन सहते स मण्डले ससारे न तिष्ठति। उत्त० ३१ अ०।

त्रिविधा उपसर्गा ।

तिविहे य उवसग्गे, दिव्वे माणुस्से तिरिक्खे य ।
दिव्वे य पुव्वभणिए, माणुस्से आभिओगे य ॥

त्रिविध' खलु परसमुत्थ उपसर्गस्तद्यथा दैवो मानुष्यकस्तैरश्च-श्च। तत्र दैवो देवकृत पूर्वमनन्तरसूत्रन्याधस्तात् भणित । मानुष्यस्तु मनुष्यकृत' आभियोग्यो विद्यानियोगजनित ॥ बृ० ६ उ०। आव०॥

(४) सूत्रकृताङ्गस्य प्रथमश्रुतस्कन्धे तृतीयाऽध्ययने उपसर्गस- हनं तत्र तावदुद्देशार्थाधिकारमभिधित्सुराह।

पढमम्मि य पडिलोमा, हुंती अणुलोमगा य बितियम्मि।
तइए अज्झत्तविसी-दणं य परवादिवयणं च ॥ ५ ॥

प्रथमे उद्देशके प्रतिलोमाः प्रतिकूला उपसर्गाः प्रतिपाद्यन्त इति। तथा द्वितीये ज्ञातिकृता स्वजनापादिना अनुलोमा अनुकूला इति। तथा तृतीये अध्यात्मविषीदनं परवादिवचनं चेत्ययमर्था- ऽधिकार इति॥

हेउसरिसेहिँ अहेउएहिँ, समयपडिएहिँ णिउणेहिँ।
सीलखलियपण्णवणा, कया चउत्थम्मि उद्देसे ॥ ६ ॥

चतुर्थोद्देशके अयमर्थोऽधिकारः तद्यथा हेतुसदृशैर्हेत्वाभासैर- न्यतीर्थिकैर्व्युद्ग्राहिता प्रतारितास्तेषां शीलस्खलितानां व्यामो- हितानां प्रज्ञापना यथाऽवस्थितार्थप्ररूपणा स्वसमयप्रतीतैर्निपु- णज्ञानिभिर्हेतुभि कृतेति। साम्प्रतं सूत्रानुगमेऽस्खलितादिगुणोपेतं सूत्रमुच्चारणीयं तच्चेदम्॥

सूरं मण्णइ अप्पाणं, जाव जेयं न पस्सती।
जुज्झंतं दढधम्माणं, सिसुपालो व महारहं ॥ १ ॥

कश्चिल्लघुप्रकृतिः संग्रामे समुपस्थिते शूरमात्मानं मन्यते। निस्तोयाम्बुद इवात्मश्लाघाप्रवणो वाग्भिर्विस्फूर्जन् गर्जति। न मत्कल्पः परानीके कश्चित्सुभटोऽस्तीत्येवं तावद्गर्जति यावत् पुरोऽवस्थितं प्रोद्यतासिं जेतारं न पश्यति। तथा चोक्तं। 'ता- वद्गज प्रस्तुतदानगण्डः करोत्यकालाम्बुदगर्जितानि। यावन्न सिंहस्य गुहास्थलीषु लाङ्गूलविस्फोटरवं शृणोति॥ १॥ न दृ- ष्टान्तमन्तरेण प्रायो लोकस्यार्थावगमो भवतीत्यतस्तदवगतये दृष्टान्तमाह। यथा माद्रीसुतः शिशुपालो वासुदेवदर्शनात्प्राक् आत्मश्लाघाप्रधानं गर्जितवान् पश्चाच्च युध्यमानं शस्त्राणि व्यापा- रयन्तं दृढं समर्थो धर्मः स्वभावः संग्रामाभङ्गरूपो यस्य स तथा तम्। महान् रथोऽस्येति महारथः स च प्रक्रमादत्र नारा- यणस्तं युध्यमानं दृष्ट्वा प्राग्गर्जनाप्रधानोऽपि क्षोभं गतः। एवमु- त्तरत्र दार्ष्टान्तिकेऽपि योजनीयमिति। भावार्थस्तु कथानकाद- वसेयः (सूत्र०) (तच्च सिसुपालशब्दे वक्ष्यते)

साम्प्रतं सर्वजनप्रतीतं वार्त्तमानिकं दृष्टान्तमाह।

पयाता सूरा रणसीसे, संगामम्मि उवट्ठिते।
मायापुत्तं न याणाइ, जेएण परिविच्छए ॥ २ ॥

यथा वाग्भिर्विस्फूर्जन्तः प्रकर्षेण विकटपादपातं रणशिरसि संग्रामाग्रमूर्धन्यग्रानीके याता गताः। के ते शूराः शूरंमन्याः सुभटा ततः संग्रामे समुपस्थिते पतत्परानीकसुभटमुक्तहेतिसङ्घाते सति तत्र च सर्वस्याऽऽकुलीभूतत्वात् माता पुत्रं न जानाति कटीतो भ्रश्यन्तं स्तनन्धयमपि न सम्यक् प्रतिजागर्तीत्येवं मातापुत्रीये संग्रामे परानीकसुभटेन जेत्रा च शस्त्रादिभिः परि समन्तात् विविधमनेकप्रकारं क्षतो हतश्छिन्नो वा कश्चिदल्पसत्त्वो भङ्गमु- पयाति दीनो भवतीति यावदिति। दार्ष्टान्तिकमाह।

एवं सेहे वि अप्पुट्ठे, भिक्खायरिया अकोविए।
सूरं मण्णंति अप्पाणं, जाव लूहं न सेवए ॥ ३ ॥

एवमिति प्रक्रान्तपरामर्शार्थे। यथाऽसौ शूरंमन्य उत्कृष्टसिं- हनादपूर्वकं संग्रामशिरस्युपस्थितः पश्चाज्जेतारं वासुदेवमन्यं वा युध्यमानं दृष्ट्वा दैन्यमुपयाति। एवं शिष्यकोऽभिनवप्रव्रजितः परीषहैरस्पृष्टोऽकृतः किं प्रव्रज्यायां दुष्करमित्येवं गर्जन् भि- क्षाचर्यायां भिक्षाटनेऽकोविदोऽनिपुणः उपलक्षणार्थत्वादन्यत्रा- ऽपि साध्वाचारेऽभिनवप्रव्रजितत्वादप्रवीणः स एवंभूत आत्मा- नं तावच्छिशुपालवत् शूरं मन्यते यावज्जेतारमिव रूक्षं संयम- कर्म सश्लेषकारणाभावात् न सेवते न भजत इति। तत्प्राप्तौ तु बहवो गुरुकर्माणोऽल्पसत्त्वा भङ्गमुपयान्ति।

संयमस्य रूक्षत्वप्रतिपादनायाह।

जया हेमंतमासम्मि, सीतं फुसइ (सवायग) सव्वगं।
तत्थ मंदा विसीयंति, रज्जहीणा वि खत्तिया ॥ ४ ॥

यदा कदाचित् हेमन्तमासे पौषादौ शीतं सहिमकणवातं स्पृ- शति लगति तत्र तस्मिन्नसह्ये शीतस्पर्शे लगति सति एके मन्दा जडा गुरुकर्माणो विषीदन्ति दैन्यभावमुपयान्ति राज्यहीं- ना राज्यच्युता यथा क्षत्रिया राजान इवेति॥ ४॥ सूत्र० ३अ० १ उ०। उक्तः प्रथमोद्देशकः। साम्प्रतं द्वितीयः समारभ्यते। अस्य चायमभिसंबन्धः इहोपसर्गपरिज्ञाध्ययने उपसर्गाः प्रतिपादिता- स्ते चानुकूलाः प्रतिकूलाश्च। तत्र प्रथमोद्देशके प्रतिकूलाः प्रतिपा- दिता इह त्वनुकूलाः प्रतिपाद्यन्त इत्यनेन सबन्धेनायातस्या- स्योद्देशकस्यादिमं सूत्रम्।

अहिमे सुहुमासंगा, भिक्खूणं जे दुरुत्तरा।
जत्थ एगे विसीयंति, ण चयंति जवित्तए ॥ १ ॥

अथेत्यानन्तर्ये प्रतिकूलोपसर्गानन्तरमनुकूलाः प्रतिपाद्यन्त इत्या- नन्तर्यार्थः। इमे त्वनन्तरमेवाभिधीयमानाः प्रत्यक्षासन्नवाचित्वा- दिदमभिधीयन्ते। ते च सूक्ष्माः प्रायश्चेतोविकारकारित्वेनान्तरा न प्रतिकूलोपसर्गा इव बाहुल्येन शरीरविकारकारित्वेन प्रकटत- या बादरा इति। सङ्गा मातापित्रादिसंबन्धाः। य एते भिक्षूणां साधूनामपि दुरुत्तरा दुर्लङ्घ्या दुरतिक्रमणीया इति। प्रायो जीवि- तविघ्नकरैरपि प्रतिकूलोपसर्गैरुदीर्णैर्माध्यस्थ्यमवलम्बयितुं महा- पुरुषैः शक्यमेते त्वनुकूलोपसर्गास्तानप्युपायेन धर्माच्च्यावयन्त्य- तोऽमी दुरुत्तरा इति। यत्र येषूपसर्गेषु सत्स्वेके अल्पसत्त्वाः स- दनुष्ठानं प्रति विषीदन्ति शीतलविहारित्वं भजन्ते सर्वथा वा संयमं त्यजन्ति नैवात्मानं संयमानुष्ठानेन यापयितुं वर्तयितुं त- स्मिन् व्यवस्थापयितुं शक्नुवन्ति समर्था भवन्तीति॥ १॥

तानेव सूक्ष्मसङ्गान् दर्शयितुमाह।

अप्पेगे नायओदिस्स, रोयंति परिवारया।
पोसणे ताय पुट्ठोसि, कस्स ताय जहासिणे ॥ २ ॥

अपि संभावने। एके तथाविधा ज्ञातयः स्वजना मातापित्रा- दयः प्रव्रजन्तं प्रव्रजितं वा दृष्ट्वोपलभ्य परिवार्य वेष्टयित्वा रुद- न्ति रुदन्तो वा वदन्ति च दीनं यथा बाल्यात्प्रभृति त्वमस्माभिः पोषितो वृद्धानां पालको भविष्यतीति कृत्वा ततो धुनाऽस्मा- नपि त्वं तात! पुत्र! पोषय पालय। कस्य कृते केन कारणेन कस्य वा बलेन ताताऽस्मान् त्यजसि नाऽस्माकं भवन्तमन्तरेण कश्चि- त्त्राता विद्यत इति। किञ्च।

पिया ते थेरओ तात, ससा ते खुड्डिया इमा।
भायरो ते सगा तात, सोयरा किं जहासिणे ॥ ३ ॥
मायरं पियरं पोस, एवं लोगो भविस्सति।
एवं खु लोइयं ताय, जे पालंति य मायरं ॥ ४ ॥

हे तात! पुत्र! पिता ते तव स्थविरो वृद्धः शतातीतः स्वसा च भगिनी तव क्षुल्लिका लघ्वी अप्राप्तयौवना इमा पुरोवर्तिनी प्रत्य- क्षेति। तथा भ्रातरस्ते तव स्वकाः निजाः स्वा' सोदराः एकोद-

रा· किमित्यस्मान् परित्यजसीति ॥३॥ तथा ( मायरमित्यादि मातर जननीं तथा पितर जनयितार पुराण विभृहि । एवं च कृते तवेह लोक परलोकश्च भविष्यति । तातेदमेव लौकिक लोकाचीर्णमयमेव लौकिक पन्था यदुत वृद्धयोर्मातापित्रो प्रतिपालनमिति तथा चोक्तम्। "गुरवो यत्र पूज्यते, यत्र धान्य सुसस्कृतम् । अदन्तकलहो यत्र, तत्र शक्र! वसाम्यहमिति"४ अपिच

उत्तरा महुरुल्लावा, पुत्ता ते तात खुड्डया ।
भारिया ते णवा तात, मा सा अन्नं जणं गमे ॥

उत्तरा· प्रधाना उत्तरा जाता वा मधुरो मनोज्ञ उल्लाप आलापो येषां ते तथाविधा· पुत्रास्ते तव तात! पुत्र! क्षुल्लका लघव· । तथा भार्या पत्नी ते नवा प्रत्यग्रयौवना अतिनवोढा वा माऽसौ त्वया परित्यक्ता सत्यन्य जन गच्छेदुन्मार्गयायिनी स्यादय च महाजनापवाद इति । अपि च ।

एहि ताय घरं जामो, मा य कम्मं सहावयं ।
वितियं पि ताय पासामो, जामु ताव सयं गिहं ॥६॥

जानीमो वय यथा त्वं कर्मभीरुस्तथाप्येहि आगच्छ गृह यामो गच्छाम· । मा त्वं किमपि सांप्रत कर्म कृथा· । अपि तु तव कर्मण्युपस्थिते वय सहायका भविष्याम· साहाय्य करिष्याम· । एकवार तावद् गृहकर्मभिर्भग्नस्त्व तात! पुनरपि द्वितीयवार पश्यामो द्रक्ष्यामो यदस्माभि सहायैर्भवतो भविष्यतीत्यतो यामो गच्छामस्तावत् स्वक गृह कुर्वेतदस्मद्वचनमिति ॥ ६ ॥

गंतु ताय पुणो गच्छे, ण य तेणासमणो सिया ॥
अकामगं परक्कम्मं, को उ ते वारेउमरिहाति ॥७॥

तात! पुत्र! गत्वा गृह स्वजनवर्ग दृष्ट्वा पुनरागन्तासि न च तेनैतावता गृहगमनमात्रेण चाश्रमणो भविष्यसि । ( अकामगंति ) अनिच्छन्तं गृहव्यापारेच्छारहित पराक्रमन्तं स्वाभिप्रेतानुष्ठान कुर्वाण कस्त्वां भवन्त वारयितु निषेधयितुमर्हति योग्यो भवति । यदि वा ( अकामगंति ) वार्द्धकावस्थायां मदनेच्छाकामरहित पराक्रमन्त सयमानुष्ठानं प्रति कस्त्वामवसरप्राप्ते कर्मणि प्रवृत्त धारयितुमर्हतीति । अन्यच्च ।

जं किंचि अणगं तात, तं पि सव्वं समीकतं ।
हिरण्णं ववहाराइ, तं पि दाहासु ते वयं ॥ ८ ॥

तात! पुत्र! यत्किमपि भवदीयमृणजातमासीत्तत्सर्वमस्माभि सम्यग्विभज्य समीकृतं समभागेन व्यवस्थापित यदिवोत्कट सत् समीकृतं सुदेयत्वेन व्यवस्थापित यच्च हिरण्य द्रव्यजातं व्यवहारादावुपयुज्यते । आदिशब्दात् येन वा प्रकारेण तवोपयोग यास्यति तदपि वय दास्यामो निर्धनोऽहमिति मा कृथा भयमिति । ८ ।

उवसंहारार्थमाह ।

इच्चेव णं सुसेहंति, कालुणी य समुट्ठिया ।
विवद्धो नाइसंगेहिं, ततो गारं पहावइ । ९ ।
जहा रुक्खं वणे जायं, मालुया पडिबंधइ ।
एवं णं पडिबंधंति, णातओ असमाहिणा । १० ।

णमिति वाक्यालङ्कारे । इत्येव पूर्वोक्तया नीत्या मातापित्रादय कारुणिकैर्वचोभि करुणामुत्पादयन्त स्वय वा दैन्यमुपस्थितास्त प्रव्रजितं प्रव्रजन्त वा ( सुसेहंतित्ति ) सुष्ठु शिक्षयन्ति व्युद्ग्राहयन्ति । स चापरिणतधर्माऽल्पसत्त्वो गुरुकर्मा ज्ञातिसङ्गैर्विबद्धो मातापितृपुत्रकलत्रादिमोहितस्ततो गार गृह प्रतिधावति प्रव्रज्यां परित्यज्य गृहपाशमनुबध्नातीति । ९ । किञ्चान्यत् ( जहारुक्खमित्यादि ) यथा वृक्ष वने अटव्यां जातमुत्पन्न मालुया वल्ली प्रतिबध्नाति वेष्टयत्येव णमिति वाक्यालङ्कारे ज्ञातय· स्वजनास्तं यतिमसमाधिना प्रतिबध्नन्ति ते तत्कुर्वन्ति येनास्यासमाधिरुत्पद्यत इति । तथा चोक्तं । "अमित्तो मित्तवेसेण, कंठे घेत्तूण रोयइ । मा मित्त! सोगइं जाहि, दो वि गच्छासु दुग्गइं" । १० । अपि च ।

विवद्धो नातिसंगेहिं, हत्थी वा वि नवग्गहे ।
पिट्ठतो परिसप्पति, सुयगो व्व अदूरए । ११ ।

विविध बद्ध· परवशीकृत· विवद्धो ज्ञातिसङ्गैर्मातापित्रादिसबन्धैस्ते च तस्य तस्मिन्नवसरे सर्वमनुकूलमनुतिष्ठन्तो धृतिमुत्पादयन्ति हस्तीवापि नवगृहे अभिनवग्रहणे धृत्युत्पादनार्थमिक्षुशकलादिभिरुपचर्यते । एवमसावपि सर्वानुकूलैरुपायैरुपचर्यते । दृष्टान्तान्तरमाह । यथाऽभिनवप्रसूता गौर्निजस्तनंधयस्यादूरगा समीपवर्तिनी सती पृष्ठत· परिसर्पत्येव तेऽपि निजा उत्प्रव्रजित पुनर्जातमिव मन्यमानाः पृष्ठतोऽनुसर्पन्ति तन्मार्गानुयायिनो भवन्तीत्यर्थ । ११ ।

सङ्गदोषप्रदर्शनायाह ।

एते संगा मणूसाणं, पाताला व अतारिमा ।
कीवा जत्थ य किस्संति, नायसंगेहिं मुच्छिया ॥ १२ ॥

एते पूर्वोक्ता सज्यन्त इति सङ्गा मातृपित्रादिसबन्धा· कर्मोपादानहेतव मनुष्याणां पाताला इव समुद्रा इवाप्रतिष्ठितभूमितलत्वात् ते ( अतारिमत्ति ) दुस्तरा एवमेतेऽपि सङ्गा अल्पसत्त्वैर्दु खेनातिलङ्घ्यन्ते । तत्र च येषु सङ्गेषु क्लीवा असमर्था· क्लिश्यन्ति क्लेशमनुभवन्ति ससारान्तर्वर्तिनो भवन्तीत्यर्थ । किंभूता ज्ञातिसङ्गै· पुत्रादिसबन्धैर्मूर्च्छिता गृद्धा अध्युपपन्नाः सन्तो न पर्यालोचयन्त्यात्मान ससारान्तर्वर्तिनमेवं क्लिश्यन्ति

अपि च ।

तं च भिक्खू परिन्नाय, सव्वे संगा महासवा ।
जीवियं नावकंखिज्जा, सोच्चा धम्ममणुत्तरं १३ ॥

त च ज्ञातिसङ्ग ससारहेतु भिक्षुर्ज्ञपरिज्ञया प्रत्याख्यानपरिज्ञया परिहरेत् । किमिति यत सर्वेऽपि केचन सङ्गास्ते महाश्रवा महान्ति कर्मण आश्रवद्वाराणि वर्तन्ते । ततोऽनुकूलैरुपसर्गैरुपस्थितैरसयमजीवित गृहावासपाश नाभिकाङ्क्षेत नाभिलषेत् । प्रतिकूलैश्चोपसर्गै सद्भिर्जीविताभियायी न भवदसमञ्जसकारित्वेन भवजीवित नाभिकाङ्क्षेत । किं कृत्वा श्रुत्वा निशम्यावगम्य क धर्मं श्रुतचारित्राख्यम् । नास्योत्तरोऽस्तीत्यनुत्तरं प्रधान मौनीन्द्रमित्यर्थ । अन्यच्च ।

अहिमे संति आवट्टा· कासवेणं पवेइया ।
बुद्धा जत्थ व सप्पंति, सीयंति अबुहा जहिं ॥ १४ ॥

अथेत्यधिकारान्तरदर्शनार्थ· । पाठान्तर वा ( अहो इति ) तच्च विस्मये । इमे इति प्रत्यक्षासन्ना सर्वजनविदितत्वात् सन्ति विद्यन्ते वक्ष्यमाणा आवर्तयन्ति प्राणिन भ्रामयन्तीत्यावर्तास्तत्र द्रव्यावर्ता नद्यादेर्भावावर्तास्तूत्कटमोहोदयापादितविषयाभिलाषसपादकसपत्प्रार्थनाविशेषा एते चावर्ता काश्यपेन श्रीमन्महावीरवर्द्धमानस्वामिना उत्पन्नदिव्यज्ञानेनावेदिता कथिता प्रतिपादिता· । यत्र येषु सत्सु बुद्धा अवगततत्त्वा आवर्तविपाकवेदिनस्तेभ्यो ऽपसर्पन्ते अप्रमत्ततया तद्दूरगामिनो भवन्त्यबुधास्तु निर्विवेकतया ये हावर्तेष्वासक्तिं कुर्वन्तीति तानेवावर्तान् दर्शयितुमाह ।

रायाणो रायमच्चा य, माहणा अदुव खत्तिया ।
निमंतियंति भोगेहिं, भिक्खूणं साहुजीविणं । १५ ।

राजानश्चक्रवर्त्यादयो राजामात्याश्च मन्त्री पुरोहितप्रभृतयस्तथा ब्राह्मणा अथवा क्षत्रिया इक्ष्वाकुवंशप्रभृतयः । एते सर्वेऽपि भोगैः शब्दादिविषयैर्निमन्त्रयन्ति भोगोपभोगं प्रत्यभ्युपगमं कारयन्ति कं भिक्षुकं ( साहुजीविणमिति ) साध्वाचारेण जीवितुं शीलमस्येति साधुजीविनमिति । यथा ब्रह्मदत्तचक्रवर्तिना नानाविधैर्भोगैश्चित्रसाधुरुपनिमन्त्रित इत्येवमन्येऽपि केनचित्संबन्धेन व्यवस्थिता यौवनरूपादिगुणोपेतं साधुं विषयोद्देशेनोपनिमन्त्रयेयुरिति । १५ ।

एतदेव दर्शयितुमाह ।

हत्थस्सरहजाणेहिं, विहारगमणेहि या ।
भुंज भोगे इमे सग्घे, महरिसी पूजयामु तं । १६ ।

हस्त्यश्वरथयानैस्तथा विहारगमनैः विहरणं क्रीडनं विहारस्तेन गमनान्युद्यानादौ क्रीडया गमनानीत्यर्थः । चशब्दादन्यैश्चेन्द्रियानुकूलैर्विषयैरुपनिमन्त्रयेरंस्तद्यथा भुवि भोगान् शब्दादिविषयानिमानस्माभिर्ढौकितान् प्रत्यक्षासन्नान् श्लाघ्यान् प्रशस्तान् न निन्द्यान् महर्षे ! साधो ! वयं विषयोपकरणढौकनेन त्वां भवन्तं पूजयामः सत्कारयाम इति । १६ ।

किञ्चाऽन्यत् ।

वत्थगंधमलंकारं, इत्थीओ सयणाणि य ।
भुंजा इमाइं भोगाइं, आउसो पूजयामु तं । १७ ।

वस्त्रं चीनांशुकादि गन्धाः कोष्ठपुटपाकादयः वस्त्राणि च गन्धाश्च वस्त्रगन्धमिति समाहारद्वन्द्वः । तथा अलङ्कारं कटककेयूरादिकं तथा स्त्रियः प्रत्यग्रयौवनाः शयनानि च पर्यङ्कतूलीप्रवरपटोपधानयुक्तानि इमान् भोगानिन्द्रियमनोनुकूलानस्माभिर्ढौकितान् भुङ्क्ष्व तदुपभोगेन सफलीकुरु हे आयुष्मन् ! भवन्तं पूजयामः सत्कारयाम इति । १७ । अपि च ।

जो तुमे नियमो चिन्नो, भिक्खुभावम्मि सुव्वय ।
अगारमावसंतस्स, सव्वो संविज्जए तहा । १८ ।

यस्त्वया पूर्वं भिक्षुभावे प्रव्रज्यावसरे नियमो महाव्रतादिरूपश्चीर्णोऽनुष्ठित इन्द्रियनोइन्द्रियोपशमगतेन हे सुव्रत ! स सांप्रतमप्यगारं गृहमावसतो गृहस्थभावं सम्यगनुपालयतो भवतस्तथैव विद्यत इति । न हि सुकृतस्यानुचीर्णस्य नाशोऽस्तीति भावः । १८ । किञ्च ।

चिरं दूइज्जमाणस्स, दोसो दाणिं कुतो तव ।
इच्चेव णं निमंतंति, नीवारेणेव सूयरं । १९ ।

चिरं प्रभूतकालं संयमानुष्ठानेन ( दूइज्जमाणस्सत्ति ) विहरतः सत इदानीं साम्प्रतं दोषः कुतस्तव नैवास्तीति भावः । इत्येवं हस्त्यश्वरथादिभिर्वस्त्रगन्धालङ्कारादिभिश्च नानाविधैरुपभोगोपकरणैः करणभूतैः । णमिति वाक्यालङ्कारे । तं भिक्षुं साधुजीविनं निमन्त्रयन्ति भोगबुद्धिं कारयन्ति । दृष्टान्तं प्रदर्शयति । यथा नीवारेण व्रीहिविशेषकणदानेन सूकरं वराहं कूटके प्रवेशयन्त्येवमसौ साधुमपि । १९ । अनन्तरोपन्यस्तवार्तोपसंहारार्थमाह ।

चोइया भिक्खचरिया, अचयंता जवित्तए ।
तत्थ मंदा विसीयंति, उज्जाणंसि व दुब्बला । २० ।

भिक्षूणां साधूनामुद्युक्तविहारिणां चर्या दशविधचक्रवालसामाचारी इच्छामिच्छेत्यादिका तया चोदिताः प्रेरिता यदि वा भिक्षुचर्यया करणभूतया सीदन्तश्चोदितास्तत्करणं प्रत्याचार्यादिकैः पौनःपुन्येन प्रेरितास्तच्चोदनामशक्नुवन्तः संयमानुष्ठानेनात्मानं यापयितुं वर्तयितुमसमर्थाः सन्तस्तत्र तस्मिन् संयमे मोक्षैकगमनहेतौ भवकोटिशतावाप्तेर्मन्दा जडा विषीदन्ति शीतलविहारिणो भवन्ति । तमेवाचिन्त्यचिन्तामणिकल्पं महापुरुषानुचीर्णं संयमं परित्यजन्ति । दृष्टान्तमाह । ऊर्ध्वं यानमुद्यानं मार्गस्योन्नतो भाग उद्धङ्कमित्यर्थः । तस्मिन् उद्यानशिरसि उत्क्षिप्तमहाभरा उक्षाणोऽतिदुर्बला यथाऽवसीदन्ति ग्रीवां पातयित्वा तिष्ठन्ति नोत्क्षिप्तभरनिर्वाहका भवन्तीत्येवं तेऽपि भावमन्दा उत्क्षिप्तपञ्चमहाव्रतभारं वोढुमसमर्थाः पूर्वोक्तभवावर्तैः पराभग्ना विषीदन्ति । २० । किञ्च ।

अचयंता व लूहेण, उवहाणेण तज्जिया ।
तत्थ मंदा विसीयंति, उज्जाणंसि जरग्गवा । २१ ।

रूक्षेण संयमेनात्मानं यापयितुमशक्नुवन्तस्तथोपधानेनानशनादिना सबाह्याभ्यन्तरेण तपसा तर्जिता बाधिताः सन्तस्तत्र संयमे मन्दा विषीदन्त्युद्यानशिरस्युद्धङ्कमस्तके जीर्णो दुर्बलो गौरिव यूनोऽपि । इह तत्रावसीदनं संभाव्यते किं पुनर्जरद्गवस्येति जीर्णग्रहणम् । एवमावर्तमन्तरेणापि धृतिसंहननोपेतस्य विवेकिनोऽप्यवसीदनं संभाव्यते किं पुनरावर्तैरुपसर्गितानां मन्दानामिति २१

सर्वोपसंहारमाह ।

एवं निमंतिए लद्धुं, मुच्छिया गिद्धइत्थीसु ।
अज्झोववन्ना कामेहिं, चोइज्जंता गया गिहं ( त्तिबेमि )

एवं पूर्वोक्तया नीत्या विषयोपभोगोपकरणदानपूर्वकं निमन्त्रणं विषयोपभोगं प्रति प्रार्थनं लब्ध्वा प्राप्य तेषु विषयोपकरणेषु हस्त्यश्वरथादिषु मूर्च्छिता अत्यन्ताशक्तास्तथा स्त्रीषु गृद्धा दत्तावधाना रमणीरागमोहितास्तथा कामेषु इच्छामदनरूपेष्वध्युपपन्नाः कामगतचित्ताः संयमेऽवसीदन्तोऽपरेणोद्युक्तविहारिणा चोद्यमाना संयमं प्रति प्रोत्साह्यमाना चोदनं सोढुमशक्नुवन्तः सन्तो गुरुकर्माणः प्रव्रज्यां परित्यज्याल्पसत्त्वा गृहं गता गृहस्थीभूताः इति परिसमाप्तौ ब्रवीमीति पूर्ववत् । सूत्र० १ श्रु० ३ अ० ३ उ० । आ० चू० आत्मविसीदनादयोऽन्यत्र ( भिक्षाटनाय गतस्योपसर्गसहनं गोयरचरिया शब्दे )

( ६ ) अनुकूलोपसर्गसहनम् ।

उट्ठियमणगारमेसणं, समणं ठाणठिअं तवस्सिणं ।
डहरा वुड्ढा य पत्थए, अविसुस्से ण य तं लभेज्जणो ॥१६॥

अगारं गृहं तदस्य नास्तीत्यनगारस्तमेवभूतं संयमोत्थानेनैषणां प्रत्युत्थितं प्रवृत्तं श्राम्यतीति श्रमणस्तं तथा स्थानस्थितमुत्तरोत्तरविशिष्टसंयमस्थानाध्यासिनं तपस्विनं विशिष्टतपोनिष्टप्तदेहं तमेवभूतमपि कदाचित् डहरा पुत्रनप्त्रादयो वृद्धाः पितृमातुलादयः उत्प्रिष्क्रामयितुं प्रार्थयेयुर्याचेरंस्तं एवमूचुर्भवता वयं प्रतिपाल्या न त्वामन्तरेणास्माकमेकः प्रतिपालकः एवं भणन्तस्ते जना अपि शुष्येयुः श्रमं गच्छेयुर्न च तं साधुं विदितपरमार्थं लभेरन् नैवाऽऽत्मसात्कुर्युर्नैवाऽऽत्मवशगं विदध्युरिति ॥१६॥ किञ्च

जइ कालुणियाणि कासिया, जइ रोयंति य पुत्तकारणे ।
दवियं भिक्खुं समुट्ठियं, णो लब्भंति ण संठवित्तए ॥१७॥

यद्यपि ते मातापितृपुत्रकलत्रादयस्तदन्तिके समेत्य करुणाप्र-

धानानि विलापप्रायाणि वचांस्यनुष्ठानानि वा कुर्युः । तथाहि । "णाह पिय कन्त सामिय, अइवल्लह दुल्लहो सि भवणम्मि ॥ तुह विरहम्मि य निक्किव, सुण्णं सव्वं पि पडिहाइ" ॥ १ ॥ "सेणिगामो गोट्ठी, गणोव्व तं जत्थ होसि सण्णिहितो ॥ दिप्पइ सिरिएसु पुरिस, किं पुण नियमं घरद्दारं" ॥ २ ॥ तथा यदि ( रोयन्तियत्ति ) रुदन्ति पुत्रकारणं सुतनिमित्तं कुलवर्द्धनमेकं सुतमुत्पाद्य पुनरेवं कर्तुमर्हसीति । एवं रुदन्तो यदि भणन्ति तं भिक्षुं रागद्वेषरहितत्वान्मुक्तियोग्यत्वाद्वा द्रव्यभूतं सम्यक् संयमोत्थानेनोत्थितं तथाऽपि साधुं न लप्स्यन्ते न शक्नुवन्ति प्रव्रज्यातो भ्रंशयितुं भावाच्च्यावयितुं नापि संस्थापयितुं गृहस्थभावेन द्रव्यलिङ्गाच्च्यावयितुमिति ॥ १७ ॥ अपि च ।

जइ वि य कामेहि लाविया, जइ णेज्जाहि णं बंधिउं घरं ।
जइ जीवितनावकंखए, णो लब्भंति ण संठवित्तए ॥ १८ ॥

यद्यपि ते निजास्तं साधुं संयमोत्थानेनोत्थितं कामैरिच्छामदनरूपैर्लावयन्ति उपनिमन्त्रयेयुरुपलोभयेयुरित्यर्थः । अनेनाऽनुकूलोपसर्गग्रहणम् । तथा यदि नयेयुर्बद्ध्वा गृहं णमिति वाक्यालङ्कारे । एवमनुकूलप्रतिकूलोपसर्गैरभिद्रुतोऽपि साधुर्यदि जीवितं नाभिकाङ्क्षेत् यदि जीविताभिलाषी न भवेत् असंयमजीवितं वा नाऽभिनन्देत् ततस्ते निजास्तं साधुं ( णो लब्भंतित्ति । ) न लभन्ते न प्राप्नुवन्ति आत्मसात्कर्तुं ( ण संठवित्तएत्ति ) नाऽपि गृहस्थभावेन संस्थापयितुमलमिति ॥ १८ ॥ किञ्च ।

सेहंति य णं ममाइणो, माया ( पिया ) ताय सुया य भारिया ।
पोसाहि ण पासओ तुमं, लोगपरं पि जहासि पोस णो ॥ १९ ॥

ते कदाचिन्मातापित्रादयस्तमभिनवप्रव्रजितं ( सेहंतित्ति ) शिक्षयन्ति णमिति वाक्यालङ्कारे ( ममाइणोत्ति ) ममाऽयमित्येवं स्नेहालवः । कथं शिक्षयन्तीत्यत आह पश्य नोऽस्मानत्यन्तदुःखितांस्त्वदर्थं पोषकाभावाद्वा त्वं च यथावस्थितार्थपश्यकः सूक्ष्मदर्शी सश्रुतिक इत्यर्थः । अतो नोऽस्मान् पोषय प्रतिजागरणं कुरु अन्यथा प्रव्रज्याऽभ्युपगमेनेहलोकस्त्यक्तो भवताऽस्मत्प्रतिपालनपरित्यागेन च परलोकमपि त्वं त्यजसीति दुःखितनिजप्रतिपालनेन च पुण्यावाप्तिरेवेति । तथाहि । "या गतिः क्लेशदग्धानां गृहेषु गृहमेधिनाम् । बिभ्रतां पुत्रदारांस्तु, तां गतिं व्रज पुत्रकेति ॥ १९ ॥ एवं तैरुपसर्गिताः केचन कातराः कदाचित् यद्यत्कुर्युरित्याह ॥

अन्ने अन्नेहि मुच्छिया, मोहं जंति णरा असंवुडा ॥
विसमं विसमेहि गाहिया, ते पावेहि पुणो पगब्भिया ॥ २० ॥

अन्ये केचनाऽल्पसत्त्वा अन्यैर्मातापित्रादिभिर्मूर्च्छिता अध्युपपन्नाः सम्यग्दर्शनादिव्यतिरेकेण सकलमपि शरीरादिकमन्यदित्यन्यग्रहणं ते एवम्भूता असंवृता नराः समोहं यान्ति सदनुष्ठाने मुह्यन्ति तथा संसारगमनैकहेतुभूतत्वात् । विषमोऽसंयमस्तं विषमैरसंयतैरुन्मार्गप्रवृत्तित्वेनापायाभीरुभिः रागद्वेषैर्वा अनादिभवाभ्यस्तत्तया दुरुच्छेद्यत्वेन विषमैर्ग्राहिता असंयमं प्रति वर्त्तिता ते चैवम्भूताः पापैः कर्मभिः पुनरपि प्रवृत्ताः प्रगल्भिता धृष्टता गताः पापकं कर्म कुर्वन्तोऽपि न लज्जन्त इति ॥ २० ॥

यत एवं ततः किं कर्तव्यमित्याह ।

तम्हा दविइक्खपंडिए, पावाओ विरतेऽभिणिव्वुडे ।
पणए वीरे महाविहिं, सिद्धिपह ( णायगं ) णेआउयं धुवं ॥

मातापित्रादिमूर्च्छिताः पापेषु कर्मसु प्रगल्भा भवन्ति तस्माद् द्रव्यभूतो भव्यो मुक्तिगमनयोग्यो रागद्वेषरहितो वा सन्नीक्षस्व तद्विपाकं पर्यालोचय । पण्डितः सद्विवेकयुक्तः पापात् कर्मणोऽसदनुष्ठानरूपात् विरतो निवृत्तः क्रोधादिपरित्यागाच्छान्तीभूत इत्यर्थः । तथा प्रणता प्रह्वीभूता वीराः कर्मविदारणसमर्था महावीथिं महामार्गं तमेव विशिनष्टि सिद्धिपथं ज्ञानादिमोक्षमार्गं तथा मोक्षं प्रति नेतारं प्रापकं ध्रुवमव्यभिचारिणमित्येतदवगम्य स एव मार्गोऽनुष्ठेयो वा सदनुष्ठानप्रगल्भैर्गन्तव्यमिति ॥ २१ ॥

पुनरप्युपदेशदानपूर्वकमुपसंहरन्नाह ।

वेयालियमग्गमागओ, मणवयसाकाय ( ण ) संवुडो ।
चिच्चा वित्तं च णायओ, आरंभं च सुसंवुडे चरेज्जासि ( त्तिबेमि )

कर्मणां विदारणमार्गगतो भूत्वा तं तथाभूतं मनोवाक्कायसंवृतः पुनस्त्यक्त्वा परित्यज्य वित्तं द्रव्यं तथा ज्ञातींश्च स्वजनांश्च तथा सावद्यारम्भं च सुष्ठु संवृत इन्द्रियैः संयमानुष्ठानं चरेदिति ब्रवीमीति पूर्ववत् । सूत्र० १ श्रु० २ अ० १ उ० ।

त्रिविधोपसर्गाधिसहनमधिकृत्याह ।

तिरिया मणुया य दिव्वगा, उवसग्गा तिविहाहियासिया ।
लोमादियं पि ण हरिसे, सुन्नागारगओ महामुणी ॥ १५ ॥

तैरश्चाः सिंहव्याघ्रादिकृतास्तथा मानुषा अनुकूलप्रतिकूलाः सत्कारपुरस्कारदण्डकशाताडनादिजनिताः । तथा ( दिव्वगा इति ) व्यन्तरादिना हास्यप्रद्वेषादिजनिताः । एवं त्रिविधानप्युपसर्गानधिसहेत नोपसर्गैर्विकारं गच्छेत् । तदेव दर्शयति । लोमादिकमपि न हर्षयेत् भयेन रोमोद्गममपि न कुर्यात् । यदि वा एवमुपसर्गास्त्रिविधा अपि ( अहियासियत्ति ) अधिसोढा भवन्ति । यदि रोमोद्गमादिकमपि न कुर्यात् । आदिग्रहणात् दृष्टिमुखविकारादिपरिग्रहः । शून्यागारगतः शून्यगृहव्यवस्थितस्य चोपलक्षणार्थत्वात् पितृवनादिस्थितो वा महामुनिर्जिनकल्पिकादिरिति ॥ १५ ॥ किञ्च ।

णो अभिकंखेज्ज जीवियं, नो वि य पूयणपत्थए सिया ।
अब्भत्थमुर्विति भेरवा, सुन्नागारगअस्स भिक्खुणो ॥ १६ ॥

स तैर्भैरवैरुपसर्गैरुदीर्णैस्तोतुद्यमानोऽपि जीवितं नाऽभिकाङ्क्षेत जीवितनिरपेक्षेणोपसर्गः सोढव्य इति भावः । न चोपसर्गसहनद्वारेण पूजाप्रार्थकः प्रकर्षाभिलाषी स्यात् भवेत् । एवं च जीवितपूजानिरपेक्षेणाभ्यस्ताः सम्यक् सह्यमाना भैरवा भयानकाः शिवापिशाचादयोऽभ्यस्तभावं स्वात्मनः उपसामीप्येन यन्ति गच्छन्ति तत्सहनाच्च भिक्षोः शून्यागारगतस्य नीराजितवारणस्येव शीतोष्णादिजनिता उपसर्गाः सुसहा एव भवन्तीति भावः । सूत्र० १ श्रु० २ अ० २ उ० । "उवसग्गेहि पाविज्जा आमोक्खाए परिव्वएज्जासि" उपसर्गाननुकूलप्रतिकूलान् सम्यगधिसह्यामोक्षाय मोक्षपर्यन्तं यावत् परि समन्ताद् व्रजेत् संयमानुष्ठानेन गच्छेत् । सूत्र० १ श्रु० ३ अ० ४ उ० । ( 'उवसग्गगब्भहरण-मिति' आश्चर्यभेदत्वोपसर्गनिरूपणम् अच्छेर शब्दे वक्ष्यमाणम् ) रोगविकारे, शुभाशुभसूचके दिव्यादिविकाररूपे उत्पाते, वाच० ।

उवसग्गकप्पाटि—उपसर्गकल्पना—स्त्री० उपसर्गं एव रचना शय्यातरदुहितृकपिलचेल्लणानां लोभाच्चाद्यवत्यरचनायामुपसर्गकरणे. "उवसग्गेति" उवसग्गा एव रयणा नेक्षायरधूआ कविलचेल्लगो लोभा संजायरयणाए उवसग्ग करेतीत्यर्थः । नि० चू० १ उ० ।

उवसग्गतितिक्खा—उपसर्गतितिक्षा—स्त्री० उपसर्गाणां सहनं-

नात् उपसृज्यन्ते एभिरिति वा उपसर्गा ते च दिव्यमानुषतै- रश्चात्मसंवेदनभेदतश्चतुःप्रकाराः प्रत्येकमपि ते स्युश्चतुर्विधाः " हास्याद् द्वेषाद्विमर्शाच्च तन्मिश्रत्वाच्च दैवत । हास्याद्द्वे- षाद् विमर्शाद् कुशीलसद्भावाच्च मानुषाः । २ तैरश्चास्तु भयक्रोधा- हारापत्यादिरक्षणात् । घट्टनस्तम्भनश्लेष-प्रपातादात्मवेदना । ३ यद्वा वातपित्तकफसन्निपातोद्भवा इति तेषां तितिक्षा सह- नम् । उपसर्गसहने ध० ३ अधि० । "अतीचारालोचनेन प्राय- श्चित्तविधेयता । उपसर्गतितिक्षा च परीषहजयस्तथा " ध० ३ अधि० ।

उवसग्गपत्त-उपसर्गप्राप्त-त्रि० उपद्रव प्राप्ते, स्था० ५ ठा० २ उ० ।

उपसर्गप्राप्तस्य ग्रहणं कल्पते ।

(सूत्रम्) उवसग्गपत्तभिक्खुं गिलायमाणं नो कप्पइ तस्स गणावच्छेदितस्स निज्जूहित्तए । अगिलाए करणिज्जं वेया- वडियं जाव रोगातंकातो विप्पमुक्के ततो पच्छा तस्स अहालहुस्सगे नामं ववहारे पट्ठवियव्वे सिया इति ।

अथास्य सूत्रस्य कः संबन्धः ।

मोहेण पित्ततो वा, आयासंचेतनो समक्खातो ।
एसो उ उवसग्गो, इमो उ अन्नो परसमुत्थो ॥

मोहेन मोहनीयोदयेन वेदोदयेनेत्यर्थः पित्ततो वा पित्तोदयेने- त्यर्थः । उन्मत्तः स आत्मसञ्चेतकः आत्मनैवात्मनो दुःखोत्पा- दकः समाख्यातः यच्चात्मैवात्मनो दुःखोत्पादनमेष आत्मसंचे- तनीय उपसर्गः ततः पूर्वमात्मसञ्चेतनीयः उपसर्ग उक्तः इत उपसर्गाधिकारादयमन्यः परसमुत्थ उपसर्गोऽनेन प्रतिपाद्यते इत्यनेन सवन्धेनायातस्यास्य व्याख्या । सा च प्राग्वत् । तत्रो- पसर्गप्रतिपादनार्थमाह ।

तिविहो य उवसग्गो, दिव्वो माणुस्सितो तिरिच्छो य ।
दिव्वो उ पुव्वभणितो, माणुसतिरिए अतो वुच्छं ॥

त्रिविधः खलु परसमुत्थ उपसर्गः । तद्यथा दैवो मानुषिकस्तै- रश्चश्च तत्र दैवो देवकृतः पूर्वमनन्तरसूत्रस्याधस्ताद्भणितः । अतो मानुषं तैरश्चं च वक्ष्ये । प्रतिज्ञातमेव निर्वाहयति ।

विज्जाए मंतेण व, चुण्णेण व जोइतो अणप्पवसो ।
अणुसासणालिहावण, खमए महुरातिरिक्खादी ॥

विद्यया वा मन्त्रेण वा चूर्णेन वा योजितः सवन्धितः सन् क- श्चिदनात्मवशो भूयात् तत्रानुशासनेति । यथा रूपलब्ध्या विद्यादिप्रयोजितं तस्यानुशासनाऽपि क्रियते । तथा तपस्वी एष न वर्त्तते तावत्तं प्रतीदृशं कर्त्तुम् एवं करणे हि प्रभूतपापोपचय- स्तव स्यादिति । एवमनुशासिताऽपि न विवर्तते तर्हि तस्यास्त प्रति प्रतिविद्यया विद्वेषणमुत्पाद्यते । अथ सा नास्ति तादृशी प्र- तिविद्या तर्हि ( लिहावणत्ति ) शून्येऽसागारिके विद्याप्रयोगत- स्तस्य पुरतः आलेखाप्यते । येन स तत् दृष्ट्वा तस्याः सागारि- कमिदमनिर्वाच्यमिति जानानो विरागमुपपद्यते । एष मानु- षिक उपसर्गः ( खमगे महुरा इति ) मथुरायां श्रमणीप्रभृतीनां मानुष उपसर्गोऽभूत् स क्षपको निवारितवान् । एषोऽपि मानुष उपसर्गः । तिरश्चनाह ( तिरिक्खा इति ) तिर्यञ्चो ग्रामेयका आ- रण्यका वा श्रमणादीनामुपसर्गान् कुर्वन्ति यथाशक्ति निवारयित- व्याः । साम्प्रतमेतामेव गाथां विवरीषुराह ।

विज्जादि चुण्णे अभिजोइयगहियादिगहिए वा ।

अणुसासणालिहावण-महुराखमकादि व बलेण ॥

विद्यामन्त्रेण चूर्णेन वा अभियोजितो बोधिकाः स्तेना आदिश- ब्दात् म्लेच्छादिपरिग्रहस्तैर्वा गृहीते यया विद्यादि योजितं त- स्या प्रागुक्तप्रकारेणानुशासना क्रियते । तथा प्रतिविद्याप्रयोग- तस्तं प्रति च द्वेषणमुत्पाद्यते । तस्याभावे पूर्वप्रकारेण लिखा- पनं कार्यते बोधिकादिगृहीते पुनः मथुराक्षपकादिनेव बलेन यथा- शक्ति बोधिकादेर्निवारणं कर्त्तव्य विद्याद्यभियोगमेव भेदतः प्रति- पादयति ।

विज्जादभिओगो पुण, दुविहो माणुस्सितो य दिव्वो य ।
तं पुण जाणंति कहं , जइ नामं गेण्हए तेसिं ॥

विद्यादिभिरभियोगोऽभियुज्यमानता पुनर्द्विविधो द्विप्रकार- स्तथा मानुषिको दैवश्च । तत्र मनुष्येण कृतो मानुषिको देवस्तु य- तेन कृतत्वाद्दैवः । तत्र देवकृतो विद्यादिभिरभियोग एष एव यत्तस्मिन् दूरस्थितेऽपि तत्प्रभावात्स तथारूप उन्मत्तो जायते । अथ तं विद्याद्यभियोगं दैवं मानुषिकं वा कथं जानन्ति सूरि- राह । तयोर्देवमनुष्ययोर्मध्ये यस्य नाम गृह्णाति तत्कृतः स वि- द्याद्यभियोगो ज्ञेयः । साम्प्रतमणुसासणालिहावणेत्येतद्व्याख्या- नयति ॥

अणुसासियम्मि य ठिए, विद्देसं देंति तह वि य अतिट्ठंते ।
जक्खीए कोवीणं, तस्स उ पुरओ लिहावेंति ॥

येन सामान्यतः स्त्रिया पुरुषेण वा विद्याद्यभियोजितं तस्यानु- शासना क्रियते । अनुशासितेऽप्यतिष्ठति विद्याप्रयोगतस्तं वि- वक्षितं साधु प्रति तस्य विद्याद्यभियोक्तुर्विद्वेषं ददत्युत्पादयन्ति वरवृषभाः । तथाऽपि च तस्मिन्नतिष्ठन्ति यक्षया शून्याः कौ- पीनं तस्य पुरतो विद्याप्रयोगतो लेखापयन्ति । येन स तद्दृष्ट्वा तस्या इदं सागारिकमिति जानतो विरज्यते । सम्प्रति विद्याप्र- योगे दृढादरतास्थापनार्थमाह ।

विसस्स विसमेवे य, ओसहं अग्गिमग्गिणो ।
मंतस्स पडिमंतो उ, दुज्जणस्स विवज्जणा ॥

विषस्यौषधं विषमेव अन्यथा विषानिवृत्तेः । एवमग्निभूतादिषु- क्तस्यौषधमग्निः , मन्त्रस्य प्रतिमन्त्रो, दुर्जनस्यौषधं विवर्जना त- द्ग्रामनगरपरित्यागेन परित्यागः । ततो विद्याद्यभियोगसाधुसा- ध्वीरक्षणार्थं प्रतिविद्यादिप्रयोक्तव्यमिति ॥

जति पुण होज्ज गिलाणो,निरुज्झमाणो ततो तिगिच्छं से ।
संवरियमसंवरिया, उवालभंते निसिं वसभा ॥

यदि पुनर्विद्याद्यभियोजितस्तदभिमुखं गच्छन् निरुध्यमानो ग्लानो भवति ततः ( से ) तस्य साधोश्चिकित्सां संवृता केना- ऽप्यलक्ष्यमाणा कुर्वन्ति । तथा असंवृतायाः विद्याद्यभियोजित तस्याः प्रत्यक्षीभूय निशि रात्रौ तामुपालभन्ते । भेषयन्ति च ता- वत् यावत् सा मुञ्चतीति ।

"खमणमहुरत्ति" अस्य व्याख्यानमाह ।

थूभमहेसड्ढिसमणी, बोहियहरणं च निवसुया जाव ।
मज्झेण य अक्कंदे, कयम्मि जुद्धेण मोएति ॥

महुराए नयरीए थूभो देवनिम्मितो तस्स महिमानिमित्तं सड्ढी- तो समणीहिं सम निग्गया । तो रायपुत्तो य तत्थ अदूरे आयावनो चेट्ठइ ततो सड्ढी समणीतो बोहिएहिं गहियातो

तेण आणीया ते वोढितं सांढुं दट्ठुं अक्कंदो कओ तत्तो रायपुत्तेण माहुणा जुरू दाऊण मोयावितो । अक्करगमनिका त्विय पव्य महे महोत्सवे आर्यिका श्रमणीभि सह निर्गतास्तासां बोधिकैश्चौ-रैर्हरण नृपसुतश्च तत्रादूरे अतापयति । बोधिकैश्च तास्तस्य मध्येन नीयन्ते । ताभिश्च त दृष्ट्वा आक्रन्दे कृते स गुरून स्तेने-भ्यस्ता मोचयति। उक्तो मानुषिक. उपसर्ग. । संप्रति तैरश्चमाह।

गामेणारएणेण व, अभिभूयं सजयं तु तिरिएणं ।

लद्धं पकंपिया वा, रक्खेज्ज अरक्खणे गुरुगा ॥

ग्रामेनारएयेन वा अभिभूतमापादितामिभव सयत च यदि वा लब्ध तद्भयात् स्तम्भीभूतं प्रकम्पितं वा तद्भयत कथं क-म्पमानशरीर रक्षेत् । यदि पुनर्न रक्षति सत्यपि बले ततोऽरक्षणे प्रायश्चित्त गुरुकाश्चत्वारो गुरुका मासा. । व्य० प्र० २ उ० ।

उवसग्गपरिणा–उपसर्गपरिज्ञा– स्त्री० "पढमणजयणा य नेसिं पत्तो वोच्छे य अहिगारो" तेषा उपसर्गशब्ददर्शितपोडशविधाना-मुपसर्गाणां यथा घटना सम्बन्धप्राप्ति प्राप्तानां चाऽधिसहनं प्रतिघातना भवति तथाऽत ऊर्ध्वमध्ययनेन वक्ष्यत इत्ययमत्राधि-कार इतीत्येवं लक्षणे सूत्रकृताङ्गस्य तृतीयेऽध्ययने, सूत्र० १ श्रु० ३ अ० १ उ० । ( यथा तत्र वर्णित तथा दर्शितमुवसग्गशब्दे )

उवसग्गसह–उपसर्गसह– त्रि० दिव्याद्युपरूवसोढरि, "वोसट्ठ-चत्तदेहो, उवसग्गसहो जहेव जिणकप्पा" पंचा० १७ विव० । [ जिणकप्पशब्दे जिनकल्पिकस्य उपसर्गसहत्वं व्याख्यास्यामि ] सम्प्रति ये व्युत्सृष्टदेहपदेनात्मसञ्चेतनीया गृहीतास्तानुपदर्शयति ।

घट्टणपवडणथंभण, लेसण चउहा उ आयवेसंया ।

ते पुण सन्निवयंती, चोसट्ठदारे न इहं तु ॥

चतुर्भिरात्मना सचिन्त्यन्ते ये ते इत्यात्मसचेत्यास्तद्यथा घट्ट-नन प्रपतनतस्तम्भनत श्लेष्मतश्च । तत्र घट्टनतो यथा चक्षुषि रज प्रविष्ट तेन च चक्षुर्दु खटितुमारब्धमथवा स्वयमेव चक्षुषि गन्नके वा किञ्चित्तु खीलप्रभृति समुत्थित घट्टयति । प्रपतनतो यथा मन्दप्रयत्नेन चङ्क्रम्यमाणप्रतिपततो दु खाप्यते स्तम्भनेन यथा तावदुपविष्ट आस्ते यावत्पादसुप्तस्तब्धो जात श्लेषणतो यथा पादं तावदाकुञ्च्यावस्थितो यावत्तत्र वातेन लग्न अथवा नृत्त शिक्षयामीति किंचिदङ्गमप्यतिशयेन नामित तच्च तत्रैव लग्नमिति ते पुनरात्मसचेतनीया व्युत्सृष्टद्वारे निपतन्ति न इह ।

" ते उप्पन्ने सम्म, सहत्ति, खमइ त्ति, तितिक्खइ, अहियासे " इति चत्वार्यप्येकार्थिकानि पदानि । तत्र सम्यक् सहनमाह ।

मणवयणकायजोगेहिं, तहिं उ दिव्वमादिए तिन्नि ।

सम्मं अहियासेइ, तत्थ उ सुण्हा पदिट्ठंतो ॥

त्रिभिर्मनोवाक्काययोगै' प्रत्येकं दिव्यादीन् त्रीनुपसर्गान् प्रत्येकं चतुर्भेदान् सम्यगध्यास्ते सहते तत्र सहनं द्विधा उच्यतो भाव-तश्च तत्र द्रव्यस्य हाने स्नुषाया दृष्टान्तमेवाह ।

सासूससुकोसोदेवर–भत्तारमादिमज्झिमगा ।

दोसादी य जहएणा, जह सुण्हा सहियउवसग्गा ॥

श्वशुर श्वश्रूश्चैतावुत्कृष्टौ पूज्यत्वाद्देवरभर्तृका मध्यमा दोसो जघन्या यथा तत्कृता उपसर्गा स्नुषाया सोढास्तया साधुनाऽपि सोढव्या! इयमत्र भावना स्नुषया अपराधे कृते तां श्वशुर' श्व-श्रूश्च हीलयति सा च हील्यमाना अतीव लज्जते यद्यपि तानि दु गोत्पादनानि वचनानि दुरध्यास्यानि तथाऽपि सा तानि सम्यगध्यास्ते चिन्तयति च न सम्यक् अध्यासिष्ये तत कुत्र याम अवध्वंसो भविष्यति स्नुषाचारस्थापयास्यति देवरा अपि चोल्लुण्ठवचनानि भाषन्ते यद्यपि तेषां सा नो लज्जते तथाऽपि न तानुल्लुण्ठति किं तु सम्यक् तद्वचनान्यध्यास्ते दासा अपि तां स्नु षामुल्लुण्ठयन्ति तथाऽपि किं किं तेषां वचनान्यहं गणयामीत्य-वगणनया सम्यगध्यास्ते न प्रतिवचनं ददाति। एतत्तद्द्रव्यसहन यत्साधुर्द्वादशविधानप्युपसर्गान् कर्म्मविनिर्ज्जरणार्थं सम्य-गध्यास्त एतदेवाह ।

सासुससुरोवमा खलु, दिव्वादिपरोवमा य मणुस्सा ।

दासत्थाणीतिरिया, तह सम्मसोहिया सोए ।

तथा वधूदृष्टान्तोक्तप्रकारेण श्वश्रूश्वशुरोपमान् दिव्यान् उप-सर्गान् देवरोपमान् मानुषान् उपसर्गान् दासस्थानीयान् तैर-श्चान् उपसर्गान्सम्यगध्यास्ते ।

सम्प्रति द्विविहे वेत्यस्य व्याख्यानार्थमाह ।

दुहा वेते समासेणं, सव्वे सामएणकंटगा ।

विसयाणुलोमिया चेव, तहेव पडिलोमिया ॥

अस्य वा एते उपसर्गाः श्रामण्यस्य कण्टका इव श्रामण्यकण्टका' सर्वे समासेन द्विधा प्रतिपादितास्तद्यथा विषयानुलोमिका इन्द्रि-यविषयानुलोमिका इन्द्रियविषयप्रतिलोमिकास्तानेव दर्शयति ।

वंदणसक्कारादी, अणुलोमा बंधवहणपडिलोमा ।

ते वि य खमता सव्वे, पत्थं रुक्खेण दिट्ठंतो ॥

चन्दनसत्कारादयोऽनुलोमा बन्धवधप्रभृतयः प्रतिलोमास्तानपि सर्वान् क्षमते अत्र वृक्षेण दृष्टान्तस्तमेवाह ।

वासीचंदणकप्पे, जह रुक्खाइ य सुहदुहसमो उ ।

रागदोसविमुक्को, सहई अणुलोमपडिलोमा ।

वासीचन्दनकल्पो यस्य स वासीचन्दनकल्पोऽथवा कल्प-स्तुल्यवाची ततोऽयमर्थो वास्यां वास्यातक्षणे चन्दनेनानुलेप-नेन कल्पस्तुल्यो वासीचन्दनकल्पो यथा वृक्षो भवति इत्येव-ममुना प्रकारेण रागद्वेषविमुक्तोऽत एव सुखदु खसमोऽनुलो-मप्रतिलोमान् उपसर्गान् सम्यक् सहते ॥ व्य० द्वि० ७ उ० ।

उवसग्गाभिउंजण–उपसर्गाभियोजन–न० उपसर्गा दिव्याद-यस्तैरभियोजनम् उपसर्गाभियोजनम् । अभिभवकायोत्सर्गे, दिव्याद्यभिभूत एव महामुनिस्तदेवार्यं करोतीति हृदयम् । उपसर्गाणामभियोजनम् । सोढव्या भयोपसर्गास्तद्भय न कार्य-मित्येवभूते कायोत्सर्गे, 'उवसग्गाभिउंजणे बीओ' आव०५अ० ।

उवसज्जण–उपसर्जन–न० उप० सृज्० ल्युट् । दैवाद्युपद्रवे, वाच० । अप्रधानभूते गौणे विशेषणे, विशे० ।

उवसत्त–उपसक्त–त्रि० विशेषेण सक्तिमति, उत्त० ३२ अ० ।

उवसद्द–उपशब्द–न० सुरतावस्थाया शलवलायमानादिषु,नं० ।

उवसम– उपशम–पु० उपशान्तिरुपशम' । आ० । अपराधवि-धायिन्यपि कोपपरिवर्जने, स च कस्यचित्कषायपरिणते: क-टुकफलावलोकनाद्भवति । कस्यचित्पुन' प्रकृत्यैवेति । प्रव० १४८ द्वा० । आचा० । सम्या० । क्रोधादिनिग्रहे,आ०म०द्वि० । " उवसमेणहणे कोह " उपशमेन शान्तिरूपेण द० ८ अ० । आचा० । माध्यस्थ्यपरिणामे, । आव० ६ अ० । शान्तावस्थाने, आव० १ अ० । इन्द्रियोपशमरूपे रागद्वेषाभावजनिते (सूत्र० २ श्रु० १ अ० ) शमे, आचा० । स च द्वेधा द्रव्यभावभेदात

द्रव्योपशमः कतकफलाद्यादिभिः कलुषजलादेः भावोपशमस्तु ज्ञानादिभिरात्मनः । तत्र यो येन ज्ञानेनोपशाम्यति स ज्ञानोपशमस्तद्यथा क्षेपण्याद्यन्यतरया धर्मकथया कश्चिदुपशाम्यतीत्यादि, दर्शनोपशमस्तु यो हि शुद्धेन सम्यग्दर्शनेनापरमुपशमयति यथा श्रेणिकेनाश्रद्दधानो देवः प्रतिबोधित इति दर्शनप्रभावकैर्वा सम्मत्यादिभिः कश्चिदुपशाम्यति । चारित्रोपशमस्तु क्रोधाद्युपशमो विनयनम्रतेति ।

पण्णाणमुवलब्भ हेच्चा उवसमं फारुसियं समादियंति

त्यक्त्वोपशमं तत्र केचन क्षुल्लका ज्ञानोदन्वतोऽप्याप्युपर्येव प्लवमानास्तमेवमन्नूनमुपशमं त्यक्त्वा ज्ञानलवोत्तम्भितगर्वाध्माताः पारुष्यं परुषतां समाददति गृह्णन्ति तद्यथा परस्परगुणनिकायां मीमांसायां वा एकोऽपरमाह त्वमत्र जानीषे न चैषा शब्दानामयमर्थो यो भवताऽभाणि । अपि च कश्चिदेव मादृशः शब्दार्थनिर्णयायात्र न सर्वे इत्युक्ते च पृष्टा गुरवः स्वयमपि परीक्षितं निश्चितं पुनरिदं न वादिनि च मल्लमुख्ये च मादृगेवाऽन्यतरं गच्छेत् द्वितीयस्त्वाह नन्वस्माकमाचार्यो एवमाज्ञापयन्तीत्युक्ते पुनराह सोऽपि वा कुण्ठो बुद्धिविकलः किं जानीते त्वमपि च शुकवत्पाठितः निरूहापोह इत्यादीन्यन्यान्यपि दुर्गृहीतकतिचिदक्षरो महोपशमकारणं ज्ञानं विपरीततामापादयन् स्वौद्धत्यमाविर्भावयन् भाषते उक्तञ्च अन्यैस्स्वेच्छारचितानर्थविशेषान् श्रमेण विज्ञाय कृत्स्नं वाङ्मयमित इति खादत्यङ्गानि दर्पेण कोरूतकर्मीश्वराणां कुक्कुटशावकसमानवल्लभ्य शास्त्राण्यपि हास्यकथां लघुतां वा क्षुल्लको नयतीत्यादि पाठान्तरं वा " हेच्चा उवसमं च णं फारुसियं समारुहंति" त्यक्त्वोपशमं अथानन्तरं बहुश्रुतीभूता एके न सर्वे परुषतामालम्बते ततश्चाज्ञा अञ्चिता वा तूर्णीभावं भजन्ते हुंकारशिरःकम्पनादिना वा प्रतिवचनं ददति १ श्रु० ६ अ० ४ उ० ( कलहोपशमे गुणा अहिगरणशब्दे उक्ताः ) विष्कम्भिनोदयत्वे, उत्त० १ अ० । विपाकोदयविष्कम्भे, । न० । " उदयविघाय उवसमो " अनुदितस्योदयविघाने, विशे० । मोहनीयकर्मणोऽनन्तानुबन्ध्यादिभेदभिन्नस्योपमश्रेणिप्रतिपन्नस्य मोहनीयभेदाननन्तानुबन्ध्यादीनुपशमयति ( इति ) उदयाभावे, स्था० ६ ठा० ॥ मिथ्यात्वमोहनीये कर्मणि, उदीर्ये, क्षीणे, शेषस्यानुदयापादने, विशे० । क्षयोपशमादेर्भेदः । अथ प्रेरको भणति ननु क्षयोपशमोपशमयोः कः किल विशेषः । सूरिराह ननु उदीर्णे उदयप्राप्ते कर्मणि क्षीणे शेषे चानुदीर्णे उपशान्ते सति क्षयोपशमोऽभिधीयत इति । प्रेरकः प्राह ।

सो चेव नणूवसमो, उदए खीणम्मि सेसए समिए ।
सुहुमोदयता मीसे, नन्नूवसमिए विसेसो यं ॥

नन्नूपशमोऽप्ययमेव य किमित्याह । य उदिते कर्मणि क्षीणेऽनुदितेऽनुपशान्तो भवति अत्रोत्तरमाह । ननु मिश्रे क्षयोपशमे सूक्ष्मोदयता अस्ति प्रदेशोदयेन सत्कर्मवेदनमस्तीत्यर्थः । उपशमिते तु कर्मणि तदपि नास्तीत्ययमनयोर्विशेष इति एतदेवाह ।

वेएइ संतकम्मं, खओवसमिएसु नाणुभावं सो ।
उवसंतकसाओ पुण, वेएइ न संतकम्मं पि ॥

स क्षयोपशमावस्थाकषायवान् जीवः क्षयोपशमिकेष्वनन्तानुबन्ध्यादिषु तत्संबन्धे सत्कर्मानुभवति प्रदेशकर्म वेदयति न पुनरनुभावं विपाकमनु नाम वेदयतीत्यर्थः । उपशान्तकषायस्तु सत्कर्मापि न वेदयतीति क्षयोपशमोपशमयोर्विशेष इति । विशे० । पं० सं० । उपशान्तकषायवीतरागछद्मस्थगुणस्थापने, प्रव० २२४ द्वा० । उपशमश्रेणौ, कल्प० । पञ्चदशे दिवसे, चं० १० पाहु० । जो० । जं० । स० । विंशतितमे मुहूर्ते, जं० ७ वक्ष० । जो० । कल्प० । तृष्णानाशे, रोगोपद्रवशान्तौ निवृत्तौ च । वाच० ।

उवसमग—उपशमक—पुं० उपशमश्रेण्यन्तर्गतेष्वपूर्वकरणादिषु, उपशान्तमोहान्तेषु, उपशमश्रेण्यां रूढेषु अपूर्वकरणानिवृत्तिबादरसूक्ष्मसपरायेषु, पं० सं० २ द्वा० । स० ।

उवसमण—उपशमन—न० उप शम भावे-ल्युट्-उपशमार्थे, "उवसमणाए अहिगरणस्स अब्भुट्ठा एवं भवति" स्था० ८ ठा० ।

उवसमणा—उपशमना—स्त्री० उदयोदीरणानिधत्तनिकाचनाकरणायोग्यत्वेन व्यवस्थाप्यते कर्म यया सा उपशमना । क० प्र० । पं० सं० । उदयोदीरणानिधत्तनिकाचनाकरणानामयोग्यत्वेन कर्मणोऽस्थापने, उक्तं च " उव्वट्टणओवट्टणसंकमणाइं च तत्थ करणाइंति" । अष्टानां करणानां षष्ठं करणमेतत् । स्था० ४ ठा० २ उ० । संप्रति उपशमनाप्रतिपादनार्थमाह । अवसरस्तत्र चैतेऽधिकाराः तद्यथा प्रथमं सम्यक्त्वोत्पादप्ररूपणा, सर्वविरतिलाभप्ररूपणा, अनन्तानुबन्धिविसंयोजना, दर्शनमोहनीयक्षपणा, दर्शनमोहनीयोपशमना, चारित्रमोहनीयोपशमना पुनः सप्रभेदेति । तत्र वेदमुपशान्तमुपशमनाकरणम् प्रभेदं सर्वात्मना व्याख्यातुमशक्यं ततो यत्रांशे व्याख्यातुमात्मनोऽशक्तिस्तत्रांशे तद्वेत्तृणामाचार्यो नमस्कारं चिकीर्षुराह ।

करणकया अकरणकया, दुविहा उवसमणा विइयाए ।
अकरणअणुइन्नाए, अणुओगधरे पणिवयामि ॥ ३१४ ॥

इह द्विविधा उपशमना करणकृता अकरणकृता च तत्र करणक्रिया यथा प्रवृत्तिपूर्वकनिवृत्तिकरणसाध्यक्रिया विशेषः तेन कृता करणकृता तद्विपरीता अकरणकृता च या संसारिणां जीवानां गिरिनदीपाषाणवृत्ततादिभिः स्नानवद्वत् प्रवृत्त्यादिकरणक्रियाविशेषमन्तरेणापि वेदनानुभवनादिभिः कारणैरुपशमनोपजायते सा अकरणकृतेत्यर्थः । इदं च करणकृताकरणकृतत्वरूपं द्वैविध्यं देशोपशमनाया एव द्रष्टव्यं न सर्वोपशमानुकरणकृताया वेति । अस्याश्चाकरणकृतोपशमनाया नामधेयद्वयं तद्यथा अकरणोपशमना अकृतोपशमना च तस्याश्च सम्प्रत्यनुयोगो व्यवच्छिन्नस्तत आचार्यः स्वयं तस्यानुयोगमजानानस्तद्वेदिनृणां विशिष्टमतिप्रभाकलिकचतुर्दशवेदिनां नमस्कारमाह । ( विइयाए इत्यादि ) द्वितीया अकरणकृता तृतीयाया उपशमनाया एव द्रष्टव्या न सर्वोपशमनानकरणकृतेवेति । अस्याश्चाकरणकृतोपशमनाया अनुयोगधरान् प्रणिपतामि तेषु प्रतिपातं करोमि तस्मादिह करणकृतोपशमनाया अधिकारः साऽपि च द्विधा वक्ष्यमाणविषयमेवाह ।

सव्वस्स य देसस्स य, करणुवसमनदुन्नि एक्केका ।
सव्वस्स गुणपसत्था, देसस्स वि तासि विवरीआ ॥ ३१५ ॥

सा करणकृतोपशमना द्विविधा सर्वस्य विषये देशस्य विषये च सर्वविषया देशविषया चेत्यर्थः । एकैकस्याश्च द्वे द्वे नामधेये तद्यथा सर्वस्योपशमनाया गुणोपशमना प्रशस्तविहायोगतिगमना च । क० प्र० ।

देसूनसमणा सव्वाण, होइ सव्वोवसामणा मोहो ।
अपसत्थपसत्था जा, करणोवसमणाए अहिगारो ॥

इह द्विधा उपशमना तद्यथा देशोपशमना सर्वोपशमना च । तत्र देशोपशमना सर्वेषामपि कर्मणां प्रवर्तते । सर्वोपशमना तु मोहे मोहनीयस्यैव देशोपशमनायाश्चामून्येकार्थिकानि तद्यथा देशोपशमना अनुदयोपशमना अगुणोपशमना अप्रशस्तोपशमना च । सर्वोपशमनायास्त्वमूनि तद्यथा सर्वोपशमना उदयोपशमना गुणोपशमना प्रशस्तोपशमना च । तत्र देशोपशमना द्विधा करणकृता करणरहिता च । सर्वोपशमना तु करणकृतैव करणानि यथाप्रवृत्तापूर्वानिवृत्तिसंज्ञानि तैः कृता तद्विपरीता करणरहिता या संसारिणां जीवानां गिरिनदीपाषाणवृत्तताविसम्भवयन् यथाप्रवृत्तादिकरणसाध्यक्रियाविशेषमन्तरेणापि वेदनानुभवनादिभिः कारणैरुपजायते । तस्याश्च सम्प्रत्यनुयोगव्यवच्छित्तिस्ते द्वे नृणामभावात् ततोऽप्रशस्ता च या करणोपशमना तयोराधिकारः प्रथमतः सर्वोपशमना वाच्या तत्र चैतेऽर्थाधिकारास्तद्यथा सम्यक्त्वोत्पादप्ररूपणा देशविरतिलाभप्ररूपणा सर्वविरतिलाभप्ररूपणा अनन्तानुबन्धि विसंयोजना दर्शनमोहनीयक्षपणा दर्शनमोहनीयोपशमना चारित्रमोहनीयोपशमा च । पं०सं० ।

तत्रादौ सम्यक्त्वोत्पादप्ररूपणार्थमाह ।

सव्वुवसमणा मोहस्सेव, तस्स सव्वुवसमकिय.जोग्गो ।
पंचिंदिओ उ सन्नी, पज्जत्तो लद्धितिगजुत्तो ॥ ३१६ ॥
पुव्वं पि विसुज्झंतो, गंठिअसत्ताण इक्कमिय सोहिं ।
अन्नयरे सागारो, जोगे य विसुद्धिलेसासु ॥ ३१७ ॥
ठिइसत्तकम्मअंतो, कोडी कोडी करेत्तु सत्तण्हं ।
दुट्ठाणचउट्ठाणे, असुभसुभाणं च अणुभागं ॥ ३१८ ॥
बंधंतो धुवपगडी, भवपाउग्गा सुभा अणाओ य ।
जोगवसायएसंको, उक्कोसं मज्झिमजहण्णं ॥ ३१९ ॥
ठिई य बंधबद्धा पूरे, नववंधपल्लसंखभागूणं ।
असुभाणसुभाणभागं अणंतगुणहाणिवड्ढीहिं । ३२० ।
करणं अहापवत्त, अपुव्वकरणमनियट्टिकरणं च ।
अंतोमुहुत्तयाइं, उवसंतद्धं चउहिं कमेण । ३२१ ।

इह सर्वोपशमना मोहस्यैव मोहनीयस्यैव शेषाणां तु कर्मणां देशोपशमना तत्र तस्य मोहनीयस्य सर्वोपशमनाक्रियायोग्य पञ्चेन्द्रिय संज्ञी सर्वाभिः पर्याप्तिभिः पर्याप्त इत्येव लब्धित्रिकयुक्तः पञ्चेन्द्रियत्वसंज्ञित्वपर्याप्तित्वरूपाभिस्तिसृभिः लब्धिभिर्युक्त अथवा उपशमलब्ध्युपशमश्रेणिश्रवणलब्धिकरणत्रयहेतुप्रकृष्टयोगलब्धिरूपत्रिकयुक्तः करणकालात् पूर्वमपि अन्तर्मुहूर्त्तकालं यावत् प्रतिसमयमनन्तगुणवृद्ध्यादिभिर्विशुध्यमानोऽवदायमानचित्तसन्ततिः ग्रन्थिकसत्वानामभव्यसिद्धिकानां या विशोधिस्तामतिक्रम्य वर्तमानः ततोऽनन्तगुणविशुद्ध इत्यर्थः । तथा अन्यतरस्मिन् मतिश्रुतज्ञानावरणविभङ्गज्ञानानामन्यतरस्मिन् साकारे साकारोपयोगे वाऽन्यतरस्मिन् मनोयोगे वाग्योगे काययोगे वा वर्तमानस्तिसृणां विशुद्धानां लेश्यानामन्यतमस्यां लेश्यायां जघन्येन तेजोलेश्यायां मध्यमपरिणामेन पद्मलेश्यायामुत्कृष्टपरिणामेन शुक्ललेश्यायां वर्तमानो जघन्येन तेजोलेश्या तथा आयुर्वर्जानां सप्तानां कर्मणां स्थितिबन्धं सागरोपमकोटाकोटीप्रमाणां कृत्वा अशुभानां कर्मणामनुभागं चतुःस्थानकं द्विस्थानकं करोति शुभानां च कर्मणां द्विस्थानकं सन्तं चतुःस्थानकं करोति ध्रुवतया प्रकृतीः पञ्चविधज्ञानावरणनवविधदर्शनावरणमिथ्यात्वषोडशकषायभयजुगुप्सातैजसकार्मणवर्णगन्धरसस्पर्शा गुरुलघूपघातनिर्माणपञ्चविधान्तरायरूपा सप्तचत्वारिंशत्संख्या बध्नन् परावर्त्तमानाः स्वस्वभावप्रायोग्याः प्रकृतीः शुभा एव बध्नाति ता अप्यायुर्वर्जाः अतीव विशुद्धिपरिणामो हि नायुर्बन्धमारभत इति कृत्वा तद्वर्जन भवप्रायोग्या इति वचनाच्चैतदवगन्तव्यम् । यदुत तिर्यङ्मनुष्यो वा प्रथमसम्यक्त्वमुत्पादयन् देवगतिप्रायोग्याः शुभाः प्रकृतीर्देवगतिदेवानुपूर्वीपञ्चेन्द्रियजातिवैक्रियशरीरवैक्रियाङ्गोपाङ्गसमचतुरस्रसंस्थानपराघातोच्छ्वासप्रशस्तविहायोगतित्रसादिदशकसातवेदनीयोच्चैर्गोत्ररूपा एकविंशतिसंख्या बध्नाति देवो नैरयिको वा प्रथमसमये सम्यक्त्वमुत्पादयन् मनुजगतिप्रायोग्या मनुजगतिमनुजानुपूर्वीपञ्चेन्द्रियजातिसमचतुरस्रसंस्थानप्रथमसंहननौदारिकशरीरौदारिकाङ्गोपाङ्गपराघातोच्छ्वासप्रशस्तविहायोगतित्रसादिदशकसातवेदनीयोच्चैर्गोत्ररूपा द्वाविंशतिसंख्या न बध्नाति केवलं यदि सप्तमनरकपृथ्वीनारकः प्रथमस्य सम्यक्त्वमुत्पादयति ततः तिर्यग्गतितिर्यगानुपूर्वीनीचैर्गोत्राणि वक्तव्यानि शेषं तदेव तथा बध्यमानप्रकृतीनां स्थितिं बध्नाति अन्तः सागरोपमकोटाकोटीप्रमाणामेव नाधिका योगवशाच्च प्रदेशाग्रमुत्कृष्टमध्यमजघन्यं च बध्नाति तथा हि जघन्ययोगे वर्त्तमानो जघन्य प्रदेशाग्रं बध्नाति मध्यमे मध्यममुत्कृष्टे तूत्कृष्टमिति । स्थितिबन्धेऽपि चूर्णे सत्यन्य स्थितिबन्धं प्राक्तनस्थितिबन्धापेक्षया पल्योपमसंख्येयभागन्यूनं करोति तस्मिन्नपि च परिपूर्णे सति अन्य स्थितिबन्धं पल्योपमासंख्येयभागन्यूनं करोति एवमन्यमन्यस्थितिबन्धपूर्वपूर्वापेक्षया पल्योपमासंख्येयभागन्यूनं करोति अशुभानां च प्रकृतीनां बध्यमानानामनुभागं द्विकस्थानकं बध्नाति तमपि प्रतिसमयमनन्तगुणहीनं शुभानां चतुःस्थानकं बध्नाति तमपि प्रतिसमयमनन्तगुणवृद्धिमेवमसौ कुर्वन् किं करोति इत्यत आह । करणमित्यादि ) करणं यथाप्रवृत्तं करोति ततोऽनिवृत्तिकरणमिति परिणामविशेषकरणं "परिणामोत्तेत्ति" वचनप्रामाण्यात् एतानि च त्रीण्यपि करणानि च प्रत्येकमन्तर्मुहूर्त्तिकानि सर्वेषामपि करणानां कालोऽन्तर्मुहूर्त्तप्रमाणस्ततोऽनेन क्रमेण चतुर्थीमुपशान्ताद्धां लभते साऽपि चान्तर्मुहूर्त्तिकी । क०प्र० ।

सम्प्रति करणानामेव स्वरूपमाविश्चिकीर्षुराह ॥

आइल्लेसुं दोसु, जहन्न उक्कोसिया भवे सोही ।
जो पइसमयं अज्झव-साया लोगा असंखेज्जा ॥

आद्ययोर्द्वयोः करणयोर्यथाप्रवृत्तिनिवृत्त्याख्ययोर्जघन्या उत्कृष्टा च शुद्धिर्भवति यतो यस्मादाद्ययोः करणयोः प्रतिसमयमध्यवसाया विशोधिरूपा नानाजीवापेक्षया असंख्येयलोकाकाशप्रदेशप्रमाणास्ततः आद्ययोर्द्वयोः करणयोः प्रतिसमयं जघन्या उत्कृष्टा च विशोधिर्भवति । तासां विशोधीनामल्पबहुत्वम् । तथा प्रथमसमये विशोधयो नानाजीवापेक्षया असंख्येयलोकाकाशप्रदेशप्रमाणास्ततो द्वितीयसमये विशोध्याधिकास्ततोऽपि तृतीये समये विशोध्याधिका एवं तावद्वाच्यं यावच्चरमसमयः एवमपूर्वकरणेऽपि द्रष्टव्यमेते च विशोध्यध्यवसाया यथाप्रवृत्तापूर्वकरणयोः स्थाप्यमाना विषमचतुरस्रं क्षेत्रमापूरयन्ते तथा करणे नानिवृत्तिकरणाध्यवसाया मुक्तावलीसंस्थिता स्थापना ।

१०००००००००००००१६
८०००००००००००२०
१०००००००००००१८
४००००००००——पूर्वकरण
३००७००००१४
२००००००१२
१०००००७
०००३
००५

एतदेवाह ॥

पइसमयमणंतगुणा, सोही उड्ढामुही तिरिहा उ ।
छेदाणि य जीवाणं, तइए उड्ढामुहा उक्का ॥

त्रयाणामपि करणानां प्रतिसमयमूर्द्धमुखा सिद्धिरनन्तगुणा वेदितव्या तद्यथा प्रथमसमयशुद्ध्यपेक्षया द्वितीयसमये शुद्धिरनन्तगुणा ततोऽपि तृतीयसमये अनन्तगुणा एवं यावदनिवृत्तिकरणचरमसमय आद्ययो शुद्धयो करणयोस्तिर्यङ्मुखा शुद्धि. षट्स्थाना षट्स्थानपतिता तद्यथा प्रथमसमयगता शुद्धि षट्स्थानविशिष्टा द्वितीयस्थानगता विशिष्टा एव यावदपूर्वकरणचरमसमय. तृतीयेविनिवृत्तिकरणे प्रतिसमयं सकलजीवापेक्षयाऽप्येकमेवाध्यवसायस्थानम्। तथाहि अनिवृत्तिकरणस्य प्रथमसमये वर्तन्ते ये च प्रवृत्ता ये च वर्तिष्यन्ते तेषां सर्वेषामप्येकमेवाध्यवसायस्थानं द्वितीयसमयेऽपि वर्तन्ते ये च प्रवृत्ता ये च वर्तिष्यन्ते तेषामपि सर्वेषामेकमेवाध्यवसायस्थानं केवल प्रथमसमयभाविविशोधिस्थानपेक्षया अनन्तगुणविशुद्धम् एव तावद्वाच्यं यावत्तस्यानिवृत्तिकरणस्य च चरमसमयस्तनस्तृतीये करणे एकैकशोधिरूर्द्धमुखरूपा न द्वितीया तिर्यङ्मुखा तत्र यथा प्रवृत्तिकरण एव ।

विशोधिविधितारतम्यमुपदर्शयन्नाह ॥

गंतुं संखेज्जंसं, अहापवत्तस्स हीण जा सोही ।
तीए य पढमसमये, अनंतगुणिया उ उक्कोसा ॥

यथा प्रवृत्तिकरणस्य सख्येयं भाग गत्वाऽन्तरसमये या जघन्या शुद्धिस्तस्या. सकाशात् प्रथमे समये उत्कृष्टा विशोधिरनन्तगुणा । इयमत्र भावना यथाप्रवृत्तिकरणस्य प्रथमसमये या सर्व्वजघन्या विशोधि सा सर्वस्तोका ततो द्वितीये समये जघन्या विशोधिरनन्तगुणा एवं तावद्वाच्य यावत् यथाप्रवृत्तिकरणस्य सख्येयो भागो गतो भवति तत प्रथमसमये उत्कृष्टा विशोधिरनन्तगुणा ततो यतो जघन्यस्यानानिवृत्तस्तस्योपरितना जघन्या विशोधिरनन्तगुणा ततोऽपि द्वितीयसमये उत्कृष्टा विशोधिरनन्तगुणा तत उपरि जघन्या विशोधिरनन्तगुणा एवमुपर्यधश्च एकैका विशोधिरनन्तगुणा तावद्वाच्या यावच्चरमसमये जघन्या विशोधि । तथा चाह ।

एवं एक्कतरिया, हेट्ठुवरि जाव हीणपज्जंते ।
तत्तो उक्कोसाओ, उवरिंवरिं होयणंतगुणा ॥

एव पूर्वोक्तप्रकारेण सख्येयभागातपगत आरभ्य अध उपरि च एकान्तरिता विशोधिरनन्तगुणा तावद्वाच्या यच्चहीनपर्यन्ता जघन्यविशोधिपर्यवसान पल्योपमसख्येयभागमात्राश्चोत्कृष्टा विशुद्धयोऽद्याप्यनुक्तग सन्ति ततस्ता उपरि उपरि अनन्तगुणा वक्तव्या तदेवमुक्त यथाप्रवृत्तिकरणम् ।

सम्प्रत्यपूर्वकरणस्य स्वरूपमाविश्चिकीर्षुराह ।

जा उक्कोसा पढमे, तीसेणं ता जहन्निया बाए ।
करणा तीए जेट्ठा. एवं जा सव्वकरणं पि ॥

प्रथमे यथाप्रवृत्तकरणे चरमसमये या उत्कृष्टा विशोधिस्तस्याः सकाशात् द्वितीय पूर्वाख्ये करणे प्रथमे समये जघन्या विशोधिरनन्तगुणा तस्या अपि सकाशात् प्रथमसमये एव ज्येष्ठा उत्कृष्टा विशोधिरनन्तगुणा ततो द्वितीये समये जघन्या विशोधिरनन्तगुणा । ततोऽपि तस्मिन्नेव तृतीये समये उत्कृष्टा विशोधिरनन्तगुणा । ततोऽपि द्वितीये जघन्या विशोधिरनन्तगुणा । ततोऽपि तस्मिन्नेव तृतीये समये उत्कृष्टा विशोधिरनन्तगुणा । एवं प्रतिसमयं तावद्वाच्यं यावत्सकलमपि करण परिसमाप्यते ।

अपुव्वकरणसमयं, कुणइ अपुव्वे इमे च चत्तारि ।
ठिइघायं रसघायं, गुणसेढी बंधगद्धा य ॥

अपूर्वकरणेन समक तस्मिन्नेव समये अपूर्वकरणे प्रविशति तस्मादेव समयादारभ्येत्यर्थ । इमान्वक्ष्यमाणांश्चतुर पदार्थान् अपूर्वान् करोति अतीते काले न कदाचनापि पूर्वं कृताः । ततो न वा स्थितिघातं रसघातं गुणश्रेणिवरुकार्थं च ।

तत्र प्रथमत. स्थितिवत स्वरूपव्यावर्णनायाह ।

उक्कोसेणं बहुसा–गराणि इयरेण पल्लसंखेयं ।
ठियअग्गाओ घायइ, अंतमुहुत्तेण ठिइखडं ॥

स्थितिसत्कर्म्मणोऽग्रिमभागादुत्कर्षेण प्रभूतानि सागरोपमाणि प्रभूतसागरोपमप्रमाणमितरेण जघन्येन पल्योपमासंख्येयभागमात्रखिण्डमन्तर्मुहूर्तेन कालेन घातयति घातयित्वा च दलिक याः स्थितीरधो न खण्डयिष्यति तत्र प्रक्षिपति तत. पुनरपि अधस्तात् पल्योपमासख्येयभागमात्रस्थितिखण्डमन्तर्मुहूर्तेन कालेन घातयन् प्रागुक्तप्रकारेणैव च निक्षिपति एवमपूर्वकरणाद्धाया प्रभूतानि स्थितिखण्डसहस्राणि व्यतिक्रामन्ति तथा च सति अपूर्वकरणस्य प्रथमे समये यत् स्थितिसत्कर्मासीत् तत्तस्यैव चरमसमये सख्येयगुणहीन जात तदेवमुक्त. स्थितिघात. ।

सम्प्रति रसघातप्रतिपादनार्थमाह ।

असुभाणं तं मुहुत्तेण, हणइ रसं कंडगं अणंतंसं ।
करणे ठिइखंडाणं, तम्मि उ रसकंडगसहस्सा ॥

स्थितिखण्डानां करणे उत्किरणे प्रवृत्त. सन् अशुभा वा प्रकृतीना रसकण्डकमनुभागकण्डकमनन्तानन्तविभागात्मकमन्तर्मुहूर्तेन विनाशयति किमुक्तं भवति अशुभप्रकृतीनां यत् अनुभागसत्कर्म्म तस्यानन्तानुभागान् मुक्त्वा शेषान् अनुभागभागान् सर्वानप्यन्तर्मुहूर्तेन कालेन विनाशयति ततः पुनरपि तस्य प्रागुक्तस्यानन्ततमस्य भागस्यानन्ततम भागं मुक्त्वा शेषान् अनुभागभागान् सर्वानन्तर्मुहूर्तेन कालेन विनाशयति एवमनेकानि अनुभागखण्डसहस्राणि एकैककस्मिन् स्थितिखण्डे व्यतिक्रामन्ति तथा चाह ( तम्मि उ रसकण्डगसहस्सा ) तस्मिन् स्थितिखण्डे एकैकस्मिन् रसकण्डगसहस्राणि गच्छन्ति स्थितिखण्डानां च सहस्रैरपूर्वकरणे परिसमाप्यते तदेवमुक्तो रसघात. ।

सम्प्रति गुणश्रेणिमाह ।

घाइयठिईइदलियघेत्तुं, घेत्तुं असंखगुणणाए ।
साहियदुकरणकालं, उदयाओ एइ गुणसेढिं ॥

घातितायाः स्थिति शुभध्यानदाहिकं गृहीत्वा उदयसमयादारभ्य प्रतिसमयमसंख्येयगुणवृद्ध्या क्षपयति तद्यथा उदयसमये स्तोक द्वितीयसमये असख्येयगुण ततोऽपि तृतीये समये असंख्येयगुणम् । एव तावद्वक्तव्य यावत्साधिककरणद्वयकालो मनाक्

समधिका अपूर्वकरणानिवृत्तिकरणकालसमया एव प्रथमसमयगृहीतदलिकनिक्षेपविधिः एवं द्वितीयादिसमये गृहीतानामपि दलिकानां निक्षेपविधिर्द्रष्टव्यः । अन्यच्च गुणश्रेणिरचनार्थं प्रथमसमये यत् दलिकं गृह्णाति ततः स्तोकं ततोऽपि द्वितीयसमये असंख्येयगुणं ततोऽपि तृतीये समये असंख्येयगुणमेव तावद्वक्तव्यं यावद्गुणश्रेणिकरणचरमसमयः । अपूर्वकरणानिवृत्तिकरणसमयेषु वा उपयत क्रमशः क्षीयमाणेषु गुणश्रेणिदलिकनिक्षेपः शेषे भवति उपरि च न वर्द्धते ।

करणाऽऽइ अपुव्वो, जो बंधो सो न होई जो ।
अणो बंधगउद्धा, सा तुल्लिमा उद्दिगःगाए ॥

अपूर्वकरणस्यादौ प्रथमसमये यो बन्धः प्रारब्धस्तबन्धकाला उच्यते कियन्तं कालं यावत् स प्रारब्धांशो बन्धो बन्धकाला उच्यते अत आह यावदभव्यो बन्धो न भवति न प्रारभ्यते स प्रारब्धो बन्धो यावन्न समाप्तिं यातीत्यर्थः । सा च बन्धकाला स्थितिकण्डकस्य च्या स्थितिः घातकाले तुल्या इदमुक्तं भवति स्थितिघातस्थितिबन्धौ युगपदारभ्येते युगपदेव च निष्ठां यात इति ।

जा करणाइए ठिइ–करणं तेर्ताए होइ संखंसो ।
अनियट्टीकरणमओ, मुत्तावलिसंठियं कुणइ ॥

अपूर्वकरणस्यादौ प्रथमसमये या स्थितिः सा स्थितिघातसहस्रैः खण्डिता सती करणान्ते अपूर्वकरणस्य चरमसमये संख्येयांशो भवति संख्येयभागमात्रा भवति संख्येयगुणाहीना भवतीत्यर्थः । एतच्च प्रागपि प्रस्तावादुक्तं तदेवमुक्तमपूर्वकरणम् । संप्रत्यनिवृत्यकरणप्रतिपादनार्थमाह "अनियट्टीत्यादि" अन्तोऽपूर्वकरणं तदूर्ध्वमनिवृत्तिं करोत्यारभते तच्च कथं भूतमित्याह मुक्तावलीसंस्थितमनिवृत्तिकरणे हि अध्यवसायस्थानानि मुक्तावलीसंस्थितानि भवन्ति एतच्च प्रागेवोक्तं तत एतदपि अनिवृत्तिकरणमभेदात् मुक्तावलीसंस्थितमित्युक्तम् ॥

एवमनियट्टिकरणे, ठिइघाईणि होंति चउरो वि ।
संखेज्जंसे सेसे, पढमठिई अंतरभवे ॥

एवमपूर्वकरणक्रमणानिवृत्तिकरणेऽपि स्थितिघातादयश्चत्वारोऽपि पदार्था भवन्ति प्रवर्तन्ते इत्थं या निवृत्तिकरणा द्वयोः संख्येयेषु भागेषु गतेषु सत्सु एकस्मिंश्च संख्येयगते भागे शेषे तिष्ठति अन्तर्मुहूर्तमात्रमधो मुक्त्वा मिथ्यात्वस्यान्तरकरणमन्तर्मुहूर्तप्रमाणं प्रथमस्थितेः किञ्चित्समधिकं भवति प्रथमास्थितिश्च ।

अंतमुहुत्तियमित्ताई, दो वि निम्मवइ बंधगद्धाए ।
गुणसेढि संखभागं, अंतरकिरणेण उक्किरइ ॥

प्रथमस्थितिमन्तरकरणं च एते द्वे अपि अन्तर्मुहूर्तप्रमाणो युगपत् निर्मापयति । तथा तत् अन्तरकरणं अभिनवस्थितिबन्धोदयानभिनवस्थितिबन्धकालप्रमाणेन कालेन करोति तथा ऽप्यन्तरकरणप्रथमसमयएवान्यास्थितिबन्धमिथ्यात्वमारभते स्थिति बन्धान्तरकरणे च युगपदेव परिसमापयति । तथा गुणश्रेणिसवन्धिनः संख्येयभागाः प्रथमद्वितीयस्थित्याश्रितास्तिष्ठन्ति एका तु श्रेणिः संख्येयतमं भागमन्तरकरणादन्तरकरणेन सहोत्किरति विनाशयति ।

सम्प्रति अन्तरकरणस्य विधिमाह ।

अंतरकरणस्स विही, घेत्तुं घेत्तुं ठिई य मज्झाउ ।
दलिय पढमठिईए, विक्खिवइ तहा उवरिमाईए ॥

अन्तरकरणस्याय विधिः यदुत अन्तरकरणस्थितेर्मध्याद्दलिकं कर्म्म परमाण्वात्मकं गृहीत्वा गृहीत्वा प्रथमास्थितौ प्रक्षिपति तथा उपरितन्यां द्वितीयस्थितौ च एवं च प्रतिसमयं तावत्प्रक्षिपति यावदन्तरकरणदलिकं सकलमपि क्षीयते अन्तर्मुहूर्तेन च कालेन सकलदलिकक्षयः ।

इगदुगआवलिसेसा, नत्थि पढमाए उदीरणागालो ।
पढमठिइए उदीरण, बियाउए आगालो ॥

इह प्रथमस्थितौ वर्तमानं उदीरणाप्रयोगेण यत् प्रथमस्थितेरेव दलिकं समाकृष्योदयसमये प्रक्षिपति सा उदीरणा । यत् पुनः द्वितीयस्थितेः सकाशात् उदीरणाप्रयोगेण समाकृष्योदये प्रक्षिपति स आगाल इति । उदीरणाया एव विशेषप्रतिपत्त्यर्थमिदं द्वितीयं नाम पूर्वसूरिभिरावेदितम् । उदीरणायां च प्रथमस्थितिमनुभवन् तावत्तो यावदावलिकाद्विकं शेषं तिष्ठति तस्मिंश्च स्थितेः आगालो न भवति किं तु केवला उदीरणैव । असावप्युदीरणा तावत् प्रवर्तते यावदावलिका शेषा न भवति आवलिकायां शेषीभूतायामुदीरणा विनिवर्तते ततः केवलेन नचोदयेन आवलिकामनुभवति । अक्षरयोजना त्वेवम् । एकस्यामावलिकाशेषायां प्रथमस्थितौ यथासंख्यमुदीरणागालो न भवति । प्रथमस्थितेश्च सकाशात् यदि च आगच्छति सा उदीरणा द्वितीयायाश्च स्थितेः सकाशाद्यदागच्छति स आगाल इति ॥

आवलिमेत्तं उदये–ण वेइत्तं ठाइ उवसमद्धाए ।
उवसमियं तत्थ भवे, सम्मत्तं मोक्खवीयं जं ॥

ततः आवलिकामात्रं प्रथमस्थितिसत्कं केवलेनैवोदयेन वेदयित्वा अनुभूय उपशमाद्धाया तिष्ठति उपशमाद्धायां प्रविशति तस्यां चोपशमाद्धाया स्थितस्य सतः प्रथमसमये एवौपशमिकसम्यक्त्वं भवति तस्य मोक्षस्याभावात् ।

उपरिमठिइ अणुभागं, तं ति ता कुणइ चरमिमच्छुदए ।
देसघाएण सम्मं, इयरेणं मिच्छमीसाइं ॥

प्रथमस्थितिचरमसमये मिथ्यात्वोदये वर्तमानो मिथ्यादृष्टिरुपरितनं स्थितिद्वितीयस्थितेः सबन्धिनं कर्मपरमाणूनामनुभागं त्रिधा करोति । अनुभागभेदेन त्रिधा द्वितीयस्थितिगतं मिथ्यात्वं दलिकं करोति इत्यर्थः । तथा शुद्धमविशुद्धं च तत्र शुद्धं सम्यक्त्वं तच्च देशघातिरसेन समन्वितं करोति । अर्द्धविशुद्धं सम्यग्मिथ्यात्वमविशुद्धं मिथ्यात्वम् । एते च इतरेण सर्वघातिना रसेन समन्विते च करोति । इहौपशमिकसम्यक्त्वलाभप्रथमसमयादेवारभ्य मिथ्यात्वस्य सम्यक्त्वं च गुणसंक्रमात्प्रवर्तते स चैवम् ।

सम्मे थोवो मीसे, असंखओ तस्स संखओ सम्मे ।
पइसमयं इइ खेवो, अंतमुहुत्ता उ विष्पाउ ॥

औपशमिकसम्यक्त्वलाभप्रथमसमये स्तोको दलिकनिक्षेपः सम्यक्त्वे ततो मिश्रे तस्मिन्नेव प्रथमसमये असंख्येयगुणस्ततोऽपि द्वितीये समये सम्यक्त्वे असंख्येयगुणः ततोऽपि तस्मिन्नेव द्वितीये सम्यग्मिथ्यात्वे असंख्येयगुणः इत्येवमुक्तेन प्रकारेण प्रतिसमयं क्षेपे सगुणसंक्रमरूपस्तावद्द्रष्टव्यो यावदन्तर्मुहूर्त्तं तदूर्ध्वं पुनः प्रागभिहितस्वरूपो विध्यातसंक्रमः प्रवर्तते ॥

गुणसंकमेण एसो, संकामो होइ सम्ममीसेसु ।
अंतरकरणम्मि ठिओ, कुणइ जओ सप्पतत्तयगुणो ॥

एष प्रागभिहितस्वरूपसंक्रमो मिथ्यात्वस्य सम्यग् मिश्रयो भवति गुणसंक्रमेणानन्तरोक्तस्वरूपः संक्रमो वेदितव्यः ।

ष्यर्थः । यतोऽसावन्तरकरणे स्थितः सप्रशस्तगुणः सह प्रशस्तेन प्रशस्येन गुणेनोपशमिकसम्यक्त्वलक्षणेन वर्तते इति सप्रशस्त गुणः सन् सक्रम करोति तस्मादन्तरकरणे स्थितस्य गुणसक्रमः प्रवर्तते तल्लक्षणस्य संभवात् तथाहि गुणसंक्रमस्येद लक्षणम् । अपूर्वकरणादारभ्य गुणानां वध्यमानानां प्रकृतीनां गुणसक्रमः प्रवर्तते इति । तदुक्तम् "गुणसंकमो अवज्झंति गणे असुभाण-पुव्वकरणाडी " इति । अपूर्वकरणे च मिथ्यात्वस्य वन्धः प्रवर्तते तस्य वेद्यमानत्वात् अन्तरकरणे च तस्योदयाभावात् वन्धो न प्रवर्तते तत्र गुणसंक्रमः प्रवर्तते ।

गुणसंक्रमेण समए, तिन्निदिज्जकंतिआउवज्जाणं ।
मिच्छत्तस्स उ इगिगुण, आवलिसेसाए पढमाए ॥

यावेन गुणसंक्रमः प्रवर्तते तावदायुर्वर्जानां सप्तानां कर्म्मणां स्थितिघातो रसघातो गुणश्रेणिर्वा प्रवर्तते यदा गुणसंक्रमस्तिष्ठति निवर्तते तदा गुणसक्रमेण समं तिस्रोऽपि स्थितिघातगुणश्रेणयस्तिष्ठन्ति तथा मिथ्यात्वस्य यावदेकावलिका प्रथमस्थितौ शेषीभूता न भवति तावत् स्थितिघातरसघातौ प्रवर्तेते आवलिकामात्रशेषीभूतायां तु प्रथमस्थितौ न भवतः सदा यावन्मिथ्यात्वस्य प्रथमस्थितिर्द्व्यावलिका शेषा न भवति तावत् गुणश्रेणिरपि प्रवर्तते द्व्यावलिकाशेषायां तस्यां गुणश्रेणिर्न भवति उत्तरार्द्धस्य चाक्षरयोजना इति मिथ्यात्वस्य एकद्व्यावलिकाशेषायां प्रथमस्थितौ यथासंख्यं स्थितिघातरसघातौ गुणश्रेणिश्च तिष्ठन्तीति ।

उवसंतद्धा अंते, विहीय उक्कट्टियस्स दलियस्स ।
अज्झवसायविसेसो, सो एक्कस्सुदओ भवे तिण्ह ॥

उपशमाद्धाया औपशमिकसम्यक्त्वाद्धाया अन्ते पर्यन्ते किंचित्समधिकावलिकाशेषे वर्तमानस्त्रयाणामपि द्वितीयस्थितिगतानां सम्यक्त्वादिषु जातानां दलिकमध्यवसायविशेषेण समाकृष्यान्तरकरणे पर्यन्तावलिकायां प्रक्षिपति तत्र प्रथमसमये प्रभूतं द्वितीयसमये स्तोक तृतीयसमये स्तोकतरमेवं तावद्वाच्य यावदावलिकाचरमसमयः तानि चैवं दलिकानिक्षिप्यमाणानि गोपुच्छसंस्थानसंस्थितानि भवन्ति ततः आवलिकामात्रे अन्तरकरणस्य शेषे सति अध्यवसायविशेषादमीषां त्रयाणामेकतरस्य दलिकस्योदयो भवति । इदमुक्त भवति यदि तदानीं शुभ परिणामस्तर्हि सम्यक्त्वदलिकस्योदय । मध्यमश्चेत्परिणामस्तर्हि सम्यग्मिथ्यात्वदलिकस्येति जघन्यश्चेत्ततो मिथ्यात्वदलिकस्येति ।

ठावलिया सेसाए, उवसमअद्धाए जाव इगिसमयं ।
असुभपरीणामत्तो, कोइ सासायणत्तं पि ॥

उपशान्ताद्धाया जघन्यतः समयशेषायामुत्कर्षतः षडावलिकाशेषायामशुभपरिणामतोऽनन्तानुबन्ध्यादिलक्षणात् कश्चिद सासादनत्वमपि याति प्रतियाति स च नियमात्तदनन्तरं मिथ्यात्वमेव प्रतिपद्यते ।

सम्मत्तेण समगं, सव्वं देसं च कोइ पडिवज्जे ।
उवसंतदंसणो सो, अंतरकरणट्ठिओ जाव ॥

सम्यक्त्वेनोपशमिकसम्यक्त्वेन समकोऽपि कश्चित् सर्वविरतिं देशविरतिं प्रतिपद्यते तदुक्तं शतकबृहच्चूर्णौ " उवसम्मद्दिट्ठी अंतकरणे ठिओ कोइ देसविरइंपि लभेइ कोइ पमत्तापमत्तभावम्मि सेसो य णो पुण न किं पि लभेइत्ति" उपशान्तदर्शनश्चौपशमिकसम्यग्दृष्टिश्च तावदवगन्तव्यौ यावदन्तरकरणे स्थितौ च तिष्ठेते इति तदेवं कृता सम्यक्त्वोत्पादप्ररूपणा । संप्रतिचारित्रमोहनीयस्योपशमनाभिधातव्या चारित्रमोहनीयस्य चोपशमको वेदकसम्यग्दृष्टिर्यतो देशविरतः सर्वविरतो वा प्रवर्द्धमानशुभपरिणामस्तथा चाह ।

वेयगसम्मद्दिट्ठी, सोही अद्धाए अजयमाईया ।
करणदुगेण उवसमं, चरित्तमोहस्स चिट्ठंति ॥

वेदकसम्यग्दृष्टयः क्षायोपशमिकसम्यक्त्वापरित्यक्तसंक्लेशविशोध्यद्धायां वर्तमाना अयनादयोऽविरतादयोऽविरतदेशविरतसर्वविरताश्चारित्रमोहनीयस्योपशमार्थ करणद्विकेन यथा प्रवृत्तापूर्वाख्येन यथायोगं चेष्टन्ते अनुचरा भवन्ति तृतीयेन तु करणेन साक्षादुपशमका एव भवन्तीति करणद्विकेन चेष्टन्ते इत्युक्तम् ।

संप्रत्येतेषामेवाविरतादीनां लक्षणमाह ।

जाणणगहणाणुपालण, विरओ विरई अविरइ उभयंसि ।
आइमकरणदुगेणं, पडिवज्जइ दोण्ह मन्नपरं ॥

विरते यत् ज्ञान ग्रहण पालन च तै कृत्वा विरतो भवति तत्र दशविधं त्रिविधेन भवेद्विरत स सर्वविरत यस्तु एकादिना विरत स देशविरतः ज्ञानग्रहणानुपालनरूपत्र्यङ्गभगव्यतिरेकेण चान्येषु भागेषु वर्तमानो नियमादविरतः चरमेऽनुभङ्गे वर्तमानो देशविरतेर्देशविरतः स चानेकप्रकारस्तद्यथा कोऽप्येकाणुव्रती कोऽपि द्व्यणुव्रती एव यावदुत्कर्षतः परिपूर्णद्वादशव्रतधारी प्रत्याख्यातसकलसावद्यकर्म्मा केवलमनुमतिमात्रसेवक । अनुमतिरपि त्रिधा तद्यथा प्रतिसेवनानुमतिः प्रतिश्रवणानुमतिः संवासानुमतिश्च । तत्र यः स्वयं परैर्वा कृतं पापं श्लाघते सावद्यारम्भोपपन्नं वा अशनाद्युपभुङ्क्ते तस्य प्रतिसेवनानुमतिः । यदा तु पुत्रादिभिः कृतं पापं शृणोति श्रुत्वा चानुमन्यते न प्रतिषेधति तदा प्रतिश्रवणानुमतिः । यदा पुन सावद्यारम्भप्रवृत्तेषु पुत्रादिषु केवलं ममत्वमात्रयुक्तो भवति नान्यत् किञ्चित् प्रतिशृणोति श्लाघते वा तदा संवासानुमतिः तत्र संवासानुमतिमात्रमेव यः सेवते स चरमो देशविरत । स चान्यसर्वश्रावकाणामुत्तमः य पुन सावद्यारम्भप्रवृत्तेषु पुत्रादिषु केवलं ममत्वमात्रयुक्तो भवति नान्यतः सानुमतेरपि विरतः स सर्वविरत उच्यते । अनयोश्च द्वयोर्देशविरतिसर्वविरत्योरन्यतरां विरतिमादिमेन यथाप्रवृत्तपूर्वाख्येन करणद्विकेन प्रतिपद्यते इह ह्यविरतः सन् यथोक्ते द्वे करणे करोति देशविरतिं सर्वविरतिं वा प्रतिपद्यते अथ देशविरतस्तर्हि विरतिमेव । अथ कस्माद्देशविरतिसर्वविरत्योर्लाभे तृतीयमनिवृत्तिकरणं न भवति इह करणकालात् प्रागप्यन्तर्मुहूर्तं कालं यावत् प्रतिसमयमनन्तगुणवृद्ध्यादिशुद्ध्या प्रवर्तमानोऽशुभानां कर्म्मणामनुभागद्विस्थानक करोतीत्यादि तदेव वक्तव्य यावत् यथाप्रवृत्त करण तदपि च तथैव वक्तव्य ततोऽपूर्वकरणं तदपि च तथैव नवरमिह गुणश्रेणिर्न वक्तव्या अपूर्वकरणाद्धायां च परिसमाप्तायामनन्तरसमये नियमाद्देशविरतिं सर्वविरतिं वा प्रतिपद्यते ततो निवृत्तिकरणं तृतीयमिह नावाप्यते ।

उदयावलिया उप्पिं, गुणसेढिं कुणइ सहचरित्तेण ।
अंतो असंखगुणणा-एताव य वड्ढए कालं ॥

करणद्वयेन व्यतिक्रान्ते उदयावलिका उपरि सह चारित्रेण वा समकालं प्रतिसमयमसंख्येयगुणनया गुणश्रेणिमन्तर्मुहूर्तं कालं यावत् करोति कस्मादन्तर्मुहूर्त्तं कालं यावत् गुणश्रेणिं करोति परतोऽपि नेत्यत आह ( ताव य वड्ढए कालं ) यतस्तावन्मात्रम-

न्तर्मुहूर्त्तं कालं यावदवश्यं वर्तते प्रवर्द्धमानपरिणामो भवति कोऽपि हीयमानपरिणामः ततो यदि प्रवर्द्धमानपरिणामो भवति तत ऊर्द्धमपि गुणश्रेणिं प्रवर्द्धमानां करोति । अथ हीयमानपरिणामस्तर्हि हीयमानामवस्थितपरिणामश्चावस्थितस्वभावस्थां हीनपरिणामो वा देशविरते स्थितिघातरसघातौ न भवत ।

परिणामपच्चएणं, गमागमं कुणइ करणरहिओ वि ।
आभोगनट्ठचरणो, करणे काऊण पावेइ ॥

परिणामप्रत्ययतः कथंचित्परिणामहासात्कारणात् देशविरतो विरतिं प्रतिपन्नः सर्वविरतो वा देशविरतिं गच्छति ततः स भूयोऽपि तां पूर्वप्रतिपन्नां सर्वविरतिं वा करणरहितोऽपि प्रतिपद्यते एवमकृतकरणेऽनेकशो गमागमं करोति य पुनराभोगतः प्रतिपत्त्या नष्टकरणो देशविरतेः सर्वविरतेर्वा परिभ्रष्टो मिथ्यात्वं च गतः स भूयोऽपि जघन्येनान्तर्मुहूर्त्तेन कालेन उत्कर्षतः प्रभूतेन कालेन पूर्वप्रतिपन्नामपि देशविरतिं सर्वविरतिं वा उक्तप्रकारेण करणेन कृत्वा करणद्वयस्य पुरस्सरमेव प्रतिपद्यते ॥

परिणामपच्चएणं, चउव्विहं होइ वड्ढई वावि ।
परिणामवड्ढयाए, गुणसेढिं तत्तियं कीरइ ॥

परिणामप्रत्ययेन परिणामात्कारणात् चतुर्विधः चत्वारः प्रकारा यथा भवति एवं हीयते वर्द्धते वा गुणश्रेणिरिति विभक्तिविपरिणामेन संबद्ध्यते इदमुक्तं भवति यदि हीयमानपरिणामो भवति तर्हि तया तथा परिणामहानिमध्ये कृतगुणश्रेणि चतुर्द्धा हीयते तद्यथा कदाचिदसंख्येयभागेन कदाचित्संख्येयभागेन कदाचिदसंख्येयगुणेन कदाचित्संख्येयगुणेन । अथ परिणामः प्रतिसमयं प्रवर्द्धते तर्हि तत्परिणामानुसारेण गुणश्रेणिरप्युक्तप्रकारेण वर्द्धते यदि पुनरवस्थितपरिणामो भवति तर्हि तावन्मात्रामेव गुणश्रेणिमारचयति एषा चैव दलिकापेक्षया द्रष्टव्या । कालश्च पुनः सर्वदाऽपि तावन्मात्रेणैव यावच्च देशविरतिं सर्वविरतिं वा परिपालयति तावद्गुणश्रेणिमपि समये समये करोति । स्थापना चेयं तदेवमुक्तो देशविरतिसर्वविरतिलाभः ।

संप्रत्यनन्तानुबन्धिनां विसंयोजनमाभण्यते ॥

सम्मुप्पायणविहिणा, चउगइया सम्मदिट्ठिपज्जत्ता ।
संजोयणा विजोएंति, न उण पढमठिइं करेंति ॥

सम्यक्त्वोत्पादविधिना सम्यक्त्वोत्पादभणितकरणत्रयरूपेण प्रकारेण चतुर्गतिकाः सम्यग्दृष्टयो वेदकसम्यग्दृष्टयः पर्याप्ताः अविरतसम्यग्दृष्टयश्चतुर्गतिका अपि देशविरतास्तिर्यग्गतिका वा मनुष्या वा सर्वविरतास्तु मनुष्याः संयोजनातोऽनन्तानुबन्धिनो वियोजयन्ति नाशयन्ति पुनरत्रान्तरकरणं कुर्वन्ति तदभावाच्च प्रथमस्थितिमपि न कुर्वन्ति अन्तरकरणस्य ह्यस्तना स्थितिरित्युच्यते । द्वितीया तु द्वितीया ततोऽन्तरकरणकारणाभावे प्रथमस्थितिमपि न कुर्वन्तीति ।

अत्रैव विशेषमाह ।

उवरिमगे करणदुगे, दलियं गुणसंकमेण तेसिं तु ।
नासेइ तइ पच्छा, अंतमुहुत्ता सभावत्थो ॥

उपरितनके द्विके अपूर्वकरणानिवृत्तिकरणाख्ये तेषामनन्तानुबन्धिनां दलिकं परमाण्वात्मकं गुणसंक्रमेणोद्वलनासंक्रमस्तु विद्धेन नाशयति अनिवृत्तिकरणे च वर्तमानः सन् गुणसंक्रमानुविद्धेनोद्वलनासंक्रमेण निरवशेषान् विनाशयति । किं त्वधस्तादावलिकामात्रं मुञ्चति तदपि च स्तिबुकसंक्रमेण वेद्यमानासु प्रकृतिषु संक्रमयति ततोऽन्तर्मुहूर्त्तात्परतोऽनिवृत्तिकरणपर्यवसाने शेषकर्मणामपि स्थितिघातरसगुणश्रेणयो न भवन्ति किं तु स्वभावस्थ एव भवति चतुर्विंशतिसत्कर्मा तदेवमुक्तानन्तानुबन्धिनां विसंयोजना । ये त्वाचार्या अनन्तानुबन्धिनामुपशमनामपि मन्यन्ते तन्मतेनोपशमनाविधिः पञ्चाशीतिवृत्तेः सप्ततिकावृत्तेर्वा अवसेयः ।

संप्रति दर्शनमोहनीयक्षपणाविधिमाह ।

दंसणखवणस्स रिहो, जिणकालीओ पुमट्ठवासुवरिं ।
अणणासकमाकरणाइं, करइ गुणसंकमं तइयं ॥

दर्शनं मिथ्यात्वसम्यक्त्वरूपं तस्य क्षपणा तस्या अर्हो योग्यो जिनकालीयो जिनविरहेण कालसंभवी प्रथमसंभवी प्रथमसंहननी च दुर्गति मनुष्यगतौ वर्त्तमानो जीवो वर्षाष्टकस्योपरि वर्तमानोऽनन्तानुबन्धेन विसंयोजनक्रमेण यथाप्रवृत्तादीनि त्रीणि करणानि यथा गुणसंक्रमं च कृत्वा साकल्येन क्षपयति । इयमत्र भावना दर्शनमोहनीयक्षपणार्थमभ्युद्यतस्त्रीणि करोति तद्यथा यथाप्रवृत्तकरणमपूर्वकरणमनिवृत्तिकरणं वा एतानि च त्रीण्यपि करणानि प्रागेव वक्तव्यानि नवरं पूर्वकरणस्य प्रथमसमये एवं गुणसंक्रमेण मिथ्यात्वसम्यग्मिथ्यात्वयोर्दलिकं सम्यक्त्वे प्रक्षेपयति उद्वलनासंक्रममपि तयोरेवमारभते । तद्यथा प्रथमस्थितिखण्डं बृहत्तरं घातयति ततो द्वितीयं विशेषहीनमेव तावद्वक्तव्यं यावन्मिथ्यात्वसम्यग्मिथ्यात्वयोः करोति ।

तक्करणाई जं तं, तस्संते संखभागो होइ ॥

तत्करणादावपूर्वकरणादौ यत् स्थितिसत्कर्मासीत्तत्तस्यैव करणस्यान्ते चरमसमये संख्येयभागमात्रं भवति ।

प्रथमसमयापेक्षया संख्येयगुणहीनं भवतीत्यर्थः ।

एवं ठिइबंधो वि य, पविसइ अनियट्टिकरणसमयम्मि ।
अपुव्वगुणसेढिठिइ–रसघायठिइबंधं च ॥

एवमनेन प्रकारेण स्थितिसत्कर्मन्यायेन स्थितिबन्धोऽपि वेदितव्यः अपूर्वकरणप्रथमसमये यावान् स्थितिबन्ध आसीत् तदपेक्षयाऽस्यैवापूर्वकरणस्य चरमसमये संख्येयगुणहीनो भवतीत्यर्थः । ततोऽनिवृत्तिकरणसमये प्रविशति तत्र च प्रविष्टः सन् प्रथमसमयादेवारभ्यापूर्वां गुणश्रेणिं अपूर्वं स्थितिघातं रसघातमपूर्वं च स्थितिबन्धमनुक्रममारभते ।

देसुवसमणनिकायण, निहत्तिरहियं च होइ तिगं ॥

अनिवृत्तिकरणप्रथमसमये एव च देशोपशमना निकाचनानिधत्तिरहितं दर्शनत्रिकं भवति देशोपशमादीनां त्रयाणां करणानां मध्ये नैकमपि तदानीं दर्शनत्रिकस्य करणं प्रवर्तते इत्यर्थः । दर्शनमोहनीयत्रिकस्य च स्थितिसत्कर्म स्थितिघातादिभिर्घात्यमानमसंज्ञिपञ्चेन्द्रियस्थितिसत्कर्मसमानं भवति । ततः स्थितिखण्डसहस्रपृथक्त्वे गते सति तु चतुरिन्द्रियस्थितिसत्कर्मसमानं ततोऽपि तावन्मात्रेषु गतेषु त्रीन्द्रियस्थितिसत्कर्मसमानं ततोऽपि तावन्मात्रेषु खण्डेषु गतेषु द्वीन्द्रियस्थितिसत्कर्मसमानं ततोऽपि तावन्मात्रेषु खण्डेषु गतेषु पल्योपमसंख्येयभागमात्रप्रमाणं भवति तदेवाह ।

कमसो असन्निचउरिं–दियाइ तुल्लं किट्ठं सत ।
ठिइखंडसहस्साइं, एयेके अंतरम्मि गच्छंति ॥
पलिओवमसंखाए, दंसणमानं तइन्नाणं ।

अनिवृत्तिकरणादारभ्य सहस्रशोऽसंज्ञिपञ्चेन्द्रियचतुरिन्द्रियादि-

तुल्यं स्थितिसत्कर्म वक्तव्यम् । एकैकस्मिंश्चोत्तरे स्थितिखण्डस-
हस्राणि स्थितिघातसहस्राणि भजन्ति भावना प्रागेव कृता एवं प-
ल्योपमसंख्येयभागमात्रदर्शनज्ञानमोहनीयेतेति यावत् सत्कर्म्माणि
जाते सति यच्छति संख्येयान् भागान् खण्डयति । इयमत्र भाव-
ना पल्योपमसंख्येयभागमात्रस्य स्थितिकर्म्मण एकसंख्येयभागं
मुक्त्वा शेषानशेषानपि संख्येयान् भागान् त्रयाणामपि मिथ्यात्वा-
दीनां विनाशयति तत प्रागुक्तस्य संख्येयभागस्य एकसंख्येय-
भागं मुक्त्वा शेषानशेषानपि संख्येयान् भागान् विनाशयति एवं
ते संख्येयभागाः खण्ड्यमाना सहस्रशोऽपि व्रजन्ति ततो मि-
थ्यात्वस्यासंख्येयान् भागान् खण्डयति सम्यक्त्वसम्यग्मिथ्या-
त्वयोस्तु संख्येयान् भागान् ।

तत्तो बहु खंडते, खंडइ उदयावलीरहियमिच्छत्तं ।
तत्तो असंखभागो, सम्मामीसाण खंडेइ ॥

ततोऽनेन विधिना स्थितिखण्डानां प्रभूतानामन्ते उदयावलि-
कारहितसकलमपि मिथ्यात्वं खण्डयति विनाशयति । तदानीं
सम्यक्त्वसम्यग्मिथ्यात्वयोर्दलिकं पल्योपमासंख्येयभागमात्रम-
वतिष्ठते अमूनि च स्थितिखण्डानि खण्ड्यमानानि मिथ्यात्वसम्य-
क्त्वानि सम्यक्त्वसम्यग्मिथ्यात्वयोः प्रक्षिपति सम्यग्मिथ्यात्व-
सम्यक्त्वातिसम्यक्त्वानि सम्यक्त्वाधस्तात् स्वस्थाने इति तदपि
च मिथ्यात्वदलिकमात्रं स्तिबुकसंक्रमेण सम्यक्त्वे प्रक्षिपति
मिथ्यात्वस्यावलिकामात्रायां स्थितौ सत्यां तत ऊर्ध्वं सम्यक्त्वं
सम्यक्त्वसम्यग्मिथ्यात्वयोरसंख्येयान् भागान् खण्डयति एवं ते
विशिष्येते ततस्तस्याप्यसंख्येयान् भागान् खण्डयति एकं मुञ्च-
ति एवं कतिपयेषु स्थितिखण्डेषु गतेषु सम्यग्मिथ्यात्वमावलि-
कामात्रं जातं तदानीं च सम्यक्त्वस्य स्थितिसत्कर्म्म च पश्चिक-
प्रमाणं विद्यते स चाष्टवर्षप्रमाणसम्यक्त्वसत्कर्म तत्काले सकल-
प्रत्यूहापगमतो निश्चयनियमतो दर्शनमोहनीयस्य क्षपक उच्यते।

अंतमुहुत्तियखंडं, तत्तो उक्किरइ उदयसमयाउ ।
पक्खिवइ असंखगुणं, नाऊण गुणसेढिपरे हीणं ॥

ततो निश्चयनयमतेन क्षपकत्वभवनादूर्ध्वं सम्यक्त्वस्य स्थिति-
खण्डमन्तर्मुहूर्त्तप्रमाणमुत्किरति घातयति तद्दलिकमुदयसमया-
दारभ्य प्रक्षिपति तद्यथा उदयसमये स्तोकं ततो द्वितीयसमये
असंख्येयगुणं ततोऽपि तृतीये समये असंख्येयगुणम् । एवं ताव-
द्वक्तव्यं यावत् गुणश्रेणीशिरः तत ऊर्ध्वं विशेषहीनं शेषहीनस्ता-
वत् यावच्चरमा स्थितिः ।

उक्किरइ असंखगुणं, जाव दुचरिमं वि अंतिमे खंडे ।
सेज्जंसो खंडेइ, गुणसेढीए तहा देइ ॥

ततो द्विस्थितिखण्डमन्तर्मुहूर्त्तप्रमाणं पूर्वस्मादसंख्येयगुणमु-
त्किरति खण्डयति प्रागुक्तप्रकारेण च उदयसमयादारभ्य निक्षि-
पति । एवं पूर्वस्मात् पूर्वदसंख्येयगुणसंस्थितिखण्डमुत्किरति
तावद्वक्तव्यो यावद्द्विचरिमं स्थितिखण्डं द्विचरिमाच्च स्थितिख-
ण्डादन्तिमं स्थितिखण्डं संख्येयगुणं तस्मिंश्चान्तिमे स्थितिखण्डे
खाड्यमानं संख्येयभागं गुणश्रेण्या खण्डयति अन्याश्च तदुप-
रितनीः संख्येयगुणा स्थितीरुत्कीर्य तद्दलिकमुदयसमयादार-
भ्य संख्येयगुणतया प्रक्षिपति । तद्यथा उदयसमये स्तोकं ततो
द्वितीयसमये असंख्येयगुणं ततोऽपि तृतीयसमये असंख्येयगु-
णम् । एवं तावद्वाच्यं यावद् गुणश्रेणिशिरः । अत ऊर्ध्वमुत्की-
र्यमाणमेव दलिकं ततस्तत्र न प्रक्षिपति एवमेव स्थितिखण्डे
उत्कीर्णे सति असौ क्षपक कृतकरण उच्यते ।

कयकरणो तक्काले, कालं पि करेइ चउसु वि गईसु ।
वेइयसेसो सेढी, अन्नयरं वा समारुहइ ॥

कृतकरण सन् कश्चित्तत्कालमपि करोति कृत्वा च तत्कालं च-
तसृणां गतीनां गतावुत्पद्यते तदेवं प्रस्थापको मनुष्यो निस्सूचके-
षु चतसृष्वपि गतिषु भवति । उक्तं च । "पट्ठवगा उ मणुस्सो
निट्ठवगो होइ चउसु वि गईसु" यदि पुनस्तदानीं कालं न क-
रोति तर्हि वेदितशेषोऽनुदितसम्यक्त्वशेष क्षायिकसम्यग्दृष्टिः
सन् अन्यतरां श्रेणिं क्षपकश्रेणिमुपशमश्रेणिं वा समारोहति वै-
मानिकेष्वेव बद्धायुष्क उपशमश्रेणिम् । अबद्धायुष्कस्तु क्षपकश्रेणिं
चतुर्गतिबद्धायुष्कस्तु न कामपि श्रेणिमित्यर्थः । अथाप्येतत्क्षी-
णसप्तक कतिथे भवे मोक्षमुपयातीत्युच्यते ।

तइये चउत्थे तम्मि व, भवम्मि सिज्झंति देसणे खीणे ।
जं देवनिरय संखाउ, चरमदेहेसु ते होंति ॥

तृतीये चतुर्थे तस्मिन्वा भवे क्षीणे दर्शने दर्शनमोहनीये सि-
ध्यन्ति जीवा कुत इत्याह । यद् यस्मात्कारणात् क्षीणसप्तक-
देवनारका संख्येयवर्षायुष्केषु भवन्ति उत्पद्यन्ते ते चरमदेहेषु वा
भवन्ति चरमदेहा वा भवन्ति ततस्तृतीये चतुर्थे तस्मिंश्च
भवे सिध्यन्तीत्युच्यते इयमत्र भावना देवगतौ बद्धायुष्कास्ते
तत्प्रकृत्या यत्कृत्वा देवेषु मध्ये उत्पद्यन्ते ये तु नरकेषु बद्धायु-
ष्कास्ते नरकेषु ततो देवेषु देवभवात्समागत्यैव मनुष्यो भूत्वा
मोक्षं यातीति चतुर्थे भवे सिध्यन्तीत्यभिधीयते ये त्वबद्धायु-
ष्का सप्तकं क्षपयन्ति ते चरमदेहा उच्यन्ते न च सप्तकायानन्त-
रं क्षपकश्रेणिमेव प्रतिपद्यन्ते इति तस्मिन्नेव भवे सिध्यन्ति उक्ता
दर्शनीयमोहनीयस्योपशमना । संप्रति दर्शनमोहनीयोपशमना
भण्यते । सा च क्षीणसप्तकस्य वैमानिकेष्वेव बद्धायुष्कस्य भ-
वति। अबद्धायुष्कस्तु क्षपकश्रेणिमारोहति यस्तु वेदकसम्यग्दृष्टिः
स तूपशमश्रेणिं प्रतिपद्यते सोऽनियतो बद्धायुष्को वासे च के-
षाञ्चिन्मतेनानन्तानुबन्धिनो विसंयोज्य चतुर्विंशति सप्तकर्म्मासन्
प्रतिपद्यते केषांचित्पुनर्मतेनोपशम्यापि ततो विसंयोजितानन्ता-
नुबन्धिकषाय उपशमितानन्तानुबन्धिकषायो वा सन् दर्शनत्रित-
यमुपशमयति । तथा चाह ।

अहवा दंसणमोहं, पढमं उवसामइत्तु सामन्ने ।
ठिच्चा अणुइ पियाण, पढमठिइं आवलीनियमा ॥
पढममुवसमुवसेसे, अंतमुहुत्ता उ तस्स विज्झा उ ।
संकेसविसोवे पमत्त, इयरपमत्तत्तणं बहुसो ॥

अथवेति प्रकारान्तरे आदौ दर्शनमोहनीयं प्रथममुपशमस्याऽपि
प्रतिपद्यते कथमुपशमस्योत्पद्यत इत्याह । श्रामण्ये संयमे स्थिता
उपशमनाविधेश्च प्रागुक्त करणत्रयानुगो वेदितव्य । न तु उप-
शमश्रेणिं प्रतिपद्यते । अथवा दर्शनमोहनीयं प्रथममुपशमस्यापि
प्रतिपद्यते कथमुपशमस्योत्पद्यत इत्याह । श्रामण्ये संयमे स्थिता
उपशमनाविधेश्च प्रागुक्त करणत्रयानुगो वेदितव्य नवरमन्तरक-
रणं कुर्वन् अनुदितयोर्मध्ये सम्यक्त्वसम्यग्मिथ्यात्वयोः प्रथमस्थि
तिरावलिकामात्रा नियमाद्वेदितव्या सम्यक्त्वस्य चान्तर्मुहू-
र्त्तप्रमाणा उत्कीर्यमाण च दलिकमन्तरेण त्रयाणामपि सम्यक्त्वो-
त्पत्ति प्रथमस्थितौ प्रक्षिपति शेषं प्रथमोपशमवत् प्रथमोपशाम-
कसम्यक्त्ववद्वेदितव्यं (अंतमुहुत्ता उ तस्सेत्यादि) बहुशो ऽन्त-
रकरणप्रदेशसमयादारभ्यान्तर्मुहूर्त्तेऽतिक्रान्ते गुणसंक्रमावसाने
विध्यातसंक्रमस्तस्य सम्यक्त्वस्य भवति किमुक्तं भवति । वि-

ध्यातमक्रमेण मिथ्यात्वसम्यग्मिथ्यात्वयोर्द्वैतिक सम्यक्त्व प्रविशतीति एव दर्शनमोहनीयत्रितये उपशान्ते सक्लेशविशोधिवशात् प्रमत्तत्वमितरप्रमत्तत्वं बहुशोऽनेकशोऽनुभूय चारित्रमोहनीयोपशमनाय सम्यक्त्व प्रतिपद्यते इत्यर्थ ।

पुण तिन्नि उ करणाइं, करेइ तइयम्मि एत्थ पुण तेउ ।
अंतो कोडाकोडी, बंधं संतं च सत्तएहं ॥

चारित्रमोहनीयोपशमनार्थं पुनरपि त्रीणि यथाप्रवृत्तापूर्वानिवृत्ताख्यानि करणानि करोति करणवक्तव्यता प्राग्वद्द्रष्टव्या केवलमत्र तृतीयकरणे ऽद्धेस्तमेव दर्शयति अत कोटाकोटीनामबन्धसत्कर्माव समानामायुर्वर्जानां करणं प्रथमसमये करोति तत्र यद्यपि प्रागुक्तेष्वपि करणेष्वेतेषां बन्ध सत्कर्मणां प्राप्यते तथाऽप्यत्र बन्धसत्कर्मणी तदपेक्षया सख्येयगुणहीने द्रष्टव्ये इति विशेष । कर्मप्रकृतौ त्वत्र सत्कर्म त्रि सागरोपमकोटाकोटीप्रमाणमुक्त बन्धस्त्वन्त सागरोपमकोटाकोटीप्रमाण' तदुक्तम् । " अतो कोडाकोडी, सत अनियट्टि णो उ उदहीण । ठिइखड चक्कोस्स पि तस्स पल्लस्स संखतमभाग " ।

ठिइखंडबहुसहस्से, एक्केक्कं जं भणिस्सामो ।

स्थितिखण्डमुत्कृष्टमपि पल्योपमसख्येयभागमात्र खण्डयति । तथा एतस्य प्राक्तनबन्धस्य पल्योपमसंख्येयभागमात्र हापयित्वा अन्य स्थितिबन्ध करोतीति शेष' । तत्र यद्यपि शतानामपि कर्मणां पल्योपमसख्येयभागप्रमाणतया उक्तस्तथाऽपि एवं सत्कर्म द्रष्टव्य तद्यथा नामगोत्रे सर्वस्तोके हीनस्थितिकत्वात् ततो ज्ञानावरणदर्शनीयावरणवेदनीयान्तरायाणि विशेषादधिकानि स्वस्थाने तु परस्परतुल्यानि ततोऽपि मोहनीय विशेषाधिकस्थितिखण्डसहस्रेषु च बहुष्वतिक्रान्तेषु एकैक यत्करोति तद्वय भणिष्याम । तदेवाह ।

करणस्स संखभागे, सेसे असण्णिमाइयाणं ।
समो बंधो कामए, पल्लवसेगतीसाणउदिवट्टं ॥

करणस्यानिवृत्तिकरणस्य सख्येयेषु भागेषु सत्सु एकस्मिन् शेषे असञ्ज्ञिकादीनां समो बन्ध क्रमेण भवति भवैवमानिवृत्तिकरणस्य सख्येयेषु भागेषु गतेष्वेकस्मिन् अशेषे असञ्ज्ञिपञ्चेन्द्रियबन्धतुल्यस्थितिबन्धो भवति तदनन्तर स्थितिखण्डपृथक्त्वे गते सति चतुरिन्द्रियबन्धतुल्यस्थितिबन्ध ततो भूयोऽपि स्थितिखण्डपृथक्त्वे गते सति त्रीन्द्रियबन्धतुल्यस्थितिबन्धस्तत एवमेव द्वीन्द्रियबन्धतुल्य ततोऽप्येवमेकैकेन्द्रियबन्धतुल्यस्ततोऽपि स्थितिबन्धसहस्रेषु गतेषु विंशतिकयो विंशतिसागरोपमकोटीप्रमाणयोर्नामगोत्रयोरित्यर्थ । पल्योपममात्र स्थितिबन्धो भवति त्रिंशत्कानां ज्ञानावरणदर्शनावरणान्तरायवेदनीयानामर्द्धपल्योपममात्रः ।

मोहस्स दोण्णि पल्ला, मतो वि हु एवमेव अप्पबहू ।
पलियम्मि तम्मि बंधे, अन्नो संखेज्जगुणहीणो ॥

मोहनीयस्य द्वौ पल्योपमौ स्थितिबन्ध स्थितिसत्कर्मणि वाऽल्पबहुत्वं यत्क्रमेण वक्तव्य तद्य सर्वस्तोक नामगोत्रयो ततो ज्ञानावरणदर्शनावरणवेदनीयान्तरायाणां विशेषाधिक मोहनीयस्य विशेषाधिक तथा यस्य यस्य कर्मणो यदा यदा पल्योपमप्रमाणः स्थितिबन्धो भवति तस्य तस्य तदा तत्कालादारभ्यान्योऽन्य स्थितिबन्ध सख्येयगुणहीनो भवति ततश्चेदानीं नामगोत्रयो पल्योपमप्रमाणात् स्थितिबन्धादन्य· स्थितिबन्धस्स सख्येयगुणहीनं करोति शेषाणां तु कर्मणां पल्योपमसंख्येयभागहीनं तत. ।

एवं तीसाए पुणो, पल्लमोहस्स होइ हु दिवड्ढं ।
एवं मोहे वद्धं, सेसाणं पल्लसंखंसो ॥

एवमुक्तेन प्रकारेण स्थितिबन्धसहस्रेष्वतिक्रान्तेषु त्रिंशत्कानां ज्ञानावरणदर्शनावरणवेदनीयान्तरायाणां स्थितिबन्ध पल्योपम प्रमाण करोति मोहनीयस्य तु सार्द्धपल्योपममात्र ततो ज्ञानावरणीयादीनामन्य स्थितिबन्ध· संख्येयगुणहीनो भवति मोहनीयस्य तु सख्येयभागहीन तत एव पूर्वक्रमेण स्थितिबन्धसहस्रेष्वतिक्रान्तेष्वित्यर्थ मोहनीयस्य स्थितिबन्ध पल्योपमप्रमाणं भवति ततो मोहनीयस्याप्यन्य स्थितिबन्ध· सख्येयगुणहीन· प्रवर्तते तदानीं च शेषकर्मणां स्थितिबन्ध· पल्योपमसख्येयभागमात्रप्रमाणो वेदितव्य ।

वीसगतीसगमोहाए, सक्कम्मं जह कमेण संखगुणं ।
पल्लअसंखेज्जंसो, नामगोयाए तो बंधो ।

विंशतकत्रिंशतकमोहानां सत्कर्म यथाक्रम सख्येयगुण वक्तव्य तद्यथा सर्वस्तोक नामगोत्रयो सत्कर्म ततो ज्ञानावरणदर्शनावरणान्तरायवेदनीयाना सगुण स्वस्थाने तु परस्परं तुल्यम् । ततोऽपि मोहनीयस्य सख्येयगुण मोहनीयस्य पल्योपममात्रे स्थितिबन्धे जाते सति नामगोत्रयोरन्यस्थितिबन्धो ऽसख्येयगुणहीनो भवति पल्योपमासख्येयभागमात्रो भवतीत्यर्थ' । अत्र सत्कर्मापेक्षया अल्पबहुत्व चिन्त्यते सर्वस्तोकनामगोत्रयो सत्कर्म ततो ज्ञानावरणदर्शनावरणवेदनीयान्तरायाणामसख्येयगुणं स्वस्थाने तु परस्पर तुल्य ततोऽपि मोहनीयस्य सख्येयगुणं तत. ।

एवं सहस्साणंपि हु, एक्कपयारेण मोहनीयस्स ।
तीसगअसंखभागो, ठिइबंधो संत पंच भवे ॥

एव पूर्वोक्तेन प्रकारेण स्थितिबन्धसहस्रेष्वतिक्रान्तेष्वित्यर्थ' । ज्ञानावरणदर्शनावरणवेदनीयान्तरायाणां स्थितिबन्धोऽसंख्येयगुणहीनो भवति पल्योपमासख्येयभागमात्रयोर्भवनादिति तात्पर्यार्थ इदानीं च सत्कर्मापेक्षया अल्पबहुत्वं चिन्त्यते सर्वस्तोकनामगोत्रयो· सत्कर्म ज्ञानावरणीयादीना चतुर्णामसख्येयगुण स्वस्थाने तु परस्पर तुल्य ततो मोहनीयस्य संख्येयगुण तत स्थितिबन्धसहस्रेषु गतेषु सत्सु एकप्रकारेण एकहेलयैव मोहनीयस्य पल्योपमासख्येयभागमात्रो ज्ञानावरणीयादीनां चतुर्णामसख्येयगुण स्वस्थाने तु परस्पर तुल्यम् ।

वासगअसंखभागो, मोहपल्लाउयाइतइयस्स ।
वासाणंतउ होज्जइ, असंखभागम्मि वज्जंति ॥

तत स्थितिबन्धसहस्रेषु गतेषु एकहेलयैव विंशतिकयोर्नामगोत्रयोरधस्तात् असख्येयगुणहीनो मोहनीयस्य स्थितिबन्धो भवति । अत्र स्थितिबन्धमाश्रित्याल्पबहुत्व चिन्त्यते सर्वस्तोक मोहनीयस्य स्थितिबन्धस्ततो नामगोत्रयो संख्येयगुण स्वस्थाने तु परस्परं तुल्य । ततो ज्ञानावरणादीनां चतुर्णामसख्येयगुण स्वस्थाने तु परस्परं तुल्य । स्थितिबन्धसहस्रेष्वतिक्रान्तेषु पश्चात् तृतीयस्य वेदनीयस्य घातानि ज्ञानावरणदर्शनावरणान्तरायाणि अधोजातानि । अत्र स्थितिबन्धमाश्रित्याल्पबहुत्वं चिन्त्यते सर्वस्तोको मोहनीयस्य स्थितिबन्ध· ततो नामगोत्रयोरसंख्येयगुण' । स्वस्थाने तु ततो परस्पर तुल्य ततोऽपि ज्ञानावरणदर्शनावरणान्तरायाणामसख्येयगुण

स्वस्थाने तु परस्परं तुल्य'। ततोऽपि वेदनीयस्यासंख्येयगुण । ततः स्थितिबन्धसहस्रेषु गतेषु सत्सु विंशतिकयोर्नामगोत्रयोरसंख्येयभागो जातानि ज्ञानावरणीयादीनि त्रीणि बध्यन्ते नामगोत्रापेक्षया ज्ञानावरणादीनां स्थितिबन्धोऽसंख्येयगुणहीनो भवतीत्यर्थ.। अत्राल्पबहुत्वं सर्वस्तोको मोहनीयस्य स्थितिबन्धः ततो ज्ञानावरणदर्शनावरणान्तरायाणामसंख्येयगुण स्वस्थाने तु परस्परं तुल्य ततोऽपि नामगोत्रयोरसंख्येयगुण स्वस्थाने तु परस्परं तुल्य । ततोऽपि वेदनीयस्यासंख्येयगुण ।

असंखसमयबद्धा, णामुदीरणा होइ तम्मि कालम्मि ।
देसघाइरसत्तो. मणपज्जवअंतरायाणं ॥

यस्मिन्काले सर्वकर्मणां पल्योपमासंख्येयभागमात्रस्थितिबन्धो जातस्तस्मिन् काले असंख्येयसमयबद्धानामुदीरणा भवति कथमेतदवसीयते इति चेदुच्यते इह यदा पल्योपमासंख्येयभागमात्र स्थितिबन्धं करोति तदा बध्यमानप्रकृतिस्थित्यपेक्षया या समयादिहीना. स्थितयस्ता एवोदीरणामुपगच्छन्ति नान्या. ताश्च चिरकालमबद्धा एव क्षीणशेषा. सम-वन्तीत्यसंख्येयसमयबद्धानां तदानीमुदीरणा तत' स्थितिबन्धसहस्रेषु एतेषु देशघातिन समनुभागं मन पर्यवज्ञानावरणादीनामन्तरायर्योर्वभ्नाति ॥

लोहादीणं पच्छा, जोग अचक्खुसुयाण तो चक्खा ।
परिभोगमईणंते, विरयस्स असेढिगायाई ॥

पश्चात्स्थितिबन्धसहस्रेष्वतिक्रान्तेषु लाभान्तरायावधिज्ञानावरणावधिदर्शनावरणानां देशघातिनं रस बध्नाति ततोऽपि संख्येयेषु स्थितिबन्धसहस्रेष्वतीतेषु भोग्यान्तरायाचक्षु कुदर्शनावरणश्रुतज्ञानावरणानां देशघातिनं रसं बध्नाति ततोऽपि स्थितिबन्धसहस्रेष्वतिक्रान्तेषु परिभोगान्तरायमतिज्ञानावरणयोर्देशघातिन रस बध्नाति ततोऽपि स्थितिबन्धसहस्रेषु वीर्यान्तरायस्य देशयति न संबध्नाति एतेषामेवानन्तरोक्तानां कर्मणां श्रेणिगता क्षपकोपशमश्रेणिरहिताः सर्वघातिनमेव रस बध्नन्ति ।

संजमघाईण तओ, अंतरमुदओ जाण दोण्हं तु ।
वेयकसायन्नयरे, सोदयतुल्ला पढमठिई ॥

वीर्यान्तरायदेशघात्यनुभागबन्धानन्तरं संख्येयेषु स्थितिबन्धसहस्रेषु गतेषु सत्सु संयमघातिनामनन्तानुबन्धि वर्जानां द्वादशकषायाणां नवानां च नोकषायाणां सर्वसंख्यया एकविंशतिप्रकृतीनामनन्तरकरण करोति तत्र चतुर्णां सञ्ज्वलनानामन्यतमस्य यस्य सञ्ज्वलनस्योदयो यस्य च त्रयाणां वेदानामन्यतमस्य वेदस्य तयोर्वेदकषायान्यतरयो कर्मणो प्रथमा स्थिति स्वोदयकालप्रमाणा भवत्यन्येषां चैकादशकषायाणामष्टानां च नोकषायाणा प्रथमा स्थितिरावलिकामात्रा । सम्प्रति चतुर्णां संज्वलनानामयाणां च वेदानां स्वोदयकालप्रमाणमाह—

थीअधुवोदयकाली, सखातगुणो उ पुरिसवेयस्स ।
तस्स वि विसेसअहिओ. कोहे तत्तो विजयकमसो ॥

स्त्रीवेदनपुंसकवेदयोरुदयकालः पुरुषवेदस्योदयकालापेक्षया सर्वस्तोकः स्वस्थाने तु परस्परं तुल्य. तत पुरुषवेदस्य उदयकाल संख्येयगुणस्तस्यापि पुरुषवेदस्योदयकालात् क्रोधस्योदयकालो विशेषाधिकस्ततोऽपि क्रोधोदयकालान्मानमायालोभानां यथाक्रमशो यथाक्रमेण विशेषाधिकस्तद्यथा सज्वलनक्रोधोदयकालात्संज्वलनमानस्य उदयकालो विशेषाधिकस्ततोऽपि संज्वलनमायाया विशेषाधिकस्ततोऽपि संज्वलनलोभस्य विशेषाधिकस्तत्र संज्वलनक्रोधेनोपशमश्रेणिं प्रतिपन्नस्य यावदप्रत्याख्यानप्रत्याख्यानावरणक्रोधोपशमो भवति तावत् संज्वलनक्रोधस्योदय. सज्वलनमानेनोपशमश्रेणिं प्रतिपन्नस्य यावदप्रत्याख्यानप्रत्याख्यानावरणमानोपशमो न भवति तावत्संज्वलनमानस्योदयः सज्वलनमायया चोपशमश्रेणिं प्रतिपन्नस्य यावदप्रत्याख्यानावरणमायोपशमो नोपजायते तावत्संज्वलनमायाया उदय. संज्वलनलोभेनोपशमश्रेणि प्रतिपन्नस्य यावदप्रत्याख्यानावरणलोभोपशमो न भवति तावद्बादरसंज्वलनलोभस्योदयस्तत. परं सूक्ष्मसपरायाद्धा तदेवमन्तरकरणमुपरितनभागापेक्षया समास्थितिकम् । अधोभागापेक्षया चोक्तनीत्या विषमस्थितिकमिति ।

अंतरकरणेण समं, ठिइखंडगबंधगद्धनिप्पत्ती ।
अंतरकरणाणंतर, समये जायंति सत्तऽमो ॥

अन्तरकरणेन समं सममित्यव्यय ततोऽयमर्थ । अन्तरकरणेन समाना स्थितिखण्डस्य बन्धकालायाश्च अभिनवबन्धाद्धायाश्च निष्पत्ति.। किमुक्तं भवति यावता कालेन स्थितिखण्डकं घातयति यद्वा अन्यस्थितिबन्धं करोति तावता कालेनान्तरकरणमपि करोति त्रीण्यप्येतानि युगपदारभते युगपन्निष्कामयति अत्रान्तकरणकाले चानुभागखण्डसहस्राणि व्यतिक्रामन्ति अन्तरकरणसत्कदलिकस्य प्रक्षेपविधिरयं येषां कर्मणां तदानीं बन्ध उदयश्च विद्यते तेषामन्तरकरणसत्कं दलिकं प्रथमस्थितिद्वितीयस्थितिं च प्रक्षिपति यथा पुरुषवेदोदयारूढ पुरुषवेदस्य येषां तु कर्मणामुदय एव केवलो न बन्धस्तेषामन्तरकरणसत्कं दलिकं प्रथमस्थितावेव प्रक्षिपति न द्वितीयस्थितावपि । यथा स्त्रीवेदोदयारूढ स्त्रीवेदस्य येषां पुनरुदयो न विद्यते किं तु केवलो बन्ध एव तेषामन्तरकरणसत्कं दलिकं द्वितीयस्थितावेव प्रक्षिपति न प्रथमस्थितौ यथा सज्वलनक्रोधोदयारूढ. शेषसज्वलनानां तेषां पुनर्न बन्धो नाप्युदय. तेषामन्तरकरणसत्कं दलिक परप्रकृतिषु यथा द्वितीयतृतीयकषायाणां तथा अन्तरकरणानन्तरसमये अन्तरकरणे कृते सति द्वितीये समये इत्यर्थ । इमे सप्त पदार्था. युगपज्जायन्ते तानेवाह ।

एगट्ठाणाणुभागबं, स उदीरणा य संखेया ।
अपुव्व संकमणं, लोभस्स असंकम्मे मोहे ॥
बद्धं बद्धं छाउ, आवलीसु उवरेयुईरणं ।
पढमं नवेउवसमणा, असंखगुणणाय जावंतं ॥

मोहे मोहनीयस्यानुभागबन्धो रसबन्ध एकस्थानक' उदीरणा संख्येयसमा संख्येयवर्षप्रमाणा चशब्दात्स्थितिबन्धः संख्येयवार्षिक स च सर्वोऽपि पूर्वस्मात् संख्येयगुणहीनो भावी तथा मोहनीयस्य पुरुषवेदसंज्वलनचतुष्टयरूपरसस्य आनुपूर्व्या क्रमेणैव संक्रमो लोभस्य च संज्वलनलोभस्य वा सक्रमस्तथा 'बद्धं बद्ध' मित्यादि इह प्राक् बद्धं बद्धं कर्म बन्धावलिकायामतीतायामुदीरणामायातिस्म अन्तरकरणे तु कृते तदनन्तरसमयेषु यद्बध्यते कर्म तत् षडावलिकाकालमवस्थाप्योदीरणामायाति तथा पण्डकवेदस्य नपुंसकवेदस्योपशमना असंख्येयगुणनया तावद्भवति यावदन्त्यश्चरमसमया तथा हि नपुंसकवेदस्य प्रथमसमये स्तोकं प्रदेशाग्रमुपशमयति ततो द्वितीं-

यसमयश्च सख्येयगुण एव प्रतिसमय सख्येयगुणं तावद्वक्तव्य यावच्चरमसमय परप्रकृतिषु च प्रतिसमयमुपशमितदलिकापेक्षया असख्येयगुण तावत्सक्रमयति यावद् द्विचरमसमये पुनरुपशमय्यमान दलिक परप्रकृतिषु सक्रमेण दलिकापेक्षया असख्येयगुण द्रष्टव्यं नपुसकवेदोपशमनारम्भप्रथमसमयादारभ्य सर्वकर्म्मणामावलिकापेक्षया सर्वस्तोका उदयसख्येयगुणा. ।

अंतरकरणपविट्ठो, सखासंखं समोहइयराणं ।
बंधादुत्तरबंधा, एवं इच्छेइ संखंसो ॥

अन्तरकरणे प्रविष्ट सन् जीव प्रथमसमय एव बन्धादुत्तरबन्धस्य संख्येयगुणा अन्तरकरणे विवक्षा सख्या सन्तीत्यर्थ. । यो हि यदपेक्षया सख्येयभागमात्रकल्प स तदपेक्षया सख्येयगुणहीन एवेति मोहनीयवर्जाना तु शेषाणा कर्म्मणां बन्धादुत्तरबन्धमसख्येयभाग करोति असख्येयगुणहीन करोतीत्यर्थ एव नपुसकवेदमुपशमयति तदुपशमनानन्तर च स्थितिबन्धसहस्रेष्वतीतेष्वेवमनन्तरोक्तेन प्रकारेण स्त्रीवेदमुपशमयति स्त्रीवेदस्य च सख्येयतमे भागे उपशान्ते यद्भवति तदुपदर्शयन्नाह।

उवसंते घाईणं, संखेज्जसमा परेण संखंसो ।
बंधो सत्तएहेव, संखेज्जवसंति उवसंते ॥

स्त्रीवेदस्य सख्येयतमे भागे उपशान्ते सति घातिनां घातिकर्म्मणां ज्ञानावरणदर्शनावरणान्तरायाणां सख्येयसमा सख्येयवर्षप्रमाणो बन्ध' स्थितिबन्धो भवति (परेणत्ति) तत. सख्येयवर्षप्रमाणात् स्थितिबन्धव्यापारादन्य. सस्थितिबन्धघातिस्वरूपाणां पूर्वस्मात् सख्येयाग सख्येयभागकल्प सख्येयगुणहीन इत्यर्थ । तस्मादेव च सख्येयवर्षप्रमाणात् स्थितिबन्धादारभ्य देशघातिनां केवलज्ञानावरणकेवलदर्शनावरणवर्जाना ज्ञानावरणदर्शनावरणकर्म्मणां नैकस्थानक बध्नाति तत एव स्थितिबन्धसहस्रेषु गतेषु सत्सु त्रिधा वेद उपशान्तो भवति तत. स्त्रीवेद उपशान्ते शेषाणां नोकषायाणामेव नपुसकवेदोक्तेन प्रकारेण सख्येयतमे भागे उपशान्ते किमित्याह ।

नामगोयाण संखा, वधावो सा असंखिया तइए ।
तो सव्वाण वि संखा, तत्तो संखेज्जगुणहीणो ॥

नामगोत्रयो सख्येया' समा सख्येयवर्षप्रमाणो बन्ध स्थितिबन्धो भवति तृतीयस्य वेदनीयस्य कर्म्मण स्थितिबन्धोऽसख्येयानि वर्षाणि असख्येयवर्षप्रमाण इत्यर्थ' तस्मिंश्च स्थितिपूर्णे सत्यन्य स्थितिबन्धो वेदनीयस्यापि सख्येयवर्षप्रमाणो भवति (ततोत्ति ) ततस्तस्माद्वेदनीयसत्कसख्येयवार्षिकस्थितिबन्धात्प्रभृति सर्वेषामपि कर्म्मणा स्थितिबन्ध सख्येयवार्षिक प्रवर्तते स च पूर्वस्मात् पूर्वस्मादन्योऽन्य प्रवर्तमान संख्येयगुणहीन प्रवर्तत इत्यर्थ तत स्थितिबन्धसहस्रेषु गतेषु सत्स्वपि नोकषाय उपशान्तो भवति ।

जं समयं उवसंतं, छक्कं उदयट्ठिई य ता सेसा ।
पुरिसे समओणावलि, दुगेण बद्धमणुवसंत ॥

यस्मिन् समये षट् नोकषाया उपशान्ता, जलसिक्तद्रुघणकुट्टितभूमि रजांसीवोपशम नीतास्तदा पुरुषवेदस्य एका उदयस्थिति समयमात्रा शेषा तदानीं च स्थितिबन्ध षोडश वर्षाणि तस्मिंश्च समये सा एका उदयस्थितिर्यच्च समयोनावलिकाद्विकेन कालेन बद्धमेतावदेवानुपशान्तं वर्तते शेष सर्वमप्युपशान्तम । इयमत्र भावना पुरुषवेदस्य प्रथमस्थितौ द्यावलिकाशेषाया प्रागुक्तस्वरूपायामेव व्यवच्छिद्यते उदीरणा तु भवति तस्मादेव च समयादारभ्य प्रधाननोकषायाणां सत्कं दलिक पुरुषवेदेन सक्रमयति किं तु सज्वलनक्रोधादिषु यदा च पुरुषवेदस्य सत्का प्रागुक्ता एकाप्युदयस्थितिरतिक्रान्ता भवति तदाऽसौ वेदको भवति अवेदकाद्धायाश्च प्रथमसमये समयद्वयोनावलिकाद्विकेन कालेन यद्बद्ध तदेव केवलमुपशान्ते तिष्ठति शेष सकलमपि नपुंसकवेदोक्तेन प्रकारेणोपशमित तदपि च तावता कालेनोपशमयति एतदेवाह ॥

आगालेणं समगं, पडिगहिया फिडइ पुरिसवेयस्स ।
सोलसवासियबंधा, चरमो चरमेण उदएण ॥
तावइ कालेणं वि य, पुरिसे उवसामए अविएसो ।
बद्धो वत्तीससमा, सजल णायराण उ सहस्स ॥

यदा पुरुषवेदस्य प्रागुक्तस्वरूप आगालो व्यवच्छिद्यते तदा तेन समक तत्कालमेव तस्य पुरुषवेदस्य यत ईहता शेषदलिकसक्रमाधारता स्फिटति अपगच्छति योऽपि च चरम पर्यन्तेऽपि षोडशवार्षिक स्थितिबन्ध पुरुषवेदस्य सोऽपि चरमेण प्रथमस्थितिचरमसमयभाविना उदयेन सहापगच्छति यदा च पुरुषवेदस्य स्थितिबन्ध' षोडशवार्षिकस्तदा सज्वलनानां सख्येयानि वर्षसहस्राणि स्थितिबन्ध यदपि च वेदकाद्धाप्रथमसमये समयोनावलिकाद्विकबद्ध पुरुषवेददलिकमस्ति तदपि वेदोदयरहित. सन् स उपशमको जीवस्तावतैव समयद्वयोनावलिकाद्विकप्रमाणेन कालेन पुरुषवेददलिकमुपशमयति द्वितीयसमये असख्येयगुण तृतीयसमये असख्येयगुणमित्र तावद्वक्तव्य यावत्का द्वयोनावलिकाद्विकचरमसमय. परप्रकृतिषु प्रतिसमयद्वयोनावलिकाद्विककाल यावद्यथाप्रवृत्त सक्रमेण सक्रमयति तद्यथा प्रथमसमये प्रभूत द्वितीयसमये विशेषहीन तृतीयसमयेऽपि विशेषहीनमेव तावत् यावच्चरमसमय तत पुरुष उपशान्तस्तदानीं च सज्वलनानां द्वात्रिंशत्समा द्वात्रिंशद्वर्षप्रमाण स्थितिबन्ध इतरेषा ज्ञानावरणदर्शनावरणान्तरायनामगोत्राणां सख्येयानि वर्षसहस्राणि स्थितिबन्ध अवेदप्रथमसमयादारभ्य क्रोधत्रिकाप्रत्याख्यानप्रत्याख्यानावरणसंज्वलनरूपमुपशमयति । 'कोहतिग आढवेइ उवसमिउ तिसुपभिगइणाए गा चउय उदीरणा बधो पिट्ठति आवलीए सेसाए इति" । यस्मिन् समये पुरुषवेदस्यावेदकाद्धस्ततस्तस्मादेवैकप्रथमसमयादारभ्य क्रोधत्रिकाप्रत्याख्यानप्रत्याख्यानावरणसज्वलनरूप युगपदुपशमयितुमारभते उपशमनां च कुर्वत प्रथमे स्थितिबन्धे पूर्णे सत्यन्य स्थितिबन्ध सज्वलनाना मसख्येयभागहीनशेषाणा च सख्येयगुणहीन शेष स्थितिघातादि तथैव सज्वलनक्रोधस्य च प्रथमस्थिता समयानावलिकात्रिकशेषाया पतद्ग्रहतापगच्छति अप्रत्याख्यानप्रत्याख्यानावरणक्रोधदलिकं न तत्र प्रक्षिपति सज्वलनमानादावेवेति भाव । ततोऽप्यावलिकाशेषायां प्रथमस्थितौ सज्वलनक्रोधस्यागालो भवति । किं तदुदीरणा तावत्प्रवर्तते यावदेका आवदका आवलिका शेषा भवति उदीरणावलिकायाश्चरमसमये स्थितिबन्धश्चत्वारो मासा शेषकर्म्मणा तु सख्येयानि वर्षसहस्राणि सज्वलनक्रोधस्य च बन्धोदयोदीरणाव्यवच्छेदास्तथा चाद एतस्मादावलिकायां शेषायामुदय उदीरणा बन्धश्च एते त्रयोऽपि पदाथा युगपत् स्फुटत्यपगच्छन्ति तदानीं चाप्रत्याख्यानप्रत्याख्यानावरणक्रोधानुपशान्तौ तदा चैकामावलिकामसमयोनावलिकां द्विचरमश्च रोषे मुक्त्वा शेषमुपशमय्यैव संज्वलनक्रोधस्योदयावलिकासमयो-

नावलिकाद्विकबद्धं च द्वलिकपुरुषवेदोक्तेन प्रकारेणोपशमयति तथा चाह "सेसयं तु पुरिससमं, एवं सेसकसायावेय इति दुगं ण आवलिया।" सञ्ज्वलनक्रोधस्य बन्धादौ व्यवच्छिन्ने शेषं पुरुषवेदसमं वक्तव्यम् । एवं क्रोधत्रिकोक्तेन प्रकारेण शेषानप्यप्रत्याख्यानप्रत्याख्यानावरणसञ्ज्वलनमानमायालोभरूपान् कषायानुपशमयति याश्च शेषीभूता आवलिकास्ता उत्तरस्मिन् कषाये स्तिबुकेन स्तिबुकसङ्क्रमेणानुभवति । इयमत्र भावना सञ्ज्वलनक्रोधस्य बन्धादिव्यवच्छिन्ने या प्रथमस्थितिरेका आवलिका तिष्ठति तां स्तिबुकसङ्क्रमेण माने प्रक्षिप्य वेदनीयान् यदपि च समयोनावलिकाद्विकबद्धं सदस्ति तदपि तावता कालेनोपशमयति तद्यथा प्रथमसमये स्तोकमुपशमयति द्वितीये असङ्ख्येयगुणं ततोऽपि तृतीयसमये असङ्ख्येयगुणमेव यावत्समयोनावलिकाद्विकचरमसमयः परप्रकृतिषु च समयोनावलिकाद्विककालं यावत् यथाप्रवृत्तसङ्क्रमेण पूर्ववत् सङ्क्रमयति एवं सञ्ज्वलनक्रोधं सर्वात्मनोपशमयति यदैव संज्वलनक्रोधस्य बन्धोदयः उदीरणाव्यवच्छिन्नास्तदेव सञ्ज्वलनमानस्य द्वितीयस्थितेः सकाशात् दलिकमाकृष्य प्रथमस्थितिं करोति निवेदयते च तत्रोदयसमये स्तोकं प्रक्षिपति द्वितीयस्थितावसङ्ख्येयगुणं तृतीयस्थितावसंख्येयगुणमेवं तावत् यावत् प्रथमस्थितेश्चरमः समयः प्रथमस्थितिप्रथमसमये सञ्ज्वलनमानस्य स्थितिबन्धश्चत्वारो मासाः शेषाणां तु ज्ञानावरणीयादीनां सङ्ख्येयानि वर्षसहस्राणि तदानीमेव च त्रीनपि मानान् युगपदुपशमयितुमारभते संज्वलमानस्य च प्रथमस्थितौ समयोनावलिकात्रिकशेषमप्रत्याख्यानप्रत्याख्यानावरणमानदलिकं सञ्ज्वलनमानं प्रक्षिपति किं तु संज्वलनमायादौ आवलिकाद्विकशेषायां त्यागालो व्यवच्छिद्यते तत उदीरणैव केवला प्रवर्तते साऽपि तावत् यावदावलिकाचरमसमयः तत एका प्रथमस्थितेरावलिका शेषीभूता तिष्ठति तस्मिंश्च समये सञ्ज्वलनानां द्वौ मासौ स्थितिबन्धः कर्मशेषाणां तु सङ्ख्येयानि वर्षाणि तदानीं सञ्ज्वलनमानस्य बन्धोदयोदीरणा व्यवच्छिन्ना । अप्रत्याख्यानप्रत्याख्यानावरणमानौ चोपशान्तौ तदानीं च सञ्ज्वलनमानस्य प्रथमस्थितिरेकामावलिकां समयोनावलिकाद्विकबद्धाश्च लता मुक्त्वा विशेषमन्यत्सर्वमुपशान्तं तदानीमेव च संज्वलनमानस्य प्रथमस्थितेरेकामावलिकां लोभमावलिकाद्विकबद्धाश्च लता मुक्त्वा विशेषमन्यत्सर्वमुपशान्तं तदानीमेव च संज्वलनमायायां द्वितीयस्थितेर्दलिकमाकृष्य प्रथमस्थितिं करोति वेदयते च पूर्वोक्तां संज्वलनमानस्य प्रथमस्थितिसत्कामेकामावलिकां स्तिबुकसङ्क्रमेण संज्वलनमायायां प्रक्षिपति समयोनावलिकाद्विकबद्धाश्च लताः पुरुषवेदोक्तक्रमेणोपशमयति सङ्क्रमयन्ति च सञ्ज्वलनमायोदयप्रथमसमये च मायालोभयोर्द्वौ मासौ स्थितिबन्धः शेषकर्म्मणां तु सङ्ख्येयानि वर्षाणि तत्समयादेव चारभ्य तिस्रोऽपि माया युगपदुपशमयितुमारभते तत सञ्ज्वलनमाया प्रथमस्थितौ समयोनावलिकात्रिशेषायामप्रत्याख्यानप्रत्याख्यानावरणमाया दलिकसञ्ज्वलनमायायां न प्रक्षिपति किं तु सञ्ज्वलनलोभे आवलिकाविशेषायां त्यागालो व्यवच्छिद्यते तत उदीरणैव केवला प्रवर्तते साऽपि तावत् यावदावलिकाचरमसमय तस्मिंश्च समये संज्वलनमायालोभयोः स्थितिबन्धयोरेको मासः शेषकर्म्मणां तु सङ्ख्येयानि वर्षाणि तदानीमेव च सञ्ज्वलनमायाया बन्धोदयोदीरणाव्यवच्छेदः अप्रत्याख्यानप्रत्याख्यानावरणमायोपशान्ते सञ्ज्वलनमायायाश्च प्रथमस्थितिसत्कामेकावलिकां समयोनावलिकाद्विकबद्धाश्च लता मुक्त्वा शेषमन्यत्सर्वमुपशान्तं ततो निरन्तरसमये संज्वलनलोभस्य द्वितीयस्थितेः सकाशात् दलिकमाकृष्य प्रथमस्थितिं करोति वेदयते च पूर्वोक्तां च मायायाः प्रथमस्थितिसत्कां समयावलिकास्तिबुकसङ्क्रमेण संज्वलनलोभे संक्रमयति समयोनावलिकाद्विकबद्धाश्च लताः पुरुषवेदक्रमेणोपशमयति संक्रमयति च संज्वलनक्रोधादीनां सूक्ष्मोदयचरमसमये यावत्प्रमाणस्थितिबन्धोऽनन्तरमुक्तस्तावत्प्रमाणमत्र साक्षात्सूत्रकृत् सवादयति ।

चरिमुदयम्मि जम्हा, तब्बंधो दुगुणो उ होइ उवसमगे ।
तयणंतरपगईए, चउगुणोऽसेसु संखगुणो ॥

इह यः क्षपकश्रेण्यां क्षपकस्य संज्वलनक्रोधादी स्वस्वचरमोदयकाले जघन्यः स्थितिबन्ध उक्तः स उपशमके द्विगुणो भवति तदनन्तरं प्रकृते पुनश्चतुर्गुणः अन्येषु तु संख्येयगुण इति ततोऽपि परस्याः प्रकृतेरष्टगुण इत्यर्थः । यथा क्षपकमधिकृत्य संज्वलनक्रोधस्य मासद्वयं जघन्यस्थितिबन्धः एको मासस्ततस्तस्य क्रोधचरमोदयकाले चतुर्मासप्रमाणो बन्धः प्रवर्त्तमानः स्वजघन्यबन्धापेक्षया चतुर्गुणो भवति ततोऽपि परा प्रकृतिर्माया स्यात् तदानीमष्टगुणो बन्धस्तस्या हि क्षपकमधिकृत्य स्वचरमोदयकाले जघन्यः स्थितिबन्धोऽर्द्धमासस्ततः क्रोधचरमोदयकाले चतुर्मासिको बन्धः प्रवर्त्तमानः स्वजघन्यबन्धापेक्षया अष्टगुणो भवति तथा मानस्य क्षपकमधिकृत्य जघन्यो बन्धः एको मासः स चोपशमके मन्दपरिणामत्वात् द्विमासप्रमाणो भवति मानस्य चानन्तरा प्रकृतिर्माया तस्यास्तदानीं चतुर्गुणः पक्षापेक्षया मासद्वयस्य चतुर्गुणत्वात् तथा मायाया क्षपकमधिकृत्य जघन्यो बन्धः पक्षः पक्षः सर्वोपशमे मन्दपरिणामत्वात् चरमोदये मासप्रमाणप्रवर्तमानो द्विगुणो भवति शेषकर्म्मणां तु ज्ञानावरणीयादीनां सर्वत्रापि संख्येयवर्षप्रमाणः स्थितिबन्धः केवलं पूर्वस्मात् हीनो हीनतर इति । संप्रतिसञ्ज्वलनलोभवक्तव्यतामाह ।

लोभस्स उ पढमठिईं, बिइओ य कुणइ तिविभागं ।
दो पुग्गलनिक्खेवो, ततिइओ पुण किट्टिवेयद्धा ॥

लोभस्य द्वितीयस्थितेर्दलिकमाकृष्य प्रथमस्थितिं करोति सा त्रिभागा त्रिभागोपेता तद्यथा प्रथमो विभागोऽश्वकर्णकरणाद्धासंज्ञः द्वितीयः किट्टिकरणाद्धासंज्ञः तयोश्च द्वयोरपि विभागयोर्दलिकनिक्षेपो भवति किमुक्तं भवति द्वितीयस्थितेर्दलिकमाकृष्य द्विभागप्रमाणा प्रथमा स्थितिं करोतीति । तृतीयः पुनः विभागः किट्टिवेदनाद्धा संज्वलनलोभोदये चाश्वकर्णकरणाद्धायां वर्तमानः प्रथमसमय एव त्रीनपि लोभान् अप्रत्याख्यानप्रत्याख्यानावरणसञ्ज्वलनरूपान् युगपदुपशमितुमारभते अन्यच्च यत्करोति प्रथमे अश्वकर्णकरणाद्धासञ्ज्ञे विभागे तदाह ।

संतावज्झमाणग, सरूवउप्फड्डगाणि जं कुणइ ।
सा अस्सकण्णकरण-द्धमति मा किट्टिकरणद्धा ॥

सन्ति विद्यमानानि यानि सङ्क्रमितानि मायाकर्म्मदलिकानि पूर्वं बद्धसंज्वलनलोभे दलिकानि वा तानि वध्यमानस्वरूपतस्तत्कालवध्यमानसञ्ज्वलनलोभरूपतया किमुक्तं भवति तत्कालवध्यमानसञ्ज्वलनलोभस्य द्विकानि चात्यन्तिरसानि यत्र करोति सा अश्वकर्णकरणाद्धा इयमत्र भावना अश्वकर्णकरणाद्धासञ्ज्ञे प्रथमे त्रिभागे वर्तमानसंक्रमितमायादलिकेभ्यः सञ्ज्वलनलोभसत्केभ्यो वा पूर्वस्पर्द्धकेभ्यः प्रतिसमयं दलिकं गृहीत्वा तस्य चात्यन्तहीनरसतामापाद्य पूर्णं च प्रतिसमयं दलिकं गृह्णन् अपूर्वाणि स्पर्द्धकानि करोति आसरतारं हि

परिभ्रमता न कदाचनापि यत्रमाश्रित्य ईदृशानि स्पर्द्धकानि कृतानि किं तु संप्रत्येव विशुद्धवशात्करोतीत्यर्थः । पूर्वाणि ( सउज्झंति ) तथा रूपाणि वा पूर्वाणि स्पर्द्धकानि कुर्वतः संख्येयेषु स्थितिबन्धेषु गतेषु सत्सु अश्वकर्णकरणाद्धा व्यतिक्रामति ततो मध्यमा द्वितीयाद्धा प्रवर्तते तदानीं च सञ्ज्वलनलोभस्य स्थितिबन्धो दिनपृथक्त्वप्रमाणः शेषकर्म्मणां तु वर्षपृथक्त्वमानः किट्टिकरणाद्धायाञ्च पूर्वस्पर्द्धकेभ्यश्च दलिकं गृहीत्वा प्रतिसमयमनन्ताः किट्टीः करोति । संप्रति किट्टिस्वरूपं प्रथमसमयोदये यावतीः किट्टीः करोति तदेव प्रतिपादयति ।

अप्पुव्वविसोहीए, अणुभागो णूणविज्ञजणं किट्टी ।
पढमसमयम्मि रसफुड–वग्गणा तं जागसमा ॥

अपूर्वया विशुद्ध्या अनुभागस्य क्रमस्य एकोत्तरवृद्ध्यापनयनेन हीनतरस्य यत् विभजनं सा किट्टिः किमुक्तं भवति पूर्वस्पर्द्धकेभ्यो ऽपूर्वस्पर्द्धकेभ्यश्च वर्गणा गृहीत्वा तासामनन्तगुणां हीनरसतामापाद्य बृहदन्तरालतया यदवस्थानं यथाऽऽसां वर्गणानामसकल्पनया अनुभागरसभागानां शतं व्युत्तरं द्व्युत्तरमेकोत्तरमासीत् तासामनुभागानां यथाक्रमं पञ्चविंशतिः पञ्चदशकं पञ्चकमिति ता किट्टयस्ता एकस्मिन् रसस्पर्द्धके अनुभागस्पर्द्धके या अनन्ता वर्गणास्तासामनन्ततमे भागे यावत्यो वर्गणास्तावत्प्रमाणाः प्रथमसमये करोति ताश्चानन्तानुबन्धाः किं तु सर्वजघन्यात्तुभागस्पर्द्धकानुभागेन सदृशाः करोति न तु ततोऽपि हीनाः उच्यन्ते ततोऽपि हीनास्तथा चाह ।

मन्दजहन्नए फड्डग, अणंतगुणहाणिया उ सारसओ ।
पयसमयमसंखंसो, आइमसमया उ जायन्तो ॥

यत् सर्वजघन्यं रसस्पर्द्धकं ततोऽपि रसमधिकृत्य ताः किट्टीरनन्तगुणहानिका अनन्तगुणहीनाः करोति ता आदिमसमयात्परतः प्रतिसमयमसंख्येयांशान् प्रतिसमयं पूर्वस्मात् असंख्येयभागमात्राः किट्टीस्तावत्करोति यावदर्वाकिट्टिकरणाद्धाचरमसमयः इयमत्र भावना प्रथमसमये प्रभूताः किट्टीः करोति द्वितीयसमये असंख्येयगुणहीनाः एवं तावद्वाच्यं यावत् किट्टिकरणाद्धायाश्चरमसमयः ।

अणुसमयमसंखगुणं, दलियमणंतं स उ अणुभागो ।
सव्वेसु मंदरसमा–इयाण दलयंति सेसूणं ॥

अनुसमयं प्रतिसमयं दलिकसंख्येयगुणं तद्यथा प्रथमसमये सकलकिट्टिगतं दलिकं सर्वस्तोकं ततोऽपि द्वितीयसमये कृतासु किट्टिष्वनन्तगुणहीनं ततोऽपि तृतीयसमये कृतासु किट्टीष्वनन्तगुणहीनम् एवं तावद्वाच्यं यावत्किट्टिकरणाद्धाचरमसमयः । तथा सर्वेषु मन्दरसादिकानां जघन्यरसप्रभृतीनां किट्टीनां दलिकं विशेषो न वक्तव्यं यावत्सर्वोत्कृष्टरसकिट्टिः । इयमत्र भावना सर्वेषु या निर्वर्तिताः किट्टयस्तासां मध्ये या मन्दरसास्तासां दलिकं सर्वप्रभूतं ततोऽनन्तरेणानुभागेनानन्तगुणेनाधिकाया द्वितीयाया किट्टेः दलिकं विशेषहीनं ततोऽप्यनन्तरेणानुभागेनानन्तगुणेनाधिकायां तृतीयस्यां किट्टौ विशेषहीनमेवमनन्तरानुभागाधिकासु किट्टिषु विशेषहीनं तावदवसेयं यावत् प्रथमसमयकृतानां किट्टीनां मध्ये सर्वोत्कृष्टरसा किट्टिरिति एवं सर्वेष्वपि समयेषु प्रत्येकं भावयितव्यम् ।

आइमसमयकयाणं, मंदाईणं रसो अणंतगुणो ।
सव्वुक्कस्स रसा वि हु, उवरिमसमयस्स णंतंसे ॥

आदिमसमयकृतानां प्रथमसमयकृतानां मन्दादीनां जघन्यरसादीनां रसो यथोत्तरमनन्तगुणो वक्तव्यस्तद्यथा प्रथमसमयकृतानां किट्टीनां मध्ये सर्वा मन्दानुभागा किट्टिः सा सर्वस्तोकानुभागा ततो द्वितीया अनन्तगुणानुभागा ततोऽपि तृतीया अनन्तगुणानुभागा एवं तावद्वाच्यं यावत्प्रथमसमयकृतानां किट्टीनां मध्ये सर्वोत्कृष्टानुभागा किट्टिरिति । एवं द्वितीयादिष्वपि समयेषु किट्टीनां प्ररूपणा कर्त्तव्या । तथा सर्वोत्कृष्टरसाऽपि सर्वोत्कृष्टानुभागाऽपि हु निश्चितमुपरितनसमयस्य सत्का पश्चात्समयभाविसर्वमन्दानुभागकिट्ट्यपेक्षयाऽनन्ततमे भागे वर्तते तद्यथा प्रथमसमयकृतानां किट्टीनां मध्ये या सर्वमन्दानुभागा किट्टिः सा सर्वप्रभूतानुभागा ततो द्वितीयसमयकृतानां किट्टीनां मध्ये सर्वोत्कृष्टानुभागा किट्टिः साऽनन्तगुणहीना । तथा द्वितीयसमयकृतानां मध्ये या सर्वमन्दानुभागा किट्टिस्तदपेक्षया तृतीयसमयकृतानां किट्टीनां मध्ये सर्वोत्कृष्टानुभागाऽनन्तगुणहीना एवं तावद्वक्तव्यं यावच्चरमसमयः । सम्प्रत्यासामेव किट्टीनां परस्परं प्रदेशाल्पबहुत्वमुच्यते प्रथमसमयकृतानां किट्टीनां मध्ये या सर्वा बहुप्रदेशा किट्टिः सा स्तोकप्रदेशा ततो द्वितीयसमयकृतानां किट्टीनां मध्ये या सर्वाल्पप्रदेशा किट्टिः सा असंख्येयगुणप्रदेशा ततस्तृतीयसमयकृतानां किट्टीनां मध्ये या सर्वाल्पप्रदेशा सा असंख्येयगुणप्रदेशा एवं तावद्वक्तव्यं यावच्चरमसमयः ॥

किट्टीकरणद्धाए, तिसु आवलियासु समयहीणासु ।
ते पडिगहिया दोण्ह वि, सट्ठाणे उवसमज्झंति ॥

किट्टिकरणाद्धायास्तिसृष्वावलिकासु समयहीनासु पतद्ग्रहता न भवति अप्रत्याख्यानप्रत्याख्यानावरणे लोभदलिकं सञ्ज्वलनलोभे सङ्क्रमयतीति भावः किं तु तयोर्द्वयोरप्यप्रत्याख्यानप्रत्याख्यानावरणलोभयोर्दलिकं स्वस्थानं एव स्थितमुपशमं नयते द्व्यावलिकाशेषायां पुनः किट्टिकरणाद्धायां बादरसञ्ज्वलनलोभस्यागालो न भवति किं तूदीरणैव साऽपि तावत् यावदावलिका । तथा किट्टिकरणाद्धायाः संख्येयेषु भागेषु गतेषु सत्सु संज्वलनलोभस्य स्थितिबन्धोऽन्तर्मुहूर्त्तप्रमाणो ज्ञानावरणदर्शनावरणान्तरायाणां दिनपृथक्त्वप्रमाणानां नामगोत्रयोर्वेदनीयाना प्रभूतवर्षसहस्रमानस्ततः किट्टिकरणाद्धायाश्चरमसमये संज्वलनलोभस्य स्थितिबन्धोऽन्तर्मुहूर्त्तप्रमाणः केवलमिदमन्तर्मुहूर्तं स्तोकचरममवसेयं ज्ञानावरणदर्शनावरणान्तरायाणामन्तरहोरात्रस्य नामगोत्रवेदनीयानां किञ्चिदूनवर्षद्वयप्रमाणं आगालव्यवच्छेदानन्तरखण्डा या उदीरणावलिका तस्याश्चरमसमये किट्टिकरणाद्धाचरमसमयस्तस्मिंश्च किट्टिकरणाद्धाचरमसमये यद्भूत् तद् दिदर्शयन्नाह ।

लोभस्स अणुवसंतं, किट्टी उदयावली य पुव्वुत्तं ।
वायरगुणाए समग, दोण्ह वि लोभमुवसंता ॥

किट्टिकरणाद्धायाश्चरमसमये सञ्ज्वलनलोभस्य तृणान्तर्मुहूर्ते यद् द्वितीयस्थितिगतं किट्टीकृतं दलिकं या च उदयावलिका किट्टीकरणाद्धाया शेषीभूता यच्च पूर्वोक्तसमयोनावलिकाद्विकबद्धमित्यर्थः । शेषं सर्वमप्युपशान्तं तथा तस्मिन्नेव समये बादरगुणेन अनिवृत्तिबादरसंपरायगुणस्थानकेन समकं द्वयोरप्यप्रत्याख्यानप्रत्याख्यानावरणलोभावुपशान्तौ किमुक्तं भवति । यस्मिन्नेव समये द्वावप्यप्रत्याख्यानप्रत्याख्यानलोभावुपशान्तौ तस्मिन्नेव समयेऽनिवृत्तिबादरसंपरायगुणस्थानकव्यवच्छेदम्

उपलक्षणमेतत् बादरसंज्वलनलोभोदयोदीरणा व्यवच्छेदाश्च ।

सेसद्धसंसतइए, दूं तावइया किट्टिओ उ पढमठिई ।
वज्जयअसंखभागं, हिट्ठुवरिमुदीरए सेसा ॥

शेषार्द्धशेष काल तृतीये त्रिभागे इत्यर्थः सूक्ष्मसंपरायो भवति ताश्च प्राकृता किट्टीर्द्वितीयस्थितेः सकाशात् कियतीः समाकृष्य प्रथमां स्थितिं तावतीं सूक्ष्मसंपरायाद्धातुल्यां करोति किट्टिकरणाद्धायामन्तिममावलिकामात्रं स्तिबुकसंक्रमेण संक्रमयन्ति तथा प्रतिसमयान्तिमसमयकृता किट्टीर्वर्जयित्वा शेषसमयकृताः किट्टय सूक्ष्मसंपरायाद्धायाः प्रथमसमये प्राय उदयमपगच्छन्ति ( दिङ्मात्यादि ) चरमसमयकृतानां किट्टीनामधस्तादसंख्येयभागं प्रथमसमयकृतानां चोपरितनसंख्येयतमभाग वर्जयित्वा शेषा किट्टीरुदीरयति ।

गेण्हंतो य मुयंता, असंखभागं तु चरमसमयम्मि ।
उवसामियबीयठिई, उवसंतं लभइ गुणट्ठाणं ॥

द्वितीयसमये उदयप्राप्तानां किट्टीनामसंख्येयभागं मुञ्चति उपशान्तत्वादुदयेन ददातीत्यर्थः । अपूर्वं वा संख्येयं भागमनुभावनार्थमुदीरणाकरणे गृह्णाति । एव ग्रहणमोक्षौ कुर्वन् तावत् ज्ञातव्यो यावत् सूक्ष्मसंपरायाद्धायाश्चरमसमयद्वितीयस्थितिगतमपि दलिकं सूक्ष्मसंपरायाद्धाप्रथमसमयादारभ्य सकलमपि सूक्ष्मसंपरायगुणस्थानकं काल यावत् पूर्ववदुपशमयति समयोनावलिकाद्विकबद्धमपि दलिक सूक्ष्मसंपरायाद्धायाश्चरमसमये ज्ञानावरणदर्शनावरणान्तरायाणामान्तर्मौहूर्तिकः स्थितिबन्धो नामगोत्रयोः षोडशमुहूर्त्तप्रमाणो वेदनीयस्य चतुर्विंशतिमुहूर्त्तमान तस्मिन्नेव चरमसमये द्वितीयस्थितिगत सकलमपि मोहनीयमुपशान्त ततः एवमुपशमितद्वितीयस्थितिरनन्तरसमये उपशान्तमुपशान्ततमोरूप गुणस्थानं लभते ।

अंतो मुहुत्तमेत्तस्स वि, संखेज्जा भागतुल्ला उ ।
गुणसेढी सव्वद्धं, तुल्ला य पएसकालेहिं ॥

अन्तर्मुहूर्त्तमात्र ततः उपशान्तमोहगुणस्थानक तस्याऽपि उपशान्तमोहगुणस्थानककालस्य संख्येय संख्येयतमो भागस्तत्तुल्या गुणश्रेणीः करोति ताश्च गुणश्रेणी सर्वा अपि सर्वमप्युपशान्तगुणस्थानकाद्धाया अनुप्रदेशापेक्षया कालापेक्षया च तुल्याः करोति अवस्थितपरिणामत्वात् ।

करणाय नोवसंतं, संकमणो वट्टणं मुदिट्ठितिगं ।
मोत्तूण विसेसेण, परिवडइ जा पमत्तो त्ति ॥

मोहनीयस्य प्रकृतिजातमुपशान्त सत् करणाय करणयोग्यं न भवति उदीरणानिधत्तिनिकाचिताना करणानामयोग्य भवतीत्यर्थः संक्रमणापवर्तन च दृष्टित्रिकसम्यक्त्व सम्यग्मिथ्यात्वरूपशेषाणां मोहनीयप्रकृतीनां न भवति दृष्टित्रिके तु संक्रमणमपवर्त्तन च भवति तत्र संक्रमो मिथ्यात्वसम्यग्मिथ्यात्वयो सम्यक्त्वम् अपवर्त्तनं तु त्रयाणामपि एव क्रोधेन श्रेणि प्रतिपन्नस्य रूप्य यदा तु मानेन श्रेणि प्रतिपद्यते तदा मान वेदमान एव प्रथमतो नपुंसकवेदोक्तक्रमेण क्रोधत्रिकमुपशमयति । ततः क्रोधोक्तप्रकारेण त्रिकदोष तथैव यदा तु मायया श्रेणि प्रतिपद्यते तदा मायां वेदयमान एव प्रथमतो नपुंसकवेदोक्तप्रकारेण क्रोधत्रिकं ततो मानत्रिक ततः क्रोधोक्तप्रकारेण मायात्रिकं शेष तथैव । यदा तु लोभेन श्रेणिं प्रतिपद्यते तदा लोभं वेदयमान एव प्रथमतो नपुंसकवेदोक्तप्रकारेण क्रोधत्रिकं ततो मानत्रिकं ततो मायात्रिकं ततः उक्तप्रकारेण लोभत्रिकमिति । सम्प्रति प्रतिपात उच्यते सोऽपि द्विधा भवक्षयेण अद्धाक्षयेण च तत्र भवक्षयो म्रियमाणस्य अद्धाक्षय उपशान्ताद्धायोर्व्यवच्छेदः तत्र यो भवक्षयेण प्रतिपतति तस्य प्रथमसमय एव सर्वाण्यपि करणानि प्रवर्तन्ते च प्रथमसमये च यानि कर्म्माण्युदीर्यन्ते तान्युदयावलिकायां प्रवेशयन्ति यानि य मोहोदीरणामायानि तेषां दलिकान्युदयावलिकाया बहिर्गोपुच्छाकारसंस्थितानि विरचयति य पुनरुपशान्तमोहगुणस्थानकाद्धापरिक्षयेण प्रतिपतति किमुक्त भवति येनैव क्रमेण स्थितिघातादीन् कुर्वन्नारूढास्तेनैव क्रमेण पश्चानुपूर्व्या स्थितिघातादीन् कुर्वन् प्रतिपतति स च तावत् प्रतिपतति यावत् प्रमत्तसंयतगुणस्थानकम् ।

ओकिट्टित्ता दलियं, पढमठिई कुण बिइयठिईहिंतो ।
उदयाइविसेसूणं, आवलिउड्ढं असंखगुणं ॥

उपशान्तमोहगुणस्थानकात् प्रतिपतनक्रमेण संज्वलनलोभादीनि कर्म्माण्यनुभवति तद्यथा प्रमत्त संज्वलनलोभ ततो यत्र मायोदयव्यवच्छेदस्ततः आरभ्य मायां ततो यत्र मानोदयव्यवच्छेदस्ततः प्रकृतिमान ततो यत्र क्रोधोदयव्यवच्छेदस्ततः आरभ्य क्रोध । इत्थ च क्रमेणानुभवनार्थं तेषां द्वितीयस्थितेः सकाशात् दलिकमपकृष्य प्रथमस्थितिं करोति उदयादिषु च उदयसमयप्रभृतिषु असंख्येयगुणं ततोऽपि द्वितीयसमये असंख्येयगुणं ततोऽपि तृतीयसमये असंख्येयगुणमुदयवतीनामावक्तव्य यावत् गुणश्रेणीशिरः तथा पुनरपि प्रागुक्तक्रमेण विशेषहीनो दलिकनिक्षेपः पतद्ग्रहे ।

जावइया गुणसेढी, उदयवई तासु हीणगं परतो ।
उदयावलीकाय, गुणसेढी कुणइ इयराणं ॥

या उदयवत्यस्तत्कालमुदयभाजस्तासां प्रकृतीनां यावती गुणश्रेणिर्यावत् गुणश्रेणीशिर इत्यर्थः तावदुदयावलिका उपरिप्रागुक्तक्रमेण संख्येयगुणं दलिकनिक्षेपं करोति ततः परतो हीनकं विशेषहीनमितरासामनुदयवतीनां प्रकृतीनामुदयावलिकाया दलिकनिक्षेपमकृत्वा इत्यर्थः ततः उपरि संख्येयगुणतया दलिकनिक्षेप स च तावत् गुणश्रेणीशिरस्ततः परत पुनर्विशेषहीन ।

संकम उदीरणाणं, नत्थि विसेसो एत्थ पुव्वत्तो ।
जं जच्चिए वच्छिन्नं, जायए वा होइ तं तत्थ ॥

इह च उपशमश्रेण्यारोहे संक्रमे विशेष उक्तो यथाऽनुपूर्वीय च संक्रमो नानाऽनुपूर्वी तथा य उदीरणायां विशेष उक्तो यथाबद्धं कर्म्म पत्रावलिकातीतमुदीरयति न षडावलिकामध्ये विशेषोऽशेषसमश्रेणिप्रतिपातेन न भवति किमुक्त भवत्यपूर्व्योऽपि बद्ध च कर्म बद्धावलिकातिक्रान्तमुदीरयतीति तथा यद्यत्र स्थान व्यवच्छिन्नमुपगतं वा संक्रमण वा अपवर्तनं वा उदीरणं वा देशोपशमना वा निधत्तिनिकाचन वा तत्तत्र स्थाने भवति तथा यत्र यत्र च स्थाने जात स्थितिरसघातादि तत्र स्थान तद्विधमेव भवतीति ।

वेइयमाण संजलण, कालतो अहिगमो ह गुणसेढी ।
पडिवत्तिकम्मा उदए, तुल्ला सेसद्धिकम्मेहिं ॥

मोहनीयस्य मोहनीयप्रकृतीनां गुणश्रेणिकालमधिकृत्य वेद्यमानानां संज्वलनकालादप्यधिका प्रतिपतिता सती आरभ्यते समारोहकाले गुणश्रेण्यपेक्षया तुल्या तथा यस्य कषायस्योदय उपशमश्रेणिप्रतिपत्तिरासीत् तस्योदयप्राप्तस्य सतो गुणश्रेणि प्रतिपतिता शेषकर्म्मा नि शेषकर्म्मांशगुणश्रेणिभिः सह

तुल्या क्रियते यथा कश्चित् सञ्ज्वलनक्रोधेन उपशमश्रेणिं प्रतिपन्नस्ततः श्रेणिं प्रतिपतन् तदा सञ्ज्वलनक्रोधमुदयेन प्राप्तवान् भवति ततः प्रभृति तत्र गुणश्रेणिशेषकर्मभिः समाना भवति एवं मानमाययोरपि वाच्यं सञ्ज्वलनलोभेन पुनरुपशमश्रेणिं प्रतिपन्नस्य प्रतिपत्तिकाले प्रथमसमयादारभ्य सञ्ज्वलनलोभस्य गुणश्रेणिभिः सह तुल्या प्रवर्तते शेषकर्म्मणां तु यदारोहत उक्तं तदेव प्रतिपततोऽप्यन्यूनातिरिक्तं वेदितव्यम् ।

खवगुवसमगम्मि एव्व, भाणे दुगुणो तहिं बंधे ।
अणुभागो णंतगुणो, असुभाणे सुभाण विवरीओ ॥

क्षपकस्य क्षपकश्रेणिमारोहतो यस्मिन् स्थाने यावान् स्थितिबन्धस्तस्मिन्नेव स्थाने उपशमश्रेणिमारोहतस्तावान् स्थितिबन्धो द्विगुणो भवति ततोऽपि तस्मिन्नेव स्थाने उपशमश्रेणितः प्रतिपततो द्विगुणो भवति क्षपकसत्कस्थितिबन्धापेक्षया चतुर्गुणो भवतीत्यर्थः । तथा क्षपकस्य यस्मिन् स्थाने अशुभप्रकृतीनां यावान् अनुभागो भवति तदपेक्षया तस्मिन् स्थाने तासामेव शुभप्रकृतीनामुपशमश्रेणीतः प्रतिपततोऽनन्तगुणः (सुभाण विवरिओत्ति) शुभानां पुनरनुभागो विपरीतो वाच्यः स चैवं उपशमश्रेणीतः प्रतिपततो यस्मिन्स्थाने शुभप्रकृतीनां यावाननुभागो भवति तदपेक्षया तस्मिन्स्थाने तासामेव शुभप्रकृतीनामुपशमकस्यानुभागोऽनन्तगुणस्ततोऽपि तस्मिन्नेव स्थाने तासामेव शुभप्रकृतीनां क्षपकस्यानन्तगुणः ।

परिवाडीए पडिओ, पमत्तइयरत्तणे बहुं किच्चा ।
देसजई सम्मो वा, सासणभावं वए कोई ॥

यथा परिपाट्या श्रेणिमारूढस्तथा परिपाट्या पतितः सन् तावदधो गच्छति यावत् प्रमत्तसंयतगुणस्थानकं ततः प्रमत्तत्वाप्रमत्तत्वे बहून्वारान् कृत्वा कश्चित् देशयतिर्भवति कोऽप्यविरतसम्यग्दृष्टिर्वा येषां मतेनानन्तानुबन्धिनामुपशमना न भवति तेषां मतेन कश्चित् सास्वादनमपि व्रजति ॥

उवसमसम्मत्तद्धा, अंतो आउक्खया धुवं देवो ।
जेण तिसु आउगेसु, बद्धेसु न सेढिमारुहइ ॥

औपशमिकसम्यक्त्वाद्धायां वर्त्तमानो यदि कश्चिदायुःक्षयात् कालं करोति तर्हि ध्रुवमवश्यं देवो भवति येन यस्मात्कारणात् त्रिषु नारकतिर्यग्मनुष्यसत्केष्वायुष्केषु श्रेणिमुपशमश्रेणिं नारोहति किं तु देवायुष्क एव बद्धे ततः कालं कृत्वा देव एव भवतीति ॥

सेढीपडिओ समो छ-द्धावलीसासणे वि देवेसु ।
एगभवे दुक्खुत्तो, चरित्तमोहं उवसमेज्जा ॥

यस्मात्कारणात् देवायुर्वर्जेषु शेषेषु त्रिष्वायुःषु श्रेणिं नारोहति तस्मात्कारणात् श्रेणीतः पतितः सन् उत्कर्षतः षडावलिकाकालं जघन्यतः समयमात्रं सासादनो भवति सोऽप्यवश्यं च्युत्वा देवेषु मध्ये समुत्पद्यते तथा एकस्मिन् भवे उत्कर्षतश्चारित्रमोहनीयं द्वौ वारावुपशमयति न तृतीयमपि वारं यस्तु द्वौ वारावुपशमश्रेणिं प्रतिपद्यते स तस्मिन् भवे क्षपकश्रेणिं न प्रतिपद्यते यस्त्वेकवारमुपशमश्रेणिं प्रतिपन्नस्तस्य भवेदपि तस्मिन् भवे क्षपकश्रेणिः । एष कार्म्मग्रन्थिकाभिप्रायः । आगमाभिप्रायेण त्वेकस्मिन् भवे एकामेव श्रेणिं न तु द्वितीयामपि तदुक्तं "अन्नयरसेढिवज्जं, एग भवेणेव सव्वाइं" । अन्यत्राप्युक्तं मोहोपशम एकस्मिन् भवे स्यादसन्ततं यस्मिन् भवे उपशमक्षयो मोहस्य

तत्र नेति एव पुरुषवेदेनोपशमश्रेणिं प्रतिपन्नस्य विधिरुक्तः । संप्रति स्त्रीवेदेन नपुंसकवेदेन चोपशमश्रेणिं प्रतिपद्यमानस्य विधिमाह

दुचरिमसमये नियगा, वेयम्मि इत्थी नपुंसगो एगो ।
समइत्तु सत्त पच्छा, किं तु नपुंसो कमारद्धे ॥

स्त्री नपुंसकस्य वेदेन सदान्योन्यं परस्परं वेदमुपशमयति किमुक्तं भवति स्त्री स्त्रीवेदमुपशमयति नपुंसकवेदं च नपुंसको नपुंसकवेदमुपशमयति स्त्रीवेदं चेति किं तु नपुंसकगते सति पूर्वक्रमेणारब्धे सत्युक्तप्रकारेणोपशमयति इह चोपशमनकरणे स्त्रिया नपुंसकस्य च निजकोदयस्य स्ववेदोदयस्य द्विचरमसमये एकेन्द्रियस्थितिं मुक्त्वा शेषं सर्वमुपशान्तमित्थं च शमयित्वा स्त्री नपुंसको वा पश्चात्सप्त पुरुषवेदादिकाः प्रकृतीरुपशमयति । इयमत्र भावना । इह स्त्री उपशमश्रेणिं प्रतिपन्ना सती प्रथमतो नपुंसकवेदमुपशमयति पश्चात् स्त्रीवेदं तच्च तावदुपशमयति यावत्स्त्रीवेदयस्य द्विचरमसमयस्तस्मिंश्च निजकोदयस्य द्विचरमसमये एकां चरमसमयमात्रामुदयस्थितिं च वर्जयित्वा शेषं सकलमपि स्त्रीवेदसत्कं दलिकमुपशमितं ततश्चरमसमये गते सति अवेदके सति पुरुषवेदहास्यादिषट्करूपाः सप्त प्रकृतीर्युगपदुपशमयितुमारभते शेषं पुरुषवेदेन च श्रेणिं प्रतिपन्नस्य उक्तं यदा स्त्रीवेदेन पुरुषवेदेन वा उपशमश्रेणिं प्रतिपद्यमानो यस्मिन् स्थाने नपुंसकवेदमुपशमयति तदूर्ध्वं यावन्नपुंसकवेदेन श्रेणिं प्रतिपन्नः सन् नपुंसकवेदमेव समुपशमयति ततः ऊर्ध्वं नपुंसकवेदं युगपदुपशमयितुमारभते स च तावद्यावन्नपुंसकवेदोदयो द्विचरमसमये तस्मिंश्च स्त्रीवेद उपशान्तः नपुंसकवेदस्य च एका उदयमात्रा उदयमात्रस्थितिर्वर्तते शेषं सर्वमप्युपशान्तं तस्यामप्युदयस्थितावतिक्रान्तायामवेदको भवति ततः पुरुषवेदादिकाः सप्त प्रकृतीर्युगपदुपशमयतीति । तदेवमुक्ता सर्वोपशमना ।

संप्रति देशोपशमनामभिधातुकाम आह ।

मूलुत्तरकम्माणं, पगइठिइयाइ होइ चउभेया ।
देसकरणेहिं देसं, समइ ज देसुमसाणो ॥

देशोपशमना मूलकर्म्मणां मूलप्रकृतीनामुत्तरकर्म्मणामुत्तरप्रकृतीनां प्रत्येकं प्रकृतिस्थित्यादिका प्रकृतिस्थित्यनुभागप्रदेशविषया चतुर्भेदा चतुर्विधा भवति इयमत्र भावना । देशोपशमना द्विधा तद्यथा मूलप्रकृतिविषया उत्तरप्रकृतिविषया च, एकैकाऽपि चतुर्भेदा तद्यथा प्रकृतिदेशोपशमना स्थितिदेशोपशमना अनुभागदेशोपशमना प्रदेशोपशमना च । अथ कस्माद्देशोपशमनेत्यभिधीयते अत आह । यत् यस्मात्कारणात् एकदेशभूताभ्यां यथाप्रवृत्तापूर्वकरणसंज्ञिताभ्यां करणाभ्यां प्रकृतिस्थित्यादीनां देशैकदेशं शमयत्यतो देशोपशमनाऽभिधीयते देशभूताभ्यां करणाभ्यामुपशमयतीति देशोपशमना । यदि वा देशस्य प्रकृत्यादीनामेकदेशस्योपशमना देशोपशमनेति व्युत्पत्तेः ॥ सम्प्रत्यस्यामेवार्थविशेषमाह ।

उवसामियस्सुवट्टण-संकमकरणाइं होंति नन्नाइं ।
देसोवसामिय जम्हा, पुव्वो सव्वकम्माण ॥

देशोपशमनया उपशमितस्य कर्म्मणः उद्वर्तनसंक्रमलक्षणे निधत्ति नान्यानि करणान्युदीरणाप्रवृत्तीनि एष देशोपशमनाया सर्वोपशमनातो विशेषः । अनया वा देशोपशमनया मूलप्रकृतिमुत्तरप्रकृतिं वा उपशमयितुं प्रवृत्तो वादरसंयो यावत् पूर्वकरणस्थानकचरमसमयः । इयमत्र भावना अस्या देशोपशमनाया

स्वामिनः सर्वेतिर्यञ्चः एकद्वित्रिचतुःपञ्चेन्द्रियभेदभिन्नाः सर्वे नारकाः सर्वे देवाः सर्वे मनुष्यास्ते च मनुष्यास्तावद्यावदपूर्वकरणान्तसमय इति एवा चैव देशोपशमना सर्वेषामपि कर्म्मणामवगन्तव्या न मोहनीयस्यैव केवलस्य। स्वामिविषयमेकं च विशेषमाह ।

खवगो उवसमगो वा, पढमकसायाण दंसणतिगस्स ।
देसोवसमगो सुमु-अपुव्वकरणंतगो जाव ॥

स देशोपशमनास्वामी देशोपशमकः प्रथमकषायाणां दर्शनत्रिकस्य च क्षपक उपशमको वा तावदवसेयो यावत्स्वस्वापूर्वकरणान्तगः । एतदुक्तं भवति।प्रथमकषायाणां विसंयोजना चतुर्गतिका अपि उपशमका मनुष्याः प्रतिपन्नसर्वविरतेर्दर्शनत्रिकस्य क्षपका मनुष्या अविरतसर्वविरता उपशमकाः सर्वविरतास्तावद्देशोपशमनाकारिणो यावत्स्वस्वापूर्वकरणचरमसमयो न परत इति । सम्प्रति साद्यादिप्ररूपणार्थमाह ।

साइयमाइ चउद्धा, देसुवसमणा अणाइमंतीणं ।
मूलुत्तरपगईणं, साइ अधुवोत्तरपगइयो वा ॥

अनादिमत्योऽनादिसत्ताकास्तासां देशोपशमना चतुर्द्धा चतुःप्रकारा तद्यथा सादिरनादिर्ध्रुवाऽध्रुवा च। तत्र मूलोत्तरप्रकृतीनामष्टानामपि अपूर्वकरणगुणस्थानकात्परतः सा देशोपशमना न प्रवर्त्तते ततः प्रतिपाते च भूयोऽपि प्रवर्त्तते इति सादिस्तत्स्थानमप्राप्तस्य पुनरनादिर्ध्रुवा अभव्यानां त्वध्रुवा भाविता मूलोत्तरप्रकृतीनां साद्यादिरूपनया चतुर्विधा देशोपशमना।सम्प्रत्युत्तरप्रकृतीनामनादिसत्कानां सा भाव्यते तत्र वैक्रियसप्तकाहारकसप्तकमनुष्यद्विकदेवद्विकनारकद्विकसम्यक्त्वसम्यग्मिथ्यात्वोच्चैर्गोत्ररूपोद्वलनयोग्यत्रयोविंशतितीर्थकराश्चतुष्प्रयवर्जा शेषास्त्रिशदुत्तरशतसंख्या प्रकृतयोऽनादिसत्ताकास्तासां मध्ये मिथ्यात्वानन्तानुबन्धिनां स्वस्वापूर्वकरणात्परतो देशोपशमना नोपजायते शेषकर्मणां त्वपूर्वकरणगुणस्थानकात् परतः स्थानात् च्यवमानस्य भूयोऽपि जायते इति सादिस्तत्स्थानमप्राप्तस्य पुनरनादिर्ध्रुवाऽध्रुवा अभव्यभव्यापेक्षया यास्त्वध्रुवा अध्रुवसत्ताकाः प्रकृतयोऽनन्तरोक्ता अष्टाविंशतिसंख्याकास्ता देशोपशमनामधिकृत्य साद्यध्रुवास्तासां देशोपशमना सादिरध्रुवा चेत्यर्थः। साद्यध्रुवता अध्रुवसत्ताकत्वादेव समवसेया ।

सम्प्रति प्रकृतिस्थानानां साद्यादिप्ररूपणार्थमाह ।

गोयाउयाणं दोएहं, चउत्थछट्टाण होइ सत्तएहं ।
साइयमाइ चउद्धा, सेसाणं एगठाणस्स ॥

इह गोत्रस्य देशोपशमनामधिकृत्य द्वे प्रकृतिस्थाने तद्यथा द्वे एका च तत्रानुद्वलितोच्चैर्गोत्रस्य द्वे उद्वलितोच्चैर्गोत्रस्यैका तथा आयुषोऽपि द्वे प्रकृतिस्थाने तद्यथा द्वे प्रकृती एका च। तत्र अबद्धपरभवायुष्कस्य एका बद्धपरभवायुषो द्वे एतेषां च चतुर्णामपि स्थानानां देशोपशमना सादिरध्रुवा च स्थानानामपि स्वयं साद्यध्रुवत्वात् तथा 'चउत्थछट्ठाण होइ सत्तएहमिति " तत्र यथासंख्येन पदयोजना तत्र चतुर्थं मोहनीयं तस्य देशोपशमनायोग्यानि षट् प्रकृतिस्थानानि तद्यथा एकविंशतिश्चतुर्विंशतिः पञ्चविंशतिः षड्विंशतिः सप्तविंशतिरष्टाविंशतिश्च शेषाणि पुनरनिवृत्तिबादरसंपराये प्राप्यन्ते इति देशोपशमनायोग्यानि भवन्ति। तत्राष्टाविंशतिस्थानं मिथ्यादृष्टिसासादनसम्यग्दृष्टिवेदकसम्यग्दृष्टीनां प्राप्यते सप्तविंशतिस्थानमुद्वलितसम्यक्त्वस्य सम्यग्मिथ्यादृष्टेर्वा षड्विंशतिस्थानमुद्वलितसम्यक्त्वसम्यग्मिथ्यात्वस्यानादिमिथ्यादृष्टेर्वा पञ्चविंशतिस्थानं षड्विंशतिसत्कर्मणो मिथ्यादृष्टेः सम्यक्त्वमुत्पादयतोऽपूर्वकरणात्परतो वेदितव्यं तस्या मिथ्यात्वदेशोपशमनाया अभावात् तथा अनन्तानुबन्धिनामुद्वलनेऽपूर्वकरणात्परतो वर्त्तमानस्य चतुर्विंशतिस्थानं चतुर्विंशतिसत्कर्मणो वा चतुर्विंशतिस्थानं देपिसप्तकस्य एकविंशतिस्थानम् अत्र षड्विंशतिलक्षणस्थानं मुक्त्वा शेषाणां पञ्चानामपि स्थानानां देशोपशमना साद्यध्रुवस्थानानामपि स्वयंकादाचित्कत्वात् षड्विंशतिस्थानस्य चतुर्द्धा तद्यथा सादिरनादिर्ध्रुवा अध्रुवा च । तत्रोद्वलितसम्यक्त्वसम्यग्मिथ्यात्वस्य सादिरनादिर्मिथ्यादृष्टेरनादिर्ध्रुवा अभव्यानां भव्यानान्त्वध्रुवा तथा षष्ठानामनन्तस्य देशोपशमनायोग्यानि सप्त स्थानानि तद्यथा त्र्युत्तरशतं द्व्युत्तरशतं षण्णवतिः पञ्चनवतिः त्रिनवतिः चतुरशीतिर्द्व्यशीतिश्च तत्रादिमानि चत्वारि स्थानानि यावदपूर्वकरणगुणस्थानकचरमसमयस्तावद्वेदितव्यानि न परतः शेषाणि च त्रीणि त्रिनवतिचतुरशीतिद्व्यशीतिरूपाणि एकेन्द्रियादीनां भवन्ति न श्रेणिप्रतिपद्यमानानां शेषाणि तु स्थानानि अपूर्वकरणगुणस्थानकात्परतो लभ्यानि नार्वागिति न देशोपशमनायोग्यानि एतेष्वपि च स्थानेषु देशोपशमना साद्यध्रुवस्थानानामपि स्वयमनित्यत्वात् शेषाणां तु ज्ञानावरणदर्शनावरणवेदनान्तरायाणां देशोपशमनामधिकृत्यैकैकं प्रकृतिस्थानम् । तत्र ज्ञानावरणस्यान्तरायस्य च प्रत्येकं पञ्चप्रकृत्यात्मकं स्थानं दर्शनावरणस्य नवप्रकृत्यात्मकं तृतीयस्य द्विप्रकृत्यात्मकम् ।एषां च देशोपशमना साद्यादिभेदाच्चतुर्द्धा चतुःप्रकारा तद्यथा सादिरनादिर्ध्रुवा अध्रुवा च । "साइयमाइचउद्धा सेसाणं एगठाणस्स " तत्रापूर्वकरणगुणस्थानकात्परतो न भवत्युपश्रेणिस्ततः शमप्रतिपाते च भूयोऽपि भवति। ततः सादिस्तत्स्थानमप्राप्तस्य पुनरनादिः।ध्रुवाऽध्रुवा च भव्याभव्यापेक्षया । उक्ता प्रकृतिदेशोपशमना ।

सम्प्रति स्थितिदेशोपशमनामाह ।

उवसामणा ठिईओ, उक्कोसा संकमेण तुल्लाओ ।
इयरा वि किं तु अभवे, उव्वलगे अपुव्वकरणेसु ॥

स्थितिदेशोपशमना द्विविधा तद्यथा मूलप्रकृतिविषया उत्तरप्रकृतिविषया च एकैकाऽपि द्विधा तद्यथा उत्कृष्टा जघन्या च तत्र मूलप्रकृतीनामुत्तरप्रकृतीनामुत्कृष्टस्थितिदेशोपशमना संक्रमेण तुल्या किमुक्तं भवति यः प्रागुत्कृष्टस्थितिसंक्रमस्वामी प्रतिपादितो यथा चोत्कृष्टस्थितिसंक्रमस्य साद्यादिप्ररूपणा तदेतत्सर्वमुत्कृष्टस्थितिदेशोपशमनायामपि वाच्यमितरा स्थितिर्जघन्यास्थितिदेशोपशमनासंक्रमेण तुल्या जघन्यस्थितिसंक्रमतुल्या किंचिदभव्यमायोग्यजघन्यस्थितौ वर्त्तमानस्य द्रष्टव्या । तस्यैव प्रायः सर्वकर्म्मणामपि जघन्याया स्थितेः प्राप्यमाणत्वात् याश्च प्रकृतयो ऽभव्यप्रायोग्यजघन्यस्थितिकाले भवन्ति तासामुद्वलकके अपूर्वकरणे वा जघन्यस्थितिदेशोपशमना वेदितव्या तत्रोद्वलनप्रायोग्याणां प्रकृतीनामन्तिमखण्डे पल्योपमसंख्येयभागमात्रे वर्त्तमाने तत्राप्याहारकसप्तकसम्यक्त्वसम्यग्मिथ्यात्वानामेकेन्द्रियस्यानेकेन्द्रियस्य च शेषप्रकृतीनां तूद्वलनयोग्यानां वैक्रियसप्तकदेवद्विकनारकमनुष्यद्विकोच्चैर्गोत्ररूपाणामेकेन्द्रियस्यैव अन्यासाञ्चापूर्वकरणचरमसमये वर्त्तमानस्येति ।

अणुनागपएसाणं, सुभाण जा पुव्वमिच्चइयराणं।
उक्कोसियर अरूविय, एगेंदी देससमणाए॥

अनुभागप्रदेशोपशमनाय यथाक्रममनुभागसंक्रमप्रदेशसंक्रमतुल्या इयमत्र भावना द्विविधा अनुभागदेशोपशमना तद्यथा जघन्या उत्कृष्टा च तत्र प्रपञ्चित प्राक् उत्कृष्टानुभागप्रदेशोपशमनाया अपि तत्र शुभप्रकृतीनां सम्यग्दृष्टिर्नवर सातवेदनीययशःकीर्त्युच्चैर्नामगोत्राणा-मुत्कृष्टानुभागे संक्रमस्वामी अपूर्वकरणगुणस्थानकात्परतोऽपि भवति उत्कृष्टानुभागदेशोपशमनायाः पुनरुत्कर्षतोऽप्यपूर्वकरणगुणस्थानपर्यवसानः स्वामी इतरासामशुभानां प्रकृतीनामुत्कृष्टानुभागदेशोपशमना स्वामी च मिथ्यादृष्टिरवसेयः इतरस्या जघन्यानुभागोपशमनायास्तीर्थकरवर्जानां सर्वासामपि प्रकृतीनामभवसिद्धिप्रायोग्यजघन्यस्थितौ वर्त्तमान एकेन्द्रियस्वामी प्रतिपत्तव्यस्तीर्थकरनाम्नस्तु य एव जघन्यानुभागसंक्रमस्वामी स एव जघन्यानुभागदेशोपशमनाया अपि। प्रदेशोपशमनाऽपि द्विधा उत्कृष्टा जघन्या च। तत्रोत्कृष्टप्रदेशोपशमना उत्कृष्टप्रदेशसंक्रमतुल्या नवरं यथा कर्म्मणामपूर्वकरणात्परतोऽपि उत्कृष्टप्रदेशसंक्रमः प्राप्यते तेषामपूर्वकरणगुणस्थानचरमसमयं यावत् उत्कृष्टप्रदेशोपशमना वाच्या जघन्या प्रदेशोपशमना अभव्यप्रायोग्यजघन्यस्थितौ वर्त्तमानस्यैकेन्द्रियस्येति समाप्तमुपशमनाकरणं तदेवमुक्तमुपशमनाकरणम्। पं० सं०। आचा० (कर्मप्रकृतितो ग्रन्थोऽर्थतो नातिरिच्यते शब्दतस्तु भिन्नोऽपि न पृथगवस्थापितोऽभिधेयस्यैवोपादेयत्वात्)

**उवसमप्पनव**–उपशमप्रभव–त्रि० उपशम इन्द्रियनोइन्द्रियजयस्तस्मात्प्रभवो जन्मोत्पत्तिर्यस्याऽसौ उपशमप्रभवः इन्द्रियमनोनिग्रहलभ्ये, पा० "अहिरन्नसो वाणियस्स उवसमप्पभवस्स नववभचेरगुत्तस्स" उपशमप्रभवस्येन्द्रियमनोजयोत्पन्नस्य। ध० ३ अधि०।

**उवसमलद्धाइकलिय**–उपशमलब्ध्यादिकलित–पुं० ३ त० उपशमलब्ध्युपकरणलब्धिस्थिरहस्तलब्धियुक्ते, "अविसाई परलोए उवसमलद्धाइकलिओ य" पं० व०।

**उवसमलद्धाइजुत्त**–उपशमलब्ध्यादियुक्त–पुं० उपशमलब्धिः परमुपशमयितुं सामर्थ्यलक्षणाऽऽदिशब्दादुपकरणलब्धिः स्थिरहस्तलब्धिश्च गृह्यते ततस्ताभिश्च संयुक्तः सपन्नः। उपशमलब्ध्यादिकलिते, ध० ३ अधि०।

**उवसमलद्धि**–उपशमलब्धि–स्त्री० परमुपशमयितुं सामर्थ्ये, ध० ३ अधि०। उपशमनाकरणसामर्थ्ये, "पजत्तो लद्धितिगजुत्तो" लब्धित्रिकयुक्त उपशमलब्ध्युपशमश्रेणिश्रवणकरणलब्धिकरणत्रयहेतुप्रकृष्टयोगयब्धिरूपत्रिकयुक्तः क० प्र०।

**उवसमसार**–उपशमसार–त्रि० उपशमप्रधाने, "से किमाहु भंते! उवसमसारं खु सामण्णं" कर्म०।

**उवसमसेढि**–उपशमश्रेणि–स्त्री० उपशमनाप्रकारे, उपशमश्रेणिं प्रकटयन्नाह।

अणदंसनपुंसत्थी, वेयच्छकं च पुरिसवेयं च।
दो दो एगंतरिए, सरिसे सरिसं उवसमेइ॥ ९७॥

तत्र प्रथमतोऽनन्तानुबन्धिनामुपशमनाऽभिधीयते अविरतसम्यग्दृष्टिदेशविरतप्रमत्ताप्रमत्तानामन्यतमोऽन्यतमस्मिन् योगे वर्त्तमानस्तेजःपद्मशुक्ललेश्यानामन्यतमलेश्यायुक्तः साकारोपयोगोपयुक्तोऽन्तः सागरोपमकोटाकोटीस्थितिसत्कर्म्मा कार्मणकालात्पूर्वमप्यन्तर्मुहूर्त्तकालं यावदवदायमानचित्तसन्तत्यपूर्वकरणं तिष्ठति तथा च तिष्ठमानश्च परावर्तमाना प्रकृती शुभा एव बध्नाति नाशुभाः। अशुभानां च प्रकृतीनामनुभागं चतुःस्थानकं सन्तं द्विस्थानकं करोति शुभानां च द्विस्थानकं सन्तं चतुःस्थानकं स्थितिबन्धेऽपि च पूर्णे सति अन्यं स्थितिबन्धं पूर्वपूर्वस्थितिबन्धापेक्षया पल्योपमासंख्येयभागहीनं करोति। इत्थं करणकालात्पूर्वमन्तर्मुहूर्त्तं कालं यावदवस्थाय ततो यथाक्रमं त्रीणि करणानि प्रत्येकमान्तर्मौहूर्तिकानि करोति। तद्यथा यथाप्रवृत्तिकरणम्, अपूर्वकरणम्, अनिवृत्तिकरणम्। चतुर्थी-तूपशान्ताद्धा। तत्र यथाप्रवृत्तिकरणे प्रविशन् प्रतिसमयमनन्तगुणवृद्ध्या विशुद्ध्या प्रविशति पूर्वोक्तं च शुभप्रकृतिबन्धादिक तथैव तत्र कुरुते न च स्थितिघातं रसघातं गुणश्रेणिं गुणसंक्रमं वा करोति तद्योग्यविशुद्ध्यभावात् प्रतिसमयं नानाजीवापेक्षया असंख्येयलोकाकाशप्रदेशप्रमाणान्यध्यवसायस्थानानि भवन्ति षट्स्थानपतितानि च। अन्यच्च प्रथमसमयापेक्षया द्वितीयसमयेऽध्यवसायस्थानानि विशेषाधिकानि ततोऽपि तृतीयसमये विशेषाधिकानि एवं तावद्वाच्यं यावद्यथाप्रवृत्तकरणसमयः एवमपूर्वकरणेऽपि द्रष्टव्यम्। अत एवैतानि स्थाप्यमानानि विषमचतुरस्रं क्षेत्रमास्तृणन्ति स्थापना चेयम्।

१२०००००००००००१६
१०००००००००००१५
८००००००००००१४
६०००००००००१३
४००००००००१२
३००००००११
२००००००९
१००००५

इह कल्पनया द्वौ पुरुषौ युगपत्करणं प्रतिपन्नौ विवक्ष्येते तत्रैकः सर्वजघन्यया विशोधिश्रेण्या प्रतिपन्नः अपरस्तु सर्वोत्कृष्टया विशोधिश्रेण्या तत्र प्रथमजीवस्य प्रथमसमये जघन्या विशोधिः सर्वस्तोका ततो द्वितीयसमये जघन्या विशोधिरनन्तगुणा ततोऽपि तृतीयसमये जघन्या विशोधिरनन्तगुणा एवं तावद्वाच्यं यावद्यथाप्रवृत्तकरणाद्धया संख्येयो भागो गतो भवति तत संख्येये भागे गते सति चरमसमयजघन्यविशुद्धकाशात्प्रथमसमये द्वितीयस्य जीवस्य उत्कृष्टा विशोधिरनन्तगुणा ततोऽपि यतो जघन्यविशुद्धिस्थानान्निवृत्तस्ततः उपरितनं जघन्यविशोधिस्थानमनन्तगुणं ततो द्वितीयसमये उत्कृष्टा विशुद्धिरनन्तगुणा ततः उपरितनं जघन्यं विशोधिस्थानमनन्तगुणं ततस्तृतीयसमये उत्कृष्टा विशुद्धिरनन्तगुणा। एवमुपर्यधश्च एकैकविशोधिस्थानमनन्तगुणनया द्वयोर्जीवयोस्तावन्नेयं यावद्यथाप्रवृत्तकरणस्य चरमसमये जघन्यं विशुद्धिस्थानं ततः शेषाणि उत्कृष्टानि यानि विशोधिस्थानानि अनुक्तानि तिष्ठन्ति तानि निरन्तरमनन्तगुणया वृद्ध्या तावन्नेयानि यावच्चरमसमये उत्कृष्टं विशोधिस्थानम्। भणितं यथाप्रवृत्तिकरणम्। सम्प्रत्यपूर्वकरणमुच्यते। तत्रापूर्वकरणे प्रतिसमयमसंख्येयलोकाकाशप्रमाणानि अध्यवसायस्थानानि भवन्ति प्रतिसमयं च षट् स्थानपतितानि तत्र प्रथमसमये जघन्या विशोधिः सर्वस्तोका सा च यथाप्रवृत्तकरणचरमसमयसत्कोत्कृष्टविशोधिस्थानादनन्तगुणा ततः प्रथमसमये एवोत्कृष्टा विशोधिरनन्तगुणा ततोऽपि द्वितीयसमये जघन्या विशोधिरनन्तगुणा ततोऽपि तस्मिन्नेव द्वितीयसमये उत्कृष्टा विशोधिरनन्तगुणा ततोऽपि तृतीयसमये जघन्या विशो

धिरनन्तगुणा एव जघन्यमुत्कृष्टं च विशोधिस्थानमनन्तगुणया वृद्ध्या तावन्नेयं यावदपूर्वकरणस्य चरमसमये जघन्योत्कृष्टविशुद्धिरनन्तगुणा । स्थापना चेयम् ।

२५००००००००२६
२३०००००००२४
२१००००००२२
१९०००००२०
१७००००१८

अस्मिंश्चापूर्वकरणे प्रविशन् स्थितिघातं रसघातं गुणश्रेणिं गुणसंक्रममपूर्वस्थितिबन्धं च युगपदारभते तत्र स्थितिघातो नाम स्थितिसत्कर्मणोऽग्रिमभागादुत्कृष्टतः प्रभूतसागरोपम (शत) पृथक्त्वमात्रं जघन्यतः पल्योपमसंख्येयभागमात्रं स्थितिखण्डं खण्डयति तद्दलिकं चाऽधस्ताद्याः स्थितीर्न खण्डयिष्यति तत्र प्रक्षिपति अन्तर्मुहूर्त्तेन कालेन तत्र स्थितिखण्डमुत्कीर्यते खण्ड्यत इत्यर्थः ततः पुनरप्यधस्तात्पल्योपमसंख्येयभागमात्रं स्थितिखण्डमन्तर्मुहूर्त्तेन कालेनोत्किरति पूर्वोक्तप्रकारेणैव च निक्षिपति एवमपूर्वकरणाद्धायां प्रभूतानि स्थितिखण्डसहस्राणि व्यतिक्रामति तथा च सत्यपूर्वकरणस्य प्रथमसमये यत् स्थितिसत्कर्मासीत्तत्तस्यैव चरमसमये संख्येयगुणहीनम् । जातरसघातो नाम अशुभप्रकृतीनां यदनुभागसत्कर्म तस्याऽनन्ततमभागं मुक्त्वा शेषाननुभागानन्तर्मुहूर्त्तेन कालेनाशेषानपि विनाशयति ततः पुनरपि तस्य प्रागुक्तस्यानन्ततमभागस्याऽनन्ततमं भागं मुक्त्वा शेषाननुभागानन्तर्मुहूर्तेन कालेन विनाशयति एवमनेकान्यनुभागखण्डसहस्राण्येकस्मिन् स्थितिखण्डे व्यतिक्रामन्ति तेषां च स्थितिखण्डानां सहस्रैरपूर्वकरणं परिसमाप्यते । गुणश्रेणीनामन्तर्मुहूर्तप्रमाणानां स्थितीनामुपरि याः स्थितयो वर्त्तन्ते तन्मध्याद्दलिकं गृहीत्वा उदयावलिकाया उपरितनीषु प्रतिसमयमसंख्येयगुणतया निक्षिपति तद्यथा प्रथमसमये स्तोकं द्वितीयसमयेऽसंख्येयगुणं तृतीयसमयेऽसंख्येयगुणम् । एवं तावन्नेयं यावदन्तर्मुहूर्त्तचरमसमयस्तच्चान्तर्मुहूर्तमपूर्वकरणानिवृत्तिकरणकालाभ्यां मनागतिरिक्तं वेदितव्यम् । एष प्रथमसमयगृहीतदलिकस्य निक्षेपविधिः । एवं द्वितीयादिसमयगृहीतानामपि दलिकानां निक्षेपो वक्तव्यः अन्यच्च गुणश्रेणिरचनाय प्रथमसमये यद्दलिकं गृह्यते तत् स्तोकं ततोऽपि द्वितीयसमयेऽसंख्येयगुणं ततोऽपि तृतीयसमयेऽसंख्येयगुणम् । एवं तावन्नेयं यावद् गुणश्रेणिकरणचरमसमयः अपूर्वकरणसमयेष्वनिवृत्तिकरणसमयेषु चानुभवतः क्रमशः क्षीयमाणेषु गुणश्रेणिदलिकनिक्षेपः शेषे भवति उपरि च न वर्द्धत इति । तथा गुणसंक्रमो नाम अपूर्वकरणस्य प्रथमसमये अनन्तानुबन्ध्यादीनामशुभप्रकृतीनां यद्दलिकं परप्रकृतिषु संक्रमयति तत्स्तोकं ततो द्वितीयसमये परप्रकृतिषु संक्रम्यमाणसमयमसंख्येयगुणं ततोऽपि तृतीयसमयेऽसंख्येयगुणम् एवं तावद् वक्तव्यं यावच्चरमसमयः । तथा अन्यस्थितिबन्धो नाम अपूर्वकरणस्य प्रथमसमयेऽन्य एवापूर्वः स्तोकः स्थितिबन्ध आरभ्यते स्थितिबन्धस्थितिघातौ युगपदेव च निष्ठां यातः एवमेते पञ्च पदार्था अपूर्वकरणे प्रवर्तन्ते व्याख्यातमपूर्वकरणम् । इदानीमनिवृत्तिकरणमुच्यते । अनिवृत्तिकरणं नाम यत्र प्रविष्टानां सर्वेषामपि तुल्यकालानामेवाध्यवसायस्थानम् । तथा हि अनिवृत्तिकरणस्य प्रथमसमये ये वर्तन्ते ये च वृत्ता ये च वर्तिष्यन्ते तेषां सर्वेषामप्येकरूपमेवाध्यवसायस्थानं द्वितीयसमयेऽपि ये वर्तन्ते ये च वृत्ता ये च वर्तिष्यन्ते तेषामपि सर्वेषामेकरूपमध्यवसायस्थानं नवरं प्रथमसमयभाविविशोधिस्थानापेक्षयाऽनन्तगुणम् । एवं तावद्वाच्यं यावदनिवृत्तिकरणचरमसमयः अत एवास्मिन् करणे प्रविष्टानां तुल्यकालानामसुमतां संबन्धिनामध्यवसायस्थानानां परस्परं निवृत्तिर्व्यावृत्तिर्न विद्यते इत्यनिवृत्तिकरणं नाम अस्मिंश्चानिवृत्तिकरणे यावन्तः समयास्तावन्त्यध्यवसायस्थानानि पूर्वस्मादनन्तगुणवृद्धानि एतानि च मुक्तावलीसंस्थानेन स्थापयितव्यानि । अत्रापि प्रथमसमयादेवारभ्य पूर्वोक्ताः पञ्च पदार्था युगपत्प्रवर्तन्ते अनिवृत्तिकरणाद्धायाश्च संख्येयेषु भागेषु गतेषु सत्सु एकस्मिन् भागेऽवतिष्ठमाने अनन्तानुबन्धिनामधस्तादावलिकामात्रं मुक्त्वा अन्तर्मुहूर्तप्रमाणमन्तरकरणमभिनवस्थितिबन्धाद्धासमेनान्तर्मुहूर्त्तप्रमाणेन कालेन करोति अन्तरकरणसत्कं च दलिकमुत्कीर्यमाणं प्रकृतिषु बध्यमानासु प्रक्षिपति प्रथमस्थितिगतं दलिकमावलिकामात्रं वेद्यमानानामुपरि प्रकृतिषु स्तिबुकसंक्रमेण संक्रमयति अन्तरकरणे कृते सति द्वितीयसमयेऽनन्तानुबन्धिनामुपरितनस्थितिदलिकमुपशमयितुमारभते । तद्यथा प्रथमसमये स्तोकमुपशमयति द्वितीयसमये संख्येयगुणं तृतीयसमयेऽसंख्येयगुणम् । एवं यावदन्तर्मुहूर्त्तकालम् तावता च कालेन साकल्यतोऽनन्तानुबन्धिन उपशमिता भवन्ति उपशमितानां यथा रेणुनिकरः सलिलबिन्दुनिवहैरभिषिच्याभिषिच्य द्रुघणादिभिर्निष्कुट्टितो निःस्पन्दो भवति तथा कर्मरेणुनिकरोऽपि विशोधिसलिलप्रवाहेण परिषिच्य परिषिच्यानिवृत्तिकरणरूपद्रुघणनिष्कुट्टितः संक्रमणोदयोदीरणानिधत्तिनिकाचनकरणानामयोग्यो भवति तदेवमेकेषामाचार्याणां मतेनानन्तानुबन्धिनामुपशमनाऽभिहिता । अन्ये त्वाचक्षते अनन्तानुबन्धिनामुपशमना न भवति किं तु विसंयोजनैव विसंयोजना क्षपणा सा चैवम् इह श्रेणिमप्रतिपद्यमाना अपि अविरता विरताश्च चतुर्गतिका अपि । तद्यथा नारका देवा अविरतसम्यग्दृष्टयः तिर्यञ्चोऽविरतसम्यग्दृष्टयो देशविरता वा मनुजा अविरतसम्यग्दृष्टयो देशविरताः सर्वविरता वा । अनन्तानुबन्धिनां विसंयोजनार्थं यथाप्रवृत्तादीनि त्रीणि करणानि कुर्वन्ति करणवक्तव्यता सर्वाऽपि प्राग्वत् नवरमिहानिवृत्तिकरणे प्रविष्टः सन् अन्तरकरणं न करोति ।

उक्तं च कर्मप्रकृतौ ।

चउगइया पज्जत्ता, तिन्नि वि संजोयणे विसंजोयेंति ।
करणेहि तिहिँ सहिया, नंतरकरणं उवसमो वा ॥

अस्याक्षरगमनिका चतुर्गतिका नारकतिर्यङ्मनुष्यदेवाः सर्वाभिः पर्याप्तिभिः पर्याप्तास्त्रयोऽप्यविरतदेशविरतसर्वविरतास्तत्राविरतसम्यग्दृष्टयश्चतुर्गतिका देशविरतास्तिर्यञ्चो मनुष्या वा सर्वविरता मनुष्या एव संयोजनामनन्तानुबन्धिनो विसंयोजयन्ति विनाशयन्ति । किंविशिष्टाः सन्त इत्याह करणैस्त्रिभिर्यथाप्रवृत्तापूर्वकरणानिवृत्तिबादरैः सहिता नवरमिहान्तरकरणं न वक्तव्यम् । उपशमो वा उपशमश्चानन्तानुबन्धिनां न भवतीत्यर्थः । किं तु कर्मप्रकृत्यभिहितस्वरूपेणोद्वलनासंक्रमेणाधस्तादावलिकामात्रं मुक्त्वा उपरि निरवशेषाननन्तानुबन्धिनो विनाशयति आवलिकामात्रं तु स्तिबुकसंक्रमेण वेद्यमानासु प्रकृतिषु संक्रमयति । तदेवमुक्ता अनन्तानुबन्धिनां विसंयोजना । संप्रति दर्शनत्रिकस्योपशमना भण्यते । तत्र मिथ्यात्वस्योपशमना मिथ्यादृष्टेर्वेदकसम्यग्दृष्टेश्च सम्यक्त्वसम्यग्मिथ्यात्वयोस्तु वेदकसम्यग्दृष्टेरेव तत्र मिथ्यादृष्टेर्मिथ्यात्वोपशमना प्रथमसम्यक्त्वमुत्पादयतः सा चैवं

पञ्चेन्द्रियसंज्ञी सर्वाभिः पर्याप्तिभिः पर्याप्तः करणकालात्पूर्वमप्यन्तर्मुहूर्त्तकालं प्रतिसमयमनन्तगुणवृद्ध्या विशुद्ध्या प्रवर्द्धमानोऽभव्यसिद्धिकविशुद्ध्यपेक्षयाऽनन्तगुणविशुद्धिको मतिश्रुताज्ञानविभङ्गज्ञानानामन्यतमस्मिन् साकारोपयोगे उपयुक्तोऽन्यतस्मिन् योगे वर्त्तमानो जघन्यपरिणामेन तेजोलेश्यायां मध्यमपरिणामेन पद्मलेश्यायामुत्कृष्टपरिणामेन शुक्ललेश्यायां वर्त्तमानो मिथ्यादृष्टिश्चतुर्गतिकोऽन्तःसागरोपमकोटीकोटीस्थितिसत्कर्मा इत्यादि पूर्वोक्तं तावद्वाच्यं यावद्यथाप्रवृत्तिकरणमपूर्वकरणं च परिपूर्णं भवति नवरमिहापूर्वकरणे गुणसंक्रमो नो वक्तव्यः किंतु स्थितिघातरसघातस्थितिबन्धगुणश्रेणय एव वक्तव्या । गुणश्रेणिदलिकरचनाप्युदयसमयादारभ्य वेदितव्या ततोऽनिवृत्तिकरणेऽप्येवमेव वक्तव्यम् अनिवृत्तिकरणाद्धायाश्च संख्येयेषु भागेषु गतेषु सत्सु एकस्मिन् संख्येयतमे भागेऽवतिष्ठमानेऽन्तर्मुहूर्त्तमात्रमधो मुक्त्वा मिथ्यात्वस्यान्तरकरणमन्तर्मुहूर्त्तप्रमाणं प्रथमस्थितेः किंचित्समधिकं न्यूनं वाऽभिनवस्थितिबन्धाद्धासमेनान्तर्मुहूर्त्तेन कालेन करोति अन्तरकरणसत्कं च दलिकमुत्कीर्य प्रथमस्थितौ द्वितीयस्थितौ च प्रक्षिपति । प्रथमस्थितौ च वर्त्तमानोदीरणाप्रयोगेण यत्प्रथमस्थितिगतं दलिकं समाकृष्योदये प्रक्षिपति सा उदीरणा यत्पुनर्द्वितीयास्थितेः सकाशादुदीरणाप्रयोगेणैव दलिकं समाकृष्य उदये प्रक्षिपति सा उदीरणाऽपि पूर्वसूरिभिर्विशेषप्रतिपत्त्यर्थमागाल इत्युच्यते उदयोदीरणाभ्यां च प्रथमस्थितिमनुभवन् तावद्गतो यावदावलिकाद्विकं शेषं तिष्ठति तस्मिंश्च स्थिते आगालो व्यवच्छिद्यते तत उदीरणैव केवला प्रवर्तते साऽपि तावद्यावदावलिका शेषो न भवति आवलिकायां तु शेषीभूतायामुदीरणाऽपि निवर्त्तते ततः केवलेनैवोदयेनावलिकामात्रमनुभवति आवलिकामात्रचरमसमये च द्वितीयस्थितिगतं दलिकमनुभागभेदेन त्रिधा करोति तद्यथा सम्यक्त्वं सम्यग्मिथ्यात्वं मिथ्यात्वं चेति । उक्तं च कर्मप्रकृतिचूर्णौ "चरमसमयमिच्छद्दिट्ठी से काले उवसमं सम्मद्दिट्ठी होहिइ ताहे बिइयठिइं तिहाणुभागं करेइ तं जहा सम्मत्तं सम्मामिच्छत्तं मिच्छत्तं चेति" स्थापना चेयम् |०|०|०| ततोऽनन्तरसमये मिथ्यात्वस्योदयाभावादौपशमिकं सम्यक्त्वमवाप्नोति । उक्तं च कर्मप्रकृतौ । "मिच्छत्तुदए खीणे, लहए सम्मत्तमोवसमियं सो । लंभेण जस्स लब्भइ, आयहियमलद्धपुव्वं जं" अन्यत्राप्युक्तम् " जात्यन्धस्य यथा पुंसश्चक्षुर्लाभे शुभोदये । सद्दर्शनं तथैवास्य, सम्यक्त्वे सति जायते" १ आनन्दो जायतेऽत्यन्तं, सात्त्विकोऽस्य महात्मनः । सद्व्याध्यपगमे यद्वद्व्याधितस्य सदौषधात्' २ एष च प्रथमसम्यक्त्वलाभो मिथ्यात्वस्य सर्वोपशमनाद्भवति उक्तं च ' सम्मत्तपढमलम्भो, सव्वोवसमा ' इति । सम्यक्त्वं चेदं प्रतिपद्यमानः कश्चिद्देशविरतिसहितं प्रतिपद्यते कश्चित्सर्वविरतिसहितम् उक्तं च पञ्चसंग्रहे " सम्मत्तेण समगं, सव्वं देसं च कोइ पडिवज्जे" । बृहच्छतकचूर्णावप्युक्तम् "उवसमसम्मद्दिट्ठी अंतरकरणे ठिओ कोई देसविरइं पि लहेइ, कोइ पमत्तभावं पि सासायणो पुण न किं पि लहेइ त्ति" [कर्म०] जिनभद्रगणिक्षमाश्रमणोऽपि "उवसामगसेढीए, पट्ठवओ अप्पमत्तविरओ उ । पज्जवसाणे सो वा, होइ पमत्तो अविरओ वा ॥ "अणे भणंति अविरय-सपमत्तापमत्तविरयाणं । अन्नयरो पडिवज्जइ, दंसणसमणम्मि उ नियट्टी 'द्वे अपि गतार्थे नवरमविरताद्यप्रमत्तानां मध्यादेकेनापि दर्शनसप्तके उपशमिते ततो ( नियट्टित्ति ) निवृत्तिबादरो भवति (विशे० ) ततो देशविरतप्रमत्ताप्रमत्तसंयतेष्व-

पि मिथ्यात्वमुपशान्तं लभ्यते । संप्रति वेदकसम्यग्दृष्टेस्त्रयाणामपि दर्शनमोहनीयानामुपशमनाविधिरुच्यते । इह वेदकसम्यग्दृष्टिः संयमे वर्तमानः सन्नन्तर्मुहूर्त्तमात्रेण कालेन दर्शनत्रितयमुपशमयति उपशमयतश्च करणत्रिकादिविधिर्यथा कर्मप्रकृतिटीकायां तथा वेदितव्यः । एवमुपशान्तदर्शनमोहनीयत्रिकश्चारित्रमोहनीयमुपशमयितुकामः पुनरपि यथाप्रवृत्तादीनि त्रीणि करणानि करोति करणानां च स्वरूपं प्राग्वत् केवलमिह यथाप्रवृत्तकरणमप्रमत्तगुणस्थानके द्रष्टव्यं पूर्वकरणमपूर्वकरणगुणस्थानके अनिवृत्तिकरणमनिवृत्तिबादरसंपरायगुणस्थानके अत्रापि स्थितिघातादयः पूर्ववदेव प्रवर्त्तन्ते नवरमिह सर्वासामशुभप्रकृतीनामबध्यमानानां गुणसंक्रमः प्रवर्तत इति वक्तव्यम् । अपूर्वकरणाद्धायाश्च संख्येयतमे भागे गते सति निद्राप्रचलयोर्बन्धव्यवच्छेदः ततः प्रभूतेषु स्थितिखण्डसहस्रेषु गतेषु सत्सु अपूर्वकरणाद्धायाश्च संख्येयतमो भागो गतो भवति एकोऽवशिष्यते अत्र चान्तरे देवगतिदेवानुपूर्वीपञ्चेन्द्रियजातिवैक्रियशरीरवैक्रियाङ्गोपाङ्गाऽऽहारकशरीराऽऽहारकाङ्गोपाङ्गतैजसकार्मणसमचतुरस्रवर्णचतुष्कागुरुलघूपघातपराघातोच्छ्वासत्रसबादरपर्याप्तप्रत्येकप्रशस्तविहायोगतिस्थिरशुभसुभगसुस्वरादेयनिर्माणतीर्थकरसंज्ञितानां त्रिंशतः प्रकृतीनां बन्धव्यवच्छेदः । ततः स्थितिखण्डपृथक्त्वे गते सति अपूर्वकरणाद्धायाश्चरमसमये हास्यरत्यरतिभयजुगुप्सानां बन्धव्यवच्छेदः । हास्यरत्यरतिशोकभयजुगुप्सानामुदयः सर्वकर्मणां देशोपशमनानिधत्तिनिकाचनाकरणव्यवच्छेदश्च ततोऽनन्तरसमये निवृत्तिकरणे प्रविशत्यपि स्थितिघातादीनि पूर्ववत्करोति ततोऽनिवृत्तिकरणाद्धाया संख्येयेषु भागेषु सत्सु दर्शनसप्तके शेषाणामेकविंशतिमोहनीयप्रकृतीनामन्तरकरणं करोति तत्र चतुर्णां संज्वलनानामन्यतमस्य वेद्यमानस्य संज्वलनस्य त्रयाणां वेदानामन्यतमस्य वेदस्य प्रथमा स्थितिः स्वोदयकालप्रमाणा शेषाणां त्वेकादशकषायाणामष्टानां च नोकषायाणामावलिकामात्रं स्वोदयकालप्रमाणं च चतुर्णां संज्वलनानां त्रयाणां च वेदानामिदं स्त्रीवेदनपुंसकवेदयोरुदयकालः सर्वस्तोकः स्वस्थाने च परस्परं तुल्यः ततः पुरुषवेदस्य संख्येयगुणः ततः संज्वलनक्रोधस्य विशेषाधिकः ततः संज्वलनमानस्य विशेषाधिकः ततः संज्वलनमायाया विशेषाधिकः ततः संज्वलनलोभस्य विशेषाधिकः । इहानिवृत्तिकरणे बहु वक्तव्यं तत्तु ग्रन्थगौरवभयान्नोच्यते केवलं विशेषार्थिना कर्मप्रकृतिटीका निरीक्षितव्या । अन्तरकरणं च कृत्वा ततो नपुंसकवेदमन्तर्मुहूर्त्तमात्रेण उपशमयति ततोऽन्तर्मुहूर्त्तमात्रेण स्त्रीवेदं ततोऽन्तर्मुहूर्त्तमात्रेण हास्यादिषट्कं तस्मिंश्चोपशान्ते तस्मिन्नेव समये पुरुषवेदस्य बन्धोदयोदीरणाव्यवच्छेदः ततः समयोनावलिकाद्विकेन पुरुषवेदमुपशमयति ततो युगपदन्तर्मुहूर्त्तमात्रेणाप्रत्याख्यानावरणप्रत्याख्यानावरणक्रोधौ तदुपशान्तौ च तत्समयमेव संज्वलनक्रोधोदयोदीरणाव्यवच्छेदः ततः समयोनावलिकाद्विकेन संज्वलनक्रोधमुपशमयति ततोऽन्तर्मुहूर्त्तमात्रेणाप्रत्याख्यानावरणप्रत्याख्यानावरणमानौ युगपदुपशमयति तदुपशान्तौ च तत्समयमेव संज्वलनमानस्य बन्धोदयोदीरणाव्यवच्छेदः ततः समयोनावलिकाद्विकेन संज्वलनमानमुपशमयति ततो युगपदन्तर्मुहूर्त्तमात्रेण अप्रत्याख्यानावरणप्रत्याख्यानावरणमाये उपशमयति तदुपशान्ते च तत्समयमेव संज्वलनमायाया बन्धोदयोदीरणाव्यवच्छेदः ततः समयोनावलिकाद्विकेन संज्वलनमायामुपशमयति ततो

युगपदप्रत्याख्यानावरणप्रत्याख्यानावरणलोभावुपशमयति त-त्समयमेव सञ्ज्वलनलोभस्य बन्धोदयोदीरणाव्यवच्छेदः। ततः सञ्ज्वलनलोभमुपशमयंस्त्रिधा करोति द्वौ भागौ युगपदुपशमयति तृतीयभागं सङ्ख्येयखण्डानि करोति तान्यपि पृथक् पृथक् कालभेदेनोपशमयति पुनः सङ्ख्येयानां खण्डानां किट्टीकृत्य परपर्यायाणां चरमखण्डमसङ्ख्येयानि खण्डानि सूक्ष्मकिट्टीकृत्य परपर्यायाणि करोति ततः समये २ एकैकं खण्डमुपशमयतीति। इह च दर्शनसप्तके उपशान्ते निवृत्तिबादरोऽभिधीयते तत ऊर्ध्वमनिवृत्तिबादरो यावल्लोभस्यासङ्ख्येयान्तिमचरमखण्ड इति प्ररूपिता मोहनीयस्याष्टाविंशतिभेदभिन्नस्याप्युपशमना। सम्प्रति गाथार्थो विव्रियते। इहोपशमश्रेणिप्रारम्भको भवत्यप्रमत्तसंयत एव। अन्ये तु प्रतिपादयन्ति । अविरतदेशविरतप्रमत्ताप्रमत्तसंयतानामन्यतम इति श्रेणिपरिसमाप्तौ वाऽविरतदेशविरतप्रमत्ताप्रमत्तसंयतानामन्यतमो भवति। स च प्रथमं युगपत् ( अणत्ति ) अनन्तानुबन्धिनः क्रोधमानमायालोभानुपशमयति ततो 'दर्शनं दर्शस्त' दर्शं मिथ्यात्वसम्यग्मिथ्यात्वसम्यग्दर्शनं युगपदुपशमयति। ततोऽनुदीर्णमपि नपुंसकवेदं यदि पुरुषः प्रारम्भकस्ततः प्रथमं नपुंसकवेदं ततः पश्चात्स्त्रीवेदं ततः षट्कं हास्यरत्यरतिशोकभयजुगुप्सालक्षणं ततः पुरुषवेदम् अथ स्त्री प्रारम्भिका ततः प्रथमं नपुंसकवेदं ततः पुरुषवेदं ततः षट्कं ततः स्त्रीवेदमिति। अथ नपुंसकवेद एव प्रारम्भकस्ततोऽसावनुदीर्णमपि प्रथमं स्त्रीवेदमुपशमयति ततः पुरुषवेदं ततः षट्कं ततो नपुंसकवेदमिति। पुनश्च द्वौ द्वौ क्रोधाद्यौ त्रिकान्तरितौ सञ्ज्वलनविशेषक्रोधाद्यन्तरितौ सदृशौ तुल्यावुपशमयति । अयमर्थः । अप्रत्याख्यानावरणप्रत्याख्यानावरणक्रोधौ सदृशौ क्रोधत्वेन युगपदुपशमयति ततः सञ्ज्वलनक्रोधमेकाकिनं ततोऽप्रत्याख्यानावरणप्रत्याख्यानावरणमानौ युगपदुपशमयति ततः सञ्ज्वलनमानं ततोऽप्रत्याख्यानावरणप्रत्याख्यानावरणमाये युगपदुपशमयति ततः सञ्ज्वलनमायां ततोऽप्रत्याख्यानावरणप्रत्याख्यानावरणलोभौ युगपदुपशमयति ततः संज्वलनलोभमिति। स्थापना चेयम्

| | |
|---|---|
| सञ्ज्वलनलोभ | अप्रत्याख्यानप्रत्याख्यानक्रोध |
| अप्रत्याख्यानप्रत्याख्यानलोभ । | पुरुषवेदः |
| सञ्ज्वलनमाया | हास्यादिषट्कः |
| अप्रत्याख्यानप्रत्याख्यानमाया। | स्त्रीवेदः |
| सञ्ज्वलनमान । | नपुंसकवेदः |
| अप्रत्याख्यानप्रत्याख्यानमान | मिथ्यात्वमिश्रसम्यक्त्वम् |
| अप्रत्याख्यानसंज्वलनक्रोधः | अनन्तानुबन्धिक्रोधमानमायालोभ |

ननु संज्वलनादीनां युक्त उपशमोऽनन्तानुबन्धिनां तु दर्शनप्राप्तावेवोपशमितत्वान्न युज्यते न दर्शनप्रतिपत्तौ तेषां क्षयोपशमादिह चोपशमादित्यविरोध इति। आह क्षयोपशमोपशमयोः कः प्रतिविशेष उच्यते । क्षयोपशमो ह्युदीर्णस्य क्षयोऽनुदीर्णस्य च विपाकानुभवापेक्षयोपशमः प्रदेशानुभवनस्तूदयोऽस्त्येव उपशमे तु प्रदेशानुभवोऽपि नास्तीति। यदाह भाष्यपीयूषपाथोधिः " वेएइ संतकम्मं,खओवसमिएसु नाणुभावं सो। उवसंतकम्मओ पुण, वेएइ न संतकम्मंपि" अन्यत्राप्युक्तम् ।

" उवसंतकम्मं ज न, तउ कढेइ न देइ उदएवि ।
न य गमयइ परपगइं, न चेव उ कड्डुए त तु "।

अस्या अक्षरगमनिका सर्वोपशमेन यदुपशान्तं मोहनीयकर्म अन्यस्य सर्वोपशमायोगात्"सव्वोवसमो मोहस्स चेवेति" वचनात् न तदपकर्षति न तदपवर्तनाकरणेन स्थितिरसाभ्यां हीनं करोतीत्यर्थः । अपिशब्दस्य भिन्नक्रमत्वान्नाप्युदये तद्ददाति नापि तद्वेदयतीत्यर्थः । उपलक्षणात्तद्विनाभाविन्यामुदीरणायामपि न ददातीत्यपि मन्तव्यम्। न च वध्यमानसजातीयरूपां परप्रकृतिं सङ्क्रमकरणेन गमयति सङ्क्रमयति। न च तत्कर्मोपशान्तं सदुत्कर्षयत्युद्वर्तनाकरणेन स्थितिरसाभ्यां वृद्धिं नयति निधत्तिनिकाचनायास्तु प्रागपूर्वकरणकाल एव निवृत्तत्वान्नेहोपशान्तत्वेन तन्निषेधः क्रियते इति । आह संयतस्यानन्तानुबन्धिनामुदयो निषिद्धस्तत्कथमुपशम इत्युच्यते स ह्यनुभागकर्माङ्गीकृत्य न तु प्रदेशकर्मेति तथा चाऽभ्यधायि परमगुरुणा"जीवेण भंते ! सयकडं कम्मं वेएइ अत्थेगइयं नो वेएइ। से केणट्ठेणं पुच्छा दुविहे कम्मे पन्नत्ते तं जहा पएसकम्मे य अणुभागकम्मे य। तत्थ णं जं पएसकम्मं तं नियमा वेएइ तत्थ णं जं अणुभागकम्मं तं अत्थेगइयं वेएइ अत्थेगइयं नो वेएइ " इत्यादि ततश्च प्रदेशकर्मण्यभावोदयस्येहोपशमो द्रष्टव्यः। आह यद्येवं संयतस्यानन्तानुबन्ध्युदयतः कथं दर्शनविघातो न भवतीत्युच्यते प्रदेशकर्मणो मन्दानुभावत्वात्। तथा कस्यचिदनुभागकर्मानुभागोऽपि नात्यन्तमपकाराय भवन्नुपलभ्यते यथा स पूर्णमत्यादिचतुर्ज्ञानिनस्तदावरणोदय इति । ततः सूक्ष्मलोभचरमकिट्ट्युपशमे सञ्ज्वलनलोभ उपशान्तो भवति तत्समयमेव च ज्ञानावरणपञ्चकदर्शनावरणचतुष्कान्तरायपञ्चकयशःकीर्त्युच्चैर्गोत्राणां बन्धव्यवच्छेदस्ततोऽनन्तरसमयेऽसावुपशान्तकषायो भवति स च जघन्येनैकं समयमात्रमुत्कर्षेण त्वन्तर्मुहूर्त्तं कालं यावत् तत ऊर्ध्वं नियमादसौ प्रतिपतति। प्रतिपातश्च द्विधा भवक्षयेण अद्धाक्षयेण च तत्र भवक्षयो म्रियमाणस्य अद्धाक्षय उपशान्ताद्धायां समाप्तायाम्। अद्धाक्षयेण च प्रतिपतन् यथैवारूढस्तथैव प्रतिपतति। यत्र यत्र बन्धोदयोदीरणाव्यवच्छिन्नास्तत्र तत्र पतता सता ते आरभ्यन्त इति यावत् प्रतिपतितश्च तावत्प्रतिपतति यावत्प्रमत्तसंयतगुणस्थानकम्। कश्चित्पुनस्ततोऽप्यधस्तनं गुणस्थानकद्वयं याति कोऽपि सास्वादनभावमपि । यः पुनर्भवक्षयेण प्रतिपतति स प्रथमसमय एव सर्वाण्यपि बन्धनादीनि करणानि प्रवर्तयतीति शेषः । उत्कर्षतश्चैकस्मिन् भवे द्वौ वारावुपशमश्रेणिं प्रतिपद्यते यश्च द्वौ वारावुपशमश्रेणिं प्रतिपद्यते तस्य नियमात्तस्मिन् भवे क्षपकश्रेण्यभावः। यः पुनरेकं वारं प्रतिपद्यते तस्य क्षपकश्रेणिर्भवेदपि उक्तं च सप्ततिकाचूर्णौ "जो दुवारे उवसमसेढिं पडिवज्जइ तस्स नियमा तम्मि भवे खवगसेढी नत्थि जो इक्कसिं उवसमसेढिं पडिवज्जइ तस्स खवगसेढी हुज्जति" एष कार्मग्रन्थिकाभिप्राय । सिद्धान्ताभिप्रायेण त्वेक-

स्मिन् भवे एकामेव श्रेणिं प्रतिपद्यते उक्तं च कल्पाध्ययने "एव अप्पडिवडिए, सम्मत्ते देवमणुयजम्मेसु । अन्नयरसेढिवज्जं, एगभवेण च सव्वाइं" सर्वाणि सम्यक्त्वदेशविरत्यादीनि । अन्यभाष्युक्तम् । "मोहोपशम एकस्मिन् भवे द्विः स्यादसन्ततः । यस्मिन् भवे तूपशम क्षयो मोहस्य तत्र नेति" । तदेवमाभिहिता सप्रपञ्चमुपशमश्रेणिः । कर्म० । विशे० । वृ० । आचा० । आ० म० प्र० । क० प्र० । प० सं० । (उवसमणाऽधिकारेऽप्युपशमश्रेणिप्रकरणस्य टीका इत संयोज्या)

उवसामइत्तु–उपशमय्य अव्य० उप–शम् ल्यप् । उपशम नीत्वेत्यर्थे, "उवसामइत्तु च जहा अन्तमुहुत्तं भिऊणं बहुकालं" प० स०

उवसामग–उपशामक–पुं० उपशान्तमोहे, आव० ४ अ० ।

उवसामिय–उपशामित–त्रि० उपशम नीते, "उवसामिए परेण व" उपशामिते परेणोपशमं नीते । व्य० १ उ० । उपशम ग्राहिते, व्य० ६ उ० ।

उवसामेमाण–उपशमयत्–त्रि० उपशमं कारयति, कुरुव्यन्तराधिष्ठित समयप्रसिद्धविधिनोपशमयति, स्था० ६ ठा० ।

उवसुद्ध–उपशुद्ध–त्रि० उप सामीप्येन शुद्धम् । निर्दोषे, सूत्र० १ श्रु० ७ अ० ।

उवसोभिय–उपशोभित–त्रि० सामस्त्येन शोभिते, । आ० म० प्र० । रा० । "कविसीसएहिं उवसोभिए" रा० । 'हारद्धहारउवसोभिए" । रा० । समारचितकेशत्वादिना जनितशोभिते, ज्ञा० ९ अ० ॥

उवसोहिय–उपशोधित–त्रि० निर्मलीकृते, ज्ञा० ६ अ० ।

उवस्तिअ–उपस्थित–त्रि०उप–स्था–क्त । स्थर्थयोस्त ८ । ४ । २९० । इति स्थस्थाने सकाराक्रान्तस्तकार । समीपस्थिते, प्रा०

उवस्सय–उपाश्रय–पु० उपाश्रीयते सेव्यते संयमात्मपालनायेत्युपाश्रय । स्था० ५ ठा० । उपाश्रीयते भज्यते शीतादित्राणार्थं य. स उपाश्रय । वसतौ, स्था० ३ ठा० । आचा० । ज्ञा० ।

उपाश्रयक्षेपः ॥

नामं ठवणा दविए, भावे य उवस्सओ मुणेयव्वो ।
एएसिं नाणत्तं, वोच्छामि अहाणुपुव्वीए ॥

नामोपाश्रय स्थापनोपाश्रय द्रव्योपाश्रय भावोपाश्रयश्चेत्युपाश्रयश्चतुर्धा मन्तव्य । एतेषामुपाश्रयाणा नानात्वविशेषमह यथानुपूर्व्या वक्ष्यामि । तत्र नामस्थापने सुगमत्वादनादृत्य द्रव्यभावोपाश्रयौ प्रतिपादयति ।

दव्वम्मि उ उवस्सओ, कीरइ कडवुत्तयमेव सुत्तम्मि ।
भावम्मि निसिद्धे जं, एसु दव्वम्मि इयरेसु ॥

द्रव्यं तु द्रव्यविषय पुनरुपाश्रयो य संयतार्थं क्रियते क्रियमाणे वर्त्तते कृतो वा परमथापि न संयतेभ्यो वितीर्यते । यो गृहस्थैरात्मार्थे निष्पादित पर यत्र संयता मासकल्पं वा ( वर्षाः ) उषित्वा अन्यत्र गता साम्प्रतमुपाश्रय शून्यास्तिष्ठति एष द्रव्योपाश्रय । भावोपाश्रयो नाम य संयतेभ्यो निसृष्ट प्रदत्तै परिभुज्यमान इत्यर्थ । य पुनरितरेषां पार्श्वस्थादीनां सृष्ट सोऽपि द्रव्योपाश्रयो विज्ञेय । आह च बृहद्भाष्यकृत् " जो समणट्ठाय कतो, वुच्छा वा आसि जत्थ समणाओ । अहवा दव्वउवस्सओ, पासत्थाई परिग्गहिओ " वृ० २ उ० । ( उपाश्रयस्य सर्वो विषयो वसतिशब्दे वक्ष्यते ) कर्मणि अच् साधयणीये, भावे अच् । आश्रये, वाच० ।

उवस्सयअसंकिलेस–उपाश्रयासंक्लेश–पुं० उपाश्रयविषये असंक्लेशे असंक्लेशभेदे, स्था० १० ठा० ।

उवस्सयसंकिलेस–उपाश्रयसंक्लेश–पुं० उपाश्रयो वसतिस्तद्विषय सङ्क्लेश । सङ्क्लेशभेदे, स्था० १० ठा० ।

उवस्सा–उपश्रा–स्त्री० द्वेषे, व्य० १ उ० ।

उवस्सिय–उपाश्रित–त्रि० उपाश्रा नाम द्वेषः स जातोऽस्येति उपाश्रित । द्वेषवति, व्य० १ उ० । अङ्गीकृते, वैयावृत्त्यकरत्वादिना प्रत्यासन्नतरे, उप–आ–श्रि० भावे–क्त–द्वेषे, शिष्यप्रतीच्छककुलाद्यपेक्षायाम, स्था० ५ ठा० ।

उवहड–उपहृत–त्रि० उप हृ–क्त–उपढौकिते, उपहाररूपेण दत्ते च । उपहिते भोजनस्थाने, ढौकिते, भक्ते, ।

तिविहे उवहडे पण्णत्ते त जहा फलिहे उवहडे सुद्धोवहडे संसट्ठोवहडे ॥

त्रिविधमुपहृत प्रज्ञप्त तद्यथा सिद्धोपहृतं फलितोपहृतं संसृष्टोपहृतं च । स्था० ३ ठा० । अमीषां पदानां व्याख्यान भाष्यकृत्करिष्यति । अधुना भाष्यप्रपञ्च ।

सुद्धे संसट्ठे य, फलितोवहडे य तिविहमेक्केक्कं ।
तिन्निगदुगमा तिन्नि य, तिगसंजोगे भवे एक्को ॥

उपहृतशब्द प्रत्येकमभिसवध्यते त्रिविधमुपहृत सूत्रेऽभिहित तद्यथा शुद्धोपहृतं संसृष्टोपहृत फलितोपहृत च । एकैक पुनस्त्रिविध यदवगृह्णाति यच्च सहराति यदाऽऽस्ये प्रक्षिपति एतदनन्तरसूत्रे वक्ष्यते । अत्रैकैकसयोगे त्रयो भङ्गास्तद्यथा । शुद्धोपहृत वा गृह्णाति १ फलितोपहृत गृह्णाति २ संसृष्टोपहृतं गृह्णाति ३ द्विकसयोगेऽपि त्रयस्तद्यथा शुद्धोपहृत फलितोपहृत च १ । शुद्धोपहृत संसृष्टोपहृतम् । २ । फलितोपहृत संसृष्टोपहृत च । ३ । त्रिकसयोगे एक । शुद्धोपहृत फलितोपहृत संसृष्टोपहृत च गृह्णाति । सर्वसंख्यया सप्त भङ्गा । एतेषामेकतरमभिगृह्णात्यभिग्रही ।

संप्रति शुद्धादिपदानामर्थमाचष्टे ।

सुद्धं तु अलेवकडं, अहवणसुद्धोदणो भवे सुद्धं ।
संसट्ठं आदत्तं, लेवाणमलेवरुं चेव ।
फलियं पहेणयादी, वंजणभक्खेहिं वा विरइयं तु ।
भोत्तुं मणसोपहियं, पंचमपिंडेसणा एसा ॥

यत् अलेपकृत काञ्जिकेन पानीयेन वा सम्मिश्रीकृत तच्छुद्धम् । अथवा शुद्धोदनो व्यञ्जनरहितो भवति । शुद्ध तदपि नियमादलेपकृतम् । संसृष्ट नाम भोक्तुकामेन तद् गृहीतम् । किमुक्त भवति । यत् स्थाले परिवेषित तत्र ग्रहणाय हस्त क्षिप्तो न तावदद्यापि मुखे प्रक्षिपति । अत्रान्तरे साधुरागतो भिक्षार्थं तत लेपकृतमलेपकृत वा संसृष्टमित्युच्यते । फलित नाम यद् व्यञ्जनैर्भक्ष्यैर्वा नानाप्रकारैर्विरचित पहेणकादि प्रहेणक आभनकमादिशब्दात्सरजस्काना दानाय कल्पित परिगृह्यते । उपहृतशब्दस्यार्थमाह । यत्र भोक्तुमनस उपहृत तदुपहृतमित्युच्यते एषा च पञ्चमी पिण्डैषणा ।

सुद्धग्गहणेणं पुण, होइ चउत्थी वि एसणा गहिया ।
संसट्ठे उ विभासा, फलिहनियमा उ लेवकडं ॥

शुद्धग्रहणेन चतुर्थ्येषणा अल्पलेपकृता नामिका गृहीता द्रष्टव्या । संसृष्टे विभाषा । फलादिलेपकृतं फलादिकेनेति । फलित तु

नियमाल्लिपदत्तमेवेति । व्य० द्वि० ए उ० ( अत्रान्यदपि किञ्चिद्वक्तव्यं तदुग्गादियशब्दतो बोध्यम् । )

उवहणंत-उपघ्नत्-त्रि० विध्वंसयति प्र० १ श्रु०२ अ० ।

उवहणण-उपहनन-न० चारित्रस्य विराधने, । स्था० १० ठा० ।

उवहत्थ-सम् आ-रभ्-धा० तुरा-पर-समारम्भे, समारभेरुवहत्थसावज्जसमारंभेज्जाया ८ । ४ । १५५ इति समारभेरुवहत्था देशः । उवहत्थइ सावज्जं समारभइ समारभयति । प्रा० ।

उवहय-उपहत-त्रि० उप-हन्-क्त-तिरस्कृते, विनाशिते, वाच० । ज्ञा० । उपधानपट्टके, पं० भा० । पं० चू० । उत्पातग्रस्ते, अशुभरूपसंयोगेन अशुभे, अभिभूते च वाच० ॥

उवहयजोणि-उपहतयोनि-स्त्री० गर्भग्रहणसमर्थायाम्, "अणुहयजोणि इत्थिया' गर्भं गृह्णातीत्यर्थः" । नि० चू० १ उ० ।

उवहयभाव-उपहतभाव-त्रि० दुष्टतादिभिर्दोषैरुपहतो भावः परिणामो यस्य । दुष्टतया परिणते, बृ० ४ उ० ।

उवहयमइविण्णाण-उपहतमतिविज्ञान-त्रि० मति स्वाभाविकी विज्ञानं च गुरूपदेशजं मतिविज्ञाने ते उपहते दूषिते यस्य स उपहतमतिविज्ञानः । तत्त्वातत्त्वव्यतिकरविवेकविकले, बृ० १ उ० ।

उवहयमणसंकप्प-उपहतमनःसंकल्प-त्रि० उपहतोऽस्वच्छतया मनःसंकल्पो यस्य स तथा । मलीमसचित्तवृत्तौ, । सूत्र० २ श्रु० २ अ० । उपहतो ध्वस्तो मनसः संकल्पो दर्पहर्षादिप्रभवो विकल्पो यस्य स तथा । विध्वस्तमनःसंकल्पे, " किण्हं देवाणुप्पिया उवहयमणसंकप्पा जाव झियायह" भ० ३ श० २ उ० ।

उवहरंत-उपहरत्-त्रि० पूजयति, धातवोऽर्थान्तरेऽपि । ८ । ४ । ५८ । इति उपहरतिः पूजार्थे, प्रा० । विनिवेशयति, आ० १४ अ० ।

उवहरिंसु-उपहृतवत्-त्रि० उपनीतवति, "समणुन्नाइं मे सद्दाइं जाव उवहरिंसु" स्था० ६ ठा० ।

उवहसिय-उपहसित-न० उप-हस्-भावे-क्त० उपहासे, निन्दासूचके हासभेदे, वाच० । हास्यचेष्टाकरणे तं० ।

उवहाजोग-उपधायोग-पुं० मायाप्रयोजने, "गुर्वलुञ्जोपधायोगोवृत्त्युपायसमर्थनम्' उपधायोग इति । उपधा माया तस्या योगः प्रयोजनं सा च तत्तत्प्रकारैः सर्वथा परैरनुपलक्ष्यमाणे प्रयोज्या । ते च प्रकारा इत्थं धर्मबिन्दौ प्रोक्तास्तद्यथा । दुःस्वप्नादिकथनमिति दुःस्वप्नस्य खरोष्ट्रमहिषाद्यारोहणादिदर्शनरूपस्य । आदिशब्दात् मातृमाण्डलादिविपरीतालोकनादिपरिग्रहः । तस्य कथनं गुर्वादेर्निवेदनमिति । ध० ३ अधि० ।

उवहाण-उपधान-न० उपधीयते शिरोऽत्र उप-धा-आधारे ल्युट् । हंसरोमादिपूर्णे उच्छीर्षके, बृ० ४ उ० । "पयादिपुन्नं सिरोवहाणं मुहाणगं" नि० चू० १२ उ० । कर्मणि घञ् । प्रणये, हेम० विशेषणे प्रणये, विश्व० । भावे, ल्युट् समीपस्थाने, न० । करणे ल्युट्-उपधानसाधने । मन्त्रे, पु० वाच० । मोक्षं प्रत्युपसामीप्येन दधातीति उपधानम् । अनशनादिके तपसि, सूत्र० १ श्रु० २ अ० २ उ० । स्था० । आव० । पं० व० । उप समीपे धीयते क्रियते सूत्रादिकं येन तपसा तदुपधानम् । प्रव० ६ द्वा० । उपदधाति पुष्टिं नयति अनेनेत्युपधानम् । व्य० प्र० १ उ० । अङ्गोपाङ्गानां सिद्धान्तानां पठनार्थमाचाराम्लोपवासनिर्विकृत्यादिलक्षणे तपोविशेषे, उत्त० ११ अ० । उपधीयते उपष्टभ्यते श्रुतमनेनेति उपधानम् । चारित्रोपष्टम्भनहेतौ श्रुतविषये उपचारे, पंचा० ९ विव० । स्था० । उ० । दशा० । विनयबहुमानाद्यौ चतुर्भङ्गयोपदधातीति उपधानम् । तपसि, ग० १ अधि० । ध० । उपधाननिक्षेपचिकीर्षयाऽऽह ।

नामं ठवणुवहाणं, दव्वे भावे य होइ नायव्वं ।
एमेव य सुत्तस्स वि, निक्खेवो चउव्विहो होइ ॥२९८॥

नामोपधानं स्थापनोपधानं द्रव्योपधानं भावोपधानं च । श्रुतस्याप्येवमेव चतुर्धा निक्षेपस्तत्र द्रव्यश्रुतमनुपयुक्तस्य यच्छ्रुत द्रव्यार्थं वा यच्छ्रुतं कुप्रावचनिकश्रुतानि चेति । द्रव्यश्रुतं भावश्रुतं त्वङ्गानङ्गप्रविष्टश्रुतविषयोपयोगस्तत्र सुगमनामस्थापनाव्युदासेन द्रव्याद्युपधानप्रतिपादनायाह ॥

दव्वुवहाणं सयणे, भावुवहाणं तवो चरित्तस्स ।
तम्हा उ नाणदंसण, तवचरणेणाहिगारं तु ॥ २९९ ॥

उप सामीप्येन धीयते व्यवस्थाप्यत इत्युपधानम् । द्रव्यभूतमुपधानं द्रव्योपधानं तत्पुनः शय्यादौ सुखशयनार्थं शिरोऽवष्टम्भवस्तु । भावोपधानमिति भावस्योपधानं भावोपधानं तत्पुनर्ज्ञानदर्शनचारित्राणि तपोवा सबाह्याभ्यन्तरं तेन हि चारित्रपरिणतभावस्योपष्टम्भनं क्रियते यत एव तस्मात् ज्ञानदर्शनतपश्चरणैरिहाधिकृतमिति गाथार्थः । किं पुनः कारणं चारित्रोपष्टम्भकतया तपोभावोपधानमुच्यत इत्याह ।

जह खलु मइलं वत्थं, सुज्झइ उदगाइएहिं दव्वेहिं ।
एवं भावुवहाणेण सुज्झए कम्ममट्ठविहं ॥ ३०० ॥

यथेत्युदाहरणोपन्यासार्थः यथैतत्तथाऽन्यदपि द्रष्टव्यमित्यर्थः । खलु शब्दो वाक्यालङ्कारे यथा मलिनं वस्त्रमुदकादिभिर्द्रव्यैः शुद्धिमुपयात्येवं जीवस्यापि भावोपधानभूतेन स बाह्याभ्यन्तरेण तपसा अष्टप्रकारं कर्म्म शुद्धिमुपयातीत्यस्य च कर्मक्षयहेतोस्तपस उपधानश्रुतत्वेनात्रोपात्तस्य तत्त्वभेदपर्यायैर्व्याख्येति कृत्वा पर्यायद्वारेणाह । यदि वा तपोनुष्ठानेनापादिता अवधूननादयः कर्मापगमविशेषाः सम्भवन्तीत्यतस्तान् दर्शयितुमाह ।

ओहणणधुवणनासण-विणासणज्झवणखवणसोहिकरणं ।
छेयण भेयण फेडण, डहणं धुवणं च कम्माणं ॥

तत्रावधूननमपूर्वकरणेन कर्मग्रन्थेर्भेदापादनं तच्च तपोऽन्यतरभेदसामर्थ्याद्भवतीत्येषा क्रिया शेषेष्वप्येकादशसु पदेष्वायोज्या तथा धूननं भिन्नग्रन्थेरनिवृत्तिकरणेन सम्यक्त्वावस्थानम् । तथा नाशनं कर्मप्रकृतेः स्तिबुकसंक्रमेण प्रकृत्यन्तरगमनम् । तथा विनाशनं शैलेश्यवस्थायां सामस्त्येन कर्माभावापादनम् । तथा ध्यापनमुपशमश्रेण्यां कर्मानुदयलक्षणविध्यापनम् । तथा क्षपणमप्रत्याख्यानादिक्रमेण क्षपकश्रेण्यां मोहाद्यभावापादनम् । तथा शुद्धिकरमित्यनन्तानुबन्धिक्षयक्रमेण क्षायिकसम्यक्त्वापादनम् । तथा छेदनमुत्तरोत्तरशुभाध्यवसायारोहणात् स्थितिह्रासजननम् । तथा भेदनं बादरसम्परायेण संज्वलनलोभस्य खण्डशो विधानम् । तथा (फेडणंति) अपनयनं चतुःस्थानिकादीनामशुभप्रकृतीनां रसतस्त्र्यादिस्थानापादनम् । तथा दहनं केवलिसमुद्घातध्यानाग्निना वेदनीयस्य भस्मसात्करणं शेषस्य च दग्धरज्जुतुल्यत्वापादनम् । तथा धावनं शुभाध्यवसायान्मिथ्यात्वपुद्गलानां सम्यक्त्वभावसंजननमिति । आचा० १ श्रु० ९ अ० १ उ० ।

तं दव्वे भावे य, दव्व उवहाणगा दिभाव इमं ।

दोग्गइपमयणधरणी, उवधाणं जत्थ जं सुत्त ॥
आगाढमणागाढे, गुरुलहुयाणादि सगडपिता ॥ १५ ॥
दुट्ठा गती दुग्गा वा गती दुग्गति दुःख वा जंसि विज्जति गतीए एसा गई दुग्गती विषमेत्यर्थः । कुत्सिता वा गतिर्दुर्गतिः अणभिलासियत्थे दुस्सद्दो जहा दुब्भगो सा य नरगगती नियगती वा । पतणं पात. तीए दुग्गतीए पतन्तमप्पाण जेण धरेति तं उवहाणं भण्णति तं च जत्थ जत्थ त्ति एस सुत्तवीप्सा जत्थ उद्देसगे जत्थ अज्झयणे जत्थ सुयक्खंधे जत्थ अगे कालुक्कालियअंगाणगेसु नेया जमिति जं उवहाण णिव्वितितादि त तत्थ तत्थ सुत्ते श्रुते कायव्वमिति पक्खे संभवति । आगाढेत्ति ज च उद्देसगादीसुत्त भणिय तं सव्व समासओ दुविह भण्णति । आगाढ अणागाढ वा त च आगाढसुय भगवतिमाइ अणागाढ आयारमाति । आगाढं उवधाण कायव्व अणागाढे अणागाढ जो पुण विवज्जासं करेति तस्स पच्छित्त भवति आगाढे वा अणागाढे वा आणा अणवत्थमिच्छत्तविराहणा य भवति एत्थ दिट्ठंतो असगडपिया को सो असगडताते। अप्पती भण्णति । गगातीरे एगो आयरिओ वायणापरिस्सतो सज्झाए वि असज्झाय घोसेति एव णाणतराय काऊण देवलोग गओ तओ चुओ आभीरकुले पच्चायाओ भोगे भुञ्जति धूया य से जाया अतीव रूववती ते पव्वतिया गोयरियाए हिण्डन्ति तस्स य सगड पुरतो वच्चति सा य से धूता सगडस्स तुंडे ठिता तीसे य दरिसणत्थ तरुणेहिं सगडाणि उप्पहेण णेरियाणि भग्गाणि य तो से दरिसेण लोगेण णाम कत असगडाए पिआ असगडपिया तस्स त चेव वेरग्गं जातं दारिय दाउ पव्वइतो पढिओ जाव चाउरगि जं असखए उद्दिट्ठे तषाणावरण उदिषं पढतस्स नट्ठाति छट्ठेण अणुण्णव इति भणिए भणति एयस्स को जोगो आयरिया भणन्ति जाव णढाति ताव आयविलं तहा पढति वारसविज्जा वारसहिं वरिसेहिं आयविल करेतेण पढिया तं च से णाणावरणं खीणं एवं सम्मं आगाढजोगो अणागाढजोगो वा अणुपालेयव्वोति उवहाणेत्ति दारं गयं । नि०चू० १ उ० । द० । व्य० ।

एवं तु समणुचिष्णं, वीरवरेणं महाणुभावेणं ।
जं अणुचरित्तु धीरा, सिवमउलं जंति निव्वाणं ॥ ३०२ ॥
एवमुक्तविधिना भावोपधान ज्ञानादितपो वा वीरवर्द्धमानस्वामिना स्वतोऽनुष्ठितमतोऽन्येनापि मुमुक्षुणैतदनुष्ठेयमिति निर्युक्तिगाथार्थ समाप्तः । आचा० १ श्रु० ए अ० १ उ० ( तच्च अनिश्चित कर्त्तव्यमिति अणिस्सिओवहाणशब्दे उक्तम )

पञ्चमङ्गलस्योपधानकर्तव्यतामाह ।

एएसिं अट्ठएहं पि पयाणं गोयमा जे केइ अणोवहाणेणं सुपसत्थ नाणमहीयंति । अज्झावयति वा अहीयंति वा अज्झावयंतेइ वा समणुजाणंति तेणं महापावकम्मे महतीं सुपसत्थनाणस्सासायण पकुव्वति । से भयव जइ एवं ता किं पंचमंगलस्स ण उवहाणं कायव्वं गोयमा ! पढमं नाणं तओ दया एय सव्वजगज्जीवपाणभूयसत्ताणं अत्तसमदरिसित्तं सव्वजगज्जीवपाणभूयसत्ताणं अत्तसमं दंसणाओ य तसिं चेव संघट्टणपरियावणकिलावणोद्दावणाइ दुक्खपायणज्जवविवज्जाणं ततो अणासवाइ य संवुडा सव्वदा रत्तं संवुडा सव्वदारत्तेणं च दमोपसमो तओ य समसत्तुमित्तपक्खयाए य अरागदोसत्तं तओ य अकोहया अमाणया अमायया अलोभया अकोहमाणमायालोभयाए य अकसायत्तं तओ य सम्मत्तं सम्मत्ताओ य जीवाइपयत्थपरित्ताणं तओ सव्वत्थ अप्पडिवद्धा तं णेयं अन्नाणमोहमिच्छत्तक्खयं तओ विवेगो विवेगाओ हेयउवाएयवत्थूवियालणे गंतव्वद्धलक्खत्तं तओ य अहियपरिच्चाओ हियायरेण य अच्चंतमज्झजमो । तओ य परमपवित्तुत्तम खंतादिदसविह अहिंसालक्खणं धम्माणुट्ठाणिक्ककरणकारवणासत्तचित्तया । तओ य खंतादिदसविहअहिंसालक्खणधम्माणुट्ठाणिक्ककरणकारवणासत्तचित्तयाए य संव्वुत्तमा खंती सव्वुत्तमम्मि उ तं सव्वुत्तमं अज्जविभावितं सव्वुत्तमं सव्वब्भंतरं सव्वसंगपरिच्चागं सव्वुत्तमं सव्वब्भंतरदुवालसविहं अच्चंतघोरवीरगकट्ठतवचरणाणुट्ठाणाभिरमणं सव्वुत्तमं सत्तरसविहकसिणसंजमाणुट्ठाणपरिपालनेक्कबद्धलक्खत्तं सव्वुत्तमं सव्वगिरणं उक्काहियं अणुगूहियबलवीरियपुरिसक्कारपरक्कमपरितोलणं च सव्वुत्तमुत्तमसज्झाणसलिलेणं पावकम्ममलखेवणक्खालणं ति । सव्वुत्तमत्तमं आकिंचणं सव्वुत्तममुत्तमं परमपवित्तुत्तमसव्वभावभावंतरेहिणं सुद्धसव्वदोसविप्पमुक्कणवगुत्तीसणाहअट्ठारसपरिहारट्ठाणपरिवेढियसुद्धद्धरघोरबंभवयधारणंति तओ एएसिं चेव सव्वुत्तमा खंती मद्दवअज्जवमुत्ती तवसंजमसच्चसोयआकिंचणसुदुद्धरबंभवयधारणं समुट्ठाणेणं च सव्वसमारंभविवज्जण तओ वि य पुढविदगागणिवाउवणस्सइवितिचउपंचेंदियाणि तहेव अजीवकायसंरंभसमारंभारंभाणं च मणोवइकायतिएणं तिविह तिविहेणं सोइंदियादिसंवरणआहारादिसन्नाविप्पजढताए वोसिरण तओ य अट्ठारससीलंगसहस्सधारणेणं च अखलियअखंडियअमिलियअविराहियउट्ठुसग्गुग्गयरविचित्ताभिग्गहनिव्वाहणेणं उवसुरमणुयतिरिच्छोइरियघोरपरीसहोवसग्गाहियासणं समकरणेणं तओ य आहारायाइपभिमासु महापयतंतओ निप्पडिकम्मसरीरया निप्पडिकम्मसरीरत्ताए य सुक्कज्झाणे निप्पकंपत्तणं तओ य अणाइभवपरंपरसंचियअसेसकम्मट्ठरासिक्खयं अणंतनाणदंसणधारित्त चउगइभववारिगउनिफरं सव्वदुक्खविमोक्खं मोक्खगमणं च तत्थ अनिट्ठजम्मजरामरणाणिट्ठसंपत्ता उव्विग्गविओ य मंतानुभेणआयसज्झायज्झाणमहादिवेयणागेगमोगदारिद्ददुक्खतत्तयनेमणस्स तं तओ य एगंतियं अच्चंतिय सिवमयलमक्खयं धुव परमसासयं निरंतरं सव्वुत्तमसोक्खंति ता सव्वमेवेयं नाणाउ पवत्तेज्जा ता गोयमा ! एगं-

तियं अचिंतियपरमसासयधुवनिरंतरसव्वुत्तमसोक्खकंखुणा पढमपरमेव तावायरेणं सामाइयमाइओगबिंदुसारपज्जवसाणं दुवालसंगं सुयनाणं कालं विणयादिजहुत्तविहिणोवहाणाणं हिंसादीयं च तिविहं तिविहेणं परिकंतेण य सरवंजणमत्ताबिंदुपयक्खराणूणगं पयच्छेदघोसबद्धयाणुपुव्विपुव्वाणुपुव्विअणाणुपुव्वीए सुविसुद्धं आचारिक्कायएण पगत्तेणेण सुविन्नेयं तं च गोयमा ! अणिहणोरंसुविच्छिन्नचरमो हिमिय संदरवग्गहं सयलसोक्खपरमहेउभूयं च तस्स य सयलसोक्खहेउभूयाओ न इट्ठदेवया नमुक्कारविरहिए केइ पारं गच्छेज्जा इट्ठदेवयाणं च नमुक्कारं पंचमंगलमेव गोयमा ! णो णमन्नंति ता णियमओ पंचमंगलस्सेव पढमं ताव विणओवहाणं कायव्वंति । से भयवं कइए विहीए पंचमंगलस्स णं वि ण उवहाणं कायव्व गोयमा ! इमाए विहीए पंचमंगलस्स णं वि ण उवहाणं कायव्व तंजहा सुपसत्थे चेव सोहणातिहिकरणमुहुत्तनक्खत्तजोगलग्गससीबलविप्पमुक्कजायाईमणा संकेण संजायसव्वसंवेगसुतिव्वतरमहंतुल्लसंतसुहज्झवसायाणुगयभत्ती बहुमाणपुव्वं णिन्नियाणदुवालसभत्ताट्ठिएणं चेइयालए जंतुविरहिओ गोयमा ! मे भत्तिभरनिब्भरद्धुसियससीसरोमावलीपप्फुल्लनयणसयवत्तपसंतसामाथिरदिट्ठी णवणवसंवेगसमुच्छलंतसंजायवहलघणनिरंतरअचिंतपरमसुहपरिणामविसेसुल्लसियसजीववीरियाणुसमयविवड्ढंतपमोयसुविसुद्धसुनिम्मलविमलथिरदढयरंतकरणेणं खितिणिहियजाणुणिसियउत्तमंगकरकमलमउलसोहंजलिपुडेणं सिरिउसभाइपवरवरधम्मतित्थयरपडिमा बिंबविणिवेसियनयणमाणसमग्गतग्गयज्झवसाणं समयदढचरित्तादिगुणसंपउववेया गुरुसद्दत्थणुट्ठाणकरणेक्कबद्धलक्खतवाहियगुरुवयणविणिग्गयं विणयादिबहुमाणपरिओसाणुकंपोवलद्धं अणेगसोगसंतावुव्वेगमहवाहिवेयणाघोरदुक्खदारिद्दकिलेसरोगजम्मजरामरणगब्भनिवासाइदुट्ठसावगगाढभीमभवोदहितरंडगभूयं इणमो सयलागममज्झवत्तगस्स मिच्छत्तदोसोवहयविसिट्ठबुद्धी परिकप्पिय उ भाणियं अघरूमाणअसेसहेउदिट्ठतजुत्ती विद्धंसणिक्कपच्चलपोढस्स पंचमंगलमहासुयक्खंधस्स पंचज्झयणेगचूलापरिक्खित्तस्स पवरपवणदेवयाहिट्ठियस्सातिपदपरिच्छिन्नेगालावगस्स तक्खरपरिमाणं अणंतगमपज्जवत्थपसाहगं सव्वमहामंतपवरवज्जाणं परमबीयभूयं नमो अरिहंताणंति । पढमजयणं अहिज्जेयव्वं । तद्दियहे य आयंबिलेणं पारेयव्वं तहेव य बीयदिणे अणेगाइसयगुणसंपउववेयं अणंतरज्झणियत्थपसाहगं अणंतरं तेणेव कमेणं दुपयपरिच्छिन्ने गालावगपंचक्खरपरिमाणं नमो सिद्धाणंति बीयमज्झयणं अहिज्जेयव्वं । तद्दियहे य आयंबिलेण पारेयव्वं । एवं अणंतरभणिएण कम्मेणं अणंतरत्थपसाहगंति पदं परिच्छिन्ने गालावगसत्तक्खरपरिमाणं । णमो आयरियाणंति तइयमज्झयणं आयंबिलेणं अहिज्जेयव्वं । तहा य अणंतरत्थपसाहग तिपयपरिच्छिन्ने गालावगसत्तक्खरपरिमाणं नमो उवज्झायाणंति चउत्थमज्झयणं अहिज्जेयव्वं । तद्दियहे य आयंबिलेणं पारेयव्वं । नमो लोए सव्वसाहूणंति पंचमज्झयणं पंचमदिणे आयंबिलेण तहेव तमत्थाणुगामियं एक्कारसपयपरिच्छिन्नतियलावगतित्तीसक्खरपरिमाणं "एसो पंचनमोक्कारो सव्वपावप्पणासणो । मंगलाणं च सव्वेसिं पढमं हवइ मंगलमिति" चूलंति छसत्तट्ठमदिणे तेणेव कम्मविभागेण आयंबिलेहिं अहिज्जेयव्वं । एवमेवं पि च मंगलमहासुयक्खंधं सरवन्नयरेहियं पयरकरबिंदुमत्ताविसुद्धं गुरुगुणोववेयगुरूवइट्ठं कसिणमहिज्जित्ताणं तहा कायव्वं जहा पुव्वाणुपुव्वीए पच्छाणुपुव्वीए अणाणुपुव्वीए जीहग्गे तरेज्जा तओ तेणेवाणंतरभणियतिहिकरणमुहुत्तनक्खत्तजोगलग्गससीबलजंतुविरहिओगासवेलाइया लग्गइ कम्मेणं अट्ठमभत्तेणं समणुजाणाविऊणं गोयमा ! महया पबंधेण सुपरिफुडं णिउणं असंदिद्धं सुत्तत्थं अणेगहा सोऊणावधारेयव्वं एयाए विहीए पंचमंगलस्स णं गोयमा ! दिणउवहाणे कायव्वो (महा० ) से भयवं सुदुक्करं । पंचमंगलमहासुयखंधस्स वि ण उवहाणं पन्नत्तं महती य एसा णियंतणा कहं वा लेहं कज्जई गोयमा ! जेणं केई ण इच्छेज्जा एयनियंतणं अविणीणं चेव पंचमंगलाई सुयनाणं महिज्जणे अज्झावेई वा अज्झावयमाणस्स वा अणुन्नं वा पयाइ से णं ण भवेज्जा पियधम्मेण हवेज्जा दढधम्मेण भवेज्जा भत्तीजुए हीलिज्जा सुत्तं हीलिज्जा अत्थं हीलिज्जा सुत्तत्थउभए हीलिज्जा गुरुजणं हीलिज्जा सुत्तत्थोभए जणेव गुरुं सेणं आसाएज्जा अतीताणागयवट्टमाणे तित्थयरे आसाइज्जा आयरियउवज्झायसाहुणो जेणं आसाइज्जा सुयणाणमरिहंतसिद्धसाहु से तस्स णं सुद्धीसुयालमणंतसंसारसागरमाहिंडेमाणस्स तासु तासु संकुडवियडासु चुलसीइलक्खपरिसंखणासु सीओसिणमिस्सजोणीसु तमिस्संधयारदुग्गं धामिज्जविलीणरवारसुत्तोज्जभंजपडहत्थवसुजलुयपूयदुद्दिणविविचिरुहिरविल्लखल्लदुद्दंसणजंबालपंकवीभत्थघोरगब्भवासेसु करूकढकढेंतचलचलचलस्स टलटलटलस्स रज्जंतसंपिंडियंगमंगस्स सुइयरं नियंतणा जेऊणं एयंविहं फासेज्जा । नो णं मणयंपि अइयरेज्जा । महा० ३ अ० ।

श्रीहीरविजयसूरिं प्रति उपधानमालारोपणयोः किं फलमुद्दिश्य कर्त्तव्यता यत्र च साऽभिहिता तदपि शास्त्रव्यक्त्या प्रसाद्यमिति प्रश्नः उत्तरमुपधानमालारोपणयोः किं फलमुद्दिश्य कर्त्तव्य-

ता यत्र च साऽभिहिताऽस्तीत्यत्र उपधानवहन श्रुताराधननिमित्तं मालारोपण तु तपस उद्यापनार्थं महानिशीथादिशास्त्रे सक्रममस्ति। श्रीहीरविजय प्रति जिनदासगणिकृतप्रश्नो यथा। तथाऽऽश्विनचैत्रमासास्वाध्यायिके सप्तम्यष्टमीनवमीदिनत्रयमुपधानमध्ये आयाति न वा तथाऽश्विनचैत्रमासास्वाध्यायिकदिनत्रयमुपधानतपोविशेषेषु लेख्यका नायातीति बोध्यम्। गुणविजयगणिकृतप्रश्नो यथा। उपधानवाहिनः श्राद्धादेरकालसज्झायां जलशौचादिविधि किं निशायामपि स्यान्न वेति। अत्रोत्तरम् स्वकीयादिना नीतेनोष्णोदकेन शौचादिविधानं युक्तिमदिति। जेसलमेरुसंघकृतप्रश्नो यथा। तथा केनचिदुपासकेन चत्वार्युपधानान्युद्व्यूढानि भवन्ति तन्मध्ये प्रथमोपधानस्य द्वादशवर्षातिक्रमे प्रथममेवोपधानं पुनरुद्वाह्य स मालां परिदधाति उत चत्वार्यपीति। उत्तरम्। प्रथमोपधानस्य द्वादशवर्षातिक्रमे पुनस्तस्मिन्नुदूढे माला परिहिता शुद्ध्यति। अथ यदि मनः स्थाने तिष्ठति तदा चत्वार्यपि पुनरुद्वाह्य मालां परिदधाति॥ १॥ तथा उपधाने वाह्यमाने तपोदिने यदि कल्याणकतिथिरायाति तदा तेनैवोपवासेन सरति उतान्याऽधिकः ततो विलोक्यते इति प्रश्ने उत्तरम् उपधानतपोदिनान्तः कल्याणकतिथ्यागमने नियन्त्रिततपस्तया तेनैवोपवासेन सरति। १२। द्वीपबन्दिरकृतप्रश्नो यथा। तथोपधानपूर्णीभवनानन्तरं तपोवासरे उत्तरितुं कल्पते नवेति? अत्रोत्तरम्। उपधानपूर्णीभवनानन्तरं तपोवासरे नोत्तीर्यते तथाविधकारणे गीतार्थाज्ञापूर्वकमुत्तरणे एकान्तेन निषेधो ज्ञातो नास्तीति। तथोपधानवाचनानमस्कार विना दीयते उत तत्पूर्विकेति? उपधानवाचनां श्रीविजयदानसूरयो नमस्कार विनैव दत्तवन्तो वयमपि तथैव दद्म इति। २७। तथोपधानवाचना पारणादिने दीयते न वा? तथोपधानवाचना प्रातः सन्ध्यायां च दीयते न वा इति? उपधानवाचना तपोवासरे पारणादिने वा दत्ता शुद्ध्यति तथोपधानवाचना आचामाम्लैकाशनकरणानन्तरं संध्यायामपि दत्ता शुद्ध्यति परं प्रतिदिनक्रियमाणसंध्यासमयक्रियां पश्चात् क्रियते। २८। तथा चतुर्मासकमध्ये मालारोपणनन्दी कुत प्रभृति विधीयते इति? चातुर्मासकमध्ये तुरीयव्रतमालारोपणनन्दी विजयदशम्यनन्तरं भवतो द्वादशव्रतनन्दी त्वर्वागपि भवन्ती दृश्यते इति। २९। तथोपधानमध्ये आर्द्रशाकभक्षण कल्पते न वा? तथा विलेपनमस्तकतैलप्रक्षेपादिकं कल्पते न वेति? उपधानमध्ये साम्प्रतमार्द्रशाकभक्षणे रीतिर्नास्ति तथा विलेपनमस्तकतैलक्षेपादिकं यतिः स्वयं न वाञ्छति अन्यः कश्चिद्यदि भक्तिं करोति तदा निषेधो नास्ति। ३०। तथा श्रावकश्राविकाणां नन्दीसूत्रश्रवणं "नाण पंचविहं पन्नत्तं" इत्यादिरूपं नमस्कारत्रयरूपं वा क्रियते न वा? श्रावकश्राविकाणां नन्दीसूत्रं नमस्कारत्रयरूपं श्राव्यते इति। ३१।

तथोपधानवाचनां श्राद्धाः श्राद्ध्यश्च ऊर्ध्वस्थानेन शृण्वन्त्युपविश्य वेति? उपधानवाचना श्राद्ध्य ऊर्ध्वस्थिता शृण्वन्ति श्राद्धास्तु चैत्यवन्दनमुद्रयेति। ३२। ही० ३ प्र०। भावे ल्युट्-प्राप्तौ, सम्म०। तथा पौषधकरणात् पूर्वं स्वाध्याय कृतो देवाश्च वन्दितास्तदा पश्चात्पौषधकरणे उपधानप्रवेशे वा पुनरपि स्वाध्यायदेववन्दनादि करणीयं नवेति प्रश्नः पौषधकरणात्पूर्वं स्वाध्यायदेववन्दनादिकृत स्यात्तदा पश्चादपि तेनैव सरतीति (सेन० २ उल्ला० २९प्र०) सामायिकाध्ययनादीनां कान्युपधानानि धामस्थानां परस्यानुयोजने किं प्रतिवच प्रदीयत इति प्रश्नः। अत्रोत्तरं महानिशीथादौ चैत्यवन्दनसूत्राणामेवोपधानान्युक्तानि सन्ति न तु सामायिकाध्ययनादीनां यद्योपधानमन्तरेऽपि सामायिकादीनां पठनं तत्र जीवव्यवहारः सम्प्रदायश्च प्रमाणं यदुक्तं श्रावकाः पञ्चनमस्कारादिक्रियत्सूत्राणि विमुच्य शेषं सामायिकादिषड्जीवनिकान्तं सूत्रमुपधानमन्तरेण यत्पठन्ति यच्चाकृतोपधानतपसोऽपि प्रथमं नमस्कारादिस्तत्र जीवव्यवहारस्सम्प्रदायश्च प्रमाणमिति सम्भाव्यत इति विचारामृतसंग्रहे श्राद्धप्रतिक्रमणविचाररूपे षष्ठद्वारे इति ( प्रश्न० २८ ) तथा मौलविधिनोपधानवहने श्राद्धया अस्वाध्याय दिनत्रयसत्कं तपः प्रवेदनं च लेख्यके समायाति न वेति प्रसाद्यं पूर्वं तु तपो न यातीति श्रुतमस्तीति प्रश्नः। अत्रोत्तरम् अस्वाध्यायदिनत्रयसत्कं तपः प्रवेदनं च न यातीति वृद्धवादोऽस्त एव षोडशदिने वाचना प्रदीयमानाऽस्ति वाचनानन्तरं च प्रवेदनरहितं पौषधत्रयं कार्यत इति ( प्रश्न० ३४ ) तथोपधानचतुष्टयस्य मालारोपणस्य चान्तरकालः कियानिति प्रश्नः। अत्रोत्तरम्। मुख्यवृत्त्या प्रथमोपधानप्रवेशानन्तरं द्वादशवर्षातिक्रमे तच्चतुष्टयं गच्छति तेन ततोऽर्वागेव मालारोपणं विधेयमिति। श्येन० १ उल्ला० ८३ प्रश्न०। तथा षष्ठोपधानप्रवेशे अद्यदिन एव मालापरिधापने प्रथमां वाचनां दत्वा मालापरिधाप्यत उत पूर्णे तत्तपसि मालापरिधानानन्तरमाद्यवाचना दीयत इति प्रश्नः। अत्रोत्तरं षष्ठोपधानप्रवेशाद्यदिने प्रवेदनकं प्रवेद्य प्रथमां वाचनां दत्वा समुद्देशादिक्रियां कारयित्वा माला परिधाप्यत इति। श्येन० २ उल्ला० ८३ प्रश्न०। तथा श्रावकाणामुपधानवहनं विना नमस्कारादिपठनं शुद्ध्यति न वेति प्रश्नः। अत्रोत्तरम् तथा यतीनां योगवहनं विना सिद्धान्तवाचनपाठनादि न शुद्ध्यति तथोपधानतपोऽन्तरा श्राद्धानामपि नमस्कारादिसूत्रपठनगणनादि न शुध्यति यदुक्तं महानिशीथे "सेभयवं सुदुक्करं पंचमंगलमहासुअक्खंधस्स विणओवहाणं पन्नत्तं एसा निअंतणा कहं वा लेहिकिज्जइ गोयमा! जेण केणइ न इच्छेज्जा एय नियतणं अविणओवहाणेण पंचमंगलाइसुअनाणम हिज्जइ अज्झावेइ वा अज्झावयमाणस्स वा अणुन्नपयाइ सेणं न भवेज्जापि अधम्मे न हवेज्जा दढधम्मे न हवेज्जा भत्तिज्जुए हीलिज्जा अत्थं हीलिज्जा सुत्तत्थोभए हीलेज्जा गुरुजेणं हीलिज्जा सुत्तं जाव हीलिज्जा सुत्तं हीलिज्जा सुत्तत्थोभए हीलिज्जा गुरु जेणं हीलिज्जा सेण आसापज्झा अतीताणागयवट्टमाणे तित्थयरे आसापज्झा आयरिअ उवज्झायसाहुणो जेण आसापज्झा सुअनाणमरिहंतसिद्धसाहु सेत्तस्स णं अणंतसंसारसागरमाहिंडेमाणस्स तासु तासु संवुडविअडासु (१ प्र०) चुलसीलक्खपरिसंकडासु सीओसणमिस्स जोणीसु सुइरनिअंतणा 'इति' परं येन प्राग् नमस्कारादिसूत्राण्यधीतानि तेनापि यथायोगं निर्विघ्नमेवोपधानानि विधिनाऽवश्य वहन्ति यानि सम्प्रति तु रूप्यकैः प्रकाशाद्यपेक्षया लाभालाभ विनाव्याचरणयोपधानतपो विनाऽपि नमस्कारादिसूत्रपाठादिपठन कार्यमाण दृश्यते आचरणायाश्च लक्षणमिदं कल्पभाष्ये उपदेशपदे च यथा "असढेण समाइन्नं, जं कत्थ य केणई असावज्जं। न निवारिअमन्नेहिं, बहुमणुमयमेअमायरिअं"। ।१। आचरणा च जिनाज्ञा समानैव यद्भणित भाष्यार्थे "अमढाइन्नाणवज्जं, गीअत्थ अवारिअतिमज्झत्था। आयरणा वि हु आणत्ति, वयणओ सुबहु मन्नति १ इति श्येयम् (६ प्रश्न०) तथा गुरुसमीपे उपधानादिक्रियां कुर्वत श्राद्धादेरन्तरालस्थस्थापनाया गुरोश्चान्तराले पञ्चेन्द्रियगमने अग्रे भवति न वेति प्रश्नः। अत्रोत्तरम् अग्रे भवतीति ( ७ प्रश्न०) तथा तृतीयाद्युपधानेषु सप्तक्षमाश्रमणानि दाप्यन्ते तत् कुत्र विधि पर्यवस्मीति प्रश्नः। अत्रोत्तर तृतीयाद्युपधानेषु तद्विधिदर्शकग्रन्थे। सप्तक्षमाश्रमणदानपि-

धानं न दृश्यते तथापि श्रीपरमगुरूणामनुशिष्टिरस्ति यतोऽग्रे मालापरिधापनसमये तयोः समुद्देशानुज्ञयोर्विधीयमानत्वादुद्देशोऽपि कर्तव्य इति तत्तत्क्षमाश्रमणानि देयानीति ( २८ प्रश्न० ) तथा श्राद्धिकैकोपधानवहनानन्तरं षण्मासमध्ये मालापरिधापनं शुध्यति किं वा षण्मासानन्तरमिति प्रश्न अत्रोत्तर तद्वहनानन्तरं षण्मासमध्य एव मालापरिधापनं शुध्यतीत्येकान्तो ज्ञातो नास्ति परं त्वरितं परिधाप्यते तदा वरमिति ( ११० प्रश्न० ) तथाऽक्रियास्थोपधाने उच्चरितपञ्चमीतपसां षष्ठदिने पञ्चमीसमेति तदा पञ्चम्युपवासं कृत्वा सप्तमदिने आचाम्लं करोति किं वा षष्ठं करोतीति प्रश्न । अत्रोत्तरम् सप्तमदिने उपवासस्यावश्यककरणीयत्वेन षष्ठं करोति शक्त्यभावे तदनुसारेणैवोपधानप्रवेशं करोति ( १३४ प्रश्न० ) तथोपधानोत्तरणादिनस्य प्राक् दिने योगोत्तरणदिनवत्तप एव कृत विलोक्यते किं वा एकाशनकपारणकेऽप्युत्तारितुं कल्पते न वेति प्रश्न । अत्रोत्तरमाह एकाशनादिपारणकेऽप्युत्तारयितुं कल्पते न तु योगादिवत्तपोनियम इति (१६४ प्रश्न०) तथा पण्डितकनकविजयगणिकृतप्रश्नस्तदुत्तरं च यथा वृद्धविध्युपधानवाहकस्य कृतचतुर्विधाहारोपवासस्य सन्ध्याप्रत्याख्यानवेलायां संध्याप्रत्याख्यानं गुरुसमक्षं कर्त्तव्य न वेति प्रश्न । अत्रोत्तरम् प्रातः कृतचतुर्विधाहारोपवासस्य संध्यायामुपधानक्रियाकरणवेलायां पश्चात्प्रत्याख्यानं कृतं विलोक्यते उपधानमन्तरा तु संध्यायां तत्स्मरणं विलोक्यते परं पुन प्रत्याख्यानकरणविशेषो ज्ञातो नास्तीति ( २७६ प्र० ) तथाऽष्टपूर्व्वार्धैरेक उपवास इत्यादिगणनया गणितं तपस्तृतीयपञ्चमोपधानमध्य आयाति न वेति प्रश्न । अत्रोत्तरम् पञ्चमङ्गलमहाश्रुतस्कन्ध. १ प्रतिक्रमणश्रुतस्कन्ध २ शक्रस्तवाध्ययन ३ चैत्यस्तवाध्ययनं ४ नामस्तवाध्ययनं ५ श्रुतस्तवसिद्धस्तवाध्ययनं चेति ६ षडुपधानानि तत्र चतुर्थषष्ठे विना चत्वार्युपधानानि मूलविधिनापरविधिना वोह्यमानानि सन्ति तत्रापरविधावष्टभिः पुरिमार्धैरेक उपवास इत्यादिगणना भवति तत्तु मूलविधौ प्रयोजनाभावाच्चतुर्थषष्ठयोर्मूलविधिनैवोह्यमानत्वात्तद्गणनाऽप्रयोजनास्तीति (१७६ प्रश्न०) तथैकादशोत्तराध्ययनचतुर्दशसहस्र्यां १३१ पत्रे " जोगवं उवहाणवं " इति द्वयमपि शिष्यस्योक्तमस्ति तत्कथं शिष्यस्य श्राद्धस्य च कार्यत इति प्रश्न । अत्रोत्तरम् योगमनोवचनकायसम्बन्धिन उपधानं तपोविशेष एतद् द्वयमपि मुनीनामेवोक्तमस्ति श्राद्धानामुपधानोद्वाहनं तु महानिशीथाद्यागमानुसारेणैवेति ( १८६ प्रश्न० ) अथ पण्डितकाहर्षिगणिकृतप्रश्नास्तदुत्तराणि च यथा उपधानवाहिश्राद्धश्राद्धीनां कल्पदिनपञ्चकमध्ये उत्तरितुं कल्पते न वेति प्रश्न । अत्रोत्तरम् महत्कारणं विना उत्तरितुं न कल्पते यदि च तथाविधकारणे उत्तरति तदाऽग्रमवर्ज्जनं करोतीति ( २०६ प्रश्न० ) तथोपधानाऽवाहिनां पञ्चमङ्गलमहाश्रुतस्कन्धपाठेऽविनायामनन्तसंसारावाप्ति फलं तदाश्रित्य किमादिश्यते इति प्रश्न । अत्रोत्तरम् उपधानावहनेऽनन्तसंसारिता महानिशीथे उक्ता परं तत्सूत्रमुत्सर्गतया श्रितं तेन यो नास्तिकस्सन्नुपधानं वोढु निरपेक्षस्तस्य सेति ज्ञेयम् (२३७ प्रश्न०) तथा अष्टाविंशतिदिनोपधाने पञ्चत्रिंशद्दिनोपधाने च सूत्रविधिना वहमाने कति दिनानि भवन्ति तथा तदुपधानद्वयात्कतिदिनेषु न्यूनेषूत्तार्यते इति प्रश्न । अत्रोत्तरम् सूत्रविधिना तद्द्वये वहमाने दिनन्यूनाधिक्य ज्ञान नास्ति तथा तदुपधाने न्यूनदिनेषु महत्कारणे सम्पूर्णे तपसि जाते उत्तारयन्तो दृश्यन्ते परं दिनसंख्या ज्ञाता नास्तीति (४४१प्रश्न०) तथा कोऽप्युपधानचतुष्कमुद्वाह्य मालां परिदधाति तस्य समुद्देशानुज्ञावस्थायामवशिष्टोपधानयोर्नाम गृह्यते नवेति प्रश्न । अत्रोत्तरम् षण्णामप्युपधानानां समुद्देशानुज्ञयोर्नाम गृह्यते द्वयोरुद्देशस्य च पुरतोऽपि भवने न दोष इति वृद्धसम्प्रदायः ( ४१८ प्रश्न० ) तथोपधानतपसि पूर्णे जाते शेषप्रवेदनेषु दिनवृद्धिर्भवति नवेति प्रश्न. । अत्रोत्तरम् उपधानशेषप्रवेदनेषु दिनवृद्धिर्भवति (४२६ प्रश्न०) तथोपधाने पार्श्वीपरावर्त्तनं शुध्यति न वेति प्रश्न । अत्रोत्तरम् तथाविधप्रकारेण तत्प्रख्यानं शुध्यति (इयेन० ३ उल्ला० ४२८ प्रश्न० ) तथोपधानवाचनाऽन्तर्गृहीतुं विस्मृता सा सायं क्रियाकरणानन्तरं गृह्यतेऽथवा द्वितीयदिने यदि द्वितीयदिने तदा स वासर कस्यां वाचनायां गण्यते इति प्रश्नः । अत्रोत्तरं प्रातरुपधानवाचना लातुं विस्मृता सा सन्ध्यायां क्रियाकरणादर्वाग् गृह्यते तथाऽपि यदि स्मृता तदा द्वितीयेऽह्नि प्रवेदनादर्वाग् गृह्यते स वासरस्त्वग्रेतनवाचनामध्ये गण्यत इति । इयेन० ४ उल्ला० १२६ प्रश्न० ।

उवहाणपडिमा–उपधानप्रतिमा– स्त्री० उपधानं तपस्तद्विषया प्रतिमा । प्रतिमाभेदे, स्था० २ ठा० । तपोविषयेऽभिग्रहे, औ० ।

उवहाणवं–उपधानवत्–पुं० उपधानं तपस्तद्विद्यते यस्याऽसौ उपधानवान् । तपोनिष्टप्तदेहे, उपधीयते उपष्टभ्यते श्रुतमनेनेति उपधानम् । श्रुतविषयोपचारवति, सूत्र० १ श्रु० ७ अ० । स्था० । उपधानमङ्गोपाङ्गादीनां सिद्धान्तानां पाठनाराधनार्थमाचाम्लोपवासनिर्विकृत्यादिलक्षणं तपोविशेष स विद्यते यस्य स उपधानवान् । सिद्धान्ताराधनतपोयुक्ते, " वसे गुरुकुले णिच्चं, जोगवं उवहाणवं । पियंकारे पियंवाई, स सिक्खं लद्धुमरहई " उत्त० ११ अ० । सूत्र० ॥

उवहाणवीरिय–उपधानवीर्य्य–पुं० उपधानं तपस्तत् यथाशक्त्या वीर्य्यं यस्य स भवत्युपधानवीर्य्यः । सूत्र० १ श्रु० ११ अ० । तपस्यनिगूहितबलवीर्य्ये, " धम्मट्ठी उवहाणवीरिए " सूत्र० १ श्रु० २ अ० २ उ० ।

उवहाणसुय–उपधानश्रुत–न० महावीरासेवितस्योपधानस्य तपस प्रतिपादकं श्रुतं ग्रन्थ उपधानश्रुतम् । अष्टमे नवमे वा आचाराङ्गस्य ब्रह्मचर्य्याध्ययने, स्था० ६ ठा० । प्रश्न० । आव० । स० । अथोपधानश्रुतस्य प्रतिपाद्यं महावीरस्वामिकृतं तप उपदर्श्यते ।

अहासुयं वदिस्सामि जहा से समणे भगवं उट्ठाय संखाए तंसि हेमंते अहुणा पव्वइए रीइत्था णो चेविमेण वत्थेण पिहिस्सामि तंसि हेमंते से पारए आवकहाए एयं खु आणुधम्मियं तस्स ॥ १ ॥

( अहासुय वदिस्सामीत्यादि । आर्य सुधर्मस्वामी जम्बूस्वामिने पृष्टत्वात् कथयति यथाश्रुतं यथासूत्र वा वदिष्यामि तद्यथा असौ श्रमणो भगवान् वीरवर्द्धमानस्वाम्युत्थायोद्यतविहारं प्रतिपद्य सर्वालङ्कारं परित्यज्य पञ्चमुष्टिकं लोचं विधाय वन देवदूष्येणेन्द्रक्षिप्तेन युक्त कृतसामायिकप्रतिज्ञ आविर्भूतमनःपर्यायज्ञानाष्टप्रकारकर्म्मक्षयार्थं तीर्थप्रवर्तनार्थं चोत्थाय संख्याय ज्ञात्वा तस्मिन् हेमन्ते मार्गशीर्षदशम्या प्राचीनगामिन्यां छायायां प्रव्रज्याग्रहणसमनन्तरमेव रीयते स्म विजहार । तथा च किल कुण्डग्रामान्मुहूर्त्ते शेषे दिवसे कूर्म्मारग्राममाप । तत्र च

भगवानित आरभ्य नानाविधाभिग्रहोपेतो घोरान् परीषहोपसर्गानभिसहमानो महासत्वतया म्लेच्छानप्युपशमं नयन् द्वादश वर्षाणि साधिकानि छद्मस्थो मौनव्रती तपश्चचार । अत्र च सामायिकारोपणसमनन्तरमेव सुरपतिना भगवदुपरि देवदूष्यवस्त्रं चिक्षिपे । तद्भगवताऽपि निःसङ्गाभिप्रायेणैव धर्मोपकरणमृते न धर्मोऽनुष्ठातुं मुमुक्षुभिरपरैः शक्यत इति कारणापेक्षया मध्यस्थवृत्तिना तथैवावधारितं न पुनस्तस्य तदुपभोगेच्छाऽस्तीत्येतद्दर्शयितुमाह "णो चेव इमेण" इत्यादिश्लोक नचैवाहमनेन वस्त्रेण इन्द्रप्रक्षिप्तेनात्मानं पिधास्यामि स्थगयिष्यामि तस्मिन् हेमन्ते तद्वा वस्त्रं त्वक्त्राणं करिष्यामि लज्जाप्रच्छादनं वा विधास्यामि किम्भूतोऽसाविति दर्शयति । स भगवान् प्रतिज्ञायाः परीषहाणां संसारस्य वा पारं गच्छतीति पारगः कियन्तं कालमिति दर्शयति । यावत्कथं यावज्जीवमित्यर्थः किमर्थं पुनरसौ विभर्तीति चेद्दर्शयति खुरवधारणे स च भिन्नक्रमः । एतद्वस्त्रावधारणं तस्य भगवतोऽनु पश्चात् धार्मिकमनुधार्मिकमेवेत्यपरैरपि तीर्थकृद्भिः समाचीर्णमित्यर्थस्तथा चागमः "सेवेमि ये अतीता जे य पडुप्पन्ना जे य आगमेस्सा अरहंता भगवन्तो जे य पव्वइंसु जे पव्वयंति जे य पव्वइस्संति सव्वे ते सोवहीधम्मो देसियव्वेत्ति " तथा भगवतः प्रव्रजतो ये दिव्याः सुगन्धिपटवासा आसंस्तदाकृष्टाश्च भ्रमरादयः समागत्य शरीरमुपतापयन्तीत्येतद्दर्शयितुमाह ।

चत्तारि साहिए मासे, बहवे पाणजाइया आगम्म ।
अभिरुज्झ कायं विहरिंसु,आरुसिया णं तत्थ हिंसंसु ।।२।।

" चत्तारि इत्यादि " श्लोकः चतुरः साधिकान्मासान्बहवः प्राणिजातयो भ्रमरादिकाः समागत्यारुह्य च कायं शरीरं विजन्हुः काये प्रविचारं चक्रुः । तथा मांसशोणितार्थतया आरुह्य तत्र काये णमिति वाक्यालङ्कारे जिहिंसुः । इतश्चेतश्च विलुम्पन्ति स्मेत्यर्थः । कियन्मात्रं कालं तत् देवदूष्यं भगवति स्थितमित्येतद्दर्शयितुमाह ।

संवच्छरं साहियं मासं, जत्थ रिक्कासि वत्थगं भगवं ।
अचेले ततो चाई, तं वोसज्ज वत्थमणगारे । ३ ।

संवत्सर इत्यादिक रूपकं तदिन्द्रोपहितं वस्त्रं संवत्सरमेकं साधिकञ्च मासं (जत्यरिक्कासित्ति) यत्र त्यक्तवान् भगवांस्तत् स्थितकल्प इति कृत्वा तावदूर्ध्वं तद्वस्त्रत्यागात् त्यागी व्युत्सृज्य च तदनगारो भगवानचेलोऽभूदिति । तच्च सुवर्णवालुकानदीपूरापहृतकण्टकावलग्नं धिग्जातिना गृहीतमिति । किञ्च ।

अदु पोरिसिं तिरियभित्तिं,चक्खुमासज्ज अंतसो झाति ।
अह चक्खु भीता सहिया, ते हंता हता बहवे कंदिंसु ।।४।।

अथानन्तर्ये पुरुषप्रमाणा पौरुषी आत्मपरिमाणा वीथी तां गच्छन् ध्यायतीर्यासमितो गच्छति । तदेव चात्र ध्यानं यदीर्यासमितस्यागमनमिति भावः । किम्भूतां तां तिर्यग्भित्तिं शकटोर्ध्वीपदादौ सङ्कुटामग्रतो विस्तीर्णामित्यर्थः । कथं ध्यायति चक्षुरासज्य चक्षुर्दत्त्वा अन्तर्मध्ये दत्तावधानो भूत्वेति । तं तथा दीयमानं दृष्ट्वा कदाचिदव्यक्तवयसः कुमारादय उपसर्गयेयुरिति दर्शयति । अथानन्तर्ये चक्षुः शब्दोऽत्र दर्शनपर्यायो दर्शनादेव भीता दर्शनभीताः सहिता मिलितास्ते बहवो डिम्भादयः पांशुमुष्ट्यादिभिर्हत्वा हत्वा चक्रन्दुः पश्यत यूयं नाम्ना मुण्डितस्तथाकायः कुतोऽयं किमितो याऽयमित्येवं हक्कोलं चक्रुरिति।।किञ्च ।

सयणेहिं विमिस्सेहिं, इत्थिओ से तत्थ परिण्णाय ।
सागारियं ण सेवेइ, ति से सयं पवेसिया झाइ ।। ५ ।।

शय्यन्ते येष्विति शयनानि वसतयः तेषु कुतश्चिन्निमित्तादिति मिश्रेषु गृहस्थतीर्थिकैस्तत्र व्यवस्थितः सन् यदि स्त्रीभिः प्रार्थ्यते ततस्ता शुभमार्गार्गला इति ज्ञात्वा ज्ञपरिज्ञया प्रत्याख्यानपरिज्ञया परिहरन् सागारिकं मैथुनं न सेवते शून्येषु च भावमैथुनं न सेवते इत्येवं स भगवान् स्वयमात्मना वैराग्यमार्गायात्मानं प्रवेश्य धर्मध्यानं शुक्लध्यानं वा ध्यायति । तथा ।

जे केइ इमे अगारत्था, मीसीभावं पहाय से झाति ।
पुट्ठो वि णाभिभासिंसु, गच्छति णाइवत्तती अंजु ।।६ ।।

ये केचन इमे अगारं गृहं तत्र तिष्ठन्तीत्यगारस्थाः गृहस्थास्तैर्मिश्रीभावमुपगतोऽपि रूप्यतो भावतश्च तं मिश्रीभावं प्रहाय त्यक्त्वा स भगवान् धर्मध्यानं ध्यायति । तथा कुतश्चिन्निमित्तात् गृहस्थैः पृष्टो वा न वक्ति स्वकार्याय गच्छत्येव न तैरुक्तो मोक्षपथमतिवर्तते ध्यानं वा ( अञ्जुत्ति ) । ऋजुः ऋजोः संयमस्यानुष्ठानात् । नागार्जुनीयास्तु पठन्ति "पुट्ठो व से अपुट्ठो वा णो अणुण्णाइपावगं " कण्ठ्यम् । किञ्च ।।

णो सुकरमेतमेगेसिं, णाभिभासे अभिवायमाणे ।
हतपुव्वो तत्थ दंडेहिं, लूसियपुव्वो अप्पपुण्णेहिं ।। ७ ।।

नैतद्वक्ष्यमाणमुक्तं वा एकेषामन्येषां सुकरमेव नान्यैः प्राकृतपुरुषैः कर्तुमलम् । किं तच्चेन कृतमिति दर्शयति । अभिवादयतो नाभिभाषते नाप्यनभिवादयद्भ्यः कुप्यति नापि प्रतिकूलोपसर्गैरन्यथाभावं याति दण्डैर्हतपूर्वस्तत्रानार्यदेशादौ पर्यटंस्तथा दूषितपूर्वो हिंसितपूर्वः केशलुञ्चनादिभिरपुण्यैरनार्यैः पापाचारैरिति । किञ्च ।।

फरुसाइं दुत्तितिक्खाइं, अइयच्च मुणी परक्कममाणे ।
आघायणट्टगीयाइं, दंडजुज्झाइं मुट्ठिजुज्झाइं ।। ८ ।।

परुषाणि कर्कशानि वा दुष्टानि तानि वा परैर्दुःखेन तितिक्ष्यन्त इति दुस्तितिक्षाणि तान्यतिगत्याविगणय्य मुनिर्भगवान्स्थितजगत्स्वभावः पराक्रममाणः सम्यक् तितिक्षते तथा आख्यातानि च तानि नृत्तगीतानि च आख्यातनृत्तगीतानि तान्युद्दिश्य न यामुकं विदधाति नापि दण्डयुद्धमुष्टियुद्धान्याकर्ण्य विस्मयोत्फुल्ललोचन उत्पुलकितरोमकूपो भवति ।

गढिए मिहो कहासु, समयम्मि णायपुत्ते विसोगे ।
अदक्खु एताइं सो उरालाइं, गच्छति णायपुत्ते असरणाए ।। ९ ।।

ग्रथितो वा बद्धो मिथोऽन्योन्यं कथासु स्वैरं कथासु समये वा कश्चिदववरुन्त स्त्रीद्वयं वा परस्परकथाया गृद्धिमपेक्ष्य तस्मिन्नवसरे ज्ञातपुत्रो भगवान् विशोको विगतहर्षश्च तान् मिथः कथावरूढान्मध्यस्थोऽद्राक्षीत् । एतान्यन्यानि वाऽनुकूलप्रतिकूलानि परीषहोपसर्गरूपाण्युग्राणि दुष्प्रधृष्याणि दुःखान्यस्मरन् गच्छति संयमानुष्ठाने पराक्रमते ज्ञाता क्षत्रियास्तेषां पुत्रोऽपत्यं ज्ञातपुत्रः वीरवर्द्धमानस्वामी स भगवानेतद्दुःसरणाय गच्छति पराक्रमत इति सम्बन्धः यदि वा शरणं गृहं नात्र शरणमस्तीत्यशरणं संयमस्तस्मै अशरणाय पराक्रमत इति । तथा हि किमत्र चित्रं यद्भगवानपरिमितबलपराक्रमः प्रतिज्ञामन्दरमारूढः पराक्रमते स भगवानप्रव्रजितोऽपि

प्रासुकाहारानुवर्त्यासीत् । श्रूयते च किल पञ्चत्वमुपगते माता-पितरि समाप्तप्रतिज्ञोऽभूत् । ततः प्रविव्रजिषुः ज्ञातिभिरभिहितो यथा हि भगवन्मा क्षथाः क्षतिक्षारावसेचनमित्येवमभिहितेन भगवताऽवधिना व्यज्ञायि यथा मय्यस्मिन्नवसरे प्रव्रजति सति बहवो नष्टचित्ता विगतासवश्च स्युरित्यवधार्य तानुवाच कियन्तं कालं पुनरत्र मया स्थातव्यमिति । त ऊचुः संवत्सरद्वयेनास्माकं शोकापगमो भावीति भट्टारकोऽप्योमित्युवाच । किं कृत्वाऽऽहारादिकं मया स्वेच्छया कार्यं नेच्छाविघाताय भवद्भिरुपस्थातव्यं तैरपि यथाकथञ्चिदार्य ! तिष्ठत्विति तैः सर्वं तथैव प्रतिपेदे । ततो भगवांस्तद्वचनमनुवर्त्यात्मीयश्च निष्क्रमणावसरमवगम्य संसारासारतां विज्ञाय तीर्थप्रवर्तनायोद्यत इति दर्शयितुमाह ॥

अवि साहिए दुवे वासे, सीतोदगं अभुच्चा णिक्खंते ।
एगत्तगए पिहियच्चे, से अभिण्णायदंसणे संते ॥१०॥
पुढविं च आउकायं च, तेउकायं च वाउकायं च ।
पणगाइं वीयहरियाइं, तसकायं सव्वसो णच्चा ॥११॥
एयाइं संति पडिलेहे, चित्तमंताइं से अभिण्णाय ।
परिवज्जियाण विहरित्था, इति संखाय से महावीरे ॥१२॥

अपि साधिके द्वे वर्षे शीतोदकमभुक्त्वा अनभ्यवहृत्यापीत्वेत्यर्थः अपरा अपि पादधावनादिकाः प्रासुकेनैव प्रकृत्या ततो निष्क्रान्तो यथा च प्राणातिपातं परिहृतवानेव शेषव्रतान्यपि पालितवानिति । तथा एकत्वमिति तत एकत्वभावनाभावितान्तःकरणः पिहिता स्थगितार्चा क्रोधज्वाला येन स तथा । यदि वा पिहितार्चो गुप्ततनुः स भगवांश्छद्मस्थकालेऽभिज्ञातदर्शनः सम्यक्त्वभावतया भावितः शान्त इन्द्रियनोइन्द्रियैः स एवंभूतो भगवान् गृहवासेऽपि सावद्यारम्भत्यागी किं पुनः प्रव्रज्यायामिति दर्शयितुमाह " पुढविं च इत्यादि एयाइं इत्यादि " श्लोकद्वयस्याप्ययमर्थः । एतानि पृथिव्यादीनि चित्तमन्त्यभिज्ञाय तदारम्भं परिवर्ज्य विहरति स क्रियाकारकसंबन्धस्तत्र पृथ्वीसूक्ष्मबादरभेदेन द्विधा सूक्ष्मा सर्वगा बादराऽपि श्लक्ष्णकठिनभेदेन द्विधैव । तत्र श्लक्ष्णा शुक्लादिपञ्चवर्णा कठिना तु पृथिवी शर्करावालुकाषट्त्रिंशद्भेदा शस्त्रपरिज्ञानुसारेण द्रष्टव्या । अप्कायोऽपि सूक्ष्मबादरभेदात् द्विधा । तत्र सूक्ष्मः सर्वगो बादरस्तु शुद्धोदकादिभेदेन पञ्चधा । तेजःकायोऽपि पूर्ववन्नवरं बादरोऽङ्गारादि पञ्चधा । वायुरपि तथैव नवरं बादर उत्कालिकादिभेदेन पञ्चधा । वनस्पतिरपि सूक्ष्मबादरभेदेन द्विधा । तत्र सूक्ष्मः सर्वगो बादरोऽप्यग्रमूलस्कन्धपर्वबीजसमूर्च्छनभेदात्सामान्यतः षोढा पुनर्द्विधा प्रत्येकः साधारणश्च । तत्र प्रत्येको वृक्षगुच्छादिभेदात् द्वादशधा साधारणस्त्वनेकविध इति । स एवं भेदभिन्नोऽपि वनस्पतिः सूक्ष्मस्य सर्वगतत्वादतीन्द्रियत्वाच्च तद्व्युदासेन बादरो भेदत्वेन संगृहीतस्तद्यथा पनकग्रहणेन बीजाङ्कुरभावरहितस्य पनकादेरुल्यादिविशेषापन्नस्य ग्रहणं बीजग्रहणेन त्वग्रबीजादेरुपादानं हरितशब्देन शेषस्येत्येतानि पृथिव्यादीनि भूतानि सन्ति विद्यन्त इत्येवं प्रत्युपेक्ष्य तथा ( चित्तमंति ) सचित्तान्यभिज्ञाय ज्ञात्वा इत्येतत्संख्ययाऽवगम्य स भगवान्महावीरस्तदारम्भं परिवर्ज्य विहृतवानिति पृथिवीकायादीनां जन्तूनां त्रसस्थावरत्वेन भेदमुपदर्श्य सांप्रतमपरस्परतोऽनुगमनमप्यस्तीत्येतद्दर्शयितुमाह ॥

अदु थावरा य तसत्ताए, तसजीवा य थावरत्ताए ।
अदु वा सव्वजोणिया सत्ता, कम्मुणा कप्पिया पुढो बाला ॥१३॥
भगवं च एवमन्नेसिं, सोवहिए हु लुप्पती बाले ।
कम्मं च सव्वसो णच्चा, तं पडियाइक्खपावगं भगवं ॥१४॥
दुविहं समेच मेहावी, किरियमक्खायमणेलिसं णाणी ।
आयाण सो य मतिवा य, सो यं जोगं च सव्वसो णच्चा ॥१५॥

अथानन्तर्ये स्थावराः पृथिव्यप्तेजोवायुवनस्पतयः ते त्रसतया द्वीन्द्रियादितया विपरिणमन्ते कर्मवशाद्गच्छन्ति चशब्द उत्तरापेक्षया समुच्चयार्थस्तथा त्रसजीवाश्च कृम्यादयः स्थावरतया पृथिव्यादित्वेन कर्मनिघ्नाः समुत्पद्यन्ते । तथा चान्यत्राप्युक्तम् "अयणं भंते ! जीवे पुढविकाइयत्ताए उववन्नपुव्वे हंता गोयमा ! असइं अदुवा अणंतखुत्तो जाव वण्णपुव्वेति" अथवा सर्वा योनय उत्पत्तिस्थानानि येषां सत्वानां ते सर्वयोनिकाः सत्वाः सर्वगतिभाजस्ते च बाला रागद्वेषाकलिताः स्वकृतेन कर्मणा पृथक्तया सर्वयोनिमुक्तेन च कल्पिता व्यवस्थापिता इति । तथा चोक्तं-" णत्थि किर सो पएसो लोए वालग्गकोडिमेत्तो वि । जम्मणमरणावाहाणेगसो जत्थ णवि पत्ता" अपिच । रङ्गभूमिर्न सा काचिच्छुद्धा जगति विद्यते । विचित्रैः कर्मनेपथ्यैर्यत्र सत्त्वैर्न नाटित " मित्यादि । किञ्च ( भगव च इत्यादि ) भगवांश्च वीरवर्द्धमानस्वाम्येवमवगम्य ज्ञातवान् सह उपधिना वर्त्तत इति सोपाधिकः द्रव्यभावोपधियुक्तः हुरवधारणे लुप्यत एव कर्मणा क्लेशमनुभवत्येवाज्ञो बाल इति । यदि वा हुर्हेतौ यस्मात् सोपधिकः कर्मणा लुप्यते बालस्तस्मात्कर्म सर्वशो ज्ञात्वा तत्कर्मप्रत्याख्यातवां स्तदुपादानं च पापकर्मानुष्ठानं भगवान् वर्द्धमानस्वामीति । किञ्च (दुविहं इत्यादि) द्वे द्विधे प्रकारावस्येति द्विविधं किं तत्कर्म्म तच्चैर्याप्रत्ययं सांपरायिकञ्च तद् द्विविधमपि समेत्य ज्ञात्वा मेधावी सर्वभावज्ञः क्रियां संयमानुष्ठानरूपां कर्मोच्छेत्रीमनीदृशीमनन्यसदृशीमाख्यातवान् किम्भूतो ज्ञानी केवलज्ञानवानित्यर्थः । किं वा परमाख्यातवानिति दर्शयति आदीयते कर्म्मानेनेत्यादानं दुष्प्रणिहितमिन्द्रियमादानञ्च श्रोतश्च आदानश्रोतस्तज्ज्ञात्वा तथाऽतिपातश्रोतश्चोपलक्षणार्थत्वादस्य मृषावादादिकमपि ज्ञात्वा तथा योगश्च मनोवाक्कायलक्षणं दुष्प्रणिहितं सर्वगः सर्वप्रकारैः कर्मबन्धायेति ज्ञात्वा श्रोतःक्रियासंयमलक्षणामाख्यातवानिति संबन्धः । किञ्च ।

अतिवातियं अणाउट्टिं, सत्तमण्णेसिं अकरणयाए ।
जस्सित्थि उ परिण्णाया, सव्वकम्मावहा उ से अदक्खु ॥१६॥

आकुट्टिर्हिंसा न आकुट्टिरनाकुट्टिरहिंसेत्यर्थः । किंभूतामतिक्रान्तां पातकादतिपातका निर्दोषा तामाश्रित्य स्वतोऽन्येषां वा करणतया व्यापारतया प्रवृत्त इति । तथा यस्याः स्त्रिया स्वरूपतस्तद्विपाकतश्च परिज्ञाता भवन्ति । सर्वे कर्मावहन्तीति सर्वकर्मावहाः सर्वपापोपादानभूताः स एवाद्राक्षीत्स एव यथाऽवस्थितं संसारस्वभावं ज्ञातवान् । एतदुक्तं भवति । स्त्रीस्वभावपरिज्ञानेन तत्परिहारेण च स भगवान् परमार्थदर्श्यभूदिति । मूलगुणानाख्यायोत्तरगुणप्रचिकटयिषयाह ॥

अहागडं ण से सेवे, सव्वसो कम्मुणा अदक्खू ।
यं किंचि पावगं भगवं, तं अकुव्वं वियडं भुंजित्था ॥१७॥

यथा येन प्रकारेण पृष्टाऽपृष्टा वा कृतं यथाकृतमाधाकर्मादिनाऽसौ सेवते किमिति । यतः सर्वैः प्रकारैस्तदासेवनेन कर्मणाऽष्टप्रकारेण बन्धमद्राक्षीत् दृष्टवानन्यदप्येवं जातीयकं न

सेवते इति दर्शयति । यत्किञ्चित्पापक पापोपादानकारणं तद्भगवानकुर्वन्विकट प्रासुकमभुङ्क्त उपभुक्तवान् । किञ्च

णो सेवती य परवत्थं, परपाए वि से ण भुंजित्था ।

परिवज्जियाण उ माणं, गच्छति संखडिं असरणाए॥१८॥

नासेवते च नोपभुङ्क्ते च परवस्त्र प्रधान वस्त्र परस्य वा वस्त्र परवस्त्र नासेवते । तथा परपात्रेऽप्यसौ नो भुङ्क्ते तथा परिव्रज्यापमानमवगणय्य गच्छत्यसावाहाराय सखण्ड्यन्ते प्राणिनोऽस्यामिति सखडिस्तामाहारपाकस्थानभूतामशरणाय शरणमनालम्बमानोऽदीनमनस्कककल्प इति कृत्वा परीषहविजयार्थं गच्छतीति । किञ्च

मायण्णे असणपाणस्स, णाणुगिद्धे रसेसु अपडिण्णे ।

अच्छिं पि णोपमज्जिज्जा, णो वि कंडूयए मुणी गायं॥१९॥

आहारस्य मात्रा जानातीति मात्रज्ञः कस्याऽशयत इत्यशन शाल्योदनादि पीयत इति पान द्राक्षापानकादि तस्य च । तथा नानुगृद्धो रसेषु विकृतिषु भगवतो हि गृहस्थभावेऽपि रसेषु गृद्धिर्नासीत् । किं पुन प्रव्रजितस्येति । तथा रसेष्वेव ग्रहण प्रत्यप्रतिज्ञो यथा मयाऽद्य सिंहकेसरामोदका एव ग्राह्या इत्येवरूपप्रतिज्ञारहितोऽन्यत्र कुल्माषादौ सप्रतिज्ञ एव । तथा अक्ष्यपि रजःकणकाद्यपनयनाय नो प्रमार्ज्जयेन्नापि च गात्र मुनिरसौ कण्डूयते काष्ठादिना गात्रस्य कण्डूत्यपनोद न विधत्त इति । किञ्च ।

अप्पं तिरियं पेहाए,अप्पं पिट्ठउ पेहाए ।

अप्पं बुइए पडिभाणी, पंथपेही चरेजते माणे ॥ २० ॥

अल्पशब्दोऽभावे वर्तते अल्प तिर्यक् तिरश्चीन गच्छन् प्रेक्षते तथाऽल्प पृष्ठत स्थित्वोत्प्रेक्षते तथा मार्गादिः केनचित्पृष्टः सन्नसाधुप्रतिभाषी सन्नल्प ब्रूते मौनेन गच्छत्येव केवलमिति दर्शयति पथिप्रेक्षी चरेद्गच्छेद्यतमान प्राणिविषये यत्नवानिति।किञ्च

सिसरंसि अद्धपडिवन्ने, तं वोसिरिज्ज वत्थमणगारे।

पसारेत्तु बाहु परक्कमे, णो अवलंबियाण खंधंसि ॥ २१ ॥

अर्द्धप्रतिपन्ने शिशिरे सति तद्देवदूष्यवस्त्रं व्युत्सृज्यानगारो भगवान् प्रसार्य बाहू पराक्रमते । न तु पुन शीतार्दित सन् संकोचयति नापि स्कन्धो वल व्यतितिष्ठतीति । सांप्रतमुपस जिहीर्षुराह ॥

एस विही अणुक्कंते, माहणेण मइमया ।

बहुसो अपडिण्णेण, भगवता एवं रीयंति त्ति बेमि ॥

एष चर्याविधिरनन्तरोक्तोऽन्वाक्रान्तोऽनुचीर्णः (माहणेत्ति) श्रीवर्द्धमानस्वामिना मतिमता विदितवेद्येन बहुशोऽनेकप्रकारमप्रतिज्ञेनानिदानेन भगवता ऐश्वर्यादिगुणोपेतेन एवमनेन यथा भगवदनुचीर्णेनान्ये मुमुक्षवोऽशेषकर्मक्षयाय साधवो रीयन्ते गच्छन्तीति । इत्यधिकारपरिसमाप्तौ ब्रवीमीति पूर्ववदुपधानश्रुताध्ययनस्य प्रथमोद्देशक इति उक्त प्रथमोद्देशक ।साम्प्रत द्वितीय आरभ्यते । अस्य चायमभिसंबन्ध इहानन्तरोद्देशके भगवतश्चर्याऽभिहिता।तत्र चावश्य कदाचिद्यथाऽवसत्या भाव्यमतस्तत्प्रतिपादनायायमुद्देशक प्रतन्यते इत्यनेन सवन्धेनायातस्यास्योद्देशकस्यादिसूत्रम् ॥

चरियासणाइं सेज्जाओ, एगतियाओ ज ओम्भइयाओ।

आइक्खताइं सयणासणाइं, जाइं सेवित्थ से महावीरे॥

चर्यायामवश्यंभावितया यानि शय्यासनान्यभिहितानि सामर्थ्यायातानि शयनासनानि शय्याफलकादीन्याचचक्षेसुधर्मस्वामी जम्बूनाम्नाऽभिहितो यानि सेवितवान्महावीरो वर्द्धमानस्वामीत्ययञ्च श्लोकश्चिरन्तनटीकाकारेण न व्याख्यातः । तत्र किं सुगमत्वादुताभावात् सूत्रपुस्तकेषु तु दृश्यते तदभिप्रायं च वय न विद्म इति प्रश्नवति प्रतिवचनमाह ( आवेसण इत्यादि ) भगवतो ह्याहाराभिग्रहवत्प्रतिमाव्यतिरेकेण प्रायशो न शय्याऽभिग्रह आसीत् नवर यत्रैव चरमपौरुषी भवति तत्रैवानुज्ञाप्य स्थितवान् । तद्दर्शयति ॥

आवेसणसभापवासु, पणियसालासु एगया वासो ।

अदुवा पलियट्ठाणेसु, पलालपुंजेसु एगदा वासो ॥२ ॥

आ समन्ताद्विशन्ति यत्र तदावेशन शून्यगृह सभा नाम ग्रामनगरादीनां तद्वासिलोकाच्छ्रायिकार्थमागन्तुकशयनार्थं च कुड्याद्याकृति क्रियते।प्रपा उदकस्थानम् आवेशनं च सभा च प्रपा चेत्यावेशनसभाप्रपास्तासु । तथा पण्यशालासु हट्टेषु एकदा कदाचिद्वासो भगवतोऽथवा ( पालियति ) कर्म्म तस्य स्थानं कर्मस्थानम् । अयस्कारवर्द्धकिकुञ्जादिकम् । तथा पलालपुञ्जेषु मञ्चोपरिव्यवस्थितेष्वधो न पुनस्तेष्वधः सुषिरत्वादेति । किञ्च ॥

आगंतारे आरा-मागारे णगरे वि एगदा वासो ।

सुसाणे सुण्णगारे वा, रुक्खमूले वि एगदा वासो ॥ ३॥

प्रसङ्गायाता आगत्य वा यत्र तिष्ठति तदागन्तार तत्पुनर्ग्रामाद्नगराद्बहिःस्थान तत्र यथा आरामे आगार गृहमारामागारं तत्र वा तथा नगरे वा एकदा वासस्तथा श्मशाने शून्यागारे वा आवेशनशून्यागारयोर्भेदः स कुड्याकुड्यकृतो वृक्षमूले वा एकदा वास किञ्च ॥

एतेहिं मुणी सयणेहिं, समणे आसि पतेरसवासे ।

राइंदियं पि जयमाणे, अप्पमत्ते समाहिए ज्झाति ॥४॥

एतेषु पूर्वोक्तेषु शयनेषु वसतिषु स मुनिर्जगत्त्रयवेत्ता ऋतुबद्धे वर्षासु वा श्रमणस्तपस्युद्युक्ता समना वासीन्निश्चलमना इत्यर्थं । कियन्त काल यावादिति दर्शयति ( पतेरसवासेत्ति ) प्रकर्षेण त्रयोदश वर्ष यावत्समस्त रात्रिन्दिवमपि यतमान संयमानुष्ठान उद्युक्तवास्तथा अप्रमत्तो निद्रादिप्रमादरहितविश्रोतसिकारहितो धर्मध्यानं शुक्लध्यान वा ध्यायतीति । किञ्च ।

णिद्दं पि णो पगामाए, सेवइ य भगवं उट्ठाए ।,

जग्गावति य अप्पाणं, इसिं साति य अपडिण्णे ॥ ५ ॥

निद्रामप्यसावपरप्रमादरहितो न प्रकामतः सेवते तथा च किल भगवतो द्वादशसु संवत्सरेषु मध्येऽस्थिकग्रामे व्यन्तरोपसर्गान्ते कायोत्सर्गव्यवस्थितस्यैवान्तर्मुहूर्त्ते यावत् स्वप्नदर्शनाध्यासित सकृन्निद्राप्रमाद आसीत्ततोऽपि चोत्थायात्मान जागरयति कुशलानुष्ठाने प्रवर्तयति । यत्रापीषच्छय्यासीत्तत्राप्यप्रतिज्ञः प्रतिज्ञारहितो न तत्रापि स्वापाभ्युपगमपूर्वक शयीत इत्यर्थ । किञ्च ।

संबुज्झमाणे पुणरवि, आसंसु भगवं उट्ठाए ।

णिक्खम्म एगया राओ, बहिं चंकमित्ता मुहुत्तगं ॥६॥

स मुनिर्निद्राप्रमादादुत्थितचित्त सम्बुध्यमान संसारपातायाय प्रमाद इत्येवमवगच्छन् पुनरप्रमत्तो भगवान् संयमोत्थानेनोत्थाय यदि तत्रान्तर्व्यवस्थितस्य पुनश्चिन्निद्राप्रमादः स्यात् तत-

स्तस्मान्निष्क्रम्यैकदा शीतकालरात्र्यादौ बहिश्चङ्क्रम्य मुहूर्त्तमात्रं निद्राप्रमादापनयनार्थं ध्याने स्थितवानिति । किञ्च ।

सयणेहिं तस्सुवस्सग्गा, भीमा आसी अणेगरूवा ।
संसप्पगा य जे पाणा, अदुवा पक्खिणो उवचरंति ॥७॥

शय्यते स्थीयते उत्कुटुकासनादिभिर्येष्विति शयनान्याश्रयस्थानानि तेषु तैर्वा तस्य भगवत उपसर्गा भीमा भयानका आसन्ननेकरूपाश्च शीतोष्णादिरूपतया अनुकूलप्रतिकूलरूपतया वा। तथा संसर्पन्तीति संसर्प्पका शून्यगृहादावहिनकुलादयो ये प्राणिन उपचरन्त्युप सामीप्येन मांसादिकमश्नन्त्यथवा श्मशानादौ पक्षिणो गृध्रादय उपचरन्तीति वर्तते । किञ्च ।

अदुवा कुचरा उवचरंति, गामरक्खा य सत्ति हत्था य ।
अदु गामिया उवसग्गा, इत्थी एगतिया पुरिसो वा ॥८॥

अथानन्तरं कुत्सितं चरन्तीति कुचराश्चौरपारदारिकादयस्ते च क्वचिच्छून्यगृहादावुपचरन्त्युपसर्गयन्ति । तथा ग्रामरक्षकादयश्च त्रिकचत्वारादिव्यवस्थितं शक्तिकुन्तादिहस्ता उपचरन्तीति । अथ ग्रामिका ग्रामधर्म्माश्रिता उपसर्गा एकाकिनः स्युस्तथाहि काचित्स्त्री रूपदर्शनाद्युपपन्ना उपसर्गयेत्पुरुषो वेति । किञ्च ॥

इहलोइयाइं परलोइयाइं, भीमाइं अणेगरूवाइं ।
अविसुब्भिदुब्भिगंधाइं, सद्दाइं अणेगरूवाइं ॥ ९ ॥
अहियासए सयानमिते, फासाइं विरूवरूवाइं ।
अरतिं रतिं अभिभूय, रीयति माहणे अवहुवाई ॥१०॥

इह लोके भवा ऐहिलौकिका मनुष्यकृता के ते स्पर्शा दुःखविशेषा दिव्यास्तैरश्चाश्च पारलौकिकास्तानुपसर्गोपादितान् दुःखविशेषानध्यासयत्यधिसहते । यदि वा इहैव जन्मनि ये दुःखयन्ति दण्डप्रहारादयः प्रतिकूलोपसर्गास्त ऐहलौकिकास्तद्विपर्ययाश्च पारलौकिका भीमा भयानका अनेकरूपा नानाप्रकारास्तानेव दर्शयति सुरभिगन्धाः स्रक्चन्दनादयो दुर्गन्धाः कुथितकलेवरादयस्तथा शब्दाश्चानेकरूपा वीणावेणुमृदङ्गादिजनितास्तथा । क्रमेलकारटितादयस्तथापितास्तांश्चाविकृतमना अध्यासयत्यधिसहते । सदा सर्वकालं सम्यगितः समितः पञ्चभिर्युक्तस्तया स्पर्शान् दुःखविशेषानरतिं संयमे रतिं चोपभोगाभिष्वङ्गे अभिभूय तिरस्कृत्य रीयते संयमानुष्ठाने व्रजति (माहणत्ति) पूर्ववत् । तथोभयभाषी एकद्विव्याकरणं क्वचिन्निमित्ते कृतवानिति भावः । किञ्च ॥

स जणेहिं तत्थ पुच्छिंसु, एगचरा वि एगदाराओ ।
अव्वाहिते कसाइच्छा, पेहमाणे समाहिं अपडिन्ने ॥११॥

स भगवानर्द्धत्रयोदशपक्षाधिका समा एकाकी विचरंस्तत्र शून्यगृहादौ व्यवस्थितः सन् जनैर्लोकैः पृष्टस्तद्यथा को भगवान् किमत्र स्थितः इत्येवं पृष्टोऽपि तूष्णींभावमभजत । तथा उपपत्न्याद्या अपि एकचरा एकाकिन एकदा कदाचिद्रात्राविव्दा पप्रच्छुरव्याकृते च भगवता कषायिनास्ततोऽज्ञानावृतदृष्टयो दण्डमुष्ट्यादिना ताडनतोऽनार्यत्वमाचरन्ति भगवांस्तु समाधिं प्रेक्षमाणो धर्म्मध्यानोपगतचित्तः सन् सम्यक् तितिक्षते । किंभूतोऽप्रतिज्ञो नास्य वैरनिर्यातनप्रतिज्ञा विद्यत इत्यप्रतिज्ञः । कथं ते पप्रच्छुरिति दर्शयितुमाह ॥

अयमंतरंसि को एत्थं, अहमंसो ति भिक्खु आहट्टु ।
अयमुत्तमे से धम्मे, तुसिणीए सकसाइए झाति ॥१२॥

अयमन्तर्म्मध्ये कोऽत्र व्यवस्थित एवं सङ्केतागता दुश्चारिणः पृच्छन्ति कर्मकरादयो वा तत्र नित्यवासिनो दुष्प्रणिहितमानसाः पृच्छन्ति तत्र चैवं पृच्छतामेषां भगवांस्तूष्णींभावमेव भजते । कचिद्बहुतरदोषापनयनाय जल्पत्यपि कथमिति दर्शयति । अहं भिक्षुरस्मीत्येवमुक्ते यदि तेऽवधीरयन्ति ततस्तिष्ठत्येवाभिप्रेतार्थव्याघातात्कषायिता महान्धाः । सांप्रतंक्रितया एव ब्रूयुर्यथा तूर्णमस्मात् स्थानान्निर्गच्छ ततो भगवानपीयत्ताऽवग्रह इति कृत्वा निर्गच्छत्येव भगवान् किन्तु सोऽयमुत्तमप्रधानो धर्म्म आचार इति कृत्वा सकषायितेति तस्मिन् गृहस्थे तूर्णीभावव्यवस्थिते यद्भविष्यतया ध्यायत्येव न ध्यानात् प्रच्यवते । किञ्च

जं सिप्पेगे पवेवेंति, सिसिरे मारुए पवायंते ।
तं सिप्पेगे अणगारा, हिमवाए णिवायमेसंति ॥ १३ ॥

यस्मिन् शिशिरादावप्येके त्वत्राणाभावतया प्रवेपन्ते दन्तवीणादिसमन्विताः कम्पन्ते यदि वा प्रवेदयन्ति शीतजनितं दुःखस्पर्शमनुभवन्ति आर्तध्यानवशगा भवन्तीत्यर्थः । तस्मिंश्च शिशिरे हिमकणिनि मारुते च प्रवाति सत्येके न सर्वेऽनगारास्तीर्थिकप्रव्रजिता हिमवाते सति शीतपीडितास्तदपनोदाय पावकं प्रज्वालयन्त्यङ्गारशकटिकामन्वेषयन्ति प्रावरिकं याचन्ते । यदि वाऽनगारा इति पार्श्वनाथप्रव्रजिता गच्छवासिन एव शीतार्दिता निवातमेषयन्ति घरशालादिवसतीर्वातायनादिरहिताः प्रार्थयन्ति । किञ्च ।

संघाडिओ पविसिस्सामो, एहा य समादहमाणा ।
पिहितावासक्खामो, अतिदुक्खहिमगसंफासा ॥ १४ ॥

इह संघाटीशब्देन शीतापनोदक्षमं कल्पद्वयं त्रयं वा गृह्यते ताः सङ्घाटी शीतार्दिता वयं प्रवेक्ष्याम एवं शीतार्दिता अनगारा अपि विदधति तीर्थिकप्रव्रजिता । तथा समिधः काष्ठानीति यावदेताश्च समादहन्तः शीतस्पर्शं सोढुं शक्ष्यामस्तथा सङ्घाट्या वाऽभिहिताः स्थगिता कम्बलाद्यावृतशरीरा इति । किमर्थमेतत्कुर्वन्तीति दर्शयति । यतो अतिदुःखमेतदतिदुःसहमेतद्भूत हिमसंस्पर्शाः शीतस्पर्शवेदना दुःखेन सह्यन्त इति यावत् । तदेवम्भूते शिशिरे यथोक्तानुष्ठानवत्सु वा स्वयूथोत्तरेष्वनगारेषु यद्भगवान् व्यधात्तद्दर्शयितुमाह ॥

तंसि भगवं अप्पडिन्ने, अधो वियडे अहियासए ।
दविए णिक्खम्म एग-दारा उ वा एति भगवं समियाए ॥१५॥

तस्मिन्नेवम्भूते शिशिरे हिमवाते शीतस्पर्शे च सर्वकषे भगवानैश्वर्यादिगुणोपेतस्तं शीतस्पर्शमध्यासयत्यधिसहते । किंभूतोऽसावप्रतिज्ञो न विद्यते निवातवसतिप्रार्थनादिका प्रतिज्ञा यस्य स तथा काध्यासयत्यधो विकटे अध कुड्यादिरहिते छन्नेऽप्युपरि तदभावे चेति पुनरपि विशिनष्टि रागद्वेषविरहाद् द्रव्यभूतः कर्म्मग्रन्थिद्रावणाद्वा द्रव संयमः स विद्यते यस्यासौ द्रविकः स च तथाऽध्यासयत् यथाऽत्यन्तं शीतेन बाध्यते ततस्तस्मात्स्थानान्निष्क्रम्य बहिरेकदा रात्रौ मुहूर्त्तमात्रं स्थित्वा पुनः प्रविश्य स भगवान् समितया सम्यग्वा समतया वा व्यवस्थितस्तं शीतस्पर्शं रासभदृष्टान्तेन सोढुं शक्तः इत्यधिसहत इति । एतदेवोद्देशकार्थमुपसञ्जिहीर्षुराह ।

एस विही अणुक्कंतो, माहणेणं मइमया ।
बहुसो अप्पडिन्नेणं, भगवया एवं रीयंते त्तिबेमि ॥ १६ ॥

एस विही स्याद्यनन्तरोद्देशकवज्ज्ञेयमिति इति ब्रवीमीतिशब्द पूर्ववदुपधानश्रुतस्य द्वितीयोद्देशकः समाप्तः । उक्तो द्वितीयोद्देशकः । सांप्रतं तृतीय आरभ्यते । अस्य चायमभिसंबन्धः इहानन्तरोद्देशके भगवतः शय्या प्रतिपादितास्तासु व्यवस्थितेन ये यथोपसर्गाः परीषहाश्च सोढास्तत्प्रतिपादनार्थमिदमुपक्रम्यते । इत्यनेन संबन्धेनायातस्यास्योद्देशकस्यादिसूत्रम् ।

तणफासे सीयफासे य, तेउफासे य दंसमसगे य ।
अहियासए सया समिए, फासाइं विरूवरूवाइं ॥ १ ॥

तृणानां कुशादीनां स्पर्शास्तृणस्पर्शास्तथा शीतस्पर्शा उष्णस्पर्शश्चातपनादिकाश्च आसन् । यदि वा गच्छतः किल भगवतस्तेजःकाय एवासीत्तथा दंशमशकादयश्च एतांस्तृणस्पर्शान्विरूपान्नानाभूतान् भगवानध्यासयति सम्यगित सम्यग्भाव गतः समितिभिः समितो वेति । किञ्च ।

अह दुच्चरलाढचारी, वज्जभूमिं च सुब्भभूमिं च ।
पंतं सेज्जं सेविंसु, आसणगाइं चेव पंताइं ॥ २ ॥

अथानन्तर्ये दुःखेन चर्यतेऽस्मिन्निति दुश्चरः स चासौ लाढश्च जनपदविशेषो दुश्चरलाढस्तं चीर्णवान्विहृतवान् । स च द्विरूपो वज्रभूमिः शुभ्रभूमिः इत्यस्मादिरूपमपि विहृतवांस्तत्र च प्रान्ता शय्या वसतिं शून्यगृहादिकामनेकोपद्रवोपद्रुता सेवितवांस्तथा प्रान्तानि चासनानि पांशूत्करशर्करालोष्टाद्युपचितानि काष्ठानि च दुर्घटितान्यासेवितवानिति । किञ्च ।

लाढेहिं तस्सुवसग्गा, बहवे जाणवया लूसिंसु ।
अह लूहदेसिए भत्ते, कुक्कुरा तत्थ हिंसिंसु णिवतिंसु ॥ ३ ॥

लाढा नाम जनपदविशेषास्तेषु च द्विरूपेष्वपि लाढेषु तस्य भगवतो बहव उपसर्गाः प्रायशः प्रतिकूला आक्रोशाश्च भक्षणादयश्च आसंस्तानेव दर्शयति जनपदे भवा जानपदा अनार्यचारिणो लोकास्ते भगवन्तं लूषितवन्तो दन्तनखक्षणोल्मुककाष्ठप्रहारादिभिर्जिहिंसुः । अथ शब्दोऽपि शब्दार्थे स चैव रूक्षश्चो भक्तमपि तत्र रूक्षदेश्य रूक्षकल्पमन्तप्रान्तमिति यावत्ते चानार्यतया प्रकृतिक्रोधना कार्पासाद्यभावत्वाच्च तृणप्रावरणा सन्तो भगवति विरूपमाचरन्ति । तथा तत्र कुक्कुराः श्वानस्ते जिहिंसुरुपरि निपेतुरिति । किञ्च ॥

अप्पे जणे णिवारेइ, लूसणए सुणए दसमाणे ।
छुछु करंति आहंतुं, समणं कुक्कुरा दसंतु त्ति ॥ ४ ॥

अल्प स्तोकः स जनो यदि परं सहस्राणामेको यदि वा नास्त्येवासाविति यस्तान् शुनो लूषकान् दशतो निवारयति निषेधयत्यपि तु दण्डप्रहारादिभिर्भगवन्तं हत्वा तत्प्रेरणायासीत् छुछु कुर्वन्ति कथं नु नामैनं श्रमणं कुक्कुरा श्वानो दशन्तु भक्षयन्तु तत्रैवंविधे जनपदे भगवान् षण्मासावधि कालं स्थितवानिति किञ्च ।

एलिक्खए जणे भुज्जो, बहवे वज्जभूमि फरुसासी ।
लट्ठिं गहाय णालीयं, समणा तत्थ एवं विहरिंसु ॥ ५ ॥

ईदृक्ष पूर्वोक्तस्वभावो यत्र जनस्तं तथाभूतं जनपदं भगवान् भूयः पौनःपुन्येन विहृतवांस्तस्यां च वज्रभूमौ बहवो जनाः पुरुषादिनो रूक्षाशितया च प्रकृतिक्रोधनास्ततो यतिरूपमुपलभ्य कदर्थयन्ति ततस्तत्रान्ये श्रमणाः शाक्यादयो यष्टिं देहप्रमाणां चतुरङ्गुलाधिकप्रमाणां वा नालिकां गृहीत्वा श्वादिनिषेधनाय विजहुरिति । किञ्च ॥

एवं पि तत्थ विहरंता, पुट्ठपुव्वा अहेसि सुणएहिं ।
संलुंचमाणा सुणएहिं, दुच्चराणि तत्थ लाढेहिं ॥ ६ ॥

यष्ट्यादिकया सामग्र्या श्रमणा विहरन्तः स्पृष्टपूर्वा आरब्धपूर्वाः श्वभिरासन् लुच्यमाना इतश्चेतश्च भक्ष्यमाणाः श्वभिरासन् दुर्निवारत्वात्तेषां तत्र तेषु लाढेष्वार्यलोकानां दुःखेन चर्यन्त इति दुश्चरान् ग्रामादीनिति । तदेवं भूतेष्वपि लाढेषु कथं भगवान् विहृतवानिति दर्शयितुमाह ।

णिहाय दंडं पाणेहिं तं, कायं वोसज्ज मणगारे ।
अह गामकंटए भगवं, ते अहियासए अभिसमेच्च ॥ ७ ॥

प्राणिषु यो दण्डनाद्दण्डो मनोवाक्कायात्मकस्तं भगवान्निधाय त्यक्त्वा तथा तच्छरीरमप्यनगारो व्युत्सृज्याथ ग्रामकण्टकान्नीचजनरूक्षालापानपि भगवांस्तान् सम्यक्क्षमणतया निर्जरामभिसमेत्य ज्ञात्वाऽऽध्यासयत्यधिसहते कथमधिसहत इति दृष्टान्तद्वारेण दर्शयितुमाह ।

णाओ संगामसीसे वा, पारए तत्थ से महावीरे ।
एवं पि तत्थ लाढेहिं, अलद्धपुव्वो वि एगदा गामे ॥ ८ ॥

नागो हस्ती यथाऽसौ संग्राममूर्द्धनि परानीकं जित्वा तत्पारगो भवत्येवं भगवानपि महावीरस्तत्र लाढेषु परीषहानीकं विजित्य पारगोऽभूत् । किञ्च तत्र लाढेषु विरलत्वात् ग्रामाणां कश्चिदेकदा वासायालब्धपूर्वो ग्रामोऽपि भगवता । किञ्च ।

उवसंकमंतमपडिन्नं, गामंतियं पि अप्पत्तं ।
पडिणिक्खमित्तु लूसिंसु, एत्ताओ परं पलेहि त्ति ॥ ९ ॥

उपसंक्रामन्तं भिक्षायै वासाय वा गच्छन्तं किम्भूतमप्रतिज्ञं नियतनिवासादिप्रतिज्ञारहितं ग्रामान्तिकं ग्राममप्राप्तमपि तस्मात् ग्रामात्प्रतिनिर्गत्य ते जना भगवन्तमलूषयिषुरुक्तवन्तोऽचुरितोऽपि स्थानात्परं दूरतरं स्थानं पर्यहि गच्छेति । किञ्च ।

हयपुव्वो तत्थ दंडेणं, अहवा मुट्ठिणा अहु कुंताइफलेणं ।
अह लेलुणा कवालेणं, हंता हंता बहवे कंदिंसु ॥ १० ॥

तत्र ग्रामादेर्बहिर्व्यवस्थितः पूर्वं हतो हतपूर्वः । केन दण्डेनाथवा मुष्टिनाऽथवा कुन्तादिफलेनाथवा लेष्टुना कपालेन घटकर्परादिना हत्वा हत्वा बहवोऽनार्याश्चक्रन्दुः पश्यत यूयं किम्भूतोऽयमित्येवं कलकलं चक्रुः । किञ्च ।

मंसूणि छिन्नपुव्वाइं, उट्ठंभिया एगदा कायं ।
परीसहाइं लुंचिंसु, अहवा पंसुणा उवकरिंसु ॥ ११ ॥

मांसानि च तत्र भगवतश्छिन्नपूर्वाणि एकदा कायमवष्टभ्याक्रम्य नानाप्रकाराः प्रतिकूलपरीषहाश्च भगवन्तमलुञ्चिषुरथवा पांशुना अवकीर्णवन्त इति । किञ्च

उच्चालइय णिहणिंसु, अहवा आसणाउ खलइंसु ।
वोसट्ठकाए पणयासी, दुक्खसहे भगवं अपडिन्ने ॥ १२ ॥

भगवन्तमूर्ध्वमुत्क्षिप्य भूमौ निहतवन्तः क्षिप्तवन्तोऽथवाऽऽसनात् गोदोहिकोत्कुटुकासनवीरासनादिकात् स्खलितवन्तो निपातितवन्तो भगवांस्तु पुनर्व्युत्सृष्टकायः परीषहोपसर्गजनितं दुःखं सहत इति दुःखसहो भगवान् नास्य दुःखप्रतिविधित्सा प्रतिज्ञा विद्यत इति अप्रतिज्ञः । कथं दुःखसहो भगवान् इत्येतद्दृष्टान्तद्वारेण दर्शयितुमाह ।

सूरो संगामसीसे वा, संवुडे तत्थ से महावीरे ।
पडिसेवमाणे फरुसाइं, अचले भगवं रीइत्था ॥ १३ ॥

यथा हि संग्रामशिरसि शूरोऽक्षोभ्य परैः कुन्तादिभिर्भिद्यमानोऽपि वर्म्मणा संवृताङ्गो न भङ्गमुपयातीत्येव स भगवान्महावीरस्तत्र लाढादिजनपदे परीषहानीकतुद्यमानोऽपि प्रतिसेवमानश्च परुषान् दुःखविशेषान् मेरुरिवाचलो निष्प्रकम्पो धृत्या संभृताङ्गो भगवान् रीयते स्म ज्ञानदर्शनचारित्रात्मको मोक्षाध्वनि पराक्रमते स्मेति । उद्देशकार्थमुपसंजिहीर्षुराह ॥

एस विही अणुक्कंतो, माहणेण मईमया ।
बहुसो अपडिसेणं, भगवता एव रीयंति त्तिबेमि ॥१४॥

"एसविही" इत्यादि पूर्ववत् उपधानश्रुताध्ययनस्य तृतीयोद्देशकः परिसमाप्त इति उक्तस्तृतीयोद्देशकः । सांप्रतं चतुर्थ आरभ्यते । अस्य चायमभिसंबन्धः । इहानन्तरोद्देशके भगवतः परीषहोपसर्गातिसहनं प्रतिपादितं तदिहापि रोगातङ्कपीडा चिकित्साव्युदासेन सम्यगधिसहते तदुत्पत्तौ च नितरां तपश्चरणायोद्यच्छतीत्येतत्प्रतिपाद्यते तदनेन संबन्धेनायातस्यास्योद्देशकस्यादिसूत्रम् ।

ओमोदरियं वा एइ त-अपुट्ठे वि भगवं रोगेहिं ।
पुट्ठो विसे अपुट्ठो वा से, णो सेसाऽज्जति ते इत्थं ॥१॥

अपि शीतोष्णदंशमशकाक्रोशताडनाद्याः शक्याः परीषहाः सोढुं न पुनरवमौदरता भगवांस्तु पुना रोगैरस्पृष्टोऽपि वातादिक्षोभभावेऽप्यवमौदर्यं न्यूनोदरता शक्नोति कर्तुं लोको हि रोगैरभिद्रुतः सस्तदुपशमनायावमोदरतां विधत्ते । भगवांस्तु तदभावेऽपि विधत्त इत्यपिशब्दार्थः । अथवा स्पृष्टोऽपि कासश्वासादिभिर्द्रव्यरोगैरपिशब्दात् स्पृष्टोऽप्यसद्वेदनीयादिभिर्द्रव्यरोगैर्न्यूनोदरतां करोति । अथ किं द्रव्यरोगातङ्का भगवतो न प्रादुष्यन्ति येन भावरोगैः स्पृष्ट इत्युक्तं तदुच्यते भगवतो हि न प्राकृतस्येव देहजाः कासश्वासादयो भवन्त्यागन्तुकास्तु शस्त्रप्रहारजा भवेयुरित्येतदेव दर्शयति । स च भगवान् स्पृष्टो वा श्वभक्षणादिभिरस्पृष्टो वा कासादिभिर्नासौ चिकित्सामभिलषति न द्रव्यौषधाद्युपयोगतः पीडोपशमं प्रार्थयतीत्येतदेव दर्शयितुमाह ।

संसोहणं च वमणं च, गायब्भंगणं च सिणाणं च ।
संबाहणं च ण से कप्पइ, दंतपक्खालणं परिणाय ॥२॥

गात्रस्य सम्यक् शोधनं विरेचनं निःश्रोतादिभिस्तथा वमनं मदनफलादिभिश्चशब्द उत्तरपदसमुच्चयार्थो गात्राभ्यङ्गनञ्च सहस्रपाकतैलादिभिः स्नानञ्चोद्वर्तनादिभिः संबाधनञ्च हस्तपादादिभिस्तस्य भगवतो न कल्पते । तथा सर्वमेव शरीरमशुच्यात्मकमित्येवं परिज्ञाय ज्ञात्वा दन्तकाष्ठादिभिर्दन्तप्रक्षालनञ्च न कल्पत इति । किञ्च ।

विरए य गामधम्मेहिं, रीयमाणे अबहुवाई ।
सिसिरंमि एगदा भगवं, छायाए ज्झाति आसी य ॥३॥

विरतो निवृत्तः केभ्यो ग्रामधर्मेभ्यो यथास्वमिन्द्रियाणां शब्दादिभ्यो विषयेभ्यो रीयते संयमानुष्ठाने पराक्रमते (माहणेत्ति) ब्राह्मणः किंभूतोऽसावबहुवादी सहृद् व्याकरणभावात् बहुशब्दोपादानमन्यथा ह्यवादीत्येव सूत्रात्तथैकदा शिशिरसमये स भगवान् छायायां धर्म्मशुक्लध्यानध्यायीआसीदिति । किञ्च

आयावइ य गिम्हाणं, अच्छति उक्कुडुए अभितावे ।
अह जावइ त्थ लूहेणं, ओयणमंथुकुम्मासेणं ॥ ४ ॥

सुब्व्यत्ययेन सप्तम्यर्थे षष्ठी । ग्रीष्मेष्वातापयति कथमिति तिष्ठत्युत्कुटुकासनोऽभितापं तापाभिमुखमिति । अथानन्तर्ये धर्म्माधारं देहं यापयति स्म रूक्षेण स्नेहरहितेन केन ओदनमन्थुकुल्माषेण ओदनञ्च कोद्रवौदनादि मन्थु बदरचूर्णादिकं कुल्माषाश्च मासविशेषाः पर्वोत्तरापथे धान्यविशेषभूताः पर्युषितमाषा वा सिद्धमाषा वा ओदनमन्थुकुल्माषमिति समाहारद्वन्द्वः । तेनात्मानं यापयतीति संबन्धः इत्येतदेव कालावधिविशेषणतो दर्शयितुमाह ॥

एयाणि तिण्णि पडिसेवे, अट्ठमासे अज्जावए भगवं ।
अपि इत्थं एगया भगवं, अद्धमासं अदुवा मासं पि ॥५॥

एतान्योदनादीन्यनन्तरोक्तानि प्रतिसेवते तानि च समाहारद्वन्द्वेन तिरोहितावयवसमुदायप्रधानेन निर्देशात्कस्यचिन्मन्दबुद्धेः स्यादारेका यथा त्रीण्यपि समुदितानि प्रतिसेवत इत्यतस्तद्व्युदासाय त्रीणीत्यनया सख्यया निर्देश इति त्रीणि समस्तानि व्यस्तानि वा यथालाभं प्रतिसेवित इति । कियन्तं कालमिति दर्शयत्यष्टौ मासानृतुबद्धसंज्ञकानात्मानमयापयद्वर्तितवान् भगवानिति । तथा पानमप्यर्द्धमासं भगवन्नपीतवानपि च ॥

वि साहिए दुवे मासे, छ प्पि मासे अदुवा विहरित्था ।
राउवरायं अपडिन्ने, अन्ने गिलायते गया भुंजे ॥ ६ ॥

मासद्वयमपि साधिकमथवा षडपि मासान् साधिकान् भगवान् पानकमपीत्वाऽपि रात्रोपरात्रमित्यहर्निशं विहृतवान् । किंभूतोऽप्रतिज्ञः पानाद्युपगमरहित इत्यर्थस्तथा (अन्नेगिलायंति) पर्युषितं तदेकदा भुक्तवानिति । किञ्च ।

अदुवा अट्ठमेण दसमेणं, छट्ठेणमेगया भुंजे ।
दुवालसमेण एगया भुंजे, पेहमाणे समाहिं अपडिन्ने ॥७॥

षष्ठेनैकदा भुङ्क्ते तथा नामैकस्मिन्नहन्येकभक्तं विधाय पुनर्दिनद्वयमभुक्त्वा चतुर्थेऽहन्येकभक्तमपि विधत्ते ततश्चाद्यन्तयोरेकभक्तदिनयोर्भक्तद्वयं मध्यदिवसयोश्च भक्तचतुष्टयमित्येवं षण्णां भक्तानां परित्यागात् षष्ठं भवत्येवं दिनादिवृद्ध्याऽष्टमाद्यायोज्यमिति अथवा अष्टमेन दशमेनाथवा द्वादशमेनैकदा कदाचिद् भुक्तवान् समाधिं शरीरसमाधानं प्रेक्षमाणः पर्यालोचयन् पुनर्भगवतः कथञ्चिद्दौर्म्मनस्यमुत्पद्यते । तथा अप्रतिज्ञो ऽनिदान इति । किञ्च ।

णच्चा से महावीरे, णावि य पावगं सयमकासी ।
अण्णेहिं वि ण कारित्था, कीरंतं पि णाणुजाणित्था ॥८॥

ज्ञात्वा हेयोपादेयं स महावीरः कर्म्मप्रेरणसहिष्णुर्नापि च पापकर्म्म स्वयमकार्षीन्न चान्यैरकुर्वन्न च क्रियमाणमपरैरनुज्ञातवानिति । किञ्च ।

गामं पविस्स णगरं वा, घासमेसे कडं परट्ठाए ।
सुविसुद्धमेसिया भगवं, आयतजोगताए सेवित्था ९ ॥

ग्रामं नगरं वा प्रविश्य भगवान् ग्रासमन्वेषयेत्परार्थं यत् कृतमित्युद्गमदोषरहितं तथा सुविशुद्धमुत्पादनादोषरहितं तथैषणादोषपरिहारेणैषित्वाऽन्वेष्य भगवानायतः सयतो योगो मनोवाक्कायलक्षण आयतश्चासौ योगश्चायतयोगो ज्ञानचतुष्टयेन सम्यग्योगप्रणिधानमायतयोगस्य भाव आयतयोगता तया सम्यगाहारशुद्ध्या ग्रासैषणा दोषपरिहारेण सेवितवानिति ।

अदुवा य सा दिगिंछित्ता, जे अण्णे रसेसिणो सत्ता ।
घासेसणाए चिट्ठंति, सययं णिवतिते य पेहाए ॥१०॥

अथ भिक्षां पर्यटतो भगवतः पथि वायसा काका ( दिगिंच्छि-त्ति ) बुभुक्षा तया आर्त्ता ये चान्ये रसैषिणः पानार्थिनः कपोत-पारावतादयः सत्वाः । तथा ग्रासैषणार्थमन्नेषणार्थञ्च ये तिष्ठ-न्ति तान् सततमनवरतं निपतितान् भूमौ प्रेक्ष्य दृष्ट्वा तेषां वृ-त्तिव्यवच्छेदं वर्जयन् मन्दमाहारार्थी पराक्रमते । किञ्च ॥

अदु माहणं च समणं वा, गामपिंडोलगं च अतिहिं वा ।

सोवागमूसियारिं वा, कुकुरं वा विट्ठियं वा पुरओ ॥११॥

वित्तिच्छेदं वज्जतो, तेसप्पत्तियं परिहारंतो ।

मंदं परिक्कमे भगवं, अहिंसमाणो घासमेसित्था ॥ १२॥

अथ ब्राह्मणं लाभार्थमुपस्थितं दृष्ट्वा तथा श्रमणं शाक्याजीव-कपरिव्राट्तापसनिर्ग्रन्थानामन्यतमं ग्रामपिण्डोलकः इति भि-क्षयोदरभरणार्थं ग्राममाश्रितस्तुन्दपरिमृजो द्रमक इति तथाऽति-थिं वा आगन्तुकं तथा श्वपाकं चाण्डालं मार्जारं वा कुक्करं चाऽ-पि श्वानं विविधं स्थितं पुरतोऽग्रतः समुपलभ्य तेषां वृत्तिच्छेदं वर्जयन्मनसो दुष्प्रणिधानञ्च वर्जयन्मन्दमनास्तेषां त्रासमकुर्व-न् भगवान् पराक्रमते । तथाऽपरांश्च कुन्थुकादीन् जन्तून् अहिं-सन् ग्रासमन्वेषितवानिति । किञ्च ।

अविसुइयं च सुक्कं वा, सीयपिंडं पुराणकुम्मासं ।

अदु वक्कसं पुलागं वा, लद्धे पिंडे अलद्धए दविए ॥१३॥

" सूइयति " दध्यादिना भक्तमार्द्रीकृतमपि तथाभूतं शुष्कं वा वल्लचनकादि शीतपिण्डं वा पर्युषितभक्तं तथा पुराणं कु-ल्माषं वा बहुदिवससिद्धस्थितकुल्माषं ( वक्कसति ) चिरन्त-नधान्यौदनं यदि वा पुरातनं सत् कुपिण्डं बहुदिवससम्भृत-गोरसगोधूममण्डकञ्चेति तथा पुलाकं जवनिष्पादितं तदेव-भूतं पिण्डमवाप्य रागद्वेषविरहाद्द्रविको भगवांस्तथाऽन्य-स्मिन्नपि पिण्डे लब्धे अलब्धे वा द्रविक एव भगवानिति । तथा हि लब्धे पर्याप्ते शोभने वा नोत्कर्षं याति नाप्यलब्धे अपर्याप्ते अशोभने वात्मानमाहारं दातारं वा जुगुप्सति । किञ्च ॥

अवि झाति से महावीरे, आसणत्थे अकुक्कुए झाणं ।

उड्ढं अहे तिरियं च, लोए झायती समाहिमपडिन्ने ॥१४॥

तस्मिंस्तथाभूत आहारे लब्ध उपभुक्ते अलब्धे वाऽपि ध्या-यति स महावीरो दुष्प्रणिधानादिना नापध्यानं विधत्ते किम-वस्थो ध्यायतीति दर्शयत्यासनस्थ उत्कुटुकागोदोहिकावीरा-सनाद्यवस्थोऽकौत्कुचः ईषन्मुखविकारादिरहितो ध्यानं धर्म्म-शुक्लयोरन्यतरदारोहति किं पुनस्तत्र ध्येयं ध्यायतीति दर्श-यितुमाह । ऊर्द्ध्वमधस्तिर्यक् लोकस्य ये जीवपरमाण्वादिका भावा व्यवस्थितास्तान् द्रव्यपर्यायनित्यानित्यादिरूपतया ध्या-यति । तथा समाधिमन्तःकरणशुद्धिञ्च प्रेक्षमाणोऽप्रतिज्ञो ध्यायतीति । किञ्च ॥

अकसाई विगतगेहिय, सद्दरूवेसु अमुच्छिए झाए ।

छउमत्थो वि परक्कम-माणो ण पमायं सयं पि कुव्वित्था ॥१५॥

न कषायी तदुदयापादितभ्रुकुट्यादिकार्याभावात् । तथा वि-गता गृद्धिर्गार्द्ध्यं यस्यासौ विगतगृद्धिः तथा शब्दरूपादिष्वि-न्द्रियार्थेष्वमूर्च्छितो ध्यायति मनोऽनुकूलेषु न रागमुपयाति नापीतरेषु द्वेषवशगोऽभूदिति । तथा छद्मनि ज्ञानदर्शनावरणमो-हनीयान्तरायात्मके तिष्ठतीति छद्मस्थ इत्येवं भूतोऽपि विवि-धमनेकप्रकारं सदनुष्ठाने पराक्रममाणो न प्रमादं कषायादिकं सकृदपि कृतवानिति । किञ्च ।

सयमेव अभिसमागम्म, आयय जोगमायसोहीए ।

अभिनिव्वुडे अमाइल्ले, आवकहं भगवं समितासी ॥१६॥

स्वयमेवात्मना तत्वमभिसमागत्य विदितसंसारस्वभावः स्वयं बुद्धः सन् तीर्थप्रवर्त्तनायोद्यतवांस्तथा चोक्तम् । 'आदित्याद्यैर्वि-बुधगणैः स्म विस्मरन्त्यां त्रिलोक्या-मास्कन्दन्त पदमनुपमं य-च्छिवत्वामुवाच । तीर्थं नाथालघुभवभयच्छेदि तूर्णं विधत्स्वे त्ये-तद्वाक्यं त्वदवगतये नाकिमुख्यान्नियोग' इत्यादि कथं तीर्थप्रव-र्त्तनायोद्यत इति दर्शयत्यात्मशुद्ध्या कर्म्मक्षयोपशमलक्षणया आयतयोगं सुप्रणिहितमनोवाक्कायात्मकं विधाय विषयकषाया-द्युपशमादिभिर्निर्वृतः शीतीभूतः तथा ऽमायावी मायारहित उप-लक्षणार्थत्वादस्याऽक्रोधाद्यपि द्रष्टव्यं यावत्कथमिति यावज्जीवं भगवान् पञ्चभिः समितिभिः समितस्तथा तिसृभिर्गुप्तिभिर्गु-प्तश्चासीदिति । श्रुतस्कन्धाध्ययनोद्देशकार्थमुपसंजिहीर्षुराह ।

एस विही अणुक्कंते, माहणेणं मईमया ।

बहुसो अपडिन्नेणं, भगवया एवं रीयंते ति बेमि ॥

ओहाणं सुयं सम्मत्तं ॥

एषोऽनन्तरोक्तः शस्त्रपरिज्ञादेरारभ्य योऽभिहितः सोऽनु-क्रान्तोऽनुष्ठित आसेवनापरिज्ञया सेवितः केन श्रीवर्द्धमानस्वा-मिना मतिमता ज्ञानचतुष्टयान्वितेन बहुशोऽनेकशोऽप्रतिज्ञेना-निदानेन भगवतैश्वर्यादिगुणोपेतेनातोऽपरोऽपि मुमुक्षुरनेनैव भगवदाचीर्णेन मोक्षप्रगुणेन यथा आत्महितमाचरन् रीयते परा-क्रमते इतिरधिकारपरिसमाप्तौ ब्रवीमीति सुधर्म्मस्वामी जम्बू-स्वामिने कथयति सोऽहं ब्रवीमि येन मया भगवद्वदनारविन्दा-दर्थजातं निर्यातमवधारितमिति उक्तोऽनुगमः । आचा० १ श्रु० ६ अ० ।

उवहाणाइयार-उपधानातिचार-पुं० आचाराम्लादितपसा योगविधानरूपस्योपधानस्याऽकरणे, जीत० ॥

उवहार-उपहार-पु० उप-हृ-घञ्-उपढौकने, उपायने, कर्म-णि घञ् । उपढौकनीये, उपायनद्रव्ये, उपगत हारम् अत्या० स० । हारसमीपस्थे तदुपशामके द्रव्ये, वाच० । उप-हृ-भावे घञ् । विस्तारणे, " पहासमुदओ वहारे हि सव्वओ चेया दीवयत " कल्प० । (मातृग्रामस्य मैथुनप्रतिज्ञयोपहारसम्पादनं मेहुणशब्दे)

उवहारणया-उपधारणता-स्त्री० अविच्युतिस्मृतिवासनाविष-यीकरणे, " सुयाए धम्माण उवहारणयाए अब्भुट्ठेयव्वं भवइ " स्था० ६ ठा० ॥

उवहारिय-उपधारित-त्रि० अवधारिते, सूत्र० २ श्रु० ।

उवहास-उपहास-पु० उप-हस्-भावे-घञ् । निन्दासूचके हासे, " अरे मए सम मा कारेसु उवहासं " पा० ।

उवहि-उपधि-पु० उपधीयते संगृह्यते इत्युपधिः । उच्यते हिरण्यादौ, भावतो मायायाम्, आचा० १ श्रु० ४ अ० १ उ० । सूत्र० । उपधीयते ढौक्यते दुर्गतिं प्रत्यात्मा येनासावुपधिः मायायाम्, अष्टप्रकारे वा कर्मणि, सूत्र० १ श्रु० २ अ० । प्रश्न० । स० । छद्मे, अमर० । उप-धा भावे-कि-अन्यस्यान्यथास्य वस्तु-नोऽन्यथाप्रकाशरूपे, व्यापारे आधारे-कि रथचक्रे, हेम० । उप-धीयते येनाऽसावुपधिः । वञ्चनीयसमीपगमनहेतौ भावे, भ० १२ श० ५ उ० । उपधिरुपसामीप्येनान्तर्यान्तरम् । द० ३ अ० । उपधी-यते जीवतो दुर्गतौ स्थाप्यते ऽनेनायदनापादिनेत्युपधिः । आतु० । उप सामीप्येन संयम उपानि पोषयति चेत्युपधिः । ध० ३ अ० ।

उपदधानीत्युपधिः । वस्त्रपात्राद्यनेकविधे परिग्रहे, द० १ अ० प्रश्न० । स्था० । कल्पादौ, ध० ३ अ० । स० । प्रज्ञा० । स्था० ।

( १ ) उपधेर्भेदाः ।
( २ ) भेदेन सविस्तरतः प्रतिपादनम् ।
( ३ ) द्वारसंग्रहः ।
( ४ ) जिनकल्पिकानां स्थविरकल्पिकानां चोपधिः ।
( ५ ) जिनकल्पिकानां ( स्थविरकल्पिकानां ) गच्छवासिनां चोपधेरुत्कृष्टविभागप्रमाणम् ।
( ६ ) आर्यिकाणामुपधिप्रमाणम् ।
( ७ ) औपग्रहिकोपधेरुत्कृष्टादिभेदाः ।
( ८ ) औपग्रहिकोपधयः ।
( ९ ) उपधिन्यूनाधिक्ये प्रायश्चित्तम् ।
( १० ) प्रथमसमवसरणे उपधिग्रहणम् ।
( ११ ) प्रथमं प्रव्रजत उपधिः ।
( १२ ) प्रव्रज्यां गृह्णन्त्या निर्ग्रन्थ्या उपधिः ।
( १३ ) रात्रौ विकाले चोपधिग्रहणम् ।
( १४ ) भिक्षणाय गतस्य भिक्षोरुपनिमन्त्रणा ।
( १५ ) भिक्षार्थं गतस्योपकरणपतने विधिः ।
( १६ ) स्थविराणां ग्रहणयोग्या उपधयः ।
( १७ ) निर्ग्रन्थीस्य उपकरणदाने निर्ग्रन्थीनामागमनपथे उपकरणानि स्थापयितव्यानि ।
( १८ ) पात्रवन्धादिप्रमाणं, उपधिविषयोऽवग्रहः, तीर्थकृतां सोपधित्वं, पादप्रोञ्छनं याचित्वा प्रत्यर्पणम्, उपधीनां धावनं, परिष्ठापनं, प्रत्युपेक्षणं च, प्रलम्बग्रहणे क उपधिर्ग्राह्य इत्यादि स्वस्वस्थाने ।
( १९ ) उपकरणप्रयोजनं विहारशब्दे ऋतुबद्धे वस्त्रग्रहणं वस्त्रयाचनविधिश्च वत्थशब्दे भिक्षाचर्यायां क उपधिर्नेतव्य इत्येषणा विहारादिशब्देषु उपधेरवश्यकरणीयत्वं बोटियशब्दे मध्यमतीर्थकृतां महामूल्यानि वासः आदीनीत्यचेलशब्दे धर्मोपकरणे परिग्रहदोषो नेति परिग्गहशब्दे विलोकनीयम् )

( १ ) त्रिविध उपधिः ।

तिविहा उवही पएणत्ता ? तंजहा कम्मोवही सरीरोवही बाहिरभंडमत्तोवही । एवं असुरकुमाराणं भाणियव्वं । एवं एगिंदिय नेरइयवज्जं जाव वेमाणियाणं ॥

कर्म एवोपधिः कर्मोपधिः एवं शारीरोपधिः । बाह्यं शरीरबहिर्भूतं भाण्डानि च भाजनानि मृण्मयानि मात्राणि मात्रायुक्तानि कांस्यादिभाजनानि भोजनोपकरणमित्यर्थः । भाण्डमात्राणि तान्येवोपधिर्भाण्डमात्रोपधिरथवा भाण्डं वस्त्राभरणादि तदेव मात्रा परिच्छेदः सैवोपधिरिति ततो बाह्यशब्दस्य कर्मधारय इति चतुर्विंशतिदण्डकचिन्तायामसुरादीनां त्रयोऽपि वाच्याः । नारकैकेन्द्रियवर्जास्तेषामुपकरणस्याभावात् द्वीन्द्रियादीनामुपकरणं दृश्यते । एवं केषाञ्चिदिति । अत एवाह । एवमित्यादि ।

अहवा तिविहा उवही पएणत्ता ? तंजहा सचित्ते अचित्ते मीसए । एवं नेरइयाणं निरंतरं जाव वेमाणियाणं ॥

( अहवेत्यादि । सचित्तोपधिर्यथा शैलभाजनमचित्तोपधिर्वस्त्रादि मिश्रः परिणतप्रायः शैलभाजनमिति । दण्डकचिन्ता सुगमा । नवरं सचित्तोपधिर्नारकाणां शरीरमचेतनं उत्पत्तिस्थानमिश्रं शरीरमेवोच्छ्वासादिपुद्गलयुक्तं तेषां सचेतनाचेतनत्वेन मिश्रत्वस्य विवक्षणादिति । एवमेव शेषाणामप्यूह्यमिति । स्था० ३ ठा० । नि० चू० । तत्वभेदपर्यायैर्व्याख्येति पर्यायान् प्रतिपादयन्नाह । "उवहीउवग्गहे स-ग्गहे य तह य वग्गहे चेव । भंडग उवगरणे वि य, करणे वि य हुंति एगट्ठा " सर्वेषां व्याख्यात्रैवोपरि [ ओघनिर्युक्तौ ] द्रष्टव्या ॥

[ २ ] इदानीं भेदतः प्रतिपादयन्नाह ।

ओहे उवग्गहम्मि य, दुविहो उवही उ होइ नायव्वो ।
एक्केक्को वि य दुविहो, गणणापमाणओ चेव ॥

उपधिर्द्विविधः ओघोपधिः उपग्रहोपधिश्चेति । एवं द्विविधो विज्ञेयः । इदानीं स एवैकैको द्विविधः कथं गणनाप्रमाणेन प्रमाणतश्च तत एतदुक्तं भवति ओघोपधेः गणनाप्रमाणेन तथा प्रमाणप्रमाणेन च द्वैविध्यम् । अवग्रहोपधेरपि ग्रहणाप्रमाणेन प्रमाणप्रमाणेन भवेद् द्वैविध्यम् । तत्र ओघोपधिर्नित्यमेव यो गृह्यते अवग्रहोपधिस्तु कारणे आपन्ने संयमार्थयोर्गृह्यते सोऽवग्रहोपधिरिति । ओघोपधिगणनाप्रमाणमेकद्व्यादिभेदं वक्तव्यं प्रमाणप्रमाणं च वक्तव्यं दीर्घपृथुतया । तथा अवग्रहोपधेरपि एकद्व्यादिप्रमाणप्रमाणप्रमाणं च दीर्घपृथुत्वद्वारेण वक्तव्यमिति ( ओ० ) ( ओहोवधेत्ति ) ओह संक्षेपः स्तोकः लिङ्गकारकोऽवश्यं ग्राह्यः । "उवग्गहोवही" उत्पत्तिकं कारणमपेक्ष्य संयमोपकरणं इति गृह्यते एस समेवतो दुविधो वही । उवग्गहिओ तिविधो जहएणो मज्झिमो उक्कोसो उवहीगणप्पमाणेण पमाणपमाणेण य दुत्तो भवति इमं गणणप्पमाणं ।

बारस चोद्दस पणवीस, उ य ओघोवधी मुणेयव्वो ।
जिणकप्पे थेराण य, अज्जाणं चेव कप्पम्मि ॥

बारसविहो चोद्दसविधो पणवीसविहो ओहोवही एयमं गणप्पमाणं यथासंख्यं जिणाण थेराण अज्जाए य । कल्पशब्दोऽपि प्रत्येकं योज्यः ।

ओवोवधी जिणाणं, थेराणोहे उवग्गहो चेव ।
ओहोवधिमज्जाणं, उवग्गहिओ अणा तव्वो ॥

जिणाण एगविहो ओहोवधी भवति थेराण अज्जाण य ओहिओ उवग्गहिओ य दुविधो भवति । नि० चू० २ उ० । प्रव० जीत० ।

(३) द्वारसंग्रहः अथ प्रमाणादिस्वरूपनिरूपणाय द्वारगाथामाह

दव्वप्पमाणअइरे-गहणे परिकम्मविभूसणामुच्छाए ।
उवहिस्स पमाणजिणं, थेरं अहक्कमं वोच्छं ॥

इह द्रव्यं वस्त्रं तस्य प्रमाणं गणनया प्रमाणेन च द्विविधं वक्तव्यम् । अतिरिक्ते हीने वा वस्त्रे दोषा अभिधातव्याः परिकर्मणं सीवनमित्येकोऽर्थः तन्निरूपयितव्यम् । ( विभूसणयत्ति ) विभूषणार्थं यदि वस्त्रं क्षालयति वा रञ्जति वा घर्षति वा सप्रमार्ष्टि वा तदा प्रायश्चित्तं भवतीति कर्त्तव्यम् । मूर्च्छया यदि वस्त्रं न परिभुङ्क्ते तदाऽपि प्रायश्चित्तं वक्तव्यम् । तत्र प्रथमद्वारे तावदुपधेः प्रमाणं जिनकल्पिकस्थविरकल्पिकानाङ्गीकृत्य यथाक्रममह वक्ष्ये । प्रतिज्ञातमेव निर्वाहयितुं जिनकल्पिकानामुपधिगणनां प्रमाणतो निरूपयति । वृ० ३ उ० ।

( ४ ) जिनकल्पिकानामुपधिमाह ।

जिणकप्पिया उ दुविधा, पाणीपाता पडिग्गहधरा य ।
पाउरणमपाउरणा, एक्केका ते भवे दुविधा ॥

जिणकप्पिया दुविधा भवन्ति पाणिपात्रभोजिनः प्रतिग्रहधा-

रिणश्च । एकेका दुविधा दट्ठव्वा सपाउरणा इयरे य जिणकप्पे उवहीविभागो इमो ॥

दुगतिगचउक्कं, पणगं णवदसएगदसगं ।
एते अट्ठ विकप्पा, जिणकप्पे होंति उवहिस्स ॥

पाणिपडिग्गाहियस्स पाउरणवज्जियस्स जहण्णोवही दुविधो रयहरण मुहपोत्तिया य । तस्स य सपाउरणस्स एगकप्पग्गहणे दसविधो दुकप्पग्गहणे एक्कारसविधो तिकप्पग्गहणे पचविहो पडिग्गहधारिस्स अपाउरणस्स मुहपोत्तियरओहरणपादणिजोगसहितो णवविहो जहण्णओ तस्स कप्पग्गहणे दसविधो दुकप्पग्गहणे एक्कारसविधो तिकप्पग्गहणे वारसविधो य उट्ठं कंठ ॥

अहवा दुगं च णवगं, उवकरणे होंति दोसि तु विकप्पा ।
पाउरणवज्जिताणं, विसुद्धजिणकप्पियाणं तु ॥

जे पाउरणवज्जिया ते विसुद्धजिणकप्पिया भवति तेसिं दुविध एव भवति दुविधो णवविधो वा । नि०चू०२उ० । पं० भा० ।

अथ विशुद्धजिनकल्पिकानामाह ।

पत्तं पत्तावंधो, पायठवणं च पायकेसरिया ।
पडलाइ रइत्ताणं, गोच्छओ पायनिज्जोगे ॥
तिन्नेव य पच्छागा, रयहरणं चेव होइ मुहपोत्ति ।
एसो दुवालसविहो, उवही जिणकप्पियाणं तु ॥

पात्र प्रतिग्रहपात्र वन्धो येन वस्त्रखण्डेन चतुरस्रेण पात्रकं धार्यते पात्रस्थापन कम्वलमयं तत्र पात्रकं स्थाप्यते पात्रकेसरिका यत्पात्र प्रतिपद्यन्ते । पटलकानि यानि भिक्षां पर्यटद्भिः पात्रोपरि स्थाप्यन्ते रजस्त्राणं पात्रवेष्टनक गोच्छक कम्वलमयो य पात्रकोपरि दीयते । एष सप्तविध पात्रनिर्योग पात्रपरिकरत्व उपकरणकलाप इत्यर्थ । तथा त्रय एव न चतु पञ्चप्रभृतय क एते इत्याह । प्रच्छादका प्रावरणरूपाः कल्पा । द्वौ सौत्रिकावेकश्चौर्णामय इत्यर्थ । रजोहरण प्रतीतम् । च समुच्चये । एव शब्दः पादपूरणे । मुखसंपोत्तिका प्रसिद्धा । एष द्वादशविध उपधिर्जिनकल्पिकानां मन्तव्य । तुशब्दो विशेषणे स चैतद्विशिनष्टि । जिनकल्पिका द्विविधा । पाणिपात्रा प्रतिग्रहधारिणश्च । पुनरेकैके द्विधा अप्रावरणा सप्रावरणाश्च । तत्राप्रावरणानां पाणिपात्राणि रजोहरणमुखवस्त्रिकारूपो द्विविध उपधि । सप्रावरणानां तु त्रिविधो वा चतुर्विधो वा पञ्चविधो वा । तत्र त्रिविधा रजोहरण मुखवस्त्रिका एक कल्प । सौत्रिक चतुर्विध स एवौर्णिक कल्पसहित पञ्चविध चतुर्विध । द्वितीय सौत्रिककल्पसहित प्रतिग्रहधारिणां प्रावरणवर्जिताना नवविध उपधि । तद्यथा पात्र १ पात्रकवन्ध २ पात्रस्थापन ३ पात्रकेसरिका ४ पटलकानि ५ रजस्त्राण ६ गोच्छक ७ रजोहरण ८ मुखवस्त्रिका ९ चेति । ये तु प्रावरणसहितास्तेषामत्रैव नवविधे एककल्पप्रक्षेपे दशविध । कल्पद्वयप्रक्षेपे एकादशभेदा कल्पत्रयप्रक्षेपे तु द्वादशविधस्तदेवमुन्यार्पतो जिनकल्पिकाना द्वादशविध उपधि सम्भवति । एष तुशब्दसूचितो विशेषणार्थ । एकग्रहणे तज्जातीयानां सर्वेषां ग्रहणमिति न्यायात् अन्येऽपि ये गच्छनिर्गतास्तेषा यथायोगमिदमेवोपकरणप्रमाणमवसातव्यम् ।

अथ स्थविरकल्पिकानङ्गीकृत्याह ।

एए चेव दुवालस—मत्तगअइरेगचोलपट्टो य ।
एसो उ चउदसविहो, उवही पुण थेरकप्पम्मि ॥

एत एव अनन्तरोक्ता द्वादशोपधिभेदा । अपर चातिरिक्तं मात्रकं चोलपट्टकश्च एष चतुर्दशविध उपधि स्थविरकल्पे भवति ।

अनन्तरोक्तमेवार्थमुपसंहरन्नाह ।

जिणा वारसरुवाइं, थेरा चउदसरूविणो ।
ओहेण उवहिमिच्छंति, अओ उड्ढं उवग्गहो ॥

जिना जिनकल्पिकाश्चोपकरणानां द्वादश रूपाणि धारयन्तीति शेष । स्थविरास्तु चतुर्दशरूपिण उपकरणचतुर्दशधारिण इत्यर्थ । एवमोघेन सामान्येनोपधिमिच्छन्ति तीर्थकरा ओघोपधिमित्यर्थ । अत ऊर्ध्वमतिरिक्तो दण्डकचित्रिकादिस्थविरकल्पिकानां सर्वोऽप्युपग्रहोपधिर्मन्तव्य ।

(५) अथ जिनकल्पिकानामुपधेरुत्कृष्टादिविभागं प्रमाणयन्नाह ।

चत्तारि उक्कोसा मज्झिम—जहन्नगा वि चत्तारि ।
कप्पाणं तु पमाणं, संडासो दो कुरंटओ ॥

जिनकल्पिकानां चत्वार्युपकरणानि उक्तानि भवन्ति त्रय कल्पा प्रतिग्रहश्चेति मध्यमजघन्यान्यपि प्रत्येक चत्वारि । तत्र पटलकानि रजस्त्राण रजोहरण पात्रकवन्धश्चेति मध्यमानि । मुखवस्त्रिका पात्रकेसरिका पात्रस्थापन गोच्छकश्चेति जघन्यानि । एतेषां च ये कल्पास्तेषां सन्दंशक कुरण्टकौ द्वौ त्रिहस्तौ दीर्घत्वेन प्रमाणं भवति विस्तरतस्तु सर्व्व हस्तमेकम् । अथवा ॥

अन्नो वि य आएसो, संडासो सत्थिएण वत्ते य ।
जं खंभियं दहुंतं, छम्मासे दुब्बलं इयरं ॥

अन्यो वा देश प्रकारादेश इत्यादि सदश स्वस्तिकश्च । तत्र जिनकल्पिकस्योत्कुटुकनिविष्टस्य जातु सदशकादारभ्य पुर पृष्ठ च छादयित्वा स्कन्धोपरि यावता न प्राप्यते एतावत्तदीयकल्पस्य दैर्घ्यप्रमाणम् । अय च सदशक उच्यते । तथा तस्यैव कल्पस्य द्वावपि पूर्वोक्तकर्णौ हस्ताभ्या गृहीत्वा द्वे अपि बाहुशीर्षे यावत्प्राप्येते तद्यथा दक्षिणेन हस्तेन वाम बाहुशीर्षं वामेन दक्षिणमेव द्वयोरपि कक्षाचिकयोर्हृदये यो विन्यासशेष स स्वस्तिकाकार इति कृत्वा स्वस्तिक उच्यते । एतत्पृथुत्वप्रमाणयुक्त च यदि च तत्परिभुज्यमान षण्मासान् यावद् ध्रियते तदादेशं दृढमिति ज्ञात्वा गृह्णाति इतरथाम षण्मासानपि यावन्न निर्वाहकमं त दुर्बलमिति कृत्वा न गृह्णाति । अथ किमर्थमसौ स्वस्तिकं करोतीत्याह ।

संडासछिंदेण हिमादिएत्ति, गुत्ता अगुत्ता वि य तस्स सेज्जा ।
हत्थेहि सामो छिवडेहि घेत्तुं, वत्थस्स कोणेमुवईव जाति ॥

तस्य जिनकल्पिकस्य शय्यागुप्ता अगुप्ता वा भवेत् । तत संदंशकच्छिद्रेण हिमादिकं शीतवातसर्पादिकमेत्यागच्छति । ततस्तस्य रक्षणार्थं स्वस्तिकहस्ताभ्यां स्वस्तिकाकारनिवेशिताभ्यां द्वावपि वस्त्रस्य कोणौ गृहीत्वा उत्कुटुक एव स स्वपिति वा ध्यायति वा । तत्र प्रायेण धर्मजागरिकया जागर्ति परं केचिदाचार्या ब्रुवते उत्कुटक एव तृतीययामे क्षणमात्र स्वपितीति । वृ० ३ उ० प्रव० । ध० । नि०चू० । इदानीं स जिनकल्पिकोपधि स्थविरकल्पिकोपधिश्च सर्व एव नवविधो भवति तस्य च मध्ये कानिचिदुत्कृष्टानि अङ्गानि कानिचित् जघन्यानि कानिचित् मध्यमानि । तत्र जिनकल्पिकानां तावत्प्रतिपादनायाह ।

तिन्नेव य पच्छागा, पडिग्गहो चेव होइ उक्कोसो ।
गुच्छगपत्तट्ठवणं, मुहणंतगकेसरिजहन्नो ॥ ७४ ॥

त्रय प्रच्छादककल्पा इत्यर्थ प्रतिग्रहश्चेति एष जिनकल्पिकादिमध्ये उत्कृष्ट उपधि प्रधानश्चतुर्विधोऽपि एतान्येव प्रधानानि

अज्ञानीत्यर्थ । गोच्छक· पात्रकस्थापन ( मुहणन्तक )मुखवस्त्रिका पात्रमुखवस्त्रिका चेत्येप जिनकल्पिकावधिमध्ये जघन्य । अप्रधानश्चतुर्विध उपधिरिति । पात्रकबन्धपटलानि रजस्त्राणो रजोहरणमित्येप चतुर्विधोऽप्यवधिर्जिनकल्पिकावधिमध्ये मध्यमोपधिना प्रधानेनाप्यप्रधान इति । उक्तो जिनकल्पिकानामुत्कृष्टजघन्यमध्यमोऽवधिरिति । श्रोघ० । गच्छवासिनां कल्पप्रमाणमाह ।

कप्पा आयपमाणा, अड्ढाइज्जा उ वित्थडा हत्था ।
एवं मज्झिममाणं, उक्कोसं होंति चत्तारि ॥

कल्पा आत्मप्रमाणा सार्द्धहस्तत्रयप्रमाणायामा अर्द्धतृता यावद् हस्ता विस्तृता· पृथुला विधेया· । एतन्मध्यमं मानं प्रमाणं भवति । उत्कर्पतो दैर्घ्येण चत्वारो हस्ता· । एतदादेशद्वयं मन्तव्यम् ।

अत्रैव कारणमाह ।

संकुचिय तरुण आय−प्पमाणसुयणे न सीयसंफासे ।
दुहओ पेल्लणथेरे, थेणुव्विय पाणाइरक्खी य ॥

यस्तरुणो बलवान् सकुचितपाद स्वप्तु शक्नोति तस्य तथा स्वयमेव शीतस्पर्शो न भवति अतस्तस्यात्मप्रमाणाकल्पोऽनुज्ञात । यस्तु स्थविरो वयस्यो वृद्ध स क्षीणबलत्वान्न शक्नोति सकुचितपाद· शयितुं अतस्तस्यानुग्रहार्थ दैर्घ्येण आत्मप्रमाणादूर्ध्व षरूङ्गुलानि विस्तरतोऽप्यर्द्धतृतीयहस्तप्रमाणादभ्यधिकानि परूङ्गुलानि विधीयन्ते एवं विधीयमाने गुणमुपदर्शयति (दुहओ पेल्लणत्ति ) शिर पादान्तलक्षणद्वयोरपि पार्श्वयोर्यत्कल्पस्य प्रेरणमाक्रमण तेन स्थविरस्य शीत न भवति । अनुचितोऽभावितशैक्ष इत्यर्थ । तस्यापि स्वप्नविधावनभिज्ञस्य कल्पप्रमाणमेव ज्ञातव्यम् । अपि च एवं प्राणिनां रक्षा कृता भवति न मण्डूकप्लुतया कीटिकादय· प्राणिन प्रविशन्तीति भाव । आदिशब्दाद्दीर्घजातीयादयोऽपि न प्रविशन्ति तेनात्मनोऽपि रक्षा कृता भवति । वृ० ३ उ० । ( पात्रकबन्धादीना प्रमाणनिरूपणमन्यत्र स्वस्वस्थाने)

इदानीं स्थविरकल्पिकानां प्रतिपादयति । तत्रापि प्रथमं ।

मध्यमावधिप्रतिपादयन्नाह ।

पडलाइ रयत्ताणं, पत्तगबंधो तहेव रयहरणं ।
मत्तो य पट्टगो वि य, पेवाणं छव्विहो नवरिं ॥ ७५ ॥

पटलानि रजस्त्राणं पात्रकबन्धश्च चोलपट्टकश्च रजोहरण मात्रक चेत्येप स्थविरावधिमध्ये परूविधो मध्यमावधिर्नोत्कृष्टो नापि जघन्य इति । पात्रकं प्रच्छादनकल्पत्रयम् । एप चतुर्विधोऽपि उत्कृष्ट प्रधान स्थविरकल्पिकावधिर्मध्ये पात्रस्थापनक पात्रकेसरिका गोच्छको मुखवस्त्रिका एप जघन्योऽवधि । स्थविरकल्पिकावधिर्मध्ये चतुर्विधोऽपि । श्रो० । इह स्थविरकल्पिकानां त्रय· प्रच्छादका भवन्तीति पूर्वमुक्तं तदिदानीं द्रढयन्नाह ।

जो वि तिवत्थडुवत्थो, एगेण अावगो व संथरई ।
न हु ते विसंति पर, सव्वेण वि तिन्नि घेत्तव्वा ॥

योऽपि साधुस्त्रिवस्त्रो द्विवस्त्रो वा संस्तरति त्रिभिर्द्वाभ्यां वा कल्पैरित्यर्थ । मैत्रान् द्वौ वा कल्पान् परिभुञ्जान् योऽप्येकेन कल्पेन संस्तरति स एकमपि कल्प न गृह्णातु पर न हि ते स्वल्पतरवस्त्रा अचेलका वा परमन्यमधिकतरवस्त्र खिसन्ति खलु इति चेदुच्यते सर्वेणापि स्थविरकल्पकेन नत्र त्रय· कल्पा नियमाद् गृह्यं तत्या यद्यपि शीतपरीषहसहिष्णुतया कश्चिदेकेनापि केनापि कल्पेनाप्रावृत संस्तरति तथाऽपि भगवतामाज्ञामनुवर्तमान सोऽपि त्रीन कल्पान गृह्णाति किमर्थ पुनरीदृशी भगवतामाज्ञा उच्यते ।

अप्पं असंथरंतो, निवारिओ होइ तीहि सत्थेहिं ।
गिण्हति गुरू विदिन्ने, पगासपामिश्लेहणे सत्ता ॥

आत्मशरीर स शीतादिना संस्तरति त्रिभिर्वस्त्रैर्निवारितो भवति । तथा चात्र विशेषचूर्णिलिखितो भावार्थः "उस्सग्गेण तहेव पाउरियव्व जाहे न सथरइ ताहे एकं कप्पं पाउणइ जाहे तेण वि न संथरेज्जा ताहे विइयपि पाउणिज्जा । जइ नाम तहावि न संथरेज्जा ताहे तइयं पि पाउणिज्जा । जइ नाम तहवि न संथरेज्जा ताहे तिन्नि विच्छड्डेऊण बाहिं पडिमाए ठाए ताव अत्थइ जाव सीएण न सहइ वि तो पच्छा तम्मि निवेसइ । जइ तत्थ न संथरेज्जा ताहे अंतोपमिमं ठाइ । तत्थ झाणोवगओ चिट्ठइ जइ न संथरइ ताहे तम्मि चेव निवेसइ एव पि जइ न सथरे ताहे एक्क कप्पं गिण्हेज्जा जाहे तेण वि न संथरेइ ताहे विइयं ततो तइयं तत्थ से अईवसायं भवइ । एव अप्पा तिहिं वत्थेहिं निवारिओ हवइ त्ति " अथ तानि परिजीर्णानि तेन त्रिभि· शीतं निवारयितुं पार्यते तत आह । गुरुभिराचार्यैर्वितीर्णानि प्रकाशप्रत्युपेक्षणानि जीर्णत्वादचौरहरणं यानि सप्त वस्त्राणि उत्कृष्टतो गृह्णाति । इदमेव स्पष्टयति ।

तिन्नि कसिणे जहन्ने, पंच य दढदुब्बलाइं गेण्हे ।
आमन्नयपरिजुत्ताई, एयं उक्कोसग गहणं ॥

कृष्णानि नाम घनमसृणानि यैरन्तरित सविता न दृश्यते ईदृशानि त्रीणि वस्त्राणि जघन्यतो गृह्णीयात् । यानि तु दृढदुर्बलानि तानि पञ्च गृह्णीयात् । यानि परिजीर्णानि तानि सप्त एतदुत्कृष्टं ग्रहण मन्तव्यम् । वृ० ३ उ० ।

उवगरणं पि धारेज्जा, जेण न रागस्स होइ उप्पत्ती ।
लोगम्मि य परिवाओ, विहिणा य पमाणजुत्तं तु ॥६६॥

उपकरणमपि वस्त्रपात्रादि धारयेत्किंविशिष्टमित्याह । येन न रागस्य भवत्युत्पत्तिस्तदुत्कर्षादात्मना एव लोके च परिवाद· खिसा येन न भवति विधिनाऽव्ययवतया प्रत्युपेक्षणादिना धारयेत्प्रमाणयुक्तं च न न्यूनाधिकमिति गाथार्थः ( पं० व० ) अत्रेदमवधेयं स्थविरकल्पिकानां प्रच्छादकत्रिकादिधारणं यत्पूर्वमुक्तं तत· सामान्यापेक्षया विशेषा पेक्षया त्वधिकधारणेऽप्यदोष· । ध० ३ अधि० । कीदृशं पुनरुपधिं भिक्षुर्धारयतीत्याह ।

जिन्नं गणणाजुत्तं, पमाणाईगालधूमपरिसुद्धं ।
उवहिं धारइ भिक्खू, जो गणचित्तं न चिंतेइ ॥

भिन्नं नाम सदृशं सकलं वा यत्र भवति गणनायुक्त गणनाप्रमाणोपेत प्रमाणेन च यथोक्तदैर्घ्यविस्तरविषयमानेन युक्तमित्यनुवर्तते । तयाऽङ्गारधूम्या परि समन्तात् शुद्ध विरहितमेव विधमुपधिं स भिक्षुर्धारयेत् यो गणचिन्तां न चिन्तयति सामान्यसाधुरिति भाव· । यस्तु गणचिन्तकस्तस्य न प्रतिनियतमुपधिप्रमाणम् । तथा चाह ।

गणचिंतगस्स पत्तो, उक्कोसो मज्झिमो जहन्नो य ।
सव्वोवि य उवहो, उवग्गहकरो महाजणस्स ॥

गणचिन्तको गणावच्छेदकादिस्तत्प्राप्तो यावदूर्द्धमुत्कृष्टो मध्यमो जघन्यश्च । सर्वोऽप्यौघिक औपग्राहिकश्चोपधिर्महाजनस्योपग्रह करोति । इदमेव भावयति ।

आलंवणे विसुद्धे, दुगुणो चउगुणो वा वि ।
सव्वो वि होइ उवग्गह−करो महाजणस्स ॥

आलम्बन द्विधा द्रव्यतो गर्तादौ निमज्जतो रज्ज्वादि भावतः संसारगर्तायां निपततां ज्ञानादि इह पुनर्यत्र क्षेत्रे काले वा दुर्लभं वस्त्रं तदादिकमालम्ब्य गृह्यते तत्र विशुद्धे प्रशस्ते सति द्विगुणो वा चतुर्गुणो वा औपग्रहिकश्चोपधिः सर्वोऽपि महाजनस्य गच्छस्योपग्रहकरो भविष्यतीति कृत्वा गणचिन्तकस्य परिग्रहे भवतीति । गतं प्रमाणद्वारम् ।

( ६ ) आर्यिकाणामुपधिप्रमाणम् ।

पत्तं पत्ताबंधो, पायट्ठवणं च पायकेसरिया ।
पडिलाइं रयत्ताणं, गुच्छओ पायनिज्जोगो ॥
तिन्नेव य पच्छाया, रयहरणं चेव होइ मुहपोत्ती ।
तत्तो पमत्तए खलु, चोद्दसमे कमढए होंति ॥
उग्गहणंतगपट्टो, अद्धोरुअचलणिआ य बोधव्वा ।
अब्भिंतरबाहिणिय-सणी य तह कंचुए चेव ॥
ओकच्छिय वेगकच्छिय, संघाडी चेव खंधकरणी य ।
ओहोवधिम्मि एते, अज्जाणं पन्नवीसं तु ॥

पात्रकादित्रयोदशेऽपि करणानि साधूनामिव द्रष्टव्यानि । चतुर्दशं तु चोलपट्टकस्थाने तासां कमठकं भवति । तच्चाष्टकमयमेकैकं संयतीनां निजदेहप्रमाणेन विज्ञेयम् । तथा अवग्रहानन्तकं १५ पट्टम् १६ अर्द्धोरुकं १७ चलनिका च १८ बोधव्या । अभ्यन्तरनिवसनी १९ बहिर्निवसनी २० तथा कञ्चुकश्चैव २१ औपकक्षिकी २२ वैकक्षिकी २३ संघाटी २४ स्कन्धकरणी २५ एवमेतान्योघोपधौ आर्यिकाणां पञ्चविंशतिरुपकरणानि भवन्ति । अथैतान्येव विवृणोति ।

उग्गहणंतओ नावा, गुज्झदेसरक्खणट्ठाए ।
सो य पमाणो तणुओ, घणमसिणो देहमासज्ज ॥

इहावग्रह इति योनिद्वारस्य सामयिकी संज्ञा तस्यानन्तकं वस्त्रमवग्रहानन्तकं पुंस्त्वं प्राकृतत्वात् तच्च नौनिभं मध्यभागे विशालं पर्यन्तभागयोस्तु तनुकं गुह्यदेशरक्षार्थं क्रियते । तच्च गणनयैकं अन्तर्बीजपातसंरक्षणार्थं च घनं घनवस्त्रेण पुरुषसमानकर्कशस्पर्शपरिहरणार्थं च मसृणं मसृणवस्त्रेण क्रियते प्रमाणेन च देहं स्त्रीशरीरमासाद्य तद्विधीयते देहो हि कस्याश्चित्तनुः कस्याश्चित् स्थूलः । ततस्तदनुसारेण विधेयमित्यर्थः ।

पट्टो वि होइ एक्को, देहपमाणेण सो उ भइयव्वो ।
छंदंतोग्गहणंतं, कडिबद्धो मल्लकच्छो वा ॥

पट्टोऽपि गणनयैको भवति स च पर्यन्तभागवर्तिबन्धकबन्धयुक्तः पृथुत्वेन चतुरङ्गुलप्रमाणः समतिरिक्तो वा दैर्घ्येण तु स्त्रीकटीप्रमाणः स च देहप्रमाणेन भक्तव्यः पृथुलकटीभागाया दीर्घः संकीर्णकटीभागायास्तु ह्रस्व इत्यर्थः । स चावग्रहानन्तकमुभयान्तयोराच्छादयन् कटीबद्धः सन् मल्लकक्षावद्भायते ।

अद्धोरुगो उ दो वि, गिण्हिउं छादए कडीभागं ।
जाणुप्पमाणचलणी, असिव्विया लंखियाए व ॥

अर्द्धोरुकोऽपि तौ द्वावपि अवग्रहानन्तकपट्टावुपरिष्टाद् गृहीत्वा सर्वकटीभागमाच्छादयति । स च मल्लचलनाकृतिः केवलमुपरि ऊरुद्वये च कशाबद्धः चलनिकाऽप्येवमेव । नवरमधो जानुप्रमाणा अस्यूतलम्बिका परिधिर्भवति वंशाग्रनर्त्तकी चलनकशा मन्तव्या ।

अंतोनिवसणी पुण, लीणतरा जाव अद्धजंघातो ।
बाहिरखुल्लगपमाणा, कडी य दोरेण पडिबद्धा ॥

अन्तर्निवसनी पुनरुपरि कटीभागादारभ्याधोऽर्द्धजङ्घां यावद्भवति सा च परिधानकाले लीनतरा परिधीयते मा भूज्जनावृता जनोपहास्येति बहिर्निवसनी पुनरुपरि कटीभागादारभ्याधः खुल्लकप्रमाणा चरणगुल्फं यावदित्यर्थः कट्यां च दवरकेन प्रतिबद्धा इदमधः शरीरस्य षड्विधमुपकरणमुक्तम् । अथार्द्धकायोपयोगिकञ्चुकादिकं व्याख्याति ।

छादितअणुक्कुयिते उरोरुहे, कंचुओ असिव्वितओ ।
एमेव य उकच्छी, सा णवरं दाहिणे पासे ॥

दैर्घ्यमाश्रित्य स्वहस्तेनार्द्धतृतीयहस्तप्रमाणः पृथुत्वेन तु हस्तमानोऽसेवितः उभयतः कसाबद्धः कञ्चुकः क्रियते सः चोरोरुहौ छादयति किम्भूतौ च ह्युक्के चितौ श्लथौ गाढपरिधाने हि विविक्तविभागौ भवेताम् कक्षायाः समीपमुपकक्षं तत्र भवा औपकक्षिकी अध्यात्मादित्वाट्ठिकण्प्रत्ययः एवमेव च कञ्चुकवत्तस्या अपि स्वरूपं वक्तव्यं सा नवरं दक्षिणपार्श्वे समचतुरस्रा हस्तेन सार्द्धहस्तप्रमाणा उरो भागं पृष्ठं च प्रच्छादयन्ती वामस्कन्धे वामपार्श्वे च वीटकबद्धा परिधीयते ।

वेगच्छिया उ पट्टे, कंचुकमुक्कच्छियं च छादेति ।
संघाडीओ चउरो, तत्थ दुहत्था उ वसधीए ॥
दुन्नि तिहत्थायामा, भिक्खट्ठाएगउच्चारे ।
ओसरणे चउहत्थाम, निसन्नपच्छादणी मसिणा ॥

औपकक्षिकी विपरीता वैकक्षिकीनामकः पट्टः कञ्चुकमौपकक्षिकीं च छादयन् वामपार्श्वे परिधीयते तथा उपरि परिभोग्याः संघाटिकाश्चतस्रो भवन्ति । एका द्विहस्ता द्वे त्रिहस्ते एका च चतुर्हस्ता दैर्घ्येण चतस्रोऽपि साऽपि सार्द्धहस्तत्रयप्रमाणा चतुर्हस्ता वा मन्तव्या तत्र हि द्विहस्ता द्विहस्तविस्तृता संघाटिका वसत्यां परिधीयते न तां विहाय प्रकटदेहया कदाऽपि भवितव्यमिति भावः । ये च द्वे त्रिहस्तायामे त्रिहस्तविस्तृते तयोर्मध्ये एका भिक्षार्थं गच्छन्त्या प्राव्रियते एका उच्चारभूमिं व्रजन्त्या तथा समवसरणे व्याख्यानश्रवणादौ गच्छन्ती चतुर्हस्तां प्रावृणोति सा च प्राक्तनसंघाटीभ्यो बृहत्तरप्रमाणा अनिषण्णप्रच्छादनार्थं क्रियते यतो न तत्र संयतीभिरुपवेष्टव्यं किन्त्वर्द्धस्थित्वा ताभिरनुयोगश्रवणादि विधेयं ततस्तथा स्कन्धादारभ्य पादौ यावद्वपुः प्रच्छाद्य तिष्ठन्ति एताश्च पूर्वप्रावृतवपुःप्रच्छादनार्थं प्रवचनवर्णप्रभावनार्थं च मसृणाः क्रियन्ते चतस्रोऽपि च गणनाप्रमाणेनैकमेव रूपं गण्यते युगपत्परिभोगाभावात् ।

खंधकरणी चउहत्था, वित्थरा वायविहुतरक्खट्ठा ।
खुज्जकरणी उ कीरति, रूववतीए कुरूडहेउ ॥

स्कन्धकरणी चतुर्हस्तविस्तरा समचतुरस्रा प्रावरणस्य वातविधुतरक्षणार्थं चतुष्पला स्कन्धे कृत्वा प्राव्रियते रूपवतीनां च संयतीनां कुब्जत्वहेतोः कुब्जकरण्यपि क्रियते पृष्ठदेशे स्वर्द्धिताऔपकक्षिकी वैकक्षिकीनियन्त्रणा तया विरूपतापादनीय कुब्जं विधीयत इति भावः । उपसंहरन्नाह ।

संवासिमेतरे वा, सव्वो वेसो समासओ उवधी ।
पासगबद्धमझुसिरो, जं वाऽऽयनए णेयं ॥

सर्वोऽप्ययमनन्तर उपधिः समासतो द्विधा संवासिम इतरश्च

द्विग्यादिखण्डानां मीवनेन निष्पन्नः संघातिमः । इतरस्तद्विपरीतोऽसंघातिमः । अयं च पातकवरुः कशावरुः तथा यश्चाङ्गपिरो गृहिसीवनिकारहित प्रतिग्रहानवर्जितो वा यश्चात्र कल्प्यकेऽकावनो वेषेषु संविग्नगीतार्थैः पूर्वसूरिभिराचीर्णं तत्सर्वमपि ज्ञेयं सम्यगुपादेयतया मन्तव्यम् ।

अथ जिनकल्पिकादीनामुपधेरुत्कृष्टादिविभागमाह ।

उक्कोसओ जिणाणं, चउव्विहो मज्झिमो वि य तहेव ।
जहन्नो चउव्विहो खलु, पत्तो थेराण वोच्छामि ॥

अथ कल्पा अनिग्रहश्चेति जिनकल्पिकानामुत्कृष्टश्चतुर्विधः । एवं मध्यमोऽपि रजोहरणपटलकपात्रकबन्धरजस्त्राणभेदाच्चतुर्विधो जघन्योऽपि मुखपोत्तिका पादकेसरिका गोच्छकपात्रकस्थापनक भेदाच्चतुर्विध ।

( ७ ) औपग्रहिकोपधेरुत्कृष्टादिभेदाः ।

उक्कोसो थेराणं, चउव्विहो छव्विहो य मज्झिमओ ।
जहन्नो चउव्विहो खलु, पत्तो अज्जाए वोच्छामि ॥

उत्कृष्टो जघन्यश्च जिनकल्पिकानामिव द्रष्टव्यो नवरं मध्यमः षड्विधः स्वयं रजोहरणं पटलकानि पात्रकबन्धो रजस्त्राण मात्रकं कम्बलपट्टकश्चेति ।

उक्कोसो अट्ठविहो, मज्झिमओ होइ तेरसविहो उ ।
जहन्नो चउव्विहो खलु, पत्तो उ उवग्गहं वोच्छं ॥

आचार्याणामुत्कृष्ट उपधिरष्टविधः अथ कल्पा ३ प्रतिग्रह ४ अभ्यन्तरनिवसना ५ बहिर्निवसना ६ संघाटिका ७ स्कन्धकरणी ८ चेति । मध्यमस्त्रयोदशविधो भवति तद्यथा रजोहरणं १ पटलकानि २ पात्रकबन्ध ३ रजस्त्राणं ४ मात्रक ५ कमठकम् ६ अवग्रहानन्तक ७ पट्ट ८ अर्धारुकमूए कञ्चुकी १० वलनिका ११ औपकक्षिकी १२ विकक्षिकी १३ चेति । जघन्यश्चतुर्विधो मुखपोत्तिका गोच्छक पात्रस्थापन चेति । अत ऊर्ध्वमतिरिक्तो यः उपधिः स उपग्रहोपधिरुच्यते । तमपि जघन्यादिविभागनिरूपणेनाह वक्ष्ये । वृ० ३ उ० ।

( ८ ) तावदौपग्रहिकोपधिमाह ।

पीढगनिसिज्जदंडग–पमज्जणी घट्टए डगलमाई ।
पिप्पलगसूइनहरणि–सोहणगदुगं जहन्नो उ ॥ ३५ ॥

पीठकं काष्ठच्छगणात्मकं लोकसिद्धमानं स्नेहवत्यां वसतौ वर्षाकाले वा ध्रियत इत्यौपग्राहिकं संयतीनां त्याग इत्यागतसाधुनिमित्तमिति निषद्या पादपुञ्छन प्रसिद्धप्रमाण जिनकल्पिकादीनां न भवति निषीदनाभावात् दण्डकोऽप्येवमेव नवरं निधारणाभावात् एवं प्रमार्जनी वसतेर्दण्डकपुञ्छनाभिधाना एवं घटक पात्रसुमादिकरणाय पिप्पलक क्षुरप्र लोहमयः । सूची सीवनादिनिमित्त वेणवादिमयी नखहरणी प्रतीता लोहमय्येव शोधनकद्वय कर्णशोधनकदन्तशोधनकाभिधान लोहमयादि जघन्यनस्त्वयं जघन्य औपग्राहिक स्वरूपाधिरिति गाथार्थः ।

एनमेव मध्यममभिधातुमाह ।

वासत्ताणे पणगं, चिलिमिणिपणगं दुगं च संथारे ।
दंडाइ पणगं पुण, मत्तगतिगपायलेहणिआ ॥ ३७ ॥

वर्षात्राणत्रयं पञ्चकं तद्यथा कम्बलमयसूत्रमयतालपत्रमयपलाशपत्रकुट्टशीर्षकं छत्रकं चेति लोकसिद्धमानानीति । तथ चिलिमिलीपञ्चक तद्यथा कम्बलमयी सूत्रमयी वालमयी दण्डमयी कडगमयीति प्रमाणमस्याः गच्छापेक्षया सागारिकप्रच्छादनाय तदावरणात्मिकैर्ज्ञेयमिति संस्तारद्वयं च शुषिराशुषिरभेदभिन्नं तृणादिकृतस्तु शुषिरस्तदन्यकृतस्त्वशुषिर इति । तथा दण्डादिपञ्चकं पुनस्तद्यथा दण्डको विदण्डक यष्टिर्वियष्टिर्नालिका चेति । मात्रकत्रितयं तद्यथा । कायकमात्रकं संज्ञामात्रकं खेलमात्रकमिति । तथा पादलेखनी काष्ठमयी कर्दमापनयिनीति गाथार्थः । पं० व० ।

संथारुत्तरपट्टो, अड्ढाइज्जा उ आयया हत्था ।
दोण्हं पि य वित्थारो, हत्थो चउरंगुलं चेव ॥४६॥

संस्तारकः तथा उत्तरपट्टकश्च एतौ द्वावपि एकैकमर्द्धतृतीयहस्तौ दैर्घ्येण प्रमाणतो भवति तथा द्वयोरप्यनयोर्विस्तारो हस्तचतुरङ्गुल भवतीति आह किं पुनरेभिः प्रयोजनं संस्तारकादिभि पट्टकैरुच्यते ।

पाणाइरेणुसंर–क्खणट्ठया होंति पट्टगा चउरो ।
छप्पइयरक्खणट्ठा, तत्थुवरिं खोम्मियं कुज्जा ॥४७॥

प्राणिरेणुसंरक्षणार्थं पट्टका गृह्यन्ते । प्राणिनः पृथिव्यादयो रेणुश्च स्वशरीरे लगति अतस्तद्रक्षणार्थं पट्टकग्रहणं ते चत्वारो भवन्तीति द्वौ संस्तारकपट्टकयुक्तावेव तृतीयो रजोहरणवाह्यनिषद्यापट्टकः पूर्वोक्त एव चतुर्थः । खोमिय एवाभ्यान्तरः निषद्यापट्टको वक्ष्यमाण एव एते चत्वारोऽपि प्राणिनः संरक्षणार्थं गृह्यन्ते । तत्र षट्पदासंरक्षणार्थं तस्य कम्बलो संस्तारकसंघर्षेण षट्पदा न विराध्यन्ते इति । इदानीं अभ्यन्तरलोमनिषद्याप्रमाणप्रतिपादनायाह ।

रयहरणपट्टमेत्ता, अदसगा किं चि वा समतिरेगा ।
इक्कगुणा उ निसिज्जा, हत्थपमाणा सपच्छागा ॥४८॥

रजोहरणपट्टकोऽभिधीयते यत्र दशिकालग्ना तत्प्रमाणा दशा दशिका तद्रहिता क्षौमा रजोहरणाभ्यन्तरे निषद्या भवति । ( किं चि वासमतिरेगेत्ति ) किंचिन्मात्रेण वा समधिका तस्य रजोहरणपट्टकस्य भवतीति ( एकगुणत्ति ) एकैव सा निषद्या भवति हस्तप्रमाणा च प्रभुत्वेन भवति (सपच्छागत्ति) सह बाह्यया निषद्यया हस्तप्रमाणा भवतीति । एतदुक्तं भवति बाह्याऽपि निषद्या हस्तमात्रैव ।

वासोवग्गहिओ पुण, दुगणो उवही उ वासकप्पाई ।
आयासंजमहेऊ, एक्कगुणो सेसओ होइ ॥ ४९ ॥

वर्षासु वर्षाकाले औपग्रहिकः अवधिर्गुणो भवति कश्चास्यासौ वर्षाकल्पादि आदिग्रहणात् पटलानि "जो व हिंडं तस्स तिम्मइ सो सो दुगुणो होति एगोति सो पुणो अन्नो घेप्पइ" स च वर्षाकल्पादिद्विगुणो भवति आत्मसंरक्षणार्थं च तत्रात्मसरक्षणाद्यदि एकगुणा एव कल्पादयो भवन्ति ततश्च "तेहिंति तेहिं पोट्टसूलेण मरति संजमरक्खणट्ठं जइ एग चेव कप्पं अइमइलो उ ढेउं नीसरइ ततो तस्स कप्पस्स ज पाणिय पडइत्ति तस्स तेणं आलुक्काओ विणासिज्जइ" शेपस्त्ववधिः एकगुण एव भवति न द्विगुण इति । किञ्च ।

जं पुण सपमाणाओ, ईसिं हीणाहियं व लंभेज्जा ।
उभयं पि अहाकडयं, न संधणा तस्स छेओ वा ॥५०॥

यत्पुन कल्पादि उपकरण स्वप्रमाणादीषद्धीनमधिक वा लभ्यते उभयमिति "ओहियस्स उवहिस्स उवग्गहियस्स वा" यदि

चनय तदेव हीनमधिकं वा लब्ध सत् 'आधाकम्मयग' पश्चात्कृत-मल्पपरिकर्म यद्बध्यते तस्य न सधना क्रियते हीनस्य तथा च्छेदन क्रियते अधिकस्य । किं च ।

रुमए लट्ठिया चेव, चम्मए चम्मकोसए ।

चम्मच्छेयणपट्टे, चिलिमिली धारए गुरू ॥ ५१ ॥

अयमपर औपग्रहिकोपधि साधोः साध्व्याश्च भवति दण्डको भवति दण्डकश्च यष्टिश्च चशब्दाद्वियष्टिश्चेति । अथ सर्वेषा-मेवमेव पृथक् पृथक् औपग्रहिकः । अयमपर एव औपग्रहिक' कश्चासौ ( चम्मएत्ति ) चर्म्म कृत्तिश्चवमिया चर्म्मकोसक "जस्थ न हणाई बुज्झति " तथा चर्म्मच्छेदः वर्ध्रपट्टिका । यदि च चर्म्म च्छेदनकं पिप्पलकादि । तथा ( पट्टेत्ति) योगपट्टक' चिलि-मिली चेति । एतैश्चर्म्मादिभिर्गुरोरौग्राहिकोपधिर्भवति ।

जं चन्न एवमाई, तवसंजमसाहगं जइजणस्स ।

ओहो इरेगगहियं, उवग्गहियं त वियाणाहि ॥

यच्चान्यद्वस्तु एवमादि चपानहादि तप सयमयोः साधक यति-जनस्य ओघोपधेरतिरिक्त गृहितमौपग्रहिक तद्विजानीहि । ओ० । ( यष्ट्यादिलक्षणमन्यत्र )

चम्मतियं पट्टदुगं, नायव्वो मज्झिमो उवहि एसो ।

अज्जाण चारगो पुण, मज्झिमो होइ अइरित्तो ॥

चर्म्मत्रिक वर्ध्रनत्रिकाकृतिरूपम् तथा पट्टद्वय सस्तरपट्टोत्तरपट्ट लक्षण ज्ञातव्यो मध्यम उपधिरेव । औपग्रहिक आर्याणां चारक' पुन सागारिकोदकनिमित्तम मध्यमोपधावुक्तलक्षणो भवत्यतिरिक्त नित्य जनमध्य एव तासा वासादिति गाथार्थः । एतदेवोत्कृष्ट-मभिधातुमाह ।

अक्खा संथारो वा, एगमणेगंगिओ अ उक्कोसो ।

पोत्थगपणगं फलगं, उक्कोसोवग्गहो सव्वो ॥ ३७ ॥

अक्षाश्चन्दनकादयः सस्तारकश्चैकं कि विशिष्ट इत्याह । एकाङ्गि-कोऽनेकाङ्गिकश्च फलक कम्बिमयादि उत्कृष्टस्वरूपेण । तथा पु-स्तकपञ्चक तद्यथा गण्डिकापुस्तक छिवाढीपुस्तक कविपु-स्तक मुष्टिपुस्तक सपुटकश्चेति । तथा फलक पट्टिका समव-सरणफलक वा उत्कृष्ट इति प्रक्रान्तापेक्षया औपगृहिक उपधे सर्व इत्यक्षादि सर्व एवेति गाथार्थः । अनयोरौघिकोपग्रहिक-योरेवोपधिद्वयोरपि विशेषलक्षणमभिधातुमाह ।

ओहेण जस्स गहणं, भोगो पुण कारणा स ओहोहि ।

जस्स उ दुग पि नियमा,कारणओ सो उवग्गहिओ ।३८।

ओघेन सामान्येन भोगे अभोगे वा यस्य पात्रादेर्ग्रहणमादान भोग पुन कारणान्निमित्तेनैव भिक्षाटनादिना स ओघोपधिर भिधीयते । यस्य तु पीठकादेर्द्वयमपि ग्रहण भोगश्चेत्येतन्निय-मात्कारणतो निमित्तेन स्नेहादिना स पीठकादि औपग्रहिक का-दाचित्कप्रयोजननिवृत्त इति गाथार्थः । अस्यैव गुणकारितामाह ।

मुच्छारहिआणेव्वो, सम्मचरणस्स साहगो भणिओ ।

जुत्तीए ईहा पुण, दोसा इयं पि अ.णाइ ॥ ३९ ॥

मूर्च्छारहितानामभिष्वङ्गवर्जिताना यतीनामेव द्विविधोऽपि पा-त्रपीठकादिरूप उपधि सम्यगधिकरणरक्षाहेतुत्वेन चरणस्य साधको भणित तीर्थकरगणधरैर्युक्त्येति । मानभोगयतनया इतरथा पुनरयुक्त्या यथोक्तमानभोगाभावे दोषा । अत्राप्युपधौ गृह्यमाणे तुच्यमाने वा आज्ञादय इति गाथार्थः ॥ पं० व० । ( ए-तेषामन्येषां चोपकरणानां प्रयोजन विहार शब्दे चारित्रार्थमने-काहगमने प्रस्तोष्यमाणे स्पष्टीभविष्यति ) ।

( ९ ) अतिरिक्तोपग्रहणेन प्रायश्चित्तम् ।

दुविहप्पमाणातिरे-ग मुत्तदेसेण तेण लहुगाओ ।

मज्झिमगं पुण उवहिं, पडुच्च मासो भवे लहुओ ॥

द्विविध द्विप्रकार गणनाप्रमाणभेदाद्यत्प्रमाण ततोऽतिरिक्ते उपधौ तत्रादेशेन चतुर्लघुका भवन्ति यत उक्त निशीथसूत्रे " जे भिक्खू गणणाइरित्त वा पमाणाइरित्त वा उवहिं धरेइ से आवज्जइ चाउम्मासियं परिहरेणट्ठाण उग्घाइयं' वृ० १ उ० ॥

ऊणातिरित्तधरणे, चउरो मासा हवंति उग्घाया ।

आणाइणो य दोसा, संघट्टणमादि पलिमंथो ॥

गणनया प्रामाणेन च ऊनस्यातिरिक्तस्य वा उपकरणस्य धर-णे प्रायश्चित्त चत्वारो मासा उद्धाता लघव आज्ञादयश्च दोषा-स्तथा यत्र परिकर्म्मणा कुर्वन् तज्जातान प्राणान्संघट्टयति आ-दिशब्दात्परितापयति अपद्रावयति च ततस्तन्निमित्तमपि तस्य प्रायश्चित्त तथा प्रतिदिवसमुभयकाल पात्राणि अन्यद्वाऽतिरिक्तमु-पकरणं प्रत्युपेक्षमाणस्य परिमन्थ सूत्रार्थव्याघात । तस्मात् गण-नया प्रमाणेन सूत्रोक्तमुपकरण धारयितव्यम् व्य० द्वि०८उ०। ओ०।

१० प्रथमसमवसरणे उपधिग्रहणम् । ( तच्च नो कल्पते इति वत्थशब्दे भाविष्यते ) वर्षासु अनतिरिक्तोपकरणग्रहण-कारणमुपदर्शयितु दृष्टान्तमाह ।

दव्वोवक्खरणेहा, दियाए तह वा कडुयभंडाणं ।

वासास्स कुडुंबी, अतिरेगं संचयं कुणइ ॥

द्रव्य हिरण्यादि उपस्कर सूर्पादि स्नेहो घृत तैल वा आदि-शब्दाद्रेरण्डादितैलपरिग्रहः । क्षारो वस्तुलादि लवण वा कटुक शुण्ठीपिप्पल्यादि भाण्डानि घटपिठरादीनि । अथवा कटुकभाण्ड वेसणमयवा हिङ्गुप्रभृतिजात । एतेषां द्रव्योपस्करादीनां कुटुम्ब्य-पि वर्षाराल अतिरिक्तसञ्चय करोति किं कारणमिति चेदुच्यते ।

वणिया ण संचरंती, हट्टा ण हवंति कम्मपरिहाणी ।

गेलण्णाए देसुव, किं काहिंति अगहिते पुव्विं ॥

वर्षाकाले वणिजो ग्रामेषु क्रयविक्रयार्थं न सञ्चरन्ति । पत्तने-ष्वपि वर्षवर्दलवशेन हट्टा न भवन्ति । अपि च यदि कुटुम्बी द्रव्योपस्करादीनामतिरिक्त सञ्चय न कुर्यात तत उत्पन्ने प्रयो-जने क्रयविक्रयार्थं तेनापणवीथ्या गन्तव्य ततश्च इक्षुकर्षणप्रवृ-ताना कर्म्मसु योगाना परिहाणिर्भवति ग्लानत्वे वा सजाते आदेश-पु वा प्राघूर्णिकेषु आगतेषु अतिरिक्तसञ्चये पूर्वमगृहीते कि पश्चाद्भोजनप्रावृर्णकमत्याद्रिक करिष्यति ॥

तह अन्नतित्थिगा वि य, जारिसो से संचयं कुणति ।

इह पुण छन्द विरहणा, पढमम्मि य जे भणियदोसा ॥

तथेति दृष्टान्तान्तरोपन्यासे अन्यतीर्थिका अपि सरजस्का-दयो यादृशो यस्य येनोपकरणेन प्रयोजनमित्यर्थः ( से )तस्या-तिरिक्तसञ्चय यथा कुर्वन्ति । यथा सरजस्का क्षारस्य दकर्स-त्कारिकामृत्तिकाया वोदिकाङ्ग एल्लकाणयोग्यादि । इहेति अस्मिन पुनर्जैने शासने यद्यतिरिक्तमुपकरण न गृह्णन्ति तत पणा जीवनिकायाना विराधना भवति । पथाऽतिरिक्तोपकर-णाभावात्पूर्वं गृह्णन्ति ततो य प्रथमे समवसरणे उपक-रण गृह्णतो दोषा भणितास्तान प्राप्नुवन्ति । एव पुन ऋ़ता कारणा विराधना भवतीत्युच्यते ।

रयहरणेणोल्लाणं, पमज्जणकुंभारसालपुढवीए ।
गामंतरितगलणे, पुढवी उदगं च दुविहं तु ॥

(कुंभारसालत्ति) कुम्भकारशाला तस्यां वर्षासु स्थितानां द्वितीयरजोहरणाभावे यदार्द्रेणार्द्रीभूत रजोहरण तेनैव प्रमार्जने पृथिवीकायस्य विराधना ग्रामान्तरं भिक्षाचर्यादिकार्येण (इनत्ति) गच्छत आगच्छतो अन्तरा आषाढतर वर्षितुमारब्धे मलिनरजोहरणे परिगलति पृथिवीं द्विविधं च भूमान्तरिक्षभेदात् द्विप्रकारमुदकं विराधयति ।

अहवा अंबीभूए, उदगं पुण उप्पतावणे अगणी ।
उल्लंमगवंधतसा, माणाइसु केण व पमज्जे ॥

अथवा द्वितीयरजोहरणाभावे यदार्द्रं रजोहरणं शोषयति ततोऽवग्रहात् स्फिटयति । अथ न शोष्यते ततोऽम्लीभवति एवमम्लीभूते तस्मिन् उदक विराध्यते । पनकश्च संमूर्च्छति अथैनद्दोषपरिहारार्थमग्नि तापयति ततोऽग्निविराधना अथार्द्रेण प्रमार्जयति ततो दशिकान्तेऽप्युल्लएडका मुईगोलका प्रतिबध्यन्ते तेषु प्रतिबद्धेषु यद्विप्रमार्जनं करोति तत आत्मविराधना । अथ न प्रमार्जयति ततः संयमविराधना । स्थाननिषदनादिषु वा केन प्रमार्जयतु ।

एमेव सेसगम्मि, संजमदोसा उ भिक्खणिज्जाए ।
चोलनिसिज्जा उल्ल-अजीरगेलन्नमायाए ॥

एमेव वर्षाकल्पादावपि शेषोपकरणे भिक्षानिर्योगे च पटलकपात्रबन्धरूपे द्विगुणे अगृहीते संयमदोषाः षट्कायविराधना लक्षणे रजोहरणवद्वक्तव्या । चोलपट्टे रजोहरणनिषद्यायां यावद्विगुणायामगृह्यमाणायां बहिर्गतानां वर्षेणार्द्रीभावे संजाते नित्यपरिभोगेन भक्तं न जीर्यते । अजीर्यमाणे भक्ते ग्लानत्वं भवति । ततआत्मविराधना परितापमहादु खादि । किंच ।

अद्धाण णिग्गतादी, परिता वा अहव पट्ठगहणम्मि ।
जं च समवसरणम्मि, अगहणे जं च परिभोगे ॥

भिक्षादुर्भिक्षाद्वा अध्वनो निर्गता आदिशब्दादशिवादिकारणानिर्गता वा ये परीता परिमितोपकरणा अथवा (नट्ठत्ति) नष्टोपकरणा हारितोपधय इत्यर्थः (गहणम्मित्ति) प्रत्यनीकेन वा उपधेर्ग्रहणे कृते विविक्ता आगच्छेयु एतेषामागतानामतिरिक्तोपकरणभावात्पग्रहणं न करोति तत उपधिनिष्पन्नं प्रायश्चित्तम् अथ नष्टं नूतनमुपधिं गृह्णन्ति ततोऽप्युपधिनिष्पन्नम् अथ प्रथमे समवसरणे उपकरणग्रहणे दोषजालं तत्प्राप्नुवन्ति । अथ न गृह्णन्ति तत उपकरणं विना शचतृणादिपरिभोगे दूषणकदम्बक तदासादयन्ति । अमुमेवार्थं व्याख्याग्रन्थेन स्पष्टयति ।

अद्धाण णिग्गयादीण-मदाने होंति उवधिणिप्फण्णं ।
जं ते आसेसणगिं सेवेद वत्थाणं जं च ॥

अध्वनिर्गतादीनामतिरिक्ताभावे उपकरणं यदि न प्रयच्छन्ति तत उपधिनिष्पन्नं भवति प्रायश्चित्तमिति शेषः । तच्च जघन्ये पञ्चकं मध्यमे मासलघुरुत्कृष्टे चतुर्लघवः । ते च अध्वादिनिर्गता अनेषणीयोपकरणमपि वा यदासेवन्ते तन्निष्पन्नमप्रयच्छता प्रायश्चित्तम् । अथान्यमीयमुपकरण तेषां प्रयच्छन्ति तत आत्मपरित्यागः । यच्चान्यगा तृणादिमेवन कुर्वन्ति तन्निष्पन्नम् । के पुन प्रथमसमवसरणे वस्त्रग्रहणे दोषा इत्याह ॥

अनट्ठपमट्ठा वा, ओमरणं गेण्हमाण पण्णरस ।

हाणं परिभोग छप्पति-चउत्थं उच्चोयगेलन्ने ॥

अथात्मनो वा परेषां वा अध्वनिर्गतादीनामर्थाय प्रथमसमवसरणे उपधिं गृह्णन्ति तत आधाकर्मादय पञ्चदशोद्गमदोषा भवन्ति आत्मोपधिमध्वनिर्गतादीनां दत्वा तमेवैकं प्रत्यवतारं नित्यं परिभुञ्जानस्य षट्पदिका संमूर्च्छति तासु चान्नपात्रमध्ये पतितासु भक्षितासु (चउत्थंति) जलोदरो भवति एकप्रत्यवतारेण वा द्रोणराशिप्रावृतेन गुरुस्य जीर्यति अजीर्यति च ग्लानत्वमुपजायते

तम्हा उ गेण्हियव्वं, वितियपदम्मि जह ण गेण्हेज्ज ।
अद्धाणे गेलण्णे, अहवा वि हवेज्ज असतीए ॥

यत एवं तस्मात् कारणादात्मनो द्विगुणप्रत्यवतारादतिरिक्तं ग्रहीतव्यं द्वितीयपदं यथा न गृह्णीयुस्तथाऽभिधीयते अध्वनि वहमानानां ग्लानत्वे वा द्विविधायामसत्तायां वा वर्तमानाना मग्रहणं भवेदिदमेव व्याख्याति ॥

कालेण चिंदिएणं, या वरिसा मंतरेण वाघाते ।
गेलण्णे वा न परे, दुविधा पुण होति असतीओ ॥

ग्रीष्मस्य चरमे मासि केचिदध्वनि प्रतिपन्नाश्चिन्तितवन्तश्च यावदाषाढपूर्णिमा नोपैति तावदेव तावत्कालेन वर्षाक्षेत्रं प्राप्स्याम । अन्तरा च नद्यादिव्याघातो भवेत् अत आषाढपूर्णिमाकाले अतिक्रान्ते प्राप्ते ततो द्विगुणोऽतिरिक्तो वा उपधिर्न गृहीत । अथवा आत्मनो ग्लानत्वेन परस्य वा ग्लानस्य व्यापृततया नातिरिक्तो गृहीत । असत्ता पुनर्द्विविधा भवति सदसत्ता असदसत्ता च सदसत्तायामनेषणीयं लभ्यते । अथवा बहव साधवो वस्त्रग्रहणस्याकल्पिका एक कल्पिक । अत सर्वेषां योग्यो अतिरिक्त पथि गृहीतुं न पार्यते । असदसत्ता तु मार्गितमपि न लभ्यते एतै कारणै पूर्वमतिरिक्तोपधौ अगृहीतेऽपि शुद्धा ।

गहिए अगहिए वा, अप्पत्ताणं तु होति अतिगमणं ।
उवही संथारगपाद-पुंछणादीण गहणट्ठा ॥

एवं गृहीतेऽगृहीते वा वर्षावासप्रायोग्ये उपधौ कालमप्राप्तानामाषाढपूर्णिमाया अर्वाक् पञ्चभिर्दिवसैर्वर्षाक्षेत्रे अतिगमनं प्रवेशो भवति । किमर्थमित्याह उपधिर्वर्षाकल्पादिक । संस्तारक काष्ठमय कम्बिकामयो वा पादप्रोञ्छन रजोहरणम् आदिशब्दात् तृणडगलादिपरिग्रह एतेषां ग्रहणार्थमप्राप्ते काले प्रवेष्टव्यम् । इदमेव व्यक्तीकरोति ।

कालेण अपत्ताण, पत्ताणं खेतओ गहणं ।
वासाजोग्गोवधिणो, खेत्तम्मि उ डगलमादीणि ॥

कालतो नियमादप्राप्तानां क्षेत्रतः प्राप्तानां वा वर्षावासयोग्यपटलकपात्रबन्धादेरुपधेर्ग्रहणं भवति एतेन चरमभङ्गौ सूचितौ कालत प्राप्तैरप्राप्तैर्वा क्षेत्रतो नियमात्प्राप्तैर्डगलादीनि गृहीतव्यानि अनेन तु द्वितीयतृतीयभङ्गौ गृहीताविति । तान्येव डगलादीनि दर्शयति ।

डगलसरक्खकुडमुह, मत्तगतिगलेवपादलेहणिया ।
संथारपीढफलगा, णिज्जोगा चेव दुगुणो उ ॥

इष्टका चीरादिमयानि डगलानि पुन प्रोञ्छनार्थं गृह्यन्ते सरजस्क क्षारमस्मशेत्पलादिविसर्जनार्थं कुटमुखं घटकण्ठकस्तत्र ग्लानयोग्यमौषध कायिकी मात्रकं वा स्थाप्यते । मात्रकत्रिक खेलमात्रक कायिकीमात्रक सञ्ज्ञामात्रकं चेति । लेप प्रतीत प्रतिश्रयाजनसंस्थापनार्थम् । पादलेखनिका वर्षासु कर्दमनिर्लेपना-

धंम । संस्तारकः परिशाटी वेति द्विविध उभयोपशमनार्थं जीवादिरक्षणार्थं च गृह्यते पीठ डगणादिमयमुपवेशनार्थं फलकश्चं एकपट्टादिमय शयनोपयोगी पात्रसत्कश्च निर्योगः । प्रत्यवतारो द्विगुण एतानि सर्वाण्यपि तदानीं गृह्यन्ते । अथ शिष्य प्रश्नयति ।

चत्तारि समोसरणे, मासा किं कप्पती ण कप्पति वा ।
कारणिग पंचरत्ता, सव्वेसिं मल्लगादीणं ॥

आषाढपूर्णिमाऽनन्तर ये चत्वारः प्रथमसमवसरणे मासास्तेषु ग्रहीतु कल्पते न वा । सूरिराह उत्सर्गतो न कल्पते द्वितीयपदे क्षेत्रस्याप्राप्ता अध्वनिर्गता वा आषाढपूर्णिमाया प्राप्तास्तत सस्तारादुपधि डगलादीनि च पञ्चरात्रिंदिवानि गृह्णन्ति पर्युषणाकल्पं च रजन्यामाकर्षन्ति । तत पञ्चम्यां पर्युषणं कुर्वन्ति । अथ पूर्वोक्तकारणात्पञ्चम्यामेव ते प्राप्तास्तत पञ्चरात्र तथैव सस्तारकमल्लादीनि गृह्णन्ति दशम्यां पर्युषणयन्ति । विशेषं चूर्णीकृत्पुनराह " तं खेत्ताए पञ्जते आसाढपुष्णिमाए च्चेव निया तेहिं य उवही न गहिओ संथारगाइ ताहे जाव पंच रत्त ताव गेण्हति पक्का पंचदिवसे पज्जोसणाकप्प कहति दसमीए एस कारणेणं कप्पई पंचरत्तं अह पंचमीए पत्ता तहेव य वरत्तगावकुतीति ' एवं सर्वेषां मल्लकादीनामुपकरणानामर्थाय कानि पञ्चरात्रिंदिवानि प्रवर्द्धमानानि तावन्मन्तव्यानि यावद्भाद्रपदशुद्धपञ्चम्यां गृहीतेऽगृहीते वा डगलमल्लकादौ नियमात्पर्युषणं विधेयम् "तेसिं तत्थ ठिआणं पडिलहुवट्टचारणादीसु लेवाईण अगहणे लहुगा पुव्विआ गहिते वा " तेषां साधूनां तत्र वर्षाक्षेत्रे स्थितानामिय सामाचारी सभाप्रपाऽऽरामदेवकुलशून्यगृहादिषु यद्वस्त्रमुज्झित पथिकादिभिः परित्यक्तं तत्प्रत्युपेक्षन्ते यदा किल कार्यमुत्पत्स्यते तदा ग्रहीष्यन्ते तदभावे चरणादिषु प्रत्युपेक्षन्ते वर्षासु यदि लेपमादिशब्दात्पात्र वा वस्त्र वा गृह्णन्ति ततश्चतुर्लघुका पूर्वं चालेपादीनि यदि न गृहीतानि तदाऽपि चतुर्लघु । इदमेव व्याख्याति ।

वासाण एस कप्पो, सव्वतो चेव जाउ सकोसं ।
परिभुत्तं विप्पइण, वाघातट्ठा परिक्खंति ॥

( वासाणत्ति ) विभक्तिव्यत्ययाद्वर्षासु तिष्ठतामेष कल्प समाचारी सर्वत सक्रोशं यावद्यत्कार्पटिकैं परिभुक्तं विप्रकीर्णं पूर्वं परिभुज्य ततोऽकिञ्चित्करमिति मत्वा परिष्ठापित ततास्तिष्ठन्त एव व्याघातार्थं निरीक्षन्ते । क पुनर्व्याघात इति चेदुच्यते ।

अध्दाण णिग्गतादी, झामियवूढे व सेह परिज्जुण्णे ।
आगतु वाहिपुव्विं, दिट्ठं असणिसण्णीसु ॥

अध्वनिर्गतादय साधव आगच्छेयु आत्मीयो वा उपधिध्यामितो दग्धो भवेत् उदकेन वा व्यूढः शैक्षो वा अवश्यप्रव्राजनीय पुराणादिरुपस्थित परिजीर्णो वा उपधिरेतैः कारणैरागन्तुकेषु तालावरादिषु पूर्वं मार्गयन्ति तत क्षेत्राद्बहिरसञ्ज्ञिषु पूर्वं दृष्ट गृह्णन्ति । अथेदमेव विभावयिषुरागन्तुकानागन्तुकान् व्याख्याति ।

तालायरे य धारे, वाणियखंधारसेणसंवट्टे ।
लाउक्कग वइग सेवग, जामाउगं पंथिगादीसुं ॥

तालावरा नटनर्त्तकवर्द्धादयो ( धारेत्ति ) देवछत्रधारका वणिजो वाणिज्यका राजविम्बसहित सचक्र परचक्रं वा स्कन्धावार उच्यते राजविम्बविरहिता सेना चौरधाटीभ ेन यद्वो ग्रामनायका अधिष्ठातार एकत्र स्थिता संवर्त्तः लाकुटिका उद्भरा व्रजिका गोकुलिका सेवकाश्चारभट्टका जामातृका प्रसिद्धा पथिका ये ग्रहव स्वदेशं प्रति प्रस्थिता एवमादिषु पूर्वं मार्गयन्ति कथमित्याह ।

आगतुकेसु पुव्विं, गवेसए चारणादिसुं वाहिं ।
पच्छा जे सग्गामं, तालावरादिणो यंति ॥

( वाहिंति ) सक्रोशयोजनान्तर्वर्त्तिष्वन्तरपल्लिकासहितेषु बाह्यग्रामेषु ये आगन्तुकाश्चारणादयस्तेषु पूर्वं गवेषयन्ति । पश्चात् वाह्यग्रामेषु चारणादीनामभावे ये तालावरादय स्वग्राममायान्ति तेषु गवेषयितव्यम् । कथमेतेषु वस्त्रसंभव इत्याह ।

लध्दूण एवे इतरे, समणाणं देज्ज सेवजामादी ।
चारणधारवणीयं, पडंति इयरे उ सम्भितरा ॥

सेवका जामातृका नवानि वस्त्राणि लब्ध्वा इतराणि पुराणानि श्रमणानां दद्यु । चारणानां ( धारत्ति ) देवछत्रधारिणां राजादय प्रसादतो वस्त्राणि प्रयच्छन्ति तानि पुराणानि वा ते साधूना दद्यु ( वणीयन्ति ) वाणिज्यक वणिज पतन्ति । इतरे तु पथिकादय आरूा श्रावका भवेयु वहिर्ग्रामे स्वग्रामेऽप्युपचारणादीनामभावे विधिमाह ।

वहिरंतसण्णिसण्णिसु, जं दिट्ठं तेसु वा जमदिट्ठं ।
केई दुहउवलंभि, सुगहिते मग्गीसु दिट्ठितरे ॥

क्षेत्राभ्यन्तरे प्रतिवृषभग्रामेषु ये असञ्ज्ञिनस्तेषु पूर्वं दृष्टं वस्त्र मार्गयन्ति तदभावे वहिर्ग्रामेऽप्येव सञ्ज्ञिषु पूर्वं दृष्ट तदभावे अन्तर्मूलग्रामे असञ्ज्ञिषु पूर्वं दृष्ट तदसत्त्वे मूलग्राम एव सञ्ज्ञिषु यत्पूर्वमदृष्ट तदभावे मूलग्राम एवासञ्ज्ञिषु पूर्वमदृष्ट वस्त्रं मार्गयन्ति केचिदाचार्या इत्य ब्रुवते । द्वयोरपि वहिरन्तर्लक्षणयो स्थानयोः प्रथमसञ्ज्ञिषु गृहीते सति ततो वहिरन्तर्वर्त्तिष्वेव सञ्ज्ञिषु यया कर्मदृष्टमितरत्वात् दृष्ट गृह्णातीति किं पुन कारण पूर्वं दृष्ट प्रथम गृह्यते उच्यते तत्र हि पूर्वप्रत्युपेक्षितत्वेनाधाकर्मादय उद्गमोत्पादनैषणादोषा परिहृता भवन्ति ॥

कोई तत्थ वणिज्जा, वाहिं खित्तस्स कप्पती गहणं ।
गंतुं ता पभिसिद्धं, कारणगमणे बहुगुणं तु ॥

कश्चिच्चोदकस्तत्रेति अनन्तरोक्तव्याख्याने इद भणेत् यदि पूर्वं प्रतिवृषभग्रामेऽप्युद्ग्रहीतव्य ततो मूलग्राम एव तर्हि दूरत्वात् । क्षेत्राद्बहिर्ग्रहण सुभगं कल्पते । गुरुराह क्षेत्राद्बहिर्वर्षासु गन्तुमपि तावत्प्रतिषिद्धं किं पुनर्वस्त्रग्रहणम् । अथ कारणे वर्षासु क्षेत्राद्बहिर्गमन करोति तत्र गतश्च वर्षाकल्पादिना निमन्त्र्यते तदा सयमस्य बहुगुणमिति कृत्वा तदपि ग्रहीतव्यम् । इदमेव व्याचिख्यासु प्रथमत परवचनं व्याख्याति ।

एवं नामं कप्पति, जं दूरे तेण वाहि गिण्हंतु ।
एव भणंति गुरुगाण, गमणे गुरुगा व लहुगा वा ॥

यत् दूरे गामाद्बहिर्वस्त्र तद्यदि प्रथम कल्पते तम एव नाम क्षेत्राद्बहि सुतरा प्रथमतरं गृह्णन्तु सूरिराह एवं भणतो भवतश्चतुर्गुरुका । अथ क्षेत्राद्बहिर्गच्छति ततो गुरुका वा लघुका वा प्रायश्चित्त तत्र नव प्रावृषि चत्वारो गुरव ऋतौ वर्षाकाले चत्वारो लघव । कारणगमने बहुगुणमिति व्याचष्टे ॥

संवंधभाविएसु, कप्पति गोयरे गतो ।
जुणेव वासकप्पं, गेण्हति जं वहुगुणं तत्तो ॥

यानि साधर्म्मिकसबन्धेन संबद्धानि परस्पर गमनागमनप्रार्द्र॰ तानि च क्षेत्राणि तेषु वर्षासु कल्पते साधर्म्मिकाणामुदन्तवहनार्थं चत्वारि पञ्च योजनानि यावत् गन्तुं वस्तुं वा एव कार्यं गतस्यापान्तराले वर्षात्राणेन कश्चिन्निमन्त्रण कुर्यात् तस्य च प्राक्तनो वर्षत्राण परिजीर्णस्ततश्च वर्षात्राण घनमसृणमभिनवं च ततो वर्षासु बहुगुणमिति कृत्वा गृह्णाति । कारणतोऽन्यदपि पटलकादिक घनमसृणादिगुणोपेनमाचार्यप्रायोग्य वा यद्वस्त्र लभ्यते तदपि भूयान् गुणोऽत्र गृहीते भविष्यतीति कृत्वा गृह्यते एवं कारणगमने ग्रहणं चोभयमपि दृष्टम्। कारणाभावे तु न कल्पते गन्तुं गृहीतुं वा। अथ गृह्णाति ततोऽमून् षोडश दोषान् । प्राप्नोति

आहाकम्मुद्देसिय, पूतीकम्मे य मीसजाए ।
ठवणा पाहुडियाए, पादोकरकीतपामिच्चे ॥
परियट्टिए अतिहडे उ, उब्भिरणमालाहडे य ।
अच्छिज्जे अणिसिट्ठे, धोते रत्ते य घट्टे य ॥

आधाकर्म्म १ औद्देशिकं २ पूतिकर्म्म ३ मिश्रजातं ४ स्थापना ५ प्राभृतिका ६ प्रादुष्करणं ७ क्रीतं ८ प्रामित्य ९ परिवर्त्तितम् १० दूत्याहृतम् ११ उद्भिन्न १२ मालाहृतम् १३ आच्छेद्यम् १४ अनिसृष्ट चेति १५ पञ्चदश दोषा ( धोयरत्तेयघट्टेयात्ते ) साधूनामर्थाय मलिनवस्त्र धौत गौरव कृतमित्यर्थः । एव रक्त प्रदत्त रागं घृष्ट मसृण पाषाणादिना उत्तेजितमेते त्रयोऽप्येक एव दोष इति।

एते सव्वे दोसा, पढमोसमोसरणवज्जिता होंति ।
जिणदिट्ठिहिं अगहितो, जो गेरहति तेहि सो पुट्ठो

एते सर्वेऽप्याधाकर्म्मादयो दोषा प्रथमे समवसरणे वस्त्रादिक गृह्णता न वर्जिता भवन्ति । अथ पूर्वं दर्प्पतो न गृहीतमुपकरणं तत प्रथमे समवसरणे यो गृह्णाति सोऽपि जिनैस्तीर्थकरैर्ये दृष्टा कर्मबन्धहेतोरस्तैः स्पृष्टो मन्तव्यः । भावतस्तेन दोषाणामङ्गीकृतत्वात् ।

पढमम्मि समवसरणे, जो वतियं पत्तचीवरं गहियं ।
सव्वं वोसरियव्वं, पायच्छित्तं च वोढव्वं ॥

प्रथमे समवसरणे दर्पतो यावत् पात्रचीवर गृहितं तावत्सर्वमपि व्युत्सृष्टव्य प्रायश्चित्त च गुरुप्रदत्त यथोक्तं वोढव्यम् । अथ वा कार्ये समुत्पन्ने यत्पात्रं वा चीवरं चाग्णादिषु गृहीत तत्सर्वं कृते कार्ये परिष्ठापनीयम् । अपरिणामकप्रत्ययनिमित्त च यथालघीय प्रायश्चित्त वोढव्यम् ।

सज्झायट्ठा दप्पेण, वावि जाणंतए वि पच्छित्तं ।
कारणगहियं तु विधय, धरेत गीए ण उ ज्झाति ॥

स्वाध्यायार्थं दर्पेण वा यदि "वहिअंतसन्निसु ज दिट्ठं तेसु चेव जमदिट्ठ" इत्यादिक क्रममुल्लङ्घ्य गृहीत तत्र जानतोऽपि गीतार्थस्यापि प्रायश्चित्तम् । यत्तु कारणे क्रमेण विधिना गृहीतं तद्दि सर्वेऽपि विदो गीतार्थास्त धारयन्ति अगीतार्थनिश्रा वनोऽन्यस्मिन्नुपकरणे लब्धे न छुष्यन्ति । वृ० ३ उ० नि० चू० । कल्प० ( अनुपदं वस्त्रग्रहण चैव शब्दे )

( ११ ) प्रथम प्रव्रजन उपधिग्रहणम् ।

( सूत्रम् ) निग्गंथस्स य तप्पढमयाए संपव्वयमाणस्स कप्पइ रयहरणगोच्छयपडिहिं कसिणेहिं वत्थेहिं आयाए संपव्वइत्तए से पुव्वोवट्ठिए सिया एवं से नो कप्पइ रयहरणपडिग्गहगोच्छए पायाए तिहिं य कसिणेहिं वत्थेहिं आयाए संपव्वइत्तए कप्पइ से अहापरिग्गहियाइं वत्थाइं गहाय आयाए संपव्वइत्तए ।

अथास्य सूत्रस्य क सबन्ध इत्याह ।

णिग्गंथिचेलगहणं, भणियं समणाण वोच्छामि ।
निक्खंते वाहुत्तं, निक्खममाणे इमं सुत्तं ॥

निर्ग्रन्थीविषय चेलग्रहण भणितम् । इदानीं श्रमणानां यथा वस्त्र गृहीतुं कल्पते तथाऽभिधीयते । यद्वा निष्क्रान्तो दीक्षितस्तद्विषय वस्त्रग्रहणमुक्तमिद तु निष्क्राम्यति दीक्षामददाने वस्त्रग्रहणाभिधायक सूत्रमारभ्यते अनेन सबन्धेनायातस्यास्य व्याख्या निर्ग्रन्थस्य तत्प्रथमतया समिति सम्यक् प्रकर्षेण पुनरभङ्गीकारलक्षणेन व्रजतो गृहवासान्निर्गच्छत सम्प्रव्रजत कल्पते । रजोहरणगोच्छके प्रतिग्रहमादाय त्रिभि कृत्स्नैर्वस्त्रैरात्मना सम्प्रव्रजितुम् । इह रजोहरणग्रहणेन मध्यमोपधिर्गोच्छकग्रहणेन जघन्योपधिः प्रतिग्रहग्रहणेनोत्कृष्टोपधि सर्वो गृहीतस्ततोऽयमर्थ जघन्यमध्यमोत्कृष्टोपधिनिष्पन्ना ये त्रय कृत्स्नाः प्रतिपूर्णा वस्त्रपात्रे प्रत्यवतारास्तैरात्मना सहितैः प्रव्रज्या ग्रहीतु कल्पते ( सेयति ) चशब्दार्थे । अथासौ प्रव्रज्यां प्रतिपन्न पूर्वमुपस्थितो दीक्षित स्यात् ततो नो कल्पते ( से ) तस्य पूर्वोपस्थितस्य रजोहरणगोच्छकप्रतिग्रहमादाय त्रिभि कृत्स्नैरात्मना सप्रव्रजितु । किंतु कल्पते ( से ) तस्य यथा परिगृहीतानि क्रीतकृतादिदोषरहितानि वस्त्राणि गृहीत्वा आत्मना सप्रव्रजितुमिति सूत्रसमासार्थः । अथ विस्तरार्थोऽभिधीयते । आह न तावद्यावत्प्रव्रजति तत कथ निर्ग्रन्थ । उच्यते द्रव्यत एको भावतो द्वितीय द्रव्यतोऽपि भावतोऽपि अपरो न द्रव्यतो न भावतः । तत्र द्रव्यतो निर्ग्रन्थः स उच्यते यो लिङ्गसहितो द्रव्यलिङ्गयुक्तो निःशङ्कः सम्भवत्यतति चत्प्रव्रजतीत्यर्थः । यस्तु प्रव्रज्यायामभिमुखो न तावदद्यापि प्रव्रजति कारणेन वा यः साधु परलिङ्गे वर्तते स द्वितीयो द्वितीयभङ्गवर्ती यस्तु उदयसहितो द्रव्यभावलिङ्गयुक्त स तृतीय उभयथाऽपि निर्ग्रन्थ इति भावः । उभयविमुक्ते तु द्रव्यभावलिङ्गरहिते गृहस्थादौ चरमश्चतुर्थो भङ्गो भवति । अत्राचार्यो देवस्य मानुष्यस्य सहवासलक्षण दृष्टान्त कर्तुकाम प्रथमत सिद्धान्त प्रज्ञापयति ।

चउधा खलु संवासो, देवासुररक्खसे मणुस्से य ।
अण्णोणकामणेण य, संजोगा सोलस हवंति ॥

देवसवास असुरसंवासो राक्षससवासो मनुजसंवासश्चेति सवासश्चतुर्धा । अत्र चान्योन्यकाम्यया षोडश सयोगा भवन्ति। तद्यथा देवो देव्या सार्द्धं सवसति १ देवोऽसुर्या सार्द्धम् २ देवो राक्षस्या सार्द्धम् ३ देवो मानुष्या सार्द्धम् ४ असुरो देव्या सम सवसति ५ असुरोऽसुर्या ६ असुरो मानुष्या ७ असुरो राक्षस्या ८ राक्षसो देव्या ९ राक्षसोऽसुर्या १० राक्षसो मानुष्या ११ राक्षसो राक्षस्या १२ मनुष्यो देव्या १३ मनुष्योऽसुर्या १४ मनुष्यो राक्षस्या १५ मनुष्यो मानुष्या १६ चेति । अत्र देवशब्देन वैमानिको ज्योतिष्को वा । असुरशब्देन तु सामान्यतो व्यन्तरः परिगृह्यते । अधस्तने च षोडश भङ्गान् चतुर्षु भङ्गेष्ववतारयन्नाह ।

अहवा देवच्छत्तीणं, संवासे एत्थ होति चउभंगो ।
पव्वज्जाभिमुहतर, गुज्झगउभामिया वासे ॥

अथवेति प्रकारान्तरद्योतक । देवच्छविमतो सवासे चतुर्भङ्गी भवति । देवो देव्या सार्द्धं सवसति । १ । देवच्छविमत्या सा-

र्द्धम् १ अविमान् देव्या सार्द्धम् ३ अविमान् अविमत्या ४ अत्र दे-
वशब्देन सामान्यतो भवनपत्यादिनिकायचतुष्टयाभ्यन्तरवर्ती गृ-
ह्यते अविमांश्च मनुष्य उच्यते अत एतेषु चतुर्षु भङ्गेषु पूर्वोक्ता
षोडशापि भङ्गा अन्तर्भूता एवं सिद्धान्तं प्रज्ञाप्य प्रस्तुतार्थसाधक
दृष्टान्तमाह 'पव्वज्जा' इत्यादि । एकः कश्चित्तरुण प्रव्रज्याभिमुखो
गुरूणां पार्श्वे प्रस्थितः अन्तरा कस्मिंश्चिद्ग्रामे एकस्यास्तरुण्या
गृहे वासार्थमुपगम्य द्वारमूले सुप्तः सा च तरुणी उद्भ्रामिका
कुशीला गुह्यकः कश्चिद्यक्षस्तया उद्भ्रामिकया सह रात्रौ वास
कृत्वा प्रभाते स्वस्थान गच्छति एवं दिवसे दिवसे करोति ।
तस्मिंश्च दिवसे यक्षो नोपागमत् द्वितीये दिवसे कोऽपि सन्नि-
ह्रोव धावी चौर्यं कर्तुकामस्तस्मिन्नेव ग्रामे तस्या एव तरुण्या
गृहे तथैव मूले प्रसुप्तः । यक्षश्च तद्दिवसमागत ।

वितियणिसाए पुच्छा, एत्थ जती आसि तेण णितऽम्हो ।
जतिवेसो यं चोरो, जो अज्ज तुहं वसति दारे ॥

यस्मिन् दिवसे यक्षोऽनायातस्ततो यो द्वितीयो दिवसस्तत्र
निशायामागतस्य यक्षस्य पार्श्वे पृच्छा कृता कल्ये किं नागतोऽसि
यक्षः प्राह । अत्र कल्ये यतिरासीत् । तेन कारणेनाहमत्र नायात' ।
अपि च साधुसंबन्धिना तेजसैव तमुल्लङ्घ्य गन्तुं न शक्यते सा
प्राह किमेवं मृषा भाषसे अयमपि तावदन्य साधुर्द्वारमूले सुप्त-
स्तिष्ठति । अत एवमुल्लङ्घ्य कथमद्यागतोऽसीति । जक्षः प्राह
एष चारित्रं प्रति विपरिणतश्चौर्यं कर्तुकाम' । अतो यतिवेषेण
चौरोऽयं मन्तव्य यस्तवाद्य द्वारे वसतीति । तदेवमनेन दृष्टा-
न्तेन प्रव्रज्यायामभिमुख प्रव्रजित एवोच्यते । उक्तं च नैश्चयिक-
नयवक्तव्यतामङ्गीकृत्य भगवत्याम् "नेरइए णं भंते नेरइएसु उववः
ज्जइ अनेरइए ? गोयमा ! नेरइएसु उववज्जइ नो अनेरइएसु
उववज्जइ " ॥

अथ रजोहरणादिपदानि व्याचष्टे ॥

रयहरणे विमज्झिमो, गुच्छगगहणे जहन्नगग्गहणं ।
पडिग्गहगहणं गहण, उक्कोसओ होइ अवहिस्स ॥

रजोहरणग्रहणेन विमध्यमोपधिर्गृहीतो गुच्छकग्रहणेन जघन्यो-
पधिग्रहण भवति प्रतिग्रहग्रहणेन चोत्कृष्टस्योपधेर्ग्रहण मन्तव्यम् ।

पडिपुण्णा पडुयारा, कसिणग्गहणेण अप्पणो तिण्णि ।
पुव्विं उवट्ठितो पुण, जो पुव्वं दिक्खितो आसी ॥

कृत्स्नवस्त्रग्रहणेनेदमुक्तं भवति । तेन प्रव्रजता आत्मनो योग्या-
स्त्रय प्रत्यवतारा प्रतिपूर्णा ग्रहीतव्या पूर्वमुपस्थित पुन स
उच्यते य पूर्वदीक्षित आसीत् एष सूत्रार्थ । अथ निर्युक्तिविस्तर ।

सोऊण कोइ धम्मं, उवसंतो परिणओ य पव्वज्जं ।
पुच्छति पूयं आयरिय उव-ज्झायपवत्तिसंघाडिए चेव ॥

इह कश्चित्तथारूपाणा स्थविराणामन्तिके धर्मं श्रुत्वा उपशान्तः
प्रतिबुद्ध प्रव्रज्यायां च परिणत आचार्यान् पृच्छति आदिशत
क्षमाश्रमणा किं मया कर्त्तव्यम् । सूरयस्तस्य सारसत्त्व ज्ञात्वा
ब्रुवते ( पूयति ) चैत्याना विपुला पूजां कुरु श्रमणसंघस्य च वस्त्रा-
दिभि प्रतिलाभन कुरु । एवमुक्ते स तथैव चैत्यानां श्रमणसंघस्य
च पूजा करोति । अथ श्रमणसङ्घ न पूजयितुमीशस्तत आचार्य-
स्योपाध्यायस्य प्रवर्त्तिन संघाटकसाधोश्च वस्त्रादिभि पूजा
विधातव्या । इदमेव भावयति ॥

णंतगघतगुलगोरस, फासुपडिलाभणं समणसंघे ।
असति गणिवायगाणं, तदसति सव्वस्स गच्छस्स ॥

स प्रविव्रजिषु श्रमणसङ्घस्य सकलस्यापि प्रासुकैः शुद्धैर्वस्त्रघृ-
तगुडगोरसादिभिर्द्रव्यैः प्रतिलाभनां करोति । अथ नास्त्येताव-
त्सारं ततो ये गणिन आचार्या ये च वाचका उपाध्यायास्तेषां
सर्वेषामपि करोति । अथ नास्त्येतावती शक्तिस्ततो यस्मिन्
गच्छेऽसौ प्रव्रजिष्यति तस्य सर्वस्यापि प्रतिलाभना विधत्ते ॥

तदसति पुव्वत्ताणं, चउण्ह सीसतिय तेसिं वावारो ।
हाणी जा तिण्णि सयं, तदभावे गुरुउ सव्वं पि ॥

तस्या अपि सकलगच्छपूजायामाया सामर्थ्या अभावे ये पूर्व-
माचार्या ये च वाचका उपाध्यायास्तेषां सर्वेषामपि करोति आ-
चार्योपाध्यायप्रवर्तिसंघाटकसाधुलक्षणाश्चत्वार उक्तास्तेषां पूजां
करोति । तेषां चाचार्यादीनां व्यापारोऽर्थकथनादिस्तस्य पुरत
शिष्यते कथ्यते यथा आचार्योऽर्थं व्याख्यानयति उपाध्याय सूत्रं
वाचयति प्रवर्तते य स संयमादौ प्रवृत्तिं कारयति संघाटक सा-
धुभिर्भिक्षाविचारभूम्यादौ गच्छता साहाय्य विधत्ते अत एषा पूजा
विधेयेति । अथ नास्त्येतावती शक्तिस्ततो यतो यथामाहात्म्य
प्रथममाचार्योपाध्याययोस्तथाप्यशक्तौ केवलस्यैवाचार्यस्य पूजां
करोति । एवमप्यशक्तौ स्वयमात्मनो योग्यान् त्रीन् प्रत्यवतारान्
तदभावे एकमपि प्रत्यवतारमादाय प्रव्रजति । अथ नास्ति तस्यै-
कोऽपि प्रत्यवतारस्ततः सर्वमपि पात्रनिर्योगादिक तस्य गुरव
प्रयच्छन्ति । अथास्य विद्यमानविभवस्योद्गमकोटिदोषैर्विशोधि-
कोटिदोषैर्वान्यविशुद्धानि वस्त्राणि प्रयच्छतो ग्रहीतु कल्पन्ते
नवेति चिन्ता चिकीर्षुराह ॥

अप्पणो कीतकडं व, आहाकम्मं व घेत्तु आगमणं ।
संजोए चेव तधा, अणिदिट्ठे मग्गणा हुंति ॥

स गृहस्थशैक्ष आत्मनो योग्य वस्त्रपात्रादि क्रीतकृतं वस्त्राधा-
कर्म वा गृहीत्वा गुरूणामन्तिके दीक्षाग्रहणायागमनं कुर्यात् ।
अत्र क्रीतकृतग्रहणेन विशोधिकोटिदोषा गृहीता । अमीषां च
दोषाणामनिर्दिष्टे उपलक्षणत्वान्निर्दिष्टे वा ये संयोगा भङ्गकास्ते
षां मार्गणा कर्त्तव्या भवतीति द्वारगाथासमासार्थ ।

साम्प्रतमेनामेव विवृणोति ।

कीयम्मि अणिदिट्ठे, तण्णोग्गहियम्मि सेहगो कप्पे ।
णिदिट्ठम्मि ण कप्पति, अहव विसेसो इमो तत्थ ॥

क्रीतकृत द्विधा निर्दिष्टमनिर्दिष्टं च । निर्दिष्टं नाम वस्त्रपात्रादिकं
क्रीणाति इत्यमुद्देश करोति अमूनि मम भविष्यन्ति अमूनि सा-
धूना दास्यामि तद्विपरीतमनिर्दिष्टम् । एवमन्येष्वपि दोषेषु भा-
वना कर्त्तव्या तत्र यानि वस्त्राणि तेनानिर्दिष्टानि क्रीतानि तेषा म-
ध्ये यत्तस्याभिरुचित वस्त्रजात तेनावगृहीते सति शेषाणि साधूनां
कल्पन्ते निर्दिष्टे तु साधूनामर्थाय यत् क्रीत तत् किमपि न क-
ल्पते । अथवा तत्र निर्दिष्टेऽयं विशेषो ऽभिधीयते ।

मज्झंतिगाणि गिण्हह, अहं तुज्झट्ठाए परिचितयं ।
सेहेहिं ति व वत्थं, तदभावे विगिचंति ॥

मदीयानि मया आत्मार्थं क्रीतानि वस्त्राणि यूयं गृह्णीथ अहं
तु युष्मदीयानि युष्मदर्थं मयैव क्रीतानि वस्त्राणि परिगृह्णामि
एव तेनोक्ते तान्यात्मार्थक्रीतानि कल्पन्ते । अथवा स ब्रूयात्
यावत् युष्मदर्थमेतानि क्रीतानि इत ऊर्ध्वं यत् आनीय तत् पु-
रुष तनस्तानिर्दिष्ट वस्त्रप्रक्षेपणाय शैक्षस्यानुपस्थापितस्य प्रय-
च्छन्ति । अथ नास्ति शैक्षो वा एव विमर्श साधुर्न भवामि यत्
वमेतानि मम दीयन्ते इति कृत्वा नेच्छति ततस्तानि ( विगि-

चति ) परिष्ठापयन्ति । एवं परिष्ठाप्यमानेषु स शैक्षो ब्रूयात् ।

एत पि मा उज्जह देह मज्झं, मज्झव्वगा गेरहह एक दो वा ।
अत्तट्ठिए होति कदायि सव्वे, सव्वे विकप्पंत वि सोधएसा ॥

एतमपि वस्त्रप्रत्यवतारमकल्पनीयतया मा परिष्ठापयत किं तु मह्यं प्रयच्छत मदीयप्रत्यवतारान् चैकं द्वौ वा यूयं गृह्णीत । अथ तेन यदत्र प्रत्यवतारा क्रीतास्तत को विधिरित्याह यान् प्रत्यवतारान् एकं वा द्वौ वा त्रीन् वा स दाता आत्मार्थयति स त्रीन् वा कदाचिदात्मार्थं करोति तदा सर्वेऽपि कल्पन्ते एष विशोधिकोटिविषयो विधिरुक्तः । अथाविशोधिकोटिविषय तमेवाह ॥

उग्गमकोडीए वि हु, संगोज्जं तथेव होति अनिदिट्ठे ।
इयरम्मि विसंजोज्जो, जइ सेहो सयं जाणइ ॥

उद्गमकोटिर्नाम आधाकर्मादयोऽविशोधिकोटयो दोषास्तेष्वपि यदि निर्दिष्टमिदं साधूनां दास्यामि इद मम भविष्यतीति निर्देशमन्तरेण वस्त्रादि क्रीतं तत्र कल्पते ( संगोज्जंहोइअनिद्दिट्ठत्ति) अनिर्दिष्टेऽपि यद्येषा दाता ब्रूयात् यैर्वस्त्रैर्यूयं निमन्त्रिता यदि तानि नेच्छथ तत इमानि मत्परिगृहीतानि गृह्णीत यानि युष्माभि प्रतिषिद्धानि तानि मम भविष्यन्ति एवमसौ संक्षोभं प्रक्षेप कृत्वा यदि ददाति तर्हि सर्वाण्यपि कल्पन्ते (इतरम्मिविसंजोज्जोत्ति ) इतरन्नाम निर्दिष्टं तत्रापि संक्षोभो यदि स्यात्ततः कल्पते । संक्षोभ पुनरस्य यथाऽसौ गृहस्थशैक्षः स्वयमन्येनानुपदिष्ट आत्मनैवेत्थ जानाति ।

उक्कोसगा व दुक्खं व, वज्जिया केसितो हमि विथेव ।
इति संखोभं तेहिं, वदंति निद्दिट्ठगेसुं पि ॥

यानि वस्त्राणि मया युष्मदर्थं कारितानि उत्कृष्टानि बहुमूल्यानि तत कथ परित्यजन्ति दुःखं वा महता प्रयासेन वाऽपि तानि अत क्लेशिन क्लेशं प्रापितोऽहं वृथैवामीभि युष्माकमनुपकरणात् अतो मदीयानि यूयं गृह्णीथ युष्मदीयानि च मम भवन्तु । इत्येव तत्र निर्दिष्टेष्वपि संयतनिमित्त निर्दिश्य कृतेष्वपि संक्षोभं कल्पनीयताकारणं वदन्ति तीर्थकरादय । संयतनिर्दिष्टान्यपि कल्पन्त इति भाव । अत्र मतान्तरमुपन्यस्य दूषयन्नाह ।

जा संजयट्ठणदिट्ठा, संखोभम्मि वि न कप्पते केई ।
तं तु ण जुज्जइ जम्हा, दिज्जति सेहस्स अविसुद्ध ॥

या अविशोधिकोटि संयतार्थं निर्दिष्टा साधूनिर्दिश्य कृता सा संक्षोभे कृतेऽपि न कल्पते एव केचिदाचार्या ब्रुवते तत्तु न युज्यते यस्मात् दीक्षितस्यानुपस्थापितस्याविशुद्धमनेषणीय वस्त्रपात्रादि दीयते इत्येतच्च चतुर्थोद्देशके वक्ष्यति तत्र शैक्षस्योग्यमविशुद्धं साधुभि परिगृहीतं भवति अतो ज्ञायते अविशोधिकोटिदोषैर्दुष्टमपि वस्त्रादिकं संक्षोभे कृते कल्पते । किंचान्यत् ॥

जह अप्पटा कम्मं, परिभुत्तं कप्पते य इतरेसिं ।
एमेव य अम्हाणं, परिगहियं वि कप्पते इयरेसिं ॥

यथा गृहस्थेनात्मनोऽर्थायाधाकर्म कृतं तदितरेषां संयतानां परिभोक्तुं कल्पते । इत्यमुनेव ज्ञापकेनास्माकमपि स शैक्षो गृहस्थ एवेति कृत्वा तेन परिगृहीतं ममेदमिति बुद्ध्या स्वीकृतमितरदपि संयतनिर्दिष्टमपि कल्पते । इतरेषां साधूनां ये पुनराचार्या अविशोधिकोटिनिर्दिष्टं संक्षोभेऽपि कृते नेच्छन्ति । ते इद वाक्यमुपदर्शयन्ति ॥

सहस्साणुवादिणा तेण, णिद्दिट्ठे केइ ण इच्छंति ।
अणिद्दिट्ठे पुण खोभं, वदंति परिफग्गु मंतव्वं ॥

यथा सहस्रानुपाति विषं भक्ष्यमाणं सहस्रान्तरितमपि पुरुषं मारयति । एवमाधाकर्माद्युपभुज्यमानं सहस्रान्तरितमपि साधु संयमजीविताद् व्यपनयति न सहस्रानुपातिविषजातेन केचिदाचार्या. साधुनिमित्तं निर्दिष्टे संक्षोभेऽपि कृते नेच्छन्ति अनिर्दिष्टे पुनः क्षोभ कृत्वा ददानस्य कल्पनीय वदन्ति । एतदेव परिफल्गु निस्सारं मन्तव्यम् । कथमित्याह ॥

एवं पि सप्पइरमंसेण, परिसरग तेण फग्गुमिच्छामो ।
दुविधं पि ततो गहियं, कप्पाविरताणावजणातं ॥

यत्ते आचार्यदेशीया इति निर्दिष्टे संक्षोभे कृते कल्पनीयं ब्रुवते एतदपि स्वगृहपतिमिश्रेण सदृशं तेन कारणेन परिफल्गु वयमिच्छामः तदीयानि प्रायेण ह्येतदपि स्वगृहपतिमिश्रेति कृत्वा अकल्पनीयं प्राप्नोति तच्चानिष्टं ततो द्विविधमपि निर्दिष्टानिर्दिष्टभेदाद् द्विप्रकारमपि तेन शैक्षेण संक्षोभकारणेनागृहीतमात्मीकृतं सत्कल्पते । तथा चाऽत्र रत्नोच्चयो मेरुमहीधरो दृष्टान्त. । तथा हि तत्र प्रक्षिप्तं तृणादिकमपि सुवर्णीभवति एव शैक्षगृहस्थेन परिगृहीत सर्वमपि कल्पनीय भवति । अपि च ॥

जहइकडं चरिमाणं, पडिसिद्धं तं हि मज्झिमो गहियं, ।
पडिवण्णपंचजामे, कप्पति तेसिं तहण्णेसिं ॥

यथा चरमतीर्थवर्त्तिनां पञ्चयामिकानां साधूनामर्थाय किमपि वस्त्रं वा पात्रं वा कृतं तच्च तैः प्रतिषिद्धं न गृहीत मध्यमैश्च पार्श्वनाथतीर्थवर्तिभिश्चतुर्यामिकैस्तत्प्रतिगृहीत ते चतुर्यामिकाः पञ्चयामधर्मप्रतिपन्नास्ततस्तद्वस्त्रादिकं तेषामन्येषामपि पञ्चयामिकानां परिभोक्तु कल्पते । एवमत्रापि साधूनामर्थाय कृतं तैः प्रतिषिद्धं शैक्षगृहस्थेनात्मार्थकृत सद्दीयमान कल्पते ।

अथ संयोगद्वार व्याख्याति ॥

उग्गमविसोधिकोटी, दुगादिसंजोगओ बहू वत्थं ।
पत्तगमीसिगासु य, णिद्दिट्ठा तह अणिद्दिट्ठा ॥

इहोद्गमकोटिभेदा आधाकर्ममिश्रजातादयस्तेषां द्विकादिसंयोगतो द्विकत्रिकचतुष्कादिसंयोगनिष्पन्ना बहवोऽत्र भङ्गका भवन्ति । ते च सुगमतया स्वयमभ्यूह्य मन्तव्या । एव विशोधिकोटिभेदानामपि क्रीतकृतादीनां द्विकादिसंयोगनिष्पन्नाः तथैव बहवो भङ्गका । एते च प्रत्येकं भङ्गका उच्यन्ते । एतेषामेवोद्गमकोटिभेदानां च परस्परं द्विकादिसंयोगनिष्पन्ना एवमेव बहवो भङ्गका भवन्ति । ते च मिश्रभङ्गका भण्यन्ते । सर्वेऽप्येते द्विधा निर्दिष्टा अनिर्दिष्टाश्च एतासु प्रत्येकमिश्रासु भङ्गपङ्क्तिषु कल्प्याकल्प्यविभागा. प्रागुक्तप्रकारेणावसातव्या. । अथ वक्ष्यमाणार्थसंबन्धनाय प्रस्तावनां करोति ।

वत्था व पत्ता व परे वि हुज्जा, दव्वंपि कुज्जा पिवणे सयंपि ।
णिज्जुत्तजंमं व रयोहरादि, काई किणे कुत्तियआवणातो ॥

वस्त्राणि वा पात्राणि वा प्रायो गृहेऽपि भवेयुः । यत्तु निर्युक्तमाण्ड पात्रनिर्योगोपकरणं चाशब्दस्य व्यवहितसंबन्धतया रजोहरणादिकं वा यदन्यत्र दुर्लभमुपकरणं तत् कश्चित्पुनः बुद्धिमान् साधूनां समीपे दृष्ट्वा तदनुसारेण स्वयमपि कुर्यात् । कश्चित्तदेव कुत्रिकापणात् क्रीणीयात् । वृ० ३ उ० । ( कुत्रिकापणवक्तव्यता स्वस्थान एव ) अथ सप्त नियोगान् व्याचष्टे ।

तिण्णि य अप्पट्टेती, चत्तारि य पूयणारिहे देंति ।
दिंतस्स य घित्तव्वो, सेहस्स विगिंचणं वावि ॥

सत निर्योगान् गृहीत्वा प्रव्रजतोऽयं गुरुस्तेषां सप्तानां मध्यात् त्रीन् स शैक्ष आत्मनोऽर्थाय गृह्णातीत्यर्थः । चतुरश्च निर्योगान् पूजनार्हाणामाचार्योपाध्यायप्रवर्त्तिसंघाटकसाधूनां प्रयच्छति तस्य चैव प्रयच्छतो यद्यसौ निर्योगः गुरूस्ततो ग्रहीतव्यः । यथाशुद्धस्तत शैक्षस्य दातव्यः । शैक्षस्याभावे 'विगिंचन' परिष्ठापन तस्य क्रियते । एवं तस्य त्रीन्निर्योगान् गृहीत्वा प्रव्रजितस्य यद्भवति तद्दर्शयति ।

सज्झाए पलिमंथो, पडिले/णिया य सो हवइ खिन्नो ।
एगा न देंति तहि तं, दोन्नि य से अप्पणो हुंति ॥

तस्य त्रीन्निर्योगानुभयकाल प्रत्युपेक्षमाणस्य महान् स्वाध्यायविपरिमन्थो भवति । तया च महत्या प्रत्युपेक्षतया स खिन्नः परिश्रान्तो भवति तत एव निर्विण्ण सन् एक निर्योग सूरीणां ददाति प्रदत्ते च तस्मिन् तस्य द्वौ निर्योगावात्मन सत्कौ भवतः । एवमप्यसौ द्वाभ्यां निर्योगाभ्यां नैव साधुभ्योऽन्यादृश इव दृश्यते । ततः ।

निग्गमणे बहुभंडो, कत्तो कतरो व वाणिओ एइ ।
बितियं पि देति तहिं, सा भंते दुल्लहं होज्जा ॥

मासकल्पे पूर्णे तत क्षेत्रान्निर्गच्छतां मध्ये स एवैको बहुभण्डो-बहूपकरणो दृश्यते । ततो लोकस्तमुद्दिश्य ब्रूते । अहो कुतः कतरो वा अयं वणिज एवमुपस्करसंभारितः समुपैति । एवमुपहासमाकर्ण्य स द्वितीयमपि निर्योग गुरूणा ददाति । तत्र गुरुभिर्वक्तव्य हे भदन्त ! आर्य मा ते तव भूयो दुर्लभमुपकरण भवेत् अत आत्मपार्श्वे एव तावद्धारय । स प्राह ।

भारेण खंधे च कडी य बाहा, पोलिज्जए णिस्ससए य उड्ढं ।
तेणे य ओधीणमभिद्दवेज्जा, ण एत्तिया इति ममोवभोगं ॥

मम मार्ग गच्छतां द्वयोर्महान् भारो भवति तेन स्कन्धः कटी बाहावगाढतर पीड्यन्ते । ततश्चेत्थमूर्ध्वनिश्वासेनाकुलो व्रजामीत्यर्थः । स्तेनाश्च मामुपकरणभरित दृष्ट्वा उपधिकारणादभिद्रवेयु । एतावन्ति च वस्त्रपात्राणि ममोपभोग नायान्ति । यच्च भगवद्भिरुक्तं मा भूयो दुर्लभं भवेत् । तत्रोच्यते ॥

जं होहि ति बहुगाणं, इम्म धम्मचरणं पवन्नाण ।
तं होहिति अम्ह पि, तुम्होहिं समं पवन्नाण ॥

यदि युष्माकं बहूनामस्मिन् भागवते शासने धर्मचरण प्रपन्नानामुपकरण भविष्यति तदस्माकमपि युष्माभि सम प्रतिपन्नानां चारित्रं प्रपन्नानां भविष्यति एव तत्प्रथमतया प्रव्रजतो विधिरुक्त । अथ पूर्वोपस्थितविषय तमेवाह ॥

सड्ढो वीरणसढए, अब्भुट्ठाणं पुणो अजाणंते ।
कतकारितं व कीतं, जाणंते अधापरिग्गहिते ॥

यश्चारित्र परित्यज्य गृहवासमुपगतस्तस्य कथं पुनरपि प्रव्रज्यायामभ्युत्थानसिद्धि सजाता अत्र वीरणसढकदृष्टान्तो वक्तव्य । एव तस्य पुनरभ्युत्थान भवति स च द्विधा जानानोऽजानानश्च यः कल्प्याकल्प्यविभाग जानाति स जानानस्तद्विपरीतोऽजानान । अगीतार्थ इत्यर्थ (अजानन्ति) भूय प्रव्रज्यायामभ्युत्तिष्ठमाने कृत वा कारित वा क्रीत वा दान वा त पूर्वोक्तविधिना कल्पते वस्तु जानानस्य यथा परिगृहीतानि शुद्धान्येव ग्रहीतु कल्पन्ते न कृतकारितादीनि । अथ वीरणसढकदृष्टान्तमाह ॥

जह सो वीरणसढओ, णइतीररुहो जलस्स वेगेण ।
थोवं थोवं खणता, पक्खित्तो भूमिणिहितमूलो वि ॥

यथा स कश्चिद्विवक्षितो वीरणसढको वीरणानां तृणविशेषाणां स्तम्बो नद्यास्तीरे रोहति स्म जायते स्मेति नदीतीररुहो नद्या प्रत्यासन्नतया जलस्य वेगेन स्तोकं स्तोकं खनना भूमिकानिहितमूलजालोऽप्यचिरादेव श्रोतसि प्रक्षिप्त । ततश्च श्रोतसा प्रवाहयित्वा समुद्र प्रापित इति भाव । एष दृष्टान्तः । अयमर्थोपनय ।

णियमसियं दिट्ठेहिं, साधूहिं जहरिहं समणुणाते ।
उवएहे उवएहतरेहि य, चालिज्जति बद्धमूलो वि ॥

कश्चित्पश्चात्कृत सिद्धपुत्रकादिवेषेण साधूनामागमनभूते क्वचिद् ग्रामे गृहवासमध्यास्य तिष्ठन् यत्तत्र मासकल्प वर्षाकल्प वा स्थिता साधवो ये (वगमिति) तत्र गच्छन्त आगता वा द्वित्राणि दिनानि तिष्ठन्ति तैर्दृष्टैर्दृष्टैश्च साधुभिर्यथार्ह यथायोग्यं समनुज्ञातः सन् पुण्यैस्त्वतरैश्च वचनैरुदकवेगस्थानीयैरनेकश प्रेर्यमाण कलत्रादिसपरिग्रहः विस्तरेण बद्धमूलोऽपि चाल्यते । गृहवास त्याजयित्वा संयमरूपे श्रोतसि प्रक्षिप्य गच्छरत्नाकरं प्राप्यत इति भाव ।

अथ जानानाजानानविषयविधिविभागमाह ।

कप्पाकप्पविसेसो, अणधीए जो उ संजमा चलिओ ।
पुव्वगमो तस्स नवे, जाणंते जाइ सुद्धाइ ॥

वस्त्रपात्रादिविषये कल्प्याकल्प्यविशेषे अनधीते सति यः संयमाच्चलितस्तस्य पूर्व प्राक्तनो नाम प्रकारो भवति यथा शैक्षगृहस्थस्योक्तः । यस्तु कल्प्याकल्प्यविधिं जानाति तस्य सर्वाणि शुद्धान्येव ग्रहीतु कल्पन्ते न क्रीतादिदोषदुष्टानि । बृ० ३ उ० ।

( ११ ) निर्ग्रन्थ्याः प्रव्रज्यां गृह्णन्त्या उपधि ।

(सूत्रम्) निग्गंथीएणं तप्पढमयाए संपव्वयमाणी कप्पइ रयहरणं गोच्छपडिग्गहमायाए चउहिं कसिणेहिं वत्थेहिं आयाए संपव्वइत्तए कप्पइ से अहापरिग्गहिएहिं वत्थेहिं आयाए संपव्वइत्ता ।

अस्य व्याख्या प्राग्वत् नवरं निर्ग्रन्थ्याश्चतुर्भिः प्रत्यवतारैः सहिताया प्रव्रजितु कल्पते इति विशेष । अथ भाष्यम् ।

एमेव गमो णियमा, णिग्गंथीणं पि होइ नायव्वो ।
जाणंत णं कप्पति, घेत्तुं जे आधापरिग्गहिते ॥

एष एव गमो निर्ग्रन्थीनामपि भवति ज्ञातव्यः । सा च पूर्वोपस्थिता स्यादित्यत्र सूत्रे तासां कल्प्याकल्प्यविभागं जानतीनां यानि यथापरिगृहीतानि कल्पन्ते ग्रहीतुम् (जे) इति वाक्यालङ्कारे ।

समणीणं नाणत्तं, णिज्जोगा तासिं अप्पणो जोग्गा ।
चउरो पंच व सेसा, आयरियादीण अट्ठाए ॥

निर्ग्रन्थेभ्य सकाशात् श्रमणीनामिदं नानात्वं विशेष उच्यते तासां प्रव्रजन्तीनामात्मनो योग्याश्चत्वारो निर्योगा भवन्ति शेषास्तु आचार्यादीनामर्थाय चत्वारो वा पञ्च वा । तत्र यदा चत्वारस्तदा एकमाचार्यस्य द्वितीयं प्रवर्तिन्यास्तृतीयं गणावच्छेदिन्या चतुर्थ संघाटकसाध्व्याः प्रयच्छन्ति । यदा पञ्च तदा तथैवाचार्यादीनां पञ्चम पुनरुपाध्यायस्य योग्य इति चूर्णिकानिप्राय । बृहद्भाष्यकार पुनराह । चत्तारि अप्पणो से, सेसा एव यहव सेसगा हुंति । आयरिओवज्झाए, पवत्तिणीभिसे य संघाडे ॥ एवेए अभिओगा ओनओगा य सदहुनि चत्तारिति" ।

( १३ ) रात्रौ विकाले चोपधिग्रहणम् ।

(सूत्रम्) नो कप्पइ निग्गंथाण वा निग्गंथीण वा वियाले वा वत्थं वा पडिग्गहं वा कंबलं वा पायपुंछणं वा पडिग्गहित्तए

अथास्य सूत्रस्य कः सम्बन्ध इत्याह ।

जह सेज्जाणाहारो, वत्थादेसे व सापयपसंगादि ।
यं दिट्ठवत्थगहणं, कुज्जा उ निसि अतो सुत्तं ॥

यथा शय्यां वसतिं, कृत्वा रात्रौ ग्रहीतु कल्पते एवमेव वस्त्रादिकमपि कल्पयिष्यते इत्यतिप्रसङ्गाद्दिवादृष्टस्य वस्त्रस्य निशि रात्रौ ग्रहणं मा कुर्यादित्यनेन इदं सूत्रमारभ्यते इत्यनेन संबन्धेनायातस्यास्य व्याख्या नो कल्पते निर्ग्रन्थानां निर्ग्रन्थीनां वा रात्रौ वा विकाले वा वस्त्रं वा प्रतिग्रहं वा कम्बलं वा पादप्रोञ्छनं वा प्रतिग्रहीतुमिति सूत्राक्षरगमनिका ।

अथ भाष्यविस्तरः

रत्तो वत्थग्गहणे, चउरो मासा हवंति उग्घाया ।
आणाइणो य दोसा, आवज्जणसंकणा जाव ॥

रात्रौ वस्त्रग्रहणे मासा उद्घाता प्रायश्चित्तम् आज्ञादयश्च दोषाः । तथा रात्रौ भक्तग्रहणेऽपि तथैव वक्तव्याः ।

बिइयं विहीविवित्ता, पविसंत्याइं समित्त रयणाए ।
ते य पगाविय सत्था, वच्चिहिंति तु जए व एक्को वा ॥

द्वितीयपदमत्रोच्यते (विहिवित्ति) अध्वनि विविक्ता मुषिताः सन्तः प्रतिमार्थादिकं समेत्य प्राप्य रजन्यामपि वस्त्रप्रतिग्रहादिकं गृह्णन्ति तत्रापि कथमित्याह तावुभावपि सार्थौ प्रागेव प्रातरेवानुकूलन्ये चलिष्यतः एको वा अन्यतरः सार्थप्रतिसार्थयोर्मध्ये चलिष्यतीति मत्वा रात्रावपि ग्रहणं कुर्वन्ति । अत एवोत्सर्गपदे अध्वा गन्तुमेव न कल्पते यदेते दोषा उत्पद्यन्ते तथा चाह ।

उद्देसु भिक्खु अद्धाणं, पव्वज्जणं तु दप्पेण ।
लहुगा पुण सुद्धपदे, जं वा आवज्जई जत्थ ॥

व्याख्यातार्था द्वितीयपदमाह ।

नाणट्ठदंसणट्ठा, चरित्तट्ठा एवमाइ गंतव्वं ।
उवगरणपुव्वपडिले-हिएण सत्थेण गंतव्वं ॥

इयमपि गतार्था ।

सत्थे वि वत्थमाणे, असजए संजए य तदुभए ।
मग्गंत जयणाणं, छिन्नं पि हु कप्पई घेत्तुं ॥

ज्ञानाद्यर्थमध्वान प्रतिपन्नानामपान्तराले चतुर्विधाः स्तेना भवेयुः एके असंयतप्रान्ता १ अन्ये संयतप्रान्ता २ अपरे तदुभयप्रान्ता ३ अन्ये तदुभयभद्रका ४ तत्रासंयतप्रान्तैः स्तेनैः सार्थे विद्यमाने मनुष्यगणे न एव साधूनां पार्श्वाद्वस्त्राणि मार्गयन्ति यतनया दानं कर्त्तव्यं प्रत्यर्प्यमाणं च छिन्नमपि तदेव वस्त्रं ग्रहीतुं कल्पते नान्यदिति संग्रहगाथासमासार्थः । अथैनामेव विवरीषुराह ॥

संजयभद्दा गिहिभद्दगा य, पंतोभये उभयभद्दा य ।
तेणा होंति चउद्धा, विगिंचणा सुद्धजईणं ॥

एके स्तेनाः संयतभद्रकाः परं गृहस्थप्रान्ताः एके गृहस्थभद्रकाः परं संयतप्रान्ताः अन्ये उभयेषामपि प्रान्ताः अपरे उभयेषामपि भद्रकाः एवं स्तेनाश्चतुर्विधा भवन्ति । अत्र च द्वितीयतृतीययोर्भङ्गयोर्वर्त्तिनां विवेचनं वस्त्रस्य पृथक्करणं भवति । अथ यत्र संयता न विविक्तास्तत्र विधिमाह ।

जइ देंति जाइयाजा-इया य न वि देंति लहुगगुरुगा य ।
सागरडाणं गमणं, गहणं तस्सेव वत्थस्स ॥

साधवो यद्ययाचिताः सन्तो वस्त्राणि गृहिणां प्रयच्छन्ति तदा चतुर्लघु । अथ याचिताः सन्तो न प्रयच्छन्ति तदा चत्वारो गुरवः । अतः सागारिकं प्रातिहारिकं भणित्वा प्रयच्छन्ति यथा भवद्भिः प्रत्यर्पणीयमिदमस्माकं यद्यर्वाग् वर्तमाना गृहं वा गता अन्यद्वस्त्रं लभध्वे गमनं नाम येषां गृहस्थानां तद्वस्त्रं प्रदत्तं ते यद्यनेन पथा गच्छन्ति ततः साधुभिरपि तेनैव गन्तव्यं यद्यन्येन व्रजन्ति ततश्चतुर्लघु यदा ते अध्वनो निर्गता भवन्ति तदा छिन्नस्यापि तस्यैव वस्त्रस्य ग्रहणं कर्त्तव्यं नान्यस्य । ततः पुनर्वस्त्रं कीदृशं दातव्यमित्याह ।

दंरूपरिहारवज्जं, चोलपट्टपडलपत्तबंधवज्जं च ।
परिजुण्णाणं दाणं, उड्डाहपओसपरिहरणा ।

महती जीर्णकम्बलिका दण्डपरिहार उच्यते तद्वर्जं चोलपट्टपडलकपात्रबन्धवर्ज्यानि यानि शेषाणि परिजीर्णवस्त्राणि तेषामुड्डाहप्रद्वेषपरिहरणार्थं दानं कर्त्तव्यम् । उड्डाहो नाम अहो अमीषामनुकम्पा ये विविक्तानामप्यस्माकं चीवराणि न प्रयच्छन्ति प्रद्वेषो नामाप्रीतिकं तद्वशात्तेषां तापनादयो दोषास्तत्परिहरणार्थं दातव्यम् ( छिन्नंपित्ति ) योऽयमपि शब्दस्तत्सूचितमेवमपरमाह ।

धोवस्स व रत्तस्स व, गहणं गिण्हम्मि चउलहुगा ।
तं चेव घेत्तुं धोउं, परिभुंजे जुसमुज्झेज्जा ॥

यदि तैर्गृहस्थैस्तद्वस्त्रं धौतं वा रक्तं वा तथाऽपि तस्यैव ग्रहणं कर्त्तव्यम् । अथ साधुप्रायोग्यं न कृतमिति मत्वा न गृह्णन्ति अन्यस्य वा ग्रहणं कुर्वन्ति तदा चतुर्लघुकः । अतस्तदेव वस्त्रं गृहीत्वा क्षारादिना धावित्वा साधुप्रयोग्यं कृत्वा परिभुञ्जते । अथातीवजीर्णं ततः उज्झेयुः परिष्ठापयेयुरित्यर्थः । गतः प्रथमो भङ्गः । अथ गृहस्थभद्रका संयतप्रान्ता इति द्वितीयो भङ्गो भाव्यते तत्र भूयश्चतुर्भङ्गी संयत्यो विविक्ता न संयताः १ संयता विविक्ता न संयत्यः २ संयत्यो विविक्ताः संयता अपि विविक्ताः ३ न संयत्यो नापि संयता विविक्ताः ४ अत्र विधिमभिधित्सुराह ।

सट्ठाणे अणुकंपा, संजयपडिहारिए निसिद्धो य ।
असई अतदुभये वा, जयणा पडिसिद्धमाईसु ॥

यत्र संयता गृहिणश्च विविक्ता न संयत्यस्तत्र संयतीनां सुस्थानं साधवः तत्रानुकम्पा कर्त्तव्याः । साधूनां वस्त्रं दातव्यमित्यर्थः । साधुभिरपि तत्प्रातिहारिकं ग्राह्यम् । यत्र संयत्यो गृहस्थाश्च मुषिता न संयतास्तत्र साधूनां संयत्यः स्वस्थानं तासां वस्त्रदानेनानुकम्पा कर्त्तव्या तच्च निसृष्टं निजं दातव्यं न प्रातिहारिकं ग्राह्यम् ( असईत्ति ) अथात्मनोऽप्यधिकमुपकरणं नास्ति ततः प्रातिहारिकमपि दातव्यं तदुभयं साधुसाध्वीवर्गः तस्य विविक्तस्य वस्त्राभावे प्रतिसार्थादिषु यतना वस्त्रान्वेषणविषया कर्त्तव्येति संग्रहगाथासमासार्थः ।

अथैनामेव विवृणोति ।

न विवित्ता जत्थ मुणी, समणी य गिहा जत्थ अद्दुद्दा ।
सट्ठाणणुकंपं तहिं, समणुत्तियरा स वि तहेव ॥

यत्र मुनयो न विविक्ता श्रमण्यश्च गृहिणश्च यत्र ( उच्चूढाति ) मुषिता तत्र स्वस्थाने संयतीवर्गे अनुकम्पा कर्त्तव्या । ताश्च संयत्यो द्विविधा संविग्ना असंविग्नाश्च यदि वस्त्राणि सन्ति तत सर्वासामपि दातव्यानि अथ न सन्ति तावन्ति वस्त्राणि तत संविग्नसंयतीनां देयानि ता अपि द्विविधा समनोज्ञाः सांभोगिन्य इतराश्चासांभोगिन्यः । यदि पूर्यन्ते ततो द्वयोरपि वर्गयोस्तथैव दातव्यानि । अथ न पूर्यन्ते ततः स्वस्थाने दातव्यानि समनोज्ञानामित्यर्थः अपिशब्दात् या धृतिदुर्बलास्ताः संविग्नाः असंविग्ना वा स्थविरास्तरुण्यो वा भवन्तु नियमात्तासां दातव्यम्। यत्र साधवो विविक्तास्तत्रेयं यतना ॥

लिंगट्ठनिक्खसीए, गिएहंति पडिहारियमेएसु ।
अमणुन्नियरगिहिसुं, जं लर्द्ध तंनिजं देंति ॥

लिङ्गार्थं तावदवश्यं रजोहरणमुखवस्त्रिके गृहीतव्ये भिक्षार्थं तु पात्रकबन्धपटलकादि शीतत्राणार्थं तु प्रावरणादि एतत्सर्वमपि प्रातिहारिकमेतेषु गृह्णन्ति । तद्यथा अमनोज्ञा असांभोगिका इतरे पार्श्वस्थादयो गृहिण प्रतीताः । अथैषु न प्राप्यते तत संयतीनामपि हस्तात्प्रातिहारिकं ग्राह्यं ततश्चोलपट्टकादिकं यदा लब्धं भवति तदा तन्निजं तत्सदृशं प्रातिहारिकं ददति प्रत्यर्पयन्ति। इह द्वितीयभङ्गे व्याख्यायमाने प्रथमतृतीयचतुर्थभङ्गा अपि लेशत स्पृष्टा अवगन्तव्या । गतो द्वितीयभङ्ग ।अथ तृतीयं भङ्ग व्याख्यानयति ॥

उच्चूढे वि तदुभये, सपक्खपरपक्खतदुभयं होइ ।
अहवा वि समणसमणी, समणुन्नियरेसु एमेव ॥

तदुभये वा उच्चूढे मुषिते सत्येवमेव यतना ज्ञातव्या । अथ तदुभयमिति किमुच्यते इत्याह । स्वपक्षाः संयता परपक्षा गृहस्थाः । अथवा तदुभय नाम श्रमणा श्रमण्यश्च । यद्वा तदुभय समनोज्ञा अमनोज्ञाश्च । यदि वा संविग्ना असंविग्नाश्चेति तदुभयम् तत्र मुषिते सति विधिमाह ॥

अमणुन्नेतरगिहिसं–जईसु असइ पडिसत्थपल्लीसु ।
तिएहट्ठाए गहणं, पडिहारिय एतरे चेव ॥

अमनोज्ञा असांभोगिका इतरे पार्श्वस्थादयो गृहिण संयत्यश्च प्रतीताः एतेषु विविक्तया वस्त्राभावे प्रतिसार्थे वा पल्ल्यां वा पञ्चकपरिहाण्या मार्गयितव्यम् । संयतीनां तु नास्ति पञ्चकपरिहाणिर्यदेव लभ्यते तदेव गृहीत्वा गात्राच्छादन ताभि कर्त्तव्य तच्च वस्त्रं त्रयाणा लिङ्गभिक्षाशीतत्राणानामर्थाय प्रातिहारिकं वा इतरद्वा निसृष्ट ग्राह्यम् ।

एवं तु दिया गहणं, अहवा रत्तिं मिलेज्ज पडिसत्थो ।
गीएसु रत्तिगहणं, मीसेसु इमा तर्हि जयणा ॥

एत दिवा ग्रहणमभिहितम् । अथवा रात्रौ प्रतिसार्थो मिलेत् तत्र स यदि सर्वेऽपि गीतार्थास्ततो रात्रावेव गृह्णन्ति अगीतार्थमिश्रास्ततस्तेषु मिश्रेष्वियं यतना । तामेवाह ।

वत्थेण व पाएण व, णिमंतए व अत्थमिए ।
आइच्चे उदिते य, गहणं गीयत्थसंविग्गे ॥

प्रतिसार्थे कश्चिद्दानश्राद्धादिरनुद्गते वा अस्तमिते वा सूर्ये वस्त्रेण वा पात्रेण वा निमन्त्रयेत् तत्र यदि सार्थो रात्रावेव चलितुकामस्तदा गीतार्था गुरुनालोचयन्ति उदिते सूर्य वस्त्रग्रहण कृत्वा समायाता एव गीतार्था संविग्ना गृह्णन्ति । अथ प्रतिसार्थे पल्ल्यां वा लभ्यते न च सार्थादिक दृश्यते तत किमित्याह ।

खंडे पत्ते तह द–ब्भचीवरे तह य हत्थपिहणं तु ।
अद्धाए विवित्ताणं, आगाढं सेसणागाढं ॥

चर्मखण्डानि संयतीनां परिधानाय दातव्यानि । तदभावे शाकादिपत्राणि तदप्राप्तौ दर्भचीवरं यत्तं ग्रन्थयित्वा समर्पयन्ति सर्वथा परिधानाभावे हस्तेनापि गुह्यदेशस्य पिधान कर्त्तव्यम् । एवमध्वनि विविक्तानामागाढं कारण मन्तव्यं शेष तु सर्वमप्युपकरणाभावे अनागाढम् ।

असंजई य निग्गया खुड्ड–गाइ पेसंति चउसु वग्गेसु ।
अप्पाहिं नियगारं, साहुं च वियारमाइगयं ॥

प्रतिमार्थपल्ल्यादौ वस्त्राणामभावेऽप्राप्तौ अध्वनो निर्गता उद्यान प्राप्ता सन्तः क्षुल्लिकादि विवर्जित ग्राम नगर वा चत्वारः संयतसंयतीश्रावकश्राविकालक्षणा ये वर्गास्तेषु तेषां समीपं प्रेषयन्ति । यद्वा सांभोगिका संयता इत्येको वर्गः अन्यसांभोगिका इति द्वितीयः । सांभोगिकाः संयत्य इति तृतीयः अन्यसांभोगिका इति चतुर्थः । एतेषां वा समीपे प्रेषयन्ति । अथ नास्ति क्षुल्लक क्षुल्लिका वा ततो यस्ततो ग्रामान्नगराद्वा अगारो गृहस्थ समायातः यो वा साधुर्विचारभूम्यादावागतस्तम् ( अप्पाहिंति ) संदिशन्ति यथा साधुसाध्वीप्रभृतीना सांभोगिकसंयतादीना वा भवता कथयितव्यं साधवः साध्व्यश्च बहिरुद्याने स्थिता सन्ति ते चाध्वनि स्तेनैर्विविक्ता अतस्तेषां योग्यानि चीवराणि प्रेषणीयानि । अत्र चायं विधि संयतै संयतानां वस्त्राणि दातव्यानि । संयतीनां तु संयतीभिः । अथ तत्र संयताः संयत्यो वा न सन्ति तदा श्रावका श्राविका वा प्रयच्छन्ति । यत्र तु संयत्यः संयता वा संयतीनां प्रयच्छन्ति तत्र विधिमाह ।

खुड्डी थेरगणप्पे, आलोगितरी उवितु पविसंति ।
ते वि य घेत्तुमइगया, समणुन्न जई जयंते व ॥

क्षुल्लिका उद्यान गत्वा स्थविरसाधूनां वस्त्राण्यर्पयन्ति। अथ न सन्ति क्षुल्लिका तत इतरा मध्यमास्तरुण्यो वा गत्वा स्थविराणामालोके स्थापयित्वा भूयोऽपि ग्राम प्रविशन्ति । यत्र संयतेन संयतीनां दातव्य तत्र क्षुल्लका स्थविरसाध्वीनामर्पयन्ति क्षुल्लकाभावे शेषा अपि साधवः स्थविराया आलोके स्थापयन्ति तेऽपि च संयता संयतीदत्तानि वस्त्राणि गृहीत्वा प्रावृत्य नगरमनिर्गता प्रविष्टाः सन्त आत्मयोग्यमुपकरणमुत्पाद्य संयतीसत्कवस्त्राणि प्रत्यर्पयन्ति एव मनोज्ञेषु विधिरुक्त ( समणुन्नजई जयते वत्ति ) यत्र ते मनोज्ञा सांभोगिका न भवन्ति तथैवं वक्ष्यमाणनीत्या यतन्ते ॥

अद्धाण निग्गयाई, संविग्गा सण्णिदुविह अगारी ।
संजई एसणमाई, असंविग्गा दोण्णि वा वग्गा ॥

अध्वनो निर्गता यत्र ग्रामादौ प्राप्तास्तत्रैते भवेयुः संविग्नविहारिण अनेनेहान्यसांभोगिका गृह्यन्ते । संज्ञिन श्रमणास्ते द्विविधाः संविग्नभाविता असंविग्नभाविताश्च । संविग्नोऽपि द्विधा आभिग्रहिकमिथ्यादृष्टिभेदात् (संजई इत्ति) श्रमण्यः संयता संविग्नानामपि द्वौ वर्गौ तद्यथा साधुवर्ग साध्वीवर्गश्च । एष विधिरुच्यते ( एसणमाईत्ति ) संज्ञिप्रभृतिषु वस्त्रमप्राप्नुवन्त पञ्चकपरिहाणिक्रमेणैषणादोषेष्वपि यतन्त इति ।

अर्थतदेव सविस्तरं व्याख्यानयति ॥

संविग्गतरं भाविय, सन्नीमिच्छा इ गाढणागाढे ।
असंविग्गामिगाहणं, पाउंजेसुं तिगं होला ॥

संज्ञिनो द्विविधा संविग्नभाविता इतरभाविताश्च मिथ्यादृष्टयोऽपि द्विविधाः आगाढा अनागाढाश्च । तत्र प्रथमं संविग्नभावितेषु संज्ञिषु तदप्राप्तावनागाढमिथ्यादृष्टिषु शुद्धं वस्त्रमन्वेषणीयम् । असंविग्नभावितेषु अगाढमिथ्यादृष्टिषु च न गृह्णन्ति कुत इत्याह । असंविग्नभाविता मृगाहरणं लुब्धदृष्टान्त चेतसि प्रणिधानसाधूनामकल्प्यं प्रयच्छन्ति ये त्वाभिग्रहिका मिथ्यादृष्टयस्ते साधुदर्शनप्रद्वेषतो विषं प्रयुञ्जीरन् हीलां वा कुर्युः अहो अदत्तादाना अमी वराका इत्थं विनश्यन्ति इत्यादि । अथ नागाढमिथ्यादृष्टिषु शुद्धं न प्राप्यते ततः किं विधेयमित्याह ॥

असंविग्गभाविएसुं, अगाढेसुं जयंति पणगादी ।
उवएसो संघाडग, पुव्वगहियं च अवसेसं ॥

असंविग्नभावितेषु उद्गमादिदोषशुद्धं यद्वस्त्रं तद्गृहीतव्यं तदभावे अगाढमिथ्यादृष्टिष्वपि यद्यात्मप्रवचनोपघातो न स्यात् अथ तेष्वपि शुद्धं न प्राप्यते ततः संविग्नभावितादिष्वेव पञ्चकादिपरिहाणया तावत् यतन्ते यावच्चतुर्गुरुमासं प्राप्ता भवन्ति ततोऽन्यसांभोगिकैर्येषु कुलेषु दत्तोपदेशेषु याचितव्यं तथाऽप्यप्राप्तौ तेषां संघाटकेन एवमप्यलाभे तेषामेव यत् पूर्वं गृहीतं वस्त्रादि तद् ग्रहीतव्यम् । अमुमेवार्थं विधिविशेषज्ञापनाय पुनरप्याह ॥

उवएसो संघाडग, तेसिं अट्ठाए पुव्वगहियं तु ।
अभिनव पुराणसुद्धं, उत्तरमूले सयं वावि ॥

अन्यसांभोगिकोपदेशेन प्रथमतः पर्यटन्ति ततस्तदीयसंघाटकेन तथाऽप्यप्राप्ता तेषामर्थायान्यसांभोगिका पर्यटन्ति तथाऽपि यदि न लभ्यते ततस्तेषामेव यत्पूर्वगृहीतवस्त्रं तद्गृहीतव्यं तथाभिनवं वा स्यात् पुराणं वा । पूर्वमभिनवं पश्चात्पुराणमपि गृह्णाते तदपि यदुत्तरगुणमूलगुणशुद्धं ततः उपादेयं नान्यथा अथापि न प्राप्यते ततो यः कृतकरणो भवति तं तच्च एवमेव वक्तव्यम् एतच्च यथाऽवसरमुत्तरत्र भावयिष्यते तदेवमन्यसांभोगिकानामपि पूर्वं गृहीतं यदा न प्राप्यते तदा मासलघुकादारभ्य तावद्यतन्ते यावच्चतुर्लघुकं प्राप्ताः ततः किं कर्तव्यमित्याह ।

उवएसो संघाडग, पुव्व गहियं न नियगमाईणं ।
अभिनव पुराणसुद्ध–पुव्वमजुत्तं पि परिजुत्तं ।

चतुर्लघुप्राप्तामित्ययवाभिपार्श्वस्थादीनामुपदेशेन वस्त्रमुत्पादयन्ति तदभावे तेषामेव संघाटकेन तथाऽप्यलाभे यत्तेषां पूर्वगृहीतं मूलोत्तरगुणशुद्धम् अभिनवमपरिभुक्तं तत्प्रथमतो ग्रहीतव्यं ततः परिभुक्तमपि तदप्राप्तौ पुराणमपि मूलोत्तरगुणशुद्धमपरिभुक्तं ततः परिभुक्तमपि ग्राह्यम् । इह निशीथचूर्णयभिप्रायेणास्यैव कल्पस्य विशेषचूर्ण्यभिप्रायेण वाऽन्यसांभोगिकात् यावन्नास्ति पञ्चकपरिहाणि किं तु ततः ऊर्ध्वं पञ्चकहान्या यतित्वा यदा मासलघुप्राप्तास्तदा पार्श्वस्थादीनामुपदेशादिनिमान् गृह्णन्तीति द्वयोश्चूर्ण्योरभिप्रायः परमेतच्चूर्णिकृता भिन्नमासप्राप्तान्यसांभोगिकानां चतुर्लघु प्राप्तास्ततपार्श्वस्थादीनामुपदेशादिना वस्त्रग्रहणे यतन्ते इति प्रतिपादितमतस्तदनुरोधेनास्माभिरपि तथैव व्याख्यातमित्यवगन्तव्यम् ।

यदोक्तमप्यर्थं विशेषज्ञापनार्थं भूयोऽप्याह ।

उत्तरमूले सुद्धे, नवे पुराणे चउक्कभयणेवं ।
परिकम्मण परिभोगे, न होंति दोसा अभिनवम्मि ॥

मूलगुणशुद्धमप्युत्तरगुणशुद्धम् १ न मूलगुणशुद्धमुत्तरगुणशुद्धमपि २ मूलगुणशुद्धं नोत्तरगुणशुद्धम् ३ न मूलगुणशुद्धं नोत्तरगुणशुद्धं ४ एतेषु चतुर्षु भङ्गेषु प्रत्येकं नवपुराणपदविषयं यद्भङ्गचतुष्कं तस्य भजना सा च यथाक्रममेवं कर्तव्या यत्तावन्मूलोत्तरगुणविशुद्धं तत्प्रथमतो नवमपरिभुक्तं ग्रहीतव्यं तदभावे नवं परिभुक्तं तदभावे पुराणं परिभुक्तमेवं द्वितीयतृतीयचतुर्थेष्वपि भङ्गेषु चत्वारश्चत्वारो विकल्पाः यथाक्रमं चैते आसेवितव्याः कुत इत्याह । परिकर्म्मणा दोषा अविधिसीवनादयः परिदोषाश्च मलिनीभूतमलितसुगन्धिगन्धभावितत्वादयोऽभिनवे अपरिभुक्ते च वस्त्रे न भवन्ति । अथ पार्श्वस्थादिष्वपि न प्राप्यते ततोऽमनोज्ञसंयतीनामप्युपदेशेन गृह्णन्ति एषां वा अर्थाय ताः पर्यटन्ति पूर्वगृहीतं वा तासां ग्रहीतव्यं तदभावे असंविग्नसंयतीनामप्युपदेशादिना गृह्णन्ति ।

अथैवमपि न प्राप्यते ततः किं कर्तव्यमित्याह ।

असई य लिंगकरणं, पन्नवणट्ठा सयं च गहणट्ठा ।
आगाढे कारणम्मि, जहेव हंसाइणो गहणं ॥

एवमप्यलभ्यमाने शाक्यादिवेषेण तदीयोपासकाना यतिभ्यो वस्त्रदापनाय प्रज्ञापनार्थं स्वयं वा ग्रहणं वस्त्रस्योत्पादनं कर्त्तव्यं किं बहुना ईदृशे आगाढे कारणे यथैव हंसतिलादेरननुज्ञापितस्यापि ग्रहणं दृष्टं तथैव वस्त्रस्यापि तथाऽप्यलाभे सूत्रं मार्गयित्वा अन्यैर्वाययति तदभावे स्वयमेवालपसागारिके वयति अथ सूत्रं न लभ्यते । ततः को विधिरित्याह ।

सेडयरुए पिंजियए, पेलुगहणे य लहुगदप्पेणं ।
भवकाले हि विसिट्ठा, करेण अकमेण ते चेव ॥

सेडुगो नाम कर्प्पासः स एव लोडितः सन् बीजरहितो रुतं तदेव रुतं पिञ्जनिकया ताडितं पिञ्जितं तदेव पूणिकया वलितं पेलुरिति भण्यते । एतेषां यदि दर्प्पेण ग्रहणं करोति तदा चत्वारः लघुकाः तपःकालाभ्यां विशिष्टास्तत्र सेडुके उभयगुरुकाः रुते तपोगुरुकाः पिञ्जिते कालगुरुकाः पेलुके द्वाभ्यां लघुकाः कारणे पुनः प्रथमपेलुकं पश्चात् पिञ्जितं ततो रुतं ततः सेडुकमपि गृह्णाति । अथाक्रमेण गृह्णाति ततस्त एव चत्वारो लघुकाः सेडुकं च त्रिवर्षातीतं विध्वयोनिकमवग्रहीतुं कल्पते न सचित्तम् ।

कडयोगि एकओ वा, असईए नालबद्धसहिओ वा ।
मिच्छाए उवगरणं, उभओ पक्खस्स पाउग्गं ॥

कृतयोगी नाम यो गृहवासे कर्त्तनं कृतवान् स गच्छस्य वस्त्राभावे एककः वा नालबद्धसंयतीसहितो वा विजने भूभागे कर्त्तनं वयनं च कृत्वा उभयपक्षस्य संयतसंयतीलक्षणस्य प्रायोग्यमुपकरणं परिकुञ्जते ततः किमित्याह ।

अगीयत्थेसु गिंचे, जहलाभं सुलभवहिखेत्ते ।
सुपच्छित्तं उ वहंति, अन्नाने तं चेव धारेंति ॥

यद्यगीतार्थास्ततस्तेषु सुलभोपधिक्षेत्रेषु गताः सन्तो यथालाभं यद्वस्त्रं लभन्ते तत्सदृशमपरं व्यूतवस्त्रं विवेचयन्ति परिष्ठापयन्तीत्यर्थः । अगीतार्थप्रत्ययनिमित्तं च यथालघुप्रायश्चित्तं वहन्ति । अथापरं न लभ्यते ततस्तदेव स्वयं व्यूतं वस्त्रं धारयन्ति । अथ सर्वेऽपि गीतार्थास्ततोऽपरस्य लाभे प्राकृतं परित्यजन्ति वा न वा न कोऽपि नियमः । अथ "वाणनिगयाई" इत्यत्र योऽयमादिशब्दस्तस्य फलमुपदर्शयन्नाह ।

एमेव य वासिमम्मि वि, झामियअो महियवूढपरिजुन्ने ।
पुव्वुट्ठिए व सत्थे, सम इत्थं जए वावि ॥

न केवलमध्वनि विविक्तानामेष विधिः किन्तु ग्रामादौ वसिमे पथि वसतां यत्रोपधिरग्निकायेन ध्मापितो दग्धः अवमौदर्ये वा विक्रीतः चौरैर्वा हृतः वर्षासु वा पानीयपूरेण वा व्यूढपरिजीर्णो वा पुराणतया दुर्बलीभूतो विवक्षितं कार्यं कर्तुमसमर्थः तत्राप्येवमेवानन्तरोक्तो विधिर्मन्तव्यः । अत्र चापरो विशेष उपदर्श्यते यत्र ग्रामे साधवः स्थिताः सन्ति तत्र सार्थे कश्चित्प्राप्तः स च आदित्योदयात्पूर्वमेवोत्थितः उच्चलितुमारब्धो वर्त्तते यत्र च गतस्य तस्य रविरुदेष्यति तत्र गच्छतां अपान्तराले च स्तेनादिजय स्तेनैर्वा साधवो दग्धाद्युपधयस्तं सार्थं नक्तं रात्रौ प्राप्ताः प्राग्ये प्रभाते अनुद्गते एव सूर्ये अग्रतश्चलितुकामाः अतो रात्रावेव यथोक्तनीत्या वस्त्रादि गृह्णीयुः ।

(सूत्रम्) अन्नत्थ एगा य हरिया हडिया एसा वि य परिभुत्ता वा धद्धा वा मट्टा वा संपधूमिया वा ॥

अस्य सबन्धमाह ।

सुत्तेण चेव जोगो, हरियाहडम्मि कप्पए निसि घित्तुं ।

हरिऊण य आहडिया, बूढा हरिएसु वा हडु ।

सूत्रेणैव सूत्रस्य योगः संबन्धोऽत्रास्ति अनन्तरसूत्रे रात्रौ वस्त्रादिक ग्रहीतु कल्पते इत्युक्तम् । अत्र तु या व्याहृता हृतिका सा निशि रात्रौ ग्रहीतु कल्पते इति प्रतिपाद्यते अनेन सबन्धेनायातस्यास्य व्याख्या । न कल्पते रात्रौ वस्त्रं ग्रहीतुमिति प्रतिषेधोऽन्यत्रैकस्या हृताहृतिकाया हरिताहृतिकाया वा तत्र पूर्वं हृत पश्चादाहृतमानीतं वस्त्रं हृताहृत तदेव हृताहृतिका स्वार्थे कः प्रत्ययः । अनिवर्तन्ते स्वार्थिकप्रत्ययप्रकृतिलिङ्गवचनानीति वचनादत्र रूढित स्त्रीलिङ्गनिर्देशः । एवं हरितेषु वनस्पतिषु आहृत हरिताहृत वस्त्र तदेव हरिताहृतिका साऽपि च परिभुक्ता परिधानादौ व्यापारिता धौता अप्कायेन प्रक्षालिता रक्ता विचित्रवर्णकैरुपरञ्जिता घृष्टा घट्टकादिना घटिता मृष्टा सुकुमारीकृता सप्रधूमिता धूपद्रव्येण सम ततः प्रकर्षेण धूपिता वाशब्दः सर्वोऽपि विकल्पार्थः । एवंविधाऽपि सा सीकर्त्तव्या पुनरसाधुप्रायोग्या कृतेति कृत्वा परिहर्तव्येति सूत्रार्थः । अथ भाष्यम् । "हरिऊण य" इत्यादि पश्चार्द्धं स्तेनैः पूर्वं हृता पश्चाद्भूयआहृतमानीत तदेव हृताहृतिकेत्युच्यते । यद्वा हृतेषु प्रक्षिप्ता या सा हरिताहृतिका । सा पुनः कथं भवतीत्याह ।

अद्धाणमणद्धाणे, व विवित्ताणं तु होज्ज आहडिया ।

अविहिम्मि संति खेमे, विहम्मगच्छे सइ गुणेसु ॥

अध्वनि अनध्वनि वा विविक्तानां हृताहृतिका सभवन्ति तत्र ( अविहे ) अनध्वनि मासकल्पेन विहरन्तो क्रमं निरुपद्रवमादौ च सति सत्सु विद्यमानेषु ज्ञानादिगुणेषु विहमध्वानं न गच्छेत् न प्रविशेत् । तथा चाह ।

उप्फरेसु भिक्खे, अद्धाणपवज्जणं तु दप्पेण ।

लहुगा पुण सुद्धपए, जं वा आवज्जई जत्थ ॥

नाणट्ठदंसणट्ठा, चरित्तट्ठा एवमाइ गंतव्वं ।

उवगरणपुव्वपाडि्लेहिएण सत्थेण गंतव्वं ॥

गाथाद्वयमपि प्राग् व्याख्यातम् । तत्राध्वनि प्रविशतां विधिमाह

अद्धाण पविसमाणा, गुरुं पवार्दिति ते गता पुरतो ।

अह तत्थ पवादेंते, चाउम्मासा भवे गुरुगा ॥

अध्वानं प्रविशन्तः प्रथममेव गुरुमाचार्यं प्रवादयन्ति गुरुप्रवादमुत्थापयन्तीत्यर्थः । तथा ते अस्माकमाचार्याः पुरतः पूर्वमेवान्येन सार्थेन सह गता अत एव वयं त्वरामहे कथं नाम तेषां समीपं क्षिप्रमेव प्राप्नुयाम । अथ तत्राध्वनि प्रविशन्त एवं न प्रवादयन्ति ततश्चतुर्मासा गुरुकाः प्रायश्चित्तम् ।

गुरुसारक्खणहेउं, तम्हा थेरो उ गणधरो होइ ।

विहरइ य गणाहिवई, अद्धाणे होइ भिक्खुस्स ।

गणधराकारधारकः क्रियत इत्यर्थः । यस्तु गणाधिपतिः सोऽध्वनि मार्गे स्वयं भिक्षुभावेन सामान्यसाधुवेषेण विरहति कुत इति चेदुच्यते कदाचिदध्वनि साधवः स्तेनकैर्विविक्ताः क्रियेरन् ततस्ते स्तेनकाश्चिन्तयेयुः ।

हयनायगा न काहिंति, उत्तरं राउले गणे वावि ।

अम्हं आहिवइस्स व, नायगमित्ताइएहिं वा ॥

हतो नायक आचार्यो येषां ते हतनायकास्तथाभूताः सन्त ते राजकुले वा गणे वा गत्वा न किमप्युत्तरमुपकरणापहारगवात्मक करिष्यन्ति अस्वामिकतया निराशीभूतत्वात् । तथाऽस्माकं योऽधिपतिस्तस्य वा तदीया वा ये ज्ञातकाः स्वजना यानि मित्राणि तत्प्रति नाम तेषामन्तिके गतास्तैः पृष्टाः सन्तो न किमप्युत्तरं प्रदास्यन्ति आचार्यस्यैव तदानीमभावेनाप्रगल्भत्वादिति भावः । तस्मादाचार्यमेवोपद्रावयाम इति विचिन्त्य तथैव कुर्युः ततो यथोक्तनीत्या गुरवः प्रवादयितव्या तत स्तेनाः चतुर्विधाः ।

संजयपंता य तहा, गिहिभद्दा चेव माहुभद्दा य ।

तदुभयभद्दा पंता, संजयभद्देसु आहडिया ॥

एके संयतप्रान्ताः गृहस्थभद्रकाः । अन्ये साधूनां भद्रकाः गृहस्थप्रान्ताः । अपरे तदुभयभद्रकाः अपरे तदुभयप्रान्ताः । अत्र ये संयतभद्रकास्तेषु हृताहृतिका भवेत् हृत्वाऽपि तयोर्वस्त्रमर्पयेयुरित्यर्थः ।

सत्थे विविंचमाणा, अहिवई भद्दओ व पंतो वा ।

दट्ठूण निवारइ, वत्थं गहियं च पेसेइ ॥

सार्थे स्तेनैर्विविच्यमाने मुष्यमाणे साधवोऽपि विविच्येरन् तत्र योऽधिपतिः चौरसेनाधिपतिः स साधूनां भद्रको वा स्यात् प्रान्तो वा यदि भद्रकस्तदा साधून् विविच्यमानान् दृष्ट्वा निवारणं करोति मैतेषां वस्त्राण्यपहरतेति । अथासौ तत्रासंनिहितस्तैर्गृहीतं तदुपकरणं भूयोऽपि प्रेषयति । अमून्येव गाथावयवान्याचष्टे ।

छिन्नदसं सिव्वणीहिं व, नाउ य सेउ वा लज्जिताणं ।

ते चेव तक्करे न-हओ अंतिए पेसेइ ॥

चौरसेनाधिपतिः साधूनामुपधिं नीतमुपढौकितं दृष्ट्वा छिन्नदशाकत्वेन साधुसत्कनिनीभिः सीवनीभिः सीवितत्वेन वा साधूनां सत्कमेतद्वस्त्रमिति ज्ञात्वा तान् तस्करान् गुरु मने आः पापा निष्ठास्थ यूय देय महात्मनां वस्त्राण्यपहृतानीत्यादि एवमुपालभ्य भूयोऽपि तस्योपधेः साधूनामर्पणार्थं तानेव तस्करान् साधूनामन्तिके प्रेषयति ॥

वीसत्थमप्पिणंते, जयणा छड्डितु केइ वच्चंति ।

विहिया पासवण भूमि, उवस्सए दिट्ठम्मि जा जयणा ॥

स्तेना द्विधा आक्रान्तिकाः अनाक्रान्तिकाः स्तेनाः कुतोऽपि न बिभ्यति अत एव ते चौरसेनापतिना वस्त्रप्रत्यर्पणार्थं प्रेषिताः सन्तो

विश्वस्ता निर्भयाश्च त एव आनीयवस्त्रं संयतानामर्पयन्ति अनाक्रान्तिकास्तु भयेन मा केनाप्यारक्षिकादिना ग्रहीष्यामह इति परिज्ञाय रात्रावानीयोपाश्रयाद्बहिः प्रश्रवणभूमावुपाश्रयमध्ये वस्त्रं प्रक्षिप्य मजन्ति पलायन्ते तस्मिन् वस्त्रे दृष्टे सति या वक्ष्यमाणा यतना सा करणीया। तामेवाह ॥

गीयमगीया अविगीय-पच्चयट्ठा करिंति वीसुं तु।
जइ संजइ वि तहियं, विगिंचिया तासिवि तहेव ॥

यदि सर्वेऽपि गीतार्थास्ततस्तदुपकरण मौलोपकरणेन सह मीलयित्वा यथास्वरुचि परिभुञ्जते। अथ ते केचिद् गीतार्थाः केचिचागीतार्था अविगीतप्रत्ययार्थं हृताहृतिकोपकरणं विष्वक् पृथक् स्थापयन्ति ते ह्यगीतार्था एवं चिन्तयेयुः एष स्तेनप्रत्यर्पित उपाधिस्तावदुपहतेन च सह मिश्रिततरोऽप्युपहत एव अतस्तेषां प्रत्ययार्थं हृताहृतिकोपकरणं विष्वक् पृथक् स्थापयन्ति। अथ संयत्योऽपि विविक्तास्ततस्तासामप्युपकरणं तथैव पृथक् कुर्वन्ति।

जो वि य तेसिं उवही, अहागडो प्पो य सपरिकम्मो य।
तं पि य करिंति वीसुं, मा अविगीयाउभंडे वा ॥

योऽपि च तेषां साधूनां यथाकृतोऽल्पपरिकर्मा सपरिकर्म्मा चोपधिस्तमप्यविष्वक् परस्परं कुर्वन्तोऽविगीतार्थाः परस्परं मारुयेयुः कलहं कुर्युः यथा किमिति त्वदीयैर्मदीयोपकृतोपाधिः सपरिकर्मणा सह मीलित इत्यादि एव तावद्भक्ते सेनापतौ विधिरभिहित। अथ प्रान्तविषयं विधिमाह ॥

पंतोवहिम्मि लुद्धो, आयरिए इच्छए विवाएउं।
कयकरणे करण वा, आगाढे किसो सयं भणइ ॥

प्रान्तश्चौरसेनापतिरुपधावुपकरणे लुब्धः सन् आचार्यान् व्यापादयितुमिच्छति ततो यस्तत्र कृतकरणो धर्मकथालब्धिमान् धनुर्वेदकृताभ्यासो वा स तत्र कारणं करोति धर्मकथादिना स्वभुजबलप्रकटनेन वा त शमयतीत्यर्थः। अथवा ईदृशे आगाढे कार्ये य एषो दुर्बलदेहः स स्वयमात्मनैवात्मानमाचार्यं भणति। एतामेव गाथां भावयति।

को तुब्भं आयरिओ, एवं परिपुच्छियम्मि अच्छाणे।
को कहयइ आयरियं, लग्गइ गुरुए व चउमासे ॥

प्रान्त सेनापतिं पृच्छति को युष्माकं मध्ये आचार्य एवमध्वनि गच्छतां परिपृष्टे सति य कश्चिदाचार्यं निर्धार्य कथयति स लगति प्राप्नोति चतुरो मासान् गुरुकानिति। किं तर्हि वक्तव्यमित्याह

सत्येणन्नेण गया, एहिंति य मग्गतो सुगुरु अज्ज।
सत्थिल्ल एव पुच्छह, हयं पलायं वमाहिंति ॥

येऽस्माकं गुरवस्ते अन्येन सार्थेन सह प्रागेव गता मार्गतो वा पृष्ठतस्ते एष्यन्ति। यदि वा न प्रतीतिर्भवतां तत सार्थिकान् पृच्छत। यद्वा हतोऽस्मावस्माकमाचार्यं पलायितो वा वयं सांप्रतमनाथा वर्तामहे एवं कथयन्ति ॥

जो वा दुब्बलदेहो, जुंगियदेहो असच्चवक्को वा।
गुरुं गिज्झ एएसि अहं, न य मि पगब्भो गुरुगुणेहिं ॥

अथवा यो दुर्बलदेहो विकलाङ्गो यो वा असत्यवाक्योऽसमञ्जसप्रलापी स सेनापतिं प्रति वक्ति अहं किलैतेषां सर्वेषामपि गुरु पर न च नेयाऽस्म्यहं प्रगल्भ सपूर्णो गुरुगुणैः शरीरसपदादिभिर्वा

हीणो वा अभिजाओ, खंजकुणीकाणओ व जाओ।

मा मे वहेह सीसे, जं इच्छह तं कुणह मज्झं ॥

व्याधिना रोगेणाहमतीवाऽभिभूतोऽस्मि खञ्ज पादविकलः कुणिः पाणिविकलः काणश्चक्षुर्विकल ईदृशो वा अहं जातोऽस्मि अतो मा मदीयान् शिष्यान् वधध्वं यन्मारणादिकं कर्तुमिच्छथ तन्ममैव कुरुध्व यत ॥

इहरा वि मरिउमिच्छं, संति सिस्साण देह मा हणह।
मम मारगत्तूणमिणं, जं किरइ मुंचह सुते मे ॥

इतरथाऽपि तावदहं मर्तुमिच्छामि ततो मदीयशिष्याणां शान्ति प्रयच्छत मा पुनर्यथास्वरुचि हन्त विनाशयत यतो यदिदं मम मारणं भवद्भिः क्रियते तन्मृतस्यैव मारकत्व भवति अतो मुञ्चत मदीयान् शिष्यान् सुतान्। अपि च ॥

एयं पि अंत जाणह, रिसिवज्झा जह न सुंदरा होइ।
इह य परत्थ य लोए, मुंचंतणुलोमिया एवं ॥

भो भद्रा एतदपि तावद्यूय जानीथ यथा ऋषिहत्या विधीयमाना इह च परत्र च लोके सुन्दरा न भवति एवमनुलोमिताः प्रज्ञापिताः सन्तस्ते तस्कराः साधून् मुञ्चन्ति। अथैवमपि न मुञ्चेरन् तत किं कर्तव्यमित्याह ॥

धम्मकही चुन्नेहि व, मंतनिमित्तेण वा वि विज्जाए।
नित्थारेई बलेण व, अप्पाणं चेव गच्छं च ॥

यो धर्मकथालब्धिमान् धर्मकथया त सेनापतिमुपशमयति चूर्णैर्वा मन्त्रेण वा विद्यया वा निमित्तेन वा पातयेत् यो वा धनुर्वेदादौ कृतपरिश्रमः स निजबलेन सेनापतिं निर्जित्यात्मानं गच्छं च निस्तारयति। अथ एषामेकमपि न विद्यते तत ॥

वोसज्जिया व तेणं, पंथफिडिए व हिंडमाणे वा।
गंतूण तेण पल्लिं, धम्मकहाईहिं पन्नवणे ॥

तेन सेनापतिनोपधिमपहृत्य साधवो विसर्जिता मुक्ता इत्यर्थः। मुक्ताश्च ये तदुपधिं न गवेषयन्ति ततश्चतुर्लघुकाः तत स्तेनपल्लीं गत्वा गवेषयितव्य उपधिः गच्छता वाऽपान्तराले यदि कोऽपि प्रश्नयेत् कुतो भवन्त इहागता ततो वक्तव्यमेते मार्गात्परिभ्रष्टा हिण्डमाना वा विहारक्रमेण विहरन्त एव वयमिह सम्प्राप्ताः तत स्तेनपल्लीं गत्वा धर्मकथादिभिः सेनापते प्रज्ञापना कर्त्तव्या।
अर्थमिदमेव भावयति ॥

भद्दमभद्दं अहिवं, नाउं भद्दे वसति तं पल्लिं।
फिडिया मुत्तिय पंथं, भणंति पुट्ठा कहा पल्लिं ॥

स्तेनपल्लीं गच्छद्भिः प्रथमत एवैतद् ज्ञातव्य किमत्र सेनापतिर्भद्रकोऽभद्रको वा यदि भद्रकस्ततस्तां पल्लीं प्रविशन्ति। अथाभद्रकस्ततो मा प्रान्तापतापद्रावणादीनि कार्षीदिति कृत्वा न तत्र गन्तव्यम्। अथ गच्छन्ति ततश्चत्वारो गुरव। अथ कोऽप्युपशमनायोत्सहते ततस्त गृहीत्वा गन्तव्यं गच्छन्तश्च कुत किमर्थं भवन्त इहायाता अत्र कुत्र वा ब्रजिष्यथ इति पृष्टा भणन्ति पन्थस्फिटिता परिभ्रष्टा वयमिह पल्ल्यामाराहान्वेषण कुर्महे।

मुसियत्ति पुच्छमाणं, को पुच्छइ किं च अम्ह मुसियव्वं।
अहिवं भणंति पुव्विं, आणेन्ते सज्झायगादीहिं ॥

किं मुषिता यूयमिति पृच्छन्त उच्यते। को नामास्मान् पृच्छति किं वा निर्ग्रन्थानामस्माक मुषितव्य ततश्च स्तेनपल्लीं गत्वा यस्तत्र सेनाया अधिपतिस्त पूर्वं प्रथमतो भणन्ति। धर्मकथादिना प्रज्ञापयन्ति प्रज्ञापितश्च यदा व्यापृतस्ततो वक्तव्यमस्माकमुपधिं प्रयच्छेत्यादिना सेनापतिरुपशमयितव्य।

उपसंतो सेणावइ, उवगरणं देइ वा दवावेइ ।
गीयत्थे हि य गहणं, तं वीसुं व सीकरणं ॥

उपशान्तः सन् सेनापतिः स्वयमेवोपकरणं ददाति स्वमानुषैर्वा दापयति ते सर्वे गीतार्थास्ततः उपकरणं मिश्रयन्ति वा न वा। अथागीतार्थमिश्रास्ततो गीतार्थैस्तस्योपकरणस्य ग्रहणं कर्त्तव्यम्। यच्च सयतासयतानामुपकरणं तद्विष्वक् विधेयम्।

अथ सेनापतिर्ब्रूयात्।

सत्थे बहू विवित्तो, गिएहह जं जत्थ पेच्छह अडंता ।
इइइं पडिपल्लीसु य, रुसेह विइओ जओ हं सो ॥

सार्थोऽस्मन्मानुषैर्बहु प्रभूतो विविक्तः अतो न ज्ञायते कस्य कुत्र वस्त्रादिकमस्तीति ततो गृहीत एव स्वकीयमुपकरणं यत्र पर्यटन्तः पश्यथ ततः साधुभिर्वक्तव्यं यद्येवं ततः स्वमानुषमस्माभिः सह वर्जयत ततस्तदीयमानुषेण सह गच्छन्ति। स च ब्रूते इहास्यामेव पल्ल्यां प्रतिपल्लीषु वा यद्युष्मदुपकरणं तत्तद् ( रुसेहत्ति ) देशीयवचनत्वात् गवेषत अहं भवतां द्वितीयोऽस्मीति ततो यद्यत्र पश्यन्ति तत्तन्मानुषादिभिः प्रज्ञाप्य गृह्णन्ति।

अह ताव न जातो जह, एएसिं पि पावइ न हत्थं ।
तह कुणिमो मोसमेणं, बुज्झंति पावा अह इमेसु ॥

अस्माकं तावदयं मोषो मुषितवस्त्रादिलक्षणो न जातः अतो यथैतेषामपि हस्तं न प्राप्नोति तथा वयमेनं मोषं कुर्महे इति विचिन्त्य केचित्पापाः स्तेनकास्तथेति चिन्तानन्तरमेतेषु प्रक्षिपन्ति । तद्यथा ।

पुढवीआउकाए, अगडवणस्सइतसेसु साहरइ ।
सुत्तत्थजाणएणं, अप्पाबहुयं तु नायव्वं ॥

पृथिवीकाये वा अप्काये वा अगडे वा गर्तायामित्यर्थः। वनस्पतिषु वा त्रसेषु वा संहरन्ति निक्षिपन्तीति यावत्। गाथायामेकवचननिर्देशः प्राकृतत्वात् एतेषु निक्षिप्तमपि ग्रहीतुं न कल्पते इति बुद्ध्या। अत्र च सूत्रार्थः येन गीतार्थेन पृथिव्यादिनिक्षिप्ते तत्रोपकरणे स्वल्पतरमेवाधिकरणमगृह्यमाणेषु बहुतरमसयतपरिभोगात्कायप्रक्षालनादिक्रमेणाल्पबहुत्वं ज्ञातव्यं ज्ञात्वा च ग्रहीतव्यं तद्वस्त्रम् । अथ न गृह्णाति ततश्चतुर्लघुका अनवस्था चैव भवति । भूयोऽपि हृत्वा ते वा अन्ये वा एवमेव पृथिव्यादिषु निक्षिपन्तीति भावः । अथ " सावि य परिभुत्ता वा " इत्यादिसूत्रावयवं विवृणोति ।

हरियाहरिया सुविहिय, पंचवन्ना वि कप्पई घेत्तुं ।
परिभुत्तमपरिभुत्ता, अप्पाबहुगं वियाणित्ता ॥

हे सुविहित ! हृताहृतिका यद्यपि स्तेनकैः पञ्चवर्णा कृता तथापि ग्रहीतुं कल्पते तथा परिभुक्ता अपरिभुक्ता वा उपलक्षणत्वाद्धौता घृष्टा मृष्टा सप्रमिता वा भवतु परं तथाऽप्यल्पबहुत्वं विज्ञाय स्वीकर्त्तव्यैव न परिहर्त्तव्या।

आघत्ते विक्कीए, परिभुत्ते तस्स चेव गहणं तु ।
अन्नस्स गिएहणंत–स्स चेव जयणाए हिंसंति ॥

स्तेनकैस्तद्वस्त्रमाघत्तं ग्रहणके मुक्तं भवेत् विक्रीतं वा परिभुक्तं वा ततस्ते ब्रूयुः वयमन्यद्वस्त्रं प्रयच्छाम इति ततो वक्तव्यं तदेवास्माकं प्रयच्छत नान्येन प्रयोजनमिति भणित्वा तदेव ग्रहीतव्यं यदि न लभते ततोऽनवस्थाप्रसङ्गनिवारणार्थमन्यस्यापि ग्रहणं कुर्वन्ति तत्र यदि संस्तरति ततः परिष्ठापयितव्यम् असंस्तरे तु परिभोक्तव्यम् । तथा तस्यैव सेनापतेर्मानुषैः सह वस्त्रान्वेषणाय यतनया हिण्डन्ते पर्यटन्ति । इदमेव भावयति ॥

अन्नं च देइ उवहिं, सा वि य नातो तहेव अन्नातो ।
सुद्धस्स होइ गहणं, असुद्धि घेत्तु परिट्ठवणा ॥

अथासौ सेनापतिरन्यमन्यसाधुसम्बन्धिनमुपधिं ददाति ततः स उपधिर्ज्ञातो वा स्यात् संविग्नासंविग्नसंबन्धितया उपलक्षितः अज्ञातो वा तद्विपरीतः तत्र यः शुद्धो विधिपरिकर्म्मितो यथोक्तप्रमाणोपेतश्च स संविग्नसंबन्धी तं गृहीत्वा तेषामेव संविग्नानामर्पयन्ति । अथ ते देशान्तरं गतास्ततो यदि संस्तरन्ति ततः परिष्ठापयन्ति। अथ न संस्तरन्ति ततः परिभुञ्जते। यः पुनरशुद्धः एतद्विपरीतः सोऽसंविग्नानां सम्बन्धी तमप्यनवस्थाऽधिकरणपरिहरणार्थं गृहीत्वा पश्चात्परिष्ठापयन्ति । इदमेव व्याचष्टे।

तं सिव्वणीहि नाउं, पमाणहीणाहियं विरंगं वा ।
इतरोवहिं पि गिएहइ, मा अहिगरणं पसंगो वा ॥

तदुपकरणमविधिसीवनिकाभिः सीवितं प्रमाणतश्च हीनाधिकं विरङ्गं विचित्रवर्णकरक्तमेवंविधं दृष्ट्वा ज्ञातव्यं यथैष इतरेषामसंविग्नानामुपधिस्तमपि ज्ञात्वा गृह्णात्येव कुत इत्याह मा तस्मिन्नगृह्यमाणे अधिकरणे असंयतपरिभोगादिना प्रसङ्गो वा भूयोऽप्युपकरणहरणलक्षणो भवत्विति कृत्वा ।

अंतरस्स व पल्लीए, जयणा गमणं तु गहण तह चेव ।
गामाणुगामियम्मि य, गहिए गमणे य तं भणियं ।

अथान्यस्य सेनापतेः पल्ल्या तस्योपकरणस्यार्द्धं नीतं भवेत् ततस्तत्रापि यतनया गमनं ग्रहणं तथैवानुशिष्टिधर्मकथादिना विधेयम्। एवमध्वनि विविक्ताना विधिरुक्तः । ग्रामानुग्रामिकेऽपि विहारे मासकल्पं विधिं कुर्वन्तो यदा विविक्ता भवन्ति तदा गृहीते स्वहस्तचटिते ( गहणेत्ति ) गृह्यमाणे चोपकरणे उपधिपृथक्करणादि धर्मकथादिकं च यत् पूर्वं भणितं तदेवात्रापि द्रष्टव्यम् । इदमेव व्याचिख्यासुराह ।

तत्थेव आणावेइ, तं तु पेसेइ वा जहिं भट्टो ।
सत्थेण कप्पियारं, त देइ जो णं तहिं नेइ ।

यद्युपकरणमन्यस्यां पल्ल्यां नीतं तदा यदि मूलपल्लीपतिर्भद्रकस्ततः उपकरणं तत्रैवात्मनो मूले तत्पल्लीवास्तव्यमानुषैरानाययति । अथवा तमात्मीयं मनुष्यं तत्र प्रेषयति यत्रासावन्यस्य सेनापतेः पल्ल्यामुपधिर्वर्तते। अथासौ न समर्थः स्वसमीपे आनाययितुं ततः सार्थेन सह तस्यां पल्ल्यां गन्तव्यम् । अथ सार्थो न प्राप्यते ततो मूलपतेर्मानुषो मार्गयितव्यः स च कल्पितारं मार्गदर्शयितारं स्वमनुष्यं ददाति यस्तत्र पल्ल्यां साधूना नयति ॥

अणुसिट्ठाई तत्थ वि, काउ सपल्लि इतरीसुं वा ।
घेत्तु सत्थेण व यं, उवयंति अह भद्दए जयणा ॥

तत्रापि पल्ल्यामनुशिष्टिधर्मकथादिप्रयोगतः कृत्वा गृहीत्वा च स्वकीयमुपकरणं जातं यदि ततः सार्थो न लभ्यते ततस्तेनैव मनुष्येण सह स्वपल्ल्यामागच्छन्ति मूलपल्ल्यामित्यर्थः । तत्र चागत्य सार्थेन सह जनपदमुपयान्ति। अथ तस्या पल्ल्या मकाशादितरासां जनपदप्रत्यन्तपल्लीनां सार्थो यदि लभ्यते ततो मुषोपकरणं नीतं भवेत् ततस्तदर्थं तत्र गत्वा तद् गृहीत्वा ततः

सार्थेन सार्द्धं जनपदमुपयान्ति । अथैष म्लेच्छस्ततोऽन्यपल्लीपतौ यवना गणिना ॥

फग्गुनपडए पंते, भणंति मेणावई तेहिं ।
एते उत्तरमग्गं-वियाइ जा पच्छिमा राया ॥

इह मूलपल्लीं मुक्त्वा या अन्या पल्ल्यस्तासामधिपतयो मूलपल्लीपतिवशवर्तिनः स्पर्द्धकपतय उच्यन्ते तेषामेकतरेण साधवो विविक्ता स च प्रकृत्यैव प्रान्तस्ततस्तस्मिन् प्रान्ते बहुशोऽपि मार्गिते उपकरणमप्रयच्छति मूलसेनापतिं भणन्ति धर्मकथादिना प्रज्ञापयन्ति स च प्रज्ञापित सन् दापयति । अथ सोऽपि प्रान्तस्ततो यः कोऽपि मारुम्बिकश्छिन्नमडम्बाधिपतिः स प्रज्ञाप्यते तत उत्तरोत्तरं तावन्नेतव्यं यावत्पश्चिमः सर्वान्तिमो राजा तमपि प्रज्ञाप्योपकरणं गृहीतव्यमिति भावः । अथ प्रमादादुपरतो न मार्गयति न वा धौतरक्ताधिकमसंयतप्रायोग्यमिति कृत्वा च गृह्णाति ततश्चतुर्लघवः ।

वसिमे वि विवित्ताणं, एमेव य वीसुकरणमादी य ।
वोसिरणे चउलहुगा, जं अहिगरणं वहाणा य ॥

न केवलमध्वनि विविक्ताना किं तु वसिमेऽपि जनपदे विविक्तानामुपकरणविष्वक्करणादीनि कार्याण्येवमेव मन्तव्यानि यस्तु स्वोपकरणं व्युत्सृजति को नामात्मानमायासयिष्यतीति कृत्वा न गवेषयतीति भावस्तस्य चत्वारो लघवः यच्चाधिकरणमप्कायप्रक्षालनादि याचते तेनोपकरणेन विना सूत्रार्थयोः संयमयोगानां चापरिहाणिस्तन्निष्पन्नमपि प्रायश्चित्तं यत एवमतः सर्वप्रयत्नेन गवेषणीयम् । बृ० १ उ० ।

( १४ ) भिक्षणाय गतं भिक्षुमुपनिमन्त्रयेत् ।

( सूत्रम् ) निग्गंथं च णं गाहावइकुलं पिंडवायपडियाए अणुपविट्ठं केइ वत्थेण वा पडिग्गहेण वा कंबलेण वा पायपुंछणेण वा उवनिमंतिज्जा कप्पइ से सागरकडंगहाय आयरियपायमूले ठवित्ता दोच्चं पि उग्गहं अणुन्नविए ॥

अस्य सूत्रस्य संबन्धमाह ।

अविरुद्धे भिक्खगतं, कोइ निमंतेज्ज वत्थएहिं ।
कारणावरुद्धचारी, विगिंचिते वावि गेण्हेज्जा ॥

अविरुद्धे विरुद्धराज्यरहिते ग्रामादौ विरुद्धराज्यचारी स्तेनादिभिर्विविक्तो मुनिः सन् वस्त्राणि गृहीयात् अतो वस्त्रग्रहणविधिं प्रतिपाद्यते ।

अहवा ओग्गहं तेणं, निवमगमपक्कम्म पच्छिम जाणितं ।
दोच्चमणुण्णवेउं, उत्तरियं वत्थभोगादी ॥

अथवा नृपतमानमतिक्रम्य विरुद्धराज्यसंक्रमणे लौकिकस्तैन्यमिदमनन्तरसूत्रे भणितम् । अथ द्वितीयं वारमवग्रहमाचार्यसमीपे अननुज्ञाप्य तदा वस्त्रपरिभोगमादिशब्दात् धारणं वा करोति तदा लोकोत्तरिकस्तैन्यं भवतीति प्रतिपाद्यते । एति सूत्रे निगमातस्याय्य व्याख्या निर्ग्रन्थपूर्वोक्तशब्दार्थः चशब्दोऽभ्यन्तरोपन्यासे णमिति वाक्यालङ्कारे गृहस्य पतिः स्वामी गृहपतिस्तस्य कुलं गृहं पिण्डपानप्रतिज्ञया पिण्डः ओदनादिस्तस्य पानगम प्रविष्टस्तप्रतिज्ञया तत्रान्यतममनुप्रविष्टं कश्चिदुपनस्कादिर्वस्त्रेण वा प्रतिग्रहेण वा कम्बलेन वा पादप्रोञ्छनेन वा उपनिमन्त्रयेत् यतं गोमिकादि कृत्वा प्रतिग्रह पात्रकम्बलवत्रमर्मोर्णिकरूप पत्रशब्देन तु पात्रके मंगिकाप्रभृतिक पात्रनिर्यो- ग प्रोञ्छनशब्देन तु रजोहरणमुच्यते । आह च चूर्णिकृत् । " पायग्गहणेण पायभंडयं गहियं पुंछणं रयहरणंति " एतैरुप समीपे आगत्य निमन्त्रयेत् उपनिमन्त्रितस्य च ( से ) तस्य निर्ग्रन्थस्य साकारकृतमाचार्यसत्कमेतद्वस्त्रं न मम अतो यस्यैव महतो आत्मनो वा परिभोगिष्यते तस्यैतद्भविष्यतीत्येवं सविकल्पवचनव्ययितं स गृहीत्वा ततः आचार्यपादमूले तद्वस्त्रं स्थापयित्वा यदि तस्यैव साधोः प्रयच्छन्ति तदा द्वितीयमप्यवग्रहम् । एकस्तावद् गृहस्थादवग्रहोऽनुज्ञापितः द्वितीयं पुनराचार्यपादमूलादवग्रहमनुज्ञाप्य धारणापरिभोगरूपं द्विविधपरिहारं तस्य वस्त्रस्य परिहर्तुं धातूनामनेकार्थत्वादाचरितुं कल्पते इति सूत्रसंक्षेपार्थः । बृ० १ उ० । ( एतद्विस्तरार्थ एव वस्त्रयाचनविधौ वत्थशब्दे वक्ष्यते ) ( उपधिविषयोऽवग्रहः उग्गहशब्दे उक्तः )

( १५ ) भिक्षार्थं गतस्योपकरणपतने विधिमाह ॥

( सूत्रम् ) निग्गंथस्स णं गाहावतिकुलं पिंडवायपडियाए अणुपविट्ठस्स अहालहुस्सए उवकरणजाए परिब्भट्ठे सिया तं च केइ साहम्मिया पासेज्जा कप्पति णं सागरकडं गाहाय जयेव ते असमणे पासेज्जा तयेवं तमाणावाहे वहु फासुए थंडिले परिट्ठवेयव्वेसिया ॥

निर्ग्रन्थस्य णमिति वाक्यालङ्कारे गृहपतिकुलं ( "पिंडवायपडियाए पति" ) पिण्डं भक्तपानं वा पातयिष्यामीति बुद्ध्या यथा सहोऽप्यः " सुत्तं पगमंतु निग्गओ " आनेष्यामीति बुद्ध्या निर्गत इत्यर्थः । अनुप्रविष्टस्य यथालघुकमेकान्तलघुकं जघन्यं मध्यमं वा इत्यर्थः । उपकरणजातं परिभ्रष्टं पतितं स्यात्तच्च कश्चित्साधर्म्मिकः पश्येत्कल्पते (से) तस्यासागारकृत नाम यस्यैवेदमुपकरणं तस्यैवेदं देयमिति बुद्ध्या गृहीत्वा यत्रैवान्यमन्यं साधार्म्मिकं पश्येत्तत्रैव एवं वदेत् इदं भो आर्य ! किं परिज्ञातं ततस्तस्यैव प्रतिनिर्यातव्यं समर्पणीयं स्यात्किमुक्तं भवति यदि तस्य सत्कं तर्हि तस्मै दीयते । अथ ब्रूयादमुकस्य सत्कं यदा तस्येति स च वदेत् न परिज्ञातं न कोऽपि न जानातीति भावः तर्हि तदात्मना परिभुञ्जीत न अन्यस्य दर्शयेत्किन्त्वेकान्ते बहुप्रासुके स्थण्डिले परिष्ठापयितव्यं स्यात् । " एवं निग्गंथस्स णं वहिया वियारभूमिं वा विहारभूमिं वा निक्खतस्से " त्याद्यपि सूत्रं भावनीयम् । तथा निर्ग्रन्थस्य णमिति प्राग्वत् ग्रामानुग्रामं "अदूइज्जमाणस्सोत्ति" विहरतोऽन्यतरत् उपकरणजातं परिभ्रष्टं स्यात्तच्च कश्चित्साधर्मिकः पश्येत्कल्पते (से) तस्य सागारकृतं गृहीत्वा दूरमप्यध्वानं परिवोढुं "जत्येवेत्यादि" प्राग्वत् एष सूत्रत्रयसंक्षेपार्थः । सम्प्रति भाष्यकृत् यथालघुस्वकग्रहणं तृतीयसूत्रगतमन्यतरग्रहणं व्याख्यानयति ।

दुविहो य अहालहुतो, जहण्णतो मज्झिमो य उवहीओ ।
अन्नयरग्गहणेण उ, घेप्पइ तिविहो उ उवहीओ ॥

यथालघु स्वकं उपधिर्द्विविधो भवति जघन्यो मध्यमश्च अन्यतरग्रहणेन तु त्रिविधोऽप्युपधिः परिगृह्यते । तदेव कृता विषमपदव्याख्या भाष्यकृता । सम्प्रति निर्युक्तिविस्तरः ।

अतो परिट्ठवंते, वहिया व वियारमादिसु लहुगो ।
अन्नयरं उवगरणं, दिट्ठं संका न घेप्पाति ॥
किं तुज्झ परिट्ठावियं, पम्हुट्ठा वा वितो न गेण्हंति ।
किं एयस्सन्नस्स व, संकिज्जइ गेण्हमाणो वि ॥

अन्तर्ग्रामादीनां मध्ये बहिर्विचारभूमौ वा परिष्ठापयति विस्मरति " पम्हुठति वा परिठवियति वा पगट्ठमिति " वचनात् प्रायश्चित्त लघुको मास. । कस्मादीदृशं प्रमाद करोतीति हेतो क पुनर्दोषो यतो विस्मृतमत आह । अन्यतरत् जघन्य मध्यममुत्कृष्टं वा उपकरण दृष्टं ततो जाता शङ्का ततश्च न केचनापि ग्रहीष्यन्ति । शङ्कामेव स्पष्टतरां भावयति । ( किं होज्जेत्यादि ) साधवस्तदन्यतरत् उपकरणमन्तर्बहिर्वा दृष्ट्वा शङ्कन्ते किमेतत् परिष्ठापितमुत कस्यापि विस्मृत भवेत् एवं शङ्कमानास्तदुपकरण विस्मृत न गृह्णन्ति यतो गृह्णन्नपि जनै शङ्क्यते तथाहि तत् पतितं गृह्णन्त सयत कोऽपि दृष्ट्वा शङ्केत किमेतस्य अन्यस्य वा । किमुक्त भवति । किमात्मीयं पतितं गृह्णाति किं वा परकीय कस्यापि दानार्थमेव शङ्कासंभवे तस्य प्रायश्चित्तं चत्वारो लघुका । अथ निःशङ्कितं परेषां स्यात्तदा चतुर्गुरुकम् । एव शङ्कासंभवतो न गृह्णन्ति तस्मिंश्चागृह्यमाणे इमे दोषा ।

थिग्गल छित्ता पोत्ते, वालगचीराइएहिं अहिगरणं ।
बहुदोसतमा कप्पा, परिहाणी जा विणा तं च ॥

तत्पतित यथालघु स्वकरण गृहस्थैर्दृष्टं ततस्ते तत् गृहीत्वा अन्यस्य छिद्रवतो वस्त्रस्य थिग्गलक कुर्वन्ति तथा प्रक्षाल्य पोतकानि वडिकापट्टिकादिरूपाणि कुर्युर्यदि वा उत्तानशायिनां बालकानां योग्यानि चीवराणि विदधीरन् इत्येवमादिभि. प्रकारैर्यथालघु स्वकस्योपकरणस्याग्रहणे अधिकरण यदा तु पतिता कल्पा न गृह्यन्ते तदा ते बहुदोषतमा प्रभूततमं तेष्वधिकरणामिति भाव । तच्च उपकरण याचमानस्य परिहाणि सूत्रार्थयो ये च तृणग्रहणाग्निसेवनादयो दोषास्तेऽपि प्रसजन्ति ।

एते अण्णे य बहू, जम्हा दोसा तहिं पसज्जंति ।
आसण्णे अतो वा, तम्हा उवहिं न वोसिरए ॥

एते अनन्तरोदिता अन्ये च यस्माद्बहवो दोषास्तत्र पतिते प्रसजन्ति तस्मात् ग्रामादीनां बहिरासन्ने प्रदेशे अन्तर्वा तमुपधिं व्युत्सृजेन्न विस्मरणत पातयेत् । अधुना य. शङ्कात शङ्कमानो वा न गृह्णाति त प्रत्युपदेशमाह ।

निस्संकियं तु नाउं, विच्चुयमेयंति ताहे घेत्तव्वं ।
संकादिदोसविजढा, नाउं अप्पंति जस्स तयं ॥

यदा एतदुपकरण कस्यापि विच्युत विस्मरणत पतितमिति तदा नियमतो ग्रहीतव्यं गृहीत्वा च शङ्कादिदोषरहितानामविषये कस्यापि शङ्का स्यादित्यादिदोषवर्जिता यस्य तदुपकरण तस्य ज्ञात्वा समर्पयन्ति । एतच्च यद्विषये कर्त्तव्य तानाह ।

समणुण्णे इयराणं, वा संजतीसंजयाणं वा ।
इयरे उ अणुवदेसो, गहियं पुण घेप्पए तेहिं ॥

समनोज्ञाना सांभोगिकानामितरासामसांभोगिकाना संयतीनां संयतानां वा सत्कमुपकरण पतित गृहीत्वा यस्य सत्क तस्य दातव्यमितरे तु पार्श्वस्थादयस्तेषामनुपदेशस्तेषा सत्क पतित गृहीत्वा यस्य सत्कं तस्मै देयमिति नास्माकमुपदेशोऽधिकरणप्रवृत्तेस्तै पुन पार्श्वस्थादिभि सविग्नानां विहारिणामेतदुपकरणमिति ज्ञात्वा यत्पतितं गृहीतं तदानीत पुनर्गृह्यते ।

अत्रैव द्वितीयपदमाह ।

बिइयपदे न गेण्हेज्जा, विवचियजुगुंछिए असंविग्गे ।
तुच्छमपओयण वा, अगण्हता होय पच्छित्ती ॥

द्वितीयपदे अपवादपदे न गृह्णीयात् पतितं विवञ्चितं परिष्ठापितमिति कृत्वा जुगुप्सितमशुचिस्थानपतितमिति वा कृत्वा असंविग्नानां वा एतदुपकरणमिति ज्ञात्वा तथा तुच्छ मुखपोत्तिकादि तदपि कुथितत्वादिना कारणेनाप्रयोजनमगृह्णतो भवति प्रायश्चित्तम् । सांप्रतमेनामेव गाथा विवृणोति ॥

अंतो विसगअजुत्तं, विवंचियं त च दट्ठु नो गिण्हे ।
असुइट्ठाणे वि चुतं, बहुधा वालादिछिन्नं वा ॥

अन्तर्ग्रामादीनां मध्ये विशकत्र खण्डाखण्डीकृत जीर्णं विवेचितं परिष्ठापितमिति ज्ञातव्य यच्च दृष्ट्वा न गृह्णीयात् । तथा अशुचिस्थानेऽपि च्युतं बहुधा वा व्यालादिभिश्च प्रवृत्तिच्छिन्नं न गृह्णीयात् ॥

हीणाहियप्पमाणं, चित्तलं विरंगभंगी य ।
एएहिं कारणेहि य, नाऊणं तं विवज्जति ॥

हीन चाधिक च हीनाधिक तत्प्रमाण यत्र तत् क्वचिद्धीन क्वचिदधिकमित्यर्थः । तच्च सीवनिकया चित्रलं चित्रं सीवनिकाचित्रल रङ्गेन रागद्वयेण भङ्गिर्विच्छित्तिर्यत्र तद्विरङ्गभङ्गि तद् दृष्ट्वा एतै कारणैरयमसविग्नानामुपधिरिति ज्ञात्वा विवर्जयन्ति ॥

एमेव य बीयपदे, जं तो उवरिट्ठविज्जइ इमेहिं ।
तुच्छो अतिजुण्णो वा, सुण्णे वा विविंचेज्जा ॥

एवमेव अनेनैव प्रकारेण परिष्ठाप्यमानैर्ग्रामादीनामन्तर्द्वितीयपदेन परिष्ठापयेत् । पतित न गृह्णीयात् । कैरित्याह तुच्छो मुखपोत्तिकापादप्रोञ्छनादिक कुथितत्वादिना अकिञ्चित्करो यदि वा अतिजीर्णो हस्तेन गृह्यमाणोऽनेकधा विशरारुर्जायते शून्ये वा विविक्ते प्रदेशे पतितो यत्र विस्मरणासंभव । तत एतै कारणैः परिष्ठापित एष उपधिरिति कृत्वा विविच्य न गृह्णीयादिति भाव. ।

एमेव य बहिया वि, वियारभूमीए होज्ज त घेत्तु ।
तस्स वि उ एस गमो, होइ य णेओ निरवसेसो ॥

एवमेव अनेनैव प्रकारेण ग्रामादीनां बहिरपि विचारभूमौ पतित भवेत् । तस्याप्येष एवानन्तरोदितो गम प्रकारो निरवशेषो ज्ञेयो ज्ञातव्यो भवति । द्वैव सूत्रद्वय भावितम् ॥

अधुना तृतीयसूत्रभावनार्थमाह ॥

गामो खलु पुव्वुत्तो, दूइज्जंते उ दोन्नि दुविहाणे ।
अन्नतरगदुण्णं, दुविहो होइ उवहीओ ॥

ग्राम खलु पूर्वमुक्तस्तस्मादनुकूलोऽन्यो ग्रामोऽनुग्राम ग्रामश्चानुग्रामश्च ग्रामानुग्राम समाहारत्वादेकवचन तत दूयमानस्य गच्छतस्तस्मिन् गच्छति द्विविधा ऋतुबद्धे काले गन्तव्यम् । तथा पादाभ्यामिति आत्मना आत्मना परया । सम्प्रति निर्युक्तिविस्तरः ॥

पंथे उवस्सए वा, पासवणुच्चारठाणे वा ।
परसवगती एएहिं, तम्हा मोत्तूणिमे ठाणा ॥

तत उपकरण पथि व्रजत कथमपि पतत् ग्रामानुग्राम या गच्छन यत्रोपाश्रये उषितस्तत्र विस्मरणत पतित भवेत् यथास्थितो वा कश्चित्पतित स्यात् उच्चार प्रश्रवणं वा कुर्वन स्यात्पतित आचमतो वा विस्मृतमेतै कारणैर्विस्मरण पतनसंभवस्ततो येषु विश्राम्यत उच्चार प्रश्रवणं वा कुर्वतो दोषा भवन्ति तानीमानि स्थानानि वर्जयेत । तान्येवाह ॥

पंथे व समणनिवसणादि, नो मासो होइ लहुओ उ ।
आगतरमंठाणे, लहुगा आणादिणो दोसा ॥

पथि यदि विश्राम्यति निवसति वा आदिशब्दात् ऊर्ध्वस्थितो वा तिष्ठति सुप्तो वा उच्चारं प्रश्रवणं वा व्युत्सृजति तदा सर्वत्र असमाचारीति निष्पन्नं प्रायश्चित्तं मासलघु । यदि पुनरागन्तृणां स्थाने तत्राऽऽदौ विश्रमणादि करोति तदा सर्वत्र प्रत्येकं चत्वारो लघुकाः आज्ञादयश्च दोषाः ।

संप्रति पथि विश्रमणादौ दोषानाह ।

मिच्छत्त अन्नपंथे, धूली उक्खिणणं उवहिणासो ।
ते चेव य सविसेसा, संकादिविविंचमाणे वि ॥

स साधु पथि विश्राम्यति धिग्जातीयाश्चान्ये जातिमदावलिप्तास्तेन पथा समागता भवेयुस्ततः स साधु चिन्तयेत् । मा मन्निमित्तमेते वर्त्तमाना हरितकायादिविराधनां कार्षुरिति स साधु पथि उत्थाय अन्यत्र तिष्ठेत् तत्र च इमे दोषा जानन्त्येतत् श्रमणवादिन आत्मन सारमतोऽयमस्मान् दृष्ट्वोद्वृत्त इति तथा साधूनां धिग्जातीयानां पथि वृत्ते त एव तेषामपि गुरवो धिग्जातीया प्रधानाश्च एतच्चाभिनवधर्म्माणः श्रुत्वा दृष्ट्वा च मिथ्यात्वं प्रतिपद्येरन् तथा ( अण्णपंथेत्ति ) तं साधुं पथि स्थितं दृष्ट्वा पथिका उद्वृत्य व्रजन्ति ते चोद्वर्तमाना हरितकायादीनां विराधनां कुर्वन्ति । तथा केचित्तं पथि स्थित दृष्ट्वा ब्रुवते अहो निर्लज्जा श्रमणा पन्थानं रुध्वा स्थिता तच्च श्रुत्वा कोऽप्यसहमान कलह कुर्यात् ततो युद्धे समापतिते भाजने भेदोऽनागाढादि परितापना च स्यात् । तथा पादनिक्षेपेण धूल्या उत्खनन भवति तेन च उपधेर्विनाशो मलिनत्वभावात् । ते एवानन्तरोदिता दोषा सविशेषा शङ्कादयो विचिकित्साऽपि उच्चारादिना तथा हि उच्चारादि पथि कुर्वतो लोकस्य शङ्कोपजायते किमनेन गुदं निर्लेपितमुत नेति आदिशब्दात्किमेष स्तेनक किं वा श्रमणोऽतिचारको हेरिको वा इत्यादिपरिग्रह एष द्वारगाथासक्षेपार्थ । सांप्रतमेनामेव गाथां विवरीषुः प्रथमतो मिथ्यात्वद्वार विवृणोति ।

पंथे न ठाइयव्वं, बहवो दोसा तहिं पसज्जंति ।
अब्भुट्ठियम्मि गुरुगा, जं वा आवज्जती जुत्तो ॥

पथि साधुना विश्रमणनिमित्तं न स्थातव्य यतस्तत्र बहवो दोषाः प्रसजन्ति तानेवाह । साधुना धिग्जातीयाना पथि प्रवृत्ते अभ्युत्थिना एते अभ्युत्थानमेतेषा कृतमिति लोकप्रतिपत्तौ तस्य प्रायश्चित्त चत्वारो गुरुकाः यच्च स्वय दृष्ट्वा यतो वा श्रुत्वा मिथ्यात्वमापद्यते अभिनवधर्म्मा मिथ्यादृष्टिर्वा गाढतरं मिथ्यात्वमधिगच्छति तन्निष्पन्न च तस्य प्रायश्चित्त धिग्जातीयानां चात्मबहुमानसम्भवस्तथा चाह ।

जाणंति अप्पणो सारं, एते समणवादिणो ।
सारमेएसि लोगो य-मप्पणो न वियाणई ॥

ये आत्मान श्रमणामिति वदन्ति ते आत्मनः सारं परमार्थतस्तु जानन्ति यथाऽस्मत्त्वमेते गरीयास इति यस्त्वेतेषामयं लोक संमार्गमयनन्यमात्मनो न विजानाति अविदितपरमार्थत्वात् । गत मिथ्यात्वद्वारम् ।

अधुना अन्यपथद्वारमाह ।

अण्णपहेण वयंते, काया सो चेव वा नवे पंथे ।
अचियत्त असंखडादी, भायणविराहणा चेव ॥

तं साधु पथि स्थितं दृष्ट्वा पान्था अन्येन पथा व्रजन्ति तथा च सति काया हरितकायादयो विराध्यन्ते । तथा स एव नवति पन्थास्ततो महान् प्रवर्तनादोष तथा पथि स्थितं दृष्ट्वा कस्यापि ( अचियत्ति ) अप्रीतिरुपजायते ततः स ब्रूते अहो मुण्ड पन्थानं रुध्वा स्थितस्तस्य श्रुत्वा कोऽप्यसहमानोऽसंखड कलहं कुर्यात् आदिशब्दात् युद्धमपि तथा च सति भाजनविराधना आदिशब्दादनागाढादिपरितापना यावत शरीरविराधना च । संप्रति "धूली उक्खणण उवहि विणासो इति" व्याख्यानयति ।

सरक्खधुली चेयसे, पत्थिवाणं विणासणा ।
अचित्तरेणुमइलम्मि, दोसा होंति अधोव्वणे ॥

सह रजसा श्लक्ष्णधूलिरूपेण वर्त्तते इति सरजस्कः स चासौ धूलिश्च तस्याश्चैतन्यस्तस्यां चेतनायामित्यर्थं पादनिक्षेपेण उत्खनेन शरीरादिसंस्पर्शतः पार्थिवानां पृथिवीकायानां विनाशन भवेत् । अथ सोऽचित्तो रेणुस्तर्हि तेनाचित्तेन रेणुना मलिने उपधौ यदि प्रक्षालयति तथाऽपि दोषः । प्राणविराधनापत्तेर्वा कुशत्वसम्भवाच्च अप्रक्षालनेऽपि दोषाः प्रवचनहीलनाद्यापत्ते । अन्यच्च ।

वेगाविद्धो तुरंगादी, सहसा दुक्खनिग्गहा ।
परम्मुहं मुह किच्चा, पहि ठाणं पणोल्लए ॥

वेगाविद्धो वेगेनागच्छन्तस्तुरङ्गादय आदिशब्दाद्बलीवर्दानामपि परिग्रहः । सहसा दुःखेन निगृह्यन्ते निवार्यन्ते इति दुःखनिग्रहा निवारयितुमशक्या इति यावत्ततः शरीरविराधना भाजनविराधना च । तथा केचित्प्रान्ताः परान्मुख मुख कृत्वा पथि स्थितं साधुं प्रणुद्येयुर्गाथायामेकवचन प्राकृतत्वात्प्राकृते हि वचनव्यत्ययो भवति । किं च ।

पम्हुट्ठमवि अन्नत्य, जइट्ठा कोति पेच्छति ।
पंथं उ परिपम्हुट्ठं, खिप्पं गेण्हति अच्छ[illegible] ॥

पथो ऽन्यत्र विस्मरणत पतितमपि प्रेक्ष्यते पथि पुनः अध्वगा परिभ्रष्टं क्षिप्र गृह्णन्ति तस्मात्पथि न विश्रमितव्यम् ।

एवं ठिओवविट्ठे, सविसेसतरा भवंति उच्चिवणे ।
दोसा निदपमायं, गते य उवहिं हरंति त्तो ॥

एवममुना प्रकारेण स्थिते ऊर्ध्वः स्थानेनावतिष्ठमाने तथा उपविष्टमाने वक्तव्यानि चात्र शयाने सविशेषतरा दोषा भवन्ति । तथाहि पूर्वोक्तास्तावच्चैव इष्टव्या । अन्यच्च शयाने कथमपि निद्राप्रमादं गते उपधिमन्ये पथिकादयो हरन्ति तस्मात्पथि न शयितव्यमिति । संप्रति " चे व य सविसेसा संकादि विविंचमाणे वी " त्येतद्व्याख्यानार्थमाह ॥

उच्चार पासवणं, अणुपंथे चेव आयरंतस्स ।
लहुतो य हो य मासो, चाउम्मासो भवित्थारो ॥

उच्चारं प्रश्रवणं चाऽध्वगानामनुकूले पथि अवतरत समाचारीनिष्पन्न प्रायश्चित्त लघुको भवति मास । अथ तथोच्चार प्रश्रवण वा कुर्वन्तमवलोक्य केचिदन्यं पन्थानं कुर्वन्ति तत्र चत्वारो मासा लघुका ( स वित्थारोत्ति ) यश्च इत्यादिभिः सह संघट्टनादि प्राप्नोति तन्निष्पन्नमपि तस्य प्रायश्चित्तमिति भाव । तथा ।

छड्डावणमन्नपडो, दवासतिय कुच्छिगंधकडसप्पे ।
तेणो त्ति व संकेज्जा, आदियणे चेव उड्डाहो ॥

कोऽपिम एव राजकुलामात्यः प्रान्त श्रमणमुच्चार पथि कुर्वन्त दृष्ट्वा कोपात्तमेव श्रमणमाक्रम्य तमुच्चार उड्डापयेत् अपरस्य

पन्था· क्रियेत तत्र चोक्तं प्रायश्चित्तम् । तथा पथि इचीभावे दुरभिगन्ध· उच्चरेत्तत्रापि प्रवचनोड्डाहस्तथा कोऽपि कलुषात्मा शङ्केत स्तेनक इति उपलक्षणमेतत् हेरिकोऽभिचारिको वा इत्यपि शङ्केत तत आदाने ग्रहणे प्रवचनस्य उड्डाह· तस्मात्पथि विश्रामणादि न कर्तव्यम् ॥

अत्रैवापवादमाह ॥

अच्छेय व दूरपहे, असहू भारेण खेदियप्पा वा ।
च्छन्ने व मोत्तुं पह, गामसमीवे य छन्ने वा ॥

अतिशयेनातप उष्णं तपति वृक्षाश्च पथि दूरे वर्तन्ते यथासन्नपल्लीमार्गे प्रतिपन्नानामेक एवाध्वनि विश्रमणहेतुरेक एव वृक्षोऽत्र सर्वत्राकाशं तेन कारणेन पथ्यपि वृक्षस्याधस्तात् विश्राम्येत । असहो नाम नातिदूरे वृक्षा सन्ति परं तत्र गन्तुं न शक्नोति तत सोऽपि पथि वृक्षस्याधो विश्रमणं कुर्यात् । अथवा उपधिभारेण खेदितात्मा अतिशयेन परिश्रान्तस्तत· एव उद्वर्तितुं न शक्नोतीति पथ्येव विश्रमयति । तदेव पथ उभयो· पार्श्वयोर्दूरेण वृक्षसद्भावे द्वितीयपदमुक्तमिदानीं समन्ततो वृक्षच्छन्ने प्रतिपादयति । ( छन्ने व मोत्तु पहत्ति ) पन्था उभयो पार्श्वयोर्वृक्षैश्छन्नस्तत्र वा विभाषायां यदि निर्भयं तत पन्थानं मुक्त्वाऽन्यत्र विश्रमणादि करोति । अथ भय तदा पथ्येवेति एतद् दूरेऽभिहितम् । ग्रामसमीपे पुनर्निर्भयमिति वृक्षैश्छन्नस्तत्र वा विभाषायां यदि निर्भय तत पन्थानं मुक्त्वाऽन्यत्र विश्रमणार्थं पथ उद्वृत्य विश्रमणादि करोति । ग्रामसमीपे यस्य तस्य वृक्षादेर्देवकुलादेश्छाया-सद्भावेन पुन साधुना पथ कियद् दूरे उद्वर्तितव्यमत आह ।

पंथे ठितो न पेच्छइ, परिहरिया पुव्ववासिया दोसा ।
बिइयपए असतीए, जयणाए वद्द ग दोणि ॥

तावति दूरे उद्वृत्य स्थातव्य यत्र पथिक पथा व्रजन् पथि ऊर्ध्वस्थितो वा साधुमुद्वृत्त न पश्यति । एवं च पूर्ववर्णिता दोषा· समस्ता अपि परिहृता । द्वितीये पदे अत एवापवादपदे पुनरुद्वर्तने असति उद्वर्तनाभावे पथ्यपि यतनया वक्ष्यमाणया स्थानादीनि करोति स च तथा कुर्वन् तीर्थकराज्ञया प्रवृत्ते शुद्ध इति ।

सांप्रतमुद्वर्तनाभावं यतनां चाह ।

संकडहरियच्छाया, असति य गहितोवही ठितो पेच्छे ।
उट्ठेइ व अप्पत्ते, सहसा पत्ते ततो पिट्ठं ॥

सङ्कटो नाम पन्था स उच्यते यो वा घोरपान्तराले तत्रोद्वर्तनस्यासंभव । अस्य वा चतसृष्वपि दिक्षु समन्ततो हरितकाय । अथवा पन्थानमतिरिच्यान्यत्र सर्वथा छाया न विद्यते । तत एतै· कारणैरुद्वर्तनासम्भवे पथ्येव गृहीतोपकरणो मुहूर्तमात्रमूर्ध्वस्थितो मार्गे एव छायाया विश्राम्येत । यदा तु पथिकानागच्छत पश्यति तदा तेषु त प्रदेशमप्राप्तेष्वेव उत्तिष्ठति तथा ते जानन्ति पूर्वमेव उत्थित इति । अथ सहसैव ते पथिका अदृष्टा एव सम्प्राप्तास्तदा तेषां पृष्ठं दत्वा उत्तिष्ठति यथा ते जानन्ति यथैष आत्मव्यापारेणोत्थित इति एवं मिथ्यात्वदोषा परिहृता भवन्ति ।

भुंजण पाणुच्चारे, जयणं तत्थ कुव्वति ।
उग्गाहडा उ जे दोसा, पुव्व तेसु जतो भवे ॥

भोजने पाने उच्चारे च यतना तत्र पथि करोति कथमित्याह । उद्ग्राहना ये पूर्वं दोषास्तेषु यतो भवेत् यथा ते न भवन्ति एष यतेतेति भाव· ।

गंतव्वपलोएउं, अकरणलहुगो य दोस आणादी ।
पम्हुट्ठो वा सट्ठे, लहुतो आणादिणो चेव ॥

विश्रम्य उच्चारप्रश्रवण वा कृत्वा यदा गन्तव्य भवति तदा सिंहावलोकनेन पश्चादवलोक्य गन्तव्यम् । यदि पुनरवलोकनं न करोति तदा प्रायश्चित्तं तस्य लघुको मास । अधिकरणदोषाश्च प्रागुक्ता कथमपि विस्मरणत पतन्ति सम्भवन्ति । आज्ञाभङ्गादयश्च दोषा । तथा यदि कथमपि विस्मरत पतित स्यात् ततस्तद्ग्रहणाय प्रतिनिवर्तितव्यम् । यदि मन्यते किं तेनेति व्युत्सृजति तदा मासलघुकमाज्ञाभङ्गादयश्च दोषा· एतदेवाह ।

पम्हुट्ठे गंतव्वं, अगमणे लहुगो य दोसआणादी ।
निक्कारणम्मि तिन्नि उ, पोरिसीकारणे सुद्धो ॥

कथमपि विस्मरणत पतिते सिंहावलोकनेन च दृष्टे नियमतस्तदानयनाय पश्चात् गन्तव्यम् । अगमने प्रायश्चित्तं लघुको मास । अधिकरणदोषाश्च प्रागुक्ता आज्ञादयश्च । तथा निष्कारणमिति कारणस्याभावे निष्कारणमस्मिन् यदि नास्ति निवर्तमानस्य प्रत्यवाय इत्यर्थस्तदा अवश्य निवर्तितव्यम् । ( तिण्णि उत्ति ) यदि प्रथमायां पौरुष्यां विस्मरणत पतित चरमायां च पौरुष्यां स्मृतं तत्र यदि निष्प्रत्यवायमन्तरा च वासोऽस्ति यदा निवृत्य गृहीत्वा आनेतव्यमथ सूर्यास्तमयवेलायां स्मृत यथा अमुकमेव विस्मरणत पतितमिति तदा आद्यान् त्रीन् यामान् उषित्वा चतुर्थे यामे प्रतिनिवृत्यानेतव्य प्रत्यवायाभावे कारणे तु प्रत्यवायलक्षणेऽनिवर्तमानोऽपि शुद्ध । एतदेव भावयति ॥

चरमाए वि नियत्तइ, जइ वासो अत्थि अंतरा वसिमे ।
तिण्णि वि जामे वसिउं, नियत्तइ निरच्चये चरमे ॥

प्रथमायां पौरुष्यां विस्मरणत पतिते तदानयनाय चरमायामपि पौरुष्यां निवर्तते यदि च तेषामन्तरा वासोऽस्ति । अथ चरमायां दिनपौरुष्यां पतति तदा रात्रेस्त्रीन् यामानुषित्वा चरमे यामे निरत्यये प्रत्यवायाभावतो निर्भयो निवर्तते ॥

कारणे सुद्धो इति व्याख्यानार्थमाह ॥

दूरं सो वि य तुच्छो, सावयतेणानदी व वासं वा ।
इच्चाइकारणेहिं, करेंति उस्सग्गमो तस्स ॥

दूरमतिशयेन गतानां स्मरणपथमवतीर्णं पतित उपधि सोऽपि वा उपधिरतिशयेन तुच्छ· । मुखपोत्तिकादिरूपोऽतिशयजीर्णश्चेति भाव । अथवा अपान्तराले व्याघ्रादीनि श्वापदानि स्तेना वा शरीरापहारिण उपकरणापहारिणो वा नदी वाऽपान्तराले वर्षा वा पतति आदिशब्दात् म्लेच्छभय वा अशिव चेत्यादिपरिग्रह· इत्यादिभि कारणैस्तस्य विस्मरणत पतितस्योपकरणस्य उत्सर्ग "वोसिरामिति" त्रिभणनपूर्वक परित्याग करोति एव करणे अधिकरणादयो न भवन्ति ॥

एव ता पम्हुट्ठो· जेसिं तेसिं विही भवे एसो ।
जे पुण अन्ने पेच्छे, तेसिं तु इमो विही होइ ॥

एवमुक्तेन प्रकारेण तावत् येषामुपधिर्विस्मरणत पतितस्तेषामेषोऽनन्तरोदितो विधिर्भवति ये पुनरन्ये साधर्मिका प्रेक्ष्य ते तेषामय वक्ष्यमाणो विधिर्भवति । तमेवाह ॥

दट्ठु अगिण्हणे लहुगो, दुविहो उवही उ नायमन्नातो ।
दुविहा नायमणाया, संविग्ग तहा असंविग्गा ॥

द्विविध उपधि-र्ज्ञातिक अज्ञातिकश्च । तस्य ज्ञातस्यापि पुनि-

तस्य दृष्ट्वा अग्रहणे प्रायश्चित्तं लघुको मासो ये च पूर्वमुक्ता अधिकरणादयो दोषास्तेऽपि तस्य प्रसजन्ति स चोपधिर्भूयो द्विधा ज्ञातोऽज्ञातश्च। तत्र ज्ञातो नाम येषां स उपधिस्तेषां ज्ञायते अज्ञातो नाम यो न ज्ञायते यथा अमुकस्य सबन्धीति । ते ज्ञाता द्विविधा संविग्ना असंविग्नाश्च ॥

मुत्तूण असंविग्गे, संविग्गाणं तु नयण जयणाए ।
दो वग्गा संविग्गे, छब्भंगा नायमन्नाए ॥

मुक्त्वा असंविग्नान् किमुक्तं भवति यो ज्ञायते असंविग्नानामेष उपधिः स न नीयते यस्तु संविग्नानां तत्र द्वौ वर्गौ तद्यथा संयताः संयत्यश्च तत्र संविग्ने एकस्मिन्वर्गे षड्भङ्गा ज्ञाते भवन्ति अज्ञाते च वक्ष्यमाणो विधिः । तत्र षड्भङ्गानुपदर्शयति-।

सयमेव अप्पं पेसेइ,अप्पाहे वा वि एव सग्गामे ।
परगामे वि य एवं, संजतिवग्गे वि छब्भंगा ॥

यदि ते संयताः संविग्ना इति ज्ञातास्तदा स्वयं वा गन्तुं नयति अन्यस्य वा हस्ते प्रेषयति संदेशयति वा यथा मया स उपधिर्विस्मरणतः पतितो लब्ध इति । एवं स्वग्रामे त्रयो भङ्गाः परग्रामेऽपि स्थितानामेते एव त्रयः प्रकाराः एवं षड्भङ्गाः संयतानामेव संयतीवर्गेऽपि षड्भङ्गास्तदेवं ज्ञातविषये विधिरुक्तः। सम्प्रत्यज्ञातविषयं विधिमाह ।

एहाणादिणा य घोसेण, सोउं गमणं च पेसणप्पाहे ।
पम्हुट्ठे वोसट्ठे, अप्पबहुअसंथरंतम्मि ॥

यो न ज्ञायते कस्याप्येष उपधिरिति स परिज्ञाननिमित्तं स्नानादिसमवसरणे घोष्यते घोषणं च श्रुत्वा केनापि कथिते येषां स उपधिस्तत्र स्वयं वा गन्तुं नयति अन्यस्य वा हस्ते प्रेषयति। संदेशयति वा । तथा ( पम्हुट्ठ ) विस्मरणतः पतिते व्युत्सृष्टे परित्यक्ते येनानीतस्तस्मिन्नसंस्तरति अल्पबहु परिज्ञाप्य परिभोगोऽनुज्ञातः । एतदेव व्याख्यानयति।

कामं विम्हरणाए, चत्तं पुण भावतो इमम्हेहिं ।
इति वेंते समणुण्णे, इच्छाकज्जेसु सेसेसुं ॥

येषां स उपधिर्विस्मरणतः पतितस्तेषामन्तिकमानीयते नीत्वा चेदं भण्यते यथाऽयं युष्मद्विस्मरणतः पतितोऽस्माभिरानीतस्ततो गृह्यतामिति एवमुक्ते ते प्राहुः काम नोऽस्माकं विस्मरणतः पतितमिदमुपकरणं परं भवतः इदमस्माभिस्त्यक्तं त्रिविधं त्रिविधेन व्युत्सृजितमिति भावः । एवं भवति उपधिस्ते यदि सभोगिकास्तेन च विना संस्तरन्ति तर्हि स येषां सत्कस्तैः परिष्ठापयन्ति । "एतेन इच्छाकज्जेसु इति" व्याख्यातम्। सम्प्रति "सेसेसुत्ति" व्याख्यायते । शेषा असांभोगिकास्तेष्वपि कार्यविचारणा इयमत्र भावना अन्यसांभोगिकैरानीते तैश्च प्रतिषेधे यदि यैरानीतस्तेन विना संस्तरन्ति अन्यश्चोपधिर्दुर्लभो न लभ्यते वा तदा ते समनुज्ञातं परिभुञ्जते एतावता " अप्पबहुसंथरंतम्मि " व्याख्यानम् । तदेव संविग्नानां विधिः ।

इदानीमसंविग्नानामुपधिविधिरुच्यते ।

पक्खिगापक्खिगा चेव, हवंति इयरे दुहा ।
संविग्गपक्खिगे णेंति, इयरेसिं न गेण्हति ।

इतरे असंविग्ना द्विविधास्तद्यथा पाक्षिका अपाक्षिकाश्च संविग्नपाक्षिका असंविग्नपाक्षिकाश्च इत्यर्थः । तत्र य संविग्नपाक्षिकः संविग्नपाक्षिकस्य संबन्धी उपधिस्तं स्वयं वा नयति अन्यस्य वा हस्ते प्रेषयति संदेशयति वा यस्त्वितरेषामसंविग्नानामुपधिस्तं पतितं दृष्ट्वा न गृह्णाति ।

अत्रैवापवादमाह ।

इयरे वि होज्ज गहणं, आसंकाए अणज्जमाणम्मि ।
किह पुण होज्जा संका, इमहि उ कारणेहिं तु ॥

इतरस्मिन्नप्यसंविग्नपाक्षिकसबन्धिन्युपधावसंग्नपाक्षिकसंबन्धित्वेनाज्ञायमाने आशङ्कया ग्रहणं भवेत् । सूरिराह परिवर्त्यमाणैः कारणैः तान्येवाह ।

एहाणादिसमासरणे, अहव समावत्तितो गयाणेगा ।
संविग्गमसंविग्गा, इति संका गेण्हते पडियं ॥

जिनप्रतिमास्नानदर्शननिमित्तमादिशब्दात् संघप्रयोजनेन वा केनापि समवसरणे मेलापके यदि वा एवमेव समापत्तितो गता पुरतोऽनेके संविग्ना असंविग्नाश्च तेषां गच्छतां कस्याप्युपधिर्विस्मरणतः पतितः स न ज्ञायते सम्यक् किं संविग्नानां केवलं स्यादसंविग्नानामपीति तं पतितं गृह्णाति ।

संविग्गपुराणोवहिं, अहवा विहिसीवणा समावत्ती ।
होज्ज व असीवितो च्चिय, इति आसंकाए गहणं तु ॥

अथवा पुराणसंविग्नोपधेः किमुक्तं भवति यषां सत्क उपधिः पतितस्ते पूर्वं संविग्ना आसीरन् पश्चादसंविग्नीभूताः स चोपधिः पूर्वं सांविग्नसीवनेन सीवितः। अथवा सांविग्नैरपि समापत्त्या विधिसीवनिकया सीवितो यदि वा असीवित एव संभवेत्ततस्तं दृष्ट्वा आशङ्का भवति किं संविग्नानामुतासंविग्नानां तत आशङ्कया ग्रहणं भवति।

सम्प्रति ग्रहणानन्तरविधिशेषमाह ।

ते पुण परदेसगते, नाउं भुंजति अहव वज्जंति ।
अन्ने उ परिट्ठवणा, कारणभोगो व गीएसु ॥

तमुपधिं गृहीत्वा येषां संविग्नानां सत्कः उपधिस्ते परदेशं गता ततस्तान्परदेशं गतान् ज्ञात्वा कारणे समापतिते परिभुञ्जते अथवा कारणाभावे परिष्ठापयन्ति । एवं कारणैरसंविग्नानामपि पतितमुपधिं गृह्णानो न प्रायश्चित्तभाग्भवति। अथ येषां सत्क उपधिः पतितो गृहीतस्ते संविग्ना अप्यन्ये असांभोगिकास्तेषां देशान्तरगतानामुपधिं गृहीत्वा निष्कारणे परिष्ठापयन्ति ( कारणात्ति ) यदि ते सर्वे गीतार्था न च तेषामुपधिरस्ति यदि वा तादृश उपधिरन्यो दुर्लभस्तदा एव कारणे परिभुञ्जते। अथ ते अगीतार्थमिश्रास्तदा परिष्ठाप्यन्ते प्रज्ञाप्य वा गीतार्थान्परिभुञ्जते एतच्चान्यसांभोगिकसत्कतया परिज्ञायते । द्रव्यपरिज्ञाने प्रागुक्त एव विधिः ।

बिइये पदे न गेण्हेज्जा, संविग्गाण पि एहि कज्जहिं ।
आसंकाए य नज्जइ, संविग्गाण च इयरेसिं ॥

द्वितीयपदे अपवादपदे संविग्नानामपि पतितमुपधिमेभिर्वक्ष्यमाणैः कार्यैः कारणैर्न गृह्णीयात् । तान्येवाह न ज्ञायते किमेष संविग्नानामुत इतरेषामसंविग्नानामित्याशङ्कया पतितं न गृह्णाति तथा॥

असिवगहियं व सोउं, ते वा भव व होज्ज जइ गहियं।
ओमेण अन्नदेसं, व गंतुकामा न गेण्हेज्जा ॥

येषां स उपधिस्ते अशिवगृहीता येन दृष्टः स नेति प्रथमो १ भङ्गः यदृष्टस्ते अशिवगृहीता येषां सत्कस्तेन गृहीता इति द्वितीय २ उभय गृहीतमिति तृतीयः ३ उभयमपि न गृहीतमिति चतुर्थो ४ भ-

ङ्ग' तत्र चतुर्थे भङ्गे अपवादमधिकृत्य शून्यो न भवति तत्रापवाद इति भाव । तत्र प्रथमभङ्गे न गृह्णाति अशिवोपहतत्वात् द्विती- येऽपि न गृह्णाति तदानीं तस्य तैरवग्रहणादशिवोपहतत्वात् तृतीये भङ्गे सदृशे अशिवे कारणे गृह्णाति विसदृशे सोमसुखादिवक्- तेर्न गृह्णाति यदि वा अवमौदर्येण देशान्तरं गन्तुकामा न गृह्णीयु' ॥

अह पुण गहियं पुव्वं, न य दिट्ठं जस्स तच्चुय तं तु ।
उवहावियन्नदेसं, इमिणा विहिणा विगिंचिज्जा ॥

अथ पुनर्गृहीतं पूर्वमुपकरणं न च स दृष्टो यस्य सत्क तदुपक- रणं विच्युतं विस्मरणत. पतितं यस्मात् ( उवहावियन्नदेसत्ति ) अथ पुनर्गृहीतमुपकरणं न च स दृष्टो यस्य सत्क तदुपवेगेन धाविता प्रधाविता अन्य देशं गतास्तत' अनेन वक्ष्यमाणेन विधिना विवेचयेत् परिष्ठापयेत् । तमेव विधिमाह ॥

दुविहा जायमजाया, जाया अभियोग तह असुद्धा य ।
अभियोगादी भेत्तु, इयरं पुण अक्खयं चेव ॥

सा परिष्ठापनिका द्विविधा जाता अजाता च तत्र जाता नाम अभियोगकृता विषकृता च तत्राभियोगो वशीकरणम् । अथवा जाता अशुद्धा सा द्विविधा मूलगुणाशुद्धा उत्तरगुणाशुद्धा च । तत्र जाता अभियोगकृता विकृता वा मूलगुणाशुद्धा उत्तरगुणाशु- द्धा वा सा भेत्तु भेत्तु वा कर्तव्या । इतरत् पुनरुपकरणमभियो- गादिदोषरहितमक्षतं चैव परिष्ठापयितव्यम् । अत्र पर प्रश्नं करोति

पहनिग्गया इयाणिं, विजाणणट्ठाइ तत्थ चोदेइ ।
तेसिं सुद्धिनिमित्तं, कीरइ विधिं इमं तु तहिं ॥

पथि निर्गता आदिशब्दादशिवादिभि' कारणैर्निर्गता परिगृ- ह्णन्ते तेषां शुद्धिनिमित्त यदत्र प्रागुक्ते विधौ प्रतिपादिते पर असहमानश्चोदयति प्रश्नयति पथिनिर्गतादीनां पथिनिर्गता मा- र्गप्रतिपन्नास्तेषां परिष्ठापितमिदमिति विज्ञानार्थं तत्रेद वक्ष्यमा- णं चिह्नं क्रियतामिति । तदेवाह ।

एगा दो तिन्नि वली, वत्थे कीरंति पत्तचीराणि ।
सुज्झंतु चोदगेणं, इति उदिते वेति आयरितो ॥

मूलगुणैरशुद्धे वस्त्रे एकावलिरेकं वस्त्रं कृत्वा तत् परिष्ठाप्यते मूलगुणैरशुद्धे पात्रे एक चीवरमेकं प्रस्तरं क्षिप्त्वा तत्परिष्ठा- प्यतामुत्तरगुणैरशुद्धे शुद्धे वा क्रियेतां पात्रे द्वे चीवरखण्डे द्वौ वा प्रस्तरौ क्षिप्येयाताम् । मूलगुणैरुत्तरगुणैश्च शुद्धे वस्त्रे त्रीणि वल्काणि क्रियेरन् । पात्रे त्रीणि चीवराणि त्रयो वा प्रस्तरा' क्षिप्येरन् इति । अमुना प्रकारेण चोदकेनोक्ते आचार्यो ब्र- वीति । किं तदित्याह ।

सुद्धमसुद्धं एत्, होति असुद्धं च सुद्धवायुवसं ।
तेण तिदुगेगगंठी, वत्थे पत्तम्मि रेहो उ ॥

एव युष्मदुक्तप्रकारेण चक्रकरणे वातवशात् शुद्धमपि चक्रै- कद्विकभङ्गतोऽशुद्धं भवति । अशुद्धमपि वातवशेन चक्रत्रिकभा- वत शुद्ध भवति। पात्रमपि वातवशेन एकद्विकचीवरापगमे शुद्ध भवति । अशुद्धमपि वातवशेनान्यागन्तुकचीवरखण्डसमागमे शुद्ध तस्मादय विधिस्तत्र कर्तव्य । मूलोत्तरगुणशुद्धे वस्त्रे त्रयो ग्रन्थय कर्तव्या पात्रे तिस्रो रेखा उत्तरगुणाशुद्धे वस्त्रे द्वौ ग्रन्थी पात्रे द्वे रेखे मूलगुणैरशुद्धे वस्त्रे एको ग्रन्थि पात्रे एका रेखा ।

अद्धाणनिग्गयादी, उवएसा एएण पेसणं वावि ।
अविकोवि़ते अप्पणमं, दव्वे भिन्ने विवित्ते य ।

अध्वनि मार्गे निर्गता अध्वनिर्गता आदिशब्दात् अशिवादि- भिर्वा कारणैर्निर्गताः परिगृह्यन्ते तेषामुपकरणे दृष्टे वह्निना भ- स्मीकृते भिन्ने वा विविक्ते वा विस्मरणत' पतिते वास्तव्या- स्तान् अध्वनिर्गतादीन् ब्रुवते अस्माकमुद्धरितानि वस्त्राणि न सन्ति केवलमस्माभिरमुकप्रदेशे परिष्ठापितानि वर्तन्ते तान्या- नीय गृह्णीथ एवमुक्ते तेऽपि प्राघूर्णका ये गीतार्थास्तान् प्रेष- यन्ति वास्तव्या अपि च तेषां चिह्नानि उपदिशन्ति यथा गर्त- समीपे गिरिसमीपे तरुसमीपे कूपसमीपे इत्यादि ( आणयणं- मिति ) अथैवं चिह्ने कथितेऽपि स्थानं न जानन्ति यदि वा न ते वास्तव्या ग्लानादिप्रयोजनैर्व्यावृतास्तत स्वयमानीय प्रय- च्छन्ति ( पेसण वा विति ) अथवा वास्तव्या प्राघूर्णकानां देशकं ददति यथा अमुकप्रदेशे वस्त्रादि परिष्ठापितमस्ति तदमीषां दर्शय अपि शब्दात् यदि ग्लानादिप्रयोजनैर्व्या- वृतास्तत परिष्ठापिताभावे अन्यत् याचित्वा प्रयच्छन्ति ( अ- वि कोविए अप्पणमिति ) आनीते परिष्ठापिते कोऽप्यकोविदो गीतार्थे उपहतमिति कृत्वा नेच्छति तत्र प्राघूर्णकैर्वास्तव्यैर्वा त- स्यात्मीयं वस्त्र पात्र वा दत्वा इतरत्स्वय ग्रहीतव्यम् । अथ त- दपि कश्चिदगीतार्थतया न गृह्णीयात्तर्हि तत् आनीत पुन. परि- ष्ठाप्यते एष गाथासङ्क्षेपार्थ ।

साम्प्रतमेनामेव विवरीषुराह ।

अद्धाण निग्गयादी, नाउ परित्तोवही विवित्ते वा ।
संपड्डगभंडधारी, पेसंती ते वियाणंता ॥

अध्वनिर्गतादीन् आदिशब्दादशिवादिकारणनिर्गतपरिग्रहस्ता- न् परीतोपधीन् परिमितोपधीन् विविक्तान्वा विविक्तोपधी- न्वा विस्मरणत. पतितोपधीनित्यर्थ । उपलक्षणमेतत् दग्धोप- धीन्वास्तव्या ज्ञात्वा कथम्भूता वास्तव्या इत्याह । सपाडुकभा- ण्डधारिणो नाम यावन्मात्रमुपकरणमुपपद्यते तावन्मात्र धर- न्ति शेष परिष्ठापयन्ति । ततस्तान् तथाभूतान् दृष्ट्वा ब्रुवते अ- स्माकमुद्धरितानि वस्त्राणि न सन्ति किं त्वस्माभिरमुकप्रदेशे परिष्ठापितानि वर्तन्ते तानि गत्वा प्रतिगृह्णीतेति एवमुक्ते त- थाऽपि प्राघूर्णका जानते गीतार्थान्प्रेषयन्ति कथमित्याह ।

गड्डागिरितरुमादीणि, काउं चिंधाणि तत्थ पेसंति ।
अवियवेट्ठा सयं वा, आणंतऽन्नं व मग्गंति ॥

अत्र प्राघूर्णका' प्रेषिता न वास्तव्या गर्तगिरितर्वादीनि चि- ह्नानि कृत्वा प्रेषयन्ति यदि वा ग्लानादिभिरव्यापृता स्वयमान- यन्ति परिष्ठापिताभावे अन्यद्वा मार्गयन्ति। साम्प्रत"अविकोविए अप्पणगमिति " व्याख्यानयति ।

नीयम्मि य उवगरणे, उवहयमेय न इच्छई कोई ।
आवकोविय अप्पणगं, अविइच्छमाणे विविंचति ॥

नीतेऽप्युपकरणे कश्चिदकोविद उपहतमेतदिति कृत्वा ने- च्छेत तस्मिन्नकोविदे आत्मीयं वस्त्रादि समर्प्यते । अथ तदपि नेच्छति तदा परिष्ठापितमानीत पुनर्विविञ्चन्ति परिष्ठापयन्ति ।

असतीए अप्पणा वि, झामियहियवूढपाडियमादीसु ।
सुज्झति कप्पयन्तो. मेव गेण्हं असढभावो ॥

येन पूर्वं तत् परिष्ठापितं तस्य पश्चादुपधि तदपि प्रदी- पनकेन दग्ध हृतो वा तस्करै पानीयेन वा नद्यादिप्लवेन प्ला- वित' म्लानो वा कथमपि विस्मरणत पतित । आदिशब्दात्प्र- त्यनीकेन वा केनापि वस्त्राणि पाटितानि पात्राणि भग्नानि

भिवानि ततो ग्रामिनहतः गृहपतितादिपूपकरणानि याचनीयानि तेषामप्यसत्यभावे कृतप्रयत्नस्तदेव पूर्वपरिष्ठापित स्वयं गृह्णातेऽशठभाव इति कृत्वा शुद्धः । व्य० द्वि० ८ उ० । (भिक्षाचर्यायां क उपधिर्नेतव्य इत्येसणाविहारादिशब्देषु )

-( १६ ) स्थविराणां ग्रहीतव्या उपधयः ॥

( सूत्रम् ) थेराणं थेरभूमिं पत्ताणं कप्पति दंडए वा १ भंडए वा २ छत्तगं वा ३ मत्तगं वा ४ लट्ठियाए वा ५ भिसि वा ६ चेलं वा ७ चेलचिलिमिलिया वा ८ चम्मए वा ९ चम्मकोसं वा १० चम्मपलिच्छेयणाए वा ११ अविरहिए ठवा सेठवेत्ता गाहावतिकुलं भत्तए वा पाणाए वा पविसित्तए वा निक्खमित्तए वा कप्पति से सं नियट्टचारिस्स दोच्चं पि उग्गहं अणुण्णवित्ता परिहारं परिहरित्तए वा ॥ ५ ॥

स्थविराणां जरसा जीर्णानां स्थविरभूमिं प्राप्तानां सूत्रार्थतदुभयोपेतानामित्यर्थः । कल्पते दण्डकं विदण्डकादिभेदभिन्नं भण्डकमनेकविधानि उपकरणानि छत्रक प्रतीतं मात्रकमुच्चरादिसत्कं लष्टिका दण्डकविशेषः । चेलं कल्पादि चर्म्म तलिकादिरूपं चर्म्मपरिच्छेदनक वध्वा एतान् अविरहिते अवकाशे स्थापयित्वा गृहपतिकुलं पिण्डपातप्रतिपाताय प्रवेष्टुं वा निष्क्रमितुं वा कल्पते सन्निवृत्तचराणां भिक्षाचर्यातः प्रत्यागतानां स्थविराणां द्वितीयमपि वारमवग्रहमनुज्ञाप्य परिहर्तुं धारणया परिभोगेन चेत्येष सूत्राक्षरमात्रार्थः । विशेषव्याख्या तु भाष्यकृता क्रियते। तत्र यानि पदानि व्याख्येयानि तानि दर्शयति ॥

दंड विदंडे लट्ठी, विलट्ठिचम्मे य चम्मकोसा य ।
चम्मस्स य जे भेया, थेरा वि जे य जराजुण्णा ॥

दण्डो विदण्डः यष्टिर्वियष्टिः चर्म्म चर्म्मकोश चर्म्मणश्च ये भेदास्ते चर्म्मपरिच्छेदनकास्ते च व्याख्येयास्तत्र प्रथमत स्थविरपदमाचक्षते । स्थविरा अपि च ये जराजीर्णास्ते द्रष्टव्याः ॥

आयवताणनिमित्तं, छत्तं दंमस्स कारणं वुत्तं ।
कम्हा ठवेइ पुच्छा, संदिग्धधरो अ दुग्गट्ठा ॥

आतप उष्णेन परितापना तस्य त्राणार्थं छत्रकं गृह्णाति दण्डकस्य उपलक्षणमेतत् विदण्डकादीनां ग्रहणे कारणं पूर्वनिशीथे कल्पे च भणितम् । अथ कस्माद्दण्डकं स्थापयति एषा पृच्छा अत्रोत्तर दण्डको दीर्घ स्थविरश्च तत तं दुर्गे व्याघ्रादिपरिवारणनिमित्त परिदधति ॥

सम्प्रति भाण्डकादिव्याख्यानार्थमाह ॥

भंडं परिग्गहो खलु, उच्चारादी य मत्तगा तिन्नि ।
अहवा भंडगहणं, अणेगविहं भंडगं गहियं ॥

भाण्डकं खलु परिग्रह उच्यते उच्चारादौ च आदिशब्दात् प्रश्रवणे श्लेष्मणि त्रीणि परिग्रहस्त्रीणि मात्रकाणि भवन्ति तद्यथा उच्चारमात्रक प्रश्रवणमात्रकं श्लेष्ममात्रकं चेति । अथवा भाण्डकग्रहणेनानेकविधं भाण्डकं गृहीतं द्रष्टव्यम् ॥

चेलग्गहणे कप्पा, तमयाचरजीवदेहनिष्पन्ना ।
दोग्ग इयरा व चिलिमिलि, चम्मनालिगा व कत्तिव्वा ॥

चेलग्रहणेन तमस्थावरजीवदेहनिष्पन्ना और्णिकसौत्रिकरूपा द्रष्टव्या कल्पा परिगृह्यन्ते चिलिमिलिर्नाम जवनिका सा दवरकमयी । तथा या इतरा चर्म्ममयनालिका उपानत् कृत्तिर्वा मौवप्रदिकोपग्रहपार्विकरूपा ॥

अंगुट्ठअवरफाए, नह कोसच्छेयणं तु जे वच्छा ।
ते छिन्नसंधणट्टा, दुखंभसंधाणहेउं वा ॥

चर्म्ममयः कोश चर्म्मकोश सोऽङ्गुष्ठस्य यदि वा ( अवरफाए ) पार्ष्णिका तस्याः परिरक्षणाय ध्रियते । अथवा नखरदनादेरौपग्रहिकोपकरणविशेषस्य चर्म्ममय कोशश्चर्म्मकोश ये तु वद्ध्रास्ते धर्म्मपरिच्छेदनकमित्युच्यन्ते । ते च छिन्नसंधानार्थमथवा द्विखण्डसंधानहेतोर्ध्रियन्ते । तदेव विषमपदानि व्याख्यातानि ॥

सम्प्रति दण्डाद्युपकरणस्थापनाचिन्तां चिकीर्षुराह ॥

जइ य ठवेइ असुन्ने, न य वेइ देज्ज अत्थ ओहाणं ।
लहुगो सुन्ने लहुगा, हियम्मि जं जत्थ यावति उ ॥

यदि चाशून्ये अविरहिते प्रदेशे दण्डाद्युपकरण स्थापयति न च कस्यापि संमुखमेवं ब्रूते अत्र दद्यादवधानमुपयोगमिति तदा तस्य प्रायश्चित्त लघुको मासः । अथ शून्ये स्थापयति तदा चत्वारो लघुकास्तथा शून्ये मुक्ते स्तेनैश्चापहृते यत्र यत्र जघन्ये मध्यमे उत्कृष्टे वा उपकरणे प्रायश्चित्तमुक्त तत्प्राप्नोति ।

अत्र परस्याशङ्कामाह ॥

एवं सुत्तं अफलं, भणियं कप्पतित्ति थेरस्स ।
भण्णति सुत्तनिवातो, अतीमहल्लस्स थेरस्स ॥

चोदकः प्राह यद्येवमशून्ये च प्रदेशे उपकरणे दोषस्तर्हि तत्सूत्रमफलमविषयं यदुक्तं कल्पते अविरहिते अवकाशे स्थापयित्वेत्यादि । सूरिराह भण्यते अत्रोत्तरं दीयते अस्य सूत्रस्य निपातोऽतिमहतोऽतिशयेन गरीयसः ।

गच्छाणुकंपणिज्जा, जेण ठवेऊण कारणेणं तु ।
हिंडइ जुन्नमहल्लो, तं सुण वोच्छं समासेणं ॥

सोऽतिवृद्धो महान् गच्छस्यानुकम्पनीयं परं येन कारणेन स जीर्णो महान् एकाकीभूतोऽविरहिते प्रदेशे उपकरणं स्थापयित्वा भिक्षां हिण्डते तत्कारणं समासेन वक्ष्ये तच्च वक्ष्यमाणं शृणु प्रतिज्ञातमेव निर्वाहयति ।

सो पुण गच्छेण समं, गंतूण अजंगमो न वा एइ ।
गच्छाणुकंपणिज्जो, हिंडइ थेरो पयत्तेण ॥

स पुनरजंगमो गच्छेन सम गन्तुं न शक्नोति तत स गच्छस्यानुकम्पनीय इति कृत्वा स्थविरो वक्ष्यमाणेन प्रयत्नेन यतनया हिण्डते तमेव प्रयत्नमाह ।

अतक्किय उवहिणा उ, थेरा भणिया अलोभणिज्जेण ।
संकमणे पट्ठवणं, पुरतो समगं व जयणाए ॥

यमुपधिं न कोऽपि तर्कयति विशेषत परिभावयति तेनातर्कणीयेनोपधिना अत एवालोचनीयेन लोभगोचरतामतिक्रान्तेन परिधाप्य मासकल्पप्रायोग्यस्य वर्षावासप्रायोग्यस्य वा क्षेत्रस्य सङ्क्रमेण कर्त्तव्ये आचार्येण ते स्थविरा अतिमहान्तो भणिता पुरत समकं वा यतनया चलयता तत्र यदि प्रतिभासते तर्हि पुरतोऽग्रे साधुभि सह तस्य प्रस्थापन क्रियते । अथ न शक्नोति पुरतो गन्तुं तदा समक नीयते कथमित्याह । यतनया तामेव यतनामाह ।

संथारग एगेण व, समगं णेण्हंति सभए ते उवहिं ।
किंतिकम्म ठव पढमा, करेंति तेसिं असति एगो ॥

यदि गच्छेन समं व्रजति तत सुन्दरमेव सकलस्यापि गच्छस्य तस्माद्वाश्यकरमात् । अथ समकं गन्तुं न शक्नोति तदा

साधुसंघाटकेन समं साधुसंघाटकस्याभावे एकेन वा साधुना समं व्रजति तत्र यौ सहायौ दत्तौ तौ तस्योपकरणं गृहीत्वा परिवहतः । यदा तु चौरभयेन सभयं स्थानं तदा समस्तमपि उपधिकल्पादिलक्षणं गृहीतो गृहीत्वा स्थविरो यथाजातः कृत्वा अग्रे क्रियते ततः सभयस्थानलङ्घने कृतिकर्म्मविश्रामणां तस्य कुरुतः कृत्वा द्रव पानीयञ्च समर्पयतः । तदनन्तरं प्रथमालिकां कारयतः । तयोर्द्वयोः साध्वोरभावे एक समस्तं प्रागुक्तं करोति ।

जइ गच्छेज्जाहि गणो, पुरतो पंथे य सो फिडिज्जाहि ।
तत्थ उ ठवेज्ज एगं, रिक्खं पमिपंथगप्पाह ॥

अथैकोऽपि सहायो न विद्यते तदा स्थविर एकाक्यपि पुरतः प्रवर्त्यते । तत्र यदि सार्थादिवशतस्त्वरितं गच्छन् स गणपुरतो गच्छेत् यदि वा पथि परिरयादिना स स्फिटितो भवेत्तत्र एकं साधुं रिक्तमुपकरणरहितं स्थापयते । अथ तत्र शरीरापहारिस्तेनभयं दुष्टव्याघ्रादिश्वापदभयं वा ततः स मोक्तुं न शक्यते तर्हि अग्रेतनस्थानात्प्रतिनिवर्त्तमानं पथिकमप्याह इति संदेशापयेन। यथाऽग्रे साधुसमुदायो व्रजन्नास्ते तस्मात्त्वरितमागन्तव्यमिति ।

सम्प्रति यथा स स्फिटितो भवति तथा प्रदर्शयति—

सारिक्खकरिसणीए, अहवा वातेण हुज्ज पुट्ठो उ ।
एवं फिडितो हुज्जा, अहवा वीपरिरएणं तु ।
कालगए य सहाए, फिडितो अहवा वि संभमे हुज्जा ।
पढमपिफितो वएण व, गामपविट्ठो व जो हुज्जा ॥

पथि गच्छतो मार्गत्य तत्र येन पथा गच्छो गतस्तस्मादन्यस्मिन्पथि केचित्साधुसदृशाः पुरतो गच्छन्तो दृष्टास्ततः साधव एते गच्छन्तीति सादृश्यकर्षिण्या भित्या विप्रलब्धः सन् तेन पथा गच्छेत् अथवा अपान्तराले स वातेन स्पृष्टः स्यात् । ततो गन्तुं न शक्नोति एवममुना प्रकारेण स्फिटितो भवेत् । अथवा तथाविश्रमहागर्त्तया प्रवर्तमानया वा परिरयेण स स्थविरो व्रजन् गच्छन् स्फिटितः स्यात् । यदि वा यस्तस्य सहायो दत्तः स कालगत इति स्फिटित एकाकी संजातः । अथवा संभ्रमे वा त्वरितं सार्थेन सह पलायमाने गच्छे स्थविरः शनैर्व्रजन् गच्छन् स्फिटितो भूयात् । यदि वा प्रथमेन क्षुत्परीषहेण पीडितः सन् यः स्थविरो ग्रामं व्रजितां वा प्रविष्टः भवेत् गच्छश्च स्तेनादिभयेन सार्थेन समं त्वरितं व्रजति स गच्छात्स्फिटितो भूयात् ।

एएहिं कारणेहिं, फिडितो जो अट्ठमं तु काऊण ।
अणुहिंमंतो मग्गइ, इतरे वि य तं विमग्गंति ॥

एतैरनन्तरोदितैः कारणैर्यो गच्छात्स्फिटितः सोऽष्टमं षष्ठं चतुर्थं वा कृत्वा भिक्षामटन् गच्छं मार्गयति अन्वेषयति इतरेऽपि च गच्छसाधवस्तं स्थविरं विमार्गयन्ति । अथ ते गच्छसाधवः सार्थेन समं व्रजन्तो यदि सार्थं मुञ्चन्ति तदा स्तेनैरपि हीयन्ते वनदावेन वा दह्यन्ते दुष्टेन वा स्वापदेन केनापि गृह्यन्ते ततो गवेषयितुं न शक्नुवन्ति तर्हि स्थविरेणावश्यमुक्तप्रकारेण मार्गणा कर्त्तव्या ।

अह पुण न संथरेज्जा, तो गहितेणेव हिंडते भिक्खं ।
जइ न तरेज्जाहि ततो, ठवेज्ज ताहिं असुन्नम्मि ॥

यदि चतुर्थेन षष्ठेनाष्टमेन वा गवेषणं कर्तुं न संस्तरेत् ततस्तदा तदुपकरणमशून्ये प्रदेशे स्थापयेत् । तत्रापि यानि वर्जनीयानि स्थानानि तानि प्रदर्शयति ।

अह पुण ठविज्ज एहिं, सुन्नगिकम्मगुंठिएसुं वा ।
नाणुण्णवेज्ज दीहं, वहुभुंजइ तत्थ पच्छित्तं ॥
तिसु लहुग देसु लहुगो, खण्डाइयणे य चउलहू होति ।
चउगुरु समखंडीए, अप्पत्तपमिच्छमाणस्स ॥

अत्राद्यगाथापदानां द्वितीयगाथोक्तप्रायश्चित्तैः सह यथासंख्येन योजना सा चैवमथ पुनः स्थापयेदेषु वक्ष्यमाणेषु स्थानेषु गाथायां तृतीया सप्तम्यर्थे ततः प्रायश्चित्तसंभवस्तत्र यदि शून्ये स्थापयति ततश्चतुर्लघु अग्निकर्म्मिकायामपि शालायां स्थापने चतुर्लघुका अग्निना यदि कथमप्युकरणस्य दाहस्तदा तन्निष्पन्नमपि प्रायश्चित्तं जुगुप्सितगृहेषु स्थापयति चतुर्लघु तस्मादेतानि वर्जयित्वा वक्ष्यमाणेषु स्थानेषु स्थापयेत् यत्र स्थापयति ते अनुज्ञापयितव्या अननुज्ञापने मासलघु दीर्घां भिक्षाचर्यां कुर्वति मासलघु बहु भुञ्जाति प्रायश्चित्तं चत्वारो लघवो भवन्ति ( खण्डाइयणेइत्ति ) खण्डस्य प्रचुरस्य अदनं भक्षणे सतीत्यर्थः । तथा अप्राप्तां सखर्मीं प्रतीक्षमाणस्य प्रायश्चित्तं चत्वारो गुरुकाः ।

संप्रति येषु स्थानेषु स्थापयेत्तानि दर्शयति ।

असति य सुमणुन्नाणं, सन्त्रोवहिणा व जइएसुं वा ।
देसकसिणं व घेत्तुं, हिंडइ मइ तंत्र आलोए ॥

यदि सुमनोज्ञा सन्ति तर्हि तेषूपकरणं स्थापयितव्यं तेषामसत्यभावे अमनोज्ञानामपि असांभोगिकानामप्युपाश्रये स्थापयेत् यदि वा सर्वेणाऽप्युपधिना गृहीतो न हिण्डते यदि शक्तिरस्ति अशक्तौ पार्श्वे स्थापयति यदि वा यथा भद्रकेषु गृहे स्थापयति ( देसकसिणं व घेत्तुमिति ) समस्तस्योपधेर्देशग्रहणं तानि यानि कृत्स्नानि परिपूर्णानि कल्पादीनि तानि गृहीत्वा भिक्षामटति अशक्तौ तान्यपि मुक्त्वा परिभ्रमति तत्र सति लाभे तेषु गृहेषु भिक्षामटाति अदन् उपकरणं पश्यति ॥

असति य अविरहियम्मि, णितिकादीण अंतिए ठवए ।
देज्जह ओहाणंति, जाव अभिक्खं परिभमामि ॥

असति अविद्यमाने भावे अविरहिते प्रदेशे नैत्यकादीनां नैत्यिको ध्रुवकार्म्मिको लोहकारादिरादिशब्दात् मणिकारशङ्खकारादिपरिग्रहस्तेषामन्तिके स्थापयेत् ब्रूते च दद्यादस्योपकरणस्यावधानं यावदहं भिक्षां परिभ्रमामि ॥

ठवेति गणयंतो वा, समक्खं तेसिं बंधिउं ।
आगतो रक्खिया जोत्ति, तेण तुब्भेचिया इमे ॥

तेषां ध्रुवकार्म्मिकप्रभृतीनां समक्षं गणयन् वाशब्दः स्थापयति वा शब्दः स्थापनाविषयप्रकारान्तरसूचने आगतश्च सन् द्वितीयमपि वारमवग्रहमनुज्ञापयति। कथमित्याह भो इत्यामन्त्रणे युष्माभी रक्षितान्यमूनि तेन युष्मदीयानीमानि मा गृह्णन्तमनुजानीत ॥

दट्ठूण व अत्तहा गंठिं, वेण गुणो त्ति पुच्छति ।
रहियं किं घरं आसी, को परो व इहागतो ॥

इह यदा तेषां समक्षमुपकरणं बद्ध्वा स्थापयति तदा मानिज्ञानं ग्रन्थिं बध्नाति । तत आगतः सन् तं प्रलोकयति । मा केनाप्युन्मुच्य किंचित् हृतं स्यात्तत्र यदि तथैव ग्रन्थिं पश्यति ततः पूर्वोक्तप्रकारेण द्वितीयमवग्रहमनुज्ञापयति । अथ ग्रन्थिमन्यथा पश्यति ततो ब्रूते केनायं ग्रन्थिरुन्मुच्य बद्ध इति

पृच्छति । तथा किमिति क्षेपे रहित शून्यं गृहमासीत् को वा अपर इह समागत इति ।

नत्थि वत्थुं सुगंभीरं, तं मे दावेह मा चिरा ।
न दिट्ठो वा कहं एत्तो, तेणओ उवओ इह ॥

ममोपकरणमध्ये यद्वस्तु सुगम्भीरमतिशोभनं तन्नास्ति तद्दर्शय तद्वस्तु मा चिरकालं कुरु । अथ न गृहीतं मया नापि कोऽप्यागच्छन् दृष्टस्तत आह तद्दृष्टो वा कथमत्रागच्छत् स्तेनक ( उवयति ) उत्पटक अवश्यं दृष्टः स्वयं वा गृहीतमिति भाव ॥

धम्मो कहिज्ज तेसिं, धम्मट्ठाए व दिन्नमन्नेहिं ।
तुब्भारिसेहि एयं, तुज्झेसु य पच्चओ अम्हं ॥

धर्मस्तेषां ध्रुवकर्म्मिकप्रभृतीनां कथ्यते । कथयित्वा च पर्यन्ते संघाटकमानीयमिदमुच्यते धर्म्मार्थमेव युष्मादृशैरन्यैरेतत् उपकरणं मह्यं दत्तं युष्मासु च विषये अस्माकमतीव प्रत्ययो विश्वासस्ततः किमित्याह ।

तो उवित्थ ठेपत्थ, दिज्जउ तं सावया इमं अम्हं ।
जइ देंती रमणिज्जं, अदेंति ताहे इमं भणति ॥

यत एव तस्मात् श्रावका यन्नोऽस्माकमत्र स्थापितं तदिदमस्माकं दीयतामेवमुक्ते यदि ददति ततो रमणीय सुन्दरम् । अथ न ददति ततोऽददतस्तान् इदं वक्ष्यमाणं भणति । तदेवाह ।

थेरत्ति काउं कुरु मा अवन्नं, संती सहाया बहवो ममन्ने ।
जे उग्गमेस्संति ममेयमोमं, खित्ताइ नाउं इति ते अदेंते ॥

स्थाविर इति कृत्वा मा ममावज्ञां कार्पुर्यतः सन्ति ममान्ये बहवः सहाया ये क्षेत्रादि ज्ञात्वा क्षेत्रकालादिकमवबुद्ध्य ममैतत् मासमुद्गमयिष्यन्ति इति एतत् तान् अददत प्रति ब्रूते ।

उवहिप्पडिबंधेणं, सो एवं अत्थए तहिं थेरो ।
आयरियपायमूला, संघाडेगो व अह पत्तो ॥

उपधिप्रतिबन्धेन स स्थविरस्तत्र एवमुक्तप्रकारेण अर्थयति तावत् यावदाचार्यपादमूलात् संघाटक एको वा साधुः समागच्छति । अथ सोऽपि प्राप्तः तर्हि यत्तैः कर्त्तव्य तदुपदर्शयति ।

ते वि य मग्गंति ततो, अदत्ते साहेंति भोइयाईणं ।
एवं तु उत्तरुत्तर, जा राया अह व जा दिन्नं ॥

तेऽपि आचार्यपदे मूलादागता साधवस्तान् ध्रुवकार्मिकादीन्मार्गयन्ति याचन्ते ततो यदि न ददति तर्हि तान् अददतो भोजिकादीनां नगरप्रधानपुरुषादीनां साधयन्ति कथयन्ति । अथ तथापि न किमप्यनुशासन तर्हि ततोऽपि वृहतां वृहतां वृहत्तराणां कथनीयम् । एवमुत्तरोत्तरस्य कथनं तावत् यावत् राजा अथवा यावद्दत्तं भवति तावत्कथनीयम् ।

अह पुण अक्खयचिट्ठे, ताहे दोच्चोग्गहं अणुन्नवए ।
तुब्भच्चयं इमं ति य, जेणं भे रक्खियं तुमए ॥

अथ पुनस्तत् उपकरणमक्षतं तिष्ठति तदा द्वितीयमवग्रहमनुज्ञापयति यथा इदं समस्तमप्युपकरण युष्मदीयं येनेद युष्मार्भी रक्षित तस्मान्मां गृह्णन्तमनुजानीतेति एतावता'कप्प तिष्ठइ भणियट्ठाणाण दोऽचपि उग्गहं अणुमविज्जति'त्याख्यातम् ।

घेत्तूणऽहिं सुन्नघरम्मि भुंजे, खिन्नो व तत्थेव य छन्नदेसे ।
असो सतो भुंजइ कच्चगेऊ, सव्वो वि उंजाण करेतु कप्पं ॥

गृहीत्वा उपधिं शून्यगृहे गत्वा भुङ्क्ते । अथ मार्गपरिश्रमेण भिक्षाटनेन च खिन्नः परिश्रान्तस्तर्हि तत्रैव छन्ने आवृते प्रदेशे भुङ्क्ते । अथ छन्नप्रदेशो नास्ति तर्हि ( कच्चगे व दुगे ) सर्वे भाजनाद्यावृत्य भाजनस्य च कल्पं कृत्वा भुङ्क्ते ।

मज्झे दवं पिवन्तो, भुत्ते वा तेहि वा दवावेति ।
नेच्छे वा मोयत्तए, एमेव य कच्चए डहरे ॥

मध्ये भोजनमध्यभागे किञ्चित् भुङ्क्ते इत्यर्थः । द्रवं पिबन् पातुकामो वा भुङ्क्ते वा परिपूर्णस्तैरेव गृहस्थैर्दापयति मात्रकात्पानीयमपवर्त्तापयति अपवर्त्यापि द्वाभ्यां हस्ताभ्यामञ्जलिं कृत्वा पिवति तथा यदि क्षुल्लके नववटुके न सर्वे भक्तं माति तदा यः पानीयविषये विधिरुक्त स एवात्रापि द्रष्टव्यस्तथा एवमेव अनेनैव प्रकारेण डहरे क्षुल्लके तच्च द्रष्टव्यम् ।

अप्पडिवज्झतगमो, इयरे वि गवेसए पयत्तेणं ।
एमेव अवुड्डस्स वि, नवरं गहिएण अडणं तु ॥

एवं यतनां कुर्वतो व्रजिकादिष्वप्रतिबध्यमानस्य प्रतिबन्धमकुर्वतो गमो गमनं गच्छे भवति । इतरेऽपि च गच्छसाधवस्तं स्थविर प्रयत्नेन गवेषयन्ति गाथायामेकवचनं प्राकृतत्वात् । योऽप्यवृद्ध कारणतः कथमप्येकाकी भवेत्तस्याप्येवमेवानेनैव प्रकारेण यतना द्रष्टव्या नवर भिक्षार्थमटनं गृहीतेनोपकरणेन तस्य द्रष्टव्यम् । व्य० द्वि० ८ उ० । ( तीर्थकृतां सोपधित्व तित्थयरशब्दे ) ( उपधेरवश्यधारणीयत्वं वोटिकशब्दे ) ( मध्यमतीर्थकरसाधवो महामूल्यान्यपि वासआदीनि भुञ्जत इत्यचेलगशब्दे दर्शितम् ) ( पादप्रोञ्छनकादीन् याचित्वा प्रत्यर्पणं पादपुंछणकादिशब्देषु ) ( उपधीनां धावनं धोवणशब्दे )

(१७) निर्ग्रन्थीनामागमनपथे उपकरणानि स्थापयति ॥

( सूत्रम् ) जे भिक्खू णिग्गंथीणं आगमणं पहंसि दंडगं वा लट्ठियं वा रयहरणं वा मुहपत्तिं वा अण्णयरं वा उवगरणजायं ठवेइ ठवित्तं वा साइज्जइ ॥ २६ ॥

जेण पहूणपक्खियादिसु आगच्छंति तिमिपहे दंडो वा छुप्पमाणो लट्ठी आयप्पमाणा अण्णतरगहणा ओहिय उवग्गहिय वा णिक्खिवति तम्मि पहे मुंचति तस्स मासलहु आणादिया य दोसा कहं उवकरणस्स णिक्खेवसंभवो उच्यते ।

णिसिपंते य ठवेज्जा, पडिलेहंतो व भत्तपाणं तु ।
संथारलोयकितिकम्म, कत्तितवावाअणो भोगा । २२१ ।

णिसिपंतो रयहरणं मुंचति भत्तपाणाति वा पडिलेहंतो सथारगं करंतो वा लोय वा करेंतो कितिकम्मं विस्सामणतं वा करेंतो मत्ताए वा कच्चि ताव ण मुचति अणाभोगेण वा एतेहिं कारणेहिं रओहरणादि मुंचेज्जा ॥

निग्गथीणागमणं, पवेज्जो य भिक्खु णिक्खिवे ।
कइतवेणं अण्णतरेण, गुरुगा लहुगोतरे आणा ॥२२२॥
पडिपुच्छदाणगहणे, संलावणुरागहासखेड्डे य ।
भिण्णकथादिराधण, दट्ठूण व भावसंबंधा ॥ २२३ ॥

कतित्तवेणं मेहुणट्ठस्स चउगुरुगं इतर अकेतव अणाभोगो अणाभोगेण मुचति । मासलहुं आणादिया य दोसा भवति इमा चरित्तविराहणा पडिपुच्छणा पढमा पुच्छा वितिया पडिपुच्छा तस्सिम वक्खाणं ।

कस्सेयं ति य पुच्छा, मम्मिाति का तूण ।किं वुत्तं वितिया ।
वित्तं ण मे मधीणं, पक्खित्ते दट्ठु एज्जंति ॥ २२४ ॥

रयोहरणादि करति संजतो घेत्तूण पुच्छति कस्सेयं ति रयोहरण साहू भणति ममेयति काऊण मया कृते साधुना इत्यर्थ । अहवा साहूण नि पढमपुच्छा किं धुयविति पच्छा एस परिपुच्छा दट्ठव्वा ततो साहू भणति वित्तं ण मे सहीणंति ण मे वा सवट्टती वित्त कस्माऊतो' पव्वईए तुम थागच्छमाणी पिच्छा सा भणति।

किं च मए अट्ठो भे, आमं एणु दाणिहं तुह सहीणं ।
संपत्ती होतु कत्ता, चत्ता तु एक्कतरो जणितो य ॥२२५॥

साहू भणति आम अनुमतार्थे सा भणति ननु आमन्त्रणार्थे इदाणिं तुह सहीणा आयत्तेत्यर्थः । ततियपुच्छा गता संपत्ती सागारिया सेवणा चउत्थपुच्छ संजतो करेति सजविता पडिपुच्छति गय इदाणिं दरोग्गहणेत्ति भणिओ य ।

हंद गेण्हह सुज्झं, दातूण साहरति सुज्झो तु ।
तुज्झं घेत्तुं व पुणो, मुंचति जा पुणो देति ॥ २२६ ॥

हदेत्यामन्त्रणे सजतो हत्थ पसारेऊण सुज्झो पडिसाहरेति भणति य तुज्झेव भवतु अहवा सो संजतो तीए हत्थाओ घेत्तूण पुणो मुचति कस्माद्धेतोः जा पुणो देति जेण छितीयं वारं मम देति देंतीए य पुणो हत्थफासो भविस्सति तस्माद्धेतो' इदाणिं संलावो साहू भणति धारेयव्वं ।

धारेतव्वं जातं, जात पउमदलकोमलतलेहिं ।
हत्थेहि परिग्गहितं, इतिहासणिरागसंबंधा ॥२२७॥

इतिहासमेतत् इतिहासतो अणुरागो भवति ततो य परोप्पर भावसवधो इयाणिं " अणुरागोत्ति " गाहा ।

संलावादणुरागो, अणुरत्तावेति जो मए दिण्णं ।
इतरो वि य पडिभणती, कस्स व जीवेण जीवामो ।२२८।

संलावा अणुरागो भवति इदाणिं हासखेड्डेयाति संजाती अणुरत्तावेइ भे मए दिण्ण भे इति भवत इतरो साहू भणति ज पि मम जीविय त पि तुज्झायत्त तेण तुज्झ वएण जीविएण जीवामो ।

एवं परोप्परस्स, भावणुबंधेण होंति मे दोसा ।
पडिसेवणगमणादी, गेण्हणदिट्ठेसु संकादी ॥२२९॥

पडिसेवणा चउत्थस्स एगतरस्स दोण्ह वा गमण तु णिक्खमण आदिसद्दातो सलिंगठितो वा अणायार सेवति संजतो वावि तिण्णि वत्तिणा वा सजय उदिण्णमोहावला वा गेण्हेज्ज अहवा खयरकम्मिएहिं गेण्हण हासखेड्ड वा करेंताणि सागारियेण दिट्ठाणि संकिते चउगुरु णिस्संकिते मूल अहवा दिट्ठे भाडिय भोतियातिपसंगो ।

वेजव्वए विराधण, दुच्छादीए हि होति जम्हा उ ।
णिग्गंथीणागमणं, पम्हट्ठं जण णिक्खिवे उवधिं ।२३०।
वितियपदमणाभोगे, पडितेए हुज्ज संजमेगतरे ।
आसण्णे दूरे वा, णिवेदजतणाए अप्पणं ति ॥२३१॥

पम्हट्ठ णाम विसरिय एगतरसभमो सावयगाणिआ उ माति सो संजयाए उवही वसहीए आसण्णे वा पडितो दूरे वा जति असमोत्ति णिवेदेंति सह दूरत्तो घत्तु जयणाए अप्पणिति ॥

आसण्णे साहंती, दूरे पडितं तु थेरिगाणेति ।
संणिक्खवंति पुरतो, गुरुणा इमि पमज्जत्ता ॥ २३२ ॥

( सूत्रम् ) वसहीए जइ आसण्णे पडियंतो ण गेण्हंति णियत्तिउ थेरिया गुरुणा साहंति अह दूरे पडियंतो थेरिया गिण्हति तरुणी वि घेत्तुं थेरिया ण समप्पेंति ता थेरिया संजयवसहिमागंतुं पमज्जित्ता भूमिगुरुणं पुरतो णिक्खवेंति एसो अप्पिणे जयणा भणिया ॥

एतत्सूत्रस्य व्याख्या सुगमत्वाद् ग्रन्थकृता न व्याख्याता। (उपधेः परिष्ठापना स्वस्थाने ) उपधिप्रत्युपेक्षणं व्याख्यानमेव ( प्रत्युपग्रहणे क उपधिर्ग्राह्य इति पलम्बशब्दे ) (धर्मोपकरणे परिग्रहदोषो नेति परिग्गहशब्दे )

उवहिअसंकिलेस–उपध्यसंक्लेश–पुं० उपधिविषयोऽसंक्लेशः उपध्यसंक्लेश' असंक्लेशभेदे, स्था० १० ठा० ॥

उवहिकप्प–उपधिकल्प–पुं० उपधिधारणसामाचार्याम्, ।

एसो चरित्तकप्पो, एत्तो वोच्छामि उवहिकप्पं तु ।
सो पुण पुव्वाभिहितो, उवहिओवग्गहे चेव ॥
जो तु विसेसो एत्थं, तं णवरि इह अहं पवक्खामि ।
मुच्छुग्गमादिएहिं, वारेयव्वो जहाकमसो ।
फासुयमफासुए य, विजाणयअजाणए ओहो ॥
ओहो बहुवग्गहिते, वारणा कस्स केचिरं ।
जदि फासुवही करणे, गहिओ उ जाणए ण तो धारेज्ज ।
जुण्हो अज्जुण्हो वि हु, अट्टकुट्ट हुज्जति हु ॥
फासुगो अजाणएण, कारणगहिओ धरिज्जते ताव ।
जावन्नो उप्पण्हो, ताहे तु विगिंचए तं तु ।
अह पुण अफासुओ तु, जाणगगहिओ तु कारणे होज्ज ।
जदि गीतत्था सव्वे, तो धारेंती तु जा जिण्हो ॥
अगीतविमिस्सेहिं, आणुपन्नमितं विगिंचंति ।
अहपुण अफासुओ तु, कारणगहिओ अगीतेणं ॥
उप्पण्हे अण्णम्मि, विगिंचती तु सो ताहे ।
एव चतुब्भंगेणं, वारणता वा परिट्ठवणा ॥
सो पुण दुविहो उवही, वत्थं पातं च होति बोद्धव्वं ॥
वत्थं तु बहुविहाणं, पाता पुण दो अणुण्हाता ॥
तो वीत पंचएहं, किण्ह वि एगो पडिग्गहो होति ।
तो दो एकेकस्स तु, भण्हति न पहुच्चए एवं ॥
तो चतुतिण्ह दुवेण्हं, अहवा एक्केक्क तस्स एक्केक्कं ।
भणति पादुणगादिसु, ताहे किं काहितेकेणं ॥
अप्पापरोप्परवयण, जीवाणिकाया य चत्तहोतिव्वं ।
चारित्तगदिट्ठंतो, तम्हा दो दो तु घेत्तव्वो ॥

इयाणिं उवहिकप्पो उवहि उग्गमादिसुद्धो धारेयव्वो । गाहासिद्धमेव । उग्गमादएस एतावधो । गाहासिद्धमेव तिण्हयपच्छा- गा गाहासिद्धमेव । एस जिणकप्पो थेरकप्पो एए चेव दुवारसरूप गाहा । पत्तमसाए गाहा फोसए गाहा सिद्ध । ज न दुवग्गहकर गाहासिद्ध । गाहा । फासुय अफासुए य धारि उवही पुणो जो गहिओ भवइ सो केचिरं धारेयव्वो जो फासुओ उवही सो जाणगा या होतु अजाणगा वा ताव परिभुंजंति जाव जुण्णो जाव रुधिहय अण्ण वि [illegible] नियमा ता-

ण गाहा। अह फासुओ जाणगा यकारणे गहिओ तहावि ताव प-रिछुज्जइ जाव वरइ अह अफासुओ अयाणगा य कारणे गहिओ ताहे उप्पन्ने फासुए इयरो परिठविज्जइ एवं चउभंगो धरणे वा परिठ्वणा वा। चोयग आह। गाहा। एगेण किमेगो पादो जाव पंचएह वि सयाणं एगो पडिग्गहओ अहवा दोण्हं तिण्हं चउ-ण्हं वा पडिग्गहओ एगो न पहुच्चइ तो दो दो एगस्स पडिग्गह उ मत्तओ य दिज्जइ उच्यते अद्धाए पाहुणगाइसु कारणाइसु कहं धरंति तु जइ पहुणाए एगमेगो पडिग्गहओ एव य भण-तस्स चउगुरु। अप्पापवयणं जीवनिकाया परिचत्ता वा रत्तय-छिद्देण सव्वेण वि दोण्हि गिण्हियव्वा मत्तओ पडिग्गहओ य किं कारणं जेण गच्छो सकारणो वा लघुछसेहपाहुणयाइसु। आह जइ नियमा दो दो धरिज्जंति जिणकप्पियाणं किं निमित्तं एगओ पडिग्गहओ। गाहा। संगहिय उच्यते। सो भगवानसं-गहियकुच्छी जोयण पि गच्छइ सन्नाहो उसकारी य पवयणस्स जेण अपसो भवइ तं न करेइ अप्पाहारो सो भगव तत्ते अओ-कल्ले वि विद्धसइ तस्साहारो सरीरए अपडिबद्धो न य आसणे वोसिरइ उच्चाराइ न य आयारावि विच्छिन्ने थंडिले पडिग्गहं एगपासे ठवेऊण एएहिं कारणेहिं तस्स एगो पडिग्ग-हो। गाहा। तिहिं जइ वत्थाणि ढाणि कईहिं वत्थेहिं पडिपुव्व-चसग्गेण तिहिं जया पुण तिहिं न संथरेज्जा तो अइरेगाणि ध-रेज्जंति। आह ननु पमाणाइरेगे दोसा उच्यते। सबालवुड्ढाओ लोगत्थो महकारणेण सकारणे तेसिं बहुएहिं कज्ज अतओ य मग्गतो मेहाइ कारणेसु न लभइ ताहे परिचत्ता सेहादयो पच्छा धोच्छेयकरो भवइ मपक्खस्स तित्थस्स वुत्तं भवइ। गाहा। जइ एए वियप्पहुणे जइ आहारोवहिसेज्जासु विप्पहुणाणं नाणदंसणचरित्ताणं तवनियमसजमसज्झायमाईणं निप्पत्ती होज्जा तेण आहागइ आइगहणेण उसहाइणं व को उवग्गहं कुज्जा। गाहा। जम्मि परिग्गहिय जत्थ पुण परिगिज्झमाणे तस्स थावराण उवघातो पवत्तेज्जा पुरेज्जा पुरेकम्म उदउल्लाइसु तं न घेप्पइ महिए वा पच्छे कमाइघरे ते वा पडिलेहणाइभएण पडिलेहेइ भएण माहीरिहिति सो परिग्गहो भवइ उवहिम्मि येयंते गहिए धरिज्जंते वा एए दोसा न भवंति सो परिग्गहो निद्दोसो त्ति अपरिग्गहो चेव। गाहा। आहारोवहिं किं निमित्तं भगवया नित्थं पवत्तियं उच्यते। न वि भगवता उपहाराद्दिनि-मित्त तित्थं पवत्तियं नाणदंसिणचरित्तनिमित्तं तवसजमाईणं निव्वाणसाहणं पडिविद्धिकारणं नित्य पवत्तियं। गाहा। भाणभरणे होराइणि नाणाइण गुणकारगाणि त्ति तेणाणुण्णायं तेसु पुण णाणाइसु ठियस्स पूयावि कव्विज्जइ जहा गणहारिस्सुक्को साहारोवहिसाइणं एस उवहिकप्पो। पं० चू० ॥

अहुणा दु उवहिकप्पं, गुरूवदेसेण वोच्छामि।
उवगेण्हति उवकारं, करेइ उवहीयते व उवही तु ॥
किं कारणं तु उवही, देसीए भगवती सुणसु।
जीवाणणुग्गहट्ठा, एवं खलु वणिदतो (इहं) तित्थे ॥
काऊण णुग्गहपदं, पदिणं यिपदं अनावो तु।
रमकादणुकंपट्ठा, अगणीमादीण चेव रक्खट्ठा ॥
अमदू णाणुकंपा य, तदुवहिगहणं जिणा यंति।
आह जदणुग्गहट्ठा. वत्थादीगहणदेसियं समये ॥
णो असदूणं काहा, धीपरिभोगो णाणुण्णातो।
भसंति पात्तेत्ति कम्हि व,कम्हि व पुण होति अप्पवित्तीओ ॥
संजम पमीनियत्ता–मेहुणमादीण णाणुण्हा।
णाणचरण ठिताणं, उवग्गहं कुणति णाणचरणाणं ॥
आहार उवहि सेज्जा, तेण उ उवहित्तणं वेंति।
जस्स पुणो वहिगहिता, उवघातकरी तु तस्स उवघाता।
कह उवघाय करेती, अइरित्तगहो य मुच्छाए ॥
संथरमाणो गेण्हति, अतिरित्तं उवहि जो भवे समणो।
वण्णादिजुत्ते मुच्छति, दव्वहारे वुवस्से वा ॥
एतेसु अणिट्ठेसु य, जो दुस्सति सो करेति उवघातं।
णाणादीणं तिण्हं, तम्हा ते वज्जए हेतू ॥
जो जत्थ जदा जहियं, उवहीधरिभोगओ अणुणाओ।
सो तत्थ अणतिचारो, अणुण्हाते चरणभेदे ॥
जह सिंधूओ कप्पा, ओरात्ता उण्हिया अणुण्हाता।
पिसियादीण य गहणं, खीरादीणं चाणुण्हाता ॥
अतिहिमदेसे य तहा, कारणियगताए सिसिरकालम्मि।
परिभुंजंताए य को, तवादिचरणे अणुवघातो ॥
हारुविसयादिएसुं, एतेसिं चेव भोत्तु पडिसेहो।
पडिसिद्धे परिभोगं, कुणमाणे भंजती चरणं ॥
णाणं पि तु सो भिंदइ, उवदेसं जेण ण कुणति।
तस्स जं णाणुपुव्वं, दंसणभेदो वि तो तेणं ॥
णिवदिक्खितमतरंता–दिएसु होति परिभोगा।
समणुण्णाओ दसिणा-दियाए इहरा अणुवभोगो पं० भा०।

इयाणिं उवहिकप्पो गाहा जीवाणुग्गहओवही किं निमित्तं धारिज्जइ याइ उच्यते जीवाणुग्गहहेऊ रसाएणं सा रक्खण-णिमित्तं पयम्मि तित्थेवं निओ उवही असहुत्तरेण य वत्था-ईण गहणं। आह जइ असहुत्तरेण वत्थाइगहणं तेण अविरइया-ओ कम्हा नोवभुंजइ उच्यते क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिरि-त्यादि। संयमप्रत्यनीकानि मैथुनादीनि अतस्तेषामभावो भवति आचरितव्ये गाहा। नाणावरणे किमुक्तं भवत्युपधिरिति उच्यते ज्ञानदर्शनचारित्राणामुपकारं कुरुते उपग्रहं करोतीत्यर्थः। उवही आहारेज्जा उपदव्यतोऽवधिरित्यपदिश्यते गाहा ज-स्सओ जो पुण संथरमाणो वि अइरित्तं उवहिं धरेइ तस्स स एव उवहिनिमित्तो उवघाओ भवइ कारणेण वा आहारे वि रसहेउं वा भुंजइ रागदोसेहिं वा एयस्सोवघाओ भवइ। गाहा जो जत्थ उवही पुण जो जत्थ जया जम्मि खेत्ते अणु-ण्णाओ जहा सिंधूए उक्कोसयाणिण तयाणं जम्मि वा काले अणुण्णातो हेमन्तकाले वासे या तेणोवहिणा नाणाइ आयारो न भवइ जो पुण खेत्तकालेसु अणणुण्णाओ। गाहा जो जत्थ उवही धरिज्जइ सो उवघाओ। एस उवहिकप्पो। पं० चू० ॥

उवहिकय–उपधिकृत–त्रि० उपाधिनिष्पन्ने, " परिहारियं भ-दितो गिहणी उवधीकतं तु पच्छित्तं " नि०चू० १ उ०।

उवहिपच्चक्खाण–उपधिप्रत्याख्यान–न० उपधिरुपकरणं तस्य रजोहरणमुखवस्त्रिकाव्यतिरिक्तस्य प्रत्याख्यानं न मयाऽसौ ग्रहीतव्य इत्येवंरूपा निवृत्तिरुपधिप्रत्याख्यानम्। रजोहरण-

मुखवस्त्रिकां विहायाऽन्योपधिपरिहारे तत्फलं यथा ।

**उवहिपच्चक्खाणेणं भंते ! किं जणयइ उवहिपच्चक्खाणेण अपलिमंथं जणयइ निरुवहिएणं जीवे निक्कंखे उवहिमंतरेण य न संकिलिस्सइ ॥**

हे भदन्त ! उपधिप्रत्याख्यानेन रजोहरणमुखवस्त्रिकापात्रादिव्यतिरिक्तस्य उपधेः प्रत्याख्यानेन उपधित्यागेन जीवः किं उपार्जयति गुरुराह हेशिष्य ! उपधिप्रत्याख्यानेन अपरिमन्थं जनयति परिमन्थः स्वाध्यायव्याघातः न परिमन्थोऽपरिमन्थः स्वाध्यायादौ निरालस्य जनयति । पुनर्निरुपधिको निष्परिग्रहो जीवो निष्काङ्क्षो भवति वस्त्रादौ अभिलापरहितः स्यादित्यर्थः तादृशो हि उपधिमन्तरेण उपधिं विना न संक्लिश्यते क्लेशं न प्राप्नोति सपरिग्रहो क्लेशं प्राप्नोतीति भावः । ( उत्त० ) निष्कान्त उपधिर्निरुपधिस्स एव निरुपधिको जीवो निष्काङ्क्षो वस्त्राद्यभिलाषरहित सक्षेतश्च पदं क्वचिदेव दृश्यते उपधिमन्तरेण चास्य भिन्नक्रमत्वाच्च संक्लिश्यते न च मानसं शारीरं वा क्लेशमाप्नोति उक्तं हि " तस्स णं भिक्खुस्स णो एवं भवति परिजुन्ने मे वत्थे सूइं जाइस्सामि संधिस्सामि उक्किसिसामितु निस्सामि वा कासिसामि इत्यादि" उत्त०२८ अ० ।

**उवहिप्पहाण**–उपधिप्रधान–त्रि० उपधिर्माया तत्प्रधानः । कृतकपटशते, "कति न वि यार्हिं उवहिप्पहाणार्हिं" सूत्र०१ श्रु०४ अ०

**उवहिय**–उपहित–त्रि० उप-धा-क्त-निहिते, अर्पिते, समीपस्थापिते, आरोपिते, उपाधिसङ्कते, उपढौकिते, वाच० । भावे-क्तः संस्तारकादेरुपढौकने, न० नि० चू० २० उ० ॥

**उवहियविहि**–उपहितविधि–पु० उपग्रहभेदे, उपहितविधिर्नाम यदाऽऽचार्य्यैर्वितीर्णं तदाऽऽचार्यानुनुज्ञाप्य अन्येषां साधूनां तदन्तरेण विसूरयता ददाति । अन्ये तु व्याचक्षते यद्यस्य गुरुभिर्दत्तं तत्तस्योपनयतीत्येष उपहितविधिः व्य० ३ उ० ।

**उवहिवहावण**–उपधिवाहन–न० वस्त्रपात्रादेरुपधेरन्येन नयने,

**( सूत्रम् ) जे भिक्खू अण्णउत्थिएण वा गारत्थिएण वा उवहिं वहावेइ वहावंतं वा साइज्जइ । ४७ । जे भिक्खूणात्तंसए असणं वा ४ दियइ देयंतं वा साइज्जइ ॥४८॥**

**जे भिक्खू उवकरणं, वहाविंगिहि अहव अण्णतित्थीणं ।**

**आहारं वा देज्जा, परुच्च तं आणमादीणि ॥ २२४ ॥**

ममेस उवकरणं वहइत्ति पडुच्च आहारं देज्जा तस्स चतुलहु आणादिया य इमे दोसा ।

**पाडेज्ज व भिंदेज्ज व, मलगयावं न उप्पति य नासो ।**

**अत्थंगले उवेज्जा, हरेज्ज वासोव्व अन्नो वा ॥ २२५ ॥**

से गिहत्थो अण्णतित्थिओ वा उवकरणं पाडेज्ज भायणं वा भिंदेज्जा मलिणे दुगंधे वा उवकरणे अन्न वा देज्ज उप्पतियाओ वा णट्ठेज्ज घा मारेज्ज वा अहवा सो अयगोलो अथंडिले पुढवियरियादिसु ठवेज्ज अहवा तस्स भारेण आयविराहणा हवेज्ज तत्थ परितावणादी ज च पच्छा उसहमेसज्जाणि घा करेंतो विराघेति तण्णिप्फण्णं च से पच्छित्तं तं उवकरणं सो घा हरेज्ज अणुवउत्तस्स वा अण्णो हरेज्ज किं च जो तं पडुच्च असणादी देज्जा तस्स चउलहु ।

**दुल्लहियत्तं साहू, पायाणं तस्स भोयणं मूलं ।**

**दगपातो वि पियणो, दुगुच्छमणं ? उड्डाहं ॥ २२६ ॥**

भगवता गोयमेण महावीरवद्धमाणसामी पुच्छितो एतेसिं णं प्रते वालाणं किं वत्तियत्त मे य भगवया वागरियं दुव्वत्तियत्त सेयं वत्तियत्त अस्सेयंतस्स य चलियत्तणस्स मूयं थड सो य साहूसमीवे आहारं आहारेत्ता वहूणि अधिकरणाणि करेज्ज गदं वा पिपज्ज अयमेज्ज वा जुत्तो वा दुग्गए घमेज्जा स्युप्पातो वा स हवेज्ज सजणेहिं परिस किं पि मे दिन्न जेण एगो जाओ एव रिउझाहो मरेज्ज वा सव्वत्थ पच्छाकम्मो फासुएण हमे मासलहु अफासुएण इमे सव्वे चउलहुं तम्हा गिहत्थो अण्णउत्थिओ वा ण वाहेज्ज वा ण वा असणादी दायव्व भवे कारण जेण उ हावेज्ज वा असणादि वा देज्जा ॥

**असिवे ओमोयरिए, रायदुट्ठे जए व गेलण्णे ।**

**देसुट्ठाणे अपरि–क्कमेवहावेज्ज देज्जा वा ॥ २२७ ॥**

असिवकारणे ओमे वा रायदुट्ठे वा वोहिगादिभए वा रज्जतो अप्पणो असमत्था वाहवेज्ज वा तन्निमित्तं असणादि देज्ज गिलाणो वहावेज्ज वा गिलाणठा वा गमंते देसुट्ठाणे वा अपरिक्कमो गिहिणा वहावेज्ज देज्ज वा आहारं । नि० चू० १२ उ० ।

**उवहिविउस्सग्ग**–उपधिव्युत्सर्ग–पु० उपधित्यागरूपे द्रव्यव्युत्सर्गे, औ० ॥

**उवहिसंकिलेस**–उपधिसंक्लेश– पुं० उपधीयते उपष्टभ्यते संयम सयमिशरीरं वा येन स उपधिः वस्त्रादिस्तद्विषयः संक्लेश उपधिसंक्लेश । सक्लेशभेदे, स्था० १ ठा० ।

**उवहिसंभोग**–उपधिसम्भोग–पु० उपधेः परिकर्म परिभोगं वा कुर्वन् सभोग्यो विसभोग्यश्चेति । संभोगभेदे, उक्तं च ' एगं च दो वि तिन्नि च, आउट्ट तस्स होइ मिच्छत्तं" आलोचयत इत्यर्थः । "आउट्टंते वि तओ, परेण तिण्हं वि संभोगो त्ति" स०

**उवहिहुंजंत**–उपभुञ्जान–त्रि० उपभोगं कुर्वाणे, प्रा० ॥

**उवाइणावित्तए**–उपानाययितुम्–अव्य० सम्प्रापयितुमित्यर्थे, " पच्छिमं पोरिसिं उवाइणावित्तए " वृ० ४ उ० । अतिक्रमयितुमित्यर्थे, कल्प० । उपादाययितुम ग्राहयितुमित्यर्थे, ज्ञा० १७ अ० ।

**उवाइणावित्ता**–उपादापय्य–अव्य० उप-आ-दा-ल्युट । प्रापय्येत्यर्थे, "पच्छिमं पोरिसिं उवाइणावित्ता आहारमाहारेइ"-भ० ७ श० १ उ० ।

**उवाइणित्तए**–उपयाचितुम्– अव्य० उपयाच्या कर्तुमित्यर्थे, विपा० ७ अ० ॥

उपादातुम्–अव्य० गृहीतुं प्रवेष्टुमित्यर्थे, स्था० ३ ठा० ।

**उवाइय**–उपयाचित–त्रि० उपयाच्यते मृग्यतेऽस्मै यत्तत् उपयाचितम् । ईप्सिते, "उवाइयं उवयाइत्तए" उपयाचितुमीप्सित वस्तु याचितुं प्रार्थयितुम । ज्ञा० २ अ० । वि० । नासिक्यपुरस्य-देवाधिष्ठितमहादुर्गमल्लगिरिस्थितप्रासादपानके स्वनामख्याते महति क्षत्रियजात्यचरे, ती०

**उवाएज्ज**–उपादेय–त्रि० उप०आ० दा-कर्मणि--यत । गृहीतव्ये, अनु० । ज्ञा० । विशे० ।

**उवागम**–उपागम–पु०स्वीकारे, समीपगमने, वाच० । उपागमने, स्थाने, आचा० ७ श्रु० ।

**उवागय**–उपागत–त्रि० उप-आ-गम-क्त-स्वयमुपस्थिते, अभ्युपगते च । वाच० 'तत्थागयमुवागए' उत्त० २३ अ० । सम० । उ० ।

ण गाहा । जइ फासुओ जाणगा यकारणे गहिओ तहावि ताव परिहुज्जइ जाव वरइ अह अफासुओ अयाणगा य कारणे गहिओ ताहे उप्पन्ने फासुए इयरो परिट्ठविज्जइ एवं चउभंगो धरणे वा परिठवणा वा । चोयग आह । गाहा । एगेण किमेगो पादो जाव पंचएइ वि सयाणं एगो पडिग्गहओ अहवा दोण्हं तिण्हं चउण्हं वा पडिग्गहओ एगो न पहुप्पइ तो दो वो एगस्स पडिग्गह उ मत्तओ य दिज्जइ उच्यते अद्धाए पाहुणगाइसु कारणाइसु कहं धरंति तु जइ पहुणाण एगमेगो पडिग्गहओ एव य भणंतस्स चउगुरु । अप्पापवयणं जीवनिकाया परिचत्ता वा रत्तयट्ठिलेण-सव्वेण वि दोण्हि गिण्हियव्वा मत्तओ पडिग्गहओ य किं कारणं जेण गच्छो सकारणो वा लघुठसेहपाहुणयाइसु । आह जइ नियमा दो ते धरिज्जंति जिणकप्पियाए किं निमित्तं एगओ पडिग्गहओ । गाहा । संगहिय उच्यते । सो भगवानसंगहियकुच्छी जोयणं पि गच्छइ सम्राहो उसकारी य पवयणस्स जेण अपसो भवइ तं न करेइ अप्पाहारो सो भगवं तत्ते अओकाले वि विद्धसइ तम्साहारो सरीरए अपडिबद्धो न य आसणे वोसिरइ उच्चाराइ न य आचारावि विच्छिण्णे थंडिले पडिग्गहं एगपासे ठवेऊण एएहिं कारणेहिं तस्स एगो पडिग्गहो । गाहा । तेहिं जइ वत्थाणि इयाणि कइहिं वत्थेहिं पडिपुण्णउसग्गेण तिहिं जया पुण तिहिं न सथरेज्जा तो अइरेगाणि घरेज्जति । आह नणु पमाणाइरेगे दोसा उच्यते । सबालवुड्ढाओ लोगत्थो महकारणेण सकारणे तेसिं बहुएहिं कज्जं अओ य भगवतो मेहाइ कारणेसु न लब्भइ ताहे परिच्चत्ता सेहादयो पच्छा वोच्छेयकरो भवइ सपक्खस्स तित्थस्स वुत्तं भवइ । गाहा । जइ एए वियप्पहुणे जइ आहारोवहिसेज्जासु विप्पहूणाणं नाणदसणचरित्ताण तवनियमसजमसज्झायमाईणं निप्पत्तं होज्जा तेण आहाराइ आइग्गहणेण उसहाइणं च को उवग्गहं कुज्जा । गाहा । जम्मि परिग्गहिय जत्थ पुण परिगिज्झमाणे तस्स थावराण उवघातो पवत्तेज्जा पुरेज्जा पुरेकम्म उदउल्लाइसु तं न घेप्पइ महिए वा पच्छे कमाइघरे ते वा पडिलेहणाइभएण पडिलेहेइ भएण माहीरिहिति सो परिग्गहो भवइ उवहिम्मि घेप्पते गहिए धरिज्जंते वा एए दोसा न भवंति सो परिग्गहो निद्दोसो त्ति अपरिग्गहो चेव । गाहा । आहारोवहिं किं निमित्तं भगवया तित्थ पवत्तियं उच्यते । न वि भगवता उपहारादिनिमित्तं तित्थं पवत्तियं नाणदरिसणचरित्तनिमित्तं तवसजमाईणं निव्वाणग्गहणं पडिविद्धिकारणं तित्थ पवत्तियं । गाहा । भाण भणे होराइणि नाणाइण गुणकारणाणिच्चि तेणाणुएहाय तेसु पुण णाणाइसु ठियस्स पूयावि इच्छिज्जइ जहा गणहारिस्सुको साहारोवहिसाइणं एस उवहिकप्पो । पं० चू० ॥

> ग्रहुणा तू उवहिकप्पं, गुरूवदेसेण वोच्छामि ।
> उवगेएहति उवकारं, करेइ उवहीयते य उवही तु ॥
> किं कारणं तु उवही, देमीए समुती सुणसु ।
> जीवाणणुग्गहट्ठा, एवं खलु वणितो (इहं) तित्थे ॥
> काऊण फुणग्गहपदं, पडिणीयपदे अभावो तु ।
> रमकादणुकेरट्टा, अगणीमादीण चेव रक्खट्ठा ॥
> ग्रामदू णाणुकंपा य, तउवहिगहणं जिणा यंति ।
> ग्राह जदणुग्गहट्टा, वत्थादीगहणदेमियं समये ॥
> नो भमकूणं काहा, धीपरिभोगो णणुग्गहातो ।
> भवति पवेत्ति कम्हि व, कम्हि व पुण होति अप्पविस्सीओ ॥
> संजम पडीनियत्ता-मेहुणमादीण णाणएहा ।
> णाणाचरण ठिताणं, उवग्गहं कुणति णाणचरणाणं ॥
> आहार उवहि सेज्जा, तेण उ उवहित्तणं वेंति ।
> जस्स पुणो वहिगहिता, उवघातकरी तु तस्स उवघाता ।
> कह उवघाय करेंती, अइरित्तगहो य मुच्छाए ॥
> संथरमाणो गेण्हति, अतिरित्तं उवहि जो भवे समणो ।
> वण्हादिजुत्ते मुच्छति, दव्वहारे वुवस्से वा ॥
> एतेसु अणिट्ठेसु य, जो दुस्सति सो करेति उवघातं ।
> णाणादीणं तिण्हं, तम्हा ते वज्जए हेतू ॥
> जो जत्थ जदा जहियं, उवहीधरिभोगओ अणुण्णाओ ।
> सो तत्थ अणतिचारो, अणुण्णाते चरणभेदे ॥
> जह सिंभूओ कप्पा, ओराला उग्गिहया अणुण्णाता ।
> पिसियादीण य गहणं, खीरादीणं चणुण्णाता ॥
> अतिहिमदेसे य तहा, कारणियगताए सिसिरकालम्मि ।
> परिभुंजंताए य को, तवादिचरणे अणुवघातो ॥
> ल्हारुविसयादिएसुं, एतेसिं चेव भोत्तु पडिसेहो ।
> पडिसिध्दे परिभोगं, कुणमाणे भंजती चरणं ॥
> णाणं पि तु सो भिंदइ, उवदेसं जेण ण कुणति ।
> तस्स जं णाणुपुव्वं, दंसणभेदो वि तो तेणं ॥
> णिवादिक्खितमतरंता-दिएसु होति परिभोगा ।
> समणुण्णाओ वसिणा-दियाण इहरा अणुवभोगो पं०भा० ।

इयाणिं उवहिकप्पो गाहा जीवाणुग्गहओवही किं निमित्तं धारिज्जइ याइ उच्यते जीवाणुग्गहहेऊ रसाएणं सा रक्खणणिमित्तं एयम्मि तित्थेयं निओ उवही असहुत्तणेण य वत्थाईण गहणं । आह जइ असहुत्तरेण वत्थाइगहणं तेण अविरइयाओ कम्हा नोवभुंजइ उच्यते क्वचित्प्रवृत्ति क्वचिदप्रवृत्तिरित्यादि । संयमप्रत्यनीकानि मैथुनादीनि अतस्तेषामभावो भवति आचरितव्ये गाहा । नाणावरणे किमुक्तं भवत्युपधिरिति उच्यते ज्ञानदर्शनचारित्राणामुपकारं कुरुते उपग्रहं करोतीत्यर्थः । उवही आहारेज्जा उपधन्यतोऽवधिरित्यपदिश्यते गाहा जस्सओ जो पुण संथरमाणो वि अइरित्तं उवहिं धरेइ तस्स स एव उवहिनिमित्तो उवघाओ भवइ कारणेण वा आहारे वि रसहेउ वा भुंजइ रागद्दोसेहिं वा एयस्सोवघाओ भवइ । गाहा जो जत्थ उवही पुण जो जत्थ जया जम्मि खेत्ते अणुन्हाओ जहा सिद्धए उक्कोसयाणिए तयाणं जम्मि वा काले अणुन्हातो हेमन्तकाले वासे वा तेणोवहिणा नाणाइ आयारो न भवइ जो पुण खेत्तकालेसु अणणुन्हाओ । गाहा जो जत्थ उवही धरिज्जइ सो उवघाओ । एस उवहिकप्पो । पं० चू० ॥

उवहिकय-उपधिकृत-त्रि० उपधिनिष्पन्ने, " परिहारियं भदितो गिहणी उवधीकतं तु पच्छित्तं " नि०चू० १ उ० ।

उवहिपच्चक्खाण-उपधिप्रत्याख्यान-न० उपधिरुपकरणं तस्य रजोहरणमुखवस्त्रिकाव्यतिरिक्तस्य प्रत्याख्यानं न मयाऽसौ ग्रहीतव्य इत्येवंरूपा निवृत्तिरुपधिप्रत्याख्यानम् । रजोहरण-

मुखवस्त्रिकां विहायाऽन्योपधिपरिहारे तत्फलं यथा ।

उवहिपच्चक्खाणेणं भंते ! किं जणयइ उवहिपच्चक्खाणेण अपलिमथं जणयइ निरुवहिएणं जीवे निक्कंखे उवहिमंतरेण य न संकिलिस्सइ ॥

हे भदन्त ! उपधिप्रत्याख्यानेन रजोहरणमुखवस्त्रिकापात्रादिव्यतिरिक्तस्य उपधेः प्रत्याख्यानेन उपधित्यागेन जीवः किं उपार्जयति गुरुराह हेशिष्य ! उपधिप्रत्याख्यानेन अपरिमन्थं जनयति परिमन्थः स्वाध्यायव्याघातः न परिमन्थोऽपरिमन्थः स्वाध्यायादौ निरालस्यं जनयति । पुनर्निरुपधिको निष्परिग्रहो जीवो निष्काङ्क्षो भवति वस्त्रादौ अभिलाषरहितः स्यादित्यर्थः तादृशो हि उपधिमन्तरेण उपधिं विना न संक्लिश्यते क्लेशं न प्राप्नोति सपरिग्रहो क्लेशं प्राप्नोतीति भावः । ( उत्त० ) निष्क्रान्त उपधिर्निरुपधिस्स एव निरुपधिको जीवो निष्काङ्क्षो वस्त्राद्यभिलाषरहितः सन्नेतच्च पदं क्वचिदेव दृश्यते उपधिमन्तरेण चास्य भिन्नक्रमत्वान्न संक्लिश्यते न च मानसं शारीरं वा क्लेशमाप्नोति उक्तं हि " तस्स णं भिक्खुस्स णो एव भवति परिजुन्ने मे वत्थे सूइं जाइस्सामि संधिस्सामि उक्कसिस्सामितुं निस्सामि वा कासिस्सामि इत्यादि" उत्त०२८ अ० ।

उवहिप्पहाण–उपधिप्रधान–त्रि० उपधिर्माया तत्प्रधानः । कृतकपटशते, "कति न वि याहिं उवहिप्पहाणाहिं" सूत्र०१ श्रु०४ अ०

उवहिय–उपहित–त्रि० उप-धा-क्त-निहिते, अर्पिते, समीपस्थापिते, आरोपिते, उपाधिसङ्कृते, उपलक्षिते, वाच० । भावे-क्त संस्तारकादेरुपढौकने, न० नि० चू० २० उ० ॥

उवहियविहि–उपहितविधि–पु० उपग्रहभेदे, उपहितविधिर्नाम यदाऽऽचार्यैर्वितीर्णं तदाऽऽचार्याननुज्ञाप्य अन्येषां साधूनां तदन्तरेण वितरयतां ददाति । अन्ये तु व्याचक्षते यद्यस्य गुरुभिर्दत्तं तत्तस्योपनयतीत्येव उपहितविधिः व्य० २ उ० ।

उवहिवहावण–उपधिवाहन–न० वस्त्रपात्रादेरुपधेरन्येन नयने,

( सूत्रम् ) जे भिक्खू अण्णउत्थिएण वा गारत्थिएण वा उवहिं वहावेइ वहावंतं वा साइज्जइ । ४७ । जे भिक्खू णात्तंसए असणं वा ४ दियइ देयंतं वा साइज्जइ ॥४८॥

जे भिक्खू उवकरणं, वहाविगिहि अहव अण्णतित्थीणं ।

आहारं वा देज्जा, पडुच्च तं आणमादीणि ॥ २२४ ॥

ममेस उवकरणं वहइत्ति पडुच्च आहारं देज्जा तस्स चतुलहु आणादिया य इमे दोसा ।

पाडेज्ज व भिंदेज्ज व, मलगथावं न उप्पति य नासो ।

अत्थंफले हवेज्जा, हरेज्ज वासोच्च अण्णो वा ॥ २२५ ॥

से गिहत्थो अण्णतित्थिओ वा उवकरणं पडेज्ज भायणं वा भिंदेज्ज मलिणे कुणेज्ज वा उवकरणे अण्णं वा देज्ज उप्पत्तियाओ वा छड्डेज्ज वा मारेज्ज वा अहवा सो अयगोलो अथक्किले पुढवियरियादिसु हवेज्ज अहवा तस्स भारेण आयविराहणा हवेज्ज तत्थ परितावणादी जं च पच्छा उसहभेसज्जाणि वा करेतो विराधेति तण्णिप्फण्णं च से पच्छित्तं तं उवकरणं सो वा हरेज्ज अणुवउत्तस्स वा अण्णो हरेज्ज किं च जो त पडुच्च असणादी देज्जा तस्स चउलहु ।

दुल्लियत्तं साहू, पायाणं तस्स भोयणं मूलं ।

दगपातो वि पियणे, दुगुञ्छणमणे उ उड्डाहो ॥ २२६ ॥

भगवता गोयमेण महावीरवद्धमाणसामी पुच्छितो एतेसिं णं भंते बालाणं किं बलियत्तं से य भगवया वागरियं दुब्बलियत्तं सेयं बलियत्तं अस्संजतस्स य बलियत्तणस्स मूलं अह सो य साहूसमीवे आहारं आहारेत्ता बहूणि अधिकरणाणि करेज्ज गद्दं वा पिएज्ज अयमेज्ज वा हत्तो वा दुग्गओए घमेज्जा दगुप्पातो वा स हवेज्ज मज्जणंहि पारस किं पि मे छिन्नं जेण पगो जाओ एव रिउड्डाहो भरेज्ज वा सव्वत्थ पच्छाकम्मो फासुएण देसे मासलहु अफासुएण देसे सव्वे चउलहु तम्हा गिहत्थो अण्णउत्थिओ वा ण वाहेज्ज वा ण वा असणादी दायव्वं भवे कारणं जेण च हाविज्ज वा असणादि वा देज्जा ॥

असिवे ओमोयरिए, रायदुट्ठे भए व गेलण्णे ।

देसुट्ठाणे अपरि–क्कमे वहावेज्ज देज्जा वा ॥ २२७ ॥

असिवकारणे ओमे वा रायदुट्ठे वा बोहिगादिभए वा रज्जतो अप्पणो असमत्था वाहवेज्ज वा तण्णिमित्तं असणादि देज्ज गिलाणो वहावेज्ज वा गिलाणट्ठा वा गमने देसुट्ठाणे वा अपरिक्कमो गिहिणा वहावेज्ज देज्ज वा आहारं । नि० चू० १२ उ० ।

उवहिविउस्सग्ग–उपधिव्युत्सर्ग–पुं० उपधित्यागरूपे द्रव्यव्युत्सर्गे, औ० ॥

उवहिसंकिलेस–उपधिसंक्लेश– पुं० उपधीयते उपष्टभ्यते संयमः संयमिशरीरं वा येन स उपधिः वस्त्रादिस्तद्विषयः संक्लेशः उपधिसंक्लेशः । संक्लेशभेदे, स्था० १ ठा० ।

उवहिसंभोग–उपधिसम्भोग–पु० उपधेः परिकर्म परिभोगं वा कुर्वन् सम्भोग्यो विसम्भोग्यश्चेति । सम्भोगभेदे, उक्तं च 'एगं च दो वि तिन्नि च, आउट्टं तस्स होइ मिच्छत्तं' आलोचयत इत्यर्थः । "आउट्टंत वि तओ, परेण तिण्हं वि संभोगोत्ति" स०

उवहिहुंजंत–उपभुञ्जान–त्रि० उपभोगं कुर्वाणे, प्रा० ॥

उवाइणावित्तए–उपानाययितुम्–अव्य० सम्प्रापयितुमित्यर्थे, " पच्छिमं पोरिसिं उवाइणावित्तए " बृ० ४ उ० । अतिक्रमयितुमित्यर्थे, कल्प० । उपादाययितुम् ग्राहयितुमित्यर्थे, ज्ञा० १९ अ० ।

उवाइणावित्ता–उपादापय्य–अव्य० उप–आ–दा–ल्युट् । प्रापय्येत्यर्थे, "पच्छिमं पोरिसिं उवाइणावित्ता आहारमाहारेइ"- भ० ७ श० १ उ० ।

उवाइणित्तए–उपयाचितुम्– अव्य० उपयाच्ञां कर्तुमित्यर्थे, विपा० ७ अ० ॥

उपादातुम्–अव्य० गृहीतुं प्रवेष्टुमित्यर्थे, स्था० ३ ठा० ।

उवाइय–उपयाचित–त्रि० उपयाच्यते मृग्यतेऽस्मै यत्तत् उपयाचितम् । ईप्सिते, "उवाइयं उववाइत्तए" उपयाचितुमीप्सितं वस्तु याचितुं प्रार्थयितुम् । ज्ञा० ३ अ० । रि० । नासिक्यपुरस्य देवाधिष्ठितमहादुर्गब्रह्मगिरिस्थितप्रासादपातके स्वनामख्याते महति क्षत्रियजात्यवरे, ती०

उवाएज्ज–उपादेय–त्रि० उप०आ० दा–कर्मणि–यत् । गृहीतव्ये, अनु० । जा० । विशे० ।

उवागम–उपागम–पुं० स्वीकारे, समीपगमने, वाच० । उपागमने, स्थाने, आचा० ७ अ० ।

उवागय–उपागत–त्रि० उप–आ–गम–क्त–स्वयमुपस्थिते अभ्युपगते च । वाच० "तमागासमुवागए" उत्त० २३ अ० । सूत्र० । ज० ।

उवाणह–उपानह्–स्त्री० चर्मपादुकायाम्, औ० । सूत्र० । "ते गिच्छं पाणहा पाए, समारंभं च जोइणो ' उपानहौ पादयोरनाचरिते पादयोरिति साभिप्रायकं नत्वापत्कल्पपरिहारार्थम्" द० ३ अ०

अथ उपानहोर्दोषप्रदर्शनार्थमिदमाह ।

गव्वो णिम्मद्दवता, णिरवेक्खो निद्दतो णिरंतरता ।
भूताणं उवघाओ, कसिणे चम्मम्मि छद्दोसा ॥

उपानहोः पिनद्धयोर्गर्वो निर्मार्दवता च भवेत् । जीवेषु निरपेक्षो निर्दयश्चासौ भवति निरन्तरता निरन्तरं भूमिस्पर्शनाद् भूतानां तु प्राणिनामुपघातश्च उपजायते एवं कृत्स्ने चर्मणि षट् दोषा भवन्तीति द्वारगाथा ।

सांप्रतमेतानेव प्रतिपदं विवृणोति ॥

आसगतो हत्थिगतो, गव्विज्जइ भूमितोइ कमणीओ ।
पादो उ समाउक्को, कमणाउ खरो अवि य भारो ॥

अश्वगतोऽश्वारूढान् हस्तिगतः पुरुषो यथा गर्वायते एवं भूमिगतान् गर्वं करोति । अहो अहं सोपानत्को व्रजामीति । तथा पादः स्वभावेनैव समार्दवस्ततः स न तथा जीवोपघातं करोति यथा क्रमणिका खरा कर्कशस्पर्शा जीवोपघातं कुर्वन्ति । अपि च भारस्तासां महान् भवति । ततस्तदाक्रान्ता बहवो जीवा विनाशमाप्नुवते । निरपेक्षद्वारमाह ॥

कंटाई पेहंतो, जीवे वि हु सो तहेव पेहिज्जा ।
अत्थि महंति य कमणी, णावेक्खइ कंटएण जिए ॥

अनुपानत्को गच्छन् कण्टकादीन् मार्गे प्रेक्षमाणो जीवानपि तथैवासौ प्रेक्षते सोपानत्कस्तु गच्छन् विद्येते मम क्रामणिके इति कृत्वा निरपायत्वादात्मनो न कण्टकादिकमपेक्षते ततश्चासौ जीवेष्वपि निरपेक्षो भवति । अथ निर्दयद्वारमाह ॥

पुव्वं अदया भूए–सु होति बंधति कमेसु तो कमणी ।
जायति हु तदब्भासा, सुदयालुस्सा वि णिद्दयया ॥

पूर्वं तावदया निर्दयत्वं भूतेषु मनसि संजातं भवति ततः क्रमयोः क्रमणिके बध्नाति तदभ्यासाच्च सुदयालोरपि प्रायो निर्दयतैव भवति । निरन्तरद्वारमाह ॥

अवि यं व मुज्ज पादेण, पक्खितो अंतरंगुलगतो वा ।
मुच्चेज्ज कुलिंगादी–ण य कमणीपक्खितो जियति ॥

कुलिङ्गस्यालघुत्वाच्चलनया असम्पूर्णानि छिद्राणि इन्द्रियाणि यस्यासौ कुलिङ्गी विकलेन्द्रियः स आदिशब्दात्सरटकृष्यादिश्च अनुपानत्कस्य पादेन प्रेरितोऽपीति सम्भावनायां सम्भाव्यते अयमर्थो यदाऽनुपानत्कं पादतलस्य गतस्तदा अथवा अन्तरांगुलमङ्गुलीनामन्तरस्य वाऽन्तर्गतः तत्र वा गतः सन् मुच्येत न म्रियेत । सोपानत्कस्य तु निरन्तरभूमिस्पर्शिनीभिः क्रमणीभिः प्रेरित आक्रान्तो न जीवति अवश्यं मरणं प्राप्नोतीत्यर्थः ।

भूतोपघातद्वारमाह ॥

कह जया गुववातो, ण होहिती पगतिपेलवतणूणं ।
सक्करहिपेल्लियाणं, कक्खडफासाहि कमणीहिं ॥

कथं येन प्रकारेण भूतानां प्राणिनां प्रकृत्या स्वभावेनैव पेलवतनूनामल्पशरीराणां समानाभिः पुरुषभाराक्रान्ताभिः कर्कशस्पर्शाभिः क्रमणीभिः प्रेरितानामुपघातो न भविष्यति भविष्यत्येवेत्यर्थः । यत एते दोषा अतः क्रमणिका न परिधातव्याः । कारणे तु प्राप्ते परिधातव्या अपि । किं पुनस्तत्कारणमित्याह ॥

विहं अतरासहुसंभम–कोढारिसचक्खुदुब्बले वाले ।
अज्जा कारणजाते, कसिणग्गहणं अणुन्नायं ॥

विहं अध्वा अतरो ग्लानः असहिष्णुर्नाम राजादिदीक्षितः । सुकुमारपादः सम्भ्रमश्चौरश्वापदादिसंक्षोभः कुष्ठरोगी अर्शोरोगी चक्षुषा दुर्बलः कश्चिद्भवति बालो वा यदि यत्र तत्र पादौ निक्षिपति । आर्या वा अध्वानं नीयन्ते कारणजातं वा कुलगणसङ्घविषयमुपस्थितम् । एतेषु कृत्स्नस्य चर्मणो ग्रहणमनुज्ञातमिति द्वारगाथासमासार्थः । अथैनामेव विवृणोति ॥

कंटाहिसीयरक्खट्ठ, ता विहे खलु समाहि जा गहणं ।
ओमहपाणगिलाणे, अहुणुट्ठियते सधट्ठा वा ॥

(विहे) अध्वनि प्रतिपद्यमाने कण्टकस्याहेर्वा अस्य च रक्षार्थं सद्गुलिकोशिकं खल्लकादि वा गृह्णन्ति । किं बहुना खलु समाधिं कृत्वा यावदर्द्धजङ्घयोरपि ग्रहणम् । तथा ग्लान औषधपानं कृत्वा वैद्योपदेशेन पृथिव्यां पदं न स्थापयति । अधुनोत्थितो वा ग्लानः क्रमयोः क्रमणिके आविध्यति शीतानुभावेन भक्तं न जरिष्यतीति कृत्वा ग्लानस्य वा भेषजार्थं त्वरितं ग्रामान्तरं गन्तव्यं ततः क्रमणिका पिनद्धव्या ।

अतिसिल्लस्स व अरिसा, मा खुब्भे तेण बंधते कमणी ।
असहुमवंतो हरणं, पादो पट्टो तु गिरिदेसा ।

अर्शोवतः पादतलदौर्बल्यादर्शांसि मा क्षुभ्येरन्निति कृत्वा क्रमणिके असौ बध्नाति । असहिष्णुर्नाम मार्गे गच्छन्नुपानद्भिर्विना गन्तुं न शक्नोति यदि गच्छति ततः पादाभ्यां रुधिरं परिगलति । अत्रावन्तीसुकुमारोदाहरणं भवति तच्चावश्यकाद्विज्ञेयम् । स क्रमणिके बध्नीयात् उदकाग्निस्तेनश्वापदादौ वा संभ्रमे क्रमणिकाः परिभोक्तव्याः । गिरिदेशे वा पर्यटतः कस्यापि पादतलं घृष्टं ततः उपानहौ पिनह्य पर्यटति ।

कुट्ठिस्स सक्करादी–हिं वा वि भिन्नो कमो मधूला वा ।
वालो असंफुरो पुण, अज्जा विहं दोव्व पासादी ॥

कुष्ठिनः सवन्धी शोणितपूयेन भिन्नः स्फुटितक्रमः शर्कराकण्टकादिस्तदादिभिराक्रान्तो महतीं पीडामुपजनयति मधूला वा पादगण्डः कस्यापि समजनि ततः क्रमणिके बध्नाति । बालो वा कश्चिदसंस्फुरोऽसंवृतो यत्र तत्र पादं मुञ्चन् कण्टकादिभिरुपद्रूयते अतोऽसौ क्रमणीके परिधाप्यते । आर्या वा विभ्रमध्वानं नेतव्यास्तत्र च (दोव्वत्ति) चौरादिभयं ततो वृषभाः क्रमणिकाः पिनह्य पन्थानं मुक्त्वा पार्श्वस्थिताः गच्छन्ति आदिशब्दात्सर्वाणि वा तत्रोत्पथेन व्रजन्ति । यो वा चक्षुषा दुर्बलः स वैद्योपदेशेनोपानहौ पिनह्यति । यतः पादयोरभ्यङ्गतोपानद्धत्वमादि परिकर्म यत्क्रियते तच्चक्षुष उपकाराय परिणमते । यत उक्तं " दन्तानामञ्जनं श्रेष्ठं कर्णानां दन्तधावनम् । शिरोभ्यङ्गश्च पादानां पादाभ्यङ्गश्च चक्षुषोः । " कारणजातद्वारमाह ।

कुलमाइकज्जदंडिय, पासादी तुरियधावणट्ठा वा ।
कारणजाते व णे, सागारमसागरे जतणा ॥

कुलादिषु कुलगणसङ्घविषयेषु कार्येषु दण्डिकाविज्ञतार्थं पार्श्वस्थितैराद्यान्ताऽन्तःपुरः पृष्टतो वा गच्छद्भिस्त्वरितं धावनार्थं कारणजाते वाऽस्मिन् आगाढे समुत्पन्ने उपानहः परिभोक्तव्याः । तत्र च सागारिकासागारिकविषया यतना । यत्र सा-

गारिकदोषो नास्ति तत्र नास्ति यतनाक्रमः। यत्र पुनः सागारिका उड्डाहं कुर्वन्ति तत्र ग्रामादिषु क्रमणिका अपनीय प्रविशन्तीति भावः । एवमध्वादिषु कारणेषु कृत्स्नचर्मणो ऽप्राप्ते विधिमाह ।

पंचविहम्मि वि कसिणे, किण्हगहणं तु पढमतो कुज्जा ।
किण्हम्मि असंतम्मि, विवस्सकसिणं तहिं कुज्जा ॥

पञ्चविधे चर्मे कृष्णे प्रथमतः कृष्णवर्णग्रहणं कुर्यात् । ततः कृष्णे वर्णकृष्णे असति अलभ्यमाने लोहितादिवर्णकृष्णमपि गृह्णीयात् तच्च कृष्णं तैलादिभिर्विवर्णं विरूपवर्णं कुर्यात् । यथा लोको नोड्डाहं कुरुते । आत्मनो वा तत्र न रागो भवति ।

किण्हं पि गिण्हमाणे, सुसिरग्गहणं तु वज्जए साहू ।
बहुबंधणकसिणं पुण, वज्जेयव्वं पयत्तेण ॥

कृष्णं वर्णकृष्णमपि गृह्णन् शुषिरग्रहणं साधु प्रयत्नतो वर्जयेत् अत्र पाठान्तरम् । " कसिणं पि गिण्हमाणेत्ति " कृत्स्नं प्रमाणकृत्स्नं वा द्वितीयपदे गृह्णातु । शुषिरग्रहणं साधुर्वर्जयेत् यत्तु बहुबन्धनकृष्णं तत्प्रयत्नतो वर्जयितव्यम् । अथ किं तद्बन्धनमित्याशङ्कयाह ।

दोरेहि व वज्झेहि व, दुविहं तिविहं च बंधणं तस्स ।
अणुमोदणकारावण, पुव्वकतम्मि अधिकारो ॥

दवरकैर्वा वर्ध्रैर्द्विविधं वा बन्धनं तस्य चर्मणो भवति । द्वौ वा त्रयो वा बन्धा दातव्या इत्यर्थः । एवं विधं बन्धनं कृत्स्नमनुज्ञातं ततश्चतुरादिबहुबन्धनबद्धं तथा कृत्स्नमकृत्स्नं वा चर्म साधुना स्वयं न कर्त्तव्यम् । अन्येन न कारयितव्यम् अन्यस्य कुर्वतो नानुमोदना कर्त्तव्या किं तु यत्पूर्वमेव गृहस्थैर्यथाभावेन कृतं तस्मिन्नधिकारः प्रयोजनं तस्य ग्रहणं कर्त्तव्यमिति भावः । अथ द्वौ त्रयो वा बन्धाः कुत्र भवन्तीत्युच्यते ।

खलुए एगो बंधो, एगो पंचंगुलीए दो बंधा ।
चउरंगुले वि ततितो, वितिओ अंगुट्ठए होइ ॥

खलुके घुण्टके एको वर्ध्रबन्धो भवति । एकस्तु द्वितीयो बन्धः पञ्चाङ्गुलस्य चतसृणामङ्गुलीनामङ्गुष्ठस्य चेत्यर्थः । एतौ द्वौ बन्धौ मन्तव्यौ यदा तु त्रयो बन्धा भवन्ति तदा खलुके एकः अङ्गुष्ठे द्वितीयः चतसृणामङ्गुलीनां तृतीयः ।

अथ स्वयंकरणादिषु प्रायश्चित्तमाह ।

सयकरणे चउलहुगा, परकरणे मासियं अणुग्घायं ।
अणुमोदणे य लहुओ, तत्थ वि आणादिणो दोसा ॥

स्वयं यदि चर्म करोति तदा चतुर्लघव । अथ परेण कारयति तदा मासिकमनुद्घातं मासगुरुकमित्यर्थः । अनुमोदनायां मासलघु । तत्रापि स्वयंकरणादौ आज्ञादयो दोषा उड्डाहश्च भवति । तथाहि तं संयतं स्वयमेव चर्म कुर्वाणं दृष्ट्वा लोको ब्रवीति । अहो चर्मकरोऽयमिति । अथ पूर्वकृतं न लभ्यते ततोऽनुमोदनया गृह्णीयात् कथमिति चेदुच्यते । यदि कोऽपि ब्रूयात् अहं ते उपानहौ करोमि ततः प्रतिशृणुयात् तूष्णीको वा तिष्ठेत् । अथानुमोदनया न प्राप्यते ततोऽन्येन कारयेत् । एवमप्यप्राप्तेऽप्यात्मना यतनया कुर्यात् बृ० ३ उ० ।

अत्र प्रायश्चित्तम् ।

सोवाहणो परिसक्किज्जा उवट्ठावणं उवाहणाओ ण पडिगाहिज्जा खवणं तारिसेणं संविहाणगे उवाहणाओ ण परिभुंजेज्जा खवणं । महा० ७ अ० ॥

उवातिक्कम्म—उपातिक्रम्य—अव्य० उप सामीप्येनातिक्रम्य अतिलङ्घ्येत्यर्थे, "उवातिकम्म अह भिक्खू जाणेज्जा" आचा० २ श्रु० १ अ० । सम्यक् परिहृत्येऽर्थे, आचा० २ श्रु० १ अ० ११ उ० ।

उवातिणिवेत्ता—उपनीय—अव्य० अतिवाह्येत्यर्थे. " उवातिणिवेत्ता तत्थेव भुज्जो भुज्जो संवसति" आचा० २ श्रु० २ अ० २ उ० ।

उवादाण—उपादान—न० उप० आ० दा० ल्युट् । ग्रहणे, स्यादात्मनोऽप्युपादानात् सा० द० स्वस्वविषयेभ्य इन्द्रियाणां निवारणरूपे प्रत्याहारे, कर्मणि—ल्युट् कार्यजननार्थमुपादीयमाने कार्यान्विते कारणे, यथा घटे मृत्पिण्डमुपादानमात्मा कर्त्ता ज्ञानादि कार्यं तत्र स्वसत्ता उपादानम् अष्ट० । विशे० । आ० म० द्वि० । नं० । तच्च सर्वदा कार्येष्वनुगतम् "असदकरणादुपादानग्रहणात् सर्वसम्भवाभावात् । शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम्" इति साङ्ख्याः । नैयायिकैस्तु उपादानकारणं समवायिकारणतया व्यवह्रियते साङ्ख्यमतसिद्धे आध्यात्मिकतुष्टिभेदे, वाच० ( एतन्निराकरणमन्यत्र )

उवादाय—उपादाय—अव्य० उप-आ-दा-ल्यप् । गृहीत्वेत्यर्थे, "उवसपज्जुवादाय" बृ० ४ उ० । " णेया उय सुयक्खाय, उवादाय समीहए " सूत्र० १ श्रु० ७ अ० ।

उवादिय—उपादित—त्रि० अद् भक्षणे इत्येतस्मात् उपपूर्वाद्धिष्ठाप्रत्ययस्तत्र बहुलं छन्दसीतीडागमः । उपभुक्ते, आचा० १ श्रु० २ अ० ।

उवादीयमाण—उपादीयमान— त्रि० उपादीयन्ते कर्मणा बध्यन्ते इत्यर्थे । जीवनिकायवधप्रवृत्ते, " एत्थ पि जाणे उवादीयमाणा जे आयरेण रमंति " आचा० २ श्रु० ।

उवाय—उपाय— पु० उप-अय्-भावे-घञ् । उपगमे, उपायतेऽर्थोऽनेन करणे घञ् । अप्रतिहततज्ज्ञानकरणे, ज्ञा० १ अ० । हेतौ, "एगं च दोस च तहेव मोहं, उद्धत्तुकामेण समूलजालं । जे जे उवाया पडिवज्जियव्वा, ते कित्तइस्सामि अहाणुपुव्विं " उत्त० ३२ अ० । विशे० । "प्रयोग उपाय इत्यनर्थान्तरम्" आ० चू० १ अ० । " सुत्तादुवायरक्खण " उपाय सम्यक्त्वाणुमताणुव्रतादिप्रतिपत्तावभ्युत्थानादिलक्षणे हेतुराह च " अब्भुट्ठाणे विणए परक्कमे साहु सेवणाए अ । सम्मद्दंसणलंभो, विरयाविरई य एए य" अथवा जातिस्मरणादितीर्थकरलक्षण यदाह " सह सम्मुइआए अ परवागरणेण अन्नेसिं वा सोच्चा " अथवा प्रथमद्वितीयकषायक्षयोपशम इति । ध० २ अधि० । " उवायकुसलेण " उपायो नाम तथा कथमपि करोति यथा तेषां वन्दनकमदत्त्वान एव शरीरवार्त्तां गवेषयति न च तया क्रियमाणे तेषामप्रीतिरुपजायते प्रत्युत चेतसि ते चिन्तयन्ति अहो एते स्वयं तपस्विनोऽपि एवमस्मासु स्निह्यन्ति । बृ० ३ उ० । " उपायेन च यच्छक्यं न तच्छक्यं पराक्रमैः " हितो० गङ्गा रिपुनिराकरणहेतुषु सामादिषु च । वाच० । उप सामीप्येन विवक्षितवस्तुनोऽविकलज्ञानहेतुत्वात् वस्तुनो लाभ एवोपायः । ज्ञानिसाधितवस्त्ववाप्तये व्यापारविशेषे, दशा० १ अ० । उपेयं प्रति पुरुषव्यापारादिकार्यां साधनसामग्र्याम्, स यत्र द्रव्यादावुपेयेऽस्तीत्यभिधीयते यथैतेषु द्रव्यादिविशेषेषु साधनीयेषु अस्त्युपायो विवक्षितद्रव्यादिविशेषत्वत् । उपायेरता नाम्य यद्भाभिधीयते तदाहरणमुपाय इति नस्मिन्नाहरणभेदे, स्था० ४ ठा० ॥

असावपि चतुर्विध एव तथा चाह ।

एमेव चउविगप्पो, होइ उवाओ वि तत्थ दव्वम्मि ।
धाउव्वाओ पढमो, लंगलकुलिएहिं खेत्तं तु ॥ ६१ ॥

एवमेव यथा उपायः किं च चतुर्विकल्पश्चतुर्भेदः भवत्युपायोऽपि तद्यथा द्रव्योपायः क्षेत्रोपायः कालोपायः भावोपायश्च । तत्र द्रव्य इति द्वारपरामर्शः द्रव्योपाये विचार्ये धातुवादः सुवर्णपातनोत्कर्षलक्षणः द्रव्योपायः प्रथम इति । लौकिके लोकोत्तरे त्वस्वादौ पटलादिप्रयोगतः प्रासुकोदककरणम् । क्षेत्रोपायस्तु लाङ्गलादिना क्षेत्रोपक्रमणे भवति अत एव लाङ्गलकुलिकाभ्यां क्षेत्रमुपक्रम्यत इति गम्यते । ततश्च लाङ्गलकुलिके तदुपायो लौकिकः । लोकोत्तरस्तु विधिना प्रातरशनाद्यर्थमटनादिना क्षेत्रभावनम् । अन्ये तु योनिप्राभृतयोगतः काञ्चनपातनोत्कर्षलक्षणमेव सद्द्रव्ययोजनादौ द्रव्योपायं व्याचक्षते विद्यादिभिश्च दुस्तरादितरणलक्षणम् । क्षेत्रोपायमित्यत्र च प्रथमग्रहणपदार्थोऽतिरिच्यमानं व्याख्याति । पाठान्तरम् वा धाउव्वाओ भणितोत्ति" अत्र कथञ्चिदविशेषत एवेति गाथार्थः ।

कालो य नालियाईहिं, होइ भावम्मि पंडिओ अभओ ।
चोरस्स कए नट्टिं, वड्डकुमारिं परिकहेइ ॥ ६२ ॥

कालश्च नालिकादिभिर्ज्ञायत इति शेषः । नालिका घटिका आदिशब्दाच्छङ्कुच्छायादिपरिग्रहः । ततश्च नालिकादयः कालोपायो लौकिकः । लोकोत्तरस्तु सूत्रपरावर्तनादिभिस्तथा भवति । भावे चेति द्वारपरामर्शाद्भावोपाये विचार्ये निदर्शनं क इत्याह । पण्डितो विद्वानभयोऽभयकुमारस्तथा चाह चोरनिमित्तं नर्तकीं वृद्धकुमारीं किम् । त्रिकालगोचरसूत्रप्रदर्शनार्थमाह । परिकथयति । ततश्च यथा तेनोपायतश्चौरभावो विज्ञातः एवं शिष्यकादीनां तेन विधिनोपायत एव भावो ज्ञातव्य इति गाथार्थः । दश० १ अ० । सोऽपि द्रव्यादिभिश्चतुर्धैव तत्र द्रव्यस्य सुवर्णादेः प्रासुकोदकादेर्वा द्रव्यमेव वा उपायो द्रव्योपायः एतत्साधनमेतदुपादेयतासाधनं वा हरणमपि तथोच्यते तत्प्रयोगश्चैवम् अस्ति सुवर्णादिपूपाय उपायेनैव वा सुवर्णादौ प्रवर्तितव्य तथाविधधातुवादसिद्धादिवदिति । एवं क्षेत्रोपायः क्षेत्रपरिकर्मणोपायो यथा अस्त्यस्य क्षेत्रस्य क्षेत्रकरणोपायो लाङ्गलादिस्तथाविधसाधुविधव्यापारो वा तेनैव वा प्रवर्तितव्यमत्र तथाविधान्यक्षेत्रवदिति । एवं कालोपायः कालज्ञानोपायो यथास्ति कालस्य ज्ञानोपाय धान्यादेरिव जानीहि वा काल घटिकाच्छायादिनोपायेन तथाभूतगणितज्ञवदिति । एवं भावोपायो यथाऽभावज्ञाने उपायोऽस्ति भावश्चोपायतो जानीहि वृद्धकुमारिकाकथाकथनेन विज्ञातचौरादिभावाभयकुमारवदिति ॥ स्था० ४ ठा० । नवरं " भावोवाए " उदाहरणम् । " रायगिहे णाम णयरे तत्थ सेणिओ राया सो भज्जाए भणिओ जहा मम एगखंभं पासायं करेहि । तेण वड्डइणो आणत्ता गता कट्ठं छिंदित्ता तेहिं अडवीए सव्वलक्खणो सरलो महइ महालओ दुमो दिट्ठो धूवो दिण्णो जेण स परिग्गहिओ रुक्खो सो दरिसावेउ अप्पाणं तो ण छिंदामो त्ति अह ण देइ दरिसावं तो छिंदामो त्ति ताहे तेण रुक्खवासिणा वाणमंतरेण अभयस्स दरिसावो दिण्णो । अहं राहो एगखंभं पासायं करेमि । सव्वोउयं च आरामं करेमि सव्ववणजाईएहिं मा छिंदहत्ति । एवं तेण कओ पासाओ । अण्णया एगाए मायंगीए अकाले अंबयाण दोहलो । सा भत्तारं भणइ मम अंबगाणि आणेहि । तदा अकाले अंबयाणं तेण उवामर्णीए विज्जाए डालं ओणामिय अंबयाणि गहिआणि । पुणो अ उण्णामणीए ओणामियं । पभाए रण्णा दिट्ठं । एयं ण दीसइ । को एस मणूसो अतिगओ जस्स एसा परिसी सत्ति त्ति सो मम अंतेउरं पि धरिसेहिइत्ति काउं अभयं सद्दावेऊण भणइ । सत्तरत्तस्स अब्भंतरे जइ चोरं णाणेसि तो णत्थि ते जीविअं । ताहे अभओ गवेसिउ आढत्तो णवरं एगम्मि पएसे गोज्जो रामइं कामो मिलिओ लोगो तत्थ गओ अभओ भणति जाव गोज्जो मंमेइ अप्पाणं ताव ममेगं अक्खाणगं सुणेह । जहा कहं पि णयरे एगो दारिद्दसिट्ठी परिवसति । तस्स धूया वड्डकुमारी अईव रूविणी य वरणिमित्तं कामदेवं अच्चेइ । सा य एगम्मि आरामे चोरिय पुप्फाणि लुंचंती आरामिएण दिट्ठा कयत्थिउमाढत्ता । तीए सो भणिओ । मा मई कुमारिं विणासेहि । तवावि भयणी भावणिज्जीओ अत्थि । तेण भणिआ एक्का एव वट्टाए मुयामि जइ णवरं जम्मि दिवसे परिणज्जसि तद्दिवसं चेव भत्तारेण अणुग्घाभिया समाणी मम सयासं एहिसि तो मुयामि । तीए भणिओ । एव हवउत्ति । तेण विसज्जिआ । अन्नया परिणीआ जाहे अपवरकं पवेसिआ ताहे भत्तारस्स सब्भावं कहेई । विसज्जिया वच्चई । पट्ठिआ आराम अंतरा य चोरेहि गहिता तेसिं पि स भावो कहिओ मुक्का गच्छंतीए अंतरा रक्खसो दिट्ठो जो छएहं मासाण आहारेइ तेण गहिया कहिए मुक्का गया आरामियसगासं तेण दिट्ठा सो ससंतो भणइ । कहमागयासि । तीए भणिअं मया कओ सो पुव्विं समओ । सो भणइ । कहं भत्तारेण मुक्का ताहे तस्स तं सव्वं कहिअं अहो सच्चपइण्णा एसा महिलत्ति । एत्तिएहिं मुक्का किहाहं दुहामित्ति । तेण विमुक्का पडियंती अ गया सव्वेसिं तेसिं मज्झेण । आगता तेहिं सव्वेहिं मुक्का । भत्तारसगास अणहसमग्गा गया । ताहे अभओ तं जणं पुच्छई । अक्खह एत्थ केण दुक्करं कयं । ताहे इस्सालुया भणंति भत्तारेणं छुहालुया भणंति रक्खसेण । पारदारिया भणंति मालागारेण । हरिएसेण भणिअं चोरेहिं । पच्छा सो गहिओ जहा एस चोरोत्ति । एतावत्प्रकृतोपयोगि । जहा अभएण तस्स ( चोरस्स ) उवाएण भावो णाओ एवमिह वि सेहाणमवयाय तथाणं उवाएण गीयत्थेण विपरिणामादिणा भावो जाणिअव्वोत्ति । किं एए पव्वावणिज्जा न वेत्ति । पव्वाविएसु वि तेसु मुंमावणाइसु एसेव विभासा य । तदुक्तम् । " पव्वाविओ सियत्ति अ, मुंमावेउं न कप्पइ" इत्यादि । कहाणयसंहारो पुण चोरो सेणिअस्स उवणीओ । पुच्छिएण सब्भावो कहिओ ताहे रण्णा भणिय । जइ नवरं एयाओ विज्जाओ देहि तो न मारेमि । देमि त्ति अब्भुवगए आसणे ठिओ पढइ । नट्ठाई राया भणई किं नट्ठा । ताहे मायंगो भणइ जहा अविणएणं पढसि । अहं भूमीए तुमं आसणे णीयतरे ववट्ठिओ । ठिया तो सिद्धाओ य विज्जाओ त्ति" । कृतं प्रसङ्गेन । एवं तावल्लौकिकमर्थाक्षिप्त चरणकरणानुयोगं चाधिकृत्योक्ता द्रव्योपायादयः । दश० १ अ० । तथाहि किल राजगृहनगरस्वामिनः श्रेणिकराजस्य पुत्रोऽभयकुमाराभिधानो देवताप्रसादोपलब्धा सर्वर्तुकफलादिसमृद्धारामस्थाम्रफलानामकालाम्रफलदोहदवद्धार्याद्दोहदपूरणार्थं चाण्डालचौरेणापहरणे कृते चोरपरिज्ञानार्थं नाट्यदर्शननिमित्तमिलितबहुजनमध्ये वृद्धकुमारिकाकथामचकथत्तथाहि काचित् वृद्धकुमारिकाभ्यर्थितवरलाभाय कामदेवपूजार्थमारामे पुष्पाणि चोरयन्ती आरामपतिना गृहीता सद्भावकथने विवाहितया पत्या अपरिभुक्तया मत्पार्श्वे समागन्तव्यमिति अभ्युपगमं कारयित्वा

मुक्ता । ततः कदाचिद्विवादिता सती पतिमापृच्छ्य रात्रावाराम-पतिपार्श्वे गच्छन्ती चौरराक्षसाभ्यां गृहीता सद्भावकथने प्रतिनिवृत्तया भवत्पार्श्वे आगन्तव्यमिति कृताभ्युपगमा मुक्ता । आरामे गता आरामिकेण सत्यप्रतिज्ञेत्यखण्डितशीला विसर्जिता इतराभ्यामपि तथैव विसर्जिता पतिसमीपमागतेति । ततो ग्रो लोकाः पत्यादीनां मध्ये को दुष्करकारक इति चासौ प्रपच्छ । तत ईर्ष्यालुप्रभृतयः पत्यादीन् दुष्करकारकत्वेनाभिदधुः । चौरचाण्डालास्तु चौरानिति ततोऽसावनेनोपायेन भावमुपलक्ष्य चौर इति कृत्वा स त बन्धयामासेति स्था० ४ ठा० ३ उ० । दृष्टान्ते, "उवाओ सो साधम्मेण य विधम्मेण य " आ० चू० १ अधि० ।

उवायकारि ( ण् ) उपायकारिन्–त्रि० आचार्यै निर्देशकारिणि, " उवायकारी य हरीमणे य एगंतदिट्ठी य अमाइरूवे " सूत्र० १ श्रु० १३ अ० ।

उवायकिरिया–उपायक्रिया–स्त्री० भावक्रियाभेदे, उपायक्रिया हि घटादिकं द्रव्यं येनोपायेन क्रियते तद्यथा मृत्खननमर्दनचक्रारोपणदण्डचक्रसलिलकुम्भकारव्यापारैर्यावद्भिरुपायैः सा सर्वाऽप्युपायक्रिया सूत्र० २ श्रु० २ अ० ।

उवायग–उपायक–पुं० उपायचिन्तके, विशे० ।

उवायतो–उपायतस्–अव्य० उपायेनेत्यर्थे, "उपायतो मोहनिन्द्रा " ध० १ अधि० ।

उवायरक्खण–उपायरक्षण–न० उपायेन रक्षणे, "सुत्तादुवायरक्खण–गहणपयत्तविसया मुणेयव्वा " ध० २ अधि० ।

उवायविचय–उपायविचय–पुं० सुष्ठु मनोवाक्कायव्यापाराविशेषाणां स्वीकरणमुपायः स कथं नु मे स्यादिति सङ्कल्पप्रबन्धे, सम्म० ।

उवालंभ–उपालम्भ–पुं० उपालम्भनमुपालम्भः भङ्ग्यैव विचित्रभणने, दशा० १ अ० । भङ्ग्यन्तरेणानुशासने, स्था० ४ ठा० "तिविहे उवालंभे पन्नत्ते तं जहा आओवालंभे परोवालंभे तदुभयोवालंभे " उपालम्भ इयमेवानौचित्यप्रवृत्तिप्रतिपादनगर्भो स चात्मनो यथा " चोल्लगदिट्ठंतेण, दुलहं लहिऊण माणुसं जम्मं । जं न कुणसि जिणधम्मं, अप्पा किं वेरिओ तुज्झ त्ति ॥ १ ॥ " परोपालम्भो यथा " उत्तमकुलसंभूओ, उत्तमगुरुदिक्खिओ तुमं वच्छ । उत्तमणाणगुणड्ढो, कह सहस्सा ववसितो एवंति ॥ १ ॥ तदुभयोपालम्भो यथा " एगस्स कए नियजी-वियस्स बहुयाउ जीवकोडीओ । दुक्खे ठवंति जे के वि ताणं किं सासयं जीयं ति ॥ १ ॥ " एवमित्यादिना पूर्वोक्तातिदेशो व्याख्यातः एवञ्चात्राक्षरघटना यथैवोपक्रमे आत्मपरतदुभयैस्त्रय आलापका उक्ता एवमेकैकस्मिन् वैयावृत्त्यादिसूत्रे ते त्रयस्त्रयो वाच्या इति । स्था० ३ ठा० । नि० चू० ॥

सम्प्रत्यात्मोपालम्भोल्लेखं दर्शयति ।

तुमए चेव कयमिणं, न सुद्धगारिस्स दिज्जए दंडो ।
इह मुक्को वि न मुच्चइ, परत्थ अह हो उवालंभो ॥

त्वयैव स्वयं कृतमिदं प्रायश्चित्तस्थानं तस्मान्न कस्याप्युपरि-अन्यथाभावः कल्पनीयः । न खलु शुद्धकारिणो लोकेऽपि दण्डो दीयते । किं च यदि इह भवे कथमप्याचार्येणैवमेव मुच्यते । तथा इह भवे मुक्तोऽपि परत्र परलोके न मुच्यते । तस्मादत्र प्रायश्चित्तमवश्यं गुणवृद्ध्या कर्त्तव्यमिति । अह एष भवत्युपालम्भः एष आत्मोपालम्भः । एतदनुसारेण परोपालम्भः । तदुभयोपालम्भोऽपि भावनीयः व्य० प्र० १ न० । उपालम्भो यत्राऽभिधीयते तादृशे आहरणतद्देशभेदे, स्था० ४ ठा० ।

अधुनोपालम्भद्वारविवक्षयाऽऽह ॥

उवलंभम्मि मिगावइ, नाहियवाईवि एव वत्तव्वे ।
नत्थि त्ति कुविन्नाणं, आयाभावे सइ अजुत्तं ॥ ७५ ॥

उपालम्भे प्रतिपाद्ये मृगापतिदेव्योदाहरणम् । एतच्च " जहा आवस्सए दव्वपरंपराए भणियं तहेवं दट्ठव्वं जाव पव्वइत्ता अज्जचंदणाए सिस्सिणी दिण्णा अन्नया भगवं विहरमाणे कोसंबीए समोसरिओ चंदाइच्चा सविमाणेहिं चंदणा आगया चउपोरसीयं समोसरणं काउं अत्थमणकाले पडिगता ततो मिगावती संभंता अयि वियालिय-त्तंति भणिऊणं साहुणीसहिया जाव अज्जचंदणासगासं गता ताव अंधयारयं जातं अज्जचंदणापमुहाहिं साहुणीहिं ताव पडिक्कंतं ताहे सा मिगावती अज्जचंदणाए उवालब्भति जहा एवं णाम तुमं उत्तमकुलप्पसूया होइऊण एवं करेसि अहो न लज्जय । ताहे पणमिऊण पाएसु पडिता परमेण विणएण खामेति खमह मे एगमवराहं णाहं पुणो एवं करेहामित्ति । अज्जचंदणा य किल तं समरसथारंगे गता पसुत्ता इयरीए वि परमसंवेगताए केवलनाणं समुप्पन्नं परमं च अंधयारं वट्टइ सप्पो य तेणंतरेण आगच्छति पव्वत्तिणीए य हत्थो लंबमाणो तीए उप्पाडिओ पडिबुद्धाय अज्जचंदणा पुच्छिता किमेयं सा भणति दीहजातीओ कहं तुमं जाणसि किं कोइ अतिसओ अत्थि पडिवाति अपडिवाइत्ति पुच्छिया । सा भणइ अपडिवाइत्ति तओ खामिया लोगलोगुत्तरसाहरणमेयं एवं पमायतो सीसो उवालभेतव्वोत्ति उदाहरणदेशता पूर्ववत् योजनीयेत्येवं तावच्चरणकरणानुयोगमधिकृत्य व्याख्यातमुपालम्भद्वारमधुना द्रव्यानुयोगमधिकृत्य व्याख्यायते नास्तिकवाद्यपि चार्वाकोऽपि जीवनास्तित्वप्रतिपादकः इत्यर्थः एवं वक्तव्योऽभिधातव्यः नास्ति न विद्यते कः प्रकरणाज्जीव इति एवंभूतं कुविज्ञानं जीवसत्ताप्रतिषेधावभासीत्यर्थः । आत्माभावे सति न युक्तमात्मधर्मत्वात् ज्ञानस्येति भावना । भूतधर्मता पुनरस्य धर्म्यननुरूपत्वादेव न युक्ता तत्समुदायकार्यताऽपि प्रत्येकं भावाभावविकल्पद्वारेण तिरस्कर्त्तव्येति गाथार्थः । अमुमेवार्थमुपसंहरन्नाह ।

अत्थि त्ति जा वियक्का, अहवा नत्थि त्ति जं कुविन्नाणं ।
अच्चंताभावे पो–गलस्स एयं चिय न जुत्तं ॥ ७६ ॥

अस्ति जीव इति एवम्भूता या वितर्का अथवा नास्ति न विद्यते इति एवम्भूतं यत्कुविज्ञानं लोकोपघातकारि अत्यन्ताभावे पुद्गलस्य जीवस्य इदमेव न युक्तमिदमेवान्यथा भावना-पूर्ववदिति गाथार्थः । उदाहरणदेशता नास्तिकस्य परलोकादिप्रतिषेधवादिनो जीवसत्तावत्ताऽवर्तनीयेति । गतमुपालम्भद्वारम् । दश० १ अ० । " एवं खलु जंबू समणेणं भगवया महावीरेणं आदिगरेणं तित्थगरेणं जाव संपत्तेणं अप्पोवालंभनिमित्तं पढमस्स णायज्झयणस्स अयमट्ठे पन्नत्तेत्ति बेमि इति ज्ञाताप्रथमाध्ययने उक्त आत्मोपालम्भः ज्ञा० १ अ० । निदर्शनतिरस्कारे, वाच० ।

उवालंभंत–उपालम्भमान–त्रि० उपालम्भं कुर्वाणे, प्रा० ।

उवालद्ध–उपालब्ध–त्रि० उप-आ-लभ-क्त तिरस्कारेण निन्दिते, वाच० । "उवालद्धो य सो सिवो बभणो" नि० चू० १ उ० ।

उवासं–अवकाश–पुं० स्थाने, नि० चू० १७ उ० । उवासादिसु–त्ति इहो ममत्तपडिसेवए उवासो आदी जेसिं ताणि उवासादीणि ताणि सथारउवस्स कुलगामणगरदेसरज्जं नि० चू० १ उ० ।

उवासंतर–अवकाशान्तर–न० वातस्कन्धानामधस्तादाकाशेषु, स्था० २ ठा० । "सत्त उवासंतरायं पएसुण सत्तसु उवासंतरेसु सत्त तणुवाया पइट्ठिया स्था० ७ ठा० । आकाशविशेषे, अवकाशरूपान्तराले च भ० १ श० ६ उ० । अवकाशान्तर नाम अमुकयोर्द्वयोर्मध्यमिति । ज्य० ७ उ० । " सत्तमे उवासंतरे " प्रथमद्वितीयपृथिव्योर्यदन्तरालमाकाशखण्डं तत्प्रथम तदपेक्षया सप्तम भ० १२ श० ५ उ० ।

उवासग–उपासक–त्रि० उपासते सेवन्ते साधूनित्युपासकाः । श्रावकेषु, उत्त० २ अ० । आव० । नं० । स्था० । स० । "उवासगो दुविहो वती अवती वा अवती सो परदंसणं सपक्खो एक्केक्को पुणो दुविहो णायगो अणायगो वा " नि० चू० ११ उ० । सेवके, उपासनाकर्त्तरि शूद्रे, पुं० स्त्री० वाच० ॥

उवासगदसा–उपाशकदशा–स्त्री० ब० व० उपासकाः श्रावकास्तद्गताणुव्रतादिक्रियाकलापप्रतिबद्धा दशा अध्ययनानि उपासकदशा । नं० । पा० । स० । सप्तमाङ्गे, बहुवचनान्तमेतत् ग्रन्थनाम आसां च सम्बन्धाभिधेयप्रयोजनानि नामान्वर्थसामर्थ्येनैव प्रतिपादितान्यवगन्तव्यानि । तथा हि उपासकानुष्ठानमिहाभिधेयं तदवगमश्च श्रोतॄणामनन्तरप्रयोजनं शास्त्रकर्तुस्तु तत्प्रतिबोधनमेव तत्परम्परप्रयोजन तूभयेषामप्यपवर्गप्राप्तिरिति । सम्बन्धस्तु द्विधा आक्षेपत्वभिधीयते उपायोपेयभावलक्षणो गुरुपर्वक्रमलक्षणश्च तत्रोपायोपेयभावलक्षणः शास्त्रनामान्वर्थसामर्थ्येनैवासामभिहितस्तथाहीदं शास्त्रमुपाय एतत्साध्योपासकानुष्ठानावगमश्चोपेयमित्युपायोपेयभावलक्षणः सम्बन्धः ॥

गुरुपर्वक्रमलक्षण तु सम्बन्ध साक्षाद्दर्शयन्नाह ।

तेणं कालेणं तेणं समएणं चंपा णामं णयरी होत्था । वण्णओ । पुण्णभद्दे चेइए । वण्णओ । तेणं कालेणं तेणं समएणं अज्जसुहम्मे समोसरिए जाव जंबू पज्जुवासमाणे एवं वयासी । जइ णं भंते ! समणेणं भगवया महावीरेणं जाव संपत्तेणं छट्ठस्स अंगस्स णायाधम्मकहाणं अयमट्ठे पण्णत्ते ? सत्तमस्स णं भंते ! अंगस्स उवासगदसाणं । समणेण जाव संपत्तेणं । के अट्ठे पण्णत्ते एवं खलु जंबू समणस्स भगवओ महावीरस्स जाव संपत्तेणं सत्तमस्स अंगस्स उवासगदसाए दस अज्झयणा पन्नत्ता । तं जहा आणंदे १ कामदेवे य २ गाहावइचुलणीपिया ३ सुरादेवे ४ चुल्लसयए ५ गाहावइकुंडकोलिए ६ सद्दालपुत्ते ७ महासयए ८ नंदणीपिया ९ सालेइणीपिया १० जइ णं भंते ! समणेणं जाव संपत्तेणं सत्तमस्स अंगस्स उवासगदसाणं । दस अज्झयणा पण्णत्ता ? ॥

'तेणं कालेणं तेणं समएणमित्यादि" सर्वं चेदं ज्ञाताधर्मकथाप्रथमाध्ययनविवरणानुसारेणानुगमनीयं नवरम् "आणंदेत्यादि" रूपकं तत्रानन्दाभिधानोपासकवक्तव्यता प्रतिबद्धमध्ययनमानन्द एवाभिधीयते एवं सर्वत्र उपा० १ अ० ।

एवं खलु जंबू समणेणं जाव संपत्तेणं सत्तमस्स अंगस्स उवासगदसाणं दसमस्स अज्झयणस्स अयमट्ठे पण्णत्ते उवासगदसाओ सम्मत्ता उवासगदसाणं सत्तमस्स अंगस्स एगो सुयखंधो दस अज्झयणा दससु चेव दिवसेसु उद्दिसिंति । खलु जम्बूरित्यादि उपाशकदशानिगमनवाक्यमध्ये यमिति तथा पुस्तकान्तरे सग्रहगाथा उपलभ्यन्ते ताश्चेमा " वाणियगामे चंपा, दुवे वणारसीए नयरीए ४ आलंभिया य ५ पुक्खरि, कंपिल्लपुरं च बोधव्वं । १ । पोलासं रायगिहं, सावत्थीए पुरीए दोन्नि भवे । एए उवासगाणं, नयरा खलु हुंति बोद्धव्वा । २ सिवनंद १ भद्द २ सामा, ३ धन्न ४ बहुला ५ पुस्स ६ अग्गिमित्ता य ७ । रेवइ ८ अस्सिणि ९ तह फग्गुणा य १० भज्जाण णामाइं ३ ॥ ओहिणाण १ पिसाए २ माया ३ वाहि ४ धण ५ उत्तरिज्जे य ६ । भज्जाय सुव्वया ७ दु-व्वया इ निरुवसग्गया दोन्नि १० ॥ ४ अरुणे १ अरुणाभे २ खलु, अरुणप्पह ३ अरुणकंत ४ सिट्ठे य ५ । अरुणज्झए य छट्ठे, ६, भूय ७ वडिंसे ८ गवे ६ कीले" १० । ५ । शिष्टादिनामान्यरुणपदपूर्वाणि द्रष्टव्यानि । अरुणशिष्टमित्यादि एताश्च पूर्वोक्तानुसारेणावसेयाः यदिह न व्याख्यातं तत्सर्वं ज्ञाताधर्मकथाव्याख्यानमुपयुक्तेन निरूप्यावसेयमिति । "सर्वस्यापि स्वकीयं वचनमभिमतं प्रायसः स्याज्जनस्य, यत्तु स्वस्यापि सम्यग्न हि विहितरुचि स्यात् कथं तत्परेषाम् । चित्तोल्लासात्कुतश्चित्तदपि निगदितं किंचिदेवं मयैतत् , युक्तं यद्यात्र तस्य ग्रहममलधियः कुर्वतां प्रीतये मे " समाप्तमुपासकदशाविवरणं समाप्तं सप्तमाङ्गम् ॥ उपा० १० अ० ।

उपाशकदशानां विषयाः ।

से किं तं उवासगदसाओ उवासगदसासु णं उवासयाणं णगराइं उज्जाणाइं चेइआइं वनखंडा रायाणो अम्मापियरो समोसरणाइं धम्मायरिया धम्मकहाओ इहलोइयपरलोइयइड्ढिविसेसा उवासयाणं सीलव्वयवेरमणगुणपच्चक्खाणपोसहोववासपडिवज्जियाओ सुयपरिग्गहा तवोवहाणाइं पडिमाओ उवसग्गा संलेहणाओ भत्तपच्चक्खाणाइं पाओवगमणाइं देवलोगगमणाइं सुकुलपच्चाया पुणो बोहिलाभो अंतकिरियाओ आघविज्जंति ॥

( उपासकदसासु णति ) उपासकानां नगराणि उद्यानानि चैत्यानि वनखण्डा राजानः अम्बापितरौ समवसरणानि धर्माचार्या धर्मकथा ऐहलौकिकपारलौकिका ऋद्धिविशेषा उपासकानाञ्च शीलव्रतविरमणगुणप्रत्याख्यानपौषधोपवासप्रतिपादनतास्तत्र शीलव्रतान्यणुव्रतानि विरमणानि रागादिविरतयः गुणा गुणव्रतानि प्रत्याख्यानानि नमस्कारसहितादीनि पौषधमष्टम्यादिपर्वदिने तत्रोपवसनमाहारशरीरसत्कारादित्यागः पौषधोपवासः ततो द्वन्द्वे सत्येतेषामप्रतिपादनताप्रतिपत्तय इति विग्रहः श्रुतपरिग्रहस्तप उपधानानि च प्रतीतानि ( पडिमाओत्ति ) एकादश उपासकप्रतिमाः कायोत्सर्गा वा उपसर्गा देवादिकृतोपद्रवः संलेखना भक्तपानप्रत्याख्यानानि पादपोपगमनानि देवलोकगमनानि सुकुले प्रत्यायानि पुनर्बोधिलाभोऽन्तक्रिया आख्यायन्ते पूर्वोक्तमेव ॥

अतो विशेषत आह ।

**उवासगदसासु णं उवासयाणं रिद्धिविसेसा परिसा-वित्थरधम्मसवणाणि बोहिलाभो अभिगमणे सम्मत्तविसु-द्धया थिरत्तं मूलगुणउत्तरगुणाइयारा ठिइविसेसा बहु-विसेसा पडिमाभिग्गहग्गहणउवसग्गाहियसंहणणाणिरुवस-ग्गा तवोयचित्ता सीलव्वयगुणवेरमणपच्चक्खाणपोसहो-ववासा अपच्छिममारणंतिया य संलेहणाझोसणाहिं अ-प्पाणं जह य भावइत्ता बहूणि भत्ताणि अणसणाए छे-अइत्ता उववण्णा कप्पवरविमाणुत्तमेसु जहा अणुभवंति सुरवरविमाणवरपोंडरीएसु सोक्खाइं अणोवमाइं कमेण भुत्तूण उत्तमाइं तओ आउक्खए चुआ समाणा जह जि-णमयम्मि बोहिं लद्धूण य संजमुत्तमं तमरयोघविप्पमुक्का वेंति जह अक्खयसव्वदुक्खमोक्खं एते अन्ने य एवमाइ उ-वासयदसासु णं परित्ता वायणा संखेज्जा अणुओगदारा जाव संखेज्जाओ संगहणीओ से णं अंगट्टयाए सत्तमे अं-गे एगे सुयक्खंधे दस अज्झयणा दस उद्देसणकाला दस समुद्देसणकाला संखेज्जाइं पयसयसहस्साइं पयग्गेणं पण्णत्ते संखेज्जाइं अक्खराइं जाव एवं चरणकरणपरूवणा आघविज्जंति सेत्तं उवासगदसाओ ॥ ७ ॥**

उवासगेत्यादि तत्र ऋद्धिविशेषा अनेककोटीसंख्याद्रव्यादिस-म्पद्विशेषाः तथा परिषदः परिवारविशेषा यथा मातापितृपुत्रा-दिका अभ्यन्तरपरिषत् दासीदासमित्रादिका बाह्यपरिषदिति विस्तरधर्मश्रवणानि महावीरसन्निधौ ततो बोधिलाभोऽभि-गम सम्यक्त्वस्य विशुद्धता स्थिरत्वं सम्यक्त्वशुद्धिरेव मूलगुणोत्तरगुणा अणुव्रतादय अतिचारास्तेषामेव वधबन्धा-दित खण्डनानि स्थितिविशेषाश्चोपासकपर्यायस्य कालमान-भेदा बहुविशेषा प्रतिमा प्रभूतभेदा. सम्यग्दर्शनादिप्रतिमाः अभिग्रहग्रहणानि तेषामेव च पालनानि उपसर्गाधिसहनानि निरुपसर्गाश्चोपसर्गाभावश्चेत्यर्थः । तपांसि च चित्राणि शीलव्र-तादयोऽनन्तरोक्तरूपा अपश्चिमाः पश्चात्कालभाविन्य अकार-स्त्वमङ्गलपरिहारार्थः । मरणरूपे अन्ते भवा मारणान्तिक्यः आत्मशरीरस्य जीवस्य च संलेखना तपसा रोगादिजयेन च कृशीकरणानि आत्मन संलेखना ततः पदत्रयस्य कर्मधारय-स्तासां ( झोसणत्ति ) जोषणा सेवना करणानीत्यर्थ ताभि-रपश्चिममारणान्तिकात्मसंलेखनाजोषणाभिरात्मान यथा च भा-वयित्वा बहूनि भक्तानि अनशनतया च निर्भोजनतया छेद-यित्वा व्यवच्छेद्य उपपन्ना मृत्वेति गम्यते । केषु कल्पवरेषु यानि विमानोत्तमानि तेषु यथाऽनुभवन्ति सुरवरविमानानि वरपुण्डरी-काणि यानि तेषु कानि सौख्यान्यनुपमानि क्रमेण भुक्त्वोत्तमानि तत आयुष्कक्षयेण च्युता सन्तो यथा जिनमते बोधिं लब्धा इति विशेष. । यथा च सयमोत्तमप्रधानं संयमं तमोरजओघ-विप्रमुक्ता अज्ञानकर्मप्रवाहविमुक्ता उपयन्ति । यथा अक्षयमपु-नरावृत्तिकं सर्वदुःखमोक्षं कर्मक्षयमित्यर्थस्तथोपासकदशा-स्वाख्यायन्त इति प्रक्रम । एते चान्ये चेत्यादि प्रागवत्परं "सं-खेज्जाइ पयसहस्साइ पयग्गेणंति " किलैकादशलक्षाणि द्विप-ञ्चाशच्च सहस्राणि पदानामिति ॥७। सम० । यावच्छब्देन "सं-खेज्जा वेढासंखिज्जा सिलोगा संखिज्जाओ निज्जुत्तीओ संखि-ज्जाओ संगहणीओ संखिज्जाओ पडिवत्तीओ " नं० ।

**उवासगपडिमा**—उपासकप्रतिमा—स्त्री० उपासकाः श्रावकास्तेषां प्रतिमा प्रतिज्ञा अभिग्रहविशेषा उपासकप्रतिमा । उत्त०३१ अ०। स० । श्रावकोचिताभिग्रहविशेषरूपेषु सुदर्शनादिषु, उपा० १ अ० । घ० । ग० । तथैकादशप्रतिमायां श्राद्ध सामायिको "जाव नियमं वा जाव पडिमं वा " कथमुच्चरते । तथा पञ्चम्यादिप्रति-मास्वष्टम्यादितिथिषु रात्रौ कायोत्सर्गकरणवदेकादश्यां प्रतिमायां कायोत्सर्गे करोति न वेति प्रश्न । उत्तरम् एकादशप्रतिमायां श्रा-वकेण सामायिके "जाव पडिमं पज्जुवासेमित्ति" पाठो भणनीय-स्तथा कायोत्सर्गोऽपि करणीय । सेन० ३ उ० ३७ प्र० । श्रावकधर्माधिकारात्तदुचितभावस्तद्विशेषमुपासकप्रतिमाप्रक्र-णमभिधित्सुर्मङ्गलाद्यभिधानायाह ।

**नमिऊण महावीरं, भवहियट्ठाय लेसओ किं पि ।**
**वोच्छं समणोवासग-पडिमाणं सुत्तमग्गेण ॥ १ ॥**

नत्वा प्रणम्य महावीरं वर्द्धमानजिनं भव्यानां शुभजीवानां हितं पथ्यं स एवार्थः पदार्थः प्रयोजनं वा भव्यहितार्थस्तस्मै भव्य-हितार्थाय भव्योपकारायेत्यनेन च परोपकारस्य मुमुक्षूणामादेय-तां दर्शयति। लेशत संक्षेपेणाल्पग्रन्थतयेत्यर्थ । अल्पग्रन्थेनापि कश्चित्समस्तमभिधेयमुच्यत इत्यत आह । किमपि स्तोकमभि-धेयजातं न समस्तमपीत्यर्थ वक्ष्ये भणिष्यामि। श्रमणोपासक-प्रतिमानां श्रावकाभिग्रहविशेषाणां संबन्धिनां पुनर्भिक्षुप्रतिमानां श्रावकधर्माधिकारात्कथमित्याह सूत्रमार्गेण दशाश्रुतस्कन्धाभि-धानागमपथेनानेन श्रुतविशेषावलम्बनत्वात्प्रकरणस्यास्य प्रामा-ण्यमावेदितमिति गाथार्थ. पंचा० १० विव० १ ।

अथ कियत्य. किमादिकाश्च ता इत्याशङ्कायामाह ।

**एक्कारस उवासगपडिमा उ पण्णत्ता तं जहा दंसणसावाए कयव्वयकम्मे सामाइअकडे पोसहोववासनिरए दिया बंभ-यारी रत्तिपरिमाणकडे दिआ वि राओ वि बंभयारी असि-णाईवि अप्पजोई मोलिकडे सचित्तपरिण्णाए आरंभपरिण्णाए पेसपरिण्णाए उद्दिट्ठभत्तपरिण्णाए समणभूए आविभवइ समणाउसो ॥**

तत्र दर्शनं सम्यक्त्वं तत्प्रतिपन्न श्रावको दर्शनश्रावक इह प्र-तिमानां प्रक्रान्तत्वेऽपि प्रतिमाप्रतिमावतोरभेदोपचारात्प्रतिमा-वतो निर्देश कृत एवमुत्तरपदेष्वपि । अयमत्र भावको दर्शन-श्रावक इह च प्रतिमानां प्रक्रान्तत्वेऽपि प्रतिमाभावार्थ सम्यग्-दर्शनस्य शङ्कादिशल्यरहितस्याणुव्रतादिगुणविकलस्यायमभ्यु-पगम सा प्रतिमा प्रथमेति । तथा कृतमनुष्ठितं व्रतादीनां कर्म तच्चाणुव्रतं ज्ञानवाञ्छाप्रतिपत्तिलक्षणं येन प्रतिपन्नदर्शनेन स कृतव्रतकर्मा प्रतिपन्नाणुव्रतादिरिति भाव इतीय द्वितीया । तथा सामायिक सावद्ययोगपरिवर्जननिरवद्ययोगोपसेवनस्वभावं कृतं विहितं देशतो येन स सामायिककृत आहिताग्न्यादिदर्शनात्क्ता-न्तस्योत्तरपदत्वं तदेवं प्रतिपन्नपौषधस्य दर्शनव्रतोपेतस्य प्रति-दिनमुभयसंध्य सामायिककरणं सामायिक यावदिति तृतीया प्रतिमेति । तथा पोष पुष्टिं कुशलधर्माणां धत्ते यदाहार्यत्यागादि-कमनुष्ठानं तत्पौषधं तेनोपवसनमवस्थानमहोरात्रं यावदिति पौष-धोपवास इति । अथवा पौषधं पर्वदिनमष्टम्यादि तत्रोपवास उपा-धे पौषधोपवास इति । इह व्युत्पत्तिरेव प्रवृत्तिस्तस्य तास्य

आहारशरीरसत्काराब्रह्मचर्यव्यापारपरिवर्जनेष्विति । तत्र पौषधोपवासे निरत आसक्तः पौषधोपवासनिरतः स एवंविधस्य श्रावकस्य चतुर्थी प्रतिमेति प्रक्रमः । अयमत्र भावः पूर्वप्रतिमात्रयोपेतोऽष्टमीचतुर्दश्यमावस्यापौर्णमासीष्वाहारपौषधादिचतुर्विधं पौषधं प्रतिपद्यमानस्य चतुरो मासान् यावच्चतुर्थी प्रतिमा भवतीति । तथा पञ्चमीप्रतिमायामष्टम्यादिषु पर्वस्वेकरात्रिकप्रतिमाकारी भवत्येतदर्थं च सूत्रमधिकृतसूत्रपुस्तकेषु न दृश्यते दशादिषु पुनरुपलभ्यते इति तदर्थं उपदर्शितः । तथा शेषदिनेषु दिवा ब्रह्मचारी ( रत्तीति ) रात्रौ किमत आह । परिमाणं स्त्रीणां तद्भोगानां वा प्रमाणं कृतं येन स परिमाणकृत इति । अयमत्र भावो दर्शनव्रतसामायिकाष्टम्यादिपौषधोपेतस्य पर्वस्वेकरात्रिकप्रतिमाकारिणः शेषदिनेषु दिवा ब्रह्मचारिणो रात्रौ ब्रह्मपरिमाणकृतोऽस्नानस्याऽरात्रिभोजिनः अबद्धकच्छस्य पञ्च मासान् यावत्पञ्चमी प्रतिमा भवतीति । उक्तंच " अट्ठमि चउद्दसीसु पडिमट्ठाएगराईय " पश्चार्द्धम् ॥

असिणाणवियडभोई, मउलियडो दिवसबंभयारी य ।
रत्तिं परिमाणकडो, पडिमा वज्जेदिसुज्झहेसुत्ति ॥ ५ ॥

तथा दिवाऽपि रात्रावपि ब्रह्मचारी ( असिणा इत्ति ) अस्नायी स्नानपरिवर्जकः क्वचित्पठ्यते ( अनिसाइत्ति ) न निशायामत्तीत्यनिशादी ( वियडभोईत्ति ) विकटे प्रकटप्रकाशे दिवा न रात्रावित्यर्थः दिवाऽपि अप्रकाशे देशे न भुङ्क्ते अशनाद्यभ्यवहरतीति विकटभोजी ( मउलिकडेत्ति ) अबद्धपरिधानकच्छ इत्यर्थः । षष्ठी प्रतिमेति प्रकृतम् । अयमत्र भावः प्रतिमापञ्चकोक्तानुष्ठानयुक्तस्य ब्रह्मचारिणः षण्मासान् यावत्षष्ठी प्रतिमा भवतीति । तथा सचित्त इति सचेतनाहारः परिज्ञातः तत्स्वरूपादिपरिज्ञानात्प्रत्याख्यातो येन स सचित्ताहारपरिज्ञातः श्रावकः सप्तमी प्रतिमेति प्रकृतम् । इयमत्र भावना पूर्वोक्तप्रतिमाषट्कानुष्ठानयुक्तस्य प्रासुकाहारस्य सप्त मासान् यावत्सप्तमी प्रतिमा भवतीति तथा आरम्भः पृथिव्याद्युपमर्दनलक्षणः परिज्ञातस्तथैव प्रत्याख्यातो येनासावारम्भपरिज्ञातः श्रावकोऽष्टमी प्रतिमेति । इह भावना समस्तपूर्वोक्तानुष्ठानायुक्तस्यारम्भवर्जनमष्टौ मासान् यावदष्टमी प्रतिमेति । तथा प्रेष्या आरम्भेषु व्यापारणीयाः परिज्ञातास्तथैव प्रत्याख्याता येन स प्रेष्यपरिज्ञातः श्रावको नवमीति । भावार्थश्चेह पूर्वोक्तानुष्ठायिन आरम्भं परैरप्यकारयतो नव मासान् यावन्नवमी प्रतिमेति । तथा उद्दिष्टं तमेव श्रावकमुद्दिश्य कृतं भक्तमोदनादि उद्दिष्टभक्तं तत्परिज्ञातं येनासावुद्दिष्टभक्तपरिज्ञातः प्रतिमेति प्रकृतम् । इहायं भावार्थः । पूर्वोदितगुणयुक्तस्याधाकर्मिकभोजनपरिहारपरस्य क्षुरमुण्डितस्य शिखावतो वा केनापि किंचिद् गृहव्यतिकरं पृष्टस्य तज्ज्ञाने सति जानामीत्यज्ञाने च सति न जानामीति ब्रुवाणस्य दश मासान् यावदेवंविधविहारस्य दशमी प्रतिमेति । तथा श्रमणेति निर्ग्रन्थसद्दृशस्तदनुष्ठानकरणात् स श्रमणभूतः साधुकल्प इत्यर्थः । चकारः समुच्चये अपिः सम्भावने भवति श्रावक इति प्रकृतं हे श्रमण ! हे आयुष्मन् ! इति सुधर्मस्वामिना जम्बूस्वामिनमामन्त्रयतोक्तमित्येकादशीति । इह चेयं भावना पूर्वोक्तसमग्रगुणोपेतस्य क्षुरमुण्डस्य कृतलोचस्य वा गृहीतसाधुनेपथ्यस्य ईर्यासमित्यादिकं साधुधर्ममनुपालयतो भिक्षार्थं गृहिकुलप्रवेशे सति श्रमणोपासकाय प्रतिमाप्रतिपन्नाय भिक्षां दत्तेति भाषमाणस्य कस्त्वमिति वा कस्मिंश्चित्पृच्छति प्रतिपन्नश्रमणोपासकोऽहमिति ब्रुवाणस्यैकादशमासान् यावदेकादशी प्रतिमा भवतीति । पुस्तकान्तरे त्वेवं वाचना " दंसणसावए प्रथमा । कयवयकम्मे द्वितीया । कयसामाइए तृतीया । पोसहोववासनिरए चतुर्थी । राइभत्तपरिन्नाए पंचमी । सचित्तपरिन्नाए षष्ठी । दिया बंभयारी राओ परिमाणकडे सप्तमी । दिया वि राओ वि बम्हयारी । असिणाणए यावि भवति वोसट्ठकेसरोमनहे अष्टमी । आरंभपरिन्नाए नवमी । उद्दिट्ठभत्तवज्जए दशमी । समणभूए या वि भवइत्ति समणाउसो एकादशीति । क्वचित्तु आरम्भपरिज्ञात इति नवमी । प्रेष्यारम्भपरिज्ञात इति दशमी । उद्दिष्टभक्तवर्जकः श्रमणभूतश्चैकादशीति । सम० । पंचा० ॥

तएणं से आणंदे समणस्स भगवओ अंतिअं पढमं उवासगपडिमं उवसंपज्जित्ताणं विहरइ । पढमं उवासगपडिमं अहासुत्तं ४ सम्मं काएणं फासेइ । जाव आराहएइ । तएणं से आणंदे समणे । दोच्चं उवासगपडिमं चउत्थं पंचमं छट्ठं सत्तमं अट्ठमं नवमं दशमं एक्कारसमं जाव आराहेइ ॥

( पढमंति ) एकादशानामाद्यमुपासकप्रतिमाश्रावकोचिताभिग्रहविशेषरूपामुपसंपद्य विहरति तस्याश्चेदं स्वरूपम् " संकादिसल्लविरहित, सम्मद्दंसणजुओ जो जंतू । सेसगुणविप्पमुक्को, एसा खलु होइ पढमाओ । " सम्यग्दर्शनप्रतिपत्तिश्चास्य पूर्वमप्यासीत् केवलमिह शङ्कादिदोषराजाभियोगाद्यपवादवर्जितत्वेन तथाविधसम्यग्दर्शनाचारविशेषपालनाभ्युपगमेन च प्रतिमात्वं संभाव्यते कथमन्यथाऽसावेकमासप्रथमायाः पालनेन द्वौ मासौ द्वितीयायाः पालनेन एवं यावदेकादश मासानेकादश्याः पालनेन पञ्चसार्द्धानि वर्षाणि पूरितवानित्यर्थः । ततो वक्ष्यतीति न चायमर्थो दशाश्रुतस्कन्धादावुपलभ्यते श्रद्धामात्रप्ररूपायास्तस्याः प्रतिपादनात् ( अहासुत्तंति ) सूत्रानतिक्रमेण यथाकल्पं प्रतिमाचारानतिक्रमेण यथा मार्गं क्षायोपशमिकभावानतिक्रमेण ( अहातच्चंति ) यथातत्त्वं दर्शनप्रतिमेति शब्दस्यान्वर्थानतिक्रमेण ( फासेइत्ति ) स्पृशति प्रतिपत्तिकाले विधिना प्रतिपत्ते ( पालेत्ति ) सततोपयोगप्रतिजागरेण रक्षति ( सोहइत्ति ) शोभयति गुरुपूजापुरस्सरं पारणककरणेन शोधयति वा निरतिचारतया ( तिरइत्ति ) पूर्णेऽपि कालावधावनुबन्धात्यागात् ( कीर्तयेत्ति ) तत्समाप्तावेवमिदं चेहादिमध्यावसानेषु कर्त्तव्यं मया तत् कृतमिति कीर्तनात् आराधयति एभिरेव प्रकारैः संपूर्णं निष्ठां नयतीति उपा० १ उ० ।

सुयं मे आउसत्तेणं भगवया एवमक्खायं इह खलु थेरेहिं भगवंतेहिं इक्कारस उवासगपडिमा पण्णत्ताओ कतराओ खलु ताओ इमाओ खलु तं जहा अकिरियावादी यावि भवति नो हियवादी णो हियपण्णे नो हियदिट्ठी नोसमावादी णो णितियावादी ण संति परलोगवादी णत्थि इहलोए णत्थि परलोए णत्थि माता णत्थि पिता णत्थि अरहंता णत्थि चक्कवट्टी णत्थि बलदेवा णत्थि वासुदेवा णत्थि णरया णत्थि णेरइया णत्थि सुकडदुक्कडाणं फलवित्तिविसेसे णो सुचिण्णा कम्मा सुचिन्नफला भवंति णो दुचिण्णा कम्मा दुचिण्णफला भवंति । अफले कल्लाणपावए नो पच्चायंति जीवा णत्थि णिरया नत्थि सिद्धी से एवं वादी एवं पण्णे एवं दिट्ठी एवं छंदरा-

गत्तिणिविट्ठे आविभवति से अन्नवइ महिच्छे महारंभे महापरिग्गहे अहम्मिए अहम्माणुए अधम्मसेवी अधम्मक्खाई अधम्मरागी अधम्मपलोई अधम्मजीवी अधम्मपलज्जणे अधम्मसीलसमुदाचारे अधम्मेणं चेव वित्तिं कप्पेमाणे विहरइ । हण छिंद भिंद विकत्तए लोहियपाणी चंडा रुद्दा खुद्दा साहसिया उक्कंचणवंचणमायाणियडिकूडकवडसातिसंपयोगबहुला दुस्सीला दुचरिया दुरणुणेया दुव्वया दुप्पडिया णंदा निस्सीले णिग्गुणे निम्मेरे निम्मेरे निप्पच्चक्खाणपोसहोववासे असाहू सव्वातो पाणाइवायाउ अपडिविरए जावज्जीवाए एव जाव सव्वाओ कोहाओ सव्वाओ माणाओ सव्वातो मायातो सव्वातो लोभातो सव्वातो पेज्जातो दोसातो कलहातो अब्भक्खातो पेसुण्णपरपरिवादातो अरतिरइमायामोसातो मिच्छादंसणसल्लातो अपडिविरए जावज्जीवाए सव्वतो कसायदंतकट्ठण्हाणमद्दणविलेवणसद्दफरिसरसरूवगंधमल्लालंकारातो अप्पडिविरया जावज्जीवाए सव्वातो सगडरहजाणजुग्गगिल्लिथिल्लिसीयासंदमाणियजंपणासणजाणवाहणभोयणपवित्थरविधीतो अपडिविरता जावज्जीवाए असमक्खियकारी सव्वाओ आसहत्थिगोमहिसदासीदासकम्मकरपोरुसातो अपडिविरता जावज्जीवाए सव्वतो कयविक्कयमासद्धमासरूवगसंववहारातो अपडिविरता जावज्जीवाए सव्वाहिरण्णसुवण्णधणधण्णमणिमोत्तियसंखसिलप्पवालातो अपडिविरता जावज्जीवाए सव्वतो कूडतुलकूडमाणातो अप्पडिविरता सव्वातो आरंभसमारंभातो अप्पडिविरता सव्वातो करणकारावणातो अप्पडिविरता सव्वातो पयणपयावणातो अप्पडिविरता सव्वातो कुट्टणपिट्टणातो तज्जणतालणवंधवधपरिकिलेसातो अप्पडिविरता जावज्जीवाए जेयावण्णे तहप्पगारा सावज्जा अबोहिया कम्मतो कज्जति परपाणपारिआवणकडा कज्जति ततो वि य अप्पडिविरता जावज्जीवाए से जहा णामए केइ पुरिसे कलममसूरातिलमुग्गमासनिप्फावकुलत्थआलिसंदजवएवमादिएहिं अयते कूरे मिच्छादंडं पउंजइ एवमेव तहप्पगारे पुरिसज्जाते तित्तिरवट्टालावककपोतकपिंजलमियमहिसवाराहगाहगोगोहकुम्मसिरी—सवादिएहिं अयते कूरे मिच्छादंडं पउंजइ ॥ जावि य से बाहिरिया परिया परिसा भवति दासेति वा पेसेति वा भत्तए वा भाइल्लेति वा कम्मारएति वा भोगपुरिसेति वा तेसिं पि य णं अण्णयरगंसि अहालघुसयंसि अवराधंसि सयमेव गरुयं दंडं वत्तेति तं जहा इमं दंडेह इमं मुंडेह इमं तालेह इमं इंडुवंधणं करेह इमं नियलबंधणं करेह इमं चारगबंधणं करेह इमं हत्थच्छिण्णं करेह इमं पायच्छिण्णं करेह इमं कण्णच्छिण्णं करेह इमं नक्क० इमं उट्ट० इमं सीसच्छिण्णं करेह इमं मुख० इमं वेच्छे उ इमं हिययउप्पाडियं करेह । एवं नयणदसणवयणजिब्भुप्पाडिनं करेह । इमं उलविचं करेह । इमं घंसियतयं इमं घोलितयं इमं सूलाकायतयं इमं सूलाभिण्णं इमं खारवत्तियं करेह । इमं दब्भवत्तियं० इमं सीहपुच्छितयं० इमं वसभपुच्छितयं० इमं कडग्गिदड्ढयं करेह । इमं काकिणिमंसखवित (खावि) तं करेह । इमं भत्तपाणनिरुद्धयं० इमं जावज्जीवबंधणं करेह । इमं अन्नतरेण असुभेण मारेह जा वि य से अब्भितरिया परिसा भवंति तं जहा मायाति वा भगिणीति वा भज्जाति वा धूयाति वा सुण्हाति वा तेसिं पि य णं अण्णयरंसि अहालहुगंसि अवराहंसि सयमेव गरुयं दंडं वत्तेत्ति सीतोदगवियडंसि कायंतो बोलित्ता भवति उसिणोदगवियडेण कायं उसिंचित्ता भवति अगणिकाएणं कायं उड्डहित्ता भवति । जोत्तेण वा वेत्तेण वा नेत्तेण वा कसेण वा छिवाडीए वा पासाइ उद्दालित्ता भवति । दंडेण वा अट्ठीए वा मुट्ठीए वा लेलूण वा कवालेण वा कायं आउडेत्ता भवति तहप्पगारे पुरिसज्जाते संवसमाणे दुम्मणा भवंति तहप्पगारे पुरिसज्जाते दंडमासी दंडगुरुए दंडपुरक्खडे अहिते अस्सिं लोयंसि अहिए परलोयंसि ते दुक्खे ति सोयंति एवं झूरेति तिप्पंति पिट्टंति परितप्पंति ते दुक्खणसोयणझूरणतिप्पणपिट्टणपरितप्पणवधबंधपरिकिलेसातो य अपडिविरता भवति । एतामेव ते इत्थिकामभोगेहिं मुच्छिता गिद्धा गढिता अज्झोववन्ना जाव वासाइं चउपंचमाइं छद्दसमाणि वा अप्पतरो वा भुज्जतरो वा कालं भुंजित्ता भोगभोगाइं पसवित्ता वेरायतणाइं संचिणित्ता बहूइं पावाइं कम्माइं उसण्णं संभारकडेण कम्मुणा से जधा नाम ते अयगोलेत्ति वा सेलगोलेत्ति वा उदयंसि पक्खित्ते समाणे उदगतलमतिवतित्ता अहे धरणितलपतिट्ठाणे भवति । एवामेव तहप्पगारे पुरिसज्जाते वहुले धुणवहुले पंकवहुले वेरवहुले दंभनियडिसातियबहुले अयसबहुले अप्पत्तियबहुले उसन्नतसपाणघाती कालमासे कालं किच्चा धरणितलमतिवतित्ता अहे नरगतलपतिट्ठाणे भवति तेणं णरगा अंतोवट्टा वाहिं चउरंसा अहे खुरप्पसंठाणसंठिता निच्चंधकारतमसा ववगयगहचंदसूरनक्खत्तजोतिसपहा मेयवसामंसरुहिरपूयपडलचिक्खल्ललित्ताणुलेवणतला असुई वीसा परमदुब्भिगंधा काऊअगणिवण्णाभा कक्खडफासा दुरहियासा असुभा नरगा असुभा नरयस्स वेदणातो नो चेव णं नरएसु नेरइया निदायंति वा सत्ति वा रतिं वा धितिं वा इमं वा उवलभंति तेणं तत्थ उज्जलं विउलं पगाढं कक्कसं कडुयं चंडं रुक्खं दुग्गं तिव्वं दुरहियासं नरए नेरइया नरयवेयणं पच्चणुभ-

वमाणा विहरंति से जधा रुक्खेसिया पव्वतायगजाते मूलच्छिन्ने अगे गरुए जातो निच्चं जतो दुग्गं जतो विसमं जतो पवडति एवामेव तहप्पगारे पुरिसज्जाते गब्भातो गब्भं जम्मातो जम्मं मारातो मारं दुक्खातो दुक्खं दाहिणगामिए नेरइए कण्हपक्खिते आगमे साणदुल्लभबोधिते यावि भवति से तं अकिरियावादी यावि भवति तं जहा आहियवादी आहियपण्णे आहियदिट्ठी सम्मावादी निइवादी संति परलोगवादी अत्थि इह लोगे अत्थि परलोगे अत्थि माता अत्थि पिया अत्थि अरहंता अत्थि चक्कवट्टी अत्थि बलदेवा अत्थि वासुदेवा अत्थि सुकडदुक्कडाणं फलवित्तिविसेसे सुचिण्णा कम्मा सुचिण्णफला भवति दुचिण्णा कम्मा दुचिण्णफला भवंति । सफले कल्लाणे पावए पच्चायंति जीवा अत्थि नेरइया देवा सिद्धी से एवं वादी एवं पन्ने एवं दिट्ठीच्छंदरागमति निविट्ठे आवि भवति से भवति महेच्छे जाव उत्तरगामिए नेरइएसु पक्खिववत्त आगमेसाणं सुलभबोधिया वि भवति से तं किरियावादसव्वधम्मरुची यावि भवति । तस्स बहूइं सीलव्वयगुणवेरमणपच्चक्खाणपोसहोववासाइं सम्मं पट्ठवितपुव्वाइं भवति पढमा उपासगपडिमा ।

(अकिरियवाइत्ति) ननु प्रतिमाधिकारे तु पूर्वं दर्शनप्रतिमास्ति दर्शनं च सम्यक्त्वं तदेव पूर्वं वक्तुमुचितं किमर्थं तर्हि पूर्वं मिथ्यात्वप्ररूपणमनुपयोगित्वात् । उच्यते मिथ्यादर्शनं खलु सम्यग्दर्शनप्रतिपक्षभूतं तदपि ज्ञातुमुचितं जावन्न तद्विपक्षतया ज्ञातं तावत्सम्यक्त्वे दार्ढ्यं भवति पूर्वं सर्वजीवानां मिथ्यात्वमेव पश्चात्केषांचिन्सम्यक्त्वमत पूर्वं मिथ्यादर्शनमेवोचितं वक्तुमिति । तद् द्विविधं तद्यथा आभिग्राहिकमनाभिग्राहिकं साभिग्राहिको नाम कुदर्शनग्रहो यथा नास्ति जीवोऽनित्यो वा जीव नास्ति वा परलोकस्त्यादिरूप अनाभिग्राहिकमसंज्ञिनामपि केषांचित् तथाविधज्ञानविकलाना यतो भव्या अपि केचनाक्रियावादिनोऽभव्याश्चापि भव्योऽक्रियावादी नियमात् कृष्णपाक्षिक एतल्लक्षणमेवमाहु 'जेसिमवड्ढो पुग्गलपरियट्टो चेव होइ संसारो । ते सुक्कपक्खिया खलु अवरे पुण कण्हपक्खिया ॥१॥' इति । क्रियावादी च नियमाद्भव्य एव शुक्लपाक्षिकश्च । यत "अंतो पुग्गलपरियट्टस्स नियमा सिज्झिहित्ति सम्यग्दृष्टिर्मिथ्यादृष्टिर्वा भवेत् अतो युक्तमादौनदुद्देशकरणमिति । तत्र क्रिया अस्तीत्येवरूपा सा वक्तुं शीलमस्येति क्रियावादी तद्विपरीतस्त्वक्रियावादी यत ये त्वक्रियावादिनस्ते अस्तीति क्रियाविशिष्टमात्मानं नेच्छन्त्येव एवंविधो भवति नास्तिकवादमनुपदर्शनग्राहकं । इत्यर्थः । स पुन कथंभूतो भवतीति दर्शयति ( णाहियावाइत्ति ) नास्तिकवादादयो नास्त्यात्मा एव वदनशीलो नास्तिकवादी एव ( णाहियपण्णेत्ति ) नास्तिकप्रज्ञ प्रज्ञा हेयोपादेयरूपा नो नास्तीत्येव वदनशीलो नास्तिकप्रज्ञ । प्रतिज्ञा वा निश्चयरूपोऽभ्युपगम एवं ( णाहियदिट्ठित्ति ) दृष्टिर्दर्शन स्वमतमिति नाव ( नो सम्मावाइत्ति ) न सम्यग्वादी मिथ्यावादीत्यर्थः ये यथावस्थितं भणन्ति ते सम्यग्वादिन तद्विपरीतास्तु मिथ्यावादिन ( णो णितित्ति याव-दि ) नित्यो मोक्षो यत्र गताना पुनरागमनादि नास्ति नियतयावस्थितिर्यत्रास्ति तन्निषेधवादी । अथवा नियतमनुष्ठानं ( णसत्ति ) परलोका स्वर्गनरकादय तद्वादी स पुनरित्थं नास्ति वदति यथा नास्तीह लोकः इहेति अयं प्रत्यक्ष सोऽपि नास्ति यद् दृश्यते तत् भ्रान्तमन्यथा प्रतिभासते तथाभूतसमुदायेन जीवादिकमस्ति तच्च वस्तुतया प्रतिभास इति भ्रान्ति । नास्ति परलोक कोऽर्थ परो नाम सुखदु:खोत्कृष्टभावसयुक्त सोऽपि नास्ति ( णत्थि माता णत्थि पिता ) इति कण्ठ्यं तन्निषेधमेवं ते कुर्वन्ति योऽयं मातृपितृव्यपदेशः स जनकत्वे कृतो जनकत्वाच्च यूकाकृमिगण्डोलकास्तथाश्रित्य स स्यान्न चैवं तस्माच्च वास्तवो मातृपितृव्यवहार इति ( णत्थि अरहंतत्ति )अर्हन्तस्तीर्थकरा शेषपदत्रय व्यक्तं ( नरयत्ति ) नरान् उपलक्षणत्वात्तिरश्चोऽपि तथाविधपापकारिण कायन्ति आह्वयन्तीति नरका सीमन्तकादयः ( णेरयियत्ति ) निर्गत अयमिष्टफलं कर्म येभ्यस्तेषु भवा नैरयिका "णत्थि सुकडेत्यादि" नास्ति सुकृतदुष्कृतयो फलवृत्तिविशेषः सुकृतं तप प्रभृति दुष्कृत जीवहिंसादि "नो सुचिण्णेत्यादि" न सुचीर्णानि सुष्ठ्वाचरितानि कर्माणि सुचीर्णफलानि इष्टफलसाधकानि भवन्ति एवमितरदपि नवरं व्यत्यय अफले इत्यादि अयमात्मा अफल फलवर्जितं केत्याह कल्याणपापकवस्तुनि ( णो पच्चायंतित्ति ) न प्रत्यायान्ति जीवा गत्यन्तरसंभारेणेत्यर्थ (णत्थि णिरयादि) अत्रादिशब्दोपादानात् नारकास्तैरश्चा नरा देवाश्चत्वारो ग्राह्या ( णत्थि सिद्धित्ति ) नास्ति न विद्यते सिद्धिर्नाम ईषत्प्राग्भारा मुक्तिक्षेति यावत् सेति स एववादी अनन्तरोक्तप्रकारवादी कथक 'पन्ने दिट्ठीति' पूर्ववत् एवं (छदरागेत्ति) छन्द स्वाभिप्राय रागो नाम स्नेहरागादिकसूत्राभिनिविष्टप्रत्यर्पितदृष्टिर्भवति (सेयत्ति)सो भवति अनन्तरवक्ष्यमाणस्वरूपो यथा " महिच्छे " इत्यादि महती राज्यविभवपरिवारादिसर्वातिशायिनीच्छान्त करणप्रवृत्तिर्यस्य स महेच्छ ।तथा महानारम्भो वहनोष्ट्रमण्डलिकानां गर्त्ताप्रवाहकृषिपण्यपोषणादिको यस्य स महारम्भ यश्चैवंभूत स महापरिग्रहः धनधान्यद्विपदचतुष्पदवास्तुक्षेत्रादिपरिग्रहवान् क्वचिदप्यनिवृत्त अत एव धर्म्मेण चरतीति धार्मिक न धार्मिकोऽधार्मिक । तत्र सामान्यतोऽप्यधार्मिक स्यादत आह ( धम्माणुएत्ति ) धर्म्मं श्रुतचारित्ररूपमनुगच्छतीति धर्मानुग । यद्वा धर्मे चक्षुबद्धणेऽनुमोदनं यस्य सो धर्मानुगस्तद्विपरीतस्तु अधर्मानुग । तथा ( अधम्मसेवीत्ति ) अधर्ममेव सेवितु शीलमस्येत्यधर्मसेवी । तथा ( अहम्मिट्ठेत्ति ) धर्म्म श्रुतरूप एवेष्टो वल्लभः पूजितो यस्य स धर्मिष्ठ । अथवा धर्मिणि मिष्टः । अथवा धर्म्मिष्ठ अतिशयेन धर्म्मी धर्मिष्ठ तन्निषेधादधर्म्मिष्ठ अधर्म्मिष्ठो वा यद्वा अधर्म्मिष्ठो निस्त्रिंशकर्मकारित्वादधर्मबहुलः अत एव ( अहम्मक्खाईति ) न धर्ममाख्यातीत्येव शीलोऽधर्म्माख्यायी । अथवा न धर्माख्यायी अथवा अधर्मात् आख्यातिर्यस्य स अधर्म्माख्यातिः । तथा अधर्म्मरागी अधर्म्मे एव रागो यस्य सोऽधर्म्मरागी । तथा ( अहम्मपलोइत्ति ) न धर्ममुपादेयतया प्रलोकयति य सोऽधर्मप्रलोकी ( अहम्मजीवित्ति ) अधर्म्मेण जीवति प्राणान् धारयतीति अधर्म्मजीवी । तथा ( अहम्मपलज्जणेत्ति ) न धर्मे प्ररज्यति आसजति य सोऽधर्मप्ररञ्जन । यद्वा अधर्म्मप्रापणीयेषु धर्म्मसु प्रकर्षेण रज्यत इत्यधर्मरञ्ज रलयोरैक्यमिति रस्य स्थाने लकारोऽत्र इत इति । "क्वचिदधम्मपज्जणे ' इति पाठ तत्राधर्मं प्रकर्षेण जनयति उत्पादयति लोकानुपयातीति अधर्मप्रजन । तथा अधर्म्मशीलेति अधर्म्मशीलो ऽधर्मस्वभाव । तथाऽधर्मात्मक समु-

दाचारो यत्किञ्चनानुष्ठानं यस्य भवति स अधर्मशीलसमुदाचारो न धर्मात्किमपि भवति तस्यैवाजावादित्येवम् । तथा ( अधम्मेण चेवत्ति ) अधर्म्मेण चारित्रश्रुतविरुद्धरूपेण वृत्तिं जीविकां कल्पयन् कुर्वाणो विहरत्यास्ते । यद्वा अधर्म्मेण सावद्यानुष्ठानेन दहनाङ्कननिर्लाञ्छनादिकेन कर्मणा वृत्तिर्वर्त्तनं कल्पयन् कुर्वाणो विहरतीति कालमतिवाहयति । यद्वा अधर्मेणैव वृत्तिं सर्वजन्तूनां यापनां कल्पयन् इति । पापानुष्ठानमेव लेशतो दर्शयितुमाह " हणेत्यादि " स्वत एव हननादिकाः क्रियाः कुर्वाणोऽपरेषामप्येवमात्मकमुपदेशं ददाति । तत्र हननं दण्डादिभिस्तत्कारयति तथा छिन्धिकर्णादिकं भिन्धि शूलादिना विकर्त्तकः प्राणिनामाजिनाय नेता अत एव लोहितपाणिर्मारयित्वा हस्तयोरप्यप्रक्षालनात् अत एव पापः पापकर्मकारित्वात् । चण्डस्तीव्रकोपावेशात् । रौद्रो निस्त्रिंशकर्मकारित्वात् । क्षुद्रः क्षुद्रकर्मकारित्वात् । साहसिकः सहसा अविमृश्यैव पापकर्मणि प्रवृत्तत्वात् । स्वत एव परलोकभयाभावात् असमीक्षितकारी अनालोचितपापकारीति भावः । तथा उक्तं च वञ्चनं प्रतारणं तद्यथा अभयकुमारः प्रद्योतगणिकाभिर्धार्मिकवञ्चनया वञ्चितः मायावञ्चनबुद्धिः प्रायो वणिजामिव । निकृतिस्तु बकवृत्त्या कुक्कुटादिकरणेन दम्भप्रधानवणिकाश्रोत्रियसाध्वाकारेण परवञ्चनार्थं मङ्गलकर्तकानामिवावस्थानं देशभाषानेपथ्यादिविपर्ययकरणम् । कूटमनेकेषां मृगादीनां ग्रहणाय नानाविधयोगकरणम् । अथवा कूटं कार्षापण तुलाप्रस्थादेः परवञ्चनार्थं न्यूनाधिककरणं कपटं यथाऽऽषाढभूतिना नटेन वा परवेषपरावृत्त्याचार्योपाध्यायसङ्घाटकार्थं चत्वारो मोदका अवाप्ताः । एतैरुत्कुञ्चनादिभिः सहातिशयेन सम्प्रयोगो योगः तेन बहुलः यदि वा सातिशयेन द्रव्येण कस्तूरिकादीनामपरस्य द्रव्यस्य सम्प्रयोगः सातिसम्प्रयोगः तेन बहुलोऽतिप्रभूतः । उक्तं च सूत्रकृताङ्गचूर्णिकृता " सो होइ साइजोगो, दव्वं जत्थादि अणदव्वेसु । दोसगुणवयणेसु य, अत्थविसंवायणं कुणइ ॥१॥ इति सम्प्रयोगबहुलः । अपरे तु व्याख्यानयन्ति उक्तं च न नाम उक्तो वा निकृतिर्वचनप्रच्छादनकर्मसानिरविजृम्भ एतत्सम्प्रयोगबहुलः शेषं तथैव । एते चोत्कुञ्चनादयो मायापर्याया यथेन्द्रशब्दस्य शक्रपुरन्दरादयः । पुनः किंभूताः ( दुस्सीलेत्ति ) दुष्टं शीलं स्वभावो यस्य स दुःशीलः दुष्परिचयश्चिरमुपचरितोऽपि क्षिप्रं विसंवदति । दुःखानुनेयो दारुणस्वभाव इत्यर्थः । तथा ( दुव्वए ) दुष्टानि वृत्तानि यस्य स तथा यथा मांसभक्षणव्रतकालसमाप्तौ प्रभूततरसत्वोपघातेन मांसप्रधानमन्यदपि नक्तभोजनादिकं तस्य दुष्टव्रतमिति । तथाऽन्यस्मिन् जन्मान्तरेऽहं मधुमद्यमांसादिकमभ्यवहरिष्यामीत्येवमज्ञानान्धो जन्मान्तरविधिद्वारेण स निदानमेव च तं गृह्णाति । तथा दुःखेन प्रत्यानन्द्यते इति दुष्प्रत्यानन्द्य इदमुक्तं भवति तैरानन्दितेनापरेण केनचित् प्रत्युपकारहेतुना गर्वाध्मातो दुःखेन प्रत्यानन्द्यते । यदि वा सत्युपकारे प्रत्युपकारजीर्णे वानन्दति प्रत्युत शठतया उपकारे दोषमेवोत्पादयति । तथा चोक्तं "प्रतिकर्त्तुमशक्तिष्ठा नराः पूर्वोपकारिणाम् । दोषमुत्पाद्य गच्छन्ति मद्गूनामिव वायसा इति" । तथा निश्शीलो ब्रह्मचर्यपरिणामाभावात् । निर्व्रतो हिंसादिविरत्यभावात् । निर्गुणो हितकारित्वादिगुणाभावात् । निर्मर्यादः परस्त्रीपरदारादिमर्यादाविलोपित्वात् । तथा अविद्यमानपौरुष्यादिप्रत्याख्यानमत्पर्वदिनोपवासश्चेत्यर्थः । यतः परमतः साधुपापकर्मकारित्वात् । तथा यावत्प्राणव्यापारेण सर्वस्मात्प्राणातिपातादप्रतिविरतो लोकनिन्दनीयादपि ब्राह्मणघातादेरविरत इति सर्वग्रहणम् । एवं पूर्वोक्तप्रकारेण यावत् करणात् " सव्वातो मुसावायातो अपडिविरया इत्यादि " पञ्चकदम्बकपरिग्रहः । तत्र सर्वस्मादपि कूटसाक्ष्यादेरप्रतिविरत इति । तथा सर्वस्मात् स्त्रीवालादेः परद्रव्यादपहरणादविरतः । तथा सर्वस्मात्परस्त्रीगमनादेर्मैथुनादविरतः एवं सर्वस्मात्परिग्रहाद्योनिपोषकादप्यविरतः । एवं सर्वेभ्यः क्रोधमानमायालोभेभ्योऽप्यविरतस्तथा प्रेमद्वेषकलहाभ्याख्यानपैशून्यपरपरिवादारतिरतिमायामृषामिथ्यादर्शनशल्यादिभ्योऽसदनुष्ठानेभ्यो यावज्जीवं प्रतिविरतो भवतीति तत्र प्रेमानभिव्यक्तमायालोभस्वभावमभिष्वङ्गमात्रं प्रेम । द्वेषोऽनभिव्यक्तक्रोधमानस्वरूपाप्रीतिमात्रं द्वेषः, । कलहो राटिः अभ्याख्यानमसद्दोषारोपणम्, । पैशून्यं प्रच्छन्नमसद्दोषाविष्करणम्, । परपरिवादो विप्रकीर्णं परेषां गुणदोषवचनम् । अरतिरती अरतिर्मोहनीयोदयाच्चित्तोद्वेगः तत्पुना रतिर्विषयेषु मोहनीयोदयाच्चित्ताभिरतिः अरतिरती माया तृतीयकषायद्वितीयाश्रवयोः संयोगः अनेन च सर्वसंयोगा उपलक्षिता । अथवा वेषान्तरकरणेन वा यत्परवञ्चनं तन्माया । मृषेति मिथ्यादर्शनं शल्यमिव विविधव्यथानिबन्धनत्वान्मिथ्यादर्शनशल्यमिति । तथा सर्वस्मात् स्नानोद्वर्त्तनाभ्यञ्जनवर्णककषायद्रव्यसंयुक्ततया विलेपनशब्दस्पर्शरसरूपगन्धमाल्यालङ्कारात् कामाङ्गात् मोहजनितादप्रतिविरतो यावज्जीवमिति । अत्र स्नानादयः शब्दाः प्रसिद्धाः नवरं वर्णकग्रहणेन वर्णविशेषापादकलोध्रादिकं परिगृह्यते । ननु पूर्वं तावत् अभ्यङ्गः पश्चात् उन्मर्द्दनं युज्यते पश्चाच्च स्नानं ततः कथमादौ स्नानोपन्यासः उच्यते यद्यपि अनुक्रमः एवमेव परः कोऽपि कदाचिदभ्यङ्गमन्तराऽपि स्नानं कुर्वन् पृष्ठिमवाहनादि कारयति तेन न व्यत्ययो दोषावह इति । गन्धाः कोष्ठपुटादयः माल्यानि ग्रथितदामानि अलङ्काराः केयूरादयः तथा सर्वतः शकटरथादेर्यानविशेषादिप्रविस्तरविधिपरिकररूपात् परिग्रहादप्रतिविरत इति । इह च शकटरथादिकमेव यानं शकटरथयानं युग्यपुरुषोत्क्षिप्तमाकाशयानं ( गिल्लित्ति ) पुरुषद्वयोत्क्षिप्ता गिल्लिका ( थिल्लित्ति ) वेगसरादिद्वयविनिर्मितो यानविशेषस्तथा ( सीयत्ति ) शिविका विज्ञाटानां यत् अड्डपल्लाणं रूढं तदन्यविषयेषु पिल्लिरित्युच्यते यद्वा तथा शिविका नाम कूटाकाराच्छादितो जम्पानविशेषः । तथा ( सदमाणियत्ति ) शिविका विशेष एव पुरुषायामप्रमाणो जम्पानानि पर्यङ्कादीनि आसनानि गल्लिकादीनि यानानि वाहनानि च पूर्वोक्तान्त पातान्येव वेदितव्यानि । अथवा यानानि नौकादीनि वाहनानि वेसरादीनि भोजनमोहनादिरूपः प्रविस्तरो नाम गृहोपस्कार इति तथा अश्वहस्त्यादिपदानि व्यक्तानि नवरं दासः आमरणं क्रयक्रीतः । कर्मकरो लोकहितादिकर्मकरः । पौरुषं पदातिसमूहः । तेभ्योऽप्यप्रतिविरतो यावज्जीवायेति । एतदेवमन्यस्मादपि वस्त्रादेः परिग्रहादुपकरणभूतादविरतस्तथा सर्वतः क्रयविक्रयाभ्यां करणभूताभ्यां यो मासकार्धमासकरूपकार्षापणादिभिः पण्यविनिमयात्मकः सद्व्यवहारस्तस्मादप्यविरतो यावज्जीवायेति । तथा सर्वस्मात्सर्वतः हिरण्यसुवर्णधनधान्यमणिमौक्तिकशङ्खशिलाप्रवालेभ्योऽप्यप्रतिविरतो यावज्जीवायेति । तत्र हिरण्यं रूप्यमघटितस्वर्णमित्येके सुवर्णं घटितं धनं गणिमादि चतुर्धा तद्यथा " गणिमं जाईफलपुगफलाइ धरिमं तु कुङ्कुमगुडाई । मेज्जं चोप्पडलोणाइ रयणवत्थाइ परिच्छेज्जं ॥ १ ॥ धान्यं चतुर्विंशतिधा यवशाल्यादि मणयो वैडूर्येन्द्रनीलादिप्रमुखाः

यो, मौक्तिकानि, प्रतीतानि, शङ्खा दक्षिणावर्त्तादय , शिलाप्रवालानि विद्रुमाणि, । अन्ये त्वाहु. । शिला राजपट्टादिरूपा प्रवालं विद्रुममेतेभ्योऽप्यप्रतिविरतो जावज्जीवायेति । तथा कूटमानाद- विरतस्तथा सर्व्वतः सर्वस्मात् आरम्भसमारम्भात् तत्रेमौ द्वावपि त्रिप्रकारौ तद्यथा मानसिकवाचिककायिकभेदात् तत्र मानसिको मन्त्रादिध्यान परमारणे हेतो. प्रथम' तथा समारम्भ. परपीडाकरोच्चाटनादिनिवन्धनध्यान वाचिको यथा आरम्भ' परव्यापादनक्षमक्षुद्रविद्यादिपरावर्त्तनासंकल्पसूचको ध्वनिरेव । समारम्भ परपरितापकरमन्त्रादिपरावर्त्तनम् । कायिको यथा आरम्भोऽभिघाताय यष्टिमुष्ट्यादिकरण समारम्भ' परितापकरो मुष्ट्या अभिघात' । तथा सर्वतः कृषिपाशुपाल्यादेर्यत्स्वतः करणं अन्येन च यत्किंचित् कारयति तस्मादविरत. उपलक्षणमनुमतेरप्येतत् तथा पचनपाचनतोऽप्यप्रतिविरत. । तथा सर्वतस्सर्वस्मात् कुट्टनपिट्टनतर्जनताडनया यः परिक्लेश प्राणिनां तस्मादप्यप्रतिविरत । सांप्रतमुपसंहरति ये चान्ये तथा प्रकारा परपीडाकारिण सावद्या. कर्मसमारम्भा अबोधिका बोध्यभावकारिणस्तथा परप्राणपरितापनकरा गोग्रहवन्दीग्रहग्रामघातात्मका येऽनार्यै क्रूरकर्मभि क्रियन्ते ततोऽप्रतिविरता यावज्जीवमिति। पुनरन्यथा बहुप्रकारमाधाकर्मिकपदप्रतिपिपादयिषुराह "सेजहाणामए इत्यादि " तद्यथेत्युपदर्शनार्थम् । नामशब्द. सम्भावनायां सम्भाव्यतेऽस्मिन्विचित्रे संसारे केचनैवंभूता पुरुषा. ये कलमसूरतिलमुद्गमाषनिष्पावकुलत्थाऽऽलिसिन्दकसन्तानानुपरिमन्थकादिषु पचनपाचनादिक्रियया स्वपरार्थमयतः अयन्न वचननिक्षेप.। तत्र कला वृत्तचनका मसूराश्चनका' । तिलमुद्गमाषा' प्रतीता । निष्पावा वल्लाः कुलत्था चपलकसदृशाश्चिप्पिटका भवन्ति। आलिसिन्दका सन्तानानुपरिमन्थका. क्रूरो मिथ्यादण्डस्तं प्रयुञ्जति मिथ्यैवानपराधिष्वेव दोषमारोप्य दण्डो मिथ्यादण्डस्तं विदधाति । तथा एवमेव प्रयोजनं विनैव तथा प्रकार. पुरुषो निष्करुणो जीवोपघातनिरत. तित्तिरवर्तकलावककपोतककपिञ्जलमृगमहिषवराहगोगोणकूर्मसरीसृपेषु जीवनप्रियेषु प्राणिष्वयत' क्रूरकर्मा मिथ्यादण्ड प्रयुञ्जति तस्य च क्रूरबुद्धेर्यथा राजा तथा प्रजा इति प्रवादात् परिवारोऽपि तथाभूत एव तेषु प्राणिष्वयत. क्रूरकर्मा मिथ्यामतिरिति । तथा दर्शयितुमाह । (जा विया से इत्यादि) पापिनी च तस्य बाह्या पर्षद्भवति । तद्यथा दास. स्वदासीसुत प्रेष्यो हि प्रेषणयोग्यो भृत्यादिर्भृयो भृतको वेतनेनोदकाद्यानयनविधायी। तथा भागिको य षष्ठांशादिलाभेन कृष्यादौ व्याप्रियते । कर्मकर' प्रतीत । तथा नायकश्चित कश्चिद्भोगपरस्तद्येयं त दासादयोऽन्यस्य लघावप्यपराधे गुरुतरं दण्डं प्रयुञ्जन्ति प्रयोजयन्ति च । स च नायकस्तेषां दासादीनां बाह्यपर्षद्भूतानाम् यस्मिन् यथा लघावप्यपराधे शब्दाश्रवणादिके गुरुतरं दण्डं वक्ष्यमाण प्रयुङ्क्ते तद्यथा इमं दासं प्रेष्यादिकं सर्वस्वापहारेण दण्डयत नमित्यादिपाठसिद्धं नवरम्। ( अपुव्वादुयंधणंति ) अपुण्य बाहुय धन निगडानि प्रतीतानि हडिरिति काष्टघोटक. चारको बन्दीप्रभृतीनामवस्थानार्थं गृहविशेष इमं निगडयुगलेन संकोचित संकोचकरणेन ह्रस्वीकुरुत मोटितमङ्गभङ्गेन कुरुते मत्प्रयेच्छ शरीरस्यासिप्रभृतिकेन ( विच्छेदत्ति ) अवसृजागपारेण छेदनं जीवन एव हृदयोत्पाटन हृदयमध्यमांसफलेनम । (ओलंबितति ) अवलम्बितं कूपपर्यन्तनदीप्रभृतिषु उल्लम्बित वृक्षादिषु घर्षित कर्णपादिना घोषितं रसनिष्कामनार्थमामूलत् शूलाग्रोतं शूलिकारोपितं गुदे प्रोता सती शूली वदने निर्गच्छति शूलाभिन्न मध्ये विध्यते क्षारान्तिकं नाम शस्त्रेण छित्वा लवणक्षारादिभिः सिच्यते दर्भवर्तितं दर्भेण शरीरविकर्त्तमं सिंहपुच्छे वन्धनं कटाग्निदग्ध कटान्तर्वेष्टयित्वाऽग्निना दह्यते काकनिमांसानि कर्त्तयित्वा खाद्यते अभ्यन्तरेण भक्तपानविधं भिममन्यतरेणाशुभेन कुत्सितमारेण व्यापादयत यूयम् । याऽपि च क्रूरकर्मवतोऽभ्यन्तरा पर्षद् भवति तद्यथा नाम कश्चित्पुरुषः प्रभुकल्पो मातापितृसुहृत्स्वजनादिभिः सार्द्धं परिवसंस्तेषां च मातापित्रादीनामन्यतमेनानाभोगतया यथाकथञ्चिल्लघुतमेऽप्यपराधे वाचिके दुर्वचनादिके तथा कायिके हस्तपादादिसंघट्टनरूपे कृते सति स्वयमेवात्मना क्रोधाध्मातो गुरुतर दण्डं दुःखोत्पादकं वर्त्तयति करोति। तद्यथा शीतोदकविकटे प्रभूते शीते वा शिशिरादौ तस्यापराधकर्तुं कायमधो बोलयिता भवति । तथोष्णोदकविकटेन कायं शरीरमपसिञ्चयिता भवति । तत्र विकटग्रहणादुष्णतैलेन काञ्जिकादिना वा कायमुपतापयिता भवति । तथाऽग्निकायोल्मुकेन तप्तायसा वा कायमुपदाहयिता भवति । तथा योत्रेण वा वेत्रेण वा खड्गेन वा नेत्रोवृक्षविशेषस्तेन त्वचा वस्कस तया वाऽन्यतमेन वा दवरकेण ताडनतस्तस्याल्पापराधकर्तुः शरीरपार्श्वाणि उद्दालयितुं भवति चर्माणि लुम्पयितुं भवति । तथा दण्डनयष्ट्यादिना वा अस्थ्ना वा लेलुना वा लोष्ठेन वा मुष्ट्या वा कपालेन वा अपरेण वा कायं शरीरमाकुट्टयिता उपताडयिता भवति अत्यर्थं कुट्टयिता वा तदेवमल्पापराधिन्यपि महाक्रोधदण्डं वर्त्तयति तथाप्रकारे पुरुषजाते एकत्र वसति तत्सहवासिनो मातापित्रादयो दुर्मनसस्तदनिष्टशङ्कया भवन्ति मार्जारदर्शने मूषकावत् तस्मिंश्च प्रवासिते देशान्तरं गच्छति गते वा तत्सहवासिनो हि सुमनसो भवन्ति त एवं यथा मार्जारे प्रवासिते मूषका विश्वस्ता. सुखेन विचरन्ति एवं तस्मिन् प्रवासिते पौरा प्रातिवेश्मिका स्वजनादिका. सर्वे वाऽन्यो लोको विश्वस्त स्वकर्मानुष्ठायी भवति। तथा प्रकारश्च पुरुषजातोऽल्पेऽप्यपराधे महान्तं दण्ड कल्पयतीति । एतदेव दर्शयितुमाह। तथा प्रकार सदण्डो मृषादण्डेनामर्षी लोकोऽपि भणति तथा अमुको वराको राज्ञा कारागारे क्षिप्तो दण्डित इत्यर्थ दण्डपासीति वा पाठस्तत्र दण्डस्य पार्श्वे दण्डपार्श्वं तद्विद्यते यस्यासौ दण्डपार्श्व' स्वल्पतया स्तोकापराधेऽपि कुप्यति दण्डं च पातयति तमप्यतिगुरुकमिति दर्शयितुमाह । दण्डगुरुको यस्य च दण्डो महान् भवत्यसौ दण्डेन गुरुर्भवति। तथा दण्डपुरस्कृत. सदा पुरस्कृतदण्ड इत्यर्थ. स चैवंभूत स्वस्य परस्याप्यस्मिल्लोकेऽस्मिन्नेव जन्मन्यहितः प्राणिनामहितदण्डोपादानात्। तथा परस्मिन्नपि जन्मन्यसावहितस्तच्छीलतया चासौ येषाञ्चिदेव येन केनचिन्निमित्ते मनसाऽन्येषां दुःखमुत्पादयति तथा नानाविधैरुपायैस्तेषां शोकमुत्पादयति शोकयतीत्येवं जूरयति गर्हति तृप्यति सुखाच्च्यावयत्यात्मानं परांश्च। तथा स वराकोऽपुष्टधर्म्मा सदानुष्ठानैः स्वत. पीड्यते परांश्च पीडयति । तथा स पापेन कर्मणा परितप्यते दह्यते परांश्च स तापयति । तदेवमसावसद्दण्डी सन् दुःखेन शोकेन जूरणतर्पणपीडनो हि प्राणिनां बहुप्रकारपीडोत्पादकतया वधबन्धपरिक्लेशादप्रतिविरतो भवति स च विषयासक्ततयैतत्करोति तद्दर्शयितुमाह "एवमेवेत्यादि" एवमेव पूर्वोक्तस्वभाव एव स निष्कृपो निरनुक्रोशो बाह्याभ्यन्तरपर्षदोरपि कर्णनासावकर्तनदण्डपातनस्वभाव । स्त्रीप्रधाना कामा स्त्रीकामा यदि वा स्त्रीषु मदनकामाविषयभूतासु कामेषु इच्छाकामेषु

मूर्च्छित गृद्धो ग्रथित अध्युपपन्न एते च शक्रपुरंदरादिवत्पर्याया कथञ्चिद्भेदं वाऽऽश्रित्य व्याख्येया । एतच्च स्त्रीपुंशब्दादिषु च प्रवर्त्तनं प्रायः प्राणिविरूपपृथक्प्रकारादिभिर्विरूपपृथग्निवर्त्तनिका-चनावस्थानि विधाय तेन च संभारकृतेन कर्मणा प्रेर्यमाणस्तत्र कर्मगुरुर्नरकतलप्रविष्टानो भवतीति। अस्मिन्नेवार्थे सर्व्वलोकप्रतीतं दृष्टान्तमाह ( से जहा णामए इत्यादि ) तद्यथा नामायोगोलको-ऽय'पिण्डः शिलागोलको वृत्ताश्मशकल वोदके प्रक्षिप्त स-मानसलिलतलमतिवर्त्यातिलङ्घ्याधोधरणितलप्रतिष्ठानो भ-वति । अधुना दार्ष्टान्तिकमाह । " एवमेवेत्यादि " यथाऽसाव-योगोलको वृत्तत्वात् शीघ्रमेवाधो यात्येवमेव तथा प्रकार पुरुजातस्तमेव लेशतो दर्शयति वज्रवद् वज्रं गुरुत्वात् कर्म तद्बहुलस्तत्प्रचुरो वध्यमानकर्मगुरुरित्यर्थः । तथा धूयत इति धून प्राग्बद्धं कर्म तत्प्रचुरः पुन सामान्येनाह ( पङ्कय-तीत्ति ) पङ्कं पापं तद्बहुलस्तथा तदेव कारणतो दर्शयितुमाह। वैरबहुलो वैरानुबन्धप्रचुरस्तथाऽप्यतियन्ति मनसा दुष्प्रणि-धान तत्प्रधानस्तथा दम्भो मायया परवञ्चनं तदुत्कट । तथा निकृतिर्मायावेषभापापरावृत्तिच्छद्मना परद्रोहबुद्धिस्तन्मय । तथा ( सातिबहुल इति ) सातिशयेन द्रव्येण परस्य हीन-गुणस्य द्रव्यस्य संयोगः सातिस्तद्बहुलस्तत्करणप्रचुरस्तथा क्वचित् आसायणबहुलेति पाठः तत्राशातना पूर्वोक्तार्था पाठ-सिद्धा तया बहुलोऽतिप्रचुरत्वादश्लाघ्योऽसङ्गततया निन्दा-शया रत्नप्रभादिकायास्तलमतितिष्ठति । परापकारभूतानि कर्म्म एयनुष्ठानानि विद्यन्ते तेषु तेषु च कर्म्मसु करचरणच्छे-दन।दिष्वयशोभाग् भवति स एवंभूतः पुरुषः ( कालमासेत्ति ) स्वायुष क्षये कालं कृत्वा पृथिव्या' रत्नप्रभादिकायास्तलमति-वर्त्य योजनसहस्रपरिमाणमतिलङ्घ्य नरकतलप्रतिष्ठानोऽसौ भवति । नरकस्वरूपप्ररूपणयाह । " तेणमित्यादि " णमिति वाक्यालङ्कारे ते नरका' सीमन्तादय बाहुल्यमङ्गीकृत्यान्तर्म-ध्यभागे वृत्ताकाराः बहिर्भागे चतुरस्राकारा इदं च पीठोपरिव-र्त्तिनं मध्यभागमधिकृत्योच्यते सकलपीठाद्यपेक्षया त्वावलिका-प्रविष्टा वृत्तात्र्यस्रचतुरस्रसंस्थानाः पुष्पावकीर्णास्तु नानासं-स्थाना प्रतिपत्तव्या' ( अहेखुरप्प सठाणसंठिया इत्ति ) अधो भूमितले क्षुरप्रस्येव प्रहरणविशेषस्य यत्संस्थानमाकारविशेष-स्तीक्ष्णतालक्षणस्तेन संस्थितास्तथाहि तेषु नरकावासेषु भूमि-तले मसृणत्वाभावतः शर्कराप्रचुरे भूभागे पादेषु न्यस्यमानेषु श-र्करामात्रसस्पर्शेऽपि क्षुरप्रेणेव पादा कृत्यन्ते ( निच्चंधयारतमसा इत्ति ) तमसा नित्यान्धकारा' उद्योताभावतो यत्तमस्तदिह तम उच्यते तेन तमसा नित्य सर्वकालमन्धकारा तत्राप्यपवर्गादिष्व-पि नामान्धकारोऽस्ति केवल बहि सूर्यप्रकाशे मन्दतमो भवति नरकेषु तीर्थकरजन्मदीक्षादिकालव्यतिरेकेणान्यदा सर्वकालम-पि उद्योतलेशस्याभावतो जात्यन्धस्येव मेघच्छन्नकालार्द्धरात्र इव चातीव बहलतरो वर्तते तत उक्तं तमसा नित्यान्धकारा त-मश्च तत्र सदाऽवस्थितमुद्योतकराणामसंभवात् ।तथा चाह । "ववगयगहचंदसूरनक्खत्तजोइसियपहा" व्यपगत परिभ्रष्टो ग्रहचन्द्रसूर्यनक्षत्ररूपाणामुपलक्षणमेतत् तारारूपाणां च ज्यो-तिष्काणा पन्था मार्गो येभ्यस्ते व्यपगतग्रहचन्द्रसूर्यनक्षत्रज्यो-तिष्कपथा तथा पुनरप्यनिष्टोपादानार्थं तेषामेव विशेषणमाह। "मेयवसेत्यादि" दुष्कृतकर्मकारिणां तेषां दुःखोत्पादनायैवंभू-ता भवन्ति । तद्यथा स्वभावसपन्नैर्मेदोवसामांसरुधिरपूयादीनां पटलानि समूहास्तैर्लिप्तानि पिच्छिलीकृतान्यनुलेपनप्रधानानि येषां ते तथा अथवा मेदोवसामांसरुधिरपूतिपटलैर्यच्चिक्खल्लं कर्दम-स्तेन लिप्तमुपदिग्धमनुलेपनेन मतनालिप्तस्य पुन' पुनरुपलेपनेन तलं भूमिका येषां ते मेदोवसालिप्तरुधिरमांसचिक्खल्लालिप्तानु-लेपनतला अत एवाऽशुचयो विष्ठाद्यशुचिक्लेदप्रधानत्वात् अत एव विस्राः कुथितमांसादिकलपकर्दमविलिप्तत्वात् क्वचित् ' बी-भच्छा' इति पाठः तत्र बीभत्सा दर्शनेऽप्यतिजुगुप्सोत्पत्ते । एवं परमदुरभिगन्धा' कुथितगोमायुकलेवरादप्यसह्यगन्धका । (काउअगणिवण्णाभा इति ) लोहे धम्यमाने यादृक्कपोतो बहुकृष्णरूपा-योवर्ण । किमुक्तं भवति यादृशी बहुकृष्णवर्णरूपा अग्निज्वा-ला निर्गच्छतीति तादृशी आभा आकारो येषां ते कपोताग्निव-र्णाभा धम्यमानलोहाग्निज्वालाकल्पा इति भाव' । नारकोत्पत्ति-स्थानातिरेकेणान्यत्र सर्वत्राप्युष्णरूपत्वात् एतच्च षष्ठसप्तमपृथि-वीवर्जमवसेयम् । यत उक्तम् । "छट्ठसत्तमीसु ण काउअगणिव-ण्णाभा न भवति " एतादृशास्ते रूपत. । स्पर्शतस्तु कर्कशाः कठिना वज्रकण्टकासिपत्रस्येव स्पर्शो येषां ते । तथा अत एव(दु-रहियासा इति ) दुःखेनाध्यासन्ते सह्यन्ते इति दुरध्यासाः कि-मिति यतस्ते नरकाः पञ्चानामपीन्द्रियार्थानामशोभनत्वादशु-भा' तत्र सत्वानामशुभकर्मकारिणामुग्रदण्डपातिनां वज्रप्रचुरा-णां तीव्रा अतितिव्रा अविद्वु सहा वेदना शरीरे प्रादुर्भवन्ति तया च वेदनया अभिभूतस्तेषु नरकेषु ते नारका नैवाक्षिनिमेष-मपि काल निद्रायन्ते नाप्युपविश्याघवन्धामक्षिसंकोचरूपामी-षन्निद्रामवाप्नुवन्ति । श्रुतं विशेषज्ञानरूप रतिं चित्ताभिरति-रूपां धृतिं विशिष्टसत्वरूपां मतिं वैशेषबुद्धिरूपां नोपलभन्ते न ह्येवंभूतवेदनापीडितस्य निद्रादिलाभो भवतीति दर्शयति ता-मुज्ज्वलां तीव्रामनुभवेनोत्कटाम् । ( तिउलति ) त्रीनपि मन प्रभृ-तिकान् तुलयति जयति तित्रितुला तां क्वचिद्विपुलामित्युच्यते तत्र सकलकायव्यापकत्वाद्विपुलाम् । ( पगाढंति ) प्रकर्षवर्तिनी ( क-क्कसति ) कर्कशद्रव्यमिव कर्कशां दृढामित्यर्थ ( कटुयति ) क-टुकां नागरादिवत् सकटुकामनिष्टामेव ( चण्डंति ) चण्डा रौद्राम ( तिव्वंति ) तीव्रां निकनिम्बादिद्रव्यमिव तीव्राम् ( दुक्खंति ) दु खहेतुकाम् ( दुग्गंति ) कष्टसाध्याम् ( दुरहियासंति ) दु-रधिसह्या वेदयन्तो विचरन्ति । अथ तावदयोगोलकपाषाणदृष्टान्त शीघ्रगतेर्निमज्जनप्रतिपादक प्रदर्शितोऽधुना शीघ्रपातार्थप्रति-पादकमेवापर दृष्टान्तमधिकृत्याह " से जहाणामए इत्यादि " तद्यथा नाम कश्चिद्वृक्ष' पर्वताग्रे जातो मूले छिन्न शीघ्रं यथा निम्न पतत्येवमसावप्यसाधुकर्मकारी तत्कर्म वातेरित' शीघ्र-मेव नरके पतति ततो नरकादप्युद्वृत्तो गर्भाद्गर्भमप्यत्र याति । एव जन्मतो जन्म मरणान्मरण नरकान्नरकं दु खाद् दुख दु खात् शारीरमानसोद्भवात् दु ख समाप्नोति ( दाहिणत्ति ) दक्षिणस्यां दिशि गमनशीलो दक्षिणगामुक' । इदमुक्त भवति यो हि क्रूर-कर्मकारी साधुनिन्दापरायण सद्दाननिषेधकस्स दक्षिणगामु-को भवति दाक्षिण्यात्येषु नारकतिर्यङ्मनुष्यामरेषु उत्पद्यते ता-दृग्भूतश्चायमतो दक्षिणगामुक इत्युक्तम् । इदमेवाह ( णेरइए-त्यादि ) नरकेषु भवो नारक कृष्णपक्षोऽस्यास्तीति कृष्ण-पाक्षिकस्तथाऽऽगामिनि काले नरकादुद्वृत्तो दुर्लभबोधिकश्चापि च बाहुल्येन भवति । इदमुक्त भवति ह्यिवि मध्ये दक्षिणा दिगप्रशस्ता गतिषु नरकगति पक्षे कृष्णपक्षस्तदस्य वि पयान्यस्येन्द्रियानुकूलत्वर्तिनि' परलोकनिरपेक्षमते साधु-प्रद्वेषिणो स्थानान्तरायविधायिनो विषमप्रशस्तां प्राप्तोति एत-न्नन्यदपि यादृगप्रशस्त तिर्यगत्यादिकमत्रोऽभिमानादिकं प-

तयोजनीयमस्येति न तस्य किंचित्त्राणं भवति । एवं मिथ्यात्वयुक्तजीववर्णनमुक्त्वा यदा कदाचित् सम्यक्त्वमाप्नोति तदा यादृशः स्यात् तथाह ( सेत्तमित्यादि ) स क्रियावादी वाऽपि भवति यथा पूर्वं व्याख्यातं तथोत्तरत्रापि व्यत्ययेन व्याख्येयम् । एवं यदा स आस्तिको भवति तदा स सम्यग्दृष्टिर्भवति यावदुत्तरगामुक शुक्लपाक्षिको देवादिषु उत्पद्यते आगामिनि काले च सुलभधर्मप्रतिपत्तिर्भवति स क्रियावादी सत्यधर्मरुचिश्चाऽपि भवति सद्भ्यो हित स चासौ धर्मः क्षान्त्यादिकस्तद्रुचिरित्यर्थः । क्वचित् " सव्वधम्मरुइत्ति " पाठः । तत्र धर्मः स्वभाव इत्यनर्थान्तरं जीवाजीवयोर्यस्य तद्रूपस्य गतिस्थित्यवगाहनादिका । अथवा सर्वे धर्मा आज्ञाग्राह्या हेतुग्राह्याश्च तान् श्रद्धत्ते सम्यक्तया मन्यते परं तस्य ए मिति वाक्यालंकारे ( बहूइ सीलव्वयेत्यादि ) शीलव्रतान्यणुव्रतानि गुणव्रतानि विरमणानि औचित्येन रागादिनिवृत्तयः प्रत्याख्यानानि पौरुष्यादीनि पौषध अवश्यतया पर्वदिनानुष्ठानं तत्रोपवासोऽवस्थानं पौषधोपवास. एषां द्वन्द्व एते नो निषेधे सम्यग् यथा भवन्ति तथा प्रस्थापिता भवन्ति न स्वचेतसि नियततया कर्त्तव्यत्वेन व्यवस्थापिता भवन्ति । एवमनुना प्रकारेण दर्शनश्रावको भवति । दर्शनं नाम सम्यक्त्वं तदाश्रित्य श्रावको भवति । ननु तथाविधविरतिं विना कथं श्रावको भवति उच्यते वस्तुव्रतान्यपि न सम्यक्त्वं विना भवन्ति यत " नत्थि चरित्तं सम्मत्तविहूणं " इत्यादि वचनात् । सम्यक्त्वं व्रतमेव अथवा सम्यक्त्वं तु पञ्चसंवरद्वाराणामाद्यं संवरद्वारं तत सम्यक्त्वे श्रावको भवत्येवेति नात्र संशयः । इदं च सम्यक्श्रद्धानरूपा प्रथमा आद्या उपासकप्रतिमा दशा० ६ अ० । आ० चू० ।

अथ दर्शनप्रतिमास्वरूपनिरूपणायाह । दारं दसणधो अविच्छेदः शुभानुबन्ध सोऽस्यास्तीति शुभानुबन्धी । तथा निरतिचार शङ्काकाङ्क्षादिदर्शनातिक्रमरहित इति तदेवमितो ग्रन्थात् दर्शनप्रतिपत्तिमात्रं निरतिचारसम्यक्त्वसद्भावावच्छिन्नं प्रतिमेत्यवसीयते । उपासकदशासु पुनरानन्दादीनां प्रतिमाकारिश्रावकाणां पूर्वं प्रतिपन्नदर्शनव्रतानां प्रतिमैकादशकस्य प्रतिपत्तिर्वर्णिता तत्प्रमाणं च सार्द्धं वर्षपञ्चकमित्यतोऽनुमीयते दर्शनप्रतिपत्तिमात्रादतिरिक्तसमाप्ता सा तदतिरेकश्चेह राजाभियोगाद्याकारषट्कवर्जनं यथावत्सम्यग्दर्शनाचारपालनादिभिः संभाव्यते कालमान चास्यामेको मासो यत एकादिकयैकोत्तरया वृद्ध्यैकादशसु प्रतिमासु यथोक्तं कालमानं भवतीति गाथार्थः । अथ दशाश्रुतस्कन्धादिषु प्रतिमाशब्दोऽभिग्रहार्थो व्याख्यात । इह पुन कस्मात्तद्व्याख्यानत्यागेन गुणार्थो व्याख्यात इत्याशङ्क्याह ।

बोंदी य एत्थ पडिमा, विसिट्ठगुणजीवलोगओ भणिया ।
ता पडिमगुणजोगा, होइ सेसत्थावयणत्थि त्ति ॥ ७ ॥

बोन्दिश्च ननु पुनरत्र प्रकरणे ग्रन्थान्तरे त्वभिग्रह प्रतिमा प्रतिमेति शब्देन भणितोक्ता किमर्थमिति चेदुच्यते विशिष्टगुणसंभारानिन्द्रियसत्त्वापेक्षया मार्गादिभुवादि स चासौ जीवलोकश्च सत्त्वलोको विशिष्टगुणजीवलोकस्तस्मात्सकाशात् गुणस्तुप्रशस्त एव सदर्शनप्रतिमावानिति स्थापनार्थमेतत्प्रतिपादनायेति । कुत पुन स इत्यत आह । तयेदृग्गुणयोगात् तया योऽसौ देहसृष्टया च इदंगुणयोग प्रागुक्तदर्शनप्रतिमागुणसंयच्च सम्मतगुणयोगादित्येतस्य संस्कृतस्य च स्थाने "ता पडिसगुणयोगा" इति प्राकृतं न विरुद्धमेवंविधप्रयोगाणामनेकशो दर्शनादिति । इदमुक्तं भवति । आस्तिक्यगुरुदेववैयावृत्त्यनियमादिभिर्गुणैर्गुणिलोकात् शुभतरः प्रतिमागुणवांस्तत्सूचकाश्च क्रियारूपास्तदभिव्यञ्जकाश्च वर्तन्ते ततस्तेषां तदभिव्यक्तेश्च बोन्दिहेतुकत्वात् बोन्दिमतः प्रतिमावत् प्राधान्यमिति स्थापनाय बोन्दीप्रतिमेत्युक्तमिति गाथार्थः । एवं तावद्दर्शनप्रतिमाशब्दस्याभिधेयमभिधाय शेषप्रतिमासु तदतिदेशं व्रतप्रतिमास्वरूप चाह ।

एवं वयमाईसु वि, दट्ठव्वमिणं ति णवरमेत्थ वया ।
घेप्पं नणुव्वया खलु, थूलगपाणवहविरयादी ॥ ८ ॥

एवमनेनैव प्रकारेण दर्शनप्रतिमोक्तेन व्रतादिष्वपि व्रतसामायिकप्रभृतिषु सर्वप्रतिमासु न केवल दर्शनप्रतिमायामेव द्रष्टव्यमवसेयम् । इद च प्रतिमाशब्दस्याभिधेयमितिशब्दो वाक्यार्थसमाप्तौ एवमतिदेशद्वारेण सामान्यतो व्रतादिप्रतिमां व्याख्याय विशेषव्याख्यानार्थमाह । नवरं केवलमत्र व्रतप्रतिमायां व्रतान्यभिग्रहाः ( घेप्पति त्ति ) गृह्यन्ते आश्रियन्ते अणुव्रतानि खलु देशमूलगुणा एव खलुरवधारणे किं स्वरूपाणि तानीत्याह स्थूलकप्राणवधविरत्यादीनि असूक्ष्मसत्त्वहिंसाविरमणप्रभृतीनीत्यादिशब्दात् स्थूलकमृषावादविरत्यादिपरिग्रह इति गाथार्थः । अथ तानि यदा भवन्ति तत्स्वरूपाणि चेत्येतद्दर्शनार्थमाह ।

सम्मत्तोवरि ते सेस–कम्मुणो अवगए पुहत्तम्मि ।
पलियाणं होंति णियमा, सुहा य परिणामरूवाउ ॥ ९ ॥

सम्यक्त्वोपरि सम्यक्त्वलाभकालस्योर्द्धं ते इति तान्यणुव्रतानि शेषकर्मणः सम्यक्त्वलाभकाले यत् क्षपित तदपेक्षया शेषस्य देशोनसागरोपमकोटाकोटीप्रमाणस्य मोहनीयादिकर्मस्थितिबन्धलक्षणस्यापगते क्षीणे पृथक्त्वे द्विप्रभृतिकेन चान्ते संख्याविशेषे केषामित्याह । पल्यानां पल्योपमानां भवन्ति जायन्ते नियमादवश्यतया । तथा शुभात्मपरिणामरूपाणि तु प्रशस्तजीवाध्यवसायस्वभावान्येव क्षायोपशमिकत्वादिति गाथार्थः । तेषां शुभात्मपरिणामस्वरूपत्वादेव यत्स्यात्तदाह ।

बंधादि असक्किरिया, संतेसु इमेसु पहवइ ण पायं ।
अणुकंपधम्मसवणा–दिया उ पहवति विसेसेण ॥ १० ॥

बन्धादिर्बन्धविच्छेदप्रभृतिरसत्क्रिया अशोभना चेष्टा प्रतिव्रतमतिचारपञ्चकरूपा सत्सु विद्यमानेष्वणुव्रतेषु प्रभवति जायते । न चैवं प्रायो बाहुल्येन प्रमादादिना कदाचित्स्यादप्रीतिः प्रायोग्रहणमनुकम्पाधर्मश्रवणादिकानुजीवदयाधर्मशास्त्राकर्णनप्रभृतिका पुन क्रियेति प्रकृत प्रभवति जायते । विशेषेण सुतरां दर्शनप्रतिमापेक्षया व्रतमात्रापेक्षया चेति । तदेवं व्रतप्रतिमा निरतिचारपञ्चाणुव्रतपालनरूपा उपासकदशाभिप्रायेण चार्योपचेर्लभ्यते मासद्वयमानेनातोऽन्यत्र व्रतमात्रमेवेति गाथार्थः । पंचा० १० विव० ।

सांप्रत द्वितीयप्रतिमास्वरूपमुच्यते ।

अहावरा दोचा उवासगपडिमा सव्वधम्मरुईया वि भवति तस्स णं बहूइं सीलव्वयगुणव्वयवेरमणपोसहोववासाइं पट्ठविताइं भवंति से णं सामाइयदेसावकासियं णो सम्मं पालित्ता भवति दोचा उवासगपडिमा ॥ २ ॥

अथेत्यानन्तर्ये अपरा अन्या उवासगेत्यादि व्यक्तं शीलव्रतादीनि च प्रस्थापितानि भवन्ति एतावता विरतिमान् भवति परं स न सामायिकं देशावकाशिकं च सम्यग्यथा भवत्यनिवार्यं इ-

तं तथा अनुपालयिता भवति इति द्वितीया श्रावकप्रतिमा दशा० ६ अ० आ०। चू०। द्वितीया व्रतप्रतिमा इह चास्या स्वरूपम्। "दंसणपडिमाजुत्तो, पालतो णुव्वए निरइयारे। अणुकंपाई गुणजुत्तो, जीवो इह होइ वयपडिमा" उपा० १ अ०। पंचा०।

अथ तृतीयामुपासकप्रतिमामाह।

**अहावरा तच्चा उवासगपडिमा सव्वधम्मरुचिया वि भवति तस्स णं बहूणं सीलव्वयगुणवेरमणपच्चक्खाणपोसहोववासाइं सम्मं पट्ठवियाइं भवंति से णं सामायिकं देसावकासियं सम्मं अणुपालित्ता भवति से णं चाउद्दसअट्ठमिउद्दिट्ठपुण्णमासिणीसु पडिपुण्णं पोसहो नो सम्मं अणुपालित्ता भवति तच्चा उवासगपडिमा ॥**

अथापरा तृतीया सुगमा नवरं तस्य बहूनि व्रतादीनि प्रस्थापितानि आत्मनि निवेशितानि भवन्ति ( सेणंति ) स णमिति वाक्यालंकारे "चाउद्दसीत्यादि" चतुर्दशी प्रसिद्धा पर्वतिथित्वेन तथैवाष्टमी पर्वत्वेन प्रख्याता ( उद्दिट्ठत्ति ) उद्दिष्टा अमावस्या पौर्णमासी पूर्णो मासो यस्यां सा पूर्णमासी तासु एवंभूतासु धर्मतिथिषु प्रतिपूर्णे यः पोषधो व्रताभिग्रहविशेषस्त प्रतिपूर्णमाहारशरीरसंस्काराब्रह्मचर्याव्यापाररूपं पोषधं नानुपालयिता भवति। इति तृतीया उपासकप्रतिमा दशा० ६ अ०। आ० चू० ( तच्चंति ) तृतीया सामायिकप्रतिमां तत्स्वरूपमिदम्। "वरदंसणवयजुत्तो, सामइयं कुणइ जो उ संझासु। उक्कोसेण तिमासं, एसा सामइयप्पडिमा"।

सामायिकशब्दार्थमाह ।

**सावज्जजोगपरिव-ज्जणादिरूवं तु होइ विण्णेयं ।**
**सामाइयमित्तिरियं, गिहिणो परमं गुणट्ठाणं ॥ ११ ॥**

सावद्ययोगपरिवर्जनादिरूपं सपापव्यापारपरिहारनिरवद्ययोगासेवास्वभावं तुशब्द पुनरर्थो भवति स्याद्विज्ञेयमवसेयं सामायिकं प्रागुक्तनिरुक्तमित्वरं स्तोकं कालो यत्रास्ति तदित्वरम् मुहूर्त्तादिप्रमाणं गृहिणः श्रावकस्य परमं प्रधानं शेषगुणस्थानापेक्षया गुणस्थानं देशचारित्रविशेषो गुणाश्रयो वेति गाथार्थः।

परमगुणस्थानमेवास्य समर्थयन्नाह ।

**सामाइयम्मि उ कए, समणो इव सावओ जतो भणितो।**
**बहुसो विहाणस्स य, तम्हा एयं बहुत्तगुणं ॥ १२ ॥**

सामायिके एव समभावरूपे न तु व्रतान्तरे तुशब्दोऽवधारणार्थं। कृते प्रतिपन्ने सति श्रमण इव साधुतुल्य सिद्धिसुखपरमसाधनभूतसमभावसाधर्म्योयतो यस्मात्कारणाद्भणितोऽभिहितस्तथा बहुशोऽनेकशो विधानं वा सेवनं वाऽस्य सामायिकस्य भणितं निर्युक्तिकृता। तथा हि "सामाइयम्मि उ कए, समणो इव सावओ हवइ जम्हा। एएण कारणेण, बहुसो सामाइयं कुज्जा" तस्मात्कारणादेतत्सामायिकं यथोक्तगुणं प्रागभिहितगुणं परमगुणस्थानमित्यर्थः इति गाथार्थः । अत्र सामायिके सति यन्न भवति यच्च भवति तद्दर्शयन्नाह ।

**मणदुप्पणिहाणादी, ण होंति एयम्मि भावओ संते ।**
**सन्नाणावाईयकारि, या य सामणविंति ॥ १३ ॥**

मनोदुष्प्रणिधानादीनि मनोदुष्प्रणिधानवचनदुष्प्रणिधानकायदुष्प्रणिधानानि प्रथमप्रकरणोक्तरूपाणि न भवन्ति न जायन्ते एतस्मिन् सामायिके भावतो भावेन न तु द्रव्यतः सति विषय-न तथा स्मृतिभावसामायिकं प्रति कृताकृतादिविषयस्मरणम्... वस्तथाऽव्यवस्थितसामायिककरणनिषेधरूपो भवतीति प्रक्रमः। शब्दः समुच्चये कस्मादेवमित्याह। श्रामण्यवीजं श्रमणभावहेतुरिति कृत्वा यत् श्रमणभावस्य परमसामायिकरूपस्य बीजं तत् मनोदुष्प्रणिधानादियुक्तं भवति कारणानुरूपत्वात्कार्यस्येति। यद्येषा सामायिकप्रतिमा एतस्य प्रकरणस्य दशा... वाऽभिप्रायेणानियतकालमाना तथाऽप्यावश्यकचू... पासकदशाभिप्रायेण च प्रतिदिनमुभयसाध्य... मासत्रयमानोत्कर्षेण उत्कृष्ट्या जघन्यतस्तु सर्वा अप्येकाहादिमाना इति। एतच्चाग्रे वक्ष्यत इति गाथार्थः। उक्ता सामायिकप्रतिमा पंचा० १० विव० ॥

अथापरा चतुर्थी उपासकप्रतिमा ॥

**अधावरा चउत्था उवासगपडिमा सव्वधम्मरुईया वि भवति तस्स णं बहूइं सीलव्वया जाव सम्मं पट्ठवियाइं भवति से णं सामाईयं देसावगासियं सम्मं अणुपालेत्ता भवति से णं चउद्दसट्ठ जाव सम्मं पोसहं अणुपालेत्ता भवति से णं एगराईयं उवासगपडिमं नो सम्मं अणुपालित्ता भवति चउत्था उवासगपडिमा ॥**

यस्मिन् दिने उपवासो भवति तस्मिन् दिने या रात्री प्रतिमां प्रतिपद्यते न च स तां शक्नोति कर्तुमिति चतुर्थी। दशा० ६ अ०। आ० चू० ( चउत्थंति ) चतुर्थी पोषधप्रतिमैवंरूपा "पुव्वोदियपडिमजुओ, पालइ जो पोसहं तु समत्तं। अट्ठमिचउद्दसीसु, चउरो मासा चउत्थी सा॥" उपा० १ अ०। अधुना पोषधप्रतिमावसरस्तत्र च पोषधमेव स्वरूपतो दर्शयन्नाह॥

**पोसेइ कुसलधम्मं, जं ता हारादिचागणुट्ठाणं ।**
**इह पोसहो त्ति भण्णति, विहिणा जिणभासिएणेव ।१४।**

पोषयति पुष्णाति कुशलधर्मान् शुभसमाचारान् प्राणातिपातविरमणादीन् यद्यस्मात्तत्तस्मादाहारादित्यागानुष्ठानं भोजनदेहसत्काराब्रह्मव्यापारपरिहारकरणमिह प्रक्रमे पोषध इत्येवं भण्यते अभिधीयते पोषं धत्ते पुष्णाति वा धर्मानिति निरुक्तात्स च यदाहारादित्यागानुष्ठानमित्याह विधिना विधानेन यथाकथञ्चित्किंभूतेन जिनभाषितेनैव सर्वज्ञोक्तेनैव स्वमतिविततेन विधानं च प्रथमप्रकरणं एवोक्तमिति न पुनर्भण्यते इति गाथार्थः।

अथ पोषधं तत्वतो निरूप्य भेदतस्तन्निरूपयन्नाह ॥

**आहारपोसहो खलु, सक्कारपोसहो चेव ।**
**बंभव्वावारेसु य, एयगया धम्मवुड्ढि त्ति ॥ १५ ॥**

आहारपोषधः प्रागुक्तस्वरूपः खलुर्वाक्यालंकारे शरीरसत्कारपोषधः पूर्वोक्तस्वरूप एव। चैवशब्दः समुच्चयार्थं ब्रह्मव्यापारयोश्चेति एतद्विषयश्च पोषधो भवति ब्रह्मचर्यपोषधो व्यापारपोषधश्चेत्यर्थः । आहारादिपोषध इति कोऽर्थः उच्यते एतद्गता आहारादित्यागसमाश्रिता धर्मवृद्धिर्धर्मपुष्टिः पोषः धत्त इति व्युत्पादनादितिशब्दो वाक्यार्थसमाप्तौ इति गाथार्थः।

इह यद्वर्जयत्यसौ तदाह ।

**अप्पडिदुप्पडिलेहिय-सेज्जासंथारमाइवज्जे त्ति ।**
**सम्मं च अणणुपालण-माहारादीसु एयम्मि ॥ १६ ॥**

'अप्पडिमित्ति' पदावयवे पदसमुदायोपचारात् 'अप्पडिलेहियत्ति' दृश्य तत्र अप्रत्युपेक्षितदुष्प्रत्युपेक्षितशय्यासंस्तारकादि वर्ज-

यति परिहरतीत्यप्रत्युपेक्षितमनिरीक्षितं दुष्प्रत्युपेक्षितं दुर्निरीक्षितं शय्या शयनं तदर्थं संस्तारकः कम्बल्यादिरूपस्तम्। अथवा शय्या वसतिः सर्वाङ्गीणशयनं वा संस्तारकश्च ततो लघुतर इति समाहारद्वन्द्वात् शय्यासंस्तारकः। आदिशब्दादप्रमार्जितदुष्प्रमार्जितशय्यासंस्तारकमप्रत्युपेक्षितदुष्प्रत्युपेक्षितोच्चारप्रश्रवणभूमिमप्रमार्जितदुष्प्रमार्जितोच्चारप्रश्रवणभूमिं चेति सम्यग् यथागमं चाननुपालनमयथावद्भोजनाद्यौत्सुक्यादिभिराहारादिष्विति। सप्तम्याः षष्ठ्यर्थत्वात् आहारशरीरसत्काराब्रह्मचर्याव्यापारपोषधानामेतस्मिन्निति पोषधे वर्जयतीति प्रकृतमिति। तदेवमियं पोषधप्रतिमा ग्रन्थान्तराभिप्रायेणाष्टम्यादिपर्वसु संपूर्णपोषधानुपालनारूपोत्कर्षतश्चतुर्मासप्रमाणा भवतीति गाथार्थः।

अथ पञ्चमी।

आहावरा पंचमा उवासगपडिमा सव्वधम्मरुइया वि भवति तस्स णं बहूइं सील जाव सम्मं पडिलेहियाइं भवंति से णं चाउद्दसिं तहेव से णं एगराइयं उवासगपडिमं सम्मं अणुपालित्ता भवति से णं असिणाणवियडभोई मउलियकडे दिया बंभचारी रत्तिं परिमाणकडे से णं एतारूवेणं विहारेणं विहरमाणे जहन्नेणं एगाहं वा दुयाहं वा तियाहं वा उक्कोसेणं पंचमासे विहरेज्जा पंचमा उवासगपडिमा ॥

सव्वधम्मेत्यादि व्यक्तम् (असिणाणेत्ति) न स्नाति स्नानं न करोति (वियडभोइत्ति) प्रकाशभोजी न रात्रौ भुङ्क्ते अप्रकाशे वा यतो ये दोषाः पिपीलिकाद्युपघातरूपाः रात्रौ भवन्ति त एवान्धकारभोजने इति प्रवादः तेन प्रकाशभोजी भवति (मउलिकडेत्ति) परिधानवाससो वलद्वयकटीप्रदेशेनावलम्बयति। अग्रे पृष्ठे च उन्मुक्तकच्छो भवतीत्यर्थः यावन्मासपञ्चमं तत्परिसमाप्यते तावद्दिवा ब्रह्मचारी (से णमित्यादि) स इत्यनिर्दिष्टनामा एतद्रूपेण विहारेण प्रतिमाचरणरूपेण विचरन् एकाहमेकदिवसं वाशब्दः परापरभेदसूचकः एवं सर्वत्र द्व्यहं त्र्यहं उत्कर्षतो यावत्पञ्चमासास्तावद्विहरति तत्रैकाहं यदि अङ्गीकृत्य प्रतिकारं कुर्यात् असामर्थ्याद्वा अन्तराले एव त्यजेत् कोऽपि तत उक्तमेकाहं चेत्यादि इतरथा तु सम्पूर्णोऽपि भवति पूर्वोक्तः प्रतिमाचतुष्टयस्याचारोऽत्रापि द्रष्टव्यः दिवा रात्रौ च ब्रह्मचारी भवति एवमुत्तरत्रापि पूर्ववत् प्रतिमाचारोऽपि वाच्य इति पञ्चम्युपासकप्रतिमा। क्वचित् "अहासुत्ता" इत्यादि पाठस्तत्र (अहासुत्ता इति) सामान्यसूत्रानतिक्रमेण (अहाकप्पा इति) प्रतिमाकल्पानतिक्रमेण कल्पे वस्त्वनतिक्रमेण वा (अहामग्गो इति) ज्ञानादिमोक्षमार्गानतिक्रमेण क्षायोपशमिकभावानतिक्रमेण वा (अहातच्चा इति) यथा तत्त्वं तत्त्वानतिक्रमेण पञ्चमासिकी श्रावकप्रतिमा इति शब्दार्थानतिलङ्घनेनेत्यर्थः (जहा सम्मं इति) समभावानतिक्रमेण (फासेति) न मनोरथमात्रेण (फासेइत्ति) उचितकाले विधिना ग्रहणात् (पालेइत्ति) असकृदुपयोगेन प्रतिजागरणात् शोधयति वा अतिचारपङ्कक्षालनात् (तीरेइ) पूर्णेऽपि तदवधौ तत्परिमाणपूरणात् (किट्टइत्ति) कीर्तयति पारणकदिने इदं चेदं चैतस्याः कृत्यं तच्च मया कृतमित्येवं कीर्तनात्। (अणुपालेइत्ति) तत्समाप्तौ तदनुमोदनात् किमुक्तं भवति आज्ञया आराधयतीति पञ्चम्युपासकप्रतिमा। दशा० ६ अ०। आ० चू०। (पंचमंति) पञ्चमीं प्रतिमां प्रतिमां कायोत्सर्गप्रतिमामित्यर्थः। स्वरूपं चास्याः " सम्माणुव्वयगुणवयसिक्खावयवं वा थिरो य नाणी य। अट्ठमिचउद्दसीपडिमाए एगराईयं। (असिणाणवियडभोई) अस्नानोऽरात्रिभोजी चेत्यर्थः (मउलिकडो) मुक्तकच्छ इत्यर्थः। दिवसबंभयारियं राइपरिमाणकडो पडिमावज्जेसु दियहेसु झायपडिमाइठिओ तिलोयपुज्जे जियकसाये निग्रोसपच्चणीयं अन्नं वा पंच जामासा " उपा० १ अ०।

अथ प्रतिमाप्रतिमास्वरूपमाह।

सम्ममणुव्वयगुणवय-सिक्खावयवं थिरो य णाणी य।
अट्ठमिचउद्दसीसुं, पडिमं ठा एगरातीयं ॥ १७ ॥

सम्यक्त्वमणुव्रतगुणव्रतशिक्षाव्रतपदानि प्रतीतानि यस्य सन्ति स तद्वान् पूर्वोक्तप्रतिमाचतुष्कयुक्त इत्यर्थः। सोऽपि स्थिरोऽविचलसत्त्व इतरो हि तद्विराधको भवति यतः सा (पडिमा) रात्रौ चतुष्पदादौ च विधीयते तत्र चोपसर्गाः संभवन्तीति ज्ञानी च ज्ञाता प्रतिमाकल्पादेरज्ञानो हि सर्वत्राप्ययोग्यः किं पुनरस्यामिति चशब्दः समुच्चयार्थो ऽष्टमीचतुर्दश्योः प्रतीतयोः उपलक्षणत्वादस्य पोषधदिवसेष्विति द्रष्टव्यं प्रमाणकायोत्सर्गं वा करोतीत्यर्थः। किं प्रमाणमित्याह। एका रात्रिः परिमाणमस्या इत्येकरात्रिकी सर्वरात्रिकी आसा प्रतिमाप्रतिमा भवतीति शेष इति गाथार्थः। शेषदिनेषु यादृशोऽसौ भवति तद्दर्शयितुमाह।

असिणाणवियडभोई, मउलियडो दिवसबंभयारी य।
रत्तिं परिमाणकडो, पडिमावज्जेसु दियहेसु ॥ १८ ॥

अस्नानोऽविद्यमानस्नानः विकटे प्रकटे दिवसे न रात्राविति यावद् भोक्तुं शीलमस्येति विकटभोजी चतुर्विधाहाररात्रिभोजनवर्जकः। ततः पूर्वपदेन सह कर्मधारयः। तथा मौलिकृत अबद्धकच्छस्तथा दिवसे ब्रह्म चरतीत्येवंशीलो दिवसब्रह्मचारी चशब्दः समुच्चये तथा (रत्तिमिति) विभक्तिपरिणामाद्रात्रौ रजन्यां परिमाणकृतः मैथुनसेवनं प्रति कृतयोषिद्भोगपरिमाणः कदेत्याह प्रतिमावर्जेष्वपर्वस्वित्यर्थो दिवसेषु दिनेषूक्तव्याख्यानसंवादिनी चेयं गाथा यदुक्तम् " असिणाण वियडभोई, पगासभोइत्ति जं भणियं होइ। दिवसेव न सि भुंजे, मउलियकडो कच्छमविराधे " कच्छानारोपयतीत्यर्थः। इति गाथार्थः।

अथ यत् कायोत्सर्गस्थितश्चिन्तयति तदाह।

झायइ पडिमाए ठिओ, तिलोगपुज्जे जिणे जियकसाए।
णियदोसपच्चणीयं, अन्नं वा पंच जा मासा ॥ १९ ॥

ध्यायति चिन्तयति प्रतिमायां कायोत्सर्गस्थितोऽवस्थितस्त्रिलोकपूज्यान् भुवनत्रयार्चनीयान् जिनानर्हतो जिनकषायान् जितक्रोधादिभावान् तथा निजदोषप्रत्यनीकं स्वकीयरागादिदूषणप्रतिपक्षं कामनिन्दादिकमन्यजनापेक्षयाऽपरम्। वाशब्दो विकल्पार्थः क्रियमाणेयं पञ्चमी प्रतिमा स्यादित्याह पञ्च यावन्मासानेयोत्कर्षेण भवतीति गाथार्थः। उक्ता पञ्चमी। पंचा० १० विव०।

अथ षष्ठीं प्रतिमामाह।

सव्वधम्म जाव से णं एगराईयं उवासगपडिमाए पालेत्ता भवति से णं असिणाणए वियडभोई मउलियडे दिया वा राओ वा बंभचारी सचित्ताहारे से परिन्नाते भवति से णं एतारूवेणं विहारेणं विहरमाणे जहन्नेणं एगाहं वा दुयाहं वा तियाहं वा उक्कोसेणं छम्मासे विहरेज्जा छट्ठा उवासगपडिमा ॥ ६ ॥

शेष व्यक्तं रात्रिभोजनादुपरतो भवति ( रत्तो रातति ) रात्रौ दिवा ब्रह्मचर्ययुक्तो भवति 'सचित्ताहारे इत्यादि' सचित्ता' सचेतना जीवसहिता इति यावत् परिज्ञया आहारितः सन् कर्मबन्धकारणत्वेन पर प्रत्याख्यानपरिज्ञया प्रत्याख्यात. 'एतारूपेण' पूर्ववत् एवमुत्तरोत्तरप्रतिमासु मासा वाच्या यथासख्य मासा इति षष्ठी । दशा० ६ अ० । आ० चू०। षष्ठी अब्रह्मवर्जनप्रतिमा तत्स्वरूप चेदम् ।

पुव्वोइय गुणजुत्तो, विसेसओ विजियमोहणिज्जो य ।
वज्जइ अबंभमेगं–तओ उ रायं पि थिरचित्ते ॥ २० ॥

पूर्वोदितगुणयुक्तः प्रागुक्ता ये स्नानविकटभोजनादय सम्यक्त्वव्रतसामायिकपोषधप्रतिमाख्या वा ये गुणास्तैर्युक्त पूर्वोदितगुणयुक्तत्व च नास्यामेवापि तु सर्वासु व्रतादिप्रतिमासु द्रष्टव्य दशादिषु तथोक्तत्वात् विशेषतो विशेषेण पञ्चमप्रतिमापेक्षया विजितमोहनीयो निराकृतकामोदयश्चशब्द• समुच्चये श्रावक इति गम्यते किमित्याह वर्जयति परिहरति अब्रह्ममैथुनमेकान्ततस्तु सर्वथैव ( राइ पिचि ) सर्वरजनीमप्यास्तां सर्वादिनं षष्ठप्रतिमास्थित इति शेष । अयमेव च पञ्चम्या षष्ठ्याश्च प्रतिमाया विशेष इति स्थिरचित्तोऽप्रकम्पमानस• सन्निति गाथार्थ

अथ स्थिरचित्तोपायानाह ।

सिंगारकहाविरओ, इत्थीए समं रहम्मि णो ठाइ ।
चयइ य अतिप्पसंगं, तहा विभूसं च उक्कोसं ॥ १२ ॥

शृङ्गारकथाविरत' कामकथानिवृत्त । तथा स्त्रिया योषिता सम सह रहस्येकान्ते नो तिष्ठति नास्ते रह स्थानस्य चित्तविप्लुतिनिमित्तत्वाद्यतो लौकिका अप्याहु "मात्रा स्वस्रा दुहित्रा वा नो विविक्तासनो भवेत् । बलवानिन्द्रियग्राम ,पण्डितोऽप्यत्र मुह्यति" तथा त्यजति वर्जयति चातिप्रसङ्गमतिपरिचय स्त्रिया सममिति वर्तते यत "वशीकुर्वन्ति ये लोका मृगान् दर्शनतन्तुना। संसर्गवागुरानिस्ते, स्त्रीव्याधा• किम्न कुर्वते" तथेति वाक्यान्तरोपक्षेपार्थ । विभूषां स्वशरीरसत्कारमलङ्कारादङ्गदादिभिश्च समुच्चये उत्कर्षामुत्कृष्टां त्यजतीति वर्तते उत्कर्षग्रहणाच्छरीरस्थितिमात्रानुगा करोत्यपीति गाथार्थ• ॥

इहैव कालमानमाह ॥

एवं जा छम्मासा, एसो हि गतो इहरहा दिट्ठं ।
जावज्जीवं पि इमं, वज्जइ एयम्मि लोगम्मि ॥ २२ ॥

एवमुक्तनीत्या शृङ्गारकथाविरमणादिलक्षणया (जा इति ) यावत् षण्मासान् कालपरिमाणविशेषानुत्कर्षतो वर्जयत्यब्रह्मेति घटते एव श्रावकोऽधिकृतस्तु षष्ठप्रतिमाप्रतिपन्न एव । अवधारणफलमाह । इतरथाऽन्यथा षष्ठप्रतिमाप्रतिपन्नकादन्यत्रेत्यर्थ । दृष्टमवलोकितं किं तदित्याह । यावज्जीवमप्याजन्माप्यास्ता षण्मासान् यावदिदमब्रह्म वर्जयति परिहरतीत्येतत्क दृष्टमित्याह । एतस्मिन् प्रत्यक्षलोके श्रावकलोक इति गाथार्थ.। यत्कुर्वाणस्य षष्ठी भवति तदुक्तम् । पञ्चा० १० विव० । उपा० ।

अथ सप्तमीमुपासकप्रतिमामाह ।

सव्वधम्म जाव रातो य राई बम्हयारी सचित्ताहारे परिण्णाते भवति आरंभे अपरिण्णाए भवति से णं एतारूवेणं विहारेणं विहरमाणे जहण्णेणं एगाहं वा दुयाहं वा तियाहं वा उक्कोसेणं सत्तमासे विहरेज्जा सत्तमा उवासगपडिमा ।

अथापरा सप्तमी नवर परिज्ञातः प्रत्याख्यात ... परि तो भवति करणकारापणानुमोदनात्रिविधेनापि करणेन । द० ६ अ० । आ० चू०

अथ यत्कुर्वत सप्तमी भवति तद्दर्शयन्नाह ।

सचित्तं आहार, वज्जइ असणादियं णिरवसेसं ।
असणे चाउलोविग–चणगादी सव्वहा सम्मं ॥ २३ ॥

सचित्तं विद्यमानचैतन्यमाहारं भोजनं वर्जयति परिहरते अशनादिकमशनप्रभृतिकं चतुर्भेदं निरवशेष सर्व ... मास्थित इति शेष । तत्राशने आहारविशेषे विषयभूते तन्दुलोविकचणकादि प्रतीतमादिशब्दादमिलादिपरिग्रह• । ... वर्जयतीत्याह । सर्वथा अपक्वदुष्पक्वौपध्यादिविवर्जनत ... सम्यग्भावशुद्धेति गाथार्थ । तथा ।

पाणे आउकायं, सचित्तरससंजुअं तहण्णं पि ।
पंचोडुंबरिकक्कडि–गाइ य तह खाइमे सव्वं ॥ २४ ॥

पाने पानकाहारे अप्कायमप्रासुकोदकं सचित्तरससंयुत तत्कालपतितत्वेन सचेतनलवणादिरसोन्मिश्र तथेति समुच्चये अन्यदप्यप्कायादपरमपि काञ्जिकादिपानकाहार वर्जयति न केवलमप्कायमेवेति । तथा पञ्चानामुदुम्बराणामुदुम्बरसमानधर्मा णां समाहार पञ्चोदुम्बरी सा च स्वरूपेण त्रसकायिकैश्च सचेतना भवतीति पञ्चोदुम्बरी च कर्कटिकाश्च चिर्भिटिका आदिर्यस्य खादिमस्य तत्तथा । च समुच्चये तथेति वाक्यान्तरोपक्षेपार्थ• स च गाथोत्तरार्द्धस्यादौ दृश्य खादिमे आहारविशेषे विषयभूते सर्वं समस्त सचित्तं वर्जयतीति प्रकृतमिति गाथार्थ ।

दंतवणं तंबोलं, हरेडगाई य साइमे सेसं ।
सेसपयसमाउत्तो, जा मासा सत्त विहिपुव्वं ॥२५॥

दन्तधावनं दशनकाष्ठ ताम्बूल प्रतीतं हरीतक्यादि च पथ्याप्रभृति च स्वादिमे स्वादिमाहारविषये अशेष सर्वं सचित्त वर्जयतीति प्रकृतम् । किंभूत सन्नित्याह शेषपदसमायुक्तो दर्शनादिगुणयुक्त• कियन्तं कालं वर्जयतीत्याह यावन्मासान् कालविशेषान् सप्तोत्कृष्टतो विधिपूर्वकमागमिकन्यायपुरस्सर न तु यदृच्छयेति गाथार्थ । उक्ता सप्तमीति । पञ्चा०१० विव०। उपा०।

अथाष्टमीमुपासकप्रतिमामाह ।

अट्ठमा उवासगपडिमा सव्वधम्मरुई आ वि भवति जाव दियाओ वा रायं बंभचारी सचित्ताहारे से परिण्णाए भवति आरंभे से परिण्णाए भवति पेस्सारंभा अपरिण्णाए भवति से णं एयारूवेणं विहारेणं विहरमाणे जाव एगाहं वा दुगाहं वा तिगाहं वा उक्कोसेणं अट्ठमास विहरेज्जा अट्ठमा उवासगपडिमा ॥

अष्टम्यां स्वयकरणमाश्रित्यारम्भ• परिज्ञातो भवति प्रेष्यारम्भोऽन्येषामादेशदानत• कारापणाच्च निवृत्त इत्यष्टमी । दशा०६ अ० । आ० चू० । अष्टमी स्वयमारम्भवर्जनप्रतिमा ।

अथ यथा वर्तमानस्याष्टमी भवति तथा दर्शयन्नाह ॥

वज्जइ सयमारंभं, सावज्जं कारवेइ पेसेहि ।
पुव्वप्पओगओ च्चिय, वित्तिणिमित्तं सिढिलभावो ॥ २६ ॥

वर्जयति परिहरति स्वयमात्मना स्वयकरणत इत्यर्थ । आरम्भ व्यापारं सावद्यं सपापं कृष्यादिकमित्यर्थ । स्वयमिति ग्रन्-

शिरा' ( सिइत्ति ) शिखा तां वाशब्दो विकल्पार्थ धारयति विनर्ति कश्चित्कोऽपीति गाथार्थः ।

जं णिहियमत्थजायं, पुट्ठो णियएहि णवर सो तत्थ ।

जइ जाणइ तो साहे, अह ण वि तो वेइ ण वि जाणे॥३३॥

यन्निहितं यत्किञ्चित् भूम्यादावर्थजातं द्रव्यप्रकारं तद्दर्शीति शेषः । पृष्टः प्रश्नितो निजकैः स्वकीयैः पुत्रादिभिर्नवरं केवलं स श्रावक इति शेषस्तत्र दशमप्रतिमायां प्रश्ने वा यदि जानाति स्मरति ( तो त्ति ) तदा साधयति कथयत्यकथने वृत्तिच्छेदप्राप्तेः । अथ यदि न नैव जानातीति वर्तते ( तो त्ति ) तदा ब्रूते वाक्यं किं तदित्याह नापि नैव जाने स्मरामीति नान्यत् किमपि तस्य गृहकृत्यं कर्तुं कल्पत इति भाव इति गाथार्थः ।

जतिपज्जुवासणपरो, सुहुमपयत्थेसु णिच्चतेल्लिच्छो ।

पुव्वोदियगुणजुत्तो, दस मासा कालमासेण ॥ ३४ ॥

यतिपर्युपासनापरः साधुसेवापरायणः सूक्ष्मपदार्थेषु निपुणमतिसमधिगम्येषु भावेषु जीवादिषु तेष्वेव लिप्सा लब्धुमिच्छा यस्य स तल्लिप्सः स नित्यं नितान्तं तल्लिप्सो नित्यतल्लिप्सः । तथा पूर्वोदितगुणयुक्तो दर्शनादिप्रतिमानवकान्वितः कियन्तं कालं यावदित्याह । दश मासान् यावत् कालमानेन कालप्रमाणापेक्षयेत्यर्थः । कालमासेनेति क्वचित् दृश्यते तत्र प्राकृतभाषापेक्षया मासशब्दस्य कालधान्यसुवर्णादिषु वृत्तिदर्शनाच्छब्दव्यवच्छेदार्थमुच्यते कालमासेनेति गाथार्थः । उक्ता दशमी । पंचा० १० विव० । उपा० । आ० चू० ।

अथैकादशीं प्रतिमामाह ।

अहावरा एक्कारसमा उवासगपडिमा सव्वधम्म जाव दाइट्ठिजत्ते से परिणाते भवति से ण खुरमुंडए वा लुत्तसिरए वा गहितायारभंडगनेवत्थे जे इमे समणाणं निग्गंथाणं धम्मे तं सम्मं काएणं फासेमाणे पालेमाणे पुरतो जुगमायाए पेहमाणे दट्ठूण तसे पाणे उद्धट्टु पायं रीएज्जा वि तिरिच्छं वा पायं कट्टु रीएज्जा सति परक्कमे संजतामेव परक्कमे जाणो उज्जुय गच्छेज्जा केवलं से णायाए पेम्मबंधणे अवोच्छिन्ने भवति एवं से कप्पति नायवीथिं तिए तत्थ से पुव्वागमणेणं पच्छाउत्ते चाउलोदणे पच्छाउत्ते भिलिंगसूवे कप्पति से चाउलोदणे पडिगाहित्तए णो से कप्पति भिलिंगसूवे पडिगाहित्तए तत्थ णं से पुव्वागमणेणं पुव्वाउत्ते भिलिंगसूवे पच्छाउत्ते चाउलोदणे कप्पति से भिलिंगसूवे पडिगाहित्तए नो से कप्पति चाउलोदणे कम्हि तत्थ से पुव्वागमणे दो वि पुव्वाउत्ताइं कप्पति से दो वि पडिगाहित्तए तत्थ से पच्छागमणेण दो वि पच्छाउत्ताइं णो से कप्पति दो वि पडिगाहित्तए जे से तत्थ पुव्वागमणेणं पुव्वउत्ते से से कप्पति पडिगाहित्तए जे से तत्थ पुव्वागमणेणं पच्छाउत्ते से से णो कप्पति पडिगाहित्तए तस्स णं गंधातिकुलं पिंडवातपडियाए अणुपविट्ठस्स कप्पति एवं वदित्तए समणोवासगस्स पडिमापडिवन्नस्स भिक्खं दलयह तं वेतारूवेण विहारेणं विहरमाणं केइ पासेत्ता वदेज्जा केइ आउसो तुमं वत्तव्वेसिया समणोवासए पडिवज्जित्तए अहमंसीति वत्तव्वं सिया से णं एतारूवेणं विहारेणं विहरमाणे जहन्नेणं एगाहं वा दुयाहं वा तियाहं वा उक्कोसेणं एक्कारस मासे विहरेज्जा एक्कारस उवासगपडिमा ॥

अहावरेत्यादि व्यक्तं लुञ्चितशिरस्को लुञ्चितशिरोजो वा शिरसि जाता. शिरोजाः (गहियाइत्ति) गृहीतानि आचारपालनार्थं भाण्डकानि उपकरणानि पात्ररजोहरणमुखवस्त्रिकादीनि नेपथ्यं साधुवेषस्तथाप्रकारवस्त्रादिप्रावरणं ततो द्वन्द्वः तथा ( जारिसेत्ति ) यादृशः श्रमणानां निर्ग्रन्थानां बाह्याभ्यन्तरग्रन्थरहितानां धर्म्मः क्षान्त्यादिकः प्रज्ञप्तः तादृशमिति अध्याहार्यं तं धर्म्मं सम्यग् यथा भवति कायेन न तु मनोरथमात्रेण स्पर्शयन् पालयन् यथाचार (पुरउत्ति) पुरतोऽग्रतो युग्मात्रया शरीरप्रमाणया शकटोद्धिसंस्थितया दृष्ट्येति वाक्यशेषः प्रेक्षमाणः प्रकर्षेण पश्यन् भूभागं तत्र ( दट्ठूणत्ति ) दृष्ट्वा त्रस्यन्तीति त्रसा द्वीन्द्रियादयस्तान् । प्राणान् धरन्तीति प्राणा जीवाः पतङ्गादयः तान् ( उद्धट्टु ) पादमुद्धृत्याग्रतलेन पादपातप्रदेशं वातिक्रम्य गच्छेत् एवं संहृत्य शरीराभिमुखमाक्षिप्य पादं विवक्षितपादपातप्रदेशादारत एव विन्यस्य उत्क्षिप्तवान् भागपार्ष्णिकया गच्छेत् तथा तिरश्चीनं वा पादं कृत्वा गच्छेत् । अथ चान्यमार्गाभावे विधिः । सति च यस्मिन् गमनमार्गे तेनैव पराक्रमेन गच्छेत् ऋजुनेत्येव सर्वं साध्वनुगमेन सर्वं तेन त्यक्तं केवलं ( णायाए त्ति ) ज्ञातीय स्वजातिविषयं मातृपितृभ्रातृप्रभृतिविषयं प्रेमबन्धनमव्यच्छिन्नमत्रोटितं भवति एवमित्यादि एवमनन्तरवक्ष्यमाणप्रकारेण(न्ते) तस्य प्रतिमाधरस्य कल्पते युज्यते आहारग्रहकाले ( नायवीथित्ति ) ज्ञातयः स्वगोत्रजास्तेषां वीथी गृहपङ्क्तिस्तत्र प्राप्तः " एतएण " मित्यप्यन्तरे तस्य ( पुव्वागमणेणंति ) प्राकृतत्वात्पदव्यत्ययः आगमनात्पूर्वकालमथवा पूर्वं प्रतिमाधर आगतः पश्चाद्दायका राद्धुं प्रवृत्ता इति पूर्वागमनेन हेतुना पूर्वायुक्तस्तन्दुलोदनः कल्पते उपलक्षणं चैतत् सर्वौदनानाम् । ( पच्छाउत्ते भिलिंगसूवे त्ति ) पश्चादायुक्तो भिलिङ्गसूपो न कल्पते तत्र पूर्वायुक्तः प्रतिमाधरागमने पूर्वमेव स्वार्थं गृहस्थैः प्रकुमारब्धः प्रतिमाधरे वा गते य एतुमारब्धः स पश्चादायुक्तः स च न कल्पते उद्गमादिदोषसंभवात् पूर्वायुक्तस्तु कल्पते तदभावात् । भिलिङ्गसूपो मसूरादिदालिः शेषं स्पष्टम् । " तस्स णमिति " वाक्यालंकारे गृहपतिकुलं पिण्डपातप्रतिज्ञया अनुप्रविष्टस्य न कल्पते युज्यते एवं वक्तुं किं तदित्याह 'समणोवासगस्सेत्यादि' श्रमणोपासकस्य प्रतिमाप्रतिपन्नस्य भिक्षां दद्ध्व न पुनर्यथा साधवो गत्वा धर्म्मलाभमिति वदन्ति तथा स वदति एवं च प्रतिमा प्रतिपन्नस्य भिक्षां दद्ध्वमित्यपि न वदति अतो वस्तुनः प्रतिमां विना न भिक्षामार्गणमुचितं सूत्ररीत्येति 'त चेत्यादि' तं च श्रमणोपासकं प्रतिपन्नेनैतद्रूपेण विहारेण विचरन्तं दृष्ट्वा कश्चिन्निर्दिश्य वदेत् केय त्वंचित्ति किमाचारप्रतिपन्न आ प्रश्नयितुमन्वयवचनं त्वमिति भवान् वक्तव्यः स्यात् तदा स वदति 'समणोवासए इत्यादि' व्यक्तम् । निर्वचनवाक्यमपि पञ्चमप्रतिमाधिकारोक्तानि पदानि " सम्म काएण फासमाणे " इत्यादीनि व्यक्तानि शेष

पाठसिद्धम् । इत्येकादशोपासकप्रतिमा षष्ठमध्ययनं च समाप्तम् । दशा० ६ अ० । आ० चू० ।

एकादशी श्रमणभूतप्रतिमा तत्स्वरूपं चैतत् ।

खुरमुंडो लोएण व, रयहरणं उग्गहं व घेत्तूण ।
समणब्भूत्रो विहरइ, धम्मं काएण फासंतो ॥ ३५ ॥

क्षुरेण मुण्डेन मुण्डो मुण्डितः क्षुरमुण्डो लोचेन वा हस्तलुञ्चनेन वा मुण्डः सन् रजोहरणं पात्रप्रोञ्छनमवग्रहं च पतद्ग्रहं चोपकरणं चैनं साधूपकरणस्य सर्वस्य गृहीत्वाऽऽदाय श्रमणभूतः साधुकल्पः सकलसाधुसमाचारासेवनेन विहरति गृहान्निर्गत्य ग्रामादिषु विचरति साधुवत् धर्मं चारित्रधर्म्मं समितिगुप्त्यादिकं कायेन देहेन न मनोमात्रेण स्पृशन् पालयन्नेकादश्यां प्रतिमायामिति शेष इति गाथार्थः ।

ममकारेऽवोच्छिण्णे, वच्चति सण्णायपल्लि दट्ठुं जे ।
तत्थ वि जहेव साहू, गेण्हति फासुतं आहारं ॥ ३६ ॥

ममेत्यस्य करणं ममकारस्तस्मिन्नव्यवच्छिन्ने अनपगते सत्यनेन स्वजनदर्शनार्थिन्वकरणमुक्तं सञ्ज्ञाता स्वज्ञातयस्तेषां पल्ली सन्निवेशस्तां सञ्ज्ञातपल्लीं द्रष्टुं दर्शनाय सञ्ज्ञातानीति गम्यते जे इति पादपूरणे निपातः । तत्रापि सञ्ज्ञातपल्लीव्रजनेऽप्यास्तामन्यत्र यथैव यद्वदेव साधुः संयतस्तथैवेति शेषः गृह्णात्यादत्ते प्रासुकं तु प्रगतासुकमेवाचेतनमेवोपलक्षणत्वाच्चास्यैषणीयं चाहारमशनादिकमिति सञ्ज्ञातपल्लिग्रहणेन चेदं दर्शयति प्रेमाव्यवच्छेदात्तत्र गमनेऽपि तस्य न दोषस्तथा ज्ञातयः स्नेहादनेषणीयं भक्तादि कुर्वन्त्याग्रहकरणेन च तद्ग्राहयितुमिच्छन्त्यनुवर्तनीयाश्च ते प्रायो भवन्तीति तद्ग्रहणं सम्भाव्यते तथापि तदसौ न गृह्णातीति गाथार्थः । सञ्ज्ञातपल्लीगमन एव तस्य कल्प्याकल्प्यविधिमाह ॥

पुव्वाउत्तं कप्पति, पच्छाउत्तं तु ण खलु एयस्स ।
ओदणभिलिंगसूपा-दिसव्वमाहारजायं तु ॥ ३७ ॥

पूर्वं तदागमनकालात् प्राक् आयुक्तं रन्धनस्थाल्यादौ प्रक्षिप्तं पूर्वायुक्तं स्वार्थमेव रान्धुमारब्धमित्यर्थः । कल्पते ग्रहणयोग्यं भवति पश्चादायुक्तं तु तदागमनकालादनन्तरमायुक्तं पुनर्न खलु नैव एतस्यैकादशप्रतिमास्थश्रावकस्य कल्पत इति वर्तते । गृहस्थानामधिकृतश्रावकार्थमधिकृतौदनादिकरणसंकल्पसंभवात् किं तदित्याह । ओदनश्च कूर भिलिङ्गसूपश्च मसूराख्यद्विदलधान्यपाकविशेष आदिर्यस्य तत्तथा तत्सर्वमपि निरवशेषमप्याहारजातमन्यव्यवहार्यमामान्यं तुशब्दोऽपिशब्दार्थस्तस्य च प्रयोगो दर्शित एवेति गाथार्थः ॥

अथैतस्याः कालमानमाह ॥

एवं उक्कोसेणं, एक्कारस मास जाव विहरेइ ।
एगाहा पियरेण, एवं सव्वत्थ पाएणं ॥ ३८ ॥

एवमनेन प्रकारेण क्षुरमुण्डादिना एकादश मासान् यावद्विहरति मासकल्पादिना विहारेण एकाहादि एकादोरात्रप्रभृति आदिशब्दात् द्व्यहत्र्यहादि यावद्विहरतीति प्रकृतम् । इतरेण जघन्येनेत्यर्थः । इह च पूर्वं प्रतिमासु जघन्यं कालमान नोक्तमतस्तदतिदेशात् आह । एवमनेनैव प्रकारेण जघन्यमानमेकाहादीत्यर्थः । एतच्च मरणे वा प्रव्रजितत्वे वा सति संभवति नान्यथा सर्वत्र सर्वप्रतिमासु प्रायेण बाहुल्येन प्रायोग्रहणादन्तर्मुहूर्त्तादिमन्यादौ दर्शितं इति गाथार्थः । इह चोत्तरासु पदस्थापदस्थानुपूर्व्या प्रवागान्तरमपि दृश्यते । तथाहि रात्रिभक्तपरिज्ञा पञ्चमी, सचित्ताहारपरिज्ञा इति षष्ठी, दिया बंभचारी राओ परिमाणकडेति सप्तमी, दिया वि राओ वि बंभयारी असिणाणए वोसट्ठकेसमंसुरोमनहेत्ति अष्टमी, सारंभपरिण्णाए त्ति नवमी, पेस्सारंभपरिण्णाए त्ति दशमी, उद्दिट्ठभत्तविवज्जए समणभूए त्ति एकादशीति । तदेवं प्रतिमानुष्ठानमुपासकस्य । पंचा० १० विव० ।

'एक्कारसहिं उवासगपडिमाहिं' उपासकाः श्रावकास्तेषां प्रतिमाः प्रतिज्ञादर्शनादिगुणयुक्ताः कार्य्या इत्यर्थः । आव० ४ अ० । ग० । एकादशोपासकानां श्रावकाणां प्रतिमा प्रतिपत्तिविशेषा दर्शनव्रतसामायिकादिविषया प्रतिपाद्यन्ते यत्र तत्तथैवोच्यते इति । आचारदशानां षष्ठेऽध्ययने, स्था० १० ठा० । प्रथमायां श्राद्धप्रतिमायां दर्शनिलिङ्गादिभिक्षुकाणामन्नादि दातुं कल्पते न वा ॥१॥ तथा कुलगुरुसंबन्धेन समागतानां दर्शन्यादीनामपि ॥ २ ॥ अन्यच्च नवमप्रतिमादिषु देशावकाशिकं कर्त्तुं युज्यते न वा ॥३॥ तथा क्वचिल्लिखितविधौ दशमप्रतिमायां कर्पूरवासादिभिर्जिनानां पूजा कर्त्तव्येति लिखितमस्ति तद्विषये कियतीः प्रतिमा यावच्चन्दनपुष्पादिभिः पूजा कियतीषु च कर्पूरवासादिभिः कस्यां न वेति ॥४॥ (उत्तरम्) प्रथमश्राद्धप्रतिमायां दर्शनिलिङ्गादिभ्योऽनुकम्पादिना अन्नादि दातुं कल्पते न तु गुरुबुद्ध्येति तत्त्वम् ॥ १ ॥ एवं कुलगुरुतादिसंबन्धेनागतानां लिङ्गिनां दातुं कल्पते ॥ २ ॥ नवमप्रतिमादिषु देशावकासिकस्याकरणमेव प्रतिभाति ॥ ३ ॥ तथा प्रतिमाधरश्रावकाणां सप्तमप्रतिमा यावच्चन्दनपुष्पादिभिरर्हदर्चनमौचित्यमञ्चति । ललितविस्तरापञ्जिकाभिप्रायेण नत्वष्टम्यादिषु । कर्पूरादिपूजा तु अष्टम्यादिष्वपि नानुचितेति ज्ञायते तेषां निरवद्यत्वादिति । अक्षराणि तु ग्रन्थस्थाने नोपलभ्यन्ते इति । एकादश्यां च साधुवदेवेति बोध्यम् । ४ ॥ ही० ।

**उवासण**—उपासन—न० उपास्यन्ते भूयः क्षिप्यन्ते शरा यत्र उप-अस्-विक्षेपे, आधारे-ल्युट् । शरक्षेपशिक्षार्थे शराभ्यासे, अमरः । उप-आस्-भावे-ल्युट् चिन्तने, मनने, वाच० । सेवने, ध० २ अधि० । त च परिव्वायगो बहूहिं उवासणेहिं लब्ध नि० चू० । १उ० । "सुस्सूसमाणो उवासेज्जा, सुप्पन्नं सुतवस्सियं" सूत्र० १ श्रु० ९ अ० ।

**उवासणा**—उपासना—स्त्री० श्मश्रुकर्त्तनादिरूपे नापितकर्मणि, तच्च ऋषभदेवकाले एव जातं पूर्वमनवस्थितनखरोमानस्तथा कालमाहात्म्यत प्राणिनोऽभवन्निति किञ्च भगवत्काल एव नखरोमाण्यतिरेकेण प्रवर्द्धितुं लग्नानि न पूर्वमिति । गुरुराजादीनां पर्य्युपासनायाम्, आ० म० प्र० । तदुक्तं निर्युक्तिकृता "उवासणाणाम सुकम्ममाईया गुरुरायाईणं वा उवासणा पज्जुवासणया" । आ० म० प्र० । आ. चू. (उसहशब्दे स्पष्टीभविष्यत्येतत्)

**उवासमाण**—उपासीन—त्रि० उपासनं विदधाने, स्था० ६ ठा० ।

**उवासीय**—उपोषितवत्—त्रि० कृतोपवासे, " नवकिरचाउम्मासे, छक्किर दो मासिए उवासीय" आ० म० द्वि० ।

**उवाह**—अवगाह—धा—भ्वा—आत्म० प० । अवगाहने, अवात् गाहेर्वाहः ८ । ४ । ४ । अवात्परस्य गाहेर्वाह इत्यादेशो वा । उवाहइ उवगाहइ अवगाहते । प्रा० ।

**उवाहण**—उपानह—स्त्री० उप-नह-क्विप्-उपसर्गदीर्घः । चर्मपादुकायाम्, । "छत्तोवाहणसंजुत्ते, धाउरत्तवत्थपरिहिए" भ० २ श० १ उ० " अणुवाहणाय समणा मज्झे चउवाहणा हु तु " आव० १ अ० । अनुपानत्काश्च श्रमणाः मम चोपानहौ भवत इति । आ० म० प्र० ।

**उवाहि**—उपाधि—पुं० उपाधीयते इति उपाधिरुच्यते हिरण्या-

टौ जावतोऽष्टप्रकारे कर्मणि, उपाधीयते व्यपदिश्यते येनेत्युपाधिः । आचा० १ श्रु० ३ अ० । कर्मजनिते विशेषणे, ।

किमत्थि उवाही पासगस्स णत्थि विज्जइ णत्थि त्ति बेमि

किं प्रश्ने अस्ति विद्यते कोऽसावुपाधिः कर्मजनितं विशेषण तद्यथा नारकस्तिर्यग्योनिः सुखी दुःखी सुभगो दुर्भगः पर्याप्तकोऽपर्याप्तक इत्यादि आहोश्विन्न विद्यते इति परमतमाशङ्क्य त कथ्यु पश्य कस्य सम्यग्वादादिकमर्थं पूर्वोपात्त पश्यनीति पश्य' स एव पश्यकस्तस्य कर्मजनितोपाधिर्न इत्येतदनुसारेणाहमपि ब्रवीमि न स्वमनीषिकयेति आचा० १श्रु०४अ०४उ० । उपाध्यानमुपाधिः । सन्निधौ, भ० १ श० १ उ० । अन्यथा स्थितस्य वस्तुनोऽन्यथाप्रकाशनरूपे कपटे, उपाधीयते स्वधर्मोऽनेन करणे-वा-कि' । स्वसामीप्यादिनाऽन्यस्मिन् स्वधर्मारोपसाधने विशेषणभेदे, उपलक्षणरूप विशेषणे च । कुटुम्बव्यापृते, उपाधीयते नाम समीपे कर्मणि के । उपनामनि, यथा भट्ट चार्यमिश्रादय । उपाधीयते मनोऽत्र आधारे कि' । धर्मचिन्तायाम् व्यभिचारोन्नायके न्यायमतसिद्धे पदार्थभेदे च । उपाधि साध्यत्वाभिमतव्यापकत्वे सति साधनत्वाभिमताव्यापक । वाच० ॥

उवाहिसुद्ध-उपाधिशुद्ध- आर्यदेशसमुत्पन्नादिविशेषणशुद्धे, " ता वयाण गीओ, उवाहिसुद्धाण देइ पव्वज्जं " पं० व० ॥

उविंत्ता-अपनरय- अव्य० विच्छिद्येत्यर्थे, " जावतिय २ अतो पमिग्गहगस्स उविंत्ता उवसज्जा " व्य० १ उ० ॥

उविंद-उपेन्द्र-पुं० उपगत इन्द्रम कृष्णे, अत्या समा० सुस्थितो विषयासूता नेन्द्रोपेन्द्रादयो रह' । उपेन्द्र कृष्ण । अष्ट० । " राजाऽधिराजस्तत्रासीदुपेन्द्रोऽपीन्द्रवद् भुवि । सदा नव सुमनसां, चित्रमोदमदस्तयत् " आव० १ अ० । तत्रेति द्वारवत्याम ।

उविंदवज्जा-उपेन्द्रवज्रा- स्त्री० " उपेन्द्रवज्रा जतजास्ततो गौ" इति वृ० र० उक्ते एकादशाक्षरपादके छन्दोभेदे, । अस्याश्च इन्द्रवज्रया समेलने उपजातिर्भवति । वाच० ॥

उविक्खेव-उत्क्षेप-पुं० वालोत्पाटने, मुण्डनमिति लोकोक्तिप्रसिद्धेऽर्थे, तं० ॥

उवियग्ग-उद्विग्न- त्रि० उद्वेगवति , स्था० ४ ठा० ।

उ(ओ)वील-अपवीड-न० शेखरे, वि० ६ अ० । अवपीडन परेषामित्यवपीड' । अष्टादशे गौणादत्तादाने, प्रश्न० १ श्रु० ३ अ० ॥

उवीलण-अपपीडन- न० निष्पीडने, विपा० ७ अ० ।

उवीला-उपपीडा-स्त्री० वेदनायाम्, "अप्पेते उवील दलेंति" अवपीड शेखरमस्तके तस्यारोपण त उपपीडांचा वेदनां दलयन्ति विपा० ६ अ० ।

उवीलेमाण- ( उप ) अपपीडयत्- त्रि० वेदनामुत्पादयति, " उवीलेमाणे विश्रम्ममाणे तज्जमाणे " विपा० ३ अ० ।

उवूहेत्ता-अनुवृंहयितृ- त्रि० परेण सम्य क्रियमाणस्य पुजादेरनुमोदयितरि, तद्भावे हर्षकारिणि, "पूयासक्कारमप उवूहेत्ता भवइ " स्था० ७ ठा० ।

उवेच्च-उपेत्य-अव्य० उप-इ- ल्यप् । प्राप्येत्यर्थे. " उवेच्च मुद्धेण उवेति मोक्खं " सूत्र० १ श्रु० १४ अ० ॥

उवेय-उपेत- त्रि० उप-इण-क्त । उपगते, समीपगते, सेवादिभ्रंमेण प्राप्ते, वाच० । युक्ते. स० । सथा० । पञ्चा० । आव० । " पसाउप्फलकयेति ' उत्त० ७ अ० । नि० । समन्विते च । नं० ।

उवेय- त्रि० उप-इण-यत् । उपायमात्र्य प्राप्तव्ये उपगम्ये, अभिप्रगम्ये च । वाच० । उपेयभावे उपायसिद्धि विशे० । स्था० ।

उवेल्ल-प्र-सृ- धा० प्रसरणे. "प्रसरः पयल्लोवेल्लौ" ८ । ४ । ७७ । इति प्रसरतेरुवेल्लादेश उवेल्लइ प्रा० ॥

उवेहमाण-उपेक्षमाण- त्रि० अवगच्छति, ' आयहाजोगमुवेहमाणे इति कम्म परिणाय स्व्वसो से ण हिंसति " आचा० । १ श्रु० ४ अ० । अकुर्वति, आचा० १ श्रु० ३ अ० । अपर्यालोचयति ' उवेहाए उवेहमाणे अणुवेहमाणं बूया उवेहाहि संमयाए भवति " आगमपरिकर्मितमतित्वाद् यथावस्थितपदार्थस्वभावदर्शितया सम्यगसम्यगिति उत्प्रेक्षमाण पर्यालोचयत्परमुत्प्रेक्षमाण गड्डरिकायूथप्रवाहप्रवृत्त वा गतानुगतिकन्यायानुमारिणं शङ्कया वा प्रव्रजन्त तथायथोत्प्रेक्षस्व पर्यालोचय सम्यग्भावेन माध्यस्थ्यमवलम्ब्य किमेतदर्हदुक्त जीवादितत्त्व यथामियत्र्याहोश्विदेतत्यक्षिणी निमीत्य चिन्तयति भाव । यदि वोत्प्रेक्षमाण संयममुत्प्रावल्येनेक्षमाण संयमे उद्यच्छन्तु प्रेक्षमाण तथायथा सम्यग्ज्ञानापन्न संयममुत्प्रेक्षस्व संयमे उद्योग कुरु । आचा० १ श्रु० ५ अ० ५ उ० । ' उवेहमाणे कुसलेहिं सवसे" उपेक्षमाण परीषहोपसर्गान् सहमान इष्टानिष्टविषये वोपेक्षमाणो माध्यस्थ्यमवलम्बमान कुशलैर्गीतार्थै सह संवसेत् आचा० २ श्रु० । उदासीने, उवेहमाणा णाढ्रयमंडे" ॥ उपेक्षमाणा इति उपेक्षा द्विविधा व्यापारोपेक्षा अव्यापारोपेक्षा च । तत्र व्यापारोपेक्षया तमुपेक्षमाणास्तद्विषयाः छेदनबन्धनादिकाया समयप्रसिद्धक्रियायां व्याप्रियमाणा इत्यर्थ । अव्यापारोपेक्षया च मृतकम्बलजनादिभिस्त सक्रियमाणमुपेक्षमाणास्तद्विषयोदासीना इत्यर्थ स्था० ६ ठा० ।

उवेहा-उपेक्षा-स्त्री० उप-ईक्ष-अ अवधीरणे, माध्यस्थ्ये, षो० ४ विव० । वा० । आरोपणे, अष्ट० । विशेषणे, षो० १३ विव० । परदोषोपेक्षणमुपेक्षा परेषा दोषा अविनयादयः प्रतिकर्तुमशक्यास्तेषामुपेक्षाऽवधीरणमुपेक्षा । सम्भवत्प्रतीकारेषु दोषेषु, नोपेक्षा विधेया षो० ४ विव० । " उवेहेण बहिया य लोयं " ( उवेहेति ) योऽयमनन्तर प्रतिपादित पापण्डिलोक एत धर्माद्बहिर्व्यवस्थितमुपेक्षस्व तदनुष्ठान मानुमस्था । चशब्दोऽनुक्तसमुच्चयार्थस्तदुपदेशमभिगमनपर्युपासनदानसंस्तवनादिक च मा कृथा इति आचा० १ श्रु० ४ अ० २ उ० । ( य' पापण्डिलोकोपेक्षक स क गुणमवाप्नुयादिति सम्मत्तशब्दे वक्ष्यते सति कलहे उपेक्षा कर्त्तव्येत्यहिगरण शब्दे उक्तम् )

उवेहाअसंजम-उपेक्षाऽसंयम-पुं० असंयमयोगेषु व्यापारणरूपे संयमयोगेष्वव्यापारणलक्षणे वाऽसंयमभेदे. स० ।

उवेहाए-उपेक्ष्य-अव्य० उप-ईक्ष-ल्यप्-पर्यालोच्येत्यर्थे. आचा० १ श्रु० ३ अ० । ज्ञात्वेत्यर्थे, "लोगविस्स च उवेहाए" उपेक्ष्य ज्ञात्वा ज्ञपरिज्ञया ज्ञात्वा प्रत्याख्यानपरिज्ञया परिहरेत् आचा० १ श्रु० ५ अ० ।

उवेहासंजम-उपेक्षासंयम-पुं० संयमभेदे इदानीमुपेक्षासंयम उच्यते सा चोपेक्षा द्विविधा स्या व्यापारोपेक्षा गृहस्थव्यापारोपेक्षा च । तत्र यथासाध्य चोदनाचोदनाविषया । संयतस्य चोदनविषया व्यापारोपेक्षा । एतदुक्त भवति साधु विषीदन्त दृष्ट्वा संयमव्यापारेषु चोदयत संयमव्यापारोपेक्षा ईक्ष दर्शने उप समीपेन ईक्षा उपेक्षा । गृहस्थस्य तु व्यापारो-

वरिउव्वट्टणुताणं, पमुच्चइ जाइ य जहन्नो ॥

अबाधाया उपरितन यत् स्थितिस्थानं तद्द्विक प्रतीत्य उद्वर्तनाकरणे परम उत्कृष्टो निक्षेपो भवति परमं तु स्थितिस्थान यस्मात्पर नोद्वर्तते तदधिकृत्य जघन्यो दलिकनिक्षेप ।
सम्प्रति यावन्मात्रा स्थितय उद्वर्तनयोग्यास्ता प्रतिपादयति ।

उक्किट्ठे ठिइबंधे, बंधावलिया अबाहमेत्तं च ।
निक्खेवं च जहन्नं, ता मोत्तुं उव्वए सेसं ॥

उत्कृष्टे स्थितिबन्धे क्रियमाण बन्धावलिकामबाधामात्रं निक्षेप च जघन्यम् । इह जघन्यनिक्षेपग्रहणात् सर्वोपरितनी आवलिका आसंख्येयभागाधिका गृह्यते ततस्तां च मुक्त्वा शेषं सर्वमपि स्थितिजातमुद्वर्तते भावना चैतद्विषया प्रागेव कृता । एष निर्व्याघाते विधिः । व्याघाते पुनरयम् ।

निव्वाघाए एव, वाघाओ संतकम्मठिइबंधो ।
आवलिअसंखभागो, जा वलिओ तत्थ अइत्थवणा ॥

एव पूर्वोक्तेन प्रकारेण दलिकनिक्षेपो निर्व्याघाते व्याघाताभावे द्रष्टव्य व्याघाते पुनरन्यथा । अथ कोऽसौ व्याघात इत्याह । व्याघात प्राक्तनस्थितिसत्कर्मापेक्षया इत्यधिकाभिनवकर्मबन्धरूपा तत्रातिस्थापना आवलिकाया असंख्येयतमो भाग स च प्रवर्तमानस्तावदवसेयो यावदावलिका । इयमत्र भावना । प्राक्तनसत्कर्मस्थित्यपेक्षया समयादिनाऽभ्यधिको योऽभिनवकर्मबन्धस्य व्याघात इहाभिप्रेतस्तन्नामा स्थापना आवलिका जघन्याया असंख्येयभागमात्रा । तथा हि प्राक्तनसत्कर्मस्थितेः सकाशात् समयमात्रेणाभ्यधिकेऽभिनवकर्मबन्धे सति प्राक्तनसत्कर्मणोऽन्त्यर्थो द्विचरमा वा स्थितिर्नोद्वर्तते । एव यावदावलिका जघन्याया असंख्येयभागमात्रा अन्यस्याश्चावलिकाया असंख्येयतमो भाग इति । एवं समयद्वयेन समयत्रयेण यावदावलिकाया असंख्येयतमेनापि भागेनाधिके अभिनवकर्मबन्धे द्रष्टव्यम् । यदा पुनर्द्वाभ्यामावलिकासंख्येयतमाभ्यां भागाभ्यामधिकोऽभिनवकर्मबन्ध उपजायते तदा प्राक्तनसत्कर्मणोऽन्त्यस्थितिरुद्वर्तते उद्वर्त्य च आवलिकाया प्रथम संख्येयतम भागमतिक्रम्य द्वितीयेऽसंख्येयतमे भागे निक्षिप्यते एतौ अतिस्थापनानिक्षेपौ जघन्यौ । यदा पुन समयाभ्यधिकाभ्या द्वाभ्यामावलिकाया असंख्येयतमाभ्यां भागाभ्यामधिकाभिर्नवकर्मबन्धस्तदा आवलिकाया प्रथममसंख्येयतम भाग समयाधिकमतिक्रम्य असंख्येयतमे भागे निक्षिप्यते एवमभिनवकर्मबन्धस्य समयादिवृद्धौ अतिस्थापना प्रवर्द्धते सा च तावत् यावदावलिका परिपूर्णा भवति । निक्षेपस्तु सर्वत्रापि तावन्मात्र एव भवति तत ऊर्द्ध्व पुनरपि नवकर्मनिक्षेप एव केवलो वर्धते । एतदेवाह ।

आवलि दोसंखंसो, जइ वड्ढइ अहिणवो उ ठिइबंधो ।
उक्किट्ठातो चरिमा, एवं जा वलिय अइत्थवणा ॥
अइत्थवणा वलियाए, पुण्णाए वड्ढंति निक्खेवो ।

यदा प्राक्तनस्थितिसत्कर्मापेक्षया अभिनवस्थितिबन्धो वर्द्धते द्वावावलिकाया असंख्येयभागौ यतस्तौ भागौ तत प्राक्तनस्थितिसत्कर्मणोऽन्त्या स्थितिरुद्वर्तते । उद्वर्त्य चावलिकायाः प्रथमसंख्येयतम भागमतिक्रम्य द्वितीये असंख्येयतमे भागे निक्षिपति एतावता स्थापनानिक्षेपौ जघन्यो ततोऽभिनवकर्मबन्धस्य समयादिवृद्धावतिस्थापना वर्द्धते यावद् यावदावलिका परिपूर्णा भवति निक्षेपस्तु तत्र सर्वत्रापि तावन्मात्र एव अतिस्थापनावलिकायां परिपूर्णायां निक्षेपो वर्द्धते इति शब्द उद्वर्तनाकर्तव्यतापरिसमाप्तिसूचको यावद्धानेन नवकर्मबन्ध प्राक्तनस्थितिसत्कर्मण सकाशात् द्वाभ्यामावलिकासंख्येयतमाभ्यां भागाभ्यामधिको न भवति तावत् प्राक्तनस्थितिसत्कर्मणश्चरम स्थितेरध आवलिकामसंख्येयभागाधिकामतिक्रम्योपरितने आवलिकाया असंख्येयतमे भागे निक्षिपति । यदा तु द्वितीयमधस्तनीं स्थितिमुद्वर्तयति तदा समयाधिके असंख्येयतमे भागे निक्षिपति एव प्रकारेण द्रष्टव्यम् । संप्रत्यल्पबहुत्वमुच्यते या जघन्या अतिस्थापना यश्च जघन्या निक्षेप एतौ द्वावपि सर्वस्तोकौ परस्पर च तुल्यौ एतौ द्वावप्यावलिकासत्कासंख्येयतमभागप्रमाणौ ताभ्यामसंख्येयगुणा उत्कृष्टा अतिस्थापना तस्या उत्कृष्टाबाधारूपत्वात् ततोऽप्युत्कृष्टो निक्षेपोऽसंख्येयगुणो यतोऽसौ समयाधिकावलिकया साबाधया हीना सकर्मस्थिति ततोऽपि सर्वकर्मस्थितिर्विशेषाधिका पं० सं० । क० प्र० ।

अथानुभागोद्वर्तनामाह ।

चरमं नो वट्टिज्जइ, जा ठाणंताणि फड्डगाणि तउ ।
उस्सक्कियउवट्टइ, उदयावट्टणा एवं ॥

चरम स्पर्द्धकं नोद्वर्तयते नापि द्विचरम नापि त्रिचरमम् एवमधस्ता तावद्वाच्यं यावच्चरमान् स्पर्द्धकानधोऽनन्तानि स्पर्द्धकानि नोद्वर्तयते किं तु तस्य चतुष्कस्याधस्तादवतीर्य यानि स्पर्द्धकानि समयमात्रस्थितिगतानि तान्युद्वर्तयति तानि चोद्वर्त्य आवलिकामात्रस्थितिगतानि अनन्तानि स्पर्द्धकानि अतिक्रम्योपरितने ते आवलिकासत्कासंख्येयभागमात्रगतेषु स्पर्द्धकेषु निक्षिपति । यथा पुनरधोऽवतीर्य द्वितीयसमयमात्रस्थितिगतानि स्पर्द्धकानि उद्वर्तयति तथा आवलिकामात्रस्थितिगतानि स्पर्द्धकानि अतिक्रम्य उपरितनेषु समयाधिकावलिकासत्कर्मासंख्येयभागमात्रगतेषु स्पर्द्धकेषु निक्षिपति एव यथा यथा अधोऽवतरति तथा तथा निक्षेपो वर्द्धते अतिस्थापना पुन पुनः सर्वत्रापि आवलिकामात्रस्थितिगतान्येव स्पर्द्धकानि । कियान् पुनरुत्कृष्टो निक्षेपविषय इति चेदुच्यते बन्धावलिकायामतीतायां समयाधिकावलिकामात्रगतानि स्पर्द्धकानि व्यतिरिच्य शेषाणि सर्वाण्यपि निक्षेपविषयः । सम्प्रत्यत्रैवाल्पबहुत्व चिन्त्यते सर्वस्तोको जघन्यनिक्षेप तस्यावलिकासत्कासंख्येयभागगतस्पर्द्धकमात्रविषयत्वात् ततोऽतिस्थापना अनन्तगुणा निक्षेपविषयस्पर्द्धकेभ्य आवलिकामात्रस्थितिगतानां स्पर्द्धकानामनन्तगुणत्वात् । एव सर्वत्राप्यनन्तगुणता स्पर्द्धकापेक्षया द्रष्टव्या तत उत्कृष्टो निक्षेपोऽनन्तगुण ततोऽपि सर्वो भागो विशेषाधिक । तदेवमुक्ता अनुभागोद्वर्तना । पं० सं० ( कर्मप्रकृतौ तु " एव उव्वट्टणाइ उ " एव चतुर्थपाद । अयमिहानुपयुक्तोऽव्याख्यातोऽपि गाथापूर्तये प्रदर्शितः )

उद्वर्तनमुद्वर्तना । तत्कायान्निर्गमे मरणे , " दोएहं उव्वट्टणा पण्णत्ता त जहा नेरइयाण चेव भवणवासीण चेव " उद्वर्तना नैरयिकभवनवासिनामेवेदं व्यपदिश्यते अधोगमनात् मरणमेवेति । स्था० २ ठा० । ( उद्वर्तनाया सर्वा वक्तव्यता उववायशब्दे दर्शिता यथा सान्तरं निरन्तरं चोद्वर्तन्ते इति मतोऽनन्तरं वा नैरयिकतिर्यग्युद्वर्त्य तीर्थकरत्वादिलाभ इति च अंतकिरिया शब्दे उक्तम् )

खुड्डागकडजुम्मनेरइयाणं भंते ! अणंतरं उव्वट्टित्ता कहिं उववज्जंति किं णेरइएसु उववज्जंति तिरिक्खजोणिएसु

उववज्जंति उव्वट्टणा जहा वक्कंतीए तेणं भंते ! जीवा एगसमएणं केवइया उव्वट्टंति गोयमा ! चत्तारि वा अट्ठ वा बारस वा सोलस वा संखेज्जा वा असंखेज्जा वा उव्वट्टंति तेणं भंते ! जीवा कहं उव्वट्टंति ? गोयमा ! से जहाणामए पवए एवं तहेव, एवं सो चेव गमओ जाव आयप्पओगेणं उव्वट्टंति णो परप्पओगेणं उव्वट्टंति रयणप्पभपुढविखुड्डागकडजुम्म एवं रयणप्पभाए वि एवं जाव अहेसत्तमाए वि । एवं खुड्डागतेओगे खुड्डागदावरजुम्मे खुड्डागकलिओगे णवरं परिमाणं जाणियव्वं सेसं तं चेव सेवं भंते ! भंतेत्ति (३१ श० ३१ उ०) कण्हलेस्सकडजुम्मे णेरइया एवं एएणं कमेणं जहेव उववायसए अट्ठावीसं उद्देसगा भणिया तहेव उव्वट्टणासए वि अट्ठावीसं उद्देसगा भाणियव्वा णिरवसेसा णवरं उव्वट्टंति त्ति अभिलावो भाणियव्वो सेसं तं चेव सेवं भंते ! भंते ! त्ति जाव विहरइ ॥ उव्वट्टणासयं सम्मत्तं ॥ ३२॥ भ० ३२ श० ३२ उ० ।

उव्वट्टणासंकम–उद्वर्तनासंकम–पुं० उन्मानप्रकृतीनां बन्धे, 'आय गाउव्वट्टइ' प० सं० स्तोकस्य रसस्य प्रभूतीकरणे, पं० सं० ।

उव्वट्टित्ता–उद्वर्त्य–अव्य० उद्वर्तनं कृत्वेत्यर्थे, स्था० २ ठा० ॥

उव्वट्टिय–उद्वर्तित–त्रि० पिष्टकादिना कृतोद्वर्तने, "अब्भंगिय संवाहिय उव्वट्टियमज्जियं च से जाए" पिं० । तत्वाच्चयाविते, "उवट्टिया पओस, तोस तब्भामओ य सेजंते" या अभिनवस्थापिता सती धात्री उद्वर्तिता धात्रीत्वाच्चयाविता । पिं० । कृतोद्वर्तनाके, "णरगा उवट्टिया अधण्णा ते वि य दीसंति" प्रश्न० १ द्वा० । ततो वि उव्वट्टिया समाणा पुणो वि पवज्जंति" प्रश्न० ३ द्वा० । "आउक्खएण उव्वट्टिया समाणा" प्रश्न० १ द्वा० ।

उव्वड्ड–उद्वृद्ध–त्रि० उद्वृद्धिमपगते, "अमुगो पव्वतराया उव्वड्डा अणउज्जंता पुरिसा कूरुवेहे उवर्णेतु" । आ० म० द्वि० ।

उव्वत्त–उद्वृत्त–त्रि० कृतोद्वर्तने, "मच्छुव्वत्त 'मत्स्योद्वृत्तमेकं वन्दित्वा मत्स्यवदु वृत्तं द्वितीयं साधुं द्वितीयपार्श्वेन रेचकावर्तेन परावर्तेत आ० ३ अ० ।

उव्वत्तण–उद्वर्तन–न० एकपार्श्वादन्यपार्श्वीभवने, ध०३अधि० । "उत्ताणयस्स पासल्लियकरणं उव्वत्तणं" नि० चू० ४उ० । उद्वर्तनं नाम तस्या उत्तानाया पार्श्वतः करणम् । बृ० ३ उ० । उद्वर्तने, "उव्वत्तणणिव्वेवणवीरंते अणिओगे" उर्द्ध वर्तन यद्गमापु वर्तते । ओ० । शरीरपरिचर्यायाकारिषु निर्यामकेषु, प्रश्न० ३ द्वा० ।

उव्वर–देश|-धर्मार्थे, दे० ना० ।

उव्वहण–उद्वहन–न० उच्चोल्य वहनम् । उत्तोल्य स्कन्धादिना वहने, विवाहे च । वाच० । जीविकाद्यभिनात्मनो धारणे, सू० ।

उव्वा–उद्‌–वा–धा० स्वा० प० अक० सेट् "स्वराद्‌नतो वा" ८ । ४ । २४० । अकारान्तवर्जितात्स्वरान्ताद्धातोरन्तेऽकारागमो वा भवति अन्त्यकारागमो वा । उव्वाइ उव्वाअइ उद्वाति । प्रा० । "उद्वाते रोहम्भावमु आ ८ । ४ । ११ इत्यादेशे कृते ओरम्माइ उम्भाअइ उद्वाइ प्रा० धर्मार्थे, दे० ना० ।

उव्वागीत–उद्गीति–पुं० यत्यानसे, अष्ट० ।

उव्वात–उद्वात–पुं० परिश्रान्ते, "अत्तद्धाणे उव्वाता जिक्खोवहिसाणएण पडिणीए" वृ० १ उ० । "उव्वातो दिवस तिएइं तु अतिक्कमे गुरुगा" उद्वात. परिश्रान्त इति कृत्वा नष्टः । व्य० १ उ० । अतिपरिश्रान्ते, "हिंडंतो उव्वातो सुत्तत्थाणं च गच्छपरिहाणी" व्य० ४ उ० ।

उव्वाह–देशी-धर्मार्थे, दे० ना० ।

उव्वाहिज्जमाण–उद्वाध्यमान–त्रि० प्राबल्येन बाध्यमाने, "उच्चारपासवणेणं उव्वाहिज्जमाणे" आचा० २ श्रु० । प्राबल्येन मोहोदयात्पीड्यमाने, "उव्वाहिज्जमाणे गामधम्मेहिं" आचा० १ श्रु० ५ अ० ।

उव्विग्ग–उद्विग्न– त्रि० उद्-विज्-कर्त्तरि-क्त-सर्वत्र लवरामचन्द्रे ८ । २ । ७९ । इति लोप प्रा० । आनन्दरसत्यागमासे, भ०३ श० १० उ० भीते, "जम्ममच्चुभउव्विग्गा दुक्खरसतगवेसिणो" उत्त० १४ अ० । "अकविजम्मणा णिच्चवासउणगाण" प्रश्न० १ द्वा० । उद्वेगवति, "उव्विग्ग अप्पुया असरणा अडवीवासं उवेंति" प्रश्न० ३ द्वा० । पराङ्मुखचित्ते, तेण नरकेसु नारका णिच्च तसिया णिच्च उव्विग्गा" प्रश्ना०२५९ । यथोक्तदुःखानुभवतस्तत्कृतवासपराङ्मुखचित्ता. जी० ३ प्रति० ॥

उव्विग्गया–उद्विग्नता–स्त्री० इष्टवियोगाद्यनिमित्तकसहजत्यागेच्छायाम, भवाद्दुद्विग्नताख्यौ, द्वा० २१ द्वा० ।

उव्विव–उद्‌विज्–धा०उद्वेगे, उद्विज ८।४। २६ उद्विजेरन्त्यस्य वो भवति । उव्विवइ उद्विजते प्रा० ।

उव्विह–उद्विह– पुं० द्वादशानामाजीविकोपासकानां तृतीये , भ० ८ श० ५ उ० ।

उव्विहंत–उद्विजहत्–त्रि० ऊर्द्ध क्षिपति, भ० ७ श०१४ उ० । उत्पतति च । किमपरं मणसा वि उव्विहत्ता इति ज्ञा०१७अ० ।

उव्विहमाण–उद्विजहत्–त्रि० उद्विजहाति, ज० १ श० ७ उ० ।

उव्विहिय–उद्‌व्यूह्य–अव्य० उत्प्रेक्ष्येत्यर्थे, भ० १३ श०७ उ० ।

उव्वीढ–उद्‌व्यूढ–त्रि० ईर्वोद्व्यूढे ८ । १ । १२० । इति उद्व्यूढशब्दे ऊत ईत्व वा । उव्वीढ उव्वूढं । उत्प्रेरिते. प्रा० ।

उव्वीलय -अपव्रीडक--पु० लज्जया अतिचारान् गोपायन्तमुपदेशविशेषैरपव्रीडयति , विगतलज्जं करोतीति अपव्रीडकः । पंचा० १५ विव० । स्था० । लज्जयाऽतिचारान् गोपायन्त विचित्रवचनैर्विलज्जीकृत्य सम्यगालोचनाकारयितरि, आलोचनाप्रतीच्छके, भ०२५श०७उ० । अय ह्यालोचकस्यात्यन्तमुपकारको भवतीति ध०२ अधि० । अभिहित च "ववहार ववहरं आगममाई उ सुणइ पंचविहा । आवीलुवगूहतं जह आलोएइ तं सव्व" स्था० ८ ठा० ।

उव्वीलेमाण--अवपीडयत्--त्रि० बाधयति, "पंथकोडेहिय उव्वीलेमाणे २ विहिंसेमाणे २ विहरइ" वि० १ श्रु० १अ० पा० ।

उव्वुड्डुयणिवुड्डुय-उन्मग्ननिमग्नत्व-न. ऊर्ध्वाधो जलगमने,उपचारात्मानामातपरितापने, "सातस्स असातस्स य, परितावणमयं उव्वुड्डुणिवुड्डुय करेति" सातमुन्मग्नत्वमिव असातपरितापनं निमग्नत्वमिवेति । प्रश्न० ३ द्वा० ।

उव्वूढ–उद्‌व्यूढ–न० उद्-वि-वह-क्त ईर्वोद्व्यूढे ८ । १ । १२० । इति ऊत इत्याभावे रूपम् । उत्प्रेरिते, प्रा० ।

उव्वेग–उद्वेग–पुं० उद्-विज-घञ्-कुत्वम् । शोके, देवानामुद्वेग ।

तिहिं ठाणेहिं देवे उव्वेगमागच्छेज्जा तंजहा अहो णं मए इमाओ एयारूवाओ दिव्वाओ देविड्ढीओ दिव्वाओ देवजुईओ दिव्वाओ देवाणुभावाओ पत्ताओ लद्धाओ अभिसमण्णागयाओ चवियव्वं भविस्सइ १ अहो णं मए माउओयं पिउसुक्कं तं तदुभयसंसिट्ठं तप्पढमयाए आहारो आहारेयव्वो भविस्सइ २ अहो णं मए कलमलजंबालाए असुईए उव्वेयणिज्जाए भीमाए गब्भवसहीए वसियव्वं भविस्सइ ॥ ३ ॥

( उव्वेगवि ) उद्वेगं शोकं भयेनाध्यवनीयं भविष्यतीत्येकं तथा मातुरोज आर्तवं पितुः शुक्रं तत्तथाविधं किमपि विलीनानामतिविलीनं तयोरोजःशुक्रयोरुभयं द्वयं तदुभयं तच्च तत् संसृष्टं संश्लिष्टं वा चेति परस्परमेकीभूतमित्यर्थः । तदुभयसंसृष्टं तदुभयसंश्लिष्टं वा तत्प्रथमतया तस्य गर्भवासकालस्य प्रथमता तत्प्रथमता तस्यां प्रथमसमय इत्यर्थः । स आहर्तव्योऽभ्यवहार्यो भविष्यतीति द्वितीयम् । तथा कलमलो जठरद्रव्यसमूहः स एव जम्बालः कर्दमो यस्यां सा तथा तस्यामत एवाशुचिकायामुद्वेजनीयायामुद्वेगकारिण्यां भीमायाम्भयानिकायां गर्भ एव वसतिस्तस्यां वस्तव्यमिति तृतीयम् । स्था० ३ ठा०३ उ० । निर्वेदे, अनु० । इष्टवियोगादिजन्ये चित्तव्याकुलत्वे, भ० ३ श० ६ उ० । जीवा० । चित्तदोषे, तत्र क्षेपाद्वेगो यथा ।

स्थितस्यैव स उद्वेगो, योगद्वेषात्ततः क्रिया ।
राजविष्टिसमाजन्म-बाधिते योगिनां कुले ॥१४॥

( स्थितस्यैवेति ) स्थितस्यैवाप्रवृत्तस्यैव स क्रम उद्वेग उच्यते ततस्तस्मादनादरजनिताद्योगद्वेषात्क्रिया परवशाविनिमित्ता प्रवृत्तिः राजविष्टिसमा नृपनियुक्तानुष्ठानतुल्या योगिनां श्रीमतां श्राद्धानां कुले जन्म बाधते प्रतिबध्नाति अनादरेण योगक्रियाया योगिकुलजन्मबाधकत्वनियमात् द्वा० १८ द्वा० । तदुक्तम् ।

उद्वेगे विद्वेषा-द्विष्टिसमं करणमस्य पापेन ।
योगिकुलजन्मबाधक-मलमेतत्तद्विदामिष्टम् ॥

'उद्वेग इत्यादि' उद्वेगे चित्तदोषे विद्वेषाद्योगविषयाद् विष्टिसमं राजविष्टिकल्पं करणमस्य योगस्य पापेन हेतुभूतेन एतच्चैवंविधं करणं योगिनां कुले जन्म तस्य बाधकमनेन योगिकुलजन्मापि जन्मान्तरे न लभ्यत इति कृत्वा योगिकुलजन्मबाधकमलमत्यर्थमेतत्तद्विदामिष्टं योगविदामभिमतम् । षो०१४ विव० । व्याकुलचित्ततायाम्, विरहजन्ये दुःखोद्रमे भये च । उद्गतो वेगो यस्मात् । निश्चले, स्तिमिते, शीघ्रगामिनि च वाच० ।

उव्वेढ-उद्वेष्ट-धा० भ्वा० आ० सक० सेट्-पृथक्करणे, "वेष्टेः" ८ । ४ । २२ । इति परस्य वेष्टेरन्त्यस्य ढो वा भवति क्त्वाभावे रूपम् उव्वेढइ उव्वेढइ उद्वेष्टते । प्रा० । "उव्वेढेज्ज वा णिव्वेढेज्ज वा उप्पोस वा करेज्जा" उद्वेष्टयेत् पृथक्कुर्यात् आचा०२ श्रु० ।

उव्वेढण-उद्वेष्टन-न० उद्-वेष्ट-ल्युट्-हस्तपादयोर्बन्धने, उपश्लेषे च । पृथक्करणे, उन्मुक्तबन्धने, त्रि० वाच० । आचा० २ श्रु० ।

उव्वेयणग-उद्वेजनक-त्रि० उद्विज्यते उद्विग्नैर्भूयते यस्मिन् स उद्वेजनकः । भयानके, उद्वेगकारिणि, " उव्वेयणाय जाईमरणं नरएसु वेयणाओ य " आतु० । उद्वेगहेतुत्वान्निरयकाहेः प्राणबन्धे, प्रश्न० १ द्वा० ।

उव्वेयणिज्ज-उद्वेजनीय-त्रि० उद्- विज-अनीयर्-कर्त्तरि । उद्वेगकारिणि, " असुईए उव्वेयणिज्जाए भीमाए गब्भवसहीए वसियव्वं भविस्सइ " स्था० ३ ठा० ।

उव्वेल्ल-उद्वेष्ट-धा० भ्वा० सक०आत्म० । "वेष्टः" ८ । ४ । २२३ । इति परस्य वेष्टेरन्त्यस्य वा ल्ल उव्वेल्लइ उव्वेढइ उद्वेष्टते । प्रा० ।

उव्वेल्लिय-उद्वेल्लित-त्रि० उल्लसिते, "उव्वेल्लिए मुज्झमयस्स तो साहाहिं" सू० ३ उ० ॥

उव्वेव-उद्वेग-पुं० उद् विज्-घञ्-कुत्वम् । "उद्विग्ने" ८ । ४ । २२६ इति अन्त्यस्य वा व । चित्तव्याकुलत्वे प्रा० ।

उसक्कण-अवष्वष्कण-न०ज्वालने, "जायण जसणं जावणं उसक्कणंति एगट्ठा " नि० चू० १ उ० । " उसक्कणियत्ताणं उकरणा भणति" नि० चू० १ उ० ॥

उसट्ट-उत्सृत-त्रि० उच्चे, " उसट्टा उसट्ट खुड्डगा " राय० ।

उसण-उषण-न० उष-क्युन् मरिचे, पिप्पलीमूले च शुण्ठ्यां चव्यिके पिपल्यां च स्त्री० उसण शब्दो देशीवचनो बाहुल्यवचनो यथा " उसणमाय देसणं वेयति " कर्म० ॥ प्राय इत्यर्थे, । ज० २ वक्ष० । प्रायोहेणेत्यर्थे, न० ।

उसणदोस-उषणदोष-पुं० उपणेन बाहुल्येन अनुपरततयेन दोषो। मृषादानसंरक्षणानामन्यतम । रौद्रध्यानस्य लक्षणभेदे, औ० ।

उसभ ( ह )-ऋष ( ष ) भ-पुं० ऋषभशब्दस्य द्विधा व्याख्या सामान्यतो विशेषतश्च । तत्र सामान्यतो यथा ऋषति गच्छति परमपदमिति ऋषभ । उणादौ ८ । १ । २१ । इत्यन्ये उसहो वृषभ इत्यपि । वर्षति सिञ्चति देशनाजलेन दुःखाग्निना दग्धं जगदिति अस्यान्वर्थः । ऋषभे वा वा ८ । १ । २३ । इति वृषभे ऋतो वेन सह उद् वा भवति । उसहो वसभो प्रा० । धर्म० । वृषेण धर्मेण भातीति वृषभः ज० २ वक्ष० । वृषभ उद्वहने एष आगमिको धातुः समग्रसंयमभारोद्वहनाद् वृषभः आ० म० द्वि० । वृषभ उद्वहने उच्चूढं तेन भगवता जगत्संसारसमग्र तेन ऋषभ इति सर्व एव भगवन्तो जगदुद्वहन्ति "अतुलनाणदंसणचरित्तं वा एवं सामण्णं " एषा सामान्यत ऋषभशब्दस्य व्युत्पत्ति । आव० २ अ० । एवञ्च सर्वेऽप्यर्हन्त ऋषभा वृषभा वा इत्युच्यन्ते तेन ऊर्वोर्वृषभ लाञ्छनत्वेन मातुश्चतुर्दशस्वप्नेषु प्रथमं वृषभदर्शनेन च ऋषभो वृषभो वेति ज०२वक्ष०।

ऊरूसु उसभलंछणउसभं सुमिणेण उसभजिणो जेण भगवतो दोसु वि ऊरूसु उसभा उप्पराहुत्ता लंछणभूया जेणं व मरुदेवीए भगवतीए चोद्दसण्हं महासुमिणाणं पढमं उसभो सुमिणे दिट्ठो तेण तस्स उसभ त्ति नाम कयं से सतित्थयराणं मायरो पढमं गय पासंति ततो वसभं ।

ऊरुद्वयेऽभिलक्षणं यतो भगवत ऊर्वोर्वृषभपदकं सुग्रलाञ्छनं मरुदेवी च भगवती स्वप्ने प्रथमवृषभं दृष्टवती तेन भगवान् ऋषभजिन । आ० म० द्वि० । अवसर्पिण्यां प्रथमे तीर्थङ्करे, प्रव० ७ द्वा० । अनु० ।

(१) ऋषभस्वामिन पूर्वभवचरित्रम् ।
(२) ऋषभस्वामिनस्तीर्थकरत्वहेतव ।
(३) ऋषभस्वामिनो जन्म तन्महोत्सवश्च ।
(४) ऋषभस्वामिनो नाम ।
(५) ऋषभस्वामिनो वृद्धि ।
(६) ऋषभस्वामिनो जातिस्मरणम् ।

(७) ऋषभस्वामिनो विवाहः ।
(८) ऋषभस्वामिनोऽपत्यानि ।
(९) ऋषभस्वामिनो नीतिव्यवस्था ।
(१०) ऋषभस्वामिनो राज्याभिषेकः ।
(११) ऋषभस्वामिनो राज्यसंग्रहः ।
(१२) ऋषभस्वामिनो लोकस्थितिनिबन्धनं शिल्पादिशिक्षणं च ।
(१३) ऋषभस्वामिनो वासः ।
(१४) ऋषभस्वामिपुत्रराज्याभिषेकः ।
(१५) ऋषभस्वामिनो दीक्षाकल्याणकम् ।
(१६) ऋषभस्वामिनश्छद्मस्थत्वकालमानम् ।
(१७) ऋषभस्वामिनो भिक्षाकालमानम् ।
(१८) ऋषभस्वामिनः श्रेयांसेन प्रवाहणकथनम् ।
(१९) ऋषभस्वामिनः श्रामण्यानन्तरं प्रवर्त्तनप्रकारः ।
(२०) ऋषभस्वामिनः श्रमणावस्थावर्णनम् ।
(२१) ऋषभस्वामिनः केवलोत्पत्त्यनन्तरं धर्मकथनम् ।
(२२) ऋषभस्वामिनो वन्दनार्थं मरुदेव्या सह भरतगमनम् भरतदिग्विजयश्च ।
(२३) ब्राह्मणानामुत्पत्तिप्रकारः तीर्थकरबलदेववासुदेवाश्च भविष्यन्ति न वेत्यादिप्रश्नकदम्बकञ्च ।
(२४) ऋषभस्वामिनः सङ्घसंख्या ।
(२५) ऋषभस्वामिनः श्रमणवर्णनम् ।
(२६) ऋषभस्वामिनः केवलज्ञानोत्पत्त्यनन्तरं भव्यानां कियता कालेन सिद्धिगमनं प्रवृत्तं कियन्तं कालं यावदनुवृत्तम् ।
(२७) ऋषभस्वामिनो जन्मकल्याणकादिनक्षत्राणि ।
(२८) ऋषभस्वामिनः शरीरसम्पत्-शरीरप्रमाणं कौमारे राज्ये गृहित्वे च यावान् कालस्तन्मानं च ।
(२९) ऋषभस्वामिनो निर्वाणगमनं देवकृत्यवर्णनं च ।
(३०) चितानन्तरं शक्रकृत्यवर्णनम् ।
(३१) इक्ष्वाकूणामपरा चितिका भरतकारिता ।

(१) अथ श्रीऋषभदेवचरित्रं तत्र प्रथमतः पूर्वभवचरित्रमाह ।

नाभी विणयभूमी, मरुदेवी उत्तरा असाढा य ।
राया य वयरनाहो, विमाणसव्वट्ठसिद्धाओ ॥ ९६ ॥
धणमिहुणसुरमहब्बल-ललियंगयवयरजंघमिहुणे अ ।
सोहम्म विज्जअच्चुअ, चक्की सव्वट्ठउसमे अ ॥ ९७ ॥
धणसत्यवाहघोसण-जइगमणं अडवि वासठाणं च ।
बहुवोलीणे वासे, चिंतायघयदाणमासि तया ॥ ९८ ॥
उत्तरकुरुसोहम्मे, महाविदेहे महाबलो राया ।
ईसाणे ललियंगो, महाविदेहे वयरजंघो ॥ ९९ ॥
उत्तरकुरुसोहम्मे, विदेहि तेगिच्छियस्स तत्थ सुओ ।
रायसुयसेट्ठिमच्चा-सत्थाहसुया वयंसा से ॥ १०० ॥

अनयोः प्रतिपादितः कुलकरवंशः इदानीं प्राक् सूचितेक्ष्वाकुवंशं प्रतिपादयन् । स च ऋषभनाथप्रभव इत्यतस्तद्वक्तव्यतामभिधित्सुराह । नाभीगाहा । ९६ । गमनिका इयम् । निर्युक्तिगाथा प्रकृतार्थप्रतिपादिका अस्यां च प्रतिपदं क्रियाध्याहारः कार्यः । स चैवम् नाभिरिति नाभिर्नाम कुलकरो यत्नुयः । विनीता भूमीति तस्य विनीताभूमौ प्रायः अयस्थानमासीत् । मरुदेवीति तस्य भार्या राजा च प्राग्भवे वैरनाभः सन् प्रव्रज्यां गृहीत्वा तीर्थकरनामगोत्रं कर्म बद्धा मृत्वा सर्वार्थसिद्धिमवाप्य ततस्तस्या मरुदेव्यास्तस्यां विनीतभूमौ सर्वार्थसिद्धादिमानादवतीर्य ऋषभनाथः सञ्जातः तस्योत्तराषाढनक्षत्रमासीदिति गाथार्थः । ९६ ॥ इदानीं यः प्राग्भवे वैरनाभो यथा च तेन सम्यक्त्वमवाप्तं यावतो वा भवानवाप्तसम्यक्त्वः संसारं पर्यटितः यथा च तेन तीर्थकरनामगोत्रं कर्म बद्धमित्यमुमर्थमभिधित्सुराह । धणगाहा । ९७ । ९८ । उत्तरगाहा । ९९ । उत्तरकुरुगाहा ॥ १०० ॥ अन्या अप्युक्तसम्बन्धा एव द्रष्टव्या तावत् यावत् 'पढमेण पच्छिमेण गाहा' किन्तु यथावसरमसम्मोहनिमित्तमुपन्यासं करिष्यामः । प्रथमगाथागमनिका । धन सार्थवाहो घोषणं यतिगमनमटवी वर्षास्थानं च बहवो व्हीने वर्षे चिन्ता घृतदानमासीत्तदा । ९७ । द्वितीयगाथा गमनिका । उत्तरकुरौ सौधर्मे महाविदेहे महाबलो राजा ईशाने ललिताङ्गो महाविदेहे च वैरजङ्घः इयमन्यकर्तृकी गाथा सोपयोगा च । ९८ । तृतीयगाथागमनिका उत्तरकुरौ सौधर्मे महाविदेहे चिकित्सकस्य तत्र सुतः राजसुतश्रेष्ठ्यमात्यसार्थवाहसुता वयस्या ( से ) तस्य । आसां भावार्थः कथानकादवसेयः प्रतिपदं चानुरूपक्रियाध्याहारः कार्यः इति । यथा धनो नामसार्थवाह आसीत् स हि देशान्तरङ्गन्तुमना घोषणां कारितवानित्यादि कथानकम् आव० १ अ० ॥

द्वीपोऽस्ति जम्बूद्वीपोऽत्र, सदा यः परिरभ्यते ।
अम्भोधिना चिरायात-मित्रवल्लहरीभुजैः ॥ १ ॥
विदेहे पश्चिमास्तस्थे, क्षितिमण्डलमण्डनम् ।
क्षितिप्रतिष्ठितं नाम, नगरं सुप्रतिष्ठितम् ॥ २ ॥
प्रियंकरकरस्तत्र, राजा राजेव विश्रुतः ।
शुचि कुवलयोल्लासी, प्रसन्नचन्द्रनामकः ॥ ३ ॥
आसीत्तत्र धनः सार्थ-वाहः पितृगृहं श्रियः ।
स पद्धिचिशती संख्य-क्रयाणकमहाकरः ॥ ४ ॥
क्रयाणकानि संगृह्य, वाणिज्यार्थं कृतोद्यमः ।
सोऽपरेद्युर्गन्तुकामो, वसन्तपुरपत्तनम् ॥ ५ ॥
सर्वलोकोपकाराय, सार्थवाहो धनस्तदा ।
आघोषयत्पुरे कृत्स्ने, भेरीवादनपूर्वकम् ॥ ६ ॥
यो मया सममभ्येति, तस्य सर्वमहं ददे ।
क्रयाणान्यक्रयाणस्या-ऽवाहनानां च वाहनम् ॥ ७ ॥
सहायमसहायस्या-शम्बलानां च शम्बलम् ।
दस्युभ्य श्वापदादिभ्य-स्त्रास्येऽहं पथि बन्धुवत् ॥ ८ ॥
अन्नैः पानैस्तथा वस्त्रैः, पात्रैरौषधभेषजैः ।
विसुरयति यो येन, सर्वं यच्छामि तस्य तत् ॥ ९ ॥
तत् श्रुत्वा वणिजोऽनेके, संवहन्ति स्म सत्वरम् ।
व्यवहर्तुं परे भोक्तुं, दरिद्रभ्रमकादयः ॥ १० ॥
प्रस्थाने सुमुहूर्त्तेऽथ, सार्थवाहो विनिर्ममे ।
नाविमक्षतमसूचि-विहितानेकमङ्गलः ॥ ११ ॥
अत्रान्तरे धर्मघोषाऽऽचार्यः सूर्य इवापरः ।
पादैः पवित्रयन् भूमिं, दीप्यमानस्तपस्त्विषा ॥ १२ ॥
तमागच्छन्तमालोक्य, सद्भक्त्यानन्दकारकम् ।
सार्थवाहो नमस्कृत्य, प्रस्फुटत्कटको द्विधा ॥ १३ ॥
उपवेश्यासने प्राक्षीद्-गुरोर्गमनकारणम् ।
वसन्तपुरमेष्याम-स्त्वया सहेति तेऽभ्यधुः ॥ १४ ॥
श्रुत्वा तान् सार्थपो भक्त्या, सूदानिति समादिशत् ।
सम्पाद्यमन्नपानाद्य-मेषामिति शेषमन्वहम् ॥ १५ ॥
आचार्या अपि तस्याख्यन्, शुद्धिमाहारगोचराम् ।
तदा च कोऽपि पक्काम्र-स्थालं तस्योपनीतवान् ॥ १६ ॥

सार्थवाहोऽवदत्पूज्या, विधायानुग्रहम्परम् ।
स्त्यानीभूतसुधाभानि, गृह्यतामाज्यमूनि मे ॥ १७ ॥
नार्यपैतानि कल्पन्ते, नाशस्त्रोपहतानि नः
धनोऽवादीद् व्रतं पूज्या-यौष्माकमतिदुष्करम् ॥ १८ ॥
कल्प्यमन्नादि च सर्वं, पूज्या सम्पादयिष्यते ।
प्रातः प्रयाणमस्माकं-स्तदागत्यात्र तिष्ठत ॥ १६ ॥
चक्रे प्रयाणं सार्थेशो, गुरवोऽपि सहाचलन् ।
सञ्जातेषु प्रयाणेषु, ततः कतिपयेष्वपि ॥ २० ॥
उज्जजृम्भे तदा ग्रीष्म, काल फलितयौवन ।
स्वकीयेनोष्मणा ज्वाला-जिह्वामप्यवहेलयन् ॥ २१ ॥
नृपस्येव निदाघस्य, महायोध इवार्यमा ।
करैः शरैरिवाक्षेपान्, जनानाहन्त्यरीनिव ॥ २२ ॥
तदा तापाद्विवोष्णांशु-स्तृष्णातिशयविह्वल' ।
पिबन् करसहस्रेण, जलस्यानान्यशोषयत् ॥ २३ ॥
प्रस्वेदप्लुतसर्वाङ्ग-स्तदा धातुमयो जन ।
ग्रीष्मनाग्निध्मध्मानाद्, द्रवरूप इवाभवत् ॥ २४ ॥
निदाघदहनोत्तप्त-वालुका वसुमत्यपि ।
भ्राष्ट्रीभूताध्वगान् जन्तून्, पचते चणकानिव ॥ २५ ॥
सत्यप्येवविधे काले, यान्त कान्तारमापतन् ।
प्रावृट्कालक्ष्मापाल-स्तत्राध्वनि रुरोध तान् ॥ २६ ॥
सेनान्यस्तस्य गर्जन्त, पर्जन्या श्याममूर्त्तय ।
पुरस्कृतेन्द्रधन्वान-स्तडिद्दण्डासिधेनव' ॥ २७ ॥
वारिधाराशरासारै-रुपर्युपरिपातिभि ।
नश्यतोऽपि जनान् घ्नन्ति, क्षत्रधर्मानभिज्ञवत् ॥२८॥ (युग्मम्)
कोऽपि श्रेयांसि वासांसि, पर्यधत्त न तद्भयात् ।
श्रीमन्तोऽपि जरद्वस्त्रा, सञ्चरन्ति पुरेऽपि हि ॥ २९ ॥
मार्गास्तदा जनैर्लब्धा-प्रसरैरवहा कृता ।
गन्तु कोऽपि न शक्नोति, पदात् पदमपि क्वचित् ॥ ३० ॥
प्राज्यस्वर्णश्रियो मत्ता-स्तदानीन्निम्नगा अपि ।
लोकात्सर्वस्वमादाय, ह्रदेषु प्रक्षिपन्त्यथा ॥ ३१ ॥
स्थाने स्थाने ग्राहयन्ति, लोकेभ्यो वहका अपि ।
वर्त्मरक्षा धनमिव, तारकैरातलञ्चलात् ॥ ३२ ॥
पादमाक्रम्य पङ्कस्तु, तलञ्च इव दुर्दम ।
क्षिप्र पातयते भूमौ, प्रधानमपि मानुषम् ॥ ३३ ॥
ईदृश्यब्दागमे याते, प्रारम्भेऽप्यतिभैरवे ।
दुर्गान्मार्गान् धनो ज्ञात्वा, तत्रैवावासमाददे ॥ ३४ ॥
कृत्वोटजान् जनोऽप्यस्था-द्वेश्मनीव निजे सुखम् ।
शुद्धोटजेऽस्थुराचार्यो, माणिभद्रोपदर्शिते ॥ ३५ ॥
प्राप्तोत्कर्षासु वर्षासु, निष्ठिते भोजने नृणाम् ।
कन्दमूलफलाशित्व, तापसानामिवाभवत् ॥ ३६ ॥
दु खिता साधवस्तत्र, कथञ्चित्कस्यचिद् गृहे ।
चेल्लभन्तेऽनवद्यानि, फलान्याददते तदा ॥ ३७ ॥
एव व्रजति काले च, स्तोकशेषे तपात्यये ।
निशाया पश्चिमे यामे, चिन्ता सार्थपतेरभूत् ॥ ३८ ॥
दु खित कोऽस्ति मे सार्थे, स्मृत सन्ति मुनीश्वरा ।
ते हि कन्दादि नाश्नन्ति, निरवद्यान्नभोजिन ॥ ३९ ॥
तस्य तच्चिन्तयैकोऽपि, यामोऽगात् गतयामताम् ।
सार्थप प्रातरायासीन्-मुनीनामाश्रये धन ॥ ४० ॥
ददर्श विस्मित साधून्, विविधासनसंस्थितान् ।
स्वाध्यायाध्यापनपरान्, मुदितान जिमितानिव ॥ ४१ ॥

वन्दित्वा तान् गुरून् भक्त्या, विधत्ते स्म स्वगर्हणाम् ।
पूज्या' सह मया नीता, कृता साराऽपि न क्वचित् ॥ ४२ ॥
तदह निष्फलो जज्ञे, ऽवकेशिरिव पादप ।
क्षमध्व मेऽपराध तत्, यूयं सर्वसहा यत ॥ ४३ ॥
ऊचे गुरुस्ते साहाय्यात्, क्रमेण वयमागता ।
दत्तं त्वयैव न सर्व-मधृति भद्र ! मा कृथा ॥ ४४ ॥
सोऽवदच्चन्दनं घृष्ट-मपि सद्गन्धबन्धुरम् ।
अगुरुर्दह्यमनोऽपि, सदोद्गिरति सौरभम् ॥४५॥
पुनरूचे ध्रुव पूज्या, अमृतेनैव निर्मिता ।
अमन्तोर्वा समन्तोर्वा, यूय समदृशस्ततः ॥४६॥
न्यमन्त्रयदथो पूज्यान्, साधून् प्रेषयताधुना ।
यच्छामि प्रासुकाहार-माधारं देहवेश्मन ॥४७॥
ययौ स्वावासमित्युक्त्वा, पश्चात्प्रापि मुनिद्वयम् ।
तदर्हमन्यदन्नाद्य-मपश्यन् किञ्चनापि स' ॥४८॥
स्त्यानीभूत घृत दृष्ट्वा, स्माहेद गृह्यतां प्रभो ! ।
साधु शुद्धमिति ज्ञात्वा, पतद्ग्रहमधारयत् ॥४९॥
हिमस्त्यान प्राज्यमाज्य. निर्मल निर्मलात्मक ।
स्वय यथेष्टं दत्ते स्मा-नन्यसामान्यभावत ॥५०॥
स्वय ददत्तदा दानं, वीजं मोक्षमहातरो' ।
तीर्थकृत्कर्माचलनं, सम्यग्दर्शनमासदत् ॥५१॥ सग्रहमाह
" धणसत्थवाहघोसण, जङ्गमण अडवि वासु ठाण च ।
बहुवोलीणे वासे, चिंताघयदाणमासि तया" ॥५२॥
धन्यमन्यो धनोऽनसीद्, वनान्ते तन्मुनिद्वयम् ।
तदप्यात्माशिष दत्वा, धनायागान्निजाश्रयम् ॥ ५३ ॥
रजन्यामथ सार्थेशो, गुरून्नन्तुमुपागमत् ।
गुरवो धर्ममादिक्षन्, मोक्षसोपानपद्धतिम् ॥ ५४ ॥
गुरूपदेशपीयुष-प्रवाहेण प्रसर्प्पता ।
पूरितं सार्थपस्याभू-न्मानस मानसोपमम् ॥ ५५ ॥
गुरून्नत्वा महासत्वान्, भावनां भावयंस्तथ ।
कृतार्थं मन्यमान स्वं, स्वाव धाम जगाम स ॥ ५६ ॥
लब्धाधिकारप्राप्तोऽथ, शरत्कालो महीतले ।
यदच्युता पलायन्त, वारिदा सपरिच्छदा ॥ ५७ ॥
सरित पङ्केषु लग्ना, वहन्ति निरहङ्कृता ।
जीवनाश प्रणेशुश्च, मार्गरोधकृतो वहा ॥ ५८ ॥
वत पुस्फोट पङ्कस्य, स्वामिनो विरहे सति ।
कमलान्युल्लसन्ति स्म, गते वैरिणि वारिदे ॥ ५९ ॥
मेघागमे निर्लीयास्था-दधुनार्क प्रकटयभूत् ।
नाप्रस्तावं स्फुरत्यत्र, तेजस्तेजस्विनामपि ॥ ६० ॥
सार्थवाहश्चचालाथ, गुरवोऽपि सहाचलन् ।
महाटवी समुत्तीर्णा, दुष्कर किं महीयसाम् ॥ ६१ ॥
अनुज्ञाप्याथ सार्थेश, गुरवो ययुरन्यत ।
सार्थवाह पुनर्गच्छन्, वसन्तपुरमासदत् ॥६२॥
क्रयविक्रयमाधाय, दिनै कतिपयैर्धन ।
प्रत्यावृत्यागमद्भूरि-लाभ स्व नगर पुन ॥ ६३ ॥
चिर प्रपाल्य सम्यक्त्व, पूर्णायु शुद्धभावन ।
इहोत्तरकुरुक्षेत्रे, मविपद्योदपद्यत ॥ ६४ ॥
धनजीवो युग्मधर्मा, तत्र वैषयिक सुखम् ।
आस्वाद्य पुण्यशेषेण, सौधर्मे त्रिदशोऽभवत् ॥६५॥
ततश्च्युतो धनजीवो, विदेहार्द्धे सपश्चिमे ।
विजये गन्धिलावत्यां, वैताढ्यगिरिमूर्द्धनि ॥ ६६ ॥

गन्धाराख्ये जनपदे, पुरे गन्धसमृद्धके ।
राज्ञः शतबलस्याभू-च्चन्द्रकान्ता तनूद्भवः ॥ ६७ ॥
महायशो धनस्यात्मा, महाबल इवापरः ।
वर्द्धमानः क्रमात्प्राप, यौवनं केलिभाजनम् ॥ ६८ ॥
कन्यां विनयवत्याख्यां, भूभुजा पर्यणाय्यत ।
राज्ये तमथ संस्थाप्य, स्वयं राजाऽग्रहीद्व्रतम् ॥ ६९ ॥
मग्नः सोऽथ महाराजो, दुरमात्यप्रतारितः ।
यथेष्टं चेष्टते धर्म-विमुखो विषयोन्मुखः ॥ ७० ॥
प्रमादमदिरामत्तो, निरर्गलशिरोमणिः ।
कृत्याकृत्यमजानानः, शिक्षाहीनो वनेऽभवत् ॥ ७१ ॥
सङ्गीतकेऽन्यदा जाय-माने मन्त्रिमतल्लिका ।
स्वयं बुद्धः प्रबोधाय, नृभुजः प्रोचिवानिति ॥ ७२ ॥
सर्वं गीतं विलपितं, सर्वं नाट्यं विडम्बना ।
सर्वेऽप्याभरणा भाराः, कामाः सर्वेऽपि दुःखदाः ॥ ७३ ॥
सम्भिन्नश्रुतिरूचे तं, किमप्रस्तावमुच्यते ।
वीणायां वाद्यमानायां, वेदोद्गारो न रोचते ॥ ७४ ॥
स्वयम्बुद्धस्तमाह स्म, नाऽहितोऽस्मि प्रभुं प्रति ।
ऐहिकस्यैव वक्ताऽसि, नामुष्मिकविधौ पुनः ॥ ७५ ॥
देव ! कारणमत्रास्ति, यत्त्वामभिदधेऽधुना ।
अद्योद्याने मयाऽदर्शि, चारणश्रमणद्वयम् ॥ ७६ ॥
तत्समीपे मयाऽप्रच्छि, कियदायुर्महीशितुः ।
तेनाख्यायि मासमेकं, ततो भीतोऽभ्यधामिदम् ॥ ७७ ॥
राजोचेऽमात्य ! सुप्तोऽहं, साधु जागरितस्त्वया ।
तदानीमेव सङ्गीतं, विससर्ज भयद्रुतः ॥ ७८ ॥
कथयामात्य ! को धर्मः, कर्त्तव्योऽल्पीयसाऽऽयुषा ।
लग्ने प्रदीपने विष्वक्, कः कूपखननोद्यमः ॥ ७९ ॥
मन्त्र्यूचे देव ! मा भैषी-र्दिनमेकमपि व्रतम् ।
न स्याद्यद्यपवर्गाय, स्वर्गाय स्यान्न संशयः ॥ ८० ॥
ततो राज्ये निजं पुत्र-मभिषिच्यानुशिष्य च ।
सप्तक्षेत्र्यां धनं प्राज्य-मुप्त्वा मुक्त्वा परिग्रहम् ॥ ८१ ॥
ततः प्रव्रज्य राजर्षि-र्द्वाविंशतिदिनानि सः ।
कृत्वाऽनशनमीशाने, विमाने श्रीप्रभाभिधे ॥ ८२ ॥
ललिताङ्गाभिधो जज्ञे, शक्रसामानिकः सुरः ।
देवी स्वयंप्रभा तस्य, तत्र दिव्यप्रभा प्रिया ॥ ८३ ॥
प्रीतिस्तयोरपृथक्त्वेन, मनसोरिव देहयोः ।
तयोः कालो ययौ भूया-श्च्युताऽन्येद्युः स्वयंप्रभा ॥ ८४ ॥
मुमूर्च्छ ललिताङ्गोऽपि, वज्रेणेवाभिताडितः ।
मनोऽभिरामारामाया, विगमे कस्य नासुखम् ॥ ८५ ॥
मूर्च्छान्ते विललापोच्चै-र्मुक्तकण्ठं रुरोद च ।
समानस्येव शोकार्त्तं, शोकमाविश्चकार सः ॥ ८६ ॥
स्वयंबुद्धोऽपि तन्मन्त्री, पश्चादादाय संयमम् ।
ईशानेऽजनि पूर्णायुः, सोऽपि शक्रसमः सुरः ॥ ८७ ॥
सोऽग्रधीः स्वामिनं मत्वा, ललिताङ्गमुपागमत् ।
प्राग्भवप्रायःस्नेहा-त्स्वान्तःशोकापनोदवित् ॥ ८८ ॥
उपयोगावधिं ज्ञात्वा, पुनस्तं स्माह मा मुह ।
सम्प्रति भवतो भार्या, मया ज्ञाताऽस्ति तेन शृणु ॥ ८९ ॥
द्वीपेऽत्र धातकीखण्डे, प्राग्विदेहावनावभूत् ।
नन्दिग्रामे गृहपति-र्नागिलोऽतीव दुर्गतः ॥ ९० ॥
नागश्रीस्तस्य भार्याऽभू-त्कन्याः षड् जनितास्तया ।
प्रायेण हि दरिद्राः स्यु-र्बहुकन्या बहुक्षुधः ॥ ९१ ॥

ततप्रियाऽऽसीत्पुनर्गुर्वी, नागिलोऽथ व्यचिन्तयत् ।
स्याच्चेदस्याः सुतैवातो, यास्याम्यूर्ध्वमुखः क्वचित् ॥ ९२ ॥
जाता सुताऽथ तात्यक्तः स, राक्षसीव व्यनशत् ।
नागश्रीर्दुःखिता तु स्या, तस्या नामापि न व्यधात् ॥ ९३ ॥
लोकैर्निर्नामिकेत्युक्ता, दुर्भगा दुःखसेवधिः ।
परगेहेषु दुष्कर्म-करणाज्जीवति स्म सा ॥ ९४ ॥
अथान्यदाऽऽढ्यडिम्भानां, हस्तेष्वालोक्य मोदकान् ।
ययाचे मातरं साऽपि, मातोचे पुत्रि ! मोदकान् ॥ ९५ ॥
गतोऽस्त्यानेतुं त्वद्धेतो-स्त्वज्जन्मन्येव ते पिता ।
शैलादम्बरतिलका-त्तावद्दारूण्युपानय ॥ ९६ ॥
क्षुद्द्यमानतया मातुः, कालकूटकिरा गिरा ।
रज्जुमादाय याति स्म, मुञ्चन्त्यश्रूणि तं गिरिम् ॥ ९७ ॥
युगन्धरमुनिस्तत्र, तदा केवलमासदत् ।
व्यन्तरैर्महिमा चक्रे, लोकास्तं नन्तुमाययुः ॥ ९८ ॥
निर्नामिकाऽपि तत्रागा-त्केवली धर्ममादिशत् ।
निर्नामिका गुरूनूचे, प्रभोऽहं कथमीदृशी ॥ ९९ ॥
गुरुः स्माह पुरा धर्म-स्त्वया नाकारि तत्फलम् ।
ततोऽधुनाऽपि तम्भद्रे ! कुरु स्या येन सौख्यभाक् ॥ १०० ॥
सम्यक्त्वं गृहिधर्मं च, साऽथ गुर्वन्तिकेऽग्रहीत् ।
साधर्मिकीति लोकेना-नुगृहीता सुखं स्थिता ॥ १०१ ॥
तेपे तपांसि भूयांसि, स्यात्कर्मप्रक्षयो यतः ।
युगन्धरगुरोः पार्श्वे, साऽस्त्यात्तानशनाऽधुना ॥ १०२ ॥
ततो मन्त्रिगिरा तस्याः, स सुरः स्वमदर्शयत् ।
निदानं सा व्यधात्तत्र, दृष्ट्वा स्यामस्य पत्न्यहम् ॥ ३ ॥
मृत्वा सा तस्य भार्याऽभू-द्देवी स्वयंप्रभाभिधा ।
नवीभूतामिवायातां, तां रेमेऽथ स पूर्ववत् ॥ ४ ॥
कियत्यपि गते काले, ललिताङ्गस्ततश्च्युतः ।
जम्बूद्वीपे प्राग्विदेहे-ऽन्यन्ते सीतोत्तरे तटे ॥ ५ ॥
विजये पुष्कलावत्यां, लोहार्गलमहापुरे ।
सुवर्णजङ्घलक्ष्मीभू-र्वज्रजङ्घः सुतोऽभवत् ॥ ६ ॥
स्वयंप्रभाप्यथ च्युत्वा, विजयेऽत्रैव साऽभवत् ।
चक्रिणः पुण्डरीकिण्यां, वज्रसेनस्य पुत्रिका ॥ ७ ॥
यौवने चन्द्रशालास्था, श्रीमती सुस्थितस्य सा ।
उद्याने केवलोत्पत्तौ, विलोक्यागच्छतः सुरान् ॥ ८ ॥
जातजातिस्मृतिर्दध्यौ, ललिताङ्गः क्व मे पतिः ।
तदज्ञानात्तदप्राप्तौ, मौनमेवास्तु मेऽधुना ॥ ९ ॥
कृत्यैरप्युपचारौघैः, सा मुमोच न मूकताम् ।
धात्र्या पृष्टा रहः प्राह, पटमालिख्य चार्पयत् ॥ १० ॥
चक्रिणो वज्रसेनस्य, वर्षग्रन्थौ नृपागमे ।
तं पटं पण्डिता धात्री, धृत्वा राजपथे स्थिता ॥ ११ ॥
तत्रागाद्वज्रजङ्घोऽपि, तं दृष्ट्वा जातिमस्मरत् ।
तथाचेदं चरित्रं मेऽ-लिखन्नूनं स्वयंप्रभा ॥ १२ ॥
अभिज्ञानानि सर्वाणि, पण्डितायाः अपृच्छत ।
श्रीमत्यै साऽथ गत्वाऽख्य-त्तदैव मुमुदे च सा ॥ १३ ॥
पितुर्व्यज्ञपयत्तच्च, श्रीमती पण्डितामुखात् ।
पिताऽपि तत्क्षणाद्वज्र-जङ्घमाहूतवांस्ततः ॥ १४ ॥
ऊचे राजा वज्रजङ्घ ! तव प्राग्भवपत्न्यसौ ।
अस्मिन्नपि भवे ते स्या-दिति तां पर्यणाययत् ॥ १५ ॥
सह श्रियेव श्रीमत्या, वज्रजङ्घो मुकुन्दवत् ।
जगाम राज्ञाऽनुज्ञातो, लोहार्गलपुरं निजम् ॥ १६ ॥

स्वर्णजङ्घस्ततो राज्ये, वज्रजङ्घं न्यवेशयत् ।
स्वयं संयमसाम्राज्यं-प्रपेदे निर्वृतिस्पृहः ॥ १७ ॥
वज्रजङ्घश्चिरं राज्यं, श्रीमत्या सह निर्ममे ।
दध्यावथ सुतं राज्ये, कृत्वा स्वः प्रव्रजिष्यते ॥ १८ ॥
राज्योत्सुकः सुतस्ताव-त्पितुर्व्यापादनाकृते ।
विषधूमं व्यधाद्रात्रौ, सुप्तयोस्तेन तौ मृतौ ॥ १९ ॥
"उत्तरकुरुसोहम्मे, महाविदेहे महब्बलो राया ।
ईसाणे ललिअंगो, महाविदेहे वइरजंघे " ॥ १ ॥ (उक्तार्था)
उत्पद्योत्तरकुरुषु, तौ द्वौ युगलधर्मिणौ ।
भुक्त्वा भोगांस्ततो जातौ, सौधर्मे सुहृदौ सुरौ ॥ २० ॥
वज्रजङ्घस्य जीवोऽथ, भुक्त्वा भोगांस्ततश्च्युतः ।
जम्बूद्वीपे विदेहेषु, पुरे क्षितिप्रतिष्ठिते ॥ २१ ॥
वैद्यस्य सुविधेः सूनु-र्जीवानन्दाभिधोऽभवत् ।
यद्दिने सोऽभवत्पुत्र-श्चत्वारस्तद्दिनेऽपरे ॥ २२ ॥
प्रसन्नचन्द्रभूपाल-पुत्रो नाम्ना महीधरः ।
सुबुद्धिनामा तनयः, सुनासीरस्य मन्त्रिणः ॥ २३ ॥
धनदत्तश्रेष्ठिसूनु-र्गुणाकर इति स्मृतः ।
पूर्णभद्राभिध सार्थ-पतिसागरनन्दनः ॥ २४ ॥
जायन्ते स्म नृपामात्य-श्रेष्ठिसार्थपनन्दनाः ।
समं वबृधिरे सर्वे, समश्च जगृहुः कलाः ॥ २५ ॥
श्रीमत्या अपि जीवोऽथ, वर्जूयात्रैव पत्तने ।
सूनुरीश्वरदत्तस्य, श्रेष्ठिनः केशवाभिधः ॥ २६ ॥
तद्युता सहवासाद्यैः, स्नेहात्षट् सुहृदोऽभवन् ।
विवेद वैद्यकं जीवा-नन्दोऽपि स्वपितुर्मुखात् ॥ २७ ॥
सदैव रममाणास्ते, परस्परावियोगिनः ।
कदाचित्कस्यचिद्गेहे, गोष्ठ्या तिष्ठन्ति नित्यशः ॥ २८ ॥
अन्यदा वैद्यपुत्रस्य, जीवानन्दस्य वेश्मनि ।
सर्वेषां तिष्ठतां तेषां, साधुर्भिक्षाकृतेऽभ्यगात् ॥ २९ ॥
जगाद राजसूर्वैद्यं, परिहासेन किञ्चन ।
अस्ति व्याध्यौषधज्ञानं, केवलं नास्ति ते कृपा ॥ ३० ॥
वेश्येव द्रव्यदृष्टिस्त्वं, यत्साधुं न चिकित्ससि ।
जीवानन्दो वदन्मित्र ! सामग्री नौषधस्य मे ॥ ३१ ॥
औषधेषु लक्षपाकं, तैलमस्त्येकमेव मे ।
गोशीर्षचन्दनं रत्न-कम्बलं चेति यो वशे ॥ ३२ ॥
चान्दनं काम्बलं मूल्य, पञ्चाप्यादाय ते गृहात् ।
प्रययुर्विपणिश्रेण्यां, स्वस्थानं मुनिरप्यगात् ॥ ३३ ॥
वणिजं वृद्धमेकं ते, स्माहुर्मूल्यादितो ननु ।
गोशीर्षचन्दनं रत्न-चन्दनं च प्रयच्छ नः ॥ ३४ ॥
सोऽवक्कि कार्यमाभ्यां व-स्तेऽभ्यधुः साधुवैद्यकम् ।
दध्यौ वृद्धो युवानोऽमी, धर्मकर्मविधित्सवः ॥ ३५ ॥
वृद्धः करोमि किंत्वहं-मतस्तानाह स प्रधीः ।
गोशीर्षकम्बलौ गृह्ण-न्त्वस्तु श्रेयोऽत्र मे फलम् ॥ ३६ ॥
तौ समर्प्य स धर्मेण, धर्मात्मा श्रेष्ठिपुङ्गवः ।
व्रतं संगृह्य कर्माणि, निगृह्य च शिवं ययौ ॥ ३७ ॥ आ० क०॥

अमुमेवार्थमुपसंहरन् गाथाद्वयमाह ।

विज्जसुअस्स य गेहे, किमिकुट्ठोवद्दुअं जइं दट्ठुं ।
विंति अ ते विज्जसुअं, करेहिए अस्स तेगिच्छं ।
तिल्लं तेगिच्छिसुओ, कंबलगं चंदणं च वाणिअओ ।
दाउं अभिनिक्खंतो, तेणेव भवेण अंतगओ ॥

गमनिका । वैद्यसुतस्य च गेहे कृमिकुष्ठोपहतं यतिं दृष्ट्वा वदन्ति च ते वैद्यसुतं कुरु अस्य चिकित्सां तैलं चिकित्सकसुतः कम्बलकं चन्दनं वाणिजस्त्वा अभिनिष्क्रान्तस्तेनैव भवेन अन्तकृत । भावार्थं स्पष्ट एव क्वचित् क्रियाध्याहारः स्वबुद्ध्या कार्य इति गाथाद्वयार्थः । आव० १ अ० "उसभेण अरहा कोसलिए चोद्दस्स पुव्वी होत्था " उसभेण अरहा कोसलिए पुव्वभवे चक्कवट्टी होत्था " स० ।

कथानकशेषमुच्यते ।

परुष्यौषधसामग्रीं, कृत्वाऽगुर्मुनिसंनिधौ ।
अनुज्ञाप्य मुनीन्द्रं तं, चिकित्सामारभन्त ते ॥ ३८ ॥
मुनेः सर्वाङ्गमभ्यङ्गं, तेन तैलेन ते व्यधुः ।
तद्वीर्येण तदाक्रान्तः, साधुर्विह्वलितोऽभवत् ॥ ३९ ॥
आकुलास्तेन तैलेन, कृमयो निर्ययुर्बहिः ।
जीवानन्दस्ततो रत्न-कम्बलेन तमावृणोत् ॥ ३० ॥
सर्वेऽपि कृमयो लग्नाः, शीतत्वाद्रत्नकम्बले ।
वैद्यस्ततोऽक्षिपत्सर्वान्, कृमींस्तान् गोशवोपरि ॥ ४१ ॥
साधुमाश्वास्य गोशीर्ष-चन्दनेनाथ सोऽलिपत् ।
आद्याभ्यङ्गेन कृमय-स्त्वग्गता निर्गता मुने ॥ ४२ ॥
द्वितीयेऽभ्यङ्गे मांसस्था-स्तृतीये चास्थिसंस्थिताः ।
कृमयो निर्ययुः सर्वे, मन्त्राकृष्टा इवाऽहयः ॥ ४३ ॥
संरोहिण्यौषधेः साधुं, स्वर्णकान्तिमथाकरोत् ।
विजहार ततः साधु-र्नवीकृतवपुः स तैः ॥ ४४ ॥
रत्नकम्बलगोशीर्ष-चन्दनस्य च विक्रयात् ।
चैत्यन्ते कारयामासु-र्मेरुशृङ्गमिवोन्नतम् ॥ ४५ ॥
कृत्वा द्रव्यस्तवन्तेऽथ, भावस्तवचिकीर्षवः ।
सुसाधुसंनिधौ दीक्षां, परुष्यादाय धीधनाः ॥ ४६ ॥
चिरं चारित्रमाचर्य, निरतीचारसुन्दरम् ।
मृत्वा षडपि ते ऽभूव-न्नच्युते त्रिदशोत्तमाः ॥ ४७ ॥
जम्बूद्वीपाभिधे द्वीपे, विदेहार्द्धे च पूर्वतः ।
विजये पुष्कलावत्यां, नगरी पुण्डरीकिणी ॥ ४८ ॥
वज्रसेनो नृपस्तत्र, धारिणी तस्य वल्लभा ।
तेष्वच्युतच्युताः पञ्च, तत्पुत्राः क्रमशोऽभवन् ॥ ४९ ॥
चतुर्दशमहास्वप्न-सूचितः प्रथमोऽङ्गजः ।
वज्रनामाख्यया ख्यातो, वैद्यस्यात्मा विविक्तधीः ॥ ५० ॥
बाहुर्नृपसुतस्यात्मा, सुबाहुर्मन्त्रिसन्मनः ।
आत्मापीठो महापीठः श्रेष्ठिसार्थेशपुत्रयोः ॥ ५१ ॥
केशवस्य च जीवोऽभू-त्स्वयशा राजपुत्रकः ।
आश्रितो वज्रनाभस्य, शैशवादपि सोऽभवत् ॥ ५२ ॥
ते वर्द्धन्ते स्म षडपि, षड्गुणा इव देहिनः ।
कलाचार्यात्कला सर्वे, स्पर्द्धयेवाच्छिदन् धिया ॥ ५३ ॥
लोकान्तिकैरथेत्युक्ते, स्वामिंस्तीर्थं प्रवर्तय ।
वज्रसेनस्ततो राज्ये, वज्रनाभं न्यवेशयत् ॥ ५४ ॥
स्वयं सांवत्सरं दानं, दत्त्वा संयममग्रहीत् ।
तुर्यं ज्ञानं तदा जातु, माङ्गलिकमिवामिलत् ॥ ५५ ॥
राजा भ्रातृष्वतुरोऽपि, लोकपालानिवाकरोत् ।
राजपुत्रं सुयशसं, सारथ्ये च न्यवेशयत् ॥ ५६ ॥
वज्रसेनजिनस्याभू-त्केवलज्ञानमेकतः ।
अन्यतश्चक्रशालाया-मुत्पन्नं चक्रमायुधम् ॥ ५७ ॥
भगवन्तं ततोऽभ्यर्च्य, चक्रं चानुप्रपूज्य च ।
साधयामास षट्खण्डां, पृथ्वीं देशकरीकृत्य ॥ ५८ ॥

चक्रे च चक्रवर्त्तित्वा भिषेकोऽस्याखिलैर्नृपैः ।
अपालयच्चिरं राज्य-मेकच्छत्रममहीतले ॥ ५६ ॥
अन्यदा समवासार्षी-द्वज्रसेनजिनेश्वर ।
ख्यास्यामघातिनाकाँ, श्रुत्वा चक्रधादयोऽभ्युधन् ॥ ६० ॥
पुत्रं निवेश्य राज्ये स्वे, वज्रनाभ ससोदर्यैः ।
चतुर्भिर्भ्रातृभिः सार्द्धं, प्रवव्राजान्तिके प्रभोः ॥ ६१ ॥
प्राप्तकालं वज्रसेन-स्तीर्थकृन्निर्वृतिं ययौ ।
वज्रनाभो द्वादशाङ्गी, परे चैकादशाङ्गिन ॥ ६२॥
बाहुः साधुपञ्चशत्या, भक्तपानान्यपूरयत् ।
सुबाहुः सर्वसाधूना-मङ्गविश्रामणां व्यधात् ॥ ६३ ॥
साधू पीठमहापीठौ, रहः स्वाध्यायकारिणौ ।
बाहुं सुबाहुमाचार्यो, लोकः सर्वश्च शंसति ॥ ६४ ॥
धन्यावेतौ महासत्त्वौ, वैयावृत्त्य सुदुष्करम ।
कुरुत कुरुते कोऽन्य , कष्टमाह्निकमीदृशम ॥ ६५ ॥
इतरौ कुक्तोऽप्रीति-मावां स्वाध्यायिनावपि ।
न कोऽपि श्लाघते यद्वा, यत्नक्कर्म चर्म च ॥ ६६ ॥
राजर्षिर्वज्रनाभोऽथ, विंशत्या स्थानकैस्तदा ।
तीर्थंकरनामगोत्रं, कर्मोपार्ज्जन्महामनाः ॥ ६७ ॥ आ० क० ॥

२ तीर्थंकरत्वहेतुसंग्रहार्थं गाथाचतुष्टयमाह ।

साहूं तिगिच्छिऊणं, सामन्नं देवलोगगमणं च ।
पुंमरिगिणीए उ चुआ, तओ सुआ वइरसेणस्स ॥
पढमित्थ वइरनाहो, बाहुसुबाहू अ पीढमहपीढो ।
तेसिं पिआ तित्थयरो, निक्खंता ते वि तत्थेव ॥
पढमो चउदसपुव्वी, सेसा इक्कारसंग वी चउरो ।
बिइओ वेयावच्चं, किइकम्म तइय ओकासी ॥
भोगफलं बाहुबलं, पसंसणा जिट्ठइअरअचिअत्तं ।
पढमो तित्थयरत्त, वीसाहिं ठाणेहिं कासीअ ॥

आसामक्षरगमनिका साधु चिकित्सयित्वा श्रामण्य देवलोके गमनञ्च पौण्डरीकिण्याञ्च च्युत सुता वैरसेनस्य जाता इति वाक्यशेषः । प्रथमोऽत्र वइरनाभो बाहुसुबाहू च पीठमहापीठौ तेषां पिता तीर्थकरो निष्क्रान्तास्तेऽपि तत्रैव पितु सकाश इत्यर्थः । प्रथमश्चतुर्दशपूर्वी शेषा एकादशाङ्गविदश्चत्वार तेषां चतुर्णां बाहुप्रभृतीना मध्ये द्वितीयो वैयावृत्त्य कृतिकर्म तृतीयोऽकार्षीत् भोगफल बाहुबलप्रशंसनाज्ज्येष्ठश्च इतरयोरचितत्वं प्रथमस्तीर्थंकरत्वं विंशतिभि स्थानैरकार्षीत् । भावार्थस्तूक्त एव क्रियाध्याहारोऽपि स्वबुद्ध्या कार्य इह विस्तरभयान्नोक्त इति गाथाचतुष्टयार्थः । आव० १ अ० । [ तीर्थकृज्जन्मनिबन्धनकारणानि तित्थयरशब्दे ]

एवं स्थानैर्वज्रनाभ-स्तीर्थकृत्कर्मबध्नवान् ।
मधुघृतकादिदानेन, बाहुश्चक्रभृत श्रियम ॥ १ ॥
बाहुर्वलं सुबाहुश्च, साधुविश्रामणाद्यधात् ।
इतरौ तु तेन माया-कर्मणा स्त्रीत्वमर्जत ॥ २ ॥
तत पूर्णायुषः काले, कृत्वा पञ्चापि साधवः ।
षट्ख सुयशः सर्वे, सर्वार्थसिद्धिमियरुः ॥ ३ ॥
जम्बूद्वीपाभिधे द्वीपे, भरतार्द्धे च दक्षिणे ।
गङ्गासिन्धुसरि[illegible]-मध्ये कल्पद्रुमाङ्किते ॥ ४ ॥
[illegible]रावसर्पिणीकाले, सुषमादुःषमारके ।
कुलकृन्नाभो नाभि-मरुदेवी या प्रियो भवत ॥ ५ ॥

पूर्वलक्षेषु चतुरा-शीतौ शेषेषु सत्स्विह ।
स नवाशीतिपक्षेषु-त्तराषाढायुते विधौ ॥ ६ ॥
आषाढे मासि कृष्णेऽपि--चतुर्थेऽह्नि सुनिर्मले ।
जीवो युगादिदेवस्य, च्युत्वा सर्वार्थसिद्धितः ॥ ७ ॥
देव्याः श्रीमरुदेवाया , सरोवर इवोदरे ।
ज्ञानत्रयपवित्रात्माऽवततार मरालवत ॥ ८ ॥
त्रैलोक्येऽपि तदैवासी--द्दक्षिणं भवसङ्गिनाम ।
उद्योत कोऽप्यनिर्वाच्य , सुखञ्च क्षणमद्भुतम ॥ ९ ॥
स्वप्नेष्वत्युत्तमाः स्वप्ना, वर्णराशौ स्वरा इव ।
निद्राणया तदा देव्या, दृश्यन्ते स्म चतुर्दश ॥ १० ॥
वृषभः १ कुञ्जरः २ सिंह ३ पद्मवासाऽभिषेचनम ४ ।
पुष्पदाम ५ शशी ६ सूर्यः ७ पूर्णकुम्भ ८ सितध्वजः ९ । ११ ।
पद्माकरः १० पयोराशि ११ र्विमानं कल्पवासिनाम । १२
रत्नोच्चय १३ शिखी चेति १४ प्रविशन्तो मुखाम्बुजे । १२ ।
तानाख्याति स्म सा नाभे--र्निद्राच्छेदे प्रमोदभाक् ।
अत्युत्तममद्भुतप्राप्तिं, तस्याः सोऽपि न्यवेदयत ॥ १३ ॥
तदैव युगपत्सर्वेऽप्यागत्य चलितासनाः ।
स्वप्नपाठकवद्देव्याः, शक्रा स्वप्नार्थमभ्यधु ॥ १४॥
देवि त्वदङ्गजस्यैते, महास्वप्नाश्चतुर्दश ।
चतुर्दशरज्जुमिते, लोके स्माहुरधीशताम ॥ १५ ॥
चतुर्दशानां पूर्वाणा-मयमेव जगत्प्रभुः ।
उपदेक्ष्यति हेमात-मातृकां बीजसन्निभाम ॥१६॥
चतुर्दश पूर्वधराः, शिष्याश्चैतस्य भाविनः ।
तथा चतुर्दशचतु-र्दशकानेष वक्ष्यति ॥१७॥
एवं स्वप्नार्थमावेद्य, सर्वेऽपि त्रिदशाधिपाः ।
स्थानं निजनिजं जग्मु-र्विसृष्टा इव सेवका ॥१८॥
तमिन्द्राख्यातमाकर्ण्य, स्वप्नार्थं देव्यमोदत ।
नाभिरप्यभजत्प्रीतिं, कस्येष्टाख्या मुदे न वा ॥१९॥ आ०क० ।

अमुमेवार्थमुपसंहरन्नाह ।

उववाओ सव्वट्ठे, सव्वेसिं पढमओ चुओ उसभो ।
रिक्खेणासाढाहिं, असाढबहुले चउत्थीए ॥

गमनिका । उपपातः सर्वार्थे सर्वेषां संजातस्ततश्चायुष्कपरिक्षये सति प्रथमश्च्युतो ऋषभ ऋषभेण नक्षत्रेण आषाढाभिः आषाढबहुले चतुर्थ्यामिति गाथार्थः । इदानीं तद्वक्तव्यताभिधित्सयैनां द्वारगाथामाह निर्युक्तिकारः ।

जम्मणे नामवुड्ढीअ, जाइस्सरणे इ अ ।
वीवाहे अ अवच्चे अ-भिसेए रज्जसंगहे ॥

गमनिका (जम्मण इति) जन्मविषयो विधिर्वक्तव्यः वक्ष्यति च " चित्तबहुलट्ठमीए " इत्यादि (नाम इति) नामविषयो विधिर्वक्तव्यः । वक्ष्यति च " देसूणगं च इत्यादि " (वुड्ढीयत्ति) वृद्धिश्च भगवतो वाच्या वक्ष्यति च "अह सो वड्ढइ भगवं इत्यादि " (जाइसरणेइयत्ति) जातिस्मरणं च विधिर्वक्तव्य । वक्ष्यति च " जाइस्सरोयमित्यादि " ( वीवाहेयत्ति ) विवाहे च विधिर्वक्तव्य । वक्ष्यति च 'भोगसमुत्थमित्यादि' (अवच्चेत्ति) अपत्येषु क्रमो वाच्य वक्ष्यति च " सोमरहवाभसुन्दरी इत्यादि "(अभिसेगेत्ति) राज्याभिषेके विधिर्वाच्य । वक्ष्यति च "आभोएउं सक्को उवागओ इत्यादि" ( रज्जसंगहेत्ति ) राज्यसंग्रहे विधिर्वाच्यः वक्ष्यति च "आसाहत्थीगावो इत्यादि" अयं समुदायार्थः । अवयवार्थन्तु प्रतिद्वारं यथावसरं वक्ष्यामः ।

[३]तत्र प्रथमद्वारावयवयार्थमभिधित्सयाजन्मन्महोत्सव माह।

**चित्तबहुलट्ठमीए, जाओ उसभो असाढनक्खत्ते ।**
**जम्मणमहो अ सव्वो, नेयव्वो जाव घोसणं ॥**

गमनिका । चैत्रस्य बहुलाष्टम्यां जात ऋषभ आषाढनक्षत्रे जन्ममहश्च सर्वो नेतव्यो यावद् घोसणमिति गाथार्थः ।

भावार्थः कथातो ज्ञेयः सा चेयम् ।

क्रमात्पूर्णेष्वथाहस्सु, चैत्रे कृष्णाष्टमीतिथौ ।
निशीथे सुषुवे सूनु, देवीयुगलधर्मिणम् ॥१॥
अचेतना अपि दिश-स्तदानीं मुदिता इव ।
प्रसेदु किं पुनर्वच्मि, लोकानां चेतनावताम् ॥२॥
वायवोऽपि सुखस्पर्शा, मन्दं मन्दं ववुस्तदा ।
क्ष्माप्यवीचितमीदृत, प्रेक्षमाणा इव प्रभुम् ॥३॥
उद्योतस्त्रिजगत्यासी-दृध्वान दिवि दुन्दुभिः ।
नारका अप्यमोदन्त, भूरप्युच्छ्वासमासदत् ॥४॥
"गयदन्तसेलहिट्ठा, अट्ठ अहो लोगवासिणीदेवी ।
नन्दणवणकूडेसु, अट्ठय तह उड्ढलोगाओ" ॥१॥
दिक्कुमार्योऽष्टाधोलोक-वासिन्यः कम्पितासनाः ।
अर्हज्जन्मावधेर्ज्ञात्वा-ऽभ्येयुस्तत्सूतिवेश्मनि ॥५॥
भोगङ्करा भोगवती, सुभोगा भोगमालिनी ।
सुवत्सा वत्समित्रा च, पुष्पमाला त्वनन्दिता ॥ ६ ॥
नत्वा प्रभु तदम्बाञ्चे-शाने सूतिगृहं व्यधु ।
संवर्तेनाशोधयत्क्ष्मा-मायोजनमितो गृहात् ॥ ७ ॥
मेघंकरा मेघवती, सुमेघा मेघमालिनी ।
तोयधारा विचित्रा च, वारिषेणा बलाहिका ॥ ८ ॥
अष्टोर्ध्वलोकादेत्यैता, नत्वार्हन्तं समातृकम् ।
तत्र गन्धाम्बुपुष्पौघ-वर्षं हर्षाद्वितेनिरे ॥९॥
अथ नन्दोत्तरानन्दे, आनन्दा नन्दिवर्द्धने ।
विजया वैजयन्ती च, जयन्ती चापराजिता ॥१०॥
अष्टावभ्येत्य पौरस्त्य-रुचकाद्रेरयादिमाः ।
जिनं जिनाम्बांनत्वाऽस्थु, प्राच्यां दर्पणपाणयः ॥११॥
समाहारा सुप्रदत्ता, सुप्रबुद्धा यशोधरा ।
लक्ष्मीवती शेषवती, चित्रगुप्ता वसुन्धरा ॥१२॥
अपाच्यरुचकाद्रेश्चा-ऽऽत्य देवं समातृकम् ।
प्रणम्य दक्षिणेनैता-स्तस्थुर्भृङ्गारपाणयः ॥१३॥
इलादेवी सुरादेवी, पृथिवी पद्मवत्यपि ।
एकनासा नवमिका, भद्रा सीतेति नामतः ॥१४॥
प्रत्यग्रुचकशैलाद्-ऽऽत्य व्यजनपाणय ।
स्वामिनं मरुदेवीञ्च, नत्वाऽस्थुः पश्चिमेन तु ॥१५॥
अलम्बुषा मितकेशी, पुण्डरीका च वारुणी ।
हासा सर्वप्रभा श्रीर्ह्री-रष्टोदग्रुचकाद्रित ॥ १६ ॥
तत्रागत्य जिनं जैनीं, जननीं चाप्तचामराः ।
प्रणिपत्योत्तरेणासा-ञ्चक्रिरे मोदमेदुराः ॥ १७ ॥
शतेरा चित्रकनका, चित्रा सौत्रामणी तथा ।
दीपहस्ता विदिक्षेत्या-स्थुर्विदिग्रुचकाद्रितः ॥ १८ ॥
रुचकद्वीपतोऽप्येयु-श्चतस्रो दिक्कुमारिकाः ।
रूपा रूपासिका चापि, सुरूपा रूपकावती ॥१९॥
प्रकल्प्य भगवन्नालं, चतुरङ्गुलनिर्जितम् ।
खनित्वा विवरं तत्र, नालन्निक्षिप्य तं तत ॥२०॥
वैडूर्यरत्नैरापूर्य, बबन्धुर्हरितालया ।
पीठं तस्योपरितले, ततोऽर्हज्जन्मगेहत ॥२१॥
पूर्वस्याञ्च दक्षिणस्या-मुत्तरस्यां विचक्रिरे ।
ताभिश्च त्रीणि कदली-गृहाणि स्वर्विमानवत् ॥ २२॥
प्रत्येकमेषां मध्ये च, सिंहासनविभूषितम् ।
विचक्रिरे चतुःशालं, स्वर्णरत्नमणीमयम् ॥ २३ ॥
ता दक्षिणचतु शाले, जिन न्यस्य कराञ्जलौ ।
निन्युस्तन्मातरञ्चाप्त-चेटीवद्दत्तबाहव ॥ २४ ॥
सिंहासने निवेश्योभा-वभ्यामञ्जुः सुगन्धिना ।
ता लक्षपाकतैलेन, जरत्संवाहिका इव ॥ २५ ॥
आमन्दानन्दनिस्यन्द-प्रमोदितदृशो भृशम् ।
उभावुद्वर्तयामासु-र्दिव्येनोद्वर्त्तनेन ताः ॥ २६ ॥
नीत्वा ताः प्राक् चतुःशाले, न्यस्य सिंहासने च तौ ।
स्नपयामासुरम्भोभिः, स्वमनोभिरिवामलैः ॥ २७ ॥
गन्धकाषायवासोभि-स्तदङ्गान्यमृजन्नथ ।
गोशीर्षचन्दनरसै-श्चर्चयामासुराप्लुताः ॥ २८ ॥
तान्यामामोचयामासु-र्देवदूष्ये च वाससी ।
विद्युदुद्योतसदृश्यश्चि, ताश्चित्राभरणानि च ॥ २९ ॥
अथोत्तरचतु शाले, नीत्वा सिंहासनोपरि ।
न्यषीदयन् भगवन्तं, भगवन्मातरञ्च ताः ॥ ३० ॥
गोशीर्षचन्दनैर्ग्रासि, द्राक् क्षुद्रहिमवद्गिरेः ।
ताः समानययामासु-रमरैराभियोगिकैः ॥ ३१ ॥
उत्पाद्यारणिदारुभ्यां, वह्निमह्नाय तास्ततः ।
होमं वितेनुर्गोशीर्ष-चन्दनैरेधसात्कृतैः ॥ ३२ ॥
रक्षापोट्टलिका बद्ध्वा, तयोरथ जिनान्तिके ।
पर्वतायुर्भवेत्युक्त्वा, स्फालयत्रश्मगोलकौ ॥ ३३ ॥
सूतिकाभवने तस्मिन्, मरुदेवीं विभुं च ताः ।
शय्यागतौ विधायाऽस्थु-र्गायन्त्यो मङ्गलान्यथ ॥ ३४ ॥ आ०क०

संग्रहमाह ।

तेणं कालेणं तेणं समएणं उसभेणं अरहा कोसलिए चउ उत्तरासाढे अभीइपंचमे होत्था ॥ २०४ ॥ तं उत्तरासाढाहिं चुए चइत्ता गब्भवक्कंते जाव अभीइणा परिनिव्वुए ॥ २०५ ॥ तेणं कालेणं तेणं समएणं उसभेणं अरहा कोसलिए जे से गिम्हाणं चउत्थे मासे सत्तमे पक्खे आसाढबहुले तस्स णं आसाढबहुलस्स चउत्थीपक्खेणं सव्वट्ठसिद्धाओ महाविमाणाओ तित्तीसं सागरोवमट्ठिती-याओ अणंतरं चइत्ता इहेव जम्बुद्दीवे दीवे भारहे वासे इक्खागभूमिए नाभिकुलगरस्स मरुदेवाए भारियाए । पुव्वरत्तावरत्तकालसमयंसि आहारवक्कंतिए जाव गब्भत्ताए वक्कंते । २०६ । उसभेणं अरहा कोसलिए तिन्नाणोवगए या वि होत्था चइस्सामि त्ति जाणइ जाव सुविणे पासइ तं । गयवसहगाहा "सव्वं तहेव नवरं, पढमं उसभमुहेणं अइंतं । पासइ सेसाउ गयं, नाभिकुलगरस्स साहेइ" सुविणपाढगा नत्थि नाभिकुलगरो सयमेव वागरेइ । २०७ । तेणं कालेणं तेणं समयेणं उसभेणं अरहा कोसलिए जे से गिम्हाणं पढमे मासे पढमे पक्खे चित्तबहुले तस्स णं चित्तबहुलस्स अट्ठमीपक्खेणं नवण्हं मासाणं

बहुपडिपुन्नाणं अट्ठमाणराइंदियाणं जाव आसाढाहिं नक्खत्तेणं जोगमुवागएणं आरोग्गारोग्गं दारयं पयाया ।२०८।

अथास्यामवसर्पिण्यां प्रथमधर्मप्रवर्तकत्वेन । परमोपकारित्वात्किञ्चिद्विस्तरत श्रीऋषभदेवचरित्रं प्रस्तौति । 'तेणमित्यादितः अभीइ पंच मेहुत्यत्ति' पर्यन्तं तत्र ( कोसालिएत्ति ) कोशलायामयोध्यायां भव कौशलिक ॥ २०४ ॥ तंजहेत्यादितः "परिनिब्बुएत्ति" पर्यन्तं सुगमम् ॥२०५॥ तेणमित्यादितो गब्भवक्कंतेति पर्यन्तं सुगमम् ॥ २०६ ॥ उसभेणमित्यादितः सयमेव आगारे इति पर्यन्तं तत्र मरुदेवा प्रथमं सुखेन ( अईंतंति ) प्रविशन्तं वृषभं पश्यति शेषास्तु जिनजनन्य. प्रथमं गजं पश्यन्ति वीरमाता तु सिंहमद्राक्षीद् ॥२०७॥ तेणमित्यादितो दारगं पयायत्ति पर्यन्तं प्राग्वत् ॥ २०७ ॥ कल्प० । अस्य संग्रहमाह ।

संवट्टमेहआयं-सगा य भिंगारतालयंटा य ।
चामरजोईरक्खं, करिंति एवं कुमारीओ ॥११६॥

संवर्तकमेघमुक्तप्रयोजनं किं कुर्वन्ति आदर्शकाश्च गृहीत्वा तिष्ठन्ति भृङ्गारॉंस्तालवृन्ताँश्चेति तथा चामरं जोतीरक्षां कुर्वन्ति एतत्सर्वं दिक्कुमार्य इति गाथार्थ ॥ ११६॥ आव० १ अ० ।

ततः सिंहासनं शाक्रं, चचालाऽचलनिश्चलम् ।
अवधिं प्रयुज्य ज्ञात्वा, जन्मादिमजिनेशितुः ॥ ३५ ॥
सद्यः स्वर्गाद्विमानेन, पालकेनेत्य देवराट् ।
जिनेन्द्रं च जिनाम्बां च, त्रि. प्रादक्षिणयँस्ततः ॥ ३६ ॥
वन्दित्वा नमंसित्वा चे-त्येव देवेश्वरोऽवदत् ।
नमोऽस्तु ते रत्नकुक्षि-धारिके विश्वदीपिके ॥ ३७ ॥
अहं शक्रोऽस्मि देवेन्द्र, कल्पादाद्य इहागमम् ।
प्रभोर्युगादिदेवस्य, करिष्ये जननोत्सवम् ॥ ३८ ॥
नैतद्भयं देवि ! तन्नैवे-त्युक्त्वाऽवस्वापिनीं ददौ ।
कृत्वा जिनप्रतिबिम्बं, जिनाम्बासन्निधौ न्यधात् ॥ ३६ ॥
भगवन्तं तीर्थकरं, गृहीत्वा करसंपुटे ।
विचक्रे पञ्चधा रूप, सर्वश्रेयोऽर्थिकः स्वयम् ॥ ४० ॥
एको गृहीततीर्थेश, पार्श्वे द्वावात्तचामरौ ।
एको गृहीतातपत्र, एको वज्रधरः पुनः ॥ ४१ ॥
शक्रराजस्ततश्चातु-र्निकायिकसुरान्वित. ।
शीघ्रं सुमेरुर्ययनैव, वनं येनैव पण्डकम् ॥ ४२ ॥
मेरुचूडादक्षिणेना-तिपाण्डुकम्बला शिला ।
सिंहासनं चाभिषेके, तेनैवोपेति देवराट् ॥ ४३ ॥
तत्र सिंहासने पूर्वा-ऽभिमुखे च निषीदति ।
द्वात्रिंशदपि देवेन्द्रा, स्वामिपादान्तमैयरुः ॥ ४४ ॥
अच्युतेन्द्रस्तत्र पूर्वं, विदधात्यभिषेचनम् ।
ततोऽनुपरिपाटीतो, यावच्छक्रोऽभिषिक्तवान् ॥ ४५ ॥
ततश्च चमरादीन्द्रा, यावच्चन्द्रार्यमादय. ।
एवं जन्माऽभिषेकस्यो-त्सवं निर्वर्त्य देवराट् ॥ ४६ ॥
देवप्रकरैतस्तैर्वृत्तो, प्राग्वत्सर्वामरान्वितः ।
तीर्थनाथमुपादाय-सद्य. प्रत्यागमत्क्षणात् ॥ ४७ ॥
प्रतिसंहृत्य तीर्थेश-प्रतिबिम्बं सपद्यपि ।
तत्र मातु सन्निधाने, भगवन्तमतिष्ठिपत् ॥ ४८ ॥
संहृत्यावस्वापिनीं च, दिव्य क्षौमयुगं तत ।
दिव्य कुण्डलयुग्म च, विमोच्योच्छीर्षके प्रभोः ॥ ४९ ॥
श्रीदामगण्डमुल्लोचे, स्वामिनो रत्नदामयुक् ।
तपनीयलम्बमानान्त-स्वर्णकन्दुकमावृधे ॥ ५० ॥
येन स्वामी तीर्थकरो, निर्निमेषविलोचनः ।
पश्यन् सुखं सुखेनैव, रममाणोऽस्ति निर्वृतः ॥ ५१ ॥
ततो वैश्रवण शक्र-वचनात्तत्क्षणादपि ।
द्वात्रिंशद्धिरण्यकोटी-, सुवर्णस्य च तावती ॥ ५२॥
द्वात्रिंशत्तु नन्दासना-न्यथ भद्रासनान्यपि ।
रूपयौवनलावण्य-सौभाग्यप्रमुखान् गुणान् ॥ ५३ ॥
न्यधात्तीर्थाधिनाथस्य, जन्मवेश्मनिवासिषु ।
अथाभियोगिकैर्देवै-र्महानादेन देवराट् ॥ ५४ ॥
घोषयामास शृण्वन्तु, भवन्तः सर्व एव हि ।
भवनवासिनो देवा, ज्योतिष्का व्यन्तरास्तथा ॥ ५५ ॥
देवा वैमानिका देव्यः, कृत्वा सावहितं मनः ।
यो देवानुप्रियः कश्चि-त्स्वामिनस्त्रिजगत्पतेः ॥ ५६ ॥
त्रिजगत्पतिमातुश्च, करिष्यत्यशुभं मन ।
ससधार्यमञ्जरीव, शिरस्तस्य स्फुटिष्यति ॥ ५७ ॥
चातुर्निकायिका देवा, एवं जन्मोत्सवं प्रभोः ।
नन्दीश्वरेऽष्टाहिकां च, कृत्वा जग्मुर्यथागतम् ।५८॥ आ० क० ।

( ४ ) नामद्वारमाह ।

देसूणगं च वरिसं, सक्कागमणं च वंसठवणा य ।
आहारमंगुलीए, ठवंति देवा मणुन्नं तु ॥ १ ॥
सक्को वंसट्ठवणा, इक्खु अगू तेण हुंति इक्खागा ।
जं च जहा जम्मि वए, जुग्गं कासीअ तं सव्वं ॥ २ ॥

देशोन च वर्षे भगवतो जातस्य तावत् पुन शक्रागमनं च संजातं तेन वंशस्थापना च कृता भगवत इति साऽयं ऋषभनाथः । अस्य ऋषभस्य गृहवासे असंस्कृत आसीदाहार इति । किं च सर्वे तीर्थकरा एव बालभावे वर्तमानाः न स्तन्योपयोगं कुर्वन्ति किन्त्वाहाराभिलाषे सति स्वामेवाङ्गुलिं वदने प्रक्षिपन्ति तस्यां चाहारमङ्गुल्यां नानारससमायुक्तं स्थापयन्ति देवा मनोज्ञं मनोऽनुकूलमेवमतिक्रान्तबालभावास्त्वग्निपक्वमेव गृह्णन्ति । ऋषभनाथस्तु प्रव्रज्यामप्रतिपन्नो देवोपनीतमेवाहारमुपभुक्तवानित्यभिहितमानुषङ्गिकमिति गाथार्थः ॥११०॥ प्रकृतमुच्यते । माहेन्द्रेण वंशस्थापना च कृतेत्यभिहितं सा किं यथाकथञ्चित्कृता आहोस्वित् प्रवृत्तिनिमित्तपूर्विकेति । उच्यते प्रवृत्तिनिमित्तपूर्विका न यादृच्छिकी कथम् ( आव० १ अ० ) शक्र सौधर्मेन्द्रो वंशस्थापने प्रस्तुते इक्षुं गृहीत्वा आगत. । अक अग कुटिलायां गतौ अनेकार्थत्वाद्धातूनाम् अक धातोरौणादिके उण् प्रत्यये अकुशब्दोऽभिलाषार्थ. । तत स्वामी इक्षोः । आकुनाऽभिलाषेण करं प्रसारयत् शक्र आर्पयत् तेन कारणेन भवन्ति इक्ष्वाकुवंशभवा ऐक्ष्वाका । आ० क० । जं० । ऐक्ष्वाका ऋषभनाथवंशजा इति एव पश्चस्तु यथा येन प्रकारेण यस्मिन् वयसि योग्यं शक्र कृतवांश्च तत्सर्वमिति । पश्चार्द्धे पागन्तरं वा ।

तालफलाहयभगिणी, होहियचि सारवणा ॥

तालफलाहतभगिनी भविष्यति पत्नीति । 'सारवणा' किल भगवतो नन्दायाश्च तुल्यवय स्थापनार्थमेवं पाठ इति । तालफलाहतभगिनी भगवतो बालभाव एव मिथुनकैर्नाभेः सकाशमानीता । तेन च भविष्याति ऋषभपत्नीति । 'सारवणा' गोपना कृतेति । तथा चानन्तरं वक्ष्यति नन्दायाः ओत्ति " अन्ये तु प्रतिपादयन्ति सर्वेयं जन्मद्वारवक्तव्यता द्वार गाथापि किन्त्वैवं पठ्यते "जंमणे य विवड्ढीयत्ति" अलं आव० १ उ० । आ० क० ।

नाभिस्स णं कुलगरस्स मरुदेवाए भारियाए कुच्छिंसि एत्थ णं उसहे णामं अरहा कोसलिए पढमराया पढमजिणे पढमकेवली पढमतित्थंकरे पढमधम्मवरचक्कवट्टी समुप्पज्जित्था॥

नाम्ना कोशलायामयोध्यायां भवः कौशलिकः भाविनि भूतवदुपचार इति न्यायादेतद्विशेषणम् अयोध्यास्थापनाया ऋषभदेवराज्यस्थापनासमये कृतत्वात् तद्व्यक्तिस्तु भरतक्षेत्रनामान्वर्थकथनावसरे । "धणवइमतिनिम्माया" एतत्सूत्रव्याख्यायां दर्शयिष्यते । अर्हन्तश्च पार्श्वनाथादय इत केचिदनङ्गीकृतराजधर्मकाः अपि स्युरित्यसौ केन । क्रमेणार्हन्नृद्दिश्याह प्रथमो राजा एतदवसर्पिण्यां नाभिकुलकरादियुग्मिमनुज शक्रेण च प्रथममभिषिक्तत्वात् । प्रथमजिन प्रथमो रागादीनां जेता । यद्वा प्रथमो मनःपर्यवज्ञानात् राज्यत्यागादनन्तरं द्रव्यतो भावतश्च साधुवर्त्तित्वेन अत्रावसर्पिण्यामस्यैव भगवत प्रथमतस्तद्भवनात् जिनत्व चावधिमनःपर्यवकेवलज्ञानिनां स्थानाङ्गे सुप्रसिद्धम् । अवधिजिनत्वेऽनुव्याख्यायमानेऽक्रमबद्धसूत्रमिति केवलिजिनत्वे चोत्तरग्रन्थेन सह पौनरुक्त्यमिति व्याख्यानासङ्गतिः । श्रोतॄणां प्रतिज्ञा तेन प्रथमकेवली आद्य सर्वज्ञ । केवलित्वे च तीर्थकृन्नामोदयो भवतीत्याह प्रथमतीर्थकरः आद्यश्चतुर्वर्णसङ्घस्थापकः । उदिततीर्थकृन्नामा च कीदृश स्यादिति प्रथमो धर्मवरो धर्मप्रधानश्चक्रवर्ती यथा चक्रवर्ती सर्वत्राप्रतिहतवीर्येण चक्रेण वर्तते तथा सोऽपीति भावः । समुत्पद्येत समुत्पन्नवानित्यर्थः । जं० २ वक्ष० ( जम्बूद्वीपप्रज्ञप्त्युक्त तित्थयर शब्दे वक्ष्यते )

तं चेव सव्वं जाव देवा देवीओ य वसुहारवासिंसु सेसं तहेव चारगसोहणमाणुम्माणवड्ढणउस्सुक्कमाइय ठिइवडियजूयवज्जं सव्वं भाणियव्वं ॥२०९॥

"तं चेव सव्वमित्यादितो ठिइवडियजूयवज्जं सव्वं भाणियव्वं-ति" यावत् । तत्र देवलोकच्युतोऽद्भुतरूपोऽनेकदेवदेवीपरिवृत सकलगुणैस्तेभ्यो युगलमनुष्येभ्य परमोत्कृष्ट क्रमेण प्रवर्द्धमान सञ्जाहाराभिलाषे सुरसंचारितामृतरससरसामङ्गुलिं मुखे प्रक्षिपति । एवमन्येऽपि तीर्थकरा बाल्येऽवगन्तव्या बाल्यातिक्रमे पुनरग्निपक्वाहारभोजिन ऋषभस्तु प्रव्रज्यां यावत्कुरानीतोत्तरकुरुकल्पद्रुमफलान्यास्वादितवान् । अथ सजातकिञ्चिदूनवर्षे भगवति प्रथमजिनवंशस्थापनं शक्रः स्वजीतमिति विचिन्त्य कथं रिक्तपाणि स्वामिसमीपं यामीति महतीमिक्षुयष्टिमादाय नाभिकुलकराङ्कस्थस्य प्रभोरग्रे तस्थौ दृष्ट्वा चेक्षुयष्टिं हृष्टवदनेन स्वामिना करं प्रसारिते इक्षु भक्षयसीति भणित्वा तां दत्त्वा इक्ष्वभिलाषात्स्वामिनो वंश इक्ष्वाकुनामाऽभवत् । गोत्रमपि अस्य एतत्पूर्वजानामिक्ष्वभिलाषात्काश्यपनामेति शक्रो वंशस्थापना कृतवान । अथ किञ्चिद्युगलं मातापितृभ्यां तालवृक्षाऽधो मुक्तं तस्मादेतत्तालफलेन पुरुषो व्यापादित । प्रथमोऽयमकालमृत्यु । अथ सा कन्या मातापित्रो स्वर्गतयोः एकाकिन्येव वने विचचार । दृष्ट्वा च तां सुन्दरीं युगलिकनरा नाभिकुलकराय न्यवेदयन् । नाभिरपि शिष्टेय सुनन्दानाम्नी ऋषभपत्नी भविष्यतीति सकललोकज्ञापनपुरस्सरं तां जग्राह । तत सुनन्दासुमङ्गलाभ्यां सह प्रवर्द्धमानो भगवान् यौवनमनुप्राप्त इन्द्रोऽपि प्रथमजिनविवाहकृत्यमस्माकं जीतमिति अनेकदेवदेवीकोटिपरिवारपरिवृत समागत्य स्वामिनो वरकृत्य स्वयमेव कृतवान् वधूकृत्य च द्वयोरपि कन्ययोर्देव्य इति । ततस्ताभ्यां विषयोपभोगिनो भगवत षट्-

लक्षपूर्वेषु गतेषु भरतब्राह्मीरूपं युगलं सुमङ्गला । बाहुबलिसुन्दरीरूपं युगलं च सुनन्दा प्रसुषुवे । तदनु चैकोनपञ्चाशत्पुत्रयुगलानि क्रमात् सुमङ्गला प्रसूतवती । २०९ ।

उसभे णं अरहा कोसलिए तस्स णं पंच नामधेज्जा एवमाहिज्जंति तं जहा उसभे इ वा १ पढमराया इ वा २ पढमभिक्खायरे इ वा ३ पढमजिणे इ वा ४ पढमतित्थंकरे इ वा ५ ॥२१०॥

"उसभेण अरहा कोसलिए इत्यादित पढमतित्थंकरेइयत्ति" पर्यन्तं तत्र इकार सर्वत्र वाक्यालङ्कारे ( पढमरायत्ति ) प्रथमराजा चैवम् । २१० । कल्प० । ति० । आ०चू० ।

अथ यथा भगवान् वयः प्रतिपन्नवान् तथाऽऽह ।

तओ णं उसभे अरहा मो कोसलिए दक्खे दक्खपइन्ने पडिरूवे अल्लीणे भद्दए विणीए । कल्प० ।

( ५ ) इदानीं वृद्धिद्वारमधिकृत्याह ।

अह वट्टइ सो भयवं, दियलोगचुओ अणुवम सिरीओ ।
देवगणसंपरिवुडो, नंदाइसुमंगलासहिओ ॥१९॥
असिअसिरोअ सुनयणो, बिंबुट्टो धवलदंतपंतीओ ।
वरपउमगब्भगोरो, फुल्लुप्पलगंधनीसासो ॥ १२० ॥

प्रथमगाथानिगदसिद्धैव द्वितीयगाथागमनिका । न सिता असिताः कृष्णा इत्यर्थः । शिरसि जाताः शिरोजाः केशाः असिता शिरोजा यस्य स तथाविधः । शोभने नयने यस्यासौ सुनयन । बिम्बं गोल्हाफलं बिम्बवदोष्ठो यस्यासौ बिम्बोष्ठः । धवला दन्तपङ्क्ती यस्य स धवलदन्तपङ्क्तिकः । वरपद्मगर्भवद्गौर । फुल्लोत्पलगन्धवन्नि श्वासो यस्येति गाथार्थः । १२० । आव० १ अ० ।

( ६ ) इदानीं जातिस्मरद्वारावयवार्थं तु विवरीषुराह ।

जाईसरो अ भयवं, अप्परिवडिएहिं तिहिं उ नाणेहिं ।
कंतीइ अ बुद्धीइ अ, अब्भहिओ तेहिं मणुएहिं ॥ २१ ॥

गमनिका । जातिस्मरश्च भगवान् ! अप्रतिपतितैरेव त्रिभिर्ज्ञानैः मतिश्रुतावधिभिः । अवधिज्ञानं हि देवलौकिकमेवाप्रच्युत भगवतो भवति तथा च कान्त्या च बुद्ध्या अभ्यधिकस्तेभ्यो मिथुनकमनुष्येभ्य इति गाथार्थः ।

( ७ ) इदानीं विवाहद्वारव्याचिख्यासयेदमाह ।

पढमो अकालमच्चू, तहिं तालफलेण दारओ पहओ ।
कन्ना य कुलगरेणं, सिट्ठे गहिया उसभपत्ती ॥२२॥

भगवतो देशोनवर्षकाल एव किञ्चिन्मिथुनक सजातापत्यमिथुनकं तालवृक्षाधो विमुच्य नि रमणाय क्रीडागृहकमगमत् तस्माच्च तालवृक्षात्पवनप्रेरितमेकं तालफलमपतत् तेन दारको व्यापादित । तदपि मिथुनकं तां दारिकां संवर्द्धयित्वा प्रतनुकषायं मृत्वा सुरलोकमुत्पन्नं सा चोद्यानदेवतेवोत्कृष्टरूपा एकाकिन्येव वने विचचार । दृष्ट्वा च तां त्रिदशवधूसमानरूपां मिथुनकनराः विस्मयोत्फुल्लनयना नाभिकुलकराय न्यवेदयन् । शिष्टश्च तैः कन्या कुलकरेण गृहीता ऋषभपत्नी भविष्यतीति कृत्वेति गाथार्थः ॥ भावार्थ एवमत सा धैयम्

प्रगुणीकुरु कल्याणि-भूयिष्ठ नीडणकद्रुमम् ।
सीमन्तिनीनां सीमन्त, परिपूर्णीकुरु त्रिगत ॥ २५ ॥
त्व यपस्य प्रदास्यानि, पुष्पनामानुपालय ।
विचित्ररत्नाभ्यु!, मुक्ताश्चित्रराफुर ॥ २६ ॥
चतुष्कान पुरय चारि मुना ३ दैन सुन्दरि ।

वेद्यन्तः कुरु हेकार्मे, धेनुगोमयगोमुखम् ॥ २७ ॥
निवेशयाऽत्र तन्वाङ्गि ! सत्वरं वरमञ्चिके।
पवित्राः शतपत्राक्षि ! त्वं चेहानय पादुकाः ॥ २८ ॥
कार्यान्तरं च हित्वा त्वं, कस्तूरीं सखि ! वर्तय।
येन पुत्र्योः कपोलेषु लिख्यते पत्रवल्लरी ॥ २९ ॥
कुन्तले ! कुन्तलोच्चसा-वाविष्कुरु वधूकृते।
मङ्गल्यवचनान् यूयं, हेस्ख्यो दत्तसत्तमान् ॥ ३० ॥
आने किमसि निद्रालु-स्तन्द्रालुरसि किं स्तुवे ! ॥
किमङ्गभङ्गं मृगाक्षि, त्व करोषि शयालुवत् ॥ ३१ ॥
कस्तूरीं विस्तरीं मुञ्च, चतुरे किमनादरा।
सानन्दा स्पन्दसे किं न, सखि ! मन्दायसे कथम् ॥ ३२ ॥
लग्नमत्यन्तमासन्नं, भवत्य किं न जानते ॥
तदिदानीमनालस्या-स्त्वरध्वं स्वस्वकर्मसु ॥३३॥ (कुलकम्)
मातादिमाधक इव, स्थित्वा काश्चिद्दिवः स्त्रियः।
रत्नसाल्यारम्भन्ते स्म, कर्म वैवाहिकं ततः ॥ ३४ ॥
तत्रोपवेशयामासु-, श्रीसुनन्दासुमङ्गले।
काश्चिन्स्वर्णासने ऽन्यङ्कुं, स्वभुवः कन्यके इव ॥ ३५ ॥
गीयमानेषु योषाभि-र्धवलेषु कलस्वनम्।
सुगन्धितैलैः सर्वाङ्ग-मयाभ्यानञ्जुरञ्जसा ॥ ३६ ॥
ते अथोद्वर्तयामासु-र्नर्तयन्त्यो वपुर्लताम्।
पिष्टिकाभिः सुपिष्टाभि, कोमलैः करपल्लवैः ॥ ३७ ॥
अतिष्ठिपत्तथैकान्ते, नूनं प्रवरमञ्चिके।
अभिषेकुरतिप्रीत्यो, रुक्मपीठे इवोज्ज्वले ॥ ३८ ॥
तयोश्चतुर्षु कोणेषु, न्यधुर्वर्णकपूयकान्।
क्रमितुं मन्मथस्येव प्रथमं पदमण्डकान् ॥ ३९ ॥
ततः कौसुम्भवासांसि, परिधाप्य च तत्क्षणात्।
तयोर्निवेशयन्ति स्म, कन्यके ते सुरस्त्रियः ॥ ४० ॥
नवस्वङ्गेषु तिलकान्, प्रदेशिन्यः सभर्तृकाः।
तयोश्चक्रुर्नवनिधी-निव कन्दर्पचक्रिणः ॥ ४१ ॥
जातवसंवासपृष्ठत सव्या-सव्यत्वेनैतयोर्मिथः।
कौसुम्भैस्तन्तुभिस्तर्कु-संपर्किभिरथापरा ॥ ४२ ॥
ते एव कर्णके वाले, सुरनार्यो निचिक्षिपु।
आस्थानां ते क्षणं तत्र, नानाकेलिकुतूहलैः ॥ ४३ ॥
तत्रैव नास्तयोर्वेगा-दुद्वर्णकमपि व्यधुः।
विविभ्रा प्राकनेनैव, पूर्वरूढिरियं यतः ॥ ४४ ॥
स्नानविष्टरमध्यास्य, स्नपयामासुराशु ते।
हिरण्मयघटाम्भोभि, सुखदैरमृतैरिव ॥ ४५ ॥
अथ प्रमार्जयामासु-रङ्गयष्टिं मृगीदृशो।
आदर्शमिव तत्सस्य, सुखस्पर्शेन वाससा ॥४६ ॥
तयोः स्नानजलैरार्द्र-केशपाशमवेष्टयन्।
मयूरैरंशुकोद्देशे-रुत्तेजितकृपाणवत् ॥ ४७॥
आस्वामात्तततो वारि, विप्रुषस्तत्सखीजनः।
करादिव करीन्द्रस्य, शीकरासारमातपः ॥ ४८ ॥
धूपायन्ति स्म धूपेन, स्निग्धकेश्यो सुगन्धिना।
ईषदार्द्र केशपाशं, धौतानीवांशुकानि ताः ॥ ४९ ॥
तन्पादान् पल्लवाताम्रा-नपि लाक्षारसेन ता।
अमण्डयन् प्रियेवेनि, रक्तं रक्तेन युज्यताम् ॥ ५० ॥
सर्वाङ्गमङ्गरागेण, तन्वङ्गयोर्व्यलिपन्न ताः।
गन्धिशालानेपनेन, काञ्चनाचलमेखले ॥ ५१ ॥
तन्वयोस्तने नाभि-लिम्बिना पत्रवल्लरी।
प्रसर्पद्दानलेखेव, मायतः कामकुम्भिनः ॥ ५२ ॥
अथाञ्जनेन तन्नेत्र-द्वयं तामिरभूष्यत।
शरदिन्दिरकुलेनेव, नीलेन्दीवरकाननम् ॥ ५३ ॥
तयोर्ललाटपट्टान्त-श्चान्दनं चन्द्रकं व्यधुः।
आसितु स्मरराजस्य, विमद्यां यष्टिकामिव ॥ ५४ ॥
तयेर्ववन्धुर्धम्मिल्ल-मुल्लसन्माल्यगर्भितम्।
निषङ्गमिव कामस्य, पूरितं कुसुमेषुभिः ॥ ५५ ॥
अथ ताभ्यां कुमारीभ्यां, स्यूतानीवेन्दुराश्मिभिः।
वासांसि वासयामासु-, पारिणेत्राणि तास्ततः ॥ ५६ ॥
तयोरवत्नमुकुटं, व्यचवन्दकराजितम्।
रुक्मपङ्केरुहोत्तंस-व्योमगङ्गाविरूम्बनम् ॥ ५७ ॥
नेत्रे कर्णान्तविश्रान्ते-र्वतंसे सत्यपि स्वयम्।
अन्यमारोपयामासुः पुनरुक्ता नया इव ॥ ५८ ॥
कर्णयोर्मणिताटङ्कौ, निःक्षिपन्ति स्म तास्तयोः।
द्विद्विरूपाविवार्केन्दू, विवाहं द्रष्टुमागतौ ॥ ५९ ॥
निवेश्यते स्म देवीभि-स्तयोर्मुक्तासरो हृदि।
वक्त्रिस्यमित्रास्येन्दु-मभितस्तारकामण ॥ ६० ॥
केयूरे भुजयोर्न्यस्ते, इन्द्रनीलमये तयोः।
पञ्चबाणस्य बाणानां, शाणे इव निशाणने ॥ ६१ ॥
निहितं काञ्चने रत्नं, राजनीति श्रिया किल।
विन्यस्यते स्म तत्पाणौ, सुरीभिर्मणिकङ्कणे ॥ ६२ ॥
अङ्गुलीषु तयोः क्षिप्ता-श्चारुहीरकमुद्रिकाः।
दोर्लतायाः फलानीव, परिपाकारुणान्यथ ॥ ६३ ॥
तद्वा श्रोणौ च सञ्जाता, तयोश्चन्द्राश्ममेखला।
गुरुनाभिसरस्तीरे, हंसावलिरिवोज्ज्वला ॥ ६४ ॥
मञ्जीराणि तयोर्न्यस्यन्, क्वणत्कारीणि पादयोः।
मरालानाह्वयन्तीव, गतिं स्पर्द्धयतु मदात् ॥ ६५ ॥
अथोत्पाट्यामरीभ्यां ते, दिव्यभूषणभूषिते।
आसिते कौतुकागारे, मूर्ते वाणिश्रियाविव ॥ ६६ ॥
विवाहाकल्पमाधातुं, विज्ञप्तो वज्रिणा विभुः।
भोगकर्मास्ति लोके च, स्थितिर्द्वेयेत्यमन्यत ॥ ६७ ॥
ततश्च कल्पिताकल्प, कृतमाङ्गल्यमज्जनः।
विहिताशेषकृत्यश्च, कृत्यविद्भिर्यथाविधि ॥ ६८ ॥
चान्दनैरसनिस्पन्नैः कृतदेहविलेपना।
विस्फुरित पुण्यलक्ष्मी, कटाक्षैरिव सर्वतः ॥ ६९ ॥
वसान पारिनेत्राणि, शुचीनि सिचयानि च।
जिनेन्द्रोऽपि शरन्मेघा-कीर्णस्वर्णाचलोपमः ॥ ७० ॥
सौधमध्यादुत्तरीत्रि-त्कन्दरादिव केसरी।
निर्जगाम गुणग्राम-द्रुमारामसहोदरः ॥ ७१ ॥
अथाधिरुह्य जात्याश्व-मुच्चैःश्रवसमिन्द्रवत्।
सक्रान्तैः पश्यतां नेत्रैः, सहस्रेक्षणतां वहन् ॥ ७२ ॥
मायूरेणातपत्रेण, स्वर्णकुम्भोपशोभिना।
प्रावृषेण्यघनेनेवा-नीयमानस्तडिन्वता ॥ ७३ ॥
शुभ्राभ्यां चामराभ्यां च, वीज्यमानो मुहुर्मुहुः।
साम्राज्यकमलालीला-कमलाभ्यामिवाभित ॥ ७४ ॥
तूर्यनादेन रोदस्यो-रुदरम्भरिणा तत ॥
निर्घोषेणेव अण्टाया, सुघोषाया प्रसर्पता ॥ ७५ ॥
श्रव श्रवणपूरं च, गायद्भिः कलगीतिका।
रक्तकण्ठैः कृतोत्कण्ठैः, कलकण्ठैरिवाङ्गिनाम् ॥ ७६ ॥
नृत्यद्भिरप्सरोवृन्दै-र्नानाभरणधारिभिः।

अनिलान्दोलितैः कल्प—शाखिशाखागणैरिव ॥ ७७ ॥
उत्तम्भितभुजैर्भट्टैः-पठ्यमानगुणोत्करः ।
उत्तानीकृतहस्ताग्रै-र्गर्जद्भिरिव कुञ्जरैः ॥ ७८ ॥
उत्तार्यमाणलवणो, देवीभिः पक्षयोर्द्वयोः ॥
पृष्ठे बिम्बीफलोष्ठीभि-र्गीयमानैरुलूलुभिः ॥ ७९ ॥
शुभोदर्कत्वपिशुनैः, शकुनैरानुकूलिकैः ।
अभ्यगान्मण्डपद्वारं, भगवान् शुभग जनैः ॥ ८० ॥
तत्रावरुह्याथ विभु-रश्वतः सवेतादिव ।
अस्थित स्थितिनिष्णातः, क्षणमेकमनुत्सुकः ॥ ८१ ॥
अथ प्रगुणयामासु-र्दधिदूर्वादिभाजनम् ।
मन्थानमुग्वलादींश्च, मङ्गल्यानखिलानपि ॥ ८२ ॥
श्रूयमाणश्रुतिकटु-स्फुटल्लवणानि स्वनम् ।
शरावसपुटं काचि-न्मुमोच द्वारि सानलम् ॥ ८३ ॥
अथोद्धरं पट्टयुग, सान्ध्यारागमिवारुणम् ।
परिधायाग्रतः काचि-दर्घदानोद्यताऽभवत् ॥ ८४ ॥
अहाय जगदर्घ्याय, सुभ्रु ! देह्यर्घमर्घदे ।
स्फीत यश इवामुष्य, नवनीत समुन्नय ॥ ८५ ॥
उद्धेष्य वचोवीची-शिशिरं चान्दन रसम् ।
दधि चैतद्गुणग्राम-वल्लक क्षिप्रमुत्क्षिप ॥ ८६ ॥
समुन्मीलन्महानील-रत्नाङ्कुरसहोदरम् ।
प्रागेव शाद्वलां दूर्वां, सुवासिनि ! समुद्धर ॥ ८७ ॥
नन्वेष शेषभोगीन्द्र-भोगोपमभुजद्वयः ।
वरस्ते तोरणद्वारि, त्रिजगच्छ्रमनिक्रम ॥ ८८ ॥
करुः समस्ति सर्वाङ्ग-मुत्तरीयांशुकावृत ।
शरदिन्दुरिवोत्फुल्ल, ज्योत्स्नाजातजटालित ॥ ८९ ॥
भृश पुष्यन्ति पुष्पाणि, वातेनोद्वाति चान्दनम् ।
तद्वारि सुचिर श्वश्रु, वर मार्धरमार्घर ॥ ९० ॥
इत्येवं धवलान् श्वश्रू, शृण्वाना श्रुतिपावनैः ।
स्वामिने दत्तवत्यर्घ-मनर्घगुणशालिने ॥ ९१ ॥
धृत्वान्तर्वामहस्तेन, विधायाग्रे च दक्षिणम् ।
युगवैशाखमुशलै-श्चक्रे च प्रोक्षणक्षणम् ॥ ९२ ॥
मनोरथमिवारीणा-मथो लवणसपुटम् ।
भगवान् सव्यपादेन, दलयामास लीलया ॥ ९३ ॥
स्कन्धे पट्टाञ्चलेनाथ, समाकृष्य जगत्प्रभु ।
नीत श्वश्र्वा वधूपान्त-मासा चक्रेऽथ शक्रवत् ॥ ९४ ॥
मदनस्य फल ग्राह्य-मित्यस्य किल सूचकम् ।
मदनस्य फलं पाणौ, बध्न वध्वोर्वरस्य च ॥ ९५ ॥
ओधन् मातापितृश्वश्रू-श्वशुराः सधवाङ्गना ।
हस्तालेपं ददौ पिष्ट्वा, वधूट्यो पाणिपङ्कजे ॥ ९६ ॥
अथाम्भोधिपय पार्ष्यां, मुक्तलग्नघटीनिजे ।
जाते सति सहस्रांशु-बिम्बे बिम्बीफलद्युति ॥ ९७ ॥
श्रुत्वा भाजनशब्द च, सावधानस्ततो हरि ।
योजयामास तत्काल, वधूवरकरान्मिथ ॥ ९८ ॥
अथान्योऽन्यस्य पश्यन्तो, विस्फारितविलोचना ।
निमेषमप्यकुर्वाणा, अन्तरायभयादिव ॥ ९९ ॥
रेजिरे ते तदा तत्र, तारामेलककारिण ।
विशन्त इव वक्त्रोऽन्त-र्मिथस्तारासु सङ्क्रमात् ॥ १०० ॥
उच्चै कौतुकवशान्, जगुर्वध्वा सखीतमा ।
नर्मकर्मणि चातुर्यं, बिभ्राणास्तत्र केलय ॥ १ ॥
वधूवरस्य सुत्रामा, करुयानञ्चलं मिथ ।
तेषां मनांसीवोग्राद-मनुराग परस्परम् ॥ २ ॥
कौतुकागारतो वेद्या-मथानिन्ये वधूवरम् ।
अवियोजितहस्ताग्र-मामोचितपटाञ्चलम् ॥ ३ ॥
आयस्त्रिंशसुर कोऽपि, चक्रे वेद्यामथानलम् ।
व्यधाद् धूम समित्क्षेपाद्, धूमपाताय कन्ययोः ॥ ४ ॥
कंसारश्च सखण्डाज्यः, पक्कस्तेनैव नाकिना ।
ताभ्यां प्रभुस्तद्द्वयी ते-नास्यत स्वस्वपाणिना ॥ ५ ॥
अथेच्छैर्मङ्गलाचारे, दीयमानेऽङ्गनाजनैः ।
रभसोल्लासितैरङ्ग-वैगुण्यमिव लम्भिते ॥ ६ ॥
मेरुं सरोहिणीज्योत्स्ना-भ्जयत्त्रामिनोऽनलम् ।
स्वाम्यभ्राम्यश्रुतस्ताभ्या-मामङ्गलचतुष्टयम् ॥ ७ ॥
अथ श्यालकदेशीय, कश्चिन्मङ्गलवर्तने ।
स्वामिनं चरणाङ्गुष्ठे, नीचे भूयोऽभ्यधारयत् ॥ ८ ॥
यथेच्छं भगवांस्तस्मै, स्वर्णरत्नान्यदापयत् ।
महान्तो ह्यावलग्नानां, ददते यत्र तत्र हि ॥ ९ ॥
कृतेषु पाणिमोक्षादि-कृत्येषु निखिलेष्वपि ।
सुमङ्गलासुनन्दाभ्यां, सहारूढो हयं प्रभुः ॥ १० ॥
स्फीतावगीतसगीत-मुखरीकृतदिङ्मुख ।
प्रत्यग्रतोरणद्वार-माययौ निजवेश्मन ॥ ११ ॥
घोटक कूर्दयामासु-श्चिरं तत्र वधूवरम् ।
हर्षोत्कर्षेण कुर्वाणा, देवा जयजयारवम् ॥ १२ ॥
लता इव समीरेण, प्रमोदेन प्रणोदिता ।
पौलोम्याद्याश्च ननृतु-र्गीतपूर्णमनोरथा ॥ १३ ॥
प्रविवेश ततः स्वामी, स्वसौधे कृतमङ्गल ।
विवाहोत्साहसौन्दर्य-रञ्जितत्रिजगज्जन ॥ १४ ॥
शुष्कनीलफलस्वादु-र्नानापक्वान्नपेशला ।
शालिसूपघृतप्राज्य-प्रलेह्यव्यञ्जनाद्भुता ॥ १५ ॥
मिथो जेमनवाराभू-द्भूरिगौरवसुन्दरा ।
ताम्बूलांशुकदानाद्यैः, सम्माननमथाभवत् ॥ १६ ॥
पूर्णपात्रप्रवेशादि-विवाहोत्सववृद्धिभिः ।
स्वामिन पितरौ तत्र, मुमुदातेतरां सदा ॥ १७ ॥
कृतकृत्योऽथ शक्रादि-देवदेवीगणोऽखिल ।
प्रणिपत्य प्रभो पादान्, स्थान निजनिज ययौ ॥ १८ ॥ आ० क०।

अमुमेवार्थमाह ।

**भोगसमत्थं नाउं, वरकम्मं कासि देविंदो ।**
**दुण्हं वरमहिलाणं, वहुकम्मं कासि देवीओ ॥**

भगवांश्च तेन कन्याद्वयेन सार्द्धं विहरन् यौवनमनुप्राप्तः । अत्रान्तरे देवराजस्य चिन्ता जाता-कृत्यमेतदतीतप्रत्युत्पन्नानागतानां शक्राणां प्रथमतीर्थकराणां विवाहकर्म क्रिय इति संचिन्त्यानेकत्रिदशवधूवृन्दसमन्वितोऽवतीर्णवानित्यवतीर्य च भगवत स्वयमेव वरकर्म चकार । पत्न्योरपि देव्यो वधूकर्मेति । अमुमेवार्थमुपसंहरन्नाह (भोगगाहा) गमनिका । भोगसमर्थं ज्ञात्वा वरकर्म तस्य कृतवान् देवेन्द्र द्वयोर्वरमहिलयोर्वधूकर्म कृतवत्यो देव्य इति गाथार्थः । भावार्थस्तूक्त एव ॥ १२३ ॥

( ८ ) अथापत्यद्वारम् ।

**छप्पुव्वसयसहस्सा, पुव्विं जायस्स जिणवरिंदस्स ।**
**तो भरहबंभिसुंदरि, बाहुबली सुंदरी चेव ॥ १२४ ॥**
**देवीसुमंगलाए, भरहो बंभी य मिहुणगं जायं ।**
**देवीइ सुनंदाए, बाहुबली सुंदरी चेव ॥ १२५ ॥**

( उप्पुव्वगाहा " ) निगदसिद्धैवेयं नवरमनुत्तरविमानादवतीर्य सुमङ्गलाया पुन बाहुपीठश्च भरतब्राह्मीमिथुनक जातं तथा सुबाहुर्महापीठश्च सुनन्दाया बाहुबली सुन्दरीमिथुनकमिति । १२४ । अमुमेवार्थं प्रतिपादयन्नाह मूलभाष्यकार. ( देवीगाहा १२५ ) सुगमत्वान्न विव्रियते आह । किमेतावन्त्येव भगवतोऽपत्यानि उत नेति । उच्यते ।

"अउणापन्नं जुअले, पुत्ताण सुमंगला पुणो पसवे ।
नीईणमइक्कमणे, निवेअणं उसभसामिस्स ॥ १२६ ॥

गमनिका । एकोनपञ्चाशत्युग्मानि पुत्राणां सुमङ्गला पुन प्रसूतवती । अत्रान्तरे प्राग्निरूपितानां हकारादिप्रभृतीनां दण्डनीतीनां ते लोका प्रचुरतरकषायसंभवात् अतिक्रमणं कृतवन्त । ततश्च नीतीनामतिक्रमणे सति तल्लोका अभ्यधिकज्ञानादिगुणसमन्वितं भगवन्तं विज्ञाय निवेदनं कथनमृषभस्वामिने आदितीर्थकराय कृतवन्त इति क्रियाऽयं गाथार्थ ।

एव निवेदिते सति भगवानाह ।

राया करेइ दंडं, सिट्ठे ते विंति अम्ह वि सो उ ।
मग्गह य कुलगरं सो, वेइ उसभो अ भे राया ॥ १२७ ॥

गमनिका । मिथुनकैर्निवेदिते सति भगवानाह । नीत्यतिक्रमणकारिणां राजा सर्वनरेश्वरः करोति दण्डं स चामात्यारक्षिकादिबलयुक्त कृताभिषेक अनतिक्रमणीयाज्ञश्च भवति । एवं शिष्टे कथिते सति भगवता ते मिथुनका ब्रुवते भणन्ति अस्माकमपि राजा भवतु वर्तमानकालनिर्देश खल्वन्यास्ववसर्पिणीषु प्राय समानन्यायप्रदर्शनार्थ । त्रिकालगोचरसूत्रप्रदर्शनार्थो वा । अथवा प्राकृतशैल्या छान्दसत्वाच्च ( विंतीति ) उक्तवन्त । भगवानाह यद्येव ( मग्गहयकुलगरति ) याचयध्वं कुलकर राजान स च कुलकरस्तैर्याचित. सन् ( वेत्तेति ) पूर्ववदुक्तवान् ऋषभो ( भे ) भवतां राजेति गाथार्थ. । ततश्च ते मिथुनका राज्याभिषेकनिर्वर्तनार्थमुदकानयनाय पद्मिनीसरो गतवन्त । अत्रान्तरे देवराजस्य खल्वासनकम्पो बभूव विभाषा पूर्ववत् यावदिहागत्याभिषेकं कृतवानिति ।

( १० ) ऋषभस्वामिनो राज्याभिषेक ।

आभोएउं सक्को, उवागओ तस्स कुणइ अभिसेअं ।
मउडाइ अलंकारं, नरिंदजोगं च से कुणइ ॥ १२८ ॥

गमनिका आभोगयित्वा उपयोगपूर्वकेनावधिना विज्ञाय शक्रो देवराज उपागतस्तस्य भगवत करोति अभिषेकम । राज्याभिषेकमिति । तथा मुकुटाद्यलङ्कारं च आदिशब्दात्कटककुण्डलकेयूरादिपरिग्रह. । चशब्दस्य व्यवहितः संबन्धो नरेन्द्रयोग्यं ( से ) तस्य करोति अत्रापि वर्तमानकालनिर्देशप्रयोजनं पूर्ववदवसेयम । पाठान्तरम् "आभोएउं सक्को, आगतुं तस्स कासिअभिसेयं । मउडादि अलंकारं, नरिंदजोगं च से कासी " भावार्थ पूर्ववदेवेति गाथार्थ । अत्रान्तरे ते मिथुनकनरास्तस्मात्पद्मसरस. खलु नलिनीपत्रैरुदकमादाय भगवत्समीपमागत्य त चालंकृतविभूषितं दृष्ट्वा विस्मयोत्फुल्लनयनाः किंकर्तव्यतान्याकुलीकृतचेतस. कियन्तमपि काल स्थित्वा भगवत्पादयो रुदक निक्षिप्तवन्त इति तानेवविधान्विनयोपेतान दृष्ट्वा देवराडचिन्तयत् अहो खलु विनीता एते पुरुषा इति विधमणं यक्षराजमाज्ञापितवानिह द्वादशयोजनदीर्घां नवयोजनविस्तीर्णां विनीता नगरीं निष्पादयेति । स चाज्ञासमनन्तरमेव दिव्यभवनप्राकारमालोपशोभितां नगरीं चक्रे ।

अमुमेवार्थमुपसंहरन्नाह ।

भिसिणीपत्तेहि यरे, उदयं घित्तुं छुहंति पाएसु ।
साहुविणीया पुरिसा, विणीयनयरी अह निविट्ठा ॥ १२९ ॥

गमनिका विसिनीपत्रैरुदकं गृहीत्वा छुभन्तीति प्रक्षिपन्ति वर्तमाननिर्देश प्राग्वत् पादयोरुपरि । देवराडभिहितवान् । साधु विनीताः पुरुषाः विनीतनगरी अथ निविष्टेति गाथार्थः । १२९

( ११ ) सांप्रत राज्यसंग्रहद्वारमभिधित्सयाऽऽह ।

आसा हत्थी गावो, गहिया एए य रज्जसंगहनिमित्तं ।
घित्तूण एवमाई, चउव्विहं संगहं कुणइ ॥ १३० ॥

गमनिका अश्वा हस्तिनो गाव एतानि चतुष्पदानि तदा गृहीतानि भगवता राज्ये संग्रह तन्निमित्तं गृहीत्वा एवमादिचतुष्पदजातमसौ भगवान् चतुर्विधं वक्ष्यमाणलक्षणं संग्रहणं करोति । वर्तमाननिर्देशप्रयोजन पूर्ववत् । पाठान्तरं वा चतुर्विधं संग्रहं " कासी " इत्ययं गाथार्थ ॥ १३० ॥ स चायम् ।

उग्गा भोगा राय-न्न खत्तिया संगहो भवे चउहा ।
आरक्खिगुरुवयं सा, सेसा जे खत्तिया ते उ ॥ १३१ ॥

स चायम । उग्गाहगाहा । गमनिका उग्रा भोगा राजन्या क्षत्रिया एव समुदायरूप संग्रहो भवेच्चतुर्धा । एतेषामेव यथासंख्यं स्वरूपमाह । ( आरक्खेत्यादि ) आरक्षका उग्रदण्डकारित्वात् उग्रा गुर्विति गुरुस्थानीया भोगा. वयस्या इति राजन्याः समानवयस इति कृत्वा वयस्या शेषा उक्तव्यतिरिक्ता ये क्षत्रियास्ते तुशब्द पुनःशब्दार्थस्ते पुन क्षत्रिया इति गाथार्थः ।

( १२ ) लोकस्थितिनिबन्धनप्रतिपादनाय गाथाचतुष्टयमाह ।

आहारे सिप्पकम्मे, मामणा य विभूसणा ।
लेहे गणिए अ रूवे अ, लक्खणे माणपोयए ॥ १३२ ॥
ववहारे नीइजुद्धे अ, ईसत्थे अ उवासणा ।
तिगिच्छा अत्थसत्थे अ, बंधे घाए अ मारणा ॥ १३३ ॥
जत्तूसवसमावाए, मंगले कोउए इअ ।
वत्थे गंधे अ मल्ले अ, अलंकारे तहेव य ॥ १३४ ॥
चोलोवणविवाहे अ, दत्तिया मडयपूयणा ।
झावणा थूभसद्दे अ, छेलावणयपुच्छणा ॥ १३५ ॥

एताश्चतस्रोऽपि द्वारगाथा । एताश्च भाष्यकार प्रतिद्वार व्याख्यास्यत्येव तथाप्यक्षरगमनिकामात्रमुच्यते तत्रापि प्रथमगाथामधिकृत्याह । तत्राहार इति आहारविषयो विधिर्वक्तव्य. कथ कल्पतरुफलाहाराभाव संवृत्त. कथं वा पक्वाहारः संवृत्त इति तथा शिल्प इति शिल्पविषयो विधिर्वक्तव्यः । कुत कथं कियन्ति वा शिल्पान्युपजातानीति । कर्मणीति कर्मविषयो विधिर्वाच्य यथा कृषिवाणिज्यादिकर्म संजातमिति तच्चाग्न्युत्पत्ते संजातमिति । च. समुच्चये ( मामणेत्ति ) ममीकारार्थे देशीवचनम् । ततश्च परिग्रहममीकारो वक्तव्यः स च तत्काल एव प्रवृत्त च पूर्ववत् । विभूषणं विभूषणा मण्डनमित्यर्थ । सा वक्तव्या सा च भगवत प्रथम देवेन्द्रै कृता पश्चाल्लोकेऽपि प्रवृत्ता । लेख इति लेखनं लेख लिपिविधानमित्यर्थ । तद्विषयो विधिर्वक्तव्य तच्च जिनेन ब्राह्म्या दक्षिणकरेण प्रदर्शितामिति । गणितविषयो विधिर्वाच्य एवमन्यत्रापि क्रिया योज्या । गणितं संख्यानं तच्च भगवता सुन्दर्या वामकरेणोपदिष्टमिति । च समुच्चये

रूप कार्मुकर्मादि तच्च भगवतो भरतस्य कथितमिति । च पूर्वेयत् । लक्षणं पुरुषलक्षणादि तच्च भगवतैव बाहुबलिन कथितमिति । मानमिति मानोन्मानावमानगणिमप्रतिमानां लक्षणम्। ( पोत इति ) बोहित्य प्रोतं वा अनयोर्मानप्रोतयोर्विधिर्वाच्य' । तत्र मान द्विधा धान्यमान रसमान च। तत्र धान्यमानमुक्तम् । "दो असती उपसती इत्यादि" रसमान "चउसठिया बत्तीसिया एवमादि" २ उन्मानं येनोन्मीयते यद्वोन्मीयते तद्यथा कर्ष इत्यादि । अवमान येनावमीयते तद्यथा हस्तेन वा दएमेन वा हस्तो वेत्यादि । ३ । गणिमं यद्गण्यते एकादिसंख्येति । प्रतिमान गुञ्जादि एतत् सर्वं तदा प्रवृत्तमिति । पोता अपि तदैव प्रवृत्ता' । तथा प्रकर्षेण उतन प्रोतः मुक्ताफलादीनां प्रोतन तदैव प्रवृत्तमिति । प्रथमद्वारगाथासमासार्थ' ॥ ३२ ॥ द्वितीयगाथागमनिका ( ववहारेत्ति ) व्यवहारविषयो विधिर्वाच्य राजकुलकरणभाषाप्रतिपादनादिलक्षणो व्यवहार स च तदा प्रवृत्तो लोकानां प्राय स्वस्वभावापगमात् ( णीतित्ति ) नीतौ विधिर्वक्तव्य' । नीतिर्हक्कारादिलक्षणा सामाद्युपायलक्षणा वा तदैव जातेति ( जुद्धेयत्ति ) युद्धविषयो विधिर्वाच्य' । तत्र युद्ध बाहुयुद्धादिक लावकादीनां वा तदैवेति ( ईसत्थेयत्ति ) प्राकृतशैल्या उकारलोपात् इपुशास्त्रं धनुर्वेदस्तद्विषयो विधिर्वाच्य इति तदपि तदैव राजधर्मे सति जातमथवा एकारान्तत्वात्सर्वेऽत्र प्रथमान्ता एव द्रष्टव्या । व्यवहार इति व्यवहारस्तदा जात एव सर्वत्र योज्यम । यथा " कयरे आगच्छइ दित्तरूवेत्यादि" ( उवासणेत्ति ) उपासना नापितकर्म तदपि तदैव जातं प्रागनवस्थितनखलोमान एव प्राणिन आसन्निति गुरुनरेन्द्रादीनां चोपासनेति । चिकित्सा रोगहरणलक्षणा सा तदैव जाता । एव सर्वत्र क्रियाध्याहार' कार्य' । ( अत्थसत्थेयत्ति ) अर्थशास्त्र (बंधे घाते य मारणेयत्ति ) बन्धो निगडादिजन्य । घातो दएमादिताडना । जीविताद् व्यपरोपण मारणेति सर्वाणि तदैव जातानीति द्वितीयद्वारगाथासमासार्थ ॥३३॥ तृतीयगाथागमनिका । एकारान्ता प्रथमाद्वितीयान्ताः प्राकृते भवन्त्येव तत्र ये ज्ञानादिपूजारूपा उत्सवा शक्रोत्सवादय समवाया' गोष्ठ्यादिमेलका एते तदा प्रवृत्ता मङ्गलानि स्वस्तिकसिद्धार्थकादीनि कौतुकानि रक्षादीनि मङ्गलानि च कौतुकानि चेति समास ( मंगलेत्ति ) एकारो ऽलाक्षणिको मुखसुखोच्चारणार्थ । एतानि भगवन् प्राग् देवै कृतानि पुनस्तथैव लोके प्रवृत्तानि । तथा वस्त्र चीनांशुकादि गन्ध कोष्टपुटादिलक्षण । माल्यं पुष्पदाम । अलङ्कार केशभूषणादिलक्षण । एतान्यपि वस्त्रादीनि तदैव जातानीति तृतीयद्वारगाथासमासार्थ । चतुर्थगाथागमनिका तत्र( चूलेति )बालानां चूडाकर्म तेषामेव कलाग्रहणार्थं नयनमुपनयन धर्मश्रवणनिमित्त वा साधुसकाश नयनमुपनयनम् । विवाह प्रतीत एव एते चूडादयस्तदा प्रवृत्ता ॥ ३५० ॥ दत्ता च कन्या पित्राद्भिना परिणीयत इति तत्तदैव सजातम् । भिक्षादान वा मृतकस्य पूजा नाम मरुदेव्यास्तदैव प्रथमसिद्ध इति कृत्वा देवै कृतेति लोके च रूढा । अध्ययना अग्निसंस्कार' स च भगवतो निर्वाणप्राप्तस्य प्रथम त्रिदशै कृत पश्चाल्लोकेऽपि सजात । भगवदादिदग्धस्थानेषु स्तूपास्तदैव कृता' लोके च प्रवृत्ता शब्दश्च रुदितशब्दो भगवत्येवापवर्गे गते सति भरतदु खमसाधारण ज्ञात्वा शक्रेण कृतो लोकेऽपि रूढ एव । "छेलापनक" इति देशीवचनमुत्कृष्टबालक्रीडापनसेटिकाद्यर्थवाचकमिति । तथा प्रच्छनं प्रच्छना सा दंमिणिकादिलक्षणा इंखिणिकां कर्णमूले घण्टिका चालयन्ति पुनर्यक्षा' खल्वागत्य कर्णे कथयन्ति किमपि प्रष्टुर्विवक्षितमिति । अथवा निमित्तादिपृच्छा सुखशयनादिपृच्छा चेति चतुर्थद्वारगाथासमासार्थ ॥ ३५ ॥ आव० १ अ० । इदानीं प्रथमद्वारावयवार्थाभिधित्सया मूलभाष्यकृदाह ॥

आसी कंदाहारा, मूलाहारा य पत्तहारा य ।
पुप्फफलभोइणो वि य, जइआ किर कुलगरे उसहो ।

गमनिका । मूलाहाराश्च आसन् कन्दाहारा पत्राहाराश्च पुष्पफलभोजिनोऽपि च कदा यदा किल कुलकर ऋषभ । भावार्थ स्पष्ट एव नवरं ते मिथुनका नरा एवभूता आसन् किलशब्दस्तु परोक्षाप्तागमवादसूचक इति गाथार्थ । तथा ।

आसी अ इक्खुभोई, इक्खागा तेण खत्तिया हुंति ।
सणसत्तरसं धन्नं, आम ओमं च भुंजीआ ॥

गमनिका । आसंश्च इक्षुभोजिन इक्ष्वाकवस्तेन क्षत्रिया भवन्ति । तथा सण सप्तदशो यस्य तत्सणसप्तदशं धान्यं शाल्यादि आममपक्वम् ( ओम ) न्यूनं च ( भुंजीया इति ) भुक्तवन्त इति गाथार्थ । १३७ । तथापि कालदोषात्तदपि न जीर्णवत्तत्श्च भगवन्त पृष्टवन्त । भगवांश्चाह हस्ताभ्यां घृष्ट्वाऽऽहारयध्वमिति ॥

अमुमेवार्थ प्रतिपादयन्नाह भाष्यकृत् ।

ओमप्पाहारंता, अजीरमाणम्मि ते जिणमुविंति ।
हत्थेहि घंसिऊणं, आहारेहंति ते भणिया ॥ ३८ ॥

गमनिका । अवममप्याहारयन्त । अजीर्यमाणे ते मिथुनका जिन प्रथमतीर्थकरमुपयान्ति । पूर्वावसर्पिणीस्थितिप्रदर्शनार्थं वर्तमाननिर्देशो भगवता च हस्ताभ्यां घृष्ट्वा आहारयध्वमिति ते भणिता' सन्त' किं कुर्वन्ति ।

आसी य पाणिघंसी, तिम्मिअ तंदुलपवालपुडभोई ।
हत्थतलपुडाहारा, जइआ किर कुलगरो उसभो ॥ ३९ ॥

आसंश्च ते मिथुनका भगवदुपदेशात्पाणिभ्यां घर्षे शीलं येषां ते पाणिघर्षिण' । एतदुक्तं भवति । ता एवौषधीं हस्ताभ्यां घृष्ट्वा त्वच चापनीय भुक्तवन्त' । एवमपि कालदोषात् कियत्यपि गते काले ता अपि न जीर्णवत्य । पुनर्भगवदुपदेशात एव तीमिततन्दुलप्रवालपुटभोजिनो बभूवु । तीमिततन्दुलान् प्रवालपुटे भोक्तुं शील येषां ते तथाविधा । तन्दुलशब्देनौषध्य एवोच्यन्ते । पुन कियतापि कालेन गच्छता अजीर्णदोषादेव भगवदुपदेशेन हस्ततलपुटाहारा आसन् । हस्ततलपुटेषु आहारो विहितो येषामिति समास । हस्ततलपुटेषु कियन्तमपि कालमौषधी स्थापयित्वोपभुक्तवन्त इत्यर्थ । तथा कक्षासु स्वेदयित्वेति यदा किल कुलकर ऋषभनाथ' परोक्षाप्तागमवादस्सूचकस्तदा ते मिथुनका एव भूता आसन्निति गाथार्थ । ३६ । पुनरभिहितप्रकारा द्व्यादिसंयोगैराहारितवन्तस्तद्यथा पाणिभ्यां घृष्ट्वा पत्रपुटेषु च मुहूर्तं तीमित्वा तथा हस्ताभ्यां घृष्ट्वा हस्तपुटेषु च मुहूर्तं धृत्वा पुनर्हस्ताभ्यां घृष्ट्वा कक्षास्वेद च कृत्वा पुनस्तीमित्वा हस्तपुटेषु च मुहूर्तं धृत्वेत्यादिभङ्गकयोजनां केचित्प्रदर्शयन्ति । घृष्ट्वा पद विहाय तद्भावयुक्त त्वगपनयनमन्तरेण तीमितस्यापि हस्तपुटधृतस्य मांदुमर्यत्वानुपपत्ते इत्यसत्त्वमाचक्षाणा अत्रोप इति । द्वितीययोजना पुनर्हस्ताभ्यां घृष्ट्वा पत्रपुटेषु तीमित्वा हस्तपुटेषु च मुहूर्तं धृत्वेति । तृतीययोजना पुनर्हस्ताभ्यां घृष्ट्वा पत्रपुटेषु तीमित्वा हस्तपुटेषु धृत्वा कक्षासु स्वेदयित्वेति ।

अमुमेवार्थमुपसंहरन्नाह ।

घंसेऊणं तिम्मण, घंसणतिम्मणपवालपुडजोई ।
घंसियनिम्मपवाले, हत्थउडे कक्खसेए अ ॥ ४० ॥

भावार्थ उक्त एव नवरमुक्तार्थाक्षरयोजना । घृष्ट्वा तीमितं कृतवन्त इत्यनेन प्रागभिहितप्रत्येकभङ्गकाक्षेपः कृतो वेदितव्यः । घृष्ट्वा प्रवालपुटतीमितभोजिन इत्यनेन द्वितीययोजनाक्षेपः । घृष्ट्वेति घृष्ट्वा तीमन प्रवाल इति प्रवाले तीमित्वा हस्तपुटेषु कियन्तमपि कालं विधाय भुक्तवन्त इति वाक्यशेष इत्यनेन तृतीययोजनाक्षेप । तथा कक्षास्वेदे च कृते सति भुक्तवन्त इत्यनेनानन्तराभिहितत्रययुक्तेन चतुर्भङ्गकयोजनाक्षेप इति गाथार्थः । अत्रान्तरे ।

अगणिस्स य उट्ठाणं, दुमघंसा दट्ठु भीअपरिगहणं ।
पासेसु परिच्छिंदह, गिण्हह पागं तओ कुणहह ॥ ४१ ॥

आह सर्वं तीमनादि ते मिथुनकास्तीर्थकरोपदेशात्कृतवन्तः स च भगवान् जातिस्मरः सन् किमित्यग्न्युत्पादोपदेश न दत्तवानित्युच्यते तदा कालस्यैकान्तस्निग्धत्वात् असत्यपि यत्ने वस्तूत्पत्तेरिति स च भगवान् विजानाति न ह्येकान्तस्निग्धरूक्षयोः कालयोर्वह्न्युत्पादः किं त्वनतिस्निग्धरूक्षकाल इत्यतो नादिष्टवानिति तेषां च चतुर्भङ्गविकल्पितमप्याहारं कालदोषाच्च जीर्णवत् इत्यस्मिन् प्रस्तावे अग्नेश्चोत्थान संवृत्तमिति । कुतः द्रुमघर्षोत्तं चोत्थित प्रवृद्धज्वालावलीसनाथ भूप्रासं तृणादि दहन्तं दृष्ट्वा अपूर्वरत्नबुद्ध्या ग्रहण प्रति प्रवृत्तवन्तः दह्यमानास्तु भीतपरिकथनमृषभाय कृतवन्त इति । भीतानां परिकथन भीतपरिकथनम् । भीत्या वा परिकथनं भीतिपरिकथनं पाठान्तरमिति । भगवानाह पार्श्वेन्यादि सुगमं ते हि अजानाना वह्नावेवौषधीः प्रक्षिप्तवन्त ताश्च दाहमापु पुनस्ते भगवतो हस्तिस्कन्धगतस्य निवेदयन्ति । स हि स्वयमेवौषधीर्भक्षयतीति । भगवानाह न तत्राभिरोहितानां प्रक्षेप ॥४१॥ इत्यं तावत्प्रथम कुम्भकारशिल्पमुत्पन्नममुमेवार्थमुपसहरन्नाह ।

पक्खेवडहणमोसहि, कहणं निग्गमणहत्थिसीसम्मि ।
पयणारंभपवित्ता, ताहे कासी य ते मणुआ ॥ ४२ ॥
पिंडेण हत्थिसीसे, मट्टियपिंडं गहाय कुम्भगं तु ।
निव्वत्तेमिअ तइ आइ–जिणोवइट्ठेण मग्गेण ॥ ४३ ॥
निव्वत्तिए समाणे, भणइ राया तओ बहुजणस्स ।
एवइआ भे कुव्वह, पयट्ठिअं पढमसिप्पं तु ॥ ४४ ॥

भावार्थ उक्त एव किं तु क्रियाध्याहारकरणेनाक्षरगमनिका स्वबुद्ध्या कार्या । यथा प्रक्षेपं कृतवतो दहनमौषधीनां बभूवेत्यादि उक्तमाहारद्वारम् । आव० १ अ० ।

शिल्पद्वारावयवार्थाभिधित्सयाऽऽह ।

पंचेव य सिप्पाइं, घडलोहे चित्तणंतकासवए ।
एक्केक्कस्स य एत्तो, वीसं वीसं भवे भेया ॥४५॥

पञ्चैव मूलभूतानि शिल्पानि । तद्यथा ( घडलोहे चित्तणंतकासवएइति ) तत्र घट इति कुम्भकारशिल्पस्योपलक्षण ( लोहेत्ति ) लोहकारशिल्पस्य ( चित्तेत्ति ) चित्रकारशिल्पस्य " णंतमिति " देशीवचनं वस्त्रवाचकं ततोऽनेन वस्त्रशिल्पस्य ग्रहणं काश्यप इति नापितशिल्पस्य । इयमत्र भावना । कल्पवृक्षेषु परिहीयमानेषु भगवता वस्त्रोत्पादनिमित्तं वस्त्रशिल्पमुत्पादितं तदनन्तरं गृहाकारेष्वपि कल्पद्रुमेषु हानिमुपगच्छत्सु गृहकरणनिमित्तं लोहकारादिशिल्पमुत्पादितं पश्चात्प्राणिनां कालदोषान्नखरोमाणि अपि वर्द्धितुं प्रवृत्तानीति नापितशिल्पोत्पादना । गृहाण्यपि च चित्ररहितानि विशोभानि भान्तीति चित्रकारशिल्पोत्पादना कुम्भकारशिल्पोत्पादकारण प्रागेव भावितम् । " एक्केक्कस्स येत्यादि " एभ्यः पञ्चभ्य एकैकस्य विंशतिर्विंशतिर्भेदा अभूवन्निति सर्वसंख्यया तदा शिल्पशतस्योत्पत्तिरभवदिति ॥ ४५ ॥

संप्रति कर्ममामणाविभूषणाद्वारप्रतिपादनार्थमाह ।

कम्मं किसिवाणिज्जा–इ मामणा जा परिग्गहे ममता ।
पुव्व देवेहिं कया, विभूसणा मंडणा गुरुणो ॥ ४६ ॥

कर्म नाम कृषिवाणिज्यादि । तच्चाग्नावुत्पन्ने संजातमिति ( मामणेत्ति ) ममीकारार्थे देशीवचनमेतत् । ततो योऽपरिग्रहे ममता सा मामणा ज्ञातव्या सा च तत्काल एव प्रवृत्तेति । तथा विभूषणा मण्डना सा च पूर्वं देवेन्द्रैर्गुरोर्भगवतः आदितीर्थकृतः कृता पश्चाल्लोकेऽपि प्रवृत्तेति ।

संप्रति लेखगणितरूपद्वारद्वयप्रतिपादनार्थमाह ।

लेहं लिवीविहाणं, जिणेण बंभीए दाहिणकरेण ।
गणियं संखाणं सुं–दरीए वामेण उवइट्ठं ॥ ४७ ॥

लेखनं लेखो नाम सूत्रे नपुंसकता प्राकृतत्वाल्लिपिविधानं तच्च जिनेन भगवता ऋषभस्वामिना ब्राह्म्या दक्षिणकरेण प्रदर्शितमत एव तदादित आरभ्य वाच्यते । गणित नाम एकद्वित्र्यादिसंख्यानं तच्च भगवता सुन्दर्या वामकरेणोपदिष्टमत एव तत्पर्यन्तादारभ्य गण्यते । अधुना रूपलक्षणमानरूपद्वारत्रयप्रतिपादनार्थमाह ।

भरहस्स रूवकम्मं, नराइलक्खणमहोइयं बलिणो ।
माणुम्माणवमाणं, पमाणगणिमा य वत्थूणं ॥ ४८ ॥

रूप नाम काष्ठकर्म पुस्तककर्मेत्येवमादि । तच्च भगवता भरतस्योपदिष्टम् । तथा नरादिलक्षण पुरुषलक्षणादि तच्च । अथ भरतस्य काष्ठकर्माद्युपदेशानन्तरं भगवता बाहुबलिन उदितं कथितम् । तथा मानं नाम वस्तूनां मानोन्मानावमानप्रमाणगणितानि तत्र मानं द्विधा धान्यमानं रसमानं च । धान्यमानम् " दो असतीए पसई दो य पसईतो सेइया चत्तारि सेइया कुलवो चत्तारि कुलवो पत्थओ " इत्यादि । रसमानं " चउसट्ठिया चउतिसिया सोलसिया " इत्यादि । उन्मानं येनोन्मीयते तच्च तुलागतं कर्षः पलमित्यादि । अवमान येनावमीयते तद्यथा हस्तो दण्डो युगामित्यादि । प्रमाण प्रतिमान तच्च सुवर्णपरिमाणहेतुः गुञ्जादि गणिमं यदेकादिसंख्यया परिच्छिद्यते । यत्तु गणित तत्प्रागेव पृथग्द्वारतयाऽभिहितमेतत्पञ्चप्रकारमपि मान भगवति राज्यमनुशासति भगवदुपदेशेन प्रवृत्तमिति (पोयए)इति द्वारगाथायां यदुक्त तस्य संस्कार प्रोतकमिति । पोतक इति वा । तथाचाह ।

मणियाई दोराइसु, पोता तह सागरम्मि वहणाइं ।
ववहारो लेहवणं, कज्जपरिच्छेयणत्थं वा ॥ ४९ ॥

ये मणिकादय आदिशब्दान्मुक्ताफलादिपरिग्रहः । दवरकादिषु लोकेन प्रोताः क्रियन्ते तदेतत्प्रकर्षेण कृतन तदा प्रवृत्तम् । अथवा पोता नाम सागरे समुद्रे प्रवहणानि तान्यपि तदैव प्रवृत्तानि । तथा व्यवहारो नाम विसंवादे सति राजकुलकरणे

गत्वा निजनिजनामाभिख्यापनलक्षणं कार्यपरिच्छेदनार्थं वा पणमुक्तिलक्षणः स व्यवहाररूपोऽपि तदा प्रवृत्तः कालदोषतो लोकानां प्रायः स्वस्वभावापगमात् ।

अधुना नीतियुद्धरूपं द्वारद्वयमभिधित्सुराह ।

नीई हक्काराई, सत्तविहा अहव सामभेयाई ।
जुद्धाइँ बाहुजुद्धाइ, यइ वट्टयाईणं च ॥ ५० ॥

नीतिर्हकारादिलक्षणा सप्तविधा । तद्यथा हकारो मकारो धिक्कारः परिभाषणा मण्डलीबन्धश्चारके प्रक्षेपो महापराधे छविच्छेद इति । एषा सप्तविधापि नीतिस्तदा विमलवाहनकुलकरादारभ्य भरतकालं पर्यन्तं कृत्वा यथायोगं प्रवृत्ता । तथा च वक्ष्यति " किंचिच्च भरहकाले " इत्यादि । अथवा नीतिर्नाम सामभेदादिका चतुष्प्रकारा । तद्यथा सामभेदो दण्ड उपप्रदानमिति एषा चतुर्विधाऽपि भगवत्काले समुत्पन्नेति । तथा युद्धानि नाम बाहुयुद्धादीनि । यदि वा वर्तकादीनां तानि उभयान्यपि तदा प्रवृत्तानि ।

सांप्रतमिषुशास्त्रोपासनारूपं द्वारद्वयमाह ।

ईसत्थं धणुवेदो, उवासणा मंसुकम्ममाईया ।
गुरुरायाईण वा, उवासणापज्जुवासणया ॥ ५१ ॥

इषुशास्त्रं नाम धनुर्वेदः स च राजधर्मे सति प्रावर्तत उपासना नाम श्मश्रुकर्तनादिरूपं नापितकर्म तदपि तदैव जातं पूर्वं ह्यनवस्थितनखरोमाणस्तथा कालमाहात्म्यतः प्राणिनोऽभवन्निति । एषा च शिल्पान्तर्गततया प्रागभिहिताऽपि पुनः पृथग्द्वारतयोपन्यस्ता भगवत्काल एव नखरोमाण्यतिरेकेण प्रवर्द्धितुं लग्नानि तत्पूर्वमिति ख्यापनार्थम् । यदि वा उपासना नाम गुरुराजादीनां पर्युपासना सापि तदैव प्रवृत्ता । अधुना चिकित्सार्थशास्त्रबन्धघातरूपद्वारचतुष्टयप्रतिपादनार्थमाह ।

रोगहरणं तिगिच्छा, अत्थागमसत्थमत्थसत्थिात्ति ।
निगमाइजमो बंधो, घातो दंडादितालणया ॥ ५२ ॥

चिकित्सा नाम रोगापहारक्रिया साऽपि तदैव भगवदुपदेशात्प्रवृत्ता । अर्थागमनिमित्तं शास्त्रमर्थशास्त्रम् । बन्धो निगडादिभिर्यमः संयमनं घातो दण्डादिभिस्ताडना । एतेऽपि अर्थशास्त्रबन्धघातास्तत्काले यथायोगं प्रवृत्ताः ।

अधुना मारणयज्ञोत्सवरूपद्वारत्रयप्रतिपादनार्थमाह ।

मारणया जीववहो, जन्ना नागाइयाण पूयातो ।
इंदाइमहापूया, पइनियया ऊसवा होंति ॥ ५३ ॥

मारणं जीववधो जीवस्य जीविताद् व्यपरोपणं तच्च भरतेश्वरकाले समुत्पन्नम् । यज्ञा नागादीनां पूजा उत्सवाः प्रायः प्रतिनियता वर्षमध्ये प्रतिनियतदिवसभाविनः इन्द्रादिमहापूजास्त्वनियतकालभाविन्य इति महोत्सवाना प्रतिविशेषः । एतेऽपि तत्काले प्रवृत्ताः ।

सम्प्रति समवायमङ्गलरूपद्वारद्वयमभिधित्सुराह ।

समवाओ गोट्ठीणं, गामाईण व संपमारो वा ।
तह मंगलाइसोत्थिय, सुवण्णसिद्धत्थगाईणि ॥ ५४ ॥

समवायो नाम गोष्ठिनां मेलापकः । यदि वा ग्रामादीनामादिशब्दात् खेटकर्बटनगरादिपरिग्रहः । स एकीभावेन किमप्युद्दिश्य एकत्र मीलनं सम्प्रसारः समवायः । किमुक्तं भवति ग्रामादिजनाना किंचित्प्रयोजनमुद्दिश्य यदेकत्र मीलनं स वा समवाय इति । तथा मङ्गलानि नाम स्वस्तिकसुवर्णसिद्धार्थकादीनि पूर्वं देवैर्भगवतो मङ्गलबुद्ध्या प्रयुक्तानि ततो लोकेऽपि तथा प्रवृत्तानि ।

सम्प्रति कौतुकादिद्वारपञ्चकमाह ।

पुव्वं कयाइं पहुणो, सुरेहिं रक्खाइकोउयाइं च ।
तह वत्थगंधमल्ला—लंकारकेसभूसाइ ॥ ५५ ॥
तं दट्ठूण पवत्तो, लंकारे उ जणो असेसो वि ।

पूर्वं प्रवृत्तो भगवतः ऋषभस्वामिनः सुरैः कृतानि कौतुकानि रक्षादीनि ततो लोकेऽपि तानि जातानि । तथा वस्त्रं चीनांशुकादिभेदभिन्नं गन्धः कुष्ठपुटादिलक्षणः माल्यं पुष्पदाम । एतानि तदैव जातानि । अलङ्कारः केशभूषादिः तं चालङ्कारं भगवतो देवैः कृतं दृष्ट्वा अवशेषोऽपि स्वं स्वमलंकर्तुं प्रवृत्तः ।

सम्प्रति चूलाद्वारमाह ॥

विहिणा चूलाकम्मं, बालाणं चोलयं नाम ॥ ५६ ॥

चूला नाम विधिना शुभनक्षत्रतिथिमुहूर्तादौ धवलमङ्गलेष्टदेवतापूजास्वजनभोजनादिलक्षणेन बालानां चूलाकर्म तदपि तदा प्रवृत्तम् ।

संप्रत्युपनयनद्वारमाह ।

उवनयणं तु कलाणं, गुरुमूले साहुणो तवोकम्मं ।
घेत्तुं हवंति सड्ढा, केई दिक्खं पवज्जंति ॥ ५७ ॥

उपनयनं नाम तेषामेव बालाना कलानां ग्रहणाय गुरोः कलाचार्यस्य मूले समीपे नयनम् । यदि वा धर्मश्रवणनिमित्तं साधोः सकाशं नयनमुपनयनं तस्माच्च साधोर्धर्मं गृहीत्वा केचित् श्राद्धा भवन्त्यपरे लघुकर्माणो दीक्षां प्रपद्यन्ते । एतच्चोभयमपि तदा प्रवृत्तम् ।

अधुना विवाहद्वारं दत्तिद्वारमाह ।

दट्ठुं कयं विवाहं, जिणस्स लोगो वि काउमारद्धो ।
गुरुदत्तिया य कन्ना, परिणिज्जंते ततो पायं ॥ ५८ ॥
दत्तव्व दाणमुसभं, दित्तं दट्ठुं जणम्मि वि पयत्तं ।
जिणभिक्खदाणं पि य, दट्ठुं भिक्खा पवत्ताओ ॥ ५९ ॥

जिनस्य भगवत ऋषभस्वामिनो कृतं विवाहं दृष्ट्वा लोकोऽपि स्वापत्यानां विवाहं कर्तुमारब्धवान् ॥ गतं विवाहद्वारम् । दत्तिद्वारमाह । भगवता युगलधर्मव्यवच्छेदाय भरतेन सह जाता ब्राह्मी बाहुबलिने दत्ता बाहुबलिना सह जाता सुन्दरी भरतायेति दृष्ट्वा तत आरभ्य प्रायो लोकेऽपि कन्या पित्रादिना दत्ता सती परिणीयते इति प्रवृत्तम् । अथवा दत्तिर्नाम दानं तच्च भगवन्तमृषभस्वामिनं सांवत्सरिकं दानं ददतं दृष्ट्वा लोकेऽपि प्रवृत्तम् । यदि वा दत्तिर्नाम भिक्षादानं तच्च जिनस्य भिक्षादानं प्रपौत्रेण कृतं दृष्ट्वा लोकेऽपि भिक्षा प्रवृत्ता । लोका अपि भिक्षां दातुं प्रवृत्ता इति भावः ।

अधुना मृतकपूजाध्यापनास्तूपशब्दद्वाराण्याह ।

मडयं मयस्स देहो, तं मरुदेवीए पढमसिद्धो त्ति ।
देवेहिं पुरा महियं, झावणया अग्गिसक्कारो ॥ ६० ॥
सो जिणदेहाईणं, देवेहिं कतो चितासु थूभा य ।
सद्दो य रुण्णसद्दो, लोगो वि ततो तहा य कतो ॥ ६१ ॥

मृतकं नाम मृतस्य देहस्तच्च मृतकं मरुदेव्याः प्रथमसिद्ध इति कृत्वा देवैः पुरा महितं पूजितम् । तत आरभ्य लोकेऽपि मृतकपूजा प्रसिद्धिं गता । ध्यापना नामाग्निसंस्कारः स च भगवतो निर्वाणप्राप्तस्यान्येषां च साधूनामिक्ष्वाकूनामितरेषां

च प्रथम त्रिदशैः कृतः पश्चाल्लोकेऽपि संजात । तथा भगवद्देहादिदग्धस्थानेषु भरतेन स्तूपाः कृता. ततो लोकेऽपि तत आरभ्य मृतकदाहस्थानेषु स्तूपा. प्रावर्तन्त । तथा शब्दो नाम रुदितशब्द. स च भगवत्यपवर्गं गते भरतदुःखमसाधारणमवबुध्य तदपसरणाय शक्रेण कृतस्ततो लोकेऽपि तत कालादारभ्य रुदितशब्दा प्रवृत्तास्तथा चाह लोकोऽपि। तथा भरतवन् शक्रवत् वा रुदितशब्दं प्रवृत्त कर्तुमारब्धवान् ।

संप्रति छेलापनकद्वारं पृच्छाद्वारं चाह ।

छेलावणमुक्किट्ठाइ, बालकीलावणं च सेंटाइ ।
इंखिणियादिरुयं वा, पुच्छा पुण किं कहिं कज्जं ॥६२॥
अहव निमित्ताईणं सुह-सइ याइ सुहदुक्खपुच्छा वा ।
इच्चेवमाइयाई, उप्पन्नं उसभकालम्मि ॥ ६३॥

छेलापनकमिति देशीवचनं तच्चानेकार्थं तथाचाह । " उक्किट्ठाइ इत्यादि" उत्कर्ष नाम हर्षवशादुत्कर्षेण नर्दनमादिशब्दात् सिंहनादिताडिपरिग्रह । यदि वा बालक्रीडन छेलापनकम् । अथवा शेंटितादि । तथा प्रच्छन पृच्छा सा इंखिणिकादिरुदितलक्षणा । इंखिणिका हि कर्णमूले घण्टिकां चालयन्ति ततो यक्षा. खल्वागम्य तासां कर्णेषु किमपि प्रष्टुर्विवक्षितं कथयन्ति । आदिशब्दात् इंखिणिकासदृशपरिग्रह । अथवा किं कार्यं कथं वा कार्यमित्येव लक्षणा या लोके प्रसिद्धा पृच्छा सा प्रच्छना । यदि वा निमित्तादीनामादिशब्दात्स्वप्नफलाफलादिपरिग्रह. । पृच्छा प्रच्छना । अथवा सुखशयितादिरूपा सुखदुःखपृच्छा प्रच्छना इत्येवमादितया सर्वमुत्पन्नमृषभस्वामिकाले । उपलक्षणमेतत् । किञ्चिद्भरतकाले किञ्चित्कुलकरकाले च । तथाचाह ।

किंचिच्च भरहकाले, कुलगरकाले वि किंचि उप्पन्नं ।
पहुणा उ देसियाइं, सव्वकला सिप्पकम्माइं ॥६४॥

किञ्चिन्निगडादिभिर्घात इत्यादिभरतकालोत्पन्न किंचित् हक्कारितं कुलकरकालेऽप्युत्पन्नं प्रभुणा तु भगवता ऋषभस्वामिना सर्वा गणितप्रभृतय कला सर्वाणि घटशिल्पप्रभृतीनि शिल्पानि सर्वाणि च कृष्यादीनि कर्माणि देशितानि । आ० म० प्र० । आव० ।

( १३ ) श्रीऋषभदेवस्य वास ।

तओ णं उसभे अरिहा कोसलिए वीसं पुव्वसयसहस्साइं कुमारवासमज्झे वसइ वसइत्ता तेवट्ठिं पुव्वसयसहस्साइं महारायवासमज्झे वसइ तेवट्ठिं पुव्वसयसहस्साइं महारायवासमज्झे वसमाणे लेहाइआओ गणिअप्पहाणाओ सउणरुअपज्जवसाणाओ बावत्तरिं कलाओ चोसट्ठिं महिलागुणे सिप्पसयं च कम्माणं तिण्णि वि पयाहिआए उवदिसइ त्ति ॥

ततो जन्मकल्याणकानन्तरमित्यर्थ. । ऋषभोऽर्हन् कौशलिकः विंशतिं पूर्वशतसहस्राणि पूर्वलक्षाणि भावप्रधानत्वान्निर्देशस्य कुमारत्वेनाकृताभिषेकराजसुतत्वेन वासोऽवस्थानं तन्मध्ये वसति । " कुमारवासमज्झावसइ " इति पाठे तु कुमारवासमध्यावसति आश्रयतीत्यर्थ. । उषित्वा च त्रिषष्टिपूर्वलक्षाणि अपि भावप्रधानो निर्देश इति महाराजत्वेन साम्राज्येन वासो ऽवस्थानं तन्मध्ये वसति । तत्र वसनश्च कथं प्रजा उपचक्रे इत्याह " तेवट्ठिं इत्यादि " त्रिषष्टिं पूर्वलक्षाणि यावन्महाराजवासमध्ये वसन् लिपिविधानादिका गणितमङ्कविद्या धर्मकर्मव्यवस्थितौ बहुप्रकारत्वात् प्रधाना यासु ता । शकुनरुतं पक्षिभाषितं पर्यवसाने प्रान्ते यासां तास्तथा द्वासप्ततिकला कलनानि कलाविज्ञानानीत्यर्थस्ता. कलनीयभेदात् द्वासप्तति अर्थात् प्राय पुरुषोपयोगिनी. । चतुःषष्टिं महिलागुणान् स्त्रीगुणान् कर्मणां जीवनोपायानां मध्ये शिल्पशत च विज्ञानशत स कुम्भकारशिल्पादिक त्रीण्यप्येतानि वस्तूनि प्रजाहिताय लोकोपकारायोपदिशति । अपिशब्द एकोपदेशकपुरुषतासूचनार्थ. । वर्तमाननिर्देशश्चात्र सर्वेषामाद्यतीर्थकराणामयमेवोपदेशविधिरिति ज्ञापनार्थम् । यद्यपि कृषिवाणिज्यादयो बहवो जीवनोपायास्तथापि ते पाश्चात्यकाले प्रादुर्बभूवु । भगवता तु शिल्पशतमेवोपदिष्टमत एवाचार्योपदेशज शिल्पमनाचार्योपदेश तु कर्मेति शिल्पकर्मणोर्विशेषमामनन्तीति । श्रीहेमसूरिकृतादिदेवचरित्रे तु । " तृणहारकाष्ठहार-कृषिवाणिज्यकान्यपि । कर्माण्यासूत्रयामास, लोकानां जीविकाकृते ॥ १ ॥ " इत्युक्तमस्ति तदाशयेन तु " कम्माणमित्यत्र " द्वितीयार्थे षष्ठी ज्ञेया । तथा च कर्माणि जघन्यमध्यमोत्कृष्टभेदात् त्रीण्यप्युपदिशति इत्यपि व्याख्येयम् । शिल्पशतं च पृथगेवोपदिशति इति ज्ञेयमिति जं० २ वक्ष० । (अथात्र सूत्रसंक्षेपत प्रोक्ता विस्तरस्तु राजप्रश्नीयादर्शेषु दृश्यमाना द्वासप्ततिकलास्ताश्च कलाशब्दे दर्शयिष्यन्ते ) शिल्पशत चेद कुम्भकृल्लोहकृच्चित्रतन्तुवायनापितलक्षणानि पञ्च मूलशिल्पानि तानि च प्रत्येक विंशतिभेदानीति । तथाचार्यम् " पंचेव य सिप्पाइ, घरलोहचित्तणतकासाए । इक्किक्कस्स य एत्तो, वीस वीसं भवे भेआ ॥ १ ॥ " इति । नन्वत्रैषां पञ्च मूलशिल्पानामुत्पत्तौ किं निमित्तमित्युच्यते युग्मिनामामौषध्योदरे मन्दाग्नितया अपच्यमाने हुतभुजि प्रक्षिप्यमाने तु समकालमेव दह्यमाने युगलिकनरैर्विज्ञप्तेन हस्तिस्कन्धारूढेन भगवता प्रथम घटशिल्पमुपदर्शितं क्षत्रिया. शस्त्रपाणय एव दुष्टेभ्य प्रजा रक्षेयुरिति लोहशिल्प, चित्राङ्गेषु कल्पद्रुमेषु हीयमानेषु चित्रकृच्छिल्पं, वस्त्रकल्पे द्रुमेषु हीयमानेषु तन्तुवायशिल्पं, बहुले युग्मिधर्मे पूर्वमवर्द्धिष्णु रोमनख मा मनुजान्तुदन्त्विति नापितशिल्पमिति । श्रीहेमाचार्यकृतऋषभचरित्रे तु गृहादिनिमित्तं वर्द्धक्ययस्कारयुग्मरूपं द्वितीय शिल्पमुक्त शेषं तत्तथैवेति । ननु भोग्यसत्कर्माण एवार्हन्तो भगवन्त समुत्पन्नव्याधिप्रतीकारकल्पस्त्र्यादिपरिग्रहं कुर्वते नेतरत्तत. किमसौ निरवद्यैकरुचिर्भगवान् सावद्यानुसंबन्धिकलाद्युपदर्शने प्रवृत्ते ? उच्यते समयानुभावतो वृत्तिहीनेषु दीनेषु मनुजेषु दुःस्थविभाव्यसंजातकरुणैकरसत्वात् । समुत्पन्नविवक्षितरसो हि नान्यरससापेक्षः प्रवर्तीति वीर इव द्विजस्य चीवरदाने । अथैव तर्हि कथमधिकविप्सोस्तस्य सति सकलेऽप्यङ्के शकलकदान सत्यं भगवतश्चतुर्ज्ञानधारकत्वेन तस्य तावन्मात्रस्यैव लाभस्यावधारणेनाधिकयोगस्य क्षेमानिर्वाहकत्वदर्शनात् । कथमन्यथा भगवदंशस्थलस्तच्छकलग्रहणेऽपि तदुच्चरितकृतार्धविभाजकस्तन्तुवायः समजायत । किं च कलाद्युपायेन प्राप्तसुखवृत्तिकस्य चौर्यादिव्यसनाशंकिरपि न स्यात् । ननु भवतु नामोक्तसुखहेतोर्जगद्भर्तुः कलाद्युपदर्शकत्वं परं राजधर्मप्रवर्तकत्व कथमुचितमुच्यते । शिष्टानुग्रहाय दुष्टनिग्रहाय धर्मस्थितिसंग्रहाय च । ते च राज्यस्थितिनिश्रया सम्यक्प्रवर्तमाना क्रमेण परेषां महापुरुषमार्गोपदर्शकतया चौर्यादिव्यसननिवर्तनतो नारकातिथेयीनिवारकतया ऐहिकामुष्मिकसुखसाधकतया च प्रशस्ता एवेति ।

महापुरुषप्रवृत्तिरपि सर्वत्र परार्थत्वसाधकनाबहुगुणाल्पदोषकार्यैकारणत्रिचारणापूर्विकैवेति । युगादौ जगद्व्यवस्था प्रथमनैव पार्थिवेन विधेयेति । ज्ञातमपीति स्थानाङ्गपञ्चमाध्ययनेऽपि " धम्मणं चरमाणस्स पंचणिस्सा ठाणा पण्णत्ता तं ज०। छक्काया १ गणो २ राया ३ गाहावई ४ सरीरं " ५ मित्याद्यावश्यकवृत्तौ राज्ञो निश्रामाश्रित्य राजा नरपतिस्तस्य धर्मसहायत्वं दुष्टेभ्य. साधुरक्षणादीत्युक्तमस्तीति परमकरुणापरीतचेतस परमधर्मप्रवर्तकस्य ज्ञानत्रययुक्तस्य भगवतो राजधर्मप्रवर्तकत्वे न काप्यनौचिती चेतसि चिन्तनीया युक्त्युपपन्नत्वात् तद्विस्तरस्तु जिनभगवत्पञ्चाशकसूत्रवृत्त्योर्यतनाद्वारे व्यक्त्या दर्शितोऽस्तीति नत एवावसेयो ग्रन्थगौरवभयादत्र न लिख्यते इति । एतेन " राज्यं हि नरकान्त स्याद् यदि राजा न धार्मिकः " इत्युक्तिरपि दृढबद्धमूला न कम्पत इति । किं चात्र तृतीयारकप्रान्ते राज्यस्थित्युत्पादे धर्मस्थित्युत्पादः पञ्चमारकप्रान्ते " वसुश्ररुरीसंघधम्मो, पुव्वण्हे विज्झही अगणिसंयं । निवविमलवाहणसुहुम-मतिनयधम्ममज्झण्हे " ! इति वचनात् धर्मस्थितिविच्छेदे राज्यस्थितिविच्छेद इत्यपि राज्यस्थितिहेतुत्वामिव्यञ्जकमेवेति सर्वं सुस्थमित्यलं विस्तरेणेति । जं० २ वक्ष० । कल्प० । स० ।

(१४) पुत्राणां राज्याभिषेकस्तदनु च भगवान् किं चक्रे इत्याह ।

उवदिसित्ता पुत्तसयं, रज्जसए अभिसिंचइ ।

उपदिश्य कलादिकं पुत्रशतं भरतबाहुबलिप्रमुखं कोशलातक्षशिलादिराज्यशते अभिषिञ्चति स्थापयति । अत्र शङ्खादिप्रभञ्जनावसानानि भरताद्यनवति भ्रातृनामानि अन्तर्वाच्यादिषु सुप्रसिद्धानीति न लिखितानि देशनामानि बहून्यप्रतीतानीति। जं० २ वक्ष० । कल्पसुबोधिकायां तु दर्शितानि । नन्दननामानि तानि चेमानि । भरतः । १ । बाहुबलिः । २ । शङ्खः ३ विश्वकर्मा ४ विमलः ५ सुलक्षण. ६ अमल. ७ चित्राङ्ग. ८ ख्यातकीर्ति ९ वरदत्त १० सागरः ११ यशोधरः १२ अमर. १३ रथवर. १४ कामदेव १५ ध्रुव. १६ वच्छः १७ नन्द १८ सुरः १९ सुनन्दः २० कुरु २१ अङ्ग. २२ वङ्ग २३ कोशलः २४ वीर २५ कलिङ्ग २६ मागध २७ विदेह २८ संगम २९ दशार्ण. ३० गम्भीर ३१ वसुवर्मा ३२ सुवर्मा ३३ राष्ट्र ३४ सुराष्ट्र ३५ बुद्धिकर ३६ विविधकर ३७ सुयश ३८ यश कीर्ति ३९ यशस्कर. ४० कीर्तिकर ४१ सूरण ४२ ब्रह्मसेन ४३ विक्रान्त. ४४ नरोत्तम. ४५ पुरुषोत्तम. ४६ चन्द्रसेन ४७ महासेन ४८ नभस्सेन ४९ भानु ५० सुकान्त ५१ पुष्पयुतः ५२ श्रीधर. ५३ दुर्धर्ष ५४ सुसुमार ५५ दुर्जय ५६ अजेयमान ५७ सुधर्मा ५८ धर्मसेन. ५९ आनन्दन ६० आनन्द ६१ नन्द ६२ अपराजित ६३ विश्वसेन ६४ हरिषेण. ६५ जय ६६ विजय ६७ विजयन्तः ६८ प्रभाकर ६९ अरिदमन ७० मान ७१ महाबाहु ७२ दीर्घबाहु ७३ मेघ ७४ सुघोष ७५ विश्व ७६ वराह. ७७ सुसेन ७८ सेनापति ७९ कपिल ८० शैलविचारी ८१ अरिञ्जय. ८२ कुञ्जरबल ८३ जयदेव ८४ नागदत्त ८५ काश्यप ८६ बल ८७ धीर ८८ शुभमति ८९ सुमति ९० पद्मनाभ ९१ सिंह ९२ सुजाति ९३ सजय ९४ सुनाभ ९५ नरदेव ९६ चित्तहर. ९७ सुरवर ९८ दृढरथ ९९ प्रभञ्जन १००॥ इति । राज्यदेशनामानि तु अङ्ग १ । वङ्ग २ । कलिङ्ग ३ । चौरु ४ । गौरु. ५ । कर्णाटक । ६ कार्णाट ७ । लाट ८ सौराष्ट्र ९ काश्मीरः १० सौवीरः ११ आभीर १२ चीणः १३ महाचीणः । १४ गूर्जरः १५ बङ्गाल. ॥ १६ श्रीमाल १७ नेपालः १८ जहाल १९ कौशल २० मालव. २१ सिंहल. २२ मरुस्थलादीनि ९३ ज्ञेयानि वृषभवर्षैः कल्प० । ( राज्यादिप्रधानस्य किं फलमित्यन्यत्र )

(१५) अथ भगवतो दीक्षाकल्याणकमाह ।

अभिसिंचित्ता तेसीइं पुव्वसयसहस्साइं महारायवासमज्झे वसइ वसइत्ता जे से गिलाणं पढमे मासे पढमे पक्खे चित्तबहुले तस्स णं चित्तबहुलस्स णवमीपक्खे णं दिवसस्स पच्छिमे भागे चइत्ता हिरण्णं चइत्ता सुवण्णं चइत्ता कोसं कोट्ठागारं चइत्ता बलं चइत्ता वाहणं चइत्ता पुरं चइत्ता अंतेउरं चइत्ता विउलधणकणगरयणमणिमोत्तियसंखसिलप्पवालरयणरचसतसारस्सा वइएज्जं विच्छड्डयित्ता विगोवइत्ता दाणं दाइ आणं परिभाएत्ता सुदंसणाए सीए सीआए स देवमणुआसुराए परिसाए समणुगम्ममाणमग्गे संखिअचक्किअणगलिअमुहमंगलिअपूरसमाणवद्धमाणग-आइक्खगलंखमंखघंटिअगणेहिं ताहिं इट्ठाहिं कंताहिं पीयाहिं मणुण्णाहिं मणामाहिं उरालाहिं कल्लाणाहिं धणाहिं मंगल्लाहिं सस्सिरीआहिं हिययगमणिज्जाहिं हिययल्हायणिज्जाइं कण्णमणनिव्वुइकराहिं अपुणरुत्ताहिं सहसइआहिं वग्गुहिं अणवरयं अभिणंदंताय अभित्थुणंताय एवं वयासी जय जय नंदा जय भद्दा धम्मेणं अभीए परीसहोवग्गाणं खंति खमे भयभेरवाणं धम्मे ते अविग्घं भवउ तिकट्टु अभिणंदंति य अभिथुणंति य तएणं उसभे अरहा कोसलिएण णयणमालासहस्सेहिं पि छिज्जमाणा २ एवं जाव णिग्गच्छइ जहा उववाए जाव आउलबोलबहुलं णभंकरें ते विणीआए रायहाणीए मज्झं णिग्गच्छइ आसिअ संमज्जिअ सित्तसुइकपुप्फोवयारकरे कलिअं सिद्धत्थवणविउलराय मग्गं करेमाणे हयगयरहपहकरेमाणे पाइक्कचडकरेण य मंठ २ उद्धतरेणुयं करेमाणे २ जेणेव सिद्धत्थवणे उज्जाणे जेणेव असोगवरपायवे तेणेव उवागच्छइ उवागच्छइत्ता असोगवरपायवस्स अहेसीअं ठावेइ ठावेइत्ता सीआओ पचोरुहइ पचोरुहइत्ता सयमेवाभरणालंकारं मुअइ मुअइत्ता सयमेव चउहिं अट्ठाहिं मुट्ठिहिं लोअं करेइ करेइत्ता छट्ठेणं भत्तेणं अपाणएणं आसाढाहिं णक्खत्तेणं जोगमुवागएणं उग्गाणं भोगाणं राइन्नाणं खत्तिआणं चउहिं सहस्सेहिं सद्धिं एगं देवदूसमादाय मुंडे भवित्ता अगाराओ अणगारिअं पव्वइए ॥

अभिषिच्य अशीतिं पूर्वलक्षाणि महान् रागो शैत्यं यत्र स चासौ वासश्च महारागवासो गृहवासस्तन्मध्ये वसति गृहपर्याये तिष्ठतीत्यर्थः । यद्यपि प्रागुक्तत्वाधिप्रनीपाय्यार्येतैव तीर्थकृतां गृहवासे प्रवर्तनं तथाऽपि समान्यत स यथोक्तः पर्योत न दोष । यद्वा महान् अरागोऽलौल्य यत्र स चासौ वासश्चेति योजनीयं यतो भगवदपेक्षया स ययधिष पर्येति एतेन " ते बद्धि

पुप्फमयसहस्साइं महारायवासमज्झे वसइ " इति पूर्वग्रन्थवि-
रोधो नेति उषित्वा ( जे से त्ति ) य स ( गिम्हाणंति ) आर्षे ग्री-
ष्मशब्दः स्त्रीलिङ्गबहुवचनान्तश्च ततो ग्रीष्मस्येत्यर्थ प्रथमो
मासो यथा ग्रीष्माणामवयवे समुदायोपचाराद्उष्णकालमासानां
मध्ये प्रथमो मास प्रथम पक्षश्चैत्रबहुलश्चात्राप्यकारपक्षस्त-
स्य नवम्यास्तिथौ पक्षो गेहो यस्य तिथिमेवपातादिषु दर्शनात्
निर्धिपाते तत्कृत्यस्याष्टम्यामेव क्रियमाणत्वात् स नवमीपक्षोऽष्ट-
मीदिवसस्तत्रानेन व्याख्यानेन "चित्तबहुलट्ठमीए" इत्याद्याग-
मविरोधात् । वाचनान्तरेण वा नवमीपक्षो नवमो दिवस दिव-
स्याष्टमीदिवसस्य मध्यन्दिनादुत्तरकाले यद्यपि दिवसशब्दास्या-
होरात्रवाचकत्वमन्यत्र प्रसिद्ध तथाऽप्यत्र प्रस्तावाद्दिवसे गतो
रजनीरजनि इत्यादाविव सूर्यचारविशिष्टकालविशेषग्रहणमन्य-
था दिवसपाश्चात्यभागस्यानुपपत्ते । त्यक्त्वा हिरण्यमघटित-
सुवर्ण रजत वा सुवर्ण घटित हैमं हेम वा कोशं भाण्डागारं
कोष्ठागारं धान्यावासगृह बलं चतुरङ्गवाहनं वेसरादि पुरान्त
पुरन्यक्त्वे विपुल धनं गवादि कनक सुवर्ण येत्यस्सल्लक्षणेत्य-
स्तानि रत्नानि मणयश्च प्राग्वत् मौक्तिकानि शुक्त्याकागादि-
प्रभवानि शङ्खाश्च दक्षिणावर्ता तत पूर्वपदेन कर्मधारय शि-
ला पट्टादिरूपा प्रवालानि विद्रुमाणि रक्तरत्नानि पद्मरागा.
पृथग्ग्रहणमेषां प्राधान्यख्यापनार्थमुक्तस्वरूपं यत्ससारं सारांति-
सारं स्वापतेय द्रव्य त्यक्त्वा ममत्वत्यागेन विच्छर्द्य पुनर्ममत्वाकर-
णेन। कुतो ममत्वत्याग इत्याह ।विगोप्य जुगुप्सनीयमेतत् अस्थि-
रत्वादिति कथनेन कथ च निश्चाल्यजनमित्याह । दायकानां
गोत्रिकानां दायधनविभाग परिभाज्य विभागशो दत्त्वा तद्दाय-
नौ नाथपान्थादियाचकानामभावाद्गोत्रिकग्रहण तेऽपि च भग-
वत्प्रेरिता निर्ममा सन्त शेषमात्रं जगृहु । इदमेव हि जगद्गुरो-
र्जीत यदिच्छावधि दानं दीयते तेषां च इयतैव इच्छापूर्ते । ननु
यदीच्छावधिकं प्रमोदान तर्हि पद्युगीनो जन पकदिनदेयं
सवत्सरदेयं वा पक पव जिघृक्षेत् इच्छाया अपरिमितत्वात् ।
सर्व्व प्रभुप्रभावेणैतादृशेच्छाया असंभवात् । सुदर्शनानाम्न्यां
शिबिकायामारूढमिति गम्यं किं विशिष्टं भगवन्त सदेवमनुजा-
सुरया स्वर्गभूपानावासिजनसहितया पर्षदा समुदायेन समनु-
गम्यमानम् अग्रे पृष्ठतत्त्वभागे शाङ्खिकादयोऽभिनन्दयन्तोऽभिष्टुव
न्तश्च एव वक्ष्यमाणमवादिषुरित्यन्वयः। तत्र शाङ्खिकाश्चन्दन-
गर्भशङ्खहस्ता माङ्गल्यकारिण शङ्खध्मा वा चाक्रिकाश्च चक्रभ्रा-
मका कुम्भकारतैलिकादयो वा लाङ्गलिका, गलावलम्बितसुव-
र्णादिमयहलधारिणो भट्टविशेषा । मुखमाङ्गलिकाश्चाटुकारिण
पुष्पमाणा वा । मागधा वर्द्धमानका स्कन्धारोपितनरा-आख्या-
यका शुभाशुभकथका लङ्खा वंशाग्रखेलका महाश्चित्रफलक-
हस्ता भिक्षाका गौरीपुत्रा इति रूढा । घाण्टिका घण्टावादका-
स्तेषां गणा सूत्रे च आर्षत्वात् प्रथमार्थे तृतीया यथाश्रुतव्या-
ख्याने च शाङ्खिकादिगणै परिवृतमिति पद्यत्वं तरा इति पदं
सान्वययोजनार्थमध्याहार्यं स्यात्। माल्याहारव्याख्यातो उल्या-
ह्याख्यायाशववर्मिति पञ्चमाङ्गे जमालिचरित्रे निष्क्रमणमहवर्ण-
ने शाङ्खिकादीना प्रथमान्ततया निर्देश एतस्यैवाशयस्य सूचक ।
यदि च प्राय सूत्राणि सोपस्काराणि भवन्तीति न्यायो ऽनुश्रियते
तदा माल्याहारव्याख्याने यथोप तान्निर्विवक्षितामिरित्यर्थ । ता-
भिरभिनन्दयन्तश्चाभिष्टुवन्तश्चेति योजना । विवक्षितत्वमेवाह ।
इष्यते स्मेतीष्टाभि प्रयोजनवशादिष्टमपि किंचित्स्वरूपत
कान्तं स्यादतान्तं चेत्यत आह कान्ताभि कमनीयशब्दाभि.
प्रियाभि. प्रियार्थाभि: मनसा ज्ञायन्ते सुन्दरतया यास्ता मनोज्ञा
भावत सुन्दरा इत्यर्थस्ताभिर्मनसा अम्यन्ते गम्यन्ते पुन. पुन याः
सुन्दरत्वातिशयात्ता. मनोमास्ताभिरुदाराभि. शब्दतोऽर्थतश्च
कल्याणासिसूचिकाभि । शिवाभिरुपद्रवाभि. शब्दार्थदूषणो-
ज्झिताभिरित्यर्थ. धन्याभिर्धनलम्भिकाभि माङ्गल्याभि. मङ्गलेऽ
नर्थप्रतिघाते साध्वीभि सश्रीकाभि । अनुप्रासाद्यलङ्कारोपेत-
त्वात् सशोभाभि। हृदयगमनीयाभिः अर्थप्राकट्यस्य आतुरीसचि-
त्वत्वात् सुबोधाभि । हृदयप्रह्लादनीयाभिः हृदयगतकोपशोकादि-
ग्रन्थिविद्रावणीभि. भजयत्र कर्तर्यनट् प्रत्ययः कर्णमनसोर्निर्वृत्ति-
करीभि. अपुनरुक्ताभिरिति च स्पष्टमर्थशतानि यासु सन्ति ता
अर्थशतिकास्ताभि.अथवाऽर्थानामिष्टकार्याणां शतानि याभ्यस्ता
अर्थशतास्ता एवार्थशतिका स्वार्थे कप्रत्ययस्ताभिर्वाग्भिर्गीर्भि-
रेकार्थिकानि वा प्राय इष्टादीनि वाग्विशेषणानीति । अनवरतं
विश्रामाभावात् अभिनन्दयन्तश्च जयजयेत्यादिभणनसमृद्धिम-
न्तो भगवन्तमाचक्षाणा. अभिष्टुवन्तश्च भगवन्तमेवमवादिषुरि-
ति। किमवादिषुरित्याह। जयजयेति भक्तिसंभ्रमे द्विर्वचनं नन्दति
समृद्धो भवतीति नन्द तस्यामन्त्रणमिदमिह च दीर्घत्वं प्राकृतत्वा
त् । अथवा जयत्वं जगत्समृद्धिकरत्वाज्जय जय भद्रेति प्राग्वत् ।
नवरं भद्र कल्याणवान् कल्याणकारी वा कथं शोभते स्मेत्याह।
धर्मेण करणभूतेन न त्वभिमानलज्जादिना अभिनो भवपरीपहोप-
सर्गेभ्य. । प्राकृतत्वात्पञ्चम्यर्थे षष्ठी परीपहोपसर्गाणां जेता भ-
वेत्यर्थः। तथा क्षान्त्या नत्वसामर्थ्यादिना क्षम. सोढा भव भय-
माकस्मिकं भैरवसिंहादिसमुत्थं तयो प्राकृतत्वात् पदव्यत्यये भैर-
वभयानां वा भयङ्करभयानां क्षान्ता भवेत्यर्थ । नानावर्णानां नाना-
विधवाग्भागीति न पूर्वविशेषणान्त पातेन पौनरुक्त्य धर्मे प्रस्तुते
चारित्रधर्मे अविघ्नं विघ्नाभावस्ते तव भवतु इति कृत्वा धातूनाम-
नेकार्थत्वाड्डपचार्य पुन पुनरभिनन्दयन्ति वाचाऽभिष्टुवन्ति चेति।
अथ येन प्रकारेण निर्गच्छति तमेवाह । " त एवणमित्यादि "
ततस्तदनन्तरमृषभोऽर्हन् कौशलिको नयनमालासहस्रैः श्रेणिस्थि-
तजनवद्दिदृक्षमाणनागरवेत्रवृन्दै. प्रेक्ष्यमाण पुन पुनरवलोक्य-
मान।आभीक्ष्ण्याद् द्विर्वचनमेवं सर्वत्र एवं तावद्वक्तव्यं यावन्नि-
र्गच्छति यथोपपातिके यथा प्रथमोपाङ्गे च पाठो भम्भासारसूत्रस्य
निर्गमगम उक्तस्तथाऽत्र वाच्यो वाचनान्तरेण यावदाकुलबोल-
बहुनभ कुर्वन्निति पूर्यन्त इति। तत्र च यो विशेषस्तमाह। विनी-
ताया राजधान्या मध्यं मध्येन भागेन इत्यर्थ. । निर्गच्छति सु-
खं सुखेनेत्यादिवन्मध्यं मध्येनेति निपात। औपपातिकगमश्चा-
यं "हिययमालासहस्सेहिं अभिणंदिज्जमाणे २ मणोमालासह-
स्सेहिं विच्छिप्पमाणे २ वयणमालासहस्सेहिं अभिथुव्वमाणे २
कांतिरुवसोहग्गगुणेहिं पिच्छिज्जमाणे २ अंगुलिमालासह-
स्सेहिं दाइज्जमाणे २ दाहिणहत्थेणं बहूणं णरणारिसहस्साणं
अंजलिमालासहस्साइं पडिच्छमाणे २ मंजुमंजुणा घोसेणं आ-
पडिपुच्छेमाणे २ भवणपतिसहस्साइं समइच्छमाणे २ तती-
तलतालतुडियगीयवाइयरवेणं महुरेण य मणहरेणं जयसद्द-
घोसविसएणं मंजुणा घोसेणं पडिबुज्झेमाणे कंदरगिरिविव-
रकुहरगिरिवरपासा उद्धघणभवणदेवकुलसिंघाडगतिगचउ-
क्कचच्चरआरामुज्जाणकाणणसहापवापएसदेसभागे पडिसुआ-
सयसकुलं करेंति हयहेसिअहत्थिगुलगुलाइअरहघणघणाइ
सद्दमीसिएणं महया कलकलरवेण जणस्स महुरेण पूरयते
सुगंधवरकुसुमचुण्णउव्विद्धवासरेणुकविलं नभ करेंति काला-
गरुकुंदुरुक्कतुरुक्कधूवनिवहेण जीवलोगमिव वासयंते समंत-

सामान्यांशाग्रहणाद्दर्शनेन विशेषांशग्रहणाभावाद् द्वयोरपि सर्वार्थविषयत्वं विरुध्यति उच्यते ज्ञानक्षणे हि केवलिनां ज्ञाने यावद्विशेषान् गृह्णति सति सामान्यं प्रतिभातमेवाशेषराशिरूपत्वात् सामान्यस्य। दर्शनक्षणे च दर्शने सामान्यं गृह्णति सति यावद् विशेषाः प्रतिभाता एव विशेषानालिङ्गितस्य सामान्यस्याभावात् अत एव निर्विशेषं विशेषाणामग्रहो दर्शनमित्युक्तमनन्तरोक्तग्रन्थे एकार्थं । ज्ञानप्रधानभावेन विशेषा गौणभावेन सामान्या दर्शनं प्रधानभावेन सामान्यं गौणभावेन इति विशेष । समुत्पन्नसम्यक्त्वक्षायिकत्वेनावरणदेशस्याप्यभावात् । उत्पन्नकेवलस्य यद्भगवत स्वरूपं तत् प्रकटयति ( जिणे जाए इत्यादि ) जिनो रागादिजेता । केवलं श्रुतज्ञानाद्यसहायकं ज्ञानमस्यास्तीति केवली अत एव सर्वतो विशेषांशपुरस्कारेण ज्ञाता सर्वज्ञाता सर्वदर्शी सामान्यांशपुरस्कारेण । नन्वर्हतां केवलज्ञानकेवलदर्शनावरणयो क्षीणमोहान्तसमय एव क्षीणत्वेन युगपदुत्पत्तिकत्वे उपयोगस्वभावात् क्रमप्रवृत्तौ च सिद्धायां " सव्वन्नू सव्वदरिसि " इति सूत्रं यथा ज्ञानप्राथम्यसूचकमुपन्यस्तम् तथा " सव्वदरिसी सव्वन्नू " इत्येवं दर्शनप्राथम्यसूचकं किं न तुल्यन्यायत्वात् नैवं "सव्वाउ लद्धीओ, सागरोवउत्तस्स उववज्जंति णो अणागारोवउत्तस्स " इत्यागमादुत्पत्तिक्रमेण सर्वदा जिनानां प्रथमे समये ज्ञानं ततो द्वितीये दर्शनं भवतीति ज्ञापनार्थत्वादित्थमुपन्यासस्येति छद्मस्थानां प्रथमे समये दर्शनं द्वितीये ज्ञानमिति प्रसङ्गाद्बोध्यम् उक्तविशेषणाद् द्वयमेव विशिनष्टि सनैरयिकतिर्यग्नरामरस्य लोकस्य पञ्चास्तिकायात्मकक्षेत्रखण्डस्य उपलक्षणादलोकस्यापि नभःप्रदेशमात्रात्मकक्षेत्रविशेषस्य पर्यायान् क्रमभाविस्वरूपविशेषान् जानाति केवलज्ञानेन पश्यति केवलदर्शनेन पर्यायानित्युक्ते द्वयमपि ग्राह्यम् । न हि पर्याया द्रव्यवियुता भवेयुर्द्रव्यं वा पर्यायवियुत तेनाधेयमाधारमाक्षिपतीति अन्यथा आधेयत्वस्यैवानुपपत्तेः यथाकाशस्य न हि आकाश क्वाप्यवतिष्ठते तस्याधारमात्ररूपस्यैव सिद्धान्ते भणनात् । अथवा सामान्यत उक्तपर्यायाणां ज्ञान व्यक्त्या निरूपयन्नाह । तद्यथा आगतिं यत स्थानादागच्छन्ति विवक्षित स्थानं जीवा गतिं यत्र मृत्वोत्पद्यन्ते स्थितिं कायस्थितिभवस्थितिरूपां च्यवनं देवलोकाद्देवानाम् मनुष्यतिर्यग्द्रवतरणम् । उपपात देवनारकजन्मस्थान भुक्तमशनादि कृत चौर्यादि प्रतिसेवितं मैथुनादि आवि कर्म प्रकटकार्यं कर्म प्रच्छन्नकृतं तं तं ( कालति ) प्राकृतत्वात् सप्तम्यर्थे द्वितीया तस्मिन् २ काले वीप्सायां द्विर्वचनं मनोवच कायान् योगान् करणत्रयव्यापारान् एवमादीन् जीवानामपि सर्वभावान् जीवधर्मानित्यर्थ । अजीवानामपि सर्वभावान् मोक्षमार्गस्य रत्नत्रयस्य विशुद्धतरकान् प्रकर्षकोटीप्राप्तान् कर्मक्षयहेतून् भावान् ज्ञानाचारादीन् जानन् पश्यन् विहरतीति गम्यम् । कथ च जानन् पश्यन् विचरतीत्याह एषोऽनन्तरवक्ष्यमाणो धर्म सकलदुःखक्षयकारणे मोक्षमार्गे सिद्धिसाधकत्वेन समदेशकस्यान्येषां च श्रोतॄणां हितं कल्याणं पथ्यभोजनवदित्यर्थ । सुखमनुकूलवेद्यं पिपासोः शीतलजलपानवत् निःश्रेयसं मोक्षस्तत्कर उक्तानां हितादीनां कारक इति । सर्वदुःखविमोक्षणं इति व्यक्तं परमसुखमात्यन्तिकसुखसमापयतीति व्युत्पत्तिवशात्परमसुखमनुभवमानन "सर्मपि समान" इति प्राकृतसूत्रेण समानादेशेऽपि प्रत्यये रूपसिद्धि । नि. श्रेयसेत्यत्र पकारलोप प्राकृतत्वात् भविष्यतीति॥ जं०२ वक्ष० आ० म० प्र० ।

( २१ ) अथ उत्पन्नकेवलज्ञानो भगवान् यथा धर्मं प्रादुश्चकार तथाह ।

तते णं से भगवं समणाणं णिग्गंथाणं णिग्गंथीण य पंचमहव्वयाइं सभावणागाइं छच्च जीवणिकाए धम्मं देसमाणे विहरति तं जहा पुढविकाए भावणागमेणं पंचमहव्वयाइं सभावणागाइं भाणिअव्वाइं ॥

ततः स भगवान् श्रमणानां निर्ग्रन्थानां निर्ग्रन्थीनां च पञ्चमहाव्रतानि सर्वप्राणातिपातविरमणादीनि सभावनाकानि ईर्यासमित्यादिस्वभावेनोपेतानि षट् च जीवनिकायान् पृथिव्यादित्रसान्तान् इत्येवंरूपं धर्ममुपदिशन् विहरतीति संबन्धः । तत्र धर्मे प्रक्रान्तव्ये षड्जीवनिकायकथनमुपक्रान्तं तज्जीवपरिज्ञानमन्तरेण व्रतपालनासंभव इति ज्ञापनार्थम् । नन्वनियम प्रथमव्रते संभवेत् मृषावादविरमणादीनां तु भाषाविभागादिज्ञानाधीनत्वात् न संभवेदित्युच्यते शेषव्रतानामपि प्राणातिपातविरमणव्रतस्य रक्षकत्वेन नियुक्तत्वात् महावृक्षस्य वृक्षवत् तथा हि मृषाभाषमभाषमाणो ह्यन्याख्यानादिविरतो न कुलवध्वादीन् अदत्तमनाददानो धनस्वामिन सचित्तजलफलादिकं च मैथुनविरतो नवलक्षपञ्चेन्द्रियादीन् परिग्रहविरतः शुक्तिकस्तूरीमृगादींश्च नातिपातयेदिति । अथैनदेव किंचिद्व्यक्तया विवृणोति तद्यथा पृथिवीकायिकान् जीवान् उपदिशन् विहरतीति सम्बन्ध । लाघवार्थकत्वेन सूत्रप्रवृत्तेर्देशग्रहणात्पूर्णोऽप्यालापको वाच्य. स चाय "आउक्काइए तेउक्काइए वाउक्काइए वाणस्सइकाइए तसकाइए त्ति" व्यक्तम् तथा पञ्चमहाव्रतानि सभावनाकानि भावनागमेन श्रीआचाराङ्गद्वितीयश्रुतस्कन्धगतभावनाख्याध्ययनगतपाठेन भणितव्यानि अत्र च सूत्रे यदुद्देशे प्रथमं "पंचमहव्वयाइ" इत्याद्युक्तं निर्देशे तु व्यत्ययेन "तं जहा पुढविकाइए" इत्यादि तत्कथमिति नाशङ्कनीयम् । यत पश्चादुद्दिष्टानामपि षड्जीवनिकायानां प्रस्तरतो वाङ्गे स्वल्पवक्तव्यतया प्रथम प्ररूपणाया युक्त्युपपन्नत्वात् सूचीकटाहन्यायोऽत्रानुसरणीयो विचित्रा सूत्राणां कृतिराचार्यस्येति न्यायेन वा स्वत एवेति ज्ञेयम् । ननु गृहिधर्मसविभ्रपाक्षिकधर्मावपि भगवता देशनीयौ मोक्षाङ्गत्वात् यदुक्तम् । "सावज्जजोगपरिव-ज्जणा उ सव्वुत्तमो जईधम्मो । बीओ सावगधम्मो, तईओ संविग्गपक्खपहो ॥ १ ॥" इति तत्कथमत्र तौ नोक्तौ उच्यते सर्वसावद्यवर्जकत्वेन देशनायां यतिधर्मस्य प्रथमं देशनीयत्वादत्यासन्नमोक्षपथत्वात् श्रमणसङ्घस्य प्रथमं व्यवस्थापनीयत्वाच्च प्राधान्यस्यापनार्थं प्रथममुपन्यासस्ततो व्याख्यातो विशेषार्थप्रतिपत्तिरिति न्यायादेतत्पुच्छभूतौ तावपि धर्मौ भगवता प्ररूपिताविति ज्ञेयम् । भगवत्प्ररूपणामन्तरेणाऽन्येषां तत्तद्ग्रन्थेषु नयो प्ररूपणानुपपत्तेरित्यल प्रसङ्गेनेति । जं० २ वक्ष० ॥

उसभेणं अरहा कोसलिएणं इमीसे उसप्पिणीए नवहिं सागरोवमकोडाकोडीहिं वीइक्कताहिं तित्थे पवत्तिए । स्था० १० ठा० ॥

उज्जाणपुरिमताले, पुरीविणीयाइ तत्थ नाणवरं ।
चक्कुप्पयायभरहे, निवेयणं चेव दोण्हं पि ॥

तथा तस्मिन्नेवाहनि भरतनृपतेरायुधशालायां चक्ररत्नमुत्पादश्च बभूव ( भरहे निवेयणं चेव दोण्हंपित्ति ) भरताय निवेदनं च द्वयोरपि ज्ञानरत्नचक्ररत्नयोः तन्नियुक्तपुरुषैः कृतमित्यध्याहार इति

गाथार्थः । अत्रान्तरे भरतश्चिन्तयामास पूजा तावद् द्वयोरपि कार्या। कस्य प्रथमं कर्तुं युज्यते। किं चक्ररत्नस्य उत तातस्येति तत्र

तातम्मि पूइए चक्क–पूइयं पूअणारिहो ताओ ।
इह लोइयं तु चक्कं, परलोअसुहावहो ताओ ॥२४॥

ताते त्रैलोक्यगुरौ पूजिते सति चक्रं पूजितमेव तत्पूजानिबन्धनत्वाच्चक्रस्य । तथा पूजामर्हतीति पूजार्हस्तातो वर्तते देवेन्द्रादितुल्यत्वात् । तथा इह लौकिकं चक्रं तुरेवकारार्थः स चावधारणे किमवधारयति । ऐहिकमेव चक्रं सांसारिकसुखहेतुत्वात् परलोकसुखावहस्तातः शिवसुखहेतुत्वादिति गाथार्थः । तस्मात्तिष्ठतु तावच्चक्रं तातस्य पूजा कर्तुं युज्यत इति संप्रधार्य तत्पूजाकरणसंदेशव्यापृतो बभूव ॥ इदानीं कथानकम् “भरहो सव्वड्ढीए भगवंतं वंदए पयट्टो । मरुदेवी सामिणी य भगवते पव्वइए भरहरज्जसिरिं पासिऊण भणिया इयो मम पुत्तस्स एरिसी रज्जसिरी आसि सपयं सो छुहापिवासापरिगओ नग्गओ हिंडइत्ति । उव्वेय करिया इयो भरहस्स तित्थगरविभूइ वन्नेंतस्स न पत्तिज्जिया इयो पुत्तसोगेण य किलेसब्भामतचक्खु जाय रुवती पत्तो भरहेण गच्छंतेण विन्नत्ता। अम्मो एहि जेण भगवओ विभूतिं दंसेमि ताहे भरहो हत्थिखंधे पुरओ काऊण निग्गओ । समोसरणदेसे य गयणतलं सुरसमूहेण विमाणारूढेणोवयंतेण विरायंतधयवरं पहयदेवदुंदुहिनिनायापूरियदिसामंडलं पासिऊण भरहो भणिया ईओ पेच्छ जइ एरिसी रिद्धी मम कोडिसयसहस्सभागेण वि । ततो तीए भगवओ उच्छवा इत्थं त पासंतीए चेव केवलमुप्पन्नं। अन्ने भणंति भगवओ धम्मकहासद्दं सुणेंतीए तक्कालं च तिकट्टुनाउय। ततो सिद्धा । इह भरहे ओसप्पिणीए पढमसिद्धोत्ति काऊण देवेहिं पूजा कया सरीरं च खीरोए बूढं । भगवं च समोसरणमज्झत्थो सदेवमणुयासुराए सहाए धम्मं कहेइ । तत्थ उसभसेणो नाम भरहपुत्तो पुव्वभवबद्धगणहरनामगुत्तो जायसंवेगो पव्वइओ बंभी य पव्वइया। भरहो सावगो जाओ। सुंदरी पव्वयंती भरहेण इत्थीरयणं भविस्सइत्ति रुद्धा सा वि साविया जाया। एस चउव्विहो समणसंघो । ते य तापसा भगवओ नाणमुप्पन्नं ति कच्छमहाकच्छवज्जा भगवओ सगासमागंतूण भवणवतिवाणमंतरजोइसियवेमाणियदेवागिण्णं परिसं दट्ठूण भगवओ सगासे पव्वइया एत्थ समोसरणे मरीचिमाइया बहवे कुमारा पव्वइया आ० म० प्र० ।

(२२) सांप्रतमभिहितार्थसंग्रहपरमिदं गाथाचतुष्टयमाह ।

सहमरुदेवीइ निग्गओ–कहणं पव्वज्जमुसभसेणस्स ।
बंभीमरीइदिक्खा, सुंदरिओरोहसु अदिक्खा ॥२५॥
पंच य पुत्तसयाइं, भरहस्स य सत्तनत्तुअसयाइं ।
सयराहं पव्वइआ, तम्मि कुमारा समोसरणे ॥ २६ ॥
भवणवइवाणमंतर–जोइसवासी विमाणवासी अ ।
सव्विड्ढिसपरिसा का–सी नाऊणप्पया महिमं ॥२७ ॥
दट्ठूण कीरमाणिं, महिमं देवेहि खत्तिओ मरिई ।
संमत्तलद्धबुद्धी, धम्मं सोऊण पव्वइओ ॥ २८ ॥

कथनं धर्मकथा परिगृह्यते । मरुदेव्यै भगवद्विभूतिकथनम्। तथा नप्तृशतानीति पौत्रकशतानि । तथा “ सयराहमिति ” देशीवचनं युगपदर्थाभिधायकं त्वरिताभिधायकं चेति । मरीचिरिति जातमात्रो मरीचीं मुक्तवानित्यतो मरीचिमान् मरीचिरभेदोपचारान्मतुब्लोपाद्वेति । अस्य च प्रकृतोपयोगित्वात् कुमारसामान्याभिधाने सत्यपि भेदेनोपन्यासः । सम्यक्त्वेन लब्धा प्राप्ता बुद्धिर्यस्य स तथाविधः शेषं सुगममिति गाथाचतुष्टयार्थः । आ० म० प्र० । आव० १ अ० । ( भरतविजयवक्तव्यता भरहशब्दे)भगवद्वन्दनार्थं सह मरुदेव्या निर्गतः (कहणं) भगवद्विभूतिकथनं ऋषभसेनस्य पुण्डरीकापरनाम्नः प्रव्रज्या ब्राह्म्यादिदीक्षा सुन्दर्या अवरोधार्थं धारणं (सयराह) समकालं सामान्येन कुमारदीक्षाभिधानेऽपि मरीचेर्विशेषेणाभिधानं प्रकृतोपयोगित्वात् (सम्मत्तलद्धबुद्धित्ति)लब्धा सम्यक्त्वबुद्धिर्येन स लब्धसम्यक्त्वबुद्धिः शेषं स्पष्टम्। अथ भरतः किं चकारेत्याह “अथोत्थाय प्रभोः पूजां, विधाय भरतेश्वरः। चकार चक्ररत्नस्याऽष्टाह्निकामहिमोत्सवम्” (आ०क०)बारसवासाणि महारायाभिसेओ वुत्तो राइणो विसज्जिया ताहे नियगवग्गं सरिउमारद्धो ताहे दाइज्जंति सव्वे निप्पज्जया एवं परिवाडीए सुंदरी दाइया सा पंडुल्लुग्गितमुही सा य जद्दिवसं रुद्धा तद्दिवसमारब्भ आयंबिलाणि करेति तं पासित्ता रुट्ठो ते कोडुंबिए भणइ । किं मम नत्थि भोयणं ज एसा य रिसीरूवेण जाया वेज्जा वा नत्थि तेहिं सिट्ठं जहा आयंबिलाणि करेइ ताहे तस्स तस्सोवरिं पयणुओ रागो जाओ । सा य भणिया जइ रुच्चति तो मए समं भोगे भुंजाहि ण वि तो पव्वयाहि त्ति। ताहे पायसु पडिया विसज्जिया पव्वइया । अन्नया भरहो तेसिं भाउयाण दूय पट्ठवेइ । जहा मम रज्जं आयणह ते भणंति अम्हं वि रज्जं ताएण दिण्णं तुब्भं वि एतु ताव ताओ पुच्छिज्जिहित्ति। जं भणिहित्ति तं करिहामो तेण समएण भगवं अट्ठावयमागओ विहरमाणो एत्थ सव्वे समोसरिया कुमारा ताहे भणंति तुब्भेहिं दिण्णानि रज्जाइ हरति भाया तो किं करेमो किं जुज्झामो उदाहु आयणामो ताहे सामी भोगेसु नियत्तावेमाणो तेसिं धम्मं कहेइ न मुत्तिसरिसं सुहमत्थि ताहे इंगालदाहकदिट्ठंतं कहेइ । “ जहा एगो इंगालदाहओ एगं भाणं पाणियस्स भरेऊण गओ तं तेण उदगं निट्ठवियं उवरिं आइच्चो पासे अग्गी पुणो परिस्समो दारुगाणि कुट्टितस्स घरं गतो पाणियं पीयं । मुच्छितो सुमिणं पासइ। एवं अगडतलागनदीदहसमुद्दा य सव्वे पीया । न य छिज्जइ तण्हा । ताहे अन्नम्मि जिन्नकूवे तणपुलियं गहाय उस्सिचइ । जं पडियसेसं तं जीहाए लिहइ एवं तुब्भेहिं वि अणुत्तरा सव्वलोगे सव्वपुरिमा सव्वट्ठसिद्धे अणुभूया तह वि तत्ति न गया । एवं वेयालियं नाम अज्झयणं भासइ संबुज्झह किन्न बुज्झह । एवं अट्ठाणउइं पि तेहिं अट्ठाणउइ कुमारा पव्वइयत्ति कोइ पढमिल्लुएण संबुद्धो कोइ बिइएण कोइ तइएण । जाहे ते पव्वइया ” आ० म० प्र० ।

अमुमेवार्थमुपसंहरन्नाह ।

मागहमाई विजओ, सुंदरिपव्वज्जबारसाभिसेओ ।
आणावण भाउआणं, समुसरणे पुच्छदिट्ठंतो ॥

मागधमादौ यस्य स मागधादिः कोऽसौ विजयो भरतेन कृत इति पुनरागतेन सुन्दर्यवस्थिता दृष्टा क्षीणत्वाद् मुक्ता चेति द्वादश वर्षाण्यभिषेकः कृतो भरताय आज्ञापनं भ्रातॄणां चकार तेऽपि च समवसरणे भगवन्तं पृच्छन्तः पृच्छन्तः भगवता चाङ्गारदाहकदृष्टान्तो गदित इति गाथाक्षरार्थः ॥ आ० म० प्र० ॥

एवं पडिसरत्थाओ, सर्वं निर्जित्य भारतम् ॥ ३० ॥

राजधान्यां विनीतायां, प्रत्यगाद्भरतेश्वरः ।
महाराजाभिषेको भू-त्तत्र द्वादशवार्षिकः ॥ ३१ ॥
सर्वान् विसृज्य नृपाला-नारेभे स्वजनेक्षणम् ।
दर्शमानेष्वथ स्वेषु, सुन्दरी दर्शिता यदा ॥ ३२ ॥
दृष्ट्वा पाण्डुमुखीं क्षामां, क्रुद्धः कौटुम्बिकानवक् ।
अस्ति मे भोजनं किं न, रूपेणेयं यदीदृशी ॥ ३३ ॥
वैद्यो वा नास्ति शिष्टैस्तैः, सर्वमप्यस्ति ते प्रभो ! ।
परं व्रतायाचाम्लै-, र्कटकाद्यदिनात् स्थिता ॥ ३४ ॥
अथ विज्ञाय तद्भावं, मुदितो भरताधिपः ।
श्रुत्वा च समवसृतं, प्रभुमष्टापदाचले ॥ ३५ ॥
विरादुत्कण्ठितस्तत्र, ततो गत्वा यमी मुदा ।
प्रभुं प्रणम्य सुन्दर्यै, दापयामास संयमम् ॥ ३६ ॥
अथ प्रत्यागतोऽयोध्यां, नगरीं भरतेश्वरः ।
व्यज्ञप्यत युधागार-नियुक्तेनैत्य केनचित् ॥ ३७ ॥
चक्रं न चक्रशालाया-मद्यापि विशति प्रभो ! ।
विना त्वदाज्ञां कुर्वत्सु, राज्यानि तव बन्धुषु ॥ ३८ ॥
चक्रवर्ती ततः भ्रातॄन्, दूतैस्तानूचिवानद ।
राज्येष्वस्ति यदीच्छा व-स्तत्सेवाक्रियतां मम ॥ ३९ ॥
प्रत्यूचिरेऽष्टानवति-, कुमारास्तानहंयवः ।
राज्यं तातेन दत्तं न-स्तत्किं भरतसेवया ॥ ४० ॥
यूयं व्रजत हे दूता ! वयं त्वत्स्वामिना सह ।
तातं पृष्ट्वा करिष्यामः, सख्यं वाऽसख्यमेव वा ॥ ४१ ॥
ततस्तेऽष्टापदे गत्वा, प्रभुं नत्वाऽब्रुवन्निदम् ।
राज्यं तावत्त्वया दत्तं, भ्राता हरति तद्वयम् ॥ ४२ ॥
युध्यामहे किमथवा, तदाज्ञामनुमन्महे ।
धर्मं तेषामथार्येऽवक्, वोजिन्यस्तान्यवर्त्तयन् ॥ ४३ ॥
निःश्रेयससमं सौख्यं, संसारे क्वापि नास्त्यहो ।
अङ्गारदाहकस्यात्र, दृष्टान्तं शृणुताधुना ॥ ४४ ॥
इहैकोऽङ्गारकृद्यातो, गृहीत्वाम्भोघटं वने ।
पीतं तेनाम्बु तत्सर्वं, तृष्णयार्त्तेन कुम्भतः ॥ ४५ ॥
उपर्यादित्यतापेन, पार्श्वेऽग्नेर्ज्वलनात्तथा ।
काष्ठकुट्टनखेदाच्च, पीडितस्तृष्णया पुनः ॥ ४६ ॥
सोऽथ गाढं गतो मूर्च्छां, सुप्तः स्वप्ने तदा जलम् ।
सर्वं गेहसरः कूप-नदीह्रदसमुद्भवम् ॥ ४७ ॥
सर्वं पपौ परं तस्य, तृष्णा छिन्ना तथाऽपि न ।
ततो मरौ जीर्णकूपे, गृहीत्वा तृणपूलकम् ॥ ४८ ॥
तेनाहृतं पयः शेषं, पतितं लेढि जिह्वया ।
न छिन्ना या समुद्रान्तैः, सा तृट् छेत्स्यति तेन किम् ॥ ४९ ॥
एवमनुभवन् भवन्तोऽपि, सुखं भवसुखावधि ।
विमाने सर्वार्थसिद्धे, तृप्तिस्तदपि नाभवत् ॥ ५० ॥
ततो वैतालिकं नामा-ध्ययनं स्वाम्यभाषत ।
बुध्यध्वं किं न बुध्यध्व-मित्यष्टानवतिध्रुवाः ॥ ५१ ॥
कोऽपि प्रथमया बुद्धः, कश्चनापि द्वितीयया ।
बुद्धाः सर्वेऽपि सर्वाभिः, कुमाराः प्राव्रजंस्तदा ॥ ५२ ॥
ज्ञात्वा चैतेभ्यस्तद्वृत्तं, भरतो भरताधिपः ।
तेजासीदागुरुस्तीना, तेषां राज्यान्यपाहरत् ॥ ५३ ॥
विज्ञाय तद्बन्धुना, तद्राज्यहरणं तदा ।
आयान्तं भारत दूत-मूचे बाहुबली बली ॥ ५४ ॥
अथ तृप्तिर्न ते भर्त्तु-र्वृद्धत्कुक्षिरिवैष कः ।
भ्रातॄणामपि राज्यानि छिनत्ति स्मातिलोलुपः ॥ ५५ ॥

मदीयमपि किं तद्व-द्राज्यमेष जिहीर्षति ।
मरिचान्यप्यश्रीर्वाञ्छ-त्यत्तुं चणकलीलया ॥ ५६ ॥
आयातोऽहं तदेषोऽस्मि, राज्याय स्वं प्रभुं युधि ।
इत्युक्त्वा दूतमुत्सृज्य, बाहुबल्यप्यषेणयत् ॥ ५७ ॥
ज्ञात्वाऽऽयान्तं च भरत, सर्वौघेण तमभ्यगात् ।
ततस्तद्बलयोरासी-त्संग्रामो द्वादशाब्दकः ॥ ५८ ॥
अथ बाहुबलिः स्माह, किमेतैः कीटकुट्टनैः ।
आवयोरेव यद्वैर-मावयोरेव यद्रणः ॥ ५९ ॥
अथाङ्गाङ्गिरणे देव-प्रार्थनात्स्वीकृते शुभे ।
दृग्युद्धं प्रथमं चक्रे, भरतस्तत्र निर्जितः ॥ ६० ॥
एवं वाग्युद्धमुष्टीमुष्टि-दण्डादण्डिरणैर्जितः ।
भरतोऽचिन्तयच्चक्री, एष एवास्त्यहं न किम् ॥ ६१ ॥
तस्यैव खिन्नचित्तस्य, चक्रं देवतयाऽर्पितम् ।
सगर्वस्तेन सोऽधावत्, हन्तुं बाहुबलिं प्रति ॥ ६२ ॥
तमायान्तं समालोक्या-चिन्तयद्बाहुबल्यपि ।
एतं सचक्रमप्येक-मुष्टिघातेन चूर्णये ॥ ६३ ॥
किं पुनः कामभोगानां, तुच्छानां कारणे मम ।
भ्रातुर्भ्रष्टप्रतिज्ञस्य, वधः कर्त्तुं न युज्यते ॥ ६४ ॥
भव्यं मे भ्रातृभिश्चक्रे, तत्करोम्यहमप्यतः ।
अथोचेऽधर्मयुद्धेच्छो ! धिक्ते भरत ! पौरुषम् ॥ ६५ ॥
अलं भोगैर्ममेत्युक्त्वा, तत्रैव व्रतमाददे ।
भरतस्तनयं बाहो, राज्ये सोमप्रभं न्यधात् ॥ ६६ ॥
अग्रे केवलिनः सन्ति, तातोपान्ते ममानुजाः ।
ततोऽहमपि यास्यामि, सजाते तत्र केवले ॥ ६७ ॥
तत्रैवास्थात्प्रतिमये-त्युपलस्तम्भनिश्चलः ।
पादयोर्जातवल्मीको, लतापहृतविग्रहः ॥ ६८ ॥
वत्सरान्ते बोधकालं, ज्ञात्वा ब्राह्मी च सुन्दरी ।
स्वामिना प्रेषिते गत्वा, दृष्ट्वा तं वल्लिवेष्टितम् ॥ ६९ ॥
नत्वोचतुरिदं बन्धो, हस्तिनोऽवतराधुना ।
द्विस्त्रिर्वचनमित्युक्त्वा, गते साध्व्यौ यथा गतम् ॥ ७० ॥
बाहुर्दध्यौ क्व हस्ती मे, मृगा चैते न जल्पतः ।
हु ज्ञातं मानहस्त्यस्ति, को मानो मे विवेकिनः ॥ ७१ ॥
तद्यामि स्वामिनं वन्दे, तान् स्वभ्रातॄन् मुनीनपि ।
उत्क्षिप्ते चरणे जातं, केवलज्ञानमुज्ज्वलम् ॥ ७२ ॥
ततो गत्वा प्रभुं प्रेक्ष्य, तस्थौ केवलिपर्षदि ।
भरतः कुरुते राज्यं, मरीचिः श्रुतवानभूत् ॥ ७३ ॥ आ० क० ।

अथ किमभूदित्याह अन्यदा ।

बाहुबलिकोवकरणं, निवेअणं चक्किदेवया कहणं ।
नाहम्मेणं जुज्झे, दिक्खा पभिमायइन्नायं ॥ ३१ ॥
पढमं दिट्ठीजुद्धं, वायाजुद्धं तहेव बाहाहिं ।
मुट्ठीहि य दंडेहि य, सव्वत्थ विजिप्पए भरहो ॥ ३२ ॥
सो एव जिप्पमाणो, विहुरो अ नरवई विचिंतेइ ।
किं मन्नि एस चक्की, जह दाणिं दुव्वलो अह यं ॥ ३३ ॥
ताहे चक्कं मणसी, करेइ पत्तं अ चक्करयणम्मि ।
बाहुबलिणा य भणिअं, धिरत्थु रज्जस्स तो तुज्झं ॥ ३४ ॥
चिंतेइ अ सो मज्झं, सहोयरा पुव्वदिक्खिया नाणी ।
अह य केवली होउं, वच्चेहामी भिओ पभिम ॥ ३५ ॥

मेवचक्कुरेण धूअं, अमूढलक्खो उ पेसए अरहा ।
इत्थीओ ओअर त्तिय, वुत्ते चिंता पए नाणं ॥ ३६ ॥
उप्पन्ननाणरयणा, तिन्नपइन्नो जिणस्स पामूले ।
गंतुं तित्थं नमिउं, केवलिपरिसाइ आसीणो ॥ ३७ ॥
काऊण एगछत्तं, भरहो वि अ भुंजए विउलभोए ।
मरिई वि सामिपामे, विहरइ तवसंजमसमग्गो ॥ ३८ ॥
सामाइअमाईअं, इक्कारसमाउ जाव अंगाओ ।
उज्जुत्तो भत्तिगओ, अहिज्जिओ सो गुरुसगासे ॥३९॥

भरतसंदेशाकर्णने सति बाहुबलिना कोपकरणं तन्निवेदनं चक्रवर्तिभरताय दूतेन कृतं ( देवयन्ति ) युद्धे जीयमानेन किमयं चक्रवर्ती न त्वहमिति चिन्तिते । देवता आगतेति ( कहणति ) बाहुबलिना परिणामदारुणान् भोगान् पर्यालोच्य कथनं कृतमलं मे राज्येनेति । तथा चाह । नाधर्म्मेण युध्यामीति । दीक्षा तेन गृहीता अनुत्पन्नज्ञानः कथमहं ज्यायान् लघीयसो द्रक्ष्यामीत्यभिधानात् प्रतिमा अङ्गीकृता प्रतिज्ञा च कृता । नास्मादनुत्पन्नज्ञानो यास्यामीति निर्युक्तिगाथा । शेषास्तु भाष्यगाथाः । तयोश्च भरतबाहुबलिनोः प्रथमं दृष्टियुद्धं, पुनर्वाग्युद्धं, तथैव बाहुभ्यां मुष्टिभिश्च दण्डैश्च सर्वत्रापि सर्वेषु जीयते भरतः । स एव जीयमानो विधुरोऽथ नरपतिर्विचिन्तितवान् अर्हन्नादितीर्थकरः हस्तिनः अवतर इति चोक्ते चिन्ता तस्य जाता यामीति सम्प्रधार्य (पए) इति पदोत्क्षेपे ज्ञानमुत्पन्नमिति । उत्पन्नज्ञानस्तीर्णप्रतिज्ञो जिनस्य पादमूले गत्वा केवलिपर्षदं गत्वा तीर्थं नत्वा आसीनः । अत्रान्तरे कृत्वा एकच्छत्रं भुवनमिति वाक्यशेषः भरतोऽपि च भुङ्क्ते विपुलभोगान् । मरीचिरपि स्वामिपार्श्वे विहरति तपःसंयमसमग्रः स च सामायिकादिकमेकादशमङ्गं यावत् । उद्युक्तः क्रियायां भक्तिगतो भगवति श्रुते वा अधीतवान् । स गुरुसकाश इत्युपन्यस्तगाथार्थः ।

अह अन्नया कयाई, गिह्मे उण्हेण परिगयसरीरो ।
अण्हाणएण चइओ, इमं कुलिंगं विचिंतेइ ॥ ४० ॥

गमनिका । अथेत्यानन्तर्ये कदाचिदेकस्मिन् काले ग्रीष्मे उष्णेन परिगतशरीरः । अस्नानेनेत्यस्नानपरीषहेण त्याजितः संयमात् एतत्कुलिङ्गं वक्ष्यमाणं विचिन्तयतीति गाथार्थः ।

मेरुगिरीसमभारे, न हुमि समत्थो मुहुत्तमवि वोढुं ।
सामन्नए गुणे गुण-रहिओ संसारमणुकंखी ॥ ४१ ॥

कान् श्रमणानामेते श्रमणा के ते गुणाः विशिष्टक्षान्त्यादयस्तान् कुतो यतो धृत्यादिगुणरहितोऽहं संसारानुकाङ्क्षीति गाथार्थः । ततश्च किं मम युज्यते । गृहस्थत्वं तावदनुचितं श्रमणगुणानुपालनमप्यशक्यम् ॥

एवमणुचिंतयतस्स, तस्स नियया मई समुप्पन्ना ।
लद्धो मए उवाओ, जाया मे सासया बुद्धी ॥ ४२ ॥

एवमुक्तेन प्रकारेणानुचिन्तयतस्तस्य निजा मतिः समुत्पन्ना न परोपदेशेन स ह्येव चिन्तयामास । लब्धो मया वर्तमानकालोचितः खलूपायो जाता मम शाश्वती बुद्धिः शाश्वतीत्याकालिकी प्रायो निरवद्यजीविकाहेतुत्वादिति गाथार्थः ॥

यदुक्तमिदं कुलिङ्गमचिन्तयत् तत्प्रदर्शनायाह ।

समणा तिदंडविरया, भगवंतो निहुअसंकुचिअगत्ता ।
अजिइंदिअदंडस्स, ओहो उ तिदंडं ममं चिन्हं ॥ ४३ ॥

गमनिका । श्रमणाः मनोवाक्कायलक्षणत्रिदण्डविरताः ऐश्वर्यादिभगयोगाद्भगवन्तः निभृतान्यन्तःकरणाशुभव्यापारपरित्यागात् सङ्कुचितान्यशुभाकायव्यापारपरित्यागादङ्गानि येषां ते तथोच्यन्ते अहं तु नैवंविधो यत अजितेन्द्रियेत्यादि न जितानीन्द्रियाणि चक्षुरादीनि दण्डाश्च मनोवाक्कायलक्षणा येन स तथोच्यते । तस्याजितेन्द्रियदण्डस्य तु त्रिदण्डं मम चिह्नं विस्मरणार्थमिति ॥

लोइंदियमुंडा सं-जया उ अहं यं खुरेण ससिहाओ ।
थूलगपा णिवहाओ, विरमणं मे सया होउ ॥४४॥

मुण्डो हि द्विधा भवति द्रव्यतो भावतश्च । तत्रैते श्रमणा द्रव्यभावमुण्डाः कथं लोचनेन्द्रियैश्च मुण्डाः संयताः सन्ति अहं पुनर्नेन्द्रियमुण्डो यतः अतोऽहं द्रव्यमुण्डतया तस्मादहं क्षुरेण मुण्डः सशिखश्च भवामि । तथा सर्वप्राणिवधविरताः श्रमणा वर्तन्ते अहं तु नैवंविधो यतः अतः स्थूलप्राणातिपाताद्विरमणं मे सदा भवत्विति गाथार्थः ॥

निक्किंचणा य समणा, अकिंचणा मज्झ किंचणा होउ ।
सीलसुगंधा समणा, अहयं सीलेण दुग्गधो ॥४५॥

गमनिका । निर्गतं किंचनं हिरण्यादि येभ्यस्ते निष्किंचनाश्च श्रमणास्तथाऽविद्यमानं किंचनमल्पमपि येषां ते अकिञ्चनाः जिनकल्पिकादयः अहं तु नैवंविधो यतो मार्गाविस्मृत्यर्थं मम किंचन भवतु पवित्रिकादि । तथा शीलेन शोभना गन्धो येषां ते तथाविधाः । अहं तु शीलेन दुर्गन्धः अतो गन्धचन्दनग्रहणं मे युक्तमिति गाथार्थः ।

ववगयमोहा समणा, मोहच्छन्नस्स छत्तयं होउ ।
अणुवाणहा य समणा, मज्झं च उवाणहा हुंतु ॥ ४६ ॥

गमनिका । व्यपगतो मोहो येषां ते व्यपगतमोहाः श्रमणाः अहं तु नेत्थं यतः अतो मोहाच्छादितस्य छत्रकं भवतु अनुपानत्काश्च श्रमणाः मम चोपानहौ भवतामिति गाथाक्षरार्थः ॥

सुक्कंबरा य समणा, निरवरा मज्झ धाउरत्ताइं ।
हुंतु अ मे वत्थाइं, अरिहोमि कसायकलुसमई ॥ ४७ ॥

गमनिका । शुक्लाम्बराः श्रमणास्तथा निर्गतमम्बरं येभ्यस्ते निरम्बरा जिनकल्पिकादयः ( मज्झत्ति ) मम य एते श्रमणा इत्यनेन तत्कालोत्पन्नतापसश्रमणव्युदासः धातुरक्तानि भवन्तु मम वस्त्राणि किमित्यहं योग्योऽस्मि तेषामेव कषायैः कलुषा मतिर्यस्यासावहं कषायकलुषमतिरिति गाथार्थः ॥

वज्जंति वज्जभीरुओ, बहुजीवसमाउलं जलारंभं ।
होउ मम परिमिएणं, जलेण ण्हाणं च पियणं च ॥४८॥

गमनिका वर्जयन्त्यवद्यभीरवो बहुजीवावद्यभीरवो बहुजीवसमाकुलं जलारम्भं तत्रैव वनस्पतेरवस्थानात् । अवद्यं पापं अहं तु नेत्थं यतः अतो भवतु मे परिमितेन जलेन स्नानं च पानं चेति गाथार्थः ।

एवं सो रुइअमई, नियगमइविगप्पिअं इमं लिंगं ।
तद्धियहेउसुजुत्तं, पारिव्वज्जं पवत्तेइ ॥ ४९ ॥

स्थूलमृषावादादिनिवृत्तः एवमसौ रुचिता मतिर्यस्य असौ रुचितमतिः अतो निजमत्या विकल्पितं निजमतिविकल्पितमिदं

स्निग्धं विशिष्टम् । तस्य हितास्ताद्धिता तद्धिताश्च हेतवश्चेति समास नं सुष्ठु युक्त स्निग्धमित्यर्थः । परिव्राजामिदं पारिव्राजं प्रवर्तयति शास्त्रकारवचनात् वर्तमाननिर्देशोऽप्यविरुद्ध एव पाठान्तरं वा ( पारिव्वज्जं ततो कारित्ति ) पारिव्राज तत कृतवानिति गाथार्थः ॥ भगवता च सह विजहार । तं च साधुमध्ये विजातीयं दृष्ट्वा कौतुकाल्लोक पृष्टवान् । तथा चाह ।

अह तं पागमरूवं, दट्ठुं पुच्छेइ बहुजणा धम्मं ।
कहेइ जईणं तो सो, वियालणे तस्स परिकहणा ॥५०॥

गमनिका । अथ त प्रकटरूप विजातीयत्वात् दृष्ट्वा पृच्छति बहुजनो धर्म्मं कथयति यतीनां सबन्धिभूत क्षान्त्यादिलक्षण ततोऽसाविति लोका भणन्ति यद्यय श्रेष्ठो भवता किं नाङ्गीकृत इति विचारेण तस्य परि समन्तात्कथना परिकथना श्रमणास्त्रिदण्डविरता इत्यादिलक्षणा पृच्छतीति त्रिकालगोचरस्तत्र प्रदर्शनार्थत्वादेवं निर्देश । पाठान्तरम् । "अह तं पागरूरूवं, दट्ठु पुच्छिसु बहुजणो धम्म । कहती सुजतीण सो, वियालणे तस्स परिकहणा " प्रवर्तत इति गाथार्थः । आ० म० प्र० । आव० १ अ० ।

( २३ ) ब्राह्मणानामुत्पत्तिप्रकारमाह ।

धम्मकहा अक्खित्ते, उवट्ठिए देइ सामिणो सीसे ।
गामनगराइ विह–रइ सो सामिणा सद्ध ॥५१॥

धर्म्मकथाक्षिप्तान् उपस्थितान् ददाति भगवतः शिष्यान् ग्रामनगरादीन् विहरति स स्वामिना सार्द्धम् । भावार्थः सुगम इत्थं निर्देशप्रयोजनं पूर्ववद्ग्रन्थकारवचनत्वाद्वा अदोष इति गाथार्थः ॥ अन्यदा भगवान्विहरमाणोऽष्टापदमनुप्राप्तवांस्तत्र च समवसृतः भरतोऽपि भ्रातृप्रव्रज्याकर्णनात्सजातमनस्तापोऽधृतिं चक्रे । कदाचिद्भोगान् दीयमानान् पुनरपि गृह्णन्तीत्यालोच्य भगवत्समीप चागम्य निमन्त्रयंश्च तान् भोगैर्निराकृतश्च चिन्तयामास । एतेषामेवेदानीं परित्यक्तसङ्गानामाहारदानेनापि तावद्धर्मानुष्ठानं करोमीति पञ्चभिः शकटैर्विचित्रमाहारमानाय्योपनिमन्त्र्य आधाकर्म्माहृतं च न कल्पते यतीनामिति प्रतिषिद्धेऽकृतकारितेनान्येन निमन्त्रितवान् राजपिण्डोऽप्यकल्पनीय इति प्रतिषिद्ध सर्वप्रकारैरहं भगवता परित्यक्त इति सुतरामुन्माथितो बभूव । तमुन्माथित विज्ञाय देवराट् तच्छोकोपशान्तये भगवन्तमवग्रहं पप्रच्छ । कतिविधोऽवग्रह इति भगवानाह । पञ्चविधोऽवग्रहस्तद्यथा । देवेन्द्रावग्रहो राजावग्रहो गृहपत्यवग्रहः सागारिकावग्रहः साधर्म्मिकावग्रहश्च । राजावग्रहो भरताधिपो गृह्यते । गृहपतिर्माण्डलिको राजा । सागारिकः शय्यातर साधर्म्मिक संयत इत्येतेषां चोत्तरोत्तरेण पूर्व पूर्वो बाधितो द्रष्टव्य इति । यथा राजावग्रहेण देवेन्द्रावग्रहो बाधित इत्यादिप्ररूपिते देवराडाह भगवन् ! य एते श्रमणा मदीयावग्रहे विहरन्ति तेषां मयाऽवग्रहोऽनुज्ञात इत्येवमभिधायाभिवन्द्य च भगवन्त तस्थौ । भरतोऽचिन्तयदहमपि स्वकीयमवग्रहमनुजानामीत्येतावताऽपि न कृतार्थता भवतु भगवत्समीपेऽनुज्ञातावग्रहः शक्रं पृष्टवान् भक्तपानमिदमानीतमनेन किं कार्यमिति देवराडाह । गुणोत्तरान पूजयस्व सोऽचिन्तयत् के मम साधुव्यतिरेकेण जात्यादिभिरुत्तराः पर्यालोचयता ज्ञात श्रावका विरता विरतत्वाद्गुणोत्तरास्तेभ्यो दत्तमिति । पुनर्भरतो देवेन्द्ररूपं भास्वरमाकृतिमत् दृष्ट्वा पृष्टवान् किं यूयमेवरूपेन रूपेण देवलोके तिष्ठत उत नेति देवराडाह नेति । तस्मानुरूपमपि न पार्यते भास्वरत्वात् । पुनरप्याह भरतस्तस्याकृतिमात्रेणास्माकं कौतुक तन्निदर्श्यताम । देवराज आह । त्वमुत्तमपुरुष इति कृत्वैकमङ्गावयव दर्शयामीत्यभिधाय योग्यालङ्कारविभूषितामङ्गुलीमत्यन्तभास्वरामदर्शयत् । दृष्ट्वा च तां भरतोऽतीव मुमुदे शक्राङ्गुलीं च स्थापयित्वा महिमामष्टाह्निकां चक्रे । ततः प्रभृति शक्रोत्सवः प्रवृत्त इति । भरतश्च श्रावकानाहूयोक्तवान् । भवद्भिः प्रतिदिनं मदीयं भोक्तव्य कृष्यादि च न कार्यं स्वाध्यायपरैरासितव्यं भुक्ते च मदीयगृहद्वारासन्नव्यवस्थितैर्वक्तव्यम । जितो भवान् वर्द्धते भयं तस्मान्माहनेति । ते तथैव कृतवन्तः । भरतश्च रतिसागरावगाढत्वात्प्रमत्तत्वात्तच्छब्दाकर्णनोत्तरकालमेव केनाह जित इति । आम् ज्ञात कषायैस्तेभ्य एव वर्द्धते भयमित्यालोचनापूर्वकं संवेगं यातवानिति । अत्रान्तरे लोकबाहुल्यात् सूपकारा पाकं कर्तुमशक्नुवन्तो भरताय निवेदितवन्तः नेह ज्ञायते कः श्रावकः को वा नेतीति लोकस्य प्रचुरत्वात् । आह भरतः पृच्छापूर्व्वकं देयमिति । ततस्तान् पृष्टवन्तस्ते को भवान् श्रावकाणां कति व्रतानि स आह श्रावकाणां न सन्ति व्रतानि किं त्वस्माक पञ्चाणुव्रतानि । कति शिक्षाव्रतानि ते उक्तवन्तः सप्त शिक्षाव्रतानि । य एवंभूतास्ते राज्ञो निवेदिताः स च काकणीरत्नेन तान् लाञ्छितवान् । पुनः षण्मासेन ये योग्या भवन्ति तानपि लाञ्छितवान् षण्मासकालादनुयोगं कृतवानेवं ब्राह्मणाः संजाता इति । ते च स्वसुतान् साधुभ्यो दत्तवन्तस्ते च प्रव्रज्यां जगृहुः । परीषहभीरवस्तु श्रावका एवासन्निति । इय च भरतराज्यस्थिति । आदित्ययशसस्तु काकणीरत्नं नासीत् । सुवर्णमयानि यज्ञोपवीतानि कृतवान्महायशः प्रभृतयस्तु केचन रूप्यमयानि केचन विचित्रपट्टसूत्रमयानीत्येव यज्ञोपवीतप्रसिद्धिः

अमुमेवार्थं समुसरणेत्यादिगाथया प्रतिपादयति ।

समुसरणभत्तउग्गह–मंगुलिज्झयसक्कसावया अहिया ।
जेया वद्धइ कागिणि–लंछणअणुसज्जणा अट्ठ ॥ ५२ ॥

गमनिका । समवसरणं भगवतोऽष्टापदे खल्वासीत् । भक्तं भरतेनानीतं तद्ग्रहणोन्माथिते सति भरते देवेशो भगवन्तमवग्रहं पृष्टवान् भगवांश्च तस्मै प्रतिपादितवान् ( अंगुलियत्ति ) भरतनृपतिना देवलोकनिवासिरूपपृच्छायां कृतायामिन्द्रेणाङ्गुलिर्दर्शिता । तत एवारभ्य ध्वजोत्सव प्रवृत्त ( सब्बुत्ति ) भरतनृपतिना किमनेनाहारेण कार्यमिति पृष्टः शक्रोऽभिहितवान् । त्वदधिकेभ्यो दीयतामिति पर्यालोचयता ज्ञात श्रावका अधिका इति ( जेया वद्धइत्ति ) प्राकृतशैल्या जितो भवान् वर्द्धते भय भुक्त्वोत्तरकाल च ते उक्तवन्तः (कागणिलंछणत्ति) प्रचुरत्वात् काकणीरत्नेन लाञ्छन चिह्न तेषां कृतमासीत (अणुसज्जण अट्ठत्ति) अष्टौ पुरुषान् यावदय धर्म्मं प्रवृत्त अष्टौ वा तीर्थकरान् यावदिति गाथार्थः । अत ऊर्द्ध मिथ्यात्वमुपगता इति ।

राया आइच्चजसे, महाजसे अइबले अ बलभद्दे ।
बलवीरियकत्तविरिए, जलविरिए दंडविरिए अ ॥५३॥

अस्या भावार्थ सुगम एवेति गाथार्थः ।

एएहि अद्धभरहं, सयलं भुत्तं सिरेण धरिओ अ ।
जिणसत्तिओ अमउडो, सेसेहिं चाइओ वोढुं ५४ ॥

गमनिका । एभिरर्द्धभरत सकलं भुक्त शिरसा धृतश्च । कोऽसावित्याह । प्रवरो जिनेन्द्रमुकुटो देवेन्द्रोपनीतः शेषैर्नरपतिभिर्न शकितो वोढु महाप्रमाणत्वादिति गाथार्थः ।

असमावगपडिसेहो, छट्ठे अ मासि अणुओगो ।
कालेण य मिच्छत्तं, जिणंतरे साहुवुच्छेओ ॥ ५५ ॥
गमनिका अश्रावकाणां प्रतिषेधः कृतः षष्ठमपि षष्ठे मासेऽनुयोगो बभूव । अनुयोगः परीक्षा कालेन गच्छता मिथ्यात्वमुपगता । कदा नवमजिनान्तरे किमिति यतस्तत्र साधुव्यवच्छेद आसीदिति गाथार्थः ।

साम्प्रतमुक्तार्थप्रतिपादनापरसंग्रहगाथामाह ।

दाणं च माहणाणं, वेया कासी अ पुच्छ निव्वाणं ।
कुंडायूभजिणघरे, भरहो कविलस्स दिक्खा य ॥ ५६ ॥
दानं च माहनानां लोको दातुं प्रवृत्तो भरतपूजितत्वात् ( वेया कासी य त्ति ) आयान् वेदान् कृतवांश्च भरत एव तत्स्वाध्यायनिमित्तमिति । तीर्थकरस्तुतिरूपान् श्रावकधर्मप्रतिपादकांश्च । आचार्यास्तु पश्चात्सुलसा याज्ञवल्क्यादिभिः कृता इति ( पुच्छत्ति ) भरतो भगवन्तमष्टापदसमवसृतमेव पृष्टवान् यादृग्भूता यूयमेवंविधा तीर्थकृतः कियन्तः खल्विह भविष्यन्तीत्यादि ( निव्वाण त्ति ) भगवानष्टापदे निर्वाणं प्राप्तो देवैरग्निकुण्डानि कृतानि स्तूपाः कृताः जिनगृहं भरतश्चकार कपिलो मरीचिसकाशे निष्क्रान्तो भरतस्य दीक्षा च सवृत्तेति समुदायार्थः । अवयवार्थे उच्यते । आद्यावयवद्वयं व्याख्यातमेव । पृच्छावयवार्थं " पुणरवि य" गाथेत्यादिनाऽऽह ॥

पुणरवि अ समोसरणे, पुच्छा अ जिणं तु चक्किणो भरहे ।
अप्पुट्ठो अ दसारे, तित्थयरो को इहं भरहे ॥ ५७ ॥
गमनिका पुनरपि च समवसरणे पृष्टवांश्च जिनं तु चक्रवर्ती भरतश्चक्रवर्तिनं इत्युपलक्षणं तीर्थकृतश्चेति भरतविशेषणं वा चक्री भरतस्तीर्थकरादीन् पृष्टवान् । पाठान्तरं वा " पुच्छी य जिणे य चक्किणो भरहे " पृष्टवान् जिनांश्चक्रवर्तिनश्च भरतः चशब्दस्य व्यवहितः सम्बन्धः भगवानपि तान् कथितवान् तथा अपृष्टश्च दशारान् तथा तीर्थकरः क इह भरतेऽस्यां परिषदीति पृष्टवान् भगवानपि मरीचिं कथितवानिति गाथाक्षरार्थः । तथा चाह । निर्युक्तिकारः ॥

जिणचक्किदसाराणं, वन्नपमाणाइं नामगुत्ताइं ।
आउपुरमाइपियरो,परियायगई च साही य ॥ ५८ ॥
गमनिका जिनचक्रवर्तिवासुदेवानामित्यर्थः । वर्णप्रमाणानि तथा नामगोत्राणि तथा आयुः पुराणि मातापितरौ यथासम्भवं पर्यायं गतिं च । चशब्दाज्जिनानामन्तराणि च पृष्टवानिति द्वारगाथासमासार्थः । अवयवार्थं तु वक्ष्यामः ॥

जारिसया लोगगुरू, भरहे वासम्मि केवली तुब्भे ।
एरिसया कइ अन्ने, ताया होहिंति तित्थयरा ॥ ५९ ॥
यादृशा लोकगुरवो भारते वर्षे केवलिनो यूयमीदृशाः कियन्तोऽन्येऽपि तात ! भविष्यन्ति तीर्थकरा इति गाथार्थः ॥

अह भणइ जिणवरिंदो, भरहे वासम्मि जारिसो उ अहं ।
एरिसया तेवीसं, अन्ने होहिंति तित्थयरा ॥ ६० ॥
होही अजिओ संभव-मभिनंदणसुमइसुप्पभसुपासो ।
ससिपुप्फदंतसीयल-सिज्जंसो वासुपुज्जो अ ॥ ६१ ॥
विमलमणंत य धम्मो, संती कुंथू अरो अ मल्ली अ ।
मुणिसुव्वयनमिनेमी, पासो तह वद्धमाणो अ ॥६२॥

अह भणइ नरवरिंदो, भरहे वासम्मि जारिसो उ अहं ।
एरिसया कइ अन्ने, ताया होहिंति रायाणो ॥ ६३ ॥
गमनिका अथ भणति नरवरेन्द्रो भरतः भारते वर्षे यादृशस्त्वहं तादृशाः कत्यन्ये तात ! भविष्यन्ति राजान इति गाथार्थः ॥

अह भणइ जिणवरिंदो, जारिसओ तं नरिंदसद्दूलो ।
एरिसया इक्कारस, अन्ने होहिंति रायाणो ॥ ६४ ॥
होही सगरो मघवं, सणंकुमारो अ रायसद्दूलो ।
संती कुंथू अ अरो, हवइ सुभूमो अ कोरव्वो ॥ ६५ ॥
नवमो अ महापउमो, हरिसेणो चेव रायसद्दूलो ।
जयनामो अ नरवई, बारसमो बंभदत्तो अ ॥ ६६ ॥
होहिंति वासुदेवा, नव अन्ने नीलपीअकोसिज्जा ।
हलमुसलचक्कजोही, सतालगरुडज्झया दो दो ॥ ६७ ॥
अथ भणति जिनवरेन्द्रो यादृशस्त्वं नरेन्द्रशार्दूलः सिंहपर्याय ईदृशाः एकादश अन्ये भविष्यन्ति राजानस्ते चैते । ( होहिंति ) गाथाद्वयं निगदसिद्धमेव यदुक्तमपृष्टश्च दशारान् कथितवान् । तदभिधित्सयाह भाष्यकारः ( होहिंति ) भविष्यन्ति वासुदेवा नव बलदेवाश्चानुक्ता अप्यत्र तत्सहचरत्वात् द्रष्टव्याः यतो वक्ष्यति " स तालगरुलज्झया दो दो " ते च सर्वे बलदेवा वासुदेवा यथासंख्यं नीलानि पीतानि च कौशेयानि वस्त्राणि येषां ते तथाविधाः । यथासंख्यमेवाह हलमुशलचक्रयोधिनः । हलमुशलयोधिनो बलदेवाः चक्रयोधिनो वासुदेवा इति । सतालगरुडध्वजाभ्यां वर्तन्त इति सतालगरुडध्वजाः एते च भगवन्तो युगपद् द्वौ द्वौ भविष्यतः । बलदेववासुदेवाविति गाथार्थः । आ०म०प्र०। आव० १ अ० ।

"तित्थगरो को इहं भरहेत्ति" तद्व्याचिख्यासयाऽऽह ।

अह भणइ नरवरिंदो, ताय इमीसित्तियाइ परिसाए ।
अन्नो वि को वि होही,भरहे वासम्मि तित्थयरो ॥४१॥
अत्रान्तरे अथ भणति नरवरेन्द्रः तात ! अस्याः एतावत्याः पर्षदः अन्योऽपि कश्चिद्भविष्यति तीर्थकरः अस्मिन् भारते वर्षे भावार्थस्तु सुगम एवेति गाथार्थः ॥

तत्थ मरीई नाम, आइपरिव्वायगो उसभनत्ता ।
सज्झायज्झाणजुत्तो, एगंते झायइ महप्पा ॥ ४२॥
गमनिका तत्र भगवतः प्रत्यासन्नभूभागे मरीचिनामा आद्यः परिव्राजकः आदिपरिव्राजकः प्रवर्तकत्वात् ऋषभनप्ता पौत्रक इत्यर्थः । स्वाध्याय एव ध्यानं तेन युक्तः एकान्ते ध्यायति महात्मेति गाथार्थः । भरतपृष्टो भगवान् तं मरीचिं दर्शयति ।

तं दाएइ जिणिंदो, एव नरिंदेण पुच्छिओ संतो ।
धम्मवरचक्कवट्टी, अपच्छिमो वीरनामुत्ति ॥४३॥
जिनेन्द्रः एवं नरेन्द्रेण पृष्टः सन् धर्मवरचक्रवर्ती अपश्चिमो वीरनामा भविष्यतीति गाथार्थः ॥

आइगरदसाराणं, तिविट्ठु नामेण पोअणाहिवई ।
पियमित्तचक्कवट्टी, मूयाइ विदेहवासम्मि ॥ ४४॥
गमनिका आदिकर ( दसाराणति ) प्रथमनामा पोतना नाम नगरी । तस्या अधिपतिर्भविष्यतीति क्रिया । तथा प्रियमित्रनामा चक्रवर्ती मूकायां नगर्यां ( विदेहवासम्मि ) महाविदेहे भविष्यतीति गाथार्थः ।

तं वयणं सोऊणं, राया अंचियतणूरुहसरीरो ।
अभिवंदिऊण पिअरं, मरीइ अभिवंदओ जाइ ॥४५॥

गमनिका । तद्वचनं तीर्थकरवदनविनिर्गतं श्रुत्वा राजा अञ्चितानि तनूरुहाणि शरीरे यस्य स तथाविधः अभिवन्द्य पितरं तीर्थकरं मरीचिम् " अभिवंदओ ' इत्यभिवन्दको याति । पाठान्तरं वा । " मरीइ अभिवंदिउं जाइ त्ति " मरीचिं याति किमर्थमभिवन्दितुमभिवन्दनायेत्यर्थः यातीति वर्तमानकालनिर्देशस्त्रिकालगोचरत्वप्रदर्शनार्थ इति गाथार्थः ।

सो विणएण उवगओ, काऊण पयाहिणं च तिक्खुत्तो ।
वंदइ अभित्थुणंतो, इमाहि महुराहिं वग्गूहिं ॥४६॥
लाभा हु ते सुलद्धा, जंसि तुमं धम्मचक्कवट्टीणं ।
होहिसि दसचउदसमो, अपच्छिमो वीरनामुत्ति ॥
आइगरदसाराणं, तिविट्ठनाम ( ४५ )—॥४७॥

स भरतो विनयेन करणभूतेन मरीचिसकाशमुपगतः सन् कृत्वा प्रदक्षिणां च (तिक्खुत्तोत्ति ) त्रि कृत्वास्तिस्रो वारा इत्यर्थः वन्दते अभिष्टुवन् एताभिर्मधुराभिर्वाग्भिर्गिरिरिति गाथार्थः । ( लाभेत्ति ) गमनिका लाभा अभ्युदयप्राप्तिविशेषा हुकारो निपातः स चैवकारार्थः । तस्य व्यवहितः सबन्धः तत्र सुलब्धा एव यस्मात् त्वं धर्म्मचक्रवर्त्तिनां भविष्यति दशचतुर्दश चतुर्विंशतितम इत्यर्थः । अपश्चिमो वीरनामेति गाथार्थः । (आइगरइत्ति) व्याख्या पूर्ववत्तया एकान्तप्रदर्शनानुरञ्जितहृदयो भावितीर्थकरत्नस्या च तमभिवन्दनायोद्यते भरत एवाह ॥

न वि ते पारिव्वज्जं, वंदामि अहं इमं च ते जम्मं ।
जं होहिसि तित्थयरो, अपच्छिमो तेण वंदामि ॥४९॥

गमनिका नापि च परिव्राजामिदं पारिव्राजं वन्दामि अहमिदं च ते जन्म किं तु यद्भविष्यति तीर्थकरः अपश्चिमस्तेन वन्दामीति गाथार्थः ।

एव एहं थोऊणं, काऊण पयाहिणं च तिक्खुत्तो ।
आपुच्छिऊण पियरं, विणीयनयरिं अह पविट्ठो ५० ॥

एवं स्तुत्वा एहमिति निपातः प्ररणार्थो वर्तते कृत्वा प्रदक्षिणां च त्रि कृत्वः आपृच्छ्य पितरं ऋषभजनेव विनीतनगरीमयोध्यामथानन्तरं प्रविष्टो भरत इति गाथार्थः । अत्रान्तरे ।

त वयणं सोऊणं, तिवई अप्फोडिऊण तिक्खुत्तो ।
अब्भहियजायहरिसो, तत्थ मरीई इमं भणइ ॥ ५१ ॥

गमनिका । तस्य भरतस्य वचनं तद्वचनं श्रुत्वा तत्र मरीचिरिदं भणतीति योगः । कथमित्यत आह । त्रिपदीं दत्वा रङ्गमध्यगतमल्लवत् । तथा आस्फोटय त्रि कृत्वः तिस्रो वारा इत्यर्थः । किं विशिष्टः संस्तत आह । अभ्यधिको जातो हर्षो यस्येति समासः तत्र स्थाने मरीचिरिदं वक्ष्यमाणलक्षणं भणति । वर्तमाननिर्देशप्रयोजनं प्राग्वदिति गाथार्थः ।

जइ वासुदेवपढमो, मूयाइविदेहचक्कवट्टित्तं ।
चरमो तित्थयराणं, होउ अलं इति य मज्झ ॥ ५२ ॥

गमनिका यदि वासुदेव प्रथमोऽहं मूकायां विदेहे चक्रवर्तित्वं प्राप्स्यामि । तथा चरम पश्चिमस्तीर्थकराणां भविष्यामि एव तर्हि भवतु एतावन्मम एतावतैव कृतार्थ इत्यर्थः । अलं पर्याप्तमन्येनेति ॥

अह यं च दसाराणं, पिया य मे चक्कवट्टिवंसस्स ।
अज्जो तित्थयराणं, अहो कुलं उत्तमं मज्झ ॥ ५३ ॥

गमनिका । अहमेव चशब्दस्यैवकारार्थत्वात् किं दशाराणां प्रथमो भविष्यामीति वाक्यशेषः । पिता च मे मम चक्रवर्तिवंशस्य प्रथम इति क्रियाध्याहारः । तथा आर्यकः पितामहः स तीर्थकराणां प्रथमः यत एवमतः अहो विस्मये कुलमुत्तमं ममेति गाथार्थः । आव० १ अ० । आ० म० प्र० ।

(२४) अथाऽस्यास्य शक्तिवचनगुणप्रतिबुद्धस्य प्रभुपरिकरभूतस्य सङ्घस्य सङ्ख्यामाह ।

उसभस्स णं अरहओ कोसलिअस्स चउरासीई गणहरा होत्था । उसभस्स णं अरहओ कोसलिअस्स उसभसेणपामोक्खाओ चुलसीइं समणसाहस्सीओ उक्कोसिआ समणसंपया होत्था । उसहस्स णं बंभीसुंदरीपामोक्खाओ तिण्णि अज्जिआसयसाहस्सीओ उक्कोसिअज्जिआसंपया होत्था । उसभस्स णं सेजंसपामोक्खाओ तिण्णि समणोवासगसयसाहस्सीओ पचसयसाहस्सीओ उक्कोसिआ समणोवासगसंपया होत्था । उसभस्स णं सुभद्दापामोक्खाओ पंचसमणोवासिआसयसाहस्सीओ चउप्पण्णं च सहस्सा उक्कोसिआ समणोवासिआसंपया होत्था । उसभस्स णं अरहउ कोसलिअस्स अजिणाणं जिणसंकासाणं सव्वक्खरसन्निवाईणं जिणो विव अवितहं वागरमाणाणं चत्तारि चउद्दसपुव्वीसहस्सा अद्धट्ठमायसया उक्कोसिआ चउद्दसपुव्वी संपया होत्था । उसभस्स णं णवओहिणाणिसहस्सा उक्कोसिआ संपया होत्था । उसभस्स णं वीसं जिणसहस्सा वीसं वेउव्विअसहस्सा सया उक्कोसिआ चउद्दसपुव्वी संपया होत्था । उसभस्स णं णवहिणाणिसहस्सा उक्कोसिआ संपया होत्था ! उसभस्स णं वीस जिणसहस्सा वीसं वे छच सया उक्कोसिया आबारस्स विउलमइसहस्सा छच्च सया पण्णासा बारसवाइसहस्सा छच सया पण्णासा उसभस्स णं गइकल्लाणाणं ठिइकल्लाणाणं आगमेसिभद्दाणं वा वीस अणुत्तरोववाइआणं सहस्सा णव य सया उक्कोसिया उसभस्स णं वीसं समणसहस्सा सिध्दा चत्तालीसं अज्जिआसहस्सा सिद्धा सट्ठि अंतेवासीसहस्सा सिध्दा ॥

सुगमं नवरं "जस्स जावइआ गणहरा तस्स तावइआ गणा" इति वचनाद्गणाः सूत्रे साक्षादनिर्दिष्टा अपि तावन्त एव बोध्या । कश्चिज्जीर्णप्रस्तुतसूत्रादर्शे "चउरासीति गणा गणहरा होत्था ' इत्यपि पाठो दृश्यते तत्र चतुरशीतिपदस्योभयत्र योजनेन व्याख्या सुबोधैवेति । गणश्चैकवाचनाचारयतिसमुदायस्त धरन्तीति गणधराः वाचनादिभिर्द्वादशाङ्गीवेदकत्वेन गणाधारभूता इति भावः ( होत्था इति ) अभवन् ( उसभस्सणमित्यादि ) ऋषभसेनप्रमुखानि चतुरशीति श्रमणसहस्राणि एष उत्कर्ष उत्कृष्टभागस्तत्र जवा औत्कर्षिका "प्रत्यये-ग्रीवां ' इत्यनेन मौविकल्पे रूपसिद्धिः । ऋषभस्य श्रमणसपदभवत् । अत्र वाक्यान्तरत्वेन श्रमणशब्दस्य न पौनरुक्त्यमेव सर्वत्र

योज्यम् "उसहस्स णमित्यादि" प्राय कण्ठ्यानि नवरं चतुर्दशपूर्विसूत्रे अजिनानां छद्मस्थानां ( सव्वक्खरसन्निवाईणति ) सर्वे ये अक्षराणामकारादीनां सन्निपाता द्व्यादिसंयोगा अनन्तत्वादनन्ता अपि ज्ञेयतया विद्यन्ते येषां ते तथा । जिनतुल्यत्वे हेतुमाह "जिणो विव अवितहमित्यादि" जिन इवावितथं यथार्थं व्यागृणतां व्याकुर्वाणानां केवलिश्रुतकेवलिनोः प्रज्ञापनायां तुल्यत्वात् । चत्वारि सहस्राणि अर्द्धाष्टमानि च शतानि एषा औत्कर्षिकी चतुर्दशपूर्विसम्पदभवत् ( विउव्विअत्ति ) वैक्रियलब्धिमन्तः शेषं स्पष्टम् । विपुलमतयो मनःपर्यवज्ञानविशेषवन्तः द्वादशविपुलमतिसहस्राणि अधिकाश्चैतेषामेव षट्शतानि पञ्चाशच्चेत्येवं सर्वत्र योज्यम् । वादिनो वादिलब्धिमन्तः परप्रवादकृतनिग्रहसमर्था ( उसभस्स णमित्यादि ) देवगतिरूपायां कल्याण येषां प्राय सातोदयत्वात्तेषां तथा स्थितौ देवायूरूपायां कल्याण येषां ते तथा अप्रविचारसुखस्वामिकत्वात् । आगामिष्यद्भद्रं येषामागामिभवे सेत्स्यमानत्वात् ते तथा तेषामनुत्तरोपपातिकानां पञ्चानुत्तरलवसप्तमदेवविशेषाणां द्वाविंशतिसहस्राणि नवशतानि "उसभस्सणमित्यादि" सुगम नवरं श्रमणार्यिकासंख्याद्वयमीलने अन्तेवासिसंख्या संपद्यते ।

( २५ ) अथ भगवत श्रमणवर्णकसूत्रमाह ।

उसभस्स णं बहवे अंतेवासी अणगारा भगवंतो अप्पेगइया मासपरियाया जहा उववाइए सव्वो अणगारवण्णओ जाव उड्ढंजाणु अहोसिरा झाणकोट्ठोवगया संजमेणं तवसा अप्पाणं भावेमाणा विहरंति ॥

अर्हत ऋषभस्य बहवो अन्तेवासिन शिष्यास्ते च गृहिणोऽपि स्युरित्यनगाराः भगवन्त पूज्याः अपि समुच्चये एकका एके अन्ये केचिदपीत्यर्थ । मास यावत् पर्यायश्चारित्रपालन येषां ते तथा । यथोपपातिके सर्वोऽनगारवर्णकस्तथाऽत्रापि वाच्य । कियद्यावदित्याह ऊर्ध्वं जानुनी येषां ते ऊर्ध्वजानव शुद्धपृथिव्यासनवर्जनादौपग्राहिकनिषद्याया अभावाच्चोत्कुटुकासना इत्यर्थ । अध शिरसोऽधोमुखा नोर्ध्वतिर्यग्वा विक्षिप्तदृष्टय ध्यानरूपो य कोष्ठ कुसूलस्तमुपागतास्तत्र प्रविष्टाः यथा हि कोष्ठके धान्यं प्रक्षिप्त न विप्रसृत भवति एव तेऽनगारा विषयेष्वपि प्रसृतेन्द्रिया न स्युरिति । संयमेन संवररूपेण तपसाऽनशनादिना समुच्चयार्थो गम्य । संयमतपोग्रहण चानयो प्रधानमोक्षाङ्गत्वख्यापनार्थं प्रधानत्व च संयमनवकर्मानुपादानहेतुत्वेन तपसश्च पुराणकर्मनिर्जरणहेतुत्वेन भवति चाभिनवकर्मानुपादानात् पुराणकर्मक्षपणाच्च सकलकर्मक्षयलक्षणो मोक्ष इति आत्मान भावयन्तो विहरन्ति तिष्ठन्तीत्यर्थ । अत्र यावत्पदसंग्राह्य "अप्पेगइआ दो मासपरिआया" इत्यादिक औपपातिकग्रन्थो विस्तरभयान्न लिखित इत्यवसेयम् ।

( २६ ) अथ ऋषभस्वामिन केवलोत्पत्त्यनन्तर भव्याना कियता कालेन सिद्धिगमन प्रवृत्त कियन्त काल यावदनुवृत्त चेत्याह ॥

अरहओ णं उसभस्स दुविहा अंतकरभूमी होत्था तं जहा जुगंतकरभूमी जाव असंखेज्जाइं पुरिसजुगाइं परिआयंतकरभूमी अंतोमुहुत्तपरिआए अंतमकासी ॥

ऋषभस्य द्विविधा अन्तं भवस्य कुर्वन्तीति अन्तकरा मुक्तिगामिनस्तेषा भूमि काल कालस्य चाधारत्वेन कारणत्वाद्भूमित्वेन व्यपदेश तद्यथा युगानि पञ्चवर्षमानानि कालविशेषा लोकप्रसिद्धानि वा कृतयुगादीनि तानि च क्रमवर्तीनि तत्साधर्म्याद्ये क्रमवर्तिनो गुरुशिष्यादिरूपाः पुरुषास्तेऽपि साध्यावस्मात्लक्षणयाऽभेदप्रतिपत्त्या युगानि पट्टपद्धतिपुरुषा इत्यर्थस्तैः प्रमितान्तकरभूमिर्युगान्तकरभूमिरिति पर्यायस्तीर्थकृत केवलित्वकालस्तदपेक्षयान्तकरभूमि कोऽर्थः ऋषभस्य इयति केवलपर्यायकालेऽतिक्रान्ते मुक्तिगमनं प्रवृत्तमिति तत्र युगान्तकरभूमिर्यावदसंख्यातानि पुरुषा पट्टाधिरूढास्ते युगानि पूर्वोक्तयुक्त्या पुरुषयुगानि समर्थपदत्वात् समासः । नैरन्तर्ये द्वितीया । ऋषभात्प्रभृति श्रीअजितदेवतीर्थं यावत् । श्रीऋषभपट्टपरम्परारूढा असंख्याताः सिद्धाः न तावन्तं काल मुक्तिगमनविरह इत्यर्थ । यस्तु आदित्ययशःप्रभृतीनां ऋषभदेववंशजानां नृपाणां चतुर्दशलक्षप्रमितानां क्रमेण प्रथमतः सिद्धिगमनं ततः एकस्य सर्वार्थसिद्धप्रस्तटगमनमित्याद्यनेकरीत्या अजितजिनपितरं मर्यादीकृत्य नन्दीसूत्रवृत्तिचूर्णिसिद्धदण्डिकादिषु सर्वार्थसिद्धप्रस्तटगमनव्यवहितः सिद्धिगम उक्त स कोशलापट्टपतीन् प्रतिपत्त्यावसातव्योऽयं पुण्डरीकगणधरादीन् प्रतीत्येति विशेषस्तथा पर्यायान्तकरभूमिर्यथा अन्तर्मुहूर्तं यावत् केवलज्ञानस्य पर्यायो यस्य स तथा एवंविधे ऋषभे सति अन्त भवान्तमकार्षीत्कश्चिद्वा कश्चिदपीति । यतो भगवदम्बा मरुदेवी प्रथमसिद्धा सा तु भगवत्केवलोत्पत्त्यनन्तरमन्तर्मुहूर्त्तेनैव सिद्धेति ॥

( २७ ) अथ जन्मकल्याणकादिनक्षत्राण्याह ॥

उसभेणं अरहा कोसलिए पंच उत्तरासाढे अभीइछट्ठे होत्था तं जहा उत्तरासाढाहिं चुए चइत्ता गब्भं वक्कंते उत्तरासाढाहिं जाए उत्तरासाढाहिं रायाभिसेअं पत्ते उत्तरासाढाहिं मुंडे भवित्ता अगाराओ अणगारिअं पव्वइए । उत्तरासाढाहिं अणंते जाव समुप्पण्णे अभीइणा परिणिव्वुए ॥

ऋषभोऽर्हन् पञ्चसु च्यवनजन्मराज्याभिषेकदीक्षाज्ञानलक्षणेषु वस्तुषु उत्तराषाढानक्षत्र चन्द्रेण भुज्यमान यस्य स तथा । अभिजिन्नक्षत्रं षष्ठे निर्वाणलक्षणे वस्तुनि यस्य स यद्वा अभिजिति नक्षत्रे षष्ठ निर्वाणलक्षणं वस्तु यस्य स तथा उक्तमेवार्थं भावयति । तद्यथा उत्तराषाढाभिर्युतेन चन्द्रेणेति शेष । सूत्रे बहुवचन प्राकृतशैल्या एवमग्रेऽपि च्युत सर्वार्थसिद्धनाम्नो महाविमानान्निर्गत इत्यर्थ । च्युत्वा गर्भं व्युत्क्रान्त मरुदेव्या कुक्षाववतीर्णवानित्यर्थ । १ । जातो गर्भवासान्निष्क्रान्त । २ । राज्याभिषेक प्राप्त । ३ । मुण्डो भूत्वा अगार मुक्त्वा अनगारिता साधुता प्रव्रजित प्राप्त इत्यर्थ । पञ्चमी चात्र ल्यब्लोपजन्या । ४ । अनन्तर यावत् केवलज्ञानं समुत्पन्नम् । ५ । यावत्पदसंग्रह पूर्ववत् अभिजिता युते चन्द्रे परिनिर्वृत सिद्धिगत । ननु अस्मादेव विभागसूत्रबलादादिदेवस्य षट्कल्याणका समापद्यमाना दुर्निवारा इति चेन्न तदेव हि कल्याणक यत्रासनप्रकम्पप्रयुक्तावधय सकलसुरासुरेन्द्रा जातमिति विधित्सवो युगपत्ससंभ्रमा उपतिष्ठन्ते न चायं षष्ठकल्याणकत्वेन भवता निरूप्यमाणो राज्याभिषेकस्तादृशस्तेन वीरस्य गर्भापहार इव नायं कल्याणक अनन्तरोक्तलक्षणायोगात । न च तर्हि निरर्थकमस्य कल्याणकाधिकारे पठनमिति वाच्य प्रथमतीर्थेशराज्याभिषेकस्य जातमिति शक्रेण क्रियमाणस्य देवकार्यत्वलक्षणसाधर्म्येण समानमसमानतया च प्रसङ्गेन तत्पठनस्यापि सार्थकत्वात तेन समानत्वक्षजानत्वे सत्यपि कल्याणकत्वाभावेनानियतवक्तव्यतया क-

विद्राज्याभिषेकस्याकथनेऽपि न दोष । अत एव श्रुतस्कन्धाग्रमाध्ययने पर्युषणाकल्पेन श्रीमद्भद्रबाहुस्वामिपादा "तेणं समएणं उसभे अरहा कोसलिए चउ उत्तरासाढे अभिइ पंचमे होत्था" इति पञ्चकल्याणकनक्षत्रप्रतिपादकमेव सूत्र बचन्धिरे न तु राज्याभिषेकनक्षत्राभिधायकमपीति । न च प्रस्तुतव्याख्यानस्यानागमिकत्व भावनीयम् आचाराङ्गभावनाध्ययने श्रीवीरकल्याणसूत्रस्यैव व्याख्यातत्वात् ।

(२८) अथ भगवत. शरीरसपद शरीरप्रमाणं च वर्णयन्नाह ।

उसभेणं अरहा कोसलिए वज्जरिसहनारायसंघयणे मचउरंसंसंठाणसंठिए पंचधणुसयाइं उड्ढं उच्चत्तेणं होत्था ॥

उसभेणमित्यादि कण्ठ्यम् ।

अथ भगवत ऋषभस्य कौमारे राज्ये गृहित्वे च यावान् काल प्रागुक्तस्त संग्रहरूपतयाऽभिधातुमाह ।

उसभेणं अरहा वीसं पुव्वसयसहस्साइं कुमारवासमज्झे वसित्ता तेवट्ठिं पुव्वसयसहस्साइं रज्जवासमज्झे वसित्ता तेसिइं पुव्वसयसहस्साइं अगारवासमज्झे वसित्ता मुंडे भवित्ता आगाराओ अणगारिअं पव्वइए उसभेणं अरहा एगं वाससहस्सं छउमत्थपरिआयं पाउणित्ता एगं पुव्वसयसहस्सं वाससहस्सूणं केवलिपरिआयं पाउणित्ता एगं पुव्वसयसहस्सं बहुपडिपुण्णं सामण्णपरिआयं पाउणित्ता चउरासीइं पुव्वसहस्साइं सव्वाउअं पालइ पालइत्ता जे से हेमंताणं तच्चे मासे पंचमे पक्खे माहबहुले तस्स णं माहबहुलस्स तेरसीपक्खेणं दसहिं अणगारसहस्सेहिं सद्धिं संपरिवुडे अट्ठावयसेलसिहरंसि चोद्दसमेणं भत्तेणं अपाणएणं संपलिअं संणिसण्णे पुव्वण्हकालसमयंसि अभिइणा णक्खत्तेणं जोगमुवागएणं सुसमदूसमाए एगूणणउइए पक्खेहिं सेसेहिं कालगए वीइक्कंते जाव सव्वदुक्खप्पहीणे ॥

'उसभेणमित्यादि' व्यक्तमथ छाद्मस्थ्यादिपर्यायाभिधानपुरस्सर निर्वाणकल्याणकमाह । ( उसभेणं इत्यादि ) ऋषभोऽर्हन् एकं वर्षसहस्रं छद्मस्थपर्यायं प्राप्य प्रपाल्येत्यर्थ । एकं पूर्वलक्षं वर्षसहस्रोनं केवलिपर्याय प्राप्य एक पूर्वलक्ष बहुप्रतिपूर्णं देशेनापि न्यूनमिति यावत् श्रामण्यपर्यायं प्राप्य चतुरशीतिपूर्वलक्षाणि सर्वायु' पालयित्वा उपभुज्य हेमन्तानां शीतकालमासानां मध्ये यस्तृतीयो मास' पञ्चम पक्षो माघबहुलो माघमासकृष्णपक्ष तस्य माघबहुलस्य त्रयोदशीपक्षे त्रयोदशीदिने विभक्तिव्यत्यय प्राकृतत्वात् दशभिरनगारसहस्रै सार्द्ध संपरिवृत अष्टापदशैलशिखरे चतुर्दशेन भक्तेनोपवासषट्केनापानकेन पानीयाहाररहितेन संपर्यङ्कनिषण्ण सम्यक् पर्यङ्केन पद्मासनेन निषण्ण उपविष्ट न तु कै स्मादिभिरिति भाव । पूर्वाह्णकालसमये अभिजिता नक्षत्रेण योगमुपागतेनार्थाच्चन्द्रेण सुषमदुष्षमायामेकोननवत्या पक्षेषु शेषेषु अत्रापि विभक्तिव्यत्यय पूर्ववत् प्राकृतत्वात् । सप्तम्यर्थे तृतीया वा कालगतो मरणधर्मं प्राप्त व्यतिक्रान्त समागात् । यावच्छब्दात् "समुज्जाए छिन्नजाइजरामरणबन्धणे सिद्धे बुद्धे मुत्ते अन्तगडे परिनिव्वुडे इति" संग्रह । तत्र सम्यगपुनरावृत्त्या ऊर्ध्वं यात्सलक्षणं स्थान यान.प्राप्तो न पुन सुगतादिवदवतारी यतस्तद्वच "ज्ञानिनो धर्मतीर्थस्य, कर्त्तार परमं पदम । गत्वा गच्छन्ति भूयोऽपि, भवतीर्थनिकारत. ॥ १ ॥" इति छिन्न जात्यादीनां बन्धनं हेतुभूतं कर्म येन स तथा । सिद्धो निष्ठितार्थ. बुद्धो ज्ञाततत्व । मुक्तो भवोपग्राहिकर्मांशेभ्य अन्तकृत् सर्वदुःखानां परिनिर्वृत समन्ताच्छीतीभूत. कर्मकृतसकलसन्तापविरहात् सर्वाणि शारीरादीनि दुःखानि प्रहीणानि यस्य स तथा । जं०२वक्ष०। आ० म० प्र० । स० ॥

उसभेणं अरहा कोसलिए इमीसे उसप्पिणीए ततियाए सुसमदुस्समाए समए पच्छिमे भागे एगूणणउइए अद्धमासेहिं सेसेहिं कालगए जाव सव्वदुक्खप्पहीणोसम० ॥ २९ ॥

( २९ ) इदानीं निर्वाणद्वारावयवार्थाभिधित्सयाऽऽह ।

अह भगवं भवमहणो, पुव्वाण अणूणगं सयसहस्सं ।
आपुव्वि विहरिऊणं, पत्तो अट्ठावयं सेलं ॥ ५४ ॥
अट्ठावयम्मि सेले, चउदसभत्तेण सो महरिसीणं ।
दसहि सहस्सेहि समं, निव्वाणमणुत्तरं पत्तो ॥ ५५ ॥

गमनिका । अथ भगवान् भवमथन पूर्वाणामन्यूनं शतसहस्रमानुपूर्व्या विहृत्य प्राप्तोऽष्टापदं शैल भावार्थ. सुगम एवेति गाथार्थ. । अष्टापदगाहा गमनिका । अष्टापदशैले चतुर्दशभक्तेन स महर्षीणां दशभि. सहस्रै. सम निर्वाणमनुत्तरं प्राप्त अस्या अपि भावार्थ. सुगम एव । नवरं चतुर्दशभक्तं षड्रात्रोपवास. भगवन्त चाष्टापदप्राप्तमपवर्गजिगमिषुं श्रुत्वा भरतो दु खसंतप्तमानसः पद्भ्यामेवाष्टापद ययौ । देवा अपि भगवन्त मोक्षजिगमिषुं ज्ञात्वाऽष्टापदशैलं दिव्यविमानानारूढा. खल्वागतवन्तः। उक्तं च। भगवति मोक्षगमनायोद्यते "जाव य देवावासो, जाव य अट्ठावओ नगवरिंदो । देवेहिं देवीहि य, अविरहिय संचरंतेहि" तत्र भगवान् त्रिदशनरेन्द्रै स्तूयमानो मोक्षं गत इति गाथार्थ ॥

अथ भगवति निर्वृते यद्देवकृत्य तदाह ॥

जं समयं च णं उसभे अरहा कोसलिए कालगए वीइक्कंते समुज्जाए छिण्णजाइजरामरणबंधणे सिध्दे बुध्दे जाव सव्वदुक्खप्पहीणे तं समयं च णं सक्कस्स देविंदस्स देवरण्णो आसणे चलिए तएणं से सक्के देविंदे देवराया आसणं चलिअं पासइ पासित्ता ओहिं पउंजइ पउंजइत्ता भयवं तित्थयरं ओहिणा आभोएइ आभोएइत्ता एवं वयासी परिणिव्वुए खलु जंबुद्दीवे दीवे भरहे वासे उसहे अरहा कोसलिए एवं जीअमेअं तीअपच्चुप्पण्णमणागयाणं सक्काणं देविंदाणं देवराईणं तित्थयराणं परिणिव्वाणमहिमं करेत्तए तं गच्छामि णं अहं पि भगवतो तित्थयरस्स परिणिव्वाणमहिमं करेमि तिकट्टु वंदइ णमंसइ वंदइत्ता णमंसइत्ता चउरासीईए सामाणिअसाहस्सीहिं तायतीसए तायतीसएहिं चउहिं लोगपालेहिं जाव चउहिं चउरासीईहिं आयरक्खदेवसाहस्सीहिं अण्णेहिं अवहूहिं सोहम्मकप्पवासीहिं वेमाणिएहिं देवेहिं देवीहिं अ सद्धिं संपरिवुडे ताए उक्किट्ठाए जाव तिरिअमसंखेज्जाणं दीवसमुद्दाणं मज्झं मज्झेणं जेणेव अट्ठावए पव्वए भगवओ तित्थयरस्स सरीरए तेणेव उवागच्छइ उवागच्छित्ता विमणे णिराणंदे अंसुपुण्णणयणे तित्थयर-

रसरीरयं तिक्खुत्तो आयाहीणं पयाहीणं करेइ करेइत्ता णच्चासणे णाइदूरे सुस्सूसमाणे जाव पज्जुवासइ तेणं कालेणं तेणं समएणं ईसाणे देविंदे देवराया उत्तरड्ढलोगाहिवई अट्ठावीसविमाणसयसहस्साहिवई सूलपाणी वसहवाहणे सुरिंदे अयरंवरवत्थधरे जाव विउलाइं भोगभोगाइं भुंजमाणे विहरइ । तएणं तस्स ईसाणस्स देविंदस्स देवरणो आसणे चलइ । तएणं से ईसाणे जाव देवराया आसणं चलिअं पासइ पासइत्ता ओहिं पउंजइ पउंजइत्ता भगवं तित्थगरं ओहिणा आभोएइ आभोएत्ता जहा सक्के निअगपरिवारेणं आणेअव्वा जाव पज्जुवासइ । एवं सव्वे देविंदा जाव अच्चुए णिअगपरिवारेणं आणेअव्वा एवं जाव भवणवासीणं इंदा वाणमंतराणं सोलस जोइसिआणं दोण्णि निअगपरिवारा णेअव्वा । तएणं सक्के देविंदे देवराया ते बहवे भवणवइवाणमंतरजोइसवेमाणिए देवे एवं वयासी खिप्पामेव भो देवाणुप्पिआ णंदणवणाओ सरसाइं गोसीसवरचंदणकट्ठाइं साहरइ साहरइत्ता तओ चिइगाइओ रएह एगं भगवओ तित्थगरस्स एगं गणहराणं एगं अवसेसाणं अणगाराणं तएणं ते भवणवइ जाव वेमाणिया देवा णंदणवणाओ सरसाइं गोसीसवरचंदणकट्ठाइं साहरंति साहरंतित्ता तओ चिइगाओ रएहंति एगं भगवओ तित्थगरस्स एगं गणहराणं अवसेसाणं अणगाराणं से सक्के देविंदे देवराया आभिओगे देवे सद्दावेइ सद्दावेइत्ता एव वयासी खिप्पामेव भो देवाणुप्पिआ खीरोदगसमुद्दाओ खीरोदगं साहरत्ति तएणं ते आभिओगा देवा खीरोदगं साहरंति ।

( जं समयं चणमित्यादि ) यस्मिन् समये सप्तम्यर्थे द्वितीया एवं तच्छब्दवाक्येऽपि अवधिना ज्ञानेनाभोगयति उपयुनक्ति शेषं सुगममुपयुज्य एवमवादीत् किमित्याह । परिनिर्वृत' खल्विति वाक्यालङ्कारे जम्बूद्वीपे भारते वर्षे ऋषभोऽर्हन् कौशलिकस्तत्तस्मात्कृतो जीतं कल्प· आचार एतद्वक्ष्यमाण वर्तते अतीतप्रत्युत्पन्नानागतानामतीतवर्तमानानागताना शक्राणामासनविशेषाधिष्ठातृणां देवानां मध्ये इन्द्राणां परमैश्वर्ययुक्तानां देवेषु राज्ञां कान्त्यादिगुणैरधिकं राजमानानां तीर्थकराणा परिनिर्वाणमहिमां कर्तुं तद्गच्छामि । णमिति प्राग्वत् अहमपि भगवतस्तीर्थकरस्य परिनिर्वाणमहिमां करोमीति कृत्वा भगवन्त निर्वृत वन्दते स्तुतिं करोति नमस्यति प्रणमति । यच्च जीवरहितमपि तीर्थकरशरीरमिन्द्रवन्द्यं तदिन्द्रस्य सम्यग्दृष्टित्वेन नामस्थापनाद्रव्यभावार्हता वन्दनीयत्वेन श्रद्धानादिति तत्त्वम् । वन्दित्वा नत्वा च किं चक्रे इत्याह ( चउरासीई इत्यादि ) चतुरशीत्या सामानिकानां प्रभुत्वमन्तरेण वपुर्वैभवद्युतिस्थित्यादिभिः शक्रतुल्यानां सहस्रैस्त्रयस्त्रिंशता त्रयस्त्रिंशकैर्गुरुस्थानीयैर्देवैश्चतुर्भिर्लोकपालैः सोमयमवरुणकुबेराख्यैः यावत्पदात् " अट्ठहिं अग्गमहिसीहिं सपरिवाराहिं तिहिं परिसाहिं सत्तहिं अणिएहिं सत्तहिं अणिआहिवईहिंति" अत्र व्याख्या अग्रमहिष्योऽष्टौ पद्मा १ शिवा २ शची ३ अञ्जू ४ अमला ५ अप्सरा ६ नवमिका ७ रोहिणी ८ एताभिः षोडशसहस्रदेवीपरिवारयुताभि तिसृभि पर्षद्भिर्बाह्यमध्याभ्यन्तररूपाभि सप्तभिरनीकैर्हय १ गज २ रथ ३ सुभट ४ वृषभ ५ गन्धर्व ६ नाट्य ७ रूपैः सप्तभिरनीकानामधिपतिभि· चतसृभिश्चतुरशीतिभिश्चतुर्दिशं प्रत्येकं चतुरशीतिसहस्राङ्गरक्षकसद्भावात् षट्त्रिंशत् सहस्राधिकलक्षत्रयप्रमितैरङ्गरक्षकदेवसहस्रैरन्यैश्च बहुभि सौधर्मकल्पवासिभिर्देवैर्देवीभिश्च सार्द्धं सपरिवृतस्तया देवजनप्रसिद्धया उत्कृष्टया प्रशस्तविहायोगतिप्रकृष्टतमत्वात् यावत्पदात् "तुरिआए चवलाए चण्डाए जयणाए उद्धूआए सिग्घाए दिव्वाए देवगईए विईवयमाणे २त्ति " अत्र व्याख्या त्वरितया मानसौत्सुक्यात् चपलया कायत· चण्डया क्रोधाविष्टेयेव भीमसंवेदनात् । जवनया परमोत्कृष्टवेगत्वात् । अत्र च समयप्रसिद्धाश्चण्डादिगतयो न ग्राह्याः । तासां प्रतिक्रम सङ्ख्यातयोजनप्रमाणक्षेत्रातिक्रमणात् तेनैतानि पदानि देवगतिविशेषणतया योज्यानि देवास्तु तथा भवस्वभावादचिन्त्यसामर्थ्यतोऽत्यन्तशीघ्रा एव चलन्तीति अन्यथा जिनजन्मादिषु महिमानिमित्त तत्रैव झटित्येवात्यन्तदूरकल्पादिभ्य' सुरा कथमागच्छेयुरिति । उद्धतया उद्धतस्य दिगन्तव्यापिनो रजस इव या गति· सा तया अत एव निरन्तर शीघ्रत्वयोगाच्छीघ्रया दिव्यया देवोचितया देवगत्या व्यतिव्रजन् २ सम्भ्रमे द्विर्वचन तिर्यगसङ्ख्येयानां द्वीपसमुद्राणां मध्य मध्येन मध्यभागेन यत्रैवाष्टापदः पर्वत· यत्रैव भगवतस्तीर्थकरस्य शरीरक तत्रैवोपागच्छति । अत्र सर्वत्रातीतनिर्देशो कर्त्तव्ये वर्त्तमाननिर्देशस्त्रिकालज्ञायिष्वपि तीर्थकरेष्वेतन्न्यायप्रदर्शनार्थ इति न हि निर्हेतुका ग्रन्थकाराणां प्रवृत्तिरिति । उपागत्य च तत्र यत् करोति तदाह ( उवागच्छित्ता इत्यादि ) उपागत्य विमना· शोकाकुलमना अश्रुपूर्णनयनस्तीर्थकरशरीरक त्रिःकृत्वः आदक्षिणप्रदक्षिणं करोतीति प्राग्वत् । नात्यासन्ने नातिदूरे शुश्रूषन्निव तस्मिन्नप्यवसरे भक्त्याविष्टतया भगवद्वचनश्रवणेच्छाया अनिवृत्तेर्यावत् पदात् " णमंसमाणे अभिमुहे विणएणं पंजलिउडे पज्जुवासइत्ति " परिग्रह । अत्र व्याख्या नमस्यन् पञ्चाङ्गप्रणामादिना अभि भगवन्तं लक्ष्मीकृत्य मुखं यस्य स तथा । विनयेनान्तरबहुमानेन प्राञ्जलीकृत इति प्राग्वत् । पर्युपास्ते सेवते इति । अथ द्वितीयेन्द्रवक्तव्यतामाह ( तेणं कालेणमित्यादि ) सर्वं स्पष्टं नवरम् अरजांसि निर्मलानि यान्यम्बरवस्त्राणि स्वच्छतया आकाशकल्पानि वसनानि धरतीति । यावत् करणात् " आलइअमालमउडे णवहेमचारुचित्तचंचलकुण्डलविलिहिज्जमाणगल्ले महिड्ढीए महज्जुईए महाबले महायसे महाणुभावे महासुक्खे भासुरबोंदी पलंबवणमालधरे ईसाणकप्पे ईसाणवडेंसए विमाणे सुहम्माए सभाए ईसाणंसि सिंहासणंसि से णं अट्ठावीसाए विमाणावाससयसाहस्सीणं असीईए सामाणिअसाहस्सीणं तायत्तीसाए तायत्तीसगाणं चउण्हं लोगपालाणं अट्ठण्हं अग्गमहिसीणं सपरिवाराणं तिण्हं परिसाणं सत्तण्हं अणीआणं सत्तण्हं अणीआहिवईणं चउण्हं असीईणं आयरक्खदेवसाहस्सीणं अण्णेसिं च ईसाणकप्पवासीणं देवाणं देवीण य आहेवच्चं पोरेवच्चं सामित्तं भट्टित्तं महत्तरगत्तं आणाईसरसेणावच्चं कारेमाणे पालेमाणे महयाहयनट्टगीयवाइय तंतीतलतालतुडिअघणमुइंगपडुप्पवाइअरवेणं इति " संग्रह । सर्वं स्पष्टं नवरम् आलिङ्गितोऽयथास्थान स्थापितो मालामुकुटो येन स तथा । नवाभ्यामिव हेम-

मयाभ्यां चारुभ्यां चित्रकृष्याभ्यां चन्द्रनाभ्यामितस्ततश्चलद्भ्यां कुमारआभ्या विक्षिप्यमानौ गल्लौ यस्य स तथेति ( तएणमित्यादि ) यथा शक्रः सौधर्मेन्द्रो निजकपरिवारेण सह तथा भणितव्य ईशानेन्द्रः यावत्पर्युपास्ते इत्यन्तं वाच्य इत्यर्थः । ( एवं सव्वे इत्यादि ) एवं शक्रन्यायेन सर्वदेवेन्द्रा वैमानिकाः अत एव यावदच्युत इत्युत्तरसूत्रं संवदति । निजकपरिवारेणात्मीयात्मीयसामानिकादिपरिवारेण सहानेतव्या भगवच्छरीरान्तिकं प्रापणीया ग्रन्थवाचकेनेत्यर्थः । ग्रन्थापेक्षया चेदं सूत्रं योजनीयमेव वैमानिकप्रकारेण यावद्भवनवासिनां दक्षिणोत्तरभवनपतीनामिन्द्रा विंशतिरित्यर्थः । अत्र यावच्छब्दो न गतार्थसंग्रहसूचकः संग्राह्यपदाभावात् किं तु सजातीयभवनपतिसूचकः वानमन्तराणां व्यन्तराणां षोडशेन्द्राः कालादयः । ननु स्थानाङ्गादिषु द्वात्रिंशद्व्यन्तरेन्द्रा अभिहिताः इह तु कथं षोडश उच्यते मूलभेदभूतास्तु षोडश महर्द्धिकाः कालादय उपात्तास्तदवान्तरभेदभूतास्तु षोडश अणपन्नीन्द्रादयोऽल्पर्द्धिकत्वान्नेह विवक्षिताः अस्ति ह्येषाऽपि सूत्रकृतप्रवृत्तिर्वैचित्री यदन्यत्र प्रसिद्धा अपि भावा कुतश्चिदाशयविशेषात् स्वसूत्रे सूत्रकारो न निबध्नाति यथा प्रतिवासुदेवाः अन्यत्रावश्यकनिर्युक्त्यादिषूत्तमपुरुषत्वेन प्रसिद्धा अपि चतुर्थाङ्गे चतुःपञ्चाशत्तमसमवाये नोक्ताः । "भरहेरवएसु णं वासेसु एगमेगाए उस्सप्पिणीए चउवण्णं २ उप्पज्जिंसु ३ तं चउवीसं तित्थयरा बारस चक्कवट्टी णव बलदेवा णव वासुदेवा" इतिपरमुपलक्षणात्तेऽपि ग्राह्या । ज्योतिष्काणां द्वौ चन्द्रसूर्यौ जात्याश्रयणात् व्यक्त्या तु तेऽसंख्याता निजकपरिवारासहवर्तिस्वपरिकरा नेतव्याः । ततः शक्रः किं करोतीत्याह ( तएणमित्यादि ) ततः शक्रो देवेन्द्रो देवराजस्तान् बहून् भवनपत्यादीन् देवानेवमवादीत् क्षिप्रमेव निर्विलम्बमेव भो ! देवानांप्रियाः ! देवान् स्वस्वामिनोऽनुकूलाचरणेनानुप्रीणन्तीति देवानुप्रियाः नन्दनवनात् सरसानि स्निग्धानि न तु रूक्षाणि गोशीर्षं नाम्ना वरचन्दनं तस्य काष्ठानि संहरत प्रापयत संहृत्य च तिस्रश्चितिका रचयत । एकां भगवतस्तीर्थकरस्य एकां गणधराणामेकामवशेषाणामनगाराणामिति ( तएणमित्यादि ) स्पष्टम् । अत्रायमावश्यकवृत्त्याद्युक्तश्चितारचनदिग्विभागः । नन्दनवनानीतचन्दनदारुभिर्भगवतः प्राच्यां वृत्ता चितां गणधराणामपाच्यां त्र्यस्रां शेषसाधूनां प्रतीच्यां चतुरस्रां सुरा अकार्षुरिति । नन्वावश्यकादाविक्ष्वाकूणां द्वितीया चितोक्ता इह तु गणधराणां कथमिति उच्यते । अत्र प्रधाननया गणधराणामुपादानेऽप्युपलक्षणाद् गणधरप्रभृतीनामिक्ष्वाकूणां द्वितीया चिता इत्येति न काऽप्याशङ्का । जं० २ वक्ष० । अत्रान्तरे च देवाः सर्वं पत्रपुष्पादिमागताश्चितिकाकृतिरिति ॥ ते चित्रश्चिताः वृत्तत्र्यस्रचतुरस्राकृतीः कृतवन्त इति । एकां पूर्वेण अपरां दक्षिणेन तृतीयामपरेणेति । तत्र पूर्वा तीर्थकृतः दक्षिणा इक्ष्वाकूणामपरा शेषाणामिति । ततोऽग्निकुमारा वदनैरग्निं प्रक्षिपन्तः एत तत्र निबन्धनाल्लोके " अग्निमुखा वै देवा " इति प्रसिद्धम् । वायुकुमारास्तु वातमुक्तवन्त इति । मांसशोणिते च ध्मापिते सति मेघकुमाराः सुरभिणा क्षीरोदजलेन निर्वापितवन्तः ( स कथेति ) सकथा हनुरुच्यते । तत्र दक्षिणा हनुं भगवतः सकथिनीं शक्रो जग्राह वामामीशानः अधस्त्यदक्षिणा पुनश्चमर अधस्त्योत्तरां तु बलिः । अवशेषास्तु दिशा । शेषाङ्गानि गृहीतवन्तः नरेश्वरादयस्तु भस्म गृहीतवन्तः । शेषा लोकास्तु तद्भस्मना पुण्ड्राणि चक्रुः तत एव च प्रभृति भस्मपुण्ड्राणि स्तूपानि जिनगृहं चेति । ततो भगवन्मुद्दिश्य वर्द्धकिरत्नेन योजनायामं त्रिगव्यूतोच्छ्रितं सिंहनिषद्यायतनं कारितवान् निजवर्णप्रमाणयुक्ताश्चतुर्विंशतिजीवाभिगमोक्तपरिवारयुक्तास्तीर्थकरप्रतिमास्तथा भ्रातृशतप्रतिमा आत्मप्रतिमां च स्तूपशतं च मा कश्चिदाक्रमणं करिष्यतीति तत्रैकं भगवतः शेषाण्येकोनशतस्य भ्रातॄणामिति । तथा लोहमयान् यन्त्रपुरुषांस्तद्द्वारपालांश्चकार दण्डरत्नेनाष्टापदं च सर्वतश्छिन्नवान् योजने योजनेऽष्टौ पदानि कृतवान् । सगरसुतैस्तु वंशानुरागाद्यथा परिखां कृत्वा गङ्गाऽवतारिता तथा ग्रन्थान्तरतो विज्ञेयमिति । याचकास्तेनाहिताग्नयः इत्यस्य व्याख्या देवैर्भगवत्सक्थ्यादौ गृहीते सति श्रावका देवानतिशयभक्त्या याचितवन्तः देवा अपि तेषां प्रचुरत्वान्महता यत्नेन याचनाभिहता आहुः । अहो याचका इति । तत एव याचका रूढाः ततः अग्निं गृहीत्वा स्थापितवन्तस्तेन कारणेनाहिताग्नय इति तत एव च प्रसिद्धास्तेषां चाग्नीनां परस्परतः कुण्डसंक्रान्तावयं विधिर्भगवतः संबन्धिभूतः सर्वकुण्डेषु सञ्चरति । इक्ष्वाकुकुण्डाग्निस्तु शेषकुण्डाग्नौ सञ्चरति । न भगवत्कुण्डाग्नाविति शेषानगारकुण्डाग्नेस्तु नान्यत्र संक्रम इति गाथार्थः । आ० म० प्र० ।

( ३० ) ततश्चिताऽनन्तरं शक्रः किं करोतीत्याह ।

तए णं से सक्के देविंदे देवराया तित्थगरसरीरगं खीरोदगेणं ण्हाणेति ण्हाणेतित्ता सरसेणं गोसीसवरचंदणेणं अणुलिंपइ अणुलिंपइत्ता हंसलक्खणं पडसाडयं णिअंसेइ णिअंसेइत्ता सव्वालंकारविभूसिअं करेंति । तए णं ते भवणवई जाव वेमाणिआ गणहरसरीरगाइं अणगारसरीरगाइं पि खीरोदगेणं ण्हावेंति ण्हावेंतित्ता सरसेणं गोसीसवरचंदणेणं अणुलिंपंति अणुलिंपंतित्ता अह ताइं दिव्वाइं देवदूसजुअलाइं णिअंसंति णिअंसंतित्ता सव्वालंकारविभूसिआइं करेंति तए णं से सक्के देविंदे देवराया ते बहवे भवणवई जाव वेमाणिए देवे एवं वयासी । खिप्पामेव भो देवाणुप्पिआ ! ईहामिगउसभतुरयजाववणलयभत्तिचित्ताओ तओ सिविआओ विउव्वह एगं भगवओ तित्थगरस्स एगं गणहराणं एगं अवसेसाणं अणगाराणं । तए णं बहवे भवणवई जाव वेमाणिआ तओ सिविआओ विउव्वंति एगं भगवओ तित्थगरस्स एगं गणहराणं एगं अवसेसाणं अणगाराणं तए णं से सक्के देविंदे देवराया विमणे णिराणंदे अंसुपुण्णणयणे भगवओ तित्थगरस्स विणट्ठजम्मजरामरणस्स सरीरगं सीअं आरुहेइ आरुहेइत्ता चिइगाए ठवेइ तए णं ते बहवे भवणवई जाव वेमाणिआ देवा गणहराणं अणगाराणं य विणट्ठजम्मजरामरणाणं सरीरगाइं सीअं आरुहेंति आरुहेंतित्ता चिइगाए ठवेंति । तए णं से सक्के देविंदे देवराया अग्गिकुमारे देवे सद्दावेइ सद्दावेइत्ता एवं वयासी खिप्पामेव भो देवाणुप्पिआ ! तित्थगरचिइगाए जाव अणगारचिइगाए अ अगणिकायं विउव्वह विउव्वइत्ता एअमाणत्तिअं पच्चप्पिणह । तए णं ते अग्गिकुमारा देवा विमणा णिराणंदा अंसुपुण्णणयणा

तित्थगरचिंगाए जाव अणगारचिंगाए अ अगणिकायं विउव्वंति ॥

तएणमित्यादि स्पष्टम् क्षीरोदकसहरणानन्तरं स शक्रः किं करोतीति दर्शयति ( तएणमित्यादि ) ततः शक्रस्तीर्थकरशरीरकं क्षीरोदकेन स्नपयति स्नपयित्वा गोशीर्षवरचन्दनेनानुलिम्पति अनुलिप्य हंसलक्षणं हंसविशदत्वात् शाटको वस्त्रमात्रं स च पृथुलं पट्ट इत्यभिधीयते । तं हंसनामकपटशाटकं निवासयति परिधापयतीत्यर्थः । परिधाप्य च सर्वालङ्कारविभूषितं करोति ( तएणमित्यादि ) ततस्ते भवनपत्यादयो देवा गणधरगणमनगाराणां च शरीराणि तथैव चक्रुः अहतान्यखण्डितानि दिव्यानि वर्याणि देवदूष्ययुगलानि निवासयन्ति शेषं व्यक्तम् ( तएणमित्यादि ) ततः शक्रो भवनपत्यादीनेवमवादीत् क्षिप्रमेव भो देवानुप्रिया ! ईहामृगादिभक्तिचित्रास्तिस्रः शिबिका विकुर्वत विकुर्व्व इति सौत्रो धातुस्तस्माद्रूपसिद्धिः शेषं स्पष्टम् । ( तएणमित्यादि ) ततः शक्रो भगवच्छरीरं शिबिकायामारोहयति महर्द्ध्या च चितिकास्थाने नीत्वा चितिकायां स्थापयति शेषं स्पष्टम् ( तएणमित्यादि ) स्पष्टम् ( तएणमित्यादि ) ततः स शक्रोऽग्निकुमारान् शब्दापयति आमन्त्रयति शब्दापयित्वा एवमवादीत् भो अग्निकुमारा ! देवास्तीर्थकरचितिकायां गणधरचितिकायामनगारचितिकायां चाग्निकायं विकुर्वत विकुर्वित्वा एतामाज्ञप्तिकामाज्ञां प्रत्यर्पयत । शेषं व्यक्तम् (तएणं अग्गिकुमारा देवा इत्यादि) व्याख्यानप्रायमेव (तएणं से सक्के इत्यादि) एतत् सूत्रद्वयमपि व्यक्तम् उज्ज्वालयत दीपयत तीर्थकरशरीरकं यावदनगारशरीरकाणि च ध्यामयत स्ववर्णत्याजनेन वर्णान्तरमापादयत अग्निसंस्कृतानि कुरुतेति । ( तएणमित्यादि ) ततः स शक्रो भवनपत्यादिदेवानेवमवादीत् भो देवानुप्रिया ! तीर्थकरचितिकायां यावदनगारचितिकायां च अगुरु तुरुक्कं सिल्हकं घृतं मधु च एतानि द्रव्याणि कुम्भाग्रशोऽनेककुम्भपरिमाणानि भाराग्रशोऽनेकविंशतितुलापरिमाणानि । अथवा पुरुषोत्क्षेपणीयो भारः सोऽग्रं परिमाणं येषां ते भाराग्रास्ते बहुशो भाराग्रशः संहरतेति प्राग्वत् । अथ मांसादिषु ध्यामितेषु अस्थिष्ववशिष्टेषु शक्रः किं चक्रे इत्याह "तएणमित्यादि" स्पष्टं नवरं क्षीरोदकेन क्षीरसमुद्रानीतजलेन निर्वापयत विध्मापयतेत्यर्थः । अथास्थियवक्तव्यतामाह "तएणं मित्यादि" ततश्चितिकानिर्वापणादनु भगवतस्तीर्थकरस्योपरितनं दक्षिणं सक्थि दाढामित्यर्थः । शक्रो गृह्णाति ऊर्ध्वलोकवासित्वात् दक्षिणश्रेणिपतित्वाच्च । बलिः दाक्षिणात्यासुरेन्द्रः सकाशाद् वी इति विशिष्टं रोचनं दीपनं दीप्तिरिति यावत् येषामस्ती ति वैरोचनाः स्वार्थेऽण् उदीच्या सुरा दाक्षिणात्येभ्य उत्तराणामधिकपुण्यप्रकृतिकत्वात् तेषामिन्द्र एव वैरोचनराजोऽपि अधस्तनं वामं सक्थि गृह्णाति अधोलोकवासित्वादुत्तरश्रेण्यधिपत्वाच्च अवशेषा भवनपतयो वत्करणात् व्यन्तरा ज्योतिष्काश्च ग्राह्याः वैमानिका देवा यथाऽर्हं यथा महर्द्धिकम् । अवशेषाणि अङ्गानि भुजाद्यस्थीनि उपाङ्गानि अङ्गसमीपवर्तीनि अङ्गुल्याद्यस्थीनि गृह्णातीति योगः । अयं भावः सनत्कुमाराद्यष्टाविंशतिरिन्द्रा अवशिष्टानष्टाविंशतिदन्तान् अन्येऽवशिष्टा इन्द्रा अङ्गोपाङ्गास्थीनीति । ननु देवानां तद्ग्रहणे क आशय इत्याह । केचिज्जिनभक्त्या जिने निर्वृते जिनसक्थि जिनवदाराध्यमिति केचिज्जीतमिति पुरातनैरिदमाचीर्णमित्यस्माभिरपीदं तथेति केऽपि धर्म्मं पुण्यमिति कृत्वा । अत्र ग्रन्थान्तरप्रसिद्धोऽयमपि हेतुः "पुआनि अपहदिअहं, अह कोइ परामव जइ करेज्जा । तो परकालिऊना उ, सलिलेण करेंति निअक्खं" १ । सौधर्मेन्द्रेशानेन्द्रयोः परस्परं सवैरयोस्तच्छलदानेन वैरोपशमोऽपि इत्यादिको ज्ञेयस्तथा व्याख्यातो विशेषार्थप्रतिपत्तिर्नो विद्याधरनराश्रितानसमशेषामिव गृह्णन्ति सर्वोपद्रवविद्रावणमिति कृत्वा आस्तां विजगदाराध्यानां तीर्थकृतां योगभृच्चक्रवर्तिनामपि देवाः सक्थिग्रहणं कुर्व्वन्तीति । अथ तत्र विद्याधरादिभिरिदंपूर्विकया भस्मनि गृहीते अखातायामेव गर्तायां जातायां मा भूत्तत्र पामरजनकृताशातनाप्रसङ्गः सातत्येन तीर्थप्रवृत्तिश्च भूयादिति स्तूपविधिमाह ( तएणमित्यादि ) सर्वं स्पष्टं नवरं सर्वात्मना रत्नमयानन्तर्वहिरपि रत्नखचितान् ( महत्ति ) महतोऽतिविस्तीर्णान् आलप्रत्ययः स्वार्थिकः प्राकृतप्रभवः त्रीन् चैत्यस्तूपान् चैत्याश्चित्ताह्लादकाः स्तूपाश्चैत्यस्तूपास्तान् कुरुत । चिताद्वयदि तिष्विन्त्यर्थः आज्ञाकरणसूत्रे ततस्ते बहवो भवनपत्यादयो देवास्तथैव कुर्वन्ति । ननु यथाऽऽज्ञाकरणसूत्रे यावत् करणेन सूत्रकृतो लाघवसूचा तथा पूर्वसूत्रेऽपि कथं न लाघवचिन्ता कृता उच्यते विचित्रत्वात् सूत्रप्रवृत्तेरिति ( तएणमित्यादि ) ततस्ते बहवो भवनपत्यादयो देवास्तेषु स्तूपेषु यथोचितं तीर्थकरस्य परिनिर्वाणमहिमां कुर्वन्ति कृत्वा च यत्रैवाकाशखण्डे नन्दीश्वरवरो द्वीपस्तत्रैवोपागच्छन्ति ततः स शक्रः पौरस्त्याञ्जनकपर्व्वते अष्टाहिकामष्टानामह्ना दिवसानां समाहारोऽष्टाहं तदस्ति यस्यां महिमायां सा अष्टाहिका तां महामहिमा करोति । ततः शक्रस्य चत्वारो लोकपालाः सोमयमवरुणवैश्रमणनामानस्तत्पार्श्ववर्तिषु चतुर्षु दधिमुखकपर्व्वतेषु अष्टाहिकां महामहिमां कुर्व्वन्ति न चात्र नन्दीश्वरवरादिशब्दानां कोऽन्वर्थ इत्युच्यते नन्द्यापर्व्वतपुष्करिणीप्रमुखपदार्थसमुद्भूता समृद्ध्या ईश्वरः स्फीतिमान् नन्दीश्वरस्य एवामनुष्यद्वीपापेक्षया बहुतरसिद्धायतनादिसमुद्भावेन वरो नन्दीश्वरवरः । तथा अञ्जनरत्नमयत्वादञ्जनास्ततः स्वार्थे कप्रत्ययः । यद्वा कृष्णवर्णत्वेनाञ्जनतुल्या इत्यञ्जनका उपमाने कप्रत्ययः । तथा दधिवदुज्ज्वलवर्णं मुखं शिखरं रजतमयत्वाद् येषां ते तथा बहुव्रीहौ कप्रत्ययः । अथेशानेन्द्रस्य नन्दीश्वरावतारवक्तव्यमाह ( ईसाणेत्ति ) ईशानो देवेन्द्र उत्तराहे अञ्जनके अष्टाहिकां तस्य लोकपाला उत्तराहाञ्जनकस्य परिवारकेषु चतुर्षु दधिमुखकेषु अष्टाहिकां चमरश्च दाक्षिणात्याञ्जनके तस्य लोकपाला दधिमुखकपर्व्वतेषु बलीन्द्रः पाश्चात्याञ्जनके तस्य लोकपाला दधिमुखकेषु ततस्ते बहवो भवनपत्यादयो देवा अष्टाहिका महामहिमामहोत्सवकृता कुर्व्वन्तीति । बहुवचनं चात्राष्टाहिकानां सौधर्मेन्द्रादिभिः पृथक् पृथक् क्रियमाणत्वात् ( करित्ता इत्यादि ) कृत्वाऽष्टाहिका महामहिमाः कृत्वा यत्रैव लोकदेशे स्वानि स्वानि स्वस्वसम्बन्धीनि विमानानि यत्रैव स्वानि स्वानि भवनानि यासप्रासादा यत्रैव स्वा स्वा सभा सुधर्मा यत्र स्वका स्वका स्वस्वसत्कमवनो माणवकनामा चैत्यस्तम्भश्चैत्यशब्दार्थः प्राग्वत् तत्रैवोपागच्छन्ति उपागत्य च वज्रमयेषु गोलवृत्तसमुद्गकेषु भाजनविशेषेषु जिनसक्थीनि प्रक्षिपन्तीति । सक्थिपदमुपलक्षणपरं तेन दन्तानपि यथार्हं प्रक्षिपन्तीति । अथ ज्ञाताधर्मकथाङ्गोक्तमल्लिनाथनिर्वाणवक्तव्यतामाश्रित्य जिनसक्थ्योः पूजनं कृत्वा जिनसक्थि च नव प्रक्षिपन्तीति इत्य प्रक्षिप्य च अग्र्यैः प्रवरैर्वरमाल्यैश्च गन्धैश्चार्चयन्ति अर्चयित्वा च विपुलान् भोगोपभोगान् भोगान् भुञ्जाना विहरन्त्यागतं इति । अथाह परः ननु चाग्न्यादिगुणाश्रितस्य भगवच्छरीरस्य पूज-

नादिकं पूर्वमपि ममान्तर्व्रणमिव बाधते तदनु इदं जिनसक्थ्यादिपूजनं कृते क्षार इव सुतरां बाधते नैवं वादीः नामस्थापनाद्रव्यजिनानां भावजिनस्येव वन्दनीयत्वात्, तदा भगवच्छरीरस्य च द्रव्यजिनरूपत्वात् सक्थ्यादीनां च तदवयवत्वाद् भावजिनाद्भेदेन वन्दनीयत्वमेव अन्यथा गर्भतयोत्पन्नमात्रस्य भगवत "समणे भगवं महावीरे" इत्याद्यभिलापेन सूत्रकर्तुं सूत्ररचना शक्राणां शक्रस्तवप्रयोगादिकं च नौचितीमवेदिति । अत एव जिनसक्थ्याद्याशातनाभीरवो हि देवास्तत्र कामसेवनादौ न प्रवर्तन्ते इति ज० २ वक्ष० ।

( ३१ ) अथेक्ष्वाकूणां द्विनीयां चिनिका वर्णयति ॥

थूभसयभाउआणं, चउवीसं चेव जिणहरे कासी ।

सव्वजिणाणं पडिमा, वन्नपमाणेहिं निअएहिं ॥

स्तूपशतं भ्रातृणां भरत' कारितवानिति । तथा चतुर्विंशतिश्चैव जिनगृहे जिनायतने ( कासित्ति ) कृतवान् का इत्याह । सर्वजिनानां प्रतिमा वर्णप्रमाणैर्निजैरात्मीयैरिति गाथार्थ । आ० म० प्र० । श्रीऋषभदेवेन सार्कं यैर्दशसहस्रमुनिभिर्भक्त प्रत्याख्यात ते कियता कालेन सिद्धास्सन्तीनि प्रश्ने ऋषभदेवेन साकं दशसहस्रमुनयोऽभिजिन्नक्षत्रे सिद्धास्सन्तीत्येतदक्षराणि वसुदेवहिण्ड्यादौ वर्तन्ते इति बोध्यम् । श्वे० ४ उल्ला०३१ प्र०। परिवेष्टनपट्टे, प्रव० २१६ द्वा० । जी० । " वइरसंघयणे " लोहादिमयपट्टबन्धकाष्ठसम्पुटोपमसामर्थ्यान्वितत्वाद्बृषभो० । भ० १ श० १ उ० । उत्त० । वृषभे, जी० ३ प्रति । रा० । ज० । औ० । अनु० । ज्ञा० । ओषधिभेदे, कर्णछिद्रे, कुम्भीरपुच्छे, मेदि० । पर्वतभेदे च धरणि० वराहपुच्छे, हेम० । "नाभिमूलात् यत्र वर्णं, उत्थित कुरुते ध्वनिम् । वृषभस्येव निर्वाति, हेलया ऋषभ स्मृत "इति सङ्गीतशास्त्रोक्ते स्वरभेदे, राजकर्तव्ये, वाच० कात्यायनगोत्राया शिवानाम्न्या कन्यकाया पितरि, तत्कथा प्रसवचहिणया दर्शिता तत एवाऽवधार्या । उत्त० १ अ० । ऋषभकूटाधिपदेवे च । स्था० ८ ठा० ।

उसभ-( ह ) कंठ-ऋषभकण्ठ-पुं० ६ त० वृषभस्य कण्ठे, वृषभकण्ठप्रमाणे रत्नविशेषे, रा० " उसभकंठाण अट्ठसय' जी० ३ प्रति० ।

उसभकूड-ऋषभकूट-न० जम्बूद्वीपे उत्तरार्द्धभरते वर्षे स्वनामख्याते पर्वते, ॥

कहि णं भंते ! जंबुद्दीवे दीवे उत्तरभरहे वासे उसभकूडे णामं पव्वए पराणत्ते गोअमा ! गंगाकुंडस्स पच्चत्थिमेणं सिंधुकुंडस्स पुरच्छिमेणं चुल्लहिमवंतस्स वासहरपव्वयस्स दाहिणिल्ले णितंबे एत्थ णं जंबुद्दीवे दीवे उत्तरड्ढे भरहे वासे उसहकूडे णामं पव्वए पराणत्ते अट्ठजोअणाइं उड्ढं उच्चत्तेणं दो जोअणाइं उव्वेहेणं मूले अट्ठजोअणाइं विक्खंभेणं मज्झे छ जोअणाइं विक्खंभेणं उवरिं च चत्तारि जोअणाइं विक्खंभेणं मूले साइरेगाइं पणवीसं जोअणाइं परिक्खेवेणं मज्झे साइरेगाइं अट्ठारसजोअणाइं परिक्खेवेणं उवरिं साइरेगाइं दुवालसजोअणाइं परिक्खेवेणं ( पाठान्तरं ) मूले बारसजोअणाइं विक्खंभेणं मज्झे अट्ठ जोअणाइं विक्खंभेणं उप्पिं चत्तारि जोअणाइं विक्खंभेणं मूले साइरेगाइं सत्ततीसं जोअणाइं परिक्खेवेणं मज्झे साइरेगाइं पणवीसं जोअणाइं परिक्खेवेणं उप्पिं साइरेगाइं बारसजोअणाइं परिक्खेवेणं मूले विच्छिन्ने मज्झे संखित्ते उप्पिं तणुए गोपुच्छसंठाणसंठिए सव्वजंबूणयामए अच्छे सण्हे जाव पडिरूवे सेणं एगाए पउमवरवेइआए तहेव जाव भवणं कोसं आयामेणं अद्धकोसं विक्खंभेणं देसूणं कोसं उड्ढं उच्चत्तेणं अट्ठो तहेव उप्पलाणि पउमाणि जाव उसभे अ एत्थ देवे महिड्ढिए जाव दाहिणेणं रायहाणी तहेव मंदरस्स पव्वयस्स जहा विजयस्स अविसेसियं ॥

क भदन्त ! जम्बूद्वीपे द्वीपे उत्तरार्द्धभरते वर्षे ऋषभकूटो नाम्ना पर्वत प्रज्ञप्त भगवानाह गौतम ! गङ्गाकुण्डस्य यत्र हिमवतो गङ्गा निपतति तत्कुण्डं तस्य पश्चिमायां यत्र तु सिन्धुर्निपतति सिन्धुकुण्डं तस्य पूर्वस्यां चुल्लहिमवतो वर्षधरस्य दाक्षिणात्यनितम्बे सामीप्यकसप्तम्या नितम्बासन्ने इत्यर्थः । अत्र प्रदेशे जम्बूद्वीपे द्वीपे उत्तरार्द्धभरते वर्षे ऋषभकूटो नाम्ना पर्वत प्रज्ञप्त अष्टयोजनान्यूर्द्ध्वोच्चत्वेन द्वे योजने उद्वेधेन भूमिप्रवेशेन उच्चत्वचतुर्थांशस्य भूम्यवगाढत्वात् अष्टानां चतुर्थांशो द्वयोरेव लाभात् । मूलमध्यान्तेषु क्रमादष्ट षट् चत्वारि योजनानि विष्कम्भेन विस्तारेण उपलक्षणत्वादायामेनापि समवृत्तस्यायामविष्कम्भयोस्तुल्यत्वादिति । तथा मूलमध्यान्तेषु पञ्चविंशतिरष्टादश द्वादश च योजनानि सातिरेकाणि परिक्षेपेण परिधिना । अथास्य पाठान्तर वाचनाभेदस्तत्कृतं परिमाणान्तरमाह । मूले द्वादश योजनानि विष्कम्भेन मध्येऽष्टयोजनानि तूपरि चत्वारि योजनानि विष्कम्भेन अत्रापि विष्कम्भायामत साधिकत्रिगुणं मूलमध्यान्तपरिधिमानं सूत्रोक्तं सुबोधम् । अत्रापर एकस्य वस्तुनो विष्कम्भादिपरिमाणे द्वैरूप्यासंभवेन प्रस्तुतग्रन्थस्यासातिशय स्थविरप्रणीतत्वेन कथं नान्यतरनिर्णय यदेकस्यापि ऋषभकूटपर्वतस्य मूलादावष्टादियोजनविस्तृतत्वादि पुनस्तत्रैवास्य द्वादशादियोजनविस्तृतत्वादीति सत्य जिनभट्टारकाणां सर्वेषां क्षायिकज्ञानवतामेकमेव मतं मूलत पश्चात्तु कालान्तरेण विस्मृत्यादिनाऽयं वाचनाभेद ॥ यदुक्तं श्रीमलयगिरिसूरिभिर्ज्योतिष्करण्डवृत्तौ " इह स्कन्दिलाचार्यप्रवृत्तौ दु षमानुभावतो दुर्भिक्षप्रवृत्त्या साधूनां पठनगुणनादिकं सर्वमप्यनेशत । ततो दुर्भिक्षातिक्रमे सुभिक्षप्रवृत्तौ द्वयो सङ्घमेलापकोऽभवत् तद्यथा एको वलभ्यामेको मथुरायां तत्र च सूत्रार्थसंघटने परस्परं वाचनाभेदो जात विस्मृतयोर्हि सूत्रार्थयोः स्मृत्वा स्मृत्वा संघटने भवत्यवश्यं वाचनाभेद इत्यादि ततोऽत्रापि दुष्करोऽन्यतरनिर्णय द्वयो पक्षयोरुपस्थितयोरनतिशायिज्ञानिभिरनभिनिविष्टमतिभि प्रवचनाशातनाभीरुभि पुण्यपुरुषैरिति न काचिदनुपपत्ति । किं च सैद्धान्तिकशिरोमणिपूज्यश्रीजिनभद्रगणिक्षमाश्रमणप्रणीतक्षेत्रसमाससूत्रे उत्तरमतमेव दर्शितं यथा "सव्वे वि उसहकूडा, उव्विद्धा अट्ठ जोअणे हुंति । बारस अट्ठ य चउरो, मूले मज्झुवरि विच्छिन्ना ॥१॥ मूले विच्छिन्ने इत्यादि शेषवर्णक' प्राग्वत । अथास्य पद्मवरवेदिकाद्याह । ( से णं एगाए इत्यादि ) स ऋषभकूटाद्रिरेकया पद्मवरवेदिकया तथैवेति । यथा सिद्धायतनकूटवर्णक प्रागुक्तस्तथाऽत्रापि वक्तव्य इत्यर्थ कियत्पर्यन्त इत्याह । यावद्भगवत ऋषभाख्यदेवस्थानं स चायं "एगेण य वणसंडेणं सव्वओ समंता संप-

रिक्खित्ते उसहकूडस्स णं उप्पिं बहुसमरमणिज्जे भूमिभागे पण्णत्ते से जहा णामए आलिंगपुक्खरेइ वा जाव वाणमंतरा जाव विहरंति तस्स णं बहुसमरमणिज्जस्स भूमिभागस्स बहुमज्झदेसभागे मह एगे भवणे पण्णत्ते" इति अत्र व्याख्या पूर्ववत् । भवनमानं साक्षादेव सूत्रे दर्शयति । क्रोशमायामेनार्द्धक्रोशं विष्कम्भेन देशोनक्रोशं चत्वारिंशदधिकचतुर्दशधनुःशतरूपमूर्द्धोच्चत्वेन । यद्यपि भवनायामापेक्षया किंचिन्न्यूनोच्छ्रायमानं भवति प्रासादस्तु आयामद्विगुणोच्छ्राय इति श्रीज्ञाताधर्मकथाङ्गवृत्त्यादौ भवनप्रासादयोर्विशेषो दृश्यते तथाऽप्यत्र तयोरेकार्थकत्वं ज्ञेयम् । श्रीमलयगिरिसूरिभिः क्षेत्रसमासवृत्तौ एतेषां ऋषभकूटानामुपरि प्रत्येकमेकैकः प्रासादावतंसकः ते च प्रासादाः प्रत्येकमेकं क्रोशमायामतोऽर्द्धक्रोशं विष्कम्भतो देशोनं क्रोशमुच्चैस्त्वेनेत्यत्रोक्तं भवनतुल्यप्रमाणतया ऋषभकूटेषु प्रासादानामभिधानादिति । अर्थो नामान्वर्थं ऋषभकूटस्य तथैवेति यथा जीवाभिगमादौ यमकादीनां पर्वतानामुक्तस्तथाऽऽपि औचित्येन वक्तव्यः तदभिलापसूत्रं तु उत्पलानीत्यादिना सूचितं तदनुसारेणेदं " सेकेणट्ठेणं भंते ! एवं वुच्चइ उसहकूडपव्वए २ गोयमा ! उसहकूडपव्वए खुड्डासु खुड्डियासु वावीसु पुक्खरिणीसु जाव विलपंतीसु बहूइं उप्पलाइं पउमाइं जाव सहस्सपत्ताइं उसहकूडप्पभाइं उसहकूडवण्णाइं उसहकूडवण्णाभाइं इति " अत्र व्याख्या प्रश्नसूत्रं सुगमम् । उत्तरसूत्रे ऋषभकूटपर्वते क्षुल्लासु क्षुल्लिकासु वापीषु पुष्करिणीषु यावद्बिलपङ्क्तिषु बहून्युत्पलानि पद्मानि यावत्सहस्रपत्राणि ऋषभकूटप्रभाणि ऋषभकूटाकाराणि ऋषभकूटवर्णानि तथा ऋषभकूटवर्णस्येव आभा प्रतिभासो येषां तानि ऋषभकूटवर्णाभानि ततस्तानि तदाकारत्वात्तद्वर्णत्वात्तद्वर्णसादृश्याच्च ऋषभकूटानीति प्रसिद्धानि तद्योगादेव पर्वतोऽपि ऋषभकूटः । उभयेषामपि नाम्नामनादिकालप्रवृत्तोऽयं व्यवहार इति नेतरेतराश्रयदोषप्रसङ्गः एवमन्यत्रापि परिभावनीयम् । प्रकारान्तरेणाऽपि नामनिमित्तमाह " उसभे अ एत्थ देवे " इत्यादि ऋषभश्चात्र देवो महर्द्धिकः अत्र यावत्करणात् " महज्जुईए जाव उसहकूडस्स उसहाए रायहाणीए अण्णेसिं च बहूणं देवाण य देवीण य आहेवच्चं जाव दिव्वाइं भोगभोगाइं भुंजमाणे विहरइ से एएणट्ठेणं एवं वुच्चइ उसहकूडपव्वए २" इति पर्यन्तं सूत्रपाठो ज्ञेयः । अत्र व्याख्या प्राग्वत् " दाहिणेणं " इत्यादि राजधानी ऋषभदेवस्य ऋषभा नाम्नी मन्दरस्य पर्वतस्य दक्षिणतस्तथैव वाच्या यथा विजया देवस्य प्रागुक्ता अविशेषितं विशेषरहितं क्रियाविशेषणमेतत् । अस्या विजयायाः राजधान्याश्च नामतोऽन्तरं तत्त्वस्मिन् वर्णके इति भाव । जं० ४ वक्ष० ॥

जंबुमंदरपुरच्छिमेणं सीयाए महाणईए उत्तरेणं अट्ठ उसभकूडा पण्णत्ता ॥

अष्टौ ऋषभकूटपर्व्वता अष्टास्वपि विजयेषु तद्भावात् ते च वर्षधरपर्वतप्रत्यासन्ना म्लेच्छखण्डत्रयमध्यखण्डवर्तिनः सर्व्वविजयभरतैरावतेषु भवन्ति तत्प्रमाणं चेदम् ।"सव्वे वि उसहकूडा, उव्विद्धा अट्ठ जोयणा होंति । बारस अट्ठ य चउरो, मूले मज्झुवरि वित्थिण्णा " त्ति ॥ १ ॥

उसभ(ह)कूडदेव-ऋषभकूटदेव-पुं० ऋषभकूटनिवासिनि देवे, "जंबुमंदरपुरच्छिमेण सीयाए महाणईए अट्ठ उसभकूडदेवा पण्णत्ता " स्था०८ ठा० ।

उसभ ( ह ) णाराय-ऋषभनाराच-न० यत्र कीलिकारहित संहनन तदृषभनाराचम् । द्वितीये संहनने, पं०सं० । क०। स्था०

उसभणाह-ऋषभनाथ-पुं० श्रीऋषभदेवे, आ० म० प्र० ।

उसभ ( ह ) दत्त-ऋषभदत्त- पुं० ब्राह्मणकुण्डग्रामवास्तव्ये कोडालसगोत्रे स्वनामख्याते ब्राह्मणवर्य्ये, आचा०२श्रु०। आव०। कल्प० (यस्य देवानन्दानाम्न्या भार्य्यायाः कुक्षौ प्रथमं श्रीवीरजिनः पुत्रत्वेनोपपन्नस्ततो हरिणेगमेषिणा सङ्क्रमितस्त्रिशलायां सिद्धार्थनरेन्द्रमहिष्यां सञ्जज्ञे इति वीरशब्दे स्पष्टीभविष्यति ) तस्य दीक्षावक्तव्यता चैवम् ॥

तेणं कालेणं तेणं समएणं माहणं कुंडग्गामे णामं णयरे होत्था वण्णओ बहुसालए चेइयवण्णओ तत्थ णं माहणकुंडग्गामे णयरे उसभदत्ते णामं माहणे परिवसइ । अड्ढे दित्ते वित्ते जाव अपरिभूए रिउव्वेय जउव्वेय सामवेय अथव्वणवेय जहा खंदओ जाव अण्णेसु य बहुसु य बंभण्णएसु य णएसु परिनिट्ठिए समणोवासए अभिगयजीवाजीवे उवलद्धपुण्णपावे जाव अप्पाणं भावेमाणे विहरइ ॥

तेणमित्यादि सुगमम् ( अड्ढेत्ति ) समृद्धः (दित्तेत्ति) दीप्तस्तेजस्वी दृप्तो वा दर्पवान् । ( वित्तेत्ति ) प्रसिद्धो यावत्करणात् "विच्छिन्नविउलभवणसयणासणजाणवाहणे " इत्यादि दृश्यम्॥ भ० ए श० ३३ उ० ॥

तस्स णं उसभदत्तस्स माहणस्स देवाणंदा णामं माहणी होत्था सुकुमालपाणिपाया जाव पियदंसणा सुरूवा समणोवासिया अभिगयजीवाजीवा उवलद्धपुण्णपावा जाव विहरइ । तेणं कालेणं तेणं समएणं सामी समोसढे परिसा पज्जुवासइ तए णं से उसभदत्ते माहणे इमीसे कहाए लद्धट्ठे समाणे हट्ठ जाव हियए जेणेव देवाणंदा माहणी तेणेव उवागच्छइ उवागच्छइत्ता देवणंदा माहणिं एवं वयासी एवं खलु देवाणुप्पिया समणे भगवं महावीरे आदिगरे जाव सव्वण्णू सव्वदरिसी आगासगएणं चक्केणं जाव सुहं सुहेणं विहरमाणे बहुसालए चेइए अहापडिरूवं उग्गहं जाव विहरइ तं महप्फलं खलु देवाणुप्पिए तहारूवाणं अरहंताणं भगवंताणं णामगोयस्स वि सवणयाए किमंग पुण अभिगमणवंदणणमंसणपाडिपुच्छणपज्जुवासणयाए एगस्स वि आरियस्स धम्मियस्स सुवयणस्स सवणयाए किमंग ! पुण विपुलस्स अट्ठस्स गहणयाए तं गच्छामो णं देवाणुप्पिए समणं भगवं महावीरं वंदामो णमंसामो जाव पज्जुवासामो एयं णे इह भवे परभवे य हियाए सुहाए खमाए आणुगामियत्ताए भविस्सइ तए णं सा देवाणंदा माहणी उसभदत्तेणं माहणेणं एवं वुत्ता समाणी हट्ठ जाव हिययाकरयल जाव कट्टु उसभदत्तस्स माहणस्स एयमट्ठं विणएणं पडिसुणेइ ॥

( हियाएत्ति ) हिताय पथ्यान्नवत् ( सुहाएत्ति ) सुखाय शर्म्मणे ( खमाएत्ति ) क्षमत्वाय सङ्गतत्वायेत्यर्थः ( आणुगामिय-

भाए (त्ति) आनुगामिकत्वाय शुभानुबन्धायेत्यर्थः (हट्ठ) इह यावत्करणादेवं दृश्यं (हट्ठतुट्ठचित्तमाणंदिया) हृष्टं तुष्टमत्यर्थं तुष्टं हृष्टं वा विस्मितं तुष्टं च तोषवच्चित्तं यत्र तत्तथा । तद्यथा भवत्येवमानन्दिता ईषन्मुखसौम्यतादिभावैः समृद्धिमुपगता ततश्च नन्दिता समृद्धतरतामुपगता (पीइमणा) प्रीतिः प्रीणनमाप्यायनं मनसि यस्याः सा प्रीतिमना (परमसोमणस्सिया) परमसौमनस्यं सुष्ठु सुमनस्कता सञ्जाता यस्याः सा परमसौमनस्यिता (हरिसवसविसप्पमाणहियया) हर्षवशेन विसर्पद्विस्तारयायि हृदयं यस्याः सा तथा ।

तए णं से उसभदत्ते माहणे कोडुंबियपुरिसे सद्दावेइ सद्दावेइत्ता एवं वयासी- खिप्पामेव भो ! देवाणुप्पिया ! लहुकरणजुत्तजोइयसमखुरवालिहाणसमलिहियसिंगेहिं जंबूणयमयकलावजुत्तपरिविसिट्ठेहिं रययमयघंटसुत्तरज्जुपवरकंचणणत्थपग्गहोग्गहियएहिं णीलुप्पलकयामेलएहिं पवरगोणजुवाणएहिं णाणामणिरयणघंटियाजालपरिगतसुजातजुगजुत्तरज्जुयजुगपसत्थसुविरचितनिम्मियपवरलक्खणोववेयं धम्मियं जाणप्पवरं जुत्तामेव उवट्ठवेह मम एयमाणत्तियं पच्चप्पिणह । तए णं ते कोडुंबियपुरिसा उसभदत्तेणं माहणेणं एवं वुत्ता समाणा हट्ठ जाव हियया करयल जाव एवं सामी तहत्ति आणाए विणएणं वयणं जाव पडिसुणेत्ता खिप्पामेव लहुकरणजुत्त जाव धम्मियं जाणप्पवरं जुत्तामेव उवट्ठवेत्ता जाव तमाणत्तियं पच्चप्पिणंति । तए णं से उसभदत्ते माहणे ण्हाए जाव अप्पमहग्घाभरणालंकियसरीरे साओ गिहाओ पडिणिक्खमइ पडिणिक्खमइत्ता जेणेव बाहिरिया उवट्ठाणसाला जेणेव धम्मिए जाणप्पवरे तेणेव उवागच्छइ उवागच्छइत्ता धम्मियं जाणप्पवरं दुरूढे ।

(लहुकरणजुत्तजोइए इत्यादि) लघुकरणं शीघ्रक्रियादक्षत्वं तेन युक्तौ यौगिकौ च प्रशस्तयोगवन्तौ प्रशस्तसदृशरूपत्वाद्यौ तौ तथा ततः स्तुगइव प्रतीतौ (वालिहाणत्ति) वालिधाने च पुच्छौ ययोस्तौ तथा समानि लिखितान्युल्लिखितानि शृङ्गाणि ययोस्तौ तथा ततः कर्मधारयोऽतस्ताभ्यां लघुकरणयुक्तयौगिकसमखुरवालिधानसमलिखितशृङ्गकाभ्यां गोयुवभ्यां युक्तमेव यानप्रवरमुपस्थापयतेति सम्बन्धः । पुनः किंभूताभ्यामित्याह । जाम्बूनदमयौ सुवर्णनिर्वृत्तौ यौ कलापौ कण्ठाभरणविशेषौ ताभ्यां युक्तौ प्रतिविशिष्टकौ च प्रधानौ जवादिभिर्यौ तौ तथा ताभ्यां जाम्बूनदमयकलापयुक्तप्रतिविशिष्टकाभ्यां रजतमय्यौ रूप्यविकारे घण्टे ययोस्तौ तथा सूत्ररज्जुके कार्पासिकसूत्रदवरकमय्यौ वरकाञ्चने प्रवरसुवर्णमण्डितत्वेन प्रधानसुवर्णे ये नस्ते नासिकारज्जू तयोः प्रग्रहेण रश्मिना अवगृहीतकौ बद्धौ यौ तौ तथा ततः कर्मधारयोऽतस्ताभ्यां रजतमयघण्टसूत्ररज्जुकवरकाञ्चननस्ताप्रग्रहावगृहीतकाभ्यां नीलोत्पलैः कृतआमेलक आपीडः शेखरो ययोस्तौ ताभ्यां नीलोत्पलकृतापीडकाभ्याम् (पवरगोणजुवाणएहिं त्ति) प्रवरगोयुवभ्यां नानामणिरत्नानां सत्का घण्टिका प्रधान जाल जालकं तेन परिगतं परिक्षिप्तं यत्तत्तथा सुजातं सुजातदारुमयं यद्युगं यूपस्तत्सुजातयुग तथा योक्त्ररज्जुकायुगञ्च योक्त्राभिधानरज्जुकायुगं सुजातयुगयोक्त्ररज्जुकायुगे ते प्रशस्ते अतिशुभे सुविरचिते सुघटिते निर्मिते निवेशिते यत्र तत् सुजातयुगयोक्त्ररज्जुकायुगप्रशस्तसुविरचितनिर्मितम् (एवंसामित्यादि) एवं स्वामिन् (तहत्ति) आज्ञया इत्येवं ब्रुवाण इत्यर्थः । विनयेनाञ्जलिकरणादिना ।

तए णं सा देवाणंदा माहणी अंतो अंतेउरंसि ण्हाया कयबलिकम्मा कयकोउयमंगलपायच्छित्ता किं ते वरपादपत्तनेउरमणिमेहलाहाररइयउचियकडगखुड्डुयएगावलीकंठसुत्तउरत्थगेवेज्जसोणिसुत्तगणाणामणिरयणभूसणविराइयंगी चीणंसुयवत्थपवरपरिहिया दुगुल्लसुकुमालउत्तरिज्जा सव्वोउयसुरभिकुसुमवरियसिरया वरचंदणवंदिया वराभरणभूसियंगी कालागुरुधूमधूविया सिरिसमाणवेसा जाव अप्पमहग्घाभरणालंकियसरीरा बहूहिं खुज्जाहिं चिलाइयाहिं वामणियाहिं वडभियाहिं बब्बरियाहिं पउसियाहिं ईसिगणियाहिं चारुगणियाहिं जोणियाहिं पल्हवियाहिं ल्हासियाहिं लउसियाहिं आरबीहिं दमिलाहिं सिंघलीहिं पुलिंदीहिं पक्कणीहिं बहलीहिं मुरुंडीहिं सबरीहिं पारसीहिं णाणादेसीविदेसपरिपिंडियाहिं सदेसनेवत्थगहियवेसाहिं इंगियचिंतियपत्थियवियाणियाहिं कुसलाहिं विणीयाहिं चेडियाचक्कवालवरिसधरथेरकंचुइज्जमहत्तरगविंदपरिक्खित्ता जाव अंतेउराओ णिग्गच्छइ णिग्गच्छइत्ता जेणेव बाहिरिया उवट्ठाणसाला जेणेव धम्मिए जाणप्पवरे तेणेव उवागच्छइ उवागच्छइत्ता जाव धम्मियं जाणप्पवरं दुरूढा ।

(तए णं सा देवाणंदा माहणीत्यादि) । इह च स्थाने वाचनान्तरे देवानन्दावर्णक एवं दृश्यते (अंतो अंतेउरंसि ण्हाया) अन्तर्मध्ये अन्तःपुरस्य स्नाता अनेन च कुलीना स्त्रियः प्रच्छन्नाः स्नान्तीति दर्शितम् । (कयबलिकम्मा) गृहदेवताः प्रतीत्य (कयकोउयमंगलपायच्छित्ता) कृतानि कौतुकमङ्गलान्येव प्रायश्चित्तान्यवश्यकार्यत्वाद्यया सा तथा तत्र कौतुकानि मषीतिलकादीनि मङ्गलानि सिद्धार्थकदूर्वादीनि (किं ते) किञ्चान्यत् (वरपादपत्तनेउरमणिमेहलाहाररइयउचियकडयखुड्डयएगावलीकंठसुत्तउरत्थगेवेज्जसोणिसुत्तगनाणामणिरयणभूसणविराइयंगी) वराभ्यां पादप्राप्तनूपुराभ्यां मणिमेखलया हारेण च रचितैः रतिदैर्वा सुघटोचितैर्युक्तैः कटकैश्च (खड्डुगत्ति) अङ्गुलीयकैश्च एकावल्या च विचित्रमणिमय्या कण्ठसूत्रेण च उरःस्थेन च रूढिगम्येन ग्रैवेयकेण च प्रतीतेन उरःस्थग्रैवेयकेण वा श्रोणिसूत्रकेण च कटीसूत्रेण नानामणिरत्नानां भूषणैश्च विराजितमङ्गं शरीरं यस्याः सा तथा (चीणंसुयवत्थपवरपरिहिया) चीनांशुकं नाम यद्वस्त्राणां मध्ये प्रवरं तत्परिहितं निवसनीकृतं यया सा तथा (दुगुल्लसुकुमालउत्तरिज्जा) दुकूलो वृक्षविशेषस्तद्वल्कलाज्जातं दुकूलं वस्त्रविशेषस्तत्सुकुमारमुत्तरीयमुपरिकायाच्छादनं यस्याः सा तथा (सव्वोउयसुरभिकुसुमवरियसिरया) सर्वर्तुकसुरभिकुसुमैर्वृत्ता वेष्टिता शिरोजा यस्याः सा तथा (वरचंदणवंदिया) वरचन्दनं वन्दितं ललाटे निवेशितं यया सा तथा (वराभरणभूसियंगी) व्यक्तम् । (कालागुरुधूमधूविया) इत्यपि व्य-

कम । ( खिरिसमाणवेसा ) श्रीवैतना तया समागनेपथ्या इत प्रकृतया नैनाट्यमिने ( खुज्जाहिंति ) कुब्जिकाभिर्वक्रज-ङ्घाभिरित्यर्थ ( चिलाइयाहिंति ) चिलातदेशोत्पन्नाभि या-वत्करणादिदं दृश्यम् ( वामणियाहिं ) ह्रस्वशरीराभि ( वड-हियाहिं ) मडहकोष्ठाभि ( बव्बरियाहिं पओसियाहिं इ-सिगणियाहिं थासगणियाहिं जोणियाहिं पल्हवियाहिं ल्हासि-याहिं लओसियाहिं आरवीहिं दमिलाहिं सिंहलीहिं पुलिंदीहिं पक्कणीहिं बहलीहिं मुरुडीहिं सबरीहिं पारसीहिं नाणादेसी-विदेसपरिपिंडियाहिं ) नानादेशीभ्यो बहुविधजनपदेभ्यो विदेशे तद्देशापेक्षया देशान्तरे परिपिरिडता यास्तास्तथा (स-देसनेवत्थगहियवेसाहिं ) स्वदेशनेपथ्यमिव गृहीतो वेषो यकाभिस्तास्तथा ताभि ( इंगियचिंतियपत्थियवियाणि-याहिं ) इङ्गितेन नयनादिचेष्टया चिन्तितञ्च परेण प्रार्थित चाभिलषित विजानन्ति यास्तास्तथा ताभि ( कुसलाहिं विणीयाहिं ) युक्ता इति गम्यते ( चेडियाचक्कवालवरिसध-रथेरकचुइज्जमहत्तरयविंदपरिक्खित्ता ) चेटीचक्रवालेनार्था-त्स्वदेशसम्भवेन वर्षधराणां वर्द्धितकरणेन नपुंसकीकृतानाना-मन्त पुरमहल्लकानाम् । ( थेरकचुइज्ज त्ति ) स्थविरकञ्चुकि-नामन्त पुरप्रयोजननिवेदकाना प्रतीहाराणां वा महत्तरकाना चान्त पुरकार्यचिन्तकाना वृन्देन परिक्षिप्ता या सा तथा । इद च सर्व वाचनान्तरे साक्षादेवास्ति ॥

तए ण से उसजदत्ते माहणे देवाणंदामाहणीए सद्धि ध-म्मियं जाणप्पवरं दुरूहमाणे णियगपरियालसपरिवुडे माह-णकुंडग्गामं णयरं मज्झं मज्झेणं णिग्गच्छइ निग्गच्छइत्ता जेणेव बहुसालए चेइए तेणेव उवागच्छइ उवागच्छइत्ता छत्ताइए तित्थकराइसए पासइ पासइत्ता धम्मियं जाणप्प-वरं ठवेइ ठवेइत्ता धम्मियाओ जाणप्पवराओ पच्चोरुहइ पच्चोरुहइत्ता समणं भगवं महावीरं पचविहेणं अभिगमेणं अभिसमागच्छइ तं सचित्ताणं दव्वाणं विउसरणयाए एवं जहा बिइए सए जाव तिविहाए पज्जुवासणयाए पज्जु-वासइ । तए ण सा देवाणंदा माहणी धम्मियाओ जाण-प्पवराओ पच्चोरुहइ पच्चोरुहइत्ता बहूहिं खुज्जाहिं जाव महत्तरगपरिक्खित्ता समणं भगवं महावीरं पंचविहेणं अभिगमेणं अभिसमागच्छइ तं सचित्ताणं दव्वाणं विउसर-णयाए अचित्ताणं दव्वाणं विमोयणयाए विणयोणयाए गायलट्ठीए चक्खुप्फासे अंजलिपग्गहेणं मणसो एगत्ती-भावकरणेणं जेणेव समणे भगवं महावीरे तेणेव उवागच्छइ उवागच्छइत्ता समणं भगवं महावीरं तिक्खुत्तो आयाहिणं पयाहिणं करेइ करेइत्ता वंदइ णमंसइ वंदइत्ता णमंसित्ता उसजदत्तं माहणं पुरओ कट्टु ठिया चेव सपरिवारा सु-स्सूसमाणी णमंसमाणी अभिमुहा विणएणं पजलिउडा पज्जुवासइ ॥

( सचित्ताण दव्वाण विओसरणयाएत्ति ) पुष्पताम्बूलादि-द्रव्याणां व्युत्सर्जनतया त्यागेनेत्यर्थ ( अचित्ताणं दव्वाण अविमोयणयाएत्ति ) वस्त्रादीनामत्यागेनेत्यर्थ ( मणसो एग-त्तीभावकरणेणंति ) अनेकस्य सत एकत्वकरणभावकरणेन ( ठियाचेवत्ति ) उर्द्धस्थानस्थितैव अनुपविष्टेत्यर्थ ।

तए णं सा देवाणंदा माहणी आगयपण्हया पप्फुयलो-यणा संवरियवलियबाहा कंचुयपरिक्खित्तिया धाराह-तकलंबपुप्फगं पिव समुस्ससियरोमकूवा समणं भगवं म-हावीरं अणिमिसाए दिट्ठीए देहमाणी २ चिट्ठइ भंतेत्ति ! भगवं गोयमे समणं भगवं महावीरं वंदइ णमंसइ वंदित्ता णमंसित्ता एवं वयासी किं णं भंते ! एसा देवाणंदा मा-हणी आगयपण्हया तं चेव जाव रोमकूवा देवाणुप्पिए अणिमिसाए दिट्ठीए देहमाणी २ चिट्ठइ गोयमादिसमणे भगवं महावीरे भगवं गोयमं एवं वयासी एवं खलु गो-यमा ! देवाणंदा माहणी मम अम्मगा अहं णं देवाणंदाए माहणीए अत्तए तए णं सा देवाणंदा माहणी तेणं पुव्व-पुत्तसिणेहाणुरागेणं आगयपण्हया जाव समुस्ससियरोम-कूवा ममं अणिमिसाए दिट्ठीए देहमाणी २ चिट्ठइ तए णं समणे भगवं महावीरे उसजदत्तस्स माहणस्स देवाणंदाए माहणीए तीसय महइ महालियाए इसिपरिसाए जाव परिसापडिगया तए णं से उसजदत्ते माहणे समणस्स भ-गवओ महावीरस्स अंतियं धम्मं सोच्चा णिसम्म हट्ठतुट्ठे उट्ठाए उट्ठेइ उट्ठेइत्ता समणं भगवं महावीरं तिक्खुत्तो जाव णमंसित्ता एवं वयासी एयमेयं भंते ! तहमेयं भंते ! जहा खंदओ जाव से जहे यं तुब्भे वदह तिकट्टु उत्तरपुरच्छिमं दिसीभागं अवक्कमइ अवक्कमइत्ता सयमेव आभरणमल्लालंकारं उमुयइ उमुयइत्ता सयमेव पंचमुट्ठियं लोयं करेइ करेइत्ता जेणेव समणे भगवं महावीरे तेणेव उवागच्छइ उवागच्छइत्ता समणं भगवं महावीरं ति-क्खुत्तो आयाहिणं पयाहिणं जाव णमंसित्ता एवं वया-सी आलित्तेणं भंते ! लोए पलित्तेणं भंते ! लोए जराए म-रणेण य एवं एएणं कमेणं जहा खंदओ तहेव पव्वइए जाव सामाइयमाइयाइं एक्कारस अंगाइं अहिज्जइ जाव बहूहिं चउत्थछट्ठट्ठमदसम जाव विचित्तेहिं तवोकम्मेहिं अप्पाणं भावेमाणे बहूइं वासाइं सामण्णपरियागं पाउणइ पाउणइ-त्ता मासियाए संलेहणाए अत्ताणं झूसेइ झूसित्ता सट्ठिं भत्ताइं अणसणाइं छेदेइ छेदेइत्ता जस्स ट्ठाए कीरइ नग्ग-भावे जाव तमट्ठं आराहेत्ता जाव सव्वदुक्खप्पहीणे तए णं सा देवाणंदा माहणी समणस्स भगवओ महावीरस्स अं-तिए धम्मं सोच्चा णिसम्म हट्ठतुट्ठा समणं भगवं महावीरं तिक्खुत्तो आयाहिणं पयाहिणं जाव णमंसित्ता एवं वयासी एयमेयं भंते ! तहमेयं भंते ! एवं जहा उसजदत्तो तहेव जाव धम्ममाइक्खइ तए णं समणे भगवं महावीरे देवाणंदा माहणिं सयमेव पव्वावेइ पव्वावेइत्ता सयमेव अज्जचंदणाए

अज्जाए सीसिणित्ताए दलयति२त्ता तए णं सा अज्जचंदणा अज्जा देवाणंदा माहणिं सयमेव मुंडावेइ२त्ता सयमेव सेहावेइ२त्ता एवं जहा उसभदत्तनेमहेव अज्जचंदणाए अज्जाए इमं एयाणुरूवं धम्मियं उवदेसं सम्मं पडिवज्जइ२त्ता तमा णाए तह गच्छइ २त्ता जाव संजमेणं संजमइ। तए णं सा देवाणंदा अज्जा अज्जचंदणाए अज्जाए अंतियं सामाइयमाइयाइं एक्कारस अंगाइं अहिज्जइ सेसं तं चेव जाव सव्वदुक्खप्पहीणा॥ ( आगयपण्हयत्ति ) आयातप्रस्नवा पुत्रस्नेहादागतस्तननुखस्तन्येत्यर्थः ( पप्फुयलोयणा ) प्रप्लुतलोचना पुत्रदर्शनप्रवर्तितानन्दजलेन ( संवरियवलयबाहा ) संवृतौ हर्षातिरेकादतिस्थूलीभवन्तौ निषिद्धौ वलयैः कटकैर्बाहू भुजौ यस्याः सा तथा। ( कंचुयपरिक्खित्तिया ) कञ्चुको वारवाण परिक्षिप्तो विक्षिप्तो विस्तारितो हर्षातिरेकस्थूरीभूतशरीरतया यया सा तथा ( धाराहयकलंबपुप्फगमिवसमुस्ससियरोमकूवा ) मेघधाराभ्याहतकदम्बपुष्पमिव समुच्छ्वसितानि रोमाणि कूपेषु रोमरन्ध्रेषु यस्याः सा तथा ( पेहमाणत्ति ) प्रेक्षमाणा आज्ञीरेण्यो चात्र द्विरुक्ति ( भंतेत्ति) भदन्त ! इत्येवमामन्त्रणवचमाऽऽमन्त्येत्यर्थः ( गोयम ! इति ) एवमामन्त्येत्यर्थः। अथवा गौतम इति नामोच्चारणम ( अयीति ) आमन्त्रणार्थे निपातो हे भो इत्यादिवत् ( अत्तएत्ति ) आत्मजः पुत्र ( पुव्वपुत्तसिणेहाणुरागेणंति ) पूर्वं प्रथमगर्भाधानकालसन्तयो यः पुत्रस्नेहलक्षणोऽनुरागः स पूर्वपुत्रस्नेहानुरागस्तेन ( महइमहालियाएत्ति ) महती चासावतिमहती चेति महातिमहती तस्यै आलप्रत्ययश्चेह प्राकृतप्रभवः ( इसिपरिसाएत्ति ) पश्यन्तीति ऋषयो ज्ञानिनस्तद्रूपा पर्षत्परिवारः ऋषिपर्षत्तस्यै यावत्करणादिदं दृश्यम्- "मुणिपरिसाए जइपरिसाए अणेगसयाए अणेगसयविंदपरिवाराए इत्यादि" तत्र मुनयो वाचंयमा यतयस्तु धर्मक्रियासु प्रयतमाना अनेकानि शतानि यस्या सा तथा तस्यै अनेकशतप्रमाणानि वृन्दानि परिवारो यस्या सा तथा तस्यै ( तएणं सा अज्जचंदणा अज्जेत्यादि ) इह च देवानन्दाया भगवता प्रव्राजनकरणेऽपि यदार्यचन्दनया पुनस्तत्करणं तच्चैवानवगतावगमकरणादिना विशेषाधानमित्यवगन्तव्यमिति (तमाणाएत्ति) तदाज्ञया आर्यचन्दनाज्ञया। भ० ९ श० ३३ उ०। विपाकदशानां तृतीयस्य सविपाकोक्तसुजातकुमारस्य पूर्वभवे जीवे च। "उसुयारणयरे उसभदत्ते गाहावई" वि० ४ अ०॥

उसभ ( ह ) पुर-ऋषभपुर- न० राजगृहनगरप्रस्थापकराजपूर्वजेन प्रस्थापिते पुरभेदे, " तत्थ एगो वसतो अच्छेहिं परद्धो एगागिणे अच्छति न नीरति अच्छेहिं वसतेहिं पराइणेतु" आ० चू० ४ अ०। आव०। " क्षीणवास्तुनि तत्रापि,चरन्त वृषभं वने। दृष्ट्वाऽन्याजय्यमृषभ, पुरं तत्र व्यधात्पुन ॥" आ० म०। आ० क०। यत्र जीवप्रदेशिकाख्या द्वितीयनिह्नवा उत्पन्नास्तस्मिन् नगरे, विशे०। आ० क०। स्था०। " उसहपुरे णयरे थूभकरंडुजाणे " विपा० २ श्रु० २ अ०।

उसभ ( ह ) पुरी-ऋषभपुरी-स्त्री०जम्बूद्वीपे मन्दरस्य पूर्वेण सीतोदाया महानद्या दक्षिणतस्थे राजधानीभेदे, स्था०७ठा०

उसभ ( ह ) सेण-ऋषभसेन- पुं० भगवत ऋषभदेवस्य प्रथमगणधरे, " उसभसेणो णाम भरहस्स रण्णो पुत्तो सो धम्मं सोऊण पव्वइओ तेण तिहिं पुव्वाइं गहिताइं उप्पण्णे विगते धुवे " आ० चू० १ अ०। कल्प०। स०। (अस्य ऋषभशब्दे वक्तव्यतोक्ता) " आइगरएरिमताले पव्वत्तिया उसभसेणस्स " नं०॥

उसा-उषा- स्त्री० ओषत्यन्धकारम्-उष्-क-प्रातरादिसन्ध्यासु, " तेज परिहानिरुपा, भानोरर्द्धोदयं यावत् " वृहत्संहितोक्ते काले, नक्षत्रप्रभाक्षय काल उषा तेन पञ्चाशद्घटिकोत्तरमारभ्य सूर्यार्द्धोदयपर्यन्तः स कालः लग्नाधस्तात्रे उषाकाले यात्राशस्ता अन्धकारेण सन्तापकारिण्यां रात्रौ, मेदि०। क्षारभूमौ, ततः कथित् गौरादित्वाङ्ङीप् स्त्री०। गव्याम, हेम०। स्थाल्याम, रमानाथ। प्रात काले, अव्य० मेदि०। अव्ययत्वात् ततो भवार्थे टयुल्तुट् च उषातन। तद्भवे, त्रि० स्त्रियां ङीप्। वाच०॥

उसिंचित्ता-अपसिञ्चयितृ- त्रि० उपतापयितरि, "उसिणोदगवियडेण कायं उसिंचित्ता भवति " उष्णोदकविकटेन कायं शरीरमपसिञ्चयिता भवति। तत्र विकटग्रहणादुष्णतैलेन काञ्जिकादिना कायमुपतापयिता भवति दशा० ३ अ०॥

उसिक्क-मुच्-धा० तुदा० सक० अनि० मुचेश्छड्डावेहरुमेल्लोसिक्करे अवणिलुञ्छधंसाडाः ८।४।९१। इति मुचेरुसिक्कादेशः। उसिक्कइ मुअइ मुञ्चति। प्रा०।

उसिक्किया-अपष्वष्क्य-अव्य०प्रज्वाल्येत्यर्थे, आचा० २ श्रु०।

उसिण-उष्ण-पुं०न० उषति दहति जन्तूनित्युष्णम् उत्त०२अ०। आहारपरिपाकादिकारणे वह्न्याद्यनुगते स्पर्शभेदे, अनु०। स्था० ( उष्णनिक्षेपः सीउण्हशब्दे वक्ष्यते ) उष्णयुक्ते, त्रि० अमरः। उष्णस्पर्शपरिणामे, 'उसिण वेयणं वेयंति' उष्णां वेदनां वेदयन्ते उष्णस्पर्शपरिणामा उष्णा प्रज्ञा०७ पद०। उष्णा प्रथमादिषु उष्णस्पर्शजनिता वेदना। स्था०१० ठा०। "उसिणपरितावेहिं घिसु" आ० चू० १ अ०।

उसिणजोणिय-उष्णयोनिक-पुं० उष्णमेव योनिर्येषान्ते उष्णयोनिकाः। उष्णोत्पन्नेषु जीवेषु,। भ० ७ श० २ उ०।

उसिणपरि ( री ) सह-उष्णपरि ( री ) षह-पुं० उपदाहे इत्यस्यौणादिकनकप्रत्ययान्तस्य उष्ण निदाघादितापात्मकं तदेव परीषहः। परीषहभेदे, उत्त० २ अ०। सूत्र०। तद्वक्तव्यता ( उपदहपरीसहप्रकरणे उक्ता )

उसिणभूय-उष्णीभूत- त्रि० अस्वाभाविकमौष्ण्यं प्राप्ते, "उसिणे उसिणब्भूए यावि होत्या",भ० ३ श० २ उ०। अनन्तरपि नरकगतजाड्यापगमाज्जातोत्साहे, जी०३ प्रति० १ उ०।

उसिणोदग-उष्णोदक-न० स्वभावत एव क्वचिन्निर्झरादावुष्णपरिणामेऽप्कायभेदे, जी० १ प्रति०। प्रज्ञा०। क्वथितोदके, "उसिणोदग तत्तफासुयं पडिगाहेज्ज संजए" द० ७ अ०। तच्च त्रिभिर्दण्डैरुत्कलितमावृतं यदुष्णोदकम् प्रव० १३५ द्वा०। पिं०। कल्प०।

उसिणोदगतत्तभोइ ( ण् )-उष्णोदकतप्तभोजिन्-पुं० त्रिदण्डोद्वृत्तोष्णोदकभोजिनि, ॥

उसिणोदगतत्तभोइणो, धम्मट्ठियस्स मुणिस्स हीमतो।
संसग्गिअ साहुराइहिं, असमाही उ तहागयस्स वि।१८।

( उसिणोदगेत्यादि) मुनेरुष्णोदकतप्तभोजिनः त्रिदण्डोद्वृत्तोष्णोदकभोजिनः। यदि वा उष्णं सन्त शीतीकुर्यादिति तप्तग्रहणम। तथा श्रुतचारित्राख्ये धर्मे स्थितस्य ( हीमतोत्ति ) ह्रीरसं-

यम प्रति जुगुप्सा तद्वतोऽसंयमजुगुप्सावत इत्यर्थः । तस्यैवंभूतस्य मुने राजादिभिः सार्द्धं य संसर्ग: स्वस्थोऽसावसाधुग्नथोद्यहेतुत्वात्तथा गतस्यापि यथोक्तानुष्ठायिनोऽपि राजादिससर्गप्रशात्मनाभिर्वेवापरथानमेव स्यात् न कदाचित् स्वाध्यायादिक भवेदिति ॥ १८ ॥

उसिणोदगनियड-उष्णोदकविकट-न० अप्रासुके त्रिदण्डोद्वृत्ते पश्चाद् वा सचित्तीभूते उष्णोदके, आचा०२ श्रु०१अ०६उ०

उसि णेसिणा-उष्णोष्ण- त्रि० अत्युष्णे, प्रश्न० १ द्वा० ॥

उसिय-उषित- त्रि० वस्-क्त-व्यवस्थिते, "उसिया वि इत्थिपोसेसु पुरिसा" सूत्र० १ श्रु० ४ अ० १ उ० । वस-क्त पर्युषिते, कृतवासे, च । उप दाहे-क्त । दग्धे, मे० । क्षरिते, अरणि । भावे क्त । वासे, न० वाच० । आचा० २ श्रु० ।

उसि(स्सि)य(उसिय)य-उच्छ्रित-त्रि० ऊर्ध्वं नीते, ज्ञा० १ अ० । उत्ते० कृते, उत्त०२२ अ०। प्रख्याते, सूत्र०२ श्रु०७ अ०। ज्ञा०। प्रज्ञा० उत्सृत-त्रि० प्रबलतया सर्वासु दिक्षु प्रसृते, ज० प्र०१ पाहु०। विपा० । लम्बमाने, "मुत्तजालतरुसियहेमजालगवक्ख" रा०।

उसियफालिय-उच्छ्रितस्फटिक- त्रि० उच्छ्रित प्रख्यातं स्फटिकवन्निर्मलं यशो यस्य। असौ उच्छ्रितस्फटिक । प्रख्यातनिर्मलयशसि, सूत्र० २ श्रु० ७ अ० । उच्छ्रितानि स्फटिकानीव स्फटिकानि अन्तःकरणानि येषां ते तथा । शुद्धान्तःकरणेषु, सूत्र० २ श्रु० २ अ० ।

उसीणर-उशीनर-पु० वृष्णिवंशोद्भवे क्षत्रियभेदे, "उशीनरश्च विक्रान्तो, वृष्णयस्ते प्रकीर्तिता" पौरवे नृपभेदे, "उशीनर च धर्मज्ञ, नितिकुन्च महावलम्। हरिवंशे कपोतार्थे स्वशरीरमांस दान प्रसिद्धम् वाच० । त्रिशङ्कुपुत्रे सुनारादेव्या पतौ, ती०।

उसीर-उ (षी) शीर-पु० न० वश-ईरन् किच्च वीरणमूले सूत्र० १ श्रु० ४ अ० । ज्ञा० । जी० । आ० म० प्र० । रा० । प्रश्न० । च०। आचा०। उत्त० । तस्य गुणा ' उशीरं पाचनं शीतं, स्तम्भनं लघु तिक्तकम् । मधुरं ज्वरहृद्वान्तिमदकुत्कफपित्तनुत् । तृष्णास्त्रविषवीसर्प दाहकृच्छ्रव्रणापहम् । भावप्र० ।

उसु-इषु-पु० इष्यते हिंस्यते अनेन इष-उ-हस्वश्च । शरे, सूत्र० १ श्रु० ५ अ० १ उ० । प्रतोदे, सूत्र० १ श्रु० ५ अ०२उ०। शरपत्रफलादिसमुदाये, "अहेण से उसू" भ० ५ श० ६ उ०। कामस्य पञ्चबाणत्वात्तद्नुस्तया पञ्चसंख्यान्विते वृत्तक्षेत्रान्तर्गते जीवावधिपरिधिपर्यन्तकृतसरलरेखायां च । वाच० ॥

तत्र इषोरानयनाय करणमाह ।

धणुवग्गाओ नियमा, जीवावग्गं विसोहइत्ताणं ।
सेसस्स छट्ठभागे, जं मूलं तं उसू होइ ॥

नियमादवश्यतया धनुःपृष्ठवर्गात् जीवावर्ग विशोध्यापनीय शेषस्य षड्भागे षड्भिर्भागे हृते यन्मूलमागच्छति तदिषुरिषुपरिमाण भवति तत्र भरतक्षेत्रस्य धनुःपृष्ठवर्गे सप्तक पट्को द्विकोऽष्टौ च शून्या । तस्मात् जीवावर्गे सप्तक पञ्चक, पट्कोऽष्टौ शून्यानि । ५४६०००००००० तस्य षड्भिर्भागे हृते आगत एककोऽष्टौ शून्यानि १००००००००० एतस्य वर्गमूलनयने लब्धानि दशसहस्राणि कलानां तासामेकोनविंशत्या भागे हृते लब्धानि योजनानां पञ्चशतानि षड्विंशत्यधिकानि षट् कला एतावान् भरतक्षेत्रस्येषु । एवं सर्वेषामपि क्षेत्राणामिषव आनेतव्या ' जो० १० पाहु० ।

उसुकाल-उष्णुकाल-पुं० देशी० उदूखले, नि० चू० १३ उ० ।

उसुग-इषुक-पु० इषु-स्थूला कन् शरप्रकारे, वाच० । इषुकाकारे, आभरणे, तिलके च । " उसुगाइएहिं मंडेहिं नावण अह्वण विभूसेमि " पिं० ।

उसुचोइय-इषुचोदित-त्रि० शराभिघातप्रेरिते, सूत्र० १ श्रु० ५ अ० २ उ० ।

उसुमट्टिया-इषुमृत्तिका-स्त्री० मुक्तादिभिः सह कुट्टितमृत्तिकायाम्,"सा इसियाइयेपिव्वित होंति उसुमट्टिया य तन्मिस्सा। सरसमट्ठोऽसिगित्ति तम्मेव ठवति तस्स हत्थी सो य मुञ्जो दव्वो वा पतेत्विप्पितत्तिकुट्टिया पुणो मट्टियाए सह कुट्टिज्जंति एसा उसुमट्टिया कुसुमट्टिया वा" नि०चू०१८ उ० ।

उसुयार-इषुकार-पुं० इषु करोति-कृ-अण् । बाणकारके शिल्पिभेदे, वाच० ।

अस्य निक्षेपः ।

उसुयारे निक्खेवो, चउव्विहो दुविहो होइ दव्वम्मि ।
आगम नोआगमओ, नोआगमओ य सो तिविहो ॥९४॥
जाणगसरीरभविए, तव्वइरित्ते य से पुणो तिविहो ।
एगभवियबद्धाओ, अभिमुहओ नामगोए य ॥९५॥
उसुयारनामगोयं, वेदंता भावओ य उसुयारे ।
तत्तो समुट्ठियमिणं, उसुयारिज्जंति अज्झयणं ॥९६॥

गाथात्रयं स्पष्टमेव नवरमिषुकाराभिलापेन नेयं तथा यदिषुकारात्समुत्थितं तत्तस्मै प्रायो हितमेव भवतीति इषुकाराय हितमिषुकारीयमुच्यते प्राधान्याच्च राज्ञो निर्देशोऽन्यथा षड्भ्योऽप्येतत्समुत्थानं तुल्यमेवेति ।

सम्प्रति कोऽयमिषुकार इति तद्वक्तव्यतामाह निर्युक्तिकृत् ।

पुव्वभवे संघडिया उ, संपीया अन्नमन्नमणुरत्ता ।
भोत्तूण भोगभोगे, निग्गंथा पव्वए समणा ॥९७॥
काऊण य सामन्नं, पउमगुम्मे विमाणे उववन्ना ।
पलिओवमाइ चउरो, ठिई उ उक्कोसया तेसिं ॥९८॥
तत्तो य चुया संता, कुरुजणवयपुरम्मि उसुयारे ।
छा वि जणा उववन्ना, चरिमसरीरा विगयमोहा ॥९९॥
राया उसुयारो य, कमलावइ देवि अग्गमहिसी से ।
भिगुनामे य पुरोहिए, वासिट्ठी भारिया तस्स ॥४००॥
उसुयारपुरे नयरे, उसुयारपुरोहिओ उ अणवच्चो ।
पुत्तस्स कए बहुसो, परितप्पंती दुयग्गावि ॥ १ ॥
काउण समणरूवं, तहियं देवो पुरोहिओ भणइ ।
होहिंति तुज्झ पुत्ता, दोन्नि जणा देवलोगचुया । २ ।
तेहि य पव्वइयव्वं, जहा य न करेह अंतरायएहे ।
ते पव्वइया संता, बोहेहिंती जणं बहुगं च ॥ ३ ॥
तं वयण सोऊणं, नगराओ निंति ते वयग्गामं ।
वट्टंति य ते जहियं, गाहंति य णं असक्कारं ॥ ४ ॥
एए समणा धुत्ता, पेयपिसायरोरमाढा य ।
मा तेसिं अल्लियहा, मा मे पुत्ता विणासेज्जा ॥ ५ ॥

दट्ठूण तहिं समणे, जइ पोराणियं च सरिऊण ।
दोण्णि तम्मापियरो, उसुयारं रायपत्तिं च ॥ ६ ॥
सोमंधरो य राया, भिगू य वासिट्ठगोयपत्तियं ।
बंभणी दारगा चेव, छप्पेए परिनिव्वुया ॥ ७ ॥

आसामक्षरार्थः स्पष्ट एव नवरं ( संघडियत्ति ) सम्यग् घटिता परस्परं स्नेहेन संबद्धा वयस्या इति यावत् तेऽपि वक्ष्यमाणद्विजातीनां पूर्वस्नेहिनो देशियोषितां पाठान्तराण्यपि तथा स्फुरन्ति आह । सम्प्रीता- सम्यगान्तरप्रीतिभाजस्तथा अन्योन्यमनुरक्ता अन्योन्यस्य स्थापनकरत्वादस्यात्यन्तस्नेहभाजः । अथवा ( संघाडियत्ति ) देशीपदमन्युत्पन्नमेव । मित्रानिवाथि प्रीतिर्वा सहानुराग समन्वित- प्रतिबन्ध पठ्यते च ( घडियाउत्ति ) घटिता मिलितास्तथा ( भोगभोगेत्ति ) भोक्तुं योग्या ये भोग्या भोगास्तान् भोग्यभोगान् भोगभोगान्वाऽतिशायिनो भोगानपागान्तरत कामभोगान्वा ( णिग्गंथापव्वइए समणत्ति ) निर्ग्रन्थास्त्यक्तग्रन्थाः प्रायजत प्रव्रज्या गृहं तस्यनन्तस्तनश्च श्रमणतपस्विनोऽपि अञ्जुवभिन्न शेष [ कुचग्गावित्ति ] देशीपद प्रक्रमाच्च्युत्वा द्वावपि दम्पती तथा अन्तराय विघ्नं (एहेत्ति) अनयोस्तथा ( णितित्ति) निर्यान्त्याधिक्येन गच्छन्ति कं व्रजग्रामं गोकुलप्रायग्रामं प्रत्यन्तग्राममित्यर्थः ( गोहंति असंभावति ) आहयतोऽसद्भावमसन्तमसुन्दर चार्थं साधुप्रेतत्वादिवक्षणं प्रेता भूता पिशाचा पिशाचनिकायोत्पन्ना पौरुपादाश्च प्रस्तावेन पुरुषसवन्धिमांसभक्षका राक्षसा इति यावत् ( तेसिंति ) सूत्रत्वात् तान् श्रमणान् [ अल्लियहत्ति ] आलीयेतामाश्रयेताम् । किमित्यत आह मा [ भे ] भवन्तौ पुत्रौ विनश्येतामिति । अत्र चेषुकारमिति राज्यकालनाम्ना सीमन्धरश्चेति मौलिकनाम्ना इति संनाययाम इति गाथैकादशावयवार्थः । भावार्थस्तु सम्प्रदायादवसेय स चायं 'जे ते दोन्नि गोवदारया साहु अणुकम्पाए अवसम्मत्ता काउं काऊण देवलोगे उ चइत्ता ते तओ देवलोगाओ चइऊ खिइपइट्ठणयरे इब्भकुले दो वि भायरा जाया । तत्थ तेसिं अन्ने वि चत्तारि इब्भदारगा वयंसया जाया तत्थ वि भोगे भुंजिउं तहारूवाणं थेराणं अंतिए धम्मं सोऊण पव्वइया सुचिरकालं संजमं अणुपालेऊण भत्तपच्चक्खाणं काउं काऊण सोहम्मे कप्पे पउमगुम्मविमाणे छ वि जणा चउपलिओवमठिइया देवा उववन्ना । तत्थ जे ते गोववज्जा देवा ते चइऊण कुरुजणवए उसुयारपुरे एगो उसुयारो णाम राया जाओ बीओ तस्सेव महादेवी कमलावती नामं संवुत्ता तइओ तस्स चेव रायणो भिगू नाम पुरोहिओ संवुत्तो चउत्थो तस्स चेव पुरोहियस्स भारिया संवुत्ता । वासिट्ठगोत्तेण जसा नाम सो य भिगू अणवच्चो गाढं तप्पए अवच्चनिमित्तं उवायपाए देवयाणि पुच्छए नेमित्तिए । ते य दो वि पुव्वभवगोवा देवभवे वट्टमाणा ओहिणा जाणिउं जहा अम्हे एयस्स भिगुस्स पुरोहियस्स पुत्ता भविस्सामो तओ समणरूवं काऊण उवागया भिगुस्स भिगुणा सभारियेण य वंदिया सुहासणत्था य तस्स दरिसंति दोण्णि वि सावगवयाणि गहियाणि । पुरोहिएण भणिय भगवं अम्हं अवच्चं होज्जति साहू हि भणए भविस्सन्ति दुवे दारगा ते य डहरगा चेव पव्वइस्सन्ति तेसिं तुज्झेहिं वाघाओ न कायव्वो पव्वयंताणं तेसु बहुजणं बोहिस्संति भणिऊण पडिगया देवा सामन्नेण य चइऊण य तस्स पुरोहियस्स भारियाए वासिट्ठीए कुच्छि दवरे पच्चायाया । तओ सो पुरोहिओ सभारिओ नगरनिग्गओ पच्चंतगामे ठिओ य

तत्थेव सा माहणी पसूया दारगा जाया ततो मा पव्वइस्सतित्ति का मायावित्तेहिं वुग्गाहिज्जंति जहा एए पव्वइयगा भिक्खरूवाइं घेत्तुमारेंति पच्छा तेसिं मंसं खायंति तं मा तुब्भे कयाइं एएसिं अल्लिएस्सह । अन्नया ते तम्मि गामे रमंता बाहे निग्गया । इओ य अद्धाणपडिवन्नया साहू आगच्छंति ततो ते दारगा साहुं दट्ठूण भयभीया पलायंता णं एगम्मि वडपायवे आरूढा साहुणो समावत्तीए गहियभत्तपाणा तम्मि चेव वडपायवबहिट्ठे ठिया मुहुत्तं च वीसामिऊणं भुंजिउं पयत्ता ते वडारूढा पासंति साभाविय भत्तपाणं णत्थि मसंति । तओ चिंतिउं पयत्ता कत्थ अम्हेहिं एयारिसाणि रूवाणि दिट्ठपुव्वाणि त्ति जाई सभरिया संबुद्धा साहुणो वंदिउं गया अम्मापिउसमीवं मायावित्त संबोहिऊण सह मायावित्तेण पव्वइया देवी संबुद्धा देवीए राया संबोहिओ ताणि वि पव्वइयाणि । एवं ताणि छ वि केवलनाणं पाविऊण निव्वाणमुवगयाणि त्ति" । इह तु सूत्रोक्तस्यार्थस्याभिधानं प्रसङ्गत इत्यदोषः । उक्तो नाम निष्पन्ननिक्षेपः ।

संप्रति सूत्रानुगमे सूत्रमुच्चारणीयं तच्चेदम् ॥

देवा भवित्ताण पुरे भवम्मि, केई चुया एगविमाणवासी ।
पुरे पुराणे उसुयारणामे, खाए समिद्धे सुरलोयरम्मे ॥ १ ॥
सकम्मसेसेण पुरा कएणं, कुलेसु दग्गेसु य ते पसूया ।
निव्विण्णसंसारभया जहा य, जिणिंदमग्गं सरणं पवन्ना ॥ २ ॥

देवाः सुरा भूत्वोत्पद्य पुरे ( भवम्मित्ति ) अनन्तरातीतजन्मनि केचिदनिर्दिष्टनामानश्च ता च्युत्वा एकस्मिन् पद्मगुल्मनाम्नि विमाने वसन्तीत्येवंशीला एकविमानवासिनः पुरे नगरे पुराणे चिरन्तने इषुकारनाम्नि ख्याते प्रथिते समृद्धे ऋद्धिमत्यत एव सुरलोकरम्ये देवलोकवद्रमणीये ते च किं सर्वथोपभुक्तपुण्या एवातस्तच्युता उतान्यथेत्याह । स्वमात्मीयं कर्म पुण्यप्रकृतिलक्षणं तस्य शेषमुद्धरितं स्वकर्मशेषस्तेन लक्षणे तृतीया पुराकृतेन पूर्वजन्मान्तरोपार्जितेन कुलेष्वन्वयेषु उदारेषु उद्धेषु च पूरणे त इति ये देवा भूत्वा च्युता प्रसूता उत्पन्ना । ( निव्विण्णत्ति ) आर्षत्वान्निर्विण्णा उद्विग्ना कुत- संसारभयात् यान्ति परित्यज्य भोगादीनिति गम्यते । किमित्याह जिनेन्द्रमार्गं तीर्थकृद्दर्शितं सम्यग्दर्शनज्ञानचारित्रात्मकं मुक्तिपथं शरणमपायरक्षाक्षममाश्रयं प्रपन्ना अभ्युपगता इत्यध्ययनार्थसूचनम् ।

कथं किं रूपं सन् जिनेन्द्रमार्गं प्रतिपन्न इत्याह ।

पुमत्तमागम्म कुमारदोवी, पुरोहिओ तस्स जसा य पत्ती ।
विसालकित्ती य तहोसुयारो, रायत्थदेवी कमलावई य ॥ ३ ॥

पुंस्त्वं पुरुषत्वमागम्य प्राप्य कुमारावकृतपाणिग्रहणौ द्वौ अपि पूर्णे सुलभबोधिकत्वेन प्राधान्यस्यापनार्थं चाऽनयो पूर्वमुपादानं पुरोहितस्तृतीय । तस्य जसा च नाम्ना पत्नी चतुर्थी । विशालकीर्तिश्च विस्तीर्णयशाश्च तथेषुकारो नाम राजा पञ्चम । अत्रैतस्मिन् भवे देवीति प्रधानपत्नी प्रक्रमात्तस्यैव राज्ञः कमलावती च नाम्ना षष्ठ इति सूत्रत्रयार्थ । संप्रति यथैतेषु जिनेन्द्रमार्गप्रतिपत्ति कुमारयोर्जाता तथा दर्शयितुमाह ।

जाईजरामच्चुभयाभिभूए, बहिं विहाराभिनिविट्ठचित्ता ।
संसारचक्कस्स विमोक्खणट्ठा, दट्ठूण ते कामगुणे विरत्ता ॥ ४ ॥
पियपुत्तगा दोन्नि वि माहणस्स, सकम्मसीलस्स पुरोहियस्स ।
सरित्तु पोराणि य तत्थ जाई, तहा सुचिन्नं तवसंजमं च ॥ ५ ॥

जातिर्जन्म जरा विस्रसा मृत्यु प्राणत्यागस्तत्कृतस्तेभ्यो भय साध्वस तेनाभिभूतौ बाधितौ जातिजरामृत्युभयाभिभूतौ पाठान्तरतश्च जातिजरामृत्युभयाभिभूते सत्यर्थात्ससारिजने बहि: ससाराद्विहार: स चार्थान्मोक्षस्तस्मिन्नभिनिविष्ट बद्धाग्रह चित्तमन्त करण ययोस्तौ तथा ससारश्चक्रमिव चक्र भ्रमणोपलक्षितत्वात्ससारचक्र तस्य विमोक्षणार्थं परित्यागनिमित्त दृष्ट्वा निरीक्ष्य साधूनिति शेष यद्वा दृष्ट्वेति प्रेक्ष्य मुक्तिपरिपन्थिनोऽमी कामगुणा इति पर्यालोच्य तावनन्तरोक्तौ ( कामगुणेत्ति ) सुब्व्यत्ययात् कामगुणेभ्य शब्दादिभ्यो विषयसप्तमी वा विरक्तौ पराङ्मुखीभूतौ प्रियौ वल्लभौ तौ च तौ पुत्राविव पुत्रकौ च प्रियपुत्रौ द्वावपि नैक एव इत्यपि शब्दार्थो माहनस्य ब्राह्मणस्य स्वकर्मशीलस्य यजनयाजनादिस्वक्रियानुष्ठाननिरतस्य पुरोहितस्य शान्तिकर्तु ( सुमरित्तुत्ति ) स्मृत्वा ( पोराणयत्ति ) सूत्रत्वात् पुराणमेव पौराणिकीं चिरंतनीं तथेति सन्निवेशे कुमारभावे वा वर्तमानाविति शेष: जातिजन्म तथा ( सुचिणत्ति ) सुचीर्णं सुचरितं वा निदानादिनाऽनुपहतत्वात् तपोऽनशनादि प्राकृतत्वाद्विन्दुलोप संयमं च तप सयममिति समाहारद्वन्द्वो वाऽत्र कामगुणविरक्तिरेव जिनेन्द्रमार्गप्रतिपत्तिरिति सूत्रद्वयार्थ: ॥

ततस्तौ किमकार्ष्टामित्याह ॥

ते कामभोगेसु असज्जमाणा, माणुस्सएसुं जे यावि दिव्वा ।
मोक्खाभिकंखी अभिजायसड्ढा,तायं उवागम्म इमं उदाहु ।६।

तौ पुरोहितपुत्रौ कामभोगेषूक्तरूपेषु ( असज्जमाणत्ति ) असक्तौ सङ्गमकुर्वन्तौ मानुष्यकेषु मनुजसवन्धिषु ये चापि दिव्या देवसवन्धिन कामभोगास्तेषु चेति प्रक्रम: मोक्षाभिकाङ्क्षिणौ मुक्त्यभिलाषिणावभिजातश्रद्धावुत्पन्नतत्त्वरुची तात पितरमुपागम्येद वक्ष्यमाण ( उदाहुत्ति ) उदाहरतां तयोर्हि साधुदर्शनानन्तर क्व अस्माभिरित्थभूतानि रूपाणि पुराऽपि दृष्टानीति चिन्तयतोर्जातिस्मरणमुत्पन्न ततो जातवैराग्यौ प्रव्रज्याभिमुखावात्ममुक्तीकरणाय तयोश्च प्रतिबोधोत्पादनाय वक्ष्यमाणमुक्तवन्ताविति सूत्रार्थ ।

यच्च तावुक्तवन्तौ तदाह ।

असासयं दट्ठु इमं विहारं, बहु अंतरायं ण य दीहमाउं ।
तम्हा गिहम्मी न रइं लहामो, आमंतयामो चरिसामो मोणं ॥

अशाश्वतमनित्य दृष्ट्वेम प्रत्यक्ष विहरण विहार मनुष्यत्वेनावस्थानमित्यर्थ । भण्यते हि ( भोगाइ भुंजमाणे विहरतीत्ति ) किमित्येवमत आह । बहव प्रभूता अन्तराया विघ्ना व्याध्यादयो यस्य तद्बह्वन्तराय बहन्तरायमपि दीर्घत्वावस्थायि स्यादित्याह । न च नैव दीर्घं दीर्घकालस्थित्यायुर्जीवित सम्प्रति पल्योपमाद्युक्ततया अप्यभावात् यत एव सर्वमनित्यं तस्मात् ( गिहम्मित्ति) गृहे वेश्मनि न रतिं धृतिं (लभामोत्ति) लभावहे प्राप्नुव अतश्चामन्त्रयाव पृच्छाव आवां यथा चरिष्याव: आसेविष्यावहे मौन मुनिभाव सयममिति सूत्रार्थ ।

एव च ताभ्यामुक्ते ।

अह तायगो तत्थ मुणीण तेसिं,तवस्स वाघायकरं वयासी।
इमं वयं वेयविदो वयंति, जहा ण होइ असुयाण लोगो ।८।
अहिज्ज वेए परिविस्स विप्पे, पुत्ते परिट्ठप्प गिहंसि जाया ।
भुत्ताण भोगे सह इत्थियाहिं,आरणगा होहिमुणी पसत्था॥

अथानन्तर तायत सन्तान करोति पालयति च मर्यादकश्च इति तात: स एव तातकस्तत्र तस्मिन्निवेशेऽवसरे वा मुन्योर्भावत प्रतिपन्नमुनिभावयो तयो कुमारयोस्तपसोऽनशनादेरुपलक्षणत्वाच्छेषस्वकर्मानुष्ठानस्य च व्याघातकर बाधाविधायिवचनमिति शेष ( वयासित्ति ) अवादीत् यदवादीत्तदाहेमां वाच वेदविदो वदन्ति प्रतिपादयन्ति यथा न भवति जायते असुतानामविद्यमानपुत्राणां लोक न विना पिण्डप्रदानाद्यभावे गत्याद्यभावात् तथा वेदवच: अनपत्यस्य लोका न सन्ति तथाऽन्यैरप्युक्त "पुत्रेण जायते लोक" इत्येषा वैदिकी श्रुति । "अथ पुत्रस्य पुत्रेण, स्वर्गलोके महीयते " तथा " अपुत्रस्य गतिर्नास्ति, स्वर्गो नैव च नैव च । गृहिधर्ममनुष्ठाय, तेन स्वर्गं गमिष्यति" यत एवं तस्मादधीत्य पठित्वा वेदानृग्वेदादीन् परिवेश्य भोजयित्वा विप्रान् ब्राह्मणान् तथा पुत्रान् प्रतिष्ठाप्य कन्याकलत्रग्रहणादिना गृहस्थधर्मे निवेश्य कीदृश: पुत्रान् गृहे जाताश्च तु गृहीतप्रतिपन्नकादीन्पाठान्तरं च पुत्रान्परिष्ठाप्य स्वामित्वे निवेश्य गृहे [ जायत्ति ] गृहे जातौ पुत्रौ भुक्त्वा णमिति वाक्यालङ्कारे भोगान् शब्दादीन् सह स्त्रीभिर्नारीभिस्ततोऽरण्ये भवौ आरण्यौ "आरण्याणो वक्तव्य इति ण प्रत्यय " आरण्यावेवारण्यकावारण्यकव्रतधारिणौ [ होहित्ति ] भवत संपद्येथां युवां मुनी तपस्विनौ प्रशस्तौ श्लाघ्याविति यमेव ब्रह्मचर्याद्याश्रमव्यवस्थानादुक्त हि "ब्रह्मचारी गृहस्थश्च, वाणप्रस्थो यतिस्तथेति" इह चाधीत्य वेदानित्यनेन ब्रह्मचर्याश्रम उक्त परिवेश्येत्यादिना च गृहाश्रम आरण्यकावित्यनेन च वाणप्रस्थाश्रम: मुनिग्रहणेन च यत्याश्रम इति सूत्रद्वयार्थ ।

इत्थ तेनोक्तौ कुमारकौ यदकार्ष्टां तदाह ॥

सो अग्गिणा आयगुणिंधणेणं,मोहानिला पज्जलणाहिएणं।
संतत्तभावं परितप्पमाणं, लोलुप्पमाणं बहुहा बहुं च १०
पुरोहियं तक्कमसो णुणंतं, णिमंतयंतं च सुए धणेणं ।
जहक्कमं कामगुणेहि चेव, कुमारगा ते पसमिक्ख वक्कं ११

वेया अहीया ण हवंति ताणं,
भुत्तादिया णिंति तमं तमेणं ।
जाया य पुत्ता ण भवंति ताणं,
को णाम ते अणुमन्नेज्ज एयं ॥ १२ ॥
खणमत्तसोक्खा बहुकालदुक्खा,
पकामदुक्खा अणिकामसोक्खा ।
ससारमोक्खस्स विपक्खभूया,
खाणी अणत्थाण उ कामभोगा ॥ १३ ॥

परिव्वयते अणियत्तकामे, अहो य राओ परितप्पमाणे।
अन्नप्पमत्ते धणमेसमाणे,पप्पोति मच्चु पुरिसो जरं च।१४।
इमं च मे अत्थि इमं च नत्थि, इमं च मे किच्च इमं अकिच्चं
तं एवमेवं लोलुप्पमाणे, हरा हरंति त्ति कहं पमाए ।१५।

सुतवियोगसभावनाजनित मनोदु खमिह शोक स चाग्निरिव शोकाग्निस्तेन आत्मनो गुणा आत्मगुणा कर्मक्षयोपशमादिसमुद्भूता सम्यग्दर्शनादयस्ते इन्धन दाह्यतया यस्य स तथा तेनादिकालसहचरितत्वेन रागादयो वात्मगुणास्ते इन्धनमुद्दीपकतया यस्य स तथा तेन । मोहो मूढता सज्ञानमिति यावत् सोऽनिल इव मोहानिलस्तस्मादधिकम हावनगदाहादिभ्योऽप्यनेन प्रज्वलन प्रकर्षेण दीपनमस्येति अधिकप्रज्वलनो यद्वा प्रज्वलने-

नाथिक्र इत्यत्र यस्तेन पूर्वत्र प्राकृतत्वाद्विशब्दस्य परनिपातस्तथा समिति समन्तात्तत इव ततोऽनिर्वृत्तत्वेन भावोऽन्तःकरणमस्येति सन्तप्तभावस्तमत एव च पारतन्त्र्यमानं सन्तप्यमानमर्थाच्छरीरे तद्दाहस्यापि शोकाविष्टत्वात् उत्पत्तेर्लोलुप्यमानं तद्वियोगशङ्कावशोत्पन्नदुःखपरशुभिरतिशयेन छिद्यमानम् । वृत्त्यस्तु व्याचष्टे [ लोलुप्पमाणोत्ति ] लोलुप्यमानं " मरणयोसत्तकुरसंताणसु य तुम्भ नविस्सइत्ति " बहुधा अनेकप्रकारं बहु च प्रभूतं यथा भवत्येवं लोलुप्यमानं वेति संबन्धः । पुरोहितं पुरो वसन्तमिति प्रक्रान्तं ( कमसोत्ति ) क्रमेण परिपाट्या तु नयन्तः स्वाभिप्रायेण प्रज्ञापयन्त निमन्त्रयन्तं च भोगैरुपच्छन्दयन्तं सुतौ पुत्रौ धनेन द्रव्येण यथाक्रमं क्रमानतिक्रमेण कामगुणैरभिलषणीयशब्दादिविषयैः पाठान्तरेण कामगुणेषु वा चः समुच्चये एवेति पूरणे कुमारकौ तावनन्तरप्रक्रान्तौ प्रसमीक्ष्य प्रकर्षेण ज्ञानाच्छादितमतिमालोच्य वाक्यं वक्ष्यमाणमुक्तवन्तावितिगम्यते । किं तदित्याह । वेदा ऋग्वेदादयोऽधीता पठिता न भवन्ति जायन्ते त्राणं शरणं तदध्ययनमात्रतो दुर्गतिपतनरक्षणासिद्धेः । उक्तं हि तैरपि " अकारणमधीयानो, ब्राह्मणस्तु युधिष्ठिर! । दुष्कलेनाप्यधीयन्ते, शीलं तु मम रोचते " तथा " शिल्पमध्ययनं नाम, वृत्तं ब्राह्मणलक्षणम् । वृत्तस्थं ब्राह्मणं प्राहुर्नेतरान् वेदजीवकान् " तथा ( भुज्जुत्ति ) अन्तर्भावितणयर्थत्वाद्भोजिता द्विजा ब्राह्मणा नयन्ति प्रापयन्ति तमो रूपत्वात्तमो नरकस्तमसा ज्ञानेन यद्वा तमसोऽपि यत्तमस्तस्मिन्नतिरौद्ररौरवादिनरके णमिति वाक्यालङ्कारे ते हि भोजिता कुमार्गप्ररूपणपशुवधादावेव कर्मोपचयनिबन्धने असद्व्यापारे प्रवर्तन्त इति तत्प्रवर्तनतस्तद्भोजनस्य नरकगतिहेतुत्वमेवानेन च तेषां निस्तारकत्वं दूरापास्तमित्यर्थादुक्तम् । तथा जाताश्चोत्पन्ना पुत्राः सुता न भवन्ति त्राणं शरणं नरकादिकुगतौ निपततामिति गम्यते । उक्तं हि तन्मतानुसारिभिरपि "यदि पुत्राद्भवेत्स्वर्गो, दानधर्मो न विद्यते । मुषितस्तत्र लोकोऽयं, दानधर्मो, निरर्थकः । बहुपुत्रा दुली गोधा, ताम्रचूडस्तथैव च । तेषां च प्रथमं स्वर्गं, पश्चाल्लोको गमिष्यति " यतश्चैवं ततः को नाम न कश्चित्सभाव्यते यस्ते तव अनुमन्येत शोभनमिदमित्यनुजानीयात्स विवेकी इति गम्यते । एतदनन्तरमुक्तं वेदाध्ययनादित्रितयमिति भुक्त्वा भोगानिति चतुर्थोपदेशप्रतिवचनमाह । खणमात्रं सौख्यं येषु ते तथा बहुकालं नरकादिषु दुःखं शारीरं मानसं च येभ्यस्ते तथा विधा कदाचित्स्वल्पकालमपि सुखमतिशायि स्यात् दुःखं त्वन्यथेति स्वल्पकालमपि तद्बहुकालमाविनोऽपि दुःखस्योपहन्तृ स्यादत आह । प्रकाममतिशयेन दुःखं येषु ते तथा अनिकामसौख्या अप्रकृष्टसुखाः । इष्टेऽप्यायना शुभफला स्युरत आह । संसारमोक्षो विपक्षो संसारमोक्षो निर्वृतिस्तस्य विपक्षभूताः प्रतिबन्धकतयात्यन्तप्रतिकूला किमित्येवंविधा इत्याह । खानिरिव खानिराकराऽनर्थानामिहपरलोकदुःखानां तुशब्दोऽवधारणे भिन्नक्रमः ततः खानिरेव एवंविधाः कामभोगा तत्कथं । अनर्थमूलत्वमेव स्पष्टयितुमाह । परिव्रजन् विषयसुखलाभार्थमितस्ततो भ्राम्यन् न निवृत्तकामोऽनुपरतेच्छः सन् ( अहो य रायन्ति ) आपत्यात्मकस्य च भिन्नमतत्वादहनि रात्रौ च अहर्निशमिति यावत् परितप्यमानस्तस्तदप्राप्तौ समन्ताच्चिन्ताग्निना दह्यमानः अन्येभ्यः सुहृत्स्वजनादिभ्यः परेभ्यश्च भोजन तदर्थं प्रमत्तस्तदन्यसक्तचेता अन्यप्रमत्तः अन्नप्रमत्तो वा धनं वित्तम् ( एसमाणित्ति ) एषयन् विविधोपायैर्गवेषयमाणः [ पप्पोतित्ति ] प्राप्नोति मृत्युं प्राणत्याग कोऽसौ पुरुषो जरां च वयोहानिलक्षणां किं च इदं च मे मम अस्ति रजतरूप्यादि इदं च नास्ति पद्मरागादि इदं च मे मम कृत्यं कर्त्तव्यं गृहप्राकारादि इदमकृत्यं प्रारब्धमपि वाणिज्यादिना न कर्तुमुचितं तमिति पुरुषमेवमेव वृथैव लोलुप्यमानमत्यर्थं व्यक्तवाचा वदन्ति हरन्त्यपनयन्ति आयुरिति हरादिरजन्यादयो व्याधिविशेषा वा हरन्ति जन्मान्तरं नयन्ति उपसंहर्तुमाह । इतीत्यस्मादेतोः कथं केन प्रकारेण प्रमादो धर्मः प्रक्रमात्कर्मे कर्तुमुचित इति शेष इति सूत्रषट्कार्थः ।

संप्रति तौ धनादिर्लोभयितुं पुरोहित आह ।

**धणं पभूयं सह इत्थियाहिं, सयणा तहा कामगुणा पकामा।**
**तवं कए तप्पइ जस्स लोगो, तं सव्वसाहीणमिहेव तुब्भं १६**

धनं द्रव्यं प्रभूतं प्रचुरं सह स्त्रीभिः समं नारीभिः स्वजनाः पितृपितृव्यादयः तथा कामगुणाः शब्दादयः [ पगामत्ति ] प्रकामा अतिशायिनस्तपः कष्टानुष्ठानं कृते निमित्तं तप्यते अनुतिष्ठति यस्य धनादेर्लोको जनस्तत्सर्वमशेषं स्वाधीनमात्मायत्तमिहैवास्मिन्नेव गृहे [ तुब्भत्ति ] सूत्रत्वाद्युवयोर्यद्यपि तयो स्त्रियस्तदा न सन्ति तथाऽपि तदवाप्तियोग्यताऽस्तीति तासामभिधानमिति सूत्रार्थः ।

तत्र हेतु ।

**धणेण किं धम्मधुराहिगारे,**
**सयणेहिं वा कामगुणेहि चेव ।**
**समणा भविस्साम गुणोघधारी,**
**वहे विहारोअभिगम्म भिक्खू ॥ १७॥**

धनेन द्रव्येण किं न किञ्चिदर्थोऽस्त्यर्थः । धर्मे एवातिसात्विकैरुह्यमानतया धूरिव धूर्धर्मधुरा तदधिकारे तत्प्रस्तावे स्वजनैर्वा कामगुणैश्चैव तथा च वेदेऽप्युक्तम् । " न प्रजया न धनेन न त्यागेनैके नामृतत्वमानसु " रित्यादि ततः श्रमणौ तपस्विनौ भविष्यावो गुणौघं सम्यग्दर्शनादिगुणसमूहं धारयत इत्येवं शीलौ गुणौघधारिणौ बहिर्ग्रामनगरादिभ्यो बहिर्वर्तित्वाद् द्रव्यतो भावतश्च क्वचिदप्यप्रतिबद्धत्वात् विहारो विहरणं ययोस्तौ बहिर्विहारावप्रतिबद्धविहाराविति यावत् अभिगम्याश्रित्य भिक्षां शुद्धोञ्छमेवाहारयन्ताविति भाव इति सूत्रार्थः । आत्माऽस्तित्वमूलत्वात्सकलधर्मानुष्ठानस्येति तन्निराकरणायाह पुरोहितः ।

**जहा य अग्गी अरणी यसंतो, खीरे घयं तिल्लमहा तिलेसु ।**
**एमेव जाया सरीरम्मि सत्ता, समुच्छई णासइ णावचिट्ठे १८**

यथेत्यौपम्ये चशब्दोऽवधारणे यथैवाग्निर्वैश्वानरो [ अरणीति] अरणितोऽग्निमन्थनकाष्ठादसन्नविद्यमान एव समूर्च्छति तथा क्षीरे घृतं तैलमथ तिलेषु एवमेव हे जातौ पुत्रौ [सरीरम्मित्ति ] शरीरे काये सत्त्वा प्राणिनः [ संमुच्छइत्ति ] समूर्च्छयन्ति पूर्वमसन्त एव शरीराकारपरिणतभूतसमुदायत उत्पद्यन्ते तथा चाहुः पृथिव्यप्तेजोवायुरिति तत्त्वानि एतेभ्यश्चैतन्यं मद्याङ्गेभ्यो मदशक्तिवत् तथा [णासइत्ति] नश्यन्त्यभ्रपटलवत्प्रलयमुपयान्ति [ नावचिट्ठित्ति ] न पुनरवतिष्ठन्ते शरीरनाशे सति क्षणमप्यवस्थिततनवो भवन्ति । यद्वा शरीरे सत्यप्यमी सत्वा न सन्ति नावतिष्ठन्ते जडवद्धटवज्जीव अत्र प्रत्यक्षतोऽनुपलम्भ एव प्रमाणं न ह्यमी शरीरे शरीरव्यतिरिक्तो वा भवान्तर-

प्रासौ प्रत्यक्षेण उपलभ्यत इति नास्ति शशविषाणवदिति भाव इति सूत्रार्थः । कुमारकावाहतुः ।

णो इंदियग्गेज्झ अमुत्तभावा,
अमुत्तभावो वि य होइ निच्चो ।
अज्झत्थहेउं नियतस्स बंधो,
संसारहेउं च वयंति बंधं ॥ १९ ॥

नो इति निषेधे इन्द्रियैः श्रोत्रादिभिर्ग्राह्यः सत्त्व इति प्रक्रमात्तस्यादयमिन्द्रियग्राह्य इत्याशङ्क्याह । अमूर्तभावादिन्द्रियग्राह्यरूपाद्यभावात् अयमाशयः यदिन्द्रियग्राह्यं सन्नोपलभ्यते तदसदिति निश्चीयते यथा प्रदेशविशेषे घटो यत्तु तद्ग्राह्यमेव न भवति न तस्यानुपलम्भेऽप्यभावनिश्चयः पिशाचादिवत्तद्विषयानुपलम्भस्य संशयहेतुत्वात् । न च साधकप्रमाणाभावात्संशयविषयतैवास्त्विति वाच्यं तत्साधकस्यानुमानस्य सद्भावात् तथा ह्यस्त्यात्मा अहं पश्यामि जिघ्रामीत्याद्यनुगतप्रत्ययान्यथानुपपत्तेरात्माभावे हीन्द्रियाण्येव द्रष्टॄणि स्युस्तेषु च परस्परं भिन्नेष्वहं पश्यामि जिघ्रामीत्यादिरनुगतोऽहमिति प्रत्ययोऽनेकेष्विव प्रतिपत्तॄषु न स्यात् । उक्तं हि । "अहं शृणोमि पश्यामि, जिघ्राम्यास्वादयामि च । चेतयाम्यध्यवस्यामि, बुध्यामीत्येवमस्ति सः" ॥ १ ॥ वृद्धास्तु व्याचक्षते अमूर्तत्वान्नोइन्द्रियग्राह्यो नोइन्द्रियं च मनो मनसश्चात्मैवात स्वप्रत्यक्ष एवायमात्मा कस्मादुच्यते त्रैकाल्यकार्यव्यपदेशत्वात्तद्यथा ॥ कृतवानहं करोम्यहं करिष्याम्यहम्, उक्तवानहं ब्रवीम्यहं वक्ष्याम्यहं, ज्ञातवानहं जानेऽहं ज्ञास्येऽहमिति । योऽयं त्रिकालकार्यव्यपदेशहेतुरहंप्रत्ययो नायमानुमानिको न चागमिकः किं तर्हि प्रत्यक्षेण एवमनेनैव आत्मानं प्रतिपद्यस्व नायमनात्मके घटादावुपलभ्यत इति । तथा अमूर्तभावादपि च भवति नित्यः तथा हि यद्द्रव्यत्वे सत्यमूर्तं तन्नित्यं यथा व्योम अमूर्तश्चायं द्रव्यत्वे सत्यनेन विनाशानवस्थाने प्रत्युक्ते । न चैवममूर्तत्वादेव तस्य बन्धाभावे वा सर्वस्य सर्वदा तत्प्रसङ्ग इति वाच्यं यतः "अज्झत्थहेउं नियतस्स बंधो" अध्यात्मशब्देन आत्मस्था मिथ्यात्वादय इहोच्यन्ते ततस्तद्धेतुस्तन्निमित्तः परस्थहेतुकत्वेऽतिप्रसङ्गादिदोषसंभवान्नियतो निश्चितो न सदिग्धो जगद्वैचित्र्यान्यथानुपपत्तेरस्य जन्तोर्बन्धः कर्मभिः संश्लेषो यथा ह्यमूर्तस्यापि व्योम्नो मूर्तैरपि घटादिभिः सबन्ध एवमस्याप्यमूर्तस्यापि मूर्तैरपि कर्मभिरसौ न विरुध्यते । तथा चाह "अरूपं हि यथाकाशं, रूपद्रव्यादिभाजनम्" तथा रूपी जीवोऽपि कर्मादिभाजनमिति मिथ्यात्वादिहेतुत्वाच्च न सर्वदा तत्प्रसङ्ग इत्यदोषः । एवं हि येषामेव मिथ्यात्वादितद्धेतुसंभवस्तेषामेवासौ न तु तद्विरहितानां सिद्धानामपि । तथा संसारश्चतुर्गतिपर्यटनरूपस्तद्धेतुं च तत्कारणं वदन्ति बन्धं कर्मबन्धम् । एतेनामूर्तत्वाद् व्योम्न इव निष्क्रियत्वमपि निराकृतमिति सूत्रार्थः । यत एवमस्त्यात्मा नित्योऽत एव च भवान्तरयायी तस्य च बन्धो बन्धादेव मोक्ष इत्यतः ।

जहा वयं धम्ममयाणमाणा, पावं पुरा कम्ममकासि मोहा ।
ओरुज्झमाणा परिरक्खयंता, तं नेव भुज्जो वि समायरामो ॥

यथा येन प्रकारेण वयं धर्मं सम्यग्दर्शनादिकमजानाना अनवबुध्यमाना पापं पापहेतुं पुरा पूर्वं कर्म क्रियाम् [ अकासित्ति ] अकार्ष्म कृतवन्तो मोहात्तत्त्वानवबोधात् अवरुध्यमाना गृहान्निर्गममलभमानाः परिरक्ष्यमाणा अनुजीविभिरनुपाल्यमाना [ तदिति ] पापकर्म [ नेवत्ति ] नैव भूयोऽपि पुनरपि समाचरामोऽनुतिष्ठामो यतः संप्रत्युपलब्धमेवास्माभिर्वस्तुतत्त्वमिति भावः । सर्वत्र च । असदो द्वयोश्च १ । २ । ५९ इति द्वित्वेऽपि बहुवचनमिति सूत्रार्थः ॥

अब्भाहयम्मि लोगम्मि, सव्वओ परिवारिए ।
अमोहाहिं पडंतीहिं, गिहंसि न रइं लभे ॥ २१ ॥

अभ्याहते आभिमुख्येन पीडिते लोके जने सर्वतः सर्वासु दिक्षु परिवारिते परिवेष्टितेऽमोघाभिरवन्ध्यप्रहरणोपमाभिः पतन्तीभिरागच्छन्तीभिः [ गिहंसित्ति ] गृहे तस्य चोपलक्षणत्वात् गृहवासे न रतिमासक्तिं लभामि लभावहे । यथा हि वागुरया परिवेष्टितो मृगोऽमोघैश्च प्रहरणैर्व्याधेनाभ्याहतो न रतिं लभते एवमावामपीति सूत्रार्थः ।

भृगुराह ।

केण अब्भाहओ लोगो, केण वा परिवारिओ ।
का वा अमोहा वुत्ता, जाया चिंतावरो हुमि ॥ २२ ॥

केन व्याधतुल्येनाभ्याहतो लोकः केन वा वागुरास्थानीयेन परिवारितः का वा अमोघा अमोघप्रहरणोपमा अभ्याहतिं प्रति करणतयोक्ता जातौ ! पुत्रौ ! चिन्तापरः [ हुमिति ] भवामि ततो ममावेद्यतामयमर्थ इति भाव इति सूत्रार्थः ।

तावाहतुः ।

मच्चुणाऽब्भाहओ लोगो, जराए परिवारिओ ।
अमोहा रयणी वुत्ता, एवं ताय वियाणह ॥ २३ ॥

मृत्युनान्तकेनाभ्याहतो लोकस्तस्य सर्वत्राप्रतिहतप्रसरत्वात् जरया परिवारितः तस्या एव तदभिघातयोग्यतापादकत्वेनोपस्थितत्वात् ( अमोहारयणित्ति ) रजन्य उक्ता दिवसाविनाभावित्वात् तासां दिवसाश्च तत्पतने ह्यवश्यभावी जनस्याभिघात एव तात ! विजानीतावगच्छतेति सूत्रार्थः । किं च ।

जा जा वच्चइ रयणी, ण सा पडिनियत्तई ।
अधम्मं कुणमाणस्स, अफला जंति राइओ ॥ २४ ॥
जा जा वच्चइ रयणी, ण सा पडिणियत्तइ ।
धम्मं च कुणमाणस्स, सफला जंति राइओ ॥ २५ ॥

या या ( वच्चइत्ति ) व्रजति रजनी रात्रिरुपलक्षणत्वाद्दिनं च न सा प्रतिनिवर्त्तते पुनरागच्छति तदागमने हि सर्वदा स्यैव जन्मरात्रिः स्यात्ततो न द्वितीया मरणरात्रिः पदाक्रिमाक्रमाभावः स्यात्तत्राधर्मं कुर्वतो जन्तोरिति गम्यते अफला यान्ति गच्छन्ति । अधर्मं निबन्धनं च गृहस्थतेत्यायुषोऽनित्यत्वादधर्मकरणे तस्य निष्फलत्वात्तत्परित्याग एव श्रेयानिति भावः । अथ व्यतिरेकद्वारेण प्रव्रज्याप्रतिपत्तिहेतुत्वमभिधाय तमेवान्वयमुखेनाह । ( जाजेत्यादि ) पूर्ववत् नवरं ( धम्मं चत्ति ) चशब्दः पुनरर्थे धर्मं पुनः कुर्वतः सफला धर्मलक्षणफलोपार्जनतो न च व्रतप्रतिपत्तिं विना धर्म इत्यतो व्रतं प्रतिपत्स्यावहे इत्यभिप्राय इति सूत्रद्वयार्थः ।

इत्थं कुमारवचनादाविर्भूतसम्यक्त्वस्तद्वचनमेव पुरस्कुर्वन् भृगुराह ॥

एगओ संवसित्ताणं, दुहओ सम्मत्तसंजुया ।
पच्छा जाया गमिस्सामो, भिक्खमाणा कुले कुले ॥ २६ ॥

एकत एकस्मिन् स्थाने उषित्वा स्थित्वा ( दुहओत्ति ) द्वय

च द्वय च द्वये आवां युवां च व्यक्त्यपेक्षया बहुवचन पुरुषप्राधान्याच्च पुंल्लिङ्गता सम्यक्त्वेन संयुता सहिता उपलक्षणत्वाद्देशविरत्या च पश्चाद्यौवनावस्थोत्तरकाले कोऽर्थः पश्चिमे वयसि आतौ! पुत्रौ! गमिष्यामो भजिष्यामो वयं ग्रामनगरादिषु मासकल्पेन क्रमेणेति शेषोऽर्थाच्च प्रव्रज्यां प्रतिपद्य भिक्षमाणा याचमानाः पिण्डमादिकमिति गम्यते कुले कुले गृहे गृहे न त्वेकस्मिन्नेव वेश्मनि। किमुक्तं भवत्यज्ञातोञ्छवृत्त्येति सूत्रार्थः।

कुमारावाहतुः।

जस्सत्थि मच्चुणा सक्खं, जस्स वत्थि पलायणं।
जो जाणइ न मरिस्सामि, सो हु कंखे सुए सिया ।२७।
अज्जे व धम्मं पडिवज्जयामो,
जहिं पवन्ना ण पुणब्भवामो।
अणागयं नेव य अत्थि किंचि,
सद्धाखमं णो विणइत्तु रागं॥ २८॥

यस्येत्यतिनिर्दिष्टस्वरूपस्यास्ति विद्यते मृत्युना कृतान्तेन सख्यं मित्रत्वं, यस्य चास्ति पलायनं मृत्योरिति प्रक्रमः। तथा यो (जाणत्ति) जानीते यथाऽहं न मरिष्यामि [ सो हु कंखेसुएसियत्ति ] स एव काङ्क्षति प्रार्थयते श्व आगामिनि दिने स्यादिदमिति गम्यते न च कस्यचित् मृत्युना सह सख्यं ततो वा पलायनं तदभावज्ञानं वा अतोऽद्यैव धर्मं प्रक्रमाद्यातिधर्मं [ पडिवज्जयामोत्ति ] प्रतिपद्यामहे। तमेव फलोपदर्शनद्वारेण विशिनष्टि [ जहेत्ति ] आर्षत्वाद्यं धर्मं प्रपन्ना आश्रिता [ न पुणब्भवामोत्ति ] न पुनर्भविष्यामो न पुनर्जन्मानुभविष्यामस्तन्निबन्धनभूतकर्मापगमाज्जरामरणाद्यभावोपलक्षणं चैतत्कथमनागतमप्राप्तं नैव चास्ति किञ्चिदतिमनोरममपि विषयसौख्याद्यनादौ संसारे सर्वस्य प्राप्तपूर्वत्वात्ततो न तदर्थमपि गृहावस्थानं युक्तमिति भावः। यद्वा ऽनागतमागतिविरहितं नैव चास्ति किंचित् किं तु सर्वमागमिष्यत्येव जरामरणादिव्यसनजातं ध्रुवं भावित्वादस्य ध्रुवस्थानम्। यद्वा अनागतं यत्र मृत्योरागतिर्नास्ति तन्न किंचित् स्थानमस्ति यतश्चैवमतः श्रद्धाऽभिलाषः क्षमं युक्तमिह लोकपरलोकयोः श्रेयः प्राप्तिनिमित्तमनुष्ठानं कर्तुमिति शेषः [ णोऽत्ति ] नो अस्माकं विनयोपसाहाय्यक रागं स्वजनाभिष्वङ्गलक्षणं तत्त्वतो हि कः कस्य स्वजनो न वा स्वजन इति। उक्तं च। ' अयणं भंते जीवस्स सामाइत्ताए धुयत्ताए सुण्हत्ताए भज्जत्ताए मित्ताए वि सयणसंबंधसंथुयत्ताए उववन्नपुव्वे हंता गोयमा! असतिं अदुवा अणंतखुत्तोत्ति " सूत्रद्वयार्थः। ततस्तयोर्वचनमाकर्ण्य पुरोहित उत्पन्नव्रतग्रहणपरिणामो ब्राह्मणीं धर्मविघ्नकारिणीं मत्वेदमाह॥

पहीणपुत्तस्स हु नत्थि वासो,
वासिट्ठि भिक्खायरियाए कालो।
साहाहि रुक्खो लहई समाहिं,
छिन्नाहि साहाहिं तमेव खाणुं॥ २९॥
पंखाविहूणो व्व जहेव पक्खी,
भिच्चविहीणो व्व रणे नरिंदो।
विवन्नसारो वणिओ व्व पोते,
पहीणपुत्तो म्हि तहा अहं पि॥ ३०॥

प्रहीणौ प्रभ्रष्टौ पुत्रौ यस्मात्स प्रहीणपुत्र। अथवा प्राकृते पूर्वापरनिपातस्यातन्त्रत्वात्पुत्राभ्यां प्रहीणस्त्यक्तः पुत्रप्रहीणस्तस्य हुः पूरणे नास्ति न विद्यते वासोऽवस्थानं मम गृह इति गम्यते वाशिष्ठि! वशिष्ठगोत्रोद्भवे! गौरवख्यापनार्थं गोत्राभिधानं तच्च कथं नु नाम धर्माभिमुख्यमस्याः स्यादिति भिक्षाचर्याया भिक्षाटनस्योपलक्षणं चैतद्व्रतग्रहणस्य कालः प्रस्तावो वर्तत इति शेषः। किमित्येवमत आह। शाखाभिः प्रतीताभिर्वृक्षो द्रुमो लभते प्राप्नोति समाधिं स्वास्थ्यं छिन्नाभिर्द्विधाकृताभिः शाखाभिस्तमेव वृक्षं यस्ताभिः समाधिमवाप्तवान् [ खाणुं ति ] स्थाणुं जनो व्यपदिशतीति उपस्कारः। यथा हि तास्तस्य शोभासंरक्षणसहायकृत्यकरणादिना समाधिहेतव एवं ममाप्येतौ सुतावतस्तद्विरहितोऽहमपि स्थाणुकल्प एवेति किं ममैवंविधस्य स्वपरयोः किंचिदुपकारकमनवस्तमेव गृहवासेनेत्यभिप्रायः। किं च पक्षाभ्यां पतत्राभ्यां विहीनो विरहितः पक्षविहीनो वा दृष्टान्तान्तरसमुच्चये यथेहास्मिन् लोके पक्षी विहङ्गमः पलायितुमप्यशक्त इति मार्जारादिभिरभिभूयते यथा भृत्याः पदातयस्तद्विहीनो वा प्रावरणे संग्रामे नरेन्द्रो राजा शत्रुजनपराजयस्थानमेव जायते यथा विपन्नो विनष्टसारो हिरण्यरत्नादिरस्येति विपन्नसारो वणिक् सांयात्रिको वेति प्राग्वत् पोते प्रवहणे भिन्ने इति गम्यते नार्वाग् न च परत इत्युदधिमध्यवर्ती विषीदति पुत्रप्रहीणोऽस्मि तथा अहमपि कोऽर्थः पक्षभृत्यार्थसहाय सूनाभ्यां विरहितोऽहमप्येवंविध एवेति सूत्रद्वयार्थः॥

वाशिष्ठ्याह।

सुसंहिता कामगुणा इमेते, संपिंडिया अग्गरसा पभूया।
भुंजामु ता कामगुणे पकामं, पच्छा गमिस्सामो पहाणमग्गं॥

सुष्ठु अतिशयेन संभृता संस्कृता सुसम्भृता के ते कामगुणा वेणुवीणाकलितकाकलीगीतादय इमे इति स्वगृहवर्तिनस्तान् प्रत्यक्षतया निर्दिशति ते तत्र तथा संपिण्डिता सम्यक् पुञ्जीकृता ( अग्गरसात्ति ) चशब्दस्य गम्यमानत्वात् अग्रा रसाश्च प्रधाना मधुरादयश्च प्रभूता प्रचुरा कामगुणान्तर्गतत्वेऽपि रसनापृथगुपादानमतिगृद्धिहेतुत्वाच्छब्दादिष्वपि चैषामेव प्रवर्तकत्वात्। कामगुणविशेषणं वा अग्रा रसास्त एव शृङ्गारादयो वा येषु ते तथा। वृद्धास्त्वाहुः रसानां सुखानामग्ररसाग्र ये कामगुणा सूत्रे च प्राकृतत्वादग्रशब्दस्य पूर्वनिपात (भुंजामोत्ति) भुञ्जीमहि तत्तस्माद्यस्मादमी सुसम्भृतादिविशेषणविशिष्टा स्वाधीनाः सन्ति कामगुणानुक्तरूपान् प्रकाममतिशयेन ततो भुक्तभोगौ पश्चादिति वृद्धावस्थायां गमिष्यावः प्रतिपत्स्यावहे प्रधानमार्गं महापुरुषसेवितं प्रव्रज्यारूपं मुक्तिपथमिति सूत्रार्थः।

पुरोहितः प्राह।

भुत्ता रसा भोइ जहाति णे वओ,
ण जीवियट्ठा पयहामि भोए।
लाभं अलाभं च सुहं च दुक्खं,
संचिक्खमाणो चरिस्सामि मोणं॥

भुक्ताः सेविता रसा मधुरादय उपलक्षणत्वाच्छेषकामगुणाश्च यद्वा रसा इह सामान्येनैवास्वाद्यमानत्वाद्भोगा भण्यन्ते। ( भोइत्ति ) हे भवति! आमन्त्रणवचनमेतत् जहाति त्यजति न इत्यस्मान् वयः शरीरावस्था कालकृतोऽयते सा चेहाभिमतक्रियाकरणक्षमा गृह्यते ततश्च यद्युक्ता एवानेकशो भोगा वयश्चाभिमतक्रियाकरणक्षमं जहाति उपलक्षणत्वाज्जीवितं च

ततो यावन्नैतत्त्यजति तावद्दीक्षां प्रतिपद्यामहे इत्यभिप्रायस्तत् किं यय स्थैर्यार्थं दीक्षां प्रतिपद्यसे उच्यते केऽपि दीक्षा यय-स्थैर्या-दिविघ्नायिनीत्याशङ्क्याह नेति निषेधे जीवितमसयमजीवितमु-पलक्षणत्वाद्वयश्च तदर्थं प्रजहामि प्रकर्षेण त्यजामि भोगान् शब्दा-न् किं तु लाभमभिमतवस्त्ववाप्तिरूपमलाभं च तदभावरूपं सुखमभिलषणीयविषयसंभोगजं चस्य भिन्नक्रमत्वात् दुःख च बाधाऽऽत्मकं ( समिक्खमाणोत्ति ) समतया ईक्षमाण पश्यन् किमुक्तं भवति लोभालोभयोस्तथा सुखदुःखयोरुपलक्षण-त्वाज्जीवितमरणादीना च समतामेव भावयन्नरिष्याम्यासे-विष्ये किं तत् मौनं मुनिभाव ततो मुक्त्यर्थमेव मम दीक्षाप्र-तिपत्तिरिति भाव इति सूत्रार्थः । वासिष्ठ्याह ।

मा हू तुमं सोयरियाण संहर,
जिण्णो व हंसो पडिसोयगामी ।
भुंजाहि भोगाइं मए समाणं,
दुक्खं खु भिक्खायरियाविहारो ॥ ३३ ॥

मा इति निषेधे हुरिति वाक्यालंकारे त्वं सोदरे शयिताः सोदर्याः सोदराद् इति य. प्रत्यय ते च समानकुक्षिभवा भ्रातरस्तेषामुपलक्षणत्वाच्छेषस्वजनानां भोगानां च ( संभ-रित्ति) अस्मार्षीः क इव (जिण्णो व हंसोत्ति ) इव शब्दस्य भिन्न-क्रमत्वात् जीर्णो वयोहानिमुपगतो हस इव प्रधानपक्षीव प्रति-कूल. श्रोत: प्रतिश्रोतस्तद्गामी सन् किमुक्तं भवति यथाऽसौ नदीश्रोतस्यनिकृष्ट प्रतिकूलगमनमारभ्यापि तत्राशक्त. पुनर-नुश्रोत एवानुधावत्येव भवानपि दुस्तर सयमभार वोढुमस-मर्थ पुनः सहोदरान् सह भोगान् वा स्मरिष्यति तदिदमे-वास्तु भुङ्क्ष्व भोगान्मया (समाणंति) सुखदु:खहेतु (खु इति) खलु निश्चित भिक्षाचर्या भिक्षाटन विहारो ग्रामादिष्वप्रतिब-द्धविहारो दीक्षोपलक्षण चैतदिति सूत्रार्थः ।

पुरोहित आह ।

जहा य भोई तणुयं भुजंगे, निम्मोयणं हेच्च पलेइ मुत्तो ।
एमेय जाया पयहंति भोए, तेहं कहं नाणुगमिस्सएगो ।३४।
छिंदित्तु जालं अवलं वरोहिया, मच्छा जहा कामगुणे पहाय ।
धोरेय सीला तवसा उदारा, धीरा हु भिक्खायरियं चरंति ३५

यथा च हे भवति ! पठ्यते चाहे भोगिनि तनु शरीर तत्र जात तनुजां भुजगम सर्पो निर्मोचनीय निर्मोक हित्वा पर्येति सम-न्तात्गच्छति मुक्त इति निरपेक्षो नाभिष्वक्त इत्यर्थः. (समेतित्ति) एवमतो पठ्यते च ( इमेनित्ति ) अत्र च तथेति गम्यते तत्त-थेमौ ते तव जातौ पुत्रौ प्रजहीतः प्रकर्षेण त्यजतो भोगान् तत किमित्याह तौ भोगास्त्यजन्तौ जातौ अहं कथम् नानुग-मिष्यामि प्रव्रज्याग्रहणेनानुसरिष्याम्येको द्वितीयो यदि ताव-दनयो कुमारकयोरपीयान् विवेको यन्निर्मोकवदत्यन्तसह-चरितानपि भोगान् भुजङ्गवत् त्यजतस्तत किमिति भुक्तभोगोऽ प्यहमेनान्न त्यक्षामि किं वा ममासहायस्य गृहवासेनेति भाव । तथा छित्वा द्विधा कृत्वा तीक्ष्णपुच्छादिना जालमानायमथ-वभिव जीर्णत्वादिना निःसारमिव वलीयोऽशीति गम्यते । रोहिता रोहितजातीया मत्स्या मीनाश्चरन्तीति सम्बन्ध ।यथेति दृष्टान्तोपदर्शने यत्तदोश्च नित्यसबन्धात्तथेति गम्यते ततस्तथा जातप्रायान् कामगुणान् प्रहाय परित्यज्य धुरि वहन्ति धौरेया-स्ते गामिव शीलमुत्क्षिप्तभारवाहितालक्षण स्वभावो येषां ते धौरेयशीलास्तपसाऽनशनादिनोदाराः प्रधाना धीरा सत्त्ववन्त हुरिति यस्माद्भिक्षाचर्यां चरन्त्यासेवन्ते प्रव्रज्याग्रहणोपलक्षणमेतद् तोऽहमपीत्थं व्रतमेव ग्रहीष्य इति भाव. इति सूत्रद्वयार्थः ॥

इत्थं तत्प्रतिबोधिता ब्राह्मण्याह । . . . .

तहेव कोंचा समइक्कमंता, तयाणि जालाणि दलित्तु हंसा ।
पलेंति पुत्ता य पई यमज्झं, तेहं कहं नाणुगमिस्सइक्का ३६

नभसीवाकाश इव क्रौञ्चा पक्षिविशेषा. समतिक्रामन्तस्तान् तान् देशानुल्लङ्घयन्तस्ततानि विस्तीर्णानि जालानि बन्धनविशे-षरूपाण्यात्मनोऽनर्थहेतुत्वाद्भित्वा (हंसत्ति) चशब्दस्य गम्यमान-त्वाद्धंसाश्च ( पलेंतित्ति ) परियन्ति समन्ताद् गच्छन्ति पुत्रौ च सुतौ च पतिश्च भर्त्ता मम सबन्धिनो गम्यमानत्वाद्यो ते जालो-पमविषयाभिष्वङ्ग भित्वा नभ: कल्पे निरुपलेपतया सयमाध्वनि तानि सयमस्थानान्यतिक्रामन्तस्तानहं कथं नानुगमिष्याम्येका सती किं त्वनुगमिष्याम्येव । एवंविधं वचन हि स्त्रीणां पति: पुत्रो वा गतिरिति । यदि वा जालानि भित्त्वेति हंसानामेव सबध्यते। समतिक्रामन्त. स्वातन्त्र्येण गच्छन्त इति तु क्रौञ्चोदा-हरणमज्ञानकलत्रादिबन्धनमुनपेक्ष हंसोदाहरण तु तद्विपरी-तपत्यपेक्षमिति भावनीयमिति सूत्रार्थः । इत्थ चतुर्णामप्येक-वाक्यतायां प्रव्रज्याप्रतिपत्तौ यद्भूत्तदाह ।

पुरोहियं तं ससुयं सदारं, सोच्चाभिणिक्खंत पहाय भोगे ।
कुडुंबसारं विउलुत्तमंतं, रायं अभिक्खं समुवाय देवी ।३७।
वंतासी पुरिसो रायं, न सो होइ पसंसितो ।
माहणेणं परिच्चत्तं, धणं आइउमिच्छसि ॥ ३८ ॥
सव्वं जगं जइ तुहं, सव्वं वावि धणं भवे ।
सव्वं पि ते अपज्जत्तं, नो वा ताणाइ ने तव ॥ ३९ ॥
मरिहसि रायं जया तया वा, मणोरमे कामगुणे पहाय ।
एक्को हु धम्मो नरदेवयाणं, न विज्जए अन्नमिहेह किंचि४०

पुरोहित पुरो वसन्तमिति च भृगुनामान सपुत्र पुत्रद्वयान्वित सदार सपत्नीक श्रुत्वाऽऽकर्ण्य अभिनिष्क्रम्य गृहान्निर्गत्य प्र-हाय प्रकर्षेण त्यक्त्वा भोगान् शब्दादीन् प्रव्रजितमिति गम्यते । कुटुम्बसार धन धान्यादि विपुल च विस्तीर्णतया उत्तम च प्रधा-नतया विपुलोत्तम ( यदिति ) यत्पुरोहितेन त्यक्तं गृह्णन्तमिति शेष (रायं) राजानं नृपतिमभीक्ष्ण पुन पुन समुवाच सम्य-गुक्तवती देवी कमलावती नाम तदग्रमहिषी । किमुक्तवतीत्याह वान्तमुद्गीर्णमशितुं भोक्तुं शीलमस्येति वान्ताशी पुरुष पुमान् य इति गम्यते राजन् ! नृपते ! स न प्रशंसित श्लाघितो विद्व-द्भिरिति शेष । स्यादेतत्कथमह वान्ताशीत्यत आह । ब्राह्मणे-न परित्यक्त परिहृत धन रूप्यमादातु ग्रहीतुमिच्छसि परिहृत धन हि गृहीतोज्झितत्वाद्वान्तमिव ततस्तदादातुमिच्छस्त्वम-पि वान्ताशीव न चेदमुचित भवादृशामित्यभिप्रायः । अथवा काक्वा नीयते राजन् ! वान्ताशी य: स प्रशस्यो न भवत्यतो ब्राह्मणेन परित्यक्त धनमादातुमिच्छसि न चैतद्भवत उचितं यत-स्त्वमप्येव वान्ताशितया अश्लाघ्य एव भविष्यसीति भावार्थ.। किं च सर्व निरवशेष जगद् भुवन भवेदिति स बन्धो यदीत्य-स्यायमर्थो न संभवत्येवैतत्कथञ्चित्समये वा ( तुहंति ) तव सर्व्वमपि धनं रजतरूप्यादिद्रव्य भवेद्धि तथैवादि योज्यते तथा सर्व्वमपि ते तव पर्याप्तमशक्तमिच्छापरिपूर्त्ति प्रतीति शेष.।

आकाशसमन्वेन तस्या अपर्यवसितत्वात्तथा नैव त्राणाय जरामरणाद्यपनोदाय नहीति सर्व्वं जगद्धनं वा तवेति ते। इह च पुनः पुनः सर्व्वशब्दस्य युष्मदस्मदोश्चापादानं भिन्नवाक्यत्वाद् पुनरुच्चामिति भावनीयं पूर्वेण गर्हितत्वमनेन चाऽनुपकारितां पुरोहितधनादिग्रहणहेतुमादर्श्य संप्रत्यनित्यतां तद्धेतुमाह। मरिष्यसि प्राणांस्त्यक्ष्यसि राजन्! नृप! यदा तदा वा यस्मिंस्तस्मिन्वा काले अवश्यमेव मर्त्तव्यम्" जातस्य हि ध्रुवं मृत्यु " रित्युक्तं हि "कश्चित्तावत्त्वया दृष्टः, श्रुतो वा शङ्कितोऽपि वा। क्षितौ वा यदि वा स्वर्गे, यो जातो न मरिष्यति" तत्रापि च कदाचिदजिज्ञपितवस्तु आदायैव मरिष्यामीत्यत आह। मनोरमांश्चित्ताह्लादकान् कामगुणाननुरूपान् प्रहाय प्रकर्षेण त्यक्त्वा त्वमेकाक्येव मरिष्यसि न किंचिदन्यत्त्वया सह यास्यतीत्यभिप्रायः। तथा एके ( हुत्ति ) एक एवाद्वितीय एव धर्म्मः सम्यग्दर्शनादिरूपो नरदेव! नृप! त्राणं शरणमापत्परिरक्षणक्षमं न विद्यते नास्त्यन्यदपरमिह इहेति चेत्यभिधान संयमस्थापनार्थं किंचिदिति स्वजनधनादिकं यदि वा इहेति लोके इहेत्यस्मिन् मृत्यौ धर्म एवैकस्त्राणं मुक्तिहेतुत्वेन नान्यत् किंचिदतः स एवानुष्ठेय इति सूत्रचतुष्टयार्थः।

यतश्च धर्म्मादृते नान्यत्त्राणमतो।

नाहं रमे पक्खिणि पंजरे वा,
संताणछिन्ना चरिस्सामि मोणं।
अकिंचणा उज्जुकडा निरामिसा,
परिग्गहारंभनियत्तदोसा ॥ ४१ ॥
दवग्गिणा जहा रण्णे, डज्झमाणेसु जंतुसु।
अन्ने सत्ता पमोयंति, रागदोसवसंगया ॥ ४२ ॥
एवमेवं वयं मूढा, कामभोगेसु मुच्छिया।
डज्झमाणं न बुज्झामो, रागदोसग्गिणा जगं ॥ ४३ ॥
भोगे भोच्चा वमित्ता य, लहुभूयविहारिणो।
आमोयमाणा गच्छंति, दिया कामकमा इव ॥ ४४ ॥
इमे य बद्धा फंदंति, मम हत्थज्जमागया।
वयं च सत्ता कामेसु, भविस्सामो जहा इमे ॥ ४५ ॥
सामिसं कुललं दिस्स, वज्झमाणं निरामिसं।
आमिसं सव्वमुज्झित्ता, विहरिस्सामो निरामिसा ॥ ४६ ॥
गिद्धोवमे उ नच्चा णं, कामे संसारवड्ढणे।
उरगो सुवन्नपासे व, संकमाणो तणुं चरे ॥ ४७ ॥
नागो व्व बंधणं छित्ता, अप्पणो वसहिं वए।
इति पत्थं महारायं, उसुयारि त्ति मे सुयं ॥ ४८ ॥

नेति निषेधे अहमित्यात्मनिर्देशे रमे इति रतिमवाप्नोमि [ पक्खिणि पंजरेवत्ति ] वाशब्दस्यापि भिन्नक्रमश्च ततः पक्षिणीव शकुनिकेव शार्ङ्गिकादि पञ्जरे प्रणीत एव। किमुक्तं भवति यथाऽसौ तु स्रोतादिके पञ्जरे न रतिं प्राप्नोत्येयमहमपि जरामरणाद्युपद्रवविहते भवपञ्जरे न रमे। अतश्छिन्नसन्ताना प्रक्रमात् स्निग्धसन्ततिः सती छिन्नशब्दस्य सूत्रे परनिपात प्राग्वत् चरिष्याम्यनुष्ठास्यामि मौनं मुनिभावम्। न विद्यमानं किंचन कृष्णत्वादि हिरण्यादि यावत् कषायादिकमस्या इत्यकिंचना ऋजु एव मायारहितं ... ऋजुकृतमस्या इति ऋजुकृ-

ना। कथं चैवंभूतेत्याह। निष्क्रान्ता आमिषाद् गृद्धिहेतोरभिलषितविषयादेर्निर्गतं वा आमिषमस्या इति निरामिषा ( परिग्गहारंभनियत्तदोसेत्ति) प्राकृतत्वात् पूर्वपरनिपातोऽतश्चामिनि परिग्रहारम्भदोषा अभिष्वङ्गनिस्त्रिंशतादयस्तेभ्यो निवृत्तोपरता परिग्रहारम्भदोषनिवृत्ता। यद्वा परिग्रहारम्भनिवृत्ता अत एव चादोषा विकृतिविरहिता। अनयोर्विशेषणसमासः। अपरं च दोषाग्निना दावानलेन यथाऽरण्ये वने दह्यमानेषु भस्मसात्क्रियमाणेषु जन्तुषु प्राणिष्वन्येऽपरे सत्त्वाः प्राणिनो विवेकिनः प्रमोदन्ति प्रकर्षेण हृष्यन्ते। किमित्येवंविधास्त इत्याह। रागद्वेषवश आयत्तता रागद्वेषवशस्तं गताः प्राप्ताः ( एवमेवंति ) बिन्दोरलाक्षणिकत्वादेवमेवेति वयं ( मूढत्ति ) मूढानि मोहवशगा निकामभोगेषु कामरूपेषु ( मुच्छियात्ति ) मूर्च्छितानि गृद्धानि दह्यमानमिव दह्यमानं न बुध्यामहे नावगच्छामो रागद्वेषावग्निरिव रागद्वेषाग्निस्तेन किं तज्जगत्प्राणिसमूहं यो हि सविवेको रागादिमांश्च न भवति स दावानलेन दह्यमानानन्यसत्त्वानवलोक्याहमप्येवमनेन दहनीय इति तद्रक्षणोपायतत्पर एव भवति न तु प्रमादवशगः सन् प्रमोदते। यस्त्वत्यन्तमज्ञो रागादिमांश्च स आर्यतमाचिन्तयन् हृष्यति न तु तदुपशमापाये प्रवर्त्तते ततो वयमपि भोगपरित्यागादेवं विधास्येवेति भावः। ये त्वेवंविधा न भवन्ति ते किं कुर्वन्तीत्याह भोगान् मनोज्ञशब्दादीन् ( भोच्चेति ) भुक्त्वाऽऽसेव्य पुनरुत्तरकाले वान्त्वा चापहाय विपाकदारुणतालघुर्वायुस्तद्वद् भूतं भवनमेषां लघुभूताः कोऽर्थो वायूपमास्तथाविधाः सन्तो।विहरन्तीत्येवंशीला लघुभूतविहारिणोऽप्रतिबद्धविहारिण इत्यर्थः। यद्वा लघुभूतः संयमस्तेन विहर्तुं शीलं येषां ते तथा आ समन्तान्मोदमाना हृष्यन्त आमोदमानास्तथाविधा इहेति गम्यते। गच्छन्ति विवक्षितस्थानमिति शेषः। क इव (दियाकामकमाइवेत्ति) इवशब्दो भिन्नक्रमस्ततो द्विजा इव कामो ऽभिलाषस्तेन क्रामन्तीति कामक्रमा यथा पक्षिणः स्वेच्छया यत्र यत्राभिरमन्ते तत्र तत्रामोदमाना भ्राम्यन्ते एवमेतेऽप्यभिष्वङ्गस्य परतन्त्रताहेतोरभावाद्यत्र यत्र संयमयात्रानिर्वहणं तत्र तत्र यान्तीत्याशयः। पुनर्बहिरास्थां निराकुर्वन्तीत्याह इमे इत्यनुभूयमानतया प्रत्यक्षाः शब्दादयश्च समुच्चये बद्धा नियन्त्रिता अनेकधोपायै रक्षिता इत्यर्थः एते किमित्याह। स्पन्दन्त इव स्पन्दन्ते अस्थिरतिधर्म्मतया ये। कीदृश इत्याह ( मम हत्थज्जमागयत्ति ) ममेत्यात्मनिर्देशः उपलक्षणत्वात्तव च हस्तं करमार्य्य अथ वा आगताः प्राप्ता कोऽर्थः स्ववशा आत्मनोऽङ्गतां दर्शयितुम् इ। ( वयं च सत्तत्ति ) वयं पुनः शक्तानि संयन्त्रान्यभिष्वङ्गवन्तीत्यर्थः अबहुत्वेऽप्यस्मदो द्वयोश्चेति बहुवचनं कामेष्वभिष्वङ्गः यशब्दादिषु एवंविधेष्वपि चामीष्वभिष्वङ्ग इति मोहविलसितमिति भावः यद्वा इमे च चेति चशब्दाद्वयं च स्पन्दामहे इव स्पन्दामहे आयुषश्चञ्चलतया परलोकगमनाय शेषं तथैव यत एवमतो भविष्यामो यथेमे पुरोहितादय। किमुक्तं भवति यथाऽमी भिक्षुच्चलत्वमवश्योऽप्यने परित्यक्तास्तथा वयमपि त्यक्ष्याम इति। स्यादेतदस्थिरत्वेऽपि सुखहेतुत्वात् किमित्यमी स्पन्दन्त इत्याह। सह मिषेण पिशितरूपेण वर्तत इति सामिषस्तं कुललमिह गृध्रं शकुनिकं वा दृष्ट्वाऽवलोक्य बाध्यमानं पीड्यमानं पक्ष्यन्तरैरिति गम्यते निरामिषमामिषविरहितमन्यथाभूतं दृष्ट्वेति गम्यते आमिषमभिष्वङ्गहेतुं धान्यादि सर्व्वं निरवशेषमुज्झित्वा त्यक्त्वा ( विहरिस्सामोत्ति ) विहरिष्याम्यप्रतिबद्धविहारितया चरिष्यामीत्यर्थः। निरामिषा परित्यक्ताभिष्वङ्गहेतुः इत्यादुपारे

नोपदेष्टुमाह गृध्रेण उपमा येषान्ते गृध्रोपमास्तानुक्तन्यायेन तुः समुच्चये भिन्नक्रमश्च योक्ष्यते ज्ञात्वाऽवबुध्य णमिति प्राग्वत् कान् प्रक्रमाद्विषयामिषवतो लोकान् कामांश्च विषयांश्च संसारवर्द्धनात् संसारवृद्धिहेतून् ज्ञात्वेति संबन्धः। अथवा काम्यन्त इति कामा इति व्युत्पत्त्या कामयोगाद्वात्यन्तगृद्धिख्यापनार्थं कामा विषयिण एवोक्ता अतस्तान् गृध्रोपमान् संसारवर्द्धकांश्च ज्ञात्वा किमित्याह (उरगो व्व सुवन्नपासेव्वत्ति) इवशब्दस्य भिन्नक्रमत्वादार्षत्वाच्चोरग इव भुजग इव सौपर्णेयपार्श्वे गरुडसमीपे शङ्कमानो भयत्रस्तमिति स्तोकं मन्दयतनयेति यावत् । चरेः क्रियासु प्रवर्त्तेश्च। अस्यायमाशयो यथा सौपर्णेयोपमैर्विषयैर्न बाध्यते तथा सयममासेवस्व । ततश्च किमित्याह ( नागोव्व) अर्थः स्पष्ट आशयश्चायं यथा नागो बन्धनं वरत्राएरकादि छित्वा द्विधा विहायात्मनो वसति विन्ध्याटवीं व्रजत्येवं भवानपि कर्म्मबन्धनमुपहत्यात्मनो वसतिं कर्म्मविगतं सुखो यत्रात्मावतिष्ठते सा च मुक्तिरेव तां व्रजेरेनेन दीक्षाया प्रसङ्गतः फलमुक्तम्। एवं चोपविश्य निगमयितुमाह । एतद् यन्मयोक्तं पथ्यं हितं महाराज! प्रशस्यनृपते! इषुकारनामन्! एतच्च न मया स्वमनीषिकयैवोच्यते किं त्वियेतन्मया श्रुतमवधारितं साधुसकाशादिति गम्यत इति सूत्राष्टकार्थः । एवं च तद्वचनमाकर्ण्य प्रतिबुद्धो नृपस्ततश्च यत्तौ द्वावपि चक्रतुस्तदाह ।

चइत्ता विउलं रज्जं, कामभोगे य दुच्चए ।
निव्विसया निरामिसा, निन्नेहा निप्परिग्गहा ॥ ४९ ॥
सम्मं धम्मं वियाणित्ता, चिच्चा कामगुणे वरे ।
तवं पगिज्झहक्खायं, घोरं घोरपरक्कमा ॥ ५० ॥

त्यक्त्वाऽपहाय विपुलं विस्तीर्णं राष्ट्रं मण्डलं पाठान्तरतो राज्यं वा कामभोगांश्चोक्तरूपान् दुस्त्यजान् दुष्परिहारान्निर्विषयौ शब्दादिविषयविरहितावत एव निरामिषौ। यद्वा विषयो देशस्तद्विरहितौ राष्ट्रपरित्यागतः कामभोगत्यागतश्च निरामिषावभिष्वङ्गहेतुविरहितौ कुत एवंविधौ यतो निःस्नेहौ निष्प्रतिबन्धौ निष्परिग्रहौ क्वचिदविद्यमानस्वीकारौ सम्यगविपरीतं धर्म्मं श्रुतचारित्रात्मकं विज्ञाय विशेषतोऽवबुध्य ( चिच्चत्ति ) त्यक्त्वा कामगुणान् शब्दादीन् वरान् प्रधानान् पूर्वविशेषणेन गतार्थत्वेऽपि पुनरभिधानमतिशयख्यापकं तपोऽनशनादि प्रगृह्याभ्युपगम्य यथाख्यातं येन प्रकारेण तीर्थकरादिभिः कथितं घोरमत्यन्तदुरनुचरं घोरं कर्म्मवैरिणं प्रति रौद्रः पराक्रमो धर्म्मानुष्ठानविषयसामर्थ्यात्मको ययोस्तौ । तथा देवीनृपौ तथैव कृतवन्ताविति शेष इति सूत्रद्वयार्थः ॥

संप्रति समस्तोपसंहारमाह ।

एवं ते कमसो बुद्धा, सव्वे धम्मपरायणा ।
जम्ममच्चुभयोव्विग्गा, दुक्खस्संतगवेसिणो ॥ ५१ ॥
सासणे विगयमोहाणं, पुव्वभावणभाविया ।
अचिरेणेव कालेन, दुक्खस्संतमुवागया ॥ ५२ ॥
राया सह देवीए, माहणो य पुरोहिओ ।
माहणी दारगा चेव, सव्वे ते परिनिव्वुडे त्ति बेमि ॥ ५३ ॥

एवममुना प्रकारेण तान्यनन्तरमुक्तरूपाणि षडपि क्रमशोऽभिहितपरिपाट्या बुद्धान्यवगततत्त्वानि सर्वाण्यशेषाणि धर्म्मपरायणानि धर्म्मैकनिष्ठानि पठ्यते च ( धम्मपरंपरत्ति ) परम्परया धर्म्मो येषां तानि परम्पराधर्म्माणि प्राकृतत्वाच्च परपराशब्दस्य परनिपातस्तथाहि साधुदर्शनात् कुमारकौ कुमारवचनात्तत्पित्रोस्तदवलोकनात् कमलादेव्यास्ततोऽपि च राज्ञ इति परम्परयैव धर्म्मप्राप्तिर्जन्ममृत्युभयेभ्य उक्तरूपेभ्य एवोद्विग्नानि त्रस्तानीति जन्ममृत्युभयोद्विग्नानि दुःखस्यासातस्यान्तः पर्यन्तस्तद्गवेषकाणि तदन्वेषकाणि सापेक्षस्यापि समासो यथा देवदत्तस्य गुरुकुलमिति। पुनस्तद्वक्तव्यतामेवाह । शासने दर्शने जिगतमोहानामर्हतामन्यजन्मनि भावनयाऽभ्यासरूपया भावितानि वासितानि भावनाभावितानि । यद्वा भाविता भावना यैस्तानि भावितभावनानि पूर्वोत्तरनिपातस्यातन्त्रत्वादत एवाचिरेणैव स्वल्पेनैव कालेन दुःखस्यान्तं मोक्षमुपगतानि प्राप्तानि । सर्वत्र च प्राकृतत्वात् पुल्लिङ्गनिर्देशः । मन्दमतिस्मरणायाध्ययनार्थमुपसंहर्तुमाह । राजेषुकारः सह देव्या कमलावत्या ब्राह्मणश्च पुरोहितो भृगुनामा ब्राह्मणी तत्पत्नी यौ च दारकौ तत्पुत्रौ चेति पूर्ववत् सर्वाणि तानि परिनिर्वृतानि कर्म्माग्न्युपशमतः शीतीभूतानि मुक्तिं गतानीति यावत् सूत्रत्रयार्थः । इति परिसमाप्तौ ब्रवीमीति पूर्ववत् । उक्तोऽनुगमः । उत्त० १४ अ० । स्वनामख्याते नगरभेदे, "उसुयारे णयरे उसभदत्ते गाहावई" विपा० १ श्रु० १ अ० ।

उसुयार(पव्वय)-इषुकारपर्व्वत-पुं० धातकीखण्डविभागकारिणि पर्वते. " दो उसुयारपव्वया " इषुकारौ दक्षिणोत्तरयोर्दिशोर्धातकीखण्डविभागकारिणाविति । स्था० २ ठा० ३ उ० । " समयक्खेत्ते चत्तारि उसुकारा " इषुकारा धातकीखण्डपुष्करार्द्धयोः पूर्वोत्तरविभागकारिणश्चत्वारः स० । स्था० ।

उसुयारिज्ज-इषुकारीय-न० "उसुयार णाम गोयं, वेदंतो भावओ य उसुयारो । तत्तो समुट्ठियमिणं, उसुयारिज्जंति अज्झयणं " यदिषुकारात् समुत्थितं तत्तस्मै प्रायो हितमेव भवतीति इषुकाराय हितमिषुकारीयमुच्यते । प्राधान्याच्च गाथा निर्देशोऽन्यथा षड्भ्योऽप्येतत्समुत्थानं तुल्यमेवेति । चतुर्दशे उत्तराध्ययने, उत्त० १४ अ० । स० ।

उसुयाल-देशी०-न० उदूखले, " उसुयालंसि वा कामजलंसि वा " आचा० २ श्रु० ।

उसुलक्खकिरिओवम-इषुलक्ष्यक्रियोपम-त्रि० शरलक्ष्यक्रियासदृशे, " श्रुत. समाधिरुक्त, इषुलक्ष्यक्रियोपम " । द्वा० २१ द्वा० ।

उसूलग-इसूलक-पुं० खातिकायां परबलपातार्थमुपरिच्छादितगर्तायाम् " उसूलगसयग्घीओ " उत्त० ९ अ० ।

उस्स ( ण् ) (ऊ)ष्मन्-त्रि० उष् आधारे मनिन् वा न्हस्व । शषोः सयोगे सोऽग्रीष्मे ८ । ४ ।७८। इति षस्थाने सकारो मागत्याम । ग्रीष्मर्तौ, प्रा० ।

उस्स-अवश्याय-पुं० स्नेहे, " अप्पहरिएसु अप्पुस्सेसु " बृ० ४ उ० । नि० चू० ।

उस्र-पुं० वसन्ति रसा अत्र-वस रक्-निपातनात् सत्वम् । किरणे, सूर्यकिरणानां वहुलाकर्षकत्वेन रसधत्त्वात्तथात्वम् । वृषे, सुरभ्याम्, लतायाम्, पृथिव्याम्, स्त्री० । वाच० ।

उस्सकलिय-उत्संकलित-त्रि० निसृष्टे, आचा० २ श्रु० ।

उस्सकइत्ता उत्ष्वष्क्य-अव्य० उत्सृष्टेऽर्थे, तत्प्रासमरतयोः सुखीभूयेति यावत् । स्था० ९ ठा० ॥

उस्सक्कण-उत्ष्वष्कण-न० स्वयोगप्रवृत्तकालावधेरूर्ध्वं पुरतः ष्वष्कणमारम्भकरणमुत्ष्वष्कणम् । ध०३ अ धि० । स्वयोगप्रवृत्तेर्नियतकालावधिपरतः करणे, । यथा काचिन्नरारूकादिप्रार्थनया रुदन्तं बालमाश्वासयति यदुत मा रोदीः समीपगृहागतो मुनिरस्मद्गृहे आयास्यति तदा तदर्थमुत्थिताऽहं तवापि दास्यामीति । ततश्च साधावागते तस्य भिक्षादानायोत्थिता वालस्यापि ददातीति उत्ष्वष्कणम् । ध०३अधि० ( पाहुडिया शब्दे स्पष्टीभविष्यति ) " उस्सक्कण अहिसक्कणं परमुहोलंकिए परोवा वि नायव्वपरेण दुवो अह नावाभिग्गहो नाम अवसर्पन् " । ध० १ अधि० ।

उस्सक्काइत्ता-अपसर्प्य-अव्य० अपसृतं कृत्वेत्यर्थे, " उस्सक्काइत्ता " विवादे प्रतिपन्थिनं केनापि व्याजेनापसर्प्यापसृतं कृत्वा पुनरवसरमवाप्य विवदते स्था ६ ठा० ।

उस्सग्ग-उत्सर्ग-पु० सृज विसर्गे उत्पूर्वात् सृजेर्घञ् । उज्झने, आव० ५ अ० । अस्य निक्षेपः ।

नामं १ ठवणा २ दविए, ३ खित्ते ४ काले ५ तहेव भावे य ६
एसो उस्सग्गस्स उ, निक्खेवो छव्विहो होइ ॥ ३६ ॥

अर्थमधिकृत्य निगदसिद्धा विशेषार्थं तु प्रतिद्वारं प्रपञ्चेन वक्ष्याम । तत्रापि नामस्थापने गतार्थे ।

द्रव्योत्सर्गाद्विरभिधित्सया पुनराह ॥

दव्वुज्जणा उ जं जेण, जत्थ अवकिरइ दव्वभूओ वा ।
जं जत्थ वा वि खित्ते, जं जच्चिरं जम्मि वा काले ॥३७॥

वितिगित्तो दव्वुस्सग्गो अकिंचिकरं सदोसं च कत्तुं जो जं दव्वं छड्डेति तत्थ अकिंचिकरं जहा भिक्खं निष्फजायणं सदोसं जहा विसकतमनियोगकतं वा एवमादि । अहवा जेण दव्वेण जत्थ वा दव्वे दव्वभूतो छड्डेति एस दव्वुस्सग्गो उ हा भरहादीहिं चक्कवट्टीहिं भारहं वास पव्वयतेहिं छड्डितं । जो वा जं खेत्तयं चयति जम्मि वा खेत्ते चयति किंचि जम्मि वा खेत्ते उस्सग्गो वणिज्जत्ति एवमादिको उस्सग्गो जो ज कालं उज्झति । जहा उज्झातो वसंतो मेदणो ण वाहत्ति छड्डितो वा सिसो एवमादि । अहवा मित्तकालं पप्प ण गीयिज्जति वासारत्ते वा ण विहरिज्जति । जच्चिरं व कालं उस्सग्गे जम्मि काले उस्सग्गे वणिज्जति । [ आ० चू०५ अ० ] द्रव्योज्झना तु द्रव्योत्सर्गं स्वयं ( जंति ) यद्द्रव्यमनेषणीयमवकिरतीति योग [ अवकीरइत्ति ] उत्सृजति (जेणेत्ति) येन करणभूतेन पात्रादिनोत्सृजति [ जत्थत्ति ] यत्र द्रव्ये व्युत्सृजति द्रव्यभूतो वा अनुपयुक्तो वा उत्सृजति एष द्रव्योत्सर्गोऽभिधीयते । द्वारं क्षेत्रोत्सर्ग उच्यते [ जं जत्थ वा वि खित्तेत्ति ] यत् क्षेत्रमुज्झणदेशादुत्सृजति यत्र वाऽपि क्षेत्रे उत्सर्गो व्यावर्ण्यते एष क्षेत्रोत्सर्गः । कालोत्सर्ग उच्यते [ जं जच्चिरं जम्मि वा कालेत्ति ] य कालमुत्सृजति यथा भोजनमधिकृत्य रजनि माधवः [ जच्चिरं यत्ति ] यावन्त कालमुत्सर्गो यस्मिन् वा काले उत्सर्गो वर्ण्यते एष कालोत्सर्ग इति गाथार्थः । आव० ५ अ० ।

भावोत्सर्गान् प्रतिपादयन्नाह ॥

भावे पसत्थमियरं, जेण व भावेण अवकिरइ जं तु ।
अस्संजमं पसत्थे, अपसत्थे संजमं चयइ ॥ ३८॥

एवमादिनो भावमतो उस्सग्गो पसत्थो अपसत्थो अण्णाणादीणं आतिमदादीण य अप्पसत्थो पाणादीण उज्झणा जेण वा भावेण तत्थ नत्थ ति [ आव० चू० ] नाम इति द्वारपरामर्शः भावोत्सर्गो द्विधा प्रशस्त शोभनं वस्त्वधिकृत्य [ इतरत्ति ] अप्रशस्तमशोभनं तथा येन वा भावेन उत्सर्जनीयवस्तुगतेन खरादिना अवकिरति अं तु उत्सृजति यत्तत्र भावेनोत्सर्ग इति तृतीयासमासः तत्रासंयमं प्रशस्ते भावोत्सर्गे त्यजति अप्रशस्ते तु संयमं त्यजतीति गाथार्थः ।

यदुक्तं येन वा भावेनोत्सृजति तत्प्रकटयन्नाह ।

खरफरुसाइसचेअणम-चेअणं दुरभिगंधविरसाई ।
दव्विअमवि चयइ दोसेण,जेण भावुज्झणा सा उ ॥३९॥

खरपरुषादि सचेतनं खरं कठिनं परुषं दुर्भाषिणोपनीतमचेतनं दुरभिगन्धविरसादि यद्द्रव्यमपि त्यजति दोषेण येन खरादिना वा भावोज्झना सा उक्ता येनोत्सर्ग इति गाथार्थः । ३९ गतं मूलद्वारगाथायामुत्सर्गमधिकृत्य निक्षेपद्वारम् ॥

अधुनैकार्थिकान्युच्यते ॥

उस्सग्ग १ विउस्सरणा, २
उज्झणा य ३ अवकिरण ४ छड्डण ५ विवेगो ६ ।
वज्जण ७ चयण ८ मुअणा ९,
परिसाडण १० साडणा चेव ११ ॥ ४० ॥

उत्सर्गः व्युत्सर्जना उज्झना च अवकिरणं छर्दनं विवेकः वर्जनं त्यजनम् उन्मोचना परिशातना शातना चैवेति गाथार्थः । आव०५अ० उत्सर्जनीयस्य त्यागरूपे आभ्यन्तरतपोभेदे, तद्भेद स द्विविधो वाह्य आभ्यन्तरश्च । तत्र बाह्यो द्वादशादिभेदस्योपधेरतिरिक्तस्यानेषणीयस्य संसक्तस्यान्नपानादेर्वा त्यागः आभ्यन्तरः कषायाणां मृत्युकाले शरीरस्य च त्यागः । ननु उत्सर्गप्रायश्चित्तमध्य एवोक्तस्तत्किं पुनरत्र भणनेन सत्यं सोऽतिचारविशुद्धयर्थमुक्तः अयं तु सामान्येन निर्जरार्थ इत्यपौनरुक्त्यम् । प्रव० ६द्वा० । ध० । स० । नं० । पञ्चा० । यथा भामेत्युक्ते सत्यभामेति गम्यते तथाऽत्राप्येकदेशेन समुदायावगमात् कायोत्सर्गे, प्रव०१ द्वा० । ( काउस्सग्गशब्देऽस्य वक्ष्यता ) " उस्सग्गंति " ईर्यापथनिमित्तं पञ्चविंशत्युच्छ्वासप्रमाणं कायोत्सर्गं करोति । ओ० । सामान्योक्तौ, ध० २ अधि० । दर्श० । सामान्योक्तो विधिरुत्सर्ग यथा त्रिविधं त्रिविधेन प्राणातिपातविरति । दर्श० । पञ्चा० । इह विधित्सितस्य वस्तुनः कारणनिरपेक्ष सामान्यस्वरूपमुत्सर्ग उच्यते । बृ० ४ उ० । अभिप्रेतवस्तुस्वरूपनिर्वाच्य कारणनिरपेक्षमुत्सर्ग । नि० चू० ११ उ० । "उस्सग्गो ओहो" उस्सग्गो पडिसेहो । नि० चू० १ उ० । अथोत्सर्गापवादयोर्विचार । अथ योऽयं " न हिंस्यात्सर्वाभूतानी " त्यादिना हिंसानिषेध औत्सर्गिको मार्गः सामान्यतो विधिरित्यर्थः वेदविहिता तु हिंसाऽपवादपदं विशेषतो विधिरित्यर्थः । ततश्चापवादेनोत्सर्गस्य बाधितत्वाच्च श्रौतो हिंसाविधिर्दोषायोत्सर्गापवादयोरपवादो विधिर्बलीयानिति न्यायात् । भवतामपि हि न खल्वेकान्तेन हिंसानिषेध तत्तत्कारणे जाते पृथिव्यादिप्रतिसेवनानामनुज्ञानात् ग्लानाद्यसंस्तरे आधाकर्मादिग्रहणमणनाच्च । अपवादपदं च याज्ञिकी हिंसा देवतादिप्रीतेः पुष्टालम्बनत्वादिति परमाशङ्क्य स्तुतिकार आह नोत्सृष्टमित्यादि अन्यार्थमिति मध्यवर्ति पदं डमरुकमणिन्यायेनो भयत्रापि संबन्धनीयम् । अन्यार्थमुत्सृष्टमन्यस्मै कार्याय प्रयुक्तमुत्सर्गवाक्यमन्यार्थप्रयुक्तेन वाक्येन नापोद्यते नापवादगोचरीक्रियते यमेवार्थमाश्रित्यापवादोऽपि प्रवर्तते तयोर्निम्नोन्नतादिव्यवहारवत्परस्परसापेक्षत्वेनैकार्थसाधनविषयत्वात् यथा जैनानां संय-

मपरिपालनार्थं नवकोटिविशुद्धाहारग्रहणमुत्सर्गस्तथाविधद्रव्यक्षेत्रकालभावापत्सु च निपतितस्य गत्यन्तराभावे पञ्चकादियतनयाऽनेषणीयादिग्रहणमपवादः सोऽपि च संयमपरिपालनार्थमेव । न च मरणैकशरणस्य गत्यन्तराभावोऽसिद्ध इति वाच्यं " सव्वत्थ संजमं सं-जमाउ अप्पाणमेव रक्खिज्जा । मुच्चइ अइवायाओ, पुणो विसोही नया विरई " इत्यागमात् तथा आयुर्वेदेऽपि यमेवैकं रोगमाधिकृत्य कस्याञ्चिदवस्थायां किञ्चिद्वस्त्वपथ्यं तदेवावस्थान्तरे तत्रैव रोगे पथ्यमुत्पद्यते हिंसा यस्या देशकालामयान्प्रति " यस्यामकार्यं कार्यं स्यात्कर्म कार्यं तु वर्जयेत् " इति वचनात् यथा बलवद्देज्वरिणो लङ्घनं क्षीणधातोस्तु तद्विपर्यय एव देशाद्यपेक्षया ज्वरिणोऽपि दध्यिपानादि योज्यमातथा च वैद्याः "कालाविरोधि निर्दिष्टं,ज्वरादौ लङ्घनं हितम्। ऋतेऽनिलश्रमक्रोध-शोककामकृतज्वरात् " एव च य पूर्वमपथ्यपरिहारो यश्च तत्रैवावस्थान्तरे तस्यैव परिभोग स खलु उभयोरपि तस्यैव रोगस्य शमनार्थ इति सिद्धमेकविषयत्वमुत्सर्गापवादयोरिति । भवतां चोत्सर्गोऽपवादश्चान्यार्थ । " न हिंस्यात्सर्वाभूतानि " त्युत्सर्गो हि दुर्गतिगतिनिषेधार्थं अपवादस्तु वैदिकहिंसाविधिर्देवताऽतिथिपितृप्रीतिसंपादनार्थं अतश्च परस्परनिरपेक्षत्वे कथमुत्सर्गोऽपवादेन बाध्यते तुल्यबलयोर्विरोध इति न्यायात् भिन्नार्थत्वेऽपि तेन तद्बाधनेऽतिप्रसङ्गात् । न च वाच्य वैदिकहिंसाविधिरपि स्वर्गहेतुतया दुर्गतिनिषेधार्थं एवेति तस्योक्तयुक्त्या स्वर्गहेतुत्वनिर्लोठनात् तन्मन्तरेणापि च प्रकारान्तरैरपि तत्सिद्धिभावाद्गत्यन्तराभावे ह्यपवादे पक्षकक्षीकार । स्या० । सम्प्रति किमुत्सर्गा अल्पे उतापवादास्तथा उत्सर्गोऽपवादो वा स्वस्थाने श्रेयान् बलवांश्च । परस्थाने बलवानपि श्रेयांश्च इत्याह । ( सूत्रम् ) "नो कप्पइ निग्गंथाण वा निग्गंथीण वा आमे ताले पलंबे अभिन्ने पडिगाहित्तए अववाइय जहा कप्पइ निग्गंथाण वा निग्गंथीण वा पक्के तालपलंबे भिन्ने वा पडिगाहित्तए " अथवा त्रिविधं सूत्रमुत्सर्गसूत्रमपवादसूत्रमुत्सर्गापवादसूत्र च। तत्रौत्सर्गिकमापवादिक चोक्तमुत्सर्गापवादसूत्र पुनरिदम् । नो कप्पइ निग्गंथाण वा णिग्गंथीण वा अन्नमन्नस्स मोय आदित्तए वा आयमित्तए वा अन्नत्थगाढाहिं रोगायकेहिं„ अथवा चतुर्विध सूत्रमौत्सर्गिकमापवादिकमुत्सर्गापवादमपवादौत्सर्गिक तत्राद्यानि त्रीण्युक्तानि चतुर्थमपवादौत्सर्गिकमिद यथा " चम्म मंस च दसाहि मा अच्चियाणं " आह उत्सर्ग इत्यपवाद इति वा कोऽर्थ उच्यते ॥

उज्जयसग्गुस्सग्गो, अववाओ तस्स चेव पडिवक्खो ।
उस्सग्गा वि निवतियं, धरेइ सालंबमववाओ ।

उद्यत सर्गोऽविहार उत्सर्गस्तस्य चोत्सर्गस्य प्रतिपक्षोऽपवादः कथमिति चेदत आह उत्सर्गादवमौदर्यादिषु विनिपतित प्रच्युत ज्ञानादिसालम्बमपवादो धारयति । ननु स उत्सर्गोऽपवाद गत सन् कथं न भगवन्नो भवति उच्यते ।

धावंतो उव्वाओ, मग्गन्नू किं न गच्छइ कमेणं ।
किं वा मउई किरिया, न कीरए असहओ तिक्खं ॥

सर्वोऽप्यस्माकं प्रयासो मोक्षसाधननिमित्त स च मोक्ष तथा साधयति नेतरत् दृष्टान्तोऽय यथा कोऽपि पाटलिपुत्रं गच्छन् धावन् चलात श्रान्तो भवति तथा न क्रमेण स्वभावगत्या मार्गज्ञ सन् गच्छति गच्छत्येवेति भाव केवल चिरेण तत्पाटलिपुत्रमवाप्नोति यदि पुन श्रान्तोऽपि धावति तदा अपान्तराल एव म्रियते एवमत्राप्यपवादौ तादृशे कार्येऽपवादमप्रतिपद्यमानो विनश्यति । किं च रोगिणस्तीक्ष्णां क्रियामसहमानस्य मृद्वी क्रिया न क्रियते क्रियत एवेत्यर्थ यथैतदेवमत्राप्युत्सर्गात्परिभ्रष्टस्यापवादगमनम् । ननु किमुत्सर्गादपवादप्रसिद्धिरुतापवादादुत्सर्गस्य तत आह ।

उन्नयमविक्खनिन्नय,पसिध्दि उन्नयस्स निन्नाउ ।
इय अन्नुन्नपसिध्दा, उस्सग्गववायगातुल्ला ॥

यथोन्नतमां प्रेक्ष्य निम्नस्य प्रसिद्धिर्निम्ना चोन्नतस्य प्रसिद्धिरित्येवमन्योऽन्यप्रसिद्धावुत्सर्गादपवादोऽपवादादुत्सर्ग प्रसिद्ध इति द्वावप्युत्सर्गापवादौ तुल्यौ । तदेवमुत्सर्गापवादद्वारमुक्तम् । इदानीमल्पद्वारमुच्यते । शिष्य पृच्छति भगवन् किमुत्सर्गा अल्पे उतापवादा उच्यते तुल्या यत आह ।

जावइया उस्सग्गा, तावइया चेव हुंति अववाया ।
जावइया अववाया, उस्सग्गा तेत्तिया चेव ॥

यावन्त उत्सर्गास्तावन्तोऽपवादा यावन्तोऽपवादास्तावन्त उत्सर्गा कथमिति चेदुच्यते सर्वस्यापि प्रतिषेधस्यानुज्ञाभावात् द्वयेऽपितुल्या । संप्रति सेयवलवते इति द्वारद्वयं व्याचिख्यासुराह ।

सट्ठाणे सट्ठाणे, सेयावलिणो व हुंति खलु एए ।
सट्ठाणपरट्ठाणे, पहुंति वत्थूण निप्फन्ना ॥

शिष्य पृच्छति किमुत्सर्ग श्रेयान् बलवांश्च उतापवाद । सूरिराह । एते खलु उत्सर्गा अपवादाश्च स्वस्वस्थाने श्रेयांसो बलिन इव भवन्ति । परस्थानेऽश्रेयांसो दुर्बलाश्च । अथ किं स्वस्थानं किं वा परस्थानमत आह । स्वस्थानपरस्थाने वस्तुनो निष्पन्ने । अथ वस्त्वेव न जानामि किं तद्वस्त्विति । उच्यते पुरुषो वस्तु तथा चाह ।

संथरओ सट्ठाणं, उस्सग्गो असहुणो परट्ठाणं ।
इय सट्ठाण परं वा, न होइ व वत्थू विणा किंचि ॥

सन्तरतो निस्तरत उत्सर्ग स्वस्थानमपवादः परस्थानमसहस्यासमर्थस्य य सस्तरीतुं न शक्नोति तस्यापवाद स्वस्थानमुत्सर्ग परस्थानमिति एवममुना प्रकारेण पुरुषलक्षण वस्तु विना न किंचित् स्वस्थान परस्थान वा किं तु पुरुषे वस्तु संस्तरति भवेत्यत पुरुषात् स्वस्थान परस्थानं वा निष्पद्यते तत उक्त प्राक् स्वस्थानपरस्थाने वस्तुनो निष्पन्नेगत सूत्रद्वारम् । वृ० १ उ० । प्रकीर्णकथायाम्, "उस्सग्गो पइन्नकहा अववाओ णिच्छयकहा" नि०चू०५उ० । अपानवायोर्व्यापारे, विष्टोत्सर्गव्यागे, दाने,समाप्तौ, व्रतोत्सर्गे वार्षिकवेदपाठसमाप्तौ च वाच० ।

उस्सग्गट्ठिइ–उत्सर्गस्थिति–स्त्री० उत्सर्गस्थाने, "उस्सग्गठिइसुद्ध जह दव्व विवज्जयं लभइ " नि० चू० १६ उ० ।

उस्सग्गववाइयकुसल–उत्सर्गापवादिककुशल–पुं० उत्सर्गश्च अपवादे भवमापवादिक च तस्मिन् कुशल । उत्सर्गापवादविषयविभागवेदिनि, दर्श० । अपवादे भवमापवादिक तस्मिन्नुत्सर्गापवादिके कुशला विषयविभागवेदिन इत्यर्थ । ते ह्युत्सर्गापवादवेदितया समयानुरूपप्रवर्तमाना लोकगृहस्थस्निग्धकेसरिकक्षपकसाधोरकालेऽपि दानदातृश्रावकवन्निर्जराभाजो जायन्त इति । दर्श० ॥

उस्सग्गववाय–उत्सर्गापवाद–पुं० द्वि० व० इतरेतरद्वन्द्व । सामान्योक्तविशेषोक्तविधौ , "उस्सग्गववायाणं वियाणगा सेवगा" उत्सर्गापवादयो सामान्योक्तविशेषोक्तविध्यो र्विज्ञाऽपदा । पञ्चा०

११ विव०। "उस्सग्गववायाणं विसयविभागम्मि दक्खाणं।बहुवयणेण दुवयणमिति" प्राकृतलक्षणवशादुत्सर्गापवादयोः सामान्योक्तविशेषोक्तलक्षणयोः विषयविभागे गोचरविच्छित्तौ दक्षाणां छेकानाम्। जीवा० १ अधि०। ( पादग्रोञ्छनस्यौत्सर्गिकत्वापवादिकत्वविचारः पायपुंछणशब्दे )

उस्सग्गववायकुसल-उत्सर्गापवादकुशल-पुं० सामान्योक्तो विधिरुत्सर्गः यथा त्रिविधं त्रिविधेन प्राणातिपातविरतिर्विशेषोक्तो विधिरपवादः यथा " पुढवाइसु आसेवा, उप्पण्णे कारणम्मि जयणाए। मिगरहियस्सठियस्स, अववाओ होइ नायव्वो" । तत्र कुशल दक्षः। प्रवचनकुशलभेदे,। सांप्रतमुत्सर्गापवादकुशलाभिधानौ तृतीयचतुर्थभेदौ युगपदभिधित्सुर्गाथोत्तरार्द्धमाह

उस्सग्गववायाणं, विसयविभाग वियाणाइ ॥ ५३ ॥

उत्सर्गापवादयोर्जिनप्रवचनप्रतीतयोर्विषयविभागं करणाकरणप्रस्तावं विशेषेण जानाति अवगच्छति। अयमत्राभिप्रायः नोत्सर्गमेव केवलमालम्बते नाप्यपवादमेव प्रमाणीकरोति किं तर्हि-वृद्धपुराश्रावकसमुदायवत् तयोरवसरमवबुध्यते। उक्तं च। "उभयमविक्खानिउणस्स, पसिद्धि उभयस्स इयराओ। इय अन्नुन्नपसिद्धा, उस्सग्गववायगा तुल्ला"ज्ञात्वा च यथाऽवसरं तयोर्विषये स्वलाव्यथां बहुलाभां प्रवृत्तिमातनोतीति ध० र०। ( अयलपुरशब्दे तद्धकथ्यतोक्ता )

उस्सग्गववायधम्मता-उत्सर्गापवादधर्मता-स्त्री० प्रतिषेधानुज्ञालक्षणतायाम्,। "काम सव्वपदेसु वि, उस्सग्गववायधम्मता जुत्ता। मोत्तुं मेहुणभावं, ण विणा त रागदोसेहिं। उस्सग्गो पडिसेहो अववाओ अणुण्णाधम्मताउस्सलक्खणताजुत्ता युज्यते घटत इत्यर्थः।" नि० चू० १ उ०।

उस्सग्गसुत्त-उत्सर्गसूत्र-न० औत्सर्गिकार्थप्रतिपादके सूत्रभेदे, वृ० १ उ०। [ सुत्तशब्दे इद व्याख्यास्यते ]

उस्सग्गिय-औत्सर्गिक-त्रि० उत्सर्ग सामान्यविधिमर्हति ठञ् सामान्यविधियोग्ये, स्त्रियां ङीप् स्या०।

उस्सण्ण-उत्सन्न-त्रि० उद्-सद्-क्त-अनुत्साहोत्सन्नोत्सच्छेदाः।१।१४ इत्युत्सन्नपर्युदासाभावादेरत उत्सन्न प्रा० उच्छिन्ने, नष्टे च। पाच०। प्रमत्तगुणयास्तव्य, कृष्टिदुत्सन्नवराक । देशान्तरं व्रजन् सोऽथ, पुण्योऽगाद् नैतपल्लिकाम्। आ० क०।

उस्साण-देशी०-बाहुल्ये, " उस्सण्णं देयासाय वेयणं वेदेंति उस्सण्ण बाहुल्येन प्रयेणेत्यर्थः। कर्म०। स्थ०। " उस्सण्णमं-साहारा० भ० ७ श० ७ उ०। एकान्ते, " उस्सण्णलक्खणमं-जुया " नि० चू० ३ उ०। उस्सण्णं नाम कोतिवायाए वहति प्रमिसमित्यर्थ । अहण स च लोगो आयरति। नि० चू० १० उ०।

उस्सण्णदोस- उत्सन्नदोष- पुं० उत्सन्नमनुपरत बाहुल्येन प्रवर्तनं इत्युत्सन्नदोष। रौद्रध्यानस्य प्रथमे लिङ्गे,आव० ४ अ०।

उस्सप्पिणी- उत्सर्पिणी- स्त्री० उत्सर्पन्ति शुभा भावा अस्यामित्युत्सर्पिणी ज्यो० २ पाहु०। उत्सर्पति वर्द्धते अरकापेक्षया वर्द्धयति वा क्रमेण पुगदीन् भावानित्युत्सर्पिणी। जं० २ वक्ष०। भ०। दशसागरोपमकोटाकोटीपरिमाणे, शुभतायवर्द्धकेऽशुभतयहानिकारके कालभेदे, प्रा० म० प्र०। अनु०। विशे०। "दससागरोवमकोडाकोडीओ कालो उस्सप्पिणीए" स्था०१०-ठा०। आ० म० द्वि०। जं०। उत्सर्पिण्यां च क्रमेण शुभा भावा अनन्तगुणतया परिवर्द्धन्ते अशुभाश्च हानिमुपगच्छन्तीति ज्यो० २ पाहु०।

अत्र षडरका।

उस्सप्पिणी कालेणं भंते ! कतिविहे पण्णत्ते गोयमा ! छव्विहे पएणत्ते ? तं जहा दुस्समदुस्समाकाले १ जाव सुसमसुसमाकाले ॥

एवमुत्सर्पिणीसूत्रमपि भाव्यं परं षडपि काला व्यत्ययेन प्राव्या यथाऽवसर्पिण्यां षष्ठ कालो दुःषमाख्यः स एवात्र प्रथमो यावत् सुषमसुषमाकालः षष्ठ इति। जं० २ वक्ष०। स्था०। भ०। आ० चू० ( सुषमसुषमाद्यानां वर्णकः ओसप्पिणी शब्दे वक्ष्यते ) एवमत्रापि ज्ञेय केवलमरकविपर्ययः कर्तव्यः। "ओसप्पिणीए एसो कालविभागो जिणेहिं निद्दिट्ठो एसो च्चिय पडिलोमं विन्नेओ उस्सप्पिणीए वि" नं०। य एव प्रागवसर्पिण्यां सुषमसुषमादयः कालविभागा उक्ता एत एवोत्सर्पिण्यामपि भवन्ति ज्ञातव्याः नवरं विभागेषु परिपाटिः प्रातिलोम्येन ज्ञातव्या तद्यथा प्रथमः कालविभागो दुःषमदुःषमा द्वितीयो दुःषमा, तृतीयो दुःषमसुषमा, चतुर्थः सुषमदुःषमा, पञ्चमः सुषमा, षष्ठ सुषमसुषमेति ( ज्यो० २ पाहु० ) सांप्रत प्रागुद्दिष्टामुत्सर्पिणीं निरूपयितुकामस्तत्प्रतिपादनपूर्वकं ततः प्रथमारकस्वरूपमाह ॥

तीसे णं समाए इक्कवीसमाए वाससहस्सेहिं काले वीइक्कंते आगमीसाए उस्सप्पिणीए सावणबहुलपडिवए बालवकरणंसि अभीइणक्खत्ते चोद्दसपढमसमये अणंतेहिं वण्णपज्जवेहिं जाव अणंतगुणपरिवुड्ढीए परिवुड्ढमाणे परिवुड्ढमाणे एत्थ णं दूसमदूसमा णामं समा काले पडिवज्जिस्सइ समणाउसो। तीसे णं भंते ! समाए भरहस्स वासस्स केरिसए आगारभावपडोआरे भविस्सइ गोअमा ! काले भविस्सइ हाहाभूए भंभाभूए एव सो चेव दूसमदूसमावेढओ णेअव्वो ॥

तस्यां समायामवसर्पिण्यां दुःषमानाम्न्यामेकविंशत्या वर्षसहस्रैः प्रमिते काले व्यतिक्रान्ते आगमिष्यन्त्यामुत्सर्पिण्यां श्रावणमासस्य बहुलप्रतिपदि कृष्णप्रतिपदि पूर्वावसर्पिण्याः आषाढपूर्णिमापर्यन्तसमये पर्यवसानत्वात् बालवनाम्नि करणे कृष्णप्रतिपत्तिथ्यादिमार्द्धेऽस्यैव सद्भावात्। अभीचिनक्षत्रे चन्द्रेण योगमुपागते चतुर्दशानां कालविशेषाणां प्रथमसमये प्रारम्भक्षणेऽनन्तैर्वर्णपर्यवैर्यावदनन्तगुणपरिवृद्ध्या परिवर्द्धमानः। अत्रान्तरे दुःषमदुःषमानाम्ना समः कालः प्रतिपत्स्यते हेश्रमण ! आयुष्मन् ! इति वर्णादीनां वृद्धिश्च येनैव क्रमेण पूर्वमवसर्पिण्यां षट्कु हानिरुक्ता तथैवात्र वाच्या चतुर्दशकालविशेषा पुन निश्वासादुच्छ्वासाद्या गण्यते समयस्य निर्विभागकालत्वेनाद्यन्तव्यवहाराभावादावलिकायाश्चाव्यवहार्यत्वेनोपेक्षा। तत्र निश्वास उच्छ्वासो वा १ प्राण २ स्तोक ३ लवः ४ मुहूर्त्तः ५ अहोरात्र ६ पक्ष ७ मास ८ ऋतु ९ अयन १० संवत्सरः ११ युगं १२ करण १३ नक्षत्रम् १४ इति एतेषां चतुर्दशानां मध्ये पञ्चसूत्रमत्काद्युक्तानामपरेषां चोपलक्षण संगृहीतानां प्रथमसमये कोऽर्थः य एव हि एतेषां चतुर्दशानां कालविशेषाणां प्रथमः समयः स एवोत्सर्पिणीप्रथमारकप्रथमसमय । अवसर्पिणीसत्कानामेषां द्वितीयाऽऽषाढपौर्णमासीचरमसमय एव पर्यवसा-

नात् इदमुक्तं भवति अवसर्पिण्यादौ महाकाले प्रथमतः प्रवर्त्तमाने सर्वेऽपि तदवान्तरभूताः कालविशेषाः प्रथमत एव युगपत् प्रवर्तन्ते तदनु स्वस्वप्रमाणसमाप्तौ समाप्नुवन्ति तथैव पुनः प्रवर्तन्ते पुनः परिसमाप्नुवन्ति यावन्महाकालपरिसमाप्तिरिति । यद्यपि ग्रन्थान्तरे ऋतोराषाढादित्वेन कथनादुत्सर्पिण्याश्च श्रावणादित्वे अस्य प्रथमसमयो न सगच्छते ऋतुद्वयस्य गतत्वात् तथापि प्रावृट् श्रावणादिर्वर्षारात्रोऽश्वयुजादिः शरन्मार्गशीर्षादिर्हेमन्तो माघादिर्वसन्तश्चैत्रादिर्ग्रीष्मो ज्येष्ठादिर्भगवतीवृत्तिवचनात् श्रावणादित्वपक्षाश्रयणेन समाधेयमिति न दोषः । किंचेद् सूत्रं गम्भीरग्रन्थान्तरे च व्यक्तानुपलभ्यमानभावार्थं कण्ठेनान्यथाप्यागमाविरोधेन मध्यस्थैर्बहुश्रुतैः परिभावनीयमिति । अथात्र कालस्वरूपं पृच्छति "तीसेणमित्यादि" सर्वं सुगमं नवरं दुष्षमदुष्षमायाः अवसर्पिणीषष्ठारकस्य वेष्टको वर्णको नेतव्यः प्रापणीयस्तन्मानत्वादस्याः गतः उत्सर्पिण्याः प्रथमोऽरः अथ द्वितीयारकस्वरूपं वर्णयति ।

तीसे णं समाए एकवीसाए वाससहस्सेहिं काले वीइक्कंते अणंतेहिं वण्णपज्जवेहिं जाव अणंतगुणपरिवुड्ढीए परिवुड्ढेमाणे परिवुड्ढेमाणे एत्थ णं दूसमा णामं समा काले पडिवज्जिस्सइ समणाउसो ॥

तीसेणमित्यादि सर्वं सुगमं नवरमुत्सर्पिणीद्वितीयारक इत्यर्थः अथाऽवसर्पिणीदुष्षमातोऽस्या विशेषमाह ।

ते णं काले णं ते णं समए णं पुक्खलसंवट्टए णामं महामेहे पाउब्भविस्सइ भरहप्पमाणमित्ते आयामेणं तदणुरूवं च णं विक्खंभबाहल्लेणं तए णं से पुक्खले संवट्टए महामेहे खिप्पामेव पतणतणाइस्सइ खिप्पामेव पतणतणाइत्ता खिप्पामेव पविज्जुआइस्सइ खिप्पामेव पविज्जुआइत्ता खिप्पामेव जुगमुसलमुट्ठिप्पमाणमित्ताहिं धाराहिं उघमेघं सत्तरत्तं वासं वासिस्सइ जे णं भरहस्स वासस्स भूमिभागं इंगालभूअं मुम्मुरभूअं छारीअभूवं तत्तकवेल्लुगभूअं तत्तसमजोइभूतं णिव्वाविस्सइ तंसि च णं पुक्खलसंवट्टगंसि महामेहंसि सत्तरत्तं णिवतितंसि समाणंसि एत्थ णं खीरमेहे णामं महामेहे पाउब्भविस्सइ भरहप्पमाणमेत्ते आयामेणं तदणुरूवं च णं विक्खंभबाहल्लेणं तए णं से खीरमेहे णामं महामेहे खिप्पामेव पतणतणाइस्सइ जाव खिप्पामेव जुगमुसलमुट्ठि जाव सत्तरत्तं वासं वासिस्सइ । जे णं भरहेवासस्स भूमीए वण्णं गंधं रसं फासं च जणइस्सइ तंसि च णं खीरमेहंसि सत्तरत्तणिवतितं समाणंसि इत्थणं घयमेहे णामं महामेहे पाउब्भविस्सइ । भरहप्पमाणमेत्ते आयामेणं तदणुरूवं च णं विक्खंभबाहल्लेणं तए णं से घयमेहे महामेहे खिप्पामेव पतणतणाइस्सइ जाव वासं वासिस्सइ । जे णं भरहस्स वासस्स भूमीए सिणेहभावं जणइस्सइ तंसि च णं घयमेहंसि सत्तरत्तं णिवतितंसि समाणंसि एत्थ णं अयमेहे णामं महामेहे पाउब्भविस्सइ भरहप्पमाणमित्ते आयामेणं जाव वासं वासिस्सइ भरहे वासे रुक्खगुच्छगुम्मलयवल्लितणपव्वयहरितगओसहिपवालंकुरमाईए तस्स वणप्फइकाइए जणइस्सइ तंसि च णं अमयमेहंसि सत्तरत्तं णिवत्तितंसि समाणंसि एत्थ णं रसमेहे णामं महामेहे पाउब्भविस्सइ । भरहप्पमाणमित्ते आयामेणं जाव वासं वासिस्सइ जे णं तेसिं बहूणं रुक्खगुच्छगुम्मलयवल्लितणपव्वयहरितओसहिपवालंकुरमादीणं तित्तकडुअकसायअंबिलमहुरे पंचविहे रसविसेसे जणइस्सइ तए णं भरहे वासे भविस्सइ परूढरुक्खगुच्छगुम्मलयावल्लीतणपव्वयहरिअओसहिए उपचिअतयपत्तपवालंकुरपुप्फफलसमुइए सुहोवभोगे आविभविस्सइ ।

'ते णमित्यादि' तस्मिन् काले उत्सर्पिण्यां द्वितीयारकलक्षणे तस्मिन् समये तस्यैव प्रथमसमये पुष्कलं सर्वमशुभानुभावरूपं भरतभूरौक्ष्यदाहिकं प्रशस्तोदकेन संवर्त्तयति नाशयनीति पुष्कलसंवर्तकः स च पर्जन्यप्रभृतिमेघत्रयापेक्षया महान् मेघो दशवर्षसहस्रावधि एकेन वर्षणेन भूमेर्भावकत्वात् महामेघः प्रादुर्भविष्यति प्रकटीभविष्यति भरतक्षेत्रप्रमाणेन साधिकैकसप्ततिचतुःशताधिकचतुर्दशयोजनसहस्ररूपेण मात्रा प्रमाणं यस्य स तथा । केनायामेन दीर्घभावेन । अयं भाव पूर्वसमुद्रादारभ्य पश्चिमसमुद्रं यावत् यावदेव व्याप्तं भविष्यतीत्यर्थः तदनुरूपश्च तस्य भरतक्षेत्रस्याऽनुरूपः सदृशः सूत्रे च लिङ्गव्यत्ययः प्राकृतत्वात् क्रियाविशेषणं वा केनेत्याह विष्कम्भबाहल्येन अत्र समाहारद्वन्द्ववशादेकवद्भावः कोऽर्थः यावान् व्यासो भरतक्षेत्रस्य इषुस्थाने पञ्चशतयोजनानि षड्विंशतिर्योजनानि षट्कलाः योजनैकोनविंशतिभागरूपास्तदतिरिक्तस्थानेतु अनियततया तथाऽस्यापि विष्कम्भ बाहल्यं तु यावता जलभारेण यावदवगाढभरतक्षेत्रतप्तभूमिमाङ्गीकृत्य तापः उपशाम्यते तावज्जलदानिष्पन्नमेव ग्राह्यमिति । अथ स प्रादुर्भूतः सन् यत्करिष्यति तदाह "तएणमित्यादि" ततश्च स पुष्कलसंवर्तकमेघः क्षिप्रमेवाश्मकाल एव 'पतणतणाइस्सत्ति' अनुकरणवचनमेतत् प्रकर्षेण स्तनितं करिष्यति गर्जिष्यतीत्यर्थः । तथा च कृत्वा 'पविज्जुत्ताइस्सत्ति' प्रकर्षेण विद्युत करिष्यति तथा च कृत्वा क्षिप्रमेव युगं रथावयवविशेषः मुसलं प्रतीतं मुष्टिः पिण्डिताङ्गुलिकः पाणिः येषां यत् प्रमाणमायामबाहल्यादिभिस्तेन मात्रा यासां ताभिः इयता प्रमाणेन दीर्घाभिः स्थूलाभिरित्यर्थः धाराभिः ओघेन सामान्येन सर्वत्र निर्विशेषेण मेघो यत्र स तथाविधं सप्ताहोरात्रान् वर्षं वर्षिष्यति वर्षां करिष्यतीत्यर्थः । जे णमिति पूर्ववत् भरतस्य वर्षस्य क्षेत्रस्य भूमिभागमङ्गारभूतं मुर्मुरभूतं क्षारिकभूतं तप्तकवेल्लुकभूतं तप्तसमज्योतिर्भूतं निर्वापयिष्यति स पुष्करसंवर्तको महामेघः । अथ द्वितीयमेघवक्तव्यमाह । तंसि च णमित्यादि तस्मिंश्च चशब्दो वाक्यान्तरप्रारम्भार्थः पुष्कलसंवर्तके महामेघे सप्ताहोरात्रावधिपतितेसति निर्भरं वृष्टे सति । अत्रान्तरे क्षीरमेघो नाम महामेघः प्रादुर्भविष्यति शेषं भरतेत्यादि प्राग्वत् । अथ स प्रादुर्भवन् किं करिष्यतीत्याह 'तएणमित्यादि' अत्र वासिस्सइ पर्यन्तं प्राग्वत् यो मेघो भरतस्य वर्षस्य भूम्याः वर्णं गन्धं रसं स्पर्शं च जनयिष्यति । अत्र वर्णादयः शुभा एव ग्राह्याः येभ्यो लोकोऽनुकूलं वेदयते अशुभवर्णादयः प्राक्कालानुभावेन जनिता वर्त्तन्त एवेति ननु यदि शुभवर्णादीन् जनयति तदा तरुपत्रादिषु नीलो वर्णो जम्बूफलादिषु कृष्णः मरिचादिषु कटुको रसः का

संयुक्ति समाश्रेय. त्युत्सर्पिण्यां द्वितीयारके " तीसे णं समाए एक्कवीसाए वास इत्यादि" तस्यां समायां दुष्षमानाम्न्यामेकविंशत्या वर्षसहस्त्रै काले व्यतिक्रान्ते अनन्तैर्वर्णपर्यवैर्योघव परिवर्द्धमान । अत्रावसरे दुष्षमसुषमा नाम्ना सम काल बत्सर्पिणीतृतीयारक. प्रतिपत्स्यते हे श्रमणेत्यादि प्राग्वत् । तीसेणमित्यादि सर्वं प्राग्वत् । अवसर्पिणीचतुर्थारकसदृशत्वमुत्सर्पिणीतृतीयारकस्येति तत् सादृश्यं प्रकटयन्नाह । तीसेणमित्यादि प्राय. प्राग्व्याख्यातार्थम । तीर्थकरास्रयोविंशति पद्मनाभादयश्चतुर्विंशतिमस्य भद्रकृष्णस्मश्चतुर्थारके उत्पत्स्यमानत्वात् एकादश चक्रवर्तिनो भरतादयो वीरचरित्रे तु दीर्घदन्तादय. द्वादशस्यारिष्टनाम्नश्चतुर्थारके एव भा.वित्वात् । नव बलदेवा जयन्तादय नव वासुदेवा आनन्द्यादय समुत्पत्स्यन्ते यत्तु तिलकादयः प्रतिविष्णवो वा नेहोक्तास्तत्र पूर्वोक्त एव हेतुरवसातव्य' । गतस्तृतीयार उत्सर्पिण्या. ॥

अथ चतुर्थ ।

तीसे णं समाए एक्कवीसाए वाससहस्से काले वीइक्कंते अणंतेहिं वण्णपज्जवेहिं जाव परिवड्ढमाणे परिवड्ढमाणे एत्थ णं दुस्समसुसमा णामं समा काले पाडिवज्जिस्सइ समणाउसो । तीसे णं भंते ! समाए भरहस्स वासस्स केरिसए आयारभावपडोआरे भविस्सइ गोअमा ! बहुसमरमणिज्जे जाव अकत्तिमेहिं चेव तेसि णं भंते ! मणुआणं केरिसए आयारभावपडोयारे भविस्सइ गोअमा तेसि णं मणुआणं छव्विहे संघयणे छव्विहे संठाणे बहूइं धणूहिं उड्ढं उच्चत्तेणं जहण्णेणं अंतोमुहुत्तं उक्कोसेणं पुव्वकोडीआउं अयालिहिंति अयालिहिंतित्ता अप्पेगइआ णिरयगामी जाव अंतं करेहिंति । तीसे णं समाए तओ वंसा समुप्पज्जिस्संति तं जहा तित्थगरवंसे चक्कवट्टिवंसे दसारवंसे । तीसे णं समाए तेवीसं तित्थगरा एक्कारस चक्कवट्टी णव बलदेवा णव वासुदेवा समुप्पज्जिस्संति ॥

'तीसे णमित्यादि' तस्यां समायां सागरोपमकोटाकोट्या द्विचत्वारिंशता वर्षसहस्रैरनियता कालव्यतिक्रान्ते अनन्तैर्वर्णपर्यवैर्यावद्वर्द्धमानोऽत्र प्रस्तावे सुषमदुष्षमा नाम्ना सम काल. उत्सर्पिणीचतुर्थारकलक्षण प्रतिपत्स्यते ।

अथ पञ्चमषष्ठावतिदिशत आह ।

तीसे णं समाए सागरोवमकोडीए वा पालीसाए वाससहस्सेहिं ऊणिआए काले वीइक्कंता अणंतेहिं वण्णपज्जवेहिं जाव अणंतगुणपरिवुड्ढीए परिवुड्ढमाणे परिवुड्ढमाणे एत्थ णं सुसमदूसमा णामं समा काले पडिवज्जिस्सइ समणाउसो । सा णं समा तिहा विभज्जिस्सइ पढमे तिभागे मज्झिमे तिभागे पच्छिमे तिभागे । तीसे णं भंते ! समाए पढमे तिभाए भरहस्स वासस्स केरिसए आयारभावपडोआरे भविस्सइ गोयमा ! बहुसमरमणिज्जे जाव भविस्सइ । मणुआणं जाव उस्सप्पिणीए पच्छिमे तिभागे वत्तव्वया सा भाणिअव्वा कुलगरवज्जा उसभसामिवज्जा । अण्णे पढंति तीसे णं समाए पढमे तिभाए इमे पण्णरस कुलगरा समुप्पज्जिस्संति तं जहा सुमई जाव उसभे सेसं तं चेव दंडणीइओ पडिलोमाओ णेअव्वाओ । तीसे णं समाए पढमे तिभाए रायधम्मे जाव धम्मचरणे अ वोच्छिज्जिस्सइ । तीसे णं समाए मज्झिमपच्छिमेसु तिभागेसु जाव पढममज्झिमेसु वत्तव्वया ओसप्पिणी एसा भाणिअव्वा सुसमा तहेव सुसमसुसमा वि तहेव जाव छव्विहा मणुस्सा अणुसज्जिस्संति जाव सण्णिचारी ॥

सुषमा पञ्चमसमालक्षण कालस्तथैवाऽवसर्पिण्याद्वितीयारकवदिति । सुषमसुषमा षष्ठारक सोऽपि तथैव अवसर्पिणीप्रथमारकसदृश इत्यर्थ । कियत्पर्यन्तमत्र ज्ञेयमित्याह यावत् षड्विधा मनुष्या अनुसंदयन्ति संतत्या अनुवर्तिष्यन्ते यावच्छनैश्चारिणः । यावत् पदात् पद्मगन्धादयः पूर्वोक्ता एव ग्राह्याः गतौ पञ्चमषष्ठौ तद्गमने चोत्सर्पिणी गता तस्यां च गतायामवसर्पिण्युत्सर्पिणीरूप कालचक्रमपि गतम् जं० २ वक्ष० ।

एवं छठे अरए उस्सप्पिणीए समत्ते वि पढमे अरए एसा चेव वत्तव्वया तम्मि वोलीणे बीयारपयारंभे मणाहं पचमहाजलहे वासे वासिस्संति कमेणं तं जहा पढमो पुक्खरावत्तो तावं निव्वावेहिइ बीओ खीरोदो वण्णकारी तइओ घओदओ नेहकारओ चउत्थो अमिओदओ ओसहिकरो पंचमो रसोदओ भूमीए सरसजणणो ते य बिलवासिणो पइसमयं बड्ढमाणसरीराउ पुढइविरूहं दट्ठूण विअलिहिंतो निस्सरंति धन्न फलाइं भुंजता मंसाहारं निवारइस्संति तओ मज्झदोससुत्तकुलगरा भविस्संति तत्थ पढमो विमलवाहणो बीओ सुदामो तइओ संगओ चउत्थो सुपासो पंचमो दत्तो छट्ठो सुमुहो सत्तमो सम्मुची जाइस्सरणेणं विमलवाहणेणं विमलवाहणो नगराइ निवेसं काहीं अग्गिम्मि उप्पन्ने अण्णपाणगं सिप्पाइं काआउ लोगववहारं च सव्वं पवत्तेहि तओ गुणनउइपक्खसमज्झिए हिए उस्सप्पिणी अरयदुगे वइकते पुंडवद्धणदेसे सयदारे पुरे संमुइनरवइणे भद्दाए देवीए चउद्दसमहासुमिणसूइओ सेणिवरायजीवो रयणप्पभाए लोलुयच्चयपच्चडाओ चुलसीइं वाससहस्साइं आउं पालित्ता उव्वट्टो समाणो कुच्छिसि पुत्तत्ताए उववज्जिहिइ वद्धमाणलक्खणआउणिगब्भाबहारवज्ज पचकल्लाणयाणं मासतिहिं नक्खत्ताणि जहा मम तहेव भविस्सति नवरं नामेणं पउमनाहो देवसेणो विमलवाहणो अ । तओ बीयतित्थयरो सुपासजीवो सूरदेवो तइओ उदाइजीवो सुपासो चउत्थो पोट्टिलजीवो सयंपभो पंचमो दयओजीवाओ सव्वाणुभूई छट्ठो कित्तियजीवो देवसुओ सत्तमो संखजीवोदयो अट्ठमो आणंदजीवो पेढालो नवमो सुनदाजीवो पोट्टिलो दसमो सयगजीवो सयकित्ती एक्कारसमो देवइजीवो मुणिसुव्वओ बारसमो कण्हजीवो अममो ते-

रसमो सव्वइजीवो निक्कसाओ चउद्दसमो बलदेवजीवो निप्पुलाओ पन्नरसमो सुलसाजीवो निम्ममो सोलसमो रोहणीजीवो चित्तगुत्तो केइ पुण भणंति कक्किपुत्तो दत्त-मानो पन्नरसइत्ति उत्तरं विक्कमवरिसे रुतुंजे उद्धारं कारित्ता जिणभवणमंमिश्रं च वसुह काउ आजियतित्थयरनामो सग्गं गंतुं चित्तगुत्तो नाम जिणवरो होहिंति । इत्थ य बहुस्सुअसंसयं पमाणं सत्तरमो रेवइजीवो समाही अट्ठारसो सयालिजीवो संवरो एगूणवीसो दीवायणजीवो जसोहरो वीसइमो कण्हजीवो विजओ एकवीसो नारयजीवो मल्लो बावीसयमो अंवडजीवो देवो तेवीसयमो अमरजीवो अणंतवीरिओ चउवीसयमो सायं बुद्धजीवो भद्दकरो अंतरालाइ पच्छाणुपुव्वीए जहा वद्दमाणजिणाणं भाविचक्कवट्टिणो दुवालस होहिंति तं जहा दीहदंतो १ गूढदंतो २ सिरिचंदो ३ सिरिभूई ४ सिरिसोमो ५ पउमो ६ नायगो ७ महापउमो ८ विमलो ९ अमलवाहणो १० विलो ११ अरिट्ठो १२ अ । नव भाविवासुदेवा तं जहा नन्दो १ नन्दिमित्तो २ सुन्दरवाहुः ३ महावाहू ४ अइवलो ५ महावलो ६ वलभद्दो ७ दुविट्ठो ८ तिविट्ठो य ९ । नव भाविपडिवासुदेवा जहा तिलओ १ लोहजघो २ वइरजंघो ३ केसरी ४ वली ५ पहाए ६ अपराजिओ ७ भीमो ८ सुग्गीवो ९ नव भाविवलदेवा तंजहा जयंतो १ अजिओ २ धम्मो ३ सुप्पभो ४ सुदंसणो ५ आणंदो ६ नंदणो ७ पउमो ८ संकरिसणो ९ य । इगसट्ठीसलागा पुरिसा उस्सप्पिणीए तइए अरए भविस्संति अपच्छिमजिणचक्कवट्टिणो जइ लिसवत्तत्थे अरए होहिंति तओ दसमगाई कप्परुक्खा उप्पज्जिहिंति अट्ठारसकोडाकोडीओ सागरोवमाणं निरंतरं जुगलधम्मो भविस्सइत्ति २१ ती० ।

एगमगाए उसप्पिणीए पढमवीयाओ समाओ वायालीसं वाससहस्साइं कालेणं पन्नत्ता ॥

( पढमवीयाउत्ति ) एकान्तदुष्षमा दुष्षमा चेति ॥४२॥ भि-चत्वारिंशत्स्थानकेऽपि किंचिल्लिख्यते [ कम्मवियागज्झयणत्ति ] कर्मणः पुण्यपापात्मकस्य विपाकस्य फलं तत्प्रतिपादकान्यध्ययनानि कर्मविपाकाध्ययनानि एतानि च एकादशांगद्वितीयाङ्गयो सम्भाव्यन्त इति "जंबूदीवस्सणमित्यादि" जम्बूद्वीपपर्यंतस्यान्तात्प्रभृति पर्यन्ते छिन्नत्वात्रिंशद्योजनानां सहस्राणि नद्विष्कम्भश्च महलं नवत्रिंशद्यात्पञ्चाशदनेकलव्धेनाधिकत्वेनाधिकपणाडेयं त्रिचत्वारिंशत्सहस्राणि भवन्तीति एव [ चउद्दिसिंपिति ] चतुर्दिगन्तभावेन भवन्तो दिशा उक्ता अन्यथा एवं (निद्दिसिंपित्ति ) वाच्यं स्यात् तत्र चैवमभिलापाः "जंबुदीवस्स णं दीवस्स दाहिणिल्लाओ दओ भासस्स णं आयामपव्वयस्स दाहिणिल्ले चरिमंते पच्चिमे तेयाली सं जोयणसहस्साइं अबाहाए अंतरे पन्नत्ते" एवमन्यत्सूत्रद्वयं नवरं दधिसमासो संखो वाय सपर्यन्त उत्तरस्यामुदकसीम इति ॥४३॥ चतुश्चत्वारिंशत्स्थानकेऽपि किंचिल्लिख्यते चतुश्चत्वारिंशत

( इसिभासियत्ति ) ऋषिभाषिताध्ययनानि कालिकश्रुतविशेषभूतानि ( दियालोयचुयाभासियत्ति ) देवलोकच्युतैः ऋषीभूतैराभाषितानि देवलोकच्युताभासितानि । क्वचित्पाठः देवलोयचुयाणं वायालीसं इसिभासियज्झयणा पन्नत्ता ( पुरिसजुगाइति ) पुरुषाः शिष्यप्रशिष्यादिक्रमव्यवस्थिता युगानीव कालविशेषा इव क्रमसाधर्म्यात्पुरुषयुगानि ( अणुपिट्ठित्ति ) आनुपूर्व्या ( अणुवधत्ति ) पाठान्तरे तृतीयादर्शनादनुबन्धेन सातत्येन सिद्धानि जावंति करणेन बुद्धाइं सव्वदुक्खप्पहीणा इति दृश्यम् । स० टी० समवायाङ्गे प्रतिषसुदेवेषु बलीस्थाने महाभीम इति ।

अहवा तिविहा उस्सप्पिणी पन्नत्ता तं जहा उक्कोसा मज्झिमा जहन्ना एवं छप्पि य समाओ भाणियव्वाओ जाव दुसमदुसमा तिविहा उस्सप्पिणी पन्नत्ता तं जहा उक्कोसा मज्झिमा जहन्ना । एवं छप्पि य समाओ भाणियव्वाओ जाव सुसमसुसमा ॥

उत्सर्पिण्यां दुष्षमदुष्षमादि तद्भेदानां चोक्तविपर्ययेणोत्कृष्टत्वं योज्यमिति । षष्ठेऽरके उत्कृष्टा चतुर्षु मध्यमा प्रथमे जघन्या ॥ स्था० ३ ठा० १ उ० ।

उस्सप्पिणीगंडिया-उत्सर्पिणीगण्डिका- स्त्री० उत्सर्पिणीविषयैकवक्तव्यतार्थाधिकारानुगतायां गण्डिकायाम्, स० ॥

उस्सप्पिणीसमय-उत्सर्पिणीसमय- पुं० उत्सर्पिणीशब्देनावसर्पिण्युपलक्ष्यते दिनग्रहणेन रात्र्युपलक्षणवत् तयो समयाः परमनिकृष्टा कालविशेषाः उत्सर्पिणीसमयाः । अवसर्पिण्युत्सर्पिण्योः समयेषु, कर्म० ॥

उस्सय-उच्छ्रय- पुं० शरीरे, आव० ५ अ० । स्वभावोन्नतत्वे तद्रूपे पञ्चचत्वारिंशत्तमे गौणाहिंसाद्रव्येऽर्थे, प्रश्न० २ श्रु० १ अ० । उच्चत्वे "उच्छ्रायेण गुणितं चिते फलम्" वाच० ।

उस्सयण-उच्छ्रय- पुं० यस्मिन्नेव सति ऊर्ध्वं श्रयति जात्यादिना दर्पोध्मातः पुरुष उत्तानो भवति स उच्छ्राय । माने, "थंडिलुस्सयणाणि य" जात्यादीनामेतत्स्थानानां बहुत्वात् तत्कार्यस्यापि मानस्य बहुत्वमतो बहुवचनम् । छान्दसत्वान्नपुंसकलिङ्गता । सूत्र० १ श्रु० १ अ० ॥

उस्सव-उत्सव- पुं० उद्-सू-अप् । आनन्दजनकव्यापारे, शक्रोत्सवादौ, प्रश्न० २ श्रु० ५ द्वा० । इन्द्रमहादौ, आ० चू० १ अ० ॥

उस्सविय-उच्छ्राप्य- अव्य० ऊर्ध्वं व्यवस्थाप्येत्यर्थे, "अवहट्टु उस्सविय दुरुहेज्जा" आचा० २ श्रु० १ अ० । "आमसिय उस्सविय भिक्खु आयसा निमंतंति" संस्थाप्योच्चावचैर्विश्रम्भजनकैरालापैर्विश्रम्भे पानयित्वा सूत्र० १ श्रु० ४ अ० ॥

उस्ससिय-उच्छ्वसित- त्रि० उच्छ्वसिते, दश० २० अ० ॥

उस्ससियरोमकूव-उच्छ्वसितरोमकूप- पुं० साधोर्दर्शनाद् वाक्यश्रवणाडुल्लसितरोमकूपे, दश० २० अ० ॥

उस्ससेज्जमाण-उच्छ्वस्यमान- त्रि० उच्छ्वसिते क्रियमाणे "उच्छ्वस्ससेज्जमाणे वा अच्छिन्ने पुमाय्ये भवेज्जा" उच्छ्वस्यमान उच्छ्वासवायुपुष्कल " स्था० १० ठा० ॥

उस्सा-अवश्याय- पुं० कपाजले, ( स्था० ४ ठा० ) यो गगनात्पतति । कल्प० । धेनुपर्याये, देशी० ॥

उस्साचारण-अवश्यायचारण- पुं० अवश्यायमवष्टभ्याप्काय-

औषधीमामजनयति गतिमसङ्गं कुर्वाणे चारणभेदे, प्रव. ६८ द्वा. ।

उस्सारकप्प–उत्सारकल्प– पुं० यत्रैकस्मिन् दिने बहुदिवसयोग्यसूत्रस्य वाचना दीयते तस्मिन्, आ० चू० १ अ० ॥

उत्सारकल्पस्य दोषादिवक्तव्यता । अथानुपक्तिकमुत्सारकल्पिकद्वारमभिधित्सुः प्रस्तावनामाह ॥

चोयगपुच्छा उस्सार–कप्पिओ नत्थि तस्स किह नामं ।
उस्सारे चउगुरुगा, तत्थ वि आणाइणो दोसा ॥

कल्पिकद्वारे व्याख्याते सति लब्धावकाशो नोदकः पृच्छां करोति भगवन्नमीषां कल्पिकानां मध्ये किमित्युत्सारकल्पिकेनोपन्यस्त । सूरिराह नास्त्युत्सारकल्पिक इति । भूयोऽपि परः प्राह । यद्युत्सारकल्पिको नास्ति ततः कथं तस्य नाम श्रूयते गुरुराह यद्यप्युत्सारकल्पो नास्त्याख्यायते तथाऽपि न कल्पते उत्सारयितुं यद्युत्सारयति तदा चत्वारो गुरुकाः तत्राप्याज्ञादयो दोषा द्रष्टव्याः । तानेवाह ।

आणाणवत्थमिच्छा–विराहणा संजमे य जोगे य ।
अप्पा परो पवयणं, जीवनिकाया परिच्चत्ता ॥

आज्ञा भगवतां तीर्थकृतामुत्सारकल्पकृता न कृता भवति तमाचार्यमुत्सारयन्तं दृष्ट्वा अन्येऽप्याचार्या उत्सारयिष्यन्ति तदीया अन्यदीया वा शिष्या विवक्षितशिष्यस्पर्द्धानुबन्धादुत्सारापयिष्यन्ति वेत्यनवस्था । मिथ्यात्वं वा प्रतिपन्ना अभिनवधर्माणः सत्त्वा व्रजेयुः । विराधना संयमे च संयमविषया योगे च योगविषया भवति । तथा तेनोत्सारकेण आत्मा स्वजीवः परः उत्सारकल्पविषयः शिष्यः प्रवचनं तीर्थं जीवनिकायाः पृथिव्यादयः एतानि परित्यक्तानि भवन्तीति द्वारगाथासमासार्थः । सांप्रतमेनामेव विवरीषुः राज्ञाऽनवस्थे क्षुण्णत्वादनादृत्य मिथ्यात्वं दर्शयितुं दृष्टान्तमाह ।

पुव्वमलियउस्सार–वायए आगए पमिमिलिंति ।
पडिलेहपुग्गलि वि य, बहुजणओजाजणा तित्थे ॥

तत्र तावत्प्रथमं कथानकमुच्यते । इह पुरा केचिदाचार्याः पूर्वान्तर्गतसूत्रार्थधारकतया लब्धवाचकनामधेयाः सर्वज्ञशासनसरसीरुहविकाशनैकसहस्ररश्मयः प्रावृषेण्यपयोमुच इव सरसदेशनाधाराधरनिपाते महीमण्डलमेकार्णवधर्मकमादधाना गन्धहस्तिन इव कलभयूथेन सातिशयगुणवता निजशिष्यवर्गेण परिकलिता एकं कंचिद्ग्राममुपागमन् । तत्र चाधिगतजीवाजीवादिविशेषणविशिष्टा बहवः श्रमणोपासकाः परिवसन्ति । ते च गुरूणामागमनमाकर्ण्य प्रमोदमेदुरमानसाः स्वस्वपरिवारपरिवृताः सर्वेऽप्यागम्य तदीयं पादारविन्दमभिवन्द्य योजितकरकुड्मला यथायथमुचितं आसाञ्चक्रिरे । ततः सूरिभिरपि रचिता यथोचिता धर्मदेशना । तदाकर्णनेन सञ्जातसंवेगसुधासिन्धौ नान्तरमलं सकलोऽपि श्रावकलोको गतः परमपरितोषपरवशः सूरीणां गुणग्रामोपवर्णनं कुर्वन् स्वं स्वं स्थानम्, तैश्च वाचकनभोमणिभिस्तत्रायातैः प्रतिहतः खद्योतपोतकल्पानामन्ययूथिकानां प्रभाप्रसरः । ततो न शक्नुवन्ति तेऽन्ययूथिका आचार्याणां व्याख्यानादिभिर्गुणैर्जायमानं निरुपमानं महिमानं द्रष्टुमिति संभूय सर्वेऽप्युपमाचार्यं वादे पराजित्य तृणादपि लघुकरिष्याम इत्येकवाक्यतया चेतसि व्यवस्थाप्य समाजग्मुः सूरीणामन्तिकम् । सूरिभिरपि निष्पातिमप्रतिभाप्रागल्भ्यतया वादलब्धिसंपन्नैर्विपुलहेतुदृष्टान्तोपन्यासपुरस्सरं मध्ये विद्वज्जनसभं कृतास्ते निष्पृष्टप्रश्नव्याकरणाः । ततः समुच्छलितः पारमेश्वरप्रवचनगोचरः कीर्तिकोलाहलः प्रादुर्भूतः परतीर्थिकानामपि परमः पराभवः निमग्नः प्रमोदपीयूषपयोनिधावस्तोकः श्रमणोपासकलोकः संपादिता सपदि विशेषतस्तेन महती तीर्थस्य प्रभावना । ततस्ते वाचकाः कियन्तमपि कालमलङ्कृत्य ग्रामं प्रबोध्य मिथ्यात्वनिद्राविद्रावणचैतन्यं भव्यजन्तुजातमन्यत्र कुत्राऽपि व्यहार्षुः तेषु च दिनकरवदन्यत्र प्रतापवत्स्वमीमुद्रहमानेषु परतीर्थिका उलूका इवाप्रसरतया घोरघूत्कारकल्पं प्रवचनावर्णवादं कर्तुमारब्धाः । वदन्ति च श्रावकान् प्रति भो श्वेताम्बरोपासकाः ! यद्यस्ति भवतां कोऽपि कण्ठूलमुखो वादी स प्रयच्छतु सांप्रतमस्माकं वादमिति । श्रावकैरुक्तम् । अहो विस्मृतमधुनैव भवतां भवान्तरानुभूतमिव तत्तादृशमदभ्रंभ्रंशनमपि लाघवं यदेवमनात्मज्ञा इवसम्भ्रमं प्रजल्पत भवत्वेवं तथाऽप्यायान्तु तावत्केचिद्वाचका वा गणिनो वा पश्चात् भणिष्यन्ति भवन्तः तत्करिष्याम इति । अथैकदा कदाचिन्निजवाग्मित्वाभिमानेन तु भुवनमपि तृणवन्मन्यमानस्तुम्बतुम्बवाग्डम्बरेण वाचस्पतिमपि मूकमाकलयन् समागतः कतिपयशिष्यकलितः औत्सारकल्पिकवाचकः । ततः प्रमुदिताः श्रावकाः गताः अन्ययूथिकनामन्तर्णे निवेदितं तत्पुरतः युष्माभिस्तदानीमस्माकं समीपे वादः प्रार्थित आसीत् । अस्माभिश्च भणितमभूत् यदा वाचका अत्रागमिष्यन्ति तदा सर्वमपि युष्मदभिप्रेतं विधास्याम इति तदिदानीमागताः सन्ति वाचकाः कुरुत तैः सह वादगोष्ठीं पूरयत स्वप्रतिज्ञामित्यभिधाय गता श्रावकाः स्वस्वस्थानम् । तैश्चान्ययूथिकैः प्राचीनपराभवप्रभवभयभ्रान्तैरेकः प्रच्छन्नवेषधारी प्रत्युपेक्षकः किं सहृदयः शास्त्रपरिकर्मितमतिर्वाग्मी वाचकः किं वा नेति ज्ञानाय प्रेषितः स चागम्योत्सारकल्पिकवाचकं प्रश्नयति परमाणुपुद्गलस्य कतीन्द्रियाणि भवन्तीति ततः स एवं पृष्टः सन् किंचिन्मात्रपल्लवत्त्वरितग्राहितया यथोक्ताव्यभिचारिविचारबहिर्मुखतया चिन्तयति यः परमाणुपुद्गलः एकस्माल्लोकचरमान्तादपरं लोकचरमान्तमेकेनैव समयेन गच्छति स निश्चितं पञ्चेन्द्रियः कुतोऽन्यदीदृशस्यैवंविधा गमनशक्तिलब्धिरित्यभिसंधाय प्रतिवचनमाभाषते भद्र ! परमाणुपुद्गलस्य पञ्चापीन्द्रियाणि भवन्ति ततः एवंविधं निर्वचनमवधार्य स पुरुषः प्रत्यावृत्य गतः अन्ययूथिकानां सन्निधौ कथितं सर्वमपि स्वरूपं तदग्रतस्ततः चिन्तितं स्वचेतसि तैर्नूनमयं शारदवारिद इव बहिरेव केवलं गर्जति अन्तस्तुच्छ एवेति विमृश्य समागताः संभूय भूयांसः लोकमीलं कृत्वा वाचकान्तिकं क्षुभितोऽसौ स्वतुच्छतया तावन्तं समुदायमवलोक्य सञ्जातः स्वेदबिन्दुसुन्दरिकितशरीरः आक्षिप्तः वादेऽपमन्यतीर्थिको वाहितो यथाऽभिमतं पक्षविशेषं न शक्नोति निर्वोढुं प्रगल्भितो दुस्तराणि प्रश्नोत्तराणि न भाषते सेदानोऽपि प्रतिवक्तुं ततः कृतो मिथ्यार्हेनिर्जितं जितमस्माभिरित्युत्कृष्टकलकलः प्रादुर्भूतः प्रवचनमालिन्यं मुकुलितानि श्रमणोपासकवदनकमलानि विप्रतिपन्ना यथा भद्रकादय इति । अथ गाथाक्षरार्थः पूर्वं कैश्चिद्वाचकैरन्ययूथिका ( मानिनश्च ) मानमर्दनेन मर्दितास्ततः उत्सारवाचके आगते सति प्रतिमर्दयन्ति प्रत्यावृत्त्या मानमर्दनं कुर्वन्ति कथमित्याह " पडिलेह " इत्यादि तैरन्यतीर्थिकैः प्रत्युपेक्षकः पुरुषः प्रेक्षितस्ततः स आगत्य पृष्टवान् पुद्गलस्य परमाणोः कतीन्द्रियाणि तेन प्रत्युक्तं पञ्चेति । ततस्तैरन्ययूथमानं मयं स वाचको वादे निरुत्तरीकृतः एवमपभ्राजना तावत् तीर्थस्य प्र-

यदि तत्र चारित्रवर्मणां चेतसि विकल्प उपजायते यदि नाम वाचकोऽप्येनं न शक्नोति निर्वचनमर्पयितु तन्नूनमेतेषां तीर्थकरैरेव न सम्यग्वस्तुतत्त्वं परिज्ञातमन्यथा कथमेष एवंविधे अर्थ व्यामुह्यते इति विपरिणामतो मिथ्यात्वगमनं भवेत् । भावित मिथ्यात्वद्वारम् ।

अथ संयमविराधनां भावयति ।

जीवाजीवे न मुणइ, अलियभया कहेइ दगमिगाई ।
करणे अविवच्चासं, करेइ आगाढणागाढे ॥

जीवाश्चाजीवाश्च जीवाजीवास्तानसौ वाचनामात्ररूपेणोत्सारकल्पेनानुयोगमवगाह्यमानो विविक्तेन न मुणति न जानीते तत्परिज्ञानाभावाच्च कुतः संयमसद्भावस्तदुक्तं परमर्षिभिः । " जो जीवे वि न याणइ, अजीवे वि न जाणइ । जीवाजीवे अजाणंतो, कह सो नाहिइ संजमं " तथा अलीकमव्यन्तभयादुदकमृगादीन् कथयति किमुक्तं भवति स उत्सारकल्पिकपल्लवमात्रग्राहितया सत्यमेव भाषितव्यं नासत्यमिति कृत्वा उदकार्थिनां नदीतडागादौ पानीयमस्ति नास्ति वेति पृच्छतामलीकं मा भूदिति कृत्वा विद्यते नद्यादौ उदकमिति कथयति मृगया प्रस्थितानां च व्याधानां दृष्टं मृगवृन्दं न वेति पृच्छतामलीकभयादेव दृष्टमिति प्रयच्छति आदिशब्दात् शूकरादिपरिग्रहः न पुनर्जानीते यथा । " सच्चा वि सा न वत्तव्वा जओ पावस्स आगमो त्ति " ततः स जलगतसूक्ष्मजन्तुजातस्य मृगादीनां वा यद् व्यपरोपणं ते करिष्यन्ति तत्सर्वमुत्सारकल्पकारकः प्राप्नोति । तथा करणे चारित्रे उत्सर्गापवादविधिमजानन् यद्विपर्यासं करोति तद्यथा आगाढे ग्लानादिकार्ये अनागाढमिति कृत्वा पञ्चकपरिहाणादिक्रमणमनागाढे वा आगाढमिति प्रतिसेवनात्मकं करोति । एषा सर्वाऽपि संयमविराधना ॥

अथ योगविराधनामाह ।

तुरियं नाहिज्जंते, नेव चिरं जोगजवि ता हुं ति ।
लद्धो महत्तसद्दो त्ति, केई पासाइ गएहंति ॥
कमजोगं न वियाणइ, विगईओ का य क य जोगम्मि ।
अप्पणस्स वि देंति तहा, परंपरा घंटदिट्ठंतो ॥

अनुज्ञातोऽस्माकं गुरुभिः सकलोऽपि श्रुतस्कन्धः ततः किमनेन पठितेन कार्यमिति कृत्वा ते शिष्यास्त्वरितं शीघ्रं नाधीयन्ते नैव च ते चिरं योगे. श्रुताध्ययननिबन्धनतपोविशेषे. यन्त्रिता नियमिता भवन्ति एकाहेनापि प्रभूतसूत्रार्थं वाचनानुज्ञाप्रदानात् । तथा लब्धोऽस्माभिर्गणिरयं वाचकोऽयमिति महान् शब्दस्ततः कुतो हेतोर्वयमद्याचार्यसन्निधौ निष्फलं तिष्ठाम इति परिभाव्य केचित्फलचरणपर्युपासनापरिभग्नाः पार्श्वानि गृह्णन्ति पार्श्वस्थो ग्रामेषु यथास्वच्छन्दं विहरन्तीति भावः [ कमजोगमिति ] योगक्रमं नापि नैव जानन्ति यथा अस्मिन् योगे एतावन्त्याचाम्लानि भवन्ति निर्विकृतिकानि इत्थं चानुद्देशादयः क्रियन्ते तथा विकृतयः का. कुत्र योगे कल्पन्ते न चैत्येवमपि न जानाति यथा कल्पिकाकल्पिकनिशीथादिषु योगेषु न विकृतयः कल्पन्ते काञ्चनापि विकृतयः व्याख्याप्रज्ञप्त्यादियोगेषु पुनरवगाहिमाविकृतिर्विकल्पते दृष्टिवादयोगेषु तु नाटक तथा चाह स एव कल्पाध्ययनस्य चूर्णिकृत् । " जहा कल्पियाकप्पियमिसीहाईणं विगईओ न विगज्जिजंति । पण्णत्तीए ओगाहिमविगई विगज्जिज्जइ दिट्ठीवाए मोक्कलं ति " । निशीथचूर्णिकृतुक्तं 'जोगो दुविहो आगाढो अणागाढो य आगाढजोगे अस्मि जोगे पयत्ता सो आगाढो यथा भगवतीत्यादि । इतरो अणागाढो यथा उत्तराध्ययनादि । आगाढे ओगाहिमगवज्जाओ नव विगईओ वज्जिज्जति दस-मा र भयणमहाकप्पसुए एको पर मोदकाविगई कप्पइ सेसा आगाढेसु सव्वविगईओ न कप्पंति अणागाढे पुण दस वि विगईओ भइयाओ जओ गुरुअणुण्णाए न कप्पति त्ति " एवंविधं योगक्रमजानन् यदाऽसौ विराधयति सा योगविराधना । तथा ( अप्पणस्स वि दिंति तहत्ति ) ते उत्सारकल्पिका अन्यस्यापि स्वशिष्यादेः तथा चोत्सारकल्पेनैव वाचनां प्रयच्छन्ति सोऽप्यपरेषां तथैवेत्येवमुत्सारकल्पे प्रवाहतः क्रियमाणे परम्परया सूत्रार्थव्यवच्छेदः प्राप्नोति घण्टादृष्टान्तश्चात्र वक्तव्यः । तमेवोपनययुक्तं गाथात्रयेणाह ।

उच्छुकरणे वकुडुग, पडणं घंटासियालनासणया ।
विगमाई पुच्छपरं-पराए नासंति जा सीहो ॥
पडियरिउं सीहेणं, स हओ आसासिया मिगगणा य ।
इय कइ वयाइ जाणइ, पयाणि पढमिल्लुगुस्सारी ॥
किंपि त्ति अन्न पुट्ठो, पच्चं तुस्सारणे अवोच्छत्ती ।
गीतामयणखरंटण-पच्छित्तं कित्तिया चेव ॥

अत्र कथानकम् । एगस्स महावइयस्स उच्छुवाडो बहुसइओ निप्फन्नो त सियालो पइसरित्ता खाइत्ति । ताहे सो उच्छुसामी सियालगहणनिमित्तं तस्स उच्छुवाडस्स परिपेरंतेसु चउदिसि खाइयं खणावेइ तत्थ एगो सियालो पडिओ सो वराओ गिहित्ता कन्ने पुच्छे च कप्पित्ता दीवियचम्मेण वेढित्ता घंटं आबंधित्ता विसज्जिओ नासंतो सियालेहिं दिट्ठो दूरओ ते सियाला अम्हारिसो त्ति काउं वयए पलाया तो विद्धरेहिं दिट्ठा पुच्छिया किं नासहत्ति तेहिं कहिय अपुव्व सत्ते करेमाणे किं पि अपुव्वं भूयं एत्ति । ते वि भएण पलायंता वरक्खूहिं दिट्ठा पुच्छिया तेहिं कहियं किं पि किर एत्ति सिग्घं नासह ते पलायंता चित्तएहिं दिट्ठा पुच्छिया कहियं किं पि किर एत्ति तुरियं पलायह ते वि पलायंता सीहेण पुच्छिया कहियं तेहिं सीहो चिंतेइ मो पाणियस्सइ ओवाहणाओ मुयामि गवेसामि ताव तेण सणियं पडियरियत्ता सियालो वि हओ घंटासीयालो कीस आओ लोकयामोत्ति रोसेण ते अ सियालादयो मिया आसमो भीयह हओ सो वराओ मण्दीवियं चम्मो णट्ठो घंटासीयलो कण वि अवराहेण ग्घत्तं तहा कओ एस दिट्ठंतो । अयमत्थो वसभो जस्स त उस्सारिज्जति सो जावतिएहिं दिवसेहिं जोगो समप्पइ तावति दिवसे कति वयाणं आलावगाणं किंचि पुत्तफासियम्मि खित्ता पव्वत्त गंतूण गच्छगागडित्तणं करेति अन्नेसिं च उस्सारेतित वि उस्सारा पत्ता पत्तेयं गच्छपागढित्तणेण ठीत्ता सिस्साण पडिच्छयाण य उस्सारकप्प करेंति । अम्हे किर सुत्तत्थाण अवोच्छित्ति करेमो तत्थ जो सोपमिल्लुगउस्सारी सो जहा ते सियाला तस्स घंटासियालस्स अकिंचि घंटारुइ च जाणति तओण को एस किं वा एयस्स गहएयस्स गइएकस्स वा एस सद्दो एव सो पढमिल्लुगुस्सारी किंचि वि जाणइ न सव्वं सब्भाव जो एयस्स पासे उस्सारकप्पं करेति सो कइवि आलावए जाणेत्ति न पुण अत्थं सो सिस्सेणं पुच्छिओ भणति किं पि केरिसो वि अत्थि एयस्स अत्थो सेसा कतिवए वि आलावए न कट्टंति ते सिस्सेहिं पुच्छिज्जता भणंति ण याणामो पुण किंपि एवं तस्स गुरू जोग वहह । एव ते अप्पाण च परं च नासता विहरति । अह अन्नया गीयत्था

आयरिया आगया तेहिं ते उवालद्धा गच्छाय अविच्छिन्ना गच्छेसु य पवेसिया सव्वे जहा एते दोसा तम्हा न उस्सारियव्वा कत्तिया ते नविस्सति जे एव निहांमिहिंति । गाथात्रयस्याप्युक्तगमनिका इत्येवं क्रियते । यत्र तद्भिक्षुकरणमिक्षुवादस्तस्य रक्षणार्थम् वराको गताख्यानिकेत्यर्थ साख्यानिका तत्र क्रोष्टुः शृगालस्य पतन ततो गृहपतिना गलके घण्टा बध्वा मुक्तस्य दर्शन शृगालानां नाशन ततो वृकादीना पृच्छा तत. सर्वेऽपि परम्परया नश्यन्ति यावत् सिंह. समागतस्तेन प्रतिजागर्य निरूप्य स घण्टाशृगालो हत । शेषा मृगगणा शृगालवृकादय आश्वासिता । अय दृष्टान्त' । अथ दार्ष्टान्तिकयोजनामाह " इयकइवयाइ इत्यादि " इत्यमुनैव प्रकारेण प्रथमिल्लुकोत्सारी शिष्य कतिपयानि सूत्रालापकरूपाणि किञ्चिन्मात्रसूत्रस्पर्शकनिर्युक्तिमिश्रितानि जानीते अस्य च समीपे योऽन्योऽधीते स कतिपयान् सूत्रालापकान् जानीते न पुनरर्थं तस्यापि पार्श्वे य पठन्ति स सूत्रालापकानपि नावगच्छति । अन्येन पृष्ट प्रतिभणति अस्ति किमप्येतदङ्गोपाङ्गादिकं श्रुत तद् यूयमेतस्य योगमुद्वहतेति । एते चैं दुरधीनविद्यत्वात्प्राय प्रत्यन्तग्राम एवार्थं लभन्ते । यत उक्तम् । "पाएण खीणदव्वा, धणियपरद्धा कयावए हाय । पच्चत सेवती, पुरिसा दुरहीयवज्जाया" । अत प्रत्यन्तं गत्वा सूत्रार्थयोरुत्सारण कुर्वन्ति वदन्ति च वयमूत्रार्थयोरव्यवच्छित्ति कुर्म इति अन्यदा च यत्र प्रत्यन्तग्रामे गीतार्थानामागमन तेरुत्सारकलिपकानां खरण्टन यथा भो किमेव सूत्रार्थयो. परिपाटिपाचना परित्यज्य सकलश्रुतधर्मधूमकेतुकल्पमुत्सारकल्पमाचरन्तः आत्मान च पर च नाशयतेत्यादि । ततश्च गच्छान्नावच्छिद्यते तेषामपुन करणेन प्रतिक्रान्ताना प्रायश्चित्त दत्तम् [कित्तिय त्ति] कियन्त एतादृशा गीतार्था भविष्यन्ति य एव शिक्षयिष्यन्ति तस्मात्प्रथमत एव नोत्सारणीयम् भावेना सप्रपञ्चं योगविराधना ।

अथात्मा परश्च परित्यक्त इति पदद्वय भावयति ।

अप्पत्ताण उ दितेण, अप्पओ इह परस्स वि य चत्ते ।
सो वि अ हु तेण चत्तो, जं न पढइ तेण गच्छेणं ॥

अपात्राणामयोग्यानां यद्वा अप्राप्तानां विवक्षितानुयोगभूमिमनुपागताना श्रुत ददतोत्सारकल्पकेन आत्मा इह परत्रापि त्यक्त- स्तत्रेह तद्वाचनादानसमुद्भूतापयश वादादिना परत्र बोधिदुर्लभत्वादिना तथा सोऽपि शिष्यो हु निश्चित तेनाचार्येण परित्यक्तो यत् तेन गणिवाचकत्वादिगर्वेणाधिष्ठित सन्न पठति पठनाभावे हि कुतो यथावच्चरणपरिपालनम् । किं च-

अजस्स हीलणा ल-ज्जणा य गारवित्रकारणमणज्जे ।
आयरिए परिवाओ, वोच्छेदो सुत्तस्स तित्थस्स ॥

आर्य सुजन सुमानुष इत्येकोऽर्थ । तस्य यथावदागमार्थबोधविकलस्य वाचकनाम्ना हीलना भवति । अहो हीलेय मम यदह वाचकेत्यभिधीये तथा (लज्जणत्ति) वाचकमिश्रा अयमालापक सिद्धान्ते विद्यते कोवा अस्यालापकस्यार्थ इति केनापि पृष्टस्य व्याकरण दातुमशक्नुवतो भृशं लज्जा भवति ततश्च श्यामवदनकु ञ्चीकृतकन्धरश्चिन्तया विमनायमानोऽवतिष्ठते अनार्ये अनार्यस्य पुनस्तदेव गौरव्यकारण गर्वनिबन्धन जायते अहो वयमेव निस्सीमप्रतिष्ठापात्र जगति वर्तामहे यदेव वाचकपदवीमध्यारोहाम इति इत्थ पर. परित्यक्तो मन्तव्य एव । आचार्ये च परिवादो भवति तथाहि स बहुश्रुताचार्यपादर्वात्सारकल्प कारयित्वा गत.

क्वापि नगरादौ पृष्टश्च कैश्चिन्निपुणैर्विमर्शय पदं यावत् न किञ्चित् अय जानीते ततस्ते ब्रुवते धिगेवं सूत्रार्थमगृहीत्वैवमध्ययविच्छेदाय आचार्यपदभाजनमाकारि तेऽप्याचार्या एवविधा भविष्यन्तीत्यात्मा परिप्यक्त । तथा प्रवचनमपि तेनाचार्येण परित्यक्तं कथमित्याह श्रुतस्योत्सारकल्पवशादनधीयमानस्य व्यवच्छेद प्राप्नोति श्रुते च व्यवच्छिद्यमाने ज्ञानाभावे च दर्शनचारित्रयोरप्यभावात्तीर्थस्यापि व्यवच्छेद. प्राप्नोति । यदि नाम तीर्थं व्यवच्छिद्यते तत को दोष इत्याह ।

पवयणवोच्छेयवट्ट-माणे जिणवयणबाहिरमईओ ।
बंधइ कम्मरयमलं, जरमरणमणतयं घोरं ॥

प्रवचन तीर्थं तस्य व्यवच्छेदे हेतुरूपतया वर्तमान कथम्भूतोऽसावित्याह । जिनवचनबाह्यमतिक. सर्वज्ञशासनबहिर्भूतदुर्बुद्धिकोमुपीको न खल्वनीदृशस्य प्रवचनव्यवच्छेदं कर्तु मतिरुत्सहते स एवंभूतो बध्नाति कर्मरजोमल रजःशब्देन बद्धावस्थ मलशब्देन निकाचितावस्थ कर्म परिगृह्यते रजश्च मलश्चेति रजोमलं कर्मैव रजोमल कर्मरजोमल निकाचिताऽनिकाचितावस्थ कर्म यथाध्यवसायस्थानमनुबध्नातीत्यर्थ. । कथम्भूतमनन्तानि जरामरणानि यस्मात् तदनन्तजरामरण गाथायां प्राकृतत्वाज्जरामरणशब्दस्य परनिपात । घोरं रौद्र शारीरमानसदुःखोपनिपातनिबन्धनत्वात् इति । तथा षड्जीवनिकायानप्यगीतार्थतयाऽसौ विराधयतीति जीवनिकाया अपि तेनोत्सारकेण परित्यक्ता अवसातव्या । यत एते दोषास्ततो नोत्सारणीयम ॥

अथ क्रमेणैवाधीयमाने सूत्रे के गुणा उच्यन्ते ।

आणा विकोवणाणुओग-
वुज्झण उवओगनिज्जरागहणं ।
गुरुवासजोगसुस्सू-
सणा य कमसो अहिज्जते ॥

क्रमश क्रमेणाधीयमाने अध्याप्यमाने च सन्ति एते गुणास्तद्यथा आज्ञा तीर्थकृता शिष्येणाचार्येण चाराधिता भवति [ विकोवणत्ति ) योगोद्वहनविधौ गच्छसामाचार्यां च विकोपना व्युत्पादना च शिष्यस्य कृता भवति ततश्च स्वय सामाचारीं वितथ्य न करोति अपरान् कुर्वता निवारयति । तथा गच्छमध्ये द्वितीयपौरुष्यामनुयोग प्रवर्तते तदाकर्णनान्मन्दबुद्धेरपि यो यन जीवाजीवादितत्वेषु प्रबोधः सपद्यते बुध्यमानस्य च श्रुते निरन्तरमुपयोगो जायते निरन्तरोपयुक्तस्य च महती निर्जरा प्रतिसमयसंख्येयभवोपात्तकर्मपरमाणुपटलापगमाद्युक्त च । " कम्ममसंखेज्जभव, खवेइ अणुसमयमेव आउत्तो । अन्नयरम्मि वि जोगे सज्झाय म्मि विसेसेणं " नित्योपयुक्तस्य च शीघ्र सूत्रार्थयोर्ग्रहण भवति तथा हि गुरुवासेन गुरुकुलवासेन सार्द्धं योग' सम्बन्धो भवति अन्यथा क्रमेण सूत्रार्थाध्ययनायोगात । यद्वा पदद्वयमिद पार्थक्येन व्याख्यायेन गुरूणामन्तिके वासो गुरुवास' स सेवितो भवति योगाश्च विधिवदाराधिता भवन्ति । तथाचार्यादीनां शुश्रूषा विनयवैयावृत्यादिना कृता भवति । यत एते गुणास्ततः क्रमेणैवाध्येतव्य. । उपसंहरन्नाह—

इअ दोसगुणे नाउं, उप्पक्कमओ अहिज्जमाणाणं ।
उज्जयविहारविहिन्नू , को वयणमइक्कमेज्जाहि ॥

इतिशब्द एवमर्थे एवमुत्क्रमेण क्रमेणचाधीयानानामुत्क्रमणतादव्यापयतां च यथाक्रम दोषान् गुणांश्च ज्ञात्वोभयविशे-

एवंविधः क्रमाध्ययनगुणदोषविभागविधिवेदी आचार्यः शिष्यो वा को नामोत्सारकल्पस्य करणेन कारापणेन वा आत्मनो वचनमभ्युपेयादङ्गीकुर्यात न कश्चिदित्यर्थः । यतश्चैवमतोऽनुपयोगित्वान्नास्त्युत्सारकल्पिक इति । बृ० १ उ० । पं० चू० ॥

कारणेऽस्तीति निश्चाययन्पुनरपि पर आह ।

जइ नत्थि कप्पो नामं, अनट्ठ हु अत्थे न होइ अभिहाणं ।
तम्हा तस्स पसिद्धी, अभिहाणपसिद्धिओ सिद्धा ॥

यदि नास्त्युत्सारकल्पिकस्ततः कुतोऽस्य नामाभिधानमिदमायातं न कुतश्चिदित्यर्थः । अनेन प्रतिज्ञातार्थः सूचितः । कुत इत्याह । असत्यविद्यमानेऽर्थे अभिधेये हुशब्दस्य हेत्वर्थवाचकत्वात् यस्मान्न भवत्यभिधानं किं तु सत्येवेति अनेन च हेत्वर्थ उपात्तः । यतश्चैवं तस्मात्तस्यार्थस्य प्रसिद्धिरभिधानप्रसिद्धित एव सिद्धा प्रतिष्ठितेति निगमनार्थः । दृष्टान्तोपनयौ स्वयमेवाऽभ्यूह्य वाच्योऽत्र प्रयोगः । अस्त्युत्सारकल्पिक अभिधानवत्त्वात् घटादिवत् यद्यदभिधानवत् तत्तदस्ति यथा घटपटादि अभिधानवच्चेदं तस्मादस्तीति । इत्थं परेण स्वपक्षे समर्थिते सति प्रतिविधीयते भो भद्र ! सुष्ठु प्रमाणानिकोऽनैकान्तिकोऽयं भवता हेतुरुपन्यस्तस्तथा चाह ।

जइ सव्वं वि य नामं, सअत्थगं होज्ज तो भवे दोसा ।
जम्हा स अत्थगत्ते, तजिवं तम्हा अणेगंतो ॥

यदि सर्वमपि नाम सार्थकं भवेत् ततो भवेदस्माकं दोषः । उत्सारकल्पिकस्यास्तित्वापत्तिलक्षणो यस्मात्पुनः सार्थकत्वे नाम भक्तं विकल्पितं स्यात् सार्थकं स्यान्निरर्थकमिति भावः । तत्र सार्थकं जीवाजीवादिकं निरर्थकं खरविषाणाकाशकुसुमकूर्मरोमवन्ध्यापुत्रादिकं यत एवं तस्मादनैकान्तोऽयं यदसद्भूतेऽर्थे न भवत्यभिधानम् । इदमत्र तात्पर्यम् । अभिधानस्य वा भावाभावयोरपि सद्भावादभिधानवत्त्वलक्षणो हेतुर्यथा उत्सारकल्पिकस्याऽस्तित्वं साधयति तथा नास्तित्वमपि साधयति उभयत्रापि साधारणत्वात् अतः साधारणरूपोऽनैकान्तिकदोषदुष्टोऽयं हेतुरिति । इत्थं व्यभिचारिपक्षतया विलक्षीभूतः परः परित्यज्य यदृच्छाजल्पमाचार्यवचनमेव प्रमाणीकुर्वन्नित्याह । भगवन्नभ्युपगतं मयाऽनन्तरोक्तयुक्तितोऽभिधानस्य सार्थकत्वमनर्थकत्वं चेति । यदिदमुत्सारकल्पिकाभिधानं सार्थकमाहोस्विन्निरर्थकमिति विवर्तते संशयावर्तगर्तायमस्माकं चेतस्तदिदानीमुद्ध्रियतां निजवाग्वरत्रयेति । उच्यते ।

निक्कारणम्मि नामं पि, निच्छिमो इच्छिमो अकज्जम्मि ।
उस्सारकप्पियस्स उ, चोअग गुणकारणं तं तु ॥

वत्स ! निष्कारणे कारणाभावे नामापि नेच्छामो वयं किं पुनरर्थं कार्ये प्रयोजने प्राप्ते इच्छाम उत्सारकल्पिकनामार्थमपि तत्तु कारणं हे नोदक ! शृणु निगमय । तत्र तिष्ठतु तावत् कारणं सर्वाणि गृह्णीता सर्वा अपि क्रिया इति ज्ञापनार्थं प्रथमत उत्सारकमाह ।

आयरियदिट्ठिवायत्थं, जाणए पुरिसकारणविहिन्नू ।
संविग्गमपरितंते, अरिहइ उस्सारणं काउं ॥

आचार्यः प्रथमस्य दृष्टिवादस्य च तयोरर्थं जानातीत्याचार्यदृष्टिवादार्थः । इहाचार्यदृष्टिवादग्रहणं वक्ष्यमाणकारणैरनयोरेवोत्सारणीयत्वात् । स्थिरवचनं ( पुरिसकारणविहिन्नू इति ) पुरुषः स एव विशेषेण नाम किमयं पुरुष उत्सारणमर्हति न वा तथा कारणमुत्सारणीये न वेत्येवं विधिवेदी । तथा संविग्नो मोक्षाभिलाषी अपरितान्तः सूत्रार्थग्रहणायामहोरात्रमप्यपरिश्रान्तः एवंविध उत्सारणं कर्तुमर्हति एवं गुणोपेत एवोत्सारकल्पं करोतीत्यर्थः ॥

अथ यस्योत्सारकल्पः क्रियते तस्य गुणानाह ।

अभिगए पडिबद्धे, संविग्गे अ सलद्धिए ।
अवट्ठिए य मेहावी, पडिबुज्झी जोगकारए ॥

अभिगतः प्रतिबद्धः संविग्नश्च सलब्धिकः अवस्थितश्च मेधावी प्रतिबोधी योगकारकः ईदृग्गुणोपेतः उत्सारकल्पयोग्य इति निर्युक्तिश्लोकसमासार्थः ॥

अथैनमेव विवृणोति ॥

सम्मत्तम्मि अभिगओ, विजाणओ वा वि अब्भुवगओ वा ।
सज्झाए अ पडिबद्धे, गुरुसु निएल्लएसुं वा ॥

सम्यक्त्वे आभिमुख्येन गतः प्रविष्टः सोऽभिगत उच्यते यो वा जीवादिपदार्थानां विज्ञापको विशेषेण ज्ञाता सोऽभिगतः । यद्वा योऽभ्युपगतो यावज्जीवं मया गुरुपादमूलं न मोक्तव्यमिति कृताभ्युपगमः सोऽभिगतः । यः पुनः स्वाध्याये परावर्तनानुप्रेक्षादौ सततमायुक्तो गुरुषु वा स्थिरममत्वानुबन्धः निजकेषु वा संबन्धिषु प्रव्रज्याप्रतिपन्नेषु संजातप्रेमस्थेमा एष त्रिविधोऽपि प्रतिबद्ध उच्यते ॥

संविग्गो दव्वम्मि उ, भावे मूलुत्तरेसु उज्जुयंतो ।
लद्धी आहाराइसु, अणुओगे धम्मकहणे य ॥

संविग्नो द्विधा । द्रव्यतो भावतश्च । द्रव्ये द्रव्यसंविग्नो मृगः सदैव सर्वतोऽपि चकितत्वात् । भावे भावसंविग्नो मूलोत्तरेषु तु मूलगुणोत्तरगुणेषु पुनर्यतमानः उद्यमं सविदधानः साधुर्मन्तव्यः सदैव संसारापायचकितत्वात् । तथा लब्धिराहारादिपूत्पादयितव्येष्वनुयोगे दातव्ये धर्मकथने च विधेये यः स सलब्धिक इति ।

लिंगविहारं वट्ठिओ, मेरा मेहावि गहणओ मइओ ।
पडिबुज्झइ जं कत्थइ, कुणइ अ जोगं तदट्ठस्स ॥

अवस्थितो द्विधा लिङ्गे विहारे च । लिङ्गावस्थितः स्वलिङ्गं न परित्यजति विहारावस्थितः संविग्नविहारं विहाय न पार्श्वस्थादिविहारमाद्रियते । मेधावी द्विधा ग्रहणमेधावी मर्यादामेधावी च उभावपि वक्ष्यमाणस्वरूपौ तत्र मर्यादामेधाविन उत्सारकल्पः क्रियते स पुनर्ग्रहणे मेधावी वा स्यादमेधावी वा । द्विविधस्यापि कारणविशेषे उत्सार्येत इति ग्रहणतो मेधावी भक्तो विकल्पितः । तथा यत्कथ्यते अभिधीयते तत्सर्वं यः प्रतिबुध्यते स प्रतिबोद्धुं शीलमस्येति प्रतिबोधी यस्तस्य तत्र उत्सार्यते तदर्थस्य ग्रहणे योगं व्यापारं यः करोति कदाचित्प्रमाद्यति स योगकारक इति तदेवं व्याख्याता " अभिगए " इत्यादिगाथा ।

अथोत्सारकल्पिकस्यैवापराचार्यपरिपाट्या गुणानाह ।

अभिगयथिरसंविग्गे, गुरुअमुई जोगकारए चेव ।
दुम्मेहमलद्धीए, पडिबुज्झी परिणयविणीए ॥
आयरियवयणवाई, अणुकूले धम्मसद्धिए चेव ॥
एयारिसे महाभागे, उस्सारं काउमरिहइ ॥

अभिगतः प्रतिबुद्धः स्थिरः सम्यग्दर्शनादक्षोभ्यः संविग्नः को दुर्धर्मोचो निष्ठुरं निर्भर्त्सितोऽपि गुरूणाममोचनशीलः

योगकारक पूर्ववत् । दुर्मेधा अपि य. सलब्धिकः परिपक्व-वया' परिणामको विनीत' अभ्युत्थानादिविनययोगत. आचार्यवर्णवादी गुरूणां गुणोत्कीर्तनकारी अनुकूल आचार्याणामन्येषां वा पूज्यानां वैयावृत्यादिना हितकारी धर्मे तप.संयमात्मके चारित्रधर्मे आद्धिक श्रद्धावान् एतादृश एवंविधगुणोपेतो महाभाग' शिष्य. उत्सार कर्तुमर्हति उत्सारकल्पस्य योग्यो भवतीत्यर्थ. ।

अनीदृशानुत्सारयितु प्रायश्चित्तमाह ।

अणभिगयमाइयाणं, उस्सारिंतस्स चउगुरू होंति ।
उग्गहणम्मि वि गुरुगा, कालमसज्झाय वक्खेवे ॥

आदेशद्वयेनापि ये गुणा उक्तास्तद्विपरीता ये अनभिगतादय· स्तद्यथा अनभिगत. अप्रतिबद्ध. असंविग्नः अलब्धिकः अनवस्थित. अमर्यादोऽमेधावी अप्रतिबोद्धा अयोगकारकः अपरिणतः अविनीत आचार्यावर्णवादी अननुकूलः अधर्मश्रद्धालु. एतेषामुत्सारयत. उत्सारकल्प कुर्वत. आचार्यस्य प्रत्येकं चतुर्गुरवः प्रायश्चित्तम् । ( उग्गहणम्मि वि गुरुगत्ति ) सूत्रमर्थं वा झगित्यवावगृह्णातीत्यवग्रहण. नन्द्यादिभ्योऽ नद्·इति कर्तर्यनट्प्रत्यय. ग्रहणमेधावीत्यर्थ । तस्य यदि निष्कारणमुत्सारयति तदापि चत्वारो गुरुकाः । अथ किमर्थं मेधाविनो नोत्सार्यन्ते उच्यते यतोऽसौ प्रज्ञावत्त्वादेवानुपूर्व्यैव पाठ्यमानो झगित्येव विवक्षितमुत्सारणीय श्रुत प्राप्स्यति ततः को नाम तस्योत्सारकल्पकरणेऽभ्यधिको गुण । अथवा ( उग्गहणम्मि वि त्ति ) यस्याचारान्तर्गतवस्त्रैषणाध्ययनस्योपक्रमणनिमित्तमुत्सार्यते तस्य यद्यप्युत्सारकल्पसमकालमेव सर्वमपि सूत्रमर्थं वा अवगृह्णाति अपिशब्दान्मन्दमेधस्तथा यद्यपि नावगृह्णाति तथाप्यवग्रहणे अनवग्रहणे वाऽकालोऽस्वाध्यायिक व्याक्षेपश्च न कर्तव्य. यदि करोति तदा चत्वारो गुरुका' । एतच्चाकालादिकमुपरिष्टाद्भावयिष्यते । अथवा ( उग्गहणम्मि वि गुरुगत्ति ) अन्यथा व्याख्यायते योऽवग्रहणे समर्थ उत्तममेधावी अपिशब्द' संभावनायां किं संभावयति यावन्मात्र सूत्र तस्योद्दिश्यते तावदशेषमप्यर्थेन युकमवगृह्णाति यो वा वैरस्वामिवत् पदानुसारिप्रतिभो भूयस्तरमप्यनुसरति तस्योत्सारणीयम् । अथ नोत्सारयति तदा चतुर्गुरुकाः तत्रापि यावदुत्सारकल्प क्रियते तावदकालोऽस्वाध्यायिक व्याक्षेपश्च न कर्तव्य. यदि करोति तदापि चतुर्गुरुका. ।

अथोत्सारकल्पकरणे यत् प्राक् कारण सन्यासिकीकृत तद्दर्शयति ॥

गच्छो अ अलद्धीओ, ओमाणं चेव अणहियासाय ।
गिहिणो उ मंदधम्मा, सुद्धं च गवेसए उवहिं ॥

कस्याप्याचार्यस्य गच्छ सर्वोऽपि वस्त्रपात्रशय्योत्पादने अलब्धिक तत्र च क्षेत्रे स्वपक्षत परपक्षतो वा अवमान विद्यते ते च साधवोऽनधिसहा. शीतादिपरीषहान् सोढुमसमर्था' गृहस्थाश्च मन्दधर्माण. तुच्छधर्मश्रद्धाका अप्रज्ञापिता. सन्तो न वस्त्रादि प्रयच्छन्ति गुरु चोपधिं साधवो गवेषयेयुरिति भगवतामुपदेश' स च दुर्लभत्वात् यादृशेन साधुना न लभ्यते अत ईदृशे कार्ये लब्धिवान् दुर्मेधा अप्युत्सारकल्प कृत्वा वस्त्रैषणाध्ययनमुद्दिश्य कल्पिक क्रियते ततश्च कल्पिकीकृत. सन् किं करोति इत्याह।

हिंडउ गीयसहाओ, सत्रद्धिआ उवहणाति से लब्धिं ।
तो एक्कओ वि हिंडइ, आयरुस्सारियसुत्तत्थो ॥

गीतसहायो गीतार्थसाधुसहितो वस्त्राद्युत्पादनार्थं हिण्डता-म । अथ गीतार्थास्तस्य लब्धिमुपघ्नन्ति तत एकाकी अप्यसहायोऽप्याचारोत्सारितसूत्रार्थ. आचारान्तर्गतवस्त्रैषणादिसूत्रार्थमुत्सारकल्पकरणेन ग्राहितः सन् हिण्डते । ननु च किं कोऽपि कस्यापि लाभान्तरायकर्मक्षयोपशमसमुत्थां लब्धिमुपहन्ति येनैवमुच्यते ते गीतार्थास्तस्योपलब्धिमुपघ्नन्ति इत्यत आह ॥

भिक्खू विहंतराणुवद्दल-अज्झागयेज्जो जहिं तहिं न पडे ।
दुग्गतिगमाइभेदे, पडइ तहिं तत्थ सो नत्थि ॥

" कोइ किर पर वसईओ सत्थो अडविं पवन्नो, तत्थ य एगो रत्तपडो निब्भग्गसिरसेहरो पच्चएह वि सयाण पुणो उवहणइ सो असत्थो तएहाए पारद्धो दूरे अ अब्भवद्दलयं वासइ तेसिं उवरिं न पडइ ते दुहा तिहा इयरा रत्तपडो पुव्विमो ण मज्झे मेलिओ सव्वत्थ पडइ जत्थ सा तत्थ न पडइ जाव निव्वेमिओ एक्कओ जाओ जत्थ सो तत्थ पडइ एवं एयारिसा परस्स पुत्ते उवहणति " अथ गाथाक्षरार्थ भिक्षुरेकः सार्थेन सार्द्धं विहमध्वान प्रविष्ट इति शेष. । ततस्तृष्णया सार्थ. प्रारब्ध. वार्दल च वर्षितुमारब्ध यत्र तेषां मध्ये सोऽभागधेयो यो भिक्षुस्तत्र वर्षं न पतति ततो द्विकत्रिकादिना द्विधा त्रिधादिना प्रकारेण सार्थस्य भेदः कृतस्तस्मिंश्च कृते यत्र स भिक्षुर्नास्ति तत्र सर्वत्र वर्षं पतति तस्योपरि न पततीत्येष दृष्टान्त । अथार्थोपनय यथा स भिक्षु. पञ्चविंशतिकस्यापि सार्थस्य पुण्यान्युपहतवानेवमन्येऽप्येवंविधा परेषां लब्धिमतामपि स्वस्वकर्मक्षयोपशमसमुत्थां लब्धिमुपघ्नन्तीति ।

अथासौ कथ च वस्त्राण्युत्पादयतीत्युच्यते ॥

भिक्खं वा वि अडंतो, विउआ पढमा य अहव सव्वासु ।
सहिओ व असहिओ वा, उप्पायवायवावे वा ॥

भिक्षामटन् वस्त्राण्युत्पादयति वाशब्दो वक्ष्यमाणपक्षापेक्षायां विभाषायामपिशब्द संभावनाया संभाव्यते । अयमपि प्रकार इति । अथ न शक्नोति युगपत् भिक्षामप्यटितु वस्त्राण्युत्पादयितु व्यतिक्रामति वा वेला भैक्षस्य वस्त्राण्युत्पादयत । भिक्षां वाऽटद्भिर्न प्राप्यन्ते वस्त्राणीत्यादिना कारणेन द्वितीयायां पौरुष्यामनुयोगग्रहण हापयित्वा वस्त्राण्युत्पादयेत् । अथ तदा न लभते बह्वी वा हिण्डि कर्तव्या तत प्रथमायामप्युत्पादयेत् । अथ बहवो गृहस्था द्रष्टव्या महता च कष्टेन ते श्रद्धां ग्राह्यन्ते तत द्वयोरपि पौरुष्यो सर्वासु वा पौरुषीषु पर्यटति । यद्यपरे गीतार्थास्तस्य लब्धि नोपघ्नन्ति तदा स तै सहितोऽप्युत्पादयेदथवा वस्त्राणि प्रभावयेद्वा दानधर्मं गृहिणां पुरतो यथा ईदृश साधूनां धर्मो न कल्पतेऽमीषां भगवतामुद्गमोत्पादनैषणादोषदुष्ट पिण्डशय्यावस्त्रपात्रचतुष्टय गृहीतुं तदमीषा वस्त्रादावनुपयोज्यमानो महती कर्मनिर्जरेत्यादि । अथ ते गीतार्थास्तस्य लब्धिमुपहन्युस्ततस्तैरसहितोऽप्येकाकी उत्पादयितु वा प्रभावयितु वा प्रभुर्न कश्चिद्दोष । इत्थ तावद्वस्त्रादीनां कल्पिको भवत्विति कृत्वा यथा आचार उत्सार्यते तथा प्रतिपादितम् ।

अथ दृष्टिवादो येन कारणेनोत्सार्यते तत्प्रतिपादयति ।

कालियसुआणुओगम्मि, गंडियाणं समोयराणहेउं ।
उस्सारिंति सुविहिया, भूयवायं न अन्नेणं ॥

इह यो धर्मकथालब्धिसम्पन्न' परमन्यापि स्वल्पपर्यायस्यात दृष्टिवाद पठितुमप्राप्तस्तस्य कालिकश्रुतानुयोगेन धर्मकथां कुर्वाणस्य गण्डिका कुलकरतीर्थकरगणिकादयो दृष्टिवादान्तर्गता

उपयुज्यन्त इति तासां गाणिकानां कालिकश्रुतानुयोगे समवतारणहेतोरुद्देशसमुद्देशादिविधिना न कल्पते तासामध्ययनादिकमिति कृत्वा सुविहिता शोभनविहितानुष्ठाना आचार्या भूतवादं दृष्टिवादमुत्सारयन्ति तान्येव वाचको भूयादित्यादिना कारणेन । अथ "कालमसज्झायवक्खेवेत्ति" यत्प्राक् पदत्रयमुक्तं तत्राद्यं पदद्वयं तावद्विवृणोति ।

गज्झायमसज्झाए, सुद्धासुद्धे व तद्दिसे काले ।
दो दो अ अणोएसुं, एसुं तू अंतिमं एकं ॥
एगंतरमायंबिल-विगईए रक्खियं पि वज्जेति ।
जावइअ य अहिज्जइ, तावइअं उद्दिसे केइ ॥

तस्योत्सारकल्पे क्रियमाणे स्वाध्यायिके अस्वाध्यायिके वा शुद्धे अशुद्धे वा काले विवक्षितश्रुतमुद्दिशेत् सर्वं वाक्यं सावधारणं भवतीति न्यायाद्दिशेदेव न व्याघातं कुर्यात् । केन विधिनेत्यत आह ( दो दो अ अणोएसुंति ) ओज-शब्देन विषयमुच्यते तद्विपरीत अनोजाः समा द्विचतुःषडादय उद्देशका यत्राध्ययने तत्रानोजस्सु उद्देशकेषु दिने दिने द्वौ द्वौ उद्देशकावुद्दिशेत् । कथमिति चेदुच्यते प्रथमायां पौरुष्यां प्रथममुद्देशकमुद्दिश्य च द्वितीय उद्दिश्यते द्वितीयमुनयोरप्युद्देशकयोस्तस्यानुयोगो दीयते ततश्चरमपौरुष्यां प्रथममुद्देशकमनुज्ञाय द्वितीयोद्देशक समुद्दिश्यतेऽनुज्ञायते चेति चूर्णिलिखिता सामाचारी । तथा ( ओजस्सत्ति ) पञ्चसप्तादिसंख्याकेषु विषमेषूद्देशकमेकमेवोद्दिशेत् । यथा शस्त्रपरिज्ञाध्ययने तथाहि तत्र सप्तोद्देशकास्तेषु च त्रिभिर्दिवसैः षडुद्देशकानुद्दिश्य चतुर्थे दिवसे एक एवावशिष्यमाणः सप्तम उद्देशक उद्दिश्यते स च प्रथमपौरुष्यामुद्दिश्य चरमायामनुज्ञायते तथैकान्तरमेकदिवसान्तरितमाचाम्लमसौ करोति एकस्मिन् दिवसे आचाम्लमपरस्मिन् निर्विकृतिकं करोतीति भावः । तथा विकृत्यां रक्षितमपि स्वरसंदत्तमप्यसौ वर्जयति केचित्पुनराचार्या ब्रुवते यावत् यत्परिमाणं श्रुतमसावधीते तावदुद्दिशेत् यदि मेधाविनया द्वे त्रीणि चत्वारि भूरितराणि वा अध्ययनान्यागमयति ततस्तानि सर्वाण्युद्दिश्यन्त न कश्चिद्दोष इति भाव । व्याख्यात " कालमसज्झायति " पदद्वयम् ।

अथ "वक्खेवेति" पद विवृणुवन्नाह ।

आहारे उवकरणे, पमिलेहणलेवखित्तपडिलेहो ।
अप्पाहारो परिहा-रगो अ जह अप्पनिद्दो अ ॥

तस्योत्सारकल्पे कर्तुमारब्धे आहारग्रहणे उपकरणस्य प्रत्युपेक्षणे लेपग्रहणे क्षेत्रप्रत्युपेक्षणायां च व्याक्षेपो न कर्तव्यः । अल्पाहारश्च यथा स भवति तथा कार्यं परिहार संज्ञा एककायिकं तथा स्खलना अल्पाहारतो भवति यथा वाऽसावल्पनिद्रो भवति तत्कर्तव्यमित्येषा संग्रहगाथा ॥

अथैतामेव प्रतिपदं विवृणोति ।

हिंडाविंति न वा णं, अहवा अन्नट्ठया न सो अडइ ।
एहिंति वसे उवहिं, पेहेइ व सो अलेमिं ॥

णामिति । तमुत्सारकल्पिकमाचार्या भिक्षां न हिण्डापयन्ति अथवा वक्ष्यमाणं समुद्घटितार्थव्याख्यानं मस्तके मतोति इत्यर्थं यदि पुनस्तेनात्मना तदा 'अहवेति' सत्सकल्पस्य प्रकारान्तरतायोतक अन्यार्थमेव आचार्यग्लानबालवृद्धादीनामर्थाय नासावुत्सारकल्पिक पर्यटति यावन्मात्रमाहारमात्मना भुङ्क्ते तावन्मात्रमेवात्मनोऽर्थं । तथा देशान्ते वा प्रत्युपेक्षन्ते स तस्योत्सारकल्पिकस्योपधिं विशेषसाधवः स वा उत्सारककल्पिको नान्येषामाचार्यक्षपकादीनामुपधिं प्रत्युपेक्षते सर्वत्र मा भूदध्ययनव्याघात इति योज्यम् ।

एमेव लेवगहणं, लिंपइ वा अप्पणो न अन्नस्स ।
खेत्तं व न पेहावे, न याचिते सोवहिं पेहे ॥

एवमेव लेपग्रहणमुपलक्षणत्वात् लेपनमपि पात्रस्य तस्य निमित्तमन्यैः साधुभि कर्तव्यम् । अथ शेषसाधवः कुतोऽपि हेतोरक्षणिकास्तत स आत्मन एव पात्राणि लिम्पति नान्यस्य साधोः । क्षेत्रं च तं न प्रेक्षापयेत् क्षेत्रप्रत्युपेक्षणार्थं त न प्रहिणुयादित्यर्थः । न चाप्यसावुत्सारकल्पिकस्तेषां क्षेत्रप्रत्युपेक्षकाणामुपधिं प्रत्युपेक्षेत ।

दिंति पणीयाहारं, न य बहुगं मा हु जग्गतो जिरं ।
मोआइ निसग्गेसुं, बहुसो मा होज्ज पलिमंथो ॥

प्रणीतं स्निग्धमधुरमाहारं परमान्नं शर्करादिकं तस्य गुरवः प्रयच्छन्ति सुखेनैवाहर्निशमपि दृष्टिवादादिसूत्रार्थान् प्रेक्षानिमित्तमिति भाव । तमपि प्रणीत न च नैव बहुकं किं तु स्वल्पं कुत इत्याह मा भूत्सूत्रार्थनिमित्त रजन्यामपि जाग्रतोऽजीर्णमिति रूक्षाहारभोजिनश्च बहुशो वारान्मोकादिनिसर्गेषु प्रश्रवणसंज्ञादिकव्युत्सर्गेषु विधीयमानेषु परिमन्थ सूत्रार्थव्याघातो मा भूदिति कृत्वा प्रणीतं दीयते । अल्पा च निद्रा स्वल्पप्रणीताहारभोजिनो भवतीत्यल्पनिद्राद्वारमपि व्याख्यातमवसातव्यम् । इत्थमुत्सारकल्पे समापिते सति विवक्षित वस्त्रोत्पादनादिकार्ये पूर्वोक्तविधिना कार्यते तदेव व्याख्यातमानुषङ्गिकमुत्सारकल्पिकद्वारम् । बृ० १ उ० ।

**उस्सारग**–उत्सारक–पुं० । उत्सारकल्पार्हे, बृ० १ उ० । ( तल्लक्षणमुत्सारकप्पशब्देऽनन्तरमेव दर्शितम् ) द्वारपाले, हेम० तेन हि प्रभुद्वारतो जना दूरीक्रियन्ते इति तस्य तथात्वम् अपसारके, वाच० ॥

**उस्सारण**–उत्सारण–न० उद्-सृ णिच् । ल्युट् । दूरीकरणे स्थानान्तरनयने, अपसारके, चालने, वाच० । उत्सारकल्पकरणे, " अरिहइ उस्सारणं काउं " बृ० १ उ० ।

**उस्सारित**–उत्सारयत्–त्रि० उत्सारकल्प कुर्वति, बृ० १ उ० ।

**उस्सारिय**–उत्सारित– त्रि० उद्-सृ-णिच्-क्त-दूरीकृते चालिते, वाच० । पातिते, " सहसा उस्सारिओ य नावाए " सथा०

**उस्सास**–उच्छ्वास–पुं० ऊर्ध्व प्रबलः श्वासः उच्छ्वास' । आव० ५ अ० । उच्छ्वसने, प्रश्न० १ आ० १ अ० । "समय उस्सासनीसासो " । प्रज्ञा० १ पद । प्रज्ञापनासत्कसमोच्छ्वासपदोक्तवक्तव्यता ऽऽन शब्दे उक्ता ) ( समोच्छ्वासनिःश्वासप्रश्न. समशब्दे )

**उस्सासग** -उच्छ्वासक–पु० उच्छ्वसन्तीत्युच्छ्वासका । उच्छ्वासपर्याप्तिपर्याप्तकेषु नैरयिकादिवैमानिकान्तेषु जीवेषु, स्था० २ ठा०२ उ० । उच्छ्वासयति वर्द्धयतीति उच्छ्वास. स एवोच्छ्वासक. जीवितवर्द्धके, " जीवितस्साए " । जीवितोच्छ्वासक जीवितमसाकमुच्छ्वासयति वर्द्धयतीति जीवितोच्छ्वास स एव जीवितोच्छ्वासकः । ज्ञा० १ अ० ॥

**उस्सिओदग**–उच्छ्रितोदक– त्रि० ६ ब० ऊर्ध्व वृद्धिगतजले, ' लवणेणं समुद्दे उस्सिओदए ' उच्छ्रितोदक ऊर्ध्व वृद्धिगतजलः सातिरेकषोडशयोजनसहस्राणि । जं० ६ श० ८ उ० ॥

उस्सिओसिय–उत्सृतोत्सृत– पुं० द्रव्यत ऊर्द्धस्थानस्थे भावतो धर्मशुक्लाध्यायिनि, तादृशावस्थस्य कायोत्सर्गे च। आव० ५ अ० ( क उस्सग्गशब्दे स्पष्टीभविष्यति )

उस्सिंघण–उत्सिङ्घन–न० वायुप्रयोगभेदे, आचा० १ श्रु० १ अ० ७ उ० ।

उस्सिंचंत–उत्सिञ्चत्– त्रि० उत्सेचन कुर्वति, "उत्तिगादिणा वाणिचितसु दगमणयरेण कठादिणा उस्सिंचणं उस्सिंचति"। नि० चू० १८ उ० । आचा० ॥

उस्सिंचण–उत्सेचन–न० ऊर्द्धं सेचनमुत्सेचनम्। कूपादे कोशादिनोत्क्षेपणे । आचा० १ श्रु० १ अ० ३ उ० । उद्–सिच्–करणे–ल्युट् । उत्सेचनोपकरणे काष्ठादौ, आचा० २ श्रु० । उत्क्रम्य आधारमतिक्रम्य सेचनमुत्सेचनम् । आधारातिक्रमेण सेचने, वाच० ।

उस्सिंचमाण–उत्सिञ्चत्– त्रि० आक्षिपति, । 'भिक्खुवडियाए उस्सिंचमाणे णिस्सिंचमाणे वा'। आचा० २ श्रु० १ अ० ६ उ० ।

उस्सिंचिय–उत्सिच्य–अव्य० उत्सेचन कृत्वेत्यर्थे, 'उस्सिंचियाए उप्पत्तियाण गिण्हाहि'। आचा० २ श्रु० ।

उस्सिक्क–उत्क्षिप्–धा० तुदा-सक-ऊर्द्धं क्षेपे, उत्क्षिपेर्गुलुगुञ्छोत्थघाल्लत्थोभुत्तोस्सिक्कहक्खुप्पा ।८।४।१४३। इति उस्सिक्कादेश । उस्सिक्कइ । उक्खिवइ । उत्क्षिपति । प्रा० ॥

उस्सिट्ठ–उत्सृष्ट–त्रि० उत्सर्गविषयीकृते सूत्रे, सद्धेतुनोत्सृष्टमपि क्वचिदपोद्यते । द्वा० २ द्वा० । त्यक्ते, दत्ते च । वाच० ।

उस्सिण्ण–उत्सिन्न–न० उण्डेरकादौ, बृ० १ उ० ।

उस्सिय–उत्सृत–त्रि० । ऊर्द्धीकृते, आ०म० प्र० । द्रव्यत ऊर्द्धस्थानस्थे भावत ध्यानचतुष्टयरहिते कृष्णादिलेश्या गते परिणामे, तादृशावस्थस्य कायोत्सर्गे च, आव० ५ अ० (काउस्सग्गशब्दे स्पष्टीभविष्यति )

उच्छ्रिक–त्रि० उत्कटे, "बंभचेराइ उस्सिताइ भवति" सू० प्र० १८ पाहु० ।

उस्त्रिक–पु० उस्र अल्पार्थे स्वार्थे वा ठन् ( घ ) अल्पवाहके जीर्णवृषभे, अल्पक्षीरस्राविण्यां गव्याम्, स्त्री० । वाच० ।

उस्सियणिसण्ण–उत्सृतनिषण्णक–पु० द्रव्यत ऊर्द्धस्थानस्थे भावत आर्तरौद्रध्यातरि तादृशावस्थस्य कायोत्सर्गे च । "अट्टं रुद्दं च दुवे, झायइ झाणाइ जो ठिओ संतो। एसो काउस्सग्गो, दव्वुसितो भावउ णिसण्णो" आव० ५ अ० (काउस्सग्गशब्दे स्पष्टीभविष्यति )

उस्सुक्क–उच्छुल्क–त्रि० उन्मुक्त शुल्कं विक्रेतव्यभाण्डं प्रतिराजदेय द्रव्यं यस्या सा तथा । यस्मिंस्तत्तथा तस्मिन् । जं० ३ वक्ष० । भ० । कल्प० । अविद्यमानशुल्कग्रहणे, विपा० १ श्रु० ३ अ० । अर्थाभावे, अव्य० "उस्सुक्कं वियरइ" ज्ञा० ८ अ० । उत्कण्ठायाम्, इच्छामात्रे, वाच० । इतराभिलाषातिरेके, षो० ३ विव० । "औत्सुक्यमात्रमवसादयति प्रतिष्ठा, क्लिश्नाति लब्धपरिपालनवृत्तिरेव । नातिश्रमापगमनाय यथा श्रमाय, राज्य स्वहस्तधृतदण्डमिवातपत्रम्" अष्ट० १ अष्ट०

उस्सुक्कविणिवित्ति–औत्सुक्यविनिवृत्ति–स्त्री० अभिलाषव्यावृत्तौ, आ० ।

उस्सुक्कावइत्ता–उत्सुकय्य–अव्य० उत्सुकीकृत्येत्यर्थे, "उस्सुक्कावइत्ता" विवादे, परमुत्सुकीकृत्य लब्धावसरो जयार्थी विवदते स्था० ६ ठा० ।

उस्सुत्त–उत्सूत्र–त्रि० सूत्रादूर्द्धमुत्तीर्णं परिभ्रष्टमित्यर्थे' । प्रव० १ द्वा० । सूत्रोत्तीर्णे, व्य० ३ उ० । "उस्सुत्तमणुवदिट्ठं" उत्सूत्रं नाम यत्तीर्थकरादिभिरनुपदिष्टम् । व्य० १ उ० । "उस्सुत्तं सुत्तादत्तेय" "उस्सुत्तमणुवइट्ठं" नि० चू० ११ उ० । "उस्सुत्तमायरतो उस्सुत्त चेव पन्नवेमाणे" इति यथा छन्दो लक्षणम् । आव० ३ अ० । आ० चू० । ऊर्द्ध सूत्रादुत्क्रान्त उत्सूत्र । सूत्रमतिक्रम्य कृते, "उस्सुत्तो उम्मग्गो" ध० २ अधि० । सूत्रातितिक्रान्ते, पञ्चा० १४ विव० । सूत्ररहिते, "उस्सुत्तो खलु न विज्जते अत्थो" व्य० ५ उ० । संथा० । सूत्राद्युत्क्रान्ते, सूत्रानुक्ते, आव० ४ अ० । "उस्सुत्ता पुण बाहइ समइ विगप्प सुद्धवित्तियमेण" प्रति० । तथोत्सूत्रप्ररूपका महाव्रतपालनतपश्चरणादिकां क्रियां कुर्वन्त कर्मलघुका भवन्ति नवेति प्रश्ने उत्सूत्रप्ररूपका महाव्रतपालनादिक्रियासहिता निह्नवादय उत्कर्षतो नवमग्रैवेयक यावद्यान्ति तेन महाव्रतपालनादिक्रियावतां तज्जन्य शुभं फलं भवतु परं तेषां कर्मणां लघुकता गुरुकता च सर्वविद्वेद्येति । १८ प्र० ॥

उस्सुत्तपरूवणा–उत्सूत्रप्ररूपणा– स्त्री० सूत्रानुपदिष्टार्थप्रज्ञापनायाम्, व्य० १ उ० । नि० चू० । ( सा च यथाच्छन्दस इति यथाच्छन्दसशब्दे ) ( अहाछन्दशब्दे उक्ता ) नवरमुत्सूत्रभाषणफलम् । मरीचिना एष मम योग्य शिष्य इति विचिन्त्य उक्तम् । "कविला इत्थ पि इहयं पि" कपिल ! जैनेऽपि धर्मोऽस्ति मम मार्गेऽपि विद्यते तच्छ्रुत्वा च कपिलस्तत्पार्श्वे प्रव्रजित मरीचिरपि अनेन उत्सूत्रवचनेन कोटाकोटिसागरप्रमाण संसारमुपार्जयामास । यत्तु किरणावलीकारेण प्रोक्तं "कविला इत्थ पि इहय पि त्ति वचनम्" उत्सूत्रमिश्रितमिति । तदुत्सूत्रभाषिणा नियमादनन्त एव ससार इति स्वमतस्वारसिकतया ज्ञेयम इद हि तन्मत ये उत्सूत्रभाषिणस्तेषां नियमादनन्त एव ससारः स्यात् । यदि च इदं मरीचिवचनमुत्सूत्रमित्युच्यते तदा अस्यापि अनन्तसंसारः प्रसज्यते न त्वसौ सम्मतिस्तदिदमुत्सूत्रमिति। तच्चायुक्तम् । उत्सूत्रभाषिण नियमात् अनन्त एव संसार इति नियमाभावात् । श्रीभगवत्यादिबहुग्रन्थानुसारेण उत्सूत्रभाषितशिरोमणिजमालिनिह्नवस्यापि परिमितभवस्य दर्शनात् स चोत्सूत्रमिश्रकथनेऽपि अस्य मरीचिवचनस्य उत्सूत्रत्वमपगच्छति विषमिश्रितान्नस्य विषत्वमिवेत्यलं प्रसङ्गेन । कल्प० ।

उस्सुय–उत्सुक–त्रि० उत्सुवति षु प्रेरणे मितद्वादि कुकन् इष्टार्थाप्तये कालक्षेपासहिष्णौ, इष्टार्थोद्युक्ते, च । "अणुस्सुओ उराले सुजयमाणो परिव्वय" सूत्र० १ श्रु० १० अ० । अल्पोत्सुके अविमनस्क । आचा० २ श्रु० ।

उस्सुयत्त–उत्सुकत्व–न० पीतोत्पत्तौ यदि म्रियेऽहं तदा उत्पश्येयमादिरूपे औत्सुक्ये, आतु० ।

छद्मस्थ एव उत्सुकायते न केवली ।

छउमत्थेणं भंते ! मणूसे हसेज्ज वा उस्सुयाएज्ज वा ! हंता हसेज्ज वा उस्सुयाएज्ज वा जहा णं भंते ! छउमत्थे मणूसे हसेज्ज वा उस्सुयाएज्ज वा तहा णं केवली वि हसेज्ज वा उस्सुयाएज्ज वा ? गोयमा ! णो इणट्ठे समट्ठे से केणट्ठेणं जाव नो णं तहा केवली हसेज्ज वा उस्सुया-

एज्ज वा ? गोयमा । जण्णं जीवा चरित्तमोहणिज्जकम्मस्स उदएणं हसंति वा उस्सुयायंति वा से णं केवलिस्स नत्थि से तेणट्ठेणं जाव नो णं तहा केवली हसेज्ज वा उस्सुयाएज्ज वा । भ० ५ श० ४ उ० ।

उस्सुयभूय-उत्सुकीभूत-त्रि० उत्प्रव्रजिते, बृ० १ उ० । "उस्सुयभूएणं अप्पाणेणं " आचा० २ श्रु० ।

उस्सेइम-उत्स्वेदिम- न० उत्स्वेदेन निर्वृत्तमुत्स्वेदिमम् । येन व्रीह्यादिपिष्ट सुराद्यर्थमुत्स्वेद्यते [ स्था० ३ ठा० ] तादृशे पिष्टोत्स्वेदनार्थमुदके, आचा० २ श्रु० । पिष्टभृतहस्तादिक्षालनजले, कल्प० । " तं उसिण चेव पाणय जं सीतोदगेण चेव ससि चियं उस्सेइमस्स इमं वक्खाणं " ॥

सीतोदगम्मि बुज्झति, दीवगमादी उ से इमं पिट्ठं ।
संसेइमं पुण विला-सिया बुज्झंति जत्थुदए ॥ ६१ ॥

मरहट्ठविसए उस्सेइ आदीवगा सीओदगे बुज्झंति उस्सेइमे उदाहरण जहा पिठं । अहवा पिट्ठस्स उस्सेइज्जमाणस्स हेट्ठा जं पाणिअं तं उस्सेइमं पच्छद्धं गतार्थम् ॥

पढमुस्सेतिसमुदयं, अकप्पकप्पं च होति केसिं चि ।
तं तु ण दुज्जति जम्हा, उसिणं वीसंति जा दएणो ॥ ६ ॥

तं दीवगादि उस्सेति मा पक्कं पि पाणिए दोसु वि तिसु वा णिच्छलिज्जंति तत्थ वितियततिज्जा य सव्वेसिं वेअकप्पा पढम पाणियं तं पि अकप्प चेव केसिं चि आयारियाण कप्प त ण घरूति कम्हा जम्हा उसिणोदगमवि अणुवत्ते दरेमि सभवति त पुण कहिं उस्सेति मे सुच्छूढेसु अचित्तं भविष्यतीत्यर्थः । नि० चू० १७ उ० ॥

उस्सेतिमपिट्ठादी, तिलाति मीसेति मतिनायव्वं ।
कंकडुगादि उवक्खड, अतिपक्करसं तु परिणाम ॥२१॥

उस्सेतिमं णाम जहा पिट्ठं पुढविकायभायणं आउकायस्स भरेता मीसए अद्धहिज्जंति सुहं सेवत्थेणं उहाडिज्जति ताहे पिट्ठपयणयं रोट्टस्स भरेता ताहे तीसे थालीए जलभरियाए उवरि ठविज्जति ताहे अहोछिद्देण तं पि ओसिज्जति हेट्ठा हु तं वा ठविज्जति । नि० चू० १५ उ० ।

उस्सेग-उत्सेक-पुं० उद्-सि-घञ्-गर्वे, उद्रेके, उद्धृत्य बहिःसेचने, च । वाच० । न सुखदुःखयोरुत्सेकविषादौ विधेयौ आचा० १ श्रु० ३ अ० १ उ० ।

उस्सेह-उत्सेध-पुं० उत्सेधति कारणमतिक्रम्य वर्द्धते उत्-सिध गत्याम्-अच् । देहे तस्य शुक्रशोणितरूपसूक्ष्मकारणातिक्रमेण वर्द्धनात्तथात्वम् । वाच० । उच्छ्राये, स्था० १० ठा० । जं० । कर्त्तरि-अच्-उच्चे, त्रि० वाच० । शिखरे, " रययमए उस्सेहे " रजतमय उत्सेधः शिखरमाह च जीवाभिगममूलटीकाकारः " कूटो माडभाग । उच्छ्रय शिखरमिति । शिखरमत्र माडभागस्य संबन्धि द्रष्टव्यम् । तद् द्वारस्य तस्य प्रागेवोक्तत्वात् । जीवा० ३ प्रति० ।

उस्सेहंगुल-उत्सेधाङ्गुल-न० उत्सेध "अणंताणं सुहुमपरमाणुपोग्गलाणमित्यादि " क्रमेणोच्छ्रयो वृद्धिनयनं तस्माज्जातमङ्गुलमुत्सेधाङ्गुलम् । अथवा उत्सेधो नारकादिशरीराणामुच्चैस्त्वं तत्स्वरूपनिर्णयार्थमङ्गुलमुत्सेधाङ्गुलम् । अङ्गुलप्रमाणभेदे, अनु० ( तद्भेदः अंगुलशब्दे उक्तः )

उहार-उहार-पुं० मत्स्यविशेषे, स किल नावमधस्तले जलस्य नयति । बृ० ४ उ० ।

उहट्टु-उद्धृत्य-अव्य० उपरिक्षिप्त्वेत्यर्थे, " उहट्टुउहट्टु णिक्खित्ते सिया " आचा० २ श्रु० ७ अ० ।

—————:✱✱✱✱:—————



इति श्रीमत्सौधर्मबृहत्तपागच्छीय-कलिकालसर्वज्ञ-
श्रीमद्भट्टारक-जैनश्वेताम्बराचार्य श्रीश्री १००८
श्री विजयराजेन्द्रसूरिविरचिते अभि-
धानराजेन्द्रे उकारादिशब्द-
सङ्कलनं समाप्तम् ॥



# ऊकार

ऊ–ऊ–अव्य० वेञ्–क्विप्–संबोधने, वाक्यारम्भे, दयायां, रक्षायां च । मेदि० । अवसाने, वितर्के, वञ्चनायां, व्यसरे निषेधे, एका० । प्राकृतेऽपि । ऊ गर्हाऽऽक्षेपविस्मयसूचने । ८ । २ । १९९ । ऊ इति गर्हादिषु प्रयोक्तव्यम् । गर्हा । ऊ णिल्लज्ज । प्रक्रान्तस्य वाक्यस्य विपर्यासाशङ्कया विनिवर्तनलक्षण आक्षेपः । ऊ किं मए भणिअं । विस्मये ऊ कह मुणिणा अहं था । सूचने ऊ केण न विण्णाअं । प्रा० ।

ऊ–पुं० अवति रक्षति । अव–क्विप्–ऊप्–ऊठ्–महादेवे, चन्द्रे, वाच० । तोये, तोयधौ, धरणीधरे, रक्षणकृति, पुरुषे, राजपुत्रके, उपकारे, अपाङ्गणे, क्वचिदर्थे, गले, मङ्गलकुम्भे, दैवे, वणिजरक्षणे च । "ऊकारो रजनीनाथे, पुरुषे राजपुत्रके । उपकारेऽपाङ्गणे च, क्वचिदर्थे प्रवर्तते । ४ गले मङ्गलकुम्भे च दैवे वणिजरक्षणे" । एका० ।

ऊआस–उपवास–पु० उप वस्–घञ् । ऊत्वोपे । ८ । १ । ७३ । इति उपेत्य स्थाने ऊत् । अभोजने, प्रा० ।

ऊज्झाय–उपाध्याय–पु० । प्राकृते ऊच्चोपे । ८ । १ । ७३ । इति उपेत्यस्य स्थाने ऊत् । पाठयितरि, प्रा० ।

ऊण–ऊन–त्रि० ऊन– हानौ–अच्–स्वप्रमाणाद्धीने, स्था० ४ ठा० । अवमे, स्था० ६ ठा० । स्वतोऽवमे, सूत्र० १ श्रु० ७ अ० असंपूर्णे, ऊनार्थशब्दयोगे तृतीया एकेनोनः । ऊनार्थकशब्देन वा तृतीया । मापेण ऊनः मापोन । वाच० । व्यञ्जनाभिलापावश्यकैरसंपूर्णे अष्टाविंशे वन्दनकदोषे, ध० ३ अधि० । "वयणकरेण हि ऊण जहण्णकालव्वसेसहिं" । अष्टाविंशदोषमाह–वचनेराशापकैः करणैर्वा वचनादिभिरावश्यकैर्न्यूनं हीनं यद्वन्दते यद्वा कश्चिदन्युत्सुकतया जघन्येनैव कालेन वन्दनं समर्पयति शेषैश्च साधुभिर्वन्दिते सति पश्चाद्वन्दते तन्मूलं नाम वन्दनकम् । वृ० ३ उ० । अक्षरमात्रापदादिभिर्हेतूदाहरणाभ्यां वा हीनरूपे सूत्रदोषे, यथा अनित्यः शब्दो घटवदिति हेतूनम् । अनित्यः शब्दः कृतकत्वादिति उदाहरणहीनमित्यादि विशे० । अनु० । आ० म० द्वि० ।

ऊणत्त–ऊनत्व–न० हीनत्वे, " ऊणत्तं न कयाइवि माणम्मरिम तु अहिगित्त्व " दर्श० ।

ऊणसयभाग–ऊनशतभाग–पु० ऊनश्चासौ शतभागश्चोनशतभाग । शतभागेऽप्यपूर्यमाणे, । आव० ३ अ० ।

ऊणाइतिरित्तमिच्छादंसणवत्तिय –ऊनातिरिक्तमिथ्यादर्शनप्रत्यय–त्रि० ऊन स्वप्रमाणाद्धीनमतिरिक्तं ततोऽधिकमात्मादि वस्तु तद्विषयं मिथ्यादर्शनं तदेव प्रत्ययो यस्य सः । ऊनातिरिक्तमिथ्यादर्शनप्रत्ययवति, । तथा हि कोऽपि मिथ्यादृष्टिरात्मानं शरीरव्यापकमपि अङ्गुष्ठपर्वमात्रं यवमात्रं श्यामाकतन्दुलमात्रं चेति हीनतया चेति तथाऽन्यः पञ्चधनुःशतिकं सर्वव्यापकं चेत्याधिकतयाऽभिमन्यते । स्था० २ ठा० ।

ऊणिय–ऊनित–त्रि० ऊनीकृते, "चायालीसं वासाइं ऊणिया–ए" जं० २ वक्ष० ।

ऊणोयर–ऊनोदर–न० क–स–ऊने उदरे, प्रव० ६ द्वा० । ऊनमवममुदरं यस्य स ऊनोदरः । ध० ३ अधि० । स्तोकाऽऽहाराभ्यवहारादपूर्णोदरे, पञ्चा० १८ विव० ।

ऊणोयरिया–ऊनोदरिका–( ता ) स्त्री० ऊनमुदरमूनोदरं तस्य करणं भावे–वुञ्–ऊनोदरिका । प्रव० ६ द्वा० । ऊनमवममुदरं यस्य स ऊनोदरस्तस्य भाव ऊनोदरता । व्युत्पत्तिरेवेयमस्य प्रवृत्तिस्तूनतामात्रे । बाह्यतपोभेदे, ध० ३ अधि० । स० । पञ्चा० । ऊनोदरिका ऊणोयरिया इति अवमोदरिका ओमोयरिया इति च समानार्थका इति तद्भेदानाह ।

से किं तं ओमोदरिया ओमोदरिया दुविहा पण्णत्ता तं जहा दव्वोमोयरिया य भावोमोयरिया य भ० २५ श० ७ उ० ।

सा द्विधा द्रव्यतो भावतश्च । प्रव० ६ द्वा० । अथवा ।

ओमोयरियं पंचहा, समासेण विहाहियं ।
दव्वओ खित्तकालेण, भावेण पज्जवेहि य ॥ १४ ॥

अवममूनमुदरं यस्मिन् तत् अवमोदरं तत्र भवमवमोदरिकं तच्च समासेन सङ्क्षेपेण पञ्चधा व्याख्यातं द्रव्यतो द्रव्येण क्षेत्रेण कालेन भावेन च पुनः पर्यायैः । उत्त० ३० अ० ।

तत्र द्रव्यतोऽवमोदरिकामाह—

से किं तं दव्वोमोयरिया य दव्वोमोयरिया दुविहा पण्णत्ता तं जहा उवगरणदव्वोमोयरिया य भत्तपाणदव्वोमोयरिया य । से किं तं उवगरणदव्वोमोयरिया उवगरणदव्वोमोयरिया । एगे वत्थे एगे पादे वियत्तोवगरणसाइज्जणया सेत्तं उवगरणदव्वोमोयरिया । भ० २५ श० ७ उ० ॥

द्रव्यत उपकरणभक्तपानविषया तत्र उपकरणविषयोनोदरिका जिनकल्पिकादीनां न तदभ्यासपरायणानां वा बोद्धव्या न पुनरन्येषां तेषां समुपध्यभावे समग्रसंयमपालनाभावात् । अथवा अन्येषामप्यतिरिक्तोपकरणाग्रहणतो भवत्येवोनोदरता ।

यदुक्तम् ।

जं वट्टइ उवगारे, उवगरणं तं च होइ उवगरणं ।
अइरित्तं अहिगरणं, अजओ य जयं परिहरंतो " इति ।

( परिहरंतोत्ति ) आसेवमानः परिहारोऽपरिभोग इति वचनात् । ततोऽयतश्च यत्परिभुञ्जानो भवतीत्यर्थः । प्रव० ६ द्वा० । द० । ग० ।

से किं तं भत्तपाणदव्वोमोयरिया भत्तपाण दव्वोमोयरिया अट्ठकुक्कुडिअंडगप्पमाणमेत्ते कवले आहारं आहारेमाणे अप्पाहारे दुवालस जहा सत्तमसए पढमुद्देसए ( भ० २५ श० ७ उ० ) तद्यथा अट्ठकुक्कुडिअंडगप्पमाणमेत्ते कवले आहारमाहारेमाणे अवड्ढोमोयरिया सोलस कुक्कुडिअंडगप्पमाणमेत्ते

कवले आहारमाहारेमाणे दुभागपत्त चउव्वीसं कुक्कुडिअंडगप्पमाणे जाव आहारेमाणे ओमोयरिया वत्तीसं कुक्कुडिअंडगप्पमाणमेत्ते कवले आहारमाहारेमाणे पमाणपत्ते एक्को एक्केण वि घासेण ऊणगं आहारमाहारेमाणे समणे णिग्गंथे नो पकामरसभोइत्ति वत्तव्वंसिया (भ० ७ श० १ उ० ) सेत्तं भत्तपाणदव्वोमोयरिया सेत्त दव्वोमोयरिया भ० २५ श० ७ उ० ॥

भक्तपानोनोदरिका पुनरात्मीयात्मीयाहारमानपरित्यागतो विज्ञाय आहारमान च " वत्तीस किर कवला, आहारो कुच्छिपूरओ भणिओ । परिसस्स महिवलियाए, अट्ठावीसं भवे कवला । कवलस्स य परिमाण, कुक्कुडिअडप्पमाणमेत्त तु । जं वा अविगिय वयणो, वयण मिच्छु–त्तिछव्वीसतो " इत्यादि । सा च अल्पाहारादिभेदत. पञ्चविधा भवति । यदाहु ।

अप्पाहारअवड्ढा, दुभागपत्ता तहेव किं चूणा ।
अठ दुवालस सोलस, चउवीस तहेक्कतीसा य ।

अयमत्र भावार्थ । अल्पाहारोनोदरिका नाम एककवलादारभ्य यावदष्टौ कवला इति अत्र चैककवलमाना जघन्या अष्टकवलमाना पुनरुत्कृष्टा द्व्यादिकवलमानभेदा मध्यमा एव नवभ्य. कवलेभ्य आरभ्य यावद् द्वादश कवलास्तावदपार्द्धोनोदरिका अत्रापि नव कवला जघन्या द्वादश कवलोत्कृष्टा शेषा तु मध्यमा । एवं त्रयोदशभ्य आरभ्य यावत् षोडश कवलास्तावद्विभागोनोदरिका जघन्यादिभेदत्रयभावना पूर्ववत् एवं सप्तदशभ्यो यावच्चतुर्विंशतिकवलास्तावत्प्राप्तोनोदरिका एवं पञ्चविंशतेरारभ्य यावदेकत्रिंशत्कवलास्तावत्किञ्चिदूनोदरिका जघन्यादिभेदत्रय पूर्ववत् भावनीयम् । एवमनेनानुसारेण पानेऽपि भणनीया तथा स्त्रीणामप्येवं पुरुषानुसारेण द्रष्टव्या । प्रव० ६द्वा० ।

विशेषव्याख्या ।

अट्ठकुक्कुडिअंडगप्पमाणमित्ते कवले आहारं आहारेमाणे निग्गंथे अप्पाहारे दुवालसकुक्कुडिअंडगप्पमाणमित्ते कवले आहारं आहारेमाणे अवड्ढोमोयरिया सोलस कुक्कुडिअंडगप्पमाणमित्ते कवले आहारं आहारेमाणे दुभागपत्ते चउव्वीसं कुक्कुडिअंडगप्पमाणमित्ते कवले आहारं आहारेमाणे ओमोदरियातिवत्तव्वंसिया वत्तीसं कुक्कुडिअंडगप्पमाणमित्ते कवले आहारं आहारेमाणे समणे निग्गंथे पमाणपत्ते इतो एकेणवि कवलेण ऊणग आहारं आहारेमाणे समणे णिग्गंथे णो पगामरसभोगीति वत्तव्वंसिया ॥ १२ ॥

अस्य संबन्धप्रतिपादनार्थमाह ॥

लक्खणमतिप्पमत्तं, अइरेगो वि खलु कप्पते उवहीं ।
इइ आहारेमाणं, अतिप्पमाणे वहू दोसा ॥

अतिरेकोऽपि खलु कल्पते उपधिरित्युच्यमाने लक्षणमतिप्रसक्त ततो मानेनैव प्रसङ्गेनाहारमप्यतिप्रमाणं कुर्यादिति हेतोराहारे मानमधिकृतसूत्रेणोच्यते यतोऽतिप्रमाणे गृह्यमाणे आहारे बहवो दोषा. " हाएज्ज व वामेज्ज व इत्यादि " रूपा ॥

प्रकारान्तरेण सम्बन्धमाह ॥

अहवा विपडिग्गहगे, भत्तं गेण्हंति तस्स किं माणं ।
जं जं उवग्गहे वा, चरणस्स तगं तगं भणइ ॥

अथवेति प्रकारान्तरोपदर्शनेन अपिशब्द सवन्धस्यैव समुच्चये पूर्वसूत्रेण प्रतिग्रहक उक्तः तस्मिंश्च प्रतिग्रहके साधवो भक्तं गृह्णन्ति तस्य भक्तस्य किं प्रमाणमित्यनेन प्रमाणमभिधीयते । अथवा किं सवन्धेन यत् चरणस्य चारित्रस्योपग्रहे वर्तते तत्तत्सूत्रकारो वदति । अनेन सवन्धेनायातस्यास्य व्याख्या । अष्टौ कुक्कुट्यण्डकप्रमाणमात्रान् कवलान् आहारमाहरयन् निर्ग्रन्थोऽल्पाहारो भण्यते द्वादश कुक्कुट्यण्डकप्रमाणमात्रान्कवलानाहारमाहारयन् अपार्द्धावमौदर्य. द्वात्रिंशत कुक्कुट्यण्डकप्रमाणमात्रान्कवलानाहारमाहारयन् किञ्चिदूनावमौदर्य द्वात्रिंशत कुक्कुट्यण्डकप्रमाणमात्रान्कवलानाहारमाहारयन् अमणो निर्ग्रन्थः प्रमाणप्राप्त । इत एकेनापि कवलेन ऊनमाहारमाहारयन् श्रमणो निर्ग्रन्थो न प्रकामभोजीति वक्तव्यः स्यात् । एष सूत्राक्षरार्थः ॥

अथ भाष्यप्रपञ्चमाह ॥

निययाहारस्स सया, वत्तीसइमे उ जो भवे भागो ।
तं कुक्कुडिप्पमाणं, नायव्व बुद्धिमंतेहिं ॥

निजकस्याहारस्य सदा यो द्वात्रिंशत्तमो भवति भागस्तत्कुक्कुटीप्रमाण एकदेशे एवसमुदायोपचारात् । कुक्कुट्यण्डकप्रमाण ज्ञातव्य बुद्धिमद्भि. ॥

अत्रैव व्याख्यानान्तरमाह ॥

कुच्छिय कुडी य कुक्कुडि–सरीरगं अंडगं मुहं तीए ।
जायइ देहस्स जओ, पुव्वं वयणं ततो सेसं ॥

कुत्सिता कुटी कुक्कुटीशरीरमित्यर्थ । तस्या शरीररूपायाः कुक्कुट्या अण्डकमिवाण्डकं मुखं केन पुन कारणेनाण्डकं मुखमुच्यते । तत आह यत् यस्मात् चित्रकर्मणि गर्भे उत्पाते वा पूर्व देहस्य वदनं मुख निष्पद्यते पश्चाच्छेष तत प्रथमभावितया मुखमण्डकमुच्यते ।

थलकुक्कुडिप्पमाणं, जं वा नायासिए मुहे खिवति ।
अयमन्नो उ विगप्पो, कुक्कुडिअंडा न वा कवले ॥

इह कवलप्रक्षेपणाय मुखे विडम्बिते यदाकाश भवति तत्स्थलं भण्यते । स्थलमेव कुक्कुट्यण्डकं स्थलकुक्कुट्यण्डक तस्य प्रमाणं यदि नायासिते मुखे कवलं प्रक्षिपति । किमुक्त भवति यावत्प्रमाणमात्रेण कवलेन मुखे प्रक्षिप्यमाणेन मुख न विकृत भवति तत्स्थलकुक्कुट्यण्डकप्रमाणम । गाथायामण्डकशब्दलोप प्राकृतत्वात् । अयमन्यः कुक्कुट्यण्डकोपमे कवले विकल्प । अयमन्योऽर्थ कुक्कुट्यण्डकप्रमाणमात्रशब्दस्येत्यर्थ । एतेन कवलमात्रेणादिना संख्या द्रष्टव्या । तदेव कृता विषमपदव्याख्या भाष्यकृता ।

सम्प्रति निर्युक्तिविस्तर. ।

अठ त्ति भणिऊणं, छम्मासा हावएउ वत्तीसा ।
नामं चोदगवयणं, पामाण होंति दिट्ठंतो ॥

अष्टाविति भणित्वा यावदवमौदर्य तावदेतत्संस्तरतो मध्य भणितमसंस्तरत पुन. द्वात्रिंशत्कं प्रमाणं भणितमुत्सर्ग । पुनरयमुपदेश षण्मासादारभ्य तावत् हापयेत् यावत् द्वात्रिंशत्कवला । इयमत्र भावना । यदि योगानां न हानिरुपजायते तदा षण्मासान् उपवासं कृत्वा पारणके एक सिक्थमाहारयेत् । अथ तेन न संस्तरति तत पारणके द्वे सिक्थे आहारयेत् । एवमेकैकसिक्थपरिवृद्ध्या तावन्नेय यावदेकं लम्बन कवल–

मित्यर्थः । तेनाप्यसंस्तरणे कवलपरिवृद्धिर्वक्तव्या । सा च तावत् यावदेकत्रिंशत्कवलाः षण्मासमुपवासकर्तुमशक्नुवन् एकेन दिवसेनोनं षण्मासक्षपणं कृत्वा एवमेव सिक्थकवलपरिवृद्ध्या पारणकं कुर्यात् । एवमेकाद्यहान्या षण्मासक्षपणं तावत् यकव्यं यावच्चार्थं कृत्वा पूर्वप्रकारेण सिक्थककवलपरिवर्द्धनेन पारणकं परिभावयेत् । अथ न संस्तरति ततो दिने दिने भुक्त्वा मासाद्येवमेव सिक्थादारभ्य यावत् द्वात्रिंशत् कवला इति । अत्र चोदकवचनं यद्येवमणावित्यादिसूत्रोपनिबद्धं नाममात्रं वचनमात्रमाचार्य आह । सिद्धिप्रासादनिर्मापणाय योगानां संधारणनिमित्तमेतन्मभ्युपगतं सूत्रेण ततो न कश्चिद्दोषस्तथा चात्र प्रासादो भवति दृष्टान्तः । स चाग्रे भावयिष्यते ।

सम्प्रति यदुक्तं " छम्मासा होवते उ बत्तीसा " इति तद्भावनार्थमाह ।

छम्मासक्खवणंतम्मि, सित्थमेगादि लंवणं ।
ततो लंवणवड्ढी जा–बेक्कतीसमसथरे ॥
एक्कमेक्कं तु हावेत्ता, दिणं पुव्वकमेण उ ।
दिणे दिणे उ सित्थादी, पावे उत्तीसमसंथरे ॥

षण्मासक्षपणान्ते सिक्थमेकमादिशब्दात् असंस्तरणे द्वे त्रीणि चत्वारि इत्यादिपरिग्रहोऽशान्तत्नुक्रमवर्म संस्तरणे च सिक्थपरिवृद्धिस्तावत्कर्तव्या यावदवमकवलो भवति । तेनाप्यसंस्तरणे द्वात्रिंशदपि कष्टव्या परमेतत्कस्याऽपि कदाचित् अन्यथा प्रकामभोजित्वदोषप्रसक्तेर्यत आह । " एत्तो एगेण वि कवलेण ऊणगमाहारेमाणे समणे णिग्गंथे पगामरसभोइत्ति वत्तव्वं सिया " इह प्रकामग्रहणेन निकाममपि सूचितमतो द्वे अपि व्याख्यानयति ।

पगामं होइ बत्तीसा, निकामं होइ निच्चसो ।
दुयवि जहन्ना ते उ, गिद्धी हवंति वज्जिया ॥

द्वात्रिंशत्कवला प्रकामं भवति त एव यन्नित्यश सर्वकालं भुज्यन्ते तन्निकामम् । एते द्वे अपि द्वात्रिंशत्कवलेभ्यः एकेनापि कवलेनोनमाहारमाहारयतो ऽपक्किे गृद्धिश्च वर्जिते भवति । " अधुनावमोयणमिति " व्याख्यानार्थमाह ।

अप्पाहारु ऊणागो–मदेसणं नाममेत्तगं नाम ।
एइ दिणमेयतीसं, आहारेउ त्ति जं भणह ॥

यदि नाम प्रतिदिनमेकत्रिंशमपि कवलानाहारयेदिति भणथ यूयं प्रतिपादयथ तर्हि यत् अल्पार्द्धत्रिभागावमौदर्यदेशनं तन्नाम मात्रकमेकत्रिंशतोऽपि कवलाना प्रतिदिवसमाहारानुज्ञानात् । आचार्य आह ।

भणंति अप्पाहारा–दओ समत्थस्स निग्गह विसेसा ।
चंदायणादयो विव, सुत्तनिवातो पगामम्मि ॥

भण्यन्ते उत्तरं दीयते अल्पाहारादयः समर्थस्य सतोऽभिग्रहविशेषाश्चान्द्रायणादय इव । सूत्रनिपात पुनरन्तिमोऽसमर्थस्य प्रकामनिकामनिषेधपरं इत्यदोषः । ये चाल्पाहारादयोऽभिग्रहविशेषास्ते यदृशां समस्तयतीनां साधारणार्थ तथा चाह ।

अप्पाहारग्गहणं, जेण य आवस्सयाण परिहाणी ।
न वि जायइ तम्मत्तं, आहारयतं तयं नियमा ।

अल्पाहारग्रहणमपार्द्धोपलक्षणं नत इदमपार्द्धाद्यादारभ्य दृणमेनत् ज्ञापयति सिद्धिप्रासादनिर्मापणाय व्यापार्यमाणानामावश्यकानां योगानां यावन्मात्रेणाहारेण परिहानिर्नोपजायते तावन्मात्रं तमभिग्रहविशेषमभिगृह्याहारयितव्यम् ।

अत्रैव दृष्टान्तमभिधित्सुराह ।

दिट्ठंतो (अ) मच्चेणं, पासादेणं तु रायसंदिट्ठे ।
दव्वे खेत्ते काले, भावे ण य संकिलेसेइ ॥

इय गाथाक्षरयोजना । भावार्थस्तु केनापि राज्ञा अमात्य आज्ञप्तः शीघ्रं प्रासादः कारयितव्य स चामात्यो द्रव्ये लुब्धस्तान् कर्मकरान् द्रव्यतः क्षेत्रतः कालतो भावतश्च संक्लेशयति कथमित्याह ।

अलोणेण य सुक्कयं, सुक्खं नो पगामं दवंतो ।
खेत्ताणुचियं ठएहे, काले उस्सूरभोयणं ॥
भावे न देति विस्सामं, निट्ठुरेहिं य खिंसइ ।
जेयं वित्तिं च नो देइ, नट्ठा अकयदंसणा ॥

द्रव्यतोऽलवणसंस्कृतं विशिष्टसंस्काररहितं शुष्कं वातादिना शोषं नीतं वल्लचनकादि तदपि न प्रकामं न परिपूर्णं ददाति । क्षेत्रतो यत्तस्मिन् क्षेत्रे अनुचितं भक्तं वा पानं वा तद्ददाति । तथा उष्णे कर्म कारयति काले उत्सूरे भोजनं दापयति भावतो न ददाति विश्रामम् । निष्ठुरैश्चवचनैः खिंसयति । जितामपि च कर्मकरतो ऽन्यामपि वृत्तिं मूल्यं न ददाति । एवं च सति ते कर्मकरा प्रासादमकृत्वापि नष्टा पलायिता । स्थित प्रासादोऽकृतो राज्ञा चैतज्ज्ञातं ततोऽमात्यस्य दण्डनं कृतं अमात्यपदाच्च्यावयित्वा तस्य सर्वस्वापहरणं कृतमिति । एष दृष्टान्तः ।

सांप्रतमुपनयमाह ॥

अकरणे य पसायस्स उ, जह सो मच्चो उ दंडितो रन्ना ।
एमेव य आयरिए, उवणयणं होति कायव्वं ॥

यथा प्रासादस्याकरणे सोऽमात्यो राज्ञा दण्डित एवमेवाचार्ये उपनयनं भवति कर्तव्यं तथैव राजस्थानीयेन तीर्थकरेण अमात्यस्थानीयस्याचार्यस्य सिद्धिप्रासादसाधूनामर्थमादेशो दत्त । स च कर्मकरस्थानीयानां साधूनां द्रव्यादिषु तत्करोति । यथा ते सर्वे पलायन्ते । तथा चाह ।

कज्जम्मि वि नो विगतिं, भत्तं न तं च पज्जत्तं ।
खेत्तं खलु खेत्तादी, कुवसहि उज्झायगे चेव ॥
तइयाए देति कालं, ओमे वुस्सग्गवादिणो निच्चं ।
संगहउवग्गहे वि य, न कुणइ भावे पयंडो य ॥

द्रव्यतः कार्येऽपि समापतिते विकृतिं घृतादिकां न ददाति । भक्तमपि प्रान्तं दापयति । तदपि च न पर्याप्तम् । क्षेत्रतः खलु क्षेत्रादीन् प्रेषयति खलु क्षेत्रं नाम यत्र तु किमपि प्रायोग्यं द्रव्येण आदिशब्दाद्यत्र स्वपक्षतः परपक्षतो वाऽपमानना तदादिपरिग्रहः । कुवसतौ वा स्थापयति उद्भ्रामके वा ग्रामे यत्र तत्र वा प्रेषयति कालत सदैव तृतीयायां भोजनं ददाति । अवमेऽपि दुर्भिक्षेऽप्युत्सर्गवादिको नित्य भावतः संग्रहे उपग्रहे विभिन्नपरिग्रहे वस्त्रपात्रादिभिर्न करोति । प्रचण्डश्च प्रकोपनशीलः ॥

लोए लोउत्तरे चेव, दो वि एए अमाइगा ।
विवरीयत्ति व णो सिद्धी, अन्ने दो वि य माइगा ॥

लोके लोकोत्तरेऽपि च एतावनन्तरोक्तौ द्रव्यमात्रतौ

द्रव्यतो भावतश्च प्रासादस्य विपरीतवर्तिनः पुनरुन्नयथापि सिद्धिरिति कृत्वा अन्यौ द्वावपि द्रव्यतो भावतश्च प्रासादस्य साधकौ ॥

सिद्धी पासायवडिं-सगस्स करणं चउव्विहं होइ ।
दव्वे खेत्ते काले, भावे य न संकिलेसेइ ॥

सिद्धि प्रासादावतंसककरणं चतुर्विधं भवति तद्यथा द्रव्यतः क्षेत्रतः कालतो भावतश्च । ततो गीतार्थो द्रव्यादिषु साधून् न संक्लेशयति ॥

एवं तु निम्मवंति, ते वि अचिरेण सिद्धिपासाया ।
तेसिं पि इमो उ विही, आहारेयव्वए होति ॥

एवं द्रव्यादिषु सङ्क्लेशाकरणतस्ते साधवोऽचिरेण स्तोकेन कालेन सिद्धिप्रासादं निर्मापयन्ति तेषामपि सिद्धिप्रासादनिर्मापकानामाहारयितव्ये अय वक्ष्यमाणो विधिस्तमेवाह ॥

अद्धमसणस्स सव्वं, जणस्स कुज्जा दवस्स दो भागे ।
वायपवियारणट्ठा, छब्भागं कुणइ यं कुज्जा ॥

अर्द्धमुदरस्य दधितक्रते मनडिसहितस्याशनस्य योग्यं कुर्यात् द्वौ भागौ द्रव्यस्य पानीयस्य योग्यौ षष्ठ तु भागं वातप्रविचरणार्थमूनकं कुर्यात् । इयमत्र भावना । उदरस्य षड् भागा कल्पन्ते तत्र ये भागा अशनस्य सव्यञ्जनस्य द्वौ भागौ पानीयस्य षष्ठां वातप्रविचरणाय । एतच्च साधारणे प्रावृट्काले चत्वारो भागा । सव्यञ्जनस्याशनस्य पञ्चमः षष्ठो वातप्रविचरणाय । उष्णकाले द्वौ भागावशनस्य सव्यञ्जनस्य त्रय पानीयस्य षष्ठो वातप्रविचरणायेति ।

एसो आहारविही, जह भणितो सव्वभावदंसीहिं ।
धम्मावस्सगाय जोगा, जेण न हीयंति तं कुज्जा ॥

एष आहारविधिर्यथा सर्वभावदर्शिभिः सर्वज्ञैर्भणिता येन च प्रकारेण धर्मनिमित्ता अवश्यकर्तव्या योगा न हीयन्ते तं कुर्यात्पान्यदिति । व्य० द्वि० ८ उ० ।

अथ क्षेत्रावमौदर्यमाह ।

गामे नगरे तहा य, रायहाणि निगमे य आगरपल्ली ।
खेडे कव्वडदोणमुह-पट्टणमडंवसंवाहे ॥ १६ ॥
आसमपए विहारे, सन्निवेसे समायघोसे य ।
थलिसेणाखंधारे, सत्थे संवट्टकोट्टे य ॥१७॥
वाडेसु य रत्थासु य, घरेसु वा एवमित्तियं खित्तं ।
कप्पइ उ एवमाइ, एवं खित्तेणओ भवे ॥१८॥

तिसृभिर्गाथाभिः कुलकम् । एवमिति अमुना प्रकारेण हृदयस्थप्रकारेण एतावन्नियतमानं क्षेत्रं पर्यटितुं मम वर्तते इति एवमादिर्गृहशालादिपरिग्रहः । अय एतावत्प्रमाणं भिक्षार्थं भ्रमितव्यमिति निर्द्धारणं क्षेत्रेण अवमौदर्यं भवेत् । तदेव भिक्षाभ्रमणक्षेत्रमाह । कुत्र कुत्र भिक्षार्थं साधुर्भ्रमति ग्रामे गुणान् ग्रसतीति ग्रामस्तस्मिन् ग्रामे । अथवा ग्रसति सहते अष्टादशविधं करम् इति ग्रामस्तस्मिन् । अथवा कण्टकवाटकावृतो जनानां निवासो ग्रामस्तस्मिन् ग्रामे । पुनर्नगरे नाऽत्र करा सन्ति इति नगरं तस्मिन् । तथा राजधान्यां राजा धीयते यस्यां सा राजधानी तस्यां राजधान्यां राजपीठस्थाने निगमे प्रभूतवणिग्निवासे आकरः स्वर्णाद्युत्पत्तिस्थानं तस्मिन् आकरे पल्ली वृक्षवंशादिगहनाश्रिता प्रान्तजनस्थानं तस्यां पल्ल्याम् । खेटं धूलिप्राकारपरिक्षिप्तं तस्मिन् खेटे । पुन कर्वटं कुनगरं द्रोणमुखं जलस्थलनिर्गमप्रवेशं तत् भृगुकच्छादिकम् । पत्तनं तु यत्र सर्वदिग्भ्यो जना पतन्ति आगच्छन्ति इति पत्तनम् । अथवा पत्तनं रत्नखानिरिति लक्षणं तदपि द्विविधं जलमध्यवर्ति स्थलमध्यवर्ति च । मडम्बं यस्य सर्वदिक्षु सार्द्धतृतीययोजनान्तर्ग्रामो न स्यात् तत्र । तथा संबाधः प्रभूतचातुर्वर्ण्यनिवासः कर्वटशब्दादारभ्य संबाधशब्दं यावद् द्वन्द्वः समासः कर्तव्यः । कर्वटश्च द्रोणमुखं च पत्तनं च मडम्बं च संबाधश्च कर्वटद्रोणमुखपत्तनमडम्बसंबाधास्तेषां समाहार कर्वटद्रोणमुखपत्तनमडम्बसंबाधं तस्मिन् कर्वटद्रोणमुखपत्तनमडम्बसंबाधे एतेषु स्थानेषु इत्यर्थ (१६) पुन कुत्र कुत्र इत्याह । आश्रमपदे तापसाश्रमोपलक्षिते स्थाने विहारे देवगृहे पुनः सन्निवेशे यात्रार्थसमागतजनावासे समाज परिषत् घोषः आभीरपल्ली समाजश्च घोषश्च समाजघोषं तस्मिन् समाजघोषे । स्थलं च सेना च स्कन्धावारश्च स्थलसेनास्कन्धावारं तस्मिन् स्थलसेनास्कन्धावारे । तत्र स्थल उच्चभूमिभागः सेना चतुरङ्गकटकसमूहः स्कन्धावारः कटकोत्तरणनिवास . सार्थक्र याणकभृता समूहः प्रतीत एव तत्र सवर्तो भयत्रस्तजनसमवायः कोट्टो दुर्गः संवर्तश्च कोट्टश्च सवर्तकोट्टं तस्मिन् संवर्तकोट्टे (१७) पुनर्वाटेषु वृत्त्यादिपरिक्षिप्तगृहसमूहेषु रथ्यासु सेरिकासु च गृहेषु प्रसिद्धेषु च एतेषु च स्थानेषु अवमोदर्यं कृतं क्षेत्रतो भवति । अथ पुन प्रकारान्तरेण क्षेत्रावमोदर्यमाह ।

पेडा य अद्धपेडा, गोमुत्तियपतंगवीहिया चेव ।
संबुक्कावट्टा य, गंतुं पच्चागया छट्ठा ॥ १९ ॥

षड्विधा क्षेत्रावमोदरिका वर्तते पेटा पेटाकारा चतुष्कोणा पेटाकारेण गोचर्यां कृत्वा अवमोदरीकरणमेवमर्द्धपेटाकारेण गोचरीकरणं गोमूत्रिकाकारेण पतङ्गवीथिका पतङ्ग शलभस्तस्य वीथिका उड्डयन पतङ्गवीथिका अनियता निश्चयरहिता शलभोड्डयनसदृशीत्यर्थ । पुन शम्बूकावर्त शम्बूकः शङ्खस्तद्वत्आवर्तो भ्रमणं यस्यां सा शम्बूकावर्ता साऽपि द्विविधा अभ्यन्तरशम्बूका बहिःशम्बूका च । शङ्खनाभिरूपक्षेत्रे मध्याद्बहिर्गम्यते सा अभ्यन्तरशम्बूकावर्ता विपरीता बाह्यात् मध्ये आगमनरूपा बहिःशम्बूकावर्ता पञ्चमी । पुनः षष्ठी आयतं गन्तुं प्रत्यागमाख्येया आदित एव आयतं सरलं गत्वा यस्यां प्रत्यागमो भवति सा षष्ठी ज्ञेया इत्यर्थ । एतासां भिक्षाचर्याणामपि अवमोदर्यत्व ज्ञेयं यतो हि अवमोदर्यार्थमेव ईदृक्प्रकारेणैव साधुराहारार्थं भ्रमति तस्मान्नात्र दोषः ।१९।

दिवसस्स पोरिसीणं, चउण्ह पि जत्तिओ भवे कालो ।
एव चरमाणो खलु, कालोमाणं मुणेयव्वो ॥ २० ॥

दिवसस्य चतसृणां पौरुषीणां प्रहराणां यावद् घटिकाचतुष्टयादिकोऽभिग्रहविषयः कालो भवति एवममुना प्रकारेण कालेन चरमाण इति गोचर्यां चरतः साधोः खलु निश्चयेन कालावम इति कालेन अवमं कालावमं मन्तव्य ॥

पुनः कालावमोदर्यमेव प्रकारान्तरेणाह ॥

अहव तइयपोरिसीए, ऊणाए घासमेसंते ।
चउभागूणाए वा, एव कालेणओ भवे ॥ २१ ॥

अथवा तृतीयायां पौरुष्यामूनायां किञ्चिद्धीनायां ग्रासमाहारमेषयन् गवेषणां कुर्वन् वा अथवा चतुर्भागेन ऊनायां तृतीयपौरु-

प्या भिक्षा चर्या साधोरुक्तास्ति कालेन अवमोदर्यं भवेत् । उत्त०३ अ० ॥

अथ भावावमोदर्यमाह ॥

से किं तं भावोमोयरिया २ अणेगविहा पण्णत्ता ? तं जहा अप्पकोहे जाव अप्पलोभे अप्पसद्दे अप्पझंझे अप्पतुमं तुमे सेत्तं भावोमोयरिया सेत्तं ऊणोमोयरिया ॥

अल्पक्रोध. पुरुष. अवमोदरिका भवत्यभेदोपचारादिति (अप्प-सद्देत्ति ) अल्पशब्दो रात्र्यादावसंयतजागरणभयात् ( अप्पझ-झत्ति) इह झञ्झा विप्रकीर्णा कोपविशेषाद्वचनपद्धति. चूर्ण्या तूक्तम् । " झंझा अणत्थ य बहुप्पलावित्त अप्पतुमं तुमेति " तुमंतुमो हृदयस्थ कोपविशेष एव । भ० २५ श० ७ उ० । भावादूनोदरिका क्रोधादिपरित्यागो यत उक्तम् । " कोहाईणम-णुदिणं, चाओ जिणवयणभावणाओ य । भावेणोणोदरिया, पन्नत्ता वीयरागेहिं ॥ " प्रव० ६ द्वा० । द० । ग० । स्था० औ०॥

इत्थी वा पुरिसो वा, अलंकिओ वा णलंकिओ वा वि ।
अन्नयरवयत्थो वा, अन्नयरेणं च वत्थेणं ॥ २२ ॥
अन्नेणं विसेसेणं, वन्नेणं भावमणुमुयंते उ ।
एवं चरमाणो खलु, भावोवमाणं मुणेयव्वं ॥ २३ ॥

युग्मम् एवमनुना प्रकारेण चरमाण' इति प्राकृतत्वाच्चरमाणस्य भिक्षाया भ्रममाणस्य साधो खलु निश्चयेन (भावोवमाण इति) भावोऽवमत्व भावावमोदर्यं ( मुणितव्य ) ज्ञेयमित्यर्थ. । भावेन अवमोदर्यं भावावमोदर्यं कोऽर्थ । यदा कश्चित्साधुरिति चि-न्तयति अद्य कश्चिद्दाता भावमेतादृश स्वरूपम् ( अणुमुयते इति) अनुन्मुञ्चन् अत्यजन् एतादृशस्वरूप भजन् मह्यम् आहार दा-स्यति तदाऽह ग्रहीष्यामि नान्यथेति भाव. । को दाता कीदृश च भावमत्यजन् तदाह ( इत्थी ) स्त्री वा पुरुषो वा अलङ्कृतः आभ-रणादिसहितोऽथवाऽनलङ्कृतोऽलङ्कारै रहित ( अन्नयरवयत्थो) अन्यतरवयस्थो वालतरुणस्थविरादिकानां त्रयाणा वयसां मध्ये अन्यतरस्मिन् एकस्मिन् वयसि स्थित । अन्यतरेण पट्टदुकूलादि-वस्त्रेण उपलक्षित. । २२ । अन्येन विशेषेण कुपितप्रहसितादि-नाऽवस्थाभेदेन उपलक्षित' वर्णेन श्वेतरक्तादिना उपलक्षितः भाव पर्यायमुक्तरूपमलङ्कारादिकम् ( अणुमुयते ) अनुन्मुञ्चन् एतादृश. सन् मह्य आहारं दास्यति तदा ग्रहीष्यामि इत्यभिग्रह-धारणेन भावावमोदर्यं ज्ञेयम् ॥

अथ पर्यायावमोदर्यमाह ।

दव्वे खित्ते काले, भावम्मि आहियाउ जे भावा ।
एएहिं ओमचरओ, पज्जवचरओ भवे भिक्खू ॥ २४ ॥

द्रव्ये अशनपानादौ क्षेत्रे पूर्वोक्ते ग्रामनगरादौ काले पौरुष्यादौ भावे स्त्रीत्वादौ आख्याता कथिता ये भावा पर्यायास्तै सर्वैर-पि द्रव्यादिपर्यायैः अवममवमोदर्यं चरति सेवति य. सोऽव-मचरो भिक्षु पर्यवचरको भवेत् । पर्यायावमोदर्यचरको भवती-त्यर्थ' । एकसिक्थकाद्यल्पाहारेण द्रव्यतोऽवमोदर्यं स्यादेव पर ग्रामादौ क्षेत्रत पौरुष्यादौ कालत स्त्रीपुरुषादिषु भावत कथ-मवमोदर्यं स्यात् उत्तर क्षेत्रकालभावादिष्वपि विशिष्टाऽभिग्र-हवशादवमोदर्यं स्यादेव । इह पुन' पर्यायग्रहणेन पर्यवप्रा-धान्यविवक्षया पर्यवावमोदर्यं ज्ञेयम् । २४ ।उत्त० ३० अ० ।

ऊधारिता-अवधारयितृ-त्रि० निश्चितं वक्तरि, " अभिक्खणं अभिक्खणं ऊधारिता.' । अभीक्ष्णमवधारयिता । शङ्कितस्या-प्यस्य निःशङ्कितस्यैवमेवायमित्येवं वक्ता । अथवा अवहारयिता परगुणानामपहारकारी यथा तथा हासादिकमपि परं भणति दासचोरस्त्वमित्याद्येकादशमसमाधिस्थानम् । दशा० १ अ० ।

ऊमिणण-अवमान-न० । लोकशास्त्रप्रसिद्धे प्रोञ्छनके, " चउ-ण्हं ऊमिणण अहिगासु नत्थि उ विरोहो " ध० २ अधि० ।

ऊरण-ऊरण-पु० उरभ्रे, रा० । मेषे, विशे० ।

ऊरस-ऊरस-पु० उरसा वर्तते इति उरस. । वक्षवति बाहुब-लिनीव पुत्रभेदे, स्था० १० ठा० ।

ऊरुघंटा-ऊरुघण्टा-स्त्री० जङ्घाघण्टायाम्, ज्ञा० १८ अ० ।

ऊरुयावल-ऊरुकावल-पु० ऊरुकयोगवस्त्रनमूरुकावल' । शारी-रदण्डभेदे, । प्रश्न० १ सं० ३ द्वा० ।

ऊरुयाल-ऊरुदार-पुं०ऊर्वोर्जङ्घयोर्दारणं दारणा ज्वालो वा ज्वा-लनं य. स तथा । शारीरदण्डभेदे, प्रश्न० १ सं० ३ द्वा० ।

ऊस-उस्र-पुं० वसन्ति रसा अत्र वस-रक्-नि-न पत्वम् ग्लो-पे " लुप्तयरवशषसां दीर्घः । ८ । १ । ४३ । इति लुप्ताध स्थ-रेफस्य सकारस्यादे' स्वरस्य दीर्घ. । किरणे, प्रा० ।

ऊष-पु० ऊष रुजायाम्, क० पांशुक्षारे, द० ५ अ०। ऊषरादि-क्षेत्रोद्भवे लवणिमनि, लवणसमिश्ररजोविशेषे, पिं० । यद्वशा-दूषर क्षेत्रम् प्रज्ञा० १ पद । जीवा०। मानुषनगप्रथमकृष्णदूर्ये-पल्योपमस्थितिके नागदेवे, द्वी० । कर्णरन्ध्रे चन्दनाद्रौ, तत्र-चन्दनादेर्विरहितापकत्वात्कर्णच्छिद्रस्य-अल्पजलादिप्रवेशेनोच्छे-गहेतुत्वात् क्षारमृत्तिकाया मलापहारकत्वात्तथात्वमिति भेद । ऊषति अन्धकार मेचक वा । प्रभाते, रेतसि, न० तस्य क्षारच-स्वात्तीव्रत्वाङ्उष्णत्वाच्च तथात्वम् । क्षारमृत्तिकायाम, स्त्री० वाच०।

ऊसट्ठ-उत्सृष्ट-न० उद् सृज्-क्त । उत्सर्जने, उच्चारादेस्त्या-गे, आचा० २ श्रु० ।

ऊसढ-उत्सृत- त्रि० उच्चे, जी० ३ प्रति० । ज० । उत्कृष्टे, व्य० ६ उ०। " ऊसढाति वा गब्भियाति वा" आचा०२ श्रु० । "यथा-ऽ ज्जुयमूसढमित्याद्युक्ते घ्राणगन्धादियुक्ते प्रव०२द्वा०। दशा०। आचा० । "रसिय रसिय ऊसढं ऊसढं मणुण्णं मणुण्णं " सम० ।

ऊसण-उषण-न० उष-ल्युट् मरिचौ, पिप्पलीमूले, शुण्ठ्यां, च। चित्रके, पु० । पिप्पल्यां, चव्ये च स्त्री० । मरीच्यादीना जिह्वो-द्वेजकतया तथात्वम् वाच० ।

ऊसण्हसण्हिया--उत्श्लक्ष्णश्लक्ष्णिका--स्त्री० । उत प्रा-बल्येन श्लक्ष्णश्लक्ष्णिका अनन्तेषु परमाणुषु. अनन्तै पर-माणुभिरेकस्या उत्श्लक्ष्णश्लक्ष्णिकाया अभिधानात् ॥ प्रव० २५४ द्वा० । " अणंताणं परमाणुपोग्गलाणं समुदयसमिति-समागमेणं सा एगा उसण्हसण्हिया' अनन्ताना व्यवहारिक-परमाणुपुद्गलाना समुदयास्त्र्यादिसमुदयास्तेषा समितयो मिल-नानि तासा समागमपरिणामवशादेकीभावन समुदयसमि-ति समागमस्तेन या परिमाणमात्रेति गम्यते । सा एका अत्य-न्त श्लक्ष्णश्लक्ष्णा सैव श्लक्ष्णश्लक्ष्णिका । उत्प्राबल्येन श्लक्ष्ण-श्लक्ष्णिका उत्श्लक्ष्णश्लक्ष्णिका भ० ६ श० ७ उ० ।

ऊसत्त-उत्सक्त-त्रि० ऊर्ध्वं सक्त उत्सक्त । ऊर्ध्वमुत्क्षिप्ते उपरिस-क्ते, " आसत्तो सत्त विउलवट्टमल्लदामकलावं " रा० म० प्र०।

ऊसर-ऊषर-न० ऊष मत्वर्थीयो र ऊषं क्षारमृत्तिकां याति ड-

हानि क-त्वा । क्षारमृत्तिकायुक्ते देशे, यस्मिन्नुप्तं बीजं न प्ररोहति । यत्र तृणादेरसम्भव । आ० । प्र० । यो० ।

ऊसरण-उत्सरण-न० उद्-सृ-ल्युट् । अनुत्साहोत्सन्नेत्सच्छे ८।१।११४। इति त्स परस्यादेरुत उत् प्रा० । आरोहणे, " थाणू मरणं तओ समुप्पयणं " विशे० ।

ऊसरदेस-ऊषरदेश-पुं० ऊषरविभागे, आ० ॥

ऊसल-उल्लस-उद्-लस्-धा० उल्लासे, उल्लसो ऊसलोसुम्भ णिल्लसपुलआअगुञ्जोल्लारोआः । ८ । ४ । २०२ । इत्युल्लसेरूसलादेशः । ऊसलइ उल्लसइ उल्लसति । प्रा० ॥

ऊसव-उत्सव-उद्-सू-अप् अनुत्साहोत्सन्ने त्सच्छे । ८।१।११४ इत्यादेरुत ऊत्वम् । प्रा० । आनन्दजनकव्यापारे, "उसवो जत्थ भत्तपाणं विसिट्ठ ऊसवाविज्जति" नि०चू० १६उ० । इंदाय महा पायं पइनियया ऊसवा हुंति" उत्सवाः प्रायः प्रतिनियता वर्षमध्ये प्रतिनियतदिवसभाविन इन्द्रादिमहा । एते च भरतकाले प्रवृत्ताः "अन्नया कयाई ऊसवे इन्नगमियाई" आ०म०प्र० । "ऊसवे जहा एगंति पच्चंतियगम्मे आभीराणि ताणि साहूण पासे धम्मं सुणंति ताहे देवलोगे वसंति एवं ते सिं अत्थधम्मे बुद्धी । अन्नया कयाइ इंदमहे वा अन्नम्मि वा ऊसवे नगरिं गयाणि जारिसा बारवती तत्थ लोगं पेच्छंति मंभियपसाहियसुगंधविचित्तनेवत्थं ताणि तं दट्ठूण भणंति । एस देवलोगो जो सो तया साहूहिं वण्णितो पच्छा हे ज इ वच्चमो तो सुदरतरं करेमो जेण अम्ह वि देवलोगे उववज्जामो । ताहे ताणि गंतूण साहूण साहिंति जो तुम्भेहिं अम्हं कहितो देवलोगो सो पच्चक्खो अम्हेहिं दिट्ठो । साहू भणंति न तारिसो देवलोगो अतो अणारिसो अणंतगुणो ततो ताणि अब्भहियजायविम्हयाणि पव्वइयाणि । एवं ऊसवेण सामायसंजो।। आ० म० द्वि० । ( पार्श्वस्थानामुत्सवा अन्यत्र )

ऊसववज्ज-उत्सववर्ज्य-न० उत्सवाभावे, " ऊसववज्जकयाइ वि, लहुओ बहुया अनिक्खगहणम्मि " व्य० १ उ० ॥

ऊसविय-उच्छ्राप्य-अव्य० ऊर्ध्वस्थं कृत्वेत्यर्थे, " तणाई ऊसविय अगणिणिसिरंति " तृणानि कुशेपीकादीनि पौन पुन्येनोर्द्धीं ध स्थानि कृत्वा सूत्र० २ श्रु० २ अ० ॥

उच्छ्रित-त्रि० ऊर्ध्वीकृते, ज्ञा० ८ अ० । आ० म० प्र० ॥

उच्छ्रायित त्रि० ऊर्ध्वीकृते, ज्ञा० ८ अ० ॥

ऊसवियरोमकूव-उच्छ्रितरोमकूप-त्रि० उच्छ्रितानि रोमाणि कूपेषु तद्रन्ध्रेषु यस्य स तथा जातरोमाञ्चे, भ० ११ श० ११ उ० कल्प० " ऊसवियरोमकूवा दृप्पिय अणगारे णिद्दाए दिट्ठी " आ० म० द्वि० ॥

ऊससण-उच्छ्वसन-त्रि० उच्छ्वसितं कुर्वति, " ऊससमाणे नीससमाणे वा कासमाणे वा गायमाणे वा " आचा० २ श्रु० ॥

ऊससिय-उच्छ्वसित-न० उच्छ्वसनमुच्छ्वसितं भावे निष्ठा क्तप्रत्ययः । अनङ्गश्रुतभेदे, नं० । आ० म० प्र० । विशे० । ऊर्ध्वं प्रबलं श्वसितमुच्छ्वसितम् । ऊर्ध्वश्वासग्रहणे, " अन्नत्थ ऊससिएणं " अन्यत्रोच्छ्वसितात् ऊर्द्धश्वासग्रहणात् । उत् ऊर्द्धं प्रबलं वा श्वसितमुच्छ्वसितमिति व्युत्पत्तेः । ध० २ अधि० । आव० ।

ऊससिर-उच्छ्वसितृ-त्रि० शीलार्थे तृन्-तत्स्थाने, । शीलाद्यर्थस्येर ८।२।१४५ । इति तृन इरादेश । उच्छ्वसनशीले, प्रा० ।

ऊसारिय-उत्सारित-त्रि० प्रलम्बीकृते, ज्ञा० १८ अ० ।

ऊसास-उच्छ्वास-पुं० उत ऊर्द्धं श्वास उच्छ्वासः । आ० चू० ४ अ० । अनुत्साहोत्सन्ने त्सच्छे ८।१।१४ । इतिच्छपरस्य उत ऊत । प्रा० । ऊर्द्धगमनस्वभावे श्वासे, जो० १ पाहु० । अहोरात्रादिषूच्छ्वाससमानम् इह अहोरात्रे मासे वर्षे वर्षशते चोच्छ्वासपरिमाणमेवं पूर्वसूरिभिः संकलितम् । "एगं च सयसहस्सं, ऊसासाणं तु तेरस सहस्सा । नउपसणमम्भाहिया, दिवसनिसि होंति विन्नेया । मासचियऊसासा, लक्खा तेतीससहस्स पणनऊई । सत्त य सयाइं नाणसु, कहियाइं पुव्वसूरिहिं । चत्तारि उ कोडी उ, लक्खा सत्ते व होंति नायव्वा । अडयालीससहस्सा, वारिसया होंति वरिसेणं " जीवा० ३ प्रति० । संख्येयावलिकात्मके काले, " संखेज्जा आवलियाओ ऊसासो " किल षट्पञ्चाशदधिकशतद्वयेनावलिकानां क्षुल्लकभवग्रहणं भवति तानि च सप्तदश सातिरेकाणि उच्छ्वासनिश्वासकालः । एषश्च संख्यातात्मः आवलिका उच्छ्वासकालो भवति भ० ६ श० ७ उ० । अनु० । कर्म० ( एकेन्द्रियादीनामुच्छ्वासवक्तव्यता आण शब्दे उक्ता ) उत्पचने, मरणे, " छेदण ऊसास अणाहियासे य " बृ० १ उ० ।

ऊसासग-उच्छ्वासक-पुं० उच्छ्वसितीत्युच्छ्वासकः । आनपर्याप्तिपरिनिष्पन्ने, विशे० । आ० म० द्वि० ।

ऊसासणाम-उच्छ्वासनामन्-न० यदुदयवशादात्मन उच्छ्वासनिश्वासलब्धिरुपजायते तस्मिन्नामकर्मभेदे, कर्म० । प्रव० । आ० । पं० सं० । "ऊससणलद्धिजुत्तो, हवेइ ऊसासणामवसा" उच्छ्वासनामवशादुच्छ्वासनामकर्मोदयेन उच्छ्वसनलब्धियुक्तो भवति उच्छ्वसनि श्वासलब्धितो जायते । यदुदयादुच्छ्वसनलब्धिरात्मनो भवति स उच्छ्वासनामः सर्वलब्धीनां क्षायोपशमिकत्वादौदयिकी लब्धिर्न सम्भवतीति चेत नैतदस्ति वैक्रियाहारकलब्धीनामौदयिकीनामपि सम्भवाद्वीर्यान्तरायक्षायोपशमैरपि चात्र निमित्तीभवतीति सत्यप्यौदयिकत्वे क्षायोपशमिकव्यपदेशोऽपि न विरुध्यते । कर्म० ।

ऊसासणिरोह-उच्छ्वासनिरोध-पुं० बालमरणसाधके प्राणनिरोधे, व्य० १० उ० ।

ऊसासणीसास-उच्छ्वासनिःश्वास-पुं० उच्छ्वासेन सह निःश्वासः प्राणसञ्ज्ञके कालभेदे, " एगे ऊसासनीसासे एस पाणुत्ति वुच्चइ " भ० ६ श० ७ उ० ।

ऊसासद्धा-उच्छ्वासाद्धा-स्त्री० उच्छ्वासप्रमितकालविशेषे, भ० ६ श० ७ उ० ।

ऊसासपज्जत्ति-उच्छ्वासपर्याप्ति-स्त्री० पर्याप्तिभेदे, यया पुनरुच्छ्वासप्रायोग्यवर्गणा दलिकमादायोच्छ्वासरूपतया परिणमय्यालम्ब्य च मुञ्चति सा उच्छ्वासपर्याप्ति । कर्म० ।

ऊसित्त-उत्सिक्त-न० उत्सेचनमुत्सिक्तम् भावे क्त । अनुत्साहोत्सन्नेत्सच्छे ८ । १ । १४ । इति उत ऊत् प्रा० । सौवीरस्य उत्सेचने, बृ० २ उ० । किञ्चमुत्सिक्तं ग्राह्यम् ।

अथोत्सिक्तपदं भावयति ।

समणत्थसघरपासंडे, जावंतिय अत्तणो य मुत्तूणं ।
उट्ठो नत्थि वि कप्पो, उस्सिचणमो जयट्ठाए ॥

काञ्जिकस्य सौवीरिणीतो यन्निष्काशन तदुत्सिक्तं तच्च पञ्चधा श्रमणार्थं साधूनामर्थायेत्यर्थं । स्वगृहपतिमिश्रं २ पाष-

णिकागिश्रं ३ यावदर्थिकमिश्रम् ४ आत्मार्थकृतम् ५। एतान् पञ्च-भेदान् मुक्त्वा अपरः षष्ठो विकल्पो नास्ति यदर्थमुत्सेचनं भवेत्। अत्र चात्मार्थे यद् गृहिनिरुत्सिक्तं तदेव ग्रहीतुं कल्पते न शेषाणीति। दूषिताऽऽख्यनपुंसकभेदे, "दूसी दुविहो भासिनो जो सावच्चो ऊसित्तो जो अणवच्चो " प० मा० ।

ऊसिय-उच्छ्रित-त्रि० उद्-श्रि-क्त-। उन्नते, कल्प० । औ० । ज्ञा० । उच्चैः कृते, उत्त० २२ अ०। उच्चे विपा० १ श्रु० ६ अ०। ऊर्ध्वीकृते, औ० । उत्तुङ्गे, कल्प० । प्रख्याते, सूत्र० २ श्रु० ७ अ०। पङ्कजले, अतिलङ्घ्य परिव्यवस्थिते, सूत्र० २ श्रु० १ अ०। प्रासादादौ वास्तुभेदे, नि०चू०१उ० "ऊसियं जं उच्छ्रयेण कयं " आ० चू० ४ अ०। आव०।

उत्सृत-त्रि० प्रयत्नतया सर्वासु दिक्षु प्रसृते, चं० १८ पाहु०। स०। लम्बमाने, "मुत्तजालतरुस्सियहेमजालगवक्खं " रा०।

ऊसियज्झय-उच्छ्रितध्वज-पुं० ऊर्ध्वीकृतजयपताकायाम्, विपा० १ श्रु० २ अ०।

ऊसियपडाग-उच्छ्रितपताक-त्रि० ऊर्ध्वीकृतपताकायुक्ते, "जहा एमिनाहे ऊसियपडाग णयरं कयं " आ० म० द्वि०। "ऊसियपडागगगणतलमणुलिहंता" रा०।

ऊसियफलिह-उच्छ्रि (त्सृ) तस्फटिक (परिघ)-पुं० उच्छ्रितं स्फटिकमिव स्फटिकमन्तःकरणं यस्य स तथा। मौनीन्द्रप्रवचनावाप्त्यापरितुष्टमनसि, इति वृद्धव्याख्या केचित्त्वाहुः उच्छ्रितः अर्गला स्थानादपनीय ऊर्ध्वीकृतो न तिरश्चीनः कपाटपश्चाद्भागादपनीत इत्यर्थः। उत्सृतो वाऽपगतः परिघोऽर्गला गृहद्वारे यस्यासौ उत्सृतपरिघः। उच्छ्रितपरिघो वा औदार्यातिरेकादतिशयदानदायित्वेन भिक्षुकप्रवेशार्थमनर्गलितगृहद्वारे, "ऊसियफलिहे अवंगुयदुवारे चियत्तंतेउरपरघरप्पवेसे " ज्ञा० ५ अ०। दशा०। औ०।

ऊसुअ-उच्छुक-त्रि० उद्गता शुकाः यस्मात्सः। अनुत्साहोत्सन्नोत्सन्ने ८।१।१४ इति च्छ नागस्यादेरुत ऊत्वम्, ॥ उद्गतशुके, प्रा०।

ऊसुम्भ-उल्लस-धा० भ्वा-पर-अक-सेट्-उल्लासे, उल्लसेरूसलोसुम्भणिल्लसपुलआअगुञ्जोल्लारोआः ८।४।२०२ इत्युल्लसेरूसुम्भादेशः ऊसुम्भइ उल्लसइ उल्लसति प्रा०।

ऊह-ऊह-पुं० ऊह-घञ्। पृथिव्यादिसम्बन्धिन्यामोघसंज्ञायाम्, विशे०। मन्दमन्दप्रकाशे स्थाणुपुरुषोचितदेशे किमयं स्थाणुरुत पुरुष इत्येवमात्मके तर्के, सूत्र० १ श्रु० ४ अ० बुद्धिगुणभेदे, स च विज्ञातमर्थमवलम्ब्यान्येषु तथाविधेषु व्याप्त्या वितर्कणम् (ध० १ अधि०) स्वरूपप्रतिपादनं स तर्कः कीर्त्यते ऊह इति च संज्ञान्तरं लभते र० ३ परि०। (तत्प्रामाण्यादिनिरूपणं तर्कशब्दे) चतुरशीतिर्यूहाङ्गशतसहस्रेषु, जो० २ पाहु० ॥ आगमाविरोधिना तर्केण आगमार्थस्य संशयपूर्वपक्षनिवारणपूर्वकोत्तरपक्षव्यवस्थापनेन निर्णयरूपे परीक्षणे, अनन्वितार्थकविभक्त्यादिकल्पने पदान्तरेण आकाङ्क्षापूरणार्थे ऽध्याहारे, साङ्ख्योक्ते ताराख्ये भेदे, आरोपे, समूहे च। वाच०।

ऊहंग-ऊहाङ्ग-न० चतुरशीतिमहाऽऽहशतसहस्रेषु, जो० २ पाहु० ॥

ऊहा-ऊहा-स्त्री-ऊह-अ० स्त्रीत्वात् टाप्। अध्याहारे, वाच०। वितर्कात्मिकायां तर्कबुद्धौ, उत्त० ३ अ०। आ० म० द्वि० ॥

ऊहापन्नत्त-ऊहाप्रज्ञप्त-त्रि० तर्कबुद्ध्या प्रणीते, "ऊहापन्नत्तं घोसियासिवभूउत्तराहिं इमं " आ० म० द्वि०।







इति श्रीमत्सौधर्मबृहत्तपागच्छीय-कलिकालसर्वज्ञ-
श्रीमद्भट्टारक-जैनश्वेताम्बराचार्य श्रीश्री १००८ श्री
विजयराजेन्द्रसूरिविरचिते अभिधानराजेन्द्रे
ऊकारादिशब्दसङ्कलनं समाप्तं-
समाप्तश्चायं द्वितीयो भागः ॥





॥ श्री ॥

इति श्रीमत्सौधर्मबृहत्तपागच्छीय-
कलिकाल-सर्वज्ञ-श्रीमद्भट्टारक
जैनश्वेताम्बराचार्य श्रीश्री
१००८ श्रीविजयराजेन्द्र-
सूरिविरचिते अभिधान
राजेन्द्रे शब्दसङ्कलने

# द्वितीयो भागः समाप्तः



# आभार-प्रदर्शनम् ।

सुविहितसूरिकुलतिलकायमान–सकलजैनागमपारदृश्व–आबालब्रह्मचारी–जङ्गमयुगप्रधान–प्रातःस्मरणीय–परमयोगिराज–क्रियाशुद्ध्युपकारक–श्री सौधर्मबृहत्तपोगच्छीय—जिनपट्टाचार्य–जगत्पूज्य-गुरुदेव-भट्टारक श्री १००८ प्रभु श्रीमद्विजयराजेन्द्रसूरीश्वरजी महाराजने 'श्रीअभिधानराजेन्द्र' प्राकृत मागधी महाकोश का सङ्कलनकार्य मरुधरदेशीय श्रीसियाणा नगर में संवत् १९४६ के आश्विनशुक्लद्वितीया के दिन शुभ लग्न में आरम्भ किया । इस महान् संकलनकार्य में समय समय पर कोशकर्त्ता के मुख्य पट्टधर शिष्य-श्रीमद्धनचन्द्रसूरीजी महाराजने भी आपको बहुत सहायता दी । इस प्रकार करीब साढे चौदह वर्ष के अविश्रान्त परिश्रम के फलस्वरूप में यह प्राकृत बृहत्कोष संवत् १९६० चैत्र—शुक्ला १३ बुधवार के दिन श्री सूर्यपुर ( सूरत—गुजरात ) में बनकर परिपूर्ण ( तैयार ) हुआ ।

ग्वालियर रियासत के राजगढ ( मालवा ) में गुरुनिर्वाणोत्सव के दरमियान संवत् १९६३ पौष-शुक्ला १३ के दिन महातपस्वी—मुनि श्रीरूपविजयजी, मुनिश्रीदीपविजयजी, मुनिश्रीयतीन्द्रविजयजी, आदि सुयोग्य मुनि महाराजाओं की अध्यक्षता में मालवदेशीय-छोटे बडे ग्राम-नगरों के प्रतिष्ठित-सद्गृहस्थों की सामाजिक मिटिंग में सर्वानुमत से यह प्रस्ताव पास हुआ कि-मर्हुम-गुरुदेव के निर्माण किये हुए 'अभिधानराजेन्द्र' प्राकृत मागधी महाकोश का जैन जैनेतर समानरूप से लाभ प्राप्त कर सकें, इस लिये इसको अवश्य छपाना चाहिये, और इसके छपाने के लिये रतलाम (मालवा) में सेठ जसुजी चतुर्भुजजीत्-मिश्रीमलजी मथुरालालजी, रूपचंदजी रखबदासजीत्-जागीरथजी, वीसाजी जवरचंदजीत्-प्यारचंदजी और गोमाजी गंभीरचंदजीत्-निहालचंदजी, आदि प्रतिष्ठित सद्गृहस्थों की देख-रेख में श्रीअभिधानराजेन्द्र-कार्यालय और 'श्रीजैनप्रभाकरप्रिंटिंग प्रेस स्वतन्त्र खोलना चाहिये । कोष के संशोधन और कार्यालय के प्रबन्ध का

समस्त--चार मर्हुम--गुरुदेव के सुयोग्य-शिष्य मुनिश्रीदीपविजयजी (श्रीमद्विजयभूपेन्द्रसूरिजी) और मुनिश्रीयतीन्द्रविजयजी को सोंपा जाय। बस, प्रस्ताव पास होने के बाद सं० १९६४ श्रावणसुदि ५ के दिन उक्त कोश को छपाने के लिये रतलाम में उपर्युक्त कार्यालय और प्रेस खोला गया और उक्त दोनों पूज्य मुनिराजों की देख-रेख से कोश क्रमशः छपना शुरू हुआ, जो सं० १९८१ चैत्र-वदि ५ गुरुवार के दिन संपूर्ण छप जाने की सफलता को प्राप्त हुआ।

इस महान् कोश के मुद्रणकार्य में कुवादिमतमतंगजमदभञ्जनकेसरी-कलिकालसिद्धान्तशिरोमणि--प्रातःस्मरणीय—आचार्य--श्रीमद्धनचन्द्रसूरिजी महाराज, उपाध्याय--श्रीमन्मोहनविजयजी महाराज, सच्चारित्री-मुनिश्रीटीकमविजयजी महाराज, पूर्णगुरुदेवसेवाहेवाक--मुनिश्रीहुकुमविजयजी महाराज, सत्क्रियावान्--महातपस्वी-मुनिश्रीरूपविजयजी महाराज, साहित्यविशारद-विद्याभूषण-श्रीमद्विजयभूपेन्द्रसूरिजी महाराज, व्याख्यानवाचस्पत्युपाध्याय-मुनिश्रीयतीन्द्रविजयजी महाराज, ज्ञानी ध्यानी मौनी महातपस्वी-मुनिश्रीहिम्मतविजयजी, मुनिश्री-लक्ष्मीविजयजी, मुनिश्री--गुलाबविजयजी, मुनिश्री--हर्षविजयजी, मुनिश्री-हंसविजयजी, मुनिश्री—अमृतविजयजी, आदि मुनिवरोंने अपने अपने विहार के दरमियान समय समय पर श्रीसंघ को उपदेश दे दे कर तन, मन और धन से पूर्ण सहायता पहोंचाई, और स्वयं भी अनेक भाँति परिश्रम उठाया है, अतएव उक्त मुनिवरों का कार्यालय आभारी है।

जिन जिन ग्राम-नगरों के सौधर्मबृहत्तपोगच्छीय--श्रीसंघ ने इस महान् कोषाङ्कन-कार्य में आर्थिक-सहायता प्रदान की है, उनकी शुभ-सुवर्णाक्षरी नामावली इस प्रकार है—

श्रीसौधर्मबृहत्तपोगच्छीय श्रीसंघ-मालवा—

| | | |
|---|---|---|
| श्रीसंघ-रतलाम। | श्रीसंघ-बाँगरोद। | श्रीसंघ-राजगढ़। |
| ,, जावरा। | ,, खारोदा-बड़ा। | ,, झाबुवा। |

| श्रीसंघ-बड़नगर । | श्रीसंघ-सरसी । | श्रीसंघ-झकणावदा । |
|---|---|---|
| ,, खाचरोद । | ,, मुंजाखेड़ी । | ,, कूकसी । |
| ,, मन्दसोर । | ,, खरसोद-बड़ी । | ,, आलीराजपुर । |
| ,, सीतामऊ । | ,, चीरोला-बड़ा । | ,, रींगनोद । |
| ,, निम्बाहेड़ा । | ,, मकरावन । | ,, राणापुर । |
| ,, इन्दौर । | ,, बरड़िया । | ,, पारां । |
| ,, उज्जैन । | ,, (भाट)पचलाना । | ,, टांडा । |
| ,, महेन्दपुर । | ,, पटलावदिया । | ,, बाग । |
| ,, नयागाम । | ,, पिपलोदा । | ,, खवासा । |
| ,, नीमच-सिटी । | ,, दशाई । | ,, रंभापुर । |
| ,, संजीत । | ,, बड़ी-कड़ोद । | ,, अमला । |
| ,, नारायणगढ़ । | ,, धामणदा । | ,, बोरी । |
| ,, बरड़ावदा । | ,, राजोद । | ,, नानपुर । |

## श्रीसौधर्मबृहत्तपोगच्छीयसंघ-गुजरात—

| श्रीसंघ-अहमदाबाद । | श्रीसंघ-थिरपुर (थराद) । | श्रीसंघ-डीसा । |
|---|---|---|
| ,, वीरमगाम । | ,, वाव । | ,, दूधवा । |
| ,, सूरत । | ,, भोरोल । | ,, वात्यम । |
| ,, साणंद । | ,, धानेरा । | ,, वासण । |
| ,, बम्बई । | ,, धोराजी । | ,, जामनगर । |
| ,, पालनपुर । | ,, डुवा । | ,, खंभात । |

## श्रीसौधर्मबृहत्तपोगच्छीय-संघ-मारवाड़—

| श्रीसंघ-जोधपुर । | श्रीसंघ-भीनमाल । | श्रीसंघ-शिवगंज । |
|---|---|---|
| ,, आहोर । | ,, साचोर । | ,, कोरटा । |
| ,, जालोर । | ,, बागरा । | ,, फतापुरा । |
| ,, भैंसवाड़ा । | ,, धानपुर । | ,, जोगापुरा । |
| ,, रमणिया । | ,, आकोली । | ,, भारुंदा । |
| ,, मांकलेसर । | ,, साथू । | ,, पोमावा । |
| ,, देवावस । | ,, सियाणा । | ,, बीजापुर । |
| ,, विशनगढ़ । | ,, काणोदर । | ,, बाली । |
| ,, मांडवला । | ,, देलंदर । | ,, खिमेल । |

श्रीसंघ-गोल ।
,, साहेला ।
,, आलासण ।
,, रेवतड़ा ।
,, धाणसा ।
,, बाकरा ।
,, मोदरा ।
,, धलवाड़ ।
,, मेंगलवा ।
,, सूराणा ।
,, दाधाल ।
,, धनारी ।

श्रीसंघ-मंडवारिया ।
,, बलदूट ।
,, जावाल ।
,, सिरोही ।
,, सिरोड़ी ।
,, हरजी ।
,, गुडाबालोतरा ।
,, भूति ।
,, तखतगढ़ ।
,, सेदरिया ।
,, गोवाडा ।
,, भावरी ।

श्रीसंघ-सांडेराव ।
,, खुड़ाला ।
,, राणी ।
,, खिमाड़ा ।
,, कोशीलाव ।
,, पावा ।
,, एंदला का गुढ़ा ।
,, चाँणोद ।
,, कूडसी ।
,, थाँवला ।
,, जोयला ।
,, काचोली ।

इनके सिवाय दूसरे भी कई गाँवो के संघों के तरफ से मदद मिली है, उन सभी का कार्यालय शुद्धान्तःकरण से पूर्ण आभारी है ।

## श्रीअभिधानराजेन्द्रकार्यालय.

रतलाम ( मालवा )

